निर्णयसागर प्रेस—बम्बई के संस्करण से पुनर्मुद्रित एवं प्रकाशित

सर्वतन्त्रस्वतन्त्रश्रीमत्पार्थसारथिमिश्रप्रणीता

# शास्त्रदीपिका

प्रथमाध्याय-द्वितीयपाद-प्रभृतियावदन्तम्

श्रीमत्सोमनाथसर्वतोमुखयाजिप्रणीत-

'मयूखमालिका'व्याख्यासहिता

प्रत्यधिकरणविभक्त'जैमिनीयन्यायमाला'युता च

तत्र च

## प्रथमस्तर्कपादः

श्रीमद्रामकृष्णप्रणीत-

युक्तिस्नेहप्रपूरणीसिद्धान्तचन्द्रिकाव्याख्यायुक्तः

स्वोपज्ञसिद्धान्तचन्द्रिकागूढार्थविवरण सहितश्च

सम्पादकः

सर्वतन्त्रापरतन्त्रमिथिलामण्डलमण्डनपण्डितप्रवर-

झोपाख्यः श्रीधर्मदत्त (बच्चाझा)




( If any defect is found in this book; please return the copy by V. P. P. for postage to the publisher for exchange free of cost. )

कृष्णदास अकादमी, वाराणसी

१९८८

प्रकाशक : कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : द्वितीय, वि० सं० २०४५
मूल्य : रू० १०२-०० ( रू० एक सौ, दो )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Human Resource Development.

© कृष्णदास अकादमी
पो० बा० नं० ११९८
चौक, ( चित्रा सिनेमा बिल्डिंग ), वाराणसी-२२१००१
( भारत )

अपरं च प्राप्तिस्थानम्
चौखम्बा संस्कृत सीरीज आफिस
के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० १००८, वाराणसी-२२१००१ ( भारत )
फोन : ६३१४५

REPRINTED AND PUBLISHED FROM THE EARLIER
EDITION OF NIRNAYASAGAR PRESS-BOMBAY



# SHĀSTRADĪPIKĀ

OF

PARTHASARATHI MISHRA

**With the Commentary Mayukhamalika**
( From Second Pada of First Chapter to the end )

By

SOMANĀTHA

AND

*With the Commentary Yuktisnehaprapurani*
( For The First Tarkpada )

By

RĀMAKRISHṆA

Edited By

**Sri Dharmadatta Jha ( Baccha Jha )**



KRISHNADAS Academy

*VARANASI-221001*
1988




# भूमिका ।

प्रसिद्धमेव नः समेषाम्—यद्वर्षसहस्रमधिवसन्ब्रह्मचर्यं विज्ञानचिन्तामणि**र्भारद्वाजमहर्षि**रपि नाशकद्वेदमियत्तया परिच्छेत्तुमिति, सच वेद ऋग्यजुःसामाथर्वशाखोपशाखादिभेदेनेव कर्मकाण्डोपासनाकाण्डज्ञानकाण्डभेदेनापि व्यभाजि **भगवता बादरायणे**नेति, निखिलपुरुषार्थमूर्धन्यं आत्यन्तिकत्रिविधबन्धविलयोऽर्थज्ञानपूर्वकाध्ययनपरिगृहीतस्वाध्यायमात्रायत्त इति, तदर्थावगमायैव परमकारुणिको **भगवान् जैमिनि**रप्यसुसूत्रद्धर्मसूत्राणि "अथातो धर्मजिज्ञासे"त्यादीनि "अन्वाहार्ये च दर्शनात्"इत्यन्तानि—इति च ॥

तदेतेषां अल्पाक्षराणामसन्दिग्धानां सारवतां विश्वतोमुखानामस्तोभानामनवद्यानां चोपवर्षादिभिर्वृत्तिकारैर्व्याख्यातानामपि यथावदर्थग्रहणं न सर्वसुशकमित्यबीभषत्तानि भगवान् **शबराचार्यः** । यदीयं हि भाष्यं सुप्रसन्नमप्यतिगभीरमनितरसाधारण्या शय्ययाऽनन्यसुलभयोपपादनसरण्या चातिशेत एव भाष्यान्तराणि । तदत्र जानीमो यद्भाष्येणानेनैव देहातिरिक्तात्मस्वरूपवेदप्रामाण्यादिसमर्थनपरेण सुदूरमपासितं लोकायतमतं दर्शनपदेऽभिषिक्तं च मीमांसाशास्त्रमिति ॥

तदत्र क्षणिकं विज्ञानं शून्यमेव वा परमतत्त्वमिति, पौरुषेयो वेदो न प्रमाणपदवीमध्यास्ते इति च सौगतमतावलम्बिभिः प्रतारितानतितरान् सुनिमग्नान्दुरुपदेशजलधौ सुदूरं गतांश्च सनातनधर्मपथादुद्दिधीर्षुर्भगवानवातारीत्सुरसेनानीः **कुमारिलमूर्त्या** उदमुमूलत्सौगतनयं प्रत्यतिष्ठिपत्सनातनसमयं व्याचष्ट च **शाबरं भाष्य**मिति प्रमोदपरंपरेयं सर्वेषाम् ॥

तदिदं न्यायसुधोपबृंहितमतिगभीरं न पारयति परिच्छेत्तुं गुरुरपीति गुरुमतावलम्बिभिरन्यथान्यथा योज्यमानेषु न्यायेषु प्रवृत्ते चान्धगोलाङ्गुलेन लोकेऽन्वग्रहीषुरिमे **पार्थसारथिमिश्राः सर्वतन्त्रस्वतन्त्राः** न्यायरत्नमाला-शास्त्रदीपिका-न्यायरत्नाकरैस्तन्त्ररत्नेन च स्वकृतैरिति सुविशदमिदं सर्वेषाम् ॥

तदत्र नायकमणिमिव देहलीदीपिकामिव च प्रकाशमानामिमां शास्त्रदीपिकामधिकृत्य किंचिदिवात्र प्रस्तावयामः ॥ सेयं शास्त्रीयमावरणं समूलघातमुपघ्नती यथार्थनाम्नीति विश्वसिमः । यस्याश्च जनकाः सुगृहीतनामानो मैथिलाः पार्थसारथिमिश्रा यज्ञात्मसूनवः स्मर्यन्ते । अत्र स्मृतिपथागतम्—

"आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना । पार्थसारथिमिश्रेण प्रयुक्तितिलकः स्मृतः ॥"

इति न्यायरत्नमालागतं तदीयमेव वाक्यं प्रमाणयामः ॥

**अत्र केचित् पर्यनुयुञ्जते**—कदा वा पार्थसारथिमिश्रा भूमिमलंचक्रुरिति ? ॥

पार्थसारथिमिश्रा हि—माधवीये जैमिनीयन्यायमालाविस्तरे शास्त्रदीपिकातत्संग्रहश्लोकादिनिर्देशात्ततः पूर्वतना इति, वार्तिकव्याख्यानकरणात्ततोऽर्वाचीना इति, पूर्वोत्तरपक्षादिसंग्रहश्लोकतद्व्याख्यानादिशैलीसाम्येन वाचस्पतिमिश्रकालिका इति च केचिदभिप्रयन्ति । एतदीयन्यायरत्नमालायाः श्रीमद्रामानुजाचार्यविरचितं नायकरत्नं नाम व्याख्यानमवलोकयन्तोऽन्येऽपि ततः पूर्वतनानेतान्मन्वानाः केषांचिदेव पक्षमनुमोदन्ते ॥ तर्कपादेऽद्वैतसांख्यादिमतनिराकरणावसरे रामानुजीयस्य मतस्यानुवादस्य खण्डनस्य वाऽकरणमपि तेषामनुकूलमिति परे तदुपोद्बलयन्ति ॥

एतदुपज्ञमेवाधिकरणप्रस्थानं परिष्कृतावस्थमिति बहवो मन्यन्ते ॥ तर्कपादे स्फोटवादं वैशेषिकनयं, अद्वैतमतं सांख्यमतं बौद्धकृतान्तं औपनिषदराद्धान्तं च यथावदेवानुवदन्तो हीमे सर्वतन्त्रस्वतन्त्रा इत्यत्र न कोऽपि विप्रतिपद्येत ॥

तत्रतत्र प्राभाकरमतनिराकरणार्थमेव प्रवर्तमानानेतानवगच्छन्तो वयं—"न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिनीम् । कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम्"इत्यत्र न्यायाभासपदेन प्राभाकरयुक्तिमेवाभिप्रयन्तीति जानीमः ॥

तदत्र शास्त्रार्थसंग्रहेणाध्यायार्थसंग्रहेण पादार्थसंग्रहेणाधिकरणार्थसंग्रहेण च पार्थसारथिमिश्रा एवास्माकमुत्तमर्णा नान्य इति वयं मन्महे ॥

तेहीमे प्रथमं जिज्ञासाधिकरणेन स्वविधिप्रयुक्तमेवाध्ययनं नाध्यापनविधिप्रयुक्तं अध्यापनस्य लौकिकेनाध्ययनेनापि सिद्ध्या शूद्राणामपि वेदाध्ययनाधिकारापत्तेः अन्तरेणापि माणवकस्यार्थज्ञानमध्यापनसिद्ध्या विचारस्यावैधत्वापत्तेश्चेति प्राभाकरमतमपनुद्य स्वमतेऽध्ययनविधिनैवेतिकर्तव्यताभूतस्य विचारस्यापि विधानेन तस्य वैधत्वमुपापादिषत । अनन्तरं चोदनैव प्रमाणं प्रमाणमेव चोदनेति नियमद्वयं धर्मस्य प्रत्यक्षादिप्रमाणान्तराविषयत्वसमर्थनेन वेदापौरुषेयत्वादिसमर्थनेन चोपपादयामासुः ॥

"न कदाचिदनीदृशं जग"दिति मीमांसकसर्वस्वपरिरक्षणार्थं कृतं अद्वैतमतखण्डनं सर्वावबोधं मनोरञ्जकं चैतेषां पूर्वोत्तरमीमांसयोरनितरसाधारणं पाण्डित्यमभिव्यञ्जयन्मिश्रोपनामत्वमपि यथार्थयति । अथावच्छरीरभाविप्राणनादिलिङ्गं सुखादीन् चैतन्यं च देहातिरिक्तात्मसद्भावे प्रमाणयन्तो हीमे सत्यमेवैतत् यदधमर्णान्सर्वांश्चरीकरीतीति ॥

अहंप्रत्ययगम्यमात्मानं यजमानत्वाहंमवभासविषयत्वविभुत्वानेकत्वादिना विवेचयन्तो हीमे न विस्मरणीयाः कृतज्ञैरित्यपि युक्तमेव ॥

संविन्मात्रेणावस्थानं ज्ञानसन्तानोपरमं अद्वैताभिमतं प्रपञ्चप्रविलयं स्वप्रकाशचैतन्यानन्दरूपं वा मोक्षस्वरूपमपोह्य— "तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते । नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारण"मिति मीमांसकसंमतमात्यन्तिकत्रिविधबन्धविलयलक्षणं मोक्षस्वरूपं ससाधनम्—"तस्मात्सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः । सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्, धर्माधर्मोच्छेदश्चोत्पन्नानां कर्मणामुपभोगेन नित्यनैमित्तककर्मानुष्ठानेनात्मज्ञानेन च विरोधात्, उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्, विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात् असति शरीरारम्भे पूर्वशरीरपाते चाशरीरोऽवस्थितो मुक्तः—"इति वाक्येभ्योऽवधारयन्तो वयं धन्यधन्या एवेति प्रत्ययामहे ॥

तदत्र प्रकरणे आत्मज्ञानमुपनिषदध्ययनपूर्वकमेव क्रत्वङ्गमिति—"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन" ॥ इति वार्तिकोपष्टम्भेन निरूपयन्तो हीमे उपनिषदां कर्माङ्गकर्तृस्तावकत्वेनैवोपयोगमभिप्रयन्तीति न ब्रह्ममीमांसयास्या मात्रयाप्यभेद इति पश्यामः ॥

तदत्र काशीमुद्रितशास्त्रदीपिकाभूमिकायां महता संदर्भेण श्रीभाष्यकारमतानुसारेण पूर्वोत्तरमीमांसयोरैकशास्त्र्यव्यवस्थानं शंकरभगवत्पादसंमततद्भिन्नशास्त्रत्वखण्डनं चाकाण्डताण्डवमसंभवदुक्तिकं चेति सुधीरमुद्घोषयामः ॥

**तथाहि**—श्रीभाष्यकारा हि पूर्वोत्तरमीमांसयोरैकशास्त्र्यमुपवर्णयन्तः "संहितमेतच्छारीरकं षोडशलक्षण्ये"ति वदता वृत्तिकारेण प्रतारिता एवेति मन्यामहे । वेदार्थो हि सिद्धसाध्यभेदः स्वविषययोर्विचारशास्त्रयोरपि द्वैविध्ये एवोपपद्यते । "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्"इति सूत्रयन् जैमिनिरप्यत्र हस्तावलम्बयति ॥

ज्योतिष्टोमदर्शपूर्णमासबृहस्पतिसवादीनां साधनचतुष्टयसंपत्तावनुषङ्गेणोपयोगेऽपि स्वर्गाद्यपर्यवसितपुरुषार्थेनैव पर्यवसानात्कर्मकाण्डे प्रतिप्रकरणं नाभ्यास उपलभ्यते, वेदान्तेषु तु पर्यवसितपुरुषार्थतत्साधननिरूपणपरेषु अभ्यास उपलभ्यते । अतोऽभ्यासानुपलम्भोपलम्भाभ्यां नैकार्थत्वनिर्णयः । संकर्षकाण्डे सूत्रशेषं वाक्यमावर्तयन्जैमिनिरपि स्वकीयस्य ग्रन्थस्येतरानपेक्षतां समाप्तिं च सूचयतीति शान्तिकर्मणि वेतालोदयः संवृत्तः । बादरायणेन प्रत्यध्यायसमाप्त्यपि सूत्रैकदेशावृत्तिकरणाद्युक्तं विशिष्टसूत्रमेव स आवीवृतच्छास्त्रसमाप्तिद्योतनायेति, नैवं जैमिनिरभ्यस्यति प्रत्यध्यायसमाप्तिसूत्रैकदेशमिति सूत्रैकदेशपुनरुच्चारणाच्छास्त्रसमाप्तिमेव स आशेत इति मन्यामहे ॥

"द्वादशाहवदुभयविधं बादरायणोऽतः" "प्रदानवदेव तदुक्तं"इत्यादिसूत्राणि तु न्यायविशेषसूचनेन तद्दृष्टान्तेनार्थविशेषनिर्णयार्थं प्रवृत्तानीत्यपि वक्तुं शक्यते इति न पूर्वतन्त्रोपजीव्यमुत्तरतन्त्रमित्यवगच्छामः । एतेन "दर्शयतश्चैवं प्रत्यक्षानुमाने"इत्यादिसूत्राण्यपि व्याख्यातानि । अत्र "धर्मावबोधात्प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्ते"रिति शारीरकभाष्यमवलम्बामहे । स्यान्नामैतत् यत्पूर्वमीमांसोपजीव्योत्तरमीमांसेति, नैतावतापि शास्त्रैकत्वनिर्वाहः । नह्युपजीव्योपजीवकयोरैक्यमिति नियमः; शतशो व्यभिचारात् । अन्यथा बौद्धवैशेषिकादितन्त्रसिद्धस्याप्यर्थस्योपजीव्यत्वेन बौद्धादितन्त्रैरप्येकप्रबन्धतापत्तेः । **वस्तुतस्तु**—पूर्वतन्त्रसिद्धार्थानां दृष्टान्ततयोत्तरतन्त्रे परामर्शो हि पूर्वोत्तरयोस्तन्त्रयोर्भेदमेवावगमयति । नहि पूर्वतन्त्र एव पूर्वतन्त्रसिद्धार्थो दृष्टान्ततयोपादीयते । नापीयं सूत्रशैली दृष्टचरा यत्समान एव तन्त्रे सूत्रितो न्यायविशेषो निदर्शनार्थं पुनः सूत्रान्तरेण परामृश्यत इति । अतिदेशशैल्या खलु "अत एव प्राणः" "तथोत्थानविसर्जने"इति परामृशन्ति । अत्र स्मृतिपथागतं "भक्ष्याशयाऽहिमञ्जूषां दृष्ट्वाखुस्तेन भक्षित"इति निदर्शनं स्मारयामः ॥

स्मर्तृभेदोऽप्यत एवोपपद्यते । असति बाधके स्मर्तृभेदो ग्रन्थभेदप्रयोजक इति नियमः । यत्र पुनरेकस्मिन्नेव ग्रन्थे स्मर्तृभेदः प्रत्यक्षसिद्धः तत्र प्रत्यक्षदर्शनेन विरोधान्मानाम प्रवर्ततामुक्तनियमः । "स्यादप्येषा कल्पना यद्यात्मैकत्वे दृढं प्रमाणं स्यात्"इति शास्त्रदीपिकागतमेव वाक्यं आत्मैकत्वपदस्थाने ग्रन्थैकत्वपदं प्रयुञ्जाना वयमत्र विलिखामः । परस्परविरुद्धसिद्धान्तयोः स्मर्त्रोर्भेदो हि ग्रन्थभेदप्रयोजक इति नियतमेवैतत् ॥

वामनजयदेवादिभिरिव समुच्चित्यैव जैमिनिबादरायणाभ्यामपि परस्परसाहाय्येनैव यदि शास्त्रमिदं रचितं स्यात्तर्हि ब्रह्मविचारानन्तरमप्यपशूद्राधिकरणं वितथमेव संपद्येत । नहि कर्मिणामेव ब्रह्मविद्याधिकारसिद्धान्तमभ्युपगच्छतां भवतां मतेऽकर्मिणामनुपनीतानां च शूद्राणां तदधिकारसंभावना संभवति । वचनमात्रेण तु मध्वादिविद्यासु अकर्मिणामपि देवानामधिकार इति खलु भवतामभिमतम् । अन्यथा कर्मब्रह्मविद्ययोरेकफलत्वानुपपत्तेः । कथमेवंसति तद्दृष्टान्तेन शूद्रा-

**धिकारः शङ्क्यते?** अस्मन्मते तु अनुपनीतानां देवानामिव लिङ्गवशेन शूद्राणामपि ब्रह्मविद्याधिकारसंभावनयोक्तमधिकरणं **सार्थ**कमिति युक्तम् । निषिद्धस्याप्यधिकारस्य भ्रान्तिप्रसक्तिमाश्रित्य तन्निषेधार्थमधिकरणान्तरारम्भे हि तेन निषिद्ध**स्या**पि भ्रान्तिप्रसक्तिमाश्रित्य पुनरधिकरणान्तरारम्भ इति दुरुत्तरानवस्था । ब्राह्मणानप्यकर्मिणो भ्रान्तिप्रपन्नाधिकारवतोऽधिकृत्याधिकरणान्तरारम्भापत्तिः, तेषामपीदमुपलक्षणमित्यङ्गीकारे तु पूर्वतन्त्राधिकरणस्यैव सर्वोपलक्षणत्वाङ्गी**कारसंभवाद्घट्टकुटीप्रभातनय इत्यहो बालविलसितं स्वदन्तैरेव स्वाङ्गुलिदंशनमित्युत्तरतः प्रचरामः ॥**

**"अथातो धर्मजिज्ञासा"**इति धर्मविचारप्रतिज्ञानमपि ब्रह्मविषयकं पूर्वोत्तरतन्त्रयोर्भेदमवगमयति । तथाहि— धर्मशब्दो हि **"चोदनालक्षणोऽर्थो धर्मः"**इति विध्येकसमधिगम्यं साध्यमेवार्थं बोधयति, नतु सिद्धं ब्रह्मापि । स्पष्टं चैतत् शिवार्कमणिदीपिकायामिति नेह पराक्रम्यते । भामत्यां तु अतःशब्देन वेदार्थसामान्यस्य विवक्षितत्वं विवक्ष्यते, **नतु धर्मशब्दः सिद्धसाध्यसाधारण इति कल्पतरुपरिमले** व्यक्तमिति पूर्वोत्तरमीमांसयोर्नैकशास्त्रत्वम् ॥

वेदार्थविचारत्वेनोपाधिना समशास्त्रत्वे कल्पसूत्रगृह्यादिभिरपि तदापत्तिः, युक्त्यात्मकविचारत्वाभावेन तत्र भेदसाधने प्रकृतेऽपि साध्यवेदार्थविचारत्वाभावेन भेदसिद्धिरिति निर्णयामः ॥

**"अथातः शेषलक्षणम्"**इत्यादिना तु साध्यगत एव विशेषो विचारित इति युक्तं तत्रैकशास्त्रत्वम्, नैवं ब्रह्मसाध्यगतो विशेषः साध्यरूपं वेत्यथातो ब्रह्मजिज्ञासेति पृथक्प्रतिज्ञयापि शास्त्रभेदमवधारयामः । इयमेव च रीतिः शास्त्र**षट्कव्यपदेशोपपत्त्यर्थं भवतामप्यादरणीयेति भक्षितेऽपि लशुने न रोगशान्तिरिति संपद्यते ॥**

**"फलजिज्ञास्यभेदाच्चे"**ति वदन्तः शंकरभगवत्पादा अप्यमुमेवार्थमभिप्रयन्ति । क्रत्वर्थपुरुषार्थावपि साध्यविशेषावेव **"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"**इति जिज्ञास्यत्वेन प्रतिज्ञाताविति तयोः साध्याद्धर्मात् **अथातो धर्मजिज्ञासा** इति सूत्रितान्न भेद इति युक्तमध्यायत्रयेण तस्यैकशास्त्रत्वम्, नैवं ब्रह्मसाध्यविशेष इति जिज्ञास्यभेदाच्छास्त्रभेदवर्णनस्य बालसंमोहनमात्रत्ववर्णनं परस्मिन्ननवकाशं पिशाचवत्स्वस्मिन्नेव विश्राम्यति । यथाच कर्मणां न ज्ञानेन सहैककार्यकारणता तथा भामत्यां सहस्रधा प्रतिपादितमिति नेह वितन्यते ॥

**एतेन**—भव्यानामुपकोसलोपासनप्रतीकोपासनान्नोपासनानामत्र विचारितत्वेन जिज्ञास्यभेदोऽसिद्ध इति शङ्का—**परास्ता,** प्रासङ्गिको हि तद्विचारः । प्रासङ्गिकोऽपि स उत्तरमीमांसायामेव संगतो नान्यत्रेति पञ्चपादिकाविवरणन्यायरक्षामण्यादौ व्यक्तमिति तत एवावगन्तव्यम् । **एतेन**—कर्मसमृच्चयार्थानामुपासनानामिह निरूपणेन सिद्धमस्खलितं कर्मावबोधानन्तर्यमिति शङ्कापि—**पराहता ॥**

"भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इहतु भूतं नित्यवृत्तं ब्रह्म जिज्ञास्य"मिति प्रतिपाद्यवैलक्षण्यं निरूपयन्तो हि भगवत्पादाः ब्रह्मणो धर्मशब्दानर्हतामपि बोधयन्तः "अथातो धर्मजिज्ञासे"ति ब्रह्मविचाराप्रतिज्ञानमपि ज्ञापयन्तश्च साध्यधर्मनिरूपणानन्तरं सिद्धधर्मविचारार्थं "अथातो ब्रह्मजिज्ञासे"ति केषांचिदुत्प्रेक्षां प्रतिक्षिपन्ति । उपपादितंच भाट्टरहस्ये "धर्मशब्दो ब्रह्मव्यावृत्तः" इति । **अयमाशयः**—कथमवगम्यते "अथातो धर्मजिज्ञासे"त्यत्र धर्मशब्दो ब्रह्मासाधारण इति, "चोदनालक्षणोऽर्थो धर्मः"इति सूत्रान्तरैकवाक्यतया वा, उत वेदार्थसामान्यस्य विवक्षितत्वादित्यतःशब्दार्थो धर्मशब्देन ब्रह्मणोऽपि ग्रहण एवोपपद्यते इति वा । तत्र प्रथमकल्पः साध्यस्वरूपएव धर्मे शब्दप्रवृत्तेरवगमान्न स भवतामनुकूलः । द्वितीयकल्पे तु धर्मशब्दस्य ब्रह्मसाधारण्ये, धर्मो विचार्यः, विवक्षितवेदार्थत्वादित्यनुमाने व्यतिरेकव्याप्तिरेव मूलमिति भवति, तस्य तदसाधारण्ये तु ब्रह्म दृष्टान्तयितुं शक्यते इति सोऽपि न भवतामनुकूलः । अथापि सौत्रं किमपि लिङ्गं यद्युपलभ्येत, तर्हि कथंचिदपि ब्रह्मसाधारण्यं निर्वोढुं शक्यते, नतु तदस्तीत्यन्यत्र कृतविस्तरमिमं विषयमुपेक्षामहे ॥

**एतेन**—'एवंच सत्यथातो ब्रह्मजिज्ञासेति तद्विषयः पृथक्शास्त्रारम्भ उपपद्यते । प्रतिवित्तिविधिपरत्वे हि "अथातो धर्मजिज्ञासेत्येवारब्धान्न पृथक्शास्त्रमारभ्येत । आरभ्यमाणं चैवमारभ्येत—"अथातः परिशिष्टधर्मजिज्ञासे"ति "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिवदिति भगवत्पादभाष्यमपि—**व्याख्यातम्** । प्रतिपत्तिविधिपरत्वे हि तद्विषयत्वे न दध्यादिवद्ब्रह्मणोऽपि साध्यत्वेन परिशिष्टधर्मशब्देन तद्ग्रहणमेव युक्तम्, नतु सिद्धस्वरूपसमर्पकेण ब्रह्मशब्देन । **एतेन**—शिष्यावधानफलं प्रतिज्ञासूत्रं, ब्रह्मजिज्ञासेति सूत्रणे एव तत्संभवाद्ब्रह्मजिज्ञासेत्याकारकमेव प्रतिपत्तिविधिपरत्वेऽपि युक्तमिति शङ्कापि —**पराहता** । परिशिष्टधर्मशब्देन विना ब्रह्मशब्देन विचार्यनिर्देशे हि प्रस्तुतधर्मविचारो नावसितः, अपूर्वः कोऽपि विचारः प्रतिज्ञायते इति संदिहानो न विचारान्तरेऽस्मिन्श्रद्दधीतेति तदवधानार्थं परिशिष्टधर्मजिज्ञासेत्येव सूत्रणीयत्वात् । तत्रापि सूत्रकारो जैमिनिः सिद्धसाध्यसाधारणो धर्मशब्द इति यद्यसूत्रयिष्यत् तर्हि श्रद्दधास्यद्ब्रह्मजिज्ञासेति सूत्रणेऽपि शिष्य इति ब्रह्मजिज्ञासेति सूत्रयन्तो बादरायणाचार्याः शास्त्रभेदमेवाभिप्रयन्ति । एतदभिप्रायेणैव हि जैमिनीयाः स्वतन्त्रमेव मोक्षस्वरूपादिकं, उपनिषदामन्यथोपयोगं च वर्णयन्ति ॥

स्वाध्यायानन्तर्यस्याथशब्दार्थत्वाभावेऽपि अधीतवेदान्तानामेव ब्रह्मविचारः साधनचतुष्टयसंपन्नानां नान्येषां वेदाध्ययनानधिकारिणाम्। पुराणेतिहासादिषु तेषामपि ब्रह्मावगमसंपत्तिवर्णनं त्वर्थवाद एवेति मन्यामहे। जन्मान्तरीयं वा ज्ञानं प्रारब्धकर्मविशेषेण संसरतो विदुरादेरनुवर्तते इति गृह्णीमः। सर्वथापि नास्मन्मते स्वाध्यायाध्ययनं विना ब्रह्मविद्याधिकार इति सिद्धम्। तदत्र—"एतेन धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति विभीषिकाप्रदर्शनं सन्देग्धेव स्वभावभीरुषु नतु युक्तितन्त्रेषु कुशलेषु" इति वदतां राममिश्रशास्त्रिणां—"अहो अनुमानकौशलं दर्शितमनुपदन्नरङ्गैस्तार्किकबलीवर्दैरिति" भगवत्पादवाक्यमेव वरमुत्तरं मन्यामहे॥

"अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्मतः" इत्यादिभिः कर्मणामपि परंपरया मोक्षोपयोगवर्णनेऽपि जन्मान्तरानुष्ठितैरपि कर्मभिश्चित्तशुद्ध्यादिद्वारेणेहजन्मनि विविदिषाज्ञानादिसिद्ध्या न कर्मावबोधानन्तर्यमथशब्दार्थः। अनधीतस्वाध्यायानां तु न विविदिषोदय इति पूर्वमेवावोचाम। परंपरया मोक्षोपयोगिनामपि कर्मणां यथा न मोक्षाधिकृताधिकारित्वं तथान्यत्र विस्तर इत्यधिकृताधिकाराभावाच्छेषशेषिभावाभावाच्च न कर्मब्रह्मज्ञानयोः क्रमविवक्षेति भगवत्पादोक्तं समीचीनमेव। तदेव तदङ्गं यद् यदुद्देशेन शास्त्रेण विधीयते, नतु तत्फलकसामान्यं तदङ्गं, दध्यानयनस्य वाजिनाङ्गत्वापत्तेः। नहि कर्मब्रह्मजिज्ञासयोः शेषशेषिभावः प्रमाणान्तरेण चोदितः। "तमेतं वेदानुवचनेने"ति श्रुतिस्तु "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" इति वचनैकवाक्यतया पुरुषसंस्कारद्वारा कर्मणां विविदिषोपयोगमेव बोधयति, नत्वङ्गत्वम्। अतएव हि "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति श्रुत्युपपत्तिः। त्यागशब्दो ह्यत्र सर्वकर्मसंन्यासपर एव विवक्षितः; "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति स्मृतेः। "सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" इति स्मृतिस्तु अज्ञाधिकृतं गौणमेव तं बोधयति, नतु मुख्यम्। अतएव—"यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इत्यत्र कर्मफलत्यागिनः त्यागित्वेन स्तुतिरुपपद्यते। उत्कृष्टेन खलु निकृष्टः स्तूयते नतु स्वेनेति सर्वविशदमिदम्। यथाच भगवद्गीतापि सम्यगेव विमृश्यमानाऽऽद्वैतमेव गोचरयति तथाऽवसरान्तरे निरूपयिष्यामः॥

**एतेन**—"निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः परिकीर्तितः॥ यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥ एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" इत्यादि गीतावचनान्यपि अज्ञाधिकृतानीति—**व्याख्यातम्**। अतएव "ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" इत्यादीन्युपपद्यन्ते। अधिकं भाष्यगूढार्थदीपिकादितोऽवगन्तव्यम्। **एतेन**—"नच वाक्यं सहकारितया कर्माण्यपेक्षते" इति भामतीनिबन्धोऽपि—**व्याख्यातः**; अकृतकर्मणामपि समधिगतशब्दन्यायतत्त्वानां निष्कम्पप्रवृत्तिनिवृत्त्यादिफलार्थज्ञानोत्पत्तिदर्शनात्। कार्यसामान्यं प्रति अदृष्टस्यापि साधारणतयाऽसाधारणतया वा कारणत्वेऽपि जन्मान्तरानुष्ठितैः कर्मभिरपि तादृशादृष्टोत्पत्तिसंभवात् इह जन्मनि कर्मानुष्ठानतदवगमयोरनावश्यकत्वान्न कर्मावबोधानन्तर्यमथशब्दार्थः। तदत्र कर्मणोऽन्यथासिद्धत्वाशङ्कातत्परिहारादिकं सर्वमकाण्डताण्डवं मन्दमतीनां स्वभावभीरूणामेव विभीषिका न युक्तितन्त्राणां कुशलानामिति स्वासिनैव स्वहस्तच्छेदो भवताम्॥

एवंच साधनचतुष्टयसंपन्नानामेव ब्रह्मविद्याधिकारः, न कर्मावबोधमात्रवताम्। अधिकमत्रोपपादनीयमवसरान्तरे निरूपयिष्यामः। साधनचतुष्टयसंपत्तिमतामपि शूद्राणामनधीतस्वाध्यायानां न ब्रह्मविद्याधिकार इत्यपशूद्राधिकरणविदां करतलामलकितम्। देवानामनुपनीतानामपि यथा ब्रह्मविद्याधिकारः एवं शूद्राणामपि जानश्रुतिरैक्वसंवादगतशूद्रत्वलिङ्गेन तदधिकारो भवत्विति शङ्कायां अनुपनीतानामपि देवानां स्वयं प्रतिभातवेदानां वेदजन्यार्थज्ञानवत्त्वेनाधिकारेऽपि अतादृशानां शूद्राणां न तदधिकारसंभव इति हि तत्रोपपादि। देवानामपि ब्रह्मक्षत्रादिभेद उपनयनं च विद्यते इत्यसमुल्लेखमप्रमाणं पश्यामः। ब्रह्म बृहस्पतिः क्षत्रमिन्द्रः मरुतो विशः इति वचनं हि क्षत्रादिकार्यकारित्वात् गौणमेव ब्रह्मत्वादिकं बोधयति। अस्तुवा मुख्यमेव ब्रह्मक्षत्रविट्त्वं वचनबलाद्बृहस्पतीन्द्रमरुताम्, एवमपि देवताधिकरणमनुपनीतान्विष्ण्वादीनेव गोचरयतीति तद्दृष्टान्तेन शूद्राधिकारशङ्कानिवारणार्थमपशूद्राधिकरणमावश्यकमेव॥

यदत्र साधनचतुष्टयसंपन्नाः शूद्रा अपशूद्राधिकरणविषयतया विवक्ष्यन्ते वा, उत तदसंपन्ना वेत्यादिविकल्पतत्परिहारादिकं तदकालवृष्टिरिव मरुमरीचिकोदकमिव च निष्प्रयोजनं भ्रान्तिविलसितं चेत्युपेक्षामहे॥

अलमनेन प्रासङ्गिकविचारेणेति प्रकृते एव विषये लेखनीं व्यापारयामः—मीमांसकसंमतप्रमाणप्रमेयविचाररूपत्वात् **प्रथमपादस्य तर्कपादत्वेन व्यपदेशोऽपि** यथार्थ एवेति मन्यामहे॥

तदत्र **द्वितीयपादेन**—वेदापौरुषेयत्वेन साधितं वेदप्रामाण्यं अर्थवादमन्त्रयोरनैकान्तिकमित्याशङ्क्य सर्वस्यापि वेदस्य प्रयोजनवदर्थपर्यवसायित्वेन प्रवृत्तिप्रयोजनप्राशस्त्यज्ञानेनार्थवादानां अनुष्ठानोपयोगिपदार्थस्मरणादिप्रयोजनेन मन्त्राणां च प्रामाण्यमुपपन्नं **तृतीयेन**—स्मार्तानामिव विधीनां श्रुत्यविरुद्धानां सदाचारम्लेच्छप्रसिद्धिकल्पसूत्रव्याकरणादीनामपि

प्रबलप्रमाणाविरुद्धानां धर्मप्रमाणतामुपपाद्य **चतुर्थेन**—उद्भिच्चित्राज्याभिहोत्रश्येनवाजपेयवैश्वदेवशब्देषु नामधेयेषु धात्वर्थ-परिच्छेदगुणफलसंबन्धादिभिः सप्रयोजनेषु धर्मप्रमाणतामुपसंगमय्य चप्रमाणाध्यायपदं—**यथार्थयामासुः** ॥

यथा **द्वितीयाध्यायस्य तदीये प्रथमे पादे**—प्रतिपदाधिकरणभावार्थाधिकरणाभ्यां धात्वर्थादेवापूर्वं अपूर्वाधिकरणेनापूर्वेऽङ्गोत्पत्तिपरमापूर्वभेदभिन्ने प्रमाणम् अवघातप्रोक्षणादेः व्रीह्याद्यर्थत्वेन गुणकर्मत्वं स्तोत्रशस्त्रयोः प्रधानकर्मत्वं मन्त्रगताख्यातानामभिधायकत्वं ऋग्यजुःसाममन्त्रब्राह्मणलक्षणानि ब्राह्मणपरिव्राजकन्यायेन निगदस्य यजुरेकदेशत्वं वाक्यैकत्ववाक्यभेदौ अनुषङ्गाध्याहारौ च निरूप्य **द्वितीयतृतीययोः** शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः तदपवादैश्च कर्मभेदकर्मैकत्वे च विविच्य **चतुर्थे** गुणोपसंहारन्यायमपि विचार्य—**भेदाध्यायपदानि वितेनुः** ॥

**तथा तृतीयाध्यायस्य प्रथमे पादे**—अवघातस्फ्यारुण्यसंमार्गाणां व्रीह्युद्धननग्रहत्वविशिष्टग्रहसामान्याङ्गत्वे द्वितीयादिश्रुतिं प्रमाणयित्वा पादशेषेण प्रासङ्गिकं यूपसप्तदशारत्नित्वं अभिक्रमणप्रयाजहोमयोरङ्गाङ्गिभावं उपवीतस्य सामिधेन्यनङ्गत्वं वारणादीनां सर्वयज्ञार्थत्वम् आग्नेयवाक्येन पुरोडाशवाक्योपसंहरणं च—**प्रतिपादयामासुः** । **द्वितीयपादे**—लिङ्गेन मुख्यार्थविनियोगं, वाचनिके विनियोगे 'कदाचनस्तरीरसी'त्यादौ गौणेऽपि विनियोगम् अवघातोत्थानवाग्विसर्गेषु आह्वानमन्त्राविनियोगं सूक्तवाकस्य लिङ्गाविरोधेन प्रस्तरप्रहरणे विनियोगं काम्ययाज्यानुवाक्यामन्त्राणां लिङ्गक्रमसमाख्याभिः काम्येष्टिष्वेव विनियोगम् भक्षमन्त्राणां यथालिङ्गं ग्रहणभक्षणसम्यक्जरणेषु विभज्य विनियोगं तृप्ताववि-नियोगम् अन्यत्र प्रासङ्गिकं—**निरणैषत** । **तृतीये पादे**—वाक्यप्रकरणस्थानसमाख्यानानि सोदाहरणं निरूप्य अङ्गप्रमाणानां प्राबल्यदौर्बल्यं निर्णीय अहीनप्रतिपत्सन्तर्दनपौष्णहविःपेषणेषु वाक्यप्रकरणविरोधं जाघनीप्रवर्ग्यनिषेधयोस्तदविरोधंच—**व्यचीचरन्**। **चतुर्थपादे**—उपवीतसर्वधर्मत्वे लिङ्गप्रकरणविरोधं प्रासङ्गिकं विधिस्वरूपं अनृतवदननिषेधे श्रुतिप्रकरणाविरोधं, निवीतजंजभ्यमानधर्मेषु वाक्यप्रकरणाविरोधं च विचार्य अनृतवदननिषेधप्रसङ्गागतं क्रत्वर्थत्वपुरुषार्थत्वविचारं जयाद्यश्वप्रतिग्रहेष्टिवमनेष्ट्यादीनां क्रत्वर्थत्वेन अवगोरणमलवद्वाससंवादनिषेधसुवर्णधारणादीनां पुरुषार्थत्वेन समाप्य वमनप्रसङ्गागतं हविःशेषविचारं यावद्यवदानं यागाभ्यासपूर्वपक्षेणाङ्गानुसारेण प्रधानावृत्त्ययोगेन सकृदवदानेऽपि अवशिष्टस्य यागीयत्वाविरोधसिद्धान्तेन प्रतिशेषं स्विष्टकृत्कार्यनिरूपणेन पुरोडाशादिदानस्य भक्षार्थताबोधनेन चोपाक्रमन्त ॥ **पञ्चमेन तु पादेन**—उपक्रान्तमिमं विचारं आज्यसौत्रामणीग्रहादिषु शेषाभावनिरूपणेन द्रव्यैकत्वे तन्त्रेण स्विष्टकृदाद्यनुष्ठाननिर्णयेन ऐन्द्रवायवे "द्विरैन्द्रवायवे" इति वचनानुसारेण द्विःशेषभक्षनिरूपणेन सोमे शेषभक्षणप्रतिपादनेन "उद्गातॄणां चमस" इत्यत्रापसुब्रह्मण्या उद्गातार इति विवेचनेन, हारियोजनसर्वभक्षणविधौ ग्रावस्तुतोऽपि ग्रहणवर्णनेन वषट्कारहोमाभिषवनिमित्तं भक्षणं निमित्तद्वयसमवायेऽपि न बाध्यते तत्रच होतुः प्राथम्यं तच्चानुज्ञानपूर्वकं अनुज्ञानानुज्ञापनयोः उपहूत उपहूयस्वमन्त्रयोर्विनियोग इत्यादिसिद्धान्तेन च—**समापयामासुः** । तदेवं षष्ठसप्तमाष्टमैः अनारभ्याधीतपर्णतायाः प्रकृतौ, साप्तदश्यस्य पाञ्चदश्यानवरुद्धायां मित्रविन्दायां गोदोहनादेः प्राकृतचमसादिबाधनेन प्रकृतौ निवेशम् आधानस्य पवमानेष्ट्यनङ्गत्वं सर्वगामित्वं स्थानवाक्यप्रकरणादिविरोधाविरोधं प्रासङ्गिकविषयान्तरं च विचार्य—**अङ्गाध्यायपदं यथार्थयन्ति स्म** । एवमेव प्रयुक्तिक्रमाधिकारातिदेशोहबाधतन्त्रप्रसङ्गादिनिरूपणेन चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमदशमैकादशद्वादशाध्यायानपि तत्तन्नामोचितान्विदधुरिति स्पष्टमिदं सर्वेषाम् इति विस्तरभयादुपरमामः उपसंहरामश्च प्रकृतं विषयं अनधिकैरेव वाक्यैः ॥

तामिमां **शास्त्रदीपिकां** दुरवगाहेन दुरवबोधेन च तर्कपादेन निर्वृतिं प्राप्यमाणां समजीजिवद्विद्वद्रत्नश्रीमद्रामकृष्णप्रणीततर्कपादव्याख्यायुक्तिस्नेहप्रपूरण्यपरपर्यायसिद्धान्तचन्द्रिकाख्या तत्प्रणीतसिद्धान्तचन्द्रिकागूढार्थविवरणेन सहेति** प्रमोदस्थानमिदमस्माकम् ॥

द्वितीयपादतःप्रभृति कर्पूरवर्तिकाशास्त्रदीपिकाप्रकाशादिभिर्बहुभिर्व्याख्यानैरुपलक्षितायाः अपि शास्त्रदीपिकायाः **सोमनाथीययैव मयूखमालिकया** विशेषतः प्रकाशः इति **युक्तिस्नेहप्रपूरणीमयूखमालिकाभ्यां** सहैतत्प्रकाशनेन बहूपकृतां **निर्णयसागराधिपतीनां** एतच्छोधनेन बहूपकृतवतां पण्डितमान्यानां **श्रीधर्मदत्त—प्रसिद्धबच्चाशर्मशास्त्रिणां** चाधमर्णं पण्डितकुलमिति निवेदयन्तः प्रार्थयामो भगवन्तमुमारमणं यथा निर्णयसागराधिपतीनां निर्णयसागरस्य चोत्तरोत्तरैश्वर्यप्रदानेनानुगृहीतातपण्डितकुलमिति—

सुधीजनविधेयः
**वेदान्तविशारदः सु—अनन्तकृष्णशास्त्री**
**मीमांसोपाध्यायः, संस्कृतकलाशास्त्रशाला. तिरुपती.**

# शास्त्रदीपिकायाः

## प्रथमतर्कपादस्य विषयानुक्रमणिका ।


| विषयः | पृष्ठं. |
|---|---|
| **प्रथमाध्याये प्रथमः पादः १।१** | |
| मङ्गलाचरणम् ... | १ |
| **१ धर्मशास्त्रारम्भप्रतिज्ञाधिकरणम्** ... | ३ |
| अध्ययनविधिविचारः ... | ५ |
| अध्ययनाधिकारनियमः ... | ६ |
| अध्ययनविधौ नियोज्यकल्पना ... | ८ |
| व्याकरणस्मृत्योपनयनस्याध्ययनाङ्गत्वम् ... | ९ |
| प्राभाकरमतखण्डनम् ... | ९ |
| अध्ययनविध्युपसंहारः ... | ११ |
| धर्मस्वरूपविचाराक्षेपपरिहारौ ... | १५ |
| **२ धर्मलक्षणाधिकरणम्** ... | १५ |
| प्राभाकरमतं तत्खण्डनं च ... | १६ |
| प्रथमव्युत्पत्तिः ... | १६ |
| प्राभाकरोक्तद्वितीयसूत्रार्थस्य खण्डनम् ... | १७ |
| प्रथमपादप्रतिपाद्यार्थसंग्रहः ... | १८ |
| धर्मस्य प्रत्यक्षादिप्रमाणगम्यत्वम् ... | १९ |
| प्रामाण्यविचारः ... | २० |
| युक्तिदर्शनम् ... | २१ |
| शब्दस्यानुमानेऽन्तर्भावपूर्वपक्षः ... | २४ |
| धर्मलक्षणविचारः ... | २५ |
| प्रभाकरमतेनार्थपदसार्थक्यं तत्खण्डनं च ... | ३२ |
| काम्येष्वपि कर्मसु विधेरेव प्रवर्तकत्वम् ... | ३३ |
| हिंसाप्रतिषेधवैरूप्यापत्तिः ... | ३४ |
| हिंसायां सांख्यमतं तत्खण्डनं च ... | ३४ |
| **३ धर्मप्रमाणपरीक्षाधिकरणम्** ... | ३५ |
| **४ धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम्** ... | ३५ |
| इन्द्रियलक्षणम् ... | ३६ |
| प्रत्यक्षविचारः ... | ३७ |
| प्रत्यक्षबौद्धमतम् ... | ३८ |
| बौद्धमतखण्डनम् ... | ३८ |
| ज्ञानस्य सविकल्पकत्वनियमस्तत्खण्डनं च | ३९ |
| अद्वैतमतेन निर्विकल्पकस्य सन्मात्रविषयत्वम् ... | ४० |
| अद्वैतमतखण्डनम् ... | ४० |
| निर्विकल्पकविषयकबौद्धमतखण्डनम् ... | ४१ |
| प्रत्यभिज्ञायां बौद्धमतेन पूर्वपक्षः ... | ४२ |
| द्रव्याभावे बौद्धमतेन पूर्वपक्षः ... | ४२ |
| तर्कमतेनावयवेष्ववयव्युत्पत्तिः ... | ४३ |
| **५ धर्मवेदप्रामाण्याधिकरणम्** ... | ४३ |
| वेदस्यापौरुषेयत्वम् ... | ४४ |
| सामान्यतः प्रमाणलक्षणम् ... | ४४ |
| प्रभाकरमतेन प्रमाणलक्षणम् ... | ४५ |
| कालप्रत्यक्षनिरूपणम् ... | ४५ |
| प्रमाणानां स्वतःप्रामाण्यम् ... | ४८ |
| प्रत्यक्षलक्षणं, प्रत्यक्षखण्डः ... | ४८ |
| बाह्यार्थशून्यवादेनाक्षेपः ... | ५१ |
| योगाचारसौत्रान्तिकयोः कलहः ... | ५२ |
| पुनर्योगाचारशङ्का ... | ५३ |
| योगाचारेण सौत्रान्तिकखण्डनम् ... | ५४ |
| योगाचारमतखण्डनम् ... | ५५ |
| ज्ञानानुमेयत्वस्थापनम् ... | ५६ |
| पुनर्विज्ञानवादखण्डनम् ... | ५७ |
| स्वीयविपरीतख्यातिमतोपन्यासः ... | ५८ |
| योगाचारमतखण्डनम् ... | ५९ |
| अनुमानपरिच्छेदः ... | ५९ |
| अनुमाने प्राभाकरमतम् ... | ६१ |
| गृहीतग्राहित्वखण्डनम् ... | ६२ |
| अनुमानावयवनिरूपणम् ... | ६४ |
| हेत्वाभासनिरूपणम् ... | ६४ |
| समवायत्वबाधे प्रश्नः ... | ६७ |
| अनुमाने दृष्टान्तनिरूपणम् ... | ६८ |
| अनुमाने प्रभाकरानुवादः ... | ६९ |
| परमुखेन प्रभाकरखण्डनम् ... | ७० |
| शब्दपरिच्छेदः ... | ७२ |
| औलूक्यमतानुवादः ... | ७३ |
| उपमानपरिच्छेदः ... | ७४ |
| अर्थापत्तिनिरूपणम् ... | ७६ |
| अर्थापत्तिसमाधानम् ... | ७७ |
| सिद्धान्तेन तर्कमतनिराकरणम् ... | ७८ |
| अर्थापत्तावनुमानस्यान्तर्भावशङ्का | ७९ |
| शक्तेः पदार्थान्तरत्वोपपादनम् ... | ८० |
| श्रुतार्थापत्तिनिरूपणम् ... | ८० |
| अर्थाध्याहारपक्षखण्डनम् ... | ८२ |
| अभाव(अनुपलब्धि)परिच्छेदः ... | ८३ |

| विषयः | पृष्ठं. |
| --- | --- |
| प्रभाकरमतखण्डनम् | ८३ |
| प्रभाकरमतानुवादः | ८५ |
| उक्तप्रभाकरमतखण्डनम् | ८५ |
| अभावस्यानुपलब्धिगम्यत्वम् | ८६ |
| चित्रार्थैहिकफलचोदनास्वाक्षेपः | ८७ |
| चित्रादिचोदनास्वाक्षेपपरिहारौ | ८८ |
| शब्दार्थयोः संबन्धाक्षेपः | ९० |
| शब्दार्थसंबन्धानित्यत्वे आक्षेपः | ९१ |
| गत्वादिजातिनिराकरणम् | ९३ |
| वर्णानामर्थप्रत्यायकत्वम् | ९४ |
| स्फोटवादखण्डनम् | ९५ |
| पदार्थनिरूपणोपक्रमः | ९७ |
| बौद्धमतेन जातिखण्डनम् | ९८ |
| स्वमतेन जातिस्थापनम् | ९९ |
| जातिव्यक्त्योर्भेदाभेदविचारः | १०० |
| प्राभाकरमतेन भेदाभेदसामानाधिकरण्ये आक्षेपः | १०१ |
| जातेः सर्वगतत्वाद्याक्षेपतत्परिहारौ | १०२ |
| संयोगविचारः | १०३ |
| सादृश्यादीनां सामान्यत्वखण्डनम् | १०४ |
| अवयविविचारः | १०६ |
| चित्रैकरूपनिराकरणम् | १०८ |
| अद्वैतमतेन पूर्वपक्षः | ११० |
| उक्ताद्वैतमतखण्डनम् | ११० |
| अर्धजरतीयाद्वैतवादेन पूर्वपक्षः | १११ |
| साङ्ख्यमतेन पूर्वपक्षः | ११३ |
| सांख्यमतखण्डनम् | ११४ |
| वैशेषिकमतेन पूर्वपक्षः | ११५ |
| वैशेषिकमतखण्डनम् | ११५ |
| शब्दार्थसंबन्धस्य नित्यत्वम् | ११७ |
| चित्रादिविषयकाक्षेपपरिहारः | ११८ |
| आत्मवादारम्भः | ११९ |
| शरीरातिरिक्तात्मसाधनम् | ११९ |
| देहाभिन्नात्मसाधनम् | १२० |
| बौद्धमतेन विज्ञानात्मवादः | १२० |
| शरीरात्मनोर्भेदोपपादनम् | १२१ |
| आत्मनो मानसाहंप्रत्ययगम्यत्वम् | १२२ |
| इन्द्रियात्मनोर्भेदः | १२३ |
| आत्मनो व्यापकत्वम् | १२४ |
| मोक्षवादारम्भः | १२५ |
| आनन्दमोक्षवादः | १२६ |
| मोक्षावस्थायां ज्ञानाभावोपपादनम् | १२७ |
| आत्मनो ज्ञानानन्दस्वरूपत्वस्य खण्डनम् | १२९ |
| मुक्तिस्वरूपकथनम् | १३० |
| आत्मज्ञानस्य क्रतुमोक्षोभयोपयोगित्वम् | १३१ |
| आत्मनित्यत्वेनाधिकरणोपसंहारः | १३१ |
| **६ शब्दानित्यताधिकरणम्** | **१३३** |
| शब्दनित्यत्वोपपादनम् | १३६ |
| शब्दस्यानेकदेशोपलम्भः | १३८ |
| दिक्कालयोर्विशेषणत्रयेण ग्राह्यत्वम् | १४० |
| शब्दप्रत्यक्षे बौद्धमतखण्डनम् | १४० |
| शब्दानित्यत्वपूर्वपक्षस्तत्खण्डनं च | १४१ |
| वर्णानामनवयवत्वं नित्यत्वं च | १४१ |
| पूर्वपक्षतया क्षणभङ्गवादः | १४२ |
| क्षणभङ्गवादखण्डनम् | १४४ |
| शब्दस्य सामान्यत्वम् | १४५ |
| **७ वेदप्रत्यायकत्वाधिकरणम्** | **१५०** |
| वाक्यस्य वाक्यार्थबोधकत्वम् | १५३ |
| अन्विताभिधानवादखण्डनम् | १५३ |
| सिद्धान्ते वाक्यार्थस्य लक्ष्यत्वम् | १५४ |
| पदार्थानां वाक्यार्थबाधकत्वशङ्कानिरासः | १५५ |
| अखण्डवाक्यार्थवादखण्डनम् | १५५ |
| **८ वेदापौरुषेयत्वाधिकरणम्** | **१६१** |
| वेदापौरुषेयत्ववादखण्डनम् | १६२ |
| पादार्थोपसंहारः | १६४ |

समाप्ता चेयं शास्त्रदीपिकायाः प्रथमतर्कपादस्य विषयानुक्रमणिका ।

---

विषयः — पृष्ठं.

## प्रथमाध्याये द्वितीयः पादः १।२

१ अकार्यबोधकवाक्यप्रामाण्याधिकरणम् ... १
२ विधिवन्निगदाधिकरणम् ... ... ... ९
३ हेतुवन्निगदाधिकरणम् ... ... ... १३
४ मन्त्रलिङ्गाधिकरणम् ... ... ... ... १४

## प्रथमाध्याये तृतीयः पादः १।३

१ स्मृतिप्रामाण्याधिकरणम् ... ... ... १७
२ श्रुतिप्राबल्याधिकरणम् ... ... ... २१
३ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ... ... २५
४ पदार्थप्राबल्याधिकरणम् ... ... ... २७
५ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ... ... ३१
६ आर्यप्रसिद्ध्यविरोधे म्लेच्छप्रसिद्धार्थपरिग्रहाधि० ३६
७ कल्पसूत्राणामस्वतःप्रामाण्याधिकरणम् ... ३७
८ सामान्यश्रुतिकल्पनाधिकरणम् ... ... ४१
९ साधुपदप्रयुक्त्यधिकरणम् ... ... ... ४३
१० आकृतिशक्त्यधिकरणम् ... ... ... ४८

## प्रथमाध्याये चतुर्थः पादः १।४

१ उद्भिदादिशब्दानां यागनामतया प्रामाण्याधि० ५३
२ उद्भिदादिशब्दानां यागनामधेयताधिकरणम्... ५५
३ चित्रादिशब्दानां यागनामधेयताधिकरणम् ... ५९
४ यागनामधेयताधिकरणम् ... ... ... ६३
५ श्येनादिशब्दानां यागनामधेयताधिकरणम् ... ६८
६ वाजपेयादिशब्दानां नामधेयताधिकरणम् ... ६९
७ आग्नेयादीनामनामताधिकरणम् ... ... ७३
८ बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ... ७५
९ प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम् ... ७६
१० निर्मन्थ्यशब्दस्य यौगिकताधिकरणम् ... ७७
११ वैश्वदेवादिशब्दानां नामधेयताधिकरणम् ... ७८
१२ वैश्वानरेष्टत्वाद्यर्थवादताधिकरणम् ... ... ८१
१३ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम् ८३
१४ आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकर० ८६
१५ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम्... ८६
१६ अपश्वादिशब्दानां गवादिप्रशंसार्थत्वाधिकरणम् ८७
१७ भूमाधिकरणे बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ८८
१८ प्राणभृदादिशब्दानां स्तुत्यर्थत्वाधिकरणम् ... ८९
१९ वाक्यशेषेण संदिग्धार्थनिरूपणाधिकरणम् ... ९०
२० सामर्थ्येनाव्यवस्थितानां व्यवस्थाधिकरणम् ... ९२

---

## द्वितीयाध्याये प्रथमः पादः २।१

१ अपूर्वस्याख्यातप्रतिपाद्यत्वाधिकरणम्... ... ९३
२ अपूर्वस्यास्तिताधिकरणम् ... ... ... १०४
३ कर्मणां गुणप्रधानभावविभागाधिकरणम् ... १०६
४ संमार्जनादीनामप्रधानताधिकरणम् ... ... १०७
५ स्तोत्रादिप्राधान्याधिकरणम् ... ... ... ११०
६ मन्त्राविधायकत्वाधिकरणम् ... ... ... ११२
७ मन्त्रनिर्वचनाधिकरणम् ... ... ... ११३
८ ब्राह्मणनिर्वचनाधिकरणम् ... ... ... ११३
९ ऊहाद्यमन्त्रताधिकरणम् ... ... ... ११३
१० ऋग्लक्षणाधिकरणम् ... ... ... ११४
११ सामलक्षणाधिकरणम् ... ... ... ११४
१२ यजुर्लक्षणाधिकरणम् ... ... ... ११५
१३ निगदानां यजुष्ट्वाधिकरणम् ... ... ... ११५
१४ एकवाक्यत्वलक्षणाधिकरणम् ... ... ... ११६
१५ वाक्यभेदाधिकरणम् ... ... ... ११७
१६, १७ } अनुषङ्गाधिकरणम् ... ... ... ... ११८
१८ व्यवेताननुषङ्गाधिकरणम् ... ... ... १२०

## द्वितीयाध्याये द्वितीयः पादः २।२

१ अङ्गापूर्वभेदाधिकरणम् ... ... ... १२१
२ समिदाद्यपूर्वभेदाधिकरणम् ... ... ... १२३
३ आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ... १२४
४ उपांशुयाजापूर्वताधिकरणम् ... ... ... १३१
५ आघाराद्यपूर्वताधिकरणम् ... ... ... १३३
६ पशुसोमापूर्वताधिकरणम् ... ... ... १३६
७ संख्याकृतकर्मभेदाधिकरणम् ... ... ... १४२
८ संज्ञाकृतकर्मभेदाधिकरणम् ... ... ... १४५
९ देवताभेदकृतकर्मभेदाधिकरणम् ... ... १४६
१० द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणम् ... १४९
११ दध्यादिद्रव्यसफलत्वाधिकरणम् ... ... १४९
१२ वारवन्तीयादीनां कर्मान्तरताधिकरणम् ... १५३
१३ सौभरनिधनयोः कामैक्याधिकरणम् ... ... १५७

## द्वितीयाध्याये तृतीयः पादः २।३

१ ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणम् ... १५९
२ क्रत्वन्तरताधिकारताधिकरणम् ... ... १६२
३ आधानस्य विधेयत्वाधिकरणम् ... ... १६४
४ दाक्षायणादीनां गुणताधिकरणम् ... ... १६५
५ द्रव्यदेवतायुक्तानां यागान्तराधिकरणम् ... १६६
६ वत्सालम्बादीनां संस्कारताधिकरणम्... ... १६७
७ नैवारचरोराधानार्थताधिकरणम् ... ... १६८
८ पात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणम् ... १६९
९ अदाभ्यादीनां ग्रहनामताधिकरणम् ... ... १७०
१० अग्निचयनस्यासंस्कारताधिकरणम् ... ... १७१

१ इत आरभ्यैव सोमनाथकृतमयूखमालिकाव्याख्यानारम्भात्पृष्ठाङ्काद्यावृत्तिर्ज्ञेया ।

विषयः पृष्ठं.

११ मासाग्निहोत्रादीनां क्रत्वनारताधिकरणम् ... ... १७३
१२ आग्नेयादिकाम्येष्ट्यधिकरणम् ... ... ... १७५
१३ अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ... ... १७६
१४ आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम् ... ... १७८

द्वितीयाध्याये चतुर्थः पादः २।४

१ यावज्जीविकाग्निहोत्राधिकरणम् ... ... १७९
२ सर्वशाखाप्रत्ययैककर्मताधिकरणम् ... ... १८०

तृतीयाध्याये प्रथमः पादः ३।१

१ प्रतिज्ञाधिकरणम् ... ... ... ... ... १८२
२ शेषलक्षणाधिकरणम् ... ... ... ... १८४
३ शेषलक्ष्याधिकरणम् ... ... ... ... १८६
४ निर्वापणादीनां व्यवस्थितविषयताधिकरणम् ... १८७
५ स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिक० १८९
६ आरुण्यादिगुणानामसंकीर्णताधिकरणम् ... १९०
७ ग्रहसंमार्जनाधिकरणम् ... ... ... १९३
८ चमसादौ संमार्गाद्यप्रयोगाधिकरणम्... ... १९५
९ सप्तदशारत्नितायाः पशुधर्मताधिकरणम् ... १९६
१० अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम्... १९७
११ उपवीतस्य प्राकरणिकाङ्गताधिकरणम् ... २००
१२ गुणानां मिथोऽसंबन्धाधिकरणम् ... ... २०३
१३ वार्त्रघ्न्यधिकरणम् ... ... ... ... २०६
१४ हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकर० २०७
१५ चतुर्धाकरणादीनामाग्नेयमात्राङ्गताधिकरणम्... २०८

तृतीयाध्याये द्वितीयः पादः ३।२

१ मुख्यं विनियोगाधिकरणम् ... ... ... २०९
२ ऐन्द्रीन्याये(ऐन्द्र्यागार्हपत्ये)विनियोगाधिकरणम् २११
३ आह्वानविनियोगाधिकरणम् ... ... ... २१२
४ अग्निविहरणादिप्रकाशकमन्त्रविनियोगाधिकर० २१४
५ सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताधिकरणम् ... २१५
६ सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् २१६
७ काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिक० २१७
८ आग्नीध्रोपस्थाने प्रकृतानां मन्त्राणां विनियोगा० २१९
९ भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधि० २२२
१० मन्द्राभिभूतिरित्यादेरेकमन्त्रताधिकरणम् ... २२३
११ इन्द्रपीतस्येत्यादिमन्त्राणां विनियोगाधिकरणम् २२४
१२ अभ्युन्नीतसोमभक्षणाधिकरणम् ... ... २२५
१३ पात्नीवतभक्षण इन्द्रादीनामनुपलक्षणाधिकरणम् २२६
१४ पात्नीवतशेषभक्षे त्वष्टुरनुपलक्षणीयताधिकरणम् २२७
१५ पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणाधिकरणम् २२७
१६ भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम् २२८
१७ क्रत्वाचिन्तारूपे अनैन्द्राणाममन्त्रकभक्षणाधि० २२९
१८ ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ... ... २२९

विषयः पृष्ठं.

१९ मन्त्रविशेषाणामनेकच्छन्दस्के विनियोगाधिक० २३०
२० एकादशाधिकरणोक्तस्य उपसंहाराधिकरणम्... २३०

तृतीयाध्याये तृतीयः पादः ३।३

१ उच्चैस्त्वादीनां वेदधर्मताधिकरणम् ... ... २३१
२ आधाने गानस्योपांशुताधिकरणम् ... ... २३३
३ ज्योतिष्टोमस्य याजुर्वैदिकाधिकरणम् ... ... २३५
४ प्रकरणस्य विनियोजकताधिकरणम् ... ... २३५
५ क्रमस्य विनियोजकत्वाधिकरणम् ... ... २३९
६ समाख्याया विनियोजकताधिकरणम्... ... २४०
७ श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वाधिकरणम् ... २४१
८ द्वादशोपसत्ताया अहीनाङ्गताधिकरणम् ... २४९
९ कुलायादौ प्रतिपदोरुत्कर्षाधिकरणम् ... २५०
१० जाघन्या अनुत्कर्षाधिकरणम् ... ... ... २५२
११ संतर्दनस्य संस्थानिवेशाधिकरणम् ... ... २५३
१२ प्रवर्ग्यनिषेधाधिकरणम् ... ... ... २५५
१३ पौष्णपेषणस्य विकृतौ विनियोगाधिकरणम् ... २५७
१४ पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ... २५७
१५ पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ... २५८

तृतीयाध्याये चतुर्थः पादः ३।४

१ निवीतस्यार्थवादताधिकरणम्... ... ... २५९
२ उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ... २६०
३ उपवीतस्य विधित्वाधिकरणम् ... ... २६१
४ उपवीतोदगग्रत्वयोरनुवादताधिकरणम् ... २६२
५ समिद्धारणस्य विधिताधिकरणम् ... ... २६३
६ दिग्विभागस्यार्थवादताधिकरणम् ... ... २६३
७ परुषि दितादीनामनुवादताधिकरणम् ... २६४
८ अनृतवदननिषेधस्य क्रतुधर्मताधिकरणम् ... २६५
९ जंजभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम् २६७
१० अवगोरणादीनां पुमर्थताधिकरणम् ... २६९
११ मलवद्वासःसंवादनिषेधाधिकरणम् ... २७०
१२ सुवर्णधारणादीनां पुरुषधर्मताधिकरणम् ... २७१
१३ जयादीनां वैदिककर्माङ्गताधिकरणम्... ... २७२
१४ वैदिकाश्वप्रतिग्रह इष्टिकर्तव्यताधिकरणम् ... २७३
१५ दातुर्वारुणीष्ट्यधिकरणम् ... ... ... २७५
१६ वैदिकपानव्यापदधिकरणम् ... ... ... २७६
१७ सौमेन्द्रचरोर्यजमानपानव्यापद्विषयताधिकरणम् २७७
१८ आग्नेयाष्टाकपालचरोर्द्ध्यवदानमात्रस्य होतव्यता० २७७
१९ सर्वशेषैः स्विष्टकृदनुष्ठानाधिकरणम् ... ... २८०
२० प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधिकरणम् ... २८०
२१ पुरोडाशविभागस्य भक्षार्थताधिकरणम् ... २८१

तृतीयाध्याये पञ्चमः पादः ३।५

१ ध्रुवाज्यादिभिः स्विष्टकृदादिशेषानुष्ठानाधिक० २८२
२ साकंप्रस्थाय्ये शेषकर्माननुष्ठानाधिकरणम् ... २८३

विषयः ... पृष्ठं.

३ सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणम् ... २८३
४ सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिक० २८४
५ ऐन्द्रवायवग्रहे द्विःशेषभक्षणाधिकरणम् ... २८५
६ सोमे शेषभक्षणाधिकरणम् ... २८५
७ उद्गातॄणां सहसुब्रह्मण्येन भक्षणाधिकरणम् ... २८७
८ ग्रावस्तुतोऽपि सोमभक्षणाधिकरणम् ... २८८
९ वषट्कारस्य भक्षनिमित्तताधिकरणम् ... २८९
१० होमाभिषवयोरपि भक्षनिमित्तताधिकरणम् ... २८९
११ वषट्कर्त्रादीनां चमसे सोमभक्षाधिकरणम् ... २९०
१२ होतुः प्रथमभक्षाधिकरणम् ... २९०
१३ भक्षस्यानुज्ञापूर्वकत्वाधिकरणम् ... २९२
१४ वैदिकवचनेनानुज्ञापनाधिकरणम् ... २९२
१५ वैदिकवाक्येन प्रतिवचनाधिकरणम् ... २९२
१६ एकपात्राणामनुज्ञापनाधिकरणम् ... २९३
१७ स्वयं यष्टुर्भक्षास्तित्वाधिकरणम् ... २९३
१८ फलचमसस्येज्याविकारताधिकरणम् ... २९४
१९ ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् २९५


### तृतीयाध्याये षष्ठः पादः ३।६


१ स्रुवादिषु खादिरतादिविधेः प्रकृतागामिताधिक० २९६
२ सामिधेनीनां सप्तदशसंख्याया विकृतिगामिता० २९७
३ नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम् २९८
४ आधानस्य पवमानेष्ट्यङ्गताधिकरणम् ... ३००
५ आधानस्य सर्वार्थताधिकरणम् ... ३०१
६ पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम् ३०२
७ उपकरणादीनामग्नीषोमीयधर्मताधिकरणम् ... ३०३
८ शाखाहरणादीनामुभयदोहधर्मताधिकरणम् ... ३०७
९ सादनादीनां सवनत्रयधर्मताधिकरणम् ... ३०८
१० रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणम् ... ३०८
११ अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम् ३०९
१२ चित्रिण्यादीष्टकानामभ्यङ्गताधिकरणम् ... ३०९
१३ अभिषवादीनां सोममात्रधर्मताधिकरणम् ... ३१०
१४ प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम् ... ३११
१५ श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम् ३१२
१६ दीक्षणीयादिधर्माणामग्नीषोमाङ्गताधिकरणम् ... ३१३


### तृतीयाध्याये सप्तमः पादः ३।७


१ बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताधिक० ३१६
२ स्वामिसंस्काराणां प्रधानार्थाधिकरणम् ... ३१७
३ सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताधिकरणम् ३१८
४ अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ३१८
५ दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ... ३१९
६ अन्तर्वेदियूपाङ्गताधिकरणम् ... ३१९
७ हविर्धानस्य सामिधेन्यङ्गताधिकरणम् ... ३२०
८ अङ्गानामन्यद्वारानुष्ठानाधिकरणम् ... ३२१
९ परिक्रीतानामृत्विजां संख्याविशेषनियमाधिक० ३२२
१० चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ... ३२४
११ चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ... ३२४
१२ चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम् ... ३२५
१३ शमितुरपृथक्त्वाधिकरणम् ... ३२५
१४ उपगस्यापृथक्त्वाधिकरणम् ... ३२६
१५ सोमविक्रेतुः पृथक्त्वाधिकरणम् ... ३२६
१६ ऋत्विगितिनाम्नोऽसर्वगामिताधिकरणम् ... ३२६
१७ दीक्षादक्षिणावाक्योक्तब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधिकरणम् ... ३२८
१८ ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ... ३२८
१९ आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृतानियमाधिक० ३२८
२० समाख्याबाधनाधिकरणम् ... ३३०
२१ चमसहोमे अध्वर्युचमसाध्वर्युकर्तृताधिकरणम् ३३०
२२ श्येनवाजपेययोरनेककर्तृकताधिकरणम् ... ३३१


### तृतीयाध्यायेऽष्टमः पादः ३।८


१ क्रयस्य स्वामिकर्मताधिकरणम् ... ३३२
२ वपनादिसंस्काराणां याजमानताधिकरणम् ... ३३३
३ तपसो याजमानताधिकरणम् ... ३३३
४ लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणम् ३३४
५ वृष्टिकामनाया याजमानताधिकरणम् ... ३३४
६ आयुर्दा इत्यादिमन्त्राणां याजमानताधिकरणम् ३३५
७ द्व्याम्नातस्योभयप्रयोज्यताधिकरणम् ... ३३५
८ अभिज्ञस्यैव वाचयितव्यताधिकरणम् ... ३३६
९ द्वादशद्वंद्वानामाध्वर्यवत्त्वाधिकरणम् ... ३३६
१० होतुराध्वर्यवकरणानुष्ठानत्वाधिकरणम् ... ३३७
११ प्रोक्षण्यासादनादीनामनाध्वर्यवताधिकरणम् ... ३३८
१२ प्रैषमन्त्राणामाध्वर्यवत्वाधिकरणम् ... ३३९
१३ करणमन्त्रेषु स्वामिफलस्याशासितव्यताधिकरणम् ३३९
१४ करणमन्त्रेषु कर्मार्थफलस्यर्त्विग्धर्मताधिकरणम् ३४०
१५ भद्रमित्यस्योभयगामिताधिकरणम् ... ३४०
१६ द्रव्यसंस्कारस्याङ्गप्रधानार्थत्वाधिकरणम् ... ३४०
१७ पवित्रस्य परिभोजनीयबर्हिषा कर्तव्यताधिक० ३४१
१८ प्राकृतपुरोडाशादीनां निधानाधिकरणम् ... ३४१
१९ काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ३४२
२० श्येनाङ्गानां नवनीताज्यताधिकरणम् ... ३४२
२१ सर्वश्येनाङ्गानां नवनीताज्यताधिकरणम् ... ३४३
२२ सवनीयानां मांसमयताधिकरणम् ... ३४३


---

### चतुर्थाध्याये प्रथमः पादः ४।१


१ क्रत्वर्थप्रतिज्ञाधिकरणम् ... ३४५
२ क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ... ३४७
३ प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ... ३५०

| विषयः | पृष्ठं. |
|---|---|
| ४ यज्ञायुधानामनुवादताधिकरणम् ... ... | ३५२ |
| ५ पश्वेकत्वाधिकरणम् ... ... ... ... | ३५३ |
| ६ पशुलिङ्गविवक्षाधिकरणम् ... ... ... | ३५४ |
| ७ आश्रयिणामदृष्टार्थताधिकरणम् ... ... | ३५४ |
| ८ प्रयुक्तिविचारप्रतिज्ञाधिकरणम् ... ... | ३५५ |
| ९ आमिक्षाप्रयुक्तताधिकरणम् ... ... ... | ३५५ |
| १० गवानयनस्य पदकर्माप्रयुक्तताधिकरणम् ... | ३५७ |
| ११ कपालानां तुषोपवापाप्रयुक्तताधिकरणम् ... | ३५८ |
| १२ शकृल्लोहितयोः पशावप्रयोक्तृताधिकरणम् | ३५९ |
| १३ पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम् ... | ३५९ |
| १४ अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधि० | ३६० |
| १५ समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ... | ३६२ |
| १६ औपभृतजौहवयोः क्रमेणोभयानुभयार्थताधि० | ३६३ |
| १७ उपभृति द्विचतुर्गृहीताचरणाधिकरणम् ... | ३६४ |


## चतुर्थाध्याये द्वितीयः पादः ४।२


| विषयः | पृष्ठं. |
|---|---|
| १ स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ... ... | ३६६ |
| २ शाखाया आहार्यताधिकरणम् ... | ३६७ |
| ३ छेदनस्य शाखाप्रयुक्तताधिकरणम् ... ... | ३६७ |
| ४ शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् ... | ३६९ |
| ५ निनयनस्य प्रतिपत्तिकर्मताधिकरणम्... | ३७० |
| ६ दण्डदानस्यार्थकर्मताधिकरणम् ... ... | ३७१ |
| ७ प्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ... ... | ३७२ |
| ८ अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ... | ३७३ |
| ९ कर्तृदेशकालविधीनां नियमार्थताधिकरणम् ... | ३७३ |
| १० द्रव्यगुणविधानस्य नियमार्थताधिकरणम् ... | ३७४ |
| ११ अवघातादिसंस्कारविधानस्य नियमार्थताधिक० | ३७५ |
| १२ यागहोमस्वरूपनिरूपणाधिकरणम् ... | ३७५ |
| १३ बर्हिष आतिथ्यादिसाधारण्याधिकरणम् ... | ३७६ |


## चतुर्थाध्याये तृतीयः पादः ४।३


| विषयः | पृष्ठं. |
|---|---|
| १ द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम् ... | ३७७ |
| २ नैमित्तिकानामनित्यार्थकत्वाधिकरणम् ... | ३७८ |
| ३ संयोगपृथक्त्वन्याये दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम् ... ... ... ... | ३७९ |
| ४ पयोव्रतादीनां क्रतुधर्मताधिकरणम् ... | ३८० |
| ५ विश्वजिदादीनां सफलत्वाधिकरणम् ... | ३८१ |
| ६ विश्वजिदादीनामेकफलताधिकरणम् ... | ३८२ |
| ७ विश्वजिदादीनां स्वर्गफलताधिकरणम् ... | ३८३ |
| ८ रात्रिसत्रस्यार्थवादिकफलताधिकरणम् ... | ३८३ |
| ९ काम्यानां यथोक्तकाम्यफलताधिकरणम् ... | ३८४ |
| १० दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ... | ३८५ |
| ११ दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिक० | ३८६ |
| १२ काम्यानामैहिकामुष्मिकफलवत्त्वाधिकरणम् ... | ३८७ |
| १३ सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणम् ... | ३८८ |
| १४ वैमृधादेः पौर्णमास्याद्यङ्गताधिकरणम्... ... | ३८९ |
| १५ अनूयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम् | ३९० |
| १६ सोमादीनां दर्शपूर्णमासोत्तरकालताधिकरणम् | ३९० |
| १७ जातेष्टिन्यायान्तर्गतवैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम् ... ... ... | ३९१ |
| १८ सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताधिकरणम् | ३९३ |


## चतुर्थाध्याये चतुर्थः पादः ४।४


| विषयः | पृष्ठं. |
|---|---|
| १ राजसूयेज्यानां देवनाद्यङ्गत्वाधिकरणम् ... | ३९४ |
| २ देवनस्य कृत्स्नराजसूयाङ्गताधिकरणम् ... | ३९५ |
| ३ सौम्यादीनामुपसत्कालकत्वाधिकरणम् ... | ३९६ |
| ४ आमनहोमानां सांग्रहण्यङ्गताधिकरणम् ... | ३९६ |
| ५ दधिग्रहस्य नित्यताधिकरणम्... ... ... | ३९७ |
| ६ वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ... ... | ३९८ |
| ७ षष्ठचितेर्नैमित्तिकत्वाधिकरणम् ... ... | ३९८ |
| ८ पिण्डपितृयज्ञस्यानङ्गताधिकरणम् ... ... | ३९९ |
| ९ रशनाया यूपाङ्गताधिकरणम् ... ... ... | ४०० |
| १० स्वरोः पश्वङ्गताधिकरणम् ... ... ... | ४०१ |
| ११ आघारादीनामङ्गताधिकरणम्... ... | ४०२ |
| १२ ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ... | ४०३ |


---

## पञ्चमाध्याये प्रथमः पादः ५।१


| विषयः | पृष्ठं. |
|---|---|
| १ क्रमनिरूपणाधिकरणे श्रुतिबलीयस्त्वम् ... | ४०५ |
| २ क्रमस्य क्वचिदार्थिकत्वाधिकरणम् ... ... | ४०८ |
| ३ क्रमस्य क्वचिदनियमाधिकरणम् ... ... | ४०९ |
| ४ क्रमस्य क्वचित्पाठानुसारताधिकरणम्... ... | ४०९ |
| ५ क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताधिकरणम् | ४१० |
| ६ क्रमस्य क्वचित्स्थानानुसारिताधिकरणम् ... | ४११ |
| ७ अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणम् ... | ४१२ |
| ८ अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधि० | ४१३ |
| ९ ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् | ४१३ |
| १० प्रयोगवचनाच्चोदकस्य बलवत्त्वाधिकरणम् ... | ४१४ |
| ११ विकृतौ क्वचित्प्रकृतिधर्मानतिदेशाधिकरणम् ... | ४१५ |
| १२ अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ... | ४१५ |
| १३ प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिक० | ४१६ |
| १४ वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ... ... | ४१७ |
| १५ दक्षिणाग्निकहोमानपकर्षाधिकरणम् ... ... | ४१७ |
| १६ पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् | ४१८ |
| १७ सांतपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् | ४१८ |
| १८ उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ... | ४१९ |


## पञ्चमाध्याये द्वितीयः पादः ५।२


| विषयः | पृष्ठं. |
|---|---|
| १ वाजपेयपशूनां सर्वेषामेकदोषाकरणादि धर्मानुष्ठानाधिकरणम् ... ... ... ... | ४२० |
| २ मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् | ४२१ |

| विषयः | पृष्ठं. |
|---|---|
| ३ अवदानस्य प्रदानान्तानुसमयाधिकरणम् ... | ४२२ |
| ४ अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ... | ४२३ |
| ५ दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ... | ४२३ |
| ६ नानाबीजेष्टावुलूखलादीनां तन्त्रताधिकरणम्... | ४२४ |
| ७ अग्नीषोमीयपशौ प्रयाजानूयाजयोः पात्रभेदाधि० | ४२५ |
| ८ नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ... ... | ४२६ |
| ९ विदेवनादीनामभिषेकपूर्वताधिकरणम् ... | ४२६ |
| १० सावित्रहोमानां दीक्षणीयपूर्वप्रयोगाधिकरणम् | ४२७ |
| ११ याजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभावि-ताधिकरणम् ... ... ... ... | ४२८ |

पञ्चमाध्याये तृतीयः पादः ५।३

| विषयः | पृष्ठं. |
|---|---|
| १ प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्य-ताधिकरणम् ... ... ... | ४२८ |
| २ प्रथमोपसत्त्रयस्य स्वस्थानावृत्त्यधिकरणम् ... | ४२९ |
| ३ सामिधेनीष्वागन्तूनामन्ते निवेशाधिकरणम्... | ४३० |
| ४ बहिष्पवमान आगन्तूनां पर्यासोत्तरकालताधि० | ४३१ |
| ५ बहिष्पवमान एवागन्तूनां साम्नां मध्ये निवेशा० | ४३१ |
| ६ प्रहेष्टकादीनां ऋत्वग्निशेषताधिकरणम् ... | ४३२ |
| ७ चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् | ४३२ |
| ८ लोकंपृणतः पूर्वं चित्रिण्याद्युपधानाधिकरणम् | ४३३ |
| ९ इष्टिसंस्कृतेग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ... | ४३३ |
| १० अग्निचिद्वर्षणादिव्रतानां ऋत्वन्तेऽनुष्ठानाधिक० | ४३४ |
| ११ दीक्षाया इष्टिसिद्धताधिकरणम् ... ... | ४३५ |
| १२ काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ... | ४३६ |
| १३ यज्ञानामग्निष्टोमपूर्वताधिकरणम् ... | ४३६ |
| १४ ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वताधिकरणम् | ४३६ |
| १५ सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वताधिकर० | ४३७ |

पञ्चमाध्याये चतुर्थः पादः ५।४

| विषयः | पृष्ठं. |
|---|---|
| १ पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् | ४३८ |
| २ मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकर० | ४३८ |
| ३ इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ... | ४३९ |
| ४ ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिक० | ४४० |
| ५ आज्यस्य सोमादनुत्कर्षाधिकरणम् ... ... | ४४१ |
| ६ विकृतानामैन्द्राग्नादीनां सद्यःकालताधिकरणम् | ४४१ |
| ७ सोमात्सांनाय्यविकारादीनामुत्कर्षाधिकरणम्... | ४४२ |
| ८ सोमविकाराणां दर्शपूर्णमासात्प्रागकर्तव्यताधि० | ४४३ |

षष्ठाध्याये प्रथमः पादः ६।१

| विषयः | पृष्ठं. |
|---|---|
| १ यागादिकर्मणां स्वर्गादिफलसाधनताधिकरणम् | ४४४ |
| २ अशक्तानामधिकारनिराकरणाधिकरणम् ... | ४४८ |
| ३ स्त्रिया अनधिकारनिराकरणाधिकरणम् ... | ४४९ |
| ४ यागे दंपत्योः सहाधिकाराधिकरणम्... ... | ४५० |
| ५ आधाने पुरुषद्वयकर्तृकनिराकरणाधिकरणम्... | ४५१ |
| ६ पुंस एवोपस्थानाद्यधिकाराधिकरणम्... ... | ४५२ |
| ७ शूद्रस्यानधिकाराधिकरणम् ... ... | ४५३ |
| ८ निर्धनाधिकाराधिकरणम् ... ... ... | ४५५ |
| ९ अङ्गहीनाधिकाराधिकरणम् ... ... ... | ४५५ |
| १० अचिकित्स्याङ्गवैकल्यस्यानधिकाराधिकरणम्... | ४५६ |
| ११ दर्शपूर्णमासयोरार्ष्यार्षेयस्यैवाधिकाराधिकरणम् | ४५६ |
| १२ रथकाराधिकाराधिकरणम् ... ... ... | ४५७ |
| १३ निषादस्थपत्यधिकरणम् ... ... ... | ४५८ |

षष्ठाध्याये द्वितीयः पादः ६।२

| विषयः | पृष्ठं. |
|---|---|
| १ सत्रे प्रत्येकस्य सत्रिणः फलसंबन्धाधिकरणम् | ४५९ |
| २ दर्शादौ कर्त्रैक्यनियमाधिकरणम् ... ... | ४६० |
| ३ आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिक० | ४६२ |
| ४ लौकिककर्मणि समाप्त्यनियमाधिकरणम् ... | ४६३ |
| ५ प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टापाताधिकरणम्... | ४६४ |
| ६ गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधि० | ४६७ |
| ७ अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्त-व्यताधिकरणम् ... ... ... ... | ४६७ |
| ८ अग्निहोत्रादीनां स्वकालावृत्त्यावृत्त्यधिकरणम् | ४६८ |
| ९ दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणम् ... | ४६८ |
| १० गुर्वनुगमनादीनां प्रवृत्तिनिमित्तमावृत्त्यधिक० | ४६८ |
| ११ ऋणत्रयापाकरणस्य ब्राह्मणादीनां नित्यताधि० | ४६९ |

षष्ठाध्याये तृतीयः पादः ६।३

| विषयः | पृष्ठं. |
|---|---|
| १ नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम्... ... | ४७० |
| २ अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ... | ४७१ |
| ३ द्रव्यभेदेपि कर्माभेदाधिकरणम् ... ... | ४७२ |
| ४ द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम्... | ४७२ |
| ५ देवतामन्त्रक्रियापचारे प्रतिनिध्यभावाधिकरणम् | ४७३ |
| ६ प्रतिषिद्धद्रव्यस्य प्रतिनिध्यभावाधिकरणम् ... | ४७४ |
| ७ स्वामिनः प्रतिनिध्यभावाधिकरणम् ... ... | ४७४ |
| ८ सत्रे कस्यचित्स्वामिनोपचारे प्रतिनिध्यादानाधि० | ४७५ |
| ९ प्रतिनिहितस्यास्वामित्वाधिकरणम् ... | ४७५ |
| १० सत्रे प्रतिनिहितस्य यजमानधर्मग्राहिताधिक० | ४७६ |
| ११ श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधि० | ४७६ |
| १२ द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिक० | ४७७ |
| १३ पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ... | ४७७ |
| १४ प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनःप्रति-निधित्वाधिकरणम् ... ... ... | ४७८ |
| १५ श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनः-प्रतिनिधित्वाधिकरणम् ... ... ... | ४७८ |
| १६ मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणम् | ४७८ |
| १७ प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्यलाभे श्रुत-द्रव्येणैव समापनाधिकरणम् ... ... | ४७९ |

१२ मेधपतित्वं स्वामिदेवतस्य ६९९

य.

१७ य एतेनेत्यग्निष्टोमः ... ४३६
२७ यजतिचोदनाद्द्रव्यदेवता० ३७५
७४ यजुर्युक्ते त्वध्वर्योर्दक्षिणा ६९५
१ यज्ञकर्म प्रधानम् ... ५७२
३४ यज्ञायुधानि धार्येरन् ... ८२६
४२ यज्ञोत्पत्त्युपदेशे ... ८५६
२२ यथाश्रुतीति चेत् ... ४८४
७२ यथाश्रुतीति चेत् ... ७६९
७२ यदि तु ब्रह्मणस्तद्रूपं ... ६९४
४९ यदि तु वचनात्तेषां ... ६७०
५५ यद्युद्गाता जघन्यः ... ५०४
३ यस्मिन्गुणोपदेशः ... ५९
२ यस्मिन्प्रीतिः पुरुषस्य ... ३४७
२ यस्य लिङ्गमर्थसंयोगात् ५५१
२६ याज्याक्रयणमविद्यमाने० ५२०
१९ याजमाने समाख्यानात् ३३६
३ याज्यानुवाक्या तु विकृ० ८७७
४४ याज्यापनयनेनापनीतो० २९३
१ यावज्जीविकोऽभ्यासः ... १७९
३ यूपश्चाकर्मकालत्वात् ... ८१८
२८ योगसिद्धिर्वार्थस्य ... ३८७
२७ यौप्यस्तु विरोधे स्यात्... ८६५

र.

३१ रशना च लिङ्गदर्शनात्... ३०८

ल.

१९ लिङ्गक्रमसमाख्यानात्... २१७
२७ लिङ्गविशेषनिर्देशात् ... २२४
६ लिङ्गविशेषनिर्देशात् ... ४४९
४५ लिङ्गविशेषनिर्देशात्समा० ५६६
२८ लिङ्गसमवायात् ... ८९
२४ लिङ्गसमाख्याभ्यां ... २२२
२७ लिङ्गसाधारण्याद्विकल्पः ५५९
७२ लिङ्गेन द्रव्यनिर्देशे सर्वत्र ७५२
२० लोकंपृणायास्तस्याः संपू० ४३३
१६ लोके कर्माणि वेदवत्... ४६३
९ लौकिके दोषसंयोगात्... ६२२
३३ लौकिकेषु यथाकामी ... ८२६

व.

३१ वचनाच्च न्याय्यमभावे... ४७७
१२ वचनात्तु द्विसंयोगः ... ५०६
७ वचनात्तु परिव्याणान्तम् ४२३
३ वचनात्त्वयथार्थे ... २११
४० वचनादननुज्ञातभक्षणम्... २९२
५ वचनादिष्टिपूर्वत्वम् ... ४३९
४४ वचनाद्रथकारस्याधानस्य ४५७
३४ वत्ससंयोगे व्रतचोदना... ४८९
२२ वनिष्टुसंनिधानादुरूकेण ६३५
३४ वरणमृत्विजामानमना ६६५
३१ वषट्काराच्च भक्षयेत् ... २८९
३७ वषट्कारश्च कर्तृवत् ... २२८
२३ वसाहोमस्तन्त्रमेकदेवत्येषु ८०८
१५ वाग्विसर्गो हविष्कृता ... ८२१
१ वाजिनेषु सोमपूर्वत्वं ... ५६२
७६ वाससि मानोपावहरणे... ७५३
२४ वासिष्ठानां वा ब्रह्मत्वस्य ५०८
३४ वासो वत्सं च सामान्यात् ६८५
१८ विकारः सन्नुभयतोऽविशे० ५१३
१६ विकारे त्वनूयाजानां ... ४२५
१९ विकृतिः प्रकृतिधर्मत्वात् ४१५
२२ विकृतेः प्रकृतिकालत्वात् ४४१
२१ विकृतौ चापि तद्वचनात् ६२६
६४ विकृतौ त्वनियमः स्यात् ७६९
२४ विकृतौ प्राकृतस्य विधेः ७६१
१ विकृतौ शब्दवत्त्वात् ६८१
३४ विकृतौ सर्वार्थः ... ३४२
३१ विक्रयी त्वन्यः ... ... ३२६
३२ विधिनिगमभेदात्प्रकृतौ ७१०
३० विधिमन्त्रयोरैकार्थ्यम् ... ११२
४० विधिरप्येकदेशे स्यात्... ४८०
१९ विधिर्वा स्यादपूर्वत्वात्... ९
१२ विधिर्वा स्यादपूर्वत्वात्... २६१
२३ विधिशब्दस्य मन्त्रत्वे ७०६
१५ विधिस्तु धारणे अपूर्वत्वात् २६३
२९ विधेः कर्मापवर्गित्वात्... ३७६
१ विधेः प्रकरणान्तरे ... ६४५
१८ विनिरुप्तेन मुष्टीनाम् ... ४९६
१५ विप्रतिपत्तौ विकल्पः ... ६२४
३२ विप्रतिपत्तौ हविषा ... ५६०
२२ विप्रतिषिद्धधर्माणां० ... ८६२
२१ विप्रतिषेधे करणम् ... ३३७
७० विप्रतिषेधे तद्वचनात् ... ६७६
३९ विप्रतिषेधे परम् ... ८८३
४८ विभागश्रुतेः प्रायश्चित्तम् ५०२
५१ विरोधिनामेकश्रुतौ ... ७६६
३२ विरोधे च श्रुतिविशेषात् ३४१
३ विरोधे त्वनपेक्ष्यं स्यात् २१
१ विवृद्धिः कर्मभेदात्पृषदा० ४२८
१६ विशये प्रायदर्शनात् ... १६७
३० विशये लौकिकः स्यात्... ५४२
१ विश्वजिति वत्सत्वङ्नामधे० ८६९
३२ विश्वजित्त्वप्रवृत्ते भावः... ४८९
६ विश्वजित्सर्वपृष्ठे तत्पूर्वक० ५३३
२७ विहारस्य प्रभुत्वादग्नीनां ५०८
१ विहारो लौकिकानामर्थं ८५८
४७ वेदिमोक्षणे मन्त्राभ्यासः ८३९
५० वेदोपदेशात्पूर्ववत् ... ३३१
१५ वैरूपसामा क्रतुसंयोगात् ७७५
१३ वैश्वदेवे विकल्प इतिचेत् ७८
१२ वैश्वानरश्च नित्यः ... ३९८
२९ व्यपदेशाच्च ... ३४०
४९ व्यवायान्नानुषज्येत १२०
६७ व्याख्यातं तुल्यानाम् ... ८०२
४८ व्यापन्नस्याप्सु गतौ यत् ५०१

श.

१ शब्दान्तरे कर्मभेदः ... १२१
२८ शमिता च शब्दभेदात्... ३२५
२३ शंयौ च सर्वपरिदानात् २६९
३८ शंय्विडान्तत्वे विकल्पः० ७६४
७ शाखायां तत्प्रधानत्वात् ३६७
८ शाखायां तत्प्रधानत्वात् ३६७
१२ शामित्रे च पशुपुरोडाशो ८४९
१८ शास्त्रफलं प्रयोक्तरि ... ३२१
५ शिष्टाकोपे विरुद्धमिति चेत् २७
६ शिष्ट्वा तु प्रतिषेधः स्यात् ७७५
६ शूद्रश्च धर्मशास्त्रत्वात् ... ५१२
२ शेषः परार्थत्वात् ... १८४
२९ शेषभक्षाश्च तद्वत् ... ६६४
३१ शेषभक्षास्तथेति० ... ८८४
३३ शेषभक्षास्तथति चेत् ... ८५५
२६ शेषस्तु गुणसंयुक्तः ... २०८
१ शेषाद्व्यवदाननाशे स्यात् ४८१
३३ शेषे ब्राह्मणशब्दः ... ११३
३७ शेषे यजुःशब्दः ... ११५
३१ शेषोऽप्रकरणेऽविशेषात् ७२
२५ श्येन-शला-कश्यप ... ६३७
१३ श्रपणं चाग्निहोत्रस्य ... ८४९
४५ श्रपणानां त्वपूर्वत्वात्... ६४१
१३ श्रुतिप्रमाणत्वाच्छिष्टाभावे ४७२
१ श्रुतिप्रमाणत्वाच्छेषाणां ५२२
१ श्रुतिलक्षणमानुपूर्व्यं ... ४०५

१४ श्रुति-लिङ्ग-वाक्य० ... २४१
१ श्रुतेर्जाताधिकारः स्यात् २३१

**ष.**

१४ षट्चितिः पूर्ववत्स्यात्... ३९८
२३ षड्भिर्दीक्षयतीति तासाम् ६८४
१ षड्विंशतिरभ्यासेन ... ६३१
३४ षोडशिनो वैकृतत्वम् ... ७२३
३५ षोडशी चोक्थ्यसंयोगात् ४१९

**स.**

२६ स आहवनीयः स्यात् ... ८८०
४५ स कपाले प्रकृत्या स्यात् ६५७
३२ संख्यायुक्तं क्रतोः ... २५५
३० संख्याविहितेषु समुच्चयः ८७५
९ संख्यासु तु विकल्पः स्यात् ८७८
३६ सगुणस्य गुणलोपे निगमेषु ७११
२६ संचिते त्वग्निचिद्युक्तं ... ४३४
२२ संज्ञा चोत्पत्तिसंयोगात् १४५
२६ संततवचनाद्धारायाम् ... ८७४
२४ संतर्दनं प्रकृतौ ... २५३
२१ संदिग्धे तु ... ... २००
२९ संदिग्धेषु वाक्यशेषात्... ९०
२९ संनहनं च वृत्तत्वात् ... ८५४
४५ संनहनहरणे तथेति चेत् ८५८
३६ संनिधानविशेषात् ... ३४२
२६ संनिधौ त्वविभागात् ... १७६
२३ संनिपातश्चेद्यथोक्तमन्ते ४२८
१ संनिपाते प्रधानानाम् ... ४२०
१ संनिपातेऽवैगुण्यात् ... ५०५
१८ संयुक्तस्त्वर्थशब्देन ... १६८
६ संयुक्ते तु प्रक्रमात्तदन्तं ४२२
२७ संसर्गिषु चार्थस्याभि० ६२७
१६ संस्काराद्वा गुणानां ... १९५
१२ संस्कारश्चाप्रकरणे ... १६६
३ संस्कारास्तु पुरुषसामर्थ्ये ३३३
५ संस्कारास्त्वावर्तेरन् ... ८१९
६ संस्कारे च तत्प्रधानत्वात् ३७५
८ संस्कारे च तत्प्रधानत्वात् ८७८
१० संस्कारे चान्यसंयोगात ७०२
१८ संस्कारे तु क्रियान्तरम् ६८३
२ संस्कारे युज्यमानानां ... ५७५
३३ संस्कृतं स्यात्तच्छब्दत्वात् ५४३
२१ संस्कृते कर्म संस्काराणां ४३३
८ संस्थागणेषु तदभ्यासः... ५६६
४१ संस्थास्तु समानविधानाः ३१३
१५ सः स्वर्गः स्यात्सर्वान्० ३८३
४४ स तृतीयसवने वचना० ७२४
४५ सत्रमेकः प्रकृतिवत् ... ७४९
२४ सत्रमहीनश्च द्वादशाहः... ५६४
१६ सत्राणि सर्ववर्णानाम् ... ५०७
३५ सत्रे गृहपतिरसंयोगात्... ८८२
४ सत्संप्रयोगे पुरुषस्य (प्र.) ३५
३० स प्रत्यामनेत्स्थानात् ... ४८८
५३ समं स्यादश्रुतत्वात् ... ६८९
२९ समवाये चोदनासंयोगस्य ३८८
४० समानयनं तु मुख्यम् ... ३६२
१३ समानेऽपूर्वत्वादुत्पन्ना ... ५२७
६ समासस्त्वैकादशिनेषु ... ७४३
४ समिध्यमानवतीं समिद्ध्य० ४३०
१७ समुच्चयस्त्वदोषार्थेषु ... ८७२
२७ समेषु कर्म युक्तं स्यात्... ३१५
४७ समेषु वाक्यभेदः स्यात् ११७
२ सर्वत्र तु ग्रहाम्नानमधिकं ६९८
१८ सर्वत्वं च तेषामधिकारात् ६६२
१३ सर्वपृष्ठे पृष्ठशब्दात्तेषाम् ७४४
४३ सर्वप्रदानं हविषः ... २७७
१ सर्वशक्तौ प्रवृत्तिः स्यात् ४७०
५७ सर्वस्वारस्य दिष्टगतौ ... ६७२
१ सर्वार्थमप्रकरणात् ... २९६
५८ सर्वासां च गुणानाम् ... ७६७
४३ सर्वेषां त्वैकमन्त्र्यम् ... २३०
१८ सर्वेषामविशेषात् ... ७०३
८ सवनीये छिद्रापिधाना० ८५९
२३ स स्वामी स्यात्तत्संयोगात् ४७५
३१ सहस्रसंवत्सरं तदायुषां ५१५
१३ साकंप्रस्थायीये ... ... २८३
३० सांतपनीया तूत्कर्षेत् ... ४१८
७३ सादनं चाविशेषात् ... ७३४
२५ सांनाय्याग्नीषोमीयविका० ४४२
२१ सांनाय्यसंयोगान्नासंनय० ४९७
३३ साप्तदश्यवन्नियम्येत ... ७८६
३२ सामप्रदेशे विकारः ... ६०९
१६ सामस्वर्थान्तरश्रुतेः ... ७०३
१ सामानि मन्त्रमेके ... ६००
२७ सामान्यं तच्चिकीर्षा हि ४७६
१९ सामिधेनीस्तदन्वाहुरिति ३२०
१ साम्नोऽभिधानशब्देन ... ५३०
२५ साम्युत्थाने विश्वजित्क्रीते ४९७
२५ सारूप्यात् ... ... ८६
२५ सार्वकाम्यमङ्गकामैः ... ३८५
१८ सुत्याविवृद्धौ सुब्रह्मण्यायां ८३५
२१ सुब्रह्मण्या तु तन्त्रम् ... ८२५
११ सूक्तवाके च ... ... २१५
१९ सोमेऽवचनाद्भक्षो ... २८५
१४ सौत्रामण्यां च ... ... २८३
२८ सौभरे पुरुषश्रुतेः ... १५७
१९ सौमिकं तु प्रणयनमवा० ५३६
२० सौमिके च कृतार्थत्वात् ३७३
१३ स्तुतशस्त्रयोस्तु ... ... ११०
३४ स्तोभस्यैके द्रव्यान्तरे ... ६१०
२० स्तोमविवृद्धौ त्वधिकम्... ७०४
१५ स्तोमविवृद्धौ प्राकृतानां ७२०
७ स्तोमविवृद्धौ बहिष्पवमा० ४३१
५१ स्थपतिर्निषादः स्यात् ... ४५८
२० स्थपतीष्टिः प्रयाजवत् ... ५१८
१० स्थाणौ तु देशमात्रत्वात् ६५२
१३ स्थानाच्चोत्पत्तिसंयोगात् ४११
३३ स्याच्छ्रुतिलक्षणे नियत० ४७८
५५ स्युर्वा होतृकामाः ... ६७२
१ स्वदाने सर्वमविशेषात्... ५
५१ स्वप्नदीतरणाभिवर्षणां ८४०
२६ स्वरसामैककपालामिक्षं च ५४०
२५ स्वरुश्चाप्येकदेशत्वात् ... ४०१
८ स्वरुस्तन्त्रापवर्गः ... ८२०
१ स्वरुस्त्वनेकनिष्पत्तिः ... ३६६
३ स्वर्दर्शं प्रति वीक्षणद ... ७४१
१७ स्ववतोस्तु वचनादैककर्म्यं ४५०
३ स्वस्थानात्तु विवृद्ध्येरन् ... ४२९
१ स्वामिकर्म परिक्रयः ... ३३२
३८ स्वामिसप्तदशाः... ... ३२८
३५ स्विष्टकृति भक्षप्रतिषेधः ७६३
३८ स्विष्टकृदावापिकोऽनुयाजे ७१२
३४ स्विष्टकृद्देवतान्यत्वे ... ७११

**ह.**

१० हरणे तु जुहोतिर्योग० ... ३६९
१ हविर्गणपरमुत्तरस्य ... ५६५
१४ हविर्धाने निर्वपणार्थम्... ८५१
३ हविर्भेदात्कर्मणोऽभ्यासः ७५६
११ हविष्कृत्सवनीयेषु ... ८६०
५५ हविष्कृदध्रिगुपुरोनुवाक्यां ८४२
१३ हिरण्यगर्भे पूर्वस्य ... ६८३
३५ हिरण्यमाज्यधर्मः ... ५६१
४ हेतुदर्शनाच्च ... ... २५
२४ होमाभिषवभक्षणं च तद्वत् ४८६
३२ होमाभिषवाभ्यां च ... २८९
३६ हौत्रास्तु विकल्पेरन् ... ८७६

# शास्त्रदीपिका।

## प्रथमाध्याये प्रथमस्तर्कपादः।

## रामकृष्णप्रणीतयुक्तिस्नेहप्रपूरण्या सिद्धान्तचन्द्रिकया सिद्धान्तचन्द्रिकागूढार्थविवरणेन च युतः।

मङ्गलाचरणम्।

लक्ष्मीकौस्तुभवक्षसं मुररिपुं शङ्खासिकौमोदकीहस्तं पद्मपलाशताम्रनयनं पीताम्बरं शार्ङ्गिणम्।

जैमिनीयन्यायमाला।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ॥ यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

आनन्दाञ्चितवदनं सदनं रघुनन्दनं दयामुक्त्योः। सीतालक्ष्मणसहितं वन्दे गिरिशादिभिर्वन्द्यम्[1] ॥ १ ॥

विधिश्रुतिस्मृतिद्वारमद्वारं योगिनामपि। वाञ्छितार्थप्रदं धर्मप्रमाणं राममाश्रये ॥ २ ॥

वाचं [ देवीं ] वन्दे गिरिशतनयं गोत्रदेवीं च भक्त्या वेदव्यासं मुनिवरमथो जैमिनिं सूत्रकारम्।

व्याख्यातारं गहनवचसां भाष्यकारं च पूज्यं भट्टाचार्यं शिखिगतितनुं तन्मतज्ञान्गुरूंश्च ॥ ३ ॥

अस्त्यत्र रेवोत्तरतीरवर्ती देशः प्रसिद्धो भुवि मालवाख्यः।

ओंकारमाहिष्मतिकाविशालतीर्थाद्यधिष्ठानकृतात्यभिख्यः ॥ ४ ॥

वसिष्ठपाराशरवत्सकौत्सशाण्डिल्यसद्भार्गवगौतमाद्याः।

वंशाः प्रसिद्धा भुवि मालवानां पूर्वक्षितीशेन्द्रसमर्चितानाम् ॥ ५ ॥

वंशो विद्याविनयविमलस्तेषु कश्चित्प्रसिद्धः कर्मब्रह्मप्रवणमतयः सर्व एव द्विजेन्द्राः।

गोत्रं शक्तिप्रवरसहितं यत्र पाराशराख्यं शक्तिर्विष्णोर्भुवनजननी देवता सा परेति ॥ ६ ॥

शिवदासाभिधस्तत्र वंशे पाराशराह्वये। वेदशास्त्रार्थसंपन्नः सदाचारपरोऽभवत् ॥ ७ ॥

तत्पुत्रोऽभून्मित्रशर्मा द्विजेन्द्रो मित्रः साक्षाद्ब्राह्मतेजोविशेषैः।

विद्वद्वृन्दैः पूजितः सर्वशास्त्रव्याख्याशिष्योद्गीतकीर्तिः पृथिव्याम् ॥ ८ ॥

जनार्दनस्तस्य सुतो मनीषी जनार्दनार्चानिरतो बभूव।

वेदेषु शास्त्रेषु च गीतकीर्तिर्महीपतीन्द्रार्चितरम्यमूर्तिः ॥ ९ ॥

तस्माज्जातो वेदशास्त्रेष्वधीती गङ्गादेव्यां भैरवाख्यो द्विजेन्द्रः।

कीर्तिर्येनोपार्जिता विश्ववन्द्या वृत्तिश्चाग्र्या भूपतेः शेषवंश्यात् ॥ १० ॥

समुत्पन्नस्तस्मादतिविमलकीर्तिर्द्विजवरः कृती पूनादेव्यां दिशिदिशि च नारायण इति।

प्रसिद्धः शास्त्रेषु क्षितिपतिसमूहार्चितपदः परब्रह्मानन्दामृतरससमास्वादनपटुः ॥ ११ ॥

तस्मादभूद्धर्मतनूरभार्यां श्रीमाधवः पुण्यचरित्रकीर्तिः।

वेदान्तवित्त्यक्तभवप्रवृत्तिः श्रीरामचन्द्रार्पितचित्तवृत्तिः ॥ १२ ॥

स देशादागतः काश्यां शास्त्राध्ययनसिद्धये। सकलत्रः कृती भाग्यात्स्थितिं तत्र चकार ह ॥ १३ ॥

तस्माज्जातः प्रभावल्यां[2] रामकृष्णाभिधः सुधीः। पितृभक्तिपरः काश्यां सर्वशास्त्रविशारदः ॥ १४ ॥

तत्तद्ग्रन्थविनिर्माणात्स्वविद्या प्रकटीकृता। कीर्तिश्च येन विपुला पूर्वापरसमुद्रयोः ॥ १५ ॥

राजराजाभिधः श्रीमद्गोपीनाथद्विजोत्तमात्। विद्वन्नागरवृन्देषु प्राप्तं भट्टपदं स्थिरम् ॥ १६ ॥

गजपतिसदसि प्राप्ता पदवी बलभद्रराजगुरोः। पण्डितशिरोमणिरिति प्रतापमार्तण्डनिर्माणात् ॥ १७ ॥

अनुशास्तृप्रसादेन व्याचष्टे शास्त्रदीपिकाम्। निमित्तमात्रमत्रैष व्याख्याता रघुनन्दनः ॥ १८ ॥

न शास्त्रदीपिकाटीका कृता केनापि सूरिणा। तदपूर्वाध्वसंचारी नोपहास्यः स्खलन्नपि ॥ १९ ॥

ग्रन्थकारो ग्रन्थारम्भे तत्समाप्तिप्रत्यूहापगमाभ्यां शिष्टाचारपरिप्राप्तविशिष्टेष्टदेवताप्रणतिरूपं मङ्गलमाचरति—लक्ष्मी-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

कारुण्याम्भोनिधिं रामं प्रणम्य तदनुग्रहात्। सिद्धान्तचन्द्रिकागूढार्थव्याख्या क्रियते मया ॥ १ ॥

---

१ गिरिशादिवन्द्याङ्घ्रिम्. २ रथाव्यां. ३ मर्थशास्त्र.

मेघश्याममुदारपीवरचतुर्बाहुं प्रधानात्परं श्रीवत्साङ्कमनाथनाथममृतं वन्दे मुकुन्दं मुदा ॥ १ ॥

युक्तिं मानवतीं विदन्स्थिरधृतिर्भेदे विशेषार्थभागाशोहः क्रमकृत्प्रयुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ॥
नित्यस्फूर्त्यधिकारवान्गतसदाबाधः स्वतन्त्रेश्वरो जागर्ति श्रुतिमत्प्रसङ्गचरितः श्रीबुक्कणक्ष्मापतिः ॥ २ ॥
यद्ब्रह्म प्रतिपाद्यते प्रगुणयत्तत्पञ्चमूर्तिप्रथां तन्त्रायं स्थितिमूर्तिमाकलयति श्रीबुक्कणक्ष्मापतिः ॥
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञ्यमुद्द्योतते ॥ ३ ॥
इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथिर्धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वौजा निमेर्गौतमिः ॥
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥
श्रुतिस्मृतिसदाचारपालको माधवो बुधः ॥ स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः ॥ ५ ॥
प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ॥ जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥ ६ ॥
एको विषयसंदेहपूर्वपक्षावभासकः ॥ श्लोकोऽपरस्तु सिद्धान्तवादी प्रायेण कथ्यते ॥ ७ ॥
चत्वारोऽवयवा एकश्लोकेनोक्ताः क्वचित्क्वचित् ॥ यत्र क्वापि बहुश्लोकैरुच्यन्तेऽतो न विस्तरः ॥ ८ ॥
सर्वथापि सहस्रे द्वे नातिक्रामति संग्रहः ॥ मीमांसासागरस्तेन क्रीडापुष्करिणी भवेत् ॥ ९ ॥
शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा ॥ शास्त्रादिविषये ज्ञाते तत्तत्संगतिरूह्यताम् ॥ १० ॥
धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः ॥ प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥ ११ ॥
अधिकारोऽतिदेशश्च सामान्येन विशेषतः ॥ ऊहो बाधश्च तन्त्रं च प्रसङ्गश्चोदिताः क्रमात् ॥ १२ ॥
विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् ॥ प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥ १३ ॥
उपोद्घातः कर्मभेदमानं तस्यापवादगीः ॥ प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ॥ १४ ॥
श्रुतिर्लिङ्गं च वाक्यादिविरोधप्रतिपत्तयः ॥ अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः ॥ १५ ॥
प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयोक्तृता ॥ फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ १६ ॥
श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने ॥ श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥ १७ ॥
अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने ॥ दीक्षा सत्रं देयवह्नी षष्ठे पादेष्वमी स्थिताः ॥ १८ ॥
प्रत्यक्षोक्त्यतिदेशोऽस्य शेषः सामनिरूपणम् ॥ नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ॥ १९ ॥
स्पष्टलिङ्गादथास्पष्टात्प्रबलादपवादतः ॥ अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः ॥ २० ॥
ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः ॥ नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥ २१ ॥
द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः ॥ ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः ॥ २२ ॥
उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः ॥ आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः ॥ २३ ॥
प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने ॥ द्वादशाध्यायपादार्था इति पादार्थसंग्रहः ॥ २४ ॥
उपोद्घातापवादाभ्यां प्रसङ्गानुप्रसङ्गतः ॥ तत्तत्पादगतत्वेन विचारान्तरमुन्नयेत् ॥ २५ ॥
शास्त्रे पूर्वोत्तरीभावोऽध्यायानामभिधास्यते ॥ पादानां तु तमत्रैव लेशाद्व्युत्पादयामहे ॥ २६ ॥
विधिः साक्षान्मितिर्धर्मे तस्य शेषोऽर्थवादगीः ॥ वेदमूला स्मृतिर्नाम वाक्यांशोऽमीष्वतः क्रमः ॥ २७ ॥
ऊहित्वा संगतीस्तिस्रस्तथाऽवान्तरसंगतिम् ॥ ऊहेताक्षेपदृष्टान्तप्रत्युदाहरणादिकम् ॥ २८ ॥
पूर्वन्यायस्य सिद्धान्तयुक्तिं वीक्ष्य परे नये ॥ पूर्वपक्षोक्तयुक्तिं च तत्राक्षेपादि योजयेत् ॥ २९ ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**कौस्तुभेति**। अध्येतॄणां लक्ष्मीसौभाग्यादिप्राप्तिसूचनार्थं जगदीश्वरस्यैतद्विशेषणम्। प्रस्तरशष्कुलीन्यायेन विघ्नविघातकत्वसामर्थ्यप्रदर्शनार्थं मुररिपुमिति द्वितीयं विशेषणम्। विशेषणान्तराणि तु भक्तानुग्रहार्थस्वीकृतशरीरध्यानौपयिकानि। मतान्तरप्रसिद्धप्रधानेनान्यथासिद्धिवारणार्थं 'प्रधानात्पर'मित्युक्तम्। नचैवं देवताधिकरणविरोधः, *उद्देश्याया एव तद्विषयत्वात्। सोमायस्वाहेत्येवंरूपा या देवता कर्माङ्गभूता तस्या एव देवताधिकरणे विग्रहादिपञ्चकनिराकरणात्। उक्तंच—'नास्माकं शब्द एव देवता नाकसदामिन्द्रादीनां देवतात्वाङ्गीकारा'दिति। अतएव वार्तिककारैः 'विशुद्धज्ञानदेहाये'त्यादिना ग्रन्थादौ महादेवो नमस्कृतः। उक्तंच भट्टोम्बेकेन—'ग्रन्थारम्भेऽभिमतदेवतानमस्कारं करोति वार्तिककार'इति। अथवा देवतास्तुतेरेव प्रधानकर्मण एतत्फलं न देवतायाः, तस्या गुणत्वाङ्गीकारात्। केचित्पुनरेतत्कर्मपर-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**उद्देश्याया इति**। इन्द्राय स्वाहेत्यादौ द्रव्यत्यागे उद्देश्या या देवता कर्माङ्गभूता तस्या एव देवताधिकरणे विग्रहादि-

**न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिकाम् ॥ कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम् ॥ २ ॥**

धर्मशास्त्रारम्भप्रतिज्ञाधिकरणम् ॥ १ ॥

## अथातो धर्मजिज्ञासा ॥ १ ॥

**स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः ॥ विचारशास्त्रं नारभ्यमारभ्यं वेति संशयः ॥ ३० ॥**
**अर्थधीहेतुताधीतेर्लोकसिद्धावघातवत् ॥ नियामकं न चैवातो वैधारम्भो न संभवी ॥ ३१ ॥**
**दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम् ॥ अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधेः ॥ ३२ ॥**
**अथवाध्यापनात्सिद्धेर्नैवास्त्यध्ययने विधिः ॥ तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः ॥ ३३ ॥**
**विधेयाध्यापनं सिध्येद्बालस्यार्थधियं विना ॥ तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम् ॥ ३४ ॥**
**स्वतःप्राप्तार्थबोधस्य विवक्षानपनोदनात् ॥ विषयादि सुसंपादं शास्त्रमारभ्यते ततः ॥ ३५ ॥**

**अनेन सूत्रेण प्रारिप्सितस्य शास्त्रस्य श्रोतृप्रवृत्तिसिद्धये धर्मज्ञानं प्रयोजनं कथ्यते । यदा हि**

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

त्वेन व्याचक्षते । तथाहि—अनेकपद्धत्यादिभिर्विशुद्धं यज्ज्ञानं तद्रम्यं स्वरूपं यस्य वेदत्रयसमाहाररूपं चक्षुर्ज्ञापकं प्रमाणं यस्य तस्मै स्वर्गादिफलप्राप्तिहेतवे । सोमस्यार्धं रसरूपं त्याज्यतया यो धारयति तस्मै नम इति । तेषामीश्वरद्रोहिणां प्रतीयमानार्थपरित्यागेनार्थान्तरं कल्पयतामनुपादेयमेव तद्व्याख्यानम् ॥ १ ॥

इदानीं सप्रयोजनं कर्तव्यं प्रतिजानीते—**न्यायाभासेति** । अत्र पूर्वार्धेन प्राभाकराद्युद्भावितन्यायाभासतमोनिराकरणेन शास्त्रतत्त्वार्थप्रदर्शनं ग्रन्थस्य प्रयोजनमुक्तम् । शास्त्रदीपिकां करिष्ये इति कर्तव्यप्रतिज्ञा । कुमारिलमतेनेति मतान्तरनिराकरणं ध्वनितम् ॥ २ ॥

कर्तव्यं प्रतिज्ञाय ग्रन्थस्य मीमांसाशास्त्रविषयत्वं द्योतयितुं तदाद्यसूत्रं लिखति—**अथातो धर्मजिज्ञासेति** । एतच्च धर्मविचाररूपं मीमांसाशास्त्रम् । लक्षणानि चास्य द्वादश—प्रमाण-भेद-शेष-प्रयुक्ति-क्रमाधिकार-सामान्यातिदेश-विशेषातिदेशो-ह-बाध-तन्त्र-प्रसङ्गाख्यानि । प्रमाणादयः प्रसङ्गान्ता द्वादश पदार्थाः क्रमाद्द्वादशानामध्यायानां विषयाः । तत्र प्रथमाध्याये चतुर्भिः पादैः क्रमेण विध्यर्थवादस्मृतिनामधेयानि विचारितानि । द्वितीये तूपोद्घातभेदतदपवादप्रयोगभेदाः । तृतीये श्रुतिलिङ्गवाक्यादीनि त्रिभिः पादैर्विचारितानि । चतुर्थे निवीतादिश्रुत्यादिबलाबलविचारः । पञ्चमे प्रतिपत्तिकर्म । षष्ठे अनारभ्याधीतानि । सप्तमे बहुप्रधानोपकारकप्रयाजादीनि । अष्टमे याजमानानि । 'प्रधानस्य प्रयोक्तृत्वमप्रधानाप्रयोक्तृता । फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः' । पञ्चमस्याद्ये श्रुत्यादिभिः क्रमो निरूपितः । द्वितीये क्रमविशेषः । तृतीये प्रयाजादिविवृद्धिः । चतुर्थे श्रुत्यादिबलाबलविचारः । 'अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने । दीक्षासत्रं देयवह्नी षष्ठपादेष्वमी स्थिताः' । सप्तमाद्ये प्रत्यक्षवचनातिदेशः । द्वितीये तस्यैव शेषः । तृतीये नामातिदेशः । चतुर्थे निर्वापौषधलिङ्गेन प्राकृतधर्मातिदेशः । 'स्पष्टाल्लिङ्गादथास्पष्टात्प्रबलादपवादतः । अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः । ऊहारम्भोऽथ सामोहो मन्त्रोहस्तत्प्रसङ्गतः । नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः । द्वारलोपोऽस्य विस्तारः कार्यैकत्वं समुच्चयः । ग्रहसामप्रकीर्णानि नञर्थश्चाष्टपादगाः । उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः । आवापविस्तृतिश्चैका दशाध्यायस्य पादगाः । प्रसङ्गस्तन्त्रनिर्णीतिः समुच्चयविकल्पने । द्वादशाध्यायपादार्था इति पादार्थसंग्रहः ।' संगतिस्वरूपं चात्र ग्रन्थान्तरादवगन्तव्यम् । सूत्रतात्पर्यं दर्शयति—**अनेनेति** । प्रयोजनपरत्वेन सकलशास्त्रशेषत्वमस्य ध्वन्यते ॥ किमर्थं प्रयोजनकथनमित्यपेक्षायामाह—**श्रोत्रिति** । ननु नानेन प्रयोजनं कथ्यते तद्वाचकपदाभावादत आह—**यदाहीति** । कर्तव्येत्युक्त्या सूत्रे कर्तव्यतापदाध्याहारः सूचितः । कर्तव्यतानुपदेशेऽथातःशब्दयोरनन्वयापत्तेः । *यथाहुः—'अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् । धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजन'मिति । *मन्दफलमेतदिति चेत् । न । *उक्तोत्तरत्वात् । *अनाश्वासा*त्तदनुपपत्तिरिति चेत् । न । *आप्तत्वेन तदुपपत्तेः । *वक्ष्यति हि 'तच्चेत्प्रत्ययिता'दिति ।

### सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

पञ्चकनिराकरणादित्यर्थः । सूत्रस्य प्रयोजनकथनार्थत्वे संमतिमाह—**यथाहुरिति** । अस्य मीमांसाशास्त्रस्य प्रतिपाद्यमानतया धर्माख्यो विषयः तदेवास्य प्रयोजनमिति वक्तुं शास्त्रादाविदं सूत्रं कृतमिति श्लोकार्थः । **मन्देति** । एतद् प्रयोजनकथनमित्यर्थः । **उक्तोत्तरत्वादिति** । शास्त्रेषु शुश्रूषुप्रवृत्तिरूपस्य प्रयोजनस्योक्तत्वादित्यर्थः । **अनाश्वासादिति** । अन्यार्थमपि शास्त्रे मिथ्यैव धर्मप्रयोजनतया श्रोतॄन्प्रवर्तयितुं शास्त्रकार आहेति शङ्कयानाश्वासात् । **तदनुपपत्तिः** । श्रोतृप्रवृत्त्यनुपपत्तिरित्यर्थः । **आप्तत्वेनेति** । महर्षेः शास्त्रकारस्याप्तत्वावधारणाद्विश्वास इत्यर्थः । **वक्ष्यति हीति** । भाष्य-

धर्मजिज्ञासा कर्तव्येत्युक्त्वा शास्त्रमारभ्यमाणं दृश्यते तदा नूनमिदं शास्त्रं धर्मज्ञानप्रयोजनमित्यवगम्यते ॥ * ॥ विदितं तावत्प्रयोजनम् । संबन्धोऽपि शास्त्रस्य प्रस्तावहेतुर्वक्तव्यः । यथा शास्त्रान्तरेषु शिष्यप्रश्नानन्तर्यादिसंबन्धः प्रस्तावको वर्ण्यते तथेहापि शास्त्रारम्भे प्रयोजकानां संबन्धानामन्यतमो वक्तव्यः—अनेन संबन्धेनेदं शास्त्रमायातमिति । अन्यथा ह्यसंबद्धप्रलपितं स्यात् । सत्यम् । इहतु य एवायं प्रयोजनेन सह शास्त्रस्य साध्यसाधनत्वसंबन्धः स एव शास्त्रस्य प्रस्तावको नान्यः । भवति हि साधनत्वमेव साध्यार्थिनः साधने प्रवृत्तिहेतुः । सचायं संबन्धः प्रयोजनोक्त्यै-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

*तथा 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेर'न्निति । उक्तंच—'सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते'इति । ननु प्रयोजनवत्प्रवृत्त्यङ्गत्वात्संबन्धोऽपि सूत्रकारेण वक्तव्यः । अविदितप्रयोजनवदविदितसंबन्धेऽपि श्रोतुरप्रवृत्तेरिति चोदयति—**विदितमिति** । यथा 'अथातो धर्मं व्याख्यास्यामः'इत्यादिषु शिष्यप्रश्नानन्तर्यरूपः संबन्धोऽभिधीयते तथात्र सूत्रकारेण प्रयोजनं तत्संबन्धोपि वक्तव्यः । अन्यथा सूत्रकारस्यासंबद्धप्रलापित्वेन तद्वचने न श्रद्दधीरन्नित्यर्थः । उक्तंच—'सिद्धार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः संबन्धः सप्रयोजन'इति । परिहरति—**सत्यमिति** । यदैवास्य शास्त्रस्येदं प्रयोजनमित्युक्तं तदैव तयोर्धर्मज्ञानविचारयोः साध्यसाधनभावलक्षणः संबन्धोऽर्थादुक्तो 'नचार्थात्प्राप्तं सूत्रकारा अक्षरैर्निबध्नन्ति । असूचकत्वेनासूत्रत्वप्रसङ्गादित्यर्थः । अयमाशयः—नास्य शास्त्रस्य शिष्यप्रश्नानन्तर्यादिरूपसंबन्धो हेतुः । लोकहितैषिणा जैमिनिना स्वयमेव धर्मज्ञानसाधनीभूतस्य शास्त्रस्यारब्धत्वात् । अतः साध्यसाधनसंबन्ध एवात्र । सच संबन्धिनोरभिधानादेवार्थाज्ज्ञात इति भाष्यकारोऽप्येनमेव संबन्धं 'धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वे'त्यादिनाऽऽक्षेपसमाधानाभ्यामुपपादयिष्यति । अतो न संबन्धान्तरगवेषणा कार्येति भावः । स एवेत्यनेन क्रियानन्तर्यगुरुपर्वक्रमरूपसंबन्धान्तरनिराकरणम् । तथाहि काणादे तन्त्रे शिष्यप्रश्नक्रियानन्तर्यरूपः संबन्धो दर्शितः । *गुरुपर्वक्रमात्मकश्च संबन्धो यथात्रैव कैश्चिदुक्तः । तद्यथा—ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, सच स्वोपदेशादनन्तरमिमं न्यायं ग्रन्थे निबद्धवानिति । क्वचित्तु ब्रह्मा महेश्वरो वा प्रजापतये मीमांसां प्रोवाच प्रजापतिरिन्द्रायेन्द्र आदित्यायेत्येवमादिपाठान्तरम् । तदत्र क्रियारूपस्तावत्संबन्धो न वाच्यः । निष्प्रयोजनत्वात् । नह्येवंरूपसंबन्धसद्भावासद्भावयोः श्रोतॄणां शास्त्रप्रवृत्तौ निवृत्तौ वा शास्त्रगोचरे ज्ञाने वा कश्चिद्विशेषः । तथा गुरुपर्वक्रमरूपोऽपि संबन्धो निष्फलो निर्हेतुकश्च । नह्यस्मिन्संबन्धे किंचित्प्रमाणमस्ति । अतः सप्रमाणकः सप्रयोजनश्च संबन्धो वाच्यः । सच साध्यसाधनत्वरूप एव युक्त इति भावः । नन्वत्र सूत्रकृतैवाथशब्दं प्रयुञ्जानेनाध्ययनक्रियानन्तर्यलक्षणस्य शास्त्रसंबन्धस्योक्तत्वात्कथमुच्यते सूत्रकारेण न पृथगुक्त इति । उच्यते—अत्राथशब्दोऽध्ययनजिज्ञासाक्रिययोरेव संबन्धमाह न शास्त्रस्य प्रयोजनेन सह, ते च क्रिये शास्त्रादत्यन्तभिन्ने । ननु जिज्ञासापदेनैव विचाररूपा शास्त्रशब्दवाच्या क्रियोपात्तैव कथमुच्यते शास्त्रादत्यन्तभिन्नेति । मैवम् । जिज्ञासापदस्य ज्ञानेच्छारूपक्रियावाचकस्य मीमांसापर्यायत्वाभावात् । श्रोतृक्रिया हि ज्ञानेच्छारूपा जिज्ञासा, वक्तृक्रिया तु विचारात्मिका मीमांसा, कुतस्तयोरैक्यम् । *कथं तर्हि जिज्ञासाशब्दस्य मीमांसायां प्रयोगः उभयोरपि सन्प्रत्ययान्तत्वसाम्येनैकार्थत्वभ्रमादिति ब्रूमः । अयमत्र विवेकः—विषयोऽप्यत्र ज्ञाप्यजन्यभेदेन द्विविधः । ज्ञाप्यो धर्मः, जन्यस्तज्ज्ञानम् । संबन्धस्तु धर्मेण सह शास्त्रस्य ज्ञाप्यज्ञापकभावलक्षणस्तज्ज्ञानेन सह जन्यजनकलक्षणः, धर्मज्ञानमवान्तरप्रयोजनम् । परमप्रयोजनं चाभ्युदयनिःश्रेयसे, तत्कामोऽधिकारीत्यनुबन्धचतुष्टयं श्रोतृप्रवृत्तिसिद्ध्यर्थं सूत्रकारेण श्रुत्यर्थाभ्यामुक्तम् । लोकानुग्रहश्च शास्त्रप्रस्तावे कारणम् । नन्वेवमपि शिष्टाचारपरम्पराप्राप्तमङ्गलानाचरणात्सूत्रकारस्याशिष्टत्वशङ्कया तच्छास्त्रे प्रवृत्त्यनुपपत्तिः । नैष दोषः । सूत्रादौ मङ्गलार्थाथशब्दप्रयोगेण मङ्गलाचरणस्य कृतत्वात् । भाष्यकारेणापि लोकशब्दं प्रयुञ्जानेन तत्त्वानुस्मरणरूपं तत्कृतं, वार्तिककारैरपि 'विशुद्धज्ञानदेहाय'इत्यनेन देवतानमस्काररूपं स्पष्टमेव मङ्गलमाचरितं, ग्रन्थकारेणापि तन्मतानुसारिणा तत्कृतमिति न कस्यचिदुपालम्भः । एवमनेन सूत्रेण सकलशास्त्रशेषरूपेण श्रोतृप्रवृत्त्यौपयिकविषयादिनिरूपणेन शास्त्रारम्भे प्रतिज्ञाते तत्सिद्ध्यर्थमध्ययनविधिविचारमा-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

कार इति शेषः । **तथेति** । जैमिनिरपि वक्ष्यतीत्यर्थः । **गुरुपर्वेति** । पर्वाण्यवच्छेदः । गुरूणां पर्वाणि गुरुपर्वाणि गुरुपर्वणां क्रमो गुरुपर्वक्रम इति विग्रहः । तदप्रतिपादने । दृष्टार्थत्वाप्रतिपादन इत्यर्थः । **कथमिति** । श्रुतावुक्तत्वादि-

वार्थोज्ज्ञायत इति न सूत्रकारेण पृथगुक्त इत्यदोषः ॥ * ॥ अत्रेदं चिन्त्यते—किमध्ययनानन्तरं धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यम्, उत गुरुगृहात्समावर्तितव्यमिति । यदि हि स्वाध्यायाध्ययनविधिना धर्ममात्रार्थमध्ययनं स्वर्गाद्यर्थेन विधीयते ततस्तन्मात्रेणैव शास्त्रार्थस्य समाप्तत्वात् 'अधीत्य स्नायात्' इति स्मृतिवचनबलेन च समावर्तितव्यमिति ॥

अध्ययनविधिविचारः ।

अथाक्षरग्रहणादिपरम्परोपजायमानवाक्यार्थज्ञानार्थमध्ययनं विधीयते । ततस्तस्य विचारमन्तरेणासंभवादध्ययनविधिनैवार्थाद्विचारो विहित इति गुरुगृह एवावस्थाय विचारयितव्यो धर्मः । तत्र—'विनापि विधिना ज्ञानलाभान्नहि तदर्थता ॥ कल्प्यस्तु विधिसामर्थ्यात्स्वर्गो विश्वजिदादिवत्' ॥ * ॥ स्वाध्यायसंस्कारद्वारेणाध्ययनस्यार्थज्ञानहेतुत्वं विनैव विधिना प्रमाणान्तरेण सिद्धमेवेति तादर्थ्ये विध्यानर्थक्यम् ॥ नचावघातादिविधिवन्नियमार्थत्वम् । अवघातो हि दर्शपूर्णमासापूर्वे नियम्यते । अवघातनिष्पन्नैरेव तण्डुलैरपूर्वं सिध्यतीति न तण्डुलस्वरूपे,

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

रभते—**अत्रेदमिति**। इदं विचारशास्त्रं विधिप्रसक्त्याऽनारभ्यमारभ्यं वेति मुख्यो विचारस्तत्सिद्ध्यर्थमध्ययनविधेरदृष्टार्थत्वं दृष्टार्थत्वं वेति विचार्यते। भाष्यकारेण च शास्त्रादावेतत्सूत्रमप्यध्ययनविधेरदृष्टार्थतामाशङ्क्य दृष्टार्थत्वप्रतिपादनपरमिति व्याख्यातं 'दृष्टो हि तस्यार्थः कर्मावबोधनं नामे'त्यादिना। तस्यायमेव प्रसंजको विधिरित्युचितएवादौ तद्विचारः। कथंपुनरदृष्टार्थत्वकोटेरुदयो यतोऽध्ययनकरणिकायां भावनायां नियोगः प्रतीयमानो नियोज्यविशेषं विनाऽपर्यवस्यन्नश्रुतस्वर्गादिपरित्यागेन 'फलमात्रेयो निर्देशा'दिति न्यायेन घृतकुल्यादिकामवलम्बते । नचार्थवादत्वं पारार्थ्यानवगमात् । नच कर्मावबोधार्थत्वेन पारार्थ्यम् । अध्ययनस्य तादर्थ्येनाश्रवणात् । अतो नादृष्टार्थत्वशङ्केति । उच्यते—अध्ययनकरणिकायां भावनायां निर्वर्त्यमानायां तावदर्थावबोधो जायते सचाहवनीयादिवदुपकारकत्वेन कर्मार्थो भवति । अतोऽध्ययनमपि तद्द्वारा कर्मार्थमाधानवत् । एवंचाध्ययनस्य पारार्थ्येऽवगते घृतकुल्यादेस्तदर्थवादत्वेनोपपत्तौ फलसमर्पकत्वायोगात् ।

**नन्वेवमपि** दृष्टार्थावबोधार्थत्वेनादृष्टार्थत्वानुपपत्तिः। मैवम्। तादर्थ्ये विध्यानर्थक्यापत्तेः। विधिंविनापि तल्लाभात्। अतो विध्यर्थवत्त्वायादृष्टार्थत्वकल्पनेति । अत्र शास्त्रारम्भसिद्ध्यर्थत्वेनाध्ययनविधेरदृष्टार्थत्वं दृष्टार्थत्वं वेति विचारे कर्तव्ये ग्रन्थकारस्याध्ययनानन्तरं गुरुगृहेऽवस्थातव्यमुत ततो निवर्तितव्यमिति विचारोऽनुपपन्नः। तत्सिद्ध्यर्थं चाध्ययनविधेर्दृष्टादृष्टार्थत्वविचारोऽत्यन्तमनुपपन्नः शास्त्रारम्भसिद्ध्यर्थत्वादध्ययनविधिविचारस्येत्यादिबहुग्रन्थविरोधात्। तस्मादस्मदुक्त एव विचारक्रमोऽनुसंधेयः। ग्रन्थोऽपि शाब्दक्रमं बाधित्वा तत्रैव योज्यः। अथ वा सूत्रकारेणाध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येत्युपदेशार्थमथशब्दः प्रयुक्तस्तस्य प्रयोजनं 'वेदमधीत्य स्नाया'दिति स्मृतिप्राप्तस्नानकालबाधः। वेदमधीत्य तावन्न स्नातव्यं यावन्न धर्मो जिज्ञास्यते इति तदर्थोऽध्ययनविधिविचार इति ग्रन्थकर्तुरभिप्रायः। **ततस्तस्येति** । विचारस्येतिकर्तव्यतारूपत्वादध्ययनविधेरेव तत्पर्यन्तो व्यापारः। नचैवं प्रवृत्तिभेदापत्तिः। आ विचारात्स्वप्रवृत्तेरेकत्वात् । एका हि प्रवृत्तिरङ्गप्रधानयोः। वक्ष्यति च—'अङ्गप्रधानवत्यां भावनायां युगपत्पुरुषनियोग' इति। मीमांसा चेतिकर्तव्यतात्वेनाङ्गम्। तदुक्तं—'धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यती'ति। अतो वैध एवायं शास्त्रारम्भ इति सिद्धान्तकोट्युपपत्तिः॥ **नन्वेवं** सति न प्रयोजनस्य वाक्यार्थत्वं स्यात् । अध्ययनविधिदृष्टार्थत्वप्रतिपादनस्यैव वाक्यार्थत्वावगमात्। ततश्च मीमांसायाः प्रयोजनं वक्तुमेतत्सूत्रमिति भाष्यं नोपपद्येत । नैष दोषः । मीमांसारम्भसिद्ध्यर्थमिह दृष्टार्थत्वं प्रतिपाद्यत इति फलतः प्रयोजनपरत्वाभिधानं तदप्रतिपादने च शास्त्रारम्भानुपपत्तेः सूत्रस्य शास्त्रादावनन्वय एव स्यात्। अतोऽध्ययनविधिदृष्टार्थत्वे सूत्रतात्पर्ये सति विचारस्य कर्तव्यतोपपत्तौ धर्मज्ञानस्य प्रयोजनत्वे फलिते सूत्रस्य तदुक्तिवचनत्वोपपत्तिः। अतो यत्कैश्चिदुक्तं—नात्र प्रयोजनं पदेनोपात्तम्, नचापदार्थस्य वाक्यार्थत्वम्, नचावाक्यार्थे तात्पर्यम्। प्रयोजनपरत्वे च कर्तव्यतानुपदेशात्, अथातःशब्दयोरन्वय इति तदपास्तम् । फलतस्तस्य प्रयोजनपरत्वात्, वाक्यार्थस्यैवान्यपरत्वे अनन्वितपदार्थकत्वचोद्यानवकाशादित्यलम्। एवं विचारस्वरूपमुपवर्ण्य पूर्वपक्षमारभते—**तत्रेति**। प्रमाणान्तरसिद्धत्वादेवार्थज्ञानार्थत्वं न युक्तमित्यर्थः। **नन्वेवमानर्थक्यापत्तिरित्यत** आह—**कल्प्यस्त्विति**। तुशब्दः सिद्धान्तापेक्षयातिशयद्योतनार्थः। सिद्धान्तेऽपुरुषार्थरूपस्यार्थावबोधस्य भाव्यत्वं, अत्र तु पुरुषार्थरूपस्य स्वर्गस्य। एवंच चेतनप्रवर्तनात्मकविध्युपपत्तिरिति। पूर्वार्धं व्याचष्टे—**स्वाध्यायेति**। न तावदयमपूर्वविधिः। वेदाध्ययनमर्थज्ञानहेतुः अध्य-

प्रमाणान्तरविरोधात्। तद्वदिहापि ज्ञानस्याध्ययनमन्तरेणापि दर्शनात्तत्स्वरूपे नियमासंभवात् क्रत्वपूर्वेष्वेवाध्ययननियमो विधातव्यः। अधीतैरेव वेदैरवगतानि कर्माणि फलदानीति। नचैवं युक्तम्। अक्रत्वर्थत्वादध्ययनस्य अनारभ्याधीतत्वात् श्रुत्याद्यभावाच्चाक्रत्वर्थत्वम्। तस्माद्-दृष्टार्थमेव स्वाध्यायाध्ययनमित्यध्ययनमात्रादेव समाप्ते शास्त्रार्थे गुरुगृहात्समावर्तितव्यमिति प्राप्तेऽभिधीयते—'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना॥ विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति॥' ॥ यदुक्तं—ज्ञानस्वरूपे क्रत्वपूर्वे वा न नियमः संभवतीति तत्राभिधीयते—नोभयथापि ब्रूमः। कथं तर्हि योऽयमग्निहोत्रादिष्वधीतवेदानां त्रैवर्णिकानामेवाधिकारो नानधीतवेदानां शूद्राणामित्यधिकारनियमः स प्रयोजनमध्ययनविधेः॥ ॥ तथाहि असत्यध्ययनविधावग्निहोत्रादिशास्त्राणि विद्वांसमलभमानान्यविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासंभवाद्विद्यामाक्षिपन्त्यविशेषाच्चतुरो वर्णानधिकुर्युः। सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो भवति न तुरीयादेः॥ ॥ तथाहि—'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्य'मिति द्वितीयानिर्देशादुपनयनसंस्कृतास्त्रैवर्णिकाः किमस्माभिः कर्तव्यमित्यपेक्षन्ते। तत्संनिधौ चाध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षते। तत्रापेक्षासंनिधियोग्यत्वैरेवं विज्ञायते—त्रैवर्णिकैरेवोपनीतैरक्षरग्रहणेनाध्ययनादिपरम्परयार्थज्ञानं कर्तव्यमिति। एवंच फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम्, अध्ययनमपि दृष्टार्थज्ञानार्थम्, अर्थज्ञानं त्वनुष्ठानौपयिकत्वात्प्रसिद्धफलकमेवेति सर्वेषां फलवत्त्वम्।

अध्ययनाधिकारनियमः।

एवंच त्रैवर्णिकेषु विद्वत्सु लब्धेषु नाग्निहोत्रादिविधयश्चतुर्थवर्णस्य विद्यामाक्षिपन्ति, किंतु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति। सोऽयमधिकारनियमोऽपशूद्राधिकरणे वक्ष्यमाणोऽध्ययनविधि-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

यनत्वात् भारताध्ययनवदिति प्रमाणान्तरेणैव प्राप्तत्वात् अप्राप्ते शास्त्रस्यार्थवत्वादित्यर्थः। नाप्यवघातवन्नियमविधित्वमित्याह—**नचेति**। कथं नचेत्यपेक्षायामाह—**अक्रत्वर्थत्वादिति**। अनारभ्याधीतत्वेनाध्ययनस्याक्रत्वर्थत्वादित्यर्थः। पर्णतावद्भविष्यतीतिचेत् नेत्याह—**श्रुत्याद्यभावादिति**। ननु सर्वथा फलाश्रवणे विश्वजिन्न्यायेन तत्कल्पनं, श्रूयते चात्र फलं 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवती'ति क्रतुफलावाप्तिः। 'यद्दचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा अभिवहन्ति यद्यजुराहुतिभिरेव तद्देवांस्तर्पयति ते पितरो देवाश्चैनमध्येतारं तृप्ता आयुरादिभिस्तर्पयन्ती'त्यायुरादिप्राप्तिः। तथा 'यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्। आहैव स नखाग्रेभ्यः परमं तप्यते तप' इति तपःफलप्राप्तिः कथमर्थवादात्फलकल्पनमितिचेत्। निर्देशात्प्रतिष्ठावदिति ब्रूमः। श्रुतपरित्यागस्यायुक्तत्वात्। अतो न स्वर्गकल्पना युक्तेति। मैवम्। एतत्फलश्रुतेर्जपयज्ञाध्ययनगोचरत्वात् 'अहरहः स्वाध्यायमधीयीते'ति विध्यन्तरश्रवणात्। 'यं यं क्रतुमधीयीते'-त्याद्युपक्रम्य 'नित्यं स्वाध्यायवान्द्विजः' इत्युपसंहारात्। वेदाक्षरस्वीकारार्थत्वे तु प्रथमाध्ययनेऽध्ययनविधिविहिते न किंचित्फलं श्रूयते यतो निर्देशादिति स्यात्। अतो दृष्टार्थमेवाध्ययनमिति। सिद्धान्तं प्रतिजानीते—**इति प्राप्त इति**। यदुक्तमध्ययनस्यार्थज्ञानार्थतायाः प्रमाणान्तरसिद्धत्वाद्विधेरानर्थक्यमिति तत्परिहरति—**विधेश्चेति**। पूर्वपक्षोक्तदूषणमनूद्य परिहरति—**यदुक्तमिति**। स्वाभिप्रेतं नियमं प्रश्नपूर्वकमुपपादयति—**कथं तर्हीति**। नन्वध्ययनविधौ त्रैवर्णिकानुपादानात्कथं त्रैवर्णिकाधिकारनियमसिद्धिरित्याशङ्कायामाह—**तथाहीति**। उपनयनविध्येकवाक्यतया त्रैवर्णिकलाभ इति भावः।

**नन्वेवं**रूपाधिकारनियमस्यापशूद्राधिकरणन्यायसिद्धत्वान्नाध्ययनविधिप्रयोजनत्वमित्याशङ्क्याह—**सोऽयमिति**। तत्राप्यध्ययनविधिवशादेव तन्नियमसिद्धिरित्यर्थः। एतच्च संभवादुक्तम्। वस्तुतस्त्वपूर्वविधिस्वीकारेण पूर्वपक्षोक्तदोषपरिहारान्नियमार्थत्वं संभवति। अनारभ्याधीतस्यापि *सामर्थ्यात्क्रत्वर्थत्वोपपत्तेः। यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतया सामर्थ्येन किंचित्कल्पयितुमारभ्यते तावत्स्वाध्यायोऽध्येतव्य इति प्रत्यक्षया श्रुत्याध्ययनमेव तदुपायत्वेन विधीयते। लिङ्गतः शीघ्रं प्रवृत्तेः उपनयनप्रक्रमाधीतत्वाच्च। तदेकवाक्यतयाधिकारनियमोऽपि सिद्ध्यति। अथ तर्ह्यपूर्वविधिरेवायं जात इति नियमभावानुपपत्तिः। नैष दोषः। फलतस्तदुपपत्तेः। अपूर्वविधित्वे सत्युपायान्तरानाक्षेपनान्नियमः फलति। परिसंख्यावत्। वाक्यार्थत्वे हि परिसंख्यायाः स्वार्थहानादिदोषः प्रसज्येत। अतोऽपूर्वविधित्वेनैव निस्तारः। अतोऽत्रापि न

प्रसादलभ्य इति फलवानेव विधिः । तेनार्थज्ञानावसानमध्ययनमध्ययनविधिना विधीयत इति विचारमन्तरेण तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपंस्तद्विरुद्धं स्मार्तं स्नानं बाधत इति सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति ॥ * ॥ केचित्पुनराचार्यकरणविधिप्रयुक्तत्वमध्ययनस्याङ्गीकृत्य किमाचार्यकसिद्धिरेवाध्ययनस्य प्रयोजनमुतार्थज्ञानमिति विचार्य अन्तरङ्गत्वादर्थज्ञानमित्याहुः । किं पुनः कारणमाचार्यकरणविधिप्रयुक्तत्वेऽध्ययनस्य, अध्ययनविधेरधिकारिशून्यत्वादाचार्यकरणविधिप्रयुक्तया चात्मलाभे विश्वजिदादिवत्फलकल्पनानुपपत्तिः । कः पुनराचार्यकरणविधिः, कथं वा तेनाध्ययनस्य प्रयुक्तिः । उच्यते—'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ॥ सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति स्मृत्यनुमितः । 'उपनीयाध्यापनेनाचार्यकं कुर्या'दित्याचार्यकरणविधिः । अत्र चाध्यापनमाचार्यत्वसाधनम् । उपनयनं तु क्त्वाप्रत्ययात्तस्यैवाङ्गम् । तत्र केन द्वारेणाध्यापनस्योपकरोतीत्यपेक्षायां उपनेयासत्तिरेवास्य द्वारमङ्गीक्रियते लिङ्गात् । तदुपनेयोऽपि नाकिंचित्करोऽङ्गमिति तद्व्यापारापेक्षायामुपनयनं प्रक्रम्य विहितमध्ययनमध्यापनोपकारित्वादुपनीतस्य व्यापारत्वेनाध्यवसीयते । तदेवं स्वाङ्गभूतमुपनयनं प्रयुञ्जानोऽध्यापनविधिस्तद्द्वारेणाध्ययनं प्रयुङ्क्ते ॥ * ॥ तदेतदनुपपन्नम् । तथाहि—नियोगार्थस्याध्ययनस्याचार्यकप्रयोजनताऽर्थज्ञानप्रयोजनता वा न शक्यते शास्त्रेण बोधयितुं साध्यद्वयस्यैकत्रासंभवात् । नियोगार्थतैव शास्त्रेण बोध्यते अर्थज्ञानार्थतायां त्वनुज्ञामात्रमितिचेत् तथाप्यर्थद्वयं स्यादेव ॥ * ॥ किंचैवं सकृदुच्चरितस्य लिङ्प्रत्ययस्य विध्यर्थत्वमनुज्ञार्थत्वं चेति वैरूप्यमपि स्यात् तेन संशय एवानुपपन्नः । तथा सिद्धान्तोऽप्यनुपपन्न एव—प्रमाणान्तरसिद्धत्वादर्थज्ञानार्थत्वं न

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

नियमो वाक्यार्थः किंत्वपूर्वविधेः फलमिति न पूर्वपक्षोक्तदोषावकाशः । नचैतावताध्ययनस्य क्रत्वङ्गतापत्तिः । तदापादितज्ञानस्यैव क्रत्वङ्गत्वात् । यदेवेत्यादिना तस्यैव क्रत्वङ्गत्वबोधनात् । अध्ययनं तु ज्ञानाङ्गमेव । यथाऽऽधानसाध्यानामग्नीनां क्रत्वर्थत्वेऽपि नाधानस्य क्रत्वर्थत्वं एवमिह ज्ञानस्य क्रत्वर्थत्वेपि नाध्ययनस्य क्रत्वर्थत्वमिति सर्वं समञ्जसम् । फलितमाह—**तेनेति** । अयंच ग्रन्थकारस्याभिप्रायोऽस्माभिरथवेत्यादिना पूर्वमेव प्रकटीकृतः । **नन्वेवं** स्तोभादीनामनर्थकानामध्ययनं कथमर्थज्ञानार्थं स्यात् । नैष दोषः । गीतिकालोपलक्षकत्वेनैव तेषामर्थवत्त्वोपपत्तेः । अध्ययनोपात्तेन स्वाध्यायेन यच्छक्नुयात्तत्कुर्यादित्येकया वचनव्यक्त्या सर्वेषां यथासामर्थ्यं विनियोगकल्पनात् । एतच्चार्थवादाधिकरणे विशेषतोऽस्माभिर्निरूपणीयमिति नेह प्रतन्यते । उपसंहरति—**इतीति** । एवं स्वमतेन पूर्वोत्तरपक्षावुपपाद्य एकदेशिमतेन तौ दर्शयितुमाह—**केचिदिति** । आचार्यकस्य पुरुषान्तरगामित्वेन बहिरङ्गत्वादध्ययनप्रयोजनत्वमेव कथमितिचेत् । न । प्रथमावगतत्वादिति ब्रूमः । अध्ययनमन्तरेण चाध्यापनस्यैवासिद्धेः । अर्थज्ञानं तु पश्चाद्भावित्वान्न प्रयोजनम् । **अन्तरङ्गत्वादिति** । अध्ययनकर्तृगामित्वेनान्तरङ्गत्वादित्यर्थः । प्रथमावगतत्वात्तत्प्रयोजनमितिचेन्न । प्रथमावगतत्वेऽपि तस्य प्रयोजनत्वापरिकल्पनात् । अकल्पितेऽपि तस्य प्रयोजनत्वेऽध्ययनानुष्ठानसंभवात् नियोग एव शब्दादवगतः प्रयोजनं स्यान्नार्थज्ञानमितिचेन्न । अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात् । फलकल्पनां निराकरोति—**आचार्येति** । फलकल्पनानुपपत्तेरर्थज्ञानार्थत्वं पर्यवस्यतीति भावः । अचार्यकरणविधिनाध्ययनस्य प्रयुक्तिमुपपादयति—**अत्रेति** । क्त्वाप्रत्ययेनाध्यापनसमानकर्तृकमवगम्यमानं तस्यैवाङ्गमित्यर्थः । *तच्छेषत्वात्तेन तत्प्रयुक्तिरुचिता नत्वध्ययनस्येत्याशङ्क्याह—**तदेवमिति** । उक्तरीत्या परम्परया तत्प्रयुङ्क्त इत्यर्थः । दूषयति—**तदेतदिति** । **नियोगार्थतैवेति** । नियोगस्यैव शब्दादवगम्यमानत्वादध्ययनप्रयोजनत्वमिति भावः । **तथापीति** । अर्थज्ञानस्यापि प्रतीयमानत्वात्प्रयोजनत्वमिति भावः । **प्रमाणान्तरेति** । 'अप्राप्ते शास्त्रमर्थव'दिति न्यायात्प्रमाणान्तरसिद्धस्य न शास्त्रविषयत्वमित्यर्थः । *विध्यर्थवत्त्वाय नियमाङ्गी-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

त्यर्थः । **सामर्थ्यादिति** । अर्थावबोधद्वारा क्रतुनिवर्तनसामर्थ्यादित्यर्थः । **तच्छेषत्वादिति** । उपनयनस्याध्ययना-

---

१ प्रकारेण.

शास्त्रगोचरतामनुभवतीति । तत्र यदेवास्मदभिप्रेतं विधेर्नियमार्थत्वं महता प्रयत्नेन भवद्भिर्दूषितं तदेव भवद्भिरपि मुकुलजैरनन्यगतिकत्वादाश्रयणीयमापन्नम् । नियमानङ्गीकारे च पूर्वपक्ष एव श्रेयानापद्यते । आचार्यत्वस्यादृष्टत्वेन प्रयोजनतोपपत्तेः । अर्थज्ञानार्थत्वे चाध्ययनं स्वाध्यायसंस्कारो नियोगार्थत्वे तु प्रधानकर्मेति वैरूप्यमपि स्यात् ॥ * ॥ अर्थाज्ज्ञातमर्थज्ञानं प्रयोजनं न शास्त्रत इतिचेत्, आचार्यत्वमपि प्रयोजनं न स्यात् तस्याप्यर्थाज्ज्ञातत्वात् । स्मृतिबाधेन च स्नानोत्कर्षो न स्यादशास्त्रस्वीकृतत्वाद्विचारस्य ।

अध्ययनविधौ नियोज्यकल्पना ।

किंच—'नियोज्यः कल्पनीयोऽत्र विध्यर्थानुपपत्तितः ॥ नचोपनयनस्याङ्गभावोऽस्त्यध्यापनं प्रति। द्वितीयाश्रुतिसामर्थ्यात्सा माणवकसंस्क्रिया ॥ तथासत्यन्तरङ्गत्वादङ्गमध्ययनस्य तत्' ॥ * ॥ यत्तावन्नियोज्याभावादप्रयोजकत्वमध्ययनविधेरिति, तदयुक्तं, अभावासिद्धेः, अश्रुतस्यापि विश्वजिदादिवत्कल्पनात् । कार्यं हि विध्यर्थः, संबन्धिशब्दश्चायं कार्यमिति, कस्यचिद्धि किंचित्कार्यं भवति न सर्वं सर्वस्य, अतः कस्येदं कार्यमित्यस्ति संबन्ध्यपेक्षा, सावश्यमध्याहृतेन केनचिन्निवर्तनीया—अस्येदं कार्यमिति, यस्येदं कार्यं स एव नियोज्य इत्युच्यते ॥ * ॥ यद्यपि कथंचित्परप्रयुक्तानुष्ठानादेवात्मलाभः स्यात्, तथापि न तावता कार्यत्वं सिध्यति । नहि कृतिसाध्यतामात्रं कार्यत्वम् । किं तर्हि, यत्कृतिसाध्यं कृतिंप्रति प्रधानभूतं तत्कार्यमित्युच्यते । प्राधान्यं च कृतेस्तदुद्देश्येन प्रवृत्तिः, ततश्चाध्ययननियोगेन कार्येण भवतावश्यं पुरुषव्यापारोद्देश्येन भवितव्यम् ॥ * ॥ नचासति नियोज्ये तदुद्देशेन कश्चित्प्रवर्तेत । अध्यापनविधिना हि प्रवर्त्यमानो माणवकः कथंचिदध्ययनमात्रमनुतिष्ठेन्नत्वपूर्वमुद्दिशेत् । नहि तस्य तदुद्देश्यं प्रमाणाभावात् । प्रयाजाद्यपूर्वाणि दर्शपूर्णमासापूर्वोपकारित्वात्तदधिकृतेन पुरुषेण तत्सिद्ध्यर्थमुद्दिश्य क्रियमाणानीति युक्तं यदसत्यपि साक्षान्नियोज्योपादाने कार्यत्वं लभन्ते, अध्ययननियोगस्य तु नान्यौपयिकत्वं यतस्तद्रूपेणोद्देश्यता स्यात् । अर्थज्ञानस्य च नियमफलत्वेन नियोगापेक्षत्वात् । तस्मादस्य कार्यत्वसिद्धयेऽवश्यं नियोज्यः कल्पनीयः ॥ * ॥ यच्चाध्यापनविधेरुपनयनद्वारमध्ययनप्रयोजकत्वमुक्तम्, तदप्ययुक्तम्—उपनयनप्रयुक्तेरेवाभावात्, तद्द्वारेणाध्यापनप्रयुक्तिर्दूरापास्ता । क्त्वाप्रत्ययेन हि समानकर्तृकत्वमेवोच्यते तेन चैकप्रयोगता कल्प्यते, अङ्गाङ्गिभावस्त्वेकप्रयोगतावशात्कल्पनीयः, द्वितीयया तु सा-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

कारेचास्मत्पक्षप्रवेश इत्याह—**तत्रेति** । प्रकारान्तरेणापि वैरूप्यमाह—**अर्थेति** । **अर्थाज्ज्ञातमिति** । शास्त्रतस्तु नियोग एव प्रयोजनं, नियोगार्थत्वस्यैव शास्त्रेण बोधनादिति भावः । अशास्त्रीयत्वे चार्थज्ञानस्य तत्सिद्ध्यर्थस्य विचारस्याप्यशास्त्रीयत्वात्स्नानोत्कर्षकत्वं न स्यादित्याह—**स्मृतीति** ।

इदानीमेकदेश्युक्तानि स्वपक्षदूषणानि परिहरति—**किंचेति** । प्रथमार्धं व्याचष्टे—**यत्तावदिति** । कल्पनामुपपादयति—**कार्यंहीति** । नियोज्यकल्पनां विनापि नियोगस्वरूपसिद्धिमाशङ्क्याह—**यद्यपीति** । परप्रयुक्तं अध्यापनप्रयुक्तं यदनुष्ठानं तत एवाध्ययननियोगस्यात्मलाभ इत्यर्थः । कथं न सिद्ध्यत्यत आह—**नहीति** । अध्यापनविधेस्त्वध्यापननियोग एवोद्देश्यो नाध्ययननियोगः अनन्यपरकृत्युद्देशस्यैव च कार्यत्वादिति भावः । अस्त्वेवं कथमेतावता नियोज्यकल्पनेत्यत आह—**नचेति** । अतो नियोज्यकल्पनमावश्यकमिति भावः । एतदेवोपपादयति—**अध्यापनेति** । **अध्ययनमात्रमिति** । तेन विनाध्यापनविध्यनिर्वाहादित्यर्थः । तस्य माणवकस्य । असावध्ययननियोगः । प्रयाजापूर्ववत्कार्यत्वमाशङ्क्याह—**प्रयाजादीति** । अर्थज्ञानौपयिकत्वमाशङ्क्याह—**अर्थेति** । अध्ययनफलत्वेन तन्मात्रापेक्षत्वमिति भावः । निगमयति—**तस्मादिति** । द्वितीयार्धं व्याख्यातुमाह—**यच्चेति** । उपनयनस्याध्यापनाङ्गत्वे शेषिणा शेषप्रयुक्तिः स्यात् नत्वेवमस्तीति भावः । एवमप्यङ्गाङ्गिभावः सेत्स्यतीत्याशङ्क्याह—**द्वितीययेति** । तृतीयार्धव्याख्यानं चैतत् । 'वसन्ते ब्राह्मण'मित्यादिद्वितीययेत्यर्थः । यथा 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

ङ्गत्वाद् शेषिणाध्यायेन तत्प्रयुक्तिरुचिता । अध्ययनस्य तु तदनङ्गत्वात्कथं तेन तत्प्रयुक्तिरित्यर्थः । **विध्यर्थेति** ।

क्षादङ्गित्वमेवोच्यते, अतो यथा त्रिवृता यूपपरिव्याणं यूपार्थं नोपाकरणार्थं एवमुपनयनमपि माणवकसंस्कारार्थं नाध्यापनार्थम् । स्मृतिगतश्च क्त्वाप्रत्ययः, प्रत्यक्षवेदगता तु 'वसन्ते ब्राह्मण'मिति द्वितीया, अतोऽपि माणवकार्थत्वम् ॥ * ॥ भवतु माणवकसंस्कारस्तद्द्वारेण त्वध्यापनाङ्गं नाध्ययनाङ्गमितिचेत्, मैवम्, अन्तरङ्गत्वादध्ययनस्य तादर्थ्यमेव संस्कारस्य युक्तम् । अध्ययनमपि फलवदध्यापनमपि तयोः कस्यायं माणवकसंस्कारोऽङ्गं भवत्वित्यपेक्षायामध्यापनस्य पुरुषान्तरगामित्वेन बहिरङ्गत्वान्माणवकगताध्ययनार्थत्वमेव युक्तम् । यथैव ह्यध्ययनस्याचार्यकसिद्धिप्रयोजनतामनादृत्य 'वेदमधीत्य स्नाया'दिति स्मृतिं बाधित्वान्तरङ्गत्वादर्थज्ञानार्थतैवाश्रीयते, तथोपनयनस्याप्यध्ययनार्थता वेदितव्या ॥

व्याकरणस्मृत्योपनयनस्याध्ययनाङ्गत्वम् ।

स्मरणादपि पाणिनीयादध्ययनाङ्गतैवोपनयनस्यावगम्यते । अध्ययनाङ्गता हि स्मरन्नाचार्यकरणे नयतेरात्मनेपदं विधत्ते, अध्यापनाङ्गत्वे हि कर्त्रभिप्रायत्वात्क्रियाफलस्य ञित्वादेवात्मनेपदं सिध्येत् । 'उपनीय तु यः शिष्य'मिति क्त्वाप्रत्ययो हि कथंचित् 'दर्शपूर्णमासाभ्यामिष्ट्वे'तिवदसत्यप्यङ्गाङ्गिभावेऽवकल्प्यते पुनर्विधानं चात्मनेपदस्यात्यन्तानर्थकम्, तस्मादध्ययनाङ्गमुपनयनं स्यात् ॥ * ॥ न स्यात् । तज्जन्यः संस्कारो हि माणवकसमवायी । सत्यम्, माणवकसमवेतोऽपि न तदर्थः, कर्त्रर्थत्वं च फलस्य कर्त्रभिप्रायत्वं नतु तत्समवायः, अन्यथाहि 'अग्नीनादधीते' त्यात्मनेपदं न स्यात्—आधानफलस्याहवनीयत्वादेरग्निसमवेतत्वेन कर्तृसमवायाभावात् । इयं च स्मृतिः 'उपनीय तु यः शिष्य'मिति, अतो बलीयसी द्वितीया श्रुतिः, तस्मान्नाध्यापनाङ्गमुपनयनमिति न तद्द्वारेणाध्यापनस्य प्रयुक्तिः ॥

प्राभाकरमतखण्डनम् ।

यच्च 'उपनीतस्य व्यापारापेक्षायामुपनयनं प्रक्रम्य विहितमध्ययनं तद्व्यापारत्वेनाध्यवसी-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

परिवीयाग्नेयं सवनीयं पशुमुपाकरोती'ति यूपपरिव्याणं यूपार्थं द्वितीयानिर्देशात् संनिधानाच्च । एवमुपनयनं माणवकसंस्कारार्थं नाध्यापनार्थमित्यर्थः । श्रुत्याध्यापनाङ्गत्वमिति चेन्नेत्याह—**स्मृतीति** । अत्राशङ्कते—**भवत्विति** । परिहरति—**मैवमिति** । अध्ययनसमानाधिकरणत्वादुपनयनस्याध्ययनार्थत्वमेव युक्तं, न बहिरङ्गाध्यापनार्थत्वमित्यर्थः । एतदेवोपपादयितुमाह—**अध्ययनमिति** ।

इतश्चाध्ययनाङ्गमित्याह—**स्मरणादपीति** । 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः'इति पाणिनीयसूत्रादित्यर्थः । एतदुक्तं भवति—अध्यापनाङ्गत्वे हि कर्त्रभिप्रायत्वात्क्रियाफलस्य 'स्वरितञितः'इत्यनेनैव सूत्रेण ञित्वादेवाचार्यकसाधनेऽप्यर्थे वर्तमानान्नयतेरात्मनेपदं प्राप्नोतीति 'संमानना'दिसूत्रमनर्थकं स्यात् । अतः संमाननादिसूत्रेणाचार्यकरणे यदात्मनेपदविधानं तदकर्तृगामिन्यपि क्रियाफले यथात्मनेपदं स्यादित्येवमर्थमिति । यथाह वृत्तिकारः—'अकर्त्रभिप्रायार्थः पुनरारम्भ' इति क्त्वाश्रुत्योपनयनस्याध्यापनाङ्गत्वमाशङ्क्याह—**उपनीयेति** । सूत्रस्य वाक्यत्वात्तदपेक्षया क्त्वाप्रत्ययश्रुतेर्बलीयस्त्वमिति शङ्काभिप्रायः । कालार्थसंयोगेऽपि क्त्वाप्रत्ययोपपत्तिरिति परिहाराभिप्रायः । उपनयनाङ्गत्वे पूर्वमर्थादुक्तमेव संमाननादिसूत्रानर्थक्यमिदानीं प्रकटीकरोति—**पुनरिति** । वस्तुतस्तु पुनरित्यादिग्रन्थः सिध्येदित्यस्यानन्तरं द्रष्टव्यः । उपनीयेत्यादिग्रन्थस्तु वेदितव्येत्यस्यानन्तरं द्रष्टव्यः । आनर्थक्यं परिहर्तुं शङ्कते—**न स्यादिति** । यस्मादुपनयनजन्यः संस्कारो माणवकसमवायी तस्मादकर्त्रभिप्रायार्थः पुनरारम्भोऽर्थवानित्यर्थः । परिहरति—**सत्यमिति** । न तदर्थः न माणवकार्थः । यदि माणवकार्थः स्यात्तदा अकर्त्रभिप्रायार्थः पुनरारम्भोऽर्थवान्स्यात् किंतूपनयनकर्त्रर्थः । ततश्च ञित्वादेवात्मनेपदं स्यादिति भावः । **ननू**पनयनकर्तर्यसमवेतस्य संस्कारस्य कथं कर्त्रर्थत्वं तत्राह—**कर्त्रर्थत्वमिति** । इतश्च नाध्यापनाङ्गत्वमित्याह—**इयंचेति** । निगमयति—**तस्मादिति** । फलितमाह—**इतीति** ॥

पूर्वपक्षोक्तं दूषणान्तरमनूद्य परिहरति—**यच्चेत्यादिना** । नन्वस्त्वध्यापनाङ्गमेवाध्ययनं किमेतावतानिष्टं स्यादत आह—

यत'इति, तदप्यबुद्धिपूर्वकम्—एवं हि वदताध्यापनाङ्गमध्ययनमित्युपपादितं भवति। यदाह्यध्यापनार्थत्वेनोपनीतस्य माणवकस्य तदुपयोगिव्यापारापेक्षायामध्ययनविधिरध्ययनं तदुपयोगिव्यापारतया विधत्ते—त्रैवर्णिकैरुपनीतैरध्यापनौपयिकव्यापारापेक्षैरध्ययनव्यापारः कर्तव्य इति तदापि स्पष्टमेवाध्यापनशेषोऽध्ययनमिति दूरनिरस्तमर्थज्ञानार्थत्वमिति सुनिरूपितो वाक्यार्थः॥ * ॥ अथाध्ययनविधिरध्ययनमर्थज्ञानार्थतया विधत्ते नाध्यापनौपयिकतया, तदाह्यध्ययनस्य तदौपयिकत्वं केन प्रमाणेन गम्यते, नह्यत्र प्रत्यक्षादीनि क्रमन्ते। संनिधानादिति चेत्, न संनिधानं नाम स्वयं प्रमाणं शब्दस्य त्वर्थं प्रतिपादयतः संनिध्यपेक्षायोग्यत्वानीतिकर्तव्यता नेत्रस्येवोन्मीलनम्। शब्दश्चेदध्यापनौपयिकतया विदध्यात् नार्थज्ञानार्थता सिध्येत्, अर्थज्ञानार्थतया विधानेऽध्यापनौपयिकता न सिध्येत्। अतो नोपनयनसंनिधौ 'स्वाध्यायोऽध्येतव्य'इति विहितस्याध्ययनस्योपनयनद्वाराध्यापनविधिना प्रयुक्तिसंभवः॥ ॥ यदि परमध्यापनस्याध्ययनमन्तरेणासंभवात्तदर्थाध्ययनमाक्षिप्यते, तथास्त्यविहितेन लौकिकेनाध्ययनेन तत्संभवान्न विहितस्याध्ययनस्य नियोगतस्तत्प्रयुक्तिः। नच प्रयुक्तिलाघवादपि विहितोपजीवनम्। तदुपजीवनेऽपि प्रयुक्त्यनवलोपात्। विहितमप्यध्ययनमध्यापनविधिनैव त्वन्मते प्रयुज्यते न स्वविधिना। तस्माल्लौकिकमेवाध्ययनमुपनीतानामध्यापनविधिराक्षिपेत्। विधिविहितमध्ययनं परप्रयुक्त्यभावादधिकारं प्रकल्पयेत्॥ ॥ किंच यद्युपनयनमध्यापनाङ्गं ततोऽध्ययनविधिरर्थज्ञानार्थः सन्नाध्यापनार्थतयोपनीतैस्त्रैवर्णिकैः संबध्येत, येऽध्यापनार्थतयोपनीतास्त्रैवर्णिकास्तदुपयोगिव्यापारमपेक्षन्ते तेऽर्थज्ञानार्थमधीयीरन्—इत्यसंबद्धमेव स्यात्। ततश्चोपनीतैरसंबध्यमानोऽध्ययनविधिश्चतुर्णामपि वर्णानां स्यादिति शूद्राधिकारप्रसङ्गः। तस्मादुपनीतानां प्रयोजनापेक्षिणामध्ययनकरणिकार्थज्ञानभावना विधीयत इत्यध्ययनाङ्गमेवोपनयनं, स्वविधिप्रयुक्तं चाध्ययनम्। प्रपञ्चेनायं पक्षो

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**इतीति**। अध्यापनार्थत्वेऽध्ययनस्यार्थज्ञानार्थत्वं न स्यादित्यर्थः। ततः किमत आह—**इतीति**। इदानीं तन्मतेनैवार्थज्ञानार्थत्वमाशङ्क्य निराकरोति—**अथेत्यादिना**। तदौपयिकत्वं अध्यापनौपयिकत्वम्। **केनेति**। अध्ययनविधेरर्थज्ञानार्थतया विधायकत्वस्योक्तत्वादिति भावः। अध्येतव्य इत्यस्य विधायकत्वमाशङ्क्याह—**शब्दस्यत्विति**। प्रकारान्तरेणाध्यापनप्रयुक्तिमाशङ्क्य निराकरोति—**यदीति**। **तत्प्रयुक्तिरिति**। तेनाध्यापनेन विहितस्यैव प्रयुक्तिर्लभ्यत इत्यर्थः। विहितप्रयुक्त्यलाभेच प्रतीयमानस्याप्यर्थस्याविवक्षितत्वादविवक्षितस्य च विचारानर्हत्वात् अनारभ्यमेव शास्त्रं स्यात् कथंचिदर्थविवक्षायां वा विधेरतत्परत्वान्न वैधत्वं विचारस्य सिद्ध्यति अवैधश्च न वैधं स्नानमुत्क्रष्टुमर्हतीति भावः। कथं चेत्यपेक्षायामाह—**तदिति**। लौकिकोपजीवनेऽपि प्रयुक्तिसंभवादित्यर्थः। इतोऽप्येवमित्याह—**विहितमिति**। अध्ययनविधिप्रयुक्त्यभावे च लौकिकमेवाक्षिपेदित्याह—**तस्मादिति**। अस्त्वेवं किमेतावतानिष्टं स्यादत आह—**विधीति**। परेणाध्यापनेन या प्रयुक्तिः सा विधिविहितस्य न लभ्यत इति कृत्वा विधिविहितमध्ययनं स्वतन्त्रमधिकारं कल्पयेदित्यर्थः। इतोऽपि नाध्यापनाङ्गमुपनयनमित्याह—**किंचेति**। नन्वस्तुनामैतदसंबद्धमिव अध्यापनाङ्गत्वं तूपनयनस्य सिद्धं तत्राह—**ततश्चेति**। अध्यापनाङ्गत्वे सतीत्यर्थः। अध्ययनाङ्गत्वे तु नैतद्दूषणमित्याह—**तस्मादिति**। यदा त्वध्ययनाङ्गमेवोपनयनं तदा न तद्द्वारेणाध्ययनस्य प्रयुक्तिः संभवति। नचाङ्गमाकृष्यमाणं प्रधानमाकर्षति प्रधानानामनङ्गवशवर्तित्वादिति। **ननु** नात्र मुख्यत्वेनाध्यापनविधिप्रयुक्तिर्निराकृता, नाप्यध्ययनस्य स्वविधिप्रयुक्तिरुपपादिता, उपनयनस्याध्यापनाङ्गत्वमात्रनिराकरणादत आह—**प्रपञ्चेनेति**। 'न निराकरणं ग्रन्थान्तरस्थमुपयुज्यते। अतस्तत्रत्यमेवैतत्संक्षेपेणोच्यते मया'। स्यादेतत् नियोज्याश्रवणान्नाध्ययनविधिरध्ययनस्य प्रयोजको भवितुं क्षमस्तस्मादध्यापनविधिप्रयुक्तिरङ्गीक्रियत इति। मैवम्। अध्यापनेऽपि तुल्यत्वात्। नहि 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यत्र नियोज्यः कश्चिच्छ्रुतः, तदश्रवणे चाध्यापनप्रयोजकत्वमपि न संभवति दूरेऽध्ययनप्रयुक्तिः। तत्राचार्यककामस्य नियोज्यत्वकल्पनेऽध्ययनविधावर्थज्ञानकामस्य नियोज्यत्वकल्पनं तुल्यम्। **ननु** ज्ञातेऽर्थे कामना स्यादज्ञाते वा। नाद्यः। ज्ञाते तदनुपपत्तेः। नहि ज्ञात एवार्थो ज्ञातुमिष्यते। न द्वितीयः। सर्वथा बुद्ध्यनारूढेऽर्थे जिज्ञासानुपपत्तेः। अतो नार्थज्ञानकामस्य नियोज्यता

न्यायरत्नमालायामेव निरस्त इत्युपरम्यते । तस्मात्पूर्वोक्त एव विचारः—किमदृष्टार्थमध्ययनमुताक्षरग्रहणादिपरम्परयार्थज्ञानार्थमिति ॥

अध्ययनविध्युपसंहारः ।

**अथवा नात्र किंचिद्विचार्येत, नावमिकन्यायेनैवाध्ययनस्याक्षरसंस्कारादिपरम्परयार्थज्ञानार्थत्व-**

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**संभवतीति** । नैषदोषः । केनचिद्रूपेणावगतस्य केनचिद्रूपेण जिज्ञासादर्शनात् । अत्रच धर्माधर्मयोरर्थानर्थहेतुत्वमात्रेणावगतयोर्विशेषरूपेणापरिज्ञातयोर्हानोपादानाशक्तेस्तत्परिज्ञानेच्छा संभवतीति धर्माधर्मज्ञानकामः स्वाध्यायमधीयीतेति नियोज्यलाभः । नैमित्तिकनिषेधाधिकारयोर्यद्यपीष्टानिष्टप्राप्तिपरिहारार्थता नास्ति तथापि विध्यर्थानुष्ठानसिद्ध्यर्थमेव तद्वाक्यार्थज्ञानमपेक्षितव्यम् । हन्त तर्हि प्रागपि वेदाध्ययनाद्धर्मजिज्ञासोपपत्तेस्तदानन्तर्यमनुपपन्नम् । न । जिज्ञासाभेदात् ।*यथाहुः—'जिज्ञासैकोपनीतस्य द्वितीयापठितश्रुतेः । ज्ञातविद्यान्तरस्यान्या या मीमांसापुरःसरे'ति अन्तिमजिज्ञासाया वेदाध्ययनानन्तर्योपपत्तिः । अतएवाह भाष्यकारः 'तादृशीं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यो या वेदाध्ययनमन्तरेण न संभवती'ति । विषयभूताध्ययनफलं ज्ञानं न नियोगजन्यमिति न तत्कामस्य नियोज्यत्वं नियोगफलस्यैव नियोज्यावच्छेदकत्वादितिचेत्, तर्हि आचार्यकमपि न नियोज्यविशेषणं स्यात् । तस्यापि विषयफलत्वात् । कश्चासावध्यापनविधिर्यत्प्रयुक्तमध्ययनं स्यात् । 'उपनीय तु *यः शिष्यं वेदमध्यापयेद्द्विजः' इत्यादिस्मृत्योपनीयाध्यापयेदाचार्यकसिद्ध्यर्थमित्येवंरूपं वचनमिति चेत् । न । एतस्याध्ययनविधिपरत्वात् । यथैव'अन्नाद्यकामं याजये'दित्यादिषु याजयतेः परः श्रूयमाणोऽपि विधिर्यागपर एव । याजयेदिति प्रयोजकव्यापारवचनशब्दस्य द्रव्यार्जनार्थप्राप्तर्त्विग्व्यापारानुवादत्वस्य वक्ष्यमाणत्वात् । एवमध्यापयेदित्यध्ययनविधिपर एव नाध्यापनविधिपरः, द्रव्योपायतयैव तस्य प्राप्तत्वात् । यथाहुः—'नाध्यापनमिदं वाक्यं विधातुं क्षमते यतः । द्रव्यार्जनार्थप्राप्तत्वाद्यच्छब्देन च संगतेः' । एवं'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'त्यत्राप्यष्टवर्षो ब्राह्मण उपगच्छेत्सोधीयीतेत्यध्ययनविधिरेव नाध्यापनविधिः । किंचात्र स्मार्तवाक्यसदृग्रूपं मूलमनुमीयते । इह पुनरध्यापनकर्तरि लौकिका आचार्यशब्दं प्रयुञ्जत इति सिद्धानुवादात्कथं कर्तव्यताश्रुतिरनुमातुं शक्यते । 'उपनीय ददद्वेदमाचार्यः स उदाहृतः' इत्यप्यनुवादो नात्र क्वचिदपि विधिगन्धः । किंचाप्रवृत्तप्रवर्तनं विधेरर्थः आचार्यके तु धनाद्यर्थं स्वयमेव प्रवृत्त इति किं तद्विधिनेत्युक्तमेव । यद्यपि 'विद्यादानेन सुमतिर्ब्रह्मलोके महीयते' इत्यादिभिर्विद्यादानात्मकमध्यापनं फलान्तरशेषतया विहितं भवेत् तथापि नाध्ययनस्य तत्प्रयुक्तिः । तत्र सर्वत्र नियोज्याश्रवणात् । नियोज्यतापि फलसाधनत्वश्रवणाद्भविष्यतीति चेत् । एवंरूपाधिकारमात्रस्याध्ययनेऽपि सद्भावात् । अत्र कश्चित् अर्थज्ञानं स्वयमपुरुषार्थत्वान्नाध्ययनस्य प्रयोजकं । ज्ञानसाध्यानि त्वग्निहोत्राद्यपूर्वाणि तद्द्वारेणाध्ययनस्य प्रयोजकानि भवन्ति । नच तेषां ज्ञानमङ्गं श्रुत्याद्यभावात् । उपकारकमात्रं तु भवति । आचार्यकस्य त्वध्यापनमङ्गमेव । अतस्तत्स्वाङ्गद्वारेण प्रयोजकम् । तस्मादध्यापनविधिप्रयुक्तमध्ययनमित्याह । तदयुक्तम् । यद्यपि न कर्माङ्गं ज्ञानं अध्ययनं तु ज्ञानाङ्गमेव, तेन च प्रयुज्यमानमध्ययनं शेषिप्रयुक्तमेव भवति, अध्यापनप्रयुक्तं तु न शेषिप्रयुक्तं भवति । अध्ययनस्य तदनङ्गत्वात् । उपकारकमात्रत्वेनैवाङ्गीकारात् यद्यपि ज्ञानं स्वरूपेणापुरुषार्थस्तथापि कर्मानुष्ठानौपयिकतया पुरुषैरर्थ्यमानत्वात्पुरुषार्थो भवति । आचार्यकमपि न स्वरूपेणाभिलषितम् । दक्षिणालाभसिद्ध्यर्थमेव तु पुरुषेणार्थ्यते[1] । अतो यथा तस्य प्रयोजकत्वमेवं ज्ञानस्यापि । अस्तुवाग्निहोत्रापूर्वमेव[2] ज्ञानद्वारेण प्रयोजकमन्तरङ्गत्वात्, नत्वध्यापनं पुरुषान्तरगामित्वात् । वस्तुतस्तु तदपि न प्रयोजकं, उत्तरविधिप्रयुक्तत्वे फलार्थितैव प्रवर्तिकेत्यापन्नम्, ततः शूद्रादेरप्यधिकारः प्रसज्येत फलार्थिताया अविशेषात् । 'विद्यादानेन सुमति'रित्येतदपि पुरुषार्थप्रापकविद्यादानाभिप्रायम् । नचाध्ययनस्य पूर्वपक्षे पुरुषार्थतास्तीति न ब्रह्मलोकप्राप्तिफलविद्यादानविधिवशादपि तस्य प्रयुक्तिः संभवति । तत्सिद्धं नाध्यापनविधिप्रयुक्तमध्ययनमित्यलमतिविस्तरेण । एवमेकदेशिमतं निराकृत्य पूर्वोक्तं स्वाभिप्रेतमेव विचारस्वरूपमुपसंहरति—**तस्मादिति** ॥

विचारस्य पौनरुक्त्यमाशङ्क्याह—**अथवेति** । **नन्व**ध्ययनस्य स्वाध्यायार्थत्वेऽध्ययनेन स्वाध्यायं भावयेदिति वाक्यार्थः

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**(गुरुमते)यथाहुरिति** । प्रथमं तावद्धर्माधर्मौ जिज्ञास्याविति कुलवृद्धेभ्यः श्रुत्वा तज्ज्ञानमिच्छन् तादर्थ्येन विहितमध्ययनं तेभ्य एवावधार्याधीते वेदैरव्युत्पन्नस्य वेदान्तज्ञानानुदयात्किमनेनोच्यते इति पुनरन्यादृशी जिज्ञासा जायते । ततो व्याकरणनिरुक्तादिश्रवणे यतते । तत्त्वार्थप्रतीतौ जातायामपि न्यायानवधारणात्संशयितो भवति ततो वाक्यार्थविशेषजिज्ञासा भवति । तदिदं जिज्ञासाद्वयमभिप्रेत्य 'अथातो धर्मजिज्ञासे'त्युक्तं नाविद्यारेयाजकरुणः प्रत्यत्वादिति । द्रव्यमर्जयित्वा ततो याजयेदध्यापयेत्प्रतिगृह्णीयाद्वेति वचनादित्यर्थः । **यः शिष्यमिति** । यच्छन्दोपबन्धाद्विधिशक्त्युपघात

१ पुरुषरूपेणार्थ्यते. २ होत्राद्यपूर्वमेव.

सिद्धेः। नवमे हि—साम्नामृगक्षराभिव्यक्तिद्वारेण स्तुत्युपयोगित्वदर्शनात्तादर्थ्यमेव नादृष्टार्थत्वमिति वक्ष्यते। तेनैव न्यायेनाध्ययनस्यार्थज्ञानार्थत्वसिद्धेरध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति सिद्धमेवैतत्प्रयोजनविवक्षया सूत्रकारेणोच्यते। यदाहुः—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजन'मिति। नत्वत्र कश्चिद्वेदवाक्यार्थो विचार्यते। तदप्याहुः—'नचात्र चोदनाव्याख्या गौरवं तत्र चोदित'मिति तत्सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति। सा चतुर्विधा—धर्मस्वरूप-प्रमाण-साधन-फलैः॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

स्यात्, ततश्च स्वाध्यायस्याध्ययनं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानि स्युः, अध्ययनस्य तु तं प्रत्युपादेयत्वविधेयत्वगुणत्वानीति अध्ययनस्य पुनर्ज्ञानार्थत्वेऽध्ययनेनार्थज्ञानं भावयेदध्ययनं च स्वाध्यायेनेति वाक्यार्थः। ततश्च स्वाध्यायस्याध्ययनं प्रत्युपादेयत्वादीनि स्युः। अध्ययनस्य तु तं प्रत्युद्देश्यत्वादीनीति। तथा स्वाध्यायस्यार्थज्ञानं प्रत्युपादेयत्वादीनि अध्ययनं प्रति संस्कार्यत्वेनोद्देश्यत्वादीनीति विरुद्धत्रिकद्वयम्। अत्रोच्यते—न स्वाध्यायोद्देशेनाध्ययनं विधीयते, नाप्यध्ययनोद्देशेन स्वाध्यायविधिः किंतु स्वाध्यायाध्ययनेन *विध्यन्तरापेक्षितं संपादयेदित्येकरूपैव वाक्यप्रवृत्तिः। अपेक्षितसंपादनं चाध्ययनस्य स्वाध्यायसंस्कारमुखेनैवेति स्वाध्यायस्य प्राधान्यमध्ययनस्य च तच्छेषत्वमिति न वैरूप्यम्। एवं स्वाध्यायस्यापि न वैरूप्यम्। अधीतेन स्वाध्यायेनार्थं जानीयादित्येकयैव वचनव्यक्त्या तत्परिहारात्। अतएव स्वाध्यायस्य संस्कार्यत्वेऽप्यर्थज्ञानं प्रत्युपादेयतया तद्गतैकत्वस्य विवक्षितत्वादेकशाखाध्ययनेऽपि अध्ययनशास्त्रार्थनिवृत्तिः सिध्यतीति शाखान्तराधिकरणे दर्शितम्। कथमेकेनैव वाक्येनोभयसिद्धिरिति चेत्। न। सामवदिति ब्रूमः। यथा 'साम्ना स्तुवीते'ति स्तुतौ विनियुक्तस्यापि साम्नः स्वाभाविकाक्षरसंस्कारत्वं न हीयते तद्वारेणैव स्तुतिसाधनत्वात्। नहि तत्रर्चो वाक्यान्तरेण विनियोगोऽस्ति। अथच तत्संस्कारत्वमेव साम्नो भवति। एवमध्ययनस्यापि स्वाध्यायं संस्कुर्वत एवार्थज्ञानजनकत्वं नान्यथा। अतएवंजातीयकं स्वभावतः संस्काररूपमपि संस्कार्योद्देशेनाविधानादर्थकर्माभिधानमपि लभते। ननु साम्नेति गीतिमात्रविनियोगेनर्चो स्तुतावविनियोगात् अनङ्गभूतानां च संस्कार्यत्वानुपपत्तिः। मैवम्। सामविनियोगेनैव सामर्थ्यादृचामपि स्तोत्रविनियोगोपपत्तेः। अतो दृष्टार्थत्वेऽप्यध्ययनविधेर्नियमार्थत्वान्नानर्थक्यमिति सिद्धम्। नच क्रत्वर्थेष्वेव नियमविधिर्न पुरुषार्थेष्विति वाच्यम्। पुरुषार्थेष्वपि *द्रव्यार्जनादिषु नियमविध्यभ्युपगमात्। अत्र तु पूर्वोक्तन्यायेनापूर्वविधित्वे सिद्धे फलत एव नियमो भवति। तस्मात् जपयज्ञपारायणक्रतुज्ञानसिद्धिप्रयोजनमध्ययनम्। अतएव नित्यम्। अवश्यानुष्ठेयजपयज्ञादिसाधनत्वात्। नावमिकमेव न्यायं विवृणोति—**नवमे हीति**। नन्वयमर्थश्चेन्नवम एव सिद्धस्तर्हि किमर्थोऽत्र सूत्रारम्भ इत्यत आह—**इति सिद्धमेवैतदिति**। प्रयोजनकथनार्थमेवात्र सूत्रारम्भो नतु तद्विचारार्थ इत्यर्थः। अस्मिन्नर्थे वार्तिककृत्संमतिमाह—**यदाहुरिति**। नात्र वेदवाक्यस्यार्थो विचार्यत इत्यत्रापि संमतिमाह—**तदपीति**। एतच्च प्रत्याख्यानपक्षे भाष्ययोजनार्थं वार्तिकम्। **नचात्रेत्यादि**। उभयव्याख्यायां हि यत्नगौरवमुक्तम्। नचात्र चोदना कापि व्याख्यायते। सूत्रमपि चेन्न व्याख्यायेत निर्विषयमेव भाष्यं स्यात्। अतो युक्तैव सूत्रव्याख्येत्यर्थः। अतो गौरवभयाद्यत्प्रत्याख्यानं तच्चोदनाव्याख्यायामिति भावः। तस्मादर्थज्ञानार्थत्वादध्ययनस्यार्थज्ञानस्य च विचारमन्तरेणासंभवादध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येत्युपपादितमर्थं निगमयति—**तत्सिद्धमिति**।

**अयमत्र सूत्रार्थः**—अत्राथशब्दस्य चत्वारोऽर्थाः आनन्तर्यमधिकारः पूर्वप्रकृतादर्थादर्थान्तरत्वं मङ्गलं च। तदत्र न तावदधिकारार्थः। इच्छाया अनधिकार्यत्वात्। अत आनन्तर्यार्थः। आनन्तर्यं च पूर्ववृत्ताद्वेदाध्ययनात्। यतस्तस्मिन्सत्येव धर्मजिज्ञासावकल्पते। वेदवाक्यगतानेकविधविचारात्। तदुक्तं—'येन वृत्तेन जिज्ञासा विना नैवोपपद्यते॥ तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते॥ संकल्पादिभिरप्येषा विना सत्यं न सिध्यति। साधारण्यात्तु तेऽप्यत्र नोपदेश्याः कथंचन। तस्माद्धर्मबुभुत्सायामसाधारणकारणम्। निर्दिष्टं सूत्रकारेष्टं तच्च नाध्ययनादृते'। तथाचोक्तं 'वेदाध्ययनमेव वेदार्थविचारात्मिकायां धर्मजिज्ञासायां दृष्टार्थं तेन विना तदनुपपत्ते'रिति। नन्वविचारितोऽपादाने बुद्धिपूर्वकमुपादानं न स्यात्। अतोऽध्ययनात्प्रागेव जिज्ञासा युक्तेति। केनोक्तं बुद्धिपूर्वकमुपादत्ते इति। कुमारहितैषिभिः पित्रादिभिरेवाध्ययने तस्य प्रवर्तनात्। विचार्याधीयानस्तु विचारस्यानेककालसाध्यत्वादध्ययनकालातिपाताद्व्रात्यतामापद्येत। नन्वेवं सति

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

इत्यर्थः। **विध्यन्तरेति**। उत्तरक्रतुविधिभिरपेक्षितमित्यर्थः। **द्रव्यार्जनादिष्विति**। 'द्रव्यमर्जयन्ब्राह्मणो याजये'-

---

१ पुनरर्थज्ञाना.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

'वेदमधीत्य स्नाया'दिति स्मृतिर्बाधिता स्यात्। नेति ब्रूमः। पूर्वकालतामात्रे क्त्वाप्रत्ययस्मरणात्। अतो वेदाध्ययनानन्तरं धर्मं विचार्य स्नास्यता न पूर्वकालता बाधिता भवति। उक्तंच—'नह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति पूर्वकालतायां क्त्वा स्मर्यते नानन्तर्यं' इति। अथवा 'इण् गतौ' इति गत्यर्थस्य धातोर्ज्ञानार्थत्वमभिप्रेत्य वेदमर्थतो ज्ञात्वा स्नायादिति व्याख्येयम्। यथाहुः—'ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते। अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता'। अत्रेदं वक्तव्यम्—अस्तुनाम पूर्वकालतामात्रे क्त्वाप्रत्ययस्मरणं तथापि लोके भुक्त्वा व्रजतीत्यादौ पौर्वापर्यविशेषरूपमानन्तर्यमेव प्रतीयते तदत्राध्ययनानन्तरमनेककालसाध्यविचारानुष्ठाने पौर्वापर्यमेव बाधितं स्यात्। किमु वक्तव्यमानन्तर्यं बाधितमिति। अतोऽध्ययनानन्तरमेव द्वयमापतति। गुरुकुलात्समावर्तनं वेदवाक्यविचारश्चेत्यस्त्येव विरोधः। तथा इङो हि नित्यसहचरितोऽधिशब्द एकदेशभूतो नहि तस्य केवलस्य प्रयोगो दृष्टपूर्वः। अत इङो रूपे समुदायप्रसिद्धिः। इणो रूपे त्ववयवप्रसिद्धिः। साच समुदायप्रसिद्धेर्दुर्बला। अधीत्येति च स्वाध्यायाध्ययनाधिकारे श्रुतत्वात्तद्विषयमेवावगम्यत इति नाधिगमार्थत्वकल्पना युक्तेति। अथोच्यते गुरुगृहादनावृत्तस्यैव स्नानमात्रमेतददृष्टार्थं न संस्काररूपं विधीयते, अतो गुरुगृहे एवावस्थायानन्तरं विचारः कर्तव्य इति नास्ति विरोधः। तत्रोच्यते—ब्रह्मचारिणो हि न स्नायादित्यस्नानादिनियम उक्तः तस्यावध्यपेक्षायामधीत्य स्नायादिति विहितं स्नानमस्नानादिनियमनिवृत्तिं लक्षयति, तत्सहचरिताश्च गुरुकुलवासादय इति तन्निवृत्त्या तेषामपि निवृत्तिर्लक्ष्यत इत्यपेक्षितार्थविधाने स्मृतेर्दृष्टार्थत्वमितरथा अदृष्टार्थं स्नानविधानं स्यात्। नच दृष्टे संभवति तद्युक्तम्। यथा लोके भोजनकाले स्थालीमात्रसंमार्जनोपदेशेऽपि तत्सहचरितसकलभोजनोपकरणसंमार्जनोपदेश एवमत्रापीति। ननु लोके कर्मार्थतया लक्षणं श्रुतिस्मृत्योस्तु यावदुपात्तमात्रविषयत्वात्सहचरितग्रहणमन्याय्यं स्यादेतदप्यधीत्य स्नायादिति स्मृतिः श्रुतिमूला स्यात् न्यायमूलात्वेषा। न्यायश्च सकलब्रह्मचारिधर्मनिवृत्तौ समानः। ब्रह्मचारिधर्मा हि गुरुकुलवासादयोऽध्ययनाङ्गमध्ययनसमाप्तौ समाप्यन्ते इष्टिसमाप्ताविव व्रतमिति न्यायः। अतो स्नाननिवृत्तौ तत्सहचरितानां सर्वेषां निवृत्तिः। ननु भवतु नाम गुरुकुलनिवृत्तिरेव स्मृत्यर्थः तथापि तदुत्तरकालमध्ययनविध्याक्षिप्तस्य विचारस्य करणान्नैव विरोधः। सत्यम्। भवेदपि स्मृत्यनुरोधेनानन्तरं स्नानं यदि स्नायादित्येतावन्मात्रमेव स्मर्येत किंतु स्नानोत्तरकालमपि नानाविधानि कर्माणि स्मर्यन्ते। यदि तान्यप्यनुरुध्यन्ते ततोऽत्यन्तं वेदबाधः स्यात्। नचाविदितवेदार्थः कर्माण्यनुष्ठातुमीष्टे ततः कियद्दूरमपि गत्वावश्यं स्मार्तस्य कस्यचित्पदार्थस्य बाधोऽङ्गीकर्तव्यस्तदध्ययनानन्तरं प्रथमोपनिपातिनो विरोधिनः स्नानस्यैव बाधनं युक्तम्। ननु सत्यपि विरोधे प्रावनिकत्वेन स्नानस्य बलीयस्त्वात्र बाधो युक्तः, धर्मजिज्ञासैव तु न्यायप्राप्ता दुर्बलत्वाद्बाधितव्या। मैवम्—'स्वाध्यायोऽध्येतव्यः' इति करणेतिकर्तव्यतयोर्यौगपद्यविधानेनाध्ययनविधिविरोधात्स्नायादिति स्मृतेरेव बाधः। अतएवाह भाष्यकारः 'अतिक्रमिष्याम इममाम्नाय'मित्यादि। किंचैकस्यापि वेदवाक्यस्य बाधे स्मृतिरप्रमाणीभवति किं पुनः समस्तस्यैवानर्थक्यापत्तौ। एवंच विरोधानुसारित्वाद्बाधस्य यन्मात्रमेव विरुध्यते तद्बाधितव्यम्, गुरुगृहपरित्यागमात्रं च धर्मजिज्ञासाविरोधि। तस्मात्तावन्मात्रमेव बाधितव्यं नतु मधुमांसादिभक्षणमपीति न तद्बाधः। यथाहुः—'तस्माद्गुरुकुले तिष्ठन्मधुमांसाद्यवर्जयन्। जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते'। ननु मधुमांसादिभक्षणवद्दारसंग्रहोऽपि विरोधाभावात्प्राप्नुयात्। न। स्नात्वा भार्यामधिगच्छेदिति स्नातकस्यैव दारसंग्रहस्मरणात् सकलब्रह्मचारिधर्मनिवृत्तौ स्नातकव्यपदेशात्। तदुक्तं—'गुरुगेहादनावृत्तः स्नातको हि न कथ्यते। तत्परत्वविधानाच्च न तावद्दारसंग्रहः'। सूत्रकारेणापि योयमथशब्देन स्मृत्यर्थबाध उक्तः स दृष्टार्थत्वेन गुरुकुलनिवृत्त्यंशमात्रस्य नाविरुद्धस्य मधुमांसभक्षणादेरिति। एतच्च प्रौढिमात्रेणोक्तम्-स्नातस्य मधुमांसादिभक्षणनिषेधात्। समावर्तनात्पूर्वं ब्रह्मचारिव्रतपरित्यागे चावकीर्णित्वापत्तेः। अतो यावद्विचारसमाप्ति ब्रह्मचारिव्रतयुक्तेनैव भवितव्यमिति युक्तम्। ननु वेदमधीत्य स्नायादिति वाक्यादध्ययनानन्तरं गुरुगृहान्निवृत्त्य स्वाध्यायोऽध्येतव्य इत्यस्माच्च पुनः प्रविश्य धर्मं जिज्ञासमानो विरोधाभावान्न स्मृत्यर्थं बाधेत। मैवम्। अध्ययनविधिविरोधापत्तेरकृतार्थस्य स्मृत्या निवर्तयितुमशक्यत्वात्। विचारसहितमध्ययनं हि विध्यर्थः। तस्मिन्ननुष्ठित एव कृतार्थो भवति अकृतार्थस्य च निर्गमो दृष्टार्थः सन्ननर्थक एव स्यात्। कृतार्थस्य त्वाश्रमान्तरनिवेशाय गुरुगृहान्निर्गमो दृष्ट इति। उक्तंच—'निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः। स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे'। अतःशब्दोऽत्र हेत्वर्थो यस्मादधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातस्तस्मात्तदध्ययनानन्तरं धर्मो जिज्ञासितव्य इति। आनन्तर्योपदेश*तद्दृष्टार्थत्वाभ्याम-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

दित्यादि 'प्राङ्मुखोऽन्नानि भुञ्जीते'त्यादिप्रकरणेतिकर्तव्यतयोरङ्गप्रधानयोरित्यर्थः। **तद्दृष्टार्थत्वेति**। यदेव दृष्टार्थमध्ययना-

१ दानग्रहणस्मरणात्. २ ह्याश्रमान्तर.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

थशब्देनैवाध्ययनस्य जिज्ञासांप्रति हेतुत्वमुक्तं किमतःशब्देनेति चेत्। न। आनन्तर्योपदेशाद्धि अध्ययनेन धर्मज्ञाने योग्यो भवतीत्येतावदेवाथशब्देनोक्तं स्यात् नत्वनुष्ठानहेतुत्वमतस्तद्वक्तुमतःशब्द इति। यथाहुः—'योग्यत्वमथशब्देन यद्यपि प्रतिपादितम्। तदेव हेतुरत्रेति नातःशब्दाद्विना भवेत्'। **अयंच श्लोकाभिप्रायः**—स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिरेवेतिकर्तव्यताभूतस्य धर्मविचारस्योत्पादकोऽनुष्ठापकश्च। तत्रोत्पत्तावथशब्देनाध्ययनस्य हेतुत्वमुक्तम्। दर्शितं चैतत् 'तस्मिन्हि सति सावकल्पते' इति। अतःशब्दोऽप्यध्ययनविधेरेव धर्मजिज्ञासां प्रत्यनुष्ठापकत्वलक्षणप्रयोजकहेतुत्वमाहेति। अकथ्यमाने तु धर्मजिज्ञासां प्रत्यध्ययनविधेरनुष्ठापकत्वे फलार्थताप्यनुष्ठापकत्वेनाशङ्क्येत साच शूद्रेपि संभवात्तस्यापि विचारं प्रयुञ्जीत, *अतोऽध्ययनविधिरेव विचारस्य प्रयोजक इति वक्तुमतःशब्द इति। अथवा जिज्ञासाहेतुत्वेऽप्यध्ययनस्याथशब्देनैव प्रतिपादितेऽध्ययनविधिप्रयुक्तोऽयं विचारोऽनन्तरमेव स्मृत्यर्थबाधेन कर्तव्य इत्यत्र न किंचित्प्रमाणमित्याशङ्कायां *प्रयोगवचनचोदितयौगपद्यपर्यालोचनयाध्ययनस्यैव स्नानबाधं प्रति हेतुत्वमतःशब्द आह। अध्ययनानन्तरं स्नानं न कर्तव्यं तदाक्षिप्तविचोरकरणविरोधादिति। धर्मस्य जिज्ञासा धर्मजिज्ञासा। **नन्वत्र** 'धर्माय जिज्ञासा धर्मजिज्ञासे'ति भाष्यकार आह तत्कथं षष्ठीसमासः। उच्यते—नात्र भाष्यकारस्य चतुर्थीसमासोऽत्राभिप्रेतः किंतु षष्ठीसमास एव, चतुर्थीसमासानुपपत्तेः। यत्रहि *तादर्थ्ये चतुर्थीसमासो भवति तत्र विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते यथा यूपाय दार्विति। अप्रकृतिविकारयोस्तु न समासो यथा रन्धनाय स्थाली, अवहननायोलूखलमिति। अतएवाह वार्तिककारः—'तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्य'मिति। नचेदं सामर्थ्यप्रदर्शनपरम्। अतोऽप्रकृतिविकारयोरपि यत्र सामर्थ्यं तत्र समासो भवत्येव। धर्मजिज्ञासापदेऽपि सामर्थ्यस्य विद्यमानत्वाद्युक्तस्तादर्थ्यसमास इति वाच्यम्। 'समर्थः पदविधि'रित्यनेनैव सिद्धत्वात्, बलिहितसुखरक्षितग्रहणानर्थक्यप्रसङ्गाच्च। रन्धनाय स्थालीत्यादिषु समासप्रसङ्गाच्च। नचात्र धर्मो जिज्ञासाविकारस्तस्मादसमासः। तदुक्तम्—'प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्तात्समस्यते। तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता'। अतो नायं चतुर्थीसमासः किंत्वश्वघासादिवत्षष्ठीसमासएव। अतएव भाष्यकारः 'सा हि तस्य ज्ञातुमिच्छा'इति षष्ठ्यन्तेन विगृह्णाति। कथं तर्हि धर्माय जिज्ञासेति विग्रहवचनम्। नेदं विग्रहवचनं किंतु षष्ठ्यर्थविशेषप्रदर्शनार्थम्। तदुक्तम्—'सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः। धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते'। यदाह भट्टोम्बेकः—'धर्माय जिज्ञासेति विगृहीतषष्ठ्यर्थकथनपरं भाष्यम्। **ननु** तादर्थ्यलक्षणसंबन्धविशेषविवक्षायां 'तादर्थ्ये चतुर्थ्युपसंख्यान'मिति चतुर्थ्येव प्राप्नोति तत्रच समासानुपपत्तिः, संबन्धमात्रविवक्षायां तु तादर्थ्यकथनमसंबद्धम्। अत्रोच्यते—सूत्रकारेणात्र संबन्धसामान्यविवक्षयैव धर्मजिज्ञासेति षष्ठीसमासः प्रयुक्तः, निर्विशेषसामान्यानुपपत्तेस्तु तादर्थ्यरूपविशेषनिष्ठता धर्मायेति भाष्येण दर्शितेति न कश्चिद्दोषः। धर्मजिज्ञासेत्यत्र कर्तव्येति शेषः। अत्र केचित्—'न चात्र ज्ञातुमिच्छा जिज्ञासा इच्छाया अकर्तव्यत्वात् सामान्यतो ज्ञाते विशेषजिज्ञासा विचारं विना न संभवतीत्यन्तर्णीतविचारजिज्ञासापदसामर्थ्याद्वेदाध्ययनानन्तरं तद्धेतुको धर्मविचारः कर्तव्य इति प्रतिज्ञासूत्रार्थः संपद्यत इत्याहुस्तन्न युक्तिसहमिव। 'सा हि तस्य ज्ञातुमिच्छे'ति भाष्यविरोधात्। नचेच्छायाः कर्तव्यत्वानुपपत्तिः बुभुक्षावदुपपत्तेः। दृश्यते च मन्दाग्नीनामपि भेषजादिना तत्कर्तव्यता। नचेच्छाया इच्छाविषयत्वाभावात्कर्तव्यत्वानुपपत्तिः। मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात्। अतएव भाष्यकारेण 'धर्मं जिज्ञासितुमिच्छेदिति धर्मजिज्ञासां कर्तुमिच्छेदिति धर्मज्ञानेच्छानिर्वृत्त्यर्थं द्वितीयेच्छोपात्ता। इच्छोपदेशेनापि च कर्तव्यतोपदिष्टा भवत्येव, तत्पूर्वभावित्वादिच्छायाः। उक्तंच व्याख्यातृभिः 'अनुपात्तमपीच्छारूपं सूत्रकृता सूत्रितेच्छाभिनिर्वृत्त्यर्थं भाष्यकृतोक्तं इच्छेदिति। तदाह—'सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र सूत्रिता'। जिज्ञासापदस्य विचारवाचित्वे तु न काचिदनुपपत्तिः। एवं तावत्सूत्रार्थमुपपाद्य संप्रति सूत्रोपात्तजिज्ञासाभेदं दर्शयति—**सेति**। यदाह भाष्यकारः—'स कथं जिज्ञासितव्यः, को धर्मः, कथंलक्षणकः, कान्यस्य साधनानि, कानि साधनाभासानि, किंफलश्चेति। साधनाभासशब्दश्चात्र वार्तिककारैर्व्याख्यातः। तथाहि—'अन्यसाधनमन्यस्य साधनाभास उच्यते। *क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति'॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

नन्तर्यमथशब्देनोपदिष्टं तदेव क्रियामात्रानन्तर्यस्यादृष्टार्थत्वादेवेन्द्रग्रहणं वेदार्थनिर्णयहेतुरित्युक्तमित्यर्थः। **अतोऽध्ययनेति**। अध्ययनविधिश्च त्रयाणामेवोपनीतानामध्ययनं विचारं च विधत्तेऽतो न शूद्राधिकार इति भावः। **प्रयोगेति**। अध्ययनविचारयोः शेषिशेषभूतयोर्योग्यत्वमिति भावः। **तादर्थ्येति**। 'चतुर्थीतदर्थार्थे'ति सूत्रे प्रकृतिविकृतिग्रहणं कर्तव्यमिति स्मरणादित्यर्थः। **क्रत्वर्थमिति**। क्रत्वर्थं पर्णमय्यादि। पुरुषार्थस्यापापश्लोकश्रवणादेरुच्यमानं साधनानामसं(?)

---

१ प्रयोजकत्वमाहेति. २ विचारणविरोधादिति. ३ तेनाप्यत्रसमासता. ४ षष्ठ्यर्थपरं. ५ जिज्ञासेति प्राप्नोति। तत्र समासानुपपत्तेः संबन्धे षष्ठीसमासः प्रयुक्तो···युक्तमिव.

धर्मस्वरूपविचाराक्षेपपरिहारौ ।

**नन्व**ध्ययनविधिना वेदवाक्यार्थविचारमात्राक्षेपाद्धर्मस्वरूपप्रमाणजिज्ञासयोः कः प्रसङ्गः । उच्यते—उपोद्घातत्वात्प्रसङ्गः । यदि हि वेदवाक्यार्थो धर्मः स्याद्वेदश्च प्रमाणं ततोऽसौ विचारः कर्तव्यो भवति । इतरथा काकदन्तपरीक्षावत्स्यात्, तदध्ययनविधिरेव प्रमाणादिविचारमाक्षिपति । धर्मग्रहणं चोपलक्षणार्थम्—अधर्मस्यापि हानाय जिज्ञास्यत्वात् । अकारप्रश्लेषेण वा सूत्रमधर्मजिज्ञासायामपि व्याख्येयमिति निरवद्यम् ॥

धर्मलक्षणाधिकरणम् ॥ २ ॥

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

**विचारविषयो धर्मो लक्षणेन विवर्जितः ॥ मानेन वाथवोपेतस्ताभ्यामिति विचिन्त्यते ॥ ३५ ॥**
**लौकिकाकारहीनस्य तस्य किं नाम लक्षणम् ॥ मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात् ॥ ३६ ॥**
**चोदनागम्य आकारो ह्यर्थत्वे सति लक्षणम् ॥ अतएव प्रमाणं च चोदनैवात्र नो कुतः ॥ ३७ ॥**
**यद्वा जिज्ञास्यवेदार्थः किं मन्त्राद्यवबोधितः ॥ सिद्धार्थोऽप्यथ विध्येकगम्यः कार्यार्थ एव वा ॥ ३८ ॥**
**सिद्धेऽपि पुत्रजन्मादौ व्युत्पत्तेरुपपत्तितः ॥ मन्त्रादिगम्यसिद्धस्य वेदार्थत्वेऽपि का क्षतिः ॥ ३९ ॥**
**हर्षहेतुबहुत्वेन व्युत्पत्तिः पुत्रजन्मनि ॥ दुर्लभा सुलभा कार्ये वेदार्थोऽतः स एव हि ॥ ४० ॥**

प्रथमं तावत् को धर्मः कथंलक्षणकः इत्येतद्द्वयमनेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते—यो धर्मः स चोदनालक्षणः चोदनैव तस्य लक्षणं प्रमाणम् । चोदना च तस्य लक्षणमेवेति श्रुत्या प्रमाणविधावर्थाच्चोदनागम्य एवाग्निहोत्रादिधर्मो नातल्लक्षणश्चैत्यवन्दनादिरिति स्वरूपमपि सिद्ध्यति । तथा यश्चोदनालक्षणः स धर्म इति स्वरूपविधावर्थात्प्रमाणसिद्धिर्वेदितव्या ॥

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रसङ्गाभावादाद्यं जिज्ञासाद्वयमाक्षिपति—**नन्विति** । समाधत्ते—**उच्यते इति** । उपोद्घातत्वं विवृणोति—**यदीति** । प्रसङ्गादधर्मजिज्ञासामप्युपक्षिपति—**धर्मेति** । एतस्य प्रतिज्ञासूत्रत्वेऽपि ग्रन्थान्तरोक्तरीत्याधिकरणमेवं व्याख्येयम् । तथाहि—'स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः । विचारशास्त्रं नारभ्यमारभ्यं वेति संशयः । अर्थधीहेतुताधीते- र्लोकसिद्धावघातवत् । नियामकं न चैवातो वैधारम्भो न संभवी । दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम् । अर्थनिर्णायकं शास्त्रमत आरभ्यतां विधे'रिति (जै. न्या.) । **ननु** प्रसिद्धश्चेद्धर्मो न जिज्ञास्यः प्रसिद्धे ज्ञानेच्छाभावात्, अथाप्रसिद्धो नतराम् । तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम् । उक्तंच—'प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वात्तु नेष्यते । *अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत्' । उच्यते—संदिग्धत्वं सप्रयोजनत्वं च विचाराक्षेपे कारणद्वयमुक्तं धर्मश्च तथा । तस्मादयमपि जिज्ञास्यः । केचिच्चैत्यवन्दनादिकं धर्ममामनन्ति । अपरेऽग्निहोत्रादिरूपं, तत्र विचारं विनैव प्रवर्तमानोऽयं कंचिदेवोपाददानो विहन्येतानर्थं च प्राप्नुयात् । निःश्रेयससाधनत्वाच्च सप्रयोजनत्वं धर्मस्य सकलजनसिद्धं, तस्माद्धर्मो जिज्ञास्य इति । तदुक्तम्—'जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयापिच । *असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्न प्रयोजनः' । अतस्तन्निर्णयार्थं शास्त्रमारब्धव्यम् ॥

एवम् 'अथातोधर्मजिज्ञासे'त्यनेन शास्त्रारम्भमुपपाद्येदानीं शास्त्रमारभते—**चोदनालक्षणोऽर्थो धर्म इति** ॥२॥ सूत्रतात्पर्यमाह—**प्रथममिति** । *एतद्द्वयं धर्मस्य स्वरूपं प्रमाणं चेत्यर्थः । किं श्रुत्यादि किं चार्थाद्विचार्यत इत्याकाङ्क्षायां वचनव्यक्तिभेदेन तद्दर्शयति—**यो धर्म इति** । ननु स्वरूपविशेषेऽपेक्षिते प्रमाणविशेषविधानमसंगतमित्यत आह—**स्वरूपमपीति** । धर्मपदार्थस्येदं प्रमाणमित्युक्ते प्रमाणायत्तत्वात्प्रमेयसिद्धेरर्थादिदमुक्तं भवति—यच्चोदनाप्रवेदितं तद्धर्मस्वरूपमिति ॥

### सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

प्रतिपुरुषार्थं च गोदोहनादिक्रतोरुच्यमानं । तदाभासमिति । *अप्रसिद्धे तु न ज्ञानं भवति अंतो नतरा मित्युक्तम् । अब्रवीत् भाष्यकारः । **असंदिग्ध इति** । समुदितं जिज्ञासायां कारणं नैकैकमिति भावः । **एतदिति** । वस्तुतस्त्वियमेव वच-

---

१ वेदारम्भो. २ किं श्रुत्या किंचार्थाद्गम्यत इति.

प्राभाकरमतं तत्खण्डनं च ।

**कश्चित्त्वाह—कार्यरूपो वेदार्थो न सिद्धरूप इत्येतदनेन सूत्रेणोच्यते, चोदनालक्षणशब्देन कार्यमुच्यते, धर्मशब्देन वेदार्थ इति। तदयुक्तम्—यानि तावद्विधिवाक्यानि तेषां विधावेव प्रामाण्यं वस्तुस्वरूपे चाप्रामाण्यं विस्पष्टमेवेति न तत्र किंचिद्वक्तव्यम्। क्षेपिष्ठादिवाक्यानामपि विध्येकवाक्यतया तत्रैव प्रामाण्यम्। मन्त्राणामपि प्रकरणेन प्रधानविधिशेषत्वं द्वितीयपादे वक्ष्यत इति न तत्रापि वक्तव्यमस्ति। तेन कस्यात्र सिद्धार्थतां निरस्य कार्यार्थतोच्यते। 'अविनाशी वा अरे अयमात्मे'त्यादीनामुपनिषद्वाक्यानामितिचेत्। न। तेषामपि यदि विध्येकवाक्यत्वमस्ति ततोऽर्थवादाधिकरणेन गतम्, अथ नास्ति कथं तेषां कार्यार्थता स्यात् ॥ * ॥ अथ तेषां विध्यश्रवणाद्विध्यन्तरेणैकवाक्यत्वाभावाच्च कार्यार्थत्वानुपपत्तेर्व्युत्पत्तिविरहाच्च सिद्धार्थे प्रामाण्यायोगादप्रामाण्यमेवाभिमतम्। किमिदानीमात्मादिवाक्यानामप्रामाण्यप्रतिपादनपरमिदं सूत्रं, सुव्याहृतं तर्हि शास्त्रारम्भे प्रथमं तावत्सूत्रकारोऽप्रामाण्यमेव वेदवाक्यानां प्रतिपादयतीति ॥ * ॥ कथंच कार्ये एव प्रामाण्यम्। तत्रैव व्युत्पत्तेः—प्रवृत्त्यधीना हि व्युत्पत्तिः, सा च कार्यावगमाधीनेति व्युत्पत्तिरपि तत्रैव भवतीति चेत्। न। अवश्यं प्रवृत्त्यधीनैव व्युत्पत्तिः—काष्ठैः स्थाल्यामोदनं पचतीत्यादिवर्तमानापदेशेष्वपि प्रसिद्धतृतीयार्थानामप्रसिद्धकाष्ठप्रातिपदिकार्थानां च पुरुषाणां काष्ठार्थे व्युत्पत्तिदर्शनात् ॥**

प्रथमव्युत्पत्तिः ।

**अथ प्रथमव्युत्पत्तिः कार्यविशेषयैव—नहि तदा शब्दान्तरवशेन शब्दान्तरस्यार्थे व्युत्पत्तिः संभवति सर्वस्य धर्मस्याप्रसिद्धत्वादिति चेत्। अस्त्वेवम्। तथापि पश्चाद्बहुशः सिद्धार्थे शब्दप्रयो-**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**ननु** यदि प्रमाणान्तरानवगम्यो धर्मः कथमनूद्यते। अप्रमाणसिद्धस्यानुवादासंभवात्। प्रमाणान्तरप्रमेयत्वे तु चोदनैव प्रमाणमेवेति विधानं विरुध्यते। सामान्यतः सिद्धस्यानुवाद इतिचेत्। न। निर्मूलायाः सामान्यसिद्धेरसंभवात्। लोकप्रसिद्धिमूलमितिचेत्। न। प्रत्यक्षादिप्रमाणातिरिक्ताया लोकप्रसिद्धेरनङ्गीकारात्। विचित्रानेकप्रकारत्वाच्च लोकप्रसिद्धेर्न तया धर्मसिद्धिः। नाप्यर्थापत्तिः। जगद्वैचित्र्यस्य स्वभावादेवोपपत्तेः, प्रमाणान्तरसिद्धे च वस्तुनि चोदनाया अनुवादकत्वापत्तेः। धर्मानुवादेन चोदनाप्रमाणविधौ चार्थपदस्यानन्वयप्रसङ्गः। नहि तदानर्थस्य धर्मत्वं प्राप्तं यन्निवर्त्येत। नापि सामान्यतो धर्मे चोदना प्रमाणत्वेन विधातुं शक्यते, तस्याः शब्दान्तरावसितभेदाग्निहोत्रादिधर्मविशेषविषयत्वात्। अत्रोच्यते—ज्योतिष्टोमादयस्तावत्क्रियाविशेषा धर्मत्वेन कार्यतया स्मर्यन्ते। वक्ष्यति च 'यो यागमनुतिष्ठति तं धार्मिकमिति हि समाचक्षते' तत्र निर्मूलमेवेदं स्मरणमिति चार्वाकाः। योगिप्रत्यक्षमूलमिति वैशेषिकादयः। एवंचानेकवादिविप्रतिपत्तौ प्रत्यक्षाद्यनुप्रवेशव्यवच्छेदेन चोदना प्रमाणत्वेन प्रतिज्ञायते 'चोदनैव तत्र प्रमाण'मिति। चोदनाया एव विधानान्नात्र प्रमाणान्तरसिद्धता संभवति। अतो यथा मन्वादिस्मरणप्रतिभासिन्यष्टकादौ चोदना मूलमिति वक्ष्यति तथेहापि च द्रष्टव्यम्। मूलविशेषानवधारणाभिप्रायं चैतद्वार्तिकम्—'धर्मे सामान्यतः सिद्धे प्रमाणं चोदनोच्यते' इति। नचार्थपदानन्वयः। एतद्वचनव्यक्तिसाधनत्वेनार्थवत्त्वात्। अर्थपदाभावे हि यश्चोदनालक्षणः स धर्म इति वचनव्यक्तिः संभाव्येत। अस्यां च श्येनादेरनर्थस्यापि धर्मत्वमापद्येत चोदनालक्षणत्वात्, *नित्यानुवादभूते त्वर्थग्रहणे नेयं वचनव्यक्तिः संभवति। प्रसङ्गादेकदेशिकृतं सूत्रार्थवर्णनं दूषयितुमुपन्यस्यति—**कश्चित्त्विति**। कथमनेन सूत्रेणायमर्थ उच्यतेऽत आह—**चोदनेति**। दूषयति—**तदिति**। गूढाभिप्रायमाशङ्क्य निराकरोति—**अथेति**। येषां कार्यार्थत्वानुपपत्तिस्तेषामप्रामाण्यमेव सूत्रकारस्याभिमतमिति भावः। एतदेव दूषयितुं पृच्छति—**कथमिति**। उत्तरमाह—**तत्रैवेति**। व्युत्पत्तेः संकेतग्रहात्। एतदेवोपपादयति—**प्रवृत्त्यधीनेति**। उत्तरं निराकरोति—**न**। **अवश्यमिति** ॥

विशेषं शङ्कते—**प्रथमेति**। परिहरति—**अस्त्विति**। इतश्च न कार्य एव प्रथमव्युत्पत्तिरित्याह—**किंचेति**। दूषणमुपसंहरति—**तस्मादिति** ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

*व्यक्तिरभिमता स्वरूपवचनव्यक्तौ वाक्यभेदप्रसङ्गादिति भावः। **नित्येति**। प्रमाणवचनव्यक्तावथशब्दो नित्यानुवाद

---

१ प्रसिद्धेरसंभवात्. २ कार्यतया लोकप्रसिद्धाः। लोकेच योयं. ३ आनेकधा मूलविप्रतिपत्तौ. ४ धर्मे प्रमाणतः सिद्धे.

गदर्शनात् 'कोऽयं राजा' 'पाञ्चाल:' इत्यादिषु प्रश्नप्रतिवचनादिषु कार्यस्य व्यभिचारादव्यभिचार्यर्थमात्रं वाच्यमिति सुज्ञानम् । यथैव हि कस्यांचिद्व्यक्तौ प्रथमं गोशब्दस्य प्रयोगदर्शनात्सैव वाच्येत्यवगमे सत्यपि पश्चाद्व्यक्त्यन्तरे प्रयोगं दृष्ट्वा पूर्वव्यक्तिव्यभिचारादव्यभिचारिसामान्यमेवार्थ इत्यध्यवसीयते तथा कार्यपरतामवगतामपि पश्चात्सिद्धार्थप्रयोगदर्शनेन बाधित्वार्थमात्रमेवाव्यभिचाराद्वाच्यमिति युक्तम् ॥ किंच प्रथमव्युत्पत्तौ कतिपयानामेव शब्दानां कार्यार्थत्वमवगतं न सर्वशब्दानाम्, अत: पश्चाद्व्युत्पाद्यमानस्य काष्ठादे: सिद्धार्थे व्युत्पत्ति: केन वार्यते । नच व्युत्पत्तौ शब्दानां पौर्वापर्यनियमोऽस्ति, अत: सर्वे शब्दा: पश्चाद्व्युत्पाद्यमाना: कैश्चित्सिद्धार्था भवन्ति । सर्वेषां तु कार्यार्थत्वे सिद्धार्थपरेषु लौकिकवाक्येषु सर्वशब्दानां लाक्षणिकत्वान्न कश्चिदन्विताभिधायी स्यात् । तत्रान्वितप्रतीति: कथं सिद्ध्येत् । वक्तृज्ञानानुमानादितिचेत् । न । यद्विषयं हि वाक्यं तद्विषयमेव वक्तृज्ञानमनुमातव्यम् । नचान्वितप्रतिपादकं वाक्यमुच्चारितमिति कथमन्वितज्ञानानुमानम् ॥ ॥ अथार्थस्वरूपस्मारकै: पदैरन्वितज्ञानमनुमीयते, तत: कार्यवाचकेऽप्यसिद्धेरन्विताभिधानं न स्यात् । किंच प्रथममेव कार्यव्यभिचार: शक्योऽवगन्तुम् । यदा हि पुत्रस्ते जात इत्युक्तस्य कस्यचिन्मुखविकासं पार्श्वस्थ: पश्यति तदा हर्षहेतुरनेन शब्देन प्रतिपादित इति हर्षहेतुभूतसिद्धार्थप्रतिपादने शब्दस्य सामर्थ्यं कल्पयति । यद्यपि च तदानीमर्थविशेषो न ज्ञायते हर्षहेतूनां बहूनां संभवात्तथापि सिद्धार्थता तावदवगता, तावतापि कार्ये व्यभिचार: सिद्ध: । किंच बहुश: पुत्रजनने सति एवं शब्दप्रयोगादन्येषु हर्षहेतुष्वप्रयोगात् पुत्रजननरूपार्थविशेषोऽपि सुज्ञान एव ॥ ॥ किंच प्रवृत्त्यधीनापि व्युत्पत्तिर्नावश्यं कार्यविषयैव भवति, तथाहि यदा कश्चित्प्रवृत्तावत्यन्तासमर्थं वृद्धमातुरं वा प्रतिविनोदार्थं वाक्यं प्रयुङ्क्ते 'नद्यास्तीरे पञ्च फलानि सन्ती'ति तत्रान्यो दैवसंगत: कश्चिदर्थी तद्वाक्यमर्थाच्छ्रुत्वा नदीतीरं गत्वा फलान्याहरति, एतत्सर्वं पश्यन्नन्यो व्युत्पित्सु: फलसद्भावप्रतिपादने शब्दस्य सामर्थ्यं व्युत्पद्यते, तस्मान्नैकान्तत: कार्यार्थता शब्दानाम् ॥

प्रभाकरोक्तद्वितीयसूत्रार्थस्य खण्डनम् ।

का चास्य सूत्रस्य वचनव्यक्ति:, यदि तावत् 'यत्कार्यं तद्वेदार्थ एवे'ति कार्यमुद्दिश्य वेदार्थता विधीयते, तथा सत्युद्देश्यस्योपादेयेन स्वरसनियमात्सर्वस्य लौकिकस्यापि गवानयनादिकार्यस्य वेदार्थता स्यात् । किंच उपादेयस्य वेदार्थस्योद्देश्येन कार्यरूपेणाग्नेरिव धूमेनाव्याप्तेरकार्येऽपि वेदस्य प्रामाण्यमनिरस्तं स्यात् ॥ * ॥ अथ 'यो वेदार्थ: स कार्यरूप एवे'ति, ततो 'यो धर्म: स चोदनालक्षण:' इति वचनव्यक्ति: स्यात्, तत्रार्थशब्दोऽभ्युदयवाची कस्य विशेषणं, यद्युपादेयस्य चोदनालक्षणपदार्थस्य, तत: सर्वस्य वेदार्थस्य कार्यत्वमर्थत्वं च विधीयते इति श्येनादिनियोगानामप्यर्थत्वं स्यात् ॥ * ॥ अथोद्देश्यवेदार्थविशेषणं, ततोऽयमर्थो भवति योऽर्थात्मकोऽभ्युदयात्मको वेदार्थ: स कार्यरूप:, ततश्च श्येनादिनियोगानां निषिद्धफलत्वेनानभ्युदयरूपाणां कार्यता न स्यात् । माभूदिति चेत् । न । तेषामपि लिङा कार्यतावगमात् । श्येनयागस्य कार्यता निवारयितुं शक्यते न नियोगस्य । तस्य कार्यैकस्वभावत्वात् । असति च कार्यत्वे श्येनवाक्यस्य कार्यार्थत्वाभावात्सिद्धार्थतैव वक्तव्या स्यात्, नच तथा संभवति विधिप्रत्यययोगात् । सिद्धे

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

वचनव्यक्त्यसंभवेनापि तद्व्याख्यानं दूषयति—**काचेति** । **तत इति** । सूत्रगतधर्मशब्दस्य वेदार्थपरत्वादेवं वचनव्यक्ति: पर्यवस्यतीत्यर्थ: । ततश्च किमत आह—**तत्रेति** । अभ्युदय: प्रयोजनम् । श्येनादीनामपि वेदार्थत्वेनोद्देश्यत्वात्तत्राप्यर्थत्वं विधेयमित्यर्थ: । **ततश्चेति** । योऽर्थरूपो वेदार्थस्तस्यैव कार्यताविधानादिति भाव: । इष्टापत्तिं शङ्कते—**माभूदिति** । **तेषामपीति** । श्येनादिनियोगानामपीत्यर्थ: । कार्यत्वानङ्गीकारे दोषमाह—**असतीति** । **सिद्धे**-

---

१ रन्विततत्वज्ञान

चार्थे व्युत्पत्तिविरहादप्रामाण्यमेव श्येनादिवाक्यानां स्यात् ॥ * ॥ अथ पूर्वसूत्राद्वेदार्थपरं धर्मपदमनुषज्य 'चोदनालक्षणो वेदार्थः' इत्येकं वाक्यम्, 'अर्थो धर्मः' इत्यपरं वाक्यम्। तदिदं स्वप्रज्ञाविलसितमात्रम्, अनुषङ्गवाक्यभेदयोर्विनाफलमाश्रयणात् । अप्रतिज्ञातस्य च धर्मस्य लक्षणमसंगतम् ॥ * ॥ अथ प्रतिज्ञातस्यैव वेदार्थस्य कार्यत्वसिद्धये धर्मत्वमुच्यते । किं कार्य एष धर्मरूपो वेदार्थः स एव जिज्ञास्यो नान्यः, तथाचेत् य एव जिज्ञास्यो धर्मस्तस्यैव सूत्राक्षराविनाशेन जिज्ञासा प्रतिज्ञातव्येति वेदार्थप्रतिज्ञावचनमनर्थकम् ॥ * ॥ अथ त्वर्थशब्दमनादृत्य यो वेदार्थः स कार्यरूप इत्युच्यते ततोऽर्थपदमनर्थकं वस्तुमात्रपर्यायमनुवादकं स्यात् । अनर्थव्युदासार्थता चास्य भाष्यकारेणोक्ता, तस्माद्विशेषणमेवैतत् । विशेषणत्वे चाभ्युदयरूपस्य वेदार्थस्य कार्यत्वाभिधानादनभ्युदयरूपस्य वेदार्थस्य कार्यत्वं न स्यादिति सर्वस्य वेदस्य कार्य एव प्रामाण्यमिति नियमो न स्यात् । ततश्च 'अविनाशी वा अरे अयमात्मे'त्यादीनामात्मस्वरूपपरत्वं न निराकर्तव्यमित्यास्तां तावत् । तस्माद्धर्मस्वरूपप्रमाणप्रतिपादनार्थमेवेदं सूत्रम् ॥ * ॥ तदिह धर्मं विषयीकृत्य चिन्त्यते—किमस्य न किंचित्प्रमाणमस्ति, किंवा प्रत्यक्षादिकमेव प्रमाणम्, उत चोदनैव, अथवा विकल्पः, अथवा समुच्चयः, इति । तत्र शब्दस्य प्रमाणान्तरप्राप्तप्रापकत्वेन स्वयमप्रमाणत्वात्प्रत्यक्षादीनां चासामर्थ्यादप्रमाणको धर्म इत्येकः पक्षः, प्रत्यक्षादिगम्य एवेत्येकः पक्षः, योगिनां प्रत्यक्षगम्यः, अर्वाचीनानां तु चोदनागम्य इत्यपरः, जगद्वैचित्र्यार्थापत्त्या किमप्यदृष्टमस्तीति सामान्येन प्रसिद्धो धर्मश्चोदनयाग्निहोत्रादिविशेषरूपेण गम्यते तस्मात्समुच्चय इति पक्षान्तरम्, चोदनैव साच प्रमाणमेवेति सिद्धान्तः । तदिह चोदनैव प्रमाणं साच प्रमाणमेवेत्यवधारणद्वयं प्रतिज्ञायते ॥

प्रथमपादप्रतिपाद्यार्थसंग्रहः।

निमित्तसूत्रे तु प्रथमद्वितीयसूत्रमात्रालोचनया वेदो धर्ममूलमित्यादिवदुपदेशशास्त्रताशङ्का मा भूदिति परीक्षाशास्त्रमेवेदमिति ज्ञापयितुं परीक्षाप्रतिज्ञानम् । यद्यपि चोपरितनव्यापारादेव परीक्षाशास्त्रत्वं गम्यते तथापि वक्ष्यमाणमेव श्रोतृबुद्धिसमाधानाय कीर्तितम् ॥ * ॥ प्रत्यक्षसूत्रे तु प्रत्यक्षस्य विद्यमानोपलम्भनत्वाद्भविष्यति धर्मे प्रामाण्यासंभवात्तत्पूर्वकत्वेनेतरेषामप्यप्रामाण्यात्प्रमाणा-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**चेति**। तन्मते व्युत्पत्तिविरहादित्यर्थः। प्रकारान्तरेणाशङ्क्य निराकरोति—**अथेति**। **अप्रतिज्ञातस्येति**। *प्रतिज्ञासूत्रगतधर्मपदस्य वेदार्थपरत्वाद्वेदार्थस्यैव तत्र प्रतिज्ञा न धर्मस्येति भावः। **धर्मत्वमुच्यत इति**। धर्मशब्देन प्रतिज्ञातं वेदार्थमुद्दिश्य चोदनालक्षणशब्देन तस्य कार्यत्व उक्ते कस्मात्कार्य इत्यपेक्षायां तस्य कार्यत्वसिद्धयेऽर्थपदेन धर्मत्वमुच्यत इत्यर्थः। **नान्य इति**। धर्मरूपो वेदार्थो जिज्ञास्य इत्यत्र धर्मस्यार्थत्वात्स एव जिज्ञास्यः। एवंच सूत्राक्षरविनाशो न भवति, वेदार्थपरत्वे तु धर्मपदस्य तद्विनाश इत्यर्थः। आनर्थक्याङ्गीकारे च भाष्यविरोध इत्याह—**अनर्थेति**। **ततश्चेति**। नियमाभाव इत्यर्थः। अतोऽस्मदुक्त एव सूत्रार्थो युक्त इत्याह—**तस्मादिति**। उक्तंच—'द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते। स्वरूपेपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः'। एवं तावत्सूत्रतात्पर्यमुक्त्वा संप्रति सूत्रसूचितं विचारस्वरूपं दर्शयति—**तदिहेति**। **ननु** प्रतिज्ञासूत्रेऽनुपपन्नोऽयं विचारः पुनरुक्तश्च सदौत्पत्तिकसूत्राभ्यामस्यार्थस्य वक्ष्यमाणत्वात्। नापि प्रतिज्ञोपपत्तिः। संभवदर्थविषयं हि वाक्यं प्रतिज्ञोच्यते। नचायमर्थः संभवति यत्प्रत्यक्षायोग्यं वस्तु तत्र वाक्यं प्रमाणमिति। उच्यते—वक्ष्यमाणोऽप्यर्थः प्रतिज्ञासमर्थनार्थमत्रोच्यमानो न दुष्यति। नचात्र पूर्वपक्षयुक्तय उक्ताः विचारस्वरूपमात्रकथनात्। संभवदर्थविषयत्वं चाग्र एवोपपादयिष्यति। आद्यं विवृणोति—**तत्रेति**। एवं सूत्रसूचितं विचारं संक्षिप्य सूत्रार्थमुपसंहरति—**तदिहेति**॥

इदानीमुत्तरसूत्राणि संगमयन्भाष्यकारमतेन तावदेतत्पादगतपदार्थाननुक्रामति—**निमित्तेति**॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

इत्यर्थः। अनुपपन्नः युक्त्यभावात्। **प्रतिज्ञेति**। चोदनैव प्रमाणं चोदना च प्रमाणमेवेति प्रतिज्ञेत्यर्थः।

---

१ न सर्वः। तथाच य एव. २ चोदनशब्देन. ३ द्विरूपेपिहि. ४ पूर्वपक्षापरपक्ष उक्तयः.

न्तरनियमविकल्पसमुच्चयनिराकरणाच्चोदनैवेत्ययमर्थः सिद्ध्यति ॥ * ॥ औत्पत्तिकसूत्रे तु स्वतःप्रामाण्यमर्थान्यथात्वकारणदोषज्ञानाभ्यामप्रामाण्यमित्याश्रित्याग्निहोत्रादिचोदनाभ्योऽसंदिग्धज्ञानोत्पत्तेः स्वतःप्रामाण्यं प्राप्तम्। नचापवादकमर्थान्यथात्वज्ञानं साक्षादस्ति, नापि कारणदोषज्ञानं, पुरुषाश्रयत्वाच्छब्ददोषाणाम्। पदपदार्थसंबन्धस्याकृत्रिमत्वात्तद्वारेण पुरुषानुप्रवेशाभावाच्चोदनानामिति स्थिते 'शब्दस्यैवानित्यत्वात्कुतः संबन्धनित्यते' त्याक्षिप्य शब्दस्य नित्यतया शब्दाधिकरणे संबन्धनित्यत्वे समाहिते, माभूत्पदार्थसंबन्धद्वारेण पुरुषानुप्रवेशः, वाक्यवाक्यार्थयोस्तु लोके संबन्धादर्शनान्निर्मूलोऽग्निहोत्रादिवाक्यार्थप्रत्यय इत्यतो व्यामोहः। सामयिको वा, अतो न वाक्यार्थे वेदस्य प्रामाण्यमित्याशङ्क्य, पदार्थानां संबन्धग्रहणं समयं चानपेक्षमाणानामेव वाक्यार्थे प्रामाण्यं संभवतीति तद्भूताधिकरणेन प्रतिपादिते ॥ * ॥ पुनर्वेदानां वाक्यात्मकत्वात् काठकादिसमाख्यानाच्च पौरुषेयत्वात्तद्वारेण दोषसंस्पर्शमाशङ्क्य स्मर्तव्यत्वे सत्यस्मरणाद्योग्यानुपलब्धिनिरस्तस्य कर्तुरनुमानासंभवात्समाख्यायाश्च प्रवचननिमित्तत्वादपौरुषेया वेदाः इति तदेकदेशानां चोदनानां सिद्धं प्रामाण्यमित्येवं समस्तः प्रथमः पादश्चोदनासूत्रप्रतिज्ञातार्थोपपादनेन तस्यैव परिकरः। सोऽयं भाष्यकारानुसारेण पादार्थोऽनुक्रान्तः। वृत्तिकारमतं तु पश्चादनुक्रमिष्यामः।

धर्मस्य प्रत्यक्षादिप्रमाणगम्यत्वम्।

प्रकृतमनुसरामः—प्रतिज्ञातं तावच्चोदनैव प्रमाणं सा च प्रमाणमेवेति ॥ **ननु** प्रत्यक्षादेरन्यानपेक्षं प्रामाण्यं संभवतीति तस्यैव धर्मे प्रामाण्यं, शब्दस्य तु सर्वदैव प्रमाणान्तरप्रमितविषयत्वान्न तदनपेक्षं प्रामाण्यं संभवतीति। उच्यते। प्रत्यक्षं तावत्संयुक्तविषयत्वेन विद्यमानोपलम्भनत्वाद्भविष्यति धर्मे न समर्थम् ॥ * ॥ यद्यपि गोदोहनादिद्रव्यं, यागादिक्रिया, नीचैस्त्वादिगुणश्च, फलसाधनत्वाद्धर्मशब्देनोच्यते नापूर्वादय इति श्रेयस्करभाष्ये वक्ष्यते, तथापि तेषां फलसाधनरूपेण धर्मत्वात् फलस्य च जन्मान्तरादिभावित्वाद्धर्मस्वरूपेण प्रत्यक्षविषयत्वं न संभवति, तत्पूर्वकत्वाच्चानुमानादिकमपि न प्रमाणम् ॥ * ॥ भावनाबलजं तु योगिप्रत्यक्षं भविष्यत्यपि धर्मे समर्थमिति मनोरथमात्रम्। भावना ह्यनुभूतगोचरनियतानुभूतेष्वेव निश्चयरूपां स्मृतिं जनयेत्। नच सात्र प्रमाणं स्मृतित्वादेव, नितरां प्रत्यक्षमनिन्द्रियजत्वात्। नेन्द्रियजत्वं प्रत्यक्षलक्षणमपितु कल्पनापोढत्वमितिचेत्, सुतरां धर्मस्याप्रत्यक्षत्वं फलसाधनरूपस्याविकल्पग्रहणासंभवात्। तस्मादनिमित्तं प्रत्यक्षम्। तत्पूर्वकत्वाच्चानुमानाद्यपि ॥ * ॥ काश्यपीयाः पुनः प्रातिभज्ञानमृषीणां

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

ग्रन्थो निगदव्याख्यातः। प्रतिज्ञातार्थमुपपादयितुमाह—**प्रकृतमिति। शब्दस्येति।** यथाहुः—'प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत्सदा। स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते' इति। **ननु** फलसाधनस्य द्रव्यादेरेव धर्मत्वाङ्गीकारात्तेषां चैन्द्रियकत्वात्कथं न धर्मस्य प्रत्यक्षविषयत्वमित्याशङ्क्य निराकरोति—**यद्यपीति**। य एव श्रेयस्करः स एव धर्मशब्देनोच्यते। कथमवगम्यते, यो हि यागमनुतिष्ठति तं धार्मिकमिति हि समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्नि'ति यजतिशब्दवाच्यमेव धर्मं समामनन्तीति श्रेयस्करभाष्ये वक्ष्यत इत्यर्थः। **तथापीति**। तदुक्तम्—'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता। श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते। ताद्रूप्येण तु धर्मत्वं तस्मान्नेन्द्रियगोचरः'। **भावनेति**। योगाभ्यासजनितः संस्कारविशेषो भावना। तज्जनितं तु ज्ञानं स्मृतिरूपमेव भवतीत्यर्थः। बाह्यमतेन शङ्कते—**नेन्द्रियेति। कल्पनेति**। नामजात्यादियोजनारहितत्वमित्यर्थः। **अविकल्पेति**। फलसाधनत्वेन रूपेण धर्मत्वम्। नच तेन रूपेण निर्विकल्पकेन ग्रहणं संभवति वस्तुस्वरूपमात्रावगाहित्वात्तस्येत्यर्थः। **प्रातिभमिति**। प्रतिभा धर्मविशेषस्तज्जन्यमित्यर्थः। **तस्येति**।

---

१ तद्भूताधिकरणेन.

धर्मे प्रवर्तेत इत्याहुः, तत्तु लिङ्गाद्याभासजत्वात्प्रमाणमेव न भवति किं पुनर्धर्मे । शब्दस्य तु बुद्धिजनकत्वादसत्यपवादे युक्तं प्रामाण्यम् ॥ * ॥ ननु नबुद्धिजननमात्रात्प्रामाण्यं युक्तं अयथार्थेष्वपि वाक्येषु बुद्धिजननाविशेषात् । सत्यम् । तत्र तु कारणदोषबाधकप्रत्ययाभ्यां युक्तमप्रामाण्यं, वेदे तु तदभावात्स्वतःप्राप्तं प्रामाण्यमनपोदितं भवति ॥

अथ प्रामाण्यविचारः।

कथं पुनः प्रामाण्यस्य स्वतःप्राप्तिः, तदर्थमिदं सर्वज्ञानान्यधिकृत्य चिन्त्यते किं प्रामाण्यमप्रामाण्यं चोभयं स्वत एवावगम्यते, अथवान्यतरदपि स्वभावेनानिरूपितं कारणगुणदोषप्रत्ययाभ्यामवगम्यते, आहोस्विदप्रामाण्यं स्वतोऽवगम्यते, प्रामाण्यं तु कारणगुणज्ञानात्संवादज्ञानादर्थक्रियाज्ञानाद्वावधार्यते, उत प्रामाण्यं स्वतःप्राप्तं सदर्थान्यथात्वकारणदोषज्ञानाभ्यामवगम्यमानेनाप्रामाण्येनापोद्यते इति । तत्र सर्वकारणानां स्वकार्यशक्तेः स्वाभाविकत्वादुभयमपि ज्ञानस्य स्वरसादेवावगम्यत इति केचित् । तदयुक्तम् । नहि ज्ञानं स्वविषयस्य तथात्वमतथात्वं च युगपच्छक्नोति वेदयितुं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

तत्तु प्रमाणमेव न भवति किं पुनर्धर्मे इति संबन्धः । यादृच्छिकत्वेन लिङ्गाद्याभासकल्पत्वादित्यर्थः । शब्दस्य तु धर्मे युक्तं प्रामाण्यं संभाव्यमानत्वात् । अर्थगोचरज्ञानजननशक्तिर्हि प्रमाणानां प्रामाण्यम् । सा च शब्दे संभवति । यतः 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इत्यत्यन्तासत्यपि गगनकुसुमसंसर्गादौ स धियमुपजनयिष्यतीत्यर्थः । नन्वेवं सति तद्वदेवाप्रामाण्यमापद्यते बुद्धिजनकत्वाविशेषात् । एवंच प्रामाण्यं साधयतोऽप्रामाण्यमापतितमित्यभिप्रायेण शङ्कते —**नन्विति** । परिहरति—**सत्यमिति** । अयमाशयः—उत्सर्गो हि ज्ञानजननेन प्रामाण्यं तत्पौरुषेयेषु वन्ध्यासुतो यातीत्यादिषु दोषादपोद्यतापि । अपौरुषेये तु शब्दे पुंदोषाभावात्स्वयमदुष्टत्वाच्च प्रमाणतैवानपोदिता सेत्स्यतीति । यथाहुः —'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि । तेनोत्सर्गे स्थिते तस्य दोषाभावात्प्रमाणता' । उक्तं चान्यैः—प्रमाणं भ्रमः संशयः स्मरणं संवाद इति पञ्चधा ज्ञानं विभजामहे तस्मात्सर्वमेव शाब्दमर्थगोचरं प्रमाणमप्रमाणं च दोषसदसद्भावनिबन्धनश्च प्रमाणेतरविभागः प्रत्यक्षादिवदेवेति ॥

**ननु** चोदनाप्रामाण्यसदसद्भावविचाराधिकारे तत्प्रामाण्याक्षेपपरिहारप्रतिसमाधाने वक्तव्ये सर्वविज्ञानप्रामाण्यप्रतिज्ञावचनमसंबद्धमप्रस्तुताभिधानादित्याशङ्क्य चोदनाप्रामाण्यसिद्ध्यर्थमेव सर्वविज्ञानप्रामाण्यचिन्तेत्याह— **तदर्थमिति** । अयमाशयः—यदाहि सर्वसंविदामौत्सर्गिकं प्रामाण्यं बाधकारणदोषायत्तं चाप्रामाण्यमिति सिद्धं भविष्यति, वेदे चापौरुषेये तदुभयाभावात्स्वतःसिद्धमेव प्रामाण्यमिति । तदेवं वादिविप्रतिपत्त्या संशय्य द्वयं स्वत इत्याद्यं पक्षं परिगृह्णाति—**तत्रेति।** स्वयमतदात्मनो दैवैरपि तादात्म्यापत्तेः कर्तुमशक्यत्वात् द्वयं स्वतः, नहि सिकतासु तैलादिकमाधातुं शक्यमिति । एतच्च सत्कार्यवादिमतं, तन्मते हि सर्वमेव कार्यजातं सदुत्पद्यत इति प्रामाण्याप्रामाण्यात्मकमपि स्वतएव, यत्स्वतोऽसत्तन्न साध्यं यथा शशविषाणं, असदुत्पत्तौ च मृत्तिका घटस्य, वीरणं कटस्येत्युपादाननियमो न स्यात्, असत्त्वाविशेषेण हि सर्वं सर्वस्मादसदुत्पद्येत । यस्य यदुत्पत्तिशक्तिरस्ति तां निश्चित्य यो यदर्थी स तदुपादत्त इति शक्तितो नियम इति चेत् । नैवम् । अविशेषात् । अस्माकं शक्त्यात्मना विकार उपादानेऽस्तीति मतं, भवतस्तु विकारोत्पत्तिशक्तिरुपादानेऽस्तीति वाचोयुक्तिमात्रं भिद्यते नार्थः । सत्त्वे कारकव्यापारानर्थक्यमितिचेत् । न । अभिव्यक्तिफलत्वात् । सन्तोऽपि हि विकाराः पूर्वमनभिव्यक्ताः कारकव्यापारैरभिव्यज्यन्ते । अभिव्यक्तावुत्पत्तिशब्दोऽनर्थक इतिचेत् । न । अभिव्यक्तिभेदात् । घटस्यान्धकारतिरोहितस्य दीपेन तदुत्सारणमभिव्यक्तिः । मृदि तु सूक्ष्माकारस्य प्रोत्सारणं कुलालेन क्रियते स्थूलाकारता प्रकटीक्रियते सा च पूर्वमपरिदृष्टेत्युत्पत्तिव्यपदेश इति दिक् । तमिमं पक्षं प्रतिक्षिपति—**तदयुक्तमिति** । न तावदेकस्यां ज्ञानव्यक्तौ द्वयं संभवति विरोधात् । प्रामाण्याप्रामाण्ये हि परस्परपरिहारस्थितिलक्षणेन विरोधेन विरुध्येते कथमेकव्यक्तिनिवेशिनी स्याताम् । अथैकस्यैव विज्ञानस्य द्वयं स्वतएव प्रकाशत इति मतं तथापि विरोधः । यदुक्तमसतः साध्यत्वानुपपत्तिः, तन्न । सतोऽप्यात्मादेरसाध्यत्वदर्शनात् । यदपि सिकतासु तैलादिर्न ज्ञायते इति तदप्ययुक्तम् । तस्य तदुपादनशक्त्यभावात् । नहि सर्वं सर्वोत्पादनशक्तियुक्तम् । अधिकं तु दूषणं ग्रन्थान्तरादवगन्तव्यम् । अतो यथा नैकस्याग्नेः शीतोष्णस्वभावत्वं विरुद्धधर्माध्यासस्य भेदनिबन्धनत्वात् । एवं न ज्ञानस्य प्रमाणाप्रमाणस्वभावत्वम् । अथ विरोधपरिजिही-

---

१ अर्थगोचरशक्तिर्हि. २ सूक्ष्माकारस्य. ३ स्थितिविरोधेन.

विरोधात् ॥ * ॥ अथ कापि ज्ञानव्यक्तिः स्वप्रामाण्यं स्वतो बोधयति काप्यप्रामाण्यमित्युच्यते, तथापि न युक्तम् । कारणान्तरनिरपेक्षस्य ज्ञानस्यैवोपलम्भहेतुत्वे किं क ज्ञाने भवतीति न शक्यं विवेक्तुम् । अतो द्वयमपि स्वस्वभावेनानिरूपितं कारणगुणदोषज्ञानाभ्यामवगम्यत इत्यपरे । तदप्यपेशलम् । एवं हि गुणदोषावधारणात्प्रागन्यतरेणाप्याकारेणार्थमनवगमयद्विज्ञानं निःस्वभावं स्यात् । तस्मादप्रामाण्यं स्वतः, प्रामाण्यं तु संवादज्ञानादिभिरित्येतदेव युक्तम् ॥

युक्तिदर्शनम् ।

तथाहि न ज्ञानमुत्पन्नमित्येतावतार्थतथात्वावधारणं युक्तं व्यभिचारादनिश्चयाच्च अप्रामाण्यमेव तस्यां वेलायां प्राप्तं, पश्चात्कारणगुणज्ञानात्संवादज्ञानादर्थक्रियाज्ञानाद्वा प्रामाण्यावगमादपोद्यते । शब्दे चाप्तप्रणीतत्वं गुणः । नच वेदे तदस्त्यपौरुषेयत्वाभ्युपगमात् । 'वनस्पतयः सत्रमासत' 'शृणोत ग्रावाणः'

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

पैया भिन्नव्यक्त्याश्रयं नीलपीतवत्स्वतो द्वयमित्युच्यते तदप्ययुक्तमित्याह—**अथेति** । कथं न युक्तमत आह—**कारणान्तरेति** । स्वतोऽद्वयवादिना प्रामाण्याप्रामाण्यावधारणे कारणान्तरस्य संवादादेरनपेक्षणात् । ज्ञानस्यैवोपलम्भहेतुत्वे सर्वज्ञानेषु बोधरूपतायाः स्वतोविशेषाप्रतिभासनात् कस्यां ज्ञानव्यक्तौ प्रामाण्यं कस्यां नेत्यनिश्चयाद्व्यवहारोच्छेदः स्यादिति भावः । परतो द्वयमिति पक्षान्तरमुत्थापयति—**अत इति** । अपेशलत्वे कारणमाह—**एवंहीति** । सर्वं हि विज्ञानं स्वभावद्वयेऽन्तर्भूतं किंचित्प्रमाणस्वभावमवशिष्टमप्रमाणस्वभावमिति स्वभावान्तराभावात् *पूर्वं च केनापि रूपेणानवधारणे स्वतो निःस्वभावत्वं स्यात् निःस्वभावस्य चाभाव एव प्राप्त इति परतोऽपि कस्य प्रामाण्याप्रामाण्ये स्यातामिति भावः । **ननु** ज्ञाने सत्त्वगुणत्वज्ञेयत्वादिस्वभावसद्भावात्कथं निःस्वभावत्वम् । मैवम् । सत्त्वगुणत्वादीनामप्यन्यतरांशपातित्वाद्गुणदोषावधारणात्प्राक् प्रामाण्याप्रामाण्यानवधारणे च स्वभावद्वयवर्जितं क्रियात्मकं किंस्वभावं स्यादित्यनवधारणं स्यात् । अत एतत्पक्षासंभवात्पक्षान्तरमेव युक्तमित्याह—**तस्मादिति** ॥

युक्तिमेव दर्शयति—**तथाहीति** । अयमाशयः—अप्रामाण्यं नाम प्रामाण्याभावस्तस्यावस्तुत्वान्न कुतश्चिदुत्पादः, प्रामाण्यं तु वस्तुत्वात्कारणगुणजन्यम् । **ननु** प्रमाण्याभावस्य प्रध्वंसादिरूपस्य मीमांसकैर्वस्तुत्वेनेष्टत्वादवस्तुत्वादित्यसिद्धो हेतुः, सिद्धत्वे वा घटादिप्रध्वंसेनानैकान्तिकः । उच्यते—एतन्मतवादिनो बौद्धस्य तुच्छमभावो न वस्त्वन्तरम् । यदि वस्त्वन्तरं स्यात्सत्यपि तस्मिन्भावस्य पूर्ववद्दर्शनं स्यादविशेषात् । नहि घटे सति पटस्यानुपलब्धिः । भावविरोधित्वादभावस्यायमदोष इतिचेत् । न । यद्यकिंचित्करोऽयं भावस्याभावः कथं विरोधी स्यात् । अथ किंचित्करस्तथापि न तावद्भावस्वरूपं करोति । अर्थान्तरकरणे तु को विरोधः । तस्माद्घटाभाव इति घटस्य भावो नास्तीत्यर्थः । नच घटादिप्रध्वंसेनानैकान्तः तस्य तेन निर्हेतुकत्वाभ्युपगमात् । प्रामाण्ये तु स्वालम्बनाव्यभिचारित्वं तस्य च वस्तुत्वाद्युक्ता गुणैरुत्पत्तिरिति । **ननु** के पुनरमी गुणाः ये प्रामाण्यस्योत्पादका इत्युच्यन्ते । यदि भेषजादिभिराहितातिशयविशेषा इत्युच्यन्ते तर्हि *अनाहितातिशयानां न प्रामाण्यं जायेत । उच्यते—'विशुद्धिरिन्द्रियादीनां गुणानतिशयः कृतः । साम्यं वातादिधातूनां विशुद्धिरभिधीयते' । साम्येन हि स्थिता वातादयः प्रामाण्यमुपजनयन्ति, तद्वैषम्ये तु तिमिरादयो दोषा जायन्ते, शब्दे तु वक्तुराशयशुद्धिर्गुणो, विप्रलम्भादयश्च दोष इति तज्जन्यमप्रामाण्यम्, प्रामाण्यं त्वर्थनिश्चयो वस्त्वात्मक इति तद्गुणेभ्यो जायते ज्ञायते चेति । यदि प्रामाण्यं *स्वतः स्यात् अप्रामाण्यमप्यवस्तुत्वेनाजन्यत्वादन्यानधीनं, तर्हि सर्वज्ञानानामपि प्रामाण्यप्रसङ्गः, स्वप्नादिज्ञानानामपि ज्ञानत्वाविशेषात् । **ननु** कथमप्रामाण्यमजन्यं दोषान्वयव्यतिरेकानुविधायित्वेन तज्जन्यत्वावगमात् । कामली हि पीतं शङ्खं जानाति, तदपगमे च शुक्लम् । अतोऽवस्तुनोऽपि हेतुजन्यत्वमापन्नम्, तदनभ्युपगमे वा स्वप्नादिज्ञानानामपि प्रामाण्यापत्तिः । उच्यते—नात्र दोषैरप्रामाण्यं जन्यते तेषां प्रामाण्यजनकगुणोत्पत्तिप्रतिबन्धकत्वेनोपक्षीणत्वात् । सत्सु च दोषेष्वसन्तो गुणा न स्वकार्यं प्रामाण्यं जनयन्तीत्यप्रामाण्यमेवानपोदितं स्वाभाविकमास्ते । तदुक्तम्—'तस्मात्कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् । स्वभावतोऽप्रमाणत्वं तदभावे न लक्ष्यते'इति । एवंच गुणाधीनप्रामाण्याभ्युपगमान्नित्यवेदवादिनां च तदसंभवादाप्तप्रणीतत्वे च प्रमाणाभावाद्वेदानामप्रामाण्यमापन्नमित्याह—**शब्देचेति** । एवं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**पूर्वंचेति** । गुणदोषावधारणात्पूर्वमित्यर्थः । अनुपपन्नस्वरूपमिति तस्य हेतोरुत्पादानात् । **अनाहितातिशयानां** इन्द्रियादी-

---

१ द्वाराच्छेदकत्वस्यादिति. २ धारणं निःस्वभावत्वं.

इत्येवमादीनामुन्मत्तप्रलपितकल्पत्वात्, अप्रत्ययिततरप्रणीतत्वादप्रामाण्यमेव वेदानामिति प्राप्तेऽभिधीयते—'परापेक्षं प्रमाणत्वं नात्मानं लभते क्वचित्। मूलोच्छेदकरं पक्षं को हि नामाध्यवस्यति'; यदि हि सर्वमेव ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं विज्ञानान्तरमपेक्षेत ततः कारणगुणसंवादार्थक्रियाज्ञानान्यपि स्वविषयभूतगुणाद्यवधारणे परमपेक्षेरन्, अपरमपि तथेति न कश्चिदर्थो जन्मसहस्रेणाप्यध्यवसीयेतेति प्रामाण्यमेवोत्सीदेत्। अथ—अर्थक्रियाज्ञानं स्वतःप्रमाणमितिचेत् को विशेषः, अव्यभिचार इति चेत्, न, स्वप्नावस्थायामसत्यप्युदकाहरणेऽर्थक्रियाविज्ञानदर्शनात्॥ * ॥ अथ सुखज्ञानमेवार्थक्रिया तच्चाव्यभिचार्येव नहि क्वचिदप्यसति सुखे सुखज्ञानमस्ति। सत्यमेतत्। नतु तेन पूर्वज्ञानस्य प्रामाण्याध्यवसानं संभवति, अप्रमाणेनापि प्रियासंगमविज्ञानेन स्वप्नावस्थायां सुखदर्शनात्। तस्मात्स्वतःप्रामाण्यं प्राप्तमर्थान्यथात्वकारणदोषज्ञानाभ्यामपोद्यत इत्यवश्यमङ्गीकरणीयम्। एवंच शब्देनाप्तपुरुषसंस्पर्शकृतत्वाद्दोषाणामपौरुषेये वेदे तदभावात्साक्षाच्चार्थान्यथात्व-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

तावत्परतःप्रामाण्येन पूर्वपक्षं कृत्वा संप्रति तमेव दूषयन्सिद्धान्तमारभते—**इति प्राप्त इति**। श्लोकार्थं विवृणोति—**यदि हीति**। अर्थक्रियाज्ञानं चाव्यभिचारात्स्वतःप्रमाणमर्थक्रियां निश्चाययच्छक्नोति पूर्वज्ञानस्य प्रामाण्यं निश्चाययितुमतो नानवस्थेति शङ्कते—**अर्थक्रियेति**। उपलक्षणं चैतत्, ज्ञानान्तरसंवादोऽपि नार्थतथात्वाभावे घटत इति ततोऽप्यर्थतथात्वनिश्चयः तथा गुणवत्कारणजन्यं यथार्थमेव भवतीति कारणगुणावधारणादपि शक्यतेऽर्थस्य तथाभावो निश्चेतुमिति। परिहरति—**नेति**। अतोऽर्थक्रियाज्ञानं व्यभिचारान्न स्वतःप्रमाणमित्यर्थः। अर्थक्रियाशब्देन नोदकाहरणादिकमुच्यते किंतु ज्ञानमेव सुखात्मकम्, सर्वं च ज्ञानं स्वार्थे स्वतएव प्रमाणव्यभिचारादिति शङ्कते—**अथेति**। परिहरति—**सत्यमिति**। पूर्वज्ञानं सुखजनकज्ञानं भवतु नाम तेन ज्ञानेनार्थक्रियायाः सुखस्य सत्यत्वनिश्चयः तथापि पूर्वज्ञानस्य याथार्थ्यं दुर्निरूपं, अयथार्थादपि ज्ञानात्सुखोत्पत्तेरित्यर्थः। किंचार्थक्रियालिङ्गकानुमानप्रवृत्तेः पूर्वं केनचिदर्थस्य निर्णयोऽङ्गीकर्तव्यः, अन्यथा व्याप्तिग्रहणस्यैवासंभवः। यच्च पूर्वमर्थनिर्णायकं तस्य स्वतःप्रामाण्यमङ्गीकर्तव्यम्। एवंच सर्वत्र तथैवास्तु किं वैरूप्याङ्गीकारेण। सिद्धान्तमुपसंहरति—**तस्मादिति**। नन्ववस्तुत्वाद्दोषजन्यमप्रामाण्यं न भवति अतस्तज्जन्यं च कथं ततो निश्चेतुं शक्यम्। उच्यते—न निश्चयप्रागभावरूपमप्रामाण्यं, किंत्वविद्यमानार्थप्रकाशकत्वरूपं, तच्च शक्यं दोषज्ञानेन निश्चेतुम्, अर्थान्यथात्वस्य दोषनिमित्तत्वात्। दुष्टेषु कारणेष्वयथार्थत्वदर्शनात्। स्वतःप्रामाण्योपपादनफलमाह—**एवंचेति**। ननु गुणविधुरेषु दुष्टेषु च कारणेष्वयथार्थज्ञानं जायते तत्कथमयं निर्णयो दोषनिमित्तकमेवायथार्थत्वं न *गुणाभावनिमित्तकमिति। सत्यम्। यद्यपि प्रसिद्धेष्वयथार्थज्ञानेषु गुणाभावो दोषश्चेति द्वयं दृष्टं, तथापि *वेदे गुणाभावेऽपि प्रामाण्यदर्शनात्तन्माबाधीति दोषनिमित्तमेवायथार्थत्वं शुक्तिकारजतज्ञानादीनां कल्प्यते, दोषस्यैव तिमिरादेस्तन्निमित्तत्वेन बहुलमुपलब्धेः। किंच गुणाभावस्याप्रामाण्यहेतुत्वे गुणस्य प्रामाण्यहेतुत्वं वाच्यं, तच्च न युज्यते, गुणाभावेऽपि शुक्तिरजतादिज्ञानेषु शुक्लत्वभास्वरत्वादिरूपाणां तथाभूतानामेव दर्शनाद्धर्म्यंशे प्रामाण्याच्च। *तस्मात्स्वकारणादेव यथार्थत्वं ज्ञानस्य, दोषादयथार्थत्वमिति। अत्रेयमुपपत्तिः—गुणज्ञानात्संवादज्ञानात्पूर्वं ज्ञानं तावज्जायतएव, तच्चोत्पन्नमपि तत्संशयात्मकमवभासते। अतएव ज्ञानोत्पत्तेरनन्तरमेव प्रमातॄणां भ्रान्तिसंविदितेऽपि रजते सम्यग्रजतबोध इव प्रवृत्तिर्दृश्यते अतो जातोऽपि निश्चयः पश्चात्कथमप्रमाणं भविष्यति, सत्यपि संवादे गुणज्ञाने वा तावदेव प्रमाणस्य सत्वं नाधिकं किंचित्, अतः किं तदपेक्षयेति। यथाहुः—'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम्। नहि स्वतोसती शक्तिः कर्तुमन्येन शक्यते'। अत्र पूर्वार्धेन ज्ञानहेतूनां प्रामाण्येऽपि व्यापार इति प्रतिज्ञातं, उत्तरेण तु सामग्र्यन्तराभावस्तत्र हेतुरुक्तः। अन्येन विज्ञानसामग्र्यतिरिक्तेनेत्यर्थः। श्लोके च स्वशब्द आत्मीयवचनः। **ननु** स्वतःप्रामाण्यवादिनापि गुणवदिन्द्रियादिकारणिकैव प्रमाणोत्पत्तिरास्थेया, तद्यदि गुणाः प्रमाणोत्पत्तौ कारणं तदार्थनिश्चयाख्ये तत्कार्येऽपि तदधीनता युक्ता, तदायत्तप्रामाण्याश्रयणात्। उच्यते—प्रमाणोत्पत्तावपि न गुणा इत्येवापेक्ष्यन्ते किंतु दोषनिराकरणौपयिकतया, दोषाणां प्रामाण्योत्पत्तिविघातक-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

नाम्। **स्वतः स्यादिति**। ज्ञानस्वभावानुबन्धि औत्सर्गिकमेव स्यादित्यर्थः। केनचित्प्रमाणेन। **गुणाभावेति**। गुणाभावनिमित्तत्वे तु वेदस्याप्रामाण्यं स्यादिति भावः। **वेदे गुणाभावेपीति**। शब्दे चाप्तप्रणीतत्वकारणगुणस्तदभावेऽपीत्यर्थः। एवं सिद्धे विज्ञानहेतूनां प्रामाण्योत्पादकत्वे वेदेऽपि तत्संभवात्सिद्धं प्रामाण्यमित्याह—**तस्मादिति**। वक्तृगुणेषु कारुणिकत्वा-

---

१ अतोऽर्थज्ञानं.

**ज्ञानाभावादपोदितं प्रामाण्यं भवति । पौरुषेयवचनानि तु पुरुषबुद्धिप्रभवत्वाद्भ्रान्त्या विप्रलिप्सया वा प्रयुक्तानि मूलदोषेण दुष्टत्वादयथार्थानि भवन्तीति वैषम्यम् ॥**

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

त्वात् । गुणैरुत्सारितानां च तद्विघातकत्वासंभवात् । अतएवासत्स्वपि वक्तृगुणेषु वेदे दोषाभावमात्रादेव प्रामाण्यं सिध्यति । किंच गुणाः प्रमाणोत्पत्तौ कारणं नैतावता प्रमाणकार्येऽप्यर्थनिश्चयाख्ये तदपेक्षा युक्ता, नहि घटः स्वोत्पत्तौ मृत्पिण्डदण्डादिकारणापेक्ष इति स्वकार्ये जलाहरणेऽपि तदपेक्षेत । लब्धात्मनां स्वकार्येषु कारणनिरपेक्षाणामपि प्रवृत्तिदर्शनात्, कारणगुणाद्यपेक्षायां त्वनवस्थायाः परिहर्तुमशक्यत्वात् । स्वतःप्रामाण्ये तु नानवस्थापत्तिः, ज्ञानस्वभावादेवार्थनिश्चयस्य सिद्धत्वात्, मिथ्यात्वाशङ्का तु तद्धेतुभूतदोषाज्ञानादयत्नेनैव निवर्तते इति । तस्माद्बोधस्वभावानुबन्धिज्ञानानामौत्सर्गिकमेव प्रामाण्यम् । यथाहुः—'तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते' इति । अर्थान्यथात्वज्ञानं च द्वेधा, नैतदेवमिति पूर्वावगतरूपोपमर्देन तत्त्वप्रकाशनेन वा । हेतवो ज्ञानानामिन्द्रियादयस्तेषु वातादिसमुत्था दोषास्तिमिरादयः तज्ज्ञानेनोत्सर्गतः प्राप्नुवन्ती प्रमाणताऽपोद्यत इति श्लोकार्थः । **नन्वस्तु** नाम स्वतःप्रामाण्यमप्रामाण्यं तु कथं परतः तस्यावस्तुत्वेन दोषैरजन्यत्वात् । उच्यते—त्रिविधमप्रामाण्यं तत्र संशयविपर्यययोर्ज्ञानात्मकवस्तुत्वाद्दोषजन्यत्वं युक्तमेव, ज्ञानप्रागभावस्त्ववस्तुतयैव प्रसिद्धः । नचास्माकमप्यसौ दोषैर्जन्यते ज्ञानकारणाभावादेव तत्सिद्धेः । यथाहुः—'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः । वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात्' इति । **नन्व**प्रामाण्यस्यापि परतस्त्वेऽनवस्था स्यात् । न । पारतन्त्र्यस्यैवानवस्थापादकत्वात् । मैवम् । पराश्रयतामात्रस्यानवस्थानापादकत्वात् सजातीयापेक्षायां ह्यनवस्था भवति । यथा प्रामाण्यस्य प्रमाणापेक्षायाम्, अप्रामाण्ये तु स्वतःप्रमाणेन नैतदेवमिति साक्षाद्विपर्ययज्ञानात् । **ननु** स्वतःप्रामाण्यपक्षे पूर्वज्ञानमप्यसंदिग्धमेवोत्पन्नं कथमप्रमाणं भविष्यति येन परेण बाध्यते, पूर्वेणैव परं किं न बाध्येत । नैष दोषः । उत्सर्गतः पूर्वस्यापि प्रामाण्यं प्राप्तमेव, अपवादभूतेन तूत्तरेण बाध्यमानं तदप्रमाणं भवति । नच वैपरीत्येन बाधः शङ्क्यः, यद्धि यद्बाधमानमवभासते तत्तस्य बाधकमभिधीयते । नचानागतोत्तरबाधरूपेण पूर्वमवभासते उत्तरं तु पूर्वज्ञानबाधमन्तरेणानुत्पद्यमानं तस्य बाधकं भवति तच्च स्वत एव प्रमाणमिति न काचिदनवस्था । **ननु** नेदं रजतमित्यादिना परेण पूर्वस्य बाधो युक्तो विषयैक्यात्, दोषज्ञानं तु कारणदोषविषयत्वेन पूर्वस्माद्भिन्नविषयं, कथं तेन पूर्वज्ञानप्रमाणताऽपोद्यत इत्युच्यते । सत्यमेवम् । तथाप्यर्थात्तुल्यार्थतामासाद्य बाधो भवति दोषाणामयथार्थज्ञानहेतुत्वात् । तथाहि शङ्खे पीतमिदमिति ज्ञाने जाते परतश्च ज्ञानकारणदोषेऽवगतेऽर्थात्पीतिमा शङ्खस्य प्रतिक्षिप्तो भवति यथा क्रत्वर्थपुरुषार्थत्वेन भिन्नविषययोरपि चमसगोदोहनयोरवान्तरव्यापारैक्येन बाध्यबाधकभावस्तथेहापि । तत्किमेष एवोत्सर्गो यत्सर्वदा परेण पूर्वं बाध्यते । नेति ब्रूमः—यदोत्तरज्ञाने बाधधीर्न भवति कारणदोषज्ञानं वा तदा पूर्वस्य बाधः । यदा तु बाधकज्ञानं सापवादं भवति तदा पूर्वज्ञानमेव निरपवादमौत्सर्गिकं प्रामाण्यं लभत इति ॥

**ननु** प्रमाणेन सता तृतीयेन बाधकं बाध्येत तदेव तु कथं प्रमाणम्, दोषाज्ञानादिति ब्रूमः—सर्वं हि ज्ञानं स्वतएव प्रमाणं यद्यपि विज्ञायमानदोषं भवति अतस्तृतीयेन बाधकज्ञानेन बाधिते पूर्वस्यैव प्रामाण्यं भवतीति । यस्य तु तृतीयेऽपि ज्ञाने दोषज्ञानं बाधकं वा जायते तस्यास्तु चतुर्थज्ञानावसानो निर्णयः । नत्वेवम्, प्रायेण प्रथमज्ञान एव निर्णयदर्शनात् । उक्तंच—'*एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः । प्रार्थ्यते तावतैवैकं स्वतःप्रामाण्यमश्नुते' । शब्दे च वक्त्रधीना एव दोषाः, वेदे तु वक्तुरभावान्निराश्रया दोषा न भवन्तीति निरपवादं प्रामाण्यमुपपन्नं भवति । 'पौरुषेये द्वयं दृष्टं दोषाभावो गुणस्तथा । प्रामाण्यं तत्र गुणतो नैव स्यादनवस्थितेः ॥ *तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः *अप्रामाण्यद्वयासत्त्वात्तेनोत्सर्गोऽनपोदितः' ॥ गुणाश्च स्वरूपसन्त एव दोषानुत्सारयन्ति न ज्ञायमानाः, ततो सन्तो दोषा न जाता इति सहजं प्रामाण्यमवतिष्ठते । यदि तु प्रमाणान्तरेण ज्ञाता एव गुणा दोषानुत्सादयेयुस्तदाऽनवस्था स्यात्, नत्वेवम्, नापि संवादापेक्षं प्रामाण्यमनवस्थानात् । वेदे च प्रमाणान्तरसंवादासंभवात्तदनुवादकत्वापत्तेश्च । '*तस्माद्दृढं यदुत्पन्नं न विसं-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

कारुणिकत्वादिषु हेतुत्वात् दोषज्ञानस्यापि स एव विषयः पर्यवस्यतीति भावः । अवान्तरव्यापारः प्रणयनाख्यः । बाधः द्वितीयं ज्ञानम् । नन्वेवं सति बाधकस्यापि बाधकान्तरदर्शनात्कस्मिन्निष्ठेत्यत आह—**एवमिति** । एवं त्रिचतुरैरेव ज्ञातैः दोषाभावसिद्धेर्न ततोऽधिका मतिः प्रार्थनीया । प्रामाण्यसिद्धौ येनानवस्था स्यात् यावदेव तु तृतीयं चतुर्थं वा ज्ञानमुत्पन्नं तावदेवैकं पूर्वमुत्तरं वा निरपवादं स्वतःप्रामाण्यं प्रतिपाद्यत इत्यर्थः । कुत्र तर्हि गुणानामुपयोगस्तत्राह—**तस्मादिति । अप्रामाण्यद्वयेति** । अतो प्रामाण्यस्य यत्कारणद्वयं तदसत्त्वादुत्सर्गतः प्रामाण्यमनपोदितमित्यर्थः । संवादासंभावात् अलौकिकार्थप्रमापकत्वेनेत्यर्थः । **तस्माद्दृढमिति** । यस्मादेते संवादापेक्षिणि प्रामाण्ये दोषास्तस्माद्विभज्य

शब्दस्यानुमानेऽन्तर्भावपूर्वपक्षः।

केचित्त्वाहुः—न लोकेऽपि शब्दस्यायथार्थत्वमस्ति तदभावात्, नहि लोके शाब्दं प्रमाणमस्ति वक्त्रभिप्रायानुमापकत्वात्पुरुषवचसाम्, तेनानुमानस्यैवायं व्यभिचारो न शब्दस्य। नवा तस्यापि विवेकाग्रहणादलिङ्गे लिङ्गव्यवहारप्रवृत्तिः। यदि तु शब्दस्यैवायं व्यभिचारोऽभ्युपेयते स्वाभाविकमेवाप्रामाण्यं स्यात्, नहि पुरुषदोषेण शब्दस्य दोषो भवति यथावस्थितशब्दाभिव्यक्तिमात्रे पुरुषस्य व्यापारात्॥ * ॥ तदिदमसारम्। यदि लोके शाब्दं नास्ति तदा वेदेऽपि कथं तत्स्यात्। 'नह्यभिप्रायानुमानक्षीणस्य शब्दस्यार्थंप्रति वाचकत्वे प्रमाणमस्ती'त्युक्तं न्यायरत्नमालायाम्॥ * ॥ यच्च व्यभिचाराभ्युपगमे स्वाभाविकमप्रामाण्यं भवति पुरुषदोषस्य शब्देऽनवतारादिति। स्यादेतदेवं यदि यदीयं यद्वाक्यं तत्र स पुरुषोऽभिव्यञ्ज्यात्। तत्तु तेनैव क्रियते वर्णा नित्याः पदानि च, वाक्यानि तु पुरुषैरेव क्रियन्ते पौरुषेयत्वादेव। यथावस्थितानि व्यज्यमानानि वेदवाक्यवदपौरुषेयाण्येव स्युः। ततश्च वक्त्रभिप्रायानुमापकत्वमपि न स्यात्, तद्यथाऽध्येतृभिरभिव्यज्यमानानि वेदवाक्यानि नाध्येतॄणामभिप्रायं सूचयन्ति तथा पुरुषवाक्यान्यपि न सूचयेयुः। यदि हि व्यभिचारशङ्कया लोके शब्दस्य प्रामाण्यं न संभवतीत्युच्यते, तर्हि तद्वक्त्रभिप्रायानुमानेऽपि तुल्यम्। अन्यथासंविदानस्याप्यन्यथावाक्यरचनादर्शनात्। किंच शब्दस्य चक्षुरादेरिव स्वसामर्थ्येन बोधकत्वाद्व्यभिचारेऽपि न बोधकत्वहानिः। लिङ्गस्याव्यभिचारिण एव गमकत्वमिति व्यभिचारिणोऽलिङ्गत्वमुपपन्नम्॥ * ॥ अथ वक्तुराप्तत्वाद्व्यभिचारशङ्कां निवर्त्यानुमानं, तथासति शाब्दमेवार्थे प्रमाणमस्तु प्रतिबन्धिकायाः शङ्काया निरस्तत्वात्। अवश्यं हि बुद्धिविशेषमनुमित्सता प्रथमं पदार्थास्तेषां चान्वययोग्यतालोचयितव्या, ते चालोच्यमाना द्रागेव वाक्यार्थं बोधयन्तीति नानुमानं प्रतीक्षन्ते॥ * ॥ किंचानुमिते बुद्धिविशेषे पश्चादनुवादभूतं वाक्यं वाक्यार्थमवबोधयतीति वः सिद्धान्तः, ततश्च यो नामानाप्त एवाप्तबुद्ध्या गृहीतस्तद्वाक्यादयथार्थमेव ज्ञानमुत्पन्नमित्यभ्युपगन्तव्यं, ततश्च दोषाधीनत्वादप्रामाण्यस्य वक्तृदोषाणां च शब्दे संक्रान्त्यनभ्युपगमात्स्वारसिकमेव शब्दे दुष्टत्वमापन्नमिति बलादप्रामाण्यं वेदस्य प्रसज्यत इत्यास्तां तावत्। तस्मादनाप्तवचसां सत्येवाप्रामाण्ये वक्तृदोषाधीन-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

वादमृच्छति। ज्ञानान्तरेण *'विज्ञानं तत्प्रमाणं प्रतीयताम्'॥ अत्र वार्तिककारैः स्वतःप्रामाण्योपयोग्यन्यदपि प्रमेयं निरूप्यानन्तरं भाष्यव्याख्याप्रसंगेन सुगतसार्वज्ञ्यमार्हतसार्वज्ञ्यं च निराकृत्यानन्तरं सृष्ट्यादौ नित्य एवायमागमः सुप्तप्रतिबुद्धन्यायेन हिरण्यगर्भस्य प्रतिभातस्ततःप्रभृत्येषा स्वाध्यायपरम्परेति वेदान्तवादिमतं *'सिद्धान्तपरिपन्थित्वेन 'नित्यागमावबोधोऽपि प्रत्याख्येयो*ऽनया दिशे'त्यादिना निराकृत्यानन्तरं भाष्यग्रन्थान्व्याख्याय तत्सूचितमनुमानं च 'चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः। *कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्तयक्षबुद्धिवत्' इत्यादिनोक्त्वा भाष्यार्थोपसंहारः कृतस्तत्सर्वं तत्रैवावगन्तव्यं विस्तरभयान्नेह लिखितम्॥

प्रसङ्गादेकदेशिमतं निराकर्तुमुपन्यस्यति—**केचित्त्विति**। तदभावात् लोके शब्दलक्षणप्रमाणाभावात्। कथमेतावता शब्दस्यायथार्थत्वपरिहारोऽत आह—**तेनेति**। तेनेत्यादिर्विवेक्तव्यमित्यन्तो ग्रन्थः स्पष्टार्थः। उपपादितमर्थं निगमयति—

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

संवादग्रहं यदुत्पन्नं दृढं असंदिग्धम्। अनेन संशयस्य व्युदासः। उत्पन्नमित्यनुत्पत्तेर्न विसंवादविपर्ययमृच्छतीति। **विज्ञानमिति**। विशिष्टं ज्ञानं अधिकार्थविषयं तेन स्मृतेर्व्युदासः ततस्तस्याः पूर्वज्ञानादनधिकार्थविषयत्वादित्यर्थः। आर्हतः क्षपणकः। **सिद्धान्तपरिपन्थित्वेनेति**। एतादृशः पुरुषो धर्माधर्मावप्यपरोक्षमीक्षेत। ततश्चोदनैवेति प्रतिज्ञाहानिः स्यादित्यर्थः। **अनयेति**। क्षपणकसर्वज्ञनिराकरणप्रयुक्तयेत्यर्थः। **कारणैरिति**। दोषयुक्तं बाधयुक्तं षड्ज्ञानका-

**त्वाद्वेदे च तदभावात्प्रामाण्यमेव वक्तव्यम्। तस्माच्चोदनालक्षण एव धर्मः श्रेयस्कर इत्यर्थः। यदेव श्रेयःसाधनरूपं यागहोमादि तदेव धर्म इत्युच्यते लोके, नापूर्वमन्तःकरणप्रवृत्त्यादि वा लोकप्रसिद्धिविरहात्॥**

धर्मलक्षणविचारः।

**नन्वपूर्वमेव श्रेयःसाधनम्। न। अवान्तरव्यापारमात्रत्वात्। तस्माद्यागादिरेव श्रेयःसाध-**

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**तस्मादिति**। धर्मपदार्थं व्याचष्टे—**श्रेयस्कर इति**। लोके यागहोमादिकर्तरि धार्मिकपदप्रयोगादित्यर्थः। यागादेरेव श्रेयःसाधनत्वबोधनादिति भावः॥

अत्र चोदयति—**नन्विति**। नैयायिकादिभिर्विहितयागादिक्रियासाध्यापूर्वस्यैव धर्मत्वाङ्गीकारादित्यर्थः। परिहरति—**नेति**। अतीन्द्रियापूर्वदर्शनमन्तरेणापि यागादिकर्तर्येव *धार्मिकपदप्रयोगदर्शनादिति भावः। तदुक्तं—'अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः। धार्मिकत्वसमाख्यानं *तद्योगादिति गम्यते'। **ननु** न तावद्यागादीनां स्वरूपमेव धर्मः, तेषामिन्द्रियकत्वेन धर्मत्वनिषेधात् श्रेयःसाधनत्वरूपेणैव धर्मत्वोक्तेः—तच्च रूपमतीन्द्रियत्वादपूर्ववदेवाप्रत्यक्षं ततश्चान्यत्साध्यमदृष्ट्वेत्यनेन न्यायेन यागादिस्वरूपस्यैव धर्मत्वमित्यापन्नं, स्वरूपाभिधाने चैकस्यैव धर्मपदस्य नानाजातीयेषु द्रव्यगुणकर्मस्वनेकशक्तिकल्पना स्यात्। नच सकलानुगतप्रीतिसाधनत्ववचनाददोष इति वाच्यम्। तस्यातीन्द्रियत्वात् विशिष्टवाचकस्य प्रीतिरूपविशेषणमात्राभिधानप्रसङ्गाच्च। किंच विधेयस्य धर्मपदार्थत्वे भावनाया एव विधेयतया धर्मपदवाच्यता स्यात्। सा हि त्र्यंशा विधीयत इति सिद्धान्तेन यागादेरविधेयत्वात्, तद्वरमपूर्वमेव धर्मपदवाच्यं तदन्वयव्यतिरेकानुविधानाद्धर्मपदस्य। तथाहि फलकालेऽसत्यपि कर्मण्यपूर्ववत्त्वयैव धर्मवानयमित्युच्यते। सत्स्वपि च यागादिषु वैगुण्येनापूर्वानिष्पत्तौ न धर्मवानिति प्रयुज्यते। अतोऽपूर्वमेव धर्मशब्दार्थः। अत्रोच्यते—धर्मशब्दोऽयं पाचकादिवत्सभाग एव धृतिसाधने वर्तते। धृतिरिति च प्रीतिपर्यायः। धृङ्ञ धृतिः प्रत्ययेन च तत्साधनमभिधीयते। पृषोदरादिमध्यपतितश्चायम्। नचैवं भोजनादौ प्रसङ्गः। चोदनालक्षणश्रेयस्करमात्रे रूढत्वात्। नच भावनायां प्रसङ्गः, विहितत्वेऽपि तस्या असाधनत्वात् यागादीनामेव श्रेयःसाधनत्वस्य चोदनाप्रमाणकत्वात्। नचैवं विशेषणमात्राभिधानापत्तिः, अखण्डस्यैव प्रायेण विशेषणमात्राभिधायकत्वदर्शनात्। असत्यां च गतौ सर्वाभिधानस्यैव युक्तत्वात्। *उक्तंच—'यत्र ह्येकखण्डेन शब्देन विशिष्टो बोध्यते तत्र विशेषणमेव शब्दस्य वाच्यम्। गवादिशब्दवत् *सामशब्दवच्चेति। केवलरूढ्यभ्युपगमेन वा उपाधिद्वयस्याभिधानमेव वाच्यम्, प्रीतिसाधनत्वस्य विहितत्वस्य च, उभयत्र धर्मपदोपचारात्। नच प्रीतिसाधनत्वरूपस्यादृश्यत्वोपालम्भः, तद्रूपस्य वेदादवगमात्। नचापूर्वस्य वेदादवगतिः, तस्य* अवान्तरव्यापारत्वेन कल्प्यत्वात्। असत्यपि कर्मणि कृतयागत्वेनैव धार्मिकपदप्रयोगोपपत्तेः। यदप्युक्तं विगुणे प्रयोगाभावान्न यागादिर्धर्म इति। तन्न। तथाविधस्याभ्युदयसाधनत्वाभावेन तत्र धर्मपदप्रयोगाभावात्। फलकाले तु धर्मवत्पदप्रयोगोऽभ्युदयसाधनाभिप्राय एव तदानीमपि शक्तिरूपेण यागस्य सत्त्वात्। **ननु** यागादिसाधनवादिनोऽप्यपूर्वसिद्धिमन्तरान्तर्भाव्यैव साधनत्वं वदन्ति। तथाह्याहुः—'तेनापूर्वं कृत्वे'ति। प्रत्यासन्नफलं चापूर्वमेव। अतिक्रान्ते कर्मणि तत एव फलसिद्धेः। अतोऽपूर्वं धर्म इत्येव न्याय्यम्। मैवम्। तद्धि कर्मशक्तिः फलशक्तिर्वा वस्त्वन्तरमेव वा स्यात्। नचैतस्य साध्यसाधनयोरन्यतररूपानुप्रवेशः संभवति। न तावत्फलसाधनभूतं सत्कल्प्यते। नापि यागसाध्यभूतं, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। नाप्युभयरूपरहितं निःस्वभावस्यासद्रूपतापत्तेः। अतो यागस्य फलोत्पादिका शक्तिः, आत्मनो वा फलभोगयोग्यता, फलस्य वाङ्कुरावस्थावान्तरव्यापाररूप एव वा कश्चित्पदार्थः, सर्वथा तावद्यागादिवाचकस्य धर्मशब्दस्य तत्प्रतिपादकत्वानुपपत्तिः। नह्युदकाहरणोत्पादिका शक्तिर्घटशब्देनाभिधीयते। सांख्यास्तु मनसो वृत्तिविशेषं धर्ममाहुः। शाक्यास्तु चित्तस्य शुभां वासनाम्। आर्हतास्तु कार्या-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

रणं ततोऽन्यत् कारणजन्यत्वात् प्रत्येकं लिङ्गादिभिर्बुद्धिशब्दः संबध्यते। **धार्मिकेति**। लौकिकानां प्रयोगदर्शनादित्यर्थः। **तद्योगादिति**। गङ्गास्नानादिना पुण्यं भवतीति लोकप्रसिद्ध्या क्रियातिरिक्ते पूर्वेऽपि प्रयोगादुभयमपि वाच्यम्। तन्न। तत्रापि पुण्यस्यावान्तरव्यापारत्वेन स्वर्गादेरेव फलत्वात् अन्यथा स्वर्गादेः स्नानाद्यसाध्यत्वं स्यादिति। **उक्तंचेति**। काशिकाटीकायामित्यर्थः। **सामेति**। अतएव सामशब्दो गीतिमात्रवचन इत्यर्थः। **अवान्तरेति**। प्रायेण करणावान्त-

१ दपूर्वमवाप्रत्यक्षं. २ रर्थान्तररूपा.

**नरूपेण धर्मः । तद्रूपाभावाच्च न शूद्रकृतस्य धर्मतापत्तिः । चोदनालक्षणमात्रस्य धर्मत्वं माभूदित्यर्थशब्देन विशेष्यते ॥ * ॥ चोदनाशब्देन च प्रवर्तकं निवर्तकं च वाक्यमुच्यते ततश्च निषेधवाक्यैः 'न हिंस्यात्' इत्यादिभिरनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि धर्मत्वं स्यात् तद्व्यावृत्त्यर्थं य एवार्थरूपेण प्रवर्तकवाक्यैर्लक्ष्यते तस्यैव धर्मत्वं वक्तुमर्थग्रहणम् ॥ * ॥ भाष्ये च श्येनादिग्रहणं तत्साध्यहिंसादिलक्षणार्थम् । उपरिष्टात् 'हिंसा हि सा, सा च प्रतिषिद्धा' इति विवरणात् ॥**

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

रम्भकान्सूक्ष्मान्मूर्तिमतः पुद्गलान्धर्ममाहुः*। पुद्गलशब्दश्चार्हतैस्तेष्वेव परिभाष्यते। वैशेषिकाश्चात्मनो विशेषगुणं मीमांसकैकदेशिनस्त्वपूर्वमेव धर्ममाहुः । सर्वेषु चैतेषु लोके धर्मशब्दप्रयोगादर्शनात् विधिना तेषां श्रेयःसाधनत्वानवगमाच्च नास्ति धर्मत्वम्। अतो यागादेरेव धर्मशब्दवाच्यतेत्युपसंहरति—**तस्मादिति**। अनधिकारिकृतस्य श्रेयःसाधनत्वाभावादिति भावः। धर्मपदं व्याख्याय सूत्रगतार्थपदव्यावर्त्यमाह—**चोदनेति**। चोदनाशब्दार्थमाह—**चोदनेति**। नन्वेतदयुक्तं, लिङादिप्रत्ययमात्रस्यैव विधौ स्मरणात् तस्य च प्रवर्तनाभिधानद्वारेण प्रवर्तकत्वं न वाक्यस्य, सत्यं तावन्मात्रस्य प्रवर्तकत्वं, तथापि तेन स्वव्यापारे पुरुषः प्रवर्त्यते। अंशत्रयात्मिका च भावना तद्व्यापारः तदंशलाभश्च नर्ते वाक्यात्सिध्यतीति युक्तमुक्तं प्रवर्तकं वाक्यं चोदनेति। तदुक्तम्—*'किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ॥ तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते'। लक्षणपदं च व्याख्यातप्रायम्। अस्तु वाक्यस्य चोदकत्वं, ततः किमत आह—**ततश्चेति। ननु** 'उभयमिह चोदनया लक्ष्यतेऽर्थोऽनर्थश्च, कोऽर्थो यो निःश्रेयसाय ज्योतिष्टोमादिः, कोऽनर्थो यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिस्तत्रानर्थो धर्म उक्तो माभूदित्यर्थग्रहणमिति भाष्ये श्येनादेरेवानर्थत्वोक्तेस्तद्विरुद्धं हिंसादीनामनर्थत्वकथनमित्याशङ्क्याह—**भाष्येचेति**। कथमेवं भाष्यार्थोऽत आह—**उपरिष्टादिति**। 'कथं पुनरसावनर्थः हिंसा हि सा सा च प्रतिषिद्धा' इत्यग्रिमभाष्यग्रन्थेन हिंसारूपश्येनशब्दार्थविवरणादित्यर्थः । **नन्वनर्थश्चोदनालक्षणपदेनैव व्यावर्तितः** विधायकवाक्यस्य चोदनात्वात् तेन चानर्थहेतोर्हिंसाया अलक्ष्यमाणत्वात्प्राणवियोगफलको व्यापारो हिंसा, सा च 'न हिंस्यात्सर्वाभूतानि' इति निषिद्धत्वादनर्थः सतु निषेधलक्षणो न चोदनालक्षणः, अथ चोदनालक्षणत्वाच्छ्येनादय एवात्र प्रत्युदाहरणभूताः तर्हि तेषां विधिविषयत्वेन निषेधागोचरत्वादनर्थत्वमेव नास्ति कथमर्थपदेन व्यावृत्तिः स्यात् । अथ श्येनादीनामपि हिंसाफलत्वेन निषेधविषयत्वादनर्थत्वम्, तन्न। केवलनिषेधविषयत्वस्यैवानर्थोपादकत्वात् कलञ्जभक्षणादिवत्प्रत्यवायहेतुत्वाच्छ्येनादीनां विधिविषयत्वेन षोडशिग्रहणादिवदनर्थत्वाभावात्। उक्तंच—'यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशि। विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत्'। किं पुनरेषां प्रत्यवायहेतुत्वे प्रमाणं, प्रतिषेध एवेतिचेत्। न। प्रतिषेधविधेरनर्थमात्रपर्यवसायितया निषेध्यस्य प्रत्यवायहेतुत्वबोधने शक्त्यभावात्, निषिध्यमानक्रियायां च रागादिना प्रवृत्तः पुमानधिकारी लब्ध एवेति *नाधिकार्यान्तरापेक्षा। **उक्तंच**—'निषिध्यमानक्रियाकर्तुरेवाधिकार' इति । किं पुनस्तस्य विशेषणं भक्षयतिरेवेति ब्रूमः । विषयविशेषणस्यापि सतो बलादधिकारिविशेषणतोपपत्तेः। यो भक्षयेत्स नेति वचनव्यत्त्यङ्गीकारात् श्रुतिपरतन्त्राणामशब्दार्थकल्पनानुपपत्तेः *अकरणं तु निषिद्धत्वादेव । नहि विधिनिषेधाभ्यामन्यो हेतुरस्ति प्रवृत्तिनिवृत्त्योः ॥

***अत्रोच्यते**—निषेधश्रुत्यर्थापत्तिरेव निषिद्धानां प्रत्यवायकरत्वे प्रमाणं विधिश्रुतिविहितानामभ्युदयहेतुत्वे तथैव व्युत्पत्तेः, निषेधश्रवणाद्धि दुःखहेतुरयं निषिद्धो विषय इति सर्वएव प्रतिपद्यते। अतएव न तत्र प्रवृत्तिः। यत्त्वधिकारिलाभे सति न कल्पनाबीजमस्तीति, तन्न। हिताहितप्राप्तिपरिहारार्थिन एव सर्वत्राधिकारान्न भक्षयतिरधिकारिविशेषणम्। नित्याधिकारेष्वप्युपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारार्थिन एवाधिकारसमर्थनात्। ततश्चैवं वचनव्यक्तिः । यतो दुःखजन्म तन्नेति । नापि श्येनादयोऽत्र हिंसाशब्देनाभिधातुं शक्यन्ते स्वरूपभेदात् । हिंसा हि श्येनादीनां फलं भवति

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

रव्यापारस्य करणेषु सत्स्वेवोपलम्भात्। अतोऽपूर्वस्यावान्तरव्यापारत्वं चिन्त्यम्। **आर्हताः। किमाद्येति**। किं केन कथमित्यनेनात्मनापेक्षितैः साध्यादिभिरपरिपूर्णः प्रत्ययः प्रवृत्तिपर्यन्ते विधौ समर्थ्य इति वाक्यस्यैव प्रवर्तकत्वेन प्रत्ययमात्रस्येत्यर्थः। **तादृशादिति**। विधिस्पृष्टविषयकनिषेधान्नैवार्थत्वं विज्ञायत इत्यर्थः । **अधिकार्यन्तरेति** । प्रत्यवाय परिहारकामः शतयातनादिपरिहारकामो वेत्यर्थः। प्रत्यवायहेतुत्वाभावे कुतो न क्रियतेऽत आह—**अकरणमिति**।

---

१ चोदनात्वम्.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

अभिचारत्वात् अतएवाभिचारिकं कर्मेत्युच्यते । यथाहुः—'हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ॥ सा हि प्राणवियोगात्मा श्येनस्तत्रासिवत्पृथक् ॥' अभिचारो मारणं हिंसेति पर्यायः। तद्यथाऽसिना शत्रौ व्यापाद्यमाने छेदनमेवासिजन्यं हिंसा नासिः, एवं श्येनजन्यमायुर्दुर्भाग्यच्छेदनमेव हिंसा न श्येनः । अतस्तत्र हिंसाभिधानमनुपपन्नमिति श्लोकार्थः । **ननु** 'सा हि प्राणवियोगात्मे'त्यनुपपन्नं, प्राणवियोगस्य मरणरूपस्य प्रयोज्यव्यापारत्वात् । नहि तत्र विधिप्रतिषेधौ संभवतः, हिंसाशब्दवाच्यमरणरूपप्रयोजकव्यापारविषयत्वात्तयोः । नहि मरणमेव मारणं, स्वरूपभेदाद्यपदेशभेदाच्च । नहि म्रियमाणो हिनस्तीत्युच्यते, तस्मादयमर्थः—प्राणवियोगआत्मावच्छेदको यस्य प्रयोजकव्यापारस्य स प्राणवियोगावच्छिन्नः प्रयोजकव्यापारो हिंसा न स्वर्गपश्वाद्यवच्छिन्न इति । **ननु** लोके मरणफलव्यापारस्य हिंसात्वप्रसिद्धेः श्येनोऽपि हिंसा स्यात् । नेति ब्रूमः । कूपादौ गवादिमरणे तत्कर्तुर्गोवधकर्तृतापत्तेः । **ननु** कूपादेरुपकारफलत्वेन चोदनान्न मरणफलत्वं, न *असिद्धस्यानुपकारकत्वेन तत्फलत्वासंभवात् । अथ मरणोद्देशेनानुष्ठीयमान इति विशेषणं श्येनश्च तथा कूपादौ च तदभावः, तर्हि पदद्वयघटितस्य हिंसार्थत्वे गौरवं स्यात्। मरणानुद्देशेन क्षिप्तनाराचाद्धते ब्राह्मणे च हिंसा न स्यात्। किंच। *अव्यवहितमरणफलको व्यापारो हिंसा पचतीत्यादावव्यहितफलव्यापारस्यैव धातुवाच्यत्वदर्शनात् । नच श्येनस्तथा, विलम्बेन मरणसाधनत्वात् । अतएव खड्गाद्याघातेन विषप्रयोगेण वा व्रणपाकपरम्परया यत्र मरणं तत्र न मुख्यं हन्तृत्वं प्रायश्चित्तोपदेशश्च मुख्यहन्तृत्वसादृश्यज्ञापनार्थः हन्तृव्यपदेशस्य तत्र गौणत्वात् ॥

**केचित्तु** मरणोद्देशेन कृतो दृष्टद्वारकस्तदनुकूलो व्यापारो हिंसा श्येनश्चादृष्टद्वारा मरणसाधनमतो न हिंसा । यदि चादृष्टद्वारापि मरणसाधनं हिंसा स्यात्तदा सप्तमीतैलाभ्यङ्गनिषेधस्यादृष्टद्वारेष्टभार्याविनाशकत्वादभ्यङ्गकर्तुर्हिंसकत्वापत्तिरित्याहुः । तन्न युक्तम् । उद्देश्यपदेनैव तद्व्यावृत्तिसिद्धेः । अभ्यङ्गस्य मरणोद्देशेनाक्रियमाणत्वात् अदृष्टद्वारकपदवैयर्थ्यात् ॥ **किंच** 'सप्तम्यां स्पृशतस्तैलमिष्टा भार्या विनश्यती'ति नायं विधिः किंतु सप्तमीतैलाभ्यङ्गनिषेधस्यार्थवादः । 'यथा तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्' इति विद्धोपवासनिषेधस्यार्थवादः विधिंविना चापूर्वद्वारकल्पनासंभवात् *तावन्मात्रेण च कूपादौ गोमरणेऽपि न तत्कर्तुर्गोवधकर्तृत्वं, नापि परिवेषयितुर्भोक्तृहन्तृत्वं, नापि गललग्नान्नमरणे भोक्तुरात्महन्तृत्वं, व्रणपाकपरम्परया विलम्बेनापि मरणे मुख्यमेव हन्तृत्वम् । **नन्वेवं** सत्यन्योद्देशेन कृते नाराचप्रक्षेपे तेनच ब्राह्मणे हते तत्कर्तुर्ब्रह्महन्तृत्वं न स्यात् । **अत्र कश्चित्**—इष्टापत्तिरेवात्र, व्यपदेशस्तु गौणः प्रयोगो लक्षणया समर्थयितुं शक्यते । अतएवातदुद्देशेन कृते प्रायश्चित्तार्धमुक्तमित्याह । तदयुक्तम् । ब्रह्महन्तृत्वेनैव तत्र संपूर्णद्वादशाब्दप्रायश्चित्तविधानात् । 'विहितं यदकामानां कामात्तद्द्विगुणं भवेत्' इति स्मरणात् 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेदि'त्यज्ञानकृते प्रायश्चित्तविधानाच्च । तस्मादेवं समाधेयम् । उद्देशपदेनात्र मरणफलकत्वमुच्यते मरणमेव फलं यस्येत्यर्थः । अन्योद्देशेन क्षिप्तनाराचस्य लक्ष्यवेधाभावान्मरणमेव फलं पर्यवसितमिति । प्रकृते तु श्येनजन्यमायुर्दुर्भाग्यच्छेदनमेव हिंसा तस्यैव मरणफलकव्यापारत्वात् न श्येनः । अतएवोक्तं—'श्येनस्तत्रासिवत्पृथक्' इति ॥

अत्र श्येनापूर्वं कुत्र जायत इति वक्तव्यम् । तत्र *केचिदाहुः—यो यद्गतफलान्विततया क्रियते स तदनुकूलमतिशयं तद्गतमेव जनयतीत्याधेयशक्तिसाधकव्याप्तेर्वैरिमारणरूपफलान्वितयागकर्तरि जायत इति । एकदेशिनस्तु श्येनापूर्वं यष्टुः प्रत्यवायापूर्वं तत्फलं च न वैरिहिंसा, किंतु स्ववृत्तिरेव नरकः, अपूर्वं तु हिंसामनुत्पाद्य नरकं साधयितुं न शक्नोतीत्यनन्तरं वैरिहिंसामेव जनयति श्येनवरिक्षप्रकारित्वात्, हिंसायाः क्षणिकत्वेऽपि तज्जन्यमपूर्वं द्वारम् । बलवदनिष्टसाधनत्वात्कथं तंत्र विधिप्रवृत्तिरितिचेत्। न कथंचिदिति ब्रूमः। यो हि *हिंसितुमिच्छेत्तस्यायमभ्युपगम इति हि तेषामुपदेशो न तु विधानम् । अतएव विध्याभासोऽयमित्याहुः । तदयुक्तम् । 'अभिचरन्यजेते'ति वैरिहिंसाफलत्वेन तस्य श्रवणात् । नरकस्य तत्फलत्वेनाश्रवणात्, कथं तर्हि श्येनहिंसाकर्तुर्नरकपातः हिंसारूपकर्मकर्तृत्वादिति ब्रूमः । किंच उद्देश्यफलरूपाया हिंसाया अपूर्वावान्तरव्यापारत्वमुच्यमानं नरकस्य चाश्रुतस्य श्येनफलत्वकल्पनमलौकिकमेवेत्युपेक्षणीयम् । वस्तुतस्तु वैरिमरणोद्देशेन

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

अधिकारिलाभे सति इति भक्षणः प्रज्ञात एवाधीकारीत्यर्थः । **अत्रेति** । हिंसाहिंसेत्यादिभाष्ये तत्कर्तुः कूपादिकर्तुः । **असिद्धस्येति** । जलाभावादनुपकारकत्वमित्यर्थः । **अव्यवहितेति** । विक्लित्तिरूपफलाव्यवधानएव पचतीति प्रयोगदर्शनादिति भावः । **तावन्मात्रेणेति** । मरणोद्देश्यकपदप्रक्षेपमात्रेणेत्यर्थः । तत्र अकामकृते । **केचिदाहुः** कुसुमाञ्जलौ उदयनाचार्याः । विधिव्यापार उपायोपेयभावप्रतिपादनरूपः । **हिंसितुमिच्छेदिति** । एतद्भाष्य उपायमात्रतयैव विधा-

---

१ कर्मोच्यते. २ फलकव्यापार. ३ फलकत्वम्. ४ त्यादौ च विहित. ५ तत्र प्रवृत्तिरिति. ६ मभ्युपाय इति. ७ श्येनस्य श्रवणात्. ८ रूपप्रसिद्धकर्म.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

क्रियमाणः श्येनादिः पुत्रेष्टिन्यायेन फलसमानाधिकरणं वैरिनिष्ठमेवापूर्वं जनयति। नन्वभिचारसाधनत्वेन श्येनश्रवणाद्वैरिमारणरूपफलान्विते यागकर्तरि तदपूर्वं कल्पयितुमुचितम्। सत्यम्। तथापि वैरिमरणस्यैवोद्देश्यत्वेन तत्फलत्वात् मारणस्यापि तादर्थ्यात्। हिंसाजन्यापूर्वं तु नरकरूपफलसमानाधिकरणं यागकर्तृनिष्ठमेव। एतच्च क्रत्वाचिन्तान्यायेनोक्तम्। भार्यापहारादिनिमित्तकश्येनाद्यनुष्ठाने प्रत्यवायाभावात्। 'षडेतानभिचरन्यजेते'ति श्रवणात्। अथ श्येनादयो नैव विधीयन्त इत्युच्येत। यदाह भाष्यकारः—'नैव श्येनादयः कर्तव्यत्वेन विधेया विज्ञायन्त' इति, कथमविधीयमानस्योपदिश्यमानत्वाभिधानम् 'यो हि हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेश' इति विध्युपदेशशब्दयोस्तुल्यार्थत्वात्॥

**अत्रकश्चिदाह**—द्वौ विधेर्व्यापारौ, एकस्तावद्धात्वर्थफलयोरुपायोपेयभावज्ञापनाख्यः, अपरोऽनुष्ठापकत्वरूपः। अयं चाधिकारविधिप्रमितोपायोपेयभावोत्तरकालीनः प्रयोगविधेर्व्यापारः। स नैव श्येनादय इत्यनेन निषिध्यते। तत्र पुरुषस्य लिप्सयैव प्रवृत्तत्वात्। यस्तु ततः पूर्वभाव्यधिकारविधिव्यापारस्तदभिप्रायेण यो हिंसितुमिच्छेदित्यादि। अतएव 'श्येनेनाभिचरन्यजेतेति हि समामनन्ती'त्यनेन श्येनस्योपायमात्रतां दर्शयति, नाभिचरितव्यमिति च प्रयोज्यतां निषेधति। एवंच सति निषिद्धेषु चोदनालक्षणेषूपायेष्वनर्थत्वमनिषिद्धेषु ज्योतिष्टोमादिष्वर्थत्वमिति। तदयुक्तम्। प्रवर्तनैकपरतया विधेः सर्वत्र प्रयोजकत्वाङ्गीकारात्। नहि प्रथममुपायोपेयभावो विधितः प्रतीयते किंत्वनवगतोपायत्वस्यैव भावार्थस्यानुष्ठानं इदं त्वं कुर्विति उत्पत्तिविनियोगयोरप्येतन्निर्वाहार्थमेव कल्पनात्। उक्तंच—'एकस्यैव विधेः प्रमेयभेदादुत्पत्त्यादयः क्रमभाविन्यश्चतस्रोऽवस्था भवन्ति इति। तत्र [*]प्रवर्तनैकपरतया प्रयोजकत्वमेव स्वाभाविकमतः स एव विधिरिति। यथाहुः—'विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धन' इति। तस्माद्विधेयो भावार्थो नच तं विधिरनुष्ठापयतीति विरुद्धम्। यदप्युक्तं लिप्सयैव तत्र प्रवृत्तिरिति। तत्र ब्रूमः। लिप्सायाः प्रवर्तकत्वे करणांशवदितिकर्तव्यतांशेऽपि सैव प्रवर्तिका स्यात्ततश्च प्रयोगविधेरुच्छेद एव। अतएवाहुः—'उपदेशाभिधानं च नाविधेयेऽवकल्पते॥ श्येनादेरविधाने च कस्यान्यस्य विधेयता॥ सर्वत्रावस्थितो न्यायो भावनांशद्वये विधिः। फलांशे भावनायाश्च प्रत्ययो न विधायक' इति च॥

**केचित्तु** अविधेयेष्वेव चोदनालक्षणत्वमात्रेणोपदेशवाचोयुक्तिः क्रमवदित्याहुः। यथा क्रमस्याविधेयस्यापि चोदनालक्षणत्वं विध्यनुमतत्वात् एवं श्येनादयोऽपि विध्यनुज्ञामात्रेणैव चोदनालक्षणा नतु विधीयन्ते। विध्यनुज्ञाच विनियोगविषयत्वात्। न तावत्क्रमस्य यागादिवद्विधेयत्वमभावार्थत्वात्। नापि दध्यादिद्रव्यवत्, अमूर्तत्वेनाकारकत्वात्। नाप्यरुणादिवद्द्रव्यावच्छेदेन कारकत्वम्। एकैकपदार्थावच्छेदकत्वेनानुपलक्ष्यमाणत्वात् अनेकाश्रयत्वात्। नापि संख्यादिवद्विधानमपृथक्पदाभिधेयत्वात्। पृथक्पदाभिधेया हि संख्या भवति। 'तां चतुर्भिरभ्रिमादत्त' इति। सा कथंचिद्विधीयेतापि। नचैवं क्रमः, प्रचयावगम्यत्वात्। तथाचेदं कृत्वा इदं कुर्यादिति पदार्था एव कर्तव्यबुद्ध्या गृह्यन्ते न क्रमः। पदार्थानां च बहूनां युगपदेकेन कर्त्रानुष्ठातुमशक्यत्वात्प्रयोगविधिः क्रममभ्यनुजानाति। तावन्मात्रेण क्रमः शास्त्रार्थः। एवंच श्येनादयोऽपि न विधीयन्ते, [*]नियोगविषयभावगत्या तु चोदनालक्षणा इत्युच्यते। अविधेयत्वाच्च निषेधविषयत्वोपपत्तिः। अतएव चोभयमिह चोदनया लक्ष्यते इत्यादिरयेनस्वरूपाभिप्रायमेव। हिंसाहीत्यपि श्येनादिस्वरूपाभिप्रायमेव। प्राणवियोगफलो हि व्यापारो हिंसा श्येनश्च तथा, अतः सोऽपि हिंसैव। नच श्येनानन्तरमेव निधनानुपलम्भनाच्च श्येनो हिंसेति वाच्यम्। किंचिद्विलम्बेऽपि तस्य तत्फलत्वानपायात्। खड्गाभिहतेऽपि क्वचिद्व्रणपाकादिनापि विलम्बसंभवात्, अतश्चोदनालक्षणो निषिद्धत्वेनानर्थश्च श्येनादिर्धर्मो माभूदित्यर्थग्रहणम्। नैतदपि युक्तम्। दृष्टान्तासिद्धेः। क्रमस्य विधेयत्वाङ्गीकारात्। यत्र विधिंविना पुरुषस्याप्रवृत्तिस्तद्विधेयं, नच फलादन्यत्र पुरुषो रागादिना प्रवर्त्यते, नच दीक्षाक्रमानुष्ठाने रागादयः प्रवर्तकाः, कथं तर्हि तत्र प्रवृत्तिरिति चेत् विधेरेवेति ब्रूमः। विधिर्हि साङ्गे प्रधाने कर्तारमायोजयन् तावतश्चैकेन कर्त्रा युगपदनुष्ठातुमशक्तेरानुपूर्व्यलक्षणं क्रममप्यनुष्ठापयति। पाठमिकश्रुत्यादिसहायश्च तत्क्रमानुपूर्व्यविशेषं शास्त्रार्थतया नियच्छति अविनियुक्तस्यानङ्गत्वात् कथं प्रयोगविधिनानुष्ठापनमितिचेन्न। अविनियुक्तस्यापि पश्वेकत्ववदङ्गत्वोपपत्तेः। अन्ये पदार्थाः कर्मस्वरूपानुबन्धाः पृथगङ्गत्वेन विनियुज्यन्ते क्रमस्तु देशादिवत्प्रयोगानुबन्ध इति नास्य पृथग्विनियोगः। किंच 'अध्वर्युर्गृहपति'मित्यादेः क्रमं विना किमन्यद्विधेयं स्यात् कर्तृदीक्षयोर्नादकादेव प्राप्तेः। नापि वाचकानुपपत्तिः। क्त्वाश्रुतेरेव तद्वाचकत्वात् 'वषट्कर्तुः प्रथमभक्षः' इत्यादौ चानन्यपराभिधानावगमाद्विधेयत्वं सिध्यति 'वेदं कृत्वा वेदिं करो-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

नप्रतिपादनपरम्। **प्रवर्तनैकेति।** विधिशब्दो हि प्रवर्तकैकरसं विध्यात्मानमभिधत्ते तदन्वयानुपपत्तेः स एवान्यत्र संक्राम-

---

१ मरणस्योद्देश्यत्वेन. २ सर्वत्रच स्थितोन्याये. ३ वच्छेदकतया. ४ प्रत्ययाव. ५ कुर्वीतेति. ६ फले व्यापारो.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

ति'इति सक्रमपदार्थकर्तव्यतावगमात् । एवंच क्रमस्य विधेयत्वान्न तन्निदर्शनेनाविधानमेव श्येनादीनामतो नोदनालक्षणत्वसिद्धिः । किंचात्र श्येनादीनामविधेयत्वे किमन्यद्विधेयमिति वक्तव्यम् । अङ्गानि विधीयन्त इतिचेत् साधनांशवत्स्वपि रागादेरेव प्रवृत्तिसिद्धेः । किंच विधिविषयाः श्येनादयो न विधीयन्ते इति महदाश्चर्यम् । अविधेयस्य विधिविषयत्वानुपपत्तेः । अविधेयत्वे च भावनांशद्वये विधिरिति स्थितसिद्धान्तहानिः स्यात् । एवमंशद्वयस्याविधेयत्वे ज्योतिष्टोमादेरपि विधेयत्वं न स्यात् । ततश्चाधर्मत्वापत्तिः । निषिद्धत्वाभावादेव धर्मत्वं भविष्यतीतिचेत् । न । निषिद्धाङ्गत्वेन प्रत्यवायावहत्वादधर्मत्वापत्तेः । यद्यपि स्वरूपेण ज्योतिष्टोमादयो न हिंसा तथाप्यग्नीषोमीयादिपशुर्हिंसा तेषां साधनं सा चांशद्वयगामिन्यपि विध्यसंस्पर्शान्निषिद्धा, अतो निषिद्धाङ्गत्वेन प्रत्यवायजनकत्वं, विधेयत्वाभावे यागस्य फलाङ्गत्वं न स्यात् । तथेतिकर्तव्यताया अपि फलवत्साधनाङ्गत्वाभावः प्रसज्येत । स्यादेतत् । साधनत्वेन विहिता अपि साध्यतया न विधीयन्त इति कृत्वा अविधेया इत्युच्यन्ते । अतएवाह—'नैव श्येनादयः कर्तव्यतया विज्ञायन्त' इति । मैवम् । साधनत्वेनापि विधिसंस्पर्शेनानर्थत्वासंभवात् विधानमात्रस्यानर्थत्वपरिपन्थित्वात् । वस्तुतस्तु साध्यत्वेन विधानमनङ्गीकारपराहतमेव मीमांसकानाम् 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'ति साध्ये स्वयमेव पुरुषप्रवृत्तिसंभवात् । तस्मान्न श्येनादिनिवृत्तिरर्थशब्दस्य प्रयोजनमित्यन्यथा वर्णनीयम् । **अत्रोच्यते**—प्रवर्तकं निवर्तकं च वाक्यं चोदनाशब्देनोच्यते अतो निषेधचोदनालक्षितानां धर्मत्वं निवर्तयितुमर्थशब्दः । तदुक्तम्—'प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः । सा चोदनेति सामान्यलक्षणं * हृदये स्थितम्' ॥ अतएव ग्रन्थकारेण यथाश्रुतं भाष्यमुपेक्ष्य प्रवर्तकं निवर्तकं च वाक्यं चोदनेत्युक्तम् । कथं तर्हि भाष्यकारस्य प्रवर्तकवाक्यमात्रोपन्यासः । निवर्तकवाक्योपलक्षणार्थमिति ब्रूमः । यदि प्रवर्तकैकपर एव भाष्याभिप्रायो भवेत्तदार्थशब्दस्यैवंरूपा व्याख्या नोपपद्येत, अनर्थानामप्रवर्तकवाक्यलक्षितानामचोदनालक्षणत्वात् । अर्थशब्दसहितस्य वा चोदनाशब्दस्यैतद्व्याख्यानं 'प्रवर्तकं वाक्यं चोदने'ति । अर्थस्य हि प्रवर्तकवाक्यलक्षणत्वात् । 'अथवा चोदनासूत्रे सूत्रकारेण सूत्रितम् । धर्मप्रमाणमेवेति तल्लक्षण*मुदीरितम् ॥' धर्मस्य प्रवर्तकवाक्यप्रमाणकत्वात् । *एवंच द्विविधचोदनापक्षे विधिचोदनाभ्यो विधेयानां ज्योतिष्टोमादीनामर्थत्वेनावधारणं निषेधचोदनाभ्यश्च निषेध्यानां ब्रह्महत्यादीनामनर्थत्वेन निर्णयः । एवं च चोदनाभ्यामर्थत्वानर्थत्वे लक्ष्येते, तेन तल्लक्षणानां ज्योतिष्टोमादीनामत्रार्थग्रहणेन धर्मत्वमुक्तम् । विधेयार्थानां च धर्मत्वे कथिते विपरीतार्थानामधर्मत्वमर्थसिद्धमिति तत्सूत्रकारेण पृथङ्न सूत्रितम् । अत उभयमित्यादिग्रन्थो विधेयप्रतिषेध्ययोर्यागादिब्रह्महत्यादिवर्गयोर्निदर्शनार्थोऽवगन्तव्यः । कथं तर्हि ब्रह्महत्यादिवर्गपरित्यागेन श्येनाद्युपन्यासः श्येनादयो हि विधेयत्वेनेष्टसाधनाः स्वर्गादपि शत्रुवधस्येष्टत्वात् । सत्यम् । श्येनः स्वयमिष्टसाधनत्वादर्थात्मकोप्यनर्थानुबन्धी, तत्फलस्य हिंसारूपस्यायुर्दुर्भाग्यच्छेदात्मकस्याविहितत्वान्निषिद्धत्वाच्च । तदिदं कार्यगतमनर्थत्वं श्येन उपचरितं कारणे कार्यवदुपचारात् । अथवा श्येनशब्द एव फल उपचरितः, कार्ये कारणवदुपचारात् । 'हिंसा हि सा सा च प्रतिषिद्धे'ति न श्येनरूपाभिप्रायं प्रतिषेधाभिधानमुपपद्यते, तस्य विहितत्वेन प्रतिषेधविषयत्वासंभवादहिंसात्वात् । अतस्तत्फलाभिप्राय एव श्येनाद्युपन्यास इति भाष्यकारस्योपचारोऽभिप्रेतः, नाभिचरितव्यमित्यत्राप्यभिचारस्यैव श्येनफलस्य निषेधं दर्शयन्न श्येनस्वरूपं निषिद्धमित्याह । यदा तु चोदनाशब्दो यथाश्रुतभाष्यानुरोधेन प्रवर्तकवाक्यपर एव व्यवस्थाप्यते तदाप्युभयमिह चोदनया लक्ष्यत इत्यादिको ग्रन्थो व्याख्याविशेषेणोपपादयितुं शक्यते । तथाहि—उभयं साध्यं साधनं च विधायिकया चोदनया लक्ष्यते । ननु फलांशे स्वयमेव पुरुषाणां प्रवृत्तिसंभवात्साध्यांशविधानाभिधानमयुक्तम् । सत्यम् । साधनेतिकर्तव्यतांशगोचरमेव विधेः प्रवर्तनं, तथापि स्वर्गयागादीनां साध्यसाधनसंबन्धस्य विधिप्रमाणकत्वात्साध्यांशविधानाभिधानमुपपन्नम् । एवंच फलं साधनं चोभयमपि चोदनालक्षणमित्युक्ते पुनरिदमुच्यते—फलं च यागादीनां द्विविधं अर्थोऽनर्थश्च । तत्र ज्योतिष्टोमादीनां तावत्स्वर्गाद्यर्थरूपं फलं प्राप्यतेऽप्रतिषिद्धत्वात्, श्येनादिफलं तु हिंसाद्यनर्थरूपं प्रतिषेधसद्भावादवाप्यते, एवंच सत्यर्थात्मकस्य फलस्यापि यत्साधनं सोऽप्यर्थ इति, अतोऽर्थात्मकफलसाधनस्य ज्योतिष्टोमादेर्धर्मत्वं वक्तुमर्थपदं प्रयुक्तमित्युक्तं भवति । उक्तंचान्यत्र—'तस्यापि साधनं यत्तदर्थ एवाभिधीयते । वक्तुं तस्यैव धर्मत्वमुक्तमर्थविशेषणम्' ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

तीति । **नियोगेति** । नियोगविषयत्वावगमात्तु चोदनालक्षणे इत्यर्थः । **हृदये स्थितं** । भाष्यकारस्येति शेषः । **उदीरितं** । भाष्यकारेणेति शेषः । अस्मिंश्च व्याख्याने कोऽर्थो इत्यादिभाष्यमेव व्याख्येयमित्याह—**एवंचेति** । फलस्य बोधनाफलस्य विधिसंस्पर्शः तस्य लिप्सेति लिप्साप्रवृत्तिः अर्थः प्रयोजनं, ततश्च फले या पुरुषस्य प्रवृत्तिः सा प्रयोजनलक्षणा न

१ मतश्चोदनालक्षणत्व.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एवं श्येनादेरप्यनर्थफलसाधनत्वादेवानर्थत्वम्। अतएव भाष्ये श्येनादिफलपर एव श्येनादिपदप्रयोगोऽवगन्तव्यः। **ननु** श्येनादिविधिसामर्थ्यादेव श्येनफलमासाद्यमानं कथमनर्थः स्यात् 'न हिंस्या'दित्यादिशास्त्रान्तरेण निषिद्धत्वादिति ब्रूमः। **ननु** विधिस्पृष्टे निषेधानवकाशः सत्यपि वा प्रतिषेधे नैवंविधस्यानर्थत्वमित्युक्तम्। सत्यम्। फलमुद्दिश्य श्येनो विधीयते, एतावत्येव फलस्य चोदनालक्षणता नतु फलमेव विधीयते, भावनायाः फलांशे प्रत्ययस्याविधायकत्वात्। वक्ष्यतिच—'जानात्येवायं पुरुषो मयैतत्कर्तव्यमुपायं तु न वेदे'ति। अतः स्वयमेव तत्र पुरुषप्रवृत्तेर्न तद्विषयकप्रवृत्तिज्ञापनं विधेः फलम्। साधनेतिकर्तव्यतयोस्त्वप्रवृत्तः पुरुषः प्रवर्त्यत इति तयोर्विधेयत्वम्। वक्ष्यति च सूत्रकारः—'तस्य लिप्सार्थलक्षणे'ति। अतः श्येनफलांशोपनिपातिन्यां हिंसायामेव तत्प्रतिषेधो विधिना न वारित इत्यनर्थतामापादयति, श्येनस्य तु सत्यप्यनर्थहेतुत्वे विधिसंस्पर्शेन निषेधाभावान्न स्वरूपेणानर्थत्वम्। **ननु** त्र्यंशभावनाविधानाङ्गीकारात्, फलस्य च तदंशत्वात्कथमविधेयत्वम्। मैवम्। उक्तोत्तरत्वात्। फलांशस्याप्युक्तरीत्या विधिसंस्पर्शात्। 'श्येनस्य तु स्वरूपेण विधेयत्वं, स्फुटीकृतं चैतद्भाष्यकारेण योहीत्यादिना लक्षणे *शतुरुत्पत्तिं दर्शयता। अत्रोंबेकभट्टैरिदं तु वार्तिककारीयं दूषणं समर्थनं च सर्वमेवाछ्नविशीर्णमित्यादिना श्येनादौ न कस्यचिदनर्थत्वम्। ब्रह्महत्यादय एव त्वनर्थत्वेनार्थपदव्यावर्त्याः। श्येनादीनां तु न साक्षान्नाप्युपचारेण नापि तत्फलस्यानर्थत्वमिति। तस्यानर्थत्वप्रतिपादनपरं श्येनो वज्र इत्यादिभाष्यमुपेक्षणीयम्॥ 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः॥ उत्पथं प्रतिपन्नस्य परित्यागो विधीयते' इत्यन्तेन ग्रन्थेन वार्तिकं भाष्यं च दूषितम्, तदस्माभिर्ग्रन्थविस्तरभयात्प्रकृतानुपयोगाच्च न लिखितम्। एवंच साधनेतिकर्तव्यतयोर्विधेयत्वे दैक्षपश्वादिहिंसापीतिकर्तव्यतारूपा विधीयत एव। फलांशस्यैव तु वैदिकी हिंसा न हिंस्यादिति निषिध्यते। **नन्वेवं**सति फलांशोपनिपातिनी सर्वप्रचारहिंसानर्थो भवेत्। मैवम्। तीर्थबहिर्भूताया एव यज्ञे हिंसाया निषेधात्। इयं तु *तीर्थमध्यगता हिंसा विधिस्पृष्टैवेति नानर्थः, श्येनफलं तु चिरातिपन्ने श्येने तज्जन्यापूर्वच्छिन्नभाग्येषु शत्रुषु विद्यमानेषु भवतीति तीर्थबहिर्भावादनर्थं इति, तेन क्रतुबहिर्भूता हिंसा वैदिकी निषिध्यते नान्तःक्रतुरिति विवेकः। यद्यपि न हिंस्यादित्यादिसामान्येन निषेधेन हिंसामात्रनिषेधप्रतीतेः साधनेतिकर्तव्यतारूपा हिंसा निषेद्धुं शक्यते तथापि *पदहोमवत् विशेषेण सामान्यस्य बाधान्न तन्निषेधः। **ननु** केयं साधनांशगामिनी हिंसा न तावच्छ्येनादिः तस्या हिंसात्वस्योक्तत्वात्। नापि दैक्षपश्वादिहिंसा तस्या इतिकर्तव्यतात्वात्। उच्यते—प्रधानपशुहिंसैवात्रोदाहरणं यथा 'वायव्यं श्वेतमालभेत भूतिकाम'इति। श्येनोदाहरणं त्वसत्तु भार्यापहारादिषु मन्युहेतुष्वनर्थतया दर्शितम्। आततायिनां वधे दोषाभावस्मरणात्। 'षडेतानभिचरन्यजेते'ति बौधायनिकाः पठन्ति॥ 'नाततायिवधे दोषो हन्तुर्भवति कश्चने'त्यादिस्मृतेश्च॥

**नन्वं**शद्वयगतहिंसाया अप्रतिषिद्धत्वेऽपि हिंसात्वेनैवानर्थत्वमस्तु। न। निषेधास्पृष्टत्वेन प्रत्यवायजनकत्वाभावात्, तथाभावस्य शास्त्रैकसमधिगम्यत्वात्। नहि त्रिवृत्पानविरेकयोरिव साध्यसाधनभावो, हिंसाप्रत्यवाययोः प्रत्यक्षेणैवावगन्तुं शक्यते, नापि बाह्यहिंसावद्विचिकित्साबलेनात्रानर्थत्वं शास्त्रीयत्वेन विचिकित्साया अभावात्। नापि 'हिंस्यमानदुःखदर्शनेन कर्तुर्दुःखानुमानम्। यथाहुर्वृद्धाः—'तथाच नारिष्वपि सिद्धमेत'दित्यादि तत्काले तत्कर्तुः सुखोपलम्भात् कालान्तरे दुःखं भविष्यतीति चेत्। न। तस्य प्रत्यक्षागोचरत्वात्। प्रत्युत हिंसाऽसुखकरी हिंसात्वादद्यवदिति प्रत्यक्षदर्शनानुसारेण विपर्ययस्यैवानुमातुं शक्यत्वात्। *अत्र कश्चित्—विवादपदं हिंसा प्रेत्य कर्तुर्विषयतुल्यफलकर्त्री क्रियाविशेषत्वात्। शास्त्रोक्तदानवदित्याह। तन्न। विपक्षे गुरुस्त्रीगमनादौ हेतोरनैकान्तिकत्वात्। हिंसा प्रेत्य कर्तुरदुःखात्मकफलजनिका क्रिया-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

वैधीत्यर्थः। **शतुरुत्पत्तिमिति**। अभिचरन्निति शतृप्रत्ययस्य 'लक्षणहेत्वोः क्रियायाः' इति हेतुलक्षणार्थत्वयोर्हि हिंसितुमिच्छेदिति वदन् श्येनादिफलांशस्याविधेयत्वंकरणांशस्य च विधेयत्वं भाष्यकारः स्फुटीकरोति। अन्यथा ह्युपदेशवचनमेवावकल्पत इति हिंसितुमित्यभिचारप्रवृत्तपुरुषानुवादाल्लक्षणेऽप्यनुपपत्तिं दर्शयति। लक्षणं च यदुपयुक्तं सिद्धवदवगम्यते न विधेयतया, अतो लक्षणत्वान्न तावद्धिंसा विधीयते श्येनादिरुपदेश इति च स्पष्टमेव श्येनादीनां विधानमुक्तम्। **तीर्थमध्यगतेति**। पूर्वापरीभूते हि यज्ञे तार्तीयसवनिकानार्षपवमानकाले सर्वस्वदक्षिणापरिवृत्तौ विपद्यत दीक्षितो विचिकेषु प्रविष्टे चारौ हिंसान्यत्र तीर्थेभ्य इति च तीर्थबहिर्भूताया एव निषेधो न तीर्थमध्यगताया इत्यर्थः। **पदहोमवदिति**। एतच्च शिरोवदित्यस्योपलक्षणम्। 'नारं स्पृष्ट्वास्थि सस्नेह'मित्यादेः 'पुरुषशीर्षमुपदधाति' इत्यनेन विशेषशास्त्रेण बाधः। काशिकायां तु शतशीर्षमुपदधातीति विशेषवचनमुदाहृतं तथाभावस्य प्रत्यवायजनकत्वस्येत्यर्थः (भिकृतविरेकोषध इत्यादीति करोति यो यत्र भतेप्यसौत। 'मत्कर्मबीजं वपते मनुष्यस्तस्यानुरूपाणि फलानि भुङ्क्ते' इति श्लोकशेषः।)

---

१ संसर्गीत० २ सिद्धमित्यादि.

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

विशेषत्वाच्छास्त्रोक्तदानवदिति साध्यविपर्ययसाधनाद्विरुद्धोऽयं हेतुः, साध्यविकलश्चायं दृष्टान्तः दातुः संप्रदानतुल्यफलाभात्। अल्पा हि प्रीतिर्गृहीतवतो भवति दातुस्तु सवत्सारोमतुल्यानि वर्षाणि स्वर्गो भवतीति शास्त्रेणावगम्यते । अपिच जपादयः क्रियाविशेषा न परेषां पीडानुग्रहयोर्वर्तन्ते, चोदितत्वमात्रेण तेषामर्थत्वावगमात्। अतस्तद्दृष्टान्तेन चोदिता हिंसा अर्थ इत्यपि शक्यते साधयितुमतो विरुद्धाव्यभिचारी हेतुः ॥ किंच 'शास्त्रप्रमाणयोर्धर्माधर्मयोरनुमानगीः । त्यक्तमन्दाक्षमन्दानामुपहासाय केवलम्। अधिकं तु वार्तिकेऽवगन्तव्यम् । **ननु** निषेधशास्त्रेण हिंसामात्रस्य प्रत्यवायशक्तिरवबोधिता साच दैक्षपशुहिंसायामपि संभवति । नहि विशेषविधानेऽन दैक्षपशुहिंसातः सा शक्तिरुत्सार्यते शास्त्राणां वस्तुगतविद्यमानशक्तिबोधकत्वात्। नहि शास्त्राणां शक्त्यावापोद्वापयोः सामर्थ्यमस्ति । अतो दैक्षपशुहिंसाया अपि शास्त्रानुसारेणैवानर्थत्वमापतति न तर्कि निषेधशास्त्रात्सुरापानस्य प्रत्यवायजननशक्तिरवगतेति शूद्रस्यापि प्रत्यवायं जनयिष्यति, वैश्यस्तोमस्य वैश्यंप्रति फलजननशक्तिर्दर्शितेति विप्रराजन्ययोरपि तत्कर्त्रोः फलं स्यात् एवमन्यदप्यूह्यम् । तस्माच्छास्त्रानुसारेणैव कर्मणां फलजननशक्तिरास्थेया । यथाहुः—'एवं ये निपुणं प्राहुस्तैरप्येतत्परीक्ष्यताम् । सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ॥ वैश्यस्तोमेन किंवा स्याद्विप्रराजन्ययोः फलम् ॥ पञ्चम्यामिष्टिकरणान्मध्याह्ने चाग्निहोत्रतः ॥ तस्माद्यद्यादृशं कर्म यादृशोत्पत्तिहेतुकम् । शास्त्रेण गम्यते तस्य तादृशस्यैव तत्फलम् ॥' एवमादि सामान्यतो हिंसामात्रे प्रतिषेधाज्जातं प्रत्यवायहेतुत्वज्ञानं, तीर्थेषु 'यो दीक्षितो यदग्नीषोमीय'मित्यादिविधिना बाध्यते । यद्यपि च न शास्त्रस्य शक्त्यावापोद्वापयोर्व्यापारस्तथापि *तदनुसारेणैव तत्तत्क्रियाभेदव्यवस्थिता एव शक्तयोऽवगम्यन्तेऽतो नातिप्रसङ्गः ॥ कथमेकस्यैव कर्मणः शक्तिभावाभावावितिचेत् लौकिककर्मवदिति ब्रूमः । यथैकमेव भोजनं स्वस्थातुरकर्तृकं भिन्नशक्तिकं दृष्टं एवमदृष्टार्थेष्वपि कर्मसु भविष्यति । यथाच तत्र स्वस्थातुरकर्तृभेदनिबन्धनभोजनव्यक्तिमाश्रित्य शक्तिभेदः समाधीयते एवमिहापि हिंसाव्यक्तिभेदादुपपन्नः शक्तिभेद इति । किंचाङ्गहिंसायां पुरुषार्थत्वे सिद्धे कदाचिदनर्थोऽपि फलतया कल्प्येत । नचैवम् । प्रकरणविनियोगेन क्रत्वर्थत्वावगमात्, क्रत्वर्थत्वेऽपि चेयं पशुसंस्काररूपा न प्रयाजादिवदारादुपकारिका, हिंसापूर्वमेव विशसनादिसंस्कारानुष्ठानात् पशुं संज्ञपयतीति पशोः प्राधान्यश्रुतेः । संस्कारत्वेऽपि वास्या अयं विशेषो यदयं दृष्टार्थ एवावघातादिवन्न प्रोक्षणादिवददृष्टार्थः । कोऽस्या दृष्टोऽर्थ इतिचेत् । क्रत्वपेक्षितैकादशावदाननिष्पत्तिरेव । नचासति हिंसासंस्कारे पशोरेकादशावदाननिष्पत्तिः संभवति हिंसानन्तरमेव हृदयाद्यवदानसंभवात्, अवघातानन्तरं वैतुष्यवत् । किंच श्येनादीनां ज्योतिष्टोमप्रकृतित्वाच्चोदकप्राप्ताङ्गरूपा हिंसा तत्रापि नाधर्मः । एवंच, अंशभावनाविधानेऽपि विधेर्हंसवन्नीरक्षीरविवेकात्प्राप्तपरिहारेणाप्राप्तमेव विधिर्गृह्णातीति भाव्यांशस्य च रागादेव प्राप्तेस्तत्परिहारः । अतः श्येनादीनां स्वतो न धर्मत्वं पारंपर्येणानिष्टसाधनत्वात्। नाप्यधर्मत्वं प्रतिषेधाभावात्। औपचारिकस्तु तत्रानर्थशब्दप्रयोग इति सिद्धम्। यत्कर्म फलद्वारापि नानर्थेनानुबध्यते तत्रैवं लोके धर्मशब्दः प्रसिद्धः । **नन्विष्टा**भ्युपायश्चोदनालक्षणो धर्म इत्युच्यते श्येनश्च तथा अतः फलस्यानर्थानुबन्धित्वेऽपि स्वतो धर्मएवायं वक्तुमुचितः । सत्यमेवैतत् । श्येनफलस्य तावन्निषिद्धत्वेनाधर्मत्वमित्येतावदविवादम्, श्येनस्वरूपं तु विचारयितव्यम् । तत्र यद्यनिष्टानुबन्धरहितेष्टाभ्युपायश्चोदनालक्षणो धर्म इति *लोके प्रसिद्धिस्तदा न श्येनादीनां *धर्मत्वं फलद्वारानिष्टानुबन्धित्वात् ॥ यदितु परंपरयानर्थानुबन्ध्यप्याहत्य प्रीतिफलो नोदनादिलक्षणो धर्म इति तदा श्येनादीनामपि धर्मत्वम् । यस्तु हिंसात्वसाधर्म्येण बाह्यहिंसावदग्नीषोमीयादिष्वप्यनर्थत्वमित्याह तस्यागमविरोधो वक्तव्यः । तथाहि श्रूयते—'क्रतौ विधानसामर्थ्यादन्यत्र तीर्थेभ्यः' इति । स्मर्यतेच 'यज्ञार्थं पशवः सृष्टा' इत्यादि । **नन्वे**वंसति चेदनालक्षणो धर्मो नेन्द्रियादिलक्षणः अर्थो धर्मो *नानर्थ इति वाक्यं भिद्येत । पौरुषेयेषु नायं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

तत्कर्तुः हिंसाकर्तुः । सांख्यमतमनुवदति—**अत्रेति । तदनुसारेण** शास्त्रानुसारेणेत्यर्थः । दृष्टार्थ एव संस्कार इति शेषः । **लोक इति ।** लोकप्रसिद्धिरेव शब्दार्थावधारणेऽलमित्यभिप्रायः । **धर्मत्वमिति ।** प्रसिद्धिकथनेनैवात्र निर्धारणमुक्तं तस्मादावर्तत इति आवृत्तौ सकलमेव हि पठितव्यं सूत्रं तत्रैकस्य चोदनालक्षणोऽर्थो धर्म इत्यत्र तात्पर्यं अन्यस्यार्थो धर्म इत्यत्र अन्यपरत्वे चान्यतमसंबन्धानुवादः त्रयाणामपि तत्रस्थपदानां तन्त्रेणोभयसंबन्धे न वाक्यभेदः सकृद्ध्वनादित्यसकृदुक्तस्यैव च योग्यतयैव संबन्धे शक्तिभेदादुपरितनं धर्मपदं वा उभाभ्यां संबध्यते चोदनालक्षणो धर्मः धर्मो अर्थ इति । मध्यपदं वा आद्यन्ताभ्याम् । अर्थो धर्मः स चोदनालक्षण इति । आद्यमेव चोत्तराभ्यां चोदनालक्षणोऽर्थः स एव धर्म इति श्रुतेन वादेन लक्षणावयवेन अनुमितेन च धर्मपदेनैकं निष्पद्यते । अर्थो धर्म इत्यपरे एवं द्वे सूत्रे इत्यर्थः । **नानर्थेति ।** यदा तु चोदनालक्षणानुवादेन धर्मविधानं तदा चोदनालक्षणत्वस्यार्थत्वव्यभिचाराद्युक्तमेव

१ एवं सामान्यतो.

प्रभाकरमतेनार्थपदसार्थक्यं तत्खण्डनं च।

केचित्तु लक्षणां परिहरन्तः श्येनादिस्वरूपमेवार्थपदस्य व्यावर्त्यं मन्यन्ते, तेषामेव 'नैव श्येनादयः कर्तव्या विज्ञायन्ते' इति विधेयत्वनिराकरणेन प्रतिषेधविषयत्वसमर्थनात्। कथं पुनस्तेषां विधेयत्वं निराक्रियते, तत्राहुः—यस्य हि विधिः स्वसिद्ध्यन्यथानुपपत्त्यानुष्ठानमाक्षिपति तद्विधेयमित्युच्यते, काम्येषु च कर्मसु कामनावशादेव प्रवृत्तिसिद्धेस्ततएव विधिः सिद्ध्यन्नन्यथानुपपत्त्यभावान्न स्वय-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दोषो विशेषतः सूत्रेषु बह्वर्थसूचकत्वादितिचेत्। न। सूत्रवाक्यस्यापि प्रमाणान्तराप्रतिपन्नवेदार्थप्रतिपादकत्वेन वेदतुल्यत्वात्। उक्तंच—'नान्यतो वेदविज्ञश्च सूत्रवृत्तिक्रियेष्यते'। उभयं च वेदसूत्रात्मकं वाक्यं वाक्यभेददोषादशक्तं अन्यपरस्य चान्यार्थप्रतिपादनाशक्तेः। उच्यते—प्रमाणान्तरप्रतिपन्नार्थसूचकत्वात् सूत्रस्य नायं दोषः। प्रमाणान्तरेण चोदनालक्षणोऽर्थश्च धर्मत्वेन लोके प्रसिद्धः ततो यथा तमर्थं साधयति तथा व्याख्येयम्। उक्तंच—'तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः। एकदेशानुमानाद्वा द्वे सूत्रे परिकल्पिते॥'

ननु सूत्रद्वयपरिकल्पनायां चोदनालक्षणो धर्म इत्यत्रानर्थस्यापि धर्मत्वं प्राप्नोति, अर्थो धर्म इत्यत्र च कृष्यादेरपि। नैवम्—'इतरेतरसामीप्यादेतावेव परम्परम्। कल्पेते वाक्यदोषाय नान्यावयवकल्पना'। यदर्थो धर्म इत्येकत्र सूत्र उक्तम्। तच्चोदनालक्षण इति, यच्चोदनालक्षण इत्येकत्रोक्तं तदर्थ इति। अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते एकार्थमेवेति। अस्मिन्पक्षेऽर्थविशेषणविशिष्टचोदनालक्षणानुवादेन धर्मविधानमापद्यते। तथाच विशेषणविशेष्योभयपरत्वाद्वाक्यभेदस्तदवस्थः, तस्माद्वाक्यभेदपरिहाराय पूर्वोक्तमेव युक्तम्। अत्रेदमुच्यते—यदि सामान्यतः सिद्धं धर्ममनूद्य चोदना प्रमाणत्वेन विधीयते तदानर्थस्य धर्मत्वं न प्राप्नोत्येव अर्थस्यैव धर्मत्वात् अतो नार्थशब्दव्युदसनीयं पश्यामः। सत्यमेवं, तथाप्यभिमतवचनव्यक्तिलाभार्थमेवार्थशब्दप्रयोगः। तदभावे हि वचनव्यक्त्यन्तरसंदेहो भवेत् यश्चोदनालक्षणः स धर्म इत्यपि वचनव्यक्तिः संभाव्येत, अस्यां च ब्रह्महत्यादीनामपि निषेधविधिलक्षितानां चोदनालक्षितत्वाद्धर्मत्वमापद्येत। नचास्यां वचनव्यक्तावर्थशब्दो विधातुं शक्यते वाक्यभेदप्रसङ्गात्। नाप्यनुवदितुं, प्राप्त्यभावात्। नहि चोदनालक्षणोऽर्थसंबन्धं न व्यभिचरति, अनर्थस्यापि तल्लक्षणत्वात्। नच तत्परित्यागो युक्तः एकदेशपरित्यागेन सूत्रानर्थक्यापत्तेः। यो धर्म इत्यस्यां तु वचनव्यक्तौ धर्मस्यार्थत्वाव्यभिचारादनुवादकत्वेनान्वयः, अतो विध्य*नुवादयो*र्विशेषसूचनार्थ एवायमर्थशब्दो न विशेषणम्॥ नन्वस्यां वचनव्यक्तावर्थशब्दस्याविशेषणत्वात् 'उभयमिह चोदनये'त्यादिभाष्यमसंबद्धं स्यात्, तत्रानर्थो धर्म उक्तो माभूदित्यर्थग्रहणमिति व्यावर्तकत्वेन विशेषणत्वाभिधानात्। उच्यते—नायमभिप्रायो भाष्यकारस्य यदेतद्विशेषणं सदनर्थस्य व्यावर्तकमिति किं तर्ह्यर्थशब्दप्रयोगे सा वचनव्यक्तिरेव न संभवति ययानर्थस्य धर्मत्वं प्राप्नोतीत्यर्थशब्दप्रयोगस्यैतत्फलं यदनर्थनिवृत्तिरित्यभिप्रेत्योक्तं अनर्थो धर्म उक्तो माभूदित्यर्थग्रहणमिति। एवंच वचनव्यक्तिविशेषपरिग्रहार्थोऽर्थशब्द इति भाष्यकारेण दर्शितं भवति। किंच *प्रमाणवचनव्यक्त्याश्रयणे प्रमाणलक्षणस्यादौ निवेश उपपद्यते तत्प्रतिज्ञानात्। स्वरूपवचनव्यक्त्याश्रयणे तु धर्मस्वरूपपरं भेदलक्षणमेवादौ क्रियेत नच तथाऽकरोतस्मात्सूत्रकारस्यैषैव वचनव्यक्तिरभिप्रेता॥ 'ग्रन्थव्याख्याप्रसङ्गेन श्येनटीकार्थवर्णनम्। मीमांसकोपयुक्तत्वात्संक्षेपेण मया कृतम्'॥

अत्र प्रसङ्गादेकदेशिमतं दूषयितुमुपन्यस्यति—**केचित्त्विति**। अस्मिन्पक्षे श्येनादिग्रहणं हिंसालक्षणार्थमिति यदुक्तं तत्परिहृतं भवतीत्यर्थः। अत्रोपपत्तिमाह—**तेषामेवेति**। यस्मात् 'नैव श्येनादयः' इति भाष्येण तेषां श्येनादीनामेव विधेयत्वनिराकरणेन प्रतिषेधविषत्वं समर्थितं तस्माच्छ्येनादिस्वरूपमेवार्थपदस्य व्यावर्त्यमित्यर्थः। विधेयत्वनिराकरणमेव प्रश्नपूर्वकमुपपादयति—**कथमिति**। श्येनादीनामपि काम्यत्वात्तत्रापि कामवशादेव प्रवृत्तिसिद्धेर्नार्थो विधिनेति भावः॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

विशेषणम् अस्तु तर्ह्येषैव वचनव्यक्तिः न। सूत्रकारानभिप्रेतत्वात्। तत्सूत्रेण प्रत्यक्षादिनिराकरणात्। यो धर्मः स चोदनालक्षण इत्येषैव वचनव्यक्तिः सूत्रकारस्याभिमता लक्ष्यते। यो धर्मः स चोदनालक्षण इत्यस्यां हि प्रतिज्ञायां अन्यलक्षणत्वनिराकरणं संगच्छते नान्यथा। तस्मादेषैवात्र वचनव्यक्तिर्मुख्याभिप्रेता च। अस्यां चार्थविशेषणमनर्थकमित्यर्थः। तदभावे अर्थपदाभावे वाक्यभेदेपि धर्मोऽर्थश्चेति पदार्थद्वयविधौ वाक्यभेद इत्यर्थः। **अनुवादेति**। नित्यानुवादभूतोऽर्थशब्द इत्यर्थः। **विशेषेति**। वचनव्यक्तिविशेषत्वसूचनार्थः। श्येनादीनां यागानां व्यापाराश्चेति प्रयोगशब्दो व्यापारवचनः। **प्रामाणमिति**। प्रमाणविकल्पः पञ्चधा दर्शितः। **अनुमितेति**। देशान्तरप्राप्त्या सूर्यस्य गतिमनुमापयति। साधनं

१ लोके धर्मत्वेन प्रसिद्धः. २ सा साधयति. ३ वचनव्यक्तिसंदेहो भवतु. ४ चोदनालक्षणत्वात्. ५ स्वरूपव्यक्त्याश्रयणे.

**मनुष्ठानमाक्षिपति ॥ * ॥ ननु कर्तव्यताबोधनमेव प्रवर्तनम्, कर्तव्यता च वेदे यागस्य लिङैव बोधितेति कथमविधेयत्वम् । सत्यम्। नतु यागस्य कर्तव्यता लिङाभिधीयते, स्वार्थस्य कर्तव्यतां** लिङभिधत्ते, यागश्च तस्य विषयः करणं च, सोऽयं कर्तव्यतात्मा नियोगार्थोऽन्यथानुपपत्त्या स्वविषयस्य कर्तव्यतां बोधयन्ननुष्ठापक इत्युच्यते । श्येनादीनां तु रागादेवानुष्टानसिद्धेर्न नियोगस्तेषामनुष्ठानमाक्षिपतीति न तेषां विधेयत्वम्। असति च विधेयत्वे तेषां निषेधविषयत्वादनर्थत्वमिति तद्व्यावृत्त्यर्थमर्थपदमिति ॥ * ॥ तत्रेदं वक्तव्यम्—कस्मिन्नंशे तेषां व्यावृत्तिरिति । धर्मत्व इति चेत्। न। तत्स्वरूपानभिधानात् । इदं हि सूत्रं वेदार्थस्य कार्यत्वप्रतिपादनार्थं न कर्मस्वरूपलक्षणार्थम्। यतः श्येनादीनां धर्मत्वं मा प्रसाङ्क्षीदित्यर्थपदेन व्यावृत्तिः क्रियेत ॥ * ॥ यदि परं कार्यत्वव्यावृत्तिः स्यात् सा चायुक्तेत्युक्तं प्राक् । भवतु वा वाक्यभेदाङ्गीकारेण धर्मलक्षणार्थमपि सूत्रम्। तथापि चोदनालक्षणपदेन कार्यात्मकमपूर्वमुद्दिश्य तस्य धर्मत्वमुच्यत इति वो मतम्, तत्र श्येनादियागस्य कः प्रसङ्गो यद्व्यावृत्त्यर्थमर्थपदं स्यात्। नहि ज्योतिष्टोमादियागस्यापि धर्मत्वमस्ति, अपूर्वस्य धर्मत्वाभ्युपगमात् ॥ * ॥ अथ श्येनाद्यपूर्वस्यैव धर्मत्वमर्थपदेन व्यावर्त्यते ततो भाष्ये श्येनादिशब्देन कर्मनामधेयेन तत्साध्यमपूर्वं लक्ष्यत इत्यविशिष्टा लक्षणा स्यात्। यदि चापूर्वमेव प्रत्युदाहरणं ततो 'हिंसा हि सा सा च प्रतिषिद्धे'ति भाष्यमसंगतं स्यात्। श्येनयागो वा तत्फलं वा हिंसा, नत्वपूर्वं कथंचिदपि हिंसापदास्पदम्। अस्मिंश्च कल्पे 'कथं पुनरसावनर्थः कर्तव्यतयोपदिश्यत'इति चोद्यम्। 'नैव श्येनादयः कर्तव्या विज्ञायन्ते' इति चोत्तरमपूर्वविषयं स्यात्। नच तस्य कर्तव्यत्वं शक्यते वारयितुं कार्यस्वभावत्वात् ॥ * ॥ एवंच यागकर्तव्यतानिषेधार्थमिदं भाष्यमङ्गीकृत्य यत् तत्समाधानाय प्रयत्यते 'कर्तव्यताविषयो हि नियोगो न पुनस्तस्य कर्तव्यतामाहे'ति तदपार्थकम्। काम्येष्वपि विधिरेव प्रवर्तको न फलं, तस्य विध्यधीनोत्पत्तिकत्वेन यागापेक्षाभावात् । विधिस्तु यागाधीननिष्पत्तित्वाद्यागमनुष्ठापयतीति युक्तम् ॥

काम्येष्वपि कर्मसु विधेरेव प्रवर्तकत्वम्।

यदिच विधिरप्रवर्तकः काम्येषु स्यादितिकर्तव्यताप्यविधेया स्यात्, तस्यामपि फलत एव प्रवृत्तिसिद्धेः साङ्गप्रधानसाध्यत्वात्फलस्य। वक्ष्यति हि 'तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षे' (जै. ९।३।७) ति। ततश्चाग्नीषोमीयहिंसाया अपि विध्यभावेन निषेधविषयत्वात्तद्युक्तस्य ज्योतिष्टोमस्याप्यनर्थत्वापत्तेः 'कोऽर्थो यो निःश्रेयसाय ज्योतिष्टोमादि'रिति भाष्यानुपपत्तिः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

अत्र चोदयति—**नन्विति**। परिहरति—**सत्यमिति** । नियोगस्येत्यर्थः। कथमविधेयस्य यागस्य कर्तव्यतासिद्धिरत आह—**सोऽयमिति**। श्येनादीनामपि नियोगादेवानुष्ठानसिद्धेर्विधेयत्वमाशङ्क्याह—**श्येनादीनामिति** । दूषयति—**तत्रेदमिति। तदिति**। तन्मते सूत्रेण तत्स्वरूपानभिधानात् । धर्मस्वरूपानभिधानादित्यर्थः। एतदेव विवृणोति—**इदमिति। उक्तं प्रागिति**। सिद्धे चार्थे व्युत्पत्तिविरहादप्रामाण्यमेव श्येनादिवाक्यानां स्यात्। अतः श्येनादीनामपि कार्यत्वमङ्गीकार्यमित्यर्थादुक्तमिति भावः । **भवतु वेति**। पूर्वसूत्राद्वेदार्थपरं धर्मपदमनुषज्य चोदनालक्षणो वेदार्थ इत्येकं वाक्यं, अर्थो धर्म इत्यपरं वाक्यमिति वाक्यभेदाङ्गीकरणेनेत्यर्थः। **तत्रेति**। श्येनादीनामपूर्वत्वाभावेन धर्मत्वप्रसक्त्यभावान्निषेधानुपपत्तिरित्यर्थः। अपूर्वं व्यावर्त्यत इत्यत्रैव दूषणान्तरमाह—**यदिचेति। अस्मिंश्चेति** । अपूर्वपक्ष इत्यर्थः। ततः किं दूषणं स्यादत आह—**नचेति** । अत्रैव दूषणान्तरमाह—**एवंचेति** । अपूर्वकर्तव्यतानिषेधासंभवान्नैव श्येनादय इत्यादिभाष्यं यागकर्तव्यतानिषेधार्थमङ्गीकृत्य तत्समाधानाय प्रतिज्ञातयागकर्तव्यतानिषेधपरत्वस्थापनाय यत्प्रयत्यते तदपार्थकमिति संबन्धः। प्रयत्नमेव दर्शयति—**कर्तव्यतेत्यादिना आहेत्यन्तेन**। फलेच्छात एव यागे प्रवृत्तिसिद्धेर्न यागस्य कर्तव्यतामाहेति भावः। कथमपार्थकमत आह—**काम्येष्विति**।

एतदनङ्गीकारे दण्डमाह—**यदिचेति**। अत्र संमतिमाह—**वक्ष्यतीति**। अङ्गयुक्ते प्रधाने फलश्रुतिर्न केवले, तस्मात्सकलाङ्गयुक्तं प्रधानानुष्ठानमित्यर्थः। अस्त्वितिकर्तव्यतांशेऽपि विधिसंबन्धः किमनिष्टमेतावता स्यादत आह—**ततश्चेति**।

हिंसाप्रतिषेधवैरूप्यापत्तिः।

**ननु** 'न हिंस्या'दिति निषेधो नारभ्याधीतत्वात्पुरुषार्थः, तेनानेन पुरुषार्था एव हिंसाः प्रतिषेद्धव्याः, क्रत्वर्थनिषेधे हि सोऽपि क्रत्वर्थः स्यात्। अविशेषे त्वेकस्य प्रतिषेधविधेः क्रत्वर्थत्वपुरुषार्थत्वापत्त्या वैरूप्यं स्यात्। तस्मात्पुरुषार्थानामेव हिंसानामिह प्रतिषेधो न क्रत्वर्थानामिति ॥ * ॥ तदिदं बालसंमोहनम्। नह्यविशेषेणापि प्रतिषेधे वैरूप्यम्। यदि हि क्रत्वर्थत्वपुरुषार्थत्वरूपं विशेषेणोद्दिश्य प्रतिषेधः क्रियेत ततः स्यादपि वैरूप्यं प्रतिषेध्योपस्थापितक्रतुपुरुषगोचरत्वात्प्रतिषेधस्य। यदातु हिंसामात्रमुद्दिश्य प्रतिषेधः क्रियते तदास्य किं वैरूप्यम्। तद्यथा या भोजनार्थं मांसोत्पादने हिंसा, या च वैरिनिर्यातनार्थतया साक्षात्पुरुषार्था तस्यामुभय्यामविशेषेण प्रतिषिध्यमानायामपि नास्ति वैरूप्यमेवमिहापि। इतरथा तत्रापि भोजनाङ्गता पुरुषार्थता च प्रतिषेधस्य स्यादिति वैरूप्यं स्यात्। तस्माद्यैव काचिद्येन केनापि प्रकारेण प्रसक्ता हिंसा सा सर्वा सामान्येन प्रतिषिध्यते। पुरुषार्थश्च प्रतिषेधोऽनारभ्याधीतत्वात्। तस्मादग्नीषोमीयहिंसाप्यसति विधेयत्वे प्रतिषेधगोचरः स्यात्। विधेयत्वे तु विधेर्विशेषविषयत्वात्सामान्यविषयो निषेधस्तद्विरोधाद्धिंसान्तराण्यवलम्बते ॥

हिंसायां सांख्यमतं तत्खण्डनं च।

**ननु** सत्यपि विधेयत्वे विधेः क्रत्वर्थत्वात्प्रतिषेधस्य च पुरुषार्थत्वाद्विषयभेदेनाविरोधान्न बाधः। नहीदं विरुद्धं क्रतोर्हिंसया भवितव्यं पुरुषस्य तु तद्वर्जनेनेति। सत्यम्। अङ्गविधिमात्रालोचनायां नास्ति विरोधः। ज्योतिष्टोमविधिस्तु साङ्गं प्रधानं पुरुषस्य विदधत्पुरुषार्थहिंसानिषेधमग्नीषोमीयहिंसायामवतरन्तं निरुणद्धि। नह्यग्नीषोमीयहिंसां वर्जयता ज्योतिष्टोमः शक्यतेऽनुष्ठातुम्। तस्मादस्ति विरोध इति सामान्यस्य बाधः। विधौ त्वप्रवर्तके सत्यग्नीषोमीयहिंसापि प्रतिषिध्येत ॥ * ॥ किमर्थं च श्येनस्य विधेयत्वं निराक्रियते, प्रतिषेधसिद्ध्यर्थमिति चेत्, कः प्रतिषेधः 'न हिंस्यात्सर्वा भूतानि' इति। नायं निषेधः श्येने प्रवर्तते हिंसाविषयत्वात्। श्येनफलं च हिंसा न श्येनः। तथा चोक्तम्—'यो हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेश'इति ॥*॥ कश्चित्त्वाह—श्येनस्य कर्तव्यत्वे सति बलात्तत्फलमपि हिंसा कर्तव्या भवतीति न निषेद्धुं शक्यते। अतः फलकर्तव्यतानिरासार्थं श्येनकर्तव्यता बलान्निरस्यत इति। तदिदमसंबद्धम्। यथैव हि श्येनापूर्वस्य कर्तव्यतायां सत्यामपि तत्साध्यफलस्य कर्तव्यता न प्रसज्यते तथा यागस्य कर्तव्यत्वे सत्यपि रागप्राप्तस्य फलस्य नास्ति कर्तव्यतापत्तिः। तस्मादनर्थकं श्येनकर्तव्यतानिराकरणम्। तस्माद्धिंसैवात्र प्रत्युदाहरणम् ॥*॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

अत्र परिहारं शङ्कते—**नन्विति**। हिंसामात्रनिषेधमाशङ्क्याह—**अविशेषेति**। दूषयति—**तदिदमिति**। वैरूप्योपपत्तिमाह—**प्रतीति**। विधेयत्वपक्षेतु नायं दोष इत्याह—**विधेयत्वेत्विति** ॥

अविरोधं शङ्कते—**नन्विति**। विरोधाभावादत्राप्यवतरन्तं प्रतिषेधं विशेषविधिर्न वारयतीत्यर्थः। **अङ्गविधीति**। यद्यपि केवलोऽङ्गविधिः क्रत्वर्थ एवेति न तन्मात्रपर्यालोचनया विरोधः संभवति तथापि साङ्गज्योतिष्टोमविधेः पुरुषार्थत्वापत्त्यास्ति विरोध इति भावः। इदानीं हिंसायामेव प्रत्युदाहरणत्वं स्थिरीकर्तुं श्येनस्य प्रतिषेधविषयत्वमेव न संभवतीत्युपपादयितुमाह—**किमर्थमिति**। अयमभ्युपाय इत्यनेन श्येनस्य हिंसासाधनत्वमुच्यते न हिंसात्वमित्यर्थः। प्रकारान्तरेण श्येनकर्तव्यतानिरासं प्रतिपादयितुमाह—**कश्चित्त्विति**। एतदपि दूषयति—**तदिदमिति**। एवं श्येनादिस्वरूपमेवार्थशब्दस्य व्यावर्त्यमित्येकदेशिमतं निराकृत्य तन्मतेऽर्थशब्दार्थमपि निराकर्तुमाह—**इदमिति**। तन्मते नित्यानां पण्डापूर्वमात्रजनकत्वेन श्रेयःसाधनत्वाभावादित्यर्थः। अस्मिन्पक्षे श्येनादिस्वरूपव्यावर्तकत्वमर्थशब्दस्य भवतीति भावः। एतदपि दूषयति—**तथेति**। 'ब्राह्मणो न हन्तव्य' इत्यत्र ब्राह्मणहननाभावविषयस्यापूर्वस्यापि धर्मत्वप्रसङ्ग इत्यर्थः। निराकरणमुपसंहरति—**इतीति**। अधिकरणस्वरूपं त्वेवम्—पूर्वसूत्रे विचारविषयत्वेन धर्म उक्तस्तत्र लक्षणप्रमाणाभ्यां वस्तुस्वरूपसिद्धेर्धर्मे लक्षणं प्रमाणं च नास्ति उतास्तीति संशयः। 'लौकिकाकारहीनस्य तस्य किंनाम लक्षणम् ॥ मानशङ्का तु दूरेऽत्र प्रत्यक्षाद्यप्रवर्तनात् ॥' अतो लक्षणप्रमाणरहितस्य न विचारविषयत्वमिति पूर्वपक्षः। माभूच्चक्षुरादिगम्यो

इदंचापरमेकदेशिनः प्रष्टव्याः—अर्थशब्देन किमुच्यते इति। यदि श्रेयःसाधनं, नित्यानां धर्मत्वं न स्यात्। अथ यन्निषिद्धफलं न भवति तदर्थशब्देनोच्यते, तथासति नञर्थविषयस्यापूर्वस्य धर्मत्वप्रसङ्गः, चोदनालक्षणत्वान्निषिद्धफलत्वाभावाच्च। भवत्विति चेत्। न। लोकविरोधात्। यो हि हिंसायामुद्युक्तः प्रतिषेधवशान्निवर्तते न तं धार्मिक इत्याचक्षते किंत्वधर्मान्निवृत्त इत्येतावत्। तदाहुः—'लोकसिद्धस्य लक्षणं परीक्षकैर्वक्तव्यं न वृद्ध्यादिवत्परिभाषण'मित्यास्तां तावत्। इति चोदनासूत्रम्॥

धर्मप्रमाणपरीक्षाधिकरणम्॥ ३॥

## तस्य निमित्तपरीष्टिः॥ ३॥

धर्मस्य ज्ञापकं मानं यदुक्तं चोदनात्मकम्॥ एतत्किं न परीक्ष्यं स्यात्किंवा सम्यक्परीक्ष्यताम्॥ ४१॥
मानोपदेशान्मेयस्य सिद्धत्वात्किं परीक्षया॥ मैवं विचारशास्त्रेऽस्मिन्परीक्षोपेक्षते कुतः॥ ४२॥
आदौ परीक्ष्यो वेदार्थश्चोदनामानताऽथवा॥ वेदार्थस्य प्रधानत्वात्प्रथमं तत्परीक्ष्यताम्॥ ४३॥
चोदनामानतैवात्र प्रथमं साध्यतां गता॥ अनपेक्षतया तस्य यतो मुख्यत्वमाश्रितम्॥ ४४॥

अनेन सूत्रेण चोदनाख्यस्य निमित्तस्य परीक्षणमस्मिन्पादे वक्ष्यमाणम् 'अथातः शेषलक्षणम्' 'अथ विशेषलक्षणम्' इतिवत्सुखग्रहणार्थमनुकीर्त्यते॥ *॥ चोदनैवेत्यस्यार्थस्य साधनाय प्रत्यक्षादीनामनिमित्तत्वमुच्यते—

धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम्॥ ४॥

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्॥ ४॥

प्रत्यक्षादिभिरप्येष गम्यते विधिनैव वा॥ अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता॥ ४५॥
वर्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ॥ अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता॥ ४६॥

प्रत्यक्षं तावदिन्द्रियार्थसंप्रयोगजन्यत्वेन विद्यमानोपलम्भनत्वाद्भविष्यति धर्मे न निमित्तम्। सत्संप्रयोगजन्यत्वमाभासेऽपि तुल्यत्वादलक्षणमिति नैयायिका दूषयन्ति, तत्तु लक्षणानभिधानाददू-

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

लौकिक आकारस्तथापि चोदनागम्यः श्रेयःसाधनत्वादिलक्षण आकारोऽस्ति। एवंचार्थत्वे सति चोदनागम्यो धर्म इति लक्षणमुक्तं सूत्रकृता। अर्थो धर्म इत्युक्ते ब्रह्मणि घटादौ चातिव्याप्तिस्तन्निवृत्त्यर्थं चोदनालक्षण इत्युक्तम्। अर्थपदं चानर्थव्यावृत्तये। चोदनागम्यत्वे च धर्मस्य चोदनैव तत्र प्रमाणमित्युक्तं भवति, तस्माल्लक्षणप्रमाणाभ्यामुपेतो धर्मो जिज्ञास्य इति सिद्धान्तः॥

**तस्य निमित्तपरीष्टिः॥ ३॥** अत्र 'चोदनालक्षणोऽर्थो धर्मः' इति प्रतिज्ञायां हेतौ वक्तव्ये मध्ये निमित्तपरीक्षाप्रतिज्ञाया असंगतिमाशङ्क्याह—**अनेनेति**। यद्यपि चोदनासूत्रे वक्ष्यमाणोऽर्थः संक्षेपेण प्रतिज्ञातस्तथापि प्रतिज्ञासंकरे सति न ज्ञायते कस्य प्रतिज्ञाभागस्य सदौत्पत्तिकसूत्राभ्यां हेतुरभिधीयत इति सुखग्रहणार्थमस्मिन्पादे चोदनाख्यस्य धर्मनिमित्तस्य परीक्षणं प्रतिज्ञायत इत्यर्थः। अयमत्र सूत्रार्थः—तस्य धर्मस्य ज्ञाने यन्निमित्तं प्रमाणं चोदनाभिधानं तत्परीष्टिः परीक्षा कर्तव्येति। 'इषु गतौ' इत्यस्माद्धातोरनिच्छार्थस्येति युचि विहिते 'परेर्वे'ति क्तिन्युचोर्विकल्पस्मरणात् युज्विधौ पर्येषणेति रूपं, क्तिन्विधौ तु परीष्टिरिति रूपं सिध्यति। अत्र धर्मप्रमाणं परीक्ष्यं नवेति संदेहे प्रमाणोपदेशेनैव प्रमेयसिद्धेः किं परीक्षयेति पूर्वःपक्षः। नात्र सिद्धवल्लक्षणप्रकथनमात्रं किंतु विचारशास्त्रत्वादस्य सर्वथा प्रमाणपरीक्षा कर्तव्येति सिद्धान्तः॥

**सत्संप्रयोगे०॥ ४॥** सूत्रसङ्गतिं तावत्करोति—**चोदनैवेति**। अनिमित्तत्वमेवोपपादयति—**प्रत्यक्षं तावदिति**। अत्र भाष्यकारेणैतत्सूत्रं सकलमेव प्रत्यक्षस्यानिमित्तत्वकथनपरत्वेन व्याख्यातम्, वृत्त्यन्तरे तु सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमित्येतावत्प्रत्यक्षलक्षणपरत्वेन व्याख्यातं, अवशिष्टं तु तस्य धर्मे प्रत्यनिमित्तत्वेन तदस्य लक्षणपरत्वे परोद्भावितं दूषणमनूद्य परिहरति—**सदिति**। कथं लक्षणानभिधानमत आह—**नहीति**। अत्रेयमुपपत्तिः—न तावदस्य सूत्रस्य प्रत्यक्षलक्षणपरत्वे 'चोदनालक्षणोऽर्थो धर्म' इत्यनया प्रतिज्ञया संबन्धः संभवति। निष्प्रयोजनं च शाब्दप्र-

षणम्। नहीदं लक्षणं प्रत्यक्षस्य, किंत्वनिमित्तत्वकथनमात्रम्। तत्र हेतुर्विद्यमानोपलम्भनत्वं तत्साधनं च सत्संप्रयोगजत्वम्। नहि सत्संप्रयोगजमविद्यमानोपलम्भनं संभवति ॥*॥ इन्द्रियार्थसंप्रयोगजत्वं सुखादिज्ञानेष्वव्याप्तेरहेतुरितिचेत्। न। तेषामपि मनःसंज्ञकेन्द्रियसंप्रयोगजत्वात्। मनःसद्भावे च सुखादिज्ञानमेव प्रमाणम्, अपरोक्षावभासज्ञानस्येन्द्रियाधीनतया रूपादिज्ञानेषु व्याप्तिदर्शनात् सुखादिविषयमपरोक्षज्ञानमिन्द्रियमनुमापयति। तत्र चक्षुरादीनामसंभवात्तेभ्योऽन्यदवतिष्ठते ॥*॥ अत्र कश्चित्—नित्यद्रव्यगतविशेषगुणत्वात्सुखादीनां द्रव्यान्तरसंयोगजत्वम्, पार्थिवपरमाणुगतरूपादीनामग्निसंयोगजत्वदर्शनात्, यच्च द्रव्यान्तरं तन्मन इत्याह—तन्न युक्तम्। शरीरं हि भोगायतनम्। किंच तस्य भोगायतनत्वमन्यत् तत्संयोगापेक्षसुखाद्युत्पत्तेः, अशितपीताद्याधारत्वाच्च न बहिःशरीरात्सुखाद्युत्पत्तिः। अतः शरीरसंयोगादेव सिद्धेर्न द्रव्यान्तरानुमानम्। किंच पार्थिवगुणानामेव द्रव्यान्तरसंयोगापेक्षा दृष्टा न द्रव्यमात्रगुणानाम्। तेजःसंयोग एव च कारणतया दृष्टो न द्रव्यमात्रसंयोगस्तस्मान्नैवं मनःसिद्धिरिति सुखाद्यपरोक्षज्ञानमेव मनसो लिङ्गम् ॥

इन्द्रियलक्षणम्।

किंपुनरिन्द्रियलक्षणं चक्षुरादिषु मनसि चानुस्यूतम्। उच्यते—यत्संप्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तदिन्द्रियमित्युच्यते, तच्च द्विविधम्, बाह्यमाभ्यन्तरं च, बाह्यं पञ्चविधं घ्राणरसनचक्षुस्त्वक्श्रोत्रात्मकम्। आन्तरं त्वेकं मनः। तत्राद्यानि चत्वारि च पृथिव्यप्तेजोवायुप्रकृतीनीत्यक्षपाददर्शनवदभ्युपगम्यन्ते। श्रोत्रं त्वाकाशात्मकं तैरभ्युपगतम्। वयं तु—'दिशः श्रोत्र'मिति दर्शनाद्दिग्भागमेव कर्णशष्कुल्यवच्छिन्नं श्रोत्रमाचक्ष्महे। मनस्तु पृथिव्यादीनामेवान्यतमात्मकं तेभ्योऽन्यद्वा सर्वथा तावदस्ति मनः। तच्चात्मतद्गुणेष्वेव स्वतन्त्रं प्रवर्तते न बाह्येषु रूपादिष्वित्यान्तरमित्युच्यते। रूपादिज्ञानेष्वपि तच्चक्षुरादिसहायं प्रवर्तते, एवमनुमानादिष्वपि लिङ्गादिसहायम्, अन्यमनस्कस्य संप्रयुक्तेष्वपि रूपादिषु ज्ञानानुत्पत्तेः। स्मृतावपि संस्कारपरतन्त्रं प्रवर्तते न स्वतन्त्रम् ॥*॥ नन्वनुमानादीनां मनोजन्यत्वात्तेषां च भूतभविष्यतोरपि प्रवृत्तेरिन्द्रियजन्यत्वं विद्यमानोपलम्भनत्वेनानैकान्तिकं स्यात्। न स्यात्। नहीन्द्रियजन्यत्वं हेतुः किंत्विन्द्रियसंप्रयोगजत्वम्। नचानुमानेऽतीताया भविष्यन्त्या वा वृष्टेरनुमीयमानाया मनसा संप्रयोगोऽस्तीत्यव्यभिचारः ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

माणाधिकारे प्रत्यक्षलक्षणकथनम्। अथानुक्तस्वरूपस्यानिमित्तत्वमेव प्रतिपादयितुं न शक्यतेऽतस्तल्लक्षणकथनं प्रयोजनवत्, तर्ह्यनुमानादेरपि लक्षणं वक्तव्यं स्यात्। नच तदुक्तं 'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते'। लोकप्रसिद्धप्रमाणव्यवहारिणो मीमांसकस्य तल्लक्षणकरणं चायुक्तमेवातो निमित्तत्वकथनपरमेवैतदिति। अस्मिन्नेवार्थे सूत्रं योजयति—**किंत्विति।** प्रत्यक्षं धर्मे निमित्तमित्युक्ते कस्मादित्यपेक्षायां विद्यमानोपलम्भनत्वादिति हेतुः। एतदुपपादकत्वेन सत्संप्रयोगजत्वाद्युपन्यासः। सता विद्यमानेनार्थेनेन्द्रियाणां संप्रयोगे सति या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षं धर्मे प्रमाणं विद्यमानार्थग्राहकत्वादिति सूत्रार्थः। अत्रेन्द्रियाणामित्युपलक्षणार्थम्। तदुक्तम्—'यद्वेन्द्रियं प्रमाणं स्यात्तस्य चार्थेन संगतिः ॥ मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ॥ तदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता' ॥ इन्द्रियमिन्द्रियार्थसंनिकर्षो वा इन्द्रियमनःसंयोगो वा आत्ममनःसंयोगो वा—आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति संयोगत्रितयमेकं प्रमाणं बुद्धिजन्मेत्यनेन जायमाना बुद्धिः प्रमाणमित्युक्तं न भूता नापि भाविनी। अतएव बुद्धेः कारकान्तराद्वैलक्षण्यं, तद्धि जन्मातिरेकिव्यापारान्तरेण प्रधानक्रियां निष्पादयति बुद्धिस्तु जन्मनैवेति ॥ यथाहुः—'बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम् ॥ व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ॥ नहि तत्क्षणमप्यास्ते जायते वा प्रमात्मकम् ॥ येनार्थग्रहणे पश्चाद्व्याप्रियेतेन्द्रियादिवत् ॥ तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते' इति। अत्र केचित्प्रकारान्तरेण मनः साधयन्ति तद्दूषयितुमुपन्यस्यति—**केचित्त्विति।** अर्थान्तरापत्त्या दूषयति—**तन्नेति।** अर्थान्तरत्वमेव विवृणोति—**शरीरं हीति।** तत्संयोगापेक्षया सुखाद्युत्पत्तेः सकाशात्किमन्यद्भोगायतनत्वं शरीरस्य स्यात्, अपित्वेतदेव यच्छरीरसंयोगेनात्मनि सुखादिकं जन्यतेऽतः शरीरात्मसंयोगजत्वात्सुखादीनां द्रव्यान्तरं शरीरमेव सिध्यति न मन इत्यस्मदुक्त एव प्रकारो मनःसाधक

---

१ भोगायतनमन्यत्. २ अनन्यमन. ३ हीन्द्रियजत्वम्.

अथ प्रत्यक्षम्।

तदेवं प्रत्यक्षं तावदनिमित्तं तत्पूर्वकत्वाच्चानुमानाद्यपि। नह्यगृहीते धर्मे तेन सह कस्यचित्संबन्धग्रहणं संभवति। सादृश्यविषयकत्वाच्चोपमानं दूरभ्रष्टम्। अर्थापत्तिरपि धर्मेण विनानुपपद्यमानस्य कस्यचिददर्शनादसमर्था ॥ * ॥ ननु जगद्वैचित्र्यमनुपपन्नम्। न। स्वाभाविकत्वेनोपपत्तेः। यद्यपि तदनुपपत्त्या किंचिददृष्टं कल्प्येत तथापि को धर्मः को वाऽधर्म इति विवेकाभावादवश्यं चोदनैवार्थनीया। सा चेदङ्गीकृता कृतमर्थापत्त्या, सामान्यतो दृष्टेन वा ॥*॥ ननु विकल्पनिमित्तं संबन्धग्रहणं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

इत्यर्थः। स्पष्टार्थोऽग्रिमग्रन्थः। अत्रानेकप्रकारं सौत्रपदव्याख्यानमाक्षेपसमाधानपूर्वकं योगिप्रत्यक्षनिराकरणं सांख्यसिद्धान्तसिद्धवृत्तिगमनपक्षनिराकरणमिन्द्रियभौतिकत्वनिरूपणं प्राप्यकारित्वादिस्थापनं तत्प्रासङ्गिकमन्यदपि प्रमेयजातं वार्तिके टीकायां चावगन्तव्यं विस्तरभयादस्माभिर्न लिखितम् ॥

प्रकृतं निगमयति—**तदेवमिति**। नन्वनुमानाद्यपि न धर्मे निमित्तं, प्रत्यक्षपूर्वकत्वादित्यनुपपन्नम्। द्विविधं हि प्रत्यक्षं सविकल्पकं निर्विकल्पकं च। न तावन्निर्विकल्पकपूर्वकत्वमनुमानस्य, लिङ्गलिङ्गिनोः सामान्यविषयत्वात्। स्वलक्षणविषयेण निर्विकल्पकेन ग्रहणासंभवात्। नाप्युपमानस्य तत्पूर्वकत्वम्,। सादृश्यस्य निर्विकल्पकागोचरत्वात्। स्मृते च नगरस्थे गवि यत्सादृश्यग्रहणं तदुपमानम्। नच तन्निर्विकल्पके संभवति। यच्चानुपपद्यमानं दृष्ट्वार्थापत्तिज्ञानमुत्पद्यते तस्यापि सविकल्पकगोचरत्वेन निर्विकल्पकेनाग्रहणम्। अस्तु वा सविकल्पकं प्रत्यक्षपूर्वकत्वं तथापि भागासिद्धोऽयं हेतुः। अनुमितानुमाने लिङ्गलिङ्गिनोरुभयोरपि प्रत्यक्षाविषयत्वात्। परमाणुमहं जानामीत्यादौ प्रत्यक्षस्यानुमानपूर्वकत्वदर्शनात्। किंच तत्पूर्वकत्वं तत्प्रत्यक्षावगतिवेलायामेव तत्प्रवृत्तिरिति। तन्न। गृहीतग्राहित्वेनाप्रामाण्यात्। यद्यन्यदा प्रत्यक्षमन्यदा चानुमानादीनि प्रमाणानि प्रवर्तन्त इति तत्पूर्वकमुच्येत तर्हि प्रत्यक्षागोचरेऽपि भविष्यत्यपि धर्मे नानुमानप्रवृत्तिर्विरुध्येत। तथापि वेदेऽपि प्रत्यक्षेण वर्णान्गृहीत्वैवार्थावधारणदर्शनेन प्रत्यक्षपूर्वकत्वान्न वेदस्य धर्मे निमित्तत्वं स्यादिति दूषणजातं परिहरंस्तत्पूर्वकत्वमुपपादयति—**नहीति**। प्रमाणान्तरगृहीतयोरेव साध्यसाधनयोर्व्याप्तिग्रहणसंभवादत्रच प्रत्यक्षस्यैव प्रमाणान्तरत्वात्तत्पूर्वकत्वापत्तिरित्यर्थः। अयमाशयः—न धर्मे प्रत्यप्रामाण्ये साध्ये प्रत्यक्षपूर्वकत्वादित्ययं हेतुरुपदिश्यते येन हेतुदोषा उद्भाव्येरन् किंतु प्रत्यक्षपूर्वकत्वाद्यत्प्रामाण्यं तस्य धर्मे प्रत्यसंभव इत्युच्यते। यस्मात् 'प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम् ॥ प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ॥' अनुमितानुमानस्यापि *पारंपर्येण प्रत्यक्षपूर्वकत्वाद्धर्मे प्रत्यसंभव इति। प्रयोगश्च धर्मो नानुमानगोचरः केनचिद्वस्तुना सहादृष्टपूर्वकत्वादसाधारणवस्तुवत्। तथा नानुमेयोऽपि अदृष्टसदृशत्वादसाधारणवस्तुवत्। **ननु** सुखित्वदुःखित्वादिजगद्वैचित्र्यमनुपपद्यमानमदृष्टं कल्पयतीति **शङ्कते—नन्विति**। परिहरति—**नेति**। स्वभावत एव कानिचित्कारणानि सुखिरूपं पदार्थमुपजनयन्ति कानिचिद्दुःखिरूपमिति किमत्रादृष्टकल्पनयेत्यर्थः। यथाहि कर्मणां विचित्रफलजननशक्तिः स्वभावादेव भवति तथा जगद्वैचित्र्यमपि स्वभावादेवास्त्विति भावः। उक्तंच—'यथा च फलवैचित्र्ये कर्मणां शक्तता स्वतः ॥ तथा विचित्रता लोके स्वभावादुपपत्स्यते ॥' अस्तु वाऽदृष्टमात्रं प्रत्यर्थापत्तेः प्रामाण्यं तथापि न तन्मात्रज्ञानं कुत्राप्युपयुज्यत इति तद्विशेषज्ञानार्थं चोदनैवाभ्यर्थनीयेत्याह—**यद्यपीति**। एतस्मात्कर्मण इदं फलं भवतीति विशेषज्ञानं विना प्रवृत्तिरेव न भवतीत्यर्थः। यथाहुः—'स्वर्गपुत्रादिभेदश्च कीदृशात्कर्मभेदतः ॥ इति यावन्न विज्ञातं तावन्नैव प्रवर्तते' ॥ सूत्रकारेण धर्मविशेषजिज्ञासैव प्रतिज्ञाता, उपरिष्टाद्विशेषाणामेव जिज्ञास्यमानत्वात्। हानोपादानार्थिभि*स्तस्यैव प्रवृत्त्यङ्गस्य ज्ञानस्य मूलपरीक्षणात्। औलूक्यास्तु जगद्वैचित्र्यात्सामान्यतः सिद्ध आगमेन विशेषतोऽवगम्यत इति *द्वाभ्यामेव प्रमाणाभ्यां धर्मः परिनितिष्ठतीत्याहुस्तत्राह—**साचेदिति**। सामान्यं हि साधयन्ती अर्थापत्तिर्न विशेषं निर्धारयितुं शक्ता, शास्त्रं तु विशेषं साधयत्सामान्यालीढमेव साधयतीति, तस्मादकारणमर्थापत्तिः सामान्यसिद्धावित्यर्थः। येतु वदन्ति—नेयमर्थापत्तिः किंतु सामान्यतो दृष्टानुमानमिदं कार्यसामान्यस्य कारणसामान्येन व्याप्तेस्तेषामप्यर्थापत्तिनिरासेनैव निस्तार इत्यभिप्रेत्याह—**सामान्यत इति**। सविकल्पकप्रामाण्यमसहमानः शङ्कते—**नन्विति। तत्कथमिति**। सविकल्पकस्याप्रत्यक्षत्वादिति भावः। परिहरति—

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

लिङ्ग्यनुमीयते। **पारम्पर्येणेति**। तत्रापि यावद्गतिसाधनयोः प्रत्यक्षेण संबन्धो नावगम्यते तावदनुमानाप्रवृत्तिरित्यर्थः। **तस्यैवेति**। विशेषविषयस्येत्यर्थः। **द्वाभ्यामिति**। अस्मिन्पक्षे नोदनैवेत्यवधारणा न सिध्यतीति भावः।

तत्कथं प्रत्यक्षपूर्वकत्वम् । सविकल्पकमप्यनुपरतेन्द्रियव्यापारस्य जायमानमपरोक्षावभासत्वात्प्रत्यक्ष-मेवेत्यदोषः ॥

प्रत्यक्षबौद्धमतम् ।

विकल्पश्चापरोक्षावभासश्चेति चित्रम् । अपरोक्षमिति हि स्वलक्षणमुच्यते तद्विषयोऽवभासो-ऽपरोक्षावभासः । विकल्पस्त्वभिलापसंसर्गयोग्यप्रतिभासत्वान्न स्वलक्षणं स्पृशति, नह्यभिलापः स्वलक्षणं स्पृशति, यदि स्पृशेदभिलापमात्रेणापि विनाऽक्षव्यापारमपरोक्षावभासः स्यात्, नचासा-वस्ति, तदुक्तम्—'अन्यथैवाग्निसंयोगाद्दाहं दग्धो हि मन्यते ॥ अन्यथा दाहशब्देन दाहार्थः संप्रकाशते' इति । तस्मादभिलापास्तावन्न विशदाकारमवभासयन्ति तत्समानविषया विकल्पा अपि ॥ ❋ ॥ यस्त्वयं विस्फारिताक्षस्य—'गौरयम्' इति विकल्पो विशदावभासः स समानकाल-विशदावभासनिर्विकल्पकसंसर्गकृतः, तदभावेऽभिलापमात्रेऽनुमाने च विकल्पाकारप्रतिभासे वै-शद्याभावात् । तस्मान्निर्विकल्पकमेव प्रत्यक्षम् । तत्रैव हि विशदस्य स्वलक्षणस्यावभासः ॥

बौद्धमतखण्डनम् ।

मैवम् । उन्मीलितनेत्रस्य विकल्पोऽपि गौरयमित्यपरोक्षावभास एव प्रतीयते नचा-सावन्यसंसर्गकृतः प्रमाणाभावात् । अभिलापसंसर्गयोग्यस्यापि सामान्याकारस्याभिलापलि-ङ्गादिभिरवैशद्यमिन्द्रियैश्च वैशद्यमुपपद्यत एव । नह्ययं परोक्षापरोक्षविभागो विषयकृतः, यदि हि तथा स्यात् सर्वदैव सामान्यं परोक्षं स्यात् स्वलक्षणं चापरोक्षं स्यात्, नचैवमस्ति, सामा-न्याकारस्यापि परोक्षापरोक्षविभागदर्शनात् । तथाहि—दूराच्छ्वेतं स्वलक्षणं पश्यन्ननिर्धारितगवाश्व-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**सविकल्पकमिति** । निर्विकल्पकजन्यस्यापि तस्य *पारंपर्येणेन्द्रियजन्यत्वमस्तीति भावः । तदुक्तं—'ततः परं पुनर्व-स्तुधर्मैर्जात्यादिभिर्यया ॥ बुद्ध्यावसीयते सा हि प्रत्यक्षत्वेन संमता ॥' **नन्विन्द्रियस्य** निर्विकल्पकोत्पत्तावेवोपक्षीणव्यापार-त्वादिन्द्रियसंप्रयोगस्य च शब्दादिस्मरणेन व्यवहितत्वादप्रत्यक्षत्वं सविकल्पकस्यापद्यत इत्यत आह—**अनुपरतेन्द्रि-येति** । अनुपरतेन्द्रियव्यापारस्य जायमानं ज्ञानमिन्द्रियाधीनत्वादिन्द्रियैर्व्यपदिश्यते शब्दादिस्मरणेनेन्द्रियाणामदूषितत्वात् । स्मृतिसहायानामपि तेषामेव करणत्वादिति भावः । उक्तंच—'तेनेन्द्रियार्थसंबन्धे विद्यमाने स्मरन्नपि ॥ विकल्पयन्स्वधर्मेण वस्तु प्रत्यक्षवान्नरः' ॥

अत्र चोदयति—**विकल्पश्चेति** । एतदेव विवृणोति—**अपरोक्षमिति** । स्वलक्षणं वस्तुमात्रम् । अभिलापो गौरय-मित्यादिशब्दः । सविकल्पकस्य स्वलक्षणासंस्पर्शे हेतुरभिलापेति । अभिलापस्य स्वलक्षणसंस्पर्शे सविकल्पकस्यापि स स्यादिति भावः । नचैवमस्तीत्याह—**नहीति** । स्पर्शेऽनिष्टमाह—**यदीति** । विनाप्यक्षव्यापारमभिलापमात्रेणापरोक्षाव-भासः स्यादित्यन्वयः । यथा वह्नित्वगिन्द्रियसंयोगाद्दाहशब्दार्थस्यापरोक्षावभासो भवति न तथा शब्दप्रयोगमात्रेणेति दृष्टान्तार्थः । विशदं स्पष्टं, अपरोक्षमिति यावत् । **तदभाव इति** । निर्विकल्पकसंसर्गाभाव इत्यर्थः । दूषणमुपसंहरति **—तस्मादिति** ॥

परिहरति—**मैवमिति** । अभिलापेत्यादिनोक्तं दूषणं परिहरति—**अभिलापेति** । **यद्भावाभावाभ्यामिति** । यस्यापारोक्ष्यस्य भावेन लिङ्गेन विस्फारिताक्षस्य पश्यामीति व्यवहारः प्रवर्तते तदभावेन लिङ्गेन न पश्यामीति । ततश्च त्रिरूपलिङ्गानुत्पन्नत्वान्नानुमानम्, स्वलक्षणविषयनिर्विकल्पकप्रत्यक्ष*विषयता नास्तीति न स्मृतित्वं, बाधकप्रत्ययाभावान्ना-प्रामाण्यं, सर्वेषां सविकल्पकेनैव प्रत्यक्षेण व्यवहारदर्शनात्पारिशेष्यात्सविकल्पकस्य प्रत्यक्षत्वं प्रमाणत्वं च सिद्धमित्यभिप्रायेणो-पसंहरति—**अत इति** । *स्यादेतत् । स्वलक्षणभिन्नजातिगुणक्रियारूपविशिष्टार्थावभासकत्वेनातस्मिंस्तद्ग्रहणरूपं सविकल्पकं भ्रान्तिरेव । प्रयोगश्च सविकल्पकज्ञानमप्रमाणमर्थान्तरेऽर्थान्तरारोपेणोत्पद्यमानत्वात् ऊषरसलिलज्ञानवत् । नैतद्युक्तम् । पररूपेण हि परस्मिन्निरूप्यमाणे भ्रान्तिर्भवति जात्यादीनां च व्यक्त्यभेदाङ्गीकारेण पारूप्याभावात् । अभेदे

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**नसमर्थेति** । व्यभिचारादिति भावः । **विषयतेति** । सविकल्पके तदतिरिक्तस्य जात्यादेरधिकस्यापि भासनादित्यर्थः ।

जातिविशेषो हेषाशब्दश्रवणादश्वत्वं तस्मिन्नेव स्वलक्षणेऽनुमिमानोऽपि परोक्षं बुध्यते। वदन्ति हि 'अश्वोऽप्ययं न चक्षुषा तथावभासत' इति । प्रत्यासन्नस्तु वदति—'संप्रत्यश्वत्वमप्यस्य चक्षुषा पश्यामि न पूर्व'मिति । स्वलक्षणं तु प्रागपि विशदमेवेति सामान्यांशगत एवायं दूरसमीपवर्तिनः परोक्षापरोक्षविभागः, तस्मात्कारणकृतोऽयं विभागः ॥ * ॥ एकस्मिन्नपि हि विषयेऽक्षैर्जायमानं विज्ञानमापरोक्ष्यं जनयति लिङ्गादिजं तु नेति किं नोपपद्यते । ज्ञानजन्यो विषयगतः फलविशेषोऽयमापरोक्ष्यं नाम सर्वस्य संवेद्यः। यद्भावाभावाभ्यां लिङ्गाभ्यामक्षैः पश्यामि न पश्यामीति विस्फारिताक्षाणामेव व्यवहारः प्रवर्तते। अतोऽस्ति विकल्पस्यापि विशदावभासित्वमिति प्रत्यक्षत्वोपपत्तिः ॥

ज्ञानस्य सविकल्पकत्वनियमस्तत्खण्डनं च ।

केचित्तु सविकल्पकमेव सर्वं ज्ञानं न निर्विकल्पकं नाम किंचिदस्तीति मन्यन्ते । तत्तु प्रतीति-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

विशेषणविशेष्यभावानुपपत्तिरितिचेत् । न । जात्यादिविशेषणस्याभेद एवोपपत्तेः सर्वदैव तदाकारबोधात् । प्रयोगश्च—विशेषणं विशेष्यादभिन्नं विशेष्ये सदा स्वानुरक्तबुद्धिजनकत्वात् स्वलक्षणस्वरूपवदिति । यद्यपि भिन्ना अपि लाक्षादयो भिन्ने स्फटिकादौ स्वानुरूपां बुद्धिं जनयन्ति तथापि—न सदेति तद्व्यवच्छेदः । जात्यादयस्तु न कदाचिदपि स्वलक्षणविविक्ताः स्वलक्षणं वा जात्यादिविविक्तमुपलब्धम् । मन्वस्तु नामैतज्जातौ, गुणकर्मणोस्त्वेतदसंभवः ताभ्यां वियुक्तस्यापि वस्तुनो ज्ञायमानत्वात्, विद्यमानेऽपि द्रव्ये पूर्वगुणविनाशस्योत्तरोत्पादस्य च दर्शनात् एवं कर्मण्यपि दर्शयितव्यम् । उच्यते—यद्यपि द्रव्यं तद्वियुक्तं दृश्यते तथापि तानि तद्वियुक्तानि न जातु दृश्यन्ते । यदि च तानि द्रव्याद्भिन्नानि भवेयुस्तदा द्रव्यवियुक्तान्यपि कदाचिदुपलभ्येरन् । नचेद्[2] तथा । कथं तर्हि द्रव्याभेदे पूर्वापरयोर्गुणकर्मणोर्नाशोत्पादौ । प्रत्यभिज्ञायते हि 'तदेवेदं द्रव्यं गुणकर्मणी च विनष्टे' इति । नैष दोषः । गुणकर्मविनाशे वस्तुनोऽपि तादूप्येण विनाशाङ्गीकारात् रूपं हि तद्वस्तुनः कथं तद्विनाशे न नश्यतीति शक्यते वक्तुम् । वस्तुतस्तु गुणकर्मणोरपि नात्यन्तिको नाशो वस्त्वात्मना विद्यमानत्वात् । जातावप्येषैव गतिः । दृश्यते हि विनष्टे पिण्डेऽवियुक्ता पिण्डान्तरे जातिः । ननु भिन्ना अपि जात्यादयः समवायात् द्रव्ये स्वानुरक्तां बुद्धिं जनयिष्यन्ति । तदुक्तम् 'अयुतसिद्धानामाधार्याधारभूतानामिह[1] प्रत्ययहेतुर्यः संबन्धः स समवाय' इति । नैतद्युक्तम् । अयुतसिद्धयोः संबन्धित्वासंभवात् । तथाहि केयमयुतसिद्धिः, युतसिद्ध्यभावमात्रं, अपृथक्सिद्धिर्वाऽभिन्नाश्रयाश्रयित्वं वाऽपृथग्गतिमत्त्वं वा । नाद्यौ । अनिष्पन्नस्याविद्यमानत्वेन संबन्धाभावात्, सिद्धयोर्हि संबन्धिनोः संबन्धो भवति नासिद्धयोः । अतएव च न निष्पद्यमानयोः, निष्पत्त्युत्तरकालं च संबन्धे युतसिद्धताप्रसङ्गः युतसिद्धयोश्च पश्चात्संबन्धे हेत्वभावात्संबन्धो न स्यात् । नहि यथा पृथक्सिद्धयो रज्जुघटयोर्देवदत्तादिः संबन्धहेतुस्तथा जातिव्यक्त्योः संयोजकः कश्चिदृश्यते, समवायस्तु संबन्धरूपत्वादेव न संबन्धहेतुः । नापि तृतीयचतुर्थौ, जात्यादेर्व्यक्त्याश्रितत्वात् व्यक्तेश्च स्वावयवाश्रितत्वात् पृथग्गतिमत्त्वात् संबन्धहेत्वभावात् *षण्णामपि पदार्थानां परस्परसंबन्धो न प्रतीयेत । किंचायं समवायः समवायिभ्यां भिन्नो वा अभिन्नो वा । भेदेऽपि ताभ्यां संबद्धोऽसंबद्धो वा । तत्र यदि तावद्व्यतिरिक्तोऽसंबद्धश्च तदा समवायिभ्यः समवायस्य विश्लेषात्समवायिनोः परस्परविश्लेषः स्यात् । अथ संबद्धस्तत्रापि न तावत्संयोगः द्रव्ययोरेव तदभ्युपगमात् समवायान्तराभ्युपगमे त्वनवस्था स्यात् । अथ समवायिनोः स्वरूपमेव समवायो नान्येन संबन्धनीय इत्युच्यते तर्ह्यङ्गीकृतोऽभेदवादः । धर्मस्वरूपानुप्रविष्टस्याभावप्रसङ्गश्च । व्यतिरिक्तः संबध्यमानश्च समवायः संयोगवत्संबन्धान्तरमपेक्षेतैव, तस्मात्समवायासंभवादभेदपक्ष एव श्रेयानित्यलम् । अस्तु वात्यन्तभेद एव जात्यादेस्तथापि न सविकल्पकस्य मिथ्यात्वं, अन्यस्यान्यथा संवेदनेन बाधकप्रत्ययेन वा मिथ्यात्वं संभवति नान्यरूपसंवेद्यतामात्रेण, सर्वेषां तत्र संवादात् । यथा भावनाया धात्वर्थविशिष्टज्ञानं न मिथ्या भवति । तदुक्तम्—'यो ह्यन्यरूपसंवेद्यः संवेद्येतान्यथा पुनः ॥ स मिथ्या नतु तेनैव यो नित्यमवगम्यते' ॥

इदानीं लौकिकानां बाहुल्येन सविकल्पके प्रत्यक्षशब्दप्रयोगात् इन्द्रियसंयोगजन्यत्वाच्च सविकल्पकमेव प्रत्यक्षं न निर्विकल्पकम् 'कल्पनापोढमभ्रान्त'मिति प्रत्यक्षलक्षणाभावादितिचेत् । न । लोकविरोधेन लक्षणानादरणात् । लक्षणस्य निर्विकल्पकमात्रविषयत्वेनोपपत्तेश्च । उक्तंच—'वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ॥ तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥ सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ॥ न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥' तथान्यत्राप्युक्तम्—'न

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

बाधकप्रत्ययसद्भावमाशङ्कते—स्यादेतदिति । षण्णामपीति । गुणकर्मसामान्यविशेषाणां द्रव्येण सह समवायसंबन्धः परस्परं चैकार्थ समवायलक्षणः संबन्धः स सर्वोपि समवायं विना न प्राप्नोतीत्यर्थः । तदभ्युपगमांशसमवायस्याद्रव्यत्वा-

१ माधेयाधारभूतानां । २ भावादत्रेतिचेत् ।

विरुद्धं—प्रतीमो हि वयमक्षसंनिपातानन्तरमविविक्तसामान्यविशेषविभागं संमुग्धवस्तुमात्रगोचरमालोचनज्ञानम् । तदभावे तु विकल्प एव न जायेत । विकल्पयता हि पूर्वानुभूतं जातिविशेषं संज्ञाविशेषं चानुस्मृत्य तेन पुरःस्थितं वस्तु विकल्पयितव्यम् । नचार्थमदृष्टवतस्तत्स्मरणमाकस्मिकमेवोत्पद्यते । तस्मादस्ति निर्विकल्पकमपि ज्ञानम् ॥

अद्वैतमतेन निर्विकल्पकस्य सन्मात्रविषयत्वम् ।

तच्च सन्मात्रविषयमिति केचित् । भेदस्य विकल्पवेद्यत्वादगृहीते च भेदे विशेषाणामग्रहणात् । किंचेतरेतराभावो भेदो नचासौ प्रत्यक्षेण ग्रहीतुं शक्यते नतरां अविकल्पकेन । अतश्च 'नेह नानास्ति किंचने'त्यादिनिषेधानां प्रत्यक्षादिविरोधाभावात् 'एकमेवाद्वितीय'मित्यादिश्रुतिभिरद्वितीयं ब्रह्म सिद्धम् ॥

अद्वैतमतखण्डनम् ।

तदिदमतिसाहसम्—किं भवतो नीलपीतयोस्तिक्तमधुरयोः शीतोष्णयोः सुखदुःखयोश्चाविलक्षणा बुद्धिः । यद्येवं नात्रोत्तरं वक्तव्यम् । नच सत्स्वरूपे सविकल्पेन विशेषग्रहणमिति वाच्यम्, अविकल्पेन विकल्पस्यापि विलक्षणस्योत्पत्त्यसंभवात् ॥ * ॥ यत्त्वावश्यमिदमस्माद्भिन्नमित्येवं विकल्पेनैव भेदो ग्रहीतव्यो नाविकल्पेन तस्य ग्रहणं संभवतीति । न ब्रूमो भेदस्य ग्रहणं किंतु भिन्नानाम् । तेषामपि न भिन्नतया किंतु स्वरूपेण—यदन्यस्माद्भिन्नं नीलं पीतं वा तद्गृह्यत इति ब्रूमः । नहि नीलं पीतं वा भेदः, तयोर्हि धर्मो भेदः, तदग्रहेऽपि धर्मिणां ग्रहणं नानुपपन्नम् ॥ * ॥ यदि च सन्मात्रं प्रत्यक्षेण गृह्यते न नीलं पीतं वा ततो विकल्पेनापीदमस्माद्भिन्नमिति कथं भेदो गृह्येत । नहि सदेव सतो भिन्नमिति संभवति । तस्मान्नीलादिगुणानां पृथिव्यादिद्रव्याणां च प्रत्यक्षेण ग्रहणात्प्रपञ्चापलापः प्रत्यक्षविरुद्ध एव ॥ * ॥ यदि तु पृथिव्यादिप्रपञ्चं नापह्नुमहे तद्धर्मं तु भेदमेवेति ब्रूयात्, तदप्यशक्यम्, नीलपीतयोरितरेतराभावस्य प्रत्यक्षानुपलब्धिसिद्धस्यापह्नवासंभवात् ।

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ॥ अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥' इति । अतः सविकल्पकमेव प्रत्यक्षमिति कस्यचिन्मतं तद्दूषयितुमनुवदति—**केचित्त्विति** । दूषयति—**तन्त्विति** । प्रतीतिमेव दर्शयति—**प्रतीम इति** । अनङ्गीकारे दोषमाह—**तदभाव इति** । कथं न जायेतात आह—**विकल्पयतेति** । सविकल्पकं हि संकेतग्रहणकालभाविशब्दादिस्मरणपूर्वकं, नचाकस्मादेव तत्स्मरणमाविरस्ति, निर्विकल्पकेन तु तत्संस्कारोद्बोधात्स्मरणोपपत्तिरित्यर्थः । उपपादितमर्थं निगमयति—**तस्मादिति** । व्यवहारानङ्गत्वान्न तत्प्रमाणमितिचेत् । न । तस्यापि व्यवहारोपयोगित्वदर्शनात् । दृश्यते हि वह्निना दह्यमानस्य सहसापसरणं तद्विमर्शानपेक्षमेव झटिति जायमानमुपलभ्यते । तिरश्चां बालानां च निर्विकल्पकेनैव सर्वो व्यवहारः, अगृहीतसंबन्धानां तेषां शब्दसंभिन्नार्थबोधासंभवात् । उक्तंच—'अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ॥ बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ न विशेषो न सामान्यं तदानीमनुभूयते ॥ तयोराधारभूता तु व्यक्तिरेवावगम्यत ॥' इति । आलोचनज्ञानमित्यनेन बोधकत्वं प्रामाण्यहेतुत्वेनोक्तम् । प्रथममित्यनेनास्तित्वं निर्विकल्पकत्वं च युक्त्या साधितम् । न विशेष इत्यनेन शुद्धवस्तुजत्वं विवृतम् ॥

अद्वैतवादिनस्तु सन्मात्रविषयकं निर्विकल्पकं प्रत्यक्षमित्याचक्षते तदुपन्यस्यति—**तत्सन्मात्रेति** । **भेदस्येति** । यत्र सविकल्पके भेदावगमस्तत्प्रत्यक्षमेव न भवतीति भावः । अस्तु वा सविकल्पकं प्रत्यक्षं तथापि न तेन भेदग्रहणं संभवतीत्याह—**किंचेति** । अभावस्य प्रत्यक्षानुपलब्धिगम्यस्य प्रत्यक्षेणाग्रहणमित्यर्थः । इदं चेतरेतराभावभेदवादी प्रष्टव्यः किं भिन्नयोरितरेतराभाव उताभिन्नयोः, आद्येऽन्यो भेदः अन्यश्चेतरेतराभाव इति स्यात् । अभिन्नयोरिति पक्षे कथमितरव्यपदेशः । तस्य भेदगर्भितत्वात् । कथं च तस्यैव तत्राभाव इति । अस्मिंश्च पक्षे वेदान्तिनामिष्टसिद्धिं दर्शयति—**अतश्चेति** ॥

दूषयति—**तदिदमिति** । वेदान्तवादिन आशङ्कामुद्घाटयति—**यदिति** । परिहरति—**न ब्रूम इति** । ननु भेदस्य वस्तुस्वरूपत्वात्कथं तद्ग्रहणे तदग्रहणमित्युच्यते तत्राह—**नहीति** । दूषणान्तरमाह—**यदीति** । यदि निर्विकल्पकेन सन्मात्रमेव गृह्यते न वस्त्वन्तरमिति पक्षस्ततः सविकल्पकस्य तत्पूर्वकत्वात्सविकल्पकेनापि न वस्त्वन्तरं गृह्येतेत्यर्थः ।

प्रत्यक्षाभावोऽपि हि प्रत्यक्षवदेव प्रमाणान्तरेभ्यो बलीयान्, इतरथा शशे चतुष्पात्त्वाद्विषाणित्वमनुमीयेत, अतो भेदापलापो न संभवति ॥ * ॥ यदि त्वितरेतराश्रयतया इतरेतराभावग्रहणस्यानवक्लृप्तेरविद्यामात्रनिमित्तं तदित्युच्यते, तदपि—यदि भिन्नतया प्रतियोगिनमाश्रयं च गृहीत्वा तत इतरेतराभावो गृह्येत ततः स्यात्, नीलपीतयोस्त्वितरेतराभावानादरेण स्वरूपेण गृहीतयोः पश्चादितरेतराभावग्रहणे किमितरेतराश्रयत्वम् ॥ * ॥ यदि तु द्वित्वमपह्नूयते न पृथिव्यादयस्तेषां च मिथो भेदः तदपि प्रत्यक्षविरुद्धम् । संख्यायाः प्रत्यक्षत्वात् । सत्यपि प्रत्यक्षविरोधे तदुपमर्देन प्रवर्तमानस्तद्बाधेनैवागमोऽद्वैतमवगमयतीतिचेत् । न । प्रवृत्त्यसंभवात् । प्रत्यक्षं हि निरपेक्षं शीघ्रं जायमानं स्वविरुद्धस्यागमिकज्ञानस्य पदपदार्थसंनिध्यपेक्षायोग्यत्वन्यायालोचनसापेक्षतया विलम्बितप्रवृत्तेः प्रवृत्तिमेव निरुणद्धि ॥ * ॥ किंचाशक्यमेव श्रुत्या प्रपञ्चस्यासत्यत्वं बोद्धुम् । बुध्यमाने हि श्रुतिरपि प्रपञ्चान्तर्गतत्वादसती बोद्धव्या स्यात् । कथंच श्रुत्यैव श्रुतेरसत्त्वं बुध्येत । असत्त्वेन हि प्रतीयमाना न प्रमाणं स्यात् । प्रमाणत्वे त्ववस्थिते[1] सत्तया प्रतीयमानायाः श्रुतेर्न मिथ्यात्वं शक्यं वक्तुम् । नह्येकस्यैव वस्तुनो युगपदेव सत्त्वमसत्त्वं च समुच्चित्य बोद्धुं शक्यम्, अन्यतरोपमर्देन ह्यन्यतरद्बुद्धावारोहति । ततश्च श्रुतिरस्तीतिचेत्, न प्रपञ्चस्याभावः संभवति । श्रुतेरपि प्रपञ्चत्वात् । नास्तिचेच्छ्रुतिः, प्रमाणाभावादेव न प्रपञ्चापलापः संभवति ॥ * ॥ ननु स्वयंप्रकाशं ब्रह्म किमस्यान्येन प्रमाणेन । भवतु ब्रह्म स्वयंप्रकाशं प्रपञ्चाभावस्य किमायातं, स हि प्रमाणमपेक्षतएव ॥ * ॥ कथं चाविद्यमानस्य प्रपञ्चस्य प्रतिभासः । अविद्ययेतिचेत्, कस्य पुनरियमविद्या । जीवानामितिचेत्, न, तेषामभावात् । भावे वा द्वैतप्रसङ्गः । ब्रह्मणि तु विशुद्धविज्ञानात्मके[2] निरवकाशैवाविद्या । विद्यात्मकमपि ब्रह्माविद्याशबलमिव भ्रान्त्यावगम्यत इति चेत्, कस्येयं भ्रान्तिः, यदि न कस्यचित्सूक्तम् । जीवानामिति[3] चेत्, न, तदभावात् । यदि ब्रह्मणः, नास्य भ्रान्तिः संभवतीत्युक्तम् । यदिच विद्यारूपेऽप्यविद्या स्यात् केनासावुच्छिद्येत । ध्यानादिभिरितिचेत् । न, तेषामप्यभावात्, भावे तु द्वैतापत्तिः । ब्रह्मणि तु सहावस्थानादविरुद्धाऽविद्या न तेनोच्छेत्तुं सा शक्या । ततश्चानिर्मोक्षप्रसङ्गः । तस्माद्ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यासत्त्वमुपचरद्भिरौपनिषदैर्वादैस्तदनुसारिभिश्चेतिहासपुराणैर्भ्रान्तानां वाक्यतात्पर्यमजानानानां न्यायाभियोगशून्यानां प्रलापोयमद्वैतवाद इत्युपेक्षणीयः । तत्सिद्धमविकल्पस्य प्रत्यक्षस्य विशेषविषयत्वम् ॥

निर्विकल्पकविषयकबौद्धमतखण्डनम् ।

अपरे तु स्वलक्षणमात्रगोचरं निर्विकल्पकमिच्छन्ति । तदपि प्रतीतिविरुद्धम् । प्रतीयते हि संमुग्धाकारं वस्तु सहसैव यत्पश्चाज्जातिद्रव्यगुणक्रियानामभिः पञ्चधा सविकल्पकेन विकल्प्यते गौरयम्, दण्ड्ययम्, शुक्लोऽयम्, गच्छत्ययम्, डित्थोऽयमिति । तत्र निर्विकल्पकमनेकाकारं वस्तु संमुग्धं गृह्णाति, सविकल्पं त्वेकैकाकारं जात्यादिकं विविच्य विषयीकरोति ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

*अथ सविकल्पकमपि सद्विषयमित्युच्येत तर्हि तेन भेदग्रहणानुपपत्तिरित्याह—**नहीति** । **प्रत्यक्षानुपलब्धीति** । इतरेतरभावः प्रत्यक्षेण ग्रहणयोग्यस्तदभावो योग्यानुपलब्धिगम्यो नापह्नोतुं शक्य इत्यर्थः । **ननु** भिन्नतया धर्मिणं प्रतियोगिनं च गृहीत्वेतरेतराभावरूपभेदग्रहणे इतरेतराश्रयः प्रसज्येतेत्याशङ्क्य परिहरति—**यदि त्विति** । अथ द्वैतमात्रमपह्नूयते न पृथिव्यादिद्रव्यमित्याशङ्क्य निराकरोति—**यदीति** । स्पष्टार्थोऽग्रिमग्रन्थः । दूषणमुपसंहरति—**तस्मादिति** । उपपादितमर्थं निगमयति—**तत्सिद्धमिति** ॥

मतान्तरमनुवदति—**अपरेत्विति** । स्वलक्षणं क्षणिकवस्तुमात्रं दूषयति—**तदपीति** । निर्विकल्पके जात्यादेरपि संमुग्धाकारेण प्रतीतेः स्वलक्षणमात्रगोचरत्वं प्रतीतिविरुद्धमित्यर्थः ॥

---

१ व्यवस्थिते. २ विद्यात्मके. ३ यदि जीवानां. । न । तदभावात्.

प्रत्यभिज्ञायां बौद्धमतेन पूर्वपक्षः।

**ननु** षष्ठोऽपि विकल्पोऽस्ति तदेवेदमिति तत्कथं पञ्चधा विकल्प इत्युच्यते। नत्वयं जातिविकल्पो व्यक्तिप्रत्यभिज्ञा हीयम्। न संज्ञाविकल्पः। अनवगतसंज्ञानामपि भावात्। तिर्यञ्चोऽपि ह्यद्यजाताः स्वमातरं प्रथममुपलभ्य क्षणान्तरे पुनरुपलभमानाः सैवेयमिति शब्दानुवेधशून्यमेव प्रत्यभिजानन्ति, तस्मादियं षष्ठी कल्पनेति पञ्चविधत्वानुपपत्तिः॥ *॥ उच्यते—इयमेवास्माभिर्नामकल्पनेत्युच्यते। तथाहि डित्थोऽयमिति तावद्गौरयमितिवद्रूवात्मना डित्थात्मना वस्तु विकल्प्यते, न दण्डीतिवत्तत्संबन्धितया मत्वर्थानुपादानात्। तत्र न डित्थशब्दो जातिवदर्थस्यात्मा अत्यन्तभिन्नत्वात् यतस्तेनैवार्थोऽनुरज्येत। तदेतदेवं विज्ञेयम्—डित्थशब्देन तद्वाच्यं पूर्वावगतं डित्थमुपस्थाप्य तदात्मना पुरःस्थितोऽर्थो विकल्प्यते डित्थोऽयमिति॥ *॥ किमुक्तं भवति, योऽसावस्माकं डित्थः सोऽयं पुरःस्थितो नान्य इति। सेयं व्यक्तिप्रत्यभिज्ञैव पञ्चमीकल्पना। साच शब्दविदां नामरूषितैव भवतीति नाम विकल्पनेति व्यवह्रियते। एतेन यदाहुः—'डित्थोऽयमित्यशब्दाकारस्यार्थस्य शब्दाकारेण विकल्पनादप्रमाणं सविकल्पम्' इति तदपि निरस्तम्। नह्यत्र शब्दाकारेणार्थः प्रतीयते किंतु पूर्वावगतार्थस्मरणमात्रे शब्दस्य व्यापारः, तेन च स्मृतेनार्थेन तादात्म्येन पुरःस्थितार्थविकल्पनात्। आहच—'यदा तु यादृशः पिण्डः पूर्वं शब्दात्प्रतीयते॥ तादृशस्मरणे हेतुः शब्दस्तत्र यथार्थते'ति। तस्मान्नामविकल्पेऽपि जात्यादिवन्नास्त्यतद्रूपारोपः। किं पुनर्जात्यादिभिर्विकल्प्यते, द्रव्यं, किं पुनरिदं द्रव्यं नाम, पृथिव्युदकतेजोवायुप्रभृति॥

द्रव्याभावे बौद्धमतेन पूर्वपक्षः।

**ननु** रूपादिव्यतिरिक्तं द्रव्यं नाम न किंचिदुपलभामहे। नच तस्योपलम्भकमस्ति, चक्षुरादीनां पञ्चानां रूपादिष्वेवोपक्षीणत्वात्। गन्धरूपरसस्पर्शसंघातः पृथिवी। रसरूपस्पर्शसंघात आपः। रूपस्पर्शसंघातस्तेजः। शब्दस्पर्शसंघातो वायुः। एवं रूपादिसंघातभेदादेव पृथिव्यादिविभागो न द्रव्यं नाम किंचिदिति सौगताः। तदयुक्तम्—आगमापायिषु रूपादिषु यदनुयायिप्रत्यभिज्ञा जायते तद्द्रव्यम्। दर्शनस्पर्शनाभ्यां चास्य ग्रहणम्। प्रत्यभिज्ञा च—यथा बदरफलं श्यामावस्थायां रक्तावस्थायां च यथा वा घटपिण्डकपालावस्थासु मृद्द्रव्यम्। अस्ति हि तत्र पिण्डावस्थाभेदे श्यामरक्तरूपभेदेऽपि द्रव्यप्रत्यभिज्ञा—मृदियं पिण्डावस्थामपहाय घटावस्था संजाता श्यामिमानं च त्यक्त्वा

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

पञ्चधेत्युक्तिमसहमानः शङ्कते—**नन्विति**। परिहरति—**उच्यत इति**। अत्रैव मतान्तरमुपन्यस्यति—**एतेनेति**। अशब्दरूपाणामेव भावानां सविकल्पकज्ञाने शब्दाकारेण निरूप्यमाणत्वात् भवति पाररूप्ये मिथ्यात्वमित्यर्थः। निरासे कारणमाह—**नहीति**। तदुक्तम्—'न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते। प्राक्शब्दाद्यादृशी बुद्धिः शब्दादपि हि तादृशी'। अत्रैव वार्तिककृत्संमतिमाह—**आह चेति**। परमार्थतस्तु नाध्यासो नापि मिथ्यात्वमिति भावः॥ **ननु** गौरयमिति सामानाधिकरण्येन शब्दानुविद्धबोधात्तद्रूपसमारोपः स्यात्। अत्र ब्रूमः—यदि गोत्वादिरूपोऽर्थः सर्वदा शब्दाकारेणैव प्रतीयते तदा भेदाभावात्कुतोऽध्यासस्तदभावे च मिथ्यात्वं दूरापास्तम्। भेदावगतौ तु सुतरामध्यासाभावः, अतो भ्रान्त्यैवेयमध्यासकल्पना तद्वादिनां, अर्थशब्दज्ञानेषु त्रिष्वपि समाननिर्देशस्य भ्रान्तिमूलस्य संभवात्। यथाहुः—'शब्देनैव हि निर्देशो गृहीतेऽर्थेऽवगम्यते॥ गौरित्येव च निर्देशो वाच्य*तद्बुद्धिवादिनाम्'। इदानीं मतान्तरनिराकरणेन रूपादिसंघातातिरिक्तं धर्मिणं स्थापयितुमाह—**किंपुनरिति**॥

**चक्षुरादीनामिति**। एतदतिरिक्तद्रव्यमात्रबोधकषष्ठेन्द्रियस्याभावान्न द्रव्यसिद्धिरित्यर्थः। मन एव षष्ठमिन्द्रियमिति चेत्। न। तस्य स्वातन्त्र्येण बहिर्विषयव्यवस्थापनेऽसामर्थ्यात्। तदाहुः—'क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु॥ न षष्ठमिन्द्रियं तस्य ग्राहकं विद्यते बहिः॥' इति। उपलम्भकाभावं परिहरति—**दर्शनेति**॥

सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

दिति भावः। अध्यासिपक्षे दूषणमाह—**अथेति**। तदभावः इतरेतराभावः। **तद्बुद्धीति**। गौरिति हि शब्दो गौरित्यर्थः।

---

१ वकल्पते.

पक्का सत्यरुणिमानं गृहीतवती । अनन्तरं घटावस्थामपहाय कपालिका जातेति । एवं तन्तुपटाद्यवस्थास्वपि द्रष्टव्यम् ॥

तर्कमतेनावयवेष्ववयव्युत्पत्तिः ।

**ननु** तन्तुपटादिषु द्रव्यान्तरोत्पत्तिरेवाभिमता, अन्यथा ह्यवयव्यपलापः स्यात् । नावयविनमपह्नुमहे, द्रव्यान्तरोत्पत्तिं तु नेच्छामः प्रतिपत्त्यभावात् । तन्तव एव हि संयोगविशेषादेकद्रव्यतामापद्यन्ते, अवयवी च भवन्ति तादृशाश्च पटजातिं स्थौल्यं च बिभ्रत ऐकपटस्थूलबुद्ध्या[1] गृह्यन्त इति लौकिकी प्रतिपत्तिः । अतो न द्रव्यस्य कदाचिदागमोऽपायो वा, घटपटगवाश्वशुक्लरक्ताद्यवस्थानामेवागमापायौ ॥ * ॥ आह च—आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ॥ तद्धर्मि यत्र च ज्ञानं प्राग्धर्मग्रहणाद्भवे'दिति । तथा—'यादृशमस्माभिरभिहितं द्रव्यं तादृशस्यैव हि सर्वस्य गुण एव भिद्यते न स्वरूप'मिति । तत्सिद्धं द्रव्यम् । तच्च जात्यादिभिः पञ्चधा सविकल्पेन विभज्यते । अतः सविकल्पकमपि प्रत्यक्षं, तत्पूर्वकं चानुमानादीति सिद्धं तेषामप्यनिमित्तत्वमिति प्रत्यक्षसूत्रम् ॥

धर्मे वेदप्रामाण्याधिकरणम् ॥ ५ ॥

## औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः, तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

**अबोधको बोधको वा न तावद्बोधको विधिः ॥ शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः ॥ ४७ ॥**
**समभिव्याहृते धर्मे शक्तिग्रहणसंभवात् ॥ बोधकस्य विधेर्मानत्वमनपेक्षतया स्थितम् ॥ ४८ ॥**

उक्तं प्रत्यक्षादीनामनिमित्तत्वम् । ततएव तन्मूलपुरुषवचनस्याप्यनिमित्तत्वम् । एवं तर्हि शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात्तदभावे तस्याप्यप्रामाण्यादभावगम्यत्वमेवायातं धर्मस्येत्या-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

अत्र वार्तिककृत्संमतिमाह—**आह चेति** । आविर्भावतिरोभावधर्मकेषु रूपादिषु यदनुयायि तद्धर्मि यथाग्निसंयोगप्रच्यावितप्राग्रूपः समुपजातरूपान्तरश्च घटः स एवायं घट इति प्रत्यभिज्ञायमानस्तदतिरिक्तो धर्मी । **ननु** रूपादीनामग्रहणे तस्यानवभासात्कथं तदतिरेकसिद्धिः । नैवम् । धर्माग्रहणेऽपि क्वचिद्धर्मिप्रतीतेः । दृश्यते च प्रदोषे शुक्लाग्रहणे ऽपि बलाकापङ्क्तिः । उपपादितमर्थं निगमयति—**अत इति** । **ननु** विस्फारितेऽपि चक्षुषि शब्दसंबन्धस्मरणोत्तरकालं पूर्वगृहीतानुसंधानेन चोत्पद्यमानत्वात् अनक्षजत्वेनाप्रत्यक्षत्वं, अनुभूते च वस्तुन्यभ्रष्टसंस्कारस्य जायमानत्वाच्च स्मृतित्वं सविकल्पकस्य । सत्यम् । तथापीन्द्रियार्थसंनिकर्षेणापरोक्षप्रतिभासतया चोत्पद्यमानत्वात्प्रत्यक्षत्वमव्याहतम् । नापि स्मृतित्वम् । पूर्वेतोऽप्यधिकार्थप्रतिभासनात् । तथाहि—पूर्वकालविशिष्टः प्रतिपन्नोऽपीदानीं वर्तमानकालविशिष्टतया गृह्यते स एवायं देवदत्त इति । यथासामान्यप्रत्यभिज्ञायामपि पूर्वमन्यव्यक्तिगतत्वेन ग्रहणमासीत् इदानीमन्यव्यक्तिगतत्वेनानुभूयते । यद्यपि पूर्वेद्युरनवगतमपरेद्युरवगम्यते तथापि निर्विकल्पकलक्षणेनावगतं सविकल्पकलक्षणेनावगम्यत इत्यधिकार्थत्वम् । यथाहुः—'स्मर्येते शब्दसंबन्धौ माभूत्प्रत्यक्षता तयोः ॥ तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ॥ गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ॥ तथापि व्यतिरेकेण पूर्वबोधात्प्रतीयते ॥ व्यक्तिकालादिभेदेन तत्रास्त्यवसरो मितेः' । वस्तुतस्तु यथा ह्यालोकमनःसापेक्षतायामपि निर्विकल्पकस्याक्षजत्वं नापैति तथा सविकल्पकस्यापि स्मरणसापेक्षतायामक्षजत्वं नापैति । नच मिथ्यात्वं भवतीति तत्त्वम् । अतो लिङ्गलिङ्गिसामान्ययोस्तत्संबन्धस्य च सविकल्पकप्रत्यक्षवेद्यत्वादुपपन्नमनुमानादीनां तत्पूर्वकत्वमित्युपसंहरति—**तत्पूर्वकं चेति** । अधिकरणं त्वेवम्—धर्मो विषयः प्रत्यक्षादिभिरपि गम्यते चोदनयैवेति संदेहः । प्रत्यक्षादीनां प्रमाणत्वेन प्रमेयावभासकत्वात् धर्मस्य च प्रमेयत्वात्प्रत्यक्षादिभिरपि गम्यत इति पूर्वः पक्षः । धर्मस्य प्रमेयत्वेऽपि प्रत्यक्षस्य वर्तमानमात्रविषयत्वात् अनुमानादेश्च तत्पूर्वकत्वान्नोदनयैव गम्यत इति सिद्धान्तः ॥

**औत्पत्तिकस्तु०** ॥ ५ ॥ **ननु** प्रत्यक्षादीनामनिमित्तत्वोपपादनेनार्थाच्चोदनैव धर्मे प्रमाणमित्यवधारणस्य सिद्धत्वात्किमुत्तरसूत्रेणेत्याशङ्क्य शङ्काविशेषनिराकरणार्थत्वं दर्शयितुमाह—**उक्तमिति** । **ननु** पौरुषेयस्यानिमित्तत्वे चोदनायाः किमायातमत आह—**एवमिति** । **ननु** लोकप्रसिद्धेरेव धर्माधर्मयोरवगतिसंभवात्कथमभावगम्यत्वोक्तिः । यदाह भगवान्वे-

---

१ एकपटद्रव्यस्थूलबुद्धिभिः.

शङ्कानिराकरणाय चोदनायाः प्रामाण्यमुच्यते । सत्यम् । लोके प्रमाणान्तरमूलानां प्रामाण्यं अतन्मूलानां चाप्रामाण्यं दृश्यते, नत्वेवमपि सापेक्षं प्रामाण्यं किंतु स्वतएव । अनाप्तवाक्यस्य त्वप्रामाण्यं न मूलविरहात् किंतु दुष्टमूलतया शब्दस्य दुष्टत्वात्स्वाभाविकस्य प्रामाण्यस्यापवादात् ॥

वेदस्यापौरुषेयत्वम् ।

अपौरुषेये तु वेदे यद्यप्याप्तप्रणीतत्वं नास्ति तथापि प्रामाण्यस्य तदपेक्षाभावादनाप्तस्पर्शनिमित्तदोषाभावाच्चानपोदितं प्रामाण्यं भवति । त्रेधा ह्यत्र पुरुषानुप्रवेशः—पदपदार्थसंबन्धद्वारेण वाक्यवाक्यार्थसंबन्धद्वारेण ग्रन्थस्यैव वा भारतादिवत्पौरुषेयत्वात् । नत्वेतत्रयमप्यस्ति, पदपदार्थसंबन्धस्य नित्यत्वमत्रौत्पत्तिकशब्देनोक्तं, वाक्यार्थस्य च पदार्थमूलत्वं वेदस्य चापौरुषेयत्वमुपरिष्टाद्वक्ष्यते ॥

सामान्यतः प्रमाणलक्षणम् ।

नच साक्षाद्बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते । अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यम-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

द्व्यासः—'इदं पुण्यमिदं पापमित्येतस्मिन्पदद्वये ॥ आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥' नन्वेवं पुण्यपापपदप्रमाणको धर्म इत्युक्तं भवति न लोकप्रमाणकः । मैवम् । तत्प्रयोगस्यैव लोकायत्तत्वादयमनुपालम्भः । नचाप्रमाणं लोकप्रसिद्धिः ब्राह्मणादिजातिविवेकस्य तदधीनत्वात्, सकलशब्दार्थावधारणस्य च तदायत्तत्वात्, अतो निषिद्धेऽपि प्रत्यक्षादौ नाभावः शङ्कितव्यः । सत्यमेवैतत् । प्रसिद्धेरेव तु प्रत्यक्षादिमूलान्तरनिषेधेन निर्मूलत्वमाशङ्क्य समूलतात्र प्रदर्श्यते । नच प्रसिद्धिः प्रत्यक्षादिवत्स्वत एव प्रमाणं, स्मरणं हि प्रसिद्धिशब्देनोच्यते । तच्च प्रत्यक्षादिमूलमेव । अव्यवस्थिता च प्रसिद्धिः । नास्तिका ह्यहिंसामेव धर्ममाहुः । अन्ये तु प्राजापत्यादिकं तपः पीडात्मकत्वात्परपीडावदधर्म एवेत्याहुः । आर्यास्तु विधिनिषेधप्रमाणकौ धर्माधर्मौ संगिरन्ते । एवं परस्परविगानात्स्वतोऽप्रमाणमेव प्रसिद्धिः । नाप्यार्यप्रसिद्धेर्धर्मं प्रति प्रामाण्यमविगानादिति वाच्यम् । तस्य शास्त्रप्रामाण्यसिद्ध्युत्तरकालीनत्वात् । तथाच वक्ष्यति—'शास्त्रस्था वा तन्निमित्तत्वा'दिति । अतोऽभावगम्यत्वनिराकरणाय चोदनाप्रामाण्यमुपपादनीयम् । यथाहुः—'तस्मादभाववक्त्रस्थौ धर्माधर्मौ न शक्नुयात् ॥ चोदना चेत्समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥' इति । प्रामाण्यमेव वक्तुं भूमिमारचयति—**सत्यमिति** ॥

अपौरुषेयत्वमुपपादयितुमाह—**त्रेधाहीति** । सूत्रं योजयति—**पदेति** । नित्यत्वमत्र स्वाभाविकत्वं शब्दार्थयोर्नित्यः संबन्धो न समयलक्षण इत्यर्थः । *अनेन कारणदोषाभाव उक्तः । तस्याग्निहोत्रादिलक्षणस्य धर्मस्य ज्ञानं निमित्तं यस्मादयमुपदेशः । **ननु** ज्ञानमुपदेश इति ज्ञानोपदेशशब्दार्थयोर्भिन्नार्थत्वात्सामानाधिकरण्यानुपपत्तिः । उपदेशो हि शब्द उच्यते ज्ञानं चार्थावगमः । नच शब्द एव ज्ञानं भवति । यदाह भाष्यकारः—'उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्' । नैष दोषः । एतस्य भावसाधनत्वे सामानाधिकरण्यानुपपत्तिः स्यात्करणसाधनस्त्वसौ करणे ल्युट् । ज्ञायतेऽनेनेति ज्ञानं ज्ञापकं प्रमाणमिति यावत् । ततश्चायमर्थः—उपदेशः सविधिकं वाक्यं धर्मे ज्ञानं प्रमाणमिति । एतेनानुत्पत्तिलक्षणमप्रामाण्यं निराकृतम् । तदुक्तं—'उपदेशो हि भवति ज्ञानं तस्येति योग्यता ॥ ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः ॥' अव्यतिरेकशब्देन बाधकप्रत्ययनिरासः । चकारात्संशयस्य । अर्थेऽनुपलब्धे इत्यनुवादत्वं निरस्यति । अतस्तच्चोदनाख्यं प्रमाणमेवानपेक्षत्वात् । नह्येवं सति प्रत्ययान्तरमपेक्षितव्यम् । अनाप्तप्रणीते हि वाक्ये प्रतिपत्तुः प्रमाणान्तरसंवादेन प्रामाण्यमाप्तप्रणीते तु तत्प्रमाणान्तरापेक्षा, चोदनायां त्वपौरुषेयत्वेनोभयापेक्षा नास्तीत्यनपेक्षत्वादित्युक्तम् । यथाहुर्वार्तिककाराः—'स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ॥ आप्तोक्तिषु परापेक्षा नोभयं चोदनासु तदि'ति ॥ बादरायणग्रहणं तु पूजार्थम् । बादरायणस्याप्येतन्मतमित्यर्थः ॥

पिण्डितार्थं दर्शयति—**एतच्चेति** । ननु ज्ञानशब्देनैव प्रामाण्यमुपदेशस्योक्तमतस्तत्प्रमाणमिति व्यर्थम् । सत्यम् । नानेन तस्यैव पुनः प्रामाण्यमुच्यते, किंतु निरपेक्षत्वेन कार्येऽर्थे शब्दस्य यत्प्रामाण्यं तत्स्वत इति नानर्थक्यम् । यथाहुः—'औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ॥ अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥ सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा' ॥ अनुपलब्ध इत्युपदेशाख्यप्रमाणविषयविशेषणम् । प्रत्यक्षादयस्तूपलब्धेष्वपि प्रवर्तन्त इति भावः । सर्वग्रहणं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

गौरिति ज्ञानमित्यर्थः । औत्पत्तिकस्तु पुण्यमारामतडागादि । पापं परगृहदाहादि । पश्यतामित्यनादरे षष्ठी । अनेनेति ।

स्तीति 'अर्थेऽनुपलब्धे' इत्यनेनोक्तम्। एतच्च विशेषणत्रयमुपाददानेन सूत्रकारेण कारणदोषबाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमाणमिति प्रमाणलक्षणं सूचितम्॥

प्रभाकरमतेन प्रमाणलक्षणम्।

नन्वेवं धारावाहिकेषूत्तरेषां पूर्वगृहीतार्थविषयकत्वादप्रामाण्यं स्यात् तस्मादनुभूतिः प्रमाणमिति प्रमाणलक्षणम्, स्मृतिव्यतिरिक्ता च प्रतीतिरनुभूतिः। स्मृतिश्च संस्कारमात्रजं ज्ञानमभिधीयते। मात्रग्रहणं च संस्कारसध्रीचीनेन्द्रियजस्य प्रत्यभिज्ञानस्य स्मृतित्वप्रसङ्गेनाप्रामाण्यं माप्रसांक्षीदित्येवमर्थम्। तदेवं संस्कारातिरिक्तकारणजन्यं ज्ञानं प्रमाणमित्युक्तं भवति, तदिदं स्वप्रदर्शने तावदव्यापकम्, संस्कारमात्रजस्यापि ज्ञानस्य स्वरूपे कर्तरि च प्रामाण्यमिष्टं भवताम्॥ * ॥ अथ स्मर्तव्यापेक्षयैव स्मृतेः स्मृतित्वं तद्विषयसंस्कारजत्वात्, स्वरूपकर्त्रपेक्षया त्वनुभूतिरेव, अतः सिद्ध्यति प्रामाण्यमित्युच्यते। एवं तर्हि मात्रग्रहणमनर्थकम्, प्रत्यभिज्ञानस्यापि पूर्वानुभूतांशापेक्षयैव स्मृतित्वात्तत्र चाप्रामाण्यमिष्टमेव, यत्र त्वंशे प्रामाण्यं तत्रानुभूतिरेव सा॥ * ॥ किंचानुवादानां 'य एवंविद्वान्पौर्णमासी'मित्यादीनामपि संस्कारमात्रजत्वाभावात्प्रामाण्यं स्यात्। भवत्विति चेत्। न। लोकविरोधात्। तथा लौकिकमपि वाक्यं वक्तृज्ञानानुमितेऽर्थेऽनुवादकतया प्रवर्तमानं प्रमाणं स्यात्। नचैतदिष्टं भवताम्। असंनिकृष्टग्रहणमनुवादानां शास्त्रत्वनिवृत्त्यर्थमित्यङ्गीकरणात्॥ * ॥ अथानपेक्षं प्रमाणं यत्स्वविषये प्रमाणान्तरं नापेक्षते तत्प्रमाणम्। अनुवादानां तु पुरोवादसापेक्षत्वादप्रामाण्यमिति। एवं तर्हि लौकिकं वाक्यमप्यनुमितेऽर्थे प्रवर्तमानमनुमानस्य शङ्कानिराकरणमात्रौपयिकत्वादर्थप्रतिपादने तदपेक्षाभावात्प्रमाणं स्यात्॥ * ॥ तथानुमानस्य प्रामाण्यं न स्यात्, तद्धि नियमग्रहणमपेक्षते। नच गृहीतमर्थं मात्रयाप्यधिकं गृह्णातीति भवतां दर्शनम्। पीतशङ्खज्ञानमप्यनुभूतित्वात्प्रमाणं स्यात्। इष्टमेवेति वदतो लोकविरोधः। तस्माद्यथार्थमगृहीतग्राहिज्ञानं प्रमाणमिति वक्तव्यम्। धारावाहिकेष्वप्युत्तरोत्तरेषां कालान्तरसंबन्धस्यागृहीतस्य ग्रहणाद्युक्तं प्रामाण्यम्॥

कालप्रत्यक्षनिरूपणम्।

सन्नपि कालभेदोऽतिसूक्ष्मत्वान्न परामृष्यत इति चेत्, अहो सूक्ष्मदर्शी देवानांप्रियः। यो हि समानविषयया विज्ञानधारया चिरमवस्थायोपरतः सोऽनन्तरक्षणसंबन्धितयार्थं स्मरति। तथाहि

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

चोत्पत्तिविनियोगप्रयोगविध्यभिप्रायम्। **ननु** 'चोदनालक्षणोऽर्थो धर्मः' इति चोदनाप्रामाण्यं प्रतिज्ञातं 'तस्य ज्ञानमुपदेशः' इत्युपदेशस्य साधितमित्यसंबद्धमिव। मैवम्। उभयोरेकार्थत्वात्। उक्तंच—'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति॥

अर्थेऽनुपलब्ध इत्येतदाक्षिपति—**नन्विति**। उपलब्धार्थविषयस्यापि लोके प्रामाण्याङ्गीकारादिति भावः। किं तर्हि प्रमाणलक्षणमित्यपेक्षायामेकदेश्यभिमतं लक्षणं दर्शयति—**तस्मादिति**। दूषयति—**तदिदमिति**। तस्यापि ज्ञानस्य तेनात्मांशस्वात्मांशयोः प्रामाण्याङ्गीकारादित्यर्थः। अतिव्याप्तिमाह—**किंचेति**। वाक्यत्वादिष्टमेव प्रामाण्यमित्यभिप्रायेणाह—**भवत्विति**। अनिष्टत्वे नियामकमाह—**असंनिकृष्टेति**। शास्त्रं शब्दविज्ञानादित्यत्रेत्यर्थः। निराकरोति—**एवमिति**। अनुमितेऽप्यर्थे प्रवर्तमानं प्रमाणं स्यात्। अत्र हेतुः स्वार्थप्रतिपादने प्रमाणान्तरापेक्षाभावात्। **नन्वनु**मानमपेक्षत एवेत्याशङ्क्याह—**अनुमानस्येति**। अनुमानं तु वाक्यस्य निर्मूलत्वशङ्कानिराकरणमात्र एवोपयुज्यते नत्वर्थप्रतिपादने तदपेक्ष्यत इत्यर्थः। नन्वनुमानस्य स्वसिद्ध्यर्थं नियमग्रहणापेक्षा नतु स्वार्थप्रतिपादन इत्याशङ्क्याह—**नचेति**। यद्यपि मतान्तरेऽनुमानस्याधिकार्थविषयत्वं तथापि तन्मते नास्तीत्यर्थः। अतोऽस्मदुक्तमेव लक्षणं ज्याय इत्युपसंहरति—**तस्मादिति**॥

उत्तरोत्तरेषां ज्ञानानाम्। चोदयति—**सन्नपीति**। कालस्य परोक्षत्वात्प्रत्यक्षधर्मस्य तन्तुनभःसंयोगवदप्रत्यक्षत्वात्तद्भेदस्यापरमर्श इति भावः। **कालभेदे त्विति**। अयमाशयः—नास्माकं वैशेषिकादिवदप्रत्यक्षः कालः किंतु प्रत्यक्ष एवास्मिन्क्षणे मयोपलब्ध इत्यनुभवात्। अरूपस्याप्याकाशवत्प्रत्यक्षत्वं भविष्यति। नहि रूपिप्रत्यक्षमित्यस्माकं प्रत्यक्षलक्षणं

किमत्र घटोऽवस्थित इति पृष्टः कथयति—अस्मिन्क्षणे मयोपलब्ध इति। तथा प्रातरारभ्यैतावत्कालं मयोपलब्ध इति। कालभेदे त्वगृहीते कथमेवं वदेत्। तस्मादस्ति कालभेदपरामर्शः। तदाधिक्याच्च सिद्धमुत्तरेषां प्रामाण्यम्॥ * ॥ **ननु** यथार्थतापि चेत्प्रमाणलक्षणम्, उष्णजलज्ञानमप्रमाणं स्यात्। इष्टमेवैतत्। **ननु** लोकविरोधः स्यात्। स्यात् यद्ययथार्थतां जानन्त एव लौकिकाः प्रामाण्यं मन्वीरन्। ते तु यथार्थतामेवैतस्य मन्वानाः प्रामाण्यमभ्रान्तत्वं च मन्यन्ते। येत्वयथार्थतां जानन्ति ते नैव प्रामाण्यं मन्यन्ते, नाप्यभ्रान्तताम्, तस्मान्नास्ति विरोधः॥ * ॥ पीतशङ्खज्ञानस्यापि स्मृतित्वाभिमानादनुभूतित्वापरिज्ञानादप्रामाण्यं मन्यन्ते, अतोऽस्माकमपि नास्ति विरोध इति चेत्, तदयुक्तम्। नहि लौकिकाः शुक्तिरजतज्ञानेऽपि स्मृतित्वं मन्यन्ते, नतरां पीतशङ्खज्ञाने।

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

किंतु संविदेव परोक्षापरोक्षनिर्भासा जायमाना इदं प्रत्यक्षमिदमप्रत्यक्षमिति विभजते। विस्फारिताक्षस्य तु भवत्येवोत्तरोत्तरक्षणेसंभिन्नावभास इति। प्रमाणलक्षणेऽव्याप्तिं शङ्कते—**नन्विति**। इष्टापत्त्या परिहरति—**इष्टमिति**। विरोधं परिहरति—**स्यादिति**। इदानीमनेनैव न्यायेनैकदेश्यपि स्वमते लोकविरोधपरिहारं शङ्कते—**पीतशङ्खेति**। येत्वनुभूतित्वं जानन्ति ते तु प्रामाण्यमेव मन्यन्त इति नास्ति विरोध इत्यर्थः। परिहरति—**तदिति**। यत्र प्राभाकरमते शुक्तिरजतज्ञाने स्मृतित्वं संभाव्यते तत्रापि न लौकिकानां स्मृतित्वाभिमानः किमु वाच्यं पीतशङ्खज्ञान इत्यर्थः। उपपादितमर्थं निगमयति—**तस्मादिति**। अत्र सूत्रकारेण चोदनोपदेशशब्दाभ्यां विधिराश्रितस्तत्प्रयोजनं न पश्यामः। न तावत्साध्यसाधनभावावगमः विधिं विनाप्याख्यातेषु साध्यसाधनभावावगमोपपत्तेः। आख्यातप्रत्ययो हि करोत्यर्थरूपां भावनामवबोधयति, साच साध्यसाधनभावमन्तरेण नोपपद्यते। यथा हि लोके ओदनं पचतीत्युक्ते पाकौदनयोः साध्यसाधनसंबन्धबुद्धिरेवं 'स्वर्गकामो यजत'इत्यतोऽपि यागेन स्वर्गः सिद्ध्यतीति गम्यत एव, आख्यातप्रयोगस्य च सर्वत्र भावात्। तेन विना च साकाङ्क्षस्य वाक्यस्य स्वार्थपर्यवसानाभावात्। अथ तस्याः साध्यसाधनमात्रेणोपपत्तेः स्वर्गस्यैव साध्यत्वं यागस्य च साधनत्वमित्ययमर्थो विधिंविना न सिद्ध्यतीत्युच्येत। तन्न। 'स्वर्गकामो यजत'इत्यत्र स्वर्गयागाभ्यामन्विता भावनावगम्यते। तत्र स्वर्गस्येष्यमाणत्वेनावगमात्साध्यत्वमेव युक्तं, यागस्य तु योग्यत्वात्संनिधेश्च तत्साधनत्वमिति नास्ति विधेः प्रयोजनम्। अथोच्येतानुष्ठितो यागादिर्धर्मो नचानुष्ठानं प्रवर्तकादृते संभवति। अतः प्रवृत्तिसिद्ध्यर्थं विध्याश्रयणमिति। तदपि न। तत्प्रयोजनार्थिन इच्छयैव तत्र प्रवृत्तिसिद्धेः अनिष्टेषु विधिशतेनाप्यप्रवृत्तेः इतिकर्तव्यतांशेऽपि करणोपकारकत्वज्ञानात्प्रवृत्तिः। नाप्यधर्मवर्जनार्थो विधिः प्रतिषेधादेव नञस्तत्सिद्धेः। श्रूयमाणोऽपि विधौ रागादिलक्षणामेव प्रवृत्तिमनुवदेत् यद्धननं कुर्यादिति। **ननु** विधायकः स्यात्। एषा हि तत्र वचनव्यक्तिः यद्धन्यात्पिबेद्वा तन्नेति। अविधायकत्वे युक्तिकलापस्तात्पर्यटीकायामवगन्तव्यः। अतोऽनर्थको विधिप्रामाण्यप्रतिपादनग्रहोऽपौरुषेयः शब्दो धर्मे प्रमाणमित्येतावदेव वक्तव्यम्। उच्यते—यदुक्तं समभिव्याहारादेव स्वर्गयागयोः साध्यसाधनभाव इति। तन्न। यजत इति पदश्रुत्या समभिव्याहाररूपवाक्यबाधेन भाव्यांशे धात्वर्थस्यैव निवेशनात्, विधौ तु सति समानप्रत्ययोपात्तविध्यवरुद्धा भावना विधेः प्रवर्तनाशक्तिरक्षार्थं विप्रकृष्टमपि पुरुषार्थरूपं स्वर्गादिफलं भाव्यत्वेन गृह्णाति यागं च साधनत्वेनेति श्रेयःसाधनत्वेन यागादेर्धर्मत्वसिद्धिर्विधेः प्रयोजनम्। यथाहुः—'विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते॥ श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत्॥ विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते॥ तत्साधनस्य धर्मत्वमेवं सति च लभ्यते॥' **ननु** भावनासामर्थ्यादेव पुरुषार्थस्य भाव्यत्वसिद्धिः। पुरुषप्रयत्नरूपा हि सा, नह्यपुरुषार्थे चेतनस्य प्रयत्नः संभवति, पदश्रुत्या च यागस्य तत्साधनत्वावगतिरिति किं विधिना। मैवम्। प्रयत्नस्येच्छायोनित्वे तस्याश्च श्रेयःसाधनत्वज्ञानाधीनत्वात्तज्ज्ञानस्य च विधिंविनानुपपत्तेरित्यलं प्रपञ्चेन॥

**अत्रेदमुच्यते**—यदुक्तं विधौ सति पुरुषार्थः साध्यो लभ्यत इति तदनुपपन्नम्। विध्यनिरूपणात्। तथाहि—किं लिङादिशब्दविशेष एव विधिस्तद्व्यापारातिशयो वा कोऽपि, तदर्थभेदो वा। नाद्यः। आप्ते हि बुद्धिपूर्वकारिणि प्रवर्तके भवति प्रवृत्तिविषयव्यापारस्य फलवत्त्वाध्यवसायः। शब्दस्त्वचेतनोऽस्मिन्प्रवर्तयत्यपि न पुरुषार्थफलप्रतिलम्भः। नहि प्रबलपवनाभिहतो गर्ते निपतन्फलं लभते। किंच प्रमाणानां प्रमेयोपदर्शना*दन्यत्र व्यापारो न दृष्टचरः। प्रत्यक्षं हि रूपादीनुपदर्शयति नतु प्रवर्तयति शब्दोपि प्रमाणमतस्तदपि न प्रवर्तयेत्। प्रवर्तकत्वेन च प्रमाणानां *त्रैफल्यं नोप

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

तत्प्रमाणमित्यनेनेत्यर्थः। तत्र यागादौ। **अन्यत्रेति**। पुरुषप्रवर्तन इत्यर्थः। **त्रैफल्यं** हानोपादानादि। ज्ञानादीत्यादिश

१ मेव मन्यमानाः, २ संभिन्नविषयावभास इति।

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

पद्येत। उपादानमात्रस्यैव फलत्वापातात्। कण्टकादिषु प्रत्यक्षेषु प्रवर्तमानो जिहासन्नपि तान्गृह्णीयात्। प्रयोगश्च—शब्दो न प्रवर्तकः प्रमाणत्वात्प्रत्यक्षादिवत्। शब्दस्य प्रवर्तकत्वे नित्यत्वात् सर्वदैव प्रवृत्तिप्रसङ्गः संबन्धज्ञानाद्यपेक्षा च न स्यात्। *कारकाणां तथापेक्षाभावात्। अतएव न शब्दव्यापारोपि विधिः। अस्तु तर्हि लिङादीनामभिधेय एवाभिधाख्यो व्यापारो विधिः। मैवम्। कार्योन्नेयस्य तस्याभिधेयत्वानुपपत्तेः। अनन्यलभ्यस्यैव शब्दाभिधेयत्वाभ्युपगमात्। अभिधानोपगमे चानवस्थापातात् विशेषहेतोरभावाच्चा*भिधामात्रस्य प्रवर्तकत्वप्रसङ्गः। *अनभिधेयत्वे त्वशब्दार्थस्य भावनासमभिव्याहारानुपपत्तिः। अस्तु तर्हि कार्यरूपोऽर्थभेदो विधिः तस्यच प्रमाणान्तरागोचरत्वेन चोदनामात्रविषयत्वादपूर्वत्वम्, कालत्रयविपरिवर्त्यर्थगोचराणि प्रमाणान्तराणि, कार्यं त्वपरामृष्टकालभेदं स्वप्रमाणादवगम्यते। कालत्रयापरामर्शादसदेव कार्यमापद्येत इतिचेत्। न। कालेनैकान्तात्। नहि कालः कालान्तरावच्छिन्नो न च नास्ति। कालान्तरावच्छेदे त्वनवस्था स्यात्। कार्यमेव च मनसि विपरिवर्तमानं नियुङ्क्ते इति साम्येन नियोग इत्युच्यते। ननु नियोक्तृव्यापारो नियोगो नच वेदे नियोक्तास्ति अपौरुषेयत्वात् शब्दस्यानियोक्तृत्वात्। मैवम्। तस्य व्यापारत्वानङ्गीकारात्। अदूरविप्रकर्षेण तु नियोगादिपदप्रयोगः। कथमनन्यगोचरे कार्यात्मनि व्युत्पत्तिः, तदभावे वा कथं शब्दात्प्रतिपत्तिः। सत्यमेतत्। तथापि लिङादीनां सकलेतरशब्दविलक्षणः कोऽपि महिमा यदविदितसमया अपि स्वार्थं गमयन्तीति कल्प्यते। अथवा कार्यमात्रे संकेतग्रहो योग्यतया च वेदे कार्यविशेषावगतिरिति न किंचिदनुपपन्नम्। अतः कार्यमेव विधिरित्याचार्याः प्रतिपेदिरे। प्रेषणादीनां तु वेदे व्यभिचारात्। एवं तर्हि इष्टाभ्युपायता लिङादीनामर्थो भविष्यति प्रवृत्तौ तस्य सर्वत्राव्यभिचारात् प्रवृत्तिहेतुत्वेन तस्यैव प्रवर्तनारूपत्वात्। अतस्तदेव लोकवेदसाधारणं चोदनोपदेशादिशब्दवाच्यं लिङादीनामर्थ इति युक्तम्। एतच्चायुक्तं प्रतीतिविरोधात्। लिङादिश्रवणानन्तरं प्रवर्तनाया एवावगमात् नेष्टाभ्युपायत्वावगमः। नन्विष्टाभ्युपायतैव प्रवर्तना। नेति ब्रूमः। 'तरति मृत्यु'मित्याद्यर्थवादादपि तदवगतेस्तत्रापि विधित्वप्रसङ्गः। ननु यागेनेति तृतीयया विधौ साधनत्वावगतिर्नार्थवादे तदभावात्। स्यादेवं यदि यागेनेति तृतीया श्रूयेत। विधेरेवायं महिमा यदतृतीयान्तोपि यजिः करणतया निर्दिश्यते। किंच इष्टाभ्युपायो यागः यागेन स्वर्गः सिध्यतीत्यादौ विधित्वप्रसङ्गः स्पष्टमेवेष्टाभ्युपायत्वावगमात्। अनन्तरं नैवमपि यागस्वर्गयोः साध्यसाधनसंबन्धसिद्धिः। नियोगो हि तदा साध्यो नच साध्यद्वयमेकत्र समवैतीत्यादिना नियोगविचारः प्रस्तावितः सोऽनुपयुक्तत्वादस्माभिरुपेक्षितः॥

अनन्तरं यथावार्तिकमेवानुसंधास्यामः। एवं हि वार्तिककृता भावार्थाधिकरण उक्तं 'लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापारोऽभिधात्मिका भावना विधि'रित्यादिना वार्तिकानुसारेण विधिस्वरूपं निरूपितं सुचरितमिश्रैस्तदेवास्माभिः संक्षिप्यते। द्वे किल भावने मीमांसकाः संगिरन्ते शब्दात्मिकार्थात्मिका चेति। तत्रार्थात्मिका स्वर्गादिफलकर्मिका यागादिधात्वर्थकरणिका स्ववाक्यप्रकरणान्यप्रकरणानारभ्यवादस्मृतिलोकाचारप्राप्ततत्तदितिकर्तव्यतावती तत्रतत्र सिद्ध्यतीति। शब्दात्मिका तु लिङादिशब्दानां प्रयोजकानां प्रयोज्यपुरुषकर्मिका अभिधासंबन्धज्ञानकरणिका अर्थवादोदितप्राशस्त्येतिकर्तव्यतावतीति विवेकः। शब्दव्यापाररूपाप्यभिधा शब्दात्मिका व्यापारतद्वतोरनतिरेकात्। द्रव्यमेव हि पूर्वावस्थातः प्रच्युतं परावस्थामप्राप्तं पूर्वापरीभूतं व्यापारशब्दवाच्यम्, भावनाहि लिङादिभिरभिधीयमाना न स्वरूपमात्रेण वर्तमानापदेशवदभिधीयते। किं तर्हि कुर्यादिति प्रवृत्तिविषयतया। अतो लिङादीनामभिधा पुरुषकर्मिकेत्युच्यते। उक्तंच—'पुरुषं हि वदन्ति भावये'दिति। लिङादिश्रवणानन्तरं प्रवृत्तिहेतुप्रत्ययः सर्वस्य भवतीत्यविवादम्। प्रवृत्तिहेतुस्वरूपे तु विप्रतिपत्तिः। तत्र संभावितानामन्येषां प्रवृत्तिव्यभिचारित्वात्प्रमाणान्तरागोचरे च प्रवृत्तिहेतौ व्युत्पत्त्यसंभवात्। अभिधेयप्रत्ययबलोन्नीयमानस्वरूपं लिङादीनामभिधानमेव प्रवृत्तिहेतुरिति युक्तं स एव प्रवर्तना पुरुषप्रवर्तकत्वात्। लिङादिव्यापारोऽपि सन् अभिधेयप्रत्ययहेतुत्वादभिधेय इत्युच्यते। यतः प्रवृत्तिदर्शनं तद्व्यापारः प्रवर्तना प्रवृत्तिहेतुत्वात्। नच शब्दान्तरेभ्यः प्रवृत्तिरुपलभ्यतेऽतो न तदभिधासु प्रवर्तनात्वप्रसङ्गः। यत्तु कार्योन्नेयत्वादनभिधानमुक्तं तन्न। भावनावगतिरूपस्य कार्यस्य वर्तमानापदेशेष्वपि प्रसङ्गात्। प्रवर्तेऽहमिति ज्ञानं तु प्रवर्तनाज्ञानोत्तरकालीनं न तदुन्नायकं अतोऽनन्यप्रमाणकत्वादुपपन्नमभिधेयत्वमभिधायाः। नापि व्युत्पत्तिविरहः। प्रवृत्तिहेतुत्वेनैवार्थापत्तितस्तदवगमात्। तथाहि—'यत्र तावल्लिङादिभ्यः प्रवृत्तिरुपलभ्यते तत्र मया प्रवर्तितव्यं इत्यन्तः संकल्पात्मा लिङ्वृत्तिविशेष उन्नीयते। अप्रवर्तमाना अपि लिङ्श्राविणः प्रवर्तस्वेति मामयमाहेति वक्तारं निर्दिशन्ति। तेनावगम्यते प्रवृत्तिहेतुरभिहितो लिङा सच नर्ते व्यापारात्सिध्यति।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

ब्दात्स्वरूपज्ञानम्। **कारकाणामिति**। शब्दस्यापि प्रवृत्तिकारकत्वादिति भावः। कार्योन्नेयस्य अर्थप्रतीत्याख्यकार्योन्नेयस्येत्यर्थः। **अभिधामात्रस्येति**। वेदादिशब्दाभिधाया अपीत्यर्थः। **अनभिधेयेति**। अत्र लिङादिव्यापाराभि-

१ कालक्रिया. २ नियोगव्यापारो.

तस्मात्सूक्तम् 'अर्थेऽनुपलब्धे' इति ॥ * ॥ वृत्तिकारस्त्वन्यथेदं वर्णयांचकारेत्येवमादिनोपवर्षमतेन। 'तस्य निमित्तपरीष्टि'रित्येवमादिसूत्रत्रयमन्यथाकृत्वा व्याचष्टे भाष्यकारः, तत्र निमित्तसूत्रेण तावत्प्रतिज्ञातस्य चोदनाप्रामाण्यस्य परीक्षापदेशेन स्वतःप्रामाण्यं हेतुरित्युच्यते ॥

प्रमाणानां स्वतःप्रामाण्यम्।

प्रसिद्धानि हि प्रत्यक्षादीनि प्रमाणानि तदन्तर्गतं च शास्त्रं, अतस्तदपि प्रसिद्धमेव। नच प्रसिद्धस्य प्रमाणस्य प्रामाण्यमन्येन परीक्षितव्यम्, स्वतएव तस्य स्वविषयोपस्थापनसामर्थ्यात्। यदि च परीक्ष्येत, ततो येन परीक्ष्येत तस्याप्यन्येन परीक्ष्येत तस्याप्यन्येनेत्यनवस्था स्यात्। तस्मात्प्रसिद्धत्वात्प्रमाणस्य चोदनापि प्रमाणमिति ॥ * ॥ ननु न ज्ञानमुत्पन्नमित्येवार्थतथात्वमध्यवसातुं शक्यम्—प्रसिद्धतरस्यापि प्रत्यक्षस्यायथार्थस्योत्पत्तिदर्शनात्, यथा—शुक्तिकायां रजतमिति प्रत्यक्षमेवायथार्थं न शुक्तिकायां रजतज्ञानस्य, प्रत्यक्षाभासत्वात् ॥

प्रत्यक्षलक्षणं, प्रत्यक्षखण्डः।

किंपुनराभासासंकीर्णं प्रत्यक्षलक्षणम्। तद्दर्शयति—'तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मसत्प्रत्यक्षम्—यदाभासं विज्ञानं तेनेन्द्रियाणां संप्रयोगे यद्विज्ञानं तत्सत्प्रत्यक्षम्। तत्सतोर्व्यत्ययादा-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एतदेवास्यानन्यप्रमाणकत्वं यत्प्रवर्तकत्वेन शब्दादवगम्यते नतु प्रवर्तनास्वरूपमेवान्यतो नावगतं येन व्युत्पत्तिविरुध्येत। नचाभिधानादभिधीयत इति मन्तव्यम्। अभिधाशब्दवदुपपत्तेः। यदेव हि शब्दश्रवणानन्तरं बुद्धौ विपरिवर्तते तदभिधेयम्। उक्तंच—'लिङादिभ्यः प्रवृत्तिहेतुरवगम्यते, नच लिङादीनामभिधानव्यापारादन्यः प्रवृत्तिहेतुः शक्यो निरूपयितु'मिति। नाप्यनवस्था तदभिधानस्य शब्दादप्रतीतेः प्रवर्तनामात्रस्यैव प्रतीतेः। नापि लिङादिस्वरूपाभिधानापत्तिः स्वयमेव तद्व्यापारस्य वैलक्षण्यात्, अतो लिङादीनामभिधा प्रवर्तना सोयं विधिः। आहच—'अभिधा भावनामाहुरन्यामेव लिङादयः' इति। तदनेनैव रूपेण विधिना संबद्धा भावना प्रवृत्तिविषयतयावगता फलवत्तया निश्चीयते तथावगता चानुष्ठीयते फलवत्ता च विधिशक्तिमवसीदन्तीमुत्तभ्नाति। सागरं तरेदित्यादौ तु सन्नपि लिङ्व्यापारो निर्वाहिकायाः फलवत्ताया अभावात् न निर्वहति। तदभावश्चानाप्तवाक्यत्वात्। वेदे त्वपौरुषेयत्वान्न पुरुषदोषशङ्कापीत्युपपन्नम्। विधौ तु तमतिक्रम्येति। 'सुचरितमिश्रनिरूपितविधितत्वमिदं मयात्र संक्षिप्तम् ॥ वार्तिकराणकटीकाविरोधपरिहारस्तु संचिन्त्यः'। वार्तिकटीकाद्यनुगुणं तु विधितत्त्वमस्माभिरर्थवादाधिकरणे निरूपणीयम्। अधिकरणं त्वेवं—विधिरबोधको बोधको वेति संशयः। अलौकिके धर्मे विधेः शक्तिग्रहणासंभवात् अबोधकत्वं, ततश्चाप्रामाण्यमिति पूर्वः पक्षः। यथा प्रसिद्धपदसमभिव्याहारेणाप्रसिद्धार्थस्य मधुकरशब्दस्य भ्रमरे संगतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते तथा 'कारीर्या वृष्टिकामो यजेते'त्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारादलौकिकभावनायां विधेः संगतिं गृहीत्वा विधिवाक्यार्थं पुरुषोऽवगच्छति तस्मान्नाबोधकत्वलक्षणमप्रामाण्यम्। नापि संवादापेक्षा स्वतःप्रामाण्याभ्युपगमात्। नापि मिथ्यात्वादिरूपं सूत्रोक्तयुक्तेरिति। अत्र भगवता वृत्तिकारेण 'तस्य निमित्तपरीष्टि'रित्येवमादिसूत्रत्रयमन्यथा व्याख्यातं। तच्च व्याख्यानं वृत्तिकारस्त्वित्यादिना ग्रन्थेन भाष्यकृता दर्शितम्। ग्रन्थकारोऽपि तद्दर्शयितुमाह—**वृत्तिकारस्त्विति**। उपवर्षमतेन सूत्रत्रयमन्यथा कृत्वा व्याचष्टे भाष्यकारः। केन ग्रन्थेनेत्यपेक्षायां वृत्तिकारस्त्वित्यादिना भाष्यग्रन्थः पठितः। निमित्तसूत्रव्याख्यानं तावद्दर्शयति—**तत्रेति**। एतच्च सूत्रं नञर्थाध्याहारेण व्याख्यातं न परीक्षितव्यं निमित्तं, प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि तदन्तर्गतं चेदं शास्त्रम्, अतस्तदपि न परीक्षितव्यमित्यस्मिन्व्याख्याने सूत्रार्थः ॥

प्रत्यक्षसूत्रमवतारयितुं परिचोदयति—**नन्विति**। परिहरति—**नेति**। यत्प्रत्यक्षं न तद्व्यभिचरति। यद्व्यभिचरति न तत्प्रत्यक्षमिति भावः। अयथार्थत्वशङ्का च परीक्षायां हेतुः। साचैवंरूपे प्रत्यक्षे न संभवत्येवातो युक्तमेवापरीक्ष्यत्वमिति भावः॥

एतदेव प्रश्नपूर्वकं सूत्रेणोपपादयति—**किं पुनरिति**। सूत्रं व्याचष्टे—**यदिति**। **ननु** सत्संप्रयोग इत्यत्र तच्छब्दाश्रवणात् तेनेन्द्रियाणामिति व्याख्यानमनुपपन्नं तत्राह—**तत्सतोरिति**। **ननु** व्यत्ययकल्पनायापि नास्ति निर्वाहः। ईदृशं यत्तत्सत्प्रत्यक्षमपि पुनस्तच्छब्दापेक्षाया विद्यमानत्वात्। नैष दोषः। व्यत्ययस्याध्याहारोपलक्षणत्वात्। उक्तंच—'यद्वाध्याहारकल्पने'ति। अन्यस्त्वेवं नायं तच्छब्दस्याध्याहार इति भट्टोम्बेकः। द्वयोरपि तत्सतोरत्राध्याहारः तत्राभाससमानाकारपरामर्शार्थोऽध्याहृतस्तच्छब्दः। अपरश्च प्रत्यक्षस्वरूपपरामर्शार्थः। सत्संप्रयोग इत्यत्र पठितः सच्छब्दस्तद्विशेषणार्थ एव, अध्याहृतस्तु शोभनार्थ इति विवेचनीयमिति सुचरितमिश्राः। **नन्वाभासलक्षणाकथनात्** न प्रत्यक्षतदाभासविवेकः

भासासंकरसिद्धिः । तदिति चाव्ययं तृतीयान्तं तेनेत्यर्थे ॥ * ॥ **नन्वसत्यपि व्यत्यये नास्ति संकरः—इन्द्रियसंप्रयोगजं ज्ञानं प्रत्यक्षम्—इत्येतावदेव वक्तव्यम् । नहि शुक्तिकायां रजतज्ञानमिन्द्रियसंप्रयोगजम्, किं तर्हि, इन्द्रियसंप्रयोगाच्छुक्तिशकलं रजतसाधारणेन भास्वरत्वादिरूपेण गृहीतम्, असाधारणं तु शुक्तिकात्वमिन्द्रियदौर्बल्यादगृहीतम्, अनन्तरं च संस्कारोद्बोधाद्रजतं स्मृतं, ततः स्मृतरजतात्मना शुक्तिव्यक्तिर्दोषवशाद्गृह्यते, अतो नेन्द्रियसंप्रयोगजं रजतविज्ञानमिति नातिप्रसङ्गः ॥ * ॥ प्रणाड्यास्तीन्द्रियसंप्रयोगजत्वमिति तद्व्यावृत्त्यर्थं तत्संप्रयोगजत्वमिति विशेषणं वक्तव्यमिति चेत्, तन्न । नहीह यथाकथंचित्संप्रयोगजन्यत्वं लक्षणं, किंतु साक्षात्तज्जन्यत्वम् । यदि च यथाकथंचिदित्याश्रीयेत ततो विशेषणे सत्यप्यतिव्याप्तिमल्लक्षणं स्यात्—आरादग्निमध्यक्षयतो यदौष्ण्यविषयमनुमानं तदपि प्रत्यक्षं स्यात्, प्रणाड्येन्द्रियसंप्रयोगजत्वात् संप्रयुक्तविषयत्वाच्च, अस्ति ह्यौष्ण्यस्येन्द्रियसंप्रयोगः संयुक्तसमवायलक्षणः । तस्मादवश्यं साक्षात्संप्रयोगजत्वं लक्षणमित्यङ्गीकर्तव्यम्, अतः शुक्तिरजतवेदनेऽपि व्यभिचाराभावादनर्थकस्तत्सतोर्व्यत्ययः ॥ * ॥ सत्यम्—साक्षात्संप्रयोगजत्वं लक्षणम् । सत्यं च शुक्तिरजतज्ञानेऽपि नातिप्रसङ्गः, पीतशङ्खद्विचन्द्रादिज्ञाने-**

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

शक्यते कर्तुम् । न । ईदृशं प्रत्यक्षमित्युक्तेऽर्थादनीदृशं प्रत्यक्षाभास इति ज्ञातुं शक्यत्वात् । प्रयोजनाभावेन व्यत्यासमाक्षिपति—**नन्वसत्यपीति** । अत्र शङ्कते—**प्रणाड्येति** । आक्षेपवादी परिहरति—**तन्नेति** । आक्षेपमुपसंहरति—**अत इति** । समाधत्ते—**सत्यमिति** । कुतस्तर्ह्यतिप्रसङ्गोऽत आह—**पीतेति** । शुक्तिरजतज्ञान एव चातिप्रसङ्गनिवारणार्थो व्यत्यय इत्याह—**अपिचेति** । उपपादितमर्थं निगमयति—**तस्मादिति** । अत्राह—किं पुनरयथार्थं ज्ञानं न तावच्छुक्तौ रजतमिति । नात्र शुक्ती रजताकारेण भासते किंतु ज्ञानद्वयमेवैतत् । तथाहि शुक्तिस्तावत्पुरोवर्तिनी रजतसाधारणेनात्मना गृह्यते । अनन्तरं च सदृशदर्शनोद्बोधितसंस्काराद्दोषवशात्प्रमुष्टतदवमर्शाद्रजतमिति स्मृतिर्भवति । तद्गोचरयोश्च गृह्यमाणस्मर्यमाणयोर्दोषवशादेव भेदकधर्मानवधारणं, भेदाग्रहादेव च विभ्रमव्यवहारो, न पुनरस्या अन्यथाभानात्। किंच शुक्तिगोचराया रजतधियः किंनिबन्धनमिति विपरीतख्यातिवादी वक्तव्यः । न तावदिन्द्रियं, प्राप्यकारित्वात्, असन्निहितरजतप्राप्त्यसंभवात् । *अतो ग्रहणकारणाभावात्स्मृतिरेवेदम् । अस्ति च स्मृतेः कारणं पूर्वानुभवप्रभाविता भावना । **ननु** तत्तांशपरामर्शाभावात्स्मरणमपि नोपपद्येत । मैवम् । अनुभूतविषयत्वमात्रेण तदुपपत्तेः तदिति परामर्शस्य तत्राप्रयोजकत्वात् । अतो ग्रहणस्मरणयोरुभयोरपि यथार्थत्वात् यथार्थायथार्थविभागोऽनुपपन्नः । सांख्यस्याप्ययमेवपक्षः । अत्र **ब्रूमः**—'उभयोश्चेद्यथार्थत्वं न भ्रान्तिः क्वापि सिध्यति ॥ स्मरामीत्यग्रहो भ्रान्तिरिति चेत्तन्न युज्यते' । अयथार्थं ज्ञानं भ्रान्तिरिति हि लौकिकाः प्रतिपद्यन्ते । भाष्यकारोऽपि 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचिनः प्रत्ययो नान्य' इति (शाब.) । यदपि विवेकाग्रहणादयथाव्यवहार इति, तदतिमन्दम् । अग्रहणस्य ग्रहणाभावरूपस्य तेनानङ्गीकारात् कस्य भ्रान्तिशब्दवाच्यता स्यात् । स्मरामीत्युल्लेखशून्यं स्मरणमेवाग्रहणमितिचेत् । न । स्मृतेर्यथावस्थितार्थविषयतया मिथ्यात्वाभावेन भ्रान्तित्वासंभवात् । सापेक्षत्वेन स्मृतेरप्रामाण्याद्भ्रान्तित्वमितिचेत् । न । स्मृतिमात्रस्य तथात्वापातात् । नहि स्मरन् भ्राम्यतीत्युच्यते । अपिच कोऽयं नियमो यत्स्मृतरजतस्तदर्थी शुक्तावेव प्रवर्तते नान्यत्र । यदि तु तामेव रजततया जानीयात्ततस्तत्र प्रवर्तेत इति युक्तम् । सादृश्यदर्शनात्तत्रैव प्रवृत्तिरितिचेत्तर्हि तत्सदृशमिति प्रतीयान्न रजतमिदमिति । नहि गवा सदृशं गवयं जानन्तो गौरयमिति व्यवहरन्ति । यदि च शुक्तावप्रसक्तं स्वतन्त्रमेव रजतं स्मर्यते कथं तर्हि नेदं रजतमिति प्रतिषेधः प्रसक्त्यभावात् । **ननु** नात्र किंचिद्बाध्यते किंत्वनवगतो विवेकोऽवगम्यते नेदं रजतमिति । शुक्तेर्विविक्तं रजतमित्यर्थः । एतच्चालौकिकमेव व्याख्यानमुपेक्षणीयम् । अतोऽन्यदन्याकारतया प्रसक्तं बाध्यत इति युक्तम्। कथमसंनिहितं ज्ञानोत्पादकमितिचेत्—प्रत्यक्षप्रमाणस्यायं धर्मो नाभासस्य । कथमन्यसंयुक्तमिन्द्रियमन्याकारज्ञानस्य हेतु-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

धातिरिक्ततृतीयमभिधेयं किमस्तीति तत्र तथेत्यर्थापत्त्या प्रवर्तितव्यम्, अतो न वर्तनापदेशे प्रवृत्तिसत्त्वेऽपि तदुभयमिति भावः । (**मूलात्मेति** । एतच्च लिङ्गादिव्यापारस्यानुपपन्नश्रवेनत्वात् ?) तद्विशेषणेति संप्रयोगविशेषणार्थः । अतो नागतादिसंप्रयोगजं योगिप्रत्यक्षं निराकृतम् । प्रमुष्टतदवमर्शा प्रमुष्टतत्तांशा । **अतो ग्रहणेति** । इदं रजतमित्यत्र ।

१ परिहरति.

प्रतिव्याप्तिः स्यात् साक्षात्संप्रयोगजत्वात् । अपिच स्मृतेन रजताकारेण यत्संनिहितस्य शुक्तिशकलस्य तादात्म्यग्रहणं तदनुपरतेन्द्रियव्यापारस्य भवत्साक्षात्संप्रयोगजमेवापरोक्षत्वात् । तस्मादाभासनिवृत्त्यर्थस्तत्सतोर्व्यत्यय इति सूक्तम् । भाष्ये त्वाभासप्रदर्शनार्थं शुक्तिकारजतज्ञानोदाहरणमित्यनवद्यम् ॥ * ॥ तत्संप्रयोगजत्वातत्संप्रयोगजत्वे कथं विविच्येते । उच्यते—ज्ञानस्वरसादेव विषयस्य तथात्वमध्यवसीयते, तदन्यथात्वं तु कारणदोषज्ञानादर्थान्यथात्वज्ञानाद्वावगन्तव्यम् । अतो यत्र प्रयत्नेनान्विष्यमाणोऽपि कारणदोषो बाधकज्ञानं वा नोपलभ्यते तत्प्रमाणम्, इतरत्त्वप्रमाणम् । चोदनार्थज्ञानस्य तूभयाभावात्सिद्धं प्रामाण्यम् । इत्यौत्पत्तिकसूत्रम् ॥ * ॥ 'ननु सर्व एव निरालम्बनः' इत्यादिना पूर्वोक्तहेतुद्वयाक्षेपनिमित्तमिथ्यात्वाक्षेपेण शून्यवादी प्रत्यवतिष्ठते । तथाहि—यत्र

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

रितिचेत् । दोषवशादिति ब्रूमः । दोषस्यैव मिथ्याज्ञानकारणत्वात् । दृश्यते हि स्वप्ने मनोदोषादवर्तमानस्यापि वर्तमानवद्भानम् । अत आत्मेन्द्रियमनोऽर्थसंनिकर्षोऽसत्सु दोषेषु सम्यग्ज्ञानहेतुः । सत्सु तु शुक्तौ विपरीतज्ञानकारणमिति यथार्थायथार्थविवेकः । योगाचारस्तु बुद्धिस्थस्य रजतादेः शुक्त्यादावारोप इत्याह । तदसत् । पुरोवर्तित्वेन रजतस्य बाधेऽहं रजतमिति स्यात् । *इदन्ताबाधे च निरधिष्ठानभ्रमापत्तिः । असदेव रजतमारोप्यत इति माध्यमिकाः । तन्न । निरुपाख्यानस्यापरोक्षाभासगोचरत्वानुपपत्तेः । अनिर्वचनीयमारोप्यत इति वेदान्तिनः । तदपि न । तादृशे वस्तुनि प्रमाणाभावात् । असतोऽप्रतीतिः सतश्च बाधानुपपत्तिरेव प्रमाणमिति चेत् । न । देशान्तरगतस्यात्रारोपेण तस्यान्यथाप्युपपन्नत्वात् । **ननु** शुक्तिरजततादात्म्यमत्र प्रतीयते, नच तदन्यत्रास्ति अतोऽनिर्वचनीयमेवाङ्गीकर्तव्यम् । मैवम् । इदमंशरजतांशतादात्म्यस्यान्यत्रापि सद्भावात् । अतोऽन्यत्र सतोऽन्यत्रारोपोऽन्यथाख्यातिरेवेति सिद्धो विपर्यासः । प्रमाणतदाभासविवेकं प्रश्नपूर्वकमुपपादयति—**कथमिति** । विवेकोपपादनफलमाह—**चोदनेति** ॥

अत्र भाष्यकारेण 'ननु सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः' इत्याद्याक्षेपपुरःसरं 'जाग्रतो बुद्धिः सुपरिनिष्ठिता कथं विपर्येष्यती'ति बाह्यार्थसद्भावः प्रतिपादितः । तस्य प्रकृतविचारासंगतिमनुपयोगं चाशङ्क्य समाधातुमाह—**नन्विति** । कारणदोषो बाधकज्ञानं चेति पूर्वोक्तहेतुद्वयं, तदाक्षेपात्प्रकृतविचारसंगतिः । सर्वस्यापि मीमांसाप्रपञ्चस्य बाह्यार्थाश्रयत्वात्—तत्सद्भावप्रतिपादनं प्रयोजनवदेवेति भावः । यथाहुः—'कर्मभ्यः फलसंबन्धः *पारलौक्यैहलौकिकः ॥ सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥ तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः । *अर्थस्य सदसद्भावे यत्नः कार्यः *क्रियां प्रति ॥' निरालम्बनवादी बाह्यार्थमपलपति ज्ञानं स्वीकुरुते । शून्यवादी तु ज्ञानस्याप्यभावमभिप्रैतीति विवेकः । उक्तंच—'तत्रार्थशून्यविज्ञानं योगाचाराः समाश्रिताः ॥ तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥ तत्र बाह्यार्थशून्यत्वं तुल्यं तावद्द्वयोरपि'इति । **ननु** बाह्यार्थाभावेऽपि संवृतिसिद्धमर्थमङ्गीकृत्य बौद्धानामिव धर्माधर्मोपदेशौ घटतएव । तदुक्तं—'द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशनाः ॥ लोकसंवृतिसत्यत्वं सत्वं च परमार्थतः' इति । एतच्चाद्वैतवादिभिरपीष्टमेव, बाह्यप्रपञ्चमिथ्यात्वनिरूपणात् । एतच्चायुक्तम् । सत्यद्वयासंभवात् । नहि संवृतेः सत्यत्वमस्ति । संवृतिशब्दस्य मिथ्यापर्यायत्वात्सत्यशब्दसमभिव्याहारानुपपत्तिश्च । अतो यः सत्यभेदो बौद्धैराश्रितः—'द्विविधं सत्यं संवृतिसत्यं परमार्थसत्यं चे'ति सोऽनुपपन्नः । नचायं सत्यशब्दः संवृतिपरमार्थयोः साधारणोऽक्षशब्दवत् विरोधात् । अतएव न गवादिवत्सामान्यशब्दोऽपि, समानानां हि भावः सामान्यं, नच तत्परस्परविरोधिनोः संभवति । नहि धर्माधर्मयोर्धर्मत्वमधर्मत्वं वा एकं सामान्यं भवति । तदुक्तं—'संवृतेर्नतु सत्यत्वं सत्यभेदः कुतोन्वयम् ॥ सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥ सत्यत्वं नतु सामान्यं मृषार्थपरमार्थयोः ॥ विरोधान्नहि वृक्षत्वं सामान्यं वृक्षसिंहयो'रिति । यदप्युच्यते—'कल्पनामात्रकल्पितेन बाह्येन सर्वो लौकिको व्यवहारधर्म' इति । तदप्यसत् । निर्वस्तुके जगत्यभिन्नस्य चिन्मात्रस्य कल्पनया भेत्तुमशक्यत्वात् । क्वचिद्भिन्नमेव किंचिद्रूपान्तरं कल्पनास्पदं भवति शुक्ताविव रजतरूपं, यस्य तु किंचिद्भिन्नमस्ति तत्केन रूपेण कल्प्यताम् । उक्तंच—'कल्पनापि ह्यभिन्नस्य नैव *निर्वस्तुके भवेत्' । **ननु** सत्यमसत्यं सांवृतं चेति त्रिविधं वस्तुतत्त्वमङ्गीकुर्मः । तत्र सांवृतं नासत्यमेव व्यवहाराविसंवादात् । नापि सदेव । प्रमाणान्तरविरोधात् । अतो विधान्तरमेवेदमिति युक्तस्तदा-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**पारलौक्येति** । कर्मभ्यो दर्शपूर्णमासकारीर्यादिभ्यः परलोकेहलोकभवस्वर्गवृष्ट्यादिसकलसंबन्धो बाह्यार्थाश्रयएव । सर्वं द्वादशलक्षणीप्रमेयं बाह्यार्थं विना न सिध्यतीत्यर्थः । धर्मार्थिभिः मीमांसकैः । लोकसंमतैः प्रत्यक्षादिभिः । **अर्थस्येति** । 'पूर्वपक्षविशुद्धा हि बुद्धिः सिद्धान्तिता भवेदि'ति पूर्वोत्तरपक्षविभागेनार्थस्य सदसद्भावयोर्यत्नः कार्य इत्यर्थः । **क्रियांप्रतीति** । क्रियासिद्ध्यर्थः । क्रियाशब्दश्चात्रानुष्ठानवाची । अभिन्नस्य चिन्मात्रस्य । निर्वस्तुके जगति । अंशे स्वप्नप्रत्ययांशे ।

51

**कारणदोषज्ञानं बाधकज्ञानं वा तत्र मिथ्यात्वम्, अन्यत्र सत्यत्वमिति व्यवस्था नोपपद्यते, सर्वेषां ज्ञानानां मिथ्यात्वात् ॥**

बाह्यार्थशून्यवादेनाक्षेपः ।

**सर्वमेव हि ज्ञानमात्मांशपर्यवसितमनादिवासनावशादात्मानमेव बाह्यतयाध्यवस्यन्मिथ्यैव । कथं पुनरात्मांशपर्यवसा यित्वं गम्यते, अनुमानात्, बाह्ये च प्रवृत्त्यसामर्थ्यात् । यथाचासामर्थ्यं तथा वक्ष्यामः । संप्रत्यनुमानमुच्यते—स्तम्भादिप्रत्यया: स्वांशमेव बाह्यतयाध्यवस्यन्तो मिथ्याभूता: प्रत्ययत्वात् स्वप्नप्रत्ययवत् शुक्तिकारजतादिप्रत्ययवच्च । स्वप्नादिप्रत्यया हि यथावगम्यमानबाह्यार्थाभावाद्देशान्तरकालान्तरवर्तिनां च संनिहितदेशकालतया प्रतिभासासंभवात् क्वचित्कदाचिदप्यसंभवतां स्वशिरश्छेदादीनां स्वप्ने प्रतिभासादवश्यं स्वात्मानमेव बहिर्वद्गृह्णन्तीत्यभ्युपगन्तव्यम् । अतस्तत्सामान्याज्जाग्रज्ज्ञानानामपि स्वांशपर्यवसायित्वान्मिथ्यात्वम्—इति प्राप्ते ॥ * ॥ अभिधीयते । न तावत्स्वप्नादिप्रत्यया: स्वांशावलम्बना:, तेऽपि बाह्यार्थमेवान्यथासन्तमेवान्यथा गृह्णन्तीति वक्ष्याम: । भवतु वा तत्रात्मख्यानं, नैतावता नीलादिप्रत्ययास्तथा भवितुमर्हन्ति, तत्र हि नीलमिदं पीतमिदं स्तम्भोऽयं घटोऽयमित्येवमिदमाकारास्पदीभूतं बाह्यं नीलादि प्रत्यक्षेणावगम्यमानं न शक्यमनुमानेनापह्नोतुम् । आत्मग्राहित्वे ह्यहं नीलमिति स्यात् ॥ * ॥ तदेवं प्रत्यक्षमेव बाह्यार्थमुपस्थाप्य तदपह्नवप्रवृत्तस्यानुमानस्योदयं निरुणद्धि । स्वप्नादिषु तु बाधकेन ज्ञानान्तरेण बाह्यसद्भाव-**

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

श्रयो व्यवहारः । मैवम् । संवृतेर्मिथ्याज्ञानत्वेन वस्तुकल्पने सामर्थ्यासंभवात्, अतो यत् परमार्थतो नास्त्येवेति निरूप्यते न तत्संवृत्या सद्रूपं भवितुमर्हति इति । यत्तु यावत् व्यवहारमविसंवादि तदस्यैव परमार्थसत् । नह्यसतः सर्वदा व्यवहारहेतुत्वं संभवति । तदुक्तं—'तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ॥ तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ॥' स्वप्नवच्च बाह्यपदार्थाभ्युपगमे स्वप्नादिभोगतुल्य एव शुभाशुभकर्मफलोपभोगो भवेत् । ततो ज्योतिष्टोमादौ नैव कश्चित्प्रवर्तेत, स्वाप्निकसुखादिवच्च यदृच्छयैव कदाचिदुत्पत्तेः प्रवृत्तिवैयर्थ्यात् । उक्तंच—'नहि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते ॥ यादृच्छिकत्वात्स्वप्नस्य तूष्णीमास्येत पण्डितैः' । अतः परमार्थफलप्राप्त्यर्थं बाह्यवस्तुव्यवस्थापनं प्रयोजनवदिति सिद्धम् । प्रत्यवस्थानं विवृणोति—**तथाहीति** ॥

व्यवस्थानुपपत्तौ कारणमाह—**सर्वेति । स्तम्भादिप्रत्यया इति ।** अत्र प्रत्ययमात्रस्य पक्षत्वे सिद्धसाधनता दृष्टान्ताभावश्च स्यात्, अतो जाग्रत इति पक्षविशेषणं कर्तव्यम् । अत्र साध्यं बाह्यानालम्बनत्वेन व्यवस्थाप्यं स्वांशालम्बनत्वस्य बौद्धेनाभ्युपगमादित्यभिप्रायेणाह—**स्वांशमेवेति** । मीमांसकाभिप्रायेण च व्यवयवोपन्यासः । सर्वज्ञाननिरालम्बनत्ववादिमते विपक्षाभावेन तत्र हेतोरवृत्तेः व्यतिरेकानुपन्यासः । समाधातुमुपक्रमते—**इति प्राप्त इति । वक्ष्याम इति ।** शून्यवाद इत्यर्थः । अन्वाचयवादेनाह—**भवत्विति । प्रत्यक्षेणेति ।** प्रत्यक्षे परिपन्थिनि तद्विरुद्धमनुमानमात्मानमेव न लभते वह्नौ शैत्यानुमानमिवेति भावः । एतदेव विवृणोति—**तदिति । नत्विहेति ।** जाग्रत्प्रत्यय इत्यर्थः । यदाह भाष्यकारः—'स्तम्भ इति जाग्रतोपि बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यती'ति । सुपरिनिश्चितग्रहणं बाधकप्रत्ययनिवृत्त्यर्थम् । अतएव स्तम्भादिप्रत्यया अनुमानाद्बलीयांसो भवन्तीति भावः । **इत्युक्तं** प्रत्यक्षेण तदुत्पत्तिनिरोधादेव न बाधकमित्युक्तमित्यर्थः । अप्रमाणगृहीतस्यार्थस्य बाधो भवति । गृहीतमात्रबाधे तु निरालम्बनाः प्रत्यया इति योऽयं भवत्पक्षः सोऽपि गृहीतत्वान्मिथ्या स्यात्, ततश्चानुमाने पक्षाभावः । किंच निरालम्बनत्वेन विशिष्टाः प्रत्ययाः साध्यन्ते तत्र विशेषणविशेष्ययोर्यज्ज्ञानं तस्यापि निरालम्बनत्वात्तयोरप्रसिद्धिः । ततश्चाप्रसिद्धविशेषणत्वमप्रसिद्धविशेष्यत्वमप्रसिद्धत्वं च दूषणम् । सालम्बनत्वे तु तेनैवानैकान्तिकत्वात् न प्रत्ययानामनालम्बनत्वसिद्धिः । तथा किमिदं निरालम्बनत्वं धर्मिणो भिन्नमभिन्नं वा, अन्त्ये विशेषणत्वासंभवः । आद्ये तद्भेदग्राहिणो ज्ञानस्य मिथ्यात्वाच्च भेदसिद्धिः । स्यादेतत् । वस्तुनि हि भेदाभेदादिविकल्पौ युक्तौ नावस्तुनि । नचालम्बनप्रतिषेधो वस्तुभूतः, अतः किं तद्विकल्पेन । मैवम् । अवस्तुत्वेऽस्मान्प्रति तद्बोधनानुपपत्तेः । नह्यवस्तु बुद्धिविषयो भवति तद्विषयत्वे वा वस्तुत्वापातात् । अथावस्तुनोऽपि वस्तुत्वं कल्पयित्वाऽनुमानव्यवहारः क्रियते प्रतिमायामिव देवतात्वमाराधनादिव्यवहारः । मैवम् । अत्यन्तासतः कल्पनायोगात् । अन्यत्र प्रसिद्धसद्भावं हि देवतात्वमन्यत्र कल्प्यते । अनालम्बनत्वं तु गगनकुसुमायमानं न कल्पनामर्हति । कल्पनापि

निराकरणाद्युज्येतात्मख्यातिः। नत्विह तथा बाधकमस्त्यन्यत् भवदुक्तादनुमानात्। नचानुमानमलं बाधितुमित्युक्तम्। दूषणसहस्रं चास्यानुमानस्य वार्तिके प्रपञ्चितमित्युपरम्यते॥

योगाचारसौत्रान्तिकयोः कलहः।

एवमनुमाने प्रत्यक्षविरोधेन निराकृते 'प्रत्यक्षस्य बहिःप्रवृत्तौ सामर्थ्यं नास्ती'त्येवं पूर्वोक्ताक्षेपेण 'शून्यस्त्वि'त्यादिना स एव शून्यवादी पुनः प्रत्यवतिष्ठते। तदिहैवं चिन्त्यते—यदिदं नीलमिदं पीतमिदमिति नीलाद्याकारं वस्तु प्रथते तत्किं विज्ञानमेव तथा प्रथते किंवा बाह्यं वस्त्विति। तदर्थमिदं विचार्यते—किं विज्ञानं प्रत्यक्षमुतानुमेयमिति, प्रत्यक्षत्वे सति निराकारस्य प्रत्यक्षग्रहणायोगात्, आकारस्य चैकस्यैव ग्रहणात् गृह्यमाण आकारो ज्ञान एवावतिष्ठत इत्यर्थस्यागृह्यमाणत्वादसत्त्वमेव भवति। अनुमेयत्वे तु बाह्यार्थं विनानुमानासंभवाद्बाह्यार्थसिद्धिः। तत्र—'ज्ञानमेवैवमाकारमात्मना प्रथते कुतः॥ नाप्रत्यक्षस्य तस्यास्ति प्रमाणान्तरतो गतिः॥ संवेद्यत्वाच्च नीलादेर्ज्ञानाकारत्वनिश्चयः॥ अर्थान्तरस्य च ग्राह्यलक्षणं नहि युज्यते'॥ * ॥ यो हि विज्ञानमप्रत्यक्षमिच्छति तस्य ज्ञानमेव न सिध्येत् प्रमाणान्तरासंभवात्। अनुमानमिति चेत्। न लिङ्गाभावात्। न तावदर्थो लिङ्गम्, विनापि तेन सुषुप्त्याद्यवस्थायामर्थसद्भावाभ्युपगमात्। अर्थव्यवहारो लिङ्गं—स हि कादाचित्कं कारणं कल्पयतीतिचेत्, एवंतु प्राग्व्यवहाराज्ज्ञानप्रतिभासो न स्यात्। अव्यवहरन्नपि घटं पश्यन् 'जानेऽहं घट'मिति ज्ञानमनुसंधत्ते इति प्रतीतिसाक्षिकम्। अर्थधर्मो ज्ञानजन्मा लिङ्गमितिचेत्। न। तत्सद्भावे प्रमाणाभावात्। अतीतानागतयोश्चार्थयोर्धर्मासंभवादतीताद्यनुमाने ज्ञानसिद्धिर्न स्यात्, तस्मादवश्यं विज्ञानं प्रत्यक्षमेषितव्यम्। एवंच तस्यैवायमाकार इति निष्प्रमाणकोऽर्थः॥ * ॥ किंच वेद्यत्वादपि नीलादेर्ज्ञानाकारत्वं, नह्यनात्मनो नीलस्य पीतवद्वेद्यता संभवति। यदि

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

निरालम्बनत्वस्य ज्ञानरूपा तदुत्पत्तौ च व्याप्रियमाणं कथमवस्तु भविष्यति। अर्थक्रियाकारित्वस्यैव वस्तुत्वात् ज्ञानोत्पादनस्याप्यर्थक्रियात्वात्। अत्रान्येऽपि पक्षसाध्यहेतुदृष्टान्तदोषा 'अग्राह्यत्वाच्च भेदेने'त्यादिना ग्रन्थेन वार्तिककृता दर्शिता इत्याह—**दूषणेति**। सहस्रशब्दोऽत्रानेकसंख्यवचनः सहस्राक्ष इतिवत्॥

अत्र 'प्रत्यक्षा च नो बुद्धिरतस्तद्भिन्नमर्थरूपं नाम न किंचदस्ती'ति। तथा—'निराकारा च नो बुद्धिराकारवान्बाह्योऽर्थः। स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते' इति पूर्वोत्तरभाष्यपर्यालोचनयात्रापि बाह्यार्थसदसद्भावचिन्तैव। उक्तंच—'शून्यस्त्विति पुनः सैव निरालम्बनतोच्यते' इति। अतः 'सर्व एव निरालम्बनः' इत्यनेनैव गतत्वात्पुनरुक्तमिदं 'शून्यस्त्वि'त्याशङ्क्य विचारस्वरूपभेदोपदर्शनेन परिहर्तुमाह—**एवमिति**। प्रत्यक्षबाह्यार्थनिराकरणपरस्यानुमानस्य स्वात्मांशग्राहकेण प्रत्यक्षेण विषयभेदे सति पूर्वोक्तः—प्रत्यक्षविरोध एव नास्तीत्यभिप्रायः पुनःप्रत्यवस्थाने मूलम्। **नन्वत्र** संदेह एव नास्तीति सर्वत्र ग्रहणे परस्परविलक्षणत्रितयप्रतिभासनात्, नीलमिदमहं गृह्णामीत्यादिषु ह्यनात्मतया नीलादयः प्रतिभासन्ते न पुनर्नील एव केवलः स्वप्रकाशः तथा प्रतिभासाभावात्। अतोऽनारभ्य एवायं विचार इत्याशङ्क्याह—**तदर्थमिति**। ज्ञानस्यैव ग्राह्यग्राहकसंवित्तिरूपेण प्रतिभासनात् निष्प्रमाणिका बहिरर्थकल्पनेत्यर्थः। यथोक्तम्—'अविभक्तोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः॥ ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते' इति। पूर्वपक्षं परिगृह्णाति—**तत्रेति**। **ननु** नीलमिदमित्यनात्मतया नीलादयो भासन्ते ननु नीलमहमिति। अतो निष्प्रमाणिकैवेयं कल्पनेत्यभिप्रायेणाह—**कुत इति**। अत्राह—**नेति**। अयमाशयः—नीलपीतादेर्ग्राह्यत्वमिति तावत्सर्वजनसिद्धम्, तत्र यदि विपर्ययज्ञानेष्विवात्मैवानात्मतयावभासत इत्यङ्गीक्रियते तदा नानेकादृष्टकल्पना भवति, अतिरिक्तग्राह्यकल्पनायां तु ग्राह्यत्वस्य ग्राहकं विनानुपपत्तेस्तत्कल्पनापीत्यनेकादृष्टकल्पना स्यादिति। **ननु** भवत्पक्षेऽप्येकस्यैव ज्ञानस्यानेकग्राह्यग्राहकशक्तिकल्पनात् अस्त्येव गौरवम्। सत्यमेवं तथापि त्वन्मते ग्राह्यग्राहकधर्मिद्वयकल्पना शक्तिद्वयकल्पना च। अस्मत्पक्षे त्वेकस्यैव शक्तिद्वयकल्पनाल्लाघवमित्यस्ति विशेषः। **अप्रत्यक्षस्येति**। ज्ञानस्याप्रत्यक्षत्वेऽन्यस्मादवगतात्तदवगन्तव्यं ततश्चानवस्था स्यात्। प्रकाशस्वभावस्य च प्रकाशान्तरापेक्षानुपपत्तेः स्वप्रकाशमेवार्थसंवेदनमिति भावः। हेत्वन्तरमाह—**संवेद्यत्वादिति**। नीलोऽयमर्थो यस्मान्नीलाकारं ज्ञानमुत्पद्यत इत्येवं वदन्तो लौकिका अपि ज्ञानाकारतामभ्युपगच्छन्तीत्यर्थः। **अर्थान्तरस्येति**। यदि चायं ग्राह्यो नीलादिर्विज्ञानस्याकारः स्यात् तदा तादात्म्यलक्षणसंबन्धेन ग्राह्यग्राहकभाव उपपद्यते, भेदे तु संबन्धा-

चार्थान्तरं नीलं ततोऽस्य किं लक्षणं वेद्यत्वम्। यद्यर्थत्वलक्षणं स्यात्, सर्वं सर्वस्य वेद्यं स्यात् व्यवस्थाहेत्वभावात्। अथ हेतुत्वं व्यवस्थापकं—य एवार्थो ज्ञानस्य हेतुः स एव वेद्यो नान्य इति चेत्। न। नेत्रादेरपि वेद्यत्वप्रसङ्गात्। सादृश्यं हेतुत्वं च विषयत्वम्, नीलार्थश्च नीलज्ञानेन सदृशो न नेत्रमितिचेत्, एवमपि समनन्तरप्रत्ययस्य हेतुत्वात् विज्ञानत्वेन च सादृश्याद्विषयत्वं स्यात्॥ * ॥ अथासाधारणेन विषयाकारेण सादृश्यं विषयलक्षणम्—ज्ञानत्वं हि सर्वज्ञानसाधारणं नीलाद्याकारस्तु केषांचिदेवासाधारणस्तेन तदाकारेण सादृश्यं विषयत्वम्। एवमपि धारावाहिकेषु पूर्वमुत्तरस्य विषयः स्यात्—उभयोर्नीलरूपत्वाद्धेतुत्वाच्च॥ * ॥ स्यान्मतम्—न सादृश्यं विषयत्वं किंतु यो ज्ञाने नीलाद्याकारविशेषसमर्थको हेतुः स विषयः, समनन्तरप्रत्ययस्तु न नीलाद्याकाराणां समर्पकः। तथासति नीलज्ञानानन्तरं सर्वदैव नीलविज्ञानं स्यात्। तत्रैकस्मिन्संताने नीलपीतादिविचित्राकारोदयो न स्यात्, कारणावैलक्षण्ये कार्यवैलक्षण्यायोगात्। नीलपीतादिविचित्रार्थसंनिधिविशेषकृतश्चायं विचित्राकारोदय इत्यर्थस्यैव ग्राह्यत्वम्॥

पुनर्योगाचारशङ्का।

**ननु** कार्यभूतसमये कारणभूतस्यार्थस्य क्षणिकत्वेनातीतत्वात्कथं प्रत्यक्षग्राह्यत्वम्, एतदेवार्थस्य ग्राह्यत्वं यज्ज्ञानाकारार्पणक्षमहेतुत्वम्। यथाहुः—'भिन्नकालं कथं ग्राह्यमिति चेद्ग्राह्यतां विदुः॥ हेतुत्वमेव तद्युक्तं ज्ञानाकारार्पणक्षमम्' इति। यद्येवं कस्यायमाकारो यो वर्तमानः प्रथते, यदि ज्ञानस्यैव तर्हि अर्थस्याप्रथमानस्य सद्भावे ज्ञानं प्रति हेतुत्वे च किं प्रमाणम्। ज्ञानवैचित्र्यमेव, नहि तत्समनन्तरप्रत्ययमात्रात्संभवतीत्युक्तम्। एवं तर्ह्यनुमेयोऽर्थः कथं प्रत्यक्षग्राह्य इत्युच्यते। एतदेव हि प्रत्यक्षग्राह्यत्वमर्थस्य यत्साक्षादाकारसमर्पणेन हेतुत्वम्, यस्तु परंपरया ज्ञानाकारसमर्पको हेतुश्च सोऽनुमेयः। तद्यथा—वह्निस्वलक्षणं धूमस्वलक्षणतद्दर्शनतद्विकल्पप्रणाड्या वह्निज्ञानं जनयदनुमेयम्। अतएव प्रत्यक्षमनुमानं च द्वे एव प्रमाणे ज्ञानार्थयोर्भिन्नत्वात्। असति तादात्म्ये तदुत्पत्तिनिबन्धन एव ज्ञानादर्थनिश्चयः। तत्र साक्षादुत्पत्तौ प्रत्यक्षं प्रणाड्या त्वनुमानमिति द्वे एव विधे। अतएव विषयसादृश्यमेव प्रामाण्यं तदधीनत्वादर्थविशेषव्यवस्थापनस्य। नहि ज्ञानमित्येव नीलवेदनं भवति पीतादावपि तुल्यत्वात्। नीलिम्ना तु नीलवेदनसिद्धिः। यथाहुः—'नहि संवित्तिसत्तयैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषादविशेषप्रसङ्गात्, तां तु सारूप्यमाविशत् सरूपयितुं घटये'दिति। तस्मात्साकारे विज्ञाने सिद्धमर्थस्य सत्त्वं ग्राह्यलक्षणं चेति सौत्रान्तिकाः॥

---

**युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।**

भावेन ग्राह्यग्राहकभावानुपपत्तिरिति भावः। श्लोकार्थं विवृणोति—**योहीति**। व्यवस्थाहेतुं शङ्कते—**हेतुत्वमिति**। एतदेव विवृणोति—**य एवेति**। परिहारं शङ्कते। **सादृश्य इति**। दूषयति—**एवमिति**। समनन्तरः *पूर्वप्रत्ययः। अत्र विशेषं शङ्कते—**अथेति**। एतदपि निराकरोति—**एवमपीति**। सौत्रान्तिकमतमुत्थापयति—**स्यादिति**। **किंत्विति**। वस्तुतो निराकारमेव ज्ञानं अर्थसंबन्धी चायमाकारो बुद्ध्यारूढः प्रतीयत इति भावः। **तथासतीति**। आकारसमर्पकत्वे सतीत्यर्थः॥

चोदयति—**ननु कार्येति**। परिहरति—**एतदेवेति**। **हेतुत्वमेवेति**। ज्ञानाकारार्पणक्षमहेतुत्वमेव ग्राह्यत्वं विदुरिति संबन्धः। पुनश्चोदयति—**यद्येवमिति**। उक्तरूपं यदीत्यर्थः। उत्तरमाह—**ज्ञानेति**। अस्मिन्पक्षे प्रत्यक्षग्राह्यत्वानुपपत्तिरिति शङ्कते—**एवमिति**। ज्ञानवैचित्र्येणैवानुमेयमित्यर्थः। समाधत्ते—**एतदिति**। वह्निस्वलक्षणं परम्परया वह्निज्ञानं जनयदनुमेयमित्यर्थः। तादात्म्यानङ्गीकारे सत्यसंबन्धात्कथमर्थनिश्चय इति चेत् तत्राह—**असतीति**। तां संवित्तिम्। आविशत् सारूप्यमिति संबन्धः। तन्मतमुपसंहरति—**इतीति**॥

**सिद्धान्तचन्द्रिकागूढार्थविवरणम्।**

प्रतिषेधो निरालम्बनत्वसाध्यरूपः। (देवसात्त्वं कल्पयित्वेत्यनुषङ्गः?) पूर्वप्रत्ययः निर्विकल्परूपः। **ज्ञानेवेति**। अर्थाभा-

योगाचारेण सौत्रान्तिकखण्डनम्।

अत्र वदामः—स्यादिदं ग्राह्यलक्षणं यद्यर्थस्याकारसमर्पकत्वे हेतुत्वे वा प्रमाणं स्यात्, नतु तदस्ति, समनन्तरप्रत्ययविशेषादेव विचित्राकारोदयसंभवात्। तथाहि—त्वयापि हि स्वप्नावस्थायामसत्यप्यर्थसंनिधौ ज्ञानवैचित्र्यदर्शनादवश्यं समनन्तरप्रत्ययकृतत्वमङ्गीकर्तव्यम्। एवंचेज्जाग्रत्प्रत्ययानामपि तथैवास्तु किमर्थग्रहणेन, अतो न हेतुत्वं ग्राह्यलक्षणम्॥ * ॥ अथ ज्ञाननिबन्धनो यत्रोपादानादिव्यवहारः स विषय इत्युच्यते, तथासति नीलज्ञानस्य नीलान्तर्गताः परमाणवो रसादयश्च विषयभावमश्नुवीरन्, उपादीयमानत्वात्॥ * ॥ अथ द्रव्यस्यैवोपादानं न गुणानां रसादीनाम्। एवं तर्हि रूपस्यापि विषयत्वं न स्यात्। किंच सुखार्थः सर्वो व्यवहारोऽतोऽनुभूते सुखे न कश्चित्सुखविषयो व्यवहारोऽस्ति नच संभवति, यतः सुखप्रतिबद्धव्यवहारानुगुण्यं तद्वित्तेः स्यात्, तथा घ्राणगृहीते गन्धे न कश्चिदुपादानादिव्यवहारोऽस्तीति कथं तस्य विषयत्वम्॥ * ॥ ननु नोपादानमेव व्यवहारः शब्दप्रयोगस्यापि व्यवहारत्वात्, अतो नीलज्ञाननिबन्धनशब्दप्रयोगगोचरत्वान्नीलिम्नो विषयत्वम्, एवं सुखादेरपि। एवमप्युपादानस्यापि व्यवहारत्वात्तद्विषयभूतानां परमाणूनां विषयत्वापत्तिस्तदवस्थैव॥ * ॥ किंच न शब्दप्रयोगवशेन ज्ञानस्य विषयनिरूपणं शक्यं विपरीतत्वात्। अर्थसंबद्धशब्दप्रयोगो हि लक्षणं न शब्दमात्रप्रयोगः, प्रत्याय्यप्रत्यायकत्वमेव हि शब्दार्थयोः संबन्धोऽतो यदर्थविषयं ज्ञानं यः शब्दो जनयति स तस्य वाच्यः, अतो ज्ञानविषयनिरूपणपूर्वकं शब्दविषयनिरूपणं, तदधीने तु तस्मिन् दुरुत्तरमितरेतराश्रयमापद्येत॥ * ॥ ज्ञानजन्यातिशयभाक्त्वमेव ग्राह्यत्वमिति चेत्, नासावुपलभ्यते, नच संभवति भूतभविष्यतोरित्युक्तम्। अथ यत्संप्रयुक्तेन्द्रियजं ज्ञानं यद्व्याप्तलिङ्गजं वा स विषय इति मतम्। ततो नेत्रजन्यस्य नीलज्ञानस्य स्पर्शो विषयः स्यात्, अस्तिच स्पर्शस्यापि रूपस्येव संयुक्तसमवायलक्षणः संबन्धो नेत्रेण। तथा गन्धलिङ्गस्य रसानुमानस्य रूपमपि विषयः स्यात्, रूपेणापि रसेनेव तस्य व्याप्तत्वात्। तस्मात् ज्ञानात्मकत्वमेव नीलादेर्विषयलक्षणमिति सिद्धं तादात्म्यम्॥ * ॥ सहोपलम्भनियमोऽपि ज्ञानार्थयोरनियमव्याप्तं भेदं व्यापकविरुद्धोपलब्ध्या प्रतिषेधन्न भेदमुपस्थापयति, भिन्नानां घटपटादीनामनियतसहोपलम्भत्वात्। नचासिद्धो वेद्योपलम्भसमये वित्तेरुपलम्भ इति वाच्यम्। उत्तरकालं सहैव ज्ञानेन विषयस्मरणदर्शनात्—ज्ञातो घट इति। नचाननुभूतस्य स्मरणं संभवति, तस्मादुत्पत्तिवेलायामेव ज्ञानस्य प्रकाशनमङ्गीकर्तव्यम्। नच निराकारस्योपलब्धिरस्तीति सिद्धं ज्ञानात्मकत्वं नी-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दूषयितुमुपक्रमते—**अत्रेति**। **अत इति**। समनन्तरप्रत्ययस्यापि विषयत्वापत्तेरित्यर्थः। प्रकारान्तरेण विषयत्वं शङ्कते—**अथेति**। परिहरति—**तथेति**। सुखस्योपादातुमशक्यत्वादिति भावः। यतः तद्वित्तेः सुखज्ञानात्। सुखस्य उपादानादिव्यवहारानुगुण्यं स्यात् तदभावे तु न विषयत्वमिति भावः। अन्यदप्याह—**तथेति**। विशेषं शङ्कते—**नन्विति**। निराकरोति—**एवमिति**। उभयरूपव्यवहाराङ्गीकारेऽप्युक्तदोषानतिवृत्तिरित्यर्थः। वैपरीत्यं विवृणोति—**अर्थेति**। प्रकारान्तरेण ग्राह्यत्वं शङ्कते—**ज्ञानेति**। **अथेति**। पक्षद्वयं चात्र प्रमाणद्वयाभिप्रायेण। उपपादितमर्थं निगमयति—**तस्मादिति**। सहोपलम्भनियमोऽप्यभेदमुपस्थापयतीति संबन्धः। अनियममाशङ्क्य निराकरोति—**नचेति**। तस्मिन्काले ज्ञानेन विषयस्यैव प्रकाशनादिति भावः। नचेत्यत्र कारणमाह—**उत्तरेति**। एतदेव सहोपलम्भे प्रमाणमित्यर्थः। प्रकाशनमित्यनेन ज्ञानस्य स्वप्रकाशत्वं ध्वनितं विषयं प्रकाशयदात्मानमपि प्रकाशयतीति भावः। **ननु** वस्तुतो निराकारमेव ज्ञानं अर्थसंबन्धी चायमाकारो बुद्ध्यारूढः प्रतीयत इत्येव किं न स्यात्। मैवम्। बाह्यार्थापरित्यागेनान्तरमनुभवमारूढ इत्यत्र प्रमाणाभावात्। अस्तु तर्ह्यर्थाकारस्यैव ज्ञाने प्रतिबिम्बोदयः जले चन्द्रस्येव। नैतदपि युक्तम्। अहनि चन्द्ररहितस्य जलस्योपलम्भाद्रात्रौ तत्प्रतिबिम्बप्रतीतिर्युक्ता, ज्ञानं तु न कदाचिदपि निराकारं दृष्टं कथं तत्राकारप्रतिबि-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

वेऽपि शुक्तिरजतादौ रजतज्ञानं साकारमुपलक्ष्यते नतु विज्ञानाभावे साकारोऽर्थः। अतो ज्ञानस्यैवाकारो धर्मो नार्थस्येति

त्वादेः । अवश्यं च स्वप्नादिबोधे वन्ध्यासुतो याति, अङ्गुल्यग्रे हस्तियूथशतमित्यादौ चात्यन्तासंभवाद्ग्राह्यस्य ज्ञानात्मकत्वमेवाकाराणामभ्युपगन्तव्यम् । तथान्यत्राप्यस्तु, तस्मान्न बाह्यमस्तीति प्राप्ते ॥

योगाचारमतखण्डनम् ।

अभिधीयते—'नीलादिवित्तेरात्मांशग्राहित्वं केन गृह्यते ॥ नात्मना नान्यसंवित्त्या सापि ज्ञानात्मावसायिनी ॥ अज्ञानस्थिरचित्रत्वबाह्यत्वादेरनात्मनः ॥ असतो वा सतो वापि कथं विज्ञानवेद्यता ॥' विज्ञानवादी हि सर्वमेव विज्ञानमात्मानमेव गृह्णाति नान्यत्, आत्मनैव च गृह्यते नान्येन, तस्याप्यन्यस्य स्वात्मपर्यवसायित्वादिति वदति । यथोक्तम्—'नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ॥ ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते' इति ॥ * ॥ तमेवंवादिनं प्रत्युच्यते—नीलज्ञानस्यात्मावसायित्वं नीलस्य च विज्ञानाकारत्वं केन ज्ञानेन गृह्यते । न तावदात्मनैव—नहि नीलमिदमित्यत्र स्वात्मपर्यवसायित्वं नीलाकारस्य च ज्ञानात्मकत्वं प्रकाशते नीलमात्रप्रकाशनात् । संवेद्यत्वग्राह्यलक्षणायोगसहोपलम्भनियमादिलिङ्गनिमित्तकेन त्वनुमानेनैव तदवगन्तव्यं—तदपि त्वनुमानमात्मांशग्राहि चेत्, न ज्ञानान्तरस्य स्वात्मपर्यवसायितां ग्रहीतुमलम् ॥ * ॥ अथानुमानं न स्वात्मांशग्राहि, ततो नीलादिविज्ञानैः किमपराद्धं, येन तानीदंकारास्पदीभूतबाह्यनीलादिप्रकाशकत्वेनावभासमानान्यपि स्वात्मन्येवावरुध्यन्ते । नहि तदैतद्वक्तुं शक्यम्—नानात्मनः संवेदनं ग्राह्यलक्षणं सहोपलम्भनियमो वा संभवतीति । तेषां सर्वेषामेवैतस्मिन्नेव भवदीयेऽनुमाने व्यभिचारात् । तत्खल्वात्मानमतिक्रम्य नीलादिवित्तेर्नीलाद्यात्मभूतस्वात्मांशावसायितां गृह्णातीत्यभ्युपगन्तव्यम् । तस्यापि स्वात्मपर्यवसायित्वे नीलबुद्धेस्तद्वशेन स्वात्मांशग्राहिता न सिद्ध्येत् । आह च—'चैत्रादिप्रत्ययानां च निरालम्बनता यदि ॥ धर्मभूता न गृह्येत साधनोत्थितया धिया ॥ ततो विषयनानात्वात्प्रतियोग्यनिराकृता ॥ रूपात्सालम्बनप्राप्तिः सती केन निवार्यते' इति ॥ * ॥ किंचाज्ञानमित्यस्य ज्ञानस्य ज्ञानाभावो ग्राह्यः, नच ज्ञानाभावस्य ज्ञानात्मता संभवति, अत्यन्तविपरीतत्वात् । तथा—तदेवेदमिति ज्ञाने पूर्वापरकालावस्थायित्वं प्रकाशते, नच क्षणिकस्य ज्ञानस्य स्थायित्वमात्मा संभवति । तथा—चित्रबुद्धौ नानाकाराणामवभासः । नचैकस्य ज्ञानस्य नानाकारता संभवति ॥ * ॥ नन्वर्थस्यापि स्थायित्वमेकस्य च नानाकारत्वं न संभवत्येव, संभवतु वा मा वा, ज्ञानात्मता तावन्न संभवति । तदसंभवे चार्थाकारौ वा स्थायित्वचित्रत्वे स्याताम्, अत्यन्तासद्रूपे वा, द्वेधापि ज्ञानानात्मकयोर्ज्ञानेन ग्रहणात्सिद्धं नः समीहितम् ॥ * ॥ तथा बाह्यं नास्तीति निषेधयतावश्यं बाह्यं बुद्धावारोपयितव्यं,

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

म्बकल्पना स्यात् । अस्तुनाम रूपस्य प्रतिबिम्बोदयः गन्धरसादीनां त्वसंभाव्य एव । यथाहुः—'शब्दगन्धरसानां च कीदृशी प्रतिबिम्बता । ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता' ॥ सिद्धान्तं प्रतिजानीते—**इतीति** ॥

श्लोकार्थं विवृणोति—**विज्ञानेति** । नीलमिदं पीतमिदमिति ज्ञानमुत्पद्यमानमात्मानमेव प्रकाशयदुत्पद्यत इत्यर्थः । अत्रैव तत्संमतिमाह—**यथेति** । **न तावदिति** । एकस्यैवैवंरूपत्वे प्रमाणाभावादिति भावः । अत्र पूर्वपक्षोक्तां युक्तिमनूद्य परिहरति—**संवेद्येति** । **नहीति** । यदानुमानं न स्वात्मांशग्राहि तदा एतत् नानेत्यादिनोच्यमानं वक्तुं न शक्यमित्यर्थः । कथं न शक्यमत आह—**तेषामिति** । नानेत्यादिनोक्तानां निमित्तानां व्यभिचारात् अभावादित्यर्थः । **ननु** तस्याप्यात्मांशपर्यवसायित्वमेवाङ्गीक्रियते नेत्याह—**तदिति** । एवमनङ्गीकारे दोषमाह—**तस्येति** । अत्रैव वार्तिककृत्संमतिमाह—**आहचेति** । अनुमानजाया बुद्धेः स्वात्मांशपर्यवसायित्वात्तया साध्यभूता *निरालम्बनता यदि न गृह्यते ततोऽस्याः स्वांशमात्रं विषयः *चैत्रादिप्रत्ययानां च चैत्रादय इति भिन्नविषयत्वान्न बाध्यबाधक भावः । अतो रूपात् चित्रादिप्रत्ययस्वरूपपर्यालोचनया विद्यमानैव सालम्बनप्राप्तिः सती केन निवार्यत इति श्लोकार्थः । दूषणान्तरमाह—**किंचेति** । निगमयति—**तस्मादिति** । यदुक्तं ज्ञानस्यैव तत्तदाकारेणावभासो नातिरिक्तस्यार्थस्येति तद्दूषयितुमाह—

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

भावः । निरालम्बनता अर्थरूपा ज्ञानातिरिक्ता । अस्याः साधनोत्थितायाः । **चैत्रादिप्रत्ययेति** । चैत्रोऽयमिति ज्ञाना-

ज्ञानातिरिक्तं च बाह्यम्। नच ज्ञानाकारता तस्य संभवति, तस्मादेवमादिसिद्ध्यर्थमवश्यं विज्ञानानामनात्मग्राहित्वं बलादभ्युपगन्तव्यम्, भवदीयानुमानार्थं च। तदेवं संविद्बलसिद्धस्य बाह्यस्य संभवे वेद्यत्वादिभिर्नापह्नवः संभवति, बाह्यस्यैव हि तदा संवेद्यत्वं दर्शनबलादभ्युपगम्यते। प्रत्युतात्मन एव संवेद्यत्वं न संभवति—नीलादिवित्तीनामिदं नीलमिदं पीतमित्यनात्मावभासित्वात् आत्मावभासित्वाभावात्॥ * ॥ अहंप्रत्ययस्तर्हि ज्ञानावलम्बनो भवतु। सोऽपि कर्त्रवलम्बनो न ज्ञानावलम्बन इत्यात्मवादे वक्ष्यामः। तथा ग्राह्यलक्षणमपि बाह्यस्यैव किंचिदेष्टव्यम्। अन्यथा नीलादिवित्तीनां स्वांशपर्यवसायित्वसाधनार्थस्य तदीयानुमानस्य नीलादिवित्तिगतं स्वांशविषयत्वं ग्राह्यं न स्यात्, स्थायित्वादयश्च तद्बुद्धीनाम्॥

ज्ञानानुमेयत्वस्थापनम्।

तल्लक्षणं चेतरेषामुक्तदोषान् ज्ञानजन्यफलभागित्वमेवाश्रयितव्यम्। ज्ञानक्रिया हि सकर्मिका कर्मभूतेऽर्थे फलं जनयति पाकादिवत्, तच्च फलमैन्द्रियकज्ञानजन्यमापरोक्ष्यम्, लिङ्गादिज्ञानजन्यं तु पारोक्ष्यमित्युच्यते। अस्ति हि विषयाविषयविभागः विषयेष्वपि परोक्षापरोक्षविभागः सार्वजनीनः। नच फलमन्तरेणायं विभागः संभवतीति तदाश्रीयते। तदेव च फलं कार्यभूतं कारणभूतं विज्ञानमुपकल्पयतीति सिद्ध्यत्यप्रत्यक्षमपि ज्ञानम्॥ * ॥ अथवा ज्ञानक्रियाद्वारको यः कर्तृभूतस्यात्मनः कर्मभूतस्य चार्थस्य परस्परं संबन्धो व्याप्तृव्याप्यत्वलक्षणः स मानसप्रत्यक्षावगतो विज्ञानं कल्पयति, नह्यागन्तुककारणमन्तरेणात्मनोऽर्थं प्रति व्याप्तृत्वमुत्पत्तुमर्हति। तच्च कारणं लोके ज्ञानशब्देनाभिधीयते। येऽपि स्वप्रकाशां संविदमातिष्ठन्ते तैरप्ययं संबन्धो मानसप्रत्यक्षगम्योऽवश्यमभ्युपगमनीयः। अन्यथा 'ज्ञातो मया घटः' इति ज्ञानज्ञेयसंबन्धो ज्ञातृज्ञेयसंबन्धो वा न व्यवहर्तुं शक्यते। यन्मात्रं हि प्रकाशितं तन्मात्रमेव व्यवहर्तुं शक्यते नान्यत्॥ * ॥ इह च संविन्मात्रं स्वयंप्रकाशितं, अर्थोऽपि तद्वशात्, ज्ञानसंबन्धस्तु केन प्रकाशितः। सोऽपि तयैव संविदा प्रकाशत इति चेत्। न। तदुत्पत्त्यवस्थायां संबन्धस्यानिष्पन्नत्वात्। प्रकाशकत्वमेव हि संविदा विषयेण संबन्धो नान्यः, तेन जातायां संविदि विषये च प्रकाशिते निष्पद्यमानः संबन्धो न तया संविदा शक्यते विषयीकर्तुम्, विरम्यव्यापारासंभवात्। नहि प्रथममर्थं प्रकाश्य पुनःसंबन्धं प्रकाशयितुमर्हति क्षणिकत्वात्॥ * ॥ अथ संबन्धोऽपि स्वयंप्रकाशत इति मन्येथाः, नात्र प्रमाणमस्ति। तस्मान्मानसप्रत्यक्षगम्योऽर्थेन सहात्मनः संबन्धो ज्ञानं कल्पयतीति रमणीयम्। अस्ति हि कोऽपि संबन्धोऽर्थेन सहात्मनो मानसप्रत्यक्षगम्यः सर्वजनीनः स ज्ञानस्य कल्पकः। अर्थगतो वा ज्ञानजन्योऽति-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**प्रत्युतेति**। अहंप्रत्ययस्य ज्ञानावभासकत्वमाशङ्क्याह—**अहमिति**। नापि *ग्राह्यत्वलक्षणानुपपत्त्या तत्सिद्धिरित्याह—**तथेति**। यथा वेद्यत्वमभ्युपगतं तथा ग्राह्यत्वमपि बाह्यस्यैव कर्मत्वादिरूपं किंचिदेष्टव्यमित्यर्थः। एवमनङ्गीकारे दोषमाह—**अन्यथेति**॥

यत्किंचिदित्यनेनोक्तमर्थं विवृणोति—**तदिति**। अन्येषां पूर्वपक्षोक्तदोषग्रासात् ज्ञानजन्यफलभागित्वमेव तल्लक्षणं ग्राह्यलक्षणमाश्रयितव्यमित्यर्थः। एतदेवोपपादयति—**ज्ञानेति**। नचास्मिन्नर्थे प्रमाणाभाव इत्याह—**अस्तिहीति**। उच्यमानो विभाग एवात्र प्रमाणमित्यर्थः। एवंच सत्येतदप्यस्मदभिमतं सिद्ध्यतीत्याह—**तदेवेति**। प्रकारान्तरेण ज्ञानकल्पनमुपपादयति—**अथेति**। किं तत्कारणमित्यपेक्षायामाह—**तच्चेति**। लोकशब्देन प्रसिद्धिरुक्ता स्वयंप्रकाशत्वपक्षेऽपि मानसप्रत्यक्षगम्यत्वमुपपादयति—**येऽपीति**। स्वप्रकाशमहिम्ना व्यवहारोपपत्तिमाशङ्क्याह—**यन्मात्रमिति**। चोदयति—**सोऽपीति**। परिहरति—**नेति**। एतदेवोपपादयति—**प्रकाशकत्वमिति**। व्यापारासंभवं विवृणोति—**नहीति**। उपपादितमर्थं निगमयति—**तस्मादिति**। प्राकारान्तरमाह—**अर्थगतो वेति**। अनुगतं प्रकाशपदवाच्यं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

तिरिक्तार्थविषयः प्रत्ययः। **ग्राह्येति**। केवलग्राह्यत्वाभ्युपगमोऽर्थ एवासौ ज्ञानशब्देनोक्तः स्यादित्यर्थः। अयं चास्मिन्पक्षे

शयः कल्पयति ज्ञानम्, अवश्यमङ्गीकरणीयश्चायमतिशयस्त्रितयप्रतिभासवादिभिरपि। त्रितयं प्रतिभासत इतिवदता ज्ञानज्ञेयज्ञातृषु त्रिष्वप्यनुगतं प्रकाशनपदवाच्यमवश्यमङ्गीकर्तव्यम्। तत्र ज्ञानत्वं तावन्नानुगतम्—तद्धि ज्ञाने एव न ज्ञातृज्ञेययोः। ज्ञेयत्वमपि ज्ञेय एव न ज्ञातृज्ञानयोः। ज्ञातृत्वं ज्ञातर्येव न ज्ञानज्ञेययोः॥ * ॥ व्यवहारविषयत्वं प्रकाशमानत्वमितिचेत्, न, संविदि व्यवहाराभावाद्विनष्टत्वात्। शब्दप्रयोगो व्यवहार इतिचेत्, न, उक्तदोषत्वात्। तदवश्यं प्रकाशनभासनादिपर्यायो धर्मविशेषस्त्रिष्वप्यनुवृत्तो गोत्वमिव गोव्यक्तिष्वस्ति। सच धर्मो ज्ञातरि ज्ञेये च ज्ञानवशाज्जायते, ज्ञानस्य तु स्वाभाविकोऽग्नेरिवौष्ण्यमिति स्वप्रकाशं ज्ञानम्। इतरौ परप्रकाश्यावित्याश्रयणीयम्। तन्निमित्तं च विषयस्य विषयत्वम्। व्यवहारादीनां हि विषयलक्षणत्वं प्रागेव दूषितम्। एकदेशिनां तु—व्यवहारनिबन्धनविषयताङ्गीकरणे रजतवित्तेः शुक्तिका विषयः स्यात्, नचैवमिच्छन्ति। तदेवमविवादसिद्धेऽर्थगतेऽतिशये तेनैव ज्ञानस्यानुमानं पूर्वोक्तेन वा मानसप्रत्यक्षगम्येन संबन्धेन संभवति। अतिक्रान्तदिवसगतदशत्वादिसंख्यावच्चासतोर्भूतभविष्यतोरविद्यमानत्वेऽपि धर्मिणः प्रकाशनधर्मो जायत इति प्रमाणबलादभ्युपगम्यते। अतो न प्रत्यक्षत्वं संविदोऽभ्युपगन्तव्यम्॥

पुनर्विज्ञानवादखण्डनम्।

नच प्रतीतिबलादपि प्रत्यक्षत्वम्—अर्थावभाससमये संविदः प्रतिभास एव नास्ति, नतरामापरोक्ष्यम्। एवंच सहोपलम्भस्यैवाभावात्तन्नियमो य उक्तः स दूरापास्त इति प्रत्युक्तमेतत्—'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति। यत्तु पश्चात्स्मरणस्य दर्शनाज्ज्ञानमपि प्रागनुभूतमिति। तदप्यसिद्धम्। अर्थएव हि तदा स्मर्यते, तत्तत्स्मरणाच्च तदैवार्थव्याप्तिरात्मनो मनसावगम्यते, तद्वशाच्च तदार्थे तावज्ज्ञानं कल्पयति। तस्य च ज्ञानस्येन्द्रियादिकारणाभावात्स्मृतित्वं निश्चित्य स्मृतिकारणभूतं पूर्वज्ञानं तदैव कल्पयतीति नास्य स्मरणम्॥ * ॥ इतश्च न नीलादेर्ज्ञानात्मकत्वम्, अनुमानादिषु विषयाकाराणां परोक्षत्वात्, ज्ञानस्य च सर्वत्र प्रत्यक्षत्वाभ्युपगमात्, नहि परोक्षापरोक्षयोरेकत्वं संभवति। एवमत्यन्तासद्रूपत्वेनाभिमतस्य स्थायित्वादेः सद्रूपज्ञानात्मकत्वमत्यन्तासंभाव्यम्। तथा भूतानुमानेषु भूतत्वमवभासते। नच वर्तमानस्य ज्ञानस्य भूतत्वमात्मा संभवति॥ * ॥ भिन्नत्वेऽपि ग्राहकाद्ग्राह्यस्य ज्ञानमेवातीतमुत्तरस्य ग्राह्यं नार्थ इतिचेन, न, प्रमाणाभावात्। अत्र चातीतं त्रेधा विकल्प्य 'अतीतं यच्च विज्ञान'मित्यादिना दूषणमुक्तम्। उत्तरमपि त्रेधैव विकल्प्य 'द्व्याकारकल्पनायां च' इत्यादिना दूषणमुक्तमिति विवेचनीयम्। तस्मादिदमपि वैभाषिकमतमयुक्त-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

शङ्कते—**व्यवहारेति**। उपादानादिव्यवहाराभावादिति परिहारार्थः। **उक्तदोषत्वादिति**। अस्मिन्पक्षे एवमित्यादिना ग्रन्थेन पूर्वं दोषस्योक्तत्वादित्यर्थः। तन्निमित्तं परप्रकाश्यत्वनिमित्तम्। उपपादितमर्थं निगमयति—**तदेवमिति**। भूतभविष्यतोस्तदनुपपत्तिं परिहरति—**अतिक्रान्तेति**॥

एतेनान्यदपि निरस्तमित्याह—**एवंचेति**। इति नियमनिरासाद्धेतोः सहोपलम्भेत्यादि यदुक्तं तदपि प्रत्युक्तमित्यर्थः। अत्र पूर्वपक्षोक्तं परिहारमनूद्य निराकरोति—**यत्त्विति**। **नास्येति**। ज्ञानस्येत्यर्थः। ततः किमत आह—**नहीति**। दूषणान्तरमाह—**तथेति**। **अत्रेति**। यच्चेदमतीतं विज्ञानमुपरितनस्य ग्राह्यत्वेन भवद्भिरिष्टं तद्ग्राह्याकारं ग्राहकाकारं उभयाकारं वा स्यादिति त्रेधा विकल्प्येत्यर्थः। केनेत्यपेक्षायामतीतं यच्च विज्ञानमित्यादिनेत्युक्तम्—'अतीतं यच्च विज्ञानं ग्राह्यत्वेन हि कल्पितम्॥ तत्स्याद्ग्राहकरूपं वा ग्राह्यं वोभयथापि वा॥' इत्यनेन वार्तिकेन विकल्प्येत्यर्थः। **दूषणमुक्तमिति**। वार्तिककारेणेति शेषः। दूषणवार्तिकं त्वेवम्—'ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते॥ *स्वकाले चा-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

दोष इत्याह—**स्वकाल इति**। ग्राह्यैकस्वभावं पूर्वविज्ञानं उत्तरोत्पत्तेः प्रागगृहीतं स्वविषयां वासनां नोत्पादयति वासनाया गृहीतविषयत्वनियमात् तदभावे च नोत्तरपूर्वविषयत्वेनोत्पद्येतेत्यर्थः। यथानागतान ज्ञानात् संतानान्तर-

मेव। तस्माद्बाह्यार्थाकार एव नीलादिर्न ज्ञानाकारः॥ * ॥ कथं तर्हि स्वप्ने, तत्रापि बाह्यमेव देशकालान्तरगतमदृष्टोद्बोधितसंस्कारवशात्स्मर्यमाणं निद्रा—दूषितमनस्कतया भ्रान्त्या संनिहितदेशकालमिव मन्यते। विस्पष्टं चैतदनन्तरदिवसानुभूतस्य स्वप्ने वर्तमानावभासदर्शनात्, अन्यत्रापि स्वप्ने तथाङ्गीकर्तुं युक्तम्। शिरश्छेदोऽप्यन्यत्रावगतः स्वसंबन्धितया दोषवशादवगम्यते। सर्वत्र संसर्गमात्रमसदेवावभासते। संसर्गिणस्तु सन्तएव। सेयं विपरीतख्यातिरुच्यते मीमांसकैः। असत्ख्यातिवादिनस्तु संसर्गिणोऽप्यपलपन्तीति विशेषः। शुक्तिरजतवेदनेऽपि विद्यमानैव रजतत्वजातिर्विद्यमानस्यैव शुक्तिकाशकलस्यानात्मभूतैवात्मतयावगम्यते। तथा वन्ध्यासुतादिष्वपि विद्यमान एव सुतशब्दार्थो वन्ध्यान्विततया तत्पदसंनिधिदोषादवगम्यते॥

स्वीयविपरीतख्यातिमतोपन्यासः।

यत्तु कैश्चिदेवमादिषु तदाकारावभासमपह्नुत्य विवेकाग्रहणमेव भ्रान्तिरित्युक्तं, तत्संविद्विरोधादेवोपेक्षणीयम्। को हि नामाङ्गुलिनिपीडितदृष्टिश्चन्द्रद्वित्वं न प्रकाशत इति ब्रूयात्। किंचैक एवायं चन्द्रो न द्वावित्येवं द्वित्वविवेकं चन्द्रस्य विस्पष्टमनुसंदधानस्य चक्षुषा द्वित्वभ्रमो जायमानः कथं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

ध्यसंवित्तेर्न स्याच्छक्त्यर्पणं ततः॥ यथैवानागताज्ज्ञानात्संतत्यन्तरजादपि॥ नष्टत्वेनाप्यविज्ञानात्तथोत्पन्नाद्विनश्यतः॥ *केवलग्राहकत्वे तु विषयत्वं न युज्यते। *किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्प्यते॥ *द्व्याकारता निरस्तैवं *संवेद्येत तदैव च॥ ततश्चोत्तरविज्ञानं न प्रतीक्षेत बोधक'मिति। **उत्तरमिति**। उत्तरज्ञानमपि ग्राहकरूपं वा ग्राह्यरूपं वा उभयरूपं वेति त्रेधा विकल्प्य द्व्याकारेत्यादिना दूषणमुक्तं वार्तिककारेणेति विवेचनीयमित्यर्थः। दूषणवार्तिकपर्यालोचनयोत्तरस्य त्रेधा विकल्पो बहिरेव बोद्धव्यः। दूषणवार्तिकं तु *'द्व्याकारकल्पनायां च परस्यात्मांश एव ते॥ प्रमापर्यवसाने च नातीतो विषयो भवेत्॥ *पूर्वग्राह्यसरूपत्वे ग्राहकत्वं तु हीयते॥ *ग्राहकाकारमात्रे स्याद्विषयो नासरूपतः॥ *नच शक्त्यर्पणस्यात्र व्यापार उपलभ्यते॥ *शक्त्यर्पणस्य चाभावो युष्मत्पक्षे प्रसाधितः' इति। अनन्तरं च 'संतानान्तरवच्चैषा'मित्यादिवार्तिकेन ज्ञानानां हेतुसाध्यत्वाभावे वास्यवासकत्वाभावे च प्रयोगा दर्शितास्ते च ग्रन्थविस्तरभयादस्माभिर्न लिखिताः। ग्रन्थकारस्य तु वार्तिकस्थविवेककीर्तनमत्र किंप्रयोजनकमिति न विद्मः। अत्र चोदयति—**कथमिति**। परिहरति—**तत्रेति**। नचैवमसत्ख्यात्यापत्तिरित्याह—**सर्वत्रेति**। एतदेवोपपादयति—**शुक्तिकेति**॥

अत्र प्रसङ्गादेकदेशिमतमनूद्य निराकरोति—**यत्त्विति**। विरोधमेव दर्शयति—**कोहीति**। विवेकग्रहेऽपि भ्रमो

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

जाद्वा न शक्त्यर्पणं एवमतीतादपि नष्टत्वेनाविज्ञानात्। उत्पन्नमात्रविनष्टादपीति दृष्टान्तार्थः। ग्राहकाकारमात्रत्वे चोपरितनंप्रति ग्राह्यता न स्यादित्याह—**केवलेति**। दूषणान्तरमाह—**किमपेक्ष्येति**। सर्वेषां ग्राहकत्वेसति ग्राह्याभावेन ग्राहकतापि न स्यादित्यर्थः। द्व्याकारतापि नैतदस्ति त्वयैकंहीत्यादिना निरस्तैवेत्याह—**द्व्याकारतेति**। **ननु** तस्यान्तरातीतमपेक्ष्य ग्राहकत्वं ग्राह्यत्वं चोत्तरमपेक्ष्येति किं नोपपद्यते। न। उक्तोत्तरत्वात्। एवं स्वोत्पत्तिवेलायामगृहीतं न शक्तिमर्पयेत् अस्मत्पक्षे ज्ञानं न स्वविषयां वासनां जनयति किंत्वर्थविषयाम्। अतएवार्थविषयैव स्मृतिस्तया जन्यते न ज्ञानविषया। तस्मादुत्पत्तिवेलायामेव संवित्तिरभ्युपगन्तव्या तत्पश्चात्स्वयमेव ग्राह्यत्वं ग्राहकत्वं चापन्नं तच्च निरस्तमिति। स्वयंप्रकाशत्वे तु प्रतीतस्य स्वग्रहणायोत्तरापेक्षा न स्यादित्याह—**संवेद्येतेति**। एवंच ग्राहकरूपत्वं द्व्याकारत्वं चानुपपन्नं इति ग्राह्यमात्ररूपं पूर्वं ततश्चार्थ एव शब्दान्तरेणोक्तो भवतीति स्थितम्। इदानीं परमपि ज्ञानं त्रेधा विकल्प्य द्व्याकारत्वे तावद्दूषणमाह—**द्व्याकारेति**। परस्य ज्ञानस्य द्व्याकाराकल्पनायां तव मते स्वात्मांश एव प्रमापर्यवसाने सत्यतीतस्यैतद्विषयत्वं न स्यात्। स्वयंप्रकाशत्वेनातीतस्य ग्राह्यस्यापेक्षाभावादिति भावः। केवलग्राह्याकारत्वे दूषणमाह—**पूर्वेति**। यथा पूर्वज्ञानं ग्राह्यरूपं तथेदमपि ग्राह्यरूपमतः पूर्वंप्रति ग्राहकत्वं न स्यादित्यर्थः। ग्राहकाकारमात्रत्वे दूषणमाह—**ग्राहकेति**। ग्राहकाकारमात्ररूपस्य पूर्वं ज्ञानं तस्य विषयो न स्यात्। केवलग्राह्यत्वाकारेण वैरूप्य इत्यादिसारूप्यनिबन्धनत्वाच्च विषयत्वस्येत्यर्थः। किंच वासनाद्वारेण पूर्वं ज्ञानमुपरितनं जनयेत् नच क्षणिकस्य वासनोत्पत्तौ व्यापारोस्तीत्याह—**नचेति**। मीमांसापक्षे तु स्थायित्वाद्विज्ञानस्याप्यात्मगतसंस्करात् वासनाजनकत्वं युक्तमित्यर्थः। ज्ञानस्य तु क्षणिकत्वेन वास्यवासकत्वभावो नास्तीत्युक्तमित्याह—**शक्त्यर्पणस्यचेति**। **प्रत्यक्षेति**। प्रत्यक्षाव्यभिचारित्वादित्यस्यायमर्थः—

विवेकाग्रहणनिमित्तः स्यात् । एवमवगतदिक्कस्य दिग्भ्रमो नाग्रहनिमित्तः संभवति ॥ * ॥ कथं पुनर्द्वित्वस्यावगमः, न संस्मरणम् । तद्धेत्वभावात्, न ग्रहणम्, अप्राप्तस्य चक्षुषा ग्रहणासंभवात् । उच्यते—देशद्वयं नेत्रेण प्राप्तं चन्द्रश्च, तयोश्च संसर्गो दोषवशादवगम्यते, देशद्वये चन्द्रंप्रतीत्यदेशगतं द्वित्वं दोषवशाच्चन्द्रेऽध्यवस्यति । तथा पित्तवर्तिपीतत्वं शङ्खस्वरूपं च चक्षुषा गृह्णन्दोषवशात्संबन्धं बुध्यत इत्यवगन्तव्यम् ॥ * ॥ किंच यदि सम्यग्रजतबोधे तादात्म्यमवभासते न शुक्तिरजतवेदने ततोऽवभास्यभेदादवभासस्य वैलक्षण्यं प्रागेव बाधकादनुसंधातुं शक्नुयात्, वैलक्षण्यावगमाच्च न प्रवर्तेत । किंच यदि रजतार्थी शुक्तेरुपादानं कार्यतयावगच्छेत्, ततोऽकार्यस्य कार्यतया भानाद्विपरीतख्यात्यापत्तिः । अथ नावगच्छेत्, न प्रवर्तेत—तत्कार्यावगमाधीनत्वात्प्रवृत्तेः ॥ * ॥ अथ कार्यत्वानवगमेऽपि तत्कार्यावगतिसादृश्यात्प्रवृत्तिः, ततस्तत्कार्यत्वानवगमेनाकार्यावगतिसादृश्यमप्यस्तीति निवृत्तिरपि स्यात् सादृश्ययोरविशेषात् । नचासति कारणे कारणसदृशं तत्कार्यं साधयितुमर्हति—मासीषधच्छुक्तिकारजतकार्यमाभरणम् ॥ * ॥ ननु व्रीहिकार्यमपूर्वं नीवाराः साधयन्ति । नैवम् । व्रीह्यंशा एव तत्र कार्यं कुर्वन्ति, तेच विकलाः सन्तोऽप्यशक्तयवस्थायां तत्साधनत्वेन यथाशक्तिप्रयोगविधानादवगता इति नाकारणात्तत्सदृशात्कार्योत्पत्तिः ॥ * ॥ अथ त्वकार्यानवगतिरेव प्रवृत्तेः कारणं, ततो बाह्या अपि वेदार्थे प्रवर्तेरन् अकार्यत्वानवगमात् । अथ त्वकार्यमेव तेऽवगच्छेयुः, ततः कार्यस्याकार्यतयावगमाद्विपरीतख्यातिरित्यास्तां तावत् । तस्मात्स्वप्नादिष्वपि बाह्यस्यैवान्यथाभूतस्यैवान्यथावभासात्सिद्धं सर्वत्र बाह्यालम्बनत्वम् ॥

योगाचारमतखण्डनम् ।

अथ स्वप्नवत्प्रत्ययत्वात्स्तम्भादिज्ञानमन्यथाभूतमित्यनुमीयते, तदसत्, तथासति प्रत्ययत्वाविशेषात्त्वदीयमप्यनुमानं मिथ्या स्यात् । मिथ्यात्वग्राहिणोऽनुमानस्यामिथ्यात्वे वा तत्रैव हेतोर्व्यभिचारः । तस्मात्सूक्तं 'यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः' शा. भा. इति । तस्मादव्यभिचारात्प्रत्यक्षं न परीक्षितव्यम् ॥ इति शून्यवादः ॥

अनुमानपरिच्छेदः ।

प्रत्यक्षस्य सत्संप्रयोगजन्यत्वलक्षणेन लोकसिद्धेनाव्यभिचारमुक्त्वा, इदानीमनुमानादेरप्यव्यभि-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

दृष्ट इत्याह—**किंचेति** । अत्र चोदयति—**कथमिति** । उदाहरणान्तरेप्यारोपमुपपादयति—**तथेति** । इदानीं तन्मतेनाप्यन्यथाख्यातिमापादयति—**किंचेति** ॥

हेत्वन्तरेण प्रवृत्तिं शङ्कते—**अथेति** । नापि सादृश्यात्प्रवृत्तिः संभवतीत्याह—**नचेति** । कारणसदृशस्यापि तत्कार्यसाधकत्वमस्तीति शङ्कते—**नन्विति** । परिहरति—**नैवमिति** । व्रीह्यंशानामेव नीवारगतानां तत्रापूर्वसाधकत्वमित्यर्थः । **तत इति** । यद्यकार्यत्वावगमात्तेषामप्रवृत्तिरित्युच्यते ततः कार्यत्वावगमात्प्रवृत्तिरित्यङ्गीकृतमित्युक्तदोषानतिवृत्तिरित्यर्थः । उपपादितमर्थं निगमयति—**तस्मादिति** । उपपादितेऽर्थे भाष्यं प्रमाणयति—**तस्मादिति** । वृत्तिकाराभिमतसूत्रार्थोपपादनप्रयोजनमुपसंहरति—**तस्मादिति** । इति शून्यवादः ॥

एवं *प्रत्यक्षस्याव्यभिचारित्वं परीक्षानिवृत्तये तत्संप्रयोग इत्यादिना लक्षणतः प्रतिपाद्यानन्तरमनुमानादिलक्षणमाह वृत्तिकारस्तस्य प्रयोजनं दर्शयति—**प्रत्यक्षस्येति** । दर्शयितुमाह वृत्तिकार इति शेषः । असूत्रितानुमानादिवर्णनं वृत्तिकारस्यानुचितमितिचेत् । न । सूत्रस्य सूचनात्मकत्वेन प्रत्यक्षेणानुमानादिलक्षणस्यापि सूचितत्वात् । अथवा प्रत्यक्षं तावदव्यभिचारित्वान्न परीक्ष्यं तत्पूर्वकमनुमानाद्यपि *एवंलक्षणकत्वात् प्रत्यक्षाव्यभिचारित्वाच्च न परीक्ष्यमित्यनुमानादिलक्षणप्रदर्शना

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

मूलप्रमाणव्यभिचारेण वानुमानस्य व्यभिचारः स्यात् स्वकीयलक्षणव्यभिचारेण वानुमानस्य व्यभिचारः स्यात् नाद्यः । प्रत्यक्षत्वाव्यभिचारित्वात् । नापि द्वितीयः । **एवंलक्षणकत्वादिति** । अयं दोषः अनौचित्यलक्षण इत्यर्थः ।

**चारार्थं लोकसिद्धमेव लक्षणमाह—'अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः' शा. भा.। यस्य यादृशस्य येन यादृशेन सह साक्षाद्वा प्रणाड्या वा यादृशः संबन्धः संयोगः समवाय एकार्थसमवायः कार्यकारणत्वमन्यो वा दृष्टान्तधर्मिषु नियतो ज्ञातस्तं तादृशं साध्यधर्मिषु दृष्टवत-**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

थैत्वात्प्रत्यक्षसूत्रस्यायमदोषः। तत्र वृत्तिकाराभिमतमनुमानलक्षणं तावदाह—**अनुमानमिति**। अत्र ज्ञातः संबन्धो व्याप्तिलक्षणो व्याप्यव्यापकयोर्दृष्टान्तधर्मिणि येन प्रमात्रा स ज्ञातसंबन्धः तस्य एकदेशस्य व्याप्यस्य धूमादेर्दर्शनात् एकदेशान्तरे व्यापकवह्न्यादौ चक्षुराद्यसंनिकृष्टेऽर्थे या बुद्धिस्तदनुमानम्। अथवा ज्ञातः संबन्धो यस्य एकदेशाभ्यां धूमवह्निरूपाभ्यां सह स ज्ञातसंबन्धो महानसादिधर्मी एकदेशी तस्य यो धूमाख्य एकदेशः तस्य पर्वतादौ दर्शनात् एकदेशान्तरे वह्न्यादौ बुद्धिः। अत्र च सर्वनामार्थे बहुव्रीहेः, स्मरणं संनिहितश्च सर्वनामार्थो भवति। नचात्र प्रमाता एकदेशी वा *केनचिदुपात्त इत्यसंनिधानात्तयोः समासार्थत्वानुपपत्तिमाशङ्क्य लिङ्गस्यैवै*कदेशरूपस्य समासार्थत्वमभिप्रेत्य व्याचष्टे—**यस्येति**। अत्र यादृशतादृशशब्दाभ्यां दृष्टान्तपरिदृष्टरूपस्य न लिङ्गत्वं नाप्यलिङ्गत्वमिति दर्शितम्। न्यूनरूपस्याप्रयोजकत्वादिति भावः। **ज्ञातः संबन्धो यस्यै***कदेशस्य धूमाख्यस्य एकदेशान्तरेण साध्येन सह स ज्ञातसंबन्धस्तस्य दृष्टवतः **पुरुषस्य या बुद्धिः** सानुमानमित्यर्थः। अत्र चैकदेशपदोपदानात्संनिहित एव सर्वनामार्थो भवतीति बहुव्रीह्युत्पत्तिः। एतदप्यनुपपन्नम्—एकदेशस्याप्यनुपात्तत्वेनासंनिधानात् एकदेशदर्शनादित्यत्रैकदेशशब्दस्योत्तरपदार्थविशेषणत्वेनोपसर्जनत्वात् पूर्वपदार्थविशेषणत्वे वैकदेशपदस्य दर्शनशब्देन सह समासानुपपत्तिः। ज्ञातसंबन्धपदसापेक्षत्वेनाव्यपेक्षालक्षणसामर्थ्याभावात्। **ननु** दर्शनक्रियां प्रत्येकदेशस्योद्देश्यत्वेन प्राधान्यम्। भवति च प्रधानस्य सापेक्षस्यापि समासः। नैवम्। शब्दतः प्राधान्याभावात्। व्याकरणे हि शब्दस्यैव पदार्थत्वात्तत्कृतगुणप्रधानभावस्यैव प्रयोजकत्वात्। **तस्मात्** विशेषणत्वमेवात्र गुणत्वं नोपकारकत्वलक्षणं शेषत्वम्, विशेष्यत्वं प्राधान्यं, न शेषित्वम्। अतएव ऋद्धस्य राज्ञः पुरुष इत्यत्र शेषिणोऽपि राज्ञः शब्दतो विशेषणत्वात् वृत्तिमपेक्षमाणस्य समासाभावः। राजपुरुषः शोभन इति च शेषभूतस्यापि पुरुषस्य विशेष्यत्वेन प्रधानत्वात् शोभनपदापेक्षस्यापि भवति समासः। अत्रच* विशेषणमेकदेशो दर्शनस्येति न ज्ञातसंबन्धपदापेक्षस्य संभवति समासः। नैष दोषः। संनिहितमात्रस्यैव सर्वनामार्थत्वेनोपादानस्यात्रानुपयोगात् *अन्यपरेणाप्युपादानेनैकदेशस्य बुद्धिसंनिध्युपपत्तेः स्वर्गकामादिपदानां च बहुव्रीहित्वेनानुपात्तेऽपि पुरुषे वृत्त्यभ्युपगमात्। अस्तु वा कर्मधारय एव बलीयस्त्वात् ज्ञातश्चासौ संबन्धश्चेति। **नन्व**स्मिन्पक्षे एकदेशदर्शनादेकदेशान्तर इत्यनुपपन्नं स्यात् संबन्धस्य निरवयवत्वेनैकदेशासंभवात् न स्यात्। संबन्धारम्भकत्वेन संबन्धिनोरेकदेशत्वोपचारात् ज्ञेयस्वरूपेऽवधारिते तज्ज्ञानं शक्यं निरूपयितुमिति ज्ञातपदमतिक्रम्य संबन्धपदं व्याचष्टे—**संबन्ध इति**। अन्यो वा तादात्म्यलक्षण इत्यर्थः। अत्रेदमुच्यते—**नैते संबन्धा** गम्यगमकभावप्रयोजकाः तदभावेऽपि कृत्तिकारोहिण्युदयादीनां लिङ्गलिङ्गिभावदर्शनात्। अपिच कार्यमपि न कार्यत्वात्कारणं गमयति किं तर्हि तेन नियतत्वात्। अन्यथा कार्यमस्तु कारणं च मानुमापयत्वित्यपि वक्तुं शक्यते। यतस्तु तेन नियतस्ततोऽनुमापयतीति स एवानुमानाङ्गं स एव च व्याप्तिशब्देनाभिधीयते। यथाहुः—'संबन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना'। अत्रानुमानव्यवहारे व्याप्तिलक्षणः संबन्धोऽङ्गमित्यर्थः। **ननु** व्याप्तेः संबन्धत्वे तद्विशिष्टत्वात् धूमवदग्नेरपि गमकत्वं स्यात्। सत्यम्। तथापि व्याप्यलक्षणसंबन्धि समवेतैव व्याप्तिर्न संयोगवदुभयसमवेता तथा दर्शनात्। अतो न धूमवदग्नेरपि गमकत्वापत्तिः। एतदप्याहुः—'व्याप्यस्य गमकत्वं तु व्यापकं गम्यमिष्यते॥ यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत्॥ स व्याप्यो व्यापकस्तस्य समो वाप्यधिकोऽपि वा।' इति। **ननु** व्याप्यस्य गमकत्वे हिंसात्वमधर्मत्वं गमयेत्। दृष्टं हि ब्रह्महत्यादौ तदधर्मत्वेन व्याप्तं तत्राहुः—'व्याप्तेश्च दृश्यमानायाः *कश्चिद्धर्मः प्रयोजकः॥ अस्मिन्सत्यमुना भाव्यमिति शक्त्या निरूप्यते॥ *अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः॥ तैर्दृष्टैरपि नैवेष्टा

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**केनचिदिति**। समासस्थेन केनचित्पदेनेत्यर्थः। **एकदेशेति**। ज्ञातसंबन्धस्यैकदेशदर्शनादित्युक्तत्वादित्यर्थः। **एकदेशस्येति**। एकदेशस्येति कर्मणि षष्ठी। क्रियया व्याप्यमानं च कर्म भवति। अतः शब्दतोऽपि प्राधान्यमेकदेशस्यावगम्यत इति भावः। **विशेषणमिति**। अतोऽप्रधानत्वेन सापेक्षस्य न समास इत्यर्थः। **अन्यपरेणेति**। दर्शनपरेणैकदेशोपादेनेनेत्यर्थः। तादात्म्याद्यभावेऽपि। शिंशपया वृक्षानुमाने तादात्म्यसंबन्धः सहेतुकः कृतकत्वादित्यादौ कार्यकारणभावः संयोगश्चायं दहनो धूमवत्वादित्यादौ अधर्मत्वं गमयेत् अग्नीषोमीयादावित्यर्थः। **कश्चिदिति**। यत्र हत्यादौ हिंसात्वनिषिद्धत्वे उपलभ्येते तत्र निषिद्धत्वमेवाक्षेपकमधर्मत्वस्य न हिंसात्वं यतो निषेधविधिप्रयुक्तत्वानिष्टानुबन्धिता न हिंसात्वप्रयुक्ता। अतो निषिद्धत्वे सत्येवाधर्मत्वस्य भवितुं शक्तिर्न हिंसात्वे सतीत्यर्थः। **अन्य इति**। हिंसात्वादयस्तु परेण निषिद्धत्वेन प्रयुक्तां व्याप्ति-

**तस्मिंस्तादृशे तादृशसंबन्धसंबन्धिनि प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यामपरिच्छिन्ने या बुद्धिः सानुमानम् । यथा धूमस्यानुपरतोर्ध्वगमनस्याग्निसाहित्यं महानसादिषु नियतमुपलब्धवतः पर्वते तद्दर्शनादग्निज्ञानम् ॥ * ॥**

अनुमाने प्राभाकरमतम् ।

**ननु** नियमावधारणाधीनत्वे कथं ताद्रूप्येणापरिच्छिन्ने प्रवृत्तिः, **ईदृशो** हि नियमः—यत्र यत्र धूमस्तत्रतत्राग्निः यद्यद्रसवत्तत्तद्रूपवदिति । एवंचेद्यावद्धूममग्निसद्भावोऽवगत एवेति नापरिच्छिन्नविषयत्वमनुमानस्य संभवतीति । अतएव चोद्याद्बिभ्यतः केचिदसंनिकृष्टग्रहणं स्मरणाभिमाननिरासार्थं व्याचक्षते गृहीतग्राहित्वमेवानुमानस्य स्वीकुर्वाणाः । तथापि नाप्रामाण्यम् । नह्यगृहीतग्रहणं प्रमाणलक्षणम् । अनुभूतिर्हि तल्लक्षणम् । अनुमानं च गृहीतग्राहित्वेऽपि प्रत्युत्पन्नलिङ्गकारणजन्यत्वेन संस्कारमात्रजन्यत्वाभावादनुभूतिरेवेति युक्तमस्य प्रामाण्यम् ॥ * ॥ अथ स्मृतिप्रमोषः कस्मान्नाश्रीयते, प्रत्युत्पन्नकारणसद्भावात्, संस्कारातिरिक्तकारणासद्भावेन हि 'इदं रजतम्' इत्यत्रानुभवरूपस्यापि रजतज्ञानस्य बलात्स्मृतित्वमाश्रित्य प्रमोषोऽङ्गीकृतः । अत्रतु लिङ्गस्यानुभवकारणस्य सद्भावादयुक्तं प्रतीतिसिद्धस्यानुभवरूपस्यापह्नवेन स्मृतिप्रमोषाङ्गीकरणमिति । सोऽयमेषामकारणकस्त्रासः । तथाहि—यदि हि यावद्व्याप्यव्यापकसद्भावोऽवगतः स्यात्ततो गृहीतग्राहित्वमाशङ्क्येतापि, नत्वेवमस्ति, महानसादिष्वेव हि दृष्टान्तधर्मिषु प्रागनुमानाद्धूमस्याग्निसाहित्यमवगतं न सर्वत्र, प्रमाणासंभ-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

व्यापकांशावधारणे'ति । एवंच सति ग्रन्थकारस्य संयोगादिरूपसंबन्धकीर्तनं किमभिप्रायमिति न विद्मः । एवंवा ग्रन्थगमनिका । ग्रन्थकारस्यापि नियतो ज्ञात इति सबन्धविशेषणं कुर्वतोऽयमेवाभिप्रायः । संयोगादिकीर्तनं तु प्रायेणैवंरूपः संबन्धस्तत्रतत्र पर्यवस्यतीत्यभिप्रायः । कृत्तिकारोहिण्युदयादीनां तु स्वरूपकृत एव गम्यगमकभाव इति नानुपपत्तिः काचित् । ज्ञातसंबन्धस्येत्यनेन ज्ञात एव संबन्धोऽनुमानाङ्गमिति सूचितम् । असंनिकृष्ट इत्यस्यार्थमाह—**ताद्रूप्येति** । ताद्रूप्येण तद्विपर्ययेण वा परिच्छिन्नस्य संनिकृष्टस्य पक्षाभासत्वमिति भावः । येन रूपेणानुमातुमिष्यते तेनैव रूपेण रूपान्तरेण वा तद्विपरीतेन शीघ्रं प्रमाणेन परिच्छिन्नो योऽर्थः स संनिकृष्टः तस्य पक्षत्वं व्यावर्तयितुमसंनिकृष्टग्रहणमित्यर्थः । तेच पक्षाभासाः प्रत्यक्षादिविरोधेन वार्तिककारैर्दर्शितास्तत्रैवावगन्तव्याः ॥

ताद्रूप्यतद्विपर्ययाभ्यामपरिच्छिन्न इत्येतदाक्षिपति—**नन्विति** । मतान्तरेण तावत्समाधत्ते—**अत इति** । एतस्मादेव नोद्यात् । एतद्भयादेव गृहीतग्राहित्वमेवानुमानस्याङ्गीकुर्वन्तीति भावः । एतत्पक्षे संनिकृष्टग्रहणस्य तर्हि का गतिरित्यत आह—**असंनिकृष्टेति** । गृहीतग्राहित्वादप्रामाण्यमिति चेत् नेत्याह—**तथापीति** । चोदयति—**अथेति** । समाधत्ते—**प्रत्युत्पन्नेति** । एतदेवोपपादयति—**संस्कारेति** । तदेतद्दूषयति—**सोऽयमिति** । यावद्व्याप्यं व्यापकसद्भावावगमे गृहीतग्राहित्वं स्यान्नत्वेवमस्तीत्यर्थः । **ननु** यावद्धूममग्निसद्भावावगमाभावे कथं व्याप्तिनिश्चयस्तत्राह—**महानसादिष्विति** । **नन्वे**तदयुक्तं, *भूयोदर्शनगम्यत्वाद्व्याप्तेः । यथाहुः—'भूयोदर्शनगम्या च व्याप्तिः *सामान्यधर्मयोः ॥ ज्ञायते भेदहानेन *क्वचिच्चापि विशेषयोः' । सत्यमेवम् । तथाप्येकत्रैव महानसादौ बहुशोऽवगताग्निसाहित्यस्य धूमस्य परिदृष्टेषु देशकालेषु वह्निनियमावगतिर्भवति एतावदेवानुमानाङ्गम्, तदनन्तरं यत्रयत्र धूमस्तत्रतत्राग्निरिति योऽवगमः सोऽप्यानुमानिक एव परोक्षरूपत्वात् । प्रत्यक्षत्वं तु संविद्विरुद्धं आपरोक्ष्याभावात्, नियमज्ञानस्य चानग्नौ धूमदर्शनं बाधकप्रत्ययो नचात्र तदस्ति, भविष्यती'ति बाधकप्रत्ययाशङ्का रजतेऽपि रजतज्ञाने समाना । वार्तिककृतोऽप्ययमेव श्लोकार्थोऽभिमतः—'ममत्वदृष्टिमात्रेण गमकः सहचारिण'इत्यग्रे भूयो दर्शनश्लोकार्थविवरणात् । **ननु** तत्र तत्र प्रत्यक्षादिना साहित्यस्यावगन्तुं-

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

मुपजीवति । अतस्तैः दृष्टैरपि व्यापकमधर्मत्वं नावधारयितुं शक्यमित्यर्थः । **भूयोदर्शनेति** । सत्यं नैकेन दर्शनेन गम्यते बहुभिस्तु दर्शनैर्बहुषु परमस्याग्निना साहित्यं गम्यते । तस्मिंश्चावगते व्यभिचारे चानवगते यथादृष्टेषु देशेषु धूमस्याग्निना व्याप्तिरवगता भवति नत्वन्यस्यैवं धूमस्य महानसेऽग्निसाहित्यमवगतदेशान्तरे चान्यस्यान्येनातः कस्य केन साहित्यं स्यात्तत्राह—**सामान्येति** । उभयभेदपरित्यागेन धूमत्वस्याग्नित्वेन पुनःपुनर्दर्शनमस्तीत्यर्थः । क्वचिच्च स्थायिनोरपि कृत्तिकारोहिण्योर्भूयोदर्शनमस्तीत्याह—**क्वचिदिति** । ननु भूयोभिरपीत्यादिर्न्यायरत्नमालाग्रन्थः । अत्रचेत्यादिर्न्यायरत्नमाला-

त्वात्। यथाचासंभवस्तथा न्यायरत्नमालायामेव प्रपञ्चितम् ॥ * ॥ दृष्टान्तधर्मिष्वेव बहुशोऽग्निसाहित्यमुपलब्धवतोऽनग्नौ च कचिदपि प्रयत्नेनान्विष्यमाणे धूममदृष्टवतः साध्यधर्मिष्वग्निमत्ताज्ञानमुत्पद्यते। आहच—'साहित्ये मितदेशत्वात्प्रसिद्धे वह्निधूमयोः॥ व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते' इति। 'ममत्वदृष्टिमात्रेण गमकः सहचारिणः' इति च। ततश्चानुमित्सता न सर्वेषां धूमवतामग्निमत्तावगन्तव्या। नापि सर्वत्रानग्नौ धूमस्याभावः। भूयोऽग्निसाहित्यं व्यभिचारादर्शनमित्येतावदेवानुमानार्थिभिरभ्यर्थनीयं नाधिकं किंचित्। यत्त्विदं यत्र यत्र धूमस्तत्रतत्राग्निरिति ज्ञानं तदनुमानमेवेति तत्रैवोक्तम्॥

गृहीतग्राहित्वखण्डनम्।

नन्वेवमप्यनेनैव सामान्यानुमानेन सर्वधूमवतामग्निमत्तावगतेति यत्पुनः पर्वतादिदेशविशेषेषु धूमदर्शनादग्न्यनुमानं तस्य गृहीतग्राहित्वं तदवस्थमेव स्यात्। मैवम्। सामान्यविशेषभेदात्। सामान्येन हि धूमवतामग्निमत्तावगता, पर्वतादेस्तु देशविशेषस्य स्वरूपमपि प्रागनवगतं, नतरामग्निमत्त्वम्। यस्त्ववगतमेवेति मन्यते, तेन पर्वतस्वरूपमेव तावदप्राप्तं पर्वतासमीपस्थैः केन प्रमाणेनावगतमिति वक्तव्यम्, न प्रत्यक्षेण, नान्येन प्रमाणेन। नचानवगतपर्वतस्तस्याग्निमत्तामवधारयितुमलम्। यदि चेदानींतनं पर्वतस्याग्निमत्त्वं प्रागेवावगतं स्यात् ततोऽग्न्यर्थी विनैव धूमदर्शनेनाग्नये पर्वतमारोहेत्। नह्यग्न्यर्थिनोऽवगतेऽग्नौ धूमदर्शनेनार्थः कश्चित्॥ * ॥ किंच धूमोपलक्षितस्य पर्वता-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

शक्यत्वात्कथं प्रमाणासंभवस्तत्राह—**यथेति**। **ननु** भूयोभिरपि दर्शनैस्तत्रतत्र साहित्यं गम्यते नतु सर्वत्र, दर्शनानां सर्वेषां स्वविषयपर्यवसानात्, अनन्तप्रत्यक्षगम्यो हि सर्वत्र सहभावः, स जीवद्भिर्दुर्लभः, विपक्षादर्शनादपि प्रत्यासन्नेष्वेव विपक्षेषु परं अभावोऽवगम्यते, सर्वविपक्षव्यावृत्तिस्तु दुर्लभैव, दृश्यादर्शनासिद्धेः तत्कथं नियमस्य सर्वदेशकालव्याप्तिरूपस्य भूयोदर्शनगम्यत्वम्। एवंच स्वयमेवाचार्येण शङ्कितम्। यथाहुः—'अन्वयोऽपि ह्यतिव्याप्यं व्यापकस्य न दृश्यते॥ अनन्तेन हि लभ्येत सप्रत्यक्षादिजन्मना'। तथा—'नाभावेन विपक्षाद्धि हेत्वभावः प्रतीयते' इति च। सर्वविपक्षाभावो न प्रतीयत इत्यर्थः। इति प्रमाणासंभवो न्यायरत्नमालायां प्रपञ्चित इत्यर्थः। हन्त तर्ह्यनुमानासंभव एव नेत्याह—**दृष्टान्तेति**। एतदपि न्यायरत्नमालायां प्रपञ्चितम्। तथाहि—अत्रच समर्थनमुक्तम्—'तत्रास्यादृष्टिमात्रेण गमकः सहचारिणः'इति। **तत्रेति**। विपक्ष इत्यर्थः। एतदुक्तं भवति—मा नाम सर्वविपक्षाभावो लिङ्गस्य सैत्सीत्, अदर्शनं तु विपक्षेषु लिङ्गस्यास्त्येव। तावता च सहचारी दृष्टो धूमादिः सहचारिणोऽग्न्यादेर्गमको भवति। यत्तु सहचारित्वमपि सर्वत्र दुर्लभं द्रष्टुमित्युक्तं तत्राप्युत्तरं—'दुर्लभं सहचारित्वं सर्वत्रेति यदुच्यते॥ द्रष्टुं मा नाम सर्वत्र द्वित्रयोर्दृश्यते ध्रुवम्॥' 'साहित्ये मितदेशत्वादि'ति च। अस्यार्थः—मा नाम सर्वत्र सहचारित्वं दर्शि, द्वित्रयोस्तु प्रदेशयोरीषत्करं दर्शनं, तावता चासति व्यभिचारदर्शने भवत्यनुमानमिति। तथा *कियद्भिः पुनः साहित्यदर्शनैरनुमानं को नामैतत्संचष्टे यावद्भिर्दृश्यते तावद्भिरेव, नतु संख्या वक्तुं शक्यते। येऽपि भूयोदर्शनसहायप्रत्यक्षगम्यं नियममाहुः, येऽपि सकृद्दर्शनेऽपि गृहीतनियमे उपाध्याशङ्कानिराकरणार्थं भूयोदर्शनमर्थयन्ते तेपि नैव संचक्षते तथा वयमपीति न कश्चिद्विशेष इति॥ **तत्रैवोक्तमिति**। न्यायरत्नमालायामेवेत्यर्थः। तथाहि आह—भवतु नामैवं यथादृष्टप्रदेशेषु साहित्यनियमादेवानुमानं, यस्त्वयं यत्रयत्र धूमस्तत्रतत्राग्निरिति भूयोदर्शनतोऽवगमः स कथम्। नह्यसौ नास्ति, नचाप्रमाणं, सर्वेषां सर्वदा दृष्टत्वेन जायमानत्वात्। तदयं कस्मिन्प्रमाणेऽन्तर्भवतीति वक्तव्यम्। उच्यते—आनुमानिकोऽयमवगमः ज्ञातसंबन्धस्योपजायमानत्वात्। परोक्षरूपत्वाच्च नैन्द्रियकः साक्षात्कारित्वाभावात् संविद्विरोधाच्च धूमस्य बहुषु देशकालेष्वग्निना साहित्यमुपलब्धवतो भवत्यनुमानम्। अन्येऽप्यतीतानागतव्यवहितविप्रकृष्टाः सर्वएव धूमवन्तोऽग्निमन्तः धूमवत्त्वात् परिदृश्यमानमहानसादिवत् इति, तेन यथालोकं प्रमाणसामग्र्यनुभवात् धर्मान्तरगतसाहित्यनियमादेव धर्म्यन्तरेऽनुमानमित्यनवद्यमिति॥

लब्धावसरः पुनर्गृहीतग्राहित्वं शङ्कते—**नन्विति**। उत्तरग्रन्थः स्पष्टार्थः। मतान्तरोक्तं गृहीतग्राहित्वमिदानीमनुमानस्य निराचष्टे—**यदिति**। **नचेति**। लिङ्गदर्शनमेवात्र प्रत्युत्पन्नं कारणम्। तस्य संबन्धिदर्शनस्य तत्र संस्कारोद्बोधे कारणत्वं क्लृप्तमित्यर्थः। तन्मतेनोपपादितं स्मृतित्वं निगमयति—**तदेवमिति**। संस्कारोद्बोधनद्वारा स्मृतिरूपवह्निज्ञानो-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

ग्रन्थः। उक्तम्। आचार्येणेति शेषः। तथा कियद्भिरित्यादिरपि न्यायरत्नमालाग्रन्थः। आहेत्यादिरपि न्यायरत्नमालाग्रन्थः।

द्दिदेशविशेषस्याग्निसंबन्धोऽवगत इति वदता धूमसंबन्धोऽप्यवगत इति वक्तव्यम् । नह्यज्ञातसंबन्धमुपलक्षणमुपलक्ष्यमुपलक्षयितुं क्षमम् ॥ * ॥ अथ देशमात्रस्य धूमेनोपलक्षणं न देशविशेषस्य, ततोऽग्निमत्त्वमपि तन्मात्रस्यावगतं न देशविशेषस्य, अतो लिङ्गलिङ्गिनोरविशेषात् 'लिङ्गस्यैव देशकालातिरेको न लिङ्गिनः' इति प्रलापमात्रम् । अपिच यत्राग्नीन्धनसंयोगस्तत्र धूम इत्यनेन धूमोऽप्यवगत एवेति न किंचिदप्यवगन्तव्यमवशिष्यते धूमज्ञानेनेत्यलं बालजल्पितेन ॥ * ॥ यदि चावगतमेवानुमानेनावगम्यते ततः स्मरणमेव प्रमुषिततद्भावमनुमानज्ञानं स्यात् । नच प्रत्युत्पन्नकारणजत्वादस्मृतित्वम्, तदसिद्धेः । संबन्धिदर्शनं हि सदृशदर्शनवत्संस्कारमुद्बोधयेत्, क्लृप्तं हि तत्र तस्य कारणत्वम्, संस्कारश्चोद्बोधितः स्मृतिं जनयतीत्यविवादम्, स्मृतेश्च प्रमोषः शुक्तिकारजतादिवेदनेषु क्लृप्त एव । तदेवं क्लृप्तेनैव मार्गेण धूमादग्निज्ञानोत्पत्तौ कोनामाक्लृप्तं लिङ्गस्य लिङ्गिज्ञानहेतुत्वं कल्पयेत् । कल्पनायां वा शुक्तावपि रजतवेदनस्यानुभवरूपत्वात्तदुपपत्तये दोषस्यैवानुभवहेतुत्वं कल्पनीयम् । अकल्पने त्वत्रापि स्मृतिप्रमोषादप्रामाण्यमेव स्यात् । तस्मादवश्यमगृहीतग्राहित्वमङ्गीकर्तव्यम् । नन्वग्निविशेषस्यागृहीतसंबन्धस्याननुमेयत्वात्सामान्यमेवानुमेयं तच्च प्रागवगतमेवेति कथमगृहीतग्राहित्वम् । यथाहुः—'विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ॥ अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः' इति । नैष दोषः । अवगतस्यापि सामान्यस्य देशान्तरकालान्तरसंबन्धस्यागृहीतस्यग्रहणादुपपन्नं प्रमेयत्वम् ॥ * ॥ इदंचापरमेकदेशिना वक्तव्यं—केन प्रमाणेन धूमदर्शनस्याग्निज्ञानहेतुत्वमवगम्यत इति । तदानन्तर्यादितिचेत् । न । तस्य संस्कारद्वारेणाप्युपपत्तेः । अनुभवरूपत्वमनुपपन्नमितिचेत् । न । स्मरणस्यापि तत्परामर्शप्रमोषेणानुभवाभिमानोपपत्तेः । वस्तुतोऽनुभवत्वं त्वसिद्धमेव प्रमाणाभावात् । नह्यग्निज्ञानस्यानुभवत्वे प्रत्यक्षमन्यद्वा प्रमाणमस्ति । अस्ति तु स्मृतिप्रमोषत्वे ॥ * ॥ अथ स्मृतिप्रमोषत्वे बाधकं स्यात् । नचाग्निज्ञानस्य तदस्तीत्यतो न स्मृतिप्रमोष इति चेत् । न । स्मृतिप्रमोषस्याप्यबाधदर्शनात् । मणिप्रभादर्शिनो मणिबुद्धिस्तावत्स्मृतिप्रमोष एव, अन्यथा विपरीतख्यातिप्रसङ्गात् । अथच प्रवृत्तस्य मणिलाभान्न बाधकमस्ति, तस्मात्स्मृतिरेवानुमानमित्यप्रामाण्यापत्तिः ॥ * ॥ कथंच गृहीतग्राहित्वमनुमानस्य, अत्यन्तापरिदृष्टे देशे काले चाग्निरनुमीयते स केन प्रमाणेन प्रागवगतः । न प्रत्यक्षेण । तस्य विद्यमानोपलम्भनत्वात् । नचान्येन केनचित् । किंचाग्निधूमयोर्मिथः संबन्धो देशकालानवच्छिन्नः प्रत्यक्षेणावगत इत्येतावदेव भवान्ब्रवीति, नचैतावता देशान्तरकालान्तरसंबन्धोऽग्नेरवगतो भवति, तस्मादगृहीतग्राह्येवानुमानम् ॥ * ॥ किमत्रागृहीतम्, अग्निसामान्यं तावद्गृहीतमेव, पर्वतोऽपि प्रत्यक्षेणावगतः, अग्निविशिष्टस्तु पर्वतो न केनाप्यवगत इति सोऽनुमेयो भविष्यति । तत्रच प्राप्ताप्राप्तविवेकेन संबन्धमात्रं प्रमेयमवशिष्यते । यथा 'दध्ना जुहोती'ति विशिष्टविषयोऽपि विधिर्विशेषणपरो भवति तथेहापि, विशिष्टविषयमेवानुमानम्, विशेषणविशेष्ययोस्तु प्राप्तत्वात् 'यजुर्युक्तं रथमध्वर्यवे ददाती'तिवत्संबन्धविषयं भवतीति ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

त्पत्तौ सत्यामित्यर्थः । **अकल्पन इति** । दोषस्यानुभवहेतुत्वाकल्पने सतीत्यर्थः । अत्रापि अनुमानेऽपि । लिङ्गस्य लिङ्गिज्ञानहेतुत्वाकल्पनात् स्मृतिप्रमोषादप्रामाण्यमेव स्यादित्यर्थः । चोदयति—**नन्विति** । प्रत्युत्पन्नकारणजत्वं दूषयितुमाह—**इदमिति** । **तस्येति** । आनन्तर्यस्येत्यर्थः । स्मरणस्यापि वस्तुतः स्मरणरूपस्यापि वह्निज्ञानस्येत्यर्थः । स्मृतिप्रमोषत्वपरिहारं शङ्कते—**अथेति** । नेदं रजतमितिवदत्र बाधकाभावान्न स्मृतिप्रमोषत्वमित्यर्थः । परिहरति—**नेति** । **अन्यथेति** । स्मृतिप्रमोषानङ्गीकार इत्यर्थः । अनुमानस्य गृहीतग्राहित्वपक्षे उपपादितं स्मृतित्वं निगमयति—**तस्मादिति** । इतश्च न गृहीतग्राहित्वमित्याह—**कथंचेति** । **तस्येति** । प्रत्यक्षस्येत्यर्थः । अनुमानस्यापि विद्यमानोपलम्भनत्वं वह्न्यादौ दृष्टमत इन्द्रियसंयोगेति विशेषणं देयम् । इतश्चैवमित्याह—**किंचेति** । स्वमतं निगमयति—**तस्मादिति** । एतदेवोपपादयितुमाह—**किमत्रेति** । दृष्टान्तद्वयं स्पष्टार्थम् ॥

अनुमानावयवनिरूपणम्।

यस्तु प्रतिपन्नमर्थं परमनुमानेन प्रतिपिपादयिषति तेन साधनं प्रयोक्तव्यम्। येन वाक्येन यस्यानुमानबुद्धिरुत्पद्यते तत्साधनमित्युच्यते।—'तच्च पञ्चतयं केचिद्द्वयमन्ये वयं त्रयम्॥ उदाहरणपर्यन्तं यद्वोदाहरणादिकम्'॥ * ॥ अक्षपादीयास्तावत्—प्रतिज्ञाहेतूदाहरणोपनयनिगमनैः पञ्चावयवं साधनं मन्यन्ते। अनित्यः शब्द इति प्रतिज्ञा, कृतकत्वादिति हेतुः, यत्कृतकं तदनित्यं दृष्टं यथा घटादीत्युदाहरणम्, कृतकश्च शब्द इत्युपनयः, तस्मादनित्य इति निगमनम्॥ * ॥ अयं त्वतिविस्तरो गतार्थ इति मन्वानाः सौगता द्व्यवयवमुदाहरणोपनयात्मकं मन्यन्ते। स्मर्यमाणनियमं हि लिङ्गं साध्यधर्मिण्यनुसंदधानस्य स्वयमेव लिङ्गबुद्धिरुत्पद्यते। तेन यत्कृतकं तदनित्यमिति कृतकत्वस्यानित्यत्वेन व्याप्तिनियमं स्मारयित्वा कृतकश्च शब्द इत्युपनयमात्रे कृते शब्दस्यानित्यत्वमवगम्यत एवेति कृतमवयवान्तरैः॥ * ॥ एवं त्वत्यन्तसाकाङ्क्षमेव वाक्यं क्लेशगम्यार्थं भवतीति त्र्यवयवमेव युक्तम्—अनित्यः शब्दः कृतकत्वात् यत्कृतकं तदनित्यं यथा घटादीत्येवमुदाहरणान्तं साधनं सर्वत्र वार्तिककारः प्रयुङ्क्ते। अथवा यत्कृतकं तदनित्यं यथा घटादि, कृतकश्च शब्दस्तस्मादनित्यः—इत्युदाहरणप्रभृति प्रयोक्तव्यम्। एवमप्यन्यूनाधिकमेव साधनम्। तथाच 'यत्कर्म तत्फलवत् होमोऽपि कर्म तेनापि तत्फलवता भवितव्य'मित्येव सर्वत्र भाष्यकारः प्रयुङ्क्ते। प्रतिज्ञादोषाः प्रत्यक्षविरोधादयोऽप्रसिद्धविशेषणत्वादयश्च वार्तिके प्रपञ्चिताः॥

हेत्वाभासनिरूपणम्।

असिद्धिः, अनैकान्तिकत्वं, बाधकत्वं, चेति त्रयो हेतुदोषाः। तत्रासिद्धिः पञ्चधा—बुद्धो धर्माधर्मवेदी सर्वज्ञत्वादिति स्वरूपासिद्धिः, नहि सर्वज्ञत्वस्वरूपं कचिदस्ति १। वह्निरदाहकः शीतत्वादिति

---

तत्र स्वार्थस्य स्वप्रतिपत्तिमात्रहेतुत्वेन शब्दप्रयोगानर्हत्वात्तदपेक्ष्य परार्थानुमानाभिप्रायेणाह—**यस्त्विति**। लोके साधनशब्दस्य हेतुमात्रे प्रयोगदर्शनात्तद्व्यावृत्त्यर्थं लक्षणं करोति—**येनेति**। श्लोकं व्याचष्टे—**अक्षपादीया इति**। उदाहरणादि अवयवप्रयोगे भाष्यकारसंमतिमाह—**तथाचेति**। अत्र वार्तिककारैः 'अग्नेर्देशविशिष्टत्वं चे*तत्पक्षस्य लक्षणमि'त्यादिना ग्रन्थेन देशविशिष्टत्व*मष्टधा विकल्प्य देशविशिष्टस्याग्नेरनुमेयत्वं दूषयित्वा 'तस्मात्*धर्मविशिष्टस्य धर्मिणः स्यात्प्रमेयता' इत्यनेन धर्मविशिष्टस्य धर्मिणोऽनुमेयत्वमुक्तम्। तथाच *'नच तस्यानुमेयत्वं विशेष्यश्चावधारितः॥ विशिष्टत्वेन चाज्ञानात्तन्मात्रस्यानुमेयता'इत्युक्तम्। तथान्यदपि प्रमेयं तद्वार्तिक एवावगन्तव्यम्। **प्रतिज्ञादोषा इति**। *'अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते॥ तेषाम*श्रावणत्वादि विरुद्धमनुमानतः'इत्यादिना ग्रन्थेन वार्तिके प्रपञ्चिता इत्यर्थः॥

**ननु** प्रत्यक्षादिविरोधेन रूपत्रयबाधात् हेतुदोष एवायं न प्रतिज्ञादोषः। सत्यम्। रूपत्रयबाध एवायं, पक्षविपर्ययद्वारेणतु पक्षदोष इत्युच्यते। *साध्यविकलत्वादय इव दृष्टान्तदोषा अप्रसिद्धविशेषणत्वादयः अप्रसिद्धविशेष्यत्वादयः अप्रसिद्धोभयत्वादिदोषाश्च निरालम्बनवादे वार्तिके प्रपञ्चिता इत्यर्थः। एवमसंनिकृष्टग्रहणनिरस्ताः प्रतिज्ञादोषादयो वार्तिक एव प्रपञ्चितत्वान्न प्रदर्शिताः। संप्रति हेत्वाभासान्प्रपञ्चयन् एकदेशदर्शनादित्यनेन दर्शनशब्देन निश्चयवाचिना निरस्तमसिद्धं तावद्दर्शयति

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**एतदिति**। देशविशिष्टस्याग्ने पक्षता न संभवतीत्यर्थः। **अष्टधेति**। 'योऽग्निः सोऽस्ति क्वचिद्देशे यो दृष्टो यत्र तत्र वा॥ अग्निः पूर्वानुभूतो वा देशमात्रेण संगतः॥' इत्यादिना ग्रन्थेनाष्टधा विकल्प्येत्यर्थः। **धर्मविशिष्टस्येति**। अग्निमानयं पर्वतो न पुनरयमग्निरेतद्देशवानित्यर्थः। **धर्मिण इति**। मत्वर्थश्च मत्वर्थेन व्याप्त इति तयोरेव गम्यगमकभावो नाग्निधूमयोरित्यर्थः। **नच तस्येति**। विशेषभूतस्याग्नेः विशेष्यः पर्वतः। **अग्राह्यता त्विति**। शब्दो न प्रतीयत **इति** प्रतिज्ञायां प्रत्यक्षविरोध **इत्यर्थः**। **अश्रावणत्वादीति**। अश्रावणः शब्द इति प्रतिज्ञायामनुमानविरोधः। **ननु प्रत्यक्ष**विरोध एवायं शब्दस्य श्रावणत्वात्। मैवम्। श्रावणत्वं नाम श्रोत्रग्राह्यत्वं सर्वशब्दधर्मो न श्रोत्रेणावसीयते बधिरादिगतान्वयव्यतिरेकलिङ्गावगम्यत्वात्। अतोऽनुमानविरोध एवेति रूपत्रयस्य धर्मत्वादित्रयस्य बाध इति। एते वक्ष्यमाणास्त्रयः संशयहेतवः। तानवाह—**साध्य इति**। अनेन सपक्षावृत्तितोक्ता। तदभावे वेत्यनेन विपक्षवृत्तिता। एवंच साधारणसंज्ञ एको

संबन्धासिद्धिः, शैत्यस्य वह्निसंबन्धाभावात् २ ॥ * ॥ नन्वेवं समुद्रवृद्धौ चन्द्रोदयस्य हेतुत्वं न स्यात्, उदयस्य समुद्रसंबन्धाभावात्, एककालसंबन्धादुभयोरदोषः। यदा तर्हि चन्द्रस्य नभोमध्ये स्थितिं दृष्ट्वा पञ्चदशनाडिकातिक्रान्ता समुद्रवृद्धिरनुमीयते तदा कथं, तत्रापि परम्परासंबन्धादुभयोरदोषः। नहि साक्षात्संबन्ध एव सर्वत्राश्रीयते, यद्धि येन साक्षात्प्रणाड्या वा केनापि संबन्धेन नियतं तत्तस्य तथैवानुमापकं भवतीति दर्शितमेवैतत्। तेन यादृशः संबन्धो हेतोर्वादिना दर्शितस्तदसिद्धौ दोषो भवति नान्यथा। गोशब्दः सास्नादिमद्वचनो गोशब्दत्वादिति व्यतिरेकासिद्धिः। नहि धर्मिव्यतिरेकेण गोशब्दत्वं नाम किंचिदस्ति ३। नित्यमाकाशमनवयवद्रव्यत्वादिति सौत्रान्तिकमाकाशाभाववादिनं प्रत्याश्रयासिद्धिः ४। वायुराकाशश्चानित्यो मूर्तत्वादिति व्याप्त्यसिद्धिः मूर्तत्वस्याकाशे व्याप्त्यभावादिति ५ ॥ * ॥ अनैकान्तिकत्वं द्विविधम्—सव्यभिचारं सप्रतिसाधनं च। नित्यः शब्दो मूर्तत्वादिति कर्मादिष्वनित्येष्वप्यमूर्तत्वस्य संभवाद्व्यभिचार्यमूर्तत्वम्। अप्रत्यक्षो वायुर्द्रव्यत्वे सत्यरूपत्वात् प्रत्यक्षो वायुर्महत्त्वे सति स्पर्शवत्त्वादिति संप्रतिसाधनत्वादुभयमप्यनिर्णायकं संशयहेतुः, अगृह्यमाणबलाबलत्वादुभयोः ॥ * ॥ कश्चित्त्वाह—न विरुद्धार्थे हेतुद्वयं तुल्यबलमेकत्र संभवति, तद्भावे वस्तुनि नित्यसंशयापत्तेः। द्रव्यत्वे सत्यरूपत्वस्यापरोक्षावभासाविरोधादप्रत्यक्षत्वमनुमापयितुमसामर्थ्याद्दौर्बल्यम्। स्पार्शनानुमानं त्वविरुद्धं बलवदिति न द्वयोस्तुल्यबलत्वम्, अतो नास्ति सप्रतिसाधनो हेतुरिति। स वक्तव्यः—सव्यभिचारोऽपि तर्हि न संशयहेतुः स्यान्नित्यसंशयापत्तिप्रसङ्गादेव ॥ * ॥ सत्यपि तस्य संशयहेतुत्वे प्रमाणान्तरेण निर्णयसंभवान्न नित्यसंशयापत्तिरिति चेत्, तर्हीहापि प्रमाणान्तरेण निर्णयसंभवाददोषः। तथा सति यत्प्रमाणान्तरविरुद्धं तस्य दुर्बलत्वादितरस्य बलीयस्त्वादतुल्यबलत्वमितिचेत्, केन चोक्तमुभयं तुल्यबलमिति, किंत्वगृह्यमाणबलाबलत्वमात्रम् ॥ * ॥ तथाहि—यः स्थाणुत्वं पुरुषत्वं वा नावधारयति तस्योर्ध्वत्वं संशयहेतुर्भवति, निर्णीते त्वन्यतरस्मिन्रूपे संशयो निवर्तते। तथा यो वायोरपरोक्षावभासं नावधारितवान् तस्य पृथिव्यादिषु प्रत्यक्षत्वव्याप्तं स्पर्शवत्त्वं व्योमादिषु चाप्रत्यक्षत्वव्याप्तमरूपत्वं वायावुपलभमानस्य भवत्येव संशयः। स तु प्रमणान्तरेण निर्णये सति निवर्तत इत्यास्तां तावत्। तस्मात्सप्रतिसाधनमपि सव्यभिचारवत्संशयहेतुः। तथाच भाष्यकारः—'यत्कर्म तत्फलवत् होमोऽपि कर्म तेनापि फलवता भवितव्य'मित्यस्य—'उपरते कर्मणि द्रव्याणां

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

—तत्रेति। वादिप्रतिवादिनोरेकस्य द्वयोर्वा संशयाज्ञानविपर्यया यस्मिन् सोऽसिद्ध इति भावः। अत्र चोदयति—नन्विति। परिहरति—एकेति। उदयसमुद्रयोः परस्परसंबन्धाभावेऽपि उदयवृद्ध्योरेककालसंबन्धात्तत्कालीनवृद्ध्यनुमापकत्वाददोष इत्यर्थः। पुनश्चोदयति—यदेति। तदा चन्द्रनभोमध्यस्थितेरतिक्रान्तसमुद्रवृद्धेश्चैककालत्वाभावादित्यर्थः। परिहरति—तत्रापीति। चन्द्रनभोमध्यस्थितिरप्यतिक्रान्तामुदयकालीनामेव वृद्धिमनुमापयति, चन्द्रद्वारा परंपरासंबन्धादित्यर्थः। दर्शितमिति। यस्य यादृशस्येत्यादिना। असिद्ध्यन्तरमुदाहरति—गोशब्द इति। ननु यः सास्नादिमद्वचनो न भवति स गोशब्दोऽपि न भवति। यथा घटशब्दादिरिति व्यतिरेकस्य सत्वान्नायं दोष इत्याशङ्क्य स्वाभिप्रेतं व्यतिरेकशब्दार्थं विवृणोति—नहीति। पक्षस्यैव हेतुत्वापत्तिरत्र दोषः। आश्रयासिद्धमुदाहरति—नित्यमिति। नचाश्रयस्यासिद्ध्या हेतोरसिद्धिः कथं स्यादित्युच्यते—'धर्मिधर्मतया गृह्यमाणस्यैव हि हेतुता॥ असिद्धे धर्मिणि कथं हेतोस्तद्धर्मता भवेत्॥' ज्ञातसंबन्धस्येत्यनेनानैकान्तिकविरुद्धयोः संशयविपर्ययजनकयोर्हेत्वाभासत्वं दर्शितं तत्रानैकान्तिकं तावदाह—अनैकान्तिकत्वमिति। सप्रतिसाधनत्वनिराकरणपरं मतान्तरं दूषयितुमनुवदति—कश्चिदिति। दूषयति—स इति। नित्यसंशयापादकत्वेन सप्रतिसाधननिराकरणे सव्यभिचारोऽपि निराकृतः स्यात्। संशयहेतुत्वाभावेऽनैकान्तिकत्वासंभवादिति भावः। सव्यभिचारिणि विशेषं शङ्कते—सत्यपीति। इष्टापत्त्यभिप्रायेण शङ्कते—तथेति। सप्रतिसाधने प्रमाणान्तरेण निर्णये सतीत्यर्थः। अतुल्यबलत्वे सप्रतिसाधनत्वाभाव इति भावः। अत्र भाष्यकारसंमतिमाह—तथाचेति। होमेनापि फलवता भवितव्यमित्यस्येति प्रतिसाधनं ब्रुवन् इति दर्शयतीति संबन्धः। प्रतिसाधन-

तत्संयोगानां च द्रव्यान्तरं फलं दृष्टमिति द्रव्यमपि फलवत्स्यात्'इति प्रतिसाधनं ब्रुवन्सप्रतिसाधनत्वमपि दूषणमिति दर्शयति, तस्मात्सोऽपि संशयहेतुः ॥ * ॥ असाधारणं तु गन्धवत्त्वं पृथिव्यां दृष्टं न क्वचिदपि बुद्धिमादधातीति न संशयहेतुः । साधारणं हि द्वयोः साध्यतदभावयोर्दृष्टत्वादुभयत्राप्यनवस्थया बुद्धिमादधत्संशयहेतुरिति युक्तम् । तथा विरुद्धार्थव्याप्तमपि हेतुद्वयमेकत्र दृश्यमानं स्वव्यापकमेकस्मिन्धर्मिण्युपसंहरदेकस्य विरुद्धोभयरूपधर्मत्वासंभवात्संशयं जनयति । नचैवं भावोऽसाधार[ण]स्य संभवतीति नायं संशयहेतुः ॥ * ॥ तथा बाधको नाम हेत्वाभासो यो विरुद्ध इति ता[र्कि]कैरभिधीयते । सच षड्विध इति केचित्, धर्मधर्म्युभयेषां स्वरूपस्य विशेषस्य च बाधात् । चतुर्धेति केचित् । उभयबाधस्य धर्मधर्मिबाधान्तर्गतत्वात् । एकधेत्यपरे—सर्वथा समीहितधर्मविपर्ययसाधनत्वात्, इदमेव च युक्तम्, अवान्तरभेदस्यानुपयोगात् । यद्यवश्यमवान्तरभेदो वक्तव्यस्तर्हि द्वैविध्यमेव वक्तव्यम्—धर्मस्वरूपबाधनं तद्विशेषबाधनं चेति । नहि धर्मितद्विशेषबाधकत्वं नाम हेतोर्दूषणं संभवतीति स्वयमेव वार्तिककारेण—'धर्मिस्वरूपबाधेन विरुद्धो योऽभिधीयत'इत्यादिना दर्शितम् ॥ * ॥ तथाहि द्रव्यातिरिक्तः समवाय इह प्रत्ययहेतुत्वात्संयोगवदिति,

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

स्वरूपं दर्शयति—**उपरत इति**। हस्तादिव्यापाररूपे कर्मण्युपरते द्रव्याणां तन्त्वादीनां तत्संयोगानां च पटादिरूपं फलं दृष्टमित्यर्थः । असाधारणस्यापि केचिदनैकान्तिकत्वमाहुस्तन्निराकरणार्थमाह—**असाधारणमिति** । एतस्य चानन्तरमेव वार्तिकविरोधं दर्शयिष्यामः । **ननु** साधारणस्यापि कथं संशयहेतुत्वम् । न तावन्नित्यानित्यबुद्धिद्वयोत्पादकत्वेन ताभ्यामेकस्याप्यनियतत्वात्—नियमलक्षणेन संबन्धेनैव तद्बुद्धिजनकत्वसंभवात् उभाभ्यां नियतत्वे चोभयत्र निश्चायकत्वापातात् । नापि कोटिद्वयसंस्पर्श्येकविज्ञानजनकत्वेन संशयहेतुत्वं अर्थसंदेहाभावेन तेनाप्यनियतत्वात्—स्वपक्षे वादिनोः संदेहाभावादित्याशङ्कां निराकर्तुमाह—**साधारणमिति** । प्रसङ्गात्सप्रतिसाधनस्यापि पूर्वोक्तसंशयहेतुत्वं स्मारयति—**तथेति** । अयमेव च विरुद्धाव्यभिचारी धर्म्यन्तरेषु विरुद्धार्थव्याप्तहेतुद्वयमेकत्रैकदेशिनि दृश्यमानं विरुद्धाव्यभिचारीत्युच्यते । निगमयति—**इतीति** । अत्र वार्तिककारैस्त्रयः संशयहेतवः—'तत्साध्ये तदभावे च द्वाभ्यां व्यावृत्त एव च ॥ द्वौ विरुद्धार्थसंबद्धौ यावेकत्रैकदेशिनी'इत्यनेन साधारणासाधारणविरुद्धाव्यभिचारिभेदात्त्रिविधा अनैकान्तिका दर्शिताः। तत्र साधारणोदाहरणानि प्रदर्श्यानन्तरं 'नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम्' इत्यसाधारणोदाहरणमुक्तम्। नन्वसाधारणधर्मोपलब्धौ संशय एव नोपजायत इत्याशङ्क्य '*निश्चयैकाङ्गवैकल्यादेष संशयकारण'मित्युक्ते ततो '*यत्राप्रत्यक्षता वायोररूपत्वेन साध्यते ॥ स्पर्शात्प्रत्यक्षता चासौ विरुद्धाव्यभिचारिता'इति । तदुदाहरणमुक्तम्—'स्वबुद्ध्या ग्रन्थकारस्य यद्धेत्वाभासवर्णनम् ॥ वार्तिकव्यतिरेकेण *किमर्थं तत्र वेद्म्यहम् ॥' बाधकाख्यं तृतीयं हेत्वाभासं दर्शयति—**तथेति** । प्रतिज्ञातार्थं बाधमानो बाधक एव विरुद्धशब्देनोच्यत इत्यर्थः । प्रतिज्ञातार्थस्य हेतुना बाधायां यो विरुद्धः स षड्विध इत्यर्थः । षड्विधत्वं विवृणोति—**धर्मेति** । धर्मधर्मिणोः स्वरूपबाधो विशेषबाधश्च । तथोभयस्वरूपबाध उभयविशेषबाधश्चेति षोढेत्यर्थः । प्रतिज्ञार्थबाधाविशेषादेक एव भेद इत्याह—**एक इति** । सर्वेष्वपि भेदेषु साध्यविपर्ययसाधनस्याविशेषादेक एव प्रकार इत्यर्थः । एते च धर्मस्वरूपबाधादयो भेदाः 'नित्यत्वे कृतकत्वस्य धर्मभेदाद्विरुद्धता' इत्यादिना ग्रन्थेन वार्तिककारैर्दर्शितास्तत्रैवावगन्तव्याः । ग्रन्थकारोऽपि किंचित्प्रपञ्चयिष्यति । द्वैविध्यमेवाह—**धर्मेति** । ननु चातुर्विध्यवादिमते धर्मिस्वरूपतद्विशेषबाधस्यापि दूषणत्वात्तदेव कथं नोदाहृतमत आह—**नहीति** । दूषयितुं तदुदाहरणं तावदाह—**तथाहीति** । द्रव्यातिरिक्त इत्युपलक्षम् । द्रव्यादिपञ्चकातिरिक्त इति साध्यो धर्मः । अत्र प्रयोगे धर्मिस्वरू-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

भेद इत्युक्तः द्वाभ्यां व्यावृत्त एवचेत्यसाधारणसंज्ञको यः । द्वौ विरुद्धार्थेत्यनेन विरुद्धाव्यभिचारिवक्ष्यमाणस्तृतीयः । **निश्चयैकाङ्गेति** । सपक्षाश्रयो विपक्षव्यतिरेकश्चेति द्वयं निश्चयाङ्गं तत्र साधारणेऽपि सपक्षव्यतिरेकाङ्गहीनस्तत्रापि वृत्तेः अतः संशयहेतुः । असाधारणस्तु विपक्षव्यतिरेके सत्यपि यत्रायं विकल इति निश्चयैकाङ्गवैकल्यात्सोऽपि संशयहेतुरित्यर्थः । प्रयोगश्च—असाधारणः संशयहेतुः निश्चयैकाङ्गवैकल्यात्साधारणवदिति । विरुद्धाव्यभिचारिणं लक्षयति—**यत्रेति** । वायुरप्रत्यक्षः द्रव्यत्वे सत्यरूपत्वात् प्रत्यक्षमहत्त्वे सति स्पर्शवत्त्वात् । लक्षणं त्वनन्तरोक्तमेवेति । किमर्थं किंप्रयोजनकमित्यर्थः । धर्मिस्वरूपबाधेनेत्यादिवार्तिकं टीकान्तरस्थं एतट्टीकायामभावात्प्रत्युत इह प्रत्ययहेतुत्वादिना तयोर्दूषण-

अत्रेह प्रत्ययहेतुत्वमसमवायत्वेन भेदेन च व्याप्तं संयोगे दृष्टम्, समवायस्यासमवायत्वं भेदं चापादयत् समवायधर्मिस्वरूपं तद्विशेषणं चैकत्वं बाधत इत्युदाहृतम् । तदयुक्तम् । इह प्रत्ययहेतुत्वं हि समवाये धर्मिणि दृष्टं न वा, यद्यदृष्टं ततोऽसिद्धत्वान्न कस्यचिदपि साधकं बाधकं वा भवति, यदि दृष्टं तत्कथं तत्रैव दृश्यमानं तस्यैव बाधनं कुर्यात्, विरोधे हि सति बाधेत, नच तद्धर्मतया दृश्यमानस्य कथंचिदपि तेन विरोधः संभवति ॥

समवायत्वबाधे प्रश्नः ।

**ननु** समवायत्वं बाधत इत्युक्तम् । यदि समवायत्वं नाम समवायधर्मिणोऽतिरिक्तं तद्बाधेऽपि न धर्मिस्वरूपं बाधितं स्यात् । अथ धर्म्येव तन्न तस्य बाधकं संभवतीत्युक्तम् । तस्मान्न धर्मिस्वरूपबाधनं नाम हेतुदोषः कचित्संभवति, सर्वत्रादृश्यमानस्यासत्त्वात् दृश्यमानस्य चाविरोधात् । धर्मिविशेषणस्यैकत्वस्य कामं संभवति बाधो नत्वेतद्दूषणम् । यदि खल्विह प्रत्ययहेतुत्वं समवायस्यैकत्वं विरुन्ध्यात् ततो द्रव्यातिरेकं साधयतः किं हीयते । नहि द्रव्यातिरेकसाधनकृतमेकत्वसाधनं, यतस्तस्य दूषणत्वेन संभाव्येत । तस्माद्धर्मस्वरूपस्य तद्विशेषस्य च बाधनाद्द्विविधमेव बाधकम् । तत्र 'नित्यः शब्दः कृतकत्वादिति कृतकत्वमनित्यत्वेन व्याप्तत्वान्नित्यस्वरूपमेव बाधते ॥ * ॥ यस्तु— स्वरूपमेव शब्दानामभिधेयं नार्थान्तरमित्येतमर्थं प्रतिपिपादयिषुस्तत्सिद्ध्यर्थमेवं प्रयुङ्क्ते—अगृहीतसंबन्धावस्थोऽपि शब्दः स्वाभिधेयमर्थं प्रतिपादयति विभक्तिमत्त्वात् गृहीतसंबन्धवदिति, तस्य धर्मविशेषविपर्ययसाधनो हेतुः, पश्चाद्धि संबन्धग्रहणादस्वरूपप्रतिपादनं दृष्टमिति तद्वदेव प्रागस्वरूपार्थत्वं तेनैव हेतुना प्रसज्येत, स्वरूपप्रतिपादने च बाधितेऽर्थप्रतिपादनमपि तद्धर्मस्वरूपं बाधितमेव । नहि प्राक् संबन्धग्रहादर्थान्तरप्रतिपत्तिः शक्यते वक्तुं प्रतीतिविरोधादेव ॥ * ॥ सर्वत्र यो हेतुर्यादृग्विशेषविशिष्टेन साध्येन दृष्टान्तधर्मिषु नियतः स तादृग्विशेषविशिष्टस्य साध्यस्य धर्मिणि प्रमाणान्तरविरोधात्साधनासंभवेन विपरीतं विशेषं नियमबलात्स्वयमेव बाधमानो निर्विशेषस्य च

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

पविपरीतसाधनोऽयं हेतुः । तथा संयोगे प्रतिद्रव्यं भेदेन व्याप्तमिह प्रत्ययहेतुत्वं दृष्टं समवायस्यापि भेदमापादयत् । तस्य विशेषं सत्तावदेकत्वं वैशेषिकाभिमतं बाधते, अतो विशेषविरुद्धोऽयं हेतुरिति समस्ततात्पर्यार्थः । दूषयति—**तदिति** । नन्वसमवायत्वेन व्याप्तत्वात्समवायस्वरूपं बाधते नेत्याह—**विरोधे हीति** । आश्रयाश्रयिणोर्विरोधासंभवादित्यर्थः ॥

धर्मबाधं शङ्कते—**नन्विति** । अभेदाभिप्रायेण समाधत्ते—**यदीति** । दूषणमुपसंहरति—**तस्मादिति** । उक्तमेवार्थं स्मारयति—**सर्वत्रेति** । कथं तर्हि वार्तिकस्य दूषणोदाहरणत्वं तत्राह—**धर्मीति** । तद्बाधस्य कथंचिद्धर्मिबाधे पर्यवसानाद्धुदाहरणमिति भावः । **नन्विति** । वार्तिककारस्याप्येकीयमतेनोपन्यासाददूषणत्वमभिप्रेतमिति भावः । अदूषणत्वमेवोपपादयति—**यदीति** । नन्वेतत्साधयतः स्वाभिप्रेतं समवायैकत्वं हीयत इति चेत्तत्राह—**नहीति** । पूर्वोक्तं स्वाभिमतं द्वैविध्यमुपसंहरति—**तस्मादिति** । आद्यमुदाहरति—**तत्रेति** । धर्मविशेषबाधमुदाहरति-—**यस्त्विति** । पूर्वेण संबन्धग्रहणादर्थवत्ता सिध्यन्ती स्वरूपेण वार्थेन सिद्ध्यति न स्वरूपातिरिक्तमर्थमालम्बत इत्यभिप्रायेण यः प्रयुङ्क्ते तं प्रत्युच्यते । धर्मविशेषविपर्ययसाधनोऽयं हेतुः । तथाहि संबन्धग्रहणानन्तरं स्वरूपातिरिक्तार्थबोधनेन सह विभक्तिमत्त्वस्य व्याप्तिदर्शनात्तद्दृष्टान्तानुसारेण प्रागपि स्वरूपातिरिक्तार्थबोधनमेव साधयेत् प्रतिप्रयोगश्च प्राक्संबन्धग्रहणान्न स्वरूपार्थत्वं विभक्तिमत्त्वात् पश्चाद्वदिति समस्तार्थः । एतदेवोपपादयति—**पश्चादिति** ॥

एतदुपपादनार्थं सामान्यन्यायमाह—**सर्वत्रेति** । तादृशस्य साध्यस्य पक्षे साधनासंभवे सति साध्यमेव न साधयतीत्यग्रिमेणान्वयः । असंभवे कारणं प्रमाणान्तरविरोधादिति । साध्यासाधने हेतुः निर्विशेषस्येत्यादिः । निर्विशेषत्वमेव कथमित्याकाङ्क्षायां स्वयमेव बाधमान इति हेतुगर्भं विशेषणम् । यस्मा*त्तद्विपरीतं साध्यगतं विशेषमेव बाधते तस्मान्निर्विशेषमेव साध्यमित्यर्थः । बाधकत्वे हेतुः—**नियमबलादिति** । अन्येन सह नियतत्वात्तद्विपरीतं बाधत इत्यर्थः । अत्र

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

स्वोपपादनात् । **तद्विपरीतमिति** । येन सह व्याप्तिर्गृहीता तद्विपरीतमित्यर्थः । **हेत्वाभासत्वेनेति** । नायं हेत्वा-

**साध्यस्यासंभवात्साध्यमेव न साधयति। यथा शरीरिचेतनकर्तृकत्वेन घटादिषु व्याप्तमुत्पत्तिमत्त्वं देहाङ्कुरादीनां चेतनकर्तृकत्वसाधनायोच्यमानं शरीरिणश्चेतनस्यानुपलब्धिविरोधेन साधयितुमशक्यत्वादशरीरस्य तेनैव हेतुना घटादिवन्निवारणाद्द्विधाद्वयशून्यस्य चेतनस्यासंभवाच्चेतनकर्तृकत्वमेवाङ्कुरादीनां न साधयति। तेन धर्मविशेषविरोधो हेतोः साध्यसिद्धिमेव निरुणद्धीति भवति दूषणम्। धर्मिविशेषविरोधस्तु साध्याविरोधित्वान्न दूषणं, प्रत्युत सिद्धान्तान्तरदूषणत्वात्प्रतिवादिन एव निग्रहस्थानत्वाद्दूषणं तद्भवति न वादिनः॥ * ॥ यस्तु दृष्टान्तपरिदृष्टसाध्यविशेषविरोधसंभवेऽपि तद्रहितं साध्यमात्रं हेतुः साधयत्येव, तच्च विशेषान्तरमाक्षिप्य सिद्ध्यतीति वदति, तस्य—उष्णाग्निनियतस्तृणादिविकारो हिमे दृश्यमानः शैत्यप्रत्यक्षविरोधादौष्ण्यासंभवेऽप्यनुष्णमेवाग्निं साधयेत्, तस्माद्धर्मिविशेषविपर्ययसाधनत्वं हेतोरदूषणमेव॥**

अनुमाने दृष्टान्तनिरूपणम्।

**उदाहरणं द्विविधम्—साधर्म्योदाहरणं वैधर्म्योदाहरणं च। साधर्म्यं—लिङ्गमुद्दिश्य लिङ्गिन उपादानम्—यो यो धूमवान् महानसादिः स सर्वोऽग्निमान् दृष्ट इति, सम्यगुक्ते च साधर्म्ये न वैधर्म्यं वक्तव्यं गतार्थत्वात्। यदा वक्तव्यमापतति तदा लिङ्ग्यभावमुद्दिश्य लिङ्गाभावोपादानम्—**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दृष्टान्तमाह—**यथेति**। उत्पत्तिमत्त्वं देहाङ्कुरादीनां चेतनकर्तृकत्वसाधनायोच्यमानं चेतनकर्तृकत्वमेव न साधयतीति संबन्धः। कथं न साधयतीत्यत्राह—**विधेति**। शरीर्यशरीरो वा द्विविधश्चेतनो दृष्टः अङ्कुरादिर्नाशरीरकर्तृकः। उत्पत्तिमत्त्वाद्धटादिवदिति निवारणादित्यर्थः। फलितमाह—**तेनेति**। ततः किमत आह—**इतीति**। धर्मो समवायस्तद्विशेष एकत्वं तद्बाधस्य साध्याविरोधित्वं पूर्वोक्तमेवानुसंधेयम्। **प्रत्युतेति**। द्रव्यातिरिक्तः समवाय इत्येवं साधयतो वादिनो नैतद्दूषणं साध्यसिद्धेरप्रत्यूहत्वात् प्रत्युत विशेषबाधं *हेत्वाभासत्वेनोद्भावयतः प्रतिवादिन एव दूषणं भवति निग्रहस्थानत्वात् [निरनुयोज्यानुयोगनिग्रहस्थानापत्तेः। हेत्वाभासस्यापि निग्रहस्थानत्वादित्यर्थः]। मतान्तरमनुवदति—**यस्त्विति**। इतिवदतीत्यनेन संबन्धः। तद्रहितं महानसीयत्वादिविशेषरहितम्। कथं तर्हि पर्वतीयवह्निसिद्धिरत आह—**तच्चेति**। सामान्यस्य विशेषमन्तरेणासिद्धेर्महानसीयत्वादिविशेषस्य बाधात् पर्वतीयत्वादिविशेषान्तरमाक्षिप्य सिद्ध्यतीत्यर्थः। तदेतद्दूषयति—**तस्येति**। हेतुदूषणमुपसंहरति—**तस्मादिति**। हेत्वाभासान्प्रदर्श्य संप्रति ज्ञातसंबन्धपदव्यावर्तितानेव दृष्टान्तदोषान्दर्शयितुं दृष्टान्तवचनं प्रस्तौति—**उदाहरणमिति**। साधनस्य साध्येन सह व्याप्तिप्रतिपादनाय दृष्टान्तद्वयं प्रयोक्तव्यमित्यर्थः। साधर्म्यदृष्टान्तं लक्षयति—**साधर्म्यमिति**। यदुद्देशेन यदुपादीयते तस्य तेन व्याप्तिः कथिता भवतीति भावः। उद्दिश्यमानं च यद्वृत्तयुक्तं प्रथमं प्रयोक्तव्यं, उपादीयमानं च तद्वृत्तैवकाराभ्यां पश्चात्। यथाहुः—'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देशलक्षणम्॥ तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्'। **ननु** यथा तथा वा रचितं वाक्यं वक्तुर्विवक्षितं प्रतिपादयत्येव किं रचनाविशेषेणेतिचेत्। न। शब्दानां स्वशक्त्यनुसारेणार्थावबोधकत्वात्। नहि शब्दा वक्तुरभिप्रायमनुरुध्यन्ते अतोऽवश्यमादर्तव्य एव रचनादिविशेषः। यत्र यत्र धूमस्तत्र तत्र वह्निरित्युक्ते साधर्म्यमात्रादेवाग्निना धूमस्य व्याप्तिरवगता किं वैधर्म्येणेत्यभिप्रायवानाह—**सम्यगिति**। अर्थाद्वैधर्म्यस्य ज्ञातुं शक्यत्वादिति भावः। अथवा सम्यक्प्रयुक्ते साधर्म्ये यस्तु भ्रान्त्या विपक्षव्यतिरेकं न प्रतिपद्यते, अवगतेऽपि वा सपक्षान्वये विपक्षव्यतिरेकाकाङ्क्षायां साधर्म्यं नापेक्षते तदा विपक्षव्यतिरेकसिद्धये वैधर्म्यमपि प्रयोक्तव्यमित्यभिप्रायेणाह—**यदेति**। कथंच तत्प्रयोक्तव्यमत आह—**लिङ्ग्यभावमिति**। तदुक्तम्—'व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते॥ तयोरभावयोस्तस्माद्विपरीतः प्रतीयते॥' **ननु** तदा वैधर्म्यादेव व्यतिरेकसिद्धेः किं साधर्म्येण। मैवम्। असाधारणे विपक्षव्यतिरेकदर्शनात् तन्निवृत्तये सपक्षान्वयप्रतिपत्तिफलत्वेन साधर्म्योपयोगात्। वस्तुतस्तु *साधारणेऽन्वयदर्शनादसाधारणे च व्यतिरेकदर्शनादुभयनिवृत्त्यर्थं द्वयमप्यपेक्षितव्यम्। **ननु** यथा शुक्लः पट इत्युक्ते नीलादिव्यवच्छेदेनैव शुक्लादीनां विशेषणत्वम्, उपादीयमानस्य

---

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

भासः साध्यसाधकत्वात्। अतस्तत्वेनोद्भावनं निग्रहस्थानापादकमिति भावः। **साधारण इति**। साधारणानैकान्तिके असाधारणानैकान्तिके चेत्यर्थः। तथा नित्यः शब्दोऽमूर्तत्वजातिवदिति दृष्टे नित्यपक्षाश्रये यदनित्यं तन्मूर्तं यथा परमा-

यत्राग्निर्नास्ति तत्र धूमोऽपि नास्ति यथा तोयादिष्विति । यत्र भावेन भावः साध्यते तत्रैव विधिरूपं साधर्म्यं तत्प्रतिषेधरूपं च वैधर्म्यम् । यत्र तु मेघाभावादिना वृष्ट्याद्यभावः साध्यते तत्र साधर्म्यमेव प्रतिषेधरूपं यथा—यदा यत्र मेघोत्पत्तिर्नास्ति तदा तत्र वृष्टिर्नास्तीति । वैधर्म्यं तु विधिरूपम्—यत्र वृष्टिरस्ति तत्र मेघोत्पत्तिरस्तीति । तेन यद्भिक्षुणोक्तं—'प्रसज्यप्रतिषेधात्मकमेव वैधर्म्यम्' इति तदनादरणीयम् ॥ * ॥ साधर्म्याभासाश्च साध्यविकलत्वादयः, वैधर्म्याभासाश्च साध्याभाववैकल्यादयो वार्तिक एव द्रष्टव्या इति ॥

अनुमाने प्रभाकरानुवादः ।

'तत्तु द्विविध'मिति दृष्टस्वलक्षणविषयमेवानुमानमिति मन्वानान्निराकर्तुमदृष्टस्वलक्षणविषयमप्यनुमानं क्रियादिविषयमस्तीति दर्शयितुं द्वैविध्याभिधानम् । नहि क्रिया स्वलक्षणं प्रत्यक्षेण कदाचिद्गृह्यते पूर्वोत्तरदेशसंयोगविभागमात्रस्य प्रत्यक्षेण ग्रहणम्, याभ्यामेवागन्तुकाभ्यामागन्तुकं कारणमनुमीयते, तच्च क्रियेत्युच्यते ॥ * ॥ ननु द्रव्यमेव कारणं स्यात्, न । तस्य प्रागपि सद्भावात् । ननु क्षणान्तरेऽन्यद्द्रव्यं सर्वसंस्काराणां क्षणिकत्वात्, सादृश्यात्तु प्रत्यभिज्ञानम् । तद्यदा समानदेशे पूर्वपूर्वमुत्तरोत्तरमारभते तदा तिष्ठतीति लक्ष्यते । यदा त्वनन्तरदेशे पूर्वपूर्वमुत्तरोत्तरमारभते तदा गच्छतीति लक्ष्यते । दीपगमनवच्छायागमनवच्च सदृशापरापरक्षणानामुत्तरोत्तरदेशप्रारब्धानां गमनावभासनिमित्तत्वात्कृतं क्रियया । किंचानुत्पन्नस्य क्षणस्य क्रियाश्रयत्वायोगात्, उत्पन्नस्य च

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रसक्तिविरोधिव्यवच्छेदपरत्वात् । तथा पर्वतोऽग्निमानित्युक्तेऽग्न्यभावस्यैव निवृत्तिर्भविष्यति नान्यस्येति न वैधर्म्यमपि प्रयोक्तव्यम् । मैवम् । शुक्लादिवदत्र वह्नेरनिश्चितत्वात् निश्चितत्वे वा साध्यत्वानुपपत्तिः, अतस्तन्निश्चयार्थं वैधर्म्यस्याप्युपयोग इति । नन्वभावसाधनकेनैवंरूपतास्तीत्याशङ्क्याह—**यत्रेति** । ततश्चैतदपि निरस्तमित्याह—**तेनेति** । विधिरूपस्यापि वैधर्म्यस्य दर्शनादित्यर्थः । **ननु** हेत्वाभासवदुदाहरणलक्षणरहिता दृष्टान्ताभासा अप्यप्रयोगाय प्रदर्शनीयास्तत्राह—**साधर्म्याभासाश्चेति** । नित्यो ध्वनिरमूर्तत्वात्कर्मवत्परमाणुवदित्यादि वार्तिके द्रष्टव्याः । अनतिप्रयोजनत्वाद्धेत्वाभासेऽन्तर्भूतत्वाच्च न मयात्र प्रदर्शिता इति भावः । उक्तंचान्यत्र—'साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्तिते ॥ असाधारणता हेतोस्तस्मिन्साधनवर्जिते' इत्यादि । नित्यः शब्दोऽमूर्तत्वात्कर्मवदिति प्रयोगे साध्यविकलो दृष्टान्तः परमाणुवदिति, साधनविकलः घटवदित्युभयविकलः । आकाशस्य च दृष्टान्तत्वेतत्रामूर्तत्वनित्यत्वे सत्यपि कर्मादौ नित्यत्वाभावेऽप्यमूर्तत्वदर्शनाद्व्याप्तिशून्यतेत्यादि तत्रैव द्रष्टव्यम् । तथा—'यत्राप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥ यदनित्यं तु तन्मूर्तमणुव*द्बुद्धिवत्खवत्' इत्यादिना वैधर्म्याभासा दर्शितास्तत्रैवावगन्तव्याः ॥

अत्र भाष्यम्—'तत्तु द्विविधं प्रत्यक्षतो दृष्टसंबन्धं सामान्यतो दृष्टसंबन्धं च । प्रत्यक्षतो दृष्टसंबन्धं यथा—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतो दृष्टसंबन्धं यथा—देवदत्तस्य *गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्यगतिस्मरणमि'ति । अत्र यथैव धूमत्वाग्नित्वयोः प्रत्यक्षत्वेन महानसादौ *प्रत्यक्षो दृष्टः संबन्धस्तथैव देवदत्तादौ चलतीति प्रत्यक्षालम्बनत्वेन गमनस्य प्रत्यक्षत्वात् देशान्तरप्राप्त्या सह प्रत्यक्षदृष्ट एव संबन्ध इति द्वैविध्यवचनमनुपपन्नम् । आदित्येऽनुमेयत्वादप्रत्यक्षतेति चेत् एतदपि पर्वतादावग्नित्वस्याप्यनुमेयत्वात्तुल्यम् । अथ देवदत्तादौ गतिप्राप्त्योः सामान्यतः प्रत्यक्षेण संबन्धमुपलभ्यादित्ये देशान्तरप्राप्तिदर्शनेन गत्यनुमानं सामान्यतो दृष्टसंबन्धमित्युच्यते एतदप्यग्निधूमयोर्महानसादौ सामान्यत एव संबन्धदर्शनादविशिष्टमिति द्वैविध्याभाव इत्याशङ्कां *निराकर्तुमाह—**तत्तु द्विविधमिति** । ननु चलतीति प्रत्ययात् प्रत्यक्षमेव क्रियास्वरूपं नेत्याह—**नहीति** । चलतीति प्रत्ययस्य संयोगविभागमात्रालम्बनत्वमिति भावः । अन्यथासिद्धिं शङ्कते—**नन्विति** । तदाधारभूतं द्रव्यमेव संयोगविभागकारणं नतु तदतिरिक्ता क्रियेत्यर्थः । प्रसिद्धक्लृप्तकारणपरित्यागेनाप्रसिद्धकल्पना निष्प्रमाणिकेति भावः । परिहरति—**नेति** । प्रागपि सद्भावान्नागन्तुकं कारणद्रव्यमि-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

णुरिति साध्याभावविकलो वैधर्म्यदृष्टान्ताभासः । **बुद्धिवदिति** । साधनाभावविकलः । आकाशवदित्युभयाभावविकल इति । **गतीति** । गतिस्मरणमित्यनेन कर्मणो नित्यानुमेयत्वं निरवद्यमिति शङ्कितुरभिप्रायः । **प्रत्यक्ष इति** । अयं च प्रत्यक्षो

विनाशग्रस्तत्वात्कथं क्रियारम्भकत्वम्। यथाहुः—'क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया' इति। तदिदं शब्दाधिकरणे निराकरिष्यामः। ततः स्थिरत्वे सति तन्मात्रेणानुपपत्तेः क्रियानुमानं युक्तमिति। न युक्तम्। कार्यं हि कारणमात्रमपेक्षते तच्चेह दृष्टमेवास्ति। प्रयत्नविशेषानन्तरं हि शरीरे देशसंयोगविभागाख्यं फलमुत्पद्यमानमुपलभ्यते ततः स एव निमित्तम्। तद्वदात्मशरीरसंयोगश्चासमवायिशरीरं च समवायीति किमत्रादृष्टकारणानुमानेन॥

परमुखेन प्रभाकरखण्डनम्।

नन्वसमवायिकारणभूतस्य संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यं नान्यत्र, तन्तुसंयोगानामिव स्वाश्रयेषु तन्तुषु पटः, तन्तुतुरीसंयोगस्य वा पटतुरीसंयोगः। प्रयत्नवदात्मसंयोगस्त्वनेवंविधे व्योम्नि कथं संयोगमारभते। अतः कारणान्तरं कल्पनीयमितिचेत्। न। तन्तुसंयोगः स्वाश्रय एव पटमारभते पटस्य बहुतन्तुव्यापित्वात्, संयोगानां च द्वयोर्द्वयोरेव वृत्तेः। किंच शरज्यासंयोगान्नोदनाख्याद्युगपदेव शरे शरावयवेषु च सर्वेष्वन्तर्बहिर्वर्तिषु बहूनिकर्माण्युत्पद्यन्ते, तत्र येषामवयवानां ज्यासंयोगो नास्ति तेष्वस्वाश्रयेषु स्वाश्रयासमवेतेषु च ज्यासंयोगः कर्मारभत इति व्यभिचारः। नहि ते संयोगाश्रयीभूते शरे समवेताः शरस्यैव तेषु समवायात्॥ * ॥ किंच प्रयत्नवदात्मसंयोगानन्तरं युगपदेव हस्ते प्रयत्नवदात्मसंयुक्ते तत्संयुक्तेचाङ्गदेऽङ्गुलीयके च तल्लग्ने मणौ च कर्मोत्पद्यते, अथैवमादिषु न चोदनात् न प्रयत्नवदात्मसंयोगाद्वा कर्मोत्पत्तिः, किंतु संयुक्तसंयोगादित्युच्यते, ज्यासंयुक्तावयवसंयोगात्तदनन्तरावयवे तत्संयोगाच्च तदनन्तरे। तथात्मसंयोगाद्धस्ते, तत्संयोगादङ्गदे, तत्संयोगान्मणावपीति। एवं तर्ह्यत्रापि शक्यते वक्तुम्। प्रयत्नवदात्मसंयुक्तशरीराकाशसंयोगाच्छरी-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

त्यथः। आश्रयस्य समवायिकारणत्वेऽप्यसमवायिकारणं क्रिया भविष्यतीति भावः। क्षणिकत्वाभ्युपगमेन द्रव्यस्याप्यागन्तुकत्वमिति शङ्कते—**नन्विति**। ननु द्रव्याणामेकरूपत्वे कथं तिष्ठति चलतीति प्रतीतिवैलक्षण्यमत आह—**तद्यदेति**। शङ्कानिराकरणं प्रतिजानीते—**तदिदमिति**। स्थिरत्वे वा कथं क्रियासिद्धिरत आह—**तत इति**। आश्रयद्रव्यमात्रेण कादाचित्कयोः संयोगविभागयोरनुपपत्तेरित्यर्थः। क्रियानुमानं चैवम्—विमतौ संयोगविभागौ प्रत्युत्पन्नकारणजौ कादाचित्ककार्यत्वात् दारुद्वैधीभाववत्। स हि कुठारदारुसंयोगविभागजन्यः। पक्षे तु प्रक्रियैव प्रत्युत्पन्नकारणमिति तदेतद्दूषयति—**न युक्तमिति**। स एव प्रयत्नविशेष एव दृष्टं कारणमित्यर्थः। एतेनार्थान्तरत्वमनुमाने दर्शितम्। असमवायिकारणं कर्मेति चेत् तत्राह—**तद्वदिति**॥

*बहिरङ्गत्वादकारणत्वं शङ्कते—**नन्विति**। पटः कार्यमिति संबन्धः। अनेवंविधे अस्वाश्रये अस्वाश्रयसमवेते चेत्यर्थः। कारणान्तरं कर्माख्यं, अतो न प्रयत्नवदात्मसंयोगेनार्थान्तरत्वमिति भावः। एवंच सति *यदेकार्थसमवायिनौ संयोगविभागौ यस्मिंश्च सति *नियमेन तदुत्पत्तिस्तत्कर्मेति नार्थान्तरत्वमित्युक्तं भवति। परिहरति—**नेति**। कथंच न स्वाश्रय एव पटमारभतेऽत आह—**पटस्येति**। संयोगस्य स्वाश्रये तन्तुद्वये बहुतरतन्त्वाश्रितपटानारम्भकत्वमिति भावः। इतश्चैवमित्याह—**किंचेति**। तेषु अवयवेषु अस्वाश्रयेषु ज्यासंयोगानाश्रयेषु। स्वाश्रयासमवेतत्वं विवृणोति—**नहीति**। ते अवयवाः। इतोप्येवमित्याह—**किंचेति**। यदि संयुक्तसंयोगात्तत्रोपपत्तिस्तर्ह्यत्रापि तथेत्याह—**एवमिति**। एतेन अनेवंविधे व्योम्नि कथं संयोगमारभत इति यदुक्तं तत्परिहृतम्। इतोऽपि न कर्मकल्पनेत्याह—**किंचेति**। आकाशे परिस्पन्दासंभवात् विहंगस्थेनानेन तत्र संयोगविभागौ वाच्यौ। तच्च न संभवतीत्याह—**नहीति**। विहंगे तु क्रियायाः प्रत्यक्षत्वादेव नानुमानमिति भावः। अज्ञाताशयः पृच्छति—**किमिति**। आशयमुद्घाटयति—**अस्तीति**। अत्र चोदयति—**नन्विति**। परिहरति—**दृश्यत इति**। दूषणमुपसंहरति—**तस्मादिति**। संप्रति यथावार्तिकं समाधत्ते—**किंत्विति**। विषयप्रपञ्चार्थं भाष्यमिति पूर्वेणान्वयः। यत्र विशेषयोरेव प्रत्यक्षेण संबन्धो गृह्यते तद्विशेषविषयं प्रत्यक्षतो दृष्टसंबन्धमित्युच्यते। यत्रच सामान्ययोः प्रत्यक्षेण संबन्धो गृह्यते तत्सामान्यविषयं सामान्यतो दृष्टमित्युच्यत इत्यर्थः।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

वर्तमानावगाही प्रत्ययः। **निराकर्तुमिति**। एतच्च मानान्तरेण निराकरणम्। **बहिरङ्गत्वादिति**। अपाश्रितत्वाद्बहिरङ्गत्वमित्यर्थः। **यदेकार्थेति**। अनेन कर्मणोन्तरङ्गत्वमुक्तम्। **नियमेनेति**। अनेन चाव्यभिचारित्वमुक्तम्।

राकाशदेशविभागस्तत्संयोगाच्च तदनन्तरदेशसंयोग इति दृष्टेनैव संयोगेन संयोगविभागसिद्धेर्न कर्मकल्पनावकल्पते ॥ * ॥ किंच न संयोगस्यैवायं धर्मः, सर्वाण्येवासमवायिकारणानि स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभन्ते नान्यत्र । ततश्च कर्माप्यसमवायिकारणत्वेनानुमीयमानं वियति विहंगमे चोभयत्रानुमीयेत । नहि विहगकर्मणा वियति कार्यं संभवति, ततश्च वियत्यपि चलतीति बुद्धिः स्यात्, अतो नानुमेयं कर्म । किमिदानीं नास्त्येव क्रियातत्वम् । अस्ति प्रत्यक्षावगमात् ॥ * ॥ ननु संयोगविभागातिरिक्तं न किंचिदत्र । दृश्यते हि सर्पति सर्पे भूमेः सर्पस्य च द्वयोर्मिथः संयोगविभागाविशेषेऽपि सर्पमेव चलतीति बुद्धिरालम्बते न भूमिम् । अतोऽस्या बुद्धेरालम्बनमस्ति सर्पे चलनं नाम तत्वम् । तद्भावाभावाभ्यां सर्पभूम्योश्चलतीति बुद्धेर्भावाभावाविल्यङ्गीकार्यम् । नचेयमानुमानिकी संभवतीत्युक्तम्, तस्मान्नैवमभिप्रायमिदं भाष्यं, किंतु विशेषविषयं सामान्यविषयं चानुमानमित्यनुमानस्य विषयप्रपञ्चार्थम् ॥ * ॥ येपि मन्यन्ते—'विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता' इति, तेऽनेन निराक्रियन्ते । उभयोरपि विशेषत्वोपपत्तेः । यत्र विशेषस्यैवानुगमस्तत्र विशेषविषयत्वं, सामान्यानुगमेतु सामान्यविषयत्वम् । नच सिद्धसाध्यत्वं देशान्तरकालान्तरसंबन्धस्यागृहीतस्य ग्रहणादिति प्रागेव वर्णितम् इत्यनुमानवादः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

तथाहि—यस्मिन्नेव धर्मिणि गोमयेन्धनाग्निविशेषतज्जन्यधूमविशेषयोः संबन्धग्रहणं तस्मिन्नेव कालान्तरे धूमविशेषदर्शनेन पुनः संदिह्यमानसद्भावस्य यदग्नेरनुमानं तत्प्रत्यक्षदृष्टसंबन्धं भाष्यकारस्याभिप्रेतमिति । ननु प्रत्यक्षावगताग्निविशेषविषयस्यानुमानस्य कथ प्रामाण्यं, पूर्वबोधात्कालान्तराधिक्येनेति ब्रूमः । ननु यदि विशेषयोरेवानुमानं कथं तर्हि भाष्ये धूमाकृतिदर्शनादित्याकृतिग्रहणम् । *आकृत्योरेव हेतुसाध्यव्यवस्थापर्यवसानादिति ब्रूमः । तर्हीदमेव विशेषानवच्छिन्नं सामान्यतो दृष्टोदाहरणं दातव्यं किमादित्योदाहरणेन । सत्यम् । तथापि विशेषतो दृष्टासंकीर्णनिःसंदिग्धसामान्यतो दृष्टप्रदर्शनार्थमादित्योदाहरणम् । प्रसङ्गान्मतान्तरनिराकरणं दर्शयति—**येऽपीति** । अनेनेत्यस्यार्थं विवृणोति—**उभयोरिति** । एतदेव दर्शयति—**यत्रेति** । ननु सामान्यस्यावस्तुत्वेन प्रत्यक्षागोचरत्वात्कथं धूमाकृतिदर्शनादग्न्याकृतिज्ञानं प्रत्यक्षदृष्टसंबन्धतः। नैष दोषः । सामान्यस्य प्रत्यक्षविषयत्ववस्तुत्वयोः प्रामाणिकत्वात् । तथाहि धूमादग्निज्ञानं वस्त्वालम्बनमभावान्यत्वे सति प्रमाणत्वात् स्वार्थे श्रोत्रबुद्धिवत् । तथा सामान्यं वस्तु प्रत्यक्षग्राह्यं च तत् अभावान्यत्वे सति प्रमेयत्वात् स्वलक्षणवदिति । अनुमानैकसमधिगम्ये तु सामान्ये *विशेषेऽनुगमाभावात्सामान्यमेव सर्वत्र लिङ्गं ततश्च लिङ्गभूतसामान्यग्रहणाय पुनरप्यपेक्षणादनवस्थापत्तेरनुमानव्यवहारोच्छेदप्रसङ्ग इत्यलं प्रसङ्गेन । वस्तुतस्तु सर्वत्र सामान्यविषयमेव प्रत्यक्षं गवादि स्वलक्षणस्यावयवित्वेन, स्वावयवापेक्षया सामान्यरूपत्वात् । अथ द्रव्यमपह्नुत्य रूपादीनामेव प्रत्यक्षत्वमुच्यते तदापि रूपविशेषान्नीलपीतादीनपेक्ष्य सामान्यमेव । एवं सर्वमपि वस्तु स्वस्वविशेषापेक्षया सामान्यमेव । द्व्यणुकस्यापि परमाणुद्वयसाधारणत्वात् सामान्यरूपतेति न क्वचिद्विशेषविषयता प्रत्यक्षस्य । यथाहुः—'रूपादयोऽपि सामान्यं सर्वे नीलाद्यपेक्षया ॥ स्वविशेषानपेक्ष्याथ नीलादीनां समानता ॥ तेचापि तावत्सामान्यं यावत्स्युः परमाणवः ॥ द्व्यणुकस्यापि यद्रूपं तत्तु साधारणं द्वयोः' । अथ देवदत्तोयमिति प्रत्यक्षस्य परमाणव एवालम्बनं तेचान्त्या विशेषा एवेति विशेषविषयता प्रत्यक्षस्य । तत्रोच्यते—किं परमाणवः समुदिताः प्रत्येकं वालम्बनम् । नान्त्यः । स्थूलप्रतिभासात् । नाद्यः । तत्समुदायस्यैकरूपत्वेन घटशरावादिबुद्धिप्रमेयवैलक्षण्याभावप्रसङ्गात् परस्परभिन्नानां च परमाणूनामभिन्नसंवेदनग्राह्यत्वानुपपत्तेः समुदायिव्यतिरेकेण समुदायस्यानङ्गीकाराच्च । किंच व्यवहाराविसंवादितया *प्रत्यक्षानुमानयोः प्रामाण्यम्, नचान्त्यैः परमाणुभिर्व्यवहारः संभवत्यतीन्द्रियत्वात् । तस्माद्देवदत्तोऽयमिति विज्ञानं परमाणुकार्यमवयव्याख्यमभिन्नं स्थूलमालम्बते तथा प्रतिभासात् । तच्च स्वाश्रयेषु व्यासज्यवर्तमानत्वात्सामान्यमेवेति सामान्यविषयता प्रत्यक्षस्येति । असाधारणविषयत्वेऽपि वा प्रत्यक्षस्योच्यमाने धूमाकृतेः *प्रत्यक्षदृष्टता नैवापैति । सत्ताद्यपेक्षया धूमत्वस्यापि विशेषरूपत्वात् । अथ सामान्यमित्येवं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

प्रयत्नस्त्वात्मत्वाद्बहिरङ्गः । हस्तपादादौ च प्रयत्नवदात्मना संयुक्तोरिति किंचिदेव देशान्तरं प्राप्नोतीति व्यभिचारी । **आकृत्योरेवेति** । नात्र विशेषयोर्गम्यगमकभावः संबन्धः । ग्रहणकालावगतयोर्विनष्टत्वात्—दृष्टयोरेव गोमयेन्धनादिना केनचिदवच्छेदेनावच्छिन्नयोर्गम्यगमकभाव इत्यर्थः । **विशेष इति** । सत्यभूमोदाहरणे तु नायमपि संभवति आदित्योदाहरणे तु न कदाचिदपि प्रत्यक्षदृष्टता संभवति । सर्वदैवादित्यदेशान्तरप्राप्त्यनुमेयात्वादित्यर्थः । अनुमानैकेति

## अथ शब्दपरिच्छेदः।

'शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानं' इति विज्ञाताच्छब्दात्पदार्थाभिधानद्वारेण यद्वाक्यार्थविज्ञानं तच्छाब्दं नाम प्रमाणम्। तल्लोकसिद्धत्वान्न परीक्षितव्यम्। तच्च द्विविधं पौरुषेयमपौरुषेयं चेति। तत्र पौरुषेयमाप्तवाक्यम्। अपौरुषेयं च वेदवाक्यम्। उभयमप्यनाप्तप्रणीतत्वदोषविरहात्स्वतश्च शब्दस्यादुष्टत्वात्प्रमाणम्। तच्च पुनर्द्विविधम्—सिद्धार्थं विधायकंचेति। विधायकमपि द्विविधम्—उपदेशकमतिदेशकं च। इत्थमिदं कर्तव्यमित्युपदेशः। यथा लोके—दधिघृतसूपशाल्यादिभिर्देवदत्तो भोजयितव्य इति। वेदेपि—प्रयाजावघातादिप्रकारेण दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति तद्वदिदं कर्तव्यमित्यतिदेशः। यथा—लोके देवदत्तवद्यज्ञदत्तो भोजयितव्य इति। वेदेपि—सौर्येण कुर्याद्यथाग्नेयेनेति। शब्दान्तरादिभिः श्रुतिलिङ्गादिभिः श्रुत्यर्थादिभिश्च विचित्रोऽयमुपदेशो भेदविनियोगक्रमानवबोधयति। वचननामधेयचोदनालिङ्गैश्चातिदेशोऽन्यत्र विहितस्य नानापदार्थविशिष्टस्य प्रकारस्य तत्प्रतिपादकस्य वा शास्त्रस्य विध्यन्तापरनामधेयस्यान्येन संबन्धं विकारं बाधं वा बोधयतीत्यूहनीयम्। असंनिकृष्टग्रहणं च पूर्ववत्ताद्रूप्यतद्विपर्ययपरिच्छेदनिरासार्थम्। एकदेशिनां तु तदनर्थकमेव स्यात्। विपरीतपरिच्छिन्ने तावन्नास्त्येव शब्दाज्ज्ञानम्। यदि स्यात् पुरुषदोषाणां शब्दे संक्रान्त्यनभ्युपगमात् स्वाभाविकमेव शब्दस्याप्रामाण्यं स्यादिति वेदाप्रामाण्यं स्यात्। यदि परं तद्रूपपरिच्छिन्नविषयस्यानुवादस्य निरासः स्यात्। तच्चायुक्तम्। तस्यापि शास्त्रत्वात्। नहि तस्याप्यप्रामाण्यम्। अनुभूतित्वात्। प्रत्यक्षाद्यन्तर्भावाभावाच्च शास्त्रत्वमेवेत्यास्तां तावत्॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

प्रतिभासाभावेन सामान्यस्याग्रहणमित्युच्येत तर्ह्यसाधारणमित्येवं प्रतिभासाभावेन स्वलक्षणस्याप्यग्रहणप्रसङ्गात्। यथाहुः—'सत्तादिसामान्यमपेक्ष्य सर्वं गोत्वाद्यसाधारणतामुपैति॥ तस्मादसाधारणमक्षगम्यं वदन्नसामान्यमपह्नुवीत॥ सामान्यरूपेण न गृह्यते चेत्किंवास्त्यसाधारणबुद्धिरत्र॥ यद्वस्तु लोकः प्रतिपद्यतेऽत्र द्विधापि तच्छक्यत एव वक्तुम्' इत्यनुमानवादः॥

इदानीं क्रमप्राप्तं शब्दप्रमाणनिरूपणमारभते—**शास्त्रमिति**। **ननु** प्रत्यक्षलक्षणव्यभिचारशङ्कानिवृत्तये शब्दमात्रस्यैवात्र लक्षणं कर्तव्यं न तद्विशेषस्य शास्त्रस्य। नच सामान्यलक्षणं विना विशेषलक्षणं कर्तुमपि शक्यते। अतिव्यापकं चैतल्लक्षणं शब्दमात्रसाधारणत्वात्। तथाहि—'विज्ञाताच्छब्दादसंनिकृष्टेऽर्थे यद्विज्ञान'मिति शब्दमात्रस्यैवैतल्लक्षणं नतु तद्विशेषस्य शास्त्रस्य। शास्त्रलक्षणं तु—'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा॥ पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥' इति। **नन्वे**तस्मिन्नपि लक्षणे स्वरूपप्रतिपादकस्य 'सोऽरोदीदि'त्येवमादेरशास्त्रत्वं स्यात्। मैवम्। विध्येकवाक्यतया *तेषामपि शास्त्रत्वोपपत्तेः। **ननु** विध्यङ्गत्वेऽपि प्रवर्तकत्वाभावात्कथं शास्त्रत्वं प्रत्ययस्यैव प्रवर्तकत्वात्; पदस्यापि शास्त्रत्वं न सिद्ध्यति नतरां विध्युद्देशवर्तिनां पदान्तराणां दूरेऽर्थवादानां शास्त्रत्वमिति। नैष दोषः। येन हि पुरुषः प्रवर्त्यते तत्प्रवर्तकं, सच त्र्यंशपूरितायां सप्ररोचनायां भावनायां प्रवर्तते, तादृशी च सार्थवादकेन वाक्येन समर्प्यत इति तद्युक्तस्यैव प्रत्ययस्य शास्त्रत्वम्। अत्रोच्यते—अत्र परीक्षाव्याजेनापि शब्दविशेषस्य शास्त्रस्यैव लक्षणं वक्तुमुचितं चोदनोपदेशशब्दाभ्यां तस्यैव प्रस्तुतत्वात्, वेदोपयोगित्वेन च लक्षणानि कर्तव्यानि। शास्त्रलक्षणं च वेदोपयोगिनः शास्त्रस्य लक्षणम्, नहि लौकिकवाक्यलक्षणं वेदप्रामाण्ये तदर्थविचारे वा उपयुज्यते, प्रत्यक्षमात्रस्य तु शास्त्रस्वरूपावधारणद्वारा तदर्थविचारेऽस्त्युपयोगः। शास्त्रावगतौ हि तदर्थावधारणं भवति। अनुमानादेरपि 'विश्वजिता यजेत स्वर्गकामः' इति। **प्रकृतिवदिति**। प्रकृतिविशेषगताङ्गेयत्तावधारणेऽस्त्युपयोग इति सामान्यलक्षणमनेनैवार्थात्सिद्ध्यतीति पृथङ्नोक्तम्। यदा हि प्रवर्तकं वाक्यं शास्त्रमित्युक्तं तदार्थात्प्रवर्तकविशेषणरहितं वाक्यमात्रं शाब्दमित्युक्तं भवति। नाप्यतिव्यापकं, शब्दशब्देन चोदनाया एवाभिधानात्। तस्या एव चोदनासूत्रे प्रकृतत्वात्। अर्थशब्देनापि धर्माधर्मयोरभिधानम्। ततश्चायमर्थः—विधायकशब्दविज्ञानादसंनिकृष्टेऽर्थे धर्माधर्मलक्षणे विज्ञानं शास्त्रमिति। ग्रन्थकारस्तु—विशेषलक्षणस्यान्तर्गतिं मत्वा सामान्यलक्षणत्वेनैव व्याचष्टे—**विज्ञातादिति**। अयमाशयः—यदि लोकवेदसाधारण्येनैव शाब्दं लक्षणतोऽनुमानात्प्रमाणान्तरत्वेन निरूप्येत तदैव वेदप्रामाण्यं सिद्ध्यति नान्यथेति। यथाहुः—'तस्माल्लक्षणभेदेन यदि शब्दप्रमाणता। समा लोके च वेदे च सिद्धा वेदप्रमाणता' इति। विभजते—**तच्चेति**॥

औलूक्यमतानुवादः ।

इदंच शाब्दम् 'अस्येदं कारणं कार्यं संबन्ध्येकार्थसमवायिविरोधि चेति लैङ्गिक'मित्यनुमानलक्षणमभिधाय 'एतेनैव शाब्दं व्याख्यातम्' इति वदन्तः काश्यपीयाः 'प्रत्यक्षमनुमानं च द्वे एव प्रमाणे' इति ब्रुवाणाः सौगताश्चानुमानादभिन्नमिति मन्यन्ते । तत्र यत्तावत्पदार्थज्ञानं तदवगतार्थविषयत्वात्प्रमाणमेव न भवतीति किं तस्य भेदाभेदपरीक्षया । यत्तु वाक्यार्थज्ञानं तदगृहीतसंबन्धैरेव पदार्थैरुपजायमानं नानुमानशङ्कामर्हति । नहि सर्वैर्वाक्यार्थविशेषैः संबन्धग्रहणमस्ति । नच संभवत्यनन्तैः संबन्धग्रहणम् । अत्यन्तापूर्वोऽपि वाक्यार्थविशेषः पदार्थैरवगम्यते दूरदेशवार्तास्विति सर्वजनीनमेतत् । यत्त्वाप्तवाक्यत्वादविसंवादानुमानं तद्वाक्यार्थावगमोत्तरकालत्वान्न तस्यानुमानत्वमापादयति । वाक्यश्रवणानन्तरमेव ह्याप्तानाप्तज्ञानानपेक्षैरेव पदार्थैर्वाक्यार्थोऽवगम्यते । अत्यन्तादृष्टपुरुषप्रणीतेऽपि वाक्येऽवगते तु वाक्यार्थे सत्यासत्यत्वसंशये प्रणेतुराप्तत्वावगमे सति सत्यत्वमनुमीयमानं न वाक्यार्थावगतेराप्तत्वावधारणानपेक्षजन्मनोऽनुमानत्वमापादयति । तस्मात्प्रमाणान्तरमेव लोके शाब्दमित्यपौरुषेयस्यापि वेदस्य सिद्धं प्रामाण्यम् । एकदेशिनां तु लोकवचसामनुमानत्वमङ्गीकुर्वतां यथा वेदप्रामाण्यं न सिद्ध्यति तथोक्तम् । इति शब्दप्रमाणवादः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

नचौलूक्यादिभिरस्यानुमानेऽन्तर्भावाङ्गीकारादनुमानलक्षणेनैव लक्षितत्वात्पृथग्लक्षणं न कर्तव्यमित्याशङ्कां निराकर्तुं तन्मतं तावदनुवदति—**इदंचेति** । इदं च शाब्दं अनुमानादभिन्नं मन्यन्त इति संबन्धः । तदेतद्दूषयति—**तत्रेति** । **ननु** द्विविधं शाब्दं पदं च वाक्यं च । तत्र यद्यपि पदं स्मारकत्वादप्रमाणमसंनिकृष्टग्रहणेन व्यावर्तितमिति न तस्य भेदः प्रतिपादनीयः तथापि परैः पद एवानुमानादभेदः प्रतिपादित इति तद्भेद एव साधयितुमुचितः । किमिदमुच्यते किं तस्य भेदाभेदपरीक्षयेति । सत्यम् । किंतु वार्तिककारैरेव—'विषयोऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयो'रित्यादिना महता प्रबन्धेन विषयभेदेन सामग्रीभेदेन च पदात्मकस्य भेदो निरूपितस्तत्रैवावगन्तव्य इति ग्रन्थकारेण तन्निरूपणमुपेक्षितम् । **ननु** पदजन्यज्ञानस्य बाधाभावात्कथं पदस्याप्रमाणत्वं इत्थम् । पदं हि प्रयुज्यमानं प्रत्यक्षेऽर्थे प्रयुज्यते परोक्षे वा । प्रत्यक्षेऽपि किं गृहीतसंबन्धेऽगृहीतसंबन्धे वा । एवं परोक्षेपीति चत्वारः कल्पाः । तत्र यद्यपि प्रत्यक्षेण प्रतीयमानेऽर्थे गृहीतसंबन्धे पदं प्रयुज्यमानं ज्ञानं जनयति तथाप्यधिकाभावेनानुवादकत्वादप्रमाणम् । अगृहीतसंबन्धे तु प्रत्यक्षे प्रयुज्यमानं प्रतिपत्तिमेव न जनयति परोक्षेप्यगृहीतसंबन्धे प्रतिपत्त्यभावः । यस्तु वाच्यत्वेनावगतः संप्रति परोक्षस्तत्र पदात्स्मृतिरेवेति । **ननु** स्मरणेऽप्यनधिगताधिगमोऽस्त्येव । अतीतकालावच्छिन्नो हि घटस्तत्र भासते तादृशश्चागृहीत एव । अनतीते तु अयमित्यपरोक्षता तत्स्मरणं किमिति न प्रमाणम् । मैवम् । अप्रमिते स्मृत्यनुपपत्तेः प्रमिते च पूर्वमेवार्थपरिच्छेदात् प्रमितेऽपि तादात्विकपरिच्छेदकत्वेन प्रत्यभिज्ञानवत्प्रमाणं भविष्यतीति चेत् । न । यावान्पूर्वोऽनुभूतोऽर्थस्तावत एव स्मृत्या प्रतीतेः पूर्वानुभववशेन हि स्मरणमुत्पद्यमानं तदनुसारेणैवोत्पद्यते तदा सत्तां न प्रत्यभिज्ञानवद्बोधयतीति । **ननु** स्मृतिः संस्कारजन्या पदात् पदार्थज्ञानं तु प्रत्युत्पन्नकारणकं कथं स्मृतिः स्यात् । मैवम् । अनधिकविषयतातुल्यतया स्मृतिवदप्रमाण्यतोपपत्तेः । उक्तंच—'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते' इति । **ननु** द्वारमित्यादावधिकार्थप्रतीतेः कथमप्रमाणम् । नैवम् । संव्रियतामित्याद्यध्याहारात्तस्य वाक्यत्वेन पदमात्रत्वाभावात् । अस्तु वा पदस्य प्रमाणत्वमनुमानत्वं च । वाक्यं हि वाक्यार्थे प्रमाणत्वेनास्माभिः प्रतिज्ञातं तत्रचानुमानत्वगन्धोऽपि नास्तीत्याह—**यत्त्विति** । 'वाक्यार्थे तु पदार्थेभ्यः संबन्धानुभवादृते । बुद्धिरुत्पद्यते तेन भिन्नासावक्षबुद्धिवत्' इति । **एवंच** वाक्यार्थज्ञानं अनुमानाद्भिन्नं संबन्धग्रहणनिरपेक्षेभ्यः पदार्थेभ्य उत्पद्यमानत्वात् प्रत्यक्षवदिति प्रयोगः सूचितः । पदार्थानामपि वाक्यार्थे संबन्धग्रहसापेक्षत्वादसिद्धो हेतुरितिचेत् तत्राह—**नहीति** । संबन्धग्रहणाभावेऽपीन्द्रियवद्बोधकत्वाद्यातिप्रसङ्गः । अपेक्षासंनिधियोग्यत्वानां नियामकत्वादिति भावः । प्रकारान्तरेणानुमानत्वमाशङ्क्य निराकरोति—**यत्त्विति** । एतदेवोपपादयति—**वाक्येति** । उपपादितमर्थं निगमयति—**तस्मादिति** । इति शब्दवादः ।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

शाक्यमतं । तेचान्त्या इति । अन्त्येभवमन्त्यम् । कस्यान्ते परिमाणस्य । तस्य हि द्वावन्तौ पारिमाण्डल्यं परममहत्त्वं च । तत्रात्यन्ताल्पत्वे वर्तमानः परमाणुरत्यन्तमहत्त्वे वर्तमानं व्योमादिकमन्त्यमित्युच्यत इति । **ननु प्रत्यक्षेति** । यथा सूत्रकारेण सत्संप्रयोगसूत्रे प्रत्यक्षमात्रस्यैव लक्षणं कृतं न तद्विशेषस्य चाक्षुषस्येत्यर्थः । **तेषामिति** । श्रुतनिन्दापरवृत्तप्रतिपादकागमत्वादित्यर्थः । **अनेनैवेति** । विशेषलक्षणेनैव सिद्धत्वान्न पृथगुक्तमित्यर्थः । **तत्रैवेति** । पदपदार्थयोर्लोकवेदयोरैक्यादिति भावः । **विषयभेदेनेति** । सामान्यमात्रं पदस्य विषयः । प्रसिद्धधर्मविशिष्टश्च धर्मी लिङ्गस्य विषयः । त्रैलक्षण्यं-

अथोपमानपरिच्छेदः।

'उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति। यथा गवयदर्शनं गोस्मरणस्य' पूर्वदृष्टे स्मर्यमाणेऽर्थे दृश्यमानार्थसादृश्यज्ञानमुपमानम्। या सावस्थाभिर्नगरे दृष्टा गौः सानेन गवयेन सदृ-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

इदानीं क्रमप्राप्तमुपमानं निरूपयितुमारभते—**उपमानमिति**। अयंच गोस्मरणस्येत्यन्तो भाष्यग्रन्थः उपवर्षसंमत एव भाष्यकारेण लिखितत्वाट्टीकाकारादिभिर्भाष्यत्वेनैवोच्यते। अत्र गोसदृशो गवय इति वाक्यमुपमानमिति कश्चित्। तन्न। तस्य शब्दानतिरेकात्। प्रत्यक्षदृष्टगोत्वानां गोसदृशो गवय इति श्रुतातिदेशवाक्यानां च वने गवयदर्शनादयं स गवय इति गोसादृश्यविशिष्टगवयज्ञानं तदुपमानमिति गौतमीयाः। तदप्यसत्। तस्यागमाबहिर्भावात्। तत्र ह्याप्तोपदेशेनैव गवयरूपार्थप्रतीतेः अतिदेशवाक्यार्थस्मरणसहकृतेन्द्रियजन्यत्वाच्च सविकल्पकप्रत्यक्षमेव तत्। अतो यथा गवयदर्शनं गोस्मरणस्येत्युदाहरणान्तरमाह भाष्यकारः। तदेतल्लक्षणं व्याचष्टे—**पूर्वेति**। प्रत्यक्षेण पूर्वदृष्टायां गवि स्मर्यमाणायां च वने गवयदर्शनादेतत्सदृशो गौरिति यद्विज्ञानं तदुपमानमित्यर्थः। ज्ञानस्वरूपमाह—**या सेति**। *अत्रेदमुच्यते—गवयदर्शनं गोस्मरणस्येति सादृश्यविशिष्टगवयदर्शनं गवि स्मरणमुत्पादयत् उपमानं तदुत्पादितं वा स्मरणमुपमानमित्युक्तम्। एतच्च ध्यानादिजन्यस्मृतिवत् अनुभूते गवि सदृशदर्शनादभिव्यक्तसंस्कारजन्यत्वेन स्मृतित्वादप्रमाणम्। संस्कारजन्यत्वेऽपि प्रत्यभिज्ञावद्देशकालाधिक्येन प्रमाणं भविष्यतीति चेत्। न। तदाधिक्याभावात्। प्रत्यभिज्ञानं हि पूर्वानुभवातिरेकेणैतत्कालीनां सत्तां गृह्णाति। उक्तंच—'इदानींतनमस्तित्वं नहि पूर्वधिया गत'मिति। उपमानं तु नगरस्थपूर्वानुभवानुसारेणोत्पद्यमानं नाधिकं गृह्णाति। *केचित्तु प्रसिद्धसाध्यसाधर्म्यात्साध्यसाधनमुपमानमित्याहुस्तन्न। किं गवयस्वरूपालम्बनमेतज्ज्ञानमभ्युपगम्यते तद्गतगोसादृश्यालम्बनं वा। नाद्यः। इन्द्रियसंनिकर्षोत्पन्नत्वेन तस्य प्रत्यक्षत्वात। न द्वितीयः। अतिदेशवाक्यादेव गवयगतत्वेन गोसादृश्यस्यावगतत्वेन तज्ज्ञानस्य स्मृतित्वात्सादृश्यविशिष्टगवयाग्राहकत्वेन स्मृतिप्रत्यक्षाभ्यामतिरेक इतिचेत्। न। उक्तदोषानिवृत्तेः। यद्यतिदेशवाक्यार्थविज्ञानादधिकार्थानवगमस्तर्हि गवये स्मृतिरूपमेवैतज्ज्ञानं स्यात्। *अधिकार्थावभासे त्विन्द्रियजन्यत्वात्प्रत्यक्षत्वमिति स्मरणान्तरितेन्द्रियव्यापारं कथं प्रत्यक्षमितिचेत्। न। इन्द्रियसंबद्धमात्रस्यैव प्रत्यक्षत्वात्। किंच श्रुता*तिदेशवाक्यानामित्यपि न वाच्यम्। अश्रुतातिदेशवाक्यानामपि वने गवयदर्शनोत्तरकालं गोसदृशोऽयमिति ज्ञानोत्पत्तिदर्शनात्। अथाश्रुतातिदेशवाक्यानामयं स गवय इति संज्ञानुसंधानेन ज्ञानं नोत्पद्यते मा नाम गवयसंज्ञावेदिष्ट। उपमानप्रमेयं तु गोसादृश्यविशिष्टं गवयं विदन्त्येव। **ननु** संज्ञासंज्ञिसंबन्धपरिच्छेद एवोपमानफलं, नचाश्रुतातिदेशवाक्यार्थस्य तथा प्रतिपत्तिरस्ति। नैतदपि युक्तम्। अतिदेशवाक्यादेव संबन्धावगतिसंभवेनास्योपमानफलत्वासंभवात्। *अत्रोच्यते—गवयदर्शनादेतत्सदृशो नगरस्थो गौरिति यद्विज्ञानं तदेवोपमानं तस्य च *स्मर्यमाणैव गौर्गवयसादृश्यविशिष्टा प्रमेयं स्मर्यमाणगोगतं वा गवयसादृश्यं प्रमेयम्। यद्यपि गवये सादृश्यं प्रत्यक्षेणावगतं गौश्च स्मर्यते तथापि—'विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता'। यथाहि प्रत्यक्षदृष्टेऽपि पर्वतादौ स्मर्यमाणे च वह्नौ विशिष्टविषयत्वेनानुमानस्य प्रमाणत्वमेवमुपमानस्यापि। यथाच तत्राग्निसामान्यमेवानुमीयते न विशेषस्तथात्र सादृश्यमात्रविशिष्टस्यैवोपमेयत्वमिति। तस्मादेवंलक्षणकत्वादुपमानमपि न व्यभिचरति। यत्र तु व्यभिचारस्तदुपमानमेव न भवति बाधकज्ञानेनाभासत्वात् यथा पालालकूटस्य गजादिसादृश्यं समीपस्थस्य तत्र बाधदर्शनात्। **ननु** सादृश्यं नाम

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

लिङ्गसामग्रीशब्दस्य चावधारणमात्रम्। नच शब्दस्य पक्षधर्मत्वादिकं संभवति। क्रियाकारकसंबन्धाभावात्। प्रयोगश्च तस्मादनुमानत्वं शब्दे प्रत्यक्षवद्भवेत् त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनादिति। **न विशिष्यत इति**। स्मरणमेवेति भावः। णस्येति कर्मणि षष्ठी। कश्चिदिति लौकिकः। काव्यादौ तथा प्रयोगात्। **अत्रेदमिति**। भाष्यकारीयलक्षणमाक्षिपति—**केचित्त्विति**। नैयायिका एव केचिदेवमाहुः—श्रुतातिदेशवाक्यानां चानेकगवयदर्शनात् गोसदृशो गवय इति यज्ज्ञानं तदुपमानमित्यर्थः। **अधिकार्थेति**। अनधिगतं गवयस्वरूपं तस्य च सादृश्यविशिष्टत्वमधिकमिति भावः। **अतिदेशेति**। सादृश्येनोपलक्षितस्य पिण्डस्य गवयशब्दः संज्ञेति अतिदेशवाक्यस्यार्थः। दृष्टे तु गोसदृशे वस्तुनि तेनैव वाक्येन स्मृतितो गवयसंज्ञा प्रतिपद्यत इति नोपमानापेक्षेति भावः। एवं तावल्लौकिकस्यागमत्वं भाष्यकरोदाहृतस्य स्मृतित्वं नैयायिकोक्तस्य च प्रत्यक्षत्वमतो नोपमानं प्रमाणान्तरमिति लक्ष्याभावेनालक्षणमेतदिति प्राप्ते वार्तिकभाष्योदाहृतमेव समर्थयितुमारभते—**अत्रोच्यत इति**। **स्मर्यमाणैवेति**। परोक्षेत्यर्थः। भाष्यगतं च स्मरणपदं गोरूपांश एव स्मरणमित्यभिप्रायो द्रष्टव्यः। विशिष्टे तु प्रमैव। एवंच कर्मव्युत्पन्नं स्मरणपदं व्याख्येयम्। ततश्च यथा सादृश्यविशि-

**श्चीति । किं पुनः सादृश्यम् । अर्थान्तरयोगिभिः संबन्धिसामान्यैरर्थान्तरस्य तादृशयोगः सादृश्यम् । यथा गोजातियोगिभिः कर्णाद्यवयवसामान्यैर्गवयजातेर्योगो गवयस्य गोसादृश्यं गवयसंयोगिभिश्च गोर्योगस्तत्सादृश्यम् । अतएव च सामान्यभूयस्त्वाल्पत्ववशेन सादृश्यप्रकर्षाप्रकर्षौ सुसदृशमीषत्सदृशमिति । ये तु सामान्ययोगातिरिक्तमन्यदेव तत्वं सादृश्यं मन्यन्ते तेषां प्रकर्षाप्रकर्षभेदः किंनिमित्त इति चिन्तनीयम् । नच तत्त्वान्तरत्वे प्रमाणमपि किंचिदस्तीत्यास्तां तावत् । नचेदमुपमानं प्रत्यक्षान्तर्गतम् । अनिन्द्रियसंनिकृष्टत्वान्नगरस्थस्य गोः । नचानुमानमगृहीतसंबन्धस्याप्युपजायमानत्वात् । एवं किलानुमीयेत गौर्गवयसदृशो गवयसादृश्यप्रतियोगित्वात् यद्यत्सादृश्यप्रतियोगि**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

न किंचिद्वस्तु धर्मिणो भिन्नमभिन्नं वा संभवति । आद्ये पृथगुपलब्धिप्रसङ्गात्, अभेदे तन्मात्रतापातात् पुरस्थितवस्तुगत च सादृश्यमगृहीतप्रतियोग्यपि जातिवद्गृह्येत । प्रतियोग्यपेक्षमेव सादृश्यं सदेतिचेत् । न । उत्पत्तौ ज्ञप्तौ च तदपेक्षाभावात् । मृतेऽपि देवदत्ते तत्सादृश्यं यज्ञदत्तस्य निष्पद्यतेऽवगम्यते च । अतः कल्पितमेवैतद्वस्तुरूपमित्यभिप्रायवान्पृच्छति—**किं पुनरिति** । उत्तरमाह—**अर्थान्तरेति** । जात्यन्तरयोगिभिरवयवसामान्यैर्यो जात्यन्तरस्य योगस्तत्सादृश्यं न धर्मिस्वरूपमात्रं, नचागृहीते गवि तत्संबंधिनां सामान्यानां ग्रहणं संभवति अतोऽवश्यं प्रतियोगिग्रहणापेक्षेति भावः । यदुक्तमुत्पत्तौ ज्ञप्तौ वा प्रतियोग्यपेक्षा न संभवति मृतेऽपि तन्निष्पत्तेरिति । तत्र ब्रूमः—नोभयत्रापि प्रतियोगी सत्तयोपकरोति किंतु स्वसंबन्धिसामान्ययोगितया स्मर्यमाणसादृश्यावगतावुपयुज्यत इति । यदपि सादृश्यमभिन्नं भिन्नं वेति विकल्पितं तदपि भेदाभेदाङ्गीकारेण परिहृतम् । लक्षणार्थं विवृणोति—**यथेति** । एतच्च सादृश्यं सदृशप्रत्ययोत्पादकत्वेन गवयसदृशेन यजेतेत्येवमादिचोदनार्थनिष्पादकत्वेन चार्थक्रियाकारित्वाद्वस्त्वेवेति भावः । अवयवग्रहणं च धर्ममात्रोपलक्षणार्थं जातिग्रहणं चोपलक्षणान्तरप्रदर्शनार्थम्*अतोऽग्निरिव माणवको यज्ञदत्तसदृशश्च देवदत्त इत्यपि सिध्यति । यत्र पुनरवयवयोः सादृश्यं यथा पद्मदलाक्षीत्यत्र पद्मस्याक्ष्णोश्च तत्रापि तयोः स्वावयवसामान्ययोग एव सादृश्यम् । यदपि गुणयोः सादृश्यं यथा—केतकीगन्धसदृशः सर्पगन्ध इति तत्रा*प्यवयविगुणानां अवयवगुणसामान्ययोगः सादृश्यं कर्मणामपि स्वसंबन्धिद्रव्यदेवतासामान्ययोग इति । एवंजात्यादिसामान्यैरपि व्यस्तैः समस्तैर्वा *विचित्रं सादृश्यमूहनीयम् । यथाहुः—*'एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ॥ एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रते'ति । **ननु** सामान्यभूयस्त्वमेव सादृश्यमस्तु किं योगग्रहणेन । न योगं विना तदप्रतीतेः गोजातीयावयवसामान्ययुक्ता तु गवयजातिः सादृश्ययुक्ता गृह्यत इति योग एव सादृश्यावगमात् । यद्यपि यमयोर्जात्यन्तरं नास्ति तथापि जात्यन्तरग्रहणस्योपलक्षणार्थत्वात् सादृश्यं संभवति नचैकरूपं सामान्यं क्वचिद्भूयसां क्वचिदल्पीयसां च दर्शनात् । अनित्यं ह्येतत् । गोत्वादिसामान्यस्यैवानेकाश्रयत्वेन नित्यत्वोपपत्तेः अथवा सर्वमेव सामान्यं नित्यं देशान्तरादिषु क्वचिदाश्रयस्य संभवात् । **ननु** व्यासज्यवर्तमानस्य कथमेकत्र ग्रहणम् । मैवम् । जातिवदेवैकत्र सादृश्यस्य परिसमाप्तत्वेन द्वयोर्व्यासज्यवृत्त्यभावात् । मतान्तरं निराकरोति—**येत्विति** । अन्यदेव स्वतन्त्रं किंचिदित्यर्थः । तेषां मते प्रकर्षाप्रकर्षभेदः प्रतियोग्यपेक्षा च न स्यादित्यर्थः । **ननु** सादृश्यविशिष्टपिण्डज्ञानस्येन्द्रियजन्यत्वात्प्रत्यक्षत्वमित्याशङ्क्याह—**नचेति** । ये तु प्रमाणद्वयवादिन औलूक्यादयः सांख्या वा प्रमाणत्रयवादिनोऽनुमानान्तर्भावं मन्यन्ते तान्प्रत्याह—**नचेति** । एतदेव विवृणोति—**एवमिति** । अत्र गवयसादृश्यविशिष्टो

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

ष्टगवयदर्शनस्मर्यमाणस्य गोः सादृश्यविशिष्टत्वेन प्रमापकमित्यर्थः । **अतोऽग्निरिवेति** । अत्र पैङ्गल्यादिः धर्मः । यज्ञदत्ते-त्यत्र यज्ञदत्तत्वादिरुपलक्षणान्तरं न जातिरित्यर्थः । **अवयवीति** । अवयविरूपो यो गुणस्तस्य योऽवयवरूपो गुणस्तत्सामान्ययोग इत्यर्थः । **विचित्रमिति** । वस्तुत्वसिद्ध्यर्थमेव विचित्रता । तामेव दर्शयति—**एवंजातीति** । जातिर्जन्म तेन सादृश्यमभिन्नब्राह्मणयोः । गुणसामान्येन तु चित्रे देवदत्तावयवानामभावादवयवसामान्ययोगरूपसादृश्यं न संभवति तथापि संस्थानपरिमाणवर्णसामान्यानि सन्त्येव तावदेव देवदत्तस्य चित्रेण सादृश्यं द्रव्यसामान्यं समानालंकारधारिणोर्गवादिधनवतोश्च नित्यादानक्रियासामान्यं श्येनयागयोः शाक्तसादृश्यं सिंहदेवदत्तयोः धर्मतः सादृश्यं पञ्चावत्तनराशंसद्वितीयप्रयाजादेरिति उपमा सादृश्यं भूयोवयवसामान्यरूपाभिन्नेति असहायि । इत्थंभावरहितं सादृश्यतः उपमानात् अग्न्यादियुतं प्रयाजादि । नहि सौर्यतद्वाक्ययोराग्नेयतद्वाक्याभ्यामन्वयो गृहीतो येनानुपमानं स्यात् अनुपमानस्य संबन्धबलादेव गमकत्वात् । अतोग्न्यादियुताः प्रयाजादयः सार्ये कर्मणि न शक्यन्ते ज्ञातुम् । सौर्यं चरुं निर्वपेदाग्नेयवदित्युपमानेन तु लभ्यते । आग्नेयवाक्यमग्न्यादियुतं चार्थमुपस्थाप्य तदितरयोः साध्यसाधनांशयोरनपेक्षितत्वात् तावनादृत्य अन्तिमांशापेक्षावशात्सौर्य-

तत्तत्सदृशं दृष्टं यथाऽयमनयोरन्यतरस्यान्यतरेणापि । नचेदं युक्तम् । यौ हि द्वावर्थौ मिथः सदृशौ युगपन्न दृष्टवानेकमेव तु गामुपलभ्य नगरे वने गवयं पश्यति सोऽपि गां गवयसादृश्यविशिष्टामुपमिनोत्येव तस्मान्नानुमानम् । शाब्दत्वं तु न शङ्क्यमेव । अतः प्रमाणान्तरम्, प्रसिद्धत्वाच्च न परीक्षितव्यम् । इत्युपमानवादः ॥

अर्थापत्तिनिरूपणम् ।

अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना । यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य परिकल्पना । प्रमितस्यार्थस्यार्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्तये याऽर्थान्तरकल्पना साऽर्थापत्तिः । यद्यनुपपन्नादुपपादककल्पनाऽर्थापत्तिः, अनुमानमेव तर्हि, तत्रापि वह्निमन्तरेणानुपपन्नाद्धूमाद्वह्निः कल्प्यते । स्यादेवम् । यद्यनुपपन्नं गमकं स्यात् ।

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

गौरनुमेयः, तत्र न तावद्गोगतं सादृश्यं लिङ्गं, प्रागुपमानात्तद्धर्मत्वेनाप्रतीतेः उपमानप्रमेयत्वात्तस्य । नापि गवयगतं अपक्षधर्मत्वादिति भावः । अधिकं तु वार्तिकेऽवगन्तव्यम् । द्वावर्थौ गोगवयरूपौ । पूर्वं मिथःसदृशार्थद्वयदर्शने सत्येव संबन्धग्रहणं संभवेदिति भावः । अतो गवयसदृशो गौरिति विज्ञानं नानुमानं अगृहीतसंबन्धस्याप्युपजायमानत्वात् प्रत्यक्षवदिति प्रयोगः सूचितः । भेदप्रतिपादनप्रयोजनं च वार्तिककारैरुक्तम् । तथाहि—'भिन्नानुमानादुपमेयमुक्त्वा सौर्यादिवाक्यैरसहायि दृष्टम् । सादृश्यतोऽम्यादियुतं कथं तु प्रत्याययेदित्युपयुज्यते नः ॥ *प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्भवति तदपचारे यत्र नीवारजातौ । तदपि फलमभीष्टं लक्षणस्योपमायाः *प्रतिकृतिरपि गौणैर्बाध्यते यत्र चान्यैः ॥ *यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् । *मतिरपि हि तथैव द्रागिवोत्पद्यतेऽस्मिन्नितरविषयबोधे सत्यपीत्थं च बाधः ॥' इत्युपमाननिरूपणम् ॥

अथ क्रमप्राप्तामर्थापत्तिं लक्षयति—**अर्थापत्तिरपीति** । अदृष्टस्य परिकल्पनेत्यन्तो भाष्यग्रन्थः । लक्षणभाष्यं व्याचष्टे—**प्रमितस्येति** । नन्ववगतार्थोऽनुपपद्यमानो नावश्यमर्थान्तरं कल्पयति । नह्यङ्गुल्यग्राधिकरणा हस्तियूथशतानुगतिरर्थान्तरं कल्पयतीत्याशङ्कानिराकरणार्थं प्रमितस्येत्युक्तम् । प्रमाणावगतोऽर्थोऽनुपपद्यमानोऽवश्यमर्थान्तरं कल्पयतीत्यर्थः । **ननु** दृष्टशब्दस्य प्रमितमात्रवचनत्वाच्छ्रुतो वेत्यनर्थकम् । नैष दोषः । श्रुतार्थापत्तेः प्रमाणग्राहिर्णीत्वेनार्थविषयाया दृष्टार्थापत्तेर्वैलक्षण्यप्रदर्शनार्थं भेदेनोपादानम् । प्रमितस्येत्यनेन (प्रत्यक्षादि)प्रमाणषट्कपूर्विकार्थापत्तिः सूचिता । तत्र प्रत्यक्षपूर्विका यथा—प्रत्यक्षतोऽवगताद्दाहाद्वह्नेर्दाहशक्तिकल्पना । देशान्तरप्राप्तिलिङ्गकेनानुमानेनादित्ये गतिमनुमाय तदन्यथानुपपत्त्या गमने शक्तिरप्यस्तीति यद्विज्ञानं सानुमानपूर्विकार्थापत्तिः । शब्दपूर्विका तु श्रुतार्थापत्तिरेव । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति श्रुते रात्रिभोजनकल्पना । गवयदर्शनादेतत्सदृशो गौरित्युपमानेन गवि गवयसादृश्यमुपमानात्तदन्यथानुपपत्त्योपमानज्ञानं प्रति ग्राह्यशक्तिरस्यास्तीति यद्विज्ञानं सोपमानपूर्विका । अभिधानानुपपत्तिप्रभवयार्थापत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना स्यादर्थापत्तिपूर्विका प्रत्युच्चारणं तु शब्दान्यत्वे सत्यप्यस्मिन्गृहीतसंबंधेऽन्यस्य वाचकत्वं न स्यात् सादृश्येन तदर्थप्रतिपादकत्वाभ्युपगमे लिङ्गाभासोत्पन्नविज्ञानवदप्रमाणं स्यात् । नचात्र सदृशप्रतीतिरस्ति तत्वेनैव प्रत्ययात् अतो वाचकशक्त्यनुपपत्त्या नित्यत्वकल्पनं अभावपूर्विकात्वर्थापत्तिर्भाष्यकारेण चोदाहृता । जीवतो देवदत्तस्येत्यादिना । अर्थापत्त्यन्तराणामप्युदाहरणप्रपञ्चः पक्षदोषावसरे बृहट्टीकायां वार्तिककारैर्दर्शितः । **ननु** भाष्यकारेणाभावपूर्विकाया एवोदाहरणात् वार्तिके कथमुदाहरणप्रपञ्चः । नैष दोषो भाष्योदाहरणस्य सर्वसूचनार्थत्वात् । अनुमानेन्तर्भावं शङ्कते—**यदीति** । परिहरति—**स्यादेवमिति** । अतोऽनुमानवैधर्म्यमिति भावः ।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

भावनया गृह्यत इति । प्रयोजनान्तरमाह—**प्रतिनिधिरिति** पादत्रयेण । प्रयोजनान्तरमाह—**प्रतिकृतिरिति** पादत्रयेण । प्रतिकृतिरपि गौणैर्बाध्यते अन्यैः साम्यदृश्यैरित्यर्थः । तदेवाह—**यदीति** । एतत्सदृशे जातापि बुद्धिर्मिथ्यापि भवति । कारणान्तरमपि सदृशोपादाने दर्शयति—**मतिरपीति** । न केवलबह्ववयवलाभः किंतु सदृशे शीघ्रमेव बुद्ध्युत्पत्तिः असदृशबोधे सत्यपीति । **इत्युपमानम्** ॥ ॥ तयोः जीवनगृहाभावयोः । **एतदिति** । विद्यमानत्वेत्यस्योत्तरार्धं तु 'गेहाद्युत्कालितश्चैत्रो लक्ष्यते बहिरेव ही'ति । अनन्तरं चैत्रे गेहासत्वमात्रं यत्स्वतन्त्रं प्रतीयते न तावता बहिर्भावश्चैत्रस्यैवावधार्यते 'सिद्धासहायविज्ञाने ज्ञेयाभावधियात्र तु । गेहादुत्कालिता सत्ता बहिरेवाथ तिष्ठत'इत्यस्योत्तरार्धमित्यर्थः ।

इह तु यन्नोपपद्यते तदेव गम्यम् । गृहाभावेन हि विनाबहिर्भावो नोपपद्यते । किमिदानीमुपपादकादनुपपन्ने बुद्धिरर्थापत्तिः । को दोषः । न खलु कश्चिद्दोषः । किं त्वसौ नैवास्ति । नह्युपपादकदर्शनादनुपपन्नार्थे बुद्धिर्भवति । यदि स्यात्, वृक्षत्वदर्शनाच्छिंशपात्वं कल्प्येत । वृक्षत्वेन विना शिंशपात्वस्यानुपपत्तेः । तस्मादनुपपन्नमेव गमकं नोपपादकम् ॥ * ॥ अथोच्यते । नाऽविनाभावेनानुपपत्तिरित्युच्यते किंतु संशयापत्तिः । यस्य हि जीवनं गृहसंबन्ध्येव प्रायशोऽवगतं तस्य गृहाभावे दृष्टे जीवनं सांशयिकं भवद्बहिर्भावकल्पनया समाधीयते । ततश्च प्राग्बहिर्भावकल्पनाया जीवनस्य संदिग्धत्वान्न लिङ्गत्वम् । नहि सन्दिग्धं लिङ्गं भवति । जीवनरहितं च गृहाभावमात्रं मृतेऽपि सद्भावादनैकान्तिकं न बहिर्भावमनुमापयितुमलम् । अतोऽनुमानासंभवात्प्रमाणान्तरमेवेदम् । यथा चानुमाने निश्चितं गमकम् । एवमर्थापत्तौ सन्दिग्धं गमकमिति दर्शनबलादभ्युपगम्यते । संशयश्चात्र पूर्वदृष्टरूपविसंवादात् ॥

अर्थापत्तिसमाधानम् ।

तदिदमसंबद्धम् । नहि संदिग्धे जीवने बहिर्भावः शक्यते कल्पयितुम् । कथं हि 'जीवति वा मृतो देवदत्तः' इति संदिहानस्तस्य बहिर्भावं कल्पयेत् । नहि भावाभावसंशयस्य बहिर्भावकल्पनयापनोदः संभवति । सर्वत्र हि संशयस्य निदानोच्छेदादुच्छेदो भवति । अन्यतरपक्षावधारणाद्वा । नच बहिर्भावकल्पनया तावन्निदानोच्छेदः । जीवनस्य प्रायेण गृहसंबन्धित्वात्तद्विपर्ययोऽत्र संशयहेतुत्वेनोपन्यस्तः । नचासौ बहिर्भावे कल्पिते समुच्छिद्यते । प्रत्युत विपर्यय एव दृढमवस्थाप्यते । नचान्यतरपक्षावधारणमपि विद्यते जीवनभावाभावौ ह्यत्र संदिह्येते । नचानयोरन्यतरस्यापि बहिर्भावकल्पनया निर्णयो भवति । अन्यद्धि जीवनं अन्यश्च बहिर्देशसंबन्धः । नच गृहाभावनिबन्धनार्थापत्तिर्जीवननिर्णयायालं भवति । नह्येवं संभवति यस्माद्देवदत्तो गृहे नास्ति तस्माज्जीवतीति, प्रत्युत पूर्वनिश्चितमेव जीवनं गृहाभावादेव संदिग्धं कथं तत एव निर्णीयते । नहि संशयहेतुरेव निर्णयहेतुर्भवति । तस्माज्जीवनं संदिग्धं तत्तावदन्यतो निश्चित्य पश्चाद्बहिःसंबन्धः कल्पयितव्यः । यस्माद्देवदत्तो जीवति गृहे च नास्ति तस्मान्नूनं बहिरवस्थित इति । ननु संदिह्यमाने जीवने तत्कल्पनं संभवति । यस्मादविद्यमानो गृहे जीवति वा न वा तस्माद्बहिः स्थित इत्यसंबद्धमेव स्यात् । तस्माद्बहिर्भावनियतं गृहाभावसहितं जीवनं निश्चित्य बहिर्भावः कल्प्यत इत्यनुमानमेवेदं न प्रमाणान्तरमिति ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

गूढाभिसंधिः पृच्छति—**किमिति** । आशयमविद्वानङ्गीकारेण परिहरति—**को दोष इति** । शङ्किता स्वाशयमुद्धाटयति—**न खल्विति** । एतदेवोपपादयति—**नहीति** । प्रकृतं निगमयति—**तस्मादिति** । अतोऽनुमानमेवैतदिति भावः । अत्र सिद्धान्तिनः परिहारमनुभाषते—**अथेति** । संशयमुपपादयति—**यस्येति** । किमेतावता दूषणमत आह—**ततश्चेति** । ननु यथा संदिग्धं न लिङ्गमेवं गमकमपि न भविष्यत्यत आह—**यथेति** । संदिग्धमेव जीवनं स्वसमाधानार्थं बहिर्भावं कल्पयति इदमेवास्य गमकत्वमिति भावः ॥

पूर्वदृष्टरूपं जीवनस्य गृहसंबन्धित्वं । दूषयति—**तदिदमिति** । अशक्यतामेवाह—**कथं हीति** । केन तदपनोद इत्याकाङ्क्षायामाह—**सर्वत्रेति** । आद्यं निराचष्टे—**नचेति** । **प्रत्युतेति** । बहिर्भावे कल्पिते गृहसंबन्धित्वविपर्ययरूपः संशयहेतुरेव दृढमवस्थाप्यत इत्यर्थः । द्वितीयं निराचष्टे—**नचेति** । असंभवं दर्शयति—**यस्मादिति** । असंबद्धत्वादेव न संभवतीत्यर्थः । निगमयति—**तस्मादिति** ॥

सिद्धान्तेन तर्कमतनिराकरणम् ।

अत्राभिधीयते—'न तावद्गृहाभावमात्रं लिङ्गं मृतेपि संभवात् । न जीवनमात्रं गृहेऽपि सद्भावात् । अतो जीवनसंसृष्टो गृहाभावो लिङ्गमिति वक्तव्यम् । प्रथमं च लिङ्गमवगम्य पश्चाल्लिङ्ग्यनुमानेन भवितव्यम् । नतु लिङ्गावगमसमय एव लिङ्ग्यवगमः । अत्रच न बहिर्भावावगममन्तरेण गृहाभावो जीवनं च संसृष्टं प्रत्येतुं शक्यते विरोधात् । जीवता ह्यवश्यं गृहे वा बहिर्वा स्थातव्यमित्यसंदिग्धम् । अतश्च बहिर्भावमनन्तर्भाव्य जीवनगृहाभावौ समुच्चित्य प्रतिपद्यमानस्येदृशी प्रतिपत्तिरापद्यते देवदत्तो गृहेऽनवस्थितो गृहे वा बहिर्वावस्थित इति । नचैवं संभवति भावाभावयोरेकत्र देशे समुच्चेतुमशक्यत्वात् । अतोऽवश्यं देशभेदेनैव देवदत्तस्य भावाभावौ समुच्चेतव्यौ । तेन भावाभावसंसर्गबुद्ध्यैव बहिर्भावस्य बुद्धत्वान्न पश्चात्किंचित्प्रमेयमस्ति । आह च 'विद्यमानत्वसंसृष्टगेहाभावधियाऽनया ॥ गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते' इति । ननु प्रमाणान्तरत्वेपि जीवनमात्रस्य गृहाभावमात्रस्य वावगमकत्वाभावात्संसृष्टमुभयं गमकमित्यङ्गीकर्तव्यम् । संसृष्टधियैव च बहिर्भावस्य बुद्धत्वान्न पश्चात् किंचित्प्रमेयमवशिष्यत इति तुल्योऽयं दोषः । उच्यते—इयमेव संसृष्टधीरर्थापत्तिरित्यवगम्य शाम्यतु भवान् किं पुनस्तस्याः कारणम् । द्वयोर्गृहाभावजीवनयोः परस्परप्रतिघात इति ब्रूमः । यथा खल्वेकेन 'नद्यास्तीरे फलानि सन्ती'त्युक्ते परेण च 'न सन्ती'त्युक्ते बलाबलविशेषमजानानः श्रोता मिथः प्रतिहतमुभयं बुध्यते । नचान्यतरदपि त्यक्तुं गृहीतुं वा शक्नोति । तथापि तु न सत्वासत्वे समुच्चिनोति विरोधात् । एवमिहापि 'गृहे वा बहिर्वाऽवस्थितो देवदत्त' इति केनचित्प्रमाणेन प्रतीतम् । अन्येन च 'गृहे नास्ती'ति तदुभयं समुच्चितं परस्परप्रतिघाति प्रती-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

समाधत्ते—**अत्रेति** । ततः किमत आह—**प्रथममिति** । **नन्विति** । कार्यकारणबुद्ध्योर्यौगपद्यायोगादिति भावः । **नन्वा**गमेन जीवनस्य निश्चितत्वात्तत्संसृष्टो गृहाभावः पूर्वमेवावगतो लिङ्गं भविष्यतीत्याशङ्क्याह—**अत्रेति** । सत्वासत्वे तावदेकस्मिन्देवदत्ते देशविशेषावनन्तर्भाव्य न शक्येते संसृज्य रोद्धुं, अतो यथैव धिया तयोः संसर्गो गम्यते तयैवाभावाक्रान्तत्वाद्गृहाद्बहिरेव चैत्रस्य विद्यमानत्वमवगतं भवतीति । अतो हेतुज्ञानकाल एव साध्यस्यापि ज्ञातत्वात् नानुमानस्य किंचित्प्रमेयमस्तीति पिण्डितार्थः । अत्रैव वार्तिकमुदाहरति—**आह चेति** । *गेहेति । एतच्छ्लोकान्तरस्योत्तरार्धं ग्रन्थकारेणात्र योजितं तुल्यार्थत्वात् । अत्र वार्तिककारैः 'बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषित' इत्यादिना ग्रन्थेन बहिर्देशविशिष्टे चैत्रे तद्विशिष्टे वा बहिर्देशेऽनुमेये गृहे चैत्राभावस्य वा लिङ्गत्वं स्यात् । चैत्राभावविशिष्टस्य वा गृहस्येत्यादयोऽनेके विकल्पा उपक्षिप्ता दूषिताश्च ते ग्रन्थविस्तरभयान्न लिखिताः । एवं तर्ह्यनुमानवदर्थापत्तेरपि न किंचित्प्रमेयमस्तीति चोदयति—**नन्विति** । अनुमान एव प्रमेयानुप्रवेशित्वं नाम दूषणं तत्र ह्यर्थादर्थान्तरप्रतीतिः संबन्धबलेनानुपपत्त्या धूमदर्शने सत्यप्यगृहीतसंबन्धस्य वह्निप्रतिपत्तेरभावात् । इह तु प्रमाणद्वयप्रतिपन्नयोरेकाधिकरणयोर्भावाभावयोः संवेदनार्थमेव बहिर्भावाख्यप्रमेयानुप्रवेश इति न दोष इत्याशयवान्परिहरति—**उच्यत इति** । ननु प्रमितस्यार्थस्यार्थान्तरेण विनानुपपत्तिमालोच्य तदुपपत्तये यार्थान्तरकल्पना सार्थापत्तिरित्युक्तं कथमिदानीं संसृष्टधीरेवार्थापत्तिरित्युच्यते । सत्यम् । अत्रापि बहिर्भावरूपार्थान्तरकल्पनास्त्येव किंत्ववगतजीवनविशिष्टगृहाभावोपपादकत्वेनैव तज्ज्ञानं न स्वातन्त्र्येण । **नन्वत्रा**पि गृहाभावस्य बहिर्भावेन नियतत्वादविनाभावेन प्रतिपत्तेरनुमानमेवास्तु । मैवम् । अगृहीताविनाभावस्यैव प्रतिपादकत्वेनानुमानत्वाभावात् । अस्तु वार्थापत्त्या गृहाभावबहिर्भावयोः संबन्धेऽवगते पश्चादनुमानं न विरोधः कश्चित् । तदुक्तम्—'तेन संबन्धवेलायां संबन्ध्यन्यतरो ध्रुवम् ॥ *अर्थापत्त्यावगन्तव्यः पश्चादस्त्वनुमानता' । **ननु** *संसृष्टधीरर्थापत्तेः कारणं सैव चेदर्थापत्तिस्तदा तत्कारणमतिरिक्तं वाच्यम्, नच तत्संभवतीत्याशयेन पृच्छति—**किं पुनरिति** । उत्तरमाह—**द्वयोरिति** । प्रतिघातमेव दृष्टान्तेन विवृणोति—**यथेति** । दार्ष्टान्तिके संगमयति—**एवमिति** । तर्हि दृष्टान्तवदत्रापि

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

अन्यतो बहिर्भावलक्षणे । **अर्थापत्त्येति** । साहित्यसिद्ध्यर्थमेवार्थापत्तेः प्रमाणान्तरत्वं तद्वशेन तु संबन्धे गृहीते । पश्चादस्त्वनुमानमित्यर्थः । **संसृष्टेति** । जीवनसंसृष्टगृहाभावबुद्धिर्बहिर्भावकल्पनारूपार्थापत्तेः कारणमित्यर्थः । **विरुद्धेति** ।

यते सोऽयं प्रतिघातो न फलसद्भावासद्भाववदसमाधेयः किंतु बहिर्भावकल्पनया समाधातुं शक्यत इत्येतावान्विशेषः । तेन प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेनालोच्यमानोऽर्थापत्तेः कारणम् । तत्समाधानाय चार्थान्तरकल्पनार्थापत्तिः प्रमाणान्तरमनुमानात् । यश्चायं प्रतीतस्य प्रमाणान्तरेण प्रतिघातः स एवार्थानुपपत्तिरित्युच्यते ॥

अर्थापत्तावनुमानस्यान्तर्भावशङ्का ।

भवत्वर्थापत्तिः प्रमाणं अनुमानं त्वर्थापत्तावेवान्तर्भवति । तथाहि यत्र यत्र धूमस्तत्रतत्राग्निरित्यवगतम् । पर्वतस्य च धूमवत्तावगता । यदि पर्वतेऽग्निर्न स्यात्तदा धूमवत्ता वा मिथ्या स्यात् । सर्वधूमवतां वाग्निमत्त्वं मिथ्या स्यात् कथं तदुभयमप्यमिथ्या स्यादित्यग्निमत्त्वं कल्प्यत इत्यर्थापत्तिरेषा । स्यादेवं यदि सर्वधूमवतामग्निमत्त्वमनुमानादन्येनावगतं स्यात् । नत्वेवमस्ति । दृष्टान्तधर्मिष्वेव हि धूमस्याग्निनियमोऽवगतो न सर्वत्र । अनुमानात्तु सर्वधूमवतामग्निमत्तावगतिरित्युक्तम् । नच दृष्टान्तधर्मिष्वेवावगतस्याग्निनियमस्य सर्वधूमवदग्निमत्तां विना कश्चिद्विरोधो येनार्थापत्तिः स्यात् । तस्मादसंकीर्णविषयत्वादनुमानमपि प्रमाणान्तरमर्थापत्तिरपि । सिद्धे च द्वयोः प्रामाण्ये येन नाम सर्वधूमवतामग्निमत्त्वमनुमानेनावगतं तस्य पर्वतादिषु धूमदर्शनाद्यदग्निविज्ञानं तद्द्वेधापि संभवति दृष्टान्तपरिदृष्टनियमस्मरणाद्वानुमानम् । प्रतिघातालोचनयावार्थापत्तिः । तस्मादर्थापत्तिः प्रमाणान्तरम् । यापि क्वचिदवस्थितस्य देवदत्तस्यान्यत्र सर्वत्राभावप्रतिपत्तिः साप्यर्थापत्तिः । तथाहि मूर्तस्यार्थस्य युगपत्कात्स्न्र्येनानेकदेशसंबन्धो न घटत इति स्वशरीरेऽवगतम् । स्वशरीरस्य हि क्वचिदवस्थितस्य ततोऽन्यत्र सर्वत्राभावो दृश्यादर्शनेनावगतः, अतोऽन्यस्यापि देवदत्तादेर्युगपदनेकदेशसंबन्धो नास्तीत्यनुमीयते । ततो देवदत्तं क्वचित्प्रत्यक्षेणावगच्छन्युगपदनेकदेशासंबन्धं चानुमानेनावधारयन्नुभयोपपत्तये देशान्तरेषु सर्वेष्वभावं कल्पयति । नन्वनुमानमेवेदं संभवति देवदत्तोऽधुना सर्वत्र नास्ति गृहेऽवस्थितत्वान्मद्वदिति । सत्यम् । देवदत्तेन सहैकदेशावस्थितस्य संभवति, यस्तु क्वचिद्गृहेऽवस्थितस्तदनन्तरं गृहमप्यतीत्य तृतीये गृहे देवदत्तं केनचित्प्रमाणेनावगतवान् स तद्गृहातिरिक्ते मध्यगृहे देशान्तरेषु च सर्वेष्वभावं देवदत्तस्य केन लिङ्गेन प्रतीयात् । अथ क्वचिद्देवदत्तं पश्यन् तद्देशव्यतिरिक्ते च प्रत्यासन्ने देशे तदभावमवगच्छन्नन्येषामपि सर्वदेशानां प्रत्यासन्नदेशवत्तद्देशव्यतिरिक्तत्वात्तच्छून्यतामनुमिमीते । तत्रापि 'विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ॥ समी-

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

परस्परप्रतीघातान्नार्थान्तरकल्पनोदेष्यतीत्याशङ्क्याह—**सोयमिति** । समाधेयत्वात्तद्विलक्षणोऽयं प्रतिघात इति भावः । फलितमाह—**तेनेति** । कार्यकारणयोर्विवेकं दर्शयति—**यश्चेति** ॥

यद्येवंरूपार्थापत्तिस्तर्ह्यनुमानस्य तत्रान्तर्भावः प्राप्नुयादिति शङ्कते—**भवत्विति** । समाधत्ते—**स्यादेवमिति** । अर्थापत्तेः पूर्वमेवानुमानप्रवृत्तेर्न विषयसंकर इति भावः । निगमयति—**तस्मादिति** । अनेनैवोपायेनान्यत्राप्यर्थापत्तिरित्याह—**यापीति** । यत्तु तत्रानुमानत्वं अर्थापत्तिस्वरूपनिर्वाहकमेवेति भावः । अत्र चोदयति—**नन्विति** । परिहरति—**सत्यमिति** । अत्र भावाभावौ संबन्धिनौ तत्र परिमितदेशकालत्वाच्छक्यते ग्रहीतुम् । अभावस्त्वनन्तदेशकालवर्ती न कथंचिद्ग्रहीतुं शक्यते अतः साहित्यग्रहणासंभवादननुमानमिति भावः । हेत्वन्तरेणानुमानं शङ्कते—**अथेति** । न सर्वदेशगतेनाभावेन नियमं ब्रूमः किंतु देवदत्ताधिष्ठितदेशव्यतिरिक्ततया तच्छून्यत्वमनुमीयत इति शङ्कार्थः । अयमत्र प्रयोगः—विवादपदं देशान्तरं देवदत्तशून्यं देवदत्ताधिष्ठितदेशव्यतिरिक्तत्वात् देवदत्ताधिष्ठितप्रत्यासन्नदेशवदिति । एतदपि वार्तिकोक्तदूषणेनैव दूषयति—**तत्रापीति** । **तद्वदिति** । चैत्रयुक्तमित्यर्थः । प्रयोगश्चैवं—देशान्तरं देवदत्तयुक्तं देवदत्ताधिष्ठितसमीपदेशव्यतिरिक्तत्वात् तदधिष्ठितदेशवदिति । *विरुद्धाव्यभिचारित्वं दूषणमुक्तमित्यर्थः । एतदुक्तं भवति—न तावद्देवदत्तसंयुक्तदेशव्यतिरिक्तत्वादिति हेतुः संभवति संदिग्धत्वात् देशान्तराण्यपि तत्संयुक्तानि न वेत्येतदेवात्र विचार्यते

### सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

विरुद्धः साध्यविपर्ययसाधकप्रतिपक्षरूपोऽव्यभिचारी यस्य तथा तस्य भावस्तत्त्वं तदिवेति । एतावानेको वाक्यार्थ इति

पदेशभिन्नत्वाच्चैत्राधिष्ठितदेशवत्' । इति वार्तिक एव दूषणमुक्तम् तस्मादर्थापत्तिरेवेयम् । **एतेन बी-
जादिष्वङ्कुरजननशक्तिकल्पना व्याख्याता ॥**

शक्तेः पदार्थान्तरत्वोपपादनम् ।

**किं पुनः शक्तिकल्पनां विना नोपपद्यते बीजादिषु सत्स्वङ्कुराद्युपपत्तिदर्शनात् असत्सु चादर्श-
नात् । बीजादीनामङ्कुरादिकारणत्वमवगम्यते । सत्स्वपि बीजेषु मूषिकाघ्रातेष्वङ्कुरानुत्पत्तेरकारणत्वं
प्रतिभासते । सोऽयं कारणत्वाकारणत्वयोर्विरोधः शक्तिकल्पनया समाधीयते—नूनमस्त्यतीन्द्रियमपि
रूपं यद्भावात् कदाचिदङ्कुरोत्पत्तिः यस्य च मूषिकाऽऽघ्राणेन नाशात्कदाचिदनुत्पत्तिरिति कल्प्यते
घ्राणाभावोऽप्यङ्कुरस्य कारणम् । घ्राणे च सति तदभावादेवानुत्पत्त्युपपत्तेरलं शक्तिकल्पनयेति चेत् ।
न । घ्राणक्रियायाः क्षणिकत्वादुत्तरकालं तदभावे सत्यप्यङ्कुरानुत्पत्तेः । प्रागभावः कारणं न प्रध्वं-
साभाव इति चेत् । न । अभावत्वाविशेषात् । नहि प्रागभावप्रध्वंसाभावयोः प्रागूर्ध्वकालभेदं
मुक्त्वा किंचिदपि रूपवैलक्षण्यमस्ति, नचाविलक्षणे कारणे कार्यवैलक्षण्यं संभवति । प्रागभावस्य प्रध्वं
साभावाद्विलक्षणमस्ति रूपमिति चेत् कल्प्यमेवं सति किंचित् । तच्चाभावे कल्प्यतां बीजस्व-
रूपे वेति बीजस्य साक्षादङ्कुरकारणत्वात्तत्रैव कल्पयितुं युक्तम् । एवं यागादेरपूर्वस्वर्गादिसाधनश-
क्तिकल्पनमूहनीयम् । कथं पुनः शक्तिमति यागे विनष्टे निराधारा शक्तिरवतिष्ठते, न निराधारा
भविष्यति । आत्माधारत्वात् । कथमन्यशक्तिरन्यत्र स्यात् तथावगमात् । नावश्यं स्वाश्रयैव शक्ति-
रिति नियमोऽस्ति, सा हि कार्यतः कल्प्यमाना यत्रैव कार्याय कल्पते तद्गतैव कल्प्या । साचेयम-
पूर्वाख्यशक्तिर्यागाश्रया सती यागविनाशान्न स्वर्गनिष्पत्तये पर्याप्नुयादित्यात्माश्रया कल्प्यते । य-
थाह—'शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ॥ तत्रैव साभ्युपेतव्या स्वाश्रयान्याश्रयापि वेति ॥'
कथमात्माश्रया सती यागशक्तिरिति व्यपदिश्यते । तस्य हि फलसाधनत्वमुपपादयितुं सा कल्प्यते ता-
वता तच्छक्तित्वम् । लोकेऽपि प्रसिद्धमेतत् तैलपानसामर्थ्याच्चिरवृत्तेऽपि तस्मिन्बलपुष्ट्यादिकमद्य
मे जातमिति लौकिका व्यवहरन्ति तस्मादनवद्यम् ॥**

श्रुतार्थापत्तिनिरूपणम् ।

**दृष्टग्रहणेनैव प्रतीतिमात्रग्रहाच्छ्रौतस्यापि ग्रहणे सिद्धे श्रुतार्थापत्तेः प्रमाणग्राहिणीत्वेन दृष्टार्थाप-
त्तितो वैलक्षण्यमुपपादयितुं श्रुतग्रहणम् । तथाहि लोके तावत् द्वारं द्वारमित्यादिषु संपूर्णार्थप्रतिपा-
दनाय संव्रियतामित्यादिशब्दान्तरं श्रुतशब्दैकवाक्यत्वेन कल्प्यते ॥ * ॥ तथा वेदेपि 'विश्वजि-**

---

**युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।**

कथं तेषां तत्संयुक्तदेशाद्यतिरेकः सिद्धः अप्रयोजकश्चायं साध्यव्यतिरेकस्यापि साधयितुं शक्यत्वादिति । उपसंहरति—**तस्मादिति** । अन्यत्राप्यर्थापत्तिमतिदिशति—**एतेनेति** ।

एतदेव प्रश्नपूर्वकमुपपादयति—**किंपुनरिति** । प्रतिबन्धकाभावस्य कारणत्वं शङ्कते—**घ्राणाभाव इति** । परिहरति—**नेति** । प्रतिबन्धकाभावे सत्यपि कार्यानुत्पत्तेस्तस्याकारणत्वमित्यर्थः । विशेषं शङ्कते—**प्रागभाव इति** । परिहरति **नेति** । प्रतिबन्धकाभावत्वेनैव कारणता वक्तव्या विशेषविवक्षायां गौरवापत्तेरिति भावः । बीजस्वरूपे तत्कल्पनायां नियामकमाह—**बीजस्येति** । उक्तमर्थमन्यत्रातिदिशति—**एवमिति** । नियमाभावे कारणमाह—**साहीति** । अस्त्वेवं प्रकृते किमायातमत आह—**साचेति** । अत्रैव वार्तिककृत्संमतिमाह—**यथाहेति** । तर्ह्यात्मशक्तिरित्येव वक्तव्यं न यागशक्तिरिति चोदयति—**कथमिति** । समाधत्ते—**तस्येति** ।

एवं प्रसक्तानुप्रसक्तं परिसमाप्येदानीं लक्षणागतश्रुतपदव्यावर्त्यमाह—**दृष्टेति** । एतच्च व्याख्यातपूर्वम् । **नन्वत्र** वा-र्तिककारैः 'पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ । रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते' इत्यनेनार्थविषयता दर्शिता तत्कथं प्रमाणग्राहिणीत्वमुच्येते । अथ 'दृष्टः पञ्चभिरप्यस्माद्भेदेनोक्ता श्रुतोद्भवा ॥ प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा' इत्युपक्रमवार्तिकपर्यालोचनया प्रमाणग्राहिणीत्वमुच्येत तर्हि वार्तिकमेव पूर्वापरविरुद्धम् । नैष दोषः । अर्थविषयत्वस्य

ता याजेते'त्यत्र स्वर्गकाम इति वा स्वर्गार्थमिति वा येनैव शब्देन श्रुतशब्दैकवाक्यभूतेन परिपूर्णार्थाभिधानं संपद्यते वाक्यं तदेव हृदयमानीय श्रुतेन सह मेलयित्वा परिपूरणाद्वाक्याद्वाक्यार्थः प्रतीयते, तथा 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिषु विधिष्वितिकर्तव्यताप्रतिपादकशब्दाश्रवणादपूर्णेषु तत्प्रतिपादकशब्दापेक्षया चोदनालिङ्गोपस्थापितस्याग्नेयविधेरुयंशस्य साध्यसाधनांशप्रतिपादकभागावनपेक्षितत्वादनादृत्य यस्तृतीयोऽंश इत्थंभावोऽन्वाधानादिर्विध्यन्तत्वेन परिकल्पितस्तस्य वाचको यः शब्दः 'आग्नेयादिव'दिति स वाक्यशेषत्वेन कल्प्यते ॥ * ॥ अथवा किमक्लृप्तेनाग्नेयादिवच्छब्देन कल्पितेन, किंतु य एवायमाग्नेयविध्यन्तस्तस्यैव व्यवहितस्यापि चोदनालिङ्गबलोपस्थापितस्य विकृतिविधिना सहैकवाक्यतामात्रमर्थापत्त्या कल्प्यते । नह्ययमनुषङ्गो येन व्यवहितस्य न स्यादिति । अतिदेशस्त्वयं व्यवहितस्यापि कथंचिदुपस्थानादुपपन्नएव । तथाच वक्ष्यति—'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेते'ति 'विध्यन्त इति प्रधानविधिवर्जितं समस्तमेव पौरोडाशिकं काण्डमभिधीयत' इति भाष्यकारः ॥ * ॥ नन्वेवं शास्त्रातिदेशाङ्गीकरणे दशमाद्यविरोधः स्यात्, ऊहबाधयोश्चासिद्धिः । भवेदेवं यदि यथाश्रुतरूपमेव 'व्रीहीनवहन्ती'ति वाक्यं विकृतिं नीत्वा तस्य यथासंभवं विकृतिविधिना सहैकवाक्यता परिकल्प्येत । यदि तथा क्रियते तत्र कृष्णलचरौ व्रीहिशब्दस्य हविर्लक्षणार्थत्वायोगादवघातस्य च दृष्टप्रयोजनाभावात् व्रीहिसाधनकोऽवघातोऽदृष्टार्थो विधीयेत तत्र नावघातस्य बाधः स्यात् । एवं नीवारादिष्वपि 'व्रीहय एवावहन्तव्याः' इति न नी-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

मतान्तराभिप्रायेणोक्तत्वात् । अतएवानन्तरं तस्याः प्रमाणग्राहिणीत्वप्रदर्शनार्थं विप्रतिपत्तिरुपन्यस्ता । 'तामर्थगोचरां केचिदपरे शब्दगोचराम् ॥ कल्पयन्त्यागमाचैनामभिन्नां प्रतिजानत' इति । सर्वे चागमान्तर्भूतां मन्यन्त इत्यर्थः । प्रयोजनं चागमान्तर्भावस्य तत्रैवोक्तम्—'प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः ॥ सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः' । **अत्रकेचित्**—दिवा न भुङ्क्ते इति श्रुतस्यैव शब्दस्य रात्रिभोजनप्रतिपादकत्वं कल्पयन्ति । अन्येतु शब्दान्तरमेव तत्प्रतिपादकमिति । तत्र न तावदाद्यः । एकस्य वाक्यस्यानेकार्थतायोगात् अन्यथापि रात्रिभोजनप्रतिपत्तेः । किंच वाक्यस्य वाचकत्वे स्यादप्यनेकार्थता, नचैतदस्ति, पदार्थान्वयरूपेणहि प्रतीयमानो वाक्यार्थः शब्दशक्तिकल्पनाहेतुर्भवति । नच दिवावाक्यस्य रात्र्यादिपदार्थान्वयोऽस्ति, तस्मात्कल्पितस्य वाक्यान्तरस्यैवायमर्थो न श्रुतस्य । तत्र कल्पितं वाक्यं किंप्रमाणमूलकमिति तावद्विचारणीयम् । न तावदस्य प्रत्यक्षं मूलं अनुच्चारितत्वात् । नानुमानं श्रुतवाक्यस्याश्रुतेन संबन्धाग्रहणात् । नापि शब्दगम्यत्वमसंभवात् । किं दिवावाक्यमेव रात्रिवाक्यस्य वाचकं वाक्यान्तरं वा । नाद्यः । वाच्यवाचकयोः संबन्धाभावात् । नान्त्यः । अनवस्थानात् । वाक्यान्तरस्यापि मूलगवेषणायां पूर्वोक्तदोषानतिवृत्तेः । नाप्युपमानगम्यत्वं श्रुतवाक्येनाश्रुतवाक्यस्य सादृश्याभावात् । अतः पारिशेष्याच्छ्रुतार्थापत्तिरेव रात्रिवाक्ये प्रमाणम् । तथाहि—पीनत्वे सति दिवाभोजनप्रतिषेधस्यात्मलाभो रात्रिवाक्यंविना नोपपद्यत इति तच्छेषत्वेन रात्रिवाक्यं कल्प्यत इति श्रुतार्थापत्तेः प्रमाणविषयत्वेन दृष्टार्थापत्तिवैलक्षण्यम् । **ननु** न रात्रिभोजनवाक्यं पीनत्वस्योपपादकं किंतु भोजनमेव, अतोऽर्थ एव कल्प्यतां किं शब्दकल्पनयेति । अथवा रात्रिभोजनसद्भावोऽपि दिवावाक्यस्यैवार्थो भवतु किं प्रमाणान्तरकल्पनेन । अथ विश्वजिदादिषु फलादेः शाब्दत्वसिद्ध्यर्थं शब्दकल्पनमित्युच्यते, तर्हि यथा शब्दाभिहितपदार्थगम्योऽपि वाक्यार्थः शब्दमूलतया शाब्दस्तथा वाक्यार्थानुपपत्तिगम्योऽप्यर्थो वाक्यमूलतया शाब्दो भविष्यति । अत्रोच्यते—श्रुतार्थानुपपत्त्या हि सविकल्पकं विज्ञानमुत्पद्यते तच्च शब्दानुवेधेनार्थं विषयीकरोतीति शब्दः पूर्वं प्रतीयते । ततश्च प्रथमागतेन शब्देनैवानुपपत्तिपरिक्षयात् नार्थं यावदर्थापत्तिर्गच्छति, प्रतिपन्नैस्तु शब्दैरर्थावगतिरिति । यद्यपि स्मर्यमाणस्य शब्दस्य सविकल्पकज्ञानोत्पादकत्वं संभवति दृष्टार्थान्यथानुपपत्त्या च सविकल्पकमेव ज्ञानमुत्पद्यते, तथापि प्रमाणैकदेशश्रवणान्यथानुपपत्त्या तदवयवस्यैव कल्पनात्तस्यैव भावनायां प्रमाणत्वात् । अधिकं तु वार्तिकेऽवगन्तव्यम् । एतदेवोपपादयति—**तथाहीत्यादिना** । वेदेऽपि शब्दान्तरकल्पनां दर्शयति—**तथेति** । अस्तु वा लोके यथा तथा, वेदेत्ववश्यं शब्दान्तरकल्पनयैवोपपत्तिरिति भावः । अक्लृप्तकल्पनापत्त्यपरितोषात्पक्षान्तरमाह—**अथवेति** । कथं व्यवहितस्य विकृतिविध्येकवाक्यता । उक्तंच—'व्यवायान्नानुषज्येत' इत्याशङ्क्याह—**नहीति** । सूत्रकृत्संमतिमाह—**तथाचेति** । एकदेशिमतापत्त्या विरोधं शङ्कते—**नन्वेवमिति** । प्रकारातिदेशस्यैव तत्र स्थापितत्वादित्यर्थः । मन्त्रस्यापि यथाश्रुतस्य प्रयोगापत्त्या ऊहासिद्धिः । बाधासिद्धिं च ग्रन्थकार एव यदीत्यादिना दर्शयिष्यति । परिहरति—**भवेदिति** । किं

वारादिष्ववहन्तिरूह्येत । नत्वेवमस्माभिरुच्यते किंतु प्रकृतौ प्रधानेन सहैकवाक्यतयावगतस्यास्य यावान्परिकरो यादृग्रूपं तादृगतिदिश्यते प्रकृतौ व्रीहीणां हविष्ट्वात्, तल्लक्षणार्थो व्रीहिशब्दः, अवघातस्य च तेषु दृष्टं प्रयोजनं तुषविमोचनं संभवतीति तद्द्वारेणास्य प्रधानैकवाक्यता । ततश्च—'अवघातवितुषीकृतैर्व्रीहिभिः पुरोडाशं कृत्वा तेन यजेते'तीदृशः प्रकृतिविधिः, तस्य प्रधानप्रतिपादको योऽशः 'यजेत' इति तद्वर्जं विशेषणांशो विकृतिवाक्येन संबध्यते, तस्यच न साक्षादवघातो विशेषणम्, अवघातविशेषितवितुषीकरणविशिष्टं हि हविर्यागस्य विशेषणं प्रकृतौ, अतस्तदेव विकृतावाकृष्यते । कृष्णलयागे च कृष्णलशब्दस्य हविर्वाचिनः प्रत्यक्षश्रवणात्तद्विरोधात्पुरोडाशशब्दो निवर्तते, तन्निवृत्त्या च व्रीहीणामपि निवृत्तिः । नहि ते कृष्णलानां प्रकृतित्वेन संभवन्ति । वितुषीकरणशब्दोऽपि यो द्वारप्रतिपादकः सोऽपि कृष्णलेषु तदसंभवान्निवृत्तः, तद्विशेषणं चावघात इति सोऽपि निवर्तते इति बाधसिद्धिः । नीवारादिषु तु वितुषीकरणसंभवादनिवृत्तोऽवघात इत्यूहस्यापि सिद्धिः । दशमाद्ये च यावच्छ्रुतानामङ्गशास्त्राणामतिदेशमाशङ्क्य प्रकृत्यन्वितानां तेन रूपेणातिदेशः सिद्धान्तित इत्यलमतिप्रसङ्गेन ॥ * ॥ नन्वर्थमेवाध्याहृत्य वाक्यं पूर्यतां किं शब्दकल्पनया । नार्थमात्रेण पूरणं संभवति, एकवाक्यभूतपदद्वयप्रतिपादिता हि पदार्था वाक्यार्थं प्रतिपादयन्ति नान्यथा । नहि 'आनय'इत्येतावत्युक्ते गामित्यनुक्ते प्रत्यक्षप्रतिपन्नेऽपि गवि गवा सहानयनमन्वीयते । एवंच विकृतिषु सौर्यादिष्वसमवेतार्थाग्न्यादिपदनिवृत्तेर्न्यूनसाकाङ्क्षमन्त्रवाक्यपूरणाय सूर्यादिपदप्रक्षेपादूहसिद्धिः ॥

अर्थाध्याहारपक्षखण्डनम्।

अर्थाध्याहारवादिनां तु सूर्यार्थेनाध्याहृतेन विशिष्टं निर्वपामिपदमेव प्रकाशयतीति नोहः सिध्येत् । तथा यत्राधिकारवाक्येऽर्थवादमात्रं श्रुतं 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'ति, तत्रापि भवन्मते विध्यर्थ एवाध्याहार्यो न विधिशब्दः, ततश्च प्राकृतस्योपकारस्य पदार्थानां च नापूर्वैदमर्थ्यं सिध्येत् । सत्स्वपि ह्यर्थानामाकाङ्क्षासंनिधियोग्यत्वेषु नाभिधानमन्तरेणान्वयसिद्धिः । नचेहापूर्वाभिधायी शब्दोऽस्ति योऽपूर्वं प्राकृतैरन्वितमभिदध्यात् । नापि प्राकृताः शब्दा विकृतौ सन्ति ये स्वार्थानपूर्वान्वितानभिदध्युः । नचार्थवादपदार्थैस्तेषामन्वयः नाप्युत्पत्त्यपूर्वेणेत्यनन्वय एव स्यात् । ॥ * ॥ एवं प्रकृतावपि 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यत्र विधिशब्दस्यानाम्नानादनध्याहाराच्च विध्यर्थस्यैव स्वर्गकामाधिकारापूर्वादाग्नेयाद्युत्पत्त्यपूर्वेभ्यश्च पृथग्भूतस्याध्याहारान्न समिदादीनामैदमर्थ्यं सिध्येत् । नहि समिदादियजतयोऽवघातादिवदधिकारापूर्वान्वितं स्वार्थमभिधातुमलं स्वापूर्वविषयत्वव्याघातात् । तस्मादीदृशेष्वधिकारविधिषु विधिशब्द एवाध्याहार्यो नार्थः ॥ * ॥ कथंच विध्यर्थस्यात्यन्तालौकिकतया प्रमाणेन तदाभासेन वा बुद्धावारोपयितुमशक्यत्वेनाभिमतस्य बुद्धिसंनिधानात्मकोऽध्याहारोऽश्रुतविधिशब्दकेष्वधिकारवाक्येषु वा 'उत्पत्तिवाक्येषु यदाग्नेयोऽष्टा-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

तर्ह्यतिदिश्यत इत्याकाङ्क्षायामाह—**किंत्विति** । अर्थाध्याहारवादी शङ्कते—**नन्वर्थमिति** । शब्दस्यापि कल्पितस्यार्थोपस्थापन एव व्यापारादिति भावः ॥

अर्थाध्याहारवादिनां प्रकृतावप्यनिष्टापत्तिमाह—**एवमिति** । नाप्यर्थाध्याहारः कर्तुं शक्यत इत्याह—**कथंचेति** । दूषणमुपसंहरति—**इतीति** । अर्थापत्तेर्भेदप्रतिपादनप्रयोजनं वार्तिककारैरुक्तम् । तथाहि—'*स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिँल्लिङ्गादिभिर्या विनियोजिका च ॥ फलादिभिर्यत्परिपूरणं च संबन्धदृक् तत्र न काचिदस्ति ॥ तत्सर्वमित्याद्यसमं-

सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

भावः । **स्मृत्येति** । स्मृत्या श्रुतिकल्पने न कश्चित्संबन्धोऽस्ति येनानुमानं स्यात् । लिङ्गादिभिरपि श्रुतिकल्पने नानुमानं संबन्धाभावात्, सत्यपि वा संबन्धे तज्ज्ञानाभावात् विश्वजिदादिषु फलादिकल्पनेऽप्यर्थापत्तिरेव नानुमानं संबन्ध ज्ञाना-

कपालोऽमावास्याया'मित्यादिषु वा शक्यते, इत्यकामेनापि शब्दाध्याहारोऽङ्गीकर्तव्य इत्यास्तां तावत् ॥ इत्यर्थापत्तिवादः ॥

अभाव(अनुपलब्धि)परिच्छेदः ।

'अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासंनिकृष्टस्ये'ति । कथं पुनः प्रमाणाभावः प्रमाणलक्षणं विपरीतत्वात् । पूर्वोक्तसदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकाभिप्रायोऽयं प्रमाणशब्दः । तदभावश्च षष्ठस्य लक्षणमिति नानुपपत्तिः । किमस्य प्रमेयम् । उक्तं 'नास्तीत्यर्थस्य' इति । सर्वं हि वस्तु सदसदात्मना द्विविधं, तद्यदा यत्र सद्रूपेण वर्तते घटादि तत्तदा तत्र प्रत्यक्षादिभिरस्तीति प्रतीयते । यत्र त्वसद्रूपेण वर्तते तत्र सद्रूपेण बोधकानां प्रत्यक्षादीनां सद्रूपबोधनायोत्पत्तुं योग्यत्वे सत्यपि योऽनुत्पादो दृश्यादर्शनयोग्यानुपलम्भादिपर्यायो भाष्ये प्रमाणाभावशब्देनोक्तस्तेनैवेन्द्रियशब्दादिस्थानीयेन नास्तीति प्रतीयते भूतलेऽत्र घटो नास्तीति ॥ * ॥ यस्तु नास्तित्वमपह्नुत्य प्रमेयाभावात्षष्ठं प्रमाणं नास्तीत्याह तस्य दृश्यादर्शनानन्तरं नास्तीह भूतले घट इत्येवमुपजायमानस्य ज्ञानस्य किमालम्बनम् । न भूतलम् । सत्यपि घटे प्रसङ्गात् । तथा गवि योऽश्वो न भवतीति प्रत्ययो रूपे च रसो न भवतीति तस्य किमालम्बनम् । न गोरूपम् । तस्य प्रतियोग्यनपेक्षप्रतीतिकत्वात् । अश्वो न भवतीति ज्ञानस्य प्रतियोग्यपेक्षत्वात् । गोरूपालम्बनत्वे च सिंहादावश्वोऽयं न भवतीति प्रत्ययो न स्यात् गोरूपस्य तत्राभावात् ॥ * ॥ अथ योऽश्वाद्भेदो गवादिष्वनुस्यूतः सोऽस्यालम्बनमित्युच्यते । कोऽयं भेदो नाम, यदीतरेतराभावः समाश्रितस्तर्ह्यभावः । अथ पृथक्त्वं नाम गुणविशेषो भेद इत्युच्यते, ततस्तस्य द्रव्यगतत्वाद्गुणेषु रूपादिषु 'रसो न भवति रूपं' 'रूपं न भवति रसः' इतीतरेतराभावप्रत्ययो न स्यात् ॥

प्रभाकरमतखण्डनम् ।

यस्तु वैयात्यात् 'भूतलप्रतीतिव्यतिरेकेण घटो नास्तीत्येवंविधा प्रतीतिरेव नास्ति' इति वदति,

---

**युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।**

जत्वं स्यान्न चेदियं स्यादनुमानतोन्या । *एवंस्वभावाप्यनुमानशब्दं लभेत चेदस्तु यथेप्सितं वः' ॥ **इत्यर्थापत्तिवादः** ॥

इदानीमभावाख्यं षष्ठं प्रमाणं निरूपयितुमारभते—**अभावोऽपीति** । प्रमाणाभावः प्रमाणमिति यथाश्रुतं लक्षणभाष्यमाक्षिपति—**कथमिति** । समाधत्ते—**पूर्वोक्तेति** । तदुक्तम्—'प्रमाणपञ्चकं यत्र वस्तुरूपेण व्यज्यते ॥ वस्तुसत्तावबोधार्थं तत्राभावप्रमाणते'ति । **ननु** केवलभूप्रदेशातिरेकेण घटाभावस्याभावात्किमस्य प्रमेयमित्याह—**किमिति** । एतदुत्तरत्वेन नास्तीत्यादिभाष्यं योजयति—**उक्तमिति** । नास्तीत्यस्यार्थस्येत्यनेन भाष्यकृता भूप्रदेशातिरिक्तस्मर्यमाणघटावच्छिन्नभूप्रदेशाधिकरणं नञर्थरूपं प्रमेयमुक्तमित्यर्थः । असन्निकृष्टस्येत्यनेनापि प्रत्यक्षाद्यविषयत्वमुक्तम् । एतदेवोपपादयति—**सर्वमिति** । तच्च नास्तितारूपमभावाख्यं प्रमेयं चतुर्विधं वार्तिककारैरुक्तम् । तथाहि—'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥ नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥ गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥ शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ॥ *शशे शृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥' अयंच वस्त्वसंकरो सत्यभावप्रामाण्येन सिध्यतीत्यभिप्रायेणोक्तं—'क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ॥ शशे शृंगं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥ अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ॥ व्योम्नि संस्पर्शिता ते च नचेदस्य प्रमाणता' इति । मतान्तरमाशङ्क्य निराकरोति—**यस्त्विति** ॥

कश्चित्तु प्रतीतिमेवापलपति तं प्रत्याह—**यस्त्विति** । इतश्चाभावाख्यं प्रमेयमस्तीत्याह—**घटोऽत्रेति** । अत्राभावाति-

**सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।**

भावात् । **ननु** स्मृतेः विकरणे प्रमाणमनुमानं स्यादिति प्रयोगात् भाष्यकारेणापि पश्चान्मानसामान्यादनुमानशब्दप्रयोगात्कथं नानुमानत्वं तत्राह—**एवमिति** ॥ **इत्यर्थापत्तिः** ॥ ॥ **शशेति** । शृङ्गस्य यदसद्रूपं शशमूर्धावयवसमवेतं सोऽत्य-

स भूतलादिप्रतीतिमप्यपह्नुवीत, अविशेषात्, घटोऽत्र भूतले नास्तीति व्यवहारस्य किं कारणं, दृश्ये घटे यद्भूतलमात्रविषयं ज्ञानं तदस्य कारणमितिचेत्, तथासति पटवद्भूतलोपलम्भे घटो नास्तीति व्यवहारो न स्यात् । भूतलमात्रोपलम्भाभावात् । घटविविक्तभूतलोपलम्भ इति चेत्, कोऽयं घटविवेकः, यदि भूतलरूपमेव, घटवत्यपि प्रसङ्गः । घटसंयोगाभावश्चेत्, अङ्गीकृतस्तर्ह्यभावः ॥ ॥ स्यान्मतम्, यदभाववादिनोऽभावज्ञानस्य कारणं तदेवास्माकं व्यवहारकारणं भवत्विति । नैवं वक्तुं शक्यम् । मम हि दृश्यादर्शनमभावज्ञानकारणम्, अदर्शनं च दर्शनाभावो नचासौ भवताङ्गीकृतः, अभावाभ्युपगमप्रसङ्गात् । प्रमाणाभावाङ्गीकारे वा किमपराद्धं प्रमेयाभावेन ॥ ॥ ननु प्रथमं प्रत्यक्षेण भूतलं गृहीत्वा पश्चादभावो बोद्धव्यस्तत्राभावज्ञानात्प्राक् यादृशं भूतलज्ञानं तादृशादेव व्यवहारो भवतु । तदिदमुक्तोत्तरम्, तथाहि—यस्यामवस्थायां भूतलस्वरूपज्ञानं घटतदभावयोश्चाज्ञानं ज्ञानाभावस्तेन घटतदभावज्ञानशून्यं भूतलज्ञानं तस्यामवस्थायामस्माभिरुपेयते तदेव च भूतलमात्रवेदनमित्युच्यते ॥ ॥ 'स्वरूपमात्रं दृष्ट्वाचे'त्यादिषु मात्रशब्देन हि घटतदभाववेदनयोरभाव उच्यते, भूतलमात्रं ज्ञायते न घटस्तदभावो वेत्यर्थः । तेन यदि भवानपि घटादिज्ञानाभावयुक्तं भूतलज्ञानमङ्गीकुर्यात् ततो ज्ञानाभावाङ्गीकाराद्घटाभावोऽप्यङ्गीकर्तव्य इत्युक्तमेव । तेन नैवं भ्रमितव्यम्—अभाववादिनापि 'स्वरूपमात्रं दृष्ट्वा च पश्चात्किंचित्स्मरन्नपी'ति भवता भावज्ञानातिरेकेण तन्मात्रवेदनमङ्गीकृतम्, तदेव दृश्ये प्रतियोगिनि नास्तीति व्यवहारकारणत्वान्नास्तीति शब्दस्याभिधेयमिति, तस्य हि ज्ञानाभावाभिप्रायो मात्रशब्दः । नचासौ भवतोऽस्ति, अतो मात्रशब्दस्यार्थाभावाद्भूतलवेदनमेव कारणमिति वक्तव्यम् । ततश्च घटवत्यपि प्रसङ्ग इति स्थितं दूषणम् ॥ ॥ अथ 'भावे देशान्तरस्थे देशान्तरग्रहणं कारण'मिति मतं, ततः शाबलेयस्थितं गोत्वं धावलेये नास्तीति व्यवह्रियेत, स्थूणान्तरस्थितश्च वंशः स्थूणान्तरेऽनुस्यूतोऽपि तत्र नास्तीति व्यवहर्तव्यः स्यात्, अतोऽत्राभाव एव नास्तीति व्यवहारकारणम्, नान्यत्र सद्भावः । स्मर्यमाणे घटे भूतलवेदनं नास्तीति व्यवहारकारणमितिचेत् । न । गृह्यमाणस्यापि पार्श्वदेशेष्वभावव्यवहारात् । संप्रत्यानीतस्य च घटस्य गृह्यमाणस्यैव 'प्रागयमिह नासीत्' इति प्राक्कालीनाभावव्यवहारात् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

रिक्तं कारणं शङ्कते—**दृश्य इति** । भूतलमात्रेत्यस्यार्थमाह—**एकाकीति** । परिहरति—**तथेति** । पटविशिष्टस्य भूतलस्यैकाकित्वाभावादित्यर्थः । प्रकारान्तरेण शङ्कते—**घटेति** । नास्तीति व्यवहारस्य कारणमित्यनुषङ्गः । प्रकारान्तरेण पुनः शङ्कते—**नन्विति** । अस्त्वेवं किमेतावता स्यादत आह—**तत्रेति** । निराकरोति—**तदिदमिति** । उक्तोत्तरत्वं विवृणोति—**तथाहीत्यादिना** । उक्तेर्थे वार्तिकं संवादयति—***स्वरूपमात्रमिति** । 'पश्चात्कंचित्स्मरन्नपि । तत्रान्यनास्तितां पृष्टस्तदेव प्रतिपद्यत' इति श्लोकशेषः । एतमेवार्थमक्षरारूढं करोति—**भूतलेति** । ततः किमत आह—**तेनेति** । **ननु** स्वरूपमात्रमित्यत्र भूतलमात्रज्ञानमङ्गीकृतमिति प्रतीयते । ततश्च तदेव नास्तीति शब्दस्याभिधेयमिति कस्यचिद्भ्रान्तिस्तां निराकरोति—**तेन नैवमिति** । पुनः प्रकारान्तरेण शङ्कते—**अथेति** । घटादौ देशान्तरस्थे देशान्तरस्य ग्रहणं नास्तीति व्यवहारस्य कारणमित्यर्थः । दूषयति—**तत इति** । अथ प्रदेशान्तरेऽपि तस्याभावान्नास्तीति व्यवहारो न भवति । अतोऽभावे सत्येव नास्तीति व्यवहारादभाव एव कारणमित्यर्थः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

न्तभाव इत्यर्थः । **स्वरूपेति** । कंचित्प्रदेशं स्वरूपमात्रेण दृष्ट्वा पुनः कालान्तरे प्रदेशान्तरं तस्य आसीत्तत्र देवदत्त इत्यनेन पृष्ठस्थप्रदेशं देवदत्तविषयं दृश्यादर्शनं च स्मृत्वा नासीत्तत्र देवदत्त इति ज्ञानमुच्यमानं अनवगतविषयत्वेन प्रमाणं श्रुति-

प्रभाकरमतानुवादः ।

**ननु** भवन्मते प्रमीयमानस्य घटस्य कथं प्राक्कालीनाभावज्ञानं भावप्रमाणाभावो ह्यभावज्ञानकारणम् । नच प्रमीयमाणे प्रमाणाभावः संभवति । संप्रति प्रमीयमाणोऽपि घटः प्राक्कालसंबन्धितया न प्रमीयते अतः प्राक्कालसंबन्धगोचरप्रमाणानुदयात्तत्कालीनाभावज्ञानं युक्तमेवेति चेत् । न । अयोग्यत्वात् । नहि प्राक्कालसंबन्धोऽधुना प्रमातुं योग्यः, योग्यप्रमाणाभावश्चाभावज्ञानकारणं न प्रमाणाभावमात्रम् । प्राक्काले तु योग्यस्यैव प्रमाणस्यानुदय आसीत्, नहि तदानीं घटाभावः सन्नपि प्रमितः प्रतियोगिनो घटस्यापरामर्शात् तदपेक्षत्वाच्चाभावज्ञानस्य, अतएव घटाभावोऽधुना स्मर्येत इति न युक्तम् । अप्रमितस्य स्मरणायोगात् । यश्चायं प्राक्कालीनः प्रमाणानुदयः सोऽधुना प्रमाणोदयेन नष्टो नाभावज्ञानमुत्पादयितुमर्हति, उद्धृतमिव नेत्रं रूपबुद्धिम् ॥ * ॥ अथ नष्टोऽपि प्रमाणानुदयः संप्रति परामृश्यमानोऽभावज्ञानं जनयेत्, ह्यस्तन इव धूमो विनष्टोऽपि संप्रति स्मर्यमाणो ह्यस्तनाग्निज्ञानम् । स्यादेवं यदि प्रमाणाभावो ज्ञायमानतया मेयाभावं बोधयेत् लिङ्गमिव लिङ्गिनम् । नच तथा संभवति अनवस्थाप्रसङ्गात् । प्रमेयाभावं हि ज्ञातुं प्रमाणाभावो ज्ञातव्यः । सोपिचाभावत्वादन्येनाभावज्ञानेन ज्ञातव्यः, सोऽप्यन्येनेति न जन्मसहस्रेणापि घटाभावोऽवधार्येत । तस्मात्सत्तामात्रेणैव प्रमाणाभावोऽभावज्ञानमुत्पादयति नेत्रादिवदित्यङ्गीकर्तव्यम्, अतः प्रमीयमाणस्य घटस्य कथं प्राक्कालीनाभावप्रमितिरिति वक्तव्यम् ॥ * ॥ उच्यते—सत्तामात्रेण ज्ञानाभावो ज्ञेयाभावं बोधयतीति सम्यगुक्तम्, अस्त्येव त्वधुना दृश्यमानस्यापि घटस्य प्राक्कालसंबन्धगोचरयोग्यज्ञानानुदयः, सहि प्राक्कालसंबन्धितया स्मर्तुं योग्यः सन्नपि न स्मर्यते, नचावश्यंप्रमाणाभाव एवाभावस्य बोधकः स्मरणज्ञानस्यापि योग्यत्वे सत्यनुदयो भावं बोधयत्येव, तेन संप्रति दृश्यमानोऽपि घटो यदि प्रागप्यासीन्ततोऽवश्यं तत्र स्थितेन प्रमितः स्यात्, प्रमितश्चाधुना स्मर्तव्यः स्यात्, एवं सत्यपि न स्मर्यते सोऽयं स्मर्तव्यविषयस्मरणानुदयः संप्रति विद्यमानः संप्रतितनं प्राक्कालीनाभावविषयं विज्ञानं जनयतीति न किंचिदनुपपन्नम् । भाष्ये च प्रमाणाभावशब्दः स्मरणाभावस्याप्युपलक्षणार्थः, तथा वार्तिकेऽपि । यद्वा प्रमाणस्य स्मरणफलत्वात्तदभावोऽपि फलतः प्रमाणाभाव एवेति शक्यते वक्तुम् ॥

उक्तप्रभाकरमतखण्डनम् ।

**ननु** न सत्तामात्रेण योग्यानुपलब्धेरभावबोधकत्वं युक्तं, सत्यामपि तस्यां कदाचिदभावबुद्ध्यनुदयात्, असत्यामपि कदाचिदुदयात् । तथाहि योऽङ्गुलीयकबुभुत्सया ससन्तमसावपवरकदेशं हस्ताभ्यां सर्वतः परामृष्टवान् तस्य तावत् सर्वदेशपरामर्शात् वस्तुतो योग्यानुपलब्धिर्जातैव, अथच किं सर्वो देशः परामृष्टः किं वा कश्चिद्देशो न परामृष्टोऽपि स्यादिति संदिहानो योग्यानुपलब्धेरनिश्चयात् सत्यामपि तस्यां नाङ्गुलीयकस्याभावमवधारयति । कदाचित्तु सर्वतोऽपरामृश्यापि सर्वतः

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

गृह्यमाणस्यैवाभावव्यवहारादिति श्रुत्वा लब्धावसरः शङ्कते—**नन्विति** । असंभवे कारणमाह—**भावेति** । परिहारं शङ्कते—**संप्रतीति** । दूषयति—**नेति** । अयोग्यतामेवोपपादयति—**नहीत्यादिना** । वैषम्येण परिहरति—**स्यादेवमिति** । शङ्कामुपसंहरति—**अत इति** । समाधत्ते—**उच्यत इति** । ननु भाष्ये प्रमाणाभावग्रहणात्कथं स्मरणाभावो बोधक इत्युच्यते तत्राह—**भाष्ये चेति** । अस्मिन्नर्थे *वार्तिकमप्युदाहरति—**तथेति** ॥

सत्तामात्रेण बोधकत्वमिति यदुक्तं तत्र शङ्कते—**नन्विति** । एतदेव विवृणोति—**तथाहीति** । ततश्चैतत्सिद्धमित्याह

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

ताभावग्राहकत्वेन चानक्षतं स्यादित्यर्थः । **वार्तिकमिति** । एतच्च वर्तिकातिरिक्तम् । **कार्येत्यादि** । यत्तु दधिरूपं प्रागभूत्वा भवति तदुपादानं कार्यं यत्तु प्रागवस्थितक्षीररूपं पश्चान्न भवति तदुपादानं कारणं तथा गौरश्वो न भवति

परामृष्टमिति भ्रान्त्या योग्यानुपलब्धिं निश्चित्यासत्यामेव तस्यां भ्रान्त्याङ्गुलीयकस्याभावमवधारयति । तस्माज्ज्ञाततयैव योग्यानुपलब्धिरभावज्ञानकारणमित्यभ्युपगन्तव्यम् । तथाचानवस्थाप्रसङ्गः । तस्मात्स्वसंवेद्या तन्मात्रसंविदेव दृश्यस्य प्रतियोगिनोऽभावो न तत्त्वान्तरम् ॥ * ॥ ननु चाभावानङ्गीकारे तन्मात्रधीरपि न कदाचिन्निरूपयितुं शक्यते, नच भूतलधीरेव तन्मात्रधीः, संसृष्टधियोऽपि तन्मात्रतापातात् । तत्रापि भूतलावभासात् । अतो घटादिवेदनाभावे सति या भूतलधीः सा तन्मात्रधीः । एवंच ज्ञानाभावाङ्गीकारादभावपह्नवोऽनर्थकः । कथं तर्ह्येतन्निरूपयितव्यं, तदभिधीयते—घटाद्यभावोऽस्ति प्रमेयम् । योग्यप्रमाणानुदयश्च तस्य सत्तामात्रेणैव नेत्रादिवद्बोधको न ज्ञाततया, यतोऽनवस्था स्यात् ॥ * ॥ यत्तु सत्यामपि योग्यानुपलब्धावभावानवधारणम्, असत्यां चावधारणमिति, तत्तु योग्यत्वाज्ञानकृतं, योग्यानुपलम्भो हि कारणं तत्र योग्यत्वं ज्ञाततयैव कारणं न सत्तामात्रेण, ततः सदेव योग्यत्वं कदाचिदज्ञातं नाभावमवधारयति कदाचित्त्वविद्यमानमेव योग्यत्वं भ्रान्त्या निश्चित्याभावमवधारयति । उपलब्ध्यभावस्तु सन्मात्रतया कारणं न ज्ञाततया, तेन नानवस्थापत्तिरिति सर्वमवदातम् । अतोऽस्त्यभावाख्यं प्रमेयम् ॥

अभावस्यानुपलब्धिगम्यत्वम् ।

नच तदैन्द्रियकम्, इन्द्रियव्यापाराभावेऽपि तज्ज्ञानोत्पत्तिदर्शनात् । योऽहनि प्रातःकाले गृहेऽवस्थितो मध्यंदिनसमये पृच्छ्यते 'किमस्मिन्गृहे प्रातःकाले माथुरः कश्चित्पुरुषः शुक्लवासा दीर्घ-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

—**तस्मादिति** । ननु चेत्यादिसिद्धान्तग्रन्थः शङ्कापरिहारार्थः । **नन्विति** पूर्वपक्षिसंबोधनार्थम् । अस्तु नामाभावाङ्गीकारस्तथापि प्रमेयत्वं प्रमाणत्वं च कथं निरूपणीयमिति पृच्छति—**कथमिति** । निरूपयितुमारभते—**तदभिधीयत इति** । पूर्वोक्तव्यभिचारं परिहर्तुमनुवदति—**यत्त्विति** । उपपादितमर्थं निगमयति—**अत इति** । यस्मात्सर्वोऽप्ययं कार्यकारणादिव्यवहारोऽभावं विना नोपपद्यते तस्मादभावाख्यं प्रमेयमस्तीत्यर्थः । नचावस्तुन एते भेदाः संभवन्ति । किंच कारणस्वरूपमेव कार्यस्याभावः, अतोपि वस्तुत्वम् । उक्तंच—'कार्यादीनामभावः को यो भावः कारणादितः' । एतच्चानुपपन्नम् । कारणातिरिक्ताभावोपपादनेन वस्त्वसंकरस्य पूर्वं साधितत्वात् भावस्वरूपत्वे चाभावस्य प्रत्यक्षावसेयत्वेनाभावप्रमाणोच्छेदः । सत्यम् । नात्र कारणस्वरूपमेवाभाव इत्युच्यते किंतु कार्याभावस्य वस्तुत्वसिद्ध्यर्थं कारणधर्मत्वमुच्यते । क्षीरमेव दध्यभावः तद्धर्मधर्मिणोश्चानतिभेदात् । तदयं वस्तुधर्मः सन् कथमवस्तु स्यादिति प्रयोगद्वयं चात्र वार्तिककारैरुक्तम्—*'यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् ॥ तस्माद्गवादिवद्वस्तु *प्रमेयत्वाच्च गम्यते ॥' नचैतस्य प्रत्ययद्वयस्य मिथ्यात्वं बाधकप्रत्ययाभावात् । नन्ववस्तुनामाभावाख्यं प्रमेयं तस्य प्रमाणं किंलक्षणकमिति तावद्वक्तव्यम् । ननूक्तं भाष्यकारेण 'अभावोऽपि प्रमाणाभाव' इति तत्राभाव इति लक्ष्यनिर्देशः, प्रमाणाभाव इति लक्षणं, प्रत्यक्षादेरर्थापत्तिपर्यन्तस्य यथाविषयमनुत्पत्तिः अभावप्रमाणस्य लक्षणमित्यर्थः । प्रत्यक्षाद्यनुत्पत्तिस्तु अभावरूपे वस्तुनि इह प्रदेशे घटो नास्तीति या बुद्धिः सा भावाख्यं प्रमाणमित्युक्तं भवति ॥

**ननु** निमीलिताक्षस्याभावज्ञानानुत्पत्तेरिन्द्रियार्थसंनिकर्षे सत्युत्पत्तेः प्रत्यक्षमेवैतत् । नच संनिकर्षाभावः संयुक्तविशेषणताया एव संबन्धत्वादफलवती शाखेतिवदित्याशङ्क्याह—**नचेति** । अयमाशयः—न तावदिन्द्रियाभावयोः संयोगः अद्रव्यत्वात् समवायादेश्चानङ्गीकारात् । नापि संयुक्तविशेषणत्वं प्रत्यासत्तिः । असति संबन्धे विशेषणत्वायोगात् । नहि भूतलघटाभावयोः कश्चित्संबन्धोऽस्ति येनाभावस्तद्विशेषणं स्यात् संबन्धं च विना विशेषणविशेष्यभावे हिमवद्विन्ध्ययोरपि तदापातात् । भावाभावयोः स्वरूपमेव संबन्ध इतिचेत् । न । तस्य संबधलक्षणरहितस्यासंबन्धत्वात् । **नन्वेवमिन्द्रियाभावयोरपि** स एवास्तु न विशेषणतानङ्गीकारात् तदङ्गीकारे वा गुणादेरपि तयैव प्रत्यासत्त्या ग्रहणात्संयुक्तसमवायादिवैयर्थ्यापत्तिः संयुक्तविशेषणत्वेन च घटाभावस्याक्षग्रहणे रसादयोपि चक्षुषा गृह्येरन् । अयोग्यत्वादग्रहणमितिचेत्तर्हि योग्यतैवैका कार्यानुमेया ग्रहणकारणमिति संनिकर्षषट्प्रकारत्वमनुपपन्नम् । **ननु** भावादभिन्नत्वेनाभावस्यापीन्द्रियग्रहणयोगतास्त्येव । मैवम् । भेदस्याप्यङ्गीकारेणात्यन्तमभेदाभावादितिदिक् । इन्द्रियव्यापाराभावेऽपि ज्ञानोत्पत्तिं दर्शयति—**योऽहनीत्या-**

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

अश्वश्च गौर्न भवति इत्यादिव्यवहारो न सिद्ध्यतीत्यर्थः । **अभावं चेति** । अभावस्य प्रागभावादिरूपभेदे सतीत्यर्थः । **यद्वेति** । प्रागभावादिरूपेण व्यावृत्तिः अभावरूपेण चानुवृत्तिरिति हेत्वन्तरम् । **प्रमेयत्वादिति** । **कर्माणीति** ।

तमो लोहितवर्णः समागतः' इति स तदानीमेव योग्यस्मरणानुदयात्तस्याभावं प्रातःकालीनमवधारयति विनैवेन्द्रियव्यापारेण । नच प्रातरवगतोऽभावस्तदा स्मर्येत इति वाच्यम् । प्रतियोगिनो माथुरस्य तदानीं कथंचिदपि बुद्ध्यावनारोहात्, अबुद्धिस्थे च प्रतियोगिनि भावे तदभावज्ञानासंभवात् । एवंच यत्रापीदानीमेवानुपरतेन्द्रियव्यापारेणैव संनिहितदेशकालवर्त्यभावः प्रतीयते तत्रापि योग्यज्ञानानुदयस्यैव क्लृप्तसामर्थ्यस्य कारणत्वसंभवान्नेन्द्रियस्य कारणत्वं कल्पयितुं शक्यम् । तस्मान्न प्रत्यक्षोऽभावः । नाप्यनुमेयः, अज्ञातेन तेन कस्यचिल्लिङ्गस्य संबन्धग्रहणासंभवात् ॥ * ॥ यदत्र कैश्चिदुच्यते —'दृश्यस्य सत्तादर्शनव्याप्ता तेन व्यापकीभूतदर्शननिवृत्त्या व्याप्यस्य दृश्यस्य निवृत्तिरवसीयत' इति तन्निरस्तम् । व्यापकनिवृत्त्या व्याप्यनिवृत्तिमनुमिमानेनावश्यं दृष्टान्तधर्मिषु निवृत्तिद्वयमवगम्य तयोश्च नियममवधार्य साध्यधर्मिणि पक्षेच साधनभूतां दर्शननिवृत्तिं केनचित्प्रमाणेनावगतम्य ततो दृश्यनिवृत्तिरनुमातव्या, निवृत्तेश्चाभावात्मिकाया न प्रत्यक्षेण ग्रहणं संभवति, निवृत्त्यन्तरेण तदनुमाने तदपि निवृत्तिरूपत्वान्निवृत्त्यन्तरेणानुमातव्यम् तदपि तथेत्यनवस्थापत्तिः । अतोऽवश्यं क्वचित्प्रमाणान्तरभूतयानुपलब्ध्याऽभावः प्रत्येतव्यः । प्रमितेच तस्मिन्पश्चाद्भवत्वनुमानम् । सिद्धं तावदभावस्य प्रमाणान्तरत्वम् शब्दोपमानार्थापत्तयस्तु नाशङ्कनीया एव। अतः सिद्धं षष्ठं प्रमाणम् । एतावन्त्येव च प्रमाणानि ॥ * ॥ यत्त्वधिकं संभवाख्यं प्रमाणं सहस्रादिसंख्ययाऽवयवभूतशतादिसंख्यावगतिः आढकप्रमाणेनावयवकुडवपरिमाणावगतिः कैश्चिदिष्यते, तदविनाभावनिमित्तत्वादनुमानमेव । 'वटेवटे वैश्रवणः' इत्यादिकं चैतिह्यं प्रमाणमेव न भवति निर्णयाभावात् । प्रामाण्येपि वाऽऽगमेऽन्तर्गतत्वान्न प्रमाणान्तरम् । प्रातिभाख्यमपि प्रमाणं कैश्चिदिष्टं 'श्वस्ते भ्रातागन्ते' त्यादिकम्; तत्तु लिङ्गाद्याभासजं, अनिश्चायकत्वादेवाप्रमाणम् । अतो यत्काश्यपीयैः प्रतिभागम्यमृषीणां धर्माधर्मत्वमाश्रितं तदसारम् । लोकप्रसिद्धिरपि प्रत्यक्षाद्यन्तर्गतैवेति न प्रमाणान्तरम् । अतः षडेव प्रमाणानि । तथाच भगवद्रामायणे 'राम षड्युक्तयो लोके याभिः सर्वोऽनुदृश्यते' इति । इत्याभाववादः ॥

चित्राद्यैहिकफलचोदनास्वाक्षेपः ।

लोकप्रसिद्धस्वतःप्रामाण्यदर्शनेन (प्रत्यक्षादीनां) तदन्तर्गतस्यापि च शास्त्रस्य स्वतःप्रामाण्यात् 'चो-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**दिना** । अत्रैव स्वरूपमात्रं दृष्टं वेत्युदाहार्यम् । उपपादितमर्थं निगमयति—**तस्मादिति** । अनुमानेऽन्तर्भावं निराकरोति —**नापीति** । अनुमानाद्भेदं निगमयति—**सिद्धमिति** । शब्दाद्यन्तर्भावसंभवानैव नास्तीति कृत्वा तद्भेदोपपादनं न कृतमित्यर्थः । महाप्रकृतं निगमयति—**अत इति** । ननु सर्वस्य प्रमाणस्य भावात्मकस्यैवोपलम्भादभावस्य प्रमाणत्वोपपादनमनुचितम् । सत्यम् । तस्य भावप्रमेयविषयत्वात् । अभावे तु प्रमेयेऽभावस्यैव प्रामाण्यौचित्यात् । प्रमेयानुरूपत्वात्प्रमाणाङ्गीकारस्य । यथाहुः—'भावात्मके यथा मेये नाभावस्य प्रमाणता ॥ तथैवाभावमेयेपि नच भावप्रमाणता ॥ भावात्मकस्य मानत्वं नच राजाज्ञया स्थितम् ॥ परिच्छेदफलत्वात्तु प्रामाण्यं स्याद्वयोरपि' इति । प्रयोगश्च प्रमाणाभावः प्रत्यक्षादेर्भिद्यते अभावशब्दवाच्यत्वात् प्रमेयाभाववत् । तथा प्रमेयाभावः स्वानुरूपेण प्रमाणेन मीयते प्रमेयत्वात् भावाख्यप्रमेयवदिति । प्रयोजनं च वार्तिककारैरुक्तम्—*'कर्माणि सर्वाणि फलैः समस्तैः सर्वैर्यथावच्च यदङ्गकाण्डैः ॥ न संगतानीह परस्परं च नाङ्गं तदेतत्प्रभवं क्रतूनाम्' इति । पौराणिकमतमनुवदति—**यत्त्विति** । उक्तंच—'इह भवति शतादौ संभवाद्यः सहस्रान्मतिरवियुतभावात्सानुमानादभिन्ना ॥ जगति बहु न तथ्यं नित्यमैतिह्ययुक्तं भवति तु यदि सत्यं नागमाद्भिद्यते तत्' । सिद्धान्तमुपसंहरति—**अत इति** । एवं युक्तिभिः प्रमाणषट्कमुपपाद्यागममप्युदाहरति—**तथाचेति** । इत्यभाववादः ॥

नन्वौत्पत्तिकसूत्रेण सकलस्य वेदस्य प्रामाण्ये साधिते पुनराक्षेपोऽसंगत इत्याशङ्क्य संगतिं करोति—**लोकेति** । प्रतिज्ञार्थे साधितेऽप्यधुना सूत्रावयवेन पूर्वपक्षवादी विषयविशेषे शङ्कां करोतीति नासंगतिरित्यर्थः । इन्द्रियाणि हि विद्यमानमर्थमुपलभन्त एव । नच चित्रेष्ट्यनन्तरमुत्पन्नाः पशवश्चक्षुषोपलभ्यन्ते । यदा चोपलभ्यन्ते न तदा चित्रेष्टिरतश्चित्रा-

दनालक्षणोऽर्थो धर्मः' इति प्रतिज्ञातेऽर्थे साधिते संप्रति 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इत्यनेन चित्रादिचोदनानामैहिकफलानां प्रत्यक्षादिभिरसंवादेन विसंवादेन च प्रामाण्यमाक्षिप्यते, पूर्वोक्तस्तु 'नन्वतथाभूतं' इत्याक्षेपः परलोकफलस्वर्गकामादिचोदनाविषय इति विषयभेदादपौनरुक्त्यम् ॥ * ॥ **ननु च** नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदनेति चोदनामात्रपरिग्रहादविशेषेणैवासावाक्षेपः तथेहापि 'यदा तावदसौ विद्यमानासीत् तदा फलं न दत्तवती । यदा फलमुत्पद्यते तदासौ नास्ति कथमसती फलं दास्यती'त्याक्षेपस्य स्वर्गकामचोदनास्वपि तुल्यत्वादविशेषत्वमिति नास्ति विषयभेदः। उच्यते—पूर्वाक्षेपस्तावत्परलोकफलविषय एव। तत्र हि 'प्रमाणान्तरापेक्षः शब्दो न स्वातन्त्र्येण प्रमाणम्। नच चोदनार्थे प्रमाणान्तरमस्ति अतोऽप्रमाणं चोदनेत्ययमाक्षेपः, स चायं परलोकफलविषय एव भवति। पशुकामचोदनासु हि यदि तावत्कर्मानन्तरमेव पश्वादीन्युपलभ्यन्ते ततोऽपेक्षितमूलप्रमाणलाभात्सिद्ध्यति चोदनायाः प्रामाण्यम् । अथ नोपलभ्यन्ते ततः प्रमाणान्तरबाधेनैव सुखमप्रामाण्यमभिधातुं शक्यत इति किमाक्षेपसारूप्यप्रतिपादनव्यसनेन। तस्मात्स तावत्परलोकफलविषय एव । अयं त्वैहिकफलविषयः । नहि पारलौकिकस्य फलस्यानन्तरकालानुपलब्ध्या निरासः संभवति । नहि तेनानन्तरं भवितव्यम्, जन्मान्तरभावित्वात् ॥ * ॥ **ननु** 'असती कथं फलं दास्यती'तीदं तुल्यम्। नेति ब्रूमः—अपूर्वद्वारेण संभवात् । स्वर्गो हि स्वभावाद्देहान्तरानुभवनीयत्वादनन्तरासंभवित्वेन शास्त्रार्थावधारणवेलायामेव निश्चीयत इत्यपूर्वमन्तर्भाव्यैव तत्र शास्त्रार्थोऽवधार्यते, तच्च चिरस्थायीति कारणस्याविनाशात्संभवति कालान्तरे स्वर्गस्योत्पत्तिः। पश्वादयस्त्वनन्तरमपि संभवन्तीति तत्साधनत्वेन चोद्यमानानां चित्रादीनां शास्त्रार्थावधारणसमयेऽपूर्वप्रणाडीसमाश्रयणे कारणं न किंचिदस्तीति स्वरूपेणैव फलसाधनत्वं शास्त्रार्थोऽवधार्यते । तथाचानन्तरमेव फलेन भवितव्यम्। कालान्तरे कर्मस्वरूपस्य विनष्टत्वात् कारणत्वाभावात्, अनन्तरं च फलमनुपलब्ध्यैव निरस्तमित्यप्रामाण्यं चित्रादिचोदनानाम् ॥

चित्रादिचोदनास्वाक्षेपपरिहारौ।

नचानुष्ठानानन्तरं फलानुपलब्ध्यैव शास्त्रार्थेऽपूर्वमन्तर्भावयितुं शक्यते शास्त्रार्थावधारणपूर्वकं ह्यनुष्ठानं नानुष्ठानपूर्वकं शास्त्रम्, तस्मादैहिकानामत्राक्षेप इति युक्तो विषयभेदः । विषयभेदाच्च न्यायोपि भिद्यते । परलोकफलासु प्रमाणापेक्षितत्वमाक्षेपन्यायः । अत्रतु प्रमाणान्तरविरोध इति

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

वाक्यं प्रत्यक्षविसंवादादप्रमाणम्। तथा यज्ञायुधवाक्यमपि प्रत्यक्षविरोधादप्रमाणम् । तत्सामान्यादग्निहोत्रादिचोदनानामप्यप्रामाण्यमिति चोदना न धर्मे निमित्तमतः प्रतिज्ञातार्थो सिद्धिरिति सूत्रावयवार्थः । अत्र वृत्तिकारेण प्रत्यक्षसूत्रादविच्छिद्यानिमित्तमित्याद्यवयवः प्रतिज्ञातचोदनाप्रामाण्याक्षेपपरतया व्याख्यातः । **नन्वत**थेत्यादिना पौनरुक्त्यमाशङ्क्य परिहरति—**पूर्वोक्तस्त्विति**। अत्रैव चोदनासूत्रस्थभाष्यं 'नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत्किंचन लौकिकं वाक्यं नद्यास्तीरे पञ्च फलानि सन्तीति। तत्तथ्यमपि भवति वितथमपि भवती'ति । अभेदं शङ्कते—**ननुचेति**। यदेत्यादिभाष्य ग्रन्थो*त्रत्यः। परिहरति—**उच्यत इति**। आक्षेपवैलक्षण्येन विषयभेद इति समस्तार्थः। अत्रत्यभाष्यस्य साधारण्यं शङ्कते—**नन्विति**। परिहरति—**नेति**। अपूर्वद्वारा तेषां स्वर्गादिफलसाधनत्वसंभवान्न तद्विषयोऽयमाक्षेपः संभवतीत्यर्थः। **तथाचेति**। स्वरूपेणैव फलसाधनत्वे सतीत्यर्थः ॥

**ननु** चित्रादिवाक्येऽप्यैहिकफलत्वमात्रं गम्यते नत्वनन्तरमेव फलमिति । अतो विलम्बितफलसिध्यर्थमपूर्वान्तर्भावो वाच्य इत्याशङ्क्याह—**नचेति**। अथवा पूर्वोक्तमेव सर्वविषयमाक्षेपमधुना सूत्रारूढं करोतीत्याह—**अथवेति** । पूर्वो-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

सर्वप्रकारोऽपि वस्त्वसंकरो भावप्रमाणक एव । नहि दर्शादेः श्रुत्यादिचोदितव्यतिरेके आगमान्तराभाव फलान्तराभावे वा आगमाभाव एव प्रमाणं नान्यत्। एतत्प्रभवं च आगमाभावप्रभवमित्यर्थः । न तथ्यं अनिर्णायकत्वात् ॥ इत्यभावः ॥ ॥ **अत्रत्य इति**। आक्षेपस्य इत्यर्थः । **निमित्ताभावेनेति** । चित्रादिरूपस्य निमित्तस्याभावादित्यर्थः।

न्यायभेदादपौनरुक्त्यम् । अथवा पूर्वोक्तं स्वमते सूत्राणि व्याचक्षणो सूत्रितमेवाक्षेपं दर्शितवान् । इदानीं तु वृत्तिकारमतेन सूत्रेणैवाक्षेपः क्रियते ॥ * ॥ तदिह । चित्रादिवाक्यानि प्रमाणान्यप्रमाणानि वेति विचार्यते । तदर्थं च किं तेषां प्रमाणान्तरविरोधोऽस्ति न वेति । तत्र फलानामनन्तरमुपलब्ध्यानामनुपलम्भादतत्साधनत्वं चित्रादीनामवगम्यते । तदिदं प्रत्यक्षाविसंवादेऽवश्यंभाविनि सति तदभावादप्रामाण्यम् ॥ * ॥ कचित्तु प्रत्यक्षविरोधादप्रामाण्यं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'ति, यज्ञायुधीति हि यज्ञायुधसंयोगाच्छरीरमुच्यते, यजमानशब्दोऽपि हि कर्तृवचनस्तस्यैव वाचको नात्मनः, तस्य सर्वगतत्वेनाभिमतस्य क्रियाविरहिणः कर्तृत्वायोगाद्यज्ञायुधसंयोगाभावाच्च, संयोगाभिप्रायश्चायं यज्ञायुधीति शब्दः पात्रचयनस्तुत्यर्थत्वात्, न स्वस्वामिसंबन्धाभिप्रायः । प्रागपि पात्रचयनात्तत्संभवात् शरीरस्य च प्रत्यक्षविरुद्धं स्वर्गगमनम् । नच कालान्तरेऽपि संभवति । यातीति वर्तमानापदेशात्, भस्मीभूतस्य च कालान्तरेऽपि तदसंभवात् । नच शरीरव्यतिरिक्तः कश्चिदात्मास्ति तस्मादप्रमाणम् । एवमपौरुषेयस्याप्यप्रामाण्ये स्वर्गकामचोदनायामपि नाश्वसितुं युक्तमित्यप्रामाण्यमेवायातम् ॥ * ॥ एवं प्रत्यक्षानुपलब्धिविरोधेन प्रत्यक्षविरोधेन चाक्षिप्ते प्रामाण्ये विरोधपरिहारमुपेक्ष्यैव कारणदोषनिराकरणेन पूर्वोक्तमेव स्वतःप्रामाण्यं स्वपक्षसाधनत्वेन सिद्धान्तवादी दर्शयति—'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेश' इति । पूर्वं हि प्रत्यक्षादीनां स्वतःप्रामाण्यस्य लोकसिद्धत्वात्तदन्तर्गतत्वाच्च शास्त्रमपि प्रमाणमित्येतावदुक्तं नतु कारणदोषनिराकरणं कृतम्, इहतु शब्दार्थसंबन्धस्यौत्पत्तिकत्वात्तद्वारा पुरुषानुप्रवेशाभावात्पुरुषाश्रयत्वाच्च शब्ददोषस्यादुष्टमेव शास्त्रमतः प्रमाणमित्युक्तम् ॥ इति चित्राक्षेपवादः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

क्रमाक्षेपं सूत्रव्याख्यानकाले उत्सूत्रमेव दर्शितवान् । इदानीं सूत्रारूढं भाष्यकारः करोतीत्यर्थः । सूत्रारूढत्वे विचारस्वरूपं दर्शयति—**तदिहेति** । सूत्रेणैव पूर्वपक्षमाह—**तत्रेति** । चित्रादिवाक्यमप्रमाणं प्रत्यक्षादिगोचरार्थप्रतिपादकत्वे सति तद्विसंवादात् विप्रलिप्सुवाक्यवत्, तथा चित्रा पशुफला न भवति स्वकाले तदजनकत्वात् स्नानभोजनादिवत् इति प्रयोगद्वयं सूत्रसूचितं द्रष्टव्यम् । **ननु** साध्यसाधनसंबन्धमात्रं विधिना बोध्यते नानन्तर्यं तत्कथमनन्तरानुपलब्ध्या विधिविषयबाधः । सत्यम् । कालान्तरे *निमित्ताभावेन फलानुत्पादात् सामर्थ्यादानन्तर्यमाक्षिप्तम् । सामर्थ्यस्य च शब्दैकदेशत्वेन शब्दप्रतिपादितमेव तद्भवति दृष्टविरुद्धमपि भवति किंचिद्वचनमित्यादिभाष्यानुसारेण वाक्यान्तरमुदाहरति—**कचित्त्विति । तस्यैवेति** । यागयोग्यश्च यजमानशब्दप्रवृत्तौ निमित्तं वर्णत्रयस्य च यागाधिकारः शरीरस्य च वर्णत्रयविभागो नात्मन इति भावः । शरीरस्य जडत्वेनाकर्तृत्वादयजमानत्वमिति चेन्न । चेतनावच्छेदकत्वेन तत्संभवात् । अस्तु शरीरवचनो यजमानशब्दः किमेतावतानिष्टमत आह—**शरीरस्येति** । स्वर्गगमनविरुद्धभस्मीभावदर्शनादप्रमाणं वाक्यं स्यादित्यर्थः । प्रयोगश्च—यज्ञायुधीयवाक्यमप्रमाणं प्रत्यक्षविरुद्धार्थप्रतिपादकत्वात् अम्बुनि मज्जन्त्यलाबूनीत्यादिवाक्यवत् । **ननु** 'धूम एवाग्नेर्दिवा ददृशे नार्चि'रित्यादिषु *मन्त्रेषु च हेतुसत्वादनैकान्तिकत्वम् । नैष दोषः । तेषामपि पक्षीकृतत्वात् *विधौ तु भविष्यत्तापि फलस्य संभवेत् नचासौ विधिरित्याह—**नचेति** । वर्तमानापदेशे तु तदानीं स्वर्गगमनं प्रत्यक्षविरुद्धमिति भावः । अस्तुवा विधित्वं तथाप्यनुपपत्तिरित्याह—**भस्मीभूतस्येति** । आत्मनः संभवतीति चेन्नेत्याह—**नेति** । आक्षेपकर्त्रा तदनङ्गीकारादिति भावः । अतिरिक्तो वा नासौ यज्ञायुधी भवेदिति भावः । आक्षेपमुपसंहरति—**तस्मादिति** । एवमग्निहोत्रादिवाक्येष्वपि मृषार्थता वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्विवेत्यभिप्रायवानाह—**एवमिति** । ननु विरोधपरिहारेण समाधानमकृत्वैवानन्तरमौत्पत्तिकस्त्वित्यादिना सिद्धान्तवादिनः प्रामाण्योपपादनमयुक्तमित्याशङ्क्याह—**एवमिति** । स्थिते हि प्रामाण्ये तद्बलेनैव सर्वाक्षेपपरिहारः सुकर इति भावः । **नन्वेवं**जातीयकस्यार्थस्य पूर्वमेव साधितत्वात्पुनरुक्तमेतदित्याशङ्क्याह—**पूर्वं हीति** । वैदिकवचनं न मिथ्या स्वार्थे वक्त्रनपेक्षत्वात् पदार्थे पदबुद्धिवदिति प्रयोगो द्रष्टव्यः । अयंच सूत्रार्थः । तुशब्दः पक्षव्यावृत्त्यर्थः । नाप्रामाण्यं चोदनायाः । यत औत्पत्तिकोऽपौरुषेयः शब्दार्थयोः संबन्धः तस्य चोदनालक्षणः सम्यक्प्रत्यय इत्यस्यार्थस्य ज्ञानं ज्ञापकः निश्चायकः । पौरुषेयो हि प्रत्ययो विप्लवते । अयं तु न तथा तस्मात्प्रमाणमेवेति । इति चित्राक्षेपवादः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**मन्त्रेषुचेति** । अदितिर्द्यौरित्यादिष्वित्यर्थः । **विधौत्विति** । यदि यायादिति विधिः श्रूयेतेत्यर्थः ॥ **एतद्घटितेति** ।

शब्दार्थयोः संबन्धाक्षेपः।

एवं संबन्धनित्यतयाऽप्रामाण्यं निराकृत्य स्वतःप्रामाण्ये स्थापिते, परः पुनराह—'स्यादेतत् नैव शब्दस्यार्थेनास्ति संबन्धः कुतोऽस्य पौरुषेयताऽपौरुषेयतावे'ति। तथाहि न तावत्संयोगोऽस्ति तद्भावे हि क्षुरादिशब्दोच्चारणे मुखस्य पाटनापि स्यात्। नच कार्यकारणभावः, द्वयोरपि नित्यत्वात्। ननु वर्णस्फोटजात्यादिविकल्पेन व्यक्त्याकृतिसंबन्धादिविकल्पेन च बाह्ययोः शब्दार्थयोर्दुर्निरूपत्वाद्गकाराद्याकारं विज्ञानमेव शब्दः, तज्जनितं च गवाद्याकारविज्ञानमेवार्थ इति कार्यकारणत्वमेव शब्दार्थयोः संबन्धः। नैवम्। निरालम्बनज्ञानानुत्पत्तेः, संबन्धान्तरं तु नाशङ्कनीयमेव॥ * ॥ प्रत्याय्यप्रत्यायकत्वं संबन्ध इति चेत् न। असति संबन्धे प्रत्यायकत्वासंभवात्। केन संबन्धेन शब्दोऽर्थं प्रत्याययतीत्येतदेव हि निरूप्यते। तत्र प्रत्यायकत्वादेव प्रत्यायकत्वमित्यात्माश्रयदोषापत्तिः, तस्मान्नास्ति संबन्धः। असति च संबन्धे वस्त्वन्तरस्य वस्त्वन्तरबोधकत्वासंभवादनिरूपितहेतुविशेषं स्वप्नज्ञानवद्यादृच्छिकं शब्दार्थज्ञानं न प्रमाणं भवितुमर्हति। लौकिकस्तु व्यवहारोऽसत्यपि शब्दप्रामाण्ये प्रमाणान्तरवशात्कथंचित्संगच्छेतापि। वैदिकस्तु व्यवहारः शब्दैकशरणत्वादनादर्तव्यः स्यान्निर्मूलत्वात्॥ * ॥ स्यादेवं यद्यसंबन्धः शब्दार्थयोः, अस्ति तु संबन्धः प्रत्याय्यप्रत्यायकत्वलक्षणः, असत्येव संबन्धान्तरे स्वभावत एव शब्दोऽर्थस्य प्रत्यायकोऽर्थश्च प्रत्याय्य इत्ययमेव संबन्धो भविष्यति। यच्चेदमिन्द्रियलिङ्गादिवत्संनिकर्षव्याप्त्यादिसंबन्धानपेक्षमर्थप्रतिपादनम् इदमेवाभिधानमित्युच्यते, तदेव च संज्ञासंज्ञित्वं, तेनोच्यते संज्ञासंज्ञिलक्षणः संबन्ध इति॥*॥ किं पुनः शब्दस्यार्थप्रतिपादने प्रमाणम्, शब्दानन्तरमर्थप्रतिपत्तिरेव। नन्वियमभिप्रायानुमानद्वा-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एवं सिद्धान्तवादिना पौरुषेयत्वेन प्रामाण्ये साधिते परं पूर्वपक्षभाष्यं स्यादेतदित्यादि तस्य तात्पर्यमाह—**एवमिति**। अत्र सिद्धान्तवादिना संबन्धिनित्यत्वमङ्गीकृत्य स्वतःप्रामाण्ये साधिते पूर्वपक्षवादी संबन्धं तस्य च नित्यत्वमनङ्गीकुर्वाणः संबन्धाभावं तावत्प्रतिपादयतीत्यर्थः। स्यादित्यादि वेत्यन्तो भाष्यग्रन्थः। संबन्धाभावमुपपादयति—**तथाहीति**। क्षुरादीत्यादिशब्देन मोदकग्रहणं पाटनादीत्यादिना पूरणग्रहणम्। **नन्वे**तदयुक्तं, संबन्धिनोः समानदेशतानियमाभावात्। नहि पित्रादिः सर्वदा पुत्रादिदेश एवावतिष्ठते संयोगस्य च सिद्धान्तिनानङ्गीकारात्तन्निराकरणं चायुक्तम्। सत्यमेतत्। संबन्धान्तरस्यासंभवात्पारिशेष्यात्संयोग एवावशिष्यते। लौकिकानां तत्रैव संबन्धत्वप्रसिद्धेः संबन्धिनोश्चैकत्र सद्भावदर्शनात् क्षुरशब्दवत्तदर्थस्यापि मुखे सद्भावापत्तेः पाटनं मोदकसद्भावे च पूरणं स्यादिति युक्तमेव तन्निराकरणम्। अयमत्र प्रयोगः—शब्दोऽर्थेन न संयुज्यते अर्थदेशानन्तरमदर्शनात् विन्ध्यो हिमवता यथेति। संबन्धान्तरं निराकरोति—**नचेति**। भिन्नसामग्रीकत्वादित्यपि हेतुर्बोद्धव्यः। एतमेव संबन्धमुपपादयितुं शङ्कते—**नन्विति**। शब्दः किं वर्णमात्रं वा स्फोटो वा जातिर्वा ज्ञानं वेत्यादिविकल्पेन शब्दस्य दुर्निरूपत्वं तथार्थोऽपि किं व्यक्तिर्वाऽऽकृतिर्वा संबन्धो वा समुदायो वेत्यादिविकल्पेनार्थस्य दुर्निरूपत्वमित्यर्थः। दूषयति—**नैवमिति**। **ननु** संयोगाभावेऽपि समवायादिसंबन्धान्तरं भविष्यति तत्राह—**संबन्धान्तरमिति**। न तावत्समवायः युतसिद्धत्वात् संयोगसमवायाभावे *चैतद्घटितसंबन्धान्तराभावः। नाप्याश्रयाश्रयिभावः आकाशपृथिव्यादिभिन्नाश्रयसद्भावादिति भावः। सिद्धान्त्यभिमतं संबन्धमाशङ्कते—**प्रत्याय्येति**। परिहरति—**नेति**। कथं तर्हि गामानयेत्यादिशब्दश्रवणानन्तरं पुरुषस्य निष्कम्पा प्रवृत्तिस्तत्राह—**लौकिक इति**। समाधत्ते—**स्यादेवमिति**। कथं संबन्धाभावे प्रत्यायकत्वमत आह—**स्वभावत इति**। वाच्यवाचकशक्तिद्वयाभिप्रायोऽयं न संबन्धान्तरं स्वसिद्ध्यर्थमपेक्षत इति भावः। **ननु** किमिदं वाचकत्वं नाम न तावद्गमकत्वं धूमादेरपि वाचकत्वप्रसङ्गात्। नाप्यर्थसादृश्येन गमकत्वं प्रतिबिम्बस्यापि वाचकत्वप्रसङ्गात्। नाप्यात्माध्यासेन गमकत्वं अध्यासस्य निरस्तत्वात्। नाप्यात्माभेदेन गमकत्वं अभेदे गम्यगमकत्वानुपपत्तेः। नापि रूपत्रयादिरहितं गमकत्वं चक्षुरादेरपि वाचकत्वप्रसङ्गात्। मैवम्। अभिधानस्यैव वाचकत्वात्। **नन्व**भिधानमेव न ज्ञायते किं तदिति तत्राह—**यच्चेदमिति**। यथेन्द्रियं संनिकर्षमपेक्षते लिङ्गादिकं वा व्याप्त्यादि तथायं न भवति किंतु संनिकर्षाद्यनपेक्षमेव यदर्थप्रतिपादनं इदमेवाभिधानमित्युच्यत इत्यर्थः। तदुक्तं भवति—अर्थप्रतिपत्तिफलकः शब्दव्यापारोऽभिधानक्रिया तस्यां च प्रतिपत्त्याख्यफलशालितया यदर्थस्य कर्मत्वं तद्वाच्यत्वं, शब्दस्य च विवक्षावशेन यत्कर्तृत्वं करणत्वं वा तद्वाचकत्वमिति। उक्तेऽर्थे भाष्यं योजयति—

रेणैवोपपन्ना, नेति ब्रूमः । अर्थाभिप्रायशून्येनापि स्वापाद्यवस्थायां परवशप्रयुक्तैरपि शब्दैरर्थप्रतिपत्तिदर्शनात् । तथा पुरुषान्तरकृतमपौरुषेयं वा वेदवाक्यमनर्थज्ञैरपि प्रयुज्यमानं व्युत्पन्नानामर्थबुद्धिं जनयत्येव, तस्मात् प्रत्यायकः शब्दः । किमिति तर्हि प्रथमश्रवणे न प्रत्याययति, सहकारिविरहात्संज्ञात्वग्रहणमपि शब्दस्यार्थे प्रत्ययतोऽङ्गं नेत्रस्येवालोकः, तेन यः पुरुषान्तरेभ्यो 'अयं शब्दोऽस्य संज्ञे'ति ज्ञातवान् तस्यैव प्रत्याययति नान्यस्येति न दोषः ॥

शब्दार्थसंबन्धानित्यत्वे आक्षेपः ।

नन्वेवमस्तु नाम संबन्धः, स तु पौरुषेय इति त्वदुक्त्यैवापन्नम् । तथाहि नहि शब्दस्यार्थेन संयोगतादात्म्यादिसंबन्धः किंतु प्रत्यायकत्वम् । तच्च पुरुषाधीनमित्युक्तं, अतो देवदत्तादिशब्दस्येव 'अस्यार्थस्येयं संज्ञे'त्येवं संबन्धे कृते पश्चाच्छब्दस्यार्थप्रतिपादनमिति सिद्धं पौरुषेयत्वम् ॥ * ॥ इति संबन्धाक्षेपः पूर्वाक्षिप्तं संबन्धनित्यत्वमसमाधायेदानीं 'अथ गौरित्यत्र कः शब्दः इति कया संगत्या केन वा

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**तेनेति** । संज्ञासंज्ञिलक्षणः संबन्धोऽयमिति भाष्यकारेण यदुच्यते तदनेनैवाभिप्रायेणेत्यर्थः । एतदेव प्रश्नपूर्वकमुपपादयति—**किमिति** । अनन्यथासिद्धार्थप्रत्ययान्यथानुपपत्तिप्रसूतार्थापत्तिरेव प्रमाणमित्युत्तरार्थः । शब्दस्यार्थप्रत्यायकत्वानङ्गीकारे च प्रतिज्ञार्थोऽपि प्रतिपादयितुं न शक्यत इति स्ववचनविरोधः स्यादिति भावः । **नन्वेवं** नियमजन्यत्वादनुमानमेव शाब्दं स्यादिति शङ्कते—**नन्विति** । परिहरति—**नेति** । अर्थप्रतीत्युत्तरकालत्वेनाविनाभावस्यात्रानुपयोगात् । अत्रहि अर्थप्रतिपत्तेः शब्दार्थयोर्गम्यगमकभावमेव *वृद्धेभ्यः प्रतिपद्य शब्दाद्यदर्थं प्रतिपद्यतेऽतस्तस्यैवार्थप्रतिपत्तावङ्गत्वम् । धूमादौ तु पूर्वमविनाभावित्वावगतिस्ततोऽर्थप्रत्ययस्ततः पश्चाद्गमकत्वावगतिरतोऽत्रानुमानमिति भावः । एवमवस्थिते पुनः पूर्वपक्षी प्रत्यवतिष्ठते—**किमिति** । गोशब्दो न गोत्ववाचकशक्तिमान् संबन्धग्रहणात्पूर्वमप्रतिपादकत्वात् देवदत्तशब्दवदिति प्रयोगो द्रष्टव्यः । प्रत्यायकत्वे वा प्रथमश्रुत एव प्रत्याययेदिति बाधकस्तर्कः । परिहरति—**सहकारीति** । प्रथमश्रवणे संज्ञात्वग्रहणरूपसहकारिविरहान्न प्रत्याययतीत्यर्थः । तदुक्तम्—'यत्साधकतमत्वेन कस्यचित्किंचिदुच्यते ॥ तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ॥ नहि तत्करणं *लोके वेदे वा किंचिदीदृशम् ॥ इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता' ॥ **ननु** साधनत्वाविशेषे सति कथं किंचित्करणं किंचिदितिकर्तव्यतेति विभागः । उच्यते—यत्फलस्य प्रत्यासन्नं तदान्तरं चक्षुरादिकरणं भवति । बाह्यं तु दीपादिकमितिकर्तव्यता । क्वचित्तु बाह्यस्यापि विवक्षातः करणत्वम् । तथाहि —'उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ॥ किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥' वस्तुतस्त्वान्तरस्यैव चक्षुरादेः कारणत्वं आलोकस्य त्वनुग्राहकत्वमेव दीपसमवधानेऽप्यन्धस्य रूपाप्रतिपत्तेः । यथाहुः—'शारीरात्ममनोयोगादसाधारणताबलात् ॥ विज्ञानासत्तिभावाच्च चक्षुः करणमिष्यते ॥ तथैवेहापि संबन्धज्ञानमङ्गं प्रसिद्धितः ॥'

एवमुपपादिते संबन्धसद्भावे तस्य कृतकत्वोपपादनेन पुनः पूर्वपक्षी प्रत्यवतिष्ठते—**नन्वेवमिति** । एतदेव विवृणोति —**तथाहीति** । संज्ञात्वं पुरुषेभ्योऽवगम्यत इत्युक्तं तेन देवदत्तादिशब्दवदस्येयं संज्ञेति वदद्भिः पुरुषैरेव कृतं स्यात् । यदि तु संज्ञात्वातिरिक्तं किंचित्संबन्धान्तरं स्यात्तदा भवेदपि नित्यता, नतु तदस्ति, भिन्नदेशाद्यधिष्ठानत्वेन स्वभावतः शब्दार्थयोरसंबद्धत्वादिति समस्तार्थः । यथाह भाष्यकारः—'मुखे हि शब्दमुपलभामहे भूमावर्थं, शब्दोऽयं नत्वर्थः अर्थोऽयं न शब्द इति व्यपदिशति । रूपभेदोऽपि भवति । गौरितीमं शब्दमुच्चारयति सास्नादिमन्तमववुध्यत इति । पृथगुक्तयोश्च यः संबन्धः स कृतको दृष्टो यथा रज्जुघटयो'रिति । उपपादितमर्थं निगमयति—**सिद्धमिति** । एवंच संबन्धस्य कृतकत्वात्तद्द्वारा च पुरुषानुप्रवेशसंभवाच्चोदना न धर्मे प्रमाणमिति तृतीयः प्रामाण्याक्षेपः । इति संबन्धाक्षेपः ॥ अत्रानन्तरभाष्यं 'अथ गौरित्यत्र कः शब्दः । गकारौकारविसर्जनीया इति भगवानुपवर्ष' इत्यादि तदनन्तराक्षिप्तसंबन्धनित्यत्वस्यासमाधानान्मध्ये शब्दस्वरूपनिरूपणादयुक्तमित्याक्षेपपूर्वकं समाधत्ते—**पूर्वाक्षिप्तेति** । संबन्धाक्षेपपरिहारा-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

संयुक्तसमवायादेरभाव इत्यर्थः । शब्दं शब्दजन्यं ज्ञानमित्यर्थः । **वृद्धेभ्य इति** । त्रेधा चावगतिर्वृद्धेभ्यो भवति क्वचित्तावदस्माच्छब्दादयमर्थो बोद्धव्य इति वृद्धाः कथयन्ति । क्वचिदयमस्य वाचकोऽयं च वाच्य इति कथयन्ति । क्वचिदुच्चारिताच्छब्दादर्थक्रियां दृष्ट्वा वाचकत्वमनुमानात्प्रकल्पयतीति । अनुग्राहिका चेयं सहकार्यपेक्षा । **लोके वेदेचेति** । लोके

प्रयोजनेन शब्दस्वरूपं निरूप्यते, संगतिस्तावत्प्रासङ्गिकी संबन्धप्रस्तावात् संबन्धिनोरपि शब्दार्थयोः प्रस्तुतत्वात्तत्स्वरूपं निरूप्यते। प्रयोजनमपि तदवयवाश्रितानामूहादीनां सत्यत्वं, निरवयवे हि वाक्ये पदे वा वाचकेऽवयवानां मृषात्वात् तदाश्रितान्यपि कार्याणि मृषा भवेयुः॥ *॥ किंच संबन्धसिद्ध्यर्थमवश्यं वर्णानां वाचकत्वं समर्थनीयम्, अन्यथा हि तेषां प्रत्येकं संगत्यभावाद्वाचकत्वानुपपत्तिमाकलयतां स्फोटस्य च शशविषाणायमानस्य दूरनिरस्तं वाचकत्वमिति संबन्ध एव वाच्यवाचकभावो निराधारत्वान्न स्यान्नतरां नित्यत्वमिति तत्सिद्ध्यर्थं वर्णानां वाचकत्वं समर्थयितुं शब्दस्वरूपं निरूप्यते। किं गौरित्यत्र वर्णा एव शब्दः उत तेभ्योऽर्थान्तरमित्येतत्प्राधान्येन निरूप्यते। वर्णावयव—गत्व—गोशब्दावयवि—जातिनिराकरणं तु प्रासङ्गिकम्। वर्णा एव शब्द इत्यवधारणसमर्थनार्थम्॥ *॥ तत्र वर्णानामपि पुद्गलाख्यानवयवानार्हताः संगिरन्ते तत्त्ववयवानुपलम्भादयुक्तम्। प्रत्यक्षेण तावदवयवा नोपलभ्यन्ते, वर्णेषु साकल्यवैकल्यग्रहणाभावात्। नानुमानेन, तैः सह कस्यचिल्लिङ्गस्य संबन्धाग्रहणात्। नच सामान्यतो दृष्टम्, नहि यद्यद्वस्तु तस्य तस्यावश्यमवयवैर्भवितव्यम्, परमाणूनां निरवयवत्वात्। तेऽपि सावयवा इति चेत्, तदवयवा अपि तथा स्युस्ततः परमपि तथेत्येकस्यैव माषावयविनोऽनन्तावयवित्वं स्यात्, ततश्चैकेनैव माषेण तिलेन वा सर्वं जगद्व्याप्येत, अनन्तैरवयवैर्मूर्तैरन्योन्यस्यावकाशमप्रयच्छद्भिरनन्तदेशव्याप्तेः। तस्मान्निरवयवाः परमाणवो वर्णाश्च। तथा गत्वजातिरौत्वजातिश्च निष्प्रामाणिकैव॥ *॥ **ननु** द्रुतविलम्बितमध्येषूदात्तानुदात्तस्वरितेषु सानुनासिकनिरनुनासिकयोर्ह्रस्वदीर्घप्लुतेषु च प्रत्यभिज्ञायमाना जातिः कथं नास्तीति शक्यते-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

र्थमेव तन्नित्यत्वोपपादनाय तदाधारभूतयोः शब्दार्थयोर्निरूपणं सूत्रकाराभिप्रेतमेव भाष्यकारेण क्रियते। तत्रापि शब्दपूर्वकत्वादर्थप्रतिपत्तेः प्रथमं शब्दनिरूपणमिति। यथाहुः—'*वर्णातिरेकः प्रतिषिध्यमानः पदेषु मन्दं पदमादधाति॥ *कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः' इति। अत्र पूर्वार्धेनाशङ्कोत्तरार्धेन परिहार उक्तः। तदिति वाक्यं परामृशति। वाक्यावयवरूपपदाश्रयाणामित्यर्थः। ऊहादीनामित्यादिशब्दान्महावाक्यावान्तरवाक्यार्थप्रयाजाद्याश्रितस्य तन्त्रप्रसंगादेरपि सत्यत्वसिद्धिः प्रयोजनमित्यर्थः। इतश्च वाचकमित्याह—**किंचेति**। मास्तु तेषां संगत्यभावाद्वाचकत्वं स्फोटस्य तु भविष्यतीत्याशङ्क्याह—**स्फोटस्येति**। विधिमुखेन कार्यमुखेन चाप्रतिभासमानस्य शशविषाणतुल्यत्वमित्यर्थः। संबन्धग्रहणमपि वाचकत्वपक्षे प्रयोजनं भवतीति भावः। अत्र चोद्यते—**अथ गौरिति**। कस्यायं प्रश्नः। न तावत्पूर्वपक्षिणः। संबन्धाक्षेपानन्तरं तस्य शब्दप्रश्नानुपपत्तेः। नापि सिद्धान्तिनः। अकृताक्षेपपरिहारस्य तत्प्रश्नानुपपत्तेः गकारौकारेत्याद्युत्तरभाष्यमपि प्रश्नानन्तरमसंबद्धं स्यात्। उच्यते—सिद्धान्तिन एवायं प्रश्नः। स हि स्वाभिप्रेतशब्दार्थसंबन्धमुपपादयितुं पृच्छति। अथ गौरित्यत्र भवतः कः शब्दोऽभिप्रेतो यस्यार्थेन सह संबन्धाभावं मन्यसे। न तावत्स्फोटाख्यः। वर्णत्रयातिरिक्तस्य बुद्धावप्रतिभासमानत्वेनाभावात्। नाप्यर्थप्रतीतिलक्षणकार्येण तस्यावगतिः। अन्योन्याश्रयात्। तत्सिद्धौ तत्सिद्धेः। अस्माकं तु गकारौकारविसर्जनीया एव गोशब्दस्ते च श्रोत्रग्रहणाः। श्रोत्रग्राह्ये वस्तुनि लोके शब्दशब्दप्रयोगात् उपवर्षग्रहणेनास्य मतस्य श्रैष्ठ्यं दर्शयति। बहुतरप्रमाणसिद्धत्वात्। **तत्सिद्ध्यर्थमिति**। वाच्यवाचकभावलक्षणसंबन्धसिद्ध्यर्थमित्यर्थः। **ननु** शब्दस्वरूपं निरूप्यत इति प्रतिज्ञाय वर्णावयवादिनिराकरणमयुक्तमत आह—**वर्णावयवेति**। तत्र वर्णावयवादिमतमनूद्य निराकरोति—**तत्रेति**। अनुपलम्भमेवोपपादयति—**प्रत्यक्षेणेति**। अवयवानामनुपलम्भादेव तैः सह संबन्धग्रहणाभाव इत्यर्थः। उक्तंच—'पृथङ्नैवोपलभ्यन्ते वर्णस्यावयवाः क्वचित्॥ नच वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत्पटे॥' गत्वादिजातिं निराकरोति—**तथेति**। देशादिभेदेन प्रतीयमानस्यापि गकारस्य स एवायमित्येकबुद्धिग्राह्यत्वेन व्योमवदेकत्वे सति नैकव्यक्तिकं गत्वसामान्यं भवतीति भावः। नन्वेकत्वे गकारस्य द्रुतादिभेदेन प्रतिभासो न स्यादित्यभिप्रायवांश्चोदयति—**नन्विति**। प्रत्यभिज्ञायमाना द्रुतादिगकारव्यक्तिष्वनुवृत्ततया गम्य-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

चक्षुरादौ प्रदीपाद्यपेक्षा। वेदे आग्नेयादौ प्रयाजाद्यपेक्षेत्यर्थः॥ इति संबन्धाक्षेपः॥ ॥ शङ्कते—**वर्णातिरेक इति**। परिहरति—**कार्याणीति**। पदाश्रयाणि संबन्धग्रहणादीनि कार्याणीत्यर्थः। एव इति वर्ण्यात्मकसंबन्ध्यपवारण-

ऽभिधातुम्। सत्यम्। अस्ति प्रत्यभिज्ञा, सातु व्यक्त्येकत्वादेवोपपन्ना। द्रुतादिभेदावभासस्तु द्रुताद्यवस्थाभेदालम्बनो न व्यक्तिभेदमापादयितुमलं भवति॥

गत्वादिजातिनिराकरणम्।

**भेदाभेदावभासोऽपि द्वेधा भवति। क्वचिद्भेदो धर्मिविषयोऽभेदस्तु धर्मविषयो यथा शाबलेयादिष्वयं गौरयं गौरयमपीति जातेरात्मलाभः। क्वचित्तु भेदावभासो धर्मादभेदावभासश्च धर्मिणमालम्बते—एकस्मिन्नेव देवदत्ते युवायं वृद्धोऽयं कृशोऽयमिति न तत्र जातिरङ्गीक्रियते। तदिह द्रुतादिषु धर्मिविषयोऽभेदो धर्मविषयस्तु भेदः। तथाहि ईदृशोऽत्रावभासः 'अनेनायमकारो द्रुतमुच्चारितोऽनेन विलम्बित'मिति नतु 'अयमकारो द्रुतोऽयं तु विलम्बित'इति येन धर्मिभेदो जातिश्चाङ्गीक्रियेयाताम्॥ ※॥ ननु काश्यादीनां क्रमवर्तित्वादेकस्मिन्देवदत्ते युक्तः समावेशः, अनुनासिकादीनां तु धर्माणां युगपदनेकवक्त्रुच्चारिते वर्णे समवेतानां कथमेकवर्णविषयत्वम्। नहि विरुद्धधर्मानेको धर्मी युगपद्बिभर्ति। सत्यम्। नत्वेते परमार्थतो वर्णधर्मा ध्वनिधर्मास्त्वेते वर्णे केवलमाभासन्ते,**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

माना। परिहरति—**सत्यमिति**। एका गकारव्यक्तिरेव तत्र तत्रानुगता प्रतीयते नतु तदतिरिक्तं गत्वमित्यर्थः। द्रुतादिभेदेन गकारादिभेदे सति स एवायमित्येकत्वप्रत्ययो न स्यादिति भावः। गत्वसामान्यालम्बनो भविष्यतीति चेन्न। विकल्पासहत्वात्। तथाहि तत्सामान्यं जातिरूपं सादृश्यरूपमपोहरूपं वा स्यात्। आद्ये किं व्यक्तेर्भिन्नमभिन्नं वा स्यात्। नाद्यः भेदेनाप्रतीयमानत्वात्। नहि शावलेयादिषु स्वरूपेण व्यावर्तमानेष्वनुगतं गोत्वं तद्भेदेन प्रतीयते एवं गत्वमिति। नेतरः। अभेदे तत्त्वाभावप्रसङ्गात्। नापि सादृश्यरूपम्। स एवेत्यनुगमात्। भूयोवयवसामान्यलक्षणस्य सादृश्यस्य निरवयवे गकारेऽसंभवात्। नाप्यपोहरूपम्। द्रुतादिभेदेषु स एवायं गकार इति श्रौत्रविज्ञानस्याभावविषयत्वासंभवात्॥

एतदेवाभिप्रेत्याह—**भेदावभास इति**। अस्त्वेवं प्रकृते किमायातमत आह—**तदिहेति**। वैषम्यं शङ्कते—**नन्विति**। परिहरति—**सत्यमिति**। ननु ध्वनीनां वायवीना*मश्रौत्रत्वात्कथं वर्णेषु तद्धर्मावभासः। उच्यते—द्रुतादिसंस्कृतश्रोत्रेन्द्रियः पुरुषस्तानपि वर्णमिश्रान् श्रोत्रेणैव गृह्णातीति तेषामपि प्रत्यक्षता। यथाहुः—'नादेन संस्कृताच्छ्रोत्राद्यदा शब्दः प्रतीयते॥ तदुपश्लेषतस्तस्य बोधं केचित्प्रचक्षते'॥ अयमाशयः—द्विविधः शब्दो वर्णो ध्वनिश्च। द्वयोरनुगतं शब्दत्वं वर्णत्वं ध्वनित्वं च तदवान्तरसामान्यं वर्णविशेषाः ककारादयः, ध्वनिविशेषाः शङ्खघोषादयः ध्वन्यात्मकश्च शब्दो वायुगुणः, सच वायौ कर्णविवरं प्राप्ते संयुक्तसमवायेन श्रोत्रं संस्कृत्य तेन गृह्यमाणः कदाचिद्धर्मरहितः, केवलो गृह्यते शङ्खघोषादिषु। कदाचिच्च वर्णानभिव्यञ्जन् तदुपश्लिष्टः प्रमीयत इति। अथवा नास्त्येव तेषां ग्रहणं, द्रुतादिसंस्कृतं तु श्रोत्रेन्द्रियमभिन्नेऽपि गकारादौ संस्कारानुकारेण भेदप्रत्ययं जनयति यथैव हि गत्वादिजातिवादिवैशेषिकमतेऽ*विद्यमानमेव शब्दे महत्त्वमल्पत्वं च ध्वनिसंस्कारानुसारिण्या बुद्ध्या गृह्यते तथा द्रुतादिकमपि ध्वनिषु श्रोत्रं प्राप्येव क्षिप्रमन्यतः प्रयातेषु तत्संयोगसंस्कारस्य श्रोत्रेऽल्पकालमवस्थानात् शब्दोऽपि तत्क्षण एवाविर्भूय तिरोभवन्द्रुत इति गृह्यते। तथा मध्यमो विलम्बित इति युक्तो व्यञ्जकधर्माणां द्रुतादीनां व्यङ्ग्ये शब्दे भ्रान्त्या समारोप इति। *कथमनवगतेषु भ्रमहेतुषु नादेषु तद्धर्मप्राप्तिर्व्यङ्ग्येषु शब्देषु, *अत्राहुः—'मधुरं तिक्तरूपेण श्वेतं पीततया तथा॥ गृह्णन्ति पित्तदोषेण विषयभ्रान्तचेतसः'॥ यथा पित्तदोषसंस्कृतं रसनेन्द्रियं मधुरं तिक्ततया गृह्णाति चक्षुरिन्द्रियं च पित्तगतं पीतत्वमगृह्णदेव श्वेतं पीततया गृह्णाति एवं ध्वनिगतान्द्रुतादीन्गृह्णदेव तथा शब्दं प्रतिपद्यत इत्यर्थः। एवं ह्रस्वदीर्घादिष्वपि द्रष्टव्यम्। अत्र केचित् दीर्घादिष्वभेदप्रत्ययवद्भेदप्रत्ययस्यापि वर्णालम्बनत्वमिच्छन्ति। द्रुतादिप्रत्ययो हि नादैरेव युज्येताप्यपारमार्थिकः। ह्रस्वदीर्घादिभेदस्तु अर्थविशेषप्रतीत्यौपयिकतया विवक्षितप्रयोगः कथं भ्रान्तिः स्यात् तद्भ्रान्तित्वे हि तन्निबन्धनार्थविशेषबुद्धिरपि अगमनं आगमनमित्यादौ भ्रान्तिः स्यात्। अतः पारमार्थिक एव ह्रस्वदीर्घादिषु वर्णभेद इति। तद्भेदे च सति तेष्वनुगतमत्वसामान्यमिच्छन्ति। एतच्चायुक्तम्। नहि यथा शाबलेयादौ गोत्वं साधारणमेवमत्वं ह्रस्वदीर्घप्लुतेषु। यथाहुः—'अत्वमित्युच्य-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

रूप इत्यर्थः॥ **अश्रौत्रत्वादिति**। मीमांसकानामित्याहुः श्रोत्रामेयत्वादित्यर्थः। **अविद्यमानमिति**। शब्दस्य गुणत्वे च तत्राल्पमहत्त्वयोरसंभवः गुणे गुणानङ्गीकारादिति भावः। शङ्कते—**कथमिति**। परिहरति—**अत्राहुरिति**।

यथाल्पे महति च दर्पणे युगपद्दृश्यमाने मुखेऽल्पत्वं महत्त्वं चेति । तस्माद्वर्णस्य व्यक्त्येकत्वेऽपि न विरोध इत्यप्रामाणिकी गत्वादिजातिः ॥ * ॥ एवं गोशब्दावयव्यपि गकारादीनामयौगपद्यात्सर्वगतत्वाच्चावयव्यारम्भासामर्थ्यात् । सर्वत्र हि कारणपरिमाणादधिकं कार्यपरिमाणम् तन्तुपटयोरिव नच विभुभ्यो वर्णेभ्यः परिमाणाधिक्यं कस्यचिद्भवति, अतो नास्त्यवयवी । तदभावे च तदाधारं गोशब्दत्वं दूरापास्तम् । तस्माद्वर्णा एव शब्दः ॥ * ॥ आह—गृह्णीम एतत्—'अवयवावयविगत्वादिकं नास्ती'ति । नतु 'वर्णा एव शब्दा'इति । अर्थप्रत्ययानुपपत्तेः । तथाहि—'नह्येकाक्षरविज्ञानादर्थधीरुपजायते ॥ वाचश्च क्रमवर्तित्वात्साहित्यं नावकल्पते' ॥ उच्यते—'यथाग्नेयादिकर्माणि क्रमवर्तीनि सन्त्यपि ॥ संहत्य कुर्वते कार्यमेकं वर्णास्तथैव नः ॥

वर्णानामर्थप्रत्यायकत्वम् ।

**ननु** क्रमवर्तिनामप्युत्पत्त्यपूर्ववशेन युक्तं साहित्यम्, वर्णानां तु कथम् । तेषामपि संस्कारेण भविष्यति तत्सद्भावे किं प्रमाणम्, यदेवाग्नेयादिषु । यथाहि तेषां शास्त्रेण संहत्यकारितावगमात्स्वरूपतश्च तदसंभवादपूर्वं द्वारं कल्प्यते, तथा वर्णानामप्येकैकशोऽभिधानादर्शनात्सकलोच्चारणे चावगमात्संहत्यकारित्वे निश्चिते स्वरूपेणासंभवात्संस्कारकल्पनं युक्तमेव, तद्वदेव चैककर्तृत्वं क्रमविशेषश्चाद्रियते विपर्ययेणार्थाभिधानादर्शनात् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

मानं हि न दीर्घप्लुतयोर्भवेत् ॥ आत्वं न ह्रस्वप्लुतयोस्त्रिमात्रत्वं न पूर्वयोः ॥ *अवर्णकुलशब्दोऽपि स्थानसाम्याद्वनादिवत् ॥ समुदायार्थवाचीति न जातिवचनो भवेत्' ॥ अत एकमात्रादिकारादुच्चारणकृत एव भेदो न पारमार्थिकः । अत्रा*न्यदपि बहुतरं प्रमेयं वार्तिकादिष्ववगन्तव्यम् । उपपादितमर्थं निगमयति—**तस्मादिति** । ननु गकाराद्यारब्धगोशब्दस्यैव गोशब्दोपलक्षितस्य संबन्धग्रहणादर्थप्रतिपादकत्वमतः कथमिदं भाष्यं गकारौकारविसर्जनीया इत्याशङ्क्य गोशब्दावयविनं निराकरोति—**एवमिति** । अप्रामाणिक इति शेषः । **अयौगपद्यादिति** । युगपदवस्थितैरेवावयवैरवयव्यारम्भदर्शनादिति भावः । विच्छिन्नप्रयत्नाभिव्यङ्ग्यत्वेनोपलब्धितो यौगपद्याभावादित्यर्थः । नापि सत्तया यौगपद्येनारम्भकत्वमित्याह—**सर्वेति** । नित्यत्वेन सर्वगतत्वेन च सर्वदा सर्वत्रारम्भकत्वं स्यादिति भावः । किंचावयवेभ्योऽधिकपरिमाणोऽवयवी दृष्टः । नच विभुभ्यः कस्यचिदाधिक्यं संभवतीति न वर्णैरवयव्यारम्भ इत्याह—**सर्वत्रेति** । तदनारम्भे च तत्समवेतं गोशब्दत्वं दूरनिरस्तमित्याह—**तदभावेचेति** । अस्तु वावयवी तथापि निष्प्रमाणकमेव गोशब्दत्वं गत्वादिवत् । स एवायं गोशब्द इत्यभिन्नवर्णत्रयालम्बनप्रतिभासादिति भावः । समुदायोऽपि वर्णत्रयातिरिक्तोऽवयविवन्निराकार्यः । समुदायस्य भेदेनानुपलम्भात् । अभेदे तु वर्णत्रयादेवार्थप्रतीत्युपपत्तेस्तस्यैव समुदायशब्दवाच्यतां निगमयति—**तस्मादिति** । अत्र चोदयति—**आहेति** । अनुपपत्तिमेव विवृणोति—**तथाहीति** । नन्वाशुतरविनाशित्वान्मास्तु स्वरूपेण साहित्यम् । संस्कारद्वारेण तु भविष्यति । नेति ब्रूमः । संस्कारकल्पनायां प्रमाणाभावात् । नहि यथा पूर्वपरिकल्पनायां साध्यसाधनसंबंधान्यथानुपपत्तिः प्रमाणमेवमत्र किंचिदस्ति, अर्थप्रतिपत्ते*रन्यथाप्युपपत्तेः । परिहरति—**उच्यत इति** ॥

वैषम्यं शङ्कते—**नन्विति** । परिहरति—**तेषामिति** । अनुपपत्त्यभावाभिप्रायेण शङ्कते—**तत्सद्भाव इति** । अप्राप्यनुपपत्तिरस्तीत्यभिप्रायवानाह—**यदेवेति** । अनुपपत्तिं विवृणोति—**तथाहीति** । यथाहीति वा पाठः । **तद्वदिति** । उक्तंच—'तेषां च *गुणभूतानां अर्थप्रत्यायनं प्रति ॥ साहित्यमेककर्त्रादि क्रमश्चापि विवक्षित' इति । कथं तर्हि

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**अन्यदपीति** ।'तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः ॥ पर्वतादीन्विजानन्तो भ्रमणे ह्रियतश्च तान् ॥ मण्डूकवसयाकाक्षा वंशानुरगबुद्धिभिः ॥ व्यक्त्यल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ॥ गृह्णन्ति यद्वि वृत्तानि निमित्तग्रहणादिना ॥ व्यञ्जकस्थमबुध्वैव व्यङ्ग्ये भ्रान्तिर्भविष्यति ॥' इत्यादिवार्तिके टीकायां चावगन्तव्यमित्यर्थः । **कथं तर्हि अवर्णकुलमिति** व्यवहारः ब्राह्मणकुलमित्यादौ समानजातीयसमुदाये प्रयोगदर्शनात् तत्राह—**अवर्णेति** । ह्रस्वादीनां स्थानसामान्यादित्यर्थः । ननु ह्रस्वादिरुच्चारणधर्मत्वादनित्यः ततसवर्णस्य वाचकत्वे वाच्ये स्वरूपमिति नित्यं स्यात् । न । आनुपूर्व्यवदेव तस्य परिहारो भविष्यति । **अन्यथापीति** । स्फोटाङ्गीकरणेपीत्यर्थः । **गुणेति** । उपादेयगतत्वेन सर्वेषां विवक्षेति

स्फोटवादखण्डनम् ।

**नन्वेवं प्रतिवर्णं संस्कारकल्पनादनेककल्पना स्यात् तद्वरमेकमेव शब्दतत्वं कल्पितम् । नैवम् । दृश्यादर्शनेन निरस्तत्वात् । शब्दो हि प्रत्यक्षग्राह्योऽभ्युपगम्यते, नच प्रत्यक्षेण वर्णातिरिक्तं किंचित्प्रकाशते । तेन नास्तीत्यवगच्छामः । त्वयापि हि शब्दतत्वं कल्पयित्वा पुनः संस्कारकल्पनावश्यं कर्तव्या । ध्वनयो हि न प्रत्येकं स्फोटमभिव्यञ्जन्ति, साहित्यं च क्रमवर्तिनां संस्कारद्वारमेवेति तुल्यं**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

क्रमवतां गकारादीनामेकपदत्वं कथं च गोशब्दो वर्तत इति पचतीतिवद्वर्तमानकालनिर्देशः । उच्यते । न घटादिवन्निष्पन्नाविनष्टतया व्यापारेषु वर्तमानापदेशः किंत्वेकफलावच्छिन्ना बह्ववयवात्मिका क्रिया 'तस्यामाद्यपरिस्पन्दात्प्रभृत्याफललाभतः ॥ क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदे'ति । अभिधानरूपे वर्णव्यापारेऽप्ययमेव वर्तमानत्वप्रकारो बोद्धव्यः । यथाहुः—'तेनात्रापि विवक्षातः प्रभृत्यर्थावबोधनात् ॥ संकल्पेनेक्ष्यमाणे स्याद्व्यापारे वर्तमानता' । विवक्षामारभ्यान्त्यवर्णपर्यन्ता वर्णा एकार्थप्रतिपत्तये विवक्षिता यावन्तं कालं व्याप्नुवन्ति तावान्वर्तमानः काल इत्युच्यते तत्कालावच्छिन्नाश्च वर्णा गोशब्दो वर्तत इत्युच्यते । व्यापारशब्देनात्र गकारादिज्ञानजन्यः संस्कारोऽभिधीयते क्रियाजन्यः संस्कारो वा । अतो नानुपपत्तिः ॥

अत्र लब्धावसरः स्फोटवादी शङ्कते—**नन्विति** । अयमाशयः—न तावद्वर्णानां प्रत्येकमर्थबोधकत्वम् । एकैकस्मादर्थाप्रतीतेः । नापि समुदितानां क्षणविनाशिनां, समुदायानुपपत्तेः । प्रतिवर्णं च संस्कारकल्पने गौरवापत्तिः । अतो वर्णोच्चारणानन्तरं यतोऽर्थप्रत्ययो भवति सोऽयं स्फोटकत्वेन प्रकाशकत्वेन स्फोट इत्युच्यते । स एव पदात्मा शब्दः । एवं वाक्यस्फोटोऽपि । अप्रत्यक्षोऽप्ययमर्थः प्रतीतिलक्षणकार्यानुपपत्त्या गम्यते । वर्णा एवानुभूयन्ते न तदतिरिच्यमानस्वरूपम् वस्तुतत्वमितिचेन्न । एकं *पदमेकं वाक्यमिति चैकरूपस्यानुभवात् । नचेयं वर्णावगाहिनी, तेषां परस्परभिन्नत्वात् । नचैकत्र नानात्वैकत्वे संभवतः, विरुद्धत्वात् । एकार्थविषयत्वेनैकत्वमितिचेत् । न । परस्पराश्रयात् । एकपदत्वेनैवैकार्थविषयत्वात् । तस्मान्न वर्णात्मकः शब्दः किंतु स्फोटरूप एवेति । तदेतद्दूषयति—**नैवमिति** । वर्णातिरिक्तवाचककल्पनायामर्थापत्तिः प्रमाणं प्रत्यक्षं वा । नाद्यः । अर्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वात् । नेतरः । तदभावात् । नचैकं पदमित्येकवस्त्ववगाहिनी नानावर्णेष्वनुपपद्यमाना बुद्धिरेव प्रमाणमिति वाच्यम् । वर्णेष्वप्येकार्थविषयत्वेन तदुपपत्तेः । अस्ति खल्वेकाभिधेयधीहेतुभावस्त्रयाणामपि वर्णानामेकस्मरणोपारूढानामश्मनामिवैकपिठरधारणे । नाप्यन्योन्याश्रयः । समधिगतैकाभिधेयधीहेतुभावानां तेषां पश्चात्पदत्वावधारणात् । कारकविशेषाभिधायी हि पदशब्दः पद्यतेनेनेति । सच कार्यसंबन्धज्ञाने सत्येव भवति नान्यथा । अत एकार्थविषयत्वज्ञाने सत्येवैकपदत्वज्ञानम् । यदाहुः—'अर्थैकत्वादेकं वाक्य'मिति । पदमप्यर्थैकत्वादेकम् । श्रोत्रग्राह्ये च वस्तुनि शब्दशब्दः प्रसिद्धो वर्ण एव च श्रोत्रग्राह्यो न स्फोटः । अतो नासौ शब्दशब्दवाच्यः कथमर्थप्रत्यायकः स्यात् । शब्दादेवार्थप्रतीतेः सर्वलोकसंमतत्वात् । आशुतरविनाशिनां साहित्यासंभवात्कथं गमकत्वमिति चेत्संस्कारद्वारेणेति ब्रूमः । यदाह भाष्यकारः—'पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक' इति । व्यापारस्य चाव्यवधायकत्वात् शब्दादर्थं प्रतिपद्यामह इत्यप्युपपद्यते । अथवा भाष्यपर्यालोचनया अन्त्यवर्णस्यैव प्रत्यायकत्वम् । एवंच शब्दादिष्वेकवचनमप्युपपन्नम् । यथाहुः—'यदि चापूर्वसंस्कार इतिकर्तव्यतेष्यते ॥ वर्णोन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत्' । केचित्तु सद्रूपान्त्यवर्णविषयप्रत्यक्षं पूर्वेषु चातीतेषु वर्णेषु । स्मृतिरूपेति चित्रस्वरूपा बुद्धिः सर्वार्थप्रतीतिहेतुरित्याहुः । उक्तंच 'चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् । केचिदाहुर्यथा वर्णो गृह्यतेऽन्त्यः पदेपदे ॥ तथान्त्यवर्णे विज्ञाते सर्वसंस्कारकारितम् ॥ स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥' अत्रान्यदपि प्रमेयं वार्तिकेऽवगन्तव्यम् । गौरवमिति चेत्तवापि तदस्तीत्याह—**त्वयापीति** । आवश्यकत्वं दर्शयति—**ध्वनय इति** । पदवाक्ययोरिति शेषः । प्रत्युत तव स्फोटसद्भावो *वर्णेभ्यश्च व्यतिरेकः सावयवे पदे गम्यमाने निरवयवत्वमित्यधिका कल्पना स्यादिति भावः । तुल्यत्वपरिहारं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

भावः । **पदवाक्ययोरितीति** । ध्वनिमात्रोपादाने शङ्खादिध्वनीनां स्फोटाभिव्यञ्जकत्वस्य परैरनिष्टत्वादंशे सिद्धसाध्यत्वं स्यात् तन्माभूदिति पदवाक्ययोरित्युक्तम् । पदवाक्ययोर्वर्तमाना वर्णाः ध्वनयो वा न व्यञ्जन्तीत्यन्वयः । अत्र स्फोटं नाभिव्यञ्जयन्तीति साध्यो धर्मः । व्यञ्जकत्वादिति हेतुः । प्रदीपवदिति दृष्टान्तः । तस्यामेव प्रतिज्ञायां सत्वादिति हेतुः । घटवदिति दृष्टान्तः । **लौकिकेति** । नच प्रत्यक्षविरोधः । प्रत्यक्षादिभिरप्रतीयमानत्वादित्यर्थः । **वर्णेभ्य इति** । वर्णाति-

तत्कल्पनम् ॥ * ॥ स्यान्मतम् । प्रत्येकमेव नादाः शब्दमभिव्यञ्जन्ति, नचैवमुत्तरनादवैयर्थ्यम्, पूर्वे हि नादाः शब्दमस्फुटमभिव्यञ्जन्ति उत्तरोत्तरे स्फुटं स्फुटतरं च व्यञ्जन्तीति नोत्तरेषामानर्थक्यम्। यद्येवं ततो य एवोत्तरे नादाः स्फुटाभिव्यक्तिसमर्थास्तैरेव भवितव्यमलं पूर्वैः ॥ * ॥ ननु न कश्चिदपि नादः स्वतोऽस्य स्फुटाभिव्यक्तिं करोति किंतु सर्वे ते प्रत्येकं व्यञ्जकाः। स तु न द्रागेव स्फुटमवभासते प्रथममस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवति, तद्यथा दूरादवस्थितः सहकारः प्रथमं हस्तिपलालकूटादिसाधारणरूपेण प्रतिभातः पुनरालोच्यमानो वृक्षात्मना प्रकाशते पुनःसहकारात्मना स्फुटो भवति तद्वदेव द्रष्टव्यम् ॥ * ॥ यद्येवं य एव ते पूर्वे नादास्तैरेवाभ्यस्यमानैरीदृशी स्फुटाभिव्यक्तिः स्यात् । उत्तरैर्वा केवलैरभ्यस्यमानैः, तत्र विजातीयनादाश्रयणमनर्थकम् ॥ * ॥ तथा प्रत्येकं हि व्यञ्जकत्वे सत्युत्तरैरस्फुटाभिव्यक्तिः पूर्वैश्च स्फुटाभिव्यक्तिः स्यादिति व्युत्क्रमेणाप्युच्चारणं स्यात्, अतोऽपेक्षितक्रमविशेषानेकविजातीयनादसमुच्चयाश्रयणादवश्यं पूर्वनादाहितसंस्कारसहितान्तिमनादाभिव्यङ्ग्यः स्फोट इत्यवश्याङ्गीकर्तव्यमिति तुल्या संस्कारकल्पना। यद्वा तवैवेयं संस्कारान्तरकल्पना, मत्पक्षे तु स्मृतिहेतुभिरेव संस्कारैः सिद्ध्यत्यर्थावगतिरिति न संस्कारान्तरं कल्पयितव्यम् ॥ * ॥ ननु ममापि त एव भविष्यन्ति। न। तेषां स्मृतेरन्यत्राव्यापारात्। मत्पक्षे तु स्मृतिमेव जनयन्तोऽर्थप्रतिपत्तिं संस्कारा जनयन्ति। तथाहि प्रत्येकवर्णानुभवभावितैः संस्कारैः संहत्य सर्ववर्णगोचरैका स्मृतिर्जन्यते। तस्यां च युगपदवभासमाना वर्णा विनैव संस्कारान्तरेण संहत्यार्थप्रत्ययं जनयन्ति ॥ * ॥ त्वत्पक्षे तु नैवं संभवति, तथाहि नादा हि न ज्ञायमानतया स्फोटं व्यञ्जयन्ति अश्रावणत्वात्, अगृहीतत्वादेव च न स्मर्यमाणानां व्यञ्जकत्वम्, येन वर्णवत्स्मर्यमाणाः कार्यं कुर्वन्तीत्युच्येत । सत्तया हि ते श्रोत्रसंस्कारं कुर्वन्तः शब्दं व्यञ्जयन्ति, नच युगपत्सत्तास्ति क्रमवर्तित्वात्, अतः संस्कारद्वारमेव साहित्यमित्यवर्जनीयं संस्कारान्तरकल्पनम् ॥ * ॥ अथ मतम्। सत्यं न स्मृतिहेतुभिः स्फोटाभिव्यक्तिः, ये तु वर्णोपलब्धिहेतवो नादजन्याः श्रोत्रगताः संस्कारास्तैरेव वर्णानामिव स्फोटाभिव्यक्तिर्भविष्यति किं संस्कारान्तरकल्पनयेति। तदयुक्तम्। तेषां क्षणिकत्वात्। नह्याद्यवर्णोपलब्धिहेतुः संस्कारोऽन्त्यवर्णश्रवणवेलायामवतिष्ठते। यद्यवतिष्ठते ततो विसर्जनीयश्रवणवेलायामपि गकारश्रवणमनुवर्तेत, तस्मात्क्षणभङ्गिनस्ते, अतो न तेषां संहत्य स्फोटाभिव्यञ्जकत्वं भवति । प्रत्येकाभिव्यक्तौ चोत्तरोत्तरेषामनर्थकत्वमित्युक्तम् ॥ * ॥ अथवा ध्वनिसंयोग एव श्रोत्रसंस्कारो नान्यः, तस्य च विस्पष्टमेव भङ्गुरत्वं गत्वरत्वाद्ध्वनीनाम्। तस्मादन्ये स्थायिनः संस्काराः कल्प्याः, तथा वर्णातिरिक्तः शब्दः कल्प्य

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

शङ्कते—**स्यान्मतमिति**। नादा एव प्रत्येकमभिव्यञ्जन्ति नतु तेषां समुदायो येन संस्कारकल्पना स्यादिति भावः। तुल्यत्वं निगमयति—**अत इति**। इदानीं स्वपक्षे विशेषं दर्शयति—**यद्वेति** । साम्यं शङ्कते—**नन्विति** । परिहरति—**नेति** । उक्तंच वस्तुधर्मो ह्येष यदनुभवः पटीयान्स्मृतिबीजमाधत्त इति। **ननु** त्वत्पक्षे स्मृतेरन्यत्रार्थप्रतिपत्तौ व्यापारो दृष्ट एव तत्राह—**मत्पक्षेत्विति**। एतदेव विवृणोति—**तथाहीति** । ननु संस्काराणां तत्र तत्र निरपेक्षाणामेव कारणभावोपलम्भान्न सर्वेषामखिलवर्णगोचरैकस्मरणजनकत्वं मैवम्। मिलितानामप्येकगोचरैकविज्ञानजनकत्वदर्शनात्। यथाहि संस्कारश्चक्षुरायनपेक्षः स्मरणकारणं चक्षुश्च तन्निरपेक्षमेवालोचनकारणं प्रत्यभिज्ञाने तूभयोः परस्परापेक्षा दृष्टैव। उत्तरो ग्रन्थः स्पष्टार्थः। अत्राशङ्कते—**नन्विति**। परिहरति—**नेति**। 'यावन्तो यादृशा ये च यदर्थप्रतिपादने ॥ वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ तेषां च गुणभूतानामर्थप्रत्यायनं प्रति ॥ साहित्यमेकवक्त्रादिक्रमश्चापि विवक्षितः' इति। नचैतत्कलकलश्रुतावशक्यज्ञानम् । तत्राप्यभ्यासपाटवेन ज्ञातुं शक्यत्वात् । अत्र चोदयति—**कः क्रम इति**। क्रमासंभवं विवृणोति—**नहीति**। समाधत्ते—**एवमिति**। उपपादितमर्थं निगमयति—**तस्मादिति** । वर्णेषु समारोपितेन ध्वनीनां क्रमेणेति संबन्धः। **ननु** पूर्वमर्थप्रतिपत्तिसंस्कारा जनयन्तीत्युक्तम् । इदानीं वर्णा वाचका इति वर्णानामर्थप्रतीतिजनकत्वमुपसंहियत इति विप्रतिषिद्धम्। नैष दोषः। तत्रापि तथाहीत्यादि विवरणग्रन्थे वर्णानामेवार्थप्रती-

इति बहुप्रमाणकमापन्नम्। मत्पक्षे तु दृढस्मृतिविपरिवर्तिनां वर्णानां वाचकत्वान्न किंचिदूनम्॥*॥ ननु युगपत्स्मर्यमाणानां वाचकत्वे व्युत्क्रमेणाप्युच्चारिता वर्णा वाचकाः स्युः, न, तत्क्रमस्याप्यङ्गत्वात्। कः पुनः क्रमोऽङ्गम्, नहि वर्णानां विभूनां नित्यानां च स्वरूपतः क्रमवत्त्वम्। न प्रतीतिक्रमः, तस्याः स्मृतिरूपाया एकत्वात्। एवं तर्हि ध्वनिक्रमो यो वर्णेष्वारोपितः प्रतिभासते सोऽङ्गमित्यदोषः। तस्माद्व्यञ्जकानां ध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्वन्तः स्मर्यमाणा वर्णा वाचकाः नान्यः शब्दोऽस्तीति सिद्धम्॥ इति स्फोटवादः

पदार्थनिरूपेणोपक्रमः।

'अथ गौरित्यस्य शब्दस्य कोऽर्थः' इति वाच्यनिरूपणोपक्रमव्याजेनाकृतिसद्भावं प्रतिपादयति संबन्धनित्यत्वसिद्धये। नह्यसत्यामाकृतौ व्यक्तिभिः शब्दस्यापौरुषेयः संबन्धः सिद्ध्यति तासामनित्यत्वात्, उपलक्षणस्यापि नित्यस्याभावादाकृत्यभावे, तस्मादाकृतिरस्ति नास्तीति विचार्यते। साधिते तु तत्सद्भावे सैव शब्दाभिधेयेत्याकृत्यधिकरणे वक्ष्यते॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

तिजनकत्वस्योक्तत्वात्। अत्र वार्तिककारैः स्फोटाभावेवाचकत्वाभावे च प्रयोगो दर्शितः। तथाहि—'वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः॥ व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः॥ सत्त्वाद्घटादिवच्चेति साधनानि यथारुचि॥ लौकिकव्यतिरेकेण कल्पितेर्थे भवन्ति हि। नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः॥ घटादिव*न्न दृष्टेन विरोधो धर्म्यसिद्धितः'। तथा वर्णजन्यत्वेऽर्थप्रत्ययस्य प्रयोगः—'*वर्णोत्था वार्थधीरेषा तज्ज्ञानानन्तरोद्भवा॥ तादृशी सा तदुत्था हि धूमादेरिव वह्निधीः॥ *दीपवद्वा गकारादिर्गवादेः प्रतिपादकः॥ ध्रुवं प्रतीयमानत्वा*त्तत्पूर्वं प्रतिपादनात्' इति। अबोधदहनोद्भूतस्फोटरूपनिराक्रिया॥ चिकित्सेव कृता शब्दविदां मीमांसकैरियम्॥ **इति स्फोटवादः॥**

अत्र भाष्यकृता संबन्धनित्यत्वोपपादनाय अथगौरित्यत्र कः शब्द इति प्रश्नपूर्वकं वाचकस्वरूपं निरूप्यानन्तरमथ गौरित्यस्य शब्दस्य कोऽर्थ इत्यादिना वाच्यस्वरूपनिरूपणमुपक्रान्तं तस्यापि वाचकनिरूपणवदेव संगतिं स्पष्टत्वादनभिधाय प्रयोजनं तावदाकृतिसद्भावप्रतिपादनस्य दर्शयति—**अथेति**। वाच्यनिरूपणोपक्रमस्तु विचारसंगतिसिद्ध्यर्थमिति भावः। एतदेवोपपादयति—**नहीति**। यद्याकृतिव्यतिरिक्ता व्यक्तय एव शब्दार्थाः स्युः ततस्ताभिर्व्यभिचारात्संबन्धोऽपि न सिद्ध्यतीति भावः। **ननु** आकृतिस्तु क्रियार्थत्वादित्यत्र सूत्रकार एवाकृतेरभिधेयत्वं स्थापयिष्यति किमत्र प्रयासेनेत्यत आह—**अस्तिनास्तीति**। आकृतिसद्भावप्रतिपादनेनाकृतेरभिधेयत्वे साधिते क्रियायामनुपयोगात्पुनरनभिधेयत्वमाशङ्क्योपयोगप्रतिपादनेन तस्या एवाभिधेयत्वं सूत्रकारो वक्ष्यतीत्यर्थः। **ननु** संस्थानमाकृतिः। तच्च प्रतिपिण्डं भिन्नमेवेति तदभिधेयत्वेपि न संबन्धनित्यत्वसिद्धिः। मैवम्। जातेरेवाकृतिशब्देनाभिधानात्। यदाह—'द्रव्यगुणकर्मणां सामान्यमात्रमाकृति'रिति। आक्रियते निरूप्यते द्रव्यमनयेति जातेरेवाकृतिशब्देनाभिधानं गौरियमित्येवंरूपेण। तथैव द्रव्यनिरूपणात्। तदुक्तं—'जातिमेवाकृतिं प्राहुर्व्यक्तिराक्रियते यया॥ सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम्॥' अत एवैकबुद्धिनिमित्तं यत्सामान्यं जातिरूपं सारूप्यरूपमपोहरूपं वा तस्य शब्दवाच्यत्वेन कस्यापि विप्रतिपत्तिरूपे तु विवाद इति तत्सद्भाव एवात्र साध्यत इत्यभिप्रायः॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

रिक्तत्वादिति हेतुः, घटवदिति दृष्टान्तः। नच दृष्टविरोधः, स्फोटस्यासिद्धत्वेन वाचकदृष्टेरित्याह—**न दृष्टेनेति**। नचाश्रयासिद्धिः अविद्यमानेपि वाचकत्वाभावस्य दर्शयितुं शक्यत्वात्सर्वथा असिद्ध्यभावात् परस्य सिद्धत्वात्। **वर्णोत्थेति**। अनन्यथासिद्धार्थकप्रतीतिः पक्षः। वर्णजन्येति साध्यं वर्णप्रतिपत्त्यनन्तरमुत्पद्यमानत्वादिति **हेतुः**। धूमादग्निज्ञानवदिति दृष्टान्तः। प्रयोगान्तरमाह—**दीपवद्विति**। गकारादित्रयं पक्षः। गोत्वप्रतिपादकमिति साध्यम्। गोत्वप्रतिपादनात्पूर्वं ध्रुवं प्रतीयमानत्वादिति हेतुः। रूपे प्रदीपवदिति दृष्टान्तः। तत्रैव हेत्वन्तरमाह—**तत्पूर्वमिति**। यत्पूर्वं हि यत्प्रतिपाद्यते तत्तस्य प्रतिपादकं यथा दीपारोपणं प्रतिपाद्यमानस्य घटस्य प्रतिपादकं वर्णोच्चारणपूर्वोऽर्थः प्रतिपाद्यते अतो

बौद्धमतेन जातिखण्डनम्।

तत्र सौगताः स्वलक्षणमेव परमार्थं मन्यमाना नाकृतिसद्भावं मन्यन्ते। तथाहि—'पृथक्त्वे व्यक्तितो जातिर्दृश्येत पृथगेव सा॥ अभेदे व्यक्तिमात्रं स्याद्द्वेधा चेन्न विरोधतः॥' नहि सैव ततोन्या चानन्या च संभवति विरुद्धत्वाद्भेदाभेदयोः। यदि च भिन्ना जातिः सा सर्वगता व्यक्तिष्वेव वा, न तावत्सर्वगतत्वम्, अन्तरालेऽनुपलब्धेः। व्यक्तिस्था चेद्व्यक्तावुत्पन्नायां तस्मिन्देशे प्रागसती कथं तस्यामुपलभ्यते, न तावत्तत्रोत्पद्यते। नित्याया उत्पत्त्ययोगात्। नच व्यक्त्यन्तरादागच्छति अमूर्तत्वात्, तस्मिंश्च व्यक्त्यन्तरेऽनुपलब्धिप्रसङ्गात्। नचांशेनागतांशेन च तत्रैव स्थितेति शक्यं वक्तुम्। निरंशत्वात्। एवं व्यक्तिनाशे न च तत्रैव पश्चादवस्थिता अनुपलब्धेः। न विनष्टा नित्यत्वात्। नचान्यत्र याति अमूर्तत्वात्। व्यक्त्यन्तरे च पूर्वमेवावस्थिता जातिरिति पुनःप्रवेशे द्विगुणोपलभ्येत। यथाहुः—'नायाति न च तत्रासीदस्ति पश्चान्न चांशवत्॥ जहाति पूर्वं नाधारमहो व्यसनसंततिः' इति॥ *॥ व्यक्तौ च वर्तमानां यद्येकस्यां व्यक्तौ कार्त्स्न्येन वर्तेत व्यक्त्यन्तरेषु न स्यात्। नह्येका सती युगपदनेकत्र कार्त्स्न्येन वर्तितुं शक्नोति। नचावयवशो वर्तते निरवयवत्वात्। कथंच नानाविधास्वतीतानागतवर्तमानासु व्यक्तिष्ववयवशो वृत्तिः संभाव्येत। व्यक्तौ च वर्तमानेहप्रत्ययमनुभवेत्। नचेह गोत्वमिति कस्यचित्प्रतीतिरस्ति किं त्वियं गौरिति॥ *॥ अथ व्यक्तेरात्मैव जातिर्न तदाधारं वस्त्वन्तरमिति चेत्, नैवं युक्तम्, कथं हि नानाभूतानामनित्यानां व्यावृत्तस्वभावानामेकरूपा नित्यानुवृत्तस्वभावा च जातिरात्मा स्यात् त्रैलोक्यसंकरप्रसङ्गात्॥ *॥ नच प्रमाणमपि किंचिदाकृतिसद्भावे संभवति, न तावत्प्रत्यक्षम्। नहि जातिः स्वविषयं ज्ञानं जनयति नित्यत्वाभ्युपगमात्। नित्यानां च सर्वार्थक्रियास्वसामर्थ्यात्। नचाजनकस्य विषयत्वं संभवति तल्लक्षणत्वाद्विषयत्वस्य। तस्माद्विकल्पाकारमात्रं सामान्यम्, अलीकं वा॥ *॥ ननु यथा ज्ञानवैचित्र्यसिद्ध्यर्थं बाह्यानि स्वलक्षणान्यभ्युपगम्यन्ते तथा गवाश्वादिविकल्पवैचित्र्यसिद्ध्यये विचित्राणि सामान्यानि किं नाम नाभ्युपगम्यन्ते। न। विचित्रस्वभावस्वलक्षणदर्शनवशादेव विकल्पवैचित्र्योपपत्तेः॥ *॥ अर्थशून्या अपि विकल्पा विचित्रार्थक्रियासमर्थस्वलक्षणाभिमानिनो जायमानास्तत्र व्यवहारार्थिनं प्रवर्तयन्तः परम्परया तत्प्रभवतया तत्प्रापयन्तो मणिमिव मणिप्रभाविषयमणिबुद्धिर्व्यवहाराविसंवादिनो भवन्तीति न लोकयात्रास्थितेः कश्चिद्विरोधः तस्मान्नास्ति जातिः॥ *॥ एतेनावयविद्रव्यं प्रत्यूढम्, तस्याप्यवयवभेदादिविकल्पाक्षमत्वात्। स्थूलावभासस्तु संचितानेकरूपा-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

तदस्मिन्नर्थे सौगतानामत्यन्तं विप्रतिपत्तेस्तमेवादावुपन्यस्यति—**तत्रेति**। **द्वेधेति**। भिन्ना अभिन्ना चेत्यर्थः॥ भेदपक्षे दूषणान्तरमाह—**यदिचेति**। **तस्मिंश्चेति**। तस्य तज्जातिशून्यत्वादित्यर्थः। **एवमिति**। व्यक्तिस्थत्वपक्षे यथा व्यक्तावुत्पन्नायां तस्मिन्देशे इत्यादिना दूषणमुक्तं तथा व्यक्तिनाशेप्येतद्वक्ष्यमाणं दूषणमवगन्तव्यमित्यर्थः। दूषणान्तरमाह—**व्यक्ताविति**। **व्यक्तौचेति**। आधेयस्याधारनिष्ठत्वेन प्रतीतिनियमादिति भावः। सिद्धान्तमाशङ्क्य निराकारोति—**अथेति**। वस्त्वन्तरत्वे त्विह कुण्डे बदरमितिवदाधारनिष्ठत्वे प्रतीतिः स्यादिति भावः। कथं न युक्तमित्यपेक्षायां त्रेधा वैलक्षण्यादित्याह—**कथंहीति**। विलक्षणस्वभावानामप्येकात्मत्वे सर्वमेकमेव स्यादित्यर्थः। **ननु** गौरयमित्यस्त्येव प्रत्यक्षं तत्राह—**नहीति**। तन्मते नित्यानामर्थक्रियास्वसामर्थ्यम्। अर्थापत्तिं शङ्कते—**नन्विति**। अन्यथोपपत्त्या परिहरति—**नेति**। वस्तुमात्रं परमार्थसत् तच्च विचित्रस्वभावं दृष्टमिति तद्दर्शनवशादेव गवाश्वादिविकल्पवैचित्र्योपपत्तेर्न तद्वशात्सामान्यसिद्धिरित्यर्थः। व्यवहाराविसंवादादर्थसिद्धिरितिचेन्नेत्याह—**अर्थेति**। अर्थशून्या अपि विकल्पा व्यवहाराविसंवादिनो भवन्तीति संबन्धः। विचित्रार्थेति हेतुगर्भं विकल्पविशेषणम्। कथमाभिमानिकज्ञानमात्रादर्थलाभोऽत आह—**परम्परयेति**। स्वलक्षणान्निर्विकल्पकमेव साक्षादुत्पद्यते; विकल्पास्तु परम्परया तत्प्रभवत्वात्तत्प्रापयन्तीति कृत्वा व्यवहाराविसंवादिनो भवन्तीत्यर्थः। अत्रानुगुणं दृष्टान्तमाह—**मणिमिति**। सामान्यनिरासोक्तदूषणमवयविद्रव्यनिरासेऽतिदिशति—**एतेनेति**। संचितानेकरूपादीति परमाणुविशेषणम्। यथा चिरकालीनाध्ययनादिखिन्नस्योत्थितस्य नीललोहितादिगु-

दिपरमाणुवशादेव केशोण्डुकावभासवदुपपन्नो नावयविकल्पनायालम्। तदभावे च निराधारत्वाद्दूरापास्तं गोत्वादिसामान्यम् ॥ * ॥ कथमसत्येकरूपे सामान्येऽत्यन्तविलक्षणानि स्वलक्षणान्यविलक्षणरूपं विकल्पं जनयन्ति । जनयन्ति चेत् किमिति कानिचिदेव गोविकल्पं जनयन्ति कानिचिदेवाश्वविकल्पम्, न सर्वाणि सर्वम् ॥ * ॥ सामान्यवादिनो वा कथं विलक्षणरूपा व्यक्तयो विलक्षणसामान्यात्मकत्वं तदाश्रयत्वं तदभिव्यञ्जकत्वं वा भजन्ते । भजन्तिचेत्किमिति काश्चिदेव व्यक्तयः केनचिदेव सामान्येन संबध्यन्ते न सर्वाः सर्वैः । स्वभावादिति चेत्, अस्माकमपि तुल्यमिदमुत्तरम् ॥

स्वमतेन जातिस्थापनम्।

अथ व्यक्तीनामप्यविलक्षणरूपसामान्यसंबन्धसिद्ध्यर्थं परमविलक्षणरूपमभ्युपगम्यते, ततस्तेनापि संबन्धसिद्ध्यर्थमपरापरसामान्यापेक्षायामनवस्था स्यात् । तस्माद्विकल्पमात्रमेवेदम्, न परमार्थतः सामान्यं नाम किंचित् ॥ * ॥ अत्राभिधीयते—'प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ॥ न शक्योऽपह्नवः कर्तुं सर्वं विजयते हि तत्' ॥ सर्वेष्वपि वस्तुषु 'इयमपि गौरियमपि गौः, अयमपि वृक्षोऽयमपी'ति व्यावृत्तानुवृत्ताकारं प्रत्यक्षं देशकालावस्थान्तरेष्वविपर्यस्तमुदीयमानं सर्वमेव तर्काभासं विजित्य द्व्याकारं वस्तु व्यवस्थापयत् केनान्येन शक्यते बाधितुम्, नहि ततोऽन्यद्बलवत्तरमस्ति प्रमाणम्, तन्मूलत्वात्प्रमाणान्तराणां तद्बाधसामर्थ्याभावात् । किंचानुमानान्यपि सामान्यापेक्षत्वात्सुतरां सामान्यं समर्थयन्ते नतु बाधितुं शक्नुवन्ति, नहि यद्यदपेक्षं तत्तस्य बाधं शक्नोति कर्तुम्। तद्बाधे हि स्वात्मापि न सिद्ध्येत् तदपेक्षत्वात् ॥ * ॥ तथाहि भेदाभेदविकल्पेन सामान्यं निराकुर्वतावश्यमेवं वक्तव्यम्—'यद्वस्तु तद्भिन्नमभिन्नं वा भवति' सामान्यमपि यदि वस्तु स्यात्ततोऽनेनापि भिन्नेनाभिन्नेन वा भवितव्यम् । नच द्वेधापि संभवति तस्मादवस्तु इति । एवंच वदता वस्तुत्वं सामान्यमङ्गीकार्यम्, अन्यथा कथं वस्तुत्वस्य भेदाभेदाभ्यां व्याप्तत्वाद्व्यापकानुपलब्ध्या सामान्यस्य वस्तुत्वं न संभवतीति भणितुं शक्यम् ॥ * ॥ नन्वौपाधिको वस्तुशब्दो न जातिनिमित्तकस्तत्कथमनेन जात्यापत्तिः । उच्यते—जातिर्वा भवतूपाधिर्वा सर्वथा तावत्सामान्यरूपमपेक्षितव्यम्। औपाधिकानामपि मूलोपलक्षणमेकमन्तरेणात्मलाभाभावात्। नच व्यावृत्तैकरसं सर्वं वस्तुजातमभ्युपगच्छतः सौगतस्य क्वचिदपि किंचिदप्यनुवृत्तं रूपं संभवतीत्यौपाधिको व्यवहारो

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

णविशिष्टः केशोण्डुकाख्यः कश्चिन्नयनाग्रे परिस्फुटति । अथवा करसंमृदितलोचनरश्मिषु येयं केशपिण्डावस्था स केशोण्डुकः। नच तावतावयविसिद्धिस्तथा स्थूलावभासो नावयविकल्पनायालमित्यर्थः। अवयविनिरासस्य प्रकृतोपयोगमाह—**तदभाव इति**। चोदयति—**कथमिति**। ननु कात्रानुपपत्तिः, नहि दृष्टेऽनुपपन्नं नाम तत्राह—**जनयन्तीति**। प्रतिबन्द्या परिहरति—**सामान्येति**। तन्मते विशेषमाशङ्क्य परिहरति—**स्वभावादिति**॥

वैषम्यमाशङ्क्य निराकरोति—**अथेति**। अस्माभिस्तु सामान्यसंबन्धसिद्ध्यर्थं परं सत्तासामान्यं स्वीक्रियते भवतां तु तदभाव इति वैषम्यमित्यर्थः। निगमयति—**तस्मादिति**। समाधत्ते—**अत्रेति** । श्लोकं व्याचष्टे—**सर्वेष्वपीति**। देशकालावस्थान्तरेष्वबाधितत्वेनास्य बलवत्तरत्वमित्यर्थः। **द्व्याकारमिति**। यदि स्वलक्षणमेव वस्तु स्यान्न सामान्यं ततोऽयं गौरयमपीति सामान्यबुद्धिर्न स्यात्। अथ सामान्यबुद्धिसिद्ध्यर्थं सत्तासामान्यमेवैकं स्वीक्रियते न गोत्वादि, ततो गौरयमश्वोऽयमिति विशेषबुद्धिर्न स्यात्। अतो द्व्याकारं वस्तु सिध्यतीति भावः। **किंचेति**। व्याप्तिग्रहस्य सामान्याधीनत्वादिति भावः । किंचान्यदपि यत्सामान्यनिराकरणार्थमुपन्यसनीयं तदेव सामान्यसाधकमित्याह—**तथाहीति**। **अन्यथेति**। सामान्यस्यावस्तुत्वे पक्षताया अभावात्कुत्रावस्तुत्वं साध्येतेति भावः। चोदयति—**नन्विति** । उपाधिश्चात्र स्वलक्षणवस्तुनि प्रतीयमानत्वमेवेति भावः । अन्वारुह्यवादेन तावत्परिहरति—**उच्यत इति** । वस्तुतस्तूपाधिरपि तन्मते न संभवतीत्याह—**नचेति**। क्वचिदनुवृत्तरूपाङ्गीकारे, तत्र वस्तुशब्दः स्वाभाविको भवेत्त सामान्ये औपाधिको भवेदिति

**दुर्घट एव, तस्मात्सर्वप्रमाणसिद्धं सामान्यं न शक्यमपह्नोतुम् ॥ * ॥ कः पुनर्विकल्पानां परिहारः, न तावदपरिहृता अपि शक्नुवन्ति सामान्यमपह्नोतुं, तेषामपि तदपेक्षत्वादित्युक्तं तथापि परिहारोऽभिधीयते ॥**

जातिव्यक्त्योर्भेदाभेदविचारः।

**भेदाभेदविकल्पे तावत्केचिदाहुः—भिन्नमेव सामान्यं व्यक्तिभ्यः । न च पृथगुपलब्धिप्रसङ्गो व्यक्तिसंबन्धित्वात् । कः पुनः संबन्धः, समवायः । कः पुनरसौ, अयुतसिद्धानामिहप्रत्ययहेतुः संबन्ध इति केचित् । तत्त्वयुक्तम् । इहप्रत्ययासिद्धेः । इयं गौरिति हि सर्वदा सर्वेषां प्रतीतिर्नेह गोत्वमिति । काचेयमयुतसिद्धिः, युतसिद्ध्यभावः । का पुनर्युतसिद्धिः, पृथग्गतिमत्त्वं पृथगाश्रयाश्रितत्वं वा, तदभावोऽयुतसिद्धिः ॥ * ॥ यद्येवमवयवावयविनोः संबन्धः समवायो न स्यात्, विनाप्यवयविचलनेनावयवानां चलनात्, अवयविनोऽवयवानां च स्वावयवाश्रयत्वात् । तथा सामान्यस्य व्यक्त्याश्रयत्वात् व्यक्तेश्च स्वावयवाश्रितत्वादस्ति पृथगाश्रयाश्रयित्वमिति समवायानुपपत्तिः। तस्मादेवं वक्तव्यम्—येन संबन्धेनाधेयमाधारे स्वानुरूपां बुद्धिं जनयति, स्वाकारेण बोधयतीत्यर्थः । स संबन्धः समवाय इति ॥ * ॥ यदि जात्यात्मना व्यक्तिः प्रतीयते ततो जातिव्यक्त्योरभेद एव प्रतीतिबलादापद्यते कथं भेदाभ्युपगमः । उच्यते—गौरयं शाबलेयो गौरयं बाहुलेय इत्युभयत्र गवाकारोऽनुवर्तमानो दृश्यते, शाबलेयबाहुलेयाकारौ तु व्यावर्तेते, तद्यदि तयोः शाबलेयगवाकारयोरभेदः स्यादेकानुवृत्तावितरोऽप्यनुवर्तेत, तद्व्यावृत्तौ वा गवाकारोऽपि व्यावर्तेत । किंच तस्यामेव व्यक्तावियं गौरिति गवात्मना प्रतीयमानायामपि नेयंबुद्धिगोबुद्ध्योर्गौर्गौरितिवत्पर्यायत्वं प्रतीयते तस्मान्नाभेदः ॥ * ॥ कथं तर्हि ताद्रूप्यं व्यक्तेः प्रतीयते । इदमेव हि ताद्रूप्यं व्यक्तेर्यत् तत् समवायः संबन्धः, तस्यैष महिमा येनाधारमाधेयं स्वबुद्ध्यानुरञ्जयति तस्माददोषः । अथवा तादात्म्यप्रतीतेरभेदोऽप्यस्तु, पूर्वोक्तन्यायेन भेदोऽपि, तस्मात्प्रमाणबलेन भिन्नाभिन्नत्वमेव युक्तम् ॥ * ॥**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

भावः । उपसंहरति—**तस्मादिति** । नन्वङ्गीकृत्यापि सामान्यं तस्य तुल्याकारबुद्धिजननशक्तिरङ्गीकर्तव्या तद्वरं विशेषाणामेवोभयवादिसिद्धानां शक्तिराश्रिता किं सामान्येन । मैवम् । विकल्पासहत्वात् । तथाहि—सर्वासु व्यक्तिष्वेका प्रतिव्यक्तिभिन्ना वा । व्यक्तिभ्यश्चान्याऽनन्या वा ग्राह्या अग्राह्या वेति । आद्ये पक्षे जातिरेव शब्दान्तरेणोक्ता स्यात् तस्या एव एवंरूपत्वात् । अथाग्राह्या शक्तिस्तर्हि सामान्यबुद्धिर्निर्विषया स्यात् । विशेषाणां तु भिन्नानामेकबुद्धिविषयत्वासंभवात् । विषयत्वे वा भिन्नत्वं न स्यात् । एवं विकल्पान्तरं प्रत्याख्येयम् ॥

मतान्तरेण तावत्परिहारमाह—**भेदेति । व्यक्तीति** । व्यक्त्या सह नित्यसंबन्धित्वादित्यर्थः । औलूक्याभिमतं समवायलक्षणमाह—**अयुतेति** । तदेतद्दूषयति—**तत्त्विति । तस्मादिति** । यत एतल्लक्षणमयुक्तं तस्मादेवं वक्तव्यमित्यर्थः । अस्त्वेवं ततः किमत आह—**यदीति** । ततश्चानेन प्रकारेण भेदसमर्थनं न संभवत्यतो यत्केचिदाहुस्तदयुक्तमिति भावः । अत्र चोदयति—**कथमिति** । तव भेदाभेदस्वीकारात्कथं भेदोपपत्तिरुक्तयुक्त्याऽभेदस्यैव पर्यवसानादित्यर्थः । **एकेति** । अभेदे हि गवाकारानुवृत्तौ शाबलेयाकारोऽप्यनुवर्तेत । शाबलेयाकारानुवृत्तौ वा गवाकारोऽपि व्यावर्तेत । **एकस्यैव वस्तुनो** विरुद्धस्वभावद्वयासंभवादिति भावः । अभेदपक्षे दूषणान्तरमाह—**किंचेति** । इयं गौरित्यत्रेयंबुद्धिर्गोबुद्धिश्च । नचैतयोर्गौर्गौरितिवत्पर्यायत्वं प्रतीयते । अभेदे तु पर्यायत्वं प्रतीयेत । तस्मान्नाभेद इत्यर्थः । अत्र चोदयति—**कथमिति** । एकान्ततो भेदपक्षे ताद्रूप्यप्रतीतिरनुपपन्ना । नहि घटपटयोस्ताद्रूप्यं कश्चित्प्रत्येति तस्मान्न भेद इति शङ्कार्थः । सिद्धान्ती तु भेदपक्ष एव ताद्रूप्यप्रतीतिमुपपादयन्परिहरति—**इदमिति** । तस्य समवायस्येत्यर्थः । आधेयं गोत्वादि । आधारं गवादिव्यक्तिम् । एवंरूपस्य समवायस्यावयव्यादिष्वसंभवेनापरितोषात्पक्षान्तरमाह—**अथवेति** ।

ननु विरुद्धौ भेदाभेदौ कथमेकत्र स्यातां न विरोधः सहदर्शनात् । यदि हि 'इदं रजतं नेदं रजत'-मितिवत्परस्परोपमर्देन भेदाभेदौ प्रतीयेयातां ततो विरुध्येयातां, नतु तयोः परस्परोपमर्देन प्रतीतिः इयं गौरितिबुद्धिद्वयमपर्यायेण प्रतिभासमानमेकं वस्तु द्व्यात्मकं व्यवस्थापयति—सामानाधिकरण्यं ह्यभेदमापादयति अपर्यायत्वं च भेदम्, अतः प्रतीतिबलादविरोधः ॥ * ॥ अपेक्षाभेदाच्च । तथाहि गोरूपेण निरूप्यमाणया जात्या व्यक्तिरभेदेन प्रतीयते 'गौरयं शाबलेय' इति । यदा तु जातिर्व्यक्त्यन्तरात्मना निरूप्यते तदेयं व्यक्तिस्ततो भिन्नरूपावसीयते 'योसौ बाहुलेयो गौः सोऽयं शाबलेयो न भवती'ति । एवं धर्मिणो द्रव्यस्य रसादिधर्मान्तररूपेण रूपादिभ्यो भेदो द्रव्यरूपेण चाभेदः । तथावयविनः स्वरूपेणावयवैरभेदोऽवयवान्तररूपेण त्ववयवान्तरैर्भेद इत्यूहनीयम् । तत्र यथा दीर्घह्रस्वादीनां विरुद्धस्वभावानामप्यपेक्षाभेदादेकत्राप्यविरुद्धत्वं प्रतीतिबलादङ्गीक्रियते तथा भेदाभेदयोरपि द्रष्टव्यं प्रतीत्यविशेषात् ॥

प्राभाकरमतेन भेदाभेदसामानाधिकरण्ये आक्षेपः ।

कश्चित्पुनराह—प्रतीतिरेव भेदाभेदावभासिनी न संभवतीति विलक्षणरूपा प्रतीतिर्हि भेदावभासः, अविलक्षणस्वरूपा प्रतीतिश्चाभेदावभासः तद्येन भेदप्रतिभाससमये जातिरूपं व्यक्तिरूपं च प्रतीतम् तेनाभेदप्रतीतिवेलायां तयोरन्यतरत्प्रत्येतव्यम्, तत्रैकस्य द्विरवभासोऽयं भवेत्, न पुनरितरेणाभेदः प्रतीतो भवति, तस्मान्नास्ति भेदाभेदयोरेकत्र प्रतीतिः ॥ * ॥ तदिदमसारम् । नहि वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः तद्भावेऽप्यभावात् । प्रथमं व्यक्तिदर्शनेऽपि ह्यस्ति जातिव्यक्त्योर्द्वयोः प्रतीतिर्नैच तदा तयोर्भेदः प्रतीयते व्यक्त्यन्तरदर्शनेन तु जातेरन्वयात्पूर्वव्यक्तेश्च व्यतिरेकादन्वयव्यतिरेकाभ्यां जातिव्यक्त्योर्भेदोऽवधार्यत इति भवतोऽपि सिद्धान्तः । तथा देवदत्तमुपलभ्य कालान्तरे तत्सदृशं यज्ञदत्तं दूरात्पश्यन् पूर्वोपलब्धं च देवदत्तं स्मरन् वस्तुतस्तद्विलक्षणमेव पुरुषद्वयं प्रत्येति तथापि न भेदमवधारयति संशेते हि 'किं स एवायं देवदत्तः किं वान्य' इति । तस्माद्वस्तुद्वयप्रतीतिरेव भेदप्रतीतिरित्ययुक्तम् ॥ * ॥ तथा तमेव देवदत्तं कालान्तरे दूरात्पश्यन्नपि 'किं स एवायमुतान्य'इति संदिहानो वस्तुगत्यैकमेव प्रतियन्नपि नाभेदमवधारयितुमलं भवति, तस्मान्न वस्तुद्वयप्रतीतिरेव भेदप्रतीतिः । नाप्येकवस्तुप्रतीतिरेवाभेदप्रतीतिः, किंत्वन्योऽयमिति बुद्धिर्भेदावभासः, अनन्योऽयमिति चाभेदावभासः । अस्तिच शाबलेयबाहुलेयावुपलभमानस्य 'अयं गौरयमपि गौः'इत्यभेदावभासः । 'अन्यः शाबलेयाद्बाहुलेय' इति च भेदावभासः । तस्मादुपपन्नं भिन्नाभिन्नत्वम् ॥ * ॥ नन्वनुवृत्ता नित्यानुत्पत्तिविनाशधर्मा च जातिः, विपरीतस्वभावा च व्यक्तिः, कथं तयोरैक्यम् । नह्येकमेव वस्त्वनुवृत्तं व्यावृत्तं नित्यमनित्यमुत्पत्तिविनाशधर्मकमतद्धर्मकं च संभवति त्रैलोक्यसंकरप्रसङ्गात्, जातिरप्येवमनित्यत्वादिधर्मा स्यात्, व्यक्तिरपि नित्यत्वादिधर्मा । नैष दोषः । नानाकारं हि तद्वस्तु केनचिदाकारेण नित्यत्वादिकं केनचिच्चानित्यत्वादिकं बिभ्रन्न विरोत्स्यते । जातिरपि व्यक्तिरूपेणानित्या व्यक्तिरपि जात्यात्मना नित्येति नात्र काचिदनिष्टापत्तिः ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

शङ्कते—**नन्विति** । परिहरति—**नेति** । **अपर्यायत्वमिति** । इदंबुद्धिगोबुद्ध्योरित्यर्थः । इतोऽप्यविरोध इत्याह—**अपेक्षेति** । गोत्वं हि शाबलेयात्मना बाहुलेयाद्भिद्यते स्वरूपेण च न भिद्यते तथा व्यक्तिरपि गुणकर्मजात्यन्तरात्मना गोत्वाद्भिद्यते स्वरूपेणच न भिद्यते । तथा व्यक्त्यन्तरादपि व्यक्तिः जात्यात्मना न भिद्यते स्वरूपेण च भिद्यत इत्यर्थाभेदेप्यविरोध इत्यर्थः । तदुक्तम्—'एवंच परिहर्तव्या भिन्नाभिन्नत्वकल्पना ॥ केनचिच्चात्मनेकत्वं नानात्वं चास्य केनचित्' ॥ उक्तमर्थं प्रदेशान्तरेऽतिदिशति—**एवमिति** ॥

एवमेकत्र प्रतीतिबलाद्भेदाभेदयोरविरोधे उपपादितेऽत्रैकदेशी दूषणमाशङ्क्य निराकरोति—**कश्चिदिति** । **तत्रेति** । यथा भेदप्रतीतौ वस्तुद्वयप्रतीतिरेवमभेदप्रतीतावेकवस्त्ववभासो वक्तव्यः । नचैवमस्ति, अत्रापि वस्तुद्वयप्रतिभासनात् । ततश्चैकस्यैव द्विरवभासोयं नत्वभेदप्रतीतिरित्यर्थः । उक्तमर्थं विवृणोति—**प्रथममिति** । उपपादितमर्थं निगमयति—**तस्मादिति** । प्रकारान्तरेण शङ्कते—**नन्विति** । परिहरति—**नैष इति** ॥

जातेः सर्वगतत्वाद्याक्षेपतत्परिहारौ।

यत्तु सर्वगता व्यक्तिगता वा जातिरिति विकल्पितं, तदपि व्यक्त्यात्मत्वाभिधानादेव परिहृतम्। व्यक्तेर्ह्यसावात्मा कथमन्यत्र स्यात्। नन्वेवं व्यक्तिदेशे व्यक्त्युत्पत्तेः प्रागविद्यमाना जातिः कथं तत्र पश्चाद्भवति, स्वकारणान्निष्पद्यमाना व्यक्तिर्जातिविशेषात्मना संबद्धैवोत्पद्यत इति न दोषः॥ *॥ तत्राविद्यमाना जातिः कथं व्यक्त्या संबध्यते। नह्यसौ तदानीमेव तत्रोत्पद्यते नित्यत्वात्। नचान्यत आगच्छति अमूर्तत्वात्। उच्यते—योऽपि देशान्तरादागत्यानेन देशेन संयुज्यते सोऽपि प्रागस्मिन्देशेऽविद्यमान एव कथमनेन देशेन संयोगमनुभवति कारणवशादिति व्यक्तम्, एवं जातिरपि कारणवशादेव व्यक्तिसंबन्धमनुभवति। इयांस्तु विशेषः—संयुज्यमानः पूर्वत्रावस्थितोऽनन्तरदेशेन प्रथमं संयुज्यते ततस्तदनन्तरदेशेनेति क्रमेण देशान्तरसंयोगं गच्छति। तादात्म्यसमवाययोस्त्वनन्तरदेशमनपेक्ष्यैव स्वकारणतो निष्पत्तिः। नहि यः संयोगस्य स्वभावः सएव तादात्म्यस्य समवायस्य वाङ्गीकर्तव्यः। प्रमाणाभावात्, विलक्षणस्वभावत्वाद्भावानाम्। तस्माददोषः॥ *॥ यद्वास्तु सर्वगतं सामान्यम्, नच सर्वत्रोपलब्धिप्रसङ्गः व्यक्तीनामभिव्यञ्जकत्वात्। सर्वगतमपि सामान्यं व्यक्तेरात्मा तत्समवेतं वा। संयुक्तसमवायसंनिकर्षेण च सामान्यस्योपलम्भः, तेन च संनिकर्षो व्यक्तिदेशे एव संभवति नान्यत्रेति न सर्वत्रोपलब्धिः। अभेदेऽपि जातिव्यक्त्योर्भेदस्यापि विद्यमानत्वान्नित्यत्वानित्यत्वादिवत्सर्वगतत्वासर्वगतत्वमपि नानुपपन्नम्॥ *॥ यत्तु कार्त्स्न्येन वा अवयवशो वा वृत्तिरिति विकल्पितम्, तदप्ययुक्तम्। भेदापेक्षं हि कार्त्स्न्यं नच सामान्यस्य स्वरूपतोऽवयवतो वा भेदोस्ति एकत्वादनवयवत्वाच्च। निरवयवत्वादेवावयवशोऽपि वृत्तिरसंभाव्यैव। तस्माद्व्यक्तिषु जातिर्वर्तत इत्येतावदेवात्र वक्तुं शक्यते प्रमाणतोऽवगमात्, न कार्त्स्न्यभागविभागः प्रमाणाभावादसंभवाच्च। तथावयविनोऽप्यवयवेषु न कार्त्स्न्यं संभवति बहुत्वाभावात्तदपेक्षत्वाच्च कृत्स्नत्वव्यवहारस्य। अवयवशो वृत्तिरप्यवयवान्तराभावादयुक्तैव। किमिदानीमेकरूपैव सामान्यस्य व्यक्तिष्ववयवेषु चावयविनो वृत्तिः। नेत्युच्यते। सामान्यं प्रत्येकं वर्तत, अवयवी तु व्यासज्येत्येवं विशेषः। व्यक्त्यन्तरमनपेक्ष्यैव व्यक्त्यन्तरे वर्तमाना स्वानुरूपां बुद्धिं जनयन्ती जातिः प्रत्येकं वर्तत इत्युच्यते

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दूषणान्तरमप्यनूद्यानेनैव न्यायेन निराकरोति—**यत्त्विति**। **व्यक्तेर्हीति**। व्यक्तिमात्रगतं सामान्यमिति कस्यचिन्मतम्। तदुक्तम्—'पिण्डेष्वेव च सामान्यं नान्तरा गृह्यते यतः॥ नह्याकाशवदिच्छन्ति सामान्यं नाम किंचन' इति। चोदयति—**नन्वेवमिति**। परिहरति—**स्वकारणत इति**। जातिविशेषात्मना गोत्वादिजातिरूपेण। सामान्यसंबन्धमाक्षिपति—**तत्रेति**। एवं व्यक्तिगतत्वपक्षे दोषं परिहृत्य वैशेषिकाभिमतसर्वगतत्वपक्षेपि दोषं परिहरति—**यद्वेति**। सर्वगतं सामान्यमभिव्यक्तिशक्त्यनुरोधेन व्यक्तिष्वेव गृह्यते। वस्तुतस्तु सर्वगतमपि सामान्यं व्यक्तेरात्मातः स्वव्यक्तिष्वेव तदुपलम्भो न सर्वत्र। उक्तंच—'कस्मात्सास्नादिमत्स्वेव गोत्वं यस्मात्तदात्मकम्॥ तादात्म्यमस्य कस्माच्चेत्स्वभावादिति गम्यताम्'॥ कार्यदर्शनानुमेया हि शक्तिरतो यत्रैवाभिव्यक्तिर्दृश्यते तत्रैव शक्तिरवगम्यते। अतएव न विजातीयव्यक्त्यन्तरे प्रतीतिः। शक्तिव्यवस्थैव किंनिबन्धनेति चेत्। न। वस्तुशक्तेरपर्यनुयोज्यत्वात्। उक्तंच—'वह्निर्दहति नाकाशं कोऽत्र पर्यनुयुज्यताम्॥ नचान्या मृग्यते युक्तिर्यथा संदृश्यते तथा'। दर्शनासिद्धे एव वस्तुनि युक्तिरन्वेषणीयेति भावः। **तत्समवेतमिति**। सर्वगतमपि सामान्यं येषु विशेषेषु समवेतं तेष्वेवाभिव्यज्यतेऽतो येभ्यो निवृत्तिस्तैरसंबन्धित्वमेव वाच्यं, नतु तत्राभावः सर्वगतत्वाभ्युपगमादिति भावः। **नन्व**नन्तत्वादेव विशेषाणां जात्यापि संबन्धो न शक्यते ग्रहीतुमतः कथं तेन जातिरभिव्यज्यतां, सकलविशेषोपस्थापकानुगतैकोपलक्षणाभावात्। सत्यम्। नहि यथा शब्दार्थयोर्लिङ्गलिङ्गिनोर्वा संबन्धो ज्ञाततया कारणं तथा जातेरपि, किंतर्हि प्रत्यक्षायास्तस्या व्यक्तिसंबन्धः, सत्तामात्रेणैव कारणमतो नै कश्चिद्दोषः। दूषणान्तरमनूद्य निराकरोति—**यत्त्विति**। **नचेति**। स्वरूपतो भिन्ने वस्तुनि कार्त्स्न्यशब्दो भवेत्। यथा कृत्स्ना घटाः पटा वेति। सामान्यं त्वेकमेवातस्तत्र कार्त्स्न्यशब्दानुपपत्तिरित्यर्थः। **अवयवान्तराभावादिति**। येष्व-

नतु कात्स्र्न्येन वृत्तिः। अवयवी त्ववयवान्तराण्यपेक्ष्यावयवान्तरे वर्तमानः स्वाकारां बुद्धिं जनयन् व्यासज्य वर्तत इति व्यपदिश्यते। नह्येकस्यामेव व्यक्तौ गोबुद्धिवदेकस्मिन्नेव, तन्तौ पटबुद्धिरुत्पद्यते ॥

संयोगविचारः।

**संयोगस्येदानीं कथं संयोगिषु वृत्तिः किं जातिवत् किंवाऽवयविवत्। उभयविलक्षणेति ब्रूमः।** स हि संयोग्यन्तरमपेक्ष्य संयोग्यन्तरे वर्तते नानपेक्ष्येति न जातितुल्यत्वम्। एकत्रैव च स्वानुरूपां जनयति बुद्धिम् 'इदमनेन संयुक्तमिदमनेन' इति, तेनावयविनापि नातीव तुल्यत्वमित्युभयवैलक्षण्यम् ॥ ※ ॥ अथ संयोगः किमेक एव द्वयोः संयोगिनोरुत प्रतिसंयोगि भिन्नावेव संयोगौ। काश्यपीयास्तावत् संयोगमुभयोर्व्यासक्तमेकं मन्यन्ते वयं तु यथा इदमनेन सदृशमिदमनेनेति प्रतियोगिनमपेक्ष्येतरत्रेतरस्यावगम्यमानं सादृश्यं प्रतिधर्मिभिन्नं भवति तथा संयोगस्य तादृशबुद्धिविषयत्वाद्भेदमेव रोचयामहे। प्रकृतमनुसरामः—तस्मान्न वृत्तिविकल्पादपि जात्यपह्नवः। यत्तु नित्यत्वाज्जातेः स्वविषयज्ञानजननासामर्थ्यान्न ग्राह्यत्वमिति। तदसत्। नित्यानामप्यर्थक्रियासामर्थ्यं क्षणभङ्गनिराकरणे वक्ष्यामः। नच हेतुलक्षणं ग्राह्यत्वम्। ज्ञानजन्यफलभागित्वलक्षणं हि तदिति शून्यवादे वर्णितम्। तस्मादयमप्यदोषः ॥ ※ ॥ यत्तु स्वलक्षणैरेव स्वानुभवद्वारेण गवादिविकल्पोदयसंभवादप्रामाणिकी जातिकल्पनेति तदप्यसारम्। नहि जातिर्न दृश्यते येनैवमुपालम्भः स्यात्। उपजायमानं तु ज्ञानं स्वविषयभूतां जातिमुपस्थापयतीति नेदृशानां प्रलापानामवसरः ॥ ※ ॥ कथंचात्यन्तविलक्षणानि स्वलक्षणान्येकरूपं विज्ञानं जनयन्ति 'तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः' इति स्थितेः। भवतो वा कथं विलक्षणानां विशेषाणामेकरूपसामान्यसंबन्धकारणत्वमितिचेत्, स्वहेतुवशादिति ब्रूमः। कानिचित्स्वलक्षणानि स्वकारणादुत्पद्यमानान्येकेन केनचित्स्वसामान्येन तादात्म्यं समवायं वा भजन्ते ॥ ※ ॥ ननु हेतवो विलक्षणाः कथमेकविधसामर्थ्ययुक्तानि स्वलक्षणानि जनयन्ति। न जनयेयुर्यदि विलक्षाणाः स्युस्तेऽपि त्वेकजातीया एव ॥ ※ ॥ नन्वेवं तत्संबन्धसिध्यर्थमपरापरजात्यपेक्षायामनवस्था। नैष दोषः, यथा तालबीजमेकजातीयं परिणामपरंपरया तालजातिसंबद्धां व्यक्तिमुपजनयति, सापि तथैव स्वकारणभूतबीजसमानजातीयं बीजान्तरम्। तथैकजातीयाच्छुक्राद्गोजातीयव्यक्तिनिष्पत्तिः, तस्यां च तज्जातीयशुक्रनिष्पत्तिरिति नात्यन्तं तादात्म्यापत्तिः। तस्मादस्त्येकमाकृतिजातिसामान्यशब्दाभिलपनीयं शाबलेयादिष्वनुगतम् ॥ इत्याकृतिवादः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

वयवेषु वर्तते ततोऽवयवान्तरसद्भावे आश्रयभूतेष्ववयवेष्ववयवशो वृत्तिरिति वक्तुं शक्यते, नत्वेवमस्ति, अतोऽवयवशोऽपि वृत्तिर्न संभवति, तस्मादत्राप्यवयवेष्ववयवी वर्तत इत्येतावदेव वक्तुं शक्यते। प्रमाणतोऽवगमादित्यर्थः। तुल्यन्यायेन जातभ्रान्तिः पृच्छति—**किमिति**। प्रतीतिरेवात्र प्रमाणमित्याह—**नहीति** ॥

प्रसङ्गात्संयोगस्यो*भयवैलक्षण्यं प्रश्नपूर्वकमुपपादयति—**संयोगस्येति। नचेति**। नच हेतुत्वेनैव ग्राह्यत्वं येनोक्तदोषः स्यात् किंतु ज्ञानजन्यफलभागित्वेनातः सामान्यस्यापि ग्राह्यत्वं संभवतीत्यर्थः। ज्ञानजन्यफलभागित्वमेव नास्तीत्याशङ्क्य निराकरोति—**यत्त्विति। इतीति**। इतिहेतोरीदृशानां प्रलापानामवसरो नास्तीत्यर्थः। वस्तुतस्तु स्वलक्षणस्यैवंरूपबुद्धिजनकत्वमेव संभवतीत्याह—**कथमिति**। अत्रैव तत्सिद्धान्तस्थितिमाह—**तदिति**। अत्र चोदयति—**भवतो वेति**। परिहरति—**स्वहेतुवशादिति**। एतदेव विवृणोति—**कानिचिदिति**। मतभेदेन पक्षद्वयोपन्यासः। परिहरति—**नेति**। महाप्रकृतं निगमयति—**तस्मादिति**। स्वमतेन जातिरूपं सामान्यं प्रसाध्य सादृश्यमेव सामान्यमिति परमतमाशङ्क्य निराकरोति—**नचेति** ॥ अयमाशयः—किमिदं सादृश्यं नाम यद्येकरूपत्वं तर्हि जातिरेव सा। नचान्यत्सादृश्यं परस्परविलक्षणानां व्यक्तीनां संभवति। यदि तासामपि किंचिदवयवसंस्थानादिसामान्यमुच्येत तर्हि शाबलेयसदृशोऽयमिति बुद्धिः स्यात्, न, गौरिति जात्यनङ्गीकारे च सादृश्यमपि दुर्लभमित्याह—**नचेति। इत्याकृतिवादः** ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

वर्णः प्रतिपादक इत्यर्थः। **उभयेति**। संबन्धस्तस्यापौरुषेयत्वं चेत्यर्थः। **अपोहरूपमिति**। अपोहरूपसामान्यवादिनश्चायमभिप्रायः—न तावद्व्यावृत्तरूपाणामत्यन्तविलक्षणानां विशेषाणामनुवृत्तः कश्चिदात्मा संभवति। नच तेषा-

सादृश्यादीनां सामान्यत्वखण्डनम्।

**नच सादृश्यमेव सामान्यं तद्बुद्ध्यभावात्, स एवायमिति प्रतीतिर्न तत्तत्सदृश इति। नच सर्वसामान्यापह्नववादिनः सादृश्यमपि संभवति भूयोवयवसामान्यात्मकत्वात्तस्य ॥ * ॥ नचातद्व्यावृत्तिरूपमपि सामान्यमनङ्गीकृतविधिरूपसामान्येन शक्यते प्रत्येतुम्। अगोव्यावृत्तिं हि प्रतीयतावश्यं प्रथममेव गौः प्रत्येतव्यः। नह्यप्रतीते गवि तद्व्यतिरेकात्मना गवां निरूपणं संभवतीति प्रथममवश्यं विधिरूपेण गौः प्रत्येतव्यः। नहि तेभ्यो व्यतिरेकरूपमपहायाश्वादिव्यक्तीनां प्रातिस्विकेन रूपेण ग्रहः संभवति। तेषामनन्तानां बुद्धावनारोहात्, अनारूढेषु च तेषु तद्व्यावृत्तिरूपस्य गोः प्रत्येतुमशक्यत्वात्। गौर्गौरिति च विधिरूपं सामान्यमवगम्यमानं कथं निवृत्तिरूपं शक्यमङ्गीकर्तुम्। तस्मादिदमतिपेलवं दर्शनम्। तस्मादस्ति जातिः ॥ इत्यपोहवादः ॥**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

इदानीं सौगतमतसिद्ध*मपोहरूपं सामान्यं निराकरोति—**नचेति**। येन विधिरूपं सामान्यं नाङ्गीकृतं तेनातद्व्यावृत्तिरूपं सामान्यं प्रत्येतुमेव न शक्यते। अतो विधिरूपं सामान्यमङ्गीकर्तव्यमित्यर्थः। एतदेवोपपादयति—**अगोव्यावृत्तिमिति**। अगवामित्यकारप्रश्लेषः। कथं न संभवतीत्यपेक्षायामाह—**नहीति**। तेभ्यो गोभ्यः। दूषणमुपसंहरति—**तस्मादिति**। तदुक्तं—'अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् ॥ गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम् ॥ भावान्तरमभावो हि पुरस्तात्प्रतिपादितः ॥ तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम् ॥' **ननु** प्रागभावादिचतुष्टयेऽभावत्वमेव सामान्यं न वस्तुरूपं सामान्यमस्ति। नैष दोषः। सर्वो ह्यभावो भावाश्रित एव भवति अतस्तत्राप्यभावत्वसामान्यमेवानुत्पत्त्यादिपर्यायप्रागभावादिरूपं न वस्तुरूपं सामान्यमस्ति। **ननु** परस्परविलक्षणेषु त्रिष्वपि क्षत्रियादिष्वब्राह्मण इति सामान्यबुद्धिरस्ति। नच तेषु वस्तुरूपं सामान्यमस्ति। *बुद्धेश्च पुरुषत्वालम्बनत्वे ब्राह्मणोप्यब्राह्मण इति बुद्ध्या गृह्येत तस्यापि पुरुषत्वात्। नच क्षत्रियत्वादिकमेवालम्बनं, सामान्यबुद्धेर्विशेषरूपालम्बनत्वासंभवात्। अतो ब्राह्मणाभाव एवात्र सामान्यं तच्चावस्तु। एवं गवादावप्यभावात्मकमेव सामान्यं सामान्यबुद्धेरालम्बनमस्तु कृतं भावरूपेणेति। **अत्र कश्चित्**—अक्षादिशब्दवदब्राह्मणशब्दोपि जातित्रयस्य वाचकः। अतो नेयं सामान्यालम्बना बुद्धिः किंतु क्षत्रियादिविशेषालम्बनैव। शब्दएवात्र साधारणो नार्थः। गवादौ त्वर्थोऽपि साधारण एव गोत्वादिरूपस्ततो नोक्तदोषापत्तिरित्याह—तदेतदयुक्तम्। *प्रतीतिविरोधात् अघटादिष्वसंभवाच्च। क्षत्रियादिषु परिमितेषु शक्येतापि साधारणशब्दत्वं ज्ञातुम्। वृक्षादिषु त्वनन्तेष्वघटादिशब्दस्य साधारणत्वं दुरधिगमम्। तस्मादेवं वक्तव्यम्—अब्राह्मणशब्देनात्र नञ्सामर्थ्याद्ब्राह्मणपर्युदासेन क्षत्रियादित्रयाधारं पुंस्त्वं प्रतिपाद्यते। कथमेकमेवाब्राह्मणपदं पुंस्त्वं प्रतिपादयति ब्राह्मणं च पर्युदस्यतीति चेत्। इत्थम्। अब्राह्मण इति हि समासपदं सावयवत्वाद्विग्रहवाक्यार्थे वर्तितुं शक्नोति। अतो ब्राह्मणपदसमभिव्याहृतेन नञा तदभावं प्रतिपादयता तत्संबद्धं पुंस्त्वं लक्षणया प्रतिपाद्यते। यावदुक्तं भवति ब्राह्मण्याभावयुक्तः पुमानिति, तावदब्राह्मण इति। एवमघट इत्यादावपि घटत्वाभावयुक्तं पार्थिवत्वादिकं सामान्यमेव प्रतिपाद्यत इति। **ननु** कथं ब्राह्मणत्वाभावयुक्तं पुंस्त्वमेव लक्ष्यते न वस्तुमात्रम्। उच्यते। सत्त्वद्रव्यत्वपार्थिवत्वप्राणित्वपुंस्त्वब्राह्मणत्वादिकक्षाभेदेन सामान्यं भवति। पूर्वपूर्वापेक्षया चोत्तरोत्तरो विशेषो भवति। तदिह पुंस्त्वविशेषे ब्राह्मण्ये नञा पर्युदस्ते *तदभावयुक्तसामान्यापेक्षः शब्दस्तदनन्तरेण पुंस्त्वेनानुरुध्यते वस्तुत्वाद्यपेक्षया तस्यैव प्रथमं प्रतीतेः। अतो ब्राह्मणत्वान्निवृत्तं नरत्वमेव ब्राह्मणपदस्य प्रतिपाद्यमवशिष्यते। **ननु** श्रुत्यवगतब्राह्मण्यवदर्थावगतं पुंस्त्वमपि नञा किं न प्रतिषिध्यते। मेवम्। विरम्यव्यापाराभावात्। नहि श्रौतं ब्राह्मण्यं प्रतिषिध्य पुनर्लाक्षणिकं पुंस्त्वं नञा शक्यं निषेद्धुम्। सकृदुच्चरितस्य द्विरभिधानासंभवात्। तच्च प्रतीयमानं पुंस्त्वं निर्विशेषावस्थानासंभवादर्थात्क्षत्रियादिभेदान्तरस्थं प्रतीयते, लोकेऽप्यब्राह्मणपदात्क्षत्रियादिष्वेव प्रतीतिर्न वस्तुमात्र इति। कथं भेदान्तरस्थमेव पुंस्त्वं प्रतीयते न पुनर्ब्राह्मणस्थं, निषेधादिति चेत्, नचोत्रपर्युदासवृत्तिनिषेधकत्वाभावात्। उच्यते—पर्युदासवृत्तिरपि

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

मेवाभिधेयत्वमानन्त्यव्यभिचाराभ्यां अतोऽतद्व्यावृत्तिरेव सर्वानुगतशब्दार्थ इति। यथा शाबलेयस्य गोव्यावृत्तिरेवं बाहुलेयस्यापीति। यथाहुः—'यद्रूपं शाबलेयस्य बाहुलेयस्य नास्ति तत् ॥ अतद्रूपपरावृत्तिर्द्वयोरपि न भिद्यते' इति। **बुद्धिरिति।** अब्राह्मण इति बुद्धेः क्षत्रियत्वादिविशेषालम्बनत्वासंभवादित्यर्थः। **प्रतीतीति**। अत्राप्यब्राह्मणत्वरूपस्य साधारणस्यार्थस्य प्रतीयमानत्वादित्यर्थः। विग्रहवाक्यार्थे ब्राह्मण्याभावयुक्तः पुमानित्यस्यार्थे। **तदभावेति**। ब्राह्मणत्वाभावयुक्तसामान्यं पुंस्त्वमेव तदपेक्षः शब्दस्तेनैवानुरुध्यते न वस्तुत्वादिनेत्यर्थः। **सादृश्यस्यापीति**। अब्राह्मणो

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

नञ् अर्थतः प्रतिषेधफल एव भवति । नहि ब्राह्मण्याभावयुक्तपुंस्त्वं ब्राह्मणे संभवति तस्मात्क्षत्रियादिष्वेव वृत्तिर्न वस्तुमात्रे । किंच ब्राह्मणमात्ररहितवस्त्वन्तरापेक्षायां सादृश्यात्क्षत्रियादिष्वेव मतिः शीघ्रं भवति अभाववत् *सादृश्यस्यापि नञ्वाच्यत्वात् । नन्वघट इत्यत्र न घटावयवसामान्ययोगः शरावादेः संभवति । सत्यम् । अवयवसामान्यमन्तरेणापि संबन्धिसामान्यमात्रेणापि तत्र सादृश्योपपत्तेः । अस्ति च मृत्तिकाविकारत्वादिना, तत्रापि घटसादृश्यसंभवात् । तदुक्तम्—'सादृश्यमेव वा वाच्यमिष्टमब्राह्मणादिषु ॥ तच्चावयवसामान्याद्विना*प्येतेन लभ्यते' ॥ यत्र तर्हि नेक्षेतेत्यादौ नास्त्येव सादृश्यं तत्र कथं । सादृश्यमन्तरेणापि साहचर्यादिना तत्र शब्दप्रवृत्तिसंभवादिति ब्रूमः । तत्र हि ईक्षणसमभिव्याहृतेन नञा तदभावं प्रतिपाद्य तत्सहितस्तद्धेतुभूतः संकल्पो नेक्षेत इत्येवं लक्ष्यते । वक्ष्यति च—'न त्वयमीक्षणप्रतिषेधः किंत्वनीक्षणविधिः व्रतप्रक्रमादिति । उक्तंच—'क्वचिद्विनापि सादृश्यात्साहचर्यादिहेतुका ॥ नञ्युक्तशब्दवृत्तिः स्याद्यथा वक्ष्यत्यनीक्षणे ॥ ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता ॥ प्रत्यासत्तेर्न संकल्पमतिक्रम्य प्रतीयते ॥' प्रतिषेधवाचिनः कथमर्थान्तरे वृत्तिरिति चेत् । न । सर्वत्रास्य निषेधवचनत्वाभावात् । तथाहि आख्यातयोग्ययं प्रतिषेधमभिधत्ते, नामधात्वर्थयोगी तु नञ् लक्षणया तदन्यमात्रे तद्विरुद्धे च वर्तते । यथाहुः—'नामधात्वर्थयोगी च नैव नञ् प्रतिषेधकः ॥ वदतोऽब्राह्मणाधर्मावन्यमात्रविरोधिनौ' । नन्वेवमपि न पिबेदित्यादावाख्यातमात्रयोगिनो नञः प्रतिषेधपर्यवसानान्न वस्त्वालम्बनत्वसिद्धिः । मैवम् । तत्रापि वस्त्वालम्बनत्वसंभवात् । औदासीन्यं नाम क्रियारहितमात्रस्वरूपमेव, तच्च वस्त्विति । यथाहुः—'यत्राप्याख्यातसंबन्धात्प्रतिषेधः प्रतीयते ॥ तत्रौदासीन्य*वस्त्वेव प्रतिपत्तावलम्बते ॥' यदाचाभावबुद्धेरभावविशिष्टवस्त्वेवावलम्बनं नाभावमात्रं तदावश्यमसाधारणशाबलेयादेरालम्बनत्वानुपपत्तेस्तदन्यद्वोत्वरूपं वस्त्वेवालम्बनमापद्यत इति सर्वं समंजसम् । *अत्रान्ये विशेषा वार्तिकेऽवगन्तव्याः । तार्किकास्तु—*नञ्समासे अब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदेन नञोत्तरपदार्थसदृशक्षत्रिये लक्षणा । *अघटः पट इत्यादौ च प्रसज्यप्रतिषेधार्थेन सामानाधिकारण्यादभाववल्लक्षणा । *व्यासेऽपि न घटः पट इत्यादौ यथा शुक्लः पट इत्यादौ शुक्लवल्लक्षणा तथा नञोऽभाववल्लक्षणा । *न पचतीत्यादौ क्रियासंबन्धे । भूतले न घट इत्यादौ च प्रसज्यप्रतिषेधे नञो मुख्यार्थतेत्याहुः । नैयायिकास्त्वनुमानेन गवादिशब्दानामपोहाभिधानं निराकुर्वन्ति । तद्वार्तिककारैर्न्यायार्थान्यानपोहत्वं । 'पक्षीकुर्यायदा सर्वांस्तदाऽथा*ऽऽवीत हेतुभि'रित्यादिना ग्रन्थेनोपन्यस्य निराकृतं तत्त्रैवावगन्तव्यं विस्तरभयान्नेह लिखितम् । प्रकृतमनुसरामः—उपपादितमर्थं निगमयति—**तस्मादिति** । इत्यपोहवादः ।

नचौलूक्यादिमतसिद्धा जातिरेवाकृतिशब्दार्थत्वेन भवद्भिरुपपादिता, भाष्यकारस्तु 'अथ गौरित्यस्य शब्दस्य कोऽर्थ इति पृष्ट्वा सास्नादिविशिष्टाकृतिरिति ब्रूम' इत्यनेन जातिविलक्षणं सास्नादिविशिष्ट*माकृतिशब्दार्थमाह । न*चैतत्संभवति, अवयविसंबन्धिनो गोत्वस्या*वयवेष्ववस्थानात् 'द्रव्यगुणकर्मणां सामान्यमात्रमाकृति'रिति वक्ष्यमाणविरोधश्च ।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

ब्राह्मणसदृश इत्यर्थः । **एतेनेति** । संबन्धिसामान्यमात्रेणेत्यर्थः । **वस्त्वेवेति** । अब्राह्मणादिशब्देष्वेवापोहांशस्य वाचकत्वावगतिः । गवादिशब्देषु तु वस्तुस्वरूपमेव लोकेऽवगम्यत इति भावः । उक्तंच—'तस्माद्येष्वेषु शब्देषु नञ्योगस्तेषु केवलम् ॥ भवेदन्यनिवृत्त्यंशः स्वात्मैवान्यत्र गम्यते' इति । **अत्रान्ये विशेषा इति** । मास्त्वपोहस्य शब्दार्थत्वं भेद एव तद्वान् शब्दार्थो भविष्यति न तावता गोत्वादिसामान्यस्य शब्दार्थत्वमिति । तन्न । विशेषाणामनुक्तेषु संबन्धग्रहणासंभवात् । यदि चापोहवत्त्वं सामान्यमेव शब्दार्थ इत्युच्येत तदपि कल्प्यमानं वस्तुरूपमवस्तुरूपं वा स्यात् । आद्ये जातिरेव सा । अन्त्येऽपोहमात्राभिधानं तत् । तच्च पूर्वमेव निरस्तम् । अथवापोहवत्त्वं नाम अपोहापोह्ययोः संबन्धः । तद्धितसमासेषु संबन्धाभिधानं भवत्प्रत्ययेनेति स्मरणात् । तदप्ययुक्तम् । संबन्धस्य सामानाधिकरण्यानुपपत्त्या वाच्यत्वस्य भवद्भिरेव निराकरणात् इत्यादयोऽन्ये विशेषा वार्तिकेऽवगन्तव्या इत्यर्थः । नन्वब्राह्मणमानयेत्यत्र नञोऽभावार्थकस्य ब्राह्मणपदेनानन्वयात् नञः सदृशलक्षणायामपि न ब्राह्मणपदेनान्वयः । नहि ब्राह्मणसदृशो ब्राह्मण इत्यन्वयः संभवति अतोऽब्राह्मणवाक्यस्यैव ब्राह्मणसदृशे शक्तिरिति मतमपाकरोति—**नञ्समास इति** । अब्राह्मणपदे ब्राह्मणपदस्य ब्राह्मणसंबन्धिलक्षणायां नञर्थान्वयादुत्तरपदार्थसदृशस्य लक्षणया लाभोपपत्तौ न शक्तिकल्पनं युक्तमित्यर्थः । अघट इत्यस्य घटान्योन्याभाववति शक्तिरिति मतं निराकरोति—**अघट इति** । घटपदे घटप्रतियोगिकत्वलक्षणायां नञर्थेन नान्वयः । पटसामानाधिकरण्यानुपपत्त्या चनञोऽभाववतिलक्षणा । तथाच घटप्रतियोगिकाभाववान्पट इति वाक्यार्थः स्यादिति । इदानीमसमासेऽपि लक्षणेति दर्शयति—**व्यासेपीति** । अत्रापि नञ्पदं स्वार्थाधिकरणे लाक्षणिकमित्यर्थः । क्व तर्हि नञो मुख्यार्थत्वमत आह—**न पचतीत्यादाविति** । पाकघटयोर्नञर्थेन सामानाधिकरण्याभावादित्यर्थः । **आवीतहेतुभिरिति** । आवीतहेतवो नामापक्षव्यावृत्तिमुखेन ये साध्यं गमयन्ति यथा प्रमादयः । ते हि निरात्मकेभ्यो घटादिभ्यो व्यावृत्ताः शरीरस्य निरात्मकत्वापोहेन सात्मकत्वं गमयन्तीत्यर्थः । **आकृतिशब्दार्थमाहेति** । तस्माद्भवतो भाष्यविरोधरूपं दूषणमिति शेषः । **एतदिति** । सास्नादिभिर्विशिष्टत्वमित्यर्थः । **अवयवेष्विति** । यद्यवयवेषु गोत्वं वर्तेत तदाऽवयविवत्सास्नादिवैशिष्ट्यं तस्य संभवेदिति

अवयविविचारः।

एतेनावयवी व्याख्यातः। तस्याप्यवयवेभ्यो भेदोऽभेदो वेति विकल्पे भेदं समवायसंबन्धमवयवगुणेभ्यश्च तत्र विशेषगुणानामुत्पत्तिमाचक्षते वैशेषिकाः। येच स्वसमवेतविशेषणविशिष्टाः स्वाश्रयस्यैकजातीयस्य परिच्छेदकास्ते विशेषगुणा इत्याहुः। वयंतु भिन्नाभिन्नत्वम्। नहितन्तुभ्यः शिरःपाण्यादिभ्यो नावयवेभ्यो निष्कृष्टः पटो देवदत्तो वा प्रतीयते। तन्तुपाण्यादयोऽवयवा एव पटाद्यात्मना प्रतीयन्ते। विद्यते च देवदत्ते अस्य हस्तः शिर इत्यादिः कियानपि भेदावभास इत्युपपन्नमुभयात्मकत्वम्। तस्मादवयवानामेवावस्थान्तरमवयवी न द्रव्यान्तरम्। त एव हि संयोगविशेषवशादकद्रव्यतामापद्यन्ते, तदात्मना च महत्त्वं पटजातिं च बिभ्रतः पटबुद्ध्या गृह्यन्ते। तेन

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

नैष दोषः। *गोत्वोपलक्षणतया सास्नाद्युपादानात्। अस्ति हि *तेषामेकावयविसंबन्धो जात्यन्तरेभ्यो गोत्वेनासाधारण्यमतस्ते शक्नुवन्ति तदुपलक्षयितुम्। तच्चोपलक्षणं विना गोशब्दवाच्यं विविच्य निर्देष्टुं न शक्यम्। यथाहुः—'पिण्डे सत्तादिजातीनां बह्वीनां समवेतता॥ तेभ्यो विशेष्यते गोत्वं सास्नादिभिरसंशयम्'॥ अथवा सास्नायेकार्थसंबन्धित्वाद्गोत्वस्य तदत्यन्तभेदात्तद्वैशिष्ट्यकीर्तनम्। अत्र कश्चिद्भाष्यगतरुचकाद्युदाहरणादाकृतिः संस्थानमिति मन्यते। तन्न। जातेरेवाकृतित्वेनाभिप्रेतत्वात्। नहि वाय्वग्निशब्दादौ किंचित्संस्थानमस्ति। नानासंस्थानपरिमाणेषु च तेष्वस्ति वायुत्वादिप्रत्यभिज्ञा। शाबलेयादौ च प्रतिपिण्डं संस्थानभेदात्कथं तत्सामान्यं स्यात्। *रुचकाद्युदाहरणं च संस्थानातिरिक्तरुचकत्वादिसामान्याभिप्रायम्, त्रयानुगतसुवर्णत्वाभिप्रायं वा। वक्ष्यति च 'द्रव्यगुणकर्मणां सामान्यमात्रमाकृति'रिति। नहि गुणकर्मसु संस्थानं संभवतीति। **ननु** यदि प्रत्यक्षा जातिस्तर्हि मनुष्यत्वादिवत् ब्राह्मणत्वादिकमपि सहसैव कथं न गृह्यते। सत्यम्। मातापितृसंबन्धस्य तदुपलक्षणस्यानवगमादिति ब्रूमः। तदुक्तम्—'तस्योपलक्षणं चापि क्वचित्केनचिदिष्यते॥ रूपादीनां विशेषेण देशकालाद्यपेक्षया॥ सुवर्णं व्यज्यते रूपात्ताम्रत्वादेरसंशयम्॥ तैलाद्धृतं विलीनं च गन्धेन च रसेन वा॥ भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते॥ अश्वत्वादौ च दूरस्थे निश्चयो जायते शनैः। संस्थानेन घटत्वादिब्राह्मणत्वादि योनितः॥ क्वचिदाचारतश्चापि सम्यग्राजादिपालितात्' इति। क्वचिद्देशे सम्यग्राजानुपालितादप्याचाराद्ब्राह्मण्यादिनिर्णयः। सच देशापेक्षः। यस्तु वसन्ताधानादिना ब्राह्मण्यादिनिश्चयः स कालापेक्षः। सर्वत्र तूपाध्यपेक्षैरिन्द्रियैरेव सुवर्णत्वादिनिर्णयः अपरोक्षभासादित्यर्थः। **ननु** यथा पङ्क्तिर्यूथं वनमित्यनेकेष्वेकत्वप्रत्ययो व्यामोहस्तथा गोत्वादिप्रत्ययोपि भविष्यति। मैवम्। रजतादिप्रत्ययवद्गवादिप्रत्ययस्य विपर्यासाभावात्। दूरत्वदोषेण हि बहुषु वृक्षेष्वेकं वनमिति प्रतीतिः। संनिकृष्टस्य तु वृक्षेषु एकत्वबुद्धिर्निवर्तते, जातिबुद्धिस्तु कथमपि न निवर्तेत इत्यस्ति विशेषः। केचित्तु नानावृक्षगतं बहुत्वसामान्यमेव वनबुद्ध्या गृह्यते तत्र चैकत्वं वनत्वं च विद्यतेऽतो भवत्येकवचनोपपत्तिः। एवंच वनस्य सत्यत्वान्न तद्दृष्टान्तेनाकृतेर्मिथ्यात्वमित्याहुः। अत्रान्ये विषया वार्तिके वनवादेऽवगन्तव्याः॥

आकृतिन्यायमन्यत्रातिदिशति—**एतेनेति**। यथैव भिन्नेष्वेकबुद्धिसद्भावात्सामान्यं सिद्ध्यति तथावयवेषु भिन्नेषु देवदत्तोऽयं घटोयमित्येकद्रव्यावभासादस्त्येवावयवेभ्यो भिन्नोऽवयवीत्यर्थः। तत्किमत्यन्तभिन्नोऽवयवी अभिन्नो वेत्याकाङ्क्षायां मतान्तरेण तावद्भेदमुपपादयति—**तस्यापीति**। तन्मते विशेषगुणलक्षणमाह—**येचेति**। स्वसमवेतं विशेषणं नेत्राद्येकाक्षगम्यत्वम्। स्वमतमाह—**वयं त्विति**। उभयोक्तयुक्तिबलादेवोभयरूपतासिद्धिरित्यर्थः। **ननु** भिन्नाभिन्नत्ववादिनामन्यतमस्याप्यनवधारणात्स्थाणुर्वा पुरुषो वेतिवत्संदेहात्किंचिदप्यबाधितं न सिध्येत्। सत्यं न सिध्येत्। यदि ज्ञानमेवाव्यवस्थितरूपमनेकमवगाहेत, यथा स्थाणुर्वा पुरुषो वेति। नत्वेवं, वस्तुविषयो ह्यस्माकमनेकान्तवादोऽनेकाकारं वस्त्विति। यत्र तु ज्ञानमेवाव्यवस्थितरूपं तत्र संशयादप्रामाण्यं भवति। इहत्वनेकरूपमेव वस्त्विति निर्णयात्कुतोऽप्रामाण्यम्। यथाहुः—'ज्ञानं संदिह्यते यत्र तत्र न स्यात्प्रमाणता॥ इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम्॥' निगमयति—**तेनेति**। वृत्तिविकल्पश्चास्य वार्तिककारैरेव परिहृतः। तथाहि—'वृत्तिश्चावयवेष्वस्य व्यासज्यैव प्रतीयते॥ ततः कार्त्स्न्यादिसंप्रश्नः प्रत्याख्येयोऽत्र जातिवत्'॥ सापेक्षेष्वनेकेषु वृत्तिर्व्यासज्यवृत्तिः, साचावयविनोऽवयवेषु प्रतीतिबलादेवाङ्गीक्रियते। यत्तु विकल्पान्तरं किं कार्त्स्न्येनैकैकत्र वृत्तिः किंवावयवश इति तु जातिवदेव परिहर्तव्यमित्यर्थः। **ननु**

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

भावः। **गोत्वोपलक्षणतयेति**। उपलक्षणतयोपादानं नतु विशेषणत्वेनातो नोक्तदोष इति भावः। **तेषामिति**। सास्नादीनामित्यर्थः। **रुचकादीति**। रुचकः स्वस्तिको वर्धमान इति प्रत्यक्षमाकृतिर्दृश्यत इति भाष्ये रुचकाद्युदाहरण-

**पटात्मना तेषामेकत्वम् अवयवात्मना तु नानात्वमुपपन्नम् ॥ * ॥ यदपि कारणगुणा रूपादयः कार्ये गुणमारभन्ते इत्युक्तं तदपि गुणद्वयप्रतीत्यभावान्नातीवास्मभ्यं रोचते । यदि हि द्वौ गुणौ प्रतीयेयातां तन्तुष्वेकः पटे चापरस्ततः कार्यकारणभावं प्रतिपद्येयाताम् नतु गुणद्वयं प्रतीयते तन्तुरूपमेव शुक्लं तन्तुषु पटभावमापन्नेषु पटरूपतया प्रतीयते नतु रूपान्तरम् । यत्रापि नानारूपैः शुक्लकृष्णरक्तपीतैस्तन्तुभिरारभ्यते पटस्तत्रापि त एव वर्णाः पटगताः प्रतीयन्ते न रूपान्तरम् ॥**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

यथा तन्त्वाद्यवयवा एव पटात्मना प्रतीयन्ते तथा सास्नादिसमुदायालम्बनैव गोत्वप्रतीतिः किं नाभ्युपगम्यते । मैवम् । पिण्डात्पिण्डान्तरेषु सास्नादिसमुदायस्य भेदात् । अतः सास्नाद्यतिरिक्तस्यैव गोत्वबुद्ध्यालम्बनत्वम् । *वनबुद्धिरपि तर्हि वनान्तरेष्वपि संभवन्ती न समुदायालम्बना स्यात् । सत्यम् । अस्ति ह्यस्माकमत्र वृक्षत्वं बहुत्वसामान्यं च, तदाश्रया वनमिति बुद्धिर्भविष्यति । **नन्व**स्मिन्पक्षे वनमित्येकवचनं, यदा हि 'वृक्षा हि बहवो वनमि'ति वार्तिकोक्तः पक्षस्तदा कथमेकवचनोपपत्तिः । नैष दोषः । जात्यभिप्रायेणैकवचनोपपत्तेः । यथाहुः—'एकत्वेप्याकृतेर्यद्वद्बहुत्वं व्यक्त्यपेक्षया ॥ बहुत्वेपि तथा व्यक्तेरेकत्वं जात्यपेक्षया ॥' तर्हि व्यक्तिसंख्यावशेन कदाचिदेकस्मिन्नपि वृक्षसमुदाये वनानीत्यपि प्रयोगः स्यात् । न स्यादिति ब्रूमः । शब्दानां नियतशक्तित्वात् । केचिदेकत्वेनैवावच्छिन्नमर्थं सर्वदा वदन्ति केचित्तु बहुत्वेनैव, केचिदुभयथापि प्रयोगभेदेन वदन्तीति । यथाहुः—'एकानेकाभिधाने च शब्दा नियतशक्तयः । केचिद्व्यक्तिं त्वसंख्याकां गमयन्त्यंबरादिवत्'॥ *एको व्रीहिस्तु निष्पन्न इति जातिं स्वसंख्यया ॥ *पत्नीसंनहनादौ तु व्यक्तिमाकृतिसंख्यया ॥ कपिञ्जलादिजातेस्तु प्रतीतिर्व्यक्तिसंख्यया ॥ व्यक्तिजाती वदन्त्यन्ये द्रव्यावयवसंख्यया ॥ अस्मानिति यथैकस्मिन्पाशानदितिरित्यपि ॥ *तत्र व्रीह्यादिशब्दानां संख्यायोगो यथारुचि ॥ वनदारादिशब्दास्तु प्रवर्तन्ते व्यवस्थया ॥ *जंगमे स्थावरे चार्थे यथायूथवनादयः ॥ *तत्र व्यक्तौ च जातौ च दारादिश्चेत्प्रयुज्यते ॥ व्यक्तेरवयवानां च संख्यामादाय वर्तते ॥ *वनशब्दः पुनर्व्यक्तीर्जातिसंख्याविशेषिताः ॥ बह्वीराहाथवा जातिं बहुव्यक्तिसमाश्रिताम् ॥' इति । एवं संयुक्तेषु परिगृहीतविततिविशेषेषु पङ्क्तिरिति बुद्धिरेकत्वावगाहिनी न निरालम्बना । संयोगादिविशेषस्यालम्बनत्वात् । एवमन्यत्राप्यूह्यम् । **नन्वत्र** भाष्यकृता पूर्वं वृक्षातिरिक्ताप्रत्ययाद*सत्त्वमुपपाद्य पुनरपि 'वनादिषु नैव प्रत्ययविपर्यासो न ते न सन्ति' इति भाष्येण सत्त्वं तद्विरुद्धम् । वक्तव्यो वाभिप्रायविशेषः । उच्यते—'लोकप्रसिद्धपदार्थव्यवहारित्वान्मीमांसकानां न स्वतन्त्रपदार्थाभ्युपगमोऽस्ति लोकदृष्ट्या चासत्त्वं पूर्वं यदि वनेन्येनेत्यादिनोक्तम् । यदि तु नायं विशेषो घटत इति कश्चिदभिनिविशेत तंप्रतीदं भाष्यम् । अथ वनादिष्विति वनस्य सद्भावेपि न काचिदस्माकं क्षतिरित्यभिप्रायः । अतएवाहुर्वार्तिककाराः—'इति निगदितमेतल्लोकसिद्धैः पदार्थैर्व्यवहृतिरिह शास्त्रे न स्वतन्त्राभ्युपेतैः ॥ भवति तु जनदृष्ट्या जातिपङ्क्त्यादिभेदो यदि तु न घटतेऽसौ नैव बाधोस्ति कश्चित् ॥' 'प्रसक्तानुप्रसक्त्यैतद्वार्तिकादेर्निरूपितम् ॥ प्रमेयमधिकं मूलमनुसंधीयतेऽधुना ॥ इति वनवादः ॥ इदानीमौलूक्याभिमतं कारणगुणप्रक्रमं निराकर्तुमाह—**यदपीति** । ग्रन्थो निगदव्याख्यातः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

मित्यर्थः । **वनबुद्धिरपीति** । यथा गोत्वबुद्धिर्विलक्षणेषु नानापिण्डेषु जायमाना न समुदायालम्बना तथा वनबुद्धिरपि बहुषु वनेषु विलक्षणेषु इदं वनमिदं वनमित्येकरूपा जायमाना न समुदायालम्बना स्यादित्यर्थः । **एको व्रीहिरिति** । अत्र व्रीहिशब्दोऽन्येषां जातिशब्दानां वृक्षादीनामुपलक्षणार्थः । **पत्नीति** । पत्नीशब्दोऽप्यौपाधिको यज्ञस्वामिन्यां वर्तमानो व्यक्तिवचनः । सच श्रुतिसंख्यया व्यक्तिमवच्छिनत्ति 'पत्नीं सन्नह्यति' इत्येतस्मिन्मन्त्रे द्वयोर्बहुषु चैकवचनस्यैव प्रयोगात् आकृतिसंख्यावाचिना शब्देन प्रवृत्तिनिमित्तं यज्ञस्वामित्वमोवाक्यं(?) तेन हि पत्नीत्वं नामाकृतिरस्ति अस्मानितिव्यक्तिमवयवसंख्यया 'अदितिः पाशा'नित्यत्र मन्त्रे जातिवचनः पाशशब्द एकस्मिन्नपि पाशे बहुवचनान्तः प्रयुज्यमानो जातिद्रव्यावयवसंख्यया वक्तीत्युक्तमिति । येचैते व्रीह्यादिशब्दास्ते प्रयोगभेदेन यथारुचि संख्यां भजन्त इत्याह—**तत्रेति** । वनदारादिशब्दास्तु व्यवस्थितसंख्यावचना इत्याह—**वनेति** । एतदेव दृष्टान्तेनोपपादयति—**जंगम इति** । कीदृशी पुनर्दारादिशब्दानां व्यवस्था तां दर्शयति—**तत्रेति** । दारादिशब्दो हि सर्वदा बहुवचनान्तः समयादेकव्यक्त्यभिप्रायेण प्रयुज्यते तदवयवसंख्यया व्यक्तिभेदमाचष्टे । यदात्वविवक्षितव्यक्तिभेदो दारमात्रपरः तदा व्यक्तिभेद इति । वनशब्दस्य त्वेकत्वसंख्यैव विवक्षितेत्याह—**वनशब्द इति** । जातिग्रहणं बहुत्वदेशसमुदायानामुपलक्षणार्थं । शङ्कुभिन्नेषु वनेषु वनानीति प्रयोगः सादेश्ये बहुत्वं जातावुपचर्य क्रियते । द्रव्यसमुदायवनलक्षितदेशाद्यनेकत्वाभिप्रायत्वे वनस्य तद्भेदादेव युक्तं बहुवचनमिति । **असत्त्वमिति** । यदि वनेऽन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते मिथ्यैव वनप्रत्यय इति, अतो वनं नास्ती-

चित्रैकरूपनिराकरणम्।

**ननु** चित्रः पट इति प्रतीयते नतु शुक्लः पीत इति वा, तस्माच्चित्राख्यं रूपान्तरमत्रोत्पन्नम्। नैवम्। चित्रं नानारूपमित्यर्थः। चित्रशब्दो हि नानापर्यायो लौकिकानां प्रसिद्धः। ततश्चित्राख्यमेकमेव रूपं लोकविरोधादेवायुक्तमङ्गीकर्तुम्। नानारूपाणामपि चावयवभेदद्वारेणैकस्मिन्नपि पटे समवायो नानुपपन्नः। एतेन संयोगजसंयोगो निरस्तो वेदितव्यः। यथा देवदत्तसंयोग एव तस्मिन्कुण्डलिनि संजाते कुण्डलिसंयोगो भवति तथा तन्तुतुरीसंयोग एव तन्तौ पटभावमापन्ने पटतुरीसंयोगो भवति न संयोगान्तरं प्रतीत्यभावादित्यलमतिविस्तरेण। तस्मादस्त्येवावयवी।—'वृत्तिः स्वावयवेष्वस्य व्यासज्येति प्रदर्शितम्॥ तेनास्त्यवयविद्रव्यं सामान्यं चास्ति सर्वगम्॥ इत्यवयविवादः॥

वर्णानामभिधातृत्वमाकृतेश्चाभिधेयताम्॥ कथयित्वाथ संबन्धकथैव प्रकृतोच्यते॥ ज्ञाप्यज्ञापकभावश्च संबन्धः प्रागुदीरितः॥ तन्नित्यत्वं यदाक्षिप्तं तत्समाधीयतेऽधुना॥ एवं हि पूर्वमुक्तम्—यस्मात्प्रथमश्रवणे शब्दोऽर्थं न प्रत्याययति तस्मान्नास्य स्वाभाविकमिन्द्रियवत्प्रत्यायकत्वम्। अस्यायमर्थः। इति पुरुषेण कथिते प्रत्याययति ततो नूनमस्य पुरुषकृतं प्रत्यायकत्वमिति पौरुषेय एव संबन्ध इति॥ * ॥ तत्राभिधीयते—नह्यस्यायमर्थ इति संबन्धकरणमिदम्, प्रसिद्धसंबन्धकथनं ह्येतत्। कथमवगम्यते अर्थान्तरकथने बहुभिर्निवारणात्। यो हि कश्चित् कस्मैचित् गोशब्दस्याश्वं गवयं वार्थमाह तमन्ये बहवो निवारयन्ति नायमस्यार्थः सास्नादिमानस्यार्थ इति, संबन्धक्रियापक्षे च देवद-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

प्रतीत्यभावादन्यदपि निराकरोति—**एतेनेति**। उपपादितमर्थं निगमयति—**तस्मादिति**। महाप्रकृतं निगमयति—**वृत्तिरिति**। व्याख्यातप्रायं चैतत्। इति अवयविवादः॥

अनन्तरोक्तप्रमेयस्य वक्ष्यमाणप्रमेयेणासंगतिमाशङ्क्य संगतिं कर्तुमाह—**वर्णानामिति**। नन्वत्र ग्रन्थकारेणायं गौरित्यत्र कः शब्दस्तथा गौरित्यस्य शब्दस्य कोऽर्थ इत्यादिभाष्यद्वयमनुक्रम्य वर्णानामभिधातृत्वमाकृतेश्चाभिधेयतोपपादिता संबन्धोपपादनसमये तु अथ संबन्धः कइत्येतद्भाष्यं कथमुपेक्षितम्। प्रयोजनाभावादितिचेत्। न। तदनुसारेणैव संबन्धस्योपपादयिष्यमाणतया तत्सत्त्वात् प्रक्रमभङ्गापत्तेश्च। तस्माद्ग्रन्थकृतोऽभिप्रायविशेषः। उच्यते—संज्ञासंज्ञिसंबन्धस्य पूर्वमेवोक्तत्वात्प्रश्नस्तावदनुपपन्नः। यच्छब्दे ज्ञातेऽर्थो विज्ञायत इत्युत्तरमप्यनुपपन्नं संबन्धस्वरूपस्याकथनात्। अतएवाहुः—'किमौषधं ज्वरस्येति पृष्टो यदि वदेदिदम्॥ येनासौ नश्यतीत्येवं किं तेन कथितं भवेत्॥' अथायमभिप्रायः—संबन्धग्रहणपूर्विका हि प्रतीतिः संज्ञासंज्ञिसंबन्धप्रतीत्युत्तरकालभावित्वान्न ातीत्यङ्गं संज्ञात्वमजानानस्यापि संबन्धान्तरदर्शनेनार्थप्रतीत्युपपत्तेः। अतोत्रापरितुष्यन् *अविनाभावरूपसंबन्धान्तराभिधित्सया पृच्छति—**अथ संबन्धः क इति**। एतच्चायुक्तम्। उत्तरभाष्ये विनाभावरूपसंबन्धकीर्तनाभावात्। तस्मादयमभिप्रायो भाष्यकारस्य। पूर्वोक्त एव संबन्धो मध्ये शब्दार्थविचारव्यवहितो नित्यानित्यविचाराय पुनः स्मारयति। उत्तरभाष्येणापि अभिधानक्रियांप्रति शब्दस्य यत्कर्तृत्वं करणत्वं वा तदेव शक्तिसंज्ञागमकत्वादिपर्यायमुच्यते—यच्छब्दज्ञानादर्थज्ञानं अयं संबन्धश्च ज्ञाप्यज्ञापकत्वमेवेति भाष्यार्थः। भाष्यादेतदर्थाप्रतीतिरिति चेत्। न। ननु कृतक इति पूर्वमुपपादित इत्यनुमानभाष्यपर्यालोचनया तस्यैव प्रतीतेः। नहि संबन्धान्तरस्य कृतकत्वं पूर्वमुक्तमिति। अतएव ग्रन्थकारोऽनतिप्रयोजनत्वाद्भाष्यमुपेक्ष्य पूर्वोक्तसंबन्धानुभाषणेनाक्षेपसमाधानाभ्यां नित्यत्वानित्यत्वविचारमारभते—**ज्ञाप्येति**। आक्षेपं तावदनुभाषते—**एवंहीति**। समाधानं प्रतिजानीते—**तत्रेति**। **प्रसिद्धेति**। यदाह भाष्यकारः—'सिद्धवदुपदेशात्' यदि संबद्धुरभावान्नियोगतो नार्था उपलभ्येरन् ततोऽर्थापत्त्या संबन्धकर्तारमवगच्छामः। अस्ति त्वन्यः प्रकारो वृद्धानां स्वार्थेन व्यवहरमाणानामुपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते, तेपि वृद्धा यदा बाला आसन् तदान्येभ्यो वृद्धेभ्यः तेप्यन्येभ्य

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

स्त्ववगच्छाम इत्यनेन भाष्येणेत्यर्थः। इति वनवादः॥ **अविनाभावेति**। शब्दार्थयोरविनाभावाभावे शब्दे ज्ञानार्थज्ञानानुपपत्तेः। नहि वस्त्वन्तरेऽवगते वस्त्वन्तरं ज्ञायेत अतोऽविनाभाव एव तयोः संबन्ध इत्यर्थः। समयं निराकर्तुं विकल्पयति—

त्वादिवद्येनैव संबन्धः क्रियते स एवार्थ इति निवारणं नोपपद्यते । तस्मान्न तावदर्वाचीनाः पुरुषा अस्य शब्दस्यायमर्थ इति वदन्तोपि तत्संबन्धकर्तृत्वेनाशङ्कनीयाः । यदिपरमेवं स्यात् सर्गादिकाले भगवता प्रजापतिना सर्वमेव स्थावरजंगमं धर्माधर्मौ च सृष्ट्वा संव्यवहाराय च शब्दानामर्थैः संबन्धं कृत्वा धर्माधर्मप्रतिपादनाय च कृतसंबन्धैः पदैर्वेदान्कृत्वात्मजेभ्यो मरीच्यादिभ्यः शब्दार्थसंबन्धो वेदाश्च प्रतिपादितास्तैरप्यन्येभ्यस्तैरप्यन्येभ्य इत्येवं पूर्वपूर्वेभ्यः प्रतिपद्योत्तरोत्तरेषां शब्दार्थप्रतिपत्तिर्व्यवहारश्चेति ॥ * ॥ तदप्ययुक्तम् । इत्थंभावे प्रमाणाभावात् प्रथमश्रुतावप्रतीतिरेव प्रमाणं सामयिकत्वे ह्यप्रतिपन्नसमयानामप्रतीतिः प्रतिपन्नसमयानां च प्रतीतिर्देवदत्तादिशब्दवदुपपन्ना भवति, स्वाभाविके तु प्रत्यायकत्वे प्रथमश्रवणेऽपि प्रतीतिः स्यादितिचेन्न । स्वाभाविकमपि प्रत्यायकत्वमवगतं सदर्थप्रतिपत्तौ निमित्तं नाप्रतिपन्नमिति युक्तैव प्रथमश्रवणेऽर्थस्याप्रतीतिः । नच सर्गादिर्नाम कश्चित्कालोऽस्ति, सर्वदाहीदृशमेव जगदिति दृष्टानुसारादवगन्तुमुचितम् । ननु स कालोऽभूत् यदा सर्वमिदं नासीदिति । प्रमाणाभावात् । मन्त्रार्थवादेतिहासपुराणादिः प्रमाणमिति चेत् । न । वेदानां पौरुषेयसंबन्धापेक्षाणां स्वयं च पौरुषेयाणां शाक्यादिग्रन्थवदतीन्द्रियार्थे प्रामाण्यासंभवात् । तदप्रामाण्ये च तन्मूलानां धर्मशास्त्रादीनां दूरनिरस्तमेव प्रामाण्यम् । सर्वाभावे च सृष्टिरपि न संभवति । मृत्तन्त्वाद्युपादानेन हि घटादीन्युपादीयन्ते । सर्वाभावे हि केनोपादेन सर्वमिदमुपादेयम् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

इति नास्त्यादिरिति । अतोऽर्वाचीनानां संबन्धवक्तृत्वमात्रं नतु कर्तृत्वमित्युपपादितमर्थं निगमयीति—**तस्मादिति** । अत्र वार्तिककारैः—'*समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा ॥ क्रियते जगदादौ वा सकृदेकेन केनचित् ॥ *प्रत्येकं वापि संबन्धो भिद्येतैकोऽथवा भवेत् ॥ *एकत्वे कृतको न स्याद्भिन्नश्चेद्भेदधीर्भवेत् ॥*भिन्नत्वे प्रतिसंबन्धं शक्तिः कल्प्याभिधां प्रति ॥' 'इत्यादिना ग्रन्थेन विकल्पोपन्यासपूर्वकमिदानींतनकर्तृत्वं संबन्धस्य निराकृत्य 'सर्गादौ तु क्रिया नास्ति तादृकालो हि नेष्यते' इत्यादिना महता प्रबन्धेन जगदादिपक्षो निराकृतस्तत्प्रपञ्चस्तत्रैवावगन्तव्यः । ग्रन्थकारस्तु तदनुसारेणैव सर्गादिपक्षं निराकर्तुमाह—**यदि परमिति** । निराकरोति—**तदपीति** । प्रमाणसद्भावं शङ्कते—**प्रथमेति** । शब्दानां प्रथमश्रवणेऽर्थस्य या प्रतीतिः सैवच संबन्धस्य कृतकत्वे प्रमाणम् । स्वाभाविकत्वे तु तस्य प्रथमश्रवणेपि प्रतीतिः स्यादित्यर्थः ॥ परिहरति—**नेति** । **इतीति** । प्रथमश्रवणे प्रत्यायकत्वस्यैवानवगमादर्थाप्रतीतिरित्यर्थः । **वेदानामिति** । एतच पौरुषेयत्ववादिमते दूषणम् । इतोपि न सर्गादिकालोऽस्तीत्याह—**सर्वाभाव इति** । तदुक्तम्—'*यदा सर्वमिदं नासीत्कावस्था तत्र गम्यताम् ॥ प्रजापतेः क्व वा स्थानं किंरूपं च प्रतीयताम् ॥' तथा—'*प्रवृत्तिः कथमाद्या च जगतः संप्रतीयते ॥ शरीरादेर्विना चास्य कथमिच्छापि सर्जने ॥' **ननु** 'प्रजापतिर्वा इदमेकमेवासीत्सोऽकामयत प्रजाः पशून्सृजेये'त्युपक्रम्य 'ततो वै स प्रजाः पशूनसृजत' इति श्रुतिरेवात्र प्रमाणं किं युक्तिकलापेनेति चेत् । न । देवस्य प्रजापतितयानाश्वासात् नित्यत्वे वा सृष्टेः प्राग्विद्यमानस्य प्रजासर्गादिरूपयथाश्रुतार्थसंबन्धानुपपत्तेः । अतोऽन्यपरविध्यन्तरप्रोचनारूपोर्थो वक्तव्य इति । सर्वे-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**समय इति** । प्रतिमर्त्यपक्षमपि विकल्पयति—**प्रत्येकमिति** । एकत्वे तावत्कृतकतैव न स्यादेकस्य बहुभिः क्रियाऽसंभवादित्याह—**एकत्व इति** । भेदस्तु प्रतीतिविरुद्ध एवेत्याह—**भिन्नश्चेदिति** । भिन्नत्वे च तेषामर्थप्रतीतिकारणत्वात् अनेकशक्तिकल्पना स्यादित्याह—**भिन्नत्व इति** । किंच यस्य केनचिद्वक्त्रा संबन्धः कृतः स वक्त्रन्तरप्रयुक्ततदर्थं न प्रतिपद्येत नह्यन्यस्मिन्संबन्धज्ञातशक्तावन्यस्मादज्ञातशक्तिकादर्थप्रतीतिः संभवति वक्त्रन्तरेणापि प्रयुक्तशब्दे स्वसंबन्धानुसारेण श्रोतार्थं बुध्यत इति चेतनस्यानेकैः पुरुषैर्नानार्थविषयाः अनेके संबन्धाः कृताः तस्य शब्दस्यार्थः कथं प्राप्येत । तस्मान्नार्वाचीनः संबन्धकर्ता संभवति । यदिच संबन्धकर्ता स्यात् स्मर्येत । यथा वृद्धिशब्दस्य संबन्धकर्ता पाणिनिः स्मर्यते । नहि विस्मृते सूत्रकर्तरि 'वृद्धिर्यस्याचामादि'रिति कश्चित्प्रतिपद्यते । एवं शब्दार्थसंबन्धकर्त्रापि व्यवहारोऽवश्यं स्मर्तव्यो भवतीति । **यदेति** । स्रष्टा चायं प्रजापतिस्तत्र क्वावतिष्ठते पृथिव्यादीनामसंभवात् अधिष्ठानरहितस्य तस्य प्रयत्नादेरसंभवात्स्रष्ट्यनुपपत्तिः । नापि शरीरी । तस्य भौतिकत्वात् भूतादीनां च तदानीमभावात्सर्वाभावे च निःसाधनस्याद्या प्रवृत्तिर्न संभवतीत्याह—**प्रवृत्तिरिति** । तदिच्छामात्रेणैव जगन्निष्पत्तिः किं प्रवृत्त्येतिचेत् । न । अशरीरस्येच्छाया अप्यसंभवात् । अत

### अद्वैतमतेन पूर्वपक्षः ।

स्यान्मतम् । आत्मैवैको जगदादावासीत् स एव स्वेच्छया व्योमादि प्रपञ्चरूपेण परिणमति बीजमिव वृक्षरूपेण, चिदेकरसं ब्रह्म कथं जडरूपेण परिणमतीति चेत् । न परमार्थतः परिणामं ब्रूमः किंत्वपरिणतमेव परिणतवदेकमेव सदनेकधा मुखमिवादर्शादिष्वविद्यावशाद्विवर्तमानमात्मैवात्मानं चिद्रूपं जडरूपमिवाद्वितीयं सद्वितीयमिव पश्यति । सेयमविद्योपादाना स्वप्नप्रपञ्चवन्महदादिप्रपञ्च-सृष्टिः । तथाच 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं नेह नानास्ति किंचने' इत्यादयो बहवोऽद्वैतवादाः। तथा 'इन्द्रो मायाभिः पुरुरूप ईयते' इति भेदावगतेर्व्यक्तमेव मायानिबन्धनत्वं दर्शितम् । तथा 'लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्विदे'त्यादिनानात्मदर्शने निन्दा 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति च नानात्वदर्शननिन्दा 'सर्वमिदमद्वितीयमेव ब्रह्म पारमार्थिकं भेददृष्टिश्चाविद्यो-पादाने'त्येतमर्थं प्रकटयतीति ॥

### उक्ताद्वैतमतखण्डनम् ।

किमिदानीमसन्नेवायं प्रपञ्चः। ओमितिचेत् । न। प्रत्यक्षविरोधात् । तथाच प्रत्यक्षं प्रपञ्चसद्भाव-ग्राहकं तथोक्तं प्रत्यक्षसूत्रे । नचागमेन प्रत्यक्षबाधः संभवति प्रत्यक्षस्य शीघ्रप्रवृत्तत्वेन सर्वेभ्यो बलीय-स्त्वात्।नच पौर्वापर्यन्यायेन प्रवृत्तमेव प्रत्यक्षमागमेन पश्चाद्बाध्यत इति वाच्यम्। आगमस्य प्रत्यक्षेण प्रवृत्तिविरोधात् । आगमप्रवृत्तिसमयेऽपि हि भेदप्रपञ्चमुपदर्शयत् प्रत्यक्षमागमप्रवृत्तिमेव निरुणद्धि । यथा खलूत्पत्तुमुपक्रममाण एव घटो दण्डेनाहन्यमानो नोत्पत्तुं प्रभवति तथागमोपि । किंच प्रप-ञ्चाभावं प्रतियतावश्यमागमोपि प्रपञ्चान्तर्गतत्वादसद्रूपतया प्रत्येतव्यः । कथं चागमेनैवागमस्या-भावः प्रतीयेत, असद्रूपतया हि प्रतीयमानो न कस्यचिदप्यर्थस्य प्रमाणं स्यात्, प्रामाण्ये वा नास-त्वम् ॥ * ॥ कश्चित्पुनराह नासत्वं प्रपञ्चस्य ब्रूमः । प्रत्यक्षादिप्रमाणतः सिद्धत्वात् । नापि परमा-र्थतः सत्वम् आत्मज्ञानेन बाध्यमानत्वात् । तस्मात् सदसद्भ्यामनिर्वाच्योऽयं प्रपञ्च इति ॥ * ॥ तदिदमसारम् । सतोऽन्यत्वमेवासत्वम्, तद्यदि प्रपञ्चः सन्न भवति व्यक्तमसन्नेवायम्, असत्त्वा-भावे वासत्त्वापत्तिः, सदसत्वयोरेकनिषेधस्येतरविधिनान्तरीयकत्वात् । नच विधाद्वयरहिते विधा-न्तरं संभवति अथापि यन्न कदाचित्प्रतीयते तदसत्, यथा शशविषाणम्, यत्प्रतीतं न कदाचिद्बा-ध्यते तत्सत् यथात्मतत्वम्, प्रपञ्चस्तु प्रतीयमानत्वाद्बाध्यमानत्वाच्च भावाभावाभ्यामनिर्वाच्य इति मतम् । तदनुपपन्नम्, लोकविरोधात् । यद्धि प्रतीतं बाध्यते मृगतोयरज्जुसर्पादि तदसदेवेति हि लौकिकी प्रसिद्धिः । नहि शशविषाणादीनां मृगतोयादीनां च कश्चिद्विशेषो लोके, सोयं प्रपञ्चोपि बाध्यते चेत् असन्नेवेति नानिर्वाच्यत्वम् । अथापि लोकप्रसिद्धिमनादृत्य वृद्ध्यादिवत्परिभाषारूपे-णानिर्वाच्य इत्युच्यते, तथाप्ययुक्तम्—प्रपञ्चस्य बाध्यत्वाभावात्, न तावत्संसारावस्थायामागमेन बाधः संभवतीत्युक्तम् । मुक्तस्य तु बाधकज्ञानं नाशङ्कनीयमेव प्रलीनसर्वकरणत्वात्, करणाभावे च

---

### युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

लोकप्रसिद्धिविरुद्धः सृष्ट्यपलाप इति चेत् । न । अन्यपरसृष्ट्यादिवाक्यादुपजातायाः प्रसिद्धेः भ्रान्तिरूपत्वेनाप्रमाणत्वात् अन्यपरत्वं च वेदस्य प्रयोजनवदर्थपरत्वादुपाख्यानमात्रस्यानुपयोगात् स्तुतिनिन्दार्थत्वाङ्गीकारादिति ॥

वेदान्तिमतं शङ्कते—**स्यान्मतमिति**।ग्रन्थो निगदव्याख्यातः । **एतमर्थमिति**। अनात्मदर्शननिन्दां नानात्वदर्श-ननिन्दां चैतमर्थं प्रकटयतीति संबन्धः । कोऽसावर्थस्तमाह—**सर्वमिदमिति** ॥

निरोधं प्रकटयति—**आगमेति**। दूषणान्तरमाह—**किंचेति**। एतन्मतानुसारिण एवाभिप्रायमाह—**कश्चित्त्विति**। उक्तंच—'प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् ॥ गाहते तदनिर्वाच्यमाहुर्वेदान्तवादिनः ॥' इति । बाधाभावं विवृ-णोति—**न तावदिति**। असद्रूपतया हि प्रतीयमानो न कस्यचिदर्थस्य प्रमाणं स्यादित्युक्तमित्यर्थः । प्रपञ्चस्याविद्यकत्वं

ज्ञानासंभवात् । नचास्मर्यमाणस्य प्रपञ्चस्याभावः शक्यते प्रत्येतुम् । नच तस्यामवस्थायां संभवति स्मरणम् सर्वसंस्काराणामुच्छिन्नत्वात्, तस्मान्न बाधसंभवः ॥ * ॥ यच्चाविद्याकृतोऽयं प्रपञ्च इति, का पुनरियमविद्या किं भ्रान्तिज्ञानम्, किंवा भ्रान्तिज्ञानकारणभूतं वस्त्वन्तरम् । यदि भ्रान्तिः सा कस्य न ब्रह्मणस्तस्य स्वच्छविद्यारूपत्वात् । नहि भास्करे तिमिरस्यावकाशः संभवति । नच-जीवानाम् । तेषां ब्रह्मातिरेकेणाभावात् भ्रान्त्यभावादेव च तत्कारणभूतं वस्त्वन्तरमप्यनुपपन्न-मेव । ब्रह्मातिरेकेण भ्रान्तिज्ञानं तत्कारणं चाभ्युपगच्छतामद्वैतहानिः ॥ * ॥ तत्किंकृता च ब्र-ह्मणो विद्या, नहि कारणान्तरमस्ति । स्वाभाविकीतिचेत् कथं विद्यास्वभावमविद्यास्वभावं स्यात् । स्वाभाविकत्वे चास्याः केन विनाशः स्यात् । आगमिकं ध्यानादि तज्जन्यं वा स्वरूपज्ञानं ब्रह्मा-विद्यां नाशयतीति चेत्, न, नह्यागमो वा ध्यानादयो वा तज्जन्यं वा ज्ञानं नित्यज्ञानात्मकब्रह्माति-रिक्तमस्ति यदविद्यां नाशयेत् । तद्वरमस्मान्मायावादान्माहायानिकवादः । यत्र नीलपीतादिवैचित्र्यं कार्यकारणभावो बद्धमुक्तादिव्यवस्था च संतानभेदेन समर्थ्यते । नित्यमेकरसं निष्प्रपञ्चमात्मान-मुपेयुषां तु समस्तलोकवेदव्यवहारोच्छित्तिरेव स्यात् ॥ * ॥ यदप्याहुः—अज्ञानजन्यः प्रपञ्चो ज्ञानेन विनाश्यते मृगतोयवत् स्वप्नप्रपञ्चवच्चेति । तदप्ययुक्तम्—यदि कुलालादिव्यापारस्थानीये-नाज्ञानेन घटवदुत्पन्नः प्रपञ्चो मुसलस्थानीयेन ज्ञानेन नाश्यते, तथापि नासत्वं प्रपञ्चस्य स्यात्, उत्पत्तिविनाशयोगादनित्यतामात्रं स्यान्नात्यन्ताभावः ॥ * ॥ केन च ज्ञानेन नाशः, नात्मज्ञानेन, वि-रोधाभावात् । निष्प्रपञ्चात्मज्ञानेनेतिचेत्, न, तत्रात्मज्ञानांशस्याविरोधात् । निष्प्रपञ्चत्वज्ञानं वि-नाशकमिति पारिशेष्यादापन्नम्—प्रपञ्चाभावश्च निष्प्रपञ्चत्वं, नच विद्यमाने प्रपञ्चे तदभावज्ञान-मुत्पत्तुमर्हति । ज्ञानेन ह्युत्पन्नेन प्रपञ्चो नाशयितव्यः प्राक् च ज्ञानात्सद्रूप एव प्रपञ्चस्तस्मिन्सद्रू-पेऽवस्थिते कथं तदभावविषयस्य ज्ञानस्योत्पत्तिः । तत्र ज्ञानोत्पत्तौ सत्यां प्रपञ्चस्य नाशः, तद्वि-नाशे च सति तदभावविषयज्ञानोत्पत्तिरितीतरेतराश्रयत्वम् ॥ * ॥ एतेन मृगतृष्णिकाजलस्य ज्ञान-विनाश्यत्वं प्रत्यूढम् । नहि तज्जलं सत् पश्चान्नाश्यते प्रागपि हि तत्र नैव जलं, अजलमेव हि रश्मि-प्रतप्तमूषरं भ्रान्त्या जलात्मनावगतं पश्चाद्बाधकेन यथावस्थितरूपमवगम्यत इत्यलमनेन बालज-ल्पितेन ॥ इत्यद्वैतमतनिरासः ॥

अर्धजरतीयाद्वैतवादेन पूर्वपक्षः ।

केचित्त्वौपनिषदाः परमार्थत एवात्मा प्रपञ्चरूपेण स्वेच्छया परिणमतीति मन्यन्ते, तथाच 'स-देव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'तदैक्षत बहुस्यां प्रजायेय' इत्येकस्यैव सन्मात्ररूपतया प्राग-वस्थितात्मनोऽनेकव्योमादिभेदभिन्नप्रपञ्चरूपेण बीजस्येव वृक्षरूपेण परिणामो दर्शितः, 'तस्माद्वा एतस्मादात्मन आकाशः संभूत'इत्यौपनिषदां वादाः पुराणवादाश्चास्मिन्नर्थे शतशो दृश्यन्ते । 'पुरुष-एवेदं सर्वं नेह नानास्ति किंचन' इत्यादि तु धर्मिभेदाभावाभिप्रायम्, तद्यथैको वृक्षः प्रादेशमात्रादूर्ध्वं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

निराकर्तुमाह—**यच्चेति । भ्रान्त्यभावादिति** । कार्यैककल्प्यत्वादज्ञानस्य तदभावेऽनुपपत्तिरित्यर्थः । यथाहुः—लौकिकी वैदिकी वापि नाज्ञाने दृश्यते प्रमा ॥ कार्यदृष्ट्याथ कल्प्यं चेल्लाघवादेकमेव तत्' इति । **नहीति** । जीवानां तावद-विद्योत्तरकालीनत्वात्पूर्वसिद्धाज्ञानकारणत्वं न संभवति । तस्माद्ब्रह्मैव कारणमिति वाच्यम् । तच्चानुपपन्नम् । विद्यारूपस्या-ज्ञानकारणत्वानुपपत्तेः । नहि भास्करस्य तिमिरकारणत्वं दृष्टमिष्टं वा । ब्रह्मणश्च तत्कारणत्वे निर्मोक्षप्रसङ्गः । अतः कार-णान्तराभाव इत्यर्थः । अन्यदप्याशङ्क्य निराकरोति—**यदपीति** । उक्तं न्यायमन्यत्रातिदिशति—**एतेनेति** । पूर्वकाले सतएव पश्चान्न विनाश्यत्वोपपत्तिरिति भावः ॥ इत्यद्वैतवादनिरासः ॥

तत्रैव मतान्तरमाशङ्कते—**केचिदिति** । ननु सर्वस्य व्योमादिभेदभिन्नत्वे भेदाभावप्रतिपादनं विरुद्धमत आह—**पुरुष एवेदमिति** । ननु यदि सद्रूपस्यैवात्मनो व्योमादिप्रपञ्चः परिणाम इत्युच्यते कथं तर्हि तस्यासत्वम् । नहि बीज-

नानाशाखोऽवस्थितो दूरस्थैर्नानावृक्षा इति गम्यते तद्वेदिनश्चान्ये तेभ्यः कथयन्ति 'नेमे नानावृक्षाः किंत्वेक एवायं वृक्षो नानाशाखोऽवस्थित'इति, तथा नामरूपप्रपञ्चं नानारूपं पश्यतां, मूलकारणस्यैकस्यात्मनोऽयं नानारूपः परिणाम इत्येवमजानतां तत्त्वकथनार्था एवंविधा वादाः। सर्वमेकस्यैव विस्तारो न किंचिदत्र नानास्तीति ॥ * ॥ ये च पुनरसत्ववादाः प्रपञ्चविषया अविद्यावादा भ्रान्तिवादा मायावादाश्च ते सर्वे प्रपञ्चस्यानित्यत्वादौपचारिकाः। यथा मृगतोयरज्जुसर्पस्वप्नप्रपञ्चादयः किंचित्कालमाविर्भूय पश्चाद्विलीयन्ते तथा भेदप्रपञ्चरूपो ब्रह्मपरिणामोऽप्याविर्भवति विलीयते चेत्याविर्भावतिरोभावधर्मकत्वसाम्यादसन्नित्युपचर्यते, तस्य चासत्कल्पत्वे तद्विषयस्य ज्ञानस्यापि सिद्ध्यत्यौपचारिकं भ्रान्तित्वम्। मायानिबन्धनत्वं च 'इन्द्रो मायाभिः पुरुरूप ईयते'इत्यादिषु युक्तमुपचारेण वक्तुम्। 'आत्मैवैकः सत्यः इति च तस्यैव नित्यत्वादुच्यते, यथा 'गोअश्वा एव पशवोऽन्येत्वपशव'इति तथेदं द्रष्टव्यम् ॥ * ॥ यस्त्वेवंविधान्वादान्यथाश्रुतार्थान्गृह्णाति स पश्वन्तरेष्वपशुत्ववादं 'आदित्यो यूपः'इत्यादि च यथाश्रुतं गृह्णीयात्। अथ तत्र प्रमाणान्तरविरोधः सोऽत्रापि समानः। अथार्थवादत्वात्तत्र न यथाश्रुतार्थग्रहणं, तदपि समानम्। प्रपञ्चस्याप्यसत्यत्वं वैराग्यजननार्थम्, आत्मनश्च परमार्थत्वं मुमुक्षूणामुत्साहजननार्थं। विस्पष्टं चैतन्मृत्पिण्डविकारदृष्टान्तदर्शनात्। ततश्च यथा कारणभूतमृत्पिण्डज्ञानेन मृन्मयो विकारः सर्वो विज्ञातो भवति शरावादिविकारो हि वाचारम्भणं नामधेयमात्रं मृत्तिकेत्येव सत्यं, एवं प्रपञ्चोपि सद्विज्ञानेन विज्ञातो भवति विकारो हि वाचारम्भणं नामधेयमात्रं सदित्येव सत्य'मित्युक्ते ज्ञायत एतत् यथाविर्भावतिरोभावधर्मा नानाविधो विकारः शरावादिः प्रपञ्चो मृत्तिका च सर्वत्रानपायिनी तेषां कारणं कार्यकारणयोश्चावस्थामात्रभेदात्स्वरूपभेदाभावात्कारणज्ञानेन तत्सर्वं कार्यमवस्थाभेदेनाज्ञातमपि स्वरूपेण ज्ञातं भवति। तथा प्रपञ्चोप्याविर्भावतिरोभावधर्मानवस्थायी तत्कारणं चात्मा सद्रूपः सर्वानुयायी नापायधर्मा। तस्मिन्विज्ञाते सर्वं तदात्मकमविज्ञातमपि व्यासरूपेण समासेन ज्ञातं भवतीत्येतदत्र विवक्षितमिति, तस्मादेकस्यैवात्मनः परिणामोऽयं भेदप्रपञ्चो नत्वसन्नेव। असत्वे हि कथं सद्विज्ञानेन विज्ञातः स्याच्छशविषाणवत्। नहि मृत्पिण्डे विज्ञाते सति शशविषाणं विज्ञातं भवति तथा प्रपञ्चोपि स्यात्, ततस्तु प्रस्तुतहानिरेव स्यात् एकोप्यात्मान्तःकरणोपाधिभेदाद्भिन्नो जीव इत्युच्यते जीवभेदाच्च बन्धमुक्तिव्यवस्थाप्युपपन्नेति ॥ * ॥ तदिदमयुक्तम्। चिद्रूपस्यात्मनो जडरूपपरिणामासंभवात्। एकत्वे चात्मनः सर्वशरीरेषु प्रतिसंधानं स्यात्—देवदत्तोऽहं यज्ञदत्तोऽहमेवेति, तथा देवदत्तशरीरे मे सुखं यज्ञदत्तशरीरे मे दुःखमिति, पादे मे सुखं शिरसि मे वेदनेतिवत् सर्वसुखदुःखोपलब्धिश्च स्यात्। अन्तःकरणभेदाद्व्यवस्थेतिचेत्, न। अचेतनत्वात्। नह्यन्तःकरणं सुखदुःखे अनुभवति अचेतनत्वात्,

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

परिणामस्य वृक्षस्यासत्त्वं भवति तत्राह—**ये चेति**। असत्त्ववादस्यौपचारिकत्वं दर्शयति—**यथेति**। **तस्यचेति**। प्रपञ्चज्ञानस्यापि वस्तुतो न भ्रान्तित्वं बाधाभावादिति भावः। **मायेति**। मायाविद्ययोरल्पान्तरत्वादभेदेनोपन्यासः। इत्यादिषु वाक्येषु यत्प्रपञ्चस्य मायानिबन्धनत्वं श्रुतं तदप्यौपचारिकं वक्तुं युक्तमित्यर्थः। नन्वागमतएव सत्यत्वश्रवणात्तदतिरिक्तस्य प्रपञ्चस्य मिथ्यात्वावगतेः कथमौपचारिकं मायिकत्वमत आह—**आत्मैवेति**। अनेन चात्मन एव नित्यतया सत्यत्वमुच्यते। प्रपञ्चस्त्वनित्यः। ततो निकृष्टो यथा गवाद्यपेक्षयान्ये पशवः। नचैतावता प्रपञ्चस्य मिथ्यात्वमेव भवतीति भावः। **एवंविधानिति**। औपनिषदान्वादानित्यर्थः। कथमेतदर्थपरत्वमित्याकाङ्क्षायां दृष्टान्तेन तात्पर्यनिर्णयमाह—**विस्पष्टमिति**। **सदिति**। यत्सद्ब्रह्म तदेव सत्यमित्यर्थः। ततः किमत आह—**कार्येति**। **सर्वमिति**। व्यासरूपेणाविज्ञातमपीत्यर्थः। सति विज्ञाते सद्रूपे विज्ञात इत्यर्थः। तथा प्रपञ्चोपि शशविषाणवदविज्ञात एव स्यादित्यर्थः। किमतो यद्येवमत आह—**ततश्चेति**। प्रपञ्चस्याज्ञाने च यत्प्रस्तुतं कारणे ज्ञाते कार्यं ज्ञायत इति तस्य हानिरेव स्यादित्यर्थः। इदंचेष्टं सिद्ध्यतीत्याह—**एकोऽपीति**। तदेतद्दूषयति—**तदिदमिति**। परिहरति—**न**। **अचेतनत्वादिति**।

आत्मा त्वनुभविता स च सर्वत्रैक इति कः प्रतिसंधानं वारयेत्, तस्मादिदमपि नातीव सुन्दरमिति ॥ इत्यात्मपरिणामवादनिरासः ॥

सांख्यमतेन पूर्वपक्षः ।

आत्मभेदं प्रकृतिपरिणामं च जगत् सांख्या मन्यन्ते । द्विविधं च सांख्यं निरीश्वरं सेश्वरं च । नीरीश्वरवादिनस्तावदाहुः—प्रकृतिरचेतना त्रिगुणात्मिका प्रधानशब्दाभिधेया महदादिविशेषपर्यन्तेन प्रपञ्चरूपेण चेतनानामुपभोगाय परिणमतीति । सेश्वरवादिनोऽप्येवमाहुः, इयांस्तु विशेषः—पुरुषशब्दाभिधेयमीश्वरं क्लेशकर्मविपाकाशयैरपरामृष्टमाश्रित्य प्रकृतिर्जगत्सृजतीति । यथा हि संस्कृतं क्षेत्रमधिष्ठाय तत्संपर्कवशाद्बीजमङ्कुरादिक्रमेण महान्तं वृक्षमारभते तथा सर्वव्यापिनमीश्वरमधिष्ठाय सर्वव्यापिनी प्रकृतिस्तत्संपर्कवशान्महदहंकारतन्मात्रादिक्रमेण परिणमन्ती विशेषान्तं प्रपञ्चमारभत इति । इतिहासपुराणेष्वपि प्रायेणैतदेव मतम् । सेयं प्रकृत्युपादाना सृष्टिः, ईश्वरस्तु निमित्तमात्रम्, क्षेत्रज्ञास्तु भोक्तारः, प्रकृतिरेव तु सर्वकार्याणां कर्त्रीति भोग्या । सा च सर्वत्रैका भोक्तॄणां च भेदाद्बद्धमुक्तव्यवस्थोपपत्तिः । तथाच—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति व्यक्तमेव भोग्यायाः प्रकृते रजःसत्वतमोरूपाया एकत्वं, भोक्तॄणां भेदाद्बद्धमुक्तव्यवस्थानं च दर्शितम् । ऐकात्म्यवादास्तर्ह्यौपनिषदाः कथं, अवैलक्षण्येनेति ब्रूमः—भेदशब्दो हि वैलक्षण्यवचनो लोके प्रसिद्धः । तथाहि सुसदृशेषु वक्तारो भवन्ति, 'नास्यास्य च कश्चिद्भेदोऽस्ती'ति, तथात्मनामपि नरपशुतिर्यग्भेदभिन्नशरीरवर्तिनां शरीरसंबन्धमपोह्य केवलं नैजरूपेण निरूप्यमाणानां पद्मरजःपरमाणुद्वयवन्न किंचिदपि वैलक्षण्यमस्तीत्यनेनाभिप्रायेणैकत्ववादा नानात्वनिषेधवादाश्च । एतदभिप्रायमेव चैतदपि भगवद्वासुदेववचनम्—'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति । तथैव 'इन्द्रो मायाभिः पुरुरूप ईयते' इति स्वयमविलक्षणोऽप्यात्मा नरपश्वादिविचित्रशरीरसंपर्कवशाद्भ्रान्त्या स्वयमपि विलक्षणरूपः प्रतीयत इत्यर्थः । ये च मुक्तानां क्षेत्रज्ञानामीश्वरेण सहैकत्वादास्तेप्यत्यन्तसाम्याद्वैलक्षण्याभावाच्च । तथाच श्रुत्यन्तरम् 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥ तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इतीश्वरसादृश्यापत्तिमेव मुक्तस्य दर्शयति । तथा भगवता वासुदेवेनाप्युक्तम्—'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति ॥ * ॥ यत्तु 'ममैवांशो जीवलोके जीवभूतः सनातनः इति भगवद्वचनं तत्स्वामिभृत्यभावपरम्—यथा खलवमात्या राज्ञोंशा व्यपदिश्यन्ते तथा जीवोपीश्वरांश इत्युच्यते । अन्यथा जीवत्वनाशात्सनातनत्वानुपपत्तिः ॥ * ॥ यान्यपि 'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' इत्यादीनि पुराणवचनानि तेषामयमेवार्थः—वैलक्षण्यमात्मनो ब्रह्मणश्चान्यत्वमत्यन्तमविद्यमानमेवाज्ञाननिमित्तमज्ञाने विनष्टे स्वयमेव विलीयत इति । विस्पष्टं हि परापरपुरुषयोर्भेदो गीतादिषूपदर्शितः—'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ॥ 'उपद्रष्टानुमन्ता च कर्ता भोक्ता महेश्वरः ॥ परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः' इति । अलमतिदूरं गत्वा । तस्मात्प्रकृत्युपादानेयं प्रपञ्चसृष्टिरिति नानुपादानोपालम्भः ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रतिसंधानाभावे च नान्तःकरणभेदः प्रयोजकः किंतु सुखदुःखानुभवितृचेतनभेद एव । सच सर्वत्रैक एवेति प्रतिसंधानापत्तिरित्यर्थः । एतन्मतदूषणोपसंहारपूर्वकं सांख्यमतमुत्थापयति—**तस्मादिति** । जगत्प्रकृतिपरिणाम एव नात्मपरिणाम इति मन्यन्त इत्यर्थः । इत्यात्मपरिणामवादनिरासः ॥

एतदेव विभजते—**द्विविधमिति** । पातञ्जलस्य सांख्यप्रवचनत्वात्तदपि सांख्यशब्देनोच्यत इत्यर्थः । एतन्मतस्योपनिषद्विरोधमाशङ्क्य निराकरोति—**ऐकात्म्येति** । **अन्यथेति** । परमार्थत ईश्वराज्ञानेनाज्ञानकृतजीवत्वनाशात् अनित्यत्वापत्तिर्जीवस्येत्यर्थः । नचैवमिष्टम्, अजवाक्येन जीवस्य नित्यत्वप्रतिपादनात् । सांख्यमतमुपसंहरति—**तस्मादिति** । अतो यदुक्तं सर्गादौ सर्वाभावे हि केनोपादानेन सर्वमिदमुपादेयमिति तत्परिहृतं प्रकृतेरुपादानत्वोपपादनादित्यर्थः ॥

सांख्यमतखण्डनम्।

अत्राभिधीयते—कथं खल्वेकरूपा प्रकृतिर्नरपशुतिर्यग्भेदभिन्नं प्रपञ्चमारभते, नह्यविलक्षणं कारणं विलक्षणं कार्यं निर्मातुमर्हति। क्षेत्रज्ञगतधर्माधर्मसहायवैचित्र्याद्वैचित्र्यमितिचेत्। न। अन्तःकरणवृत्तित्वाद्धर्माधर्मयोः, अन्तःकरणस्य च कार्यवर्गान्तःपातित्वात् सर्वस्य महदादेः कार्यस्य प्राकृतप्रतिसंचरे प्रकृतौ विलीनत्वाद्धर्माधर्मावपि तस्यामवस्थायामविद्यमानावेवेति न तद्बलेन वैचित्र्यम्। महदादिविकारारम्भे चास्याः किं कारणं, स्वरूपमेवेतिचेत् सर्वदाऽऽरम्भप्रसङ्गस्ततः प्रलयानुपपत्तिः। ईश्वरेच्छया विक्रियत इतिचेत्। न। ईश्वरस्य समस्तक्लेशरहितस्यापास्तसमस्तकामस्येच्छाऽसंभवात्, इच्छायाश्चाप्यन्तःकरणधर्मत्वात् तस्मिन्काले तदसंभवात्॥ *॥ किंच प्राकृते प्रलये प्रकृतिमात्रमात्मानश्च केवलमवतिष्ठन्ते, सर्वे चात्मानो निर्विशेषाः सर्वेषां चैतन्यमात्ररूपत्वात्। नच धर्माधर्मकृतमपि वैलक्षण्यमात्मनां संभवति, तयोरात्मधर्मत्वाभावात्, अन्तःकरणवृत्तित्वात् तस्य च तदानीमभावादित्युक्तम्। एवंच धर्माधर्मरहितेषु निर्विशेषेषु पुरुषेष्ववस्थितेषु सर्गकाले प्रकृतिः शरीरारम्भेणात्मनो बध्नातीति चेत्, ये पूर्वसृष्टौ मुक्ता ये चामुक्तास्तान्सर्वान्बध्नीयादविशेषात्। तथा येऽश्वमेधमनुष्ठाय फलमभुक्त्वा पूर्वसृष्टौ स्थिताः, ये च ब्रह्महत्याकारिणस्तेषां सर्वेषामैकविध्यमेव स्यात् पूर्वकृतयोर्धर्माधर्मयोर्नष्टत्वात्॥ *॥ ननु नाशो नाम नात्यन्ताभावः किंतु कारणे कार्याणां तिरोभावमात्रं विनाशः, उत्पत्तिरपि विद्यमानानामेव कारणे कार्याणामाविर्भवमात्रं, नह्यत्यन्तासतामुत्पत्तिः संभवति शशविषाणस्याप्युत्पत्तिप्रसङ्गात्, असदुत्पत्तौ च सर्वत्र सर्वं स्यान्नियमो न स्यात्, तन्तुभ्यः पटो मृत्तो घट इति। यथाहुः—'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात्। शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्' इति। तथा—'नासतो विद्यते भावो नाभावो विद्यते सतः' इति भगवद्वासुदेववचनम्। तस्मात्प्रलये धर्मादेः शक्त्यात्मनावस्थितत्वात्तद्वशेन युक्तं सृष्टिवैचित्र्यम्। नैतदेवम्—नहि मृत्पिण्डावस्थायां वा कपालावस्थायां वा घटरूपमस्ति दृश्यादर्शनविरोधात्॥ *॥ यत्तु 'नासतो विद्यते भावः' इति वचनं तदात्माभिप्रायं, पूर्वत्र हि 'नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः॥ नचैव नभविष्यामः सर्वे वयमतः परम्' इत्यात्मनित्यत्वं प्रतिपादयितुमुपक्रान्तमेवानेनोच्यते—नाविद्यमानस्यात्मन उत्पत्तिर्न विद्यमानस्य विनाशः सर्वे एवात्मानोऽनुत्पत्तिविनाशधर्माणो नित्या इति, न पुनः कार्यजातस्य सर्वस्य नित्यत्वाभिप्रायम्, असर्वगतत्वादनुपलब्धिविरोधाच्चेत्युक्तम्॥ *॥ यदि परमुपादानोपादेययोरभेदमाश्रित्य मृदात्मनादौ घटो व्यवस्थित इत्युच्यते, नच तावता कार्यसिद्धिः। नहि मृदवस्थेन घटेनोदकाहरणं क्रियते। तथा धर्माधर्मावपि स्वरूपेणाविद्यमानौ प्रकृत्यात्मना स्थितावपि न स्वकार्याय पर्याप्ताविति न तद्वशेन वैचित्र्यसंभवः। प्रमाणमपि महदादिक्रमेण प्रकृतिपरिणामे किंचिन्नास्ति—

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

समाधत्ते—**अत्राभिधीयत इति**। प्राकृतप्रतिसंचरे प्रकृतौ सर्वेषां प्रलय इत्यस्मिन्पक्ष इत्यर्थः। एतेन प्रतिशक्तिवैचित्र्यात्कार्यवैचित्र्यमित्यपि निरस्तम्। शक्तिवैचित्र्यस्यापि प्रकृतिकार्यतया धर्माधर्मतुल्यत्वाद्दूषणान्तरमाह—**महदादीति**। लब्धावसरः शङ्कते—**एवंचेति**। अत्र सांख्यः स्वसिद्धान्तावष्टम्भेन शङ्कते—**नन्विति**। एतदेवोपपादयति—**नहीति**। अस्मिन्नर्थे संमतिमाह—**यथाहुरिति**। उक्तार्थं चैतत्। तदेतद्दूषयति—**नैतदेवमिति**। **असङ्गतत्वादिति**। कार्यजातस्य कृतकत्वेनानित्यत्वावधारणात् प्रमाणविरुद्धं नित्यत्वाभिधानमसंगतं स्यादित्यर्थः। मृदादौ कारणे च घटादिकार्यसत्त्वमनुपलब्धिविरुद्धमित्यर्थः। अथ तु वेदनित्यत्वाङ्गीकारेण समाधीयेत तथापि दोष इत्याह—

पुरुषवचसां प्रमाणान्तरागोचरार्थे प्रमाणत्वासंभवात्, वेदानामपि पौरुषेयत्वादितरपुरुषवचनवदप्रामाण्यात् ॥ * ॥ यदि तु सृष्टिप्रलयपरम्परामनादिमङ्गीकृत्य प्रतिसृष्टि 'सर्वेषां चैव नामानि कर्माणि च पृथक्पृथक् ॥ वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' इत्यादिवचनैः ऋतुलिङ्गन्यायेन नामप्रभावव्यवहारवस्तूत्पत्त्या शब्दानामनाद्यर्थसंबद्धानां वेदानां च नित्यत्वमाश्रित्य प्रामाण्यमङ्गीक्रियते, तथाप्येकस्य प्रजापतेः संप्रदायप्रवर्तकत्वे कृतकाशङ्का स्यादेव। अथ पुनः 'अष्टाशीतिसहस्राणि संप्रदायप्रवर्तकाः' इत्यादिवचनानुरोधेन बहूनां महर्षीणां सृष्ट्यन्तराधीतं वेदं स्मरतां सुप्तप्रतिबुद्धन्यायेन संप्रदायप्रवर्तकत्वमाश्रित्य कृतकाशङ्कां निरस्य नित्यता समर्थ्येत, तथाप्यनुपादानं जगन्निर्माणमशक्यमभ्युपगन्तुं, (प्रकृत्यादीनां ह्युपादानत्वं निरस्तम्।) औपनिषदास्तु सृष्टिप्रलयवादाः पौराणिकाश्चार्थवादतया नेतव्याः। भवतु चैवं तथापि नास्माकं काचित्क्षतिः। संबन्धनित्यत्ववेदप्रामाण्ययोरविघातात् ॥ इति सांख्यमतनिरासः ॥

### वैशेषिकमतेन पूर्वपक्षः।

वैशेषिकास्तु—पौरुषेयत्वमेव शब्दार्थसंबन्धानां वेदानां चाङ्गीकुर्वन्तोऽनुमानेन सृष्टिप्रलयावीश्वरं च सिषाधयिषन्तः प्रयोगमारचयन्ति—त्रिविधं हि वस्तुजातं संप्रतिपन्नचेतनकर्तृकं घटादि, संप्रतिपन्नातत्कर्तृकं व्योमादि, विप्रतिपन्नतत्कर्तृकं महीमहीधरदूर्वाङ्कुरादि, तत्रान्तिममधिकृत्योच्यते—क्षित्यादिकं बुद्धिमत्कर्तृकं कार्यत्वात् घटादिवत्। कार्यत्वं च क्षित्यादेः सावयवत्वात् घटादिवत् ॥ * ॥ किं पुनः पृथिव्यादेः समवायिकारणम्, पार्थिवाप्यतैजसवायवीयपरमाणुजातं यथास्वं पृथिव्यप्तेजोवायूनां समवायिकारणं, नहि प्रलये परमाणूनां प्रलयोऽस्माकमस्ति सांख्यादिवत्। कार्यद्रव्याणि तु द्व्यणुकादीनि सर्वाण्येवेश्वरेच्छया विश्लिष्टावयवानि प्रलीयन्ते, परमाणवस्तु मिथोऽसंयुक्तास्तिष्ठन्ति व्योमादयश्च क्षेत्रज्ञाश्चात्मीयधर्माधर्मयुक्ता एवावतिष्ठन्ते। सर्गकाले पुनरीश्वरेच्छां क्षेत्रज्ञादृष्टं च निमित्तमासाद्य परमाणुषु कर्माण्युत्पद्यन्ते तद्वशाच्च मिथः संयुक्ताश्चतुष्टयेऽपि परमाणवो द्व्यणुकादिक्रमेण यथास्वं पृथिव्यादिकं भूतचतुष्टयमारभन्ते। निमितभूतक्षेत्रज्ञादृष्टवैचित्र्याच्च जरायुजाण्डजोद्भिज्जस्वेदजभिन्नं शरीरभेदमीश्वरेच्छाकारितसंयोगविशेषवशात्परमाणव आरभन्ते ॥

### वैशेषिकमतखण्डनम्।

नत्वेतदपि युक्तम्—नहीच्छामात्रेण प्रयत्नमन्तरेण परमाणुषु स्पन्दोत्पत्तिः संभवति, इच्छाकारितप्रयत्नवशेन शरीरस्पन्दोत्पत्तिरद्यत्वेऽपि दृश्यते। ईश्वरोऽपि प्रयतत इति चेत्। न। अशरीरस्य प्रयत्नासंभवात्। सर्वगता अपि ह्यात्मानः शरीरप्रदेश एव प्रयत्नमारभन्ते न बहिः, अतः शरीरापेक्षः प्रयत्नः। प्रलयकाले च सर्वकार्याणां प्रलयादीश्वरशरीरमपि प्रलीनमिति कथमशरीरः प्रयतेत। नचाशरीरस्येच्छापि संभवति मुक्तात्मनामिव। नापि ज्ञानं संभवति—इन्द्रियादेरभावात्

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**यदि त्विति**। यदितु वेदानां नित्यत्वमाश्रित्य प्रामाण्यमङ्गीक्रियते इति संबन्धः। **अथेति**। अथ पुनरेवं कृतकाशङ्कां व्युदस्य नित्यता समर्थ्येतेति संबन्धः। तथापि यत्पूर्वदूषणं 'सर्वाभावे हि नोपादानेन सर्वमिदमुपादेय'मिति तन्न शक्यं परिहर्तुमित्यर्थः। यस्मात्प्रकृत्यादीनामुपादानत्वं निरस्तमतिरिक्तस्य चासंभव इति भावः। अभ्युपेत्यापि सृष्टिप्रलयौ स्वपक्षसिद्धिमाह—**भवत्विति**। उक्तंच 'श्रुतिस्मृतीतिहासप्रामाण्यात्सर्गप्रलयावपीष्येते' इति ॥ इति सांख्यमतनिरासः ॥

इदानीमौलूक्यमतेन सृष्टिप्रलयौ दूषयितुमनुवदति—**वैशेषिकास्त्विति**। **चतुष्टयेऽपीति**। पार्थिवाप्यतैजसवायवीया इत्यर्थः ॥

एतदपि दूषयति—**नत्विति**। इच्छामात्रेणैव भगवतो जगन्निष्पत्तिः किं प्रयत्नेनेति चेत्। न। अशरीरस्येच्छाया अप्य-

---

१ प्रतिसृष्टिचतुर्लिङ्गन्यायेन.

॥ * ॥ नित्यमस्य ज्ञानं नित्या चेच्छा नित्यश्च प्रयत्न इति चेत्, न, सर्वज्ञानेच्छाप्रयत्नानामनित्यत्वव्याप्तेः । शक्यते हि प्रयोक्तुम्—क्षित्यादिकं नाऽशरीरिचेतनकर्तृकं न नित्यप्रयत्ननित्येच्छानित्यज्ञानकर्तृकं कार्यत्वात् घटवदिति ॥ * ॥ ननु घटस्यापीश्वरकर्तृकत्वमस्त्येवेति साध्यहीनो दृष्टान्तः । तथापि कुलालस्यापि कर्तृत्वान्न केवलेश्वरकर्तृकत्वं घटस्य, ततश्चैवं प्रयोक्तव्यं—क्षित्यादिकं न केवलाशरीर्यात्मादिकर्तृकं कार्यत्वात् घटवदिति, वस्तुत्वाद्व्योमदिवदिति हेतुदृष्टान्तौ सर्वथापि निर्दोषौ । तथा क्षित्यादिकं न बुद्धिमत्कर्तृकं शरीरिकर्तृकत्वविरहात् व्योमवदिति साक्षादेव प्रतिसाधनं कर्तव्यम् । अथेश्वरशरीरं नित्यमङ्गीकृत्य प्रलयेऽपि सशरीरमेवेश्वरमभ्युपगच्छेत्, ततः सावयवत्वमीश्वरशरीरे नैकान्तिकं न क्षित्यादेः कार्यत्वं साधयेत्, सशरीरकर्तृकत्वं च दूर्वाङ्कुरादीनामनुपपन्नमनुपलब्धिविरोधात् ॥ * ॥ किंच प्रतिकार्यं प्रयत्नभेदेन भवितव्यम्, अन्यो हि पादसंचरणे प्रयत्नः अन्यश्च बाहूद्धरणे, तथा सति यद्यपीश्वरे प्रयत्नो नित्यः स्यात्तथापि तस्यैकत्वान्न विचित्रकार्योदयहेतुत्वं संभवतीति व्यर्थ एवासौ । यदि त्वनन्तकार्यानुरूपा अनन्ता एव प्रयत्नाः सर्वदैवेश्वरेऽवतिष्ठेरन् तथासति प्रलयकरणीभूतस्य परमाणुविश्लेषकस्य प्रयत्नस्य सर्गकालेऽप्यवस्थानात्, संयोजकस्य च सर्गहेतोः प्रलयकालेप्यवस्थानात् उभयोः परस्परविघातान्न सृष्टिः स्यात् न प्रलयः । यच्च क्षेत्रज्ञादृष्टवैचित्र्यात्कार्यवैचित्र्योपपत्तिरिति, तदप्ययुक्तम्—नहि दृष्टकारणवैलक्षण्यमन्तरेणादृष्टवैलक्षण्यमात्रात्कार्यवैलक्षण्यं सिद्ध्यति । नह्यदृष्टशतेनापि तालबीजमन्तरेण तालवृक्षो निष्पद्यते। विनापि बीजमीश्वरमहिम्ना सर्वं सिद्ध्यतीति चेत् । न । तत्रैव प्रमाणाभावात् । नित्यत्वे

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

संभवादित्याह—**नहीति**। केवलाशरीर्यात्मादीत्यादिशब्देन नित्यज्ञानेच्छाप्रयत्ना गृह्यन्ते । मास्त्वनित्यमीश्वरशरीरं ज्ञानादिवच्छरीरमपि तस्य नित्यं भविष्यतीत्याशङ्क्य निराकरोति—**अथेति**। क्षित्यादेः कार्यत्वसाधने यत्सावयवत्वं हेतूकृतं तदीश्वरशरीरे अनैकान्तिकत्वान्न साध्यसाधनक्षममित्यर्थः । किंच सर्गाद्यकाले पृथिव्याद्यभावात् किंमयं तच्छरीरं स्यात्, शरीरलक्षणाभावात् कथं शरीरमिति व्यवह्रियते । नह्यभोगायतनं शरीरं भवति । नापि हितकामस्येश्वरस्य दुःखप्रायजगत्सिसृक्षापि संभवति । नच साधनरहितस्य सृष्टिकर्तृत्वं संभवति । क्षेत्रज्ञगतौ धर्माधर्मौ साधनमिति चेत् । न । तयोरपि प्राक्सृष्टेरभावात् । *कार्यापवर्गित्वात्तयोः सद्भाव इति चेन्न । विनाशे कार्यत्वस्यैव प्रयोजकत्वात् । नच धर्माधर्ममात्रेण कार्यसृष्टिः संभवति । लोके दृष्टमृत्तन्त्वादेरप्युपादानदर्शनात् सृष्टेश्चानुकम्पाप्रयोज्यत्वे सुखमेव सृजेत् । अथ प्राणिगताशुभस्याप्यपेक्षणान्नैकरूपा सृष्टिस्तर्ह्यन्यदपेक्षमाणस्य स्वातन्त्र्यव्याघातः । जगत्सर्गे चास्य प्रयोजनमपि नास्ति आप्तकामत्वात्। नच तद्रहितस्य प्राकृतस्यापि प्रवृत्तिः संभवति । नाप्यनुकम्पया प्रवृत्तिः । उक्तोत्तरत्वात् । यदि चानुकम्पानिमित्ता सिसृक्षा स्यात् संजिहीर्षा तर्हि किंनिमित्ता । साप्यनुकम्पानिमित्तेति चेत् । न । विरुद्धयोः सिसृक्षासंजिहीर्षयोरेकहेतुकत्वापत्तेः । *अनुकम्पाभावे चानुकम्पाया अपि तदानीमसंभवात् । क्रीडार्था प्रवृत्तिरिति चेत् । न । कृतार्थत्वव्याघातापत्तेः । यथाहुः—'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥ *एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं भवेत् ॥ क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता ॥ बहुव्यापारतायां च क्लेशो बहुतरो भवे'दिति । किंच सर्गवत्संहारोऽपि न बुद्धिपूर्वकारिणः संभवति, निष्प्रयोजनत्वात् । **नित्यत्वे हीति** । तन्मते वेदानां पौरुषेयत्वेनानाश्वासान्नार्थनिश्चय इति भावः । यथा पर्वते वह्न्यनुमानं न तथात्यन्तमलौकिकेर्थेऽनुमानं संभवतीति भावः । **ननु** विमतः संबन्धः सकर्तृकः शब्दार्थसंबन्धत्वात् 'वृद्धिरादैच्'इत्या

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

ऐच्छिकस्वशरीरोत्पादनमपि न संभवतीति । **तदिदमिति** । केचित्त्वौपनिषदा इत्यारभ्य व्यवस्थानुपपन्नेत्यन्तस्य पूर्वपक्षस्य दूषणं लब्धावसर इति । **कार्यापवर्गित्वादिति** । धर्माधर्मयोः फलजननानन्तरमेव नाशो नान्तरा । फलोत्पत्तिपर्यन्तं तत्सद्भावकल्पना । अतः प्रलयेपि तयोर्नाशो नास्तीत्यर्थः । **अनुकम्पेति** । असृष्टशरीराणां चात्मनां मुक्तानामिव न किंचिद्दुःखमस्ति येनानुकम्प्येरन् अतोऽनुकम्पाभाव इत्यर्थः । **क्रीडार्थेति** । क्रीडा हि विदेवनादिजनितसुखाद्यै नराणां, नचाप्तसुखस्य सा संभवति तदनवाप्तौ च कृतार्थतालक्षणमैश्वर्यं न सिद्ध्येदित्यर्थः । किंच क्रीडाल्पायासा रमयति अयंच समस्तधरादिविषयो महाव्यापारोऽतिक्लेशरूपः क्रीडार्थ इति वाचोयुक्तिर्न चित्तमनुरञ्जयतीति । **एवमिति** । प्रयोजनरहितप्रवृत्तौ च बुद्धिमत्त्वहानिरि

हि वेदानामवसिते तत्प्रामाण्यबलेनेश्वरस्यापरिच्छेद्यो महिमा, सृष्टिप्रलयौ ऋतुलिङ्गन्यायमाश्रित्य सिध्येयुर्न वा। वेदांस्त्वनादृत्य दृष्टानुसारेण पर्वते इवानुमानमत्यन्तालौकिकेऽर्थे प्रवर्तयतामुपेक्षैवोत्तरमित्युपरम्यते । तस्मान्न सर्गादिकालेऽपि संबन्धकारणम् ॥

शब्दार्थसंबन्धस्य नित्यत्वम् ।

अशक्यं च कर्तुं सर्वशब्दानां संबन्धकरणम्—यदा न कश्चिदपि शब्दः केनाप्यर्थेन संबद्ध आसीत् तदा कथं संबन्धः क्रियेत, संबन्धं हि कुर्वतावश्यं केनचिद्वाक्येन स कर्तव्यः—गौः सास्नादिमानित्यादिना । नचाप्रसिद्धमर्थप्रतिपादकत्वेन सास्नादिशब्दमर्थप्रतिपादनाय शक्नोति कर्तोच्चारयितुं, तथा हस्तसंज्ञादयोपि, प्रतिपादकत्वासिद्धेः ॥ * ॥ नन्वेवमप्रसिद्धसंबन्धस्य कथनमप्यनुपपन्नम्—यद्यपि हि तदा वक्तुः प्रसिद्धसंबन्धत्वात्संबन्धकथनाय वाक्योच्चारणं संभवति तथापि श्रोतारोऽप्रसिद्धसमस्तपदार्था बालाः कथं वाक्येन संबधं प्रतिपद्येरन्, तस्मात्करणवत्कथनमप्यनुपपन्नम् । नैष दोषः । कथयितुस्तावन्न कर्तुरिवाशक्तिः—उपायसंभवात्, प्रतिपत्तारस्तूपायाभावान्न प्रतिपद्यन्त इति दृष्टविरुद्धम्, दृश्यन्ते ह्यप्रसिद्धसमस्तशब्दार्था बाला वृद्धेभ्यः संबन्धं प्रतिपद्यमानाः ॥ * ॥ किंचास्त्युपायो बालानां—नावश्यं संबन्धकथनवाक्येनैव वृद्धेभ्यो बालाः संबन्धं प्रतिपद्यन्ते, किंतु यदा वृद्धाः प्रसिद्धसंबन्धाः स्वकार्यार्थेन व्यवहरन्ति तदा तेषामुपशृण्वन्तो बालाः संबन्धं प्रतिपद्यन्ते । यदा हि केनचिद्गामानयेत्युक्तः कश्चित्सास्नादिमन्तमानयति तदा समीपस्थो बालोऽवगच्छति यस्मादयमेतद्वाक्यश्रवणानन्तरमस्मिन्नर्थे प्रवर्तते तस्मादस्माद्वाक्यादयमर्थः प्रत्यायित इत्येवं संमुग्धरूपेणावगतं प्रत्यायकत्वम् पश्चाद्बहुषु प्रयोगेष्वन्वयव्यतिरेकाभ्यां वाक्यभागानां पदानां पदभागानां च प्रकृतिप्रत्ययानां वाक्यार्थभागेषु पदार्थेषु विविच्यते, तस्मान्न पौरुषेयः संबन्ध इति न तद्वशेन पुरुषापेक्षास्तीति सिद्धमनपेक्षं वेदानां प्रामाण्यम् ॥ इति संबन्धाक्षेपपरिहारः ॥

यच्चानन्तरफलानुपलब्ध्या चित्रादीनां न पश्वादिफलत्वमिति स्यादेवम् । यदि प्रत्यक्षादिपञ्चकमेव प्रमाणं स्यात्तदा ह्यनन्तरफलोपलम्भादेव तत्साधनत्वं स्यात् नान्यथा, शब्दस्यापि तु प्रमितिजनकतया प्रत्यक्षादिवत्प्रमाणत्वात् तेनच चित्रादीनां पशुसाधनत्वावगमादसत्यप्यनन्तरोपलम्भे सिद्ध्यति तत्साधनत्वम् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

दिसंबन्धवदित्यनुमानं भविष्यतीतिचेन्न । सकर्तृकत्वस्य स्मर्यमाणकर्तृकत्वप्रयोज्यत्वेन त्वदुक्तहेतोरप्रयोजकत्वात् । नन्वगृहीतसंबन्धाच्छब्दादर्थप्रतीत्यन्यथानुपपत्त्या संबन्धकर्तृकल्पनेति चेत् । न । अनादिवृद्धव्यवहारहेतुकानादिसंबन्धग्रहणापेक्षत्वेनान्यथानुपपद्यमानत्वात् । एतदेवाभिप्रेत्य निगमयति—**तस्मादिति** ।

**नचेति** । अर्थप्रतिपादकत्वेनाप्रसिद्धं सास्नादिशब्दमिति संबन्धः । **विविच्यत इति** । अत्र प्रत्यायकत्वमित्यनुषञ्जनीयम् । उपपादितमर्थं निगमयति—**तस्मादिति** । यथाह सूत्रकारः—**उपदेश इति** । अनेन प्रत्यक्षं वृद्धव्यवहारमुपदिशति । प्रत्यक्षा हि व्यवहर्तारः। कल्प्यश्च संबन्धकर्ता। *अव्यतिरेकश्च यथास्मिन्देशे सास्नादिमति गोशब्द एवं देशान्तरेऽपि । नचैवमेकः कर्तुं शक्तः । अनेके च संबन्धकर्तारः सर्वेषु दुर्गमेषु कथं संगस्यन्ते । अथवा अव्यतिरेकश्च । नहि संबन्धव्यतिरिक्तः कश्चित्कालोऽस्ति अतः सर्वत्र संबन्धस्याव्यतिरेकान्न कर्तृकल्पना । किंच प्रमाणान्तरेणानुपलब्धे देवदत्तादावर्थेऽनर्थकं संज्ञाकरणमशक्यं च, विशेषज्ञानार्थं हि संज्ञाः क्रियन्ते, नचाज्ञायमानेषु तेषु *तत्संभवति । तस्मादपौरुषेयः शब्दस्यार्थेन संबन्धः । अतः प्रमाणमग्निहोत्रादिवाक्यम्, पुरुषानपेक्षत्वात् । तस्माच्चोदनालक्षण एव धर्मो नान्यलक्षणः । बादरायणग्रहणमुक्तार्थम् ॥ इति संबन्धाक्षेपपरिहारः ॥

एवं तावत्संबन्धनित्यत्वोपपादनेन स्वपक्षं प्रसाध्य नन्वेवमप्यनिमित्तं शब्दः कर्मकाले फलादर्शनात् कालान्तरे च कर्मण एवाभावादित्याक्षेपमनूद्य परिहरति—**यच्चेति** । नन्वसौत्रश्चित्राक्षेपपरिहारोऽनुपपन्नः । नानुपपन्नः । अर्थेऽनुपलब्धे तत्प्रमाणमित्यस्यात्रापि योजयितुं शक्यत्वात् । अतएव जैमिन्याशयाभिज्ञो भाष्यकारः परिहरति स्म । 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इत्यभियुक्तोक्तेः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

त्यर्थः । युक्त्यन्तरमाह—**अव्यतिरेकश्चेति** । **तत्संभवतीति** । तत् संज्ञाकरणम् । विशेषानुद्देशो हि संज्ञाक्रिया,

चित्रादिविषयकाक्षेपपरिहारः ।

**ननु** प्रमाणान्तरविरोधादप्रामाण्यमित्युक्तं, न, तदभावात्, नहि शब्दोऽनन्तरमेव चित्राफलसाधनमिति ब्रूते येन विरोधः स्यात्, साधनत्वमेव प्रतिपन्नं तन्मात्रवचनात्, तस्य चापूर्वद्वारेण कालान्तरेऽपि तैलपानादिवत्फलसाधनत्वोपपत्तेः ॥ * ॥ यत्तु प्रागनुष्ठानाच्छास्त्रार्थावधारणवेलायां नापूर्वमन्तर्भावितमित्युक्तं, यद्यप्येवं तथापि पश्चादेवमवगच्छति—साधनत्वमात्रेऽपि शब्देनोक्ते भ्रान्त्या मया साक्षात्साधनत्वमेव प्रतिपन्नं तच्चेदानीमन्यथा जातम्, अतो नूनमस्य केनापि द्वारेण कालान्तरे फलमिति ॥ * ॥ प्रागपि च शक्यमेवापूर्वमवगन्तुम्—अनेकेषामङ्गप्रधानकर्मणां क्षणिकानामपूर्वमन्तरेण यौगपद्यासंभवात्, पश्वादीनां च दृष्टकारणापेक्षत्वान्न क्षणमात्रेणोत्पत्तिः संभवतीत्यवश्यंभाव्यपूर्वम् । नच पश्वाद्युत्पत्तिमात्रं फलम् उपभोगस्य तु चिरकालत्वात् यावदुपभोगमवस्थास्यमानेन केनचिद्भवितव्यम् । नच क्रियायास्तावत्कालमवस्थानं संभवतीत्यपूर्वमङ्गीकर्तव्यमिति तद्द्वारेण युक्तं कर्म कालान्तरे फलदमिति नानन्तरानुपलब्ध्या शास्त्रस्य बाधः ॥ इति चित्राक्षेपपरिहारः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

चोदयति—**नन्विति** । अनन्तरं फलानुपलब्ध्या साधनत्वबाधादित्यर्थः । परिहरति—**नेति** । विषयभेदेन प्रमाणान्तरविरोधाभाव इत्यर्थः । यथाहुः—'प्रत्यक्षादिविसंवादो न शब्दे दोषमासजेत् ॥ आनन्तर्यविसंवादो नाविशेषप्रवर्तिनीम् ॥ चोदनां बाधितुं शक्तः स्फुटा*द्विषयभेदतः' । विरोधाभावं विवृणोति—**नहीति** । सामर्थ्यादानन्तर्यं चोदितमिति चेत् । न । अविशेषप्रवृत्तवाक्ये तदभावात् । कृष्यादिवत्कालान्तरेऽपि फलसंभवात् । **नन्वचो**दितेऽप्यानन्तर्ये पाकादिवत्संभवात्किमित्यनन्तरमेव पशवो न भवन्ति । कर्मणां वैचित्र्यादिति ब्रूमः । कानिचित्स्वत एव विप्रकृष्टफलानि । कानिचिद्देशकालापेक्षया विलम्बन्ते । कानिचिद्विरुद्धफलेन कर्मान्तरेणार्धभुक्तेन प्रतिबन्धात्स्वफलमददन्त्यवतिष्ठन्ते । अतो नानन्तर्यनियम इति । अथ चित्रानन्तरफला क्रियात्वात् मर्दनवत् इति साध्येत तर्हि प्रत्यक्षानुपलब्ध्या समानविषयया बाधः । उपसंहरति—**इतीति** । आनन्तर्याभावेऽप्यपूर्वद्वारेण चित्रादीनां पश्वादिफलत्वं संभवतीत्यर्थः । अत्रेदं चिन्त्यते —किमिहैव जन्मनि चित्रादीनां फलं उतेह वा जन्मान्तरे वेत्यनियमः । केचित्त्विहैव मन्यन्ते । तथाच योगसिद्ध्यधिकरणे वक्ष्यति । तन्न युक्तम् । इह जन्मनि चित्रादिकं विनापि यत्फलं दृश्यते तस्य निर्निमित्तत्वापत्तेः चित्रादिफलस्यैकजन्मक्षीणत्वात् । **नन्वामु**ष्मिकस्वर्गफलज्योतिष्टोमादिकर्मशेषेणेहाकृतकर्मणामपि पश्वादिफलं सेत्स्यति अतो न निर्निमित्तत्वापत्तिः । मैवम् । स्वर्गादिफलसाधनत्वेन चोदितस्य कर्मणः फलान्तरसाधानत्वासंभवात् । तस्माद्यथाचोदनमविशेषितकालमेव फलं नत्विहैवेति नियमः । उक्तंच—'तस्मात्कालाविशेषेण चोदनार्थो यथा स्थितः ॥ स तथैवावगन्तव्यो नाधिको निष्प्रमाणकः' इति ॥ तार्किका अप्यैहिकफलत्वमेव चित्रादीनामभ्युपगच्छन्ति । यत्तु क्वचित्तत्कारिणामनन्तरमेव फलं न भवति तत्कर्मवैगुण्यादिति । तदप्यसत् । अकृतकर्मणां फलस्य निर्निमित्तत्वापत्तेः । **नन्वेवं** स्वर्गस्यापि कालविशेषाश्रवणादनियमः स्यात् । न स्यात् । षष्ठाद्ये तस्यामुष्मिकफलत्वसाधनात् । पश्वादीनामप्यैहिकत्वं योगसिद्ध्यधिकरणे वक्ष्यत इति चेत् न । तत्राप्यामुष्मिकत्वमेवेति पूर्वपक्षं विधायैहिकत्वमप्यस्तीत्यनियमेनैव सिद्धान्तकरणात् । यथाहुः—'यदाकदाचिद्भवदेतदिष्यते फलं हि पश्वादि न सांपरायिकम् ॥ *तथा स्थितस्यैव च तस्य साधनं विधीयते योऽपि भृशं त्वरान्वितः ॥ *साधारणं यत्तु फलं बहूनां स्वभावतस्तादृशमेव चेष्टम् ॥ सर्वस्य चासन्नतयैव कांक्षितं वृष्ट्यादि तच्चैहिकमेव युक्तम् ॥ *कमिपदमविशिष्टं यद्यपि श्रूयते वा भवति फलविशेषो नान्यथा काम्यते हि ॥ *फलति यदि न सर्वं तत्कदाचित्तदेव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते ॥ इति चित्राक्षेपपरिहारः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

नच तस्योद्देशः संभवति अतोऽनर्थकं संज्ञाकरणमशक्यं चेति भावः । **विषयाभेदत इति** । आनन्तर्यविषयो हि प्रत्यक्षविसंवादो नासावविशेषवर्तिनीं चोदनां बाधते विषयभेदादित्यर्थः । यस्त्वत्यन्तं त्वरतेऽद्यैव मे पशवो भूयासुरिति कामयते तस्यापि किं तदैव फलं नेत्याह—**तथेति** । यदाकदाचिद्भवतः फलस्य साधनं विधीयमानमन्तरितापेक्षयान्यादृशं भवतीत्यर्थः । किमेष एवोत्सर्गः स्वर्गादन्यत्फलं इह वा अमुत्र वा भवतीति, नेत्याह—**साधारणमिति** । यत्खलु द्रव्यादिकं स्वभावत एव हि साधारणं तदप्येवं सर्वेषामिष्टं तथैवेष्यते तच्च सर्वेषामासन्नतयैवेष्टं अतस्तदैहिकमेवेति । **ननु** चित्रादिवदत्रापि कमिपदमविशिष्टं नह्यनन्तरं वृष्टिकाम इति श्रूयते तत्राह—**कमिपदमिति** । सत्यमेवैतत्तथाप्यनन्तरमेव फलं भवति कामनासामर्थ्याद्वृष्ट्यभिचारराष्ट्रोपद्रवशमनादेरैहिकस्यैव सर्वैः काम्यमानत्वात् । कथं तर्हि क्वचित्कृतायामपि कारीर्यां नानन्तरमेव फलोत्पत्तिस्तत्राह—**फलतीति** । वृष्टिविरुद्धफलेन शास्त्रप्रतिषिद्धेन केनचित्प्रबलेन कर्मणा जन्मा'

आत्मवादारम्भः।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याती'त्येतच्छब्देन प्रत्यक्षं शरीरं यज्ञायुधसंयुक्तमुपदिशतीति। तदभिधीयते—अर्थवादत्वादस्यान्यपरत्वान्न स्वार्थे प्रमाणान्तरविरोधो दोषः। नच विरोधोऽपि विद्यते। नह्यनेन शरीरस्य स्वर्गगमनमुच्यते किंतर्ह्यात्मनो यस्यैतच्छरीरं, सोऽपि हि शरीरशरीरिणोरभेदोपचारेण शरीरस्थेन यज्ञायुधित्वेन प्रत्यक्षत्वेन च व्यपदिश्यते। आत्मनो वा स्वर्गगमनं शरीरे उपचर्येत इति नास्ति विरोधः॥ * ॥ यजमानशब्दोऽपि तस्यैव यागस्वामित्वात्कर्तृत्वाच्च वाचकः। नच शक्यते तस्य कापिलवदकर्तृत्वं वक्तुम्—श्रुतिविरोधात्, सर्वत्र हि कर्तृभोक्तृशब्दयोः सामानाधिकरण्यं दृश्यते। यथात्रैव—'यजमानः स्वर्गं लोकं याती'ति। तथा 'य एवंविद्वानग्निं चिनुते ऋध्नोत्येव' 'य एवंविद्वान्द्विरात्रेण यजते स्वर्गमेव लोकमेति,' तथोपनिषत्स्वपि 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ती'ति कर्तृत्वाभिधायिन्या षष्ठ्यात्मनः संकल्पं प्रति कर्तृत्वमुक्तम्॥ * ॥ संभवति च सर्वगतस्याप्यात्मनो यागज्ञानप्रयत्नसंकल्पादिषु साक्षादेव कर्तृत्वं, नहि वयं स्पन्दमेव क्रियामुपगच्छामो वैशेषिकवत्, येनात्मनः कर्तृत्वं न स्यात्, धात्वर्थमात्रस्य क्रियात्वात्। स्पन्देष्वपि प्रयोजकत्वेनास्यैव कर्तृत्वं संभवति, प्रयत्नेन ह्यसौ शरीरं स्पन्दे प्रयोजयति। साक्षात्तु न संभवति, सर्वगते स्पन्दस्यासंभवात्—इत्यनेनाभिप्रायेण पुराणेषूपनिषत्सु चाकर्तृत्ववादाः॥

शरीरातिरिक्तात्मसाधनम्।

किंपुनः शरीरव्यतिरिक्तात्मसद्भावे प्रमाणं प्राणनादिलिङ्गं सुखादयश्च प्राणनादिशब्देन कोष्ठस्थस्य वायोरूर्ध्वाधोगमनवृत्तिविशेषस्य प्राणनादिशब्दवाच्यस्य हेतुभूतः प्रयत्न उच्यते सच सुखादयश्च न शरीरधर्माः संभवन्ति, अयावच्छरीरभावित्वात्। ये हि कार्यद्रव्यवर्तिनो विशेषगुणा रूपादयस्ते विरोधिगुणान्तराद्वा द्रव्यविनाशाद्वा विनश्यन्ति, प्राणनादयस्तु तद्भावेपि नश्यन्ति मृतावस्थायामिति न शरीरगुणाः। तथा ज्ञानमप्ययावच्छरीरभावित्वादेव न शरीरधर्मः। तथा ये प्रत्यक्षविषयाः शरीरगुणास्ते स्वयमिव परैरपि प्रत्यक्षेण गृह्यन्ते यथा रूपादयः, सुखादयस्तु प्रत्यक्षा

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एवं तावच्चित्राक्षेपं परिहृत्य संप्रति वाक्यान्तरे दृष्टविरोधं परिहर्तुमनुवदति—**यत्त्विति**। परिहरति—**तदिति**। अर्थवादस्य निरालम्बनस्यानुपपत्तिमाशङ्क्याह—**नचेति**। सोऽपि हि यज्ञायुधित्वेन शक्यते वक्तुमिति संबन्धः। तदुक्तम्—'साक्षाद्यद्यपि संबन्धो नात्मनो यज्ञसाधनैः॥ तथापि लक्षणावृत्त्या शरीरद्वारको भवेत्'॥ **ननु** पुष्करपलाशवन्निर्लेपस्य कथं कर्तृत्वाद्युपपत्तिरत आह—**नहीति**। सांख्यमत एवात्मनस्तथात्वं नास्माकं वेदप्रामाण्यवादिनामिति भावः। **येनेति**। व्यापकस्य स्पन्दासंभवादिति भावः॥

नन्वकर्तृत्वमात्मन उपनिषित्सु श्रूयते तत्राह—**इतीति**। **किं पुनरिति**। ननु यज्ञायुधवाक्यस्यादित्ययूपादिवाक्यवदर्थवादतयापि नेतुं शक्यत्वाद्देहातिरिक्तात्मप्रतिपादनं व्यर्थम्। सत्यम्। नैरात्म्ये हि साध्यसाधनसंबन्धप्रतिपादकानां चोदनानामप्रामाण्यमापद्येत। तथाहि स्वर्गकामचोदनादिभिर्हि स्वर्गस्यामुष्मिकत्वाज्जन्मान्तरे फलोपभोगो बोध्यते, सोपि कर्तुरेव नान्यस्य। तस्य ज्ञानमात्रात्त्वेतेषां क्षणिकत्वात्कर्तृत्वभोक्तृत्वानुपपत्तेः। शरीरचैतन्येऽपि तस्य विनिपातात् अतिरिक्तस्य च कस्यचिद्लोकुरनङ्गीकारात् इष्ट्यादेश्चादत्तफलत्वापात् तद्वचनस्याप्रामाण्यं स्यादिति यज्ञायुधिवाक्यसामर्थ्यच्छलेन देहातिरिक्तात्मप्रतिपादनं तत्प्रामाण्यार्थमेवेति। यथाहुः—'तस्माद्वेदप्रमाणार्थमात्मात्र प्रतिपाद्यते॥ यद्यपि प्रकृतं वाक्यं व्याख्यायेतार्थवादतः'॥ यथाभाष्यं तावदाह—**प्राणनादीति**। योसौ प्राणित्यपानिति उच्छ्वसिति निमिषतीत्यादि चेष्टितवान् सोऽत्र शरीरे यज्ञायुधीत्यर्थः। युक्त्यन्तरमाह—**सुखादीति**। एतदेव विवृणोति—**प्राणनादीति**। कथं न संभवन्त्यत आह—**अयावदिति**। **तदभावेपीति**। द्रव्यविनाशाभावे शरीरे सत्यपीत्यर्थः। युक्त्यन्तरमाह—**तथेति**। **तदिदमिति**। अयावच्छशरीरभावित्वं परप्रत्यक्षाग्राह्यत्वं चेति द्वयमित्यर्थः॥ **ननु** कार्श्यादीनामपि देह-

अपि सन्तो न परप्रत्यक्षग्राह्याः तस्मान्न शरीरगुणाः, तदिदमपि द्वयं सुखादीनां शरीरगुणत्वं निवारयद-न्यगुणतां सूचयति । योऽसावन्यः स आत्मा । किंच सर्वे एव विशेषगुणाः कारणेऽपि वर्तमाना एव कार्यद्रव्यगुणतां भजन्ते, नच शरीरकारणभूतेषु पार्थिवपरमाणुषु चैतन्यमस्तीति कथं शरीर-गुणता चैतन्यस्य स्यात् । तस्मादन्यश्चेतनः ॥

देहाभिन्नात्मसाधनम् ।

कश्चित्पुनराह—सर्वथा वित्तिषु तावद्वेत्तावभासते अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात् । नच शरीरस्य करचरणाद्यवयवसंनिवेशविशिष्टस्यास्ति तथावभासः, अतोऽन्यः शरीरादात्मेति । तत्त्व-युक्तम्—संनिवेशाप्रतिभासेऽपि शरीरप्रतिभाससंभवात् । नहि संनिवेश एव शरीरं, शरीरधर्मो हि संनिवेशः, संभवति च धर्माप्रतिभासोऽपि धर्मिणः प्रतिभासः, अन्यथा आत्मनोपि प्रतिभासो न स्यात् तद्धर्माणां सर्वगतत्वादीनामर्थवित्तिष्वप्रतिभानात् । नचैकान्तिकमर्थवित्तिषु वेत्तृभानं, अर्थ एव हि तदा भासते न वेत्ता॥ * ॥ नच स्वपरवेद्ययोरनतिशयः । नहि वेदितृभासनकृतोऽयमतिशयः किंतु कस्यचिदेव किंचिदाभासते नान्यस्य इत्येतावानतिशयो नान्यः, तस्मान्न ज्ञातृप्रतिभासेन शरी-रविवेकसिद्धिः, किंतु पूर्वोक्तादेव कारणात्—ज्ञानसुखादीनां शरीरगुणत्वासंभवात् ततोऽन्य एतेषा-माश्रयः स एवात्मा ॥

बौद्धमतेन विज्ञानात्मवादः ।

सौगतास्त्वाहुः—'सिद्धे ज्ञानसुखादीनां गुणत्वे गुणिकल्पना ॥ ननु तत्सिद्धमस्माकं तावन्मा-त्रोपपत्तितः ।' नह्याश्रयमन्तरेण ज्ञानमात्रमनुपपन्नं स्वतन्त्रमेव ज्ञानं किं नेष्यते सुखादयोऽपि ज्ञान-विषयाः स्वतन्त्रा एव अन्यस्याश्रयस्यानुपलब्धेः । ज्ञानमेव च 'नीलमहं जानामी'ति ज्ञातृत्वेन वि-पर्यासितदर्शनैरध्यवसीयते नान्यः प्रमाणाभावात् ॥ * ॥ ननु ज्ञानस्य क्षणिकत्वात्कथं पूर्वेद्युरु-पलब्धे परेद्युःस्मरणमिच्छा प्रत्यभिज्ञा च । नहि स्वयमनुपलब्धे तानि संभवन्ति—नहि देवदत्ते-

---

**युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।**

गुणानामयावद्देहभावित्वं दृष्टम् । *स्थौल्याद्यवस्थान्तरं तत्रास्तीति चेत् । न । अत्रापि मृत्युरेवावस्थान्तरमस्त्वयेवेति वक्तुं शक्य-त्वात्, अतो नायावद्देहभावित्वेन शरीरगुणत्वनिवृत्तिरिति । मैवम् । *प्राणादीनां शरीरगुणत्वे तदपगमस्य निर्निमित्तत्वापत्तेः । तथाहि द्रव्यविनाशाद्गुणान्तरोपनिपाताद्वा गुणस्य विनाशो दृष्टः । नच प्राणाद्यपगमरूपस्य मृत्योरन्यतरदपि निमित्तमत्रास्ति पापमिति चेन्न । तस्यात्मगुणत्वेन शरीरधर्मत्वाभावात् । अतो मृत्योः शरीरावस्थान्तरत्वाभावात्कार्श्यादितुल्यतेति । वस्तुतस्तु कार्श्यादीनां रूपादिवद्गुणत्वमेव नास्तीति । **ननु** कथं शरीरगुणत्वनिराकरणेनान्यगुणत्वसिद्धिरत आह—**सूच-यतीति** । सुखादयः क्वचिदाश्रिताः गुणत्वात् रसादिवत् यत्राश्रिताः स आत्मेति भावः । दूषणान्तरमाह—**किंचेति** ॥

अत्रैव मतान्तरमाशङ्क्य निराकरोति—**कश्चिदिति** । **अन्यथेति** । वेदितुरनवभासे इत्यर्थः । **नचेति** । शरीरस्य तथावभासे तस्यैव वेत्तृत्वं स्यादिति भावः । **नहीति** । यदि संनिवेश एव शरीरं स्यात्तदा तदप्रतिभासे शरीराप्रतिभासः स्यादिति भावः । **नचेति** । तत्प्रतिभासे अहमाकारोल्लेखः स्यादिति भावः । दूषणमुपसंहरति—**तस्मादिति** । मता-न्तरमवतारयितुं स्वोक्तमर्थमनुवदति—**पूर्वोक्तादिति** ॥

श्लोकचतुर्थपादं व्याचष्टे—**नहीति** । नन्वहं जानामीति नाश्रय उपलभ्यत एव तत्राह—**ज्ञानमेवेति** । अत्राशङ्कते —**नन्विति** । पूर्वेद्युर्दृष्टे परेद्युरहमिदमदर्शमिति भवति प्रत्ययः सच प्रत्यगात्मन्येवोपपद्यते नान्यत्रेत्यर्थः । इच्छाप्युपल-

**सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।**

न्तरानुष्ठितेन प्रतिबन्धस्तदा कल्प्यते नच प्रतिबन्धादसाधयतः साधनत्वहानिरिति । कथं तर्ह्यकृतकारीर्यादिकर्मणां वृष्टिनिष्पत्तिः । कर्मान्तरादिति ब्रूमः । जन्मान्तरानुष्ठितमपि कर्मादृष्टफलं स्वफलोत्पादनाय शरीरमिव वृष्ट्यादिकमारभत इति न कश्चिद्दोषः । तेषां ज्ञानानामित्यर्थः । **स्थौल्यादीति** । शरीरे सत्यपि तद्विरुद्धावस्थान्तरेण पूर्वावस्थाया नाश इति भावः । परिहरति—**नेति** । अत्रापि मृत्युरेवावस्थान्तरं तेन सत्यपि शरीरे सुखादिनाशः कार्श्यादिवत्संभवतीति भावः । **प्राणादीनामिति** । कार्श्यादीनां देहगुणानां तन्निष्ठस्थौल्यादिरूपगुणान्तरोत्पादान्नाशः । प्राणविनाशे तु न शरी-

नोपलब्धेऽर्थे यज्ञदत्तस्य स्मरणादीनि संभवन्ति। सत्यम्—न संभवन्ति संतानभेदे समानायां तु संततावेकेनोपलब्धेऽन्यस्य स्मरणाद्युपपन्नं दृष्टत्वात्, नह्युपलब्धुः स्मर्तुश्चैकत्वं क्वचिदपि दृष्टं, एकस्य स्थास्नोः पुरुषस्य क्वचिदप्यनुपलब्धत्वात्, तस्माज्ज्ञानमेव ज्ञातृ नान्यो ज्ञातास्तीति ॥ * ॥ अत्रोच्यते—'प्रत्यभिज्ञायते कर्ता यः पूर्वापरकालयोः ॥ तस्य स्थास्नोः स्फुटो भेदो विज्ञानात्क्षणभङ्गुरात्'। विषयप्रत्यभिज्ञानानुपपत्तेर्ज्ञातुरेकत्वकल्पनायां स्यादप्येतदुत्तरं—संतानैकत्वादेवोपपद्यत इति। यदा तु ज्ञातैवैकः पूर्वापरकालयोः प्रत्यभिज्ञायते—योऽहं पूर्वमद्राक्षं स एवाहमनुपश्यामीति तदा प्रत्यभिज्ञयैव ज्ञातुरेकत्वावगमात्, विज्ञानस्य च क्षणिकत्वात्ततोऽन्यो ज्ञाता सिद्धो भवतीति ॥ * ॥ किमहंप्रत्ययगोचरो ज्ञाता स्यात्, तथा सति शरीरमेव जानामि कृशोऽहं स्थूलोऽहं गच्छाम्यहमिति कार्श्यादिबुद्धिसामानाधिकरण्यादहंबुद्धेर्गोचरः, आत्मनश्च सर्वगतस्य कार्श्याद्यनुपपत्तेः ॥ * ॥ उच्यते—ज्ञातृविषयस्तावदहंप्रत्यय इत्यविवादम्, यो हि परामृशति स स्वात्मानमहमिति परामृशति परानिदमिति। तेन निःसंशयमस्य ज्ञातृगोचरत्वं शरीरस्य च ज्ञातृत्वं निराकृतं, अतोऽत्यन्तसंसृष्टयोरेकत्वभ्रान्त्या सामानाधिकरण्यप्रतीतिरुष्णतोयप्रतीतिवत् भास्वरायःपिण्डप्रतीतिवच्च ॥

शरीरात्मनोर्भेदोपपादनम्।

तथा व्यतिरेकबुद्धिरपि दृश्यते 'ममेदं शरीरं कृश'मिति षष्ठ्यास्मदर्थस्य शरीरव्यतिरेकात्, शरीरस्य च परविषयेदंकारास्पदत्वात्, ततोऽस्माद्विवेकावभासात्पूर्वोक्तन्यायेन च शरीरस्याज्ञातृत्वात्, अभेदावगमस्य च संसर्गदोषवशेन भ्रान्त्याप्युपपत्तेः, पूर्वाभ्यस्तस्मृत्यनुबन्धेन च विना जातस्य हर्ष-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

ब्धिसमानकर्तृका सती ज्ञानातिरिक्तं स्थायिनमात्मानमुपकल्पयतीत्यर्थः। परिहरति—**सत्यमिति**। ननु योऽहमद्राक्षं स एवाहमनुपश्यामीत्युपलब्धुः स्मर्तुश्चैकत्वमिष्टमेव तत्राह—**एकस्येति**। संतत्यभेदेन *तदुपपत्तिरिति भावः। यदुक्तं सन्तानैकत्वादेव तदुपपत्तिरिति तत्परिहरति—**विषयेति**। यदि विषयप्रत्यभिज्ञान्यथानुपपत्त्या ज्ञातुरेकत्वं कल्प्येत तदैतदुत्तरं स्यादित्यर्थः। प्रत्यभिज्ञास्वरूपमाह—**योऽहमिति**। योऽहमित्यादौ ज्ञातैवाहंप्रत्ययस्य विषयः। तद्यदाहंबुद्धिर्ज्ञात्रालम्बनी तदा ज्ञानातिरिक्त एको ज्ञाता सिद्ध्यतीत्यर्थः। प्रयोगश्च—'ह्यस्तनाहंमतिग्राह्यो ज्ञाताद्याप्यनुवर्तते ॥ अहंप्रत्ययगम्यत्वादिदानींतनबोद्धृवत्' ॥ अत्र चोदयति—**किमिति**। शरीरमेवाहंबुद्धेर्गोचर इति संबन्धः। अतस्तस्यैवाहंबुद्धिगोचरत्वाज्ज्ञातृत्वमापद्यत इति भावः। उक्तंच—'अहं यामीत्यहंशब्दः शरीरार्थः प्रयुज्यते ॥ मन्तृत्वात्तस्य नह्यात्मा गमनं प्रतिपद्यते' ॥ समाधत्ते—**उच्यत इति**। परानिदमितीति परामृशतीत्यनुषङ्गः। कथं तर्हि देहेऽहंप्रत्ययः। अज्ञातविवेकानां भ्रान्त्येति ब्रूमः। ज्ञातविवेकानां तु नास्त्येव। तेषामपि ज्ञातृविषयकमहमिति जानामीति च ज्ञानमनुवर्तत एव। यथाहुः—'जानाम्यहमितीदं तु ज्ञानं नैव निवर्तते ॥ तन्निवृत्तौ न तेषां स्याद्ध्यानं शिष्योपदेशने' ॥ समानविषयबुद्धिधारणैव ध्यानम्। नच स्वात्मन्यहंबुद्धेरन्या बुद्धिः संभवति अतोऽस्ति योगिनामप्यहंमानः। तथा जानामीत्येवमात्मानमनवगच्छतः कथं शिष्योपदेशे प्रवृत्तिः। दृश्यते च योगीश्वरस्यापि वासुदेवस्यार्जुनोपदेशे प्रवृत्तिरिति। अहंमानश्च 'अहं सर्वस्य जगतः' इत्यादिभिरिति ॥ फलितमाह—**तेनेति**। अस्य। अहंप्रत्ययस्येत्यर्थः। **ननु** शरीरमेवाहंप्रत्ययगोचरत्वाज्ज्ञानात्। नेत्याह—**शरीरस्येति**। ज्ञानादिगुणत्वनिराकरणेन निराकृतमित्यर्थः। किंचैवं भूतचैतन्यवादी प्रष्टव्यः पञ्चभूतात्मके शरीरे किं सर्वाणि चेतयन्ते किंवैकमिति। आद्ये सर्वेषां समत्वात्परस्परमसंबन्धापत्तिः। एकचैतन्ये तु इतरेण विनापि लोष्ठादावपि पृथिव्यादिकस्य चैतन्यं स्यात्। नहि तस्य चैतन्येऽन्यदपेक्षणीयमस्ति। प्रयोगश्च येयं शरीरगता भूतान्तरसंसृष्टा पृथिवी सा न चेतयते पृथवीत्वात् लोष्ठवत्। एवं जलादावपि दर्शयितव्यम्। **ननु** कार्श्यादिसामानाधिकरण्याद्देहविषयोऽहंप्रत्ययः स्यादत आह—**अत इति**। देहात्मनोरभेदभ्रमाद्देहगतं कार्श्यादिकमात्मन्यध्यस्यत इति भावः ॥

भ्रान्तित्वे कारणमाह—**तथेति**। एवमिन्द्रियाणामप्यस्मदर्थाद्भेदपरामर्शात्सिद्धमज्ञातृत्वम्। यथाहुः—'इदं मयीदर्शं चक्षुर्मनो मे भ्रान्तमित्यपि ॥ इन्द्रियेष्वपि भेदेन व्यवहारश्च दृश्यते' इति। **ननु** तुल्यत्वे कथमभेदप्रतीतिरेव भ्रान्तिः स्यादत आह—**तत इति**। उक्तन्यायेन शरीरस्याज्ञातृत्वसिद्धेः ज्ञातृगोचराहंप्रत्ययविषयत्वविरोधाज्ज्ञातुर्भिन्नेऽपि शरीरे तत्संसर्गकृतोऽयमभेदभ्रम इत्यर्थः ॥ **ननु** मम शरीरमितिवन्ममात्मेत्यपि भेदव्यपदेशोऽस्ति नायमर्थो ममात्मना ज्ञात

सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

रनिष्ठगुणान्तरोपघातोऽस्तीति प्राणादिना न शरीरगुणत्वमिति भावः। **तदुपपत्तिरिति**। प्रत्यभिज्ञोपपत्तिरिति भावः।

भयशोकसंप्रतिपत्त्यनुपपत्तेः । जातिस्मराश्च केचिदद्यत्वेऽपि देहान्तररहोवृत्तं वृत्तान्तं संबोधयन्त उपलभ्यन्त इत्युपलब्धिसिद्धः शरीरात्मनोर्भेदः ॥ * ॥ यद्यपि चानेन प्रकारेण शरीरात्मनोर्विस्पष्टो भेदो न सिद्ध्येत् तथापि तावदभेदोऽपि न विस्पष्टः—मम शरीरमिति विवेकस्यापि प्रतिभासात् । तत्र संमुग्धे तत्त्वे श्रुतार्थापत्त्या साक्षाच्छ्रुत्या वा निर्णयः । स्वर्गकामादिश्रुतयो हि शरीरातिरिक्तं परलोकफलोपभोगयोग्यं कर्तारमन्तरेणानुपपद्यमानास्तमाक्षिपन्ति ताभिश्चाक्षिप्तं साक्षादेवोपनिषदः समर्थयन्ति 'अविनाशी वा अरेऽयमात्मा' इत्येवमाद्य इति सिद्धः शरीरातिरिक्तो मानसप्रत्यक्षरूपोऽहंप्रत्ययगम्यो ज्ञाता । कथं पुनर्ज्ञातुर्ज्ञेयत्वं, नह्येकस्य कर्तृत्वं कर्मत्वं च स्वात्मनि क्रियाविरोधात्संभवति, तस्मान्नाहंवित्तिर्नाम घटादिवित्तिव्यतिरेकेण काचिदस्ति, घटादिवित्तावेव तु विषयवदात्मा भासत इत्युक्तम् ॥

आत्मनो मानसाहंप्रत्ययगम्यत्वम् ।

कः पुनरयं स्वात्मनि क्रियाविरोधो नाम, यस्यां क्रियायां यः कर्ता न सा तस्मिन्नेव स्वफलं जनयतीत्यर्थः । किं पुनः संवित्तिक्रियायाः फलं, भासनं, किमिदं कर्तरि न भवति । ओमितिचेत्, कथं तर्ह्यसौ भासते । नह्यसति भासने भासत इति शक्यते वक्तुं, तस्मादर्थवित्तिष्वप्यात्मनो भासनाभ्युपगमेऽपि स्वात्मनि क्रियाविरोधस्तुल्य एव । व्यवहारयोग्यतामात्रं संवित्तेः फलं नान्यदितिचेत् भवत्वेवम् । अस्ति तावत्फलम् । तच्च विषयेष्विवात्मन्यपि संवित्तितो जायत इत्यङ्गीकृतं भवद्भिः । अतस्तुल्यो विरोधः ॥ * ॥ यदि परमार्थविरोधमुद्भाव्य सत्यप्यात्मनः क्रियाजन्यफलभागित्वे कर्मसंज्ञा कर्मविभक्तिश्च न भवतीत्युच्यते 'परसमवायिक्रियाफलभागित्वं कर्मत्वम्' इत्यभिधानात् तच्चायुक्तम् । शब्दसाधुत्वं हि प्रयोगतोऽवगन्तव्यम् । अस्ति चात्मनः स्वकर्तृकायामेव क्रियायां कर्मव्यवहारो लोके वेदे च—यथा तावद्भाष्य एव स्वसंवेद्यः संभवतीति कर्मवाची कृत्यप्रत्ययप्रयोगः, वेदेपि 'आत्मानमुपासीत' 'आत्मानं वेद' 'आत्मा ज्ञातव्यः' इत्यनेकशः प्रयोगः ॥ * ॥ नच गन्तुर्गमने कर्मत्वं प्रयोगाभावात् शब्दसाधुत्वे हि प्रयोगपरवशा वयं न स्वयमीश्महे । यथाहि चलनार्थत्वे समाने गच्छतिः सकर्मकः चलतिश्चाकर्मकः प्रयोगस्य तथा दर्शनात्, एवं ज्ञातुः कर्मत्वं गन्तुश्चा-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

इति, ततश्चात्मनोऽन्यदात्मान्तरं प्रसज्येत । नैष दोषः । ज्ञानस्यैवावस्थारूपेणात्मनो भिन्नत्वात् ममेति भेदव्यपदेशोपपत्तेः । नचेह ज्ञातृज्ञानशरीरातिरिक्तं वस्त्वन्तरं प्रतीयते येनात्मान्तरापत्तिः स्यात् भेदस्याज्ञानहेतुकत्वात् । **ननु** नैतावता घटपटयोरिव शरीरात्मनोर्भेदः सिध्यत्यत आह—**तथापीति** । तत्र श्रुतार्थापत्तिं दर्शयति—**स्वर्गेति** । श्रुतिमुदाहरति—**अविनाशीति** । ननु नास्तिकान्प्रति श्रुत्युपन्यासोऽयुक्तः । नह्यनेन ते प्रतिबोधयितुं शक्यन्ते । सत्यम् । उक्तयुक्त्यैव तत्प्रतिबोधनात् । यस्तु वेदवादी शिष्यः,यो वा 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्ती'ति भूतचैतन्याभिधानाज्जातभ्रान्तिर्वेदविरोधमात्मनो मन्यते तत्प्रतिबोधनाय श्रुत्युपन्यास इति । विरोधपरिहारं च ग्रन्थकार एव 'यत्तु विज्ञानघन'इत्यादिना ग्रन्थेन दर्शयिष्यति । *गूढाभिसंधिः पृच्छति—**कथमिति** । तत्किमात्मनो भानमेव नास्ति । अस्तीत्याह—**घटादीति** । विषयवद्भासते नतु ज्ञातृत्वेनेति भावः ॥

प्रतिबन्द्या परिहरिष्यन्पृच्छति—**कः पुनरिति** । ननु विषयवद्भासत इत्युक्तमेव । सत्यम् । तथापि तत्र संवित्तिक्रियाकर्तृत्वेनैव भासतेऽतस्तुल्यो दोष इत्याह—**तस्मादिति** । चोदयति—**व्यवहारेति** । तच्च घटादिष्वेव संभवतीति भावः । परिहरति—**भवत्विति** । भासनरूपस्य फलस्य त्वयाप्यङ्गीकारात्तुल्यो विरोध इत्यर्थः । **यदीति** । परसमवेतक्रियाफलभागित्वं कर्मत्वं तच्चात्मनि ज्ञातरि विरुद्धमित्यभिप्रायः । एतदप्ययुक्तमित्याह—**तच्चेति** । लोके तावदुदाहरति—**यथेति** । नचैवं गमनक्रियाकर्तुरपि कर्मत्वापत्तिरित्याशङ्क्य निराकरोति—**नचेति** । उपपादितमर्थं निगमयति

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**कथं नहीति** । देहस्यात्मनः सकाशात्परत्वे इदमिति परामर्शः स्यादिति भावः । **गूढाभिसंधिरिति** । आत्मनि

कर्मत्वं भविष्यति । तस्मान्मानसाहंप्रत्ययगम्य आत्मा । तथाच श्रुतिः 'स मानसीन आत्मा जनानाम्' इति । तेन यद्यपि विषयवित्तिवेलायामेवात्मावभासस्तथापि न विषयवित्तिकर्तृतयावभासः किंतु मानसाहंप्रत्ययकर्मतयावभासो न तद्वित्तिकर्मतयाऽव्याप्तेः । ननु शरीरवदात्मन्यप्यहमभिमानो भ्रान्तिरेव, न, बाधाभावात् । योगिनामस्ति बाध इतिचेत्, न, प्रमाणाभावात् ।—'तथाच येऽपि योगस्य परां काष्ठामुपागताः ॥ योगेश्वरेश्वरास्तेऽपि कुर्वन्त्यात्मन्यहंमतिम् ॥ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ॥ एवमादावहंशब्दः परस्मिन्पुंसि हि ध्रुवम् ॥' नहि महद्विकारोऽहंकारः कृत्स्नस्य प्रभवः, नापि क्षराक्षराभ्यामुत्तमः, नापि ब्रह्मशब्दवाच्ये प्रधाने गर्भं दधाति, पुरुषसंपर्केकृतत्वात्प्रकृतिक्षोभस्य । तथोपनिषत्स्वपि—'ब्रह्म वा इदमग्र आसीत्' 'तदात्मानमेवावेदहं ब्रह्मास्मि'इति, मन्त्रवर्णोपि 'अहं मनुरभवं सूर्यश्च'इति । तस्मादहंप्रत्ययगम्यत्वमात्मनोऽनिच्छन्तः श्रुतिविरोधादेवोपेक्षणीयाः ॥*॥ यत्तु निर्मुक्ताहंकारममकारवचनं तदपि पौर्वापर्येण परामृष्यमाणं नाहंकारस्वरूपनिषेधार्थं भवति, एवंहि तद्वचनं—'नास्य कश्चिन्नायं कस्यचित् निर्मुक्ताहंकारममकार एवाय'मिति । तदयमर्थः—यस्मान्नास्य कश्चित्तस्मान्निर्मुक्तममकारः, यस्मान्नायं कस्यचित्तस्मान्निर्मुक्ताहंकार इति । यद्यहंकारस्वरूपनिषेधः स्यात्, न पूर्वेण संबध्येत,—यस्मान्नायं कस्यचित्तस्मादस्मिन्नहंभावो भ्रान्ति'रिति किं केन संगतम्, तस्मान्नायमहंतास्वरूपनिषेधः किं तर्हि जन्मसंबन्धितयात्मन्यहंमतिः 'अहमस्य पिताहमस्य पुत्र'इत्यादिः स भ्रम इत्येवं संगतं भवति ॥ * ॥ अयमात्मा न कस्यचिदपि पुत्रादिरूपेण संबन्धी, जन्यजनकभावस्य शरीरविषयत्वात्, शरीरं हि शरीराज्जायते नत्वात्मात्मान्तरात्, तस्मादन्यसंबन्धितयात्मन्यहंमतिः कृशादिमतिवच्छरीराद्विवेकमबुध्यमानानां भ्रान्तिरिति । तदिदमस्यान्यसंबन्धित्वनिषेधेन पुत्रादिविषयस्नेहनिवर्तनेन वैराग्यजननार्थमुच्यते, नाहंकारस्वरूपस्यायं निषेधोऽनुपयोगादसंगतत्वात् प्रमाणान्तरविरोधात् 'अहं ब्रह्मास्मि' इति वचनविरोधाच्च । तस्मादहंप्रत्ययगम्यो ज्ञाता शरीरातिरिक्त इन्द्रियव्यतिरिक्तश्च ॥

इन्द्रियात्मनोर्भेदः ।

कथमिन्द्रियभेदः, इन्द्रियाभावेऽपि ज्ञातुरेकस्य प्रत्यभिज्ञानात् योऽहं रूपमद्राक्षं सोऽहं स्पृशामीति, योऽहमग्रहीषं सोऽहं स्मरामीति । मनस्तु प्रत्यक्षसिद्धस्य ज्ञातू रूपादिज्ञानेषु व्यतिरिक्तकरणाधीनत्वात् सुखादिज्ञानेषु भवितव्यं करणेनेत्येवं कल्प्यत इति नास्य ज्ञातृत्वमाशङ्कनीयम् ॥ * ॥ येतु कर्तृतयैवात्मसिद्धिर्न कर्मतयेत्याहुस्तेषामात्मनि स्मरणप्रत्यभिज्ञाने नोपपद्येयाताम्, तत्रापि हि पूर्वकालसंबन्धित्वेनात्मनः प्रतिभासोऽङ्गीकरणीयः, नच सांप्रते स्मरणे पूर्वकालसंबन्धिनः कर्तृत्वं संभवतीति कथं कर्तृतया सिद्ध्येत्, तस्मादहंप्रत्ययकर्मतयैवात्मनः सिद्धिरिति रमणीयम् ॥ * ॥ अथ स्वप्रकाशत्वमात्मनः सुखादीनां च किं नेष्यते, स्वप्रकाशस्य कस्यचिदप्यदर्शनात् सर्वस्यैव हि वस्तुनः

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

—**तस्मादिति** । स आत्मा जनानां मानसीनो मनोगम्य इत्यर्थः । **तदिति** । तस्य भासमानस्य वित्तिकर्मतयैवावभास इति व्याप्तेरित्यर्थः । अन्यथासिद्धिमाशङ्क्य निराकरोति—**नन्विति** । **पुरुषेति** । महद्विकारस्यैवंरूपगर्भधारणासंभवादिति भावः । स्वमते श्रुतिविरोधं परिहरति—**यत्त्विति** । असंबन्धमेव विवृणोति—**यस्मादिति** ॥

इदानीमिन्द्रियातिरेकं प्रश्नपूर्वकमुपपादयति—**कथमिति** । मनसोऽपीन्द्रियत्वेनैव कल्पनान्न ज्ञातृत्वशङ्कास्तीत्याह—**मनस्त्वति** । ननु क्लृप्तमेवास्ति चक्षुरादिकं किं मनसेत्यत उक्तम् । **रूपादीति** । सुखादिज्ञानार्थं तत्कल्पनमित्यर्थः । अत्रैव मतान्तरमाशङ्क्य निराकरोति—**येत्विति** । अनुपपत्तिं विवृणोति—**तत्रापीति** । एतत्कालसंबन्धिनि स्मरणे पूर्वकालसंबन्धिनः कर्तृत्वं न संभवति अतः कर्मतयैव सिद्धिरित्याह—**तस्मादिति** । वेदान्तिमतमुत्थापयति—**अथेति** ।

परप्रकाश्यत्वनियमात्। स्वप्रकाशत्वे चात्मा सुषुप्तावपि प्रकाशेत, नच प्रकाशते, यथोक्तम्—'अत्रेतयमेव सुषुप्त इत्युच्यते' इति ॥*॥ ननु सुषुप्तावपि प्रकाशत एवात्मा स्वाभाविकपरमानन्दयुक्तः, अन्यथा कथम् 'सुखमहमस्वाप्सम्' इति प्रबोधे प्रतिसंधानं स्यात्, अर्थान्तरं तु न किंचिच्छरीरमिन्द्रियमन्यद्वा वस्तु प्रकाशत इत्येतावान् स्वप्नजागराभ्यां सुषुप्तेर्भेदः। नैतदेवम्—संविद्विरोधात्, नहि सुप्तानामात्मा सुखं वा प्रकाशते, नह्यभासमानं व्यवहारमात्रेण प्रकाशत इति शक्यमङ्गीकर्तुम् ॥*॥ किंच—'सुष्वापादुत्थिताश्चैवं निर्विद्यन्ते हि कामुकाः ॥ वृथेयमन्तरेणैव कामिनीं यामिनी गता ॥ आश्लिष्टामप्यबुद्ध्वैनां मृतवच्छयितं मया ॥ भुक्त्वा च परमानन्दं तस्य च स्मरणादयम् ॥ स्वल्पाल्पसुखहान्यैवं निर्वेदो नावकल्पते ॥ तत्सुखं विस्मृतं चेत्स्यात्सुखमस्वाप्समित्ययम्। व्यवहारो न युज्येत, दुःखाननुभवे त्वियम् ॥ सुखव्यवहृतिस्तस्माद्गुणवृत्त्येति निश्चयः'। प्रबुद्धा हि सुषुप्तावगतं किंचिदपि दुःखमसंस्मरन्तः स्मरणानुत्पत्त्यैव सुषुप्त्यवस्थायां मे न किंचिदपि दुःखमासीदित्यवगम्य तत्रैव सुखव्यवहारं गुणवृत्त्या कुर्वन्ति, तथाच व्यवहरन्ति—एतावन्तं कालमहमात्मानमप्यबुद्ध्वा शयितोऽस्मीति। तस्मात्सुषुप्तावप्रकाशान्नात्मनः स्वप्रकाशत्वम्, अतो मानसप्रत्यक्षगम्य एवायमिति स्थितम् ॥

आत्मनो व्यापकत्वम्।

स पुनरयमात्मा अणुः शरीरपरिमाणो विभुर्वेति चिन्तनीयम्। तत्राणुपरिमाणत्वे युगपच्छिरःपादयोर्वेदनानुपपत्तिः। अयौगपद्येऽप्यतिशैघ्र्याद्यौगपद्यावगतिरिति चेत्, स्यादेवं यद्यणुत्वं कुतश्चित्सिद्धं स्यात्, तदसिद्धौ दृष्टानुसारादनणुत्वमेव युक्तम्। तत्र शरीरपरिमाणत्वे सावयवः स्यात्, द्विविधमेव हि निरवयवद्रव्यम्—अणु विभु वा, तदसौ शरीरसंमितः सन् सावयवः स्यात्, तत्र बह्ववयवकल्पना तावतां चान्यूनानधिकानामवयवानां पुत्तिकाहस्तिदेहयोरतिसंकोचविस्तारकल्पनं नातीव हृदयमनुरञ्जयति, तस्माद्विभुत्वमेव युक्तम्। तथाच श्रुतिः—'अनन्तमपारम्' इति। भगवद्गीतासु च वचनम्—'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' इति। ये चोपनिषत्स्वणुत्ववादाः पुराणेषु च 'अङ्गुष्ठमात्रं पुरुषम्' इत्यादयस्ते सूक्ष्मग्रहणगोचरत्वाभिप्रायाः ॥*॥ ननु विभुत्वे सर्वशरीरेष्वेक एवात्मास्तु किं नानात्मभिरभ्युपगतैः, नैवम्—एकत्वे सति यथा करणभेदेऽपि कर्तुरेकत्वाच्चक्षुषा दृष्टमर्थं मनसा स्मरति त्वचा च प्रत्यभिजानाति—यमहमदर्शं तमहं स्पृशामीति, तथा देवदत्तशरीरस्थेनात्मना दृष्टमर्थं यज्ञदत्तः प्रत्यभिजानीयात्, शरीरभेदेऽप्यात्मनः प्रत्यभिज्ञातुरेकत्वात्। कर्तुरेकत्वेऽपि मनोभेदाद्व्यवस्थेति चेत्, न, करणत्वान्मनसः, करणभेदस्य चक्षुरादेर्भेदव्यवस्थापकत्वायोगादित्युक्तम् ॥*॥ चक्षुरादिकरणानामव्यवस्थापकत्वेऽपि मनः करणं व्यवस्थापकमिति चेत्, न, करणत्वाविशेषात्। स्यादप्येषा कल्पना यद्येकात्मत्वे दृढं प्रमाणं स्यात्। ननु तदस्ति। येत्वात्मैकत्ववादाः श्रुतिषु स्मृतिषु पुराणेषु वा ते 'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' 'उत्तमः पुरुषस्त्वन्यः' इत्यादिभिरात्मभेदवचनैः प्रत्यक्षादिभिश्च विरोधान्नैकान्ततः शक्नुवन्त्यात्मैकत्वं निश्चाययितुम् ॥*॥ वचनानां हि मिथो विरोधे सिद्धवस्तुविषयत्वेन च विकल्पासंभवे प्रमाणान्तरान्निर्णयः स्यात्, तच्च प्रमाणान्तरं भेद एव समर्थमित्यैकात्म्यवादानामवैलक्षण्यपरत्वं

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

ततश्च न कर्मकर्तृविरोधो भविष्यतीति भावः। परिहरति—**स्वप्रकाशस्येति**। **अर्थान्तरमिति**। जाग्रदवस्थायामर्थान्तरप्रकाशः सुषुप्त्यवस्थायां त्वात्मन एव केवलस्य प्रकाश इति भेद इत्यर्थः। निराकरोति—**नैतदिति**। सुषुप्त्यवस्थायां परमानन्दप्रकाशेऽल्पतरसुखभागी निर्वेदो न स्यादित्याह—**भुक्त्वेति**। ननु सुषुप्तावानन्दाप्रकाशे सुखमहमस्वाप्समिति व्यवहारः कथमत आह—**दुःखेति**। गुणवृत्तिमुपपादयति—**प्रबुद्धाहीति**॥

आत्मन्येव विचारान्तरमवतारयति—**स पुनरिति**। ग्रन्थो निगदव्याख्यातः। **नन्वेकमेवाद्वितीयमित्यादिश्रुतिरे-**

पूर्वोक्तन्यायेनावगन्तव्यम् ॥ * ॥ विस्पष्टं चैतद्वायुदृष्टान्तोपादानात्—'वेणुरन्ध्रादिभेदेन भेदः षड्जादिसंज्ञितः ॥ अभेदव्यापिनो वायोस्तथा तस्य महात्मनः' इति । नहि वायुद्रव्यं सर्वत्रैकं व्यक्तिभेदस्य स्पष्टत्वात्, अविलक्षणस्वभावस्य तु वायोर्वेणुरन्ध्रकृतं षड्जादिवैलक्षण्यं, एवमात्मानोऽपि पशुमनुष्यादिवैलक्षण्यं देहसंबन्धकृतं न स्वाभाविकमित्ययमेवार्थः । वायोरिति तस्येति चैकवचनं सामान्याभिप्रायम्, तस्मात्प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः एवंच बद्धमुक्तादिव्यवस्थापि युक्ततरा भवति ॥ इत्यात्मवादः ॥

मोक्षवादारम्भः ।

कः पुनरयं मोक्षो नाम, विचित्रवासनावशेन विचित्रनीलपीतादिरूपेण प्रवहतो ज्ञानसंतानस्य निःशेषवासनोच्छेदान्नीलपीतादिवैचित्र्यं हित्वा केवलं संविन्मात्रेणावस्थानमिति केचित् । अपरेतु दीपसंतानस्येव ज्ञानसंतानस्योपरमम् । उभयमप्येतद्बाह्यार्थाभावमूलमिति तत्सद्भावप्रतिपादनेनैव निराकृतम् ॥ * ॥ अपरे तु प्रपञ्चविलयमपवर्गमाहुः । अविद्यानिर्मितो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधेनैव ब्रह्मविद्यया अविद्यायां विलीनायां स्वयमेव विलीयते । तथाहि श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति ॥ * ॥ तदिदमपि प्रपञ्चस्याविद्यानिर्मितत्वनिराकरणेन परमार्थत्वप्रतिपादनान्निरस्तमेवेति 'आत्मैवेदं सर्वमि'ति सर्वस्यात्मा भोक्तेत्यर्थः । यथा 'यः कामयेत राष्ट्रं स्यामि'ति राष्ट्रस्य भोक्तेत्यर्थः । यथा—'यः कामयेत सर्वमिदं भवेयमि'ति सर्वस्य भोक्ता भवेयमित्यर्थः । तथा—'आत्मा सर्वमि'ति सर्वस्यात्मा भोक्तेत्यर्थः । यत्तु 'यत्र हि द्वैतमिव भवती'ति द्वैतभावस्य भ्रान्तित्ववचनं तदौपचारिकम्—यथा खलु स्वप्नप्रपञ्चेन्द्रजालमृगतोयादिः कियन्तंचित्कालं दृष्टिपथमापन्नः पश्चाद्विलीनो भोग्यतामतिवर्तते तथायं शरीरेन्द्रियविषयरूपप्रपञ्चोऽप्यस्यात्मनः कियन्तंचित्कालमुपभोग्यः सन् पश्चाद्विनाशादनुपभोग्यो भवतीत्यनेन सादृश्येन भ्रान्तिरित्युपचारेणोच्यते पुरुषाणां विषयभोगेष्वास्थानिवर्तनेन मुक्तावभिरुचिं जनयितुं, यदपि 'यत्र त्वस्य सर्वमात्मैवाभू'दिति मुक्तावात्मनोऽद्वितीयत्ववचनं तदपि न प्रपञ्चस्वरूपनिषेधार्थं किंतु सतएव प्रपञ्चस्यात्मसंबन्धनिषेधार्थं, अस्येतिवचनात्, नह्यत्रैतावदुच्यते 'यत्र सर्वमात्मैवाभू'दिति, किं तर्हि, 'यत्र त्वस्य सर्वमात्मैवे'ति । तेनास्यायमर्थः—यत्र यस्यामवस्थायां मुक्तावित्यर्थः । अस्य आत्मनो दृश्यत्वेन दर्शनसाधनत्वेन दर्शनायतनत्वेन वा न किंचिदन्यत्संबन्धि विद्यते किंत्वात्मैवास्य सर्वं नान्यत्किंचित् तदा केन कं पश्येदिति । यथा लोके यस्य न किंचिदपि बान्धवो वित्तं वास्ति स एवं वदति—'न मे किंचिदस्ति अहमेव सर्वं' तत्र संबन्ध्यन्तरं न किंचिदस्तीत्येतावद्विवक्षितम्, एवं मुक्तावात्मैवात्मनः सर्वमिति संबन्ध्यन्तराभावमात्रं विवक्षितं न प्रपञ्चस्वरूपाभावः, तस्मान्न प्रपञ्चविलयो मोक्षः किंतु प्रपञ्चसंबन्धविलयः । त्रेधा हि प्रपञ्चः पुरुषं बध्नाति भोगायतनं शरीरं भोगसाधनानीन्द्रियाणि भोग्याः शब्दादयो विषयाः । भोग इति च सुखदुःखविषयोऽपरोक्षानुभव उच्यते तदस्य त्रिविधस्यापि बन्धस्यात्यन्तिको विलयो मोक्षः ॥ * ॥ किमिदमात्यन्तिकत्वं पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः, अनुत्पन्नानां चात्यन्तिकोऽनुत्पादः । कथमत्यन्तानुत्पत्तिः, उत्पादकयोर्धर्माधर्मयोर्निःशेषयोः परिक्षयात् । सोऽयं प्रपञ्चसंबन्धो बन्धस्तद्विमोक्षश्च मोक्षः ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

वात्र प्रमाणमत आह—**येत्विति**। ते नैकान्ततः शक्नुवन्त्यात्मैकत्वं निश्चाययितुमिति संबन्धः । दृष्टान्तमेवोपपादयति—**वेण्विति** । सामान्याभिप्रायं अवैलक्षण्याभिप्रायमित्यर्थः ॥ इत्यात्मवादः ॥

प्रसङ्गान्मोक्षस्वरूपं निरूपयितुमारभते—**कः पुनरिति** । मतान्तरनिरूपणग्रन्थः स्पष्टार्थः । मतान्तरनिराकरणमुपसंहृत्य स्वमतमनुसंधत्ते—**किंत्विति** । मोक्षशब्दस्यान्वर्थतां दर्शयति—**सोऽयमिति** ॥

आनन्दमोक्षवादः।

**नन्वेवमशेषधर्मक्षयान्मुक्तस्य न किंचित्सुखं स्यात् ततश्चापुरुषार्थो मोक्षः स्यात्। नैष दोषः— नहि धर्मजन्यो मुक्तस्यानन्दः तथा सत्युत्पत्तिमत्त्वात् विनाशी स्यात् तत्रापुनरावृत्तिश्रुतेर्विरोधः स्यात्। स्वाभाविकस्त्वात्मानन्दः संसारेणाभिभूतः सन् निर्मुक्तसंसारस्याभिव्यक्तौ भोग्यो भवति स्वाभाविकत्वे चानन्दस्य 'आनन्दं ब्रह्मे'त्यादिश्रुतिसहस्रं प्रमाणम्॥ * ॥ ननु सुखाभावेऽपि श्रुतिरस्ति 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति। सत्यम्—विषयसुखाभिप्रायं त्वेवंजातीयकम्, अन्यथानन्दश्रुतिविरोधात्। अथ सुखाभाववचनबलेनानन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते सुखाभाववचनानामत्यल्पत्वात्तेषामेवान्यथाकरणं युक्तं न भूयसामानन्दवचनानाम्। किंचानन्दशब्दस्य दुःखाभावपरत्वेऽत्यन्तस्वार्थहानिः स्यात्, सुखशब्दस्य तु सामान्यवचनस्य विशेषेऽपि व्याख्याने नातीव स्वार्थहानिरिति तदेव युक्तम्॥ * ॥ ननु विद्यमानोऽप्यानन्दोऽननुभूयमानोऽकिंचित्करएव, नच मुक्तस्य सर्वकरणहीनस्यानन्दानुभवः संभवति। स्वप्रकाशोऽयमानन्द इतिचेन्न, संसारावस्थायामप्रकाशात्। ननु तत्राप्यानन्दस्वभावः पुरुषः प्रकाशत एव आत्मनि प्रेमोत्पत्तेः, नह्यसुखे प्रेमोत्पत्तिः संभवति नाप्यविज्ञाते सुखे। किमिदानीमस्माभिरात्मा सुखरूपोऽनुभूयते, सत्यमिति ब्रुवाणस्यातिसाहसिकस्य नोत्तरं वाच्यम्। यदि संसारिणोऽपि परमानन्दमनुभवेयुस्ततो मुक्तस्य न कश्चिदतिशय इति तदेवापुरुषार्थत्वं मोक्षस्यापद्येत, अतो बलादसुखरूपस्याप्यात्मनः प्रेमविषयत्वं दृष्टत्वादङ्गीकर्तव्यम्॥ * ॥ अथ स्वप्रकाशोऽप्यानन्दः संसारावस्थायामभिभूतो न प्रकाशते। कोऽयं प्रकाशमानस्याभिभवो नाम, प्रकाशनिवारणं ह्यभिभवः। नच प्रकाशमानस्याप्रकाशनं संभवति, यदि तु नैव प्रकाशते संसारावस्थायां तस्यामवस्थायामसतः प्रकाशस्य मुक्तावस्थायामुत्पद्यमानस्य कारणं वक्तव्यम्, विज्ञानमेव च प्रकाशाख्यस्य फलस्य कारणं तच्चेन्द्रियाधीनम्, नच मुक्तस्येन्द्रियाणि संभवन्तीति कथमानन्दानुभवः स्यात्॥ * ॥ उच्यते—बाह्येन्द्रियाण्येव मुक्तस्य**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

आनन्दमोक्षवादिमतेन तावत्परिहरति—**नैष इति**। अत्र चोदयति—**नन्विति**। समाधत्ते—**सत्यमिति**। प्रियाप्रियशब्दयोर्विषयजन्यसुखदुःखयोरेव प्रयोगदर्शनादिति भावः। **तेषामेवेति**। 'विप्रतिषिद्धसमवाये भूयसां स्यात्स्वधर्मत्व'मिति न्यायेनेत्यर्थः। इतश्चैवमित्याह—**किंचेति**। प्रकारान्तरेण शङ्कते—**नन्विति**। **नहीति**। उक्तंचाभियुक्तैः —'प्रेमानुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः' इति। अनुभवविरोधादुपहासेन परिहरति—**किमिति**। दूषणान्तरमाह—**यदीति**। अभ्युपेत्याह—**यदित्विति**। कारणं वक्तव्यं तच्च वक्तुं न शक्यत इत्यभिप्रायः। अशक्तिमुपपादयति—**विज्ञानमेवेति**। समाधत्ते—**उच्यत इति**। **एवमिति**। ज्ञानमपि सुषुप्त्यवस्थायां श्रुतिबलादेवाङ्गीक्रियत इत्यर्थः। अत्र मोक्षस्याभावात्मत्वप्रतिपादनपरवार्तिकविरोधं परिहरति—**यस्त्विति**। अत्र सांख्याभिमतं मोक्षस्वरूपं निराकर्तुं 'सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते॥ स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः॥ *नहि कारणवत्किंचिदक्षयित्वेन गम्यते' इत्युक्त्वा 'तस्मात्कर्मक्षयादेवे'त्यादिना मोक्षस्वरूपमुक्तम्। तथा—*'नच क्रियायाः कस्याश्चिदभावः फलमिष्यते॥ *तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये॥ उत्तरप्रचयासत्त्वाद्देहो

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

ज्ञेयत्वे विषयतया ज्ञानत्वानुपपत्तिरित्यभिसंधिः। **नहीति**। भावरूपं सर्वमकारणवदुत्पत्तिधर्मकं दृष्टान्ते क्षयधर्मकमेव घटादिवत् अतो न सुखात्मिका मुक्तिरात्मज्ञानेन क्रियत इत्यर्थः। शरीरसंबन्धो हि बन्धस्तदभावो मोक्षः। अतस्तेन निष्पन्नानां देहानां प्रध्वंसाभावः। अनुत्पन्नानां च देहानां प्रागभावः सएव मोक्षः। कर्मनिबन्धनश्च बन्धः कर्मक्षयादेव नभवतीति सिध्यत्यभावात्मकत्वे मोक्षस्य नित्यता नत्वानन्दात्मकत्वे इत्यर्थः। वस्तुतस्तु बन्धप्रध्वंस एव मोक्षो नतु प्रागभावसहितः सकलकर्मक्षये तदसंभवात्। कारणान्तरसमवधाने हि प्रागभावः संभाव्येत नच तथास्ति धर्माधर्मरूपसकलकारणक्षयात्। नचाभावरूपस्यापि मोक्षस्य ज्ञानसाधनमित्याह—**नचेति**। नन्वस्तुनाम कर्मक्षयादेव मोक्षः स एव तु कुतस्तत्राह— **तत्रेति**। यस्तु देहाद्विविक्तमात्मानं जानाति तस्य पूर्वतनानां कर्मणां फलोपभोगेन क्षयात्तन्निर्मितशरीरे पतितेनागतानां

निवर्तन्ते मनस्तु तस्यामवस्थायामनुवर्तते इत्यानन्दश्रुतिबलादेवाध्यवसीयते । एवं ज्ञानं च 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुते:, विज्ञानघनश्रुतेश्च, तस्मान्मुक्त्यवस्थायां मानसप्रत्यक्षेण परमानन्दमनुभवन्नात्मावतिष्ठते । तदुक्तम्—'निजं यत्त्वात्मचैतन्यमानन्दश्चेष्यते च य: ॥ यच्च नित्यविभुत्वादि तैरात्मा नैव मुच्यते' इति । यत्तु 'तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ॥ नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्' इति वार्तिकं तत्परमतमित्येवमानन्दमोक्षवादिनो मतम् ॥ * ॥ अपरे त्वाहु:—अभावात्मकत्ववचनमेव स्वमतमुपपत्त्यभिधानात् आनन्दवचनं तूपन्यासमात्रत्वात् परमतम् । नहि मुक्तस्यानन्दानुभव: संभवति करणाभावात् । मन: स्यादितिचेत्, न, अमनस्कत्वश्रुते: 'अमनोऽवागि'ति ॥

मोक्षावस्थायां ज्ञानाभावोपपादनम् ।

यत्तु 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'इति तज्ज्ञानशक्त्यभिप्रायम्, अन्यथा हि सुषुप्तावपि ज्ञानानुवृत्तिरुक्ता स्यात् साच संविद्विरुद्धेत्युक्तम् । विस्पष्टं चास्य शक्त्यभिप्रायत्वम् । एवं हि श्रूयते—'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' एवमन्यान्यपि वाक्यानि 'जिघ्रन्वै तन्न जिघ्रति नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते', 'न श्रोतु: श्रुतेर्विपरिलोपो विद्यते', 'न स्प्रष्टु: स्पृष्टेर्विपरिलोपो विद्यते', 'न ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यते' इति तत्र तत्र दृष्टिघ्रातिश्रुतिस्पृष्टिशब्दाश्चक्षुर्घ्राणश्रोत्रत्वगिन्द्रियजन्यानां रूपगन्धशब्दस्पर्शविषयाणां विज्ञानविशेषाणां वाचका: नार्थान्तरविषयाणां नापि विज्ञानसामान्यस्य, नचैषां ज्ञानविशेषाणां सुषुप्तौ मुक्तौ वा कथंचिदप्यपरिलोप: संभवति, नहि तदानीमिन्द्रियाणि सन्ति नापि गन्धादयो ज्ञायन्ते तदुभयाभावे च न श्रुत्यादिशब्दवाच्यज्ञानविशेषा: संभवन्ति ॥ * ॥ ननु यथा प्रकाश्यासन्निधावपि सवितु: प्रकाशकत्वं नित्यम्, एवमिन्द्रियाभावेऽपि नित्यैव दृष्टिरितिचेत्, स्यादेवम्—यदि ज्ञानमात्रं दृष्ट्यादिशब्दानां वाच्यं स्यात्, नतु तथास्ति, लोकप्रसिद्ध्यभावात् । यथा लोकं च शब्दार्थावधारणं न यथेच्छम् । नहि लोके गन्धादन्यद्घ्राणं जिघ्रतीत्युच्यते, गन्धमपि यदा घ्राणादन्येनानुमानादिना जानाति तदा न जिघ्रती-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

नोत्पद्यते पुन: ॥ *कर्मजन्योपभोगार्थं शरीरं न: प्रवर्तते ॥ तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥ *मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयो: ॥ नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ *प्रार्थ्यमानं फलं ज्ञानं नचानिच्छोर्भविष्यति ॥ *आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते' ॥ **परमतमिति** । परमतनिराकरणप्रसङ्गेनोक्तत्वादिति भाव: । नन्वानन्दमोक्षस्य 'स्वर्ग एव भवेदेष:' इत्यनेन दूषितत्वात्कथं वार्तिकानुसारि तन्मतं स्यात् । सत्यम् । मोक्षस्यानित्यत्वापत्तिरूपं दूषणमुक्तं तदुक्तरीत्या परिहर्तुं शक्यतेऽतो वार्तिकाभिमतमेवानन्दरूपत्वं मोक्षस्येति कस्यचिद्व्याख्यातुर्मतमित्यर्थ: । स्वाभिप्रेतं वार्तिकाभिप्रायमाह—**अपरे त्विति** । एतदनन्तरं मतान्तरानुपन्यासादत्रच युक्त्यभिधानात्तदेव वार्तिककृन्मतमित्यर्थ: ॥

एतस्यैव स्वमतत्वं स्थापयितुमानन्दमोक्षवादिमतं दूषयति—**नहीत्यादिना** । कथं न संभवत्यत आह—**नहीति** । इन्द्रियविषययोरभावे च दृष्ट्यादिशब्दवाच्यानां ज्ञानविशेषाणामसंभवात् । 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति यथाश्रुत-

सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

च कर्मणामनुसंधानासत्त्वाद्देहान्तरानुत्पत्तेरत्यन्तासंबन्ध: शरीरेण भवतीत्यर्थ: । नन्वसत्यपि कर्मणि मातापितृसंयोगादेव शरीरनिष्पत्तेर्न मोक्षसिद्धिरत आह—**कर्मेति** । धर्माधर्मसहितस्यैव संयोगस्य शरीरे हेतुत्वमित्यर्थ: । अतो मोक्षार्थिभिर्न विवेकज्ञानमात्रेण कृतार्थंमन्यमानै: स्थातव्यं किंत्वेवं कर्तव्यमित्याह—**मोक्षार्थीति** । काम्यनिषिद्धे हि स्वफलोपभोगाय शरीरमारभेते ते न शरीरारम्भं परिजिहीर्षता तेन कर्तव्ये । नित्यनैमित्तिके च पूर्वकृताधर्मक्षयाय कर्तव्ये । तदेवमात्मोपासनस्यापि पूर्वकृतकर्मक्षयद्वारेणैव मोक्षसाधनत्वं उपासनं च ध्यानम् । एतदभिप्रायं च 'ज्ञानाग्नि: सर्वकर्माणी'त्यादि । **ननु** नित्यान्येवाग्निहोत्रादीनि स्वर्गार्थान्यपीति तानि कुर्वत: कथं मोक्षोऽत आह—**प्रार्थ्यमानमिति** । फलाभिसंधिकृतान्येव स्वफलदानेन पुरुषं बध्नन्ति नत्वनभिसंधिकृतानि । अतएव 'अनाश्रित: कर्मफल'मित्युक्तम् । देहविवेकज्ञानविधिवाक्यशेषेऽपुनरावृत्तिश्रवणं तदर्थवादमात्रम् । अर्थवादस्यावलम्बनं दर्शयति—**आत्मज्ञ इति** । देहविविक्ता-

त्युच्यते, तस्माद्घ्राणादीन्द्रियजन्यगन्धादिविषयज्ञानविशेषवाचिनो घ्रात्यादिशब्दाः, नच तेषां सुषुप्तौ मुक्तौ वा संभवत्यपरिलोपः, तस्माद्घ्राणादिशक्तावेव प्ररोचनार्थं घ्राणाद्युपचारः, यथा 'तेन ह्यन्नं क्रियते' इति शक्तिवर्तमानत्वेन 'प्ररोचनार्थं क्रियते' इति वर्तमानत्वोपचारः, तस्मात् 'न ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यत' इत्येतदपि शक्त्यभिप्रायमेव ॥ * ॥ यत्त्वादित्यप्रकाशकत्ववदिति, किं तस्य प्रकाशकत्वमभिप्रेतं, यदि तिमिरोत्सारणं, तन्नित्यमस्त्येव, सर्वदा ह्यसावव्यवहितेषु देशेषु तिमिरमुत्सादयत्येव, नत्वेवमात्मा सर्वदा शृणोति सुषुप्तावश्रवणात् । अथ ज्ञानजनकत्वमादित्यस्य प्रकाशकत्वम् न तन्नित्यं, तस्मात्सामर्थ्यमेव तत्रापि नित्यं, तस्माज्ज्ञानशक्त्यभिप्रायमिदं नित्यत्वाभिधानम् ॥ * ॥ एषा ह्यत्र वचनव्यक्तिः—यदेतत्सुषुप्तौ मुक्तौ वात्मा न पश्यति पश्यन्नेव द्रष्टुं शक्नुवन्नेव न पश्यति । नहि द्रष्टुरात्मनो या दर्शनशक्तिस्तस्याः कदाचिदपि लोपो विद्यते साह्यविनाशिनीति न द्रष्टुर्द्वितीयमन्यद्दर्शनसाधनं चक्षुर्व्यापाररूपं दृश्यं वा तस्यामवस्थायामस्ति यतो दर्शनं स्यात्, यद्यपि दृश्यं रूपादिकं स्वरूपतस्तस्यामवस्थायामस्ति तथापि दृश्यता दर्शनयोग्यता तस्यामवस्थायां नास्तीति तेन रूपेणाभावाद्दृश्यं नास्तीत्युच्यते, तस्मात्साधनान्तरवैकल्यात्तस्यामवस्थायां न पश्यति न शक्तिवैकल्यात्, शक्तिस्तु न कदाचिदपि लुप्यत इति । एवमन्येषामपि वाक्यानां योजना । तथा ज्ञानशक्त्यपरिलोप एव ज्ञानापरिलोप उच्यते, ज्ञातिशब्दश्चात्रानुमानादिज्ञानपरः चक्षुरादिज्ञानानां स्वशब्दैरुक्तत्वात् ॥ * ॥ एवं 'विज्ञानं ब्रह्म' 'विज्ञानघन' इत्यादीनामपि शक्तिपरत्वं वेदितव्यम् । स्वयमेव श्रुत्या शक्तिपरत्वं व्याख्यातं 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती'ति भूतेन्द्रियनाशादात्मापि प्रमाणागोचरत्वमापन्नो विनष्टइव भवतीति । न तस्येतः प्रेतस्य मुक्तस्य संज्ञास्तीति । एवं याज्ञवल्क्येनोक्ते मैत्रेयी चोदयतिस्म 'अत्रैव भगवान्मामोहितवान् विज्ञानघन इति न चास्ति संज्ञेति विरुद्धाभिधानात्' इति । षष्ठाध्याये तु विनाशाविनाशविरोधश्चोदयिष्यत इति विवेकः । एवं चोदितो याज्ञवल्क्यः परिहारमाह 'न वा अरे अहंमोहं' 'परस्परविरुद्धं ब्रवीमि' 'अलं वा अरे इदं विज्ञानाय' अत्रात्मतत्त्वं सर्वास्ववस्थासु विज्ञानाय समर्थमित्यर्थस्तेन विज्ञानघनत्वाभिधानं सामर्थ्याभिप्रायमिति व्याख्यातं भवति । संभवति च शक्तस्यापि ज्ञानाभाव इति नास्ति विरोध इत्यभिप्रायः । अनया च श्रुत्या सर्वविज्ञानश्रुतयः शक्त्यभिप्राया व्याख्याताः ॥ * ॥ यदि शक्तिरस्ति ततस्तस्यामवस्थायां ततः केन ज्ञानानुत्पत्तिः ज्ञानसाधनानामिन्द्रियाणां ज्ञेयानां च विषयाणामभावात् । तदाह 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'इत्यादि, तदेतत्प्रागेव व्याख्यातम् । एवमर्थान्तरज्ञाने साधनाभावान्निराकृते सति आत्मानमेव मुक्तावस्थायां जानात्वित्याशङ्क्याह 'विज्ञातारमरे केन विजानीयात्'इति नह्यात्मापि विनासाधनेन ज्ञातुं शक्यते मनसा खल्वसौ संसारावस्थायां ज्ञायते नच मुक्तस्य मनःसंबन्धोऽस्ति अतः केनात्मानं जानात्विति व्यक्त एव मुक्तस्यात्मज्ञानस्याभावो ज्ञानशक्तिमात्रस्यावस्थानं श्रुत्या दर्शितं, तस्मान्निःसंबन्धो निरानन्दश्च मोक्षः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

मनुपपन्नं स्यात् अतो ज्ञानशक्त्यभिप्रायमेव व्याख्येयमिति भावः । उपपादितमर्थं निगमयति—**तस्मादिति** । ननु ज्ञानवाचकस्य दृष्ट्यादिशब्दस्य कथं शक्तिपरत्वमत अत—**एषा हीति** । वाक्यान्तरं योजयति—**तथेति** । 'न ज्ञातुर्ज्ञातेर्विपरिलोपो विद्यते' इत्यस्याप्येवं योजनेत्यर्थः । **नन्वस्तु** नाम ज्ञात्यादिशब्दानां शक्तिपरत्वं 'विज्ञानं ब्रह्मे'त्यादीनां तु कथमत आह—**एवमिति** । नन्वेवं श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इत आह—**स्वयमिति** । श्रुतिकृतव्याख्याने नायं दोष इति भवः । एतदेव दर्शयति—**विज्ञानेत्यादिना** । **षष्ठाध्याय इति** । उपनिषद एव षष्ठाध्याय इत्यर्थः । श्रुतिकृतं व्याख्यानमुपसंहरति—**तेनेति** । चेदयति—**यदीति** । परिहरति—**ज्ञानेति** । **एवमिति** । अर्थान्तरज्ञाने निराकृते सतीति संबन्धः । निगमयति—**तस्मादिति** ॥

आत्मनो ज्ञानानन्दस्वरूपत्वस्य खण्डनम् ।

**ननु** नात्मनोऽन्यद्विज्ञानमानन्दो वा किंत्वात्मैव ज्ञानमानन्दश्च 'विज्ञानं ब्रह्म' 'आनन्दं ब्रह्म' इति श्रुतेः, आत्मा च सुषुप्तितुरीययोरपि भवतीति कथं विज्ञानस्य चानन्दस्य चाभावः। नैतदेवं, यद्धि वस्त्वन्तरप्रकाशजननस्वभावं वस्तु यस्मिन्सति किमप्यर्थान्तरं प्रकाशत एव तल्लोके विज्ञानशब्देनोच्यते, नचात्मनि सति किंचिदन्यत्प्रकाशत एव, विद्यमानेऽपि तस्मिन्सुषुप्त्यवस्थायामर्थान्तरस्य कस्यचिदप्यदर्शनात् अतो न ज्ञानमात्मा ॥ * ॥ **ननु** प्रकाशजननस्वभावोऽपि सहकारिवैकल्यान्न जनयेत्। सत्यं न जनयति। यस्मिंस्तु सहकारिसंनिधाने तत्कृते वान्यस्मिन्नागन्तुके सति नियमेन प्रकाशत एवार्थान्तरं तज्ज्ञानशब्दवाच्यम्। तथा गीतिश्रवणप्रियालिङ्गनचन्द्रदर्शनमधुरास्वादसुरभिघ्राणादिजन्यमाह्लादमानन्दसुखशब्दावभिदधाते, नचैवंरूपत्वमात्मनोऽस्ति, यथा ह्यन्यसुखेषु सुखरूपं प्रत्यभिज्ञायते नैवमात्मनि प्रत्यभिजानीमो येनानन्दशब्दस्याभिधेयः स्यात् ॥ * ॥ यदि पुनरियदेवात्मरूपं प्रतीयते तस्यैव ज्ञानमिति चानन्दमिति च संज्ञेत्युच्यते न सा लौकिकी नापि वैदिकी। यदि परं वृद्ध्यादिवत्परिभाष्येत तदस्तु यथाकामम्। यत्तु 'विज्ञानं ब्रह्म' 'आनन्दं ब्रह्म' इति च सामानाधिकरण्यं तद्धर्ममात्रवचनत्वेन धर्मधर्मिणोरभेदान्नीलोत्पलादिवदुपपन्नम् ॥ * ॥ **नन्वा**नन्दशब्दा गुणमात्रनिष्ठा न नीलादिवद्गुणिनि वर्तन्ते, सत्यं, न बाहुल्येन वर्तन्ते, कदाचित्तु गुणमात्रवचनानामपि गुणिनि प्रयोगो भवति यथा शीतो मधुरो रसः स्निग्धो गुरुश्चेति रसशब्दो द्रव्ये प्रयुज्यते, अन्यथा शीतादिशब्दसामानाधिकरण्यायोगात्। किंच 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति मत्वर्थीयनिर्देशादात्मानन्दयोर्भेदोऽवगम्यते। तथा 'आनन्दं ब्रह्मणो विद्वान्' 'स एको ब्रह्मण आनन्दः' इति षष्ठ्यानन्दाद्ब्रह्म व्यतिरिच्यते ॥ * ॥ किंच न मे सांप्रतं किंचिदपि सुखं दुःखमेव तु सर्वात्मना ममेति सुखाभावे दुःखानुभवे चानुसंधीयमानस्यात्मनः कथमानन्दरूपता स्यात्। किंच स्वप्रकाशानन्दरूपमात्मानमभ्युपगच्छतामस्माकं चैतावदविवादं सुषुप्तितुल्या मुक्तिरिति। संसारानुवृत्त्यनुवृत्तिमात्रं भिद्यते अन्यत्सर्वं तुल्यम्। तथाच श्रुतिरपि—'ता एताः प्रजा अहरहर्ब्रह्मलोकं यन्ति। अहरहरागच्छन्ति' इति सुषुप्तिं ब्रह्मलोकशब्देन वदन्ती तुल्यत्वमेतयोर्दर्शयति, सुषुप्तिश्चास्माकमपि गोचरो नच तत्रानन्दानुभवोऽस्तीति व्यक्तमेतत्, तस्मान्निरानन्दो मोक्षः, दुःखपरिलोपाच्च पुरुषार्थत्वम् ॥ * ॥ सुखलोपादपुरुषार्थत्वमपीतिचेत्—'नैवमल्पं हि संसारे सुखं तदपि सूरयः ॥ बहुप्रयाससाध्यत्वाद्दुःखमेवानुजानते ॥ जन्ममृत्युजराव्याधिदुःखान्यनुदिनं नृणाम् ॥ स्वयमेव विनायत्नान्निपतन्ति सहस्रधा ॥ विहिताकरणान्नित्यं प्रतिषिद्धनिषेवणात् ॥ महदामुष्मिकं दुःखं यत्नैरेव गम्यते ॥ बहुदुःखपरिष्वक्तं यन्नाम स्वल्पकं सुखम् ॥ सुरापानादिसुखवद्वर्जनीयं विवेकिनाम् ॥ एवंभूतेऽपि संसारे ये रक्ताः सुखतृष्णया ॥ न तेषामधिकारोऽस्ति मुक्तिशास्त्रे कथंचन ॥ संसारादुद्विजन्ते ये दृष्टलोकपरावराः ॥ त एव खलु मुच्यन्ते न तु यः प्राकृतो जनः ॥ तेषामेवापवर्गाख्यः पुरुषार्थो महात्मनाम् ॥ तेषामेवाधिकारश्च मुक्तिशास्त्रे मनीषिणाम् ॥ तेनाभावात्मकत्वेऽपि मुक्तेर्नापुरुषार्थता ॥ सुखदुःखोपभोगो हि संसार इति शब्द्यते ॥ तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः ॥ श्रुतिरप्येतमेवाह भेदं संसारमोक्षयोः ॥ न ह वै सशरीरस्य प्रियाप्रियविहीनता ॥ अशरीरं

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

वेदान्तिमतेन समाधातुं शङ्कते—**नन्विति**। निराकरोति—**तदिति**। **यस्मिंस्त्विति**। यस्मिंस्तु सति प्रकाशत एवार्थान्तरं तत्तज्ज्ञानशब्दवाच्यं, ज्ञायतेऽनेनेत्यर्थकरणात्। नचात्मनि सति किंचिदन्यत्प्रकाशते अतो न ज्ञानरूपत्वमात्मन इत्यर्थः। एवमानन्दरूपत्वमपि न संभवतीत्याह—**तथेति**। सामानाधिकरण्यानुपपत्त्याऽभेदमाशङ्क्य निराकरोति—**यत्त्विति**। दृष्टान्तवैषम्यं शङ्कते—**नन्विति**। इतश्च भेद इत्याह—**किंचेति**। युक्त्यन्तरमाह—**किंचेति**। अस्तु नाम सुषुप्तितुल्यता ततः किमत आह—**नचेति**। **एतावतीति**। संसारे सुखदुःखसंस्पर्शः मोक्षे तु तदभाव इति।

वा वसन्तं स्पृशतो न प्रियाप्रिये ॥ आनन्दात्मकमात्मानं ये वदन्ति स्वयंप्रभम् ॥ तन्मतेऽपि च संसारान्मुक्तेरेतावती भिदा ॥ आत्मा ह्यानन्दरूपोऽसौ संसारेऽपि प्रकाशते ॥ तावानेव स मोक्षेऽपि नाधिक्यं तस्य किंचन ॥ अथ संसारवेलायामानन्दो न प्रकाशते ॥ नह्यप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः ॥ यद्यसौ न प्रकाशेत किंतर्ह्यन्यत्प्रकाशते ॥ आत्मस्वरूपमिति चेन्ननु चानन्द एव तत् ॥ तच्चेत्प्रकाशते नूनमानन्दोऽपि प्रकाशते ॥ तेन शब्दादिविषयजन्ययोः सुखदुःखयोः ॥ निवृत्तिरेव संसारादपवर्ग इतीर्यते ॥ ततश्च सुखलोपेन मुक्तेर्न पुरुषार्थता ॥ यद्यस्माकं भवेत्तर्हि तुल्यैषा भवतामपि ॥ सुखहानिमतस्तस्य भूयो दुःखविवर्जनात् ॥ मोक्षस्य पुरुषार्थत्वमावयोरुभयोः समम् ॥ सुखदुःखविहीनोऽतो मुक्तः स्वस्थोऽवतिष्ठते ॥' इति

मुक्तिस्वरूपकथनम्।

किमिदं स्वस्थ इति, ये ह्यागमापायिनो धर्मा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारास्तानपहाय यदस्य स्वं नैजं रूपं ज्ञानशक्तिसत्ताद्रव्यत्वादि तस्मिन्नवतिष्ठत इत्यर्थः। यदि तु संसारावस्थायामविद्यमानोऽप्यानन्दो मुक्तावस्थायां जन्यत इत्युच्यते ततो जनिमत्त्वादनित्यो मोक्षः स्यात्। केन चासावनुभाव्यः; नहि स्वप्रकाशत्वं कस्यचित्संभवतीत्युक्तम्। नच मनसानुभवः संभवतीति मुक्तस्य मनसोऽभावात् अमनस्कत्वश्रुतेरित्युक्तम्। अतएव 'नित्योऽप्यानन्दः संसारदशायामभिभूतत्वादननुभूतोपि मुक्तावभिभवे निवृत्ते मनसानुभूयते' इत्येतदपि निरस्तम् ॥ * ॥ किंच सुखविशिष्टात्मानुभवः पुरुषार्थो न सुखमात्रानुभवः, नच मुक्तावात्मानुभवः संभवति 'विज्ञातारमरे केन विजानीयात्'इति कण्ठेनैव श्रुत्या निषिद्धत्वात् 'अलं वा अरे इदं विज्ञानाय' इतिच श्रुत्या विज्ञानशब्दस्य शक्तिपरत्वं व्याचक्षाणया मुक्तौ शक्तिमात्रमवतिष्ठते न ज्ञानमिति व्यक्तमेवोक्तमिति श्रुतिविरुद्धं मुक्तस्य विज्ञानमशक्यमभ्युपगन्तुम्। नह्यस्याः श्रुतेः प्रियाप्रियास्पर्शश्रुतेश्च तत्त्वकथनं मुक्त्वा कथंचिदन्यपरत्वं संभवति। विज्ञानश्रुतयस्तु शक्तावेव विज्ञानोपचारं कुर्वन्ति प्ररोचनार्थतयेत्युपपन्नम्। एवमानन्दश्रुतयोऽपि पुरुषार्थत्वसामान्यात्सुखत्वोपचारेण प्ररोचनार्थतया प्रवृत्ताः। युक्तं चैतत् 'वचनयोर्विरोधेऽन्यतो निर्णयः'इति। विरोधश्चात्रानन्दप्रियाभाववचनयोः। नचाभाववचनं वैषयिकाभिप्रायम्, इतरत्तु स्वाभाविकाभिप्रायमिति शक्यं वक्तुम्। उभयत्रापि सामान्योपादानादत्यन्तसमानविषयत्वात्। अतः प्रमाणान्तरवशादानन्दवचनं दुःखाभावपरम्, इतरत्तु यथाश्रुतमिति न्याय्यम्। तस्मात्सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्, धर्माधर्मयोरुच्छेदश्चोत्पन्नानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेनात्मज्ञानेन च विरोधात्, उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्, विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्, असति शरीरारम्भे पूर्वशरीरनिपाते चाशरीरोऽवस्थितो मुक्तो भवति ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एवमनङ्गीकारे दोषमाह—**आत्मा हीति**। तस्मादेतदेव निष्कृष्टं मोक्षस्य रूपं वक्तव्यमित्याह—**तेनेति**। किमतो यद्येवमत आह—**ततश्चेति**। अथ सुखहानिमतोऽपि मोक्षस्य दुःखनिवृत्त्यैव पुरुषार्थत्वं तदस्माकमपि तुल्यमित्याह—**तस्येति** ॥

उत्तरमाह—**ये हीति**। ये धर्मा बुद्ध्यादिसंस्कारान्तास्तत्परित्यागेन स्वस्मिन्नवस्थानमित्यर्थः। इतोऽप्येवमित्याह—**किंचेति**। नन्वलं विज्ञानायेति ज्ञानसद्भावप्रतीतेर्न ज्ञानमवतिष्ठत इत्यनुपपन्नं तत्राह—**नहीति**। तत्कथनं ज्ञानाभावकथनम्। **पुरुषार्थत्वसामान्यादिति**। सुखदुःखाभावयोः पुरुषार्थत्वं समानमतो दुःखाभावे सुखत्वमुपचर्यत इत्यर्थः। वाक्यान्तरविरोधे *सत्येवमेव* कल्पयितुं युक्तमिति वृद्धसंमत्या द्रढयति—**उक्तमिति**। बहुकृत्वोपि पथ्यं वदितव्यमिति न्यायेनोक्तमेवार्थं पुनराह—**तस्मादिति**। उत्पाद्यानां धर्माणामित्यग्रिमेण संबन्धः। एतदर्थसंवादक वार्तिकमस्माभिः पूर्वमेव लिखितं तदत्रानुसंधेयम् ॥

आत्मज्ञानस्य क्रतुमोक्षोभयोपयोगित्वम्।

**नन्वात्मज्ञानं क्रत्वर्थम्।** सत्यम्। पुरुषार्थमपि च तत् संयोगभेदात्। यत्तावत् 'अविनाशी वा अरेऽयमात्मा' इत्यादिना शरीराद्व्यतिरिक्तनित्यात्मस्वरूपसद्भावज्ञानं तत्पारलौकिकफलकर्मानुष्ठानौपयिकत्वात्कर्मज्ञानवदेव सामर्थ्यतः क्रतुसंयोगात्क्रत्वर्थम्। यथाहि ज्योतिष्टोमादिवाक्याध्ययनं दृष्टेनैवानुष्ठानौपयिकं ज्ञानं जनयतीति तदर्थतयाध्ययनविधिना विधीयते तथा 'अविनाशी वा अरेयमात्मा'-इत्यादिवाक्यानामप्यध्ययनविधिरेव कर्मानुष्ठानोपयोग्यात्मज्ञानार्थतां विधत्ते। तद्यदि प्रमाणान्तरेणात्मनः शरीरादिविवेको नैकान्ततः सिद्ध्यति ततो दृढविवेकप्रतिपादकानामुपनिषद्वाक्यानां विस्पष्टमेव फलम्। यथोक्तम्—'इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या॥ दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन' इति। अथ त्वन्यतोऽपि सिद्ध्यति, ततो यथैवान्यथापि क्रतुज्ञानसंभवेऽध्ययनोपात्तवेदवाक्यावगतकर्मरूपाणामेव पुंसां कर्मस्वधिकारः तथैवाध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेवाधिकार इत्यध्ययनविधिबलादेव कल्प्यते॥ * ॥ यस्त्वात्मसद्भावप्रतिपादनोपक्रमे विधिसरूपं वाक्यम् 'आत्मा वा अरे द्रष्टव्यः' इत्यादि तद्वक्ष्यमाणस्यार्थस्यातिगहनत्वान्महोपयोगत्वाच्च कथं हि नामालस्यं हित्वा श्रद्धाविशेषेण वक्ष्यमाणमर्थं प्रतिपद्येतेत्येतावन्मात्रार्थम्। तस्मादेतज्ज्ञानं दृष्टोपयोगित्वात्क्रत्वर्थम्॥ * ॥ यानि पुनरितिकर्तव्यताविशेषयुक्तान्युपासनात्मकानि विधीयन्ते तेषां क्रतौ दृष्टोपयोगाभावाददृष्टफलत्वम्। अदृष्टं च फलं वाक्यशेषाद्द्विविधं अभ्युदयरूपं निःश्रेयसरूपं च, 'सर्वान्कामानाप्नोति' 'सोऽश्नुते सर्वान्कामान्' इत्याद्यभ्युदयफलम्। 'न स पुनरावर्तते' इत्यादि निःश्रेयसफलमिति विवेकः॥

आत्मनित्यत्वेनाधिकरणोपसंहारः।

यत्तु 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इत्यनेन ब्राह्मणेन भूतचैतन्यमुक्तमित्याशङ्क्यते तत्स्वयमेव ब्राह्मणेनात्रैव 'मा भगवन्मोहान्तं प्रापितवान्पूर्वमज-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

यदुक्तमात्मज्ञानेन विरोधादिति तत्राशङ्कते—**नन्विति**। पुरुषार्थत्वे हि निःश्रेयसफलतया विरोधः स्यादिति भावः। क्रत्वर्थत्वे तावत्संयोगं दर्शयति—**यत्तावदित्यादिना**। तस्मादेतज्ज्ञानं दृष्टोपयोगित्वात्क्रत्वर्थमित्यन्तेन। यानि पुनरित्यादिना विवेक इत्यन्तेन पुरुषार्थत्वप्रदर्शनम्। कर्मज्ञानवदिति दृष्टान्तार्थं विवृणोति—**यथाहीति**। दार्ष्टान्तिके योजयति—**तथेति**। नन्वनुमानादिनाप्यात्मज्ञानं सिद्ध्यति किमनेनेत्यत आह—**तद्यदीति**। अहं स्थूलोऽहं गच्छामीत्यादिशरीर एवाहंमानदर्शनात्प्रमाणान्तरप्रतिपादितोऽप्यात्मनः शरीरादिविवेको न दृढरूपेण हृदयेऽवतिष्ठत इति भावः। अत्र वार्तिककृत्संमतिं दर्शयति—**यथोक्तमिति**। नित्यात्मसत्तामात्रेणैव वेदप्रामाण्यसिद्धेस्तन्मात्रमिह भाष्यकारेण प्रतिपादितं दार्ढ्यार्थिभिस्तु वेदान्तविहितेष्वेव श्रवणमनननिदिध्यासनादिषु यतितव्यमिति श्लोकतात्पर्यार्थः। एतेन भाष्यकारस्याप्ययमेवाशयो लक्ष्यते। अत्र नित्यत्वमात्रप्रतिपादकवेदान्तवाक्योदाहरणात्, अकर्त्रभोक्त्रात्मप्रतिपादकवाक्यानुदाहरणाच्च। तदुदाहरणे हि कर्मशरणानां कर्मणि शैथिल्यापत्तेरिति। **नन्वात्मज्ञानं** स्वतन्त्रमेक निःश्रेयससाधनत्वेन विहितं कथं तस्य क्रत्वर्थत्वमत आह—**यस्त्विति**। उक्तंच—'आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं नच चोदितम्॥ कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते'। विवेकज्ञानस्य पारलौकिकफलेषु ज्योतिष्टोमादिषु प्रवृत्तिर्दृष्टमेव प्रयोजनमित्यर्थः। पुरुषार्थरूपमात्मज्ञानमुदाहरति—**यानि पुनरिति**। उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे वा दृष्टप्रयोजनाभावात् अदृष्टापेक्षायां श्रुत्याद्यभावेन च क्रत्वर्थत्वासंभवात् वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलतया पुरुषार्थत्वमेवेति समस्तार्थः। 'युक्तिभिः श्रुतिभिश्चात्मनित्यत्वे प्रतिपादिते॥ वाक्यान्तरोत्थितभ्रान्तेः शङ्केदानीं निरस्यते' इति॥

**यत्त्विति**। तत्स्वयमेव ब्राह्मणेन परिहार उक्त इति संबन्धः। उक्तंच—*'सदसन्नाश्यनाश्यात्मपरकीर्तनमूढया॥ चो-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

त्मज्ञ एव हि देहसंबन्धवैराग्यात् यथोक्तमोक्षोपायानुष्ठानेन मुक्तो भवतीति तदालम्बनोऽर्थवाद इति। **सदसदिति**। यथा सद्रूपस्यासद्रूपस्य च कीर्तनं तथा विनाशिनोऽविनाशिनश्च कीर्तनं तेन मूढया मैत्रेय्या चोदितः सिद्धान्तरूपमुत्तरमाहेत्यर्थः।

रामृतत्वमभिधायाधुना विनाशीत्यभिधाना'दिति पूर्वपक्षं चोद्याख्यमुक्त्वा सिद्धान्तपरिहार उक्तः। 'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा'इत्युक्त्वा कथं तर्हि विनाशवचनमित्याशङ्क्य 'मात्रासंसर्गस्त्वस्य भवती'त्युक्तम्। मात्राशब्देन भूतेन्द्रियाणि धर्माधर्मौ च विकारशब्दवाच्या उच्यन्ते ॥*॥ एतदुक्तं भवति—विज्ञानघनशब्देन ज्ञानशक्तिस्वभावस्यात्मनोऽभिधानम्, 'स ह्येतेभ्यो भूतेभ्यः समुत्थाय मुक्तो भूत्वा तान्येवानुविनश्यति' भूतविनाशात्सोऽपि विनष्ट इव भवतीति, भूतस्थो ह्यसौ स्वयं प्रत्यक्षेण गृह्यते परैश्च शरीरचेष्टालिङ्गकेनानुमानेन। मुक्तस्तु प्रमाणपथातिवर्तनाद्विनष्ट इव भवतीति विनश्यतीत्युच्यते, तदनेन प्रकारेण मात्राणामेव विनाश इत्युच्यते नात्मन इत्यविरोधः। तदुक्तम्—'अविनाशी स्वरूपेण पुरुषो या तु नाशिता ॥ मात्राणां साधिकाराणां भूतादीनामसंज्ञिता'इति। किमिदं भूतादीनामसंज्ञितेति। यदि तावत् 'न प्रेत्य संज्ञास्ती'त्यस्य व्याख्यानं, तदयुक्तम्। नहि 'न प्रेत्य संज्ञास्ती'त्यनेन भूतादीनामसंज्ञित्वमुच्यते। किंतर्ह्यात्मन एव मुक्तस्य संज्ञाभावोऽनेनोच्यते, तस्यैवोपायाभावेन 'तत्केन कं पश्ये'दित्यादिना 'विज्ञातारमरे केन विजानीया'दित्यन्तेन विज्ञानाभावोपपादनात्। सत्यम्। नेदमस्य व्याख्यानं, प्रकरणार्थोपसंहारस्त्वयं—यत एवं पूर्वोक्तेन न्यायेन भूतचैतन्यं न संभवति ब्राह्मणेनापि तथैवोक्तम्, तस्माद्भूतेन्द्रियाणामसंज्ञित्वमचैतन्यम्, अन्यस्तु तेभ्यो नित्यश्चेतनः तस्य स्वर्गगमनसंभवान्न 'स्वर्गं लोकं याती'त्यस्य प्रत्यक्षविरोधः ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दितः पूर्वपक्षोऽयमिति सिद्धान्तमब्रवीत्' ॥ उक्तमेवार्थं स्पष्टयति—**एतदिति**। अत्रैव सिद्धान्तश्रुतिव्याख्यानपरं वार्तिकमुदाहरति—**तदुक्तमिति**। अत्र पादत्रयेणैव सिद्धान्तश्रुतिव्याख्यानोपपत्तेश्चतुर्थपादानर्थक्यम्। तटस्थः शङ्कते—**किमिति**। प्रकरणार्थोपसंहारपरत्वमजानानस्य समाधानमाशङ्क्य निराकरोति—**यदीति**। स्वयं समाधत्ते—**सत्यमिति**। स्वर्गं लोकं यातीत्यस्य न प्रत्यक्षविरोध इति संबन्धः। अत्र हेतुः नित्यस्य स्वर्गगमनसंभवादिति। **नन्वस्तु** नाम नित्यत्वमात्मनस्तथापि मयैव कर्मकाले कृतस्यामुष्य कर्मणः फलमिदं मया भुज्यत इत्यपरामृशतः कर्मण्यनुरागाभावान्नानुष्ठानं स्यात्, तथा स्वोपयोगे परोपयोगे वा न कश्चिद्विशेषः स्यात्, यो ह्यस्य कर्मणः फलसाधनत्वं फलकालेऽनुसंधास्यामीति निरूपयति स कर्मानुतिष्ठति नान्यः। एवं निषिद्धमपि न वर्जयेत्। ततश्चानित्यपक्षवन्नित्यत्वपक्षेऽप्यात्मनः *कृतनाशाकृतागमौ फलत इति। यथाहुः—'नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नोऽपि सन्यदा ॥ न कर्मफलसंबन्धं फलकाले च बुध्यते ॥ मया यद्यत्कृतं कर्म तस्येदं भुज्यते फलम् ॥ शुभाशुभं मयैवेति तदा कोऽस्य रसो भवेत् ॥ अपरामृश्यमाने हि स्वकर्मप्रत्यये फले ॥ न विशेषो भवेत्कश्चित्स्वपरात्मोपभोगयोः ॥ कुर्वन्नप्यशुभं कर्म तेनैवं चिन्तयेन्नरः ॥ न स्मरिष्यामि भोगेऽहमिति नैतद्विवर्जयेत् ॥ तत्र नित्यत्वपक्षेऽपि कृतनाशाकृतागमौ ॥ फलतस्तुल्यरूपौ चेद्वृथा तत्प्रतिपादनम्' इति। नैष दोषः। भोगकालीनस्मृतेः कर्मणि प्रवृत्तौ निवृत्तौ वा न कश्चिदुपयोगः, भोगस्य प्रवृत्त्युत्तरकालीनत्वात्। यस्तु प्रवृत्त्यङ्गभूतः शास्त्रतः फलसाधनत्वपरामर्शः स प्रवृत्तेः पूर्वमस्त्येव। भोगकालेऽपि विदुषामस्त्येव परामर्शः। अविदुषां तु तदभावेऽपि न दोषः। यथाहुः—'नैष दोषो न भोगे हि स्मृतिर्न ह्युपयुज्यते ॥ न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥ तदङ्गं यः परामर्शस्तदस्तित्वं च मृग्यते ॥ प्राक्प्रवृत्तेश्च सोऽस्त्येव विदुषां शास्त्रतः स्फुटः ॥ भोगकालेऽपि शास्त्रज्ञा विमृशन्त्येव केचन ॥ तेषामेवाधिकारश्च माभूदविदुषां हि सः' इत्यात्मवादः ॥ इति पञ्चमाधिकरणम् ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**कृतनाशेति**। कर्तुः कृते कर्मणि नाशः भोक्तुश्चाकृते कर्मण्यागम इत्यर्थः। कर्मजन्यत्वं तत्तत्कर्मफलत्वमित्यर्थः।

शब्दानित्यताधिकरणम् ॥ ६ ॥

**कर्मैके तत्र दर्शनात् ॥ ६ ॥ [अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य ॥११॥ समं तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा ॥ १७ ॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥१८॥ सर्वत्र यौगपद्यात् ॥१९॥ संख्याभावात् ॥ २० ॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योग्यस्य ॥ २२ ॥ लिङ्गदर्शनाच्च ॥ २३ ॥]**

विध्यादिरूपो यः शब्दः सोऽनित्योऽथाविनश्वरः ॥ अनित्यो वर्णरूपत्वाद्वर्णे जन्मोपलम्भनात् ॥ ४९ ॥
अबाधितप्रत्यभिज्ञाबलाद्वर्णस्य नित्यता ॥ उच्चारणप्रयत्नेन व्यज्यतेऽसौ न जन्यते ॥ ५० ॥

शब्दस्यार्थप्रत्यायकत्वं स्वाभाविकमिति यदुक्तं तदाक्षिप्यते—शब्दस्यानित्यत्वात्, नह्यभिनवस्य शब्दस्य वृद्धव्यवहारपरम्परया स्वाभाविकं प्रत्यायकत्वं शक्यते गृहीतुम्, अगृहीतमपिचेत्स्वभावतश्चक्षुरादिवत्प्रत्याययेत् प्रथमश्रवणेऽपि प्रत्याययेत्, तस्मादनित्यत्वे शब्दस्य देवदत्तादिशब्दवत्पुरुषकृतमेव प्रत्यायकत्वमापद्यते । कथं पुनरनित्यत्वं शब्दस्य, प्रयत्नानभिव्यङ्ग्यत्वे सति तदनन्तरमुपलब्धेर्घटादिवत्तज्जन्यत्वमध्यवसीयते । अन्यथा किमिति तदनन्तरमेवोपलभ्यते न पूर्वं, उपलब्धस्य च द्रागेव तिरोभावाद्विनाशित्वमध्यवसीयते । नचासिद्धमनभिव्यङ्ग्यत्वम्, अभिव्यक्त्ययोगात् । सा हि प्रतिबन्धकनिरासेन वा संस्कारविशेषाधानेन वा । न तावत्प्रतिबन्धनिरासः—प्रतिबन्धकानुपलब्धेः । स्तिमिता वायवः श्रोत्रमाच्छाद्यावस्थिताः शब्दोपलब्धिं प्रतिबध्नन्ति, तेषु प्रयत्नोत्थापितैः कौष्ठ्यैर्वायुभिरुत्सारितेषूपलभ्यते शब्द इतिचेत्, एवंतर्हि सर्वे शब्दाः सर्वगतत्वात् श्रोत्रं प्राप्याव-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**कर्मैके तत्र दर्शनात्** ॥६॥ नन्वौत्पत्तिकसूत्रोपक्षिप्तशब्दार्थसंबन्धनित्यत्वेन वेदप्रामाण्यसिद्धेरसंगतः शब्दाधिकरणारम्भः । निष्प्रयोजनश्चायं विचारः । असत्यपि नित्यत्वे वेदप्रामाण्यसिद्धेः अनित्यादपि शब्दादनित्यत्ववादिनामिवार्थप्रतीतिसंभवात् । शब्दव्यवहारानादितया च पुरुषानुप्रवेशाभावात् । अनित्यत्वे संबन्धनित्यत्वं न सिध्यतीतिचेत् मासेत्सीत् । अनित्यत्वेऽपि तस्मिन्पुरुषस्वातन्त्र्याभावादेव प्रामाण्यसिद्धेरव्याहतत्वादित्याशङ्क्य संगतिं तावत्करोति—**शब्दस्येति** । कथमनित्यत्वे प्रत्यायकत्वहानिरत आह—**नहीति** । नहि क्षणिकस्य संबन्धग्रहणं संभवति तदनपेक्षायां च नेत्रादिवत्प्रथमश्रवणेऽपि प्रत्याययेत् । अतः शब्दस्यार्थप्रत्यायकत्वासंभवान्निर्निमित्तैव वेदादर्थप्रतीतिः स्यादिति भावः । **कथं** तर्हि लोके शब्दादर्थप्रतीतिः । निर्मूलैरपि विज्ञानैर्दृष्टार्थेषु गतिसंभवादिति ब्रूमः । शब्दैकसमधिगम्ये धर्मे तदनुपपत्तेः । व्यवहारानादित्वेनोपपत्तिरिति चेत् । न । शब्दस्यानित्यत्वे* तदनुपपत्तेः । तदिहाधिकरणे पदात्मकः शब्द उदाहरणं स किमनित्यः किंवा नित्य इति संदेहे पूर्वपक्षेऽनित्यत्वं प्रश्नपूर्वकमुपपादयति—**कथमिति** । **नन्वभिव्यक्तावपि** प्रयत्नानन्तर्योपपत्तेर्नैकान्ततोऽनित्यत्वसिद्धिरित्याशङ्कानिराकरणाय सत्यन्तम् । अयंच सूत्रार्थः—कर्मजन्यत्वमेके नैयायिकादयः शब्दस्य मन्यन्ते, कुतः तत्र दर्शनात् । तस्मिन्कर्मणि सति शब्ददर्शनात्, अतः कृतकत्वादनित्यः शब्दः । इत्यवगच्छामः । एतत्सूचितमनुमानं तूक्तमेव । अभिव्यक्त्यैवान्यथासिद्धिरितिचेत् । न । अभिव्यक्तेः प्राक्शब्दसद्भावे प्रमाणाभावात् । अस्थानादित्यनेन सूचितं हेत्वन्तरमाह—**उपलब्धस्येति** । उच्चारणानन्तरं मुहूर्तमप्यवस्थानाभावाद्विनष्टः शब्द इत्यवसीयत इत्यर्थः । किंच शब्दं कुरु शब्दं माकार्षीरित्यादिकरोतिशब्दव्यवहारादप्यनित्यः शब्दः तदिदमुक्तं **करोतिशब्दादिति** । हेतुगतविशेषणासिद्धिमाशङ्क्य निराकरोति—**नचेति** । शब्दसंस्कारपक्षे दूषणमाह—**शब्दस्येति** । नित्यत्वपक्षे सर्वगतोऽयं शब्दः तदयं संस्कृतः सर्वैः पुरुषैः श्रूयेते कृतकत्वेतु प्रादेशिकत्वान्नायं दोष इति भावः ।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

**तदनुपपत्तेरिति** । व्यवहारानादित्वानुपपत्तेरित्यर्थः । **ननु** धर्माधर्माय गृहीतो नभोभागः श्रोत्रं न सर्वमाकाशभागभेदाच्च

स्थिताः प्रतिबन्धकेषूत्सारितेषु युगपच्छ्रूयेरन् ॥ * ॥ अथ संस्काराधानं तत्रापि त्रैविध्यं—शब्दस्य वा संस्कारमादध्युः कौष्ठ्या वायवः श्रोत्रस्य वा उभयोर्वा । शब्दस्य चेत् तस्यैकत्वात्सर्वगतत्वादनवयवत्वेनावयवसंस्कारायोगात् स्रुघ्नस्थैर्वायुभिः संस्कृतः शब्दः पाटलिपुत्रेऽप्युपलभ्येत, तदिदमुक्तं—'तत्र सर्वैः प्रतीयेत'इत्यादिना । श्रोत्रसंस्कारपक्षेऽप्ययमेवदोषः ॥ * ॥ यदि काणादकापिलवैदिकमतेनाकाशमहंकारो दिग्वा श्रोत्रं तस्यैकत्वात्सर्वगतत्वादनवयवत्वाच्च सर्वपुंसामेकमेव श्रोत्रं स्यात्तच्चैकदेशस्थैरपि ध्वानाभिः संस्कृतमिति कः सर्वेषां शब्दोपलब्धिं वारयेत् । तदिदम्—'आकाशश्रोत्रपक्षेचे'त्यादिना 'श्रोत्रादेरियमेव दिगि'त्यन्तेन दर्शितम् । अस्मिंश्च पक्षे श्रोत्रस्य सर्वशब्दसाधरणत्वादेकशब्दोपलब्ध्यर्थमपि संस्कृतं श्रोत्रं प्रसङ्गात्सर्वान्शब्दान्घटार्थोन्मीलितमिव नेत्रं समानदेशस्थान्पटादीनवबोधयेत् । तदिदं—'सकृच्च संस्कृतं श्रोत्र'मित्यादिना दर्शितम् ॥ * ॥ अयंच दोषः पूर्वोपक्षिप्तेऽपि शब्दसंस्कारपक्षे दर्शयितव्यः—सर्वे हि शब्दाः श्रोत्रदेशेऽवस्थितास्तत्रैकस्मिन्संस्क्रियमाणे बलादन्येषामपि संस्कारः स्यादेव । नहि समानदेशानां समानेन्द्रियग्राह्याणां कस्यचित्संस्कारः कस्यचिन्नासंस्कार इति व्यवस्था संभवति घटादावदर्शनात्, तदिदमुक्तं—'एतदेव प्रसंक्तव्यम्'इत्यादिना ॥ * ॥ उभयसंस्कारपक्षे तूभयेऽपि दोषाः समुच्चित्य दर्शयितव्याः, तस्मान्न प्रयत्नाभिव्यङ्ग्यः शब्दः, तज्जन्यस्त्वसौ प्रादेशिकश्च, श्रोत्रं च कर्णशष्कुल्येव, तथा सति हि कैश्चिदेव कश्चिदेव शब्दः श्रूयत इत्युपपद्यते, अन्यथा श्रोत्रव्यवस्था शब्दव्यवस्था चोभयमपि न स्यात् । किंच नानादेशस्थैश्च वक्तृभिरुच्चारितः शब्दो युगपन्नानादेशेषूपलभ्यते 'तदेकस्य नित्यस्यानुपपन्न'मितिशा०भाष्यम् । तत्र नि-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**ननु** शब्दैकदेशो ध्वनिभिः संस्कृतः स दूरवर्तिनां श्रोत्रेणाप्राप्तः कथं ते शृणुयुरत आह—**अनवयवत्वेनेति** । अत्र वार्तिककृत्संमतिमाह—**तदिदमिति** । 'शब्दः संस्क्रियते यदि ॥ निर्भागस्य विभोर्न स्यादेकदेशेऽपि संस्क्रिया'इति श्लोकशेषः । **नन्वाधारद्वारक** एवास्य ध्वनिभिः संस्कारः, अतो य एवाधारः संस्कृतस्तत्समीपगतैरेव पुरुषैर्गृह्यते न दूरस्थैः । मैवम् । व्योमात्मादिवच्छब्दस्य निराधारत्वात् । आकाश एवाधार इति चेत् । न । तस्य निरवयत्वेन प्रदेशसंस्कारासंभवात् । श्रोत्रसंस्कारपक्षेऽप्युक्तमेव दोषमतिदिशति—**श्रोत्रेति** । काणादमते आकाशं श्रोत्रं । सांख्यमतेऽहंकारः । मीमांसकमते दिक् श्रोत्रम् । तत्राप्येकत्वादिकं समानम् । अतः सर्वेषां शब्दोपलब्धिः स्यादित्यर्थः । अनित्यत्वादिमते तु कर्णशकुल्या एव श्रोत्रत्वान्नायं दोष इति भावः । अत्रापि संमतिमाह—**तदिदमिति** । 'विभुत्वात्प्राप्तितुल्यता ॥ दूरभावेऽपि शब्दानामिति ज्ञानं प्रसज्यते ॥ श्रोत्रस्य चैवमेकत्वं सर्वप्राणभृतां भवेत् ॥ तेनैकश्रुतिवेलायां शृणुयुः सर्व एव ते ॥ *तस्यानवयवत्वाच्च न धर्माधर्मसंस्कृतः ॥ नभोभागो भवेच्छ्रोत्रं व्यवस्थाद्वयसिद्धये ॥ वैशेषिकोक्तसिद्धान्तेष्वेवं तावत्प्रसज्यते । कापिलेपि विभुत्वेन श्रोत्रादेरियमेव दिक्' इति ग्रन्थशेषः । दूषणान्तरमपि श्रोत्रसंस्कारपक्षे दर्शयति—**अस्मिंश्चेति** । अत्रापि संमतिमाह—**तदिदमिति** । 'सर्वशब्दान्प्रबोधयेत् ॥ घटायोन्मीलितं चक्षुः पटं नहि न बुध्यते' इति श्लोकशेषः दूषणमेव दर्शयति—**सर्वेहीति** । अत्रापि संमतिमाह—**तदिदमिति** । *'विषयस्यापि संस्कृतौ ॥ समानदेशवृत्तित्वात्संस्कारो ह्यविशेषतः ॥ स्थिरवायुपनीत्या च संस्कारोऽस्य भवेन्न चेत् ॥ *दृष्टं चावरणापाये तद्देशान्योपलम्भनम् ॥ संस्कृतासंस्कृतत्वे च शब्दैकत्वे न सिध्यतः ॥*एकावस्थाभ्युपेतौ वा सर्वैर्ज्ञायेत वा नवा ॥'इत्यादिशब्दगृहीतो ग्रन्थः । पूर्वपक्षमुपसंहरति—**तस्मादिति** । यस्मान्नित्यत्वे विभुत्वे च शब्दस्य क्वचिदेव कस्यचिच्छ्रवणमिति व्यवस्था नावकल्पेत तस्मादित्यर्थः । अत्र 'सत्वान्तरेयौगपद्या'दिति हेत्वन्तराभिधानार्थं चतुर्थं पूर्वपक्षसूत्रं तद्व्याख्यानार्थं भाष्यं 'नानादेशेष्वि'त्यादि । तदनुसंधत्ते—**किंचेत्यादिना** । तदनुसंधानं च पूर्वपक्षौपयिकार्थविशेषप्रदर्शनार्थम् । अत्र भाष्यपुस्तकेषु 'नानादेशेषु च युगपच्छब्दमुपलभामहे'इति पाठः । ग्रन्थकारस्तु 'नानादेशैश्च वक्तृभि'रित्यादिना सोपस्करं पठितवानित्यदोषः । नानादेशेषु सत्वान्तरे यौगपद्यात् युगपदुपलभ्यमानत्वात् नह्यकृतक*एको युगपन्नानादेशेषूपलब्धुं शक्यते, कृतकत्वे तु कारणा

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

संस्कारव्यवस्था कस्यचिच्छ्रवणं न सर्वेषामिति च व्यवस्था सिद्ध्यत्यत आह—**तस्येति** । **विषयस्यापीति** । श्रोत्रविषयस्य शब्दस्येत्यर्थः । **दृष्टं चेति**। अदृष्टरूपे संस्कारस्यापि काचिद्व्यवस्था, स्थिरत्वायपनयनरूपे तु संस्कारतास्त्येकरूपत्वात्तेन व्यवस्थासिद्धिरित्यर्थः । **शब्दैकत्व इति** । स्यादपि शब्दभेदे कथंचित्संस्कारव्यवस्था नत्वेकस्मिन् शब्दे सा संभवति विरुद्धत्वादि

त्यस्यानुपपन्नमिति प्रतिज्ञा, एकस्येति हेतुः, नित्यो ह्यसावेकः स्यात् एकस्यानुपपन्नं नानादेशेपूपलम्भनमिति ॥ * ॥ ननु नावश्यत्वं नित्यत्वे सत्येकत्वं भवति, अनेकान्येव हि गकारादीनि नित्यानि भवन्तीत्यत आह--'असति विशेषे नित्यस्य नानेकत्वम्'(शा.भा.)इति। एतदुक्तं भवति---प्रत्यभिज्ञाख्यविशेषप्रत्ययबलेन ह्यस्तनाद्यतनगकारयोरेकत्वावगमान्नित्यत्वमाश्रीयते। अस्ति चासावविशेषप्रत्ययो युगपन्नानावक्तृभिरुच्चारितेऽपि गकारे नहि तत्रापि प्रत्ययविशेषोऽस्ति, असति च विशेषे नित्यस्य नानेकत्वं संभवति। अनेकत्वे हि प्रत्यभिज्ञाया अप्रामाण्यमस्माकमिव भवतोऽपि स्यात् तदप्रामाण्ये च नित्यत्वानुपपत्तिः, तस्मान्नित्यत्वे सत्येकत्वमङ्गीकर्तव्यं, एकस्य चानुपपन्नं नानादेशोपलम्भनमिति ॥ * ॥ वार्तिकेपि---'यौगपद्योपलम्भाद्वा भेदो भेदाच्च कार्यते'ति द्वयमुपक्षिप्य यथायौगपद्योपलम्भाद्भेदो भवति तथा दर्शितम्---'अविभुत्वे हि युगप'दित्यादिना 'स्फुटेऽन्यत्वेऽवकल्पते'इत्यन्तेन। यथाच भेदात्कार्यता भवति नाकार्यस्य नित्यस्य भेदोऽवकल्पते तथा दर्शितम्---'नित्यत्वे त्वेकबुद्धिः स्या'दिति। नहि नित्यत्ववादिना प्रत्यभिज्ञाया भ्रान्तित्वमिष्यते। तथाच वक्ष्यते---'अपि चैकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः स्युर्नतु शब्दः'इति। नहि तदप्रामाण्ये नित्यत्वं सिद्ध्यति प्रमाणान्तराभावात्, अतो नित्यत्वे सत्येकत्वं स्यात्तच्च नानादेशोपलम्भेन विरुध्यत इति, ततश्च यौगपद्योपलम्भाद्भेदो भेदे च प्रत्यभिज्ञाया अप्रामाण्यं तदप्रामाण्ये च नित्यत्वाभावात्कार्यत्वं---तदेतदानुपूर्व्यं स्वतश्चसिद्धम्। दृढे चानित्यत्वे दीपवत्सादृश्यात्प्रत्यभिज्ञा भवति तस्मादनित्यः शब्द इति प्राप्ते ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

यतत्वेन सर्वमुपपद्यत इति सूत्रार्थः। भाष्यं व्याचेष्टे---**तत्रेति**। अग्रिमं भाष्यमवतारयति---**नन्विति**। भाष्यार्थमुपसंहरति---**तस्मादिति**। उपपादितमर्थं वार्तिकोक्तं करोति---**वार्तिकेऽपीति**। **अविभुत्वे हीति**। तत्रैवं वार्तिकग्रन्थः---*'अविभुत्वे हि युगपन्नैको नानावगम्यते॥ कार्त्स्न्येन चावगम्यत्वादेकदेशो घटादिवत्॥ शब्दस्याविभुता तस्मादन्यतास्य मुखान्तरे॥ *एकः सन्नेकदेशस्थो यदैकत्र प्रयुज्यते॥ तदा वक्त्रान्तरे न स्यादेकवक्तृमुखादिवत्॥ *कार्यत्वे स्यात्क्रियाभेदात्फलभेदः प्रतिक्रियम्॥ *तेनैकबुद्धिः सादृश्यात्स्फुटेऽन्यत्वेऽवकल्पते'इति। **नित्यत्व इति**। 'न किंचिद्भ्रान्तिकारणम्[1]। कामं देशा इति न्यायात्त्वैकत्वं विरुध्यते'इति श्लोकशेषः। श्लोकार्थमाह---**नहीत्यादिना**। भाष्यकारोक्तं न्यायं विवृणोति---**तथेति**। अपिचेत्यादि नतुशब्द इत्यन्तो भाष्यग्रन्थः, तस्यार्थमाह---**नहीत्यादिना**। अस्त्वेवं कथमेतावता कार्यत्वसिद्धिरत आह---**ततश्चेति**। अनित्यत्ववादिशास्त्रसिद्धमित्यर्थः। पूर्वपक्षं निगमयति---**तस्मादिति**। अत्रान्यदपि पूर्वपक्षसूत्रद्वयम्। तद्यथा---'प्रकृतिविकृत्योश्च' अत्र दर्शनादिति शेषः। दध्यत्र इत्यत्र इकारः प्रकृतिर्यकारो विकृतिः। नच नित्यत्वे प्रकृतिविकृतिभावः संभवति। यद्धि विक्रियते तदनित्यं अतः प्रकृतिविकृतिभावदर्शनादनित्यः शब्द इति। तथा 'वृद्धिश्च कर्तृभूम्नास्य'। कर्तॄणां भूम्ना बहुत्वेन वृद्धिः महत्त्वमस्य शब्दस्योपलभ्यत इति शेषः। बहुषु शब्दमुच्चारयत्सु महाञ्शब्दः श्रूयते स यद्यभिव्यज्यते तदा बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत बह्वल्पप्रदीपाभिव्यक्तघटादिवत्, कृतकत्वे तूपचितावयवत्वेन सर्वमुपपद्यते तस्मात्कृतकः शब्द इति। उक्तंच---'हेतुवृद्ध्यनुसारित्वात्कार्यतास्य घटादिवत्॥ नहि दीपसहस्रेऽपि व्यञ्जके वर्धते घटः॥ षड्भिः सूत्रैः पूर्वपक्षस्तावद्भिस्तन्निराकृतिः॥ पुनरन्यैस्तु सिद्धान्तः षड्भिरित्येष संग्रहः'। सिद्धान्तं प्रतिजानीते---**इति प्राप्त इति**॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

त्यर्थः। ततः किमित्यत आह---**एकेति**। नन्वविभुत्वमेवासिद्धं तत्राह---**अविभुत्वे हीति**। गगनं हि तत्तदुपाधिपरिच्छिन्नमेव प्रदेशेषु गृह्यते न कार्त्स्न्येन सामान्यस्यापीदमेव कार्त्स्न्यार्थः सर्वव्यक्त्यनुरागः। नचैकस्यैकत्रावगतिः एकैकव्यक्त्यनुरक्तप्रतीतेः अतो युक्तं तयोर्विभुत्वं शब्दस्यैकैकत्र कार्त्स्न्येनावगमात् घटवदविभुत्वमिति। तस्माद्युगपदनेकवक्त्रुच्चरितस्य गकारस्य नानात्वम्। अविभुत्वे सति युगपन्नानादेशावगमात् घटवत् एकत्वेवाननानादेशेवगमः स्यादित्याह---**एक इति**। एकत्वे हि एकेन प्रयुज्यमानस्तन्मुखेऽवस्थितो मुखान्तरे न स्यात् यथा तदेव मुखं मुखान्तरकृतकत्वे उपपन्नो नानादेशोपलम्भ इत्याह---**कार्यत्व इति**। कथं तर्हि प्रत्यभिज्ञात आह---**तेनेति**। तिलादाविवेत्यभिप्रायः। यदि चावश्यं

---

१ न कश्चिद्भ्राति कारणम्.

शब्दनित्यत्वोपपादनम् ।

अभिधीयते—'प्रयत्नानन्तरं दृष्टेर्नैकान्त्यात्कार्यता ध्वनेः ॥ तदभिव्यङ्ग्यपक्षेऽपि युज्यते तत्र दर्शनम्' ॥ यत्तु कथमभिव्यङ्ग्यत्वमिति, श्रोत्रसंस्कारेणेति ब्रूमः । यत्त्वाकाशस्याहंकारस्य वा श्रोत्रत्वे तत्संस्कारत्वे च सर्वत्र पुंसामुपलब्धिः स्यादित्युक्तं तत्र ब्रूमः—यदि तयोः श्रोत्रत्वे भवेदयं दोषः । तत्कर्णशष्कुलीभवतु श्रोत्रं साच प्रतिपुरुषं भिन्नेति नातिप्रसङ्गः । यद्यपि चाकाशमेव श्रोत्रं तत्तु न साक्षात्संस्क्रियते किंत्वधिष्ठानद्वारेण, ततश्च यद्यपि श्रोत्रं सर्वेषामेकं तथाप्यधिष्ठानानां भिन्नत्वात्संस्कारव्यवस्थया श्रवणस्य व्यवस्था भविष्यति ॥ * ॥ नन्वेकत्वेसतीन्द्रियस्य यद्यप्यधिष्ठानानि भिन्नानि तथाप्येकेनाप्यधिष्ठानेन संस्कृतेनेन्द्रियस्य संस्कृतत्वात्सर्वपुंसामिन्द्रियं संस्कृतमिति सर्वेषामुपलब्धिः स्यादेव । तदुक्तं—'नन्वेकस्मिन्नधिष्ठाने लब्धसंस्कारमिन्द्रियम् ॥ बोधकं सर्वदेहेषु स्यादेकेन्द्रियवादिनः' इति । सर्वदेहवर्तिनां पुंसामित्यर्थः । अत्रोत्तरम्—'पुंसां देहप्रदेशेषु विज्ञानोत्पत्तिरिष्यते ॥ तेन प्रधानवैदेश्याद्विगुणा सा तु संस्कृतिः' इति । अयमर्थः—स्वशरीर एव भोगायतने सर्वपुंसामपि ज्ञानमुत्पद्यते नान्यत्र, शब्दज्ञानाङ्गं चायमधिष्ठानसंस्कारः प्रधानसमानदेशत्वं चाङ्गानां गुणस्तेन देहान्तरवर्तिनः पुरुषस्य यत्स्वदेहे निष्पादयितव्यं विज्ञानं तस्य तद्देहगत एव संस्कारो निष्पादको भवति न देहान्तरगतः । सहि तत्प्रधानभूतेन ज्ञानेन विदेशत्वाद्विगुणः ॥ * ॥ ननु संस्कार्यस्यैकत्वात्तद्द्वारत्वाच्च संस्काराङ्गभावस्य देशभेदोऽकिंचित्कर एव, यथा बर्हिरेकत्वात्तत्संस्काराणामातिथ्याकालानामप्युपसदग्नीषोमीयाङ्गत्वं न विहन्यते तद्वदत्रापि स्यात् । न । अदर्शनात् । नह्येकस्मिन्नधिष्ठाने सर्वेषां ज्ञानमुपलभ्यते, अतः साधारणमपीन्द्रियं विज्ञानसमानदेशसंस्कारसचिवमेव ज्ञानमुत्पादयति नान्यथेति दर्शनबलादध्यवसीयते ततो नातिप्रसङ्गः ॥ * ॥ नचावश्यमेकमेवेन्द्रियं—यद्यप्याकाशमेकमनवयवं च तथापि तस्य प्रादेशिकैर्घटादिभिर्ये संयोगास्तेऽपि प्रादेशिकास्तत्र कर्णशष्कुलीसंयोगानां प्रतिपुरुषं भिन्नत्वात्तदवच्छिन्नस्य चाकाशस्य श्रोत्रत्वात्सत्यपि स्वरूपैकत्वेऽवच्छिन्नरूपाणां श्रोत्राणां भेदाद्व्यवस्थासिद्धिः । एवमहंकारभागे दिग्भागे वा श्रोत्रे द्रष्टव्यम् ॥ * ॥ यत्तु 'सकृच्च संस्कृतं श्रोत्रं सर्वशब्दान्प्रकाशयेदि'त्युक्तं, तत्रोच्यते—ध्वनयो हि ताल्वादिस्थानविशेषसंपर्काद्विजातीया विलक्षणसामर्थ्यान्निष्पद्यन्ते, ततश्च कश्चिदेव ध्वनिः कस्यचिच्छब्दस्यानुगुणं संस्कारमाधत्ते न सर्वसाधारणमित्युपलब्धिव्यवस्था कल्प्यते शब्दसंस्कारपक्षेऽपि कश्चिदेव ध्वनिः कंचिच्छब्दं संस्करोति न सर्वः सर्वमिति युक्ततरैव व्यवस्था । दृष्टा च समानेन्द्रियग्राह्याणा-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

अत्र पूर्वपक्षनिराकरणसूत्रषट्कमध्ये 'समं तु तत्र दर्शन'मित्याद्यसूत्रं तदभिप्रायेणाह—**प्रयत्नानन्तरमिति** । वक्ष्यमाणयुक्तिकलापेन शब्दनित्यत्वे सिद्धे प्रयत्नानन्तरीयकत्वस्याभिव्यञ्जकत्वेनान्यथासिद्धतया कृतकत्वस्यायोजकत्वमित्यभिप्रायः । तुशब्दः पक्षव्यावृत्त्यर्थः । तत्र प्रयत्नाख्ये कर्मणि सति यत् शब्दस्य दर्शनं तदुत्पत्तिपक्षेऽभिव्यक्तिपक्षे च समं तुल्यमिति सूत्रार्थः । उक्तं दूषणमनूद्य परिहरति—**यत्त्वित्यादिना** । उक्तेऽर्थे वार्तिककृत्संमतिमाह—**तदुक्तमिति** । सर्वदेहेष्वितिपदं व्याचष्टे—**सर्वेति** । अत्रोत्तरवार्तिकं पठति—**अत्रेति** । वार्तिकं व्याचष्टे—**अयमर्थ इति** । प्रधानसमानदेशत्वस्य व्यभिचारं शङ्कते—**नन्विति** । परिहरति—**नेति** । लोके कर्मोपलक्षणमिति न्यायेनात्र दर्शनबलादेवमङ्गीक्रियत इति भावः । **नन्वा**काशमिन्द्रियं तच्चैकमेवेति तत्राह—**नहीति** । अस्त्वेवं प्रकृते किमायातमत आह—**ततश्चेति** । नह्याकाशमात्रं श्रोत्रं, किं तर्हि धर्माधर्मोपगृहीतविशिष्टशक्त्युपेतकर्णशष्कुल्यवच्छिन्नं, अतो यस्यैतादृशी कर्णशष्कुली नास्ति धर्माधर्मलोपेन वाताद्युपहतत्वात् तस्य सदाप्याकाशं तदनवच्छिन्नत्वादयोग्यमिति स बधिरो भविष्यतीत्यपि व्यवस्था सिध्यतीति भावः । **ध्वनयो हीति** । शब्दोपलब्धिव्यवस्थां दृष्ट्वा तद्बलेन प्रतिवर्णसंस्कारहेतुभूता ध्वनिजातिभेदाः कल्प्यन्ते, तत्संयोग एव श्रोत्रस्य संस्कारो न स्थिरवाय्वपनयो येनातिप्रसङ्गः स्यादिति भावः । अथ ताल्वादिसंयोगविभाग एव शब्दस्य कारणं न वायवीय इत्युच्येत तथापि तस्य विजातीयत्वाद्विलक्षणसामर्थ्याच्च व्यवस्थेति भावः । शब्दसंस्कारपक्षोक्तदूषणपरिहारोपि ध्वनिजातिभेदाश्रयणेन कर्तव्य इत्याह—**शब्देति** । ननु विजातीयानामेव

भ्यभिव्यञ्जकव्यवस्था—'सावित्रं हि तेजो घटादीनामेवाभिव्यञ्जकं न नक्षत्राणां, निम्बत्वक्

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रदीपादीनां घटाद्यभिव्यञ्जकत्वं दृष्टमत आह—**दृष्टेति** । एतदेव विवृणोति—**सावित्रमिति** । अस्मिन्नेव पक्षे दूषणान्तरं परिहरति—**नचेति** । अत्र वैशेषिकादयः 'संयोगाद्वा विभागाद्वा शब्दाद्वा शब्दनिष्पत्ति'रित्याहुः । तथाहि प्रथमं भेरीदण्डसंयोगात् वेणुदलविभागाद्वा शब्दो निष्पद्यते । सच वीचीसंतानवत्समानजातीयान्शब्दान्सर्वतस्तनोति । तेषु च संतन्यमानेषु स्वदेशप्राप्तः शब्दः श्रोत्रेण गृह्यत इति । एतच्चायुक्तं लोकविरोधात् । लोको हि एकमेव शब्दं परस्मै श्रावयितुं विवक्षति नतु शब्दान्तरं श्रावयितुं शब्दान्तरं विवक्षति तेनेयं विवक्षानुसारिणी शब्दश्रुतिः, शब्दसन्तानपक्षे त्वन्य एव शब्दो वक्त्रा विवक्ष्यते श्रोत्रा चान्यः श्रूयत इति न विवक्षानुसारिणी शब्दश्रुतिः स्यात् । अदृष्टचरशब्दानेकत्वकल्पने गौरवं च स्यात् । आरम्भकत्वं तु न केवलमदृष्टं प्रमाणविरुद्धं च निष्क्रियत्वात् । देशान्तरकार्यारम्भश्च सुतराममूर्तस्याभिघातमकुर्वतोऽनुपपन्न एव । या चेयमारम्भणीयं प्रति नातिदूरमारभत इति देशेयत्ता नच तस्याः किंचिन्निमित्तमस्ति अन्तिमोऽपि शब्दः शब्दान्तरमारभेतैवाविशेषात् । सदृशं सजातीयं वा करोतीतयेतदपि न दृष्टचरम् । यत्तु वीचीसन्तानवदित्युक्तं तदनुपपन्नं, तत्र सक्रियत्वादभिघातकरणाद्वेगवत्त्वाच्च यथाक्रममारम्भोपपत्तेः । यथाहुः—'वेगवत्सक्रियत्वाभ्यां तरङ्गाणां च युज्यते ॥ कार्यदेशान्तरारम्भो यावद्वेगं च तत्क्रिया'इति । देशान्तरे कार्यारम्भो यावद्वेगं चेत्युपपन्नमित्यर्थः । प्रयोगश्च—शब्दो न शब्दारम्भकः शब्दत्वादन्त्यशब्दवत् । एवं संयोगविभागावपि न शब्दारम्भकौ संयोगविभागत्वात् ताल्वादिसंयोगविभागवदिति । अतो भाष्यकारोक्त एव पक्षः साधीयान् । यदाह भाष्यकारः—'अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान्संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिष्ठन्ते तेन वायोरप्रत्यक्षत्वात्संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु अतो न दोषः । अतएवानुवातं दूरादुपलभ्यते शब्दो न प्रतिवातम्'इति । अभिघातेन हीत्यादिना यदुक्तं तत्प्रत्यक्षसिद्धं न कल्पनीयम् । स च वायुः शब्दविशेषाभिव्यक्तौ ताल्वादिस्थानविशेषसंयोगमनुरुध्यते स्थानविशेषवशेन शब्दविशेषोपलम्भात् । यावद्वेगमभिप्रतिष्ठन्त इत्येतदपि वेगवत्त्वादेव वायूनां शरादिवत्क्लृप्तमेव । यदपि स्तिमितानि वाय्वन्तराणीत्याद्युक्तं तदपि सर्वं क्लृप्तमेवेति । ननु स्तैमित्यं स्थिरत्वमेव नच तद्वायोः संभवति सदागतित्वात् । सत्यम् । सूक्ष्मत्वात्पदार्थान्तरानचालयन् स्थिरवद्भवतीति स्थिराभिधानम् । अत्र वार्तिककारैर्ध्वनिजन्यः संस्कार एव श्रोत्रमित्यादिभर्तृमित्रमतम् ।—'इममेव च संस्कारं शब्दग्रहणकारणम् । केचित्तु पण्डितंमन्याः श्रोत्रमित्यभिमन्यते ॥'इत्यादिना महता प्रबन्धेन दूषयित्वा 'श्रोत्रमाकाशदेशं च भौतिकेन्द्रियवादिनः'इत्यादिना तन्त्रान्तरविरोधं च प्रदर्श्य *'यदि चावश्यकर्तव्यस्तार्किकोक्तिविपर्ययः ॥ ततो वेदानुसारेण कार्या दिक्श्रोत्रता मतिः ॥ दिशः श्रोत्रमिति ह्येतत्प्रलयेष्वभिधीयते ॥ तच्च प्रकृतिगामित्ववचनं चक्षुरादिवत् ॥ दिक्च सर्वगता चैका यावद्व्योमव्यवस्थिता ॥ कर्णच्छिद्रपरिच्छिन्ना श्रोत्रमाकाशदेशवत् ॥ यावांश्च कणभुङ्न्यायो नभोभागप्रकल्पने ॥ दिग्भागेषु समस्तोसावागमात्तु विशिष्यते'इत्याद्युक्तं तत्तत्रैवावगन्तव्यम् । अत्र ग्रन्थकारेणानुक्तः परिहारार्थसूत्रद्वयार्थ उच्यते—तत्र *अस्थानादित्येतस्य परिहारसूत्रम् 'सतः परमदर्शनं विषयानागमा'दिति । यत्परं कारणमनित्यत्वे कथितं अस्थानादिति, तत्र सतो विद्यमानस्यैव शब्दस्य अदर्शनं परं नत्वभावः । कुतः । विषयानागमात् विषयं शब्दं प्रति अनागमात् । उच्चारयितृमुखोद्गतवायवीयसंयोगविभागानां स्तिमितसमीरणापसारणेन शब्दाभिव्यञ्जकानामभावात् । सतोऽपि शब्दस्याग्रहणं नतु स्वरूपाभाव इति सूत्रार्थः । वार्तिककारैस्त्वस्थानादित्यस्य हेतोरनैकान्तिकत्वप्रदर्शनार्थत्वेनैतत्सूत्रं व्याख्यातम् । यथाहुः—'कूपपूरणयत्नेन खं तिरोधीयते यदा ॥ अस्थानादित्ययं हेतुस्तदा नैकान्तिको भवेत् ॥ *आकाशधीप्रबन्धो हि तदा तस्मिन्न तिष्ठति ॥ तिरोहितानभिव्यक्तेः शब्दबुद्धिप्रबन्धवत्' ॥ नन्वप्रत्यक्षस्याकाशस्य किमिदं तिरोधानं नाम । नाप्रत्यक्षमाकाशमिति ब्रूमः । अपरोक्षावभासात् । अप्रत्यक्षस्य प्रमाणान्तरासंभवेनासिद्ध्यापत्तेश्च । शब्दलिङ्गकमनुमानमेव प्रमाणमिति चेत् । न । गुणत्वाभावेन गुण्यनुमापकत्वासंभवात् । गुणत्वे वा वायुगुणत्वात्प्रसिद्धस्य गुणिनोऽनुमानम् । वायौ हि श्रोत्रं प्राप्ते शब्द उपलभ्यते यथा चम्पकद्रव्ये घ्राणसंनिकृष्टे गृह्यमाणस्य गन्धस्य तद्गुणत्वम् । यद्वा वायुरेव ताल्वादिस्थानसंयोगात्तत्तच्छब्दगुणको निष्पद्यते तस्मिंश्च श्रोत्रं प्राप्ते संयुक्तसमवायसंनिकर्षेण श्रोत्रेण शब्दो गृह्यते । अनित्यवायुधर्मत्वे शब्दे कथं नित्यतेति चेत् गोत्वशुक्लत्वादिगुणवच्चैतदिति ब्रूमः । *नीरूपस्यापि

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

तन्त्रान्तरविपरीतमेव वक्तव्यं तर्ह्येव वक्तव्यमित्याह—**यदीति** । वेदानुसारमेव दर्शयति । **दिश इति** । अभिप्रायैषे हि संज्ञप्यमानस्य पशोरङ्गानां प्रलये विधीयमाने दिशः श्रोत्रमिति वचनेन श्रोत्रस्य दिक्षु प्रलयोऽभिहितः तत्र यथा 'सूर्यमस्य चक्षुर्गच्छता'दिति तेजोरूपे सूर्ये चक्षुर्विलयेन तेजःप्रकृतिकत्वज्ञानं तथा श्रोत्रस्य दिक्प्रकृतिकत्वज्ञानमिति । **अस्थानादिति** । उच्चारणानन्तरमवस्थानाभावादित्यर्थः । कथमिति तत्राह—**आकाशेति** । **नीरूपस्येति** । आकाशरूपस्येत्यर्थः ।

चन्दनगन्धस्यैवाभिव्यञ्जिका न गन्धान्तराणां, तस्माददोषः ॥ * ॥ नच शब्दसंस्कारे सर्वपुंसामुपलब्धिप्रसङ्गः—ध्वनीनां प्रादेशिकत्वात्तद्देशे शब्दः संस्क्रियते न सर्वत्र, अतः संस्कृतेन शब्देन यस्येन्द्रियं संनिकृष्टं स एव शृणोति नान्य इत्युपपन्नम् ॥

शब्दस्यानेकदेशोपलम्भः।

'युगपद्देशभेदश्च स्यादेकस्यापि सूर्यवत् ॥ ये विन्ध्यनिलया ये च कामरूपे व्यवस्थिताः ॥ प्राग्भागे ह्यात्मनः सर्वैरुद्यन्भास्वान्निरीक्ष्यते ॥ प्रत्यग्भागे तथास्तं यन्मध्याह्ने चोपरि स्थितः ॥ भिन्नाश्च तेषां प्राग्भागास्तथा प्रत्यक् तथोपरि ॥ तेष्वस्य दृश्यमानस्य विस्पष्टा भिन्नदेशता' ॥ तथा यस्मिन्यावद्दूरे देशे कैश्चित्सूर्योदयो दृश्यते तद्देशवर्तिनोऽन्येपि ततः परस्तात्तावति पश्यन्ति ततोऽप्यस्ति भेदाभेदः। नच सूर्यनानात्वमाशङ्कनीयम्, नहि केचिद्भिन्नं सूर्यं पश्यन्ति ॥ * ॥ किं पुनरेकदे-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

चापरोक्षावभासान्नानुपपन्नं प्रत्यक्षत्वम्। एवं दिक्कालयोरपि प्रत्यक्षता समर्थनीया। तयोरप्यपरोक्षावभासात्प्रमाणान्तरासंभवाच्चेति दिक्। **ननु** नानुपलब्धत्वं हेतुः किंत्वसत्वम्। सत्यम्। तदप्यसिद्धत्वादसाधकम्। यथाहुः—'अथ पूर्वापरासत्वं हेतुस्तत्राप्यसिद्धता॥ सन्नेव *साधनाभावाच्छब्दोऽतो नोपलभ्यते॥' हन्त तर्हि यदा व्यञ्जकं लब्धं तदा *किं न चिरमुपलभ्यते। उच्यते—वायवीया हि ध्वनयोऽभिव्यञ्जकाः, तेच श्रोत्रं प्राप्यैवान्यतः प्रयाताः शब्दबुद्धिरपि तदनुवर्तिनी न चिरमनुवर्तते। यथा मेघान्धकारे विद्युज्जनिता घटादिबुद्धिरिति। तदुक्तं—'क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते॥ मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ॥ *यथा घटादेर्दीपादिरभिव्यञ्जक इष्यते॥ चक्षुषोऽनुग्रहादेवं ध्वनिः स्याच्छ्रोत्रसंस्कृतेः॥' अत्रेदं चिन्त्यते—किमिदं तमोद्रव्यान्तरमुतालोकाभाव इति। तत्र 'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः' इति काश्यपीयास्तन्न युक्तिसहम्। नीलबुद्धेर्निर्निमित्तत्वापत्तेः। अभावस्य नीलिमाभावात्। नचासतो नीलिम्नः किंचिद्ग्राहकं स्मारकं वास्ति। भूगुणारोपस्य च सादृश्यं विनानुपपत्तेः। नेदं रजतमितिवद्बाधाभावाच्च। अभावत्वे तु प्रतियोगिविशेषोल्लेखश्च स्यात् आलोकादर्शनमात्रेण तु तद्भ्रमो भवन् तच्छून्यभागेपि स्यात्। अतो द्रव्यान्तरमिदं वायुवन्नीलिमगुणकम्। वायुः रूपरहितस्पर्शवान् इदं चास्पर्शरूपवदित्येतावान्विशेषः। **ननु** रूपान्तरग्रहणवदेतद्ग्रहणे आलोकापेक्षया भवितव्यम्। सत्यम् अस्तु नामान्यत्र तथा, एतन्नीलरूपग्रहणे त्वालोकापेक्षा नास्तीति दर्शनबलादेवाभ्युपगम्यते। निमीलितनेत्रस्यापि कानिचिच्चाक्षुषाणि तेजांसि निःसरन्त्येव यैर्नीलरूपं गृह्यते। वस्त्वन्तरमपि गृह्येतेति चेत् एतावद्भिस्तद्ग्रहणासंभवात्। जात्यन्धानामुद्धृतनेत्राणां च यद्यन्धकारदर्शनमस्ति ततस्तेषामपि सन्ति कानिचित्तेजांसीति कार्यबलादेव कल्प्यते। अधिकं तु टीकायामवगन्तव्यम्। भाष्यवार्तिककाराभ्यामनुपक्षेपात्प्रकृतविचारानुपयोगाच्चास्माभिर्न प्रपञ्चितम्। औलूक्यादीनां त्वेतदेव विचारसर्वस्वमिति तैः प्रपञ्चितम्। **ननु** सजातीयानामेवाभिव्यञ्जकत्वं दृष्टं पार्थिवं घ्राणं गन्धेन गन्धानभिव्यनक्ति। आप्यं रसनं रसेन रसान्। नच वायवीयानां ध्वनीनां शब्देन साजात्यमस्ति। नच शब्दस्तेषां गुणोऽतः कथमभिव्यञ्जकत्वं स्यात्। नैष दोषः। विजातीयानामप्यभिव्यञ्जकत्वदर्शनात्। दृश्यते हि तैजसः प्रदीपादिर्घटाद्यभिव्यञ्जकः॥ यत्तु करोतिशब्दादित्युक्तं तस्यैतत्परिहारसूत्रं 'प्रयोगस्य पर'मिति। यत्परं कारणमुक्तं कृतकत्वे शब्दं कुर्वित्यादि तत्प्रयोगस्य उच्चारणस्य नतूत्पत्तेः; गोमयान्कुर्विति समाहारेपि करोत्यभिधानदर्शनात्। यथा पादौ कुरु अवकाशं कुरु तथा शब्दप्रयोगं कुर्विति सूत्रार्थः। 'सत्त्वान्तरे च *यौगपद्या'दिति यदुक्तं तत्परिहारसूत्रं 'आदित्यवद्यौगपद्यम्' इति। यथा एक एवादित्यो नानादेशेष्वनेकैर्गृह्यते तथा शब्दोऽपीति सूत्रार्थः॥

एतदभिप्रायेणाह—**युगपदिति**। एतेन पूर्वपक्षोक्तहेतोरनैकान्तिकत्वमुक्तं भवति। अत्र चोदयति—**किं पुनरिति**।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**साधनाभावादिति**। व्यञ्जकाभावादित्यर्थः। **किं न चिरमिति**। अभिव्यक्तस्य पुनस्तिरोधाने कारणाभावादिति भावः। **यथा घटादेरिति**। चाक्षुषस्य तेजस आप्यायनं कुर्वन् प्रदीपो यथा चाक्षुषाणां घटादीनां व्यञ्जको भवति तथा ध्वनयोपि श्रोत्रसंस्कारं कुर्वन्तः शब्दस्याभिव्यञ्जका भवन्तीत्यर्थः। **यौगपद्यादिति**। शब्दो कृतकः नानादेशेषु

शब्दस्यैव सावितुर्नानादेशोपलम्भे कारणम्, उच्यते—अतिदूरवर्तिनोऽस्य यथावद्देशमजानन्तः स्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते । विस्पष्टं चैतत् । तथाहि—'योऽपराह्णे यस्मिन्यावद्दूरे देशे सूर्यं पश्यति—'अस्मिन्क्षेत्रेऽस्मिन्पर्वते सूर्यः' इति, स सवितारमीक्षमाण एव तद्देशे गतस्ततः परस्तात्तथैव तं पश्यति तेनावगम्यते सर्वेषां देशानामग्रतः स्थितोऽसौ संनिहितवदवभासत इति । ये चादित्यापेक्षया स्तोकदेशाः पर्वतास्तेऽपि द्वियोजनस्थितानां त्रियोजनस्थितानां च पुरुषाणां तुल्यवदवभासन्ते, तस्मादेकत्वेऽपि संभवति नानादेशोपलम्भः । तथैकमेव मुखं भिन्नेष्वादर्शेषु युगपद्दृश्यते ॥ * ॥ ननु प्रतिबिम्बं नामार्थान्तरं तत्र दृश्यते । न । तस्याभावादनुपलम्भाच्च, नहि मूर्तमध्ये मूर्तान्तरं संभवति । किंच शरावस्थमुदकं भूमेरुपरि नाभिदघ्ने धारयित्वा तस्योपरिष्टादरत्निदघ्ने स्वमुखं कुर्वन्नुदकस्याधस्तादरत्निमात्रे मुखप्रतिबिम्बं पश्यति, तस्मिंश्च देशे पार्श्वस्थाः पुरुषा न कंचिदपि पश्यन्ति तेन दृश्यादर्शननिरस्तः प्रतिबिम्बाख्योऽर्थो न शक्योऽभ्युपगन्तुम् । तस्मादादर्शतेजसा जलेन च प्रतिहतं नायनं तेजः परावृत्य गृह्णातीति युक्तम् । तस्मादनैकान्तिको नानादेशोपलम्भो न नानात्वं शब्दस्य साधयति ॥ * ॥ ननु सवितुः सांनिध्याध्यासाद्युक्ता नानादेशावगतिः शब्दे तु कथम् । सर्वगतत्वात्—सर्वगतो हि शब्दो भिन्नदेशैर्ध्वनिभिः स्वे स्वे देशेऽभिव्यज्यमानो भिन्नदेशोऽवभासते, ध्वनयो हि श्रोत्रदेशमागत्यापि शब्दं व्यञ्जयन्तः स्वोत्पत्तिदेशमिव शब्दं भासयन्तीति दर्शनबलादभ्युपगम्यते ॥ * ॥ ननु प्राप्यकारि श्रोत्रं, नच ध्वन्युत्पत्तिदेशः श्रोत्रेण प्राप्यत इति कथं तस्य श्रोत्रेण ग्रहणम्, तदग्रहे च कथं तद्विशिष्टशब्दग्रहः । उच्यते—नायं श्रोत्रतस्तद्विशिष्टशब्दप्रत्ययः, किंतु श्रोत्रं हि स्वदेशस्थितं शब्दं बोधयदपि न देशविशिष्टं बोधयति किंतु स्वरूपमात्रेण, यतस्तु दिश आगता ध्वनयस्तया विशिष्टं शब्दं बोधयन्ति, सा हि दिक् श्रोत्रप्राप्ता शक्यते श्रोत्रेण ग्रहीतुम्, यद्यपि न स्वातन्त्र्येण दिशः श्रोत्रग्राह्यत्वं तथापि रावे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यत इति दृष्टत्वादङ्गीक्रियते कालवत् । यथाहि कालो न स्वातन्त्र्येणेन्द्रियैर्गृह्यते अथच विषयेषु स्वेषु गृह्यमाणेषु तद्विशेषणतया सर्वैरपीन्द्रियैर्गृह्यते तद्वत् । ततश्चास्यां दिशि शब्द इति विशिष्टग्रहणं तावत्सिद्धम् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

समाधत्ते—**उच्यत इति** । दूरस्थस्य सन्निध्यध्यासकृतो नानादेशभ्रम इत्यर्थः । अस्य सवितुः । निगमयति—**तस्मादिति** । नहि स देशोऽस्ति यत्रोच्चरितः शब्दो न गृह्यते अतो देशानवच्छेदादाकाशवद्विभुत्वमिति भावः । विभोरपि न सर्वं व्यापितया ग्रहणं व्यञ्जकाधीनत्वादिति भावः । **नन्वस्तु** नामैवं तथापि कथं *देशभेदभ्रान्तिः । इत्थम् । व्यापको हि शब्दो यदा भिन्नदेशे युगपद्गतैर्ध्वनिभिरभिव्यज्यते तदा शब्दो पि तत्तद्देशेऽवगम्यते ध्वनीनां च पूरितान्तरालत्वाच्छब्दोऽप्यन्तरालेऽनवगम्यमानो विच्छिन्न इव भासते । अतो ध्वनेरल्पदेशत्वाच्छब्देऽप्यविभुत्वभ्रान्तिरिति । उदाहरणान्तरमाह—**तथेति** । उक्तंच—'जलपात्रेषु चैकेन नानेकः सवितेक्ष्यते ॥ युगपत् *नच भेदस्य प्रामाण्यं तुल्यवेदनात्' ॥ दृष्टं च नेत्रप्रवृत्तिभेदादेकस्यापि चन्द्रादेरनेकधा दर्शनम् । यथाहुः—'ईषन्निमीलितेऽङ्गुल्या यथा चक्षुषि दृश्यते ॥ पृथगेकोपि भिन्नत्वाच्चक्षुर्वृत्तेस्तथैव न' इति ॥ 'अत्र ब्रूमो यदा तावज्जले सौरेण तेजसा ॥ स्फुरता चाक्षुषं तेजः प्रतिस्रोतःप्रवर्तितम् ॥ स्वदेश एव गृह्णाति सांवतारमनेकधे'ति । उपपादितं सूत्रार्थं निगमयति—**तस्मादिति** । अत्राशङ्कते—**नन्विति** । अस्तुनामाग्रहणं ततः किमत आह—**तदिति** । समाधत्ते—**उच्यत इति** । यदि ध्वन्युत्पत्तिदेशविशिष्टशब्दग्रहणं स्यात्तदायं दोषः स्यान्नतु तथास्तीत्यर्थः । **साहीति** । यस्मात्सा दिक् श्रोत्रदेशा भवतीति भावः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

युगपदुपलभ्यमानत्वादिति हेतुरिति । **देशभेदेति** । अत्रैव देशे शब्दोऽस्ति नान्यत्रेति कथं देशभेदभ्रान्तिरित्यर्थः । ननु भिन्नान्येव तत्र प्रतिबिम्बानि नेत्याह—**नचेति** । नहि बिम्बात्प्रतिबिम्बस्य भेदोऽस्ति प्रत्यभिज्ञानात् । नतरां प्रतिपात्रं

दिक्कालयोर्विशेषणतयैवग्राह्यत्वम्।

ध्वनयश्च क्रमेण मन्दीभवन्तः प्रत्यासन्नाद्दूराद्दूरतराच्च देशादागतास्तीव्रं मन्दं मन्दतरं च शब्दं बोधयन्ति। बोधविशेषाच्च ध्वन्युत्पत्तिदेशः प्रत्यासन्नदूरादिरूपेणानुमानाद्धृदयदेशमागच्छन्ति तत्र यः शब्दस्य परमार्थदेशः श्रोत्रदेशस्तस्याग्रहणाद्दिग्विशिष्टस्य शब्दस्वरूपस्य ध्वन्युत्पत्तिदेशस्य च ग्रहणात्तयोः संसर्गभ्रमादेवंविधः प्रत्ययो भवति—प्राच्यां दिश्येतावदन्तराले शब्द इति, तस्माद्-भिव्यञ्जकदेशभेदादुपपन्नं नित्यस्यापि नानादेशोपलम्भनमित्यदोषः॥ *॥ नन्वयं दोषो यदसति बाधके भ्रान्तित्वम्, प्रत्यभिज्ञायां वा कः पक्षपातो येन सा भ्रांतिर्न स्यात्। अयमस्ति पक्षपातः—नह्यसंभवति तद्भ्रान्तित्वे भ्रान्तित्वमङ्गीकर्तुं युक्तम्, नानादेशोपलब्धेस्त्वपरिहार्यं भ्रान्तित्वम्—अनित्यत्वपक्षेऽपि श्रोत्रगत एव परमार्थतो गृह्यते श्रोत्रस्य प्राप्यकारित्वात्। नच वक्तृमुखगतो येन तद्देशग्रहणस्याभ्रान्तित्वं स्यात्॥

शब्दप्रत्यक्षे बौद्धमतखण्डनम्।

यदपि सौगतोऽप्यप्राप्यकारित्वमेवाङ्गीकुर्वन्नभ्रान्तित्वं समर्थयते, तदयुक्तम्—अप्राप्यकारित्वे हि संनिकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयातां, तयोस्तु क्रमेणोपलब्धिर्न कथंचिदप्यप्राप्यकारित्वे समर्थयितुं शक्या॥ *॥ किंच क्षणिको वा शब्दः स्यात्स्थायी वा। यदि क्षणिकस्ततः प्रत्यासन्नैर्गृहीतमात्रो नष्टः कथं विप्रकृष्टैः पश्चाद्ग्रहीतुं क्षमः। स्थायित्वं तु सौगतानामनभिमतमेव। स्थायित्वे च प्रत्यासन्नानां शब्दश्रवणं चिरकालमनुवर्तेत। तस्मादप्राप्यकारित्वासंभवादवर्जनीयं नानादेशोपलब्धेर्भ्रान्तित्वम्। अस्मत्पक्षे तु ध्वनीनां क्रमेणासन्नदूरगमनात् गत्वरत्वेन चैकस्मिन्श्रोत्रे चिरमनवस्थानादुपपन्ना क्रमेणोपलब्धिश्चिरकालाननुवृत्तिश्च, तस्मान्नैकान्ततस्तावदनित्यत्वम्॥*॥ अर्थ-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

दृष्टान्तार्थं विवृणोति—**यथेति**। उपपादितं विशिष्टग्रहणं निगमयति—**ततश्चेति**। भ्रान्त्या तद्विशिष्टग्रहणं संभवतीति भावः। भ्रान्तित्वमुपपादयितुं भूमिकामारचयति—**ध्वनयश्चेति**। ध्वन्युत्पत्तिदेशोऽनुमानाद्धृदयमागच्छति नतु श्रोत्रेण गृह्यत इत्यभिप्रायः। कथमेतावता भ्रान्तित्वमत आह—**तत्रेति**। ग्रहणादित्यत्रानुमानेन ग्रहणादिति ज्ञेयम्। चोदयति—**नन्विति**। बाधकप्रत्ययंविना भ्रान्तित्वे प्रत्यभिज्ञाया अपि भ्रान्तित्वं स्यादिति भावः। परिहरति—**अयमिति**। नन्वनित्यत्वपक्षे तत्रतत्र शब्दोत्पत्तिसंभवान्नानादेशोपलब्धेरभ्रान्तित्वमत आह—**अनित्येति**॥

अत्रैव मतान्तरमाशङ्क्य निराकरोति—**यदपीति**। दूषणान्तरमाह—**किंचेति**। **तस्मादिति**। यस्मात्स्थायित्वे क्षणिकत्वे वाऽप्राप्यकारित्वं न संभवति तस्मात्प्राप्यकारित्वमेव वाच्यं तदाच नानादेशोपलब्धेः भ्रान्तित्वमेव गतिरित्यर्थः। स्थायित्वपक्षोक्तं दूषणं स्वमते परहरति—**अस्मत्पक्ष इति**। महाप्रकृतं निगमयति—**तस्मादिति**। अत्र ग्रन्थकारेण परिहारसूत्रद्वयं सिद्धान्तसूत्रं च परित्यक्तं तत्प्रसङ्गाद्व्याख्यायते। यदुक्तं यकारादिरूपेण विक्रियमाणत्वादिकारादेरनित्यत्वमिति तस्यैतत्परिहारसूत्रम् 'शब्दान्तरमविकार' इति। यस्त्वया 'दध्यत्रे'त्यत्र इकारस्य यकारो विकार उक्तस्तच्छब्दान्तरमेव न विकारः। परमते शब्दस्य गुणत्वात्स्वमतेच विभुत्वेन विकारायोगात्। **ननु** 'इको यणची'ति स्मृतिवशादिकारः प्रकृतिर्यकारो विकृतिरित्यवगम्यते। मैवम्। स्मृत्या प्रकृतिविकृतिभावाप्रतिपादनात्। उक्तंहि शास्त्रादौ—'सिद्धे शब्दार्थसंबन्धे नियमार्थं व्याकरण'मिति। प्रकृतिविकारभावं च ब्रुवता दध्यत्रपदमसिद्धमेव साधितं स्यात्। अतोऽयमभिप्रायः सूत्रकारस्य—अचि परतः संहितायामेव यणन्तानां साधुत्वमन्यत्र चेगन्तानामिति। एतेन *संप्रसारणं व्याख्यातम्। नापि सादृश्यात्प्रकृतिविकारभावावगतिः। इकारयकारयोः सर्वात्मना सादृश्याभावात्। यदुक्तं 'वृद्धिश्च कर्तृभूम्नाऽस्येति' तत्परिहारसूत्रं 'नादवृद्धिपरे'ति। या त्वया शब्दस्य वृद्धिरुक्ता सा ध्वनिरूपस्य संयोगविभागात्मकस्य नादस्यैव न शब्दस्य निरवयवत्वात्। बहुषु ह्युच्चारयत्सु उत्पाद्यमानाः संयोगविभागाः पृथक्पृथक् शब्दं व्यञ्जयन्तः स्वगतमुपचयं तत्रारोपयन्तः शब्दे महत्त्वव्यवहारमुपजनयन्ति, न स्वतःशब्दे वृद्धिरुपपद्यते निरवयवत्वात् एवं पदस्यापि। उक्तंच—'वर्णो-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

भेद इति भावः। **संप्रसारणमिति**। यकारस्येकारः संप्रसारणं वकारस्योकार इति तत्रापि क्वचिद्विषये यकारस्य सा-

प्रतिपत्त्यनुपपत्त्या तु नियतत्वमेव युक्तम्, नहि प्रत्युच्चारणमन्यस्यान्यस्य क्रियमाणस्यार्थप्रत्यायकत्वं संभवति, संबन्धग्रहणासंभवादगृहीतसंबन्धस्य चाप्रत्यायकत्वात् । नचान्यस्मिन्गृहीतसंबन्धेऽन्यस्य प्रत्यायकत्वं संभवति । नहि गोशब्दे गृहीतसंबन्धेऽश्वशब्दः प्रत्याययति । सत्यम्—असदृशो हि न प्रत्याययति, यस्त्वन्योऽपि गृहीतसंबन्धेनार्थवता शब्देन सदृशः शब्दः स प्रत्याययतीति चेत्, न । तदसंभवात् । नहि कश्चिदपि मुख्योऽर्थवान् संभवति, सर्वेषां तुल्यत्वेन संबन्धग्रहणात्. नहि द्विस्त्रिर्वानुपलब्धस्य संबन्धग्रहणं संभवति अन्वयव्यतिरेकाभावात् ॥

शब्दानित्यत्वपूर्वपक्षस्तत्खण्डनं च ।

अथ व्युत्पत्तिसमये सदृशेषु शब्देषु द्वित्रेपूपलब्धेषु पश्चाच्छ्रूयमाणः संबन्धग्रहणं लब्ध्वार्थवान्भवति, तदुत्तरकालास्तत्सादृश्यात्प्रत्याययन्तीत्युच्यते । तदयुक्तम्—य एवोपलब्धशब्दान्तरेण

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

ऽनवयवत्वात्तु वृद्धिह्रासौ न गच्छति ॥ व्योमादिवदतो सिद्धा वृद्धिरस्य स्वरूपतः' इति ॥ **भाष्यकारोप्याह**—'वायवीयाः संयोगविभागाः नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जयन्तो नादशब्दवाच्याः । तेन नादस्यैषा वृद्धिर्न शब्दस्य' इति । **ननु** यदि वायवीयाः संयोगविभागाः संयोगविभागविशिष्टो वा वायुरेव नादो न शब्दविशेषस्तर्हि वायोरश्रावणत्वात्तद्रूपस्य शङ्खादिनादस्य श्रवणं न स्यात् । अत्र केचित् वायुगुणभूताः ध्वन्याख्याः शब्दविशेषा एव श्रोत्रेण गृह्यन्ते । त एव च वायुना सह ताल्वादिभिः प्रेरिताः श्रोत्रं संस्कुर्वन्तः शब्दस्य व्यञ्जका इत्याहुः । **ननु** वर्णोच्चारणवेलायां ध्वनयो न श्रूयन्ते तत्कथं तेषां व्यञ्जकत्वम् । मैवम् । वर्णोच्चारणे ध्वन्युपलब्धेः सर्वजनीनत्वात् । तथाच दूरादधीयानेषु वर्णानशृण्वतोऽपि ध्वनिमात्रं शृण्वन्ति । तेचताल्वादिसंयोगविशेषलाभे सति वर्णान्व्यञ्जयन्ति स्वयं चोपलभ्यन्ते । भेर्यादिध्वनयस्तु केवलं स्वयमेवोपलभ्यन्ते । भाष्योक्तवायवीयध्वनिपक्षे तु ध्वन्याख्यशब्दाभावेऽपि वायुनानात्वादेव शङ्खादिघोषश्रवणमुपपद्यते । अधिकं तु वार्तिकेऽवगन्तव्यम् । एवं तावत्षड्भिः सूत्रैः परपक्षं प्रतिक्षिप्य तावन्मात्रेण स्वसिद्धान्तासिद्धिं मन्यमान आह —'नित्यस्तु स्याद्दर्शनस्य परार्थत्वादि'ति । सिद्धान्तसूत्रमेतत् । तुशब्दः पक्षं व्यावर्तयति—नित्यः शब्दो भवितुमर्हति । कुतः । दर्शनस्य परार्थत्वात् । दृश्यते शब्दोऽनेनेति दर्शनमुच्चारणं तस्य परार्थत्वात् अर्थप्रत्यायनार्थत्वात् । उच्चारितमात्रो विनश्यतीतिचेच्छब्दः तदार्थावगत्यर्थं नोच्चार्येत । अगृहीतसंगतिकत्वेनार्थावबोधकत्वासंभवात् । अर्थवत्सादृश्यादर्थावगम इति चेत् । न कश्चिदपि शब्दोऽर्थवान् सर्वेषामभिनवत्वात् । **नन्वसिद्धोऽयं** हेतुः पारार्थ्यस्य दर्शनधर्मत्वेन शब्दधर्मत्वाभावात् । स्वरूपेण सिद्धस्यापि पक्षधर्मत्वेन न सिद्धिः । नैष दोषः । अर्थापत्तेर्विवक्षितत्वात् । यथाहुः—'अनुमानप्रयोगे हि *वक्तुमित्यादि युज्यते ॥ अर्थापत्तिरियं चोक्ता पक्षधर्मादिवर्जिता' इति ॥ अर्थापत्तौ च द्वावेव दोषौ अन्यथाप्युपपत्तिरन्यथैवोपपत्तिः । तदिहापि यद्यनित्यत्वेप्यर्थप्रत्यायकत्वमुपपद्येत अनित्यत्व एव वा ततो दूषणं स्यादिति । अतोऽर्थप्रत्यायकत्वेन नित्यत्वमेवाङ्गीकर्तुं युक्तमिति सूत्रार्थः । ग्रन्थकारोप्येतत्सर्वमभिप्रेत्याह—अर्थप्रतिपत्त्यङ्गत्वाच्छब्दस्य नित्यत्वमेवयुक्तमित्यर्थः । उक्तंच—'*फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता ॥ निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते' इति । अनुपपत्तिमेवोपपादयति—**नहीति** । कथं न संभवतीत्यत आह—**संबन्धेति** । अगृहीतसंबन्धस्य चार्थप्रत्यायकत्वेऽपूर्वोपि सर्वः शब्दः सर्वं प्रकाशयेदिति भावः । संबन्धज्ञानं च न क्षणिकस्य संभवतीति भावः । **ननु** कंचित्कालं शब्दोऽवस्थास्यति यावत्संबन्धदर्शनं व्यवहारश्च संभवति नैतावता नित्यत्वसिद्धिः । सत्यमेतत् । यद्यवस्थानं स्यात् कंचित्कालमवस्थाने वा कालान्तरावस्थानं को निवारयेत् । यथाहुः—'संबन्धदर्शनं चास्य नानित्यस्योपपद्यते ॥ संबन्धज्ञानसिद्धिश्चेद्ध्रुवं कालान्तरे स्थितिः' ॥ शङ्कते—**सत्यमिति** । परिहरति—**नेति** । असंभवमेवोपपादयति—**नहीति** । तदुक्तम्—'कस्य चैकस्य सादृश्यात्कल्प्यतां वाचकोऽपरः ॥ अदृष्टसंगतित्वेन सर्वेषां तुल्यता यतः' ॥

उक्तेऽर्थे वार्तिककृत्संमतिमाह—**तदुक्तमिति** । य एव हि कस्यचिच्छ्रुतशब्दान्तरस्य चरमश्रुतोऽर्थवान्स्यात्स एवाश्रुतशब्दान्तरस्यान्यस्य प्रथमश्रुतत्वादनर्थकः स्यादिति विरुद्धमापद्येतेति श्लोकार्थः । अत्रापि संमतिमाह—**तदुक्तमिति** । 'कैश्चिदर्थो न गम्यते ॥ तत्तुल्यमुत्तरस्येति किं सादृश्येन वाचकः' इति श्लोकशेषः । **तदयुक्तमिति** । 'अथानन्यश्रुती-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

धुत्वं कचिदिकारस्येति । तद्रूपस्य वा पुरुषस्येत्यर्थः । **वक्तुमिति** । अनुमानप्रयोगे विवक्षिते इत्यादिदूषणं वक्तुं युज्यत इत्यर्थः । **फलवदिति** । फलवतो गवानयनादिव्यापारस्याङ्गभूतोऽर्थप्रत्ययः तत्फलेन फलवान् शब्दः स्वयं तु निष्फल

**पश्चाच्छ्रूयमाणोऽर्थवान्निरूप्यते स एवाश्रुतशब्दान्तराणां पुरुषाणां प्रथमश्रुतोऽनर्थक इति विरोधापत्तेः । तदुक्तं—'अप्रतीतान्यशब्दानां तत्कालेऽसावनर्थकः । स एवान्यश्रुतीनां स्यादर्थवानिति विस्मयः' इति ॥ * ॥ अथार्थवानेवायम्, अप्रतीतान्यशब्दास्त्वन्वयव्यतिरेकवैकल्यादर्थवत्त्वं न जानन्तीत्युच्यते । तथासति तदुत्तरकालानामपि शब्दानामेवमर्थवत्त्वसंभवात्किमिति सादृश्येन प्रत्यायकत्वम्। तदुक्तम्—'अथास्य विद्यमानोऽपी'त्यादिना ॥ * ॥ अथोत्तरकालस्य शब्दश्च कांश्चिदगृहीतसंबन्धान्प्रत्यप्रत्यायकत्वादानर्थक्यमेवाश्रीयते, ततो योऽसावर्थवत्त्वेनाभिमतः शब्दो यत्सादृश्यादुत्तरेषां प्रत्यायकत्वं सोऽपि केषांचिदप्रत्यायक इत्यनर्थक एवेति सर्वेषामानर्थक्यं स्यात् । तदुक्तम्—'अनर्थकत्वमस्य स्या'दित्यादिना ॥ * ॥ किंच व्युत्पत्तिकालवर्ती शब्दोऽर्थवान् । उत्तरे तु व्यवहारकालवर्तिनस्तत्सादृश्यात्प्रत्याययन्तीति ब्रुवाणस्य विरुद्धमापद्यते—य एव हि केषांचिद्व्युत्पत्तिकालवर्ती स एवान्येषां व्यवहारानुपातीत्येकस्यैवार्थवत्त्वं मुख्यं तत्सादृश्याद्गौणमिति विरोधः । तदुक्तम्—'अर्थवत्सदृशत्वेने'ति । तस्मान्न सादृश्येन प्रत्यायकत्वमित्येकत्वमेव शब्दस्याश्रयितव्यम् ॥ * ॥ अथ गत्वादिसामान्यमेकमाश्रित्य वाचकत्वं समर्थ्येत, तन्न । तदभावात्—व्यक्तिभेदे हि सामान्यमात्मानं लभते नान्यथा ॥**

वर्णानामनवयवत्वं नित्यत्वं च ।

कश्चित्पुनराह—सत्यपि व्यक्तिभेदे निष्प्रमाणकमेव सामान्यं, यत्र हि भेदावगतौ सत्यामेवाभेदावगतिस्तत्र सामान्यम्, इह तु सन्नपि व्यक्तिभेदो नावगम्यते, अतोऽत्र विवेकाग्रहणादेव प्रत्यभिज्ञा भ्रान्तिरूपा नालं सामान्यं साधयितुमिति ॥ * ॥ तत्त्वयुक्तम्—सति हि व्यक्तिभेदे कथमन्तरेण सामान्यं प्रत्यभिज्ञा स्यात् । विवेकाग्रहणादिति चेत्, कोऽयं विवेकाग्रहो नाम, ह्यस्तनाद्गकारादद्यतनस्य गकारस्य यद्व्यावृत्तं रूपं तन्न गृह्यत इत्यर्थः । किं तर्हि गृह्यते, अद्योच्चरितेऽपि गकारेऽवश्यं किंचिद्रूपं गृह्यते । व्यावृत्तं चेन्न गृह्यते व्यक्तमनुवृत्तग्रहणम् । अनुवृत्तं च सामान्यमित्युच्यते । तस्मात्सिद्ध्यति सामान्यम् । नच सादृश्यादेव प्रत्यभिज्ञासिद्धेरलं सामान्येनेति वक्तव्यम्, अवयवसामान्ययोगात्मकत्वात्सादृश्यस्य वर्णानां चानवयवत्वात् ॥ * ॥ ननु संबन्धिसामान्यमात्रं सादृश्यम्, अतोऽनवयवानामपि ताल्वादिस्थानसामान्यं सादृश्यं भविष्यति । न । अश्रावणत्वात्, श्रवणजन्या हीयं प्रत्यभिज्ञा तदस्याः श्रवणग्राह्यमेवालम्बनं वक्तव्यम्, नच ताल्वादिसामान्यं श्रावणम्, अतो गत्वादिसामान्यनिबन्धनेयं प्रत्यभिज्ञा सिद्ध्यति । एवंसति व्यक्तिभेदे सामान्यं तदभावात्तु नास्ति सामान्यमेव वक्तव्यम्, अतः सिद्धं प्रत्यभिज्ञया शब्दस्य नित्यत्वम् ॥ * ॥ किं पुनरिदं प्रत्यभिज्ञाख्यं प्रमाणम्, प्रत्यक्षमिति ब्रूमः पूर्वानुभवजनितसंस्कारसध्रीचीनेन्द्रियजन्यत्वाद्ग्रहणस्मरणरूपमिदमेकं ज्ञानं, तत्र पूर्वानुभूतोंऽशः स्मर्यते स्मर्यमाणेन तु तेन सहैकत्वविशिष्टं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

न्प्रति ॥ पूर्वस्मिन्नपि तत्सत्वात्सर्वानर्थकता भवेत्'इति शेषः । अन्यदप्युदाहरति—**तदुक्तमिति** । 'यो वा श्रुतवतां ततः ॥ मुख्योऽसावश्रुतानां स्यात्तदेकत्वे न युज्यते' । एकएव शब्दः श्रुतार्थवच्छब्दान्तरस्य गौणः अश्रुतार्थवच्छब्दस्य मुख्यः स्यात् । नचैकस्य गौणत्वं मुख्यत्वं च युक्तमित्यर्थः । एतेच श्लोका ग्रन्थकारेणैव व्याख्यातप्रायाः ॥ अत्रैव किंचिदाशङ्क्य निराकरोति—**अथेति** । **व्यक्तीति** । विवेकाग्रहणादेवात्र प्रत्यभिज्ञानव्यक्त्यैकत्वमेवावगम्यत इति भावः ॥

कथं निष्प्रमाणकमत आह—**यत्रेति** । **अतोऽत्रेति** । विवेकाग्रहणादेवात्र प्रत्यभिज्ञा न व्यक्त्यैकत्वात् । अतो भ्रान्तिरूपेत्यर्थः । किमिति न गृह्यत इति चेत्तत्राह—**ह्येति** । प्रकृतं निगमयति—**अत इति** । ननु प्रदीपेऽपि स एवायमिति

वर्तमानं रूपं प्रत्यभिज्ञया प्रत्यक्षेण गृह्यत इति वेदितव्यं, तस्मान्नित्यः शब्दः । प्रदीपे तु प्रभामण्डलस्यावयवविश्लेषमन्तरेणात्यन्तानुपपत्तेर्विश्लिष्टावयवस्य चावयविनोऽवश्यंभावी विनाशो विनष्टे च पूर्वस्मिन्प्रदीपे पश्चात्तनमवश्यं प्रदीपान्तरमेव भवति दृढे च भेदे प्रत्यभिज्ञासादृश्यनिमित्तेति कल्प्यते । शब्दे तु न किंचिद्भेदे प्रमाणमस्तीति विशेषः ॥

पूर्वपक्षतया क्षणभङ्गवादः ।

ननु सर्वभावानां क्षणिकत्वात्कथं शब्दस्य नित्यता । किं पुनः सर्वक्षणिकत्वे प्रमाणं प्रत्यक्षं तावत्कालसत्तां बोधयति न कालान्तरनिषेधं करोति । नीलप्रत्यक्षमिव न पीतिमानं निषेधति । दृश्यादर्शनेन तु तस्य निषेधः । नच संप्रति कालान्तरं दृश्यं येन दृश्यादर्शनात्तन्निषेधः स्यात्, नचान्यदपि प्रमाणं पश्यामः—स्वभावहेतुकं प्रमाणं सत्तामात्रानुबन्धिसाध्यविषयत्वादिति । कथं पुनः सत्तामात्रानुबन्धसिद्धिः, क्षणिकतायाः विपक्षे बाधकप्रमाणप्रवृत्तेः क्षणिकत्वविपक्षे ह्यक्षणिकत्वे व्यापकानुपलब्ध्या बाध्यमाना सत्ता क्षणिकत्वेन व्याप्यमाना तदनुमापयति । किं पुनः सत्ताया व्यापकं, क्रमाक्रमाविति ब्रूमः, तथाहि—अर्थक्रियाकारितैव सत्ता नान्या । नहि स भावः सत्तां लभते यो न कांचिदर्थक्रियामारभते, यतः स्वज्ञानस्यापि सर्वे भावाः कारणम्, यदपि किंचिदज्ञायमानमपि सत्त्वेन संभाव्यते तदपि सर्वं विज्ञानं प्रत्यालम्बनत्वादर्थक्रियाकारि, तदर्थक्रियाकारितैव सत्ता, यदेवार्थक्रियाकारि तदेव परमार्थसदिति । साच क्रमयौगपद्याभ्यां व्याप्ता, नचाक्षणिकत्वे ते संभवतः—स्थायी हि पदार्थो न तावदर्थक्रियाः सर्वा युगपत्कर्तुमर्हति, तथासति द्वितीये क्षणे कृत्याभावादर्थक्रियाकारित्वविरहादसल्लक्षणापत्तेः क्षणिकत्वमेव स्यात् । नापि क्रमः संभवति —सहि भावः सर्वार्थक्रियासमर्थः किमिति कांचिदेवारभते नान्यां समर्थस्य क्षेपायोगात् ॥ * ॥ सहकार्यपेक्षया विलम्बत इति चेत् । न । सहकारिणो ह्यकिंचित्करा अनपेक्ष्याः किंचित्कराश्चेद्यत्तैः क्रियते तदेव कार्यसाधनं स्यात् तदनन्तरं कार्यनिष्पत्तेः भावस्तत्कारणमेव स्यात्—नह्यागन्तुकेऽतिशये कार्यमारभमाणे भावस्य कारणता संभवति भिन्नत्वात्, अभेदे वा भावोऽपि तत्कालजन्मा क्षणिक एव स्यात्, भेदाभेदौ तु विरुद्धावेव, तस्मान्नाक्षणिकस्य सत्ता संभवतीति सिद्धं सन्मात्रानुबन्धित्वं क्षणिकतायाः । किंच कृतकानां भावानामवश्यंभावी विनाशस्तेनापि क्षणिकत्वं घटादीनां । तथाहि—यद्येषां ध्रुवभावि न तत्र तेषां हेत्वन्तरापेक्षा ध्रुवभावी च कृतकानां विनाश इति विरुद्धव्याप्तोपलब्धिः—ध्रुवभाविता हि निषिध्यमानहेत्वन्तरापेक्षित्वव्याप्ता अग्न्युष्ण-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रत्यभिज्ञास्त्येव नच तया प्रदीपस्य नित्यत्वमत आह—**प्रदीपे त्विति** । प्रदीपे तु प्रत्यक्षमेव भेदग्राहकं प्रमाणं, शब्दे तु न तादृशं किंचित्प्रमाणमस्तीति वैधर्म्यमित्यर्थः ॥

प्रमाणाभावमेवोपपादयति—**प्रत्यक्षमिति** । क्षणिकत्वे प्रमाणं शङ्कते—**पश्याम इति** । सतो वस्तुनः स्वभाव एव क्षणिकत्वे प्रमाणं कथमित्यपेक्षायामाह—**सत्तेति** । सत्तामात्रानुबन्धि यत्साध्यं क्षणिकत्वं तद्विषयत्वाद्वस्तुस्वभावस्य यत्सद्वस्तु तत्क्षणिकमिति नियमादिति भावः । एतदेव प्रश्नपूर्वकमुपपादयति—**कथमिति** । अत्रोत्तरं विपक्ष इति । अक्षणिकत्वे सत्ताया बाधकप्रमाणप्रवृत्तेः सत्तानुबन्धसिद्धिरिति भावः । एतदेव विवृणोति—**क्षणिकत्व इति** । ननु स्थायित्वेपि सत्तोपपत्तिर्न क्षणिकत्वे सत्त्वं व्यापकत्वमित्यभिप्रायेण पृच्छति—**किं पुनरिति** । उक्तमर्थं विवृणोति—**तथाहीति** । अर्थक्रियां कुर्वत एव सत्तालाभ इति भावः । अस्त्वेवं कथमेतावता क्षणिकत्वसिद्धिरत आह—**साचेति** । कथं न संभवतीत्यत आह—**स्थायीति** । युक्त्यन्तरमाह—**किंचेति** । एषां यद्ध्रुवभावि तेषां तत्र हेत्वन्तरापेक्षा नास्तीत्यर्थः । न्यायं प्रकृते योजयति—**ध्रुवेति** । विरुद्धव्याप्तोपलब्धिं विवृणोति—**ध्रुवभावितेति** । निषिध्यमानं यत् हेत्वन्तरापेक्षित्वं ते न व्याप्ता यथाग्नेरुष्णत्वं ध्रुवभावित्वान्न हेत्वन्तरापेक्षं तथा नाशस्य ध्रुवभाविता हेत्वन्तरापेक्षां प्रति-

त्वादिषूपलब्धा स्वव्यापकमनपेक्षत्वमुपस्थापयन्ती तद्विरुद्धं सापेक्षत्वं प्रतिक्षिपति । अथवा हेत्वन्तरापेक्षाणां वाससि रागादीनामध्रुवभावित्वव्याप्तेस्तद्विरुद्धं ध्रुवभावित्वं व्यापकविरुद्धोपलब्ध्या विनाशस्य हेत्वन्तरापेक्षां निवारयति, निरपेक्षश्च विनाशः स्वाभाविको जन्मानन्तरमेव भवतीति सिद्धः क्षणभङ्गः ॥ * ॥ मुसलप्रहारादयस्तु विसदृशसंतानहेतवो न विनाशस्य । प्रतिपत्तारस्तु सदृशपरापरोत्पत्त्या क्षणानां भेदमलक्षयन्तस्तत्त्वभ्रान्त्या विनाशमबुध्वा मुसलप्रहारानन्तरं विसदृशसंतानदर्शिनस्तदैव विनाशं मन्यमाना मुसलादेर्विनाशहेतुतां मन्यन्ते । परमार्थतस्तु न केऽपि विनाशहेतवः, हेत्वन्तरजन्मा च विनाशो न तावद्भावादभिन्नो भवितुमर्हति हेतुभेदात्, भिन्नत्वे तु तस्मिन्जातेऽपि भावस्य पूर्ववदुपलब्धिः स्यात् पटजन्मनि घटवत्, तस्मात्स्वहेतुत एव भावा विनाशस्वभावा जायन्त इति क्षणभङ्गसिद्धिः ॥ * ॥ किंच प्रयत्नरक्षितानामपि घटादीनां कियतापि कालेनावयवक्षयविश्लेषवशेन विनाशो दृश्यते विनैव मुसलप्रहारादिभिः, सोऽयमुत्पत्तिप्रभृति किंचित् किंचिदन्यथात्वमन्तरेण नोपपद्यते, प्रत्यक्षेणैव चान्यथात्वमभिनवपुराणावस्थयोरज्ञातघटोत्पत्तिकालैरपि पुरुषैरुपलभ्यते । नचैकस्यैव घटस्य नानारूपत्वं संभवति नानात्वैकत्वयोर्विरोधात्, तस्मात्प्रतिक्षणमन्यत्वं घटादेः । प्रयोगश्च भवति—'विवादाध्यासिता भावाः सत्वात्क्षणविनाशिनः ॥ दीपवत्प्रत्यभिज्ञापि स्यात्प्रदीपवदेव नः' ॥

क्षणभङ्गवादखण्डनम् ।

अत्राभिधीयते—न तावदर्थक्रियाकारितैव सत्ता सतो ह्यर्थक्रियाकारिता नतु सैव सत्ता—नच सर्वस्य भावस्यार्थक्रियाकारितानियमः, अतत्कारिणोपि संभवात् । नच ज्ञानकारणत्वमपि सर्वस्य नियतं—अज्ञायमानस्यापि स्वरूपसद्भावसंभवात् । नच सर्वेषां विज्ञानं प्रत्यालम्बनहेतुतातीतानागतानां भावानां संभवति, अविद्यमानानां हेतुत्वानुपपत्तेः । हेतुत्वे वा सर्वज्ञाननिष्पत्तौ सर्वेषां व्यापृतत्वात्क्रमानभ्युपगमेन च पुनर्व्यापारानुपपत्तेः, तल्लक्षणत्वाच्च सत्तायाः सर्वज्ञानानन्तरमेव समस्तस्य जगतः शून्यताप्रसङ्ग इति यत्किंचिदेतत् ॥ * ॥ संभवति च भावानां क्रमेणार्थक्रियाकरणत्वं, सहकारिव्यपेक्षया विलम्बोपपत्तेः । सहकारिणश्चातिशयमागन्तुकं भावाद्भिन्नाभिन्नं भिन्नमेव वा कुर्वन्त्येव, यथा बीजस्य क्षितिसलिलसंयोगेऽतिशयः तदलाभे स्थायिनोऽपि बीजस्य प्रागङ्कुरानारम्भः, लाभे चारम्भ इति न कदाचिदनुपपत्तिः ॥ * ॥ नन्वेवं संयोगस्यैव कारणत्वं स्यान्नतु बीजस्य । नैवम्, संयोगमात्रात्तदुत्पत्त्यदर्शनात्—नहि क्षितिसलिलसंयोगोऽङ्कुरं जनयति । बीजविशिष्टस्य तु संयोगस्य कारणत्वे विशेषणीभूतस्य बीजस्यापि कारणत्वमङ्गीकार्यम् । यस्तु सहकार्यपेक्षां नानुमन्यते तस्य क्षितिसलिलसंयोगानपेक्षात्कुसूलस्थादेव बीजादङ्कुरो जायेत ॥ * ॥ नन्वन्त्यक्षणप्राप्तः समर्थ एव भावोऽनपेक्षो जनयितुम् । निरपेक्षोऽप्यसौ सहकारिभिर्विना नास्तीति तैर्विना न करोति, कुसूलस्थं हि बीजमन्यदेव । अन्यच्चेदं क्षितिसंयुक्तं यतोऽङ्कुरो जायते । सत्यम् ।

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

क्षिपतीति संबन्धः । एवमन्वयमार्गेणोक्त्वा व्यतिरेकेणाह—**अथवेति** । रागादीनां हेत्वन्तरापेक्षित्वमध्रुवभावित्वेन व्याप्तं दृष्टमिति दृष्टान्तार्थः । फलितमाह—**निरपेक्षश्चेति** । विनाशस्य हेत्वपेक्षास्तीति चेन्नेत्याह—**मुसलेति** । उत्तरग्रन्थो निगदव्याख्यातः ॥

तदेतन्निराकर्तुमारभते—**अत्रेति** । यदुक्तं किंचित्करश्चेदित्यादि तत्परिहरति—**सहकारिणश्चेति** । भावाद्भिन्नाभिन्नं भिन्नमेव वा भावनिष्ठमतिशयं कुर्वन्ति अतोऽभावस्यैव कारणता नतु तस्येति भावः । चोदयति—**नन्विति** । तदनन्तरं कार्योपलम्भादिति भावः । अत्रैव विशेषं शङ्कते—**नन्विति** । अनपेक्षश्चेत्कथं सहकारिणमपेक्षतेऽत आह—**निरपेक्षोऽपीति** । स्वरूपलाभार्थमेव तस्य सहकार्यपेक्षा न कार्यजननार्थमिति भावः । परिहरति—**सत्यमिति** ।

इदंत्वत्र वक्तव्यम्—यदिदमन्त्यक्षणप्राप्तं क्षितिसलिलसंयुक्तमङ्कुरजनकं तद्यदि कृषीवलप्रयत्नविरहात्कुसूलस्थमेव स्यात्तदापि किमङ्कुरं जनयति । ओमितिचेत् किमर्थं तर्हि कृषीवलस्य प्रेक्षापूर्वकारिणः प्रयासः । विदुषां च स्वर्गापवर्गार्थं चैत्यवन्दनादिप्रयासः, तदुपदेशश्च देशिकानामनर्थकः स्यात्, अन्त्यक्षणप्राप्ताद्विज्ञानादेव धर्माधर्मानपेक्षात्स्वर्गापवर्गसिद्धेः । तस्मात्सहकार्यपेक्षाङ्गीकर्तव्या, ततश्च सहकारिसंनिधिक्रमेण संभवति स्थायिनोऽपि भावस्य क्रमेणार्थक्रियाकारणमिति विपक्षे बाधकप्रमाणाभावादनियता क्षणिकत्वेन सत्ता नालं तदनुमापयितुम् । नच ध्रुवभावितया विनाशस्य हेत्वन्तरानपेक्षत्वं, घटसंताने कपालसंतानस्य ध्रुवभाविनो मुसलप्रहारादिहेत्वन्तरापेक्षादर्शनादनैकान्तिकत्वात् ॥ * ॥ **ननु** हेत्वन्तरेण भावाद्भिन्ने विनाशे जाते विनाशेऽपि भावस्य पूर्ववदुपलब्धिः स्यात् तस्मात्स्वाभाविको विनाशः । किमिदं स्वाभाविको विनाश इति । भावस्वभावादेव विनाशो जायते न हेत्वन्तरादित्यर्थः ॥ * ॥ **ननु** भावादपि जातो विनाशो भावाद्भिन्नश्चेत्तुल्य एव दोषः पूर्ववदुपलब्धिः स्यादिति । अथाभिन्न एव विनाशो भावात्ततो विनाशस्याप्रत्यक्षत्वाद्भावोऽप्यप्रत्यक्षः स्यात् । अत्यन्तविपरीतस्वभावयोश्च भावाभावयोरेकत्वाभिधानं साहसमात्रम् । अथापि विनाशो नाम न किंचिद्भिन्नमभिन्नं वा तत्त्वं तुच्छत्वादिति । ततो जातस्य भावस्यासति विनाशे नित्यमेव स्यादिति सुसमर्थितः क्षणभङ्गः । तस्माद्भिन्नेनापि विनाशेन भावस्योपलब्ध्यादि निरस्यत इत्यकामेनाभ्युपगन्तव्यम् ॥ * ॥ यत्तु प्रतिक्षणमवस्थाभेद इति, भवतु, नैतावतावस्थावतो भावस्य प्रतिक्षणं विनाशेन भवितव्यं प्रमाणाभावात्, नानावस्थानामपि युगपदेकस्मिन्धर्मिणि विरुद्धानां क्रमेणाविरुद्धानां च संभवात्, ततश्च नूतनाद्यवस्थाः क्रमेणानुभूय पुराणावस्थां प्राप्तस्य प्रयत्नरक्षितस्यापि युक्तोऽवयवविश्लेषणाद्विनाशः । नच सत्तया दीपदृष्टान्तमात्रेण घटादेरपि क्षणिकत्वम्, सत्तायाः संदिग्धविपक्षव्यतिरेकादहेतुत्वात्, प्रतिज्ञायाश्च प्रत्यभिज्ञाप्रत्यक्षविरोधात् ॥ * ॥ नच सादृश्यात्तदुत्पत्तिः, अवयवसामान्यासंभवात्, अनुवृत्तं हि सामान्यं संभवति नच सर्वक्षणिकवादिनामनुवृत्तं किंचित्संभवति, संभवे वा न सर्वक्षणिकत्वम्, तस्मान्न सर्वभावानां क्षणिकत्वं नतरां शब्दस्य, तस्य ह्यन्तेऽपि विनाशो नास्ति यतः सूक्ष्मविनाशकल्पना स्यात्, तस्मान्नित्यः शब्दः । प्रयोगश्च भवति—नित्यः शब्दः श्रावणत्वाच्छब्दत्ववत् ॥

शब्दत्वस्य सामान्यत्वम् ।

नच शब्दत्वं नास्तीति भ्रमितव्यं प्रत्यभिज्ञानात्, अरण्ये हि गच्छन्तोऽश्रुतपूर्वं शब्दविशेषं

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**विपक्ष इति**। क्षणिकत्वविपक्षे स्थायित्वपक्षे अर्थक्रियाकारित्वे बाधकप्रमाणाभावादित्यर्थः । ततः किमत आह—**अनियतेति**। प्रभायाः क्षणिकत्वव्यभिचारादगमकत्वमित्यर्थः । उक्तदूषणपरिहारो नचेत्यादिना **नचेति**। प्रतिज्ञायां हेतुः—**घटसंतान इति**। **किमिदमिति** सिद्धान्तप्रश्नः । **भावस्वभावादिति**। क्षणभङ्गवादिन उत्तरम्। **ननु** भावादपीत्यादिः सिद्धान्तिग्रन्थः । दोषमेवाह—**पूर्ववदिति**। यथा विनाशात्पूर्वकाले उपलम्भस्तथा विनाशोत्तरकालेऽप्युपलम्भः घटजन्मनि पटस्येवेत्यर्थः। एतच्चाभ्युपेत्यवादेनोक्तं वस्तुतस्त्वभेद एव न संभवतीत्याह—**अत्यन्तेति**। अन्यदप्याशङ्क्य निराकरोति—**अथापीति**। **नानेति** । नानावस्थानामपि अविरुद्धानामेकस्मिन्धर्मिणि युगपत्संभवात् विरुद्धानां च क्रमेण संभवात् नावस्थाभेदमात्रेण क्षणिकत्वसिद्धिरिति तात्पर्यार्थः । विनाशस्तु युज्यत इत्याह—**ततश्चेति**। **सत्ताया इति**। विपक्षे स्थायित्वे सत्तायाः संभवाद्व्यभिचारेणाहेतुत्वमित्यर्थः । निराकरणमुपसंहरति—**तस्मादिति** । सूक्ष्मविनाशः प्रतिक्षणविनाशः । महाप्रकृतं निगमयति—**तस्मादिति** ॥

युक्तिभिरुपपादितमर्थं प्रयोगेण द्रढयति—**प्रयोगश्चेति** । नचास्य वायुधर्मभूतैर्ध्वनिभिर्व्यभिचारस्तेषामपि श्रावणत्वादिति वाच्यम्। ध्वनिधर्मान्यत्वेसतीति विशेषणात् । यथाहुर्वृद्धाः—'हेतुरेव त्वसौ स्पष्टो नित्यत्वस्योपलभ्यते ॥

श्रुत्वा प्राणिनः कस्यायं शब्द इति संदिहन्ते, नच सामान्यदर्शनमन्तरेण विशेषसंशयो घटते। तथावान्तरजातिरपि वर्गतृतीयगकारादिष्वनुवृत्ता ककारादिभ्यो व्यावृत्ता कदाचिदस्ति। तथा वर्गप्रथमेषु द्वितीयेषु चतुर्थेषु पञ्चमेषु च यथास्वमनुवृत्ताः सन्ति जातयः॥ * ॥ कथमवगम्यते। प्रत्यभिज्ञानादेव, तथाहि—कियत्यपि दूरदेशं दकारमुच्चरितं श्रुतवतां गकारादिषु संशयो भवति न चायं संशयो दत्वनिबन्धनो गकारादिष्वभावात्, अतोऽस्ति तृतीयादिष्वनुवृत्तमन्येभ्यो व्यावृत्तं रूपं यदुपलम्भादेष संशयः। तथा धकारोच्चारणे भकारादिषु संशयो नान्येषु। तेन चतुर्थेष्वप्यस्ति सामान्यम्, एवं प्रथमेषु द्वितीयेषु पञ्चमेषु च यथास्वं सामान्यानि तैरेव दृष्टान्तैः शब्दस्य श्रावणत्वहेतुना नित्यत्वानुमानम्॥ * ॥ ननु शङ्खादिनादानामनित्यत्वेऽपि श्रावणत्वादनैकान्तिको हेतुः। न। तेषामपि प्रत्यभिज्ञया नित्यत्वात्। यदि तेषु प्रत्यभिज्ञा नास्ति ततो 'ध्वन्यन्यत्वेसती'ति विशेषणादव्यभिचारः। यदा चानित्यत्वं ध्वनीनां तदा कार्यस्यानाश्रितस्यानुपपत्तेराश्रयभूतेन केनचिद्द्रव्येण भवितव्यं, तस्य चानेकत्वे प्रमाणाभावादेकत्वे द्रव्यस्यैकद्रव्याश्रितस्याभावाद्द्रव्यान्यत्वे शब्दस्य संयोगविभागयोरनपेक्षकारणत्वाभावादकर्मत्वे सति पारिशेष्याद्गुणत्वमेव ध्वनीनां भवति॥ * ॥ तत्र पार्थिवभेर्यादिगुणत्वे तरङ्गाद्याप्यद्रव्यगुणत्वे वा श्रवणप्राप्त्यसंभवान्न तद्ग्राह्यत्वं सिद्ध्येत्, तस्मान्न पृथिव्यादिगुणत्वम्। वायुगुणत्वं तु युक्तम्। मुखशङ्खादिसंयोगाद्भेरीदण्डसंयोगादन्यतो वा निष्पद्यमाना वायवस्तच्छब्दविशेषगुणका निष्पन्नाः सर्वासु दिक्षु प्रविशमानाः श्रोत्रेण संयुज्यन्ते ततश्च संयुक्तसमवायात्तद्गतः शब्दः श्रोत्रेण गृह्यते। यस्मादेव वायुगुणः शब्दस्तस्माद्यत्कैश्चिदुच्यते, 'शब्दलिङ्गमाकाश'मिति तन्निरस्तम्। वर्णानां तु नित्यानां द्रव्यत्वमेवाङ्गीक्रियते॥ * ॥ नन्वेषामपि शब्दत्वाद्ध्वनिवद्गुणत्वानुमानमिति चेत्। न। वर्णा न गुणाः ध्वन्यन्यत्वे सति श्रावणत्वाच्छब्दत्ववत् दिग्वत् कालवच्चेति प्रतिसाधनसद्भावात्। यथाच दिक्कालयोः श्रावणत्वं तथा प्राग-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

भूतावयवधर्माह्यध्वन्यन्यत्वविशेषितः' इति॥ *अर्थापत्त्यभिप्रायेण वर्णितमपि सूत्रं प्रयोगाभिप्रायेण वर्णयितुं अङ्क्यते—**नचेति**।—'अत्रोच्यते स्थिरःशब्दो धूमगोत्वादिजातिवत्॥ संबन्धानुभवापेक्षसामान्यार्थावबोधनात्'॥ यथा धूमत्वमग्नेर्गमकं गोत्वं च विषाणित्वस्येति दृष्टान्तार्थः। नचानित्यत्वानुमानेनास्य सत्प्रतिपक्षतेति वाच्यम्। तस्य दुष्टत्वात्। नतावत्कृतकत्वेन तत्साधनं, कृतकत्वस्य परं प्रत्यसिद्धेः। नाप्यैन्द्रियकत्वं हेतुः। आद्यमध्यमशब्दयोरैन्द्रियकत्वासिद्धेः। औलूक्यादिभिरन्त्यस्यैव तदङ्गीकारः। अथान्त्य एव पक्षोस्तु। नैवम्। मीमांसकं प्रत्याश्रयासिद्धेः। तेनान्तिमशब्दानङ्गीकारात् अविशेषेण तु सर्वशब्दपक्षीकरणे भागासिद्धो हेतुः। आद्यमध्यमेष्वव्याप्तेः। नच पक्षतावच्छेदकनानात्वे एव दूषणमिति वाच्यम्। एतस्य परिभाषामात्रत्वात् आद्यमध्यमशब्दयोरनित्यत्वासिद्धेः। किंचैन्द्रियकत्वस्य सामान्येष्वपि सत्वाद्व्यभिचारः। सामान्यवत्त्वेसतीति विशेषणेपि व्यभिचारः। गोत्वादीनामपि सत्तासामान्ययोगित्वात् व्यक्त्यतिरिक्तजात्यङ्गीकारे मीमांसकं प्रति *तद्वत्त्वमसिद्धम्। अभेदाङ्गीकारे तु तार्किकं प्रत्यसिद्धिरिति दिक्॥ पक्षसाध्यहेत्वादिदूषणप्रपञ्चस्तु वार्तिकेऽवगन्तव्यः॥ प्रसङ्गादवान्तरसामान्यं साधयति—**तथेति**। अवान्तरसामान्यसाधनस्य प्रयोजनमाह—**तैरेवेति**। अत्र सांख्यानां सत्वरजस्तमःस्वभावः शब्दः। आर्हतानां पुद्गलारब्धः। औलूक्यानामाकाशगुणः। तादात्म्याच्छङ्खादिविषयः। शिक्षाकारस्यार्थवाचकरूपेण शब्दात्मना परिणतो वायुरेव शब्दः। वैयाकरणानां तु स्फोट एव शब्द इति। तदत्र नानामतातिरेकेण स्वमतं दर्शयितुमाह—**यदाचेति**। अस्त्वेकमेवाश्रयरूपं द्रव्यं तत्राह—**एकत्व इति**। द्रव्यत्वं त्वनेकद्रव्याश्रितमेव दृष्टं अत एकद्रव्याश्रितस्य द्रव्यत्वासंभवात् नादस्य द्रव्यान्यत्वमित्यर्थः। कर्मत्वमपि न संभवति तल्लक्षणाभावादित्याह—**शब्दस्येति**। एवं गुणत्वे सिद्धे स्वमते वायुगुणत्वं वक्तुं परिशिनष्टि—**तत्रेति**। एवं शब्दमात्रस्य वायुगुणत्वे प्राप्ते वर्णेषु विशेषमाह—**वर्णानामिति**। **न तावदिति**। अतो नोच्चारणं वर्णानां कारणमिति। एवं

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

एवेत्यर्थः। प्रयोगे सूत्रकारस्यापि संमतिं दर्शयितुमाह—**अर्थापत्तीति**। **तद्वत्त्वमिति**। भेदे सत्येव तद्वत्ता संभ-

वोक्तम् । यत्तु स्पर्शविरहित्वे सत्येकेन्द्रियग्राह्यत्वाद्रूपादिवच्छब्दस्य गुणत्वमिष्यते, तस्यापि यथोक्तमेव प्रतिसाधनमित्यास्तां तावत् । तस्मात् ह्यस्तनाद्यतनयोः प्रत्यभिज्ञानाद्वर्णानां न तावत्प्रत्युच्चारणमन्यत्वम् । एवंचोच्चारणं शब्दस्य न कारणं किंत्वभिव्यञ्जकमिति सिद्धम् । नचोच्चारणादन्यत्कारणं संभवतीत्यकार्यत्वं, अतएवाविनाशान्नित्यत्वसिद्धिः । इदमेव हि नित्यत्वं यत्स्वरूपसद्भावे सत्युत्पत्तिविनाशरहितत्वम् ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

शब्दमात्रस्य वायुगुणतेति भावः । कथं तर्हि तदनुविधानं वर्णानामत आह—**एवमिति** । ततश्च दर्शनस्य परार्थत्वादित्यस्य उच्चारणस्य शब्दाभिव्यक्त्यर्थत्वादित्यप्यर्थः संभवतीति भावः । अधिकरणार्थमुपसंहरति—**अत इति** । अत्र द्वितीयं सिद्धान्तसूत्रम्—**सर्वत्र यौगपद्यादिति** । इतोपि नित्यः शब्दः, यतो गोशब्दात्सर्वत्र सर्वगवीषु युगपत्प्रत्ययो जायते अत आकृतिवचनोऽयम् । नचाकृत्या शब्दस्य संबन्धः शक्यते कर्तु*मिति संबन्धनित्यत्वद्वारा शब्दनित्यत्वं साध्यते । विनष्टे शब्दे तन्नित्यताया असंभवात् । विनश्वराणामपि व्यक्तीनां जातिसंबन्धो नित्यो दृष्ट इतिचेत् तत्र जात्याश्रयाणां व्यक्तीनामत्यन्तानुच्छेदात्संबन्धनित्यत्वम् । ता ह्यनुद्भूतरूपेण सर्वदा सन्त्येव, गोशब्दानां त्वनुद्भूतरूपेण स्थित्यभावात् । **ननु** संबन्धनित्यताया अभावात्कथं तद्द्वारा शब्दनित्यत्वसिद्धिः । नैष दोषः । संबन्धस्य कृतकत्वेऽङ्गुल्या कंचिदेकमर्थं निर्दिश्य संबन्धः क्रियेत । अनेकव्यक्तिष्वङ्गुलिनिर्देशासंभवात् । ततश्चैकव्यक्तिनिष्ठः संबन्धो न सार्वत्रिकः स्यादिति न सर्वगवीषु प्रत्ययः सिध्येत् । *जातिमेव निर्दिश्य संबन्धः क्रियत इति चेत् । न । *बहुजातिसंनिधाने हि सकृच्छ्रुतस्य गोशब्दस्य गोत्वमात्रशक्तिनिर्धारणा न स्यात् । यथाहुः—'पार्थिवद्रव्यसत्वादिलाङ्गुलत्वादिसंकरात् ॥ विना प्रयोगभूयस्त्वान्न स्याद्गोत्वावधारणे'ति । नित्येतु गोशब्दे सति बहुकृत्व उच्चारितः श्रुतपूर्वस्त्वन्यासु गोव्यक्तिषु *अन्वयव्यतिरेकाभ्यामाकृतिवचनतामव[illegible]मयिष्यति । तस्मादपि नित्यः । प्रयोगश्चात्र वार्तिककारैर्दर्शितः—'तस्मादकृत्रिमः शब्दो न कदाचिद्विनश्यति । नित्येन नित्यसंबन्धादाकाशपरमाणुवत्' । अथवा शब्दनित्यत्वमेवानेन सूत्रेणोच्यते न संबन्धनित्यत्वं, नित्येत्यादिभाष्यपर्यालोचनयैवमर्थावगात् । यथाहुः—'बहुभिः श्रवणैरेष प्राणित्वादीनि वर्जयत् ॥ निकृष्टगोत्ववाचित्वं चिरेण प्रतिपद्यते ॥ *तावत्कालं स्थिरं चैव कः पश्चान्नाशयिष्यति' ॥ तथा परं सूत्रं 'संख्याभावादिति' । अष्टकृत्वो गोशब्द उच्चरित इति हि वदन्ति नाष्टौ गोशब्दा इति तेनैकत्वमवगम्यते । भिन्नत्वे तु शब्दस्याष्टौ गोशब्दा इति संख्यया भाव्यं साच नास्ति, अतः स एवायमिति प्रत्यभिज्ञानादेकत्वं शब्दस्य सादृश्यात्प्रत्यभिज्ञानमितिचेत् । न । तादृश इति प्रतिपत्त्यभावात्, कृत्वसुच्प्रत्ययानुपपत्तेश्च । योयं क्रियाभ्यावृत्तिगणनविहितकृत्वसुच्प्रत्ययः स क्रियावतामभेदे भवति । तेन पूर्वोच्चरितस्यैव गोशब्दस्य पुनरुच्चारणक्रियैवानुवर्तत इत्यवगम्यते । तदुक्तम्—'क्रियावतामभेदे हि क्रियावृत्तिषु कृत्वसुच् ॥ तत्प्रयोगाद्ध्रुवं तस्य शब्दस्यावर्तते क्रिया' ॥ भुक्तवन्तोऽष्टकृत्वो ब्राह्मणा इति प्रयोगदर्शनात् व्यभिचारी कृत्वसुच्प्रत्यय इति चेत् । नैष दोषः । कृत्वसुच्प्रत्ययेनात्र प्रत्यभिज्ञानरूप*प्रमाणान्तरोपस्थापनात् । नापि कृत्वसुचो व्यभिचारः । एकब्राह्मणत्वविवक्षयात्र प्रयोगनिष्पत्तेः । अत्र बुद्धिकर्मणी अपीत्यादिशङ्कापरिहारभाष्यम् । 'नहि ते प्रत्यक्षे अथ प्रत्यक्षे ते अपि मितये एवे'ति । तदनुपपन्नमिव । प्रत्यक्षत्वेन हि नित्यत्वं साधयतो घटादिभिर्व्यभिचारः स्यात्, अप्रत्यक्षत्वेन चानित्यत्वसाधने व्योमादेरप्यनित्यता स्यात् । ततः परिहारभाष्यस्यायमभिप्रायो वर्णनीयः । नास्माभिः प्रत्यभिज्ञाशब्दस्य नित्यत्वे हेतुत्वेनोक्ता येनानैकान्तिकत्वमुच्येत, किंत्वनित्यत्ववादिनं प्रति प्रत्यभिज्ञाप्रत्यक्षविरोधोऽयमुक्तः । नच प्रत्यक्षस्यानैकान्तिकत्वं दूषणं स्यात् । अथवा लिङ्गत्वेपि प्रत्यभिज्ञाया नानैकान्तिकत्वं प्रत्यक्षत्वेन विशेषणात् । नहि बुद्धिकर्मणोः प्रत्यक्षत्वमिति भाष्यार्थः । नच घटादिभिर्व्यभिचारः । स्थायित्वमात्रसाधने तस्य दृष्टान्तत्वात् । नित्यत्वसाधनत्वे तु श्रौत्र*प्रत्यक्षत्वमेव हेतुः शब्दत्वं च दृष्टान्त इति । **ननु** कर्मणः प्रत्यक्षत्वात्कथमप्रत्यक्षत्वाभिधानं । नैष दोषः । परमाण्वाद्याश्रित-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

त्वादिति । नच मीमांसकमते भेदोऽस्ति अतस्तद्वत्त्वं तन्मते सिद्धमित्यर्थः । **इतिसंबन्धेति** 'इतोपीत्यादिना कर्तुमि'त्यन्तेन भाष्येण संबन्धनित्यलक्षणशब्दनित्यत्वं साध्यत इत्यर्थः । **जातिमेवेति** । जातेरेकत्वादेकनिष्ठः संबन्धः सेत्स्यतीति भावः । **बहुजातीति** । पार्थिवत्वद्रव्यत्वसत्वलाङ्गूलत्वगोत्वाद्यनेकजातिसंपिण्डितगोपिण्डे उत्पन्नविनष्टस्य गोशब्दस्यान्वयव्यतिरेकासंभवात् न संनिकृष्टगोत्वमात्रे शक्तिनिर्धारणा स्यादित्यर्थः । नित्येत्वित्यादिभाष्यग्रन्थः । **अन्वयेति** । तज्जातीयेषु सर्वेषु प्रयोगात् अतज्जातीयेषु चाप्रयोगादित्यर्थः । नन्वेवं स्थायित्वमात्रं सिद्ध्येन्न तन्नित्यत्वमत आह—**तावत्कालमिति** । **प्रमाणान्तरोपस्थापनादिति** । अतस्तदेवात्र प्रमाणं न कृत्वसुच्प्रत्यय इति भावः । **प्रत्यक्षत्वमेवेति** ।

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

कर्माभिप्रायित्वात् प्रत्यक्षत्वाभिधानं तु प्रत्यक्षद्रव्यवृत्तिकर्माभिप्रायं तस्य तु शब्दत्ववदेव प्रत्यक्षत्वान्नित्यत्वमिष्टमेवेति। यथाहुः—'यत्कर्मातीन्द्रियाधारं तदप्रत्यक्षमिष्यते ॥ प्रत्यक्षद्रव्यवर्तिन्यो दृश्यन्ते याः क्रियाः पुनः ॥ तासां वर्णवदेवेष्टं नित्यत्वं प्रत्यभिज्ञया' यदि नित्या एव ताः किमिति नित्यं नोपलभ्यन्ते। व्यञ्जकाभावादिति ब्रूमः। किं तदभिव्यञ्जकमिति चेत्कर्मोत्पादकत्वेन *यत्त्वदभिमतं नोदनाभिघाताख्यं तदेवाभिव्यञ्जकमिति गृहाण। व्यञ्जकाभावाच्च संततानुपलम्भः। यथाहुः—'त्वच्छब्दत्वकर्मत्वे नित्ये अपि सती यथा॥ न नित्यमुपलभ्येते तथा ये बुद्धिकर्मणी'। बुद्धेश्चैकत्वेऽपि प्रयत्नभेदाद्भेदः। कर्मणश्च देवदत्तश्चलति यज्ञदत्तश्चलतीत्याश्रयभेदाद्भेद इति। **ननु** कर्मणः संयोगविभागाख्यकार्यनाश्यत्वात्कथं नित्यत्वसिद्धिः। सत्यम्। तत्तु कर्मणां द्रव्यसंबन्धमेव नाशयति न कर्मस्वरूपम्। द्रव्यसंबन्धनमेव वाभिव्यक्तिः। क्रिया हि जातिवदेव यस्मिन्द्रव्ये तादात्म्यं समवायं वा संबन्धं प्रतिपद्यते तत्रैव गृह्यते। अतः संबन्धनमेव वाभिव्यक्तिः बुद्धेश्चैतन्यरूपत्वादेव नित्यत्वम्। चैतन्यं चितिशक्तिः तच्च पुंसः *स्वाभाविकत्वान्नित्यमेकंच। गोबुद्धिरश्वबुद्धिरित्यादिभेदस्तु *विषयनानात्वात्। यथाहुः—'बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य नः। नित्यत्वमेकता चेष्टाभेदस्तु विषयाश्रयः'॥ **ननु** भाष्ये बुद्धेरेव नित्यत्वमुच्यते नतु तच्छक्तेः। सत्यम्। चैतन्यमेव भाष्ये बुद्धिशब्देनोच्यते तत्तु समर्थं शक्तियुक्तमिति यावत्। यदि चैतन्यः पुमान् किमिति सर्वं सर्वदा न जानाति। मैवम्। शक्तस्यापि सहकारिसंनिध्यपेक्षणात्। उक्तंच —'स्वरूपेण यथाचाग्निर्नित्यं दहनकर्मकः। उपनीतं दहत्यर्थं दाह्यं नान्यन्नचान्यथा'॥ **ननु** विषयान्तरसंचारे पूर्वबुद्धेर्भग्नत्वावगमात्कथं नित्यत्वम्। सत्यमेतत्। विषयोपनेतृचक्षुरादिकरणव्यापारभङ्गात्तन्निमित्तोऽप्यात्मविकारो भज्यत इति भग्नबुद्धिर्न पुनश्चैतन्यभङ्गादिति। **ननु** बुद्धिश्चैतन्यं चितिशक्तिः तस्याश्चाप्रत्यक्षत्वात्कथं प्रत्यक्षत्ववचनम्। सत्यम्। चितिशक्तिरप्रत्यक्षा, अत्र तु चैतन्यस्वभावः प्रमातैव लक्षणया बुद्धिशब्देनोच्यते। सच प्रत्यक्षो नित्यश्च, तस्य ज्ञानाख्यो विकारोऽप्रत्यक्षोऽनित्यश्चेति तदभिप्रायं पूर्वभाष्यम्। तदेवं भाष्यार्थः—यत्पूर्वपक्षवादिना बुद्धिकर्मणोर्नित्यत्वप्रसञ्जनं कृतं तद्यदि ज्ञानस्वरूपविकाराभिप्रायं तदयुक्तम्। तस्याप्रत्यक्षत्वात्। अथ चिच्छक्तिस्वभावपुरुषाभिप्रायं, सतु नित्य एवेति। एवं शुक्लादिगुणानामपि नित्यत्वैकत्वेऽवगन्तव्ये। *भेदबुद्धिस्तु भिन्नाश्रयसंसर्गात्। स्वरूपैकत्वेच ततएव प्रत्यभिज्ञोपपत्तेर्न गुणत्वरूपत्वातिरेकेण शुक्लत्वादिजातिः कल्पनीया। योप्ययमतिशुक्लोयमीषच्छुक्ल इति भेदः सोपि संसर्गभेदात्। तथाहि केवलद्रव्यसंसर्गेऽपि शुक्लं नीलादिसंसर्गे त्वीषदिति। यदपि धूसरस्वच्छभासुरपार्थिवाप्यतैजसेषु द्रव्येषु शुक्लस्य वैलक्षण्यं तदपि भिन्नजातीयद्रव्यसंसर्गभेदेनावगन्तव्यम्। ज्वालादेः क्षणिकत्वेपि प्रत्यभिज्ञास्तीति चेत्। सत्यम्। सा यदि सामान्यविषया न दोषः। कैश्चित्तस्य नित्यत्वानङ्गीकारात्। व्यक्तिविषया तु तद्गताभेदबुद्ध्यैव बाधिता नालं नित्यत्वं साधयितुम्, प्रत्यभिज्ञा तु ज्वालादीनां सादृश्यादपि संभवति, शब्दे तु नैवं बाधकमस्तीति दिक्॥ शब्दनित्यत्वे तु प्रयोगा वार्तिकेऽवगन्तव्याः। तथा परं सूत्रम् 'अनपेक्षत्वा'दिति। यथाभिनवं पटादिकं क्रियमाणमनुपलभ्यापि वर्तमानदशायां तन्त्वादिसंयोगापेक्षजन्मा पटादिरित्यध्यवसाय नूनमेतत्तन्त्वादिनाशात्तत्संयोगनाशाद्वा विनङ्क्ष्यतीत्यनित्यत्वमध्यवसीयते नैवं शब्दस्य किंचित्कारणमवगम्यते यद्विनाशाद्विनङ्क्ष्यतीत्यवधारणा भवति, अतोऽवयवसंयोगादिकारणानपेक्षत्वादसंभावितविनाशो नित्य एव शब्द इति सूत्रार्थः। **ननु** वायुरापद्यते शब्दतामिति शिक्षाकारवचनात्पटादिवदवयविद्रव्यविशेषः शब्दोऽतस्तद्वदेवावयवसंयोगविशेषविनाशात्संभवत्येवास्य विनाश इति शङ्कानिराकरणार्थं सूत्रम्। 'प्रख्याभावाच्च योगस्य' इति प्रकृष्टा प्रत्यक्षाख्या प्रख्या प्रत्यभिज्ञेतियावत्। वायवीयावयवयोगस्य अन्वयस्य कार्यशब्दप्रत्यभिज्ञाभावात् न तत्कारणत्वं शब्दस्येति सूत्रार्थः। यदाह भाष्यकारः 'वायवीयश्चेच्छब्दो भवेत् वायोः संनिवेशविशेषः स्यात्। नच तानस्य वायवीयानवयवान् शब्दगतान्स्पृशामः तस्मान्न वायुकारणकः शब्दः अतो नित्य इति। वार्तिकं च—*'शब्दो यथा पौद्गलिको निषिद्धः स्याद्वायवीयस्य स एव मार्गः। तस्मादनिर्धारितहेतुभागः सर्वत्र साक्षाद्भवतीति नित्यः'॥ इतश्च नित्यः शब्द

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

प्रत्यक्षत्वे सति प्रत्यभिज्ञायमानत्वादिति हेतुविशेषणादित्यर्थः। **यत्त्विति**। संयोगविभागाख्यं कार्यमित्यर्थः। **स्वाभाविकत्वादिति**। एतच्च पुंसः स्वाभाविकमतो नित्यमित्यर्थः। **विषयेति**। विषयशब्देन विषयघटादिभेदेनानुष्ठीयमानभेदश्चितिशक्तेः कार्यभूतः पुंसो ज्ञानाख्यो विकार उच्यते। तस्यानुमेयत्वं शून्यवादे वर्णितं तद्भेदाद्भेदाभास इति। **ननु** बुद्धेः प्रत्यक्षत्वं शास्त्रविरुद्धं ज्ञाततालिङ्गकानुमानगम्यं चाङ्गीकारात्। मैवम्। बुद्धिज्ञानयोः स्वरूपभेदेन तदुपपत्तेः। अयमत्र विवेकः—'चैतन्यं चितिशक्तिर्या पुंसः सा बुद्धिरुच्यते॥ चितिशक्तेः कार्यभूतो विकारः पुरुषस्य यः॥ ज्ञानाख्यः सोऽनुमेयस्तु शास्त्रेऽस्मिन्नुपवर्णितः॥ चितिशक्तिर्यदा बुद्धिः कथं प्रत्यक्षता तदा॥ शक्तेरतीन्द्रियत्वं हि मीमांसायां प्रतिष्ठितम्॥ शक्तिः कार्यानुमेयत्वादिति वार्तिकशासनात्॥ चैतन्यमेव शास्त्रेऽस्मिन्बुद्धिरित्यभिधीयते॥ चितिशक्तियुतं तत्तु प्रत्यक्षं सर्वदैव नः' इति॥ **भेदबुद्धिस्त्विति**। अयमपि शुक्लोऽयमपि शुक्ल इति भेदबुद्धिः। **शब्दो यथेति**।

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

इत्याह 'लिङ्गदर्शनाच्च'। एतच्च वार्तिककारैः स्पष्टार्थत्वात्त्यक्तम्। अन्यपरं वाक्यमन्यार्थद्योतकं लिङ्गमित्युच्यते। तदत्र शब्दस्य नित्यत्वे दृश्यते 'वाचा विरूपनित्यये'ति रूपयतीति रूपं वाचःकर्ता तद्रहितत्वेन नित्या वेदवाक् विरूपनित्येत्युच्यते तयेति श्रुत्यर्थः। इयं चाग्निपदा ऋक् अतोऽत्र लिङ्गं तद्दर्शनान्नित्यः शब्द इति। उक्तंच—'अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदती'ति 'भाष्यवार्तिकयोर्दृष्टमुपयुक्तं स्वदर्शने। ग्रन्थकारेण च त्यक्तं प्रमेयं लिख्यते मया'॥ नन्वस्तुनामैवं नित्यत्वं तथापि*आनुपूर्व्यनित्यत्वादनित्यत्वमापन्नं, पदं हि वाचकमिष्टं, तच्च क्रमाधीनं, विशकलितानां वर्णानामवाचकत्वात् क्रमश्चानित्यः। *तथाहि देशतः कालतो वा क्रमो भवति। नच वर्णानां सर्वगतानां नित्यानां च स्वतः क्रमः संभवति। *ध्वनयो हि क्रमवर्तिनः क्रमेण शब्दानभिव्यञ्जयन्तः स्वीयं क्रमं वर्णेष्वपि दर्शयन्ति, *क्रमरचना च पुरुषाधीना यथाविवक्षं तदुपपत्तेः। अतः पुरुषपारतन्त्र्यादप्रामाण्यापत्तिः। अतो निष्फलमेव वर्णानां नित्यत्वप्रतिपादनम्। नहि तन्नित्यत्वे वाचकस्य पदस्य नित्यत्वं सिध्यति। नहि परमाणूनां नित्यत्वादारब्धे घटादौ नित्यत्वं दृष्टम्। यथाहुः—'वर्णाः सर्वगतत्वाद्वा न स्वतः क्रमवृत्तयः॥ अनित्यध्वनिकार्यत्वात्क्रमस्यातो विनाशिता॥ पुरुषाधीनता चास्य तद्विवक्षावशाद्भवेत्॥ वर्णानां नित्यता तेन निष्फला परमाणुवत्॥' किंच क्रमं विना वर्णानां प्रतिपादकत्वासंभवात्क्रमस्य च वाचकत्वात्पदत्वं न क्रमविशिष्टानां वर्णानां *तस्य चानित्यत्वाद्वाचकानित्यत्वमिति। अत्रोच्यते—न तावत्क्रमस्य पदत्वप्रसक्तिः। वस्त्वन्तराधारस्य स्वतन्त्रस्य क्रमस्यादर्शनात् अतोत्र गुणप्रधानभाव एव विचारणीयः किं क्रमविशिष्टा वर्णा एव वाचकाः उत वर्णाश्रितः क्रम इति। एवंच सति क्रमवतां वर्णानामेव वाचकत्वं प्राधान्यात् न क्रमस्य। सर्वपदार्थाङ्गत्वेन तस्यावगमात्। नह्यसौ स्वतन्त्र एव वस्त्वन्तरत्वेन क्वचिद्व्यवह्रियते। अतएव क्रमविशिष्टा वर्णा एवास्माकं प्रतिपादकाः न क्रममात्रम्। नन्वस्तु नामैवं तथापि क्रमस्य पुरुषार्थत्वात्तद्विशिष्टवाचकस्यापि पौरुषेयत्वमापत्स्यते तन्न। अत्राहुः—नच क्रमस्य कार्यत्वं पूर्वसिद्धपरिग्रहात्॥ *वक्ता नहि क्रमं कंचित्स्वातन्त्र्येण प्रपद्यते॥ यथैवास्य परैरुक्तिस्तथैवैनं विवक्षति॥ परोप्येवमतश्चास्य संबन्धवदनादिता॥ तेनैवं व्यवहारात्स्यादकौटस्थ्येपि नित्यता॥ *यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता'इति। ननु वर्णानामपि व्यवहारादेवानिदंप्रथमत्वरूपनित्यत्वमस्तु किं कूटस्थनित्यतयेतिचेत्। नैवम्। वर्णानामनित्यत्वे *व्यवहारस्यैवानुपपत्तेः। तथाहि वर्णेषु नित्येषु सत्सु तानेवादाय प्रयोगविशेषेण शक्यते क्रमविशेषो निष्पादयितुं परमाणुभिरिव घटादीनि। वर्णाभावे तु किंमूला रचना स्यात्। नहि निरुपादानं कार्यरचनं संभवति। नच नित्यविभूनां क्रमानुपपत्तिरिति वाच्यम्। ध्वनिवशात्तदुपपत्तेः। ताल्वादिसंयोगविभागक्रमवशेन तत्प्रेरितानां ध्वनीनामपि क्रमो भवति। ताल्वादयो ध्वनयश्च जात्या नित्याः। तेन गकारौकारसविर्जनीयानां क्रममिच्छन् तदभिव्यञ्जकानां ध्वनिजातीयानां तदनुरूपेण क्रमेण प्रेरणं चिकीर्षन् ताल्वादिसजातीयानां स्थानानां संयोगविभागौ क्रमेणारभत इति तद्वशेन व्यापकानामपि वर्णानां क्रमग्रह इति। केचित्तु क्रमस्य कूटस्थत्वमेवाहुः। तथाहि—पौर्वापर्यं क्रमः चिरक्षिप्रात्मकं च दीर्घादिरूपं, पूर्वापरचिरक्षिप्रप्रत्ययाश्च कालालम्बनास्तेन ध्वनिभिर्वर्णेषु पूर्वापरभागेन व्यज्यमानः काल एव क्रम इति। ननु काल एव चेत्क्रमः स त्वेको विभुर्नित्यश्च कथं पूर्वापरेण रूपेण विभक्तो भासते। उच्यते—यथा वर्णो नित्यः सर्वगतोऽपि दीर्घादिरूपेण विभक्तो भासते ध्वन्युपाधिवशात् तथा कालोऽपि स्वयमभिन्नोपि आदित्यगतिक्रियोपाधिवशाद्भिन्नो भासते उपाधयश्च विनष्टवर्तमानाना-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

पौद्गलिकः पुद्गलाख्यवर्णपरमाण्वारब्धः स यथा निरस्तः तेनैव न्यायेन शब्दस्यावयवयोगोपि निराकर्तव्यः। बाधान्वयव्यतिरेकानुविधायित्वं तु शब्दस्य जनकतया प्रागेवोक्तम् तस्मादित्यधिकरणार्थोपसंहारः। अतोऽस्य हेतुर्नास्ति उच्चारणस्याभिव्यञ्जकत्वात्। यतश्च भागा न सन्ति यतश्च सर्वदेशे साक्षाद्भावात् अपरोक्षीभावात्सर्वगतस्तस्माद्व्योमादिवन्नित्य इति श्लोकार्थः। **आनुपूर्व्यनित्यत्वादिति**। आनुपूर्वी क्रमः तस्या नित्यत्वाद्वाचकानित्यत्वमित्यर्थः। एतदेवोपपादयति—**पदं हीति**। कथं क्रमस्यानित्यत्वमत आह—**तथाहीति**। कुतस्तर्हि तेषु क्रमोऽत आह—**ध्वनयो हीति**। नन्वनित्यत्वेऽपि पुरुषस्वातन्त्र्याभावान्न प्रामाण्यं तत्राह—**क्रमेति**। पुरुषो हि स्वविवक्षानुसारेण क्रममारचयति। अतस्तत्र पुरुषस्य स्वातन्त्र्यमित्यर्थः। तदुपपत्तेः क्रमोपपत्तेरित्यर्थः। **तस्य चेति** क्रमस्येत्यर्थः। एतदेव विवृणोति—**वक्तेति**। कथं पुनरवगम्यते सर्वः परोक्तप्रकारमेव क्रमं विवक्षति। ननु कश्चिदपि स्वातन्त्र्येणेति तत्रोत्तरं संबन्धवदिति। कर्तुरस्मरणादित्यर्थः। **नन्वसत्यपि स्वातन्त्र्ये पुरुषकार्यता तावत्क्रमस्यास्तीति**। तद्विशिष्टस्यापि कथं नित्यतेति **तत्राह—तेनेति**। न कूटस्थनित्यतां वाचकस्य ब्रूमः किंतु व्यवहारवदेवास्य नित्यत्वं, अनिदंप्राथम्यमिति यावत्। गकारौकारविसर्जनीयानां एतेषामेव ईदृशेनैव क्रमेण व्यवहारः प्रायोऽनिदंप्रथम इति पदस्यानिदंप्रथमत्वं नित्यत्वमेव न वर्णवत्कूटस्थनित्यत्वमिति। **नन्वेवमपि पुरुषकार्यतास्त्येव तदधीनं च प्रामाण्यं संपन्नमत आह—यत्नत इति**। स्वातन्त्र्ये हि पुरुषस्य तदायत्तं प्रामाण्यं स्यात् न पारतन्त्र्ये। उच्चारणपरतन्त्रो हि पुरुषः। नह्यस्माभिरुच्चार्यमाणानामपि मन्वादिवाक्यानामस्मदादिदोषवशेना-

वेदप्रत्यायकत्वाधिकरणम् ॥ ७ ॥

**उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ [तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्॥२५॥ लोके संनियमनात्प्रयोगसंनिकर्षः स्यात्॥२६॥]**

वेदवाक्यमप्रमाणं स्यान्मानं वा नास्य मानता ॥ पृथक्संगत्यपेक्षायामनपेक्षत्ववर्जनात् ॥ ५१ ॥

वेदेऽपि लोकवच्चैव वाक्यार्थे संगतिः पृथक् ॥ अग्रहीतव्या ततो वाक्यं प्रमाणं नैरपेक्ष्यतः ॥ ५२ ॥

यद्यपि पदपदार्थसंबन्धस्यापौरुषेयत्वाद्वृद्धव्यवहारादेवार्थावगतिः सिद्ध्यति तथापि वाक्यार्थरूपे धर्मे पुरुषसंकेतानपेक्षत्वान्न किंचिन्मूलं संभवतीत्यप्रामाण्यं धर्मे चोदनायाः ॥ * ॥ तथाहि प्रत्येकं वा पदानि वाक्यार्थमवगमयेयुस्तत्संघातो वाक्यं वा पदार्था वा । न तावत्प्रत्येकं पदेभ्यो वाक्यार्थप्रतीतिर्दृश्यते, न पदानां वाक्यार्थविशेषैः संबन्धग्रहणमस्ति, नच संभवत्यनन्तत्वाद्वाक्यार्थानाम् । वेदार्थस्य च प्रमाणान्तरागोचरत्वात्तेन संबन्धग्रहणमत्यन्तासंभाव्यम् । अनन्तवाक्यार्थसाधारणत्वाच्च पदार्थानां प्रत्येकं वाक्यार्थविशेषप्रतिपादनमनुपपन्नम्, अगृहीतसंबन्धत्वादेव च पदसंघातवाक्यपदार्थानामपि न संभवति प्रत्यायकत्वम् । नचागृहीतसंबन्धः शब्दोऽर्थं प्रत्याययति बालानामप्रतीतेः, प्रतीतौ व्युत्पत्तिवैयर्थ्याच्च । यद्यपि पदमज्ञातसंबन्धं न प्रत्यायकं तथापि पदसंघातो वा पूर्वपूर्ववर्णजनितसंस्कारसहितो वा वाक्यान्त्यवर्णो वा निरवयवो वाक्यस्फोटो वा संबन्धग्रहणानपेक्ष एव वा वाक्यार्थं प्रत्याययिष्यतीति चेत् । न । अव्युत्पन्नानामपि प्रसङ्गात्, व्युत्पत्तिवैयर्थ्यप्रसङ्गाच्चेत्युक्तम् । अथ पदार्थवेदनमपि वाक्यार्थप्रतीतावङ्गमतस्तद्रहितानामपि प्रतीतिर्न दोषः, व्युत्पत्तिश्च पदार्थानां नानर्थिकेत्युच्यते, तदयुक्तम् । यदि हि पदेभ्योऽर्थान्तरभूतं वाक्यं पदार्थव्यतिरिक्तं वाक्यार्थं साक्षादेव वाचकतया प्रतिपादयति कस्तदा पदार्थवेदनस्योपयोगः तदनुपयोगे च पदार्थव्युत्पत्तिरनर्थिका वाक्यार्थं प्रतिपित्सताम् । नच पदार्थाद्वाक्यार्थावगतिः असंबन्धात् ॥ * ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

गताः सूर्यादिक्रिया इति तद्दर्शने कालेप्यतीतादिविभागः क्षिप्रत्वं चाल्पक्रियावच्छेदात् । बहुक्रियावच्छेदाच्चिरत्वमिति क्रमस्य नित्यत्वे पदस्यापि नित्यत्वं सिद्धम् । यथाहुः—'तस्मान्न पदधर्मोऽस्ति विनाशी कश्चि*दीदृशः ॥ *तेन नित्यं पदं सिद्धं वर्णानित्यत्ववादिनाम्' ॥ **ननु** ध्वनिधर्माः क्रमादयः कथं वर्णानामर्थं प्रत्याययतामङ्गं भवन्ति । अत्राहुः—'परधर्मोपि चाङ्गत्वयुक्तमश्वगजादिवत्' किं पुनः क्रमादिनां व्यवहारनित्यत्वे प्रमाणं । अर्थापत्तिरेवेति ब्रूमः । पूर्वोक्तार्थापत्तिर्वाचकरूपस्यैव नित्यत्वं कल्पयति न वर्णस्वरूपमात्रस्येति । इति शब्दाधिकरणम् ॥

**उत्पत्तौ वावचनाः स्युः ॥ २४ ॥ ननु** पदपदार्थसंबन्धस्य नित्यत्वे साधिते पुरुषानुप्रवेशाभावात्प्रतिज्ञातं चोदनाप्रामाण्यं सिद्धमेवेति किं वाक्यविचारेणेत्याशङ्क्याह—**यद्यपीति** । अनेन पूर्वोत्तरविचारयोराक्षेपसंगतिर्दर्शिता । अत्र कश्चिन्न तावत्पदार्थनित्यत्वं साधितमाकृतिग्रन्थे तत्सद्भावमात्रप्रतिपादनात् । अतः पदपदार्थसंबन्धानामपौरुषेयत्वानुभाषणमनुपपन्नम् । उच्यते—शब्दनित्यत्ववदाकृतेरपि प्रत्यभिज्ञया नित्यत्वैकत्वे सिद्धे दृष्टैकगोव्यक्तेरपरदर्शनेन स एवायमिति निश्चयात्, यागादेर्हि स्वर्गादिफलसाधनत्वांशो धर्मः स च वाक्यार्थो नैकेन पदेनोच्यत इति संकेताग्रहणान्निर्मूलो वाक्यार्थप्रत्यय इत्यर्थः । निर्मूलत्वमेव दर्शयितुं यावत्संभवं मूलानि विकल्प्य निराकरोति—**तथाहीति । ननु** वाक्यस्य पदसंघातरूपत्वात्कथं पृथङ्निर्देशः । आकाङ्क्षादिमत्पदसंघातरूपत्वेन पृथङ्निर्देश इति ब्रूमः । इतोपि न संबन्धग्रहणमित्याह **—वेदार्थस्येति** । नन्वदृष्टसंगतीन्यपि चक्षुरादीन्यर्थं बोधयन्त्येव । सत्यम् । तेषां सत्तामात्रेणैव बोधकत्वं नतु शब्दस्य तथेत्याह—**नचेति** । अत्र चोदयति—**यद्यपीति** । अनन्तरोक्तदोषद्वयपरिहारं शङ्कते—**अथेति** । तद्रहितानां पदार्थावगतिरहितानाम् । वाक्यार्थस्य याऽप्रतीतिः अङ्गवैकल्यात्सा दूषणमेव न भवतीत्यर्थः । दूषयति—**तदिति** । पदपदार्थव्यतिरेकेण वाक्यवाक्यार्थयोरर्थान्तरभूतयोरनवगमादिति भावः । **असंबन्धादिति** । यथा पदपदार्थयोः

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

प्रामाण्यं भवंति । **व्यवहारस्यैवेति** । व्यवहारोत्र क्रमविशेषविशिष्टवर्णप्रयोगरूपो ज्ञातव्यः । **ईदृश इति** । अर्थप्रत्यायकमित्यर्थः । यदाच वर्णनित्यत्ववादिनां पदस्यापि व्यवहारनित्यत्वम् । एवंच यदुक्तं वर्णानामित्यादिना तेन निष्फल परमा

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

संबन्धोऽस्ति न तथा पदार्थवाक्यार्थयोः संबन्धोऽस्तीत्यर्थः । किंच पदार्थानां परस्परमप्यसंबन्धाद्वाक्यार्थावगतिर्दुर्लभा । तथाहि जातिपदार्थपक्षे तावद्गोशब्देन गोत्वमात्रमभिहितं शुक्लपदं तु तदेकवाक्यभूतं तस्यैव शुक्लगुणानुरागं प्रतिपादयतीति संसर्गो वाक्यार्थो वाक्यार्थत्वाच्च पदानामेकवाक्यता, व्यक्तिपदार्थपक्षे तु गोशब्देनैव शुक्लकृष्णादिव्यक्तिषु सर्वास्वभिहितासु शुक्लपदं शुक्लसंसर्गं प्रतिपादयदपि तत्परत्वे सति*आनर्थक्यात्कृष्णादिव्यवच्छेदेनैव विशेषणं भवतीति भेदो वाक्यार्थः । *तत्राद्ये पक्षे संसर्ग एव मुख्यो वाक्यार्थः कृष्णादिव्यवच्छेदस्त्वार्थिकः । द्वितीयपक्षे तु शाब्द एव कृष्णादिव्यवच्छेदः । तत्र पदाभिधेययोर्जातिगुणयोर्मिथोऽनुरागव्यवच्छेदाभावात् विशेषणविशेष्यत्वमनुपपन्नम् । अनुरागासंभवे च तन्निबन्धनो व्यवच्छेदोऽप्यनुपपन्नः । यथाहुः—'गोत्वेन नहि शुक्लत्वं गोत्वं वा तेन रज्यते ॥ अन्योन्यात्मन्यसद्भावाद्व्यक्तिगत्वाद्द्वयोरपि' ॥ ननु मास्तु परस्परानुरागस्तथापि व्यक्तिरेव ताभ्यामनुरज्यमाना वाक्यार्थो भविष्यति । मैवम् । तस्याः शब्देनाप्रतिपद्यमानाया वाक्यार्थत्वासंभवात् । तदसंभवाच्च न शब्दयोरप्येकवाक्यतासिद्धिः । इतश्च न संसर्गभेदयोर्वाक्यार्थत्वम् । यथाहुः—'संसर्गे वापि भेदे वा वाक्यार्थे परिकल्पिते ॥ पदार्थव्यतिरेकश्च नास्ति संसर्गभेदयोः ॥ पदार्थैरेव संसर्गभेदानुगृहीतैर्वाक्यार्थो नाम वस्त्वन्तरमेवारभ्यत इतिचेत् । न । जातिगुणयोर्वस्त्वन्तरानारम्भकत्वात् । वाक्यार्थातिरिक्तस्य तस्य प्रमाणान्तरेणानुपलम्भात् । अत्र वैयाकरणैरुक्ता वाक्यविकल्पाः 'आख्यातं शब्दसंघातो जातिः संघातवर्तिनी ॥ एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहतिः ॥ पदमाद्यं पृथक्सर्वं पदं सापेक्षमित्यपि ॥ वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम्' ॥ तत्र तावदाद्यस्य पदस्यान्त्यस्य वा सर्वेषां वा प्रत्येकं मिथोऽनुग्रहापेक्षया संघातस्य वाक्यत्वकल्पनं तदयुक्तम् । इतरेतरानुग्रहासंभवात् । तत्र *न तावदाद्यस्येतरेतरैरनुग्रहः कश्चिद्दृश्यते नच संभवत्ययौगपद्यात् । किंचाद्यस्यैव सर्वैः संस्क्रियमाणस्य प्राधान्याद्वाक्यत्वं स्यात् । नाप्यन्त्यस्य सर्वेषां संहतानां पृथग्भूतानां वास्त्यनुग्रहः । उक्तदोषात् । अनुग्रहरहितानां च स्वतन्त्राणामेव वाक्यत्वे व्यस्तोच्चारितानां गौरश्च इत्यादीनां च वाक्यत्वं स्यात् । 'नापि एकोऽनवयवः शब्दो जातिः संघातवर्तिनी'ति पक्षौ, पदस्फोटजातिनिराकरणेन निराकृतत्वात् । नापि क्रमो बुद्ध्यनुसंहतिरिति पक्षः, क्रमस्य बुद्ध्या निकृष्योपसंहर्तुमशक्यत्वात् । यथाच वर्णक्रमस्य पदत्वं निराकृतं तथा पदक्रमस्य वाक्यत्वमपि निराकर्तव्यम् । किंच वर्णक्रमस्य पदत्वं युज्येतापि अर्थप्रतीत्यौपयिकत्वात्क्रमान्तरे चार्थप्रतीत्यभावात्, पदक्रमस्यतु वाक्यार्थप्रत्ययानौपयिकस्य कथं वाक्यत्वं औपयिकत्वे वा क्रमभेदे सति वाक्यार्थभेदः स्यात् । अस्तु तर्ह्याख्यातपदमेव वाक्यं प्राधान्यात् पदान्तरस्य तदर्थत्वात् प्राधान्यं चाख्यातस्य पदार्थान्तरानुरक्तप्रधानभूतभावनाप्रतिपादकत्वात् । एतदप्ययुक्तम् । तदाकारज्ञानोत्पत्तावपि पदार्थानां परस्परं संगत्यभावात् । कारकाणां क्रियाणां वा परस्परं संबन्धाप्रतीतेः । न तावद्द्रव्याणां परस्परं संबन्धः तादात्म्याद्यसंभवात् । यथाहुः—*'अत्यन्तभेदनिष्पन्नषष्ठ्यभावानपेक्षणैः ॥ तृतीयाद्यपहारेण संनिधेरपि बाधनात्' । हन्त तर्हि कारकविभक्तिश्रवणात्क्रिययैव सह द्रव्याणां संबन्धोस्तु । मैवम् । स्वरूपेण द्रव्याणां क्रियासंबन्धाभावात् । नह्यार्द्रैः काष्ठैः पाकक्रिया संभवति । शक्तिरेव कारकं नचार्द्राणां शक्तिरस्तीतिचेत् । न । अमूर्तायास्तदसंभवात् । शक्तिविशिष्टं द्रव्यं कारकमितिचेत् । न । शक्तैरपि तैस्तिष्ठद्भिः पाकासंभवात् । ज्वलनादिमुखेन तेषां पाकसंबन्ध इति चेत् । न । क्रिययोः परस्परान्वयासंभवात् । काष्ठादीनां च ज्वलनोपक्षीणानां पाकसाधनत्वासंभवाच्चेति दिक् । अत्राधिकं वार्तिकेऽवगन्तव्यम् । *एवं धातुप्रत्ययवाच्ययोः क्रिययोरपि संगतिर्न संभवति । भावनासंबन्धो हि साध्यतया साधनतया वा स्यात् । नोभयथापि संभवति । साध्यसाधनवाचिन्योर्द्वितीयातृतीययोः पचतीत्यत्राश्रवणात् । नापि विध्यन्वयः संभवति । सकृदुच्चरितस्य विधिप्रत्ययस्य श्रौतानेकव्यापारासंभवात् । धात्वर्थान्वितभावनाविधानादर्थाद्धात्वर्थविधिरपि सेत्स्यतीति चेत् । न । धात्वर्थान्वयात्प्रागेव समानप्रत्ययोपादानलक्षणया प्रत्यासत्त्या केवलाया एव भावनाया विधानात् मास्तु धात्वर्थविधानं तथापि पदश्रुत्या भावनायां विनियुक्तत्वात् तस्याप्यनुष्ठानं सेत्स्यति । मैवम् । विधिसंबन्धं विनानुष्ठानासिद्धेः, विध्यधीना हि प्रवृत्तिर्नाभिधानविनियोगमात्राधीनेति । यदाच समानपदोपात्तस्यापि धात्वर्थस्याविधानं तदा पदा-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

णुवदिति तत्परिहृतमित्याह—**तेनेति** ॥ उत्पत्तौ० ॥ **आनर्थक्यादिति** । गोशब्देनैव शुक्लकृष्णादिसंसृष्टसकलव्यक्तिप्रतिपादनात् शुक्लपदेनापि पुनः शुक्लसंसर्गप्रतिपादने सत्यानर्थक्यं स्यादित्यर्थः । अत्रादावुपन्यस्तमप्याख्यातवाक्यपक्षे बहुवक्तव्यत्वादुपेक्ष्यम् सूचीकटाहन्यायेन पक्षान्तरं तावन्निराकरोति—**तत्रेति** । अन्त्यपदस्य वाक्यत्वं परैरनुपन्यस्तमपि संभवादुपन्यस्तम्, तदनन्तरमेव वाक्यार्थप्रतीतेः प्रतीयमानत्वात् । **क्रमभेद इति** । गामानयेत्येकः क्रमः, आनय गामित्यपरः क्रम इति क्रमभेदः । **न तावदिति** । उखायामोदनं काष्ठैर्देवदत्तः पचेदित्यत्र द्रव्याणां परस्परं न संभवतीत्यर्थः । **अत्यन्तेति** । अत्यन्तभेदेन तादात्म्याभावात् निष्पन्नत्वेन कार्यकारणभावाभावात् षष्ठ्यभावाच्च संबन्धमात्रस्यापि वाक्येनाप्रतिपादनात् निष्पन्नत्वाद्वचनस्य परस्पराकाङ्क्षास्ति । निराकाङ्क्षाणां च कथं परस्परसंबन्ध एकवाक्यता चेति । षष्ठ्यभावेपि सन्निधानात्संबध्यत इतिचेत् न । कारकविभक्त्या संनिधिबोधेन क्रियासंबन्धावगमादित्यर्थः । एवं क्रियाकारकयोः

**ननु सामान्यं पदार्थो विशेषो वाक्यार्थः संबन्धश्च सामान्यविशेषलक्षणः। सत्यम्। नियतविशेषावगतिस्तु न सिध्यति सर्वविशेषसाधारणत्वात्सामान्यस्य। ततश्च गामानयेति पदावगतमानयनसामान्यं विशेषाक्षेपोन्मुखमपि न गोरेवानयनमाक्षिपेत्। ततश्च न गोरेवानयनं प्रतीयेत। नचाकाङ्क्षासंनिधियोग्यत्वैर्नियमः, सत्स्वपि तेष्वदर्शनात्। नहि प्रत्यक्षेण गामुपलभ्य कस्येयमिति जिज्ञासमानः संनिहितमपि देवदत्तं स्वामिनमध्यवस्यति, तस्मान्निर्मूलो वाक्यार्थः सांकेतिकः। नच वेदे संकेतयितास्तीत्यप्रामाण्यम्। अथवा वेदवाक्यानामपि पौरुषेयत्वमाश्रित्य पुरुषप्रामाण्यादेव प्रामाण्यमङ्गीकर्तव्यम्। युक्तंच सर्ववाक्यानां पौरुषेयत्वदर्शनादेव वेदवाक्यानामपि पौरुषेयत्वम्। अथ पुरुषाणामीदृशेऽर्थे प्रामाण्यं न संभवति, ततो प्रामाण्यमेवास्तु नत्वनपेक्षं प्रामाण्यं सिद्ध्यतीति पूर्वः पक्षः॥**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

न्तरगतस्य सोमादेः कारकस्य वाक्यान्तरस्य च प्रयाजादिर्विध्यन्तस्य दूरापास्तं विधानम्। विधिनात्वसंगतस्य प्रयाजादेर्विध्यन्तसमाख्यापि निर्निमित्ता स्यात्। यदांशत्रयस्य विध्यसंबन्धाद्भावनैव विधातव्या तदा तस्यां केवलायां पुरुषं प्रवर्तयितुमशक्यत्वात्तयाप्यन्वयासंभवात् निर्विषयत्वं विधेरिति दिक्॥ **ननु** माभूद्भावनाद्वारांशानां विधिः साक्षादेव भविष्यतीतिचेत्। नेति ब्रूमः। समानप्रत्ययोपात्तभावनानिरुद्धस्य विधेरन्यत्र गमनासंभवात् पुरुषव्यापारविषयत्वाच्च विधेः कारकाणां चातद्रूपत्वान्न साक्षाद्विधानमिति। एवमुपसर्गनिपातानामपि न केनचित्संगतिः। न तावत्परस्परमुपसर्गाणां संगतिरसंभवात्। नापि नामभिः 'उपसर्गाः क्रियायोगे' इति स्मरणेन नामभिः संबन्ध्यमानस्योपसर्गस्योपसर्गत्वमेव न स्यात्। नापि धात्वर्थेन क्रियया वा संगतिरकारकत्वात्। ननु कारकस्यापि विशेषणतया भविष्यति। नैवम्। अर्थानुरञ्जकत्वात्। अननुरञ्जकत्वं च 'आनर्थक्यान्यवाचित्वविपरीतप्रसाधनात्'। नच प्रलम्बतेयमित्यत्र कश्चिदतिरिक्तोऽर्थोस्ति, प्रासाद इत्यादौ चान्य एवार्थः, प्रतिष्ठत इत्यत्र च विपरीत एवार्थः। नचैवंरूपस्य विशेषणत्वं संभवति। यथाहुः—'येन स्वार्थाविरोधेन विशेष उपजन्यते॥ विशेषणं तदेवेष्टं नतु यत्स्वार्थनाशकम्'॥ **नन्वा**गच्छत्युद्गच्छतीत्यादौ आभिमुख्यादौ विशेषोपजननाद्विशेषणत्वं भविष्यति। नैवम्। आभिमुख्यादेः कर्तृधर्मत्वेन धात्वर्थाङ्गत्वाभावात् कर्तृसंबधित्वे चोपसर्गत्वविरोधात्। नापि भावनया संगतिस्तदर्थानामंशत्रयानन्तर्भावात्। नञादयस्तु निपातविशेषा येनैव संबन्द्धुमिष्यन्ते तस्यैवार्थे विक्रियन्ते न केनचित्संबन्धुमर्हन्तीति। किंच पदार्थपूर्वको वाक्यार्थो भवति। नचोपसर्गनिपातानां गवादिशब्दानामिव अयमस्यार्थ इति नियतः स्वातन्त्र्येण कश्चिदर्थोऽवगम्यते यद्वारेणैते वाक्यार्थान्वयं गच्छेयुरिति। स्यादेतत्—पदार्था एव वाक्यार्थः। नच गौरश्वः पुरुषो हस्तीत्यस्यापि वाक्यत्वप्रसङ्गः पदार्थमात्रस्य तदनङ्गीकारात्। अर्थान्तरान्वितरूपविशेषस्यैव वाक्यार्थत्वाभ्युपगमात्। तथाहि पदं केवलोच्चरितं किंचिदर्थस्वरूपमेवाभिदध्यात्। पदान्तरसमभिहारे चानयनान्वितं तदुज्झित्य क्वचिद्बन्धनान्वितं तर्हि पदार्थे क्वचिदप्याश्वासो न स्यात्। सर्वत्रान्वितमेवाभिधत्त इतिचेत्। न। केवलोच्चारणे पदार्थस्वरूपमात्रावगमात्। अथ पदार्थसंगत एवार्थे वाक्यं प्रवर्तत इत्युच्येत तर्हि पदार्थज्ञानस्य तत्र दृष्टोपकारिता न स्यात्। अज्ञातपदार्थस्यापि वाक्यार्थावगतिप्रसङ्गादित्यलमतिप्रपञ्चेन॥ संबन्धमाशङ्कते—**नन्विति**। परिहरति—**सत्यमिति**। येन प्रतिनियतविशेषावगतिर्भवति स एव संबन्धो वाच्य इति भावः। अस्तु साधारण्यं किमेतावता स्यादिति तत्राह—**ततश्चेति**। विशेषमात्राक्षेपेण तत्पर्यवसानसंभवादिति भावः। **सत्स्वपीति**। एतच्च संनिधिमात्राभिप्रायेण दूषणं भवति। शाब्दसंनिधौ तु नैतद्दूषणं भवतीति चिन्त्यम्। उपपादितमर्थं निगमयति—**तस्मादिति**। **ननु** 'चोदनालक्षणोऽर्थो धर्म'इत्युक्तं चोदना च वाक्यमेवातो वाक्यमेव वाक्यार्थप्रतीतेर्मूलमिति कथं निर्मूलत्वम्। सत्यम्। सदपि वाक्यमगृहीतसंबन्धत्वान्न वाक्यार्थप्रतीतेर्मूलम्। सांकेतिकः पारिभाषिकः। केचिद्वेदान्कृत्वाऽस्य वाक्यस्यायमर्थ इति संकेतः कृतो वृद्ध्यादिवत्। ततश्च वाक्यार्थावगतिः पुरुषाणामित्यर्थः। अयं च सूत्रार्थः। उत्पत्तौ चेति चकारोऽप्यर्थे। शब्दार्थतत्संबन्धानामुत्पत्तौ औत्पत्तिकत्वेपि नित्यत्वेपीति यावत्। न चोदनायाः प्रामाण्यं यतोऽवाचकाः शब्दा वाक्यार्थस्य ते हि सामान्यमभिदधति वाक्यार्थश्च विशेषरूपः। **ननु** पदाभिहिताः पदार्था एव वाक्यार्थं बोधयन्तु तत्राह—**अर्थस्यातन्निमित्तत्वादिति**। अर्थस्य पदार्थस्य अतन्निमित्तत्वाद्वाक्यार्थबोधनिमित्तत्वाभावात् पदार्थानां वाक्यार्थबोधकत्वेऽशाब्दत्वैव वाक्यार्थस्य स्यात्। उपपत्त्यन्तरं तु ग्रन्थकारोक्तमेव ज्ञेयम्। अथवा शब्दार्थसंबन्धानामौत्पत्तिकत्वेपि वेदवाक्यार्थस्य धर्मस्यावचनाः अप्रतिपादकाः स्युः। अप्रमाणमिति यावत्। नच पदार्थानां तन्निमित्तभावोऽसंबन्धादिति सूत्रार्थः। असंबन्धोपपत्तिश्च ग्रन्थोक्तैवानुसंधेया। **ननू**त्पत्तिशब्दस्य कथमौत्पत्तिकशब्दार्थत्वम्। औत्पत्तिकशब्दलक्षकत्वेनेति ब्रूमः। यथा द्यावोरित्यस्य द्यावापृथिव्योरिति। वेदप्रस्थानाभ्यासमतो महर्षेः प्रायेण सूत्रेषु छान्दसपदप्रयोग एव भवतीति न दोषः कश्चित्॥

वाक्यस्य वाक्यार्थबोधकत्वम् ।

अत्र केचिदाहुः—'वाक्येनैव हि वाक्यार्थः साक्षादेवाभिधीयते ॥ उपलक्षणतश्चास्य संबन्धग्रहसंभवः ॥ वाक्यं गोपदयुक्तं यत्तत्साक्षादिमदन्वितम् ॥ वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि ॥ सत्यं व्युत्पत्तिरेवं स्यात्तथापि तु न वाक्यतः ॥ वाक्यार्थावगतिर्युक्ता तिरोभावेऽपि दर्शनात् ॥ पूर्वभागेषु वाक्यस्य विस्मृतेष्वपि दृश्यते ॥ वाक्यार्थावगतिः पुंसां पदार्थस्मृतिशालिनाम्' ॥ यथैव विस्मृतपूर्ववर्णानामन्तिमवर्णमात्रान्न पदार्थावगतिर्भवति तथैव वाक्यावयवेषु पूर्वपदेषु विस्मृतेषु वाक्यार्थावगतिर्न स्यात ! दृश्यते हि विस्मृतपूर्वपदानामपि दीर्घतमेषु वाक्येषु वाक्यावगतिः । नच स्वरूपेण विस्मृतेपि स्मर्यमाणपदार्थवशादेव तद्वाचिपदयोगितां वाक्यस्यानुमाय ततो वाक्यार्थावगतिरिति वक्तुं युक्तम्, अस्यां प्रणाड्यां प्रमाणाभावात् । अनुसंधीयमानैरेव हि पदार्थैः साक्षादेव हि वाक्यार्थप्रतीतिसंभवे कोमामेद्दर्शी कल्पनामवलम्बते । संभवति च पदार्थेभ्यो वाक्यार्थावगतिरिति वक्ष्यामः ॥ * ॥ येप्याकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितस्वार्थाभिधायीनि पदान्येव वाक्यार्थप्रतीतिनिमित्तमिति ब्रुवते तेषामपि विस्मृतेषु केषुचित्पदेषु वाक्यार्थावगतिर्न स्यादिति तुल्यमेव दूषणम् । किंचैवंवादिनां प्रतिपदं वाक्यभेदः स्यान्न क्वचिदेकवाक्यता सिद्ध्येत् । गामानयेति गोपदमानयनकर्मभूतां गां प्रतिपादयति तथा नयतिरपि गोकर्मकमानयनं तयोश्च भेदाद्भिन्ने एव वाक्ये स्याताम् ॥

अन्विताभिधानवादखण्डनम् ।

अथान्वितभेदे सत्यप्येकस्यैवान्वितस्य प्रधानभूतत्वात्प्रयोजनैकत्ववशेन वाक्यैकत्वमुच्यते । तदयुक्तम् । नह्यनेकं विशिष्टं प्रतिपादयतां प्रयोजनैकत्वमात्रेणैकवाक्यता भवति, यदि स्यात् 'यजेत स्वर्गः फलं पशुर्हविरग्निर्देवता' इत्यत्राप्येकवाक्यता स्यात् । सर्वेषां द्रव्यदेवताफलविशिष्टयागानुष्ठानप्रयोजनत्वात् । तथा 'दर्शपूर्णमासाभ्यां यजेत' इत्यस्य 'समिधो यजती'त्यादिभिरेकप्रयोजनत्वाद्वाक्यैकत्वं स्यात् ॥ * ॥ नन्विष्टमेवैकवाक्यत्वम् । यथा वक्ष्यति—'तद्वाक्यं हि तदर्थत्वात' इति । भाष्यकारोपि—'वाक्यं ह्येकं दर्शपूर्णमासाभ्यां सहधर्माणाम्' इति । सत्यम् । 'प्रकरणानुमेयं तु तत्रैकवाक्यत्वं न प्रत्यक्षं, अन्यथा वाक्यविनियोज्यत्वापत्तेः । एवं गामानयेत्यत्रापि प्रत्यक्षैकवाक्यता साक्षान्न स्यात्, इष्यते चासौ । तस्मात् यत्रैकवाक्यत्वं तत्रापर्यवसितव्यापाराणामेव पदानामेकस्मिन्नर्थे पर्यवसानं वक्तव्यम् ॥ * ॥ त्वन्मते चानयतिर्गवान्वितानयनं प्रतिपाद्य पर्यवस्यति, गोपदमपि गव्येवानयनान्विते पर्यवसितमिति स्यादेव वाक्यभेदः । नहि गोपदस्यानयने गवान्विते पर्यवसानं येनैकवाक्यता स्यात् । अथ गोपदमप्यानयनमेव गवान्वितमभिदध्यात् अनेकार्थत्वं स्यात्,

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

एकदेशिमतेन तावत्पूर्वपक्षं परिहर्तुमाह—**अत्रेति** । संबन्धग्रहमुपपादयति—**वाक्यमिति** । तदेतदर्धाङ्गीकारेण निराकरोति—**सत्यमिति** । अस्त्वेवं तथापि त्वन्मते साक्षादेव वाक्याद्वाक्यार्थावगतिर्न संभवतीत्यर्थः । कथं न युक्तेत्यत आह—**तिरोभावेपीति** । एतदेव विवृणोति—**पूर्वेति** । श्लोकं व्याचष्टे—**यथैवेति** । **दृश्यत इति** । यस्मादेवमतो न साक्षाद्वाक्यादेव वाक्यार्थावगतिः त्वन्मते संभवतीति भावः । अत्र परिहारमाशंक्य निराकरोति—**नचेति** । अगत्या प्रणाड्याश्रयणमितिचेत् । न । सिद्धान्तनीत्या गतिसंभवादित्याह—**अन्विति** । **वक्ष्याम इति** । स्वसिद्धान्तनिरूपणावसर इत्यर्थः । अन्विताभिधानमतमनूद्य प्रतिक्षिपति—**येपीति** । अस्मिन्नेव पक्षे दूषणान्तरमाह—**किंचेति** । **ननु** समभिव्याहृतयोः पदयोः स्पष्टमेवैकवाक्यत्वं गम्यते । सत्यम् । तथाप्यन्वितभेदाद्वाक्यभेदः स्यादित्याह—**गामिति** ॥

**नहीति** । विशिष्टैकार्थप्रतिपादकत्वेनैवैकवाक्यात्वमिति भावः । अविदिताशयश्चोदयति—**नन्विति** । अभिप्रायमुद्घाटयन्परिहरति—**सत्यमिति** । मया तु प्रत्यक्षमेकवाक्यत्वं तवापादितमित्यभिप्रायः । उक्तं दूषणं लौकिकवाक्येऽतिदिशति—**एवमिति** । भिन्नार्थे पर्यवसितत्वादिति भावः । दूषणमुपसंहरति—**तस्मादिति** । अनेकार्थत्वं विवृणोति

गोश्चानयनस्य चाभिधानात्। नहि गोरन्यतःसिद्धिः यतस्तामनभिधाय तद्विशिष्टमानयनमेवाभिदध्यात् ॥ * ॥ किंच 'अतिशोभनो राजपुरुषः' इत्यत्रातिशयान्वितस्य शोभनगुणस्य राजान्वितस्य च पुरुषस्य पुनः परस्परान्वयो गम्यते—समासे हि परस्परान्वयपूर्वकः पदार्थान्तरान्वयः, तेनान्वितयोरेवात्रान्वयः। नचासावभिधानतः सिद्ध्यति। पुरुषशब्दो हि पुरुषस्यैवार्थान्तरान्वयमभिधत्ते तस्यैव स्वार्थत्वात्, अतोऽनन्वितान्वयमलमभिधातुम्, एवं शोभनशब्दोऽपि स्वार्थस्यैव शोभनस्यान्वयमाह नान्यान्वितस्य, अतोऽन्वितयोरन्वयोऽवश्यं पदार्थनिबन्धन इत्यभ्युपगन्तव्यम् ॥*॥ किंच 'रूढिर्योगाद्बलीयसी शीघ्रप्रवृत्तित्वा'दित्यविवादम्, अन्विताभिधाने च विपरीतं बलाबलं स्यात्, अश्वकर्ण इति समुदायो यावद्वृक्षजातिं स्मारयति तावदेवाश्वशब्दोऽपि वाजिनं कर्णशब्दोऽप्यवयवं स्मारयत्येव, अतो न स्मृतिकाले तावद्विशेषः, अभिधानं तु योगवृत्तौ पदान्तरमनपेक्ष्य स्वावयवाभ्यामेव शीघ्रं मिथो निर्वर्तते। रूढिस्तु प्रतियोगिसंनिधानलिप्सया पदान्तरमपेक्षमाणाभिधाने विलम्बित इति वैपरीत्यम् ॥

## सिद्धान्ते वाक्यार्थस्य लक्ष्यत्वम्।

स्वरूपमात्राभिधानपक्षे तु पदान्तरापेक्षाभावादक्षरश्रवणमात्रादेव रूढ्यर्थोऽभिधानसिद्धोऽवयवार्थलक्षिताद्यौगिकाद्वाक्यार्थस्थानीयाद्बलीयान्भवति। एवम्—'अतिमधुरं गोक्षीरम्' 'ईषन्मधुरमजाक्षीरम्' इति 'केतकीगन्धसमानः सर्पगन्धः इत्यादिदर्शयितव्यम्। तस्मात्पदाभिहितैः पदार्थैर्लक्षणया वाक्यार्थः प्रतिपाद्यते। तत्र गामानयेत्यानयतिरानयनसामान्यमभिधाय तद्व्यक्तिं लक्षयति गोपदमपि स्वार्थद्वारेणानयनमेव गोकर्मकत्वाकारेण तत्संबन्धिस्वरूपेण लक्षणया प्रतिपादयति, एवं यत्रयत्र वाक्ये योयोऽर्थो विशेष्यत्वेन विवक्षितस्तमेव स्वपदेन सामान्यवाचिना लक्षितं सन्तमितराणि पदानि स्वार्थाभिधानद्वारेण तत्संबन्धिरूपेण लक्षयन्ति। यत्राप्यन्वितस्यैव पुनरन्वयान्तरं तत्रापि लक्षितलक्षणापरंपरया तस्य सर्वस्य सिद्धिरित्येषा दिक् ॥ * ॥ ननु कर्मत्वेनाभिहिता गोस्तत्क-

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

**गोश्चेति**। ननु प्रत्येकमभिधानेऽनेकार्थत्वापत्तिः। नत्वेवम्। किंत्वेकहेलयैवानयनान्वितं स्वार्थमभिधत्ते अतो नानेकार्थत्वमत आह—**नहीति**। गोशब्दाद्गोरुपस्थितौ सत्यामेव तद्विशिष्टानयनाभिधानमिति व्यापारभेदाद्वाक्यभेदः स्यादेवेति भावः। इतोप्येवमित्याह—**किंचेति**। नन्वत्र समभिव्याहारवशेन शोभनगुणान्वितस्यैव पुरुषस्य प्रतीतेरेक एवान्वयः सिध्यति तत्राह—**समासेहीति**। ततः किमत आह—**नचेति**। असौ अन्वितान्वयः। अभिधानतो न सिद्ध्यति समासपदयोर्मध्ये केनापि पदेनानभिधानादित्यर्थः। एतदेवोपपादयति—**पुरुषेति**। कथं तर्हि तदवगतिः सूत्रादत आह—**अत इति**। अन्वितानामपि पदार्थानां पुनराकाङ्क्षादिवशेन परस्परान्वय इत्यर्थः। इतोऽप्येवमित्याह—**किंचेति**। वैपरीत्यमेव विवृणोति—**अश्वेति**। ननु रूढेः शीघ्रप्रवृत्तित्वाद्वृक्षजातिरेवादौ स्मर्यते तत्राह—**अत इति**। अलब्धात्मिकायास्तदसंभवादिति भावः। नन्वेवं सति कथं योगस्य बलत्वसिद्धिरित्याशंक्य विशेषमाह—**अभिधानं त्विति** ॥

अस्मत्पक्षे तु नैष दोषो भवतीत्याह—**स्वरूपेति**। अन्विताभिधानपक्ष एव पदान्तरापेक्षा स्यादिति भावः। रूढ्यर्थो यौगिकाद्बलवान् भवतीत्यर्थः। एतदपि स्वरूपमात्राभिधानपक्षे सिध्यतीत्याह—**एवमिति**। यस्माद्वाक्यादेव साक्षाद्वाक्यार्थप्रतीतिर्न संभवति तस्मादयमेव पक्षोऽङ्गीकार्य इत्याह—**तस्मादिति**। यद्यपि प्रत्येकं पदानि संहतानि वा न साक्षात्तन्मूलं तथापि पदार्थाः पदैः प्रतिपादिताः प्रत्यासत्त्यपेक्षायोग्यत्वसनाथाः मूलं भविष्यन्ति तद्भावे वाक्यार्थप्रत्ययस्य भावादित्यर्थः। पदार्थप्रतिपादने व्यापृतानां पदानां पुनर्वाक्यार्थेऽपि व्यापारान्तरे गौरवमदृष्टकल्पना दृष्टहानिश्च स्यात्। यथाहुः—'पदार्थेषु प्रयुक्तानां पुनर्व्यापारकल्पना ॥ पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ॥' वर्णेभ्यो हि पदार्थेषु प्रतीतेषु तदनन्तरमेव वाक्यार्थप्रतीतेर्जायमानत्वात्सामर्थ्यं गम्यत इत्यर्थः। अत्र कश्चित्संमुग्धमेव पदं पदार्थस्य वाचकं, प्रकृतिप्रत्ययरूपावान्तरभेदस्तु प्रक्रियामात्रतया वैयाकरणैः कल्पित इत्याहुस्तदयुक्तम्। प्रत्यक्षेण प्रकृतिप्रत्ययतद्वाच्यानां भेदावगमात्। दृश्यते हि वृक्षं वृक्षेणेत्यत्र प्रकृत्येकत्वेपि प्रत्ययभेदात्कर्मत्वकरणत्वरूपार्थभेदः। तथा वृक्षं घटं चेत्यत्र प्रकृतितदर्थभेदे प्रत्ययाभेदेन कर्मत्वरूपैकार्थत्वमिति दिक्। अस्मिन्पक्षेऽन्वितान्वयोपि सिध्यतीत्याह—**यत्रापीति**।

र्मिकां क्रियां लक्षयन्त्यपि कथमानयनमेव लक्षयति, तदेकवाक्यतयेति ब्रूमः—लक्षणा हि साधारण्येनैव प्रवृत्ताप्येकवाक्यतया नियम्यत इति दर्शनबलादङ्गीक्रियते । योऽपि ह्यन्विताभिधानमिच्छति तेनापि सामान्यतः प्रवृत्ता लक्षणा पदान्तरैकवाक्यत्वेन नियम्यत इत्येतदङ्गीकृतमेव। यथाहि युगपदधिकरणवाचितायां द्वन्द्वमिच्छन्ति तत्र धवखदिरावित्यत्र खदिरप्रातिपदिकं द्विवचनोपपत्तयेऽर्थान्तरं लक्षयदपि धवमेव लक्षयति नार्थान्तरम् । तत्पदसमभिव्याहारादेव तथा सर्वत्रास्तु । यत एवायमन्वयविशेषो विनाभावादसिद्ध्यन्नेकवाक्यतावशादेव सिद्ध्यति । अतएव शब्दस्य प्रमाणान्तत्वमनुमानात् ॥

पदार्थानां वाक्यार्थबाधकत्वशङ्कानिरसः ।

**ननु** प्रत्यक्षेण गवि देवदत्ते चावगते सत्स्वप्याकाङ्क्षासंनिधियोग्यत्वेषु न परस्परान्वयप्रतीतिर्भवति तस्मान्न पदार्था वाक्यार्थं गमयन्तीति पदानामेवान्विताभिधानं युक्तम् । अन्विताभिधानेऽपि तुल्योयं दोषः—यौ तावदर्थौ प्रत्यक्षप्रतिपन्नौ तद्वाचकावपि शब्दौ तस्मिन्समये स्मृतिस्थौ भवतः, नच तौ स्वार्थयोराकाङ्क्षादिसद्भावेऽप्यन्वयं प्रतिपादयतः ॥ * ॥ अथ यादृगवस्थितैः पदैरन्वयो वृद्धव्यवहारे दृश्यते तादृशान्यवान्वयं प्रतिपादयन्ति नान्यादृशानीत्युच्यते, तत्पदार्थेष्वपि तुल्यम् । तेपि हि पदार्था एकैकविशिष्टार्थप्रतिपादनाय समाहृता वाक्यार्थं प्रतिपादयन्तीति न दोषः । तेषां च समाहारे यत्र पुरुषस्य स्वातन्त्र्यं तत्र तद्बुद्ध्यधीनं प्रामाण्यम्, अस्वातन्त्र्ये चानपेक्षं अतो न पदानामन्विते शक्तिः प्रमाणवती, निरस्तश्चायमन्विताभिधानवादो न्यायरत्नमालायामित्यास्तां तावत् ॥

अखण्डवाक्यार्थवादखण्डनम् ।

**वाक्यस्फोटोऽपि** पदस्फोटन्यायेनैव निरस्तः । वाक्यार्थस्य च निर्भागत्वं भागावगमात्प्रसङ्ग-

---

**युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।**

**लक्षणा हीति** । क्रियामात्रलक्षकत्वेन प्रवृत्ताप्यानयनपदैकवाक्यतयानयनमेव लक्षयतीत्यर्थः । अन्विताभिधानवादिनाप्येतदङ्गीकृतमित्याह—**योऽपीति** । एतदेव दृष्टान्तेनोपपादयति—**यथाहीति** । एतच्च शाब्दिकानां मतम् । अस्यार्थः—अधिक्रियत इत्यधिकरणं पदार्थस्तस्य युगपद्वाच्यतायां एकेन पदेन पदार्थद्वयस्यैकदोपस्थापनं तस्मिन् द्वन्द्वो भवतीत्यर्थः ॥ एतन्निरूपणं चाधिकारलक्षणे करिष्यते ।

अत्रान्विताभिधानवादी चोदयति—**नन्विति** । अतः पदार्थानां कारणत्वे व्यभिचारात्पदानामेवान्विताभिधानं युक्तमिति शङ्कार्थः । प्रतिबन्द्या परिहरति—**अन्वितेति** । तुल्यत्वं विवृणोति—**याविति** । यद्यपि तत्काले गोशब्ददेवदत्तशब्दौ स्मृतिस्थौ भवतः तथापि न तावदन्वयं प्रतिपादयत इति तुल्यो दोष इत्यर्थः । विशेषं शङ्कते—**अथेति** । यावदवस्थितैः । समभिव्याहृतैरित्यर्थः । साम्येन परिहरति—**तदिति** । साम्येन विवृणोति—**तेऽपीति** । ननु समाहारस्य पुरुषाधीनत्वादप्रामाण्यं स्यादत आह—**तेषां चेति** ॥

वाक्यस्फोटनिरासोऽपि पदस्फोटनिरासवदवगन्तव्य इत्याह—**वाक्येति** । यथाऽनंशस्य पदस्य वैशद्यावैशद्ये न युज्येते तथाऽनंशस्य वाक्यस्यापि सामान्यविशेषतत्वानामनुभूयमानता वैशद्यं । सामान्यतन्मात्रस्य वेदनमवैशद्यं । नचैतन्निखिलसामान्यविशेषविरहिणः स्फोटस्य संभवति । तदागमन्यायेन चान्वयव्यतिरेकाभ्यामर्थावगमादनंशतानुपपत्तिः । **ननु** यदि विभागेनैव प्रकृतिप्रत्ययाभ्यामर्थद्वयाभिधानं तर्हि यत्र प्रकृतिमात्रं प्रयुज्यते अग्निचिदित्यादौ यत्र वा प्रत्ययमात्रं अधुनेति कथमत्रार्थद्वयाभिधानं, तत्र प्रतीतिबलेन तन्मात्रस्यैव द्विशक्तत्वादिति ब्रूमः । शब्दस्वभावस्यान्यथाकर्तुमशक्यत्वात् । अत्रैकदेशानुमानेनोभयार्थत्वमिति केचित् । तन्न । नहि क्विप् प्रत्ययस्य कदाचिदपि प्रयोगोऽस्ति यतस्तेन ज्ञातसाहचर्याच्चिनोतिरूपमनुमापयेत् । अधुनेति च इदंशब्देन विनैव सर्वदा प्रयुज्यमानः कथमिदंशब्दमनुमापयेत् । नाप्यर्थैकदेशेन लक्षणया तत्प्रतीतिः लक्षणानुगतबुद्ध्यभावात् । क्विबन्तादिषु मुख्यत्वेनैव प्रतीतेः । दूषणान्तरं तु स्फोटवादोक्तमनुसंधेयम् । अत्र स्फोटवादी पदतद्भागानामन्वयव्यतिरेकासंभवादानर्थक्यमाह । तथाहि—'नामाख्यातादिसाकल्यवैकल्यानुगमे सति ॥ तदर्थानुगमो दृष्टः पदवाक्यान्तराश्रयः ॥ विप्राश्वः पचते यातं राजहस्तिन्यगादिति ॥ तथान्यरूपम-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

ध्यत्र राजा दध्यत्र गामिति' । अस्यार्थः—पदवाक्यान्तराश्रय इति पदान्तराश्रयो वाक्यान्तराश्रयोऽर्थानुगमो दृष्टः । तत्र नामपदमाख्यातपदमित्यादिरूपेण पदान्तरत्वं पदभेदे च वाक्यान्तरत्वं, तत्र साकल्यानुगमे तदर्थानुगमाभावादन्वयो नास्ति, वैकल्यानुगमे तु सकलस्य वाचकरूपस्य व्यतिरेकेपि तदर्थसंभवाद्व्यतिरेकोपि नास्ति तत्रान्वयाभावोदाहरणं विप्रेत्यादि । विप्रशब्दौ तु स्वतन्त्रावुपसर्गार्थवाचिनौ दृष्टौ तत्समुदायस्त्वन्यत्र ब्राह्मणवाचकः । 'अश्व इत्यपि नामेदमाख्यातं *लुङि चेदृशम् ॥ आख्यातं पचते शब्दः पचते इति वा द्वयम् ॥ स्त्रीद्वित्वं पुंबहुत्वं वा ते षष्ठ्यर्थे चतुर्थ्यथ ॥ पचते इति सर्वं वा चतुर्थ्यन्तं शतुः पदम् ॥ यातं लोण्मध्यमद्वित्वमयातं लङि वा भवेत् ॥ कर्तृनिष्ठाद्वितीयान्तं प्रथमान्तं नपुंसकम् ॥' अयातमित्यत्र यातशब्दस्य साकल्यानुगमे स्वार्थासंभवः, तथा यातमयातमिति द्वयोः पदयोः प्रत्येकमाख्यातनिष्ठा प्रथमान्तद्वितीयान्तत्वेन त्रेधा त्रेधा विभागे तत्तदर्थव्यभिचारः । 'राजहस्ती समासो वा राजलोण्मध्यमोऽथवा ॥ हस्तिनीत्यथ सप्तम्यामथ स्त्रीप्रत्ययान्तरम् ॥ अगादिति लुङन्तस्यादगो वा *पञ्चमीपरः' ॥ एवमेकरूपेपि पदे नानार्थविकल्पेन तत्तदर्थानुगमाभावः, शब्दभेदानामपि पदानां न कश्चिदर्थो व्यवस्थितः शक्यो निश्चेतुम् । तदनिश्चये च तदधीनस्य वाक्यार्थस्याप्यनिश्चयः स्यात् ॥ निर्भागवाक्यवादिनां तु प्रत्येकं वाक्यभेदान्नास्ति व्यभिचारः तथान्यरूपमिति तु व्यतिरेकव्यभिचारोदाहरणं । राजेतिशब्दो नृपवाचको दृष्टो राजेत्यत्र तच्छब्दव्यतिरेकेऽपि नृपप्रतीतिर्भवति तथा दध्यत्रेत्यत्र दधिशब्दव्यतिरेकेऽपि तदर्थप्रतीतिर्दृष्टा । गामित्यत्र गौरित्यस्य पदस्याभावेपि तदर्थप्रतीतिरिति व्यतिरेकव्यभिचारः । पूर्वपदव्यतिरेकेपि पदान्तरादेवात्रार्थप्रतीतिर्भविष्यतीतिचेत् । न । पदान्तरस्य तत्र संकेतग्रहाभावात् । नच पदान्तरेपि व्यतिरेकग्रहोऽस्त्विवति वाच्यम् । आनन्त्येन तत्र संकेतग्रहासंभवात् । अत्राहुः—'अत्र ब्रूमः *पदात्मा न सर्वेष्वेतेषु भिद्यते ॥ *केनचिद्धर्मभेदेन जराराजादिवत्क्रमात्' ॥ केन पुनरुपायेनायं धर्मभेदोऽवगम्यते, क्रमान्यत्वन्यूनत्वादिभिरिति ब्रूमः । यथाहुः—'पदावधारणोपायान्बहूनिच्छन्ति सूरयः ॥ क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः' ॥ नदीदीनेत्यत्र क्रमान्यत्वं, शुनः शून इति न्यूनातिरिक्तत्वं, शुन इति कर्मीभूतः शुनक उच्यते, शून इति च वृद्धिमापन्नः, तत्र क्रमान्यत्वे न्यूनत्वे वा विकलस्य वाचकत्वाभावादेवार्थानवगतिरित्यविवादम् । अतिरेके च पदान्तरत्वमेव । स्वरस्तु बहुव्रीह्यादिर्निर्णयोपायः । भोक्तुकामः पचत इति वाक्यवशेनाख्यातं निर्णीयते । पचते दक्षिणां देहीत्यत्र नामधातोरेकवाक्यवशेन शत्रन्तम् । श्रुतिः सामानाधिकरण्यं तत्र यातः पुनरायातीत्यत्राख्यातसामानाधिकरण्यादिति कर्तृनिष्ठाप्रथमान्तं नामपदं निर्णीयते । यातो देवदत्तयज्ञदत्तावित्यत्र द्विवचनान्तनामपदसामानाधिकरण्यादाख्यातमिति शरणमत्र व्याकरणम् । यथा मातापितृसंबन्धानुभवनिमित्तस्मरणात्समानेऽपि मनुष्यत्वे ब्राह्मणत्वादिकं निर्णीयते तथा अश्वस्त्वं देवदत्तेत्युक्ते *अश्वपदं लोके संकीर्णमपि व्याकरणस्मृत्याख्यातमिति निर्णीयते एवमन्यदप्यूह्यम् । एतत्प्रपञ्चस्तु वार्तिकेऽवगन्तव्यः । नापि व्यतिरेकव्यभिचारः । दध्यत्रेत्यत्र दधिपदव्यतिरेकाभावेन प्रत्यभिज्ञया दधिशब्दार्थस्यैवावगमात् । कथं तर्हि वैलक्षण्यावगतिरिति चेत् । आनन्तर्यदोषादिति ब्रूमः । इकारान्तमप्यकारेण परेण संहितादोषात् यकारान्तमिव भ्रान्त्यावगम्यत इति । अथवा पदान्तरमेवेदं, पारमार्थिक एवायं यकारः दधिशब्दार्थप्रतीतिस्तु तत्समानार्थत्वात् 'इको यणची'ति सूत्रेण समानार्थत्वावगमात् । अनेन हीकारस्य स्थाने यकारोच्चारणं संहितायां भवतीत्युच्यते तेनेकारान्तपदसमानार्थत्वमस्य कथितं भवति । प्रत्यभिज्ञया पदैकत्वमितिचेत् । न । प्रत्यभिज्ञाया अभावात् पदैकत्वे ह्यनवगतसूत्रार्थः दधीत्यत्र व्युत्पन्नस्य दध्यत्रेत्यत्र तदर्थावबोधः स्यान्नत्वेवमस्ति। विकारानन्त्यात्संबन्धाग्रहणमितिचेत् । न । *लक्षणेन तद्विदुक्तेर्वा संबन्धग्रहणसंभवेनातिक्लेशाभावात् । **ननु** दध्यत्रेत्यत्राविभक्तस्याज्ञातावधेर्नार्थवत्त्वमतः कथं तदन्ताद्दध्यर्थप्रतीतिरिति । नैष दोषः । अवध्यग्रहणेऽप्येतस्मादेव पदान्तराद्दध्यर्थावगमेनार्थवत्त्वोपपत्तेः । अथवा ज्ञायत एवावधिर्नेतु विच्छिद्योच्चार्यते तेन संहितायामेवास्य

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

कारकाणां च मिथः संगतिर्निराकृता । क्रिययोरिदानीं धातुप्रत्ययवाच्ययोर्निरस्यति—**एवमिति** । एवं नामाख्यातयोः संगतिर्निरस्ता । संप्रत्युपसर्गनिपातानां निराकरोति—**एवमिति** । **लुङिचेदृशमिति** । टुओश्विगतिवृध्योरिति धातोर्लुङि अश्व इति रूपमित्यर्थः । **पञ्चमीपर इति** । अगात् वृक्षादिति पञ्चम्यान्तोऽगशब्द इत्यर्थः । **पदात्मेति** । विप्राश्वादिषु पदान्तरत्वमेव नामाख्यातानामतो नान्वयव्यभिचार इत्यर्थः । **ननु** पदान्तरे तेषामेव वर्णानां सत्वात्कथं तद्भेदे पदं भिद्येत वर्णात्मकत्वात्पदस्य तत्राह—**केनचिदिति** । नामत्वाख्यातत्वादिधर्मभेदेनेत्यर्थः । यथा जराराजादिषु क्रमाद्भेदः । **अश्वपदमिति** । अश्वपदं लोकप्रयोगमात्रेणाश्ववचनतया नामत्वेनापि संभाव्ययानं भूतेलुङ्, च्लिलुङि, जूस्तंभ्वि'त्यादिना च्लेरङादेशः श्वयातर इत्यादि व्याकरणस्मृत्यान्वाख्यानवशेन लुङि मध्यमपुरुषैकवचनं टुओश्विगतिवृध्योरिति धातोरङ्गीकृतमित्यर्थः । **लक्षणेनेति** । लक्षणमिकोयणचीत्यादि सूत्रं तद्विदः सूत्रार्थविदः । उक्तिरुपदेशस्तस्मात्संबन्धग्रहणसंभव इत्यर्थः । यथा शब्दाभिहिताः पदार्थाः संबन्धमनपेक्ष्यैव वाक्यार्थं प्रतिपादयन्तो लोकवेदसाधारण्ये

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

साधुत्वात् विभिद्यमानस्यासाधुत्वप्रसङ्गात्। यथा कुम्भकारादिसमासे न कदाचिदुत्तरपदं विच्छिद्योच्चार्यते एवमिहापि संहितायाम्। असंहितायां तु दधिपदमेव नित्यं प्रयोक्तव्यमिति। यथाहुः—'ज्ञायते चावधिस्तत्र व्यञ्जनान्तेन तूच्यते॥ दधिशब्दावबोध्यत्वान्नित्यं नित्यसमासवत्' इति। एवं राजराजादिपदेष्वपि व्यतिरेकव्यभिचारः परिहर्तव्यः। तत्रापि पदान्तरस्य किंचिदंशसमानस्य तदर्थप्रतिपादकत्वात्। या तु ब्राह्मणकम्बलादौ न ब्राह्मणार्थावगतिस्तत्रावध्यन्तरसत्त्वेन पदान्तरत्वात्। अवध्यन्तरसत्त्वेऽपि तत्पदमविकलमस्त्येवेति कथं तदर्थो नावगम्यत इति चेत्। न। उत्सर्गस्यापवादेन बाधात्। अत्र हि प्राच्यस्य पदरूपस्यावध्यन्तरमेवापवादकम्। यदा त्ववध्यन्तरं दूरीकृत्य प्राच्यरूपेण पदान्तरमुच्चार्यते तदा तदर्थावगतिर्भवत्येवेति न दोषः कश्चित्। यत्राप्यश्वकर्णादावन्यूनानधिकमेव पदद्वयं तत्रापि वाजिकर्णयोरनभिधानम्। उत्सर्गरूपाया अवयवप्रसिद्धेरपवादरूपया समुदायप्रसिद्ध्या बाधात्। पूर्वमेव वृक्षाद्यर्थावगमात् अर्थप्रकरणाधीनेन श्रोत्रा बोधितस्वार्थयोरपि न सर्वदा तद्बाधः। तथाहि—अश्वमानय कर्णं विध्यतीत्यादौ व्यस्तप्रयोगे तावन्नावयवार्थयोः किंचिद्बाधकमस्ति। समस्तप्रयोगेऽप्यश्वकर्णं परिमार्ष्टीत्यादौ प्रमाणान्तरवशेन समुदायार्थबाधादवयवार्थनिर्णयः सिध्यतीति। **ननु** पदानां स्वपदार्थमात्रप्रतिपादनावसितानां न विशिष्टरूपवाक्यार्थबोधनसामर्थ्यमस्तीति निर्भागं वाक्यमेव वाचकं कल्प्यमेवं पदार्थानामेव वाक्यार्थे सामर्थ्यात् न वाक्यस्य तत्र सामर्थ्यं कल्प्यम्। यथाहुः—'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः॥ तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते'। हन्त तर्हि पदार्थेभ्योऽवगम्यमानो वाक्यार्थो न शाब्दः स्यात्। नैष दोषः। पदार्थानां शाब्दत्वे तद्द्वारा वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वसंभवात्, वाक्यार्थे हि शब्दानां तात्पर्यं न पदार्थेषु तेषां प्रमाणान्तरसिद्धत्वात्। अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितस्तथापि तेषु तात्पर्याभावात् वाक्यार्थपर्यन्तत्वतात्पर्ये च शब्दस्य प्रामाण्यात् सिध्यति शब्दप्रमेयतया वाक्यार्थस्य शाब्दत्वमिति। नाप्यसंबन्धोपालम्भः, अविनाभावरूपस्य संबन्धस्य सत्त्वात्। यथाहुः—'संबद्धमेव चैतेऽर्थं गमयन्त्यविनाभुवम्॥ सामान्यं स्वविशेषेण विना नह्युपपद्यते'॥ हन्त तर्ह्यनुमानादेव वाक्यार्थावगतिरापद्येत। नैवम्। पक्षाद्यभावेनानुमानासंभवात्। न तावत्पदार्था एव वाक्यार्थविशिष्टतया पक्षीक्रियन्ते त एव हेतवस्ततः प्रतिज्ञार्थैकदेशतेति। अथ वाक्यार्थमेव पक्षीकृत्य पदार्थानां हेतुत्वमुच्येत तदप्यसत्। पूर्वमप्रतीतस्य पक्षत्वानुपपत्तेः। पदार्थेभ्य एव हि तत्संसर्गात्मा वाक्यार्थोऽवगम्यते न ततः प्रागिति दिक्। एतद्दूषणप्रपञ्चस्तु वार्तिकेऽवगन्तव्यः॥ किंच त्रिलक्षणलिङ्गजन्या हि धीरनुमानं। नचैवं तज्जन्या पदार्थैरेवागृहीतसंबन्धैरियं जन्यते अतः प्रमाणान्तरमेव शब्दमिति। *अपिच—'भावनावचनस्तावत्तां स्मारयति लोकवत्' इत्येतावदविवादम्। सा च यजते पचतीत्यादावाख्यातप्रत्ययान्वयेऽन्वयात् यागपाकशब्दान्वये वाख्यातव्यतिरेके व्यतिरेकात् आख्यातप्रत्ययार्थ इति केचित्। धातुरेवाख्यातप्रत्ययसंनिधानानुगृहीतशक्तिर्भावनां वक्तीत्यपरे। अन्ये पुनर्धातुप्रत्यययोरन्यतराभावेपि भावनाया अप्रतीतेः समुदायार्थो भावनेत्याहुः। अस्तुनाम यः कश्चित्पक्षो नचात्र विवेकेन प्रयोजनं किंचित्। *प्रकृतमेव निरूपयामः—साचेयं भावना स्वर्गकामो यजेतेत्याख्याताभिहिता साध्यसाधनेतिकर्तव्यतांशान् सामान्येनाक्षिप्यान्यतो विशेषमपेक्षते। एवं स्वर्गोऽपि कर्मिकर्मतयावगतः सिद्धे कामनाया अभावात्साध्यतयावगतो भावनामपेक्षते। तयोश्चाकाङ्क्षासंनिधियोग्यत्ववशेन परस्परान्वयो गम्यते काम्यसाध्यसंबद्धा च भावना साधनमपेक्षते पदश्रुत्या च धात्वर्थ एव साधनत्वेनोपस्थाप्यते। गोदोहनादिद्रव्यस्यापि साधनत्वेन श्रवणात्कथं धात्वर्थस्यैव भावनान्वय इति चेत्। सत्यम्। तस्याप्यप्प्रणयनादिरूपधात्वर्थाश्रयेणैव तत्साधनत्वं न स्वरूपतः। निराश्रयस्य तदनुपपत्तेः। **ननु** धात्वर्थस्याप्यसिद्धत्वात्साध्यतयैवान्वयः किं न स्यादिति चेत्। न। तस्यापुरुषार्थस्य विध्युपष्टब्धभावनया साध्यत्वेनाग्रहणात्। **नन्वेवमपि** तृतीयाभावात्कथं यागस्य करणत्वम्। स्वभावादेवेति ब्रूमः। नहि करणत्वं तृतीयया नियतं यतस्तन्निवृत्त्या निवर्तेत। सक्त्वादौ तृतीयां विनापि करणत्वदर्शनात्। प्रयाजशेषे तृतीयासत्त्वेऽपि करणत्वाभावात्। कथं तर्हि यागेनेति तृतीयोपदर्श्यते। स्वभावसिद्धमेव करणत्वसंबन्धं स्पष्टीकर्तुमिति ब्रूमः। यथाहुः—'न केवलं तृतीयैव करणत्वं नियच्छति॥ प्रमाणान्तरगम्येऽपि न किंचिद्विरुणद्धि सा'॥ तथा—'प्रत्यासत्तिनिमित्तोऽयं संबन्धः कल्प्यतेऽनयोः॥ तं च विस्पष्टमाख्यातुं यागेनेति प्रयुज्यते॥ यथौपगवशब्दार्थे तस्यापत्यमितीदृशात्॥ कथयन्ति नचैतस्मिन्षष्ठ्यन्तोपगुसंभवः'॥ किंच यथा यागशब्दात्तृतीया भवति नैवं जयेतेत्यत्र, धातोरप्रातिपदिकत्वात्। अतस्तदर्थव्याख्यानार्थं यागेनेति तृतीयान्तस्य प्रयोग। एवंच लब्धसाधनसंबन्धा भावना करणोपकारसाधनमुपायमात्रमपेक्षते प्रयाजाद्युपायश्च भाव्यमात्रम्। तयोश्चाकाङ्क्षासंनिधियोग्यत्वैर्मिथः संबन्धसिद्धिः। सचोपायः क्वचित्स्ववाक्यगत एव लभ्यते। यथा 'रेवतीषु

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

नैव शब्दस्य प्रमाणान्तरत्वमापादयन्ति तथादर्शयितुं सारमाह। **अपिचेति। प्रकृतमेवेति**। प्रत्ययार्थत्वमेवांगीकृत्य तद्गतं प्रमेयं निरूपयाम इत्यर्थः। **नन्वस्तु** नाम सन्निहितस्य वाक्यवशाद्यागाङ्गत्वं वाक्यान्तरगतस्य तु कथमत आह—

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

वारवन्तीयं कृत्वा जयेते'ति। क्वचित्तु वाक्यान्तरगतो यथा प्रयाजादिः। *वाक्यान्तरगतस्याप्यपेक्षावशादन्वयः। *उपायरहितानां करणानां फलसाधनत्वासंभवात्प्रयाजानां च निष्प्रयोजनत्वापत्तेः। **ननु** विश्वजिद्वत्स्वर्गप्रयोजनवत्त्वात्कथं प्रयाजादेर्निष्प्रयोजनत्वापत्तिः। मैवम्। अपेक्षितसंनिहित*क्रतूपकाररूपदृष्टप्रयोजनलाभे सति प्रयोजनान्तरकल्पनानुपपत्तेः। **नन्वंशानां** भावनासंबन्धेसति परस्परसंबन्धानुपपत्तिः परस्परसंबन्धे वा न भावनासंबन्धः स्यात् संबन्धद्वयविधाने वा वाक्यभेदप्रसङ्गात्। अत्राहुः—*'एकभावनयोपात्तास्त्रयोऽप्यंशाः परस्परम्॥ उपकार्योपकारित्वं पश्चादनुभवन्ति ते॥ *भावनापेक्षमाणा हि साधनं किं फलस्य मे॥ साधनानुग्रहः कोवेत्यनुस्यूतमपेक्षते॥ *आकाङ्क्षैवमविच्छेदे सिद्धा शुक्लगवादिषु॥ *एकक्रियागृहीतेषु संबन्धश्च परस्परम्॥ *द्रव्यद्वारेण चैतेषां विशेषणविशेष्यता' इति। ततश्च भावनामेव विशिष्टां विदधत्प्रत्ययोऽर्थाद्यागादीन्विदधाति न साक्षादिति। तदुक्तम्—'एवं पदार्थवाक्यार्थसंघातैरुपकल्पिताम्॥ विशिष्टां भावनां प्राप्य वृत्तिर्विधिनिषेधयोः'॥ यत्तु प्रत्यासत्तिवशात्केवले भावनात्मनि पर्यवसितो विधिर्न पश्चाद्यागादीनंशान्विधातुमलमित्युक्तं तत्र ब्रूमः—न तावत्केवले भावनात्मनि विधिपर्यवसानं संभवति, अंशत्रयापरिपूर्णाया भावनाया अनुष्ठातुमयोग्यतया चेतनप्रवर्तनात्मकविध्यन्वयासंभवात् योग्यताया अपि संबन्धकारणत्वात्। अयमत्र क्रमः—प्रत्यासत्तिविशेषाद्विधिभावनयोरन्वयेन भवितव्यमित्येतावत्प्रथममवगम्यते। ईदृशी चावस्था विधिसंस्पर्श इति विधिप्रक्रम इति चोच्यते। तथाच भवितव्यं यथावगतभावनान्वयो विधिरयोग्यत्वात्तामविदधद्यावदंशत्रयं परिपूर्णं परीक्ष्य पश्चात्सर्वांशसंपूर्णामंशान्तरानपेक्षिणीं विदधातीति। यथाहुः—'यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनाम्॥ तथाप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति॥ अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः॥ अंशत्रयेण चापूर्णां नानुतिष्ठति भावनाम्॥ तस्मात्प्रक्रान्तरूपोपि विधिस्तावत्प्रतीक्षते॥ यावद्योग्यत्वमापन्ना भावनान्यानपेक्षिणी' इति। **नन्वस्तु** नामैवं नामाख्यातसंबन्धे, उपसर्गनिपातानां तु कथं गवादिवत्स्वतन्त्राणामर्थावधारणाभावात्। सत्यमेवम्। तथाप्यन्यसहितानामेव प्रयोगनियमात् तदागमन्यायेनार्थवत्त्वं सिद्ध्यति। चकारागमे हि समुच्चयोऽवगम्यते न *ततः प्राक्, वाचकत्वद्योतकत्वविवादस्तु नात्रोपयुज्यते, द्वेधापि वाक्यार्थोपयोगित्वसिद्धेः। तदुक्तम्—'वाचकद्योतकत्वं तु नातीवात्रोपयुज्यते॥ तद्भावाद्वाचकत्वं वा परस्यानुग्रहोऽस्तु वा'। यत्तु नैषां क्रियया नाम्ना वा संबन्धः संभवतीत्युक्तं तत्राप्याहुः—'ईषदर्थादयस्तावत्साक्षान्नाम्नैव संगताः॥ अप्रयुक्तक्रियाद्वारा विशेषाधानतोऽपरे॥ *आपिङ्गः प्रवयाश्चेति द्वयस्यैतन्निदर्शनम्॥ *क्वचित्प्रकृष्टतादीनां भावनोपनिपातिनाम्॥ इतिकर्तव्यतात्वेन प्रतिपत्तिपरिग्रहौ'॥ **नन्वाभिमुख्यस्य** कर्तृधर्मत्वात्कथं क्रियया संबन्ध इतिचेत्, क्रियैकार्थसमवायसंबन्धेनेति ब्रूमः। नहि कर्तृस्वरूपाङ्गमभिक्रमणमानर्थक्यात् धातुसंबन्धे च णमुलो विधानात्, अतः क्रियाङ्गमेवेति। **ननु** प्रासादः प्रतिष्ठते इत्यादावन्यार्थविरुद्धार्थाश्चोपसर्गाः धातोः स्वार्थशक्तिं लोपयन्तः कथं धातुना संबध्यन्ते। उच्यते—वाचकत्ववादिमते तावन्नैते विशेषणं किंतु धातुभागसमा एव। तथाहि—शब्दान्तरात्तिष्ठतेः सकाशात् प्रतिष्ठतिरश्वकर्णशब्दवत्समुदायशक्त्यैव गमने वर्तते। अभिदधातीत्यादावपि समुदायशक्तिः तथा प्रलम्बतिरपि लंबतेः सकाशाच्छब्दान्तरं समानार्थं नतु लम्बतेः प्रशब्दो विशेषणमिति। द्योतकत्ववादिनस्तु विशेषणत्वमेव मन्यन्ते। यथाहुः—*'प्रशब्देनोपसृष्टस्य तिष्ठतेर्गतिशक्तता॥ *नहि प्रशब्दवेलायां गमने जायते मतिः'॥ **ननु** तिष्ठति-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

**वाक्यान्तरेति**। अपेक्षायां कारणमाह—**उपायेति**। **क्रतूपकारेति**। फलादावनङ्गत्वेनावस्थितस्य करणस्यानुग्रह एव फलमेतेषामित्यर्थः। **एकभावनयेति**। कारणं साध्यस्योपकारं करोति इतिकर्तव्यतातु कारणस्य फलजननसामर्थ्यमित्यर्थः। कारणमाह—**भावनेति**। साध्यवता हि भावना साध्यानुस्यूतेनैव रूपेण साधनमपेक्षते। कारणमाह—**भावनेति**। साध्यन्विता हि भावना साध्यानुस्यूतेनैव केनेदं फलं कर्तव्यमिति नतु तदाकारप्रहाणेन तथेत्थंभावमपि साधनानुस्यूतेनैव कीदृशेन व्यापारेणेदं फलसाधनं स्यादिति। नच वाक्यभेदोंशद्वयविशिष्टाया भावनायाः फले विधानादिति। भावनावच्च गामानय शुक्लामित्यादौ आनयनस्य जातिसंबन्धाविच्छेदेनैव गुणाकाङ्क्षा तत्संबन्धाविच्छेदेनैव च जात्याकाङ्क्षा दर्शयितव्येत्याह—**आकाङ्क्षेति**। अंशानामिव गुणयोरेकक्रियान्वितयोर्मिथः संबन्धसिद्धिरित्याह—**एकेति**। यत्तु गोत्वशुक्लत्वयोर्न परस्परानुराग इत्युक्तं तत्राह—**द्रव्येति**। यद्द्रव्यमवच्छिन्दन्ती जातिरानयनाङ्गं गुणोपि तदेवावच्छिन्दन् तस्मिन्कर्मणि वर्तत इत्येतदेव गुणस्य जातिविशेषणत्वमिति भावः। **ततः प्रागिति**। यथा कुम्भकारादिनित्यसमासोत्तरपदे तदागमन्यायादग्रेः प्रवयस्त्वं सिध्यति तद्वदित्यर्थः। उभयत्रोदाहरणमाह—**आपिङ्ग इति**। ईषत्पिङ्गो व्यापिङ्गः। प्रगतवयाः प्रवयाः। **क्वचिदिति**। प्रवसेद्दक्षिणां दद्यादभिकामं जुहोतीति प्रकृताभिमुख्यत्वादीनां भावनेतिकर्तव्यतात्वेनैव विधानमनुष्ठानं चेत्यर्थः। **प्रशब्देनेति**। तिष्ठतेरेव गतिरित्यर्थः। सतु प्रोपसर्गेणैव द्योतत इत्यर्थः।

दनुपपत्तेश्च निरसनीयम् । तथाहि—'प्रसङ्गतन्त्रबाधोहातिदेशाधिक्रियाक्रमाः' प्रयुक्तिशेषभेदाश्च

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

मात्रेणापि न गमने मतिर्जन्यते ततः कुत एतत्, तिष्ठतिर्वाचकः प्रशब्दो द्योतक इति विपरीतमेव किं न स्यात् । उच्यते—धातूनां तावत्सामान्येन क्रियामात्रे शक्तिः क्लृप्तैवातस्तिष्ठतेर्गमनाख्ये विशेषे एव शक्तिकल्पनं भवति । प्रशब्दस्य तु सामान्ये विशेषे चोभयत्रापि अक्लृप्तैव शक्तिः कल्पनीयेति गौरवम् । अतो द्योतकत्वमेव प्रशब्दस्य न वाचकत्वमिति । कथमेतावता विशेषणत्वं, प्रशब्दस्य धातोरर्थान्तरविषयकशक्त्यन्तरोद्भावनेनैव विशेषणत्वमिति ब्रूमः । औपसंदानिकी शक्तिरेव द्योतनमिति हि प्रसिद्धिः । अयमत्र विवेकः—तिष्ठतेर्गतिनिवृत्तिर्गतिश्चेति द्वावर्थौ, दधातेरपि धारणमभिधानं च । तत्रानुपसृष्टयोर्गतिनिवृत्तौ धारणे च शक्तिराविर्भवति । प्राभ्युपसर्गौ तु तां शक्तिमपोह्य गतावभिधाने च शक्तिमाविर्भावयतः । उक्तंच—'तेन शक्त्यपवादोऽयं भवेदर्थापवादवत्' इति । अयं च द्योतकत्ववादिनोऽभिप्रायः । वाचकत्वपक्षे तु समुदायशक्तिरेवेति । अत्र केनचित्कर्मणः कर्मसाध्यत्वाभावाश्च ज्वलनादिद्वारेण काष्ठपाकान्वय इत्युक्तम् । तन्निराकरणप्रसङ्गेन कर्तृत्वकरणत्वादिनिरूपणं वार्तिककारेण महता प्रबन्धेन कृतं तत्तत्रैवावगन्तव्यम् । नन्वस्तुनामैवमुपसर्गाणां संबन्धः नञादेस्तु वस्तुस्वरूपविरुद्धप्रतिषेधविकल्पादिवाचकत्वात्कथं संबन्धः स्यात् । उक्तंच—'स्वश्रुतेः प्रथमं वस्तु सद्भावेन निरूपितम् ॥ कथं नञादिभिः पश्चादभावमुपनीयते' इति । अत्रोच्यते—न तावन्नञा वस्त्वभावः क्रियते, यतस्तस्य वस्तुना विरोधः स्यात् किंतु विद्यमानमेवाभावं वर्तमानमतीतमनागतं वाभिदधाति । त्रेधा हि नञो वृत्तिः—पर्युदासाभावप्रतिषेधैः । तद्यत्र नाम्ना संयुज्यते अब्राह्मण इति तत्र ब्राह्मणवस्त्वन्तरपर्युदस्तं क्षत्रियाख्यवस्त्वेव नञा प्रतिपाद्यते, तथा नेक्षेतेत्यादौ धात्वर्थयोगेपीक्षणपर्युदस्तमनीक्षणसंकल्पाख्यवस्त्वन्तरमेवोच्यते । तच्च वस्त्वन्तरपर्युदस्तत्वं वस्त्वन्तरस्यानुगुणमेव सर्ववस्तूनामितरेतराभावात्मकत्वात् । यत्राप्याख्यातसंयोगे नास्ति घटो नासीन्न च भविष्यतीति वा निवृत्तिः प्रतीयते तत्रापि न वस्त्वभावो नञा क्रियते किंत्वज्ञानसंशयविपर्ययमात्रनिवारणम् । यथाहुः—'नामधात्वर्थयोगी च निषेधोऽन्यार्थभाग्भवेत् ॥ तत्र वस्त्वन्तरैर्युक्तं वस्त्वेवानुगुणं च तत् ॥ आख्यातप्रत्ययैर्योगे निवृत्त्यर्थः प्रतीयते ॥ *तत्र चाज्ञातसंदिग्धविपरीतार्थवारणम् ॥' ननु वस्तुस्वरूपाभाववाचकस्य कथं शब्दान्तरसमभिव्याहारः । मैवम् । अभावस्य वस्तुत्वप्रतिपादनात्तदभिधायिनो नञो घटादिवत्तदुपपत्तेः । ननु प्राप्तिपूर्वको निषेधो भवति तद्यदि घटसत्ता प्राप्ता कथं निषिध्यते । नहि विद्यमानस्याविद्यमानता संभवति । स्यादेवं यद्ययं प्रतिषेधः स्यात् । नत्वेवम् । 'न हन्यान्न पिबे'दित्यादाविव विधिसंयोगाभावात् किंत्वभावस्वरूपमात्रकथनम् । नच तत्प्राप्त्यपेक्षम् । हन्त तर्ह्यभाववाचिनो नञः कथं सद्भाववाचिना घटशब्देन समभिव्याहारः न स्यात् । अस्तिनास्तिशब्दयोरिव विरुद्धार्थत्वात् । नैष दोषः । *नह्यत्र घटशब्देन घटस्य सत्वं बोध्यते किंतु सदसत्त्वसाधारणं स्वरूपमात्रम् । तच्च प्रादेशिकत्वाद्घटस्य क्वचित्सद्भाववत् क्वचिच्चासत्त्वमिति न विरोधः । सत्त्वबोधने तु पटोस्तीत्यस्तिशब्दप्रयोगः न स्यात् । ननु मीमांसकानां मते जातिरेव शब्दार्थः तस्याश्च नित्यत्वात्कथमसत्वसाधारण्य़ं । नैष दोषः । नास्तीत्यस्य व्यक्तिविशेषणत्वाङ्गीकारात् शब्दार्थरूपाया जातेस्तदसंभवात् । यथाहुः—'जातेरस्तित्वनास्तित्वे नच कश्चिद्विवक्षति ॥ नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे' ॥ नन्वेवमपि 'ब्राह्मणं न हन्यात्' 'सुरां न पिबेत्' इत्यादौ नञः प्रतिषेधवृत्तेरस्ति विरोधः । तथाहि प्राप्तिपूर्वकः प्रतिषेधो भवति । तद्यदि रागादिना पानं हननं वा तेनानुष्ठितं तदा कथं तस्याभावः कथ्यते । यदि तु नानुष्ठास्यते ततः प्राप्त्यभावात्प्रतिषेधानुपपत्तिरिति । उच्यते—नात्र नञोऽभावार्थत्वं किंतु चिकीर्षिताद्व्यापरान्निरुन्धनम् । संभवति च पुंसः पानादौ वैराग्यजननेन तदभावावस्थापनमित्यविरोधः । उक्तंच—'विधिना युज्यते यत्र न हन्यान्न पिबेदिति ॥ तत्राभावार्थता नैव *स्वयं पुंसो रुणद्धि हि' ॥ एतत्प्रपञ्चस्तु न्यायरत्नाकरेऽवगन्तव्यः । प्रकृतमनुसरामः—इतश्च वाक्यार्थस्य निर्भागत्वं निरसनीयमित्याह—प्रसङ्गादिति । यदि निर्भागो वाक्यार्थः स्यात् तदा वाक्यार्थावयवपदार्थविषयः प्रासङ्गिकादिव्यवहारो न स्यादित्यर्थः । यथाहुः—*'प्रासङ्गिकादि यत्कार्यं पदार्थोपनिबन्धनम् । आकाङ्क्षाविदितप्रश्नौ यौ च दृष्टौ पिकादिषु ॥ असत्यं त-

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

कथं तिष्ठत्यन्तर्गत्यर्थता गम्यतेऽत आह—नहीति । अतो न प्रशब्दस्य गत्यर्थतेति भावः । तत्रचेति । यथा स्थाणुप्रत्यक्षेण स्थाणुविषयाज्ञानसंदेहो निवार्यः तथा तत्रापीत्यर्थः । नह्यत्रेति । घटो नास्तीत्यत्रेत्यर्थः । स्वयमिति । स्वयमेव पुमांसं केशेषु गृहीत्वा चिकीर्षितान्व्यापरान्निरुणद्धीत्यर्थः । प्रासङ्गिकादीति । पाशुकानां प्रयाजादीनां पुरोडाशेषु प्रसङ्गः त्रिषु चामेयादिषु तन्त्रमङ्गानि कृष्णलादिषु चावघातादीनां बाध इत्यादिर्योऽयं वेदव्यवहारः या च लोके द्वारंद्वारमित्युक्तेः अर्थान्तराकाङ्क्षा, पिकमानयेत्यादौ कः पिक इत्यपि भेदेन प्रश्नः एतत्सर्वमसति पदार्थविभागेऽनुपपन्नं स्यादित्यर्थः ।

१ ज्ञानद्वारेण.

**कथं निर्भागवादिनाम्' ॥ यदाहि 'अग्नीषोमीयं पशुमालभेते'ति निर्भागस्य साङ्गप्रधानविधेरर्थो निर्भागः न साध्यं न साधनं नाप्यङ्गानि तदा न पशुर्न प्रयाजा न पुरोडाशो न तदीया अनुयाजाः सन्तीति किं कुत्र प्रसज्यते । एवं तन्त्रादिष्वपि दर्शयितव्यम् । तस्मादनेकपदार्थानुरक्तो वाक्यार्थः । सच पदार्थमूलो न निर्मूलो नच संकेतमूलः । तस्मान्नाप्रामाण्यं चोदनायाः । यत्तु वाक्यत्वात्पौरुषेयत्वमित्युक्तं तदुपरितनेऽधिकरणे निराकरिष्यामः ॥**

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

*दपोद्धृत्य नचैकं कल्पयिष्यति ॥ असत्यैर्गम्यमानेऽर्थे सत्यता नेत्युदाहृतम् ॥ स्वरूपेणासतो दृष्टं नोपायत्वं हि कस्यचित्' इति । प्रसङ्गादीत्यादिशब्दार्थं विवृणोति—**तथाहीति** । उक्तमर्थमुपपादयति—**यदाहीति** । उपपादितमर्थं निगमयति—**तस्मादिति** ॥

**अत्र सिद्धान्तसूत्रम्**—'तद्भूतानां *क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' तद्भूतानां तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां *क्रियार्थेन पदेन समाम्नायः समुच्चारणं नानपेक्ष्य पदार्थान् पार्थगर्थ्येन *वाक्यार्थम् । कुतः । अर्थस्य पदार्थस्य तन्निमित्तत्वात् वाक्यार्थप्रत्ययनिमित्तत्वात् पदानि तावत्स्वार्थानभिदधति पश्चात्ते पदार्था आकाङ्क्षादिवशेन वाक्यार्थमवगमयन्तीति सूत्रार्थः । अथवा ग्रन्थकाराभिप्रेत एवं सूत्रार्थो वर्णनीयः । इह केचिद्वाक्यमेव वाक्यार्थस्य वाचकमिति मन्यन्ते केचित्तु निर्मूलमेव वाक्यार्थज्ञानमित्याहुस्तेषामुभयेषामपीदं सूत्रेण निराकरणम् । तथाहि लोकसिद्धेषु पदार्थेषु वर्तमानानां पदानामेव वाक्यार्थज्ञानोपायत्वात् न वाक्यस्य वाचकत्वम् । कुतः । अर्थस्य तन्निमित्तत्वात् पदार्थानामेव तन्निमित्तत्वोपपत्तेर्निष्प्रमाणकं वाक्यस्य वाचकत्वमित्यर्थः । नापि निर्मूलं वाक्यार्थज्ञानं अर्थस्य पदार्थस्य तन्निमित्तत्वात् तन्मूलत्वात् । नचैवं वाक्यार्थस्याशाब्दत्वापत्तिः । यतस्तेषां क्रियार्थेन समाम्नायः । **ननु** यदि पदार्थेषु पदानि वर्तन्ते पदार्थाश्च वाक्यार्थस्य क्रियायाः विशिष्टभावनाया निमित्तं ततः कथं पदानां क्रियार्थत्वेन समाम्नायः सिध्येत् । वाक्यार्थावगतावेव तात्पर्यादिति ब्रूमः । तथाहि पदार्थस्वरूपस्य प्रमाणान्तरसिद्धत्वात् तन्मात्रप्रतिपादनं निष्फलं, यतः पदार्थावसिताभिव्यापाराणामपि पदानां तत्रानवसिततात्पर्याणां वाक्यार्थावगतावेव तात्पर्यमिति *युक्तमेवोक्तं तेषां क्रियार्थेन समाम्नाय इति । यथाहुः—'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ॥ वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ॥ पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्' इति । **नन्वे**वमपि पदैरनभिधेया भावना कथमर्थ इति । उच्यते । प्रयोजनतयेति ब्रूमः । क्रियार्थेन समाम्नाय इत्यत्रार्थशब्दस्य प्रयोजनवचनत्वात् । यथाहुः—'प्रयोजनतया चैषामर्थमिच्छन्ति भावनाम् ॥ क्रियार्थेनेति तेनेह समाम्नायप्रयोजनम्' । यत्रापि लोके शुक्लो गौरिति निष्क्रियमेव वाक्यं श्रुतं तत्राप्यानीयतामित्यध्याहर्तव्यम् । आख्यातवर्जितपदस्य प्रयोजनाक्षमत्वात् । किंचान्वयव्यतिरेकाभ्यामपि पदार्थानां निमित्तत्वमवसीयते । उच्चरितेभ्योऽपि पदेभ्यः कदाचिन्मानसादपचारात्पदार्थाग्रहणे वाक्यार्थाग्रहणात् । ***ननु** वाक्यमप्यत्र न गृहीतमितिचेत् । न । पदोच्चारणं विनापि शौक्ल्यादिपदार्थावगममात्रेण शुक्लगुणकद्रव्यावगमदर्शनात् । तस्माद्वाक्यव्यतिरेकेपि पदार्थचयेऽन्वीयमानः पदार्थनिमित्त एव वाक्यार्थप्रत्ययः । एवंच सति सिद्धे पदार्थनिमित्तत्वोपपत्तावपि मानसादपचारादग्रहणं तत्रापि पदार्थाग्रहणादेव वाक्यार्थाग्रहणं नतु वाक्याग्रहणादित्युत्तरं युक्तं संविदविरोधात् । यथाहुः—'पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः ॥ खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥ दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ॥ मानसादित्यतो न स्याद्वाक्यग्रहणमुत्तरम् ॥ मानसेनापराधेन पदार्थान्ये न गृह्णते ॥ ते तु वाक्यं गृहीत्वापि नार्थं गृह्णन्ति कर्हिचित्' ॥ प्रयोगास्तु वार्तिकेऽवगन्तव्याः विस्तरभयान्नेह लिखिताः । **नन्वे**वमपि लौकिकवाक्यवद्वेदेऽप्यानुपूर्व्याः पौरुषेयत्वम् । दृश्यते च लोके—'नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः ॥ नीलकौशेयसंवीताः प्रणश्यन्तीव कादम्बा'इति । अतो वैदिका अपि पुरुषकृता इति तन्निराकरणार्थमिदं सूत्रम् । लोके सन्नियमात्प्रयोगसंनिकर्षः स्यात् । एतच्च व्यवहितविपरिणतानुषङ्गेण व्याख्येयम् । लोके संनिकर्षात्प्रमाणान्तरसंबन्धात् प्रयोगसंनियमः स्यात् पुरुषाधीनप्रयोगव्यवस्था युक्ता स्यात् नत्विह प्रमाणान्तरागोचरार्थविषयत्वादिति सूत्रार्थः ॥ इति सप्तमं वाक्याधिकरणम् ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम्।

अथासतो भागानपोद्धृत्य सर्वोयं व्यवहारः सिध्यतीत्युच्यते तत्राह—**अपोद्धृत्येति** । असदपोद्धरणगम्यमानं प्रसङ्गादिकार्यमप्यसदेव स्यादिति भावः । **क्रियार्थेनेति** । क्रियावाचकेन पदेनेत्यर्थः । यद्वा अंशत्रयविशिष्टभावनार्थत्वेनेत्यर्थः । **वाक्यार्थमिति** । पदागम्यप्रतिपादकवाक्यस्वरूपासिद्ध्यर्थमित्यर्थः । **युक्तमेवोक्तमिति** । यत्परः शब्दः इति तान्त्रिकप्र-

वेदापौरुषेयत्वाधिकरणम् ॥ ८ ॥

**वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥ २७ ॥ [अनित्यदर्शनाच्च ॥ २८ ॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्याः प्रवचनात् ॥ ३० ॥ परं तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ कृते वा विनियोगः स्यात्कर्मणः संबन्धात् ॥ ३२ ॥]**

पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता ॥ काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥ ५३ ॥
समाख्याध्यापकत्वेन वाक्यत्वं तु पराहतम् ॥ तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥ ५४ ॥

संकेतानपेक्षैरेव पदैः पदार्थाः प्रतिपाद्यन्ते तैरप्यनपेक्षितसंकेतैर्वाक्यार्थ इत्युक्तम् । इदानीं तु किं पौरुषेयाणि वेदवाक्यानि उतापौरुषेयाणीति चिन्त्यते । पौरुषेयत्वेतु संजातस्यापि वाक्यार्थप्रत्ययस्य स्वतःप्राप्तमपि प्रामाण्यं पौरुषेयस्येदृशेऽर्थे मूलप्रमाणासंभवाद्विप्रलम्भभ्रान्त्यादिमूलतयाचोद्यते । तत्र—'वेदानां पौरुषेयत्वं वाक्यत्वाद्भारतादिवत् ॥ काठकादिसमाख्यापि कृतकत्वे समर्थ्यते ॥' नन्वपूर्वात्मा वेदार्थोऽलौकिकः कथंचिदपि बुद्धावारोपयितुमशक्यः । कथं तत्र पुरुषा वाक्यं रचेयुः । भवानपि वा कथमीदृशे तस्मिल्लिङ्गादेः शक्तिं गृह्णीयात् । अधिकारिनियोज्यान्वययोग्यं स्वर्गसाधनक्षमं कार्यरूपमित्यादिरूपेण कथंचिद्धृदयमानीय शक्तिग्रहणम् । तथा वाक्यरचनाविधिः संभविष्यति, तस्माद्वाक्यत्वात्पौरुषेया वेदाः । तथाच काठकादिसमाख्या युज्यते, नहि प्रवचन-

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

**वेदांश्चैके संनिकर्षं पुरुषाख्याः** ॥ २७ ॥ ननु पदपदार्थसंबन्धनित्यतया वाक्यार्थमूलविवक्षया च चोदनाप्रामाण्य उपपादिते चोदनैव प्रमाणमित्यवधारणसिद्धेरग्रिमविचारानर्थक्यमित्याशङ्क्याक्षेपान्तरनिराकरणेनार्थवत्त्वमुपपादयितुं वृत्तमनुवदति—**संकेतानपेक्षैरिति** । अत्र केचिदाहुः—संबन्धनित्यत्वाद्युपपादनेन चोदनाप्रामाण्याक्षेपे परिहृतेपि कठादिसमाख्यया शाखानां पौरुषेयत्वावगमात्तदवयवानां चोदनानां पुनः प्रामाण्यमाक्षिप्यते इति । तन्न युक्तम् । सामान्यप्राप्तौ सत्यां विशेषनियमार्था समाख्या भवति । यथर्त्विजां सामान्यतः पदार्थेष्वनियमेन कर्तृत्वे प्राप्ते आध्वर्यवादिसमाख्यया नियमः क्रियते । नचेह वेदानां सामान्येन कश्चित्कर्ता प्राप्तो यतः काठकादिसमाख्यया कठादयो नियम्येरन् । प्रवचनेनापि च समाख्योपपत्तौ नैकान्ततस्तया काठकादिकर्तृत्वसिद्धिरतो वाक्यत्वादेवात्र पौरुषेयत्वमाशङ्क्य निराक्रियत इत्यभिप्रायवानाह—**इदानीमिति** । ननु पौरुषेयाणामप्याप्तप्रणीतानां इष्टमेव प्रामाण्यं *कथं तेन चोदनाप्रामाण्यापवादोऽत आह—**पौरुषेयत्व इति** । ईदृशे लौकिकप्रमाणागोचरे । पूर्वपक्षमाह—**तत्रेति** । समाख्यात्वभ्युच्चयहेतुरत्रेत्याह—**काठकादीति । नन्वे**तदपि कर्तुरस्मरणादित्यनेन पूर्वमेव परिहृतम् । सत्यम् । अत्रत्यमेवानागतावेक्षणेन प्रसङ्गात्पूर्वमुक्तं, इहैव तु वेदानां पौरुषेयत्वं निराक्रियते तेनात्रैवेदमुपन्यसनीयं निराकरणीयं चेति सर्वमनवद्यम् । किंच—'जायते वाक्यतापत्तिः पदानां रचनावशात् ॥ नच सा पुरुषाभावे कथंचिदुपपद्यते' ॥ अतोऽवश्यमाश्रयणीयो वेदानां कर्तेति सिद्धान्तिनः शङ्कामुपपादयति—**नन्विति** । प्रतिबन्द्या परिहरति—**भवानपीति** । यद्येवं शक्तिग्रहणं तर्हि वाक्यरचनाप्येवं भविष्यतीत्याह—**अधिकारीति** । श्लोकार्थमुपसंहरति—**तस्मादिति** । ननु प्रवचनेनापि समाख्योपपत्तौ नैकान्ततस्तत्कर्तृत्वसिद्धिरित्युक्तं तत्राह—**नहीति** । कर्तृत्वपक्षे तु काठकादिविशेषणत्वं संभवतीत्याह—**कर्तृत्वमिति । किं** पुनरिदं कर्तृत्वं यदेकस्यैव संभवति न बहूनामित्यभिप्रायेण पृच्छति—**किमिति** । उत्तरमाह—**य इति** । पूर्वपक्षमुपसंहरति—**तस्मादिति** । अयंच सूत्रार्थः । चकारस्तुशब्दार्थः । एके वादिनः । संनिकर्षः संनिकृष्टकालत्वं लक्षीकृत्य कृतकान्वेदान्मन्यन्ते, यतस्ते पुरुषाख्याः पुरुषेणाख्यायन्ते कठादिरूपेण । 'अधिकृत्य *कृते ग्रन्थे' इत्यभियुक्तस्मरणात् ।

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

सिद्धेरित्यर्थः । **नन्विति** । अत्र भाष्यकारेण अंतरेणापि पदोच्चारणमित्यादिना वाक्यग्रहणमुत्तरमुक्तं तन्न युक्तम् । वाक्यस्य तत्राग्रहणदर्शनात् । तस्मात्पदार्थग्रहणादेव वाक्यार्थग्रहणं तदग्रहणाच्च वाक्यार्थाग्रहणमित्येवोत्तरं वक्तव्यमित्यर्थः । अथवा मानसादपराधादित्यादिना ग्रन्थेन वाक्यग्रहणमुत्तरमुक्तं तत्र वाक्यस्य ग्रहणात्संविद्विरोध इत्यर्थः । **पश्यत इति** । श्वेतं कंचित्पदार्थमव्यक्तं अगवाश्वादिरूपं दूरादुपलभमानस्य तस्मिन्नेव प्रदेशे हेषया खुरशब्देन चाश्वजातिं गतिं चानुमिमानस्य तत्र वस्त्वन्तराणामभावमवगच्छतः गुणजातिक्रियाणामान्तरान्यायमपेक्षमाणानां योग्यानामर्थापत्त्या स श्वेतोश्वो धावतीति परस्परसंसर्गावगतिर्दृष्टेत्यर्थः । **कथं तेनेति** । पौरुषेयत्वेनेत्यर्थः । **कृते ग्रन्थ इति** । क्वचिच्च तद्धितप्रत्ययश्च तेन प्रोक्त-

निमित्ता समाख्या संभवति । प्रवचनस्यानेकपुरुषसाधारणत्वात्काठकविशेषणासंभवात्, कर्तृत्वं चैकस्यैवेति युक्तं विशेषणम् । किं पुनर्वाक्ये पुंसः कर्तृत्वम् । यः स्वातन्त्र्येण पदानि वाक्यत्वेन रचयति स कर्ता, स्वातन्त्र्यं चैकस्यैवेति युक्तं विशेषणम् । यस्तु यथैव पुरुषान्तरेणोच्चारितं तथैवोच्चारयामीत्येवमुच्चारयति नासौ कर्ता, तादृगुच्चारणं च बहूनामप्येकस्मिन्वाक्यो संभवतीति विशेषणानुपपत्तिः, तस्मात्कर्तृनिमित्तेयमिति प्राप्ते ॥

वेदापौरुषेयत्ववादखण्डनम् ।

अभिधीयते—'उक्तं तु शब्दपूर्वत्वमाख्याप्रवचनादिति ॥ वाक्यत्वात्पौरुषेयत्वं दृश्यादर्शनबाधितम् ॥ प्रतिहेतुविरुद्धश्च हेतुस्तस्मादकृत्रिमाः' ॥ यदि वेदानां कर्ता कश्चिदभविष्यत्ततोऽवश्यमध्येतृपरंपरया बुद्धादिवदस्मरिष्यत्, नह्यस्य विस्मरणं संभवति, तत्प्रत्ययेन हि तदा सर्वपुंसां वेदार्थानुष्ठानं प्रमाणान्तरागोचरत्वात्फलसाधनत्वस्य । अतोऽर्वाचीनैः कथमसौ विस्मर्येत, यतः स कर्तावश्यं स्मर्तव्यो नच स्मर्यते, तेन स्मृतिरूपदर्शनयोग्यत्वे सत्यप्यदृश्यमानः कर्ता शशविषाणवदभावासनाध्यवसीयते ॥ * ॥ येऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परंपरया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम्, सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिपन्ति, केचिदीश्वरं, अन्ये हिरण्यगर्भं, अपरे प्रजापतिम्, नचायं नानाविधो विवादः परंपरया कर्तरि मन्वादिवत्स्मर्यमाणे कथंचिदप्यवकल्प्यते। नहि मानवे भारते शाक्यग्रन्थे वा च कर्तृविशेषं प्रति कश्चिद्विवदते, तस्मात्स्मर्तव्यत्वे सत्यस्मरणाद्दृश्यादर्शनबाधितं सामान्यतोदृष्टं न शक्नोति कर्तारमवसाययितुम् ॥ * ॥ सप्रतिसाधनश्च हेतुर्वाक्यत्वादिति । विवादाध्यासितं वेदाध्ययनं गुर्वध्यापनपूर्वकं वेदाध्ययनत्वादद्यतनाध्ययनवदिति, तदिदमाह सूत्रकारः—'उक्तं तु शब्दपूर्वत्व'मिति । शब्दशब्देनात्र शब्दजन्यमध्ययनम् । तदयमर्थः—सर्वपुंसामध्ययनमध्ययनान्तरपूर्वकं, सर्वे हि यथैव गुरुणाधीतं तथैवाधिजिगांसन्ते। न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति यः कर्ता स्यात् तस्मादपौरुषेया वेदाः । समाख्यापि योग्यानुपलब्धिनिराकृते कर्तरि तन्निमित्ता न संभवतीति प्रवचननिमित्ताध्यवसीयते। प्रवचन एवातिशययोगेनासाधारण्यं कठस्य संभवतीति न विशेषणत्वा-

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

अतः समाख्यातः पौरुषेयत्वं वेदानामिति । **ननु** सामान्यप्राप्तौ सत्यामेव विशेषनियमे समाख्या व्याप्रियत इत्युक्तम्। सत्यम्। इहाप्यस्त्येव सामान्ये प्राप्तिः लौकिकवाक्यसाधर्म्यपदसंघातत्वादिदर्शनात् । उक्तंच—'वचनान्तरसाधर्म्यात्कर्तुः सामान्यसंप्लवे ॥ समाख्यया विशेषोऽयं कठादिरवधार्यते' ॥ अनित्यदर्शनाच्च जननमरणवन्तः । तथाऽनित्या एव वेदार्थाः श्रूयन्ते। 'बबरः प्रावाहणिरकामयत' 'कुसुरबिन्दुरौद्दालकिरकामयत' इत्यादि । अत एभ्यः प्राक्ते ग्रन्था नाभूवन्निति गम्यते। अतोऽप्यनित्या वेदा इति। सिद्धान्तं प्रतिजानीते—**इति प्राप्त इति** ॥

**अभिधीयत इति**। 'उक्तं तु शब्दपूर्वत्वं' 'आख्याप्रवचनादि'ति च सिद्धान्तसूत्रद्वयं भाष्यकारेण पृथग्लिखित्वा व्याख्यातम्। ग्रन्थकारेण तु परिहारसौकर्याय तदेकीकृत्य पठितम्। श्लोकार्थमुपपादयाति—**यदीति**। अनादराद्विस्मरणमिति चेत्। न। एतादृशे विषयेऽनादरानुपपत्तिरित्याह—**तदिति। दृश्यादर्शनेति**। अतः स्मर्तव्यस्य सतः सर्वथैवास्मरणा असत्यां सामान्यतः कर्तुः प्राप्तौ न समाख्यया विशेषनियम इति भावः । उक्तेऽर्थे सूत्रं योजयति—**तदिदमिति**। शब्दशब्देनात्र शब्दाध्ययनमुच्यते। उच्चारणमिति यावत् । तत्पूर्वकत्वमध्येतॄणामौत्पत्तिकसूत्रादावुक्तमित्यर्थः । एतदेव विवृणोति—**सर्वेति**। सूत्रार्थमुपसंहरति—**तस्मादिति**। नन्वप्राप्तस्यापि कर्तुः समाख्यैव मूलं कस्मान्न भवत्यत आह—**समाख्यापीति**। समाख्यायाः प्रवचननिमित्तत्वेनाप्युपपद्यमानत्वात् न कर्तृकल्पनामूलत्वं 'तेन प्रोक्त'मित्यपि स्मरणदर्शनात्। किंच दुर्बला हि समाख्या श्रुत्याद्यपेक्षया आदिमती च। कथं तया श्रुत्यात्मकस्य शब्दराशेः कर्त्रुपस्थापकत्वेनाप्रामाण्यमापादयितुं शक्यमतोपि प्रवचननिमित्तेयमिति । **ननु** प्रवचनस्यानेकपुरुषसाध्यत्वात्कठस्य विशेषणत्वानुपपत्तिस्तत्राह—**प्रवचन एवेति**। प्रकर्षवशादसाधारण्योपपत्तेर्विशेषणत्वं स्यादित्यर्थः । यथाहुः—'स्मर्यते च वैश

नुपपत्तिः ॥ * ॥ यद्वा नायं पुरुषविशेषवचनः कठशब्दः किंतु नित्यस्य चरणविशेषस्यैवेयं संज्ञा तच्चरणैः पुरुषैः परंपरयाऽधीयमाना शाखा काठकशब्देनाभिधीयते । 'तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता ॥ चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः' ॥

---

## युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका ।

प्रावचनः सर्वशाखाध्यायी । कठः पुनरिमां केवलां शाखामध्यापयाम्बभूव । अतोऽन्यां शाखामनधीयानस्तस्यामसाधारण' इति । अथवा रूढिरेवेयमश्वकर्णादिवन्निर्निमित्तेत्याह—**यद्वेति** । यथाहुः—'कामं वा निर्निमित्तेयं शाखामेकां वदिष्यति । श्रुतिसामान्यमात्रं हि नात्र दण्डमवाप्यते' ॥ यच्च नित्यदर्शनादित्युक्तं तत्परिहारार्थं सूत्रम् । 'श्रुतिः सामान्यमात्रम्' इति श्रुतिशब्दस्यैवात्र साम्यमात्रं मात्रार्थः समानः । नह्यत्र प्रवाहणस्यापत्यं प्रावहणिः किंतु यः प्रवाहणस्य कर्ता । यदाह-प्रशब्दः प्रकर्षे सिद्धो वहतिश्च प्रापणे । नत्वस्य समुदायः क्वचिद्वर्तते । इकारस्तु यथैवापत्येऽर्थे सिद्धस्तथा क्रियायामपि कर्तरि, तस्माद्यः प्रवाहयति स प्रवाहणिरिति । बबर इति शब्दानुकरणं 'चाषेण किकिदीविना' इतिवत् । तेन यो नित्योऽर्थो वा पुरुषस्तमेवैतौ शब्दौ वदिष्येते । एवमुदाहरणान्तरेऽप्यूह्यम् । ऋतुलिङ्गन्यायेन वा प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया न वेदस्यानित्यत्वमापादयन्तीति । किंच अयं वेदो नित्यः स्यादनित्यो वा । आद्ये अनित्यमर्थमसंभवादेव वर्जयिष्यति । अन्त्ये त्वप्रमाणत्वादेव सुतरामिति । दर्शिता च नित्या कृत्यर्थता भाष्ये । यथाहुः—'अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति ॥ नित्यानित्यविकल्पेन वेदस्तादर्थ्यवर्जनात् ॥ नित्यस्य नित्य एवार्थः कृतकस्याप्रमाणता'इति । **ननु** 'वनस्पतयः सत्रमासत, सर्पाः सत्रमासत, गावो वा एतत्सत्रमासत'इत्यादीन्युन्मत्तबालप्रलापसदृशानि वाक्यानि श्रूयन्ते, एतानि च जरद्गवादिवाक्यवदप्रमाणभूतानि कथमिव कृत्स्नस्य वेदस्याप्रामाण्यं नापादयेयुरिति । तन्निराकरणार्थमिदं सूत्रम्—वृत्ते वा विनियोगः स्यात्कर्मणः संबन्धात् । वाशब्दः पक्षव्यावृत्त्यर्थः । वृत्ते कर्मणि सत्राख्ये प्रशंसाद्वारेण विनियोगो विधिः स्यात्, कुतः, कर्मणः संबन्धात् । विनियुक्तं हि दृश्यते परस्परेण संबन्धार्थम् । कथम् । *ज्योतिष्टोम इत्यभिधाय कर्तव्य इत्युच्यते, केनेत्याकाङ्क्षिते सोमेनेति, किमर्थमिति स्वर्गायेति, कथमिति इत्थमनयेतिकर्तव्यतयेति । एवं पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थमवगच्छन्तः कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः । **ननु** वनस्पतीनां सर्पाणां गवां वा सत्रकरणमनुपपन्नम् । मैवम् । स्तुतयो ह्येताः सत्रस्य । वनस्पतयो नामाचेतानाः त इदं सत्रमुपासितवन्तः किंपुनर्विद्वांसो ब्राह्मणा इति । *वक्ष्यति च अप्राप्ताचानुपपत्तिरिति । कश्चित्तु संबन्धादित्यस्य स्थाने समत्वादिति पठित्वा व्याख्यातम् । कर्मणः अंशत्रयोपेतस्य सत्रभावनाख्यस्य ज्योतिष्टोमेन यजेतेत्यादिकर्मणा समत्वादिति । तत्तु भाष्यविरोधादुपेक्षणीयम् । तदेवमुपपादितं चोदनाप्रामाण्यमुपसंहरति—**तस्मादिति** । ननु प्रमाणरूपस्य समाप्तत्वादनन्तरं विधिभेदविचार एवारब्धव्यः किं त्रिपाद्यर्थवादादिविचारेणेति तत्राह—**चोदनेति** । अनेन पादेन चोदनाया एव प्रामाण्यमुक्तम् । अर्थवादादीनां त्रिपाद्या साधयिष्यते । अतः पादत्रयमपि चोदनासूत्रवदेव *जिज्ञासासूत्रोक्तया 'को धर्म'इत्यनयैव प्रतिज्ञया संगच्छत इति नासंगतिः, नापि प्रमाणलक्षणसमाप्तिरिति भावः ॥

## सिद्धान्तचन्द्रिकागूढार्थविवरणम् ।

मित्यस्मिन्नर्थे वर्तत इत्युक्तं तत्तु पूर्वपक्ष एतदुपन्यासस्य सिद्धान्तौपयिकस्यानौचित्याच्चिन्त्यं यच्च सूत्रकारेणानित्यसंयोगपरिहारार्थमुक्तं परंतु श्रुतिसामान्यमिति तत्समाख्यायामपि शक्यं वक्तुम् । अतो भूतिरेवेयमित्याभूतीति कठशाखीयैः पुरुषैः परंपराधीयमाना शाखा कठशब्देनाभिधीयत इत्यत्रापि श्रुतिसामान्यमित्यर्थः । नन्वर्थः समान इति अन्यत्र प्रवाहणस्यापत्यमाहार्यं शब्दः । अत्रतु यः प्रकर्षेण प्रापयति वायुः स प्रावाहणिरुच्यत इत्यर्थभेदः । सूत्रस्यकृतेपदस्य व्याख्यातं कर्मणीति । **ज्योतिष्टोम इति** । **ननु** सूत्रवाक्यानुपपत्तौ परिहर्तव्यतायां ज्योतिष्टोमवाक्यव्याख्यानं न युक्तम् । नैष दोषः । यथेदं संबद्धार्थं तथा तदपि वाक्यं भविष्यतीत्यभिप्रायेण तदुपन्यस्येत्—**वक्ष्यतिचेति** । **अप्राप्तानुपपत्तिः** प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येतेत्यर्थवादचरणे सूत्रकारो वक्ष्यतीत्यर्थः । **जिज्ञासेति** । अतो न त्रिपाद्याश्चोदनासूत्रे शेषतया संगतिः किंतु जिज्ञासासूत्रशेषतयेति भावः ॥

**इति श्रीमाधवात्मजश्रीरामकृष्णभट्टकृते सिद्धान्तचन्द्रिकागूढार्थविवरणे**

**प्रथमस्याध्यायस्य प्रथमस्तर्कपादः संपूर्णः ॥ १ ॥**

पादार्थोपसंहारः।

यदि चोदनासूत्रे प्रतिज्ञातं—भेदशेषप्रयुक्तिक्रमनियमाधिकारातिदेशबाधोहतन्त्रप्रसङ्गसर्वविशेषणविशिष्टे धर्मस्वरूपे चोदनैव प्रमाणं प्रमाणमेव चोदनेति तत्र चोदनैवेत्यवधारणेन यच्चोदनानिरपेक्षाणां तया सह तुल्यकक्षतया स्पर्धमानानां प्रत्यक्षादीनामप्रामाण्यं प्रतिज्ञातं तत्प्रत्यक्षसूत्रेण साधितम्। 'औत्पत्तिकस्त्वि'त्यादिना पादशेषेण प्रमाणमेवेत्ययमंशः साधितः। तदेवमस्मिन्नेव पादे चोदनासूत्रप्रतिज्ञातार्थविशेषे साधिते उपरितनं पादत्रयं चोदनासूत्रशेषतया न संगच्छते किंतु प्रथमे सूत्रे किंलक्षणो धर्म इति धर्मस्य प्रमाणं वक्तव्यत्वेन प्रतिज्ञातं तत्रानेन पादेन चोदनायाः प्रामाण्यमुक्त्वार्थवादस्मृतिनामधेयानामुपरितनेन पादत्रयेण प्रामाण्यं प्रतिपाद्यते तेन चोदनासूत्रवदेव पादत्रयं जिज्ञासासूत्रोक्तया 'को धर्म' इत्यनयैव प्रतिज्ञया संगच्छते ॥ * ॥ नचार्थवादादीनां प्रामाण्ये चोदनैवेति प्रतिज्ञाव्याघातः स्यादिति वाच्यम्, तुल्यजातीयापेक्षत्वादवधारणस्य, यथा 'शुक्लः पटः' इत्युक्ते कृष्णादीनामेव निवृत्तिर्न द्रव्यत्वादीनाम्। एवं चोदनैवेत्यवधारणेन प्रत्यक्षादीनामेव चोदनावत्स्वातन्त्र्येण प्रमाणीबुभूषतां व्यावृत्तिर्नत्वर्थवादादीनां चोदनैकवाक्यतया चोदनामूलतया च प्रमाणीभवतां चोदनाविषयेणावधारणेन प्रामाण्यं निरस्तं नापि साधितम्, उपरितनेन पादत्रयेण तु तत्साधयिष्यते यथाह—

इति प्रमाणत्वमिदं प्रसिद्धमुक्त्वेह धर्मं प्रति चोदनायाः।
अतः परं तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति तस्य योऽर्थः ॥ १ ॥

इति पदवाक्यप्रमाणपारावारपारीणमीमांसासाम्राज्यधुरंधरश्रीमहोपाध्यायविद्वद्वरश्रीमत्पार्थसारथिमिश्रप्रणीतायाः शास्त्रदीपिकायाः प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

युक्तिस्नेहप्रपूरणी सिद्धान्तचन्द्रिका।

एतदेव विवृणोति—**द्वयमिति**। ततः किमित्यत आह—**तदेवमिति**। त्रिपाद्या हि चोदनासूत्रशेषत्वे चोदनासूत्रप्रतिज्ञातार्थे साधिते तदर्थोऽपि साधित इति न पृथगारम्भः स्यादिति भावः। चोदनामूलतयेति स्मृत्याचाराभिप्रायम्। नत्वनेनावधारणेनार्थवादादीनां निरस्तं नापि साधितमिति संबन्धः। तत्किमप्रामाण्यमेव तेषामभिमतं नेत्याह—**उपरितनेनेति**। अस्मिन्नर्थे संमतिं दर्शयति—**यथाहेति**। अतः परमित्यनेनैतदाह नेह प्रमाणलक्षणं समाप्तं, अर्थवादादिप्रामाण्याप्रतिपादनात्तेनात्र सिद्धेऽपि चोदनाप्रामाण्ये तत्सरणं पादत्रयेण विध्यर्थवादमन्त्रात्मना वेदं त्रेधा विभज्य ततः स्तुत्यादिप्रयोजनप्रतिपादनं न तत्तद्वेदस्य धर्मंप्रति प्रामाण्यं प्रतिपादयिष्यत इति ॥

नानाग्रन्थस्थितं सर्वं प्रमेयं फक्किकाश्च ताः ॥ संक्षिप्य लिखिता नात्र कल्पितं लिखितं मया ॥
येषामादर एव नास्ति विदुषां शास्त्रे न तेषामयं ग्रन्थः क्वाप्युपयुज्यते जडधियां तन्त्रान्तराभ्यासिनाम्।
येषां धर्मविचारणे सुकृतिनां श्रद्धादरौ तत्कृते ग्रन्थोयं रचितो गभीरमनसां शास्त्रार्थकल्पद्रुमः ॥

इति श्रीमत्पराशरगोत्रसकलशास्त्रविशारदश्रीमाधवात्मजरामकृष्णभट्टविरचितायां
शास्त्रदीपिकाटीकायां युक्तिस्नेहप्रपूरण्यां सिद्धान्तचन्द्रिकाख्यायां
प्रथमाध्यायस्य प्रथमः पादः।

समाप्तश्चायं तर्कपादः।

# शास्त्रदीपिका ।

## सोमनाथप्रणीतमयूखमालिकाव्याख्यासहिता ।

### प्रथमाध्याये द्वितीयः पादः ।

अकार्यबोधकवाक्यप्रामाण्याधिकरणम् ॥ १ ॥

**श्रीगणेशाय नमः ।**

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥१॥ [शास्त्रदृष्टविरोधाच्च ॥२॥ तथा फलाभावात् ॥३॥ अन्यानर्थक्यात् ॥४॥ अभागिप्रतिषेधाच्च ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥७॥ तुल्यं च सांप्रदायिकम् ॥८॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥९॥ गुणवादस्तु ॥१०॥ रूपात्प्रायात् ॥११॥ दूरभूयस्त्वात् ॥१२॥ अपराधात्कर्तुश्च पुत्रदर्शनम् ॥१३॥ आकालिकेप्सा ॥१४॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥]**

[ जैमिनीयन्यायमाला । ]

वायुर्वा इत्येवमादेरर्थवादस्य मानता ॥ न विधेयेऽस्ति धर्मे किं किंवासौ तत्र विद्यते ॥ १ ॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात् ॥ नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः ॥ २ ॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः ॥ तेनैकवाक्यता तस्माद्वादानां धर्ममानता ॥ ३ ॥
वादोक्तहेत्वपेक्षत्वान्न विधेर्मानतेति चेत् ॥ सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥ ४ ॥

'अथातो धर्मजिज्ञासे'त्यत्र प्रमाणस्वरूपसाधनफलैः साभासैर्धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः ।

---

**सोमनाथप्रणीतमयूखमालिकाव्याख्या ।**

**श्रीः** ॥ आविष्करोतु विबुधैरभिनन्दनीयां वाचं स कोऽपि मम बल्लवसार्वभौमः ।
वंशोऽपि यत्परिगृहीततया बिभर्ति वाचालतां त्रिभुवनैकविमोहयित्रीम् ॥ १ ॥
अधिगम्य कलामखिलामप्रभवाद्वेङ्कटाद्रियज्वगुरोः । वचनैरनतिप्रचुरैर्व्याकुर्वे शास्त्रदीपिकां विशदाम् ॥ २ ॥
विबुधाः प्रणम्य मूर्ध्ना बहुधा वः प्रार्थये कृतावस्याम् । अर्पयत दृशं सूक्ष्मां निन्दत परतोऽभिनन्दत वा ॥ ३ ॥
परिलिखतः किंचिदपि प्रकृतिर्भवति प्रमाद इति । अन्विष्य गुणकणानप्यभिनन्दत वीतमत्सरा विबुधाः ॥ ४ ॥

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ ननु** अर्थवादादेः प्रामाण्यविचारस्य धर्मविचारात्मकलाभावात्कथं शास्त्रसंगतिरित्याशङ्क्य शास्त्रार्थप्रदर्शनपरप्रथमसूत्रार्थकथनेन शास्त्रसंगतिं तावद्दर्शयति—**अथात इति ।** अत्राथशब्द आनन्तर्यार्थकः । अतःशब्दस्त्वनधीतवेदो वेदार्थभूतं धर्मं विचारयितुं न शक्नोतीति पूर्ववृत्ताध्ययनहेतुत्वस्थिरीकरणार्थस्तन्मुखेनाथशब्दस्यार्थान्तरपरत्वशङ्कानिराकरणार्थश्च । सूत्रेच कर्तव्येतिपदमध्याहर्तव्यम् । अत एव ग्रन्थकारेण जिज्ञास्यत्वेनेति विध्यर्थकृत्यप्रत्ययः प्रयुक्तः । ततश्चाथ वेदाध्ययनानन्तरं अतः पूर्ववृत्ताध्ययनाद्धेतोर्धर्मस्य विचारः कर्तव्य इति सूत्रस्य श्रौतोऽर्थः । तत्र धर्मस्यालौकिकस्य लोकसिद्धप्रमाणैरविचारितसिद्धप्रमाणभावैरवगन्तुमशक्यत्वात्साधनफलनिर्णयमन्तरेणानुष्ठानद्वाराभ्युदयपर्यवसानत्वाभावेनालौकिकश्रेयःसाधनात्मकतत्स्वरूपस्यैवासिद्धेराभासनिरूपणं विना तद्विभक्तप्रमाणस्वरूपसाधनफलनिर्णयासंभवाच्चार्थात्प्रमाणस्वरूपसाधनफलानां प्रमाणस्वरूपसाधनफलाभासानां च विचार्यत्वं लभ्यत इति श्रुत्यर्थाभ्यां प्रमाणस्वरूपसाधनफलैर्बुद्धागमचोदितचैत्यवन्दनतत्साधनतत्फलादिलक्षणतत्तदाभाससहितैर्धर्मस्य जिज्ञास्यत्वं प्रथमसूत्रे प्रतिज्ञातमित्यर्थः । तत्र प्रथमेऽध्याये प्रमाणं विचार्यते, द्वितीये स्वरूपं, षष्ठे फलम्, इतरेषु साधनमिति विवेकः । एवंच प्रतिज्ञातप्रमाणविचाररूपत्वादर्थवादादिप्रामाण्यविचारः शास्त्रसंगत इति भावः । **नन्वेवं** जिज्ञासासूत्रे श्रुत्युपात्तधर्मस्वरूपस्यैव प्रथमं निरूपणमुचितमिति प्रमाणस्य कथं प्रथमं निरूपणमित्याशङ्कायां स्वरूपादेः सर्वस्य प्रमाणाधीनसिद्धिकत्वात्प्रथमं प्रमाणनिरूपणं युक्तमिति परिहारमभिप्रेत्याध्यायार्थं वदन्नर्थवादादिप्रामाण्यविचारस्याध्यायसंग-

तत्रास्मिन्नध्याये प्रमाणं निरूप्यते किं प्रमाणं धर्मे इति। तेन यदेव किंचिद्धर्मप्रमाणनिरूपणमर्थवादमन्त्र-स्मृतिनामधेयादिगोचरं तत्सर्वमत्रैव संगतम्। नह्यत्र चोदना प्रामाण्यसाधनं लक्षणार्थो येन स्मृत्या-देरसंगतिः स्यात्। किंतर्हि। धर्मप्रमाणनिरूपणम्। तदुक्तं भाष्यकारेण 'को धर्मः कथंलक्षणक' इति सर्वस्मिंश्चाध्याये तदेव क्रियत इति समस्तमध्यायं प्रमाणलक्षणमाचक्षत इति। तेन लक्षणसं-गतिस्तावत्सिद्धा। प्रकृतसंगतिरपि चोदनानां प्रामाण्ये पदपदार्थसंबन्धस्यौत्पत्तिकत्वेन वाक्यार्थप्र-तीतेर्मूलवत्तया चोपपादितेऽनन्तराधिकरणे वेदद्वारेण तासां पौरुषेयत्वमाशङ्कितम्। यथोक्तं भाष्य-कारेण 'संनिकृष्टकाला वेदा इदानींतनास्ते च चोदनानां संघाताः। तत्र पौरुषेयाश्चेद्वेदा असंशयं

---

तिमुपपादयति—तत्रेत्यादिना। तत्र प्रमाणादिमध्य इत्यर्थः। तेनेति प्रथमसूत्रे प्रमाणसामान्यस्यैव प्रतिज्ञातत्वेनेत्यर्थः। संगतमेवेत्यन्वयः। यद्वा सर्वमेवेत्यन्वयः। सर्वमेव संगतं नतु चोदनाख्यतदेकदेश इत्यर्थः। नन्वेवमपि 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण चोदनैव धर्मे प्रमाणमिति विध्युद्देशप्रामाण्यस्य प्रतिज्ञातत्वादर्थवादादिप्रामाण्यविचारस्य नात्र संगतिरित्यतआह —नहीति। लक्षणार्थः अध्यायार्थ इत्यर्थः। एवं लक्षणसंगतिरित्यत्रापि लक्षणशब्दोऽध्यायपरः। स्मृत्यादेरिति। आदिपदेनाचारादिपरिग्रहः। अत्र येनार्थवादादेरसंगतिः स्यादिति वक्तव्ये स्मृत्यादेरित्युक्तिर्यदि कश्चिच्चोदनाशब्दस्य 'चुद प्रेरणे' इति धातुनिष्पन्नस्य प्रवर्तकवाक्यवाचित्वादर्थवादमन्त्रसहितमहावाक्यस्यैव साङ्गे प्रधाने प्रवर्तकत्वाच्चोदनाप्रामाण्य-प्रतिज्ञयैवार्थवादादिप्रामाण्यस्यापि प्रतिज्ञातत्वान्न तद्विचारासंगतिरिति ब्रूयात्तंप्रति चोदनाशब्दस्य महावाक्यपरत्वेऽपि तदन-न्तर्गतस्मृत्यादिविचारासंगतिप्रसङ्गान्न चोदना प्रामाण्यमध्यायार्थ इति प्रतिपादनार्था। एवंच चोदनाशब्दस्य महावाक्यपर-त्वमादायापि स्मृत्यादिप्रामाण्यविचारस्य संगमयितुमशक्यत्वात्स्वातन्त्र्येण साक्षात्प्रवर्तकविध्युद्देशमात्रपरतया तान्त्रिकव्यवहा-रसिद्धस्य चोदनाशब्दस्य महावाक्यपरत्वसमर्थनक्लेशः केषांचिद्व्यर्थः चोदनासूत्रं च न कृत्स्नाध्यायार्थप्रतिज्ञापरं किंतु प्रथ-मपादार्थप्रतिज्ञापरमिति भावः। उक्तंच चोदनासूत्रे ग्रन्थकारेण—समस्तः प्रथमपादः चोदनासूत्रप्रतिज्ञातार्थप्रतिपादनेन तस्यैव परिकर—इति। तथा तेनैव प्रथमपादान्ते विस्तरेणाप्युक्तं 'तदेवमस्मिन्नेव पादे चोदनासूत्रप्रतिज्ञातं निरवशेषेण स-मासं, उपरितनं तु पादत्रयं न चोदनासूत्रशेषतया तेन संगच्छते, किंतु प्रथमसूत्रेण किंलक्षणो धर्म इति धर्मस्य प्रमाणं वक्तव्यत्वेन प्रतिज्ञातं तत्रानेन पादेन चोदनायाः प्रामाण्यमुक्तमर्थवादस्मृतिनामधेयानामुपरितनेन पादत्रयेण प्रतिपाद्यते, तेन चोदनासूत्रवदेवोपरितनमपि पादत्रयं जिज्ञासासूत्रोक्तया किंप्रमाणको धर्म इत्यनयैव प्रतिज्ञया संगच्छत' इति। वस्तुतस्तु चोदनैव प्रमाणमिति साक्षाद्धर्मप्रमितिकरणस्य चोदनावाक्यस्य प्रामाण्यप्रतिज्ञायां तच्छेषतया तन्मूलतया च प्रमाणानामर्थ-वादस्मृत्यादीनामर्थात्प्रामाण्यं प्रतिज्ञातं भवति। अवधारणव्यवच्छेद्यास्तु चोदनानिरपेक्षा बौद्धाद्यागमा एवेति कृत्स्नाध्याया-र्थप्रतिज्ञापरत्वं चोदनासूत्रस्य। प्रथमपादार्थप्रतिज्ञा तु 'तस्य निमित्तपरीष्टि'रिति सूत्रेण क्रियत इति कल्पयितुं युक्तम्। ग्रन्थ-कारपक्षे तु निमित्तसूत्रस्य नातीव प्रयोजनमिति ध्येयम्। कथंलक्षणक इति। किं धर्मे प्रमाणं केनच प्रकारेण तस्य प्रामाण्य-मित्यर्थः। ततश्च किंप्रमाणको धर्म इति सामान्येन प्रश्नोपन्यासात्प्रमाणसामान्यनिरूपणमेवाध्यायार्थ इति भाष्यकारस्यापि संमतमित्यर्थः। ननु 'पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णय' इति वार्तिकबलात्प्रथमपादस्यैव प्रमाणनिरूपणपरत्वप्रतीतेः कथं कृत्स्नस्याध्यायस्य प्रमाणनिरूपणपरत्वमित्यत आह—सर्वस्मिंश्चेति। तद्वार्तिकं साक्षात्प्रमाणचोदनाभिप्रायमिति भावः। प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमित्यादिभाष्यकारादिव्यवहारबलादपि कृत्स्नस्याध्यायस्य प्रमाणनिरूपणपरत्वमवसी-यत इत्याशयेनाह—इति समस्तमिति। ननु यदि सर्वाणि धर्मप्रमाणान्यस्मिन्नध्याये प्रतिपाद्यानि तर्हि प्रमाणत्वाविशे-षादर्थवादादीनां वा प्रथमतो विचार्यत्वं किं न स्यादित्यत आह—प्रकृतेति। प्रथमपादेन संगतिरित्यर्थः। उच्यतइति शेषः। पदपदार्थेति। देवदत्तादिशब्देषु पदपदार्थसंबन्धस्य पुरुषाधीनत्वदर्शनाद्वैदिकपदेषु च संकेतयितुरभावाद्भावे च भ्रमप्रमादादिपुरुषदोषसंस्पर्शादप्रामाण्यमित्याशङ्कायां पदपदार्थसंबन्ध औत्पत्तिको नित्यः नतु संकेतयितृपुरुषाधीनः। तस्य च वैदिकपदेष्वपि गोत्वादिसामान्यमुखेन सुग्रहत्वादग्निहोत्रादिचोदनाभ्यो जायमानस्य ज्ञानस्य स्वतःप्रमाणभावस्य प्रामा-ण्यापवादकपुरुषदोषासंस्पर्शादुपपन्नं प्रामाण्यमित्येवमौत्पत्तिकसूत्रे उपपादिते तथापि न चोदनानां प्रामाण्यं संभवति वाक्य-वाक्यार्थयोः संबन्धस्य संकेतयितृपुरुषाधीनस्य ग्रहणासंभवात्। तयोर्हि पदपदार्थयोरिव न सामान्यरूपेण संबन्धग्रह उपयुज्यते किंतु विशेषरूपेण, नचालौकिकस्य वैदिकवाक्यार्थस्य विशेषरूपेण लोके संबन्धग्रहः संभवति तस्मान्मूलाभावाद्वैदिकवा-क्याज्जायमानमपि ज्ञानं व्यामोहमात्रमतो न चोदनानां प्रामाण्यमित्येवमाशङ्कायां संबन्धग्रहणमनपेक्ष्यैवाकाङ्क्षादिमतां पदा-र्थानां वाक्यार्थप्रतीतिजनकत्वसंभवेन समूलत्वादस्ति प्रामाण्यमित्येवं तद्भूताधिकरणे व्युत्पादिते वेदानां काठकादिसमा-ख्याबलेन पौरुषेयत्वात्तदवयवभूताभ्यश्चोदनाभ्यो जातमपि वाक्यार्थज्ञानं पुरुषदोषकलुषितं पुरुषस्यालौकिकेऽर्थे भ्रमप्रमाद-संभवादित्येवं वेदद्वारा पुरुषदोषानुप्रवेश इत्यव्यवहिते वेदाधिकरण आशङ्कितमित्यर्थः। नच वेदाधिकरणस्य चोदनाप्रा-माण्यप्रसाधनतात्पर्यात्साक्षादेव चोदनानां पौरुषेयत्वं तत्राशङ्कितुमुचितम्, नतु वेदद्वारेणेत्याशङ्कनीयम्, काठकादिसमा-

पौरुषेय्यश्चोदना इत्येवमाशङ्क्य वेदापौरुषेयतया तदवयवानां चोदनानामप्यपौरुषेयतया प्रामाण्यं प्रतिपादितम् । एवं चोदनानां वेदावयवानां प्रामाण्ये साधिते तदवयवत्वेनोपस्थितानामर्थवादादीनां भागानामप्यपौरुषेयत्वसामान्याच्चोदनावत्प्रसक्तं प्रामाण्यमस्ति नवेति चिन्त्यत इति । तदिदमुक्तम् —'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥' इति । अस्यार्थः—सिद्धप्रमाणभावं चोदनांशे वेदं त्रिधा विभज्य किं तावन्मात्रस्यैव प्रामाण्यमुत सकलस्येति विचार्यते न विधेरेव किंतर्हि विध्यर्थवादमन्त्राणां सर्वेषां सर्वशः सर्वप्रकारं विधिस्तुतिस्मृतिभिर्धर्मप्रतीतावुपयोगः प्रतिपाद्यत इति । यद्वा चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्य प्रामाण्यं सिद्धप्रायमपि बोधकशक्त्यभावमाशङ्क्य स्थिरीक्रियते विध्यर्थवादमन्त्राणामिति, नायमर्थो विधेरप्युपयोगः प्रतिपाद्यत इति किंतर्हि विध्यादीनां सर्वेषामुपयोगोऽस्ति न विधेरेवेति प्रतिपाद्यत इति,

---

ख्यायाः चोदनासंघातात्मकवेदतच्छाखास्वेवाध्येतृकुले प्रसिद्धत्वेन तन्मुखेन क्रियमाणायाः पौरुषेयत्वाशङ्कायाः वेदद्वारैव कर्तुमुचितत्वादिति भावः । संनिकृष्टकाला इत्यस्य व्याख्यानमिदानींतना इति । सादय इति यावत् । **वेदापौरुषेयतयेति** । दृश्यादर्शनादिना कर्तुरभावनिश्चयात् समाख्यायाः प्रवचननिमित्ततयोपपत्तेश्चापौरुषेयत्वसाधनेनेत्यर्थः । **एवमिति** । ततश्चार्थवादादीनामर्थबोधनशक्तिसंभवासंभवाभ्यां क्रियमाणप्रामाण्याप्रामाण्यविचारः प्रथमपादोक्तस्य पदपदार्थसंबन्धे वाक्यवाक्यार्थसंबन्धे वाक्यस्वरूपे च पुरुषसंस्पर्शाभावस्य तुल्यत्वात्तेषां प्रामाण्यप्रसक्तौ घटते नान्यथेति प्रामाण्यप्रसंजकत्रिप्रकारपुरुषसंस्पर्शाभावप्रतिपादकतया प्रथमपादस्योपजीव्यत्वात्तदानन्तर्यमस्य विचारस्येत्येवं प्रकृतसंगतिरित्यर्थः । **नच** प्रथममर्थवादाद्यर्थमेवापौरुषेयत्वं व्युत्पाद्य तदुपजीवनेन चोदनाप्रामाण्यस्यापि विचारयितुं शक्यत्वादिदमनियामकमिति वाच्यम् चोदनानामेव साक्षाद्धर्मप्रमितिजननशक्तत्वेन तदर्थत्वेनैवापौरुषेयत्वव्युत्पादनस्य कर्तुमुचितत्वादिति भावः । **ननु** प्रथमपादे चोदनाप्रामाण्यस्यैव व्युत्पादनात्सर्वशः सिद्धप्रमाणभावस्येत्ययुक्तमतो वार्तिकं व्याचष्टे—**अस्यार्थ इति** । त्रेधा विभज्येत्युक्त्या श्लोके वेदस्येति षष्ठी अवयवै[1]व्यतिरेकजनितेति सूचितम् ततश्च वेदस्यावयवभूतानां विध्यर्थवादमन्त्राणामित्यर्थः श्लोके द्रष्टव्यः । किं ता[2]वन्मात्रस्यैव प्रामाण्यमुत सकलस्येत्येत[3]देव श्लोकारूढं कुर्वन् विवृणोति—**न विधेरेवेति** । तेनास्यं ग्रन्थस्य श्लोकस्थविधिशब्दार्थकथनप्रयोजनपरत्वाभावात्तत्परस्य । किंतर्हि विध्यादीनां सर्वेषामुपयोगोऽस्ति न विधेरेवेति प्रतिपाद्यते इति वाक्यस्य न वैयर्थ्यमिति ध्येयम् । **सर्वप्रकारमिति** । इदंच क्रियाविशेषणम् । तदपि पर्यवसितार्थकथनम् शब्दार्थस्तु सर्वशब्दस्य प्रकारकात्स्न्र्यपरत्वमादाय सर्वैः प्रकारैरित्येवं वर्णनीयः । अतएव विधिस्तुतिस्मृतिभिरिति तृतीयया विवरणं युज्यते । अत्र सर्वशब्दार्थस्य कथंचित्कारकत्वसंभवेऽपि सर्वशब्दस्य बहुशब्दपर्यायतद्विशेषत्वाभावान्न 'बह्वल्पार्थाच्छस्कारकादन्यतरस्या' मित्यनेन शसूप्रत्ययः संभवति । नापि 'संख्यैकवचनाच्च वीप्साया'मित्यनेन वीप्साया अत्राभावात्तस्मात्स्वार्थमात्रेऽयं शस् । 'सर्वस्य द्वे'इति सूत्रे एकैकश इति भाष्यकारोदाहरणेन स्वार्थिकशसो ज्ञापितत्वात् । उक्तंच धातुवृत्तौ 'एकैकशः पितृसंयुक्तानीत्यत्र शसः प्रायश इत्यादिवदत्यन्तस्वार्थिकत्वाद्वीप्सायामनभिधानाद्द्विर्वचनम् । तथाच 'सर्वस्य द्वे'इत्यत्र भाष्यम् 'यत्रच तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनं यथा एकैकशो ददाति' । इदमेव भाष्यमत्यन्तस्वार्थिकस्य शसो मूलमिति । **ननु** चोदनांश इति कुतो लब्धं नच प्रथमपादे तत्प्रामाण्यव्युत्पादनात्तल्लाभ इति वाच्यम् । तथासति पूर्वपादे चोदनाप्रामाण्यस्य कण्ठोक्ततया उक्तप्रमाणभावस्येति वक्तुमुचितत्वेनार्थि[5]कैसिद्धिप्रवणस्य सिद्धशब्दस्य प्रयोगानुपपत्तेरित्यस्वरसादाह—**यद्वेति** । इदानीमवयवकात्स्न्र्याभिप्राये[6]ण व्याचष्टे—**समस्तस्येति** । पूर्वव्याख्याने प्रकाराणामस्मिन्व्याख्यानेऽवयवानां च सर्वशब्दार्थत्वं योग्यतया लब्धमिति बोध्यम् । बोधनशक्तिनिश्चयात्प्रागर्थादपि संभावनामात्रं न तु सिद्धिरित्यभिप्रायेण सिद्धप्रायमित्युक्तम् । अतएव पूर्वग्रन्थे चोदनावत्प्रसक्तं प्रामाण्यमिति प्रसक्तिशब्दएव प्रयुक्तः । **ननु** विधिग्रहणं व्यर्थं तदुपयोगस्य प्रथमपादएव प्रतिपादितत्वादतआह—**विध्यर्थवादेति** । विध्यर्थवादमन्त्राणामुपयोग इदानीमुच्यते इति नार्थः येन विध्युपयोगस्यापीदानीं वक्तव्यत्वं स्यात्, किंतु इतिशब्दाध्याहारेण विध्यर्थवादमन्त्राणामुपयोग इति इदानीमर्थवादमन्त्रप्रामाण्यकथनेनोच्यत इत्यर्थः । ततः अर्थवादमन्त्रोपयोगकथनं विना त्रयाणामप्युपयोगोऽस्तीत्यस्यार्थस्यासिद्धेरिदानीमर्थवादादिमात्रोपयोगकथनेऽपि त्रयाणामप्युपयोगोऽस्तीति इदानीमुच्यत इत्युक्तिरुपपन्नेति भावः । **नन्वेवमर्थवर्णने इतिशब्दाध्याहार एव दोष इत्यस्वरसादाह—**

---

१ अवयविनोऽवयवानां यो व्यतिरेको भेदस्तज्जनितेत्यर्थः । भेदेषष्ठ्याविधानात् । अवयवव्यतिकरजनितेति युक्तः पाठः । अवयविनाऽवयवानां यो व्यतिकरो मिश्रणमवयवावयविभावलक्षणः संबन्धस्तज्जनितेति तदर्थः । अर्थस्य प्रयोजकत्वं विवक्षित्वेदमुक्तम्. २ धर्मिसाक्षात्प्रमाणस्य चोदनामात्रस्येत्यर्थः. ३ इत्येतद्विचारमेव तात्पर्यविषयत्वेन श्लोकसंबद्धं कुर्वन्नित्यर्थः. ४ श्लोकारूढताकरणेन. ५ अर्थतो या वस्तुसिद्धिः स्वरसतस्तद्बोधकस्येत्यर्थः. ६ सर्वश इत्यस्येति शेषः.

**नामधेयाभिप्रायं वा विधिग्रहणम्। यद्वा अर्थवादमन्त्रयोः स्तुतिस्मृतिभ्यामुपयोगे कथितेऽर्थाद्विधेरपि सामान्यसिद्धमुपयोगित्वं साक्षाद्विधानेन विशेषरूपेण साधितं भवतीत्यभिप्रायः। औदुम्बराधिकरणे विध्युपयोगः प्रतिपाद्यत इत्यभिप्रायो वा। तत्रास्मिन्नेव सूत्रे विध्युद्देशातिरिक्तानां सर्वेषामेवानर्थक्यं पूर्वपक्षीक्रियते। सिद्धान्तेऽपि स्वाध्यायविधिवशादेवार्थवत्तया भवितव्यमित्येतावत्साधारण्येनैवाभिधास्यते पश्चात्तु क्रमेण स्तुत्याद्युपयोग इति दर्शयितव्यम्। तत्र प्रथममर्थवादेष्वेव सिद्धान्तकथनात्तानेवोदाहृत्य चिन्त्यते। यानि 'वायुर्वै क्षेपिष्ठा देवते'त्येवमादीनि विधिभावना-**

---

**नामधेयेति।** नन्वेवं विधिशब्दो न मुख्यार्थ इत्यस्वरसादाह—**यद्वेति।** अर्थादिति परिशेषादित्यर्थः। **नन्वा**र्थिकस्य कण्ठोक्तिविषयत्वाभावादुच्यत इत्युक्तमित्यस्वरसादाह—**औदुम्बरेति।** तत्रहि विधौ सत्येव समीहितसाधनत्वप्रतीतिरिति विध्यभावादुदुम्बरताया ऊर्गवरोधंप्रति साधनत्वं न संभवतीति प्रतिपादनादिति भावः। नामधेयाभिप्रायं विधिग्रहणमिति पक्षव्यतिरिक्तेषु त्रिष्वपि पक्षेषु विध्यादिग्रहणं नामधेयस्याप्युपलक्षणं बोध्यम्। ननु 'विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु'रिति सिद्धान्तसूत्रदर्शनादर्थवादेषु द्वारविशेषप्रतिपादनार्थमिदमधिकरणमिति प्रतीयते तदनुपपन्नम्। सामान्येन प्रामाण्यप्रतिपादनाभावे द्वारविशेषप्रतिपादनस्यानवसरदुःस्थत्वाच्चोदनार्थमुक्तेनापौरुषेयत्वेनार्थवादादीनां प्रामाण्यापवादकदोषाभावमात्रसिद्धावपि धर्मप्रमितिजनकत्वरूपप्रामाण्यस्य सामान्यतोऽपि तेनासिद्धेरित्यतआह—**तत्रास्मिन्निति।** आनर्थक्यमिति अर्थशून्यत्वं प्रयोजनशून्यत्वं वेत्यर्थः। **अभिधास्यत इति।** 'विधिनात्वेकवाक्यत्वा'दिति सूत्रांशेन 'तुल्यं च साम्प्रदायिक'मितिसूत्रेण चेत्यर्थः। एवं विचारद्वयेऽस्याधिकरणस्य तात्पर्यमुक्त्वा गौरवभीत्या स्वेन विचारद्वयं पृथक्कृत्य नप्रदर्श्यते किंतु विशेषविचारार्थमर्थवादानामवश्योदाहर्तव्यत्वात्तत्रैव सामान्यविचारोऽपि विशेषविचारेण सह संकलय्य प्रदर्श्यते इत्याह—**तत्रेति।** सामान्यविचारस्य मन्त्रादिविशेषविचारेण संकलनेऽपि गौरवाभावाविशेषात्तेनवा संकलनं किं न स्यादित्यतो नियामकमाह—**प्रथममिति।** 'स्तुत्यर्थेन विधीनां स्यु'रिति सूत्रणां मन्त्रनामधेयविषयाधिकरणान्तरदर्शनाद्गुणसूत्राणामर्थवादमात्रविषयत्वाच्च सूत्रकारेण प्रथममर्थवादगोचरविशेषविचारे सिद्धान्तः कथ्यत इति निश्चीयते। ततश्च प्राथमिकार्थवादसंबन्धिविशेषविचारेणैव सह सामान्यविचारस्य प्रदर्शनं युक्तं नतु चरमेण मन्त्रादिविचारेणेति भावः। **विधीति।** अत्र विधिशब्देन शब्दभावना नोच्यते। तथासति पूर्वपक्षिणा शब्दभावनाया अनङ्गीकारेण तद्घटितस्य धर्मिणः पूर्वपक्षसिद्धान्तसाधारण्याभावप्रसङ्गात्, पूर्वपक्षिणा शब्दभावनाङ्गीकारेऽर्थवादानां तदीयेतिकर्तव्यतारूपस्तुतिसमर्पकतया प्रामाण्यस्यावर्जनीयत्वेन पूर्वपक्षस्यैवानुन्मेषात्। वार्तिकेच योपिच क्लेशेन स्तुतिनिन्दात्मकोऽर्थः कल्प्यते स भावनांशत्रयानन्तःपातान्न गृह्यत इति पूर्वपक्षदशायामुक्त्वा तदनुवादपूर्वकमस्तित्वंतर्गतिः कथमिहहि लिङादियुक्तेषु द्वे भावनेऽवगम्यत इत्यादिना शब्दभावनाव्युत्पादनादर्थवादाधिकरणे वर्णितेति च भावार्थाधिकरणोक्तेश्च शब्दभावनाया एतदधिकरणव्युत्पादितत्वावगमात्, न्यायसुधायामपि बहुधाशब्दभावनां निराकृत्य एतत्सर्वं पूर्वपक्षी मनस्याधाय पृच्छतीत्युक्त्या एतदधिकरणपूर्वपक्षिणः शब्दभावना नाभिमतेति स्पष्टमेवावगम्यते तस्माद्विधिशब्दो विधायकलिङादिप्रत्ययपरस्ततश्च लिङादिवाच्या यार्थभावना तदंशत्रयातिरिक्तार्थानीत्यर्थः। अर्थभावनायाः सर्वाख्यातवाच्यत्वादर्थवादगताख्यातानामर्थभावनातिरिक्तार्थकत्वाभावाद्विधिप्रत्ययवाच्यत्वमर्थभावनायां विशेषणं दत्तम्। ततश्च लिङादिषु यादृशरूपेणार्थभावनाप्रतीतिराख्यातान्तरेषु न तादृग्रूपेण तत्प्रतीतिरिति विधिशब्दवाच्यत्वविशेषणेन तद्रूपप्रतीतिलाभे सति तदतिरिक्तार्थकत्वमर्थवादगताख्यातानामस्तीति तत्संग्रहसिद्धिः। जर्तिलयवाग्वा वा जुहुयादित्यर्थवादगतलिङादीनां संभावनार्थकतया तेष्वर्थभावनाया न विधिस्थलीयरूपेण प्रतीतिरिति न काप्यनुपपत्तिः। अत्र न मन्त्रादिव्यावृत्त्यर्थं विधिभावनेत्यादिविशेषणं, सत्यपि तस्मिन् तद्व्यावृत्त्यसिद्धेः, मन्त्राणामपि 'अश्विनोर्बाहुभ्या'मित्यादीनां विधिभावना तदंशत्रयातिरिक्तार्थकत्वात् तदतिरिक्तमात्रार्थकत्वविवक्षायामर्थवादानामपि वायुर्वा इत्याद्यंशे देवतादिप्रतिपादकत्वेन तदभावात्। नच तदतिरिक्तार्थैदंपर्यं विवक्षितं तत्तु स्तुत्यर्थानामर्थवादानामस्ति मन्त्राणां तु कर्मसमवेतद्रव्यदेवतादिप्रकाशनैकप्रयोजनत्वान्नास्तीति युक्तम्। एतत्पूर्वपक्षावस्थायामर्थवादानां स्तुत्यैदंपर्यस्यासिद्धत्वेन तेषां धर्मित्वाभावप्रसंगात्तथा मन्त्राणां प्रकाशनार्थत्वस्यासिद्धत्वेन तद्व्यावृत्त्यसिद्धेश्च। तस्मान्मन्त्रार्थवादनामधेयानां त्रयाणां धर्मितामादाय यदि सामान्यविचारः क्रियते तदा तन्नितयसाधारणधर्मिसूचनार्थं सूत्रगतातदर्थशब्दसमानार्थकमिदं विशेषणम्। नच मन्त्राणां द्रव्यदेवतादिलक्षणेतिकर्तव्यतार्थकत्वा नामधेयस्य करणार्थकत्वाच्चेदमत्यन्तायुक्तमिति वाच्यम्। मन्त्राणां द्रव्यदेवतादिप्रकाशकत्वसद्भावेऽपि द्रव्यादेर्भावनायामितिकर्तव्यतात्वेनान्वयो न मन्त्रजनिततदुपस्थितिमुखेन किंतु विधिगतद्रव्यादिशब्दजनितोपस्थितिमुखेन। तथा समानपदोपात्तधात्वर्थस्यैव भावनाकरणत्वं नतु नामार्थस्येति भावार्थाधिकरणे वक्ष्यमाणत्वाद्धातोरेव करणसमर्पकत्वं नतु नामधेयस्य

---

१ विध्यतिरिक्तानां. २ वेदितव्यं. ३ अर्थवादादीनां प्रामाण्ये विचारणीय इत्यर्थः. ४ समीहितसाधनगोचरत्वेनेत्यर्थः.

**तदंशत्रयातिरिक्तार्थानि तानि किं धर्मे प्रमाणमुत नेति संशयः, तदर्थमिदं विचारयितव्यं किं विध्युद्देशेनैषामेकवाक्यत्वमुत भिन्नवाक्यतेति, तत्सिद्ध्यर्थमप्येतच्चिन्तनीयं किं विध्युद्देशार्थवादयोः परस्पराकाङ्क्षास्ति नवेति । तत्रैवं पूर्वपक्षः—'अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात् । विध्युद्देशाः समाप्यन्ते विशिष्टार्थविधानतः ॥' यथाश्रुतिगृहीतानि तावत्सन्तमसन्तं वा भूतमर्थमन्वाचक्षते न धर्माधर्मौ । न चाध्याहारादिभिस्तत्प्रतिपादनम् । अपरिपूर्णेषु खल्वध्याहारादयः परिपूर्णानि चैतानि । 'स एवैनं भूतिं गमयती'ति विशिष्टार्थप्रतिपादनादर्थान्तराकाङ्क्षाभावात् । अनाकाङ्क्षत्वादेव च न सन्निहितेनापि 'वायव्यं श्वेतमालभेते'त्यनेनैकवाक्यता । विशिष्टार्थप्रतिपादनमेव हि लोके पदानां कार्यमवधारितं न प्रयोजनवदर्थप्रतिपादनं येन तल्लिप्सया विध्येकवाक्यता कल्प्येत । आख्यायि-**

---

ततश्च तदंशत्रयातिरिक्तार्थकत्वमित्यनेन तदंशत्रयसमर्पकतया भावनावाचकशब्दान्वयाभावो विवक्षित इति मन्त्रनामधेयसाधारण्योपपत्तेः । एवंचास्य विशेषणस्य त्रितयसाधारण्याद्विशेषविचारे मन्त्रादिव्यवच्छेदाभिप्रायेण वायुर्वा इत्यादिविशेषणं तत्र चादिशब्देनार्थवादमात्रग्रहणमिति दिक् । नन्वयं संशय एवानुपपन्नः अर्थवादेभ्यो धर्मप्रमित्यभावेन तेषां प्रामाण्याभावस्य निश्चितत्वादित्याशङ्क्य स्वतो धर्मप्रमित्युत्पादकत्वाभावेऽपि विध्येकवाक्यतया तत्संभव इत्याशयेन तदर्थसंशयमाह—**तदर्थमिति** । नचाकाङ्क्षाभावादेकवाक्यताव्यतिरेकनिश्चयात्तत्संशयोऽप्यनुपपन्न इत्याशंक्याकाङ्क्षाभावस्यानिश्चयात्संभवत्येकवाक्यतासंशय इत्याशयेनाह—**तत्सिद्ध्यर्थमिति** । एवं सर्वेषु तदर्थसंशयेषु योजनाप्रकारो द्रष्टव्यः । **समाप्यन्त इति** । परिपूर्णा भवन्तीत्यर्थः । विशिष्टेति अंशत्रयविशिष्टार्थभावनाविधानत इत्यर्थः । प्रथमं स्वतो धर्मप्रतिपादकत्वाभावलक्षणं सामान्यपूर्वपक्षमुपपादयति—**यथाश्रुतीति** । धर्मिनिर्देशगतं 'वायुर्वा'इत्यादीन्येतदिह विशेष्यत्वेन संबध्यत इति द्रष्टव्यम् । सन्तं वायुक्षेपिष्ठत्वादिकमसन्तं 'देवा वै देवयजनमध्यवसाय दिशो न प्राज'न्निति दिङ्मोहादिकम् । अधर्मग्रहणं दृष्टान्तार्थम् । ननु यथाश्रुतेभ्यो धर्मप्रतीत्यभावेऽपि वायुः क्षेपिष्ठोतोऽन्येनापि क्रियासु क्षेपिष्ठेन भवितव्यमित्यध्याहारादिभिः धर्मप्रमितिः संभवतीत्यत आह—**नचेति** । आदिपदेनानुषङ्गविपरिणामव्यवधारणाकल्पनादयो गृह्यन्ते । एवं स्वतो धर्मप्रतिपादकत्वाभावादप्रामाण्यमिति प्रथमपूर्वपक्षमुपपाद्य द्वारविशेषाभावात्मकद्वितीयपूर्वपक्षमुपपादयति—**अनाकाङ्क्षत्वादिति** । ननु वायव्यमिति वाक्ये वायुदेवताविधिर्न संभवति । 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येवे'त्येतदनन्तरं अतिक्षिप्रा[1]देवता इत्याहुः 'सैनमीश्वराप्रदह' इति निन्दित्वा 'एतमेव सन्तं वायवे नियुत्वत आलभेते'तिश्रवणेन नियुत्वद्वाक्यएव वायुदेवताविधेः । नच पूर्वविहितवायुदेवतायामेव नियुत्वद्वाक्ये नियुत्वत्त्वगुणविधिः संभवति । तथासति सगुणस्य देवतात्वात् केवलस्य वायोर्देवतात्वाभावादसमर्थतया वायव्यमिति तद्धितोत्पत्त्ययोगात् काम्यपशुयाज्यापुरोनुवाक्याकाण्डे 'पीवोऽन्नां रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्री'रित्यादीनां नियुत्वत्त्वगुणकवायुदेवताप्रकाशकानामेव याज्यापुरोनुवाक्यानामाम्नानाच्च । तस्मान्नियुत्वद्वाक्यएव देवताविधिः पूर्वत्र तु वायुदेवताविधिसरूपोऽर्थवाद इति सिद्धान्तेऽपि वायुर्वैक्षेपिष्ठेत्यादेर्देवतास्तुतितद्द्वारककर्मस्तुत्या वायव्यं श्वेतमालभेतेत्यनेनैकवाक्यत्वासंभवादिदमयुक्तमिति चेन्न । नियुत्वद्वाक्यस्य नियुत्वत्त्वगुणकवायुदेवताकश्वेतद्रव्यककर्मान्तरविधिपरत्वम् । 'सैनमीश्वराप्रदह'इत्यादेः केवलवायुनिन्दायाश्च नहिनिन्दान्यायेन नियुत्वत्त्वगुणकवायुस्तुत्या तदेकवाक्यत्वमित्युपपत्तेर्वायव्यवाक्यस्य देवताविशिष्टकर्मविधायकत्वे बाधकाभावात् । नचात्र जर्तिलयवाग्वा जुहुयादित्यत्र विधिस्वीकारे एकप्रयोगवचनप्राप्तयोर्जर्तिलयवागूपयसोर्विकल्पापत्तिवदिह वायव्यवाक्यस्य विधायकत्वे किंचिद्बाधकमस्ति येन स्वरसतः प्रतीयमानं विधायकत्वं परित्यज्येत । 'पीवोन्ना'मित्यादेः सगुणस्यापि निर्गुणदेवताके कर्मण्यपि विनियोग उपपद्यते । यथा 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं वारुणं दशकपालं सारस्वतं चरुमग्नावैष्णवमेकादशकपाल'मित्यस्यामिष्टौ निर्गुणाग्निदेवत्य आग्नेयकर्मणि 'आयुर्दा अग्ने हविषो जुषाण'इति सगुणाग्निदेवत्ययाज्याया विनियोगस्तद्वदिति न काप्यनुपपत्तिः । **केचित्तु** वायव्यवाक्यस्य विधायकत्वमिति कृत्वाचिन्तया वायुर्वा इत्यादेरुदाहरणत्वमित्याहुः । **ननु** विशिष्टार्थप्रतिपादने निराकाङ्क्षत्वेऽपि प्रयोजनवदर्थप्रतिपादनायास्त्येव विध्युद्देशाकाङ्क्षेत्यतआह—**विशिष्टेति** । प्रमाणस्य हि प्रमेयावगतिरेव कार्यं नतु प्रयोजनवदर्थावगतिः । अन्यथोपेक्ष्यवस्तुनोऽनवगमप्रसङ्गादिति भावः । **ननु** प्रत्यक्षादौ तथानियमाभावेऽपि बहुक्षीरादिवाक्येषु प्रयोजनवदर्थपरत्वदर्शनाच्छब्दे तथा नियमः स्वीकार्य इत्यतआह—**आख्यायि-**

---

१ प्रायणीये अदितेः. २ वाक्यान्यथात्वकरणम्. ३ नहि विहितस्य निन्दा संभवति श्रूयते चात्र निन्दा तस्मादिति शायने न पूर्वं वायुदेवताविधिरिति भावः. ४ धृतिमते. ५ नहि निन्दा केवलं किमपि निन्दितुं प्रवर्ततेऽपितु कस्यचिन्निन्दामुखेन कस्मिंश्चिदुत्कर्षप्रतिपादयितुमितिरुक्तनिन्दावाक्यस्य केवलवायुनिन्दायां तात्पर्याभावादपितु सगुणवायुस्तुतिपरत्वात्केवलवायुविधिद्योतकत्वं नास्तीति भावः. ६ नचात्र किंचिद्बाधकमस्तीत्यन्वयः. ७ अवश्यकर्तव्यत्वरूपप्रयोजनेत्यर्थः.

**कारूपाणां बहुलमुपलब्धेर्लोके। स्वाध्यायविधिवशाद्वेदस्य कृत्स्नस्य प्रयोजनवदर्थपर्यवसानमवगतमिति चेन्न दृष्टोऽर्थस्तेनानुसर्तव्यो न तद्वशेनार्थकल्पना। तद्वरमदृष्टार्थता स्वाध्यायाध्ययनस्य तत्र तावदर्थवादानामाकाङ्क्षा। नापि विध्युद्देशस्य तस्यापि विशिष्टभावनाविधानेन निराकाङ्क्षत्वात्। नच प्रवर्तनाय प्राशस्त्यापेक्षा। विधित एवानपेक्षात्समीहितसाधनभावावगमेन प्रवृत्तिसिद्धेः। नचार्थवादैः प्राशस्त्यं प्रतिपाद्यते। भूतार्थमात्रप्रतिपादनात्। लक्षणयाहि तेभ्यः प्राशस्त्यं गम्यते नच श्रौतस्यार्थस्य संभवे सा युक्ता। एकवाक्यतायां च लक्षणा स्यात् नच तस्यां प्रमाणमस्ति तस्मादानर्थक्यम्। एवं मन्त्रनामधेययोरपि दर्शितव्यम् ताभ्यामपि धर्माधर्मप्रमित्यनुदयात्। तस्मादेषामप्रामाण्यं तेन न समस्तो वेदः प्रमाणमित्यवधारणं सिध्यति। सिद्धान्तस्तु—विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥७॥ 'स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते। सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता ॥' स्वाध्यायाध्ययनविधिना दृष्टार्थत्वात्सकलस्य वेदस्य प्रयोजनवदर्थपर्यवसानं बोधितम्। अर्थवादानां च भूतार्थप्रतिपादनेन प्रयोजनानवाप्तेर्यस्ततो लक्ष्यमाणः क्षिप्रदेवतसाध्यं कर्म क्षिप्रमेव फलं ददातीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्प्रयोजनाकाङ्क्षां शक्नोति पूरयितुमिति गृह्यते। स्वाध्यायविधिरेवच प्रयोजनवदर्थपर्यवसानं बोधयन् प्राशस्त्यपरतया विना तदनुपपत्तेस्तात्पर्यमेषां बोधयति[3]। तात्पर्याच्च लक्षणासिद्धिः ततश्चैकवाक्यत्वम्। यत्तु दृष्टोऽर्थः स्वाध्यायाध्ययनविधिनानु-**

---

**केति।** बहुक्षीरादिवाक्येषु च वक्तृतात्पर्यात्तथात्वं नतु तावता शब्दमात्रे तथा नियमः। क्षेमेन्द्रादिनिर्मिताख्यायिकादौ व्यभिचारादित्यर्थः। एवमपि वैदिकशब्दमात्रे तथा नियमोऽवश्यंस्वीकार्य इति शङ्कते—**स्वाध्यायेति**। स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिवशादित्यर्थः। तद्बलाद्वेदस्य प्रयोजनवदर्थपर्यवसानं प्रथमसूत्रएव साधितमिति भावः। **दृष्ट इति।** तत्तच्छब्दशक्तिपर्यालोचनया लभ्य इत्यर्थः। **न तदिति।** अशक्यार्थप्रतिपादनशक्तेर्विधिसहस्रेणाप्याधातुमशक्यत्वादिति भावः। ततश्च वेदस्य यदंशे प्रयोजनवदर्थपरत्वं संभवति तत्रैवाध्ययनविधिरर्थज्ञानं प्रयोजनत्वेन स्वीकरोति नान्यत्रेति भावः। ननु यद्यर्थवादाध्ययनस्य नार्थज्ञानं किंतर्हि तस्य प्रयोजनम्। नचादृष्टं प्रयोजनम्। तथासति एकस्यैवाध्ययनविधेर्विध्युद्देशांशेऽर्थज्ञानरूपं दृष्टं प्रयोजनमर्थवादेष्वदृष्टमिति वैरूप्यापत्तेः। नचैतद्दोषपरिहारार्थं विध्युद्देशांशेऽप्यदृष्टार्थता स्वीकर्तुमुचिता। तथासति प्रथमसूत्रोक्तस्य वेदविवक्षितार्थत्वस्य प्रत्युद्धारप्रसङ्गात्। अतोत्रापि यथाकथंचिद्दृष्टमेव फलवदर्थज्ञानं प्रयोजनं स्वीकार्यमित्यत आह—**तद्वरमिति**। अयमत्राशयः—नह्यध्ययनमात्रात्स्वतन्त्रादृष्टं विश्वजिदादिवत्स्वीक्रियते येन यत्राध्ययनस्यादृष्टार्थत्वं तत्र स्वाध्यायसंस्कारत्वाभावादर्थकर्मत्वं[4] यत्रत्वर्थज्ञानफलकत्वं तत्रार्थज्ञानफलकत्वस्य स्वाध्यायद्वारकत्वात्स्वाध्यायसंस्कारस्य गुणकर्मत्वमिति वैरूप्यं स्यात् किंतु नित्यनैमित्तिकजपयज्ञपारायणादिविधिभिः 'अहरहः स्वाध्यायोऽध्येतव्यो याजयित्वा प्रतिगृह्य वानश्नन् त्रिःस्वीयं वेदमधीयीते'त्यादिभिः साध्यते यददृष्टं तदिह फलत्वेन स्वीकृतम्। तत्र च वेदस्वरूपधारणस्यापेक्षितत्वादध्ययनस्य स्वाध्यायसंस्कारत्वमावश्यकम्। ततश्च यदेव विध्यन्तरोपयोग्यपेक्षितमध्ययनेन संपादयितुं शक्यं तत्सर्वं स्वाध्यायसंस्कारभूतेनाध्ययनेन संपादयेदित्येकयैव वचनव्यक्तिभङ्ग्या सर्वेषामपि प्रयोजनानां संग्रहान्न कथंचिदपि वैरूप्यप्रसक्तिरिति। इदानीं श्लोकस्योत्तरार्धं व्याचष्टे—**नापीति**। ननु लोके इयं गौः क्रय्येत्यादिवाक्यश्रवणमात्रान्न प्रवृत्तिः, किंतु बहुक्षीरा जीवदपत्येत्यादिना स्तुतौ सत्यामेव। ततश्च वेदेऽपि विधिवाक्यानां प्रवर्तकत्वायार्थवादापेक्षा स्यादित्यत आह—**नचेति**। समीहितसाधनतावगम एव प्रवृत्तौ कारणम् लोकेऽपि समीहितसाधनतावगतिदार्ढ्यार्था[5] स्तुतिः। वेदेच समीहितसाधनतावगतिर्वेदजन्यत्वादेव दृढेति स्तुत्यनपेक्षाद्विधेरेव प्रवृत्तिसिद्धेर्न तदर्थमर्थवादापेक्षेत्यर्थः। **नच श्रौतेति।** तथाचान्वयानुपपत्त्यभावान्न लक्षणेत्यर्थः। **ननु** अन्वयानुपपत्त्यभावेऽपि तात्पर्याल्लक्षणा स्यादित्यत आह—**एकेति**। तात्पर्यमप्येकवाक्यतयैवावगन्तव्यमुपायान्तराभावान्नचैकवाक्यता संभवति परस्परं नैराकाङ्क्ष्यादिति प्रागेवोक्तमित्यर्थः। एवमर्थवादेषु स्वतो धर्मप्रमितिजनकत्वाभावात्सामान्यपूर्वपक्षः स्तुतिसमर्पकतया एकवाक्यत्वासंभवाद्द्वारविशेषासंभवलक्षणविशेषपूर्वपक्षश्च प्रतिपादितः तत्र सामान्यं पूर्वपक्षं मन्त्रनामधेययोरप्यतिदिशति—**एवमिति। तस्मादिति।** पदपदार्थादिसंबन्धादिषु पुरुषसंस्पर्शाभावेन समस्तो वेदः प्रमाणमिति यदवधारितं तन्न सिध्यतीत्यर्थः ॥ **(विधिनात्वेकवाक्यत्वादिति)। प्राशस्त्येनेति।** प्राशस्त्यावगमद्वारेणेत्यर्थः। **नन्वध्ययनविधेर्विश्वजिन्न्यायेन स्वर्गार्थता किं न स्यादितिशङ्कां निराकुर्वन् श्लोकं व्याचष्टे—स्वाध्यायेति**। ततश्च दृष्टे

---

१ पर्यवसानमितिचेत्. २ प्रतीत्यनु. ३ गमयति. ४ साक्षात्प्रयोजनहेतुकर्मत्वं प्रधानकर्मत्वमितियावत्. ५ दार्ढ्यमप्रामाण्यशङ्कानास्कन्दितत्वम्.

**र्तव्यो न तद्वशेनार्थकल्पनेत्युक्तं तत्सत्यं, लाक्षणिकोऽप्यर्थो दृष्ट एव । दृश्यतएव हि श्रौतार्थद्वारेण तत्संबन्धिन्यर्थान्तरे प्रत्ययः । संभवति तु श्रौतपरत्वे तात्पर्याभावान्न लक्षणाङ्गीक्रियते । अतश्च स्वाध्यायविधिनार्थवादस्यापि पुरुषार्थपर्यवसानं बोधयता परंपरयापि दृष्टलाभे स्वर्गादिकल्पनानुपपत्तेर्भूतार्थमात्रस्याप्रयोजनत्वात्प्राशस्त्यपरत्वं लक्षणयाङ्गीक्रियते । तद्धि पुरुषप्रवर्तनाय विधिरपेक्षते । यत्तु स्वयमेव विधिः समीहितसाधनतां बोधयन् अलमेवानपेक्षः प्रवर्तयितुमित्युक्तं तत्रोच्यते । सत्यं, विधिरेव प्रधानं प्रवृत्तिकारणं तस्यैव त्वनुग्राहिका प्राशस्त्यावगतिः । फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति, तत्साधनेतु दुःखाकरे स्वतस्तावद्द्वेष एव, अवश्यंच साधने प्रवर्तमानस्य तत्रैव रुच्या भवितव्यम् । हितसाधनत्वावगतिरपि तत्रैव च रुचिं जनयन्ती प्रवृत्तिहेतुः स्यात् नान्यथा, साच पुरुषेभ्यः प्रमादालस्यादियुक्तेभ्यः कर्म दुःखात्मकं रोचयन्ती गुणकथनमपेक्षते । अवगतसमीहितसाधनभावमपि कर्मारुचिगोचरं सत् सतामसतां वा गुणानां कीर्तनाद्रोचततेरामिति सर्वजनीनमेतत् । तदेवं विधीनामध्ययनविधिवशेन दृष्टे पुरुषप्रवर्तने प्रवर्तमानानां प्राशस्त्यापेक्षत्वादर्थवादानां चाध्ययनविधिवशेनैव प्रयोजनमपेक्षमाणानां मिथो नियम इति विधिना सहैककार्यकर-**

---

संभवत्यदृष्टकल्पनाऽयोगात् दृष्टार्थज्ञानार्थत्वमेव नत्वदृष्टस्वर्गार्थमिति प्रथमसूत्रएव प्रपञ्चितमिति भावः । **नन्व**ध्ययनविधिः प्रयोजनवदर्थपर्यवसानं बोधयन्नपि भूतार्थप्रतिपादनेन प्रयोजनालाभादर्थवादांशेऽर्थज्ञानं न स्वीकरोतीत्यतआह—**अर्थवादानामिति** । यतएव भूतार्थप्रतिपादने प्रयोजनालाभोऽतएव तद्विहाय प्राशस्त्यप्रतिपादनं स्वीक्रियत इत्यर्थः । ततो लक्ष्यमाण इत्यनेनार्थवादगतपदानां प्रत्येकं न प्राशस्त्यलक्षणकत्वम् तथासति पदान्तरवैयर्थ्यापत्तेः किंतु कृत्स्नस्यार्थवादवाक्यस्येति सूचयति । **ननु** प्राशस्त्यमेव दुर्वचं । न तावदिष्टफलकत्वं विशिष्टेतिकर्तव्यताकत्वं वा तत्संभवति । विध्युद्देशाङ्गवाक्याभ्यामेव तत्सिद्धेः । नापि गुणवत्त्वम् । क्षेपिष्ठत्वादिसाधारणगुणवत्त्वानिर्वचनात् । नच क्षेपिष्ठत्वादिकमेव तत् । तथासति वाच्यत्वेन लक्ष्यत्वानुपपत्तेरननुगतत्वाच्चेत्यत आह—**क्षिप्रदेवतेति** । अत्र क्षिप्रमेवेत्यनेन कर्मणोऽल्पकालसाध्यत्वसूचनेन फलस्य दीर्घकालभोग्यत्वप्रतीतेः फलोत्कर्षरूपं प्राशस्त्यमित्युक्तं भवति । इदंच बलवदनिष्टाननुबन्धित्वे पर्यवस्यतीति बोध्यम् । एवं वपोत्खननाद्यर्थवादेष्वप्युक्तरूपप्राशस्त्यप्रतिपादनप्रकार ऊहनीयः । **ननु** प्राशस्त्यलक्षणैव न संभवति अन्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वाऽभावादित्युक्तमतआह—**स्वाध्यायविधिरिति** । ततश्च नैकवाक्यतया तात्पर्यावगतिः येनोक्तदोषः स्यादिति भावः । एवंचैकवाक्यता निष्प्रत्यूहेत्याह—**ततश्चेति** । **ननु** शब्दशक्त्यलभ्यत्वान्न लाक्षणिकस्य दृष्टत्वमत आह—**दृश्यत इति** । परंपरया शब्दशक्त्यैव लाभाल्लाक्षणिकस्यापि दृष्टत्वमुपपन्नमिति भावः । ननु तर्हि सर्वत्र लक्षणा स्यादित्यत आह—**संभवतीति** । मुख्यसामर्थ्यसंभवे गौणसामर्थ्यस्याग्राह्यत्वान्न सर्वत्र लक्षणाप्रसक्तिरित्यर्थः । नन्वेवमपि मुख्यार्थमादाय प्रयोजनवदर्थपर्यवसानाभावाददृष्टमेवाध्ययनविधेः प्रयोजनं किं न स्यादित्यतआह—**परंपरयेति** । अत्र स्वर्गकल्पना जपपारायणादिद्वाराभिमता नतु विश्वजिन्न्यायेन साक्षात्स्वर्गकल्पना । विश्वजिन्न्यायात् स्वर्गकल्पनस्य प्रथमसूत्रएव निराकरणात्तर्थासति स्वर्गस्यैकस्यैव कल्पनीयत्वेन स्वर्गादीत्यादिपदानुपपत्तिश्चेति ध्येयम् । अनन्तरप्रवृत्तविध्युद्देशापेक्षितत्वादित्युक्तमुपपादयितुं पुनरुपक्षिपति—**तद्धीति** । **प्रधानमिति** । अध्ययनविधिना तत्तच्छक्त्यनुसारेण वैदिकशब्दान्विनियुञ्जानेन वेदे श्रूयमाणा ये लिङादयस्तेषां पुरुषप्रवृत्तिमिमे भावयेयुरिति लिङादीनामेव पुरुषप्रवृत्तौ विनियुक्तत्वादिति भावः । **ननु** यथा फले स्वरूपावगतिमात्रेण लिप्सा तथा फलसाधनेऽपि तत्सिद्धेः किं प्राशस्त्यावगतेरित्यत आह—**फल इति** । **द्वेष एवेति** । ततश्चेष्टसाधनत्वावगतिवदनिष्टसाधनत्वावगतेरपि कष्टं कर्मेति न्यायेन लोकसिद्धत्वात्प्रवृत्तिनिवृत्त्योर्मध्यस्थ उदासीनैव न प्रवर्तेतेत्यर्थः । अतः प्रवृत्तिसिध्यर्थं रुच्या भवितव्यमित्याह—**अवश्यमिति** । रुचिरुत्कटेच्छा । ननु तर्हि रुच्यैव प्रवृत्तिसिद्धौ किं साधनत्वावगत्येत्यत आह—**साधनत्वेति** । **नान्यथेति** । वाग्त्रादिवत्तस्याः प्रवर्तकत्वासंभवादित्यर्थः । एवंच साधनत्वावगत्या रुच्युत्पादने कर्तव्ये गुणकथनेन बलवदनिष्टाननुबन्धित्वज्ञापने सति द्वेषनिरासेनार्थवादानामुपयोग इत्याशयेनाह—**साचेति** । बालानामौषधपानादावयमर्थः सुप्रसिद्ध इत्याह—**अवगतेति** । **सर्वजनीनमिति** । हितार्थे व्युत्पन्नस्याप्यस्य विदितार्थे लाक्षणिको निरूढः प्रयोग इत्याहुः । **ननु** सिद्धान्ते भावनैव लिङादिवाच्या न समीहितसाधनत्वम् । ततश्च कथमयं ग्रन्थसंदर्भ इतिचेत् । सत्यं, प्रवर्तना लिङादिभिरभिधीयते । प्रवृत्तिहेतुर्धर्मः प्रवर्तना । नच प्रेक्षापूर्वकारी समीहितसाधनादन्यत्र प्रवर्तयितुं शक्य इति । अर्थात्समीहितसाधनत्वमपि लिङादिभिरभिधीयत इत्याशयात् । यद्वा ग्रन्थकारमते इष्टसाधनत्वमेव प्रवर्तनेति न काप्यनुपपत्तिः । उपपादितं परस्परमपेक्षानि-

---

१ अत्र च. २ बोधनात्. ३ मपेक्षते. ४ कीर्तनादेव. ५ रुचिकरप्राशस्त्य. ६ विश्वजिन्न्यायेन स्वर्गकल्पने सतीत्यर्थः.

**स्वात्तद्वदेवार्थवादानामपि सिद्धं प्रामाण्यम् । एवं मन्त्राणामपि स्वाध्यायाध्ययनविधिवशादेव प्रयोजनवत्त्वावगमाद्विधिस्तुत्योश्च द्वितीयेऽध्याये निराकरणात्प्रकरणादिवशेन प्रधानाङ्गभूतानां दृष्टमदृष्टं वा प्रयोजनं कल्प्यत इति नाप्रामाण्यम्। नन्वेवमप्यङ्गत्वे प्रयोजनं लभ्यते नतु प्रामाण्यम्। नैष दोषः। पदार्थानां वाक्यार्थे प्रामाण्याभ्युपगमात् । उक्तंहि 'पदार्थास्तत्स्मृतिर्वा स्या'दिति । तेन मन्त्रविशिष्टमर्थं बोधयतः प्रधानवाक्यस्यार्थे मन्त्राणामपि प्रामाण्यं संभवति । तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धम् । प्रयोजनविशेषस्तु प्रकृतमर्थवादाधिकरणं परिसमाप्य पश्चाद्वक्ष्यते। तथा नामधेयस्यापीति सिद्धं सकलस्य वेदस्य प्रामाण्यम् ॥**

---

यमुपसंहरति —**तदेवमिति** । अर्थवादेषूक्तं सामान्यसिद्धान्तं मन्त्रनामधेययोरपि क्रमेणोपपादयति—**एवमित्यादिना । विधिस्तुत्योरिति** । 'देवांश्च याभिर्यजते ददाति चे'त्यादिमन्त्राणां यच्छब्दादिना विधिशक्तिप्रतिबन्धाद्विधायकत्वं नास्तीति विधिमन्त्राधिकरणे स्तोत्रशस्त्रेषु विनियुक्तानां च मन्त्राणां कर्मसमवायिदेवतास्तुत्या देवतास्मरणार्थत्वं नास्तीति स्तुतशस्त्राधिकरणे चोक्तत्वादित्यर्थः । इदंच वस्तुकथनमात्रं विधिस्तुत्यर्थत्वेऽपि प्रामाण्याविघातादिति ध्येयम् । सामान्यतः प्रामाण्यसिद्धिदशायां प्रयोजनविशेषौदासीन्येन सिद्धेर्दृष्टमदृष्टं वेत्युक्तिः । **नन्व**ङ्गत्वनिर्वाहकतया दृष्टादृष्टान्यतरप्रयोजनकल्पनेऽपि धर्मप्रमितिजनकत्वासिद्धेर्न प्रामाण्यमिति शङ्कते—**नन्विति । पदार्था इति** । पदोपस्थापितपदार्था वा पदजन्यपदार्थज्ञानं वा शब्दप्रमाणं स्यादित्यर्थः । नन्वेवमपि जुह्वादिपदार्थवैलक्षण्यं शब्दरूपस्य मन्त्रस्य न सिद्धमित्यत आह—**तेनेति** । क्रमप्रकरणाभ्यामङ्गभूतमन्त्रस्य शब्देनोपस्थितिंविना प्रधानविधिर्मन्त्रविशिष्टं प्रधानं विधातुं न क्षमते 'बर्हिर्देवसदन'मित्यादेः मन्त्राभिधायकशब्दश्च न प्रत्यक्षपठित इति मन्त्रएव स्वाभिधायकशब्दकल्पनाद्वारा स्वविशिष्टधर्मप्रतीतौ व्याप्रियत इति युक्तं प्रामाण्यम् । जुह्वादीनां तु जुह्वा जुहोतीति श्रवणात्स्वरूपोपस्थितौ न व्यापार इति वैषम्यमिति भावः । **ननु** विधिस्तुतिस्मृतिभिरित्यनेन मन्त्राणामनुष्ठेयार्थस्मारकतया यद्धर्मे प्रामाण्यमुपक्षिप्तं तदिदानीमपि न सिद्धमित्याशङ्क्य नैतदधिकरणव्युत्पाद्यप्रामाण्याभिप्रायं तत् किंतु मन्त्राधिकरणे वक्ष्यमाणप्रामाण्याभिप्रायमित्याशयेनाह—**तेन मन्त्राणामिति** । अस्मिन्नधिकरणे मन्त्राणामध्ययनविधिबलादानर्थक्यपरिहारेणाङ्गतया पदार्थविधया प्रामाण्यं सिद्धं मन्त्राधिकरणे तु अर्थप्रकाशनरूपद्वारव्युत्पादनेन अर्थवादप्रचोदितमन्त्रस्मारितद्रव्यदेवतादियुक्तनामावच्छिन्नधात्वर्थभावनाख्यधर्मप्रमितावर्थवादानां प्ररोचकतयेव मन्त्राणामपि स्मारकतया प्रामाण्यं सिध्यतीति तत्रैव तद्व्युत्पाद्यमिति भावः । अर्थप्रकाशनद्वारव्युत्पादनेन मान्त्रवर्णिकदेवतासूक्तवाक्यफलादीनां सिद्ध्या तद्विशिष्टधर्मप्रमित्युपयोगितयापि प्रामाण्यं सिध्यतीति ध्येयम् । **भवदेवस्तु** मन्त्राणामनुष्ठेयनिर्वापादिलक्षणधर्मबोधकत्वादेव प्रामाण्यम् । नच तर्हि निर्वापादेशास्त्रान्तरावगतत्वेनानुवादत्वमात्रमेव नतु प्रामाण्यमनधिगतार्थगन्तृत्वाभावादितिवाच्यम्। तथाप्यनुवादस्य प्रयोजनवत्त्वमात्रेण विद्वद्वाक्यवत्प्रामाण्योपपत्तिरित्याह—**अर्थवादाधिकरणमिति** । अर्थवादविचारमित्यर्थः । **तथेति** । नामधेयत्वेन संमतस्योद्भिदादेरपि अध्ययनविधिपरिग्रहात्सामान्यतः प्रामाण्यं सिद्धमित्यर्थः । हेतुत्वान्वयस्तु हेत्वधिकरणे निराक्रियते इति । 'नात्र निराक्रियते' इति क्वचित्पठ्यते तस्य चायमर्थः—प्राभाकरा भूतभव्यसमुच्चारन्यायेन मलिनः स्नायादित्यादौ स्नानादिकार्ये मालिन्यादेरिवार्थवादानां चोदनार्थकार्ये हेतुत्वेनान्वयाद्धेतुसापेक्षत्वलक्षणमप्रामाण्यं चोदनानां निराकर्तुमिदमधिकरणमित्याहुस्तदयुक्तम्। 'हेतुर्वा स्यात्' इति हेत्वधिकरणे 'तेन ह्यन्नं क्रियत' इत्यादेर्हेतुत्वेनान्वयस्य निराकरणेनात्र हेतुत्वान्वयशङ्कानुदयात् । नच तत्र हि शब्दश्रुतिबलात्प्राप्तहेत्वन्वयनिराकरणेऽप्यत्र भूतभव्यसमुच्चारन्यायात्तच्छङ्कोन्मेषः संभवतीति वाच्यम् । एवमप्यनपेक्षवेदगम्यकार्यस्य हेत्वन्वयायोग्यत्वादेव हि तदन्वयो निराकार्य इत्येकत्र तन्निराकरणे पुनस्तच्छङ्कानुदयादन्यतरवैयर्थ्यस्यापरिहार्यत्वादिति । प्रयोजनं तु पूर्वपक्षे रात्रिसत्रादौ विश्वजिन्न्यायात् स्वर्गफलकत्वम् । सिद्धान्ते त्वार्थवादिकफलसिद्धिः । एवमुच्चैस्त्वादीनां पूर्वपक्षे ऋग्धर्मत्वं सिद्धान्ते वेदधर्मत्वमित्याद्यूह्यम् । सूत्रार्थस्तु—आम्नायस्य वेदस्य तद्भूतानां क्रियार्थेन समाम्नाय इति क्रियार्थत्वावगमादक्रियार्थानामर्थवादादीनामानर्थक्यं प्रयोजनवदर्थशून्यत्वं तस्मादक्रियार्थकं सर्वमनित्यमुच्यते। अनित्यशब्दोऽयमनित्यलौकिकवाक्यसादृश्यपरःसन्नप्रामाण्यमाह तस्मादप्रामाण्यमुच्यत इति ॥



विधिवन्निगदाधिकरणम् ॥ २ ॥

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ [लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥ उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्, तस्मात्स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥]**

ऊर्जोवरुध्या इत्येष विधिवन्निगदो न किम् ॥ यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया ॥ ५ ॥
चतुर्थ्या फलताला भाद्यूपौदुम्बरता फलम् ॥ ऊर्जोवरोधं कथयन्कथं स्तुतिपरो भवेत् ॥ ६ ॥
अस्तुतौदुम्बरत्वस्याविधानात्कस्य तत्फलम् ॥ अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः ॥ ७ ॥
आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात् ॥ न प्रमा चोदनेत्येतन्न वादो ह्येकवाक्यतः ॥ ८ ॥

पूर्वोक्ताक्षेपेण त्विदमारभ्यते । यदुक्तं नानर्थक्यमर्थवादानामिति तद्ब्रूहीमः । स्तुत्यर्थत्वं तु केषुचिन्न मृष्यामहे यथा 'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मादूर्जं पशूनाप्नोत्यूर्जोवरुध्या' इत्येवमादिषु विधिसंभवादित्येवमाक्षिप्यते । अत्रैवं विचार्यते । किमौदुंबरो यूपो भवतीत्यौदुंबरताया 'ऊर्जोवरुध्या' इति फलमुत सर्वोऽयमर्थवाद इति । तदर्थं च किमेवंजातीयकेन विधिविभक्तिरहितेन साधनत्वमौदुंबरतायाः शक्यते प्रतिपादयितुं न वेति, तत्र पूर्वःपक्षः 'ऊर्जं पशूनाप्नोत्यूर्जोवरुध्या' इत्यनेन पशूनां साध्यत्वं गम्यते श्रुत्या लक्षणया तु प्राशस्त्यम् । फलविधौ चार्थवत्त्वमानर्थक्यमर्थवादत्वे साध्यस्य च साधनापेक्षत्वात्तत्सन्निधावुच्चरितमौदुंबरत्वमसत्यपि विधौ

---

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥** आक्षेपिकीं सङ्गतिमाह—**पूर्वेति** । पूर्वाधिकरणे सर्वेषामर्थवादानां स्तुत्यर्थत्वादानर्थक्यं नास्तीत्युक्तम् । तत्र केषुचित्स्तुत्यर्थत्वमाक्षिप्यत इत्यर्थः । यद्यप्यर्थवादत्वस्वीकारेण स्तुत्यर्थत्वाक्षेपो न क्रियते तथापि सिद्धान्तिनोऽर्थवादत्वेन संमतेषु केषुचित्स्तुत्यर्थत्वमाक्षिप्यत इति । यद्वा मन्त्रनामधेयभिन्नविधिविभक्तिरहितवाक्यपरोऽर्थवादशब्दस्ततश्च तादृशानां सर्वेषां यत्पूर्वाधिकरणे स्तुत्यर्थत्वमुक्तं तत्केषुचिदाक्षिप्यत इत्यर्थः । ऊर्क् अन्नम् । **विधिसंभवादिति** । साध्यसाधनभावप्रतीतिसंभवादित्यर्थः । **किमिति** । अत्र औदुम्बरो यूपो भवतीत्यत्र पूर्वपक्षे सिद्धान्ते च विधिरस्ति । ततश्च ऊर्जोवरुध्या एतत् किं फलसमर्पकं सत् यदौदुंबरो यूपो भवतीति विध्युद्देशान्तर्गतमुत ऊर्ग्वा उदुंबर इत्यारभ्य ऊर्जोवरुध्या इत्यन्तः सर्वोऽयमर्थवाद इति संशयार्थः । ऊर्ग्वा इत्याद्याप्नोतीत्यन्तस्य ऊर्क्पदवाच्यान्नरूपतया साजात्यात्साध्यसाधनभावो युक्त इत्यौचित्येन स्तुत्यर्थत्वस्य पूर्वपक्षेऽपि संमतत्वात्सर्वोयमित्युक्तमिति व्याचक्षते । वस्तुतस्तु विधिविभक्तिरहितेनासत्यपि विधौ नार्थो विधिना । विधावसति अर्थवादत एव विधिरुन्नेयः । औदुंबराधिकरणे वा विध्युपयोगः प्रतिपाद्यत इति ग्रन्थस्वारस्यपर्यालोचनया ग्रन्थकारस्यात्र विधिरनभिमत इति लभ्यते । किंच यदि पूर्वपक्षे औदुंबरो यूपो भवतीत्यत्र विधिः संमतस्तदा विधिगोचरभावनायामौदुंबरतायाः किं करणत्वेनान्वयः किंवा भाव्यत्वेन । नाद्यः । तथासत्युक्तविधिनैव साधनत्वप्रतीतेः साधनत्वप्रत्यायकशब्दाभावेऽपि साध्यसन्निध्युच्चारणमात्रेण साधनत्वप्रतीतिसंभवरूपपूर्वपक्षव्याकोपापत्तेः । नान्त्यः । औदुंबरतारूपभाव्यावरुद्धायां भावनायामूर्गवरोधस्य भाव्यत्वेनान्वयासंभवेनोर्जोवरुध्या इत्यस्य फलसमर्पकतया विध्युद्देशान्तर्भावस्य तदभिमतस्यासिद्धिप्रसङ्गात् । तस्मात्सर्वोयमित्यनेनौदुंबरो यूप इत्यादेः पूर्वोक्तस्य कृत्स्नस्यैव परामर्शो युक्तः नतु तदेकदेशस्य ऊर्ग्वा इत्यादेः । तस्मादौदुंबरो यूपो भवतीति येयमौदुंबरता प्रतीयते तस्यामूर्गवरोधः फलमुत औदुंबरो यूपो भवतीत्यादिरूर्जोवरुध्या इत्यन्तः सर्वोऽयमर्थवाद इति विधित्वानङ्गीकारेणैव ग्रन्थो व्याख्येयः । एवंजातीयकेनेत्यस्य विवरणं **विधिविभक्तिरहितेनेति** । विधिविभक्तिविरहेऽपि साधनत्वप्रतिपादनसंभवे सत्यौदुंबरो यूपो भवत्यूर्जोवरुध्यै इत्युभयं मिलित्वा साध्यसाधनभावप्रतिपादनपरं भवतीत्यौदुंबरताया ऊर्गवरोधः फलं भवति । तत्प्रतिपादनासंभवे तु कृत्स्नमेव वाक्यमर्थवाद इति फलफलिभावो बोध्यः । **श्रुत्येति** द्वितीयायाश्चतुर्थ्याश्च साध्यत्वार्थकत्वादिति भावः । तैत्तिरीयशाखायां ऊर्जोवरुध्या इत्यस्याभावात्तत्र साध्यत्वप्रतीत्युपपादनाय द्वितीययापि साध्यत्वप्रतीतिरुपपादितेति ध्येयम् । **फलविधाविति** । फलसमर्पकत्व इत्यर्थः । **आनर्थक्यमिति** । स्तुत्यभावेऽपि विधिवाक्यादेव प्रवृत्त्युपपत्तेरनर्थकप्रायमर्थवादत्व इत्यर्थः । **नन्वस्तु** साध्यत्वप्रतीतिस्तथापि साधनत्वबोधकविध्यभावान्न साध्यसाधनभावप्रतीतिरित्यत आह—**साध्यस्येति** । भूतभव्यसमुच्चारन्यायात्तत्प्रतीतिः संभ-

---

१ बरतादीनां. २ अर्थना.

साधनत्वेनावगम्यते। साधनत्वावगमादेव च प्रवृत्तिसिद्धेर्नार्थो विधिनेति। सिद्धान्तस्तु विधावसति भावनाया औदुंबरताभवनाक्षिप्तायाः सैव भाव्या स्यान्न फलं। सन्निहिता च सा, विप्रकृष्टं तु फलम्। अतो न फलसंबन्धः। तेन यद्यपि तावदूर्जं पशूनाप्नोत्यूर्जोवरुध्या इत्यनेन फलमभिधातुं शक्यते तथाप्यविहितत्वौदुंबरत्वस्य फलवचनमनर्थकमित्यर्थवादत एवात्र विधिरुन्नेतव्यः। नच स्तुतित्वेन विधिशक्तिमुपजनय्य पुनस्तेनैव फलकल्पना संभवति वाक्यभेदप्रसङ्गात्। तस्मादर्थवादः। नचैवं विधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुमिति पर्णमय्यधिकरणे वक्ष्यामः। अत्रतु साध-

---

वतीतिभावः। नन्वेवमपि प्रेरणाज्ञानाभावात्प्रवृत्तिर्न स्यादित्यत आह—**साधनत्वेति**। गुर्वादिप्रेरणया विना स्वतएव प्रवर्तमानस्य यथा साधनत्वावगमादेव प्रवृत्तिरेवमिहापि प्रवृत्तिरुपपद्यत इति भावः। एवंचौदुंबरताभवनस्य पुंव्यापाराधीनत्वात्कर्तव्यतांविना च पुंव्यापारायोगात्तदर्थं विधिरवश्यं वाच्य इति शङ्काया नावकाशः। उक्तरीत्या समीहितसाधनत्वावगमादेव पुंव्यापारसिद्धेरिति बोध्यम्। यद्यौदुंबरत्वस्य साध्यापेक्षा स्यात्तदा ऊर्जोवरुध्या एतत्तेन साकं साध्यत्वेनान्वीयेत। साधनत्वेनोपस्थितस्य हि साध्यापेक्षा भवति। नचात्रौदुंबरत्वं साधनत्वेनोपस्थितं साधनत्वप्रत्यायकशब्दाभावात्। अतः स्वरूपेणौदुंबरत्वस्य साध्येनान्वयासंभवादूर्गवरोधेन सह साध्यसाधनभावेनौदुंबरत्वस्यान्वयमिच्छतौदुंबरताभवनस्य प्रयोजकव्यापारंविना स्वतोऽसिद्धेः। तेन प्रयोजकव्यापाररूपभावनामाक्षिप्य तस्या भाव्यापेक्षत्वात्तद्द्वारा संबन्धो वाच्यः स न संभवतीत्याह—**विधाविति**। प्रवर्तनात्मकशब्दभावनावाचकविधिप्रत्यये सति अपुरुषार्थभाव्यकत्वे पुरुषस्य प्रवर्तयितुमशक्यतया प्रवर्तनैव स्वसंबद्धाया भावनायाः पुरुषार्थभाव्यकत्वमापादयतीति ऊर्गवरोधरूपफलसंबन्धः सिध्येदिहतु विध्यभावः। औदुंबरताभवनेनाक्षिप्ताया भावनाया औदुंबरतैव भाव्या स्यात्। भवनकर्तृत्वेनावगतौदुंबरताया एव भावनाकर्मत्वौचित्यादित्यर्थः। नियामकान्तरमाह—**सन्निहितेति**। औदुंबरताभवनाक्षिप्ताया भावनायास्तद्देशत्वादिति भावः। ननूर्गवरोधस्यतुर्थ्यवगतसाध्यत्वनिर्वाहार्थं भावनया स्वसंबन्धमेव कल्पयिष्यतीत्याशङ्क्याह—**तेन यद्यपीति**। **अविहितस्येति**। विध्यभावे हि पुरुषार्थरूपभाव्यप्रतिपादनमनर्थकं येनकेनचिद्भाव्येन भावनाया निराकाङ्क्षत्वसंभवात्ततश्चौदुंबरतारूपभाव्येन निराकाङ्क्षाया भावनाया ऊर्गवरोधलक्षणपुरुषार्थसंबन्धो विध्येकलभ्य इति भावनाया ऊर्गवरोधं फलमिच्छतार्थवादतोऽवश्यं विधिः कल्पनीय इत्यर्थः। **ननु** कल्पयित्वैव विधिं फलत्वेन संबध्यतामित्यत आह—**नचेति**। विधिकल्पनार्थमूर्जोवरुध्या इत्यस्य स्तुतौ तात्पर्यं वक्तव्यम्। कल्पिते च विधौ पुनस्तस्यैव फलसंबन्धप्रतिपादकत्वे वाक्यभेदप्रसङ्गादयुक्तमित्यर्थः। उपजनय्य निश्चाय्येत्यर्थः। यद्यपि आप्नोत्यन्तार्थवादेनापि विधिकल्पनासंभवेनोर्जोवरुध्या इत्यस्य केवलफलार्थकत्वान्न वाक्यभेदप्रसङ्गस्तथापि यस्य पर्णमयी जुहूर्भवतीत्यादौ यत्र तादृशवाक्यान्तराभावस्तत्र वाक्यभेदो दुष्परिहर इति भावः। तस्मादौदुंबरो यूपो भवतीत्यादिरूर्जोवरुध्या इत्यन्तः सर्वोऽप्यर्थवादस्तत्र च 'विधिनात्वेकवाक्यत्वा'दितिन्यायेनार्थवादस्य केवलस्यासंभवात्तेनापि विधिः कल्पनीय एव। कल्पिते तु विधौ प्रागुक्तरीत्या वाक्यभेदप्रसङ्गेन ऊर्जोवरुध्या इत्यस्य फलसमर्पकत्वाभावात् क्रतूपकारस्यापि पुरुषाभिलषितत्वात्तमेव भाव्यत्वेन स्वीकरोतीत्याशयेनोपसंहरति—**तस्मादिति**। ननु यूपस्यौदुंबरत्वेन भवनस्यान्यतोऽप्राप्तत्वादप्राप्तार्थकत्वादेव विधिः कल्प्यताम्। किंच फलवचनमेव विधिं विनानुपपद्यमानं साक्षाद्विधिं कल्पयतु नत्वर्थवादत्वेन। ततश्च न वाक्यभेददोष इत्यस्वरसादाह—**नचेति**। चतुर्थे यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्यादावपापश्लोकश्रवणादीनां फलत्वेन प्रतिपादनं न संभवति स्वर्गकाम इत्यादिवत्कामशब्दसंयोगाभावादिति वक्ष्यते, तद्वदेवात्रापि कामशब्दाभावादूर्गवरोधस्य फलत्वेन प्रतिपादनं न संभवतीत्यर्थः। ब्राह्मणाय सूप इत्यादौ व्यभिचारात्तादर्थ्यचतुर्थ्या न साध्यत्वार्थकत्वमिति भावः। **ननु** तर्हि तेनैं पौनरुक्त्यमित्यत आह—**अत्रेति**। विधिविभक्त्यभावेनौदुंबरत्वपर्णमयत्वादीनां साधनत्वान्वयायोग्यत्वादूर्जोवरुध्यै न पापं श्लोकं शृणोतीत्यादीनामर्थवादत्वमत्रोक्तम्। तत्र कामशब्दाभावेन साध्यप्रतिपादनाशक्तेरर्थवादत्वमुच्यत इत्यपौनरुक्त्यमित्यर्थः। **ननु** वैपरीत्यं किं न स्यादतो नायं पौनरुक्त्यपरिहार इत्यस्वरसादाह—**अथवेति**। अंशद्वयेऽप्यत्रैव विचारितेऽपि यथा 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यत्र स्तुतिसमर्पकस्यैवार्थवादस्य फलसमर्पकत्वं तथा एतेषामपि फलसमर्पकत्वमस्तीति शङ्कायां युक्तं रात्रिसत्रस्थले प्रकारान्तरेण फलाकाङ्क्षाया अशान्तेरगत्या स्तुतिसमर्पकस्यैवार्थवादस्य फलसमर्पकत्वम्। उदुंबरतापर्णतादीनां तु क्रतूपकारेण फलाकाङ्क्षाशान्तेर्नागतिकत्वमिति प्रतिपादनार्थं तदधिकरणमित्यर्थः। किंच औदुंबरतायाः सिद्धरूपतया स्वतः फलभावनाकरणत्वासंभवात्कर्तृव्यापारविषयत्वायाश्रयीभूतक्रियापेक्षायां तदलाभान्न फले औदुम्बरताविधिरित्याह—**नचेति**। प्रकरणात्। सन्निधानादित्यर्थः। एवंच प्रकरणादाश्रयलाभाभावे वाक्यादेवाश्रयसंबन्धो बोधनीयः। ततश्च गुणफलसंबन्धे गुणाश्रयसंबन्धे च वाक्यव्यापाराद्वाक्यभेदः स्यादित्याह—

---

१ पर्णमयाधिकरणन.

नांशविचारमुखेनार्थवादत्वमुक्तम्। तत्र तु साध्यांशविचार इत्यपौनरुक्त्यम्। अथवा साध्यांशेऽप्यत्रैव विचारिते रात्रिसत्रन्यायेन फलपरत्वमप्यपापश्लोकश्रवणादीनामाशङ्क्य निराकरिष्यते चतुर्थे। नचौदुम्बरतायाः फले विधीयमानायाः प्रकरणात् आश्रयो लभ्यते तत्रास्मादेव वाक्यादाश्रयकल्पनायां वाक्यभेदः। पशुयागो हि प्रकृतः स तावदयोग्यः। यत्र हि गुणः कारकतामापद्यते स आश्रयः, यथा होमो दध्नः न चौदुंबरता शक्नोति यागे कारकीभवितुम्। तदाश्रयत्वे च यूपग्रहणानर्थक्यं अनुवादासंभवात्। यत्तु पशुनियोजनं यूपद्वारेण योग्यं तदपि सह यूपेनैवाप्रकृतम्। नच प्रकृतिवच्छब्देन तस्य सन्निधिसंभवः। स हि प्राकृतमित्थंभावं सामान्येन सन्निधापयति तत्र न यूपस्य स्वरूपेण विपरिवृत्तिरस्ति। अविपरिवर्तमानं च न शक्नोत्याश्रयाकाङ्क्षां पूरयितुम्। तादृशी च विपरिवृत्तिर्जुह्वादीनामप्यस्तीति तेषामप्याश्रयत्वं स्यात्। तत्र तथैव यूपग्रहणानर्थक्यं। तत्र वाक्येनैवाश्रयसंबन्धे फलसंबन्धे च विधीयमाने वाक्यभेदः। एकदेशिनां तु वाक्येनैवाश्रयसंबन्धं फलसंबन्धं च गुणाधिकारेऽभ्युपगच्छतामिहापि तथैव संभवाद्यदेकवाक्येन संबन्धद्वयासंभवादप्रामाण्य-

---

तत्रेति। प्रकरणादाश्रयलाभाभावमेवोपपादयति—**पशुयाग इति**। सोमापौष्णं श्येतमालभेत पशुकाम इति विहित इति शेषः। **यत्रहीति**। इदंच यत्र फलाय विधीयमानस्य गुणस्य जातिद्रव्यशुक्लादिगुणरूपत्वं तदभिप्रायम्। तेन 'दाक्षायणयज्ञेन स्वर्गकामो यजेत, पशुकाम उक्थ्यं गृह्णीयात्, षोडशिनं वीर्यकामः, शुक्राग्रान् महान् गतश्रीः प्रतिष्ठाकाम' इत्यादिषु आवृत्तिसंस्थाग्रतादीनां गुणानां दर्शपूर्णमासादिषु करणत्वाभावेऽपि तेषामाश्रयत्वमुपपद्यत इति ध्येयम्। **नचेति**। उदुंबरत्वजातेरमूर्ततया यागे कारकत्वयोग्यता नास्तीत्यर्थः। **ननु** स्वपरिच्छेद्यद्रव्यद्वारा जातेरपि कारकत्वशक्तिरस्तीत्यत आह—**तदाश्रयत्व इति**। पशुयागस्याश्रयत्वे तस्य यूपशब्देनाभिधातुमशक्यत्वाद्दध्नेन्द्रियकामवाक्ये जुहोतेरिव प्रकरणप्राप्ताश्रयसंबन्धानुवादकत्वासंभवादनर्थको यूपशब्दः स्यादित्यर्थः। **ननु** तर्हि पशुनियोजनमेवाश्रयोऽस्तु तत्रौदुंबरताया यूपद्वारेण कारकत्वयोग्यत्वाद्यूपे क्रियमाणस्य नियोजनस्य स्वार्थसंबन्धेन यूपशब्देनाभिधानसंभवाच्चेत्यत आह—**यस्त्विति**। **अप्रकृतमिति**। सोमापौष्णपशौ अनाम्नातत्वेन पाठतः सन्निहितं न भवतीत्यर्थः। **ननु** पाठसन्निध्यभावेऽपि चोदकात्सन्निधिरस्तीत्यत आह—**नचेति**। इत्थंभावं अखण्डोपकारम्। सामान्येन सर्वपदार्थविशिष्टत्वेन। यूपस्येत्यनन्तरं नियोजनस्य चेति शेषः। दशमाद्याधिकरणन्यायेनोपकारमुखेनैव पदार्थानामतिदेशो न स्वरूपेण। ततश्चाखिलपदार्थविशिष्टाखण्डोपकारातिदेशे उपकारात्पृथग्भावेन पदार्थानां स्वातन्त्र्येणानुपस्थितत्वान्नियोजनस्य स्वरूपेण बुद्धौ विपरिवृत्तिर्नास्तीत्यर्थः। **ननु** पदार्थविशिष्टोपकारबुद्धेः पदार्थविषयत्वमप्यस्तीति तावन्मात्रेणाश्रयत्वमस्त्वित्यत आह—**अविपरिवर्तमानमिति**। स्वरूपेणेत्यनुषज्यते। स्वरूपेणोपस्थितिरेवाश्रयत्वान्वये उपयुज्यते न यथाकथंचिदुपस्थितिमात्रम्। अन्यान्वितत्वेनोपस्थितस्यान्यत्राश्रयत्वायोग्यत्वादित्यर्थः। **ननु** विशिष्टविधिना विशेषणानामिवार्थात्पदार्थानामपि पृथगतिदेशात्तेषामपि स्वातन्त्र्येणोपस्थितिरस्ति तथा पदार्थपृष्ठभावेन शास्त्राणामप्यतिदेशाङ्गीकारात्स्वस्वशास्त्रेण पदार्थानां स्वातन्त्र्येणोपस्थितिरनिवार्यान्यथा तवापि यूपानुवादेनौदुंबरत्वविधिर्न स्यादित्यत आह—**तादृशीति**। चोदकान्नियोजनस्य यादृशी उपस्थितिस्तादृशीत्यर्थः। इष्टापत्तिमाशङ्क्याह—**तत्रेति**। तस्मात्पाठसन्निहितस्य पशुयागस्य चोदकसन्निहितस्य नियोजनस्य चाश्रयत्वासंभवाद्यूपग्रहणानर्थक्यपरिहाराय वाक्येनैव यूप आश्रयत्वेन समर्प्यत इति वक्तव्यम्। संभवतिच तस्य सिद्धरूपस्यापि नियोजनविशिष्टतया साध्यत्वादाश्रयत्वम्। ततश्च वाक्यभेदो दुष्परिहर इत्याह—**तत्रेति**। **प्राभाकरैस्तु** औदुंबरो यूपो भवतीति यूपौदुंबरत्वसंबन्धविधिरूर्जंपशूनाप्नोतीति पशूदुंबरसंबन्धविधिश्च प्रतीयत इति वाक्यभेदः प्रतिभाति, तथा ऊर्जंपशूनाप्नोतीत्यस्य स्तुतिपरत्वावलंबनेन सस्तुतिकौदुंबरताविधेरेकवाक्यत्वं च प्रतिभाति। तयोश्च बलाबलानध्यवसायादप्रामाण्यमिति पूर्वपक्षं कृत्वा यथानियोगं विनियोग इति एकवाक्यत्वस्य प्रबलत्वात् सस्तुतिकविधिपरत्वमेवेति सिद्धान्तितं तद्दूषयति—**एकदेशिनामिति**। ते हि गुणफलविधिषु दध्नेन्द्रियकामस्य जुहोतीत्यादिषु दध्यनुरक्तो होमः फलाय विधीयत इति वदन्तो दधिहोमसंबन्धः फलसंबन्धश्च वाक्येनैव लभ्यत इति स्वीकुर्वन्ति। तेषामिहापि एकेनैव वाक्येन यूपौदुंबरत्वसंबन्धस्य फलसंबन्धस्य च लाभसंभवेन वाक्यभेदाप्रसङ्गादनध्यवसायनिबन्धनाप्रामाण्यपूर्वपक्षानुत्थानात्तन्निराकरणाय स्तुत्यर्थत्वव्युत्पादनं व्यर्थमित्यर्थः। एकवाक्येनेत्यस्य चायमर्थः—एकेन वाक्येन संबन्धद्वयबोधनासंभवात्किमेकवाक्यत्वं संबन्धद्वयबोधेन वाक्यभेदो वा स्वीकर्तव्य इत्यनध्यवसायादप्रामाण्यमाशङ्क्येति। **भवनाथेन** तु गुणाश्रयसंबन्धो गुणफलसंबन्धश्चेति संबन्धद्वयविधानमाश्रित्यानध्यवसायो नोपपादितः, किंतु औदुंबरो यूपो भवतीति स्वतन्त्रो विधिः प्रतीयते। तथा ऊर्जंपशूनाप्नोतीति उदुंबरव्यापारविषयः पशुकामनियोज्यकः स्वतन्त्रएव विधिः साधीयो भातीत्येवं स्वतन्त्र-

---

१ परत्वमेवापाप. २ नायाः विधिराश्रयो. ३ आवृत्तदर्शपूर्णमासेन.

माशङ्क्य तन्निरासार्थं स्तुत्यर्थत्वमापादितं तदनर्थकम्। कश्चित्त्वाह यूपस्यादृष्टत्वात्तत्संबन्धो दधिहोमसंबन्धवन्न लोकतो लभ्यते। ततस्तस्य फलसंबन्धस्य च नैकस्माद्वाक्यात्सिद्धिरिति। तदसत्। यद्यपि यूपत्वमदृष्टं तेन तु निमित्तेन यस्मिन्काष्ठे यूपशब्दो वर्तते तस्य चौदुंबरजातेश्च लौकिक एव संबन्धः। यदि चैवं न लभ्यते 'खादिरं वीर्यकामस्य यूपं कुर्या'दित्यत्रापि एकवाक्यता न स्यात्। अस्तु तत्र वाक्यभेद इति चेत् वार्तमेतत्। एकवाक्यत्वावगमात्। यदि चात्रैकस्मिन्नाख्याते वाक्यभेदः तथासत्यौदुंबरो यूपो भवति ऊर्जे पशूनाप्नोतीत्याख्यातद्वये सुतरां वाक्यभेदः प्रामाण्यं च संभवतीति दूरापेतमप्रामाण्यम्। अथ खादिरो यूपो भवतीत्येतद्वाक्यविहितयूपसंबन्धाश्रयणेन फलसंबन्धविधिर्यः खादिरो यूपः स वीर्यकामस्येति। तथासति खादिरत्वं न क्रत्वर्थं स्यात् [1]उक्थ्यवद्व्यूढवच्च फलार्थमेव स्यात्। उभयार्थं चैतदिष्टं खादिरत्ववदुभयार्थतां दधिग्रहस्य वदतो निबन्धकारस्यापि। तस्माद्यूपाश्रितस्य खादिरत्वस्येवौदुंबरत्वस्य फलार्थविधिसंभवान्नाप्रामाण्यशङ्केत्यास्तां तावत्। तस्मादौदुंबरता यूपोद्देशेन विधीयते [2]तैत्स्तुतिरियमूर्जोवरुध्या इति सिद्धम्॥

---

साध्यद्वयप्रतीतिमाश्रित्यानध्यवसायः प्रतिपादितः। उक्तंच तेनैव—'अतएव न गुणफलसंबन्धोऽयं आख्यातद्वयावगतस्वतन्त्रसाध्यद्वयविरोधादि'ति। तदप्ययुक्तम्। एवमपि गुणफलसंबन्धविधिनैकवाक्यतोपपादनसंभवे तन्निर्वाहाय सिद्धान्ते निरर्थकप्रायस्तुत्यर्थत्वव्युत्पादनस्यानर्थक्यादिति ग्रन्थकाराशयः। **ननु** सत्यमस्मन्मते दध्यनुरक्तो होमः फलाय विधीयते तथापि दध्यनुरागो न वाक्येन विधेयः, किंतु क्रियाकारकत्वमात्रेण लोकसिद्धमेव दधिहोमसंबन्धमाश्रित्य केवलफलहोमसंबन्ध एव विधेयः। **नच** दध्यनुरागस्य होमे विधानाभावे फलार्थिनो दध्युपादानं नियमेन न स्यादिति वाच्यम्। दध्यनुरक्तरूपापन्नस्यैव होमस्य फलविधिविषयत्वाद्गुणोपादानंविना तद्रूपासिद्ध्या नियमेन तदुपादानसिद्धेः। एवंच दध्युपरक्तरूपापन्नस्य होमस्य फलसंबन्धविधिबलाद्दध्युपरागोऽपि नियमेन सिध्यतीत्येतावता संबन्धद्वयस्यापि वाक्येनास्मन्मते सिद्धिव्यवहारः नतु संबन्धद्वयस्यापि वाक्यविधेयत्वेन। प्रकृते च यूपस्यादृष्टरूपस्यालौकिकत्वेन लोकतस्तत्संबन्धासिद्धेस्तदाश्रयणेन फलसंबन्धमात्रविधिर्न संभवतीति यूपौदुंबरसंबन्धस्यापि विधेयत्वावश्यंभावाद्दुष्परिहरो वाक्यभेद इति तन्मतानुसारिणः कस्यचिदुपपादनमनुवदति—**कश्चिदिति। तदसदिति।** तक्षणादिजन्यसंस्कारविशिष्टस्यालौकिकत्वेऽपि विशेष्यांशकाष्ठविशेषस्य लौकिकत्वाद्गुणाश्रयसंबन्धो लोकतः सिद्धो वाच्यः। अन्यथा देवतोद्देशविशिष्टप्रक्षेपरूपहोमस्याप्यलौकिकदेवताघटितत्वात्तत्संबन्धोऽपि लोकसिद्धो न स्यादिति भावः। **ननु** यूपशब्दो न संस्कारविशिष्टदारुवाचकः, किंतु नागृहीतविशेषणान्यायात्संस्कारमात्रवाचकस्तस्य चालौकिकत्वान्न कथंचिदपि तत्संबन्धस्य लोकतस्सिद्धिरुपपादयितुं शक्यते इति यदि कश्चिद्ब्रूयात्तदा दण्डमाह—**यदीति।** यूपशब्दस्य निष्कृष्टसंस्कारमात्रवाचकत्वमभ्युपगच्छतापि एवंभूतस्थले संस्काराश्रितकाष्ठपरत्वमवश्यं वक्तव्यमन्यथा खादिरं वीर्यकामस्येत्यत्रापि यूपखदिरसंबन्धस्य लोकतःसिद्ध्यभावेन वाक्येनैव बोधने वाक्यभेदः स्यादित्यर्थः। वार्तं असारमित्यर्थः। नन्ववगम्यमानमप्येकवाक्यत्वमनुपपत्त्या परित्याज्यमित्यत आह—**यदीति। तथासतीति।** एकस्मिन्नाख्याते वाक्यभेदं स्वीकुर्वाणस्य तवाख्यातभेदे तस्य दोषत्वाभावेन वाक्यभेदस्य स्वध्यवसानत्वादनध्यवसायनिमित्तमप्रामाण्यं दूरापेतमित्यर्थः। **ननु** तत्र लोकतःसिद्ध्यभावेऽपि वाक्यान्तरेणाश्रयसंबन्धः सिध्यतीति शङ्कते—**अथेति।** तर्हि खादिरो यूपो भवतीति वाक्यस्य गुणफलविध्यपेक्षितगुणाश्रयसंबन्धबोधकत्वेन क्रत्वर्थताबोधकाभावान्न क्रत्वर्थं खादिरत्वं स्यात्, किंतु केवलफलार्थमेव स्यादित्याह—**तथासतीति। उक्थ्यवदिति।** यथा पशुकाम उक्थ्यं गृह्णीयादिति ज्योतिष्टोममाश्रित्य पशुफलाय उक्थ्यसं[3]स्थाविधौ उक्थ्यसंस्थाया लोकतोऽनवगतत्वेन यदुक्थ्यो गृह्यते इति प्रकरणाम्नातवाक्यस्य उक्थ्यस्वरूपज्ञापनेन गुणफलविधिशेषत्वेन क्रत्वर्थत्वबोधकत्वाभावादुक्थ्यसंस्थायाः केवलफलार्थत्वं, यथावा द्वादशाहमाश्रित्य 'यत्कामो व्यूढच्छन्दसा द्वादशाहेन यजते सोऽस्मै कामः समृध्यते यं यं कामयते तंतमाप्नुया'दिति फलाय विधीयमानं यद्ग्रहाग्रताभेदभिन्नं द्वादशाहस्य व्यूढात्मकं स्वरूपं तस्य लोकतोऽनवगतत्वादैन्द्रवायवाग्रौ प्रायणीयोदयनीयावितरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथ द्वे आग्रयणाग्रे' इत्यादिव्यूढोत्पत्तिवचनस्य तत्स्वरूपज्ञापनोपक्षीणत्वेन क्रत्वर्थताबोधकत्वाभावाद्व्यूढस्य केवलफलार्थत्वं तद्वदित्यर्थः। इष्टापत्तिमाशङ्क्याह—**उभयेति।** यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयादिति, दधिग्रहं गृह्णीयात्पशुकामस्येति च विहितदधिग्रहस्य क्रतुपुरुषोभयार्थत्वं वदता निबन्धकारेण खादिरस्य दृष्टान्तीकरणात्खादिरस्याप्युभयार्थत्वं तस्य संमतं न केवलपुरुषार्थत्वमित्यर्थः। यदिच खादिरो यूपो भवतीत्यत्राक्षेपाद्विध्यन्तरकल्पनाद्वोभयसंबन्धलाभं मन्यसे तदात्रापि तथा संभवान्निरर्थकप्रायस्तुत्यर्थत्ववर्णनमयुक्तमित्याशयेनाह—**आस्तांतावदिति।** अधिकरणार्थमुपसंहरति—**तस्मादिति। विधीयत इति।** अर्थवादकल्पितविधिना अर्थवादकल्पितपञ्चमलकारत्वेन भवतीत्यनेन वेति शेषः। प्रयोजनं पूर्वपक्षे औदुंबरतायाः फलार्थेनानुष्ठानं सिद्धान्ते तु क्रत्वर्थेनेति। सूत्रार्थस्तु ऊर्गवरोधफलस्य मानान्तराप्राप्तत्वात्तत्प्रापकमेवेदं वाक्यं नत्वर्थवादो यस्मादर्थवादमात्रमनर्थकमिति॥

---

१ उक्थ्यादिवत्. २ ततः स्तुति. ३ समाप्तिविधौ.

हेतुवन्निगदाधिकरणम् ॥ ३ ॥

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥२६॥ [स्तुतिस्तु शब्दपूर्वत्वात्, अचोदना तस्य ॥२७॥ अर्थे स्तुतिरन्याय्येति चेत् ॥२८॥ अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २९ ॥ यदि च हेतुरवतिष्ठेत निर्देशात्, सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥३०॥]**

तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः ॥ हिना श्रुता हेतुतातः शूर्पमन्यच्च साधनम् ॥ ९ ॥
शूर्पसाधनता श्रौती नाश्रौतैः सा विकल्प्यते ॥ अतो निरर्थको हेतुः स्तुतिस्तस्मात्प्रवर्तिका ॥ १० ॥

एवमानर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्चार्थवादा विचारिताः । इदानीं हेतुप्रतियोगिनो विचार्यन्ते । एवं श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियत'इति । तत्र संशयः किं शूर्पेण होमे कर्तव्येऽन्नकरणताहेतुः, उतार्थवाद इति । तत्रहि शब्दश्रुत्या हेतुत्वं गम्यते । लक्षणया प्राशस्त्यम् । अनर्थकप्रायश्चार्थवादः । हेतुस्त्वर्थवान् । कः पुनरर्थो हेतोः येन येनान्नं क्रियते शूर्पादन्येनापि दर्वीपिठरादिना तेनतेनापि होमसिद्धिः हेतोः प्रयोजनं।कथमप्रसिद्धायां व्याप्तौ हेतुत्वव्यपदेशः । अतएव हेतुव्यपदेशाद्व्याप्तिमन्तरेणानुपपद्यमानात् व्याप्तिवचनं कल्प्यते, येनयेनान्नं क्रियते तेन तेन होतव्यमिति । तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः शूर्पेण जुहोतीत्यवयुत्यानुवादः । तेनेदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वमन्नकरणत्वाद्धेतोः अतः शूर्पमन्यद्वा यदन्नकरणं तेन होतव्यमिति पूर्वःपक्षः । सिद्धान्तस्तु शूर्पस्य तृतीयाश्रुत्या करणत्वं

---

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्** ॥ २६ ॥ ननु प्रथमाधिकरणे सर्वेषामर्थवादानामानर्थक्यं निराकृतम् । तन्मध्ये विधिवन्निगदानां सर्वेषां विधित्वं पूर्वाधिकरणे निरस्तम् । ततश्च नात्र किंचिद्विचार्यम् । नच पूर्वाधिकरणे फलविधिसरूपाणामेव विधित्वं निराकृतं नतु विधिवन्निगदमात्रस्येति वाच्यम् । पूर्वाधिकरणगुणसूत्रे '[३]यो विदग्धः स नैर्ऋतः' इत्यादीनां गुणविधिसरूपाणामप्यर्थवादत्वस्य व्यवस्थापितत्वादतएव निवीताधिकरणादीनां कृत्वाचिन्तया प्रवृत्तिर्वक्ष्यते । तस्मात्किमर्थमिदमधिकरणमित्याशङ्कयाह—**एवमिति** । आनर्थक्यं प्रतियोगिसिद्धान्तन्यायनिवर्त्यं येषां ते तथोक्ताः । एवमग्रेऽपि प्रथमाधिकरणे सर्वेऽर्थवादा आनर्थक्यप्रतियोगित्वेन विचारिताः । द्वितीये तेषां मध्ये केचिद्विधिप्रतियोगित्वेन विचारिताः । इदानीं तेषामपि मध्ये केचन हेतुप्रतियोगित्वेन विचार्यन्त इत्यर्थः । एवंच यदुक्तं सर्वेषां विधिवन्निगदानां स्तुत्यर्थत्वमिति तदयुक्तम् । केषुचिद्धेतुविधिसंभवादिति पूर्वाधिकरणोक्ताक्षेपेण प्रवृत्तेः संगतिरिति भावः । **श्रूयत इति** । चातुर्मास्येषु यवमयैकरंभपात्रहोम इति शेषः—**अनर्थकेति** । 'विधेरेव द्वे शक्ती कल्पयिष्याम' इति वार्तिकोक्तेः विधिबलादेव स्तुतेरपि लाभादिति भावः । **ननु** वैदिकार्थस्य हेतुनैरपेक्ष्येण हेतोरानर्थक्यादगत्यार्थवादत्वमेव स्वीकर्तव्यमित्यत आह—**हेतुस्त्विति** । सत्यं वैदिकार्थो न हेतुसापेक्षस्तथापि हेतोरधिकार्थलाभार्थत्वान्नानर्थक्यमित्याशयः । **ननु** शूर्पगतान्नकरणत्वेन हेतुना दर्वीपिठरादीनां होमसाधनत्वासिद्ध्या नाधिकार्थलाभ इत्याशयेन पृच्छति—**कःपुनरिति** । न शूर्पगतान्नकरणत्वं हेतुः किंत्वन्नकरणत्वमात्रम् । ततश्चाधिकार्थलाभार्थत्वं नानुपपन्नमित्याशयेनोत्तरमाह—**येनेति** । **ननु** हेतुत्वं व्याप्तिसापेक्षं व्याप्तिश्चात्र न लोकसिद्धा होमसाधनत्वस्य शास्त्रावगम्यतया तद्व्याप्तेर्लोकतोऽवगन्तुमशक्यत्वादिति शङ्कते—**कथमिति** । लोकतोऽनवगमेऽपि कल्पितवचनेन तदवगमसंभवान्नानुपपत्तिरिति परिहरति—**अतएवेति** । ननु तर्हि व्याप्त्यर्थं कल्पितसामान्यवचनेनैव शूर्पस्यापि होमसाधनत्वप्राप्तेः शूर्पवाक्येनापि तद्विधानमनर्थकमित्यत आह—**तेनेति** । **अवयुत्येति** । दर्व्यादिषु बहुषु प्राप्तेषु शूर्पमात्रस्य पृथक्कृत्यानुवाद इत्यर्थः । एवंचैकेनैव वाक्येन शूर्पस्य दर्व्यादीनां च विधानान्न विषमशिष्टविकल्पापत्तिरिति भावः । **ननु** कल्पितवचनस्यैव सर्वविधायकत्वे श्रुतवाक्यस्य कथमुपयोग इत्यत आह—**तेनेति** । ईदृशं वक्ष्यमाणमित्यर्थः । तदेवाह—**शूर्पस्येति** । हेतोरित्यन्तः श्रुतैकदेशः, अवशिष्टोऽनुमितैकदेश इति विवेकः । **ननु** शूर्पेण होतव्यमिति प्रतिज्ञामवलम्ब्य तेनहीति तत्र हेतुरुपन्यसनीयः । ततश्च प्रथमप्रवृत्तस्य शूर्पवाक्यस्यानुवादकत्वानुपपत्तेरयं प्रकारोऽनुपपन्न इत्यत आह—**इतिपूर्वःपक्ष इति** । अनया दिशा पूर्वपक्षो वर्णनीय इत्यर्थः । दिङ्मात्रमुक्तम् । यथा पूर्वःपक्ष उपपन्नो भवति तथा वर्णनीय इति यावत् । ततश्च प्रत्यक्षवचनस्योक्तरीत्या शूर्पविधायकत्वाव्यर्थभावात्सामान्यवचनमेव शूर्पांशेऽनुवादकमिति पूर्वःपक्ष उपपादनीय इति भावः । यदि प्रत्यक्षवचनेन शूर्पस्यानुमानिकेन च तदितरेषां विधिस्तर्हि प्रत्यक्षानुमानयोरतुल्यबलत्वेन विषमशिष्टविकल्पापत्तेर्नायमपि पक्षः समीचीन इति दूषयति—**शूर्पस्येति** । तस्माद्विषमशिष्टविकल्पापत्त्या अधिकार्थलाभासंभवाद्धेतुत्वान्वयमिच्छता शूर्पस्य यद्धोमसाधनत्वं विधीयते

---

१ प्रतिहेतुप्रतियोगिनः. २ निर्देशात्. ३ पुरोडाशः. ४ यवसक्तुपात्रं.

गम्यते न तदानुमानिकैर्दर्वीपिठरादिभिर्विकल्पितुमर्हति। **नच** वेदेनोच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते वेदस्यैव तत्र प्रमाणत्वादर्थवादस्त्वपेक्षितः प्ररोचनार्थत्वेन, तस्मादर्थवादत्वम्। एवंचाप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति। क्रियत इति चावर्तमाने वर्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति। **नहि** भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने। तेन रुच्यर्थत्वेन लक्षणया वर्तमाननिर्देशो युक्तः। विध्यर्थत्वेतु निष्प्रमाणकं लक्षणाश्रयणम्। **नच** श्रौतेन वर्तमानान्नक्रियेण मुख्यान्नकरणेन च शक्यते होमः कर्तुम्। तस्मादर्थवादत्वम्।

मन्त्रलिङ्गाधिकरणम् ॥ ४ ॥

**तदर्थशास्त्रात् ॥ ३१ ॥ [वाक्यनियमात् ॥ ३२ ॥ बुद्धशास्त्रात् ॥ ३३ ॥ अविद्यमानवचनात् ॥ ३४ ॥ अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ अर्थविप्रतिषेधात् ॥ ३६ ॥ स्वाध्यायवद्वचनात् ॥ ३७ ॥ अविज्ञेयात् ॥ ३८ ॥ अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥ गुणार्थेन पुनःश्रुतिः ॥ ४१ ॥ परिसंख्या ॥ ४२ ॥ अर्थवादो वा ॥ ४३ ॥ अविरुद्धं परम् ॥ ४४ ॥ संप्रैषे कर्मगर्हानुपलम्भः संस्कारत्वात् ॥ ४५ ॥ अभिधानेऽर्थवादः ॥ ४६ ॥ गुणादप्रतिषेधः स्यात् ॥ ४७ ॥**

---

तत्रैव हेतुसमर्पकत्वमात्रेण पर्यवसानं वाच्यम्। नच तत्संभवति। वैदिकार्थस्य हेत्वनपेक्षत्वादित्याह—**नचेति। अर्थवादस्त्विति।** अनेन पूर्वपक्ष्युक्तमानर्थक्यं परिहृतम्। अध्ययनविधिबलेन सार्थवादस्थलेऽर्थवादेनैव प्ररोचनायाः संपाद्यतया विधेरेव प्ररोचनाशक्तिमाश्रित्यार्थवादवैयर्थ्यकथनस्यायुक्तत्वादिति भावः। विकल्पाभावे आनुमानिकवचनमनर्थकं स्यादिति तत्सार्थकत्वाय विषमशिष्टविकल्पोऽप्यङ्गीकार्य इत्याशङ्कायां यद्यानुमानिकवचनमवश्यं कल्पनीयं स्यात्तदानर्थक्यपरिहारार्थं षमशिष्टविकल्पोऽप्यङ्गीकार्यः स्यादिह तु अपेक्षितस्तुतिसमर्पकत्वेन। तेन ह्यन्नं क्रियते इत्यस्य चरितार्थतया हेतुपरत्वस्यावश्यवक्तव्यत्वाभावात्तन्निर्वाहकव्याप्तिप्रतिपादकसामान्यवचनस्य नावश्यकल्पनीयत्वमिति परिहारं सूचयन्दूषणान्तरमाह—**एवंचेति।** स्तुत्यर्थत्वे एव वाक्यस्य प्रवणतापीत्याह—**क्रियते इति।** यदा शूर्पस्य होमसाधनत्वं तदाऽन्नक्रियायाः वर्तमानत्वाभावेनावर्तमान एवायं वर्तमानतानिर्देशः सच प्ररोचनार्थत्वे युज्यत इत्यर्थः। तदेवोपपादयति—**नहीति।** इयं गौः पूर्वस्मिन्प्रसवे बहुक्षीरा आसीदिति वा आगामिनिप्रसवे बहुक्षीरा भविष्यतीतिवोक्तेऽपीदानीं बहुक्षीरेत्यत्र यादृशी प्रीतिस्तादृशप्रीतेरदर्शनादित्यर्थः। **नन्व**वर्तमाने वर्तमनत्वाभावात्कथं स्तुत्यर्थतयापि तन्निर्देश इत्यत आह—**तेनेति।** अत्र यद्यप्यवर्तमाने वर्तमानत्वारोपमात्रं नतु वर्तमानार्थकलट्प्रत्ययस्य लक्षणाप्रसक्तिः, तथासति वर्तमानत्वप्रतीत्यभावेन प्रीत्यतिशयानुपपत्तेर्नहि भूते भाविनीति पूर्वग्रन्थपर्यालोचनया वर्तमानत्वेनैव रूपेण प्रतीतेर्ग्रन्थकृदभिमतत्वावगमाच्च। तथापि अवर्तमाने वर्तमाननिर्देशः स्तुतिलक्षणया रुच्यर्थत्वेन युज्यत इत्येवं स्तुतिलक्षणापरत्वेनग्रन्थो योज्यः। यद्वा परत्र परशब्दप्रयोगमात्रेण लक्षणावाचोयुक्तिर्द्रष्टव्या। **नन्वे**वमपि स्तुतेर्लक्षणीयत्वाल्लक्षणैव दोष इत्यत आह—**विधीति।** हेतुविध्यर्थत्वे वक्ष्यमाणरीत्या श्रौतार्थस्य हेतुत्वानुपपत्तेर्वर्तमाननिर्देशेनावर्तमानमेव लक्षयित्वा तस्य हेतुत्वविधिः स्वीकर्तव्यस्तथाच तव विधौ लक्षणाश्रयणं स्यात्तच्चात्यन्तायुक्तं। न विधौ परः शब्दार्थ इति न्यायादिति भावः। मुख्यार्थस्य हेतुत्वानुपपत्तिमेवोपपादयति—**नचेति।** क्रियाद्वयस्य यौगपद्याभावाद्वर्तमानान्नक्रियेण होमः कर्तुं न शक्यत इति वर्तमाननिर्देशो लाक्षणिकस्त्वयावश्यं स्वीकार्य इत्यर्थः। अन्नक्रियायां पाकस्यैवाव्यवहितत्वात्करणत्वं नत्वत्यन्तव्यवहितस्य शूर्पस्य। ततश्च मुख्यान्नकरणेन पाकेन होमस्य कर्तुमशक्यत्वाद्गौणान्नकरणं शूर्पं तेनेत्यत्र लक्षणया प्रतिपाद्यमिति तस्यापि लक्षणा स्यादित्याशयेनाह—**मुख्येति।** स्वमते तु गौणान्नकरणस्यापि स्तुत्यर्थं मुख्यनिर्देश उपपद्यत इति भावः। एतेन काकेभ्यो दधि रक्ष्यतां तेहि दध्युपघातकाः इत्यत्र तेहि दध्युपघातका इति हेतुवचनात्काकशब्दस्य दध्युपघातकगृध्रमृगादिसाधारणाजहल्लक्षणादर्शनादिहापि शूर्पस्य होमसाधनत्वे शूर्पत्वं न प्रयोजकं, किंतु दर्व्यादिसाधारणमन्नकरणत्वमात्रमित्येवंपरं सत् शूर्पशब्दस्य दर्व्यादिसाधारणाजहल्लक्षणासंपादकत्वेन हेतुवचनमर्थवदिति निरस्तम्। मुख्यस्य शूर्पशब्दस्य जघन्यहेत्वनुसारेण लक्षणाया एवायुक्तत्वादिति भावः। तस्मादनेन प्राशस्त्यएव हेतुः समर्प्यते नतु होमसाधनत्वे इत्याशयेनोपसंहरति—**तस्मादिति।** सूत्रार्थस्तु तेन ह्यन्नं क्रियते इति हेतुविधिः स्यात्तथासति दर्व्यादीनामपि होमसाधनत्वलाभेनार्थवत्त्वादिशब्दश्रुत्युपपत्तेश्चेति॥

---

१ अवर्तमाने वर्तमान. २ श्रवणं न परिकल्पते।

**विद्यावचनमसंयोगात् ॥ ४८ ॥ सतः परमविज्ञानम् ॥ ४९ ॥ उक्तश्चानित्यसंयोगः ॥ ५० ॥ लिङ्गोपदेशश्च तदर्थत्वात् ॥ ५१ ॥ ऊहः ॥५२॥ विधिशब्दाश्च ॥ ५३ ॥]**

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ॥ यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥ ११ ॥
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः ॥ न तद्भानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ॥ १२ ॥
मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने ॥ न मन्त्रलिङ्गसिद्धार्थमनुवर्तीतरद्यतः ॥ १३ ॥

गतोऽर्थवादप्रसङ्गः, मन्त्रेष्विदानीं चिन्ता, तेषामपि त्वाद्येऽधिकरणे आनर्थक्यमाशङ्क्य स्वाध्यायविधिबलेनार्थवत्तया भवितव्यमित्येतावदपर्यवसितं कथितं, तत्पर्यवसानायेदानीमर्थविशेषश्चिन्त्यते, तेषां च क्रमप्रकरणाभ्यां क्रत्वङ्गत्वं भवतु किं दृष्टेनैवार्थप्रकाशनेनोपकारेण भवति किंवोच्चारणमात्रेणादृष्टं कुर्वतामिति । तत्र—'यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम् ॥ प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरम् ॥' शक्यते ह्युपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनम् । तद्यदि तावन्मात्रमेव कार्यं मन्त्राणां स्यात् नित्यवदाम्नानमनर्थकं स्यात् । अथतु मन्त्रप्रत्यायनाददृष्टं कल्प्येत ततो यद्दूरमपि गत्वा कल्प्यमदृष्टं तदुच्चारणादेव कल्पयितुं युक्तं, तद्धि पुरुषव्यापारगोचरः । प्रत्यायनं तु तस्मिन्ननुष्ठिते स्वयमेव भवति, स्वव्यापारे च पुरुषो नियुज्यते यत्रच नियुज्यते तत्र फलापेक्षा । तेन यावश्यंभाविन्यदृष्टकल्पना सा तत्रैव युक्ता नतु तस्य प्रत्यायनार्थत्वं, प्रत्यायनं त्वदृष्टार्थमिति युक्तम् । तस्माददृष्टार्थो मन्त्राः । तथाच शाखाद्युपपत्तिः । इतरथा परिसंख्याद्याश्रयणे क्लेशः स्यादिति । अत्रा-

---

**तदर्थशास्त्रात् ॥ ३१ ॥** विधिसमभिव्याहृतार्थवादविचारानन्तरमवसरसंगत्या तदसमभिव्याहृतमन्त्रविचारः प्रस्तूयत इत्याह—**गत इति । ननु** मन्त्राणामप्यर्थवादाधिकरण एव विचारितत्वात्पुनस्तद्विचारोऽसंगत इत्याशङ्क्य तत्र सामान्यतोऽर्थवत्त्वमात्रसाधनेन पदार्थविधया प्रामाण्यमात्रं साधितमिदानीमर्थप्रकाशनरूपप्रयोजनविशेषनिरूपणेन मन्त्राणां शब्दविधयाप्युपयोगलक्षणं यत्प्रामाण्यं विधिस्तुतिस्मृतिभिरित्युपक्षिप्तं तत्प्रसाध्यत इति न वैयर्थ्यमित्याशयेन यदुक्तमर्थवादाधिकरणे तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धम् । प्रयोजनविशेषस्तु प्रस्तुतमर्थवादाधिकरणं परिसमाप्य पश्चाद्वक्ष्यत इति तदेव शिष्यहितार्थं पुनः स्मारयति—**तेषामिति ।** यथाचार्थप्रकाशने सति शब्दविधया प्रामाण्यं भवति । तथार्थवादाधिकरण एव उपपादितम् । **ननु** मन्त्राणामङ्गत्वे सत्ययं विचारः संगच्छते अङ्गत्वं च न तावत् 'उरु प्रथस्वेति पुरोडाशं प्रथयती'त्येवं तदर्थशास्त्रेण संभवति सिद्धान्ते तस्यार्थवादार्थत्वात्सर्वत्र तदर्थशास्त्राभावाच्च । नापि लिङ्गेनार्थप्रकाशनार्थत्वं नास्तीतिवदतः पूर्वपक्षिणो लैङ्गिकविनियोगासंप्रतिपत्तेरित्याशङ्क्य उभयसंप्रतिपन्नं प्रमाणमाह—**क्रमेति ।** प्राकृतानां प्रकरणेन वैकृतानां क्रमेणेति विवेकः । विकृतेश्चोदकेन निराकाङ्क्षतया विकृत्याम्नातमन्त्राणामितिकर्तव्यताकाङ्क्षालक्षणप्रकरणविनियोज्यत्वासंभवात् । यद्वा प्रकरणेन क्रत्वङ्गत्वं क्रमेण तत्तत्पदार्थाङ्गत्वमिति बोध्यम् । क्रमप्रकरणाभ्यामित्युपलक्षणम् । यथासंभवं लिङ्गव्यतिरिक्तैः पञ्चभिरप्यङ्गत्वबोधस्य पूर्वपक्षेऽपि वक्तुं शक्यत्वादिति ध्येयम् । **नन्वर्थ**प्रत्यायनार्थत्वेनैवार्थवत्त्वात्कथं दृष्टार्थत्वे मन्त्राम्नानानर्थक्यमित्याशङ्क्याम्नानशब्दस्य नित्यवदाम्नानमर्थो नाम्नानमात्रमिति दर्शयन् तद्वैयर्थ्यमुपपादयति—**शक्यत इति ।** उपायान्तरेण कल्पसूत्रोपद्रष्टृवचनात्मीयग्रहणकवाक्यादिरूपेणेत्यर्थः । **नित्यवदिति ।** स्वार्थे वतिः । नित्यानां प्रयाजानामिवेत्यर्थे वा वतिः । यद्वा तदर्हमित्यर्थे वतिः । तथाच नित्यार्हमाम्नानमनर्थकं स्यादित्यर्थः । प्रत्यायनाददृष्टं चेदित्यत्र मन्त्रोच्चारणादर्थप्रत्यायनं अर्थप्रत्यायनाददृष्टमिति प्रतीयते तच्चायुक्तम् । सिद्धान्तिना मन्त्रनियमस्यैवादृष्टार्थत्वाङ्गीकारेणार्थप्रत्यायनस्यादृष्टार्थत्वानङ्गीकारात्तन्निराकरणानुपपत्तेरित्याशङ्क्य प्रत्यायनशब्देन विवक्षितमर्थमाह—**मन्त्रप्रत्यायनादिति ।** मन्त्रेणैव प्रत्यायनादित्यर्थः । मन्त्रेणैवेत्युपायनियमादिति यावत् । श्लोके वरशब्देन सूचितं विशेषं दर्शयति—**तत इति ।** नियमस्तु व्यावृत्तिरूपो न साक्षादुच्चारणवत्पुरुषव्यापारगोचर इत्याशयेनाह—**प्रत्यायनं त्विति ।** ततः किमित्यतआह—**स्वव्यापार इति ।** ततोऽपि किमित्यत आह—**यत्रेति । नत्विति ।** उच्चारणस्यार्थप्रत्यायनार्थत्वं प्रत्यायनाश्रितमन्त्रनियमस्यादृष्टार्थत्वमित्येतदयुक्तमित्यर्थः । यद्वा श्लोके प्रत्यायनाददृष्टमित्यनेन मन्त्रोच्चारणं प्रत्यायनार्थं प्रत्यायनाददृष्टमिति प्रकारः सिद्धान्त्यनभिमतोऽपि संभवमात्राभिप्रायेण पूर्वपक्षे निरस्त इति यथाश्रुत एव ग्रन्थो योज्यः । अस्मिन्व्याख्याने मन्त्रप्रत्यायनादित्यस्य मन्त्रोच्चारणजन्यप्रत्यायनादित्यर्थो बोध्यः । एवं नित्यवदाम्नानानर्थक्यादिनोपपादितं पूर्वपक्षमुपसंहरति—**तस्मादिति ।** अत्र लिङ्गदर्शनमाह—**तथाचेति ।** इमामगृभ्णन्रशनामृत-

---

१ विधिवशेन. २ प्रकाशनेन भवति. ३ फलाकाङ्क्षा. ४ त्वदृष्टार्थं. ५ तथाच तदर्थशास्त्रा.

**भिधीयते—'यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना ॥ अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत् ॥ स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः ॥ एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना ॥' यस्तु मन्त्रेणैव स्मर्तव्यमिति नियमः तस्य न किंचिदृष्टमस्तीत्यदृष्टं कल्प्यते । मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशम् । तदर्थशास्त्रादयोपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृताः । 'तस्मात्प्रकाशनेनैवं मन्त्राणामुपकारिता । उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥' इति शास्त्रदीपिकायां प्रथमाध्यायस्य द्वितीयपादः ॥ २ ॥**

---

स्येत्यश्वाभिधानीमादत्ते । तां चतुर्भिरभ्रिमादत्ते उरुप्रथस्वेति पुरोडाशं प्रथयतीत्येवमादिकं यत्प्रकाशनसमर्थो मन्त्रस्तदर्थे मन्त्रविनियोजकं शास्त्रं तदर्थशास्त्रं तदिदं तदर्थशास्त्रं मन्त्राणामदृष्टार्थत्व एवोपपद्यते । अर्थप्रकाशनार्थत्वे तु अर्थप्रकाशनसामर्थ्यरूपलिङ्गादेव मन्त्रस्य तत्प्रकाश्यार्थे विनियोगस्य सिद्धत्वात्तदर्थशास्त्रमनर्थकं स्यादित्यर्थः । आदिशब्देन वाक्यनियमाविद्यमानवचनादीनां ग्रहणम् । **ननु** 'इमामगृभ्ण'न्निति मन्त्रस्य लिङ्गादेवाश्वरशनादाने विनियोगसिद्धावपि इत्यश्वाभिधानीमादत्ते इति शास्त्रं मन्त्रलिङ्गाविशेषादग्निचयने कर्तव्यगर्दभरशनायामपि मन्त्रस्य विनियोगप्राप्तौ अश्वरशनामेवादत्ते नतु गर्दभरशनामित्येवं तन्निवृत्त्यर्थं, तथा 'देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाददेऽङ्गिरस्व'दित्यादीनां मन्त्राणां लिङ्गादभ्यादाने विनियोगसिद्धावपि तां चतुर्भिरभ्रिमादत्ते इति वचनं चतुःसंख्यारूपगुणविधानार्थं उरुप्रथस्वेति पुरोडाशं प्रथयतीति वचनमर्थवादरूपमित्येवं तदर्थशास्त्रादिकमर्थप्रकाशनार्थत्वपक्षेऽप्युपपद्यत इत्याशङ्क्याह—**इतरथेति** । इत्यश्वाभिधानीमादत्ते इतिशास्त्रस्य गर्दभरशनातो व्यावृत्त्यर्थत्वेऽश्वरशनाग्रहणरूपस्वार्थत्यागो गर्दभरशनावर्जनरूपपरार्थस्वीकारः गर्दभरशनाग्रहणे लिङ्गात्प्राप्तस्य मन्त्रस्य बाधश्चेति त्रयो दोषाः स्युः । तथा देवस्यत्वेत्यादिमन्त्राणां चतुर्णामाम्नानात्प्रचयशिष्टा चतुःसंख्या सिद्धेति गुणविध्यर्थं चतुर्भिरिति वाक्यमनर्थकं स्यात् । प्रथस्वेति पुरोडाशं प्रथयतीत्यस्यार्थवादत्वाङ्गीकारे मन्त्रलिङ्गकल्पितो यो मन्त्रविधिस्तस्यायमर्थवाद इति वक्तव्यम् । नच तत्संभवति ब्राह्मणे पठितस्यास्य मन्त्रसमानदेशमन्त्रलिङ्गकल्पितविध्यपेक्षया भिन्नदेशत्वेन तदर्थवादत्वानुपपत्तेरतः परिसंख्याद्यर्थत्वं क्लेशेनोपपाद्यमिति परिसंख्याद्यर्थत्वस्वीकारे तावत्क्लेश एव दोष इत्यर्थः । अदृष्टार्थत्वे हि अदृष्टस्वरूपं तस्य फलत्वमुच्चारणे जननसामर्थ्यं च कल्पनीयम् । प्रत्यायनार्थत्वे तु तत्स्वरूपस्योच्चारणे तज्जनकत्वस्य च सिद्धत्वात्तस्य फलत्वमात्रं कल्पनीयमिति कल्पनालाघवात्प्रत्यायनार्थत्वमेवेत्याशयेनाह—**यस्येति** । अनेनैव जपमन्त्रादिषु दृष्टार्थत्वालाभाददृष्टकल्पनं न दोष इति सूचयति । **नन्वेवं** स्मरणस्योपायान्तरेणापि संभवान्नित्यवदाम्नानमनर्थकं स्यादित्युक्तमित्याशङ्क्य मन्त्रेणैव स्मर्तव्यमिति नियमार्थतया नित्यवदाम्नानं नानर्थकमित्याशयेनाह—**यस्त्विति** । **नन्वेवमदृष्टकल्पनं** तवापि तुल्यं अर्थप्रत्यायनस्य फलत्वकल्पनं त्वधिकमिति विपरीतगौरवमित्यत आह—**मन्त्रोच्चारणस्य त्विति** । ततश्च प्रथममुच्चारणस्य दृष्टफलत्वे कल्पिते पश्चात्तावन्नियमादृष्टकल्पनागौरवं फलमुखत्वान्न दोष इति भावः । लिङ्गदर्शनं विघटयति—**तदर्थेति** । यद्यपि प्रचयशिष्टा चतुःसंख्या तथापि चतुर्भिरभ्रिमादत्ते इति वचनं संख्यायाः आदानाङ्गत्वविधानार्थं, चतुःसंख्याया अङ्गत्वे च द्वादशे वक्ष्यमाणरीत्या समुच्चयः सिध्यतीति नानर्थक्यम् । उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यस्य भिन्नदेशतया मन्त्रलिङ्गकल्प्यविधिशेषत्वासंभवेऽपि अत्रैव वाक्ये पुरोडाशं प्रथयतीत्यंशेन पुरोडाशप्रथनं विधीयते । उरु प्रथस्वेति मन्त्रकरणांशेन तदेव प्रथनं यज्ञपतिप्रथनप्रकाशकमन्त्रकरणकत्वात्प्रशस्तमिति स्तूयते । ततश्चोरुप्रथस्वेति मन्त्रकरणांशोऽर्थवाद इत्यश्वाभिधानीमादत्त इति वचने च मन्त्रलिङ्गाद्गर्दभरशनायामश्वरशनायां च प्रथमं मन्त्रस्य प्राप्तौ पश्चाद्गर्दभरशनाव्यावृत्तिरनेन क्रियत इत्येवं न प्राप्तपरिसंख्या स्वीक्रियते । येन त्रैदोष्यं स्यात् । किंतु लैङ्गिकविनियोगात्प्रागेव प्रत्यक्षवचनेनाश्वरशनायां विनियोगे सति मन्त्राकाङ्क्षाविरहान्न गर्दभरशनायां विनियोग इत्येवमप्राप्तपरिसंख्या स्वीक्रियत इत्येवं गुणार्थेन पुनःश्रुतिरर्थवादो वा परिसंख्या वा अविरुद्धं परमित्यादिभिः सूत्रैस्तदर्थशास्त्रवाक्यनियमादयः परिहृता इत्यर्थः । यथाच प्राप्तपरिसंख्यायां त्रैदोष्यं न त्वप्राप्तपरिसंख्यायां तथा दशमे षोडशग्रहपेटिकायां वक्ष्यामः । **ननु** जिज्ञासासूत्र एवाध्ययनस्यार्थज्ञानफलकत्वसाधनाय दृष्टे संभवत्यदृष्टकल्पना न न्याय्येति न्यायस्य व्युत्पादनादिह पुनस्तद्व्युत्पादनमनर्थकमितिचेन्न । इहैवायं न्यायो व्युत्पाद्यते । अनेन तु न्यायेनाध्ययनस्यार्थज्ञानार्थत्वं न संभवति । तथासति विधिवैयर्थ्यात् विध्यभावेऽपि प्रमाणान्तरेणैव तदर्थसिद्धेः । **नचावघातादिवन्नियमविधिः** संभवति अध्ययनस्य क्रत्वर्थत्वाभावेन तन्नियमस्य क्रतावनुपयोगात् स्वरूपे च नियमानर्थक्यादित्येवंरूपविशेषाशङ्कानिराकरणार्थत्वेन जिज्ञासासूत्रे पुनस्तद्व्युत्पादनोपपत्तेस्तस्मादिहैव तद्व्युत्पादनमिति । तदेतदभिसंधायोपसंहरति—**तस्मादिति** । कर्म वा विधिलक्षणमित्यधिकरणापौनरुक्त्यं तु नवम एव वक्ष्यामः ॥ **इति श्रीनिट्टलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥**

## प्रथमाध्याये तृतीयः पादः ।

स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥**
**[ अपिवा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥ ]**

**अष्टकादिस्मृतेर्धर्मे न मात्वं मानताथवा ॥ निर्मूलत्वान्न मानं सा वेदार्थोक्तौ निरर्थता ॥ १ ॥**
**वैदिकैः स्मर्यमाणत्वात्संभाव्या वेदमूलता ॥ विप्रकीर्णार्थसंक्षेपात्सार्थत्वादस्ति मानता ॥ २ ॥**
**न मा स्मार्ताष्टकाङ्गत्वाद्यां जना इति मन्त्रगीः ॥ तन्न स्मृतेर्मूलवेदेऽनुमिते मात्वसंभवात् ॥ ३ ॥**

कथंलक्षणो धर्म इत्येतदिह लक्षणार्थ इत्युक्तम् । तत्र प्रथमे पादे चोदनाप्रामाण्यं सिद्धम् । द्वितीये त्वर्थवादादेः । एवं कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । इदानीं पौरुषेयीषु स्मृतिष्वाचारेषु च वैदिकपरिगृहीतेषु चिन्ता । यद्यपि चोदनाप्रामाण्यमप्रामाण्येऽपि स्मृतीनां न विहन्यते तथापि किंलक्षणो धर्म इति जिज्ञासाधिकारात्स्मृतिप्रामाण्यं लक्षणे संगतम् । नन्वप्रामाण्ये स्मृतीनां वेदस्यापि तत्सापेक्षत्वादप्रामाण्यं स्यात् । 'यां जनाः प्रतिनन्दन्ती'त्ययं मन्त्रो रात्रिदेवताककर्माङ्गत्वेन प्रतीयते । स्मार्ते च कर्मणि रात्रिर्देवतेति तदपेक्षस्य मन्त्रस्य तदप्रामाण्यादप्रामाण्यं स्यात्तत्सामान्यादितरेषु

---

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥१॥** अस्मिन्पादे करिष्यमाणस्य स्मृतिपुराणेतिहासकल्पसूत्राचारादिप्रामाण्यविचारस्याध्यायसंगतिमाह—**कथमिति** । किं धर्मे प्रमाणं कथं च तस्य प्रामाण्यमित्यर्थः । ततश्च किंप्रमाणक इति प्रश्नानुसारेण धर्मप्रमाणमात्रस्यैवाध्यायार्थत्वात्स्मृत्यादिप्रामाण्यविचारोऽध्याये संगत इति भावः । एवमपि कथमानन्तर्यमित्यत आह—**तत्रेति** । साक्षान्निरपेक्षतया धर्मप्रमितिजनकत्वाच्चोदनायाः प्रथमं प्रामाण्यं विचारितम्, तदनन्तरं तदेकवाक्यतापन्नानामर्थवादादीनामित्येवं कृत्स्नस्य वेदस्य प्रामाण्यविचारानन्तरं तन्मूलतया प्रमाणत्वात्स्मृत्यादीनां प्रामाण्यं विचार्यत इत्यानन्तर्यमित्यर्थः । उद्भिदादिनामधेयानामपि अर्थवादाधिकरणे सामान्यतः प्रामाण्यस्य साधितत्वाद्गुणविधित्वेऽपि प्रामाण्याक्षतेश्च कृत्स्नस्येत्युक्तेर्नानुपपत्तिः । **नन्वे**वमपि वेदैकदेशत्वान्नामधेयस्य तद्विचारानन्तर्यमेवास्य युक्तम् । **नच** नामधेयविचारस्य स्मार्तनामधेयसाधारण्यात्तस्य पश्चाद्भाव इति वाच्यम् । तथासत्यर्थवादविचारस्यापि स्मृतिपुराणाद्यर्थवादसाधारण्येन तस्यापि पश्चाद्भावापत्तेरितिचेन्नैवम् । मन्त्रार्थवादमूलस्मृतीनामपि बहुशो विद्यमानत्वेनार्थवादप्रामाण्यविचारंविना स्मृतिप्रामाण्यविचारासंभवात् । नामधेयंतु नैकमपि स्मृतेर्मूलमिति वैषम्यमिति भावः । वैदिकपरिगृहीतत्वं स्मृतेरपि विशेषणम् । **ननु** चोदनासूत्रेण चोदनाप्रामाण्यस्यैव प्रतिज्ञातत्वात्स्मृतिप्रामाण्यविचारो न संगत इति शङ्कते—**यद्यपीति** । चोदनासूत्रं नाध्यायार्थप्रतिज्ञापरं किंतु प्रथमपादार्थप्रतिज्ञापरमित्याशयेनाह—**तथापीति** । कथंलक्षण इति भाष्ये किंशब्दस्य थमुप्रत्ययार्थप्रकारविशेषणत्वमात्रं नाभिमतम्, किंतु स्वातन्त्र्येण लक्षणशब्देनापि संबन्धोऽभिमत इत्याशयेन किंलक्षणो धर्म इत्युक्तम् । **ननु** नह्यत्र चोदनाप्रामाण्यप्रसाधनं लक्षणार्थः येन स्मृत्यादेरसंगतिः स्यादित्यर्थवादाधिकरण एवास्यार्थस्योक्तत्वात्पुनरुक्तिर्व्यर्थेत्याशङ्क्य प्रभाकरमतप्रसञ्जनार्थं तदुक्तिरित्याशयेन चोदनासूत्रप्रतिज्ञातं चोदनाप्रामाण्यमेवाध्यायार्थः । स्मृतिप्रामाण्यविचारस्य चोदनाप्रामाण्यसिध्यर्थत्वात्संगतिरिति प्रभाकरमतमुत्थापयति—**नन्विति** । स्मृतीनामप्रामाण्ये कृत्स्नस्य वेदस्याप्यप्रामाण्यं स्यात् तदेकदेशमन्त्रस्य तत्सापेक्षत्वादित्यर्थः । तदेवोपपादयति—**यां जना इति** । 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नोऽस्तु सुमङ्गली स्वाहे'त्ययं मन्त्रो रात्रिदेवताप्रकाशकत्वात्तद्देवताककर्माङ्गत्वेन प्रतीयते, तत्र रात्रिशब्दः रात्रिपरो वा माघकृष्णाष्टमीरूपैकाष्टकापरो वा भवतु, सर्वथापि रात्रिरूपेण प्रकाशनात्तेनैव रूपेण देवतात्वमिति रात्रिरूपेण यस्मिन्कर्मणि देवता समवैति तदङ्गत्वमेव मन्त्रस्येत्यर्थः । **ननु** तथापि रात्रिदेवताकश्रौतकर्माङ्गत्वसंभवात्कथमप्रामाण्यमित्यत आह—**स्मार्तेचेति** । 'रात्र्यै कृष्णं पिङ्गाक्ष'मित्यत्र पर्यग्निकृतोत्सर्गात्स्वाहान्तमन्त्रस्य तदङ्गत्वानुपपत्तेरन्यस्यापि श्रौतस्योत्पत्तिशिष्टेन प्रकरणाम्नातेन वा मन्त्रान्तरेणावरोधान्न तदङ्गत्वमस्य मन्त्रस्य किंत्वष्टकाश्राद्धाङ्गहोमे रात्रिदेवताके स्मार्तएव कर्मणि मन्त्रस्याङ्गत्वमित्यर्थः । अष्टकाश्राद्धाङ्गहोमे रात्रिदेवतामेक **इत्याश्वलायन**वचनाद्रात्रिर्देवतेति भावः । **तत्सामान्यादिति** विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वमित्यौदुंबराधिकरणगुणसूत्रम् । तस्य चायमर्थः—'अप्सुयोनिर्वाश्व' इत्यादौ अप्सुयोनिरश्वः कार्य इति विधिरनर्थकः अशक्यत्वात्तस्मात्तत्र स्तुतिः प्रतीयेत । ऊर्जोवरुध्या इत्यादावपि विध्यसंभवेन तत्सादृश्यात्स्तुत्यर्थत्वमिति । **नच** प्रकृते कृत्स्नस्य वेदस्य स्मार्तकर्मसापेक्षत्वाभावात्तत्सामान्यमेव नास्तीति वाच्यम् । यां जना इति मन्त्रस्य पौरुषेयस्मृतिप्रतिपाद्यकर्माङ्गत्वे सति मन्त्रस्य मानान्तरापेक्षकार्यबोधकत्वमवश्यं वक्तव्यमिति सर्वस्यापि

तथात्वमिति सकलस्य वेदस्याप्रामाण्यं तेन वेदप्रामाण्यसिध्यर्थमेव स्मृतिप्रामाण्यमिति संगतिरिति। नैतदेवम्। यदा हि स्मृतेरप्रामाण्यं तदा मन्त्रस्य स्मार्तकर्माङ्गत्वे किं प्रमाणम्। न तावल्लिङ्गं, तस्य सामान्यसंबन्धप्रमाणापेक्षत्वात्। नापि स्मृतिवाक्यं, तस्याप्रामाण्यात्। यद्यपि च लिङ्गमात्रं विनियोजकं स्यात्तथापि फलवदङ्गत्वेनाफलस्य विनियोगात् स्मृत्यप्रामाण्ये च स्मार्तस्य कर्मणः फलवत्त्वाभावान्नतादर्थ्यं मन्त्रस्य येन सापेक्षता स्यात्। सत्यपिच मन्त्राप्रामाण्ये सकलस्याप्रामाण्यं कुतस्त्यम्। नहि मन्त्रस्य स्वारसिकमप्रामाण्यं येन शब्दमात्रे स्यादपितु सापेक्षैकवाक्यत्वकृतम्। नच कृत्स्नस्य तदस्तीति कथमप्रामाण्यम्। तस्मान्नैवं संगतिः संभवतीति पूर्वोक्तैव संगतिर्ज्यायसी धर्मप्रमाणचिन्ताधिकारात्स्मृतीनामपि तत्र प्रामाण्यं प्रतिपाद्यत इति। नचैवं चोदनैवेति प्रतिज्ञाव्याकोपः। तन्मूलत्वेन तदन्तर्भावेण वेतरेषां प्रामाण्यात्स्वातन्त्र्येण प्रामाण्याभावात्। तदिह किं स्मृत्याचाराणां धर्मे प्रमाणत्वमुत नेति विचार्यते। तदर्थंच श्रुतिमूलत्वमेषामुत भ्रान्त्यादिमूलत्वमिति विचारयितव्यम्। तत्र 'प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात्॥ चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता॥'

---

सापेक्षकार्य एव व्युत्पत्तिसिद्धेः सापेक्षार्थकत्वरूपाप्रामाण्यहेतुसामान्यात्सर्वचोदनानामप्रामाण्यसिद्धिरिति भावः। **नच** पुंवाक्येषु क्रियातिरिक्तकार्याभिधानाभावात्स्मार्तकार्यासिद्धिरिति कस्यचिद्दूषणाभिधानं युक्तम्। अलौकिकार्थकत्वेन स्मृतिवाक्यस्य पुंवाक्यत्वेऽपि क्रियातिरिक्तकार्यार्थकत्वस्य तैरङ्गीकारात्। इयांस्तु विशेषः—श्रुतौ निरपेक्षं कार्याभिधानमन्यत्र तु पुंवाक्यान्तरमर्यादया वक्तृज्ञानानुमानद्वारेति न काप्यनुपपत्तिः। **तस्येति**। लिङ्गं हि अर्थप्रकाशनसामर्थ्यं। तेन च मन्त्रप्रकाश्यार्थ एव मन्त्रविनियोगः सिध्यति नतु तदप्रकाश्यक्रत्वपूर्वेऽपि तस्य तत्रासामर्थ्यात्क्रत्वपूर्वसंबन्धाभावे केवलमर्थप्रकाशस्यानर्थक्याच्च क्रतुना सामान्यसंबन्धं प्रमाणान्तरसिद्धमपेक्ष्य किंद्वारा क्रतुसंबन्ध इत्याकाङ्क्षायां तदीयद्वारविशेषे लिङ्गं विनियोजकमिति प्रकृते सामान्यसंबन्धबोधकक्रमसमाख्याप्रकरणानामन्यतमाभावेन स्मार्तकर्मणा मन्त्रस्य सामान्यसंबन्धाभावाल्लिङ्गमात्रान्न स्मार्तकर्माङ्गत्वमित्यर्थः। **नन्व**'ञ्जलिनोत्तरयापूपाञ्जुहोति मांसौदनमुत्तराभि'रित्यादिस्मार्तवाक्यं विनियोजकं, नचापूपहोममांसौदनहोमयोरापस्तम्बोक्तयो रात्रिदेवताकत्वस्य मानान्तरेणानवगतत्वान्मन्त्रस्य तत्र विनियोगासंभव इति वाच्यम्। वाचनिकविनियोगे देवतावगत्यनपेक्षणादित्यत आह—**नापीति। ननु** अध्ययनविधिरेव दृष्टार्थलोलुपः सन् स्वाध्यापितमन्त्रस्याश्वलायनेन रात्रिदेवताकत्वेनोक्तस्मार्तकर्मणा सामान्यसंबन्धमापादयिष्यति। ततश्चाध्ययनविधिबलादेव सामान्येनाष्टकाहोमसंबन्धे सिद्धे पश्चाल्लिङ्गात्तदीयरात्रिदेवताशेषतया विनियोगोस्तु। नचैव 'शुभा वामिन्द्राग्नी'मित्यादीनामैन्द्राग्नमेकादशकपालं निर्वपेदित्यादौ यत्र क्रमसमाख्याभ्यां सामान्यसंबन्धः सिद्धस्तत्रैव विनियोगो नतु इन्द्राग्निसंबद्धकर्ममात्रे सामान्यसंबन्धस्य तत्राभावादित्येवं लिङ्गक्रमाधिकरणोक्तं विरुध्येत, इन्द्राग्निसंबद्धकर्ममात्रेऽध्ययनविधिबलादेव सामान्यसंबन्धसिद्धिसंभवादिति वाच्यम्। सति गत्यन्तरेऽध्ययनविधेर्व्यापारगौरवाङ्गीकारायोगादिह त्वगत्या तत्स्वीकारादित्यत आह—**यद्यपीति**। श्रुत्याद्यन्तर्गतक्रमप्रकरणादिप्रमाणान्तराभावाभिप्रायो मात्रशब्दः। **फलवदिति**। यद्यपि तेषां मते सर्वत्र फलानवश्यंभावस्तथापि फलपदेनात्राधिकारो विवक्षितस्ततश्च साधिकारशेषत्वेन निरधिकारस्य विनियोगात् स्मृत्यप्रामाण्ये स्मार्तकर्मणः साधिकारत्वस्यैवाभावान्न तत्र विनियोगः संभवतीत्यर्थः। **भवनाथेन** तु मन्त्रस्य स्मार्तकर्माङ्गत्वमस्तु वा मावा। अनुष्ठेयावस्थकार्यप्रकाशकस्य मन्त्रस्य स्मार्तकर्माभिधायित्वमवश्यं वाच्यम्। श्रौतस्य तदभिधानयोग्यस्याभावादतोऽप्रामाण्यमित्युक्तं तदयुक्तम्। स्मार्तकर्माङ्गत्वाभावेऽपि तदीयकार्याभिधायित्वस्वीकारे नक्षत्रेष्ट्यादा'वह्ने स्वाहा रात्रियै स्वाहे'ति रात्रिदेवताककार्यसद्भावेन तत्प्रतिपादकत्वस्यापि संभवादप्रामाण्यकल्पनापेक्षयोत्पत्तिशिष्टमन्त्रकश्रौतकर्माङ्गत्वकल्पनस्य ज्यायस्त्वेन तस्यैव युक्तत्वादिति यत्किंचिदेतत्। मन्त्रस्य स्मार्तकर्माङ्गतया मानान्तरसापेक्षकार्यार्थकत्वेनाप्रामाण्येऽपि सकलस्य वेदस्य तत्सापेक्षत्वाभावेन तत्सामान्याभावात्कथमप्रामाण्यम्। नहि कस्यचिन्मन्त्रस्य सापेक्षकार्यार्थकत्वमात्रेण सर्वत्र सापेक्षकार्यव्युत्पत्तौ प्रमाणमस्ति येन सर्वस्याप्रामाण्यं स्यादित्याशयेनाह—**सत्यपिचेति**। स्वतोऽनपेक्षकार्य एव व्युत्पत्तेः सापेक्षकार्यार्थत्वं न स्वारसिकमित्यर्थः। पूर्वोक्तसंगतिमेवाह—**धर्मेति**। तन्मूलत्वेनेति वाशब्दो व्यवस्थितविकल्पार्थः। ततश्च स्मृत्यादेस्तन्मूलत्वेनार्थवादादेस्तदन्तर्भावेन च प्रामाण्यादित्यर्थः। तथाच चोदनैवेत्येवकारः स्वतन्त्रप्रमाणतया प्रसक्तबौद्धाद्यागमव्यवच्छेदार्थक इति भावः। एवंच स्मृतिप्रामाण्यविचारस्याध्याये साक्षात्संगतत्वादस्मिन्नधिकरणे तदेव विचार्यं नतु प्रभाकरमत इव तन्मुखेन चोदनाप्रामाण्यमित्याशयेनाह—**तदिहेति। ननु** मन्वादीनां रागद्वेषाभावान्न तन्मूलमनृतवदनं संभवतीत्यत आह—**भ्रान्त्यादीति**। प्रमाद आदिशब्दार्थः। एवंच भ्रान्त्यादेः संभावितत्वाद्भ्रान्त्यादिमूलत्वमेव न चोदनामूलत्वं, तस्या अनुपलभ्यमानतया तन्मूलत्वस्यात्यन्तासंभावितत्वात्ततश्च

---

१ उत्तरया ऋचा.

संभवद्भ्रमविप्रलम्भेषु पुरुषेषु न तावन्निर्विचिकित्समेव प्रामाण्यं स्वध्यवसानम्। अतश्चाननुष्ठानात्फलतोऽप्रामाण्यमेव। किञ्च नैषां प्रत्यक्षादिमूलत्वेन प्रामाण्यम्। तेषां धर्माधर्मयोरप्रवृत्तेः। नच स्वातन्त्र्येण वेदवत् पौरुषेयत्वात्। न चोदनामूलत्वेन तदनुपलम्भात्। नह्यनुपलभ्यमानाश्चोदनाः स्वप्रमेयं प्रतिपादयन्ति। नचासां प्रत्यक्षेणोपलम्भसंभवः, अनुच्चार्यमाणत्वात्। उच्चार्यमाणत्वे वा स्मृतिप्रणयनवैयर्थ्यम्। प्राक्पठिता अपि संप्रति पुरुषक्षयादुत्सन्ना इतिचेन्न, विकल्पासहत्वात्। यो ह्युत्सादनं चोदनानां वदति स वक्तव्यः—किमेका काचिच्छाखा स्मार्तश्रुतिसङ्घात्मिका पूर्वमासीत्सा चेदानीमध्येतृक्षयादुत्सन्नेति कल्प्यते किंवा बह्वीषु शाखास्वितस्ततः स्मृतिमूलभूताः श्रुतयः पठिताः संप्रत्युत्सन्ना इति। तत्र सहस्रं सामशाखा एकशतमध्वर्युशाखा एकविंशतिशाखं बाह्वृच्यमित्यादिशाखाप्रमाणस्य परम्परया सर्वलोकस्मरणान्नाधिका शाखा संभावयितुं शक्यते। नापि पठ्यमानानामेव शाखानामवहिताध्येतृकाणां मध्ये कासांचिच्चोदनानामुत्सादसंभवः। नच संप्रत्यपि पठ्यन्ते एव विप्रकीर्णस्मृतिमूलभूताः श्रुतय इति युक्तं स्मृतिप्रमाणनयवैयर्थ्यादि ह्युक्तम्। तन्न तावदिदानीमतीतकाले पठिताः श्रुतयः स्मृतीनां मूलं नापि नित्यानुमेया अन्धपरम्परान्यायात्। या हि चोदना न कदाचिदुच्चार्यते तस्यां सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्दुर्लभमस्तित्वम्। ननु स्मृतिलिङ्गवशेनानुमानं प्रसरत्येव सर्वेषां लिङ्गादिकल्प्यास्विव विषम उपन्यासः। लिङ्गादयो हि सर्वपुरुषप्रत्यक्षाः श्रुतिमन्तरेणानुपपद्यमानाः युक्तं यत्तस्यां निश्चयमादधति। स्मृतिवाक्यरचना तु पौरुषेयीपदार्थविषयोपलभ्यते तद्विषयमेव रचयितुर्ज्ञानं कल्पयति। अष्टकाकर्तव्यताविषयं च स्मृतिवाक्यमिति नूनमयम-

---

श्रद्धामात्रेण प्रमाणत्वाभिधानमात्रं नतु वस्तुतः प्रमाणत्वमित्यर्थः। **ननु** भ्रान्त्यादावपि संभावनामात्रं न निश्चयः, संभावना च वैदिकपरिग्रहादिना चोदनायामप्यस्ति, ततश्च कथमप्रामाण्याध्यवसाय इत्यत आह—**संभवदिति**। ततश्च बाधितार्थकत्वरूपाप्रामाण्यानिश्चयेऽप्यननुष्ठापकत्वलक्षणाप्रामाण्यनिश्चयः संभवतीत्यर्थः। बाधितार्थकत्वलक्षणमप्यप्रामाण्यं परिशेषप्रमाणेन निश्चेतुं शक्यमित्याशयेनाह—**किंचेति**। **ननु** 'यद्वै किंच मनुरवदत्तद्भेषज'मिति वचनात्स्वातन्त्र्येणैव प्रामाण्यमस्त्वित्यत आह—**नचेति**। उक्तश्रुतिवचनं चार्थवादमात्रमिति भावः। **ननु** अनुपलभ्यमानापि चोदना मूलं किं न स्यादित्यतआह—**नहीति**। चक्षुरादिवच्छब्दस्य सत्तामात्रेण बोधकत्वाभावादिति भावः। **उच्चार्यमाणत्व इति**। उच्चार्यमाणत्वे तत एवाष्टकादिकर्तव्यतावगमेनानुष्ठानसंभवात्स्मृतिप्रणयनं व्यर्थमित्यर्थः। **ननु** यदा मन्वादयः स्मृतिं प्रणीतवन्तस्तदा तन्मूलभूतचोदनानामुच्चारणमस्तीति प्रत्यक्षेण ता उपलभ्य तदर्थस्मृतिप्रणयनं नानुपपन्नम्। नवा तद्वैयर्थ्यं इदानींतनान्प्रति तदर्थवत्त्वादिति शङ्कते—**प्रागिति**। **किमिति**। किं शाखारूपेणोत्सादः उत पठ्यमानास्वेव शाखासु तत्तद्वाक्यस्योत्साद इति विकल्पार्थः। **एकशतमिति**। एकाधिकं शतमित्यर्थः। बाह्वृच्यं बह्वृचानामाम्नाय इत्यर्थः। **नापि पठ्यमानानामिति**। अन्यथा कतिपयाङ्गवाक्योत्सादनशङ्कया क्वापि वैदिके कर्मणि निष्कंपप्रवृत्तिर्न स्यादिति भावः। उत्सन्नविप्रकीर्णशाखामूलत्वदूषणमुपसंहरति—**तन्न तावदिति**। प्राभाकरपक्षं दूषयति—**नापीति**। नित्यानुमेयत्वे हि यथास्मदादिभिर्मन्वादिस्मृत्या तन्मूलभूतश्रुतिरनुमीयते तथा मनुनापि वृद्धमनोः स्मृतिमुपलभ्य सानुमेया तेनाप्यन्यस्मृतिमुपलभ्येत्येवं स्मृतिपरंपरामूलकानुमानपरंपरैव नतु कस्यापि श्रुतिगोचरं प्रत्यक्षमस्तीत्यन्धपरंपरोपदिष्टशौक्ल्यादिवच्छ्रुतिसद्भावो दुर्लभ इत्यर्थः। तदेतदाह—**याहीति**। ननु योऽर्थः प्रत्यक्षयोग्यः पटशौक्ल्यादिस्तत्र भवतु कस्यापि प्रत्यक्षप्रसराभावे सत्यसत्त्वं इहतु नित्यानुमेयश्रुतीनां प्रत्यक्षायोग्यत्वात्केवलानुमानपरम्परागम्यत्वेऽपि नासत्वमिति शङ्कते—**नन्विति**। **लिङ्गादिकल्प्यास्विति**। इदंच लिङ्गादिभिः श्रुतिरनुमीयत इति पक्षमाश्रित्य लिङ्गादिभिरर्थापत्तिविधया श्रुतिर्गम्यते नानुमानविधयेति पक्षे अनुमानगम्यत्वे दृष्टान्तीकरणासंभवादिति ध्येयम्। अनन्यथासिद्धलिङ्गसद्भावे हि नित्यानुमेयवस्तुसिद्धिस्ततश्च लिङ्गादीनामनन्यथासिद्धत्वात्ततः श्रुतिकल्पनं युक्तम्। स्मृतिरूपलिङ्गस्य तु श्रुतिसद्भावंविनापि रचयितुः समर्थज्ञानमात्रेणोपपत्तेर्न ततः श्रुतिसिद्धिरिति परिहरति—**विषम इति**। लिङ्गादीनामनुमेयत्वे येनैव लिङ्गाद्यनुमानं तेनैव श्रुत्यनुमानसंभवाल्लिङ्गादीनां श्रुतावप्रयोजकता स्यादतस्तद्व्यावृत्त्यर्थं सर्वपुरुषप्रत्यक्षा इत्युक्तम्। यद्वा श्रुतिमन्तरेणानुपपद्यमानाः सर्वपुरुषप्रत्यक्षा इत्यन्वयः। तेन रूपेण सर्वपुरुषप्रत्यक्षा इत्यर्थः। **नन्वलौकिकाष्टकाकर्तव्यत्वस्य** श्रुत्येकसमधिगम्यत्वाच्छ्रुतिंविना स्मृतेरप्यनुपपत्तिस्तुल्येत्यत आह—**स्मृतिवाक्येति**। स्मृतिवाक्यं हि कार्यतया स्वकारणमनुमापयत् वाक्यरचनायामर्थज्ञानं करणमिति रचयितुरर्थज्ञानमेव कल्पयति न श्रुतिस्वरूपं तज्ज्ञानं वा, तयोरकारणत्वादित्यर्थः। यद्वा लौकिकवाक्यानां वक्तृज्ञानानुमापकतया बोधकत्वमिति **प्रभाकरै**रङ्गीकारास्मृतिवाक्येनापि स्मर्तुरर्थज्ञानमेव कल्पयितुं

ष्टकाकर्तव्यतां वेदेत्येतावत्प्रथमं कल्पयति न श्रुतिस्वरूपं नापि श्रुतिज्ञानम् । एवमर्थज्ञाने स्मृतिकारस्य कल्पिते तस्मात् ज्ञानलिङ्गाज्ज्ञेयभूतार्थानुमानं न श्रुतिकल्पनम् । एवं स्मृतिकारान्तरस्यापि स्मृत्यन्तरलिङ्गादर्थ एवानुमानमिति निष्प्रमाणिका श्रुतिकल्पना स्यात् । अथोच्येत । न खलु परकीयेण ज्ञानेन झटित्येव ज्ञेयनिश्चयः, मूलानुसंधानसापेक्षत्वात् । तत्र यदि स्मृतिकारस्यार्थविषयज्ञानमूलमनुसंदधानः स्मृत्यन्तरमेव संभावयेत् तदपि ज्ञानस्यैव लिङ्गं नार्थस्य । एवं ततः पूर्वतरमपि स्मरणं ज्ञानस्यैव लिङ्गं नार्थस्येति न क्वचिदर्थनिश्चयो लैङ्गिको लभ्यते इति श्रुतिरेव कल्पयितव्या । यद्येवं श्रुतावपि तुल्यमेवैतत्, स्मृतिकारस्य मूलतया श्रुतिज्ञानमेव प्रथमं कल्प्यते न श्रुतिसद्भावः । श्रुतिविषयेण तु ज्ञानेन ज्ञेयभूतश्रुतिनिर्णयः परज्ञानेन च तद्विषयश्रुतिनिश्चयो मूलानुसंधानसापेक्षः । मूलंच स्मृतिकारस्य स्मृत्यन्तरमेव । तदपि चार्थज्ञानद्वारेण श्रुतिज्ञानस्यैव लिङ्गं न श्रुतिसद्भावस्येति न क्वचित्कस्यचिदपि श्रुतिसद्भावनिश्चयो लैङ्गिको लभ्यते । लिङ्गादीनि तु श्रुतिसद्भावमेव कल्पयन्तीत्युक्तो विशेषः । तेन यदि परकीयेण ज्ञानेन प्रागेवार्थनिश्चयस्ततोऽर्थस्मरणपरम्परयार्थस्यैव ज्ञानान्न श्रुतिसिद्धिः । अतः स्मृत्यन्तरमेव मूलं स्यात्, अन्धपरम्परया च रूपनिश्चयस्तदा स्यात्, चैत्यवन्दनादीनामपि पुंवाक्यपरम्परया धर्मत्वानुमानं स्यात् । अथ मूलानुसंधानसापेक्षं ततो यथा वयं मानवीयात्स्मरणान्मनोरर्थविषयं श्रुतिविषयं च ज्ञानमात्रं कल्पयित्वा श्रुतिसद्भावमनिश्चित्य तन्निश्चयाय मनोः श्रुतिसद्भावमूलप्रमाणं मृगयामहे । तथा मनुरप्यन्यस्य सोऽप्यन्यस्येति न श्रुतिसद्भावसिद्धिः । एवमुभयथापि श्रुतिर्नित्यानुमेया न सिध्यतीति तन्मूलत्वेन न स्मृतीनां प्रामाण्यमतः श्रद्धामात्रविजृंभितं स्मृतिप्रामाण्यमिति प्राप्तेऽभिधीयते—'वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः ॥ संभाव्यवेदमूलत्वा-

---

युक्तं नान्यदित्यर्थः । **ननु** प्रथमं श्रुतिस्वरूपतज्ज्ञानयोरकल्पनेऽपि रचयितुरर्थज्ञानकरणत्वेन पश्चात्कल्पनमावश्यकमित्यत आह—**एवमर्थज्ञान इति** । स्मृतिवाक्यादर्थं जानानो हि पुरुषः प्रथमं वक्तृज्ञानमनुमाय तस्य ज्ञेयाविनाभावाज्ज्ञेयभूतार्थमेवानुमिनोति नतु श्रुतिं तज्ज्ञानं वाऽनपेक्षितत्वादित्यर्थः । अनपेक्षितत्वमसिद्धमर्थसत्तानिश्चयार्थं तदपेक्षावश्यंभावादिति शङ्कते—**अथेति** । यद्यपि तन्मते ज्ञानमात्रस्य याथार्थ्यात्परकीयज्ञानेनापि झटित्यर्थनिश्चयो वक्तुं शक्यते तथापि मूलभूतप्रमाणनिश्चयाभावेऽसंसर्गाग्रहसंभावनया परकीयज्ञानमेव न निश्चयमासादयेन्नतरां ज्ञेयभूतार्थं इति ज्ञानाज्ज्ञेयं निश्चिन्वतो मूलानुसंधानमावश्यकमिति भावः । **नन्वेवमपि** न श्रुतिसिद्धिः स्मृत्यन्तरस्यापि मूलत्वसंभवादित्यत आह—**तत्र यदीति** । यदि ज्ञानेन ज्ञेयनिश्चयो मूलानुसंधानसापेक्षस्तर्हि श्रुतिज्ञानाज्ज्ञेयभूतश्रुतिनिश्चयेऽपि मूलानुसंधानसापेक्षत्वस्य तुल्यत्वात्तत्र स्मृत्यन्तरं विना मूलान्तराभावादुक्तरीत्या श्रुतिसिद्धिरपि न स्यादिति परिहरति—**यद्येवमिति** । **ननु** स्मृतिकारस्यार्थज्ञानमूलतया श्रुतिस्वरूपमेव कल्प्यते न तज्ज्ञानं येनोक्तप्रकारः श्रुतिकल्पनायामपि तुल्यः स्यादित्यत आह—**न श्रुतीति** । स्वरूपसती श्रुतिर्नार्थज्ञानमूलं, तथात्वेऽस्मदादीनामपि स्वरूपसत्या श्रुत्यैवार्थज्ञानसंभवेन स्मृतिप्रणयनवैयर्थ्यादिति भावः । **स्मृत्यन्तरमेवेति** । श्रुतिस्वरूपस्य नित्यानुमेयतया प्रत्यक्षेण तन्निश्चयासंभवाल्लिङ्गान्तराभावाच्चेत्यर्थः । लैङ्गिकः स्मृतिरूपलिङ्गजन्य इत्यर्थः । लिङ्गादीनां तु न श्रुतिज्ञानानुमापकत्वं येन तत्रापि श्रुतेः स्वरूपासिद्धिः स्यात् किंतु तत्स्वरूपानुमापकत्वम् । अतस्तत्र युक्तं श्रुतिसद्भावकल्पनमिति प्रागुक्तं वैषम्यं स्मारयति—**लिङ्गादीनीति** । यदि श्रुत्यसिद्धिभिया मूलानुसंधानं विनैव परकीयेण श्रुतिज्ञानेन ज्ञेयनिश्चयं परः स्वीकुर्यात्तदा दोषमाह—**तेनेति** । तथासति मूलानुसंधानंविनैव श्रुतिवदर्थस्यापि निश्चेतुं शक्यत्वादर्थज्ञानमूलत्वेन श्रुतिसिद्धिर्न स्यादित्यर्थः । **ननु** ज्ञानाज्ज्ञेयस्य झटित्येव सिध्यार्थनिश्चयार्थं मूलानुसंधानानपेक्षायामपि वस्तुतः स्मृतिकारस्यार्थज्ञानमूलं किंचिद्वक्तव्यमिति तन्मूलतया श्रुतिसिद्धिरप्रत्यूहेत्यत आह—**अत इति** । अस्तु तर्हि स्मृत्यन्तरमेव मूलं तथाप्यर्थनिश्चयसद्भावात्स्मृतीनां प्रामाण्यमप्रतिहतमिति तटस्थशङ्कायामाह—**अन्धेति** । ननु प्रत्यक्षयोग्यत्वतदभावाभ्यां वैषम्यं पूर्वमेवोक्तमित्यरुचेराह—**चैत्येति** । एतद्दोषपरिहारार्थं मूलानुसंधानसापेक्षत्वादेव ज्ञानाज्ज्ञेयनिश्चय इति स्वीकारे प्रागुक्त एव दोष इत्याह—**अथेति** । तस्मान्मूलानुसंधानसापेक्षत्वे तदभावे च न श्रुतिसिद्धिरित्युपसंहरति—**एवमिति । वैदिकैरिति** । यदुक्तमत्यन्तासंभावितं वेदमूलत्वमिति तन्निराकरणार्थमुक्तं **संभाव्येति** । एवं वेदमूलत्वे संभावितेऽपि वेदमूलत्वभ्रान्तिमूलत्वस्यापि संभावितत्वादननुष्ठानलक्षणमप्रामाण्यं स्यादित्यतो वेदमूलत्वनिश्चायकहेतूपन्यासः पूर्वार्धे कृत इति बोध्यम् । स्मर्यमाणत्वादित्यत्र पाकं पचतीतिवत्क्रियासामान्यात्मक-

---

१ कश्चित.

त्स्मृतीनां वेदमूलता ॥' य एव हि वेदस्यैव धर्ममूलता नान्यस्येति आस्थिता मन्वादयस्तेषामष्टकाधर्मादिषु धर्मत्वस्मृतिर्न कथंचनोपपद्यते—न यदि—वेदमूलता, तथा वैदिकानामेवाऽविगीतपरंपरया परिग्रहो वैदिकत्वस्मरणं च शिष्टानां नासति वेदमूलत्वेऽवकल्प्यते । संभवति च त्रैवर्णिकानां वेदसंयोग इति तन्मूलत्वमेवाध्यवसीयते । कथमनुच्चारितानां मूलत्वोपपत्तिरितिचेत् उच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः संप्रत्यपि विप्रकीर्णाः काश्चित्कचित्कस्यांचिच्छाखायां विप्रकीर्णत्वाच्च शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात्तादर्थ्येनार्थवन्निबन्धनं तदुपलम्भेपि वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति न वैयर्थ्यमतः स्मृतयः प्रमाणमिति सिद्धम् ॥

श्रुतिप्राबल्याधिकरणम् ॥ २ ॥

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

**औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः ॥ अमितिर्वेति संदेहे मितिः स्यादष्टकादिवत् ॥ ४ ॥**
**औदुम्बरीं स्पृशन्गायेदिति प्रत्यक्षवेदतः ॥ विरोधान्मूलवेदस्याननुमानादमानता ॥ ५ ॥**
**प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् ॥ अमात्वे शङ्किते बाधोऽनुमानस्यात्र वर्ण्यते ॥ ६ ॥**
**परप्रत्यक्षवेदोऽत्र मूलं चेद्वेष्टनस्य तत् ॥ अस्त्वेवमप्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ ७ ॥**

उत्सृष्टस्य स्मृतिप्रामाण्यस्यापवादः क्रियते । अत्र प्रत्यक्षश्रुतिविरुद्धाः स्मृतय उदाहृत्य विचार्यन्ते किं प्रमाणमप्रमाणं वेति । तदर्थं च पूर्ववदेव स्मृतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम् । अत्र पूर्वाधिकरणं समस्तमेव पूर्वःपक्षः । नच प्रत्यक्षश्रुतिविरोधात्स्मृतिमूलश्रुतिकल्पनानवक्लृप्तिः, द्व्यसं-

---

करोत्यर्थकस्मृधातुर्यथा श्रुते स्मृतिषु स्मर्यमाणत्वानुपपत्तेरिति ध्येयम् । **आस्थिता इति** । 'वेदोऽखिलो धर्ममूल'मित्यादिना प्रतिज्ञातवन्त इत्यर्थः । **ननु** वैदिकैः स्मर्यमाणत्वेऽपि वैदिकपरिगृहीतत्वेऽपि च न्यायाभासमूलस्मृतीनां न वेदमूलत्वेत्याशङ्कानिराकरणार्थं 'तत्परिग्रहदार्ढ्यंत' इत्येतत्प्रकारान्तरेण व्याचष्टे—**वैदिकत्वेति** । वेदमूलत्वस्मरणमित्यर्थः । न्यायाभासमूलेषु न शिष्टानां वेदमूलाचरणमिति भावः । ततश्च तत्परिग्रहशब्देन वेदमूलत्वेन वैदिकपरिग्रहो विवक्षितो बोध्यः । **अध्यवसीयत इति** । अष्टकादिस्मृतिर्वेदमूला वेदमूलकतया वैदिकैः परिगृहीतत्वात् प्रत्यक्षवेदमूलवदित्याद्यनुमानेनेति शेषः । **भवदेवस्तु** अर्थापत्तिरेवात्र मानं नानुमानमित्याह । ननु स्मृतिमूलभूतवेदोऽनुपलब्धिबाधितः, कथंचिदनुपलभ्यमानस्यापि सद्भावेऽप्यनुपस्थितस्य तस्यार्थज्ञापकत्वाभावात्स्मृतिमूलत्वं दूरापास्तमिति शङ्कते—**कथमिति । ननु** उच्चार्यमाणत्वे स्मृतिप्रणयनवैयर्थ्यमित्युक्तमत आह—**विप्रकीर्णत्वादिति** । लिङ्गादीनां श्रुतिस्वरूपमात्रकल्पनेनाप्यनुपपत्तिशान्तेस्तत्र श्रुतिस्वरूपमात्रमेव कल्प्यते नतूच्चारणं तेन विनानुपपत्त्यभावादिति । तत्र नित्यानुमेयश्रुतिमूलत्वमिह त्वनुच्चारितस्य मूलत्वासंभवादन्धपरंपरापत्तेश्चोच्चारणकल्पनागौरवमप्याश्रित्य विप्रकीर्णशाखामूलत्वमेवाङ्गीकृतमिति वैषम्यं बोध्यम् । तच्छाखाध्यायिष्वर्थवदित्याह—**तदुपलम्भेऽपीति** । सूत्रार्थस्तु चोदनैव धर्मे प्रमाणमिति धर्मस्य वेदैकमूलत्वान्मूलभूतवेदरहितं स्मृत्यादिकं धर्मप्रमाणत्वेनानपेक्ष्यमिति ॥

**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥ ननु** पूर्वाधिकरणे सर्वस्मृतीनां प्रामाण्यमुक्तं इदानीं विरुद्धानामप्रामाण्यमुच्यत इति परस्परविरोध इति शङ्कां परिहरन्नापवादिकीं संगतिं दर्शयति—**उत्सृष्टस्येति** । उत्सर्गतः प्राप्तस्येत्यर्थः । ततश्चोत्सर्गस्यापवादविषयेतरविषयतया पूर्वाधिकरणस्याविशेषेण प्रवृत्तस्याप्यविरुद्धस्मृतिप्रामाण्य एव तात्पर्यं नतु सर्वप्रामाण्ये इति न परस्परविरोध इति भावः । **अत्र प्रत्यक्षेति** । 'औदुंबरीं स्पृष्ट्वोद्गायेत्' 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्य'मित्यादि प्रत्यक्षश्रुतिविरुद्धा 'औदुंबरी सर्वा वेष्टयितव्या' । 'अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्' 'क्रीतराजकोऽभोज्यान्न' इत्याद्या इत्यर्थः । औदुंबरीनाम यज्ञवाटे सदसि निखातौदुंबरप्रकृतिकः स्थाणुविशेषः । सा स्थूणा सर्वापि वाससा आच्छादयितव्येति स्मृत्यर्थः । **अत्रेति** । यद्यपि वैदिकैः स्मर्यमाणत्वादित्यादिः पूर्वाधिकरणसिद्धान्त एव पूर्वःपक्षस्तथापि पूर्वपक्षस्य सिद्धान्तशेषत्वात्सर्वमित्युक्तेरविरोधः । **ननु** पूर्वाधिकरणे स्मृतीनां श्रुत्यनुमानेन प्रामाण्यमुक्तं, नचात्र श्रुत्यनुमानं संभवति सर्ववेष्टनस्मृतिमूलभूतश्रुत्यनुमानस्य स्पर्शनश्रुतिविषयप्रत्यक्षबाधितत्वादतो नात्र पूर्वाधिकरणन्यायप्रवृत्तिरित्याशङ्क्य निराकरोति—**नचेति । अनवक्लृप्तिरिति** । यथा वह्न्यावशैत्यप्रत्यक्षं शैत्याभावं विषयीकरोति एवं स्पर्शनश्रुतिप्रत्यक्षमनुमेयश्रुत्यभावं न विषयीकरोतीति न साक्षादनुमानस्य प्रत्यक्षेण विरोधाद्बाधः किंतु प्रत्यक्षानुमानविषयीभूतश्रुत्योः परस्परविरुद्धार्थकत्वाद्बाधो वक्तव्यः । सच न संभवति 'व्रीहिभिर्यजेत'

भवात् व्रीहियवादिश्रुतिवत् । यत्र हि द्वयोरसंभवस्तत्रैकविषयेण प्रत्यक्षेणेतरविषयकमनुमानं प्रमेयापहारा.दनायासेन निराक्रियते वह्नाविव शैत्यानुमानम् । यत्र तु द्वयसंभवस्तत्र शीघ्रप्रवृत्तमपीतरन्नेतरस्य विषयमपहरतीति तद्विषयमनुमानं न शक्नोति प्रतिषेद्धुम् । संभवतिच युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियवबृहद्रथन्तरग्रहणादिविषयश्रुतिवदिति प्रत्यक्षेणापि स्पर्शनविधिना सर्ववेष्टनश्रुतिविषयमनुमानं न शक्यं निराकर्तुम्। कथंतर्हि श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधः। तत्रापि हि श्रुतिद्वयसंभवान्न क्रमया'कल्प्या'निराकरणं कर्तुं शक्यते। उच्यते। नैव तत्र प्रमेयापहारनिबन्धनो बाधः, किंतु कल्पनामूलोच्छेदात् । यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणी चाकृतार्थस्तावदेव तत्सिध्यर्थं श्रुतिकल्पनं प्रमाणवत् । यदातु क्रमया द्वयोरपि नैराकाङ्क्ष्यं तदा मूलोच्छेदादाकाङ्क्षाधीना श्रुतिकल्पना नैवोन्मज्जति । अत्र तु प्रत्यक्षश्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्यते । यतो मूलोच्छेदादनुमानविरोधः स्यात् । यदि परं प्रमेयापहारादग्नाविव शैत्यानुमानं प्रत्यक्षेण बाध्येत । नचैवं संभवति, श्रुतिद्वयसंभवात् । अग्नेर्हि शैत्यौष्ण्ये न संभवतः, परस्परोपमर्दकत्वात्तयोः । अतः प्रत्यक्षेणौष्ण्येन शैत्यस्यापहृतत्वान्न तद्विषयमनुमानमुदेतुमुत्सहते । अत्र च संभवति श्रुतिद्वयं व्रीहियवादिवदित्युक्तम् । अथवा श्रुतिद्वयप्रमेये न मिथो विरुद्धे नहि व्रीहिशक्त्या यवशक्तिर्बाध्यते सा वा तया, स्पर्शनशक्त्या वा वेष्टनशक्तिः सा वा तया । शक्तिमात्रं हि विधेः प्रमेयं, अतोऽत्रानुमानस्य प्रत्यक्षेणाविरोधाद्विरुद्धानामपि प्रामाण्यमिति प्राप्तेऽभिधीयते । 'अप्रामाण्यं विरुद्धानामशक्यार्थविधानतः॥ औदुंबरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन् ॥ वेष्टितां वापि संस्प्रष्टुमतोऽन्योन्यविरोधतः॥ प्रमेयापहृतेरेव बाधः स्यादग्निशैत्यवत् ॥' अशक्यार्थविषयता हि मूर्धाभिषिक्तमप्रामाण्ये निदानं विधीनाम् । सागरं

---

'यवैर्यजेते'ति श्रुतिद्वयवद्विरुद्धार्थकश्रुतिद्वयस्यापि संभवादित्यर्थः । एतदेव विवृणोति—**यत्रेति । व्रीहीति** । यथा दर्शपूर्णमासयोर्व्रीहिभिर्यजेत यवैर्यजेतेति श्रुतिद्वयं स्वस्वविषयस्येतरनिरपेक्षतया साधनताबोधकत्वेन युगपदनुपसंहरणीयार्थकं ज्योतिष्टोमे 'बृहत्पृष्ठं भवति' 'रथंतरं पृष्ठं भवती'ति श्रुतिद्वयं पृष्ठस्तुत्योर्विकल्पप्रतिपादकवचनानुसाराद्युगपदनुपसंहरणीयार्थकं 'अतिरात्रे षोडशिनं गृह्णाति नगृह्णाती'ति श्रुतिद्वयं भावाभावयोरेकस्मिन्प्रयोगेऽसमावेशाद्युगपदनुपसंहरणीयार्थकं तद्वदित्यर्थः । नन्वेवं श्रुतिलिङ्गाधिकरणविरोधः स्यादिति शङ्कते—**कथंतर्हीति** । द्विप्रकारो हि लोके प्रत्यक्षेणानुमानस्य बाधः । एकस्तावत्प्रमेयापहाराद्यथा वह्नावौष्ण्यप्रत्यक्षेण शैत्यानुमानस्य । द्वितीयस्तु अनुमितिसामग्रीविघटनेन । यथा सिद्धसाधनस्थले प्रत्यक्षदृष्टे करिणि तदनुमानस्य श्रुतिलिङ्गादिषु च न प्रमेयापहाराद्बाधः येनोक्तशंकावकाशः स्यात्, किंतु सामग्रीविघटनादतस्तत्र संभवति श्रुत्यानुमानबाध इत्याह—**नैव तत्रेति** । तदेवोपपादयति—**यावद्धीति** । अग्निचयनप्रकरणे पठितः 'कदाचन स्तरीरसी'ति मन्त्रः स्वाम्नानसाफल्यार्थं स्वसाध्यं प्रकरण्युपकारमपेक्षते, प्रकरण्यपि मन्त्रं स्वाङ्गत्वेन गृह्णन् अकिंचित्कुर्वतोऽङ्गत्वासंभवान्मन्त्रसाध्यं स्वस्य किंचिदुपकारमपेक्षते । एवमुभयाकाङ्क्षितोपकारसिध्यर्थं लिङ्गाच्छ्रुतिकल्पनं वक्तव्यम्। तत्र यावल्लिङ्गं श्रुतिकल्पनायां व्याप्रियते । ततः प्रागेव ''प्रत्यक्षयैन्द्या गार्हपत्य' मितिश्रुत्या गार्हपत्योपस्थानरूपोपकारस्यावगतत्वेन मन्त्राम्नानप्रकरणिनोरुभयोरपि निराकाङ्क्षत्वेन श्रुतिकल्पनामूलभूतोपकाराकाङ्क्षालक्षणसामग्रीविघटनान्न लिङ्गाच्छ्रुतिकल्पनावकल्प्यत इत्यर्थः । इहतु सर्ववेष्टनस्मृतेर्मूलापेक्षा श्रुतिकल्पिका । साच प्रत्यक्षयापि स्पर्शनश्रुत्या न शाम्यतीति सामग्रीविघटनाभावादप्रत्यूहं स्मृत्यनुमानमित्याह—**अत्रत्विति । यदि परमिति** । यदिशब्दः संभावनायाम् । सामग्रीविघटनाभावात्प्रमेयापहारादेव परमत्र बाधः संभाव्यते सोऽपि न घटत इत्यर्थः । तदेव विशदयति—**अग्नेरिति** । एवं प्रत्यक्षानुमेयश्रुत्योः सत्यपि विरुद्धार्थत्वे श्रुत्यनुमानबाधो न संभवतीत्युक्तम् । इदानीं विरुद्धार्थत्वमेवासिद्धमित्याह—**अथवेति** । नन्वस्तु शक्त्योरविरोधः, तथापि शास्त्रार्थभूतपदार्थद्वयकर्तव्यताविरोधादस्त्येव विरुद्धार्थत्वमित्याशङ्क्य 'व्रीहिभिर्यजेते'त्यस्य व्रीहिभिः पुरोडाशस्य कर्तव्यता नार्थः किंतु व्रीहयः पुरोडाशे शक्ता इति शक्तिमात्रमेव, साचाननुष्ठानेऽपि संभवतीति न विरोध इत्याह—**शक्तिमात्रंहीति । ननु** अशक्यार्थविधायकत्वमसिद्धं औदुंबर्या यदवयवावच्छेदेनोद्गातृस्पर्शनं तदितरत्र वेष्टनस्य कर्तुंशक्यत्वादित्यत आह—**औदुंबरीमिति** । सर्वशब्दसंकोचे प्रमाणाभावेन सर्वावयवावच्छेदेन वेष्टनं स्मृत्यर्थः । तच्च स्पृशता कर्तुं न शक्यमित्यर्थः । **नन्वे**वमपि वेष्टिताया एव औदुंबर्याः स्पर्शनसंभवान्न विरोध इत्यतआह **—वेष्टितामिति** । तदा वस्त्रव्यवधानेन मुख्यः स्पर्शशब्दार्थो न संपादितः स्यादिति भावः । एवंच श्रुत्यादिवत्सामग्रीविघटनेन बाधासंभवेऽपि विषयापहारनिबन्धनो बाध इत्याह—**अत इति** । अत्र स्मृतीनां श्रुतिविरोधे वक्तव्येऽन्योन्यविरोधवचनं किमर्थमित्याशङ्क्य स्मृतिबाधसिध्यर्थत्वेन प्रथमतोऽन्यतरबाधमवतारयितुमित्याशयेन व्याचष्टे—**अशक्येति**. **निदानमिति** । अशक्यार्थं प्रवर्तकत्वाभावादिति भावः । **ननु** प्रवृत्त्यभावेऽप्यबाधितार्थकत्वात्प्रामाण्यमुपपद्य

तरेदित्यादिवत् अशक्यं च स्पृशता वेष्टयितुं वेष्टयता स्प्रष्टुं वाऽतो वेष्टयेत् स्पृशेदित्यशक्यार्थविधानाम्न तावदुभयोरपि प्रामाण्यं संभवतीत्यवश्यमन्यतरद्बाधितव्यम् । **ननु** शक्तिमात्रं विधेः प्रमेयं, संभवति चाननुष्ठीयमानयोरपि शक्तिरिति सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति नैकस्यापि बाधो युज्यते, तत्किमिदानीं सागरं तरेदग्निनार्सिचेदित्यादीनामप्युपपन्नं प्रामाण्यमननुष्ठीयमानस्यापि शक्तिसद्भावात् । तथा सामान्यविशेषशास्त्रयोरविरोधः स्यादाहवनीयपदयोरपि शक्तिसंभवात् । अतश्चाहवनीयस्य न पदेन बाधः स्यात् । अविरुद्धस्य दुर्बलस्यापि बाधायोगात् । नचात्र श्रुत्यादिभिरिव लिङ्गादीनां मूलोच्छेदेन श्रुतिकल्पनाविरोधाद्बाधसंभवः । सामान्यशास्त्रस्यापि प्रत्यक्षत्वात्तन्मात्रेण होमान्तरेष्विव पदहोमेऽप्याहवनीयसिद्धेः । अतोऽत्र सामग्रीविरोधासंभवात्प्रमेयविरोधादेव बाधोऽङ्गीकर्तव्यः । शक्तिमात्रे च प्रमेये तद्विरोधाभावान्न विरोधः सिध्येत् । एवमुत्पत्त्युत्पन्नशिष्टनित्यनैमित्तिकादिषु प्रसङ्गो दर्शयितव्यस्तस्मादवश्यमनुष्ठानविरोधे शास्त्रविरोधोऽङ्गीकर्तव्यः । किंच न शक्तिमात्रं भूतार्थकथनवद्विधिना बोध्यते । प्रवर्तनारूपो हि विधिरर्थात्समीहितसाधनशक्तिं बोधयति, प्रवर्तना च अशक्यविषया न संभवतीति स्यादेवाप्रामाण्यं, यदापि समीहितसाधनतैव विध्यर्थ इत्याश्रीयते तदापि न तन्मात्रं विधिः किंतु कर्तुः समीहितसाधनता, नचाशक्येऽर्थे कर्तृत्वं संभवतीत्यप्रामाण्यम् । यथोक्तं 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'ति तेनाशक्यानुष्ठानमर्थद्वयं बोधयतोः प्रमाणयोः प्रमेयविरोधादवश्यमन्यतरद्बाधितव्यम् । तत्र प्रत्यक्षेणानुमानस्य बाधोऽग्नाविव शैत्यानुमानस्येति सिद्धमप्रामाण्यं स्मृतीनां श्रुतिविरुद्धानाम् । व्रीहियवादिषु तु द्वयोरपि प्रत्यक्षत्वेनागृह्यमाणविशेषत्वान्नैकेनेतरस्य बाधः संभवति विरु-

---

इति शङ्कते—**नन्विति** । शक्तेः शास्त्रप्रमेयत्ववादिनापि न तन्मात्रेण शास्त्रपर्यवसानं वक्तुं युक्तमतिप्रसङ्गात्किंतु शक्तिरप्यनुष्ठानपर्यवसिताया भवति तादृश्येव शास्त्रार्थ इति वक्तव्यम् । ततश्चानुष्ठानविरोधेऽस्त्येव शास्त्रविरोध इति परिहरति—**तत्किमिदानीमिति** । **ननु** सर्वथाऽनुष्ठानायोग्ये स्थले शक्तिसद्भाव एवासिद्ध इत्यस्वरसादाह—**तथेति** । **आहवनीये जुहोतीति** सामान्यशास्त्रस्य ज्योतिष्टोमे सोमक्रयण्याः सप्तमे पदे जुहोतीति विशेषशास्त्रस्य विरोधो न स्यात् । पदहोमेऽप्याहवनीयस्य शक्तिसद्भावादित्यर्थः । **ननु** विरोधाभावेऽपि विशेषशास्त्रस्य प्रबलत्वात्तेन दुर्बलस्य सामान्यशास्त्रस्य बाधः किं न स्यादित्यत आह—**अविरुद्धस्येति** । नहि प्रबलं प्रबलमित्येव दुर्बलं बाधते किंतु सत्येव विरोध इति भावः । **ननु** विशेषशास्त्रस्य विशेषविषयत्वं क्लृप्तं, सामान्यशास्त्रस्य विशेषविषयत्वं कल्पनीयं, कल्पना च होमस्याधिकरणाकाङ्क्षानुसारेण वाच्या, सा चाकाङ्क्षाविशेषविहितेन शान्तेति श्रुत्यादिवदत्रापि कल्पनामूलोच्छेदादेव बाधः संभवतीत्यत आह—**तन्मात्रेणेति** । सामान्यशास्त्रस्य प्रत्यक्षमात्रेणेत्यर्थः । कल्प्यान्तरव्यावृत्तिपरो मात्रशब्दः । नहि सामान्यशास्त्रस्य विशेषविषयत्वं इदानीं कल्प्यं निर्विशेषं न सामान्यमिति न्यायेन विशेषविषयत्वस्यापि क्लृप्तत्वाद्विनाप्याघारं होमसंभवेन होमेनानाकाङ्क्षितत्वस्य दशमे तन्त्ररत्ने व्यक्तत्वाच्च । ततश्च कल्पनां विनैव होमान्तर इव पदहोमेप्याहवनीयः सिध्यतीति नात्र कल्पनामूलोच्छेदनिबन्धनबाधावकाश इत्यर्थः । **प्रमेयेति** । पदाहवनीययोर्युगपदाधारत्वविरोधादित्यर्थः । **एवमिति** । 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'ति यागोत्पत्तिसमये एव विहितयाऽऽमिक्षया, 'वाजिभ्यो वाजिन'मित्युत्पन्ने यागे पश्चाद्विहितस्य वाजिनस्य, तथा 'सप्तदशानुब्रूयाद्वैश्यस्ये'ति वैश्यनिमित्तेन सामिधेनीसाप्तदश्येन नित्यस्य तत्पाञ्चदश्यस्य च बाधो न स्यादित्यर्थः । आदिशब्देन नित्यकाम्यसावकाशनिरवकाशादिसंग्रहः । **ननु** नानुष्ठानपर्यन्तशक्तिः शास्त्रार्थः किंतु शक्तिमात्रमेव, आहवनीयस्य च पदहोमे शक्तिरस्तीति न तत्रापि प्रमेयापहारः, किंतु झटिति प्रवृत्तेन विशेषशास्त्रेण पदेऽनुष्ठापिते सामान्यशास्त्रस्य स्वविषयानुष्ठापकत्वमात्रम् । तथाचात्र तद्वदननुष्ठापकत्वेऽपि स्मृतिमूलश्रुतिसिद्धिरप्रत्यूहेत्यस्वरसादाह—**किंचेति** । भूतार्थकथनवदिदमत्र शक्तमित्येवं विधिर्न बोधयति किंतु प्रवर्तनात्मिकां शब्दभावनामेव शक्त्या प्रतिपादयति । प्रवर्तना च प्रवृत्तिफलको व्यापारः । **नचापुरुषार्थसाधने** पुरुषः प्रवर्तयितुं शक्यत इत्यर्थादेव समीहितसाधनताशक्तिं बोधयतीत्यर्थः । **ननु** अर्थादपि तद्बोधावश्यंभावे आवश्यकत्वाच्छक्तेरेव विध्यर्थत्वमस्त्वित्यत आह—**यदापीति** । **तन्मात्रमिति** । अन्यथा देवदत्तकृतेन कर्मणा यज्ञदत्तस्यापि फलं स्यादिति भावः । **नन्वन्यतरबाधे** प्रत्यक्षश्रुतिबाधो वा किं न स्यादित्यत आह—**तत्रेति** । कथंतर्हि विरुद्धानां व्रीहियवादिशास्त्राणां प्रामाण्यं तत्राप्यन्यतरस्योक्तरीत्यावश्यं बाध्यत्वादित्यत आह—**व्रीहीति** । अविद्यमानदोषयोरित्युपलक्षणं, स्वस्वार्थबोधकयोरित्यपि द्रष्टव्यम् । ततश्च 'अप्रामाण्यं त्रिधा

द्व्यर्थत्वाच्च न द्वयोराश्रयेन प्रामाण्यम्। नचाप्रामाण्यमविद्यमानदोषयोः संभवतीति गत्यन्तराभावादुभयोरपि पाक्षिको बाधः कल्प्यते। **नचैवं** शास्त्रस्याप्रामाण्यं, यथा सामान्यशास्त्रस्य विशेषशास्त्रबाधितस्यापि नाप्रामाण्यं तद्वदिहापि। **ननु** बाधितं भवति प्रमाणं च भवतीति व्याहतम्। सत्यमेतत्। **नत्वत्र** पारमार्थिकः शास्त्रार्थो बाध्यते येनाप्रामाण्यं शास्त्रस्य स्यात्, किंतु प्रतिपक्षमनालोचयतो यः शास्त्रस्य स्वरसतः सार्वत्रिकः प्रत्ययः सोऽत्र बाध्यते, तद्बाधाच्च पाक्षिकानुष्ठानपरत्वं शास्त्रस्य पर्यवसीयते। सामान्यशास्त्रस्येव विशेषानाक्रान्तविषयपरत्वमिति नाप्रामाण्यम्। **नचैवं** स्मृतिवशेन श्रुतिस्वरूपभङ्गेन स्पर्शनस्य पाक्षिकत्वं कल्पयितुं शक्यते। स्मृतेः स्वतोऽप्रामाण्येन श्रुतिबाधासामर्थ्यात्, श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिविहितस्पर्शविरोधेन विरुद्धत्वात्। **ननु** पाक्षिकत्वेनापि प्रत्यक्षश्रुतेरुपपत्तेर्यस्मिन्पक्षे सा नास्ति तत्र स्पर्शाभावेन वेष्टनस्यापि शक्यानुष्ठानत्वात्तद्विषये श्रुतिकल्पनमुपपन्नमितिचेन्न। इतरेतराश्रयत्वात्। **स्वरसतो** हि श्रुतिवाक्यादपाक्षिकं स्पर्शनं गम्यते। तस्मिंश्चापाक्षिके न स्मार्तश्रुतिकल्पनं, अशक्यत्वात्। नहि स्पृशता वेष्टयितुं शक्यते। तत्र स्पर्शनस्य पाक्षिकत्वे सति शक्यार्थतामापाद्य काल्पनिकी श्रुतिरात्मानं लभते। तस्यां च लब्धात्मिकायां तद्विरोधात्स्पर्शनस्य पाक्षिकत्वमितीतरेतराश्रयत्वं स्यात्। अतोऽत्र श्रुत्यसंभवाद्भ्रान्त्यादिमूलकत्वादप्रमाणमेवंजातीयकं स्मरणम्। **नह्यसंभवद्**भ्रान्त्यादिकं स्मरणं कस्यचिच्छक्यमध्यवसातुम्। संभाव्यमाने तु भ्रान्त्यादौ **दृष्टानुगुणा**दृष्टकल्पना। **असति** विरोधे कर्तृसामान्याद्वैदिकपरिग्रहदार्ढ्यानुपपत्त्या च श्रुत्यनुमानमिति न सर्वत्रैकरूप्यमिति॥

---

भिन्नं मिथ्यात्वाज्ञानसंशयै'रित्युक्तत्रिप्रकाराप्रामाण्यमप्यसंभावितमित्यर्थः। **ननु** अन्यतरस्याप्रामाण्यभीत्या बाधकल्पने उभयोरप्यप्रामाण्यमापतितमित्याशङ्क्य निराकरोति—**नचैवमिति**। दृष्टान्तोयं प्रसाध्याङ्गको बोध्यः। अतएव दृष्टान्तसाधारण्येन शङ्कते—**नन्विति**। **सत्यमिति**। शास्त्रतात्पर्यविषयस्य बाधे हि शास्त्रस्याप्रामाण्यं इह चोभयोः पाक्षिकत्वात् व्रीहिशास्त्रस्य यवानाक्रान्तविषयएव तात्पर्यं न सर्वत्र। एवं यवशास्त्रस्यापि। ततश्चोभयोरपि स्वस्वतात्पर्यविषये प्रामाण्यं नानुपपन्नं, यवशास्त्रमनालोचयतो व्रीहिशास्त्रमात्रपर्यालोचनया यः सर्वविषयः प्रत्ययः शब्दशक्तिमात्रालोचनेन तात्पर्यभ्रमादिना जायते स परं बाध्यते। एवंच बाधप्रामाण्ययोर्भिन्नविषयत्वान्न व्याघातः। एवंचानेनैव न्यायेन सामान्यशास्त्रस्थलेऽपि विशेषशास्त्रानालोचनदशायां यः सर्वविषयः प्रत्ययो जायते स एव बाध्यते। **नच** तत्र जातस्य प्रामाण्यं विशेषानाक्रान्त एव तस्य तात्पर्येण तात्पर्यविषयस्याबाधितत्वेन प्रामाण्योपपत्तेरित्येवं दृष्टान्तोऽप्युपपन्न इत्येवं तदेव दृष्टान्तयति—**सामान्यशास्त्रस्येति**। **श्रुतिस्वरूपेति**। स्वरसतोऽपाक्षिकार्थकत्वेन प्रतीयमानं यत् श्रुतिस्वरूपं तद्भङ्गेनेत्यर्थः। **ननु** स्मृतेः श्रुतिबाधासामर्थ्येऽपि कल्पितश्रुतेस्तद्बाधकत्वमस्त्वित्यत आह—**श्रुतिकल्पनस्य चेति**। नच प्रत्यक्षश्रुतिमपर्यालोचयतः स्मृतिमूलभूतश्रुतिकल्पनं संभवतीति वाच्यम्। अनालोचयतः कस्यचिज्जातस्यापि श्रुत्यनुमानस्य पश्चाद्विरुद्धश्रुतिदर्शनेन भ्रान्तित्वस्यैव कल्पनीयत्वादन्यथा 'इमामगृभ्ण'न्निति मन्त्रस्यापि लिङ्गाद्गर्दभरशनादाने विनियोगः स्यात्तत्रापी 'त्यश्वाभिधानीमादत्ते' इति शास्त्रमपर्यालोचयतः श्रुत्यनुमानसंभवात्। **ननु** प्रत्यक्षश्रुतिविरोधेऽपि श्रुत्यनुमानं नानुपपन्नं व्रीहियवादिश्रुतिवत्प्रत्यक्षश्रुतेः पाक्षिकत्वेनोपपत्तेरिति शङ्कते—**नन्विति**। इतरेतराश्रयत्वमेव विवृणोति—**स्वरसत इति**। ननु मन्वादीनां वीतदोषाणां भ्रान्त्यादिकमसंभावितमित्यत आह—**नहीति**। महर्षीणामपि व्यतिक्रमादिदर्शनाद्भ्रान्त्यादिकं संभाव्यत इत्यर्थः। **दृष्टानुगुणेति**। दृष्टस्पर्शनश्रुत्यनुगुणा सर्ववेष्टनस्मृतेः भ्रान्तिमूलकत्वकल्पनेत्यर्थः। **नन्वेवमष्टकादि**स्मृतिष्वपि भ्रान्त्यादिकमेव मूलं स्यादित्यत आह—**असतीति**। अष्टकादिस्मृतीनां मूलजिज्ञासायां वैदिकपरिग्रहादिदृष्टानुगुण्याद्विरोधाभावाच्च वेदमूलत्वमेवाध्यवसीयते नतु भ्रान्त्यादिमूलत्वं, तस्य वैदिकपरिग्रहादिदृष्टानुगुणत्वाभावादित्यर्थः। **नन्वेवमर्धवैशसं** स्यादित्यत आह—**इति न सर्वत्रेति**। न्यायमूलत्वादेतादृशमर्धवैशसं न दोषः। अन्यथोत्सर्गापवादमात्रोच्छेदापत्तेरिति भावः। सूत्रार्थस्तु श्रुतिविरोधे यन्मानान्तरानपेक्षं श्रुतिवाक्यं तदेव प्रमाणं स्यान्नतु स्मृतिवाक्यं, यस्मादसत्येव विरोधे स्मृतेः श्रुत्यनुमापकत्वमिति॥



दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

## हेतुदर्शनाच्च ॥ ४ ॥

**वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः ॥ प्रमा न वा श्रुत्यबाधात्प्रमा स्यादष्टकादिवत् ॥ ८ ॥**
**दृष्टलोभैकमूलत्वसंभवे श्रुत्यकल्पनात् ॥ सर्ववेष्टनवद्बाधहीनाप्येषा न हि प्रमा ॥ ९ ॥**

अधिकरणान्तरं वा । अत्र गृह्यमाणकारणं श्रुत्यविरुद्धस्मरणमुदाहरणं 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती'त्यादिकं । तत्प्रमाणमप्रमाणं वेति विचार्यते। कर्तृसामान्यात्प्रत्यक्षश्रुतिविरोधाभावात्प्रामाण्यमिति प्राप्ते उच्यते । न दृष्टे हेतौ हेत्वन्तरानुमानं क्रमते । दृष्टश्चात्र लोभ एव हेतुरिति । ततएव स्मृत्युपपत्तेर्नात्यन्तापरिदृष्टवैदिकवचनकल्पनोपपत्तिः । अतः श्रुतिविरुद्धं दृष्टकारणं च स्मरणमप्रमाणं ततोऽन्यत्प्रमाणमिति । यस्त्वाचार्यैरधिकरणभङ्गो दर्शितस्तत्रायमभिप्रायः । भवेदेवं स्मृतेर्बाधः यदि स्मृतेर्मूलं न कदाचिदपि कैश्चित्कस्यामपि शाखायां पठ्यत इत्यध्यवसातुं शक्यते तदा हि तत्र सर्वपुरुषाणामेव प्रत्यक्षप्रसराभावात्केवलं स्मृत्यनुमानसमधिगम्यं श्रुतिवाक्यमनुमानस्य च प्रत्यक्षविरोधेऽनुदयात्सकलजनसमस्तप्रमाणपथातिवर्तिगगनकुसुमायमानं स्यात् । नचैवमध्यवसातुं शक्यम् । अनन्तचरणाधाराणामनेकसहस्राणां वेदशाखानां कात्स्न्र्येनोपलम्भासंभवात् । एवंचानध्यवसीयमाने सत्यपि विरोधे दुर्लभतरमप्रामाण्यम् । नित्यानुमेयश्रुतिमूलतानिराकरणात् । यदा हि शाखान्तरविप्रकीर्णानि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि स्मृतीनां मूलं तदा वेष्टनवाक्यमपि पुरुषान्तरप्रत्यक्षतया संभाव्यमानं कथमिव शक्यं नास्तीति वदितुम् । द्वेधा हि तस्यासत्त्वावधारणं बाधकप्रमाणसद्भावात्साधकप्रमाणाभावाद्वा भवेत् । बाधकसद्भावोऽपि द्वेधा दृश्यादर्शनाद्वा तदभावनि-

---

**हेतुदर्शनाच्च ॥ ४ ॥** इदं सूत्रं सर्ववेष्टनस्मृतेरप्रामाण्येऽन्वाचयत्वेन वस्त्रमहत्त्वविषयलोभरूपहेतुपरतया व्याख्यायान्वाचयेनातीव प्रयोजनमिति मत्वाधिकरणान्तरत्वेनापि भाष्ये व्याख्यातं, तत्र गुणसूत्रत्वेन व्याख्यानं पूर्वाधिकरणे भ्रान्त्यादिमूलत्वकथनेनैव प्रदर्शितप्रायमिति मत्वा अधिकरणान्तरं प्रदर्शयति—**अधिकरणेति** । पूर्वाधिकरणद्वयेनागतार्थत्वसूचनाय विशेषयति—**गृह्यमाणेति** । लोके गृह्यमाणो यो लोभस्तन्मूलतया संभाव्यमानमित्यर्थः । **वैसर्जनेति** । अवान्तरदीक्षाविसर्जनार्थो होमो वैसर्जनहोमः स यजमानतत्पत्नीपुत्रभ्रातृषु समन्वारब्धेषु अहतेन वाससा उपरि संप्रच्छादितेषु कर्तव्यस्तत्र तत्संप्रच्छादनार्थं वासो वैसर्जनहोमीयं तदध्वर्युर्गृह्णातीत्यर्थः । आदिशब्देन यूपहस्तिनो दानमाचरन्तीत्यादिसंग्रहः । **वाजपेयादौ यूपपरिव्याणशाटकं यूपहस्तिशब्दार्थः** । अविरोधादित्यनेनैव विरोधलक्षणपूर्वाधिकरणसिद्धान्तहेत्वभावेन पूर्वपक्षोत्थानात्संगतिरित्यपि सूचितम् । दृष्टतया लोभमूलकत्वकल्पनायां दानविषयकस्मृतिमात्रस्याप्रामाण्यापत्त्याऽतिप्रसङ्ग इति पूर्वपक्षिणो भावः । **मन्वादि**प्रणीताष्टकादिस्मृतिसहपठिततया दानस्मृतीनां लोभमूलत्वकल्पनानवकाशान्मुक्ततया पठ्यमानानां वैसर्जनीयादिस्मृतीनां लोभमूलत्वेऽपि नातिप्रसङ्गः । ततश्च यजमानस्य कर्मसमाप्तिश्रद्धां तदनन्तरं स्वाच्छन्द्यं च दृष्ट्वा कर्ममध्ये स्वेन यदुक्तं तत्सर्वं विश्वस्य करिष्यतीति बुद्ध्या वस्त्रलोलुपेनाध्वर्युणा प्रवर्तितेयं स्मृतिरिति दृष्टलोभमूलकतया संभाव्यमानत्वादत्यन्तादृष्टश्रुतिकल्पनमन्याय्यमित्याशयेन सिद्धान्तमाह—**न दृष्ट इति** । वक्ष्यमाणभङ्गसौकर्यार्थमधिकरणद्वयसिद्धमर्थं निगमयति—**अत इति** । एवं यथाभाष्यमधिकरणद्वयमुपवर्ण्याचार्योक्तमधिकरणद्वयसिद्धान्तभङ्गं प्रदर्शयति—**यस्त्विति** । बाधितत्वाच्छ्रुत्यनुमानं न संभवतीत्युक्तं तदनुपपन्नं, बाधनिश्चयो ह्यनुमितिप्रतिबन्धकः । प्रकृते न बाधनिश्चयो नास्ति क्वापि स्मृतिमूलं न पठ्यत इत्येवं पाठाभावनिश्चयाभावेन श्रुत्यभावनिश्चयासंभवादित्याह—**भवेदेवमिति** । पाठाभावनिश्चये वा कथं श्रुत्यभावनिश्चय इत्यत उपपादयति—**तदाहीति** । **ननु** अनुपलब्ध्या पाठाभावो निश्चीयत इत्यत आह—**नचैवमिति** । चरणाः शाखाध्यायिपुरुषाः । अनेकसहस्राणां अतिबहूनामित्यर्थः । ततश्च सत्यपि पाठेऽनुपलम्भसंभवान्न ततस्तदभावनिश्चय इति भावः । **नन्वेवं** बाधनिश्चयाभावेऽपि बाधसंदेहादनुमितिप्रतिबन्धः स्यादित्यत आह—**एवंचेति** । अनुमानमात्रोच्छेदापत्तेर्बाधसंदेहो न प्रतिबन्धक इति भावः । सत्यपि विरोधे दुर्लभमप्रामाण्यं, किमु वक्तव्यं विरोधाभावे वैसर्जनीयवासोदानस्मृत्यादावित्यपिशब्दार्थः । यद्वा वार्तिकोक्तविरोधाभावसूचनार्थोऽपिशब्दः । यदि हि स्मृतिमूलभूतश्रुतेर्नित्यानुमेयत्वं स्यात्तदा तत्सत्ताशङ्काया अभावात्प्रत्यक्षश्रुतिविरोधे तदभावः स्वध्यवसानः स्यान्नित्यानुमेयत्वं च तस्या निराकृतमित्याह—**नित्येति** । विप्रकीर्णशाखावादे च तत्संदेह एव न तदभावनिश्चयः संदेहश्चानुमानेऽनुकूल एवेति न श्रुत्यनुमानानुपपत्तिरित्याशयेनाह—**यदाहीति** । ननु अनुपलब्धेर्विरुद्धश्रुतिदर्शनाच्च तदभावः शक्यतेऽध्यवसातुमित्यत आह—**द्वेधाहीति** । **दृश्येति** । दृश्यस्य दर्शनयोग्यस्यादर्शनमनुपलब्धिरित्यर्थः । **समस्तेति** । ततश्च तत्सर्वे-

यत्तार्थान्तरदर्शनाद्वा। न तावत्कृत्यादर्शनं समस्तशाखोपलम्भाभावादित्युक्तम्। नच विरुद्धश्रुतिदर्शनं तदभावनियतं येन तद्दर्शनात्तदभावोऽवधार्येत। विरुद्धानामपि ग्रहणाग्रहणादिश्रुतीनां सहस्रं दर्शनात्। तेन न तावद्बाधकसद्भावः। नापि साधकाभावः। स खल्वात्मनः सर्वेषां वा भवेत्। न तावत्स्वप्रमाणनिवृत्त्या वस्त्वभावनिश्चयः। अतिप्रसङ्गात्। नच समस्तपुरुषाणामत्र प्रमाणं नास्तीति शक्यं निश्चेतुम्। संभवति हि तस्य शाखान्तरसमाम्नानं पुरुषान्तरैश्च प्रत्यक्षीकरणम्। नित्यानुमेयत्वे हि सर्वेषामिहानुमानमेव प्रमाणं स्यात्। तच्च प्रत्यक्षश्रुतिविरोधान्नोदेतीति सर्वपुरुषाणां साधकप्रमाणाभावादीषत्करमभावावधारणं स्यात्। नच तदस्तीत्युक्तमन्धपरंपरादोषात्। अतः पुरुषान्तराणामिह प्रत्यक्षसंभवात्तस्य चात्मप्रत्यक्षतुल्यत्वान्न स्मार्तश्रुतिनिराकरणम्। तदुक्तम् 'आत्मीयात्परकीयस्य दौर्बल्यं नैव किंचन॥ प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्॥' यदा चैवं स्वशाखापठितश्रुतितुल्यप्रमाणतया स्मार्तमपि वेदवाक्यं संभाव्यते तदा स्मृतिलिङ्गकानुमानं न केनचित्प्रतिवध्यत इति न निर्मूलत्वं स्मृतेर्वक्तुं शक्यते। ततश्च वेष्टनस्पर्शनयोरात्मीयपरकीयप्रत्यक्षश्रुतिविहितयोस्तुल्यकक्षप्रमाणतया विकल्पो न्याय्यः। यदि परमात्मीयस्य प्रत्ययस्य विस्रम्भणीयत्वात्तेनैव परप्रत्यक्षमनादृत्य व्यवहारः क्रियते ततः क्रियताम्। अनादरश्च सहस्रतमेऽप्यंशे परप्रत्ययस्यादृष्टमूलस्य न्यायाभासनिमित्तत्वसंभवाद्भ्रान्त्यादिमूलत्वसंभवाद्वा अङ्गं वा समभिव्याहारादविशेषादुभौ वा इत्यादिवत्। नत्वप्रामाण्याध्यवसानम्। व्यवहारविशेषौचित्यप्रतिपादनार्थं चेदं सूत्रं 'विरोधे त्वनपेक्षं स्यादि'ति। श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्षं श्रुतिवाक्यं तदेव ग्राह्यम्। असति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणमिति। यथाहुः—'यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते॥ तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते॥' इति। तेन फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति सिद्धम्।

---

ऽप्युपलब्ध्ययोग्यतया योग्यानुपलब्धिर्नास्तीत्यर्थः। तदभावनियतपदार्थान्तरदर्शनमिह विरुद्धश्रुतिदर्शनमेव वक्तव्यमन्यस्याभावादित्याशयेनाह—**नचेति**। विरुद्धश्रुतिदर्शनं दृश्यमानाविरुद्धश्रुतिरित्यर्थः। **समाम्नानमिति**। विप्रकीर्णवादाभ्युपगमादित्यर्थः। इदंच प्रत्यक्षीकरणयोग्यत्वार्थमुक्तं, विप्रकीर्णश्रुतिवादे सर्वपुरुषप्रत्यक्षाभावावधारणाशक्यत्वं व्यतिरेकमुखेनाप्याह—**नित्येति**। **ननु** पुरुषान्तराणां प्रमादसंभवात्तत्प्रत्यक्षमकिंचित्करमित्यत आह—**तस्यचेति**। पुरुषान्तरस्य हि प्रमादो न निश्चितः। संभावनामात्रं च न स्मृतिमूलश्रुतिव्यतिरेकनिश्चयक्षममिति भावः। **स्मार्तेति**। स्मृतिमूलभूतेत्यर्थः। **नन्वेवमपि** स्मृतिमूलभूतश्रुतेः संभावनामात्रं न निश्चय इति कथं स्मृतेः प्रामाण्यमत आह—**यदाचेति**। एवं संभाविते श्रुतिवाक्ये सति 'इयं स्मृतिर्वेदमूला मन्वादिप्रणीतस्मृतित्वाद्वैदिकपरिगृहीतत्वाद्वा अष्टकादिस्मृतिवत्' इत्यनुमानेन श्रुतिसद्भावो निश्चेतुं शक्यत इत्यर्थः। **ननु** विरुद्धार्थत्वादुभयोः कथं प्रामाण्यमित्यत आह—**ततश्चेति**। **ननु** यत्र उभयं तुल्यवदनुष्ठानार्हं तत्र विकल्पः, इहत्वात्मीयप्रत्यक्षस्य विस्रम्भणीयतरत्वात्तस्यैवानुष्ठानमिति न विकल्पसंभव इत्यत आह—**यदीति**। **व्यवहारः** अनुष्ठानमित्यर्थः। शास्त्रतस्तुल्यवदनुष्ठानार्हत्वं विकल्पे प्रयोजकं नतु पुरुषबुद्धित इति न विकल्पानुपपत्तिरिति भावः। **परप्रत्यक्षमनादृत्येति**। योयं परप्रत्यक्षेऽनादर उक्तः सोऽपि नात्यन्तं किंत्वल्पीयानेवेत्याह—**अनादर इति**। तस्य वा किं मूलमित्यत आह—**परेति**। **अङ्गं वेति**। पिण्डपितृयज्ञो दर्शकर्मणोऽङ्गम्। 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती'तिदर्शकर्मवाचकामावास्याशब्दसमभिव्याहारादित्यर्थः। चतुर्थे च 'पितृयज्ञः स्वकालत्वादनङ्गं स्या'दित्यत्र अमावास्याशब्दस्य कालपरत्वेन दर्शकर्मसमभिव्याहाराभावान्न तदङ्गं पिण्डपितृयज्ञः, किंतु स्वतन्त्र एवेति व्यवस्थापयिष्यते। तदधिकरणपूर्वपक्षमूलत्वादिदं कल्पसूत्रवचनं न्यायाभासमूलमित्यर्थः। **अविशेषादिति**। दर्शपूर्णमासयो 'राग्नेयं चतुर्धा करोती'ति यच्चतुर्धाकरणं तद्विषयमिदं कल्पसूत्रवाक्यम्। अग्निसंबन्धाविशेषादाग्नेयाग्नीषोमीयावुभावपि चतुर्धाकुर्यादित्यर्थः। सत्यप्यग्नीषोमीयस्याग्निसंबन्धे नासावाग्नेयशब्देनाभिधातुं शक्यः। तत्र केवलस्याग्नेर्देवतात्वाभावेन सोमसापेक्षतया समर्थत्वाभावेन देवतातद्धितानुपपत्तेरतः केवलाग्नेयस्यैव चतुर्धाकरणं नत्वग्नीषोमीयस्यापीति तृतीये शेषस्तु गुणसंयुक्त इत्यत्र वक्ष्यते, तदधिकरणपूर्वपक्षमूलत्वादिदं न्यायाभासमूलमित्यर्थः। एवं चाङ्गं वेत्यादिवन्न्यायाभासमूलत्वशङ्कया परप्रत्ययस्य यत्किंचिदनादरसद्भावेऽप्युक्तरीत्या श्रुतिमूलकत्वसंभवान्न तावन्मात्रेणाप्रामाण्यमित्याह—**नत्विति**। सूत्रस्य तर्हि का गतिरित्यत आह—**व्यवहारेति**। **तदेवेति**। अनपेक्ष्यमिति पाठे विरोधे स्मृतिवाक्यमनुष्ठानेऽनपेक्ष्यमित्यर्थो बोध्यः। **नन्वेवमप्यप्रामाण्यमापन्नमित्यत आह—तेनेति**। तावताप्यननुष्ठापकत्वलक्षणमेवाप्रामाण्यमापतितं नतु बाधितार्थकत्वल-

---

१ मिति स्थितम्.

भाष्यमप्यननुष्ठानरूपाप्रामाण्यपरं व्याख्येयम् । यद्वा यान्येतानि त्रयीविद्भिर्न गृहीतानि शाक्यादिभिर्निर्मितानि धर्मशास्त्राभासानि तेषामनेनाप्रामाण्यं पूर्वोक्तसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेनोच्यते । तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम्, मन्वादिवद्वेदमूलत्वेन प्रामाण्यमिह निराक्रियते । तेषां ह्यसत्यपि प्रसिद्धवैदिकैरग्निहोत्रादिभिः कर्तृसामान्ये भिन्नप्रस्थाना वेदा मूलं भविष्यति । यथैवाथर्वणस्य त्रयीभिन्नप्रस्थानरूपता तथा चतुर्भ्योऽपि वेदेभ्यो भिन्नरूपा वेदाः संभवेयुः । ते चेदानीं प्रलीनाः, मन्वादीनामपि हि केचित्प्रलीनशाखामूलतामनुमन्यन्ते तद्वदत्रापि भविष्यति । इत्थंच संभवति प्रामाण्ये नाप्रामाण्यं युक्तमिति भवति केषांचिदाशङ्का, साच मन्दविषन्यायेन निराकर्तव्यैवेत्येवमर्थमिदमधिकरणम् । कृतः पूर्वःपक्षः । सिद्धान्तस्तु—अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या मन्वादिष्वनुपलभ्यमानोऽपि वेदः कल्पितः, शाक्यादिष्विदमत्यन्तविपरीतमवैदिकमप्रमाणं च तदित्येवशिष्टानां स्मरणं, वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते । दृष्टानुसारिणी च कल्पना न तद्वैपरीत्येन । अतोऽत्र वेदकल्पना दवीयसीत्यप्रामाण्यमेव तेषामसन्मूलत्वादिति ॥

पदार्थप्राबल्याधिकरणम् ॥ ४ ॥

## शिष्टाकोपे विरुद्धमिति चेत् ॥ ५ ॥ [न, शास्त्रपरिमाणत्वात् ॥ ६ ॥ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥]

आचान्तेनेत्यमा मा वा स्मृतिरेषा न मा भवेत् ॥ वेदं कृत्वेति यः श्रौतः क्रमस्तेन विरोधतः ॥ १० ॥
आचान्त्यादिः पदार्थोऽत्र क्रमो धर्मः पदार्थगः ॥ धर्मस्य धर्म्यपेक्षत्वादबाधादस्ति मानता ॥ ११ ॥
शाक्योक्ताहिंसनं धर्मो न वा धर्मः श्रुतत्वतः ॥ न धर्मो नहि पूतं स्याद्गोक्षीरं श्वदृतौ धृतम् ॥ १२ ॥
सदाचारोऽप्रमा मा वा निर्मूलत्वादमानता ॥ अष्टकादेरिवैतस्य समूलत्वात्प्रमाणता ॥ १३ ॥

'आचान्तेन कर्तव्यं' 'यज्ञोपवीतिना कर्तव्यं' 'दक्षिणाचारेण कर्तव्य'मित्येवमादीनि क्रत्वङ्गस्मरणा-

---

क्षणमिति न दोष इति भावः । इदानीं बाधितार्थप्रत्ययजनकत्वरूपाप्रामाण्यपरत्वेन वर्णकान्तरमाह—**यद्वेति । शाक्यादीति ।** आदिशब्देन वार्तिकोक्तपाशुपतपाञ्चरात्रादिसंग्रहः । **धर्मेति ।** सिद्धान्ताभिप्रायेण धर्मशास्त्राभासत्वं बोध्यम् । **पूर्वेति ।** 'अपिवा कर्तृसामान्यात्प्रमाणमनुमानं स्या'दिति स्मृत्यधिकरणसिद्धान्तसूत्रेऽग्निहोत्रादीनां वैदिकपदार्थानां ये कर्तारस्त एवाष्टकादिस्मृतीनामिति कर्तृसामान्यात्प्रामाण्यमुक्तम्, तदभावे प्रामाण्यं नास्तीत्येवं तत्प्रत्युदाहरणरूपेणेत्यर्थः । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म 'तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वा'दिति सूत्रेण पुनरुक्तिमाशङ्क्याह—**तेषामिति । ननु** मन्वादिस्मृतीनां प्रत्यक्षवेदार्थकरम्बितत्वाद्विप्रकीर्णवेदवाक्यमूलत्वसंभवेन भवतु प्रामाण्यं, शाक्यादिग्रन्थानां तु सर्वत्र प्रत्यक्षश्रुतिविरुद्धार्थानां न विप्रकीर्णश्रुतिवाक्यानि मूलत्वेन कल्पयितुमुचितानीति कथं तेषां प्रामाण्यमित्यत उक्तं **भिन्नप्रस्थाना इति ।** वैदिकार्थकरम्बितत्वाभावेन विप्रकीर्णवाक्यमूलत्वासंभवेऽपि वेदान्तरमूलत्वं नानुपपन्नमित्यर्थः । **ननु** वेदान्तरमसंभावितमेवेत्यत आह—**यथेति ।** नन्वेवं चत्वारो वेदा इति सकललोकप्रसिद्धपरिमाणविरोध इत्यत आह—**ते चेति ।** अप्रलीनवेदाभिप्राया प्रसिद्धिरिति भावः । **ननु** यैः शाक्यादिग्रन्था आद्रियन्ते तैरप्रमाणं वेद इत्येवाभ्युपगम्यते । ततश्च शाक्यादिग्रन्थानां वेदमूलतया प्रामाण्यानङ्गीकारात्तन्निराकरणार्थमिदमधिकरणं व्यर्थमित्यत आह—**केषांचिदिति ।** नहि शाक्यादिग्रन्थाभिमानिभिस्तेषां वेदमूलतया प्रामाण्यमुच्यत इति तन्निराकरणार्थमिदमधिकरणं, किंतु वैदिकानामेव मध्ये केषांचिन्मन्दानामष्टकादिस्मृतिवत्तेषामपि वेदमूलतया प्रामाण्यशङ्कया परिग्रहः प्रसज्येतेति तन्निराकरणार्थमिदमिति न वैयर्थ्यमित्यर्थः । **ननु** वैदिकपरिग्रहाभावेऽप्यहिंसादिकतिपयवैदिकार्थयोगित्वेन हेत्वन्तरेण वेदमूलत्वानुमानं किं न स्यादित्यत आह—**दृष्टेति ।** वेदविद्वेषिजनपरिग्रहेण वेदमूलत्वव्यतिरेकनिश्चयाद्धेत्वन्तरेणापि वेदानुमानं न प्रवर्तत इत्यर्थः । तदीयग्रन्थेष्वहिंसावचनं न विहिताग्नीषोमीयादिव्यतिरिक्तविषयं, किंतु तत्साधारण्येन हिंसामात्रनिषेधपरमिति तदंशेऽपि न वैदिकार्थसंस्पर्श इति भावः । दवीयसी दूरतरा ॥

**शिष्टाकोपे विरुद्धमितिचेत् ॥ ५ ॥** स्मृत्युक्तानां पुरुषार्थानां क्रतुमध्येऽवश्यानुष्ठेयत्वाभावेन विरोधाशङ्काया अभावात्क्रत्वङ्गेत्युक्तम् । सर्ववेष्टनादिस्मृतीनामपि क्रत्वङ्गतयैव वेष्टनादिबोधकत्वात्तद्व्यावृत्त्यर्थं क्रत्वङ्गस्मरणान्यपि न सर्वाण्युदाहरणं, किंतु कतिपयान्येवेत्याशयेनाह—**आचान्तेनेति ।** यद्वैदिकं कर्म कर्तव्यं तत्सर्वं कृताचमनेनैव कर्तव्यमित्यर्थः ।

---

१ परिगृहीतानि. २ प्रस्थाना वा. ३ भिन्नरूपता. ४ दिपु त्वत्यन्तं वैदिकविपरीत. ५ अष्टकादीनाम्. ६ श्रौतक्रमेण.

न्युदाहरणं किं प्रमाणमप्रमाणं वेति विचारः। तदर्थं च प्रत्यक्षश्रुत्या विरुध्यन्ते नवेति। तदर्थमप्येभिः क्रतुमध्येऽनुष्ठीयमानैः कस्यचिच्छ्रुत्यर्थस्य क्रमादेर्भवति बाधो न वेति। अथवाभ्युपेत्यैव विरोधं प्रमाणमप्रमाणं वेति विचारः। तदर्थं च प्रमाणप्रमेयबलाबलविसंवादे किं ज्याय इति चिन्त्यते। तथाहि श्रुतिस्मृत्योः प्रमाणयोः श्रुतिर्बलीयसीति स्थितम्। अतः श्रौतत्वात्क्रमादयः स्मार्तेभ्य आचमनादिभ्यो बलीयांसो विज्ञायन्ते। प्रमेयस्वरूपालोचने तु पदार्थगुणत्वात्क्रमादेराचमनादयः पदार्था बलीयांसोऽवगम्यन्त इति बलाबलद्वयविसंवादात्कतरेण निर्णय इति संदेहः। तत्र पूर्वःपक्षः—'श्रुत्युक्तानां क्रमादीनां स्मार्तैराचमनादिभिः॥ व्याकोपः स्यादतस्तावद्विस्पष्टैव विरोधिता॥ ततः श्रुतिबलीयस्त्वात्स्मृतेः स्यादप्रमाणता॥ पूर्वभाविप्रमाणस्थं प्रमेयस्याद्बलाबलात्॥ ज्यायस्तेनैव निर्णीते न पश्चादितरादरः। नैराकाङ्क्ष्यात्प्रमातॄणामतः स्मृत्यर्थबाधनम्॥' 'वेदं कृत्वा वेदिं कुर्या'दिति क्रमः। कालश्च यः प्रधानेनाङ्गानामविप्रकर्षः प्रयोगप्राशुभावश्च प्रयोगवचनावगतो यश्च पूर्वाह्णादिः, परिमाणं चाविस्मृतसर्वपदार्थानुष्ठानसिद्ध्यर्थं प्रयोगविधिनैवाकाङ्क्षितं पदार्थविधिप्रचयावगतं तदेतत्रितयमपि क्रमकालपरिमाणात्मकमाचमनादिभिरन्यथात्वमापद्यते। तेन विरोधस्तावदस्त्येव। विरोधे च श्रुतेर्बलीयस्त्वात्स्मृत्यर्थस्याचमनादेर्बाधः। नच श्रुत्यर्थत्वेऽपि पदार्थगुणभूतत्वात्क्रमादेर्दौर्बल्यमाचमनादेः स्मृत्यर्थस्यापि पदार्थत्वाद्बलीयस्त्वमिति वाच्यम्। प्रमाणपूर्वको हि प्रमेयावगमः। तेन पूर्व-

---

एवमग्रेऽपि दक्षिणाचारेण दक्षिणकरेणेत्यर्थः। **किमिति**। अत्र विरोधाविरोधावेव विचार्यौ। विरोधाविरोधयोः प्रामाण्याप्रामाण्ये स्मृत्यधिकरणविरोधाधिकरणाभ्यामेव सिद्धे इति प्रामाण्याप्रामाण्यविचारः फलविचारतयोपन्यस्तः। एवंच विरोधएव क्वास्ति क्व नास्तीत्येवं विरोधाधिकरणविषयव्याप्त्यर्थत्वादस्य तेन संगतिर्बोध्या। हेतुदर्शनाधिकरणस्य तु समनन्तरस्यापि विरोधाधिकरणाभ्युच्चयहेतुभूतहेतुदर्शनपरस्य स्वातन्त्र्येणाप्यप्रामाण्यापादनशक्तिप्रतिपादनपरस्य वा तदुक्तत्वान्न तेन पृथक्संगत्यपेक्षेति द्रष्टव्यम्। **क्रतुमध्य इति**। अनेन क्रतूपक्रमे कर्तव्यमात्रं नोदाहरणं तस्य श्रौतक्रमादिविरोधित्वाभावादिति सूचयति। **ननु** क्रमादेः पदार्थगुणत्वात्तदपेक्षया पदार्थानां प्राबल्यात्क्रमादिबाधेन शाखान्तरीयपदार्थोपसंहारोऽस्तीति शाखान्तराधिकरणे सूत्रकारेणैव वक्ष्यमाणत्वात्तेनैव गतमिदमित्यस्वरसादाह—**अथवेति**। अस्मिन्पक्षे प्रामाण्याप्रामाण्यविचारो न फलविचारः किंत्वधिकरणाङ्गविचार एव। अतश्च विरोधे सत्यपि प्रामाण्यव्युत्पादनाद्विरोधाधिकरणेनापवादिकी संगतिरस्मिन्पक्ष इति द्रष्टव्यम्। **प्रमाणेति**। प्रमाणबलाबलस्य प्रमेयबलाबलस्य च विरोध इत्यर्थः। प्रमाणबलाबलं प्रमेयबलाबलं चोपदर्शयन् तदर्थसंशयस्य मूलसंशयोपपादकत्वं विवृणोति—**तथाहीति**। **विज्ञायन्त इति**। ततश्च प्रमाणबलाबलज्यायस्त्वे प्रबलप्रमाणगम्येन क्रमादिना दुर्बलप्रमाणगम्यस्याचमनादेर्बाधात्स्मृतेरप्रामाण्यं फलतीत्यर्थः। **अवगम्यन्त इति**। तथाच प्रमेयबलाबलज्यायस्त्वे दुर्बलप्रमाणगम्यस्याप्याचमनादेः स्वरूपतः प्रबलस्य क्रमादिना स्वरूपतो दुर्बलेन बाधासंभवात्स्मृतेः प्रामाण्यं फलिष्यतीत्यर्थः। द्वितीयपूर्वपक्षं संगृह्णाति—**पूर्वभावीति**। वेदो दर्भमुष्टिविशेषः। **इति क्रम इति**। एवंप्रकारेण श्रुत्यर्थपाठादिगम्यः क्रम इत्यर्थः। **कालश्चेति**। अङ्गानां प्रधानाविप्रकर्षलक्षणः प्रयोगप्राशुभावलक्षणः पूर्वाह्णादिलक्षणश्चेति त्रिप्रकारः कालः। तत्र 'पूर्वाह्णो वै देवाना'मित्यादिश्रुत्या पूर्वाह्णादिकाल आहत्य विहितः। इतरौतु प्रयोगविधिना सर्वाङ्गसहितप्रधानानुष्ठापकेन एकस्मिन्क्षणे तत्साहित्यासंभवात्साहित्यनिर्वाहार्थमाक्षिप्तौ। ततश्च प्रयोगवचनादवगत इत्येतदविप्रकर्षप्राशुभावयोर्विशेषणं बोध्यम्। **ननु** परिमाणमनुष्ठेयपदार्थानामियत्तारूपं न कस्यापि श्रुतिवाक्यस्यार्थ इत्यत आह—**अविस्मृतेति**। किं कश्चित्पदार्थो विस्मृतः किंवा सर्वमनुष्ठितमिति संदेहस्य पदार्थेयत्तावधारणंविना निराकर्तुमशक्यत्वादुक्तसंशयनिराकरणार्थं प्रयोज्यपदार्थेयत्तारूपं परिमाणं सकलपदार्थानुष्ठापकः प्रयोगविधिरपेक्षमाणः तत्तत्पदार्थविधिसंघातगतं परिमाणं स्वीकरोतीत्येवं प्रयोगविधेरेव परिमाणमर्थ इत्यर्थः। **तदेतदिति**। तत्र वेदवेद्यनुष्ठानमध्ये यदि क्षुतादिनिमित्तमाचमनमनुष्ठीयेत तदा क्रमः प्रधानसंनिकर्षलक्षणः कालश्च विरुध्यते तथानुष्ठेयपदार्थभूयस्त्वे पूर्वाह्णादिः परिमाणं च विरुध्यते। एवं तन्मध्य एव दैवाद्यज्ञोपवीतस्रंसने तस्य यथापूर्वं स्थापने क्रियमाणे क्रमकालौ विरुध्येते। दक्षिणहस्तेनैव करणे प्रयोगप्राशुभावो विरुध्यते इत्येवं यथासंभवं योज्यम्। इदानीं द्वितीयपूर्वपक्षं तदीयसिद्धान्तनिराकरणपूर्वकं विवृणोति—**नचेति**। **बलीयस्त्वमिति**। तथाच प्रमेयबलाबलाश्रयणेन स्मृतेः प्रामाण्यमुपपद्यत इत्यर्थः। **ननु** प्रमेयावगमस्य प्रमाणपूर्वकत्वेऽपि प्रमाणबलाबलस्य प्रमेयबलाबलापेक्षया प्रथममुपस्थितत्वला-

---

१ स्वं प्रतिपद्यते. २ अष्टकास्मृतिः.

भाविप्रमाणस्थं बलाबलं पूर्वं गम्यते । तेनचाचमनादिभ्यः क्रमादीनां बलीयस्त्वे निर्णीते निराकाङ्क्षत्वान्न पश्चादवगतं प्रमेयबलाबलमादर्तव्यम् । तस्मादाचमनादिस्मृतीनामप्रामाण्यमिति । सिद्धान्तस्तु 'पदार्थप्राप्त्यपेक्षत्वात्क्रमादेरविरोधिता ॥ विरोधेऽपि च दौर्बल्यं पदार्थेभ्यो गुणत्वतः ॥' सर्वेषु हि पदार्थेषु प्राप्तेषु प्रयोगवेलायां तद्विशेषणतया क्रम आश्रीयत इति, तेन पदार्थप्राप्त्यपेक्षत्वात्क्रमस्यात्यन्तिकजघन्यप्रमाणकोऽपि पदार्थः पूर्वं प्राप्नोति पश्चात्क्रमः सर्वपदार्थप्रयोगाङ्गतयावतरन्नपि न पदार्थैर्विरुध्यते । कालोऽप्येवमेव प्रयोगाङ्गत्वात्, यावन्तः पदार्था अवधारितास्तेषां सर्वेषामेव पूर्वाह्णादिकालत्वं प्रधानसंनिकर्षः प्रयोगप्राशुभावश्च । परिमाणं तु न कस्यचिच्छास्त्रस्यार्थः । प्रयोगविधिरपि न तदाक्षिपति । अन्यथाप्यविस्मरणसिद्धेः । अथापि शास्त्रार्थस्तथापि प्रयोगौपयिकत्वात्प्रयोगस्य च प्रयोज्यपदार्थप्राप्त्यपेक्षत्वादविरोधित्वम् । यद्यपि क्रमादीनामाचमनादिभिर्विरोधः स्यात्तथापि सर्वपदार्थगुणत्वाद्दौर्बल्यम् । आचमनादयस्तु पदार्थत्वाद्बलवन्तः । नच प्रमाणबलाबलस्य पूर्वभावित्वम् । नहि प्रमाणयोः स्वरूपतो विरोधः अपितु प्रमेयविरोधनिमित्तः । प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति । यद्यदैव प्रमेययोर्विरोधो गम्यते तदैव तयोर्बलाबलमपीति ततएव निर्णये कृते नैराकाङ्क्ष्यात्प्रमाणबलाबलमनादर्तव्यमिति न स्मृतेर्बाधः । यद्धि स्वभावत एवाप्रमाणं (शाक्यवाक्यं)तत्सर्वदैवानादर्तव्यम् । यत्तु बलवद्विरोधापेक्षमप्रमाणं तत्तदभावापेक्षया प्रमाणमेवेत्यवगन्तव्यम् । नचात्र बाधकमस्ति प्रमाणबलाबलस्याबाधकत्वात् । तस्मादाचमनादेर्बलीयस्त्वात्तदनुरोधेनैव श्रुत्युक्तक्रमादयो बाध्यन्त इत्याचमनादिस्मृतीनामबाधात्प्रामाण्यमिति ।

---

भात्तेनैव निर्णीते न पश्चादितरादर इत्ययुक्तमित्यत आह—**तेनेति** । श्रुतिस्मृतिलक्षणं हि प्रमाणं न चक्षुरादिवदनवगतमेव प्रमेयावगतिहेतुः, किंत्ववगतम् । ततश्च प्रमेयावगमात्पूर्वमेव श्रुतिस्मृतिलक्षणप्रमाणावगमावश्यंभावेन तदवगमदशायामेव तद्गतबलाबलावगमात्प्रमाणबलाबलं प्रमेयबलाबलात्पूर्वमेवावगम्यत इत्यर्थः । ननु प्रमाणस्य प्रमेयावगत्यर्थत्वात्प्रमेयबलाबलानुसारेण पूर्वभाविप्रमाणबलाबलं त्याज्यमित्यत आह—**तेनचेति** । **पदार्थेति** । सकलपदार्थप्राप्त्यनन्तरं कल्प्यमानस्य क्रमादेस्तदनुगुणतयैव कल्पनादिति भावः । यद्यपि पूर्वाह्णादिलक्षणकालस्यान्तरा स्मार्तबहुपदार्थानुष्ठाने विरोधोऽस्त्येव तथापि प्रत्यासत्त्यादिना कथंचित्तत्राप्यविरोध उपपादनीयः । अन्यथा भिन्नस्कन्नादिहोमानां श्रौतानामुपसंग्रहो न स्यादिति भावः । द्वितीयसिद्धान्तं संगृह्णाति—**विरोधेऽपीति** । ननु क्रमस्य पदार्थप्राप्तिसापेक्षत्वेऽपि वेदं कृत्वा वेदिरिति ययोः पदार्थयोः श्रुत्यादिना क्रमोऽवगम्यते तयोरेव पदार्थयोः प्राप्तिरपेक्ष्यते नेतरेषां, तथाच क्रमस्य स्मार्तपदार्थप्राप्तिसापेक्षत्वाभावात्कथं न तद्विरोधित्वमित्यतः पूर्वार्धं विवृणोति—**सर्वेष्विति** । यद्यपि द्वयोरेव पदार्थयोः पौर्वापर्यलक्षणः श्रुत्यादिगम्यः क्रमोऽवगम्यते तथापि नासौ तत्तत्पदार्थगोचरप्रातिस्विकविधिभिः संबध्यते अनाकाङ्क्षितत्वात्, किंतु प्रयोगविधिना स हि सर्वपदार्थाननुष्ठापयन्क्रममपेक्षते । प्रयोगविधिश्च सकलपदार्थप्राप्त्यनन्तरमात्मानं लभत इति युक्तं क्रमस्य स्मार्तपदार्थप्राप्त्यपेक्षत्वमिति भावः । यद्वा वितैतिलक्षणक्रमाभिप्रायेणायं ग्रन्थो बोध्यः । नन्वेवमपि प्रयोगविधिः श्रौतसकलपदार्थप्राप्त्यैव लब्धात्मको न जघन्यप्रमाणकपदार्थप्राप्तिमपेक्षत इत्यत आह—**जघन्येति** । जघन्यप्रमाणकपदार्थप्राप्तिमपि प्रतीक्ष्यैव प्रयोगविधिरात्मानं लभत इत्यवश्यं स्वीकार्यम् । अन्यथा तस्य लिङ्गादिगम्यपदार्थप्राप्त्यपेक्षत्वमपि न स्यादेवंच स्मार्तपदार्थानामपि प्राप्तिः प्रयोगविधिनापेक्षितैवेति भावः । **काल इति** । प्रयोगप्राशुभावरूपस्य प्रधानसंनिकर्षरूपस्य च कालस्य प्रयोगविधिलभ्यत्वादविप्रतिपन्नं प्रयोगाङ्गत्वं, पूर्वाह्णादिलक्षणस्यापि कालस्याकाङ्क्षाबलात्प्रयोगविधिनैवान्वयो ननु तत्तत्पदार्थविधिभिरिति तस्यापि प्रयोगाङ्गत्वमेकादशन्यायेन सिद्धम् । ततश्च त्रिविधस्यापि कालस्य प्रयोगाङ्गत्वात्सर्वपदार्थप्राप्तिसापेक्षत्वमस्तीत्यर्थः । **तेषामिति** । तेषां सर्वेषामेवाङ्गं न तदेकदेशस्येत्यर्थः । परिमाणस्य प्रयोगविध्यर्थत्वमुक्तं निरस्यति—**प्रयोगेति** । **अन्यथेति** । ध्यानाद्युपायान्तरेणेत्यर्थः । ननु ध्यानादेरनियतत्वान्न ततो नियमेनाविस्मरणसिद्धिरिति तदर्थं प्रयोगविध्यर्थत्वमेवावश्यं वाच्यमित्याशङ्कायामभ्युपगमवादेनाह—**अथापीति** । **सर्वेति** । सर्वे पदार्था यस्य प्रयोगस्य तद्गुणतयेत्यर्थः । विततिलक्षणक्रमे तु यथाश्रुत एव ग्रन्थः । प्रमाणयोः श्रुतिस्मृत्योः स्वरूपेण प्रथममवगमेऽपि न तद्विरोधज्ञानस्य पूर्वभावित्वं, तस्य प्रमेयविरोधज्ञानसापेक्षत्वादित्याह—**नहीति** । ननु सर्ववेष्टनादिस्मृतिवदाचमनादिस्मृतेरपि विरुद्धार्थत्वाविशेषादप्रामाण्यमेव किं न स्यादित्यत आह—**यद्धीति** । अतएव शाक्यादिवचनं सर्वदैवाप्रमाणमिति भावः । **श्रुत्युक्तेति** । आचमनादिस्मृतिमनालोचयतः केवलश्रुतिदर्शनेन वेदवेद्योरव्यवहितपौर्वापर्या-

---

१ मवगम्यते. २ अङ्गतया. ३ अत्यन्तजघन्य. ४ स्वभावादेवाप्रमाणं. ५ विततिरनेकधर्मः.

**नन्विदमेवाधिकरणं पूर्वपक्षस्यातिमन्दत्वात्, यज्ञोपवीतादेश्च प्रत्यक्षश्रुतिविहितत्वेनानुदाहरणत्वात् तस्माद्यत्पूर्वं शाक्यादिशास्त्राभासानामप्रामाण्यमुक्तं तत्रैव चोद्योत्तरत्वेनाद्यं सूत्रद्वयं व्याख्येयम्। यत्तु तेष्वहिंसादिवचनं श्रुतिस्मृतिशिष्टं न कोपयति तत्प्रमाणं भवत्विति चेत्तत्रोत्तरं 'न शास्त्रपरिमाणत्वादि'ति। न खलु येन केनचित्प्रमितो धर्मः फलं साधयति (तत्प्रमाणं भवति।) 'स्वाध्यायोऽध्येतव्यः'। 'वेदोऽखिलो धर्ममूलं तद्विदां च स्मृतिशीले धर्मज्ञसमयः प्रमाणं वेदाश्च'। 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश'त्येवमादिभिरेव धर्मप्रमितेर्नियमनादन्यतः प्रमितस्य फलसाधनत्वाभावेन धर्मत्वाभावात्तेषामप्रामाण्यमिति। यत्तु तृतीयं**

---

दिलक्षणक्रमादिगोचरा या बुद्धिर्जायते सा बाध्यत इत्यर्थः। ततश्च न तत्र श्रुतेस्तात्पर्यं किंतु स्मार्तपदार्थमन्तर्भाव्यैव यत्पौर्वापर्यादिकं तत्रैव तात्पर्यमिति न श्रुतेरप्रामाण्यप्रसक्तिरिति। एवं यथाभाष्यमधिकरणमुपवर्ण्यात्राचार्योक्तं भङ्गमाह—**नन्विति। मन्दत्वादिति।** शुचिना कर्म कर्तव्यमित्याचमनादेः क्षुतादिनिमित्ताशुचित्वनिराकरणादिना कर्तृसंस्कारतया सकलवैदिकपदार्थाङ्गत्वेन अनाचान्तेनायज्ञोपवीतिना च कृतवेदेर्वैगुण्यापत्त्या वेद्या अप्याचमनादिकमङ्गम्। एवंच स्वाङ्गस्य स्वव्यवधायकत्वाभावात्साङ्गवेदेवेदकरणानन्तर्यप्रतिपादनाद्वा श्रुतिस्मृत्योर्विरोधाभावेन प्रथमपूर्वपक्षस्य मन्दत्वं, तथाचमनादिस्मृतीनां मूलभूतश्रुतिनिश्चयाभावे प्रामाण्यासिद्ध्याचमनादेस्तत्प्रमेयत्वाभावात्तत्सिध्यर्थं मूलश्रुतिनिश्चये विरोधाधिकरणभङ्गसमये प्रतिपादितरीत्या उभयोरपि प्रत्यक्षश्रुतिप्रमाणकत्वेन प्रमाणबलाबलविभागाभावाद्द्वितीयपूर्वपक्षस्यापि मन्दत्वमित्यर्थः। **प्रत्यक्षेति।** अस्मदादिप्रत्यक्षेत्यर्थः। 'तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या' इति। इदं प्रत्यक्षश्रुतिवाक्यं यज्ञोपवीतस्य विधायकम्। यद्यपि 'अजिनं वासो वा दक्षिणत उपवीये'त्यग्रिमवाक्यपर्यालोचनया यज्ञोपवीत्येवाधीयीतेत्यत्र यज्ञोपवीतशब्दस्याजिनवाससोरुपन्यासविशेषमात्रपरत्वमेव प्रतीयते नतु त्रिसूत्रनवतन्तुकत्रिवृद्ग्रन्थियुक्तयज्ञोपवीतपरत्वं, तथाप्यजिनवासोग्रहणं न यज्ञोपवीतशब्दार्थान्तर्गतं किंतु 'दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीत'मित्येतावन्मात्रस्यैव यज्ञोपवीतसंज्ञाकरणात्तन्मात्रमेव यज्ञोपवीतशब्दार्थः। अतएव **भट्टभास्करेणा**जिनं वासो वेति द्रव्यविधिरित्युक्त्वा, अथ यज्ञोपवीतस्य लक्षणमाहेत्येवं दक्षिणत उपवीयेत्यादिव्याचक्षाणेन तावन्मात्रमेव यज्ञोपवीतस्वरूपमुक्तम्। एवंच सामान्येन लक्षणकथनानुसारादजिनवासोग्रहणस्य प्रदर्शनार्थत्वमाश्रित्य नवतन्तुकादिसाधारण्येनैव यज्ञोपवीत्येवाधीयीतेतिश्रुतिः प्रवर्तत इत्याचार्याणामाशयः। अतएव भाष्यार्थसंग्रहकारेणाप्युक्तम्—'नवतन्तु दक्षिणं कृत्वा सव्यांसे यन्निधीयते। तत्सूत्राद्युपवीतं स्याद्दैवे कर्मणि तत्स्मृत'मिति। यद्वा 'यज्ञोपवीतिना कर्तव्य'मिति स्मृतौ यज्ञोपवीतशब्दएव कर्माङ्गत्वेन यज्ञोपवीतसमर्पकः श्रूयते नान्यः। ततश्चाजिनं वासो वेति श्रुतौ कर्माङ्गत्वेन श्रुतं यद्यज्ञोपवीतं तत्परत्वमेव तस्य नतु 'नित्यं यज्ञोपवीती'त्यादिस्मृतिगतयज्ञोपवीतशब्दवन्नवतन्तुकादिपरत्वं, तस्माद्युक्तं प्रत्यक्षश्रुतिमूलत्वमित्याचार्याशयो बोध्यः। 'यथा वै दक्षिणः पाणिरेवं देवयजन'मिति दक्षिणपाणिसाम्येन देवयजनस्तुतिर्दक्षिणपाणेर्दैवयजनवद्यज्ञाङ्गत्वेऽवकल्प्यते नान्यथेति तदुन्नीतं दक्षिणाचारस्य विधानम्। नचैवं 'यथा सव्यस्तथा श्मशानकरण'मित्यस्यापि प्रेतकर्माङ्गभूतसव्यहस्तविध्याक्षेपकत्वापत्तिरिति वाच्यम्। तत्राचारविरोधेन तदनाक्षेपेऽपि दक्षिणहस्ते तदाक्षेपे बाधकाभावात्, न सोमेनोच्छिष्टा भवन्तीति सोमभक्षणे उच्छिष्टाभाववचनं उच्छिष्टत्वनिमित्ताचमनाभावप्राप्त्यर्थं सदुच्छिष्टान्तरेष्वाचमने लिङ्गमिति। तदुन्नीतं क्षुताद्युच्छिष्टनिमित्ताचमनस्य विधानम्। **नच** स्मृतिप्राप्ताचमननिषेधार्थत्वेनोपपत्तेर्नास्य सामान्यवचने लिङ्गत्वमिति वाच्यम्। स्मृतेः स्वतःप्रमाणत्वाभावेन तत्प्रामाण्यनिर्वाहार्थत्वेनावश्यं श्रुतिवाक्यस्य कल्पनीयत्वे सति श्रौतलिङ्गोन्नीतवाक्यस्यैव स्मृतिमूलत्वकल्पनौचित्यात्। यद्यपि आचमनदक्षिणाचारविधायकवाक्ययोर्न प्रत्यक्षत्वं तथापि प्रत्यक्षश्रुतिसामर्थ्यगम्यत्वात्प्रत्यक्षश्रुतित्वमुपपद्यत इति भावः। **उक्तमिति।** वार्तिक इति शेषः। तत्राद्यं चोद्यपरत्वेन व्याचष्टे—**यत्त्विति।** द्वितीयमप्युत्तरपरत्वेन व्याचष्टे—**तत्रेति। न शास्त्रेति।** एतावन्त्येव धर्मे प्रमाणानि धर्मप्रमाणशास्त्राणां परिमितत्वादित्यर्थः। **वेदादिभिरेवेति।** यद्यपि 'स्वाध्यायोऽध्येतव्यः' इति नियमविधिना वेदादेव धर्मप्रमितिर्नियमिता न स्मृत्यादिभिस्तथापि स्मृत्यादीनां स्वातन्त्र्याभावाद्वेदनियमात्तदुपजीविनियमोऽप्यर्थात्सिध्यतीत्याशयः। **ननु** वेदादिभिरेव धर्मः प्रमातव्य इति नियमो न शक्यः प्रतिपादयितुं, व्युत्पन्नस्य शाक्यादिस्मृतिभ्योऽपि धर्मप्रमितेर्वारयितुमशक्यत्वादित्यत आह—**अन्यत इति।** धर्मत्वमलौकिकश्रेयःसाधनत्वरूपं शाक्यादिग्रन्थादर्थं ज्ञात्वानुतिष्ठन्नपि ततः श्रेयो न लभते। अध्ययनविधिबलेन वेदजन्यज्ञानस्यैवानुष्ठानोपयोगित्वात्। अतः शाक्यादिप्रतिपाद्यत्वमुखेन तस्य धर्मत्वमेव नास्तीति भावः। यद्यप्यहिंसादिषु निषेधेषु वेदेनैव ज्ञातं हिंसादिकं प्रत्यवायाय भवतीति वा, वेदेनैव ज्ञातं तद्वर्जनं प्रत्यवायपरिहाराय भवतीति वा नियमविध्यसंभवान्निषेधवाक्येष्वध्ययननियमस्य जपयज्ञादिष्वेवोपयोग इति **न्यायरत्नमालायां** प्रपञ्चितत्वाच्छाक्यादिप्रतिपाद्याया अप्यहिंसायाः प्रत्यवायपरिहारलक्षणफलसाधनत्वं संभवति, तथापि

---

१ यद्धि. २ एवमादिभिर्वेदादिभिः.

सूत्रं 'अपिवा करणाग्रहणे प्रयुक्तानि प्रतीयेरन् (तेष्वदर्शनाद्विरोधस्ये'ति) तत्सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम् । अत्रानिबन्धनाः सदाचारा वसन्तोत्सवादिविषया उदाहरणं प्रमाणमप्रमाणं वेति संदेहः । तदर्थं च श्रुतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम् । तत्र स्मृत्यधिकरणे कर्तृसामान्यादाचाराणामपि स्मृतिवत्प्रतिपादितमपि प्रामाण्यं निर्निबन्धनतया व्यतिक्रमसाहससंकराद्याक्षिप्य समाधीयते । यदि वसन्तोत्सवादयोऽष्टकादिवद्वेदमूला भवेयुस्ततस्तद्वदेव मन्वादिभिरपि निबध्येरन् । अनिबन्धनात्तु नैषां मूलं केनचिद्दृष्टम् । आचारपरंपरामात्रमेव दृष्ट्वा मन्वादिभिरपि सदाचारः प्रमाणमित्येवं परोक्षरूपेणाभिधानात्प्रामाण्यमनुमीयत इति मन्यामहे । तत्र सैवान्धपरंपरा स्यात्, धर्मव्यतिक्रमसाहसदर्शनाच्च नाचारमात्राच्छक्यं धर्माध्यवसानमिति पूर्वः पक्षः । सिद्धान्तस्तु—धर्मबुद्ध्या वैदिकैरनुष्ठानमसति वैदिकत्वेऽनुपपन्नम् । व्यतिक्रमसाहसदर्शनं तु रागद्वेषादिनिबन्धनत्वान्न धर्मबुद्धिनिबन्धनम् । धर्मबुद्धिनिबन्धनस्य चाचरितस्यागृह्यमाणकारणत्वात् श्रुतिस्मृतिविरोधादर्शनाच्च धर्मेलिङ्गत्वाव्यभिचारः । मन्वादिभिस्तु लाघविकैर्यदि नाम स्वरूपेणानिबध्यसामान्यात्मना शिष्टाचारः प्रमाणमित्युक्तम् । नैतावता कश्चिद्दोषः । तस्मात्स्मृतिवदाचाराणामपि धर्मे प्रामाण्यं सिद्धम् ॥

शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ५ ॥

## तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥ [शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥]

यवादिशब्दाः किं व्यर्था नो वार्यम्लेच्छसाम्यतः ॥ दीर्घशूकप्रियंग्वाद्या द्वयेऽप्यर्था विकल्पिताः ॥ १४ ॥
यत्रान्या इति शास्त्रस्था प्रसिद्धिस्तु बलीयसी ॥ शास्त्रीयधर्मे तेनात्र प्रियंग्वादि न गृह्यते ॥ १५ ॥
यवाद्यर्थानिर्णयेन तद्वाक्यं न प्रमेति चेत् ॥ न शास्त्रस्य बलित्वेन तत्प्रसिद्ध्यार्थनिर्णयात् ॥ १६ ॥
यो मातुलविवाहादौ शिष्टाचारः स मा न वा ॥ इतराचारवन्मात्वममात्वं स्मार्तबाधनात् ॥ १७ ॥
स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ॥ अनुमेया स्मृतिः स्मृत्या बाध्या प्रत्यक्षया तु सा ॥ १८ ॥
लौकिको वाक्यगो वार्थस्त्रिवृदादेः समत्वतः ॥ उभौ विध्यर्थवादैकवाक्यत्वादस्त्विहान्तिमः ॥ १९ ॥

आचारप्रसङ्गाच्छब्दस्यार्थे प्रयोगरूपाचारविप्रतिपत्तौ बलाबलं चिन्त्यते । अत्र भाष्ये आर्यम्ले-

---

क्यादिप्रतिपाद्यानां तटाकाराममण्डपनिर्माणदयादीनां धर्मप्रमाणत्वेन परिगणितशास्त्रबहिर्भूतशाक्यग्रन्थतो ज्ञात्वानुष्ठितानां फलवत्त्वं नास्तीत्यत्र तात्पर्यम् । एवंचाहिंसादिवचनमिति पूर्ववाक्येऽतद्गुणसंविज्ञानबहुव्रीहिर्बोध्यः । नचैवमहिंसादिलक्षणनिषेधेषु तेषां प्रामाण्यं स्यादिति वाच्यम् । शाक्यादिग्रन्थेष्वहिंसावचनं हिंसासामान्यनिषेधपरं नतु विहिताग्नीषोमीयादिपशुहिंसाव्यतिरिक्तविषयम् । ततश्च वेदविरोधादेव तत्राप्यप्रामाण्यमिति भावः । अष्टकादिकं व्यावर्तयति—**अनिबन्धना इति** । स्मृतिनिबन्धनरहिता इत्यर्थः । शाक्याद्याचारं व्यावर्तयति—**सदाचारा इति** । **वसन्तेति** । फाल्गुनकृष्णप्रतिपदि क्रियमाणः परस्परजलसेको वसन्तोत्सवः । आदिशब्देन कार्तिकशुक्लप्रतिपदि क्रियमाणप्रदीपदानादीनां ग्रहणम् । शाक्यादिस्मृतिवदाचारस्याप्यप्रामाण्यमित्युत्थितेः संगतिः । **ननु** स्मृत्यधिकरण एवाचारप्रामाण्यमपि साधितमित्यत आह—**तत्रेति** । **व्यतिक्रमेति** । इन्द्रादेरहल्यागमनादिलक्षणधर्मव्यतिक्रमस्य वसिष्ठादेः पुत्रशोकाद्भृगुपतनादिरूपात्मवधप्रवृत्तिलक्षणसाहसस्य दर्शनादित्यर्थः । **नन्व**निबन्धनमसिद्धम् 'आचारश्चैव साधूनामात्मनस्तुष्टिरेव च' इति निबद्धत्वादित्याशङ्क्य निर्निबन्धनत्वं प्रातिस्विकरूपेणानिबन्धनमभिमतमित्याशयेन विवृणोति—**यदीति** । सामान्यतो निबन्धनं तु तदानींतनाचारदर्शनमात्रेणाप्युपपद्यमानमन्धपरंपराप्रसङ्गान्न प्रामाण्यसाधनक्षममित्याह—**आचारेति** । नाचारमात्रं हेतुः येनोक्तदोषः स्यात्, किंतु धर्मबुद्ध्यानुष्ठीयमानाचारविशेषः । अतो नोक्तदोष इत्याह—**धर्मबुद्ध्येति** । **अगृह्यमाणेति** । व्यतिक्रमादिस्थलइव रागद्वेषादिलक्षणकारणाग्रहादित्यर्थः । अनेन सौत्रं कारणाग्रहणे इत्येतद्व्याख्यातम् । **श्रुतिस्मृतीति** । अनेन तेष्वदर्शनाद्विरोधस्येति सूत्रांशो व्याख्यातः । विशिष्यानिबन्धनमप्यन्यथासिद्धत्वाभावात् श्रुत्यभावनिश्चायकमित्याशयेनाह—**मन्वादिभिरिति** । **नैतावतेति** । विशिष्यमूलभूतश्रुतिं दृष्ट्वैव शिष्टाचारः प्रमाणमिति सामान्येन निबन्धनं कृतं नत्वाचारमात्रादिति न प्रागुक्तान्धपरंपराप्रसङ्ग इत्यर्थः ॥

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्** ॥ ८ ॥ ननु यववराहादिशब्दार्थविचारस्य कथमत्र संगतिरित्यत आह—**आचारेति** । इदंच पूर्वत्राचारप्रामाण्यं प्रतिपाद्यत इति वार्तिककारपक्षाभिप्रायेण । भाष्यकारपक्षे तु

---

१ मित्येवमुक्तं. २ निबन्धत्वा.

च्छविशेषानुपादानाद्वाक्यशेषेण सिद्धान्तकथनात् शिष्टाचारस्य च पूर्वप्रकृतत्वाद्यत्र शिष्टानामेव मिथोऽभिधानविप्रतिपत्तिः केषांचिद्वाक्यशेषानुगुणा केषांचिदननुगुणा तत्र तुल्यबलतामाशङ्क्य वाक्यशेषानुगुणाया बलीयस्त्वं प्रतिपाद्यत इति लक्ष्यते, तत्तूदाहरणाभावाद्यवादिशब्दानां दीर्घशूकादिष्वेव सर्वशिष्टप्रयोगादन्यस्यापि शिष्टप्रयोगस्य विप्रतिपत्तिविषयस्योदाहरणस्यादर्शनात् 'संदिग्धे तु वाक्यशेषा'दित्यनेन गतप्रायत्वाद्वाक्यशेषाच्चेन्निर्णयस्ततोऽसति वाक्यशेषेऽभियुक्तानभियुक्तप्रसिद्ध्योश्च तुल्यबलत्वप्रसङ्गादयुक्तमिति मत्वाचार्यैरन्यथाधिकरणं व्याख्यातम् । यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः यथा पीलुशब्दमार्या वृक्षविशेषे प्रयुञ्जते म्लेच्छास्तु हस्तिनि । तत्र चिन्त्यते किं तुल्यबलत्वमुतार्यप्रसिद्धिर्बलीयसीति । तत्र—'लोकप्रसिद्धिगम्यत्वाच्छब्दार्थस्योभयोरपि ॥ समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलम् ॥' यः शास्त्रप्रमाणको धर्मस्तत्र शास्त्राभियोगशून्येभ्यो म्लेच्छेभ्यस्तदभियोगशालिनामार्याणामस्तु बलीयस्त्वम् । व्यवहारगम्यस्तु शब्दार्थः सच म्लेच्छानामप्य-

---

बलाबलप्रसङ्गात्सङ्गतिर्बोध्या । अत्र भाष्यकारेण यवमयश्चरुर्भवति वाराही उपानहावुपमुञ्चते वैतसे कटे प्राजापत्यान्संचिनोतीत्याद्युदाहृत्य यववराहवेतसशब्दान्के[१]चित्प्रियङ्गुवायसजम्बुवृक्षेषु प्रयुञ्जते, अन्ये दीर्घशूकसूकरवञ्जुलेषु प्रयुञ्जत इति प्रयोगद्वयस्यापि तुल्यबलत्वात्प्रियंग्वादीनां दीर्घशूकादीनां च यवादिशब्दार्थत्वाध्यवसानाद्विकल्पेन ग्रहणमिति पूर्वपक्षयित्वा यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति वाक्यशेषाद्दीर्घशूका यवा निश्चीयन्ते । अन्यौषधिम्लानिकालो हि वसन्तस्तत्र दीर्घशूकानामेव मोदमानत्वात् । प्रियङ्गूणां शरत्कालिकानां वसन्ते स्वरूपगन्धस्याप्यभावाद्वाराहं गावोऽनुधावन्तीति वाक्यशेषाद्वराहशब्दस्य सूकरार्थत्वम् । गावो हि सूकरं चतुष्पात्त्वेनानुकुर्वन्तिं वत्सबुद्ध्या वानुधावन्ति नतु वायसम् । अप्सुजो वेतस इति वाक्यशेषाच्च वेतसशब्दस्य जलवृक्षरूपवञ्जुलवाचकत्वम् । तस्माद्दीर्घशूकादीनामेव ग्रहणमिति सिद्धान्तितम् । तदिदमनुपपन्नम् । यवादिशब्दानां दीर्घशूकादिष्वेव सर्वैः शिष्टैः प्रयुज्यमानतया तत्र शिष्टानामभिधानविप्रतिपत्त्यभावादिति वार्तिककारेण दूषितम् । **नन्विदमयुक्तं**, भाष्ये शिष्टानामत्र परस्परविमतिरित्यनुक्तत्वेन आर्यम्लेच्छविमतिपरत्वेनापि भाष्योपपत्तेरित्याशङ्क्य भाष्यस्वारस्यपर्यालोचनया शिष्टानामेवाभिधानविप्रतिपत्तिपरत्वप्रतीतेराचार्योक्तदूषणमुपपन्नमित्युपपादयति—**अत्रेत्यादिना । वाक्यशेषेणेति** । यद्यार्यम्लेच्छविषयत्वं भाष्यस्य स्यात्तदार्याणां स्वरूपतो बलवत्त्वात्स्वरूपबलेनैव सिद्धान्तः कथनीयः स्यादिति भावः । **पूर्वप्रकृतत्वादिति** । यद्यपि भाष्यकारमते प्रातिस्विकाचारविषयाधिकरणं नास्ति तथापि स्मृत्यधिकरणादिषु सर्वत्रापि स्मृतितुल्ययोगक्षेमत्वेनाचाराणामपि विषयत्वादस्ति तेषां प्रकृतत्वमिति भावः । यद्वा स्मृतिनिबद्धाचाराणां प्रकृतत्वात्तदभिप्रायेणायं ग्रन्थो बोध्यः । **ननु** न्यायव्युत्पादन एव तात्पर्यात्तस्य चोदाहरणान्तरे फलवत्त्वान्नेदं दूषणमित्यत आह—**अन्यस्यापीति । ननु** सर्वदेशनिवासिशिष्टाचारविप्रतिपत्त्यभावो दुरध्यवसानः योग्यानुपलब्ध्यभावादित्यस्वरसादाह—**संदिग्ध इति । ननु** तत्र वाक्यशेषेण न शब्दार्थनिर्णयः क्रियते, किंत्वञ्जनसाधनत्वेन कीदृशं द्रव्यमुपादेयमिति संशये तेजो वै घृतमिति वाक्यशेषाद्घृतलक्षणं द्रव्यमुपादेयमित्युपादाननिर्णयः क्रियते, इहतु शब्दार्थनिर्णय इति भेदान्न गतार्थत्वमित्यत उक्तं **प्रायत्वादिति** । निर्णेतव्यभेदेऽपि 'विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धमितरेणावधार्यते' इति न्यायस्य तुल्यत्वादस्ति गतार्थत्वम् । अतएव सारस्वतं मेषमित्यत्र वाग्वै सरस्वतीति वाक्यशेषात्सरस्वतीशब्दः प्रकृतिः नतु सरस्वच्छब्द इत्यादिनिर्णयोऽपि अक्ताधिकरणन्यायलभ्य इति भावः । यदि आर्याणामेव यत्र विप्रतिपत्तिस्तत्र वाक्यशेषान्निर्णय इति स्वीक्रियते तदा यत्र वाक्यशेषस्तत्र वाक्यशेषानुगुणाननुगुणप्रसिद्ध्योर्बलाबलसंभवान्निर्णयः स्यादसति तु वाक्यशेषे यवैर्यजेतेत्यादौ दीर्घशूकानां प्रियङ्गूणां च विकल्पः स्यात्तत्र प्रसिद्धिद्वयस्यापि तुल्यबलत्वादित्याह—**वाक्यशेषाच्चेदिति । अभियुक्तेति** । वाक्यशेषानुगुणाननुगुणप्रसिद्ध्योरित्यर्थः । यद्वा **ननु** भाष्यस्याप्यार्यम्लेच्छविप्रतिपत्तिविषयत्वमेव स्वीक्रियते ततश्च 'संदिग्धे तु वाक्यशेषा'दित्यनेन गतार्थत्वं, तत्र हि वाक्यशेषसमभिव्याहृतविधिवाक्यगतसंदेहापाकरणमात्रं क्रियते, इहतु वाक्यशेषानुगुण एव शब्दस्यार्थ इति निश्चयेन तदसमभिव्याहृतेऽपि संदेहापनयेन भेदादित्यत आह—**वाक्यशेषाच्चेदिति** । यद्यार्यम्लेच्छविप्रतिपत्तौ वाक्यशेषो निर्णायकस्तदा वक्ष्यमाणपील्वादिषु वाक्यशेषाभावादार्यम्लेच्छप्रसिद्ध्योस्तुल्यबलत्वं स्यादित्यर्थः । **लोकेति** । लौकिकव्यवहारगम्यत्वादित्यर्थः । **ननु** शास्त्रार्थ इव लोकेऽप्यार्याणां प्राबल्यं किं न स्यादिति शङ्कां निराकुर्वन् श्लोकं व्याचष्टे—**य इति** । अभियोगोऽभिनिवेशः । **नन्वनादित्वादार्यव्यवहारस्य** प्राबल्यमित्यत आह—

---

१ मस्ति. २ म्लेच्छाः.

विशिष्ट इति प्रमाणाविशेषादविशिष्टो द्वयोरपि शब्दार्थः । यच्चार्येष्वनादित्वकारणमवध्यस्मरणं तदपि समानं म्लेच्छेष्वपि । तस्मात्समेयमभिधानविप्रतिपत्तिः स्यादिति प्राप्ते ब्रूमः—'प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते ।। अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ।।' न तावदेवं न्याय्यं उभावपिशब्दार्थाविति । अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्, शब्दप्रयोगेऽपि चान्यतरस्याप्यनवधारणाद्व्यवहारानुपपत्तिप्रसङ्गात्कदाचित्कस्यचिदुपादानेऽष्टदोषविकल्पापत्तेरेकत्र मुख्यत्वेनान्यत्र गौणत्वेनापि प्रयोगोपपत्तेः गौणेऽपि प्रयोगे पार्श्वस्थानां मुख्याभिमानसंभवात्तैरेव चान्येभ्यो मुख्यत्वस्य कथनान्मुख्याभिधानपरम्परानुवृत्तिसंभवात् । तत्र यदि न कथंचिदपि विशेषोऽवधार्येत तदा गत्यभावाद्द्वयोरप्यभिधेयता स्यात् । अस्ति त्वभियुक्तानभियुक्तयोर्विशेषः । शास्त्रस्था हि शब्दैकसमधिगम्यधर्माधर्माविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथंचित्सिद्धेः प्रयोजनाभावान्नाविप्लुतिसिद्धौ यतन्ते, अतो यद्यपि प्रतिपादकतामात्रं म्लेच्छेष्वपि सिध्यति तथापि विप्लुतिसंभवान्न तेषु शब्दार्थतत्त्वसिद्धिरित्यार्यप्रसिद्ध्यैव निर्दोषया बलीयस्याऽर्थसिद्धिरिति पील्वादिशब्दा वृक्षाद्यर्थाभिधायिन इति स्थितम् । भाष्यमप्यार्यम्लेच्छविगानाभिप्रायं व्याख्येयम् । वाक्यशेषश्चाभ्युच्चयत्वेनोक्तः न मूलहेतुतयेति ।। स्मृत्याचारविरोधे वा यत्र मन्वादिनिबन्धनानामनि-

---

यमेति । सूत्रार्थं दर्शयन्नुपसंहरति—**तस्मादिति** । म्लेच्छव्यवहारसिद्धपदार्थग्रहणेऽपि कस्यचिद्विरोधाभावादिति भावः । **प्रतिपादकतेति** । अर्थप्रत्यायकतामात्रं म्लेच्छेष्ववगम्यते नत्वयंशब्दार्थ इति शक्तिपर्यन्तनिश्चय इत्यर्थः । **ननु** येन म्लेच्छव्यवहारेण प्रतिपादकता निश्चीयते तेनैव शक्तिनिश्चयोऽप्यस्त्वित्याशङ्क्य तथासति नानार्थत्वप्रसङ्ग एव बाधक इत्याशयेनाह—**न तावदिति । अदृष्टेति** । प्रमाणान्तरादृष्टेत्यर्थः । **ननु** प्रकरणादिनाऽन्यतरावधारणं भविष्यति असतिप्रकरणादावनियमेन यस्यकस्यचिदुपादानमस्त्वित्यत आह—**कदाचिदिति** । हस्तिवृक्षयोरुभयोरप्यर्थत्वकल्पनानन्तरं पीलुशब्दप्रयोगे यदा हस्ती गृह्यते तदा वृक्षार्थत्वग्राहकं यत्प्रमाणं तस्य प्राप्तप्रामाण्यपरित्यागः अप्राप्ताप्रामाण्यस्वीकारश्चेति दोषद्वयं, पुनः प्रयोगे यदा वृक्षो गृह्यते तदा वृक्षार्थताग्राहकप्रमाणस्यैव परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्याग इति दोषद्वयमित्येवं चत्वारो दोषाः । तथा हस्त्यर्थताग्राहकप्रमाणस्य प्राप्तप्रामाण्यपरित्यागः अप्राप्ताप्रामाण्यस्वीकार इति दोषद्वयं, पुनःप्रयोगे यदा हस्ती गृह्यते तदा हस्त्यर्थताग्राहकप्रमाणस्य स्वीकृताप्रामाण्यपरित्यागः परित्यक्तप्रामाण्यस्वीकारश्चेति । एवं पर्यायत्रयेणैकैकस्मिन्प्रमाणे चत्वारश्चत्वारो दोषा इत्यष्टदोषदुष्टविकल्पापत्तिरित्यर्थः । कथंतर्हि तत्र मुख्याभिमानोऽत आह—**गौणेऽपीति** । यत्र कश्चित्कंचित्प्रत्यङ्गुल्या निर्दिश्य हस्तिनि पीलुशब्दं प्रयुङ्क्ते तत्र श्रोता उन्नतत्वसादृश्येनासौ प्रयुङ्क्त इति गौण्यार्थं प्रतिपद्यते, तटस्थस्तु तयोर्व्यवहारं पश्यन्मुख्यत्वं भ्राम्यति सच मुख्यतयाभिमन्यमानः परानपि तथैव बोधयतीति मुख्याभिमानपरम्परानुवृत्तिः संभवतीत्यर्थः । ततश्चावध्यस्मरणेऽपि म्लेच्छव्यवहारस्य युक्तितः सादित्वमेवेति भावः । एवं तर्हि वृक्षादिष्वपि नानार्थत्वं न स्यादित्याशङ्क्य प्रयोगद्वयस्य विशेषावधारणानवधारणाभ्यां वैषम्यमभिप्रेत्याह—**तत्रेति । शास्त्रस्था हीति** । एकद्रव्यसाध्यादृष्टस्य द्रव्यान्तरेणोत्पत्त्यसंभवाच्छब्दार्थविप्लवे धर्मविप्लवः स्यादिति भीत्या शक्तिभ्रमादवाचकशब्दप्रयोगे गावीगोणीशब्दप्रयोग इवापशब्दप्रयोगनिमित्तप्रायश्चित्तभीत्या च शिष्टाः शब्दार्थतत्त्वं परिपालयन्तीत्यर्थः । अनेनैव पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वाद्धस्तिवाचकत्वाभिप्रायेण पीलुशब्दप्रयोगस्यापशब्दप्रयोगत्वाभावादाहिताग्नेरपशब्दप्रयोगनिमित्तं प्रायश्चित्तं न भवति, सिद्धान्ते तु भवतीति प्रयोजनमपि सूचितम् । **भवदेवस्तु** 'पैलवौदुम्बरौ वैश्यस्य दण्डा'विति गौतमस्मृतौ हस्तिभवास्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्पः पूर्वपक्षे, सिद्धान्ते तु पीलुवृक्षदण्ड एवेति प्रयोजनमाह—**भाष्यमपीति** । भाष्ये कः पुनरत्र निर्णयः यः शास्त्रस्थानां स शब्दार्थः के शास्त्रस्थाः शिष्टा इत्यादिना शिष्टप्रसिद्धिबलवत्त्वेन सिद्धान्तकथनादार्यम्लेच्छव्यवहारविमतिपरत्वं वाक्यशेषस्याभ्युच्चयत्वं चावसीयत इति भावः । **नचैवमपि** प्रियंगवादीनां दीर्घशूकादीनां च विकल्पेन ग्रहणमिति पूर्वपक्षोऽनुपपन्नः । सकृदुच्चरितस्यार्थद्वयप्रतिपादकत्वासंभवेन विकल्पाप्रसङ्गात् विशेषानवधारणे त्वनध्यवसायादप्रामाण्यमेव स्यान्नतु विकल्प इति वाच्यम् । यस्य योऽर्थः प्रसिद्धतरस्तस्य यवादिशब्दश्रवणे स एवार्थः प्रतीयत इति पुरुषभेदेनोभयग्रहणाद्विकल्पस्याध्यवसितार्थकत्वस्य च संभवादिति भावः । **इदानीमाचार्योक्तं** वर्णकान्तरं प्रदर्शयन् 'स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ॥ समा विप्रतिपत्तिः स्यान्मूलसाम्याद्द्वयोरपी'ति वार्तिकप्रथमपादं सूत्रस्थानीयत्वेन लिखति—**स्मृत्याचारेति । मातुलेति** । 'मातुलस्य सुतामूढ्वा मातृगोत्रां

---

१ दृष्टकल्पना. २ सिद्धौप्रयो.

बन्धनानां चाचाराणां विरोधो मातुलदुहितृपरिणयनादिषु तत्र किं तुल्यकक्षत्वमुत स्मृतीनां बलीयस्त्वमिति चिन्त्यते । तत्र—'बलाबलविशेषस्तु कक्षान्तरितकारितः ॥ श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः ॥' श्रुत्या हि साक्षादर्थः प्रतीयते स्मृत्या तु श्रुतिकल्पनयेत्येकान्तरितप्रामाण्यात्प्रत्यव्यवहितप्रामाण्या श्रुतिर्बलीयसीति । तेन तत्र युक्तं यत्स्मृतेरननुष्ठानलक्षणमप्रामाण्यम् । इह त्वेवंविशेषो नास्ति, द्वयोरपि श्रुतिमूलत्वेनैकान्तरितयोरविशेषात् । तस्मात्समा विप्रतिपत्तिरिति । अत्रोच्यते—'सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ॥ तस्यास्तेन बलीयस्त्वमाचारान्निर्निबन्धनात् ॥' प्रत्ययिततरा हि मन्वादयः स्मर्तारः । तत्स्मरणं गुणवत्तरकर्तृकत्वादितरजनचारित्र्याद्विस्रम्भणीयतरमिति व्यक्तमेतत् । अपिचाचरितॄणां जनानां स्वयमितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुमसामर्थ्यादवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा संमर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्यम्[१] । अतश्चाचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति द्व्यन्तरितप्रामाण्याद्दुर्बलत्वम् । अपिचाचारेषु कर्म[२]स्वरूपमात्रमेव प्रत्यक्षं, कर्तव्यता तु विमर्शपूर्वमर्थसुखादिहेत्वन्तरा[३]संभवनिरूपणेन पारिशेष्यात्कल्पयितव्या । तां च कल्पयित्वा पश्चान्मूलकल्पनमिति विप्रकर्षः । सनिबन्धनासु तु स्मृतिषु द्रागेव ग्रन्थतः कर्तव्यता गम्यते, मूलमात्रं तु कल्प्यमिति संनिकर्षः । सर्वेषां च स्मृतिविरुद्धाचाराणां मातुलदुहितृपरिणयनादिविषयाणां कामादिहेत्वन्तरं स्पष्टमेव दृश्यत इति न कथंचिदपि श्रुतिमूलत्वं संभावनीयम् । नचात्र विकल्पाभ्युपगमेनोभयोरपि प्रामाण्यं संभवति वस्तुनि विकल्पासंभवात् । नहि मातुलदुहितृपरिणयनात्प्रत्यवायोत्पत्तिरनुत्पत्तिश्च संभवतीत्यवश्यमन्यतरस्याप्रामाण्यमाश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्याचारस्याप्रामाण्यमिति सिद्धमेवंजातीयकानां दुराचारत्वम् ।

---

तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरे'दिति स्मृतिनिषिद्धं मातुलसुतापरिणयनम्, आदिशब्देन पर्युषितभोजनानुपनीतसहभोजनादिसंग्रहः । अत्र मातुलसुतायाः पुत्रिकाकरणादौ गान्धर्वादिविवाहादौ वा यत्र मातृगोत्रनिवृत्तिर्नास्ति तद्विषयो मातुलसुतापरिणयननिषेधो नतु यत्र गोत्रनिवृत्तिस्तद्विषयोऽपीति चन्द्रिकादौ प्रपञ्चितत्वादिहापि गान्धर्वादिविवाहाद्यभिप्रायको मातुलसुतापरिणयनशब्दो बोध्यः । **बलाबलेति** । श्रुतिस्मृत्योर्बलाबलविशेषः स्मृतेः श्रुत्यनुमानरूपकक्षाव्यवधानप्रयुक्तः । स्मृत्याचारयोस्तु नैवं बलाबलविशेषः संभवति । उभयोरपि साक्षाच्छ्रुत्यनुमापकत्वेन तुल्यकक्षत्वादित्यर्थः । **द्वयोरिति** । आचारस्यापि साक्षाच्छ्रुत्यनुमापकत्वेनैव प्रामाण्योपपत्तावाचारात्स्मृतिमनुमाय ततः श्रुतिकल्पने मानाभाव इति भावः । **सप्रत्ययेति** । प्रत्ययशब्देन मन्वादीनां विप्रकीर्णवेदतदर्थानुभव इदानींतनापेक्षया मन्वादिषु विश्वासश्च विवक्षितः । **सोपनिबन्धनेति** । इतस्ततो विप्रकीर्णत्वपरप्रकरणगतत्वसिद्धवन्निर्देशकल्प्यत्वादिना तिरोहितान्विधीनुपसंहृत्य तत्प्रतिपाद्यकर्मणां कर्तव्यत्वकथनमुपनिबन्धनं तद्युक्तेत्यर्थः । निर्निबन्धनात् । निरुपनिबन्धनादित्यर्थः । **इतरेति** । ततश्च तत्राविश्वासशङ्कया न झटिति श्रुत्यनुमानप्रवृत्तिरिति भावः । सोपनिबन्धनेत्यत्रोपशब्दसूचितमिदानींतनानां साक्षात् श्रुतिं दृष्ट्वा चरणासामर्थ्यप्रयुक्तं कक्ष्यान्तरव्यवधानं विशदयति—**अपिचेति । अवश्यमिति** । प्रत्यक्षवेदविहितेऽपि स्मृतिकल्पसूत्रादित एवानुष्ठानेन केवलवेदादनुष्ठानस्येदानींतनेष्वदृष्टेरिति भावः । निबन्धनाभावप्रयुक्तं विप्रकर्षमाह—**अपिचेति । सर्वेषां चेति** । इदंच प्रायिकाभिप्रायं जनपदग्रामधर्मतयानुष्ठीयमानेषु तदसंभवादिति ध्येयम् । ननु यथा श्रुतिविरुद्धानामपि स्मृतीनां विप्रकीर्णशाखावादे प्रामाण्यम्, एवं स्मृतिविरुद्धानामाचाराणामपि किं न स्यादिति वाच्यम् । तत्र विकल्पेनोभयानुष्ठानसंभवात्प्रामाण्यमिह तु विकल्पासंभवान्न प्रामाण्यमिति वैषम्यमित्याशयेनाह—**नचेति । वस्तुनीति** । मातुलसुतापरिणयनस्य श्रुतिविहितत्वे सति प्रत्यवायकरत्वाभावो वक्तव्यः । विधिविषयस्य प्रत्यवायकरत्वानुपपत्तेः, निषेधबलाच्चावश्यं प्रत्यवायकरत्वं वक्तव्यमन्यथा निषेधानुपपत्तेः । नचैकस्यैव प्रत्यवायकरत्वं तदभावश्च संभवति विरोधादत ईदृशस्थले विधिप्रतिषेधाभ्यां विकल्पो नाभ्युपगन्तुं युक्तः । अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यादौ क्रत्वर्थस्थले तु निषेधेन ग्रहणस्य क्रतूपकारकत्वाभावो न बोध्यते किंतु निषेधेन ग्रहणाभावस्य क्रतूपकारकत्वमात्रं बोध्यते । ततश्च तत्र विधिनिषेधाभ्यामेकस्यैव वस्तुनो विरुद्धस्वभावद्वयानापादनात्संभवति विकल्पः । एवं स्पर्शनसर्ववेष्टनादिष्वपि विकल्पः संभवतीति वैषम्यमिति भावः । 'त्रिवृच्चर्वाश्ववालादेर्लोकेऽन्योऽर्थः प्रतीयते । वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षण'इत्यादिना पुनरपि वर्णकान्तरं कृतं तद्दर्शयन् पूर्ववदेव वार्तिकाद्यपादं सूत्रस्थानीयत्वेन लिखति

---

१ समर्थितमर्थं. २ चाचारे कर्म. ३ सुखहेत्वन्तरा.

अथवा त्रिवृच्चर्वाश्ववालादेर्यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिः यथा 'त्रिवृद्बहिष्पवमान'मिति। अत्र त्रिवृच्छब्दस्य त्रैगुण्यं लोकादर्थोऽवगम्यते वाक्यशेषात्तु स्तोत्रीयानवकं 'आदित्यः प्रायणीयः पयसि चरु'रिति चरुशब्दस्य स्थालीवाक्यशेषादोदनं आश्ववालः प्रस्तर इत्यश्वस्य वालः। वाक्यशेषात्तु काशः। ऐक्षव्यौ विधृती इतीक्ष्ववयवालिके लोकात्, वाक्यशेषात्तु काशमूलके। किं तत्र लोकवाक्यशेषयोस्तुल्यबलत्वमुत वाक्यशेषस्था प्रतीतिर्बलीयसीति संशयः। तत्र—'पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः॥ अदृष्टसाधनत्वे हि लोकाद्वेदोऽतिरिच्यते॥' विध्युद्देशात्तावदेतावदवगम्यते यदिह त्रिवृदादिशब्दाभिधेयं तद्वाक्यार्थान्वयीति, किंतु तस्याभिधेयमित्यन्यतोऽवगन्तव्यम्। तत्र लोकस्याप्यभिधेयनिर्णये वेदवाक्यशेषतुल्यत्वं ततोऽधिकं वा सामर्थ्यमस्तीत्यर्थद्वयमपि तुल्यप्रमाणकत्वाद्विकल्पेन ग्रहीतव्यमिति पूर्वःपक्षः। सिद्धान्तस्तु—'वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते नहि॥ तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी॥' यदि लौकिकोऽर्थो विध्युद्देशेनाश्रीयते अन्यार्थो वाक्यशेषोऽन्यार्थश्च विध्युद्देश इति न कथंचन संबन्धः स्यात्। तस्माद्यत्र वाक्यशेषःस्त्रिवृद्बहिष्पवमानमित्यादिषु तत्र तावत्तदनुगुण एवार्थः समाश्रयणीय इत्येतावदिहाधिकरणे स्थितम्। यदा चैवं वाक्यशेषवशात्स्तोत्रीयानवकमपि वाच्यमित्यवधारितं तदा यत्र वाक्यशेषो नास्ति त्रिवृदग्निष्टुदग्निष्टोम इत्यादिषु तत्राप्यनेनैवार्थेन भवितव्यं रूढिवशादिति दशमे वक्ष्यते। चरुशब्दोऽप्योदन-

—त्रिवृच्चर्वाश्ववालादेरिति। लोकादिति। त्रिवृद्रज्जुरित्यादिव्यवहारादित्यर्थः। वाक्यशेषादिति। त्रिवृद्बहिष्पवमानमित्युक्त्वा 'उपास्मै गायता नर'इत्यादीनां स्तोत्रसाधनीभूतानां नवानामृचामाम्नानाच्छाखान्तरे 'नवभिः स्तुवन्ती'ति श्रवणाच्चेति भावः। चरुरिति। अदितिमोदनेनेति वाक्यशेषः। अश्वस्य वाल इति। योगादिति शेषः। वाक्यशेषादिति। 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्सोपः प्राविशत्' स वालधौ गृहीतस्तान्वालान्मुक्त्वा विवेशह। ते वालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तै'रित्येतस्मादित्यर्थः। वार्तिके आदिशब्दसंगृहीतमाह—ऐक्षव्याविति। लोकादिति। लोकप्रसिद्धयोगादित्यर्थः। वाक्यशेषः काशमूलपरोऽन्वेषणीयः। ननु धर्मप्रमितावन्तरङ्गसाधनत्वाद्वेदस्य तत्प्रसिद्धेः प्रबलत्वात्कथं पूर्वपक्ष इत्यत आह—तत्र पदार्थेति। धर्मविषये लोकस्य बहिरङ्गत्वेऽपि पदार्थसंबन्धविषये नासौ वेदाद्धीयत इत्यर्थः। ननु विध्युद्देशादेव वाक्यशेषसध्रीचीनात्स्तोत्रीयानवकादिरूपार्थप्रतीतेर्न त्रैगुण्यादिसंग्रह इत्याशङ्क्य वाक्यशेषस्य स्तावकतया यथाकथंचिदुपपत्तेर्विध्युद्देशः साधारण एवेत्याह—विध्युद्देशादिति। अधिकमिति। वाक्यशेषगतपदार्थव्युत्पत्तेर्लोकाधीनत्वेन प्रथमभावित्वाल्लोकस्याधिक्यमित्यर्थः। अर्थद्वयमिति। यद्यपि सकृच्छ्रुतस्यार्थद्वयपरत्वमसंभवि तथाप्यन्यतरनिर्णयकारणाभावादनध्यवसाये चाप्रामाण्यापत्त्या ततो वरं सकृच्छ्रुतस्यार्थद्वयपरत्वमावृत्त्या स्वीकृत्य प्रामाण्यसमर्थनमितीह विकल्प एव न्याय्य इत्यर्थः। त्रैगुण्यस्वीकारपक्षे त्रिवृद्बहिष्पवमानमित्यस्य बहिष्पवमानाख्यस्तोत्रं त्रिवारं कर्तव्यमिति वा तिसृभिर्ऋग्भिः कर्तव्यमिति वार्थो बोध्यः। अर्थद्वयं विकल्पेन ग्राह्यमित्युपलक्षणम्। यदा लोकस्याधिक्यं तदा लौकिक एव ग्राह्य इत्यपि बोध्यम्। वाक्यैकत्वमिति। विधिस्तुत्योर्भिन्नविषयत्वे विध्यविषयस्य स्तुत्यानर्थक्या 'दानर्थक्यप्रतिहतानां विपरीतं बलाबल'मितिन्यायेन वाक्यशेषस्य प्राबल्यमिति भावः। ननु 'आदित्यः प्रायणीयश्चरु'रित्यादौ वाक्यशेषस्यार्थवादरूपत्वाद्भवतु समानविषयत्वाय वाक्यशेषश्रुतौदनादेरेव विध्युद्देशगतचर्वादिशब्दार्थत्वं त्रिवृद्बहिष्पवमानमित्यत्र तु नार्थवादरूपो वाक्यशेषः, किंतु स्तोत्रीयानवकाम्नानलक्षणः। सच स्तोत्रीयानवकविधानार्थः। ततश्च स्तोत्रीयानवकविधिना त्रिवृद्बहिष्पवमानमिति विधेरङ्गाङ्गिभावेनैकवाक्यत्वमात्रं, तच्चासत्यपि विषयैक्ये सिध्यतीति कथं तत्र स्तोत्रीयानवकविधानार्थत्वमिति चेत्। सत्यम्। एवमपि स्तोत्रीयानवकाम्नानस्य तद्विधिमात्रार्थत्वे विध्युद्देशे त्रिवृच्छब्दाभावेऽपि बहिष्पवमाने तद्विधिसिद्धेस्त्रिवृच्छब्दानर्थक्यं स्यादिति विध्युद्देशे त्रिवृच्छब्दोच्चारणसहितं स्तोत्रीयानवकाम्नानं त्रिवृच्छब्दस्य स्तोत्रीयानवकमर्थ इत्येवं तच्छब्दार्थकथनपरमप्यवसीयत इतीहापि युक्तो वाक्यशेषान्निर्णय इति। एवंच स्तोत्रीयानवकस्य त्रैगुण्यस्य च परस्परं संबन्धाभावेन त्रैगुण्ये गौणत्वासंभवादगत्या त्रिवृच्छब्दस्य नानार्थत्वमित्याशयः। ननु दशमे त्रिवृदग्निष्टोम इत्यादौ त्रिवृच्छब्दस्य स्तोत्रीयानवकार्थत्वं वक्ष्यत इति पुनरुक्तिरित्यत आह—यदा चेति। वाक्यशेषबलात्स्तोत्रीयानवके रूढाविह निश्चितायां त्रिवृदग्निष्टोम इत्यादावसत्यपि वाक्यशेषे रूढिबलात्स्तोत्रीयानवकमेव ग्राह्यमित्येतदधिकरणप्रयोजनं तत्र वक्ष्यत इत्यपुनरुक्तिरित्यर्थः। चरुशब्दे तु न नानार्थत्वं स्थाल्यां व्यवहारस्य गौणस्योपपत्तेरिति विशेषमाह—चरुशब्द इति। दाशमिकचर्वधिकरणस्यापि पूर्ववदेव प्रयोजनविचाररूपत्वान्न

१ वालादौ. २ आतिथ्येष्टौ प्रस्तराधारौ. ३ शेषात्काश. ४ नास्ति वाक्यशेषो.

स्थाल्योः परस्परसंबन्धित्वाद्वाक्यशेषावधारितौदनवचनत्वेन स्थाल्यामन्याय्यं चानेकार्थत्वमिति प्रतिबद्धशक्तित्वाल्लाक्षणिकः। तेनासत्यपि वाक्यशेषे 'सौर्यं चरुं निर्वपे'दित्यादावप्योदनवचनत्वमेवेति दशमे वक्ष्यते। आश्ववालैक्षवीशब्दावपि काशतन्मूलयो रूढत्वादन्यत्रापि तदर्थावेव भवतः। न चात्र 'संदिग्धेषु वाक्यशेषा'दित्यनेन गतत्वम्। असंदेहात्। इह हि वाक्यशेषात्प्रागर्थान्तरमेव गृहीतं वाक्यशेषेण बाध्यते नतु प्रथमं संदिग्धं तेन निर्णीयत इति॥

आर्यप्रसिध्यविरोधे म्लेच्छप्रसिद्धार्थपरिग्रहाधिकरणम्॥ ६॥

## चोदितं तु प्रतीयेताविरोधात्प्रमाणेन॥ १०॥

कल्प्यः पिकादिशब्दार्थो ग्राह्यो वा म्लेच्छरूढितः॥ कल्प्य आर्येष्वसिद्धत्वादनार्याणामनादरात्॥ २०॥
ग्राह्या म्लेच्छप्रसिद्धिस्तु विरोधादर्शने सति॥ पिकनेमादिशब्दानां कोकिलाद्यर्थता ततः॥ २१॥
अर्थाबोधादप्रमाणं पिकालम्भनचोदना॥ मैवं म्लेच्छप्रसिद्ध्यापि तद्बोधादविरुद्धया॥ २२॥

आर्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तम्। इदानीं किं म्लेच्छप्रसिद्धिरित्येवाप्रमाणमुत बलवद्विरोधादेवाप्रमाणम्। अविरोधे तु तस्या अपि भवत्येवाभिधेयनिर्णये प्रामाण्यमिति चिन्त्यते। पिक-नेम-सत-तामरसादिशब्दा न कचिदार्याणां प्रसिद्धाः, म्लेच्छानां तु कोकिलादिषु प्रसिद्धाः। तत्र यद्यप्रमाणमेव म्लेच्छप्रसिद्धिस्ततस्तेषां निरुक्तादिवशेनार्थकल्पनम्। अथ तु सा प्रमाणम् ततः सैवाश्रयिष्यते। तदत्र म्लेच्छप्रसिद्धिः प्रामाण्ययोग्या न वेत्येतावदधिकरणशरीरम्। सत्यपि तु प्रामाण्ये किं म्लेच्छगतत्वाद्दुर्बला निरुक्तादिद्वार। शास्त्रस्थत्वाद्बलीयसी उतेयमेव दुर्बला कल्प्यत्वात् [+] म्लेच्छप्रसिद्धिस्तु क्लृप्तत्वाद्बलीयसीत्येतत्प्रासङ्गिकम्। शिष्टाकोपे ह्येतदवस्थितं स्वरूपगतमेव बलाबलं प्रमाणद्वारकाज्ज्याय इति तेनैव न्यायेनात्रापि प्रयोक्तृद्वारा[३] बलाबलात्क्लृप्तकल्प्यत्वेन स्वरूपगतमेव ज्यायो भवति तेन गतप्रायमिह प्रसङ्गत उक्तं भाष्यकारेण। प्रामाण्यसंभवासंभवमात्रं तु म्लेच्छप्रसिद्धेश्चिन्त्यते। तत्र पूर्वः पक्षः।—'म्लेच्छेषु हि पदार्थानां विप्लुतिर्भूयसी यतः॥ ततस्तेषु प्रसिद्धेऽर्थे न विस्रम्भः

---

पुनरुक्तिरित्याह—**तेनेति**। **रूढत्वादिति**। दीर्घश्लक्ष्णपत्राणां काशानामश्वकेशैः सादृश्यादश्ववालशब्दस्य काशेषु गौणत्वाभ्युपगमे गौणत्वस्य पदान्तरसंबन्धाधीनत्वात्पदान्तरसापेक्षत्वेनासामर्थ्यादाश्ववाल इति तद्धितोत्पत्तिर्न स्यात्। ऐक्षवीशब्दे तु गौणत्वमनाशङ्क्यमेवेति भावः। **इहहीति**। वाक्यशेषाभावे हि कोऽप्यन्तरोपस्थापकाभावाल्लोकतस्त्रैगुण्यादिकमेव विध्युद्देशे निश्चितमिति प्राग्वाक्यशेषान्निश्चय एव। 'अक्ताः शर्करा'इत्यत्र विध्युद्देशस्य द्रवद्रव्यमात्रसाधारण्यात्प्राग्वाक्यशेषात्संदेहः। ततश्च वाक्यशेषस्य संदेहनिवर्तकत्वेऽपि प्रबलविपरीतनिश्चयनिवर्तकत्वं न संभवतीत्यधिकाशङ्कानिराकरणार्थमित्यगतार्थत्वमित्यर्थः। यववराहादिस्थले तु वाक्यशेषात्प्राक् संदेह एव न विपरीतनिर्णय इति प्राक्भाष्यकारपक्षे गतार्थत्वस्य नानुपपत्तिः। नचैवमपि चरुशब्दस्यानाम्नावितान्तरूष्मपक्वौदने याज्ञिकैः प्रयुज्यमानत्वेनासत्यपि वाक्यशेषे प्रयोगद्वयबलात्स्थाल्योदनयोः संदेह एव न विपरीतनिर्णय इति तदुदाहरणे गतार्थत्वमपरिहार्यमिति वाच्यम्। याज्ञिकप्रयोगस्य काचित्कस्य लक्षणयाप्युपपत्तौ तन्मात्रस्य सार्वत्रिकलौकिकप्रयोगसमबलत्वाभावेन तत्रापि प्राग्वाक्यशेषाद्विपर्ययसंभव इति भावः॥

**चोदितं तु प्रतीयेताविरोधात्प्रमाणेन॥ १०॥** पूर्वोक्तस्य म्लेच्छप्रसिध्यप्रामाण्यस्यापवादात्संगतिरित्याशयेनाह—**आर्येति**। **पिकेति**। पिकशब्दः कोकिले, नेमशब्दोऽर्धे, सतशब्दः शतच्छिद्रपरिमण्डलदारुपात्रे, तामरसशब्दः पद्मे न म्लेच्छानां प्रसिद्ध इत्यर्थः। **न कचिदिति**। पिकादिशब्दस्य कोकिलादिषु निघण्टुकारप्रयोग एतदधिकरणमूल इति भावः। विचारप्रयोजनमाह—**तत्रेति**। **तेषामिति**। 'पिकमालभेत सते हिरण्यं निधाये'त्यादिचोदनागतानामिति शेषः। ननु वार्तिके म्लेच्छप्रसिद्धेरपि प्रामाण्यमङ्गीकृत्य म्लेच्छप्रसिद्धेर्निगमनिरुक्तादिप्रसिद्धेश्च बलाबलविचारस्यापि प्रवर्तितत्वात्कथं प्रामाण्यमात्रव्युत्पादनपरत्वमस्येत्यत आह—**तदत्रेति**। **प्रासङ्गिकमिति**। अन्यतः सिद्धमिह प्रसङ्गादुक्तमित्यर्थः। तदेव विशदयति—**शिष्टेति**। ननु शिष्टाकोपाधिकरणे प्रमाणबलाबलात्प्रमेयबलाबलं ज्याय इति व्युत्पादितं इह तु आश्रयबलाबलात्स्वरूपबलाबलं ज्याय इत्युच्यत इति भेदान्न गतार्थत्वमित्यत आह—**प्रायमिति**। ययोर्बाध्यबाधकभावो विचार्यते तत्स्वरूपगतं बलाबलं तत्संबन्ध्यन्यगतबलाबलापेक्षया ज्यायः। स्वरूपापेक्षयान्यस्य बहिरङ्गत्वादित्येव

---

१ निर्णीतं, २ द्वारात्तु. ३ द्वाराद्बलाबलात्.

कथंचन ॥' पदानि पदार्थाश्चापभ्रंशप्राया एव म्लेच्छेषु बाहुल्येन, तेषु कथमिवाविप्लुतपदार्थावधारणम् । अतोऽप्रमाणं म्लेच्छप्रसिद्धिः । नहि ते दृष्टार्थव्यवहारित्वाच्छब्दार्थाविप्लवे यत्नं कुर्वन्ति । तस्माद्विप्लुतिसंभवात्तेषु प्रसिद्धोऽर्थो न विस्रम्भणीयः । निरुक्तादिद्वारेण त्वर्थकल्पनं पिकादीनामिति । सिद्धान्तस्तु—'पदानि तावदेतानि वेदादिष्वेव दर्शनात् ॥ अविप्लुतानि तेषां च भाव्यमर्थेन केनचित् ॥ नित्येनार्येष्वसौ नास्ति यतो म्लेच्छेषु विप्लुतिः ॥ म्लेच्छप्रसिद्ध एवार्थस्तेषामिति हि निर्णयः ॥' पिकादिपदानि तावद्वेदेतदङ्गादिषु दृष्टत्वादविप्लुतानि । तदेषां नित्येन केनचिदर्थेन भवितव्यम् । नचामीषामार्येष्वर्थः कश्चिदस्ति । यत्र मुख्यानि भूत्वा म्लेच्छप्रसिद्धेऽर्थे गौणभ्रान्त्यादिनिमित्तप्रयोगभाञ्जि विप्लुतिं गच्छेयुः । नह्यसति मुख्ये गौण्यादिसंभवः । तस्मान्म्लेच्छप्रसिद्ध एवार्थोऽमीषां नित्योऽध्यवसीयते । अतः सिद्धमविरुद्धेषु प्रसिद्धवाचकेषु म्लेच्छानामभिधेयनिर्णये प्रामाण्यमिति ॥

कल्पसूत्राणामस्वतःप्रामाण्याधिकरणम् ॥ ७ ॥

## प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ [नासंनियमात् ॥ १२ ॥ अवाक्यशेषाच्च ॥ १३ ॥ सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च ॥ १४ ॥]

**अपौरुषेयाः कल्पाद्याः कृत्रिमा वा न कृत्रिमाः ॥ श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मात्वं यतः समम् ॥ २३ ॥**
**पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः ॥ तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम् ॥ २४ ॥**
**कल्पे सर्वतिथौ दर्शकार्यतोक्तेः श्रुतिर्न मा ॥ न कल्पे साध्यवेदत्वग्रहाणां दुर्बलत्वतः ॥ २५ ॥**

अत्र कल्पसूत्राण्युदाहृत्य किं प्रमाणमप्रमाणं वेति भाष्ये विचारितम् । ननु स्मृत्यधिकरण एव सर्वेषामेव वेदातिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता वृत्ता । तत्र केचिदाहुः । तत्राशब्दतया पूर्वपक्षमुक्त्वा शब्दानुमानेन सिद्धान्तितम् । एतानिच वैदिकार्थनिबन्धनत्वात्प्रत्यक्षशब्दानीति न तत्रोदाहरणम् । स्मृतयो हि प्रायेणेतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्ति-

---

न्यायशरीरम् । तच्चान्यत्कचित्प्रमाणं क्वचिदाश्रय इत्यन्यदेतदिति भावः । ननु यथा पदानां म्लेच्छैर्व्यवह्रियमाणत्वेऽप्यविप्लुतत्वं तथा पदार्थानामपि किं न स्यादित्यतः श्लोकं व्याचष्टे—**पदानीति** । श्लोके पदार्थानामित्यत्र द्वन्द्वोऽभिमतः । ततश्च म्लेच्छेषु पदानामपि बहुशो विप्लुतिदर्शनादिहापि पिकादिप्रातिपदिकानामेव म्लेच्छैर्व्यवह्रियमाणत्वेन विभक्त्यन्ततया वेदतदङ्गेषु श्रूयमाणपदापेक्षया म्लेच्छगतानां तेषामन्यत्वमेवेति पदाविप्लुतिरसिद्धेति भावः । **निरुक्तादीति** । जर्भर्यादिवदिति भावः । विभक्त्यभावेऽपि प्रातिपदिकांशस्य वेदतदङ्गेषु प्रत्यभिज्ञायमानत्वान्नान्यत्वमित्याशयेनाह—**पदानीति** । ननु निरुक्तादिप्रसिद्ध एव नित्योऽर्थोऽस्त्वित्यत आह—**आर्येष्विति** । निरुक्तादिना प्रकृत्यादिविभागेनार्थकल्पनाया बहुप्रकारत्वसंभवान्न ततो नियतः कश्चिदर्थो लब्धुं शक्यते, जर्भर्यादौ तूपायान्तराभावात्तदनुसरणमिति भावः । **यत्रेति** । तथाच म्लेच्छप्रसिद्धेर्गौणत्वादिना उपपादयितुमशक्यत्वादपि तदर्थोऽवश्यं स्वीकार्य इति भावः । सूत्रार्थस्तु—म्लेच्छैश्चोदितमपि प्रतीयेत । प्रात्यं स्यादिति यावत् । प्रमाणेनार्यव्यवहारेणाविरोधादिति ॥

**प्रयोगशास्त्रमितिचेत् ॥ ११ ॥** करिष्यमाणशङ्कावसरदानाय भाष्योक्तं कीर्तयति—**अत्रेति** । क्रतुप्रयोगं पाठमात्रेण स्पष्टं कल्पयन्ति ये बौधायनीयादयो ग्रन्थास्ते कल्पाः । 'एतत्तीर्थमित्याचक्षतेऽरत्नं पादग्रहण' इत्यादि स्वकृतसंज्ञापरिभाषादिभिः प्रयोगस्य सूचकान्याश्वलायनीयादीनि सूत्राणीति विवेकः । **नन्विति** । अत्र स्मृत्यधिकरण एव सर्वेषां प्रामाण्यस्य विचारितत्वादिदमधिकरणं गतार्थमित्याशङ्का क्रियत इति भ्रमो न कार्यः । भाष्ये कल्पसूत्राणि प्रमाणमिति पूर्वपक्षं कृत्वा न प्रमाणमित्येव सिद्धान्तकथनेन गतार्थत्वशङ्कानवकाशात् । तस्मात्स्मृत्यधिकरणे वेदातिरिक्तानां सर्वेषां प्रामाण्यस्य व्यवस्थापितत्वात्तद्विरुद्धं कल्पसूत्राणामिहाप्रामाण्यव्यवस्थापनमित्याशङ्कापरोयं ग्रन्थो बोध्यः । अशब्दतया वेदमूलकत्वाभावेनेत्यर्थः । शब्दानुमानेन मूलभूतवेदानुमानेनेत्यर्थः । **वैदिकेति** । प्रत्यक्षवेदविहितार्थनिबन्धनरूपत्वात्प्रत्यक्षवेदमूलानीत्यर्थः । तथाच प्रत्यक्षवेदमूले वेदमूलकत्वाभावलक्षणपूर्वपक्षाप्रवृत्तेरनुमेयवेदमूलकत्वसिद्धान्ताप्रवृत्तेश्च कल्पसूत्राणां न स्मृत्यधिकरणोदाहरणत्वमिति न तद्विरोध इत्यर्थः । सिद्धान्ताविषयत्वमेव स्पष्टयितुं स्मृतीनां कल्पसूत्रवैधर्म्यमाह—**स्मृतय इति** । इत-

---

१ कल्पनीयेतिशेषः. २ वेदवेदाङ्गादिषु. ३ अविप्लुतानि नित्यानि. ४ मीषामित्यध्यवसीयते. ५ वाचकत्वेषु. ६ सर्वेषामेवा.

कल्पिततिरोहितप्रायविधिमूलाः। तद्यथा 'नयनं दक्षिणं दीक्षितः पूर्वमङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते' इति प्रसिद्धवत्सव्यस्य पूर्वमञ्जनं निर्दिष्टं, तच्च दृष्टप्रयोजनाभावात्प्रमाणान्तरेणाप्राप्तमित्यनुपपत्त्या विधिः कल्प्यते। तथा 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति तस्माद्गर्भेणाविज्ञातेन ब्रह्महे'त्येवंविधं स्मृतीनां मूलम्। अतएव चैषु स्मार्तत्वप्रसिद्धिः। प्रत्यक्षश्रुतावविहितत्वात्। दर्शपूर्णमासादिषु तु प्रत्यक्षविधिसद्भावाच्छ्रौतत्वम्। इममेव च विशेषमभिप्रेत्य गौतमेनोक्तं 'प्रत्यक्षश्रुतिविधानाद्गार्हस्थ्यस्ये'ति। ननु स्मृतिपरम्परयैवानुमेयत्वम् अन्धपरम्परादोषात्। अतएव प्रत्यक्षश्रुतिविरोधे स्मृतेरननुष्ठानम्। स्मृतयो हि सिद्धवन्निर्देशानुपपत्तिकल्पितविधिमूलतयापि संभाव्यन्ते। कल्पनाच प्रत्यक्षश्रुतिविरोधेऽनुपपन्ना तेनाविरुद्धविषयवद्विरुद्धविषयेऽपि न्यायाभासेन विधिं कल्पयित्वा किमियं स्मृतिः प्रवर्तिता 'किंवाऽग्निहोत्रं जुहुयादाद्यन्ते द्युनिशोः सदे'त्यादिवत्प्रत्यक्षमेव विधिं दृष्ट्वेति विचिकित्सोदयाद्यावत्तद्विषयः प्रत्यक्षविधिर्नोपलभ्यते तावत्तदनादरेण प्रत्यक्षोपलब्ध एवानुष्ठेय इति। तेन स्मृतयएव तत्रोदाहरणं न कल्पसूत्राणि। किंच नैषामिह प्रामाण्याप्रामाण्यचिन्ता, किंतु स्वतन्त्राणामेव वेदवत्प्रामाण्यमुत स्मृतिवत्परतन्त्राणामिति। यद्वा भवतु नामैषामपि तत्र वि-

---

स्ततो विप्रकीर्णत्वं परप्रकरणगतत्वं वाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पितत्वं च तिरोहितप्रायत्वे हेतुत्रयं बोध्यम्। तत्र विप्रकीर्णत्वस्याष्टकादिस्मृतिमूलभूतश्रुतिषु पूर्वमेवोक्तत्वात्परप्रकरणगतत्वस्य च दर्शपूर्णमासगतमलवद्वासोव्रतकलापविधानादौ प्रसिद्धत्वाद्वाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पितविधीनुदाहरति—**तद्यथेति**। **सव्यमिति**। दक्षिणं पूर्वमङ्क्ते इति विहितं दीक्षितस्य दक्षिणनयनाञ्जनप्राथम्यं मनुष्याणां सव्याञ्जनप्राथम्यनिर्देशेन तद्व्यावृत्तये दीक्षितस्य दक्षिणनयनाञ्जनप्राथम्यमेव युक्तमिति स्तूयते। तत्र दृष्टार्थत्वान्मनुष्याः सव्यनयनाञ्जनं प्रथमं कुर्वन्तीत्येवं प्रमाणान्तरप्राप्तस्य सिद्धवन्निर्देश इति वक्तुं न शक्यते। सव्यनयनस्य प्रथममञ्जनेन दृष्टविशेषाभावादतोऽत्र सिद्धवन्निर्देशान्यथानुपपत्त्या मानुषीभिः सव्यनयनाञ्जनं प्रथमं कर्तव्यमिति विधिरनुमीयत इत्यर्थः। **तस्मादपीति**। आदित्यग्रहस्य द्विदेवत्यग्रहेभ्यो ग्रहणं सार्थवादकं श्रूयते 'देवा वै यज्ञाद्रुद्रमन्तरायन् स आदित्यानन्वाक्रमत ते द्विदेवत्यान्प्रापद्यन्त तान्न प्रतिप्रायच्छन् तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति तस्माद्द्विदेवत्येभ्य आदित्यो गृह्यत'इति। देवा यज्ञं कुर्वन्तस्तस्मिन्यज्ञे रुद्रं विस्मृतवन्तः। सच रुद्र आदित्याननुप्राप्याबाधत। तेच बाधिता आदित्या द्विदेवत्यग्रहान् शरणं प्रपन्नाः। तेच द्विदेवत्यग्रहास्तानादित्यान् रुद्राय न प्रत्यर्पयन् तस्मादद्यत्वेऽपि अन्यस्य वध्यं तद्भयाच्छरणागतं तस्मै हन्तुकामाय न प्रयच्छन्ति तस्मादादित्यग्रहदेवतानामादित्यानां द्विदेवत्यग्रहेषु संनिधानाद्द्विदेवत्यग्रहेभ्य आदित्यग्रहस्य ग्रहणं कर्तव्यमिति तदर्थः। तत्र तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीति सिद्धवन्निर्देशान्यथानुपपत्त्या शरणागतो न प्रत्यर्पणीय इति विधिरनुमीयत इत्यर्थः। **तस्माद्गर्भेणेति**। 'अविज्ञातो वा एष गृह्यते यदाग्रयणस्थाल्या गृह्णाति वायव्येन जुहोति'इति विधिशेषस्तस्माद्गर्भेणाविज्ञातेन ब्रह्महेति आग्रयणाख्यो ग्रहः स्थाल्या ग्रहणसमये ये देवा दिवीति मन्त्रेणैन्द्रवायवादिमन्त्रवद्देवताविशेषविज्ञानाभावादविज्ञातो गृह्यते। अतः स्थाल्या गृहीतस्याविज्ञातत्वान्न स्थाल्यैव होतव्यं किंतु स्थालीगतं सोमं वायव्येनोर्ध्वपात्रेण पुनर्गृहीत्वा तेन जुहुयात्तथासति धाममध सवितरित्यादिषु पुनर्ग्रहणार्थमन्त्रेषु होमार्थमन्त्रेषु च सवित्रादिदेवताविशेषविज्ञानसद्भावेनाज्ञातत्वदोषः परिहृतो भवति। अविज्ञातत्वस्य च दोषत्वं तस्माद्गर्भेणेति वाक्यशेषेण प्रतिपाद्यते। गर्भिणीवधे गर्भस्य स्त्रीपुंसभावेन विशिष्याविज्ञानाद्ब्रह्महा भवतीति गर्भस्याविज्ञातत्वेन ब्रह्महत्याभिधानात्। अत्र चाविज्ञातगर्भवधे सिद्धवद्ब्रह्महत्यानिर्देशान्यथानुपपत्त्या तत्र ब्रह्महत्यातुल्यप्रायश्चित्तविधिः 'हत्वा गर्भमविज्ञातमेतदेव व्रतं चरे'दिति स्मृतिमूलभूतोऽनुमीयत इत्यर्थः। **अतएवेति**। तिरोहितविधिमूलत्वादेवेत्यर्थः। एषु अष्टकादिषु। **प्रत्यक्षश्रुताविति**। अस्मदादिप्रत्यक्षश्रुतावित्यर्थः। **ननु** स्मार्तश्रौतविभागो यदि तिरोहितातिरोहितविधिमूलत्वनिबन्धनः कथं तदा प्रत्यक्षश्रुतिविधानाद्गार्हस्थ्यस्येति गौतमोक्तिः संगच्छताम्। तत्र नित्यानुमेयाप्रत्यक्षवेदमूलकत्वनिबन्धनत्वप्रतीतेरित्याशङ्क्य तस्या अप्यत्रैव तात्पर्यमित्याह—**इममेवेति**। कल्पितविधिमूलत्वेऽपि हि कल्पनाया न्यायाभासमूलकत्वशङ्कयाननुष्ठानमुपपद्यते नान्यथेत्यतो विरोधाधिकरणोक्तानुष्ठापकत्वबलात्क्वचित्कल्पितविधिमूलत्वं स्वीकार्यमित्याह—**अतएव प्रत्यक्षेति**। भवतु वा कल्पसूत्राणामपि स्मृत्यधिकरणविषयत्वं तथापि न तद्विरोधः स्वातन्त्र्येण प्रामाण्याभावपरत्वाद्भाष्यस्येत्याशयेनाह—**किंचेति**। नन्वेवमपि स्मृतिष्वपि स्वातन्त्र्यशङ्कानिराकरणस्य संभवात् तासामप्यत्रोदाहरणत्वं स्यादित्याशङ्कायामिष्टापत्त्या पक्षान्तरमाह—**यद्वेति**। कल्पसू-

---

१ पूर्वं मनुष्याः. २ प्रसिद्धव. ३ द्विरोधविषयेपि. ४ कित्सोपजननात्. ५ नैवेषामिह.

वाक्येषामपितु मन्वादीनामिह स्वातन्त्र्यनिराकरणम्। अथवाङ्गान्यत्रोदाहरणम्। तेषां हि 'षडङ्गमेके' इति वेदत्वस्मरणात्स्वातन्त्र्यशङ्का जायते। अथवा शाक्यादिग्रन्थानां श्रुतिमूलत्वेन प्रामाण्ये निरस्ते संप्रति वेदवत्स्वातन्त्र्येण प्रामाण्यमाशङ्क्य निराक्रियते। तदेतानि चत्वार्यपि विचारस्थानानि समानन्यायानि सह विचार्यन्ते, किमेषां स्वातन्त्र्येण प्रामाण्यं संभवति नवेति। तदर्थंच किमेषां पौरुषेयत्वमपौरुषेयत्वं वेति चिन्तनीयम्। तत्रावगतिस्तावदेतेभ्यो धर्माधर्मविषया जायते। सा च स्वतःप्रमाणम्। तद्यदि पौरुषेयत्वं शाक्यादिग्रन्थानां ततः पुरुषदोषादप्रामाण्यापत्तेर्दृष्टप्रामाण्यहानिः स्यात्। अतो दृष्टानुगुण्यादपौरुषेयत्वम्। मन्वादीनां त्वविगीतमेव प्रामाण्यम्। तत्किमेषामेवापौरुषेयत्वं कल्प्यतां उत वाक्यान्तरं कल्पयित्वा तस्य च नित्यत्वकल्पनमिति दृष्टानुसारित्वान्नित्यत्वकल्पनं ज्यायः। अङ्गानां तु 'मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेक' इति स्मरणाद्दृढमेवापौरुषेयत्वम्। कल्पसूत्राणां तु पठितपाठप्रत्यक्षवेदार्थोपनिबन्धनाच्छाखान्तरतुल्यत्वादपौरुषेयत्वम्। नहि सकलजनप्रत्यक्षवेदवाक्यविषयमर्थं वदतामेषां पुरुषैः प्रणयनं संभवति। मन्वादिभिस्तु समाख्यानं काठकादिवत्प्रवचननिमित्तत्वेनाप्युपपन्नं तन्निमित्ता चैषां लोकानां कर्तृत्वस्मृतिः। भवतिचात्र प्रयोगः—'बौद्धाद्यध्ययनं सर्वं गुर्वध्ययनपूर्वकम्॥ बौद्धाध्ययनसामान्यादधुनाध्ययनं यथा॥' कल्पानां तु नित्यब्रह्मयज्ञविधिविषयत्वादपि नित्यता। श्रूयते हि 'यद्ब्राह्मणानीतिहासान्पुराणानि कल्पा'निति। कथं ह्यनित्यानां नित्यविधिविषयत्वम्। तस्मादेषां नित्यविधिविषयत्वात्स्वातन्त्र्यमिति प्राप्ते ब्रूमः। 'नैतेषां पौरुषेयाणां स्वातन्त्र्यमुपपद्यते॥ स्पष्टं च पौरुषेयत्वं दृढकर्तृस्मृतेर्बलात्॥' पुरुषपरम्परयैव ह्येषु कर्तारः स्मर्यन्ते न काठकादिवत्प्रवचनेन परिहर्तुं शक्यन्ते। तत्र हि समाख्यानमात्रं, अत्रतु पारम्पर्येणैव सर्वेषामविगीतस्मरणादनित्यत्वसंभवः। षडङ्गमेक इति परमतोपन्यासात्पूर्वपक्षोक्तिमात्रं, नानाशाखागतलिङ्गादिकल्पितश्रुत्यर्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वात्तादर्थ्येनार्थवन्निबन्धनं नानर्थकम्। एवंविधाश्च ग्रन्थाः प्रतिमन्वन्तरं क्रियमाणा येनकेनचित्सर्वं कालमविच्छिन्नपारम्पर्येण प्रवर्तन्ते। ते च वेदार्थकल्पनात्कल्पा इति नित्ययैव समाख्यया ब्रह्मयज्ञाङ्गतया विधीयन्त इत्यनित्यत्वेऽपि ग्रन्थ-

---

त्रादिपरित्यागेनाङ्गपरिग्रहे पूर्वपक्षसौकर्यं हेतुमाह—**तेषां हीति**। वार्तिकाभिमतपक्षमाह—**तदेतानीति**। यद्यपि पूर्वेऽपि पक्षाः वार्तिककारैरेवोपन्यस्तास्तथापि ते पक्षास्तेषां न संमता इत्याशयेन ग्रन्थकारेण केचिदिति मतान्तरेणोपन्यस्तास्ते पक्षा इति द्रष्टव्यम्। **चत्वारीति**। कल्पसूत्रमन्वादिवचनाङ्गशाक्यादिग्रन्थरूपाणीत्यर्थः। एवंच पिकादिशब्दार्थनिर्णये म्लेच्छप्रसिद्धेः स्वातन्त्र्येण प्रामाण्यवदमीषामपि स्वातन्त्र्येण प्रामाण्यमित्युत्थानात्संगतिर्बोध्या। शाक्यादिग्रन्थानामप्रामाण्यस्य पूर्वं व्यवस्थापितत्वात्स्वतःप्रामाण्यं दुरुपपादमिति मत्वा तत्रापि प्रथमं पूर्वपक्षमुपपादयति—**तत्रावगतिरिति**। **स्वत इति**। प्रामाण्यस्वतस्त्वस्य तर्कपादे व्यवस्थापितत्वादिति भावः। **अविगीतमिति**। वैदिकपरिगृहीतत्वादिति भावः। **ज्याय इति**। लाघवादिति भावः। **पठितपाठेति**। पठितस्य पाठेन पाठपरम्परया प्रत्यक्षो वेदस्तदर्थनिबन्धनादित्यर्थः। **ननु** बौद्धमानवादिसमाख्यया पौरुषेयत्वं स्यादित्यत आह—**बुद्धेति**। नन्वविगीतमन्वादिकर्तृस्मृतिपरम्परया पौरुषेयत्वमित्येव युक्तमित्यत आह—**तन्निमित्तेति**। मानवादिसमाख्यां दृष्ट्वा तस्यां मन्वादिकर्तृत्वनिबन्धनत्वबुध्या इदानींतनानां मन्वादिकर्तृत्वस्मृत्युपपत्तेर्न ततोऽपि पौरुषेयत्वमित्यर्थः। **कथमिति**। इतिहासपुराणानामपि स्मृतितुल्ययोगक्षेमत्वेनात्र विषयत्वान्न तेष्वतिप्रसङ्गः शङ्कनीय इति भावः। मन्वादिग्रन्थेष्वेव मन्वादिकर्तृकत्वस्योक्तत्वात्तन्निबन्धना कर्तृस्मृतिपरंपरा न भ्रान्तिमूलत्वेन संभावयितुं शक्या। ततश्च दृढकर्तृस्मरणबलात्समाख्यापि कर्तृत्वनिबन्धनैव न प्रवचननिबन्धनेत्याशयेनाह—**स्पष्टंचेति**। प्रत्यक्षवेदार्थविषयकपुरुषवचनानर्थक्यमुक्तं परिहरति—**नानेति**। प्रवाहनित्यतया नित्यब्रह्मयज्ञविधिविषयत्वमुपपन्नमित्याह—**एवंविधा इति**। नन्वेवंविधग्रन्थानां सद्भावेऽपि तेषां सर्वेषां कल्पत्वाभावात्र ब्रह्मयज्ञाध्ययनविषयत्वसंभव इत्यतआह—**ते चेति**। कल्पनाद्ग्रन्थनादित्यर्थः। एतस्य स्वातन्त्र्याभावसाधनस्य शाक्यादि-

---

१ संप्रति श्रुतिवदेव तत्प्रामाण्य. २ प्रामाण्यं न वेति. ३ समुपजायते. ४ प्रमाणान्तरं. ५ वाक्यार्थविषयग्रन्थप्रणयन. ६ बुद्धबौधायन(मनु)मशकादि. ७ समाख्या काठ. ८ त्वेनोपपन्ना. ९ चैषु लौकिकानां. १० वशात. ११ माणाः केचित.

व्यक्तीनां नित्यविधिविषयत्वोपपत्तिः । तस्मान्नैषां स्वातन्त्र्येण प्रामाण्यमिति शाक्यादिनिबन्धनानां सिद्धं धर्मे प्रमाणाभासत्वम् । कल्पादिषु तु यानि प्रत्यक्षश्रुति(न्याय)विरुद्धानि वचनानि तेषामप्रामाण्यं यथा 'अविशेषादुभौ वे'ति सर्वपुरोडाशानां चतुर्धाकरणवचनं, संनिहितं च शास्त्र'माग्नेयं चतुर्धा करोती'ति। तथा स कृताकृत इति सवनीये पुरोडाशे विकल्पवचनं पूर्वपक्षमूलं न वचनमूलम्। 'अन्यत्र तदर्थवादवचना'दित्याश्वलायनवचनात् । तथा 'यावद्यूपं वेदिमुद्धन्ती'ति वेदेर्यूपाङ्गत्ववचनं 'जाघनीभिश्च पत्नीः संयाजयन्ती'ति जाघनीनां समुच्चयवचनं द्वादशाधिकरणपूर्वपक्षमूलं न वचनमूलम् । तत्र हि संनिहितं शास्त्रं जाघन्या पत्नीः संयाजयन्तीति । विवक्षितं चैकत्व'मुपादेयगतत्वा'दिति द्वादशे वक्ष्यते । तथा 'पुरोडाशं पर्यग्निकरोती'ति संनिहिते शास्त्रे 'सर्वाणि हवींषी'ति

---

कल्पसूत्रादिभेदेन फलभेदं दर्शयति—**इति शाक्यादीति । अविशेषादिति** । इदंच विरोधाधिकरणभङ्गावसरे व्याख्यातम् । किमत्र प्रत्यक्षशास्त्रं यद्विरोधादप्रामाण्यमुच्यत इत्यत आह—**संनिहितंचेति । स कृताकृत इति ।** अग्नीषोमीयपशौ पशुमालभ्य पुरोडाशं निर्वपतीति पशुयागे या देवता तद्देवताकः पुरोडाशो यागाङ्गत्वेन विहितः, सवनीयपशावपि तथैव चोदकेन नित्यकर्तव्यतया प्राप्तः[१] पुरोडाशयागः स कृताकृत इत्यनेन तस्य विकल्प उच्यते । इदंच विकल्पवचनं द्वादशाध्याये 'छिद्रपिधानार्थत्वात्पुरोडाशो न स्यादन्येषामेवमर्थत्वा'दित्यधिकरणे सवनीयपशौ पशुपुरोडाशयागस्य नित्यत्वप्रतिपादनात्तदधिकरणपूर्वपक्षमूलमित्यर्थः । सवनीयपशुपुरोडाशयागविकल्पे कल्पसूत्रकारैरुपन्यस्तहेतोर्द्वादशाध्यायाधिकरणपूर्वपक्षहेतुत्वात्तदुक्तहेतुबलादेव पूर्वपक्षमूलत्वं स्फुटमवगम्यत इत्याह—**अन्यत्रेति** । अन्यत्राग्नीषोमीययागगतपशुपुरोडाशयागे 'अथो पशोरेव छिद्रमपिदधाती'ति वपोद्धरणप्रयुक्तछिद्रापिधानार्थत्वस्योक्तत्वादिह च छिद्रापिधानस्यानुसवनं सवनीया निरूप्यन्ते अपिहित्या अच्छिद्रताया इति सवनीयपुरोडाशैरेव सिध्यवगमान्न तदर्थं पशुपुरोडाशः कर्तव्य इत्यर्थः । ततश्च इत्थमेव च द्वादशाध्याये पूर्वपक्षं कृत्वा पुरोडाशयागेन वपोद्धरणकृतपशुच्छिद्रापिधानस्य प्रत्यक्षबाधितत्वेन तद्वचनस्यार्थवादत्वाद्देवतासंस्कारार्थत्वमेव पुरोडाशयागस्य प्रकृताविति्हापि देवतासंस्कारो माविलोपीत्येतदर्थं नित्यं कर्तव्यः सवनीयपशौ पशुपुरोडाश इति सिद्धान्तयिष्यमाणत्वादस्य न्यायाभासमूलत्वमित्यर्थः । **यावदिति** । प्रस्तुतमुक्थ्यं प्रकृत्यापस्तम्बैराम्नातं 'यावद्यूपं वेदिमुद्धन्ती'ति, तत्रहि प्रकृताविव यूपैकादशिनी तिरश्चीनतया न मातव्या किंतु यथाप्रकृत्यग्निष्ठं यूपं मीत्वाऽन्ये यूपाः प्राञ्च एव मातव्या इति यूपैकादशिनी प्राचीनतया मातव्यत्वेन विहिता । तत्र प्राचीनतया मीयमानानामेकादशानामपि यूपानां कार्त्स्न्येन वेद्यां मानं यथा स्यादिति यूपमानाङ्गभूतवेदिदेशसिद्ध्यर्थं 'यावद्यूपं वेदिमुद्धन्ती'ति यावति देशे यूपा मीयन्ते तावति देशे वेदिर्मातव्येत्येवमिदं वचनम् । तथा यूपस्य वेदिरिति तृतीयाध्यायाधिकरणपूर्वपक्षमूलम् । 'तत्रार्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि'इत्यनेन यूपार्धमानाङ्गत्वेन वेदिर्विधीयते । अर्धान्तरं वेद्यामन्यत्र वा मातव्यमिति पूर्वपक्षकरणात् । अन्तर्वेदिबहिर्वेदिशब्दोपलक्षितो देशविशेषो यूपमानाङ्गत्वेन विधीयत इति तदीयसिद्धान्ते कृत्स्नस्य यूपावटदेशस्य वेद्यात्मकत्वमनपेक्ष्यमिति यावद्यूपदेशवेदिमानवचनं न्यायाभासमूलमित्यर्थः । **जाघनीभिरिति** । पश्वेकादशिन्यां सर्वपशुसंबन्धिर्जाघनीभिः[४] पत्नीसंयाजाः कर्तव्या इति द्वादशाध्यायाधिकरणपूर्वपक्षमूलम् । तत्र हि हृदयाद्यनुनिष्पन्नजाघनीप्रतिपत्त्यर्थत्वात्पत्नीसंयाजानां सर्वजाघनीनां प्रतिपत्तिलक्षणसंस्कारो माविलोपीति सर्वाभिः पत्नीसंयाजाः कर्तव्या इति पूर्वपक्षं कृत्वा दर्शपूर्णमासयोर्हि आज्येन सह जाघनी विकल्पिता । नच तत्र जाघन्याः प्रतिपत्तिप्रसक्तिरिति गुणभूतैव पत्नीसंयाजेषु जाघनी तादृश्येव पशावाज्येन विकल्पिता सती प्राप्ता पशुप्रकरणगतेन जाघन्या पत्नीः संयाजयन्तीति वचनेन नियम्यत इति गुणभूताया एव नियमनेन जाघनी न प्रतिपाद्या इत्युपादेयगतायाः संख्याया विवक्षितत्वे जाघनीबहुत्वे यया कयाचिज्जाघन्या पत्नीसंयाजाः कर्तव्या इति सिद्धान्तकथनादित्यर्थः । **चमसेति** । ग्रहं संमार्ष्टि इत्यत्रैकत्ववद्ग्रहत्वमप्यविवक्षितम् । ततश्च चमसेष्वपि संमार्गः कर्तव्य इति पूर्वपक्षं कृत्वा ग्रहत्वस्य विवक्षितत्वप्रतिपादनेन चमसेषु संमार्गो न कर्तव्य इति चमसाधिकरणे सिद्धान्तितं तदधिकरणपूर्वपक्षमूलं 'पुरोडाशं पर्यग्निकरोती'त्यत्रापि पुरोडाशत्वस्याविवक्षिततया सर्वहविषः पर्यग्निकरणवचनमित्यर्थः । तद्वाक्ये पुरोडाशत्ववचनमवश्यं विवक्षितमित्यत्राष्टमिकजैमिनिव्यवहारलक्षणं लिङ्गदर्शनमाह—**पशुरिति** । पर्यग्निकरणस्य सर्वहविरङ्गत्वे 'पशुः पुरोडाशविकारः स्याद्देवतासामान्या'दित्यधिकरणे पशोः पुरोडाशविकारत्वे पर्यग्निकरणत्वलक्षणहेतुप्रतिपादनमनुपपन्नं स्यादित्यर्थः । प्रत्यक्षशास्त्रविरोधे

---

१ सवनीयपुरोडाशस्य. २ कल्पसूत्रं. ३ परितो ज्वलदुल्मुकभ्रामणमित्यर्थः. ४ जाघनी पशुपुच्छं.

वचनं च दशमाधिकरणपूर्वपक्षमूलं न वचनमूलम् । 'पशुः पुरोडाशविकारः स्यात्पर्येग्निकरणदर्शना'-दित्यष्टमेऽभिधानात् । तदिदमुक्तं 'सर्वत्र च प्रयुक्तत्वात्संनिधानशास्त्राभावे'ति ॥

सामान्यश्रुतिकल्पनाधिकरणम् ॥ ८ ॥

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥ [अपिवा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥ १६ ॥ दर्शनाद्विनियोगः स्यात् ॥१७॥ लिङ्गाभावाच्च नित्यस्य ॥१८॥ आख्या हि देशसंयोगात् ॥१९॥ न स्याद्देशान्तरेष्विति चेत् ॥२०॥ स्याद्योगाख्या हि माथुरवत् ॥२१॥ एकधर्मो वा प्रवणवत् ॥ २२ ॥ तुल्यं तु कर्तृधर्मेण ॥ २३ ॥]**

**होलाकादेर्व्यवस्था स्यात्साधारण्यमुताग्रिमः ॥ देशभेदेन दृष्टत्वात्साम्यं मूलसमत्वतः ॥ २६ ॥**
**प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे ॥ अर्थाबोधादमात्वं चेन्न सामान्यानुमानतः ॥ २७ ॥**

**स्मृतीनामाचाराणां च विरोधाविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते । स्वातन्त्र्यं च स्मृतीनां निरस्तम् । इदानीं केषांचिदाचाराणां स्मृतीनां च व्यवस्थाऽव्यवस्था वेति चिन्त्यते । होलाकादयो हि कैश्चिदेव प्राच्याद्यभिमानिभिरनुष्ठीयन्ते न सर्वैः । गृह्याणि मानवातिरिक्ताश्च स्मृतयः कैश्चिदेव काश्चित्पठ्यन्ते न सर्वैः । तदेतान्स्मृत्याचारानुदाहृत्य विचार्यन्ते । किमेते तेषामेव धर्मा उत सर्वेषामिति । तदर्थं च किं तेषां स्मृतिर्मूलभूता व्यवस्थितविषया शक्यते कल्पयितुं उत सर्वसाधारण्येनैवेति । तत्र—'लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते ॥ धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते ॥' स्मृत्याचारलिङ्गगम्या श्रुतिर्न प्रत्यक्षा । तच्च लिङ्गं केषुचिदेवोपलभ्यते । अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते । नहि तस्याः सर्वविषयत्वे प्रमाणमस्ति । व्यवस्थितविषयत्वेऽपि स्मृत्याचार-**

---

कल्पसूत्राणामप्रामाण्यमित्यत्रैतदधिकरणगुणसूत्रसंमतिमाह—**तदिदमिति** । सर्वस्मिन्नपि पूर्वपक्षे दर्शयागः कर्तव्यः सर्वस्मिन्नप्यपरपक्षे पूर्णमासयागः कर्तव्य इति कल्पसूत्रे प्रतिपादनात् 'अमावास्यायाममावास्यया यजेत' 'पौर्णमास्यां पौर्णमास्या यजेते'तिप्रत्यक्षशास्त्रसद्भावाच्चेत्यर्थः । ततश्च प्रत्यक्षशास्त्रविरोधे पूर्वपक्षापरपक्षमात्रे दर्शपूर्णमासकर्तव्यतापरकल्पसूत्रस्याप्रामाण्यं सूत्रकारेणैव प्रतिपादितमिति तत्समानन्यायत्वा 'दविशेषादुभौ वे'त्यादेरप्यप्राम.ण्यं तदनुमतमित्यर्थप्रयोगशासकं सूत्रं स्वतःप्रमाणमितिचेदिति सूत्रार्थः ॥

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥ व्यवस्थेति** । विषयपरिशोधनेन तत्प्रामाण्यस्य स्थिरीकरणात्प्रामाण्यस्य स्वातन्त्र्याभावस्य चासत्त्वे व्यवस्थाविचारानुपपत्तेश्च संगतिरिति भावः । **होलाकेति** । वसन्तोत्सवो होलाका अर्कवृक्षादिरूपस्वकुलक्रमागतस्थावरदेवताभ्यर्चनरूपाह्निनैबुकादयो दाक्षिणात्यैर्मातृगणपूजालक्षणयागादयः प्रतीच्यैर्ज्येष्ठपौर्णमास्यामर्चनापूर्वकक्रियमाणवृषभधावनरूपा वृषभयज्ञादय उदीच्यैरित्यादिशब्दार्थः । **गृह्याणीति** । अत्र गृह्येषु कपालं भगालमिति ब्रूयात्, अभद्रं भद्रमिति ब्रूयात्, मणिं धनुरिति ब्रूयात्, धेनुं भव्येति ब्रूयात्, इत्यादयः पुरुषार्थतया विहिता ये धर्मास्तद्विषयोयं विचारो नतु कर्मार्थतया विहितधर्मविषयः । तेषु हि स्थालीपाकादिषु गृह्यान्तरोक्तानामपि धर्माणां शाखान्तराधिकरणन्यायेनाव्यवस्थायाः स्वतःसिद्धत्वादुपनयनोपाकरणमहानाम्नीव्रतादिषु तत्तद्वेदाध्ययनार्थेषु कर्मसु तत्तदध्ययनार्थोपकारभेदेन धर्मव्यवस्थाया अप्यविचारितसिद्धत्वात् । उपनयनादिविषयमेव च 'बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्' इति वचनमिति ध्येयम् । **मानवेति** । पुराणादिव्यतिरिक्तेष्वपि द्रष्टव्यम् । **कैश्चिदिति** । गौतमगोभिलीये छन्दोगैरेव पठ्येते, वासिष्ठं बह्वृचैः, शङ्खलिखितोक्तं वाजसनेयिभिः, आपस्तम्बीयबौधायनीये तैत्तिरीयैरित्यर्थः । **ननु** स्मृत्याचाराभ्यां कर्तव्यतामात्रमवगम्यते नतु व्यवस्थेति कथं पूर्वःपक्ष इत्यत आह—**तत्रेति** । ननु लिङ्गस्य पक्षधर्मताबलाल्लिङ्गिनः पक्षसंबन्धमात्रं सिध्यति नतु लिङ्गिनोऽन्यसंबन्धाभावोऽपि ततः सिध्यतीति कथं व्यवस्था सिध्यतीत्याशङ्क्य प्रमाणाभावादसति सर्वविषयत्वे व्यवस्था स्वतएव सेत्स्यतीत्याशयेनाह—**नहीति** । प्रमाणाभावमेवोपपादयति—**व्यवस्थितेति** । किंच सर्वविषयत्वे बाधके सहकृतं श्रुत्यनुमानमेव व्यवस्थावि-

---

१ कृष्णपक्षे. २ स्वस्वकुलागतं करञ्जार्कादिस्थावरदेवतापूजादिकमाह्निनैबुकशब्देनोच्यते. ३ अरुणकेतुकाध्यायपाठे व्रतम्.

योरुपपत्तेः। यदि च साधारणी श्रुतिः स्यात्तत्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्याताम्। यदि त्वालस्यादिनिमित्तमितरेषामनाचरणं तदा स्यादपि साधारणानुमानम्। यत्तु नियमेन प्राच्याद्यभिमानिनामाचरणमितरेषां चानाचरणं न तत्साधारणानुमानेऽवकल्पते। तस्माद्व्यवस्थितमेषां धर्मत्वमिति प्राप्तेऽभिधीयते—'विशेषाभावमात्रेण प्रसिध्येत्सर्वधर्मता॥ विशेषणाद्व्यवस्था स्यात्तच्च नेहोपपद्यते॥' यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति तदयुक्तम्। नहि सर्वधर्मत्वादिना प्रमाणमुपन्यसितव्यम्। उभयवादिसिद्धेनैव विधिनाऽसति विशेषोपादाने सर्वधर्मत्वसिद्धेः, व्यवस्थावादिना तु वक्तव्यं[1] विशेषे प्रमाणम्। तच्च नास्ति। तथाहि स्मृतयस्तावत्साधारण्येनैव विदधतीति न तेषु चरणविशेषोपादानमस्ति। स्मृत्यनुसार्येव च श्रुतिकल्पनमिति तदपि[2] साधारणं न्याय्यम्। पाठव्यवस्थातु कर्तुस्तच्चरणत्वात्। कर्ता हि छन्दोगः स्वशिष्यांश्छन्दोगान्स्वग्रन्थमध्यापयामास तेऽप्यन्यांश्छन्दोगानित्येवं गौतमीयस्य छन्दोगैः पाठः। तथापस्तम्बग्रन्थस्य तैत्तिरीयैरेवं गृह्यग्रन्थानामपीति व्यवस्थितधर्मविषयत्वमप्रमाणकम्। आचाराणां तु सर्वाचरि[3]त्रनुगतमनाचरितृभ्यश्च व्यावृत्तमाकृतिव्यक्तिगुणसंस्थानादिकं न किंचिद्विशेषणं संभवति यदुपादाय होलाद्यधिकारं विशिंष्यात्। तथा प्राच्यादिसमाख्यापि व्यभिचारिणी तद्देशगतानामपि केषांचिदनाचरणात्। चिरविनिर्गतपुत्रपौत्रा[4]दीनां चासत्यामपि समाख्यायामाचरणात्। तस्मादसति विशेषणे सर्वधर्मत्वमाचाराणां स्मृतीनां चेति सिद्धम्॥

---

चयां श्रुतिमनुमापयतीति ततएव व्यवस्थासिद्धिरित्याशयेन सर्वविषयत्वे बाधकमाह—**यदि चेति**। ननु यथाग्निहोत्रादिश्रुतेः साधारण्येऽप्यालस्यादिना केषांचिदननुष्ठानं एवमिहाप्युपपत्तेरसाधारणं न बाधकमित्यत आह—**यदीति**। **तदेति**। आलस्यादेरनित्यत्वादिति भावः। **अतइति**। नियमेनानाचरणस्य साधारणश्रुत्यनुमानेऽनुपपत्तेरित्यर्थः। **न तदिति**। तस्यालस्यादिनिमित्तत्वेऽनानुपपन्नस्य श्रुत्यनुमानेऽङ्गत्वाभावादित्यर्थः। **विशेषेति**। व्यवस्थितविषयत्वे प्रमाणाभावेन सामान्यविधित एवाग्निहोत्रादिवत्सर्वधर्मत्वसिद्धिरित्यर्थः। **विशेषणादिति**। अनुमितश्रुतेः यत्किंचिद्विशेषणविशिष्टपुरुषविषयत्वे व्यवस्था स्यात् तच्च नोपपद्यत इत्यर्थः। **ननु** सर्वविषयत्वे प्रमाणाभावात्सामान्यानुमानाद्विशेषविषयत्वसिद्धिरिति वैपरीत्यं किं न स्यादित्याशङ्कां निराकुर्वन्नाह—**यदुक्तमित्यादिना**। **उभयेति**। अग्निहोत्रादिवत्सामान्यविधितएव सर्वविषयत्वसिद्धेर्न तत्र प्रमाणान्तरापेक्षेति भावः। ननु लिङ्गव्यवस्थैव तत्र प्रमाणमित्याशङ्क्योपपादयति—**तथाहीत्यादिना**। स्मृतिलक्षणलिङ्गस्य कीदृशी व्यवस्थाभिमता किं व्यवस्थितविषयत्वरूपा उत पाठव्यवस्थारूपा। आद्येआह—**स्मृतय इति**। चरणविशेषः शाखाध्यायिविशेषः। द्वितीये आह—**पाठेति**। ततश्चान्यथासिद्धत्वान्न ततोऽनुमितश्रुतेर्व्यवस्थितविषयत्वमित्यर्थः। ननु तर्ह्यनन्यथासिद्धत्वादाचारव्यवस्थया व्यवस्थितविषयश्रुत्यनुमानं स्यादित्यत आह—**आचाराणांत्विति**। **आकृतीति**। 'ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यत्रेव जातिर्विश्वामित्रो होतेत्यत्र विश्वामित्रव्यक्तिः शुक्लो होतेत्यत्रेव गुणः अन्यूनाङ्गा ऋत्विज इतिवत्संस्थानं वा नास्तीत्यर्थः। क्रियापरिग्रहार्थ आदिशब्दः। यावतोऽश्वान्प्रतिगृह्णीयादित्यत्रेव क्रियापि काचिदिह नास्तीत्यर्थः। नन्वेवमपि समाख्यायाः संभवात्तद्विशिष्टः कुर्यादित्येवंविधश्रुत्यनुमानमस्त्वित्यत आह—**प्राच्यादीति**। **केषांचिदिति**। देशान्तरादागतानामित्यर्थः। **ननु** चिरनिर्गतत्वेऽपि तत आगत इति प्राच्यादिदेशादागमननिमित्ता समाख्या संभवतीत्यत आह—**पुत्रपौत्रेति**। ततश्च चिरनिर्गतानां ये पुत्रपौत्रादयस्तेषां 'तत्र जातः, तत्र भवः, सोऽस्य निवासः, तत आगत' इति वा कथमपि प्राच्यादिसमाख्या न संभवतीत्यर्थः। सूत्रार्थस्तु—अनुमापकस्य व्यवस्थितत्वाद्व्यवस्थासंयुक्तमेव श्रुतिरूपं प्रमाणमनुमेयं स्यादिति॥

---

१ वक्तव्यं प्रमाणं. २ सापि साधारणी न्याय्या. ३ चरितृष्वनुगत. ४ पौत्राणामपि चासत्यां समाख्यायां समाचारात.

साधुपदप्रयुक्त्यधिकरणम् ॥ ९ ॥

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥ [शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥ तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥]**

गोगाव्यादिषु साधुत्वे प्रयोगे वा न कश्चन ॥ नियमोऽत्रास्ति वा नास्ति व्याकृतेर्मूलवर्जनात् ॥ २८ ॥
साधूनेव प्रयुञ्जीत गवाद्या एव साधवः ॥ इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः ॥ २९ ॥
अम्बाम्भनशास्त्रस्य दन्त्यतालव्यसंशयात् ॥ अमात्येऽदन्त्यनिर्णीतिराप्तोक्तव्याकृतेर्बलात् ॥ ३० ॥

स्मृत्याचारविरोधे स्मृतेर्बलीयस्त्वमाचारेष्वप्यभियुक्ताचारस्य बलीयस्त्वं स्थितम् । इदानीं शब्दापशब्दविभागेऽपि किं व्याकरणस्मृतेस्तदभियुक्तानामाचारस्य चेतरलोकव्यवहाराद्बलीयस्त्वं संभवति नेति चिन्त्यते । तदिहैकस्मिन्नर्थे प्रयुज्यमानान्गो-गावी-गोण्यादिशब्दान्व्याकरणानुगताननुगतांश्चोदाहृत्य चिन्तनीयं किमेते सर्वे एकस्मिन्नर्थे प्रयोक्तव्याः साधवः किंवा व्याकरणानुगता एव साधवोऽन्येत्वसाधवो न प्रयोक्तव्या इति । तदर्थं च किं सर्वेऽप्यविच्छिन्नपारंपर्यप्रयोगजा उत केचिदशक्तिजा अपभ्रंशा इति । तदर्थं च किं व्याकरणं प्रमाणमप्रमाणं वेति चिन्तनीयम् । तत्सिद्धये किमस्य मूलं संभवति नेति, मूलसंभवे प्रमाणभूतव्याकरणस्मृतिशास्त्रबलीयस्त्वेन तदभियुक्तपुरुषाचारबलेन च पृथग्जनाचारबाधात् गाव्यादीनामसाधुत्वं, निर्मूलत्वे तु तदप्रामाण्याल्लौकिकप्रयोगाविशेषात्सर्वेषां साधुत्वेन प्रयोज्यतेति । तेन व्याकरणे प्रामाण्याप्रामाण्यमेवात्र चिन्तनीयम् । तत्र 'निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात् ॥ पूर्वापरविरोधाच्च नास्य प्रामाण्यसंभवः ॥ तस्मादनेन शब्दानां प्रयोगो न नियम्यते ॥ तेनार्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया ॥' नियमद्वयार्थं हि व्याकरणं साधूनेव प्रयुञ्जीत नासाधूनित्येकः प्रयोगनियमः । गवादय एव साधवो न गाव्यादय इति साधुत्वस्वरूपनियमोऽपरः । नचैतद्द्वयमप्यनेन नियन्तुं शक्यते । तथाहि-न तावत्साधूनेव प्रयुञ्जी-

---

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥२४॥** ननु आचारात्स्मृतेर्बलवत्त्वस्य स्मृत्याचारविरोधे वेति वर्णकेऽनभियुक्ताचारापेक्षयाऽभियुक्ताचारस्य बलवत्त्वस्य पील्वादिविषयवर्णके च व्यवस्थापितत्वेन ततएव व्याकरणस्मृतेस्तदभियुक्ताचारस्य च बलवत्त्वसिद्धेरिदं व्यर्थमित्याशङ्क्य शब्दापशब्दविभागे व्याकरणस्मृतेः प्रयोगरूपाचारमूलत्वेनेहाचारापेक्षया स्मृतेर्बलीयस्त्वं न संभवतीति शङ्कानिराकरणार्थत्वान्न व्यर्थमित्याशयेन वृत्तकथनपूर्वकं विचार्यं दर्शयति—**स्मृत्याचारेति । गोगावीगोण्यादीति ।** व्याकरणानुगतान्गवादिशब्दान् तदननुगतान्गावीगोणीगोतेत्यादिशब्दांश्चेत्यर्थः । **किमिति ।** एते किमत्र सर्वे एकस्मिन्नर्थे प्रयोक्तव्याः किंवा व्याकरणानुगता एव प्रयोक्तव्यास्तदर्थं च किमेते सर्वे साधवः उत व्याकरणानुगता एव साधवोऽन्ये त्वसाधव इति संशयद्वयमेकीकृत्य लिखितमिति द्रष्टव्यम् । साधुत्वासाधुत्वगोचरद्वितीयसंशयहेतुत्वेन संशयान्तरमाह—**तदर्थमिति** । अत्र सर्वेऽप्यविच्छिन्नपारम्पर्यप्रयोगजा उत केचिदशक्तिजा इति संशयकोटिद्वयम् । अपभ्रंशा इत्येतत्तु द्वितीयसंशयकोटिरूपमशक्तिजत्वस्य फलभूतमिहानूदितमिति ध्येयम् । **मूलमिति ।** मूलमात्रसंभवासंभवसंशयोपन्यासेन विगानादीनामभ्युच्चयत्वमेवाभिमतं नतु प्राधान्यमिति गम्यते । फलफलिभावं स्वयमेव दर्शयति—**मूलेति ।** मूलसंभवे व्याकरणस्मृतेः प्रामाण्यात्तदननुगतानामशक्तिजत्वेनासाधुत्वादप्रयोज्यत्वम् । निर्मूलत्वेतु तदप्रामाण्यात्सर्वेषामनवच्छिन्नपारम्पर्यप्रयोगजत्वेन साधुत्वात्प्रयोज्यत्वमिति फलफलिभावसंभव इत्यर्थः । ननु सर्वेषां प्रयोज्यत्वाप्रयोज्यत्वविचारस्य नाध्याये पादे च संगतिरित्याशङ्क्य तत्संशयः फलसंशयत्वेनोपन्यस्तः । अधिकरणं तु प्रामाण्यविचारपरमेवेत्यस्ति तदुभयसंगतिरित्याशयेनाह—**तेनेति । अर्थेति ।** गाव्यादिभ्योऽप्यर्थस्य प्रतीयमानत्वाद्धेतोरर्थप्रत्ययाय सर्वेऽपि प्रयोज्या इत्यर्थः । तत्र व्याकरणतात्पर्यविषयनियमद्वयोपन्यासपूर्वकं तत्र मूलाभावरूपं निर्मूलत्वमापादयति—**नियमद्वयार्थमिति** । एतद्द्वयं, प्रयोगः साधुत्वं चेति द्वयमित्यर्थः । यद्वा नियन्तुं कर्तुमित्यर्थः । तत्राद्यनियमः किं शब्दोच्चारणस्य यत्कार्यं तदर्थं उत शब्दोच्चारणाश्रितादृष्टार्थं इति विकल्पं मनसि निधायाद्ये आह—

---

१ युक्तानां चेतर. २ विचार्यते. ३ गोगाव्यादि. ४ इत्यर्थः. ५ करणबलीयस्त्वेन. ६ देतेन.

तेति नियमसंभवः। अर्थावगमाय हि शब्दोच्चारणं न धर्माय। अर्थश्च यद्यसाधुभ्योऽपि गम्यते ततः साधुनियमोऽनर्थकः। अथ न गम्यते ततः सुतरां नियमशास्त्रानर्थक्यम्। अर्थवशादेव नियमद्वयसिद्धेः। अथ गम्यमानेऽप्यसाधुभ्योऽर्थे दृष्टार्थमपि शब्दप्रयोगमाश्रित्य धर्माय साधुनियमः शास्त्रेण क्रियत इत्युच्यते। तन्न। मूलासंभवात्। न तावदत्र प्रत्यक्षादीनां मूलत्वम्। तेषां धर्माधर्मयोरप्रवृत्तेः। नच वेदवाक्यानि गवादिशब्देषु प्रतिपदं कल्पयितुं शक्यन्ते, अनन्तवाक्यपाठासंभवात् अपठितानां च मूलत्वानुपपत्तेः। नच सुशब्दमेव प्रयुञ्जीत नापशब्दमित्येकेनैवोपलक्षणेन सर्वेषामपि संग्रहः। गाव्यादीनामपि श्रोत्रग्रहणत्वेन सुशब्दत्वात्व्यवस्थानुपपत्तेः। नचावान्तरसामान्यं गवादिष्वनुगतं गाव्यादिभ्यश्च व्यावृत्तं किंचिदस्ति येन व्यवस्था स्यात्। साधुत्वमिति चेत् किंपुनरिदं साधुत्वं यद्गवादिष्वेव व्यवस्थितमित्युच्यते। नहीदं प्रत्यक्षादिभिरवगम्यते। वाचकत्वमिति चेत् तद्गाव्यादिष्वप्यविशिष्टं, तेषामपि हि प्रयोगप्रत्ययानुपपत्त्या वाचकत्वं लोके गम्यते। नह्यवाचकानां प्रयोगः प्रत्यायकत्वं वा घटते। नच यवादीनामिव प्रियङ्ग्वादिषु गुणात्प्रयोगसंभवः, मुख्याभावात्। मुख्यपूर्वको हि गौणः नासावत्यन्तावाचकस्य गाव्यादेरवकल्पते। एतेन लक्षणा प्रत्यूढा। तेन गाव्यादीनामवाचकत्वं लोकविरुद्धमिति न साधुरूपं शास्त्रेण नियन्तुं शक्यते। अनादित्वं साधुत्वमितिचेत् तदपि गाव्यादिष्वविशिष्टम् तत्रापि संबन्धुरस्मरणाददृष्टसाधनत्वमिति चेन्न, तस्य प्रत्यक्षाद्यविषयत्वात्। वेदवाक्यानां च प्रतिपदमसंभवादुपलक्षणानुपपत्तेश्च। तत्र साधु-

---

**अर्थावगमायेति**। शब्दोच्चारणकार्यमपि यद्यदृष्टात्मकं स्यात्तदा तत्र नियमस्योपयोगः संभाव्येत नच तदस्तीत्याशयेन न धर्मायेत्युक्तम्। **अनर्थक इति**। असाधुभ्योऽर्थप्रतीतेर्वारयितुमशक्यत्वादिति भावः। **अर्थवशादिति**। गाव्यादिभ्योऽर्थप्रत्ययाभावेऽर्थज्ञानाय तत्प्रयोगाप्रसक्तेर्नियमविधिफलतद्व्यावृत्तेः स्वतःसिद्धत्वादित्यर्थः। यद्यपि सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेष्विति शब्दवार्तिके धर्माय नियम इत्ययमेव पक्ष उक्तस्तथापि संभवमात्रेण नियमस्यार्थप्रत्ययार्थत्वमुद्भाव्य दूषितमिति ध्येयम्। द्वितीयमुत्थापयति—**अथ गम्यमान इति**। **दृष्टार्थमपीति**। दृष्टार्थभोजनाश्रितप्राङ्मुखत्वनियमवदिति भावः। मूलेति व्याकरणकर्तृभिर्दृष्टार्थशब्दप्रयोगाश्रितसाधुनियमस्य धर्मार्थत्वं ज्ञात्वा तदर्थं शास्त्रं प्रणेतव्यं तेषां तज्ज्ञानमेव न संभवति मूलाभावादित्यर्थः। अस्तु तर्हि वेदो मूलमित्याशङ्क्य किं गोशब्दमेव प्रयुञ्जीत न गाव्यादिकं अश्वशब्दमेव प्रयुञ्जीत नाश्वशब्दमित्यादिरूपेण प्रतिपदं वेदवाक्यानि मूलत्वेन कल्प्यन्ते उत केनचित्साधारणधर्मेण सर्वान्क्रोडीकृत्य गवाश्वादिशब्दविषयमेकमेव वाक्यं मूलत्वेन कल्प्यत इति विकल्पं हृदि निधाय प्रथमं दूषयति—**नचवेदेति**। **अपठितानां चेति**। नित्यानुमेयवेदस्य मूलत्वनिराकरणादिति भावः। यद्यपि 'अथ शब्दानुशासनं' 'शब्दर्दुरं करोति शाब्दिक'इत्यादिष्विव शब्दशब्दः सुशब्दपरोऽभिमतः। अतएव नापशब्दमित्येतदुपपद्यते। तथापि यथाश्रुताभिप्रायेण दूषयति—**गाव्यादीनामिति**। इदानीं सुशब्दपरोऽपि शब्दशब्दो न संभवति सुशब्दस्यैव कस्यचिद्गाव्यादिव्यावृत्तस्याभावादित्याह—**नचावान्तरेति**। अनेनैव यथानुगतप्राच्यत्वाद्यभावेन होलाकादीनां न व्यवस्था तथा गवादीनां प्रयोगेऽपि न व्यवस्थेति प्रत्यवस्थानात्संगतिरिति सूचितम्। **किंपुनरिति**। किं जातिरूपमुपाधिरूपं वा, उभयथापि न संभवतीत्यर्थः। तत्र जातिपक्षे दूषणमाह—**नहीति**। योग्यव्यक्तिवृत्तिजातेर्योग्यत्वाज्जातिरूपत्वे प्रत्यक्षेण गृह्येतेति भावः। उपाधिरूपं शङ्कते—**वाचकत्वमिति**। ननु साधुशब्दस्मरणाकार्यानुमाद्वा प्रयोगप्रत्ययोपपत्तिरित्यत आह—**नह्यवाचकानामिति**। गवादिष्वपि तथात्वस्य वक्तुं शक्यत्वाद्विनिगमनाविरह इति भावः। **गुणादिति**। यद्यपि गौणत्वेऽपि साधुत्वापत्तेरिदमयुक्तं तथापि नह्यवाचकानां प्रयोग इत्येतदुपपादनमात्रमिदं यववराहाधिकरणागतार्थत्वस्फोरणार्थमुपन्यस्य निरस्तमिति ध्येयम्। **एतेनेति**। गोणीशब्दस्यापभ्रंशे मुख्यस्यापि तत्संबन्धप्रतीतिपूर्वकत्वाभावाल्लक्षणा न संभवतीति भावः। एवंच गाव्यादीनामपशब्दत्वाभावात्तस्मा 'ब्राह्मणेन न म्लेच्छितवै' 'आहिताग्निरपशब्दं प्रयुज्ये'त्यादिनिषेधो न गाव्यादिविषयः किंतु अर्थापेतः शब्दोऽपशब्द इति व्युत्पत्त्या शून्यामृतवदननिषेधपरः वैदिकादपेत इति स्वरवर्णादिभ्रंशविषयो वा, न म्लेच्छभाषा शिक्षितव्येति स्मृत्यनुसारेण म्लेच्छभाषाविषयो वा बोध्यः। साधुत्वनिराकरणेनैव शाब्दिकाभिमतद्वितीयनियमोऽपि निराकृत इत्याह—**इति न शास्त्रेणेति**। गवादय एव साधवो न गाव्यादय इति द्वितीयनियमे नियम्यमानसाधुत्वाभिप्रायेण शङ्कते—**अदृष्टसाधनत्वमिति**। **तत्रेति**। अदृष्टसाधनताबोधकवाक्य उपलक्षणान्तराभावात्साधुत्वमेवोपलक्षणं वाच्यम्। ततश्च साधुत्वमदृष्टसा-

---

१ गवादिषु. २ मुपसंग्रहः. ३ दिभिर्गम्यते. ४ वाचकत्वं चेत्तद्गाव्यादिष्वविशिष्टं. ५ न शास्त्रेण साधुरूपं. ६ एतदपि.

त्वमेवोपलक्षणं तदेव च प्रमेयमित्या[1]त्माश्रयदोषापत्तिः । तस्मान्मूलाभावादप्रमाणं व्याकरणम् । परस्परविगानाच्च सूत्रकारो ह्यवश्यवक्तव्यं प्रयोजनमनभिदधानो निष्प्रयोजनतामेव शास्त्रस्य मन्यते । भाष्य[2]वार्तिककारौ तु धर्मप्रयोजनतामिति विगीतत्वम् । तयोरपि मिथोज्ञानतत्पूर्वप्रयोगधर्मत्ववचनाद्विगीतत्वम् । निष्फलं चेदं शास्त्रम् । नह्यनेन धर्मार्थकाममोक्षाणां किंचि[3]दप्यवाप्यते धर्म इति चेन्न । तत्रापि पूर्वोक्तनिर्मूलत्वेनाप्रमाणत्वात् । नच रक्षोहादीनामपि प्रयोजनत्वं, ते[4]षामप्यन्येभ्य एव शिष्याचार्यसंबन्धलोकमीमांसादिभ्यः सिद्धिरिति वार्तिकएव प्रपञ्चितम् । वेदविरुद्धं चेदं व्याकरणं 'दृष्टं सामे'त्यधिकृत्य 'कलेर्ढक्' 'वामदेवाड्ड्यड्ड्यौ'इत्युक्तम् । वेदे च 'यदकालयत्तत्कालेयस्य कालेयत्वं ततो वामं वसु समभव'दित्युपन्यस्य 'वा[5]मं वा इदं देवेभ्योऽजनि तस्माद्वामदेव्य'मिति वेदबाधादप्रामाण्यम् । पूर्वापरविरोधाच्च । अर्थप्रयुक्तानां हि शब्दानां व्याकरणं, प्रतिज्ञातं वाक्यमेव च तथेष्टं न पदानि अनर्थकत्वात् । यथोक्तम्—'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ॥ देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥' इति । ततश्च यथाप्रतिज्ञं वाक्यमेव व्याकरणेन संस्कर्तव्यं तदव्याकरणात्पदव्याकरणाच्च पूर्वापरविरोधः । प[6]दद्वारा व्याकरणेन वाक्यमेव संस्क्रियत इति चेन्न, अत्यन्तमविद्यमानत्वाद्वाक्ये पदानां तद्द्वारेण वाक्यस्य विषाणद्वारेणेव शशस्य संस्का[7]रासंभवात् ।

---

धनत्वरूपं चेददृष्टसाधनमदृष्टार्थे प्रयुञ्जीतेत्येवमुपलक्षणस्य प्रमेयस्य चैक्यादात्माश्रयः स्यादित्यर्थः । **तस्मादिति** । उक्तहेतोर्नियमद्वयेऽपि मूलाभावादित्यर्थः । विगानात् विरोधादित्यर्थः । ननु पाणिनेरपि प्रयोजनं संमतमेवान्यथा तस्य प्रमत्ततापत्तेरित्यत आह—**तयोरपीति** । भाष्यकारेण अथवा पुनरस्तु ज्ञाने धर्म इति साधुशब्दज्ञाने धर्म इत्युक्तं, वार्तिककारेण तु शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देनेति ज्ञानपूर्वकप्रयोगे धर्म इत्युक्तमिति तयोरपि परस्परविरोध इत्यर्थः । इदंच प्रदर्शनमात्रं, अग्रे बहुशो वार्तिकप्रत्याख्यानेन विरोधस्यातिस्फुटत्वादिति ध्येयम् । निर्मूलत्वेनैव धर्मरूपप्रयोजनाभावे सिद्धेऽपि यत्प्रयोजननिराकरणाभिप्रायेण नैष्फल्यादिति पृथगुक्तं तत्प्रयोजनं निराचष्टे—**नच रक्षेति** । 'देवान्प्रदुह उद्ग्राभं च निग्राभं चे'त्यादौभाषायामविद्यमानं लोपागमविकारादिकं वैयाकरणो निश्चित्य सम्यग्विद्वान्परिपालयति नान्य इति वेदरक्षा व्याकरणप्रयोजनम्, तथा सौर्यंचर्वादौ सूर्याय जुष्टमित्याद्यूहः प्रयोजनम्, एवं ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यागमोऽपि व्याकरणस्य प्रयोजनम् । अत्रप्रयोजनशब्दः प्रयोजकपरः । तथा एकेन लक्षणेन बहूनां शब्दानां ज्ञानं भवतीति प्रतिपदपाठापेक्षया लाघवं च प्रयोजनम् । एवं 'स्थूलपृषतीमनड्वाहीमालभेते'त्यादौ कर्मधारयबहुव्रीहिसंदेहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिनिश्चयो व्याकरणाभिज्ञस्य भवतीत्यसंदेहश्च प्रयोजनमिति वैयाकरणोक्तरक्षादिकमपि न प्रयोजनम् । वेदतदर्थाभिज्ञगुरुशिष्यपरंपरयैव वेदपाठक्रमस्येव वेदस्यापि रक्षासिद्धेः । मीमांसयाऽग्नय इत्यस्य स्थाने सूर्यवाचकचतुर्थ्यन्त ऊहितव्य इति सिद्धे चतुर्थ्यन्तसूर्यशब्दस्य सूर्यायेत्यस्य लोकत एव सिद्धे ऊहोऽप्यन्यथासिद्धः । उदाहृतस्मृतिरूपागमे षडङ्गशब्दस्य श्रुतिलिङ्गादिषट्प्रमाणपरत्वोपपत्तेः सोऽप्यन्यथासिद्धः । अनेकोत्सर्गापवादजटिलस्य व्याकरणस्य लघूपायत्वमसिद्धम् । स्थूलपृषतीत्यत्रापि पूर्वपदप्रकृतिस्वरः शिष्याचार्यसंप्रदायादेवावगन्तव्यः । तथासति ततएव स्वरवदर्थविशेषस्याप्यवगतिसंभवात्किं व्याकरणेनेत्येवं रक्षादिकं न प्रयोजनमिति वार्तिके प्रपञ्चितमित्यर्थः । **वेदेति** । कलिना दृष्टमित्यर्थे 'कलेर्ढगि'ति ढक्प्रत्ययमुत्पाद्य कालेयशब्दोव्युत्पादितस्तथा वामदेवेन दृष्टं सामेत्यर्थे 'वामदेवाड्ड्यड्ड्या'विति वामदेवशब्दाड्ड्यत्प्रत्ययं वोत्पाद्य वामदेवशब्दो व्युत्पादितः । वेदेतु 'यदकालयत्तत्कालेयस्य कालेयत्व'मिति कालनक्रियां निमित्तीकृत्य कालेयशब्दो व्युत्पादितः । तथा 'आपो ऋत्वियमार्छंस्तासां वायुः पृष्ठे व्यवर्तत ततो वामं वसु समभवत्तन्मित्रावरुणावपश्यतां तावब्रूतां वामं वा इदं देवेभ्योऽजनी'ति रजोधर्मं प्राप्ताभिरद्भिर्वायोः संगमे सति उत्तमं वसु धनं जातं तच्च देवतासंबन्धि जातं तेनेदं वामदेवाख्यं सामेति वामदेव्यशब्दो व्युत्पादितः । अतो वेदविरोधादप्रामाण्यमित्यर्थः । **अर्थेति** । 'सिद्धे शब्दार्थसंबन्ध' इति वार्तिके तथा प्रतिज्ञानादिति भावः । तत्र हरिसंमतिमाह—**यथेति** । यथा ब्राह्मणकम्बलशब्दे ब्राह्मणशब्दस्य कश्चिदर्थो नास्ति समर्थसूत्रभाष्यादौ समासे पदानामानर्थक्यस्योक्तत्वात्, तथा देवदत्त गामभ्याजेति वाक्ये देवदत्तादयः शब्दा अप्यनर्थका इत्यर्थः । पदानां वाक्यावयवत्वात्तद्द्वारा वाक्यमेव संस्क्रियत इति शङ्कते—**पदद्वारेणेति** । न पदसमुदायो वाक्यं किंत्वखण्डमन्यदेव वाक्यमिति पदानां वाक्यावयवत्वाभावान्न तद्द्वारेण वाक्यसंस्कारसंभव इति परिहरति—**अत्यन्तेति** । गाव्यादिप्रयोगस्य ततोऽर्थप्रत्ययस्य च वाचकत्वाभावेऽपि वाचकाशक्तिजत्वेनोपपत्तेस्तेषां साधुत्वाभावान्न प्रयो-

---

१ आत्माश्रयापत्तिः. २ वार्तिकभाष्यकारौ. ३ कश्चिदवाप्यते. ४ तेषामन्यतएव. ५ वामं वामदेवेभ्यो. ६ पदद्वारेण वाक्यमेव व्याकरणेन संस्क्रियते. ७ संस्काराभावात्.

तस्मादप्रमाणं व्याकरणं सर्वैर्भाषितव्यमिति प्राप्तेऽभिधीयते । 'प्रयोगप्रत्ययौ तावद्वाचकत्वात्स्वतेऽपि हि । युक्तावेकस्य चार्थस्य न्याय्या नानेकशब्दता ॥ अभियुक्तस्मृतेश्चात्र स्याद्विशेषावधारणम् । स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे ॥ प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानता ॥ प्रयोगनियमे मूलं वेदस्तस्मात्प्रमाणता ॥' गवादय एव साधवो न गाव्यादय इति साधुस्वरूपनियमः । साधव एव प्रयोज्या नासाधव इति धर्माय प्रयोगनियम इति द्वौ नियमौ व्याकरणेन प्रतिपाद्येते । द्वयोरपि च मूलसंभवादुपपन्नं प्रामाण्यम् । तथाहि प्रयोगनियमे मन्वादिवत्सप्रत्ययप्रणीतत्वाद्वेदमूलत्वम् । नहि पाणिनिकात्यायनपतञ्जलिभ्योऽन्ये[3] प्रणयितारो विद्यन्ते तेनच तत्प्रत्ययात्स्वनुमानं वेदवचनम् । प्रत्यक्षमेवच वाजसनेयादिषु वचनम् 'तस्माद्ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्दः' इत्यादि, 'आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपे'दित्यादिषु च प्रायश्चित्तविधानम् 'उत त्वः पश्यन्नि'त्यादयश्च बहवो मन्त्रवर्णाः शब्दापशब्दविभागाभिज्ञतदनभिज्ञस्तुतिनिन्दारूपाः, दृष्टार्थेऽपि च शब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाश्रितदिङ्नियम इव शास्त्रेण क्रियत इति न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्था । सत्यानृतवदनवर्जनयोश्चाविगीतमेव शास्त्रार्थत्वम् । तच्च शब्दार्थ-

---

ज्यत्वमिति सिद्धान्तमाह—**प्रयोगेति** । गवादिवद्गाव्यादीनामपि वाचकत्वस्वीकारे बाधकमाह—**एकस्य चेति** । नच विनिगमनाविरह इत्याह—**अभियुक्तेति** । नच साधूनामपि प्रयोगः किं न स्यादित्याशङ्क्याह—**प्रयोगनियम इति** । व्याकरणस्मृत्या साधूनामेव प्रयोगस्य नियमितत्वान्नासाधूनां प्रयोज्यत्वम् । नच प्रयोगनियमे स्मृतेरमूलत्वं वेदस्यैव मूलत्वादित्यर्थः । **प्रतिपाद्येते इति** । साधुस्वरूपनियमः साक्षात्प्रतिपाद्यते प्रयोगनियमस्तु तात्पर्यगत्येति विवेकः । **म्लेच्छितवा इति** । न म्लेच्छितव्यमित्यर्थः । गाव्यादीनामपशब्दत्वस्य वक्ष्यमाणत्वात्तद्विषयत्वे बाधकाभावान्निषेधस्यान्यविषयत्वं न कल्पनीयमिति भावः । अपशब्दनिषेधे च साधुशब्दनियमोऽर्थात्सिध्यतीत्याशयः । **आहिताग्निरिति** । नचैवमाहिताग्निमात्रस्य स्वभाषाव्यवहारोच्छेद इति वाच्यम् । आहिताग्निशब्दस्यान्वाहिताग्निपरत्वेनाग्न्यन्वाधानानन्तरं कर्ममध्येऽपशब्दप्रयोगे एव प्रायश्चित्तमिति ततोऽन्यत्र गाव्यादिभिः स्वभाषया व्यवहारे प्रत्यवायाप्रसक्तेः । तस्माद्ब्राह्मणेन न म्लेच्छितवा इति वाजसनेयिवाक्यस्य तु ज्योतिष्टोमप्रकरणगतत्वान्नातिप्रसङ्गः । एवं 'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दै'रिति स्मृत्यनुमितश्रुत्यावगम्यमानोऽप्यपशब्दनिषेधः क्रतुविषयः । 'वाचा ह च मनसाह च यज्ञो वर्तते' इति लिङ्गदर्शनेन वाग्योगशब्दस्य यज्ञपरतया वाग्योगविच्छब्दस्य ऋत्विग्यजमानपरत्वात् । अतएव महाभाष्ये सर्वोऽप्यपशब्दनिषेधः क्रतुविषय एव न लौकिकव्यवहारविषयोऽपीति प्रतिपादितम् । तस्मात्क्रतोरन्यत्रापशब्दप्रयोगे न प्रत्यवायप्रसक्तिः । **उत त्व इति** । 'उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वां३ विसस्रे जायेव पत्य उशती सुवासाः' इत्यस्मिन्मन्त्रे त्वः कश्चिद्वाचं पश्यन्नुत पश्यन्नपि न ददर्श कश्चिदेनां शृण्वन्नपि न शृणोति उशती कामयमाना सुवासा जाया पत्ये इव वाक् त्वस्मै कस्मैचित्तन्वां स्वतनुं विसस्रे उतो विवृणोतीत्यर्थः । अत्र पूर्वार्धे शब्दानभिज्ञनिन्दा उत्तरार्धे तदभिज्ञप्रशंसा । तथा 'सक्तुमिव तितउना[7] पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि' इत्यादयः शब्दाभिज्ञतदनभिज्ञस्तुतिनिन्दार्था बहवो मन्त्रा इत्यर्थः । एवंच सुशब्दाभिज्ञप्रशंसया तदभिज्ञानपूर्वकप्रयोगनियमविधिरवश्यं कल्प्यत इति भावः । नन्वर्थप्रत्ययार्थे शब्दोच्चारणे साधुनियमोऽनर्थक इत्यत आह—**दृष्टार्थेऽपीति** । दृष्टार्थभोजनमाश्रित्य 'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुख' इत्यादिना आयुरादिफलार्थो दिङ्नियमवदृष्टार्थमपि शब्दोच्चारणमाश्रित्य साधुनियमोऽभ्युदयाय व्याकरणानुमितेन प्रागुक्तप्रशंसानुमितेन वा 'एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवती'ति प्रत्यक्षेण शास्त्रेण वा विधीयत इत्यर्थः । **इति न प्रयोगेति** । प्रयोगोत्पत्तेः प्रयोगनियमस्य तन्नियामकव्याकरणस्य वा अशास्त्रत्वान्मूलभूतवेदरहितत्वाच्छब्देषु व्यवस्थासाधुप्रयोगनियमो न स्यादिति यद्दूषणं पूर्वपक्षसूत्रेणाभिहितं तन्नेत्यर्थः । **द्विविधमिति** । नच सत्यानृतद्वैविध्येऽपि सत्यं वदेन्नानृतं वदेदिति विधिनिषेधगतसत्यानृतशब्दयोरेकैकार्थकत्वमेव न त्वर्थद्वयपरत्वं सकृच्छ्रुतपदस्यार्थद्वयपरत्वानुपपत्तेरिति वाच्यम् । सत्यत्वं नामाबाधितार्थप्रतिपादकत्वं तदभावोऽनृतत्वम् । प्रतिपादकत्वं चेह वृत्तिमुपजीव्य बोधकत्वम् । तेन गाव्यादावर्थाबाधेऽपि तत्र वृत्तेरभावान्न सत्यत्वप्रसङ्गः । अर्थानृतस्थले प्रतिपादकत्वसद्भावेऽप्यर्थस्याबाधितत्वाभावान्नातिप्रसङ्गः । एवं चानेन रूपेण शब्दार्थसत्यद्वयस्य तदनृतद्वयस्य च क्रोडीक-

---

१ सर्वे भाषितव्या इति. २ व्याकरणे प्रति. ३ न्यःकश्चित्प्रत्ययिततरोस्ति. ४ प्रत्ययितारः. ५ वेदवाक्यम्. ६ भोजनाश्रित इव दिङ्नियमः शास्त्रेण विधीयत इति. ७ तितउश्चालनी.

भेदेन द्विविधम् । तत्र यथैवार्थसत्यं यथावस्थितार्थकथनं धर्माय तथा शब्दसत्यमपि यथावस्थिताविप्लुतशब्दोच्चारणमित्यर्थः । यथाचार्थानृतमन्यथावस्थितस्यान्यथावचनं प्रत्यवायाय तथा शब्दानृतमप्यन्यरूपे[1] वाचके सत्यन्यरूपोच्चारणमिति[2] यावत् । तेन न प्रयोगोत्पत्त्यशास्त्रत्वम् । द्वाभ्यामेव च वाक्याभ्यां साधूनेव शब्दान्सत्यपर्यायान्प्रयुञ्जीत नासाधूनपशब्दाननृतपर्यायानिति समस्तशब्दापशब्दविधिप्रतिषेधसिद्धेर्नानन्तवाक्यकल्पनापत्तिः । साधुत्वासाधुत्वे एव च शब्दापशब्दसत्यानृतपर्याये उपलक्षणे । अनादिवाचकत्वमेव साधुत्वं तद्विपर्ययश्चासाधुत्वम् । यत्तु प्रयोगप्रत्ययान्यथानुपपत्त्या[3] गाव्यादीनामपि वाचकत्वाद्व्यवस्थानुपपत्तिरित्युक्तं तत्रोच्यते । यद्यप्यमीषामवाचकत्वं[4] यद्यपि च मुख्याभावे गौणलाक्षणिकयोरसंभवस्तथापि वाचकाशक्तिजयतया मूलशब्दोपस्थापेनन प्रत्यायकत्वं भविष्यति । अशक्तिजत्वापरिज्ञानाच्चोपशृण्वन्तोऽपि बालास्तत्रैव संज्ञासंज्ञिसंबन्धं शिक्षित्वा तथैव स्वयं व्यवहरन्ति तेभ्यश्च शिक्षित्वाऽन्येऽपीत्येवमपि प्रयोगप्रत्यययोरुपपत्तौ नैकान्ततः सर्वेषामप्यविच्छिन्नपारंपर्यवाचकत्वमध्यवसातुं शक्यते । संभवति चैवं नानेकशब्दत्वमेकस्यार्थस्याभ्युपगन्तुं न्याय्यम् । अनेकशक्तिकल्पनाप्रसङ्गात् । प्रयोगवेलायां चाष्टविधदोषनिदानविकल्पापत्तेः वाच्यवाचकयोश्चैकैकधावधारितस्य[5] नियमस्यानेकत्वे बाधप्रसङ्गात् । सास्नादिमानेव हि यस्यामभिधानक्रियायां कर्म तस्यां गोशब्दः करणमित्ययमनयोः[6] शब्दार्थयोः संबन्धः ।

---

तत्त्वेनोक्तदोषानवकाशात् । **अर्थसत्यमिति** । अर्थसत्यवदनमित्यर्थः । एवमग्रेऽपि । **द्वाभ्यामिति** । नचान्यतरेणैव साधुशब्दानुष्ठानासाधुवर्जनयोर्लाभादुभयोपादानं व्यर्थमिति वाच्यम् । साधुनियमस्याभ्युदयार्थत्वेन तत्साध्यफलापेक्षाविरहदशायामसाधुशब्दवर्जनस्य ततो लाभाभावात्तद्वदसाधुनिषेधेनार्थात्साधुशब्दैर्व्यवहारसिद्धावपि तन्नियमस्य श्रुतिंविनाभ्युदयकारित्वासिद्धेश्चोभयावश्यंभावादिति भावः । **उपलक्षणे इति** । विधेयनिषेध्यसंग्राहके इत्यर्थः । **अनादीति** । नन्वत्र पदद्वयोपादानं किमर्थम् । नच वाचकत्वं टिघुभादिसंज्ञास्वपि गतं, तासां च न साधुत्वं साध्वसाधुबहिर्भावात् । उक्तंच—'यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः । अनपभ्रंशरूपत्वान्नास्त्यासामपशब्दता ॥ हस्तचेष्टा यथा लोके तथा संकेतिता मताः । नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवे'दिति । ततस्तद्वारणार्थमनादिपदं तन्मात्रं च 'हेलयो हेलय इति कुर्वन्तः पराबभूवु'रिति वेदे श्रुतेष्वपभ्रंशेषु गतमतो वाचकत्वमित्युभयोपादानमिति वाच्यम् । टिघुभादिसंज्ञानां हस्तादिचेष्टावत्संकेतितत्वेन तद्वत्प्रत्यायकत्वमात्रसद्भावेऽपि वाचकत्वे प्रमाणाभावात् । नचैवं देवदत्तादिसंज्ञानामपि वाचकत्वं न स्यादिति वाच्यम् । तासां स्वरूपेण सादित्वेऽपि 'द्वादशेऽहनि पिता नाम कुर्या'दिति शास्त्रविषयत्वेनानादित्वस्य वाचकत्वस्य च युक्तत्वादतएव 'यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादय'इति नामकरणादिशास्त्रामूलकानां स्वेच्छाकल्पितसंज्ञानामेव साध्वसाधुबहिर्भाव उक्तो न सर्वासाम् । अलय इत्यादीनामपि अरय इति प्रयोक्तव्ये करणापाटवादिनाऽलय इति कुर्वन्तः पराबभूवुरिति वेदादेव शत्रुरूपार्थे सादित्वावगमेन तेषामनादित्वाभावात् । अस्य वाक्यस्यार्थवादत्वेन तस्मादलय इत्यपभ्रंशप्रयोगासिद्धेश्चेति चेदुच्यते । वाचकत्वमर्थप्रत्यायकत्वमिह विवक्षितम् । तच्च गाव्यादिष्वपीत्यतिप्रसङ्गवारणार्थमनादीतिपदम् । अग्रिमवाक्ये यद्यप्यमीषां वाचकत्वमिति गाव्यादीनां वाचकत्वमभ्युपगम्यैव नैकान्ततः सर्वेषामविच्छिन्नवाचकत्वमध्यवसातुं शक्यते इत्यनादिवाचकत्वस्य निषेधेन वाचकत्वपदस्य प्रत्यायकत्वमात्रपरत्वावगमात् आनादित्वमात्रं हुमादिषु स्तोभेषु गतमिति तद्वारणार्थं वाचकत्वमिति पदद्वयमप्यावश्यकमिति दिक् । **तथापीति** । केनचिद्गामानयेति प्रयोक्तव्ये करणापाटवादिना गावीमानयेति प्रयुक्ते श्रोतृपुरुषेण गोशब्दं प्रयोक्तुमुद्यतस्याशक्तिजोऽयं शब्द इति निश्चित्य सास्नादिमदर्थे आनीते व्युत्पित्सवस्तदुभयव्यवहारं पश्यन्तो गावीशब्दस्यैव सास्नादिमदर्थेन संज्ञासंज्ञिसंबन्धं व्युत्पाद्य व्यवहरन्तीत्यर्थः । नन्वशक्तिजत्वं वा कल्पनीयं वाचकत्वं वा कोन्वत्र विशेष इत्यत आह—**संभवतीति** । दृष्टत्वादशक्तिजत्वकल्पनैव लघीयसीति भावः । **अष्टविधदोषेति** । विकल्पस्याष्टदोषदुष्टत्वं पीलुवर्णक एवावोचाम । **वाच्येति** । गोशब्देन सास्नादिमानभिधीयत इत्याप्तवाक्याद्वाचकत्वग्रहदशायामभिधानक्रियाद्वारा तत्कर्मकरणयोर्वाच्यवाचकयोरथैकत्वे द्रव्यगुणयोरैककर्म्याेन्नियमः स्यादित्यनेन न्यायेन नियमरूपः संबन्धोऽवगतस्ततश्च गाव्यादेरपि सास्नादिमदर्थवाचकत्वस्वीकारे सास्नादिमत्कर्मकाभिधानक्रियायां गोशब्द एव करणमित्येवंरूपनियमस्य व्युत्पत्तिकालावगतस्य बाधः स्यादित्यर्थः । तत्वेनो-

---

१ अन्यथारूपे. २ मिति न प्रयोगोत्पत्त्य. ३ प्रत्ययानुपपत्त्या. ४ कत्वं साधुत्वमध्यवसातुं. ५ कैकस्यावधा. ६ मित्ययमनयोः संबन्धः.

तद्यदि गाव्यादिभिरपि सास्नादिमानभिधीयते ततस्तस्यां वेलायां सास्नादिमत्कर्मिकायामप्यभिधानक्रियायां गोशब्दस्य करणत्वाभावात्प्रतीतबाधः । तस्मादेकैकस्यैव वाचकत्वमितरे तदशक्तिजा इति न्याय्यम् । करहस्तादिषु तु विशेषानवधारणादन्याय्याप्यनेकशब्दता गत्यन्तराभावादङ्गीक्रियते । गवादिगाव्यादिषु त्वभियुक्तस्मरणास्मरणाद्विशेषोस्तीति न तावत्सर्वेषां वाचकत्वम् । वाचकरूपनियमेपि स्मृतेः स्मृत्यन्तरमेव मूलं तस्याप्यन्यदित्येवमनादिरेवैषा स्मृतिपरम्परा । नचान्धपरम्परान्यायः, शब्दस्वरूपस्य शब्दान्तराद्विविक्तस्य प्रत्यक्षत्वात् । सर्वे हि स्वेस्वे काले गवादिशब्दान्प्रत्यक्षत एवोपलभन्ते । अतीतकाले च सत्तां पूर्वेभ्यो वृद्धेभ्यः श्रुत्वावधारयन्ति । सर्वकालमपि च केचन वृद्धाः सन्तीति तत्प्रत्यक्षसंभवान्न कदाचिदपि प्रत्यक्षविच्छेदः । सर्वकालवर्तित्वमेव चानादित्वं साधुत्वं तच्च विच्छिन्नपारम्पर्याभियुक्तस्मरणेन सुलभमिति न निर्मूलत्वम् । नच विगानादप्रामाण्यं श्रुतीनामपि ग्रहणाग्रहणादिविगानदर्शनात् । फलं चास्य शब्दापशब्दविभागज्ञानमुपादानपरित्यागोपयोगि धर्माधर्मप्राप्तिपरिहारार्थम् । रक्षोहादि च वेदविरुद्धं कामं भवत्वप्रमाणं सर्ववेष्टनादिस्मरणवत् न तावता सर्वाप्रामाण्यम् । एवं पदानर्थक्यपदस्फोटवाक्यस्फोटाद्यभ्युपगमोऽपि न न्यायमूल इति न्यायाभावादप्रमाणम् । धर्माधर्मसिध्यर्थं तु शब्दापशब्दविभागकथनमभियुक्तप्रणीतत्वात्प्रमाणमेवेति प्रमाणं व्याकरणं तदनुगता एव गवादयो वाचका इति स्थितम् ॥

आकृतिशक्त्यधिकरणम् ॥ १० ॥

**प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥ [अद्रव्यशब्दत्वात् ॥ ३१ ॥ अन्यदर्शनाच्च ॥ ३२ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥ तदर्थत्वात्प्रयोगस्याविभागः ॥ ३५ ॥ ]**

लोके पदपदार्थौ यौ न तौ वेदेऽथवात्र तौ ॥ रूपभेदात्पदं भिन्नमुत्तानादिभिदा स्फुटा ॥ ३१ ॥
वर्णैकत्वात्पदैकत्वं क्वाचित्की रूपभिन्नता ॥ प्रायिकेण पदैक्येन तदर्थैक्यं तथाविधम् ॥ ३२ ॥
व्यक्तिर्व्रीह्यादिशब्दार्थ आकृतिर्वा क्रियान्वयात् ॥ व्यक्तिर्व्युत्पत्तिवेलायामाकृत्या सोपलक्ष्यते ॥ ३३ ॥
शक्तिग्रहादियुक्तिभ्य आकृतेरर्थतोचिता ॥ क्रियापर्यवसानाय व्यक्तिस्तत्रोपलक्ष्यताम् ॥ ३४ ॥
गवादिचोदना नो मा जातिव्यक्त्योरनिर्णयात् ॥ आनन्त्यव्यभिचाराभ्यां न व्यक्तिरिति निर्णयः ॥ ३५ ॥

इदानीं वाचकप्रसङ्गाद्वाच्यविशेषश्चिन्त्यते, किमाकृतिरुत व्यक्तिरिति । तत्र यदि लोकवेदयोः

---

पपादयति—**सास्नादिमानित्यादिना** । एवं प्रयोगनियमे मूलमुपपाद्य साधुस्वरूपनियमेऽप्युपपादयति—**वाचकरूपनियम इति** । साधुत्वस्य तत्तत्कालीनपुरुषप्रत्यक्षगम्यत्वेन केवलानुमानगम्यत्वाभावान्नान्धपरंपरेत्याशयेनाह—**शब्दस्वरूपस्येति** । तदेव विवृणोति—**सर्वेहीति** । ननु स्वकाले प्रत्यक्षत्वमपभ्रंशस्याप्यस्तीत्यत आह—**अतीतेति** । नन्वेतावता सर्वस्मिन्काले शब्दस्वरूपप्रत्यक्षमात्रसिद्धावपि साधुत्वस्य प्रत्यक्षतोऽसिद्धेर्नान्धपरम्परायाः परिहार इत्यत आह—**सर्वकालवर्तित्वमिति** । अनेन प्रकारेणानादित्वनिश्चयस्य गाव्यादिष्वतिप्रसक्तिं शङ्कमानोऽनतिप्रसक्तमनादित्वावगमोपायमाह—**तच्चादीति** । अभियुक्तस्मरणपरम्परया तत्तत्कालीनवृद्धप्रत्यक्षसध्रीचीनया सास्नादिमदर्थेषु गवादिशब्दानामनादिवाचकत्वरूपं साधुत्वं स्वध्यवसानं, गाव्यादिषु तु केवलप्रत्यक्षमात्रपरम्परा संभाव्येतापि नच तन्मात्रेण साधुत्वनिश्चयः । अशक्तिजत्वस्यापि संभवात् । तस्मादभियुक्तस्मरणाभावाद्गाव्यादिषु नानादित्वनिश्चय इति न साम्यमिति भावः । शास्त्रप्रयोजनविषये भाष्यवार्तिककारयोः परस्परविगानादप्रामाण्यमुक्तं निरस्यति—**नचेति** । स्मृत्योः परस्परविगानेऽपि विरुद्धश्रुतिद्वयानुमानसंभवेनोभयोरपि प्रामाण्यमुपपद्यत इति भावः । विकल्पाभिधानं च प्रौढवादमात्रं ज्ञानपूर्वके प्रयोगे धर्मो नतु केवले ज्ञाने इति भट्टपादैर्व्यवस्थापितत्वात् वार्तिकप्रत्याख्यानादेरप्यन्यथासिद्ध्यादिनिबन्धनत्वेन विवक्षितार्थे भाष्यवार्तिककारयोर्न विगानं, यत्रापि विवक्षितशब्दभेदे विगानं तत्र यथोत्तरं मुनित्रयप्रामाण्यात्परिहरणीयमित्याद्यूह्यम् । **फलंचेति** । धर्माधर्मप्राप्तिपरिहारार्थमुपादानपरिहारौ तदुपयोगिशब्दापशब्दविभागज्ञानं फलमित्यर्थः । अन्वाचयफलमाह—**रक्षादीति** । व्याकरणादपि रक्षादेः संभवात् षडङ्गशब्दस्य प्रसिद्धेर्वेदशब्दसमभिव्याहाराच्च तदीयशिक्षाद्यङ्गपर एवेति भावः । **पदेति** । समासे पदानामानर्थक्यं वाक्यस्फोटपदस्फोटाद्यभ्युपगमश्चेत्यर्थः ॥

**प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥** लोकवेदाधिकरणस्य व्याकरणाधिकरणेन न संगतिः किंत्वा

---

१ दित्येवमेपा.

शब्दार्थानामन्यत्वं भवेत्तत इदमनारम्भणीयम् । तथाहि लौकिकशब्दविषयं तावदिदमधिकरणमनर्थकं, वैदिकविषयं तु भवत्यर्थवत् । ननु तत्र व्यवहाराननुपातिनां शब्दानामर्थनिर्णयः शक्यते कर्तुमुपायाभावात् । तेनोभयस्मिन्नपि विषयेऽनारम्भणमेवाधिकरणस्यान्यत्वपक्षे स्यात् । एकत्वपक्षे तु लोके वृद्धव्यवहारानुसारेण शब्दार्थनिर्णयः कृतस्तत्रानुपयुक्तोऽपि वेदे फलिष्यति । तेनाकृत्यधिकरणोपोद्घाततया लोकवेदयोः पदपदार्थानामन्यानन्यत्वे विचार्येते । तत्र सत्यपि वर्णाभेदे केषांचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजादिपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टो भेदः, स्वरूपादिशब्दसाहचर्याच्च लोकवेदयोः पदानामन्यत्वं, अर्थोऽपि च पदान्यत्वादेव। 'उत्ताना वै देवगवा वहन्ती'ति दर्शनाच्च । अश्ववालादिशब्दानां च स्पष्टार्थान्तरदर्शनादन्य इति प्राप्तेऽभिधीयते—'प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् ॥ वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥' ननु वर्णाभेदेऽपि स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः—'पदावधारणोपायान्बहूनिच्छन्ति सूरयः ॥ क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती'रिति । सत्यम् । योऽर्थप्रतीत्यौ-

---

कृत्यधिकरणस्यैव । अतएव व्याकरणाधिकरणानन्तरं तत्संगतत्वादाकृत्यधिकरणाक्षसंदेहमुपन्यस्य पश्चाल्लोकवेदाधिकरणं भाष्यादौ प्रवर्तितमित्याशयेनाकृत्यधिकरणस्य व्याकरणाधिकरणेन संगतिमाह—**व्याकरणमिति** । आकृतिरिति । जातिरित्यर्थः । ननु नैयायिकाभिमतावयवसंस्थानरूपा आकृतिः, तस्या निरवयवेष्वसंभवादिति ध्येयम् । लोकवेदाधिकरणस्याकृत्यधिकरणोपोद्घातत्वात्संगतिरित्याह—**तत्रेत्यादिना । अनर्थकमिति** । व्यक्तेः शब्दार्थत्वे सामान्यविशेषशब्दयोरुभयोरपि व्यक्तिवाचकत्वाविशेषेण सामान्यविशेषशास्त्रयोस्तुल्यबलत्वान्न बाध्यबाधकभावः किंतु विकल्पः । यदात्वाकृतिः शब्दार्थस्तदा सामान्यशास्त्रेण व्यापकजातावभिहितायां तद्द्वारा यावत्सकलव्यक्त्युपस्थितिस्ततः प्रागेव विशेषशब्दाभिहितावान्तरजातिद्वारा वा क्वचित्कौण्डिन्यादिशब्दवद्विशेषशब्दस्य व्यक्तिवाचित्वाद्वा व्यक्तिविशेषप्रतीतिर्झटिति भवतीति शीघ्रप्रवृत्तेन विशेषशास्त्रेण मन्थरप्रवृत्तस्य सामान्यशास्त्रस्य बाध इत्यादिकं ह्यस्य प्रयोजनम् । इदंच वैदिकविषयत्व एव घटते ननु लौकिकविषयत्व इति तद्विषयत्वेऽनर्थकं स्यादित्यर्थः । यद्यपि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यादौ ब्राह्मणशब्दस्य जातिवाचित्वात्कौण्डिन्यशब्दस्य व्यक्तिवाचित्वाल्लोकेऽपीदं प्रयोजनं संभवति तथापि पुमिच्छानुसारिलौकिकवाक्यार्थनिर्णये न्यायानपेक्षणाद्धर्मोपयोगाभावाच्चानर्थक्यमिति भावः । **ननु** व्यवहाराननुपातित्वे यूपादिशब्दवदर्थनिर्णयोऽस्त्वित्यत आह—**उपायेति** । लोकप्रसिद्धतक्षणादिशब्दसमभिव्याहारलक्षणोपायाद्यूपशब्दार्थनिर्णयः । सर्वेषां शब्दार्थानामन्यत्वे तु तादृशोपायाभावान्न कस्यापि शब्दस्यार्थनिर्णयः स्यादित्यर्थः । **अन्यानन्यत्वे इति** । अन्यत्वानन्यत्वे इत्यर्थः । यथाश्रुतेऽन्यानन्यरूपसमासार्थगतभावस्यैकत्वे द्विवचनानुपपत्तेः। **स्वरेति** । वैदिकेषु नियतः स्वरः, 'देवास' इत्यादौ वर्णागमश्छान्दसः, 'त्मना देवेष्वि'त्यादावात्मनेत्यस्याकारलोपः, 'उद्ग्राभं च निग्राभं चे'त्यादौ हकारस्य भकारात्मको विकारः, लोके तु नियतस्वरादीनां विपर्ययः, अधीयतेऽस्यामिति व्युत्पत्त्याऽध्ययनतिथिरध्यायः, अष्टम्याद्यनध्ययनतिथिरनध्यायः, वेदवाक्यान्यध्याय एवोच्चार्यन्ते लौकिकानि त्वनध्यायेऽपीत्येवं नियतस्वरादितद्विपर्ययाध्यायानध्यायादिधर्मभेदेनेत्यर्थः । आदिशब्देनोपनीतत्रैवर्णिकप्रयोज्यत्वतदभावादिसंग्रहः । यद्यपि पाणिनिना वेदइव भाषायामपि स्वरानुशासनस्य कृतत्वाल्लोकेऽपि स्वरनियमावश्यंभावस्तथापि लोके स्वरनियमस्य शिष्टैरनादरेण सत्यप्यनुशासने वचन्ति इत्यादिवदप्रयोगादेव स्वरनियमो नावश्यक इत्याहुः । **व्यपदेशेति** । स्वरनियमादियुक्तेषु वैदिकत्वव्यपदेशात्तद्रहितेषु लौकिकत्वव्यपदेशाच्चेत्यर्थः । **पदान्यत्वादिति** । संज्ञाधिकरणन्यायेन शब्दभेदेऽर्थभेद औत्सर्गिक इति भावः । **उत्ताना इति** । नच लौकिकगवीष्वविद्यमानस्योत्तानवहनस्य देवगवीषु प्रतिपादनमात्रेण कथं वाच्यभेदस्तथासति स्थूलत्वादिधर्मभेदेऽपि वाच्यभेदापत्तेरिति वाच्यम् । य उत्ताना वहन्ति ते देवानां गोशब्दवाच्या इत्येवं लोकविलक्षणवस्त्वन्तरस्यैवानेन गोशब्दवाच्यत्वप्रतिपादनेन वाच्यभेदावश्यंभावादिति भावः । वर्णैक्येऽपि नियतानियतस्वरत्वादिना पदभेदः स्यादिति शङ्कते—**नन्विति । क्रमेति** । क्रमादीनां त्रयाणां परिहारग्रन्थे उदाहरणं स्पष्टम् । पचत इति पदं नामधेयत्वेनाख्यातत्वेन च संभाव्यमानं भोक्तुकामः पचत इत्यत्राख्यातम् । पचते दक्षिणां देहीत्यत्र शत्रन्तं नामेति च पदान्तरसमभिव्याहारान्निश्चीयते इति पदान्तरसमभिव्याहाररूपवाक्यं पदभेदावगमोपायः । अश्वस्त्वमित्यत्राश्व इति पदं नामत्वेन संभाव्यमानं वेहोच्छूनतालक्षणविवक्षितार्थलाभाय व्याकरणस्मृत्या लुङि 'टुओश्वि गतिवृद्ध्यो'रित्यस्य मध्यमपुरुषैकवचनान्तमाख्यातं निश्चीयत इति व्याकरणस्मृतिः पदभेदज्ञानोपायः । अत्र श्रुतिशब्देन प्रथमान्ताख्यातपदयोर्यत्सामानाधिकरण्यं तद्विवक्षितम् । उक्तंच वाक्याधिकरण एव

---

१ इदं प्रकृत्याधिकरणम्. २ गुणादिषु.

पयिको धर्मस्तद्भेदे भिद्यत एव पदम्। यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वं अन्तोदात्तत्वे स्वार्थवृत्तितास्मरणादवगम्यते। ब्रह्मब्राह्मणादिषु तु न्यूनातिरेकवशादर्थभेदो[1] लोकत एवावगतः। जराराजादिषु क्रमभेदादर्थान्यत्वाध्यवसायः[2]। नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति। यदि ह्यनियतस्वराणामन्योऽर्थो नियतस्वराणामन्योऽर्थ इति स्मृतितो लोकतो वाऽवगतं स्यात्ततो नियतानियतस्वरतया लोकवेदयोः पदभेदो भवेत् नचैवमतो नास्ति पदभेदः। पद्यते गम्यतेऽनेनेति पदम्। अतो गमकस्वरूपस्य कियतापि रूपेण सति भेदे भिन्नं पदं तदभावे तु धर्ममात्रभेदान्न तद्भिद्यते। एवं देवासः त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किंचिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात्, सत्यपि च केषांचिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्, पदैक्ये च तदर्थावगमादुत्तानादिवचनस्यान्यपरत्वादश्ववालाद्यर्थभेदेऽपि केषांचिद्भेदे सर्वेषां तदभावात्सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम्। एवं सिद्धे विचार्यते। किमाकृतिः शब्दार्थ उत व्यक्तिरुताकृतिविशिष्टा व्यक्तिरिति त्रयः पक्षाः प्राधान्यतश्चिन्त्यन्ते[3]। अन्येतु विकल्पसमुच्चयसंबन्धसमुदायादयः सर्वे पक्षा आकृतिविशिष्टव्यक्तिपक्षनिराकरणेनैव निराकृता भवन्तीति न पृथग्विचार्यन्ते। तत्र—'प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता। नह्याकृतिरमूर्तत्वाद्व्यवहारोपयोगिनी॥ लिङ्गकारकसंख्याभिः संबन्धोऽस्या न कल्प्यते॥ सामानाधिकरण्यं च न जातिगुणशब्दयोः॥ व्यक्तिवाचित्वपक्षे तु सर्वमेतत्समञ्जसम्॥ तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः॥' 'व्रीहीनवहन्ति' 'पशुमालभेत' 'गामानय' 'ब्राह्मणो न हन्तव्यः' इति यावन्त एवमादयो विनाशिमूर्तद्रव्यगोचराः[4] प्रयोगविधयः प्रतिषेधा वा ते सर्वे व्यक्तावेव संभवन्ति नाकृतौ। नह्याकृतिरवहन्तुमालब्धुमानेतुं हन्तुं वा शक्यते, नित्यत्वादमूर्तत्वाच्च। तेनानर्थकं तद्विधानं प्रतिषेधश्च प्राप्त्यभावात्। व्यक्तिपक्षे तूपपद्यते तस्माद्व्यक्तिः शब्दार्थः। एवंच वृक्षौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्य-

---

नयरत्ने ग्रन्थकारेण—किमियं श्रुतिः सामानाधिकरण्यमित्यर्थं इति यातः पुनरायातीत्यत्रायातीत्याख्यातपदसामानाधिकरण्यात् यात इति कर्तरिनिष्ठायां प्रथमान्तं नामेति, यातो देवदत्ताविल्यत्र द्विवचनान्तनामपदसामानाधिकरण्याद्यात इति आख्यातमिति निश्चीयते इति सामानाधिकरण्यं पदभेदज्ञानोपायः। काशिकाटीकायां तु 'उद्भिदा यजेते'त्यत्रोद्भिदेति तृतीयाश्रुतिबलाद्भावनाकरणभूतकर्मपर एवोद्भिच्छब्दः नतु खनित्रादिपर इति निश्चीयत इत्यर्थविशेषावच्छिन्नपदभेदस्तृतीयया श्रुत्याऽवसीयत इति श्रुतेः पदभेदज्ञानोपायत्वमुक्तम्। स्वरादीनामप्यर्थप्रतिपत्त्युपयुक्ततया भेदकत्वं न स्वरूपेण। इह चार्थप्रतिपत्त्यौपयिकधर्मभेदाभावान्न पदभेद इति परिहरति—**सत्यमिति**। **स्वार्थेति**। अन्तोदात्तत्वे तत्पुरुषत्वावगमेन स्वार्थवृत्तितावगम्यत इत्यर्थः। **स्मरणादिति**। व्याकरणादित्यर्थः। अध्यवसाय इत्यत्र लोकत इत्यनुषज्यते। नन्वर्थप्रमित्यौपयिकधर्मभेदाभावेऽपि धर्मभेदमात्रात्पदभेदः किं न स्यादित्यत आह—**पद्यत इति**। देवास इत्यादिष्वपि धर्मभेदमात्रं नार्थप्रमित्यौपयिकधर्मभेद इति न पदभेद इत्याह—**एवमिति**। नन्वर्थभेदानवगमात्पदभेदाभाववदर्थैक्यानवगमादभेदोऽपि न स्यादित्यत आह—**किंचिदिति**। स्वरूपादिसाहचर्यादुक्तं भेदं निरस्यति—**सत्यपीति**। सर्वेषां पदानां भेदे वैदिकपदानां व्यवहारानुपातित्वाभावेनार्थावगम एव न स्यादित्याह—**पदैक्य इति**। पदैक्ये सत्येव तदर्थावगमसंभवादित्यर्थः। **अन्यपरत्वादिति**। य उत्ताना वहन्तीत्युद्दिश्य गोशब्दवाच्यं विधातुमशक्यं उत्तानवहनस्याप्रसिद्धत्वादतो वायुपुराणोक्तरीत्या पृथिवीगोलकत्रैलोक्यभ्रमणवशाद्देवा अपि कदाचिदिमं लोकं उपरि पश्यन्तीति तद्दृष्टिमाश्रित्य एतेषामेव गवां दक्षिणात्वादिना देवसंबन्धिनामुत्तानवहनं स्तुत्यर्थमनुकीर्त्यत इत्यर्थः। आदिशब्देन 'देवेभ्यो वनस्पते हवींषि हिरण्यवर्णप्रदिवस्तेऽर्थ एतद्वै दैव्यं मधु यद्धृत'मित्यादिसंग्रहः। **अन्येत्विति**। 'नियोगेन विकल्पेन द्वे वा सह समुच्चिते। संबन्धः समुदायो वा विशिष्टा वैकयेतरे'त्यष्टपक्षीमुपक्षिप्य 'गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः। जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके॥ संख्या च सप्तमी तेषामष्टौ पक्षा द्वयोर्द्वयोः॥' इत्यादिना बहवः पक्षा वार्तिके उपन्यस्तास्ते पक्षा इत्यर्थः। **प्रयोगेति**। व्रीहीनवहन्तीत्यादीनामवहननाद्यनुष्ठानगोचरचोदनानां भावाद्व्यक्तिष्वेव च तासां संभवादित्यर्थः। आकृतौ तदसंभवमाह—**नहीति**। दूषणान्तरमाह—**लिङ्गेति**। प्रयोगचोदनाग्रहणं प्रतिषेधस्याप्युपलक्षणमित्याशयेन व्याचष्टे—**व्रीहीनिति**। लाक्षणिकव्यक्त्याश्रयणेन प्रयोगचोदनासमर्थने सर्वेषामपि वैदिक-

---

१ तिरिक्तवशात्. २ क्रमान्यत्वा. ३ प्राधान्येन चिन्त्यन्ते. ४ मूर्तिमद्द्रव्य.

याभिहितानि लिङ्गसंख्याकारकाणि तया संबध्यन्ते। जातेरलिङ्गत्वादसंख्यत्वादमूर्तत्वेनाकारकत्वा-द्यासंबन्धः स्यात्। सामानाधिकरण्यं च गौः शुक्ल इति शुद्धव्यक्तिवचनयोरेकार्थवृत्तित्वादुपपद्यते। जातिगुणविशिष्टद्रव्यवचनत्वेऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम्। त्वत्पक्षे तु जातिगु-णमात्रवृत्तित्वादर्थभेदे दुर्लभं सामानाधिकरण्यं स्यात्। एवं पुरुषो देवदत्त इति जातिद्रव्यवचन-योर्दर्शयितव्यम्। तस्माद्व्यक्तिरेवार्थः। कथं तर्हि व्यक्त्यन्तरे प्रयोगो यत्र न दृष्टः शब्दस्तत्र सामा-न्यस्योपलक्षणत्वाददोषः। यैवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थशिक्षा योऽयं शुक्लवासाः स देवदत्त इतिवत्। यथाच तत्रोपलक्षणभूतं वासोऽनभिधाय देवदत्त एवाभिधीयते तथेहाप्युपलक्षणमात्रत्वात्सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते। एकोपलक्षणत्वादेव नानेकशक्तिकल्पनापत्तिः। आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः। तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थ इति। नैतद्युक्तम्। कुतः—'आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः। संदे-हाच्चरमज्ञानाच्चित्रबुद्धेरभावतः॥ अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः॥ आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता॥ व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता॥ लिङ्गसंख्यादिसंबन्धः सामानाधिकर-ण्यधीः॥ सर्वं समंजसं ह्येतद्वस्त्वनेकान्तवादिनः॥ लक्षणा वाभ्युपेतव्या जातेस्तेनाभिधेयता॥' नह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम्। व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं नियमलक्षण-त्वात्संबन्धस्यानियमे तदयोगात्। अनन्ताश्च शब्दव्यक्तयोऽनन्तासु व्यक्तिषु कल्प्याः। जात्युपल-क्षणत्वेऽप्यभिधेयानामानन्त्याच्छक्त्यानन्त्यमस्त्येव। व्युत्पत्तिकाले हि जातिरुपलक्षणं नाभिधान-समये। अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तिगतम्[3]। तद्यथाऽक्षत्रयमेकापवरकस्थमेकापवरक-स्थित्यैवोपलक्ष्य कश्चित्कंचिदाह—'य एतस्मिन्नपवरकेऽधुना स्थितास्तेऽक्षशब्दाभिधेया' इति। तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थितिर्नामैकमुपलक्षणं लभ्यते तथापि शब्दस्तदनादरेण व्यक्तिमात्रमेव[4] स्वरूपेणाभिधत्ते इति भवति शक्तित्रयम्। एवमिहापि। यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षण-मासीत्तथापि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेनैव रूपेणाभिधत्त इति स्यादेव शक्त्यानन्त्यम्। अपिच यद्यव्यपदेश्यं धर्मिस्वरूपमभिधेयं ततो गोशब्दोच्चारणाद्गोव्यक्तिः प्रतीयमानापि नाश्वादिव्य-क्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात्। नह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते। ततश्च गौरित्युक्ते सर्वत्राविशिष्टा प्रतीतिः स्यात्। यथाह—'अव्यपदेश्यत्वेन सर्वत्राविशेषा'दिति।

---

शब्दानां लाक्षणिकत्वापत्त्या क्वापि लक्षणादूषणं न देयं स्यादिति भावः। **अलिङ्गत्वादिति**। इदं चापाततः 'स्तनकेश-वती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इत्युक्तलक्षणस्य लिङ्गस्य वृक्षव्यक्तावप्यसंभवात्सत्वरजस्तमोगुणानामाविर्भावादिलक्षणलि-ङ्गस्य जातावपि संभवादिति ध्येयम्। **असंख्यत्वादिति**। द्वित्वादिसंख्याया वृक्षत्वे स्वतोऽसंभवादित्यर्थः। **एवमिति**। देवदत्तशब्दः संज्ञात्वाद्द्रव्यवचन इति भावः। केवलव्यक्तिपक्षे शङ्कते—**कथमिति**। यत्र पूर्वं गोशब्दो न दृष्टस्तत्र शक्तिग्रहाभावात्कथं पश्चात्तत्प्रयोग इत्यर्थः। यदा एकस्यां व्यक्तौ शब्दं दृष्ट्वा शक्तिर्गृह्यते तदा सामान्यस्योपलक्षणतया सर्वव्यक्तिक्रोडीकारेणैव शक्तिग्रहणाद्व्यक्त्यन्तरे प्रयोगो नानुपपन्न इति परिहरति—**सामान्यस्येति**। नचोपलक्षणत्वमात्रेण सामान्यस्याभिधेयत्वप्रसक्तिरित्याह—**यथाच तत्रेति**। व्यक्त्यानन्त्यकृतशक्तिनानात्वस्यापि न प्रसक्तिः, उपलक्षणैक्येन शक्त्यैक्यादित्याह—**एकोपलक्षणेति**। व्यक्त्यभिधाने बाधकान्याह—**आनन्त्येति**। जात्यभिधाने साधकान्याह—**अन्वयेति**। जातिपक्षोक्तदोषानुद्धरति—**व्यक्त्याकृत्योरिति**। **नहीति**। अनन्तव्यक्त्युपस्थित्यसंभवादिति भावः। **व्यभिचारादिति**। गोशब्दकरणकाभिधानक्रियायां सास्नादिमद्व्यक्तिः कर्मेति ग्रहणदशायामभिधानक्रियाकर्मकरणयोः सास्ना-दिमद्व्यक्तिगोशब्दयोर्यः क्रियाद्वारा संबन्धः स नियमरूपो भवति व्यवहारदशायां च कदाचित्कस्याश्चिदभिधानं नतु सर्वासां सर्वदेति यदा यद्व्यक्तेरभिधानं तदा तदितरासां परित्यागात्ताभिः सहावगतनियमबाधप्रसङ्गादित्यर्थः। तदेतदाह—**निय-मेति**। जातेरुपलक्षणत्वान्न शक्त्यानन्त्यमित्युक्तं निरस्यति—**व्युत्पत्तिकाल इति**। **प्रातिस्विकेनेति**। प्रातिस्विक-तत्तद्व्यक्तिस्वरूपमात्रमित्यर्थः। अक्षत्रयं विदेवन-विभीतक-रथावयवात्मकम्। अपवरकं गर्भगृहम्। **अपिचेति**। जातेः शक्तिग्रहसमयमात्रे उपलक्षणत्वेऽप्यभिधानसमये जातिसंस्पर्शाभावात् गवादिशब्दव्यपदेशानर्हव्यक्तिमात्रस्याभिधेयत्वेन निर्विकल्पकमेव शब्दात्स्यादित्यर्थः। नन्वेतद्दोषपरिहारार्थमभिधानसमयेऽपि जातेरुपलक्षणत्वं स्वीक्रियत इति शङ्कते—

---

१ रेकार्थत्वात्. २ लक्षणलाभादेव. ३ व्यक्तीनाम्. ४ व्यक्तित्रयमात्र. ५ विशेषणप्रसङ्गात्.

अथाभिधानसमयेऽपि जातिरुपलक्षणमित्यभिदधदेव हि व्यक्तिं शब्दो जातिमुपलक्षणमुपादाय तज्जातीयरूपेणाभिधत्ते गोजातीयमिति। ततः प्रथमं जातिरभिधातव्या। नह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते। ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं न शुद्धाभिधानम्। विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम्। तदभिधाने च ततएवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः। किंच गोशब्द उच्चरिते व्यक्तिषु संशयो भवति न कस्यांचिन्निर्णयः। यत्र च संशयो न तस्य शब्दाभिधेयता, शब्दस्य निश्चयजनकत्वात्। सामान्यं तु निर्णीयत इति भवत्यभिधेयम्। नन्वसत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रं निर्णीयत एव किमिदं व्यक्तिमात्रं, सामान्यं विशेषो वा। द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा। तत्र विलक्षणबुद्ध्यालम्बनं व्यक्तिः सामान्यबुद्ध्यालम्बनं च सामान्यं न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूपम्। सामान्यमेव त्वनेन मात्रशब्देनाभिधीयत इति तदेवाभिधेयम्। प्रथमं च सामान्यमेव शब्दाद्गम्यते पश्चाद्व्यक्तिष्वाकाङ्क्षामात्रं जायते। ततस्तदेवाभिधेयं न व्यक्तिविशेषः। विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तूत्पद्यतेऽतोऽभिधेया जातिः। अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम्। व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते अतोऽभिधेया जातिः। नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वं अपितु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुगतरूपतया बुद्ध्या गृह्यते तत्र सामान्यं शब्दार्थ इति। अयमर्थः सामान्यात्मना वस्तुशब्दाद्गम्यते न विशेषात्मनेति। यच्च सामान्यात्मना शब्देन बोधितं तस्य क्रियासंबन्धश्चोद्यते शक्नोति च तत्क्रियां साधयितुम्। अतस्तदेव क्रियाश्रयं विशेषरूपमपि लिङ्गसंख्याकारकसंबन्धः सामानाधिकरण्यं च सर्वमनेकान्ताश्रयेणैव सुपरिहरम्। यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणेनोपपद्यते। यत्र तु 'पशुना यजेत' 'अरुणया क्रीणाती'त्यादौ करणत्वश्रवणं तत्र जातिगुणयोश्चामूर्तयोरपि द्रव्यावच्छेदेन मुख्यमेव करणत्वमुपपन्नं, अधिकरणसंप्रदानादिरूपं त्वमूर्तस्यासंभवादभेदं लक्षणां वाश्रित्य समर्थनीयम्। आहच—'तेन तल्लक्षितव्यक्तेः क्रियासंबन्धचोदना॥ जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः॥' इति तत्सामान्यमेवाभिधेयं न व्यक्तिरिति सिद्धम्॥ इति शास्त्रदीपिकायां प्रथमाध्यायस्य तृतीयः पादः॥ ३॥

---

**अथाभिधानेति**। एवं तर्हि नागृहीतविशेषणान्यायाज्जात्यभिधानावश्यंभावे ततएव व्यक्तिप्रतीतिसिद्धेर्न तस्या अप्यभिधेयत्वं स्यादिति परिहरति—**ततइति**। **किंच गोशब्द इति**। गामानयेत्युक्ते गोव्यक्तिष्वेव का वा गौरानेयेति संदेहदर्शनादित्यर्थः। **आकाङ्क्षामात्रमिति**। प्रागुक्तसंदेहमूलकमिति शेषः। **खण्डेति**। खण्डितशृङ्गः खण्डितदन्तो वा खण्डः, शृङ्गरहितो मुण्डः। **अन्वयेति**। गोत्वान्वये सति गोशब्दप्रयोगात्तद्व्यतिरेकेऽश्वादिषु गोशब्दप्रयोगाभावाच्चेत्यर्थः। **अनतिरेकादिति**। तादात्म्यादित्यर्थः। **अनेकान्तेति**। भेदाभेदरूपतादात्म्याश्रयणेनेत्यर्थः। **लाक्षणिकेति**। जातेः स्वतो विलक्षणत्वेन व्यक्तिमनपेक्ष्य इतरव्यावृत्तजातिप्रतीतौ पश्चाल्लक्षणया व्यक्तिप्रतीतिरिति भावः। भवदेवस्तु लक्षणा ह्यनुपपत्तिमूला। अनुपपत्तिश्च क्रियाकारकसंबन्धयोग्यपदार्थावगमनिबन्धना। नचाकृतिः क्रियाकारकसंबन्धयोग्या किंतु व्यक्तिरेव। ततश्च जातिमात्राभिधाने क्रियाकारकसंबन्धयोग्यपदार्थानवगतेः कस्य कुत्र संबन्धानुपपत्तिरतः क्रियापदस्य लक्षणया व्यक्तिपरत्वे कारकपदे व्यक्तिलक्षणा, कारकपदस्य लक्षणया व्यक्तिपरत्वे क्रियापदे व्यक्तिलक्षणेति परस्पराश्रयापत्तेर्व्यक्तिलक्षणानुपपन्नेत्याह। तदयुक्तम्। प्रथमं क्रियाकारकसंबन्धयोग्यव्यक्त्यप्रतीतावपि कारकाभिधायिविभक्तिसमभिव्याहारमात्रेण क्रियाकारकसंबन्धयोग्यवस्तुद्वये क्रियापदकारकपदयोस्तात्पर्यमिति तात्पर्यग्रहे सति तद्योग्यव्यक्तिद्वयलक्षणायामन्योन्याश्रयानवकाशादिति। **अधिकरणेति**। अधिकरणत्वमुपश्लेषादिलक्षणं द्रव्यस्यैव ननु जातेः। तथा द्रव्योद्देश्यत्वविशिष्टद्रव्यप्रतिग्रहीतृत्वलक्षणं संप्रदानत्वमप्यचेतनाया जातेर्न संभवतीति भावः। सूत्रार्थस्तु—अवहननादिप्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता। एवमपि गौस्तिष्ठति गां पश्येत्यत्र जातेरभिधेयत्वं किं न स्यादित्यत आह—**अर्थैकत्वमिति**। अर्थैकत्वं हि सर्वत्र व्यक्त्यनभिधाने सिध्यति। अन्यथा क्वचिद्व्यक्तिः क्वचिज्जातिरित्यर्थे नानात्वं स्यादिति भावः। कथं तर्हि जातेः प्रतीतिरत आह—**अविभागादिति**। जातेः व्यक्तितादात्म्यात्प्रतीतिरित्यर्थः॥ **इति वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां प्रथमाध्यायस्य तृतीयः पादः॥ ३॥**

---

१ भिधानं—तदाह 'सामान्याकारेण निरूपणे विकल्पादि'ति विशेषणादित्यर्थः। विशिष्ट. २ प्रतीति. ३ बुध्यते. ४ गुणयोरेवामूर्तयोरपि. ५ द्रव्यपरिच्छेदेन.

# प्रथमाध्याये चतुर्थः पादः ।

उद्भिदादिशब्दानां यागनामतया प्रामाण्याधिकरणम् ॥ १ ॥

## उक्तं सामाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

**उद्भिदादिपदं धर्मे किममानमुत प्रमा ॥ विध्यर्थवादमन्त्रांशेष्वनन्तर्भावतो न मा ॥ १ ॥**
**अन्तर्भावो विधावुद्भिदा यजेतेति दृश्यते ॥ नामत्वेनान्वयो वाक्ये वक्ष्यतेऽतः प्रमैव तत् ॥ २ ॥**

उद्भिदादिशब्दानुदाहृत्य गुणविधिर्नामधेयमिति भाष्ये विचार्योक्तं सामाम्नायैदमर्थ्यमित्यनेन सूत्रेण पूर्वपक्षमभिधाय 'अपि वा नामधेयं स्या'दित्यनेन सिद्धान्तितं तत्तु प्रमाणलक्षणासंगतमिति वार्तिककारेणाधिकरणभेदमाश्रित्य प्रथममुद्भिदादिशब्दानां धर्मे प्रामाण्यमस्ति नवेति विचार्य पश्चाद्गुणविधिनामधेयविचारो दर्शितः । तदनेन शास्त्रारम्भप्रयोजनसमर्थनावसरे 'पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः' इति वार्तिकं दृष्ट्वा प्रथमएव पादे प्रामाण्याप्रामाण्यचिन्ता समाप्ता । त्रिपाद्यां तु कथंलक्षण इति थमुना प्रतिज्ञातः प्रामाण्यप्रकारो निरूप्यते विध्यर्थवादमन्त्रनामधेयस्वरूपैर्धर्मे प्रामाण्यं वेदस्येति प्रकारतद्वतोरनतिभेदात्समस्तोऽध्यायः प्रमाणलक्षणमाख्यायत इति ये मन्यन्ते ते निराकृताः । तथासति हि नामधेयस्वरूपप्रकारचिन्तनाद्यथाभाष्यमेवाधिकरणं संगतं स्यात् तस्मान्न तावदयं पक्षो वार्तिककारस्य संमतः । नच युक्तः । स्मृतिपादस्य त्रिपाद्यामसंगतिप्रसङ्गात् । नहि

---

**उक्तं सामाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥** वार्तिककारोन्नीताधिकरणान्तरस्योपयोगमाह—**उद्भिदादिशब्दानित्यादिना** । विचार्येति संशय्येत्यर्थः । **तत्त्विति** । उद्भिदादीनां प्रामाण्यमविचार्यैव यदि गुणविधिनामधेयविचारः क्रियते तदा तद्विचारस्य स्वातन्त्र्यापत्त्या अध्यायासंगतिः स्यादतः प्रामाण्यविचारपूर्वकमेव गुणविधिनामधेयविचारः प्रस्तोतव्यस्तदा तु विचारितप्रामाण्यप्रतिष्ठार्थत्वाद्गुणविधिनामधेयचिन्तायाः संगतिरिति भावः । वार्तिककारेण प्रामाण्यविचारपूर्वकं गुणविधिनामधेयचिन्ताप्रवर्तनेन कृत्स्नस्याध्यायस्य प्रमाणव्युत्पादनार्थत्वं वार्तिककाराभिमतमित्यवगमात् सुचरितमिश्रमतं वार्तिककारासंमतत्वान्न युक्तमित्याह—**तदनेनेति** । **पूर्वमिति** । अत्र स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यत इति पूर्वार्धम् । ततश्चायमर्थः । धर्मस्य स्वरूपादिषु मध्ये पूर्वं तावत्प्रमाणरूपाभ्यां द्विधा विप्रतिपद्यते । भावे लकारः । धर्मे किं योगिप्रत्यक्षं प्रमाणमुत चोदनेति प्रमाणे, तथा किं चैत्यवन्दनादिर्धर्म उत यागादिरिति स्वरूपे च विप्रतिपद्यते विप्रतिपत्तिः क्रियते । एतादृशविप्रतिपत्त्या प्रमाणे स्वरूपे च संशये सति आद्यस्यास्य विप्रतिपत्तिद्वयस्य निर्णयः पादेन प्रथमपादेन क्रियत इति संभावितेतरप्रमाणनिषेधेन वेदस्य संभाविताप्रामाण्यनिराकरणेनच प्रामाण्ये प्रतिपादिते तद्गम्ययागादिरेव धर्म इत्यर्थान्निश्चयात्स्वरूपमपि निर्णीतं भवतीति भावः । **थमुना प्रतिज्ञात इति** । कथंलक्षणो धर्म इत्येतत्प्रश्नोत्तरत्वेनावतीर्णस्य चोदनासूत्रस्य थमुप्रत्ययार्थप्रकारप्रतिज्ञायामपि तात्पर्यावश्यंभावात्तस्य थमुप्रत्ययप्रसादलभ्यत्वात्थमुना प्रतिज्ञात इत्युक्तेरुपपत्तिः । **ननु** टुप्टीकायां केचिदानर्थक्येनोत्सूत्रं पूर्वपक्षं कुर्वन्ति सूत्रेण तत्परिहरन्तीत्येवमिदं मतान्तरत्वेनोपन्यस्यानर्थक्यस्य पूर्वमेव सर्ववेदविषयस्य निराकृतत्वादिति वार्तिककारैरेव दूषितत्वात् तन्त्रवार्तिकेऽधिकरणान्तरप्रवर्तनं मतान्तराभिप्रायेणेत्युक्तत्वादयमेव पक्षो वार्तिककारसंमत इत्यस्वरसादाह—**नच युक्त इति** । वेदस्य स्मृत्यादिलिङ्गकानुमितिरपि प्रत्यक्षावगतिवत्प्रामाण्यप्रकार इति स्मृतिपादस्यापि स्मृत्यादिलिङ्गकावगतिरूपप्रकारव्युत्पादनार्थत्वस्य वक्तुं शक्यत्वाद्यथाश्रुतमिदमनुपपन्नमिति स्वातन्त्र्येण प्रामाण्यप्रकारव्युत्पादनं स्मृतिपादे नास्तीत्यत्र तात्पर्यमिति केचिदाहुः । एवंसति स्मृतिपादवदेव प्रथमं प्रामाण्यविचारमकृत्वापि प्रकारविचारस्य कर्तुं शक्यत्वेन प्रकृतासंगत्यापत्तेर्यथाश्रुत एवार्थो ग्रन्थकाराभिमतः । किंच न प्रत्यक्षावगतिर्वा स्मृत्यादिलिङ्गजन्यावगतिर्वा प्रामाण्यप्रकारः । प्रामाण्यप्रकारो नाम विशिष्टवाक्यार्थरूपधर्मप्रमितौ यथासंभवं तत्तद्विशेषणांशबोधकत्वं विशेष्यांशबोधकत्वं वा नतु वेदेन धर्मप्रमितौ जननीयायामितिकर्तव्यतात्वमात्रेण शब्दगोचरावगतिरपि प्रकारः । तथासति धर्मप्रमित्यर्थमपेक्षितानां सर्वेषामपि प्रकारत्वे सति व्युत्पाद्यत्वापत्तेः । अतः प्रत्यक्षावगतेः स्मृत्यादिलिङ्गजन्यावगतेश्चोभयोरपि न प्रामाण्यप्रकारत्वमिति यथाश्रुत एव ग्रन्थः समर्थनीयः । अतएवार्थवादाधिकरणे सर्वशः सर्वप्रकारं विधिस्तुतिस्मृतिभिरिति विधानादय एव प्रकारा उक्ताः नतु तत्र प्रत्यक्षावगतिर्लिङ्गजन्यावगतिर्वा दर्शितेति दिक् । तस्मात्कथंलक्षण इति थमुप्रत्ययप्रकृत्या किंप्रमाणक इति प्रतिज्ञातप्रमाणमेवाध्यायार्थः । थमुप्रत्ययेन प्रतिज्ञातप्रकारनिरूपणं त्वानुषङ्गिकतया तत्र तत्र प्रामाण्य-

---

१ व्युत्पादिते.

तत्र वेदप्रामाण्यप्रकारनिरूपणम् । तस्मात्सर्वस्मिन्नेवाध्याये धर्मे प्रमाणतदाभासनिरूपणमेव क्रियत इति वक्तव्यम्। तत्र चोदनैव साक्षात्प्रमाणम्। अर्थवादमन्त्रस्मृतिनामधेयानि तच्छेषत्वेन तन्मूलत्वेन च प्रमाणं भवन्तीति धर्मप्रमितेरितिकर्तव्यतास्थाने नियतं निपतन्ति । चोदनातु प्रधानं प्रमाणम् । तस्याश्च प्रथमपाद एव समाप्तं प्रामाण्यमित्यनेनाभिप्रायेणोक्तं 'पादेनाद्यस्य निर्णय' इति । चोदनैव हि साक्षात्प्रमाणं तत्तु प्रथमपादेनैव निर्णीतमित्यभिप्रायः । त्रिपाद्यां त्वप्रधानप्रमाणनिरूपणमित्येतावान्भेदः । प्रमाणचिन्तात्मकत्वं तु सकलस्याध्यायस्याविशिष्टमिति स एवैकोऽध्यायार्थः । तदिह संभवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठबहिष्पवमानाग्निहोत्राघारश्येनादिशब्दानुदाहृत्य चिन्त्यते किमेते धर्मप्रति प्रमाणं नवेति । तत्र—'विध्यर्थवादमन्त्रांशैर्वेदाद्धर्मः प्रतीयते ॥ नचोद्भिदादिशब्दानां तेष्वन्तर्भावसंभवः॥ न तावदर्थवादत्वं स्तुतिबुद्धेरभावतः ॥ उत्तमा-मन्त्रणा-स्यन्त-त्वान्तरूपाद्यभावतः ॥ मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते ॥ नच विध्यन्तपातित्वं साध्याद्यनभिधानतः॥' न तावदेते साध्यमभिदधत्यफलवचनत्वात्। न साधनं समानपदोपात्तधात्वर्थसाधनावरोधाद्भावनायाः । नच गुणविधानेनेतिकर्तव्यतान्तर्भावः । उद्भिदादिरूपस्य लोके गुणस्याप्रसिद्धत्वान्मत्वर्थलक्षणादोषाच्च चित्रादिषु वाक्यभेदप्रसङ्गादग्निहोत्रादिषु तत्प्रख्यशास्त्रान्तरसद्भावात् श्येनादिषु उपमानानुपपत्तेः । नच नाम्न इतिकर्तव्यतान्तर्भावः । नाम्नोऽनितिकर्तव्यतारूपत्वात् अप्रवृत्तिविशेषकरित्वेनच नाम्नोऽनर्थकत्वादप्रसिद्धत्वाच्च । तस्मादप्रमाणमेवंजातीयकमिति पूर्वःपक्षः । सिद्धान्तस्तु—'सकलस्यैव वेदस्य स्वाध्यायाध्यायवाक्यतः॥ विज्ञातं पुरुषार्थत्वमुद्भिदादेरपि ध्रुवम् ॥' तत्र त्वदुक्तेनैव मार्गेण मन्त्रार्थवादत्वासंभवाद्विध्युद्देशान्तर्भावस्य च प्रत्यक्षत्वात्तत्रैव गुणत्वेन नामधेयत्वेन वा प्रामाण्यं स्वाध्यायविध्यध्यापितस्यानर्थक्यासंभवात्सर्वानुपपत्तिपरिहारेणार्थवत्त्वमध्यवसितव्यम् ।

---

प्रतिष्ठापनार्थं क्रियते नत्वेतावता तस्याध्याये साक्षाद्व्युत्पाद्यत्वमित्याशयेनाह—**तस्मादिति** । कथंतर्हि पूर्वं प्रमाणरूपाभ्यामिति वार्तिकोपपत्तिस्तत्राह—**तत्र चोदनैवेति । तच्छेषत्वेनेति** । चोदनाकार्यधर्मप्रमितौ प्रमेयधर्मे प्राशस्त्यादिरूपविशेषणोपस्थापनेनोपयोगादर्थवादादेस्तच्छेषत्वं स्मृत्यादेस्तु तन्मूलत्वमिति विवेकः । श्रुत्यनुमानं विना स्मृतिजन्यधर्मप्रमितेरप्यतथात्वानिश्चयात्तन्निश्चयः श्रुत्येकलभ्य इति तन्मूलप्रमाणभावस्यापीतिकर्तव्यतास्थानत्वोक्तिः । नामधेयविचारस्य स्मृतिविचारानन्तर्ये निमित्तं स्मृत्यधिकरण एवोक्तम्। इदानीं वार्तिककारस्याधिकरणं दर्शयति—**तदिहेति** । उद्भिदाद्यधिकरणेषु यान्युदाहरणानि तानि सर्वाण्यत्रोदाहरणमित्याह—**संभवदिति** । अन्तर्भावासंभवमेवोपपादयति—**नतावदिति । स्तुतीति** । संज्ञायाः संज्ञिनिर्देशार्थत्वेन प्राशस्त्यबुद्धिर्नास्ति पशूद्भेदनकर्तृत्वरूपप्रवृत्तिनिमित्तानुसारेण गुणसंबन्धप्रतीतेः सहस्राक्षादिवत्कथंचित्स्तुत्युपपादनेतु स्तुत्यभ्युपगमे प्रातिपदिकार्थप्राधान्यापातात्तृतीयावगतपारार्थ्यबाधप्रसङ्ग इत्याहुः । **उत्तमेति** । 'पूष्णो हस्ताभ्यामाददे' इत्यादौ उत्तमपुरुषः । 'अग्ने हव्यं रक्षस्वे'त्यादावामन्त्रणम्। 'वस्वसि रुद्रोसी'त्यादावस्यन्तता। 'अर्चिषे त्वे'त्यादौ त्वान्तत्वम्। आदिशब्देन स्तुत्याशीरभिधानादिकं विवक्षितम्। **ननु** उक्तस्य सर्वस्याभावेऽपि 'वसन्ताय कपिञ्जलानालभेते'त्यादिवन्मन्त्रत्वं स्यादित्यत आह—**मन्त्रप्रसिद्ध्येति । साध्यादीति** । 'समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेते'त्यादावपि प्रकरणादिवशाद्धातुनैवोद्देश्यविशेषप्रतीतिसिद्धेर्नोद्देश्यविशेषप्रत्यायकत्वेनापि विध्युद्देशान्तर्गतिरिति भावः । **मत्वर्थेति** । मत्वर्थलक्षणादयो दोषा अग्रिमाधिकरणेषु स्पष्टाः । नच मत्वर्थलक्षणादीनामानर्थक्याज्ज्यायस्त्वादिदमयुक्तमिति वाच्यम् । कृत्स्नस्य वेदस्य प्रामाण्यावश्यंभावे हि आनर्थक्यापेक्षया तेषां ज्यायस्त्वमिति प्रामाण्यविचारावसरे तु तत् ज्यायस्त्वासिद्धेरिति भावः । **नाम्न इति** । तस्येतिकर्तव्यतात्वबोधकश्रुत्यादिप्रमाणाभावादिति भावः । नन्वनितिकर्तव्यतारूपेऽपि नामतयैव प्रामाण्यमस्त्वित्यत आह—**अप्रवृत्तीति** । धातुना यावती प्रवृत्तिस्तावत्येव नाम्नोऽपि भवति न ततोऽतिरिक्तेति नाम्नो नैरर्थक्यमित्यर्थः । नामत्वमप्यसंभवीत्याह—**अप्रसिद्धत्वादिति** । न तावदुद्भिच्छब्दो रूढ्या कर्मणि प्रसिद्धः । नापि योगेन उच्छब्दस्योर्ध्वत्वमर्थः । धातोर्विदारणं प्रत्ययस्य च कर्तृत्वमिति ऊर्ध्वविदारणकर्तरि खनित्रादावेवावयवशक्त्या प्रसिद्धिर्नतु कर्मणीत्यर्थः । **सर्वेति** । तत्परिहारोपायश्च वक्ष्यत इति भावः । **नन्व**ध्ययनविधिबलाद्भाव्यं प्रामाण्येनेत्यर्थवादाधिकरण एवोक्तमित्यत आह—

---

१ स्थाने निपतन्ति. २ प्रमाणमित्येतावान्. ३ गुणत्वेनाप्रसिद्धत्वात्. ४ करत्वेन. ५ स्वाध्यायविधिवाक्यतः. ६ परिहारेणाध्यव. ७ शोचिषेत्वेत्यादौ.

एतावदिहाधिकरणे स्थितं भाव्यं तावत्प्रामाण्येनेति । तदेतदर्थवादप्रस्तावेऽभिहितमप्यनेकविचारान्तर्हितमिति कृत्वा विशेषविचारायानेन सूत्रेणोपस्थाप्यते ॥

उद्भिदादिशब्दानां यागनामधेयताधिकरणम् ॥ २ ॥

## अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

गुणोऽयं नामधेयं वा खनित्रेऽस्य निरुक्तितः ॥ ज्योतिष्टोमं समाश्रित्य पश्वर्थं गुणचोदना ॥ ३ ॥
फलोद्भेदात्समानैषा निरुक्तिर्यागनाम्न्यपि ॥ नामत्वमुचितं यागसामानाधिकरण्यतः ॥ ४ ॥
लौकिके गणयागेऽस्य विधेः सापेक्षतेति चेत् ॥ निरुक्त्या श्रौतयागस्य नामत्वान्निरपेक्षता ॥ ५ ॥

विधित्वेन प्रामाण्यमित्येतावदवस्थितं तच्च द्वेधा संभवति गुणविधानेन नामधेयत्वेन वा । यावदनयोरन्यतरन्नोपपाद्यते तावत्पूर्वावगतमपि प्रामाण्यं न प्रतितिष्ठतीति तत्प्रतिष्ठापयिषया गुणविधिनामधेयचिन्ता प्रस्तूयते । तत्र प्रथमं तावदुद्भिदादिषु यौगिकेषु चिन्त्यते । किं गुणविधिः कर्मनामधेयमिति । तदर्थं किमेषां वैयधिकरण्येनाख्यातसंबन्धः, सामानाधिकरण्येन वेति । 'तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः ॥ प्रवृत्त्यौपयिकत्वाच्च गुणो यागे विधीयते ॥' यद्यपि व्रीह्यादिवदेते न क्वचित्समुदायरूपेण रूढास्तथाप्यवयवद्वारेणोद्भेदनसाधनेषु खनित्रादिषु प्रसिद्धिसंभवात्कर्मणि च कथंचिदप्यप्रसिद्धेर्नामधेयत्वेऽपि च यजेः प्रवृत्त्यन्तरानुपदेशादानर्थक्यापत्तेः गुणविधिपक्षे तु गुणे प्रवृत्त्यौपयिकत्वेन प्रयोजनवत्त्वाद्गुणविधानमेव युक्तम् । नच मत्वर्थलक्षणा यागानुवादात् । यदि ह्यत्र यागो विधीयेत ततस्तस्य करणत्वादुद्भिदाद्यपि करणमिति करणस्य करणान्तरेण संबन्धायो-

---

**तदेतदिति ।** सामान्यतः सिद्धस्यापि विशेषनिरूपणंविना प्रतिष्ठितत्वाभावात्तत्प्रतिष्ठार्थं विशेषविचारावश्यंभावे तदर्थतया पुनः स्मारणमर्थवदित्यर्थः । सूत्रार्थस्तु—समाम्नायस्य सर्वस्य धर्मप्रमित्यर्थत्वमध्ययनविधिबलादर्थवादाधिकरण एवोक्तं तस्मादुद्भिदादिकमपि तदर्थं स्यादिति ॥

**अपि वा नामधेयं स्यात्—॥२॥** पूर्वाधिकरणेन गुणविधिनामधेयपेटिकायाः संगतिमाह—**विधित्वेनेति ।** विध्यन्तर्भावेणेत्यर्थः । **यौगिकेष्विति ।** प्रथमत्वे हेतुगर्भं विशेषणम् । यौगिकानामुद्भिदादीनां योगेन खनित्रादिवत्कर्मण्यपि वृत्तेः संभवान्नामत्वं तेषां सुखेनोपपादयितुं शक्यत इति तद्विचारस्य प्राथम्यमिति भावः । **किमेषामिति ।** यदा वैयधिकरण्येनान्वयस्तदा कर्मसामानाधिकरण्याभावेन नामत्वासंभवाद्गुणविधिः । यदा तु सामानाधिकरण्येनान्वयस्तदा मत्वर्थलक्षणाप्रसङ्गेन गुणविधित्वासंभवान्नामधेयत्वमिति फलफलिभावः । **यद्यपीति ।** व्रीह्यादिशब्दवद्यद्यपि समुदायशक्तिर्नास्तीत्यर्थः । **ननु** खनित्रादावपि लोके उद्भिच्छब्दस्याप्रयोगात्कथं तत्र प्रसिद्धिरित्यत उक्तम् **प्रसिद्धिसंभवादिति ।** समुदायशक्तौ हि उद्भिच्छब्दस्य समुदायरूपेण प्रयोगोऽपेक्षितः । अवयवशक्तौ त्ववयवप्रयोगमात्रमपेक्षितम् । एवंचोच्छब्दस्योर्ध्वतायां धातोर्विदारणे क्विपः कर्तृत्वे च प्रयोगमात्रेण तत्रितयसमुदायरूपस्योद्भिच्छब्दस्योर्ध्वविदारणसाधनखनित्रादिप्रत्यायकत्वं संभवतीति भावः । **ननु** उद्भिनत्ति पशून्प्रकाशयतीत्येवं कर्मण्यपि योगेन प्रसिद्धिः संभवतीत्यत आह—**कर्मणीति ।** धातूपसर्गयोः प्रकाशने शक्त्यभावादिति भावः । **ननु** नामधेयस्यापि तन्नामककर्मविशेषप्रवृत्तिहेतुत्वादस्ति प्रवृत्त्यौपयिकत्वं, नच यजितस्तत्सिद्धिस्तस्य सामान्यवाचित्वेन ततो विशेषे प्रवृत्त्यसिद्धेरित्यतस्तत्र तदभावमुपपादयति—**नामधेयत्वे चेति ।** नामधेयत्वपक्षे यज्यर्थो विधेयः विधिश्च विशेषविषय इति विधिसमभिव्याहृतयजित एव कर्मविशेषप्रवृत्तिः सिध्यतीति भावः । **ननु** वैयधिकरण्येनाख्यातसंबन्धः सामानाधिकरण्येन वेति तदर्थसंशयोपन्यासाद्वैयधिकरण्येन गुणविधिः पूर्वपक्ष्यभिमतो लक्ष्यते तत्र सामानाधिकरण्येनापि गुणविध्युपपत्तेर्वैयधिकरण्यं किमर्थमाश्रीयत इत्याशङ्कायां सामानाधिकरण्यपक्षे गुणविशिष्टयागो विधेयस्तत्र च मत्वर्थलक्षणा स्यादतः सामानाधिकरण्यं परित्यज्य वैयधिकरण्येन गुणविधिः पूर्वपक्षिणा स्वीकृत इति परिहारं सूचयन् वैयधिकरण्यपक्षे मत्वर्थलक्षणा नास्तीत्याह—**नचेति ।** यागानुवादेन गुणविधिरिति धातूद्भित्पदयोर्वैयधिकरण्याङ्गीकारादस्मिन्गुणविधिप्रकारे मत्वर्थलक्षणादोषोऽपि नास्तीत्यर्थः । यागस्य विधेयत्वे मत्वर्थलक्षणामनुवादत्वे तदभावं च क्रमेणोपपादयति—**यदीति ।** धात्वर्थस्य विधेयत्वे हि तस्य प्रत्ययवाच्य-

---

१ निरूढा. २ यजितः.

गात् भिन्नार्थयोश्च श्रुत्या सामानाधिकरण्याभावादुद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वोद्भिद्वता यागेनेति सामानाधिकरण्येन गुणो विधातव्य इति भवेन्मत्वर्थलक्षणा । यदा तु प्रकृतज्योतिष्टोमयागानुवादेन गुणमात्रमनेन विधीयते तदा विधिवाक्ये करणत्वेनोपदिष्टस्यापि यागस्यासाधितस्य करणत्वानुपपत्तेर्यदर्थाक्षिप्तं साध्यत्वं तदनुवादेन तदर्थतया तदाश्रित्य वा वाक्यान्तरेण फलाय गुणे विधीयमाने नास्ति मत्वर्थलक्षणा । उद्भिदा यागः कर्तव्य इति यागसाधनेनोद्भिदा पशून्भावयेदिति वा । नन्वेवं ज्योतिष्टोमवाक्येऽपि ज्योतिष्टोमगुणविधानान्न यागविधिरस्ति तथान्यत्रापि सर्वत्रोपपदश्रवणात्तद्विधिरेवेति क्वचिदपि कर्मविध्यभावाल्लौकिककर्माश्रयणेन गुणविधीनां सापेक्षत्वेनाप्रामाण्यप्रसङ्गः । नैष दोषः । प्रकृतकर्माभावेन गत्यभावाज्ज्योतिष्टोमवाक्ये कर्मविधानं, तस्मिंश्च विधीयमानेऽनेकविधिदोषान्मत्वर्थलक्षणादोषाच्च ज्योतिष्टोमपदमेकं कर्मनामधेयं भविष्यति । यद्वा तदेकं मत्वर्थलक्षणामाश्रित्य गुणविशिष्टकर्मविधानम्, उद्भिदादयस्तु तत्रैव प्रकृते कर्मणि गुणविधयः, वरं हि लक्षणाश्रयणमप्रामाण्यात् । नच लक्षणायाः प्रमाणान्तरापेक्षत्वेनाप्रामाण्यं, पदसमभिव्याहारादेव लक्षणासिद्धेः, इतिकर्तव्यतासंनिधिविशेषाच्च 'भूयस्त्वेनोभयश्रुती'त्यनेन न्यायेन ज्योतिष्टोमवा-

---

भावनायां करणत्वेनान्वयो वाच्यः । करणत्वेनान्वीयमानेन धात्वर्थेनोद्भिदादीनां तृतीयया करणत्वेनावगम्यमानानामपि वैयधिकरण्येनान्वयो न संभवति करणस्य करणान्तरेणान्वयायोगादतः सामानाधिकरण्येनैवोभयोरन्वयो वक्तव्यः । सामानाधिकरण्यं चात्यन्तभिन्नार्थयोरनयोरुद्भिद्रूपेण यागेनेत्येवंश्रुत्या न संभवतीति उद्भिच्छब्दस्य तद्वति लक्षणया निर्वाह्यमिति यागविधिवाक्ये गुणस्यापि विधेयत्वस्वीकारे मत्वर्थलक्षणा स्यादित्यर्थः । **प्रकृतेति** । ताण्डके ज्योतिष्टोमानन्तरमुद्भिदादियागाम्नानादिति भावः । **ननु** यागानुवादेऽपि यथाप्राप्त्यनुवाद इति वाक्यान्तरे करणत्वेन विहितस्य यागस्य तथैवानुवादो वक्तव्यः । ततश्च कथं तत्र करणान्तरविधिः करणानां परस्परं संबन्धाभावस्य त्वयैवोक्तेरित्यत आह—**विधिवाक्ये इति** । करणत्वोपदेशबलादेव नासाधितं करणमिति न्यायेनार्थात्साध्यत्वेनापि यागः प्राप्त इति तेन रूपेणानुवादान्न करणान्वयानुपपत्तिरित्यर्थः । वार्तिककारोन्नीतगुणफलसंबन्धविधिपक्षमाह—**तदाश्रित्येति** । आश्रित्य गुणविधिपक्षे वचनव्यक्तिमाह—**यागसाधनेनेति** । तृतीयया निर्देशात्करणभूतमुद्भिदादिकं फले विधीयते तत्र च कुत्र करणभूतमित्यपेक्षायां संनिधानात्प्रकृतयागे करणत्वेनान्वय इत्यभिप्रायेण यागसाधनेनेत्युक्तं ज्योतिष्टोमानुवादेन गुणविधिमाक्षिपन् प्राभाकरमतमुत्थापयति—**नन्विति । गुणेति** । ज्योतिषामग्न्यादीनां स्तोमलक्षणेत्यर्थः । **सर्वत्रेति** । यद्यपि उद्धन्ति उपव्ययत इत्यादावुपपदं न श्रूयते तथापि केवलस्य तिङन्तस्यापर्यवसानात्प्रकरणादिना तत्रापि कर्त्रादिवाचकमुपपदमावश्यकमिति भावः । **लौकिकेति** । दृष्टार्थत्यागादिलक्षणेत्यर्थः । **सापेक्षत्वेनेति** । लौकिककर्मणो मानान्तरावगम्यत्वात्तत्सापेक्षत्वेनाप्रामाण्यमापतेदेवं चाप्रामाण्येनैव पूर्वःपक्षः प्रवर्तनीय इति प्रभाकरस्याशयः । कर्मविधौ पार्थक्येन गुणविधौ च दोषमाह—**अनेकेति** । तथाच वाक्यभेदः स्यादिति भावः । विशिष्टविधावाह—**मत्वर्थेति** । नामधेयत्वे प्रागुक्तरीत्यानर्थक्यात्ततो वरं लक्षणाश्रयणमित्याशयेनाह—**यद्वेति** । ननु मुख्यार्थसंबन्धित्वेनावगते लक्षणा भवति नानवगते, इहच मुख्यार्थगुणविशिष्टकर्मणोऽवगतिर्वानेनैव वाक्येन संभवति लक्षणावृत्तेः पूर्वमस्य वाक्यस्य बोधकत्वासंभवादतो मानान्तरेणैवावगतिर्वाच्या । तथाच लक्षणापक्षेऽपि मानान्तरसापेक्षत्वादप्रामाण्यं तुल्यमित्याशङ्क्य निराकरोति—**नचेति । पदेति** । विशिष्य प्रकृतकर्मणः प्रकृतगुणेन विशिष्टस्य मानान्तरानवगतत्वेऽपि गुणपदाद्गुणस्य यजिधातोः कर्मणश्चोपस्थितौ गुणस्य पृथग्विधेयत्वानुपपत्तौ च सत्यां समभिव्याहारबलादेव विशिष्टकर्मरूपयोग्यवस्तूपस्थितौ तत्र लक्षणा संभवति । प्राभाकरमते नियोज्यार्थकस्वर्गकामपदसमभिव्याहारबलात्स्थायिकार्ये शक्तिग्रहवदिति भावः । यद्वा ननु लौकिककर्मानुवादेन ज्योतिष्टोमलक्षणगुणविधानेन मुख्यार्थोपपत्तावपीह लक्षणास्वीकारे तस्याः मानान्तरमेव मूलं वाच्यम् । अन्वयानुपपत्त्यभावे लक्षणायाः प्रमाणान्तरंविना स्वीकर्तुमयुक्तत्वादेवंच मतान्तरसापेक्षत्वादप्रामाण्यं लक्षणापक्षेऽपि दुर्वारमित्याशङ्क्य निराकरोति—**नचेति । पदेति** । लौकिककर्मणो दृष्टार्थत्यागमात्रस्य देवतोद्देश्यकत्वाभावेन यागरूपत्वाभावाद्यजेतेत्यनेन तदनुवादासंभवात्तत्र गुणविधानासंभवेन मुख्यार्थानुपपत्तौ गङ्गाघोषादाविव समभिव्याहारादेव लक्षणासिद्धेर्नाप्रामाण्यमित्यर्थः । ननु तर्ह्युद्भिदादिवाक्येष्वेव कर्मविधानं ज्योतिष्टोमवाक्ये तत्कर्मणि गुणविधिरिति वैपरीत्यं किं न स्यादित्यत आह—**इतिकर्तव्यतेति** । एकस्य कर्मणो वेदद्वये श्रवणे सति यत्र वेदेऽङ्गभूयस्त्वं तत्र कर्मविधिरन्यत्राङ्गमात्रविधिरिति भूयस्त्वेनोभयश्रुतीति तृतीये वक्ष्यमाणन्यायेनात्रापि ज्योतिष्टोमवाक्य एव कर्मविधिस्तत्संनिधौ दीक्षणीयादीनामिष्टीनामग्नीषोमीयादिपशूनामभिषवादिसंस्काराणां स्तोत्रशस्त्राणां च भूयसामङ्गानामाम्नानान्नतूद्भिदादिवाक्येषु । तत्र

---

१ पेक्षणेनाप्रा. २ अपूर्वे.

**ष्वयएव कर्मविधानं नेतरेषु। भवतु वा ज्योतिष्टोमवाक्येऽपि गुणमात्रविधानमेवमपि नाप्रामाण्यम्। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'ति 'विश्वजित्सर्वपृष्ठोऽतिरात्रो भवती'त्यादिष्वनेकगुणोपादानेन कर्मणोऽवश्यं विधातव्यत्वात्। तत्रैव ज्योतिष्टोमोद्भिदादिगुणविधिसंभवान्न लौकिककर्माश्रयणादप्रामाण्यम्। कथमप्रकृतेषु गुणविधानमिति चेत् लौकिकं वा किं प्रकृतं येन तत्र गुणो विधीयेत, तेन यदि तावदप्रकृतेऽपि विधिः स्यात्ततो विश्वजिदादिष्वेव विधानान्नाप्रामाण्यम्। अथ न, तत्र लौकिकेष्वप्य[३]विधानाद्विशिष्टकर्मविधिरित्युभयथापि नाप्रामाण्यम्। नचौत्पत्तिकज्योतिष्टोमादिगुणावरोधादुद्भिदादिगुणानामविधानम्। काम्यत्वेन तेषां नित्यगुणबाधकत्वात्। 'उद्भिदा यजेत पशुकाम' इति हि प्रकृतं ज्योतिष्टोममाश्रित्योद्भिद्गुणः पश्वर्थत्वेन विधीयते। तस्माद्गुणविधिरिति प्राप्तेऽभिधीयते—'धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा॥ फले कर्मणि वा नेह गुणो वाक्ये विधीयते॥' फले तावद्विधीयमाने गुणे परपदसंबन्धविधानाद्धातोरत्यन्तपारार्थ्यं स्यात् विप्रकृष्टार्थविधिश्चापद्यते। अथ तु कर्मण्येव गुणो विधीयते तथापि विप्रकृष्टार्थविधानं, धातोश्च किंचित्पारार्थ्यमस्त्येव, फलपदं चानर्थकं स्यात्। 'दध्यादौ गत्यभावेन सर्वमेतत्समञ्जसम्॥ उद्भिदा-**

संवत्सरमाग्नेयोऽष्टाकपाल इति कतिपयाम्नानादित्यर्थः। **नन्वेवं** यत्र कर्मणि ज्योतिष्टोमापेक्षयाङ्गभूयस्त्वं तत्रैव कर्मविधिः स्यात् ज्योतिष्टोमवाक्यं तु तत्र गुणविधिरिति स्यादितिचेदिष्टापत्तेस्तावतापि वैदिकएव कर्मणि गुणविधिः नतु लौकिककर्मणीत्यस्मदभिलषितसिद्धेस्तदेतदभिसंधायाह—**भवतु वेति। यदाग्नेय इति।** अग्निर्देवताऽष्टाकपालेषु संस्कृतपुरोडाशो द्रव्यममावास्यादिः काल इत्यनेकगुणो विधेय इत्यर्थः। **विश्वजिदिति।** बृहद्रथन्तरवैरूपादीनां षडहगतानां पृष्ठानां साकल्यं अतिरात्रसंस्था चेत्यनेकगुणोपादानमित्यर्थः। इदंच विश्वजिद्वाक्यं सप्तमे विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वादित्यधिकरण उदाहरिष्यमाणाद्विश्वजित्सर्वपृष्ठो भवतीति वाक्यादन्यदेव वाक्यम्। इतरथा तत्र तन्त्ररत्नादिषु पृष्ठानां सर्वतायाश्च विधाने वाक्यभेदः स्यादिति शङ्कातत्परिहारयोरसंगतत्वापत्तेरुत्पत्तिवाक्येऽनेकगुणविधानेऽपि वाक्यभेदशङ्कानवकाशात्। अतस्तत्रोत्पन्ने कर्मणि गुणविधानार्थवाक्यमुदाहरणमिदं च कर्मोत्पत्तिपरमन्यदेव। अतएव च तत्र भाष्ये विश्वजित्सर्वपृष्ठमित्येवोदाहृतं नतु विश्वजित्सर्वपृष्ठोऽतिरात्रो भवतीति ध्येयम्। आदिशब्देन त्रिवृदग्निष्टुदग्निष्टोम इत्यादिवाक्यसंग्रहः। **अथ नेति।** यद्यप्रकृते कर्मणि गुणविधिर्न तदा लौकिकस्याप्यकृतत्वेन तत्र गुणविध्यसंभवादुद्भिदादिवाक्येष्वेव गुणविशिष्टकर्मविधिरित्यर्थः। **ननू**त्पत्तिशिष्टगुणावरुद्धे कर्मणि गुणान्तरविध्यसंभवाज्ज्योतिष्टोमाग्नेयविश्वजिदादिवाक्योत्पन्नकर्मसु नोद्भिदादिगुणविधिः संभवतीत्याशङ्क्य निराकरोति—**नचेति। काम्यत्वेनेति।** भवेदेवं यद्युद्भिदादिगुणः कर्मार्थत्वेन विधीयेत। अयंतु कर्माश्रित्य फलार्थत्वेन विधीयते। ततश्च पुरुषार्थसमासक्तेः काम्यं नित्यस्य बाधकमितिन्यायेनोत्पत्तिशिष्टमपि नित्यं बाधित्वा काम्यगुणनिवेशान्न गुणविधानानुपपत्तिरित्यर्थः। नचैवमपि पूर्वोक्तकर्मार्थगुणविधिपक्षेऽनुपपत्तिर्न परिहृतेति वाच्यम्। ज्योतिष्टोमस्य नामत्वपक्षेऽनुपपत्त्यभावाद्गुणविशिष्टतयोत्पन्नस्यापि कर्मणो निष्कृष्य स्वरूपमात्रानुवादेन गुणविधिसंभवाच्च अप्रामाण्यापेक्षया गुणविशिष्टतयोत्पन्नकर्मणः स्वरूपमात्रानुवादेन तत्र गुणविधानस्यापि ज्यायस्त्वात्। अयं च प्रकारो 'वरं हि लक्षणाश्रयणमप्रामाण्यात्' इत्यनेनैव सूचित इति ग्रन्थकारेण न पृथगुक्त इति ध्येयम्। श्लोके यथासंख्यं न विवक्षितमित्याशयेन व्याचष्टे—**फले तावदिति।** फलाय गुणविधौ धातोर्न विधेयसमर्पकत्वं धात्वर्थस्याविधेयत्वात्राप्युद्देश्यसमर्पकत्वं धात्वर्थे कस्यचिदविधानादतो धातोर्न स्वार्थमुच्चारणं किंतु पशूद्भित्पदसंबन्धविधानार्थं विधिप्रत्ययावश्यंभावे केवलप्रत्ययस्य प्रयोगानर्हत्वात्तदर्थं धातूच्चारणमित्यत्यन्तपारार्थ्यमित्यर्थः। **विप्रकृष्टेति।** विधायकप्रत्ययस्य समानपदोपात्तत्वेन संनिहितधात्वर्थमुल्लङ्घ्य पदान्तरोपात्तगुणविधानार्थत्वाद्विधिविधेययोर्विप्रकर्षादिति भावः। **कर्मणि** गुणविधिपक्षे धातोरुद्देश्यसमर्पकत्वेन विध्युपयोगादत्यन्तपारार्थ्याभावेऽपि वाक्यस्य परमतात्पर्यविषयीभूतविधेयसमर्पकत्वाभावादस्ति किंचित्पारार्थ्यमित्याह—**धातोश्चेति। फलपदं चेति।** नच सर्वेभ्यो ज्योतिष्टोम इति पशुफलार्थत्वमपि ज्योतिष्टोमस्यास्तीति पशुलक्षणफले निमित्ते उद्भिद्गुणविधानार्थत्वान्न वैयर्थ्यं, यथा यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेति वृष्ट्यादिफलत्रयार्थत्वेन विहितस्य सौभरसाम्नस्तत्फलविशेषे निमित्ते, 'हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति निधनविशेषनियमविधानं तद्वदिति वाच्यम्। एवमपि विश्वजिदादिवाक्यविहितकर्मणि गुणविधिरिति पक्षे तस्य सर्वफलार्थत्वाभावेन तत्र फलपदानर्थक्यापरिहारात्कामशब्दस्य निमित्तसमर्पकत्वं नास्तीत्येकादशाद्यादौ भाष्यकारादिभिः प्रपञ्चितत्वेन पशुकामपदस्य निमित्तपरत्वासंभवाच्च हीषिति वृष्टिकामायेत्यादावपि वृष्टिकामादिशब्दैर्वृष्ट्यादिफलसाधनं सौभरं लक्षयित्वा तदर्थत्वेन हीषादयो नियम्यन्ते। हीषादयः सौभराङ्गभूतास्तद्वारेण

१ चाश्रुतो भवति. २ विधिरिति चेत्. ३ केप्यविधानाद्विशिष्टविधि.

दिषु तत्रैवं नामधेयत्वसंभवात् ॥' 'दध्नेन्द्रियकामस्य जुहुयात्' 'व्रीहिभिर्यजेते'त्येवमादिषु दधिव्री-ह्यादिपदानामर्थान्तरे नित्यं रूढत्वात् न सामानाधिकरण्येन यजिनामत्वं शक्यं कल्पयितुम् । अप्र-सिद्धार्थं हि प्रसिद्धपदसामानाधिकरण्येन निर्णीयते । **दध्यादयस्तु निरूढत्वान्न कथंचिदपि धातु-सामानाधिकरण्यं प्रतिपद्यन्त इति गत्यभावात्तत्र धातुपारार्थ्यं विप्रकृष्टार्थविधानं चाश्रितम् । उद्भि-दादयस्तु यथैवावयवद्वारेण खनित्रादौ वर्तन्ते तथैव स्वफलोद्भेदनकारित्वाद्यागेऽपीति नात्र धात्वर्थ-विधानं बाधितव्यम् । 'विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा ॥ सोमादौ गत्यभावात्सा नत्वत्र गतिसंभवात् ॥'** उद्भिदादयो हि करणत्वेन श्रूयन्ते । करणं च कारकत्वात्क्रिययैव संबध्यते नान्येन । क्रियाचात्र प्रत्ययवाच्या फलभावनैव । नच तस्यामुद्भिदादीनां करणत्वं संभवति समानपदोपात्त-

---

वृष्टिकामादीनां पुरुषाणामनियमेन शेषभूताः प्राप्ता नियम्यन्त इति द्वितीये वक्ष्यमाणत्वेन तत्रापि फलपदस्य निमित्तपरत्व-स्यासंप्रतिपत्तेः। अतएव ग्रन्थकारेण कर्मणि नैमित्तिकगुणविधिपक्षो नोक्त इति दिक् । **नन्वेवं** दध्नेन्द्रियकामस्य जुहुयादित्यादौ फलाय गुणविधिः व्रीहिभिर्यजेतेत्यादौ कर्मणि गुणविधिश्च न स्यादित्याशङ्क्य वैषम्यमाह—**दध्यादाविति । गत्यभा-वेनेति ।** नामत्वरूपगत्यभावेनेत्यर्थः । **ननु** लोके पिकः कोकिल इत्यादौ प्रसिद्धपदसामानाधिकरण्यात्पिकादिशब्दानां कोकिलाद्यर्थकत्वनिश्चयवद्दध्यादावपि संभवान्नागतिकत्वमित्यत आह—**अप्रसिद्धेति ।** भवेदेवं यदि प्रसिद्धार्थकयजि-सामानाधिकरण्यं संभावितं स्यात् तत्त्वत्यन्तनिरूढानामनुपपन्नमिति सामानाधिकरण्यस्यैवासंभवान्न तद्बलाद्यागनामत्वं दध्या-दीनामित्यर्थः । **ननु** तर्ह्युद्भिदादीनामपि खनित्रादाववयवशक्त्यात्यन्तनिरूढत्वान्न सामानाधिकरण्येन नामत्वं स्यादित्यत आह—**उद्भिदादय इति ।** धातूनामनेकार्थत्वा'दुद्भिन्नविशुद्धलयो घनस्ते', 'मन्त्रोयं केनोद्भिन्न' इत्यादिप्रयोगबलादाविर्भावे प्रकाशने वा धातोर्वृत्तिरिति कर्मण्यपि योगः संभवति । यद्यपि पशूद्भेदनहेतुत्वमतिप्रसक्तं तथापि यजिसामानाधिकरण्य-बलात्तद्गतमेवोद्भेदनकर्तृत्वं प्रवृत्तिनिमित्तमिति नातिप्रसङ्गः । केचित्तु योगिनि रूढिरित्याहुः । उक्तप्रयोगबलादाविर्भावे प्रकाशने वा उद्भिच्छब्दस्य समुदायशक्तिरित्याहुः । केचित्तु विदारणे कृते भूम्यन्तर्निखातनिध्यादेः प्रकाशनं भवतीति विदारणार्थकधातुना तत्सहदृष्टप्रकाशनं लक्षणया प्रकाश्यते । नचैवं नामत्वपक्षेऽपि लक्षणाया अवश्यंभावे मत्वर्थलक्षणाप्रस-ङ्गाद्विशिष्टविधिनिराकरणमसंगतं स्यादिति वाच्यम् । प्रयोगप्राचुर्येण मत्वर्थलक्षणापेक्षयाऽस्या ज्यायस्त्वादित्याहुः । **ननु** सर्वथा पशूद्भेदनसाधनेन कर्मणा पशून्भावयेदिति वाक्यार्थपर्यवसानात् पशुकामपदाख्याताभ्यामेव पशूद्भेदनसाधनत्वाव-गतिसिद्धेः किमुद्भित्पदेन, योगरूढिपक्षेऽपि योगार्थप्रतीत्यवश्यंभावात् रूढिशक्तिविषये प्रवृत्तिनिमित्तानिरूपणान्निरूपणेऽपि तस्य वाक्यार्थप्रतीतिविषयत्वाननुभवाच सोऽप्यनुपपन्न इति चेत्, स्यादेवं यदि पशूद्भेदनसाधनत्वेन रूपेण यागमुद्भित्पदं बोध-येत्तत्तु संज्ञारूपत्वादुद्भिन्नामकत्वेन रूपेण प्रतिपादयति । एवंच विधिसमभिव्याहृतधातुनैव कर्मविशेषसिद्धावपि कीदृशोऽसौ कर्मविशेष इत्यपेक्षायामस्मिन्वाक्ये द्रव्यदेवतादेरश्रवणेन द्रव्यदेवताद्युपलक्षणेन यागविशेषप्रतिपादनासंभवादुद्भिन्नामकोयं याग इति तद्विशेषप्रतिपादनार्थत्वादुद्भित्पदस्य न वैयर्थ्यम् । उद्भित्पदं तूद्भित्पदेनानभिहितमपि प्रत्यक्षश्रुतत्वमात्रेण स्ववाच्य-कर्मविशेषमन्यस्माद्व्यावर्तयद्विशेषणभावमनुभवति । शब्दोपस्थितस्यैवान्वयबोधविषयत्वमिति नियमश्च संज्ञाशब्दव्यतिरिक्त-विषयः । यद्वा संज्ञाशब्दानां स्वरूपप्रवृत्तिनिमित्तकत्वमिति शाब्दिकोक्तरीत्या उद्भिच्छब्देनैव स्वरूपस्यापि बोधनं संभवतीति न काप्यनुपपत्तिः । नचैवं पशूद्भेदनसाधनत्वस्य वाक्यार्थप्रतीतिविषयत्वाभावात्तदर्थकयोगाश्रयणवैयर्थ्यमिति वाच्यम् । यत्रार्थे यस्य शब्दस्यावयवयोगादिसंभवस्तत्रैव संज्ञात्वं नान्यत्र । अतएव कृतकशब्दस्यैव संज्ञात्वमिष्यते नतु लृतकश-ब्दस्य । अतएव च सोमेन यजेतेत्यादौ सोमादिशब्दानां न नामधेयत्वम् । ततश्च संज्ञात्वनिर्वाहार्थमेवोद्भिदादिशब्दानां कर्मणि योगाश्रयणमिति तद्वैयर्थ्यानवकाशात् । एवं संज्ञाशब्दानां स्वरूपप्रवृत्तिनिमित्तेन संज्ञिनि रूढत्वेऽपि अमावास्याशब्दस्य न कर्मसंज्ञात्वं योगाभावात् मुख्यार्थकालसंबन्धनिमित्तमिति अमावास्याशब्दः काले मुख्यः कर्मणि गौण इत्यादिव्यव-हारस्य नानुपपत्तिः । अथवा उद्भिच्छब्द उद्भिच्छब्दाभिधेयत्वेन रूपेण लक्षणया कर्म प्रतिपादयति, सा च लक्षणा योगेन स्वाभिधेयत्वे सति प्रवर्तते नान्यथेति तदर्थं योगाश्रयणं, लक्षणापि निरूढत्वान्मत्वर्थलक्षणापेक्षया ज्यायसीति न गुणवि-धिपक्षोक्तदोषप्रसङ्गः । अस्तुवा अवयवयोगं विनापि संज्ञात्वं तथाप्युद्भिच्छब्दस्य योगेन खनित्रादिलक्षणगुणविध्यर्थत्वप्र-सक्तौ योगस्य कर्मण्यपि समानत्वान्न गुणविधित्वाध्यवसाय इत्येवं योगस्य गुणविधावसामर्थ्यप्रतिपादनाभिप्रायेण कर्मणि योगोपपादनमुपपद्यत इति संक्षेपः । **ननु** तर्हि धातुपारार्थ्यादिदोषाभावाद्गुणविशिष्टकर्मविधिः किं न स्यादिति तटस्थाशङ्का-यामाह—**विशिष्टविधीति । ननु** पशुफलंप्रति करणत्वसंभवान्न मत्वर्थलक्षणाप्रसक्तिरित्यत आह—**करणंचेति ।** पशुफलस्य भावनायां कर्मत्वेन कारकाणां मिथः संबन्धासंभवान्न पशुफलेन संबन्ध इति भावः । **ननु** भिन्नपदोपादाना-

धात्वर्थावरोधादिति भावार्थाधिकरणे वक्ष्यामः । नच धात्वर्थेनोद्भिदादीनां संभवति संबन्धः । तस्य धातुना प्रत्ययार्थप्रति करणत्वेनोपादानात्क्रियारूपतयानवगमात्, क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थप्रति करणत्वानुपपत्तेः । नच सत्यपि प्रत्ययवाच्यायाः फलभावनाया धात्वर्थावरोधेऽर्थाक्षिप्तया धात्वर्थभावनयोद्भिदादीनां संबन्ध इति वक्तव्यम् । तस्या इहाश्रुतत्वात् । अश्रुतत्वया च तया शब्दान्तरस्यान्वयायोगात् । फलभावना ह्यत्र श्रुता नच धात्वर्थभावना । नचाध्याहृत्य धात्वर्थभावनां तया संबन्धः उद्भिदा भाव्यमानेन यागेन पशून्भावयेदिति । विनाप्यध्याहारेण वाक्यसमन्वयोपपत्तेः । तदवश्यं यदत्र प्रत्ययार्थे करणं यागस्तत्रैव तृतीयान्तैरुद्भिदादिपदैर्वर्तितव्यं नान्या गतिरस्ति । तत्र गुणेविधिपरत्वेऽर्थान्तरवाचिनामुद्भिदादिपदानामर्थान्तरे यागे वृत्तिर्मत्वर्थलक्षणया स्यात् उद्भिद्वता यागेनेति । नामधेयत्वे तु श्रुत्या । 'सोमेन यजेते'त्यादिषु तु सोमादिशब्दानामर्थान्तरेऽत्यन्तनिरूढत्वाद्यागे च कथंचिदप्यप्रसिद्धेरप्रसिद्धकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणमिति मत्वर्थलक्षणया गुणविशिष्टयागविधानमङ्गीकृतं सोमवता यागेन समीहितं कुर्यादिति । उद्भिदादीनां त्ववयवद्वारेण कर्मण्यपि प्रसिद्धिरस्तीति श्रुत्या नामधेयत्वं युक्तम् । प्रयोजनं च नाम्नां सर्वत्र व्यवहार एव । नह्यन्तरेण नामधेयमृत्विग्वरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः स्यात् । कचिच्च गुणफलोपबन्धेनार्थवत्ता । 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपे'दिति गुणोपबन्धः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलोपबन्धः । कचिच्च भेदकतयार्थवत्त्वं यथा 'अथैष ज्योति'रित्यादिषु वक्ष्यते । यथाचात्रैव 'उद्भिदा यजेत पशुकाम' इति । नामधेयत्वाभावे हि प्रकृतस्यैव ज्योतिष्टोमस्य फलविधिरयं स्यात् । नामधेयत्वे तु यागान्तरविधानात्सिद्धमर्थवत्त्वम् ॥

चित्रादिशब्दानां यागनामधेयताधिकरणम् ॥ ३ ॥

## यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥

यच्चित्रया यजेतेति तद्गुणो नाम वा भवेत् ॥ चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ ॥ ६ ॥
द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः ॥ स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत्तथा ॥ ७ ॥

इह ये लोके जातिगुणवचनतया निरूढा गुणफलोपबन्धेषु वाक्येषु श्रुताः कर्मण्यपि योगवशेन

---

त्प्रत्ययवाच्यभावनायां समानपदोपात्तधात्वर्थावरुद्धायां करणत्वासंभवेऽपि धात्वर्थेन संबन्धोस्त्वित्यत आह—**नच धात्वर्थेनेति** । ननु धात्वर्थस्य करणत्वेनान्वितस्याप्यसाधितस्य करणत्वानुपपत्तेरर्थाक्षिप्ता या धात्वर्थकर्मिका भावना तस्यां करणत्वमुद्भिदादीनामस्त्वित्याशङ्क्य निराकरोति—**नच सत्यपीति** । अर्थाक्षिप्ताया धात्वर्थभावनायाः शब्दानुपस्थितत्वान्न तया संबन्ध इत्याह—**तस्या इति** । ननु भावनावाचकप्रत्ययस्य विद्यमानत्वादश्रवणमसिद्धमित्यत आह—**फलभावनाहीति** । प्रवर्तनासंबन्धात्फलपदसमभिव्याहाराच्च फलकर्मकभावनामेवायं प्रत्ययः प्रतिपादयति न धात्वर्थकर्मिकामिति भावः । **ननु** अध्याहारे उद्भिदा यागं भावयेद्यागेन पशूनिति वाक्यभेदः स्यादित्यत आह—**उद्भिदा भाव्यमानेनेति । तदिति** । उद्भिच्छब्दस्य यागे वृत्तिंविना करणत्वानुपपत्तेरित्यर्थः । श्लोकोत्तरार्धं व्याचष्टे—**सोमेनेति** । नाम्न आनर्थक्यं पूर्वपक्षोक्तमुद्धरति—**प्रयोजनमिति** । ननु द्रव्यदेवताद्युपलक्षणेन तदाख्यानं संभवतीत्यत उक्तं—**लघुरिति** । गुणफलोपबन्धेन । गुणफलसंबन्धार्थत्वेनेत्यर्थः । नामधेयसामान्यस्य प्रयोजनमुक्त्वा प्रकृतस्याप्याह—**यथाचेति** । सूत्रार्थस्तु—अपिवेति पूर्वपक्षव्यावृत्त्यर्थम् । ततश्च नायं गुणविधिः किंतु कर्मण उद्भिदादिकं नामधेयं स्याद्गुणविधायकत्वासंभवादिति ॥

**यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्धः** ॥ ३ ॥ पूर्वाधिकरणविषयाद्व्यावर्तयति—**लोके जातीति** । आज्यादिशब्दो जातौ चित्राशब्दश्च गुणे रूढ इति भावः । उत्पत्तिवाक्यगताज्यादिपदं नोदाहरणमिति वक्ष्यमाणमभिप्रेत्योत्पत्तिवाक्यगताज्यादिशब्दव्यावृत्त्यर्थमाह—**गुणफलोपबन्धेष्विति** । आज्यादिशब्दो गुणविध्यर्थवाक्ये श्रुतः चित्राशब्दः फलोपबन्धवाक्य इति विवेकः । दधिसोमादिशब्दान्व्यावर्तयति—**कर्मण्यपीति** । अत्र योगवशेनेति योगशब्देनावयवशक्तिलक्षणो मुख्यार्थसंबन्धलक्षणश्च योगो विवक्षितः । ततश्च 'यैदाजिमीयुस्तदाज्यानामाज्यत्व'मिति यस्माद्देवाः प्रजापति-

---

१ तस्य धात्वर्थस्य, २ विधित्वे, ३ नामधेयत्वमिति, ४ नाम्नः सर्वत्र, ५ यत् सदोगृहम्,

संभवद्वृत्तय उत्पत्तिवाक्ये फलवाक्ये गुणवाक्ये वा तृतीयानिर्देशेन कर्मसमभिव्याहृताः शब्दास्ते सर्वे उदाहरणम् । यथा 'चित्रया यजेत पशुकामः' 'पञ्चदशान्याज्यानि सप्तदशानि पृष्ठानि त्रिवृद्वहिष्पवमान'मिति चित्राज्यपृष्ठबहिष्पवमानशब्दास्ते गुणविधयः कर्मनामधेयानि वेति संशयः । तदर्थं च किं गुणविधौ वाक्यभेदो भवति नवेति चिन्तयितव्यम् । कस्मात्पुनरुत्पत्तिवाक्यमेवाज्यैः स्तुवत इत्यादिकं नोदाह्रियते । पक्षद्वयेऽपि निर्णयकारणाभावात् गुणवाक्याधीन एव निर्णय इति तदेवोदाहृतम् । तथाहि न तावदाज्यैः स्तुवत इति गुणविधिरध्यवसातुं शक्यते । घृतस्य स्तुतौ करणत्वासंभवात् तत्र लक्षणया घृतसंबन्धिभिर्मन्त्रैरिति वक्तव्यम् । नच घृतसंबन्धिनः केचिन्मन्त्राः प्रसिद्धाः ये लक्ष्येरन् । तत्रानेनैव वाक्येन लक्षणया घृतसंबन्धं मन्त्राणां विधाय तैश्च स्तोत्रे विधीयमानेऽत्यन्तगौरवम् । विधौ च लक्षणात्यन्तक्लिष्टा समाश्रिता स्यात् । तद्वरं 'यदाजिमीयुस्तदाज्या-

---

वचनादेतेषु स्तोत्रेष्वाजिमभावन् तस्मादेतान्याज्यानीत्येवमर्थवादबलादाज्यशब्द आजिशब्दात्तत्र साधुरिति यत्प्रत्यये सत्यवयवयोगेन कर्मणि संभवद्वृत्तिरिति भावः । 'आपो वा ऋत्वियमार्च्छंस्तासां वायुः पृष्ठे व्यवर्तते'त्यार्तवयुक्तानामपां पृष्ठे वायोः स्पर्शे सति रथन्तरादीन्युत्पन्नानीति स्पृशतेर्धातोर्निष्पन्नः पृष्ठशब्दः स्पर्शनजनितेषु रथन्तरादिषु योगेन संभवद्वृत्तिः । तथा 'सोमः पवत'इत्यादौ पवनक्रियाकर्तृत्वेन प्रसिद्धसोमे यौगिकपवमानशब्दस्य तद्वाचकमन्त्रसाध्ये स्तोत्रे मुख्यार्थसंबन्धेन सदसो बहिः क्रियमाणं स्तोत्रं बहिष्पवमानमित्येवं संभवद्वृत्तिस्तथा दध्यादिविचित्रद्रव्यकत्वान्मुख्यार्थसंबन्धेन चित्राशब्दोऽपि कर्मणि संभवद्वृत्तिरिति भावः । कर्मणि संभवद्वृत्तित्वमात्रेण न कर्मनामत्वं किंतु तत्सामानाधिकरण्येन निर्देशे सतीति नामत्वसंभावनार्थमाह—**उत्पत्तिवाक्य इति** । आज्यपदं बहिष्पवमानपदं चोत्पत्तिवाक्ये कर्मसमानाधिकृतं, चित्रापदं सिद्धान्ते फलवाक्ये कर्मसमानाधिकृतं, पूर्वपक्षे तु गुणवाक्य इत्यभिप्रायेण फलवाक्ये गुणवाक्ये वेत्युक्तम् । इदंच प्रदर्शनमात्रं तेन 'पृष्ठैः स्तुवते' इत्यनुवादवाक्ये कर्मसमानाधिकृतपृष्ठशब्दसंग्रहः । यद्वा 'पृष्ठैः स्तुवत' इत्यनुवादबलात् सप्तदशानि पृष्ठानीति गुणवाक्यगतः पृष्ठशब्दः स्तुतिपरोऽवसीयत इति गुणवाक्यशेषत्वाद्गुणवाक्यशब्देन पृष्ठैः स्तुवत इत्यनुवादवाक्यमेव विवक्षितं बोध्यम् । **कस्मादिति** । नच विनिगमनाविरहः, उत्पत्तिवाक्ये आज्यादिशब्दानां कर्मसामानाधिकरण्यस्य स्पष्टतया नामत्वस्य स्वध्यवसानत्वेन तदुदाहरणस्यैव युक्तत्वात् । स्वध्यवसानार्थमेवोत्पत्तिवाक्यमभिनीय दर्शयति—**आज्यैरिति । घृतस्येति** । गुणाभिधानरूपायां स्तुतावशब्दात्मकस्य घृतस्य करणत्वासंभवादित्यर्थः । **ननु** विशिष्टविधिपक्षे कर्मणो भावनाकरणत्वेन विधेयत्वात्कर्मणि तत्करणकभावनायां वा उद्भिदादीनां वैयधिकरण्येन गुणविधायकत्वासंभवान्मत्वर्थलक्षणा स्यादिति पूर्वाधिकरण उक्तम् । ततश्च प्रकृतेऽप्याज्यैः स्तुवत इत्युत्पत्तिवाक्ये स्तोत्ररूपस्य कर्मणः करणत्वेन विधानादाज्यैरित्यस्य गुणविधित्वे चाज्यवद्भिः स्तोत्रैर्भावयेदित्येवं आज्यप्रातिपदिकस्य मत्वर्थलक्षणया स्तोत्रपरत्वे सत्याज्यप्रातिपदिकात्परया तृतीयया विभक्त्या स्तोत्रगतमेव करणत्वमनूद्यते नत्वाज्यरूपगुणगतकरणत्वं प्रतिपाद्यते । एवंचोत्पत्तिवाक्ये आज्यैरित्यस्य गुणविधित्वेऽपि घृतस्य स्तुतौ करणत्वाप्रसङ्गादिदमयुक्तमिति चेत्सत्यम् । आज्यैरिति विभक्तिराज्यविशिष्टस्तोत्रगतमेव करणत्वमनुवदति तथाप्याज्यप्रातिपदिके मत्वर्थलक्षणायां मत्वर्थसंबन्धः को वेत्यपेक्षायां संबन्धान्तरस्यानवगमात्प्रथमावगतक्रियाकारकभावलक्षणसंबन्ध इत्यवश्यमेवाभ्युपेयम् । इयांस्तु विशेषः । क्रियाकारकभावलक्षणः संबन्धस्तत्त्वेन विशिष्य मत्वर्थलक्षणया न प्रतीयते किंतु संबन्धत्वेनैव सामान्येन प्रतीयते । तदनन्तरं तत्स्वरूपविचारे स एव क्रियाकारकभावरूपः पर्यवस्यति । अवश्यंच क्रियाकारकभावसंबन्धापरित्यागेनैव मत्वर्थलक्षणोपपादनीया । अन्यथा सोमेन यजेतेत्यादौ मत्वर्थलक्षणया सोमविशिष्टयागविधौ सति यागे सोमादेः करणत्वं न स्यात् । भावार्थाधिकरणे वक्ष्यमाणक्रियाकारकसंबन्धापरित्यागन्यायो निर्विषयश्च स्यादेवंच मत्वर्थलक्षणायामपि घृतस्य स्तोत्रे करणत्वमवश्यं वाच्यमिति स्तुतौ करणत्वासंभवेन गुणविधित्वनिराकरणं युज्यत इति भावः । तथाच गुणविधिरिति वदता आज्यशब्देन स्तुतिकरणत्वयोग्या मन्त्राः लक्षणया विधीयन्त इति वक्तव्यम् । तदपि न संभवतीत्याह—**तत्रेति** । ननु ये घृतसंबन्धिनो मन्त्रास्तैः स्तोत्रमात्रं विधीयत इति नाङ्गीक्रियते येन मन्त्राणां प्रसिद्ध्यपेक्षा स्यात् किंतु विशिष्टविधिविधया संप्रत्येव मन्त्राणां घृतसंबन्धोऽपि विधीयत इति स्वीक्रियते, तथाच नाप्रसिद्धिर्दोष इत्यत आह—**तत्रानेनैवेति । विधाविति** । अनुवादे हि लक्षणा नात्यन्तं दुष्यति तस्य पुरोवादसापेक्षत्वेन तदनुसारेणार्थबोधकत्वावश्यंभावाद्विधेस्तु अनन्यापेक्षतया प्रवर्तमानस्य मुख्यार्थप्रवणतया तत्र लक्षणात्यन्तदुष्टेत्यर्थः । यद्यपि वेदे प्रकाशकत्वेन घृतसंबन्धिनो बहवो मन्त्राः प्रसिद्धा एव तथापि तेषामिह विधाने 'अग्न आयाही'त्यादीनामाज्यस्तोत्रसांनिध्याम्नातानामानर्थक्यं विकल्पो वा स्यादाज्यशब्देन घृतसंबन्धिमन्त्राँल्लक्षयित्वा तद्विशिष्टस्तोत्रविधौ लक्षितलक्षणा च स्यादिति तद्दूषणं द्रष्टव्यम् ।

---

१ उत्तरम्.

नामाज्यत्व'मित्यादिवाक्यशेषावगतयोगाश्रयणेन नामधेयत्वमङ्गीकृतमिति न गुणविधित्वाध्यवसानं, रूढत्वाच्च नामधेयत्वमपि न स्वध्यवसानम् । यदा तु पञ्चदशान्याज्यानीति संख्याविशिष्टान्याज्यान्यवान्तरप्रकरणेन स्तोत्रगुणतया विधीयन्ते तदा तेनैव प्राप्तमाज्यसंबन्धं लक्षणया मन्त्राणामनूद्य स्तुतिमात्रमुत्पत्तिवाक्ये विधीयते । अनुवादे च लक्षणा न दोषः [1] । स्तुतिमात्रविधानाच्च लाघवं विधेर्विनैव नामधेयत्वेन लभ्यत इति प्रसिद्ध्यादिभिर्गुणवचनतैवाध्यवसीयते । यदा तु नात्र संख्याविशिष्टाज्यविधानं संभवति किंतु आज्यानुवादेन संख्यामात्रविधानं तदा स्तोत्रे घृतस्याप्राप्तत्वात्तदनुवादासंभवात्स्तोत्रानुवादेनैव संख्या विधातव्या । तच्चाज्यशब्दस्य स्तोत्रवाचित्वेऽवकल्प्यते नान्यथेति गुणवाक्यालोचनेनैवाज्यादिपदमुत्पत्तिवाक्यगतं नामधेयत्वेनाध्यवसीयत इति पक्षद्वयेऽपि गुणवाक्याधीनत्वान्निर्णयस्य तत्रैव कथा प्रवर्तते । पञ्चदशान्याज्यानीति किं संख्यायुक्तं घृतं स्तोत्राङ्गतया विधीयते किंवाज्यशब्देन स्तोत्रमुद्दिश्य संख्यामात्रं विधीयत इति । एवं सप्तदशानि पृष्ठानीत्यादिषु द्रष्टव्यम् । एवं चित्रयेत्यत्राग्नीषोमीययागानुवादेन [2] चित्राशब्देन चित्रत्वस्त्रीत्वे विधीयेते उत दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति प्रकृतो यागः फले विधीयते । चित्राशब्दस्य चित्रद्रव्यवाचकत्वात्तत्रैव नामधेयत्वमिति । तत्र प्रसिद्ध्यादिभिर्गुणविधिः रूढत्वाच्च नोद्भिदादिन्यायः । उत्पत्तिवाक्यावगतकरणत्वेनार्थाक्षिप्तं यौगस्य [3] यत्साध्यत्वं तदनुवादेन वैयधिकर-

---

रूढत्वादिति । सामानाधिकरण्यसंभवमात्रेण नामधेयत्वे सोमेन यजेतेत्यादावतिप्रसङ्गः, वाक्यशेषश्च स्तुत्यर्थत्वान्नात्यन्तमादरणीय इति भावः । एवमुत्पत्तिवाक्योदाहरणे पक्षद्वयेऽपि निर्णयासंभवमुपपाद्य गुणवाक्योदाहरणे तत्संभवमुपपादयन् प्रथमं पूर्वपक्षे उपपादयति—यदा त्विति । अत्रतु वाक्ये तृतीयाविभक्त्यभावेन करणस्यानपेक्षितत्वादङ्गत्वमात्रेण विधानं नानुपपन्नमित्याशयेनाह—अवान्तरप्रकरणेनेति । यद्यपि 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथं मावैर्गृह्णन्ति प्रकृताः क्रियाः'इत्यभियुक्तोक्तेः संख्याविशिष्टद्रव्याज्यमात्रस्य प्रकरणविनियोज्यत्वमनुपपन्नं तथाप्याज्यस्य न स्वरूपेण स्तोत्राङ्गत्वं संभवति किंतु संनिधानेन । तच्च संनिधापनं विना न संभवतीति संख्याविशिष्टाज्यानि संनिधापयेदित्येवमयं विधिः पर्यवसित इति संनिधापनक्रियायोगादाज्यलक्षणद्रव्यस्य प्रकरणविनियोग उपपद्यत इति भावः । नन्वेवं गुणवाक्यगतस्याज्यशब्दस्य स्तोत्रनामत्वाभावेऽप्युत्पत्तिवाक्यगतस्य नामत्वमवश्यं वाच्यम् । गुणवाक्यतो घृतस्याङ्गत्वलाभेऽपि करणत्वस्याप्राप्त्योत्पत्तिवाक्यगतस्य घृतानुवादकत्वासंभवादित्याशङ्कामपवदितुमाह—तेनैवेति । आज्यानां मन्त्राणां चैकस्तोत्राङ्गत्वबलेन मन्त्राज्यसंबन्धः प्राप्त इति भावः । उत्पत्तिवाक्योदाहरणपक्षे गुणविधित्वे गौरवं स्यात्तद्वरं नामत्वाङ्गीकरणमित्युक्तस्य दोषस्यात्र नावकाश इत्याशयेनाह—विनैवेति । गुणवाक्ये सिद्धान्तसंभवमुपपादयति—यदा तु नात्रेति । अनूद्यविधिरिति पक्षे आज्यशब्देन स्तोत्रावान्तरप्रकरणात्स्तोत्रं तत्संबन्धिघृतं वाऽनुवदितव्यं, तत्र स्तोत्रसंबन्धित्वेन घृतस्याप्राप्तेः स्तोत्रानुवादपक्ष एव परिशिष्यत इति तन्निर्वाहार्थमुत्पत्तिवाक्येऽप्याज्यशब्दस्य स्तोत्रार्थकत्वं वाच्यमित्यर्थः । यद्यपि 'घृतेन वर्धयामसि' 'घृतैर्गव्यूतिमुक्षत'मिति प्रकृतस्तोत्राङ्गभूतमन्त्रसद्भावात्तदनुवादेन पञ्चदशत्वसंख्याविधिः संभवति तथापि आज्यपदस्य घृतप्रकाशकमन्त्रपरत्वे लक्षणैव दोष इति भावः । प्रागुक्तमेव संशयं विवृणोति—पञ्चदशानीति । संख्यायुक्तमिति । आज्यस्य संसर्गिकद्रव्यतया स्वतःसंख्यायोगाभावेऽपि पञ्चदशपात्रनिहितत्वेन वा तावत्पलादिपरिमितत्वेन वा संख्यायोगः संभवतीति भावः । एवमिति । सप्तदशानि पृष्ठानीत्यत्र किं सप्तदशत्वसंख्यायुक्तपृष्ठानि स्तोत्राङ्गत्वेन विधीयन्ते उत पृष्ठशब्देन स्तोत्राण्यनूद्य संख्यामात्रं विधीयते, तथा त्रिवृद्बहिष्पवमानमित्यत्र त्रिवृत्त्वविशिष्टपवमानद्रव्यं किं स्तोत्राङ्गत्वेन विधीयते उत बहिष्पवमानशब्देन स्तोत्रमनूद्य तत्र त्रिवृत्त्वं विधीयते इति संशयो द्रष्टव्य इत्यर्थः । स्तोत्रकाले सप्तदशपुरुषाः स्वस्वपश्चाद्भागं प्रदर्श्य स्थिताश्चेत्सप्तदशानां पृष्ठानां स्तोत्रसाधनत्वमुपपद्यते । तथा त्रिकटु त्रिफलादिकं त्रित्वसंख्याविशिष्टद्रव्यं चूर्णीकृतं जलसिक्तं सदसो बहिर्वस्त्रेण निष्पीड्यमानं यत्सोमवत्पवते तत्स्तोत्राङ्गमिति तत्रापि संख्याविशिष्टद्रव्यविध्युपपत्तिः । एवंच पवमानशब्दस्य यौगिकत्वेऽपि पवनक्रियाकर्तरि निरूढत्वादुदाहरणत्वमित्याहुः । केचित्तु जातिगुणवचनतया निरूढानामुदाहरणत्वेन पवमानशब्दस्य पवनकर्तृवाचकस्योदाहरणत्वानुपपत्तेः पवमानशब्दं वायुवाचकमङ्गीकृत्य स्तोत्रकाले सदसो बहिर्व्यजनादिना त्रिगुणो वायुः संपादनीय इत्येवं गुणविधिमुपपादयन्ति । चित्रद्रव्यवाचकत्वादिति । नानाद्रव्यवाचकत्वादित्यर्थः । नोद्भिदादिन्याय इति । अनेनैव पूर्वा-

---

१ अनुवादत्वाच्च. २ येत्यग्नीषोमीय. ३ यद्यागस्य साध्यत्वं.

ण्येनैव गुणविधानान्न मत्वर्थलक्षणेत्युक्तम् । नच वाक्यभेदः । एकपदोपात्तत्वाच्चित्रत्वस्त्रीत्वयोरुभय-विशिष्टैककारकविधानात्पशुकामपदमपि पशुसाधनत्वादग्नीषोमीयस्य यागस्यार्जनाङ्गतया प्राप्त-साधनकामनानुवादः । अस्तिहि पशुयागं कुर्वतः पशुकामना । पञ्चदशान्याज्यानीत्यत्रापि संख्याविशिष्टाज्यविधानान्न वाक्यभेदः । तस्माद्गुणविधिः । एवंचाज्यैः स्तुवत इत्याद्युत्पत्तिवाक्ये-ऽप्याज्यादिपदं गुणवाक्यप्राप्तगुणानुवादकं न नामधेयमिति प्राप्तेऽभिधीयते—'वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः ॥ अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते ॥' चित्रत्वं स्त्रीत्वं च नैकेन विधातुं शक्यं वाक्यभेदप्रसङ्गात् । उभयविशिष्टकारकविधानेऽपि गौरवमस्त्येव । कामपदं च फले मुख्यं साधने गौणम् । प्रकृतफलाकाङ्क्षदध्यादियागातिक्रमश्च न न्याय्यः । तस्मात्तत्रैव फलमात्रविधानम् । चित्रापदं च सामानाधिकरण्यान्नामधेयम् । पञ्चदशान्याज्यानीत्यत्रापि समासाभावान्न संख्यावि-शिष्टद्रव्यप्रतिपत्तिरस्ति । तत्रोभयोर्द्रव्यसंख्ययोर्विधानाद्वाक्यभेदः । तस्मादाज्यानुवादेन संख्यामात्रं विधेयम् । तच्च यद्युत्पत्तावाज्यपदं नामधेयं ततो घटते नान्यथेति गुणवाक्यवशादेवोत्पत्तौ नामत्वं ज्ञायते । सामानाधिकरण्याच्चाज्यैः स्तुवत इति वाक्यशेषाच्च यदाजिमीयुरित्यादेर्नामत्वमेव युक्तम् । यत्तु वार्तिके पृष्ठैः स्तुवत इत्युत्पत्तिवाक्यमुदाहृतं, तत्र चोदयन्ति, यद्येतदुत्पत्तिवाक्यं तथा सत्युत्पत्तौ बहु-त्वयोगाद्बहूनि मुख्यानि पृष्ठानि भवेयुः । तत्र यत्सप्तमे वक्ष्यते ज्योतिष्टोमे पृष्ठबहुत्वाभावाद्वैकल्पिके द्वे एव पृष्ठे नतु बहूनीति मैत्रावरुणसामादिषु पृष्ठशब्दो गौणः । तेन विश्वजित्सर्वपृष्ठ[1] इति सर्व-शब्दो बहुत्वापेक्षत्वान्न चोदकप्राप्तानुवाद इति तद्विरुध्यते । तेन रथन्तरं पृष्ठं भवति बृहत्पृष्ठं

---

धिकरणवैषम्येणोत्थानात्संगतिरिति सूचितम् । **उक्तमिति** । पूर्वाधिकरण इति शेषः । **ननु** अग्नीषोमीयपशुयागे चित्र-त्वस्त्रीत्वरूपगुणद्वयविधाने वाक्यभेदः । नच मेष्यादौ स्त्रीत्वस्य प्राप्तत्वात्तत्र चित्रत्वमात्रविधानादवाक्यभेद इति वाच्यम् । 'अदित्यै त्रयो रोहितैता इन्द्राण्यै त्रयः कृष्णैता' इत्यादिषु चित्रत्वस्य प्राप्तत्वेन तत्र स्त्रीत्वमात्रविधानमित्यपि वक्तुं शक्य-त्वात् । तस्माद्विनिगमनाविरहेण विकृतिपशुषु विध्यसंभवादनारभ्याधीतानां प्रकृतिगामित्वन्यायेन प्रकृतावग्नीषोमीयएव चित्र-त्वस्त्रीत्वोभयविधिरिति वक्तव्यत्वाद्वाक्यभेदो दुष्परिहार इत्याशङ्क्य निराकरोति—**नचेति** । अग्नीषोमीयपशुद्रव्यानुवादेन चित्रत्वस्त्रीत्वे न विधीयेते येन प्रतिगुणं विध्यावृत्तेर्वाक्यभेदः स्यात् किंतु पशुयागानुवादेनोभयविशिष्टं तृतीयार्थभूतं कारकं विधीयते, तत्र च चित्रत्वस्त्रीत्वकारकाणां वैशिष्ट्यस्य विधिव्यापारंविनैवैकपादोपादानतो लाभान्न विध्यावृत्तिलक्षणवाक्यभेद इत्यर्थः । यद्यप्यग्नीषोमीयपशोः कृष्णसारङ्गत्वलोहितसारङ्गत्वधर्मकत्वाच्चित्रत्वस्य सद्भावेन तत्र स्त्रीत्वमात्रविधानाद्वाक्य-भेदः परिहर्तुं शक्यते तथापि तृतीयार्थकारकस्यैव प्राधान्याद्विधानमुचितमिति तस्यैव स्त्रीत्वचित्रत्वोभयविशिष्टस्य विधान-माशङ्क्य परिहार उक्तः । स्त्रीत्वस्य प्राणिन्येव मुख्यत्वाद्विधीयमानस्त्रीत्वबलादेव प्राणिद्रव्यकयागेऽयं विधिरित्यवगमात्पशुयाग एवायं विधिः नतु दध्यादिवाक्यप्रकृतयागे न वा कर्मान्तर इति भावः । **नन्वेवमपि** यागे चित्रत्वस्त्रीत्वविशिष्टकारकस्य फले यागस्य च विधानाद्वाक्यभेदतादवस्थ्यमित्यत आह—**पशुकामेति । संख्याविशिष्टाज्येति** । नच 'स्तोमे डविधिः पञ्चदशाद्यर्थं' इति डप्रत्ययान्तपञ्चदशशब्दस्य स्तोत्रीयऋग्गतसंख्यावाचकस्य घृतगतसंख्यार्थकत्वमनुपपन्नमिति वाच्यम् । स्तोमशब्दस्य लाघवेन स्तोत्राङ्गगतसंख्यामात्रवाचित्वं नतु ऋग्गतसंख्यावाचित्वमिति स्तोमे विहितडप्रत्ययान्तस्य पञ्चदशशब्दस्य स्तोत्राङ्गभूतघृतगतसंख्यार्थकत्वस्यापि संभवादिति भावः । **वाक्येति** । वाक्यभेदप्रसङ्गान्न गुणविधिः किंतु कर्मसामानाधिकरण्यादेर्नामतैवेत्यर्थः । उत्पत्तिशिष्टकारकावरोधादग्नीषोमीययागस्य तत्र कारकान्तरविधानानुपपत्ति-दोषे सत्येव दोषान्तरमाह—**उभयेति । फले मुख्यमिति** । स्वर्गकामाधिकरणोक्तरीत्येति भावः । तत्रैव प्रकृतदध्या-दियाग एवेत्यर्थः । **पञ्चदशानीति** । अत्र समासाभावाद्विशिष्टप्रतिपत्तिनियमाभावे विध्यन्वयस्याभ्यर्हितत्वेन सर्वेषां विधिसंबन्धस्यैवापेक्षितत्वादाज्यसंख्ययोः परस्परसंबन्धंविनैव स्वातन्त्र्येण विधिसंबन्धे सति विधिसंबद्धार्थद्वयविधानाद्वा-क्यभेदः स्यादित्यर्थः । **सामानाधिकरण्यादिति** । विधीयमानस्य स्तोत्रस्य भावनायां करणत्वात्तृतीयान्ताज्यपदस्या-स्तिकरणीभूतस्तोत्रसामानाधिकरण्यमित्यर्थः । **इत्यादेरिति** । आदिशब्देना'पो वा ऋत्वियमार्च्छ'न्नित्यादिदृष्टार्थवादसं-ग्रहः । **उत्पत्तिवाक्यमुदाहृतमिति** । उत्पत्तिवाक्यत्वेनोदाहृतमित्यर्थः । पृष्ठबहुत्वाङ्गीकारे च विश्वजित्सर्वपृष्ठो भवती-तीदं वाक्यं ज्योतिष्टोमाच्चोदकेन प्राप्तसर्वपृष्ठत्वानुवादकं न भवति । सर्वशब्दस्य बह्वपेक्षत्वाज्ज्योतिष्टोमे च पृष्ठबहुत्वाभावा-दिति यत्सप्तमे वक्ष्यते तद्विरुध्येतेत्याह—**तत्र यदिति** । रथन्तरादिवाक्यस्यैवोत्पत्तिवाक्यत्वेन नवमे वार्तिककारैरेवो-

---

१ विश्वजिति सर्वपृष्ठशब्दो. २ धानान्न वाक्यभेद इति पाठः.

भवतीत्युत्पत्तिर्वाक्यं वक्तव्यम् । तथाच स्वयमेव वार्तिककारो नवमे वक्ष्यतीति सत्यमेवम् । अनादरात्त्विदमुक्तम् । एतदुक्तं भवति—सर्वथा सप्तदशानि पृष्ठानीत्येतदत्रोदाहरणं, यदेव तूत्पत्तिवाक्यं पृष्ठैः स्तुवत इति वा रथन्तरं पृष्ठं भवतीति वा न तदेवोदाहर्तव्यमित्यभिप्रायः ॥

यागनामधेयताधिकरणम् ॥ ४ ॥

## तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

अग्निहोत्रं जुहोत्याघारमाघारयतीत्यमू ॥ विधेयौ गुणसंस्कारावाहोस्वित्कर्मनामनी ॥ ८ ॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः ॥ गुणो विधेयो नामत्वे रूपं न स्यात्क्षरद्भृते ॥ ९ ॥
संस्क्रियाघारमाघारयतीत्युक्ता द्वितीयया ॥ आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥ १० ॥
अग्निर्ज्योतिरिति प्राप्तो मन्त्रादेवस्तथा घृतम् ॥ चतुर्गृहीतवाक्योक्तं द्वितीयायास्त्वियं गतिः ॥ ११ ॥
नासाधिते हि धात्वर्थे करणत्वं ततोऽस्य सा ॥ साध्यतां वक्ति संस्कारो नैवाशङ्क्यः क्रियात्वतः ॥ १२ ॥

'आघारमाघारयति' 'अग्निहोत्रं जुहोती'त्याघारशब्दोऽग्निहोत्रशब्दश्च गुणविधिः कर्म नामधेयं वेति विचारः । प्रसिद्ध्यादिभिर्गुणविधिः । नच मत्वर्थलक्षणाग्निहोत्रशब्दे बहुव्रीहिणैवाग्नये होत्रमस्मिन्निति मत्वर्थस्योक्तत्वादुपसर्जनार्थोऽग्निर्देवता विधीयते । नामधेयत्वे चारूपत्वं स्यात् । यद्यपि च दध्यादिवाक्यैर्द्रव्यं लभ्यते तथापि देवताभावादरूपत्वम् । 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रात'रित्यनयोरनेकगुणोपपादनेन विशिष्टकर्मविधित्वाद्देवताविधौ वाक्य-

---

क्येस्तद्विरोधादित्याशयेनाह—तथाचेति । सप्तदशानि पृष्ठानीत्येतत्रोदाहरणं तदेवोदाहर्तव्यमिति पाठेऽभिप्राय इति अनन्तरं वार्तिकगतोदाहरणाक्षेपग्रन्थस्येति शेषो बोध्यः । सूत्रार्थस्तु—यस्मिन्वाक्ये रूढ्या गुणोपदेशः प्रतीयते तत्र नासौ गुणोपदेशः किंतु तस्य नामत्वेन प्रधानसंबन्ध इति ॥

**तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥** इह गुणविधित्वेऽपि न वाक्यभेद इत्युत्थानात्संगतिः । **प्रसिद्ध्यादिभिरिति** । यद्यप्यग्निहोत्रशब्दः समुदायरूपेण न क्वचित्प्रसिद्धः तथापि तदवयवस्याग्निशब्दस्य देवतात्वार्हे प्रसिद्धिरिह विवक्षिता । आदिशब्देनच प्रवृत्तिविशेषकरत्वादिसंग्रहः । ननूद्भिदादिष्विव मत्वर्थलक्षणाप्रसङ्गाद्गुणविधिर्न संभवति । नच होत्रशब्दस्यौणादिकत्रन्प्रत्ययान्तस्य भावसाधनत्वमङ्गीकृत्याग्नये होत्रं होम इति तादर्थ्ये चतुर्थ्यास्तत्पुरुषेण मत्वर्थलक्षणां विनैव कर्मसामानाधिकरण्याद्गुणविधिः संभवतीति वाच्यम् । यूपाय दार्वित्यादौ प्रकृतिविकारभावस्थल एव तादर्थ्यचतुर्थ्यास्तत्पुरुषस्य नियमितत्वेन प्रकृते तदसंभवात्षष्ठीसमासे संबन्धविशेषानवगमेन प्रवृत्त्यनौपयिकतया षष्ठीसमासासंभवात् व्यधिकरणबहुव्रीहेः शास्त्राननुमतत्वेन बहुव्रीह्यसंभवादतोऽग्निश्चासौ होत्रं चेति कर्मधारयेणाग्निरूपहोत्रे प्रतिपादिते सति पश्चात्कर्मसामानाधिकरण्यं मत्वर्थलक्षणयैव वाच्यमिति मत्वर्थलक्षणाप्रसङ्गो दुर्वार इत्याशङ्क्याह—**नचेति** । 'सप्तमीविशेषणे बहुव्रीहा'विति ज्ञापकत्वात्सप्तमीगर्भव्यधिकरणबहुव्रीह्यवश्यंभावात्समानज्ञापकमाश्रित्य चतुर्थीगर्भबहुव्रीहिरप्यविरुद्धः । अतएव 'सच्छात्रजन्मा हि विवेकलाभ'इत्यादौ 'अवर्ज्यो जन्माद्युत्तरपदो व्यधिकरणबहुव्रीहि'रिति वामनेनोक्तमिति भावः । एतेनोद्भिदधिकरणे सर्वेषामेव यौगिकानां नामधेयत्वे व्युत्पादितेऽप्यग्निहोत्रादिषु मत्वर्थलक्षणाभावाद्गुणविधित्वमस्त्विति शङ्कानिराकरणार्थत्वादस्य न वैयर्थ्यमिति सूचितम् । नत्वन्यपदप्रधानो बहुव्रीहिरन्यपदार्थश्च होमरूपो जुहोतिनैव विधीयत इति किमग्निहोत्रपदेनेत्यत आह—**उपसर्जनेति** । **नामधेयत्व इति** । द्रव्यदेवते हि यागस्य रूपे । ततश्च नामधेयत्वपक्षेऽग्निहोत्रशब्दस्य देवताविध्यर्थत्वाभावादेतद्वाक्ये विधीयमानकर्मणो देवतालाभाभावादरूपत्वं स्यादित्यर्थः । **ननु** नामधेयत्वपक्षेऽपि यदग्नये चेत्यादिवाक्याभ्यां देवतालाभान्नारूपत्वमित्यत आह—**यदग्नय इति** । तयोर्वाक्ययोर्यथाक्रममग्निप्रजापतिसूर्यप्रजापतिलक्षणानेकगुणश्रवणेन विशिष्टकर्मान्तरविधायकत्वेन अग्निहोत्रवाक्यविहिते कर्मणि गुणविधायकत्वं न संभवतीत्यर्थः । **ननु** यदग्नये चेति वाक्येनाग्निप्रजापत्याश्रितमेकदेवताकारकमग्निहोत्रवाक्यविहिते कर्मणि विधीयते एवं सूर्यवाक्येऽपीति न वाक्यभेदः । नचाग्नये प्रजापतये इति चतुर्थीभेदात्तत्प्रतिपाद्यदेवताकारकभेद एवात्रेति वाच्यम् । तद्धितवच्चतुर्थ्या देवतायामस्मरणेन तद्वाचकत्वाभावादतश्चतुर्थ्या देवता कल्प्या । कल्पनायां च लाघवादेकैव कल्प्येति कथमत्र कारकभेदः । **नच** चतुर्थ्या देवतावाचकत्वाभावेऽपि न तत्कल्प्या देवता किंतु तल्लक्ष्या द्रव्योद्देश्यत्वविशिष्टद्रव्यप्रतिगृहीतत्वरूपसंप्रदानवाचिन्यास्तस्या विशेषणभूतद्रव्योद्देश्यत्वरूपदेवताकारके लक्षणासंभवात्ततश्च शब्दभेदस्यैव देवताकारकस्य प्रतिपादनाच्चतुर्थीभेदे तद्भेद आवश्यक इति वाच्यम् । नहि द्रव्योद्देश्यत्वमेव देवतात्वम् । तथासति मैत्रावरुणाय दण्डं प्रयच्छति आत्रेयाय हिरण्यं ददातीत्यादौ मैत्रावरुणात्रेयादेरपि द्रव्योद्देश्यत्वसद्भावेन देवतात्वापत्तेः । किंचोद्देश्यत्वमात्रस्य देवतात्वे

---

१ वाक्यमिति. २ अग्निहोत्रे. ३ कर्मविधानाद्देवता.

भेदादसामर्थ्यम् । नचैककारकविधानाद्वाक्यभेदः । विभक्तिपृथक्त्वेन कारकनानात्वात् । यदि अग्नीषोमीयवदग्निप्रजापतिभ्यां समस्ताभ्यामेकविभक्तिरश्रोष्यत तत उभयविशिष्टैकदेवताकारकविधानाच्च वाक्यमभेत्स्यत[1] । अथापि क्रीणातिवत्पृथक्पदं विभक्तिः स्यात्तथापि तया वाक्येनारुणैकहायनीवदग्निप्रजापत्योः युगपत्संबन्धात्स्यादुभयविशिष्टमेकं कारकम् । यदा तु यजतिददातिजुहोतिभ्य इव भावनाविभक्तिः प्रत्येकमग्निप्रजापतिभ्यामुच्चरन्ती देवताविभक्तिः प्रकृत्यर्थभेदभिन्नामेव देवतां भावनामिव प्रतिपादयति तदा कुतो देवतैक्यम् । देवतासामान्येन त्वेकत्वं भावनासामान्येन तुल्यमिति समस्तो वेद एकं वाक्यं स्यात् । अतो नामत्वे देवताविधानासंभवादरूपत्वमिति गुणविधित्वमेव युक्तम् । अविहितदेवताकेषु वा दर्विहोमेषु गुणविधानान्न तत्प्रख्यत्वम् । आघारशब्देनापि क्षरण-

---

प्रतिनिधीयमानस्यापि देवतात्वसंभवात् षष्ठे वक्ष्यमाणो देवताप्रतिनिध्यभावो विरुध्येत । अतोऽन्यदेव देवतात्वं वाच्यमिति शाब्दवृत्त्या देवतायाः प्रतिपाद्यत्वाभावात्कल्प्यत्वमेवेति प्रकृते देवताकारकैक्यान्न वाक्यभेद इति प्राभाकरमतमाशङ्क्य निराकरोति—**नचेति । विभक्तीति ।** अस्त्वन्यदेव देवतात्वं तथापि तस्य द्रव्योद्देश्यत्वसहचरितत्वात्तद्घटितसंप्रदानत्ववाचिकया चतुर्थ्या तदेव लक्षणया प्रतिपाद्यम् । देवतायाः कल्पनयापि प्रतीत्यवश्यंभावे श्रूयमाणचतुर्थ्यास्तल्लक्षकत्वस्यैव वक्तुं युक्तत्वात् । किंच चतुर्थ्या देवताकल्पकत्वं किं संप्रदानत्वरूपमुख्यार्थप्रतिपादनेन उतार्थान्तरलक्षणया । नाद्यः । देवतायाः प्रतिग्रहीतृत्वाभावेन तद्घटितसंप्रदानत्वरूपमुख्यार्थप्रतिपादनासंभवात् । नापि द्वितीयः । लक्षणाया आवश्यकत्वे देवतायां लक्षणां विनार्थान्तरे लक्षणां स्वीकृत्य तन्मुखेन देवताकल्पनस्यासंभवदुक्तिकत्वात् । एवंच लक्षणया देवताकारकस्य चतुर्थीप्रतिपाद्यत्वात्तद्भेदे तत्प्रतिपाद्यदेवताभेद आवश्यक इति भावः । विभक्तिपृथक्त्वे कारकनानात्वमेवोपपादयति—**यदिहीति । तत इति ।** समासेन सहिततया प्रतिपादितयोरेव विभक्त्यर्थान्वयादिति भावः । नत्वरुणास्थले द्रव्यगुणयोरसत्यपि समासे क्रमेण वैशिष्ट्यं दृष्टं तद्वदिह किं न स्यादित्यत आह—**अथापीति ।** क्रीणातेः पृथक्पदत्वात्तत्र समासाभावेऽपि युगपदन्वयसंभवादुभयविशिष्टक्रयविधिः संभवति । इहतु विभक्तेः पृथक्पदत्वाभावान्न युगपदुभाभ्यां विभक्त्यर्थान्वयसंभव इति वैषम्यमित्यर्थः । एवंच पदश्रुत्या प्रथममेकैकमात्रान्विते देवताकारके पदान्तरप्रतिपाद्यस्येतरस्य वाक्येनान्वयासंभवात्तत्तद्विशिष्टदेवताकारकभेदः स्वीकार्य इत्याह—**यदा त्विति । अविहितदेवताकेष्विति ।** ननु पूर्वं गुणविधिविषयस्य कस्यचित्कर्मणोऽनुक्तत्वादत्र वाकारोऽनुपपन्न इतिचेदुच्यते । गुणविधौ मत्वर्थलक्षणामाशङ्क्य बहुव्रीहिणा मत्वर्थलाभात्तत्परिहाराभिधानेन ग्रन्थकारस्याग्निदेवताविशिष्टकर्मविधिपक्षः प्रागभिमतो लक्ष्यते । केवलगुणविधौ मत्वर्थलक्षणाया अप्रसक्त्या शङ्कायास्तत्प्रसक्तिमभ्युपगम्य तदर्थस्यान्यतो लाभकथनेन परिहारस्य चासंगतत्वापत्तेः । एवंच प्रागुक्तगुणविशिष्टकर्मविधिपक्षाभिप्रायेण वाकार उपपद्यते । यद्वा यदग्नये चेत्यादिवाक्ययोर्विशिष्टकर्मविधायकत्वेनाग्निहोत्रवाक्यविहितकर्मणि देवताविधायकत्वं नास्तीत्युक्ते अर्थादग्निहोत्रवाक्यस्य तद्वाक्यविहितकर्मणि गुणविधायकत्वं संभवतीत्युक्तप्रायमिति तदभिप्रायेण वाकारः । नच यदग्नयेचेत्यत्राग्निवाक्यविहितकर्मण्यग्नेः सद्भावान्न तत्राग्निलक्षणगुणविधिः संभवति । सूर्यवाक्यविहितकर्मण्यपि उत्पत्तिविशिष्टसूर्याद्यवरोधादग्निविधानासंभव एवेति तत्पक्षोऽनुपपन्न इति वाच्यम् । अग्निवाक्यविहितकर्मणि अग्निविधानवैयर्थ्येऽपि सूर्यवाक्ये चशब्दद्वयश्रवणेनान्यतरसमुच्चयस्यैकेनैव चशब्देन लाभे चशब्दान्तरस्यान्यसमुच्चयप्रापणार्थतया प्रकृते उत्पत्तिशिष्टगुणावरुद्धेऽपि गुणविधिः संभवति । अग्निवाक्ये चशब्दद्वयस्यागत्या परस्परसमुच्चयार्थत्वं सूर्यवाक्ये त्वग्निदेवतोपनायकस्य वाक्यान्तरस्य सद्भावेन तत्समुच्चयार्थत्वमेव । द्वितीयचकारश्रवणस्येत्येवं भवदेवोक्तरीत्या तस्यापि पक्षस्योपपत्तेः । केचित्तु सायंजुहोति प्रातर्जुहोतीतिवाक्ययोरनुपादेयकालसंबन्धात्कर्मविधिरवश्यंभावीति तद्वाक्यद्वयविहिततत्कर्मणोः सिद्धान्ते वक्ष्यमाणरीत्या मान्त्रवर्णिकाग्निसूर्यप्राप्तिमपेक्ष्य यदग्नयेचेति वाक्यद्वयस्य सायंप्रातःशब्दप्रत्यभिज्ञायुक्तस्य प्रजापतिसमुच्चयमात्रविधानाश्रयणेनाप्यग्निहोत्रवाक्यविहितकर्मणो रूपाभावोपपादनसंभवाद्यदग्नयेचेति वाक्यद्वयस्य विशिष्टकर्मविधायकत्वेनैवारूपत्वमुपपादनीयमित्यत्र ग्रन्थकारस्य नाग्रहः । एवंच सायंप्रातर्वाक्यविहितकर्मद्वयमध्ये अग्निप्राप्तिरहिते प्रातर्वाक्यविहिते कर्मणि सूर्यप्रजापतिभ्यां सह विकल्पेनाग्निविधिरिति पक्षमपेक्ष्य वा सायंहोमेऽप्यग्निप्रजापतिभ्यां विकल्पेन केवलाग्निविधिरिति पक्षमपेक्ष्य वा पक्षान्तरप्रदर्शनार्थो वाकार इत्याहुः । तन्न । अग्निहोत्रवाक्यं हि केवलगुणविधिरिति पक्षएव परं सायंजुहोति प्रातर्जुहोतीतिवाक्ययोरनुपादेयकालसंबन्धात्कर्मविधिसंभवः नत्वग्निहोत्रवाक्यं कर्मविधिरिति पक्षे, तदा सायंजुहोति प्रातर्जुहोतीत्यनयोः सत्यप्यनुपादेयकालसंबन्धे न कर्मान्तरविधायकत्वं फलं चाकर्मसंनिधाविति न्यायस्य कर्मभेदप्रयोजकस्याभावात् । किंतु संनिहितेऽग्निहोत्रवाक्यविहितकर्मण्येव केवलं सायंप्रातःकालविधानार्थं साय-

---

१ वाक्यं भेत्स्यते. १ शब्दान्तराद् भिन्नाम्

**समर्थं द्रव्यमाज्यपयःप्रभृत्यभिधीयते। तच्च द्वितीयानिर्देशादाधारणसंस्कार्यत्वेनावगम्यते। निष्प्रयोजनस्य संस्कारासंभवात्प्रयोजनापेक्षायां प्रकृतद्रव्यापेक्षोपांशुयाजार्थता विज्ञायते। प्रकरणेन च गुणे विधीयमाने नास्ति मत्वर्थलक्षणा। मतुप्प्रत्यययुक्तस्यैव वाक्यस्य प्रकरणेन कल्पनात्। नचात्र यागो विधीयते संस्कारमात्रस्य श्रवणात्। नच संस्कारकर्माणि कचिन्नामवन्ति दृश्यन्ते तस्माद्गुणविधिः। एवंच द्वितीयानिर्देशो युक्तो भवति। आघारस्य संस्कार्यत्वात्। अग्निहोत्रे चार्थाक्षिप्तसाध्यत्वानुवादेनोपसर्जनार्थविधानात्। नामधेयत्वे तु तस्याविधेयत्वात्कर्मैव विधेयं, तेन करणमिति नामधेयं तृतीयान्तं स्यादनुपपन्ना द्वितीया स्यात्। नच फलवाक्यएव कर्मणः करणत्वम्। उत्पत्तिवाक्ये तु फलवाक्यापेक्षितकर्मस्वरूपकर्तव्यतैव प्रतिपाद्यत इति वाच्यम्। विधेः करणत्वावगमात्कर्मत्वासंभवात्, साध्यत्वे च तस्य साध्यान्तरानपेक्षत्वान्न फलवाक्येनापि फले विधातुं शक्यत इति कर्मान्तरमेव फलवाक्ये स्यात्। तथाचाघाराग्निहोत्राधिकरणे वक्ष्यते। नह्यकरणभूतोऽसौ साध्यान्तरानपेक्षत्वाद्वाक्यान्तरेणापि**

---

प्रातर्वाक्यद्वयं स्यात्तथाचाग्निहोत्रवाक्यं कर्मविधिरिति वदतः सायंप्रातर्वाक्ययोः कर्मविधायकत्वाभावेन तंप्रति यदग्नये चेति वाक्यद्वयस्य तत्र गुणविधायकत्वमाश्रित्याग्निहोत्रवाक्यविहितकर्मणो रूपाभावोपपादनासंभवाद्यदग्नयेचेति वाक्यद्वयस्य विशिष्टकर्मान्तरविधायकत्वमाश्रित्यैवारूपत्वमुपपादनीयम्। एवंच सायं जुहोति प्रातर्जुहोतीतिवाक्ययोः कर्मविधिररूपत्वमुपपादयतो ग्रन्थकारस्यानभिमत एव वक्तव्य इति कथं सायंप्रातर्वाक्यविहितकर्मद्वये प्रातर्वाक्यविहितकर्मणि वा गुणविधिपक्षसंभवः। येन तदपेक्षो वाकारः समर्थ्येत। कथंचित्सायंप्रातर्वाक्यविहितकर्मणि गुणविधिसंभवेऽपि तत्पक्षद्वयस्य पूर्वग्रन्थे सूचकाभावेनात्रत्यवाकारस्य तदपेक्षया पक्षान्तरपरत्ववर्णनमत्यन्तक्लिष्टत्वादयुक्तमिति। **आघारशब्देनेति**। 'घृ क्षरणदीप्त्यो'रितिधातो'रकर्तरि च कारक'इति कर्मणि घञन्त आघारशब्द इति भावः। आज्यभागादिव्यावृत्त्यर्थं प्रकृतेत्युक्तं आज्यभागादेरङ्गत्वाच्चास्ति प्रकरणम्। ततश्च प्रकरणात्प्रधानस्येति न्यायेन प्रधानभूतोपांशुयाजार्थत्वमस्याघारणसंस्कृतद्रव्यस्य, सर्वस्मै वा इति वाक्यं तु आज्यभागादिविषयं नतूपांशुयाजविषयमिति भावः। अग्निहोत्रशब्द इवात्रापि न मत्वर्थलक्षणादोषप्रसक्तिरित्याह—**प्रकरणेनेति**। अत्र यद्यपि आघारमाघारयतीति वाक्य आघारपदं विधेयगुणसमर्थकं न भवति तथापि प्रकरणकल्पितवाक्येन संस्कृताघारद्रव्यस्य विधानात्तत्र चाघारपदस्य विधेयगुणसमर्थकत्वमस्तीति यदेव सिद्धान्ते नामधेयं तस्यैव पूर्वपक्षे गुणविधित्वोपपत्तिरिति प्रकरणेन गुणे विधीयमान इत्यनेन सूचितम्। **मतुप्प्रत्ययेति**। इदं चोपांशुयाजवाक्यमेव प्रकरणसनाथं संस्कृताघारद्रव्यविशिष्टोपांशुयाजविधायकमित्याश्रित्योक्तम्। यदा तु उपांशुयाजवाक्ये उपांशुयाजं विधाय पर्यवसितेसति उपांशुयाजमनूद्य प्रकरणकल्पितवाक्येन द्रव्यविधिस्तदा वैयधिकरण्येनैव गुणस्य विधेयतया मतुप्प्रत्ययकल्पनानवकाशादिति ध्येयम्। नच सान्नाय्योपांशुयाजादिद्रव्यं क्षरणयोग्यमाघारशब्देनानूद्य तस्य क्षरणसंस्कारो विधीयत इति स्वीकारेऽपि आघारपदस्य नामत्वाभावसिद्धेस्तथा किमिति नाङ्गीकृतमिति वाच्यम्। आघारशब्देन सान्नाय्यादिद्रव्यस्याविहितत्वेन तेन शब्देन तदनुवादासंभवादिति भावः। **ननु** प्रकरणेन वाक्यकल्पनादिदोषपरिहारायास्मिन्नेव वाक्ये यागविधिर्युक्तः, ततश्चाघारपदं नामधेयमेव भविष्यतीत्यत आह—**नचात्रेति**। प्रत्यक्षयज्यश्रवणाद्द्रव्यदेवतासंबन्धादिरूपतत्कल्पकाभावाच्चेति भावः। नन्वस्तु संस्कारविधिस्तथाप्याघारपदं नामधेयमेव नतु संस्कार्यद्रव्यसमर्पकं आघारयतीति क्षरणसंस्कारविधिबलादेव योग्यतया द्रवद्रव्यरूपसंस्कार्यलाभोपपत्तेरित्यत आह—**नचेति**। संकल्पकृत्विग्वरणादिषूपयोगलक्षणप्रयोजनाभावात्संस्कारकर्मणां नामानर्थक्यात्तस्योद्देश्यसमर्पकत्वमेव श्रुतशब्दस्यैवोद्देश्यसमर्पकत्वसंभवे विधेयसामर्थ्यादुद्देश्यकल्पनानौचित्यादिति भावः। द्वितीयानिर्देशबलादपि गुणविधिरेव वाच्य इत्याशयेनाह—**एवंचेति**। **अग्निहोत्रेचेति**। इदंच दर्विहोमादौ गुणविधिरिति पक्षाभिप्रायेण विशिष्टविधिपक्षे उक्तप्रकारासंभवादिति ध्येयम्। ननु फलवाक्ये फलश्रवणबलेन फलकर्मकभावनाप्रतीतौ धात्वर्थस्य कर्मणस्तत्र करणत्वेनान्वय आवश्यक इति। तत्र तथात्वेप्युत्पत्तिवाक्ये भावनायाः कर्मान्तरसंबन्धाभावाद्धात्वर्थकर्मत्वस्य फलवाक्यापेक्षितत्वात् समानपदश्रुत्या धात्वर्थस्य कर्मत्वेनात्रान्वयायुक्ता द्वितीयेत्याशङ्क्य निराकरोति—**नचेति**। **उत्पत्तिवाक्य इति**। अनेनोत्पत्तिवाक्यमेवात्रोदाहरणं नतु फलवाक्यमिति सूचितम्। **विधेरिति**। प्रवर्तनात्मकविधिसंबन्धात्पुरुषाभिलषितसाधनत्वाभावे पुरुषस्य प्रवर्तयितुमशक्यत्वात्समीहितविशेषस्वर्गाद्यप्रतीतावपि अनेन कर्मणा समीहितं कुर्यादित्येवं धात्वर्थस्य करणत्वेनैवान्वयो वाच्य इत्यर्थः। **ननु** धात्वर्थभाव्यकत्वेऽपि परम्परया पुरुषार्थपर्यवसानात्प्रवर्तनासंबन्धोपपत्तिरित्यत आह—**साध्यत्वेचेति**। **कर्मान्तरमेवेति**। ततश्च परम्परयापि पुरुषार्थपर्यवसानं न स्यादिति भावः। उत्पत्तिवाक्ये करणत्वेन प्रतीत्यभावे फलवाक्ये तस्यान्वयो न स्यादित्यत्र वार्तिकसंमतिमाह—**तथाचेति**। **असाविति**। धात्वर्थ

---

१ चार्थासाध्यत्वा. २ विधेयं च तत्करणमिति.

फले विधातुं शक्यत इति। तस्मादुत्पत्तावपि कर्मणः करणत्वाद्द्वितीयानुपपत्तिरतो गुणविधिः। अत्रोच्यते—'वाक्यार्थो न विधातव्यो धात्वर्थेविधिसंभवे ॥ पदान्तरं न चानन्यगति नामत्वसंभवात् ॥' श्रुत्या हि धात्वर्थविधानं वाक्येनोपपदार्थस्य। तत्र यद्युपपदमनन्यगति स्यात् स्याद्वाक्यार्थविधानम्। तत्तु शाखान्तरप्रख्यापितं गुणं निमित्तीकृत्य नामधेयत्वेन संभवतीति न धात्वर्थविधानं बाधितव्यम् किंपुनः शाखान्तरं यदस्य गुणस्य प्रख्यापकम्। अग्नेस्ताव'दग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायंजुहोति सूर्योज्योतिर्ज्योतिःसूर्यःस्वाहे'ति प्रातरिति वाचनिकमंत्रवर्णात्प्राप्तिः। 'यदग्नये च प्रजापतये च सायं जुहोती' त्येतत्तु मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानमित्यतो न वाक्यभेदः। आघारवाक्येप्याघारसंज्ञके कर्ममात्रे विहिते 'चतुर्गृऽहीतं वा एतदभूत्तस्याघारमाघार्ये'त्यनेनैवाज्यप्राप्तेः क्षरणात्मकत्वं प्राप्तमिति तन्निमित्तनामधेयत्वसंभवात्कर्मविधानमेव युक्तम्। दृष्टंच संस्काराणामपि नाम-

---

इत्यर्थः। ननु गुणविशिष्टकर्मविधिरिति पक्षे गुणविशिष्टकर्मणः पदद्वयसमभिव्याहारलक्षणवाक्यगम्यत्वाद्भवतु वाक्यार्थविधिः, केवलगुणविधिरिति पक्षे तु न वाक्यार्थविधानं केवलगुणस्य वाक्यगम्यत्वाभावादित्याशङ्क्य सत्यं, केवलो गुणो न वाक्यगम्यस्तथापि गुणस्य च विधेश्च संबन्धो वाक्यप्रमाणकः नतु धात्वर्थसंबन्धवच्छ्रुतिप्रमाणकः। ततश्च समानपदश्रुत्या विधानसंभवे वाक्येन विधानमयुक्तमित्येवमर्थकतया श्लोकपूर्वार्धं केवलगुणविधिपक्षे योजनीयमित्याशयेनाह—**श्रुत्या हीति**। यद्यप्याघारवाक्ये क्षरणसमर्थाज्यपयःप्रभृतिद्रव्यानुवादेनाघारणलक्षणसंस्कारमात्रविधानान्न विशिष्टविधिप्रयुक्तवाक्यार्थविधिदोषः, नवा वाक्येन विधानं तथापि प्रकरणकल्पितवाक्ये विशिष्टविधिपक्षस्योपांशुयाजानुवादेन द्रव्यविधिपक्षस्य च पूर्वमुक्तत्वात्तत्र वाक्यार्थविधिः। वाक्येन विधिदोषः संभवतीत्याशयेनाह—**स्याद्वाक्यार्थविधानमिति**। सोमेन यजेतेत्यादिवदिति भावः। शाखान्तरप्रख्यापितमित्यनेनैवारूपत्वमपि परिहृतं भवतीति भावः। मन्त्रवर्णोऽपि न लिङ्गविनियोज्यो येन देवतावगमात्पूर्वं मन्त्रसामर्थ्यानिश्चयान्मन्त्रविनियोग एव न स्यादित्याशयेन वाचनिकेत्युक्तम्। एवंच विधित्सिताग्निलक्षणगुणस्य मन्त्रवर्णादेव प्राप्तेर्न विशिष्टविधिः नापि दर्विहोमादिषु गुणविधिः मन्त्रवर्णप्राप्तगुणं निमित्तीकृत्य नामधेयतयाग्निहोत्रपदस्योपपत्तौ धात्वर्थात्प्रच्याव्य गुणविधेः पर्यवसायितुमयुक्तत्वादित्यर्थः। यद्यपि अत्रापि पक्षे अग्नये होत्रमस्मिन्निति व्यधिकरणएव बहुव्रीहिस्तथापि नामधेयस्य तत्प्रख्यशास्त्रप्राप्तानुवादत्वेन तदनुसारात्समानज्ञापकाश्रयणेन व्यधिकरणबहुव्रीह्याश्रयणं युक्तं पूर्वपक्षे तु तादृशप्रमाणाभावादमूलकं व्यधिकरणबहुव्रीह्याश्रयणमिति भावः। **ननु** नाग्निहोत्रवाक्यविहितकर्मणि मन्त्रवर्णतो देवताप्राप्तिः यदग्नयेचेति वाक्यद्वयेऽनेकगुणश्रवणेन विशिष्टकर्मान्तरविध्यवश्यंभावेन 'अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेति सायंजुहोती'त्यादिमन्त्रविध्योः सायंप्रातःप्रत्यभिज्ञाबलेन तद्विषयतयाग्निहोत्रवाक्यविहितकर्मणि मन्त्रविधेरेवाभावात्। नच तत्र लिङ्गादेव मन्त्रविनियोगसिद्धेर्वचनानर्थक्यम् 'अग्निर्ज्योतिर्ज्योतिः सूर्यःस्वाहेत्येव सायंहोतव्य'मिति मिश्रलिङ्गमन्त्रविधिपर्युदासेन शुद्धलिङ्गमन्त्रयोर्लिङ्गादप्राप्तेः प्रधानाकाङ्क्षोपजीवनेन हि लैङ्गिकविनियोगः प्रवर्तते। इहतु वाचनिकमिश्रलिङ्गमन्त्राभ्यामेव प्रधानाकाङ्क्षाशान्तेरित्यत आह—**यदग्नय इति**। ततश्च तद्वाक्यस्य कर्मान्तरविधायकत्वाभावान्न तत्र मन्त्रान्वयः किंत्वग्निहोत्रवाक्यविहितकर्मण्येवेति भावः। **ननु** यदि यदग्नयेचेति वाक्येऽग्निर्देवता न विधीयते तदा वचनस्य झटिति प्रवृत्तेः केवलप्रजापतिरेव देवता स्यादेवं चाग्निर्ज्योतिरिति मन्त्रस्य वचनविनियुक्तस्य वचनात्त्वयथार्थमैन्द्री स्यादिति न्यायेन गौण्या प्रजापतिप्रकाशकत्वमेव स्यादित्यग्नेर्देवतात्वं मन्त्रवर्णतो न लब्धुं शक्यमिति कथं मान्त्रवर्णिकाग्निसूर्यानुवादः कथंवा तदनुवादेन प्रजापतिसमुच्चयमात्रविधिरिति चेदुच्यते। यदग्नये इति वाक्यं चशब्दसहितं विशिष्टकर्मविधौ गौरवाद्भीतमन्यतः सूर्याग्निप्राप्तौ प्रजापतिसमुच्चयमात्रविधानेन लाघवं पश्यदग्निप्राप्तिमपेक्षमाणं वाचनिकमन्त्रवर्णात्तत्प्राप्तिसंभवाल्लाघवलोभेन जघन्यमन्त्रवर्णतोऽग्निप्राप्तिमपेक्ष्य तदनुवादेन प्रजापतिसमुच्चयं विदधातीति मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानं युक्तमिति भावः। **आघारवाक्ये इति**। आघारमाघारयतीतिवाक्ये आघारमित्यनेन क्षरणसमर्थं द्रव्यमुद्दिश्य तस्याघारसंस्कारो न विधीयते किंतु धात्वर्थाघारणमेव विधीयते। तस्य चाघारणस्य 'चतुर्गृहीतं वैतदभूत्तस्याघारमाघार्ये'ति वाक्येन यजौहवं चतुर्गृहीतं प्रयाजाज्यं तत्संस्कारकता विधीयते। एवंच चतुर्गृहीतवाक्येनाज्यरूपसंस्कार्यप्राप्तेराघारपदं न संस्कार्यसमर्पकं किंतु चतुर्गृहीतवाक्यादाज्यप्राप्त्या द्रवद्रव्यक्षरणात्मकत्वं प्राप्तमिति तत्प्रवृत्तिनिमित्तीकृत्य भावे घञमाश्रित्याघारपदं नामधेयमेव। एवंच संस्कार्यस्य चतुर्गृहीतस्य लाभे सत्यस्य संस्कारविशिष्टद्रव्यपर्यन्तत्वाभावेन पूर्वपक्षोक्तरीत्या नास्य संस्कारस्योपांशुयाजार्थत्वं युक्तं किंतु चतुर्गृहीतवाक्यबलात्प्रयाजार्थत्वमेव। ततश्च यथाग्निहोत्रवाक्ये दर्विहोमादौ विधित्सितगुणस्य तत्प्रख्यशास्त्रादप्राप्तावपि यद्विधित्सया धात्वर्थादुत्सार्यते विधिः स गुणः समानपदश्रुत्युपात्तधात्वर्थविधिस्वीकारेणैव शाखान्तरप्राप्तोऽनुवदितुं शक्यत इति श्रुत्यर्थविधिपरित्या-

---

१ विधानमतो.

धेयत्वम् 'उपांशुं गृह्णात्यन्तर्यामं गृह्णाती'ति । नचास्य संस्कारत्वं 'इन्द्र ऊर्ध्वोध्वर इत्याघारमाघारयती'-तिमान्त्रवर्णिकेन्द्रदेवतावत्त्वाद्यागत्वसिद्धेः । अतो नामत्वम् । अर्थाक्षिप्तसाध्यांशाभिप्रायकश्च द्वितीयानिर्देशः । कथं पुनरशाब्देनानध्याहृतेन च शाब्दस्यान्वयः । नहि श्रुत्या लक्षणया वा विधिवाक्ये साध्यत्वं शाब्दं, नाप्यध्याहृतं वाक्यभेदप्रसङ्गात्, अग्निहोत्रहोमं कुर्याद्धोमेन च फलमिति अर्थाक्षिप्तेनापि यद्यन्वयः स्यात्तथासति गुणोऽप्युद्भिदादिवाक्येऽर्थाक्षिप्तसाध्यांशाभिप्रायेण करणभूतेऽपि कर्मणि विधीयमानः श्रुत्यैव शक्यो विधातुमिति मत्वर्थलक्षणा दत्तजलाञ्जलिः स्यात् । एतेन ये धात्वर्थस्य विषयतया करणत्वेन चान्वयं मन्यन्ते ते निराकृताः । विषयभूतेन हि कथं करणवाचिनां

---

गायोगेन दर्विहोमादौ न गुणविधिरित्युक्तमेवमिहापि उपांशुयाजाज्ये आघारणसंस्कारस्य तत्प्रख्यशास्त्रादप्राप्तावपि चतुर्गृहीताज्यसंस्कारत्वबलप्राप्तक्षरणत्वानुवादेन नामधेयत्वेनोपपत्तेराघारणविधिवाक्यस्य संस्कृतद्रव्यपर्यन्तत्वस्य प्रकरणेन तद्द्रव्यस्योपांशुयाजे विनियोगकल्पनस्य चतुर्गृहीतवाक्ये प्रयाजाज्यसंस्कारत्वेनावगम्यमानस्याघारणस्योपांशुयाजद्रव्यसंस्कारत्वकल्पनस्यैतद्दोषपरिहारार्थं प्रयाजद्रव्यसंस्काराघारणापेक्षयाऽघारवाक्ये आघारणान्तरं विधीयत इति कल्पनस्य चायुक्तत्वान्नामधेयत्वमेव युक्तमिति भावः । **उपांशुमिति** । अंश्वदाभ्यन्यायेन उपांश्वन्तर्यामशब्दयोरपि नामत्वमिति भावः । किंचास्याघारणस्य केवलसंस्कारत्वं नास्ति किंतु मान्त्रवर्णिकदेवतासंयोगाद्यागत्वमपीति प्रस्तरप्रहरणवदुभयरूपत्वम् । एवंच यागत्वान्नामधेयस्य न काप्यनुपपत्तिरित्याह—**नचास्येति** । नचैन्द्रवायवादिग्रहणे श्रुतदेवतायास्तद्द्वारा यागान्वयवदाघारणे श्रुतमान्त्रवर्णिकदेवतायास्तद्द्वारोपांशुयाज एवान्वयः संभवतीति कथमस्य यागत्वमिति वाच्यम् । यथा सूक्तवाक्येन प्रस्तरं प्रहरतीत्यत्र सूक्तवाक्यस्य करणत्वबलात्तत्प्रतिपाद्याग्न्यादेर्देवतात्वेन प्रहरणस्य यागरूपत्वमेवमिहापि मन्त्रस्येतिकरणेन करणत्वेन विनियोगबलात्तत्प्रतिपाद्येन्द्रस्याप्याघारणदेवतात्वेन तस्यैव यागत्वावश्यंभावात् । नचैवं केवलमारादुपकारकत्वमस्तु किमिति प्रस्तरप्रहरणवदुभयरूपत्वमङ्गीक्रियत इति वाच्यम् । यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति प्रयाजार्थतया विहितस्य चतुर्गृहीतस्य स्वतन्त्रकर्मान्तरे विनियोगासंभवात्, तस्मात्पात्रस्थितपास्यमानजलस्येव किंचित्क्षारणरूपस्याघारणस्य प्रयाजेषूपयोक्ष्यमाणाज्यसंस्कारत्वमवश्यं वाच्यमित्युभयरूपत्वमेव । एवंचाघारणानन्तरं चतुर्गृहीतस्य नाशदोषापहारेषु सत्स्वन्यच्चतुर्गृहीतं गृहीत्वाऽऽघारणेन संस्कृत्य प्रयाजा यष्टव्या इत्याहुः । **ननु** नामत्वपक्षे तस्य धातुसामानाधिकरण्यं वाच्यम् । धात्वर्थश्चेह विधेयत्वात्करणमिति कथं द्वितीयान्तस्य नामधेयस्य करणार्थकधातुसामानाधिकरण्यमित्यत आह—**अर्थाक्षिप्तेति** । धात्वर्थस्य करणत्वाद्दर्शपूर्णमासाभ्यामित्यादौ यथा तृतीयान्तस्य नामधेयस्य धातुसामानाधिकरण्यं तथाऽसाधितस्य करणत्वाभावाद्धात्वर्थस्यार्थाक्षिप्तं साध्यत्वमप्यस्तीति तदादायेह द्वितीयान्तनामधेयस्य धातुसामानाधिकरण्यमुपपद्यत इत्यर्थः । ननु विधीयमानस्य धात्वर्थस्य करणत्वं शाब्दमिति युक्तं तृतीयान्तस्य धातुसामानाधिकरण्यमर्थाक्षिप्तसाध्यत्वंतु न शाब्दमिति कथं तदादाय द्वितीयान्तसामानाधिकरण्यनिर्वाह इति शङ्कते—**कथंपुनरिति** । **विधिवाक्ये इति** । धात्वाख्यातसमुदायरूपे यजेतेतिपद इत्यर्थः । **ननु** तर्हि धात्वर्थस्य साध्यताबोधकशब्दोऽध्याह्रियतां तथासति धात्वर्थस्य साध्यत्वेनोपस्थितत्वान्न द्वितीयान्तसामानाधिकरण्यानुपपत्तिरित्याशङ्कयाह—**नापीति** । **अर्थाक्षिप्तेनापीति** । अर्थाक्षिप्तसाध्यभावेन धात्वर्थेन यदि द्वितीयान्तस्य विशेषणभावेनान्वयः स्यात्तदा अर्थाक्षिप्तसाध्यभावे यागे उद्भिदादिगुणस्यापि वैयधिकरण्येन विधानसंभवेन मत्वर्थलक्षणादोषाप्रसङ्गादुद्भिदादेरपि गुणविधित्वमेव स्यादित्यर्थः । प्राभाकरास्तु प्रवृत्तिहेतुभूतकार्याभिधानं लिङादीनां व्युत्पन्नम् । प्रवृत्तिहेतुत्वं च विलक्षणकार्यस्यैव कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवंच विशेषतः कार्यप्रतिपत्त्यर्थमवच्छेदकापेक्षायां धात्वर्थोऽवच्छेदकतया संबध्यते । यद्यपि धात्वर्थः साक्षात्कार्यमवच्छेत्तुं न क्षमते तथापि यागकृतिसाध्यमपूर्वमित्येवं कृत्यवच्छेदद्वारा कार्यमपूर्वमवच्छेत्तुं शक्नोतीति धात्वर्थोऽवच्छेदकत्वेन संबध्यते अवच्छेदकत्वमेव विषयत्वमिति धात्वर्थस्य यागादेर्लिङाद्यर्थे कार्ये प्रतिपत्त्यनुबन्धितया विषयत्वेनान्वयः । तथा कार्यं कृतिसाध्यं भाव्यमिति पर्यायः । ततश्च भाव्यरूपापूर्वोद्देशप्रवृत्ता या कृतिः सा भावनेत्युच्यते । साच क्रियात्वात्करणमन्तरेणानुपपन्नेति कृतिसाध्यलक्षणकार्यस्य स्वनिष्पत्त्यर्थं स्वसाधनार्थप्रवृत्तकृतिरूपभावनामुखेन करणापेक्षायां धात्वर्थएवोत्पत्त्यनुबन्धित्वेन करणतयापि संबध्यते । परोद्देशप्रवृत्तकृतिव्याप्यत्वं हि करणत्वम् । संभवतिच धात्वर्थस्यापूर्वोद्देशप्रवृत्तकृतिव्याप्यस्य करणत्वमिति । तस्माद्धात्वर्थो विषयतया करणतया चान्वीयत इति वदन्ति । तन्मतमपि धात्वर्थस्य करणतया साध्यतया चान्वयनिरसनेनैव निरस्तमित्याह—**एतेनेति** । यदि धात्वर्थस्य करणत्वसाध्यत्वलक्षणरूपद्वयेनान्वयो न संभवति एवं विषयत्वकरणत्वलक्षणरूपद्वयेनाप्यन्वयो न संभवति न्यायसाम्यादित्यर्थः । विषयत्वेन करणत्वेन चान्वयमिच्छद्भिः प्राभाकरैर्वक्तव्यं किं विषयपरः शब्दः उत करणत्वपरः आहोस्विदुभयपरः इति । तत्राद्ये आह—**विषयभूतेन हीति** । आर्थिकेन उक्त-

---

१ दादिरर्थाक्षिप्त. २ निरस्ता वेदितव्याः. ३ यथा.

नामधेयानां सामानाधिकरण्यम् । आर्थिकेन करणत्वेन सामानाधिकरण्यमितिचेत्, साध्यत्वमपि तर्ह्यार्थिकमस्तीति गुणविधिरपि विनैव मत्वर्थलक्षणया विनाच वैरूप्येण स्यादिति समस्तमेव नामधेयप्रतिपादनमनुपपन्नं स्यात् । अथ विषयत्वद्वारेण करणत्वपरएव शब्दस्ततोऽन्यपरेण शास्त्रेणोपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यादतत्परत्वात् । अथ शब्द एव प्रथमं विषयतयाभिधाय पुनःकरणतयाप्यभिधत्ते । कथं सकृदुच्चरितो द्विरभिदध्यादभिधाने वा साध्यत्वमपि पुनरभिदधीत । नहि नियामकमस्ति द्विरेवाभिधत्ते न त्रिरिति । 'सकृत्प्रवृत्तायाः किमवगुण्ठनेने'ति न्यायात् । ततश्च गुणविधिरपि स्यादित्युक्तम् । अतः करणत्वेनैवान्वयो वाच्यो न विषयत्वेनेत्यास्तां तावत् । अतः कथं द्वितीयाश्रुतिनिर्देश इति वक्तव्यम् । तदुच्यते । अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वं असाधितस्य करणत्वानुपपत्तेरतः साध्यत्वसाधनत्वयोर्द्वयोरेकार्थसमवायात्, साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यत इत्यविरोधः ॥

श्येनादिशब्दानां यागनामधेयताधिकरणम् ॥ ५ ॥

## तद्व्यपदेशं च ॥ ५ ॥

**श्येनेनाभिचरन्मर्त्यो यजेतेति श्रुतौ गुणः ॥ विधीयते पक्षिरूपो नाम वा तस्य कर्मणः ॥ १३ ॥**
**श्येनेनेति गुणः काम्यः सौमिकः सोमबाधया ॥ न चित्रावद्वाक्यभेदो रूढेश्चैवमनुग्रहः ॥ १४ ॥**
**यथा वै श्येन इत्युक्त्या ह्युपमानोपमेयता ॥ नैकस्मिंस्तेन गौण्यास्य वृत्त्या स्यात्कर्मनामता ॥ १५ ॥**

इह रूढशब्दा एव वाक्यभेदरहितास्तद्व्यपदेशवन्त उदाहरणम् । यथा 'श्येनेनाभिचरन्यजेते'त्यादिषु श्येनादिशब्दास्तेषु गुणविधिरुत कर्मनामधेयं वेति संशयः । अत्यन्तनिरूढत्वाद्गुणविधिर्ज्योतिष्टोमादिषु काम्यत्वाच्च नित्यमुत्पत्तिशिष्टमपि सोमं बाधते । यद्वा गुणविशिष्टकर्मविधानं अप्रसिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत् । नच यथा वै श्येनो निपतत्येत्यादिवाक्यशेषदर्शितक्रियासामान्येन कर्मणि गौणत्वेन कर्मवचनत्वं युक्तम् । अत्यन्तविप्रकृष्टार्थत्वात् गौणत्वस्य

---

रीत्या करणत्वं विना कार्यत्वानिर्वाहादिति भावः । **साध्यत्वमपीति** । यद्यपि तन्मते करणत्वमौपादानिकं नत्वार्थिकमित्यस्ति वैषम्यं तथापि करणत्वं विनानुपपद्यमानो विधिरेव साध्यत्वं विना करणत्वानुपपत्तेः साध्यत्वमप्याक्षिपेदिति साध्यत्वमप्यौपादानिकं स्यादिति साम्यमिति भावः । द्वितीयं शङ्कते—**अथेति । न शास्त्रार्थ इति** । नचेष्टापत्तिः । शब्दान्तराधिकरणे तैर्विषयत्वस्य शास्त्रार्थत्वव्युत्पादनविरोधप्रसङ्गादिति भावः । तृतीयं शङ्कते—**अथ शब्दएवेति** । तस्माद्विषयत्वस्य शाब्दत्वे करणार्थकतृतीयान्तनामधेयसामानाधिकरण्यासंभवात्तन्निर्वाहाय करणत्वमेव शाब्दमिति स्वमतमेवैष्टव्यमित्याह—**ततश्चेति** । सूत्रार्थस्तु—तस्य विधित्सितगुणस्य प्रख्यं प्रख्यापकमन्यच्छास्त्रं यत्र तदपि नामधेयं स्यादिति ॥

**तद्व्यपदेशं च ॥ ५ ॥** उद्भिदधिकरणादिन्यायाविषयत्वस्फोरणार्थं तद्विषयाद्व्यवच्छिनत्ति—**रूढशब्दा इति** विशेषणद्वयेन । तत्र प्रथमेनाग्निहोत्रादेर्द्वितीयेन चित्राज्यादेरिति विवेकः । नन्वेवं वाक्यभेदराहित्ये चित्राधिकरणपूर्वपक्षन्यायेन गुणविधित्वस्यैव वक्तव्यत्वेन सिद्धान्तासिद्धिरित्याशङ्क्य सिद्धान्तं संभावयितुं विशिनष्टि—**तद्व्यपदेशेति** । अत्र तद्व्यपदेशशब्दः सौत्रानुकरणं सूत्रेच तच्छब्देन यस्मिन्गुणोपदेश इति प्रकृतो गुणो निर्दिश्यते । विशब्दश्च भिन्नार्थकः । ततश्च तस्माद्विधेयत्वाभिमताद्गुणाद्व्यपदेशो भेदेन निर्देशस्तद्वन्त इत्यर्थः । अभेदे सादृश्यानुपपत्तेः सादृश्यार्थकवाक्यशेषेऽस्ति भेदेन कीर्तनमिति भावः । **श्येनेनेति** । संदंशेनाभिचरन्यजेत गवाभिचर्यमाणो यजेतेत्यादिरादिशब्दार्थः । ज्योतिष्टोमादिष्वित्यादिशब्देनोद्भिदधिकरणोक्तविश्वजिदादिसंग्रहः । **ननु** गुणविधौ स्वस्य स्वसादृश्यानन्वयाद्वाक्यशेषानुपपत्तिरित्यस्वरसादाह—**यद्वेति** । विशिष्टविधौ श्येनविशिष्टस्य यागस्य श्येनापेक्षया भिन्नत्वाद्वाक्यशेष उपपन्न इति भावः । **ननु** वाक्यशेषप्रसिद्धार्थस्वीकारान्नास्त्यप्रसिद्धार्थकल्पनेत्याशङ्क्याह—**नचेति** । आदिशब्देन यथा संदंशेन दुरादानमादत्ते यथा गावो गोपायन्तीत्यादिवाक्यशेषसंग्रहः । **अत्यन्तेति** । सिंहो देवदत्त इत्यादौ सिंहशब्देन स्वाभिधेयसिंहगतक्रौर्यादिसदृशमाणवकगतक्रौर्यादिगुणं साक्षान्मुख्यार्थासंबन्धिनमपि लक्षयित्वा तद्विशिष्टं माणवकरूपं धर्मिणं लक्षयतीति गौण्यामत्यन्तविप्रकर्षः ।

---

१ दभिदधाने वा. २ द्वितीयानिर्देश. ३ साध्यसाधनयोः. ४ श्येनइत्यादि. ५ संदंशी इति भाषायां चुल्ल्युपरिस्थपात्रसाधउच्चारणसाधनयन्त्रम्.

लक्ष्यमाणगुणैर्योगाद्वृत्तिर्गौणीति वक्ष्यति । तद्वरं लक्षणैवाश्रिता । गौणत्वे चात्यन्तार्थान्तरपरत्वाच्छ्रुतिबाधः । लक्षणायां तु तद्वत्यपि वर्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनार्थश्येनविधिपरएव करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इत्येकवाक्यत्वार्थं लक्षणाश्रयणम् । तात्पर्यं तु श्रुत्यर्थ एवेति न श्रुतिबाधः । उच्यते—गुणविधौ तावत्स एव स्तोतव्यः । तस्य चात्मनैवोपमानमनुपपन्नमिति तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिः । विशिष्टविधिस्तु गौरवादेवायुक्तः । नच सोमादिवत्पदान्तरस्यानन्यगतित्वं यथा वै श्येन इति वाक्यशेषानुसारात् गौणत्वेन नामत्वसंभवात् । अवश्यं हि वाक्यशेषस्येदमेव प्रयोजनं, कथं नाम श्येनशब्दस्य यागनामधेयता विज्ञायेतेति । तस्मान्नामधेयम् । एवं यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशैश्चतुर्भिर्नामत्वं साधितम् । एतैरेव च सर्वत्र नामधेयत्वमिति द्रष्टव्यम् ॥

वाजपेयादिशब्दानां नामधेयताधिकरणम् ॥ ६ ॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥
## [तुल्यत्वात्क्रिययोर्न ॥ ७ ॥ ऐकशब्द्ये परार्थवत् ॥ ८ ॥]

यजेत वाजपेयेन स्वाराज्यार्थीत्यसौ गुणः ॥ नाम वा गुणता तन्त्रयोगाद्गुणफलद्वये ॥ १६ ॥
साधारणयजेः कर्मकरणत्वेन तन्त्रता ॥ त्रिकद्वयं विरुद्धं स्यात्तन्त्रतायां फलं प्रति ॥ १७ ॥
उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ॥ उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥ १८ ॥
त्यक्त्वा तन्त्रं तदावृत्तौ वाक्यं भिद्येत तेन सः ॥ वाजपेयेतिशब्दोऽपि कर्मनामाग्निहोत्रवत् ॥ १९ ॥

'वाजपेयेन स्वाराज्यकामो यजेते'ति वाजपेयशब्दः किं गुणविधिरुत कर्मनामधेयमिति चिन्त्यते । तदर्थमिदं विचार्यते किं यजेतेत्याख्यातं गुणफलाभ्यां तन्त्रेण संबद्धुं क्षमते नवेति सर्वाणि चोद्भिदादीन्यत्रोदाहर्तव्यानि । तत्र 'सर्वेष्वाख्यातशब्देषु तन्त्रसंबन्धसंभवात् ॥ मत्वर्थलक्षणादोषो नास्ती-

लक्षणास्थले तु स्वाभिधेयसंबन्धिनएव लक्षणेति न तत्रात्यन्तविप्रकर्ष इति भावः । **वक्ष्यतीति** । तत्सिद्धिपेटिकायां वार्तिककार इति शेषः । **गौणत्वे चेति** । गौणत्वे मुख्यार्थस्य सर्वथा त्याग एव । मत्वर्थलक्षणायां तु सामानाधिकरण्यनिर्वाहार्थं तद्वति लक्षणायामपि विशेष्यांशस्य धातुनैव लाभात्तद्वल्लक्षकोऽपि शब्दो विशेषणीभूतस्वाभिधेयपर एवेति श्रुत्यर्थानुग्रह इत्यर्थः । **गुणविधौ तावदिति** । केवलगुणविधौ विधेयस्य गुणस्यैव स्तुतिर्वक्तव्या । नच वाक्यशेषे प्रतिपाद्यमानं श्येनत्वावच्छिन्नप्रतियोगिकतया स्वरसतः प्रतीयमानं सादृश्यं श्येनत्वाक्रान्ते विधेये गुणेऽन्वेति, अभेदे सादृश्यासंभवादित्यर्थः । नचात्रानन्वयालंकारः शङ्क्यार्हः । अनन्वये हि धर्मैक्यमावश्यकमिह तु मत्स्याद्यादानभ्रातृव्यादानरूपधर्मभेदेनानन्वयाप्रसक्तेर्धर्मभेदेऽप्यनन्वयाङ्गीकारे 'धर्मार्थकामेषु समं प्रपेदे यथातथैवावरजेषु वृत्ति'मित्यादावप्यनन्वयापत्त्या धर्मभेदनिबन्धनोपमोच्छेदापत्तेः । नचैवमिहापि धर्मभेदनिबन्धनोपमैवास्त्विति वाच्यम् । उपमानोपमेययोर्भिन्नशब्दनिर्देशे एकधर्मिकत्वाप्रतीत्या धर्मभेदनिबन्धनैकधर्मिकोपमायाः प्रकृतेऽनुन्मेषादिति भावः । ननु विशिष्टविधौ न वाक्यशेषानुपपत्तिः । श्येनात्तद्विशिष्टकर्मणो भेदेन कर्मणि श्येनसादृश्यान्वयसंभवात् यागरूपाणां क्रियाणां नियत्यादानादिक्रियान्तरपरत्वनिर्देशस्य च तद्धेतुत्वमात्रेणोपपत्तेरित्यत आह—**विशिष्टविधिस्त्विति** । विधिलाघवादत्यन्तक्लिष्टगौण्याश्रयणं श्रुतिबाधश्च न दोष इति भावः । किंच यदि श्येनस्तुतिमात्रपर्यवसितो वाक्यशेषः स्यात्तदा श्येनो हि मत्स्यादिकमिव भ्रातृव्यं नियत्यादत्ते इत्येवंरूपो वाक्यशेषः स्यात्तस्माच्छेदनादन्यत्किंचिदयमिति सर्वनाम्ना निर्दिश्य तत्र श्येनसादृश्यं ब्रुवतो वाक्यशेषस्य श्येनपदे यागनामत्व एव तात्पर्यमिति तद्बलाद्यागनामत्वमावश्यकमित्याशयेनाह—**अवश्यं हीति** । एवमग्निज्योतिरित्यादौ ज्योतिरादिशब्दानामपि नामत्वमुक्तेष्वन्यतमेन ज्ञेयमित्याह—**एतैरेवेति** । सूत्रार्थस्तु तस्य गुणस्य व्यपदेशो यस्मिन् श्येनादिपदे तदपि नामधेयं स्यादिति ॥

**नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्** ॥ ६ ॥ यजेतेत्याख्यातमिति यज्यन्वितः प्रत्यय इत्यर्थः । ननूद्भिदादिष्वपि तन्त्रसंबन्धेन गुणविधिपूर्वपक्षस्य प्रवर्तयितुं शक्यत्वात्तेषामप्युदाहरणत्वं स्यादित्याशङ्कायामिष्टापत्तिरित्याशयेनाह—**सर्वाणि चेति** । नन्वेवमपि येषूद्भिदादिषु गुणविधित्वपरिपन्थिमत्वर्थलक्षणादोषः तेषामेवोदाहरणत्वं स्यायेषु तु अग्निहोत्रश्येनादौ तत्प्रख्यशास्त्रादेर्गुणविधित्वपरिपन्थित्वं तेषामुदाहरणत्वमनुपपन्नमेव । तन्त्रसंबन्धाश्रयणे मत्वर्थलक्षणाया इव तत्प्रख्यादेरन्यथाकरणायोगादित्याशङ्क्य येनाभिप्रायेण सर्वेषामुदाहर्तव्यत्वमुक्तं तमभिप्रायमाविष्करोति—**सर्वेष्विति** ।

१ चार्थान्तर. २ करणभूतेन. ३ सैतदेव. ४ शब्दस्यानामधेयता.

त्याक्षिप्यतेऽधुना ॥ कर्मत्वं करणत्वं वा नाख्यातेनाभिधीयते ॥ यागादेः किंतु संबन्धमात्रं साधारणं च तत् ॥' यदि हि यजेतेति यागस्य कर्मत्वमुच्येत ततः साध्यद्वयासमवायान्न फलं संबध्येत गुणएव तु साधनतया संबध्येत। अथ तु करणत्वमेव यागस्य ततोपि करणद्वयासमवायान्न गुणः संबध्येत फलमेव संबध्येतेति न स्यात्तत्त्वं, नत्वेतदन्यतरदाख्यातेनोच्यते तद्वाचकशब्दाभावात्। प्रकृत्या हि यागमात्रमुक्तं प्रत्ययेन तु भावना। तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते। तच्च कर्मकरणत्वयोः साधारणम्। अतश्चोभयरूपसाधारणत्वाद्यागस्य तद्विषयापि भावना यागकर्मिका यागकरणिका चेति द्विरूपा भवति। तत्र यागकर्मिकांशेन गुणसंबन्धं तत्करणिकांशेन[1] तत्फलसंबन्धं भावना लभते तन्त्रेणेति विनैव मत्वर्थलक्षणया यागे गुणविधानमुपपन्नं वाजपेयेन यागं कुर्यात् यागेन च स्वाराज्यमिति। अत्रोच्यते—'संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत् ॥ तद्विशेषपरत्वे तु स्यादन्यतरसंगतिः ॥ रूपद्वयपरत्वं तु विनाऽऽवृत्त्या न लभ्यते ॥ तस्मान्नाख्यातशब्दस्य तन्त्रसंबन्धसंभवः ॥' श्रुत्या लक्षणया वा यत्परः शब्दः स एव शब्दान्तरार्थेन संबध्यते। तद्यद्याख्यातात्संबन्धमात्रं धात्वर्थभावनयोरवगतं ततो नैकस्यापि फलगुणयोस्तदन्वयः स्यात्। फलस्य साध-

नहि प्रागुक्तानां सर्वेषां हेतूनामन्यथाकरणाभिप्रायेण सर्वेषामुदाहर्तव्यत्वमुच्यते किंतु सर्वेष्वप्युदाहरणेषु विशिष्टविधिपक्षे प्रथममापततो मत्वर्थलक्षणादोषस्य तन्त्रसंबन्धाश्रयणेनान्यथाकरणं संभवतीत्यभिप्रायेण सर्वेषामुदाहरणत्वमुच्यते, अतो नोक्तदोष इत्यर्थः। एवंच श्येनवाक्यादिष्वपि विशिष्टविधिपक्षे आपततो मत्वर्थलक्षणादोषस्याक्षेपेण प्रवृत्तेः संगतिर्बोध्या। एवंचोद्भिदधिकरण एव मत्वर्थलक्षणापरिहाराय नामधेयत्वाश्रयणेन मत्वर्थलक्षणाक्षेपकस्यास्य तदानन्तर्यमेव स्यात्। नच चित्राज्याधिकरणस्यापि तन्मात्राक्षेपकत्वाविशेषेण विनिगमनाविरह इति वाच्यम्। चित्रया यजेतेत्युदाहरणान्तरे तदाक्षेपकाच्चित्राज्याधिकरणादुद्भिदधिकरणविषयवाक्ये तदाक्षेपकस्यास्याभ्यर्हिततत्त्वादिति शङ्कायां अप्यनवकाशः। सर्वत्र मत्वर्थलक्षणाक्षेपप्रकारस्य वर्णितत्वेन सर्वानन्तर्यस्यैव युक्तत्वादिति। नन्वेवं तर्हि वाजपेयोदाहरणं किमर्थम्। नच वाजपेयवाक्यस्य प्राचीनाधिकरणचतुष्टयन्यायाविषयतया तदुदाहरणमिति युक्तम्। पेयरूपान्नलक्षणविधित्सितगुणस्य सुराग्रहविधानादेव सिद्ध्या तत्प्रख्यन्यायविषयत्वान्नच वाजपेयशब्दस्य गुणविधित्वे औषधद्रव्यकत्वेनैष्टिकविध्यन्तः प्राप्नोति, वाक्यान्तरेण सुराग्रहविधाने तु सत्यप्यौषधद्रव्यकत्वे उत्पत्तिवाक्यगतेन देवताभावलक्षणाव्यक्तत्वेन सादृश्यात्सौमिकविध्यन्तः। ततश्च यत्फलकं गुणविधानं पूर्वपक्षे विवक्षितं तत्फलकस्य तत्प्रख्यशास्त्रान्तरस्याभावान्न तद्विषयत्वमिति वाच्यम्। यथाग्निहोत्रवाक्येऽग्निर्ज्योतिरित्यादिना दर्विहोमे विधित्सितगुणप्राप्त्यभावेऽपि यथाकथंचिद्विधित्सितगुणप्राप्तिमात्रेण नामधेयत्वं तद्वदिहापि यथाकथंचिद्गुणप्राप्तिमात्रेण तत्प्रख्यन्यायविषयत्वसंभवादितिचेन्मैवम्। वाजपेयशब्दस्य गुणविधित्वे सत्यैष्टिकविध्यन्तप्राप्त्या सप्तदशदीक्षो वाजपेय इति दीक्षोपसदादिदर्शनमनुपपन्नं स्यादिति लिङ्गदर्शनोपन्यासार्थं तदुदाहरणादिति। **ननु** भावार्थाधिकरणे धात्वर्थस्य करणत्वेनान्वयव्युत्पादनात्करणस्य करणान्तरसंबन्धासंभवेन कथं गुणफलाभ्यां तन्त्रसंबन्ध इति पूर्वः पक्ष इत्यत आह—**कर्मत्वमिति**। भावार्थाधिकरणे व्युत्पाद्यं धात्वर्थस्य करणत्वं संबन्धमात्रव्युत्पादनेऽपि संभवतीति नावश्यं करणत्वप्रकारकबोधोऽङ्गीकार्य इति भावः। कर्मत्वकरणत्वान्यतरप्रतिपादने हि गुणफलाभ्यां युगपत्संबन्धो न भवेत्। संबन्धमात्रप्रतिपादने तु संभवति युगपदुभयसंबन्ध इति श्लोकं व्याचष्टे—**यदिहीति**। **साध्यद्वयेति**। साध्यद्वयस्य परस्परं संबन्धाभावादित्यर्थः। एवं करणद्वयासमवायादित्यस्याप्यर्थो बोध्यः। **ननु** यागस्य कर्मत्वकरणत्वसाधारणसंबन्धमात्रेण प्रतीतावपि गुणफलयोर्नानेन संबन्धः संभवति तयोः कारकत्वेन क्रिययैव संबद्धुमर्हत्वाद्यागस्य चाक्रियात्वादित्यत आह—**अतश्चेति**। नहि यागे साक्षाद्गुणफलयोः संबन्धः किंतु भावनासंबन्धद्वारेति नोक्तदोष इति भावः। **विनैवेति**। वैयधिकरण्येनैव गुणस्य यागे संबन्धादिति भावः। तन्त्रसंबन्धेन लब्धमर्थमभिनीय दर्शयति—**वाजपेयेनेति**। नच तन्त्रसंबन्धाङ्गीकारे गुणस्य यागस्वरूपार्थत्वापत्त्याऽपूर्वार्थत्वं न स्यादिति वाच्यम्। वाजपेयवाक्ये यागे गुणविधानानन्तरं प्रयोगविधिना गुणविशिष्टयागविधानेन तत्सिद्धेः यथा 'तप्ते पयसि दध्यानयती'त्यनेन वाक्येन पयःस्वरूपोद्देशेन विहितस्यापि दध्यानयनसंस्कारस्य 'सा वैश्वदेव्यामिक्षे'तिवाक्ये सेत्यनेन संस्कारविशिष्टस्य पयसो यागार्थत्वेन विधानात्संस्कारस्यापूर्वार्थत्वं तद्वदिति भावः। **तद्विशेषेति**। संबन्धविशेषकर्मत्वकरणत्वान्यतरपरत्व इत्यर्थः। **ननु** संबन्धसामान्यावगमेऽपि निर्विशेषं न सामान्यमित्यर्थाद्विशेषे पर्यवसानावश्यंभावाद्गुणफलसंबन्धो युज्येतेत्यत आह—**श्रुत्येति**। संबन्धसामान्यपरत्वे तेनैव रूपेण पदार्थान्तरसंबन्धो वाच्यः नत्वार्थिकेन कर्मत्वकरणत्वलक्षणरूपान्तरेणेत्यर्थः। अस्तु तर्हि संबन्धसामान्यरूपेणैव भावनान्विते यागे गुणफलोभयान्वय इत्यत आह—**तद्यदीति**।

[1] कांशेन फल.

नापेक्षित्वाद्यागकरणिकैव भावना फलसंबन्धमर्हति । तथा गुणस्य साध्यापेक्षत्वाद्यागकर्मिकयैव भावनया संबन्धः । अनिर्धारितोभयरूपा तु नैकेनाप्यन्वीयते । अयोग्यत्वात्तत्रावश्यं विशेषपरता-भ्युपगन्तव्या । कथमसत्योः कर्मकरणविभक्त्योस्तत्परता शब्दस्येति चेत्[2], संबन्धसामान्यवाचिनी वा षष्ठी किमत्रास्ति येनात्र[3] संबन्धमात्रमभ्युपगम्येत । समभिव्याहारादेव लक्षणया संबन्धावगति-रितिचेत् । न । ततएव समभिव्याहारात्पदान्तरान्वयपर्यालोचनया संबन्धविशेषस्यैव लक्षणया सिद्धेः । नैह्यसति विशेषपरत्वे पदान्तरान्वयो घटत इत्युक्तं । तस्माद्विशेषपरतेति । तत्र कर्मपरत्वे गुणस्यैव संबन्धो न फलस्य । करणपरत्वे तु फलस्यैव न गुणस्येत्यन्यतरविशेषपरत्वेऽन्यतरस्यैव संबन्धान्न तन्त्रेणोभयसंबन्धः । उभयपरत्वं तु नावृत्तिमन्तरेण लभ्यते । न खलु यस्मिन्नेव क्षणे यागं करणा-त्मनावबुद्ध्यामहे तस्मिन्नेव कर्मात्मनावबोद्धुमीश्महे इति स्वानुभवसिद्धमेतत् । एवं गुणप्रधान-त्वोद्देश्योपादेयत्वविध्यनुवादत्वकृतमपि वैरूप्यं अतो न तन्त्रत्वं । भावनावदितिचेत् । यथा खलु भाव-नाकर्मकरणत्वगुणप्रधानत्वोद्देश्योपादेयत्वादिरूपभेदमन्तरेणैवाख्याताभिधेयेनैवात्मना साध्यादिभिः संबध्यत इदमनेनेत्थं कुर्यादिति । तथा यागोऽपि कर्मकरणत्वादिरूपमनादृत्य धात्वभिहितेनैव च यागरूपेण गुणफलाभ्यां संबध्यत इति न वैरूप्यमिति । न अक्रियात्वात् । भावना हि क्रियारूपा सर्वकारकसाधारणरूपैवेति युक्तं पदवैरूप्येणानेकसंबन्धं लभते । यागस्त्वक्रियारूपः कथमिव कार-करूपैर्गुणादिभिः संबध्यते । तदसौ भावनाद्वारेणैवारुणैकहायनीवद्गुणफलाभ्यां संबध्यत इति युक्तम् । भावनासंबन्धोऽपि चास्य स्वरूपेण न संभवति । कारकं हि क्रियया संबध्यते न वस्तुरूपमतोऽवश्यं कर्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः । तत्रान्यतररूपप्रतिपादनेऽन्यतरेणैव गुणेन फलेन

---

**अनिर्धारितेति** । यागकर्मकत्वयागकरणकत्वरूपेणानिर्धारितं भावनासामान्यमित्यर्थः । **अयोग्यत्वादिति** । आकाङ्क्षा-विरहेणानिर्धारितोभयरूपभावनामात्रस्य गुणफलाभ्यामन्वयानर्हत्वादित्यर्थः । **लक्षणयेति** । समभिव्याहारगम्यः सर्वोपि लाक्षणिकः, वाक्यस्य वाक्यार्थे लक्षणेति सिद्धान्तादिति भावः । लक्षणावश्यंभावे आकाङ्क्षितकरणत्वादावेव लक्षणाश्रयणं युक्तं नत्वनाकाङ्क्षितसंबन्धसामान्यइति परिहरति—**न । ततएवेति** । एवं प्रथमश्लोकपूर्वार्धं व्याख्याय विशेषपरत्वं पर्यवसाययन् तदुत्तरार्धं व्याचष्टे—**तस्माद्विशेषेति** । द्वितीयश्लोकं व्याचष्टे—**उभयेति** । **आवृत्तिमिति** । यजेरिति शेषः । **नखल्विति** । एकस्य शब्दस्य युगपत्कर्मत्वकरणत्वोभयबोधनरूपव्यापारद्वयासंभवादिति भावः । **एवमिति** । साधनस्य साध्यसिद्ध्यर्थत्वाच्छेषत्वापरपर्यायं गुणत्वं साध्यस्य शेषित्वापरपर्यायं प्राधान्यं प्राधान्यस्य च कृत्युद्देश्यत्वं विनानुपपत्तेस्तदु-द्देश्यत्वापादकं अप्राप्तस्य चोद्देष्टुमशक्यत्वात्प्राप्तानुकीर्तनरूपानुवादापादकमुद्देश्यत्वम् । एवं शेषत्वस्य पारतन्त्र्यरूपत्वात्परा-र्थोत्पाद्यत्वलक्षणोपादेयत्वापादकत्वं उपादेयस्य च विध्यधीनत्वाद्विधेयत्वापादकत्वमित्येवं साधनत्वे गुणत्वोपादेयत्वविधेय-त्वात्मकमेकं त्रिकं, साध्यत्वे प्राधान्योद्देश्यत्वानुवाद्यरूपमपरं त्रिकं, तदिदं च त्रिकद्वयं परस्परविरुद्धमिति तत्कृतमपि वैरूप्यं स्यात् । ततश्च विरुद्धत्रिकद्वयाक्रान्तो याग एकेन वाक्येन गुणतया उपादातुं विधातुं प्रधानतया उद्देष्टुमनुवदितुं च न शक्यत इति साध्यसाधनत्वकृतवैरूप्य इवात्रापि वाक्यभेदः स्यादिति भावः । **ननु** माभूदुक्तरीत्या भावनान्वयद्वारा यागस्य गुणफलोभयसंबन्धः साक्षादेव भावनावत्तदुभयसंबन्धोऽस्तीति शङ्कते—**भावनावदिति** । शङ्कामेव विवृणोति—**यथाखल्विति । आख्याताभिधेयेति** । येन रूपेणाख्यातेनाभिधीयते तेन रूपेणेत्यर्थः । **साध्यादिभिरिति** । फलकरणेतिकर्तव्यताभिरित्यर्थः । **अक्रियात्वादिति** । परिहारं विवृणोति—**भावनाहीति** । अक्रियारूपयागस्य साक्षाद्भावनावत्कारकसंबन्धासंभवेन भावनाद्वारैव यागस्य तत्संबन्धो वाच्य इत्याह—**तदसाविति** । **अरुणेति** । यथारुण्यस्य एकहायन्याश्च कारकतया क्रियान्वयद्वारा परस्परसंबन्धस्तद्वदित्यर्थः । अस्तु तर्हि स्वरूपेण भावना संबन्धद्वारैव तदन्वय इति शङ्कायां प्रागुक्तामेव तदनुपपत्तिं स्मारयति—**भावनासंबन्धोऽपि चेति । कारकं हीति** । यद्यपि कारकं क्रिययैव संबध्यत इत्येव नियमः नतु कारकमेव क्रियया संबध्यते इति मातुःस्मरतीत्यादौ व्यभिचारात्तथापि 'अधी-गर्थदयेशांकर्मणी'ति कर्मणः शेषत्वविवक्षायां षष्ठीविधानबलात्संबन्धितामात्रेण तत्रान्वयसंभवेऽपि प्रकृते धातुप्रत्ययसम-भिव्याहारस्य संबन्धमात्रे विधानाभावाल्लक्षणयैव तल्लाभो वाच्यः । लक्षणावश्यंभावे चापेक्षितकरणत्वादिविशेष एव तदा-

---

१ करणिकादि. २ चेत् सामान्य. ३ येन संबन्ध. ४ ततश्च नह्यसति. ५ उभयरूपपरत्वं. ६ प्राधान्यं.

वा संबन्धान्नोभयसंबन्धसिद्धिः । उभयरूपप्रतिपादने वा द्विरुच्चारणाद्वाक्यभेदः, तस्मान्न तन्नसंबन्ध सिद्धिः। तेन गुणविधिपक्षे सैव मत्वर्थलक्षणा 'सोमेन यजेत, अरुणया क्रीणाती'त्यादिवदाश्रयितव्येति। वरं वाजं पेयं सुराद्रव्यमस्मिन्निति सुराग्रहविधानात्तत्प्रख्यतया नामधेयत्वम् । ये तु कार्याभिधायिनामेव भावनाभिधायित्वं न सर्वाख्यातानामित्याहुस्तेषां काष्ठैः पचतीत्यादिषु भावनाभावाद्धात्वर्थेनैव कारकाणां संबन्धात्क्रियारूपत्वं धात्वर्थस्याभ्युपगन्तव्यम् । अतश्च स्वरूपेणैव धात्वर्थः कारकसंबन्धमर्हतीति विनैवावृत्त्या यज्यभिहितेनैव रूपेण साध्यसाधनाभ्यां संबध्यत इत्यधिकरणमिदमनुपपन्नं स्यात् । नचोद्देश्योपादानादिकृतमपि वैरूप्यम् । गुणविशिष्टयागविधानात् । नच मत्वर्थलक्षणा, कारकविभक्त्यैव श्रुत्या क्रियारूपधात्वर्थसंबन्धसिद्धेः । अतोऽक्रियारूप एव धात्वर्थ इत्याश्रयणीयम् । युक्तंचैतत् । अन्यथा हि काष्ठैः पचतीतिवत्काष्ठैः पाक इत्यपि संबन्धः स्यात् । तेन यद्यपि धात्वर्थानामेवान्योत्पादानुकूलतया क्रियारूपत्वमस्ति तथापि न धातुभिस्तद्रूपत्वमभिधीयते प्रतीत्यभावादिति न तत्संबन्धः कारकाणाम् । यथाहि वस्त्वादिशब्दाभिहितापि क्रिया न कारकैः संब-

---

श्रयणं युक्तं नत्वनपेक्षितसंबन्धसामान्य इत्याहुः । **तेनेति** । तन्त्रेणोभयान्वयासंभवात् वैयधिकरण्येन गुणविध्यसंभवेनेत्यर्थः । प्रवृत्तिनिमित्तासंभवे नामत्वमपि न निर्वहतीत्यतः प्रवृत्तिनिमित्तमाह—**वाजमिति** । सुराग्रहविधानलब्धं पेयरूपान्नवत्त्वं प्रवृत्तिनिमित्तमित्यर्थः । प्राभाकरमते तु धात्वर्थस्य क्रियात्वेन कारकान्वययोग्यत्वाद्भावनावद्धात्वर्थस्य साध्यसाधनाभ्यामन्वयसंभवादिदमधिकरणमनुपपन्नं स्यादित्याह—**येत्वित्यादिना । तेषामिति** । तेषां मते कार्याभिधायिलिङादीनामेव कार्यविशेषणभूतकृतिरूपभावनावाचित्वं । लडादिप्रत्ययानां तु भावनावाचकत्वं नास्ति तेषां कार्याभिधायित्वाभावात्, किंतु संख्यामात्रवाचकत्वमिति प्रत्ययवाच्यभावनायां कारकान्वयानुपपत्तेस्तत्सिद्ध्यर्थं धात्वर्थस्यैव क्रियारूपत्वं वाच्यमित्यर्थः । **गुणविशिष्टेति** । यागे गुणविधिः । यागस्य च फले विधिरिति स्वीकारे हि वैरूप्यं स्यान्नत्वेवमस्ति गुणविशिष्टयागविधानादित्यर्थः । **कारकविभक्त्यैवेति** । ननु तन्मते धात्वर्थस्य क्रियात्वात्स्वरूपेण कारकान्वययोग्यत्वेऽपि प्रकृते धात्वर्थस्य फलंप्रति करणत्वाभ्युपगमेन करणत्वावस्थस्य यजेः स्वकरणान्वयायोग्यतया वैयधिकरण्येन गुणान्वयासंभवान्मत्वर्थलक्षणावश्यं स्यादेव । अतएव यत्र सोमेनयजेतेत्यादावुत्पत्तिवाक्ये फलाश्रवणाद्धात्वर्थस्य न करणत्वं । तत्र स्वरूपेण धात्वर्थस्य स्वकरणान्वययोग्यत्वान्मत्वर्थलक्षणां विनैव गुणविशिष्टयागविधिरिति तन्मतस्थितिः । तस्मादिह मत्वर्थलक्षणा दुर्वारेति चेत् सत्यं, अपूर्वस्य स्वतःकृतिसाध्यत्वाभावाद्यागद्वारैवापूर्वस्य कृतिसाध्यतेत्यपूर्वकार्यतानिर्वाहार्थं यागस्यापि साध्यत्वप्रतीतेस्तैरङ्गीकारात्तेन रूपेण स्वकरणान्वयसंभवात्तन्मते मत्वर्थलक्षणा क्वापि न संभवतीत्यत्र तात्पर्यं बोध्यम् । उपपत्तिबलादपि धात्वर्थस्याक्रियात्वमेव स्वीकार्यमित्याह—**युक्तंचैतदिति** । धात्वर्थस्य क्रियात्वेन कारकान्वययोग्यत्वे भावार्थकघञ्प्रत्ययान्तेनाप्यभिधीयमानस्य धात्वर्थस्य क्रियात्वात्कारकान्वयः स्यादिष्टापत्तौ च कन्यया शोक इति घञन्ते हेतुतृतीयोदाहरणं शाब्दिकैः कृतमनुपपन्नं स्यात्तत्रापि करणतृतीयासंभवादिति भावः । **नन्विदमनुपपन्नं** 'कर्तृकर्मणोः कृति' 'कर्तृकरणे कृता बहुल'मित्यादिसूत्रानुसारेण कृदन्तस्थलेऽपि कारकान्वयावश्यंभावेन काष्ठैः पाक इति प्रयोगस्येष्टत्वात् । नच घञ्प्रत्ययेन सिद्धत्वाभिधानात्सिद्धत्वेन प्रतीयमानस्य धात्वर्थस्य कथं कारकान्वय इति वाच्यम् । प्रत्ययेन सिद्धत्वाभिधानेऽपि प्रकृत्या साध्यरूपाभिधानेन तदन्वयोपपत्तेः । उक्तंच 'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ॥ प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ॥ सत्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति । एवंच साध्यरूपस्यापि तस्य लिङ्गसंख्यान्वयसिद्ध्यर्थं घञादिभिस्तस्य तदन्वययोग्यरूपाभिधानमात्रं नतु तावता तस्य कारकान्वयानुपपत्तिः । अन्यथा 'ओदनं भुक्त्वा प्रव्रजति, दर्भतरुणकेनोपघातं जुहोती'त्यात्र्यव्ययकृत्स्वप्याख्याताभावेन कारकान्वयो न स्यात् । कन्यया शोक इत्यादौ तु कारकान्वययोग्यत्वे सत्यपि यदा कन्याया व्यापारो न विवक्षितस्तदा कारकत्वासंभवाद्धेतुत्वेनैवान्वय इत्यभिप्रायेण तदुदाहरणमुपपद्यते । उक्तंच हरिणा 'द्रव्यादिविषयो हेतुः कारकं नियतक्रिय'मिति । 'अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यत' इति चेतिचेत्सत्यम् । यद्यप्येवं तथापि लोके काष्ठैः पाक इति प्रयोगाभावेन धात्वर्थस्याक्रियारूपत्वनिश्चये उक्तं सर्वमपि गौणतया निर्वाह्यमिति ग्रन्थकारस्याभिमानः । **ननु** धात्वर्थसामान्यं भावनेति वक्ष्यमाणत्वेन धात्वर्थस्य क्रियात्वं त्वयाप्यङ्गीकृतमित्यत आह—**तेनेति । अन्योत्पादेति** । भवितुः प्रयोजकव्यापारो भावनेत्युच्यते स च व्यापार आग्नेयादिलक्षणप्रधानप्रयाजादिलक्षणेतिकर्तव्यतात्मक एव । ततश्चास्तिधात्वर्थानां क्रियात्वमित्यर्थः । **ननु** धात्वर्थस्य क्रियात्वमस्तिचेत्तदभिधायकधातुना नाभिधीयत इत्यनुपपन्नमित्याशङ्क्य शब्दशक्तिवैचित्र्यादुपपद्यत इत्याह—**यथाहीति । वस्त्वादीति** । मन्वाख्यातमात्रस्यैव तदभिधायकत्वे भावनाक्रियानि-

भ्यते तथा न धात्वभिहितापि । भावनादिशब्दा अपि न तद्रूपस्याभिधायकाः । अदूरविप्रकर्षमात्रेण तेषामाख्यातपर्यायत्वम् । आख्यातमेव तद्रूपाभिधायीति तेनैव कारकाणामन्वयः । तेन लडादिष्वपि कारकसंबन्धसिद्ध्यर्थमाख्यातस्य भावनावाचित्वमङ्गीकर्तव्यम् । अन्यथा धात्वर्थस्य क्रियात्वापत्तेर-धिकरणमिदमनुपपन्नं स्यात् । भवन्मते चासत्यपि प्रत्ययार्थस्य क्रियात्वे धात्वर्थक्रियासंबन्धित्वा-[1]भ्युपगमात्कारकाणां सुतरां गुणविधित्वमेव स्यात् । अपिच लडादिभिरपि कर्मनामधेयानां करणा-र्थतया समभिव्याहारोऽनुवादवाक्ये दृश्यते 'वाजं वा एषोऽवरुरुत्सते यो वाजपेयेन यजते यद्दर्भ-मयं परिधापयति वाजस्यावरुध्या' इति तद्यदि लडादिषु धात्वर्थ एव क्रिया स्यात्कथं तृतीयान्त-नामधेयसंबन्धः। नह्यात्मैवात्मनः करणं भवति। तथा 'यो राजसूयेन यजते योऽश्वमेधेन यजत' इति। तथा 'तमालभत तेनायजत' इति लङन्तप्रयोगेऽपि दर्शयितव्यम् । अतो यथा वैदिकवाक्यालोच-नेनापूर्वं शब्दार्थं भवन्तोऽनुमन्यन्ते तथा सर्वाख्यातानां करोत्यर्थवचनत्वं विमुक्तलज्जैरनुमन्तव्यम् । तथाहि तत्रैव तृतीयान्तानां नामधेयानां करणसमर्पकतयान्वयो घटते । अन्यथा दुर्घटत्वं स्यादि-त्यास्तां तावत् । तस्मात्सिद्धं नामधेयत्वम् ॥

आग्नेयादीनामनामताधिकरणम् ॥ ७ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः स्युः ॥ ९ ॥

**यदाग्नेयोऽष्टाकपाल इति नाम गुणोऽथवा ॥ नामाग्निहोत्रवन्मैवं नामत्वे देवता नहि ॥ २० ॥**
**मन्त्रोऽपि नेह प्रत्यक्षस्तल्लिङ्गिताद्देवताविधिः ॥ देवद्रव्यविशिष्टस्य विधानादेकवाक्यता ॥ २१ ॥**
**यदाग्नेय इति प्रोक्तं न मानं विध्यसंभवात् ॥ इति चेन्न विशिष्टार्थविधौ सत्यप्रमा कुतः ॥ २२ ॥**

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्यत्राग्नेयशब्दो गुणविधिरुत कर्मनामधेयमिति विचारः । तदर्थं च किमत्र तत्प्रख्यन्यायोऽस्ति नवेति । तत्रानेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते । तस्य तु स्थानक्रमादग्निदैवत्यं याज्यानुवाक्यायुग-

---

ष्पादनादिशब्दानामपि तदभिधायकत्वं न स्यादित्याशङ्कायामिष्टापत्तिरित्याह—**भावनादीति** । कथं तर्हि तेषां तत्पर्या-यत्वमित्यत आह—**अदूरेति** । ननु यत्र प्रधानभूतकार्याभिधायकं लिङादिकं वर्तते तत्र प्रधानभूतकार्यविशेषणतया भिधीयमानभावनयैव कारकान्वयो न धात्वर्थेन । एवंच वाजपेयवाक्येऽपि गुणस्य धात्वर्थान्वयाप्रसक्तेर्युक्तमिदमधिकरण-मित्यत आह—**भवन्मत इति । सुतरामिति** । अनुपसर्जनतया पदेनोपस्थितत्वात्तेनैवान्वयः । ननु प्रत्ययवाच्यकार्य-विशेषणत्वेन लिङादिशब्दाभिधेयभूतभावनया। तस्याः परोपसर्जनत्वेन कारकान्वयानर्हत्वात्। तस्माद्धात्वर्थस्य कारकान्वयार्हत्वे एतदधिकरणविरोधापत्त्या तदनर्हत्वमेव वाच्यमिति लडादिषु कारकसंबन्धार्थं प्रत्ययस्यैव क्रियावाचित्वमङ्गीकर्तव्यमिति भावः । **वाजमिति** । वाजमन्नमवरुरुत्सतेऽवरोद्धुं प्राप्तुमिच्छतीत्यर्थः । **नन्वे**तेष्वधिकारवाक्यस्थभावनालक्षणया तृतीया-न्तनामधेयसमभिव्याहारोपपत्तिरित्यत आह—**अत इति** । यथाच वैदिकप्रयोगबलादपूर्वस्य वाच्यत्वं तथा 'योऽश्वमेधेन यजत'इत्यादिवैदिकप्रयोगबलात्सर्वाख्यातानां भावनावाचित्वमङ्गीकर्तव्यमित्यर्थः । अधिकरणार्थमुपसंहरति—**तस्मादिति** । प्रयोजनं प्रागुक्तरीत्या पूर्वपक्षे दार्शिकविध्यन्तप्राप्तिः, सिद्धान्ते तु सौमिकविध्यन्तप्राप्तिः । सूत्रार्थस्तु—नामधेयत्वेन संभा-विते वाजपेयादौ गुणस्य श्रुतेस्तस्यैव विधानं स्यादिति ॥

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः स्युः ॥ ९ ॥** यथा वाजपेयशब्दस्य नामत्व-मेवमाग्नेयशब्दस्येति प्रत्यवस्थानात्संगतिः । **वाक्यभेदेति** । यद्यप्यनेकगुणविशिष्टकर्मविधौ न वाक्यभेदप्रसक्तिस्तथाप्य-नेकगुणविशिष्टकर्मविधौ विशेषणेष्वनेकगुणेषु आक्षेपलभ्यविधिभेदोऽस्तीति तदभिप्रायेण वाक्यभेदोक्तिः । यद्वा तथात्वे गौरवं तद्दोषपरिहाराय गुणानां पृथगेव विधाने वाक्यभेदः स्यादिति गुणविधिर्न संभवतीत्यत्र तात्पर्यम् । **नन्वेवं** नामधे-यत्वमपि न संभवति नामार्हकर्मविशेषाभावादित्यत आह—**अष्टाकपालेति** । अष्टाकपालद्रव्यस्य भावनायां धात्वर्थानु-रागमन्तरेण करणत्वासंभवादष्टाकपालद्रव्यककिंचिद्धात्वर्थविशिष्टभावनामात्रं विधीयत इत्यर्थो बोध्यः । सच धात्वर्थः 'शिरो वा एतद्यागस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय'मित्यर्थवाद उपांशुयाजादिसमभिव्याहाराद्यागरूपो बोध्यः । यद्वा 'अष्टनः कपाले हविष्युपसंख्यान'मिति हविषि अष्टन आत्वविधानेनाष्टाकपालस्य हविष्ट्वे 'द्विर्हविषोऽवद्यती'ति अवदाने गृहीते तत्संस्कारकोपस्तरणाभिघारणाभ्यां चतुरवत्तत्वेसति चतुरवत्तं जुहोतीति वाक्यावगतहोमरूपो बोध्यः । तेन किंचि-

---

[1] धात्वर्थसंबन्धित्वा.

**लमर्कं संभवति । ततश्च मान्त्रवर्णिकोऽग्निरग्निहोत्रवत्प्राप्त इति तद्वदेव नामधेयत्वम् । उच्यते— 'मन्त्राकाङ्क्षा नचात्रास्ति सत्यामपि न योग्यता ॥ मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत्त्रयम् ॥' नह्यष्टाकपालो भवतीत्येतावता पुरुषव्यापारः कश्चिदुक्तो योऽनुष्ठानाय स्मारकं मन्त्रमपेक्षेत । सत्यामपि तु मन्त्राकाङ्क्षायां पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धायोग्यत्वान्न संबन्धः। यदि यागत्वं मन्त्रसंबन्धात्प्रागेवावगतं स्यात्ततो भवेद्देवतावाचिमन्त्राभिधायिना मन्त्रेण संबन्धः। नतु तदस्ति । देवतासंबन्धात्प्राक् प्रत्यक्षयागाश्रवणात् । नचात्र वाचनिको मन्त्रः येनाधारवद्बला- न्मान्त्रवर्णिकी देवता स्यात् । अग्निहोत्रे तु होमस्य पुरुषव्यापारस्य श्रवणादस्ति मन्त्राकाङ्क्षा । योग्यश्च होमो देवताभिधायिना मन्त्रेण संबन्धुं । वाचनिकश्च तत्र मन्त्रः । तेन युक्तं मान्त्रवर्णिकदेवताकल्पनम् । इहतु मन्त्रसंबन्धस्याकाङ्क्षायोग्यत्ववशेन कल्प्यत्वान्न प्राग्यागत्वसिद्धिरस्तीति देवतासंबन्धेनैव यागो लब्धव्य इत्याग्नेयशब्देनैव देवताभिधातव्या । विशिष्टकर्मविधानाक्षार्थादनेकेषामपि गुणानां विधिः सिद्ध्यतीति न वाक्यभेदः ॥**

---

द्धात्वर्थावगमेऽपि तस्य देवताप्रकाशनमन्त्रान्वययोग्ययागत्वादिना प्रतीत्यभावेन तत्र तादृशमन्त्रानन्वयात्र मन्त्रवर्णतो देवताप्राप्तिरिति शङ्काया अनवकाशः । **नन्वेवमपि** कथमाग्नेयशब्दस्य नामधेयत्वं तत्र विधित्सिताग्निदेवतालक्षणगुणस्यान्यतोऽप्राप्तेः । नच मन्त्रवर्णात् प्राप्तिः । वाचनिकमन्त्रविनियोगाभावात् । नच यथासंख्याम्नानलक्षणक्रमप्रमाणेन मन्त्रविनियोगः संभवति । तैत्तिरीयशाखायां द्वितीयकाण्डे प्रथममग्नीषोमीयस्य विधिः पश्चादाग्नेयस्य हौत्रकाण्डे च प्रथममाग्नेयस्य याज्यानुवाक्यायुगलं पश्चादग्नीषोमीययाज्यानुवाक्यायुगलमिति क्रमस्यैवाभावादित्यतआह—**तस्येति** । वाजसनेयिशाखायां प्रथममाग्नेयस्य पश्चादग्नीषोमीयस्याम्नानमित्यस्ति मन्त्रविनियोग इति भावः । नन्वेवमपि तद्धितसद्भावे मन्त्रवर्णतो देवताप्राप्तिरयुक्तेति गुणविधिरेव किं न स्यादित्यत आह—**ततश्चेति** । प्रागुक्तविशिष्टविधिगौरवादिप्रसङ्गादिह तद्धितो न देवताप्राप्तिक्षम इति भावः । **नहीति** । अष्टाकपालो भवतीत्यष्टाकपालकर्तृकभवनमात्रं प्रतीयते न कश्चित्पुरुषव्यापारः । पुरुषव्यापारश्रवणे चानुष्ठानाय मन्त्रापेक्षा स्यात्, अष्टाकपालव्यापारश्रवणे तु न पुरुषस्य तदनुष्ठानाय मन्त्रापेक्षेत्यर्थः । **नन्वष्टा**कपालभवनस्य भावनां विनानुपपत्तेर्भावनाया विधेयत्वावगमे सति अष्टाकपालद्रव्यस्य धात्वर्थानुरागमन्तरेण भावनान्वयासंभवाद्धात्वर्थस्य वक्तव्यत्वेन स एव पुरुषव्यापारो मन्त्रमपेक्षतामित्यत आह—**सत्यामपीति** । उक्तरीत्या धात्वर्थापेक्षायां स धात्वर्थस्ते पश्यन् पुरोडाशं कर्मभूतं सर्पन्तमिति वाक्यशेषबलात्पुरोडाशाकृतिनिर्माणरूप एव पर्यवस्यति । सच स्वानुष्ठानाय मन्त्रमपेक्षमाणोऽपि यागरूपत्वाभावेन देवताप्रतिपादकं याज्यापुरोनुवाक्यारूपं मन्त्रं नापेक्षत इति देवताप्रतिपादकस्याग्निर्मूर्धेत्यादियाज्यापुरोनुवाक्यारूपमन्त्रस्य न तेनान्वयसिद्धिरित्यर्थः । **तत इति** । उपांशुयाजवदिति भावः । **नतु तदस्तीति** । नच प्रागुक्तोपांशुयाजसाहचर्यात्तन्निश्चय इति वाच्यम् । 'शिरो वा एतद्यज्ञस्य यदाग्नेय'इत्याग्नेयशब्दस्य कर्मनामत्वे स्थिते ह्याग्नेयशब्दाभिधेयस्य कर्मण उपांशुयाजसाहचर्याद्यागत्वनिश्चयः । यागत्वनिश्चये च मन्त्रान्वयान्मन्त्रवर्णतो देवताप्राप्त्याग्नेयशब्दस्य तत्प्रख्यन्यायेन कर्मनामत्वमिति परस्पराश्रयप्रसङ्गात् । नापि पूर्वोक्तरीत्या धात्वर्थस्य प्रथमं होमत्वनिश्चयः । तथासति चतुरवत्तहोमस्याष्टाकपाले प्रधानकर्मत्वमग्नीषोमीयादौ संस्कारतयाङ्गत्वमिति वैरूप्यापत्तेः । तस्मात्प्रथमं देवताप्रकाशकमन्त्रान्वययोग्ययागत्वाद्यनवगमान्न तत्प्रकाशकमन्त्रान्वय इत्यर्थः । **ननु** प्रथमं यागत्वानिश्चयेऽप्याघारवन्मन्त्रान्वयाद्यागत्वमस्त्वित्यत आह—**नचेति । वाचनिकेति**। 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'तिवचनसद्भावादिति भावः । **इहत्विति** । ततश्च मन्त्रवर्णतो देवतालाभासंभवाद्गौरवमप्यङ्गीकृत्याग्नेयशब्देन देवताविधिः स्वीकार्य इत्यर्थः । **नन्वष्टा**कपालद्रव्यस्याग्निदेवतायाश्च विधाने वाक्यभेदः । नचोभयविशिष्टकर्मविधानान्नायं दोष इति वाच्यम् । यज्यश्रवणेन तदुभयविशिष्टकर्मविध्यसंभवादित्यत आह—**विशिष्टेति** । प्रत्यक्षयज्यश्रवणेऽपि द्रव्यदेवतासंबन्धस्य यागंविनानुपपत्तेस्तदाक्षिप्तो याग एवोभयविशिष्टो विधीयते । विशिष्टविधौ च विशेषणानामार्थिकविधिविधेयत्वे श्रूयमाणविधेरावृत्त्यभावान्न वाक्यभेददोषः । एवंच विशेषणेष्वाक्षेपलभ्यविधिभेदप्रयुक्तं गौरवमगत्या प्रकृते स्वीकार्यमिति भावः । प्रयोजनं पूर्वपक्षे आग्नेयं पयोभवतीत्यत्राग्नेयशब्दस्य कौण्डपायिनामयनगताग्निहोत्रशब्दवदतिदेशकतया चोदनालिङ्गापेक्षया प्रबलेन नामधेयेन, पुरोडाशधर्मप्राप्तिःसिद्धान्ते तु नामत्वाभावादसति नामधेयनिमित्तातिदेशे देवतासामान्यापेक्षया प्रबलेन द्रव्यसामान्येन सान्नाय्यधर्मप्राप्तिः । सूत्रार्थस्तु—स यागो द्रव्यदेवतात्मकगुणौ च विधीयेरन् विधानार्थलिङ्प्रत्यये यागस्यैव द्रव्यस्यैव देवताया एव विधानमिति विशेषाभावादेवमपि यदि विध्यन्तरेण शिष्टाः स्युस्तदैषां विधानं न भवेद्विध्यन्तरविशिष्टत्वाभावे कथं न विधेया भवेयुरिति ॥

---

१ मन्त्रो नाधारवत्.

बर्हिरादिशब्दानां जातिवाचिताधिकरणम् ॥ ८ ॥

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥**

**बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः ॥ जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥ २३ ॥**
**जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ॥ विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः ॥ २४ ॥**
**बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत् ॥ जातेस्तत्र निमित्तत्वात्तद्युक्ता चोदना प्रमा ॥ २५ ॥**

कर्मनामप्रसङ्गाद्द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः सर्वैः प्रयुज्यमानानामसंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं संस्कारनिमित्तता यूपादिवत्, उत जातिवाचितेति चिन्त्यन्ते । तत्र पील्वादिवदश्ववालादिवच्च शास्त्रस्थयाज्ञिकप्रसिद्धिः सार्वलौकिकी चाशास्त्रस्थम्लेच्छकतिपयप्रसिद्धेर्बलीयसीति संस्कारनिमित्ततेति प्राप्ते ब्रूमः । 'अन्वयव्यतिरेकाभ्यामेतेषां जातिवाचिता ॥ व्यभिचारान्न संस्कारनिमित्तत्वं प्रकल्प्यते ॥' नहि शास्त्रस्थाः सर्वलोकस्थाश्च जातिमपहाय प्रयुञ्जते, संस्कारत्वमपहाय जातिमात्रे केचित्प्रयुञ्जते, तेन जातिमेते न व्यभिचरन्ति । व्य-

---

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥** द्रव्यनामविषयविचारस्य कर्मनामविचारप्रस्तावासङ्गतिमाशङ्क्याह—**कर्मनामेति ।** अग्रिमाधिकरणस्यैतदपवादत्वेन तदग्रिमाधिकरणस्य तदतिदेशत्वेन च प्रवृत्तत्वात्तयोरपि न कर्मविचारप्रस्तावसङ्गतिः पृथगवक्तव्येत्याशयेन प्रकृताधिकरणमात्रस्यैव कर्मनामविचारेण सङ्गतिरुक्तेति ध्येयम् । अनेनैव पूर्वत्र पुरोडाशविषयाग्नेयशब्दस्य विचारितत्वात्तत्प्रसङ्गेन पुरोडाशशब्दस्य तत्तुल्ययोगक्षेमतया बर्हिराज्यशब्दयोश्च बुद्ध्युपारूढत्वात्तद्विषयो विचार इदानीं क्रियत इति समनन्तराधिकरणसङ्गतिरपि प्रासङ्गिकीति सूचितम् । **बर्हिराज्येति ।** 'बर्हिषि हवींष्यासादयति । तेऽपश्यन् पुरोडाशं कर्मभूतं । पशोर्वै प्रतिमा पुरोडाशः । धाना, करम्भः, परिवापः, पुरोडाश आज्यस्यैव नः उपांशु पूर्णमास्यां यज'मित्यादौ श्रुतानामिति शेषः । शास्त्रस्थैः सर्वैरित्यनेन वक्ष्यमाणपूर्वपक्षहेतुमिहैव बुद्धिसौकर्यार्थं सूचयति । जातिमात्र इत्यनेन जातेरव्यतिरेकलक्षणः सिद्धान्तहेतुरपि सूचितः । **प्रयुक्तानामिति ।** बर्हिरादाय गावो गताः आज्यं क्रय्यं पुरोडाशेन मे माता प्रहेलकं ददातीत्यादाविति शेषः । **यूपादिवदिति ।** आदिशब्देनाहवनीयादिपरिग्रहः । अनेनैव दृष्टान्तकथनेन यथा यूपं तक्षतीत्यत्र पलाशादिकं तक्षति यूपीकर्तुमिति वचनविपर्ययाङ्गीकरणेन यूपोद्देशेन तक्षणविध्यभावान्नान्योन्याश्रयः, एवमिहापि बर्हिर्लुनाति, आज्यं विलापयति, पुरोडाशं प्रथयतीत्यादिसंस्कारविधिषु दर्भं लुनाति बर्हिःकर्तुं, घृतं विलापयत्याज्यं कर्तुं, पिष्टं प्रथयति पुरोडाशं कर्तुमित्येव वाक्यार्थोऽङ्गीक्रियते न बर्हिराद्युद्देशेन संस्कारविधिः । ततश्च संस्कारवाचित्वपक्षे बर्हिर्लुनातीत्यादिविधिषु बर्हिराद्युद्देशेन संस्कारविधिः, संस्कारविधौ च सति तदर्थकबर्हिरादिशब्देनोद्देश इत्यन्योन्याश्रय इति शङ्काया अनवकाश इति सूचितम् । नच यूपीकर्तुं छिनत्तीत्यत्र किं छिनत्तीत्यपेक्षायां पलाशे बध्नातीतिप्रस्तुतस्य पलाशादेरिव बर्हिःकर्तुं किं लुनातीत्यपेक्षायां दर्भादेरुद्देश्यतयाऽन्वयो न लभ्यते दर्भादेरप्रस्तुतत्वादिति वाच्यम् । 'दर्भैस्तृणीत हरितै'रिति मन्त्रे दर्भाणां प्रस्तुतत्वात् । यत्त्वत्र प्राभाकरैरुक्तं—अयं मन्त्रो न वचनविनियोज्यः किंतु लिङ्गविनियोज्यः । लिङ्गविनियोगश्च बर्हिषा वेदिं स्तृणातीति'बर्हिःस्तरणविधिप्रवृत्तौ भवति । तत्प्रवृत्तिश्च बर्हिःस्तरणप्रकाशके मन्त्रे दर्भाणां स्तरणसाधनत्वोक्तिसामर्थ्यसिद्धदर्भोद्देश्यताकबर्हिर्लवनविध्यधीनबर्हिःशब्दार्थनिर्णये सति भवतीति प्रकारान्तरेणान्योन्याश्रयापत्तिरिति । तन्न । बर्हिषा वेदिं स्तृणातीत्यत्र प्रथमं बर्हिःशब्दार्थानिर्णयेऽपि बर्हिःपदयुक्तस्तरणविधिश्रवणे दर्भकरणकस्तरणप्रकाशनसमर्थमन्त्रश्रवणे संस्कारविधिषु बर्हिःशब्दश्रवणे च सति संस्कारविधिषु यदि मन्त्रोपस्थितान्दर्भानुद्दिश्य संस्कारा विधीयेरन् तदा तैः स्तरणविधिस्तत्र च स्तरणे मन्त्रस्य लिङ्गाद्विनियोगश्च भविष्यतीत्येवंविधतर्केण संस्कारविधिषु दर्भोद्देश्यत्वे तात्पर्यनिश्चयेन संस्कारविधिप्रवृत्त्यन्तरं बर्हिषा वेदिं स्तृणातीति बर्हिःशब्दार्थनिर्णयसद्भावेन स्तरणविधिप्रवृत्त्यनन्तरं मन्त्रस्य लिङ्गात् स्तरणे विनियोगसंभवेनान्योन्याश्रयानवकाशात् । किंच वरदराजीये 'आज्यं विधाय घृतशब्देन बर्हिर्विधाय कुशशब्देन च स्तुतिर्वाक्यशेषे दृश्यते'इत्युक्तत्वेन वाक्यशेषोपस्थितकुशादेरेवोद्देश्यत्वसंभवान्न संस्कारवाक्येष्वन्योन्याश्रयणप्रसक्तिरिति न काप्यनुपपत्तिः । **पील्वादीति ।** पील्वादिषु केवलशास्त्रस्थप्रसिद्धिरश्ववालादिषु तु याज्ञिकप्रसिद्धिरित्यभिप्रायेणोभयोपादानं द्रष्टव्यम् । शास्त्रस्थप्रसिद्धेर्बलवत्त्वे युक्त्यन्तरमाह—**सार्वलौकिकीति ।** अशास्त्रस्था जातिमात्रे न सर्वदेशेषु प्रयुञ्जते । शास्त्रस्थास्तु संस्कृते सर्वदेशेषु प्रयुञ्जत इति सार्वभौमत्वाच्छास्त्रस्य प्रसिद्धेर्बलवत्त्वमित्यर्थः । **अन्वयेति ।** यद्यपि शास्त्रस्थप्रयोगस्यापि संस्कारान्वयव्यतिरेकौ स्तस्तथापीह शास्त्रस्थत्वाशास्त्रस्थत्वौदासीन्येन प्रयोगमात्रस्य जातौ सत्यां बर्हिरादिशब्दप्रयोगस्तदभावेनेत्येवमन्वयव्यतिरेकौ स्तः । संस्कारे तु नैवं प्रयोगमात्रस्यान्वयव्यतिरेकौ । विनापि संस्कारमशास्त्रस्थानां प्रयोगदर्शनेन

१ सार्वत्रिकी. २ धाना भृष्टयवाः. ३ दधिसक्तवः. ४ परिवापोऽपूपः.

भिचरन्ति तु संस्कारम् । अतो जातिवाचिता । नच शास्त्रस्थसर्वलोकविरोधः, तत्रापि जातेरभ्युपगमादित्युक्तम् । नच जातिमात्रे शास्त्रस्थानामप्रयोगादतद्वचनत्वम् । नहि यो यत्र शक्तः स तत्र सर्वैः प्रयोक्तव्यः । तस्माज्जातिवचनाः ॥

प्रोक्षण्यादिशब्दानां यौगिकताधिकरणम् ॥ ९ ॥

## प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

**प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु ॥ तथोक्तेः संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः ॥ २६ ॥**
**अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः ॥ योगः स्यात्क्लृप्तशक्तित्वात्क्लृप्तिर्व्याकरणाद्भवेत् ॥ २७ ॥**

प्रोक्षणीशब्दस्यापि पूर्ववत्सर्वलोकशास्त्रस्थप्रयोगात्संस्कारनिमित्तत्वं प्राप्तमपोद्यासंस्कृतेऽपि क्वचित्प्रयोगादव्यभिचाराज्जातिनिमित्तता प्राप्ता । नचावयवार्थता युक्ता, समुदायप्रसिद्धेर्बलीयस्त्वात् । अवयवद्वारेण हि विशिष्टार्थप्रतीतिर्वाक्यादिव वाक्यार्थप्रतीतिः पदार्थनिमित्ता लाक्षणिकी । समुदायप्रसिद्धौ तु श्रुत्या प्रतीतिरिति सैव बलीयसी । उच्यते—'रूढिर्लब्धात्मिका योगं बाधते नत्वलब्धिका । तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता ॥' यथा वृक्षेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु । तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा ॥ नादृष्टा समुदायस्य शक्तिं कल्पयितुं क्षमा । सन्ति त्ववय-

---

व्यभिचारात् । संस्कारव्यतिरेके प्रयोगव्यतिरेकाभावादित्यर्थः । अनेनैवाभिप्रायेण श्लोकं व्याचष्टे—**नहीति** । ननु शास्त्रस्थप्रसिद्धेर्बलवत्त्वस्य पूर्वपादे व्यवस्थापितत्वात्तया चाशास्त्रस्थप्रसिद्धेर्बाधात्कथं जातिवाचकतेत्यत आह—**नच शास्त्रस्थेति।** शास्त्रस्थप्रसिद्धेर्बलवत्त्वेऽपि विरोधाभावान्नाशास्त्रस्थप्रसिद्धिबाधकत्वं तस्याः । यदिहि शास्त्रस्थाः जातिमपहाय प्रयुञ्जीरन् तदा विरोधः स्यान्न त्वेवमस्ति । तत्रापि जातेरनपगमादित्यर्थः । **उक्तमिति** । संस्कृतेष्वपि जातेरनपगमात्तन्निमित्तातिक्रमो न शक्यो वक्तुमिति वार्तिक इति शेषः । ननु जातिमात्रे शास्त्रस्थानां प्रयोगाभावादस्त्येव विरोध इत्यत आह—**नच जातिमात्र इति । नहीति** । शक्तिविषयमात्रे न प्रयोगनियमः । आलस्यादिना प्रयोगाभावस्य सर्वत्र संभवेन क्वापि शब्दे तथा नियमाभावादित्यर्थः । तथाच शास्त्रस्थानां प्रयोगाभावमात्रान्न विरोध इत्यर्थः । प्रयोजनं संस्कारवाचित्वे बर्हिषा यूपावटमवस्तृणातीति यूपावटास्तरणबर्हिषि समन्त्रकाः लवनादयः, आज्येन यूपमनक्तीति यूपाञ्जनार्थे आज्ये विलापनावेक्षणादयः, रौहिणपुरोडाशादौ समन्त्रकप्रथनादयश्च कर्तव्याः । जातिमात्रवाचित्वे तु न कर्तव्या इति । सूत्रार्थस्तु—असंस्कारे संस्काराभावेऽपि बर्हिराज्ययोः शब्दलाभात्प्रयोगलाभादतच्छब्दः बर्हिरादिशब्दः संस्कारव्यतिरिक्तजातिवाचक इति । अत्र न्यायसाम्यात्सूत्रे बर्हिराज्यग्रहणमुपलक्षणमित्याश्रित्य पुरोडाशोऽप्युदाहृत इति द्रष्टव्यम् ॥

**प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥** दर्शपूर्णमासयोः प्रोक्षणीरासादयतीति श्रुतः प्रोक्षणीशब्दः किमुत्पवनादिसंस्कारनिमित्त उत जातिनिमित्त उत यौगिकः क्रियानिमित्त इति संशये पूर्वाधिकरणपूर्वपक्षरीत्या संस्कारनिमित्तत्वपक्षं तत्सिद्धान्तरीत्या द्वितीयपक्षं चोपपादयति—**प्रोक्षणीशब्दस्यापीति । असंस्कृतेपीति** । प्रोक्षणीभिरुद्वेजिताःस्म इति जातिमात्रेऽपि क्वचिद्देशे प्रयोगादित्यर्थः । पूर्ववदित्यनेनापवादिकी सङ्गतिरिति सूचितम् । ननु प्रपूर्वो'दुक्षसेचने' इति धातोर्ल्युटि व्युत्पन्नस्य प्रोक्षणीशब्दस्य प्रकृष्टसेचनसाधनवाचकत्वं योगेनैव संभवतीति यौगिकत्वमेव न्याय्यमिति सिद्धान्तमाशङ्क्य रथकाराधिकरणन्यायेन परिहरति—**नचेति** । बलीयस्त्वमेवोपपादयति—**अवयवेति** । लाक्षणिकप्रतीतिः शक्त्युपस्थापितमुख्यार्थरूपपदार्थनिबन्धना, एवं वाक्यार्थप्रतीतिरपि तत्तत्पदशक्त्या उपस्थापितपदार्थनिबन्धनत्वाल्लाक्षणिकी । तथावयवद्वारेणार्थप्रतीतिरपि वाक्यार्थतुल्ययोगक्षेमत्वाल्लाक्षणिकी, समुदायप्रसिद्ध्या त्वर्थप्रतीतिः पदश्रवणमात्रनिबन्धनत्वाच्छ्रौतीति समुदायप्रसिद्धेर्बलीयस्त्वमित्यर्थः । रथकारशब्दे 'रथकारस्तु माहिष्यात्करिण्यां यस्य संभवः' इति स्मृत्यारूढः । क्लृप्तत्वाच्च तत्र रूढेर्बलवत्त्वमिह तु रूढेरक्लृप्तत्वान्न बलवत्त्वमिति वैषम्यमित्यभिप्रेत्य सिद्धान्तमाह—**रूढिरिति** । नन्विहापि प्रयोगबलाद्रूढिरवश्यं वाच्येत्यत आह—**तत्रैवेति** । नच योगार्थसंभवेऽपि पङ्कजादिवद्योगरूढत्वमस्त्विति वाच्यम् । पद्मव्यतिरिक्ते द्रव्ये पङ्कजनिकर्तृत्वरूपयोगार्थसद्भावेऽपि पङ्कजशब्दप्रयोगाभावेन तत्र योगरूढ्यङ्गीकारेऽपि आज्यं प्रोक्षणमित्यप्लवात्यभावेऽपि प्रोक्षणशब्दप्रयोगदर्शनेन प्रकृते योगरूढ्यभावादिति भावः । **यथेति** । अश्वस्य करण इति योगस्य वृक्षे संभवादित्यर्थः । उपपन्नत्वादिति प्रयोगप्रत्यययोरिति शेषः । **सन्तीति** । प्रोक्षणीभिरुद्वेजिताःस्म इत्यादौ जातिमात्रे प्रयोगश्च प्रकृष्टोक्षणयोग्यत्वादुपपन्न इति भावः । नन्वेवं घृतादिसाधारणस्यास्य कथमप्गोचरप्रत्ययजनकत्वमत आह—

---

१ जातेरनपगमात्. २ प्रतिपत्तिः. ३ इति भावः. ४ अग्निष्टोमे प्रवर्ग्याख्यमारादुपकारकं कर्म तत्र रौहिणौ पुरोडाशौ यवमयौ तूष्णीं कार्यौ. ५ वैश्यायां क्षत्रियाज्जातो माहिष्यः. ६ शूद्रायां वैश्याज्जातः करिणः.

वार्थाः प्रकृष्टोक्षणहेतुत्वात् ॥ स्त्रीलिङ्गत्वाच्च तेनात्र नात्मानं लभते रूढिः । वाक्यार्थे वाक्यवत् तस्माद्यौगिकः प्रोक्षणीशब्दः ॥

निर्मन्थ्यशब्दस्य यौगिकताधिकरणम् ॥ १० ॥

## तथा निर्मन्थ्ये ॥ १२ ॥

रूढिर्योगो योगरूढिर्वा निर्मन्थ्यस्य वर्तनम् ॥ आद्यौ पूर्ववदन्त्योऽचिरजातेर्नावमीतवत् ॥ २८ ॥

निर्मन्थ्येनेष्टकाः पचन्तीति विषयवाक्यान्निर्मन्थ्यशब्दस्यापि शास्त्रस्य सार्वलौकिकप्रयोगात्संस्कारनिमित्तत्वमव्यभिचाराद्वा जातिनिमित्तत्वमुद्भाव्य प्रसिद्धावयवार्थत्वात्पूर्ववद्यौगिकत्वं साधनीयम् । विशेषस्त्वेतावान्—प्रोक्षणीशब्दो हि सेचनसाधनत्वनिमित्तः । अस्ति चापां सेचनसाधनत्वं सर्वदेति युक्तं यौगिकत्वम् । निर्मन्थ्यशब्दस्तु मन्थनकर्मत्वनिमित्तः । नच निष्पन्नस्याग्नेर्मन्थनकर्मत्वयोग्यतास्ति । निष्पन्नेचाग्नावयं शब्दो लोके प्रयुज्यते निर्मन्थ्यमानय पक्ष्यामह इति । नच भूतपूर्वेण योगेन प्रवृत्तिः, प्रतिक्षणमग्निभेदात् । यो ह्यग्निर्मन्थननिष्पन्नः स तदैव नष्टः अन्यश्चायं पाकायानीयते, सोयमसत्यवयवार्थे प्रयुज्यमानं संस्कारमिव योगमपि व्यभिचरतीति न तन्निमित्तः । जातिं तु न व्यभिचरतीति तद्वाचित्वमेव युक्तमितीमां विशेषाशङ्कां निर्वर्तयितुमतिदेशः क्रियते । भूतपूर्वमपि योगं निमित्तीकृत्य संतानाभिप्रायेण प्रयोगोपपत्तेर्नेहि रूढिरत्यन्तापरिदृष्टा कल्पयितुं शक्यते । तस्माद्यौगिकः ॥

---

**स्त्रीलिङ्गत्वादिति** । एतेषां चतुर्णामपि श्लोकानां वक्ष्यमाणवृत्तिविशेषत्वाल्लक्षणानुसारेण द्वितीयचतुर्थपादयोः गुरूपान्तिमत्वं बोध्यम् । प्रयोजनं च यदा संस्कारवाचित्वं तदा स्त्रीलिङ्गबहुवचनान्तस्यैव संस्कारवाचित्वात्सौमारौद्रचरावाज्यं प्रोक्षणमिति विहिते आज्येऽप्यविकारेण प्रोक्षणीरासादयेत्येव प्रयोगः कर्तव्यः । यदातु जातिनिमित्तकस्तदाज्यत्वजातिप्रकाशनायाज्यमासादयेत्यूहेन प्रयोगः । यदातु यौगिकस्तदा प्रोक्षणमासादयेति लिङ्गवचनोहेन प्रयोग इति द्रष्टव्यम् । सूत्रार्थस्तु—प्रोक्षणीष्ववयवार्थसंयोगाद्योगत्वं ननु समुदायशक्तिरिति ॥

**तथा निर्मन्थ्ये** ॥ १२ ॥ अग्नौ श्रूयते निर्मन्थ्येनेष्टकाः पचन्तीति, तत्र निर्मन्थ्यशब्दः किं संस्कारनिमित्त उताग्नित्वजातिनिमित्त अथवा यौगिक इति संशयेऽस्याधिकरणस्य पूर्वन्यायातिदेशार्थत्वात्तद्वदेव पूर्वोत्तरपक्षावुपपादनीयावित्याह—**निर्मन्थ्यशब्दस्यापीति** । **संस्कारनिमित्तत्वमिति** । निर्मन्थ्यस्याग्नेः संस्कारा आधानप्रकरणे जातं यजमानोऽभिप्राणिति जातमध्वर्युरञ्जलिना गृह्णातीति केचिदाम्नायन्ते । पशुप्रकरणेऽपि जातायानुब्रूहीति प्रेषितेन 'धनंजयं रणेरणे' इति मन्त्रेण प्रकाशनादयः संस्कारा आम्नायन्ते तत्र संस्कारनिमित्तत्वे विनिगमनाविरहादुभयेषां वा आग्न्याधेयिकानां पाशुकानां विकल्पेन वा आतिथ्या चातुर्मास्यादिषु आपस्तम्बसूत्रे पशुवन्निर्मन्थ्य इत्युक्त्या पाशुकानामेव वा निमित्तत्वं बोध्यम् । **अव्यभिचारादिति** । संस्कारविरहितेऽपि निर्मन्थ्यमानय यक्ष्यामह इति जातिमात्रे क्वचित्प्रयोगाद्व्यभिचारान्न संस्कारनिमित्तत्वं किंत्वव्यभिचारादग्नित्वजातिनिमित्तकत्वमित्यर्थः । **प्रसिद्धेति** । निरुपसृष्टान्मन्थतेः 'ऋहलोर्ण्य'दिति व्युत्पन्नस्य योगाग्निर्मन्थनकर्मार्थकत्वमित्यर्थः । ननु तर्हि पूर्वन्यायेनैव सिद्धत्वादतिदेशो व्यर्थ इत्याशङ्क्य विशेषाशङ्कानिराकरणार्थत्वान्न वैयर्थ्यमित्याशयेन विशेषाशङ्कामाह—**विशेषस्त्विति** । **नचेति** । निष्पत्त्यनन्तरं तस्य निष्पत्त्यवस्थान्वयिकर्मत्वनिवृत्तेरिति भावः । ननु निष्पन्नस्याप्यग्नेः पूर्वं निष्पत्तिदशायां कर्मत्वमासीदिति भूतपूर्वगत्या तत्रापि प्रयोग उपपद्यत इत्याशङ्क्याह—**नचेति** । **प्रतिक्षणमिति** । अग्निव्यक्तिर्हि प्रतिक्षणं अधिकतुषकाष्ठादिव्यापनप्रयुक्तपरिमाणभेदेन तदधीनज्वालाभेदनिबन्धनपरिमाणभेदेन च भिद्यते । ततश्च यस्यां व्यक्तौ निर्मन्थ्यशब्दः प्रयुज्यते न तस्याभूतपूर्वस्यापि कर्मत्वं उत्पत्त्यवस्थापन्नव्यक्त्यपेक्षया तस्या व्यक्तेर्भिन्नत्वादित्यर्थः । **संतानेति** । प्रतिक्षणं व्यक्तिभेदेऽपि सन्तानैक्यान्मन्थननिष्पन्नाग्निसंतानपतितत्वेनैकतामापाद्य भूतपूर्वगत्या प्रयोग उपपद्यत इत्येवं यथाकथंचिदवयवयोगेनैवोपपत्तावत्यन्तापरिदृष्टशक्त्यन्तरं रूढ्यात्मकं न कल्पनीयमित्यर्थः । नन्वेवं चिरनिर्मथितस्यापि तादृक्संतानपतितत्वादचिरनिर्मथितत्वलाभो न स्यात् । नचेष्टापत्तिः । संस्कारनिमित्तत्वे संस्कृतेनेष्टकाः पक्तव्याः, जातिनिमित्तत्वे येनकेनचिदग्निना यौगिकत्वे त्वचिरनिर्मथितेनेति भाष्योक्तप्रयोजनासिद्धिप्रसङ्गादिति चेत्सत्यम् । यद्यपि योगश्चिरनिर्मथितसाधारणस्तथापीह निर्मन्थ्येनेष्टकाः पचन्तीत्यनेन निर्मन्थ्योऽग्निर्न विधीयते येन चिरनिर्मथितस्यापि प्रसङ्गः स्यात्, किंतु पाकादेव विशेष्यभूताग्निप्राप्तेर्विशेषणं मन्थनमेव विधीयते तच्च विहितं मन्थनं अङ्गत्वात्प्रयोगमध्ये प्रधानदेशे तत्काले तत्कर्त्रानुष्ठेयमित्यचिरनि-

---

१ संस्कारवाचित्व. २ तस्याग्निमात्रविषयत्वात्.

वैश्वदेवादिशब्दानां नामधेयताधिकरण— ॥

**वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ [न वा प्रकरणात्प्रत्यक्षविधानाच्च नहि प्रकरणं द्रव्यस्य ॥ १४ ॥ मिथश्चानर्थसंबन्धः ॥ १५ ॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥]**

चातुर्मास्याद्यपर्वप्रोक्ताग्नेयाद्यष्टकान्तिके ॥ वैश्वदेवेति शब्दोक्तो गुणः संघस्य नाम वा ॥ २९ ॥
नामत्वे रूपराहित्यादविधिर्गुणता ततः ॥ अग्न्यादिभिर्विकल्प्यन्ते विश्वदेवास्तु सप्तसु ॥ ३० ॥
अनूद्याष्टौ यजेतेति तत्संघे नाम वर्णितम् ॥ अविधित्वेऽप्यर्थवत्स्यान्नाम प्राक्प्रवणादिषु ॥ ३१ ॥
इज्यन्तेऽत्र यजन्ते वा विश्वेदेवा इतीदृशी ॥ निरुक्तिर्न विकल्पः स्यादुत्पत्त्युत्पन्नशिष्टतः ॥ ३२ ॥
गुणनामत्वसंदेहादप्रमा चोदनेति चेत् ॥ नोक्तन्यायेन संघस्य नामधेयत्वनिर्णयात् ॥ ३३ ॥

चातुर्मास्येषु प्रथमे पर्वण्यष्टौ यागाः श्रूयन्ते 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमि'ति। तत्संनिधाविदमाम्नायते 'वैश्वदेवेन यजेते'ति। तत्र संशयः किं यजेतेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः विश्वेदेवा देवताविधीयन्ते किंवा तेषामेव नामधेयमिति। तत्र

---

मथितत्वसिद्धिर्न विरुध्यते। नच पाकेनाग्निमात्रलाभेऽपि निर्मन्थनजन्याग्निर्नियमेन न लभ्यते। अतः सूर्यकान्तादिजन्याग्निव्यावर्तनफलो निर्मन्थनजन्याग्निनियमविधिः संभवतीति कथं विशेषणभूतमन्थनविधिरिति वाच्यम्। मन्थनजन्यत्वं ह्यग्नेरग्नित्वेनैव प्राप्तं नतु तदवान्तरधर्मपुरस्कारेण, निर्मन्थनजन्यत्वग्रहे च सर्वस्याग्नेर्वस्तुतो निर्मन्थनजन्यत्वाभावेऽप्यग्निजातीयस्य कस्यचित्तज्जन्यतामात्रेण सर्वस्याग्नेः सामान्येन तज्जन्यत्वयोग्यता वक्तव्येति निर्मन्थ्यशब्दस्य प्रोक्षणीशब्दस्येव योग्यतामादाय प्रवृत्तस्य सर्वाग्निसाधारण्येन मन्थनजन्याग्निमात्रस्य नियमविध्यनुपपत्तेः। उक्तंच न्यायसुधायां 'अग्निजातीयस्य कस्यचिन्मन्थनजन्यत्वेन शक्त्यवधारणाद्वैद्युतादावप्यग्निजातीयत्वाविशेषेण सामान्यतः शक्तिसंभवेने'ति। किंचाग्निमात्रस्य निर्मन्थनजन्यत्वयोग्यत्वानङ्गीकारे संस्कारवद्योगार्थस्यापि व्यभिचरितत्वादव्यभिचाराज्जातिनिमित्तत्वमेव स्यादिति। केचित्तु सूर्यकान्ताद्यग्निष्वपि क्वचिद्देशे निर्मन्थ्यशब्दस्य प्रयोगमाश्रित्य जातिनिमित्तत्वमिह नाशङ्क्यते येन योगार्थस्य व्यभिचारः स्यात्, किंतु साक्षान्निर्मन्थनाजन्येऽपि निर्मन्थनजन्यसंतानपतिताग्नौ प्रयोगमाश्रित्य तत्र हि साक्षान्निर्मन्थनजन्यत्वाभावेन योगासंभवादव्यभिचाराज्जातिवाचित्वं वाच्यमिति तन्मात्राश्रयणेनापि जातिवाचित्वपक्षोन्मेषसंभवादेवं च सर्वस्याग्नेः सिद्धान्ते क्लेशेन निर्मन्थनजन्यत्वं न वक्तव्यमित्याहुस्तन्न। तथासति निर्मन्थ्येनेष्टकाः पचन्तीत्यस्य निर्मन्थनजन्यसंतानपतिताग्निनियमार्थत्वसंभवेन विशेषणभूतनिर्मन्थनविध्यभावापत्तेरचिरनिर्मथितत्वालाभप्रसङ्गात्। तस्मादग्निमात्रविषयमेव 'निर्मन्थ्यमानय ओदनं पक्ष्यामह' इति प्रयोगमाश्रित्य जातिनिमित्तत्वपक्षप्रवृत्तिर्वाच्या। तथाच सति योगार्थस्याव्यभिचाराय सर्वसाधारण्यं क्लेशेनापि वक्तव्यमेव। एवंच देशविशेषे वैद्युतादिसाधारणप्रयोगाश्रयणेनैव जातिपक्षस्योपपादनीयत्वेसति वैद्युतादिप्रयोगस्य योगेनोपपादयितुमशक्यत्वाज्जातिवाचित्वं वाच्यमित्येवं विशेषाशङ्काया वक्तुं शक्यत्वेऽपि ग्रन्थकारेण यत्र योगस्य प्रसक्तिस्तत्रापि योगस्य व्यभिचारात्सर्वथा यौगिकत्वं न संभवतीत्येवमत्यन्तासंभवितत्वद्योतनाय मन्थनजन्यस्थलएव व्यभिचारप्रदर्शनेन विशेषाशङ्का दर्शितेत्यवधातव्यम्। सूत्रे प्रोक्षणीष्विवेति तथाशब्दार्थः ॥

**वैश्वदेवे विकल्प इतिचेत् ॥ १३ ॥ प्रथमइति।** चातुर्मास्याख्यकर्मणश्चत्वारि पर्वाणि वैश्वदेव–वरुणप्रघास–साकमेध–शुनासीरीयाख्यानि तन्मध्ये प्रथमे पर्वणीत्यर्थः। ननु गुणविधिपक्षे वैश्वदेवशब्दस्य देवताविशिष्टद्रव्यपरत्वात्प्रकृतयागानुवादेन देवताया द्रव्यस्य च विधाने वाक्यभेदः स्यादित्यत आह—**विश्वेदेवा देवता इति।** विश्वेदेवशब्दस्य देवताविशिष्टद्रव्यवाचकत्वेऽपि प्रकृते द्रव्यविशेषस्याश्रवणान्न द्रव्यान्तरविधिः, किंतु प्रकृताष्टाकपालादिद्रव्याण्येवानेन वैश्वदेवपदेनाभिधीयन्ते। तत्रच द्रव्याणामाग्नेयादिवाक्यैरेव प्राप्तत्वादुपसर्जनदेवतामात्रविधानान्न वाक्यभेद इति भावः। ततश्च पूर्वत्र यथा निर्मन्थ्यशब्दे उपसर्जनभूतमन्थनविधिरेवमिहाप्युपसर्जनविधिरिति प्रत्यवस्थानात्संगतिः। एतदवान्तरसङ्गतिलोभादेवेदं कर्मनामविचारप्रकरणे न कृतम्। एवंचामिक्षायां विश्वदेवदेवताकत्वस्योत्पत्तिवाक्यएव प्राप्तेः तद्व्यतिरिक्तेषु सप्तस्वेव हविष्षु देवताविधिरिति ध्येयम्। **किंवेति।** नच वैश्वदेवशब्दस्य देवतातद्धितान्तस्य यजिसामानाधिकरण्यमनुपपन्नं देवतातद्धितस्य सूक्तहविषोर्वार्तिककारेण नियमितत्वादिति वाच्यम् तस्य वार्तिकस्य प्रायिकाभिप्रायकत्वादतएव तेनाज्यभागस्तेन सौम्यः वृधन्वत्याग्नेयस्याज्यभागस्य पुरोनुवाक्या भवतीति। 'यद्वायव्य आज्यभागो भवती'ति श्रुता-

---

१ यागाः समाम्नाताः. २ संभावित.

'नामत्वपक्षे स्याद्वाक्यमेतदनर्थकम् । देवतातो विधेया स्याद्गत्यभावाद्विकल्प्यते ॥' नामत्वपक्षे हि तस्याविधेयत्वाद्यागस्य चारूपत्वेनाविधेयत्वात्समस्तवाक्यानर्थक्यप्रसङ्गः । तस्माद्गुणविधिः । ननु अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरमनवकाशमिति चेन्न, विकल्पसंभवात् । नचाद्यापि सूत्रभाष्यकाराभ्यामुत्पत्तिशिष्टप्राबल्यं कथितमिति तुल्यबलतां मन्यते । ननु च गुणाधिकरणे बलाबलं वक्ष्यते तेन गतार्थमिति चेत् न, आनर्थक्याधिक्यात् । वक्ष्यति हि 'श्रुतिलिङ्गाधिकरणे दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकं भवति ततो विपरीतो बाधो भवती'ति । तदिहाप्यविधीयमाने गुणे समस्तस्यैव वाक्यस्यानर्थक्यप्रसङ्गाद्देवतैव विधातव्या । सा च गत्यभावादुत्पन्नशिष्टाप्युत्पत्तिशिष्टैरग्न्यादिभिर्विकल्पयिष्यत इति । स्यादेतदेवं यदि वाक्यानर्थक्यं स्यात् । तत्त्वनुवादत्वेऽपि समुदा-

---

'वाग्नेयः सौम्यश्चाज्यहविषावाज्यभागा'विति सूत्रे चाज्यभागयागादौ देवतातद्धितप्रयोग उपपन्न इति भावः । **तस्येति ।** नाम्नो विधेयधात्वर्थावच्छेदकत्वेन स्वयं विध्यनर्हत्वादित्यर्थः । अस्तु तर्हि धात्वर्थस्यैव विधेयत्वमित्यत आह—**यागस्येति ।** यद्यप्यव्यक्तत्वेन सौमिकधर्मप्राप्ते रूपलाभः संभवति सौमिकधर्मप्राप्तौ च इन्द्रवाय्वादिलक्षणसर्वदेवताकत्वाद्वैश्वदेवग्रहयज्याभ्यासस्य विश्वदेवदेवताकत्वाद्वा नामधेयत्वमपि संभवति तथापि प्रकृतद्रव्यप्रत्यभिज्ञानान्न कर्मान्तरविधिरित्यादिवक्ष्यमाणयुक्तिभिः धात्वर्थविधानं न संभवतीत्यत्र तात्पर्यम् । ननु गुणपदमात्रश्रवणेऽपि प्रकरणात्प्रकृते कर्मणि गुणविधिरिति ज्ञातुं शक्यत्वेन धातुप्रयोगस्य प्रत्ययानुग्रहमात्रार्थत्वाद्गुणविधिपक्षेऽपि तुल्यमानर्थक्यमित्यत उक्तम्—**समस्तेति** । ननु यजिशब्देन प्रकृतयागाननूद्य गुणविधिरित्ययुक्तम् । अनूद्यमानानां प्रकृतयागानां देवतान्तरविशिष्टत्वेन बुद्धिस्थानां देवतान्तरसंबन्धानर्हत्वादिति शङ्कते—**नन्विति ।** गुणान्तरविशिष्टतयोत्पन्नानामपि निष्कृष्य स्वरूपमात्रानुवादेन गुणविधिः संभवतीत्याशयेन परिहरति—**विकल्पेति ।** ननु प्रथमावगत्यनुसारेणैवानुवादस्थलेऽपि बुद्धिः संभवतीति निष्कृष्यानुवाद एवानुपपन्न इत्युत्पत्तिशिष्टस्य प्रबलत्वाद्विषमशिष्टविकल्पोऽनुपपन्न इत्याशङ्क्याह—**नचाद्यापीति । कथितमिति ।** व्युत्पादितमित्यर्थः । तथाच चित्राधिकरणे भाष्यकारेण तद्व्यवहारेऽपि न दोषस्तस्य तद्व्युत्पादनपरत्वाभावादिति द्रष्टव्यम् । ततश्चात्रैवाधिकरणे उत्पत्तिशिष्टप्राबल्यं व्युत्पाद्यमित्येतदधिकरणपूर्वपक्षे उत्पत्त्युत्पन्नशिष्टयोः समबलत्वमुपपद्यत इति भावः । **नन्विति ।** ततश्चोत्पत्तिशिष्टप्राबल्यं नैतदधिकरणव्युत्पाद्यमिति भावः । नचोत्पत्त्युत्पन्नशिष्टबलाबलमत्र व्युत्पाद्यं गुणाधिकरणे तु तद्धितचतुर्थीबलाबलं व्युत्पाद्यमिति न गतार्थतेति युक्तम् । उत्पत्तिशिष्टप्राबल्ये अत्र स्थिते उत्पत्तिशिष्टामिक्षाया उत्पन्नशिष्टवाजिनाद्बलवत्त्वेन तत्र तुल्यबलतया पूर्वपक्षानन्नुन्मेषप्रसङ्गात्, तस्मादुत्पत्तिशिष्टप्राबल्यं तत्रैव व्युत्पाद्यमित्याशयः । एवं तर्हि अस्तु तत्रैवाधिकरण इदं व्युत्पाद्यम् । नचैवमुत्पत्तिशिष्टप्राबल्यस्य तत्र सिद्धत्वाद्विकल्पाप्रसक्तेरेतदधिकरणपूर्वपक्षानुत्थितिरिति वाच्यम् । उत्पत्तिशिष्टस्यान्यत्र प्राबल्यमङ्गीकृत्यैवैतदधिकरणपूर्वपक्षप्रवृत्तेरुपपादयितुं शक्यत्वादित्याशयेन परिहरति—**आनर्थक्याधिक्यादिति ।** तदेव विवृणोति—**वक्ष्यति हीति । गत्यभावादिति ।** नच सवनीयहविष्षु यथा इन्द्राय हरिवते धाना निर्वपेदिन्द्राय पूषण्वते करम्भं[1] सरस्वत्यै परिवापमिन्द्रायपुरोडाशं[2] मित्रावरुणाभ्यां पयस्यामिति[3] वचनाद्देवतोद्देशेन निर्वापः । एतेषां हविषामिन्द्रमेव यजन्तीति वचनादिन्द्रोद्देशेन याग एवमिहापि 'आग्नेयमष्टाकपालं निर्वपती'त्यादिवचनैरग्न्याद्युद्देशेन निर्वापः । यागस्तु विश्वदेवोद्देशेनेत्युपपत्तेरगतिकत्वाभावात्कथं विकल्प इति वाच्यम् । इहहि आग्नेयमष्टाकपालं निर्वपतीति निर्वापो न विधीयते तस्य चोदकत एव प्राप्तत्वात् । नापि निर्वापे देवताविधिः । तद्धितप्रतिपाद्यदेवताया द्रव्यान्वयित्वेन प्रतीयमानाया निर्वापान्वयितया विधानानौचित्यादस्य वाक्यस्य निर्वापार्थतया देवताविधायकत्वाङ्गीकारे यागविधायकत्वाभावेनाष्टाकपालादीनामनन्वयापत्तेः । नह्यष्टाकपालादीनां निर्वापेऽन्वयः संभवति । तस्माच्चोदकप्राप्तनिर्वापानुवादेनात्र द्रव्यदेवतासंबन्धानुमितयागविधिरेव वाच्यः, किंत्वविशिष्टविधेर्वक्ष्यमाणरीत्याऽसंभवेन प्रकृतयागोद्देशेन देवतामात्रविधिरिति वक्तव्यत्वादाग्नेयादिवाक्येष्वेव यागविधिरित्यवश्यमङ्गीकर्तव्यम् । ततश्चाग्न्यादिदेवताया यागान्वयित्वादवश्यंभावेनागतिकत्वस्यापरिहार्यत्वादिन्द्राय हरिवते धाना इत्यादिषु तु अष्टाकपालादिगुणान्तराश्रवणाच्चतुर्थ्या हरिवदिन्द्रादेर्निर्वापान्वयित्वस्वरसाच्च तत्र निर्वापमात्रे हरिवदाद्यन्वयविधानेऽपि वाक्यस्य चारितार्थ्योपपत्त्या निर्वापे हरिवदादीनामुद्देश्यत्वं न यागे देवतात्वं, यावच्च निर्वापे उद्देश्यत्वबलाद्यागे देवतात्वं कल्पयितुं प्रयत्यते तावत्प्रत्यक्षेणैवषां हविषामिन्द्रमेव यजन्तीति वचनेनेन्द्रस्य देवतात्वमवगम्यत इति तद्विरोधेन हरिवदादीनां न यागे देवतात्वमिति वैषम्यात्तस्मायुक्तमगतिकत्वमिति भावः । सिद्धान्तमाह—**स्यादेतदिति ।** यदि प्राजापत्यवदेकवाक्यचोदिता इमे यागाः स्युस्तदैकश-

---

१ करंभं दधिसक्तवः. २ परिवापमपूपम्. ३ आमिक्षाम्.

यीकरणेनार्थवत् । नहि नानावाक्यचोदितानामाग्नेयादीनामेकशब्दोपादानादृते समुदायभावापत्तिः रेकसंज्ञासंबन्धो वा लभ्यते । सतित्वनुवादे [1]तेनैवैकेन निमित्तेनैकप्रतीत्या रूढानामेकसमुदायत्वमेः कनामधेयत्वं च लभ्यते । ततश्च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्येवमादिषु वैश्वदेवनामकस्याग्नेयादिः यागसमुदायस्य ग्रहणं सिद्धं भवति । इतरथा ह्यामिक्षायागस्यैव वैश्वदेवत्वप्रत्यक्षप्रत्यभिज्ञानात्प्राचीः नप्रवणादिसंबन्धः स्यात् । नन्वनुवादेऽपि श्रुत्यर्थलाभादामिक्षायागस्यैव स्यात् । इतरथा हि वैश्वः देवा[2]वैश्वदेवसमुदाये वैश्वदेवशब्दः छत्रिन्यायेन कल्प्यः स्यात् । न । आनर्थक्यात् । आमिक्षायागस्य हि देशादिसंबन्धोऽसत्यप्यनुवादे लभ्यते । ततश्च तदवस्थमानर्थक्यं स्यात् । वरं चानर्थक्याल्लक्षः णाश्रयणम् । नचावश्यं लक्षणा, वाक्यशेषदर्शितयोगवशेन श्रुत्यैवाष्टानामपि यागानां नामत्वसंभः वात् । एवंहि श्रूयते ‘यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्व’मिति । तदनेन योगेनाष्टानां[3]मपि यागानां नामत्वव्युत्पादनार्थोऽयमनुवादः । सति चानुवादत्वेनाप्यर्थवत्त्वे न देवताविशिष्टयाः गान्तें[4]रविधानमपि शङ्कनीयं गौरवात् प्रकृतप्रत्ययबाधाच्च । अष्टौ हवींषीति चात्यन्तानन्यगतिलिङ्गः विरोधाच्च । तस्मात्समुदायानुवादः । तत्रच यैश्वृ[5]त्वयोगेनैकदेशदेवतात्वेन वा विश्वेषां देवानां समः वायात्तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः ॥

---

ब्दोपादानं विनाप्युत्पत्तिदशायामेव सहोत्पन्नत्वात्समुदायापत्तिः सिद्ध्येदिहतु न तथा संभवतीति प्रदर्शनाय नानावाक्यचोदितानामित्युक्तम् । **सतित्विति** । ततश्च यजेतेत्यनुवादेन समुदायभावापत्तौ वैश्वदेवेनेत्येकसंज्ञासंबन्ध उपपद्यत इत्येकसंज्ञासंबन्धसिद्ध्यर्थत्वादनुवादस्य न वैयर्थ्यमित्यर्थः । **ननु** संज्ञासंबन्धस्य वा किं प्रयोजनमत आह—**ततश्चेति** । वसन्ते वैश्वदेवेन यजेतेत्यादिरादिशब्दार्थः । **नन्व**सत्यपि वैश्वदेवात्मकनामधेयसंबन्धे प्राचीनप्रवणादिवाक्यगतयजिनैवाग्नेयादियागाष्टकानुवादात्तस्य देशसंबन्धोऽस्त्वित्यत आह—**इतरथेति** । नन्वामिक्षायागस्यैव प्राचीनप्रवणादिसंबन्धः स्यादिति दूषणं तुल्यमिति शङ्कते—**नन्विति** । आनर्थक्यमेव विशदयति—**आमिक्षेति** । नन्वानर्थक्यवल्लक्षणापि दोषएवेति कोऽनयोर्विशेष इत्यत आह—**वरंचेति** । अतएव यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येत्यत्र ‘एकादश वै पशोरवदानानि तानि द्विरवद्यती’तिवचनानर्थक्यप्रसङ्गाद्वपाशब्दस्य पाशुकहविर्मात्रलक्षणा स्वीक्रियत इति भावः । अनेनैव यथा ‘य एवं विद्वान् पौर्णमासीं यजते । य एवंविद्वानमावास्या’मिति विद्वद्वाक्ये पौर्णमास्यमावास्याशब्दानुरोधात्कालसंबद्धानामेवानुवादेऽप्यनुवादस्य तेषामेव फलसंबन्धार्थत्वेनानर्थक्याभावात्तत्र पौर्णमास्यमावास्यापदानुरोधात्कालसंबद्धानामेवानुवाद इह तु वैश्वदेवपदानुरोधेऽनुवादानर्थक्यान्न तदनुरोध्यनुवाद इति विद्वद्वाक्यवैषम्यमिति सूचितम् । **नन्वेवं** लक्षणाश्रयणाद्वरं गुणविध्याश्रयणमिति यदि कश्चिद्ब्रूयात्तं प्रत्याह—**नचावश्यमिति** । एवं वाक्यशेषे जाग्रत्यपि वाक्यशेषदर्शितयोगबलेन नामत्वाङ्गीकारे वैश्वदेवशब्दस्य संबन्धसामान्यार्थकतद्धितान्तत्वं स्यात्तच्च प्रतिपदोक्तदेवतातद्धितसंभवेन युक्तम् । तस्माद्यथाकथंचिद्वाक्यशेषो वर्णनीय इत्यभिमानेन पूर्वपक्षप्रवृत्तिर्नानुपपन्नेति ध्येयम् । प्रतिपदोक्ततद्धिताङ्गीकारेण गुणविधिस्वीकारे विषमशिष्टविकल्पापत्तेरेव प्रकृते संबन्धसामान्यतद्धिताभ्युपगमः श्रेयानिति सिद्धान्त्याशयः । **ननु** तर्हि वाक्यशेषदर्शितयोगेनैव यागसमुदायनामतालाभादनुवादानर्थक्यमित्याह—**तदनेनेति** । असत्यनुवादे वाक्यशेषप्रदर्शितयोगेन कुत्रास्य प्रवृत्तिरित्यज्ञानान्न तन्मात्रेण नामतासिद्धिः । सति त्वनुवादेऽनूदितेष्वष्टसु कथं वैश्वदेवनामप्रवृत्तिरित्यपेक्षायां वाक्यशेषप्रदर्शितयोगेन नामप्रवृत्तिः स्वध्यवसानेति वाक्यशेषप्रदर्शितयोगेन नामव्युत्पत्त्यर्थत्वादनुवादस्य न वैयर्थ्यमिति भावः । **ननु** तर्हि विषमशिष्टविकल्पापत्तिदोषाभावाद्देवताविशिष्टकर्मान्तरविधानमस्तु तथापि न नामत्वसिद्धिरित्यत आह—**सति चेति । अष्टौ हवींषीति** । नव प्रयाजा इत्यन्ते नवानूयाजा अष्टौ हवींषि द्वावाघारौ द्वावाज्यभागौ त्रिंशत्संपद्यन्त इति त्रिंशदाहुतिसंपत्तिवाक्येऽष्टौ हवींषीति हविषामष्टत्वं कीर्त्यमानमनुपपन्नं स्यात्कर्मान्तरविधौ तद्धविषा सहाग्नेयादीनां नवत्वादित्यर्थः । देवतामात्रविधिरिति पक्षेऽपि सर्वेषां विश्वदेवदेवताकत्वे संप्रतिपन्नदेवताकत्वेन सर्वेषां हविषामेकैवाहुतिरित्याहुतीनां त्रयोविंशतिसंख्यापत्त्या नित्यत्रिंशत्त्वासंपत्तेरिति ध्येयम् । सूत्रार्थस्तु—वैश्वदेवशब्दे गुणविधानाद्विकल्प इति चेदिति ॥

---

१ तेनैव निमित्तेनैक. २ वैश्वदेवेषु. ३ नाष्टानां नामत्व. ४ न्तरमपि. ५ वृत्त्ययोगेन.

वैश्वानरेष्टत्वाद्यर्थवादताधिकरणम् ॥ १२ ॥

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ [ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥ १८ ॥ तच्छेषो नोपपद्यते ॥ १९ ॥ अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ॥ २० ॥ कारणं स्यादिति चेत् ॥ २१ ॥ आनर्थक्यादकारणं, कर्तुर्हि कारणानि, गुणार्थो विधीयते ॥ २२ ॥**

यद्द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम् ॥ श्रुतमष्टाकपालादि तद्गुणो नाम वा स्तुतिः ॥ ३४ ॥
अन्तर्भावादष्टतादेर्नाम स्यादग्निहोत्रवत् ॥ द्रव्यं द्रव्यान्तरे नो चेद्गुणस्तर्हि फले त्वसौ ॥ ३५ ॥
वाक्यैक्यमुपसंहाराद्विस्पष्टं तत्तु बाध्यते ॥ नानागुणविधौ तस्मादंशद्वारांशिसंस्तुतिः ॥ ३६ ॥
अगुणत्वादनामत्वादमन्त्रत्वादनन्वये ॥ अष्टत्वाद्यप्रमाणं चेन्नार्थवादतयान्वयात् ॥ ३७ ॥

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इत्युक्त्वा 'यदष्टाकपालो भवति गायत्र्येवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन्नि'त्यादि श्रूयते । तत्र विचारः किमष्टाकपालादिशब्दाः प्रकृतस्य वैश्वानरयागस्य नामधेयं, उत तत्रैव गुणविधिः, अथवा फले गुणविधिः, किंवार्थवाद इति । तदर्थंच किं गुणविधिपक्षे सर्वेषामष्टाकपालादीनामुत्पत्तिशिष्टता संभवति, किंवा सर्वेषामुत्पन्नशिष्टता, अथवा द्वादशकपाल उत्पत्तिशिष्टोऽन्ये तूत्पन्नशिष्टा इति । तत्र वैश्वानरसामानाधिकरण्यादष्टत्वादीनां द्वादशसु प्राप्तेस्तत्प्रख्यन्यायेन नामधेयत्वमाशङ्क्य द्रव्यवचनत्वाद्यागसामानाधिकरण्याभावात्तत्प्रख्यत्वाभावाच्च गुणविधिः । तथाहि यद्यपि द्वादशस्वष्टौ विद्यन्ते तथापि न द्वादशकपालेऽष्टाकपालः समस्ति । यो ह्यष्टसु कपालेषु संस्कृतः पुरोडाशः सोऽष्टाकपालः । नच पुरोडाशे पुरोडाशान्तरमस्ति । नच द्वादशकपाल एवाष्टसु संस्कृत इति शक्यते वक्तुम् । अष्टानां तत्र सापेक्षत्वात् । अष्टभिश्चतुर्भिश्चासौ संस्कृतो न केवलैरष्टभिः । ततश्चासामर्थ्यात्तद्धितानुपपत्तिः ।

---

**पूर्ववन्तो विधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ इत्यादीति** । आदिशब्देन 'तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती'त्यन्तं गृह्यते । नामधेयमित्याद्येकवचननिर्देशः प्रत्येकाभिप्रायो द्रष्टव्यः । **तदर्थमिति** । कर्मणि गुणविध्यादिपक्षद्वयार्थमित्यर्थः । अत्र तत्रेत्यतः प्राक्तनवाक्येनैव कोटिः प्रतिपाद्यते । ततश्च किं सर्वेषां समशिष्टत्वमुत विषमशिष्टत्वमिति संशयस्य पर्यवसितोऽर्थो बोध्यः । तत्र सर्वेषामुत्पत्तिशिष्टतया उत्पन्नशिष्टतया वा समशिष्टत्वे कर्मणिगुणविधिः, द्वादशकपालस्योत्पत्तिशिष्टत्वमन्येषामुत्पन्नशिष्टत्वमित्येवं विषमशिष्टत्वे तु फलाय गुणविधिः सिद्ध्यतीति फलफलिभावो बोध्यः । द्वादशकपाल उत्पत्तिशिष्टोऽन्येतूत्पन्नशिष्टा इत्यनेनैव गुणविधिपक्षे एकवाक्यत्वासंभवस्य स्फोरणात्तत एवार्थवादत्वसिद्धेरर्थवादत्वकोटिसिद्ध्यर्थं न कोट्यन्तरोपन्यासः कृतः । नामधेयपक्षस्य सूत्रभाष्यानारूढत्वेऽप्यतिस्थूलत्वेऽपि च पादसङ्गत्यर्थमाचार्योक्तस्योपन्यासमात्रमिह कृतमिति तदर्थं न कोट्यन्तरोपन्यासः कृत इति ध्येयम् । **तत्रेति** । वैश्वानरं द्वादशकपालमिति द्वितीयान्तो वैश्वानरशब्दः प्रथमान्ततया विपरिणतोऽष्टाकपालादिवाक्येष्वनुषज्यते । सचानुषक्तो वैश्वानरशब्दो वैश्वानरदेवताकप्रकृतयागपर इति तत्सामानाधिकरण्यादष्टाकपालादिषु विधित्सिताष्टत्वादीनां सहस्रे शतन्यायेन द्वादशसु सद्भावाद्द्वादशकपालविधिनैव प्राप्तेस्तत्प्रख्यन्यायान्नामत्वमित्यर्थः । **द्रव्येति** । वैश्वानरशब्दस्य द्वितीयान्तस्य द्वादशकपालसामानाधिकरण्येन द्रव्यपरत्वादष्टाकपालादिवाक्येष्वनुषक्तस्यापि तस्य द्रव्यपरत्वस्यैव वक्तव्यत्वेनाष्टाकपालादिवाक्येषु यागवाचकशब्दाभावादष्टाकपालादिशब्दानां द्रव्यवचनत्वादर्शआदित्वेन मत्वर्थीयाच्प्रत्ययान्तत्वकल्पने प्रमाणाभावाच्च यागसामानाधिकरण्याभावान्न नामत्वमित्यर्थः । तत्प्रख्यत्वाभावमुपपादयति— **तथाहीति । नच पुरोडाश इति** । ततश्च द्वादशमध्येऽष्टसद्भावेऽपि अष्टाकपालशब्देन विधित्सितस्याष्टसु कपालेषु संस्कृतपुरोडाशरूपगुणस्य द्वादशकपालविधिनाऽप्राप्तेर्न तत्प्रख्यत्वमित्यर्थः । ननु पुरोडाशान्तराभावेऽपि द्वादशकपालस्यैवाष्टसु संस्कृतत्वादस्ति द्वादशकपालविधिस्तत्प्राप्तिरित्यत आह—**नच द्वादशेति । अष्टभिरिति** । यद्यपि 'संस्कृतंभक्षा'इत्यत्र 'तत्रोद्धृतममत्रेभ्य'इत्यतः तत्रेत्यधिकारादष्टस्विति वक्तुं युक्तं तथाप्यधिकरणस्यैव साधकतमत्वविवक्षया तृतीयानिर्देशो बोध्यः । **ततश्चेति** । सापेक्षमसमर्थमित्यष्टानां चतुरपेक्षाणामसामर्थ्यात् 'समर्थानां प्रथमाद्वे'ति सामर्थ्यापेक्षस्तद्धितोऽष्टाकपालशब्दान्न स्यादित्यर्थः । तद्धिताभावादेव तद्धितार्थे विषयभूते विधीयमानः समासोऽपि न स्यादिति भावः ।

तस्मात्प्राप्त्यभावान्न तत्प्रख्यत्वम् । अतएव नार्थवादत्वम् । नह्यविहितस्याष्टाकपालस्य स्तुतिः संभवति तस्माद्गुणविधिः । अष्टाकपालद्रव्यमष्टत्वसंख्या वा वैश्वानरयागे विधीयते । नचोत्पत्तिशिष्टद्वादशकपालविरोधादविधानं, सर्वेषामुत्पत्तिशिष्टत्वात् । एकं हीदं वाक्यं वैश्वानरं द्वादशकपालं निर्वपेदित्यादि यस्मिञ्जात एतामिष्टिं निर्वपतीत्येवमन्तमेकोपक्रमावसानत्वात्तन्मध्ये चाष्टत्वादयः श्रुताः सर्व एवोत्पत्तिशिष्टाः संभवन्ति । यद्वा सर्व एवोत्पन्नशिष्टा वैश्वानरं द्वादशकपालमिति देवताविशिष्टयागविधानात् । तत्र यदष्टाकपाल इत्यादिभिर्वाक्यान्तरैर्वैकल्पिकद्रव्यविधानम् । उपक्रमे तु द्वादशकपालशब्दो गुणवाक्यप्राप्तद्रव्योपलक्षणार्थो न विवक्षितः । विवक्षितत्वे त्वष्टाकपालादीनामानर्थक्यं स्यात्, तस्माद्गुणविधिः । उच्यते—'उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते । सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते ॥' अर्थवादत्वे ह्येकवाक्यत्वं सिद्ध्यति, त्वत्पक्षे तु नानागुणविधानेनार्थभेदाद्वाक्यभेदः स्यात् । किंच निर्वपतिनात्र कर्मविधानं सच द्वितीयान्तेनैव द्वादशकपालेन संबध्यते न प्रथमान्तैरष्टाकपालादिभिः । ततश्च द्वादशत्वमुत्पत्तिवाक्यशिष्टत्वादितरेभ्यो वाक्यान्तरविहितेभ्यो बलवत्स्यात् । 'नचाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत् ॥ न द्वादशकपालस्य ह्यविवक्षोपपद्यते ॥' वैश्वानरसामानाधिकरण्याद्द्वितीयान्तं द्वादशकपालपदं निर्वपतिसंयुक्तं नाविवक्षितं विना कारणेन कल्पयितव्यम् । अष्टत्वादीनामन्यथाप्युपपत्तेः । तस्मादुत्पत्तिशिष्टं द्वादशकपालत्वमितीतरेषां कर्मणि

---

तस्मादिति । नचाष्टाकपालशब्देन विधित्सितो गुणो नाष्टसु कपालेषु संस्कृतपुरोडाशरूपो येनोक्तदोषः स्यात् किंतु अष्टत्वसंख्यैव, साच प्राप्तैवेति वाच्यम् । अष्टत्वसंख्यापि विधीयमाना परिच्छेदकत्वेनैव विधेया नच द्वादशानामष्टत्वसंख्या परिच्छेदिकेति परिच्छेदकत्वेन, विधित्सिताष्टत्वप्राप्त्यभावस्य तथाप्यपरिहार्यत्वात् । तस्मान्नकथंचिदपि तत्प्रख्यत्वसंभव इति भावः । अतएवेति । द्वादशकपालविधेरष्टाकपालविषयकत्वाभावादेवेत्यर्थः । नहीति । 'विधाना त्वेकवाक्यत्वा'दिति स्तुतिमात्रस्य विध्येकवाक्यतानियमादिति भावः । द्रव्यस्य कपालानां च वैश्वानरवाक्येनैव प्राप्तिं मन्वान आह—अष्टत्वसंख्या वेति । यद्यप्यष्टत्वं चोदकतः प्राप्नोति तथापि नवत्वादिसंख्यया बाधो माभूदित्यष्टत्वसंख्यापि विधेयेति भावः । उत्पत्तिशिष्टद्वादशकपालावरोधादित्युपलक्षणम्, तादृशद्वादशत्वसंख्यावरोधादित्यपि द्रष्टव्यम् । ननु द्वितीयान्तस्य द्वादशकपालस्य प्रथमान्तानामष्टाकपालादीनां चैकस्मिन्वाक्ये समावेशानुपपत्तेः कथं सर्वेषामुत्पत्तिशिष्टत्वमित्याकाङ्क्षायां तदेवोपपादयति—एकंहीति । प्रथमान्तानामष्टाकपालादीनां द्वितीयान्ततया विपरिणामे सति वैश्वानरमष्टाकपालं नवकपालं दशकपालं एकादशकपालं द्वादशकपालं निर्वपेदित्येवं सर्वेषामेकस्मिन्वाक्ये समावेशात्सर्वेषामुत्पत्तिशिष्टत्वमित्यर्थः । तत्र चाष्टाकपालादीनां परस्परसंबन्धानादरेण वैश्वानरशब्दान्वयेसति प्राजापत्यन्यायेन द्रव्यदेवतासंबन्धभेदेन यागभेदादष्टाकपालादिद्रव्यकाः पञ्चयागा विधीयन्त इति ध्येयम् । एवंचाष्टत्वादय इत्यस्याष्टाकपालादय इत्यर्थो बोध्यः । यदितु क्लेशेनाष्टाकपालादीनां परस्परसंबद्धानां वैश्वानरशब्दान्वयः स्वीक्रियते तदैकस्मिन्नेव द्रव्ये तत्संस्कारार्थं कपालगताष्टत्वादिसंख्याविधिरपि संभवतीत्यभिप्रायेण यथाश्रुतार्थोऽष्टत्वादय इति शब्दो बोध्यः । ननु अष्टाकपालादिशब्दानां द्वितीयान्ततया विपरिणाम एव दोषः, किंचाष्टाकपालादिवाक्यगतानां यदि द्वितीयान्तत्वमिष्यते तदा भवतीत्यस्य गायत्र्यैवैनमित्यादेश्चानन्वयः स्यादष्टाकपालादिवाक्यगतानां प्रथमान्तत्वमेव स्वीकृत्याष्टाकपालादिशब्दानामावृत्तिमङ्गीकृत्य द्वितीयान्तत्वाङ्गीकारे आवृत्तिरेव दोष इत्यस्वरसादाह—यद्वेति । वैकल्पिकद्रव्यविधानमित्युपलक्षणम् । वैश्वानरवाक्ये देवतामात्रविशिष्टयागोत्पत्त्यभ्युपगमेऽपि तस्य यागस्यैकदेवताकत्वात्तद्धितेन देवतानिर्देशान्निर्वपतिसाम्याच्चाग्नेयविध्यन्तप्राप्तौ द्रव्यस्य कपालानां च प्राप्तेरस्मिन्नपि पक्षेऽष्टत्वादिसंख्यामात्रविधानस्यापि संभवादिति ध्येयम् । ननु वैश्वानरवाक्ये द्वादशकपालस्यापि श्रूयमाणत्वात्कथं देवतामात्रविशिष्टयागविधिरित्यत आह—उपक्रम इति । गुणेति । गुणवाक्यप्राप्ताष्टाकपालादिसर्वद्रव्योपलक्षणार्थो नतु द्वादशकपालत्वलक्षणत्वार्थमात्रपर इत्यर्थः । कर्मणिगुणविधिपक्षं दूषयति—उच्यत इति । तत्र प्रथमं सर्वेषामुत्पत्तिशिष्टत्वं दूषयति—उत्पत्तीति । ननु कलापगुणविधिपक्षेऽपि वाक्यभेदस्तुल्य इत्याशङ्क्य कलापगुणविधिवादी नेह कर्मणि गुणविधिपक्षदूषकः येन दोषसाम्यं स्यात् किंतु सिद्धान्ती, ततो न दोषसाम्यमित्याशयेन श्लोकं व्याचष्टे—अर्थवादत्वे हीति । निर्वपतिनेति । निर्वपतिपरप्रत्ययेनेत्यर्थः । सचेति । निर्वपतिरित्यर्थः । न प्रथमान्तैरिति । द्वितीयान्ततया विपरिणामपक्षः प्रागेव दूषितः । न द्वादशकपालस्येति । उपक्रमगतस्येति शेषः । नन्वष्टाकपालादीनामानर्थक्यापत्तेरुपक्रमगतद्वादशकपालस्याविवक्षेत्युक्तमित्यत आह—अष्टत्वादीनामिति । अन्यथेति । वक्ष्यमाणरीत्या तु

---

१ वाविधीयते. २ वाक्यगतत्वादितरे. ३ कारणं,

विधानासंभवात् । अथ ब्रह्मवर्चसादिफलार्थत्वेन वैश्वानरयागमाश्रित्याष्टत्वादिविधानम् । काम्यो हि गुण उत्पत्तिशिष्टबाधेनापि शक्यते विधातुमिति प्राप्तेऽभिधीयते—'फलार्थेषु गुणेषु स्याद्वाक्यभेदोऽर्थभेदतः । उपक्रमोपसंहारसाम्याद्यात्रैकवाक्यता ॥' 'वैश्वानरं द्वादशकपाल'मिति यैवेष्टिरुपक्रान्ता तामेव यस्मिञ्जात एतामिष्टिं निर्वपतीत्युपसंह्रियमाणामन्ते पश्यन्तो न तन्मध्ये वाक्यान्तरमवगन्तुमीश्महे । फलेभ्यश्च गुणेषु विधीयमानेषु स्फुट एव वाक्यभेदोऽर्थभेदात् । तस्मादर्थवादत्वम् । अवयवद्वारेणावयविस्तुतिः । द्वादशकपालावयवो हि योऽष्टासु कपालेषु संस्कृतः सोऽष्टाकपालपुरोडाशसादृश्यात् गौण्या वृत्त्याष्टाकपाल इत्युच्यते स्तोतुं तस्मादर्थवादः ॥

यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थत्वाधिकरणम् ॥ १३ ॥

## तत्सिद्धिः ॥ २३ ॥

**यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ॥ सामानाधिकरण्येन स्यादेकस्यान्यनामता ॥ ३८ ॥**
**गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ॥ अंशांशित्वाद्यभावेन पूर्ववन्नात्र संस्तुतिः ॥ ३९ ॥**
**अर्थभेदादनामत्वं गुणश्चेत्प्रहियेत सः ॥ यागसाधकताद्वारा विधेयप्रस्तरस्तुतिः ॥ ४० ॥**

'यजमानः प्रस्तरः' 'यजमान एककपाल'इत्यत्र नामधेयगुणविध्यर्थवादसंदेहे सामानाधिकरण्या-

---

त्यर्थत्वेनेत्यर्थः । **ननु** द्वादशकपालस्योत्पत्तिशिष्टत्वेऽपि अष्टाकपालादीनां गुणविधित्वं नानुपपन्नं, फलायगुणविधिसंभवादिति फलायगुणविधिपक्षमुत्थापयति—**अथ ब्रह्मवर्चसेति** । अत्र यद्यपि विध्यश्रवणे समीहितसाधनत्वाप्रतीतेः समभिव्याहारमात्रकल्प्यसाधनत्वस्यौदुम्बराधिकरणे निरस्तत्वात्कमिपदाश्रवणे समभिव्याहारकल्प्यसाध्यत्वस्य पर्णमय्यधिकरणे निरसिष्यमाणत्वाच्च फलायगुणविधिपक्षस्योन्मेषएव नास्ति तथापि 'गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाती'त्यादीनां स्तावकत्वमङ्गीकृत्य तादृशस्तुतिबलादष्टाकपालो भवती'त्यादेर्विधित्वकल्पने उत्पत्तिशिष्टगुणावरोधात्कर्मणिगुणविध्यसंभवे च सति पूतएव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवतीत्युपसंहारे कीर्त्यमानानां पूतत्वादीनां कमिपदराहित्येऽपि क्रमेणाष्टाकपालादिफलत्वकल्पनेन कथंचित्फलायगुणविधिपक्ष उपपादनीय इति भावः । **ब्रह्मवर्चसादीति** । ब्रह्मवर्चसहेतुकपूतत्वादिफलार्थत्वेनेत्यर्थः । **ननु** उत्पत्तिशिष्टगुणावरोधे कथं फलायवा गुणविधिरित्यत आह—**काम्य इति** । 'पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधक'मिति तार्तीयन्यायादिति भावः । **गुणेष्विति** । विधीयमानेष्विति शेषः । **ननु** महावाक्यविधया एकवाक्यतापन्नेष्वेव दर्शपूर्णमासादिषु गोदोहनादिविधिदर्शनादीदृशो वाक्यभेदो न दोष इत्यत आह—**उपक्रमेति** । दर्शपूर्णमासादिषु आग्नेयादिवाक्यैः कर्मविधौ पर्यवसिते वाक्यान्तरेण फलायगोदोहनादिविधिरिह तु वैश्वानरविधेः पशुमान्भवतीत्यन्ते पर्यवसानम् । उपक्रमोपसंहाराभ्यां तावत् एकवाक्यत्वावगमात् । ततश्चावान्तरवाक्यस्यैवात्रापर्यवसानात्फलायगुणविधिर्न संभवतीत्यस्ति वैषम्यमिति भावः । अनेनैवाभिप्रायेण श्लोकं व्याचष्टे—**वैश्वानरमिति** । **तामेवेति** । अनेन पूतत्वादीनां प्रधानेष्टिगततया कीर्त्यमानानां तदाश्रिताष्टाकपालादिफलत्वकल्पनमत्यन्तक्लिष्टमिति सूचितम् । **ननु** अविहितस्य स्तुत्ययोगादर्थवादत्वमपि न संभवतीत्युक्तमित्यत आह—**अवयवेति** । यथा मुखादिस्तुत्या कामिनीस्तुतिस्तद्वदित्यर्थः । **नन्वष्टाकपालादिपुरोडाशानां** द्वादशकपालपुरोडाशावयवत्वाभावादवयवद्वारापि न स्तुतिसंभव इत्यत आह—**द्वादशकपालावयवो हीति** । अष्टाकपालादिशब्दैरष्टाकपालादिपुरोडाशसदृशानो द्वादशकपालावयवानामेवात्र निर्देशात् तत्स्तुत्या चेदृशोऽयं द्वादशकपालः प्रशस्तः यत्तदवयवाष्टाकपालादिभिरेव ब्रह्मवर्चसहेतुकपूतत्वादिसिद्धिरित्येवमवयविद्वादशकपालस्तुतिरुपपद्यत इत्यर्थः । सूत्रार्थस्तु—पूर्ववन्तः पूर्वप्राप्तिमन्तः वैश्वदेवादिशब्दाः खलु गुणविधानार्था न भवन्ति अस्मिंस्त्वष्टाकपालादिसमाम्नाये तत्सामर्थ्यं स्यादिति । एवंच वैश्वदेवादिशब्दवैषम्येण प्रत्यवस्थानात्संगतिरिति द्रष्टव्यम् ॥

**तत्सिद्धिः ॥ २३ ॥** जातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः । **सामानाधिकरण्यादिति** । ननु नामधेयत्वपक्षे नाम्नो विधेयत्वाभावाद्विधेयान्तराभावाच्च वाक्यानर्थक्यम् । नचेदृङ्नामकत्वात्प्रशस्तोऽयमिति स्तावकतयार्थवत्त्वं शङ्कनीयम् । अर्थवादपक्षादविशेषप्रसङ्गादितिचेन्नैवम् । 'प्रजा वै बर्हिः यजमानः प्रस्तरः' इति सामानाधिकरण्यात्प्रजाशब्दस्य बर्हिर्नामत्वे यजमानशब्दस्य प्रस्तरनामत्वे च सति यजमाननामकप्रस्तरस्य प्रजानामकबर्हिरुपरि भावकरणेन प्रसिद्धं यजमानस्यायजमानादुत्तरत्वं भवतीत्येवंरूपा उत्तरं बर्हिषः प्रस्तरं सादयतीति विधेया स्तुतिः सा सामंजस्येनोपपद्यत इति स्तुतिविशेषत्वेन नामधेयस्यानर्थक्याभावात् । एवंचार्थवादपक्षे साक्षादेव स्तुत्यर्थत्वं नामधेयपक्षे तु परम्परयेति तदपेक्षया भेदः । इदं च स्तुतिविशेषपरतया सार्थक्यं प्रस्तरशब्दस्य यजमाननामत्वे न संभवतीत्यस्वरसाद्वाह

---

१ संभवः. २ गुणविधिनामधेयार्थवाद.

देकमितरस्य नामधेयं प्रस्तरशब्दो वा यजमानस्य यजमानशब्दो वा प्रस्तरस्येति शङ्का। भिन्नार्थत्वेन तु प्रसिद्धत्वान्नैकमपीतरस्य नामधेयम्। नचार्थान्तरवचनेनार्थान्तरस्य स्तुतिर्भवति । अष्टाकपालादिभिस्त्ववयवद्वारेण द्वादशकपालस्य स्तुतिर्युक्ता। नच प्रस्तरावयववचनो यजमानशब्दः येन स्तुतिः स्यात्। तस्मादन्यतरस्य कार्येऽन्यतरस्य विधानाद्गुणविधिः। तत्रापि यजमानस्य मुख्यत्वाच्छ्रुतिवृत्तो यजमानः प्रस्तरशब्दलक्षिते स्रुग्धारणादौ कार्ये विधीयते तस्माद्गुणविधिः । नैतदेवं, यजमानस्य हि स्रुग्धारणादौ विनियुक्तस्य स्वपदार्थकरणविरोधात् । प्रस्तरवच्च सूक्तवाक्येन प्रहरणादेककपालवच्च सर्वहुतकरणात्सर्वतन्त्रविलोपः स्यात् । तस्मादर्थवादः । कथं परशब्देन परस्य स्तवनं सामानाधिकरण्यं च गुणादिति ब्रूमः। कथमगुणवचनो गुणमभिदध्यात्, नाभिदधाति किंतु स्वार्थसंबन्धेन बोधयति। यजमानशब्दो हि स्वार्थमभिधत्ते स चाभिहितः स्वसमवेतं स्वकार्यकरत्वं संबन्धाद्बोधयति तच्च प्रस्तरेऽप्यस्तीति प्रस्तरबोधः । एवं स्वार्थसदृशे तद्गुणशालिनि तात्पर्यं भजमानो

—**यजमानशब्दो वेति**। अनेकार्थत्वस्यान्याय्यत्वात्सामानाधिकरण्यस्य वक्ष्यमाणरीत्यान्यथोपपत्तेश्च नामत्वपक्षः स्थूलोऽपि पादसङ्गत्यर्थमाचार्यैः कल्पित इति सूचयति—**इति शङ्केति** । सिद्धान्त्यभिमतमर्थवादत्वं निराकरोति—**नवेति**। नच रूपात्प्रायादित्यर्थवादाधिकरणगुणसूत्रे परशब्देन स्तुतिः परस्योक्तेति वाच्यम्। एतदधिकरणसिद्धस्यैव तत्र स्तेनं मन इत्याद्युदाहरणशेषे स्तुतिसिध्यर्थमनूदितत्वात्। एवं गौणमुख्याधिकरणे गौणमुख्यविषयमन्त्रविनियोगविचारसिध्यर्थं गौणवृत्तिसद्भावमात्रं प्रतिपादयिष्यते, इह तु गुणयोगनिमित्तवृत्तित्वं लक्षणं प्रतिपाद्यत इति ततोऽपि भेदो बोध्यः । **अष्टाकपालादिभिरिति**। अनेन पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । अन्यतरस्वरूपेऽन्यतरविधेरशक्यत्वादुक्तमन्यतरकार्य इति। अनिर्धारितस्य शास्त्रार्थत्वानुपपत्तेर्निर्धारयति—**तत्रापीति**। **मुख्यत्वादिति**। प्रथमोपस्थितस्य तस्यासंजातविरोधित्वेन कार्यलक्षकत्वानुपपत्तेः। अतएव यो होता सोऽध्वर्युरित्यत्र जघन्यस्याध्वर्युशब्दस्य कार्यलक्षकत्वमाश्रित्य तत्कार्ये होतुर्विधानं नतु तत्कार्येऽध्वर्युविधानमिति भावः। **स्रुग्धारणादाविति**। प्रस्तरे जुहूं सादयति सर्वा वा स्रुच इति वचनात्स्रुग्धारणं प्रस्तरकार्यं प्रस्तरपाणिः परिधीन्परिदधातीत्यादिशब्दार्थः। **स्वपदार्थेति**। द्वितीयाघारान्वारम्भणहविरभिमर्शनेडान्वारम्भणादिरूपेत्यर्थः। ननु यजमाने स्रुग्धारणादौ व्यापृतेऽपि यजमानकार्यं पत्नी अध्वर्युर्वा करिष्यति॥ नचान्यकर्तृकत्वे याजमानसमाख्याविरोधः। स्रुग्धारणादौ प्रस्तरयजमानयोरुभयोरपि विहितत्वेन विकल्पितत्वात्। यदाप्रस्तर एव स्रुगासादनं तदा यजमानेन स्वपदार्थानुष्ठानसंभवेन तदा समाख्योपपत्तेरित्यस्वरसादाह—**प्रस्तरवदिति** । यद्यपि प्रहरणेन प्रस्तरस्य होमेन पुरोडाशस्य च प्रतिपाद्यत्वान्न तयोः प्रस्तरैककपालकार्यत्वं तथापि प्रतिपाद्यस्य प्रतिपत्तिरूपक्रियायामार्थिकं साधनत्वमस्तीति प्रहरणहोमयोः प्रस्तरैककपालकार्यत्वं नानुपपन्नम् । प्रस्तरप्रहरणस्य तु यागरूपत्वमप्यस्तीति तत्र प्रस्तरस्य गुणभावादपि प्रस्तरकार्यत्वं प्रहरणस्य संभवतीति भावः । पवमानेष्टिष्विव प्रस्तरवद्यजमानस्य प्रहरणे सति दर्शपूर्णमासादिकं किमपि कर्म न स्यादिति सर्वतन्त्रलोप इत्यनेन सूचितम्। **ननु** विशेषविहिततन्त्रलोपप्रसङ्गात्सामान्यतः प्रस्तरकार्ये विधिः प्रहरणव्यतिरिक्तविषयोऽस्तु इति चेन्न। विधिप्रत्ययाश्रवणात् विध्यन्तरैकवाक्यत्वस्य स्पष्टत्वाच्च प्रस्तरकार्ये यजमानविधानानुपपत्तिरित्याशयेनोपसंहरति—**तस्मादिति**। ननु येन निमित्तेन परशब्दः परत्र वर्तते तदेव निमित्तमालम्ब्य स्तुतिरुपपद्यत इत्यत आह—**सामानाधिकरण्यंचेति**। तथाच परशब्दस्य परत्रवृत्तौ निमित्तस्यैवाभावान्न तदादाय स्तुतिसंभव इति भावः। **गुणादिति**। गुणं निमित्तीकृत्य परशब्दः परत्र वर्तते तमेव च गुणमालम्ब्य स्तुतिरप्युपपद्यत इत्यर्थः। **ननु** गुणवाचकत्वे गुणनिमित्तकतयान्यत्र वृत्तिः स्यात् नचासौ गुणवचनः तस्मान्न गुणादन्यत्र वृत्तिरिति शङ्कते—**कथमिति**। सत्यम्। न गुणवचनः तथापि स्वार्थसंबन्धेन गुणं लक्षयित्वा तन्मुखेन परत्र वर्तत इति परिहरति—**तच्चेति**। साङ्गप्रधानस्य यजमानकार्यतया प्रस्तरकार्यस्यापि यजमानकार्यत्वादस्ति प्रस्तरे यजमानकार्यकरत्वम् । नचैवं प्रथमं गुणलक्षणा तदनन्तरं च तद्द्वारा प्रस्तरे वृत्तिरिति विरम्यव्यापारः स्यादिति वाच्यम् । द्विरेफादिष्विवोपपत्तेरिति भावः। **ननु** यजमानशब्दः स्वार्थगतं गुणं लक्षयित्वा निवृत्तव्यापारोऽस्तु परस्य तु प्रतीतिर्गुणसंबन्धादेव भविष्यति परत्र शब्दव्यापाराभ्युपगमेऽपि स्वार्थसंबन्धिगुणसंबन्धेन लक्षितलक्षणयैव श्रुत्युपपत्तेः किमिति शब्दस्य गौण्यात्मकं वृत्त्यन्तरमङ्गीक्रियत इत्यत आह—**एवमिति**। सामानाधिकरण्याच्छब्दस्य परत्र तात्पर्यनिश्चये तन्निर्वाहाय शब्दस्य वृत्तिर्वक्तव्या। साच न लक्षितलक्षणा संभवति। लक्षणायां हि मुख्यार्थसंबन्धित्वरूपादरेण लक्ष्यार्थस्य प्रतीत्या भवितव्यं सिंहो माणवक इत्यादौ तु सिंहसंबन्धित्वेन प्रतीतिर्न विवक्षिता किंतु सिंहगतक्रौर्यादितुल्यक्रौर्यादिगुणयोगित्वमात्रेण । एवंच माणवकस्य परम्परया सिंहसंबन्धे विद्यमानेऽपि तद्रूपानादरेण गुणयोगमात्रस्य विवक्षितत्वात्तत्प्रतीत्यर्थं गौण्यात्मकं वृत्त्यन्तरमङ्गीकर्तव्यं

१ मानशब्दः. २ स्वः यजमानः. ३ वाकेन. ४ पद्धतिः. ५ आधेयत्वं. ६ वृत्तिः. ७ अत्रवि शेषः. ८ प्रतिपत्तिसंस्कारविषयत्वात्. ९ आश्रयत्वेन.

यजमानशब्दो गौणः संपद्यते यथा लोके सिंहो देवदत्त इति । नचाध्यारोपितार्थकत्वं लोके गौणत्वं तत्संबन्धिन्यर्थान्तरे तदभावात् । नहि सिंहो देवदत्त इति प्रयुञ्जानस्य सिंहत्वाध्यारोपोऽस्ति शौर्यादिगुणविवक्षयैव प्रयुङ्क्ते । प्रतिपत्तारोऽपि सादृश्यमेव प्रतिपद्यन्ते नाध्यारोपम् । तस्मादभिधेयसदृशे वृत्तिर्गौणत्वं नाध्यारोपितवचनत्वम् । कथं तर्हि खपुष्पशशविषाणादीनां शब्दानां गौणता खपुष्पं भवत्सिद्धान्त इत्यादिषु । नहि तेषां मुख्यमभिधेयमस्ति येन सादृश्यात् गौणत्वं स्यात् । उच्यते—यद्येषामभिधेयं नास्ति कथं तर्ह्यन्यत्र तद्रूपारोपः । नहि स्वरूपेणाविद्यमानमन्यत्रारोपयितुं शक्यते । तेन, तद्रूपमेवारोपितमङ्गीकर्तव्यम् । ततश्चारोपितस्यापि तस्य मुख्यत्वाद्युक्तमन्यत्र गौणत्वम् । त्वत्पक्षे तु खपुष्पएव खपुष्पशब्दो गौणः स्यात् आरोपितवचनत्वात् । भवत्विति चेत् न, सर्वलौकिकविरोधात् । तस्मान्नाध्यारोपो गौणलक्षणम् । स्वार्थसादृश्यं तु भवति । खपुष्पादीनामपि मुख्यसादृश्यविवक्षयैव लौकिका गौणं प्रयोगं प्रयुञ्जते । यथाकाशस्य पुष्पात्मना शशमूर्धवर्तिनां चावयवानां विषाणात्मना विकारोऽत्यन्ताप्रसिद्धो निष्प्रमाणकः तथा भवत्सिद्धान्त इति । तस्माद्यजमानवत्कार्यसिद्धावभ्यर्हितत्वात्प्रस्तरस्य प्रशंसेयमित्यर्थवादत्वम् ॥

---

मित्यर्थः । एवंच गौण्या लक्षणातो भेदे सत्यपि ग्रन्थकाराणां कदाचिल्लक्षितलक्षणात्वेन व्यवहारो लक्षणाद्वारकमात्रेणेति द्रष्टव्यम् । इह संबन्धित्वविधानादरस्फोरणार्थमेव सदृश इत्युक्तम् । सादृश्यनिर्वाहार्थं तद्गुणशालिनीत्युक्तम् । केचित्तु परत्र परशब्दः स्वार्थाध्यारोपेण वर्तते तथाचाध्यारोपितार्थकत्वं गौणत्वमित्याहुस्तन्मतं निराचष्टे—**नचेति** । प्रयोक्तृप्रतिपत्त्रोर्विशेषदर्शनवत्त्वेनाध्यारोपासंभवात्प्रयोक्तुस्तद्विवक्षाभावात्प्रतिपत्तुस्तत्प्रतीत्यभावाच्च नाध्यारोपितार्थत्वं गौणत्वमित्याह—**तदभावादिति** । ननु वादिना प्रतिवादिसिद्धान्तस्यात्यन्तासत्वख्यापनार्थं खपुष्पं भवत्सिद्धान्त इति यत्र प्रयुज्यते तत्र खपुष्पादीनामत्यन्तासत्वेन मुख्यार्थगुणयोगस्याभावादारोपितार्थत्वमेव गौणत्वमङ्गीकर्तव्यमिति शङ्कते—**कथं तर्हीति** । आरोपितार्थत्ववादिना हि परत्र मुख्यार्थारोपात् गौणत्वमिष्यते । तथाचासतां खपुष्पादीनां परत्रारोपासंभवात्तन्मतेऽपीदं दूषणं तुल्यमित्याह—**यद्येषामिति** । प्रतिबन्द्या अनुत्तरत्वादाह—**तेन तद्रूपमिति** । **आरोपितस्यापीति** । नहि मुख्यत्वमनारोपितत्वकृतं किंतु वृत्त्यन्तरमनपेक्ष्य शब्दप्रयोगकृतम् । तच्चारोपितस्यापि संभवतीति भावः । यदिच प्रागुक्तप्रतिबन्दीपरिहारार्थमारोपितार्थत्ववादिना परत्र मुख्यार्थारोपमादाय गौणत्वं नेष्यते किंत्वारोपितार्थत्वमादायेष्यते तदा दोषमाह—**त्वत्पक्ष इति** । खपुष्पस्यारोपितत्वमादायारोपितार्थत्वात्खपुष्प एव खपुष्पशब्दो गौणः स्यादित्यर्थः । **प्रयोगं प्रयुञ्जत इति** । पाकं पचतीतिवद्व्याख्येयम् । **यथेति** । अनेन च ग्रन्थेनाकाशस्यैव सादृश्यप्रतियोगित्वं तस्य तु न स्वरूपेण सादृश्यप्रतियोगित्वं किंतु पुष्पादिविकारात्मना । ततश्च पुष्पादिविकारात्मनाऽसत्वेऽपि स्वरूपेण सत्वात् अत्यन्तासतः कथं सादृश्यनिरूपकत्वमिति शङ्का निरस्तेति ध्येयम् । ननु प्रयोक्तृप्रतिपत्त्रोर्विशेषदर्शनेसत्यपि प्रतिमासु देवतारोपवदाहार्यारोपः संभवत्येव सिंहो देवदत्त इतिवत्सिंहो लोष्टमिति प्रयोगाभावेन सादृश्यप्रतीतिरपिशब्दादारोपितार्थत्वप्रतीत्यनन्तरं तदन्यथानुपपत्त्या प्रतिपत्तुरुपपद्यते आरोपितार्थत्वे । एवंच 'प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तर' इति 'यजमानो वा एककपालः सुवर्गो लोक आहवनीयः यदेककपालमाहवनीये जुहोति यजमानमेव सुवर्गं लोकं गमयती'त्यादिस्तुतिराञ्जस्येनोपपद्यते । लोकेऽपि च 'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान्बादरायण'इत्यादौ बादरायणे ब्रह्मत्वाद्यारोप एव चतुर्वदनत्वादिप्रसिद्धब्रह्माद्येकैकगुणवैकल्यवर्णनं स्वरसं भवति । तथाऽयं राजा साक्षादिन्द्र इत्यादौ साक्षादिति विशेषणं मुख्येन्द्रत्वारोप एव समञ्जसं भवति । मुख्यगौणयोरेकशब्दोपादानमात्रेणाभेदाध्यवसायमाश्रित्य साक्षादिति विशेषणसमर्थनं त्वत्यन्तक्लिष्टम् । गङ्गायां घोष इत्यादौ मुख्यलाक्षणिकयोरेकशब्दोपादानसंभवेऽप्यभेदाध्यवसायादर्शनात् । तथा मुखं चन्द्र इत्यादौ रूपकमिच्छतामालंकारिकाणामप्यारोपितार्थत्वमेव गौणत्वं संमतं, सादृश्यार्थकत्वे तु तुल्यादिशब्दवदुपमैव स्यान्नतु रूपकम् । नन्वेवमिदं रजतमिति भ्रान्तप्रतारकवाक्याद्विशेषो न स्यादिति वाच्यम् । प्रतिपत्तुरनाहार्यारोपो भवत्विति बुद्ध्या प्रयोगे प्रतारकवाक्यत्वं, प्रतिपत्तुराहार्यारोपो भवत्विति बुद्ध्या प्रयोगे गौणत्वमित्येवं विशेषोपपत्तेः । तस्मादारोपितार्थत्वमेव गौणत्वं लोकवेदानुगुणमिति चेत्सत्यमेवं, तथापि वेदे आरोपितार्थत्वस्वीकारे अप्रामाण्यापत्तेरयं पक्ष आचार्यैरुपेक्षितः । यद्यपि रुद्ररोदनादिवदसदर्थेनापि स्तुतिसंभवान्नाप्रामाण्यप्रसक्तिस्तथापि 'प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः । नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचर' इति न्यायेन वेदे प्रामाण्यविरोधिन आरोपितार्थत्वस्यावकाशो न देय इत्याशयेन तन्निराकरणं कृतमिति ध्येयम् । सूत्रार्थस्तु-तद्धि तस्य मुख्यस्य सिद्धिः कार्यं तत्कार्यकरत्वमिति यावत् । तच्च वक्ष्यमाणजात्यादयश्चेत्येते गुणस्य गौणवृत्तेराश्रयानिमित्तानीति कृत्स्नस्य एकसूत्रत्वेऽपि ग्रन्थकारेण बुद्धिसौकर्यार्थं एकैकाधिकरणोपयुक्तांशएव सूत्रस्थानीयतया लिखित इति ध्येयम् ॥

---

१ आरोप.

आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम् ॥ १४ ॥

## जातिः ॥ २४ ॥

**आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत्सर्वनिर्णयः ॥ द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे ॥ ४१ ॥**

'अग्निर्वै ब्राह्मण' इत्यादिष्वपि पूर्ववन्नामधेयत्वं गुणविधित्वं चोद्भाव्यार्थवादत्वं साधनीयम्। निमित्तान्तरकथनार्थं तु सूत्रान्तरम्। एवमुत्तरसूत्राण्यपि द्रष्टव्यानि। पूर्वत्र हि परशब्दस्य परत्र-वृत्तौ तत्सिद्धिकरत्वं निमित्तमिह तु जातिर्जननमित्यर्थः। द्वावपि ह्यग्निब्राह्मणौ सृष्टिकाले ब्रह्मणो मुखाज्जाताविल्यर्थवादे संकीर्तितौ। अनेन सादृश्येनाग्निशब्दो ब्राह्मणे प्रवर्तते स्तोतुम्॥

यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ॥ १५ ॥

## सारूप्यात् ॥ २५ ॥

**आदित्यो यूप इत्यत्र स्तुतिरादित्यशब्दतः ॥ द्वारं चाक्षुषसारूप्यं घृताक्ते तैजसेऽस्ति तत् ॥ ४२ ॥**

आदित्यो यूपो यजमानो यूप इत्यत्राप्येत एव पक्षाः। सारूप्यं त्वत्र शब्दप्रवृत्तिनिमित्तम्। ननु सर्वत्रैव सारूप्यं गौणत्वनिमित्तं कोऽत्र विशेषः। सत्यम्, इह तु चक्षुर्ग्राह्यं सारूप्यं विवक्षितम्।

---

**जातिः ॥ २४ ॥** अत्र भाष्यकारेणाग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो वैश्यो वैश्वदेव इति तद्धितान्तमुदाहृतम्। तद्धितान्ताग्नेयादिशब्दानां संबन्धसामान्यतद्धितमादाय वा देवतातद्धितत्वेऽपि सूक्तहविषोरेव देवतातद्धितान्तवाच्यत्वमिति नियमस्याभावादाग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवतीतिवद्वा ब्राह्मणादिषु मुख्यत्वेन गौणवृत्त्युदाहरणत्वमनुपपन्नमित्याचार्यैरग्निर्वै ब्राह्मण इति तद्धितरहितमेवोदाहर्तव्यमित्युक्तं तदनुसारेण स्वयमपि तद्धितरहितमेवोदाहरति—**अग्निरिति**। पूर्वन्यायातिदेशात्संगतिः। **गुणविधित्वमिति**। अग्निकार्ये होमादौ ब्राह्मणविधिः। ननु तर्हि किमर्थमधिकरणान्तरमित्यत आह—**निमित्तान्तरेति**। सूत्रान्तरं सूत्रैकदेशान्तरप्रयोज्यमधिकरणान्तरमित्यर्थः। एवमग्रेऽपि निमित्तान्तरव्युत्पादने एतत्प्रभृतीनां पञ्चानामधिकरणानां तात्पर्यमिति सङ्गतावपुनरुक्ततायां चातीव यत्नो न कार्य इति भावः। आकृतिपरत्वं वारयति—**जननमिति**। ननु जननमात्रमतिप्रसक्तमित्यत आह—**द्वावपीति**। न जननमात्रं निमित्तं किंतु मुख्यस्य यस्माज्जननं तस्माज्जननमितरस्य विवक्षितमिति नातिप्रसङ्ग इति भावः। **अर्थवाद इति**। 'प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्रीछन्दो रथंतरं साम ब्राह्मणो मनुष्याणा'मित्यस्मिन्नित्यर्थः। नच प्रपञ्चस्यानादित्वेन सृष्ट्याद्यभावादयमर्थो न सिद्ध इति वाच्यम्। इतिहासपुराणप्रामाण्यबलेन सृष्ट्यादेः प्रामाणिकत्वादस्यार्थस्यासत्यत्वेऽप्यर्थवादे संकीर्तनमात्रेण जननस्य निमित्तत्वोपपत्तेश्च। अनेनैवाभिप्रायेण तदर्थसद्भावे नात्यन्तं यत्नः कर्तव्य इत्याशयेनार्थवादे संकीर्तितावित्युक्तमिति द्रष्टव्यम्॥

**सारूप्यात् ॥ २५ ॥ एतएवेति**। नामधेयगुणविध्यर्थवादपक्षा योजनीया इत्यर्थः। **ननु** यजमानस्य यूपकार्ये नियोजनादौ विधिसंभवेऽप्यादित्यस्य तत्र विधानासंभवात्तद्वाक्ये कथं गुणविधिपक्षसंभवः। नचासावादित्यो यतो जायत ततो बिल्व उदतिष्ठदित्येकदेशजनननिमित्तेनादित्यशब्देन बिल्व एव गौण्या प्रतिपाद्यते, स एव खलेवालीवद्यूपकार्ये विधीयत इति युक्तम्। तथासति विधेयसमर्पकादित्यशब्दस्य लक्षणाप्रसङ्गात्तदपेक्षयार्थवादत्वस्यैव ज्यायस्त्वादेतेनादित्यशब्दप्रकृतेरदितिशब्दस्य भूवाचकत्वमङ्गीकृत्य मृन्मयो यूपः कार्य इति आदित्यशब्दस्यार्कवृक्षवाचकत्वमङ्गीकृत्यार्कवृक्षमयो यूपः कार्य इति निम्बवृक्षस्यादित्यनिवासत्वात्तत्परत्वमाश्रित्य निम्बवृक्षमयो यूपः कार्य इति यूपे आदित्यप्रतिबिम्बं संपाद्य तत्र नियोजनं कार्यमिति आदित्यप्रतिकृतौ वा नियोजनं कार्यमिति 'इवेप्रतिकृता'विति विहितकन्प्रत्ययस्य 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवेप्रतिकृतौ लोपः कनो देवपथादिभ्य'इति स्मरणाद्यूपे लिखितमादित्यमादित्याकारध्वजं वा संपाद्य नियोजनं कर्तव्यमिति गुणविध्युपपादनप्रकारा निरस्तास्तेषां प्रसिद्धादित्यशब्दार्थत्यागतद्धितान्तरकल्पनादुष्टत्वादितिचेदादित्यसाधनककर्माङ्गोपस्थानादौ यूपस्यान्तरा यूपं आहवनीयं च दक्षिणातिहृत्येत्यादिकतिपययूपकार्ये आदित्यस्य वा विधिसंभवादिति भावः। **सर्वत्रेति**। तत्सिद्ध्याद्युदाहरणे सर्वत्रेत्यर्थः। **चक्षुरिति**। एवं चक्षुर्ग्राह्यसादृश्यस्योद्भूतत्वात्तन्निमित्तत्वं शब्दप्रवृत्तेर्झडिति प्रतीयत इत्याशयेन सूत्रे प्रथमान्तस्यापि सारूप्यशब्दस्योद्भूतशक्तिस्फोरणार्थं सारूप्यादिति पञ्चम्या अपादानं कृतमिति ध्येयम्। न्यायसुधाकृतस्तु आदित्यो यूप इत्यादौ सारूप्यं प्रत्यक्षत्वाच्छाब्दबुद्धिविषयः। यजमानः प्रस्तर इत्यादौ तु सत्तया सारूप्यमुपयुज्यते। शाब्दबुद्धिस्तु सारूप्यप्रयोजकतत्कार्यकरत्वादेरिति विशेषमाहुस्तत्र। इह

---

१ पूर्ववद्गुणविधित्वं नामधेयत्वं. २ निमित्तेनाग्निशब्दो. ३ त्वत्र प्रवृत्ति.

चाक्षुषं हि यूपस्य यजमानस्य सारूप्यमूर्ध्वत्वम्, आदित्यसारूप्यं चाञ्जननिमित्तं तेजस्वित्वम्। अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयते ॥

अपश्वादिशब्दानां गवादिप्रशंसार्थत्वाधिकरणम् ॥ १६ ॥

## प्रशंसा ॥ २६ ॥

पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम् ॥ अजादिष्वपशुत्वं यद्गुणो वादोऽथवास्तु तत् ॥ ४३ ॥
स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम् ॥ अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना ॥ ४४ ॥
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः ॥ लक्ष्यास्तत्र निमित्तं तु प्रशंसैव गवाश्वयोः ॥ ४५ ॥

'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इत्यत्र नामधेयत्वमनाशङ्क्यमिति गुणविधित्वेनैव पूर्वः पक्षः। पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः क्रियतेऽजादीनामिति। सिद्धान्तस्तु तत्र तत्राजादीनां विहितत्वादशक्यः पशुकार्ये प्रतिषेधः। तस्मादर्थवादः। प्रशंसानिमित्तस्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्यापशुशब्दस्य परत्राजादिषु पशुषु प्रयोगः। ननु सर्वएव प्रशंसानिमित्तोऽर्थवादः किमत्र विशेषेणोपन्यस्यते। सत्यं, फलमन्यत्र गुणवादस्य प्रशंसा तत्सिद्ध्यादिना गुणेन परशब्दः प्रवृत्तः प्रशंसापरो भवति। इह तु शब्दप्रवृत्तिनिमित्तमपि गुणः प्रशंसैव। तस्मादयमत्रावयवार्थः—'अपशवोवाऽन्ये गोअश्वेभ्य'इत्यत्रापशव इति नञ्समासगतेन पशुशब्देन प्रथमं गवाश्वगतं प्राशस्त्यमुपादाय पश्चात्तदभावो नञा पश्वन्तरेषु कथ्यते। नहि पशुत्वं शक्यं प्रतिषेद्धुम्। अवश्यंच पशुशब्दोपात्तोऽर्थो नञा पश्वन्तरेषु पर्युदसितव्यः। शक्नोति च पशुशब्दोऽयं गवा-

---

सारूप्यस्य प्रत्यक्षसिद्धत्वं हि तत्प्रयोजकतेजस्वित्वोर्ध्वत्वादेः प्रत्यक्षत्वाद्वाच्यम्। तथाचेहापि सारूप्यप्रयोजकतेजस्वित्वादेः प्रथमोपस्थितत्वावश्यंभावेन तेजस्वित्वादेरेव शाब्दज्ञानविषयत्वसंभवात्। तस्मात्सत्तया सारूप्यस्य यजमानः प्रस्तर इत्यादौ नियामकत्वे इहापि तथा स्यादिह सारूप्यस्य शाब्दज्ञानविषयत्वस्वीकारे यजमानः प्रस्तर इत्यादावपि तथा स्यादिति यत्किंचिदेतत् ॥

**प्रशंसा ॥ २६ ॥ इत्यत्रेति।** 'अपशवो वा अन्ये गोअश्वेभ्य'इत्यन्यशब्देन घटादयो नोच्यन्ते किंतूपात्तगवाश्वसदृशत्वादजादय एवोच्यन्ते। तैत्तिरीयशाखाया'मपशवो वा अन्ये गोअश्वेभ्यः पशव' इति अन्यशब्दसामानाधिकरण्येन पशुशब्दश्रवणाच्च। ततश्चान्यशब्दसमानाधिकृतस्यापशुशब्दस्याजादिनामत्वमेव वाच्यं तच्च विरोधादनाशङ्कनीयमित्यर्थः। एवंचास्याधिकरणस्य नामधेयप्रस्तावे सङ्गतिः। तत्प्रतिपक्षतया प्रसक्तगुणविध्यर्थवादविचाररूपत्वादिति द्रष्टव्यम्। नन्वपश्वात्मकघटादिकार्येऽजादीनां विध्यसंभवाद्गुणविधिरपि न संभवतीत्यत आह—**पशुकार्य इति**। गवाश्वव्यतिरिक्ता अजादयः अपशवः पशुकार्यकरा न स्युरित्येवमजादिषु पशुकार्यनिषेधविधिः संभवतीति भावः। पशुकार्येऽजादिप्रतिषेध इति वदता दोहनादिलक्षणकार्येऽजादिनिषेधस्य कर्तुमशक्यत्वाद्वैदिकालम्बनादिकार्ये तन्निषेध इति वक्तव्यम्। सोऽपि न संभवतीत्यत आह—**तत्रेति।** अपशव इत्यत्राख्याताभावेन निषेधविधेः कल्पनीयत्वात् प्रत्यक्षविधिविरोधे निषेधविधिर्न कल्पयितुं शक्यत इति भावः। प्रशंसानिमित्त इत्यत्र निमित्तशब्दस्य फलपरत्वं मत्वा शङ्कते—**नन्विति। प्रशंसैवेति।** प्रशस्तत्वाभावस्य निमित्तत्वे प्रतियोगिभूतप्रशंसापि निमित्तमिति भावः। यथा सिंहो माणवक इत्यत्र सिंहशब्दः स्वार्थमभिधाय तद्गतक्रौर्यादिकं गुणं लक्षयित्वा तन्मुखेन माणवके वर्तते एवमिहाऽपशुशब्दः स्वार्थं पशुभिन्नं घटादिकमभिधाय तद्गतं प्रशस्तपशुत्वाभावरूपं गुणं लक्षयित्वा नाजादिषु वर्तते ॥ नञपशुशब्दसमुदायस्य लक्षणांविनापि तदेकदेशपशुशब्दस्य प्रशस्तपशुत्वे लक्षणामात्रेण प्रशस्तपशुत्वाभावरूपगुणोपस्थितेः समुदायेन संभवात्। गौण्यां हि गुणोपस्थितिरपेक्षिता। सा च सिंहादिशब्देष्वेकदेशलक्षणया न निर्वहतीति तत्र सिंहशब्दस्य गुणे लक्षणा, इहतु एकदेशलक्षणयैव गुणोपस्थितिसंभवान्नावश्यं समुदायलक्षणा स्वीकर्तव्या। नचैवं समुदायस्य प्रशस्तपशुत्वाभावरूपगुणलक्षकत्वाभावात् 'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते'ति वार्तिकोक्तगौणत्वमिह न स्यादिति वाच्यम्। वार्तिके लक्ष्यमाणशब्दस्य लक्षणामूलप्रतीतिविषयत्वार्थकत्वेनोपपत्तेः इत्यभिप्रेत्यापशुशब्दैकदेशस्य पशुशब्दस्य लक्षणां वदन् गौणत्वमुपपादयति—**अयमत्रावयवार्थ इति**। नञेत्यनन्तरं मुख्यार्थरूपघटादिषु बोधयित्वेति शेषः। पशुशब्दलक्षणावश्यंभावाय मुख्यार्थस्यानुपपत्तिं दर्शयति—**नहीति। अवश्यमिति।** अपशुशब्दस्य पश्वन्तरवाचकान्यशब्दसामानाधिकरण्यादिति भावः। ननु पशुशब्दः स्वार्थमात्रगतं प्राशस्त्यं लक्षयेन्न गवाश्वादिगतमित्यत आह—**शक्नोति चेति। एकवाक्यतयेति।** यद्यपि समासान्तर्गतस्य पशुशब्दस्य गवा-

---

१ प्रतीयते तस्मादर्थवादः प्रशंसा. २ प्रशंसाफलो. ३ तथाहि अयमत्र.

श्वशब्दाभ्यामेकवाक्यतया संबद्धस्तद्गतं प्राशस्त्यं लक्षयितुम् । तच्च नञा पर्युदसिष्यते । एतदुक्तं भवति—गवाश्वयोर्हि यत्प्राशस्त्यं न तदन्येष्वस्ति तस्मादप्रशस्तास्ते गवाश्वमेव तु प्रशस्तमिति ॥ सोयं गवाश्वगतप्राशस्त्याभावः पश्वन्तराणामपशूनां च तुल्य इत्यनेनाभिप्रायेण पश्वन्तराण्यपशव इत्युच्यन्ते ॥

भूमाधिकरणे बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥ १७ ॥

## भूमा ॥ २७ ॥

**सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गकाः ॥ विधेयस्ते गुणत्वेन वादो वाऽत्र गुणे विधिः ॥ ४६ ॥**
**आख्यातेनाभिसंबन्धाद्विध्यन्तरयोगतः ॥ लिङ्गप्रकरणप्राप्तेर्मन्त्राणां विध्यसंभवात् ॥ ४७ ॥**
**शाननूद्येष्टकाधानं विदध्यास्तोष्यते यतः ॥ यथासृष्टेत्यनेनातः सृष्टीरित्यर्थवादगीः ॥ ४८ ॥**
**एकयाऽस्तुवतेत्यादौ मन्त्रसंघे क्वचिन्नहि ॥ सृष्टिशब्दस्तथाप्युक्तिः सृष्टिशब्देन भूमतः ॥ ४९ ॥**

'सृष्टीरुपदधाती'ति सृष्टिशब्दो गुणविधिरुतार्थवाद इति संशयः । तत्राख्यातसंबन्धाद्विध्यन्तरैकवाक्यत्वाभावादर्थवत्त्वाच्च विधिः । सृष्टिलिङ्गा मन्त्रा उपधानार्थेन विधीयन्ते । नैवम् । लिङ्गप्रकरणाभ्यामेव प्राप्तत्वान्न विधिर्मन्त्राणां संभवति । तथासति परिसंख्या स्यात् । तत्र बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानादन्ये परिसंख्यायेरन् । साच त्रिदोषा परिसंख्यातानां च मन्त्रान्तराणामानर्थक्यं स्यात् । तस्मादुपधानमेवात्र विधेयम् । सृष्टीरिति तु लिङ्गप्राप्तमन्त्रानुवादमात्रं यथा सृष्ट-

---

श्वशब्दाभ्यां नैकवाक्यता तथापि गवाश्वशब्दाभ्यां सह एकस्मिन्वाक्ये उच्चारणादुपस्थितगवाश्वादिगतप्राशस्त्यलक्षकत्वं संभवतीत्यत्र तात्पर्यम् । यद्वा शाखान्तरे पशवो गोअश्वा इति गवाश्वविशेषणत्वेन पशुशब्दस्योपादानात्तस्य गवाश्वगतप्रशंसापरत्वावश्यंभावेन तत्समानयोगक्षेमतया समासान्तर्गतपशुशब्दस्यापि गवाश्वगतप्राशस्त्यलक्षकत्वमिति भावः । ननु 'पुरस्तात्प्रतीचीनमश्वस्योपदधाति पश्चात्प्राचीनमृषभस्ये'ति विध्येकवाक्यत्वादिदं वाक्यं गवाश्वप्राशस्त्यपरम् । तत्र यदि समासान्तर्गतपशुशब्देनैव गवाश्वगतप्राशस्त्यं प्रतिपाद्यते तदा तन्मात्रेण विवक्षितार्थसिद्धेरजादिषु तन्निषेधस्यानर्थक्यं स्यादतो न गवाश्वगतप्राशस्त्यं नञा पर्युदासार्हमित्यत आह—**एतदुक्तमिति** । इतरत्र प्रशंसानिषेधमुखेन प्रशंसाप्रतिपादने प्रशंसातिशयो लभ्यत इति न निषेधानर्थक्यमिति भावः । एवंच पशुशब्दलक्षणया घटादिगतगुणोपस्थितिसंभवाद्गौणीवृत्तिरुपपन्नेत्याशयेनाह—**सोयमिति** ॥

**भूमा ॥ २७ ॥** पूर्ववैषम्येण प्रत्यवस्थानात्संगतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति** । ननु नात्र गुणविधिः संभवती-'ष्टकानामिष्टकाभिरग्निं चिनुत' इति विध्यन्तरविहितत्वादुपधानस्यापि चयनविधित एवार्थात्प्राप्तेरित्यत आह—**सृष्टिलिङ्गा इति** । सृष्टिशब्दो हि 'तद्वानासामुपधानो मन्त्र' इतीष्टकासु 'लुक्च मतो'रिति सूत्रेण सृष्टिमानासामिष्टकानामुपधान उपधानार्थो मन्त्र इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्प्रत्यये च सति छान्दसत्वेन यत्प्रत्ययलोपान्निष्पन्नः सृजिशब्दवन्मन्त्रोपधेयेष्टकावचनस्तत्र विशेष्यभूतानामिष्टकानामन्यतः प्राप्तावपि विशेषणभूतमन्त्रविधिः संभवतीति भावः । **लिङ्गेति** । उपधानेऽपि मन्त्राणां सामर्थ्ये संभवमात्रेण लिङ्गोपन्यास इति ध्येयम् । ननु 'इमामगृभ्ण'न्निति मन्त्रस्येव लिङ्गप्रकरणाभ्यां प्राप्तिसंभवेऽपि विधिः किं न स्यादित्याशङ्क्याह—**तत्रेति** । इष्टापत्तिमाशङ्क्याह—**साचेति** । यद्यप्यप्राप्तपरिसंख्यात्वान्न त्रैदोष्यम् । नच 'मन्त्रान्तराणां व्युष्टीरुपदधाती'त्यादिवचनान्तरप्राप्तत्वान्नायं दोष इति वाच्यम् । सृष्टिव्युष्ट्यादिवाक्यमध्ये किंप्राप्तस्य किंपरिसंख्यापकमित्यत्र विनिगमनाविरहेण येषां मन्त्राणामग्निप्रकरणेऽधीतानां विनियोजकं वचनं नास्ति तेषामेव परिसंख्येति वक्तव्यतया त्रैदोष्याप्रसक्तेस्तथापि विधिप्रवृत्तेरितरनिवृत्तिमात्रफलकत्वात्सा जघन्येति तात्पर्यम् । **आनर्थक्यमिति** । इदं चापाततः ग्रहणासादनादिष्वपि विनियोगसंभवेनानर्थक्याभावादिति ध्येयम् । **तस्मादिति** । समुदितानामपि व्यूहविशेषरूपेण स्थापनसंभवेन चयनविधितः प्रत्येकोपधानस्याप्राप्तेरिष्टकाङ्गत्वेन चोपधानविधौ प्रतिप्रधानावृत्तिन्यायात्प्रत्येकोपधानसिद्धेस्तदर्थमुपधानविधिरर्थवान् । किंचोपधानस्यान्यतोप्राप्तावप्याध्वर्यवसमाख्याते काण्डे तद्विधानेनाप्यध्वर्युकर्तृकत्वं संभवतीति तदर्थमप्युपधानविधिरावश्यकः । नच चयनस्याध्वर्युकर्तृकत्वादेवोपधाने तत्सिद्धिरिति वाच्यम् । अन्यसहायेनापि संधुक्षणादौ कृते देवदत्तेन पाकः कृत इति लोके व्यवहारदर्शनेनोपधानेऽन्यसहायेन कृतेऽपि चयनस्याध्वर्युकर्तृकत्वाविरोध इति सहायान्तरव्यावृत्त्यर्थं तद्विध्यविरोधात् । नचैवमनेन प्रकारेण 'सृष्टीरुपदधाति, व्युष्टीरुपदधाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाती'त्यादिष्वपि उपधानमात्रविधिरेव वक्तव्य इत्येकेनैवोपधानविधिना प्रत्येकोपधानस्याध्वर्युकर्तृकत्वस्य च सिद्धेरितरवैयर्थ्यं स्यादिति वाच्यम् । यदिहि एकस्मिन्नपि वाक्ये इष्टकासामान्योद्देशेनोप-

---

१ गवाश्वेषु. २ न्तरशेषत्वाभावादर्थ,

मेवावरुन्ध इत्यस्यार्थवादस्योपपत्त्यर्थमिति भाष्याभिप्रायः । केचित्तु मन्त्रविधिमेवं समर्थयन्ते । नह्येकया स्तुवत इत्येवमादीनामुपधानैकान्तिकं लिङ्गमस्ति येन प्राप्तिः स्यात् । साधारणलिङ्गत्वाद्धि ग्रहणासादनादिष्वपीष्टकानां प्राप्नुयुः तत्रास्ति विधेरवकाशः । सत्यामप्युपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवद्भविष्यति । वक्ष्यतिहि 'मध्यमायां तु वचनाद्ब्राह्मणवत्य' इति । नचास्मिन्सूत्रे सृष्टीनां विधानमवश्यमादर्त्तव्यम् । गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः भूमासृष्टिसमुदाये हि[2] भूमास्ति । सृष्ट्यसृष्टिसमुदायेप्ये 'कया स्तुवत' इत्यनुवाके सृष्टिभूमास्तीत्यनेन सादृश्येन सृष्टिशब्दः ॥

प्राणभृदादिशब्दानां स्तुत्यर्थत्वाधिकरणम् ॥ १८ ॥

## लिङ्गसमवायात् ॥ २८ ॥

**सृष्टिवत्प्राणभृत्तत्र सादृश्यं लिङ्गभूमतः ॥ मन्त्रैकमन्त्रगो लिङ्गसमवायो विशिष्यते ॥ ५० ॥**

'प्राणभृत उपदधाती'त्यत्रापि पूर्ववदेव मन्त्रोपादानमर्थवादार्थं विध्यर्थं वेति विवेक्तव्यम् । निमित्ता-

---

धानविधिः स्यात्तदैवेतरवैयर्थ्यमिह तु तत्तद्वाक्येषु सृष्ट्यादितत्तदिष्टकाविशेषोद्देशेनैवोपधानं विधीयते सृष्ट्यादिशब्दानां विशेषमात्रबोधकत्वात्ततश्च सृष्टिवाक्येनोपधाने विहिते तत्रोद्देश्यानां सृष्टीनामेव प्रत्येकमुपधानं स्यात्तदुपधानस्यैवाध्वर्युकर्तृकत्वं च स्यान्न व्युष्ट्यादीनामिति तासामपि प्रत्येकोपधानविध्यर्थं तदुपधानस्याध्वर्युकर्तृकत्वसिद्ध्यर्थं च सर्ववाक्येष्वप्युपधानविध्यवश्यंभावेनानर्थक्याभावादिति भावः । कथं तर्हि भाष्येऽर्थवादत्वेन सिद्धान्तकथनमित्यत आह—**सृष्टीरिति** । इत्थमिदमुपधानं प्रशस्तं यत्सृष्टिपदयुक्तैर्मन्त्रैरिदं क्रियते । तथासति 'यथासृष्टं ब्रह्मणा यानि सृष्टानी'त्यस्मिन्ननुवाके कीर्तितानि तान्यनतिक्रम्य । तदतिक्रमनिमित्तविघ्नादि निरस्येति यावत् । सर्वाणि वस्तूनि यजमानः प्राप्नोति इत्येवमुपधानस्तुत्युपपत्त्यर्थं सृष्टिपदमिति भाष्याभिप्रायः । ननु कृत्स्नं वाक्यमर्थवाद इति । तथासति सन्निहितविध्यन्तराभावेनार्थवादत्वस्यैवानिर्वाहादतो भाष्यकारस्याप्युपधानविधिः संमत इति तदाशय उपपद्यत इत्यर्थः । यद्यपि सृष्टिपदमुद्देश्यसमर्पकं ननु केवलं स्तुत्यर्थमनुवादमात्रम्, तथासत्युपधानमात्रस्यैव विधेयत्वापत्त्या तस्येष्टकासंस्कारकत्वाभावात्प्रत्येकोपधानासिद्धिप्रसङ्गात् । प्रागुक्तरीत्या वाक्यान्तरे तद्विधिवैयर्थ्यापत्तेस्तथापि सृष्टीरित्यस्य विधेयसमर्पकत्वं नास्तीत्यत्र भाष्यस्य तात्पर्यं बोध्यम् । **नहीति** । उपधाने योगं विना 'यो वा इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति' 'तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्याहैषा वा इष्टकानां प्रतिष्ठे'तिवाक्यविहितस्य तया देवतयेति मन्त्रैकवाक्यभावस्याप्यसिद्धेर्न तदेकवाक्यतयाप्युपधानैकान्तिकं लिङ्गमुपपादयितुं शक्यमिति भावः । **ग्रहणेति** । इष्टकानां पाकदेशाद्ग्रहणे उपधातृसमीपस्थापने । आदिशब्दादानयनादिष्वित्यर्थः । ननु चयनप्रकरणाम्नातानां चयनेनाव्यवधानेन संबद्धोपधान एव प्राप्तिर्युक्ता नतु व्यवहितग्रहणादिष्वित्यत आह—**सत्यामपीति** । 'यां वै कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्या'दितिवचनेनाभिपूर्वस्य जानातेः प्रत्यक्षार्थकतया प्रत्यक्षब्राह्मणविहितानामिष्टकानां चयनसंबन्धिचितिपञ्चकमध्ये या मध्यमा चितिस्तस्यां प्राप्तिरिति पञ्चमे वक्ष्यमाणत्वात्तत्सिद्ध्यर्थं विधानमित्यर्थः । नच मन्त्रविधावपीष्टकानां विधानाभावात्कथं मध्यमचितिप्राप्तिरिति वाच्यम् । इष्टकासु मन्त्रविशेषं विनान्यस्यप्रातिस्विकविशेषस्याभावेन प्रातिस्विकविशेषविशिष्टतया इष्टकागोचरस्य कस्यापि प्रत्यक्षविधेरभावेन प्रत्यक्षब्राह्मणविहितमन्त्रकत्वेनैवेष्टकानां प्रत्यक्षब्राह्मणविहितत्वस्य वक्तव्यत्वात्ततश्चाम्युपांनुवाक्यविहितचित्रिण्यादिवत्सृष्टीनामपि चितिविशेषसंबन्धित्वेनानिर्ज्ञातत्वादासामपि मध्यमचितिप्राप्तिरुपपद्यते । एवंचाम्युपानुवाक्यविहितवज्रिणीचित्रिणीरौद्रप्राणभृदादीनां पञ्चमप्रस्तार इव सृष्ट्यादीनां कल्पसूत्रकारैश्चतुर्थप्रस्तारे विनियोगेऽपि न्यायतो मध्यमप्रस्तार एव विनियोगो वज्रिण्यादिवद्युक्त इति नकल्पसूत्रविरोधः शङ्कनीय इति भावः । भाष्यस्यापि सृष्टिशब्दस्य विधेयसमर्पकत्वाभावे नाग्रहः किंतूदाहरणप्रदर्शनमात्रएव तात्पर्यमित्याशयेनाह—**नचास्मिन्निति** । धातुपारार्थ्यविप्रकृष्टविधानादिदुष्टोयं पक्ष इति केचिदित्यनेन सूचितः । भूमा बहुत्वमित्यर्थः । भूम्नो मुख्यामुख्यसाधारण्यमुपपादयन् गुणयोगेन परत्र परशब्दप्रवृत्तिमुपपादयति—**सृष्टीति** । एकसमुदायावच्छिन्नेषु समुदायिष्वित्यर्थः । एवमग्रेऽपि । समुदायग्रहणं तु प्रत्येकं बहुत्वान्वयानर्हत्वात्तद्योग्यतार्थं कृतम् । **असृष्टीति** । प्रथमचतुर्दशान्तिमेषु 'एकया स्तुवते सप्तविंशत्या स्तुवते त्रयस्त्रिंशता स्तुवते'त्येतेषु सृष्टिशब्दाभावादेतेषामसृष्टित्वं बोध्यम् । नच सृष्टिमात्रपरत्वमेवास्तु किमिति सृष्ट्यसृष्टिपरत्वमिति वाच्यम् । सृष्टीरुपदधातीत्युपक्रम्य यत्सप्तदशोपदधातीत्युपसंहारेऽनुकीर्तनेन सृष्ट्यसृष्टिपरत्वावश्यंभावादिति भावः ॥

**लिङ्गसमवायात् ॥ २८ ॥** प्राणभृत इत्यत्र प्राणभृच्छब्दस्य मन्त्रेष्वभावेन तद्वानासामिति पूर्वोक्तप्रकारासंभवात्प्राणं प्राणशब्दं बिभ्रतीति प्राणभृत इति मन्त्रेषु तन्मन्त्रोपधेयेष्टकासु च मन्त्रद्वारा प्राणशब्दभरणात्प्राणभृच्छब्दप्रवृत्तिर्बोध्या ।

---

१ विधिरेवेति. २ हि सृष्टिभूमास्ति । सृष्ट्यसृष्टिसमुदाये. ३ काण्डवि.

न्तरकथनार्थं तु सूत्रान्तरम् । तत्रहि भूम्ना शब्दप्रयोगः । इह तु लिङ्गवतामल्पत्वात्तत्समवायमात्रेण शब्दप्रवृत्तिः । प्राणभृद्गणे ह्य प्राणभृत्समवायोस्ति । प्राणभृदप्राणभृद्गणेऽपि प्राणभृत्समवायोऽस्तीत्यनेन सादृश्येन प्राणभृच्छब्दः । तदेवं 'तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः । षड्भिः सर्वत्र शब्दानां गौणीवृत्तिः प्रकल्पिता ॥

वाक्यशेषेण संदिग्धार्थनिरूपणाधिकरणम् ॥ १९ ॥

## संदिग्धेषु वाक्यशेषात् ॥ २९ ॥

शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम् ॥ तैलादिनाऽञ्जिता अक्ता घृतेनैवाथवाऽञ्जनम् ॥ ५१ ॥
तैलादिनाऽपि मुख्यत्वादसंजातविरोधनात् ॥ अप्राप्तार्थत्वतश्चास्य विधेर्वाद्वलिरवतः ॥ ५२ ॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ नहि ॥ घृतेनैवाञ्जनं वाक्यशेषात्संदिग्धनिर्णयात् ॥ ५३ ॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी ॥ बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम् ॥ ५४ ॥

'अक्ताः शर्करा उपदधाति' 'तेजो वै घृत'मित्यत्र संशयः किं घृततैलवसानामन्यतमेन केनचिदञ्जनं कर्तव्यमुत घृतेनैवेति । तदर्थं किं विध्युद्देशार्थवादयोर्विरोधोऽस्ति नवेति । स्तावकत्वेन प्रामा-

---

पूर्ववदिति । प्राणभृत उपदधातीति त्रीणि वाक्यानि सन्ति । तत्र त्रिष्वपि वाक्येषु पूर्ववदेव संशयपूर्वपक्षादिकं सर्वमनुसंधेयमित्यर्थः । तत्र प्रथमे प्राणभृद्वाक्ये रेतस्येव प्राणान्दधातीत्यादिरर्थवादः । द्वितीये क्रतुष्वेव प्राणान्दधातीत्यादिः । तृतीये नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्त इत्यादिरिति द्रष्टव्यम् । **लिङ्गवतामिति** । यद्यपि प्रथमवाक्यविधेयेष्वयं पुरोभुव इत्यादिषु 'तस्य प्राणो भौवायनः वसन्तः प्राणायनः प्राणं गृह्णामि प्रजाभ्य' इति त्रयाणां मन्त्राणां प्राणभृत्त्वेऽपि द्वितीयतृतीयवाक्यविधेयेषु प्राणं मे पाहीत्येकस्यैव मन्त्रस्य प्राणभृत्त्वाल्लिङ्गवतामिति बहुवचनं प्रत्येकं नान्वेति, तथापि सर्वाभिप्रायं बोध्यम् । **प्राणभृद्गण इति** । प्राणभृदप्राणभृदात्मकसमुदायिषु गौणार्थेषु प्राणभृत्समवायः समुदायद्वारक एव वक्तव्यो नान्यथेत्याशयेनात्र समुदायोपादानं तदपि द्वितीयतृतीयवाक्यविधेयेषु प्राणभृत एकत्वेन तत्समुदायात्मकगुणाभावात्प्रथमवाक्यविधेयाभिप्रायेण बोध्यम् । द्वितीयतृतीयवाक्यस्थले तु प्राणभृदप्राणभृत्समुदाय एव गुणस्तस्य प्राणभृद्रूपमुख्यार्थे प्राणभृदप्राणभृद्रूपगौणार्थेषु च समवायेन तस्य गुणत्वसंभवात् । यदि च सूत्रे लिङ्गसमवायशब्देन प्राणलिङ्गकमन्त्रसमवायो न विवक्ष्यते किंतु प्राणप्रतिपादनसामर्थ्यमात्रसमवायो विवक्ष्यते तदा वनैकदेशे पुष्पिते वनं पुष्पितमिति व्यवहारदर्शनात्प्राणप्रतिपादनरूपं लिङ्गं प्राणभृन्मन्त्र इव प्राणभृदप्राणभृत्समुदायेऽपि समवेतमिति वक्तुं शक्यत इति तत्सामर्थ्यमेव गुण इति द्रष्टव्यम् । अत्र 'प्राणभृत उपदधाती'त्यनन्तर 'मयं पुरोभव इति पुरस्तादुपदधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मनः एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात्सूवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारायमुपरिमतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दश दशोपदधाती'ति पञ्चाशदिष्टकानां कीर्तनात्तावत् परत्वं प्रथमवाक्यगतप्राणभृच्छब्दस्य द्वितीयवाक्यगतस्य प्राणभृत इति बहुवचनानुसारात्तृतीयवाक्यगतस्य तु दशप्राणभृतः पुरस्तादुपदधातीति वचनाद्बहुवचनाच्च बोध्यम् । **सर्वत्रेति** । यद्यपि स्तेनं मन इत्यादौ प्रच्छन्नत्वादिना गौणत्वस्यापि ग्रन्थेषूक्तत्वान्न सर्वत्र तैर्निर्णयस्तथापि यथासंभवं प्रच्छन्नत्वादेरप्यत्रैवान्तर्भावः संपादनीयः । यद्वा तत्सिद्धिपेटिकाया नामधेयगुणविध्यर्थवादविचाररूपाया अर्थवादत्वसिध्यर्थे गौणवृत्तिस्वरूपकथनमात्रपरत्वेऽपि गौणवृत्तिनिमित्तेयत्तावधारणार्थत्वाभावात्प्रच्छन्नत्वादेरत्रानन्तर्भावेऽपि न दोषः । एवंच प्रायिकाभिप्रायेण सर्वत्रेत्युक्तमिति ध्येयम् । ननु 'मृष्टीरुपदधाति प्राणभृत उपदधाती'त्यत्र छत्रिणो यान्तीत्यादिवल्लक्षणयैवोपपत्तेः किमिति गौणवृत्त्याश्रयणम् । नच छत्रिणो यान्तीत्यादावपि न लक्षणा किंतु सृष्ट्यादिवत्प्राणभृदादिवद्वा गौण्येवेति युक्तं लक्षणाया गौणवृत्त्यपेक्षया ज्यायस्त्वेन लक्षणासंभवे गौणवृत्त्यभ्युपगमस्यायुक्तत्वादितिचेत्सत्यम् । तथापि यत्रोक्तगुणयोगनिमित्तसादृश्यतोऽर्थप्रतिपत्तिस्तत्र लक्षणया निर्वाहाभावात्तन्निर्वाहार्थं तत्रापि गौणवृत्त्यभ्युपगमो न विरुद्धः । एवंच छत्रिस्थलेऽप्युक्तरीत्या कदाचिद्गौणत्वमपि संभवतीति तत्रापि नावश्यं लक्षणानियमः । अतएवाग्रिमाधिकरणे घृतशब्दोयं लक्षणार्थो भविष्यतीति घृताघृतसमुदाये घृतशब्दस्य लक्षणाव्यवहार उ करे युज्यत इति ध्येयम् ॥

**संदिग्धेषु वाक्यशेषात् ॥ २९ ॥ तदर्थमिति** । यदि विरोधस्तदा विध्युद्देशस्य प्राबल्यात्तदनुसारेण येनकेनचिदञ्जनं यदि च न विरोधस्तदाऽर्थवादानुसारात् घृतेनैवेति फलाफलिभावः । ननु केन द्रव्येणाञ्जनं कर्तव्यमित्ययं विचारः प्रामाण्यविचाररूपत्वाभावादध्याये नसङ्गत इत्यत आह—**स्तावकत्वेनेति** । विध्यर्थवादमन्त्रनामधेयात्मकानां वेदावयवानां विधायकत्वस्तावकत्वस्मारकत्वधात्वर्थावच्छेदकत्वलक्षणैस्तत्तदवयवव्यापकरूपैः प्रामाण्ये प्रतिपादितेऽर्थवादात्मकवेदावयवैकदेशस्य कस्यचिद्वाक्यस्य स्तावकत्वातिरेकेण प्रकारान्तरेण प्रामाण्यव्युत्पादनं संप्रति युक्तं प्राप्तावसरत्वादितीदानीमि-

---

१ शब्दप्रवृत्तिः. २ सारूप्ये.

व्यमर्थवादस्योक्तम् । इदानीं संदिग्धार्थनिर्णयेऽपि कचित्प्रामाण्यं प्रतिपाद्यत इति सङ्गतिः । 'तत्राक्ता इति शब्देन येनकेनचिदञ्जनम् ॥ प्रतीयते विधिश्चायं बलीयानर्थवादतः ॥ प्राधान्यात्प्रक्रमस्थत्वादप्राप्तविषयत्वतः ॥ तद्बाधाद्धृतशब्दोयं लक्षणार्थो भविष्यति ॥' प्रधानं विधिः, अङ्गं स्तुतिः । नचाङ्गेन प्रधानं बाधितुं युक्तम् । उपक्रमस्थत्वाच्चासंजातविरोधो विधिर्निर्विघ्नमेव स्वार्थं बोधयन्नुपसंहारस्थं स्वविरुद्धमर्थवादं लक्षणां नयति । विधिश्चाप्राप्तविषयत्वाद्यथाश्रुत एव नेतव्यः । अर्थवादस्त्वनुवादत्वाल्लक्षणयापि नीयमानो नातीव दुष्यति । विधेश्च यत्किंचिदञ्जनसाधनं गम्यत इति तेन बाधितो घृतशब्दोऽर्थवादस्थोऽञ्जनसमर्थद्रव्यमात्रलक्षणार्थो भविष्यति । तस्माद्येनकेनचिदञ्जनमिति प्राप्ते ब्रूमः—'विधेर्यदि विरोधः स्याद्भवेदेवं न चास्त्यसौ ॥ नहि सामान्यशब्दोऽयं विशेषेण विरुध्यते ॥' सामान्यं हि विधिना बोधितम् । तच्च सर्वविशेषेषु कृत्स्नमस्तीति न विशेषोपादाने तस्य बाधः । अवश्यं च यः कश्चिद्विशेष उपादातव्यः निर्विशेषेण सामान्येन व्यवहाराभावात् । तत्रासति विशेषप्रमाणे यः कश्चित्स्यात् अस्ति तत्र घृतस्य प्रमाणमर्थवादः । स हि घृतं स्तुवन्नविधेयस्य स्तुत्ययोगाद्विधेयत्वं गमयति, तस्माद्घृतेनैवाञ्जनम् ॥

त्यनेन सूचितम् । नामधेयापवादत्वेन प्रसक्तार्थवादप्रसङ्गात्पादसङ्गतिर्बोध्या । ननु अक्ता इति विधावञ्जनकर्मत्वमात्रं शर्कराणां प्रतीयते नत्वञ्जनसाधनं स्नेहद्रव्यं ततश्च येनकेनचिद्द्रव्येणाञ्जनमिति कथं पूर्वःपक्ष इत्यत आह—**तत्राक्ता इति** । अञ्जनक्रिययैव तत्साधनत्वेन स्नेहद्रव्यसामान्यमाक्षिप्यत इति भावः । ननु प्रधानस्यापि विधेरुपक्रमाधिकरणेऽर्थवादानुसारेण नयनं कृतं तद्वदिह किं न स्यादित्यत आह—**प्रक्रमस्थत्वादिति** । तत्र विधेरुपसंहारगतस्यान्यथानयनेऽपीहोपक्रमस्थत्वेनासंजातविरोधित्वात्स्वतः प्रबलस्य विधेरन्यथा नयनं न युक्तमिति भावः । **प्रधानमिति** । विधेः प्रेरणात्मकशब्दभावनारूपत्वात्प्राधान्यम् । शब्दभावनेतिकर्तव्यतारूपायाश्च स्तुतेस्तदङ्गत्वमित्यर्थः । ननु कांस्यभोजिन्यायेन प्रधानस्यापि विधेरङ्गभूतस्तुत्यनुरोधित्वमस्त्विति शङ्कानिवारणं सूचयन्नप्राप्तविषयत्वतः इति हेतुं व्याचष्टे—**विधिश्चेति** । **यथाश्रुत एवेति** । ननु घृतमात्रविषयतया संकोचनीय इत्यर्थः । एवंच यत्र गुणानुरोधित्वे प्रधानस्य नकिंचिद्बाध्यते तत्रैव कांस्यभोजिन्याय इह तु गुणानुरोधित्वे तैलादिविषयत्वांशे बाधः स्यादतो नात्र कांस्यभोजिन्याय इति भावः । **ननु** विधावप्याक्षेपादञ्जनसाधनद्रव्यप्रतीतिर्वाच्या प्ररोचनार्थमर्थवादैकवाक्यत्वावश्यंभावेन प्ररोचनार्थमपेक्षितार्थवादादञ्जनसाधनद्रव्यलाभे तदाक्षेपायोग इत्यत आह—**विधेश्चेति** । विधेरेव द्वे शक्ती कल्पयिष्याम इति न्यायेन विधेरेव प्ररोचनार्थत्वसंभवान्न तदर्थं विधेरर्थवादापेक्षा विधित एव सामान्याक्षेपो नानुपपन्न इति भावः । वासः परिधत्ते 'एतद्वै सर्वदेवत्यं यत्क्षौममि'ति भाष्योक्तोदाहरणान्तरे त्वाक्षेपोऽपि नापेक्षितः, सामान्यस्य श्रुतत्वादिति द्रष्टव्यम् । नचैवं प्रकृतेऽपि वर्तमानापदेशतया स्फुटं विध्यभावादर्थवादत एव विधिः कल्पनीय इति विधित्वसिध्यर्थमेवार्थवादापेक्षास्तीति वाच्यम् । अप्राप्तार्थकत्वादेव विधित्वकल्पनोपपत्तेः । शर्करा अक्ता उपदध्यात्तेजोघृतमिति प्रत्यक्षविधिश्रवणाच्चेति भावः । एवंच यथाग्निविद्यारूपाङ्गानुसारेण प्रधानविधेस्त्रैवर्णिकविषयतया संकोचस्तथेहापि स्तुतिरूपाङ्गानुसारात्प्रधानस्यापि विधेः घृतविषयतया संकोचः किं न स्यादिति शङ्काया अनवकाशः । अग्निविधेर्विना प्रधानानुष्ठानासंभवेन तयोः प्रधानेनापेक्षितत्वेन तदनुसारात्संकोचेऽपि प्रकृतेऽर्थवादं विनैव विधित्वकल्पनस्य स्तुतेश्चोपपन्नत्वेनार्थवादस्यावश्यापेक्षणीयत्वाभावात् यदङ्गं प्रधानेन नियमेनापेक्षितं तादृशाङ्गबलात्प्रधानस्य संकोचः यत्त्वङ्गं प्रधानेन नियमेनानपेक्षितं तादृशाङ्गबलात्प्रधानस्य न संकोचः । अतएवेन्द्रायत्वेत्यादिमन्त्रबलादैन्द्रप्रदानविषयतया सोमस्य न संकोचः किंत्वैन्द्रानैन्द्रसर्वप्रदानसाधारण्यमेव । अनैन्द्रप्रदानेषु मन्त्रं विनाप्युपायान्तरेणानुष्ठेयार्थस्मृतिसंभवेन मन्त्रस्यानैन्द्रप्रदानैर्नियमेनानपेक्षितत्वादन्यथा तत्राप्यैन्द्रप्रदानमात्रविषयतया संकोचः स्यादिति बोध्यम् । विधिना यदि सर्वे विशेषाः प्रातिस्विकरूपेण बोधिताः स्युस्तदैकविशेषविषयेणार्थवादेन विरोधः स्यात् । यदि च सामान्यं व्यासज्यवृत्ति सत् प्रत्येकं पर्यवसितं न भवेत्तदा परं सामान्यविधेर्विशेषविषयार्थवादेन विरोधः स्यान्न त्वेतदुभयमप्यस्ति विधेः सामान्यरूपेणैवाञ्जनसाधनद्रव्योपस्थापकत्वात्सामान्यस्य प्रत्येकं पर्यवसितत्वाच्चेत्येवं श्लोकं व्याचष्टे—**सामान्यं हीति** । नन्वेवमपि सामान्येनापि सर्वविषयस्य विधेः संकोचादवर्जनीयो बाध इत्यत आह—**अवश्यंचेति** । ततश्च व्यवहाराय विध्यनुमतत्वात्संकोचो न दोष इति भावः । ननु घृतशब्दस्य घृतवाचकस्यापि नवपुराणगव्यमाहिषादिविशेषमनपेक्ष्य व्यवहारोपयोगित्ववद्विधेरपि विशेषमनपेक्ष्यैव व्यवहारोपयोगित्वं किं न स्यादित्यत आह—**तत्रासतीति** । तत्र नवपुराणत्वादिविशेषनिर्धारणे प्रमाणाभावाद्धृतत्वेन रूपेण निश्चितेन येनकेनचिद्विशेषेण व्यवहारः स्वीक्रियत इत्यर्थः । ननु अर्थवादेनापि घृतेनाञ्जनं कर्तव्यमिति न प्रतीयत इत्यत आह—**सहीति** । एवंच घृतस्तुतिबलाद्धृतस्याञ्जनसाधनत्वेन विधानावश्यंभावेन ततएव सामान्यविधेः पर्यवसानसंभवेन विधेः स्तुतिशक्तिं कल्पयित्वा प्रत्यक्षस्तुतिरहिततैलादेर्विधेयत्वकल्पनं गौरवपराहतम् । 'अतएवाग्नेय्या आग्नीध्रमुपतिष्ठत' इत्यत्राप्रकृताग्नेयीग्रहणे तस्याः क्रतुसंबन्धस्यापि कल्पनीयत्वात्तत्कल्पनागौरवपरिहारार्थं ज्योतिष्टोमप्रकरणपठिताग्नेयीपरत्वमेव सामान्यशब्दस्याग्नी-

सामर्थ्येनाव्यवस्थितानां व्यवस्थाधिकरणम् ॥ २० ॥

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

**स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी ॥ आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवस्थिताः ॥ ५५ ॥**

**व्यवस्थापकराहित्यात्स्रुवाद्या अव्यवस्थिताः ॥ व्यवस्थापकतागतेस्तद्वशेन व्यवस्थितिः ॥ ५६ ॥**

विधेरिदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते। 'स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यतीत्यवदानाङ्गतया[1] स्रुवादीनि विहितानि। अवदानं च द्रवाणामाज्यादीनां संहतानां च पुरोडाशादीनां मांसादीनां चास्ति। तत्र किमविशेषेण स्रुवादीनि भवेयु; यथासामर्थ्यं वेति। तथाञ्जलिना सक्तून् प्रदाव्ये जुहुयादिति किं देवताप्रसादादिप्रार्थनायामिव हस्तसंयोगमात्रमञ्जलिहोमे उत यथासामर्थ्यं व्याकोश एवेति तत्राविशेषश्रवणादनियम इति प्रतिभायामुत्तरमुच्यते। अशक्यार्थविध्यसंभवादवश्यंविधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्तव्यं तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति 'द्रवादिषु स्रुवादीनां व्याकोशस्य च सक्तुषु ॥ अर्थापत्तिवशात्तस्माद्व्यवस्थैवेत्यवस्थितम्[2] ॥ नामार्थवादविधिमन्त्रयुतश्च वेदस्तद्वत्स्मृतेश्च चरितं च निरस्तदोषम्। धर्मप्रमाणमिह सिद्धमतः परं तद्भेदप्रकारविनियोगफलादिचिन्ता' ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

---

क्रियते। एवंच प्रत्यक्षस्तुतिसद्भावे विधेः स्तुतिशक्तिकल्पनानुपपत्तेरक्ता इत्यत्र स्तुत्यर्थमवश्यापेक्षितार्थवादत एव अञ्जनक्रियापेक्षितसाधनलाभे क्रिययाञ्जनसाधनद्रव्यसामान्याक्षेपस्यैवात्राप्रवृत्तेर्विरोधशङ्कावकाश एव नास्तीति भावः। सूत्रार्थस्तु संदिग्धविधौ अर्थवादरूपाद्वाक्यशेषात्तद्विषयत्वकल्पनेति। यद्यपि विधावपि सामान्यरूपेण निश्चयान्न मुख्यसंदेहस्तथापि घृततैलवसानामन्यतममञ्जनसाधनमित्यव्यवस्थितार्थप्रतीतिमादाय गौणसंदेहपरोयं शब्द इत्याहुः ॥

**अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥** ननु सामर्थ्यस्य लिङ्गरूपत्वात्तद्विचारस्य तृतीये सङ्गतस्य कथमत्र सङ्गतिरित्यत आह—**विधेरिति**। अर्थवादरूपवेदावयवस्य स्तावकत्वातिरेकेण प्रामाण्यप्रतिपादने तद्वदेवविधिरूपावयवस्यापि विधायकत्वातिरेकेण प्रकारान्तरेणापि प्रामाण्यमस्त्विति व्युत्पादनमत्रैव सङ्गतमितीदानीमित्यनेन सूचयति। विचारोपयोगितयावदानस्य विषयभेदमाह—**अवदानं चेति। यथासामर्थ्यमिति।** हस्तस्य पुरोडाशावदाने स्रुवस्य द्रवावदाने स्वधितेः मांसावदाने चेत्यर्थः। सामर्थ्यानुसरणे सति यत्रोद्देश्यसंकोचस्तादृशमुदाहृत्य यत्र विधेयस्य संकोचस्तदुदाहरति—**तथेति**। प्रदाव्ये दवाग्नावित्यर्थः। व्याकोश इति। आ ईषदर्थे ईषत्कोश ईषद्विकसितमुकुलसदृशः ननु देवताप्रसादनाभयप्रार्थनादाविवात्यन्तं हस्तद्वयसंयोग इति यावत्। **अविशेषेति**। पूर्ववदिह व्यवस्थापकार्थवादाभावादिति भावः। अतएव पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिर्बोध्या। यद्यप्यशक्यार्थविधिरनुपपन्नस्तथापि सामर्थ्यरूपलिङ्गानुसारेण श्रुतिसंकोचस्यायुक्तत्वात्सामान्यविषयश्रुत्यनुसारेण मुख्यसामर्थ्याभावेप्यैन्द्रीन्यायेन गौणे सामर्थ्यमाश्रित्य शक्यार्थविधानमुपपादनीयम्। अस्तिच हस्तादेर्मांसाद्यवदानेऽपि आयसादिसहायेन गौणं सामर्थ्यमित्याशयः। (तथासति) आयसादिसहायेन सामर्थ्यमिहाङ्गीकर्तुं न शक्यते हस्तेनेत्यादिना हस्तादेर्निरपेक्षसाधनत्वावगमादतएव व्रीहिभिरित्यवगतनैरपेक्ष्यबाधप्रसङ्गाद्व्रीहियवयोर्न मिश्रणेन पुरोडाशप्रकृतित्वमिति द्वादशे वक्ष्यते। अतोऽत्र गौणसामर्थ्यस्याप्यसंभवादवश्यंभाविश्रुतिसंकोच इत्याशयेनाह—**अशक्येति**। नच यथाउत्करे[3] वाजिनमासादयतीति श्रुतवाजिनपात्राधारत्वोपपत्त्यर्थमुत्करस्य पृथ्वग्रत्वं कल्प्यते तद्वदिह स्वधितेर्द्रवावदानसामर्थ्यसिध्यर्थं बिलवत्त्वं स्रुवस्य मांसावदानसामर्थ्यसिद्ध्यर्थं तीक्ष्णाग्रत्वं च कल्प्यतामिति वाच्यम्। प्राक्सिद्धस्वरूपेण श्रुतिनिर्वाहाभावादुत्करे पृथ्वग्रत्वकल्पनेऽपि प्रकृते क्लृप्तसामर्थ्येन स्वधित्यादेर्मांसाद्यवदानमात्रविनियोगस्वीकारेऽपि श्रुत्युपपत्त्या बिलादिकल्पनागौरवस्यानाश्रयणीयतया कल्पनागौरवभीत्या पूर्वत्रैवाग्नेयीन्यायेनात्रापि श्रुतिसंकोचस्यैव न्याय्यत्वादित्याशयेनोपसंहरति—**तस्मादिति। आकोशस्य[4] चेति**। अञ्जलिना वा पिबेदित्यादाविवेति भावः। सूत्रार्थस्तु सामर्थ्याद्विधेर्व्यवस्थितार्थत्वकल्पना स्यात् सामर्थ्यकल्पितशब्दस्य विधिवाक्यैकदेशत्वादिति। अत्र पूर्वसूत्रात्संदिग्ध इति पदमनुषञ्जनीयम्। तेन यत्र संदेहो नास्ति तत्र न सामर्थ्येन व्यवस्था कल्पनीया। तथाच दर्शपूर्णमासादिविधेरेकादशे वक्ष्यमाणन्यायेन सर्वाङ्गविशिष्टकर्मविषयतया निश्चितस्य सामर्थ्यानुसारेणान्धपङ्ग्वादिषु शक्यमात्राङ्गविषयतया संकोचकल्पना न प्रसज्यत इति न तिर्यगधिकरणविरोधः। अनेनैवाभिप्रायेण विधेरिदानीमित्यधिकरणाद्यवाक्ये संदिग्धार्थनिर्णय इत्युक्तमिति ध्येयम्। शिष्यबुद्धिसौकर्यायैतदध्यायार्थं द्वितीयाध्यायार्थजातं च कारिकया संगृह्णाति—**नामार्थवादेति** ॥ **इति श्रीनिट्टलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकासंज्ञायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥**

---

१ त्ववदानसाधनत्वेन. २ व्यवस्थेति व्यवस्थितम्. ३ उत्कटे. ४ व्याकोश.

# द्वितीयोऽध्यायः ॥ २ ॥

## द्वितीयाध्याये प्रथमः पादः ।

अपूर्वस्याख्यातप्रतिपाद्यत्वाधिकरणम् ॥ १ ॥

**भावार्थाः कर्मशब्दाः, तेभ्यः क्रिया प्रतीयेत, एष ह्यर्थो विधीयते ॥ १ ॥ [ सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥ येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात्स्वे प्रयोगे ॥ ३ ॥ येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः प्रतीयेताश्रितत्वात्प्रयोगस्य ॥ ४॥ ]**

प्रमाणमुपजीव्यत्वात्प्रथमेऽध्याय ईरितम् ॥ मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥ १ ॥
विधिवाक्ये पदैः सर्वैरपूर्वं प्रतिपाद्यते ॥ प्रत्येकमथवैकेन सर्वैस्तत्प्रतिपादनम् ॥ २ ॥
फलान्वयित्वात्सर्वेषां प्रधानान्वयलाभतः ॥ लाघवादेकबोध्यत्वं तच्छेषस्तु पदान्तरम् ॥ ३ ॥
द्रव्यादिशब्दतोऽपूर्वधीर्भावार्थपदादुत ॥ द्रव्यादीनां फलार्थत्वात्तच्छब्देन ह्यपूर्वधीः ॥ ४ ॥
क्रियाद्वारमृते द्रव्यं फलेन नहि युज्यते ॥ भावनावाचिनोऽपूर्वमाख्यातादवगम्यते ॥ ५ ॥
धात्वर्थव्यतिरेकेण भावना नेति चेन्न तत् ॥ सर्वधात्वर्थसंबद्धः करोत्यर्थो हि भावना ॥ ६ ॥
धात्वर्थः करणं तस्यां समानपदवर्णितः ॥ द्रव्याद्युपकृतिर्दृष्टा धात्वर्थोत्पादनात्मिका ॥ ७ ॥

प्रथमेऽध्याये धर्मस्य प्रमाणं निरूपितं, प्रथमपादे चोदनायाः त्रिपाद्यां त्वर्थवादमन्त्रनामधेयस्मृत्याचाराणां, वाक्यशेषसामर्थ्ययोश्च संदिग्धार्थनिर्णये[1] प्रामाण्यमुक्तम् । एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणात्कथंलक्षणको धर्म इत्ययमंशो निरूपितः । तद्विचारादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्मत्वावधारणात्को धर्म[2] इत्ययमंशो विचारितो भवति । वेदादिप्रमेयो धर्म इत्येतावत्यवबोधितेऽपि न कार्त्स्न्येन धर्मस्वरूपमवगतं भवति । भेदलक्षणेन त्वियन्ति धर्मस्वरूपाणीत्यवधारणाभिर-

---

**भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥** विनियोगप्रयुक्त्यादीनामपि यद्यपि प्रमाणाधीनसिद्धिकत्वमस्ति तथापि प्रमाणनिरूपणानन्तरं धर्मस्वरूपविशेषस्य प्रथमं जिज्ञासितत्वात्तदर्थं भेदनिरूपणमेव कर्तव्यं नतु विनियोगादिनिरूपणमित्याशयेन धर्मस्वरूपविशेषस्य प्रथमजिज्ञासितत्वस्फोरणार्थं वृत्तं कीर्तयति—**प्रथम इति ।** कृत्स्नस्याध्यायस्य प्रमाणनिरूपणपरत्वं नतु प्रथमपादमात्रस्येति नामधेयपादाद्ये स्वेन प्रतिपादितमर्थं मनसि निधाय कृत्स्नाध्यायस्य प्रमाणनिरूपणपरत्वं विशदयति—**प्रथमपाद इति । त्रिपाद्यांत्विति ।** नत्वेकदेशिरीत्या प्रकारव्युत्पादनपरत्वं त्रिपाद्या इति भावः । चोदनामपेक्ष्य यत्प्रमाणं तद्युत्पादनरूपार्थैक्यात्त्रिपादीति समाहारो बोध्यः । सामर्थ्यशब्दस्त्वत्सनाथविधिपरस्ततश्च वाक्यशेषसामर्थ्ययोः संदिग्धार्थनिर्णये चेत्यन्वयो बोध्यः । यथाच 'अर्थाद्वा कल्पनैकदेशत्वादि'तिसूत्रे 'संदिग्धे तु वाक्यशेषा'दित्यतः संदिग्धपदानुषङ्गस्तथा तत्रैव प्रतिपादितम् । **ननु** समस्तस्य प्रमाणनिरूपणपरत्वमनुपपन्नं कथं लक्षण इति भाष्ये थमुप्रत्ययप्रयोगेण प्रकारस्यापि व्युत्पाद्यत्वप्रतीतेरित्याशङ्क्य भाष्यस्यापि प्रकारस्य प्रधानतया व्युत्पादने न तात्पर्यं किंतु समस्तेनाध्यायेन प्रमाणे व्युत्पाद्यमाने आनुषङ्गिकतया प्रकारव्युत्पादने इति न भाष्यविरोध इत्याशयेन स्वोक्तार्थमेव भाष्यारूढं करोति—**एवमिति । इत्ययमंश इति ।** इति जिज्ञासितोंश इत्यर्थः । अंशत्वं चास्य प्रथमसूत्रोपक्षिप्तप्रमाणस्वरूपसाधनादिसमुदायापेक्षया चोदनासूत्रे श्रुत्यर्थाभ्यां प्रतिपाद्यमानप्रमाणस्वरूपोभयसमुदायापेक्षयापि वा बोध्यम् । एवमग्रेपि । एवं वृत्तमनुकीर्त्य ततएव विशेषजिज्ञासोपयोगितया धर्मस्वरूपस्य सामान्यतः सिद्धिमाह—**तद्विचारादेवेति ।** तदुपयोगितयैव विशेषतो निर्णयाभावमाह—**वेदादीति । नन्वस्तु** प्रमाणनिरूपणेन सामान्यतो धर्मस्वरूपस्य ज्ञातत्वात्तद्विशेषजिज्ञासा तथापि भेदलक्षणारम्भे किमायातमित्यत आह—**भेदलक्षणेनेति ।** भेद-

---

१ संदिग्धनिर्णये. २ को धर्मः.

वशेषस्वरूपावगतिसिद्धिः। अतो भेदलक्षणमपि कोधर्म इत्यस्मिन्नंशेऽन्तर्गतं ( भवति )। कान्यस्य साधनानीत्येवमादीनि तु शेषलक्षणादौ विचारयिष्यन्ते। सर्वंच भेदाभेदशेषशेषिभावादि प्रमाणबलेन निरूपणीयमिति प्रमाणलक्षणात्पश्चादारम्भः। ननु वेदार्थस्यैवेह भेदाभेदादि शास्त्रे चिन्त्यते तत्र तु वेदप्रामाण्यमेवोपयुज्यते, स्मृत्यादिप्रामाण्यस्य तु नतत्रोपयोगं पश्यामः। नैवम्। धर्मस्यैवेह भेदाभेदादिविचारः शास्त्रे चिन्त्यते श्रौतस्य स्मार्तस्य वा। न श्रौतस्यैव। अष्टकादिष्वपि शब्दान्तरादिलक्षणस्य भेदस्य श्रुत्यादिलक्षणस्य च शेषशेषिभावस्य प्रयुक्त्यादेश्च तुल्यत्वात्। अपिचाहत्यैव शास्त्रे स्मृत्याचारप्रमाणकधर्मविचारः प्रदेशेषु करिष्यते द्रव्यार्जननियमः क्रत्वर्थः पुरुषार्थ इति। तथा प्रजापतिव्रतानि। तथा तस्मिंस्तु शिष्यमाणा जननेन प्रवर्तेरन्। अपिवा वेदतुल्यत्वादुपायेन प्रवर्तेरन्। आचाराद्गृह्यमाणेषु तथा स्यादित्यादिभिः। तस्माद्धर्म इत्येव शास्त्रविषयो न वेदार्थ इति। तथाच दर्शितं 'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजन'मिति। तथा चा 'थातो धर्मजिज्ञासा। चोदनालक्षणोऽर्थो धर्म' इति च सूत्रं, को धर्मः कथंलक्षण इत्यादि भाष्यं च न कुकविकृतिरिव वेदार्थपरं व्याख्येयम्। अतो धर्मप्रमाणत्वेन स्मृत्यादिनिरूपणं नानुपयोगीति सिद्धम्। तत्र भेदपूर्वकत्वाच्छेषलक्षणादेः प्रथमं तावद्भेदलक्षणमारभ्यते शब्दान्तरादिभिः। तत्र शब्दान्तराभ्यासना-

---

निरूपणेन परस्परव्यावृत्तत्वावगतौ सत्यामियन्ति धर्मस्वरूपाणीत्यशेषविशेषधर्मस्वरूपावगतिर्भवतीत्यर्थः। ततश्च प्रमाणनिरूपणानन्तरं प्रथमजिज्ञासितधर्मविशेषस्वरूपनिर्णयार्थत्वाद्भेदलक्षणमेव प्रथममारम्भणीयमित्याशयेनाह—**अतो भेदलक्षणमपीति**। ततश्च सर्वेषां प्रमाणाधीनसिद्धिकत्वाविशेषे विशेषलक्षणादौ निरूपणीयार्थस्य प्रमाणनिरूपणाधीनजिज्ञासाविषयत्वाभावान्न तन्निरूपणमिह सङ्गतमित्याशयेनाह—**कान्यस्येति**। नन्वेवं प्रथमसूत्रे स्वपदोपात्तधर्मस्वरूपस्यैव प्रमाणापेक्षयापि प्रथमं जिज्ञासितत्वात्तदर्थस्य भेदलक्षणस्यैव प्राथम्यं स्यादतएव भाष्यकारेण को धर्मः कथंलक्षणक इति प्रमाणजिज्ञासापेक्षयापि स्वरूपजिज्ञासैव प्रथममुपात्तेत्यत आह—**सर्वंचेति**। एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यादित्युत्पन्नस्योत्पत्तिविध्यानर्थक्याद्भेदः प्रतिपाद्यते। तत्प्रतिपादनं चानर्थक्यपरिहारेण प्रामाण्यव्युत्पादनानन्तरमेव घटते नान्यथा। शेषत्वादौ तु नैवम्। अवघातादेराज्यार्थत्वेऽप्यदृष्टार्थतयानर्थक्याभावादित्यसाधारण्येनापि भेदलक्षणस्य प्रमाणलक्षणापेक्षा बोध्या। नन्वेवं स्मृत्यादिप्रामाण्यविचारस्य प्राथम्यं न स्यादिति शङ्कते—**नन्विति**। **वेदार्थस्यैवेति**। तस्यैव सर्वत्रोदाहरणादिति भावः। आहत्योदाहृतत्वाभावेऽपि न्यायसाम्यात्स्मार्तस्यापि शास्त्रविषयत्वमप्रतिहतमिति परिहरति—**नैवमिति**। अनुदाहृतत्वमप्यसिद्धं स्मार्तादिमात्रनिष्ठविचारस्यापि दर्शनादित्याह—**अपिचेति**। **द्रव्येति**। प्रतिग्रहादिनैव ब्राह्मणो धनमर्जयेदित्येवंरूप इत्यर्थः। **तथेति**। 'नेक्षेतोद्यन्तमादित्य'मित्यादीनि प्राजापत्यव्रतानि विचारयिष्यन्त इत्यर्थः। **तस्मिन्निति**। 'प्राङ्मुखोऽन्नानि भुञ्जीत, उदङ्मुखो मूत्रं कुर्या'दित्यादयः स्मार्तनियमास्तस्मिन्पुरुषे शिष्यमाणा जननेन जननमारभ्य प्रवर्तेरन्निति, वेदाध्ययनतुल्यत्वादुपायेनोपनयनमारभ्य प्रवर्त्तेरन्निति च पूर्वोत्तरपक्षसूत्राभ्यां षष्ठे स्मार्तनियमाश्चिन्तयिष्यन्त इत्यर्थः। स्मार्तस्याहत्य विचार्यत्वमुदाहृत्याचारप्रमाणकस्याप्युदाहरति—**आचारादिति**। आचाराद्गृह्यमाणेषु गुर्वनुगमनादिषु तथाभेदनहोमादिवत्प्रतिनिमित्तमावृत्तिः स्यादित्यनेनाचारप्रमाणकं विचारयिष्यत इत्यर्थः। आदिशब्देनोदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि इतरेषु तु पैत्राणीत्यादिसंग्रहः। ननु स्मार्तादिविचारः प्रासङ्गिकतयाप्युपपद्यत इत्यस्वरसादाह—**तथाचेति**। मीमांसाया धर्माख्यं विषयं प्रयोजनं च वक्तुं आद्यसूत्रं प्रवृत्तमित्यर्थः। तथाचैतद्वार्तिकविरोधाद्वेदार्थमात्रस्य विषयत्वं वक्तुं न शक्यत इति भावः। यदि शङ्को गुरुमतानुसारी तदा स वार्तिकविरोधं नानुमन्यत इत्याशयेनाह—**तथाचेति**। प्राभाकराणां तथा व्याख्यानमेव दोष इति भावः। **ननु** प्रथमसूत्रेऽथशब्देन वेदाध्ययनानन्तर्यस्योक्त्या तदनुसारेण धर्मशब्दस्य वेदार्थपरत्वेन व्याख्यानं न दुष्यति। नचाथशब्द आनन्तर्यमेव प्रतिपादयति। वेदाध्ययनानन्तर्यं तु वेदार्थभूतधर्मजिज्ञासाबलादेव वर्णनीयम्। तथाच वेदाध्ययनानन्तर्यवत् स्मृत्यध्ययनानन्तर्यमप्यथशब्देन प्रतिपादयितुं शक्यत इति न तद्बलाद्धर्मशब्दस्य वेदार्थपरत्वेन व्याख्यानं युक्तमिति वाच्यम्। एवमप्याचारप्रमाणकधर्मस्यासंग्रहापत्तेरिति चेन्नैवम्। स्मृत्यादीनां वेदमूलतया प्रमाणत्वेन प्रधानभूतवेदाध्ययनानन्तर्योक्त्या तन्मूलप्रमाणभावस्मृत्यादिगम्यधर्मव्यावर्तनाक्षमत्वादिति भावः। भेदलक्षणस्य प्राथम्ये नियामकान्तरमाह—**तत्र भेदपूर्वकत्वादिति**। तत्र सर्वस्य प्रमाणाधीनत्वेऽपीत्यर्थः। **ननु** शब्दान्तरादीनां न भेदबोधने सामर्थ्यमित्यत आह—**तत्रेति**। तथाच शब्दान्तरादीनामुत्पत्तिविधिद्वारा भेदबोधकत्वमस्तीत्यर्थः। उत्पत्तिविधिरपि न साक्षाद्भेदं बोधयति किंत्वर्थादि-

---

१ शेषलक्षणे. २ शेष्यादि. ३ चारगम्यधर्म.

मभेयगुणप्रकरणान्युत्पत्तिपरतां विधेर्बोधयन्ति । उत्पन्नस्य चोत्पत्त्यन्तराभावात् । वाक्यान्तरविहितात्कर्मणः स्ववाक्यविषयस्य भेदं बोधयन्ति । संख्या त्वेषामेवान्यतमेनोत्पत्तिपरत्वे विधेरवगते सत्यनेकोत्पत्तिपरतां विधेर्बोधयन्ती स्ववाक्यविधेयानामेव कर्मणां मिथोभेदमावहतीति वेदितव्यम् । तदिह धात्वर्थभावनापूर्वाणां त्रयाणामपि भेदः प्रतिपादयिष्यते । तत्रापूर्वस्याशब्दार्थत्वात्स्वरूपेण भेदनिरूपणाशक्तेर्भावनाभेदानुनिष्पादी भेदः तद्भेदश्च करणीभूतधात्वर्थभेदद्वारेण वक्ष्यते । तच्च धात्वर्थस्य करणत्वे सति वक्तुं शक्यते नान्यथेति प्रस्तुतधात्वर्थभेदानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थमाद्यमधिकरणमुपोद्घातत्वेनाध्यायस्यारभ्यते । किमिहोदाहरणं 'श्येनेनाभिचरन्यजेत', 'चित्रया यजेत पशुकामः', 'सोमेन यजेत, 'हिरण्यमात्रेयाय ददाति' 'हिरण्यं भार्यं' 'समिधो यजति' 'दशापवित्रेण ग्रहं संमार्ष्टि' 'यद्येनमार्त्विज्यादवृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येन । यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयादि'त्यादियावत्किंचिददृष्टार्थं विधानं कर्तव्यं पुरुषार्थं काम्यं नैमित्तिकं वा द्रव्योपपदं वा नामोपपदं वा गुणोपपदं वा तत्सर्वमुदाहरणम् । केचित्त्वधिकारचोदना एवोदाहरन्ति तासु च सर्वासु विरुद्धत्रिकद्वयापत्त्या नामैवोपपदम् । अतो नामो-

---

त्याह—**उत्पन्नस्येति** । अनेनोत्पत्तिपूर्वकत्वाद्विनियोगादीनां उत्पत्तिविध्यर्थविचाररूपस्य भेदलक्षणस्य विनियोगादिविध्यर्थविचारात्मकशेषलक्षणाद्यपेक्षया प्राथम्यमावश्यकमिति नियामकान्तरं सूचितम् । ननु प्रयाजैकादशत्वादेः संख्यान्तरावरुद्धेष्वन्वयदर्शनाच्च संख्यायाः स्वविशिष्टकर्मोत्पत्तिपरत्वापादकत्वमिति कथं तस्याभेदकत्वमित्यत आह—**संख्यात्विति** । सप्तदश प्राजापत्यानित्यत्रानेकगुणश्रवणात् द्वेधाहि गुणस्य भेदकत्वमिति पौर्णमास्यधिकरणे वक्ष्यमाणन्यायेन गुणतः विधेः कर्मोत्पत्तिपरत्वे सति उत्पद्यमानस्य कर्मणोऽनेकत्वं बोधयतीत्यर्थः । अनेन संख्यागुणयोर्भेदो दर्शितः । शब्दान्तरसंज्ञयोस्तु भेदं संज्ञाधिकरणे वक्ष्यामः । लिङ्गस्य क्रमप्रकरणादिसापेक्षस्यापि श्रुत्यादिभिः सहेव संख्याया गुणादिसापेक्षाया अपि शब्दान्तरादिभिः सह परिगणनं न विरुध्यत इति द्रष्टव्यम् । ननु यदि शब्दान्तरादिभिः भेदोऽस्मिन्नध्याये व्युत्पाद्यते तर्हि भावार्थाधिकरणस्य भेदव्युत्पादकत्वाभावादस्मिन्नध्याये सङ्गतिर्न स्यादिति शङ्कायामुपोद्घाततया संगतिरिति परिहारं वदन् उपोद्घातत्वोपयोगितयाऽध्यायप्रतिपाद्यं विशदयति—**तदिहेति** । ततस्मादुक्तरीत्या भेदव्युत्पादनस्यात्रैव सङ्गतत्वादित्यर्थः । इहाध्याये इत्यर्थः । ननु त्रयाणामध्यायार्थत्वमात्रेण कथमुपोद्घातत्वसिद्धिरित्यत आह—**तत्रापूर्वस्येत्यादिना** । **भावनाभेदेति** । अंशत्रयविशिष्टभावनाया वाक्यार्थत्वेन तद्भेदस्य साक्षात्प्रतिपादयितुं शक्यत्वात्तत्प्रतिपादने सति क्रियाणां फलापवर्गित्वेन तद्भेदस्य फलभेदंविनानुपपत्तेर्नान्तरीयकतया अपूर्वभेदः सिद्ध्यतीत्यर्थः । अनुनिष्पादीत्यस्यायत्नसिद्धत्वे तात्पर्यं नतु अनादरणीयत्वेऽपूर्वसाधनत्वेनैव भावनानां धर्मत्वं न स्वरूपेणेति धर्मभेदेयत्ताज्ञानस्यापूर्वभेदानादरे सिध्यभावादिति । **तद्भेदश्चेति** । भावनाभेदश्चेत्यर्थः । एवंच भावनाभेद एवाध्यायार्थः । अपूर्वभेदधात्वर्थभेदौ तु तत्र फलतया गुणतया चान्यथासिद्धावित्यध्यायभेदशङ्काया अप्यनवकाश इति भावः । **प्रस्तुतेति** । अनुनिष्पादिशब्देन धात्वर्थभेदानुनिष्पादित्वाद्भावनाभेदो विवक्षितस्ततश्च धात्वर्थभेदस्य तदनुनिष्पादी यो भावनाभेदः यश्चापूर्वभेदः तयोर्योऽनुसारः प्रस्तुतस्तत्सिध्यर्थमित्यर्थः । धात्वर्थभेदस्य भावनाभेदद्वारा पूर्वभेदपर्यन्तत्वं यत्प्रस्तोष्यते तत्सिद्ध्यर्थमिति यावत् । प्राभाकरोक्तोदाहरणं निराचिकीर्षुः स्वमत उदाहरणं प्रश्नपूर्वकमाह—**किमिहेत्यादिना** । अभिचरन् शत्रुवधकामः दशापवित्रं शुक्लं वलक्ष्याः पवित्रमोतं भवतीत्यापस्तम्बोक्तलक्षणं द्रष्टव्यम् । दशहोता 'चित्तिःस्रुगि'त्यादिमन्त्रः । चतुर्होता पृथिवीहोतेत्यादिः । उभयत्र तृतीयार्थे द्वितीया । **अदृष्टार्थमिति** । यद्यप्यत्र धात्वर्थस्य भावनाकरणत्वं व्युत्पाद्यमेवंच दृष्टार्थस्यावहननादेर्वैतुष्यादिभावनाकरणत्वमप्येतदधिकरणलभ्यमिति तस्याप्युदाहरणत्वं संभवति, तथापि करणत्वव्युत्पादनस्य करणभेदनिबन्धनभावनाभेदानुनिष्पाद्यपूर्वभेदे तात्पर्यमिति तात्पर्यविषयीभूतापूर्वभेदस्य दृष्टार्थेष्वभावात्तद्व्यावृत्त्यर्थमदृष्टार्थमित्युक्तम् । नियमादृष्टं तु न क्रियाजन्यमिति तद्भेदः सन्नप्यकिंचित्करः । उक्तंच वार्तिके 'सत्यप्यवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्मांकाङ्क्षितदृष्टप्रयोजनपर्यवसानान्न क्रियाजन्यापूर्वान्तरोत्पत्तिः । यत्तु नियमापूर्वं निरूपितं तत्क्रियाजन्यं न भवतीति न तथा व्यपदिश्यत इति । एवंच दशापवित्रेण ग्रहं संमार्ष्टीति नित्यवत्श्रुतस्य संमार्गस्यानित्यसोमावमैकनिर्हरणार्थत्वानुपपत्तेरदृष्टसंस्कारार्थत्वमेवेत्याशयेन तदुदाहृतं । द्रव्यगताधेयशक्तिरूपादृष्टसंस्कारस्याप्यपूर्वत्वेन संमार्गाधिकरणे ग्रन्थकारेण व्यवहारादुपपन्नं तस्योदाहरणत्वमिति द्रष्टव्यम् । प्राभाकरमतमाह—**केचिदिति** । **विरुद्धेति** । ननु तन्मते किं विषयत्वान्वयमादाय विरुद्धत्रिकद्वयं करणत्वान्वयमादायवा नाद्यः । कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं हि विषयत्वम् । एतादृशस्य च विषयत्वस्य कारकान्वयाविरोधित्वेन विध्यावृत्तिं विनान्वितामिधानादेवोपपदार्थकारकविशिष्ट-

---

१ त्पत्त्यभावात्. २ परतां बोधयन्ती. ३ विहितानामेव. ४ एवोदाहरणं. ५ वक्ष्यन्.

**पपदान्येवोदाहरणमित्याहुः। तदयुक्तम्। तथाहि यद्यपि तावदधिकारचोदना एवोदाहरणं तथापि तासु सर्वासु न नामैवोपपदं यदेव हि यौगिकवाक्यभेदतत्प्रख्यतव्यपदेशयुक्तं तदेव नामधेयं इतरत्स्वधिकारावगतमपि गुणार्थमेव। यथा 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुया'दिति चतुर्होतृशब्दो मन्त्रवचनो न नामधेयम्। तथा 'यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहीतेनाज्येनेति नैमित्तिकाधिकारगतमाज्यपदं न नामधेयम्। नच विरुद्धत्रिकद्वयापत्तिः। मत्वर्थलक्षणया विशिष्टविधिसंभवात्। वरंच[3] मत्वर्थलक्षणा अप्रसिद्धार्थकल्पनातः। इतरथा हि सोमेनयजेतेत्यपि सोमपदं नामधेयंस्यात्। उत्पत्तिवाक्येऽपि गुणपक्षे लक्षणास्तीत्यभ्यासाधिकरणे स्वयमेव निबन्धनकारेणोक्तं 'यागविधानेने'त्यादिना। युक्तं चैतत्।(तथापि तत्रापि यद्यपि प्रथमपूर्वान्तरमप्रतिपन्नं तथापि प्रत्ययेन तावत्तदेवाभिधीयते। तत्करणं च याग इति दोषसाम्यान्नामत्वं स्यात्। नचैवं युक्तम्। किंच 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'वायव्यं श्वेतमालभेते'त्यधिकारचोदनेयम्। अत्र चरुं श्वेतमिति द्रव्यगुणशब्दौ, सौर्यादिपदं भावार्थं नियोगविषय**

---

धात्वर्थप्रतीतिसंभवेन विरुद्धत्रिकद्वयाप्रसङ्गात्। न द्वितीयः। पदनिमित्तान्वयो हि विरुद्धत्रिकद्वयापत्तिप्रयोजकः विषयत्वमेव च तन्मते आभिधानिकं करणत्वं त्वौपादानिकमिति करणत्वान्वयस्य पदनिमित्तकत्वाभावात्तमादाय विरुद्धत्रिकद्वयप्रसक्त्यभावादिति चेन्मैवम्। यद्यप्यवच्छेदकत्वमेव विषयत्वं तथापि तद्घटकत्वपर्यन्तमिति वाजपेयाधिकरणे वरदराजोक्तेरवच्छेदकत्वरूपविषयत्वाभिधाने धात्वर्थस्यापूर्वगतकृतिसाध्यताघटकत्वस्याभिधानमायातं। घटकत्वंच कृतिसाध्यत्वे सति अपूर्वसाधनत्वरूपमिति कृतितत्साध्यमध्यस्थस्य धात्वर्थस्यापूर्वप्रतिसाधनतया धीस्थत्वेनोपपदार्थकारकान्वयायोग्यतयाऽन्विताभिधानतो विशिष्टप्रतीत्यसंभवेन धात्वर्थोद्देशेनोपपदार्थस्य पृथग्विधेयतया विरुद्धत्रिकद्वयापत्तिसंभवात् कामाधिकारे च फलकरणत्वेनाभिसंहितस्यैव विषयत्वेनाभिधानदशायामेव करणत्वस्फुरणेन करणत्वस्याप्याभिधानिककल्पत्वात्करणत्वान्वयमादायापि तत्र विरुद्धत्रिकद्वयापत्तिः संभवतीति न काप्यनुपपत्तिः। **नामेति**। नामोपपदान्यधिकारचोदनावाक्यान्येवोदाहरणमित्यर्थः। प्रथममधिकारचोदनामात्रोदाहरणत्वाङ्गीकारपूर्वकं तत्र नामोपपदत्वनियमं दूषयति—**यद्यपीत्यादिना**। **यौगिकेति**। यौगिकशब्दो भावप्रधानः तथाच कर्मणि योगेन संभवद्वृत्तिकत्ववाक्यभेदादि युक्तमित्यर्थः। **नैमित्तिकेति**। वृतस्य निरासेसति निरस्तपुरुषस्यैवायं विधिरिति क्रत्वर्थत्वाभावादस्य नैमित्तिकाधिकारकत्वमिति भावः। ननु चतुर्होतृशब्दस्याज्यशब्दस्य च गुणविधित्वे विरुद्धत्रिकद्वयापत्त्या नामत्वमेवैष्टव्यमित्याशङ्क्य निराकरोति—**नचेति**। ननु तर्हि मत्वर्थलक्षणैव दोष इत्यत आह—**वरंचेति**। ननूत्पत्तिवाक्ये लिङ्प्रत्ययेन प्रधानापूर्वानुवादशङ्कयाऽपूर्वप्रतीत्यभावेन धात्वर्थस्य करणत्वाभावात्साध्यतया क्रियात्मना प्रतीयमाने तस्मिन् सोमेनेति कारकान्वयस्य मत्वर्थलक्षणांविनैव संभवात्। सोमेन यजेतेत्युत्पत्तिवाक्येन मत्वर्थलक्षणाप्रसक्तिरित्यत आह—**उत्पत्तीति**। अभ्यासाधिकरणे समिधो यजतीत्यत्र गुणविशिष्टकर्मविधौ मत्वर्थलक्षणाप्रसङ्गात् समिच्छब्दो न गुणपर इति निबन्धनकारेणोक्तत्वात्। प्राभाकरमतेऽपि सोमेन यजेतेत्युत्पत्तिवाक्येऽपि मत्वर्थलक्षणा स्यादित्यर्थः। ननु समिधो यजतीति द्वितीयान्तस्य समिच्छब्दस्य साध्यार्थकत्वादुत्पत्तौ च धात्वर्थस्य साध्यत्वेन साध्यस्य साध्यान्तरसंबन्धाभावात्समिद्वन्तं यागं कुर्यादिति युक्ता मत्वर्थलक्षणा, सोमेन यजेतेत्यत्र तु नैवं तृतीयान्तत्वादयंचार्थोऽभ्यासाधिकरणे वरदराजीये स्पष्टः। तस्मात्सोमेन यजेतेत्यत्र न मत्वर्थलक्षणाप्रसक्तिरित्यस्वरसादाह—**युक्तं चैतदिति**। **तथापीति**। प्रधानापूर्वानुवादशङ्कया प्रथममपूर्वान्तरप्रतीत्यभावेऽपि प्रधानापूर्वे करणत्वेनावगतस्य धात्वर्थस्य प्राच्योदीच्याङ्गोपकार्यत्वसिद्ध्यर्थं कल्प्यमानमुत्पत्त्यपूर्वं लिङ्वाच्यतयैव कल्प्यत इति तैरङ्गीकारात्प्रथममप्रतिपादितमप्युत्पत्त्यपूर्वं पश्चाल्लिङाऽभिधीयते। तस्यच कार्यत्वेन धात्वर्थस्य प्रधानापूर्वं इव करणत्वं वक्तव्यमिति करणस्य करणान्तरसंबन्धाभावेन विरुद्धत्रिकद्वयापत्तिमत्वर्थलक्षणान्यतरदोषसाम्यात्सोमपदस्यापि नामत्वमेव स्यादित्यर्थः। **ननु** पश्चादभिधीयमानेऽपि उत्पत्त्यपूर्वे धात्वर्थो विषयत्वेनैवाभिधीयते न करणत्वेनेति न विरुद्धत्रिकद्वयापत्तिरित्यत आह—**तत्करणमिति**। उत्पत्त्यपूर्वस्योपादानेन कल्प्यमानस्य धात्वर्थजन्यत्वेन कल्पनात्प्रथमतो धात्वर्थसाधनकत्वेनावगतस्यैव लिङ्वाच्यत्वमिति कामाधिकार इव करणत्वमादाय विरुद्धत्रिकद्वयापत्तिर्वक्तुं शक्येत्यभिप्रायः। क्वचिदुदाहरणे मत्वर्थलक्षणाप्रसक्तिरपि नास्तीत्याशयेनाह—**किंचेति**। अधिकारचोदनेयमिति प्रत्येकाभिप्रायेणैकवचननिर्देशः। ननु भावार्था इति सूत्रानुसारेण भावार्थयुक्ताधिकारचोदनानामेवोदाहरणत्वादनयोरधिकारचोदनात्वेऽपि नोदाहरणत्वमित्यत आह—**सौर्यादिपदमिति**। सौर्यादिशब्दः सास्यदेवतेति विहिततद्धितान्तो देवताविशिष्टद्रव्यपरस्तत्र द्रव्यस्य साध्यत्वाभावेन विषयत्वाभावाद्द्रव्यदेवतासंबन्धो यागेन साध्यत्वाद्विषयः। यद्यपि द्रव्यदेवतासंबन्धस्यापि यागंविनानुपपत्तेः स

---

१ जुहुयाचतुर्गृहीते. २ विधान. ३ च लक्षणा.

**इति निबन्धनकारः शब्दानुबन्धवादी मन्यते । तेन तदप्यत्रोदाहरणम् । भावार्थयुक्ताधिकारचोदनात्वाच । तथा हिरण्यंभार्यमित्यक्रत्वर्थत्वाद्विश्वजिदादिवदत्रोदाहरणम् । अत्र चरुश्वेतहिरण्यसौर्यशब्दा द्रव्यगुणदेवतावचना न नामधेयम् । अतो नामोपपदान्येवोदाहरणमित्ययुक्तमेतत् । भाष्यविरुद्धं च । भाष्यकारो हि भावार्थाधिकरणस्य प्रयोजनमभिदधानः सिद्धान्ते श्रुतद्रव्यापचारे प्रतिनिध्युपादानं प्रयोजनमाह । नामधेयत्वे हि कस्य प्रतिनिधिः स्यात् । नचावश्यमधिकारचोदना एवोदाहरणं 'सोमेन यजेत' 'हिरण्यं ददाती'त्यादिष्वपि कुतोऽपूर्वमिति विचारसंभवात् । यद्यपि तेषु प्रधानापूर्वानुवादशङ्कया न प्रथममपूर्वान्तरं प्रतीयते तथापि पश्चादपि तावत्प्रतीयमानं किंविषयं पत्येतुं न्याय्यमिति संभवति चिन्ता । ननु तत्पश्चात्कारकविशिष्टस्य कर्मणो ग्राहकगृहीतस्यावान्तरव्यापारत्वेन कल्प्यमानं भावार्थविषयत्वेनैव निर्णीतमिति न विचारावसरः । स्यादेवं यदि कर्मैव ग्राहकेण गृह्यत इति प्रागस्मादधिकरणात्सिद्धं स्यान्नतु तत्सिद्धम् । अत्रैव ह्येतद्विचार्यते । किं सर्वाणि पदानि क्रियाकारकसंबन्धानादरेणापूर्वस्य विषयीभवन्ति उत क्रियाकारकसंबन्धापरित्यागेनेतरपदविशेषितमेकमेव पदम् । यदाप्येकं तदापि द्रव्यादिपदं भावार्थविशेषितं विपरीतं वेति । तत्र क्रियाकारकसंबन्धावगमात्तत्रापि द्रव्यगुणयोर्भावार्थकारकत्वेन श्रवणादन्योत्पादकस्वभावत्वाच भावार्थादेवापूर्वमिति स्थिते चास्मिन्क्रियाकारकसंबन्धापरित्यागन्याये ग्राहकग्रहणमपि भावार्थस्यैव भवति । तस्यान्योत्पादकस्वभावत्वात् कारकत्वाच द्रव्यगुणयोः । अतश्चापूर्वमपि ततएव स्यात् । असति तु**

आवश्यकस्तथापिशब्देन संबन्धस्यैव प्रतीतेः सएव विषय इति निबन्धनकारो मन्यत इत्यर्थः । भावार्थे साध्यार्थमित्यर्थः । अश्रुताधिकारस्थलेऽपि उपपदस्य नामधेयत्वनियमाभावमाह—**हिरण्यमिति** । विश्वजिदादिवदित्यतद्गुणसंविज्ञानबहुव्रीहिणा रात्रिसत्रादिवदित्यर्थः । दुर्वर्णोस्य भ्रातृव्य इत्यर्थवादतः फलकल्पनादिति द्रष्टव्यम् । **अत्र चार्विति** । यद्यपि चरुं श्वेतमिति द्रव्यगुणशब्दाविति पूर्वमप्युक्तं तथापि नियोगविषयसमर्पकपदपरिशेषार्थं पूर्वमुक्तम् । इदानीं तु नामधेयत्वाभावायेत्यपुनरुक्तिः । पूर्वपक्षे द्रव्यस्यादृष्टार्थत्वान्न प्रतिनिधिः । सिद्धान्ते तु भावार्थत्वेन दृष्टार्थत्वाद्द्रव्यापचारे प्रतिनिधिर्भवतीति भाष्ये उक्तं तदधिकारचोदनासु द्रव्योपपदत्वे सत्येव घटते नान्यथा, अतो भाष्यविरुद्धं चेदमित्याह—**भाष्येति** । पूर्वमभ्युपगतमर्थं परित्यजति—**नचावश्यमिति** । कुतोऽपूर्वमिति किंविषयमपूर्वमित्यर्थः । **ननु** व्रीहीनवहन्तीत्यादिषु लिङादीनां प्रधानापूर्वानुवादकत्वदर्शनेन तद्वदेवोत्पत्तिवाक्यगतलिङादीनामारादुपकारकाङ्गवाक्यगतलिङादीनां च किंप्रधानापूर्वानुवादकत्वमिति शङ्कया प्रथममपूर्वान्तराप्रतीत्या कुतोऽपूर्वमिति विचारासंभवान्नोदाहरणत्वमित्याशङ्क्य परिहरति—**यद्यपीति । पश्चादिति** । प्राच्योदीच्याङ्गसाहित्यार्थं कल्प्यमानस्योत्पत्त्यपूर्वस्य क्षणिकस्य चाङ्गस्येतराङ्गसाहित्येन करणोपकारजनकत्वानुपपत्त्या कल्प्यमानस्याङ्गापूर्वस्य लिङ्वाच्यतयैव कल्पनात्पश्चात्तावल्लिङाऽपूर्वं प्रतिपाद्यत इति तत्रापि विचारो युक्त इत्यर्थः । **ननु** अपूर्वं कल्प्यमानं कर्मण एवावान्तरव्यापारत्वेन कल्प्यते । उपपदार्थस्य कर्मविशेषणतयाऽभिहितत्वेन तस्य स्वातन्त्र्येण ग्राहकग्रहणाभावेन व्यापारकल्पनानवकाशात् । एवं कर्मविषयत्वेन निश्चितत्वान्न तत्र चिन्तावकाश इति शङ्कते—**नन्विति** । उपपदार्थस्य न स्वातन्त्र्येण ग्राहकग्रहणं किंतु तद्विशिष्टकर्मण एवेत्यस्यार्थस्यैतदधिकरणाधीनत्वादितः पूर्वमुपपदार्थस्यापि स्वातन्त्र्येण ग्राहकग्रहणसंभवादस्ति विचारस्यावकाश इति परिहरति—**स्यादेवमिति** । उपपदार्थविशिष्टस्य कर्मणो ग्राहकग्रहणमित्यस्यार्थस्यैतदधिकरणाधीनत्वस्पष्टीकरणाय तन्मते प्रतिपदाधिकरणविचार्यं भावार्थाधिकरणविचार्यं च दर्शयति—**किं सर्वाणीति** । विषयीभवन्ति । विषयसमर्पकाणि भवन्तीत्यर्थः । तत्र प्रतिपदाधिकरणसिद्धान्तमाह—**तत्र क्रियेति** । यथाविनियोगं नियोग इति क्रियाकारकसंबन्धावगमानुसारेणैकस्मादेवापूर्वं नतु सर्वेभ्य इति प्रतिपदाधिकरणसिद्धान्त इत्यर्थः । भावार्थाधिकरणसिद्धान्तमाह—**तत्रापीति** । क्रियाविशेषितस्य द्रव्यादेर्न विषयत्वं द्रव्यादेः क्रियांप्रति उपसर्जनतया सिद्धतया च प्रतीतस्यापूर्वविषयत्वानुपपत्तेर्धातोरेकफलावच्छिन्नानेकक्रियाक्षणनिचयवाचकत्वेन धातुनान्योत्पादनानुकूलत्वेनावगतस्य धात्वर्थस्य तदन्यथानुपपत्त्या साध्यत्वेन प्रतीतेस्तैरङ्गीकारेण तस्यैव विषयत्वयोग्यत्वाच । अतो भावार्थस्यैव विषयत्वमिति भावार्थाधिकरणसिद्धान्त इत्यर्थः । एवमेतदधिकरणार्थं प्रदर्श्य तदधीनत्वमुपपदार्थविशिष्टकर्मणो ग्राहकग्रहणस्याह—**स्थिते चेति** । एतदधिकरणात्पूर्वं तु उपपदार्थस्यापि पृथग्ग्राहकग्रहणं संभवतीत्याह—**असतीति** । अस्मिन्न्याय इति सिद्धान्तद्वयन्यायस्यापि ग्रहणम् । ततश्च प्रतिपदाधिकरणसिद्धान्ताभावे उभयोर्ग्रहणं भावार्थाधिकिरणसिद्धान्ताभावे दानोपसर्जनहिरण्यस्येति विवेकः । इदमुपलक्षणं सोमोपसर्जनो यागः यागोपसर्जनः

१ युक्तार्थचोदना. २ वदुदाहरणम्. ३ गुणवचना. ४ दधिकारात्. ५ गमात्प्रागपि.

अस्मिन्नध्याये हिरण्यं ददातिश्च मिथः संबन्धानादरेण ग्राहकेण गृह्येयातां दानोपसर्जनं वा हिरण्यम्। ततश्चापूर्वमपि पश्चात्कल्प्यमानमुभयविषयं हिरण्यविषयं वा स्यात्। तस्मात्तत्रापि भावार्थविषयत्व-मपूर्वस्यैतदधिकरणाधीनमिति युक्तमुदाहरणत्वम्। तस्माददृष्टार्थं सर्वमत्रोदाहरणम्। तत्र संशयः किं सर्वाणि पदानि प्रत्येकमपूर्वं प्रतिपादयन्ति उतैकमिति। तदर्थमिदं विचार्यते किं सर्वेषां पदा-नामर्थाः फलभावनायां करणं उतैकस्यैव करणत्वं इतरे च तदर्था इति। यच्च फलसाधनं ततोऽपूर्वं कल्प्यते। अतो यस्तस्य वाचकस्तेनापूर्वं प्रतिपादितं भवतीति। ततश्च सर्वेषां फलसाधनत्वे सर्वे-भ्योऽपूर्वं एकस्य तु साधनत्वे ततएवापूर्वमिति। तत्र प्रधानसंबन्धलाभादवैरूप्याच्च सर्वेषां फलेन संबन्धः। अन्यथाहि यत्फलसाधनं तस्य फलंप्रत्युपादानविधानगुणभावात्। इतरत्तु प्रत्युद्देशानुवाद-प्रधानत्वाद्वैरूप्यं, मत्वर्थलक्षणा वा स्यात्। तस्मात्सर्वेषां फलसंबन्ध इति प्राप्तेऽभिधीयते। अपूर्वस्य तावददृष्टत्वादेककल्पनयैवोपपन्ने वाक्ये नानेककल्पनमुपपत्तिमत्स्यात् तस्मादेकमेव फलसाधनमितरत्तु तदर्थमिति। नच वैरूप्यं, श्येनादीनां नामत्वसंभवात्। सोमादिषु मत्वर्थलक्षणाश्रयणात्। वरं चादृष्टकल्पनातो लक्षणा। तस्मादेकमपूर्वं। यदैकं तदा संदेहः किं भावशब्देभ्य उत द्रव्यगुणश-ब्देभ्य इति। तदर्थंच किं भावार्थाः फलेन संबध्यन्ते किंवा द्रव्यगुणशब्दार्था इति। नन्वनियमेन यत्किंचिद्भवतु नत्ववश्यं नियन्तव्यम्। उच्यते—नानियमो वाक्येन बोधयितुं शक्यते तस्यैकरूप एवार्थः। नहि तत्कदाचिद्यागस्य फलवत्त्वमितरस्य च तादर्थ्यं प्रतिपादयति कदाचिच्च विपर्ययम्। वचनव्यक्तिभेदात्। तस्मादेकरूप एव वाक्यार्थः स किंरूप इति चिन्तयितव्यम्। तत्रानध्यवसाय-मेव केचित्पूर्वपक्षमाहुः। तदयुक्तम्। तथाह्यप्रामाण्यमेव स्यात्। तच्चायुक्तम्। तैथाहि प्रमाणलक्षण एवायं विचारः स्यात्। नत्विह सिद्धत्वात्प्रामाण्यस्य। ननु पक्षद्वयेऽप्यनुष्ठानस्यैकरूपत्वेनाध्यवसि-

---

सोमो वेत्यपि द्रष्टव्यम्। एवंचोपपदार्थस्यापि ग्राहकग्रहणविषयत्वेसति हिरण्यं ददातीत्यादेरप्युदाहरणत्वमुपपन्नमित्यत आह—ततश्चापूर्वमपीति। किं भावशब्देभ्योऽपूर्वमुत द्रव्यगुणशब्देभ्य इति भावार्थाधिकरणप्रवृत्तेरेकस्मादपूर्वमिति निर्ण-याधीनत्वात्तदुपोद्घाततया प्रतिपदाधिकरणं प्रवर्तयति—तत्रेति। नन्वपूर्वस्यावाच्यत्वात्कथमयं विचार इत्यत आह—यच्चेति। ततश्च किं सर्वाण्यपूर्वकल्पनासमर्थाभिधायकानि उतैकमिति विचारार्थ इत्यर्थः। प्रधानेति। फलस्य सर्वापे-क्षया प्राधान्यात्सर्वेषां प्रधानसंबन्धलाभेन सर्वेषां फलसंबन्ध इत्यर्थः। अवैरूप्यादिति। वैरूप्यं विरुद्धरूपवत्त्वं विरुद्ध-त्रिकद्वयमिति यावत्। तदभावादित्यर्थः। एकस्यैव फलसंबन्धे तु वैरूप्यं स्यादित्याह—अन्यथेति। ननु मत्वर्थलक्षणा-श्रयणेन वैरूप्यं सुपरिहरमित्याशङ्कायां तर्हि सैव दोष इत्याशयेनाह—मत्वर्थेति। सर्वेषामिति। अत्रेदमवधेयम्—सर्वेषां समुच्चितानां न फलभावनाकरणत्वं सर्वेषां परस्परासंबन्धेन भावनान्वयितया ज्योतिष्टोमेनेत्यादिविभक्त्या नैरपेक्ष्य-बोधनेन च समुच्चयासंभवात्। नापि विकल्पेन। द्रव्यादेः क्रियानुरागं क्रियायाश्च द्रव्यसाध्यतामन्तरेण फलसाधनत्वानुप-पत्त्या एकभावनायां करणत्वेनान्वितानां क्रियाद्रव्यादीनामरुणैकहायनीवत्परस्परसाहित्यावश्यंभावात्। अतः सहितानां साधनत्वाभावेऽपि साधनानां समुच्चय इति। नानेकेति। संमुच्चयाङ्गीकारात्परमापूर्वस्यैकत्वेऽपि सर्वेषूत्पत्त्यपूर्वभेदः पूर्व-पक्षे आवश्यकः स्यात् सचायुक्तस्तस्मात्प्रधानसंबन्धोऽप्रयोजक इति भावः। श्येनादीनामिति। नामतया परिहारः भावार्थाधिकरणसापेक्षः भावार्थस्य करणत्वंविना तन्नामत्वासिद्धेः। मत्वर्थलक्षणया परिहारस्तु तदधिकरणं नापेक्षते। द्रव्यादपूर्वेऽपि क्रियावता द्रव्येणेति मत्वर्थलक्षणावश्यंभावादिति विवेकः। वरंचेति। लक्षणाया लोके दृष्टत्वादिति भावः। इदानीं भावार्थाधिकरणं दर्शयति—यदैकमिति। यदा एकमेव पदमपूर्वप्रतिपादकं तदा किं द्रव्यादिपदेभ्योऽपूर्वं प्रति-पाद्यते उत धातुभ्य इति विचार्यत इत्यर्थः। नन्विति। नच धात्वर्थस्य करणत्वसिद्ध्यर्थं भावार्थादपूर्वमिति नियमस्य वक्तव्यत्वादियं शङ्कानुपपन्नेति वाच्यम्। अविशेषेणेति भाष्यदर्शनात् अनियम इत्येव पूर्वपक्षः प्रवर्त्यतां ननु द्रव्यादिभ्य एवापूर्वमिति नियमपर्यन्तः पूर्वपक्षः प्रवर्तयितव्य इत्येवमभिप्रायकत्वेन शङ्काया उपपत्तेः। वचनव्यक्तीति। यागवि-शेषितद्रव्यादिना फलं कुर्यादिति द्रव्यादिविशेषितयागेन फलं कुर्यादिति चार्थद्वयबोधने वाक्यभेदापत्तेरित्यर्थः। तस्मा-दिति। ततश्च नियमेनैव पूर्वपक्षः प्रवर्तयितव्य इत्यर्थः। केचित् प्राभाकरा इत्यर्थः। ननु यत्र वाक्यार्थानध्यवसाये-ऽनुष्ठानस्याप्यनध्यवसायो भवति तत्रैवाप्रामाण्यम्। तत्रानध्यवसायेऽनुष्ठानस्यैव निवृत्त्याऽनुष्ठानपर्यन्तबोधजनकत्वाभावादिहतु

---

१ सर्वेषामर्थाः. २ तथा सति.

तत्वाम्नाप्रामाण्यं, मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चिदनुष्ठाने विशेषः किमर्थमधिकरणम् । अपिच पूर्वपक्षे श्येनादीनां गुणविधित्वाच्छ्येनद्रव्येण यष्टव्यम् । सिद्धान्ते तु नामधेयत्वात्सोमेन यष्टव्यमित्यस्ति विशेषः । यथाह भाष्यकारः—'स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः' इति । यत्र तु न सिद्धान्तेऽपि नामधेयं यथा 'सोमेन यजेते'ति तत्र प्रतिनिधिसदसद्भावः प्रयोजनम् । तदप्याह भाष्यकारः—'यदि द्रव्यगुणशब्दा अपूर्वं बोधयन्ति । द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तः [१] द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य' इति । तस्मात्प्रसज्यत एवाप्रामाण्यमिति [२] नैवं पूर्वःपक्षः, किंतु द्रव्यादिभ्योऽपूर्वं तएव फलसाधनमिति । कुतः—'फलं हि साध्यमानत्वात्सिद्धं साधनमिच्छति ॥ द्रव्यादि च तथा यागः स्वयं साध्यो न साधनम् ॥' 'श्येनेनाभिचरन्यजेते'त्यादौ फलं, 'समिधो यजती'त्यादौ च फलवदुपकारः, साध्यरूपत्वात् सिद्धरूपं साधनमपेक्षते न साध्यान्तरम् । द्रव्यगुणौ च सिद्धरूपत्वात्तदाकाङ्क्षां पूरयितुं समर्थौ, यागादयस्तु स्वयमेव साध्यत्वान्न साधनत्वयोग्याः । तस्माद्द्रव्यादिभ्यः फलम् । यत्तु भाष्यकारेणाविशेषेणेत्युक्तं तच्छब्दतो विशेषानवगमाद्वस्तुस्वभावेन द्रव्यादिभ्यएव फलं युक्तमित्येतदभिप्रायम् । तस्माद्द्रव्याद्येव फलभावनायाः करणमिति प्राप्तेऽभिधीयते—'भावनैव हि भाव्येन फलेनान्वेतुमर्हति ॥ धात्वर्थः करणं तस्यां लाघवात्संनिकर्षतः ॥' फलमपि कारकं करणमपि । नहि कारकाणि मिथः संबध्यन्ते किंतु क्रियया । साचेह प्रत्ययवाच्या फलभावना, तेन तयैव फलं संबध्यते तद्द्वारेणैव करणस्य फलसंबन्धः । तस्यांच धात्वर्थस्यैव करणत्वं युक्तम् । कल्पनालाघवात्तस्मिन् हि फलवत्यपूर्वसाधने कल्पिते द्रव्यादेस्तन्निर्वृत्तिर्दृष्टमेव प्रयोजनम् । द्रव्यादिभ्यस्त्वपूर्वे कल्प्यमाने धात्वर्थोऽसिद्धरूपः सिद्धरूपस्य द्रव्यादेर्न दृष्टमुपकारं शक्नोति कर्तुमिति ततोऽ-

---

पक्षद्वयेऽपि द्रव्येण क्रिया निर्वर्तयितव्येत्यनुष्ठानस्याध्यवसितत्वान्नाप्रामाण्यमिति शङ्कते—**नन्विति** । **किमर्थमिति** । अनुष्ठानविशेषफलकत्वान्मीमांसाया इति भावः । अनुष्ठानविशेषाभावोऽप्यसिद्ध इत्याह—**अपिचेति** । पूर्वपक्षे द्रव्यादिभ्योऽपूर्वमिति पक्ष इत्यर्थः । यद्यप्यस्मिन्पक्षे श्येनस्यैवापूर्वजनकत्वान्न गुणविधित्वं तथापि गुणत्वाविवक्षया विधेयसमर्पकत्वमात्रे तात्पर्यं बोध्यम् । **सिद्धान्त इति** । भावशब्देभ्योऽपूर्वमिति पक्ष इत्यर्थः । **सोमेनेति** । अव्यक्तासु तु सोमस्येति न्यायेन सौमिकधर्मप्राप्तेरिति भावः । द्रव्यशब्देभ्योऽपूर्वे सति नामधेयत्वाभावे भाष्यसंमतिमाह—**यथाहेति** । एवंच पक्षद्वयेऽप्यनुष्ठानविशेषसद्भावेऽनध्यवसायपूर्वपक्षदशायामनुष्ठानस्यैकरूपत्वाध्यवसानाभावेऽननुष्ठापकत्वलक्षणमप्रामाण्यं दुर्वारमिति भावः । **यदीति** । यदि द्रव्यगुणशब्दा अपूर्वं प्रतिपादयन्तीति पक्षस्तदा द्रव्यादीनामदृष्टार्थत्वाददृष्टार्थस्य प्रतिनिध्यभावान्न प्रतिनिधिः । यदातु भावशब्देभ्योऽपूर्वमिति पक्षस्तदा द्रव्यं गुणं वा प्रतिनिधायानुष्ठातव्यमित्यर्थः । एवंच प्रतिनिधानाप्रतिनिधानरूपविशेषसद्भावेनानुष्ठानैकरूप्याभावेनानध्यवसायपक्षे प्रामाण्यं स्यादिति भावः । नच प्रतिनिधानाप्रतिनिधानसंदेहे प्रतिनिधिनिवृत्तावपि मुख्यस्थले द्रव्येण क्रिया निर्वर्तयितव्येत्येवंरूपानुष्ठानस्य निश्चितत्वे प्रामाण्यमुपपद्यत इति वाच्यम् । मुख्यप्रतिनिध्योः सामानविध्यस्य तृतीये वक्ष्यमाणत्वेन प्रतिनिधिस्थलस्यापि मुख्यशास्त्रतात्पर्यविषयत्वेन तात्पर्यविषये सर्वत्रानुष्ठानफलकत्वाभावेनाप्रामाण्यापत्तेरवर्जनीयत्वादिति भावः । इदानीं निर्धारणात्मकं स्वाभिमतं पूर्वपक्षमाह—**किंत्विति** । द्रव्यादिभ्योऽपूर्वमित्यत्र हेतुमाह—**त एवेति** । तदेवोपपादयति—**फलं हीति** । सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपदिश्यत इति न्यायादिति भावः । तथा सिद्धरूपं ततश्च तदेव फलसाधनत्वेनान्वययोग्यमित्यर्थः न साधनं न साधनत्वेनान्वययोग्यमित्यर्थः । कारिकायां फलशब्देनेप्सितमात्रं विवक्षितमित्याशयेनाह—**समिध इति** । नन्वेवं विशेषेण पूर्वपक्षकरणे कथं भाष्ये विशेषेणेत्युक्तमित्यत आह—**यत्त्विति** । **शब्दत इति** । द्रव्यभावार्थयोरुभयोरपि स्वर्गादिरूपफलापेक्षया पदान्तरस्थत्वेन शब्दतो विशेषानवगमादित्यर्थः । नच फलस्य भावनाद्वारैव करणसंबन्धो न साक्षाद्भावनायां च धात्वर्थस्य पदश्रुत्यान्वय इत्यस्ति विशेष इति वाच्यम् । द्रव्यस्यापि श्येनेनेति विभक्तिश्रुत्या विनियोगेनोभयोरपि श्रुतिविनियोज्यत्वाविशेषादिति भावः । **भावनैवेति** । अपूर्वद्वयकल्पनस्य फलतत्साधनयोः साक्षात्संबन्धेऽप्यविशेषाद्भावनाद्वारा संबन्धकथनं संनिकर्षत इति द्वितीयहेतूपपादनाभिप्रायेणेति ध्येयम् । **नहि कारकाणीति** । अयोग्यत्वादिति भावः । ननु द्रव्यस्य सिद्धरूपस्य व्यापारानुप्रवेशमन्तरेण फलोद्देशप्रवृत्तकृतिव्याप्यत्वरूपफलभावनाकरणत्वासंभवात्क्रियाया व्यापाररूपायाः द्रव्यगतकरणत्वसंपादकत्वेन दृष्टद्वारैवोपयोगः । गुणकामेषु खादिरं वीर्यकामस्य दध्नेन्द्रियकामस्ये-

---

१ एतदधि. २ यत्तु.

व्यपरमदृष्टं कल्पनीयम् । संनिकृष्टश्च प्रकृत्युपात्तो धात्वर्थः प्रत्ययवाच्यया भावनया पदश्रुत्या संबध्यते । द्रव्यादि तु पदान्तरेणोपात्तं वाक्येन । श्रुतिश्च वाक्याद्बलीयसी । साध्यरूपोऽपि धात्वर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम् । तस्मात्सएव भावनायाः करणम् । का पुनरियं धात्वर्थातिरेकिणी भावना नाम यस्यां धात्वर्थः करणम् । कर्तृव्यापार इति चेत् । नन्वसौ पचावधिश्रयणादिर्यजौ च मानसस्त्यागस्तद्धेतुर्वा प्रयत्नः संकल्पो वा, गतौ चलनं, ते चाधिश्रयणत्यागप्रयत्नसंकल्पचलनादयो धात्वर्था एवेति न धात्वर्थातिरेकिणीं भावनामुपलभामहे । प्रयत्नो भावनेति चेत् रथो गच्छतीत्यादौ व्यभिचारः । स्पन्द इति चेत् यजेतेत्येवमादिषु आत्मकर्तृकेषु व्यभिचारः । उभयसाधारणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत् शब्दादिष्वभावप्रसङ्गः । नहि शब्दस्य विभोरचेतनस्य स्पन्दः प्रयत्नो वास्ति । तत्र—'अभिधाभावनामाहुरन्यामेव लिङादयः ॥

---

त्यादिष्वाश्रयस्येव ततो नादृष्टद्वयकल्पनाप्रसक्तिरित्यस्वरसादाह—**संनिकृष्टश्चेति** । उभयोरपि श्रुतिविनियोज्यत्वाविशेषं परिहरति—**द्रव्यादीति** । श्येनेनेति तृतीयान्तपदश्रवणे सति श्येनः करणमित्येतावन्मात्रं प्रतीयते ननु भावनारूपशेषिविशेषोऽपि ततो गम्यते । यजेतेति पदश्रवणे तु प्रकृत्यंशेन धात्वर्थः प्रत्ययेन भावना उभयसमभिव्याहारेण च यागो भावनायां करणमिति प्रतीयते । ततश्च द्रव्यादेर्भावनाकरणत्वं भावनावाचकपदान्तरसमभिव्याहारलभ्यं, धात्वर्थस्य तु करणत्वं पदान्तरसमभिव्याहारमनपेक्ष्य प्रकृतिप्रत्ययसमभिव्याहारमात्रेण लभ्यत इति तृतीयाश्रुतिरिह दुर्बला पदश्रुतिस्तु प्रबलेत्यर्थः । इदमेव चाभिसंधाय वस्तुतः श्रुतिविनियोगेऽपि वाक्येनेत्युक्तम् । ननु साध्यरूपस्य धात्वर्थस्य कथं साधनत्वमित्यत आह—**साध्येति** । नहि वाक्यार्थज्ञानदशायां सिद्धत्वमपेक्षितं किंतु फलनिष्पत्तिदशायाम् । तच्च यागेऽप्यव्याहतमिति भावः । नन्वपूर्वभावनायां धात्वर्थः करणमित्ययुक्तं धात्वर्थातिरिक्ताया आख्यातवाच्याया भावनाया एवाभावादिति वैयाकरणः शङ्कते—**का पुनरिति** । ननु पचति पाकं करोति यजति यागं करोतीति सर्वत्राख्यातस्य करोतिना विवरणात्करोतिसमानार्थत्वं वक्तव्यं करोतिश्च सकर्मकः तच्च कर्मोत्पाद्यमेव भवति 'नित्यं न भवनं यस्य नित्यं चापि न भूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव' इति वार्तिकोक्तेः । ततश्चोत्पद्यमानस्य वस्तुन उत्पत्त्यनुकूल उत्पादकव्यापारः करोतिशब्दवाच्य इति संपन्नम् । करोतिसमानार्थकश्च भावयतिशब्दः । भवन्तं प्रेरयतीति भूधातोः 'तत्प्रयोजको हेतुश्चे'ति णिचि व्युत्पन्नस्य भावयतिशब्दस्य भवितृप्रयोजकव्यापारवाचित्वादेवंच पाकं करोतीत्यस्य पाकंभावयतीत्यर्थः । पाकशब्दार्थश्च विक्लित्तिः । तथा महाभाष्ये उक्तत्वात् । ततश्च तण्डुलरूपकर्मगतविक्लित्तिलक्षणव्यापारः पचिधातुवाच्यस्तत्प्रयोजको देवदत्तादिरूपकर्तृव्यापारः प्रत्ययवाच्यः स एव च कर्तृव्यापारः भवितुः पाकस्य प्रयोजकव्यापारत्वाद्भावनेत्युच्यते । एवंच सर्वत्रापि कर्तृव्यापार एव भावनेति शङ्कते—**कर्तृव्यापार इति** । न विक्लित्तिः पाकशब्दार्थः किंत्वधिश्रयणादिव्यापारनिचय इतरथा कृष्णलेषु विक्लित्त्यसंभवात् घृते श्रपयतीति कृष्णलानां पाकविधानमनुपपन्नं स्यादेवंच कर्तृव्यापारस्यैव धात्वर्थत्वान्न तस्य प्रत्ययवाच्यभावनात्वमेवं सर्वत्रापीत्यभिप्रेत्य परिहरति—**नन्विति** । अत्र धात्वर्था इत्येव पाठो युक्तः नतु धात्वन्तरार्था इति धात्वन्तरार्थस्य प्रत्ययवाच्यत्वेऽपि तत्र प्रकृतधात्वर्थस्य करणत्वोपपत्त्या प्रकृतासङ्गतत्वापत्तेः प्रयत्नादेरपि धात्वन्तरार्थत्वेनैतद्दूषणग्रस्तस्य पुनरपि शङ्कितुमनर्हत्वेनाग्रिमग्रन्थासामञ्जस्यप्रसङ्गाच्चेति ध्येयम् । नन्वस्त्वधिश्रयणादेः पच्यादिधात्वर्थत्वं तथापि तदतिरिक्तः प्रयत्नाख्यः कर्तृव्यापारः प्रत्ययवाच्यभावनास्त्विति शङ्कते—**प्रयत्न इति** । **रथ इति** । नच लक्षणा शङ्कनीया । देवदत्तो गच्छतीत्याद्यपेक्षया प्रतीतिवैलक्षण्याभावादिति भावः । **स्पन्द इति** । यद्यपि गतौ चलनमिति प्रागुक्तत्वेन स्पन्दस्यापि गमिधात्वर्थत्वेन धात्वर्थातिरिक्तत्वं नास्ति तथापि गमेरुत्तरसंयोग एवार्थ इति मतमाश्रित्येदमिति ध्येयम् । **उदासीनत्वेति** । उदासीनत्वं नामाकुर्वद्रूपत्वं तद्विच्छेदः कुर्वद्रूपत्वमिति यावत् । **शब्दादिष्विति** । ततश्च शब्दोऽभिदधातीत्यादिप्रयोगो न स्यादिति भावः । **नहीति** । यद्यप्युदासीनत्वविच्छेदशब्दार्थः कुर्वद्रूपत्वं तच्चान्योत्पादनानुकूलत्वं ततश्च शब्दोऽभिदधातीत्यत्र शब्दगतार्थाभिधानशक्तेरर्थप्रतीतिलक्षणभाव्योत्पादनानुकूलत्वेनाख्यातप्रतिपाद्यत्वसंभवान्नोक्तदोषावकाशः । अन्यथा सिद्धान्तेप्यगतेः । तथापि यस्मिन्सति कर्तुरुदासीनत्वविच्छेदव्यवहारो दृश्यते तादृशो धर्म उदासीनत्वविच्छेदशब्दार्थस्तदेव च कुर्वद्रूपत्वं स च धर्मः क्रियाविभागान्यतरहेतुप्रयत्नस्पन्दान्यतरएव तद्भूत्येव कुर्वद्रूपव्यवहारदर्शनान्नत्वन्यः । एवंचोदासीनत्वस्य विच्छेदो यस्मात्सोयमुदासीनत्वविच्छेद इति बहुव्रीहिमभिप्रेत्य शब्दादिष्वभाव उक्त इति ध्येयम् । इष्टापत्तिशङ्कायामाचार्यवचनविरोधमाह—**तत्रेति** । अभिधाशब्दस्य कर्तरि करणे वा व्युत्पत्तौ अभिधायाः शब्दस्य भावनेत्यर्थः । भावे कर्मणि वा व्युत्पत्तौ अभिधात्मिका भावने-

---

१ धात्वन्तरार्था. २ प्रयत्नः परिस्पन्दो वास्ति. ३ व्यापारे. ४ अर्थभावनाभिधानानुकूला लिङादिनिष्ठाभिधाख्या.

**अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥' इत्यादिविरोधः । तस्माद्वक्तव्यं भावनारूपम् । किमत्रोच्यते । उक्तं ह्येतदाचार्यैः—'धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ॥ तथापि सर्वसामान्यरूपेणान्यावगम्यते ॥' इति । विवृतं चैतन्मण्डनेन—'कथ्यमानाद्रूपभेदाद्द्विधा धात्वर्थसङ्गतिः ॥ अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥' इति । एतदुक्तं भवति—सत्यम् न धात्वर्थादत्यन्तातिरिक्ता भावना । धात्वर्थानामेव तु द्वे रूपे पाको यागः प्रयत्नः संकल्पश्चलनं छेदनमभिधानमिति — प्रातिस्विकं धात्वभिधेयमेकमक्रियात्मकं सिद्धस्वभावम् । अपरं तु सर्वधात्वर्थानुयायि करोतिप्रत्ययवेद्यं क्रियात्मकं साध्यस्वरूपमन्योत्पादानुकूलात्मकमाख्यातप्रत्ययाभिधेयम् । तथाहि यः स्पन्दते यो यजते प्रयतते चलति अभिदधाति ते सर्वे करोतिप्रत्ययमनुभवन्ति भिन्नेष्वपि हि धात्वर्थेषु । तच्च रूपमुत्पाद्यवस्त्वन्तरकर्मकमेव सर्वदा प्रतीयते । तदेवच भवितुः प्रयोजकव्यापारो भावनेत्युच्यते । तच्चाख्यातेष्ववगम्यमानत्वात्तदभावे पाकादावनवगमादाख्याताभिधेयमाश्रीयते । येऽपि प्रयत्नं भावनामाहुः येच स्पन्दं येचोभयं तेऽपि न स्वरूपेण तेषां भावनात्वमाहुः । किंत्वन्योत्पादानुकूलत्वम् । तच्च**

---

त्यर्थः । **अर्थात्मेति** । अर्थः पुरुषार्थ आत्मा भाव्यत्वेन निरूपको यस्याः सेत्यर्थः । अभिधाशब्दस्य शब्दपरत्वमेवाश्रित्य व्यापारव्यापारिणोरनतिभेदादभिधात्मिका शब्दात्मिकाभावना अभिधाभावना । तथा तद्व्यावृत्त्यर्थमुपात्तमर्थात्मेति विशेषणमित्यर्थस्वरूपा भावना अर्थात्मभावनेत्यप्याहुः । अत्र 'सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽभिधीयत' इति । पचतियजतीत्यादिषु यत्र कर्तुः सिद्धत्वं तत्रैवाख्याते भावनावाचकत्वमिति । तथा 'अस्त्यादावपि कर्त्रंशभाव्येऽस्त्येव हि भावना । अन्यत्राशेषभावात्तु न तथा सा प्रतीयते' इत्यसिद्धकर्तृके अस्तिभवतीत्यादावपि भावनास्तीति पक्षद्वयमुक्तम् । तत्राद्ये पक्षे सर्वशब्दस्य सिद्धकर्तृकस्थलीयाख्यातमात्रे संकोचो बोध्यः । शब्दगतव्यापारस्य भावनात्वानङ्गीकारेऽभिधाभावनामिति शब्दगतव्यापारस्य भावनात्वोक्तिः । लिङादय आहुरिति आख्यातप्रयोगः । तत्रत्याख्यातस्य भावनावाचकत्वाभावेऽर्थभावनायाः सर्वाख्यातगम्यत्वोक्तिश्च विरुध्येतेत्यर्थः । **नच** शब्दादिष्वर्थभावनानङ्गीकारे शब्दभावनोक्तिविरोधो न दूषणत्वेन वक्तुमुचित इति वाच्यम् । लिङ्विधत्त इत्याद्याख्यातप्रयोगे लिङादिगतार्थभावना प्रतीयते **नच** तत्रान्यार्थभावना संभवतीति लिङादिगतशक्तिरूपा शब्दभावनैव तत्रार्थभावनात्वेन प्रतीयते इति वक्तव्यत्वेन तदुक्तिविरोधस्य दोषत्वसंभवात् । **धात्वर्थव्यतिरेकेणेति** । धात्वर्थभावनयोर्नात्यन्तभेदः किंतु सामान्यविशेषभावमात्रेण भेद इत्यर्थः । सर्वसामान्यरूपेणान्येत्युक्ते जातिव्यक्तिभावेनान्यत्वभ्रमं व्यावर्तयितुमाह—**विवृतं चेति** । धात्वर्थो धातुना यागत्वादिविशेषरूपेणाभिधीयते आख्यातेन तु अन्योत्पादानुकूलात्मना सामान्यरूपेणाभिधीयते । एवं धात्वाख्याताभ्यां कथ्यमानात्सामान्यविशेषलक्षणरूपभेदाद्धात्वर्थस्य द्वेधा वाक्यार्थान्वयः । तथाचान्योत्पादानुकूलात्मभावना किं कुतः प्रदुष्यति न कुतोपीत्यर्थः । तत्र रूपभेदादिकं विशदयन् श्लोकद्वयं व्याचष्टे—**एतदुक्तमिति** । अक्रियात्मकं कारकान्वयायोग्यमित्यर्थः । सिद्धस्वभावं अव्यापारात्मकमित्यर्थः । सामान्यरूपत्वार्थं सर्वधात्वर्थानुयायीत्युक्तं । भावनात्वसिद्ध्यर्थं करोतिप्रत्ययवेद्यमिति । करोतीति यः प्रत्ययस्तद्वेद्यमित्यर्थः । करोतेर्भावयतिपर्यायत्वस्य पूर्वमेवोक्तत्वात् करोतिप्रत्ययवेद्यत्वे भावनात्वसिद्धिर्द्रष्टव्या । करणादिकारकान्वययोग्यतासिद्ध्यर्थं क्रियात्मकमित्युक्तम् । साध्यस्वरूपं पूर्वापरीभूतानेकव्यापारसमुदायात्मकम् । अन्योत्पादनानुकूलात्मकमिति भावनाशरीरमेवोक्तम् । तत्र करोतिप्रत्ययवेद्यत्वे सर्वधात्वर्थानुयायित्वे चानुभवं प्रमाणयति—**तथाहीति । प्रत्ययमनुभवन्तीति** । अयं करोतीति प्रत्ययस्य विषयीभवन्तीत्यर्थः । तथैव वक्तव्येऽनुभवन्तीत्युक्त्या करोमीति तदीयोऽपि प्रत्ययः प्रमाणमिति सूचितम् । करोतिप्रत्ययवेद्यरूपस्यान्योत्पादनानुकूलस्वभावत्वमप्यनुभवसिद्धमित्याह—**तच्चेति** । करोतेरुत्पादनार्थकस्य सकर्मकत्वादिति भावः । एतावता भावनायां किमायातमित्यत आह—**तदेवचेति** । भवितुर्भवनस्योत्पत्तेः कर्तुरुत्पत्तुरोदनादेर्यः प्रयोजको देवदत्तादिस्तस्य यो व्यापारः ओदनोत्पत्त्यनुकूलस्तत्त्वादित्यर्थः । भवतेर्ण्यन्तात्तुत्पन्नस्य भावनाशब्दस्य भवितुः प्रयोजकव्यापारवाचित्वादित्यर्थः । एवं धात्वर्थातिरिक्तं भावनास्वरूपं प्रसाध्य तस्याख्यातवाच्यत्वमाह—**तच्चेति** । पाकादौ पाकस्त्याग इत्यादावित्यर्थः । **न स्वरूपेणेति** । यत्नत्वादिना रूपेण प्रतिपादितस्य कर्माकाङ्क्षाविरहेण प्रत्युत विरोधित्वादिति भावः । **तच्च सर्वेति** । **नच** करोतिप्रत्ययवेद्यं भावनारूपमिति पूर्वमुक्तत्वात्करोतेश्च यत्नवाचित्वेन तस्यैव भावनात्वमुचितं न सर्वधात्वर्थानामिति वाच्यम् । स्तम्बकरिर्व्रीहिरित्यादावचेतनेऽपि प्रयुज्यमानस्य कृञः यत्नार्थत्वानुपपत्तेः । किंच भावयतिकरोत्योः पर्यायत्वादपि

---

१ लक्ष्यते. २ धात्वर्थातिरेकिणी. ३ धात्वर्थमभिधेयं. ४ स्वभावरूपं. ५ कूलमाख्यात. ६ माख्याताभिधेयम्. ७ ष्ववगमात्तदभावे. ८ कूलं रूपं. ९ दिति भावः.

सर्वधात्वर्थानामस्तीति सर्वव्याप्येव भावनारूपमङ्गीकर्तव्यम् । तस्मिंश्च क्रियारूपे प्रकृत्युपात्तो यागादिः कदाचित्कर्मत्वेन संबध्यते पाकं करोति यागं करोतीति, कदाचित्करणत्वेन यागेन स्वर्गं करोति पाकेनौदनमिति यथाविवक्षितम् । तद्यदा यागादेः कर्मत्वेन सङ्गतिस्तदा तद्धेतुभूतः प्रयत्नः संकल्पादिर्वा धात्वन्तरार्थोऽपि यजेतेत्यत्रपदे यागकृतिरित्येवंरूपेणाख्याताभिधेयतां भजते, संकल्पादिकं तु विशेषरूपं धात्वन्तराभिधेयं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते । यदातु विधिवशात्करणत्वेन यागस्य सङ्गतिः कर्मत्वं तु स्वर्गादेर्दर्शपूर्णमासयागेन स्वर्गं करोतीति तदा न यागस्य हेतुभूतैव कृतिराख्यातेनोच्यते यागस्य कर्मत्वाभावात् फलस्यैव कर्मत्वात्तत्कर्मिका कृतिराख्यातेनोच्यते यागस्तु करणम् । अतो यदवस्थो यागः स्वर्गं संपादयति तदवस्थो यागो येन व्यापारेण निष्पद्यते स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति । तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते । यागेन स्वर्गं कुर्यादित्यनेन ह्येतावदवगम्यते यथा यागात्स्वर्गो भवति तथा व्याप्रियेतेति । तत्र कथं व्यापर्त्तव्यं कोऽसौ व्यापार इति व्यापारविशेषात्मककथंभावापेक्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारसंपादनं शास्त्रान्तरैरवगम्यते । यागस्वरूपस्य च प्रयत्नादिसंपादनमर्थापत्त्या । नह्यनिष्पादितस्य करणत्वमुपपद्यते । तेन स्वरूपसंपादनं प्रयाजादिभिश्चोपकारसंपादनमिति सकलोयं व्यापारः स्वर्गकृतिरित्यनेनाकारेणाख्यातशब्देनाभिधीयते, विशेषरूपं तु प्रयाजादिशास्त्रान्तरैरवगम्यते । तेन सकलोऽयं प्रयाजादिव्यापारः प्रधानकरणिकाया

---

न प्रयत्नः करोत्यर्थः । तथाच शब्दभावनायां भावयतिप्रयोगानुपपत्तेः । अतएव यती प्रयत्न इतिवत् डुकृञ् प्रयत्न इति न स्मृतं किंतु करण इत्येव स्मृतम् । तस्मात्करणं प्रयत्नादन्यदेव करोत्यर्थः । एवंचोक्तरीत्या प्रयत्नमात्रस्य भावनात्वाभावेन रथादेः प्रयत्नाभावेऽपि रथो गच्छतीत्यादिप्रयोगस्य स्वरसत एवोपपत्तेस्तन्निर्वाहाय न्यायसुधाकारस्य वृथा क्लेशानुभव इति ध्येयम् । नन्वस्तु धात्वर्थातिरेकिणी भावना तथापि लोके पचति पाकं करोतीति विवरणात्तत्र धात्वर्थस्य कर्मत्वमेव न करणत्वम् । तथाच कथमस्मिन्नधिकरणे धात्वर्थस्य करणं व्युत्पाद्यत इत्याशङ्कां निरसितुं धात्वर्थस्य भावनायां द्वेधान्वयमुपपादयति—**तस्मिंश्चेति । पाकेनौदनमिति ।** तस्मिंश्च द्वैविध्यमपि लोकसिद्धमेवेति भावः । धात्वर्थस्य कर्मत्वे कीदृशव्यापारो भावना करणत्वे च कीदृश इत्याकाङ्क्षायां क्रमेणाह—**तद्यदेति ।** यागं करोति यागं भावयतीत्येवं यागस्य भाव्यत्वेन प्रतीतौ तन्निष्पादानुकूलव्यापारस्यैव भावनात्वौचित्याद्यागोत्पत्त्यनुकूलः प्रयत्नसंकल्पादिरेव तत्र यागकर्मकभावनात्वेन प्रतीयत इत्यर्थः । **यागकृतिरित्येवंरूपेणेति ।** यागोत्पादनानुकूलव्यापारत्वलक्षणसामान्यरूपेणेत्यर्थः । इदंच यागस्य कर्मत्वं यागानुवादेन गुणविधिषु द्रष्टव्यम् । **विधिवशादिति ।** विधिः प्रवर्तनात्मकशब्दभावना तद्वशात्करणत्वेनान्वय इत्यर्थः । पुरुषाभिलषितफलस्य भाव्यत्वंविना पुरुषस्य प्रवर्तयितुमशक्यत्वेन प्रवर्तनात्मकविधिसंबन्धवशादर्थभावनायां पुरुषार्थस्य स्वर्गादेः भाव्यत्वे सति धात्वर्थस्य करणत्वमेव परिशिष्यत इति भावः । **ननु** स्वर्गस्य साक्षात्कृतिव्याप्यत्वाभावात्स्वर्गकृतिरपि यागजननानुकूलकृतिरेवेति यागस्यापि तत्र कर्मत्वमेव न करणत्वमित्यत आह—**अत इति ।** ततश्च यागोत्पत्त्यनुकूलकृत्यपेक्षया स्वर्गोत्पत्त्यनुकूलकृतेरन्यत्वात्तत्र यागस्य करणत्वं संभवतीति भावः । **ननु** यागस्य करणत्वे यागेन स्वर्गं कुर्यादित्यर्थो भवति एतावता कथं फलसाधनावस्थयागसंपादककृतिः स्वर्गकृतिरुच्यते कथं वा विशेषरूपस्यास्पर्शनमित्याकाङ्क्षायामुपपादयति—**यागो येनेति ।** फलसाधनावस्थयागसंपादनंविना यागात्स्वर्गासिद्धेर्यागेन स्वर्गं कुर्यादित्यस्य यादृशव्यापारैर्येन प्रकारेणोपेते यागेऽनुष्ठिते यागात्फलं भवति तथा तादृशव्यापारोपेततया यागानुष्ठानमेवार्थ इत्यर्थः । प्रमाणान्तरं वक्ष्यमाणं प्रयाजादिशास्त्ररूपमर्थापत्तिरूपं च द्रष्टव्यम् । **व्यापारेति ।** व्यापारविशेषाधीनोपकारात्मकेत्यर्थः । **अग्न्यन्वाधानेति ।** अत्र कोसौ व्यापार इत्यपेक्षितो व्यापारविशेषोऽग्न्यन्वाधानादिः कथं व्यापरितव्यमित्यपेक्षितो व्यापारप्रकारस्तु अग्न्यन्वाधानादिजन्यदृष्टादृष्टोपकारसंपादनरूप इति विवेकः । **ननु** यागस्वरूपोत्पत्त्युपयोगिनामवघातादीनां कथं स्वर्गकृतिरित्यनेन रूपेण ग्रहणमित्याशङ्कायां यागनिष्पादनस्यैव स्वर्गकृत्यन्तरगतत्वात्तदर्थानामवघातादीनां स्वर्गकृतित्वं नानुपपन्नमित्याशयेनाह—**यागस्वरूपस्येति ।** प्रपञ्चः सामान्यरूपेण स्वर्गोत्पादानुकूलात्मना प्रतीतायाः फलभावनाया विशेषरूपाणीत्यर्थः । **नन्वेवं** यागस्य करणत्वं न स्यात्तथाहि न तावद्यागस्वरूपोत्पत्त्यनुकूलव्यापारे यागस्य करणत्वं संभवति स्वोत्पादके स्वस्य करणत्वासंभवान्नापि प्रयाजादिव्यापारे प्रयाजादिस्वरूपोत्पत्तौ तदीयद्रव्यदेवतादेरेव कर-

---

१ स्वर्गंकुर्यादिति. २ संपद्यते. ३ तथा यागे व्याप्रि. ४ तत्र स्वरू. ५ फलभावनायाः.

भावनाया एव प्रपञ्चः । तेन च व्यापारेण फलसाधनात्मना संपद्यमानो यागः करणम् । एतदेवहि करणानां करणत्वं यदुत फलोद्दे[1]शप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना संपत्तिः, परशोरिवोद्यमननिपातनाभ्यां द्वैधीभावसाधनतया । तत्सिद्धा धात्वर्थातिरिक्ता भावना । नन्वेवं सा धात्वर्थसामान्यमेव भावना स्यात् । नेति ब्रूमः । विलक्षणत्वात्प्रतिधात्वर्थं अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यं अन्यच्च चलनादेः संयोगा[2]दीन्प्रति फलभेदात् । एकात्मकत्वे हि तद्रूपस्य फलभेदो न स्यात् । भिन्ने[3]षु तेषु रूपेषु फलभावनात्वसामान्यमनुवर्तते यागादिष्विव करणत्वसामान्यम् । अयं चापरो विशेषः । यतो धातोर्यज्यादिकात्प्रत्यय उत्पन्नस्ततो[4]ऽर्थान्तरं संकल्पादिकं तत्कृतिरूपेण प्रत्ययेनोच्यते न यजिरेव । त[5]त्तु कामं धात्वन्तरेणोच्यतां, इह तावदेकान्ततः प्रत्ययार्थः, यजिस्तु तत्र कर्म वा करणं वा । तथा संकल्पयतीत्यत्रापि संकल्पादर्थान्तरमेव भावना । संकल्पस्तु कर्म वा करणं वा । तेन यतो धातोः प्रत्यय उत्पन्नस्तदर्थव्यतिरिक्तैव भावना तत्कर्मिका तत्करणिका वा तद्गतेन प्रत्ययेनोच्यते नतु तस्यैव रूपान्तरमिति न धात्वर्थसामान्यं भावनेत्युच्यते । धात्वन्तरेण तस्याभिधानं नानिष्टं यथा स्पन्दनस्य प्रयत्नस्य वा द्वयोर्वा भावनात्वे स्पन्दादिधातुवाच्यत्वं, त[6]स्मात्सूक्तं धात्वर्थातिरिक्तं भावनारूपम् । तत्र च धात्वर्थः करण[7]म् । यच्च करणं ततोऽपूर्वं कल्प्यत इति भावशब्देभ्योऽपूर्वम् ॥

णत्वात् । नापि प्रयाजादिजन्योपकारे प्रयाजादेरेव तत्र करणत्वेन यागस्य करणत्वाभावादित्यत आह—**तेन च व्यापारेणेति** । नहि यागत्वेन यागस्य करणत्वं नवा तत्तद्व्यापाराणां प्रयाजत्वादिप्रातिस्विकरूपेण यागकरणकत्वान्वयः येनोक्तदोषः स्यात् किंतु फलसाधनावस्थत्वेन रूपेण यागस्य करणत्वं स्वर्गकृतित्वरूपेण च व्यापारनिचयस्य यागकरणकत्वान्वयः । एवंच यागस्य स्वर्गसाधनत्वावस्थासंपत्तावेव सा कृतिः स्वर्गकृतिर्भवति नान्यथेति युक्तं यागस्य करणत्वमिति भावः । एवंच स्वर्गकृतौ यागः करणमित्युक्ते विवक्षिताविवक्षितविवेकेन सविशेषणेहीति न्यायात् स्वर्गनिष्पत्तौ यागः करणमिति संपन्नमित्याहुः । **ननु** तेनैव व्यापारेण फलसाधनात्मना यदि संपद्यते तर्हि तत्साध्य एव स्यान्न तत्करणमित्याशङ्क्य एतादृशं फलसाधनात्मना साध्यत्वं न करणत्वविरोधि किंत्वनुकूलमेवेत्याशयेनाह—**एतदेवेति** । फलसाधनात्मना निष्पत्तेः करणत्वविरोधित्वे परशोरपि करणत्वं न स्यादित्याशयेन दृष्टान्तमाह—**परशोरिति** । अयंभावः—प्रयाजत्वादि तत्तद्रूपेण प्रयाजादिव्यापारनिचयैः फलसाधनात्मना संपद्यमानस्य यागस्य न तत्तद्रूपविशिष्टव्यापारेषु करणत्वं येनोक्तविरोधः स्यात् किंतु प्रातिस्विकरूपविशिष्टप्रयाजादिव्यापारनिचयेन फलसाधनात्मना संपत्तिः तथा संपन्नस्य यागस्य तस्यैव प्रयाजादिव्यापारनिचयस्य यत्स्वर्गोत्पादनानुकूलत्वरूपं स्वर्गकृतित्वं तद्रूपापन्ने तस्मिन्व्यापारे करणत्वमिति न काप्यनुपपत्तिरिति । धात्वर्थसामान्यमेव भावना स्यादिति शङ्कितुः किं सर्वधात्वर्थसामान्यस्यैकरूपत्वाद्वक्ष्यमाणो धात्वर्थभेदाद्भावनाभेदो न स्यादिति तात्पर्यम् उत कथ्यमानाद्रूपभेदात् द्विधा धात्वर्थसङ्गतिरित्यादिवार्तिककारस्वारस्याद्यजेतेत्यादौ यागस्यैवान्योत्पादनानुकूलात्मना भावनात्वं वक्तुमुचितम् । तत्र त्वया किमिति प्रकृत्यर्थधातुव्यतिरिक्तप्रयाजादिव्यापारस्य भावनात्वमुच्यत इति । आद्ये आह—**विलक्षणत्वादिति** । कथं तर्हि धात्वर्थसामान्यरूपतोक्तिरित्यत आह—**भिन्नेष्विति** । अन्योत्पादनानुकूलत्वरूपानुगतधर्ममादाय तथा व्यवहार इति भावः । द्वितीये आह—**अयंचेति** । यजेतेत्यत्र यागस्यैवान्योत्पादनानुकूलात्मना भावनात्वे यागानुवादेन गुणविधिषु यागस्य कर्मत्वं न स्यात् । यागोत्पादनानुकूलव्यापारो हि यागकर्मको भवति । नच याग एव यागोत्पादनानुकूलव्यापारः तस्मान्न गुणविधिषु कर्मत्वसंभवः । एवं तत्र यागस्य यागोत्पादनानुकूलत्वाभावेन यागस्य करणत्वस्थलेऽपि स्वर्गोत्पादनानुकूलकृतेर्वस्तुतो यागत्वे भेदाभावात् करणत्वं च न स्यादिति यजेतेत्यत्र यागव्यतिरिक्तैव भावना स्वीकार्येति भावः । एवं द्विधा धात्वर्थस्य सङ्गतिरित्यस्यैकस्यैव धात्वर्थस्य यजेतेति प्रकृत्यर्थभूतस्य यागात्मना भावनात्मना च प्रतीतिरिति नार्थः किंतु यजेतेत्यत्र प्रकृतिलक्षणधात्वर्थो यागो विशेषरूपेण संबध्यते प्रयत्नसंकल्पादिधात्वन्तरार्थस्तु प्रत्ययार्थसामान्यरूपेण संबध्यत इत्यर्थः । तथाच धात्वन्तरार्थस्य प्रकृतधात्वर्थस्य च धात्वर्थत्वेन एकत्वमभिप्रेत्य द्विधा धात्वर्थसङ्गतिरित्युक्तमित्युपपादनीयम् । **तत्कृतीति** । तदर्थसंबन्धिकृतिरूपेणेत्यर्थः । **न यजिरेवेति** । नैव यजिरित्यर्थः । **नानिष्टमिति** । धात्वन्तराभिधेयत्वेऽपि प्रकृतधात्वर्थस्य कर्मत्वकरणत्वसंभवेन धात्वन्तरार्थत्वस्य विरोधित्वाभावादिति भावः । प्रस्तुताधिकरणसिद्धान्तमुपसंहरति—**तत्रेति** । सूत्रार्थस्तु भावार्थाः प्रत्ययेन भावनाप्रतिपादकाः प्रकृत्या कर्मवचना ये शब्दास्तेभ्योऽपूर्वं प्रतीयेतेति । यद्वा भावार्थाः भावनाप्रयोजनकाः ये कर्मशब्दाः धातवस्तेभ्योऽपूर्वं प्रतीयेत एष हि धात्वर्थः पदश्रुत्या भावनाकरणत्वेन विधीयत इति प्रयोजनं प्रति निधानाप्रतिनिधानादिरूपं प्राक् ग्रन्थकारेणैव दर्शितम् । **ननु** पूर्वपक्षेऽपि प्रक्रान्तस्य कर्मणोऽसमासिदोषपरिहारार्थ-

१ द्देशेन प्रवृत्त. २ संयोगादिप्रति. ३ भिन्नेषु रूपेषु भावनात्व. ४ धात्वर्थान्तरं. ५ सातु. ६ तस्मात्सिद्धं. ७ करणं ततो.

अपूर्वस्यास्तिताधिकरणम् ॥ २ ॥

## चोदना पुनरारम्भः ॥ ५ ॥

अपूर्वसदसद्भावसंशये सति नास्ति तत् ॥ मानाभावात्फलं यागात्सिध्येच्छास्त्रप्रमाणतः ॥ ८ ॥
क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम् ॥ विरुद्धं मान्तरेणातः श्रेयोऽपूर्वस्य कल्पनम् ॥ ९ ॥
अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते ॥ अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम् ॥ १० ॥
यागक्रिया सूक्ष्मरूपा परमाण्वात्मसंश्रिता ॥ यावत्फलं नियोगाख्यं नापूर्वमिति चेन्न तत् ॥ ११ ॥
मानहीनं क्रियासौक्ष्म्यं नियोगस्तु लिङादिना ॥ अभिधेयः पृथग्यागादपूर्वं कार्यमस्त्यतः ॥ १२ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'श्येनेनाभिचरन्यजेते'त्येवमादिष्वपूर्वं सिद्धं कृत्वा तत्प्रतिपादकशब्दविशेषो विचारितस्तस्य त्वस्तित्वमेवासिद्धमिति तत्प्रतिपादनार्थमारभ्यते किमेतेष्वपूर्वंनाम यागस्वर्गातिरिक्तमस्ति नेति विचारः । तदर्थं च किं वाक्यावगतः स्वर्गयागादिसाध्यसाधनभावोऽपूर्वमन्तरेणापि घटते नवेति । तत्र—'साध्यसाधनभावो हि श्रूयते स्वर्गयागयोः ॥ वस्त्वन्तरस्य सद्भावे श्रुतिरेव विरुध्यते ॥' वस्त्वन्तरं हि कल्प्यमानयागस्य साध्यं स्वर्गस्य साधनं वा कल्प्येत । तच्चोभयमपि श्रुतिविरुद्धं स्वर्गयागयोरेव साध्यसाधनभावश्रवणात् । कथं पुनः क्षणिकस्य यागस्य विनाऽपूर्वेण कालान्तरभाविफलसाधनत्वमिति यदि ब्रूयात् प्रतिब्रूयादेनं अपूर्वेऽपि कल्पिते कथं यागस्य फलसाधनत्वं तदा ह्यपूर्वमेव फलसाधनं स्यान्न यागः । यागस्यैव शक्तिरवान्तरव्यापारो वाऽपूर्वमितिचेन्न शक्तिमति व्यापारवति चातीते शक्तिव्यापारयोरवस्थानायोगात् । तस्माद्याग एव विनष्टोऽपि फलं साधयति । स एव वा फलं यावदवतिष्ठत इति शास्त्रप्रामाण्यादवगन्तव्यं, नापूर्वमिति प्राप्ते ब्रूमः—'विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः ॥ क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमत् ॥' तदेव हि श्रुतार्थानुपपत्त्या कल्पयितव्यम् न यत्प्रमाणान्तरेण विरुध्यते । विरुद्धं च सर्वप्रमाणैर्विनष्टस्यासतोऽनारब्धवस्त्वन्तरस्य कार्यारम्भकत्वमवस्थानं च क्षणमात्रवर्तिनः प्रमाणवि-

---

मवश्यसमापनीयत्वेन प्रतिनिधानमावश्यकमिति प्रागुक्तं प्रयोजनमुपपन्नमितिचेत्सत्यम् । तथापि पूर्वपक्षे सदृशमसदृशं वा यत्किंचिदुपादाय कर्म समापनीयं ननु सदृशमेव येनकेनचित्समाप्तिसिद्धेः । नच यत्किंचिद्द्रव्यं प्रतिनिधिरिति वक्तुं शक्यं विसदृशत्वात् द्रव्यादेवापूर्वमिति पूर्वपक्षे मुख्यद्रव्यं फलार्थं कर्मसमाप्त्यर्थं उपादीयमानं यत्किंचिद्द्रव्यं तु प्रक्रान्तापरिसमाप्तिदोषपरिहारार्थमिति फलभेदाच्च । तस्मादुपपन्नं प्रयोजनमिति ॥

**चोदना पुनरारम्भः** ॥ ५ ॥ पूर्वाक्षेपात्संगतिरित्यभिप्रेत्याह—**दर्शेति** । यागस्य स्वर्गसाधनत्वस्य श्रुतस्यान्यथानुपपत्त्या पूर्वं कल्प्यत इति श्रुतार्थापत्तिरपूर्वे मानमिति सिद्धान्ती मन्यते तदयुक्तम् । कल्प्यमानस्यापूर्वस्य साधनत्वविरोधितया तदुपपादकत्वासंभवात् इत्यभिप्रायेण श्लोकं व्याचष्टे—**वस्त्वन्तरंहीति । स्वर्गयागयोरेवेति** । एवकारेण मध्यं वस्त्वन्तरं व्यवच्छिद्यते । ततश्च साधनत्वबोधकशास्त्रेणाव्यवधानस्यैव बोधनान्मध्ये वस्त्वन्तरस्वीकारे तद्विरोधः स्यादिति भावः । नन्वव्यवहितसाधनत्वासंभवाद्वस्त्वन्तरव्यवधानमवश्यमङ्गीकार्यमित्याशयेन शङ्कते—**कथमिति** । व्यवहितस्य कुलालपितृवदन्यथासिद्धत्वान्न साधनत्वमिति साधनं सर्वमव्यवहितमेव वाच्यम् । ततश्चापूर्वकल्पने साधनत्वं व्याहन्येतैवेत्याशयेन परिहरति—**प्रतिब्रूयादिति** । नन्वपूर्वस्य व्यवधायकत्वाभावान्नोक्तदोष इति शङ्कते—**यागस्यैवेति । शक्तिरिति** । यागस्य या स्वर्गजननानुकूलशक्तिः सैवापूर्वम् । ततश्च शक्तेः स्वयं साधनत्वाभावेन यागसाधनताव्यवधायकत्वं नास्ति शक्तिसद्भावाच्च यागस्य साधनत्वमप्युपपद्यत इति भावः । **व्यापार इति** । नहि स्वाङ्गं स्वव्यवधायकमिति न्यायाद्व्यापारोऽपि न व्यवधायक इति भावः । कथं तर्हि क्षणिकस्य साधनत्वमित्यपेक्षायामाह—**तस्मादिति** । कृतयागस्य पुरुषस्य स्वर्ग इति कल्पनया विनष्टस्यापि साधनत्वमुपपादनीयमिति भावः । **स एवेति** । सूक्ष्मरूपेणावस्थानस्य वाऽयोग्यत्वस्य वा कल्पनान्नानुपलब्धिबाध इति भावः । यदुक्तं—शास्त्रप्रामाण्याद्विनष्टस्यापि फलजनकत्वं क्षणिकस्यापि स्थायित्वं वा कल्प्यमिति तन्निरासपूर्वकं श्लोकं व्याचष्टे—**तदेवहीति** । व्यापारद्वारा कार्यजनकपूर्वानुभवघृतपानकृष्यध्ययनादिव्यावृत्त्यर्थमाह—**अनारब्धवस्त्वन्तरस्येति** । कृतयागस्यापि पुरुषस्य न स्वर्गसंभवः पुरुषे यागजनितविशेषंविना कृतयागपुरुषस्याकृतयागपुरुषापेक्षयाङ्गवैलक्षण्याभावादिति भावः । व्यवधिः व्यवधानं ज्वालायाः प्रत्यक्षतया शक्तित्वासंभवात्

---

१ यागसाध्यं स्वर्गसाधनं च.

**स्तुमेव** । अतोऽपूर्वमेव कल्पयितव्यम् । नच श्रुतिविरोधः । तस्य यागस्य शक्तित्वात् । अवान्तरव्यापारत्वाद्वा । नहि शक्त्यावान्तरव्यापारेण वा व्यवधिरकरणतामापादयति काष्ठानामिव ज्वालया । नचावश्यं शक्तिमत्येवे शक्त्यावस्थातव्यम् । कार्यानुमेया हि[3] सा । यत्रैव कार्यायालं तत्रैव कल्प्यते । अतो यागशक्तिरात्मन्येव तिष्ठतीत्यविरोधः । एतावदेव वावान्तरव्यापाराणां तत्त्वं यत्समीहितोद्देशप्रवृत्तेन साधनेन तत्सिद्ध्यर्थमन्तरा साध्यमानत्वं काष्ठैरिव ज्वालायाः । तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापाररूपम्, अङ्गानां च फलवदुपकारसाधनानाम् । एषात्र प्रक्रिया । प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनत्वं बोध्यते यागेन स्वर्गं कुर्यादिति । कथं विनश्वरेण फलं कर्तव्यमित्यपेक्षायामपूर्वं कृत्वेत्युच्यते । कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानप्रकारेणेति । ततः पूर्वापरकालवर्तिभिरङ्गव्यापारैर्विषयीकृतस्य यागस्यापूर्वसाधनत्वं न स्वरूपेण संभवतीत्यपूर्वान्तरमपि परिकल्प्यते । दर्शपूर्णमासयोस्तु पक्षद्वयवृत्तिभ्यां समुदायाभ्यां युगपत्फलापूर्वारम्भायोगादेकैकंप्रति समुदायमपूर्वं कल्प्यते । तत्कथंभावापेक्षायामन्वाधानाद्यङ्गोपदेशः । ततः पूर्ववदेव पूर्वोत्तराङ्गसहितेभ्यस्तदुत्पत्तिर्न स्वरूपेण संभवतीति प्रतित्रिकं त्रीणित्रीण्युत्पत्त्यपूर्वाणि कल्प्यन्ते । यदि पुनः प्रथममेव षड्भ्यो यागेभ्यः षडपूर्वाणि कल्प्येरन् ततोऽपूर्वार्थत्वादङ्गानामङ्गोपकृतेभ्यो

---

व्यापारमात्रे दृष्टान्तत्वमित्याहुः । **कार्यानुमेयेति** । कार्यबलात्कल्प्यमाना शक्तिर्यथा कार्यं निर्वहति तथा कल्पनीया । इह च शक्तेरात्मनिष्ठतयैव कार्यं निर्वाह्यमित्यात्मनिष्ठैव यागस्य शक्तिः कल्प्यत इति न विरोध इत्यर्थः । **एतावदेवेति** । ननु व्यापारिणः सत्त्वमप्यवान्तरव्यापारत्वे प्रयोजकमित्येवकारार्थः । **अङ्गानां चेति** । अनेनाङ्गवाक्यान्यप्यत्रोदाहरणमिति सूचितम् । **ननु** फलसाधनत्वनिर्वाहार्थमपूर्वकल्पनेत्ययुक्तम् । तथासत्येकेनैवापूर्वेण तन्निर्वाहोपपत्तेरुत्पत्त्यपूर्वादिरूपनानाऽपूर्वकल्पनायास्त्वदभिमताया असिद्धेरित्याशङ्कायां तत्तदपूर्वकल्पनाप्रकारमाह—**एषेति** । फलापूर्वात्मकपरमापूर्वकल्पनाप्रकारमुक्त्वा उत्पत्त्यपूर्वप्रकारकल्पनाप्रकारमाह—**कथमपूर्वमिति** । अपूर्वकरणस्यालौकिकत्वेन कथमपूर्वं कर्तव्यमिति तत्प्रकारजिज्ञासा भवतीति भावः । विषयीकृतस्य उपकृतस्य । स्वरूपेण साक्षात् । विनश्वरस्य यागस्य स्वरूपेणोदीच्याङ्गोपकार्यत्वाभावादुत्पत्त्यपूर्वं परिकल्प्यत इत्यर्थः । नचोत्पत्त्यपूर्वमेवाङ्गोपकृतं स्वर्गं साधयतु किं परमापूर्वेणेति वाच्यम् । यागस्वर्गयोः साध्यसाधनभावनिर्धारणानन्तरं हि कथंभावाकाङ्क्षा भवति नतु प्रथमम् । तन्निर्धारणं च यागस्य विनश्वरत्वेनापूर्वकल्पनानन्तरमेव निर्व्यूढं भवतीति प्रथमतः फलापूर्वमेव कल्प्यं नतु उत्पत्त्यपूर्वम् । तत्तूक्तरीत्याङ्गसाचिव्यनिर्वाहार्थं पश्चादेव कल्प्यमित्यपूर्वद्वयकल्पनावश्यंभावात् । अतएव सप्तमाद्यतन्त्ररत्नेऽपूर्वकृतेरेव कथंभावाकाङ्क्षा न स्वर्गकृतेरित्येवमपूर्वार्थत्वं धर्माणामुपपादितमुपपद्यत इति ध्येयम् । एवं सर्वसाधारण्येन परमापूर्वोत्पत्त्यपूर्वकल्पनामुक्त्वा दर्शपूर्णमासयोः समुदायापूर्वद्वयस्याधिकस्य कल्पनामाह—**दर्शेति** । दर्शपूर्णमासाभ्यां यजेतेति दर्शपूर्णमासशब्देन साहित्यबोधनात्परस्परसहितस्य समुदायद्वयस्य परमापूर्वजनकत्वं प्रतीयते । पक्षद्वयवर्तिनोश्च समुदाययोः स्वतः साहित्यासंभवात् तन्निर्वाहार्थं समुदायापूर्वद्वयं कल्पनीयमित्यर्थः प्रतीयते । स चानुपपन्नः । आग्नेयादिवाक्यैरुत्पन्नानां फलाकाङ्क्षायां दर्शपूर्णमासवाक्येन फलसंबन्धो बोध्यते । तत्र चाग्नेयादयः समुदायिन एवोत्पन्ना न समुदाय इति दर्शपूर्णमासवाक्येन समुदायमुखेन समुदायिनामेव फलजनकत्वं बोध्यत इति वक्तव्यत्वेन समुदाययोस्तज्जनकत्वाभावात्, पौर्णमास्यधिकरणे वार्तिके दर्शपूर्णमासशब्दयोः समुदायिपरत्वस्य प्रपञ्चेनोपपादितत्वाच्चेति । तस्मादन्यथा वर्ण्यते । पौर्णमास्यां पौर्णमास्या यजेताभावास्यायाममावास्यया यजेतेति पृथक्करणविभक्तिनिर्देशात् परस्परनिरपेक्षस्यैकैकस्य त्रिकस्य करणत्वमवगम्यते । नच तत्फलापूर्वंप्रति वक्तुं शक्यम् । तत्र परस्परसाहित्यावश्यंभावात् । अतस्तन्निर्वाहार्थमेकैकत्रिकसाध्यसमुदायापूर्वद्वयमङ्गीकर्तव्यमिति । ततश्च पक्षद्वयशब्दोपलक्षितपौर्णमास्यमावास्यावाक्यद्वये निरपेक्षसाधनत्वेनावगताभ्यां त्रिकाभ्यां युगपत्फलापूर्वारम्भे नैरपेक्ष्यस्य बाधप्रसङ्गेन तदादाय पक्षद्वयवाक्यश्रुतकरणत्वनिर्वाहासंभवात्तदर्थं प्रतित्रिकमेकैकं समुदायापूर्वमङ्गीकर्तव्यमिति ग्रन्थार्थो बोध्यः । **ननु** फलवाक्ये दर्शपूर्णमासशब्दस्य समुदायिपरत्वमिति प्रागुक्तरीत्या षण्णां यागानां फलसंबन्धबोधनेन षण्णामपि साहित्यसिद्ध्यर्थं षडुत्पत्त्यपूर्वाण्येव प्रथमं कल्प्यन्ताम् । ततश्च तैरेव फलसिद्धेः किं परमापूर्वेणेत्यत आह—**यदीति** । प्रथमतः फलाकाङ्क्षाया औत्कण्ठ्यात्फलसाधनतानिर्वाहकत्वेनैवापूर्वं कल्प्यं न साहित्यनिर्वाहार्थम् । ततश्च यदि प्रथममेव षडपूर्वाणि कल्प्यन्ते तर्हि तानि फलापूर्वाण्येव स्युर्नतूत्पत्त्यपूर्वाणि । सप्तमाद्ये वक्ष्यमाणन्यायेन धर्माणामपूर्वार्थत्वात्प्रथमं

---

१ काष्ठादीनामिव. २ शक्तिमत्येवावतिष्ठते. ३ हि शक्तिः. ४ मपि कल्प्यते. ५ वर्तिभ्यां. ६ वदेवाङ्गसहिते. ७ त्रीण्यपूर्वाणि. ८ पुनःषड्यागेभ्यः.

यागेभ्योऽपूर्वसिद्ध्यै पुनरपि षडपूर्वाणि कल्प्यानि स्युरिति गौरवं स्यात्। तस्मादेकमेव फलापूर्वमुत्पत्त्यपूर्वाणि तु प्रतिप्रधानं भिद्यन्ते, तथाङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वाच्च स्वरूपेण संहत्योपकर्तुं शक्नुवन्तीत्यवान्तरव्यापाररूपाणि तावदपूर्वाण्यारभन्ते। ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भौन्मुख्यरूपमनुग्रहं परमोपकाराभिधानं जनयन्ति। तत्र त्वयं विभागः—सन्निपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यतिशयं दधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते तद्द्वारेण फलापूर्वे। आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ। एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्तीत्येवमेकरूपेणेत्थंभावेन स्वीक्रियन्ते। तस्मादस्त्यपूर्वम्॥

कर्मणां गुणप्रधानभावविभागाधिकरणम्॥ २॥

**तानि द्वैधं गुणप्रधानभूतानि॥ ६॥ [यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्॥ ७॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्॥ ८॥]**

अवघातादिनापूर्वमुत्पाद्यं विद्यते न वा॥ यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥ १३॥
दृष्टे तुषविमोके तु नापूर्वं द्रव्यतत्त्वतः॥ स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्वचः॥ १४॥
द्वितीयां सक्तुवद्भक्त्वा नियोगेऽन्वीयतां क्रिया॥ साक्षादिति न मन्तव्यं दृष्टस्यात्रोपपत्तितः॥ १५॥

एवं तावदस्त्यपूर्वम्। तदाख्यातेभ्यस्तदर्थं च द्रव्यादिपदम्। आख्यातं तु द्रव्याद्यपेक्षया प्रधा-

---

कल्पितानि यान्यपूर्वाणि तदर्थत्वमेव धर्माणां स्यात्तत्तथाङ्गोपकृतेभ्यो यागेभ्योऽपूर्वसिद्ध्यर्थं पुनरपि षडपूर्वाणि कल्पनीयानीति गौरवं स्यादित्यर्थः। **तस्मादिति**। षण्णामपि यागानां तन्त्राभिधानेन कल्प्यत इत्यर्थः। अङ्गानामपूर्वमस्तीति पूर्वं संक्षेपेणोक्तं विशदयति—**तथेति**। एकादशे वक्ष्यमाणन्यायेनाङ्गानां सर्वेषां युगपत्प्रयोगवचनग्रहात्समुच्चित्य क्रतूपकारजनकत्वनिश्चये सति क्षणिकानां परस्परसाहित्यस्य स्वरूपेणासंभवात् प्रत्यङ्गमेकैकमपूर्वं कल्प्यत इत्यर्थः। **ननु** यथाग्नेयादीनां प्रधानानां फलसाधनतानिर्वाहार्थं प्रथमं फलापूर्वमेकं सर्वप्रधानसाध्यं कल्प्यते पश्चाच्चाङ्गसाहित्यसिद्ध्यर्थं प्रातिस्विकान्युत्पत्त्यपूर्वाणि कल्प्यन्ते तथाङ्गानामपि सर्वेषां क्रतूपकारजनकत्वनिर्वाहार्थं सर्वाङ्गजन्यमेकमपूर्वं कल्पनीयं पश्चाच्च परस्परसाहित्यसिद्ध्यर्थमवान्तरव्यापाररूपाण्युत्पत्त्यपूर्वाणि कल्पनीयानीति कथं सर्वाङ्गजन्यमेकमपूर्वं ग्रन्थकारेण नोच्यते। अङ्गीकृतं च तथैव न्यायसुधाकारैरिति चेदुच्यते। यथा स्वर्गस्य कालान्तरभावित्वं एवमङ्गजन्यस्य क्रतूपकारस्य न कालान्तरभावित्वं ब्राह्मणसंतर्पणान्ताङ्गानुष्ठानानन्तरमेव तदुत्पत्तेः। ततश्चाग्नेयादिभिः कथं कालान्तरभावि स्वर्गरूपं फलं साधनीयमिति सर्वसाध्यैकफलापूर्वकल्पकजिज्ञासावदिह कथं सर्वैरङ्गैः कालान्तरभाविक्रतूपकारः कर्तव्य इति जिज्ञासाया अभावेन सर्वसाध्यमेकमपूर्वं न कल्प्यते किंतु क्षणिकानामेषां कथं साहित्यमित्येवात्र जिज्ञासा। सा च प्रातिस्विकापूर्वकल्पनामात्रेणापि शाम्यति। प्रधानेषु तु फलाकाङ्क्षाया उत्कटत्वात्तस्य च कालान्तरभावित्वात्तन्निर्वाहकजिज्ञासैव प्रथममुदेति। सर्वेषां फलसाधनतानिर्वाहकं सर्वसाध्यमेव प्रथमं कल्प्यमिति वैषम्यम्। तदेतदभिप्रेत्यावान्तरापूर्वैरेव क्रतूपकारसिद्धिमुपपादयति—**तत इति**। अङ्गजन्यः प्रधानस्यानुग्रह उद्यमननिपातनादिना परशोरिव फलजननसामर्थ्योद्बोधनात्मा नान्यः। स एव च परमोपकारः सर्वाङ्गापूर्वैरेव परस्परं संहितैर्जायत इत्येतावदङ्गार्थः। एवंचावघातप्रयाजादिजन्यदृष्टादृष्टवस्तुसंपादनमेवान्तरोपकार इति ग्रन्थकारस्याशयः। इमं चार्थं दशमाद्ये स्पष्टमुपपादयिष्यामः। **ननु** सर्वेषामङ्गानां करणोपकारजनकत्वमित्ययुक्तं। सन्निपत्योपकारकाणामवघातादीनामनुष्ठानसमये प्रधानोत्पत्त्यपूर्वस्यैवासत्त्वेन तदुपकारकत्वासंभवात्। नच प्रयाजादिवदपूर्वद्वारा तत्संभवस्तेषामपूर्वाभावादित्यत आह—**तत्रेति**। **यागस्वरूपस्येति**। विशिष्टद्रव्यदेवतादिना जायमानो यागः शक्त्यतिशयसंपन्न एव जायत इत्यर्थः। **तद्द्वारेणेति**। तथाविधयागजन्योत्पत्त्यपूर्वस्यैव फलापूर्वजनकत्वादिति भावः। **नन्वेवं** साक्षादुपकारजनने व्याप्रियमाणत्वात्प्रयाजादीनामेवेत्थंभावेन स्वीकारः स्यात्ततश्च तेषामेव विकृतावतिदेशः स्यान्नावघातादीनामित्यत आह—**एवमिति**। कथं भावयेदिति ह्युपकारजननप्रकारमात्रमेवापेक्ष्यते नतु साक्षादुपकारजननप्रकार एव। ततश्च सत्यप्यवान्तरविशेषे सर्वेषामेवाङ्गानामित्थंभावेन संग्रहो नारादुपकारकाणामेवेत्यर्थः। इत्थंभावेन परमोपकारजनकव्यापारत्वेनेति यावत्। प्रयोजनं तु यावदिह शास्त्रे पूर्वोपजीवि भवति अङ्गानामपूर्वार्थत्वातिदेशोहादि तत्सर्वं बोध्यम्। सूत्रार्थस्तु चोदनाऽपूर्वं पुनरस्ति। यतः कर्मणा फलारम्भश्चोद्यत इति॥

**तानि द्वैधं गुणप्रधानभूतानि॥ ६॥** अपूर्वाधिकरणाधीनो भावार्थाधिकरणस्यात्मलाभ इत्यपूर्वाधिकरणस्य भावा-

---

१ रम्भोन्मुखस्य. २ परमोपकारं.

नस्य कर्मणो वाचकमित्याख्यातभेदानुसार्यपूर्वभेदानुसरणं कर्तव्यमिति स्थितं, तस्यापवादः क्रियते। सत्यपि धात्वर्थभावनयोर्भेदे केषुचिदाख्यातेषु नापूर्वं भिद्यत इति दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'तण्डुलान्पिनष्टि' इति श्रूयते। तत्र संशयः किमवघातादिभ्योऽपूर्वमस्ति नवेति। तदर्थं च किमवघातार्थो व्रीहय उत व्रीह्यर्थोऽवघात इति। तत्र वाक्यसाफल्यायावश्यं कल्प्यमदृष्टम्। तच्च धात्वर्थादेव साध्यभूताख्याय्यम्। तथाहि भूतस्य द्रव्यस्य तन्निर्वृत्त्या दृष्टार्थता स्यात्। इतरथा त्वदृष्टद्वयं कल्प्यमित्युक्तं पूर्वाधिकरणे। तस्मात्प्रधानमेव व्रीह्यपेक्षयावघातः तत एवापूर्वमिति। स्यादेवं यद्यदृष्टं कल्प्येत। तत्र पुनः क्लृप्तमेव यागनिर्वृत्तिः प्रयोजनं, तादर्थ्ये चावघातस्य कर्मौपयिकं तुषविमोकादि दृष्टमेव प्रयोजनं लभ्यत इति न कस्यचिददृष्टं कल्प्यम्। नियमादृष्टमात्रं तु कल्पनीयम्। तत्रावघातस्यादृष्टार्थत्वेऽपि द्रव्यनियमादवश्यं कल्प्यमित्यदृष्टद्वयम्। तद्वरमेकमेव दृष्टार्थादवघातान्नियमादृष्टं कल्पितम्॥

संमार्जनादीनामप्रधानताधिकरणम्॥ ४॥

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्॥ ९॥ [तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात्॥ १०॥ द्रव्योपदेश इति चेत्॥ ११॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात्॥ १२॥]**

संमार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता॥ गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत्॥ १६॥
गुणत्वं नहि संभाव्यं प्राधान्यं तु प्रयाजवत्॥ अदृष्टकल्पनेनापि गुणत्वं स्याद्द्वितीयया॥ १७॥

यत्र न किंचिद्दृष्टमस्ति कर्मौपयिकं तु द्रव्यं द्वितीयया संयुज्य निर्दिश्यते 'स्रुचः संमार्ष्टी'त्यादिषु

---

र्थाधिकरणशेषतया प्रधानेन भावाधिकरणेनैवास्य सङ्गतिमाह—**एवमिति**। अत्राख्यातशब्दो धातुपरः। यद्यपि भावार्थाधिकरणे धात्वर्थस्यापूर्वभावनाकरणत्वमेव व्युत्पाद्यं नतु धात्वर्थभेदानुसार्यपूर्वभेदानुसरणं कर्तव्यमिति। ततश्च भावार्थाधिकरणे यदुक्तं धातोरपूर्वभावनाकरणार्थकत्वं तस्यैवात्रापवादः क्रियते नापूर्वभेदस्यापवादस्तथापि धात्वर्थस्यापूर्वभावनाकरणत्वव्युत्पादने सति वक्ष्यमाणस्य धात्वर्थभेदानुसार्यपूर्वभेदानुसरणस्य, तथा धात्वर्थस्यापूर्वभावनाकरणत्वापवादे सत्यपूर्वभेदापवादस्य च सिद्धेः फलाभिप्रायेण ग्रन्थो योज्यः। **तदर्थमिति**। यद्यवघातार्था व्रीहयस्तदा व्रीहिसाधनकावघातस्य दृष्टप्रयोजनाभावादस्त्यपूर्वम्। यदि तु व्रीह्यर्थोऽवघातस्तदा दृष्टवैतुष्यद्वारैव व्रीह्यर्थत्वादवघातस्य नास्त्यपूर्वमिति फलफलिभावः। नन्वग्निमाधिकरणे द्वितीयायाः साध्यार्थकतया तत्सहितविधिबलाद्द्वितीयान्तार्थस्य शेषित्वस्य वक्ष्यमाणत्वात्तन्न्यायेनेहापि द्वितीयाश्रुत्या व्रीह्यर्थत्वमेवावघातस्येति कथं पूर्वपक्ष इत्यत आह—**तत्रेति**। दृष्टवैतुष्यार्थत्वे तस्य लोकतएव प्राप्तेर्विधिवैयर्थ्यापत्त्या तत्साफल्यायावश्यं प्रकृतेऽपूर्वं कल्पनीयम्। तच्च यदि व्रीहिद्रव्यात्कल्प्यते तदावघातस्य व्रीह्यर्थत्वमदृष्टद्वारैव वाच्यम्। द्रव्यादपूर्वमितिपक्षेऽवघातविशिष्टद्रव्यस्य विधेयत्वाददृष्टद्वारावघातस्य द्रव्यार्थत्वे द्रव्यविशेषणतयाऽवघातविधिवैयर्थ्यापत्तेरतो व्रीह्यर्थत्वेऽवघातस्यादृष्टद्वयकल्पनाप्रसङ्गाद्द्वितीयाश्रुत्यवगतमपि व्रीह्यर्थत्वं परित्यज्य सक्तुवद्द्वितीयायास्तृतीयार्थलक्षकत्वाश्रयणेनावघातार्था व्रीहय इति युक्तः पूर्वपक्ष इत्यर्थः। भवेदेवमदृष्टद्वयकल्पना, यदि व्रीहिद्रव्यमवघातविशिष्टमिह विधीयत इति मया स्वीक्रियेत किंतु क्रत्वर्थतया प्राप्तान् व्रीहीनुद्दिश्य तादर्थ्येनावघातमात्रं विधीयते। अतो न तावत् व्रीहिद्रव्यादपूर्वकल्पनाप्रसक्तिः। नाप्यवघातस्य व्रीह्यर्थतानिर्वाहायापूर्वकल्पना, दृष्टवैतुष्यद्वारेव तदर्थत्वसंभवात्। अतो नास्मत्पक्ष एकस्याप्यपूर्वस्य कल्पनेति सिद्धान्तमाह—**स्यादेवमिति**। नन्वेवं वा वाक्यवैयर्थ्यं स्यादित्युक्तमित्यत आह—**नियमेति**। ननु तर्हि तवापि नियमादृष्टस्य कल्पनीयत्वात् को विशेष इत्यत आह—**तत्रेति**। व्रीहिसाधनकावघातविधिपक्षेऽपि सर्वे द्रव्यविधयो नियमविधय इति चतुर्थे वक्ष्यमाणन्यायेन विशेषणभूतव्रीहिविधेर्नियमार्थतया त्वत्पक्षेऽपि नियमादृष्टमावश्यकम्। एवंच तवैवापूर्वद्वयकल्पना। मम तु नियमादृष्टमात्रकल्पना। नचैवं नियमादृष्टरूपापूर्वस्य सद्भावान्नास्त्यपूर्वमिति कथमुच्यत इति वाच्यम्। नियमादृष्टस्य क्रियाफलानुनिष्पादित्वेन तस्य फलत्वव्यवहारायोग्यत्वादिति भावः। प्रयोजनं व्रीहिसाधनकावघातविधिरिति पूर्वपक्षेऽवघातस्य यागीयद्रव्यसंस्कारत्वाभावेन यवप्रयोगेऽपि व्रीह्यवघातोऽदृष्टार्थे कर्तव्यः। सिद्धान्ते तु यागीयद्रव्यसंस्कारार्थत्वाद्यवेष्वेवावघातः कर्तव्य इत्यादि द्रष्टव्यम्। सूत्रार्थस्तु तान्याख्यातानि गुणकर्मप्रतिपादकानि प्रधानकर्मप्रतिपादकानीत्येवं द्वैधं द्विधेति॥

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्॥ ९॥** पूर्वाधिकरणविषयाद्व्यावर्तयति—**न किंचिदिति**। प्रयाजा-

---

१ दृष्टार्थावघातनियमा.

तत्र विचार्यते किं प्रधानकर्म उत गुणकर्मेति । तदर्थं च किं साध्यवाचिनी द्वितीयाऽथवा साधनवाचिनीति । यद्यपि चात्र सिद्धान्तेऽपि द्रव्यगतादृष्टसंस्काररूपापूर्वसद्भावान्नापूर्वभेदाभेदयोरुपयोगस्तथापि पूर्वोक्तगुणकर्मलक्षणस्याव्यापकत्वं प्रधानकर्मलक्षणस्यातिव्याप्तिं चाशङ्क्य समाधीयत इति सङ्गतिः । तथाहि यैस्तु द्रव्यं चिकीर्ष्यते इति दृष्टोपकारित्वं गुणकर्मलक्षणमुक्तम् । तच्चाव्यापकं संमार्जनादिष्वभावात् । तथा यैस्तु द्रव्यं न चिकीर्ष्यते इति दृष्टोपकाराभावः प्राधान्यलक्षणमुक्तं तच्च संमार्जनादिष्वतिप्रसक्तं तेषामपि प्राधान्यप्रसङ्गादिति । इदमाशङ्काद्वयं निराकर्तुमिदमुच्यते। द्वितीयाश्रुत्या संमार्जनादीनामपि द्रव्यगुणत्वम् । पूर्वोक्तं तु लक्षणद्वयं न गुणप्रधानविषयमपि त्वपूर्वसदसद्भावविषयम् । तन्मात्रस्यैव भावार्थाधिकरणापवादत्वेन प्रतिपिपित्सितत्वात् । तेनापूर्वसदसद्भावाय तानि द्वैधमिति गुणप्रधानकर्मणी उपक्षिप्ते । कीदृशं तद्गुणकर्म यत्रापूर्वं नास्ति कीदृशं वा प्रधानकर्म यत्रापूर्वमस्तीत्यपेक्षायामुक्तं दृष्टोपकारिष्वपूर्वं नास्ति तदभावे चास्तीति । संमार्जनादिषु चास्त्येवापूर्वं द्रव्यगतमित्यनवद्यं लक्षणम् । अत्र पूर्वपक्षाभिप्रायः—दृष्टप्रयोजनत्वमेव गुणकर्मलक्षणं न द्वितीयेति । कुतः—'व्यभिचारान्न साध्यत्वमुच्यते लोकवेदयोः ॥ साधनत्वं द्वितीयार्थः सर्वत्राव्यभिचारतः ॥' 'बल्वजान् शिखण्डकान्कुर्वि'ति लोके, 'सक्तून् जुहोती'ति च वेदे व्यभिचारान्न साध्यत्वं द्वितीययोच्यते । साधनत्वं तु घटं करोतीत्यादावपि घटादेर्बुद्धिस्थत्वेन क्रियाहेतुत्वा-

---

द्विद्यमानत्वर्थमाह—**कर्मेति** । **तदर्थमिति** । साध्यवाचित्वे द्रव्यस्य प्राधान्यात्कर्मणो गुणत्वं साधनवाचित्वे तु द्रव्यस्य कर्मार्थत्वात्कर्मणः प्राधान्यमिति फलफलिभावः । गुणकर्मत्वप्रधानकर्मत्वचिन्ताया न प्रकृतसङ्गतिरिति शङ्कते—**यद्यपीति** । **यैरिति** । यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते तस्य द्रव्यप्रधानत्वादिति सूत्रं यैराख्यातार्थैः कर्मभिः द्रव्यं स्वरूपेण वैतुष्यादिधर्मविशिष्टतया वा कर्तुमिष्यते तत्र गुणः प्रतीयेत तेषु तदाख्यातार्थेषु कर्मसु गुणत्वं गुणकर्मत्वं प्रतीयेत । कुतः। तस्य द्रव्यप्रधानत्वात् । तस्य कर्मणः प्रत्यक्षतो द्रव्यप्रधानकत्वादित्यर्थः । **तथेति** । यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वादिति सूत्रं तत्र प्रत्यक्षद्रव्यस्य कर्मप्रति गुणभूतत्वात्कर्मण एव तत्र प्राधान्यमित्यर्थः । **आशङ्काद्वयमिति** । ननु पूर्वपक्षिणा संमार्गादेः प्रधानकर्मत्वस्यैवाङ्गीकारात्कथं गुणकर्मत्वलक्षणस्याव्याप्तिः शङ्कितुं शक्या कथं वा प्रधानकर्मलक्षणस्यातिव्याप्तिस्तस्मादिदमनुपपन्नमितिचेन्न । पूर्वाधिकरणे दृष्टोपकारित्वं गुणकर्मलक्षणमुक्तम् । तच्च संमार्गादेः प्रधानकर्मत्वे एव घटतेऽन्यथा संमार्गादिषु तस्याव्याप्त्यापत्तेः । तथा पूर्वाधिकरणे उक्तं दृष्टोपकाराभावरूपं प्रधानकर्मलक्षणमपि संमार्गादीनां प्रधानकर्मत्वएव कल्प्यतेऽन्यथा संमार्गादिषु प्रधानकर्मलक्षणस्यातिव्याप्त्यापत्तेरतः प्रागुक्तलक्षणद्वयनिर्वाहार्थं संमार्गादीनां प्रधानकर्मत्वमेवाङ्गीकर्तव्यं न गुणकर्मत्वमित्येवमव्याप्त्यतिव्याप्तिशङ्काद्वयमवष्टभ्य प्रसक्तं यत्संमार्गादेः प्रधानकर्मत्वं तन्निराकरणार्थमिदमुच्यत इत्यत्र तात्पर्यात् । एवं चाव्याप्त्यादिशङ्कापूर्वकं पूर्वाधिकरणोक्तलक्षणबलेनापाततः प्रसक्तं संमार्गादेः प्रधानकर्मत्वमपोद्यत इति सङ्गतिरिति पूर्वग्रन्थस्य तात्पर्यं बोध्यम् । निराकरणप्रकारमाह—**द्वितीयेति** । गुणप्रधानकर्मलक्षणतया प्रतीयमानस्य किमित्यपूर्वसदसद्भावविषयतयान्यथानयनं क्रियत इत्यत आह—**तन्मात्रस्येति** । ततश्च लक्षणपरत्वमनपेक्षितार्थत्वप्रसङ्गादयुक्तमिति भावः । अपूर्वसदसद्भावविषयत्वे तु नाव्याप्त्यतिव्याप्त्यवकाशः संमार्जनादिष्वपूर्वसद्भावादित्याह—**संमार्जनादिष्विति** । द्वितीयेति प्रकृतोदाहरणाभिप्रायेण सामर्थ्याद्विनापि संमार्गादीनां संस्कारत्वस्याङ्गीकारादिति ध्येयम् । ननु व्याकरणस्मृत्यनुसाराद्द्वितीयायाः साध्यार्थकतया द्वितीयया स्रुगादीनामेव प्राधान्यावगतेः कथं संमार्गादीनां प्रधानकर्मतया पूर्वः पक्ष इत्यत आह—**अत्रेति** । द्वितीयायाः साध्याभिधायित्वे हि सा समभिव्याहृतक्रियायाः पारार्थ्यं गमयन्ती गुणकर्मत्वस्य लक्षणं स्यात् । साध्याभिधायित्वमेव तु तस्या असिद्धमित्याह—**व्यभिचारादिति** । न केवलं द्वितीयया साध्यार्थकत्वाभावात् गुणकर्मलक्षणत्वाभावः किंतु तस्याः साधनत्वार्थकतया तद्बलादेव प्रधानकर्मत्वमपि सिध्यतीत्याह—**साधनत्वमिति** । बल्वजास्तृणविशेषाः । शिखण्डकान् शिखण्डकाकारानित्यर्थः । बल्वजानां सिद्धतया साध्यत्वाभावाद्व्यभिचार इति भावः । **सक्तूनिति** । सक्तूनां स्वरूपेणातिशयविशिष्टत्वाकारेण वा होमसाध्यत्वाभावादिति भावः । ननु घटं करोतीत्यादौ घटस्यासिद्धस्य साधनत्वासंभवात्साधनत्वार्थकत्वेऽपि व्यभिचारस्तुल्य इत्यत आह—**घटमिति** । एवमाकारो घटः कर्तव्य इति बुद्ध्यावुत्पत्त्यनन्तरमेव तत्र कृतेरुत्पत्तेः बुद्धिस्थत्वेन घटस्यापि साधनत्वं संभवतीति भावः । द्वितीयाबलात्प्रधानकर्मत्वमुत्तरार्धतात्पर्यविषयं वि-

---

१ चातिव्यापकं. २ प्रसंगात् तदिदं. ३ तावन्मात्र. ४ पूर्वं विद्यते. ५ संमार्गादिषु. ६ कर्मत्वे. ७ घटादीनां.

दृत्येवेत्यव्यभिचारात्स एव हि द्वितीयार्थः । ततश्च स्रुगादिसाधनकसंमार्गविधानादृष्टोपकाराभावाच्च प्रधानकर्मैव संमार्गादीनीति प्राप्ते ब्रूमः—'स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते ॥ कर्तुर्यदीप्सितं यच्च तथायुक्तमनीप्सितम् ॥ तत्कर्म तद्द्वितीयार्थ इत्येवं पाणिनेः स्मृतिः ॥ बलीयसी च साचाराप्रयोगोऽप्यस्ति तादृशः ॥' स्मृतिस्तावदाचाराद्बलीयसीति स्थितम् । स्मरतिच पाणिनिः 'कर्मणि द्वितीया', 'कर्तुरीप्सिततमं कर्म', 'तथायुक्तं चानीप्सित'मिति च । यथेप्सितं क्रियया संयुज्यते साध्यात्मना तथा साध्यात्मनैव क्रियया युक्तमनीप्सितमपि कर्मसंज्ञमितीप्सितानीप्सितानुवर्ति साध्यरूपं कर्मेत्यर्थः । कर्म च द्वितीयार्थ इति साध्यत्वमेव द्वितीयार्थः । नच निर्मूलं स्मरणं, घटं करोति व्रीहीनवहन्तीति लोकवेदयोः प्रयोगसद्भावात् । यदि च साधनत्वमर्थः स्यात्तर्हि परशुना छिनत्तीति परशौ द्वितीया स्यात् । साधनविशेषवचनत्वादयमदोष इति चेत् कः पुनरसौ यस्य साध्यत्वमितिचेत्तदेव तर्हि वाच्यमस्तु किं साधनत्वोपलक्षणत्वेनाश्रितेन । नन्वेवमपि कथं स्रुगादीनां शेषित्वं ईप्सितं हि शेषी भवति । नचेप्सितं द्वितीयार्थः किन्त्वीप्सितानीप्सितानुवृत्तसाध्यत्वमात्रम् । सत्यम् । न शेषित्वं द्वितीयार्थः । तत्तु विधेर्लभ्यते । विधिवशेन हि समीहितमेव भावनाया भाव्यमवगतम् । तद्विशेषश्च पदान्तरात्प्राप्यते । तत्र च द्वितीयया स्रुगादीनां भाव्यत्वमुच्यते । समीहितभाव्यापेक्षिण्यां च भावनायां नासमीहितस्य भाव्यत्वं संभवतीति स्रुगादीनां समीहितत्व-

---

णोति—ततश्चेति । ननु द्वितीयाबलात्प्रधानकर्मत्वाङ्गीकारेऽवहननादावपि तथात्वं स्यादित्यत आह—इष्टेति । ननु साध्यवाचिनि द्वितीयेति व्याकरणस्मृतेरभावात्कथं स्मृत्या साध्याभिधायित्वं द्वितीयाया इत्यत आह—कर्तुरिति । नन्वन्यत्राचारापेक्षया स्मृतेर्बलवत्त्वेऽपि व्याकरणस्मृतेः प्रयोगरूपाचारमूलत्वाच्च तदपेक्षया बलवत्त्वमित्यत आह—प्रयोगोऽपीति । ततश्च केवलप्रयोगापेक्षया व्याकरणानुगृहीतप्रयोगस्य बलवत्त्वात्तदनुसारेण साध्यत्वमेवार्थ इति भावः । व्याकरणस्मृतिबलात्साध्यत्वं द्वितीयार्थ इत्युपपादयितुं 'तथायुक्तं चानीप्सित'मितिसूत्रार्थं वदन् कर्मसंज्ञाविषयं निष्कर्षति—यथेति । नन्वेतावतापि कथं साध्यत्वस्य द्वितीयार्थत्वसिद्धिरित्यत आह—ईप्सितेति । नन्वेवं साध्यं कर्मेत्येव सूत्रं कर्तव्यं स्यात्तु ईप्सितानीप्सितयोर्भेदेन संज्ञाकरणमिति चेन्मैवम् । तथासति यवेभ्यो गां वारयति । अग्नेर्माणवकं वारयति । इत्यादौ 'वारणार्थानामीप्सितः' इत्यपादानसंज्ञया यवाग्न्यादीनां कर्मसंज्ञाबाधस्यावश्यंवाच्यतया तद्वदेव माणवकादीनामप्यपादानत्वं माभूदित्येवमर्थं 'कर्तुरीप्सिततमं कर्मेति'ईप्सिततमस्य पृथक्कर्मसंज्ञाया वक्तव्यत्वेसति द्वेष्योपेक्ष्ययोः संग्रहार्थं 'तथायुक्तं चानीप्सित'मितीदमप्यावश्यकमिति पृथक्संज्ञाकरणस्यैव युक्तत्वादेवंच भेदेन सूत्रणादीप्सिततममेव द्वितीयार्थः । अनीप्सिते तु लक्षणेति न्यायसुधाकारैरुक्तमयुक्तमिति द्रष्टव्यम् । नच साध्यत्वमर्थ इति पक्षेऽपि 'दिवः कर्म च' 'अधिशीङ्स्थासां कर्मे'त्यादिषु लक्षणावश्यंभावादनीप्सितेऽपि लक्षणैवास्त्विति वाच्यम् । तत्साधारणप्रवृत्तिनिमित्तस्य केनापि वक्तुमशक्यतया तत्रागत्या लक्षणास्वीकारेऽपि संभवन्मात्रविषयानुगमस्य त्यक्तुमनुचितत्वादिति भावः । घटमिति । बुद्धिस्थत्वं बुद्धौ विषयत्वमात्रं नतु वस्तुतः सद्भाव इति साध्यत्वमेव घटस्येति भावः । व्रीहीनिति वैतुष्यविशिष्टत्वेन व्रीहीणां साध्यत्वमिति भावः । स्वाभिमतं साध्यत्वमेव साधने विशेष इति परमुखेन वाचयितुं पृच्छति—कः पुनरिति । नन्वेवमपि स्रुगादीनां शेषित्वप्रत्यायकाभावेन संमार्गादीनां गुणकर्मत्वं न सिध्यतीति शङ्कते—नन्विति । ईप्सितं हीति । यद्धि येन रूपेण पुरुषस्य समीहितं भवति तेन रूपेण तद्वस्तु तत्समीहानिमित्तपुरुषव्यापारगोचरीभूतेन येन वस्तुना साध्यते तत्तस्याङ्गमित्युच्यते । इदमेव च परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपत्वात्पारार्थ्यमित्युच्यते । ततश्चेप्सितं क्रिययाप्तुमिष्टतमं क्रियोद्देश्यमितियावत् । तदेव शेषीभवतीत्यर्थः । नहि शेषित्वं द्वितीयया साक्षात्प्रतिपाद्यं येनोक्तदोषः स्यात्किंतु तद्विधिगम्यम् । तत्र तु द्वितीयायाः साहाय्यमात्रं तच्च साध्यत्वाभिधायित्वेऽपि संभवतीति परिहरति—सत्यमिति । विधिवशेनेति । प्रवर्तनात्मकशब्दभावना विधिः । प्रवृत्तिहेतुर्व्यापारश्च प्रवर्तना । नच समीहितसाध्यादन्यत्र चेतनः प्रवर्तयितुं शक्यत इति विधिः स्वस्य प्रवर्तनात्वसिद्ध्यर्थं स्वभाव्याया भावनायाः समीहितभाव्यत्वं गमयन् भावनाकरणस्य समीहितोद्देशप्रवृत्तव्यापारगोचरत्वं गमयतीत्यर्थः । विधिबलादेव तदवगमे स्रुगादिपदान्तरवैयर्थ्यमित्यत आह—तद्विशेष इति । एतावतापि कथं द्वितीयायाः सहायत्वमित्यत आह—तत्रेति । समीहितत्वं साध्यत्वं चेति द्वयं शेषित्वबोधेऽपेक्षितं तत्र द्वितीयया साध्यत्वं विधिबलाच्च समीहितत्वमिति द्वितीयासध्रीचीनविधितः शेषित्वबोधः संभवतीत्यर्थः । उक्तंच न्यायरत्नमा-

---

१ संमार्जनादिति. २ साधनोपलक्ष. ३ नुवर्ति. ४ भाव्यं भावनाया. ५ स्रुगादीनां द्वितीयया.

सिद्धिः । ननु यत्समीहितं तस्य साधनं विधिना बोध्यते ननु तद्वशेन समीहितत्वं, कोनामाह समीहितत्वं विधिगम्यमिति । किंतु विधिविशेषणीभूतया[1] क्रिययेप्सितत्वं स्रुगादीनां द्वितीयया प्रतिपादितसाध्यभावानां विधिवशाद्गम्यत इत्युच्यते । स्वरूपेण तु तेषां समीहितत्वं क्रतुसाधनत्वादेव सिद्धम् । सक्तूनां तु भूतभाव्युपयोगरहितत्वान्न[2] समीहितत्वमस्तीति समीहितसाध्यापेक्षिण्यां भावनायां भाव्यत्वेनान्वयस्यायोग्यत्वात्साधनत्वमेव लक्षणया द्वितीयाभिधत्ते । स्रुगादीनि तु क्रतुसाधनत्वरूपेणेप्सितत्वाद्योग्यान्येव समीहितभाव्यापेक्षिण्या संमार्गभावनयान्वेतुमिति साध्यत्वमेव श्रुतिबलेन गृह्यते । तत्र दृष्टोपकाराभावेऽप्यदृष्टसंस्कारकल्पनात्[3] सिद्धं गुणकर्मत्वम् ॥

स्तोत्रादिप्राधान्याधिकरणम् ॥ ५ ॥

**स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥ [अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥ वशावद्वा गुणार्थं स्यात् ॥ १५ ॥ न श्रुतिसमवायित्वात् ॥ १६ ॥ व्यपदेशभेदाच्च ॥ १७ ॥ गुणश्चानर्थकः स्यात् ॥ १८ ॥ तथा याज्यापुरोरुचोः ॥ १९ ॥ वशायामर्थसमवायात् ॥ २० ॥ यत्रेति वाऽर्थवत्त्वात्स्यात् ॥ २१ ॥ न त्वाम्नातेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकं च तद्वचनम् ॥ २६ ॥ अन्यश्चार्थः प्रतीयते ॥ २७ ॥ अभिधानं च कर्मवत् ॥ २८ ॥ फलनिर्वृत्तिश्च ॥ २९ ॥**

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता ॥ दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥ १८ ॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम् ॥ तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम् ॥ १९ ॥

इह स्तोत्रशस्त्राण्युदाहरणं 'आज्यैः स्तुवते' इत्यादिप्रगीतमन्त्रसाध्यं गुणेन गुणिनः संबन्धाभिधानं स्तवनं स्तोत्रम् ॥ शस्त्रमपि स्तवनमेवाप्रगीतमन्त्रसाध्यम् । 'प्रउगं शंसति'[4] इत्यादि गुणकर्माणि प्रधानकर्माणि वेति विचारः । तदर्थं च किंदेवतांप्रति गुणभूतानि तत्प्रकाशनार्थानि किंवा देवतां-

लायाम्—'कर्तुः समीहितं येन सिध्यत्यङ्गं तदुच्यते । प्रमाणं च विधिस्तत्र श्रुतिलिङ्गादिसंयुतः ॥' इति । **ननु** विधिना समीहितत्वं बोध्यत इत्युक्तं स्रुगादीनां क्रतुसाधनत्वादेव समीहितत्वसिद्धेरिदं समीहितमित्येवंरूपेण बोधने विधेरसामर्थ्याच्चेति समीहितशब्दस्येहाविषयमात्रमर्थ इति मन्यमानः शङ्कते—**नन्विति** । नहीदं समीहितमित्येवं विधिबलाद्गम्यत इत्युच्यते किंतु यद्वस्तुतः समीहितं स्रुगादि तस्य संमार्जनादिक्रियया ईप्सितत्वमाप्तुमिष्टतमत्वं तदुद्देशेन क्रियायाः प्रवृत्तिः क्रियांप्रत्युद्देश्यत्वमिति यावत् । तदेव विधिना बोध्यते । एवंच क्रतुसाधनत्वेनेच्छाविषयस्यापि स्रुगादेरुद्देश्यत्वंविना परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणं पारार्थ्यं संमार्गादीनां न संभवतीति तत्सिद्ध्यर्थं विधिगम्यं समीहितत्वमुद्देश्यत्वपर्यन्तं नत्विच्छाविषयत्वमात्रमिति न काप्यनुपपत्तिरिति परिहरति—**कोनामेति** । यत्र साध्यत्ववाचि द्वितीयादिकं नास्ति तत्र साध्यत्वमुद्देश्यत्वं च द्वयमपि विधितएव स्वर्गादेरवगम्यत इति ध्येयम् । कथं तर्हि सक्तूनिति द्वितीयानिर्वाह इत्यत आह—**सक्तूनामिति** । यद्विधिव्यापारंविनैव पुरुषस्याभिलषितं तस्य विधीयमानसाधनंप्रत्युद्देश्यत्वमात्रं विधिगम्यमिति पूर्वोक्तप्रकारेण सक्तूनामपि प्रमाणान्तरेणाभिलषितत्वेसति विधित उद्देश्यत्वसिद्धिमाश्रित्य मुख्यार्थत्वमुपपादयितुं शक्यते । नच तदस्ति । सक्तूनां भूतोपयोगित्वेन प्रतिपाद्यतया वा भाव्युपयोगित्वेन क्रतुसाधनभावेन वाभिलषितत्वाभावात्,अतो भाव्यत्वेनान्वयासंभवेन साधनत्वे लक्षणा स्वीक्रियत इत्यर्थः । स्रुगादीनां तु अस्ति सक्तुवैषम्यमित्याह—**स्रुगादीनीति** । स्रुगादीनां साध्यत्वमप्यनुपपन्नं तद्धि न स्वरूपेण संभवति नाप्युपकारविशिष्टत्वेन । अवहननादिजन्यवैतुष्यरूपोपकारवदिहोपकारानुपलब्धेरित्यत आह—**तत्रेति** । प्रयोजनं संमार्गस्य प्रधानकर्मत्वे पशुचातुर्मास्यादिषु स्रुग्वृद्धावपि कपिञ्जलाधिकरणन्यायेन तिसृभिरेव संमार्गः । तथा व्रीहीन्प्रोक्षतीत्यादौ यवप्रयोगेऽपि व्रीहिभिरेव प्रोक्षणमित्यादि सिद्धान्ते तु विपरीतमिति । सूत्रार्थस्तु दृष्टोपकाररहिते धर्ममात्रे श्रुते प्रयाजवत्कर्म प्रधानकर्म स्यात् दृष्टस्योपकारस्यानिर्वृत्तेर्गुणकर्मत्वासंभवादेति ॥

**स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥** ननु स्तोत्रशस्त्रयोः स्तुतित्वेनैक्यात्कथं भेदेन निर्देश इत्यत आह—**प्रगीतेति** । **तदर्थं चेति** । अत्र तदर्थं किं देवतांप्रति गुणभूतान्युत देवतांप्रति प्रधानभू-

१ विधिविषयीभूतया. २ भाव्युपयुक्तत्वाभावान्न. ३ प्यदृष्टकल्पनात्. ४ इत्यादि तानि.

प्रति प्रधानभूतान्यदृष्टार्थानीति । तत्र—'देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनम् ॥ न युक्तं तेन तादर्थ्योत्स्तोत्रादेर्गुणकर्मता ॥' गुणेन गुणिसंबन्धे हि कीर्त्यमाने गुणिनी देवता कीर्त्यते । तत्कीर्तनाच्च तत्स्मरणं क्रतूपयोगि दृष्टमेव प्रयोजनं लब्धमिति नादृष्टकल्पनावसरः । तस्माद्देवताप्रकाशनार्थत्वाद्गुणकर्मैवेति । उच्यते—'सत्यं दृष्टार्थता युक्ता श्रुतिश्चैवं विरुध्यते ॥ देवतास्मरणार्थत्वे श्रुतरूपं विहन्यते ॥' यथाश्रुतस्यार्थस्य प्रयोजनकल्पनं न श्रुतरूपहानेन । स्तुतिश्चात्र कर्तव्यतया श्रूयते स्तौति शंसतीति । यदा च मन्त्रवाक्यं गुणसंबन्धाभिधानपरमेव भवति तदा स्तुतिर्भवति । यदा तु गुणद्वारेण गुणिप्रकाशनार्थं तदा न स्तुतिर्भवति । यथा लोके वक्रकेशान्तो देवदत्त इति गुणसंबन्धपरत्वे स्तुतिं मन्यन्ते । यदा त्वेवमुच्यते योयं वक्रकेशान्तस्तमानयेति न तदा स्तुतिबुद्धिर्भवति । तेन प्रकाशनार्थत्वे स्तौतिशंसत्योः स्वार्थहानेन प्रकाशनलक्षणार्थता स्यात् । नच तत्र लक्षणार्थत्वे प्रमाणमस्ति, श्रुत्यैव वाक्यार्थोपपत्तेः, तेन श्रुतिबलाददृष्टार्थत्वमेव ॥ एवंच माहेन्द्रग्रहयाज्याभ्याससंनिधावैन्द्री स्तुतिरुपपन्ना भवति । इतरथा हि श्रुतिसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति माहेन्द्रग्रहदेवता नेन्द्रशब्देन शक्यते प्रकाशयितुमिति यत्रेन्द्रस्तत्रैन्द्री स्तुतिरुत्कृष्येत । मनोतास्थाग्निशब्दवद्वाग्नीषोमाविन्द्रशब्दएव लक्षणया महेन्द्रं प्रकाशयेत् । तच्च द्वयमप्यन्याय्यम् । तस्मात्प्रधानकर्मणी स्तोत्रशस्त्रे ॥

---

तानीत्येवं तदर्थसंशयः तत्प्रकाशनार्थान्यदृष्टार्थानीति च गुणकर्मत्वप्रधानकर्मत्वयोः फलनिर्देशपरम् । एवंच किमिमानि देवताप्रकाशनार्थान्युतादृष्टार्थानीत्येवं संशये प्रथमं प्रदर्शनीयेऽपि पूर्वाधिकरणस्य तानि द्वैधाधिकरणोक्तप्रधानकर्मत्वापवादकतया तेन सङ्गतिरिति सूचनाय गुणकर्मत्वप्रधानकर्मत्वकोटिकः संशयः प्राधान्येन प्रदर्शित इति ध्येयम् । अत्राग्निमारुतादौ विनियुक्तस्य मण्डूकाक्षसूक्तादेर्देवताप्रकाशनार्थत्वाभावाद्देवताग्रहणं स्तुत्यमात्रोपलक्षणार्थं द्रष्टव्यम् । ननु देवताप्रकाशनार्थत्वे स्तुतिरूपत्वं विहन्येतेति शङ्कां निराकुर्वन्श्लोकं व्याचष्टे—**गुणेनेति** । अग्निर्मूर्धादिव इत्यादिपुरोनुवाक्यायाज्यादिषु सत्यपि गुणसंबन्धप्रकाशने तत्र न तात्पर्यं किंतु गुणिप्रकाशने एव तात्पर्यं एवमिहापि गुणप्रकाशनमतन्त्रीकृत्य तन्मुखेन गुणिप्रकाशनएव तात्पर्यं दृष्टार्थत्वायाभ्युपेयं गुणसंबन्धकीर्तनमात्रेण स्तुतित्वं चोपपद्यत इति भावः । अनेन पूर्ववदिहापि गुणकर्मत्वमिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । परार्थे गुणसंबन्धबोधनमात्रेण न स्तुतित्वं किंतु गुणसंबन्धबोधने पर्यवसितत्वेन । अतो गुणिप्रकाशनार्थत्वे स्तुतिरूपस्य श्रौतस्य बाधप्रसङ्गादिह दृष्टार्थत्वमपि परित्याज्यमित्याह—**सत्यमिति** । **तेनेति** । एतेन स्तुतेरदृष्टार्थत्वेऽपि गुणिनिष्ठगुणाभिधाने क्रियमाणे गुण्यभिधानमप्यानुषङ्गिकं भवतीति तदंशे देवतासंस्कारत्वमपि किं न स्यात् । नच स्तोत्रशस्त्रमन्त्रैर्गुणभागित्वेनैव देवता प्रकाश्यते न हविर्भागित्वेन, प्रधानदेवता तु हविर्भागित्वाकारेति तद्रूपप्रकाशनाभावान्न देवतासंस्कारत्वसंभव इति वाच्यम् । हविर्भागित्वाकारेण देवताप्रकाशनं कर्तव्यमित्यत्र मानाभावादग्निर्मूर्धेत्यादिमन्त्रेषु प्रकाशनार्थेषु हविर्भागित्वाकारद्योतकशब्दाभावेन तेषामग्निप्रकाशनमात्रेण देवताप्रकाशनार्थत्वस्य वक्तव्यत्वाच्च । एवंच तद्वदेवात्रापि हविर्भागित्वाकाराप्रतिपादनेऽप्यानुषङ्गिकगुण्यभिधानमात्रेण देवतास्मरणार्थत्वं संभवत्येव । ततश्च स्विष्टकृदुत्तमप्रयाजादिवदुभयार्थत्वमेव स्तोत्रशस्त्राणां किं न स्यादिति शङ्का निरस्ता । आनुषङ्गिकतयापि गुणिपरत्वस्वीकारे स्तुतिहानापत्तेर्लोके केवलगुणपरत्वसंबन्ध एव स्तुतित्वव्यवहारदर्शनादतो गुण्यभिधानमानुषङ्गिकतयापि न तत्परं किंतु केवलगुणसंबन्धार्थमेव । स्विष्टकृदादौ त्वेवंश्रौतार्थहानिरूपबाधकाभावादुभयार्थत्वमुपपन्नमिति वैषम्यमिति भावः—**श्रुतिबलादिति** । प्रयाजशेषेण हवींष्यभिघारयतीत्यादौ न दृष्टार्थत्वलोभमात्रेण तृतीयाया लक्षणा, किंतु शेषशब्दस्वारस्यबलेनेति तद्वदिह दृष्टार्थत्वाय स्तौतिशंसत्योर्लक्षणास्त्विति शङ्कायां नावकाश इति भावः । **ऐन्द्री स्तुतिरिति** । 'अभि त्वा शूर नोनुम'इत्यादिप्रगाथेन क्रियमाणा इति शेषः । **नन्विन्द्रमहेन्द्रयोरभेदादिन्द्रप्रकाशनेनापि महेन्द्रसंस्कारसंभवान्नोत्कर्ष इत्यत आह—इतरथेति** । श्रुत्या चतुर्थ्यन्तशब्देन समवायिनी कर्मान्वयिनीत्यर्थः । देवता यत्किंचिच्छब्देन निगमेषु न निर्देश्या किंतु विधिवाक्यश्रुतशब्देनैवेति दाशमिकन्यायेन । वस्तुत इन्द्राभिन्नश्चेदपि महेन्द्रो महेन्द्रशब्देनैव देवताप्रकाशनार्थेषु निगमेषु वक्तव्य इतीन्द्रस्तुत्या महेन्द्रसंस्कारो न संभवतीत्यर्थः । **मनोतेति** । अग्नीषोमीयपशौ 'त्वं ह्यग्ने प्रथमो मनोते'ति मनोतामन्त्रे श्रुतोऽग्निशब्दो लक्षणया यथाग्नीषोमौ प्रतिपादयति तथा इन्द्रशब्दोऽपि लक्षणया महेन्द्रं प्रकाशयेदित्यर्थः । **नन्वेवं** पूषानुमन्त्रणमन्त्रस्यापि लक्षणया दर्शपौर्णमासिकाग्न्यादिदेवताप्रकाशकत्वसंभवेनोत्कर्षो न स्यादिति चेन्न । लक्षणा हि तात्पर्याधीना । पूषानुमन्त्रणमन्त्रस्य नाग्न्यादिप्रकाशने तात्पर्यग्राहकं प्रमाणमस्ति

---

१ गुणगुणि. २ लक्षणा स्यात. ३ माहेन्द्रग्रहमंनिधा. ४ महेन्द्रं लक्षणया.

मन्त्राविधायकत्वाधिकरणम् ॥ ६ ॥

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥ [अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥]**

**देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम् ॥ विधायकं न वान्येन समत्वात्तद्विधायकम् ॥ २० ॥**
**यच्छब्दादेः क्षीणशक्तिर्न विधिर्द्विविधं ततः ॥ आख्यातमभिधानं च प्रधानगुणकर्मणी ॥ २१ ॥**

प्रासङ्गिकमिदमधिकरणम् । द्विविधमाख्यातमुक्तं प्रधानकर्मणां विधायकं गुणकर्मणां च किमेतदेव प्रकारद्वयम् । नेत्युच्यते। अस्ति तु तृतीयमपि प्रकारान्तरमभिधायकत्वमिति प्रतिपाद्यते । तत्र 'देवांश्च याभिर्यजते ददाति च', 'अग्नीदग्नीन्विहर', 'बर्हिर्देवसदनं दामी'त्येवमादीनि यच्छब्दामन्त्रणोत्तमपुरुषादिसंयुक्तान्याख्यातानि । यानिच 'यस्योभयं हविरार्तिमार्च्छे'दित्यादीनि यावन्ति निमित्तादिप्रतिपादनेनाख्यातान्तरैरेकवाक्यतां गतानि तान्युदाहरणम् । तानिच प्रायेण मन्त्रेष्वेवेति मन्त्रोपन्यासः । ननु मन्त्रत्वस्य कश्चिन्न्यायोपयोगः । तानि किं विधायकान्यविधायकानि वेति संशयः । तत्र—'विधायकत्वमेतेषामाख्यातत्वाविशेषतः ॥ सत्यपि प्रकृते कर्मण्यभ्यासात्कर्मभेदधीः ॥' अत्रोच्यते—'यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते ॥ नहि याभिर्यजेतेति कथंचिद्विधिसंभवः ॥' तथा दामि गृह्णामीति नात्मनात्मा शक्यो विधातुम्। आमन्त्रणविभक्तेश्चाग्नीदग्नीन्विहरेति वक्त्रभिमुखश्रोतृविषयत्वाद्वेदे च वक्तुरभावाद्विधेश्चाभिमुखानभिमुखपुरुषसाधारणत्वाद्विरुद्धस्वभावेनामन्त्रणेन विधिशक्त्यवलोपः । तस्मादेवमादीनां प्रयोगमध्ये पुरुषान्तरेण पुरुषे स्मारयितव्ये सामर्थ्यं न बहिःप्रयोगभाविनि विधाविति सिद्धमभिधायकत्वम् ॥

---

येन लक्षणा स्यात् । प्रकरणं तु लिङ्गापेक्षया दुर्बलत्वान्न लिङ्गबाधने क्षमम् । तस्माल्लक्षणानुपपत्तेस्तत्रोत्कर्षस्य युक्तत्वात् । प्रकृतेच न केवलं प्रकरणाम्नानेन लक्षणा, किंतु 'अभि त्वा शूर नोनुम' इति प्रगाथस्य महेन्द्रग्रहयाज्याभ्यासक्रमे उत्तराग्रन्थे पठितत्वादुत्तराग्रन्थपठितस्य क्रत्वर्थतया तद्बलादेव इन्द्रशब्दस्य महेन्द्रतात्पर्यग्रहात्संभवति लक्षणेति वैषम्यम् । इदंच वैषम्यं 'मनोतायां तु वचना'दित्यत्र दशमे संप्रवक्ष्यामः । अनेनैव पूर्वोत्तरपक्षयोरुत्कर्षानुत्कर्षरूपं प्रयोजनमित्यपि सूचितम् ॥

**विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥** अभिधायकत्वमनुवादकत्वमित्यर्थः। **देवानिति** । याभिः गोभिर्देवान् यजते याश्च ददातीत्यर्थः । अत्र यच्छब्दस्य 'न ता नशन्ति न दभाति तस्करो नैना अमित्रो व्यथिरादधर्षती'तिपूर्वत्र विद्यमानेन 'ज्योगित्ताभिः सचते गोपतिः सहे'त्युत्तरत्र विद्यमानेनच तच्छब्देनान्वयो बोध्यः । सूत्रे मन्त्रग्रहणान्मन्त्रगतानामेवाख्यातानामुदाहरणीयत्वात्कथं ब्राह्मणगतान्यपि यस्योभयमित्यादीन्युदाह्रियन्त इत्यत आह—**तानिच मन्त्रेष्वेवेति** । प्रायेणेति शेषः । ननु यथासूत्रं मन्त्रगतमात्रविषयमेवेदमस्तु । एवंसति तन्मात्रोदाहरणे प्रवृत्तं भाष्यमपि संगच्छत इत्यत आह—**नन्विति** । अयं चार्थो वार्तिके प्रपञ्चित इति भावः । अभ्यासादिति शब्दान्तरादेरप्युपलक्षणम्। यच्छब्दबलात्सिद्धत्वावगमेन विधिशक्तिर्विहन्यत इत्याशयेनाह—**नहीति । वेदे चेति** । ननु वक्तुरभावेऽपि आख्यातस्य विधायकत्वं नानुपपन्नमित्ययं ग्रन्थोऽनुपपन्नस्तथा स्वेन स्वस्य विधातुमशक्यत्वेऽप्याख्यातस्य विधायकत्वसंभवात्पूर्वग्रन्थोऽप्यनुपपन्न इतिचेन्मैवम् । आख्यातस्य विधायकत्वं हि प्रेरणाबोधकत्वं नान्यत् । यजेत स्वर्गकाम इत्यादौ च प्रेरणाश्रयत्वयोग्यस्यान्यस्यानुपलम्भाच्छब्दगतैव प्रेरणा स्वीक्रियते । माणवक, संध्यामुपास्वेत्यामन्त्रणविभक्तिस्थले लोके प्रेरणाया वक्तृगतत्वदर्शनादिहापि आमन्त्रणविभक्तिस्थले प्रेरणास्वीकारे सा वक्तृगतैव वाच्या । नच वेदे वक्तास्तीत्यभिप्रायेणास्य ग्रन्थस्योपपत्तेः । तथोत्तमपुरुषस्थलेऽप्यस्मदर्थस्य प्रतीयमानत्वात्तद्गता प्रेरणा वाच्या । साच न संभवति । स्वेनैव स्वस्य प्रेरयितुमशक्यत्वादित्येवं पूर्वग्रन्थस्याप्युपपत्तेः । एवंच पूर्वग्रन्थे विधातुमित्यस्य प्रेरयितुमित्यर्थो बोध्यः । ननु यतएव वेदे वक्तुरभावः अतएवाख्यातगता प्रेरणा स्वीक्रियतामिति विधायकत्वमामन्त्रणादिस्थलेऽप्युपपन्नमित्यत आह—**विधेश्चेति** । आमन्त्रणविभक्तेरभिमुखार्थप्रत्यायकत्वेन सर्वपुरुषसाधारणविधिप्रत्ययविरोधित्वादामन्त्रणविभक्तिस्थले विधिर्न संभवतीत्यर्थः । अनेनैव न्यायेनोत्तमपुरुषस्यापि विधिविरोधित्वं द्रष्टव्यम् । एवंच विधायकत्वाभावे सति मन्त्राधिकरणप्रदर्श्या तन्न्यायेन स्मारकत्वमेवैषामित्युपसंहरति—**तस्मादिति** । स्मारकत्वेऽध्वर्य्वादिना आमन्त्रणविभक्तिनिर्वाह इत्याशयेनाह—**प्रयोगेति** । सूत्रार्थस्तु विधिगतानां मन्त्रगतानामाख्यातानां च विधायकत्वैकार्थ्यमेकजातीयशब्दत्वादिति ॥

---

१ कर्मणां विधायकं चेति. २ तृतीयोऽपि प्रकारोऽभिधा. ३ तानि विधायकानि नवेति.

मन्त्रनिर्वचनाधिकरणम् ॥ ७ ॥

## तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

**अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ॥ नास्त्यस्ति वाऽस्य नास्त्येतदत्याहयादेरवारणात् ॥ २२ ॥**
**याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ॥ तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते ॥ २३ ॥**

न्यायानौपयिकेनापि मन्त्रशब्देन पूर्वं व्यवहृतमिति तत्प्रसङ्गात् 'अहे बुध्निय मन्त्रं मे गोपाये'त्यादिवेदप्रयुक्तस्य मन्त्रशब्दस्यार्थनिरूपणार्थं मन्त्रलक्षणं क्रियते । यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानस्वरूपाणि वाक्यानि तानि मन्त्रशब्देनोच्यन्ते । प्रायिकमिदमभियुक्तप्रसिद्ध्युपलक्षणार्थम् यत्राभियुक्तानां मन्त्रत्वप्रसिद्धिः स मन्त्र इत्यर्थः ॥

ब्राह्मणनिर्वचनाधिकरणम् ॥ ८ ॥

## शेषे ब्राह्मणशब्दः ॥ ३३ ॥

**नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ॥ नासीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥ २४ ॥**
**मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ॥ अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् ॥ २५ ॥**

द्विविभागस्य वेदस्यैकभागस्य मन्त्रात्मकस्य लक्षणमुक्तं, तत्प्रसङ्गात् 'एतद्ब्राह्मणान्येव पञ्च हवींषी'ति वेदप्रयुक्तस्य ब्राह्मणशब्दस्यार्थपरिज्ञानार्थं ब्राह्मणलक्षणाभिधानम् । अविशिष्टं ब्राह्मणमिति ॥

ऊहाद्यमन्त्रताधिकरणम् ॥ ९ ॥

## अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३४ ॥

**ऊहप्रवरनाम्नां किं मन्त्रतास्त्यथवा नहि ॥ मन्त्रास्तदेकवाक्यत्वान्न तल्लक्षणवर्जनात् ॥ २६ ॥**

ऊहप्रवरनामधेयानां मन्त्रत्वं न वेति संदेहे मन्त्रैकवाक्यत्वेन तन्मध्ये निवेशान्मन्त्रैकार्यकरत्वेन च मन्त्रत्वे प्राप्तेऽभिधीयते । मन्त्रकार्यकरत्वं तावद्रथघोषादिष्वनैकान्तिकं, मन्त्रैकवाक्य-

---

**तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥** अत्र भाष्यकारेण मन्त्रस्वरूपापरिज्ञाने मन्त्रगताख्यातानामभिधायकत्वं व्युत्पादयितुं न शक्यमितीदमर्थतः विधिमन्त्राधिकरणात्पूर्वं द्रष्टव्यमित्युक्तं तदयुक्तम् । विधिमन्त्राधिकरणे मन्त्रत्वस्य न्यायानुपयुक्तत्वादित्याचार्यैर्दूषयित्वा प्रासङ्गिकमिदमित्युक्तम् । तत्र यदि मन्त्रत्वस्य न न्यायोपयोगस्तर्हि कथं प्रसङ्गादपि मन्त्रलक्षणकथनमित्यपेक्षायां प्रासङ्गिकत्वमुपपादयति—**न्यायेति** । ननु वेदार्थनिर्णयार्थं प्रवृत्तायां मीमांसायां लक्षणकथनमयुक्तमित्यत आह—**अहे बुध्नियेति** । आवसथ्यस्याग्नेरिदं संबोधनम् । ननु 'वसन्ताय कपिञ्जलानालभते'इत्यादीनां मन्त्रत्वेऽप्यप्राप्तार्थकत्वेन विधायकतयाऽनुष्ठेयार्थस्मारकत्वाभावादव्याप्तिस्तथा जपमन्त्रादिष्वप्यव्याप्तिरित्यत आह—**प्रायिकमिति** । प्रयोजनं लघुनोपायेन लक्ष्यावगम एव । तदुक्तं भाष्ये 'लघीयसी प्रतिपत्तिर्लक्षणेने'ति । तथाचाहुः—'आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥' इति । सूत्रार्थस्तु—तदभिधानं चोदकं प्रयोजकं येषां तेषु मन्त्राख्येति ॥

**शेषे ब्राह्मणशब्दः ॥ ३३ ॥ अविशिष्टमिति** । अत्र वेदत्वेसतीति विशेषणात् कल्पसूत्रादिषु नातिव्याप्तिः । मन्त्रलक्षणे उक्ते तदतिरिक्तस्य ब्राह्मणत्वे अर्थसिद्धेऽपि तृतीयप्रकारनिरासार्थमिदं सूत्रमिति ध्येयम् ॥

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३४ ॥** तच्चोदकसूत्रादापाततः प्रसक्तं मन्त्रत्वमपोद्यत इति सङ्गतिः । **ऊहेति** । अग्नये जुष्टं निर्वपामीत्यादिमन्त्रस्य सौर्यादिविकृतिषु सूर्याय जुष्टमित्येवं प्रक्षिप्यमाणं सूर्यादिपदमिह ऊहशब्देन विवक्षितम् । तथाग्निर्देवो होतेति मन्त्रे युवनाश्ववदम्बरीषवदङ्गिरोवदित्थं प्रक्षिप्यमाणं यजमानार्षेयं प्रवरः सुब्रह्मण्यानिगदे सूरभट्टशर्मणः पुत्रो यजते सोमनाथयज्वशर्मणः पौत्रः सूरेश्वरयज्वशर्मणो नप्ता यजते भैरंमदायाः पुत्रो यजत इत्येवं प्रक्षिप्यमाणानि यजमानपित्रादीनां नामधेयानि नामधेयशब्देन विवक्षितानि नत्वाशास्तेयं यजमानोऽसाविति सर्वनामयुक्तसूक्तवाकादिषु निर्दिश्यमानानि सोमनाथयज्वशर्मेत्यादिनामधेयानि । सूक्तवाकादिषु सर्वनामनिर्देशस्य तत्तन्नामाम्नानपर्यवसितत्वात्तेषां मन्त्रत्वात् । तस्मात्सर्वनामरहितेषु मन्त्रेषु यजमानस्य तत्पूर्वेषामपरेषां च नाम गृह्णातीति विध्यन्तरबलान्निक्षिप्यमाणनामधेयानीहोदाहरणमिति द्रष्टव्यम् । **मन्त्रेति** । अत्र मन्त्रैकवाक्यत्वमेको हेतुर्मन्त्रकार्यकरता चापरो हेतुर्मन्त्रमध्ये निवेशादित्येतत्तु मन्त्रेण सहैकार्थप्रतिपादकत्वरूपमन्त्रैकवाक्यत्वसिद्ध्यर्थमुक्तम् । अतएव सिद्धान्ते

**तापि न तत्कारणं। किंतु—'अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्पते ॥ स्वाध्यायकाले तेषां च समाम्नातेषु मन्त्रधीः ॥ मन्त्रानध्यापयामोऽस्य तथा मन्त्रानधीमहे ॥ समाम्नायबहिर्भूत ऊहादौ नास्ति मन्त्रधीः' ॥ तस्मादभियुक्तप्रसिद्ध्यभावादेवामन्त्रत्वम् ॥**

ऋग्लक्षणाधिकरणम् ॥ १० ॥

## तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

**वेदभागयोर्मन्त्रब्राह्मणयोर्लक्षणमुक्तम्। तत्र मन्त्रभागस्यापरोऽवान्तरविभागः ऋगादिरूपो वेदे[2] लोके च प्रसिद्धः 'अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषी'ति। तत्र को भाग ऋक्शब्देनोच्यते को वा सामशब्देन को वा यजुःशब्देनेति तत्परिज्ञानाय ऋगादिलक्षणमुच्यते यत्रार्थवशेन पादव्यवस्था सा ऋगिति ॥**

सामलक्षणाधिकरणम् ॥ ११ ॥

## गीतिषु सामाख्या ॥ ३६ ॥

**यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां तथापि नागृहीतविशेषणेति[3]न्यायात् 'कवतीषु रथन्तरं गायती'त्याद्यतिदेशोपपत्तेश्च गीतिरेव सामेति सप्तमे स्वयमेव सूत्रकारो वक्ष्यति। इह तु मन्त्रविभागमात्रं विवक्षितम्। तद्यदि प्रगीतो मन्त्रः साम यदिवा गीतिमात्रमुभयथापि ऋग्यजुषाभ्याम-**

---

तयोरेव हेत्वोः परिहारो वक्ष्यत इति ध्येयम्। मन्त्रैकवाक्यत्वं मन्त्रभूतेन जुष्टमित्यादिना सह विशिष्टैकार्थप्रतिपादकत्वं मन्त्रकार्यकरता च मन्त्रभूतस्याग्निपदस्य यत्कार्यमपूर्वाय देवताप्रकाशनं तत्करत्वमित्यनयोर्भेदो बोध्यः। **रथेति**। महाव्रते रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति रथघोषस्यामन्त्रस्यैव सतोऽसर्ज्यसर्जीति मन्त्रकार्यस्तोत्रोपाकरणकरत्वावगमादिति भावः। आदिशब्देन दुंदुभिघोषादेर्ग्रहणम्। **न तत्कारणमिति**। इषेत्वेत्यादावध्याह्रियमाणछिनद्म्यादिपदे व्यभिचारादिति भावः। **अधीमह इति**। एवंप्रकारा मन्त्रधीरिति पूर्वेण संबन्धः। **समाम्नायेति**। ऐरापदप्रिपदादेर्मन्त्रसमाम्नाये पाठाभावेऽपि ऐरं कृत्वोद्गेयं पप्रीति ब्रूयादिति वेदेनैव मध्यगतत्वावगतेर्मन्त्रत्वमिति भावः। प्रयोजनं पूर्वपक्षे ऊहभ्रेषे मन्त्रभ्रेषप्रायश्चित्तं सिद्धान्ते तु न तत्प्रायश्चित्तमिति। सूत्रार्थस्तु-अनाम्नातेषूहादिष्वमन्त्रत्वं यत आम्नातेष्वेव मन्त्रब्राह्मणविभाग इति। अयंच हेतुः ब्राह्मणलक्षणकथनानन्तरमेव वक्तुं शक्यते न ततः पूर्वमिति। तच्चोदकसूत्रापवादस्याप्यस्य ब्राह्मणलक्षणानन्तर्यं वोध्यम्। न्यायसुधायां तु ऊहादेरनुमानगम्यस्य वेदत्वमभ्युपगम्य पठ्यमानवेदविषयत्वं द्वैराश्यनियमस्य वक्तुमेतदधिकरणमित्युक्तं तदयुक्तम्। तथासति अनुमानादिगम्यवेदस्य ब्राह्मणत्वाभावादेतद्ब्राह्मणान्येव पञ्च हवींषीत्यादौ लिङ्गाद्यनुमितस्य वेदस्य ब्राह्मणत्वाभावेनातिदेशाभावप्रसङ्गात् ऊहादेरनुमानादिगम्यस्य वेदत्वाङ्गीकारे इषेत्वेत्यादौ छिनद्मीत्यादिपदाध्याहारस्याप्यनुमानादिगम्यत्वेन तस्यापि वेदत्वप्रसङ्गात्। तस्मादर्थाद्वा कल्पनैकदेशत्वादितिन्यायेन कल्प्यमानस्य शब्दस्य न वेदत्वं किंतु तदर्थस्य वेदतात्पर्यविषयत्वमात्रेण तत्रतत्र ग्रन्थकाराणां वेदत्वव्यवहारः। एवंच लिङ्गादिकल्प्यस्य ब्राह्मणत्वावश्यंभावादाम्नातेषु हि विभागः स्यादिति सौत्रो हेतुः प्रायिकाभिप्रायो द्रष्टव्यः ॥

**तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥** मन्त्रप्रसङ्गादृगादिलक्षणस्य सङ्गतिरित्याशयेनाह—**वेदेति**। वेदप्रसिद्धिमेवाह—**अहे बुध्नियेति**। **यत्रेति**। ऋचः सर्वस्याः विशिष्टैकार्थप्रतिपादकत्वेऽपि प्रतिपादमवान्तरार्थभेदसंभवादर्थवशेनेत्युक्तम्। इदंच पादव्यवस्थाहेतूनां वृत्तवशादीनामुपलक्षणं तदपि न लक्षणशरीरप्रविष्टं पादव्यवस्थामात्रस्यैव लक्षणत्वसंभवादिति द्रष्टव्यम्। सूत्रे तेषां मन्त्राणां मध्ये इत्यर्थः। अनेन पादव्यवस्थारूपलक्षणे मन्त्रत्वेसतीति विशेषणं सूचितम्। तेन लौकिकश्लोके नातिव्याप्तिरिति द्रष्टव्यम् ॥

**गीतिषु सामाख्या ॥ ३६ ॥** ननु सामान्यधीमह इति गीतिविशिष्टे मन्त्रेऽभियुक्तानां सामशब्दप्रयोगान्न केवलं गीतिः सामशब्दार्थ इति शङ्कते—**यद्यपीति**। **कवतीष्विति** रथंतरादिशब्दस्य गीतिविशिष्टमन्त्रवचनत्वे कशब्दयुक्तासु कयानश्चित्र इत्यादिषु कवतीषु ऋक्षु रथन्तरशब्दाभिधेयां गानविशिष्टामभि त्वा शूर नोनुम इत्येतामभिवर्तीं कुर्यादित्येवं कवतीषु रथन्तरं गायतीत्यस्यातिदेशवाक्यस्यार्थः स्यान्नच तथा संभवति। ऋचामृगन्तराधारत्वासंभवात्। अतोऽतिदेशो

---

१ मवगम्यते. २ लोके वेदे च. ३ न्यायेन.

न्यत्सामेति विभागसिद्धेर्विभागाय न प्रयत्यते १ सप्तमे तु रथन्तरमुत्तरयोर्गायतीत्याद्यतिदेशौपयिकत्वाद्विभागेन प्रयोजनमस्तीति तत्रैव वक्ष्यमाणावष्टम्भेन गीतिः सामेत्युक्तम् । यत्त्वत्र भाष्यवार्तिकयोर्गीतिवाचित्वं साधितं तद्वक्ष्यमाणमेव प्रसङ्गादिति द्रष्टव्यं न सूत्रार्थतया । माभूत्साप्तमिकस्य पौनरुक्त्यम् ॥

यजुर्लक्षणाधिकरणम् ॥ १२ ॥

**शेषे यजुःशब्दः ॥ ३७ ॥**

**नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते ॥ पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः ॥ २७ ॥**

ऋक्सामाभ्यां यदन्यत्प्रश्लिष्टपठितं मन्त्रजातं तद्यजुः ॥

निगदानां यजुष्ट्वाधिकरणम् ॥ १३ ॥

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥ [व्यपदेशाच्च ॥ ३९ ॥ यजूंषि वा तद्रूपत्वात् ॥ ४० ॥ वचनाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥ ४२ ॥ गुणार्थो व्यपदेशः ॥ ४३ ॥ सर्वेषामिति चेत् ॥ ४४ ॥ न ऋग्व्यपदेशात् ॥ ४५ ॥]**

**प्रोक्षणीरासादयेति निगदाभिविधावहिः ॥ यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥ २८ ॥**

**परप्रत्यायनार्थत्वादुच्चैस्त्वं यजुरेव सः ॥ तल्लक्षणेन युक्तत्वात्प्रैष्यमिति सुस्थितम् ॥ २९ ॥**

**शेषे यजुःशब्द** इत्येतदाक्षेपेणेदमारभ्यते । सन्ति निगदानामपरसंबोधनरूपा मन्त्राः प्रोक्षणीरासादयेत्येवमादयः ते किं यजुर्भ्योऽन्ये किंवा यजूंष्येवेति विचारः । संज्ञाभेदादिमे निगदा इमानि यजूंषीति । तथा उपांशु यजुषा उच्चैर्निगदेनेति विप्रतिषिद्धधर्मयोगाच्च भेदप्राप्तावुच्यते—संज्ञा तावन्नितरां गद्यन्त इति व्युत्पत्त्या यजुःष्वेवोच्चैर्धर्मयोगाच्छक्नोति वर्तितुम् । ब्राह्मणेष्विव परिव्राजकसंज्ञेति न तया भेदः । नच धर्मद्वयविरोधः, सत्यपि यजुष्ट्वे परप्रत्यायनकार्यविरोधेन निगदेषूपांशुत्वस्याप्राप्तेरर्थवशादुच्चैस्त्वसिद्धेः । ननु वाचनिकमुपांशुत्वं, लैङ्गिकं परं संबोधनं कार्यं, तत्कथं लिङ्गेन वचनस्य बाधः । उच्यते । अङ्गमुपांशुत्वं मन्त्रस्य प्रधानं परप्रत्यायनकार्यं तद्यद्यपि दुर्बलप्रमाणकं तथापि स्वरूपतो बलवत्त्वात् बलवत्प्रमाणकमपि स्वरूपतो दुर्बलमुपांशुत्वं बाधते । प्रमाणबलाबलाद्धि प्रमेयबलाबलं ज्याय इति वर्णितमेतत् । नच वचनस्याप्रामाण्यं, यजुरन्तरे सावकाश-

---

पपत्त्यर्थं रथन्तरादिशब्दानां सामविशेषवाचकानां गानमात्रवाचकत्वावश्यंभावात्सामशब्दस्यापि गीतिमात्रवाचकत्वमित्यर्थः । ननु तर्हि तेनैव गतत्वात्किमर्थमिदमित्यत आह—**इहेति । विभागायेति** । ऋगपेक्षया विवेकायेत्यर्थः । ननु भाष्याद्युक्तिः सूत्रार्थतयैव किं न स्यादित्यत आह—**माभूदिति** ॥

**शेषे यजुःशब्दः ॥ ३७ ॥** प्रश्लिष्टेति स्वरूपकथनपरम् । ब्राह्मणव्यावृत्त्यर्थमाह—**मन्त्रजातमिति** ॥

**निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥ आक्षेपेणेति** । आक्षेपश्च निगदेष्वतिव्याप्त्यापत्त्येति भावः । **संज्ञेति** । नितरां गद्यन्ते इति व्युत्पत्त्या यजुःष्वेव संज्ञा उपपादयितुं न शक्यते ऋक्ष्वतिप्रसङ्गादिति भावः । **तथेति** । ननूपांशुत्वस्य वेदोपक्रमाधिकरणे यजुर्वेदविहितकर्मधर्मत्वोक्तेरिह कथं मन्त्रधर्मत्वव्यवहारः । नच तदधिकरणोदाहृतवाक्यादिदं वाक्यान्तरमेव यजुःशब्दस्य लक्षणया वेदपरत्वहेतोरुपक्रमविरोधस्यात्राभावादिति कल्पनं युक्तम् । भाष्यकारेण प्रकृतानुपयुक्ततया उपक्रमगतवाक्यस्यानुदाहरणमात्रेणात्र तद्विरोधाभावकल्पनया वाक्यान्तरत्वस्वीकारस्यायुक्तत्वादिति चेत्सत्यम् । तदधिकरणपूर्वपक्षे स्थित्वा इह मन्त्रधर्मत्वव्यवहारः । अतएवायमभ्युच्चयो हेतुरित्याहुः । **संज्ञा तावदिति** । गदतेर्धातोर्गद्यमित्यादौ पादबन्धरहितप्रश्लिष्टपठिते प्रसिद्धेः पादबन्धवतीष्वृक्षु नातिप्रसङ्ग इति भावः । **सत्यपीति** । नचोपांशुत्वेन परप्रत्यायनाशक्तौ प्रैषार्थत्वासंभवेऽपि प्राप्तकालतायां लोट् भविष्यतीति कथमर्थवशादुच्चैस्त्वप्राप्तिरिति वाच्यम् । आग्नीध्रादेरग्निविहरणाद्यनुष्ठानाय तत्स्मरणमपेक्षितमिति प्रैषार्थत्वेऽपेक्षितार्थत्वं दृष्टार्थत्वं च लभ्यते । प्राप्तकालत्वार्थकत्वे तु अनपेक्षितार्थत्वमदृष्टार्थत्वं च स्यादिति तत्परिहारार्थं प्रैषार्थत्वस्यैव युक्तत्वादिति भावः । ननु लिङ्गप्राप्तोच्चैस्त्वेन वचनप्राप्तोपांशुत्वस्य न बाधसंभव इति शङ्कते—**नन्विति** । यद्युपांशुत्वस्य निरवकाशत्वं स्यात्तदा 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेन दुर्बलमप्युपांशुत्वमनुरोध्यं स्यान्न चात्र निरवकाशत्वमित्याशयेनाह—**नचेति** ।

---

१ न च धर्मभेदाद्भेदः. २ तदुभयं. ३ मन्त्राङ्गमुपांशु. ४ बलीय इति.

स्यात्। अपिचाप्राप्तविधानान्नियमविधानं लघीयः। तेन यत्रानियमेनोपांशुत्वं प्राप्तं तत्र तन्नियममात्रमुपांशुयजुषेत्यनेन क्रियते। निगदव्यतिरिक्तेषु च यजुःषु येनकेनचित्स्वरेण कार्यसिद्धेरुपांशुत्वस्यानियमप्राप्तिरिति तद्विषयमेवेदं वचनम्। निगदेषु तु कार्यवशेनोच्चैस्त्वमेव प्राप्तं न पक्षेप्युपांशुत्वमिति न तत्रास्य वचनस्य व्यापारः। एवंचार्थतः प्राप्तेरुच्चैर्निगदेनेत्यनुवादः। तस्माद्यजूंष्येव निगदा न मन्त्रान्तरम्। तथाच वेदे 'अहेबुध्निय मन्त्रं मे गोपाय० ऋचः सामानि यजूंषी'ति मन्त्रशब्दसामानाधिकरण्यमृगादीनामेव त्रयाणां दृश्यते॥ जात्यन्तरत्वे हि निगदशब्दोऽपि तत्र श्रूयेत। तस्मात्त्रैधमेव मन्त्राणाम्॥

एकवाक्यत्वलक्षणाधिकरणम्॥ १४॥

## अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्॥ ४६॥

**देवस्य त्वेति वाक्यस्य भिन्नत्वमथवैकता॥ ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता॥ ३०॥**
**विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम्॥ तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते॥ ३१॥**

ऋग्यजुःसामरूपे वेदविभागेऽभिहितेऽधुना तदवान्तरभेदं कथयितुं प्रस्तावः। तत्र ऋक्सामानामध्येतृसिद्धो भेदो न वक्तव्यः। यजुषां तु प्रश्लिष्टपठितानां भेदो न सुज्ञान इति तत्परिज्ञानाय यजुषः परिमाणलक्षणमुच्यते। यावदेकप्रयोजनं विभागे च साकाङ्क्षं पदजातं तावद्यागसाधनत्वाद्यजुर्वक्तव्यत्वाच्च वाक्यम्। एतस्माच्च कारणादेकवाक्यत्वं यत्ततोऽन्यद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति। उदाहरणं च 'देवस्य त्वा सवितुः प्रसवे' इति। अत्र हि सर्वाणि पदानि निर्वापप्रकाशकानि विभागे च साकाङ्क्षाणि। तस्मादेषामेकयजुष्ट्वम्॥

---

अनेनैव लिङ्गस्य निरवकाशत्वादानर्थक्यप्रतिघातन्यायेनापि तस्य प्राबल्यं सूचितम्। एवमुपांशुत्वस्य संकोचात्मको बाध उक्तः। वस्तुतस्तु सोऽपि नास्तीत्याह—**अपिचेति। न तत्रास्येति**। ततश्च निगदविषयतयोपांशुत्वस्याप्राप्तेर्न तस्य निगदेतरविषयतया संकोच इति भावः। ननु यदि कार्यत उच्चैस्त्वप्राप्तिस्तर्हि उच्चैर्निगदेनेति वचनं किमर्थमित्यत आह—**एवंचेति**। अनुवादश्च निगदस्य कार्यार्थमुच्चैष्ट्वेऽपि यजुरन्तरे उपांशुत्वमेव युक्तमित्येवमौचित्येनोपांशुयजुषेति विधिः स्तुत्यर्थ इति भावः। **श्रूयेतेति**। यजुःशब्दस्य प्रश्लिष्टपठितत्वमात्रपरत्वमादाय निगदस्यापि यजुःशब्देनैव निर्देशस्वीकारे लक्षणैव दोष इति भावः। प्रयोजनं तु यजुष्ट्वे यजुर्भ्रेषप्रायश्चित्तं सर्वाणि यजूंषीति वाचस्तोमे परिप्लवशंसने विनियोगश्च। यजुर्भेदे तु न तदुभयमिति। सूत्रार्थस्तु निगदश्चतुर्थं मन्त्रजातं स्यादेवोच्चैस्त्वरूपधर्मविशेषादिति॥

**अर्थैकत्वादेकं वाक्यं०॥ ४६॥ अधुनेति**। ऋचः सामानि यजूंषीति मन्त्रगतऋगादिप्रातिपदिकार्थज्ञानानन्तरं बहुवचनावगतऋगादिभेदनिरूपणस्य प्राप्तावसरत्वादिति भावः। यद्येवमृक्सामयोरपि अवान्तरभेदो वक्तव्यः स्यादित्यत आह—**तत्रेति। एकप्रयोजनमिति**। अर्थशब्दोऽत्र नाभिधेयवाची किंतु प्रयोजनवचन इति वार्तिके प्रपञ्चितमिति भावः। एकप्रयोजनत्वमात्रे कृते भगो वां विभजत्वर्यमा वां विभजत्वित्यादीनां पुरोडाशविभागप्रकाशनरूपैकप्रयोजनत्वादेकयजुष्ट्वं स्यात्तद्व्यावृत्त्यर्थं विभागे सति साकाङ्क्षत्वमित्येतावदुक्ते स्योनं ते सदनं कृणोमीत्यस्य कृत्स्नस्यैकयजुष्ट्वं स्यात्तस्मिन् सीदेति तच्छन्दबलेन विभागे साकाङ्क्षत्वादत एकप्रयोजनत्वमिति। तत्र पूर्वभागस्य सदनकरणप्रकाशनमुत्तरभागस्य प्रतिष्ठापनप्रज्ञानं प्रयोजनमिति नातिप्रसङ्गः। ननु यजुःपरिमाणविचारे एकवाक्यलक्षणमसङ्गतमित्याशङ्क्य नात्र लौकिकसाधारण्येन एकवाक्यलक्षणमुच्यते किंतु तावदेकं यजुरित्येकयजुष एवेत्याशयेन सूत्रे वाक्यशब्दस्य यजुःपरत्वं यजुःशब्दवाक्यशब्दयोरेकार्थत्वप्रदर्शनेनाह—**यागेति। वक्तव्यत्वादिति**। यागप्रयोगे उच्चारणीयत्वादित्यर्थः। ततश्चेदमपि यागसाधनत्वे पर्यवसितमिति भावः। वक्तव्यत्वादित्यनेनैव यावदेकं यजुस्तावत्प्रयोगसमये प्रयोक्तव्यं नतु तदेकदेश इति प्रयोजनमपि सूचितम्। एवंच तत्प्रयोजनसूचनायैव सूत्रे यजुःशब्दे प्रयोक्तव्येऽपि वाक्यशब्दप्रयोग इति नाकौशलं सूत्रकारस्येति द्रष्टव्यम्। नन्वेतावतापि कथं यजुर्भेदावगतिरित्यत आह—**एतस्मादिति**। वाक्यान्तरमित्यस्य विवरणं यजुरन्तरमिति। एकयजुष्ट्वे उक्ते यजुरन्तरमिति चार्थादुक्तमित्यर्थः। नन्वश्विनोर्बाहुभ्यामित्यादेर्निर्वापेऽसमर्थत्वात्तत्र कथमेकप्रयोजनवत्त्वमित्यत आह—**अत्रहीति**। अश्विनोरित्यादेरपि स्तुत्या निर्वापार्थत्वं नवमे वक्ष्यत इति भावः॥

---

१ कार्यवलेनो. २ त्रिधैव मन्त्राः ३ मन्त्रविभागे. ४ एतस्माच्चेत्कारणादेकवाक्यत्वं तदा. ५ प्रकाशनार्थानि.

वाक्यभेदाधिकरणम् ॥ १५ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

**इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे ॥ असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात् ॥ ३२ ॥**

**छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ॥ अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः ॥ ३३ ॥**

एकप्रयोजनं सर्वं विभज्यमानं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम् । अनेन लक्षणेन यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादिपदमस्ति तत्रैतत्सुगमं परिमाणम् । अथ यत्र समवेतार्थप्रकाशकपदाभावेन लैङ्गिकविनियोगाभावे वाचनिको विनियोगः परस्परनिराकाङ्क्षं च स्वरूपं गम्यते यथा 'इषेत्वोर्जेत्वे'ति यथाच 'आयुर्यज्ञेन कल्पतां' 'प्राणो यज्ञेन कल्पता'मिति । तत्र किं यदेकं यजुरिति चिन्त्यते, किं प्राग्दृष्टार्थमन्त्रावधेरेकमन्त्रत्वमुत यावदेव मिथःसंबद्धमिषेत्वेति तावदेकं यजुरन्यच्च यजुरन्तरमिति । तदर्थंच किं सर्वमेकार्थमुत भिन्नार्थमिति विचारः । तत्र तावत्—'अदृष्टार्थत्वमेतेषामनुष्ठेयाप्रकाशनात् ॥ तच्चैकं तत्र साकाङ्क्षाः सर्वे इत्येकवाक्यता ॥' अदृष्टं हि कल्प्यमानमेकमेव युक्तं तावतैवोपपत्तेरतः सर्वे तावदेकार्थाः । तच्च सर्वेषां सह कल्पितमिति संभूयकारित्वाद्विभज्यमानाः साकाङ्क्षा भवन्तीत्येकवाक्यता । निश्चिते च मन्त्रैकत्वे यद्यपि प्रतीकभेदेनानेकत्र विनियोग इषेत्वेति छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति, तथापि यावद्विनियोगं सकल आवर्तिष्यते । उच्यते—'यद्यप्येषामदृष्टोऽर्थस्तथापि न तदेकता ॥ रूपतो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः ॥ अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् ॥ यथापेक्षमतस्तेषां भिन्नादृष्टप्रकल्पनम् ॥ यथाविश्वजिदादीनां भेदेन फलकल्पना ॥ यथाच समिदादीनामपूर्वं भिन्नमिष्यते ॥ तद्वदत्र नचात्रैषामदृष्टार्थत्वसंभवः ॥ शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी ॥' इषेत्वेति छिनत्तीति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते । क्रियानिर्वर्तकं च करणं भवति । नच मन्त्राणां क्रियानिर्वर्तकत्वमन्यतः प्रकाशनात् । तेन विधिबलादेषां प्रकाशनार्थत्वम् । तत्र यावता विना चोदितस्य प्रकाशनं न संभ-

---

**समेषु वाक्यभेदः स्यात् ॥ ४७ ॥** ननु इषेत्वा ऊर्जेत्वेत्यनयोः परस्परनिरपेक्षार्थकत्वेन भिन्नार्थप्रकाशनप्रयोजनकयोः पूर्वन्यायेनैव यजुर्भेदस्य सुज्ञानत्वात्किमर्थमिदमधिकरणमित्याशङ्क्याह—**एकेति** । एवंच लैङ्गिकविनियोगाभावस्थले परस्परनैरपेक्ष्यं सदपि न भेदज्ञानाय क्षमते किंतु तद्भेदाभेदयोः साधारणमेवेत्याशयेन तदेव धर्मितावच्छेदकत्वेनाह—**वाचनिक इत्यादिना** । एवंच पूर्ववदिह यजुर्भेदकाभावान्नात्र तद्भेद इति प्रत्यवस्थानात्सङ्गतिर्बोध्या । **दृष्टार्थेति** । वायुवस्थेत्यस्य वायुवत् शीघ्रगामिनो भवथेत्येवं वत्सानां मातृसकाशादपाकरणरूपार्थप्रकाशनार्थत्वेन दृष्टार्थत्वात्ततः प्रागित्यर्थः । **एकार्थमिति** । अर्थशब्दः प्रयोजनपरः । **अनुष्ठेयेति** । करणत्वं च रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीतिवदनुष्ठेयाप्रकाशकस्याप्युपपद्यत इति भावः । **तत्र साकाङ्क्षा इति** । स्तोत्रशस्त्रादौ विनियुक्तानां तु प्रसिद्धो भेद इति तत्र संख्यप्यदृष्टैक्ये न मन्त्रैक्यमिति ध्येयम् । ननु विनियोगभेदाददृष्टमपि भिन्नमेव कल्प्यमित्यत आह—**निश्चिते इति** । विनियोगभेदाददृष्टं तदा भिद्येत यदि विनियोज्यमन्त्रस्य भेदः स्यात् । इह तु विनियोज्यस्यैकमन्त्रत्वमेवादृष्टद्वयकल्पनाभीत्या निश्चितमिति पदचतुष्टयस्यापि क्वचिदादिप्रतीकग्रहणेन क्वचिदन्त्यप्रतीकग्रहणेन चेत्येवमुभयत्र विनियोगादेकमेवादृष्टं कार्यद्वये उपयोक्ष्यत इति भावः । **आवर्तिष्यत इति** । यद्यप्यावृत्तिबलादेवादृष्टमपि भिद्यत एव तथापि व्यक्तिभेदमात्रमदृष्टस्य नतु वैजात्यमित्यत्र तात्पर्यम् । **रूपत इति** । विनियोज्यस्वरूपाज्ञाने विनियोगस्यैवासंभवात् प्रथमं विनियोज्यमन्त्रस्वरूपे पर्यालोच्यमाने परस्परनिरपेक्षतया भेदस्यैव प्रतीतेस्तदनुसारेण परस्परनिरपेक्षतयैवादृष्टं कल्प्यमिति तदपि भेदेनैव कल्प्यमित्यर्थः । एवंच यत्र मन्त्रैक्यं लिङ्गवशेनावगतं तत्रैवान्त्यप्रतीकग्रहणेन विनियोगः यथा आ नः प्राण एतु परावत अन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणायत्वेति मन्त्रस्यामृतमसि प्राणायत्वेति हिरण्यमभिव्यनितीति अन्त्यप्रतीकग्रहणेन विनियोगो नतु सर्वत्रेति भावः । **नच मन्त्राणामिति** । अतएव ऐन्द्या गार्हपत्यमुपतिष्ठत इत्युपस्थाने करणत्वेन विनियोगबलाद्गौणवृत्त्याश्रयणं सूक्तवाकप्रतिपाद्यानामायुरादीनां फलत्वमग्न्यादीनां च देवतात्वं कल्प्यत इति भावः । **तत्र यावतेति** । अध्याहारेणापि प्रकाशनार्थत्वसंभवे तदेवाश्रयितुं युक्तं नतु ध्वन्यात्मकरथघोषादिवद्यथाकथं-

---

१ एतेन. २ तार्थपदाभावेन. ३ नैराकाङ्क्ष्यं च स्वरूपतोऽवगम्यते. ४ मिति चिन्ता. ५ प्रकल्पना. ६ विधिवशादेषां.

वति सैवृध्याहर्तव्यं छिनद्मीत्यादि । तत्रैकेन छेदनं प्रकाश्यते अन्येनानुमार्जनमित्यर्थभेदान्मन्त्र-भेदः । तथा 'आयुर्यज्ञेन कल्पता'मित्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् 'क्लृप्तीर्वाचयती'ति च क्लृप्तिबहुत्ववचनस्य चोदितत्वात्तत्संपत्त्यर्थमायुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः ॥

अनुषङ्गाधिकरणम् ॥ १६ ॥ १७ ॥

## अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

**या ते अग्ने रजेत्यध्याहारो यद्वानुषञ्जनम् ॥ तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः ॥ ३४ ॥**
**वेदकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम् ॥ अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः ॥ ३५ ॥**
**नानुषङ्गोऽनुषङ्गो वाच्छिद्रेणेत्यस्य शेषिणौ ॥ चित्पतिस्त्वेत्यनाकाङ्क्षावतो नात्रानुषज्यते ॥ ३६ ॥**
**करणत्वं क्रियापेक्षं क्रिया चैका पुनास्त्विति ॥ मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥ ३७ ॥**

अत्रापि यजुःपरिमाणमेव चिन्त्यते । यत्र बहूनां वाक्यशेषापेक्षाणां वाक्यानां संनिधावेकस्यान-न्तरदेशे परिपूरणसमर्थो वाक्यशेषः श्रूयते यथा 'याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा । याते अग्ने रजाशया याते अग्ने हराशये'ति । अत्रोत्तरौ मन्त्रावुदाहरणं किमेतयोर्लौकिकः शेषोऽध्याहार्यः उत योसौ पूर्वमन्त्रानन्तरं पठितस्तनूर्वर्षिष्ठेत्यादिः स एव सर्वेषामर्थेनाम्नातः पूर्वस्यैवोत्तरयोरप्यनुषङ्गेण शेष इति अध्याहारे 'याते अग्ने रजाशये'त्ये-तावानेव मन्त्रोऽध्याहृतस्य लौकिकस्योहादिवदमन्त्रत्वात् । अनुषङ्गे तु तत्सहितएव मन्त्र इत्यस्ति परिमाणे विशेषः । तत्र—'एकत्रैव निबद्धो हि समाम्नायेन वैदिकः ॥ शेषोऽन्यत्र न नेतव्यो लौकि-कस्त्वनिबन्धनः ॥' लौकिको हि शब्दः सर्वार्थो न क्वचिदेव विशेषेण निबद्धः । स यत्रयत्र कार्यं तत्र सर्वत्र यथेष्टं विनियुज्यमानो न विरुध्यते वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं

---

चित्क्लेशेन करणत्वमुपपादयितुं युक्तम् । अन्यथा ऐन्द्यादौ गौणत्वमपि न स्यादिति भावः । ननु छेदनं पदचतुष्टयेन प्रकाश्य-तामेवमनुमार्जनमपीति दृष्टार्थत्वेऽपि न मन्त्रभेद इत्यत आह—**तत्रेति** । प्रथमावगतनैरपेक्ष्यानुसारेण पृथगेव छेदना-दिप्रकाशकत्वं कल्प्यमिति भावः । **क्लृप्तिबहुत्ववचनस्येति** । क्लृप्तीर्वाचयतीत्यत्र क्लृप्तिशब्दो न मन्त्रपरस्तत्र लक्षणापत्तेः किंतु क्लृप्त्यर्थपरएव । ततश्च क्लृप्त्यर्थं बहुधा वदन्तं यजमानं प्रयोजयतोऽध्वर्योर्व्यापारो विहितोऽर्थाद्यजमानकर्तृकक्लृप्तिबहु-त्ववचनविधिं कल्पयतीति कल्पितेन विधिना यजमानकर्तृकक्लृप्त्यर्थबहुत्ववचनस्य विहितत्वात्तन्निर्वाहार्थं आयुर्यज्ञेनकल्प-तामित्यादेरायुरादिविशिष्टक्लृप्तिप्रकाशनपरत्वमेव नतु भगो वां विभजत्वित्यादौ विभागसामान्यप्रकाशनार्थत्वमिव क्लृप्तिसा-मान्यप्रकाशनमात्रार्थत्वमिति प्रकाशमानायुरादिविशिष्टक्लृप्तिविशेषरूपार्थभेदेन तत्रापि मन्त्रभेद आवश्यक इत्यर्थः । प्रयोजनं पूर्ववदेवैकत्र कृत्स्नप्रयोगाप्रयोगलक्षणम् । क्लृप्त्युदाहरणे तु प्राणो यज्ञेन कल्पतामित्यादौ भ्रेषे कृत्स्नस्यावृत्तिः पूर्वपक्षे । सिद्धान्ते तु यस्यैव भ्रेषस्तन्मात्रस्यैवावृत्तिर्मन्त्रभेदादिति । सूत्रार्थस्तु—समेषु परस्परनिरपेक्षतया तुल्येषु यजुर्भेदः स्यादिति ॥

**अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥** नन्वध्याहारानुषङ्गचिन्तायाः कथमत्र सङ्गतिरित्यत आह—**अत्रापीति । परिपूरणेति ।** आकाङ्क्षापूरणसमर्थ इत्यर्थः । **सर्वेषामर्थेनेति** । इदंच सिद्धान्तयुक्तिरूपं न कोट्यन्तरगतमिति ध्येयम् । अस्याश्चिन्तायाः यजुःपरिमाणचिन्तापर्यवसायित्वमाह—**अध्याहार इति । अस्तीति ।** अनेनैव पूर्वपक्षे मन्त्रभ्रेषप्रायश्चित्ताभावः सिद्धान्ते तु तत्सद्भावः । यद्वाध्याहृतस्यामन्त्रत्वात्पूर्वपक्षे उच्चारणं प्रयोगकाले नानु-ष्ठेयं बुद्धौ प्रतिसंधानमात्रेणाप्यर्थप्रत्यायकत्वसंभवादतएवेषेत्वेत्यादौ छिनद्मीत्यादिकं पदं प्रयोगकाले याज्ञिकैर्नानुष्ठीयते । अनुषङ्गे तु मन्त्रत्वात्प्रयोगकाले उच्चारणमपि कर्तव्यमिति प्रयोजनमपि सूचितम् । केचित्तु अध्याहृतस्याप्युच्चारणमस्त्येव याज्ञिकानां तदननुष्ठानं त्वनास्थयेत्याहुः । ननु अश्वप्रतिग्रहेष्ट्यधिकरणन्यायेन वैदिकस्यैव वैदिकाकाङ्क्षापरिपूरणार्थत्वस्य न्या-य्यत्वात्कथं पूर्वः पक्ष इत्यत आह—**तत्रेति** । यदि हि प्रकारान्तरेणाकाङ्क्षापरिपूरणं न स्यात्तदा गत्यन्तराभावान्निबद्ध-स्यापि वैदिकस्यानुषङ्ग आश्रीयेत । संभवति च लौकिकेनापि तत्परिपूरणम् । तस्माल्लौकिकसंभवे निबद्धस्य वैदिकस्यान्यत्र नयनं न युक्तमिति स्फोरयितुं श्लोकं व्युत्क्रमेण व्याचष्टे—**लौकिको हीति**। नन्वाकाङ्क्षापरिपूरणार्थं कल्प्यमान उपस्थितत्वा-त्तनूर्वर्षिष्ठेत्यादिरेव कल्प्यः नतु प्रभाप्रवृद्धतरास्मान्पात्वित्यादिरर्थः कश्चिच्छेपस्तस्यानुपस्थितत्वात् । एवंच बलाद्वैदिकस्यैव

---

१ तावदध्या. २ पेक्षिणां.

शक्यते । नीयमानो वा समाम्नायबहिर्भावाल्लौकिक एव स्यात् । नच सर्वार्थमाम्नात इति वाच्यम् । सकृदाम्नातस्यानेकार्थत्वानुपपत्तेः । नचागृह्यमाणविशेषत्वम् । आनन्तर्येण देशभेदेन च विशेषणग्रहणात् प्रथमस्य ह्यसावनन्तरो न तृतीयस्य । द्वितीयस्य तु यद्यप्यनन्तरस्तथापि परस्ताद्भावित्वेन वाक्यशेषस्यापेक्षितत्वाच्च पुरस्ताद्भाविना संबन्धः । प्रथमस्य त्वपेक्षित एव देशे पठितस्तस्मात्तस्यैवायं शेष इति प्राप्तेऽभिधीयते—'यथापेक्षितरूपे हि वाक्यशेषे समर्थिते ॥ वेदेन लौकिकः शेषो न मृग्यो निष्प्रमाणकः ॥' सर्वानन्तरं सकृत्पठितुमशक्यो बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैः सर्वैः संबन्धसिद्धेः । पुनःपुनरसमाम्नातोऽप्ययं शेषः सर्वार्थेनैवाम्नात इति युक्तमङ्गीकर्तुम् । एवं वेदसमर्पितेन शेषेण सर्वेषां नैराकाङ्क्ष्यसिद्धेः निष्प्रमाणको लौकिकोऽध्याहारः । शक्नोति चायं सर्वैः संबद्धुम् । प्रथमेन हि संबद्धो द्वितीयस्याप्याकाङ्क्षावेलायां बुद्धौ विपरिवर्तमानस्तेनापि संबध्यते । तत्संबन्धाच्च विपरिवृत्त्यभङ्गात्तृतीयेनापि संबन्धसिद्धिः । तुल्यो ह्यस्य सर्वैर्योगः कारणाविशेषात् । एतावच्च शब्दानामन्वये कारणमाकाङ्क्षासंनिधिर्योग्यत्वं च नत्वनन्तरसमाम्नानम् । व्यवहितसमाम्नातस्याप्यसंबद्धव्यवधानाभावे बुद्धिविपरिवृत्तिरूपं संनिधानं सर्वत्र क्रमेण लभ्यते । तस्मादाम्नानमेवास्य सर्वार्थमिति सर्वशेषता । एवं तावत्साकाङ्क्षेष्वनुषङ्ग उक्तः । यत्र तु निराकाङ्क्षाणामेकार्थानां संनिधावेकस्यानन्तरं वाक्यशेषः श्रूयते यथा 'चित्पतिस्त्वा पुनातु । वाक्पतिस्त्वा पुनातु । देवस्त्वा सविता पुनात्वि'ति सर्वे निराकाङ्क्षा यजमानपावनार्थाः सत्यप्येकार्थत्वे वचनात्समुच्चीयन्ते । तेषामन्ते 'अच्छिद्रेण पवित्रेणे'ति शेषः समाम्नातः सः किं पूर्वयोरप्यनुषज्यते किंवा परस्यैव मन्त्रस्य शेष

---

नयनमापतितमित्यत आह—**नीयमानो वेति** । यथास्थानमुच्चारणे हि तस्य वैदिकता नतु तद्भेदे । ततश्चोपस्थितस्य कल्पनेपि तस्य वैदिकसादृश्यमात्रं नतु वैदिकत्वमित्यर्थः । **ननु** वैदिकाम्नानं यदभिप्रायं तदनुसारेण नयने वैदिकत्वं न हीयते । अतएव सूक्तवाकादौ असाविति सर्वनामाम्नानस्य यजमाननामधेयाम्नानाभिप्रायकत्वेनैवासमाम्नातस्यापि यजमाननामधेयस्य वैदिकत्वमिष्यत इत्यत आह—**नच सर्वेति**। **सकृदिति** । सकृदर्थप्रत्यायकत्वमात्रेण वाक्यशेषनैराकाङ्क्ष्यात्सर्वार्थत्वे प्रमाणाभावादिति भावः । आनन्तर्येणेत्यनेन तृतीयव्यावृत्तिं देशभेदेनेत्यनेन द्वितीयव्यावृत्तिं चाह—**प्रथमस्येति । न पुरस्तादिति** । ततश्च सत्यप्यानन्तर्ये द्वितीयेन यद्यनन्वयस्तदा 'आनन्तर्यमचोदने'तिन्यायेन तृतीयान्वयो दूरापेत इति भावः । स्यादेवं यदि वैदिकस्यान्वयायोग्यता । इह तु सर्वैरपि तस्यान्वययोग्यता इति वैदिकस्यैवान्वय इत्याशयेनाह **—यथेति** । सर्वार्थत्वे तत्तदन्ते पुनः पुनः पाठः स्यादिति शङ्कां निराकरोति—**सर्वानन्तरमिति** । बुद्धिविपरिवृत्तिमात्रेण वक्ष्यमाणाकाङ्क्षादित्रयेण सर्वैरन्वयसिद्धेः सर्वान्ते प्रत्येकमसकृत्पाठोऽनर्थक इत्यर्थः । एवंच सत्यगृह्यमाणविशेषत्वात्सर्वार्थमेवाम्नानमित्याह—**पुनरिति** । एवंच वैदिकलाभे सति न लौकिकं ग्राह्यमश्वप्रतिग्रहवदिति श्लोकं व्याचष्टे—**एवं वेदेति** । प्रागुक्तं विशेषग्रहणं निराचिकीर्षुराह—**शक्नोति चेति** । **तेनापीति** । द्वितीयः स्वापेक्षितदेशे पठितमपि बुद्धिसंनिधानमात्रेण परिवृत्त्या पुरस्तात्परिपठितं गृह्णातीत्यर्थः । एवंच द्वितीयसंबन्धे सति तस्याप्यव्यवधायकत्वादानन्तर्यकृतविशेषग्रहणमसिद्धमित्याह—**तत्संबन्धादिति** । ननु पाठत आनन्तर्यलक्षणसंनिधानस्यान्वयबोधे प्रयोजकत्वात्कथं व्यवहितेनान्वय इत्याशङ्क्य तदेवासिद्धमित्याह—**तुल्य इति** । एवंचैकत्र निबन्धनं नेतरान्वयप्रतिकूलमित्याशयेनोपसंहरति—**तस्मादिति** । अथवा भाष्ये अथवेत्यादिनास्यैव वर्णकान्तरं कृतं पूर्ववर्णकविषयाद्भेदं दर्शयन् तदाह—**एवमिति** । ननु सर्वेषां यजमानपावनार्थत्वे विकल्पः स्यादित्यत आह—**सत्यपीति** । त्रिभिः पावयतीति वचनात्समुच्चयः । यथा नतुर्भिरभ्रिमादत्ते इत्यत्रेति भावः । पूर्वत्रहि शेषिणां साकाङ्क्षत्वानुसारेण सर्वार्थत्वं वाक्यशेषाम्नानस्येत्यनुषङ्गो युक्तः । इह तु

---

१ स्याकाङ्क्षितत्वात. २ तस्यैव विशेष. ३ समर्पिते. ४ हितस्याप्यसंबन्धिव्यव.

इति ॥ तत्र शेषस्तावदेकेनैवानन्तरेण संबद्ध्य निराकाङ्क्षः संपद्यते । शेषिणस्तु प्रागेव निराकाङ्क्षत्वेन निःप्रमाणोऽनुषङ्ग इति । उच्यते । पुनातुशब्देनैकवाक्यतामुपगतोऽयमच्छिद्रादिः करणद्वारेण पावनक्रियाप्रकाशनार्थः । सैव च क्रिया पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यते । तदर्थश्च वाक्यशेषः प्रधानवशात्तत्राकृष्यत इत्यनुषङ्गसिद्धिः ॥

व्यवेताननुषङ्गाधिकरणम् ॥ १८ ॥

**व्यवायान्नानुषज्येत ॥ ४९ ॥**

गच्छतामितिशब्दस्यानुषङ्गोऽस्ति न वोपरि ॥ सं यज्ञपतिरित्यत्र योग्यत्वात्सोऽस्ति पूर्ववत् ॥ ३८ ॥
तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि ॥ नान्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते ॥ ३९ ॥

'सं ते वायुर्वातेन गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषे'ति गच्छतामित्ययं शब्दः संयजत्रैरङ्गानीत्यनेन बहुवचनान्तेनायोग्यत्वान्न संबध्यते । संयज्ञपतिना तु योग्यत्वादनुषङ्गेण संबध्यत इत्याशङ्कायामुच्यते । पूर्वत्रासंबद्धत्वेन बुद्धिविपरिवृत्तिभङ्गान्नानुषङ्गः । सर्वत्र तुल्ययोगित्वादनुषङ्गो हि वर्णितः ॥ असंबन्धितिरोधाने व्यवधानान्न तुल्यता ॥ इति श्रीशास्त्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

नैवमिति पूर्ववैषम्येण प्रत्यवस्थानात्संगतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति** । क्रियैक्यादनुषङ्गे च चित्पत्यादिपदानामपि सर्वत्रानुषङ्गः स्यात्तथा प्रकरणान्तरगतपवनक्रियासंबन्धोऽपि स्यादिति भावः । सत्यम् । शेषिणो निराकाङ्क्षास्तथापि शेषस्तावत्साकाङ्क्षस्तस्य च करणप्रकाशकस्य तत्करणकानुष्ठेयपवनक्रियाप्रकाशनद्वारा प्रकरणे निवेशो वक्तव्यः । साच क्रिया त्रिष्वपि मन्त्रेषु एकैव कृत्तीर्यजमानं वाचयतीत्यादिवत् क्रियाभेदे प्रमाणाभावाच्चित्पत्यादिपदानां तु कर्त्रादिवाचकानां प्रतिमन्त्रं कर्त्राद्यन्तराम्नानान्नानुषङ्गः । नचात्रापि संनिहितकर्तृविशेषविशिष्टपवनक्रियैवान्वयोस्तु ततश्च नानुषङ्ग इति युक्तम् । करणप्रकाशकमन्त्रस्य क्रियांविना साक्षात्प्रकरणे निवेशासंभवेन तन्निर्वाहार्थं क्रियास्वरूपमात्रमेवापेक्षितं ननु कर्तृविशेषविशिष्टत्वमपीति कर्तृविशेषविशिष्टत्वानादरेण पवनक्रियासामान्यरूपेणैव वाक्यशेषान्वये सति प्रधानावृत्त्या गुणावृत्तेर्न्यायप्राप्तत्वादनुषङ्गोऽत्रावर्जनीय इत्याह—**पुनातुशब्देनेति** । प्रकरणाज्ज्योतिष्टोमापूर्वसंबन्धिपवनक्रियान्वयान्नातिप्रसङ्ग इति भावः । प्रयोजनं कृत्स्नप्रयोगाप्रयोगरूपम् । सूत्रार्थस्तु—अनुषज्यते इत्यनुषङ्गः सन्वाक्यपरिसमाप्तिः वाक्यपरिसमापकः सर्वेषु शेषिषु वाक्यशेषस्य यौगपद्येनान्वयादिति ॥

**व्यवायान्नानुषज्येत** ॥ ४९ ॥ अनुषङ्गापवादात्सङ्गतिः पूर्वोत्तरपक्षकथनेनैव संशयः सुगम इति तमुपेक्ष्य पूर्वपक्षमाह—**गच्छतामिति । योग्यत्वादिति** । तथाच सकृद्गच्छतामित्याम्नातस्य स्वयोग्ययावदर्थत्वकल्पनादिहाप्यस्यानुषङ्ग इति भावः । युगपत्सर्वान्वये हि अनुषङ्गो भवति प्रकृतेचासंबन्धिपदव्यवधाने सति संनिहितमात्रेणैवान्वयो न योग्यतामात्रेणान्तरा बुद्धिविच्छेदादित्याह—**पूर्वत्रेति** । संयजत्रैरङ्गानीत्यत्रेत्यर्थः । नच संयजत्रैरङ्गानीत्यत्र गच्छतामित्येकवचनस्यासंबन्धेऽपि धातोः संबन्धसंभवात्तन्मात्रस्य सर्वत्रानुषङ्गोऽस्त्विति युक्तम् । प्रकृतिप्रत्यययोः परस्परान्वितयोरेव पदान्तरेण संबन्ध इति तयोरेकस्यासंबन्धे सत्यपरस्याप्यसंबन्धनियमेन धातुमात्रस्यानुषङ्गायोगादिति भावः । प्रयोजनं पूर्वाधिकरणप्रथमवर्णकवद्द्रष्टव्यम् । **इति श्रीनिट्टलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥**

---

१ निरपेक्षास्तेनाप्रामाणिको.

## द्वितीयाध्याये द्वितीयः पादः ॥ २ ॥

### अङ्गापूर्वभेदाधिकरणम् ॥ १ ॥

### शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

ददाति–यजतीत्यादौ भावनैक्यमुतान्यता ॥ आख्यातैक्यात्तदेकत्वं धातुभेदोऽप्रयोजकः ॥ १ ॥
धातुभेदेन भिन्नत्वमाख्याते श्रूयते ततः ॥ उत्पत्त्येकानुरक्तत्वाद्भिद्यन्ते भावना मिथः ॥ २ ॥
**नियोगैकत्वतः शास्त्रमभिन्नमिति चेन्न तत् ॥ धातुभेदाच्छास्त्रभेदे नियोगो भिद्यते बलात् ॥ ३ ॥**

गतमुपोद्धातप्रसक्तानुप्रसक्तम् । इदानीं लक्षणार्थः कर्मभेदः शब्दान्तरादिभिरभिधीयते । तत्र प्रथमं शब्दान्तराद्भेदोऽभिधीयते । इहैकप्रकरणगतान्यपर्यायधातुनिष्पन्नान्याख्यातानि यजति-ददाति-जुहोतीत्यादीन्युदाहरणम् । तत्रहि सत्यपि प्रत्ययांशस्यैकत्वे धातुभेदादाख्यातपदानि मिथः शब्दान्तराणि भवन्ति । तत्र संशयः—किमेकैव भावना नानाधात्वर्थानुरक्ता विधीयते उत प्रतिधात्वर्थं भावनाभेद इति । तत्र—'भिन्नासु भावनासु स्यादनेकापूर्वकल्पनम् । एकस्यैवोपपन्नेऽर्थे नानेकं तत्र कल्प्यते' ॥ फलापवर्गित्वात्क्रियाणां न फलभेदमन्तरेण क्रियाभेदसंभवः । तद्यदि प्रतिधात्वर्थं भावनाभेदः स्यात्ततः सा भाव्यरूपाऽपूर्वभेदादृते न भिद्यत इत्यनेकापूर्वकल्पना स्यात् । नचैकेनैवोपपन्ने वाक्यार्थेऽनेककल्पना न्याय्या, तस्मादेका भावना । किंच 'भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते ॥ गुणभूता हि धात्वर्था न तां भिन्द्युः कथंचन ॥' यद्यपि धातुभेदादाख्यातपदानि मिथः शब्दान्तरं तथापि प्रत्ययांशः सर्वत्रैकरूपस्तदर्थश्च भावना तदभेदादभिन्ना भवितु-

---

**शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥** पादभेदमानन्तर्यं च सूचयितुं वृत्तवर्तिष्यमाणे कीर्तयति—**गतमिति** । उपोद्धातः धात्वर्थकरणत्वं तच्च स्तुतशस्त्राधिकरणान्तैरधिकरणैः सपरिकरं विचारितम् । तत्प्रसक्तं मन्त्रगताख्याताविधायकत्वं तदनुप्रसक्तं मन्त्रलक्षणादीति विवेकः । **इदानीमिति** । प्राप्तावसरत्वादिति भावः । कर्मभेदः क्रियाभेदः भावनाभेद इति यावल्लक्षणार्थं इदानीं व्युत्पाद्यत इत्युक्त्यास्मिन्नेव पादे प्राधान्येन कर्मभेदो व्युत्पाद्यत इति सूचयति । ततश्चोपोद्धातः पूर्वस्य पादस्यार्थः, अस्यतु कर्मभेद इति पादभेदो द्रष्टव्यः । **प्रथममिति** । शब्दान्तरस्थले धात्वर्थभेदस्य स्पष्टत्वेन तद्भेदनिबन्धनभावनाभेदस्य सुखेनोपपादयितुं शक्यत्वादिति भावः । प्रकरणान्तरविषयाद्यवच्छेदायाह—**एकप्रकरणगतानीति** । वस्तुतस्तु यथैकप्रकरणगतेषु 'सोमेन यजेत । हिरण्यमात्रेयाय ददाति । दाक्षिणानि जुहोति । प्रउगं शंसति । आज्यैः स्तुवते'इत्यादिषु वक्ष्यमाणलाघवप्रत्ययैक्याभ्यां भावनाया एकत्वं, एवं दर्शपूर्णमाससोमाग्निहोत्रादिवाक्येषु सर्वेष्वप्येका भावनेति ताभ्यामेव लाघवप्रत्ययैक्याभ्यां वक्तुं शक्यत्वेन सर्वत्रैकस्या एव भावनायाः प्रत्यभिज्ञाने सत्यसंनिधानलक्षणप्रकरणान्तरस्याभावान्न ततोऽत्र भावनाभेदशङ्कावकाशः । एवंचैकप्रकरणगतेष्वाख्यातेषु भावनैक्ये व्युत्पादिते तत्समानन्यायतयान्यत्रापि भावनैक्यं स्वयमेव ज्ञास्यन्तीत्याशयेन मन्दबुद्धीनां सुबोधायैकप्रकरणगतानीत्युक्तमिति ध्येयम् । **ननु** प्रत्ययस्यैक्यात्कथं शब्दान्तरत्वमित्यत आह—**तत्रहि सत्यपीति** । एवंच यद्यपि पर्यायधातुनिष्पन्नाख्यातेष्वपि स्वरूपतः पदभेदोऽस्ति तथापि तत्र भावनाभेदप्रयोजकधात्वर्थभेदाभावात्तद्व्यावृत्तयेऽपर्यायधातुनिष्पन्नानीति विशेषितमिति ध्येयम् । **ननु** केवलस्य प्रत्ययस्य क्वापि वाक्येऽश्रवणादुत्पत्तिशिष्टैकधात्वर्थावरुद्धायां धात्वन्तरार्थान्वयासंभवात्कथं भावनैक्यम् । नच फलवाक्ये धात्वर्थाविवक्षया केवलभावनाविधिरन्यत्र तु गुणविधिरिति युक्तं विनिगमनाविरहात्, पदस्यैकप्रसरत्वेन फलवाक्यव्यतिरिक्तवाक्येषु फलवाक्योत्पन्नभावनां प्रत्ययेनानूद्य प्रकृत्या तत्र धात्वर्थः करणत्वेन विधीयत इति कल्पनाया अत्यन्तायुक्तत्वाच्च । तस्माद्भावनैक्यकोटेरनुन्मेषात्संशय एवानुपपन्न इत्याशङ्क्य सर्वेषां वाक्यानामेकवाक्यत्वाभ्युपगमेन सर्वविशिष्टभावनाविधिसंभवाद्भावनैक्यकोटेरुन्मेषः संभवतीत्याशयेन संशयमाह—**तत्रेति** । ननु भावनाभेदेऽप्यपूर्वैक्यमस्तु । अतएव भाष्यकारेण भावनाभेदमङ्गीकृत्यापूर्वैक्येन पूर्वपक्षो वर्णितः । ततश्च कथमनेकापूर्वकल्पनाप्रसक्तिरित्यतः श्लोकं व्याचष्टे—**फलेति** । भाष्यं च यथाश्रुतं वार्तिके दूषितमिति भावः । **ननु** शब्दान्तराद्भावनाभेदसिद्धावनेकापूर्वकल्पनागौरवमपि प्रामाणिकत्वान्न दुष्यतीत्याशङ्कायां शब्दान्तरस्य भेदकत्वमेवानुपपन्नं प्रत्ययैक्येन भावनै-

---

१ किमत्रैका. २ कल्प्यते लभते. ३ कल्पनं न्याय्यं.

मर्हति। यदिहि धात्वर्थान्प्रति गुणभूता भावना स्यात्ततस्तेषां धातुभेदेन भिन्नत्वाद्भावनापि तान्प्रत्युपादीयमाना प्रतिधात्वर्थं भिद्येत । भावनाप्रधानत्वात्त्वाख्यातस्य तां प्रत्युपादीयमाना धात्वर्थाः संहत्यैव तां विशिंषन्ति क्रयमिवारुणिमादयः। तस्मान्न भावना भेदमावहेदिति प्राप्तेऽभिधीयते— 'प्रत्ययांशः समानोऽपि प्रतिधातुप्रयोगतः ॥ तत्तदर्थानुसारेण भावना भेदमावहेत् ॥ निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ॥ ततः सर्वविशिष्टा स्याद्द्वन्द्वोत्पन्नसुबर्थवत् ॥ यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः ॥ श्रूयेत क्रयवत्सर्वैर्विशिष्येत स धातुभिः ॥' नहि समुदितेभ्यो धातुभ्यः प्रत्ययः श्रूयते अग्नीषोमादिभ्य इव सुप्प्रत्ययः। नापि पृथक्क्रीणातिरिवारुणादिभिर्विभक्तो येन सर्वैर्धात्वर्थैः प्रातिपदिकार्थैरिव सुबर्थः पदेन क्रय इवारुणिमादिभिर्वाक्येन युगपद्भावना विशिष्येत। प्रत्येकं तु धातुभ्यः प्रत्ययः श्रूयत इति नैकभावनासंभवः । तथाहि प्रत्ययो हि यजिधातुपरः श्रूयमाणः केवलां यागकरणिकां भावनां श्रुत्या विधत्ते। दानहोमौ तस्यां निविशमानौ पदान्तरगतत्वाद्वाक्येन प्रकरणेन वा निविशेयाताम्, तेच श्रुतितो दुर्बले, करणांशोपनिपाताच्चास्ति विरोधः । समुच्चये नैरपेक्ष्यबाधः। तेन दानहोमयोस्तदनुवादेन विधानासंभवात्तदनुरक्ते भावने एव तद्गतेन प्रत्ययेन विधातव्ये। विहितायाश्च विधानासंभवाद्भावनान्तरत्वं, उच्चार्यमाण एव प्रत्ययः प्रकृत्यर्थभेदभिन्नामेव स्वाभिधेयां भावनामवगमयति। तस्मात्सिद्धो धात्वर्थभेदेन भावनाभेदः ॥

---

क्यस्यैव प्रतीतेरित्याह—**किंचेति**। उक्तशङ्कोत्तरत्वेन पूर्वार्धं व्याचष्टे—**यदिहीति**। धात्वर्थान्प्रति गुणभूता धात्वर्थफलिकेत्यर्थः। **भावनाप्रधानत्वादिति**। आख्यातेन भावनायाः क्रियात्वेन प्रतिपादनात्तत्र कारकत्वमेव धात्वर्थस्य नत्वपूर्ववत्फलत्वमित्यर्थः। ततश्च फलापवर्गित्वात्क्रियाणां क्रियाभेदे फलभेद आवश्यको नतु कारकभेदे क्रियाभेद इति भावः। भवेदेवं यदि सर्वविशिष्टभावनाविधानं संभाव्येत। प्रकृते च प्रत्ययस्यैकत्वेऽपि तस्य केवलस्याप्रयोगात् यजिपरः श्रूयमाणः प्रत्ययो यागविशिष्टां भावनां प्रतिपादयतीति यागविशिष्टतयोत्पन्नायां भावनायां दानादेरन्वयानुपपत्त्या तत्रापि दानादिविशिष्टभावनान्तरमेव विधेयमिति सर्वधात्वर्थविशिष्टैकभावनाविध्यसंभवाच्छब्दान्तरे भावनाभेद आवश्यक इत्याह—**प्रत्ययांश इति**। तत्तदर्थानुरागेणेत्यनेन यथा ज्ञानस्य ज्ञेयरूपानुरञ्जकभेदाद्भेद एवमिहापि भावनाया अनुरञ्जकधात्वर्थाधीननिरूपणतया तद्भेदाद्भेदो न्याय्य इति दर्शयति। **ननु** यथा समूहालम्बनस्यानेकविषयानुरक्तस्यापि न भेद एवमिह किं न स्यादित्याशङ्कायां तत्र सर्वेषां विषयाणां युगपदिन्द्रियसंनिकर्षात्संभवत्येकज्ञानानुरागः इहतु न युगपन्नानाधात्वर्थानामेकभावनानुरागः संभवति तत्सामग्रीविरहादित्येतद्व्यतिरेकमुखेनाह—**निष्पद्येतेति**। सः प्रत्ययार्थः। धातुभिः धात्वर्थैः। **ननु** तथात्वे वा कथं युगपत्संबन्ध इत्यपेक्षायां यथाक्रमं पदश्रुतिलक्षणप्रमाणस्य वाक्यलक्षणप्रमाणस्य च विशेषादित्याशयेन द्वितीयतृतीयश्लोकौ व्याचष्टे—**नहीति**। प्रकृतेतूभयव्यतिरेकान्न युगपत्संबन्ध इत्याह—**प्रत्येकमिति**। ननु प्रत्येकं प्रत्ययश्रवणेऽपि युगपदन्वयः किं न स्यादित्यप्रयोजकत्वशङ्कायां प्रबलदुर्बलप्रमाणोपस्थितत्वान्नेह युगपदन्वयः संभवतीत्युपपादयति—**तथाहीति**। 'सोमेन यजेत । दाक्षिणानि जुहोती'त्यनयोः स्पष्टमेकवाक्यत्वाप्रतीतेरपरितोषादाह—**प्रकरणेनेति**। संनिधानेनेत्यर्थः। **ननु** सत्यपि दौर्बल्ये एकस्य करणत्वेनेतरस्याङ्गत्वेन निवेशे विरोधाभावान्न बाध इत्यत आह—**करणांशेति**। सर्वेषामेकभावनान्वये विनिगमनाविरहात्सर्वेषां करणत्वमेव स्यान्नत्वेकस्य करणत्वमितरस्याङ्गत्वमित्येकांशोपनिपातादस्ति विरोध इत्यर्थः। अनेनैव सर्वेषामेकभावनान्वयपक्षे यागदानहोमादीनां समप्राधान्यं भावनाभेदे त्वङ्गाङ्गिभाव इत्यधिकरणप्रयोजनमपि सूचितम्। **ननु** समुच्चयसंभवान्न विरोध इत्यत आह—**समुच्चय इति**। 'समर्थः पदविधि'रिति प्रकृतिप्रत्ययात्मकपदविधेः सामर्थ्यापेक्षत्वात्सापेक्षस्य चासमर्थत्वात्सामर्थ्यबलादेव नैरपेक्ष्यमवगतं तत्समुच्चये सति विरुध्येतेत्यर्थः। नच यथा अग्नये दात्र इत्यादिपृथग्विभक्तिश्रवणेऽपि दातृत्वविशिष्टाभिलक्षणदेवताकारकमेकं तद्वदिह किं न स्यादिति वाच्यम्। दातृशब्दात्परस्य विभक्तेर्विशेषणविभक्तित्वेन साधुत्वार्थतया तत्र सत्यपि पृथक्प्रत्ययश्रवणे विशिष्टैककारकविधिः संभवति, प्रकृते तु विशेषणविशेष्यभावापन्नोभयविशिष्टविधिरिति वैषम्यादिति भावः। एवंच विशिष्टविध्यसंभवादनुरञ्जकधात्वर्थभेदाद्भावनाभेद आवश्यक इति प्रथमश्लोकं व्याचष्टे—**तेनेति**। सूत्रार्थस्तु—शब्दान्तरे पर्यायधातुभेदे कर्मभेदो भावनाभेदः धात्वर्थेन भावनाया अनुबन्धस्यावच्छेदस्य कृतत्वादिति ॥

---

१ नुरागेण. २ विशेष्येत. ३ दिभ्यो र्वाक्तः. ४ यजतिपरः. ५ विध्यसंभवात्. ६ सर्वधात्वर्थविशिष्ट.

समिदाद्यपूर्वभेदाधिकरणम् ॥ २ ॥

## एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

**समिधो यजतीत्यादावेकत्वमुत भिन्नता ॥ धातुप्रत्यययोरैक्यादेकत्वं भिन्नता कुतः ॥ ४ ॥**

**अभ्यासात्कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे ॥ विधित्वं श्रुतितो भाति संनिधेरनुवादता ॥ ५ ॥**

अभ्यासादिदानीं भेदोऽभिधीयते। विधेरविशेषेण पुनः श्रवणमभ्यासः। यथा 'समिधो यजति। तनूनपातं यजति'इत्यादि पञ्चकृत्वो यजतिपदमभ्यस्तं तत्किमेकां भावनां प्रतिपादयति उत प्रत्यभ्यासं भावनाभेद इति। तदर्थं च किमेक एव यागः किंवा पञ्चयागा इति। यागैकत्वे भावनैकत्वं, तद्भेदे तु पूर्वाधिकरणन्यायेन धात्वर्थभेदाद्भावनाभेद इति। तत्र—'प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ॥ तदैकत्वात्तदर्थोऽपि न भेदं प्रतिपद्यते ॥' प्रत्ययांशस्य सर्वत्र समानत्वात्तदर्थस्यापि भावनाया एकत्वं प्राप्तमपि करणीभूतधात्वर्थभेदादपोदितम्। इहतु तस्यैव धातोः पुनः पुनः श्रवणादसति च शब्दभेदेऽर्थभेदस्य निष्प्रमाणकत्वात्स एव यागः सैव च भावना। ननु समिदादिसंज्ञाभेदात् 'अथैष ज्योतिरथैष विश्वज्योति'रित्यादिवद्यागभेदः स्यात्। न। शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानात् स्पष्टे च यागैकत्वे तस्य समित्संज्ञावरुद्धस्य संज्ञान्तरमन्याय्यमिति तनूनपादादिशब्दाः समिद्यागे देवतां विधास्यन्ति न संज्ञाः, येन संज्ञातो भेदः स्यात्। यदिहि तनूनपातं यजतीत्यादयो यागविधयो भवेयुस्ततो विहितस्य विधानायोगात् विधेः पुनःश्रुत्या यागभेदो भवेत्। सतिच यागभेदे संज्ञान्तरं [१]युक्तमिति स्यात्तनूनपादादीनां संज्ञात्वं, तेनाभ्यासनिमित्तभेदाधीनमेषां संज्ञात्वमिति न संज्ञावशेन भेदसिद्धिः। यत्र तु प्राग्यागावगमात्संज्ञात्वं सिद्धं तत्र संज्ञातो भेदः स्यात् यथा अथैष ज्योतिरिति, उद्भिदा यजेतेति। इह [१]उपपदान्यपोद्धृत्य यजतीत्येतावन्मात्रं पञ्चकृत्वोऽभ्यस्तं भेदं बोधयति नवेत्येतदेव चिन्त्यते। तत्र चाभेदावगमाद्गुणविधिरेव तनूनपादादिशब्दैः। नच गुणाद्भेदः, सर्वेषां तनूनपादादिशब्दानामुत्पन्नवाक्यशिष्टत्वेन दध्यादिवदभेदकत्वात्, समिधो यजतीति चोत्पत्तौ समिच्छब्दस्य नामधेयत्वेन गुणत्वाभावात्। नचागृह्यमाणविशेषत्वम्। प्रथमोच्चारितत्वेन समिद्वाक्ये यागविधिरितरेषु तत्प्रत्यभिज्ञानात्तदनुवादेन गुणविधिश्चरमश्रुतत्वात्। एवं गुणविधानार्थत्वादेव पुनःश्रुतेर्नानर्थक्यं। सत्यपि चानर्थक्ये न दोषः। नहि प्रयोजनवशेन प्रमाणं नेतुं [१]युक्तम्।

**एकस्यैवं पुनःश्रुतिः० ॥ २ ॥ इदानीमिति।** यथा शब्दान्तरस्य पदश्रुत्या प्रतीयमानार्थमात्रमवलम्ब्य भेदकत्वमेवमभ्यासस्याप्रीत्यनेन सादृश्येनाभ्यासस्यैवेदानीं भेदकत्वव्युत्पादनं युक्तं नतु संख्यासंज्ञादीनां, तेषां विधिपदस्थत्वाभावेन वाक्यगम्यसंबन्धमपेक्ष्य भेदकत्वादिति भावः। **नन्वभ्यासो** नाम विधेः पुनः श्रवणं ततश्च नास्य शब्दान्तराद्विभक्ततां पश्याम इत्यत आह—**विधेरिति।** तत्र धातुभेदेन विशेषितत्वान्नातिप्रसङ्ग इति भावः। **ननु** पूर्वत्र यथा प्रत्ययैकत्वेऽपि तदर्थभेद एवमिहापि किं न स्यादित्याशङ्कां निराकुर्वन् सङ्गतिं च सूचयन् श्लोकं व्याचष्टे—**प्रत्ययांशस्येति।** तटस्थः शङ्कते—**नन्विति।** भवेदेवं यदि कर्मभेदावगमात्प्राक् समित्तनूनपादादिशब्दानां संज्ञात्वमवगतं स्यात्, तत्र यद्यपि कर्मभेदावगमाभावेऽपि समिच्छब्दस्य संज्ञात्वावगमोऽस्ति तथापि तनूनपादादीनां संज्ञात्वावगमः कर्मभेदावगमाधीन इत्यन्वयव्यतिरेकाभ्यामुपपादयन् न संज्ञाभेद इति परिहरति—**नेति। देवतामिति।** कर्मभेदावगमाभावे संज्ञात्वानुपपत्तेर्नवमदशमयोर्वक्ष्यमाणसंज्ञात्वासंभवात्तदीयपूर्वपक्षोक्तरीत्या देवताविधिरेवावतिष्ठत इति भावः। **यागावगमादिति।** यागभेदावगमादित्यर्थः। अथैष ज्योतिरिति वाक्ये यागशब्दाभावात्तत्र यागभेदावगमंविना संज्ञात्वावगमः स्पष्टः। उद्भिदा यजेतेत्यादावपि धातुपारार्थ्यविप्रकृष्टविधानादिदोषप्रसङ्गाद्गुणविध्यसंभवादेव संज्ञात्वनिश्चय इति तत्रापि यागभेदावगमंविनैव संज्ञात्वावगम इति भावः। **तेनेति।** उपपदानां भेदज्ञानानौपयिकत्वेनेत्यर्थः। अपोद्धृत्य अतन्त्रीकृत्य। **ननु** न यद्यभ्यासेन कर्मभेदस्तर्हि विधिपुनःश्रुतेरानर्थक्यं स्यादिति शङ्कायां गुणविधानार्थत्वाभानर्थक्यमिति परिहारं वक्ष्यन् गुणविधित्वमुपपादयति—**तत्रेति।** नन्वेवमपि गुणादेव भेदः स्यादिति तटस्थस्यैव शङ्कां निराकरोति—**नचेति। दध्यादीति।** अग्निहोत्रं जुहोतीति द्रव्यासंयुक्ततयोत्पन्नकर्मानुवादेन दध्ना जुहोतीत्यादिभिर्विधीयमानदधिपयःप्रभृतिवदित्यर्थः। **ननु** मन्त्रवर्णादेव तनूनपादादिप्राप्तेर्गुणविधिरनर्थक इत्यत आह—**सत्यपीति।** नन्वध्ययनविधिवशेन प्रयोजनवदर्थपरत्वावगमा-

१ उत. २ न्यायात्. ३ युक्तमेवेति. ४ दादिशब्दानां. ५ यागभेदावग. ६ संज्ञया. ७ तेन तूप. ८ चिन्त्यं. ९ पादादीनामुत्पन्नशिष्टत्वात्. १० शक्यं.

तस्मादेको यागः तदेकत्वाच्च भावनापूर्वयोरप्येकत्वमिति प्राप्तेऽभिधीयते—'विधेस्तावत्स्वभावोऽयमप्रवृत्तप्रवर्तनम् ॥ धात्वर्थभावयोरेव तच्च श्रुत्यावगम्यते ॥' यत्तावदुक्तं भवत्वानर्थक्यमिति तदयुक्तम्। विधिश्रुतिविरोधात्। तथाहि स्वतोऽप्रवृत्तप्रवर्तनं गम्यते। तच्च बलवता कारणान्तरेणान्यथात्वं प्रतिपद्यते। नचात्र तदस्ति। तद्यद्येकमेव कर्म स्यात्तस्य पूर्वविहितत्वादप्रवृत्तप्रवर्तनात्मा विधिरूपरुध्येत तेन विधिवशात्कर्मान्तरत्वम्। यत्तु दृढप्रत्यभिज्ञानात्कर्मैकत्वमिति तन्न। संनिधिबलाद्धि[1] प्रत्यभिज्ञा विधिश्रुत्या तु भेदज्ञानं संनिधेश्च श्रुतिर्बलीयसी। ननु यजिश्रुतिकृतैवेयं प्रत्यभिज्ञा न यागोऽयमिति श्रुत्यावगम्यते न पुनः स इति वान्य इति वा साधारण्येनैव तदभिधायिन्यां श्रुतौ संनिधिकृतामभेदबुद्धिमनभिजानन्तः श्रुतिकृतां मन्यन्ते। तस्माद्विधिश्रुत्या कर्मभेदः। यदप्युक्तं संनिधिकृतप्रत्यभिज्ञानाबाधाय गुणविधानार्था पुनःश्रुतिर्भवत्विति। तदप्ययुक्तं श्रुतिविरोधादेव, पदलक्षणयाहि श्रुत्या धात्वर्थभावनयोरेव विधेयत्वं गम्यते न तत्संनिधिमात्रेणैव बाधितुं शक्यते। यदि हि तनूनपादादिदध्यादिवदविधीयमानमनर्थकं स्यात् ततस्तस्यावश्यंविधेयत्वादनेकार्थविध्यशक्त्या कर्मानुवादाकाङ्क्षायां संनिधिकृतमभेदज्ञानं विधिरनुमन्येत। यदा तु मन्त्रवर्णप्राप्तत्वात्तनूनपादादिदेवतानां तत्प्रख्यन्यायेन नामधेयत्वेनानुवादत्वेन वा संभवान्नानर्थक्यं तदा श्रुत्यवगतकर्मविधानं न बाधितव्यम्। तस्माद्यागभेदाद्भावनाभेदस्तद्भेदाच्चापूर्वभेदः ॥

आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

**प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ [विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युगपच्छास्त्राचोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥**

एवं विद्वान्पौर्णमासीममावास्यामितीरितम् ॥ कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥ ६ ॥
कर्मान्तरं स्यादभ्यासाद्ध्रौवं द्रव्यं हि देवता ॥ वार्त्रघ्नीत्यादितो लभ्यानुवादस्तु न युज्यते ॥ ७ ॥
वार्त्रघ्नीत्याज्यभागाङ्गव्यवस्थोक्तेर्न देवता ॥ पौर्णेत्यनूद्यते पौर्णमासीयुक्तं त्रिकं तथा ॥ ८ ॥
अमेत्यपि समूहस्य द्वित्वसिद्धिः प्रयोजनम् ॥ सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥ ९ ॥
विद्वद्वाक्यविधौ विध्यावृत्तिराग्नेयकादिना ॥ विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥ १० ॥

इदानीमभ्यासस्यापवादः क्रियते। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति

---

दानर्थक्यमयुक्तमित्यत आह—**नहीति**। एकस्यैव यागस्य मान्त्रवर्णिकानेकदेवतालम्बनेन स्तुत्यर्थतया पुनःश्रवणोपपत्तेर्नाप्रामाण्यप्रसक्तिः किंतु प्रकृतिविशेषकरत्वाभावात्स्तुत्यर्थत्वे आनर्थक्यमात्रम्। तच्च प्रत्यभिज्ञाबलान्न्यायप्राप्तत्वेन न दोषावहम्। नहि प्रमाणस्वरसात्प्रतीयमानं प्रयोजनानुसारेण परित्यक्तुं शक्यमित्यर्थः। एवचास्मिन्पूर्वपक्षे चतुर्दशपौर्णमास्याभाहुतयो हूयन्ते इति संख्यादर्शनं वैकल्पिकदेवताभेदमादायोपपादनीयमित्याशयः। **तदेकत्वादिति**। धात्वर्थैकत्वेऽपि दध्नेन्द्रियकामस्येत्यादौ यथा भावनापूर्वयोर्भेदस्तद्वदिह भावनाभेदप्रयोजकाभावादिति भावः। यदुक्तमानर्थक्यमप्यङ्गीकृत्य स्तुत्यर्थत्वं स्वीकार्यमिति तन्निराकरणपरत्वेन पूर्वार्धं व्याचष्टे—**यत्तावदिति**। नन्वेवं विद्वद्वाक्यादेरनुवादकत्वं न स्यादित्यत आह—**तच्चेति**। तत्र बलवद्बाधकं रूपालाभ इति भावः। नन्विहापि प्रत्यभिज्ञैव बाधिकेति शङ्कानिराकरणं मनसि निधायाह—**याग इत्यादि**। **न पुनरिति**। तच्छब्दाद्यभावादिति भावः। गुणविधाननिराकरणार्थत्वेनोत्तरार्धं व्याचष्टे—**यदप्युक्तमिति**। पदलक्षणयेत्येतद्धात्वर्थमात्रान्वयिभावनायाः प्रत्ययलक्षणश्रुत्या विधेयत्वावगमादिति ध्येयम्। **ननु** दध्ना जुहोतीत्यादौ संनिधिकृतप्रत्यभिज्ञाबलादेव धात्वर्थभावनयोर्विधिं बाधित्वा पदान्तरस्थस्य दध्यादेर्विधेयत्वमङ्गीकृतं तद्वदिह किं न स्यादित्याशङ्क्य वैषम्यमाह—**यदिहीति**। दधिविशिष्टकर्मान्तरविधिना श्रुत्यनुग्रहमाशङ्क्याह—**अनेकेति**। सूत्रार्थस्तु—एकस्य पुनःश्रुतिरप्येवं शब्दान्तरवद्भेदिका अविशेषात् दध्यादिवद्विधेयविशेषाभावात्। अन्यथा हि वाक्यमेवानर्थकं स्यादिति ॥

**प्रकरणं तु पौर्णिमास्यां रूपावचनात् ॥ ३ ॥ तावब्रूतामिति**। इदं वाक्यमुपांशुयागस्य कालविधायकमिति दर्श

---

१ प्राप्ते ब्रूमः. २ भिज्ञया. ३ संनिधिकृता हि. ४ मभेदप्रत्यभिज्ञामनभि.

तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन् ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदैन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्याया'मिति कालसंयुक्तानि वचनानि श्रूयन्ते। तथा 'समिधो यजति' 'तनूनपातं यजति' 'आज्यभागौ यजती'त्यकालसंयुक्तानि। तेषां संनिधौ 'य एवंविद्वान्पौर्णमासीं यजते' 'य एवंविद्वानमावास्यां यजत' इति वाक्यद्वयं श्रुतम्। तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति फलं श्रुतं तत्र विचार्यते । किमनेन फलवचनगतेन यजिना संनिहिताः सर्वे यागा राजसूयवत्फलंप्रति विधीयमानाः समप्रधानाः किंवा य एव कालसंयुक्तास्तेषामेव फलसंबन्धेन प्राधान्यमन्येषां तदङ्गत्वमेवेति। तत्सिद्ध्यर्थमिदं विचारयितव्यम् । य एवंविद्वानित्येवं संयुक्तौ यजतिप्रकृतानामाग्नेयादीनां यागानां पौर्णमास्यमावास्याकालसंयुक्तानां तन्निमित्तप्रसिद्धनामधेयत्वाभ्यां पौर्णमास्यमावास्यापदाभ्यां विशेष्यमाणावनुवदितारावुतापूर्वयोः कर्मणोरेवंसंज्ञकयोर्विधातारावितिति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम् किमपूर्वकर्मविधौ रूपं लभ्यते नवेति । ततोऽप्येतद्विचार्यते किं 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्याया'मित्येताभ्यां यदाग्नेयोऽष्टाकपाल इत्यादिभिर्वाक्यैर्वा कर्मणोरनयो रूपं विधातुं शक्यं नवेति। ततोपि पुनर्विचारणीयम् किं प्राप्तकर्मानुवादेनानेकगुणविधानमेकेन विधिना संभवति उत नेति । अत्रचाभ्यासापवादार्थत्वादधिकरणस्य य एवंविद्वानित्येवं संयुक्तमेव वाक्यद्वयमधिकरणस्य विषयः। तच्च कर्मान्तरस्य विधायकं समुदायानुवादकं वेत्येतावदेवाधिकरणशरीरम् । एतस्य तु फलं समप्रधानाङ्गाङ्गिभावविचारः । फलविचारविषयत्वेन चाग्नेयादिवाक्यानामुपन्यासो नाधिकरणशरीरविषयत्वेन । तत्र पूर्वाधिकरणन्यायेन विधेः पुनःश्रुत्या कर्मान्तरत्वं पौर्णमास्यमावास्यासंयुक्तयोः। किंपुनरनयोर्द्रव्यदैवतम्। उच्यते। द्रव्यं तावत् 'चतुर्ध्रुवायां गृह्णाती'त्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनापेक्षम्। द्रव्याकाङ्क्षिणां प्रकरण-

---

मोपान्त्ये ग्रन्थकारो वक्ष्यति। एवंचास्य वाक्यस्याग्नेयादिवत्कर्मोत्पत्तिपरत्वाभावेऽपि एतद्वाक्यबलेनोपांशुयाजस्य विद्वद्वाक्यगतपौर्णमासीपदेन फलवाक्यगतपौर्णमासपदेन च परामर्शात्फलसंबन्धसिद्धिरिति तदुपयोगितयास्योदाहरणत्वमिति ध्येयम्। यथाच तावब्रूतामितिवाक्यबलादुपांशुयाजस्य फलसंबन्धसिद्धिस्तथा दशमएव वक्ष्यामः । **राजसूयेति** । यथा स्वाराज्यकामो राजा राजसूयेन यजेतेति वाक्यस्थयजिना संनिहिता इष्टिपशुसोमयागाः सर्वे फलंप्रति विधीयन्ते तद्वदित्यर्थः। **समप्रधाना इति**। प्रधानशब्दो भावपरः । ततश्च समं प्राधान्यं येषामिति बहुव्रीहिस्तेन पुंलिङ्गोपपत्तिः । यद्वा समं प्रधानं फलं येषामिति बहुव्रीहिर्वोध्यः। **तन्निमित्तेति**। कालयोगनिमित्तेत्यर्थः। **एवंसंज्ञकयोरिति**। पौर्णमास्यमावास्यासंज्ञयोरित्यर्थः। **तत इति**। सार्वविभक्तिकस्तसिः। तदर्थमित्यर्थः । वार्त्रघ्नी वृत्रहननप्रकाशकपदयुक्ते अग्निर्वृत्राणि, त्वं सोमेत्येते ऋचौ । वृधन्वत्यौ वृद्धिप्रकाशकपदयुक्ते अग्निः प्रत्नेन, सोम गीर्भिरित्येते ऋचौ। **विधातुमिति** । लब्धुमित्यर्थः । वार्त्रघ्नी इत्यादिना रूपलाभपक्षे रूपशब्दो देवतामात्रपरः । यदि वार्त्रघ्न्यादिना आग्नेयादिवाक्यैर्वा रूपं लभ्यते तदा विद्वद्वाक्यद्वयस्य विधायकत्वे फलवाक्यस्थयजिना सर्वेषां परामर्शात् कालसंयुक्तानामकालसंयुक्तानां च सर्वेषां प्राधान्यं, यदि च न लभ्यते तदा विद्वद्वाक्यद्वयस्य विधायकत्वासंभवात्कालसंयुक्तकर्मानुवादकत्वेसति तद्बलेन कालसंयुक्तानामेव फलसंबन्धात्प्राधान्यम्, इतरेषां तु फलवदफलन्यायेन तदङ्गत्वमिति फलफलिभावो बोध्यः । इयांस्तु विशेषः—आग्नेयादिवाक्यै रूपलाभपक्षे आग्नेयादिवाक्याना कर्मविधायकत्वाभावाद्विद्वद्वाक्यविहितकर्मणोः प्रयाजादीनां च समप्राधान्यं, वार्त्रघ्नीपौर्णमास्यामित्यादिवाक्याद्रूपलाभे तु आग्नेयादिवाक्यानां कर्मविधायकत्वाद्विद्वद्वाक्यविहितकर्मणोराग्नेयादिकर्मणां प्रयाजादीनां च समप्राधान्यमिति। तत्राग्नेयादिवाक्यै रूपं विधातुं शक्यते नवेत्येतन्मात्रार्थत्वेन संशयान्तरमाह—**ततोपीति** । ननु समप्राधान्याङ्गाङ्गिभावविचारो भेदलक्षणेन संगतस्ततएवाग्नेयादिवाक्यानामुदाहरणत्वेनोपन्यासोऽप्ययुक्त इत्यत आह—**अत्रचेति**। तत्र प्रथमं वार्त्रघ्नी पौर्णमास्यामित्यादिमन्त्रविधिवलाद्दैवतालाभ इति पक्षावलम्बनेन पूर्वपक्षमाह—**तत्रेति** । विधिपुनःश्रुतेरानर्थक्यापत्त्या पूर्वाधिकरणन्यायेन विद्वद्वाक्यद्वयस्य विधायकत्वे सत्यभ्यासात्कर्मान्तरत्वमित्यर्थः। **ननु** सर्वस्मै वा इति वाक्यस्य वैशब्दोपबन्धेन विधायकत्वासंभवाद्वार्त्रघ्नीपौर्णमास्यामिति वाक्यस्याज्यभागयोरनुवाक्या व्यवस्थार्थत्वस्य मिथश्चानर्थसंबन्ध इति तृतीये वक्ष्यमाणत्वाच्च न द्रव्यदेवतालाभ इति पृच्छति—**किंपुनरिति**। **असंयुक्तेति**। प्रयोजनविशेषणेति शेषः । लिङ्गं सामर्थ्यम् । नच—'नावान्तरक्रियायोगादृते वाक्योपकल्पनात्। गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' इत्युक्तेः कथं ध्रौवाज्यस्य प्रकर-

---

१ श्रूयन. २ संयुक्ता यागास्तेषामेव. ३ तदङ्गनेनि. ४ विद्वानिति संयुक्तौ. ५ शक्यते न वेति.

गतानां सर्वकर्मणामविशेषेण लिङ्गप्रकरणाभ्यामङ्गं भवदुपांशुयाजादीनामिवानयोरपि कर्मणोर्लभ्यते । वचनाद्वा सर्वस्मै वा एतद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमिति । देवतापि च वार्त्रघ्नी पौर्णमास्याम-नूच्येते वृधन्वती अमावास्यायामिति वाक्याभ्यां पौर्णमास्यमावास्यासंज्ञयोरनयोर्मन्त्रविधानान्माघ्न-वर्णिकीति रूपलाभात्कर्मान्तरत्वम् । अन्यथा समस्तस्यानुवादस्यानर्थक्यं न केवलं य एवंविद्वानित्ये-तयोरेवानर्थक्यम् । पौर्णमास्यां पौर्णमास्या यजेतेति अमावास्यायाममावास्यया यजेतेत्येतदपि वाक्य-द्वयमनर्थकं स्यात् । नह्यनेनाग्नेयादीनां कालो विधीयते तेषामुत्पत्तिवाक्यैरेव कालस्य विहितत्वात् । यदा तु य एवंविद्वानित्येताभ्यां पौर्णमास्यमावास्यासंज्ञके कर्मान्तरे विधीयेते तदा तयोः कालवि-धानात्पौर्णमास्यां पौर्णमास्या यजेतेत्यपि वाक्यद्वयमर्थवद्भवति । तस्मात्कर्मान्तरविधानम् । यदात्वेवं तदा सर्वे यागाः फलसंबन्धात्समप्रधानभूताः नहि तदा फलवाक्यगतं दर्शपूर्णमासपदमलमाख्या-

---

गविनियोज्यत्वं लिङ्गं च स्वतो न प्रमाणमिति वाच्यम् । चतुर्ध्रुवायां गृह्णातीति ग्रहणक्रियायाः प्रकरणग्रहणं तत्संस्कार्यद्र-व्यस्य प्रकरणाङ्गत्वं विनानुपपन्नमिति, ततएव द्रव्यस्यापि प्रकरणविनियोज्यत्वस्य प्रकृतेऽवश्यंवाच्यत्वादिति भावः । अन्यथा दशमे वक्ष्यमाणमुपांशुयाजार्थत्वमपि न स्यादित्याशयेन दृष्टान्तमाह—**उपांश्विति** । यद्वा द्रव्यस्य प्रकरणग्राह्यत्वानुप-पत्तेरेवास्वरसादाह—**वचनाद्वेति** । इदंच वचनं स्पष्टं तादर्थ्यचतुर्थीबलाद्विधायकमेव । वैशब्दश्च यदाग्नेय इत्यादौ यच्छब्दवन्न विधिप्रतिबन्धक इति भावः । नचैवं वचनमश्रुतद्रव्येष्वाज्यप्रापकमेव न भवति तस्य लिङ्गप्रकरणाभ्यामेव प्राप्तेः, किंतु यागरूपाणामिवायागरूपाणामपि द्रव्याकाङ्क्षाविशेषात्सदनकरणादिष्वपि तत्प्राप्तौ तत्परिसंख्यार्थमिति वाच्यम् । कथंचिद्ध्रौवाज्यस्य लिङ्गप्रकरणविनियोज्यत्वसंभवेऽपि तदपेक्षया वचनस्य शीघ्रप्रवृत्तिकरत्वादेवंच सदनकरणादिषु ध्रौवप-रिसंख्यार्थिक्येवेति न काप्यनुपपत्तिः । **देवतापि चेति** । तृतीये ह्याग्नेयादिकर्मसु वाक्येन वार्त्रघ्यादिमन्त्रविधिर्न संभ-वति । तेषां स्वक्रमाम्नातमन्त्रान्तरावरुद्धत्वादाग्नेयादिषु केवलस्य सोमस्य देवतात्वाभावेन सोमदेवताकानुवाक्यायुगलस्य तेषु विध्यसंभवाच्च । अतः प्रबलेन वाक्येनाग्नेयाद्यर्थतया विध्यसंभावाद्दुर्बलेनापि संनिधिनाज्यभागाङ्गत्वमङ्गीकृत्य वचनमनुवा-क्यायुगलद्वयस्य व्यवस्थार्थमिति वक्ष्यते । एवंच विद्वद्वाक्यविहितकर्मार्थतया मन्त्रविधिरितिपक्षे तादृशबाधकाभावाद्दुर्बलेन संनिधिनाज्यभागार्थत्वमङ्गीकृत्य व्यवस्थार्थत्वं न कल्पनीयं किंतु पौर्णमास्यमावास्यासंज्ञाभ्यां विद्वद्वाक्यविहितकर्मणोः प्रत्य-भिज्ञायमानत्वात्तत्रैव मन्त्रविधिस्तदधिकरणपूर्वपक्षोक्तरीत्या स्वीकार्यः । एवंच वार्त्रघ्नी पौर्णमास्यामिति पौर्णमासीसंज्ञके कर्मणि वार्त्रघ्नीमन्त्रद्वयस्य विधिबलादेको मन्त्रोऽनुवाक्या अपरस्तु याज्या । अनूच्येते इत्यस्यानुवादत्वाद्याज्यायामपि प्रैषप-श्चाद्भावमाश्रित्यानुशब्द उपपादनीयः । वृधन्वती अमावास्यायामित्यत्रापि आज्यभागयोस्तु 'तौ होचतुरग्नीषोमा'वित्युपक्र-म्याम्नातेन 'यस्यैकस्यैचिद्देवतायै हविर्निर्वपन्नाज्यस्यैव नौपुरस्तादयजन्नि'त्यनेनाग्नीषोमयोर्देवतयोर्लाभः । यद्वा 'जुषाणो अग्नि-राज्यस्य वेतु, जुषाणः सोम आज्यस्य हविषो वेति'त्यनयोराज्यभागाभ्यामन्यत्र विधानाभावेन तयोः संनिधिप्राप्ताज्यभागा-ङ्गत्वानपायात्तत एवाज्यभागयोर्देवताप्राप्तिरनुवाक्याद्वयं च तयोरग्निसोमदेवताकं दाशतयीभ्य आगमयितव्यमिति भावः । **अन्यथेति** । अनुवादे हि पौर्णमास्यमावास्याशब्दयोः संज्ञात्वसिद्धिः समुदायद्वयसिद्धिर्वा भवतीति तद्द्वारा कालसंयुक्ता-नामेव फलसंबन्धसिद्धिः प्रयोजनं वाच्यम् । नच तत्संभवति । पौर्णमास्यमावास्याशब्दयोः संज्ञात्वेऽपि फलवाक्यगतदर्श-पूर्णमासशब्दयोः संज्ञात्वासिद्ध्या कालसंयुक्तानामेव फलसंबन्धस्यासिद्धेस्तथा फलवाक्ये दर्शपूर्णमासशब्दयोर्न समुदायपर-त्वम् यत्निसामानाधिकरण्यात् समुदायस्यच यागत्वाभावात् किंतु समुदायिपरत्वमिति समुदायद्वयसिद्ध्यापि कालसंयुक्तानां फलसंबन्धासिद्धेरतोऽनुवादकत्वे आनर्थक्यं स्यादित्यर्थः । उपपदार्थविधायकत्वेनापि सार्थक्यं विधिपुनःश्रवणस्य न संभ-वतीति समस्तशब्दं प्रयुञ्जानस्य भावः । **विहितत्वादिति** । नच सहप्रयोगार्थमाग्नेयादिष्वेव कालविधिरिति युक्तम् । य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति कालविधौ सत्यपि सर्वासामिष्टीनां सर्वेषां सोम-यागानां सर्वेषां च पशुबन्धानां यथा न सहप्रयोग एवमिहापि सत्यपि कालविधौ सहप्रयोगासिद्धिरिति भावः । **तयोरिति** । नन्वेवं पौर्णमास्यमावास्याशब्दयोः संज्ञात्वेसति ताभ्यां शब्दाभ्यां विद्वद्वाक्यविहितकर्मानुवादेन कालविधिः कालविधौ च तयोस्तत्प्रख्यन्यायेन नामत्वमिति परस्पराश्रयः । नच य इष्ट्यादिवाक्येन प्राप्तकालसंबन्धमादाय पौर्णमास्यमावास्याशब्द-योर्नामत्वसंभवान्नान्योन्याश्रय इति वाच्यम् । य इष्ट्यादिवाक्येन विद्वद्वाक्यविहितकर्मद्वयेऽपि कालद्वयसमावेशासंभवेनाव्य-वस्थापत्तेः । य इष्ट्यादिवाक्येन विद्वद्वाक्यविहितकर्मणोः कालप्राप्त्यभ्युपगमे पौर्णमास्यामित्यादिवाक्यद्वयानर्थक्यस्यापरिहार्य-त्वापत्तेश्च । तस्मात्पौर्णमास्यादिवाक्येनैव कालप्राप्तिरुपेया ततश्चान्योन्याश्रयो दुष्परिहर इतिचेन्न । प्रवृत्तिनिमित्तानिश्चयेऽपि सामानाधिकरण्यमात्रेणाथैव ज्योतिरित्यादिवत्संज्ञात्वनिश्चयसंभवेनान्योन्याश्रयानवकाशादिति भावः । विद्वद्वाक्यद्वयस्य कर्मा-

तमवच्छेत्तुमप्रसिद्धार्थत्वात् । कालनिमित्तं ह्येतद्द्विवचनान्तं तद्येषामुत्पत्तौ द्वित्वमाज्यभागादीनां न तेषु प्रातिपदिकं समर्थं कालयोगाभावात् । येषां त्वाग्नेयादीनां कालयोगस्तेषां बहुत्वाद्द्विवचनानुपपत्तेरसमर्थं पदम् । नच समुदायद्वयापेक्षया द्वित्वसंभवः । समुदायो हि पूर्वप्रसिद्ध एव वा गृह्येत अत्रैव वा राजसूयवद्वा संपाद्येत । न तावत्पूर्वं सिद्धमस्ति । समुदायद्वयमेकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायापत्तिः । एकाभिधानेन चैकावगतिः । नचाग्नेयादिकर्मणां त्रिकस्य त्रिकस्यैकाभिधानमस्ति प्राक्सिद्धम् । य एवंविद्वानित्यनयोस्तदनुवादत्वानङ्गीकरणात्, उत्पत्तिवाक्येषु चैकैककर्मविधानेन समुदायाभावात् । तत्रतु फलवाक्यगतेन यजिना तन्त्रेण सर्वेषामुपादानात्समुदायापत्तिः स्यात् । तथाचैकसमुदायनिष्पत्तौ राजसूयवद्द्विवचनानुपपत्तिः । नच दर्शशब्देन पूर्णमासशब्देन च त्रिकस्य त्रिकस्य पृथक्पृथक्तन्त्रोपादानात्समुदायद्वयसिद्धिरिति वाच्यम् । तयोराख्यातपरतन्त्रत्वात् । तद्यत्राख्यातं वर्तते तत्राभ्यामपि वर्तितव्यम् । नचाख्यातं तन्त्रेण त्रीन्यागान्प्रथममुपादाय पुनरन्यानुपादातुमर्हति सकृदुच्चरितत्वात् । नच समुदायद्वयं तन्त्रेण शक्यमुपादातुं, समुदायद्वयस्य प्रागसिद्धत्वात् । तदिदमाख्यातं बहून्यागान्संनिहितान्फलमेकंप्रति तन्त्रेणोपादत्ते, तेषां च तदुपादानादेवैकः समुदायोऽत्रैव निष्पद्यते । ततश्च नामधेयमपि समुदाय्यभिप्रायं बहुवचनं समुदायाभिप्रायं चैकवचनं लभ्येत न कथंचिद्द्विवचनम् । द्विवचनान्तं चेदम् । अतोऽप्रसिद्धार्थत्वान्नानेनाख्यातं विशेषे स्थापयितुं शक्यमित्यविशेषात्सर्वेषां फलसंबन्धात्प्राधान्यं, नामधेयमपि

---

न्तरविधायकत्वमुपपाद्य तत्फलं सर्वेषां प्राधान्यमुपपादयति—**यदेति** । **अप्रसिद्धेति** । प्रसिद्धार्थत्वे हि चतुर्थोपान्त्याधिकरणन्यायेन नाम्न आख्यातावच्छेदकत्वे सति सर्वेषां प्राधान्यं न स्यान्नचेदं प्रसिद्धार्थमित्यर्थः । अनेन चतुर्थे दर्शपूर्णमासपदस्य प्रसिद्धार्थत्वमङ्गीकृत्य प्रसिद्धार्थत्वेऽपि न नाम्नाख्यातावच्छेदः संभवति आख्यातस्य प्राधान्येन नाम्ना तस्य संकोचायोगादतः प्रयाजाग्नेयादीनां सर्वेषामेव प्राधान्यमित्याशङ्कायां प्रसिद्धार्थेन नाम्ना कांस्यभोजिन्यायेनाख्यातावच्छेदः संभवतीत्येवं व्युत्पाद्यम् । इहतु विद्वद्वाक्यद्वयस्य कर्मान्तरविधायकत्वात्प्रसिद्धार्थत्वमेव नास्तीति सर्वेषां समप्राधान्यशङ्का निराक्रियत इत्यपुनरुक्तिः सूचिता । **ननु** दर्शपूर्णमासशब्दस्य कालयोगिषु प्रसिद्धत्वात्कथमप्रसिद्धार्थकत्वमत आह—**कालनिमित्तमिति** । ननु कालयोगिषु समुदायद्वयाभिप्रायेण द्विवचनमुपपद्यत इत्यत आह—**नचेति** । अत्रैव समुदायसंपत्तिसंभवेऽपि न प्रकृतोपयोग इत्याह—**तत्रत्विति** । ननु फलवाक्ये यज्यभिधानप्रयुक्तसमुदायद्वयासिद्धावपि दर्शपूर्णमासपदद्वयाभिधाननिबन्धनसमुदायद्वयसिद्धिरस्त्वित्यत आह—**नच दर्शेति** । **तयोरिति** । समुदायद्वयसिद्धेः पूर्वं तयोरप्रसिद्धार्थत्वादिति भावः । **ननु** सिद्धान्त इव समुदायद्वयमाख्यातेन तन्त्रेणोपादीयतामित्यत आह—**नच समुदायद्वयमिति** । **असिद्धत्वादिति** । इदंच वस्तुकथनमात्रं । समुदायद्वयसिद्धावपि तदभिप्रायं दर्शपूर्णमासपदं न भवति । समुदायस्य यागरूपत्वाभावेन यजिसमानाधिकरणस्य तस्य समुदायिपरत्वावश्यंभावेन समुदायपरत्वासंभवादित्येव पूर्वपक्षे वक्तव्यम् । अन्यथा विद्वद्वाक्यद्वयस्यानुवादत्वेऽपि समुदायद्वयसिद्ध्यार्थवत्त्वसंभवेन प्रागुक्तस्य समस्तानुवादानर्थक्यस्य प्रत्युद्धारप्रसङ्गादिति ध्येयम् । तस्माद्यजिना समुदायद्वयस्य तन्त्रेणाभिधानासंभवादत्रैव समुदायकल्पनायामेक एव समुदायः स्यादित्याह—**तदिदमिति** । **इत्यविशेषादिति** । नच विद्वद्वाक्यविहितकर्मणोर्द्वित्वात्तयोरेव दर्शपूर्णमासपदं वर्ततामिति वाच्यम् । तयोर्हि वर्तमानं कालयोगादेव वर्तेत नतु प्रकारान्तरेण, कालयोगश्चाग्नेयादीनामप्यविशिष्ट इति कथं तयोरेव दर्शपूर्णमासपदस्य वृत्तिः । विद्वद्वाक्ये प्रत्येकमेकैकस्यैव कर्मणो विधानेन तयोरपि कर्मणोरुत्पत्तौ द्वित्वानवगमाविशेषात् । यद्येवमाग्नेयवाक्यविहिताग्नेयकर्मद्वयपरत्वमस्तु तयोरेकस्मिन्वाक्ये विधीयमानतयोत्पत्तौ द्वित्वावगमसंभवादितिचेत् सत्यम् । तथापि फलवाक्यगतदर्शपूर्णमासशब्दयोस्तत्परत्वं तन्नामत्वे मानाभावात्कालयोगनिमित्तलक्षणया वाच्यम् । लक्षणा च तात्पर्यग्रहणाधीना । नच फलवाक्यगतदर्शपूर्णमासपदयोराग्नेयवाक्यविहिताग्नेयकर्मद्वये तात्पर्यग्राहकं तत्सामानाधिकरण्यादिकं किंचिदिहास्तीति भावः । एतेनाग्नेयादिवाक्यार्थविद्वद्वाक्यविहितकर्मणो रूपविधिरितिपक्षे विद्वद्वाक्यद्वयविहितकर्मणोरेव कालयोगो नत्वन्येषामिति कालयोगिकर्मणोर्द्वित्वात्तयोरेव दर्शपूर्णमासशब्देन निर्देशः सुकर इति तयोरेव प्राधान्यं किं न स्यादिति भवदेवशङ्का निरस्ता । विद्वद्वाक्यविहितकर्मणोः पूर्णमास्यमावास्यानामकत्वेन फलवाक्ये पूर्णमास्यमावास्याशब्दयोरभावेन तयोरप्रत्यभिज्ञानात्, प्रत्युत दर्शपूर्णमासशब्दान्तरश्रवणे सत्यर्थान्तरबुद्धेरेव स्वरसतो जायमानत्वादुक्तरीत्या लक्षणायां प्रमाणाभावात्, आग्नेयादिवाक्यार्थगुणविधिरिति पक्षेऽप्युपांशुयाजवाक्ये विद्वद्वाक्यप्रत्यभिज्ञापकपौर्णमास्यादिशब्दाभावेन तत्र गुणविध्यसंभवात् तस्य कर्मान्तरविधित्वमावश्यकमिति कालयोगिकर्मणां त्रित्वेन

तत्परतन्त्रत्वात्सर्वेषामेवाव्युत्पन्नं द्विवचनप्रतिरूपकमिति प्राप्तेऽभिधीयते—'कर्मान्तरविधायित्वे स्यात्सर्वेषां प्रधानता ॥ समुदायानुवादौ तु रूपाभावादिमौ मतौ ॥ द्रव्यं कथंचिल्लभ्येत देवता तु न लभ्यते ॥ लभ्यते मन्त्रवर्णाच्चेदाज्यभागाङ्गता यतः ॥ लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता ॥ वचनं तु व्यवस्थार्थमन्यार्थत्वादबाधतः ॥' वार्त्रघ्नीवृधन्वतीनां हि लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेनाव्यवस्थया प्राप्तानां तादर्थ्याबाधेन व्यवस्थामात्रं वार्त्रघ्नी पौर्णमास्यां वृधन्वती अमावास्यायामित्येताभ्यां विधीयते लाघवादिति नैतेषां मन्त्राणां य एवंविद्वानिति विहितकर्मान्तरसंबन्धो येन मान्त्रवर्णिकी देवता स्यात्। नच कल्पयितुं देवता शक्यते, विधिगम्यत्वाद्देवतात्वस्य । नचासत्यां देवतायां यागानुष्ठानं संभवतीति गत्यभावात्समुदायानुवादत्वम् । तत्र पौर्णमासीसंयुक्तेन वाक्येनोपपदवशात्पौर्णमासीकालयुक्तानां त्रयाणां तन्त्रेणानुवादः, तेनैवैकानुवादेन त्रयाणामपि तेषामेकसमु-

---

द्विवचनानुपपत्तितावदस्थ्याश्च । एतेनैव दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वाद्विवचनस्य व्यत्ययेनाप्युपपत्तेरव्युत्पन्नद्विवचनप्रतिरूपकत्वकल्पनापेक्षया व्यत्ययकल्पनस्यैव न्याय्यत्वात् कालयोगिनामेव प्राधान्यं किं न स्यादित्यपि निरस्तम् । तात्पर्यग्राहकप्रमाणाभावेन प्रातिपदिकस्य कालयोगिपरत्वाभावादिति । **ननु** सर्वेषां प्राधान्येऽपि राजसूयवद्यजिना तन्त्राभिधानकृतं समुदायमादायैकवचनमेव स्यात्ततश्च तवापि द्विवचनानुपपत्तिस्तुल्येत्यत आह—**नामधेयमपीति** । कथंचिदित्यनेन वैशब्दवर्तमाननिर्देशनिराकरणक्लेशं सूचयति । **ननु** वचनाद्वार्त्रघ्नीवृधन्वतीमन्त्राणां विद्वद्वाक्यविहितकर्माङ्गत्वमित्युक्तमत आह—**वचनं त्विति** । आज्यभागयोर्मन्त्रव्यवस्थामात्रविधाने हि विधेर्न मन्त्रप्राप्त्यंशे व्यापारः किंतु नियमांश इत्यप्राप्तांशपरिपूरण एव विधेर्व्यापाराल्लाघवं लिङ्गक्रमाबाधश्चेत्याभ्यां हेतुभ्यां व्यवस्थार्थमेव वचनमित्यर्थः । **ननु** किमत्र पौर्णमास्यमावास्याशब्दयोः कालपरत्वमङ्गीकृत्य पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्न्यौ अमावास्यायां काले यावाज्यभागौ तयोर्वृधन्वत्यावित्येवं व्यवस्थाविधिरिष्यते उत तयोः कर्मपरत्वमाश्रित्य पौर्णमासीकालकर्तव्यकर्मणि यावाज्यभागौ तयोर्वार्त्रघ्न्यौ अमावास्याकालकर्तव्यकर्मणि यावाज्यभागौ तयोर्वृधन्वत्यावित्येवं व्यवस्थाविधिः । नाद्यः । आज्यभागयोराग्नेयादिवदुत्पत्तौ कालसंयोगाभावेन तयोः पौर्णमास्यमावास्याकालकर्तव्यत्वस्यैवाभावेन कालसंबन्ध्याज्यभागयोर्व्यवस्थाविध्यनुपपत्तेः । न द्वितीयः । समप्राधान्यमिति पूर्वपक्षदशायामाज्यभागयोः पौर्णमास्यमावास्याकालकर्तव्यकर्माङ्गत्वाभावेन तादृशाज्यभागयोर्व्यवस्थाविध्यनुपपत्तेः । ततश्च वचनस्य व्यवस्थार्थत्वेसति मान्त्रवर्णिकदेवतालाभाभावेनारूपत्वात्कालयुक्तानुवादेसति तेषामेव प्राधान्यं, कालयुक्तानां प्राधान्ये च सत्याज्यभागयोरकालयुक्तयोरङ्गत्वात्पौर्णमास्यमावास्याकालकर्तव्यकर्माङ्गभूताज्यभागानुवादेन व्यवस्थाविधिरिति परस्पराश्रय इतिचेन्नैवम् । आज्यभागयोः प्राधान्येऽपि य इष्ट्यादिवाक्येन पौर्णमास्यमावास्याकालप्राप्तिसंभवेन कालमुखेनैव व्यवस्थाविध्युपपत्तेः । फलवाक्येन युगपदेकफले चोदितानामसति बाधके एकप्रयोगत्वप्राप्तौ सत्यां कांस्यभोजिन्यायेनाग्नेयादिषु श्रुतपौर्णमास्यादिकालमेव सर्वप्रधानसाधारण्येन प्रयोगवचनोऽनुमन्यत इति तद्बलादपि पौर्णमास्यमावास्ययोराज्यभागसद्भावेन व्यवस्थाविधौ बाधकाभावाच्च । नच कालमुखेन व्यवस्थाविध्यङ्गीकारेऽग्नीषोमीयविकाराणाममावास्यायामनुष्ठाने वार्त्रघ्नमन्त्रप्राप्तिः, सान्नाय्यविकारणां पौर्णमास्यनुष्ठाने वृधन्वतीप्राप्तिश्च न स्यादि वाच्यम् । नहि सिद्धान्तिना कालमुखेन व्यवस्था परमार्थतोऽङ्गीक्रियते येनोक्तदोषः स्यात्किंतु पौर्णमासीशब्दस्य कालद्वाराग्नेयादित्रिकपरत्वमङ्गीकृत्य तदङ्गयोराज्यभागयोर्वार्त्रघ्न्यावित्येवं व्यवस्थैव परमार्थतोऽङ्गीक्रियते, एवममावास्यावाक्येपि । इदानीं तु एतावन्मात्रमुच्यते । आज्यभागयोरङ्गत्वाभावात्पौर्णमास्यां कर्तव्याग्नेयाद्यङ्गभूतयोराज्यभागयोर्वार्त्रघ्न्यावित्यादिरूपव्यवस्थाविधिर्न संभवति । तस्माद्विद्वद्वाक्यविहितकर्मणोरेव वार्त्रघ्न्यादिमन्त्रविधिः स्वीकर्तव्य इति वदन्तं पूर्वपक्षिणं प्रत्यङ्गत्वाभावेऽपि कालमुखेन व्यवस्थाविधिसंभवान्न त्वदभिमतो विद्वद्वाक्यविहितकर्मणोर्मन्त्रविधिः संभवतीति । तस्माद्व्यवस्थाविधौ न काप्यनुपपत्तिः । वस्तुतस्तु कालमुखेन व्यवस्थायामपि यथा पौर्णमासविकारेषु वार्त्रघ्नौ मन्त्रौ दर्शविकारेषु च वृधन्वन्तौ तथा द्वादशे 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्व'मित्यधिकरणे वक्ष्यामः । **ननु** यागस्य देवतांविनानुपपत्त्या देवता कल्प्यतामित्यत आह—**नचेति** । यागस्य देवतयाविनानुपपत्त्यास्ति काचिदिह देवतेत्येतावन्मात्रसिद्धावपि इयमस्य देवतेति विधिंविना विशेषानवगमादित्यर्थः । समस्तानुवादानर्थक्यमुद्धरन् कालयुक्तानामेव प्राधान्यसिद्धिफलमुपपादयति—**तत्रेति** । य एवंविद्वान् पौर्णमासीं यजत इतिवाक्ये यजिना पौर्णमासीमित्युपपदवशात्पौर्णमासीकालयुक्ता यागास्तन्त्रेणानूद्यन्ते । तदनुवादरूपमेकमभिधानमवलम्ब्य तेषामेकः समुदायो निष्पद्यते स एव समुदायः पौर्णमासीमित्युपपदेनाभिधीयते । धातुना तन्त्राभिधानलब्धसमुदायस्योपपदेनाभिधानादुपपदस्यैकवचनान्तत्वम-

---

१ वादेत.

द्वायापत्तिः । तदेकत्वाच्च पौर्णमासीमित्येकवचनम् । एवममावास्यासंयुक्तेऽपि । ततश्च समुदायद्वय-सिद्धेः कालयोगाच्चाग्नेयादीनां प्रसिद्धार्थं दर्शपूर्णमासाभ्यामिति द्विवचनान्तं कालयोगि चोपपदं शक्नोत्याख्यातमाग्नेयादिषु व्यवस्थापयितुमिति तेषामेव प्राधान्यम् । इयमेव च द्विवचनापेक्षितसमु-दायद्वयसिद्धिः समुदायानुवादप्रयोजनमिति नानर्थक्यम् । यत्तूक्तं 'पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेते'त्येतदपि वाक्यद्वयमनर्थकम् स्यादिति नानर्थकं । आग्नेयादीनामेव त्रिकस्य त्रिकस्य सहप्रयोगार्थत्वात्, उत्पत्तिवाक्येषु हि तेषां प्रत्येकमेव कालसंयोगान्नैकप्रयोगता सिद्ध्येत् । अनेन तु वचनेन यथैकप्रयोगतासिद्धिस्तथैकादशे वक्ष्यामः । तस्मादरूपत्वात्प्रयोजनवत्त्वाच्च समुदायानुवादत्वम् ॥ इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते—'भवेदेवमरूपत्वे समुदाया-नुवादता ॥ यदाग्नेयादिवाक्यैस्तु तयो रूपं विधीयते ॥' य एवंविद्वानित्येताभ्यां पौर्णमास्यमावा-स्यासंज्ञकौ यागौ विधीयेते । यदाग्नेयोऽष्टाकपाल इत्यादिभिस्तु पौर्णमास्यमावास्यासंज्ञाभ्यां तावेव यागावनूद्याष्टाकपालादिद्रव्यमग्न्यादयश्च देवता विधीयन्ते इति नारूपत्वम् । एवं सर्ववाक्यानि विधा-यकानि भवन्ति न कश्चित्समुदायानुवादः यागश्च प्रत्यक्षश्रुतो न द्रव्यदेवतासंयोगादनुमातव्यो भव-तीति श्रेयानयं पक्षः । 'अत्रोच्यते गुणोऽनेकः प्राप्तकर्मानुवादतः ॥ नैकेन विधिना शक्यो विधा-

---

प्युपपन्नम् । एवंचानुवादस्य समुदायसिद्धिः प्रयोजनमित्यर्थः । तदेकत्वात्पौर्णमासीमित्येकवचनमित्यनेनैव यजिकृततन्त्रा-भिधानलब्धसमुदायस्य पौर्णमासीपदेनानुवादात्पौर्णमासीनामसिद्धिरप्यनुवादस्य प्रयोजनं वैश्वदेवेन यजेतेत्यत्रेवेति सूचितम् । ननु फलवाक्यस्थस्य द्विवचनान्तनाम्नः षट्स्विव विद्वद्वाक्यस्थयोरेकवचनान्तनाम्नोरपि त्रिषु त्रिष्वनन्वितार्थत्वे-नाप्रसिद्धार्थत्वाविशेषात् कथमुपपदानुसारेण विद्वद्वाक्यस्थयजत्योः कालयुक्तमात्रानुवादकत्वम् । ततश्च विद्वद्वाक्यस्थनाम्नो-रेव यजिपरतन्त्रत्वावश्यंभावेन यजेश्च संनिहितसर्वयागानुवादस्वरसतया तदनुसारेण तयोरपि सर्वप्रकृतयागनामत्वमेव स्यादिति चेन्मैवम् । 'य एवंविद्वान्पौर्णमासीं यजते यावदुक्थेनोपाप्नोति तावदुपाप्नोति य एवंविद्वानमावास्यां यजते यावद-तिरात्रेणोपाप्नोति तावदुपाप्नोती'ति विद्वद्वाक्यस्थपौर्णमास्यमावास्याशब्दितयोः व्यवस्थितफलार्थवादः श्रूयते । सच पौर्णमास्य-मवास्याशब्दद्वयस्य व्यवस्थितार्थत्व एव घटते नान्यथेति तदुपपत्त्यर्थं तयोर्न सर्वप्रकृतयागनामत्वं किंतु कतिपयनामत्व-मेव । कतिपयनामत्वे च तत्तत्कालयुक्तकर्मनामत्वमेव न्याय्यमिति तदनुसारेण तत्कालयोगिष्वेव विद्वद्वाक्यस्थयजिवृत्तेरवश्यं वाच्यत्वात् वैश्वदेववाक्येऽप्युपपदवशाद्यथा वैश्वदेव्यामिक्षायागमात्रस्य नानुवादप्रसक्तिस्तथा वैश्वदेवाधिकरणएवोक्तम् । एवंच समुदायद्वयसिद्धौ तत्रोपपदस्य प्रसिद्धार्थत्वात्तदनुसारेण कांस्यभोजिन्यायेन यजेः कालयोगिष्वेव वृत्तेस्तेषामेव प्राधान्यम् । नच समुदायद्वयसिद्धावपि फलवाक्यगतदर्शपूर्णमासशब्दस्य न समुदायपरत्वम् । तस्य यजिसामानाधिकरण्यात् समुदायस्य च यागत्वाभावादिति वाच्यम् । समुदायस्य यागत्वाभावेऽपि समुदायद्वारा लक्षणया समुदायिषु वृत्तिसंभवेन यजिसामाना-धिकरण्योपपत्तेः, पूर्वपक्षे च कालवाचकदर्शपूर्णमासशब्दस्य तात्पर्यग्राहकाभावान्न कालद्वारा कालयोगिषु वृत्तिः । सिद्धान्ते तु विद्वद्वाक्येन समुदायकरणस्यानर्थक्यापत्त्या तद्बलादेव फलवाक्यस्थद्विवचनान्तदर्शपूर्णमासशब्दस्य समुदायद्वारा समुदायिषु तात्पर्यनिश्चय इति वैषम्यम् । एवं विद्वद्वाक्याभ्यां पौर्णमास्यमावास्यारूपसंज्ञाकरणबलात्तद्बलेन कालयुक्तानामेव प्रत्यभिज्ञया संज्ञाबलेनापि कालयुक्तानामेव फलसंबन्धः । यथाच विद्वद्वाक्यगतपौर्णमास्यमावास्याशब्दयोः फलवाक्यगत-दर्शपूर्णमासशब्दयोः पर्यायत्वं तथा चतुर्थे ग्रन्थकारेणैव वक्ष्यते । ततश्च विद्वद्वाक्येन पौर्णमास्यमावास्याशब्दयोः संज्ञात्व-सिद्धावपि फलवाक्यगतदर्शपूर्णमासशब्दयोः संज्ञात्वाभावात् कथं संज्ञाबलात्कालयोगिनामेव फलसंबन्धसिद्धिरिति शङ्काया अनवकाश इति भावः । **तथैकादश इति** । यत्र इष्ट्यादिवाक्यवैषम्यं तत्रैव वक्ष्याम इति भावः । इदानीमाग्नेयादि-वाक्यै रूपलाभ इति पूर्वपक्षप्रकारमुत्थापयति—**इदानीमिति** । ननु प्रथमपूर्वपक्षप्रकारेऽपि सर्ववाक्यानि विधायकानि भवन्तीत्याशङ्क्य ततो विशेषमाह—**याग इति** । नच प्राप्तकर्मानुवादेनानेकगुणविधाने विध्यावृत्त्या वाक्यभेदप्रसङ्गः गुणानां सिद्धरूपतया स्वतो विधेयत्वाभावात् गुणविधिस्थले गुणविशिष्टभावनाया एव विधिसंबन्धो न केवलं गुणस्य । ततश्च प्राप्तकर्मानुवादेन साक्षादनेकगुणविध्यभावादनेकगुणविशिष्टभावनाविधौ च विशिष्टकर्मविधाविव विधेः सकृदेव व्यापार इति विध्यावृत्त्यभावादिति भावः । **श्रेयानिति** । यद्यपि प्रथमपूर्वपक्षसिद्धान्तद्वितीयपूर्वपक्षरूपपक्षत्रयमध्ये अस्य पक्षस्यातिशयप्रतिपादनादीयसुन्प्रत्ययोऽनुपपन्नः तथापि प्रथमपूर्वपक्षद्वितीयपूर्वपक्षयोर्विद्वद्वाक्यस्य विधायकत्वसिद्ध्या प्रशस्तयोर्मध्ये द्वितीयपूर्वपक्षोऽतिशयित इति । तथा सिद्धान्तद्वितीयपूर्वपक्षयोरष्टयागकल्पनाभावात्प्रशस्तयोर्द्वितीयपूर्वपक्षो-

---

१ त्याख्यातं विशेषे स्थापयितुं.

तुमसकृच्छ्रुतेः ॥' भावनास्थोऽपि विधिस्तादर्थ्यभेदेन तत्रतत्र संक्रामति यत्परश्च विधिः स एव विधातव्यो नान्यस्तद्देशोऽपि। तद्यदा पूर्वकर्मपरो विधिर्भवति तदा तस्यैकस्यानेकगुणविशिष्टस्य विधानाद्विशेषणानां चार्थापत्त्या विधिसिद्धेर्नासकृच्छ्रवणदोषः प्रसज्यते। यदा त्वन्यतः प्राप्तं कर्म भवति तदा तस्याविधेयत्वाद्विशेषणपरो विधिर्भवति तत्रानेकेषु विशेषणेष्वेकेन विहितेनेतरस्यानाक्षेपात्तत्रापि श्रुत्यैव विधानं कर्तव्यमित्यावृत्तिप्रसङ्गः। विशेषणान्यपि यानि प्रागेव क्रियाकारकसंबन्धान्मिथःसंबन्धितया शब्देन प्रतिपादितानि विनैव विधिना प्रसिद्धसंबन्धानि भवन्ति। यथा पशुनेत्येकपदोपात्तानि जातिलिङ्गसंख्याकारकाणि। तत्र हि प्रत्ययाभिधेयमेकं प्रधानभूतं करणकारकमुपसर्जनीभूतजात्यादिविशिष्टं पदेन प्रतिपादितम्। प्रसिद्धा च कारकशक्तिर्जात्यादीनां प्रमाणान्तरेण विनैव विधिनेति शक्यं प्राप्तकर्मानुवादेनापि तदनेकं विधातुम्। भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन षष्ठ्या वा क्रियान्वयात्प्रागेव मिथःसंबन्धं शब्दतो वस्तुतश्च विधिमनादृत्यैव लभन्ते। यथाभ्युदयेऽष्टौ 'ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि'ति। तत्रहि शिपिविष्टशब्दो यौगिकः शक्नोति संनिहितेन विष्णुशब्देन श्रुत्यैव सामानाधिकरण्यं प्रतिपत्तुम्, प्रसिद्धश्च विष्णुः शिपिविष्टो

---

ऽतिशयित इत्येवं द्वौद्वावेकीकृत्य तन्मध्ये प्रकर्षविवक्षया ईयसुन्प्रत्यय उपपाद्यः। असकृच्छ्रुतेः विधिप्रत्ययस्यासकृच्छ्रुतिप्रसङ्गाद्विध्यावृत्तिप्रसङ्गादिति यावत्। ततश्च वाक्यभेदः स्यादिति भावः। **ननु** विशिष्टभावनाविधानान्न वाक्यभेद इत्युक्तमत आह—**भावनेति**। स्वरसतः शब्दभावनात्मकविधेरर्थभावनागोचरतया तावद्गुणविशिष्टभावनागोचरतया प्रथमं प्रतीयमानोऽपि विधिः भावनायाः प्राप्ततया तत्परत्वाभावाद्विशेषणीभूतगुणपरः सन् तत्र पर्यवस्यति। यत्रच विधेः पर्यवसानं स एव विधेयस्ततश्चानेकगुणविधिस्वीकारे सर्वत्र विधेस्तात्पर्यात्सर्वत्र पर्यवसानं वाच्यम्। नच सकृच्छ्रुतस्य विधेरनेकत्र पर्यवसानं संभवतीति विध्यावृत्तिरवर्जनीयेत्यर्थः। **ननु** विधितात्पर्याभावेऽपि विध्यन्विततया प्रतीयमानभावनान्विततमात्रेण प्राप्तस्यापि विधेयत्वं किं न स्यादित्यत आह—**नान्य इति**। तद्देशस्तस्य विधेर्देश एव देशो यस्य स तथा विधिसमभिव्याहृतो विधिना सह यथाकथंचिदन्विततया प्रतीयमान इति यावत्, तथासति फलादावतिप्रसङ्ग इति भावः। नन्वेवमप्राप्तस्य कर्मणो गुणविशिष्टस्य विधिर्न स्यात्तत्रापि विशेषणे विधिपर्यवसानार्थमावृत्तिप्रसङ्गादित्यत आह—**तद्यदेति। अर्थापत्त्येति**। विशेषणेन विना विशिष्टस्यासिद्ध्यार्थापत्त्यैव विशेषणविधिसिद्धौ न श्रुतस्य विधेर्विशेषणे पृथक्पर्यवसानमपेक्षितं किंतु विशिष्ट एवेति न तत्रावृत्तिप्रसङ्ग इत्यर्थः। प्राप्तकर्मानुवादेन गुणविधिस्थले तु नैवमाक्षेपाद्विशेषणलाभः। भावनारूपस्य कर्मरूपस्य वा विशेष्यस्य प्राप्ततया विधेर्विशिष्टपरत्वाभावात्केवलगुणपरत्वमेव वाच्यम्। गुणपरत्वे चैकस्य गुणस्येतरविशिष्टस्य विधेर्न संभवति 'गुणानां च परार्थत्वादि'ति न्यायेन तेषां परस्परवैशिष्ट्याभावात्ततश्चैकेन विहितेनेतरस्यानाक्षेपात् प्रतिगुणं पृथगेव विधेस्तात्पर्यतः पर्यवसानं वाच्यमिति तत्र विध्यावृत्तिरनिवार्येत्याह—**यदा त्विति**। नन्वेवं पशुनेत्यादावपि प्राप्तकर्मानुवादेन जातिलिङ्गसंख्याकारकाणां गुणानां विधानं न स्यादित्यत आह—**विशेषणान्यपीति**। उक्तविशेषणद्वयसमावेशं प्रथमत एकपदोपादानस्थल उदाहरति—**यथा पशुनेति**। यद्यपि 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इत्येतदुत्पत्तिवाक्यं पशुविशिष्टयागमेव विधत्ते। ततश्च प्राप्तकर्मानुवादेन गुणविधाने नेदमुदाहरण तथापि शाखान्तराभिप्रायेणेदमित्याहुः। **ननु** प्रातिपदिकवचनविभक्तिप्रतिपाद्यानां जातिलिङ्गसंख्याकारकाणां विनिगमनाविरहात्समप्राधान्यमेवेति कथं विशिष्टाभिधानमित्यत आह—**तत्र हीति**। कारकप्राधान्यं च पश्वेकत्वाधिकरणे स्पष्टमिति भावः। **प्रमाणान्तरेणेति**। अन्वयव्यतिरेकाभ्यामेव जात्यादेराश्रयद्वारा कारकत्वस्य लोकसिद्धत्वादिति भावः। अनेनैव त्र्यङ्गैरिति समासपदोपादानस्थलेऽपि प्राप्तकर्मानुवादेन विशिष्टविधिरुपपादितप्राय इति द्रष्टव्यम्। इदानीं भिन्नपदोपादानस्थले आह—**भिन्नेति**। सामानाधिकरण्येन षष्ठ्या वेत्युपलक्षणम् रेवत्यधिकरणपूर्वपक्षे कृत्वाशब्देनापि विशिष्टोपस्थितेर्वक्ष्यमाणत्वादिति द्रष्टव्यम्। सामानाधिकरण्येन विशिष्टोपस्थितावुदाहरणमाह—**यथेति**। षष्ठ्युदाहरणं ऋत्विग्भ्यो दक्षिणां ददातीति विहितदक्षिणानुवादेन तस्य द्वादशशतं दक्षिणेति तस्येति षष्ठ्या संख्येयविशिष्टद्वादशशतसंख्याविधिरिति द्रष्टव्यम्। चतुर्दश्याममावास्याभ्रमाद्दर्शोपक्रमे कृते तदनन्तरं रात्रौ चन्द्रोदयेसति अकालोपक्रमदोषनिर्हरणार्थं यस्य हविर्निरुप्तमित्यादिना विहितेऽभ्युदयेष्टिः, तत्र ये क्षोदिष्ठा इति वाक्येन शिपिविष्टत्वविशिष्टो विष्णुः शृतक्षोदिष्ठानुवादेन विधीयते। तत्र च शिपिभी रश्मिभिर्विष्टः आविष्टः शिपिविष्ट इत्येवं शिपिविष्टशब्दस्य यौगिकत्वात् समानविभक्तिकेन विष्णुशब्देन सामानाधिकरण्येसति शिपिविष्टत्वविशिष्टो विष्णुः क्रियासंबन्धात्प्रागेव शब्देनोपस्थितः

---

१ असकृच्छ्रुतेः आवृत्तिप्रसङ्गात्. २ विधेयो. ३ नेतरानाक्षेपात्. ४ क्रियान्वयान्मिथः. ५ श्रुते.

मन्त्रार्थवादादिभिरिति । तत्र केवलं तस्य शृतसहितक्षोदिष्ठसंबन्धो विधिना बोधयितव्यः । यो विष्णुः शिपिविष्टः स शृतस्य क्षोदिष्ठानां च देवतेति । तेनैकार्थविधानाद्विधिप्रत्ययस्य नासकृदुच्चारणापत्तिः । अत्र त्वाग्नेयोऽष्टाकपालः पौर्णमास्यामिति यद्यपि तद्धितस्य संनिहितद्रव्यवचनत्वात्सामानाधिकरण्यलक्षणः शाब्दः संबन्धः प्रागेव पौर्णमासीसंबन्धादाग्नेयाष्टाकपालयोर्लभ्यते तथाप्यसौ संबन्धः प्रमाणान्तरेणासिद्धत्वादत्रैव विधातव्यस्तं च विधाय पुनः पौर्णमासीसंबन्धविधिरित्यावृत्तिप्रसङ्गः । नह्येवं संभवति य आग्नेयोऽष्टाकपालः स पौर्णमास्यामित्यसिद्धत्वादाग्नेयस्याष्टाकपालस्य । अतएव वक्तव्यम् अष्टाकपाल आग्नेयः कर्तव्यः सच पौर्णमास्यामिति । ततश्चावृत्तिः प्रत्ययस्य स्यात् । तस्माद्यएवं विद्वानिति विहितकर्मानुवादेनात्र गुणविध्यसंभवादवश्यमेव भावनान्तरं द्रव्यदेवताविशिष्टमाक्षिप्तयजिकं विधातव्यम् । नच भावना भावनान्तरस्य रूपं भवतीति सिद्धमरूपत्वम् । ततः समुदायानुवादौ ॥

उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

**पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥ [चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ प्राये वचनाच्च ॥ १२ ॥**

उपांशुयाजमित्येषोऽनुवादोऽत्राथवा विधिः ॥ विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता ॥ ११ ॥
जामित्वोक्तेरन्तराल उपांशुगुणके विधौ ॥ सत्यर्थवादो विष्ण्वादिस्तद्रूपं ध्रौवमन्त्रतः ॥ १२ ॥

अतःपरं समुदायानुवादापवादकतयाधिकरणत्रयमारभ्यते । दर्शपूर्णमासयोः श्रूयते 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजतीति विष्णुरुपांशु यष्टव्यो जामित्वाय प्रजापतिरुपांशुयष्टव्योऽजामित्वायाग्नीषोमावुपांशुयष्टव्यावजामित्वाये'ति । तथाग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीयाणि याज्यानुवाक्यायुगलानि शाखाभेदे-

---

विधिव्यापारंविनैव मन्त्रार्थवादप्रसिद्धिबलाद्विष्णुः शिपिविष्टः प्रसिद्धश्चेति । यो विष्णुः शिपिविष्टः स शृतस्य क्षोदिष्ठानां च देवतेति शृतानुवादेन शिपिविष्टत्वविशिष्टविष्णुविधानेऽपि विशेषणसंबन्धसिद्ध्यर्थं पृथग्विधिव्यापाराभावेन विध्यावृत्त्यभावान्न वाक्यभेद इत्यर्थः । यदि सामानाधिकरण्यमपि लक्षणया भवेत्तदा लक्षणाभीत्यैव परस्परवैशिष्ट्यानादरेण पृथगेव कर्मान्वयः स्याद्यथारुणयेत्यस्याकृत्यधिकरणन्यायेन गुणवाचकस्य द्रव्यसामानाधिकरण्यं लक्षणया वाच्यमिति द्रव्यवैशिष्ट्यानादरेण केवलगुणस्यैव क्रयान्वयस्तद्वत् । नचात्र लक्षणाप्रसक्तिरित्याशयेन श्रुत्येत्युक्तं, विधिंविना संबन्धसिद्धिमाह—**प्रसिद्धश्चेति । मन्त्रेति ।** मन्त्रः 'किमित्ते विष्णो परिचक्ष्यं भूत्प्रयद्ववक्षे शिपिविष्टोऽस्मी'त्यादिः । अर्थवादः 'यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्ट' इत्यादिः । 'यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवती'ति निरुक्तमादिशब्दार्थः । **एकार्थेति ।** शिपिविष्टत्वविशिष्टविष्णुलक्षणैकार्थेत्यर्थः । प्रकृते तु क्रियान्वयात्प्रागेव सामानाधिकरण्यबलेन शब्दतो विशिष्टप्रतिपादनसंभवेऽपि विनैव विधिना वस्तुतः प्रसिद्धसंबन्धत्वाभावान्न विशिष्टविधिसंभव इतीममर्थं शब्दतः प्रतिपादनसंभवमभ्युपगच्छन्नाह—**अत्रत्विति ।** उक्तमेवार्थं विशदयति—**नहीति । आक्षिप्तेति ।** अगत्याक्षेपोऽपि न दोष इत्याशयः । द्रव्यदेवताविशिष्टयागान्तरयुक्तभावनान्तरविधाने च विद्वद्वाक्यविहितकर्मगन्धाभावात् सिद्धं तस्यारूपत्वमित्याह—**नचेति ।** सूत्रार्थस्तु—पौर्णमास्यां पौर्णमास्यपलक्षितविद्वद्वाक्यद्वये प्रकरणं प्रकृतमेव कर्मजातं स्यात् कर्मान्तरविधौ रूपप्रापकवचनाभावादिति ॥

**पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥** विध्यनुवादचिन्तायाः प्रकृतासङ्गतिमाशङ्क्याह—**अतःपरमिति । जामीति ।** दशमे 'अजामिकरणाच्चे'ति सूत्रभाष्ये जामिता सादृश्यमिति व्याख्यातं, सादृश्यस्य दोषपर्यवसायित्वं च एकरूपायाः क्रियायाः पुनःपुनरनुष्ठाने तन्द्रा स्यादिति तन्द्रापादकत्वेन बोध्यम् । इदमेव च न्यायसुधायां सादृश्यस्य दोषपर्यवसायित्वमुक्तम्, परंतु तत्र सौन्दर्यवाचिजामिशब्दः तस्य सादृश्ये लक्षणेत्युक्तम् । नयविवेके तु दशमे जामितासादृश्यमेकरूपा द्विःक्रियेति । तेन कृताकृताननुसंधिदोष इति सादृश्यस्य दोषपर्यवसायित्वमुक्तम् । अन्वञ्चौ अनुपूर्वौ निरन्तराविति यावत् । वक्ष्यमाणमान्त्रवर्णिकदेवतालाभसंभवासंभवपरिज्ञानसौकर्यायाह—**तथेति । शाखेति ।** तैत्तिरीयके प्रजापतेन त्वत्, सवेद पुत्र इति प्राजापत्यं, ऐतरेयके इदंविष्णुः प्रतद्विष्णुरिति वैष्णवमित्यादिरूपेणेत्यर्थः । यद्यप्यैतरेयके वैष्णवं युगलं आग्नेयैन्द्राग्नमध्ये आम्नायते न त्वाग्नेयाग्नीषोमीयमध्ये तथाप्याग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलमध्य इत्यत्राग्नी-

---

१ शृतसहित. २ भावनान्तरः.

नाम्नातानि। तत्र संशयः किमुपांशुयाजमन्तरा यजतीति समुदायानुवादो विष्ण्वादिसंयुक्तानां[1] यागानामुत विधिरिति। तदर्थं च किमस्य रूपमस्ति नवेति। तदर्थमपि विष्णुरुपांशु यष्टव्य इत्यादिभिर्विष्ण्वादिदेवत्या यागा विधीयन्ते, किंवाऽयमर्थवाद इति। यदि विधयस्ततस्तेषामेव यागानां विष्ण्वादिदेवत्या याज्यानुवाक्या लिङ्गक्रमाभ्यामङ्गं भवन्ति नोपांशुयाजमन्तरा यजतीत्यस्य सामर्थ्यापरिज्ञानात्[2]। अतश्च मान्त्रवर्णिकदेवतालाभाभावादरूपः[3] सन्नगत्या विष्ण्वादियागानां समुदायमनुवदति। यदा तु विष्ण्वादिवाक्यत्रयमर्थवादस्तदा[4] च याज्यापुरोनुवाक्याः यागान्तराभावादुपांशुयाजमन्तरा यजतीत्यस्यैव क्रमादङ्गं भवन्ति दशमाधिकरणन्यायेनेति मान्त्रवर्णिकी देवता लभ्यते ध्रौवं च द्रव्यमिति रूपलाभाद्विधिरेव भवतीति। 'तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात्॥ ऐकान्तिको विधिर्नात्र वर्तमानापदेशतः॥' वैश्वानरादिवाक्येषु हि यदष्टाकपालो भवतीत्यादिषु विधिपुरुषव्यापारयोरश्रवणाद्यच्छन्दोपबन्धाद्वर्तमानापदेशश्रवणादर्थवादरूपत्वात् द्वादशकपालं निर्वपेदिति विधियुक्तभावनाश्रवणादुपक्रमोपसंहारमध्यवर्तिनामष्टाकपालादीनां[5] तदेकवाक्यत्वं न बाधितव्यमिति गुणफलविधानं निरस्तम्। इहतु सत्यपि जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्तित्वे विष्णुर्यष्टव्य इति यच्छब्दाद्यनुपहृतविस्पष्टविधिश्रवणादजामित्वायेति[6] च तैथैव[7] प्रत्येकमुपक्रमोपन्यस्तजामित्वदोषपरिहारप्रशंसावगमाद्वाक्यभेदमङ्गीकृत्य विधित्वमध्यवसीयते। जामिवैतदिति चोपक्रमश्रवणमपि[8] तेषामनुषङ्गेण वाक्यशेषो भवति। सतिच तेषां विधित्वे रूपाभावाद्वर्तमानापदेशाच्चोपांशुयाजमन्तरा[9] यजतीत्ययं जामित्वोपन्यासेन प्रस्तुतानां वक्ष्यमाणानां विष्ण्वादियागानां समुदायानुवाद इति प्राप्तेऽभिधीयते—'जामित्वोपक्रमादेकमजामित्वोपसंहृतेः॥ वाक्यं

षोमीयग्रहणमुपलक्षणार्थमिति न दोषः। यद्वा वाचनिकपौर्णमासीकालविधिबलादाग्नेयैन्द्राग्नमध्यपठितस्यापि मन्त्रयुगलस्य क्रमबाधेन पौर्णमास्यामेव निवेशान्न दोषः। ननु मान्त्रवर्णिकदेवतालाभस्य दशमे वक्ष्यमाणत्वात् कथमरूपत्वकोटेरुन्मेष इत्यत आह—**तदर्थं चेति**। दशमोक्तमान्त्रवर्णिकदेवतालाभ इह विष्ण्वादिवाक्यानां विधायकत्वालम्बनेनाक्षिप्यत इति भावः। इममेवार्थं विशदयन् फलफलिभावमुपपादयति—**यदीति**। **लिङ्गक्रमाभ्यामिति**। क्रमस्य साधारण्येऽपि लिङ्गस्याधिकस्य विद्यमानत्वादिति भावः। द्रव्यं तु सिद्धमेवेत्याह—**ध्रौवं चेति**। वैश्वानरवाक्यवैषम्यप्रदर्शनेऽपि श्लोकस्य तात्पर्यं दर्शयन् व्याचष्टे—**वैश्वानरेति**। **विधीति**। विधेः प्रवर्तनाया अश्रवणादष्टाकपालकर्तृकभवनस्य विध्ययोग्यतया विधियोग्यस्य यागादिलक्षणपुरुषव्यापारस्याश्रवणाच्चेत्यर्थः। **विधियुक्तेति**। विधियुक्तपुरुषव्यापारश्रवणादित्यर्थः। यद्यपि पुरुषव्यापारस्य निर्वापस्य श्रवणेऽपि तस्य न विधेयत्वं चोदकतः प्राप्तेस्तथापि द्रव्यदेवतासंबन्धाक्षिप्तयागस्य विध्यर्हस्य सद्भावादित्यत्र तात्पर्यम्। **विस्पष्टेति**। हिरण्यंभार्यमित्यादिवत् कृत्यप्रत्ययस्यापि प्रधानकर्मविधिपरत्वमुपपद्यते। ततश्च विष्णुं यजतीत्यादौ देवतायां द्वितीयावत्कर्मार्थकतव्यस्याप्युपपत्तेः विष्ण्वादिदेवताकयागविधिर्विष्ण्वादिवाक्येष्विति भावः। **प्रशंसेति**। प्रशंसावगमात्तत्रैव विधिशक्तिरुपलभ्यत इति प्रत्येकं विधिर्वाच्यः। इतरथा त्रिष्वप्यजामित्वोक्तिरनर्थका स्यादिति भावः। **वाक्यभेदमिति**। तत्र वाक्यभेदेऽपि स्वरसतो विधायकत्वासंभवादेकवाक्यत्वानुरोधेऽपीह तत्संभवादेकवाक्यत्वे स्वरसतो विधायकत्वासंभवाच्चैकवाक्यत्वं नानुरोध्यमिति भावः। ननु जामिवा इति दोषस्य सकृच्छ्रवणादेकवाक्यत्वमेव न्याय्यमित्यत आह—**जामिवेति**। **समुदायेति**। अत्रोपांशुयाजं यजतीत्यनयोरेवानुवादकत्वोक्त्यान्तरालपदं कालविधायकं पशुसोमाधिकरणपूर्वपक्षे सोमपदमिवेति केचित्। वस्तुतस्तु अजामित्वानुकीर्तनबलादेवान्तरालकालएव विष्ण्वादियागविधेः पर्यवसानादन्तरालपदमप्यनुवादकमेवेति ध्येयम्। समुदायानुवादप्रयोजनं च तावब्रूतामग्नीषोमाविति कालविधायकवाक्यस्थेनोपांशु पौर्णमास्यां यजन्निति पदेन सर्वेषां ग्रहणम्। अन्यथा तावित्यग्नीषोमप्रतिपादकोपपदानुसारेणाग्नीषोमीययागमात्रस्यैव ग्रहणं स्यात्। सति च समुदायानुवादे तद्बलात्समुदायीकृतानां त्रयाणामपि यागानामनुवादः। अग्नीषोमीयग्रहणं च सर्वदेवतोपलक्षणार्थं स्यात्। ततश्च सर्वेषां कालविधौ ग्रहणे सति फलवाक्येन ग्रहणात् सर्वेषां फलसंबन्धः सिध्यति। इदंच वार्तिके व्यक्तम्। एवंच यथा विद्वद्वाक्ये समुदायानुवादादाग्नेयादीनां फलसंबन्धः एवमन्तरावाक्ये समुदायानुवादाद्विष्ण्वादियागानामपि कालसंबन्ध इति वा तद्द्वारा फलसंबन्ध इति वा प्रत्यव-

१ विष्ण्वादिगुणकानां. २ अन्तरावाक्ये देवताया अविधानेन तदीयदेवताप्रकाशनसामर्थ्यापरिज्ञानात्. ३ लाभादरूपः. ४ विष्ण्वादिश्रवणमर्थ. ५ मष्टत्वादीनां. ६ वर्तित्वे यच्छब्दाद्यनुपहृतविधिश्रवणा. ७ तेष्वेव. ८ चोपक्रमस्त्रयाणामपि. ९ पांशुयाजं यजतीत्ययं.

तन्मध्यपाताच्च विष्ण्वादेरर्थवादता ॥ वाक्यशेषानुषङ्गश्च गतौ सत्यां न युज्यते ॥ अनूचीननिमित्तश्च जामिदोषोऽत्र कीर्तितः ॥ तेनान्तरालसंयुक्तो विधिस्तत्रैव निश्चितः ॥ अजामित्वं च तस्यैव प्रशंसेत्यवधारितम् ॥' 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावि'ति पुरोडाशनैरन्तर्ये जामिदोषाभिधानादुपक्रम एवैतदध्यवसितम् । नूनमन्तराले किंचिद्विधित्सितम् । तच्चान्तरालकरणादेवाजामित्वगुणेन प्रशिशंसिषितमिति किं तद्विधेयमित्येतावदनवगतम् । अन्तरालसंयुक्तं तु तद्विधानमित्यवगतमेव । नच विष्ण्वादिवाक्येष्वन्तरालसंयोगोऽस्ति येन विधित्वं स्यात् । अन्तराले चाविहितानां नाजामित्वेन प्रशंसावकल्पते । पुरोडाशनैरन्तर्याज्जामिता स्यादतो यत्र कचिद्विष्ण्वादयो यष्टव्या अजामित्वायेति किं केन संगतम् । तस्मादुपांशुयाजमन्तरा यजतीत्युपांशुगुणको यागोऽन्तरालोपलक्षिते काले विधीयते । तदर्थवादोऽयं विष्णुरुपांशुयष्टव्य इत्यादिर्मान्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेनेति न्याय्यम् । एवंचैकवाक्यत्वं न बाधितं भविष्यति । नचानुषङ्गः सत्यां गतौ कल्पितो भवति । तस्माद्विधिरयं न समुदायानुवादः ॥

आघाराद्यपूर्वताधिकरणम् ॥ ५ ॥

**आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ [संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥१५॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्संनिधेर्गुणार्थेन पुनःश्रुतिः ॥ १६ ॥**

**अग्निहोत्राघारवाक्यमनुवादोऽथवा विधिः ॥ अरूपत्वात्तु दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥ १३ ॥**
**गुण्यसिद्धौ न दध्यादिर्गुणो दुष्टा विशिष्टता ॥ रूपं दध्यादिमत्राभ्यासमतोऽसौ गुणिनो विधिः ॥ १४ ॥**

'अग्निहोत्रं जुहोति' 'आघारमाघारयती'ति निर्गुणं कर्म संज्ञायुक्तं श्रुतं तत्संनिधौ च दध्ना जुहोति ऊर्ध्वमाघारयतीत्यादीनि सगुणानि श्रवणानि । तत्र संशयः किं दध्ना जुहोतीत्यादिभिर्गुणवि-

---

स्थानादवान्तरसङ्गतिर्बोध्या । **अजामित्वेति** । सर्वान्तेऽजामित्वकीर्तनादित्यर्थः । एकवाक्यत्वे स्वरसतो विधायकत्वाभावादेकवाक्यत्वं नानुरोध्यमित्युक्तं निराकरोति—**अनूचीनेति** । अनूचीनत्वनिमित्तजामित्वकीर्तनादुपक्रम एवान्तरालयुक्ततया किंचित्कर्मविधेर्निश्चितत्वादुपक्रमानुसारेणान्तरा वाक्यस्यैवान्तरालयुक्ततया कर्मप्रतिपादकस्य विधायकत्वं स्वीकर्तव्यं नतु स्वरसतो विधिसमर्थानामपि विष्ण्वादिवाक्यानामित्येकवाक्यतायाः न किंचिद्बाधकमित्यर्थः । प्रत्येकं प्रशंसावगमाद्विष्ण्वादिष्वेव विधिरित्युक्तं निरस्यति—**अजामित्वंचेति** । उपक्रमेऽनूचीनताप्रयुक्तजामितादोषकीर्तनादजामित्वप्रशंसाप्युपक्रमदशायामेवान्तरालयुक्तविधेरिति निश्चितेति विष्ण्वादिषु प्रशंसावगमोऽसिद्ध इति भावः । एवंचात्र एकवाक्यतानुसरणे उपक्रमएवान्तरालयुक्तविध्यवगमो मूलमित्यभिप्रायेण तदुपपादनपरमनूचीननिमित्तश्चेत्यादिसार्धश्लोकं प्रथमतो व्याचष्टे—**जामि वा इति** । नन्वजामित्वकीर्तनबलादेव विष्ण्वादिवाक्येष्वन्तरालकाललाभात्तेष्वपि विधिः संगच्छत इत्यत आह—**पुरोडाशेति** । अन्तरालत्वेनान्तरालोपस्थितिपूर्वकविधिप्रवृत्तावेवोपक्रमावगतं स्वरसं भवति नतु यथाकथंचिदन्तरालपर्यवसानमात्रेणेति भावः । उपांशुयाजशब्दो न नामधेयं तत्प्रख्याद्यभावात् किंतु गुणविधिरित्याशयेनाह—**उपांशुगुणक इति । उपलक्षित इति** । यथा चान्तरालस्योपलक्षणत्वं तथा दशमे व्यक्तम् । **ननु** विष्ण्वादिवाक्यानामर्थवादत्वं न संभवति विष्ण्वादीनां विध्यन्तरादप्राप्त्या निरालम्बनस्तुत्ययोगात्ततोऽन्तरा वाक्ये कर्मविधावपि विष्ण्वादिवाक्यैर्देवताविधिर्वक्तव्यस्तद्वरं तेष्वेव कर्मविधानमित्यत आह—**तदर्थवाद इति** । प्रयोजनं पूर्वपक्षे विष्ण्वादिदेवत्यास्त्रयो यागाः समुच्चयेनानुष्ठेयाः । सिद्धान्ते तु एकएव विकल्पितविष्ण्वादिदेवत्य इति । सूत्रार्थस्तु—पौर्णमासीं यजत इति वाक्यवदुपांशुयाजमन्तरा यजतीति वाक्यमपि समुदायानुवादः स्यादिति ॥

**आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥** इह दध्यादेरन्यतोऽप्राप्तत्वेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन विष्ण्वादिवाक्यानामिव स्तावकत्वाभावाद्विधायकत्वे सति दध्यादिविशिष्टकर्मविधेरग्निहोत्रादिवाक्यमनुवाद इति प्रत्यवस्थानात्सङ्गतिः । पूर्वपक्षसौकर्यायाह—**निर्गुणमिति** । अग्निहोत्रशब्दस्य गुणविधित्वे निर्गुणत्वासिद्धिमाशङ्क्याह—**संज्ञायुक्तमिति** । अग्निहोत्रशब्दः पूर्वपक्षे दध्यादिवाक्योत्पन्नानां होमानां संज्ञा । सिद्धान्तेतु स्ववाक्योत्पन्नकर्मण इति पक्षद्वयेऽपि संज्ञैव न गुणविधिरिति भावः । किमग्निहोत्रवाक्यमाघारवाक्यं च समुदायानुवाद उत विधिस्तदर्थं च किं दध्याद्यूर्ध्वादिवाक्यै-

---

१ पुरोडाशद्वयनैरन्तर्यं. २ प्रशंसितुमिदम्. ३ विष्ण्वादियुक्तेष्व.

शिष्टा होमाघारा विधीयन्ते, तेषां च रूपवतामरूपोऽयमग्निहोत्रं जुहोतीति आघारमाघारयतीति समुदायानुवादः, उतायमेक एव कर्मविधिरितरे तत्रैव गुणविधय इति। तदर्थमिदं विचार्यते—किमविज्ञातरूपं कर्म विधातुमेव न शक्यमुताविज्ञातरूपमपि तावद्विधाय पश्चाद्रूपज्ञानं संभवतीति। तथेदमपरं चिन्तनीयं—प्राप्ते कर्मणि गुणमात्रविधानं संभवति उत नेति—'तत्र रूपापरिज्ञाने विशेषानवधारणात्॥ सामान्यस्याविधेयत्वाज्ज्ञानयोर्विधिसंभवः॥ नच दध्यादिभिर्वाक्यैः प्राप्तकर्मानुवादतः॥ गुणमात्रं विधातव्यमव्यापारात्मकं यतः॥' अग्निहोत्रं जुहोतीति होमसामान्यमवगम्यते। नच तद्विधानयोग्यम्। विशेषस्तु योग्यः। सचानुरञ्जकाधीननिरूपण इति न जुहोतीत्येतावता गम्यते। नचेह द्रव्यदेवतादिकमनुरञ्जकमुपात्तं यद्वशेन विशेष्यावधारणं स्यात्। अनिरूपितश्च विशेषो न विधिनान्वेतुं योग्यः। तेनावगतस्य सामान्यस्यायोग्यत्वाद्योग्यस्य च विशेषस्यानवगतत्वान्नात्र विधिः संभवति। तथाग्निहोत्रमिति संज्ञापि च विशेषविषयत्वादनवगते विशेषे दुर्घटैव। यदाचैवं विधिरेवानिष्पन्नस्तदा न दध्यादिवाक्यैरपि गुणविधानं शक्यम्। विहिते कर्मणि तदनुवादेन तैर्गुणो विधातव्यः। नचात्र विहितं कर्मेत्युक्तम्। अपिच यद्यप्यत्र कर्म विधीयेत तथापि न शक्यते गुणो विधातुम्। अव्यापारात्मकत्वात्। चेतनप्रवर्तनात्मको हि विधिः। नचासौ स्वव्यापारादन्यत्र प्रवर्तयितुं शक्यते। तेन दध्यादिवाक्यैरपि स्वस्वव्यापार एव विधातव्यः। तद्विशेषणतया च द्रव्यादीनां विधिरङ्गीकर्तव्यः। नचाग्निहोत्रमित्यत्र विहितो होमः पुनरन्यत्र दधिविशिष्टोपि विधातुं शक्यते। विहितस्य विधानायोगात्। तेन दधिमात्रमवशिष्यते। तच्चाविधेयमित्युक्तम्। अतोऽत्र दध्यादिविशिष्ट होमा विधीयन्ते। तथाचाग्निहोत्रमित्यस्यान्यतोऽपि रूपालाभात्समुदायानुवादत्वमेव।

---

गुणविशिष्टहोमाघारा विधीयन्त उत दध्याद्यूर्ध्वत्वादिगुणमात्रं विधीयते इति संशयद्वयं संकलय्याह—**किमिति**। विशिष्टहोमाघारविधौ प्रकृतकर्मसद्भावादनुवादः, गुणमात्रविधौ तु प्रकृतकर्माभावेनानुवादासंभवाद्विधिरिति फलफलिभावो बोध्यः। प्रथमसंशयार्थे संशयान्तरमाह—**तदर्थमिति**। द्वितीयसंशयार्थे संशयमाह—**तथेति**। **तत्रेति**। तत्र रूपशब्देन द्रव्यदेवतामन्त्रोर्ध्वत्वादिसाधारण्येनानुरञ्जकगुणमात्रं विवक्षितम्। अनयोरग्निहोत्राघारवाक्ययोरित्यर्थः। विधातव्यं विधातुं शक्यमित्यर्थः। नच तदिति सामान्यस्यानुष्ठानानर्हत्वात् यत्किंचिद्धोमविधिनैव प्राप्तेश्चेति भावः। **अनवगतत्वादिति**। अयमसावित्यनिश्चितस्य विधातुमशक्यत्वादिति भावः। **ननु** अग्निहोत्रसंज्ञकमिदं कर्मेत्येवं संज्ञयैव विशेषावगमः संभवतीत्यत आह—**तथेति**। कर्मविशेषापरिज्ञाने कस्येयं संज्ञेत्यज्ञानान्न तया विशेषावगमसंभवः। उद्भिदादिस्थले तु चोदकाद्रूपलाभेसति विशेषावगमः। नचात्रापि विधिवलेनैवान्यत्रानवगतो होमविशेषोऽयमित्यवगमात्संज्ञोपपत्तिः। अस्मिन् पूर्वपक्षे प्राप्तकर्मानुवादेन गुणविध्यनङ्गीकारेण तत्र मन्त्रविध्यभावे सति मान्त्रवर्णिकदेवतालाभासंभवेन तत्प्रख्यन्यायाप्रवृत्त्या नामत्वस्यैवानुपपत्तेरिति भावः। **ननु** दध्यादिवाक्यैर्गुणविधानाद्विशेषावगमो भविष्यतीत्यत आह—**यदाचैवमिति**। तथा सति दध्यादिवाक्यैर्गुणविधौ सति विशेषावगमादग्निहोत्रवाक्ये कर्मविधिस्तस्मिंश्च सति दध्यादिवाक्यैर्गुणविधानमिति परस्पराश्रय इति भावः। द्वितीयश्लोकं व्याचष्टे—**अपिचेति**। नन्वेवं सति दध्यादिश्रवणस्यानर्थक्यं स्यादित्यत आह—**तद्विशेषणतयेति**। ननूत्पन्नस्य कर्मणो यथा फलादौ पुनर्विधानं तद्वदिहाग्निहोत्रवाक्योत्पन्नस्य गुणविशिष्टतया विधिरस्त्वित्यत आह—**नचेति**। कर्मभेदो ह्युत्पत्तिविध्यवगम्य इति तद्भेदे कर्मभेद आवश्यकः। ततश्च फलनिमित्तयोः कर्मविधिरधिकारविधिः, देशकालयोः कर्मविधिः प्रयोगविधिः, संस्कार्ये कर्मविधिर्विनियोगविधिरिति फलाद्यनुपादेयपञ्चकस्थले उत्पत्तिविध्यभावात्तत्र कर्मभेदाभावेऽपि दध्यादिवाक्येषु गुणविशिष्टतया कर्मविधिस्वीकारेऽधिकारादिविधित्रयाभावेन परिशेषादुत्पत्तिविधिरेव वाच्य इतीह कर्मभेदावश्यंभावान्नाग्निहोत्रवाक्यविहितकर्मणो गुणविशिष्टतया पुनर्विधिसंभव इत्यर्थः। **तेनेति**। अग्निहोत्रवाक्ये विहितकर्मणो दध्यादिवाक्यैः पुनर्विधानासंभवात्तव पक्षे दध्यादिकमेव विधेयमवशिष्यते। तद्विधिश्च न संभवतीति प्रागेवोक्तमित्यर्थः। **समुदायेति**। अत्रेदमवधेयम्। दध्यादिवाक्येषु देवता न श्रूयते। यदग्नये चेत्यादिषु द्रव्यं न श्रूयते। एवं मन्त्रविधिस्थले मान्त्रवर्णिकदेवतालाभसंभवेऽपि द्रव्यं न लभ्यत एव। एवंचास्मिन्पूर्वपक्षे तेषां सर्वेषामपि वाक्यानां तत्तद्गुणविशिष्टकर्मान्तरविधायकतया तत्र न क्वापि कर्मणि द्रव्यदेवतोभयलाभः। नच जुहो-

---

१ यमेव कर्म. २ अत्र अग्निहोत्रवाक्ये. ३ नात्मा हि विधिः. ४ असौ चेतनः. ५ रपि व्यापार, ६ ग्निहोत्रवाक्यविहितो. ७ अन्यतः दध्यादिवाक्येभ्यः.

एवमाघारवाक्येऽपीति प्राप्ते ब्रूमः । 'प्रकृतानामसद्भावात्कर्मणां नानुवादता ॥ नहि दध्यादिवाक्येषु दध्याद्याक्षिप्तशक्तिना ॥ विधिना शक्यते कर्म विधातुमितरत्र तु ॥ अनन्याक्षिप्तशक्तित्वाद्विधिः कर्मैकगोचरः ॥' दध्ना जुहोतीति ह्यप्राप्तदध्याद्याक्षिप्तशक्तिर्विधायकोऽनेकविधिनिमित्तगौरवपरिजिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथंचिदपि प्राप्तिं लभते ततो विशिष्टविधिमङ्गीकरोति । सत्यां त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्रविधानं लाघवान्नतु विशिष्टविधानम् । अतश्चाविहितत्वाद्धोमानामप्राप्तत्वादग्निहोत्रवाक्येऽनन्याक्षिप्तशक्तित्वाच्च विधायकः कर्म विधत्ते । यद्यपि तत्र रूपं न श्रूयते तथापि विधिवशादेव सामान्यमतिक्रम्य तल्लक्षितोऽन्यत्राविहितो होमविशेषोऽयमित्येतावदवगम्यमानत्वान्न विधानासंभवः । तल्लक्षितविशेषविषयत्वेन च संज्ञोपबन्धोऽप्युपपन्नः । तस्य च दध्यादिवाक्यै रूपविधानान्नानुरूपत्वं स्वरूपेणाविधेयमपि दध्यादिव्यापारविशिष्टं शक्यं विधातुं दध्ना जुहुयादिति । यद्यपि न क्रियां विहाय द्रव्ये विधिः प्रतीयते तथापि तस्यामेव विशि-

---

तीति चोद्यमाने सर्पिराज्यं प्रतीयादित्यादिकल्पसूत्रानुमितवाक्यादिना द्रव्यादिलाभः शङ्कनीयः । प्राप्तकर्मानुवादेन गुणमात्रविधिर्न संभवतीत्यस्मिन्पूर्वपक्षे कल्पसूत्राद्यनुमितवाक्येनापि द्रव्यादिविध्यसंभवात् । तस्माद्दध्यादिवाक्यैर्देवतोद्देशरहितं केवलत्यागप्रक्षेपमात्रं विधीयते । एवं यदग्नये चेत्यादिषु अग्न्यादेर्द्रव्यासंबन्धेसति मुख्यदेवतात्वासंभवादग्न्यादीनामुद्देशमात्र चतुर्थ्यन्तशब्देन निर्देशलक्षणं विधीयते । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोती'ति मन्त्रविधिस्थलेऽपि मन्त्रस्योच्चारणमात्रमेव विधेयम् । एवंच सर्वेष्वपि वाक्येषु जुहोतिस्तत्तद्वाक्यविधेयत्यागादौ लाक्षणिकस्तेषां च त्यागप्रक्षेपादीनां सर्वेषामग्निहोत्रं जुहोतीत्ययमनुवादः । अनुवादस्य च प्रयोजनमधिकारवाक्ये सर्वेषां ग्रहणमितरथा यदग्नये चेत्यादिवाक्यविहिताग्निसंबद्धकर्मण एवोपपदवशादधिकारवाक्ये ग्रहणं स्यात् । सतितु समुदायानुवादे तदानर्थक्यप्रसङ्गाद्वैश्वदेवशब्दवत् प्रकृतानां सर्वेषामपि कर्मणामग्निहोत्रशब्दो नामधेयमित्यवगमात् सर्वेषामधिकारवाक्ये ग्रहणात् सर्वेषां फलसंबन्धसिद्धिः । वस्तुतस्तु दध्यादिवाक्यैर्यदग्नयेचेत्यादिभिश्च विधेयानां कर्मणामेकरूपत्वाभावादग्निहोत्रवाक्यस्थेन जुहोतिना सर्वेषामनुवादो राजसूयस्थयजिना यागायागानामिव न संभवति किंत्वेकरूपाणामेव । तत्र चोपपदानुसारादग्निसंबद्धानां यदग्नयेचेत्यादिवाक्यविहितानामेव । ततश्च तेषामेव फलवाक्ये ग्रहणं न सर्वेषामिति । **भवदेवस्तु** आकाङ्क्षावशात्परस्परद्रव्यदेवतापदानुषङ्गेण सर्वेषामेव वाक्यानां द्रव्यदेवताविशिष्टहोमविधायकत्वम् । नचैवमग्निहोत्रवाक्येऽपि द्रव्यदेवतानुषङ्गेण कर्मविधायकत्वमुपपद्यत इति वाच्यम् । वर्तमानापदेशत्वेन पञ्चमलकारत्वकल्पकार्थवादाभावेन दध्यादिवाक्यवद्गुणाश्रवणेन च विधित्वानुन्मेषे सत्यनुवादत्वस्यैव युक्तत्वादित्याह । **नन्वेवमप्याघारवाक्यं न समुदायानुवादः** । प्रयोजनाभावात् । नचेन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयतीति मन्त्रविधौ सर्वेषां ग्रहणं प्रयोजनमिति वाच्यम् । अस्मिन्पूर्वपक्षे वाक्यान्तरप्राप्ताघारानुवादेन मन्त्रविध्यसंभवेन तस्यापि वाक्यस्य मन्त्रविशिष्टाघारान्तरविधायकत्वादित्यत आह—**एवमिति** । चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येति प्रयाजाज्यरूपे संस्कार्ये आघारविनियोजकवाक्ये सर्वेषां ग्रहणमाघारवाक्ये प्रयोजनम् । यद्यप्यत्रासत्यपि समुदायानुवादे राजसूयवाक्ये सर्वेषां यागानां फले विनियोगवदिह संस्कार्ये सर्वेषां विनियोगः संभवति तथाप्याघारमित्येकत्वनिर्देशस्य समुदायीकरणं विनानुपपत्तेः । समुदायीकरणेऽप्यस्यैव वाक्यस्य राजसूयवाक्यवद्व्यापारकल्पने गौरवात् समुदायानुवादस्यैव तत्प्रयोजनं युक्तमित्याहुः । **दध्याद्याक्षिप्तेति** । दध्यादेः प्रकारान्तरेणोपपत्त्यभावेनावश्यविधेयत्वादिति भावः । **नन्वेवं** सोमेन यजेतेत्यादावपि सोमस्यैव विधिः स्यान्नतु विशिष्टविधिरित्यत आह—**अनेकेति** । ततश्च तत्र वाक्यान्तरेण कर्मणोऽप्राप्तेरगत्या गौरवमप्यङ्गीकृत्य विशिष्टं विधत्ते प्रत्यय इति भावः । **सत्यां त्विति** । संभवन्त्यां त्वित्यर्थः । यथाश्रुतेऽग्निहोत्रवाक्येन कर्मणः प्राप्तौ दध्यादिवाक्यैर्होमविध्यभावः । तत्र होमविध्यभावे चाप्राप्तत्वादग्निहोत्रवाक्ये कर्मविधानमिति परस्पराश्रयप्रसङ्गादिति ध्येयम् । **विधिवशादिति** । सर्वेषां विधिप्रवणत्वादप्राप्तार्थत्वाच्चात्र विधिपरत्वे निश्चिते तद्बलादेव सामान्यस्यायोग्यत्वात्तल्लक्षितो विशेष एव विधीयते । सच विशेषोऽयमसाविति विशिष्यानवगतोऽप्यन्यत्राविहितोऽयं कश्चिद्धोमविशेष इत्येतावन्मात्रेणावगत इति कृत्वा विध्यर्ह एवंच विशिष्टज्ञानस्यानपेक्षितत्वान्न पूर्वपक्षोक्तान्योन्याश्रयावकाशस्तावन्मात्रावगमेनापि संज्ञोपबन्धोपपत्तेर्न संज्ञादुर्घटत्वं चेति भावः । तस्यापि विशेषस्य वाक्यान्तरेण रूपालाभे पर्यवसानमाशङ्क्याह—**तस्य चेति** । **तथापीति** । एवंच गुणस्य साक्षाद्विधिविषयत्वाभावाद्गुणविशिष्टकर्मविषयतया प्रतीयमानस्यापि विधेर्न कर्मोत्पत्तिपरत्वं, कर्मणः प्राप्तत्वेन तत्स्वरूपज्ञापने विधेरतात्पर्यात् । अप्राप्तगुणमात्रे तात्पर्यं विधेः, विधितात्पर्यविषयश्च विधेयो न विधिसंबन्धितया प्रतीयमानमात्रमिति दध्यादिवाक्यस्य कर्मोत्प-

---

१ दध्यादिभिराक्षिप्ता धात्वर्थादुतार्थस्वमात्रविषयत्वेन बोधिता शक्तिर्यस्याः. २ अग्निहोत्राघारवाक्ययोः. ३ दध्यादिहोमाघाररूपम्. ४ नज्ञायते. ५ आरूपत्वं. ६ क्रियासंबन्धरहितम्.

ष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वादप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते न प्रतीतितः । तेनात्र गुणमात्रविधानम् । अग्निहोत्रं जुहोतीति प्रकृतकर्मलाभाभावात्, रूपलाभाच विधिरेव न समुदायानुवादः ॥

पशुसोमापूर्वताधिकरणम् ॥ ६ ॥

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन ॥ १७ ॥ [अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥ संस्कारस्तु न भिद्येत परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २० ॥]**

**यजत्यालभतीत्येतावनुवादौ विधी उत ॥ गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ ॥ १५ ॥**
**नानुवादोऽपुरोवादे यज्यालभ्योरतो विधिः ॥ ग्रहणे सोमसंस्कारोऽवदाने पशुसंस्क्रिया ॥ १६ ॥**

'अग्नीषोमीयं पशुमालभेते'ति श्रूयते । तथा 'हृदयस्याग्रे[3]ऽवद्यत्यथ जिह्वाया अथ वक्षस' इत्यादीनि । तथा 'सोमेन यजेते'तिश्रुतं तथा[4] 'ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती'त्येवमादीनि । तत्र संशयः किमवद्यतिगृह्णातिभ्यां चोदितानां कर्मणामेवालभतियजती समुदायस्यानुवदितारौ उतापूर्वयोः कर्मणोर्विधाताराविति । तदर्थंच किमैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते किंवा संस्कारमा-

---

त्तिविधित्वाभावादग्निहोत्रवाक्योत्पन्नकर्मणो दध्यादिवाक्ये दध्यादिविशिष्टरूपेण विधेयतया प्रतीयमानत्वेऽपि न भेदप्रसक्तिरिति भावः । प्रयोजनं पूर्वपक्षे दध्यादिवाक्यविधेयानां कर्मणां समुच्चित्यानुष्ठानं, सिद्धान्तेतु एकस्मिन्नेव कर्मणि द्रव्याणां विकल्पाच्च समुच्चयः । तथा पूर्वपक्षे सायंप्रातर्वाक्ययोरपि दध्यादिवाक्यवत्कर्मान्तरविधायकत्वेन दध्यादिवाक्यविहितकर्मसु सायम्प्रातःकालनियमाभावः सिद्धान्ते तु तद्भाव इत्यादि । आघारवाक्ये तु पूर्वपक्षे ऊर्ध्वत्वसांतत्यादिमध्ये यस्य भ्रंशस्तद्गुणकस्य कर्मणः पुनरनुष्ठान, सिद्धान्ते तु कर्मभेदाभावाद्गुणानुसारेण प्रधानावृत्त्ययोगाद्गुणलोपप्रायश्चित्तमात्रमिति । सूत्रार्थस्तु—आघाराग्निहोत्रवाक्यमपि पौर्णमासीवत्समुदायानुवादः स्यादरूपत्वादिति ॥

**द्रव्यसंयोगात्०** ॥ १७ ॥ दध्यादिवाक्येषु गुणाकृष्टशक्तिकत्वान्न कर्मविधिः किंतु कर्मानुवादेन गुणविधिरित्युक्ते तद्वदेव पशुसोमवाक्ययोरपि न कर्मविधिरिति प्रत्यवस्थानात्सङ्गतिः । यद्वा दध्यादिवाक्येषु कर्मविध्यभावेनाग्निहोत्राघारवाक्ययोरनुवादाभावेऽपि हृदयाद्यैन्द्रवायवादिवाक्येषु कर्मविध्यवश्यंभावेन पशुसोमवाक्ययोरनुवादो भवतीति प्रत्यवस्थानात्सङ्गतिः । **आलभतियजती इति** । आलभतिना स्पर्शएवानूद्यते इति पक्षेऽपि तन्मुखेन हृदयादिवाक्यविहितकर्मप्रत्यभिज्ञासद्भावमात्रेणालभतेः समुदायानुवादत्वं बोध्यम् । **ऐन्द्रवायवादिवाक्यैरिति** । आदिशब्देन मैत्रावरुणादिवाक्यानां हृदयादिवाक्यानां च संग्रहः । **संस्कारमात्रमिति** । ननु पूर्वपक्षेऽपि पशूदाहरणे हृदयादिवाक्येष्ववदानमात्रं विधीयते अग्नीषोमीयवाक्यएव यागकल्पनेति पक्षेऽवदानसंस्कारमात्रविधेरङ्गीकारात्कथं संस्कारमात्रं विधीयत इति सिद्धान्तकोटिरिति चेदुच्यते । अवदानसंस्कारो हृदयादिवाक्येषु विधीयते इति न पशूदाहरणे पूर्वपक्षोपपादनपरग्रन्थार्थः । हृदयादीनामग्नीषोमीयवाक्येन देवतासंबन्धेन हविष्ट्वेसति चोदकतएवावदानप्राप्त्या तद्विधिवैयर्थ्यात्तथासति हृदयादिवाक्यैर्यागानामप्राप्ततया पशुवाक्ये तेषामपि विधेयत्वापत्तेश्च । नच पशुवाक्यएव यागाः कल्प्यन्तामिति वक्ष्यमाणत्वादत्रेष्टापत्तिरिति वाच्यम् । नहि तत्रैव तावन्तो यागाः कल्प्यन्त इति वक्ष्यमाणवाक्यस्याग्नीषोमीयं पशुमालभेतेत्यस्मिन्वाक्ये यागा विधीयन्त इत्यर्थः । तथासति समुदायानुवादपूर्वपक्षस्यासंभवदुक्तिकत्वापत्तेः किंतु हृदयादिवाक्येषु हृदयादिसाधनककर्ममात्रविधिः पशुवाक्येन तु देवतासंबन्धात्तेषामेव कर्मणां यागरूपत्वेनावधारणमात्रं यथा आघारमाघारयतीति वाक्येनाघारसंज्ञके कर्ममात्रे विहिते चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येत्यनेन द्रव्यस्य इन्द्र ऊर्ध्वोध्वर इत्यनेन मन्त्रविनियोगे मान्त्रवर्णिकदेवतायाश्च लाभात्तस्य यागरूपत्वाध्यवसानं तद्वत् । ततश्च हृदयादिवाक्येषु चोदकप्राप्तावदानानुवादमात्रमिति संस्कारविधेरभावात्संस्कारमात्रं विधीयत इति सिद्धान्तकोटिरुपपद्यते । अस्तु वा हृदयादिवाक्येष्ववदानसंस्कारमात्रविधानमित्येव पशूदाहरणे प्रथमपक्षः । तथापि किमैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते उत संस्कारमात्रमित्ययं संशयः सोमोदाहरणमात्राभिप्रायतयाप्युपपद्यत इति न काप्यनुपपत्तिः । हृदयादिवाक्येषु देवताया अभावेन तेषां यागविधिपरत्वस्यास्पष्टतया

---

१ गुणपरतां. २ प्रकृतलाभा. ३ अग्रे प्रथमम्. ४ तत्राप्यैन्द्रवायवं.

ग्रमिति । तत्र—'ऐन्द्रवायवमित्यादिद्रव्यदेवतसङ्गतेः ॥ यागएव विधातव्यो गृह्णातौ नहि देवता ॥' ऐन्द्रवायवमित्यादिताबद्देवतातद्धितोयम् । नच देवता यागादन्येन संपादयितुं शक्या, येन ग्रहणेनैन्द्रवायवं कुर्यादिति वाक्यार्थः स्यात् । नचैन्द्रवायवं सन्तं गृह्णातीति संभवति, असिद्धत्वादैन्द्रवायवस्य । तेनावश्यं यागा एव विधातव्याः । ननु नायमवश्यं देवतातद्धितएव तस्येदमिति संबन्धमात्रेऽपि श्रवणात्तस्य, तेनेन्द्रवायूद्देशविशिष्टग्रहणमात्रविधिः संभवत्येव । भवेदेवमैन्द्रवायवादिषु परिहारो मरुत्वतीयादिषु देवतायामेव छविधानादवश्यं देवतासंबन्ध एवाङ्गीकर्तव्यः । तथाचैन्द्रवायवादिष्वपि तथास्तु किमनिरूपितसंबन्धमात्राश्रयणेन । तस्माद्यागविधानम् । एवंच सोमेन यजेतेति देवताभावादरूपः सन् समुदायानुवादएव भवति यजिः । सोमशब्देन तु तत्रैव[2] गृह्णातिना सामान्याक्षिप्तं द्रव्यं नियम्यते । यद्वा अण्व्या धारया गृह्णातीति गुणवाक्येन धारासमर्थद्रवद्रव्यमात्रावगमात्तत्प्रकृतित्वेन सोमविधानं व्रीहिभिर्यजेतेतिवत् । ननु विकृतावुपात्तायां[3] प्रकृतिविधानं युक्तम् । नचैन्द्रवायवादिवाक्ये[4] पुरोडाशादिवद्विकृतिरुपात्ता यस्याः प्रकृतिर्विधीयेत । यदितु सोममभिषुणोति सोमं पावयतीत्यादिभिः सोमरसस्य प्रकृतत्वात्तद्विषयत्वाच्च गृह्णातेः प्राप्तएव विकृतिभूतो रस इत्युच्यते । ततस्तस्य निर्ज्ञातसोमप्रकृतित्वान्न भूयः सोमविधानं संभवति । नचाण्व्या धारये-

---

पश्वुदाहरणेऽनुवादत्वस्य क्लेशेनोपपादनीयत्वात्सूत्रे प्रथमोपात्तमपि पश्वुदाहरणमुपेक्ष्य प्रथमं सोमोदाहरणे पूर्वपक्षमाह—**तत्रेति । याग एवेति** । यागो विधातव्य एवेत्यन्वयः । ऐन्द्रवायवादिवाक्येषु यागविधिवादिनोऽपि यागेन ग्रहणस्यानाक्षेप्यतया ग्रहणानुवादासंभवेसति श्रुतग्रहणविध्यवश्यंभावेन यथाश्रुतान्वयानुपपत्तेरिति । अतएव वार्तिके ग्रहणस्यादृष्टार्थत्वमुक्तम् । शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते देवतोद्देशुमित्येवं सत्यदृष्टार्थता विधेरिति । **गृह्णाताविति** ग्रहणे केवले विधीयमाने ऐन्द्रवायवमिति द्रव्यसंबन्धित्वेन श्रुता देवता नावकल्प्यत इत्यर्थः । ऐन्द्रवायवमिति द्वितीयया तस्य साध्यत्वं प्रतीयते, तच्च किमुत्पाद्यतया उत संस्कार्यतया इति विकल्पं मनसि निधायाद्य आह—**नच देवतेति** । ऐन्द्रवायवमिति देवतासंबन्धि द्रव्यं प्रतीयते, सच संबन्धः 'न क्रियागर्भसंबन्धादृते संबन्धनं क्वचित्' इत्यनेन न्यायेन क्रियया घटयितव्यः । द्रव्यस्य देवतासंबन्धघटनसमर्था च क्रिया यागएव नान्या । ततश्च ग्रहणेन देवतासंबन्धस्य घटयितुमशक्यत्वाद्ग्रहणेनैन्द्रवायवं कुर्यादित्येवं देवतासंबन्धिद्रव्यस्य ग्रहणसाध्यत्वं स्वीकर्तुमयुक्तमित्यर्थः । द्वितीयेत्वाह—**नचैन्द्रवायवमिति । असिद्धत्वादिति** । अवहननादिसंस्कार्याणां व्रीहिभिर्यजतेति शास्त्रान्तरेण सिद्धिवदैन्द्रवायवस्य संस्कार्यत्वे शास्त्रान्तरेण सिद्धिर्वक्तव्या साच प्रकृते नास्तीत्यर्थः । तस्माद्द्रव्यदेवताभ्यां ग्रहणेन च विशिष्टो यागएव विधेय इत्याह—**तेनेति । तेनेन्द्रवायूद्देशविशिष्टेति** । इन्द्रवायुप्रकाशकमन्त्रेण ग्रहणे क्रियमाणे स्वकरणमन्त्रद्वारा ग्रहणस्येन्द्रवायुवैशिष्ट्यं ग्राह्यस्य रसस्यैन्द्रवायुसंबन्धित्वं चोपपद्यत इति भावः । **देवतायामेवेति** । 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिग्रहमेधाच्छ च' इतिछप्रत्ययविधायकसूत्रस्य 'सास्य देवते'त्येतदधिकारे पठितत्वादिति भावः । **तथास्त्विति** । देवतातद्धितस्य विशेषविहितत्वान्मरुत्वतीयाद्यवैरूप्यलाभाच्चेति भावः । **किमनिरूपितेति** । सामान्यस्यानुष्ठानानौपयिकत्वाद्विशेषात्मनाऽनिरूपितस्य संबन्धसामान्यस्य ग्रहणमयुक्तमिति भावः । विद्वद्वाक्यादिवन्न कृत्स्नं वाक्यमनुवादः किंतु यजिमात्रमित्याशयेनाह—**यजिरिति** । कथं न कृत्स्नवाक्यस्यानुवादत्वमित्याकाङ्क्षायां सोमशब्दार्थस्य विधेयत्वादित्याशयेनाह—**सोमशब्देनेति** । ग्राह्यद्रव्यविशेषस्याश्रवणाद्गृह्णातिनाऽनियमेनाक्षिप्तं ग्राह्यद्रव्यं सोमशब्देन नियम्यते । ततश्चैन्द्रवायववाक्यविहितयागे हविष्ट्वेन सोमविधानमित्यर्थः । नचाण्व्या धारया गृह्णातीति गुणवाक्यपर्यालोचनया धारासमर्थजलादिरूपद्रवद्रव्यविशेषस्य निश्चितत्वात्सोमलक्षणद्रव्यविधिर्न संभवतीति वाच्यम् । सोमस्य रसीभावेनापि धारावाक्योपपत्त्या तेन स्वतःसिद्धद्रवद्रव्यस्य जलादेरप्राप्तेरिति भावः । **ननु** यदि रसीभावेनापि धारावाक्यमुपपन्नं तर्हि न हविष्ट्वेन सोमविधानं हविःप्रकृतित्वेनैव सोमविधेर्युक्तत्वादित्याशङ्कायामिष्टापत्त्या तमेव पक्षमवलम्बते—**यद्वेति । द्रव्यमात्रेति** । मात्रशब्देन प्रकृतिनिरपेक्षजलादिरूपतद्विशेषप्रतीतिर्व्यावर्त्यते । दृष्टान्तवैषम्याभिप्रायेण शङ्कते—**नन्विति । उपात्तायामिति** । वाक्यान्तरेण प्राप्तायामित्यर्थः । तत्र न तावदैन्द्रवायवादिवाक्यैर्विकृतिप्राप्तिस्तत्र द्रव्यविशेषाश्रवणादित्याह—**नचैन्द्रेति** । ननु साक्षादैन्द्रवायववाक्ये विकृतिविशेषाश्रवणेप्यैन्द्रवायवमिति तद्धितस्य द्रव्यसामान्यवाचिनः सोममभिषुणोतीत्यादिवाक्यसंनिहितसोमरसएव पर्यवसानात्तस्यैव गृह्णात्यन्वयादस्ति विकृतिप्राप्तिरित्यत आह—**यदित्विति** । यत्र हि वाक्ये विकृतिमनूद्य तत्प्रकृतित्वेन द्रव्यं विधीयते तत्र परमप्राप्तस्यानुवादासंभवाद्विकृतिद्रव्यस्य प्राप्त्यपेक्षा, इह च न विकृतिद्रव्य-

---

१ तत्प्रसरणात्. २ तत्रैव यागसमुदाये. ३ विकृतौ प्राप्तायां. ४ वाक्येषु.

स्ततोऽपि विकृतिप्राप्तिः उदकस्यापि द्रवद्रव्यस्य संभवात् । उच्यते । यदि विकारानुवादेनैव प्रकृतिविधानं स्यात्ततोऽयं दोषः स्यात् । नच व्रीहिभिर्यजेतेत्यपि पुरोडाशानुवादेन व्रीहिविधिः, पुरोडाशस्यानुपात्तत्वात् व्रीहिभिरिति च करणविभक्तेर्द्रव्यसंबन्धाभावात् । तेन यागंप्रति करणत्वेन विहिता व्रीहयः पुरोडाशावरुद्धे यागे साक्षात्करणत्वाभावात्तत्प्रकृतित्वेनैव करणं भवन्तीति प्रकृतिद्रव्यविधिरित्युच्यते न प्रकृतित्वेनैव विधानात् । एवमत्रापि यागंप्रति करणत्वेन विहितः सोमो धारासमर्थद्रवद्रव्यावरुद्धे यागे तत्प्रकृतिर्भवति । संभवति च सोमप्रकृतिकं द्रवद्रव्यमिति युक्तं प्रकृतिद्रव्यविधानम् । अथवा सोममभिषुणोतीत्येवमादिभिः सोमरसस्य प्राप्तत्वात्सोमशब्दोऽनुवादएव तत्प्रख्यन्यायेन नामधेयं भवति । तदेवं त्रेधा पूर्वः पक्षः—सोमशब्देन द्रव्यं विधीयते प्रकृतिद्रव्यं वा नामधेयं वेति । यजिस्तु सर्वथैव समुदायानुवादः । तथाच यागभेदादैन्द्रवायववादीनां समुच्चयेसति 'दशैतानध्वर्युः प्रातःसवने ग्रहान्गृह्णाति' 'आश्विनो दशमो गृह्यते तं तृतीयं जुहोती'त्यादिक्रमसमुच्चयदर्शनमुपपद्यते । अन्यथात्वेकत्वाद्यागस्य तदर्थानां देवतानां ग्रहणानां च विकल्पेसति क्रमादिदर्शनानुपपत्तिः । यदि च सोमेन यजेतेति यागविधिः स्यात्ततः सोमशब्दस्य लतावचनत्वात्तयैवोत्पत्तिशिष्टया यागः साध्यत इति नैन्द्रवायववादिवाक्यै रसविषयैर्गुणविधिः संभवतीत्यानर्थक्यं तेषां स्यात् । अभिषवादिविधिभिश्चोत्पत्तिशिष्टलता न रसीकर्तुं शक्यते । तस्मादैन्द्रवायववादिभिरेव यागविधिः । एवं 'अग्नीषोमीयं पशुमालभेते'त्यत्रापि यागविधौ सत्युत्पत्तिशिष्टपशुजातीयद्रव्यमेव यागसाधनमिति हृदयाद्यवदानवचनानि तत्र गुणविधित्वेनासंभवादनर्थकानि स्युः । अतो हृदा-

---

मनूद्य तत्प्रकृतित्वेन सोमविधिरपित्वर्थात्प्रकृतिद्रव्यविधिपर्यवसानमिति परिहरति—**उच्यत इति** । **नच व्रीहिभिरिति** । ततश्च तत्र वाक्यान्तरेण पुरोडाशप्राप्तिसद्भावेऽपि सा न व्रीहिविधावुपयुज्यत इति भावः । **ननु** प्रकृतिनिरपेक्षजलादिसाधारणत्वाद्धारासमर्थद्रव्यस्य पुरोडाशवैलक्षण्यादिहार्थादपि न प्रकृतिविधिसंभव इत्यत आह—**संभवति चेति** । धारासमर्थद्रव्यं यदि सर्वथा प्रकृतिसंबन्धानर्हमेव स्यात्तदेव परं प्रकृतिद्रव्यविध्यसंभवो नान्यथेति भावः । **प्राप्तत्वादिति** । अनेन प्रकृतिद्रव्यविधिरपि न संभवति अभिषवादिवाक्यैरेव प्रकृतेः प्राप्तेः संभवादिति पूर्वपक्षेऽस्वरसः सूचितः । अनुवादस्य प्रयोजनमाह—**तत्प्रख्येति** । नच ज्योतिष्टोमनामधेयसद्भावान्नामान्तरानर्थक्यं, न्यायप्राप्तत्वेन नामान्तरस्यापरिहार्यत्वात् । 'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम' इति व्यवहारस्य ज्योतिष्टोमनाम्नाऽन्यथासिद्ध्यसंभवेनानर्थक्याभावाच्चेति भावः । उक्तार्थे लिङ्गदर्शनमाह—**तथाचेति** । **समुच्चय इति** । फलवाक्येन सर्वेषां युगपद्ग्रहणात्प्रयोगवचनेन समुच्चित्योपादानादिति भावः । **दशेति** । उपांश्वन्तर्यामैन्द्रवायवमैत्रावरुणशुक्रमन्थ्याग्रयणोक्थध्रुवाश्विना दशग्रहा द्रष्टव्याः । **तृतीयमिति** । यद्यपि आश्विनः पञ्चमो हूयते तथाप्युपांश्वन्तर्यामयोरवषट्कारहोमत्वाद्वषट्कारहोमेष्वाश्विनहोमस्य तृतीयत्वं बोध्यम् । आदिशब्देन 'पञ्च माध्यंदिने गृह्णाति तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते' इत्यादिसंग्रहः । **क्रमेति** । दशेत्यनेन तृतीयशब्दे प्रकृत्या च समुच्चयः तीयप्रत्ययेन क्रमश्च प्रतीयत इति भावः । **अन्यथेति** । सोमवाक्यस्य यागविधायकत्व इत्यर्थः । **ननु** सोमवाक्यस्य यागविधायकत्वेऽपि दशैतानित्यादेः समुच्चयादिविधायकत्वेनोपपत्तेर्न क्रमसमुच्चयदर्शनानुपपत्तिरित्यरुचेराह—**यदि चेति** । **गुणेति** । ग्रहणगुणविधिरित्यर्थः । **आनर्थक्यमिति** । अनेनैव सोमशब्दस्य नामत्वपक्षे सोमवाक्यानर्थक्यं न दोषः । ऐन्द्रवायववादिबहुवाक्यानर्थक्यापेक्षयैकस्य सोमवाक्यस्यानर्थक्यस्य ज्यायस्त्वादित्यपि सूचितम् । **नन्वभिषवादिवाक्यबलेन** सोमस्य रसभावापत्त्यवगमाद्रसविषयग्रहणविधिर्नानुपपन्न इत्यत आह—**अभिषवादीति** । ततश्चोत्पत्तिशिष्टलतास्वरूपभङ्गापत्त्याऽभिषवादीनां संस्कारत्वानुपपत्त्यार्थकर्मत्वमेव त्वत्पक्षे स्यादिति न तद्बलाद्रसभावापत्त्यवगम इति भावः । ननु देवताया अभावेनारूपत्वात्सोमवाक्यस्यानुवादत्वेप्यग्नीषोमीयवाक्यस्य नानुवादकत्वम् तत्र द्रव्यदेवतयोः श्रवणादित्यतस्तत्रापि पूर्वपक्षमुपपादयति—**एवमिति** । **अनर्थकानीति** । अत्रैन्द्रवायववादिवाक्यानां यागविधायकत्वाभावेऽत्यन्तानर्थक्यं रसविषयग्रहणस्य सोमसंस्कारत्वानुपपत्त्या संस्काररूपग्रहणविध्यनुपपत्तेर्देवतासंबन्धानुपपत्त्याऽऽरादुपकारकस्यापि केवलग्रहणस्य विध्यनुपपत्तेर्हृदयादिवाक्यानां तु संस्कारविधित्वाभावेऽपि नानर्थक्यमदृष्टार्थमवदानमात्रविध्युपपत्तेः । नचोत्पत्तिशिष्टपशुजातीयद्रव्यविरोधप्रसङ्गादिदमप्ययुक्तमिति वाच्यम् । दर्शपूर्णमासजाघनीवत्सूनास्थहृदयादिग्रहणे सत्यारादुपकारकावदानोपपत्तेरेवं चारादुपकारकावदानविधायकानि स्युरित्यत्र तात्पर्यं बोध्यम् । **ननु** प्राप्तकर्मानुवादेन देवतायाः पशुजातेश्च विधानानुपपत्तेर्न

---

१ प्रकृतिर्विधातव्या. २ त्वासंभवात्. ३ प्रकृतिविधानं. ४ साधनीय.

दिवाक्यविहितहृदयादिद्रव्यककर्मानुवादेन देवताविधानमेतदिति वक्तव्यम् । पशुशब्दोऽपि 'हृदयादीनां छागस्य वपाया मेदसः' इति मन्त्रवर्णाच्छागप्रकृतित्वात्तेषामेव विकृतेः[1] प्रकृतिवदुपचारादनुवादः । ननु कानि पुनः[2] कर्माणि हृदयादिवाक्यैर्विधीयन्ते यान्यनूद्य देवताविधानम् । उच्यते । द्वावत्र पक्षौ एकस्तावदवदानमात्रमत्र विधीयते द्रव्यदेवतासंयोगा[3]भावात् प्रत्यक्षयज्यश्रवणाच्च । तदाक्षिप्तं तु स्पर्शनमालभतिनाऽनूद्यते । पशुशब्देन तु हृदयादिप्रकृतिद्रव्यवाचिनोपचाराद्धृदयादिद्रव्यं अग्नीषोमीयशब्देन तु[4] प्रतिहृदयाद्यग्नीषोमीयत्वे विहिते तावन्तो यागाः कल्प्यन्त इति । अपरस्त्वसत्यपि देवतासंबन्धश्रवणे हृदयाद्यवदानानां सान्नाय्यावदानप्रकृतिकत्वात्तद्वदेव[5] यागसाधनत्वं हृदयादीनामभिषवयुक्तपूतीकवल्लभ्यते तेन[6] यागानुवादेनैव देवताविधिरिति । तस्मात्समुदायानुवाद इति प्राप्तेऽभिधीयते—'द्रव्यान्तरेण संयोगान्नानुवादोऽवकल्प्यते ॥ तेन यागविधी एतावन्ये गुणविधायिनः ॥' पशुशब्दो हि जातिवचनोऽतज्जातीयेषु हृदयादिषु विना कारणेन न लक्षणया वर्तितुम[7]र्हति श्रौतपशुविशिष्टयागविधानोपपत्तेः । नच पशुविशिष्टे यागे[8] हृदयादिवाक्यानां गुणविधित्वासंभवः पशोरेव हृदयादिद्वारेण करणत्वोपपत्तेः, प्रनाड्यापि हि येन यत्क्रियते भवति तत्तस्य करणं । यथा लोके गोमयेन पचतीति, वेदे च तुषपका भवन्ति, यागेन स्वर्गमिति । तस्मादेको यागः पशुविशिष्टोऽग्नीषोमदेवत्यो विधीयते । हृदयादिवचनानि तु तत्रैव संस्कारमात्रविधानानि ।

---

देवताविधिसंभव इत्यत आह—**पशुशब्द इति । इति मन्त्रवर्णादिति** । इतिशब्द आद्यर्थपर्यवसन्नस्तेन छागस्य हविष आत्तामित्यादिमन्त्रसंग्रहः । **प्रकृतिवदिति** । प्रकृतिवाचकशब्देन लक्षणयाभिधानादिति पर्यवसितोऽर्थः । **ननु** हृदयादिवाक्यैर्न यागरूपकर्मविधिः यज्यश्रवणादवदानमात्रविधौ यागाभावात् पशुवाक्ये देवताविधिरप्ययुक्तः स्यादिति शङ्कते—**नन्विति । अवदानमात्रमिति** । ननु यागत्वेन यागविधिः यागत्वोपस्थापकाभावादिति मात्रशब्दार्थः । यागत्वेन यागोपस्थापकाभावमेवाह—**द्रव्यदेवतेति** । नन्ववदानमात्रविधावप्यालभतेः कथमनुवादकत्वं स्पर्शनस्याप्राप्तेरित्यत आह—**तदिति । तावन्त इति** । हृदयादीनामुद्देश्यतया एकेन पशुशब्देनानुवादलब्धमपि साहित्यमविवक्षितमिति प्रत्येकं देवतान्वये द्रव्यदेवतासंबन्धभेदाद्यागभेद इति भावः । यागभेदोक्त्यैव चात्रापि 'एकादश वै पशोरवदानानि हृदयस्याग्रेऽवद्यत्यथ जिह्वाया' इति क्रमसमुच्चयदर्शनोपपत्तिः । स्वपक्षे अग्नीषोमीयवाक्यस्य विधायकत्वे तु यागभेदाभावात्तदनुपपत्तिरिति सूचितम् । **अपरस्त्विति** । हृदयादिवाक्येषु हृदयादिष्ववदानं श्रूयते । तच्चावदानं हृदयादीनां पशुप्रभवत्वेन सान्नाय्यसाम्यात्सान्नाय्यावदानप्रकृतिकं गम्यते । ततश्च तद्वदेव हृदयाद्यवदानमपि यागसाधनमिति निश्चयेसति हृदयादिवाक्यैर्यागा एव विधीयन्ते तेषु च विधीयमानेषु चोदकप्राप्तावदानसंबन्धोऽनूद्यते । यथा सोमाभावे पूतीकानभिषुणुयादित्यभिषवसंयोगात्पूतीका यागसाधनत्वेन विधीयन्ते तद्विधितएव प्राप्तोऽभिषवसंबन्धोऽनूद्यते तद्वत् । इयांस्तु विशेषः । तत्र प्रकृतसोमयाग एव सोमाभावे निमित्ते नैमित्तिकद्रव्यमात्रविधिरिह तु प्रकृतयागाभावात् हृदयादिविशिष्टयागान्तरविधिरिति भावः । यद्यपि पूतीकाः न यागसाधनं, नायं सोमाभावे द्रव्यान्तरविधिः किंतु प्रतिनिधिनियम इति षष्ठे वक्ष्यमाणत्वात्तथापि प्रतिनिधिनियमोऽप्यभिषवसंयोगबललभ्य इत्यभिप्रायेण दृष्टान्तो बोध्यः । वस्तुतस्तु फलचमसोऽत्र दृष्टान्तत्वेनोपादेयः । तस्मै भक्ष्यं प्रयच्छेदिति यागीयद्रव्यप्रतिपत्त्यर्थभक्षसंयोगेन फलचमसस्य यागसाधनत्वेन विधानादिति । **द्रव्यान्तरेणेति** । पशुसोमलक्षणद्रव्यान्तरसंयोगे सति प्रत्यभिज्ञाविरहाद्धृदयादिरूपरसरूपद्रव्यान्तरावरुद्धे पशुसोमलक्षणद्रव्यविध्यसंभवाच्च पशुसोमवाक्ये नानुवादके किंतु द्रव्यविशिष्टकर्मान्तरविधायके हृदयाद्यैन्द्रवायवादिवाक्यानि तु तत्रैव गुणविधय इत्यर्थः । **ननु** पशुशब्दस्य हृदयादिषु प्रकृतिवदुपचाराद्वृत्तिरित्युक्तत्वान्न तत्र द्रव्यान्तरसंयोग इत्यत आह—**पशुशब्द इति** । ननु पशुवाक्ये पशुविशिष्टयागविधौ सति उत्पत्तिशिष्टपशुनैव यागः कर्तव्यो न हृदयादिनेति । तत्र हृदयादिवाक्यानां गुणविधायकत्वासंभवादानर्थक्यं स्यादतः पशुवाक्ये पशुशब्दस्य हृदयादिषु लक्षणा स्वीकार्येत्युक्तमत आह—**नचेति** । यद्युत्पत्तिशिष्टं पशोः करणत्वं हृदयादिवाक्यैर्गुणविधौ बाध्येत तदा परं हृदयादिवाक्यानामानर्थक्यं स्यान्नचेहोत्पत्तिशिष्टपशुकरणत्वबाधः हृदयादिद्वारा पशोरेव करणत्वादित्यर्थः । **ननु** पशोर्व्यवहितत्वात्करणत्वं नोपपद्यत इत्यत आह—**प्रनाड्येति । एको याग इति** । पशुद्रव्यस्यैकत्वादेको यागः त्वत्पक्षेऽनेके यागा इति गौरवं स्यादिति भावः । संस्कारमात्रविधानानीत्यनेन न प्राकृतावदानोद्देशेन हृदयादिविधिः किंतु हृदयादिविशिष्टावदानान्तरविधिरिति दर्शयति । यथाचावदानान्तरविधिस्तथा दशमे स्पष्टयिष्यामः । **नन्वेवमपि** सोमशब्दस्य पूर्वपक्षोक्तप्रकारत्रयेणोपपत्तेः सोम-

---

१ विकृतौ. २ कथं पुनः. ३ संयोगाश्रवणात्. ४ तु हृदयादिप्रकृतद्रव्येऽग्नीषोमीयत्वेन. ५ तद्वदत्र. ६ न यागानु. ७ भवितुम. ८ यागे विहिते.

तथा सोमेन यजेतेति सोमशब्दो लतावचनः। नचासौ प्रकृतेष्वैन्द्रवायवादियागेषु हविष्ट्वेन विधातुं शक्यते । धारया गृह्णातीति गुणवाक्येन संनिधापितस्य द्रवद्रव्यस्यैन्द्रवायवमिति तद्धितेन देवतासंबन्धित्वेन श्रुत्या विधानान्न तावद्धविर्विधानं । नापि तत्प्रख्यन्यायेन नामधेयत्वं । सोमरसस्य प्रागस्माद्वचनादप्राप्तेः । नन्वैन्द्रवायवमिति प्रकृताभिधायी तद्धितोऽभिषवादिवाक्यैः प्रकृतं सोमरसमेवाभिधत्ते । मैवम् । अणव्या धारया गृह्णातीत्यनेन वाक्येन व्यवधानादभिषवादिवाक्यानामप्रकृतत्वाद्धारासमर्थद्रव्यमात्रमत्र प्रकृतम् । नच धारावाक्यं सोमरसविषयं धारामात्रश्रवणात्तन्मात्रेणैवच वाक्यार्थोपपत्तेः।सत्यपि [1]संनिधौ तद्विषयत्वं धारावाक्यस्याप्रामाणिकम् । संस्कारवाक्येषु हि लौकिकस्य संस्कारानुपपत्तेरपूर्वसाधनविशेषलक्षणया कथंचित्प्रकृतग्रहणं युक्तम् । धारावाक्येतु ग्रहणोद्देशेन धारामात्रविधानान्न प्रकृतापेक्षा । किंचास्मिन्पक्षेऽयमपि नियमो नास्ति य एव क्रये सोमः स एवाभिषवे, यश्चाभिषवे सएव पावने इति । सर्वेषां क्रयादिवाक्यानां लौकिकसोमग्रहणेनारादुपकारकक्रयादिविधायिनां मिथोऽनपेक्षत्वात् । नच प्रकरणाद्विशेषलाभः । प्रकरणस्याविशेषकत्वात् । नाप्यधिकाराद्विशेषसिद्धिः, तुल्येषु नाधिकारः स्यादिति हि द्रव्यसंख्याहेतुसमुदायमित्यत्र वक्ष्यति । यदिहि तं सोममभिषुणुयादिति तच्छब्दः श्रूयेत ततः सा वैश्वदेवीतिवत्प्रकृतग्रहणं भवेत् । सोममात्रश्रवणे तु न प्रकृतगामित्वम् । एवं धारावाक्येऽपि ऐन्द्रवायवादिवाक्येषु प्रकृतगामित्वपि

---

वाक्येन द्रव्यान्तरसंयोग इत्याशङ्क्य तत्र हविर्विधिपक्षं प्रथमतो दूषयति—**तथेति । धारयेति** । नहि धारावाक्यान्यथानुपपत्त्या सोमलक्षणद्रव्यविधिर्न संभवतीति वयं वदामः येन सोमद्रव्यस्य रसीभावेनापि धारावाक्योपपत्तिः स्यात् किंत्वैन्द्रवायवमिति द्रव्यसामान्यवाचकस्य तद्धितस्य धारावाक्यसंनिहितधारासमर्थद्रव्यविशेषविषयतयैव प्रवृत्तेरैन्द्रवायवादिवाक्ये एव द्रव्यविशेषलाभे सति गृह्णातिनाऽनियमेन द्रव्याक्षेपाभावान्न द्रव्यविधिनियमः संभवतीत्यर्थः । **प्रागिति** । सोमेन यजेतेत्याहत्य सोमविधेः प्राक् सोमरसस्याप्राप्तेरित्यर्थः । **ननु** धारावाक्यस्य सोमरसविषयत्वेन धारावाक्यसंनिधापितसोमरसविषयत्वमैन्द्रवायवादितद्धितस्य भविष्यतीत्यत आह—**नच धारेति** । ननु धारावाक्ये सोमरसाश्रवणेऽपि अभिषवादिवाक्यसंनिधानात्तस्य सोमरसविषयत्वमस्त्वित्यत आह—**तन्मात्रेणेति**। नहि तद्धितस्य सामान्यवाचिनो विशेषं विना पर्यवसानाभाववद्धाराशब्दस्यापर्यवसानमस्ति श्रुतमात्रेण पर्यवसानादिति भावः । **नन्वेवं** व्रीहीन्प्रोक्षतीत्यादिषु यथा प्रकृतग्रहणं तद्वद्धारावाक्ये प्रकृतग्रहणं किं न स्यादित्याशङ्क्य वैषम्यमाह—**संस्कारेति** । कथंचिदित्यस्य विवरणं **लक्षणेति । ग्रहणोद्देशेनेति** । ग्रहणार्थत्वेनेत्यर्थः । **ननु** धारावाक्यस्यैन्द्रवायवादिवाक्यविहितग्रहणोद्देशेन धाराविधायकत्वे ऐन्द्रवायवादिवाक्यप्रवृत्त्यनन्तरं प्रवृत्तेर्वक्तव्यत्वेन धारावाक्यप्राप्तधारासमर्थद्रव्यविषयत्वमैन्द्रवायवादितद्धितस्य न स्यात् किंतु संनिहिताभावाद्व्यवहितत्वेऽप्यभिषवादिवाक्यप्राप्तसोमरसविषयत्वमेव स्यादित्यस्वरसादाह—**किंचेति** । सोमवाक्येन सोमद्रव्यस्याहत्य विध्यनङ्गीकारे सोमस्याप्राप्तत्वेनाभिषवादिवाक्यानां संस्कारविधायकत्वानुपपत्त्यारादुपकारकक्रयादिविधायकत्वेन तेषामेवैकसोमविषयत्वाभावाद्धारावाक्यस्याभिषवादिवाक्यसंनिहितसोमरसविषयत्वं दूरापेतमित्याशयः । **ननु** क्रयादिवाक्यानामेकयागप्रकरणे आम्नाततत्वेन प्रकरणानुसारादेव तद्वाक्येषु प्रकृतं सोमं क्रीणाति प्रकृतं सोममभिषुणोतीत्येवमाकारेण विशेषितसोमस्य ग्रहणात्सर्वेषामेकविषयत्वमस्त्वित्यत आह—**नचेति** । प्रकरणंहीतीकर्तव्यतालक्षणं वाऽऽकाङ्क्षालक्षणं वा तस्य च विनियोगमात्रे व्यापार इति न तस्य परविशेषकत्वं संभवतीत्यर्थः । प्रकरणस्याविशेषकत्वं सप्तमाद्ये सम्यगुपपादयिष्यामः । **ननु** प्रकरणस्याविशेषकत्वेऽपि संनिध्यपरपर्यायादधिकाराद्विशेषोस्तु सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीत्यादौ संनिहितैकहायनीसंबन्धिपदमित्यभ्युपगमेन संनिधानाद्विशेषलाभसंभवादित्यत आह—**नाप्यधिकारादिति । तुल्येष्विति** । नवमे द्रव्यसंख्याहेतुसमुदायमित्यधिकरणे 'तुल्येषु नाधिकारः स्यात्'इति गुणसूत्रे तुल्येषु वाक्येषु एकत्र संनिधिरपरत्र विशेषहेतुर्न स्यात्तुल्यत्वेन विनिगमनाविरहादिति सूत्रकारो वक्ष्यतीत्यर्थः । **ननु** सा वैश्वदेवीत्यस्य संस्कारविधित्वाभावेऽपि संनिहितपरत्वं दृष्टं तद्वदिह किं न स्यादित्यत आह—**यदीति** । तत्र तच्छब्दस्य श्रवणात्तस्य च संनिहितपरामर्शित्वात्तप्ते पयसि दध्यानयतीति वाक्यसंनिहितपरत्वं युक्तं न त्विहेत्यर्थः । ननु यथा सप्तमं पदमित्यत्र कस्य पदमित्यपेक्षायां संनिधानादेकहायन्याः पदमिति स्वीक्रियते तद्वदिहापि कस्य धारेत्यपेक्षायां संनिहितसोमरसविषयत्वं धारावाक्यस्यावर्जनीयमित्यत आह—**एवमिति** । पदस्यावयवत्वेन नित्यमवयविसाक्षेपत्ववद्धाराया न नित्यमन्यापेक्षत्वमिति वैषम्यमिति भावः । **नन्वेवमैन्द्रवायवमिति** तद्धितस्य सास्यदेवतेति विहितस्य सर्वनामतुल्ययोगक्षेमतया सा वैश्वदेवीतिवत्प्रकृतपरत्वमवर्जनीयमित्याशङ्क्योक्तं स्मारयति—**ऐन्द्रवायवेति** । प्राभाकरैस्तु पूर्वपक्षे वार्ति-

---

१ संनिधाने.

धारासमर्थं द्रव्यमेव गृह्यते नतु सोमरसस्तस्याप्रकृतत्वादित्युक्तम् । अतो न तत्प्रख्यन्यायेन नामधेयत्वम् । एतेनैकदेशिनः संस्कारवाक्यैः सोमरसस्य प्राप्तिमभिदधाना निरस्ता वेदितव्याः । तेषां च सिद्धान्तेऽपि तथैव सोमप्राप्तेः सोमपदं नामधेयं स्यादित्यास्तां तावत् । एवं तावन्न हविष्ट्वेन विधानं नापि नामधेयत्वमित्युक्तं, प्रकृतिद्रव्यविधानं त्ववशिष्टं तन्निराकरणार्थं च सूत्रं 'अचोदकाश्च संस्कारा' इति । यद्यैन्द्रवायवादिवाक्येषु यागो विधीयेत ततः स्यात्प्रकृतिद्रव्यविधिः । तेषु तु ग्रहणमात्रमेव देवताविशिष्टं यागे विधीयते तन्मात्रश्रवणात् । संभवति च ग्रहणेनैन्द्रवायवं कुर्यादिति विधिः । यद्यपि न ग्रहणमात्रेण तद्देवत्यता भवति यागसहितेन तु ग्रहणेन शक्यते तद्देवत्यता कर्तुम्, अतो देवताविशिष्टे ग्रहणे चोदिते यागमन्तरेण तदनुपपत्तेः, यागापेक्षायां सोमेन यजेतेत्येतत्सर्वत्र द्रव्यदेवतासंबन्धमुपपादयद्यागान्तरकल्पनां निरुणद्धि । दशमुष्टीर्मिमीत इति च परिमाणश्रवणात्तावतश्च सोमस्याल्पपरिमाणैः पात्रैरसति समुच्चये ग्रहणासंभवाद्यथागृहीतानामेव च होमादुपपन्नं क्रम-

ककारोक्तीतः प्रकृतिद्रव्यविधिपक्षो न संभवति संस्कारवाक्यैरेव सोमरसस्य प्राप्तेरित्युक्तं तदप्युक्तरीत्या संस्कारवाक्यैः सोमरसप्राप्त्यसंभवान्निरस्तमित्याह—एतेनेति । अत्र अण्व्या धारया गृह्णातीतिवाक्ये धारासमर्थं द्रवद्रव्यं न श्रुतं धारामात्रश्रवणाद्धाराशब्दस्य च द्रवद्रव्यवचनत्वाभावाद्बिन्दुसंततिमात्रवचनो ह्यसौ । तत्र धेनुवृषभशब्दादौ गवादिद्रव्यवत् द्रवद्रव्यस्य धाराशब्दार्थे उपाधित्वमात्रम् । एवंच धारावाक्ये आक्षेपत एव द्रवद्रव्यप्रतीतिर्वाच्या । नच संस्कारवाक्यप्रकृतसोमरसरूपद्रवद्रव्यलाभे सत्याक्षेपो युज्यते, तस्माद्धारावाक्यस्यापि सोमरसविषयत्वादैन्द्रवायवादितद्धितस्य धारावाक्यसंनिहितविशेषपरत्वेऽपि सोमरसविषयत्वावश्यंभावात् प्रकृतिविशेषविशिष्टत्वेनैव रसप्राप्तेः प्रकृतिविधानमयुक्तमिति भवनाथोक्तं न युक्तम् । संस्कारवाक्येष्वपि सोमशब्दस्यैव श्रवणेन रसस्याश्रवणात् । नच सोमं क्रीणातीत्यादीनां लताविषयत्वेऽपि सोमं पावयतीत्यादीनां रसविषयत्वावश्यंभावेन तत्र सोमशब्देन रसस्य लक्षणीयत्वादस्ति संस्कारवाक्येषु रसस्य शब्दादुपस्थितिरिति वाच्यम् । लक्षणयोपस्थितिर्ह्यनुपपत्तिप्रतिसंधाननिबन्धना । ततश्च वाक्यान्तरावगतसोमशब्देन मुख्यार्थानुपपत्तिप्रतिसंधानपूर्वकं लक्षणया रसप्रतीतेर्विलम्बितत्वेनापेक्षितार्थस्य वाक्यान्तराज्झटित्यवगमाभावेन वाक्यान्तराद्विलम्बेन प्रतीतिपर्यन्तमस्य वाक्यस्य प्रतीक्षाया वक्तुमनुचितत्वेन स्ववाक्य एवाक्षेपाद्धारासमर्थद्रव्यप्रतीतिकल्पनस्यैव ज्यायस्त्वात् । एवंच धारावाक्योपस्थितधारासमर्थद्रव्यमात्रविषयत्वादैन्द्रवायवादितद्धितस्य सोमवाक्येन प्रकृतिद्रव्यविधिर्नानुपपन्न इति ॥ यद्येवं नाभ्युपेयते तदा बाधकमाह—तेषांचेति । यथा ऐन्द्रवायवादितद्धितस्य सोमं पावयतीत्यादिवाक्यसध्रीचीनधारावाक्यप्राप्तसोमरसविषयत्वं पूर्वपक्षे स्वीकृत्य पूर्वपक्षे आचार्योक्तीतः प्रकृतिद्रव्यविधिपक्षो निराक्रियते तर्हि तेषांमते पूर्वपक्षवदेव सिद्धान्तेऽपि तथैवैन्द्रवायवादितद्धितस्य सोमरसविषयत्वसंभवादैन्द्रवायवादिवाक्यैः सोमरसविशिष्टग्रहणविधौ सति देवतावद्द्रव्यस्याप्यैन्द्रवायवादिवाक्यैरेव प्राप्तौ सोमवाक्यं केवलयागविधायकं स्यात् सोमपदं च तत्प्रख्यन्यायेन नामधेयं स्यादित्यर्थः । ननु स्ववाक्ये द्रव्यविधौ संभवति वाक्यान्तरात्तल्लाभो न युक्त इत्यत आह—आस्तामिति । तथासति तत्प्रख्यन्यायोच्छेदः स्यादिति भावः । तन्निराकरणार्थमिति । सोमशब्दस्य प्रकृतिद्रव्यविधानार्थत्वे सोमवाक्ये द्रव्यान्तरसंयोगाभावेन प्रथमसूत्रेण तन्निराकरणासंभवादिति भावः । एवंच पशूदाहरणे पूर्वपक्षस्य प्रथमसूत्रेणैव निराकर्तुं शक्यतया प्रथमतस्तत्र सिद्धान्त उपपादित इति बोध्यम् । सूत्रेण क्रियमाणं तन्निराकरणप्रकारं विशदयति—यदीति । यागेति । ग्रहणस्य यागार्थत्वे सति यागद्वारा ग्रहणेनैन्द्रवायवः कृतो भवतीति भावः । नन्वेवं यागावश्यंभावे यथा आग्नेयोऽष्टाकपालो भवतीत्यत्र श्रुतस्य द्रव्यदेवतासंबन्धस्य निर्वाहकत्वेन तत्रैव वाक्ये यागः कल्प्यते एवमैन्द्रवायवादिवाक्येषु यागः कल्प्यतां । तथाच सोमवाक्यं विद्वद्वाक्यवदनुवादकमेव । इतरथा विद्वद्वाक्यमप्यनुवादकं न स्यात् । सोमवाक्यस्यैन्द्रवायवादिवाक्यापेक्षितयागविधायकत्ववत्तस्याप्याग्नेयवाक्यापेक्षितयागविधायकत्वमेव स्यादित्यत आह—अत इति । विशिष्टार्थाभिधानेन पर्यवसितस्य हि वाक्यस्याकाङ्क्षाबलाद्वाक्यान्तरेण संबन्धः । आग्नेयवाक्ये च पुरुषव्यापाराश्रवणाद्विशिष्टभावनाभिधानमेव न पर्यवस्यति । अपर्यवसितस्य च न विद्वद्वाक्येनान्वय इति विशिष्टभावनाचोदनापर्यवसानाय पुरुषव्यापाररूपो यागस्तत्रैव कल्प्यते तेन विद्वद्वाक्यमनुवाद इति युक्तम् । इह त्वैन्द्रवायवादिवाक्येषु ग्रहणरूपस्य पुरुषव्यापारस्य श्रवणात्तदभिधानापर्यवसानं किंत्वभिधानानन्तरं देवतासंबन्धनिर्वाहकापेक्षामात्रमिति सोमवाक्यमपेक्षितविधानार्थं संपद्यते । एवं श्रुतेनैव निर्वाहोपपत्तावैन्द्रवायवादिवाक्येष्वश्रुतयागकल्पनं न युक्तमिति वैषम्यमित्यर्थः । तावत इति । परिमाणश्रवणबलेन सर्वस्य रसीकरणावश्यंभावादिति भावः । नन्वल्पपात्रैर्ग्रहणानन्तरं सर्वेषां पात्रान्तरे एकीकृतानां होमसंभवान्नाभ्याससिद्धिरित्यत आह—यथेति । अल्पपात्रैर्ग्रहणस्यैवावदानवत्प्रदानपर्यन्तत्वात् ग्रहचमसानामेव होमसाधनत्वश्रवणाच्च

१ संबन्धानुपपादयत्.

समुच्चयदर्शनम्। आश्विनो दशमो गृह्यते तं तृतीयं जुहोतीति त्रयाणामपि समुदायानुवादापवादाधिकरणानां पूर्वपक्षे कर्मभेदः सिद्धान्ते त्वभेद इति लक्षणसंबन्धः॥

संख्याकृतकर्मभेदाधिकरणम्॥ ७॥

## पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात्॥ २१॥

आहुतीस्तिस्र इत्यत्र कर्मैक्यमुत भिन्नता॥ एकत्वं सकृदाख्यातात्संख्यावृत्त्या प्रयाजवत्॥ १७॥
आख्यातमात्रं नो मानं संख्यया बहुकर्मता॥ आवृत्त्यैकादशत्वं तु प्रयाजे गत्यभावतः॥ १८॥
पशून्सप्तदश प्राजापत्यानित्यत्र भाष्यकृत्॥ विचारमाह पूर्वत्र क्रियात्रित्वस्फुटत्वतः॥ १९॥
बहुत्वोपेतपशुभिर्देवयोगादभिन्नता॥ रूपस्य तेन कर्मैक्यं संख्या नात्र क्रियागता॥ २०॥
देवतासंगतस्यैव तद्धितार्थस्य पश्चिमः॥ बहुत्वसंगमो रूपसंख्यया तत्क्रियाभिदा॥ २१॥

गतोऽभ्यासप्रसङ्गः। संख्यया भेद इदानीमभिधीयते। अत्र कर्मोत्पत्तिवाक्यगता कर्मसमानाधिकरणासंख्योदाहरणम्। यथा तिस्र आहुतीर्जुहोति द्वादशद्वादशानि जुहोतीति, तत्रैको होमो विधीयते बहवो वेति संदेहः। तत्र—'आख्यातस्य सकृच्छ्रुत्या कर्मैकत्वेऽवधारिते॥ संख्यासंपत्तिरभ्यासात्प्रयाजैकादशत्ववत्॥' तदुच्यते—'स्यादेवं यदि कर्मैक्यं प्रागस्मादवधारितम्॥ आख्यातमात्रात्तत्सिद्ध्येत्तावतश्चाप्रमाणता॥' एकादश प्रयाजान्यजतीति निर्ज्ञातसंख्येषु प्रयाजादिषु

---

न पात्रान्तरेण होमः संभवतीति भावः। पशूदाहरणे तु क्रमसमुच्चयोपपादनं दशमे हृदयादीनां समुच्चयस्य वक्ष्यमाणत्वात्तत एव व्यक्तमिति द्रष्टव्यं प्रयोजनम्। पूर्वपक्षे ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तस्य यागस्य स्वार्थतया विनियुक्तदेवताकत्वाभावलक्षणाव्यक्तत्वाभावाद्विश्वजिदादिष्विवाव्यक्तासु तु सोमस्येति न्यायाप्रवृत्तिः। सिद्धान्तेतु तत्प्रवृत्तिः। पशूदाहरणे तु पूर्वपक्षे यागभेदाद्विकृतिष्वेकस्यैव यागस्येतिकर्तव्यताप्राप्तेर्हृदयादिना त्वेकेन यागः, सिद्धान्ते सर्वैः। यद्वा पूर्वपक्षे सारस्वतं मेषमैन्द्रमृषभमित्यादिषु विशसनादिकमकृत्वा श्रुतमेषादिजातीयेन द्रव्येणाविकृतेनैव यागः कर्तव्यः। विकृतिषु विशसनादीनामनुपदिष्टत्वात् अभिषवादिविधिभिश्चोत्पत्तिशिष्टा लता न रसीकर्तुं शक्यत इत्यादिग्रन्थेन परंपराश्रयणे श्रुतविरोधस्योक्तत्वेन तन्न्यायेन मेषवृषभादिष्वपि श्रुतमेषादिजातीयसाधनत्वविरोधप्रसङ्गेन विशसनादीनां चोदकतः प्राप्त्यसंभवात्। सिद्धान्ते तु प्रकृताविव विकृतावपि परंपराश्रयणेऽपि श्रुतद्रव्यस्याविरोधाच्चोदकानुसाराद्धृदयादिभिर्याग इत्याद्यूह्यम्। सूत्रार्थस्तु—पशुसोमवाक्ययोर्द्रव्यान्तरसंयोगात्कर्मचोदनाप्रकरणे प्रकृतहृदयाद्यैन्द्रवायवादिवाक्यविहिते यागे सति हि पशुसोमवाक्ययोर्द्रव्यसंयोगोऽनर्थकः स्यान्नहि तस्य गुणार्थेन संभव इति॥

**पृथक्त्वनिवेशात्०॥ २१॥** उत्पन्नकर्मानुवादेन विधीयमाना संख्या न कर्मभेदनक्षमा संख्याविधिवाक्ये कर्मोत्पत्तेरेवाभावेनोत्पत्तिविधिगम्यभेदस्य तत्राप्रसङ्गादतएव प्रयाजैकादशत्वादीनां न भेदकत्वमित्याशयेनाह—**कर्मोत्पत्तीति।** उत्पत्तिवाक्यगतापि संख्या यदि दर्भपिञ्जूलैः पावयतीतिवत्कर्मगता न भवेत्तदा तया न कर्मभेदः सिद्ध्येदित्यत आह—**कर्मसमानाधिकरणेति।** कर्मवाचकशब्दसमानाधिकृतशब्दाभिधेयेत्यर्थः। अत्र कर्मोत्पत्तिवाक्यगतत्वं तद्वाक्यविधेयत्वं विवक्षितं तेन यत्र समिधो यजतीतिबहुवचनान्तनामस्थले बहुत्वं समिधो अग्नआज्यस्य व्यन्त्विति मन्त्रवर्णप्राप्तं देवतागतमनूद्यते नतु कर्मगतत्वेन विधीयते तत्र नातिप्रसङ्ग इति द्रष्टव्यम्। आमनहोमविधायकवाक्यमुदाहरति—**तिस्र इति। द्वादशेति।** द्वादशसंघातान् प्रत्येकं द्वादशसंख्यायुक्ताञ्जुहोतीत्यर्थः। ततश्चचतुश्चत्वारिंशदधिकशतं होमाः संपन्नाः। तत्राग्नाविष्णू इत्याद्याः कूयवाश्चम इत्यन्ताः पञ्चत्रिंशदधिकशतंमन्त्राः कूयवाश्चम इत्यावृत्त्या शेषसंख्यापूरणमिति बौधायनीयाः। **आख्यातस्येति।** सकृच्छ्रुतस्याख्यातस्य एकमात्रविधिसामर्थ्यं नत्वनेककर्मविधिसामर्थ्यम्। सकृच्छ्रुतस्यानेकत्र व्यापारायोगात्तथाच स्वपदगताख्यातबलात्कर्मैक्येऽवधृते पदान्तरगतसंख्याभ्यासेनैव संपाद्या। यथैकादश प्रयाजान्यजतीति पशौ श्रुतं प्रयाजैकादशत्वं प्रयाजानां प्रकृतौ पञ्चसंख्याकत्वेन निर्ज्ञातत्वात्तदविरोधायाभ्यासेन संपाद्यमेवमिहापि आख्यातावगतैकत्वाविरोधायाभ्यासेनैव संख्या संपाद्येत्यर्थः। एवंचाभ्यासस्थले आख्यातस्य पुनःश्रुत्या कर्मभेदेऽपि संख्यास्थले न कर्मभेदः पुनःश्रुत्यभावादित्यभ्यासप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानादभ्यासानन्तरं संख्यैव सङ्गतेति भावः। अभ्यासप्रतिष्ठायाः पशुसोमपर्यन्तत्वात्पशुसोमाधिकरणेनास्य न पृथक्संगत्यपेक्षेति द्रष्टव्यम्। **असादिति।** संख्यावाचकपदसंबन्धादित्यर्थः। **ननु** पदान्तरसंबन्धात्प्रागेवाख्यातात्तत्सिद्धिरित्युक्तमित्यत आह—**आख्यातेति।** यद्यप्युक्तरीत्या सकृच्छ्रुतस्याख्यातस्यैकमात्रकर्मविधिशक्तत्वादाख्यातमात्रात्कर्मैक्यसिद्धिः संभाव्यते तथापि यत्र वाक्ये कर्मैक्यविरोधिपदान्तरं नास्ति तत्रैवाख्यातस्य कर्मैक्यसाधकत्वम्। यत्र तु तद्विरोधि पदान्तरमस्ति तत्र नाख्यातात्कर्मैक्य-

श्रुतासंख्यायुक्तं यदभ्यासेन पूर्यते । नचैवमिह कर्मैकत्वं विज्ञातम् । नह्याख्यातमात्रं प्रमाणम् । यतः कर्मैकत्वं प्रागवधारितं स्यात् । यावन्ति हि वाक्ये पदानि प्रयुज्यन्ते तावतां संहृत्य प्रामाण्यम् । अतो विदधदेवाख्यातं संख्यासामानाधिकरण्याद्बहूनि कर्माणि श्रुतसंख्याविशिष्टानि विधत्त इति [1]सिद्धो भेदः । अत्रच कर्मण्येव संख्याश्रवणात्पूर्वपक्षाशङ्का मन्देति मत्वा भाष्यकारः सप्तदशप्राजापत्यानित्युदाहरत् । अत्रहि द्रव्यगतया संख्यया नातिस्फुटः कर्मभेद इति विचार्यते, किं सप्तदश पशुद्रव्यक एको यागो विधीयते किंवैकैकपशुद्रव्यकाः सप्तदशैव यागा इति । तदर्थं च विचार्यते । प्राजापत्यानिति प्रकृत्या प्रजापतिर्देवताभिधीयते तद्धितेन पशुद्रव्यं, बहुवचनेन बहुत्वम् । [2]तत्र किं तद्धितार्थः पशुः प्रथमं बहुत्वेनान्वितः पश्चात्प्रजापतिना देवतया संबध्यते पशुश्च पशुश्च पशुश्च पशवस्तेषां प्रजापतिर्देवतेति, तदा च बहुभिः पशुभिर्व्यासज्यैका देवता संबध्यते इति द्रव्यदेवतासंबन्धैक्यादेको यागो भवति । किंवा प्रथमं प्रजापतिनान्वितः पशुः पश्चाद्बहुत्वेन संबध्यते । प्रजापतिर्देवतास्येति प्राजापत्यः प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्याः बहव इति तदा भिन्नैर्द्रव्यदेवतासंबन्धैर्भिन्ना एव यागाः [3]कल्प्यन्ते । तत्र प्राजापत्यशब्देन देवतासंबन्धोपसर्जनं द्रव्यमेव प्राधान्येनोच्यते । यच्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेन संबन्धो नोपसर्जनस्य देवतासंबन्धस्य । ननु देवताविशिष्टं द्रव्यमभिहितमिति विशिष्टेनैव रूपेण संख्यान्वयः स्यान्न स्वरूपमात्रेण । न । द्वौ त्रय

---

सिद्धिः । नह्याख्यातस्य कर्मैक्यमर्थः किंतु भेदनियामकाभावे आख्यातस्य सकृच्छ्रुत्यार्थादैक्यसिद्धिः । प्रकृते च तिस्र इत्यादिपदमेव भेदनियामकमस्ति । सति च भेदनियामके सकृच्छ्रुतमेवाख्यातं भिन्नान्यपि कर्माणि युगपदेव विधत्त इति नाख्यातमात्रादेकत्वसिद्धिः । यदि च तिस्र इत्यादिपदासहितं आख्यातमात्रमेव एकं वाक्यमभविष्यत्तदा तन्मात्रजन्यप्रमायां विरोधिसंख्यान्तराभानादाख्यातं कर्मैक्यमवागमिष्यत् । नचाख्यातमात्रमेकं वाक्यम् । तस्मादाख्यातमात्रस्य पृथक्प्रामाण्याभावान्न तत ऐक्यसिद्धिरित्यर्थः । **एकादशेति** । प्रकृतौ पञ्चसंख्याकानां तेषां विकृतावपि चोदकेन तत्संख्या निर्ज्ञातेति भावः । **विदधदेवेति** । न कर्ममात्रं प्रथमतो विधत्ते येनैक्यावगमं प्रत्याशास्यादित्येवकारार्थः । विदधदेवेत्यनेनानेककर्मविध्यर्थमाख्यातस्य व्यापारभेदो नास्तीत्यपि दर्शयति—**मन्देति** । सहश्रुतपदानां संभूयैकार्थप्रतिपादकत्वस्य तद्भूताधिकरणादौ बहुधोक्तेरिति भावः । आचार्यैस्तु पूर्वपक्षस्य मन्दत्वेऽपि प्रागुक्ताभ्यासप्रत्युदाहरणसङ्गतिलोभात्तिस्र आहुतीरित्याद्युदाहृतमित्याहुः । **प्रथमं बहुत्वेनेति** । ननु तद्धितार्थस्य प्रथमं बहुत्वान्वयोऽनुपपन्नः । प्राजापत्यशब्दस्य तद्धितान्तस्यैकशेषे सति तस्यैव बहुष्वर्थेषु प्रवृत्त्या प्राजापत्यशब्दार्थस्यैव बहुत्वान्वययोग्यतया प्रथमं तद्धितार्थस्य बहुत्वान्वयात्पूर्वमेव प्रजापत्यान्वयावश्यंभावादिति चेदुच्यते । प्रजापतिशब्दाद्बहूनां ण्यप्रत्ययानामुपपत्तौ तद्धितमात्रस्यापि एकशेषसंभवेन केवलतद्धितस्यापि बहुषु वृत्तिरविरुद्धेति तद्धितार्थमात्रस्यापि बहुत्वान्वयः संभवत्येव । 'यञञोश्चे'त्यत्र यञां बहुष्वञां बहुष्वित्यप्यर्थस्य स्वीकारेण गर्गा इत्यादौ गर्गशब्दादेकस्माद्बहूनां यञामुत्पत्तेस्तद्धितमात्रैकशेषस्य च सरूपसूत्रे 'तद्राजस्य बहुषु तेनैवास्त्रिया'मिति सूत्रे च भाष्यप्रदीपयोर्व्यवहृतत्वात् । तथाच यदि तद्धितमात्रस्यैकशेषस्तदा प्रथमं बहुत्वान्वयानन्तरं तद्धितार्थस्य प्रकृत्यर्थान्वयः । यदि च तद्धितान्तस्य एकशेषस्तदा प्रथमं प्रकृत्यर्थान्वितस्य तद्धितार्थस्य पश्चाद्बहुत्वान्वय इति पक्षद्वयसंभवाद्युक्तः संशयः । यद्यपि तद्धितस्य देवताविशिष्टद्रव्यवाचित्वात्तद्धितार्थस्य प्रथमं बहुत्वान्वयेऽपि द्रव्यदेवतासंबन्धभेदप्रसङ्गान्न यागैक्यसिद्धिः तथापि तद्धितस्य द्रव्यमात्रवाचित्वं देवता तु तद्धितोपसंदानात्प्रकृत्यैव प्रतीयते इति पक्षे तद्धितार्थद्रव्यमात्रस्यैव बहुत्वान्वयान्न यागभेदप्रसक्तिरित्याशयः । अतएव प्रकृत्या प्रजापतिर्देवता तद्धितेन तु पशुद्रव्यमित्यादिवाक्येषु प्रकृतेः प्रजापतिदेवताप्रत्यायकत्वव्यवहारः तद्धितस्य द्रव्यमात्रप्रत्यायकत्वव्यवहारश्च सङ्गच्छत इति ध्येयम् । **पशुश्चेति** । यद्यपि तद्धितो द्रव्यसामान्यवाची तथापि प्राजापत्यान्पशूनिति समभिव्याहारात्सामान्यवाचकस्यापि तद्धितस्य पशावेव पर्यवसानात्तथोक्तम् । अस्याः कोटेर्यागैक्यफलकत्वमिदानीमेवोपपादयति—**तदा चेति** । द्वितीयकोटेर्बहुयागफलकत्वमुपपादयति—**तदा भिन्नैरिति** । द्रव्यदेवतासंबन्धस्य यागकल्पकत्वात्तद्भेदे यागभेद आवश्यक इति भावः । यद्वा क्रियाणां फलापवर्गित्वाद्द्रव्यदेवतासंबन्धरूपफलभेदे यागक्रियाभेदोऽप्यावश्यक इति भावः । ननु तद्धितमात्रस्यैकशेषेपि तद्धितान्ताद्बहुवचनोत्पत्त्यनन्तरप्रकृत्यर्थान्वयस्य प्राथमिकत्वावश्यंभाव इत्याशङ्कायां प्रथमं तद्धितार्थस्य प्रजापतिना देवतयान्वयेपि विशेष्यमात्रस्यैव बहुत्वान्वयो न प्रजापतिदेवताविशिष्टस्येति तदापि नेष्टसिद्धिरिति परिहारमभिप्रेत्याह—**तत्रेति** । **विशिष्टेनेति** । प्रतीतस्य तद्रूपस्य परित्यागे मानाभावादिति

---

[1] प्रमितं स्यात्. [2] तत्र तद्धितार्थो बहुत्वेन प्रथममन्वितः. [3] कथ्यन्ते.

इत्यत्रानैकान्त्यात् । नहि द्वावित्यत्र द्वित्वविशिष्टेन रूपेण द्विवचनाभिहितसंख्यायोगः । तथासति द्वाविति चत्वारः प्रतीयेरन् । एवं त्रय इति नव । तथा तस्माद्यथा तत्र द्वित्वविशिष्टमपि द्रव्यं द्विशब्देनोक्तं स्वरूपेणैव द्विवचनाभिहितसंख्यायोगं प्रतिपद्यते तथात्रापि तद्धिताभिहितं द्रव्यं स्वरूपेणैव बहुत्वयोगं प्रतिपद्यते न सोपसर्जनम् । तस्मादेकं कर्म सप्तदशपशुद्रव्यकं । कथमिदानीं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदानद्रव्यकत्वं यागस्यानुग्रहीतव्यम् । मानुग्राहि । नचोदकानुसार्युपदेशनिर्णयः । यथोपदेशं त्वतिदेशवर्णनम् । तस्मादेकं कर्मेति प्राप्ते ब्रूमः—'यदि कर्म भवेदेकमेकः स्याच्चोदकस्ततः ॥ तेन चैकगणप्राप्तेः पशुसंख्या विरुध्यते ॥' सवनीयविकारा ह्यैकादशिनाः तद्विकाराश्च प्राजापत्याः । तत्र चैकपशुनिष्पन्नैकादशावदानद्रव्यत्वं यागस्यासीदित्यत्राप्येकत्वे यागस्य चोदकोप्येकमेवावदानगणमतिदिशेत् । तस्मादत्र सप्तदशानां प्राजापत्यत्वं न संपादितं स्यात् । नचोपदेशेनातिदेशस्य बाधः विरोधाभावात् । प्राजापत्यानित्युपदेशस्योभयथाप्युपपत्तेः । तेनार्थद्वयसाधारणमुपदेशवाक्यं प्रकृतिवच्छब्देन वाक्यशेषभूतेनानेककर्मपरमवधार्यते । कर्मभेदे हि

भावः । **तथासतीति** । द्वित्वविशिष्टे द्वित्वान्तरान्वये चतुष्ट्वोपजननादिति भावः । **तनु** यद्यत्रैकं कर्म स्यात्तदा चोदकोऽप्येकः स्यात्तश्च प्रकृतौ हृदयादीनामेकादशानामवयवानामेकपशुनिष्पन्नानामन्नत्वादिहाप्येकपशुनिष्पन्नानामेकादशावयवानामेव प्राप्त्या एकस्यैव पशोर्यागसाधनत्वं स्यान्न सर्वेषां, ततश्च सर्वेषां यागसाधनत्वनिर्वाहार्थं यागभेद एव स्वीकार्य इति शङ्कते—**कथमिति** । अत्रावदानशब्दोऽवदेयपरस्ततश्च एकपशुनिष्पन्नानि यान्येकादशावदेयानि हृदयादीनि तद्द्रव्यकत्वमित्यर्थः । प्रकृतावग्नीषोमीयमित्येकत्वस्य विवक्षितत्वेन पशोरेकत्वादेकपशुनिष्पन्नैकादशावदानगणस्य द्रव्यत्वेऽपीह सप्तदशानां पशूनामुपदेशबलादुपदेशानुसारेण चोदकस्य वर्णनीयत्वात्सप्तदशपशुषु प्रतिपश्वेकादशावदानप्राप्तेरेव चोदकाद्वर्णनीयत्वेन सर्वेषां यागसाधनत्वमुपपद्यत इति । परिहरति—**मानुग्राहीति** । यद्यपि सप्तदशपशूपदेशस्य कर्मभेदेऽप्युपपत्त्या उपदेशस्य संदिग्धार्थत्वान्न ततश्चोदकस्यान्यथाभावः प्रकृते संभवति तथापि प्रकृतावेकादशावदानप्रकृतिभूतात्पशोर्यागः साधनीय इत्येवमेकादशावदानगणः पशुधर्मतयैव क्लृप्तो न यागधर्मतया । ततश्च कर्मैक्येऽप्यवदानगणस्य साक्षाद्यागधर्मत्वाभावान्न तस्यैकस्य प्राप्तिः किंतूपाकरणादिवत्पशुधर्मत्वात्सत्यपि कर्मैक्ये पशुभेदादेकादशावदानगणस्यापि प्रतिपशु भेदेनैव प्राप्तेः सर्वेषां यागसाधनत्वमुपपद्यत इत्यत्र तात्पर्यं बोध्यम् । प्रकृतौ ह्येकादशावदानप्रकृतिभूतात्पशोर्यागः साधनीय इति नार्थः । पशोर्हविष्ट्वाभावेन तथार्थवर्णनस्यायुक्तत्वात् किंतु हृदयादीनामेव हविष्ट्वात्पशुप्रकृतिकैर्हृदयादिभिर्यागः साधनीय इत्येव पर्यवसितोऽर्थो वक्तव्यस्तथाच सति हृदयादीनामुपाकरणादिवन्न पशुधर्मत्वं किंतु यागधर्मत्वम् । एवंच प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशवाक्येन प्रकृतियागवद्विकृतियागोऽप्येकादशभिर्हृदयादिभिरवयवैः साधनीय इत्येतावन्मात्रबोधनात्पशुभेदेपि कर्मैक्यादेकएव हृदयादिगणः प्राप्नोति । एकेन च हृदयादिगणेन सर्वेषां पशूनां यागसाधनत्वं संपादयितुमशक्यमेवेत्याशयेनाह—**यदिकर्मेति** । **सवनीयेति** । आष्टमिकन्यायेनैकादशिनानां सवनीयविकारत्वं ऐकादशिनविकारत्वं चास्येति भावः । अत्रैकादशिनविकाराः प्राजापत्या इत्येतावद्वक्तव्येपि एककर्मत्वपक्षेऽस्य सवनीयः प्रकृतिर्भवेदिति वार्तिकदर्शनादेककर्मत्वपक्षे सुत्याकालत्वसाम्यात्सवनीयविकारत्वं प्राजापत्यानामिति कस्यचिद्भ्रमः स्यात्तन्निरासार्थमेककर्मत्वपक्षेप्यैकादशिनविकारा एव प्राजापत्याः गणसाम्यात् । यद्यप्यैकादशिनेषु प्रतिपशु यागभेदात्पशुयागानां गणः प्रकृते तु यागैक्यपक्षे न यागानां गणः किंत्वेकस्मिन्नेव यागे पशूनामेव गणस्तथापि सुत्याकालस्यैकादशिनेष्वप्यविशेषादेककालालंभनीयगणसंबन्धित्वसामान्याधिक्यादैकादशिनविकारा एव प्राजापत्याः नतु सवनीयविकाराः' वार्तिकस्याप्यैकादशिनद्वारा सवनीयः प्रकृतिरित्यत्र तात्पर्यमिति प्रदर्शनाय सवनीयविकारा ह्यैकादशिना इत्युक्तम् । **तत्रचेति** । ऐकादशिनेषु यागानां भिन्नत्वात् प्रतियागमग्नीषोमीयाच्चोदकपरंपरयैकपशुनिष्पन्नैकादशावदानद्रव्यकत्वमासीदित्यर्थः । **नसंपादितमिति** । सर्वेषां यागसाधनत्वाभावाद्यागेन विना देवतासंबन्धानिर्वाहादिति भावः । नच प्रकृतौ पशोरेकत्वादेकपशुनिष्पन्नत्वमवदानगणस्यार्थिकम् । नचार्थिकं चोदकः प्रतिदिशति । तस्मादिहैकस्य पशोर्हृदयावदानमन्यस्य जिह्वावदानमित्येवमवदानगणप्राप्तिमङ्गीकृत्य सर्वेषां यागसाधनत्वमुपपद्यत इति वाच्यम् । एवमपि हृदयादीनामेकादशानामेव प्राप्त्या तत एकादशानामेव पशूनां प्राजापत्यत्वसंपत्त्या सर्वेषां प्राजापत्यत्वानिर्वाहतादवस्थ्यादिति भावः । **उभयथेति** । बहुत्वान्वयानन्तरं देवतान्वयेपि बहुत्वेन वेषेण देवतान्वय इत्यत्र प्रमाणाभावेन स्वरूपेणैव देवतान्वयसंभवात्तदानीमपि कर्मभेदो न दुर्लभ इति कर्मभेदेन तदभेदेन चोपदेशोपपत्तेरित्यर्थः । कथंतर्हि कर्मभेदनिर्णय इत्यत आह—**तेनेति** । श्लोके यदि कर्म भवेदेकमेकः स्याच्चोदक इत्यनेन व्यतिरेकमुखेन सूचितम् । कर्मभेदे उपपत्तिं दर्शयति—**कर्मभेद**

१ भिहितं संख्यायोगं प्रतिपद्यते.

प्रातकर्मभिन्नैश्चोदकैस्तावतां गणानां प्राप्तेः सिध्यति सर्वेषां प्राजापत्यत्वम्। एवं 'वसन्ताय कपिञ्जलानालभेते'त्यादिष्वपि चोदकवशेनैव यावद्द्रव्यं यागभेदः। येतु चोदकमनादृत्य द्रव्यस्य तद्धिताभिहितस्य विशिष्टस्यैव बहुत्वावगमाद्भेदमाहुस्तेषां चतुर्थ्येभिहितदेवतेषु वसन्ताय कपिञ्जलानित्यादिषु न कर्मभेदः सिध्येत्। तत्रच प्रतिपश्ववदानगणप्राप्तिर्न स्यात्। अथ तत्र चोदकवशाद्भेदस्ततस्तथैव सर्वत्रास्तु किमतद्व्यापिना तद्धितोपन्यासेनेत्यास्तां तावत्॥

संज्ञाकृतकर्मभेदाधिकरणम्॥ ८॥

## संज्ञा चोत्पत्तिसंयोगात्॥ २२॥

**अथैष ज्योतिरित्यत्र गुणो वा कर्म वा पृथक्॥ गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते॥ २२॥**
**अथेति प्रकृते छिन्न एतच्छब्दोऽग्रगं वदेत्॥ संख्ययेवान्यकर्मत्वमिह नूतनसंज्ञया॥ २३॥**

उद्देशक्रमस्यातन्त्रत्वाद्बहुविचारं गुणप्रकरणान्तरनिमित्तं भेदमुपेक्ष्य संप्रति संज्ञातो भेदोऽभिधीयते। ज्योतिष्टोमं प्रकृत्य श्रूयते 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते'ति। तत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिना सामानाधिकरण्याद्यागनामत्वं तावत्सिद्धम्। तत्र संशयः किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो

इति। नन्वेवं सति वसन्तायेत्यादौ कपिञ्जलानिति स्वपदोपात्तबहुत्वान्वयानन्तरमेव पदान्तरार्थदेवतासंबन्ध इति तत्र कर्मभेदो न स्यात्। यस्य येन रूपेण पदादुपस्थितिस्तस्य तेनैव रूपेण पदान्तरार्थसंबन्धस्यौत्सर्गिकत्वेन तत्रावश्यं कपिञ्जलानां बहुत्वेनैव देवतान्वयादित्यत आह—**एवमिति**। तत्रापि चोदकस्य वाक्यशेषस्थानीयत्वाच्चोदकस्यानन्यगतिकतया गुणभूतमपि चोदकमनुरुध्यैव वाक्यार्थस्य वर्णनीयत्वाच्च चोदकानुसारात्स्वरूपेणैव देवतान्वयोऽन्यथा सर्वेषां देवतासंबन्धो न संपादितः स्यादिति भावः। प्राभाकरास्तु उपदेशतः करणनिर्णयानन्तरं चोदकप्रवृत्तिरिति पश्चाद्भाविना चोदकेनोपदेशार्थनिर्णयायोगाच्चोदकमनादृत्य तद्धितान्तश्रुत्या विभक्त्या प्रकृत्यभिहितप्रजापतिदेवताविशिष्टस्यैव बहुत्वावगमाद्यागभेदमाहुस्तन्मतमनूद्य दूषयति—**येत्विति**। ननु तर्हि तत्रागत्या भाविनोऽपि चोदकस्य प्रतिसंधानाद्भेदोऽस्त्वितिशङ्कते—**अथेति। तद्धितोपन्यासेनेति**। तद्धितेन विशिष्टावगत्युपन्यासेनेत्यर्थः। अतद्व्यापिनेत्यनेन क्वचित्तद्धितस्वारस्यान्निर्णयः क्वचिच्चोदकादिति न्यायभेदादधिकरणभेदः स्यादिति दर्शयति। **ननु** कपिञ्जलानां पर्यग्निकृतानामुत्सर्गात्तत्रावदानगणप्राप्त्यभाव इत्यत आह—**इत्यास्तामिति**। एवमपि यत्र न पर्यग्निकृतोत्सर्गः 'अदित्यै त्रयो रोहितैता' इत्यादौ तत्र प्रतिपश्ववदानगणप्राप्तिर्न स्यादेवेति दोषोऽपरिहार्य इति भावः। प्रयोजनं तिस्र आहुतीरित्यादौ यत्रैतादृशस्थल एकएव मन्त्रस्तत्र पूर्वपक्षेऽभ्यासभेदेऽपि कर्मणो भेदाभावात्सर्वादौ सकृदेव मन्त्रः प्रयोज्यः सिद्धान्ते तु कर्मभेदात्प्रतिकर्म मन्त्र आवर्तनीय इत्यादि। प्राजापत्योदाहरणे तु पूर्वपक्षे सर्वेषां पशूनां व्यासक्तं यागसाधनत्वं साधननिवेशी च धर्म इत्युपाकरणादिना सर्वेषु पशुषु व्यासक्त एव संस्कार उत्पद्यते न प्रत्येकम्। ततश्चोपाकरणादिकतिपयधर्मानुष्ठानानन्तरमेकस्य पशोर्नाशे तत्संस्कारस्य व्यासक्तस्येतरपशुगतस्यापि नाशात्तत्स्थाने पश्वन्तरोपादाने पुनः सर्वेषु पशुषूपाकरणादय आवर्तनीयाः। सिद्धान्ते तु यागभेदान्नष्टपशुस्थाने आनीतस्यैव पुनरुपाकरणादयो नान्येषामितीदं प्रयोजनं वार्तिके व्यक्तम्। सूत्रार्थस्तु—एकाधिकायाः संख्यायाः पृथक्त्वैकार्थसमवायात्तया कर्मभेदः स्यादिति॥

**संज्ञा चोत्पत्तिसंयोगात्॥ २२॥** नन्वध्यायाद्ये भाष्यकारेण संख्यानन्तरं गुणस्योद्देशात्संख्यागुणयोः कर्माङ्गत्वं नैरन्तर्यप्रयोजकमिति भाष्यकारतात्पर्यावसायात्कथं तादृशहेतूल्लङ्घनेन सूत्रकारेण संख्यानन्तरं संज्ञाव्युत्पादनं क्रियत इत्यत आह—**उद्देशेति**। भाष्यकारस्य क्रमे तात्पर्याभावान्न तदीयोद्देशमात्रेण कर्माङ्गत्वं नियामको हेतुः कल्पनीयः येन तदुल्लङ्घनात्सूत्रकारस्याकौशलं स्यादिति भावः। **ननु** कर्माङ्गत्वहेतोर्भाष्यकारतात्पर्यविषयत्वाभावेऽपि वस्तुतस्तस्य किमिति न परिग्रहस्ततश्च कर्माङ्गभूतसंख्याविचारानन्तरं कर्माङ्गत्वसाम्याद्गुणविचार एव प्रवर्तनीय इत्यत आह—**बहुविचारमिति**। सूचीकटाहन्यायेन प्रथमं संज्ञाया एव व्युत्पादनौचित्यात्कर्माङ्गस्वरूपं सादृश्यं संख्यागुणयोरानन्तर्यनियामकत्वेन सूत्रकृता न परिगृहीतमिति भावः। **ननु** ज्योतिरादिशब्दानां यागसामानाधिकरण्याभावाद्यागनामत्वमेव नास्तीति कथं नाम्नो भेदकत्वाभेदकत्वविचार इत्यत आह—**तत्रेति**। अथैष ज्योतिरित्यत्र ज्योतिरादिशब्दनिर्दिष्टानामेतेनेत्येतच्छब्देनापि ज्योतिरादिरूपेणैव प्रत्यायनादेतच्छब्दस्य यजिसामानाधिकरण्यं ज्योतिरादिशब्दानां यजिसामानाधिकरण्यपर्यवसितमिति युक्तं तेषां नामत्वमिति भावः। **ज्योतिरादिशब्दैरिति**। त्रिवृदादिस्तोमपरज्योतिःशब्देन तद्द्वारा तद्वतः क्रतोरनुवादस्तथा सर्वज्योतिःशब्द–विश्वज्योतिःशब्दाभ्यामपि त्रिवृदादीनि सर्वाणि स्तोमान्यस्यैत्येवं प्रकृतज्योतिष्टोमानुवाद इति भावः। अत्र

१ करण्येन याग.

विधीयते उत कर्मान्तराण्येवंनामकान्येवंदक्षिणानि विधीयन्त इति । तत्र प्रकरणादेतच्छब्दस्य च प्रकृताभिधायित्वात्तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहान्यप्रकृतकल्पनागौरवाच्च पूर्वस्यैव गुणविधिरिति प्राप्ते ब्रूमः—'नामान्तरश्रुतावर्थभेदस्तावत्प्रतीयते ॥ बलवद्बाधकाभावात्सावन्यथात्वं प्रपद्यते ॥' नचात्र बलवदस्ति बाधकं येन संज्ञानिमित्तो भेदोऽपोह्येत । संज्ञाश्रुत्या चार्थान्तरताव-गमात्प्रकरणविच्छेदे जातेऽर्थान्तरकलुषितायां बुद्धावुपनिपतत्सहस्रदक्षिणेन यजेतेति न ज्योतिष्टोमं गन्तुमर्हति तस्मात्कर्मान्तराणि । एवंच अथैष ज्योतिरित्यादेरर्थवत्त्वमन्यथानर्थक्यं स्यात् । एतेन सह-स्रदक्षिणेन यजेतेत्येतावतैव ज्योतिष्टोमस्य गुणविधिसिद्धेरेतच्छब्दश्च प्रस्तूयमानकर्मान्तरवचनत्वे-नाप्युपपद्यत इति सिद्धः कर्मभेदः ॥

देवताभेदकृतकर्मभेदाधिकरणम् ॥ ९ ॥

**गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥**

गुणः कर्मान्तरं वा स्याद्वाजिभ्यो वाजिनं त्विति ॥ गुणो देवाननूद्योक्तसमुच्चयविकल्पतः ॥ २४ ॥

आमिक्षोत्पत्तिशिष्टत्वात्प्रबला तत्र वाजिनम् ॥ गुणोऽप्रविश्य कर्मान्यत्कल्पयेद्वाजिदेवकम् ॥ २५ ॥

**इदानीं गुणलक्षणो भेदः प्रस्तूयते । द्वेधा च गुणस्य भेदकत्वम् । कश्चित्तावद्गुणः पूर्वविहितस्य क-**

---

ज्योतिरादिशब्दैरनूद्य गुणो विधीयत इत्युक्त्या यथा यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यत्र यत्किंचेति वाक्य-स्यानुवाद्यसमर्पकतया तेनोपांश्विति विध्येकवाक्यता, एवमथैष ज्योतिरित्यादेः प्रकृतकर्मानुवादकत्वे गुणविध्येकवाक्यताप-त्त्याचानर्थक्यमिति सूचितम् । एवंनामकानि एवंदक्षिणानि विधीयन्ते इत्यनेन सिद्धान्तेऽपि अथैष ज्योतिरित्यादेरेतेने-त्यनेन विधेयेषु कर्मसु नामविशेषसमर्पकतया तदेकवाक्यत्वं नतु भिन्नवाक्यत्वम् । तद्धि न तावद्विधायकतया । एतेनेत्यने-नैव विधिसिद्धेः । नचैतेनेत्यनेन विशिष्यविधास्यमानानामेव कर्मणामथैष ज्योतिरित्यादिना सामान्यतो विधिः यथैन्द्रवायवं गृह्णातीत्यादिप्रातिस्विकविधिभिर्विधास्यमानानामैन्द्रवायवाग्रान्गृह्णीयादिति सामान्यतो विधिस्तद्वदिति वाच्यम् । तत्र सामान्योपक्रमस्य शुक्रमन्थ्यग्रतादिकाम्यगुणानां विशिष्यविधास्यमानधाराग्रहणमात्राश्रयकत्वसिद्धिरूपप्रयोजनवदिह सामा-न्योपक्रमस्य प्रयोजनान्तराभावात् । नाप्यनुवादतया, विधेयविशेषसमर्पकत्वेन विध्येकवाक्यत्वसंभवे वाक्यभेदस्यानुवादस्य चायुक्तत्वादिति सूचितम् । एकवाक्यतामेवाभिप्रेत्य सिद्धान्ते वक्ष्यति—प्रस्तूयमानकर्मपर इति । अन्यथा प्रस्तो-ष्यमाणकर्मपर इत्यवक्ष्यत् । **प्रकरणादिति** । ततश्च प्रत्यभिज्ञानात्प्रकृतएव कर्मण्याख्यातं वर्तते इति न कर्मान्तरत्वमिति भावः । एष इत्येतच्छब्दश्रुत्यापि न कर्मान्तरत्वमित्याह—**एतदिति** । नच संज्ञान्तरश्रुतावर्थान्तरप्रतीतिः शङ्कनीया । ज्योतिरादिसंज्ञानां प्रथमश्रुतैतच्छब्दानुसारित्वेन तासां प्रकृतेऽर्थान्तरप्रत्यायकत्वानुपपत्तेरित्याशयेनाह—**तत्सामानाधि-करण्यादिति** । नन्वथशब्दबलात्प्रकृतप्रत्यभिज्ञाविच्छेदादिदं सर्वमयुक्तमित्यत आह—**प्रकृतेति** । गुणविधेः प्रकृतक-र्मापेक्षत्वपरोऽथशब्दः । द्वादशशतदक्षिणापक्षापेक्षया पक्षान्तरपरिग्रहार्थो वा नत्वधिकारार्थको येन प्रकृतबुद्धिविच्छेदः स्यादिति भावः । **नन्वेवं** विद्वद्वाक्येऽपि पौर्णमास्यादिनामश्रवणात्कर्मान्तरं स्यादित्यत आह—**बलवदिति** । तत्र रूपा-लाभो बाधक इति भावः । प्रकरणादित्येतन्निरस्यति—**संज्ञाश्रुत्येति । न ज्योतिष्टोममिति** । ततश्च प्रकृते कर्मणि गुणविध्यसंभवात्प्रकृतहान्यादिकमपि न दोष इति भावः । **एवंचेति** । पूर्वकर्मबुद्धिविच्छेदकत्वादिति भावः । युक्तं यत्किंच प्राचीनमित्यस्यानुवादतया सार्थक्यं, तत्राग्नीषोमीयात्प्राचीनलक्षणोद्देश्यस्यान्यतोऽनुवादासंभवादिह तु एतेन सहस्र-दक्षिणेन यजेतेति वाक्यगतैतच्छब्देन धातुना च ज्योतिष्टोमानुवादसिद्धेरथैष ज्योतिरित्यादेर्नानुवादतयार्थवत्त्वमित्याशये-नाह—**एतेनेति** । यदुक्तं अथैष इत्येतच्छब्दानुसारेण संज्ञानयनमिति तत्राह—**एतच्छब्द इति** । प्रागप्रस्तुतेऽप्येष देवदत्त इत्येतच्छब्दप्रयोगान्न तस्य प्रस्तुतपरत्वनियम इति भावः । नच संज्ञायाः शब्दान्तरवदभिधानान्तरत्वेनाभिधेया-न्तरोपस्थापकत्वान्न ततो भेदः स्यादिति वाच्यम् । धात्वन्तररूपं हि शब्दान्तरं भावनानुरञ्जकव्यापाररूपेण स्वार्थं वदत् स्वार्थानुरक्ताया भावनायाः धात्वर्थान्तरानुरक्तभावनातः स्पष्टं भेदं बोधयति । संज्ञा तु न भावनानुरञ्जकव्यापाररूपेण धा-त्वर्थं वदति नाम्नो निष्पन्नरूपाभिधानस्वभावत्वात्तेनासौ धात्वर्थमात्रभेदे व्याप्रियते । तद्भेदाच्च शब्दान्तरन्यायेन भावना-भेद इति संज्ञाशब्दान्तरयोरत्यन्तभेदात् । तदुक्तं 'स्वरूपानभिधायित्वात्संज्ञा शब्दान्तरात्पृथक्' इति । सूत्रार्थस्तु—संज्ञापि भे-दिका पृथक्त्वनिवेशितत्वात् । पूर्वपक्षेऽपि ज्योतिरादिशब्दा यद्यपि संज्ञास्तथाप्युत्पन्नकर्मगोचरत्वेनोत्पत्तिसंयोगाभावान्न तासां भेदकत्वम् । सिद्धान्तेतूत्पत्तिसंयोगाद्भेदकत्वमित्याशयेनोक्तमुत्पत्तिसंयोगादिति ॥

**गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥** संज्ञानन्तरं संनिहितात्कर्मणो भेदकत्वसामान्याद्गुणस्यैव व्यु-

---

१ हानाप्रकृतकल्पनायोगाच्च.

मेण: प्रबलगुणावरुद्धत्वात्तत्र निवेशमलभमान आत्मसङ्गतये विधे: कर्मान्तरपरतां[1] कल्पयन् भेदको भवति । अनेकत्वाद्वा गुणानां प्राप्तकर्मानुवादेन विध्ययोगात्सर्वेषां विधिसिद्धये विधे: कर्मपरत्वं कल्प्यते । तत्रानेकगुणनिमित्तो भेद: पौर्णमास्यधिकरण एव प्रसङ्गात्प्रतिपादित: । अधुना बलवद्विरोधनिमित्तो भेदोऽभिधीयते । चातुर्मास्येपु वैश्वदेव्यामिक्षेति यागं विधायाम्नायते 'वाजिभ्यो वाजिन'मिति । तत्र संशय: किं पूर्वस्मिन्नेवामिक्षायागे वाजिनगुणो विधीयते किंवा कर्मान्तरमिति । तदर्थंच किमुत्पत्त्युत्पन्नशिष्टौ गुणौ तुल्यबलावुत उत्पत्तिशिष्टो बलीयानिति । तथा तद्धितचतुर्थ्योरपि बलाबलं चिन्तनीयम् । तत्र—'वाजेनामिक्षया योगाद्विश्वेदेवा हि वाजिन: ॥ प्रकृतां[2]स्तान्वदेच्छ्रुत्या वाजिशब्दश्च यौगिक: ॥' ते हि पूर्वविहितकर्मसंप्रदानरूपेण प्राप्तास्तेनैव रूपेणात्र प्रत्यभिज्ञायन्ते । तथाविधैश्च[3] तै: संबध्यमानं वाजिनं पूर्वकर्मण्येव विहितं भवति । एवंच संभवति पूर्वत्र गुणमात्रविधाने प्रकृतहानमप्रकृतकल्पनमपूर्वान्तरकल्पनं विशिष्टविधि[4]कल्पनं च नाश्रयितुं युक्तम् । नन्वामिक्षायुक्तस्यैवोत्पत्तौ पूर्वकर्मणोऽवगतत्वान्न तत्र द्रव्यान्तरसंबन्धापेक्षा योग्यता वास्ति । उच्यते । यद्यप्युत्पत्तौ द्रव्ययुक्तं कर्मावधारितं तथापीह निष्कृष्य कर्मस्वरूपमात्रमनूद्यते । अभिधानकृता चाकाङ्क्षा न वस्तुकृता । तेन स्वरूपमात्रस्याभिधानोपात्तस्यास्त्येव द्रव्यान्तरसंबन्धा-

---

त्पादनं युक्तं नत्वसंनिहितात्कर्मणो भेदकस्य प्रकरणान्तरस्येत्याशयेनाह—**इदानीमिति** । ननु पौर्णमास्यधिकरण एवं प्राप्तकर्मण्यनेकगुणविधानासंभवेन गुणनिमित्तकभेदो व्युत्पादित इतीह पुनर्व्युत्पादनं व्यर्थमित्याशङ्क्य प्रबलगुणावरुद्धे कर्मणि गुणान्तरस्य निवेशासंभवेन भेदकत्वव्युत्पादनार्थत्वादस्य न वैयर्थ्यमित्याशयेनाह—**द्वेधेत्यादि** । ननु तर्हि वाजिभ्यो वाजिनमित्यत्र वाजिलक्षणदेवताया वाजिनलक्षणद्रव्यस्य च वैश्वदेवयागे विधिरस्त्विति शङ्कानिराकरणार्थत्वेनानेकगुणनिमित्तभेदोऽप्यत्रैव कुतो न व्युत्पाद्यत इत्यत आह—**तत्रानेकेति** । **तत्रेति** । वाजिनवाक्ये इत्यर्थः । प्रथमसंशयहेतुभूतमेव संशयान्तरमाह—**तथेति** । इदंच प्रकृतोदाहरणाभिप्रायेण यत्रोभयत्र तद्धितश्चतुर्थी वा यत्र च तृतीयादिना उत्पत्त्युत्पन्नशिष्टयोः करणाधिकरणत्वादिना श्रवणं तत्रापि गुणाद्भेदस्यैतदधिकरण एव व्युत्पाद्यतया तत्रोक्तसंशयस्य तदर्थसंशयत्वासंभवादिति द्रष्टव्यम् । **ननु** वाजिनवाक्ये प्रकृतामिक्षायागानुवादकशब्दाभावात्तत्र गुणविधिरिति कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । वाजमन्नमदनीयमामिक्षारूपं येषामित्येवमामिक्षायागसंबन्धिनो विश्वान्देवाननूद्य तत्र वाजिनलक्षणगुणविधिः संभवतीत्यर्थः । **प्रकृतांस्तानिति** । तदस्यास्तीति सर्वनामार्थे तद्धितविधानादनुवादस्य सतिसंभवे संनिहितगामित्वाच्च संनिहितान्विश्वान्देवानेवानुवदति न वाजसंबन्धिमात्रमिति नातिप्रसक्तिरिति भावः । वाजिशब्दस्याश्वे रूढत्वाद्विश्वदेवपरत्वे रूढिपूर्वकलक्षणा स्यान्नतु यौगिकत्वमितीमं लक्षणादोषं वारयितुं श्रुत्येत्युक्तम् । नात्र रूढिपूर्वकं लक्षणा संभवति । अश्वे वाजिशब्दस्य रूढत्वेऽपि विश्वेषां देवानां मुख्यार्थसंबन्धाभावादिति भावः । **ननु** वाजिशब्दस्य विश्वदेवपरत्वेऽपि न विश्वदेवत्वेन तेषां देवतात्वं किंतु वाजित्वेन । तथाचेन्द्रमहेन्द्रन्यायेन देवताभेदान्न पूर्वकर्मसमवाय इत्यत आह—**तेहीति** । **संप्रदानरूपेणेति** । देवतारूपेणेत्यर्थः । **तेनैवेति** । पूर्वकर्मणि देवतात्वप्रयोजकविश्वदेवत्वरूपेणैवेत्यर्थः । एवंच विश्वदेवत्वरूपेणैव वाजिनसंबन्धो न वाजित्वरूपेणेति भावः । **ननु** विश्वदेवत्वेन रूपेण तेषां वाजिनसंबन्धविधानेऽपि कथं प्रकृतकर्मणि गुणविधिसिद्धिरित्यत आह—**तथेति** । विश्वेषां देवानां वाजिनस्य च यागंविना प्रतीयमानसंबन्धानिर्वाहाद्यागापेक्षायां प्रकृतयागीयद्रव्यरूपामिक्षापरवाजशब्दमहिम्ना उपस्थितप्रकृतामिक्षायागस्यैव तन्निर्वाहकत्वेन कल्पनावश्यंभावादावश्यके प्रकृतयागएव वाजिभ्यो विश्वेभ्यो देवेभ्यो यजेतेति यत्तद्वाजिनमित्येवं वाजिशब्दोपस्थापितदेवतामुखेन वाजिनं विहितं भवतीत्यर्थः । **ननु** अस्मिन्पक्षे वाजिशब्दस्याश्वे क्लृप्तरूढिपरित्याग एव दोष इत्यत आह—**एवंचेति** । प्रधानस्य विधेर्गुणमात्रविधानलाघवलब्धत्वात्तदनुसारेण प्रकृतकर्महान्यादिदोषप्रसङ्गेन च रूढिपरित्यागो न दोष इति भावः । आकाङ्क्षाविरहादेवान्वयार्हतापि नास्तीत्याह—**योग्यता वेति** । यद्वामिक्षाद्रव्यस्यैव कृत्स्नयागव्याप्तेर्योग्यतापि नास्तीत्याह—**योग्यता वेति** । ततश्चोत्पन्नशिष्टो दुर्बल इति भावः । **निष्कृष्येति** । आमिक्षावाक्ये द्रव्यदेवतासंबन्धबलादामिक्षया यजेतेत्येवं यजेतेतिपदं कल्पितं तदेव पदमस्मिन्वाक्ये कर्मानुवादकं स्वीक्रियत इति । तेन यजेतेति केवलपदेन कर्ममात्रं आमिक्षारूपगुणसंबन्धाद्विश्लेष्यानूद्यत इत्यर्थः । **ननु** केवलेन यजेतेत्यनेन स्वरूपमात्रानुवादसंभवेऽपि वस्तुतस्तस्य कर्मणो गुणान्तरावरुद्धत्वान्न वाजिनान्वयसंभव इत्यत आह—**अभिधानेति** । **न वस्त्विति** ।

---

१ कर्मान्तरोत्पत्तिपरतां. २ प्रकृता. ३ तथा विधेन च. ४ विधिगौरवं च.

पेक्षा। योग्यता चास्त्येव स्वरूपमात्रे द्रव्यान्तरेण संबद्धुम्। शब्दान्तराधिकरणे हि प्रत्ययवाच्या भावना प्रकृत्यर्थानुरक्तैवावगम्यते न शुद्धस्वरूपेति। तत्र धात्वन्तरमनवकाशं स्यादित्युक्तम्। इह तु कल्पितेन यजिना गुणाननुरक्तमपि कर्मावगतं पदान्तरत्वादित्युच्यते। ततस्तदनुवादेन शक्यं गुणान्तरविधानम्। अतो नास्त्युत्पत्त्युत्पन्नशिष्टयोर्विरोधः। नचामिक्षाया देवतासंबन्धस्य श्रौतत्वाद्वाक्यगम्याद्वाजिनसंबन्धाद्बलीयस्त्वमिति वाच्यम्। द्वयोर्वाक्यगम्यत्वात्। नह्यामिक्षाया देवतासंबन्धो वैश्वदेवीपदेन केवलेनावगम्यते। किंत्वामिक्षापदैकवाक्यतया। तस्मादुभयोस्तुल्यबलत्वात्पूर्वस्मिन्नेव कर्मणि विकल्पः समुच्चयो वेति प्राप्तेऽभिधीयते—'आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाच्छ्रुतेः॥ उत्पन्ने वाजिनं वाक्यात्तेन तद्दुर्बलं मतम्॥' यत्तु सगुणोत्पन्नमपि कर्म स्वरूपमात्रेण निष्कृष्य शक्यं गुणान्तरं विधातुमित्युक्तं तदयुक्तम्। तत्र यद्यप्यभिधानतः स्वरूपमात्रं निष्कृष्यते तथापि तस्योत्पत्तिवाक्यावगतस्यानुवादात्तत्स्वरूपमालोच्यमानमेव गुणयुक्तमवगम्यते। ततश्च नैराकाङ्क्ष्यादयोग्यत्वाच्च गुणान्तरमत्र निवेशमलभमानमात्मनिवेशक्षमकर्मान्तरोत्पत्तिं सूचयति। श्रौतश्चामिक्षाया विश्वैर्देवैः संबन्धः। तद्धितस्य देवताविशिष्टद्रव्यवाचिनः पदान्तरोपस्थापितद्रव्यविशेषवचनत्वाद्वाजिभ्य इति चतुर्थी संप्रदानमात्रं वदति नतु तद्विशिष्टं द्रव्यम्। वाक्यात्तु तत्संबन्ध इति दुर्बलत्वम्। प्रपञ्चितं चैतद्वार्तिकएव। अन्येच बहवः संनिकर्षविप्रकर्षप्रकारास्तत्रैव[1] द्रष्टव्याः। तस्मादामिक्षावरुद्धे पूर्वकर्मण्यसंनिवेशाद्वाजिनगुणात्कर्मभेद इति॥

---

इतरथा पुरोडाशकपालादेः स्वरूपमात्रेणाभिधानतस्तुषोपवापाद्यन्वयो न स्यादिति भावः। **नन्वेवं** यजति—ददातीत्यादौ यागान्वितताया अपि भावनायाः निष्कृष्य स्वरूपेणाभिधानाद्दानाद्यन्वयसंभवादेकधात्वर्थान्वितताया भावनाया न धात्वर्थान्तरसंबन्ध इति शब्दान्तराधिकरणोक्तस्य विरोधः स्यादित्यत आह—**शब्दान्तरेति**। भावनाया न केवलेन प्रत्ययेनानुवादः शक्यः कर्तुं किंतु प्रकृतियुक्तेन। सच प्रकृत्यर्थानुरक्तामेवानुवदेन्न शुद्धामिति तत्र स्वरूपमात्रानुवादासंभव इति भावः। **श्रौतत्वादिति**। 'सास्य देवते'ति तद्धितस्य देवताविशिष्टद्रव्याभिधायित्वादिति भावः। वाजिनसंबन्धात् वाजिनस्य देवतासंबन्धादित्यर्थः। **नहीति**। तद्धितेन द्रव्यं सामान्यरूपेणैवाभिधीयते नामिक्षात्वेन, आमिक्षात्वेन त्वभिधानं पदान्तरेणैवेत्यामिक्षासंबन्धोऽपि वाक्यगम्य इत्यर्थः। **विकल्प इति**। वाजयोगस्य देवताविशेषणत्वे समुच्चयः, उपलक्षणत्वे तु विकल्प इति भावः। वाजिशब्देन विश्वदेवानां तेनैव रूपेणोपस्थानस्य प्रागुक्तत्वादामिक्षासंबन्धान्निष्कृष्य स्वरूपेणाभिहिते प्रकृतकर्मणि वाजिनविधिरित्यङ्गीकाराच्च समुच्चयपक्षो दुर्बल इति ध्येयम्। **आमिक्षाया इति**। आमिक्षायाः कर्मोत्पत्तिसमय एव चोदितत्वात् श्रुतिचोदितत्वाच्च बलीयस्त्वं, वाजिनं तूत्पन्ने कर्मणि चोद्यते वाक्याचेति दुर्बलमित्यर्थः। **तथापीति**। अनुवादस्य पुरोवादसापेक्षत्वात्पुरोवादपर्यालोचनेनैवात्मलाभ इत्यनुवादत्वनिर्वाहार्थं पुरोवादपर्यालोचनस्यावश्यकत्वात्तस्मिन्पर्यालोच्यमाने गुणयुक्तस्यैव कर्मणो बुद्धौ विपरिवृत्तेः तद्दशायां निष्कृष्याभिहितस्यापि कर्मणो न गुणान्तराकाङ्क्षा संभवति। एकगुणयुक्ततया बुद्धौ विपरिवृत्तेर्गुणान्तराकाङ्क्षाप्रतिबन्धकत्वात् पुरोडाशकपालादौ त्वगत्या कथंचिन्निष्कृष्याभिधानेनाकाङ्क्षोत्थाप्यते नत्विहागतिकत्वं विशिष्टकर्मान्तरविधिसंभवादिति भावः। **तद्धितस्येति**। सर्वनामार्थे विहितस्य तद्धितस्य पदान्तरसंनिधाने तदुपस्थाप्यविशेष एव पर्यवसानात् सर्वनामार्थतद्धितेनैवामिक्षाद्रव्यस्याप्युपस्थितेरामिक्षादेवतासंबन्धः श्रौत इत्यर्थः। वस्तुतस्तु तद्धितस्य द्रव्यविशेषवाचित्वाभावेऽपि चतुर्थ्यपेक्षया बलवत्त्वं संभवति द्रव्यस्य सामान्यरूपेणापि प्रतीत्या द्रव्यस्य देवतायाः संबन्धस्य च तद्धितादेवावगतेश्चतुर्थ्या द्रव्यसामान्यस्याप्यप्रतीतेर्द्रव्यदेवतासंबन्धस्य सुतरामप्रतीतेश्चेत्याद्यभिसंधायाह—**प्रपञ्चितमिति**। एतेनामिक्षावाक्ये यागः प्रत्यक्षो न श्रूयते किंतु कल्प्यः। स च कल्प्यमानो लाघवादामिक्षावाजिनयोरुभयोरपि देवतासंबन्धनिर्वाहकत्वेनैक एव कल्पयितुं युक्त इत्यामिक्षावाजिनोभयविशिष्टयागस्यैव कल्पितेन यजिना विधानादुभयोरप्युत्पत्तिशिष्टत्वमिति शङ्कापि निरस्ता। आमिक्षादेवतासंबन्धस्य श्रौतत्वेन झटित्युपस्थित्यामिक्षावाक्ये प्रथममेव यागस्य कल्पनीयतयोभयोरुत्पत्तिशिष्टत्वाभावादिति। ***अन्य इति***। तद्धितस्य देवतावाचकत्वं चतुर्थ्यास्तु तल्लक्षकत्वमित्यादय इत्यर्थः। सूत्रार्थस्तु—अपूर्वसंयोगे पूर्वकर्मणि निवेशाभावे गुणोपि भेदकः पूर्वकर्मनिवेशाभावश्चोभयोरपि वाक्ययोः समत्वान्मिथोऽनपेक्षत्वादनुवादकतयैकस्य वाक्यस्येतरापेक्षायां पूर्वकर्मनिवेशः स्यान्नत्विहेति भावः॥

---

१. तत्रैव=वार्तिके एव.

द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणम् ॥ १० ॥

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥**

**दधिहोमेऽन्यकर्मत्वं गुणो वान्यत्र पूर्ववत् ॥ निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥ २६ ॥**

इति प्रत्युदाहरणसूत्रम् । अथवाधिकरणान्तरम् 'अग्निहोत्रं जुहोती'ति निर्गुणं कर्मोत्पन्नं तत्संनिधौ च दध्ना जुहोति पयसा जुहोतीत्यादयो बहवो गुणाः श्रूयमाणाः पूर्वकर्मनिवेशे सति विकल्पप्रसङ्गादन्यतरावरुद्धे चान्यतरस्य निवेशासंभवात्पूर्ववदेव कर्मान्तरं कल्पयन्तीति प्राप्ते ब्रूमः । सर्वेषामेषामन्योन्यानालोचनेनाग्निहोत्रवाक्यमात्रालोचनात्तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात्पौर्वापर्याभावाच्चान्यावरुद्धेऽन्यस्य[1] निवेश इत्यभावात्तत्रैव गुणमात्रविधानं प्रमाणवशाच्च विकल्पः ॥

दध्यादिद्रव्यसफलत्वाधिकरणम् ॥ ११ ॥

**फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥**

**[अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥]**

**यद्धनेन्द्रियकामस्य जुहुयादिति तत्पृथक् ॥ गुणो वा भिद्यते कर्म धात्वर्थस्य फलित्वतः ॥ २७ ॥**

**मत्वर्थगौरवादिभ्यो नान्यत्कर्म फलाय तु ॥ गुणे विधेये धात्वर्थो विहितत्वादनूद्यते ॥ २८ ॥**

अग्निहोत्रं जुहोतीति प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुया'दिति श्रूयते । तत्र संशयः किमग्निहोत्रात्कर्मान्तरं दधिविशिष्टमिन्द्रियकामाय विधीयते उत तत्रैव गुणमात्रं फलाय विधीयत इति । तदर्थमिदं विचार्यते किं कर्मणः फलमिदमुत गुणादिति । यदा कर्मणः तदा प्राप्तस्य कर्मणः फलसंबन्धं गुणसंबन्धं चैकं वाक्यं न शक्नोति विधातुमिति कर्मान्तरं स्यात् । गुणफलसंबन्धे तु तन्मात्रं वाक्येन विधीयते, दधिहोमसंबन्धस्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यमानो न वाक्यं भिनत्तीति सिद्ध्यत्येकवाक्यत्वमकर्मान्तरत्वेऽपि । तेन भेदाभेदसिद्ध्यर्थं कर्मणः फलमुत गुणादिति चिन्त्यते ।

---

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेतेति ॥ २४ ॥** सूत्रं भाष्यकारेण द्वेधा व्याख्यातम् । तत्र प्रथमं दर्शयति—**अगुण इति ।** अग्निहोत्रं जुहोतीति गुणरहिते कर्मण्युत्पन्ने दध्यादिवाक्यैर्गुणविधिः संभवति नतु सगुणश्रुतामिक्षावाक्ये इतीदं सूत्रं प्रत्युदाहरणार्थमित्यर्थः । द्वितीयमाह—**अथवेति ।** वस्तुतस्तु पूर्वन्यायान्निवेश एव न संभवतीत्याह—**अन्यतरेति ।** एकैकस्माद्वाक्यादेकैकस्य गुणस्योपस्थित्या सर्वेषां युगपदन्वयासंभवाद्यस्य प्रथममन्वयस्तदवरुद्धे पूर्वन्यायेनान्यान्वयासंभवात्कर्मान्तरत्वमत एव सङ्गतिरपीति भावः । गुणविध्यर्थानुवादसिद्ध्यर्थं कर्मोत्पत्तिलक्षणं पुरोवादमात्रं पर्यालोच्यं नतु गुणान्तरविधिरपि । कर्मोत्पत्तिश्चात्रागुणैव । ततश्चैकस्यैव प्रथममन्वयेऽपि गुणान्तरविधिसिध्यर्थं प्रथमान्वितगुणविशिष्टतया कर्मणोऽनालोचनीयत्वान्नात्र पूर्वाधिकरणन्यायप्रवृत्तिरित्याह—**सर्वेषामिति । पौर्वापर्येति ।** एकान्वयानन्तरमपरान्वयनियमोऽप्यसिद्धः सर्वेषां युगपदुपस्थितौ युगपदन्वयस्यापि संभवादित्यर्थः । प्रयोजनं पूर्वपक्षे दध्यादिविशिष्टानां कर्मणां सर्वेषामनुष्ठानं, सिद्धान्ते त्वेकस्यैव विकल्पितदध्यादिद्रव्यकस्यानुष्ठानमिति आघाराग्निहोत्राधिकरणे गुणकर्मसंनिधौ सगुणश्रुतिर्गुणविधानार्थेत्युक्तत्वादिदमधिकरणमनर्थकम् । नच यत्र निर्गुणसंनिधावेकमेव सगुणवाक्यं तत्राघाराग्निहोत्राधिकरणोक्तिः सावकाशा । प्रकृते तु सगुणवाक्यानां बहुत्वात्सर्वेषामेककर्मान्वये विकल्पापत्त्या कर्मान्तरत्वशङ्कायां तन्निराकरणार्थत्वान्न वैयर्थ्यमिति वाच्यम् । निर्गुणसंनिधौ श्रुतानां बहूनामपि सगुणवाक्यानां गुणमात्रविधायकत्वस्य तत्रैव वक्तव्यत्वादन्यथाघाराग्निहोत्रवाक्ययोः समुदायानुवादपूर्वपक्षस्य निराकर्तुमशक्यत्वात्तस्मात्पूर्वव्याख्यानमेव सम्यगिति ॥

**फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥ तत्रैवेति ।** तदाश्रित्येत्यर्थः । ननु कर्मणः फलं गुणाद्वेति[2] संदेहस्य कथं भेदाभेदसंशयहेतुत्वमित्यपेक्षायां गुणफलात्मकानेकार्थोपादानस्य पूर्वकर्मण्यसंभवे भेदावश्यंभावात्तत्संभवे भेदाभावाच्च संभवासंभवसंशयद्वारा भेदाभेदसंशयहेतुत्वमित्याशयेन संभवासंभवद्वारा फलफलिभावमुपपादयति—**यदेति । तेनेति ।** उक्तरीत्या संभवासंभवद्वारा हेतुत्वेनेत्यर्थः । **ननु** सिद्धान्तेऽपि गुणफलयोः साक्षादन्वयानुपपत्त्या भावनाद्वारा सबन्धस्य वक्तव्यत्वात् प्राप्तभावनायां च गुणफलोभयसंबन्धविध्यनुपपत्तेरन्यतरानर्थक्यपरिहारार्थं भावनान्त-

---

१ न्यस्य निवेश. २ फलं गुणाद्वेति.

**सत्यपि च पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारालक्षणसंबन्धः । तत्र—'धात्वर्थात्फलमित्युक्तं भावना संनिकर्षतः ।। विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी ।।' भावार्थाधिकरणे ह्येतदुक्तं—यथा धात्वर्थात्फलं न नामार्थात् स तु धात्वर्थस्यैवाङ्गमिति, तदिहापि दधि होमार्थं, होमः फलार्थः । किंच—'दध्नश्च फलसंबन्धे जुहोतिः स्यादनर्थकः ।। यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते ।।' नह्येकं वाक्यं फले होमे च शक्नोति दधि विधातुम् । तत्रासति होमसंबन्धे जुहोतीति पदमनर्थकं स्यात्, तस्य च दध्ना सह क्रियाकारकभावोऽवगम्यमानः परित्यक्तः स्यात् । तस्माद्धोमस्यैव फले विधानं गुणविशिष्टस्येति प्राप्ते ब्रूमः—'धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते ।। विधेयं यच्च तेनैव फलं नान्येन युज्यते ।।' तत्रैव हि भावार्थाधिकरणन्यायो यत्र धात्वर्थो नामार्थश्चोभयमपि विधीयते । अत्र तु प्राप्तत्वेन धात्वर्थस्याविधेयत्वाद्गुणमात्रं विधीयते विधेयस्यैव च फलसंबन्धो नाविधेयस्य । तेन गुणस्यैव फलं न कर्मान्तरं विधेयं भविष्यति । नापि प्रकृतहानाप्रकृतकल्पना-विशिष्टविधिगौरवमत्वर्थलक्षणादिदोषप्रसङ्गः । अतो गुणमात्रविधानात्तस्यैव फलं, जुहोतेरिदानीं कथमन्वयः । केचिदाहुः । कर्मापन्नमेव दधि फलकामस्य विधीयते न दधिमात्रम् । अभावार्थस्य विधिविषयत्वायोगात् । अतो दध्यनुरक्तो होम एव विधीयते । नचैवं वाक्यभेदः । दध्नो विधाना-**

---

रविधेरवश्यं वाच्यत्वेन भाव्यकरणभेदेन च भावनाभेदस्यावश्यकत्वान्नास्याश्चिन्ताया अध्यायसंगतिरित्यत आह—**सत्य-पीति** । भावनाभेदहेतुत्वेन धात्वर्थभेदस्यापि विचार्यत्वात्तत्प्रसङ्गादध्यायसङ्गतिरित्यर्थः । **संनिकर्षत इति** । एक-पदस्थत्वादिति भावः । **ननु** धात्वर्थस्य सिद्धरूपत्वाभावान्न करणत्वयोग्यतेति विप्रकृष्टस्यापि नामार्थस्यैव तत्स्वीकारो युक्त इत्यतः श्लोकं व्याचष्टे—**भावेति** । तत्रैवेयं शङ्का परिहृतेति भावः । **ननु** पूर्वाधिकरणे निर्गुणसंनिधौ सगुणश्रुतेर्गुणार्थ-त्वोक्तेः कथं कर्मान्तरत्वमित्यत आह—**किंचेति** । अनेन पूर्वापवादेन प्रत्यवस्थानात्संगतिरिति सूचितम् । सोपि तत्सं-बन्धोपीत्यर्थः । **ननु** तर्हि दध्ना जुहोतीति वाक्यप्राप्तदधिसंबन्धानुवादेन होमस्यैव फले विधिरस्त्विति शङ्कां निवर्तयितुं श्लोकं व्याचष्टे—**नहीति** । कर्मानुवादस्य सर्वस्यापि उत्पत्तिवाक्यमात्रापेक्षत्वेन गुणवाक्यानपेक्षणाद्दधिप्राप्त्यनन्तरं फल-विधिरित्यत्र प्रमाणाभावान्न दधिवाक्यप्राप्तदध्यनुवादेन होमस्य फलविधिसंभव इत्यनेनैव वाक्येन दधिफलार्थतया होमा-श्रितत्वेन च विधेयमिति वक्तव्यम् । नच तत्संभवतीत्यर्थः । ननु प्रकरणप्राप्तानुवादकत्वान्न वैयर्थ्यमित्यत आह—**तस्य चेति** । प्रकरणेन हि होमएव प्राप्तो नतु दधिहोमयोः संबन्धोऽपि । ततश्च दधिहोमयोः प्रतीयमानक्रियाकारकभावसंब-न्धस्यानुवादासंभवात् स सर्वथा परित्यक्त एव स्यात्, तथा नियमेन फलार्थिनो दधिहोमसंबन्धोपादानं च न स्यात्तस्य कर्त-व्यत्वेनाप्राप्तेरिति भावः । **विधेयमिति** । तस्यैव प्रवर्तनालक्षणविधिसंबन्धनिर्वाहाय फलाकाङ्क्षत्वादिति भावः । धात्वर्थ-नामार्थयोरुभयोरपि फलान्वयसंभावनायां हि संनिकर्षो नियामक इतरत्र तु संनिकर्षोऽकिंचित्कर इति भावार्थाधिकर-णापवादपरतया श्लोकं व्याचष्टे—**तत्रैव हीति** । ननु गुणस्य फले विधाने जुहोतेरानर्थक्यापत्तेरगत्या प्रकृतहानादिक-मङ्गीकृत्यापि विशिष्टविधिरेव स्वीकार्य इत्याशयेन शङ्कते—**जुहोतेरिति** । तत्र प्राभाकरोक्तं जुहोत्यन्वयं निराकर्तुमनु-वदति—**केचिदिति** । दधि हि न स्वरूपेण फलकामस्य विधातुं शक्यम् । अक्रियारूपस्य तस्य कार्यात्मकविधिविषयत्वा-नुपपत्तेः । विषयत्वं हि यागकृतिसाध्यो नियोगः दानकृतिसाध्यो नियोग इत्येवं कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वम् । तच्च साक्षात्कृतिव्याप्यतया क्रियारूपस्य भावार्थस्यैव संभवति । ततश्च दध्नो भावार्थत्वाभावेन स्वतो विधिविषयत्वासंभवान्न केवलं दधि फलाय विधीयते किंतु क्रियानुरक्तमेव । क्रियानुरक्तस्य तु दध्नः स्वतो भावार्थत्वाभावेऽपि भावार्थलक्षण-क्रियानुप्रवेशेन द्रव्यदेवतासंबन्धवद्विषयत्वं संभवति । तस्मात्क्रियानुप्रविष्टं दधि विधीयते न केवलमित्यर्थः । **ननु** यदि दध्नो विधिविषयत्वसिध्यर्थं क्रियानुप्रवेश आवश्यकस्तर्हि साक्षात्कृतिव्याप्यत्वात्क्रियाया एव विधेयत्वमस्तु । नचैवं दधिप-दानर्थक्यम् । दध्यनुरक्तक्रियाया विधौ तदानर्थक्याभावादिति शङ्कायामिष्टापत्तिमभिप्रेत्याह—**अत इति** । नन्वेवं दधि-होमसंबन्धस्य होमफलसंबन्धस्य च विधानाद्वाक्यभेदः स्यादित्याशङ्क्य दधिसंबन्धस्य विधानाभावान्न वाक्यभेद इत्याह—**नचैवमिति** । ननु दधिसंबन्धस्याप्राप्तत्वात्सोऽप्यवश्यं विधेयः । नच दध्ना जुहोतीत्यनेनैव तत्प्राप्तिः । तथासति दध्ना

---

१ जुहोतेः स्यादनन्वयः, २ यस्य च.

भावात् । लौकिकं हि क्रियाकारकलक्षणसंबन्धमाश्रित्य द्रव्याणां क्रियापत्तिः नपुनस्तादर्थ्यं, कर्मणोऽकारकत्वप्रसङ्गात् । अतः फलार्थतैव होमे कारकीभूतस्य दध्नः प्रतीयते न होमार्थत्वम् । होमार्थत्वे तत्रापि विधिव्यापाराद्वाक्यभेदः स्यान्नतु तदस्ति । तेन होमाश्रितस्य दधिव्यापारस्य फले विधानाद् वाक्यभेदंविनैव सिद्धो जुहोत्यन्वय इति । तत्रेदं वक्तव्यम् । यदि दधि न विधीयते किंतर्हत्र विधीयते । होमएव दध्यनुरक्तः फलाय विधीयत इतिचेदेवं तर्हि होमएव फलार्थं स्याद्दधि तु होमेएव दध्यनुरागसंपत्त्यर्थमुपदीयमानं तदर्थमेव स्यान्न फलार्थं । अपिच माभूद्दध्नो विधानं दध्यनुरागस्तु प्राप्तस्य कर्मणो विधीयते फलसंबन्धश्चेति वाक्यभेदः । ननु न ब्रूमो न दधिविधानमिति किंतु होमार्थतया न विधीयते फलार्थतया होमाश्रितं विधीयते । होमे कारकीभूतमित्यर्थः । उच्यते । दध्नेति दधिविशिष्टं करणमात्रं पदेनोच्यते । होमे तु तत्कारकमिति कुतोऽवगम्यते । वाक्यादितिचेत् एवं सत्याश्रयसंबन्धं फलसंबन्धं च बोधयद्वाक्यं भिद्येत । ननु लोकसिद्धमेव क्रियाकारकलक्षणमाश्रयाश्रयिसंबन्धमुपादाय केवलं फलसंबन्धकरणान्न वाक्यभेदः । नैवम् । लोकतो हि क्रियाकारकयोः संबन्धः संभवमात्रेण सिद्धो न तु कर्तव्यतया, कर्तव्यतयाचात्र दधिहोमसंबन्धः श्रूयते दध्ना जुहुयादिति । तेन तस्य कर्तव्यताफलसंबन्धश्चेति वाक्यभेदः । तथाहि दध्नेन्द्रियकामस्य जुहुयादित्यत्र न तावद्य

---

जुहोतीति वाक्यावगतदधिहोमसंबन्धस्य फलोपयुक्ततया दध्नः क्रत्वर्थत्वाभावप्रसङ्गादित्यत आह—**लौकिकमिति** । दध्नः कारकत्वाद्धोमस्य क्रियात्वात्क्रियाकारकयोः संबन्धस्य लोकत एवावगमाल्लोकसिद्धं क्रियाकारकभावलक्षणसंबन्धं यो दध्यनुरक्तो होम इत्यनूद्य स इन्द्रियकामस्येत्येतावन्मात्रविधानेन दध्यनुरागस्य विधेयत्वाभावान्न वाक्यभेद इत्यर्थः । ननु सोमेन यजेतेत्यादौ कारकत्वं तादर्थ्यलक्षणशेषशेषिभावसंबन्धेन दृष्टम् । तादर्थ्यं च विध्येकसमधिगम्यमिति वाक्यभेदो दुष्परिहर इत्यत आह—**न पुनरिति** । क्रियानिर्वर्तकत्वमेव कारकत्वं नतु तादर्थ्यपर्यन्तम् । तथात्वे कर्मकारकस्य क्रियार्थत्वाभावेन कारकत्वाभावप्रसङ्गात् । क्रियानिर्वर्तकत्वमात्रं च लोकगम्यमेवेति भावः । नन्वेवं दध्यनर्थकमेव स्यात् । नच तत्फलार्थं त्वया होमस्य फले विध्यभ्युपगमादतो दध्नो होमार्थत्वमवश्यं स्वीकार्यमित्यत आह—**अत इति** । नहि केवलस्य होमस्य फले विधानं मया स्वीक्रियते किंतु दध्यनुरक्तस्येति दध्नोपि फलोपयोगित्वान्नानर्थक्यमिति भावः । एवंच दध्यनुरक्तस्य होमस्य फले विधानाद्दध्युपादानाभावे दध्यनुरागावस्थहोमासंपत्तेस्तत्सिद्ध्यर्थं नियमेन फलार्थिनो दध्युपादानसिद्धेर्दधिहोमसंबन्धविधानावश्यकत्वाभावाद्वाक्यभेदेन विनैव सिद्धो जुहोत्यन्वय इत्युपसंहरति—**तेनेति** । **फले विधानादिति** । फले दध्यनुरक्तहोमविधेरर्थाद्धोमाश्रितदधिव्यापारस्य सिद्ध्या फले विहितत्वोक्तिरिति द्रष्टव्यम् । दध्येव फले विधेयं न दध्यनुरक्तो होमः । ततश्च जुहोतेरन्वयो दुर्घट इति दूषयति—**तत्रेति** । ननु होमगतदध्यनुरागसंपत्त्यर्थमुपादीयमानमपि दधि न होमार्थं तादर्थ्येन विध्यभावात्किंतु फलार्थमेव । फलार्थतयापि यद्यपि दधि न स्वतो विहितं तथापि दध्यनुरक्तत्वेन होमस्य फले विधानेनैव दध्यनुरागंविना होमात्फलासिद्ध्या तदनुरागसंपत्त्यर्थमुपादेयस्य दध्नोऽपि फलार्थत्वसिद्धिरित्यस्वरसादाह—**अपिचेति** । दध्नः साक्षात्फले विधानं मास्तु दध्यनुरक्तहोम एव फले विधीयताम् । तथापि प्राप्तस्य होमस्य दध्यनुरागः फलसंबन्धश्च विधेय इति संबन्धद्वयविधानाद्वाक्यभेदः स्यादित्यर्थः । ननु तर्हि न दध्युपरक्तो होमः फले विधीयते किंतु दध्येव होमाश्रितं विधीयते । होमाश्रितत्वस्य च तृतीयैवावगमान्न वाक्यभेदो नवा जुहोतेरानर्थक्यमिति पक्षान्तरं शङ्कते—**नन्विति** । ननु दध्नो द्रव्यस्य होमक्रियाश्रितत्वमनुपपन्नम् । तथाश्रयाश्रयिभावे तृतीयाया अननुशासनात्तस्य तृतीयावगम्यत्वमप्यनुपपन्नमिति शङ्कां निराकर्तुं होमाश्रितशब्दार्थमाह—**होम इति** । अस्मिन्नपि पक्षे वाक्यभेदस्तुल्य इति मनसि निधायाह—**दध्नेति** । जुहोतिपदसमभिव्याहाराद्धोमे तत्कारकमित्यवगम्यत इति शङ्कते—**वाक्यादिति** । तर्हि अनेन वाक्येन दध्नो होमसंबन्धस्य फलसंबन्धस्य च विधानाद्वाक्यभेद इति परिहरति—**एवमिति** । ननु दधिहोमयोः क्रियाकारकभावेन संबन्धो लोकसिद्धस्ततश्च दधिहोमसंबन्धे विधिव्यापाराभावाद्धोमाश्रितदधिविधाने वा दध्यनुरक्तहोमविधाने वा न वाक्यभेद इति पक्षद्वयेऽपि उक्तवाक्यभेदस्योद्धारं शङ्कते—**नन्विति** । **तेनेति** । नच दध्यनुरक्तहोमस्य फले विधाने दध्यनुरागाभावे दध्यनुरागावस्थहोमासंपत्तेरर्थादेव तत्कर्तव्यतासिद्धेस्तच्छ्रवणमनुवादः । तथा होमाश्रितदधिविधानेऽपि ततो दधिहोमसंबन्धकर्तव्यताया विधानाभावान्न वाक्यभेद इति वाच्यम् । एवं सति सोमेन यजेतेत्यादावपि सोमयागयोः क्रियाकारकभावलक्षणसंबन्धं लोकसिद्धमादाय केवलयागविधेर्वक्तुं शक्यतया विशिष्टविधिमात्रोच्छेदापत्तेरिति भावः । वाक्यभेदमेव संभावितवचनव्यक्तिनिरासेन विशदयति—**तथाहीति** । **होमस्येति** ।

---

१ विधानाद्वाक्यभेदेनैव. २ होमगतदध्यनु. ३ तदनुरागस्तु. ४ विशिष्टकारकमात्रं.

इन्द्रियकामः स दध्ना जुहुयादिति वचनव्यक्तिः संभवति । होमस्याविधेयत्वात् । विधाने च कर्मान्तरतापत्तेः । अतो जुहुयादिति तावदनुवादः । तत्र यत् जुहुयात्तद्दध्नेति, इन्द्रियकामस्येति च वाक्यभेदः । अथ यद्दध्ना जुहुयात्तदिन्द्रियकामस्येति तदयुक्तम् । नहिं सत्यपि संभवे दध्ना होतव्यं प्राप्तं यदनूद्येत । अथ यदिन्द्रियकामस्य जुहुयात्तद्दध्नेति तदप्ययुक्तम् । इन्द्रियकामार्थेन होमस्याप्राप्तत्वात् । अथ मन्येत यद्यपीन्द्रियकामस्येन्द्रियकामत्वेन रूपेण होमो न प्राप्तः । इन्द्रियार्थेनेति यावत्तथापि पुरुषाणां बहुकामत्वात्कदाचिदग्निहोत्रावस्थायामपि संभवतीन्द्रियेषु पुरुषस्य कामना । तेनेन्द्रियकामनोपलक्षितस्य पुरुषस्य कदाचित्प्राप्त एव होम इति तदनुवादेन दधि विधीयते इति । तदयुक्तम् । कामशब्दस्य काम्यफलस्वरूपाभिधायिनः पुरुषस्वरूपपरत्वे लक्षणाप्रसङ्गात् । अपिचैवं न फलार्थं दधि स्यात् किंत्विन्द्रियकामनायां निमित्ते नैमित्तिकं क्रत्वङ्गं स्यात् । विवरणकारस्य त्वपूर्वान्तरानभ्युपगमात् क्रत्वपूर्वान्वितस्यैव गुणस्य फलार्थत्वादपूर्वसंबन्धस्य च लोकतः सिद्ध्यभावात् सुतरां वाक्यभेदः स्यात् । तस्मान्न होमसंबद्धं दधि वाक्येन विधीयते अपितु दध्नेत्येतावन्मात्रं य इन्द्रियकामः स दध्नेति । कथं तर्हि जुहोतेरन्वयः । उच्यते । दध्नेति करणभूतं दधि फलाय विधीयते तृतीयानिर्देशात् । क्रियापेक्षं च कारकमिति क्रियाविशेषापेक्षायां संनिधिलक्षणप्रकरणप्राप्तो होमसंबन्धो जुहोतिनानूद्यते । ननु होमादिवत्फलभावनापेक्षमेव करणत्वं भविष्यति

---

तस्याग्निहोत्रवाक्यादेव प्राप्तत्वादिति भावः । **ननु** दध्ना जुहोतीत्यादिगुणविधिषु यथाविहितस्यैव गुणविशिष्टतया शब्दतो विधिः फलतस्तु गुणविधिस्तथात्रापि किं न स्यादित्यत आह—**विधानेचेति** । यत्र हि एकमेवाप्राप्तं तत्र परं प्राप्तस्यापि कर्मणोऽप्राप्तगुणविशिष्टतया पुनर्विधिरिह तु गुणसंबन्धस्य फलसंबन्धस्य चोभयोरप्राप्त्या विधेरुभयत्र तात्पर्यभेदेन विध्यावृत्त्या वाक्यभेदप्रसङ्गान्न प्राप्तस्य कर्मणो गुणविशिष्टतया फले पुनर्विधानं संभवति । तस्माद्धोमस्य विधाने कर्मान्तरत्वमेव स्यादित्यर्थः । **इतिचेति** । इति च विधेयत्वाद्वाक्यभेद इत्यर्थः । **ननु** इन्द्रियकामस्य या होमप्राप्तिः सा इन्द्रियकामत्वावच्छिन्नैवेति वक्तुं शक्यमित्यतस्तस्यार्थमाह—**इन्द्रियार्थेनेति** । कामपदस्य फलपरत्वस्यैकादशे वक्ष्यमाणत्वात्तदेवाभ्युपगन्तुं न्याय्यम् । तद्विहाय यद्यत्र कामनोपलक्षितपुरुषपरत्वं स्वीक्रियते तदा स्वरसतः फलपरतया प्रतीयमानस्य तत्परित्यागेन पुरुषोपलक्षकत्वस्वीकार एव दोष इत्याह—**तदयुक्तमिति** । ननु वाक्यभेदादुपलक्षकत्वमेव ज्याय इत्यरुचेराह—**अपिचेति** । इन्द्रियकामशब्दस्य पुरुषोपलक्षकत्वे पुरुषोपलक्षणीभूतायाः कामनाया निमित्तत्वमेव पर्यवस्येदिति भावः । **विवरणकारस्येति** । दध्नेन्द्रियकामस्य जुहुयादिति गुणविभक्ताकारो होमः शब्दतः प्रतीयते । ततश्च निबन्धनमते शब्दबलाद्गुणविभक्तत्वाकारेण होमस्य विषयत्वं प्रकृतनियोगे तु न गुणविभक्तत्वाकारेण होमो विषयः किंतु स्वरूपेण । एवंच रूपभेदेन प्रकृतविषयप्रत्यभिज्ञाभावात्पूर्वनियोगान्नियोगान्तरमिन्द्रियकामवाक्ये प्रतीयत इति शब्दबलवादिनो निबन्धनकारस्य मतम् । विवरणकारस्य तु वस्तुबलवादित्वाच्छब्दतो गुणविभक्तहोमप्रतीतावपि न गुणविभक्तत्वाकारेण नियोगविषयत्वं किंतु वस्तुबलाद्भावार्थरूपहोममात्रस्यैव । एवंच रूपभेदाभावेन प्रकृतविषयप्रत्यभिज्ञाबाधाभावात् इन्द्रियकामवाक्येन नियोगान्तरं किंतु स एव नियोग इति मतम् । एवंच लोकतः सिद्धं गुणविभक्तत्वाकारमादाय तेन रूपेण होमस्य नियोगान्तरसंबन्ध स्वीकुर्वाणस्य निबन्धनकारस्य मते तदाकारसंपादकस्य गुणस्य कथंचिच्छब्दव्यापारंविनाऽर्थान्नियोगसंबन्धलाभं प्रत्याशासंभवेऽपि विवरणमते तत्प्रत्याशापि नास्ति । स्वरूपेणैव होमस्य तन्मते विषयतया तत्र शब्दव्यापाराभावे लोकतो दधिहोमयोः संबन्धसिद्धावपि दध्ना प्रकृतनियोगसंबन्धस्य कथंचिदप्यप्राप्तेः, तस्मात्प्रकृतनियोगसंबन्धस्य वाक्येनैवात्र मतेऽवश्यबोध्यत्वात्सुतरां वाक्यभेदः स्यादित्यर्थः । तस्माद्धोमसंबद्धस्य दध्नो वा दधिसंबद्धस्य होमस्य वा विधिरिति प्राभाकरमतं न युक्तम् । किंतु दध्नेत्येतावन्मात्रं फलाय विधीयते इत्याचार्यमतमेव युक्तमित्याह—**तस्मादिति** । तत्राचार्यमते जुहोत्यन्वयमुपपादयितुं पूर्वकृतमाक्षेपं पुनरुत्थापयति—**कथमिति** । जुहोतेर्नोद्देश्यतया न वा विधेयतयान्वयः, किंतु य इन्द्रियकामः सः दध्नेति इन्द्रियकामोद्देशेन दधिविशिष्टकारकं जुहोतिपरप्रत्ययेन विधीयते । तत्र च कारकस्य क्रियापेक्षत्वादपेक्षितक्रियासमर्पणार्थं केवलप्रत्ययप्रयोगस्यासंभवाच्च यस्मिन्कस्मिंश्चिद्धातौ प्रयोक्तव्ये जुहोतिः प्रयुज्यते तदर्थस्य संनिहितत्वेनानुवादसंभवान्न धात्वन्तरम् । तदर्थस्याप्राप्तत्वेनानुवादासंभवेन तस्यापि विधेयत्वापत्त्या वाक्यभेदापत्तेः । एवंच दध्नेति तृतीयया प्रतीयमानं कारकत्वं किं क्रियानिरूपितमिति क्रियाविशेषापेक्षायां संनिधानाद्बुद्धौ विपरिवर्तमानहोमक्रियानिरूपितमित्यवगमात् संनिधानात्क्रियाकारकभावेन दध्यन्वितो होमो जुहोतिना-

---

१ फलार्थेन. २ कामस्य=फलरूपाभिधायिनः कामपदस्य. ३ करणत्वमिति क्रियापेक्षाणां. ४ भट्टपादः.

न क्रियान्तरमपेक्षते । उच्यते । न धात्वर्थत्वद्दध्यादेः सिद्धस्वभावस्य स्वरूपेण फलभावनाकरणत्वमुपपद्यते, कर्तृव्यापारविषयस्य हि करणत्वं, दध्यादेश्च कंचिद्धात्वर्थंप्रति करणीभवतः कर्तृव्यापारविषयता न स्वरूपमात्रेण यागादिवदित्यस्ति धात्वर्थविशेषाकाङ्क्षा । यद्यपि चादृष्टोपकारकप्रयाजादिव्यापारविषयता यागादिवद्दध्यादेः सिद्धस्वभावस्यापि स्वरूपेण संभवेत्तथापि दृष्टार्थव्यापारविषयतासिद्ध्यर्थं कारकीभावमपेक्षते । अवश्यंच दृष्टद्वारेणापि कर्तृव्यापारविषयता करणस्याङ्गीकर्तव्या । अन्यथा दृष्टार्थाङ्गमात्रानुष्ठानात्करणंप्रति पुरुषव्यापाराभावात्करणोपदेशवैयर्थ्यं स्यात् । तस्माद्विभक्त्यभिहितकारकविशिष्टं दधि दधिविशिष्टं वा कारकं प्रत्ययार्थप्राधान्यात्फलाय विधीयते । फलभावनाकरणत्वं च यागादिवदेव समभिव्याहारसिद्धं न विभक्त्यभिधानमपेक्षते । कारकभावश्च क्रियाविशेषापेक्ष इति संनिधिवशप्राप्तो होमोऽत्र धातुनानूद्यत इति सिद्ध्यति जुहोतेरन्वयः । कारकभावश्चैकपदोपात्तः क्रियाविशेषसंबन्धस्तु संनिधिप्राप्तः फलान्वयएव वाक्येन विधीयतइति न वाक्यभेदः ॥

वारवन्तीयादीनां कर्मान्तरताधिकरणम् ॥ १२ ॥

## समेषु कर्म युक्तं स्यात् ॥ २७ ॥

उक्त्वाग्निष्टुतमेतस्य वारवन्तीयसाम हि ॥ रेवतीष्वृक्षु कुर्वेति श्रुतं पशुफलाप्तये ॥ २९ ॥
रेवत्यादिर्गुणः कर्म पृथग्वा पूर्ववद्गुणः ॥ रेवतीवारवन्तीयसंबन्धाख्यः पशुप्रदः ॥ ३० ॥
साम्नोऽत्र फलकर्मभ्यां संबन्धे वाक्यभिन्नता ॥ तेनोक्तगुणसंयुक्तमन्यत्कर्मोच्यते फले ॥ ३१ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्ष्वेकविंशमग्निष्टोमसामकृत्वा 'ब्रह्मवर्चसकामो यजेते'त्यग्नि-

---

नूद्यते केवलं नतु विधीयते इति वाक्यभेदं विनैव भवति जुहोत्यन्वय इति परिहरति—**उच्यत इति** । यत्र च न तृतीयानिर्देशः शुक्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकाम इत्यादौ तत्रापि शुक्रस्येतरेषां च प्रथमचरमभावस्य क्रियानिर्वाह्यत्वान्निर्वाहकक्रियापेक्षायां संनिहितक्रियानुवादकतया गृह्णातिप्रभृतीनामन्वय इति ध्येयम् । अत्र नाकाङ्क्षालक्षणं प्रकरणम् । तस्य विनियोगमात्रप्रमाणत्वाद्दध्न आश्रयाकाङ्क्षायामपि होमस्य नित्यद्रव्यैर्निराकाङ्क्षतयोभयाकाङ्क्षालक्षणप्रकरणाभावाच्चेत्यतो विवक्षितं प्रकरणशब्दार्थमाह—**संनिधिलक्षणेति** । ननु धात्वर्थस्य सिद्धान्ते क्रियात्मकत्वाभावान्न जुहोतेः कारकान्वयः । एवंच दध्नेति तृतीयावगतं कारकत्वं न होमापेक्षं किंतु फलभावनापेक्षमेव स्वीकार्यमिति केवलदध्न एव फले विधानं न करणभूतस्येति नोक्तप्रकारेण जुहोत्यन्वय इति शङ्कते—**नन्विति** । फलभावनापेक्षं करणत्वमिति पक्षेऽपि साक्षाद्दध्यादेः फलभावनाकरणत्वासंभवाद्धात्वर्थमपेक्ष्य फलभावनाकरणत्वं वक्तव्यमित्यावश्यकत्वात्तदपेक्षमेव करणत्वं विभक्त्यभिधेयमस्तु । यद्यपि धात्वर्थो न कारकान्वययोग्यस्तथापि तत्कर्मकभावना योग्या । सा च प्रकरणादुपस्थितेति तन्निरूपितकरणत्वं विभक्त्यभिधेयं । श्रुतस्य च जुहोतेरनुवादकत्वाद्भावनाद्वारकसंबन्धानुवादपरत्वकल्पनमपि न दोष इत्याशयेन परिहरति—**उच्यत इति । यद्यपि चेति** । दृष्टार्थव्यापारविषयत्वं दृष्टार्थक्रियासमवायंविना न संभवतीति सिद्धस्वभावस्य दध्यादेः स्वरूपेण दृष्टार्थकर्तृव्यापारविषयत्वासंभवेऽप्यदृष्टार्थव्यापारविषयत्वं सिद्धस्वभावस्यापि संभवति अदृष्टार्थव्यापारस्य तदुपकार्यरूपत्वात्तत्र साध्यस्वभावत्वस्याप्रयोजकत्वादित्यर्थः । तत्तद्गुणकामस्थले संभावितादृष्टव्यापारोपलक्षणार्थः प्रयाजादिशब्दः । **ननु** कर्तृव्यापारविषयतामात्रेण कारकत्वोपपत्तेर्मास्तु दृष्टार्थव्यापारविषयत्वमित्यत आह—**अवश्यंचेति । वैयर्थ्यमिति** । प्रवृत्त्यन्तरानुपदेशादिति भावः । दधिविशिष्टं वा कारकमित्यत्र हेतुः—**प्रत्ययार्थेति** । ननु तृतीयावगतकरणत्वस्य होमापेक्षत्वे फलभावनाकरणत्वं गुणस्य न स्यात्तत्प्रत्यायकाभावादित्यत आह—**फलेति** । ननु तर्हि फलभावनाकरणत्वस्याप्यवश्याभिधेयत्वात्तदेव तृतीयावगम्यमस्त्वित्यत आह—**न विभक्तीति** । अन्यलभ्यत्वादिति भावः । **क्रियाविशेषापेक्षः** क्रियावच्छेदकधात्वर्थापेक्ष इत्यर्थः । **संनिधीति** । एवंच विधिव्यापारंविनैव संनिधिना पदश्रुत्या च होमकारकीभूतं दधीत्येतावतोऽर्थस्य सिद्धौ तदिन्द्रियकामस्येत्येतन्मात्र एव विधेर्व्यापारान्न वाक्यभेद इत्याह—**कारकभाव इति** । न्यायसुधाकृतस्तु संनिधिलक्षणप्रकरणेन दध्नो होमान्वयविधायकं वाक्यं कल्प्यते । कल्पिताच्च वाक्यात्प्राप्तस्य होमसंबन्धस्य जुहोतिरनुवाद इत्याहुः । एवंच जुहोतेः संनिधिसिद्धार्थानुवादकतया उद्देश्यविधेयान्यतरसमर्पकत्वाभावान्न वाक्यभेद इत्युपसंहरति—**इति न वाक्यभेद इति** । प्रयोजनं पूर्वपक्षे फलार्थहोमे सायंप्रातःकालनियमाभावादनियतकालत्वं सिद्धान्ते तु नियतकाल एव नित्यहोमे दधिप्रयोग इति । सूत्रार्थस्तु—भावार्थाधिकरणन्यायेन फलस्य कर्मसंबन्धित्वात्प्रकृतेऽपि फलश्रुतेः कर्मान्तरं स्यादिति ॥

**समेषु कर्म युक्तं स्यात् ॥ २७ ॥** तृवृत्स्तोमेनायनवकस्तोमकः अग्निष्टोमः अग्निष्टोमसंस्थोऽग्निष्टुत् अग्निष्टुन्नामकः

---

१ स्वरूपेण. २ पुरुषप्रवृत्त्या. ३ वायव्यास्वेक.

श्रुत्संज्ञकं यागं विधाय तस्य च प्राकरणिकेन वारवन्तीयमग्निष्टोमसाम कार्यमिति वाक्येन गुणं विधाय पुनराम्नातं एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति। तत्रापि पूर्ववत्संशयः किं पूर्वस्मिन्नेवाग्निष्टुत्संज्ञके यागे पशुफलार्थत्वेन रेवत्याधारं वारवन्तीयं गुणो विधीयते उत कर्मान्तरमिति। तदर्थमेतद्विचार्यते। किं पशुफलस्य वारवन्तीयस्य प्रकृतो याग आश्रयोभवितुं शक्नोति न वेति। 'तत्र पूर्ववदत्रापि गुणमात्रं विधीयते॥ फलाय नतु यागस्य विधानं विधिगौरवात्॥ 'सामाश्रयत्वं यागस्य साक्षाद्यद्यप्यसंभवि॥ तथापि स्तोत्रनिर्वृत्तिद्वारा तदुपपद्यते॥' विशिष्टयागान्तरविधौ विधिगौरवात्प्रकृतहानाप्रकृतकल्पनादोषाच्च तत्रैव रेवत्याधारं वारवन्तीयं फलाय विधीयते। यद्यपि द्रव्यदेवतासाधनो यागः साम्ना साधयितुं न शक्यते इति न साक्षात्साम्नः प्रकृताश्रयकत्वं संभवति तथाप्यानर्थक्यात्। तदङ्गेष्वित्यङ्गभूतस्तोत्रनिर्वृत्तिद्वारेण यागसाधनत्वं साम्नः संभवतीति युक्तं प्रकृताश्रयकत्वम्। नन्वेवं रेवतीवारवन्तीयसंबन्धः फलसंबन्धश्चेत्यनेकार्थत्वाद्वाक्यभेदः स्यात्। नैष दोषः। यदि संबन्धद्वयमपि विधिशब्देनैव बोधयितव्यं स्यात् स्याद्वाक्यभेदः। कृत्वाशब्देनैव रेवतीवारवन्तीयसंबन्धे प्रतीते केवलफलसंबन्ध एव यजेः परेण लिङ्प्रत्ययेन प्रतिपादितव्य इति न वाक्यभेदः। यथा विशिष्टापूर्वकर्मविधौ तस्य विशेषणसंबन्धे विभक्त्यादिभिरेव सिद्धे तादृशस्य फले विधानादवाक्यभेदः। यः फलं कुर्यात् स ईदृशेन यागेनेति तद्वदिहापि यः पशून्कुर्यात्स रेवतीषु वारवन्तीयकरणेनेति न वाक्यभेदः। तस्मात् फलाय गुणमात्रविधिः यजिस्तु विपरिवृत्तिप्राप्तपूर्वानुवादः। एतच्छब्दोपि षष्ठ्यन्तः पूर्वस्य यागस्य फलवता गुणेन सहाश्रयाश्रयिसंबन्धं संनिधिलब्धमनुवदति। अग्निष्टोमसामशब्दोऽप्यानर्थक्यात्तदङ्गे-

---

अग्निष्टोमसाम यज्ञायज्ञाव इत्याग्नेयीषु प्रकृतिवत्प्राप्तं तत्र वायव्यास्विति वायुदेवताप्रकाशकऋग्वचनेन प्राकृतऋगपवादः त्रिवृदित्यनेनाविशेषात्सर्वस्तोत्रेषु त्रिवृत्त्वप्राप्तौ अग्निष्टोमसाम्नि एकविंशत्वं प्रतिप्रसूयते एकविंशमित्यनेनेति ध्येयम्। अत्र त्रिवृदित्यादि यजेतेत्यन्तमेकंवाक्यं नतु त्रिवृदित्यादि अग्निष्टोम इत्यन्तमेकं वाक्यम्। तस्य वायव्यास्वित्यन्यद्वाक्यम्। तेन तस्य वायव्यास्वित्यादेर्नोदाहरणत्वशङ्कावकाश इति ध्येयम्। **तस्यचेति**। इदंच वक्ष्यमाणानुवादत्वसौकर्यार्थमुक्तम्। रेवतीषु रेवतीशब्दवतीष्वित्यर्थः। नन्वत्रानेकगुणश्रवणेन कस्य गुणस्य फले विधिरित्यज्ञानात्कथं पूर्ववत्संशय इत्यतस्तमेव दर्शयति—**किमिति**। पूर्वापवादात्संगतिरिति सूचयन् धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रविधिरिति पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षमाह—**तत्रेति**। ननु गुणसाध्यस्यैवाश्रयत्वाद्यागस्य च साक्षात्सामसाध्यत्वाभावान्नाश्रयत्वसंभव इत्यत आह—**सामाश्रयत्वमिति। आनर्थक्यादिति**। तृतीये आनर्थक्यात्तदङ्गेष्वित्यधिकरणे सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्र सप्तदशारत्नित्वस्य वाजपेये साक्षादन्वयासंभवाद्वाजपेयाङ्गपशुयागाङ्गयूपद्वारान्वयो वक्ष्यते तेनैव न्यायेनेत्यर्थः। अनेकार्थविधानमात्रेण न वाक्यभेदः। विशिष्टविधिमात्रोच्छेदापत्तेः। किंतु यत्रानेकार्थविधिस्थले विधिव्यापारंविना विशेषणवैशिष्ट्यासिद्धिस्तत्र विशेषणविशेष्यसंबन्धसिद्ध्यर्थं विशिष्टविधानार्थं च विधायकप्रत्ययस्य व्यापारभेदाद्विध्यावृत्त्या वाक्यभेदः। यथा पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मण्याग्नेयादिवाक्यैर्गुणविधिरिति पक्षे प्रकृते च विधिव्यापारंविना कृत्वाशब्देनैव वारवन्तीयस्य रेवतीसंबन्धसिद्ध्या तत्र विधिव्यापाराभावात् कृत्वाशब्दान्तपदसंदर्भेणोपस्थितस्य रेवत्याधारवारवन्तीयस्य फलसंबन्धमात्र एव विधिव्यापाराद्विध्यावृत्त्यभावान्न वाक्यभेद इति परिहरति—**नैष इति**। अन्यथा सिद्धान्तेऽपि वाक्यभेदः स्यादित्याशयेन दृष्टान्तमाह—**यथेति। वारवन्तीयकरणेनेति**। अत्र वारवन्तीयकरणं वारवन्तीयकृतिर्भावनात्मिका गुणत्वेन विधीयत इत्यत्र न तात्पर्यं किंतु रेवतीवारवन्तीययोः सप्तमीद्वितीयाभ्यां कारकतयोपस्थितयोः परस्परमन्वयस्य क्रियाद्वारकत्वात्तदन्वयघटकत्वेन कृतिरुपात्ता। तेन रेवत्याधारवारवन्तीयं गुणो विधीयत इत्यादिग्रन्थाविरोधः। एतस्येति षष्ठ्यर्थविधानादपि वाक्यभेदो न शङ्कनीय इत्याशयेनाह—**एतच्छब्द इति**। एतेनेति तृतीयान्तस्यैतच्छब्दस्य तु विधेयगुणप्रतिपादकतया विधिशेषत्वमेव नत्वनुवादकत्वम्। नच विधेयगुणस्य वारवन्तीयशब्देनैव समर्पणादेतच्छब्दवैयर्थ्यमिति वाच्यम्। वारवन्तीयमिति द्वितीयान्तेन प्रधानतयोपस्थितस्य वारवन्तीयस्य फलभावनाकरणत्वान्वयायोग्यत्वेन तद्योग्यतार्थं तस्य तृतीयान्तैतच्छब्देन करणतया निर्देशावश्यंभावादिति षष्ठ्यन्तशब्दस्यानुवादकत्वं वदतो भावः। एवमग्निष्टोमाख्यस्तोत्रसाधनत्वविधानतोऽपि न वाक्यभेदप्रसक्तिरित्याह—**अग्निष्टोमसामशब्द इति**। नन्वग्निष्टुति कृतौ

---

१ किंफलार्थस्य. २ तत्रैव=अग्निष्टुति. ३ प्रकृतः=अग्निष्टुत्. ४ अग्निष्टुत्. ५ कुर्यात्सदृशेन. ६ संनिधिः. ७ प्राप्तयागानुवादः. ८ आनर्थक्यतदङ्गप्राप्तस्तोत्र.

त्विति न्यायप्राप्तस्तोत्रसंबन्धानुवादः । यद्यपि तत्रान्यानि बहूनि स्तोत्राणि आज्यपृष्ठादीनि सन्ति तथापि वारवन्तीयस्य क्रत्वर्थस्याग्निष्टोमस्तोत्रमेव स्थानं दृष्टमिति फलार्थस्यापि तदेव स्थानं भविष्यति । तस्मादेषां प्राप्तत्वेनाविधेयत्वान्न वाक्यभेद इति प्राप्तेऽभिधीयते—'प्रकृतं कर्म गृह्णाति फलाय विहितो गुणः ॥ यत्र तत्र गुणात्कामो यागः साम्ना न साध्यते ॥' कारकभावापत्तिर्हि तदाश्रयत्वं तदपि प्रकरणप्राप्तमनुवदितव्यम् । वाक्येनाश्रयसंबन्धकरणे वाक्यभेदापत्तेः । तेन यत्र प्रकृते कर्मणि फलार्थस्य गुणस्य कारकभावः संभवति तत्रैव गुणात्कामो यथा दध्नेन्द्रियकामस्येति । नत्विह प्रकृतयागे कारकत्वं साम्नः संभवति, संभवति तु तदङ्गभूते स्तोत्रे कारकत्वम् । तत्तु न प्रकृतमातिदेशिकत्वादिह स्तोत्राणाम् । नचायमानर्थक्यतदङ्गन्यायस्य विषयः । यो हि कर्माङ्गत्वेन गुणश्चोद्यते स तत्र साक्षादसंभवन्नङ्गे निविशते । संभवति ह्यङ्गद्वारेणाप्युपकारकत्वम् । नचाश्रयत्वमङ्गद्वारेण संभवति । नह्यङ्गे कारकं भवत्प्रधाने कारकं संभवति । साम्नश्च गीतिरूपक्रियात्वाद्यागादिवन्नाश्रयापेक्षा यतः प्रकृतक्रियासंबन्धः स्यात् । ननु नावश्यं कारकतयैव तदाश्रयत्वं संबन्धान्तरेणाप्युपपत्तेः । तेन क्त्वाशब्देन क्रियान्तरसमानकर्तृकतया गम्यमानं रेवतीवारवन्तीयसंबन्धकरणं फलाय विधीयते । किं तत्क्रियान्तरमित्यपेक्षायां संनिधानाद्यागो लभ्यते । एवमप्यग्निष्टोमसामेति नावकल्प्यते अनुवादत्वासंभवाद्विधाने च वाक्यभेदात् । नच क्रत्वर्थस्य वारवन्तीयस्य यत्स्थानं तदेव पुरुषार्थस्यापि भवतीति प्रमाणमस्ति । यतोऽग्निष्टोमसामेत्यनूद्येत । किंच रेवतीषु

---

स्तोत्रान्तराणामपि सद्भावात्तेषामपि चोदकाद्विपरिवृत्त्यविशेषाद्विशिष्याग्निष्टोमस्तोत्रसंबन्धानुवादायोगात्सोऽवश्यं विधेय इत्यत आह—यद्यपीति । दृष्टमिति । ततश्च क्रत्वर्थवाक्ये शब्देनोपस्थितस्य बुद्धौ विपरिवृत्तेश्चोदकोपस्थितस्तोत्रान्तरादस्ति विशेष इति भावः । प्रकृतमिति । प्रकृते कर्मणि कारकीभवतीति यावत् । तत्साध्यत्वाभावेऽपि तदाश्रयत्वं किं न स्यादिति शङ्कां निराकुर्वन् श्लोकं व्याचष्टे—कारकेति । स्तोत्रस्याश्रयत्वयोग्यतायामपि नेह तत्संभव इत्याह—संभवतित्विति । न प्रकृतं न विशिष्य स्वशब्देन संनिहितमित्यर्थः । एवंच श्लोके प्रकृतमिति विशेषणं स्तोत्रस्याश्रयत्वासंभवस्फोरणार्थमुक्तमिति द्रष्टव्यम् । अङ्गभूतस्तोत्रनिर्वृत्तिद्वारा यागाश्रयत्वमुक्तं निरस्यति—नचायमिति । नहीति । क्रिया कारकभावस्य साक्षात्संबन्धरूपत्वादिति भावः । यद्यपि पशुसोमाधिकरणे प्रणाड्यापि हि येन यत्क्रियते भवति तत्तस्य करणमित्युक्तं तथाप्यारादुपकारकस्य स्तोत्रस्य यागे कारकत्वासंभवादिह प्रणाड्यापि नास्ति कारकत्वमित्याशयः । किंच साम्नो दध्यादिवदाश्रयापेक्षत्वाभावान्न यागस्याश्रयत्वमित्याश्रयसंबन्धानुवादकत्वाभावाद्यजतेर्यागान्तरविधिरेवात्रेत्याह—साम्न इति । गीतिश्चोच्चारणविशेषः । का पुनरसौ शब्दस्योच्चारणविशेषः इति सप्तमे भाष्यकारोक्तेरेवं च सामान्यधीत इति प्रयोगः। उच्चारणक्रियारूपाणां साम्नामुच्चारणविषयत्वाभावेऽपि गुरूच्चारणानन्तरभाविव्यापारविषयतामात्रेणोपपादनीय इति भावः । न्यायसुधायां तु ध्वनिविशेषात्मकस्वरसमाहार एव गीतिर्न क्रियेत्युक्तम् । उक्थ्यसंस्थादीनां च समाप्त्यादेश्च क्रियात्वेऽपि ससंबन्धिकत्वादेव क्रियान्तरापेक्षत्वमिति वैषम्यं बोध्यम् । संबन्धान्तरेणेति । अतएव 'पशुकाम उक्थ्यं गृह्णीयात् दाक्षायणयज्ञेन स्वर्गकाम' इत्यादौ संस्थावृत्त्यादिरूपगुणस्य प्रकृतयागे कारकत्वाभावेऽपि तत्संबन्धिप्रयोगपरिभेदकत्वमात्रेण तदाश्रितत्वमिति भावः । एवंच साम्नो गीतिरूपक्रियात्वात्कर्तृव्यापारविषयत्वार्थं दध्यादिवत्क्रियापेक्षाविरहेऽपि समानकर्तृकत्वनिर्वाहार्थमस्त्यपेक्षेत्याशयेनाह—किंतदिति । एवं यागस्याश्रयत्वसंभवेऽपि अग्निष्टोमपदानर्थक्यप्रसङ्गान्न गुणफलविधिः संभवतीति परिहरति—एवमपीति । अनुवादत्वेति । आज्यपृष्ठादिषु बहुषु स्तोत्रेषु चोदकप्राप्तेषु विशिष्याग्निष्टोमस्तोत्रसंबन्धानुवादे कारणाभावादिति भावः । प्रमाणमिति । क्रत्वर्थवाक्येऽग्निष्टोमोपस्थितेर्गुणविधानार्थतया स्वप्राधान्याभावात्क्रत्वर्थवाक्ये तदुपस्थितेर्नानुवादप्रयोजकत्वमिति भावः । नच यथा 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेय'मित्यत्रानुवादबलात्स्थाननियमस्तद्वदिहाप्यस्त्विति वाच्यम् । नहि तत्राप्यनुवादस्य साक्षात्स्थानप्रमाणत्वं किंतु विधीयमानस्य स्थानापेक्षायां अनुवादबलादुपस्थितस्थानमेव विधिरनुमन्यत इत्येतावन्मात्रम् । प्रकृतेच वारवन्तीयस्य न स्थानापेक्षा किंतु समानकर्तृकक्रियापेक्षा । साच यागेनैव शान्तेति त्वयाङ्गीक्रियतेऽतोऽत्र स्थानापेक्षाविरहेणानुवादोपस्थितस्थानस्य विधिना असंस्पर्शान्नानुवादेन स्थाननियम इति वैषम्यमिति भावः । किंचेति । इदंचापाततः 'धातुसंबन्धे प्रत्ययाः' इत्यधिकृत्य 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्ययानुशासनेन क्त्वाप्रत्ययस्य धात्वन्तरार्थसमानकर्तृकत्वमेवार्थो वक्तव्यः ।

---

१ प्राप्तेब्रूमः. २ वाक्यभेदात्. ३ कारकभावात्प्रधानेकारकत्वं भवति. ४ संनिदधानो याग उपलभ्यते. ५ रेवतीवारवन्तीयं. ६ तत्=साम.

वारवन्तीयं कृत्वा पशून्भावयेदित्युक्ते पशुभावनापेक्षयैव समानकर्तृकत्वसंभवान्न क्रियान्तरापेक्षा यतः संनिहितो यागः संबध्येत । तस्माद्गुणफलसंबन्धविधौ यजेतेति चाग्निष्टोम सामेति च द्वावपि शब्दौ प्रकरणप्राप्तानुवादत्वासंभवाद्विधाने च वाक्यभेदादनर्थकौ स्याताम् । तस्मात् कृत्वाशब्दकल्पितरेवतीवारवन्तीयसंबन्धविशेषितोऽपूर्वो यागः फलाय विधीयते । तत्र साम्नः प्रकृतितोऽग्निष्टोमस्तोत्रस्थानप्राप्तेस्तदनुबद्धा रेवत्योऽपि तत्स्थाना भवन्ति तेनाग्निष्टोमसामेत्यनुवादः। एतच्छब्दोऽपि प्रस्तूयमानापूर्वयागवचनः। रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्येतावन्मात्रं विधीयत इति लाघवं एकवाक्यत्वं च लभ्यतेऽपूर्वकर्मविधौ, गुणफलसंबन्धविधौ तु यज्यादेरानर्थक्यं वाक्यभेदो वा स्यादित्युक्तम्। ये तु गुणफलाधिकारेष्वपि वाक्येनैव गुणस्याश्रयसंबन्धमभ्युपगच्छन्तः कर्मैव गुणानुरक्तं फले विधीयते वाक्येनैवेत्याहुस्तेषामत्रापि रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रविशिष्टस्य प्रकृतस्यैव यागस्य दध्यनुरक्तस्येव होमस्य फले विधिसंभवात्सिद्धान्तहानिः। ननु तत्र दध्यनुरागो होमस्य लोकसिद्धो लभ्यते केवलस्तु फलसंबन्धो वाक्येन विधीयते । इहतु यद्यपि ऋक्सामयोः स्तोत्रसाधनत्वं लौकिकं स्तोत्रस्य तु यागविशेषणत्वं न लोकतः सिद्ध्यतीति विधिवशादेवैतु लब्धुं शक्यम्। ततश्च तस्य फलसंबन्धस्य च विधानाद्वाक्यभेदः स्यात्। सत्यम्। न लोकतःसिद्धमतिदेशतस्तु सिद्धम्[६]स्तोत्रस्य पूर्वयागाङ्गत्वेन तद्विशेषणत्वं च ऋक्सामयोर्लोकतः सिद्धम्।

---

भावना तु न धात्वन्तरार्थः किंतु प्रत्ययार्थ इति पशुभावनापेक्षसमानकर्तृकत्वानुपपत्त्या क्रियान्तरापेक्षावश्यंभावादिते। **अनर्थकौ स्यातामिति**। अनेनैव वारवन्तीयमग्निष्टोमसाम कार्यमिति क्रत्वर्थवाक्यं तत्संनिहितं वारवन्तीयमाश्रित्य रेवत्य एव फलाय विधीयन्ताम्। तासां वारवन्तीयसाम्नि कारकभावसंभवेन साम्नस्तदाश्रयत्वोपपत्तेर्गोदोहनेन पशुकामस्य प्रणयेदित्यादाविव संनिधित एवाश्रयसंबन्धस्य प्राप्त्या तदनुवादकतया वारवन्तीयशब्दस्योपपन्नत्वेन वाक्यभेदाप्रसङ्गाच्चेति पक्षान्तरं निरस्तम्। वारवन्तीयसामाश्रित्य रेवतीविधानेऽपि अग्निष्टोमसामेति यजेतेति च द्वयोरपि शब्दयोरुक्तरीत्यानर्थक्यतादवस्थ्यादग्निष्टोमस्तोत्रमाश्रित्य रेवतीनां फले विधिरिति पक्षस्तु अनाशङ्कनीय एव, स्तोत्राणामिहातिदेशिकतयाऽग्निष्टोमस्तोत्रस्य वारवन्तीयंप्रतीव रेवतीप्रत्याश्रयत्वानुपपत्तेरिति ध्येयम्। कृत्वाशब्दकल्पितः कृत्वाशब्देन निर्वाहित इत्यर्थः। रेवतीवारवन्तीययोः कारकयोः संबन्धस्य कृत्वाशब्दोक्तभावनारूपक्रियानिर्वाह्यत्वादिति भावः। **रेवतीवारवन्तीयेति**। अत्र वारवन्तीयं साक्षाद्यागे विशेषणम्। तद्द्वारा रेवत्यो विशेषणमिति विवेकः। नन्वग्निष्टोमस्तोत्रविशेषित इत्यपि वाच्ये कथं रेवतीवारवन्तीयसंबन्धविशेषितत्वमात्रोक्तिरित्यत आह—**तत्रेति**। एतस्येति षष्ठ्यन्तस्य प्रस्तूयमानकर्मानुवादमात्रपरत्वे आनर्थक्यापत्तेरेतस्यैतद्धर्मस्येत्येवं प्रकृताग्निष्टुद्धर्मातिदेशकत्वमेव वाच्यम्। ततश्च प्रकृतिभूतेऽग्निष्टुति वारवन्तीयसाम्नोऽग्निष्टोमस्तोत्रसाधनत्वात्प्रकृतिवदिहापि तत्स्थानप्राप्तेरग्निष्टोमसामेत्यस्यानुवादत्वान्न तस्य विधेयकर्मविशेषकत्वमिति भावः। ननु अग्निष्टुति वायव्याधारस्यैव वारवन्तीयस्याग्निष्टोमस्थानत्वादिह कथं रेवत्याधारस्य तत्स्थानप्राप्तिरित्यत आह—**तदनुबद्धा इति**। वारवन्तीयस्याग्निष्टोमस्थानप्राप्तौ तदाधारभूतानां रेवतीनामप्यग्निष्टोमस्तोत्रसंबन्धप्राप्त्या रेवत्याधारस्यापि वारवन्तीयस्याग्निष्टोमस्थानत्वमुपपद्यते। एवंच वायव्यानां रेवतीभिः प्रत्याम्नानाद्बाधमात्रं नतु तावता वारवन्तीयस्याग्निष्टोमस्थानत्वाभाव इति भावः। यद्वा अग्निष्टुदादीनां निकायित्वान्निकायिषु प्रथमस्य विध्यन्त उत्तरेषु प्रवर्तते इत्यष्टमे वक्ष्यमाणन्यायेनाग्निष्टुतः प्रथमस्य रेवतीवाक्यविहितकर्मान्तरे प्रकृतित्वं बोध्यम्। **एतच्छब्द इति**। षष्ठ्यन्तस्य धर्मलक्षकत्वपक्षे तृतीयान्त इति शेषः। प्राभाकरमते वक्ष्यमाणसिद्धान्तहानेः सुखप्रतिपत्त्यर्थं पक्षद्वयोक्तं गुणदोषजातं संगृह्य दर्शयति—**रेवतीष्विति**। प्राभाकरैस्तु गुणाधिकारस्थले वाक्येन गुणविभक्तावस्थतयोपस्थितस्य कर्मणः फले विधानमिति वाक्येनैव गुणाश्रयसंबन्धस्य फलसंबन्धस्य च स्वीकारात्तेषामेतदधिकरणसिद्धान्तो न सिध्येदित्याह—**येत्विति**। ननु गुणाधिकारेषु संबन्धद्वयस्य वाक्येन विधानमस्माभिर्न स्वीक्रियते येनोक्तदोषः स्यात् किंतु गुणाश्रयसंबन्धः क्रियाकारकभावेन लोकसिद्ध एव वाक्येन केवलं फलसंबन्धकरणायोपादीयते। फलसंबन्धएव तु विधीयते। इहतु ऋक्सामयोः स्तोत्रे कारकभावेनान्वयात्तत्संबन्धस्य लोकतःसिद्धावपि स्तोत्रयागयोरङ्गाङ्गिभावेनान्वयात्तस्य चालौकिकतया लोकतःसिद्धत्वासंभवात्तत्रापि विधेर्व्यापारावश्यंभावाद्वाक्यभेदप्रसङ्गेन गुणफलविधिर्न संभवतीति वैषम्यं शङ्कते—**नन्विति**। स्तोत्रयागयोरङ्गाङ्गिभावस्यालौकिकतया लोकतः सिद्ध्यभावेऽपि अतिदेशतः सिद्धिसद्भावादिहापि न वाक्यभेद इति परिहरति—**सत्यमिति**। नचैवं चोदकप्राप्ताग्निष्टोमस्तोत्रसंबन्धस्य फलार्थतयोपयोगात्स्तोत्रस्य क्रत्वर्थत्वं

---

१ विशेषितोयागः. २ पूर्वविधौ. ३ फलायविधीयते. ४ अङ्गत्वम्. ५ देव लब्धव्यम्. ६ यागाङ्गत्वात्स्तोत्रवि.

तदेवर्क्सामविशेषितस्तोत्रानुरागं यागस्यान्यतःसिद्धमुपादाय केवलफलसंबन्धमात्रं विधिनानेन बोध्यत इति कुतो वाक्यभेदः । किंच फलाशब्देन स्तोत्रसमानकर्तृकत्वमेव यागस्योच्यते न तत्कारकत्वं तादर्थ्यं वा । समानकर्तृकत्वं च लोकसिद्धमेव लभ्यत इति दध्यादिभिरविशेषः । अतो रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रसमानकर्तृकत्वविशिष्टः प्रकृत एव यागः फलाय विधातुं शक्यते । यद्वाग्निष्टोमस्तोत्रमेवातिदेशप्राप्तं रेवतीवारवन्तीयानुरक्तं पशुकामस्य विधीयताम्[1] । यजिपरस्यापि विधेः स्तोत्रविषयत्वं न दुष्यति । निर्वपेतिपरस्येव द्रव्यदेवतासंबन्धविषयत्वं यजेरपि निर्वपतिवदनुवादत्वात् । तस्माद्वाक्येनाश्रयसंबन्धे सिद्धान्तहानिरित्यास्तां तावत् ॥

सौभरनिधनयोः कामैक्याधिकरणम् ॥ १२ ॥

## सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥ [सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिः स्यात्, निधनार्थो पुनःश्रुतिः ॥ २९ ॥]

**वृष्ट्यन्नस्वर्गकामानां सौभरं स्तोत्रमीरितम् ॥ निधनान्यपि हीषूर्ग् इति वृष्ट्यादिकामिनाम् ॥ ३२ ॥**
**फलान्तरं किं वृष्ट्यादि हीषादीनामुतोदिते ॥ सौभरे फलसंभिन्ने निधनं विनियम्यते ॥ ३३ ॥**
**फलान्तरं चतुर्थ्योक्तं वृष्टिकामाय हीषिति ॥ सौभरस्य फलं वृष्टिर्हीषित्युक्त्या विवर्धते ॥ ३४ ॥**
**प्रोक्तवृष्ट्यन्नकामानामन्यत्वं प्रत्यभिज्ञया ॥ नियमेऽपि चतुर्थ्येषा तादर्थ्यानुपपद्यते ॥ ३५ ॥**

'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते'ति ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य तदाश्रयं सौभरं फलत्रयसाधनत्वेनाम्नातम् । यद्यपि सौभरस्य साम्नो गीत्यात्मक्रियात्वाद्वारवन्तीयवन्नाश्रयापेक्षा तथापि स्तुवीतेत्यनेनैकवाक्यत्वात्तत्साधनभूतस्यैव फले विधानं विज्ञायते । तथाहि यावन्ति पदानि वाक्ये प्रयुज्यन्ते तावतां यथान्वयो भवति तथा वाक्यार्थो वर्णनीयः । तद्यदि

---

न स्यादिति वाच्यम् । भावानवबोधात् । नहि स्तोत्रमत्र गुणत्वेनाभिमतं येन तस्य क्रत्वर्थत्वं न स्यात् किंतु रेवत्याधारं वारवन्तीयमेव गुणत्वेनाभिमतं तस्य च यागरूपाश्रयसंबन्धघटकमात्रं स्तोत्रमिति स्तोत्रानुरक्तत्वाकारेण यागस्य फलेन विधिः किंतु वारवन्तीयानुरक्तत्वेनेति स्तोत्रस्य क्रत्वर्थत्वे बाधकाभावादिति भावः । अस्तुवा स्तोत्रानुरक्तत्वाकारेणैव यागस्य फले विधिस्तथापि न वाक्यभेदप्रसक्तिरित्याह—**किंचेति** । तत्कारकत्वमिति दृष्टान्तार्थमुक्तम् । **ननु** समानकर्तृकत्वेन विधिपक्षे तत्रापि सिद्धान्तहानिः स्यात्तस्मादुभाभ्यामेव समानकर्तृकत्वपक्षो दूष्य इत्यस्वरसादाह—**यद्वेति** । फलार्थगुणस्य क्रत्वन्तःप्रवेशसिद्ध्यर्थमतिदेशप्राप्तमिति विशेषणम् । **ननु** यजिपरस्य विधेर्यागविधायकतया तस्यैव गुणानुरक्तस्य फले विधिर्वाच्यः नतु स्तोत्रस्य तत्र विधेरसामर्थ्यादित्यत आह—**यजिपरस्येति** । निर्वपतीति सौर्यं चरुं निर्वपेदित्यत्र । **ननु** तत्र निर्वापस्य चोदकप्राप्ततयानुवाद्यत्वाद्धात्वर्थस्य विध्यसंभवेनान्यस्य विधिस्वीकारेऽपि इह धात्वर्थस्यैव विधिर्युक्त इत्यत आह—**यजेरपीति** । स्तोत्रानुवादस्य त्वदुक्तरीत्या लोकतःसिद्ध्यभावेन तदनुरक्तयज्यर्थस्य फले विधानासंभवात्कर्मान्तरविधिपक्षे गौरवान्नाग्निष्टुद्वाक्यप्राप्तो यागोऽत्रानूद्यते निर्वपतिवदित्याश्रयणीयत्वात्तौल्यमिति भावः । नन्वग्निष्टोमशब्दस्य अग्निष्टोमस्तोत्रमात्रार्थकत्वात्कथं चोदकप्राप्तस्याश्रयत्वनियमो येन प्रकृतक्रत्वनुप्रवेशः सिध्येदित्यत आह—**आस्तामिति** । यथा त्वन्मते प्रकरणादाश्रयसंबन्धानङ्गीकारेऽपि दध्नेन्द्रियकामस्य जुहुयादित्यादौ प्रकृतहोमाश्रितत्वमेवमिहापि चोदकप्राप्ताग्निष्टोमस्तोत्रस्याश्रयत्वमुपपद्यत इति भावः । सूत्रार्थस्तु—समेषु क्रियात्वाविशेषादाश्रयानपेक्षतया तत्तुल्येषु गुणेषु श्रुतेषु कर्मयुक्तं फलं स्यान्न गुणयुक्तमिति ॥

**सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥** सौभरस्य फलत्रयार्थत्वं विना तत्फलात्फलान्तरार्थस्य तत्तत्फलसाधने निधननियमस्य चासंभवात्करिष्यमाणविचारहेतुत्वेन सौभरस्य फलत्रयसाधनत्वमाह—**यद्यपीति** । **ब्रह्मसामेति** । उक्थ्यस्तोत्राणां त्रयाणां मध्यममित्यर्थः । सौभरं यदि स्वरूपेण फले विधीयेत तदा परमाश्रयापेक्षाविरहाद्ब्रह्मसामाश्रितत्वं न भवेदिदं तु न स्वरूपेण विधीयते किंत्वन्यत्र कारकीभूतम् । तत्र च कुत्रेदं कारकमित्यस्याश्रयापेक्षा । वारवन्तीयस्य तु अन्यत्र कारकभावमनापन्नस्यैव स्वरूपेण फले विधानान्नाश्रयापेक्षेति वैषम्येण परिहरति—**तथापीति** । नन्वेकवाक्यत्वमेवासिद्धमित्यत आह—**तथाहीति** । नन्वानर्थक्ये वारवन्तीयवाक्यवदेव कर्मान्तरविधायकत्वं स्यादित्यत आह—

---

१ विधीयते. २ दुष्यतीति निर्वापपरस्येव.

सौभरमात्रं विधीयते तदा स्तुवीतेत्यनर्थकं स्यात्। स्तुत्यन्तरविधाने गौरवं मत्वर्थलक्षणा च स्यात्। अतः सौभरेणेत्येकपदोपात्तसौभरविशिष्टं करणकारकं फले विधीयते । करणं च क्रियापेक्षमिति युक्तं प्रकृतस्तोत्राश्रयत्वम्। वारवन्तीयं तु द्वितीयान्तत्वान्न करणीभूतमवगम्यते किं तर्हि कर्मीभूतम्। नच स्तोत्रे यागे वा साम्नः कर्मत्वं संभवति। तेन क्त्वाशब्दार्थमात्रंप्रति कर्मत्वान्न क्रियान्तरापेक्षेति वैषम्यम्। तदेवं फलत्रयसाधनभूतं सौभरं प्रकृत्यामनन्ति 'हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति। तत्र संशयः—किं हीषादयो निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते उत सौभरस्यैव तत्तत्फलं साधयन्तस्तत्तन्निधनमनियमेन पाठतः प्राप्तं नियम्यन्त इति। तदर्थं च किं वृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैते साक्षाद्विधीयन्ते अथवा तत्साधनशेषत्वेनेति। तत्र पुरुषस्य श्रौतत्वात्तादर्थ्यमेव हीषादीनां विज्ञायते चतुर्थ्या । तच्छेषता च तदभिलषितफलसाधनतयेति फलार्थत्वमेवैषाम्। साधनसंबन्धे तु वृष्टिकामादिशब्दैः सौभरं लक्ष्येत। नच श्रुतिसंभवे लक्षणासंभवः। तस्माद्धीषादयो गुणाः फलान्तरार्था इति प्राप्ते ब्रूमः। वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्तमानानि प्रत्यभिज्ञायन्त इति न फलान्तरावगमः। किंच हीषिति शब्दमात्रे फलाय विहिते सत्याश्रयापेक्षायां यत्तावत्सौभरं प्रकृतं न तच्छक्यंत्याश्रयत्वं प्रतिपत्तुम्। यत्तु तदवयवभूतं निधनं न तत्प्रकृतम्। नचानर्थक्यतदङ्गन्यायस्यायं विषय इत्युक्तम्। सत्यपि च तदङ्गावतरणेऽनेकावयवत्वान्नियमेन न निधनसंबन्धः, तत्र निधनमित्यनर्थकं स्यात्, विधाने च वाक्यभेदः। तस्माद्वृष्टिकामादिशब्दलक्षिते सौभरे निधनसाधनत्वेनैवानियतप्राप्ता हीषादयो नियः-

---

**स्तुत्यन्तरेति। वारवन्तीयंत्विति।** नच द्वितीयान्तस्यान्वयायोग्यत्वेऽपि पशुकामो ह्येतेन यजेतेति एतच्छब्देन तृतीयान्तेन निर्दिष्टस्य तस्य यजेतेत्यनेन करणभावेनान्वययोग्यत्वाद्वारवन्तीयस्यापि कारकविशिष्टस्य विधिः शङ्कनीयः। एतेनेत्येतच्छब्दस्य सामपरत्वेऽपि यागे साम्नः करणत्वासंभवात्स्तोत्रस्याप्रकृतत्वाच्च तत्रैतेनेति तृतीययान्यत्र करणभावो न प्रतिपाद्यते किंतु द्वितीयान्तवारवन्तीयशब्देन प्रधानतया निर्दिष्टस्य तस्य पुनस्तृतीयान्तैतच्छब्दनिर्देशंविना फलभावनाकरणत्वान्वयायोग्यत्वात् फलभावनाकरणत्वमेवैतेनेत्यनेन प्रतिपाद्यत इति वैषम्यमिति भावः। **निधनमिति।** प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः पञ्च साम्नो भक्तयः सन्ति, तत्र यान्तिमा समाप्तिरूपा भक्तिः सा निधनशब्दार्थः। निधनविशेषा निधनसाधनविशेषा इत्यर्थः। **सौभरफलादिति।** अत्र हीषादिशब्दाः किं वृष्ट्यादिफलार्थतया विधीयन्ते इत्येव पूर्वपक्षकोटिः। सौभरवत् हीषादीनामपि फलसाधनत्वे तत्फलं न सौभरफलं किंतु ततोऽन्यदित्याशयेन सौभरफलात्फलान्तरार्थत्वेनेत्युक्तं तदपि फलभेदोऽपि प्रसङ्गाद्व्युत्पाद्यत इत्यध्यायसङ्गतिसूचनायोक्तम्। यद्वा भावनाभेदापवादादध्यायसङ्गतिः। अवान्तरसङ्गतिस्तु रेवतीवाक्ये गुणफलविध्यसंभवेऽपीह तत्संभव इति प्रत्यवस्थानाद्बोध्या। **पाठत इति।** शाखाभेदेन हीषादिनिधनयुक्ततया सौभरस्य पाठादित्यर्थः। **साधनेति।** वृष्टिरूपफलसाधनं यत्सौभरं तदर्थं हीषिति निधनं कुर्यान्न निधनान्तरमित्येवं व्यवस्थाविधौ वृष्टिकामादिशब्दैस्तत्साधनं सौभरं लक्षणीयमित्यर्थः। एवंच नियमविधेर्ज्यायस्त्वेपि लक्षणाप्रसङ्गात् स न युक्त इत्याशयेनोपसंहरति—**तस्मादिति। प्रत्यभिज्ञायन्त इति।** ततश्च तेषां वृष्ट्यादीनां सौभररूपसाधनेन निराकाङ्क्षत्वान्न हीषादिलक्षणसाधनान्वयार्हतेति भावः। ननु यतएव प्रकृतफलानां साधनान्तरावरुद्धत्वमतएव प्रत्यभिज्ञाबाधेन फलान्तरपरत्वमित्यस्वरसादाह—**किंचेति। न तदिति।** अनेकावयवव्यासस्य तस्यान्तिमावयवमात्रसाधनीभूतेन हीषादिना निर्वर्तयितुमशक्यत्वादिति भावः। अस्तु तर्हि निधनमेवाश्रय इत्यत आह—**यत्त्विति। सत्यपिचेति।** निधनवद्भक्त्यन्तरेष्ववतारसंभवादिति भावः। तस्माद्वाक्यभेदाल्लक्षणाया ज्यायस्त्वाद्व्यवस्थाविधिरेव स्वीकार्य इत्याह—**तस्मादिति।** ननु वृष्टिसाधनसौभरार्थतया हीषिति शब्दस्य नियमस्तस्य निधनसंबन्धश्च विधेय इति तथापि वाक्यभेदस्तुल्य इत्याशङ्कां निराकर्तुमाह—**निधनसाधनत्वेनेति।** पाठादेव निधनसाधनत्वेन हीषादीनां प्राप्तेस्तेषां नियममात्रमेव क्रियत इति न वाक्यभेद इति भावः। अत्र वृष्टिसाधनसौभरं नोद्देश्यं विशिष्टो-

---

१ विधीयेत ततः. २ साधनं सौभरं प्रकृत्याम्नातं. ३ लक्षणसंभवः. ४ त्वेनैव नियत.

न्यन्ते । अथवा लक्षणापि नैवात्र विद्यते । नहि यदेव फलस्य करणं तस्यैव पुरुषशेषत्वं, तदङ्गस्यापि तद्द्वारेणास्त्येव पुरुषशेषता । तथाचान्यत्रापि प्रयोगो दृश्यते वसिष्ठादीनां नाराशंसो द्वितीयः प्रयाज इत्यादिः । तेन हीषादयः सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादीनां पुरुषाणामनियमेन शेषभूताः प्राप्तास्तानेव प्रति यथाप्राप्तरूपा नियम्यन्त इति न लक्षणा । साधनद्वारेण तु तादर्थ्यं न साक्षादिति लक्षणावाचोयुक्तिर्भाष्यवार्तिकयोः । यथाप्राप्तानां च नियम इति ^१ शाखान्तरगते सौभरे शाखान्तरीयं निधनं न प्रयोक्तव्यं किंतु तत्तन्निधनसहित एव सौभरविशेषस्तत्तत्फलार्थेन प्रयोक्तव्यः—तस्मात्फलान्तरार्थेन नैव हीषादयो गुणाः । विधीयन्ते नियम्यन्ते यथाप्राप्ते तु सौभरे ॥

इति शास्त्रदीपिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

## द्वितीयाध्याये तृतीयः पादः ॥ ३ ॥

ग्रहाग्रताया ज्योतिष्टोमाङ्गताधिकरणम् ॥ १ ॥

### गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥

### [ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥ ]

रथन्तरं साम सोमे भवेत्तद्वद्बृहज्जगत् ॥ ऐन्द्रवायवशुक्राग्रयणाग्राश्च ग्रहाः श्रुताः ॥ १ ॥
रथन्तरादिसंयुक्तमन्यत्कर्माथवा गुणः ॥ गायत्रादियुतात्पूर्वादन्यत्वावृत्तितो गुणैः ॥ २ ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ॥ ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् ॥ ३ ॥

ज्योतिष्टोमं प्रकृत्य श्रूयते । यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात् यदि बृहत्सामा शुक्राग्रान्गृह्णीयादिति तत्र संशयः । किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामा बृहत्सामेति

---

द्वेशदोषप्रसङ्गात् किंतु वृष्टिसाधनमात्रं । तत्तु प्रस्तुतत्वात्सौभरमेवेत्याशयेन सौभर इत्युक्तिरिति द्रष्टव्यम् । **ननु** सौभरार्थानां हीषादीनां साक्षात्फलार्थत्वाभावात्तदभावे च फलकामसंबन्धित्वेन विध्यसंभवात् वृष्टिकामादिशब्दानां लक्षणावश्यंभाव इत्यत आह—**नहीति** । अङ्गाङ्गिभावे आनर्थक्यतदङ्गन्यायावतारसंभवात्, सौभरार्थस्यापि पुरुषशेषतया विधिः संभवतीति भावः । एवं प्रस्तुतमधिकरणं समाप्य वार्तिके किं यत्र क्वापि शाखायामधीतस्य सौभरस्य वृष्टिफलंसाधयतः हीष्शब्दो नियम्यते उत यत्र हीष्निधनकं पठ्यते तच्छाखागतमेव वृष्टिकामस्य प्रयोक्तव्यमित्येवं संशय्य सर्वशाखागतस्यापि सौभरस्य वृष्ट्यर्थं प्रयोगसंभवात्तत्र निधननियममात्रमेवेति पूर्वपक्षं कृत्वा—'प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम् ॥ अतः समस्तैव विकल्पमाना यथासमाम्नायमसौ नियम्ये'ति । हीषादिनिधनमुखेन सौभरस्यैव तत्तन्निधनयुक्ततयाम्नातस्य तत्तत्फले नियम इति सिद्धान्तितं तद्दर्शयति—**यथाप्राप्तानां चेति** । शाखान्तराम्नाते सौभरे शाखान्तराम्नातस्याप्राप्तेस्तन्मात्रस्य नियमो न संभवति संभवतितु यः वृष्टिकामः सः । सौभरेणेत्येवमविशेषेणोक्तौ वृष्ट्यर्थतया सर्वशाखागतसौभरप्राप्तेर्हीष्निधनयुक्ततयाम्नातमेव सौभरं वृष्टिकामस्येति नियम इति हीषादिमुखेन सौभरव्यवस्थैवेयमित्यर्थः । प्रयोजनं पूर्वपक्षे सौभरमुक्थ्यानां ब्रह्मसामकार्यमिति नित्यस्य यदि बृहत्सामातिरात्रः स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यं यदि रथन्तरसामा सौभरं कुर्यादिति नैमित्तिकस्य च सौभरस्य संनिध्यविशेषेण हीषादिगुणं प्रत्याश्रयत्वसंभवात्तत्रापि फलार्थतया हीषाद्यनुष्ठानं तथा वृष्ट्यर्थे सौभरे ऊर्गादिनिधनस्यापि स्वफलार्थप्रयोगः सिद्धान्ते तु नेति । सूत्रार्थस्तु वृष्टिकाम इत्यादिपुरुषसंयोगात्सौभराश्रिते हीषादौ । फलसंयोगः । **इति श्रीसोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥** पूर्वस्मिन्पादे कर्मभेदः प्रतिपा-

---

१ नातीवात्र. २ यथारूपा.

विधीयते किंवा ज्योतिष्टोम एव रथन्तरेण बृहता वावच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेनानु-कीर्त्यत इति। तदर्थमिदं चिन्त्यते। किमयं कृत्स्नक्रतुसंयोगो रथन्तरादेरुताकृत्स्नक्रतुसंयोग इति। तदर्थमपि किं रथन्तरविशिष्टः क्रतुरिह निमित्तमुत क्रतुविशिष्टं रथन्तरमिति। 'तत्रान्यार्थप्रधान-त्वाद्बहुव्रीहेर्निमित्तता॥ रथन्तरविशिष्टस्य क्रतोरेवावगम्यते॥ विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यते॥ ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य संभवः॥ रथन्तरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि॥ सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि॥' तेन व्यवच्छेदाभावात्सत्तयापि [१]व्यापिन्या सामान्तरसापेक्षतया विशेषणासंभवात्। पूर्वत्रासंभवी रथन्तरसामत्वं गुणः कर्मान्तरं कल्पयति। यदिशब्दश्च [२]निपातत्वादनर्थको रुच्यध्याहारादिना वा व्याख्येय इति [३]प्राप्तेऽभिधीयते। यदि शब्दा-

---

दितः अस्मिन्पादे तदपवादः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वमानंतर्यं चेत्याहुः—**निमित्तत्वेनेति**। क्रतुविशिष्टं रथन्तरं निमित्तमिति पक्षेऽपि क्रतोर्निमित्तविशेषणत्वमात्रेण वान्यपदार्थप्रतीत्यवस्थायां बहुव्रीहिणा क्रतोरभिधानमात्रेण वा ज्योतिष्टोमो निमित्तत्वेनानुकीर्त्यत इत्युक्तिरुपपद्यत इति ध्येयम्। **किमयमिति**। अस्मिन्वाक्ये प्रतीयमानो रथन्तरक्र-तुसंयोगः किं यावन्ति क्रतौ स्तोत्राणि तावत्स्तोत्रेषु उतैकस्मिन्नित्यर्थः। **तदर्थमपीति**। यदि रथन्तरविशिष्टः क्रतुर्निमित्तं तदा कृत्स्नक्रतुसंयोगं विना विशेषणत्वासंभवात्कृत्स्नक्रतुसंयोग एव रथन्तरस्य भवति, प्रकृतस्य च क्रतोः कृत्स्नस्य रथन्त-रसंयोगाभावात्कर्मान्तरत्वम्। यदि च क्रतुविशिष्टं रथन्तरं निमित्तं तदा रथन्तरस्य विशेष्यतया कृत्स्नक्रतुसंयोगस्यानपेक्षि-तत्वादकृत्स्नक्रतुसंयोगएव प्रकरणाद्भवतीति प्रकृतज्योतिष्टोमएव कीर्त्यते इति फलफलिभावः। ननु पूर्वपक्षे निमित्तत्वाभा-वात्तृतीयसंशयो न युक्तः। नच किमिह रथन्तरविशिष्टः क्रतुर्निमित्तमवगम्यते उत क्रतुविशिष्टं रथन्तरं निमित्तमवगम्यत इत्येवमर्थकतया पूर्वपक्षे निमित्तत्वानङ्गीकारेऽपि न दोष इति वाच्यम्। तथासत्यस्य संशयस्य सिद्धान्तासिद्धितत्सिद्धिमात्रो-पयुक्तया पूर्वसंशयहेतुत्वाभावात् इतिचेन्न। पूर्वपक्षे शब्दतः रथन्तरसामकसोमस्य ग्रहाग्रतांप्रति निमित्तत्वेनाप्रतिपाद-नेऽपि प्रधानस्याङ्गानुष्ठाने निमित्ततया 'हेतुहेतुमतोर्लिङि'तिपक्षे रथन्तरसामसोमहेतुकानैन्द्रवायवाग्रान्ग्रहान्गृह्णीयादिति वाक्यार्थाङ्गीकारेण शब्दतोऽपि निमित्तत्वापरपर्यायहेतुत्वप्रतिपादनाभ्युपगमेन च तदुपपत्तेरिति भावः। **नन्वस्तु** बहुव्री-हिवशाद्रथन्तरविशिष्टस्य क्रतोर्निमित्तत्वं तथापि प्रकृतस्यैव ज्योतिष्टोमस्य रथन्तरविशिष्टस्य निमित्तत्वसंभवान्न कर्मान्तरत्व-मित्यत आह—**विशेषणमिति**। अयोगव्यवच्छेदकतया विशेषणत्वनिराकरणार्थमाह—**विशेष्यव्यापीति**। नीलमु-त्पलमित्यादौ विशेषणस्य व्यापित्वदर्शनादिति भावः। **ननु** देवदत्तः कुण्डलीत्यादावेकदेशस्थकुण्डलादेर्विशेष्यव्यापित्वाभा-वेऽपि विशेषणत्वदर्शनादिहापि रथन्तरस्य कृत्स्नक्रतुव्याप्त्यभावेऽपि विशेषणत्वं किं न स्यादित्यतउक्तं **व्यवच्छेत्तृ इति**। तत्र देवदत्तैकदेशभूतकर्णस्थस्यापि कुण्डलादेर्व्यावर्तकत्वात्संभवति विशेषणत्वमिह तु व्यावर्तकत्वाभावान्न तत्संभव इति भावः। विशेषणद्वयस्य क्रमेण प्रकृते व्यतिरेकमाह—**ज्योतिष्टोम इति**। उभयव्यतिरेके हेतुमाह—**सन्तीति**। गाय-त्र्यादिसाम्नां सद्भावात्तद्विधिवैयर्थ्यापत्त्या न व्यावर्तकत्वं तेषां सद्भावादेव रथन्तरस्य न कृत्स्नव्याप्तिर्गायत्रादिसामयुक्तक्रत्वंशे रथन्तरव्याप्त्यभावादित्यर्थः। **ननु** यत्र विशेषणसत्ता नित्यप्राप्ता तत्रैव सत्ताप्रतिपादनस्यानर्थक्यादन्यव्यवच्छेदकत्वापेक्षा। प्रकृते च रथन्तरसत्ताया नित्यप्राप्तत्वाभावेन तत्प्रतिपादनानर्थक्याभावात्स्वासत्ताव्यावर्तनेन विशेषणत्वमस्तु। यद्वा विरो-धिबृहद्व्यावर्तनेन विशेषणत्वमस्त्वित्यत आह—**सामान्तरेति**। रथन्तरसामेति समासगम्यं रथन्तरस्य विशेषणत्वं। समा-सश्च 'समर्थः पदविधि'रित्यनुशासनात्सामर्थ्यापेक्षः। सामर्थ्यं च यदि क्रतौ कृत्स्ने रथन्तरमेकमेव स्यात्तदा भवति। प्रकृते च रथन्तरस्य सामान्तरसहितस्यैव क्रतौ सद्भावो न केवलस्येति सामान्तरसापेक्षसत्ताकस्य क्रतुसंबन्धात्सापेक्षमसमर्थमित्य-सामर्थ्यात्समासानुपपत्तेस्तद्गम्यं विशेषणत्वमनुपपन्नम्। नच क्रतौ सापेक्षसत्ताकत्वेऽपि पृष्ठस्तोत्रेऽनपेक्षत्वं शङ्कनीयम्। तस्यात्रान्यपदार्थतयानुक्तत्वात्तस्मान्नकथंचिदपि रथन्तरस्य प्रकृतक्रतुविशेषणत्वसंभव इत्यर्थः। विशेषणशब्दो भावसाधनो बोध्यः। **पूर्वत्रेति**। प्रकृते कर्मणि अनुवाद्यतया निवेशमलभमानोयं गुणः स्वनिवेशयोग्यकर्मान्तरविधिपरत्वमेवास्य वा-क्यस्य कल्पयतीति भावः। ननु कर्मान्तरपरत्वे तस्य संप्रति विधीयमानत्वात् सिद्धधर्मनिमित्तत्वप्रतिपादकयदिशब्दानु-पपत्तिरित्यत आह—**यदीति**। **रुच्येति**। यदि रोचेत तदा रथन्तरसामानं क्रतुं कुर्यादित्यनेन प्रकारेणेत्यर्थः। आदि-शब्देन गृह्णीयादिति लिङः [४]कामप्रवेदनार्थतया [५]यद्यैन्द्रवायवाग्रान् गृहीतुमिच्छेत्तदा रथन्तरसामानं क्रतुं कुर्यादिति व्याख्या-नप्रकारस्य 'हेतुहेतुमतोर्लिङि'त्यनुशासन..स्यादिति लिङो हेत्वर्थत्वेन यदि रथन्तरसामा सोमो हेतुस्तदा तद्धेतुकानैन्द्रवा-यवाग्रान् गृह्णीयादिति। गृह्णीयादिति लिङो वा हेतुमदर्थत्वेन यदि ग्रहाग्रता हेतुमत्वेन विवक्षिता तदा तद्धेतुः सोमः कर्तव्य इति व्याख्यानप्रकारस्य च संग्रहः। **यदि शब्दादिति**। प्रथमे पक्षे आनर्थक्यमेव दोषः द्वितीये रुच्यध्याहारो

---

१ चाव्यापिन्या. २ शब्दश्च निरर्थको. ३ प्राप्ते भ्रमः. ४ काम इच्छा. ५ यदीयस्य.

द्प्रकरणाच्च ज्योतिष्टोमस्याभिधानम् । नहि सामान्तरव्यवच्छेदेनैव[1] रथन्तरस्य विशेषणत्वम् । शब्दो हि स्वार्थसत्तामेव प्रथमं बोधयति । यदि सा नित्यप्राप्ता स्यात्ततस्तत्प्रतिपादनमनर्थकमित्यर्थान्तरव्यवच्छेदं कुर्यात् । इहतु रथन्तरसत्तायाः पाक्षिकत्वात्तत्प्रतिपादनेऽपि नानर्थक्यमित्यसत्ताव्युदासेन सत्तयैवात्र विशेषणत्वलाभान्न कर्मान्तरत्वम् । यद्यपि सामान्तरमेव [2]व्यवच्छिद्यते तथापि वैकल्पिकयोर्बृहद्[3]रथन्तरयोर्विरोधिनोः परस्परव्यवच्छेदेनैव विशेषणत्वं नाविरोधिनां सामान्तराणां [4]व्यवच्छेदेन । यथा नीलोत्पलमिति पीतादीनामेव व्यवच्छेदो नतु दैर्घ्यादीनाम् । नच रथन्तरस्य सामान्तरापेक्षत्वम् । अनपेक्षस्यैव पृष्ठस्तोत्रसाधनत्वेन ज्योतिष्टोमान्वयात् । तेन यद्यपि रथन्तरविशिष्टः क्रतुरिह निमित्तं तथापि प्रकृतस्यैवाभिधानम् । अथवा क्रतुविशिष्टं रथन्तरमिह निमित्तमनित्यत्वात् । नित्यस्तु क्रतुर्न निमित्तं भवितुमर्हति । तेन यद्यपि बहुव्रीहिणा रथन्तरविशिष्टः क्रतुरेवाभिधीयते तथापि दध्ना जुहोतीतिवद्विशेषणपरत्वात्तस्यैव निमित्तत्वं प्रथमप्रतीतं च रथन्तरमुल्लङ्घ्य यदिशब्दोपक्रान्तनिमित्तत्वप्रतीतिर्न क्रतुं यावद्गच्छतीति रथन्तरमेव निमित्तम् । तच्च ज्योतिष्टोमेऽप्यस्ति तस्मान्न कर्मान्तरम् ॥

---

वाक्यभेदश्च तृतीये यदि गृह्णीयादिति व्यवहितान्वयः । चतुर्थे सिद्धस्य हेतुत्वकल्पनाक्लेश इति चतुर्णामपि पक्षाणां दुष्टत्वात्स्वरसतः प्रकृतस्य कर्मणो निमित्तत्वप्रतिपादकयदिशब्दबलात्प्रकरणाच्च प्रकृतस्यैव कर्मणः सोमशब्दः प्रतिपादको न कर्मान्तरस्येत्यर्थः । **शब्दो हीति** । नहि व्यवच्छेदो विशेषणशब्दस्य साक्षादर्थः किंतु विशेष्ये विशेषणसत्तामात्रं तत्प्रतिपादनस्य त्वानर्थक्याद्व्यवच्छेदे शब्दस्य तात्पर्यकल्पनामात्रं । प्रकृतेतु रथन्तरसत्तायाः पाक्षिकत्वेन नित्यप्राप्तत्वाभावान्नानर्थक्यमिति नान्यव्यवच्छेदेऽपि तात्पर्यं कल्पनीयम् । स्वार्थसत्तायां प्रतिपादितायां स्वार्थासत्तारूपोऽयोगोऽर्थाद्व्यावर्तितो भवतीत्ययोगव्यावर्तकत्वेनैवास्य विशेषणत्वमित्यर्थः । अन्ययोगव्यवच्छेदकत्वमपि प्रकृते संभवतीत्याह—**यद्यपीति** । यद्यपि बृहद्रथन्तरयोरेकस्मिन्पृष्ठस्तोत्रे न विकल्पस्तथापि बृहत्सामसाधनकपृष्ठस्तोत्रस्य रथन्तरसामसाधनकपृष्ठस्तोत्रस्य च क्रतौ विकल्पात्सामद्वयस्यापि एकप्रयोगानन्वयित्वाभिप्राया वैकल्पिकत्वोक्तिः । ततश्च विरोधनिबन्धनत्वाद्व्यवच्छेदस्य बृहद्रथन्तरयोः परस्परविरोधिपरस्परव्यावर्तकत्वेन विशेषणत्वं संभवतीत्यर्थः । सापेक्षत्वादसामर्थ्यमुक्तं निरस्यति—**नचेति** । **अनपेक्षस्येति** । यद्यप्यत्र पृष्ठस्तोत्रं न श्रुतं तथापि रथन्तरं सामास्य सोमयागस्येत्युक्तेः रथन्तरस्य साम्नः साक्षात्सोमयागसंबन्धाभावादानर्थक्यतदङ्गन्यायेन रथन्तरसामेति निर्देशः पृष्ठस्तोत्रद्वारा परंपरासंबन्धएव योग्यत्वात्पर्यवस्यति । 'उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामे'त्यादिवद्दाशमिकन्यायेन रथन्तरसामेति निर्देशस्य पृष्ठस्तोत्रमात्रपरत्वावसायादपि तथैव स्वीकर्तव्यम् । तत्र च पृष्ठस्तोत्रे निरपेक्षत्वात्सामर्थ्येसति समाससंभवात्तद्गम्यं विशेषणत्वमुक्तरीत्याऽयोगव्यवच्छेदेनान्ययोगव्यवच्छेदेन वा उपपद्यत इत्यर्थः । **तेनेति** । यद्यपीत्यनेनायं पक्षः सिद्धान्त्यनभिमतोऽप्यभ्युपगमवादेन समर्थित इति दर्शयति । सिद्धान्त्यभिमतं पक्षमवलम्बते—**अथवेति** । **तेनेति** । बहुव्रीहिणा पदार्थप्रतीत्यवस्थायां विशेष्यतयावगतस्यापि क्रतोर्नित्यतया निमित्तत्वानर्हत्वात्तत्परित्यागेन विशेषणस्यैव निमित्तत्वं स्वीकार्यं वाक्यस्य निमित्ततात्पर्यकत्वेन तदनुसारेणायोग्यविशेष्यपरित्यागेन योग्यविशेषण एव तत्कल्पनस्य न्याय्यत्वाद्यथा दध्नाजुहोतीत्यादौ विशेष्यस्य होमस्य प्राप्तत्वेन वाक्यतात्पर्यविषयविध्यन्वयायोग्यतया तत्परित्यागेन योग्यस्य विशेषणतयापि प्रतीतस्य दध्नो विधिस्वीकारस्तद्वदित्यर्थः । क्रतुं यावन्न गच्छतीत्यन्वयः । क्रतुपर्यन्तं न गच्छतीत्यर्थः । **ननु** साम्नः क्रत्वन्तरेऽपि सत्त्वादव्यापकेन क्रतुना विशेषणमयुक्तम् । अयोगवृत्त्या तु विशेषणत्वस्वीकारे क्रतुनिमित्तत्वपक्षं परित्यज्यैतत्पक्षपरिग्रहस्य प्रयोजनं न पश्याम इत्यत आह—**तच्चेति** । ज्योतिष्टोमेऽपि रथन्तरं क्रत्वन्तरनैरपेक्ष्येणास्तीत्यर्थः । एवंचापर्यायेण सर्वपदार्थग्राहिणा प्रयोगवचनेन युगपत्सर्वेषां साम्नां ग्रहणात्सामान्तरसापेक्षक्रतुसंबन्धकत्वात्तत्रान्ययोगव्यवच्छेदासंभवेन तत्पक्षपरित्यागः क्रत्वन्तरस्य ज्योतिष्टोमस्य च पृथक् प्रयोगवचनकत्वेन प्रकृतप्रयोगवचनं क्रत्वन्तरनिरपेक्षतयैव प्रकृतक्रतुगतं साम गृह्णातीति निरपेक्षसामसंबन्धित्वात्क्रतुनान्ययोगव्यवच्छेदेन विशेषणं संभवतीत्येतत्पक्षपरिग्रह इत्यस्ति वैषम्यमिति भावः । यद्वा रथन्तरमेव निमित्तं न क्रतुविशिष्टं येनोक्तदोषः स्यात् । नचैवं क्रतुबहिरध्ययनादावपि रथन्तरस्य सद्भावादतिप्रसङ्ग इति वाच्यम् । शब्देन प्रकृतक्रतुविशिष्टस्य निमित्तत्वाबोधनेऽपि संनिधानात्तस्यैव निमित्तत्वावगमः । अनुवादस्य सति संभवे संनिहितगामित्वादित्याशयः । एवंच न विशिष्टोद्देशदोषप्रसक्तिः । प्रथमपक्षेतु क्रतोर्नित्यतया निमित्तत्वासंभवाद्रथन्तरेण विशेषणेऽपि 'यस्योभयं हविरार्तिमार्च्छेती'त्यत्रार्तेर्हविषा विशेषण इव विशिष्टोद्देशोऽदोष इति द्रष्टव्यम् । अत्रेदम-

---

१ छेदनेन. २ व्यवच्छेत्तव्यं. ३ रथन्तरबृहतोः. ४ व्यवच्छेदेन.

क्रत्वन्तरताधिकारताधिकरणम् ॥ २ ॥

## अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

**राजसूयं प्रकृत्येष्टिरवेष्ट्याख्या श्रुतात्र तु ॥ विप्रक्षत्रियविड्भेदाद्धविषां व्यत्ययः क्रमे ॥ ४ ॥**
**विप्रादेरनुवादः स्यात्प्रापणं वानुवादगीः ॥ व्यत्ययाय त्रयाणां च राजत्वाप्राप्तिरस्ति हि ॥ ५ ॥**
**न राज्ययोगाद्राजत्वं क्षत्रियत्वं तु तत्त्वतः ॥ अप्राप्तप्रापणं तस्मान्न रथन्तरतुल्यता ॥ ६ ॥**

राजसूये राजकर्तृकेऽवेष्टिर्नामेष्टिः समाम्नाता । 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे'त्यादिका । तां प्रकृत्य[1] श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं[2] मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेव'मिति । तत्र संशयः किं ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्ये निधानविशेषंप्रति निमित्तार्थानि श्रवणानि उताप्राप्तानां प्रापकाणीति । तत्सिद्ध्यर्थमिदं[3] विचार्यते—किं राजसूये त्रयाणामपि वर्णानामधिकारः[4] किंवा क्षत्रियस्यैवेति । तदर्थंच किं ( राजसूयाधिकारगतो ) राजशब्दस्त्रयाणामपि वाचकः किंवा क्षत्रियस्यैवेति । ततोपि[5] पुनर्विचारयितव्यं, क्षत्रियत्वजातिनिमित्तोयं राजशब्दो राज्यकर्तृत्वनिमित्तो वेति । यदि राज्यकर्तृत्वनिमित्तस्तद्योगिनां त्रयाणामपि वर्णानामधिकारवाक्यस्य राजोपपदोपादानतः प्राप्तेर्निमित्तार्थानि ब्राह्मणादीनां श्रवणानि । अथ जातिनिमित्तस्ततोऽतज्जातीययोर्वैश्यब्राह्मणयो राजोपपदवशेनार्थान्निवृत्तेरप्राप्तानां ब्राह्मणादीनां प्रापकाणीति । तत्र—'राज्ययोगनिमित्तोयमार्यावर्तप्रसिद्धितः ॥ सर्वलोकप्रसिद्धत्वादविगानाच्च गम्यते ॥ क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते ॥ द्रविडेषु विगीतं च तदन्येष्वप्रसिद्धितः ॥' तेन राज्ययोगाद्राजानस्त्रयोऽपि भवन्ति । राज्यपदं तु रूढ्या जनपदरक्षणे प्रवर्तते न राजयोगमपेक्षते । ननु राजयोगाद्राज्यमभियुक्ताः स्मरन्ति 'तस्य कर्मणी'त्यधिकृत्य 'पत्यन्तपुरोहितादिभ्यो यगि'ति वचनाद्राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वमवस्थितम् । उच्यते । लोकप्रयोगएव शब्दार्थावधेयम्—

वधेयम्—बृहत्सामत्वे शुक्राग्रत्वविधानादेव पाठप्राप्तैन्द्रवायवाग्रतायाः रथन्तरसामविषयत्वसिद्धावपि यदि रथन्तरसामेति वचनं ऐन्द्रवायवाग्रतायाः नैमित्तिकत्वप्रतिपादनार्थम् । तत्फलं च 'संसव उभे कुर्याद्गोसव उभये कुर्या'दिति बृहद्रथन्तरोभयसामसु निमित्तभूतस्य निरपेक्षस्य रथन्तरस्य बृहतश्चाभावे'नोपवर्ती रथन्तरपृष्ठस्य प्रतिपदं कुर्यादग्रवर्ती बृहत्पृष्ठस्ये'ति विहितप्रतिपद्द्वयनिवृत्तिवद्रथन्तरनिमित्तैन्द्रवायवाग्रताया अपि निवृत्तिरिति । प्रयोजनं कर्मान्तरत्वे तस्य फलवदफलन्यायेन ज्योतिष्टोमाङ्गत्वाज्ज्योतिष्टोमाङ्गत्वेन केवलरथन्तरसामकं कर्मान्तरमनुष्ठेयम् । सिद्धान्तेतु नैमित्तिकाग्रतामात्रानुष्ठानं यदि बृहत्सामेति वाक्यविहितशुक्राग्रतायाः प्रकृतौ निवेशानिवेशादिकं च द्रष्टव्यम् । सूत्रार्थस्तु—रथन्तरसामेति सामसंयोगस्याशेषे कृत्स्नक्रतौ भूतत्वाद्रथन्तरसामेति शब्दस्यापूर्वक्रतुसंयोगाद्रथन्तरसामादिर्गुणः कर्मान्तरमाक्षिपेदिति ॥

**अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥** आदिशब्देन ऐन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवीं चरुं पिशंगी[6]प्रष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वंशा[7] दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो[8] दक्षिणेत्यस्य संग्रहः । **मध्ये इति ।** सर्वहविषामिति शेषः । मध्ये निधायेत्यादेरैन्द्रमित्यनेन वैश्वदेवमित्यनेनापि संबन्धः । **तत्रेति ।** आर्यप्रसिद्धेः सर्वलोकव्यापित्वात् म्लेच्छानामपि क्षत्रियादन्यस्मिन् राज्ययोगेन राजशब्दप्रयोगेन विप्रतिपत्त्यभावाच्च राज्ययोगप्रसिद्धेर्बलवत्तया राज्ययोगनिमित्तएव राजशब्दः नतु क्षत्रियत्वजातिनिमित्तः । तत्प्रसिद्धेरनार्यप्रसिद्धित्वात् । द्रविडदेशमात्रगतत्वादार्याणां जातिमात्रे प्रयोगाभावेन विप्रतिपन्नत्वाच्च दुर्बलत्वादित्यर्थः । अत्र म्लेच्छप्रसिद्धेर्विगीतत्वोक्त्यैव युक्तं बर्हिराज्यस्थलेऽनार्यव्यवहारादपि जात्यर्थत्वम् । अपिचार्यव्यवहारस्य जात्यव्यभिचारित्वात् । इहतु ब्राह्मणवैश्ययोरपि आर्यैः प्रयोगेण जातिव्यभिचारान्न जात्यर्थत्वमिति वैषम्यं सूचितम् । **तेनेति ।** यद्यपि ब्राह्मणवैश्ययोर्न शास्त्रदृष्ट्या राज्ययोगः क्षत्रियस्यैव परिपालनविधानात्तथापि शास्त्रोल्लङ्घनेन ब्राह्मणवैश्ययोरपि राज्ययोगस्य दृश्यमानत्वात् प्रवृत्तिनिमित्ततायां शास्त्रमूलकत्वस्यातन्त्रत्वाद्यथाकथंचिद्राज्ययोगसद्भावमात्रेण त्रयाणामपि वर्णानां राजशब्दवाच्यत्वमुपपद्यत इति भावः । **नन्वेवं** राज्ययोगाद्राजा राजयोगाच्च राज्यमिति परस्पराश्रयं स्यादित्यत आह—**राज्यपदमिति । तस्येति ।** तस्य भाव इति तस्येत्यधिकृत्य 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति कर्मणीत्यधिकृत्य चेत्यर्थः । **तत्रेति ।** पुरोहितादिगणे 'राजास' इति पाठादित्यर्थः । अन्यत्राचारात्स्मृतेर्बलवत्त्वेऽपीह प्रयोगमूलत्वाद्व्याकरणस्य तदपेक्षया प्रयोगरूपाचारस्य बलवत्त्वमिति परिहरति—**उच्यत**

१ प्रकृत्याच्यते. २ बार्हस्पत्यं हविः. ३ तदर्थमिदं. ४ ब्राह्मणादीनामधिकारः उत. ५ ततोपि किं राजशब्दो राज्ययोगनिमित्त उतक्षत्रियजातिनिमित्त इति विचारयितव्यम्. ६ पिशङ्गी प[illegible] गौः. ७ वन्ध्या गौः. ८ धवलमेचको गौः.

धारणे प्रमाणं स्मृतेरपि सएव मूलं नान्यदस्ति। प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते। ततस्तदनुसारेण स्मरणं शब्दापशब्दविभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजशब्दाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। यदिशब्दसामर्थ्यादप्येवमेव। यदिशब्दो हि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणं अन्यथा प्राप्त्यभावाद्यदिशब्दोऽनुपपन्नः स्यात्, वैदिकश्च निर्देशः स्मृतेरपि बलीयांस्तस्मान्निमित्तार्थानीति प्राप्ते ब्रूमः। न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते कर्तुम्। अन्यथापि तत्सद्भावात्। राजानमभिषेचयेदित्यभिषेकविधौ प्रागेव राज्ययोगाद्राजशब्दः क्षत्रियमात्रे वेदे प्रयुक्तस्तेन रूढमेव राजपदं निर्णीयते। यदिशब्दस्तु निपातत्वाद्यथाकथंचिदपि नीयमानो न दुष्यति। स्मरणाच्च स्वतन्त्रमेव राजपदम्। न चास्य निर्मूलत्वं द्रविडप्रयोगस्य मूलस्य संभवात्। अतो नायथार्थत्वे स्मरणस्य प्रमाणमस्तीति तेनैवाभियुक्तप्रणीतेनाचारस्य संभवाद्गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधाद्राजयोगादेव राज्यशब्दः। स्वतन्त्रस्तु राजशब्दः क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात्प्रापकाणि वचनानीति॥

---

**इति। शब्देति।** नकुलनखनक्षत्रादिशब्देष्विव व्याकरणं राज्यशब्देपि साधुत्वमात्रपरं व्याख्येयमित्यर्थः। **यदिशब्देति।** अनेन पूर्ववद्यदिशब्दबलान्निमित्तार्थत्वमिति प्रत्यवस्थानात्संगतिरिति सूचितम्। **प्रागेवेति।** जनपदपरिपालनलक्षणराज्ययोगस्याभिषेकोत्तरकालत्वादिति भावः। **रूढमेवेति।** यद्यपि राज्ययोगनिमित्तत्वेऽपि रूढत्वमेव न यौगिकत्वं राज्यशब्दं प्रकृतिं कृत्वा राजशब्दाव्युत्पादनात् तथापि रूढमेवेत्यस्य निरपेक्षार्थप्रतिपादकमेवेत्यर्थः। परिपालनरूपराज्ययोगस्तु परिपाल्यसापेक्ष इति भावः। **यथाकथंचिदिति।** पूर्वाधिकरणपूर्वपक्षोक्तप्रकारेणेत्यर्थः। **अत इति।** पूर्वोक्ताभिषेकविध्यनुगृहीतप्रयोगमूलकतया स्मरणस्य याथार्थ्यनिश्चयादिति भावः। **ननु** 'एष वो भरता राजा सोमोऽस्माकं ब्राह्मणानां राजा, सोमो वा ओषधीनां राजा, राजानौ वा एतौ देवतानां यदग्नीषोमौ, इन्द्रो राजा जगतश्चर्षणीना'मित्यादिवैदिकनिर्देशः परिपालनेऽप्यस्त्येव। तथा स्मरणमप्यस्ति। तथाहि—जनपदविशेषवाचिनो विदेहपञ्चालादिशब्दात्तस्य राजेत्यर्थेऽपत्यार्थप्रत्ययातिदेशके 'तस्य राजन्यपत्यव'दिति वार्तिके राजशब्दस्य परिपालकार्थकत्वात्तस्मात्कथं जात्यर्थकत्वनिर्णय इति चेदुच्यते। श्रुतिव्याकरणयोरुभयत्र साम्येऽप्यनेकार्थकत्वस्यान्याय्यत्वात्पालकत्वं क्षत्रियत्वजातिर्वा एकमेव राजशब्दार्थ इतरत्र व्यवहारस्तु गौणतया नेयः। नच विनिगमनाविरहः। सप्रतियोगिकौपाधिकपालकत्वरूपधर्मापेक्षया निष्प्रतियोगिकक्षत्रियत्वजातेर्लघुत्वस्यैव नियामकत्वात्। किंच न जनपदपरिपालनं राजशब्दार्थः। राज्ञा नियुक्ते जनपदाधिकारिणि सत्यपि तस्मिन् राजपदाप्रयोगात्। नापि स्वतन्त्रपालनं सम्राजा देशविशेषे राजभावेनाभिषिक्ते तदभावात्। तस्मादनुगतानतिप्रसक्तपरिपालनाभावाज्जातिरेव राजशब्दार्थः। क्षत्रियस्य च प्रायेण पालकत्वात्तद्गुणयोगेन ब्राह्मणादिषु गौणो राजव्यवहारः। यथा क्षत्रियगतश्रैष्ठ्यगुणयोगेन पक्षिराजो वृक्षराज इति व्यवहारस्तद्वदिति। **राजयोगादेवेति।** ननु जनपदरक्षणे रूढ इत्येवकारार्थः। **स्वतन्त्रस्त्विति।** राजशब्दस्तु स्वतन्त्र इत्यन्वयः। **प्राप्त्यभावादिति।** ननु राजशब्दस्य क्षत्रियमात्रवचनतया राजा राजसूयेनेतिवाक्येन ब्राह्मणवैश्ययोः प्राप्त्यभावेऽप्येतयान्नाद्यकामं याजयेदितिवाक्येन प्रकृतावेष्टेः प्रयोगान्तरविधानात्तत एवान्नाद्यकामत्वाविशेषेण त्रयाणामपि वर्णानां प्राप्तिसंभवात्सिद्धान्तेऽपि निमित्तार्थता दुर्वारेतिचेन्न। एतयान्नाद्यकाममित्यत्र कर्तृत्वं त्रयाणामपि वर्णानां न श्रुतं किंतु अन्नाद्यकामस्य फलित्वेन श्रवणबलादाक्षेप्यं तत्र यावदाक्षेप्यमयं विधिः प्रवर्तते ततः प्रागेव स्वाराज्यकामवाक्येऽवेष्टिकर्तृत्वेनावगतक्षत्रियेणैव स्वस्य निराकाङ्क्षतां पश्यन् तमेवानुमन्यते न कर्त्रन्तरं प्रयुङ्क्ते। यथा लब्धाग्निविद्यत्रैवर्णिकलाभेन निराकाङ्क्षाकर्मविधयो न शूद्रस्याग्निविद्ये प्रयुञ्जते तद्वत्। तस्मात् स्वाराज्यप्रयोगविधिसंगृहीतस्यापि क्षत्रियस्य कर्तुः प्रसङ्गादन्नाद्यकामप्रयोगेप्यन्वयापत्त्या यदि ब्राह्मण इत्यादेर्निमित्तार्थत्वासंभवात्प्रापकत्वं नानुपपन्नमिति भावः। अत्र यदि ब्राह्मण इत्यादिवाक्यैर्न कर्मान्तरविधिः प्रकृतावेष्टिप्रत्यभिज्ञाविरोधात् किंतु ब्राह्मणादिविशिष्टप्रयोगान्तरविधिरेवं चान्नाद्यकामवाक्ये तस्यैव प्रयोगस्य फलापेक्षस्य फलसंबन्धः नतु अन्नाद्यकामवाक्येनैव प्रयोगान्तरविधिरिति द्रष्टव्यम्। यद्यपि यदि ब्राह्मण इत्यादेः प्रापकत्वे निमित्तार्थत्वे च बहिरवेष्टौ त्रयाणामपि वर्णानां कर्तृत्वान्न फलभेदस्तथापि अन्तरवेष्टौ पूर्वपक्षे त्रयाणां वर्णानां कर्तृत्वं सिद्धान्तेतु क्षत्रियस्यैवेति फलभेदो बोध्यः। एवं राजसूयमेव विषयीकृत्य राजशब्दार्थनिरूपणे कर्तुं शक्येऽपि अध्यायसङ्गतये प्रयोगभेदव्युत्पादनायावेष्टिवाक्योदाहरणमिति द्रष्टव्यम्। सूत्रार्थस्तु—अवेष्टिविषयं यदि ब्राह्मण इत्यादिकं ब्राह्मणादिकर्तृकप्रयोगान्तरप्रधानं स्यादेकस्यैव क्षत्रियस्य राजसूययज्ञसंयोगादिति॥

---

१ साधुशब्दविभाग. २ राजपदाभि.

आधानस्य विधेयत्वाधिकरणम् ॥ ३ ॥

**आधाने सर्वशेषत्वात् ॥ ४ ॥**

**वसन्ते विप्र आदध्यात्तत्रैवोपनयीत च ॥ अनुवादः प्रापणं वानुवादः कालसिद्धये ॥ ७ ॥**
**अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात् ॥ क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ॥ ८ ॥**
**लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम् ॥ कालविप्रादिसंयुक्तमतोऽप्राप्तं विधीयते ॥ ९ ॥**

**इदमामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य' इति । तथा 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्य'मिति । अत्रापि स एव विचारः । किं ब्राह्मणादीना-माधानोपनयनयोः प्राप्तानां वसन्तादिकालंप्रति निमित्तार्थानि श्रवणानि, ( किंवा ब्राह्मणादीनामप्रा-प्तमाधानमुपनयनं च विधीयते । तत्र—'विना नैवाग्निविद्याभ्यां क्रत्वनुष्ठानसंभवः ॥ अग्निविद्ये न च स्यातामाधानोपनयौ विना ॥' नहि गुरुमनुपेत्य विद्या लभ्यते नाप्याधानमन्तरेणाहवनीयादयः। तदेकोपायत्वात् । कथं पुनरसत्याधानविधौ तदेकोपायत्वमाहवनीयादीनामदृष्टरूपाणामवगन्तुं शक्यं येनाहवनीयादिभिस्तदाक्षिप्येत । सति वा विधौ कथमाहवनीयादेस्तत्साध्यत्वम् । नहि वसन्तादि-वाक्येष्वाहवनीयादिग्रहणमस्ति । यतस्तज्ज्ञायेत ) । यदि तु 'नक्तं गार्हपत्यमादधाति दिवाहवनीयं त्रिभिर्गार्हपत्यमादधाति पञ्चभिराहवनीय'मित्यादिगुणवाक्यालोचनेनैतज्ज्ञायते ध्रुवमाधानाधीन-माहवनीयादिशब्दाभिधानीयकमित्युच्यते तन्ममापि तुल्यम् । अतोऽग्निविद्यासाध्यैः क्रतुभिस्तदु-पायभूतयोरुपनयनाधानयोराक्षेपतः प्राप्तिः, अथवा य एवंविद्वानग्निमाधत्त इति सामान्यतः सर्व-वर्णानामाधानस्य विधायकं गुणानपहृतविधिशक्तिकमस्त्यत्र वचनं यस्मिन्गुणापहृतविधिशक्तयो वस-न्तादिविधयो ब्राह्मणादिनिमित्तं कालमात्रं विदधति तस्मान्निमित्तार्थानि श्रवणानीति प्राप्ते ब्रूमः—**

---

**आधाने सर्वशेषत्वात् ॥ ४ ॥** इह तर्हि प्राप्तार्थत्वान्निमित्तार्थत्वमस्त्विति प्रत्यवस्थानात्सङ्गतिः । यद्यन्यत आधा-नप्राप्त्या ब्राह्मणादिश्रवणं निमित्तार्थं तदा ब्राह्मणादीनामिव शूद्रस्याप्यस्त्याधानम् । यदि तु ब्राह्मणादिवाक्यान्येवाधानविधा-यकानि तदा शूद्रस्य पृथगाधानविध्यभावान्नाधानमित्यधिकरणप्रयोजनम् । इदं चानुपपन्नम् । ब्राह्मणादिश्रवणस्य निमित्ता-र्थत्वेऽपि शूद्रस्योपनयनाभावेन विद्याभावादेवाधानेऽधिकाराप्रसङ्गादित्याशङ्क्य प्रयोजनसिद्ध्यर्थतया उदाहरणान्तरमाह— **तथेति ।** ततश्च पूर्वपक्षे शूद्रस्याप्युपनयनसंभवादस्ति विद्येति न प्रयोजनानुपपत्तिरिति भावः । सएवेत्यनेन तदर्थ-संशयातिदेशस्यापि प्रसक्तौ तद्व्यावृत्त्यर्थं स्वयमेव विवृणोति—**किमिति ।** ननूपनयनस्य विद्ययाक्षेपसंभवेऽपि आधानस्य नाक्षेपः संभवति उपनयनविद्ययोरिवाधानाहवनीययोः कार्यकरणभावस्य लोकतोऽसिद्धेरिति शङ्कते—**कथमिति ।** लोकतः कार्यकारणभावानवगमेऽपि गुणवाक्ये आधानस्याहवनीयादेश्च साध्यसाधनभावकीर्तनात्तदवगमसंभव इतीमं परिहारं परमुखेन वाचयितुं प्रतिवन्दीमाह—**सति वेति । ननु** नक्तं गार्हपत्यमादधातीत्यादिवाक्यानां नक्तादि-गुणमात्रविधायकत्वेनाधानविधायकत्वाभावात्ततः कथं साध्यसाधनभावप्रतीतिः । नचाधानविध्यभावेऽपि द्वितीयया गार्ह-पत्यादेः साध्यत्वप्रतिपादनात्समभिव्याहारादेव साध्यसाधनभावावगम इति वाच्यम् । विध्यभावे समभिव्याहारमात्रेण साध्यसाधनभावप्रतीतेरौदुम्बराधिकरणे निरस्तत्वादेवं चावश्यमाधानविधिर्वसन्तादिवाक्येषु स्वीकार्यः । सति च विधौ विधिबलादेवाधानस्य प्रयोजनावश्यंभावात् द्वितीयया स्ववाक्ये साध्यत्वेनावगताग्नीनामेव प्रयोजनत्वकल्पनौचित्याद्वसन्ता-दिवाक्येष्वाहवनीयादिग्रहणाभावेऽपि नक्तं गार्हपत्यमित्यादिवाक्येष्वाधानसाध्यस्य गार्हपत्यादिशब्दनिर्देशादाधानवाक्ये योयमग्निशब्दः स गार्हपत्यादिपरः अन्यथा गार्हपत्यादीनां गुणवाक्येष्वाधानसाध्यत्वेनानुवादानुपपत्तेरित्येवं संभवति गार्हपत्यादीनामाधानसाध्यत्वनिश्चयः, विध्यभावे तु केवलसमभिव्याहारान्न साध्यसाधनभावनिश्चय इत्यस्ति वैषम्यमित्यस्व-रसादाह—**अथवेति ।** ननु वसन्तादिवाक्यादस्य को विशेषो येनेदमाधानविधायकं स्यादित्यत आह—**गुणानपहृ-तेति । ब्राह्मणादिनिमित्तमिति ।** अत्र सामान्यविधितः आक्षेपाद्वा आधानप्राप्तौ सत्यां तत्कर्तृत्वेन ब्राह्मणादीनामिव

---

१ अत्र धनुश्चिह्नान्तर्गतेंशे काशीमुद्रितपुस्तके २४३–२४४ पत्रेऽन्यथैव पाठो दृश्यते सचेत्थं—( निमित्तार्थानि श्रवणानि उत प्रापकाणीति । 'तत्र विद्याग्निसाध्यत्वात्क्रतूनां तदुपाययोः ॥ प्राप्तत्वाद्ब्राह्मणादीनां निमित्तार्था पुनःश्रुतिः ॥' आहवनीये जुहोतीति वाक्यादग्निसाध्यत्वं क्रतूनाम् । आहवनीयश्चाधानैक्यसाध्य इत्यर्थादाधानप्राप्तिर्ज्ञानपूर्वकत्वाच्चेतनप्रवृत्तेः, क्रतुज्ञानस्य च वेदाध्य-यनसाध्यत्वात्, वेदाध्ययनस्य चोपनयनमन्तरेणासंभवात् उपनयनस्यापि क्रतुभिरेवार्थात्प्राप्तिः । नन्वलौकिकत्वादाहवनीयादीनां विधिमन्तरेणाधानसाध्यत्वानवगतेः कथं क्रतुभिरर्थादाधानस्याक्षेपः । तथापि वा प्रथमाधानविधिषु वसन्तादिष्वाहवनीयादिपदाश्रवणा-दाधानसाध्यत्वावगमः स्यात् । ) यदि नक्तं. २ गुणानभिभूतशक्तिक.

'न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयोः ॥ सामान्यवचनं यत्तद्वर्तमानापदेशकम् ॥' वसन्तादिवाक्येषु तावद्यदिशब्दाद्यभावाद्वाक्यान्तरविहिताधानोपनयनविपरिवृत्त्यभावाच्च क्रियाविधिरेव प्रतीयते । यदि सामान्यतः प्राप्तिः स्यात्तदा बलान्निमित्तार्थता स्यात् नत्वस्ति प्राप्तिः । क्रतुविधयस्तावदग्निविद्यामात्रसाध्याः, अग्नयस्तु यद्यप्याधानसाध्यास्तथापि न तेनैव सर्वे निष्पाद्या अन्येन निष्पादितानामप्यन्येन क्रयादिभिरपि प्राप्तिसंभवात् । तथा विद्यापि पुस्तकनिरीक्षणाद्युपायसंभवान्नैकान्तत उपनयनमाक्षिपति तत्रास्ति विधेरवकाशः । सामान्यवचनं तु वर्तमानापदेशरूपं न वसन्तादियुक्ते प्रत्यक्षविधौ सति क्लेशेन विधित्वमापादयितव्यम् । तस्मात्प्रापकाणि वचनान्यध्ययनोपनयनयोः ॥

दाक्षायणादीनां गुणताधिकरणम् ॥ ४ ॥

**अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ [अगुणाच्च कर्मचोदना ॥ ६ ॥ समाप्तं च फले वाक्यम् ॥ ७ ॥ विकारो वा प्रकरणात् ॥ ८ ॥ लिङ्गदर्शनाच्च ॥९॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥]**

यद्दाक्षायणयज्ञेन स्वर्गकामो यजेत तत् ॥ कर्मान्तरं गुणो वोक्तदर्शादौ फलसिद्धये ॥ १० ॥
गुणस्यास्याप्रसिद्धत्वात्कर्मभेदोऽत्र संज्ञया ॥ गुणो व्युत्पत्तिशेषाभ्यामावृत्त्याख्यो न नाम तत् ॥ ११ ॥

दर्शपूर्णमासप्रकरणे श्रूयते 'दाक्षायणयज्ञेन स्वर्गकामो यजेत, तथा साकंप्रस्थायीयेन यजेत पशुकाम' इति । तत्र विचारः किं कर्मान्तरविधिः उत दर्शपूर्णमासयोरेव गुणात्फलमिति । तदर्थं च किं दाक्षायणादिशब्दो गुणविधिः कर्म नामधेयं वेति विचारः । तत्रैवंसंज्ञकस्य गुणस्य लोकेऽप्रसिद्धत्वादुद्भिदादिवत्सामानाधिकरण्येन नामधेयत्वं, तच्च भेदकं ज्योतिरादिवत् । अपिचास्य नामत्वेनाविधेयत्वाद्गुणस्य[3] च विधेयान्तरस्याभावात्फलस्य चाविधेयत्वात् कर्मैव विधीयत इत्यभ्यासादपि भेद इति प्राप्तेऽभिधीयते—'स्यादेवं नामधेयत्वे गुणस्त्वत्र विधीयते ॥ फलाय साकंप्रस्थानमावृत्तिश्चेत्यभिन्नता ॥' नामत्वे संज्ञालक्षणोऽभ्यासलक्षणो वा कर्मभेदः स्यात् । गुणविधिस्त्वयं यद्यपि

कालत्वेन वसन्तादीनामपि प्राप्तेर्वसन्तादौ निमित्ते ब्राह्मणादिविधेरपि संभवाद्ब्राह्मणादीनामेव निमित्तत्वमिति नाग्रहः किंतु ब्राह्मणादौ निमित्ते वसन्तादिविधिर्वसन्तादौ वा निमित्ते ब्राह्मणादिविधिः सर्वथा वसन्तादिवाक्यं नाधानप्रापकमिति तात्पर्यम् । ऐकान्तिकी नियता । **यदिशब्देति** । यदिशब्दादिसद्भावे धात्वर्थस्य प्राप्तत्वावगमाद्विधिप्रतिबन्धः एवं प्रत्यभिज्ञायामपि । प्रकृतेच तदुभयाभावादप्रत्यूहः कर्मविधिरित्यर्थः । **बलादिति** । क्रियायाः प्राप्तत्वेन तद्विध्यसंभवेसति यदिशब्दाद्यभावेऽपि प्राप्तार्थत्वमात्रेण ब्राह्मणादिश्रवणस्य निमित्तत्वं स्यान्नचात्रान्यतः प्राप्तिरित्यर्थः । **न तेनैवेति** । अग्निसाध्यकर्माधिकारिणैवेत्यर्थः । आधानविधिसद्भावे ह्यादधीतेत्यात्मनेपदबलेन आधानसाध्याग्नीनां कर्तृसंबन्धित्वप्रतीत्या स्वीयाधानसाध्यत्वं स्यात् । आक्षेपपक्षेतु आत्मनेपदस्यानुवादत्वेनाविवक्षिततयाग्निभिराधानमात्राक्षेपेऽपि तस्य स्वकर्तव्यत्वे प्रमाणाभावात्परानुष्ठिताधाननिष्पन्नाग्नीनां क्रयादिनापि संपादनं संभवतीति भावः । **तथेति** । यद्यप्यध्ययनविधिबलादध्ययनसंपादितविद्याया एव कर्मानुष्ठानोपयुक्तत्वात्ततएव पुस्तकनिरीक्षणादिव्यावृत्तौ सत्यामध्ययनमात्रसाध्यया विद्यया गुरुमनुपेत्याध्ययनस्य कर्तुमशक्यत्वादध्ययनद्वारोपनयनाक्षेपः संभवति तथापि प्रत्यक्षविधौ सत्याक्षेपात्प्राप्तिवर्णनमनुचितम् । ब्राह्मणविशिष्टोपनयनानुवादेन वसन्तादिकालविधौ विशिष्टानुवाददोष इत्यादिदूषणे तात्पर्यं बोध्यम् । **सामान्येति** । य एवंविद्वानितिवचनमित्यर्थः । सूत्रार्थस्तु—आधाने विषये वसन्तादिवाक्यं प्रापकमेवासर्वशेषत्वादाधानस्य कंचिदपि क्रतुंप्रति शेषत्वाभावेन क्रतुविधिभिराक्षेपतः प्राप्त्यभावादिति ॥

**अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥** वसन्तादिवाक्येष्वाधानमिवात्रापि कर्मान्तरं विधेयमिति प्रत्यवस्थानात्सङ्गतिः । **तत्रैवमिति** । दाक्षायणशब्दवाच्यस्य गुणस्याप्रसिद्धत्वेन दध्नेन्द्रियकामादिष्विव फलाय गुणविध्यसंभवात् यजिसामानाधिकरण्यादुद्भिदादिवन्नामत्वमेव वाच्यम् । ततश्च संज्ञाबलात्कर्मान्तरत्वमित्यर्थः । **अपिचे** । यद्यपि कर्मणो विधेयत्वेऽपि संनिधौ त्वविभागादिति न्यायान्न कर्मान्तरत्वं तथाप्येकस्यानेकसंज्ञानर्थक्येन संज्ञायाः प्रकृतकर्मानन्वयात्तदुपोद्बलितात्पुनर्विधानात्कर्मान्तरत्वमित्येवं संज्ञानिबन्धनभेदस्यैव दृढीकरणार्थमित्याहुः । साकंप्रस्थानमावृत्तिश्च गुण इत्य-

१ प्रस्थाय्येन. २ वंविधसंज्ञायुक्तस्य लोके गुणस्याप्रसिद्धत्वात्. ३ गुणान्तरस्य विधेयस्याभावा.

न लोकसिद्धो गुणस्तथापि वाक्यशेषादवयवव्युत्पत्त्या चावृत्तिसहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यते। अतो गुणावप्राप्तावतश्यं विधातव्यौ यागस्तु प्रकृत इति तदाश्रयमेव गुणमात्रं फलाय विधीयते दध्यादिवत्। तद्यथैव दध्यादेरर्थान्तरेऽत्यन्तरूढत्वान्न नामत्वं एवं दाक्षायणादिशब्दानां द्वे पौर्णमास्यावित्यादिवाक्यशेषदर्शनेन दार्शपौर्णमासिकगुणवचनत्वावगमात् तद्वशेन च धातुपाराध्यादेराश्रयणीयत्वान्नोद्भिदादिवत्कर्मान्तरवचनत्वं संभवतीत्यकर्मभेदः॥

द्रव्यदेवतायुक्तानां यागान्तराधिकरणम्॥ ५॥

**संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्॥ १२॥ [यावदुक्तं वा कर्मणः श्रुतिमूलत्वात्॥ १३॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्॥ १४॥ लिङ्गदर्शनाच्च॥ १५॥]**

वायव्यः श्वेत आलभ्यो भूत्यै सौर्यं चरुं तथा॥ निर्वपेद्ब्रह्मतेजोर्थमीषामुष्टिनिरूप्ययोः॥ १२॥
गुणौ श्वेतं चरुं किंवा यावत्कथितकर्मणी॥ फलार्थे अथवा यागे विशिष्टौ विहिताविह॥ १३॥
श्वैत्यं वायुस्पृगीषायामाग्नेये च रविप्रभे॥ चरुर्गुणश्चरुः स्थाली निर्वापस्तु तदाश्रितः॥ १४॥
फलहानेर्न तत्किंतु यावच्चोदितकर्म तत्॥ द्रव्यादिरूपसंपत्तेरवार्या यागतार्थिकी॥ १५॥

'दर्शपूर्णमासयोरीषामालभेत तथा चतुरो मुष्टीर्निर्वपती'ति। तथानारभ्य किंचिच्छ्रूयते 'वायव्यं श्वेतमालभेत भूतिकामः। सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति। तत्र संदेहः किं दार्शपूर्णमासिकयोरीषालम्भमुष्टिनिर्वापयोः श्वेतचरू गुणौ विधीयेते किंवा कर्मान्तरे यावदुक्ते निर्वपणमालम्भनं च गुणफलविशिष्टे किंवा यागविधानमितरच्चेतरच्चेति। तत्र विधिगौरवान्न कर्मान्तरविधानं यागस्त्वश्रुतत्वाद्दूरभ्रष्टः। नचासति यागे देवतात्वं वाय्वादीनां संभवति तेन सर्ववृक्षाणां वायुसंबन्धा-

न्वयः। **वाक्यशेषादिति**। द्वौ पौर्णमास्यौ द्वे अमावास्ये यजेतेत्येतस्मात् सह कुम्भीभिरभिक्रामं जुहोतीत्येतस्माच्च वाक्यशेषात् पौर्णमास्यमावास्यावृत्तिलक्षणगुणस्य कुम्भीभिः सह प्रस्थानरूपस्य च गुणस्य प्रसिद्धत्वात्। दक्षस्योत्साहिनो यजमानस्येमे दाक्षा ऋत्विजस्तेषामयनं आवृत्तिः आवृत्तितद्वतोश्चाभेदविवक्षया यज्ञशब्दसामानाधिकरण्यनिर्वाहस्ततश्च दक्षयजमानसंबन्धिऋत्विक्कर्तृकावृत्त्यात्मकपक्ष इत्यवयवव्युत्पत्त्या साकंप्रस्थायः सह प्रस्थानं तत्संबन्धित्वात्साकंप्रस्थायीय इत्यवयवव्युत्पत्त्या च वाक्यशेषप्रसिद्धावृत्तिसहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यत इति लोकतोऽप्रसिद्धत्वेऽपि गुणस्य विधिर्नोनुपपन्न इत्यर्थः। **अप्राप्ताविति**। फलार्थत्वेनेतिशेषस्ततश्च वाक्यशेषः लोकतोऽप्रसिद्धस्य गुणस्य स्वरूपज्ञापनार्थः ताभ्यां तु फलसंबन्धविधिरिति न कस्यापि वैयर्थ्यं उक्थ्यव्यूहादेः स्वरूपफलसंबन्धयोर्बोधकवाक्यद्वयवदिति भावः। **विधातव्याविति**। लोहितोष्णीषादिवदुपसर्जनविधिरिति भावः। एवंच दध्नेन्द्रियकामाधिकरणन्यायेन फलाय गुणविधिरेव नतूद्भिदादिवत्कर्मान्तरत्वमित्याह—**यागस्त्वित्यादिना**। प्रयोजनं पूर्वपक्षे दर्शपूर्णमासप्रयोगाद्बहिः सौर्यादिवद्दाक्षायणयज्ञादेः प्रयोगः तथा दाक्षायणयज्ञस्य पञ्चदशवर्षप्रयोगेण दर्शपूर्णमासयोस्त्रिंशद्वर्षप्रयोगाबाधः सिद्धान्ते तु तस्यैव गुणविकृतप्रयोगमात्रं त्रिंशद्वर्षप्रयोगबाधश्चेति। सूत्रार्थस्तु—अयनेषु दाक्षायणादिवाक्येषु संज्ञोपबन्धात्कर्मान्तरं स्यात्॥

**संस्कारश्चाप्रकरणे कर्मशब्दत्वात्॥ १२॥** ईषा निर्वापार्थशकटावयवभूतदारुविशेषः। **अनारभ्येति**। अनारभ्योक्तिः कर्मान्तरत्वादिप्रतिपादनसौकर्यार्था फलायगुणविध्यसंभवस्फोरणार्था च। तथाच युक्तं पूर्वत्र कर्मणः संनिहितत्वात्फलायगुणविधिरिहतु अनारभ्यविधानात्प्रकरणादाश्रयालाभेन फलायगुणविध्यसंभवात् कर्मणि गुणविधिः गुणविशिष्टकर्मान्तरविधिर्वा स्वीकार्य इति प्रत्यवस्थानात्सङ्गतिर्बोध्या। यावदुक्ते श्रुतमात्रे इत्यर्थः। इदं चाश्रुतयागविधिव्यावृत्त्यर्थमुक्तं यागविधानमित्यत्रापि गुणफलवैशिष्ट्यान्वयो ज्ञेयः। **इतरदिति**। सौर्यवाक्यादितरद्वायव्यवाक्यं तस्मादितरत्सौर्यवाक्यं चेत्यर्थः। सिद्धान्ते दोषान्तरमाह—**यागस्त्विति**। दूरभ्रष्टः अत्यन्ताप्रसक्तइतियावत्। **ननु** गुणविधिपक्षोऽपि न संभवति प्राप्तकर्मानुवादेन देवतायाः श्वेतत्वादेश्च विधाने वाक्यभेदप्रसङ्गात्। नचायं न देवतातद्धितः किंतु संबन्धसामान्यार्थ इति वाच्यम्। देवतायामेव 'वाय्वृतुपित्रुषसो यदि'ति यत्प्रत्ययविधानात्संबन्धसामान्ये 'वृद्धाच्छ' इति छप्रत्ययप्रसङ्गादित्यत आह—**नचेति**। भवतु देवतातद्धितएवायं तथापि यागाभावे देवतात्वानिर्वाहाद्गौण्यावृत्त्या तद्धितो निर्वाह्यः। अनुवादत्वाच्च गौणी न दुष्यतीति न वाक्यभेद इति भावः। **सर्वेति**। 'ओषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादा'

१ वाचकत्वं. २ श्रुतिकामः. ३ चतसृभिः. ४ कुदनं इति भाषा.

त्कथंचिदीषाया एव वायव्यमित्यनुवादः सौर्यमिति चाग्नेयस्यैव । तेजोदैवत्यसामान्यात् । अतो दार्शपूर्णमासिकयोरालम्भनिर्वापयोर्गुणविधी यदालभेत तच्छ्वेतमिति यन्निर्वपेत्तच्चरुमिति । चरुशब्दः स्थालीवचनः । सप्तम्यर्थे च द्वितीया । स्थाल्यां निर्वपेदित्यर्थः । भूतिब्रह्मवर्चसकामशब्दौ सार्वकाम्यप्राप्तानुवादाविति । नैतद्युक्तम् । नहि फलपदयोर्नित्यवच्छ्रुतयोः संभवत्प्रयोजनयोश्च पाक्षिकानुवादत्वमानर्थक्यं च युक्तमङ्गीकर्तुं । तस्माद्गुणफलविशिष्टं कर्मान्तरं यावदुक्तं विधीयते । लोकेऽपि चालम्भनादिसद्भावान्नैकान्ततो दार्शपूर्णमासिकयोः प्रतीतिः, देवतापदं तु पूर्ववद्यथाकथंचिन्नेयम् । यागस्याश्रुतस्य विधानायोगात्तदभावे च देवतात्वासंभवात् । तस्माद्यावदुक्तकर्मान्तरविधिरिति प्राप्ते ब्रूमः—'देवतापदवैयर्थ्यं यावदुक्तविधौ भवेत् ॥ तेन तत्कल्पितो यागो विधेयोऽत्राश्रुतोऽपि सन् ॥' नहि यदेव प्रत्यक्षपठितं तदेवैकं शाब्दं सामर्थ्यमपि हि शब्दैकदेश इत्युक्तं, अतो द्रव्यदेवतासंबन्धकल्पितो यागो विधीयते । तदयं वाक्यार्थः । श्वेतमालभेत वायुदेवत्यं कुर्याद्भूतिकाम इति । तत्रालभेतेत्यनुवादः चोदकादर्थाद्वा प्राप्तत्वाद्वायव्यं श्वेतं कुर्यादित्येतावद्विधीयते । नचान्तरेण यागं वायव्यः शक्यते कर्तुमिति यागएवायमेवं विहितो भवति । तस्माद्याग एव गुणफलविशिष्टो विधीयते ॥

वत्सालम्भादीनां संस्कारताधिकरणम् ॥ ६ ॥

## विशये प्रायदर्शनात् ॥ १६ ॥ [अर्थवादोपपत्तेश्च ॥ १७ ॥]

**वत्सालम्भो यजिः स्पर्शो वा वायव्यादिवद्यजिः ॥ स्पर्शः स्याद्देवराहित्यात्संस्कारः प्रायपाठतः ॥ १६ ॥**

अग्निहोत्रदोहाधिकारे 'वत्समालभेते'ति श्रुतं तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसा-

इति श्रुतौ प्राणभृतां वनस्पतिभोक्तृत्वावगमात्तेन संबन्धेन वनस्पतिसंबन्धिनि प्राणे वायौ देवतात्वोपचारेण वायव्यशब्दोऽनुवाद इत्यर्थः । **ननु** लोकेऽप्यालम्भादिसंभवात्कथमेकान्ततो दार्शपूर्णमासिकप्रतीतिरिति शङ्कां निराकुर्वन्नाह—**अत इति ।** अनारभ्याधीतानां प्रकृतिगामित्वात्प्रतीतिरिति भावः । नन्वाग्नेयस्य पुरोडाशत्वात्तत्र चरुविधानमशक्यमत आह—**चरुशब्द इति ।** यतएव पुरोडाशे चरुविधिरनुपपन्नः अतएव लक्षणयाऽत्र चरुशब्दः स्थालीवचन इत्यर्थः । केवलगुणविधौ फलपदानन्वयमाशङ्क्याह—**भूतीति । पाक्षिकेति ।** सर्वेभ्यः कामेभ्य इति सार्वकाम्यस्य प्रयोगभेदाधीनत्वात् भूत्यादेः पाक्षिकत्वमित्यर्थः । **आनर्थक्यमिति ।** अनुवादस्य प्रयोजनाभावादिति भावः । **लोकेऽपिचेति ।** अव्यभिचरितक्रतुसंबन्धिष्वेव प्रकृतिगामित्वन्यायो नान्यत्रान्यथा हिरण्यभरणादिष्वतिप्रसङ्गः । हिरण्यभरणादिष्वतिप्रसङ्गादेव वैदिकत्वसामान्याद्वैदिककर्मसंबन्ध्यालम्भाद्यनुवादेन गुणविधिरपि नाशङ्कनीय इति भावः । **यागस्येति ।** आग्नेयोऽष्टाकपालो भवतीत्यत्र पुरुषव्यापारंविना विध्यनुपपत्तेः पुरुषव्यापारापेक्षायामवश्यकल्प्यः पुरुषव्यापारः पदान्तरार्थद्रव्यदेवतासंबन्धोपस्थितयागरूप एव कल्पयितुं न्याय्य इति युक्तस्तत्राश्रुतस्यापि यागस्य विधिः, इह त्वालम्भननिर्वापयोः पुरुषव्यापारयोः श्रुतत्वात्ततएव विध्युपपत्तेरश्रुतयागविधिर्नाभ्युपेय इति भावः । **ननु** यागस्याश्रुतत्वाद्देवतापदवैयर्थ्यं न्यायप्राप्तं न दुष्यतीत्यत आह—**नहीति । उक्तमिति ।** अर्थाद्वा कल्पनेत्यत्रेति शेषः । आलम्भनिर्वापयोरनुवादादस्मत्पक्षेऽपि नात्यन्तगौरवमित्याशयेनाह—**तत्रेति ।** नचास्मत्पक्षे वायव्यपदानर्थक्यं । त्वत्पक्षे आलभतेरिति कोन्वत्र विशेष इति वाच्यम् । विधिप्रत्ययप्रयोगार्थं धातूपादानावश्यंभावेन स्वपक्षे धातोरानर्थक्याभावादिति भावः । **ननु** प्रकृतावग्नीषोमीये पशौ आलम्भस्य स्पर्शस्यार्थिकत्वादार्थिकस्य च चोदकाभावान्न चोदकात्तत्प्राप्तिरित्यत आह—**अर्थाद्वेति ।** तर्हि प्रकृतिवदेवेहाप्यार्थिकी प्राप्तिः संभवतीति भावः । परिनिष्ठितवाक्यार्थं वक्तुमाह—**नचेति ।** सूत्रार्थस्तु—अप्रकरणेऽनारभ्यश्रुते वायव्यादिवाक्ये दार्शपूर्णमासिकः संस्कार एवानूद्यते नतु यागो विधीयते कर्मणो यागस्य शब्दाभावादिति ॥

**विशये प्रायदर्शनात् ॥ १६ ॥** दोहाधिकारे दोहप्रस्ताव इत्यर्थः । अत्र पूर्वपक्षस्यातिमन्दत्वेन प्रत्युदाहरणमात्रत्वमित्यनास्थया संशयानुपन्यासः । **ननु** कथमत्र यागविधिरिति पूर्वः पक्षः । वायव्यादिष्विव देवतासंयोगाभावात् । नच पूषासीतिवत्समुपसृजतीति वत्सालम्भे मन्त्रविधानान्मान्त्रवर्णिकदेवतालाभोऽस्त्विति वाच्यम् । उपसृजतीत्यस्य समीपधारणार्थत्वेनालम्भार्थत्वाभावात्संनिहितवाच्यसिशब्दसामानाधिकरण्येन पूषशब्दस्य पुष्टियोगेन वत्सपरतया देवतापरत्वाभावाच्चेत्यत आह—**तत्रेति ।** वत्सालम्भो यजिमत्कर्मप्राणिद्रव्यकालम्भत्वादिति सामान्यतो दृष्टानुमानादस्य यजिमत्कर्मत्वाध्यवसाये यागविधित्वमुपपद्यत इत्यर्थः । यद्वा वायव्यं श्वेतमालभेतेत्यादिप्रयोगबलात्प्राणिकर्मकतया प्रयुज्यमानस्याल-

१ बोधकः. २ तेजोदेवता. ३ फलवत्पदयोः.

मान्यादत्रापि यागविधिं मन्यते। तस्योत्तरमालम्भो नाम स्पर्शमात्रं न तस्य यागमन्तरेणानुपपत्तिः। लोकेऽपि च दृष्टत्वादतोऽत्रालम्भमात्रं वत्ससंस्कारो विधीयते॥

नैवारचरोराधानार्थताधिकरणम्॥ ७॥

**संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात्॥ १८॥**

चरुर्भवति नैवार उपधत्ते चरुं त्विति॥ यागः स्यादुपधानं वा यागः शेषोक्तदैवतः॥ १७॥
यागत्वानिश्चये शेषो नापेक्ष्योऽतो यजिः कुतः॥ किं तूपधानमात्रत्वं यावदुक्तं चरौ स्थितम्॥ १८॥

'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवारा' इत्यत्रापि किं चरोर्यावदुक्तमुपधानमात्रमुत याग इति संशयः। तत्र बृहस्पतेर्वा एतदन्नमिति कथं बृहस्पतेः स्याद्यद्यसौ देवता न स्यात् संबन्धान्तराभावात्। तैत्तिरीयाणां तु बार्हस्पत्यो भवतीति तद्धितेनैव वाक्यशेषे देवतात्वमुक्तम्। अतो वाक्यशेषावगतदेवतासंबन्धबलेन यागार्थता चरोः उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिप्रत्याम्नानेनेति प्राप्ते ब्रूमः। विध्युद्देशापेक्षितो विशेषो वाक्यशेषाद्गृह्यते नानपेक्षितः। चरुश्चोपधानेनैव स्थण्डिलनिर्वृत्त्यौपयिकेन[1] निराकाङ्क्षो नार्थान्तरमपेक्षते। नचोपधानस्य यागवद्देवतापेक्षा। यतो

---

भतेर्यागार्थत्वादिहाप्यालभतिना यागाभिधानाद्यागविधिसंभव इत्यर्थः। सति च यागविधित्वाध्यवसाये प्राणिद्रव्यकत्वेनाग्नीषोमीयविध्यन्तप्राप्त्यादिना देवतालाभ उपपादनीय इति भावः। सामान्यतो दृष्टानुमानस्य वैदिकार्थे प्रवृत्त्यसंभवात्स्पर्शार्थकतया प्रसिद्धस्यालभतेर्यागार्थत्वे प्रमाणाभावादध्वर्युमालभेतेत्यादौ प्राणिद्रव्यकर्मत्वेऽपि स्पर्शमात्राभिधानाद्वायव्यवाक्ये आलभतेरार्थिकानुवादकत्वमिति पूर्वाधिकरणएवोक्तेश्च प्रकारद्वयमप्यनुपपन्नमित्याशयेन मन्यत इत्युक्तम्॥ **आलम्भोनामेति**। आलभतेः स्पर्श एवार्थो न याग इत्यर्थः। अनुमानं निषेधति—**न तस्येति**। उभयत्र हेतुमाह—**लोकेपीति**। ननु दोहनबलाद्वा वत्समुपावसृजतीत्युपावसर्जनबलाद्वार्थसिद्धत्वादालम्भविधिरप्यनुपपन्न इत्यत आह—**वत्ससंस्कार इति**। न स्पर्शमात्रं विधीयते येनोक्तदोषः स्यात् किंतु चाटुकरणात्मकस्पर्शविशेषलक्षणः संस्कारः। सच नार्थप्राप्तः गोप्रमोदातिशये चोपयुज्यते इति न तस्य वैयर्थ्यमिति भावः। प्रयोजनं पूर्वपक्षेऽग्निहोत्राङ्गतया कश्चित्पशुयागोऽनुष्ठेयः। सिद्धान्तेतु वत्सचाटुकरणम्। सूत्रार्थस्तु—यागविधिः संस्कारविधिर्वा इति संशये यावदुक्तं संस्कारमात्रमेव विधेयं दोहनादिसंस्कारप्रायपाठादिति।'

**संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात्॥ १८॥ उपधानमात्रमिति**। मात्रशब्दप्रयोगादुत याग इत्यत्र तदप्रयोगाच्चात उपधानयुक्तो यागो विधीयते इति द्वितीयकोटेरर्थो बोध्यः। **कथमिति**। यदि बृहस्पतिर्नीवारप्रकृतिके चरौ देवता न भवेत्तदा कथं बृहस्पतेर्नीवारा अन्नं भवेयुरित्यर्थः। ननु तद्धितचतुर्थीमन्त्रवर्णानामेव देवतावगमकत्वन तदभावात्प्रकृते कथं बृहस्पतेर्देवतात्वावगम इति। यदि कश्चिद्ब्रूयात्तंप्रति तद्धितोऽप्यस्तीत्याह—**तैत्तिरीयाणामिति**। पूर्ववैषम्येण प्रत्यवस्थानात्संगतिरिति सूचयन्नुपसंहरति—**अत इति**। किंच उपधानमात्रविधिस्वीकारे चरोरन्यत्राविनियुक्तस्य सक्तुवत्संस्कार्यत्वासंभवाद्द्वितीयाश्रुतिरनुपपन्ना स्यात्। यागविधिपक्षे तु तस्य यागस्यैकदेवताकत्वौषधद्रव्यकत्वादिनाग्नेयविध्यन्तप्राप्तौ चोदकप्राप्तस्विष्टकृदादिप्रतिपत्तिबाधनेनोपधानं चरोः प्रतिपत्तित्वेन विधीयत इति न द्वितीयानुपपत्तिरित्याशयेनाह—**उपधानं त्विति**। वाक्यशेषे हि देवतात्वं न श्रूयते तत्र यदि विध्युद्देशस्य देवताकाङ्क्षा स्यात् तदा तद्बलादश्रुतदेवताकल्पनापेक्षया ज्यायस्त्वाद्वाक्यशेषश्रुतबृहस्पतेर्देवतात्वं रात्रिसत्रे प्रतिष्ठायाः फलत्ववत्कल्प्येत। इह च विध्युद्देशस्योपधानमात्रविधायकत्वेनोपपन्नस्य न देवतापेक्षा चरोरुपधानस्य वा देवतापेक्षाविरहात्ततो न वाक्यशेषाद्देवतालाभ इत्याह—**विध्युद्देशेति। स्थण्डिलनिर्वृत्तीति**। चरूपधानं प्रकरणादग्न्यङ्गं तदङ्गत्वं च स्थण्डिलनिर्वृत्त्यर्थतयैव उपधानस्य च स्थण्डिलनिर्वृत्त्यर्थत्वं उपधेयचरुद्वारा न साक्षात्ततश्चोपधानलक्षणसंस्कारविधिबलादेवोपधेयस्य चरोरपि उपधानसाध्यस्थण्डिलनिर्वृत्तौ विनियोगकल्पनादुपधानविधेरयमर्थो भवति उपहितेन चरुणा स्थण्डिलं निर्वर्तयेदिति। एवंचानेनैव वचनेन चरोरपि विनियोगात्संस्कार्यत्वं संभवतीति द्वितीयाप्युपपद्यते। अयंचार्थो न्यायमालायां स्पष्टः। यद्यपीष्टकाभिरग्निं चिनुत इति प्रबलश्रुत्यवगतेष्टकावरुद्धे स्थण्डिलनिर्वृत्तिरूपकार्ये लिङ्गप्रकरणाभ्यामुपधानस्य साधनत्वं न संभवति तथापि द्वितीयावगतसंस्कारत्वानर्थक्यात् दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वाच्चेष्टकावरुद्धेऽपि चयने उपधानस्यापि निवेशो नानुपपन्नः। नचेष्टकाभिरेव स्थण्डिलनिर्वृत्तिस्तथा सति पुरीषोपधानादेरपि अदृष्टार्थत्वापत्तेरिति स्थण्डिलनिर्वृत्त्यौपयिकत्वं वदतो ग्रन्थकारस्याशयः। यथाचानेन न्यायेन होमविधिबलादेव सक्तूनां न संस्कार्यत्वलाभस्तथा नवमे वक्ष्यामः। तैत्तिरीयवाक्य-

---

१ निर्वृत्त्यौपदिकेन, त्यौपपादकेन.

वाक्यशेषावगता देवता गृह्येत, तैत्तिरीयकवाक्यमपि बार्हस्पत्यो भवतीति वर्तमानापदेशकं न देवताविधानपरमतोऽर्थवादमात्रं वाक्यशेष इत्युपधानमेव चरोर्न यागः ॥

पात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणम् ॥ ८ ॥

## पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥

पर्यग्निकृतः पात्नीवत उत्सृज्यत इत्यसौ ॥ यागो गुणो वा यागः स्यादन्वयाव्यवधानतः ॥ १९ ॥
प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गशब्दतः ॥ गुणं पर्यग्निकृत्याख्यं वक्त्युत्तरनिवृत्तये ॥ २० ॥
न दुष्टा परिसंख्यात्र चोदकात्प्राग्विधौ सति ॥ पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः ॥ २१ ॥

'त्वाष्ट्रं पात्नीवतमालभेते'ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ती'ति श्रुतं । तत्र संशयः । किं[1] पूर्वत्र पर्यग्निकरणान्ताङ्गरीतिगुणविधिरुत तत्संस्थयागान्तरविधिरिति । तदर्थं च किं पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वय उत पर्यग्निकृतमुत्सृजन्तीति । तत्राव्यवहितसंबन्धलाभात्पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयो नतु पर्यग्निकृतमुत्सृजन्तीति । व्यवहितकल्पनादोषात् । नच पात्नीवतशब्दात्पूर्वयागप्रत्यभिज्ञानं त्वष्टा हि पत्नीवांस्तत्र देवता न केवलः पत्नीवान् । अतो यथाग्नेयमित्यग्नीषोमीयादेरग्रहणं तथात्रापि । नच पूर्वत्र विधेयः कश्चिदिह गुणः संभवति । न तावत्पर्यग्निकरणं चोदकप्राप्तत्वात्, नोत्सर्गः तस्याप्युत्पत्तिवाक्यसिद्धत्वात् पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ विशिष्टानुवादाद्वाक्यभेदः । नच पर्यग्निकृत्वोत्सृजतीति क्रमः । तस्यापि चोदकप्राप्तेः । नच पर्यग्निकरणान्ताङ्गकलापः, तस्यापि सिद्धत्वात् । नोत्तराङ्गपरिसंख्या त्रिदोषत्वात्तस्मात्कर्मान्तरमिति[3] । अत्रा-

मपि प्राग्दीव्यतीयार्थमात्रविहितण्यप्रत्ययान्तत्वेन विशिष्यदेवतार्थत्वे विध्युद्देशाकाङ्क्षालक्षणप्रमाणाभावाद्यथाकथंचिन्नीयमानमपि न दुष्यतीत्याशयेनाह—**तैत्तिरीयेति** । सूत्रार्थस्तु—चरुरर्थशब्देन कार्यशब्देनोपदधातिना संयुक्तस्तदर्थ एव नतु यागार्थः श्रुतिसंयोगात् । उपधानार्थत्वं चोपधानसंस्कारार्थस्यापि चरोरार्थिकसाधनत्वाभिप्रायेण बोध्यः ॥

**पात्नीवते तु पूर्ववत्त्वादवच्छेदः ॥ १९ ॥** इह विधौ पात्नीवतमिति देवताश्रवणाद्यागान्तरमिति प्रत्यवस्थानात्सङ्गतिः । **पूर्वत्रेति** । त्वाष्ट्रवाक्यविहिते कर्मणीत्यर्थः । पर्यग्निकरणान्ताङ्गरीतिविधिः पर्यग्निकरणान्ताङ्गानुष्ठानविधिः पर्यग्निकरणान्ताङ्गकलापविधिरिति पर्यवसितोऽर्थः । **तदर्थमिति** । अत्र यः पर्यग्निकृतस्तं पात्नीवतं कुर्यादिति न पूर्वपक्षकोटेरर्थः कर्मान्तरविधिपक्षेऽप्राप्तस्य पर्यग्निकृतस्योद्देश्यत्वासंभवान्नापि पर्यग्निकृतत्वपात्नीवतत्वोभयविशिष्टविधिः कर्मान्तरविधिपक्षे । तत्र चोदकत एव पर्यग्निकरणस्य प्राप्त्या विधिवैयर्थ्यात्तस्मादयमत्र तदर्थसंशयार्थः । उत्सृजन्तीति प्रत्ययप्रतिपाद्यविधेः किं पात्नीवतेनान्वयः किंवा पर्यग्निकृतेनेति । यदि पात्नीवतेनान्वयस्तदा वायव्यन्यायेन द्रव्यदेवतासंबन्धाक्षिप्तयागविधिसिद्धिः । तत्र पर्यग्निकृतशब्दश्चोदकप्राप्तपर्यग्निकरणानुवादः । उत्सृजतिधातुस्तु यागविधिबलादुत्सर्गस्य प्राप्तेः प्रत्ययानुग्रहमात्रार्थः । यदा तु पर्यग्निकृतेन विधेरन्वयः तदोत्सृजतिधातोः पूर्वयागानुवादार्थत्वादुत्सृजतीति यत्तत्पर्यग्निकृतमित्येव धातुना पूर्वयागमनूद्य प्रत्ययेन तत्र पर्यग्निकरणान्ताङ्गरीतिविधिमिद्धिरेवं च पात्नीवतं कुर्यादित्येव पूर्वपक्षे वाक्यार्थस्तत्र चोदकप्राप्तपर्यग्निकरणानुवादकत्वेन पर्यग्निकृतशब्दः पात्नीवतेनान्वेतीत्येतावता पर्यग्निकृतं पात्नीवतं कुर्यादित्युक्तमिति द्रष्टव्यम् । **अव्यवहितेति** । पात्नीवतशब्दो विधिप्रत्ययस्याव्यवहितः पर्यग्निकृतशब्दस्तु व्यवहित इति भावः । **ननु** पात्नीवतशब्दस्य प्रकृतप्रत्यभिज्ञापकत्वात्कथं तस्यैव यागान्तरविधिप्रयोजकत्वमित्याशङ्क्याह—**नचेति** । अनेनैव नवमोपान्त्याधिकरणे पर्यग्निकृतानारण्यानुत्सृजन्तीत्यत्र पर्यग्निकरणान्ताङ्गरीतिविधानस्य व्युत्पादनात्तन्न्यायेनैव अत्रापि तदन्ताङ्गरीतिविधानसिद्धेरस्याधिकरणस्य वैयर्थ्यमिति शङ्का निरस्ता । युक्तं तत्रारण्यानामीशानाय परस्वत आलभेत इति विहिते प्रकृते कर्मणि प्राप्तत्वेन तद्बलात्प्रकृतकर्मप्रत्यभिज्ञया तदन्ताङ्गरीतिविधिरिह तु प्रत्यभिज्ञाविरहान्न तदन्ताङ्गरीतिविधिसंभव इति शङ्कानिराकरणार्थत्वेनास्य वैयर्थ्याभावादिति । एवंच यद्यपि नवमोपान्त्याधिकरणस्यैव तदन्ताङ्गरीतिव्युत्पादनपरत्वात्पर्यग्निकृतवाक्ये पूर्वकर्मणि विधेयगुणाभावप्रतिपादनं तत्पूर्वपक्ष एव सङ्गतं नत्विह तथापि तत्रत्यमेवात्र कर्मान्तरविध्युपोद्बलनार्थमुक्तमिति ध्येयम् । **तस्यापीति** । देवतोद्देशेन द्रव्यत्यागात्मयागोत्पत्तिवाक्यादेव त्यागरूपस्योत्सर्गस्य सिद्धत्वादित्यर्थः । उत्सर्गविधौ दोषान्तरमाह—**पर्यग्निकरणविशिष्टेति** । उत्सर्गविधिपक्षे विशिष्टस्यैवोद्देश्यत्वापाताद्वाक्यभेद इत्यर्थः । **प्राप्तेरिति** । व्यवधानेऽपि पौर्वापर्याविघातादिति भावः । प्रथमं प्रौढिवादेन त्वष्टृसापेक्षस्यैव पत्नीवतो देवतात्वमभ्युपगम्य सापेक्षत्वेऽप्येकदेशप्रत्यभिज्ञया तन्मुखेन समुदायलक्षणया तदुक्तपूर्वयागप्रत्यभिज्ञा

१ किंपर्यग्नि. २ तत्संबद्धयाग. ३ मिति प्राप्ते मम:.

भिधीयते—पत्नीवच्छब्दस्तावन्मनोतास्थाग्निशब्दवच्छक्नोत्यत्र पूर्वयागमुपस्थापयितुम्। नचात्राग्नेयवदसामर्थ्यं, उत्पत्तिवाक्ये हि त्वाष्ट्रं पात्नीवतमिति हि प्रत्येकमुत्पन्नस्तद्धितः प्रत्येकमेव वेदतात्वं गमयति न त्वग्नीषोमीयादिवत्समासादुत्पन्नस्तद्धितो येन व्यासक्तं सापेक्षं देवतात्वं स्यात्। नच प्रत्येकमपि देवतात्वे विकल्पः। युगपदेकेन वाक्येन विधानात्। अतो डित्थडपित्थयोर्माता डित्थमातेति शक्यते वक्तुं यथा एवं पात्नीवतमिति। सति चैवं प्रकृतप्रत्यभिज्ञाने न कर्मान्तरत्वं युक्तम्। अत उत्सृजतिना पूर्वयागमनूद्य पर्यग्निकरणान्ताङ्गकलापविधिर्यद्यपि चासौ चोदकात्सिध्यति तथापि ततः प्रागेव विधीयते। तेन च कृप्तोपकारेण निराकाङ्क्षस्त्वाष्ट्रप्रयोगवचनो गृहमेधीयवन्नातिदेशमपेक्षते। शक्नोति च पर्यग्निकृतशब्दः प्राकृतपर्यग्निकरणावस्थावचनस्तदन्ताङ्गकलापं गमयितुम्। नहि पूर्वाङ्गेष्वकृतेष्वियमवस्था भवति प्रकृतोत्सर्गानुवादेन चाङ्गरीतिविधौ पात्नीवतशब्दो नित्यानुवाद इति न विशिष्टानुवाददोषः॥

अदाभ्यादीनां ग्रहनामताधिकरणम्॥ ९॥

## अद्रव्यत्वात्तु केवले कर्मशेषः स्यात्॥ २०॥

**यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम्॥ तद्यागो वा गुणो यागः स्याददाभ्यांशुनामतः॥ २२॥**
**ग्रहयोरेव नाम स्यादानन्तर्योद्विधिस्तयोः॥ गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिना॥ २३॥**

'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाती'त्यनारभ्य श्रुतं, तत्र विचारः किं ज्योतिष्टोमे ग्रहणविधिरुत यागान्तरविधिरिति। तदर्थं च किमंशुमदाभ्यमिति यागनामनी ग्रहणनामनी वेति। तत्र ग्रहणस्य संस्कारत्वादवघातादिवन्नामधेयानर्हत्वाद्यागनामत्वमदाभ्यं यजत इति। नाम च प्रकृतादपि भेदकमित्युक्तं, किमुताप्रकृतादेव ज्योतिष्टोमादंशौ तु यद्यपि यजतिर्न श्रुतस्तथापि संज्ञयैव तावत्कर्मान्तरं कल्प्यते। तच्च गृह्णातिचोदनासा-

---

संभवतीत्याह—**पत्नीवच्छब्द इति**। 'त्वं ह्यग्ने प्रथमो मनोते'ति मनोतामन्त्रस्थाग्निशब्दो यथाग्नीषोमौ लक्षयति तथा पात्नीवतशब्दप्रकृतिभूतपत्नीवच्छब्दोऽपि त्वष्टृपत्नीवल्लक्षकः सन् पूर्वयागमुपस्थापयितुं शक्नोतीत्यर्थः। इदानीमभ्युपगमं परित्यज्य निरपेक्षस्यैव देवतात्वात्प्रत्यभिज्ञा सुलभेत्याह—**नचात्रेति**। आग्नेयवदसामर्थ्यमप्यत्र नास्तीत्यर्थः। स्यादित्यनन्तरं केवलस्यासमर्थत्वं च स्यादिति शेषः। **ननु** प्रत्येकं देवतात्वे विकल्पः स्यात्ततश्च यदा पात्नीवतत्वं तदैव तदन्ताङ्गरीतिविधिः स्यादित्यत आह—**नचेति**। **युगपदिति**। ततश्चैकक्रियावशीकारादन्योन्यनियमलाभ इति भावः। **प्रागेवेति**। ततश्चाप्राप्तपरिसंख्यात्वात्र त्रैदोष्यमिति भावः। **गृहमेधीयवदिति**। यथा गृहमेधीययागः आज्यभागौ यजतीति कृप्तप्राकृतोपकाराज्यभागाभ्यां निराकाङ्क्षत्वान्नातिदेशमपेक्षते तद्वदित्यर्थः। **नन्वेवमपि** पर्यग्निकरणमात्रविधिरेव नतु तदन्ताङ्गरीतिविधिः शंय्वन्ता प्रायणीया सन्तिष्ठत इडान्ता आतिथ्येतिवदन्तशब्दाभावादित्याशङ्कायामसत्यप्यन्तशब्दे भूतकालार्थकनिष्ठाबलादेव तदन्तत्वलाभ इति परिहारमभिप्रेत्याह—**शक्नोतीति**। ननु पात्नीवतविशिष्टोत्सर्गानुवादेन तदन्ताङ्गरीतिविधौ विशिष्टोद्देशाद्वाक्यभेदः। नचोत्सर्गमात्रानुवादेन तद्विधिः संभवति अतिप्रसङ्गादित्यत आह—**प्रकृतेति**। उत्सृजतिमात्रमेवोद्देश्यसमर्पकमिति न विशिष्टोद्देशदोषः। संनिधानात्प्रकृतस्यैवोद्देश इति नातिप्रसङ्गश्चेति भावः। सूत्रार्थस्तु—पात्नीवते पर्यग्निकृतं पात्नीवतमिति वाक्ये प्रत्यभिज्ञायमानपूर्वकर्मवत्त्वात् तदन्ताङ्गरीतिविधानेनेतरेषामभावः स्यादिति॥

**अद्रव्यत्वात्तु केवले कर्मशेषः स्यात्॥ २०॥ हविषेति**। हविषा सोमेन हविःसोमं परेत्युपसर्गस्यैतीत्यनेनान्वये परैति नश्यतीत्यर्थः। **अनर्हत्वादिति**। संकल्पादिष्वनुपयोगादिति भावः। **किमुतेति**। अप्रकृतत्वोक्त्यैव पूर्ववत्प्रत्यभिज्ञाविरहाद्यागान्तरविधिरिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम्। **तथापीति**। ग्रहणस्य संस्कारकर्मणो नामधेयानर्हत्वात् ग्रहणव्यतिरिक्तं प्रधानभूतमेवंसंज्ञकं कर्म विधीयत इति कल्प्यत इत्यर्थः। तथापि देवताभावात्तस्य कथं यागत्वाध्यवसाय इत्यत आह—**तच्चेति**। ज्योतिष्टोमे ऐन्द्रवायवं गृह्णातीत्यादि गृह्णातिशब्ददर्शनादिहाप्यदाभ्यं गृह्णातीतिगृह्णातिशब्दसद्भावात्तमेव गृह्णातिशब्दं चोदनासामान्यमादायास्मिन्वाक्ये विधेयं कर्म ज्योतिष्टोमप्रकृतिकमिति निश्चीयत इति तदीयद्रव्यदेवतालाभाद्यागरूपत्वाध्यवसायः। यथा आघारमाघारयतीति आघारसंज्ञके कर्ममात्रे विहिते मान्त्रवर्णिक-

---

१ पात्नीवतशब्दः. २ 'त्वं ह्यग्ने प्रथमो मनोता। अस्या धियो अभवो दस्म होता' (तै. ब्रा. ३।६।१०) ३ क्रतुशब्दः.

मान्याज्ज्योतिष्टोमप्रकृतिकमिति तदीयविध्यन्तप्राप्तेर्द्रव्यदेवतासंबन्धाद्यागो भविष्यति । तस्माद्यागान्तरे इति । उच्यते—'संस्काराणां न नामानि वार्यन्ते राजशासनात् ॥ आनन्तर्यादतः स्यातां ग्रहयोरेव नामनी ॥ अंशौ तावद्यजिर्नास्ति श्रुतस्तन्नामता कुतः ॥ अदाभ्ये श्रूयमाणोऽपि व्यवधानान्न नामभाक् ॥ तदिह ग्रहयोरेव भेदो नामवशाद्भवेत् । ननु यागस्य तेनात्र विधीयेते ग्रहावुभौ ॥ तयोर्गृह्णात्युपस्थानाज्ज्योतिष्टोमेन सङ्गतिः । अथवा तैत्तिरीयाणामनयोर्विनियोजकम् ॥ अस्ति प्रकरणे वाक्यं तेन तादर्थ्यमेतयोः ॥ अदाभ्ये श्रूयमाणोऽपि गुणसंक्रान्तशक्तिना ॥ विधिना न विधातव्यो यागस्तेन न भिद्यते ॥ अंशौ त्वश्रुत एवेति विधेयौ केवलौ ग्रहौ ॥'

अग्निचयनस्यासंस्कारताधिकरणम् ॥ १० ॥

## अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥ [द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥]

**अग्निं चिनुत इत्यत्र यागे वा संस्कृतिर्यजिः ॥ लिङ्गेन यागनामत्वाद्यजिना चानुवादतः ॥ २४ ॥**
**रूढ्या द्रव्यस्य नामैतद्वह्नेराधानवच्चितिः ॥ संस्कारः संस्कृते वह्नावग्निष्टोमो विधीयते ॥ २५ ॥**

'य एवंविद्वानग्निं चिनुते' इति श्रुतं तथेमान्यपि वचनानि 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येने'त्यादि । तत्र संदेहः किमयमग्निं चिनुत इति यागविधिरुताग्निसंस्कारमात्रं स्वतन्त्रं विधीयते । किंवा ज्योतिष्टोमादिषु गुणो विधीयत इति । तदर्थं च किमग्निशब्दो यागनामधेयमुत द्रव्यवचन इति । तत्रांश्वदाभ्यवत्प्रकरणे पुनःसंकीर्तनाभावान्न क्रतुसंयोगस्तदभावे च संस्कारमात्रं स्वतन्त्रमनर्थकम्, अतोऽग्निं कुर्यादिति यागविधिः चिनोतिश्चेष्टकाभिरग्निं चिनुत इति वाक्यप्राप्ता-

---

देवतालाभाद्यागत्वाध्यवसायस्तद्वत् । एवंच गृह्णात्यपि चोदकप्राप्तानुवाद इति भावः । संस्कारकर्मणो नामानर्हत्वे उभयत्रापि यागविधिः स्यान्नतु तदस्तीत्याह—**संस्काराणामिति** । सामानाधिकरण्यात्प्रतीयमानं संस्कारनामत्वं प्रयोजनाभावान्न परित्यक्तुमर्हमिति भावः । **आनन्तर्यादिति** । अनन्तरश्रुतत्वादित्यर्थः । अत्र श्रुतत्वरूपविशेष्याभावादंशुवाक्ये यजिव्याप्तिरदाभ्ये तु विशेषणाभावादित्याह—**अंशाविति** । **तेनेति** । एवंचांशुवाक्ये प्रथमं तत्संज्ञककर्ममात्रविधिकल्पनाक्लेशो नाङ्गीकरणीयः । किंच तस्य पश्चाद्यागत्वनिर्वाहोपि न संभवति । कर्मस्वरूपविशेषस्याज्ञानेन विश्वजिन्न्यायात्फलविशेषकल्पनाभावे फलविशेषाज्ञाने सति अनेन कर्मणैतत्फलं कथं कर्तव्यमित्येवंरूपेतिकर्तव्यताकाङ्क्षाविरहेण तन्मूलचोदनालिङ्गसामान्यनिबन्धनातिदेशस्याप्यप्रवृत्तेः । एवंच यागत्वनिर्वाहाभावादाग्नेयाधिकरण इव कर्ममात्रविधिर्न संभवतीति भावः । **ननु** ग्राह्यविशेषापरिज्ञानात्प्रयोजनाभावाच्च ग्रहणविधिरप्यनुपपन्न इत्यत आह—**तयोरिति** । ज्योतिष्टोमाव्यभिचरितगृह्णातिशब्दोपस्थितज्योतिष्टोमाङ्गत्वेसति तत्रापि संनिपातित्वसंभवे आरादुपकारित्वस्यान्याय्यत्वात् सन्निपातित्वस्य सोमसंस्कारद्वारैव वक्तव्यत्वात्संस्कार्यसोमाख्यग्राह्यलाभः क्रतूपकारलक्षणप्रयोजनलाभश्चेति भावः । **ननु** चतुर्जुह्वां गृह्णाति चतुर्ध्रुवायां गृह्णातीति गृह्णातेर्दर्शपूर्णमासयोरपि दर्शनान्न ततो ज्योतिष्टोमाङ्गत्वलाभ इत्यरुचेराह—**अथवेति** । **वाक्यमिति** । 'देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दांसि सवनानि समवस्थापयन्नित्यादि देवा वै प्रबाहु ग्रहानगृह्णत स एतं प्रजापतिरंशुमपश्यत्तमगृह्णीतेत्यादि चेति शेषः । **गुणेति** । यथा रेवत्यधिकरणपूर्वपक्षे यजिपरेण विधिना कृत्वा शब्दार्थविधिरेवमदाभ्यवाक्येऽपि गृह्णातिशब्दार्थविधिरुपपद्यत इति भावः । सूत्रार्थस्तु—अद्रव्यत्वात् द्रव्यस्य तदुपलक्षितदेवतायाश्चालाभात् केवले गृह्णातौ कर्मशेषः । ज्योतिष्टोमकर्माङ्गविधिरेव स्यादिति ॥

**अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥** विषयवाक्यमुक्त्वा पूर्वोत्तरपक्षसौकर्यार्थमाह—**तथेमानीति, गुणो विधीयत इति** । यद्यपि य एवं विद्वानग्निं चिनुत इति वाक्ये चयनमात्रमेव विधीयते नतु ज्योतिष्टोमादिगुणत्वेन तथापि तस्य चयनस्याथातोऽग्निमित्यादिवाक्यैः ज्योतिष्टोमाद्यङ्गभावावगमाज्ज्योतिष्टोमे गुणभूतं नतु स्वतन्त्रमिति द्वितीयपक्षाद्भेदप्रदर्शनाय गुण इत्युक्तम् । पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति** । प्रथमपक्षे सत्येव सिद्धान्तपक्षं निराकृत्य द्वितीयपक्षं निराकरोति—**तदभाव इति** । नच ऋध्नोत्येवेत्यार्थवादिकफलश्रवणात्स्वातन्त्र्यं शङ्कनीयम् । फलवत्त्वे संस्कारत्वस्यैवानुपपत्तेरिति भावः । ननु यागविधौ चिनोतेः कथमन्वयः पूर्वाधिकरणपूर्वपक्षे ग्रहणस्येव चोदकप्राप्त्यभावेनानुवादासंभवादित्यत आह—**चिनोतिरिति** । पूर्वपक्षे य एवं विद्वानितिवा-

---

१ यां नैव. २ सन्निपत्योपकारित्वम्. ३ शीघ्रं.

नुवादो निर्वपतिवत्, कथं पुनरसति यजिश्रवणे यागविधानम्। उच्यते—अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारितेऽ'थातोऽग्निमग्निष्टोमेनानुयजन्तीति यदग्निं यजति तदाग्निष्टोमेने'ति संस्थाविधिपरे वाक्ये यजतिनानुवादादुत्पत्तौ यागवचनोऽग्निशब्द इति गम्यते। यद्यपि नायं संस्थाविधिः किंत्वग्निष्टोमसंस्थेन यागेनाग्निमनुयजन्तीति तथाप्यग्नेर्यागत्वम्। नह्यन्यथाभूतमन्यैरनुयष्टुं शक्यते। यथा देवदत्तमनुगच्छति यज्ञदत्त इत्युक्ते देवदत्तोऽपि गच्छतीति प्रतीयते, अन्यथाऽनुगमानुपपत्तेरेवमनुयजनवशादेवाग्नेर्यागत्वसिद्धिः। तस्माद्यागविधानं स्यादिति प्राप्तेऽभिधीयते—'अग्नेश्चयनसंस्कारमात्रमत्र विधीयते॥ तस्याथातोऽग्निमित्यादिवाक्यैः स्यात्क्रतुसङ्गतिः॥ वह्नौ रूढोऽग्निशब्दोऽयं नहि यागस्य वाचकः॥' नह्यग्निशब्दोत्यन्तरूढत्वाद्वाक्यभेदतत्प्रख्यतव्यपदेशविधुरत्वाच्च यागनामत्वं प्रतिपद्यते। तेन ज्वलनस्यैवायं चयनसंस्कारो विधीयते। तस्यच संस्कारस्य क्रतुसंबन्धपराण्यथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यादीनि। अत्राग्निशब्दः प्रकरणाच्चयनसंस्कृतेऽग्नौ वर्तते। अनुशब्दश्चयनापेक्षया पश्चाद्भावमग्निष्टोमादीनामाह। तेन चयनसंस्कृतेऽग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः। नत्वत्राप्यग्निशब्दो यजिसमानाधिकरणो येन नाम स्यात् न चावश्यं तुल्यरूपाणामेव पौर्वापर्यं। पाकमनुभुङ्क्ते इत्यादिषु विजातीयानामपि दर्शनात्। तस्मादपि ज्योतिष्टोमादिषु गुणविधिः॥

---

क्यस्य यागविधायकत्वेन चयनविधायकत्वाभावादिष्टकावाक्यमिष्टकाविशिष्टचयनविधायकं तच्च प्रकरणात् य एवंविद्वानिति वाक्यविहितयागाङ्गमिति तद्वाक्यप्राप्तचयनानुवादश्चिनोतिरित्यर्थः। अंशुवाक्यवदिहापि यागविधानानुपपत्तिरित्याशयेन पृच्छति—**कथमिति**। अस्त्यत्रातिदेशात्प्रागेव यागत्वाध्यवसाय इति वैषम्यमभिप्रेत्य परिहरति—**उच्यत इति**। **संज्ञयैवेति**। आहवनीयाग्निप्राप्तेरग्निशब्दस्तत्प्रख्यन्यायेन नामधेयमिति भावः। **अथात इति**। अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तं षोडशिना तमतिरात्रेण तं द्विरात्रेणेत्यादीनि चतुर्दश वाक्यानि श्रूयन्ते तत्रोक्थ्यादिवाक्येष्वनुयजन्तीति क्रियापदमनुषज्यते। तत्राद्यानि चत्वारि वाक्यानि अग्निनामकयागस्य संस्थाविधिपराणि तं द्विरात्रेणेत्यादीनि दश वाक्यानि तस्यैव यागस्य कालविधायकानि। ततश्च तेषु सर्वेषु वाक्येषु यजतिनानुवादादनुवादे यागसामानाधिकरण्येनाग्निशब्दस्य यागनामत्वाध्यवसायादस्ति प्रथमतो यागत्वनिश्चयः। तन्निर्वाहश्चाव्यक्तत्वात्सौमिकधर्मप्राप्त्या सुकर इति भावः। एवंच संस्थाविधिपर इत्युपलक्षणं, कालविधिपर इत्यपि बोध्यम्। अनुशब्दश्चेष्टकाभिरिति वाक्यप्राप्तचयनानन्तर्यस्य य एतेनेति वाक्यावगताग्निष्टोमानन्तर्यस्य वाऽनुवादक इति भावः। **ननु** अनुवादत्वेऽनुशब्दस्यानर्थक्यमित्यस्वरसादनुशब्दस्य कर्मप्रवचनीयत्वमाश्रित्याग्निमनु अग्निष्टोमादिसंस्थेन यजन्तीत्येवं सिद्धान्त्यभिमतवचनव्यक्तिस्वीकारेणापि यागविधानमुपपादयति—**तथापीत्यादिना**। सिद्धान्ते इमानि वाक्यान्यग्निविनियोजकानि। तत्राग्निष्टोमसंस्थायाः क्रत्वर्थत्वादग्नेस्तादर्थ्यासंभवादग्निष्टोमसंस्थेन यागेनेति तत्रैव यागलक्षणा, उक्थ्यादिवाक्येषु तु उक्थ्यादिशब्दानामुक्थ्यादिसंस्थामात्रपरत्वमेव नतु तद्युक्तयागपरत्वम्। तासामेव संस्थानां फलवत्त्वेनाग्निंप्रति शेषित्वसंभवादिति ध्येयम्। **नह्यन्यथेति**। तुल्यरूपेष्वेव पौर्वापर्यदर्शनादिति भावः। अत्र विद्वद्वाक्य इत्यर्थः। नहि विद्वद्वाक्येऽग्नियागविधिरिष्यते। येनाहवनीयादिप्रापकशास्त्रादेव विधित्सितगुणप्राप्तेर्नामत्वं स्यात्। किंतु प्रसिद्धाग्न्यनुवादेन तस्य संस्कारो वैयधिकरण्येन विधीयतेऽतो नात्र तत्प्रख्यन्यायावतार इत्याशयेनाह—**तेनेति**। तथाच यागविधेरभावादग्निष्टोमादिवाक्यानां न संस्थाविधिपरत्वमित्याशयेनाह—**तस्यच संस्कारस्येति**। ननु तेषु वाक्येषु केवलाग्निशब्दश्रवणात्कथं तत्संस्कारस्य क्रतुसंबन्धसिद्धिरित्यपेक्षायां तेषां वाक्यानां क्रतुसंबन्धविधिपरत्वमुपपादयति—**अत्रेति**। अनुशब्दः पश्चाद्भावमाहेत्युक्त्या चयनानन्तर्यरूपगुणविधित्वमेवैषामिति कस्यचिद्भ्रमः स्यात्तन्निराकरणाय निकृष्टार्थमाह—**तेनेति**। एवंचाग्निष्टोमादिवाक्येषु यजिसामानाधिकरण्यं यदुक्तं तद्भ्रममित्याह—**नत्वत्रेति**। यदपि सिद्धान्तवचनव्यक्त्याश्रयणेनापि यागविध्युपपादनं तन्निषेधति—**नचावश्यमिति**। सूत्रार्थस्तु अग्निरग्निशब्दो यागनामप्रतीयेत। अग्निस्तोत्रमग्नेः शस्त्रमिति स्तोत्रशस्त्रयुक्ततया निर्देशरूपलिङ्गदर्शनात् स्तोत्रशस्त्रयोः क्रत्वेकसंबन्धित्वादिति स्तोत्रशस्त्रवाक्येऽनुपपत्तिबलात् लक्षणयाग्निशब्दस्य तद्युक्तक्रतुपरत्वमात्रेण विद्वद्वाक्ये यागनामत्वमग्निशब्दस्य नाभ्युपेयमिति सिद्धान्ताशयः॥

---

१ अतोग्निमित्यादिवाक्येषु. २ उक्थ्यादिसंस्थासु फलश्रवणात्.

मासाग्निहोत्रादीनां कर्मान्तरताधिकरणम् ॥ ११ ॥

## प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

**मासं जुहोत्यग्निहोत्रं गुणोऽन्यत्कर्म वा गुणः ॥ अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥ २६ ॥**
**उपसद्भिश्चरित्वेति नित्ये तासामसंभवात् ॥ अनेकस्याविधेश्चान्यत्कर्म प्रकरणान्तरात् ॥ २७ ॥**

गुणभेदप्रसङ्गे समाप्तेऽधुना प्रकरणान्तरेण भेदोऽभिधीयते । कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति मासं दर्शपूर्णमासाभ्यां यजन्त' इत्यादि श्रुतं तत्र संदेहः किं नैयमिकाग्निहोत्रादौ मासो विधीयते किंवा कर्मान्तरमिति । तदर्थं किमनुपादेयगुणसंबन्धानुगृहीतोऽसन्निधिर्भेदकारणं भवत्युत नेति । 'तत्राग्निहोत्रशब्देन तत्कर्मोपस्थितं यतः । तस्मात्तत्रैव मासो[1]ऽयमप्राप्तत्वाद्विधीयते ॥' उपादेयमनुपादेयं वा यदप्राप्तं तदेव विधेयं मासश्च तथा यच्च प्राप्तं तदनुवाद्यमग्निहोत्रशब्दएव स्वाभिधेयं कर्मोपस्थापयति । तच्च प्राप्तं न विधेयम् । अतो यद्यपि स्वभावतोऽनुपादेयं मासमुद्दिश्य कर्मोपादीयते तथापि मासएव विधेयो न कर्म । विधिनिबन्धनश्च भेदो नोपादाननिबन्धनः, तस्मादुपादेयमपि कर्माविधीयमानं न भिद्यत इति प्राप्तेऽभिधीयते 'प्रकरणान्तरे प्रयोजनान्यत्व'मिति किमिदं प्रकरणान्तरमिति । अप्रकृताभिधानमित्यर्थः । कथमप्रकृताभिधानं । उच्यते—उपसद्भिश्चरित्वेति वचनान्नहि नैयमिकस्योपसदः सन्ति । तत्र ताश्च मासश्चेत्यनेको गुणः प्राप्ते कर्मणि न शक्यते विधातुमिति कर्मान्तरम् । अत्र चाप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः अप्रकृताभिधानं तु गुणादिति न गुणाद्भेदः । यद्येवं वाजिभ्यो वाजिनमित्यत्राप्यप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः । अप्रकृताभिधानं तु पूर्वकर्मासंयोगिनो गुणादिति । तत्रापि प्रकरणान्तरमेव भेदकं स्यान्न गुणः । तथा शब्दान्तराभ्याससंज्ञाभिरप्यप्रकृतविषयतैव विधेर्बोध्यते न साक्षाद्भेदः । स तु विधेरप्रकृतविषयत्वात्सिद्ध्यतीति सर्वत्र प्रकरणान्तरमेव भेदकं स्यान्न शब्दान्तरादयः । अथैतेषामेतदेव भेदकत्वं यद्विधेरप्रकृतविषयत्वापादनम् । एवंसत्यत्रापि गुणा[2]देव तत्सिद्धेः सएव

---

**प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥ गुणभेदेति ।** अंश्वदाभ्यादिविकारश्च प्रासङ्गिकस्तत्र पक्षद्वयेऽपि कर्मभेदात्तस्यच भेदस्य नामनिबन्धनत्वादिति द्रष्टव्यम् । मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधेन मासं शुनासीरीयेण मासं त्रिवृता मासं पञ्चदशेनेत्यादिरादिशब्दार्थः । यदाहवनीये जुह्वति अग्निष्टोमे प्रवृणक्तीत्यादिव्यावृत्त्यर्थमनुपादेयसमभिव्याहृतेत्युक्तम् । **ननु** नैयमिकाग्निहोत्रादेरसन्निहितत्वेनानुपस्थितत्वात्तत्र कथं मासगुणविधिरित्याशङ्क्यासंनिहितस्यापि नाम्ना उपस्थितिर्नानुपपन्नेत्याह—**तत्रेति । ननु** मासस्य पुरुषकृत्या संपादयितुमशक्यत्वादनुपादेयस्य कथं विधेयत्वमित्याशङ्क्य मासस्यानुपादेयतया यो मासस्तत्र होमं कुर्यादित्येवंशब्दतो मासोद्देशेन कर्मविधिप्रतीतावपि अप्राप्तपक्षपातित्वाद्विधेः कर्मिणि मासएव विधेय इत्याह—**उपादेयमिति ।** शब्दान्तराधिकरणोक्तरीत्या विहितस्य विधानानुपपत्त्या हि भेदो वक्तव्यस्तत्र च विधानमेवोपयुज्यते नोपादानमित्यर्थः । तत्र भाष्ये आपाततः प्रतीयमानं प्रकरणान्तरशब्दार्थमाह—**अप्रकृतेति ।** प्रागपरिज्ञातकर्माभिधानमित्यर्थः । यद्वा प्रागवगतकर्मानभिधानमित्यर्थः । **ननु** अग्निहोत्रशब्दः स्वाभिधेयं नैयमिकाग्निहोत्रमुपस्थापयतीत्युक्तत्वादिदमयुक्तमिति पृच्छति—**कथमिति ।** वाक्यभेदप्रसङ्गात् प्रसिद्धाग्निहोत्रं परित्याज्यमिति परिहरति—**उच्यते इति ।** ननु 'मासं दीक्षिता भवन्ति ते मासि सोमं क्रीणन्ति तेषां द्वादशोपसदः उपसद्भिश्चरित्वा सोममुपनह्य मासमग्निहोत्रं जुहोती'ति ताण्डिब्राह्मणे आम्नानात्प्राप्तोपसदानन्तर्यानुवादकत्वेनोपसद्भिश्चरित्वेत्यस्योपपत्तेः वाक्यभेदाप्रसङ्गात्कथं प्रसिद्धाग्निहोत्रे गुणविधेर्निरास इत्यत आह—**नहीति ।** प्रसिद्धाग्निहोत्रस्य कुण्डपायिनामयनस्य च अङ्गाङ्गिभावाभावेन एकप्रयोगवचनपरिगृहीतत्वाभावाद्दीक्षितो न ददाति न जुहोति न यजतीति सोमयागमध्ये पुरुषार्थहोमनिषेधेन सांतपनीयाग्निहोत्रयोरिव दैवादेककालोपनिपाताभावाच्च क्रमाकाङ्क्षाविरहात्कामेष्टीनामिवात्र पाठो न क्रमप्रापकः । एवंच पाठप्राप्तक्रमानुवादकत्वेनोपसद्भिश्चरित्वेत्यस्योपपत्त्यसंभवात् प्रसिद्धाग्निहोत्रेऽनेनोपसदस्तदानन्तर्यं मासश्च विधेया इति स्वीकार्यमिति वाक्यभेदो दुरुद्धर इति भावः । **नन्वेवं** गुणनिमित्तक एव भेदः स्यादित्यत आह—**अत्रचेति ।** इमं पक्षं दूषयति—**यद्येवमिति । सर्वत्रेति ।** संज्ञाव्यतिरिक्तस्थल इत्यर्थः । ननु शब्दान्तरादीनां साक्षाद्भेदकत्वाभावेऽपि परंपरया तदस्तीति शङ्कते—**अथेति ।** द्वारद्वारिभावापन्नयोरुभयोरपि एकविषयत्वादेकपरिगणनेनैवेतरस्यार्थात्सिद्धेरुभयोः

---

१ मप्राप्तो हि विधीयते. २ गुणात्तत्सिद्धेः.

भेदकः स्यादिति न प्रकरणान्तरं शब्दान्तरादिभिः सह संख्यातुं युज्यते । तद्धि साक्षाद्भेदकं सर्वत्रान्येतु तद्धेतव इत्यतुल्यत्वात्कथं सहगणनम् । अपिच मासं दर्शपूर्णमासाभ्यां यजेतेत्यत्रानेकगुणाभावान्नाप्रकृताभिधानं सिध्येत् । तस्मान्नाप्रकृताभिधानं प्रकरणान्तरं किंत्वन्यदेव गुणादिवदप्रकृताभिधानहेतुभूतमिति वक्तव्यम् । किं पुनस्तत्पूर्वकर्मासंनिधानं कथंपुनस्तेन भेदसिद्धिः । उच्यते —'कर्मासंनिहितं नैव बुद्धौ विपरिवर्तते । शब्दात्तु तदुपस्थानमुपादेये गुणे भवेत् ॥' असंनिहितं तावत्कर्म न बुद्धौ विपरिवर्तते तादृशमपि कथंचिज्जुहोतीति प्राप्तवन्निर्देशेन दूरस्थमपि उपस्थाप्येत यदि विधित्सितो गुण उपादेयः स्यादाहवनीयादिवत् । तत्र हीदृशी वचनव्यक्तिः शक्यते दर्शयितुं यज्जुहोति तदाहवनीय इति । 'यत्र वाक्येऽनुपादेयो देशकालादिको गुणः ॥ श्रुतो न तत्र दूरस्थकर्मोपस्थानसंभवः ॥' यत्कुर्यादित्येवं प्राप्तवन्निर्देशेन दूरस्थकर्मोपस्थापनं स्यात्तथाच तस्योद्देशान्मासस्तत्रोपादेयः । नच होमानुरोधेन मासः संपादयितुं शक्यः । तेनैषा वचनव्यक्तिर्यो मासस्तत्र होमं कुर्यादिति । तेन शब्दस्वरसतः प्राप्तोपस्थानानवगमात्संनिधानाभावाच्च क्रियैव विधातव्येति

---

सह परिगणनं न स्यादित्याशयेनाह—**तद्धीति** । **अपिचेति** । नच तत्राप्युपसद्भिश्चरित्वेत्यस्यानुषङ्गादनेकगुणाभिधानमस्तीति वाच्यम् । निराकाङ्क्षवाक्येष्वनुषङ्गे प्रमाणाभावात् । **ननु** मासगुणस्याग्निहोत्रं जुह्वतीत्यनेन नान्वयः । प्राकरणिकप्रातरादिकालान्तरावरोधात् किंतु उपसद्भिश्चरित्वेत्यनेनैवान्वयः । एवं दर्शपूर्णमासादियागैरपि नान्वयः । उत्पत्तिवाक्यादिश्रुतकालान्तरावरोधादतो मासमित्यस्य दर्शपूर्णमासादिवाक्येषु साकाङ्क्षत्वादुपसद्भिश्चरित्वेत्यस्यावश्यकोऽनुषङ्गस्ततश्चोपसत्सु मासस्य दर्शपूर्णमासादिकर्मण्युपसदानन्तर्यस्य चेत्यनेकगुणस्य विधिस्तत्रापि इतिचेन्नैवम् । उपसदां चोदकेन वा कुण्डपायिनामयनगतप्रागुदाहृतताण्डिवाक्येन वा द्वादशत्वसंख्यावरुद्धत्वेन तद्विरोधेनोपसत्स्वपि मासगुणविधानासंभवस्य तुल्यत्वात्तस्मादुपसत्सु मासविधावग्निहोत्रादिकर्मणि मासविधौ च वचनान्तरावगतार्थबाधस्यावश्यकत्वान्मासगुणस्य क्रत्वर्थसापेक्षासु गुणभूतासु चोपसत्सु न विधिः किंतु तन्निरपेक्षे प्रधानभूते धात्वर्थएव विधिर्युक्त इति दर्शपूर्णमासादिवाक्येषूपसद्भिश्चरित्वेत्यस्यानुषङ्गाभावादिति भावः । वार्तिकोक्तं प्रकरणान्तरशब्दार्थमुपक्षिपति—**किंत्वन्यदिति** । **उच्यत इति** । यत्र पूर्वं कर्म संनिहितं तत्र तदनुवादेन गुणविधिः यथा दध्ना जुहोतीत्यादौ । यत्र तु कर्म न संनिहितं तत्र पूर्वकर्मप्रत्यभिज्ञानाभावेन तत्र गुणविधित्वासंभवाद्भावार्थाधिकरणन्यायेन धात्वर्थविध्यवश्यंभावाद्विहितस्य विध्यनुपपत्त्या सिध्यति कर्मभेद इत्याशयः । **ननु** पूर्वकर्मणोऽसंनिहितत्वेऽपि सगुणश्रुतौ गुणाकृष्टशक्तिकत्वाद्विधेर्यथा यदाहवनीये जुहोतीत्यादौ जुहोतिशब्देन कर्मण उपस्थापनमाश्रित्य तत्र गुणविधिः स्वीक्रियते तद्वदिह किं न स्यादित्यत आह—**शब्दादिति** । एवं चासंनिधानाद्भेद इत्युत्सर्गस्य उपादेयगुणश्रवणेऽपवादेऽप्यनुपादेयगुणस्थले न क्षतिरिति भावः । यद्यपि वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीत्यत्रोपादेयगुणस्थलेऽपि कर्मान्तरत्वं ग्रन्थकारस्येष्टमतएव सप्तमे 'तथावभृथः सोमा'दित्यत्र वक्ष्यति । यन्तीत्यनेन तु प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते । तत्र प्रयुज्यमानोऽवभृथशब्दो मुख्यावभृथसादृश्यं विदधत्तद्धर्मानतिदिशतीति तथाप्यनुपादेयगुणश्रवणवदुपादेयानेकगुणश्रवणमप्यनपवादकमिति न दोष इत्याहुः । **नन्वसंनिधानाविशेषे** उपादेयत्वानुपादेयत्वाभ्यां को विशेष इति शङ्कां निराकुर्वन् श्लोकं व्याचष्टे—**असंनिहितमिति** । **कथंचिदिति** । अभिध्यानादिना बुद्धौ विपरिवृत्तिं संपाद्येत्यर्थः । तत्राहवनीयादेर्गुणस्य कर्मोद्देशेनोपादेयत्वसंभवाद्विशिष्टविधिगौरवभीत्या कर्मण उद्देश्यत्वावश्यंभावे दूरस्थस्यापि तस्य कथंचिद्बुद्धौ विपरिवृत्तिं संपाद्य यज्जुहोतीत्येवमुद्देशसंभवात्कर्मोद्देशेन गुणविधिः संभवतीत्याशयेनाह—**तत्रहीति** । अनुपादेयगुणस्थले तु कर्मोद्देशेन गुणविधिमिच्छता[2] यद्धोमं कुर्यात्तन्मासमित्येवं वचनव्यक्तिः स्वीकार्या । नच सा स्वीकर्तुं शक्यते । कर्मोद्देशेन मासस्य दध्यादिवदुपादानानर्हतया तथा वचनव्यक्तेरयोगात्तत्र कर्मणः प्राप्तवन्निर्देशस्यासंभवेन कर्मणएव मासोद्देशेन विधिर्वाच्यस्ततश्च विहितस्य विध्ययोगात्तत्र कर्मभेद आवश्यक इत्याह—**यत्रेति** । **नचेति** । मासस्य दध्यादिवत्संपादनानयनग्रहणादिक्रियान्तराविष्टतया उपादेयत्वाभावादित्यर्थः । मासोद्देशेन कर्मोपादानेऽपि कर्मणस्तत्रैव कर्तव्यतया तत्कर्मान्तराविष्टतयैव विधेयत्वं मासे कर्मणोऽनुष्ठेयतामात्रेणैव परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणपारार्थ्यात्मकं शेषत्वं च मासस्योपपद्यत इति भावः । **ननु** पौर्णमास्यां पौर्णमास्या यजेतेत्यादौ कालोद्देशेन कर्मण उपादेयत्वेऽपि यथा न कर्मान्तरत्वं तद्वदिह किं न स्यादित्यत आह—**संनिधानेति** । तद्वैषम्यं 'संनिधौ तु अविभागा'दित्यत्र वक्ष्यते इति भावः । काले उक्तन्यायं देशनिमित्तयोरप्यतिदिशति—**एवमिति** । आगोरणं संकल्पः । अप्रवर्तमानस्य सत्रसंकल्पो विश्वजिद्यागस्य निमित्तमित्यर्थः । नचैवं य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेत्यत्राप्यनुपादेयकालसमभिव्याहारात्कर्मान्तरता स्यादिति वाच्यम् । तत्र

---

१ वरुणदेवताकाया आमिक्षायाः निष्कासो लोक इति भाषा. २ कर्मोद्देशेन प्रवृत्ता या कृतिः.

कर्मभेदः। एव 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः' 'सत्रायावगूर्य विश्वजिता यजेते'ति देशनिमित्तयोरपि द्रष्टव्यम्। **ननु** नामधेयेन भवति पूर्वकर्मण उपस्थानं भवतु धात्वर्थस्य भावना तु तेनानुपस्थानाद्भिद्यत एव धात्वर्थोऽपि यादृशो धातुनाऽऽख्यातेवर्तिनापूर्वापरीभूतो विधेरुपानीयते न तादृशो नाम्नोपस्थाप्यत इति तस्यापि युक्तो भेदस्तदभेदेऽपि भावना तावद्भिन्नेति सिद्धम्॥

आग्नेयादिकाम्येष्ट्यधिकरणम्॥ १२॥

## फलं चाकर्मसंनिधौ॥ २५॥

अष्टाकपालमाग्नेयं रुक्कामः प्राकृते फलम्॥ कर्मान्यद्वा फलं भानात्पूर्वन्यायाप्रवर्त्तनात्॥ २८॥
मा भूद्भिन्नं प्रकरणं कर्मान्तरमसंनिधेः॥ अनारभ्याधीतमेतद्रूपं त्वन्यूनमीक्षते॥ २९॥

'आग्नेयमष्टाकपालं निर्वपेद्रुक्काम' इत्यनारभ्य श्रुतं तथा 'त्रैधातवीया दीक्षणीया' इत्यश्वमेधे।

---

य इष्ट्या यजेतेति यच्छब्दसमभिव्याहृताख्यातेन कर्मणः सिद्धतयैव प्रतीत्या तद्विरोधेन यः पौर्णमास्यादिकालस्तत्रेष्ट्या यजेतेत्येवंरूपवचनव्यक्तिस्वीकारस्यायुक्ततया कर्मणो विध्यसंभवे यथाश्रुतवचनव्यक्तिस्वीकारेणैव य इष्ट्या यजेतेत्यनेन दूरस्थमेव कर्म सिद्धतयानूद्य द्वितीयेनाख्यातेन तत्र गुणविधेरेव वाक्ये स्वरसतः प्रतीयमानस्य स्वीकर्तव्यत्वादिति भावः। **नन्व**संनिधानात्संनिधिकृतविपरिवृत्त्यभावेऽपि नामधेयकृततद्विपरिवृत्तिः संभवति। नच नाम्नाविपरिवर्तमानेऽपि तस्मिन्ननुपादेयमासविध्यसंभवाद्विपरिवृत्तिरप्रयोजिकेति वाच्यम्। प्रसिद्धाग्निहोत्रे मासविध्यसंभवेऽपि प्रसिद्धस्यैवाग्निहोत्रस्य नाम्ना विपरिवर्तमानस्य कुण्डपायिनामयनाङ्गत्वेन विधिसंभवादिति शङ्कते—**नन्विति**। प्रथमं नामधेयेन धात्वर्थस्य विपरिवृत्तिमभ्युपगम्य परिहरति—**भवत्विति। तेनेति**। अग्निहोत्रादिशब्दो हि धात्वर्थस्यैव नामधेयं न तु भावनाया इति तेन भावनोपस्थित्यसंभवात्प्रसिद्धाग्निहोत्रस्य कुण्डपायिनामयनाङ्गत्वेन विधानेऽपि भावनाभेदोऽपरिहार्य इति भावः। इदानीमभ्युपगमं परित्यजति—**धात्वर्थोऽपीति। यादृश इति**। लिङ्गसंख्याद्यन्वयानर्होऽसत्वभूत इत्यर्थः। ननु नाम्ना तद्रूपोपस्थित्यभावेऽपि नैयमिकाग्निहोत्रेऽग्निहोत्रशब्दो यद्रूपवाचकस्तद्रूपविपरिवृत्तिरस्त्विति शङ्कां निराकर्तुं विधेरुपनीयत इत्युक्तं। प्रसिद्धाग्निहोत्रस्य विध्यर्थं हि त्वया विपरिवृत्तिरुच्यते। विधिश्च सिद्धरूपस्य नामोपस्थाप्यस्य न संभवति भावार्थाधिकरणे चाधात्वर्थस्य विधिविषयाकारसमर्पणं धातुनैव न नाम्नेति प्रतिपादनात्तश्च सिद्धरूपस्य विपरिवृत्तिर्विध्यनुपयुक्तेति भावः। **विधेरुपानीयते इति**। परिहारग्रन्थे विध्युपयोग्युपस्थितिर्नाम्ना न संभवतीति प्रतिपादनादस्माभिः शङ्कायां प्रसिद्धाग्निहोत्रस्य कुण्डपायिनामयनाङ्गतया विधौ तात्पर्यं वर्णितमिति बोध्यम्। **ननु** यत्र नामधेयं प्रसिद्धं तत्राख्यातं नामपरतन्त्रं यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्याख्यातं अग्निहोत्रादिनामधेयं च प्रसिद्धार्थमितीहापि आख्यातस्य नामपरतन्त्रत्वात्तदनुसारेण प्रसिद्धस्यैवाग्निहोत्रस्य कुण्डपायिनामयनाङ्गतया विधिरस्त्विति चेन्मैवम्। नहि दर्शपूर्णमासज्योतिष्टोमफलवाक्यगतं नामधेयं स्वातन्त्र्येण कंचिदर्थमुपस्थाप्य तत्राख्यातमवस्थापयतीत्येवंरूपं नामधेयस्य स्वातन्त्र्यमाश्रित्याख्यातस्य तत्पारतन्त्र्यमिष्यते येन प्रकृतेऽपि तन्न्यायेन नामोपस्थापितप्रसिद्धाग्निहोत्रे आख्यातावस्थानं स्यात्। तत्रापि हि नामधेयं प्रधानभूताख्यातमुखप्रतीक्षं सत् स्वरसोपस्थितार्थ एव वर्तते तत्र संनिधिवशादाख्यातेन स्वरसोपस्थिताग्नेयादिव्यतिरिक्तार्थे नामधेयानामाख्यातव्यवस्थापकत्वाभावात् किंतु संनिध्यविशेषादाख्यातेन प्राकरणिकसर्वकर्मपरामर्शप्रसक्तौ तन्मध्य एव केषुचित्कर्मस्वाख्यातं नामधेयानि संकोचयन्तीत्येतावन्मात्रम्। तस्मादिहाप्याख्यातस्वरसावगतार्थ एव नाम्नः प्रसिद्धस्यापि प्रवृत्तिर्वाच्या। आख्यातं चासंनिधानात्स्वरसतः कर्मान्तरमेवोपस्थापयतीति तत्रैव नाम्नः साप्तमिकन्यायेन सादृश्याद्वृत्तिरिति सिद्धं कर्मान्तरत्वमिति भावः। एवंच 'अतिरात्रः चतुर्विंशश्चत्वारोऽभिप्लवाः षडहा' इत्यादौ यत्राख्यातं नास्ति तत्र केवलनामधेयेन प्रसिद्धस्यैव कर्मणोऽतिरात्रः कार्य इत्येवंविधिसंभवान्न तत्र धात्वर्थभेदः किंतु भावनामात्रभेदः। तदुक्तं—'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुते'रिति 'एकादशिनीवत् त्र्यनीकापरिवृत्तिः स्या'दिति दाशमिकाधिकरणे अभिप्लवषडहगतज्योतिरादिषु गवामयनगतेष्वैकाहिकधर्मातिदेशोक्तिश्च कर्मभेदाभावाद्भावनाभेदमात्रेणोपपादनीयेइति प्रौढिवादेन वार्तिकोक्तं सर्वत्र भावनाभेदपक्षमाह—**तदभेदेऽपीति**। प्रयोजनं पूर्वपक्षे प्रसिद्धाग्निहोत्रे यावज्जीवादिकालैर्मासस्य विकल्पः कुण्डपायिनामयने अग्निहोत्रानुष्ठानं च। सिद्धान्ते तु तदुभयाभाव इत्यादिसूत्रे प्रयोजनशब्दो धात्वर्थपरः॥

**फलं चाकर्मसंनिधौ॥ २५॥** पूर्ववदित्यनेन पूर्वन्यायातिदेशात्सङ्गतिरिति सूचितम्। यजमानसंस्कारवाचकशब्दाभावात्कथं तत्र त्रैधातव्या विधिरिति शङ्कानिराकरणार्थमुक्तं। **दीक्षणीया कार्येति**। दीक्षणीयाशब्दस्तत्कार्ययजमा-

---

१ कर्मोपस्थापनं. २ रुपादीयते. ३ रुक्कान्तिः. ४ त्रैधातव्या. ५ प्रयाजादिरूपे.

तत्रापि पूर्ववत्संशयः। किं प्रकृत आग्नेये फलविधिः काम्ये च त्रैधातवीये कर्मणि दीक्षणीया कार्ये यजमानसंस्कारविधिः उत कर्मान्तरविधिरिति । तदिह पूर्वत्र यः प्रकरणान्तरग्रहणात्तदेव भेदके नासंनिधानमात्रमिति मन्यते । यो वा फलस्योपादेयत्वं मन्यते शक्यते तद्दर्शपूर्णमासस्थेनापि कामयितुं न मासादिवदशक्यसंपादनमिति तन्निराकरणार्थमिदमधिकरणम् । पूर्वत्राप्यविपरिवृत्ति-कारणत्वादसंनिधानमेव कारणं न प्रकरणान्तरं, सदपि तत्र व्याप्रियते । तच्चासंनिधानमत्राप्यवि-शिष्टम्। यद्यपि फलं शक्यं कामयितुं तथापि स्वरसादेव तत्काममुद्दिश्य साधनमेवोपादेयं न फलं फलत्वव्याघाताद्विधीयमानं हि तदङ्गमेव स्यात्। एवं संस्कारेऽपि द्रष्टव्यम् । नचाग्नेयेऽग्निहोत्रव-न्नामधेयत्वमस्ति येनाभेदाशङ्कापि तावत्स्यात्। तस्मादत्रापि कर्मभेदः ॥

अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ॥ १३ ॥

## संनिधौ त्वविभागात्फलार्थेन पुनःश्रुतिः ॥ २६ ॥

यजेत्समे पौर्णमास्यां यावज्जीवं तथैतया ॥ अन्नाद्यकाम इत्यादौ कर्मभेदोऽथवा गुणः ॥ ३० ॥
विध्युपादानयोरैक्याद्देशादेरनुपपत्तितः ॥ आवश्यके कर्मविधौ तद्भेदः पुनरुक्तितः ॥ ३१ ॥
देशादियोगस्याप्राप्तेर्विधिर्न ह्येकता तयोः ॥ पुंशब्दयोर्व्याप्रुतिस्त्वात्पुनरुक्त्वा त्वनूद्यते ॥ ३२ ॥

सर्वेषामेव देशकालनिमित्तफलसंस्कार्याणां संनिधौ प्रत्युदाहरणार्थमिदमारभ्यते। 'समे दर्शपूर्ण-मासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, एतयान्नाद्य-

---

नसंस्कारलक्षणार्थक इति भावः। अतिदेशस्य विशेषाशङ्कानिराकरणार्थत्वमित्याशयेन तामाह—**पूर्वत्रेति । तदेवेति ।** परप्रकरणगतत्वलक्षणप्रकरणान्तरमेवेत्यर्थः। अस्य प्रकारस्य त्रैधातवीयवाक्याव्यापनात्प्रकारान्तरमाह—**योवेति** । ननु पुरुषप्रवृत्त्यविषयस्य फलस्य कथमुपादेयत्वमित्यत आह—**शक्यत इति** । कामनामुखेन फलस्यापि पुरुषप्रवृत्तिविषयत्वं संभवतीति भावः। दर्शपूर्णमासस्थेन यजमानेन रुक्कामसंपादनवत्काम्यत्रैधातवीयाप्रयोगेणैवाश्वमेधे यजमानसंस्कारस्यापि संपादयितुं शक्यत्वात्तत्रापि न कर्मान्तरत्वमित्यनेनैवोक्तप्रायम्। **मासादिवदिति**। देशनिमित्तसंग्रहार्थ आदिशब्दः। सरस्वत्या दक्षिणेतीरे इति स्वतःसिद्धस्यैव देशस्य ग्रहणादनुपादेयत्वं प्राक्सिद्धस्यैव निमित्तत्वात्तस्याप्यनुपादेयत्वमतएव देश-कालनिमित्तानि पूर्वाधिकरण एवोक्तानि। इदं तु फलसंस्कार्यमात्रविषयमिति भावः। प्रथमप्रकारं निरस्यति—**पूर्वत्रेति।** द्वितीयं निरस्यति—**यद्यपीति** । स्वरसादितिकामनामुखेन फलस्य प्रवृत्तिविषयत्वस्वीकारे कामनाविधिबलात्संपाद्या स्यात्। नचात्र समुद्रमनोध्यानादिवद्विधितः कामना संपाद्यते किंतु स्वरससिद्धैव। ततश्च स्वारसिककामनामुखेन फलस्य विध्यधी-नप्रवृत्तिविषयत्वासंभवेनोपादेयत्वासंभवात् उद्देश्यत्वमेवेति तदुद्देशेन कर्मैव उपादेयमित्यर्थः । नन्वस्तूद्देश्यत्वं तथापि देशादिवद्विधेयत्वं किं न स्यादित्यत आह—**फलत्वेति**। व्याघातमेवोपपादयति—**विधीयमानं हीति** । विधेयत्वे देशकालवदेवाङ्गं स्यात्तस्माद्देशकालयोः सिद्धवत्काररूपोद्देश्यत्वेऽपि कर्मणस्तत्रानुष्ठेयतया तद्विशिष्टवेषेण तयोरपि विध्यधी-नप्रवृत्तिविषयतया विधेयत्वमुपपद्यते फलस्य तु स्वारसिकप्रवृत्तिविषयत्वलक्षणप्रयोजनरूपेणोद्देश्यत्वम्। तच्च विधेयत्ववि-रोधि। विधेयत्वे विध्यधीनप्रवृत्तिविषयत्वापत्त्या स्वारसिकप्रवृत्तिविषयत्वरूपप्रयोजनत्वव्याघातादिति वैषम्यमिति भावः। संस्कार्यस्यापि विध्यन्तरसिद्धस्य फलवदुद्देश्यतया तद्वदेव प्रधानत्वात्तद्व्याघातप्रसङ्गान्न विधेयत्वमित्याह—**एवमिति।** प्रयोजनं पूर्वपक्षे रुक्कामार्थं न पृथक्प्रयोगः किंतु गुणफलवद्दर्शपूर्णमासप्रयोगेणैव तत्सिद्धिः । सिद्धान्ते तु कर्मान्तरत्वात्पृ-थक्प्रयोग इति। इदंच प्रयोजनं शक्यते हि तद्दर्शपूर्णमासस्थेनापि कामयितुमिति ग्रन्थेनैव सूचितम् । केचित्तु फलं च फलसंस्कार्यदेशकालनिमित्तलक्षणमनुपादेयपञ्चकमेव प्रकरणान्तरलक्षणप्रमाणस्य सहकारि न परप्रकरणपाठः। फलाद्यात्मका-नुपादेयसमभिव्याहारादसंनिधौ सति तत एव भेदसंभवात् इत्यस्य सूत्रस्यासंनिधिप्रयोजकफलाद्यनुपादेयपञ्चकप्रदर्शनमात्रे तात्पर्यं प्रकरणान्तरशब्दस्यासंनिधानार्थकस्य व्याख्यातृवचनादप्यवगतिसंभवात्फलविधेयत्वस्य लिप्सासूत्रे षष्ठाध्यायादौ च बहुधा निरासाच्च। प्रागुक्तविशेषाशङ्काप्रकारद्वयस्यापि मन्दत्वेनाधिकरणान्तरानर्थक्यात्ततश्चानुपादेयपञ्चपरत्वमेव सौत्रफल-पदस्य नतु फलसंस्कार्यमात्रपरत्वमिति वदन्ति ।

**संनिधौ त्वविभागात्फलार्थेन पुनःश्रुतिः ॥ २६ ॥** अनुपादेयसहकृतासंनिधेर्भेदकत्वेऽभिहिते फलमात्रप्रत्यु-दाहरणायोगात्सूत्रे फलग्रहणं भाष्ये तदुदाहरणं चोपलक्षणमिति सूचयन्नेव सङ्गतिमाह—**सर्वेषामिति** । समे इत्यादीनि त्रीणि वाक्यानि दर्शपूर्णमासयोर्देशकालनिमित्तपराणि। अवेष्टेः फलपरमेतयेति वाक्यं स्विष्टकृतं यजन्तीति विहितस्विष्ट-

---

१ णामसंनिधिप्रत्यु.

कामं याजयेत शेषात्स्विष्टकृते समवद्यती'ति । तत्र संशयः । कर्मसंनिधौ किं देशादिसंबन्धे कर्मभेदो भवत्युत प्रकृतमेव कर्म देशादिषु विधीयत इति विचारः । किं प्राप्तम्—'अत्रापि तावद्देशादेरुद्देशात्कर्म तत्प्रति ॥ उपादेयं तथाच स्याद्विधेयं तेन भिद्यते ॥' विधानमेवोपादानं नान्यत् । अत्रच देशादेरुद्देश्यत्वात्कर्मावश्यमुपादेयम् । ततश्च विधेयत्वापत्तेर्विहितस्य विधानायोगात्सत्यपि संनिधौ कर्मान्तरमिति प्राप्ते ब्रूमः—'संनिधावविभक्तत्वं कर्मणः प्रत्यभिज्ञया ॥ गम्यते तेन तस्यैव फलाद्यर्था पुनःश्रुतिः ॥' निर्देशगतस्वातन्त्र्यपारतन्त्र्यात्मके उद्देशोपादाने प्राप्ताप्राप्तवशौ[1] तु विध्यनुवादौ । अतस्तयोस्ताभ्यां भेदादुपादेयमपि कर्म देशकालयोः पूर्वं प्राप्तं तद्रूपमेव प्रत्यभिज्ञायत इत्यनुवाद्यम् । तस्य तूद्देश्याभ्यामपि देशकालाभ्यां संबन्धमात्रमप्राप्तमिति तन्मात्रं विधीयत इति न कर्मभेदः स्यात् । अस्तु तावद्देशकालयोर्विधेयत्वात्कर्मणोऽनुवादः । निमित्तफलसंस्कार्याणां त्वविधेयत्वात्कर्मैव विधेयमिति भेदः स्यात् । 'सत्यं कर्म विधातव्यं तथापि तु न भिद्यते ॥ उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र नः ॥' कर्मस्वरूपगताऽप्रवृत्तप्रवर्तनमुत्पत्तिः[2] । नचैकस्मिन्कर्मणि उभाभ्यामप्रवृत्तप्रवर्तनं संभवतीति कर्मभेदः स्यात्, संभवति त्वन्येनाप्युत्पादितस्यान्येन निमित्तादिसंबन्धप्रतिपादनं कर्तव्यतामात्रं ह्युत्पत्तिवाक्यादवगतं तत्तु कस्मिन्निमित्ते कस्मै वा कामायेति विशेषापेक्षायामुत्पन्नस्यैत्र कर्मणो नैमित्तिकी कर्तव्यता निमित्तवाक्ये प्रतिपाद्यते फलविनियोगश्च फलवाक्ये संस्कारविनियोगश्च तद्वाक्य इत्यकर्मभेदः ॥

---

कृद्यागस्य संस्कार्यपरं शेषादिति वाक्यमिति विवेकः । **ननु** उपादेयत्वमात्रेण कथं विधेयत्वमित्यतस्तदुपपादनपूर्वकं श्लोकं व्याचष्टे—**विधानमेवेति** । ननु देशादेरुद्देश्यत्वेपि कर्मण उद्देश्यत्वमेवास्त्विति शङ्कानिराकरणार्थमवश्यमित्युक्तम् । उद्देश्यद्वयान्वयासंभवादेकस्य उद्देश्यत्वे इतरस्योपादेयत्वमावश्यकमिति भावः । **सत्यपीति** । ततश्च कर्मभेदेऽनुपादेयसंबन्ध एव प्रयोजको न त्वसंनिधानमिति पूर्वोक्तमनुपादेयसंबन्धस्य सहकारित्वमसंनिधेर्भेदकत्वं चायुक्तमित्याक्षिप्यत इति भावः । ततएव च सङ्गतिर्बोध्या । **संनिधाविति** । कर्मणः संनिधौ सति बुद्धौ विपरिवर्तमाने तस्मिन्नेव धातोर्वृत्तेरसंनिधिस्थल इव धातोः स्वरसतः कर्मान्तरप्रतिपादकत्वाभावात्प्रत्यभिज्ञाबलादकर्मान्तरत्वमित्यर्थः । ननूपादेयत्वे विधानावश्यंभावे विहितस्य विधानानुपपत्त्या विधिसमभिव्याहारेण धातोः कर्मान्तरपरत्वमेव स्वरसतः वाच्यमिति कथं प्रत्यभिज्ञेत्याशङ्क्योपादेयस्य विधेयत्वनियमो नास्तीत्याह—**निर्देशेति** । व्रीहीन्प्रोक्षतीति ये व्रीहय इति स्वप्राधान्येन व्रीहीन्निर्दिश्य तान्प्रोक्षेदिति तत्परतन्त्रतया प्रोक्षणं निर्दिश्यते । तत्र व्रीहीणामनन्यनिष्ठतया स्वप्राधान्येन निर्देश(श्य)त्वमेवोद्देश्यत्वं प्रोक्षणस्य चान्यनिष्ठतया पारतन्त्र्येण निर्देश्यत्वमुपादेयत्वमिति निर्देशगतस्वातन्त्र्यपारतन्त्र्ये एवोद्देशोपादाने इत्यर्थः । **प्राप्तेति** । प्राप्तबोधनमनुवादोऽप्राप्तबोधनं विधानमिति यावत् । **प्रत्यभिज्ञायत इति** । संनिधिवशादिति भावः । ननु कर्मणोऽनुवाद्यत्वाद्देशकालयोश्चोद्देश्यत्वात्कस्यापि विधियोग्यस्याभावाद्वाक्यस्य विधायकत्वमेव न स्यादित्यत आह—**तस्य त्विति** । देशकालयोर्न फलवत्प्राधान्येन प्रयोजनभावेनोद्देश्यत्वं किंतु निर्देशगतस्वातन्त्र्यमात्रम् । ततश्च दध्यादिवदानयनोपादानादिक्रियाविशिष्टतयाऽनुष्ठेयत्वाभावमात्रेण देशकालयोः स्वतन्त्रनिर्देशेऽपि फलवत्प्रयोजनतया निर्देशाभावेन विधिसंभवात्सप्तम्या च तयोः शेषत्वप्रतीतेः कर्मार्थतया तद्विधिपरमेवेदं वाक्यमित्यर्थः । **निमित्तेति** । तेषां विधेयत्वे देशकालवत्कर्माङ्गत्वापत्तेरिति भावः । तस्यैव फलाद्यर्था पुनःश्रुतिरितीमं श्लोकांशं व्याकुर्वन्नेव समाधत्ते—**सत्यमिति** । उत्पत्तिविधिभेदस्य कर्मभदप्रयोजकत्वमुपपादयति—**कर्मस्वरूपेति** । निमित्तफलवाक्ययोरधिकारविधिः संस्कार्यवाक्ये विनियोगविधिरिति । तत्रोत्पत्तिविधित्वाभावान्न भेद इत्याशयेनाह—**संभवतीति** । तदेवोपपादयति—**कर्तव्यतेति** । **फलविनियोग इति** । फलविधेरधिकारविधित्वेऽपि कर्मणः फलशेषत्वसद्भावाद्विनियोगोक्तिरित्याहुः । एवंच निमित्तादिवाक्येष्वधिकारविनियोगविधिवद्देशकालवाक्ययोः कर्मणो विधिस्वीकारेऽपि प्रयोगविधिरेवायं स्यान्नतूत्पत्तिविधिरिति न तत्रापि भेदप्रसक्तिः । पूर्ववाक्ये च देशकालयोः कर्मणोऽनुवाद्यत्वोक्तिः कर्मस्वरूपाभिप्रायेति न तद्विरोधः । एकस्मिन्नपि वाक्ये एकस्यैव कर्मणो विध्यनुवादयोरुत्पत्तिप्रयोगरूपविषयभेदेनोपपत्तेः । **नन्वेवं** मासमग्निहोत्रमित्यादावपि प्रयोगविधिरेव नोत्पत्तिविधिरित्यसंनिधानस्थलेऽपि भेदो न स्यादिति चेत्सत्यम् । अयमपि प्रयोगविधिरेव किंतु प्रयोगस्योत्पत्त्यपेक्षितत्वात्संनिहितोत्पत्त्यभावेऽयमेव विधिरुत्पत्तावपि व्याप्रियते । यथाग्नेयवाक्ये द्रव्यदेवतासंबन्धमात्रप्रतीतावपि तस्य यागंविनानुपपत्तेर्यागापेक्षायां सएव विधिर्यागमपि विधत्ते तद्वत्पौर्णमास्यां पौर्णमास्येत्यादौ तु संनिहिताग्नेयादिवाक्यैरुत्पत्तेर्लाभात्तामेवानुमन्यते नतूत्पत्तावपि प्रयोगविधिर्व्याप्रियते । यथा ऐन्द्रवायवादिवाक्येषु श्रुतस्य द्रव्यदेवतासंबन्धस्य याग-

---

१ प्राप्त्यप्राप्तिवशौ. २ प्रवृत्तपूर्वप्रवर्तन.

आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम् ॥ १४ ॥

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥२७॥ [अविभागात्तु कर्मणा द्विरुक्तेर्न विधीयते ॥ २८ ॥ अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥]**

**दर्शपूर्णमासप्रोक्त आग्नेयः केवलोऽप्यसौ ॥ दर्शे यदिति वाक्याभ्यां कर्मान्यद्वानुवादगीः ॥ ३३ ॥**

**अभ्यासादन्यकर्मत्वं दर्शेष्टौ द्विः प्रयुज्यताम् ॥ एकत्वप्रत्यभिज्ञानादनूक्त्यैन्द्राग्नसंस्तुतिः ॥ ३४ ॥**

दर्शपूर्णमासयोः'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'ति कालद्वययुक्तमाग्नेयस्यैकं वचनं, अपरं तु यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवतीत्येव कालयुक्तं । तत्र संशयः । किमुभयत्र विहितादाग्नेयात्कर्मान्तरमिदममावास्यायां विहितं उत तस्यैवानुवाद इति । तत्राभ्यासात्कर्मान्तरम् । **ननु** तत्राविशेषाद्भेदः । नहि तत्रैवं वक्तुं शक्यम् । एवमर्थेन पुनःश्रुतिरे[1]षेति विशेषाग्रहणात्सर्वे विधयः । इह त्वस्ति विशेषग्रहणं कालद्वययुक्तस्येतरा पुनःश्रुतिः संभवति । नच विपर्ययः पौर्णमास्याधिक्यादिति । नैवम् । नहि तत्राविशेषाद्भेदः । समिद्वाक्यस्य प्राथम्येन विशेषग्रहणाद्विधिः पुनःश्रुतिबला[2]त्तद्भेदः । किंचात्रापि न विशेषग्रहणं किमुभयकालयुक्तेन विहितस्येतरोऽनुवादः किंवा केवलामावास्यायुक्तेन विहितममावास्यायामाग्नेयमनूद्येतरेण केवलपौर्णमा[3]सीयुक्ताग्नेयविधिरिति । तस्मात्कर्मान्तरमिति प्राप्ते ब्रूमः—'कर्मणः प्रत्यभिज्ञानादविभागः प्रतीयते ॥ ऐन्द्राग्नस्य प्रशंसार्था तस्यैवैषा पुनःश्रुतिः ॥' इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥३॥

---

पेक्षायां सोमेन यजेतेति संनिहितयागलाभान्नैन्द्रवायवादिवाक्यानि यागविधावपि व्याप्रियन्ते तद्वदिति वैषम्यम् । प्रयोजनं पौर्णमास्यादिवाक्येषु कर्मान्तरविधौ कर्माधिक्यं सिद्धान्ते तु तदभाव इति स्फुटं एतयेति वाक्यस्य कर्मान्तरविधायकत्वे तस्मिन्कर्मण्यव्यक्तासु तु सोमस्येति सौमिकधर्मप्राप्तेरन्नाद्यकामेन सोमहविष्को यागः कर्तव्यः । सिद्धान्ते आग्नेयादिहविष्कान्नेष्टिरेवेति वार्तिके व्यक्तम् सूत्रे विभागाद्विपरिवृत्तेरित्यर्थः ॥

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत** ॥२७॥ अच्युतः सान्नाय्यवत्कादाचित्को न भवतीत्यर्थः । अविशेषाद्भेदमेवोपपादयति—**नहीति** । **पौर्णमास्याधिक्यादिति** । उत्पत्तिशिष्टगुणावरोधात्केवलामावास्याकालयुक्तवाक्योत्पन्नकर्मानुवादेन कालद्वययुक्तवाक्ये पौर्णमासीकालविध्यनुपपत्तेः कालद्वयवाक्यमेव विधिरित्यवधारणान्न विपर्यय इत्यर्थः । ननु प्राथम्यं पाठप्रयुक्तं कस्यचिदवर्जनीयमिति न ततो विशेषावधारणमित्यस्वरसादाह—**किंचेति** । केवलामावास्याकालयुक्तवाक्योत्पन्नकर्मणि कालद्वययुक्तवाक्येन पौर्णमासीलक्षणकालविधिमवलम्ब्य विशेषो नोच्यते येनोत्पत्तिशिष्टामावास्यावरुद्धकर्मणि पौर्णमासीविध्यनुपपत्तेस्तत्रैव कर्मविधिनिर्णयः स्यात् किंतु कालद्वययुक्तवाक्ये कालभेदादाग्नेययागद्वयं प्रतीयते । तत्र च केवलामावास्यायुक्तवाक्योत्पन्न अमावास्याकालयुक्त आग्नेयोऽनूद्यते पौर्णमासीकालयुक्ताग्नेययागान्तरं विधीयत इति कालद्वययुक्तवाक्ये आग्नेययागभेदमाश्रित्यात्रापि विशेषाग्रहणमुपपादयति—**किमुभयेति** । **कर्मण इति** । कालद्वययुक्तवाक्यविहितकर्मणः प्रत्यभिज्ञानात्तदेवैककालयुक्तवाक्ये नतु कर्मान्तरमित्यर्थः । विधिपुनःश्रवणबलाद्विशेषाग्रहणाच्चाभ्यासन्यायाद्भेद इत्युक्तं निरस्यति—**ऐन्द्राग्नस्येति** । अमावास्यायां केवलाग्निदेवत्योऽपि प्रशस्तः । किमुतेन्द्रसहिताग्निदेवत्य इत्यैवैन्द्राग्नप्रशंसार्थत्वात्पुनःश्रवणस्य विधिरेवात्र नास्तीति विधिपुनःश्रवणाभावादैन्द्राग्नविध्येकवाक्यतया तत्प्रशंसार्थं केवलामावास्यावाक्यमेवानुवाद इति विशेषग्रहसद्भावाच्च नात्राभ्यासन्यायाद्भेद इत्यर्थः । कर्मणः प्रत्यभिज्ञानादित्यनेन संनिधानादकर्मान्तरत्वमिति पूर्वन्यायातिदेशात्सङ्गतिरिति सूचितम् । सूत्रार्थस्तु—आग्नेय अमावास्यायामावर्तनीयः अभ्यासस्य कर्मभेदकत्वस्योक्तत्वेनामावास्यायामाग्नेयद्वयावगमादिति भेदेन प्रतीयेतेति वाच्ये संप्रतिपन्नदेवताकत्वाद्यागभेदेऽपि तन्त्रेणानुष्ठानादनुष्ठानभेदो नास्तीति शङ्कां निराकर्तुं यागद्वयस्य तन्त्रानुष्ठानेऽपि पुरोडाशद्वयं कर्तव्यमिति प्रयोजनप्रदर्शनार्थमभ्यासेन प्रतीयेतेत्युक्तम् ॥ **इति श्रीसोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालेकाख्यायां द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥**

---

१ श्रुतिरेवेति. २ बलात्तु तत्र भेदः. ३ मासीकालाग्नेय.

# द्वितीयाध्याये चतुर्थः पादः ।

यावज्जीविकाभिहोत्राधिकरणम् ॥ १ ॥

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ [कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ अपवर्गे च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु नियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥]**

यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा ॥ कालत्वात्कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥ १ ॥
न कालो जीवनं तेन निमित्तप्रविभागतः ॥ काम्यप्रयोगो भिन्नः स्याद्यावज्जीवप्रयोगतः ॥ २ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति काम्यं प्रयोगं विधायाम्नायते यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तत्र संशयः । योयं यावज्जीविको धर्मो विधीयते स किमभ्यासः कर्मार्थः उत नियमः पुरुषार्थ इति पूर्वपक्षे काम्यस्यैव प्रयोगस्याभ्यासविधिः । सिद्धान्ते प्रयोगान्तरं नित्यं विधीयत इति भेदप्रसङ्गात्प्रयोगभेदाभेदचिन्ता । तत्र कर्माङ्गविधौ कर्म कथं भावसंबन्धात्प्रकरणानुग्रहः, पुरुषार्थविधौ तु तदसंबन्धात्प्रकरणबाधः स्यादतोऽभ्यासविधिः यावज्जीवं यागमभ्यस्येदिति । नैतद्युक्तम् । 'यावज्जीवपदे काललक्षणैवं प्रसज्यते ॥ यजिना च तदभ्यासलक्षणा प्रक्रियावशात् ॥' नहि प्रकरणवशेन श्रुतेर्लक्षणार्थता न्याय्या । त्वत्पक्षे च जीवनवाचिना तत्संबद्धः कालो लक्ष्यते । यजिना च यागाभ्यासः । नचैतन्न्याय्यम् । तस्माज्जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्श-

---

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥** यावज्जीवं भवो यावज्जीविकः । किं कर्मार्थ उत पुरुषार्थः तदर्थे च किमयमभ्यासात्मक उत नियमात्मक इति संशयद्वयं संकलय्याह—**स किमिति** । पूर्वपक्षे यावज्जीवकालस्य कर्माङ्गत्वेनाप्राप्तेस्तस्यावश्यं विधेयत्वात्तद्विधावर्थप्राप्तोऽभ्यासोऽनुवाद एव न विधेयस्तथा सिद्धान्तेऽपि नियमवाचकशब्दाभावान्न नियमो विधेयः किंतु दर्शपूर्णमासादिकर्मैव जीवने निमित्ते विधेयं कर्मणश्च नैमित्तिकत्वेन निमित्तेसति नैमित्तिकावश्यंभावादवश्यानुष्ठेयत्वात्मकनियमोऽप्यर्थादेव सिध्यति । तथाच किमत्र. दर्शपूर्णमासादिकर्मार्थतया यावज्जीवकालो विधीयते उत जीवने निमित्ते दर्शपूर्णमासादिकर्म विधीयत इति संशयनिष्कर्षो बोध्यः । **ननु** क्रतुपुरुषशेषत्वचिन्ता तृतीये सङ्गता नात्रेत्यत आह—**पूर्वपक्ष इति** । **प्रयोगान्तरमिति** । यद्यपि यथा पूर्वपक्षे यावज्जीवकालाभ्यासविशिष्ट एकः प्रयोगः न तथा सिद्धान्ते एकः प्रयोगः किंतु काले विधिबलात्पौर्णमास्यादिकालविशिष्टजीवनस्य निमित्तत्वपर्यवसानात्प्रतिनिमित्तं कर्मणः प्रयोगपरिसमाप्तेर्भिन्नभिन्न एव प्रयोगः । तथापि प्रयोगान्तरमिति सामान्याभिप्रायेणैकवचननिर्देशः । **प्रयोगभेदेति** । अनेनास्मिन्पादे प्रयोगभेदः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वं पूर्वपादे कर्मभेदे सहायत्वेनोक्तानुपादेयसमभिव्याहारेण प्रयोगभेदव्युत्पादनादानन्तर्यं चेति सूचितम् । **ननु** सिद्धान्तेऽपि प्रकृतकर्मण एव निमित्ते विधानादस्ति प्रकरणानुग्रह इति शङ्कां निराकर्तुं कथं भावसंबन्धादित्युक्तम् । ततश्च प्रकरणशब्दो नाधिकारपर इति भावः । **लक्षणेति** । अव्ययकृतो भावे भवन्तीति णमुलन्तस्य जीवनक्रियावाचिनः काले लक्षणा स्यादित्यर्थः । **यजिनाचेति** । एकस्या यागक्रियायाः यावज्जीवकालासंबन्धाद्यजिनाप्यभ्यासो लक्षणीय इत्यर्थः । **ननु** क्रियाव्यतिरिक्तस्य कालस्याभावाज्जीवनक्रियाया एव कालरूपत्वान्न लक्षणेत्यत आह—**त्वत्पक्ष इति** । क्रियायाः कालत्वाभ्युपगमेऽपि नियतपरिमाणनिमेषादिक्रियाया एव कालत्वान्न जीवनक्रियाकाल इति प्रकृते काललक्षणावश्यंभाव इति भावः । **ननु** यथा पौर्णमास्यां पौर्णमास्या यजेतेति चोदितकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिः, तथा यावज्जीवकालैकदेशे सकृदनुष्ठानेनापि शास्त्रार्थसिद्धिसंभवात्किमित्यभ्यासलक्षणेत्यत आह—**यजिना चेति** । तत्रापौर्णमासीव्यावृत्त्यर्था चोदनेति युक्ता सकृदनुष्ठानेऽपि शास्त्रार्थसिद्धिः । इह त्वजीवनकालव्यावृत्त्यर्था न चोदना तदा कर्मणोऽशक्यत्वादेवाप्रसक्तेः समस्तकालग्रहणार्थैव चोदना इत्यभ्यासलक्षणाप्यवर्जनीयेत्यर्थः । **जीवने निमित्त इति** । धातुसंबन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य यागस्य च संबन्धः प्रतीयते । सच संबन्धो व्याप्तिरूपो वाच्यः । संबन्धमात्रस्य पूर्वोक्तप्रकारेणावर्जनीयतया तत्प्रतिपादनानर्थक्यात् व्याप्तिश्च यदायदा जीवनं तदातदा याग इत्येवंरूपा जीवनस्य निमित्तत्वे एव संभवति नान्यथेति संबन्धसामान्यवाचिना णमुल्प्रत्ययेन निमित्तत्वं लभ्यत इत्याशयः । एवंच जीवने निमित्ते यागं कुर्यादित्युक्ते निमित्तस्य नैमित्तिकव्याप्तेर्यावच्छब्दोऽनुवाद इत्यभिप्रायेण जीवनमात्रमेव निमित्तत्वेनोपन्यस्तम् । **प्रत्यवायेति** । पापक्षयायेत्यर्थः । सर्वशक्त्यधि-

---

१ जीवकालं.

पूर्णमासप्रयोगो विधीयते । जीवनं च यावद्विनिपातं नियतमिति नियतनिमित्तत्वान्नियमो विधीयत इति पुरुषार्थः ॥

सर्वशाखाप्रत्ययैककर्मताधिकरणम् ॥ २ ॥

**नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्यात् ॥ ८ ॥ [एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥ न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यं स्यात् ॥११॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥१४॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ अर्थासंनिधेश्च ॥ १७ ॥ न चैकं प्रति शिष्यते ॥ १८ ॥ समाप्तिवच्च संप्रेक्षा ॥१९॥ एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २० ॥ प्रायश्चित्तं निमित्तेन ॥ २१ ॥ प्रक्रमाद्वा नियोगेन ॥ २२ ॥ समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥ २३ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥ द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २५ ॥ विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २६ ॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २७ ॥ उपहव्येऽप्रतिप्रसवः ॥ २८ ॥ गुणार्था वा पुनःश्रुतिः ॥ २९ ॥ प्रत्ययं चापि दर्शयति ॥ ३० ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥ विरोधिना त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥]**

शाखाभेदात्कर्मभेदो न वा कर्मात्र भिद्यते ॥ दृष्टं काठकनामादि बहु भेदस्य कारणम् ॥ ३ ॥

ग्रन्थद्वारादिना ह्येते युज्यन्ते भेदहेतवः ॥ रूपादिप्रत्यभिज्ञानादभिन्नं कर्म गम्यते ॥ ४ ॥

शाखान्तरेषु[१] किमग्निहोत्रादि कर्म भिद्यते किंवा सर्वशाखास्वेकमेवेति विचारः । तत्राविशेषेण[२] पुनःश्रुतिलक्षणादभ्यासाद्दूरत्वलक्षणाच्च प्रकरणान्तराद्भेदः तथा गुणादपि क्वचिदैन्द्राग्नमेकादशकपालं निर्वपेदिति श्रुतं क्वचिद्द्वादशकपालमिति । तत्रावश्यमन्यतरेण कर्मोत्पादयितव्यं येन चोत्पादितं तद्गतो गुणश्च उत्पत्तिशिष्ट[३] इति, इतरस्तत्र निवेशमलभमानो वाजिनवत्कर्मान्तरं कल्पयतीति प्राप्ते ब्रूमः—'विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत् ॥ तावन्मात्रमिहापि स्यान्नतु भेदः प्रसिद्ध्यति ॥'

---

करणे टुपटीकातन्त्ररत्नयोर्नित्यकर्मणः विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालनार्थत्वं निरस्य विधिबलात्पापक्षय एव फलं कल्प्यते इति व्यवस्थापितत्वात् । न्यायसुधाकृतस्तु नित्यकर्मणः पापक्षयो न फलं किंतु विहिताकरणजन्यप्रत्यवायप्रागभावपरिपालनमेव फलमित्याहुः । नन्वेवं नियमः पुरुषार्थो विधीयत इति कथमुच्यत इत्यत आह—**जीवनंचेति** । जीवने निमित्ते कर्मणः पापक्षयार्थतया विधौ नियमोऽप्यर्थसिद्ध इत्यभिप्रायात्तदुक्तिरिति भावः । प्रयोजनं पूर्वपक्षे दर्शपूर्णमासयोः फलकामनावत एव प्रयोगः सोऽपि यावज्जीवमभ्यस्त एव कामाय कल्प्यते सिद्धान्ते तु कामनारहितस्यापि काम्यस्तु सकृत्कृतएव फलाय कल्प्यते इति । सूत्रार्थस्तु—यावज्जीवकोऽभ्यासः सन् कर्मार्थः प्रकरणात् ॥

**नामरूपधर्मविशेष०** ॥ ८ ॥ सर्वप्राणनिबन्धनभेदापवादात्सर्वान्ते निवेशोऽस्येत्याहुः । **शाखान्तरेष्विति** । अनेकशाखाश्रुतमग्निहोत्रादिकं प्रतिशाखं भिद्यत इत्यर्थः । **तथेति** । यद्यविशेषेण श्रवणं तदभ्यासाद्भेदः यदिच विशेषेण तदा गुणादिति तात्पर्यम् । अत्र काठकं का०..पमित्यादिसंज्ञाया उत्पत्तिसंयोगाभावेन कर्मभेदकत्वासंभवादपर्यायधातुप्रयोगाभावेन शब्दान्तराभावात्संख्यायाः स्वातन्त्र्येण कर्मोत्पत्त्यवगमकत्वाभावाच्चाभ्यासप्रकरणान्तरगुणाख्यानि त्रीण्येवोप-

---

१ शाखान्तरेषु कर्म. २ तत्राविशेषात्पुनः. ३ शिष्ट इतरस्तु तत्र.

पुनःश्रुत्या हि कर्म विधेयमित्येतावत्सिध्यति, विधिवशात्तु भेदो विहितस्य विधानायोगात्, एवमसंनिधावपि विपरिवृत्त्यभावात्कर्मविधानं, विधानाच्च भेदस्तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिध्येन्नत्वत्र विधिवशाद्भेदसिद्धिर्विहितस्यापि पुरुषान्तरंप्रति विधिसंभवात् । यथा खल्वेकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेवापरस्यापि विधत्ते न कर्मान्तरं एवमत्राप्यध्येतृभेदात्तान्प्रति सर्वाण्येव वाक्यान्येकमेव कर्म विदधति न कर्मान्तरमेवमेकादशद्वादशकपालयोरुभयोरुत्पत्तिशिष्टत्वान्न बलाबलं, तस्मादभेदः ॥ शब्दान्तराभ्यासगुणैः ससंख्यैर्नाम्ना च दूरेण च सापवादः ॥ भेदः क्रियाणामिति साधितोऽयमतः परं तद्विनियोगचिन्ता ॥ इति पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ इति द्वितीयोऽध्यायः ॥ २ ॥

---

न्यस्तानि । सूत्रे च नामाद्युक्तिरभ्युच्चयमात्रार्थेति ध्येयम् । कर्मार्थतामात्रं कर्मोत्पत्तिगोचरतामात्रमित्यर्थः । **विहितस्यापीति** । अधीयत इत्यध्यायः स्वश्चासावध्यायश्च स्वाध्यायः । स्वत्वं च पितृपितामहादिपरंपरागतत्वम् । ततश्च स्वाध्यायोऽध्येतव्य इति स्वकीयशाखाध्ययनमात्रमेव विधीयते स्वाध्यायस्याध्ययनसंस्कार्यस्यापि अर्थज्ञानं प्रत्युपादेयत्वेन तत्र स्वत्वस्यैकत्वस्य च विवक्षितत्वादेव चैकैकस्य पुरुषस्यैकैकशाखाध्यायित्वात्तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान्प्रत्यज्ञातज्ञापकत्वेनार्थवत्त्वादेकस्यैव पुनःश्रुतिरविशेषादनर्थकं हि स्यादिति न्यायाप्रवृत्त्या न भेद इत्यर्थः । नचैवं वेदान्तराध्ययनमपि न स्यादिति वाच्यम् । वेदानधीत्येत्यादिशास्त्रेण वेदेषु समुच्चयावगमादिति भावः । **न बलाबलमिति** । ततश्च विकल्प इति भावः । अनेनैव विरुद्धानां विकल्पोऽविरुद्धानां तु भिन्नशाखागतानामपि समुच्चय इति प्रयोजनमपि सूचितम् । सूत्रार्थस्तु—काठकमित्यादिसंज्ञया अष्टाकपालद्वादशकपालादिना रूपेण कारीर्याद्यध्ययनेषु भूरिभोजनादिधर्मविशेषेण पुनरुक्त्या उदितानुदितहोमनिन्दया एकस्मिन्कर्मणि सर्वशाखागतानामङ्गानामनुष्ठानाशक्त्याऽग्निचयनादेः शाखाभेदात्समाप्तिभेदेन उदितानुदितहोमयोः स्वस्वकालातिक्रमे प्रायश्चित्तविधानेन इष्टयज्ञानामनिष्टयज्ञानां च द्वादशाहे दर्शनादिरूपान्यार्थदर्शनेन च शाखान्तरे कर्मभेदः स्यादिति ॥ **इति श्रीनिट्टलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथस्य सर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकासंज्ञायां द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## इति द्वितीयाध्यायः समाप्तः ॥

तत्त्व दर्शन आश्रम ... २९४ ... १४९२१



# तृतीयाध्यायः ॥ ३ ॥

## तृतीयाध्याये प्रथमः पादः ।

प्रतिज्ञाधिकरणम् ॥ १ ॥

### अथातः शेषलक्षणम् ॥ १ ॥

**द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियास्वयम् ॥ बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते ॥ १ ॥**
**अशाब्दी शेषता शाब्दी वा न शाब्दप्रतीतितः ॥ क्रियाकारकसंसर्गमात्रे व्युत्पत्तिसंभवात् ॥ २ ॥**
**गुणप्रधानभावेन संसर्गेऽन्तर्भवत्यसौ ॥ व्युत्पत्तिसंभवात्तत्र शाब्दता स्यात्क्रियादिवत् ॥ ३ ॥**

एवंसिद्धे भेदे शेषशेषित्वमिदानीं चिन्त्यते । भिन्नानां हि तत्संभवति नाभिन्नानामिति भेदलक्षणस्य हेतुत्वम् । यद्यपि 'व्रीहीनवहन्ति' 'सोमेन यजेते'त्यादिषु द्रव्यकर्मणां शेषशेषिभावो न कर्मभेदापेक्षस्तथापि कर्मणामपि प्रयाजाग्नेयादीनां शेषशेषित्वमिहैव वक्तव्यमिति तत्सिद्ध्यर्थं भेदलक्षणापेक्षणम् । ननु चावघातस्यापि व्रीहिभिर्यजेतेति शास्त्रान्तरार्थेन शेषशेषित्वचिन्ता न व्रीहिपदार्थमात्रेण, शास्त्रभेदलक्षणं च पूर्वं वृत्तमिति भवति हेतुत्वम् । तत्किं व्रीहीनवहन्ति व्रीहिभिर्यजेते-

---

**अथातः शेषलक्षणम् ॥ १ ॥** हेतुहेतुमद्भावं सङ्गतिं सूचयन् वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते—**एवमिति** । इदानीमित्यनेन भेदाधीनत्वाविशेषेऽपि प्रयुक्त्यादिनिरूपणस्य नायं समयस्तेषां शेषशेषिभावापेक्षत्वात् किंतु शेषशेषिभावनिरूपणस्यैवेति दर्शयति । **ननु** अथातः शेषलक्षणं शेषः परार्थत्वात्कः शेषः केन हेतुना शेषः इत्यादिसूत्रभाष्यपर्यालोचनया शेषत्वमेवाध्यायार्थ इत्यवगमाच्छेषशेषित्वं चिन्त्यत इत्ययुक्तमितिचेन्नैवम् । शेषत्ववच्छेषित्वस्याप्यवश्यविज्ञेयतया शेषशेषिभावस्यैवाध्यायार्थत्वौचित्यात् सूत्रकारेण तु एकज्ञाने सति नान्तरीयकतयेतरसिद्धेरेकमेव सूत्रणीयम् । तत्रच शेषोऽस्यास्तीति शेषीति मतुवर्थस्य शेषज्ञानं विना ज्ञातुमशक्यत्वाच्छेषत्वमेव सूत्रितं नतु तावता तावन्मात्रमध्यायार्थ इति भावः । **ननु** दर्शपूर्णमासयोः सोमयागस्य च सत्यपि भेदे शेषशेषित्वाभावेन भेदस्य शेषशेषित्वहेतुत्वाभावात्तन्निरूपणयोरपि न हेतुहेतुमद्भाव इत्याशङ्क्य हेतुत्वमुपपादयति—**भिन्नानां हीति** । भेदंविना शेषशेषित्वाभावाद्भेदोऽवश्यं शेषत्वहेतुरित्यर्थः । **ननु** तथापि पूर्वाध्यायार्थकर्मभेदंविनापि शेषशेषित्वदर्शनान्न भेदशेषलक्षणयोर्हेतुहेतुमत्त्वमित्याशङ्कते—**यद्यपीति** । शेषशेषित्वमात्रमेवास्मिन्नध्याये निरूप्यं न द्रव्यकर्मणोरेव शेषशेषित्वम् । ततश्च कर्मणां शेषशेषित्वस्य कर्मभेदाधीनत्वात्कर्मभेदनिरूपणं विना कृत्स्नस्य शेषशेषित्वस्य निरूपयितुमशक्यत्वादस्ति हेतुहेतुमद्भाव इति परिहरति—**तथापीति** । द्रव्यकर्मणोः शेषशेषित्वनिरूपणेऽपि भेदलक्षणस्य हेतुत्वसंभवात् किमित्येकदेशमुखेन[1] हेतुत्वं समर्थ्यत इति प्राभाकरः शङ्कते—**नन्विति । शास्त्रान्तरार्थेनेति** । शास्त्रान्तरप्रतिपाद्यं यद्रूपं तद्युक्तेन वेषेणेत्यर्थः । **न व्रीहीति** । व्रीहिपदार्थमात्रस्य लोकसाधारणस्य संस्कारानर्हतया तन्मात्रशेषत्वे आनर्थक्यप्रसङ्गादित्यर्थः । **नन्वेतावता** शास्त्रभेदस्य शेषशेषित्वहेतुत्वं स्यात्तावतापि कर्मभेदस्य हेतुत्वालाभात्कर्मभेदप्रतिपादनपरद्वितीयाध्यायापेक्षा कथमस्येत्यत आह—**शास्त्रभेदेति** । तन्मते द्वितीयाध्यायार्थः शास्त्रभेद एव न कर्मभेद इति नोक्तदोष इति भावः । यदि व्रीहीनवहन्तीति शास्त्रस्य व्रीहिभिर्यजेतेति शास्त्रस्य च परस्परं भेदः स्यात्तदोक्तरीत्या व्रीह्यवघातशेषशेषिभावस्य शास्त्रभेदलक्षणापेक्षा स्यात् । नचानयोः शास्त्रयोः परस्परं भेदोऽस्ति । अवहननशास्त्रस्य व्रीहिशास्त्रापेक्षया भेदाभावात् । तस्मात्प्राभाकररीत्यापि न तत्र भेदलक्षणापेक्षेति परिहरति—**तत्किमिति** । **नन्ववहननशास्त्रस्य** व्रीहिशास्त्रापेक्षया भेदाभावेऽपि व्रीहिशास्त्रस्यावहननशास्त्रापेक्षया भेदोस्त्येव । व्रीहिशास्त्रस्यावहननशास्त्रमनपेक्ष्य स्वसाध्यप्रतिपादकतयानपेक्षसाध्यभेदलक्षणस्य शास्त्रभेदहेतोस्तत्र सद्भावादेवं चान्यतरभेदस्य तत्रापि सद्भावाच्छास्त्रभेदस्य हेतुत्वं संभवतीत्यभिप्रायेण शङ्कते

---

१ कर्मशेषशेषित्वमुखेन.

त्वनयोः शास्त्रयोर्भेदोऽस्ति । ओमिति चेत्केन खलु । न तावन्निरपेक्षसाध्यभेदोऽत्रास्ति नाप्यनुब-न्धभेदो येन शास्त्रभेदः स्यात् । तस्माद्वाक्यान्तरत्वमेवात्र न शास्त्रान्तरत्वम् । **नच** वाक्यभेदलक्षणं पूर्वं वृत्तम् । सोमेन यजेतारुणया क्रीणातीत्यादिषु वाक्यान्तरत्वमपि नास्ति । दूरादेव शास्त्रभेदः । **ननु** तत्रापि ज्योतिष्टोमेन स्वर्गकामो यजेतेति शास्त्रान्तरविहिताधिकारसंबन्धस्यैव यागस्य शेषः सोमं इतिचेन्न । नहि सोमज्योतिष्टोमवाक्ययोरनुबन्धसाध्यभेदोऽस्ति । उभयत्रापि सोमस्यैव विषयत्वेनानुबन्धभेदाभावात् निरपेक्षसाध्यभेदाभावाच्च । 'उद्भिदा यजेत पशुकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यादौ तु स्ववाक्यत एव फले यागस्य द्रव्यदैवतस्य च यागे शेषत्वमिति वाक्यान्तरत्वमपि नास्ति तथैकस्मिन्नेव पदे प्रत्ययार्थं भावनामपूर्वं वा प्रति प्रकृत्यर्थस्य यागस्य शेष-त्वात्पदभेदोऽपि नास्ति । नतरां वाक्यभेदः । नतमां च शास्त्रभेदः । तस्मात्कर्मणामेव शेषशेषित्व-

---

—**ओमिति** । यद्यन्यतरभेदमाश्रित्य हेतुत्वमुच्यते तर्ह्यन्यतराभेदमाश्रित्याहेतुत्वमपि स्यात्तस्मात्परस्परभेदमाश्रित्यैव हेतु-हेतुमद्भावो वक्तव्यः सचात्र नास्ति, व्रीहिशास्त्रस्यावहननशास्त्रापेक्षया भेदेऽप्यवहननशास्त्रस्य व्रीहिशास्त्रापेक्षया भेदाभा-वादिति परिहरति—**केन खल्विति** । **ननु** अवहननस्य नियमादृष्टानुविद्धा तुषविमुक्तिः साध्यं व्रीहेस्तु तथाभूता यागनि-र्वृत्तिरिति साध्यभेदात् व्रीहिशास्त्रापेक्षयावहननशास्त्रस्य भेदः किं न स्यादित्यत आह—**न तावदिति** । न साध्यभेदमा-त्राच्छास्त्रभेदः तथासति स्वर्गकामो यजेतेत्यस्यापि नियोग[1]स्वर्गलक्षणसाध्यभेदाद्भेदापत्तेः किंतु निरपेक्षसाध्यभेदात् । न चात्र निरपेक्षसाध्यभेदोऽस्ति अवहननशास्त्रसाध्यस्य व्रीहिशास्त्रसाध्यापेक्षत्वादित्यर्थः । अवहननस्य गुणकर्मतया नियोगविषय-त्वाभावादवहननवाक्ये नियोगान्तरं न प्रतीयते किंतु प्रधाननियोगएव लिङानूद्यते । तत्रच प्रधानयागएवानुबन्धस्तस्माद-त्रानुबन्धभेदो दूरापेत इत्याशयेनाह—**नापीति** । तस्मात्साध्यभेदानुबन्धभेदलक्षणहेतुद्वयाभावादत्र शास्त्रभेदो नास्ति किंत्वर्थभेदाद्वाक्यभेदमात्रमित्याह—**तस्मादिति** । **ननु** वाक्यभेदे सति विवरणमतरीत्या शास्त्रभेदोऽप्यस्ति तन्मते वस्तुबलात्प्रातिस्विकसाध्यभेदमात्राच्छास्त्रभेदानुज्ञानादित्यत आह—**सोमेनेति । दूरादेवेति** । यद्यपि सप्तदश प्राजाप-त्यानित्यत्र वाक्यभेदाभावेऽपि शास्त्रभेदस्तैरिष्यते । उक्तंच संख्याधिकरणे वरदराजेन—'न वाक्यभेदः शास्त्रभेदे तन्त्रं निरपेक्षभिन्नालौकिकार्थप्रतिपादनक्षमत्वमेवे'ति । ततश्च वाक्यभेदाभावेऽपि शास्त्रभेदसंभवादिदमयुक्तम् । तथापि प्रकृते शास्त्रभेदो नास्तीत्यत्रैव तात्पर्यं बोध्यम् । **ननु** सोमेन यजेतेत्यत्र सोमद्रव्यंप्रति यागस्य शेषिता नैतद्वाक्योपात्तवैषेर्ण्ये किंत्व-धिकारशास्त्रार्थत्वेन, अधिकारशास्त्रं च सोमेन यजेतेति शास्त्राद्भिन्नमित्यस्ति तत्र शास्त्रभेदस्य हेतुतेति शङ्कते—**नन्विति** । पूर्वोक्तरीत्यान्यतरभेदस्याप्रयोजकत्वात्परस्परभेद एव वाच्यः । स[2] तत्रापि नास्तीत्याह—**नेति** । **ननु** शास्त्रभेदो नाम भिन्नासंनिकृष्टार्थत्वं ततश्च शास्त्रार्थभूतोत्पत्त्यपूर्वपरमापूर्वयोर्भिन्नत्वादस्ति तत्रापि शास्त्रभेद इत्यत आह—**उभयत्रेति** । शास्त्रार्थता हि कार्यतायां पर्यवसिता कार्यत्वेन चापूर्वस्य सविषयता न स्वरूपेण । तथाचोत्पत्त्यपूर्वेऽपि सोमयागस्यैव विष-यत्वेन तदनुबद्धकार्यताया अपि भेदाभावान्न पारमार्थिकः शास्त्रार्थभेद इति भावः । **नन्वेकत्र** परमापूर्वं साध्यमन्यत्रोत्प-त्त्यपूर्वमिति साध्यभेदाद्भेदोऽस्त्वित्यत आह—**निरपेक्षेति** । उत्पत्तिसाध्यस्याधिकारशास्त्रसाध्यापेक्षत्वादिति भावः । यत्रैकमेव वाक्यमुत्पत्त्यधिकारपरं तत्रायमपि प्रकारो न संभवतीत्याशयेनाह—**उद्भिदेति** । **द्रव्येति** । द्रव्यदेवतस्य तदाक्षिप्तयागं स्ववाक्यविहितं प्रति शेषत्वमित्यर्थः । भावनामपूर्वं[3] वेति स्वपरमतभेदेनोक्तम् । **ननु** द्वितीयाध्याये परम-शास्त्राणामवान्तरशास्त्राणां च यदेकं परमशास्त्रमियदेकमवान्तरशास्त्रमितीयत्तया भेदकथनाद्यत्परमापूर्वार्थो यदवान्तरशास्त्रा-र्थस्तत्परमापूर्वान्तर्गते शेषिणि तस्य शेषता न त्वन्यपरशास्त्रान्तर्गते शेषिणीति व्यवस्थितशेषत्वंप्रति शास्त्रभेदस्य हेतुत्वं संभवतीतिचेन्मैवम् । किमिह शेषत्वे शास्त्रभेदापेक्षा उत व्यवस्थायाम् । नाद्यः । पूर्वोक्तरीत्या शेषत्वस्य शास्त्रभेदानपेक्ष-त्वात् । न द्वितीयः । व्यवस्थायां शास्त्रभेदस्य हेतुत्वेऽपि अथातः शेषलक्षणमित्यध्यायार्थतया प्रतिज्ञाते शेषत्वे शास्त्रभे-दस्य हेतुत्वाभावान्नच निरूढकार्यप्रत्यनिरूढकार्यस्य शेषता निरूढा निरूढता च शास्त्रयोर्भेदे सत्येव भवति नान्यथातः शास्त्रभेदः शेषत्वे हेतुरिति वाच्यम् । अरुणया क्रीणातीत्यादावनिरूढकार्यस्यापि शेषित्वस्वीकाराद्वाक्यभेदमात्रादेव निरू-ढानिरूढत्वोपपत्त्या तत्र शास्त्रभेदस्याप्रयोजकत्वाच्च । अतएव शास्त्रान्तरविहितं शेषीति प्राभाकरग्रन्थस्य वाक्यान्तरविहितं शेषीत्यत्र तात्पर्यमिति **भवनाथवरदराजाभ्यामुक्तम्** । तस्मान्न कथंचिदपि शास्त्रभेदापेक्षेति भावः । एवंच द्रव्यक-र्मणोः शेषशेषित्वे भेदलक्षणापेक्षाभावात्स्वोक्तरीत्यैव हेतुत्वं वक्तव्यमित्युपसंहरति—**तस्मादिति** । कर्मणां शेषशेषि-

---

१ नियोगाख्यापूर्वविषयत्वं. २ सोमः । न. ३ अपूर्वं. ४ यागत्वेन. ५ परमापूर्वप्रतिपादकानामित्यर्थः. ६ उत्पत्त्यपूर्वशा-स्त्राणां. ७ प्रसिद्धकार्यं.

चिन्तार्थं भेदलक्षणापेक्षणम्। अत्रापि न शास्त्रभेदापेक्षा। तदभावेऽप्यवघाताग्नेयादीनां शेषशेषित्वात्। तस्मात्कर्मभेदानुभाषणमेवैतन्नानाकर्मलक्षणं वृत्तमिति न तद्द्वारा शास्त्रभेदानुभाषणम्। तस्येहानुपयोगात्। अतएव कर्मभेदएव पूर्वाध्यायार्थो न शास्त्रभेदः। सौत्रेण चातःशब्देन पूर्ववृत्तस्येह हेतुत्वमुच्यते। हेतुत्वं च कर्मभेदस्यैव संभवति न शास्त्रभेदस्येत्युक्तम्[2]। अतः सूत्रभाष्यविपरीतं शास्त्रभेदस्याध्यायार्थत्वम्। अयुक्तं चानुबन्धान्तरं हि बुध्यमानस्तदनुबद्धं नियोगान्तरमेव बुध्यते न मध्ये शास्त्रभेदमतो नासौ चोदनार्थः। अचोदनार्थश्च न विचारमर्हतीति न तद्विचारार्थं भेदलक्षणमित्यास्तां तावत्। बहुप्रकारं चेदं शेषलक्षणं वक्ष्यते कः शेष इति तत्स्वरूपं, केन हेतुना शेष इति शेषशब्दप्रवृत्तिनिमित्तं, कथं विनियुज्यत इति विनियोगप्रकारः। श्रुत्यादीनि विनियोगे शेषस्य शेषिणा सहान्वयबोधने कारणानि प्रमाणानि। तेषां च विरोधे बलाबलं, विरोधश्च कास्ति कच नास्ति तदेतत्सर्वमभिसंधाय शेषलक्षणं वक्ष्याम इति सूत्रितं, तदनेन सूत्रेण श्रोतृबुद्धिसमाधित्सया वक्ष्यमाणार्थप्रदर्शनमात्रं[3] कृतं नात्र पूर्वपक्षेण प्रयोजनम्॥

शेषलक्षणाधिकरणम्॥ २॥

## शेषः परार्थत्वात्॥ २॥

**स्वरूपहेतू न स्तोऽत्र स्तो वा नैवानिरूपणात्॥ पारार्थ्यं शेषताहेतू रूपं तेनोपलक्षितम्॥ ४॥**

उक्तं शेषलक्षणं वक्ष्यत इति, तदिदमुच्यते। प्रथमं तावदनेन सूत्रेण शेषस्वरूपं हेतुश्च श्रुत्यर्था-

---

त्वेऽपि परोक्तशास्त्रभेदस्य न हेतुत्वं व्यभिचारादित्याह—**अत्रापीति**। **तदभावेऽपीति**। अवहननशास्त्रस्य व्रीहिशास्त्रेणेवाग्नेयशास्त्रेणापि भेदो नास्ति निरपेक्षसाध्यभेदानुबन्धभेदाभावादिति भावः। यद्यपि संनिपातिनोऽवघातादेराग्नेयादिकरणार्थत्वं तन्मते औपादानिकं नतु वैनियोगिकं। वैनियोगिकशेषत्वं च तृतीयाध्यायार्थः। तथाच तत्र शास्त्रभेदाभावो न दोषः। तथाप्युपादानलक्षणप्रमाणाभावादौपादानिकशेषित्वं नास्तीति प्रयाजादिवत्संनिपातिनामपि प्रकरणगम्यं करणशेषत्वमिति स्वमतावष्टम्भेनेदं वृत्तकीर्तनभाष्यानुगुण्यादप्येवमेवाङ्गीकर्तव्यमित्याशयेनाह—**तस्मादिति**। **तस्येति**। शास्त्रभेदस्य शेषत्वेऽनुपयोगादिति भावः। **अतएवेति**। भाष्ये कर्मभेदलक्षणस्यैव वृत्तत्वकीर्तनादित्यर्थः। सूत्रे अतःशब्देन वृत्तस्य हेतुत्वकथनात्सूत्रानुगुणोऽपि कर्मभेदएव नतु शास्त्रभेद इत्याह—**सौत्रेणचेति**। **अनुबन्धेति**। अनुबन्धत्वं नाम विषयत्वम्। ततश्च विषयात्मकानुबन्धभेदाद्विपथिनियोगभेदमेव प्रतिपद्यते नत्वन्तरा शास्त्रभेदम्। अनुबन्धभेदस्यानुबन्ध्यमाननियोगभेदद्वारैव शास्त्रभेदहेतुतया तस्य साक्षाच्छास्त्रभेदहेतुत्वाभावात्प्रथमत एव शास्त्रार्थभूतनियोगभेदावगमे शास्त्रभेदस्य वैयर्थ्याच्चेति भावः। **न विचारमिति**। नच कर्मभेदोऽपि लोकसिद्धत्वान्न विचारमर्हतीति वाच्यम्। कर्मणः स्वरूपेण लोकसिद्धत्वेऽप्यलौकिकश्रेयःसाधनतारूपेण लोकसिद्धत्वाभावादन्यथा तिङ्सुबन्तचयात्मकवाक्यलक्षणशास्त्रस्यापि लोकसिद्धत्वात्तद्भेदोऽपि न व्युत्पाद्यः स्यादिति भावः। **ननु** सत्यं शास्त्रभेदो न चोदनार्थस्तथापि सएव पूर्वाध्यायार्थो युक्तः। प्रमाणलक्षणानन्तरं प्रमाणभूतशास्त्रभेदस्यैव जिज्ञासितत्वाज्जिज्ञासाप्रसूतत्वाच्च व्युत्पादनस्येत्यत आह—**आस्तामिति**। नहि प्रमाणं स्वातन्त्र्येण प्रस्तुतं येन तन्निरूपणानन्तरं तत्रैव भेदजिज्ञासा स्यात् किंतु धर्मजिज्ञासायां प्रतिज्ञातायां किं धर्मे प्रमाणमित्येवं धर्ममुखेन ततश्च प्रमाणव्युत्पादनस्य धर्मार्थतया प्रमाणव्युत्पादानन्तरं प्रधानभूतधर्मस्यैव भेदजिज्ञासा नतु तद्गुणभूतप्रमाणस्य भेदजिज्ञासेति शास्त्रभेदस्य प्रथमं जिज्ञासितत्वमेवासिद्धमिति भावः। **ननु** यदि शेषशेषित्वमध्यायार्थस्तर्हि श्रुत्यादिनिरूपणस्यात्रासङ्गतिः स्यादित्यत आह—**बहुप्रकारमिति**। विनियोगशब्दार्थविवरणं **शेषस्येति**। **श्रोतृबुद्धीति**। प्रतिज्ञासद्भावे वक्ष्यमाणश्रुत्यादीनां शेषविषयत्वं मुखेन ज्ञातुं शक्यते। अन्यथा धर्ममात्रविषयत्वं कश्चित्संभावयेदिति भावः। आचार्यैस्तु द्विलक्षण्याः परं शिष्टं यावत् किंचन लक्षणं तत्सर्वं वक्तुमारब्धमथातःशेषलक्षणमिति। अवशिष्टसकलाध्यायार्थनिरूपणप्रतिज्ञापरत्वेनापि सूत्रं व्याख्यातम्॥

**शेषः परार्थत्वात्॥ २॥** कृत्स्नेऽध्याये वक्ष्यमाणमर्थं प्रतिज्ञासूत्रेण सङ्गमयति—**उक्तमिति**। विनियोगादिचिन्तायाः स्वरूपज्ञानाधीनत्वाच्छेषशब्दप्रवृत्तिहेतूक्तेः स्वरूपज्ञानदृढीकरणार्थत्वाच्च तदुभयनिरूपणं प्रथमं क्रियत इत्याह—**प्रथममिति**। **ननु** भाष्ये स्वरूपस्यैवोक्तत्वात्सूत्रस्यार्थद्वयपरत्वमनुपपन्नम्। नच भाष्ये इह सूत्रे शेषस्य लक्षणं येन च हेतुना शेष उच्यते तदुभयमपि व्याख्यायत इत्युक्तत्वादर्थद्वयपरत्वं भाष्यसंमतमेवेति वाच्यम्। एवमपि यथाभाष्यं सूत्रे-

---

१ अनुवादः. २ संभवति कर्मभेदस्येत्युक्तं. ३ मात्रं नात्र. ४ अर्थापत्तिगम्यं.

भ्यामुच्यते । तत्र सूत्रे श्रुत्या हेतुरुच्यते परार्थत्वाच्छेष इति, स्वरूपं त्वर्थात् । यदाहि परार्थत्वं शेषशब्दप्रवृत्तौ हेतुस्तदा परार्थ एव शेष इति सिद्धं भवति । भाष्ये तु यः परार्थस्तं वयं शेषं ब्रूम इति स्वरूपं श्रुत्योक्तम्, अर्थात्तु हेतुरिति द्रष्टव्यम् । अत्र चाविनाभावादिलक्षणाभासनिराकरणाय पारार्थ्यं लक्षणमुच्यते । केचित् किल येन विना यन्न भवति बीजादिनेवाङ्कुरादिः स बीजादिस्त-स्याङ्कुरादेः शेष इत्याहुस्तदयुक्तम् । रूपरसादीनामाग्नेयादीनां च मिथो विनाभावेन शेषत्वापत्तेः । प्रयोज्यत्वं शेषत्वमित्येतदपि पुरोडाशकपालादिष्वप्रयोज्येष्वपि शेषत्वसंभवादव्यापकम् । अन्येतु यद्यस्मादधिकं विधीयते स तस्य शेष इत्याहुः । तदतिमन्दम् । अङ्गप्रधानानां परस्पराधिक्यात्, अन्ये विध्यन्तविहितत्वं शेषत्वमाहुस्तदपि विध्यादिविहितानामपि शाखाच्छेदनादीनामङ्गत्वदर्शना-दयुक्तम् । तस्मादुपकारकत्वमेव शेषत्वमित्यन्ये । तदप्ययुक्तम् । प्रधानान्यप्यङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः । 'तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षम् ॥ परोद्देशप्रवृत्तिश्च पारार्थ्यमभि-धीयते ॥' कथं तर्हि श्रुत्यादिलक्षणं शेषत्वम् । नहि सोमेन यजेतेति तृतीयया परोद्देशप्रवृत्तत्वं सोम-स्योच्यते करणमात्राभिधानात् । उच्यते । न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः । किं तर्हि

---

ऽपि स्वरूपस्यैव श्रौतत्वस्य वक्तुं न्याय्यत्वेन तस्यार्थिकत्वानुपपत्तेरित्यत आह—**भाष्य इति** । सौत्रपञ्चमीस्वारस्यात्सूत्रे हेतुरेव श्रौतः परंतु तस्य स्पष्टं प्रतीयमानत्वादस्पष्टस्य स्वरूपस्य सुखप्रतिपत्त्यर्थं भाष्ये स्वरूपं कण्ठत उक्तम् । **ननु** सूत्रस्य स्वरूपमात्रपरत्वे स्वरूपश्रौतत्वे वा भाष्यतात्पर्यमिति न काप्यनुपपत्तिरिति भावः । लक्षणकथनपरतया **संशयपू-र्वपक्षादिकं** नावश्यकमित्याशयेनाह—**अत्रेति । यन्न भवतीति** । भवनमिहोत्पत्तिस्थितिसाधारणमभिमतं नतु बीजा-ङ्कुरोदाहरणादुत्पत्तिमात्रं रूपरसादीनामिति दूषणासंगत्यापत्तेरिति द्रष्टव्यम् । आग्नेयादीत्यादिशब्देनाग्नीषोमीयादेर्ग्रहणम् । **ननु** यो येन प्रयुज्यते स तस्य शेषस्तथाच न पूर्वोक्तदोष इति लक्षणान्तरमाशङ्क्याह—**प्रयोज्यत्वमिति । पुरोडाशेति ।** पुरोडाशकपालेन तुषानुपवपतीति तुषोपवापाप्रयोज्यस्यापि पुरोडाशकपालस्य तुषोपवापे शेषत्वादित्यर्थः । **आदिशब्देन** वारुण्यानिष्कासेन तुषैश्चावभृथं यन्तीति वरुणप्रघासावभृथाप्रयोज्यतुषनिष्कासादिसंग्रहः । **यदिति** । नच **प्रधानापेक्षया-**ङ्गानां प्रत्येकमाधिक्याभावादिदमयुक्तमिति वाच्यम् । प्रत्येकमाधिक्याभावेऽप्यङ्गसमुदायस्याधिक्यसद्भावात्तथाच **यज्जातीयं** यज्जातीयापेक्षया विधितः स्वरूपतो वाधिकं तत्तस्याङ्गमिति लक्षणमिति भावः । **अङ्गेति** । राजसूयादिषु **अङ्गापेक्षयानु-**मत्यादिप्रधानानामाधिक्यादव्याप्त्यतिव्याप्ती स्यातामित्यर्थः । **विध्यन्तेति** । यद्विध्यनन्तरं यद्विधीयते **तस्य स शेष** इत्यर्थः । **विध्यादीति** । प्रधानविध्यपेक्षया पूर्वविहितानामपीत्यर्थः । इदमुपलक्षणं पूर्वपूर्वविहिताङ्गं **प्रति उत्तरोत्तरवि-**हिताङ्गस्यापि शेषत्वापत्तेरित्यपि द्रष्टव्यम् । **उपकारकत्वमिति** । नन्वेवमध्ययनाधानयोरपि क्रत्वङ्गत्वं **स्यात्** । नचेष्टाप-त्तिः । तथासति तयोः काम्यश्रुतिप्रयुक्तत्वापत्त्या कामश्रुतीनां चाविशेषेण प्रवृत्त्या शूद्राणामप्यध्ययनाधानसंभवेनाधिकारप्रस-ङ्गादपशूद्राधिकरणविरोधः स्यात् । किंच पश्वर्थमनुष्ठितानामङ्गानां पशुपुरोडाशे प्रसङ्गादुपकारकाणामपि पुरोडाशाङ्गत्वं स्यात्ततश्चाग्निमारुतादूर्ध्वं पाशुकानूयाजोत्कर्षे पुरोडाशार्थपिष्टलेपफलीकरणहोमयोरप्युत्कर्षः स्यात् । **सर्वेषां** पुरोडाशाङ्गत्वेन बद्धक्रमत्वात्तथाच 'प्रासङ्गिकं च नोत्कर्षे'दित्यधिकरणविरोधः स्यादितिचेन्मैवम् । यथा विद्याया अग्नीनां चाङ्गत्वेऽपि काम-श्रुतिभिर्विध्यन्तरसिद्धाग्निविद्यत्रैवर्णिकैर्निराकाङ्क्षतया नाक्षेपः, एवं विद्यासाधनीभूताध्ययनस्य अभ्यर्थाधानस्य च कामश्रुति-भिरनाक्षेपसंभवेनापशूद्राधिकरणविरोधाभावात् पाशुकानूयाजानां पुरोडाशाङ्गत्वेऽपि पश्वर्थानुष्ठितैरेव पुरोडाशोपकारसिद्धेः पुरोडाशप्रयोगविधिर्न तान्यनुष्ठापयति । ततश्च सत्यप्यङ्गत्वेऽनूयाजानां पाशुकप्रयोगविधिसंग्राह्यतया पिष्टलेपफलीकरणहो-मयोः पौरोडाशिकप्रयोगविधिसंग्राह्यतया च प्रयोगविधिभेदेन बद्धक्रमत्वाभावात् अनूयाजोत्कर्षेऽपि पिष्टलेपफलीकरणहो-मयोरनुत्कर्षोपपत्त्या 'प्रासङ्गिकं च नोत्कर्षे'दित्यधिकरणविरोधाभावाच्चेति भावः । **अनुष्ठानेति** । अनुष्ठानलक्षणमुपकार-मित्यर्थः । **ननु** पारार्थ्यं न परोत्पादकत्वं प्रयाजादीनामाग्नेयाद्यनुत्पादकत्वादतः परोपकारकत्वमेव पारार्थ्यं वाच्यमित्युक्त-दोषतादवस्थ्यमित्यत आह—**परोद्देशेति** । परोद्देशप्रवृत्तपुरुषव्यापारगोचरत्वं पारार्थ्यम् । ततश्च प्रधानस्याङ्गोद्देश्यक-प्रवृत्त्यगोचरत्वान्नातिप्रसङ्गः । कर्तुरपि यागाद्युद्देशप्रवृत्तसज्जीभावादिव्यापारविषयत्वान्नाव्याप्तिस्तथा कालस्य प्रतीक्षणव्यापा-रविषयत्वाद्देशस्य प्राप्त्यनुकूलव्यापारविषयत्वात् । यद्वा देशकालयोः व्यापारान्तराभावेऽपि प्रधानक्रियायास्तत्रानुष्ठानात्तमेव व्यापारमादाय लक्षणगमनं फलस्यापि पुरुषेण स्वोपभोग्यतयोपपाद्यत्वात्तस्यापि पुरुषशेषत्वोपपत्तिः । **नन्वेवं** श्रुत्यादिगम्यं शेषत्वं न भवेदिति शङ्कते—**कथमिति** । अभिधानेन शक्येत्यर्थः । विधिप्रत्ययस्य प्रवर्तनावाचकत्वात्तद्बलादर्थात्पारार्थ्य-

---

१ तत्र श्रुत्या. २ दितिलक्षणा. ३ मित्येतदपि. ४ अनुष्ठाप्यते. ५ वरुणदेवताया आमिक्षायाः संबन्धी यो निष्कासः भाषायां फोक इति प्रसिद्धः. ६ वरुणप्रघासान्तर्गतेऽवभृथे कर्मणि. ७ आग्निमारुतं शस्त्रम्.

विधिसहिताः पारार्थ्यं बोधयन्तीति। विधिरपि नाभिधानेन पारार्थ्यं गमयति किंत्वर्थापत्त्या। स हि चेतनप्रवर्तनात्मा। नचानुद्दिष्टफले व्यापारे चेतनः प्रवर्तयितुं शक्यत इत्यर्थाद्विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्तता गम्यते। फलार्थश्च व्यापारः फलवदेव पुरुषस्याभिलषित इति तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिः सिद्धा भवति। तस्माद्युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षणं शेषत्वमिति॥

शेषलक्ष्याधिकरणम्॥ ३॥

**द्रव्यगुणसंस्कारेषु बादरिः॥३॥ [कर्माण्यपि जैमिनिः फलार्थत्वात्॥ ४॥ फलं च पुरुषार्थत्वात्॥ ५॥ पुरुषश्च कर्मार्थत्वात्॥ ६॥]**

किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम्॥ पुमान्कर्म च पक्षौ द्वावादेयौ मतभेदतः॥ ५॥
शेषत्वमुपकारित्वं द्रव्यादावाह बादरिः॥ पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः॥ ६॥

अत्र शेषत्वस्य विषयकथनेन कः शेष इत्ययमेवांशः प्रपञ्च्यते। 'बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम्॥ श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः॥' उपकारकत्वमेव शेषत्वं न पारार्थ्यम्। तस्य बोधकाभावात्, विधिस्तावत्प्रवर्तनामात्ररूपो न तादर्थ्यं गमयति। श्रुत्यादयोऽपि साध्यसाधनभावमात्रपरा न पारार्थ्यं प्रतिपादयन्ति। तस्मादुपकारकत्वमेव शेषत्वम्। तच्च दृष्टार्थानां द्रव्यगुणकर्मणां दर्शनादेवावगम्यते, प्रोक्षणादीनां तु श्रुत्यादिभिः। द्वितीया हि व्रीहीणां प्रोक्षणंप्रति साध्यत्वमभिदधानोपकारमन्तरेण तदनुपपत्तेरुपकारं गमयति, नतु यागस्य फलशेषत्वे, फलस्य वा पुरुषशे-

---

सिद्धिः संभवतीत्याह—**स हीति।** **नन्वस्तु** विध्यर्थस्य शब्दभावनायाश्चेतनप्रवर्तनात्मकत्वं तावतापि ह्यफले प्रवृत्त्यसंभवात्तद्विषयस्य पुरुषाभिलषितसाधनत्वमात्रं सिद्ध्यति। नच समीहितसाधनत्वमात्रं पारार्थ्यम्। तथासत्यामिक्षावद्वाजिनस्यापि क्रतुप्रयुक्ततया समीहितत्वसद्भावाद्ध्यानयनस्य च वाजिनेऽपि साधनत्वाद्वाजिनं प्रत्यप्यङ्गत्वापत्तेः। किंतु समीहितोद्देश्यकत्वं पारार्थ्यम्। उक्तंचेदानीमेव त्वया परोद्देशप्रवृत्तिश्च पारार्थ्यमिति। ततश्च विधिबलादपि न पारार्थ्यसिद्धिरिति शङ्कां परिहर्तुमनुद्दिष्टफल इत्यनुद्दिष्टशब्दप्रयोगः। अयमाशयः—प्रवर्तनात्मको विधिर्न समीहितसाधनत्वमात्रं स्वविषयस्य बोधयति समीहितसाधनत्वस्यापि पुरुषव्यापारंविनैव सिद्धौ समीहितसाधनत्वमात्रेण प्रवृत्त्यभावेन प्रवृत्तिफलकव्यापारत्वलक्षणप्रवर्तनात्वानुपपत्तेरतः समीहितोद्देशेनात्र पुरुषेण व्यापारितव्यमित्येवं विधिरेव परोद्देशप्रवृत्तपुरुषव्यापारगोचरत्वलक्षणं पारार्थ्यमर्थाद्गमयतीति। **नन्वस्तु** साक्षाद्विधिविषयस्यार्थभावनात्मकव्यापारस्य प्रवर्तनात्मकविधिसंबन्धात्स्वर्गादिपारार्थ्यं, तथापि सोमादीनां कथं विधितः पारार्थ्यसिद्धिः। शब्दभावनात्मकविधेः साक्षात्तद्विषयत्वाभावादित्यत आह—**फलार्थश्चेति।** सत्यम्। विधिः साक्षाद्भावनामेव गोचरयति तथापि तद्विशेषणतया धात्वर्थं तद्विशेषणतया सोमादींश्च विषयीकरोत्येव। ततश्च धात्वर्थस्य यागस्य भावनाविशेषणत्वं सोमादीनां च धात्वर्थविशेषणत्वं विना विधिसंस्पर्शायोगाद्विधिः स्वविषयत्वसिद्धये धात्वर्थादीनां भावनादिविशेषणत्वमपेक्षते। विध्यपेक्षितं च विशेषणत्वं श्रुत्यादयः समर्पयन्ति धात्वर्थस्य पदश्रुत्या भावनाविशेषणत्वस्य सोमादीनां तृतीयाश्रुत्यादिना धात्वर्थविशेषणत्वस्य चावगमात्। एवं श्रुत्यादिना विशेषणत्वे सति विधेर्विशिष्टविषयत्वाद्विशिष्टविधिना तत्तद्विशेषणानामपि स्वस्वविशेष्योद्देशप्रवृत्तपुरुषव्यापारगोचरत्वस्य बोधनात्सिध्यति सोमादीनामपि विधितः पारार्थ्यमित्यर्थः। एवंच श्रुत्यादीनां तत्तत्पदार्थविशेषणत्वमुखेन पारार्थ्यबोधकविधौ साहाय्यकाचरणाद्युक्तं श्रुत्यादिगम्यत्वं पारार्थ्यस्येत्युपसंहरति—**तस्मादिति।** सूत्रार्थस्तु—परार्थत्वाच्छेष इत्युच्यते॥

**द्रव्यगुणसंस्कारेषु बादरिः॥ ३॥ ननु** बादरिमतनिराकरणं प्रकृतासङ्गतमित्याशङ्क्याह—**अत्रेति। विषयेति।** आश्रयेत्यर्थः। द्रव्यादिशेषतायाः सिद्धान्तेऽपि संमतत्वादवधारणपरतया सूत्रं व्याचष्टे—**बादरिरिति। ननु** द्रव्यादेरुपकारकत्वेऽपि तेषामेव शेषत्वं कुत इत्यतः श्लोकतात्पर्यमाह—**उपकारकत्वमेवेति। दृष्टेति।** व्रीह्यादिद्रव्यस्य क्रियासाधनत्वादारुण्यादिगुणस्य द्रव्यपरिच्छेदकत्वादवहननादिक्रियाया अपि वैतुष्यादिसामर्थ्याच्चान्वयव्यतिरेकाभ्यामेवैतेषामुपकारकत्वमवगम्यत इत्यर्थः। यद्यपि तत्रापि व्रीहिभिर्यजेतेत्यादिश्रुतिरस्ति तथापि श्रुतेर्नियममात्रे तात्पर्यमुपकारकत्वं तु प्रत्यक्षसिद्धमेवेत्याशयः। श्रुत्यादेरित्येतद्विवृणोति—**प्रोक्षणादीनामिति। उपकारमिति।** व्रीहिगतातिशयलक्षणमित्यर्थः। यद्व्यावृत्त्यभिप्रायकं सूत्रं तदाह—**नत्विति।** ननु भावार्थाधिकरणे धात्वर्थस्य करणत्वोक्तेर्यागेन कुर्यादित्येव

---

१ वृत्ततावगम्यते,

त्वे प्रत्यक्षदर्शनं श्रुत्यादयो वा संभवन्ति । यजेतेति यागः कर्तव्य एतावदुच्यते, नतु यागेन फलमिति । तदेतत्स्वर्गकामाधिकरणपूर्वपक्षे वक्ष्यामः । स्वर्गोऽपि काम्यमानात्मना शब्देनोच्यते नत्वात्मार्थः परार्थो वेति । तस्मान्न तयोः शेषत्वम् । अतएव न पुरुषस्य शेषिता, शेषत्वं तु तस्य द्रव्यत्वादिष्टमेव । तस्माद्द्रव्यगुणसंस्कारेष्वेव शेषत्वमिति । तदेतत्स्वर्गकामाधिकरणपूर्वपक्षवादिनो बादरेर्मतम् । जैमिनिस्तु उपकारलक्षणस्य शेषत्वस्योक्तदोषत्वात्पारार्थ्यमेव शेषत्वं तच्च विधिगम्यमिति स्वर्गकामाधिकरणसिद्धान्ते वक्ष्यमाणमभिप्रेत्य कर्मणामपि पारार्थ्याच्छेषत्वमाह । तदेतत्तत्र सिद्धमिति नात्र किंचित्प्रतिपाद्यं, प्रपञ्चमात्रं त्विह पूर्वोक्तशेषत्वविषयस्य क्रियते । प्रपञ्चं तु कुर्वन् परमतोपन्यासपुरःसरं स्वमतमुपन्यस्तवान् । एवं फलस्यापि पुरुषशेषत्वं कामवशादेवावगम्यते विधिवशाच्च । नह्यस्वार्थं कश्चित्कामयते । यदपि परार्थं कामयते तदपि परम्परया स्वार्थमेव । अत्र तु परम्पराप्रमाणाभावादात्मार्थतैव गम्यते । विधिश्चानात्मार्थफलसाधने प्रवर्तयितुमशक्नुवन् फलस्यात्मार्थतां गमयति । यजेतेति चात्मनेपदनिर्देशात् । तस्माद्यागफलयोरप्यस्ति शेषता । ततश्च पुरुषस्यापि शेषित्वम् । नचैवं सर्वतः प्रधानत्वात्पुरुषस्य शेषत्वं नास्तीति मन्तव्यम् । आख्यातेन कर्तुर्गुणभूतत्वेनोपादानात् । औदुम्बरीसंमानादिषु तु श्रुत्यैव गुणत्वात् ॥

निर्वापणादीनां व्यवस्थितविषयताधिकरणम् ॥ ४ ॥

**तेषामर्थेन संबन्धः ॥ ७ ॥ [विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥]**

श्रुता व्रीह्याज्यसांनाय्यधर्माः सांकर्यगामिनः ॥ व्यवस्थिता वा सांकर्यं फलापूर्वेण संगतेः ॥ ७ ॥
अवान्तरापूर्वसत्त्वात्साक्षात्तेनैव संगतौ ॥ श्रुत्या व्यवस्थापितास्ते सा हि प्रकरणोत्तमा ॥ ८ ॥

कः शेषः केन हेतुना शेष इति द्वयमप्युक्तम् । इदानीं कथं विनियुज्यत इत्ययमंशो निरूप्यते ।

---

तदर्थो नतु यागः कर्तव्य इत्यत आह—**तदेतदिति** । समानपदश्रुत्या धात्वर्थस्य भाव्यत्वं नतु वाक्येन स्वर्गस्येति वक्ष्याम इत्यर्थः । ततश्च स्वर्गकामाधिकरणसिद्धान्तन्यायेन भाव्यत्वात्प्रच्युत्यनन्तरमेव भावार्थाधिकरणप्रवृत्तिरिति न तद्विरोधशङ्कावकाश इति भावः । **ननु** काम्यमानं स्वर्गंप्रति पुरुषस्य शेषित्वमवश्यं वाच्यम् । काम्यमानस्य सर्वस्यात्मार्थतयैव काम्यत्वादित्यत आह—**अतएवेति** । यत्फलं सत्काम्यते तदेवात्मार्थतया काम्यं, स्वर्गस्तु न फलत्वेन काम्यते किंतु स्वर्गशब्दस्य चन्दनादिपरतया साधनकामनानुवादमात्रमिति न तस्यात्मार्थत्वमिति भावः । **तस्मादिति** । जातेरपि परिच्छेदकत्वाद्गुणग्रहणेनैव ग्रहणं तेन न व्यवच्छेदानुपपत्तिः । **ननु** विधेः प्रवर्तनात्वान्यथानुपपत्त्या पारार्थ्यबोधकत्वमन्यथा प्रवृत्तिरेव न स्यादित्यत आह—**तदेतदिति** । तर्हि मा कश्चित्प्रवर्तिष्ट किं नश्छिन्नमिति स्वर्गकामाधिकरणपूर्वपक्षे वक्ष्यमाणत्वाद्बादरिमते प्रवृत्त्यनुपपत्तिर्न दोष इति भावः । तर्हि स्वर्गकामाधिकरणेनैव गतत्वात्किमर्थमिदमित्यत आह—**तदेतत्तत्रेति**। ननु प्रपञ्चकरणे 'कर्माण्यपि जैमिनिः फलार्थत्वात्, फलं च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वा'दिति सूत्रत्रयमेव कर्तव्यं नतु द्रव्यगुणसंस्कारेष्विति सूत्रं तत्राह—**प्रपञ्चमिति** । स्वर्गस्य च फलत्वे सिद्धे तस्यात्मार्थत्वमपि सिद्धमित्याह—**एवमिति** । कामवशादित्येतदुपपादयति—**नहीति** । नहि स्वर्ग उत्पद्यतामिति कश्चित्कामयते किंतु स्वर्गो मे स्यादित्यात्मार्थतयैव स्वर्गं कामयत इत्यर्थः । **यदपीति** । पुत्रपूतत्वादिकमित्यर्थः । विधिवशादित्येतदुपपादयति—**विधिश्चेति** । **आत्मनेपदेति** । कर्तृगामिनि क्रियाफले तद्विधानादिति भावः । **पुरुषस्यापीति** । यद्यपि शेषत्वस्य विषयप्रपञ्चप्रतिपादनावसरे पुरुषस्य शेषित्वं न प्रतिपाद्यं तथापि यागस्वर्गपुरुषाणां शेषशेष्युभयरूपत्वस्य सिद्धान्तेऽङ्गीकारात्पुरुषस्याप्युभयरूपत्वसमर्थनार्थमिदमिति ध्येयम् । **सर्वत इति** । द्रव्यादिशेषिभूतयागापेक्षया प्रधानस्वर्गप्रत्यपि प्राधान्यादित्यर्थः । **आख्यातेनेति** । कर्तारं विना क्रियाया अनिष्पत्तेः क्रियावाचकाख्यातेन स्ववाच्यसंख्याश्रयः कर्ता गुणत्वेनैवाक्षिप्यत इति भावः । **श्रुत्येति** । यजमानेन संमितौदुम्बरी भवतीति तृतीययेत्यर्थः ॥

**तेषामर्थेन संबन्धः ॥ ७ ॥** स्वरूपज्ञानानन्तरं प्राप्तावसरोऽयं विचार इत्याशयेनाह—**क इति** । **इदानीमिति** ।

---

१ त्मार्थमेवेति विधिश्च. २ अत्र 'फलं च पुरुषार्थत्वात्' 'पुरुषश्च कर्मशेषत्वात्' द्विसूत्रीति का. मु. पु. विशेषः.

दर्शपूर्णमासयोर्निर्वपणप्रोक्षणावघातादय औषधधर्माः, उत्पवनादय आज्यधर्माः, शाखाहरणादयः सांनाय्यधर्माः। तेषु संशयः किं सर्वे आज्ये औषधे सांनाय्ये च कर्तव्या उत यथासंयोगं व्यवस्थेति। तदर्थं च किं परमापूर्वप्रयुक्ता एते किंवावान्तरापूर्वप्रयुक्ता इति। तत्सिद्ध्यर्थमपि किमवान्तरापूर्वाणि सन्ति नेति। सत्सुच तेषु किं तानि प्रयोजकानि किंवा परमापूर्वम्। यदापि तानि तदापि किं सर्वाणि सर्वेषां प्रयोजकानि किंवा व्यवस्थेति। किंतावत्प्राप्तं—'एकमेव फलापूर्वं फलस्यैकस्य सिद्धये॥ कल्प्यं नान्यानि धर्माणां तादर्थ्यात्संकरो भवेत्॥' अवघातादीनां व्रीह्यादिभिः संबन्धोऽपूर्वसाधनविशेषत्वकृतो न व्रीह्यादिस्वरूपकृतः। तच्चापूर्वं सर्वेषामाग्नेयादीनामेकफलसाधनत्वादेकमेव कल्प्यते न बहूनि। तदर्थश्चावघातस्तदीये हविषि कर्तव्यः। तदीयत्वं चाज्यादीनामप्यविशिष्टम्। अतो यथा व्रीहिषु श्रुतोऽवघातो यवेष्वपि भवति, एवमाज्यादिष्वपि भवितुमर्हति। सन्तु वावान्तरापूर्वाणि तथापि तानि निष्फलत्वाद्यागस्वरूपवदेव न धर्माणां प्रयोजकानि। परमापूर्वं तु फलव अतस्तदेव प्रयोजकम्। नचात्र वाङ्नियमन्यायः। तत्र हि दीक्षणीयाशब्दो दीक्षणीयापूर्वं लक्षणयोपस्थापयति, ज्योतिष्टोमापूर्वं तु लक्षितलक्षणयेत्यस्ति विप्रकर्षः। अत्र तु परमापूर्वमवान्तरापूर्वं च द्वयमप्याग्नेयादिसाध्यमिति न लक्षणायां विशेषः। प्रधानत्वाच्च परमापूर्वमेव प्रयोजकं युक्तम्। यद्यपि चावान्तरापूर्वाण्येव प्रयोजकानि तथापि प्रकरणाविशेषात्सर्वाणि सर्वेषां प्रयोजकानि, तस्मात्संकर इति। अत्राभिधीयते—सन्ति तावदवान्तरापूर्वाणि, कुतः 'नह्याग्नेयादिकर्माणि विशरारूणि तैर्विना॥ संहत्य परमापूर्वं जनयन्ति स्वरूपतः॥' तदेतदपूर्वाधिकरण एवानागतावेक्षणेन प्रतिपादितम्। सत्सु च तेषु तादर्थ्यमेवावघातादेर्युक्तम्। प्रत्यासत्तेः। यद्यपि चाग्नेयादीन्येवोभयत्र कारणं तथापि साक्षादुत्पत्त्यपूर्वे कारणत्वं तद्द्वारेण तु परमापूर्वे संबन्धनिमित्ता

---

यावद्बलाबलविचारमिति शेषः। श्रुतेः प्राबल्यादस्मिन्पादे श्रुतिविनियोगप्रकारः प्राधान्येन प्रतिपाद्यत इत्याशयेन विषयमाह—**दर्शेति। औषधधर्मा इति।** औषधसंयोगेन श्रुता इत्यर्थः। यद्वा सिद्धान्ताभिप्रायेणौषधधर्मत्वोक्तिः। **किमिति।** अत्र किमवघातादयः सर्वे औषधादीनां सर्वेषामपि शेषभूता उत यथासंयोगमौषधादीनामेवेति संशये तात्पर्ये, कर्तव्या इति तु शेषत्वस्य प्रयोजनाभिप्रायेणोक्तं **किं परमापूर्वप्रयुक्ता इति।** किं फलापूर्वप्रयुक्ता इत्यर्थः। अवान्तरापूर्वाणि न सन्तीति पक्षे तन्निरूप्यपरमत्वस्याप्यभावेन यथाश्रुतानुपपत्तेः। अवान्तरापूर्वसद्भावाश्रयणेन द्वितीयसंशयार्थं संशयान्तरमाह—**सत्सुचेति।** सत्स्वपीत्यर्थः। अवान्तरापूर्वप्रयोजकत्वाश्रयणेन प्रथमसंशयार्थं संशयान्तरमाह—**यदापीति।** ननु व्रीह्यादिश्रुतिबलात्तत्स्वरूपार्थत्वात्कथं संकर इति तटस्थाशङ्कां निराकुर्वन् श्लोकं व्याचष्टे—**अवघातेति।** स्वरूपार्थत्वे आनर्थक्येनापूर्वार्थत्वस्य नवमे वक्ष्यमाणत्वादिति भावः। स्रुवादिव्यावृत्त्यर्थं साधनविशेषेत्युक्तम्। प्रदेयतया साधनत्वं विशेषशब्दार्थः। अनेन चावघातादीनां स्रुवादिसाधारण्याभावमङ्गीकृत्याज्यादिसाधारण्येन पूर्वपक्षकरणात्स्रुवादिसाधारण्याभावप्रतिपादनार्थेन द्रव्यसंख्याहेत्वधिकरणेनापुनरुक्तिः सूचिता। अनेनतु तस्यागतार्थत्वं तत्रैव वक्ष्यामः। **निष्फलत्वादिति।** साक्षात्फलसाधनत्वाभावादित्यर्थः। **तदेवेति।** ततश्च तदेवापूर्वं प्रयोजकं तत्साधनत्वेन व्रीह्यादीनां धर्मग्राहित्वमिति परमापूर्वसाधनत्वेनैव धर्मग्राहित्वमिति संकर इति भावः। **ननु** यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादिति वाङ्नियमस्य दीक्षणीयावान्तरापूर्वप्रयुक्तत्वं नतु सौमिकपरमापूर्वप्रयुक्तत्वमिति नवमे वक्ष्यते तद्वदिह किं न स्यादित्यत आह—**नचेति। लक्षितेति।** तस्य परंपरासंबन्धित्वादिति भावः। **प्रकरणेति।** प्रकरणाविशेषात् व्रीह्यादिशब्देन प्राकरणिकसकलावान्तरापूर्वसाधनलक्षणेति भावः। **विशरारूणीति।** विनश्वराणीत्यर्थः। इदमुपलक्षणं क्रमिकाणीत्यपि द्रष्टव्यम्। **ननु** अन्तिमस्य कर्मणः स्वरूपेण साहित्यसंभवात्तस्यावान्तरापूर्वं नावश्यकं तथा दधिपयसोरेकप्रदानत्वादेकमेवापूर्वं स्यादिति तद्धर्माणां संकरो दुर्वार इत्यत आह—**तदेतदिति।** अन्तिमस्याप्युदीच्याङ्गसाहित्यसिद्ध्यर्थमपूर्वमावश्यकं दधिपयसोरपि तदीययागभेदाद्भावनाभेदस्तद्भेदाच्चापूर्वभेद आवश्यकः भावनाभेदस्य भाव्यापूर्वभेदं विनानुपपत्तेरिति भावः। गतार्थत्वमभिप्रेत्याह—**अनागतेति।** अत्रत्यमेवान्तरापूर्वव्युत्पादनमिति भावः। प्रत्यासत्त्यविशेषमाशङ्क्याव्यवहितसंबन्धेन झटित्युपस्थितेरुत्पत्त्यपूर्वमेव लक्षणीयमित्युपपादयति—**यद्यपीत्यादिना।** यागवैषम्य-

---

१ सत्स्वपिच. २ किं प्राप्तम्. ३ व्रीह्यादीनां च. ४ मेवावान्तरापूर्वं च.

च लक्षणा, तेन व्रीहिशब्दो यागद्वारेणापूर्वमुपस्थापयन् प्रथमं तावदुत्पत्त्यपूर्वे निपतति, तस्यापि चादृष्टत्वेनाज्ञातप्रकारत्वात्परमापूर्वसिद्ध्यौपयिकत्वेन च फलवत्त्वादतिक्रमकारणाभावात्तादर्थ्यमेवावघातादेर्युक्तम् । सत्यपि च सर्वेषां प्रकरणाविशेषे श्रुतेर्व्यवस्थावगमादसंकरः । एवंचावघातादेर्दृष्टार्थता भवति । अन्यथा त्वदृष्टार्थता स्यात् । नच क्वचिदपि दृष्टसंभवे ततएव विध्युपपत्तेरर्थोपपत्तिपरिक्षयाददृष्टकल्पनया सर्वार्थत्वं युक्तमङ्गीकर्तुम् । अतश्च यद्यपि तावदवहन्तीत्येतावन्मात्रं श्रूयते तथापि दृष्टार्थवशादेव व्यवस्था स्यात् किमुत यदा व्रीह्यादिसंयोगेनैव श्रवणं, तस्माद्यथासंयोगं व्यवस्था ॥

स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम् ॥ ५ ॥

## द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

**द्रव्यस्य स्फ्यकपालादेः सांकर्यं वा व्यवस्थितिः ॥ यज्ञायुधत्वं सर्वेषां समं तेनात्र संकरः ॥ ९ ॥**
**वाक्यस्योद्धननादेः स्याद्वैयर्थ्यं संकरे सति ॥ अनुवादो ह्यायुधोक्तिर्व्यवस्था तेन पूर्ववत् ॥ १० ॥**

दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि चे'त्याद्युपक्रम्य 'एतानि वै दश यज्ञायुधानी'ति श्रुतम् । तथा 'स्फ्येनोद्धन्ती'त्यादीन्यपराणि वचनानि । तत्र संशयः किं स्फ्यादिना येन यदस्मिन्प्रकरणे शक्यं तत्सर्वं तेन कर्तव्यमुत यथासंयोगमुद्धननाद्येवेति । तत्रायुधशब्दस्य साधनवचनत्वाद्यज्ञसाधनत्वं गम्यमानं साक्षादसंभवदङ्गेष्ववतरदविशेषात्सर्वाङ्गेषु विज्ञायते । उद्धननादिसंयोगस्त्वनेनैव प्राप्तत्वादवयुत्यानुवादः । नैतद्युक्तम् । एवंहि बहूनामुद्धननादिवाक्यानामानर्थक्यं स्यात् । नचानुवादत्वमपि संभवति नित्यप्राप्त्यभावात् । नह्युद्धननं स्फ्येनैव प्राप्तं अन्येनापि संभवात्, पाक्षिकानुवादत्वे

---

माह—**तस्यापीति** । यागस्य तु क्रियारूपस्य लौकिकत्वेन निर्ज्ञातप्रकारत्वान्न प्रयोजकत्वमिति वैषम्यमिति भावः । निष्फलत्वादित्युक्तं निरस्यति—**परमेति** । साक्षात्फलसाधनत्वमप्रयोजकमिति भावः । **श्रुतेरिति** । व्रीहिशब्दः स्वार्थसंबन्ध्यपूर्वं लक्षयति, औषधद्रव्यककर्मसाध्यापूर्वमेव च । तथा नत्वाज्यसांनाय्यद्रव्यककर्मसाध्यमिति न प्राकरणिकसर्वोत्पत्त्यपूर्वसाधनलक्षणेति भावः । एवं एवंसतीत्यर्थः । **अर्थापत्तीति** । क्वाचित्कदृष्टलाभमात्रेणैवाम्नानस्य चारितार्थ्यादिति भावः । नचात्र परमापूर्वोत्पत्त्यपूर्वयोरेकजन्यत्वेऽप्यवान्तरापूर्वप्रयुक्तत्वव्युत्पादने वाङ्मियमविचारस्य कैमुतिकन्यायेन गतार्थत्वमिति वाच्यम् । भवत्वाग्नेयाद्युत्पत्त्यपूर्वस्य प्रधानजन्यापूर्वत्वादवघातादिप्रयोजकत्वं, दीक्षणीयापूर्वस्य तु अङ्गापूर्वत्वान्न प्रयोजकत्वमित्याशङ्कानिराकरणार्थत्वेन तस्य गतार्थत्वाभावादिति भावः । सूत्रार्थस्तु—तेषां संस्काराणां अर्थेन दृष्टप्रयोजनवशेन व्यवस्थया संबन्ध इति ॥

**द्रव्यं चोत्पत्तिसंयोगात्०** ॥ ११ ॥ प्रथमेनादिशब्देनाग्निहोत्रहवणी च शूर्पं चेत्यादेर्ग्रहणम् । द्वितीयेन कपाले श्रपयति अग्निहोत्रहवण्या हवींषि निर्वपति शूर्पेण विविनक्तीत्यादेः । 'अर्थाद्वा कल्पनैकदेशत्वा'दिति न्यायेन शक्तेः सहकारित्वात्पूर्वपक्षेऽपि न प्राकरणिकसर्वक्रियान्वयः किंतु शक्यमात्रान्वय इत्याशयेनाह—**शक्यमिति** । **साधनेति** । युद्धसाधनवचनस्याप्यायुधशब्दस्य प्रकृते लक्षणया साधनमात्रवचनत्वमिति भावः । **साक्षादिति** । चतुर्थे प्रदेयतया साक्षात्साधनत्वं न संभवतीति वक्ष्यमाणत्वादिति भावः । अनेन चातुर्थिकं यज्ञायुधवाक्यस्य प्रदेयत्वविधिनिराकरणपरं इदंतु परंपरासाधनत्वविधिनिराकरणपरमित्यपुनरुक्तिता सूचिता । **अङ्गेष्विति** । यथा सप्तदशारत्निर्वाजपेयस्येति परम्परासंबन्धेऽपि षष्ठ्युपपत्तेः सप्तदशारत्नित्वं वाजपेयाङ्गपशुयागेऽवतरति एवं यज्ञायुधसमासान्तर्वर्तिषष्ठ्या अपि परम्परासंबन्धेनोपपत्तेः साधनत्वमङ्गेष्ववतरतीति भावः । **अनेनैवेति** । बहुविषयत्वाद्यज्ञायुधवाक्यमेव विधायकमित्यभिमानः । नन्वस्तु यज्ञायुधवाक्यं विधायकं पुरोडाशं चतुर्धा करोति आग्नेयं चतुर्धा करोतीत्यत्रेव विशेषशास्त्रेण सामान्यस्योपसंहारसंभवान्न सर्वार्थत्वमित्यत आह—**उद्धननादीति** । युक्तं तत्रोभयोर्भिन्नशाखागतत्वाच्छाखान्तराधिकरणोक्तरीत्योभयोरपि विधायकत्वाद्विशेषेणोपसंहारः । भिन्नशाखागतत्वं च विशेषे स्थाप्यते । नित्यं सामशाखान्तरीययेति तत्रत्यवार्तिकादेवावगम्यते । इह च विशेषशास्त्रस्याविधायकत्वान्नोपसंहार इति भावः । अवयुत्य एकदेशं पृथक्कृत्येत्यर्थः । अनेनोद्धननादिवाक्यस्य विधायकत्वाभावाद्व्रीह्यादीनामवघातादिसंयोगवदिह संयोगासत्वान्न व्यवस्थितिरिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् ।

---

१ ज्ञाततत्प्रकारत्वात्. २ श्रुतेर्बलीयस्त्वावगमात्. ३ स्फ्यादीनां.

वा नित्यवच्छ्रवणविरोधः। तस्मादेतानि वाक्यानि विधायकानि। यज्ञायुधवाक्यं त्वेतैरेव प्राप्तार्थत्वात् वैशब्दोपबन्धादाख्याताभावाच्चानुवादकम्। वरंच बह्वानर्थक्यादेकानर्थक्यम्। नचास्यानर्थक्यमप्यस्ति। यज्ञायुधानि संभरन्तीत्यनन्तरश्रुतासादनविधिशेषत्वात्। 'तस्मादस्यानुवादत्वादितरे विधयो मताः॥ तेन स्फ्यादेर्व्यवस्था स्यात्कार्येषूद्धननादिषु॥'

आरुण्यादिगुणानामसंकीर्णताधिकरणम्॥ ६॥

## अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्॥ १२॥

**क्रीणात्यरुणयेत्येतत्संकीर्णं वा क्रयैकभाक्॥ क्रमेणानन्वयात्कीर्णः सर्वद्रव्येषु रक्तिमा॥ ११॥**
**द्रव्यद्वारा क्रये योगात्तद्यागे चान्वयः पुनः॥ साक्षात्क्रये गुणस्यार्थाद्द्रव्ये संनिहिते त्वसौ॥ १२॥**

ज्योतिष्टोमे श्रूयते 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती'ति। तत्रारुणशब्दोऽयमाकृत्यधिकरणन्यायेनान्वयव्यतिरेकाभ्यां गुणवचनः। पिङ्गाक्ष्येकहायनीशब्दौ तु यौगिकौ सामानाधिकरण्यादेकद्रव्यवचनौ। गुणाधिक्यफलं च शब्दद्वयम्। नचैकेन विहितेऽपरेण विधिर्न संभवतीति वक्तव्यम्। उभयोरपि श्रुत्यैव द्रव्यवचनयोर्युगपत्प्रवृत्तेः। तदिहारुणिमानंप्रति संदेहः। किमेनं वाक्याद्भित्त्वा प्रकरणेन सर्वद्रव्येषु निवेशयामः किंवा क्रीणातिना संबध्य तदङ्गं सन्नेकहायन्यां निविशित इति। तदर्थं च क्रियासाधनत्वं संभवति नेति। तत्र—'अमूर्तत्वाद्गुणो नैव क्रियां सा-

---

**प्राप्तेति**। अनेन यज्ञायुधवाक्यस्येह विधित्वनिराकरणेऽपि चतुर्थे विधित्वशङ्का पुनरुन्मिषति। स्फ्यादिवाक्यैः परम्परया साधनत्वप्राप्तावपि प्रदेयतया साक्षात्साधनत्वस्याप्राप्त्या वैशब्दाद्युपबन्धेऽप्यप्राप्तार्थतया विधित्वसंभवादिति चातुर्थिकाधिकरणस्योत्थितिरपि सूचिता। अनुवादत्वे आनर्थक्यमाशङ्क्याह—**वरंचेति**। सूत्रार्थस्तु—द्रव्यमपि येन संयुक्तं तदर्थमेवोपपद्यते स्फ्येनोद्धन्तीत्युत्पत्तौ संयोगादिति॥

**अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्॥ १२॥ नन्व**रुणाशब्दस्य गुणविशिष्टद्रव्यवाचितया द्रव्यस्य क्रीणात्यन्वयसंभवेन व्यवस्थोपपत्तेर्विचारोऽयमनर्थक इत्यत आह—**तत्रेति**। आकृत्यधिकरणव्युत्पाद्येन नागृहीतविशेषणान्यायेन तथा गुणे सत्येव द्रव्येऽरुणाशब्दः प्रयुज्यते नासतीत्यन्वयव्यतिरेकाभ्यां चारुणशब्दः केवलगुणवाचको द्रव्ये तु निरूढलक्षणया प्रयुज्यत इत्यर्थः। **नचैवं**सति गुणगतारुणत्वजातिरेव वाच्या स्यान्नतु गुण इति वाच्यम्। गुणगतजातेर्द्रव्यसमवायाभावेन द्रव्येऽरुणादिशब्दप्रयोगस्य गुणगतजात्या निर्वाहासंभवेन गुणस्य तद्वाच्यत्वावश्यंभावादिति भावः। **नन्वेवमनेन** न्यायेन पिङ्गाक्ष्येकहायनीशब्दयोरपि विशेषणमात्रवचनयोः विशिष्टद्रव्यवचनत्वं न स्यात्ततश्च द्रव्यगुणयोरैककर्म्यान्नियमो वक्ष्यमाणोऽनुपपन्नः स्यादित्यत आह—**पिङ्गाक्षीति**। यौगिकत्वं द्रव्यवचनत्वे हेतुः सामानाधिकरण्यं एकत्वे। यथा यौगिकानां द्रव्यवचनत्वं यथा चारुणाशब्दस्य गुणवचनत्वं तथा वार्तिके प्रपञ्चितम्। **ननु** प्रकृते एकः शब्दो गुणविशिष्टद्रव्यविधायकः इतरस्तु लोहितोष्णीषादिवद्गुणमात्रविधिपर इति वक्तुं न शक्यते। पदद्वयस्यापि यौगिकत्वाविशेषेण कारकविभक्त्यन्तत्वाविशेषेण च विनिगमनाविरहात्। तस्मादुभाभ्यामपि गुणविशिष्टद्रव्यविधिरेव वक्तव्यस्तत्र विहितविधानासंभवाद्द्रव्यान्तरविधिरेव स्यादिति कथमेकद्रव्यवचनत्वं कथं वा गुणाधिक्यफलकत्वमित्याशङ्कां निराकरोति—**नचेति**। उभयोर्द्रव्यविधायकत्वेऽपि न द्रव्यभेदः सामानाधिकरण्यबललब्धद्रव्यैक्यपरित्यागे कारणाभावात्। नच विहितविधानानुपपत्तिरेव तत्र कारणम्। उभयोरपि युगपद्विधायकत्वे तदभावादित्यर्थः। नचात्र शक्तिलक्षणाकृतवैषम्यमस्ति येनैकस्यैव विधायकत्वं स्यादित्याशयेन श्रुत्येत्युक्तम्। 'बहुव्रीहेश्चान्यपदार्थे शक्तिरेव नतु लक्षणे'ति वार्तिकएव साधितमिति भावः। **प्रकरणेनेति**। प्रकरणेनेत्युपलक्षणे तृतीया। प्राकरणिकसर्वद्रव्ये निवेशयाम इत्यर्थः। प्रकरणस्य स्वातन्त्र्येण गुणविनियोजकत्वाभावेन यथाश्रुतानुपपत्तेः कारकाणां मिथोऽन्वयाभावादरुणयेत्यस्य क्रीणातिनैवान्वयो वाच्यः सच न संभवतीत्याह—**अमूर्तत्वादिति**। नचैवं जातेरपि कारकत्वं न स्यादिति वाच्यम्। जातिवाचकशब्दानामप्यत्राधिकरणे विषयत्वेनैतत्पूर्वपक्षेष्टापत्तेरिति **भवदेवः**। अन्ये तु अमूर्ताया अपि जातेर्द्रव्याध्यवसायहेतुत्वात्क्रियासाधनत्वमारुण्यस्य तु नाध्यवसायहेतुत्वम्। एकहायन्यादिपदैरेव द्रव्यस्याध्यवसितत्वादिति वदन्तो गवा यजेतेत्यादिजातिवाचकशब्दानां नोदाहर-

---

१ युधशब्दवाक्यं. २ नर्थक्यं यज्ञा. ३ अरुणयेत्येकवाक्यतया प्रतीयमानार्थैकत्वे द्रव्यगुणयोरेकहायन्यरुणाशब्दवाच्ययोः परस्परमवच्छेद्यावच्छेदकतया नियमः कृतः ऐककर्म्यादेकक्रयलक्षणक्रियाकार्यार्थत्वात्. ४ वाचिनौ. ५ द्रव्यवाचकयोः. ६ सदेकहायन्य.

धयितुं क्षमः । तस्मात्क्रीणातिना नास्य संभवत्येकवाक्यता ॥' क्रीणातिना हि संबध्यमानस्तृतीयासंयोगात्करणकारकं स्यात् । नचामूर्तस्य करणकारकत्वं संभवतीति नास्य क्रैयसंबन्ध इति । ततः पृथग्भूतः प्रकरणे निविशत इति । ननु प्रकरणे वा कथमस्य निवेशः । न तावत्क्रियाभिः, अमूर्तत्वात् । नच द्रव्यैः, कारकस्य द्रव्यसंबन्धानुपपत्तेः । अनुपात्तानि चात्र द्रव्याणि कथं तैर्गुणः संबध्येत । स्यादेतत् । तृतीयया करणद्रव्याणि प्राकरणिकान्यनूद्य प्रातिपदिकार्थो गुणस्तत्परिच्छेदकत्वेन विधीयते नतु गुणस्य करणत्वं येन द्रव्यसंबन्धो न स्यात् । तृतीयया चोपात्तानां द्रव्याणां नानुपादानदोष इति । नैतद्युक्तम् । नहि तृतीया करणीभूतद्रव्याभिधायिनी । विभक्तयो हि कारकशक्तिं निष्कृष्याभिधायकतया क्रियां विशिंषन्ति नतु कृदन्तकरणादिशब्दवत्कारकोपसर्जनं द्रव्यमभिदधति, येन गुणस्तत्परिच्छेदकतया संबध्येत । उच्यते । प्रातिपदिकमेव गुणवचनमपि लक्षणया द्रव्यं प्रतिपादयति । तच्च तृतीयासंयोगात्करणं तदनेन पदेन गुणविशिष्टं द्रव्यं करणरूपं प्रतिपाद्यते । तत्र विशेष्याणि करणद्रव्याणि प्रकरणगतान्यनूद्य विशेषणभूतो गुणः परिच्छेदकत्वेन विधीयते, येनयेन द्रव्येण किंचित्क्रियते तेनारुणगुणकेनेति । नन्वेवं लक्षितस्य द्रव्यस्य क्रयएव करणत्वस्य संभवात्किमिति वाक्यभेदः । नानेन लक्षितं द्रव्यान्तरं शक्यं विधातुम् । श्रौतैकहायन्यवरुद्धत्वात्क्रयस्य, ऐकहायनी तु स्वशब्दविहिता न पुनर्लक्षणया विधातुं शक्यते । अथैकहाय-

---

णत्वमित्याहुः । **तृतीयेति ।** **ननु** आरुण्यादिविशिष्टक्रयविधिरयं ततश्चारुणयेत्यस्योद्भिदाधिकरणोक्तरीत्या मत्वर्थलक्षणावश्यंभावेनारुणाशब्दगततृतीयाविभक्त्या मत्वर्थलक्षणयाऽरुणाप्रातिपदिकप्रतिपाद्यक्रयगतमेव कारकत्वं प्रतिपादनीयमिति कथं तृतीयासंयोगादारुण्यगुणस्य कारकत्वमिति चेत् । मत्वर्थलक्षणायामपि क्रियाकारकसंबन्धापरित्यागेनैव क्रयस्य लक्षणीयत्वेनारुण्यस्य कारकत्वहान्यभावाद्यथाच प्रतीयमानक्रियाकारकसंबन्धापरित्यागेन मत्वर्थलक्षणा तथा चित्राज्याधिकरणे प्रतिपादितमस्माभिः । **अनुपात्तानि चेति ।** प्रकरणस्य साक्षाद्गुणविनियोजकत्वाभावेन प्राकारणिकद्रव्ये विनियोगमिच्छता केनचिच्छब्देन प्राकरणिकद्रव्याण्यनूद्य तत्रायं गुणो विधीयत इति वक्तव्यम् । नचात्र प्राकरणिकद्रव्यवाचकः कश्चिच्छब्दोऽस्तीत्यर्थः । तया क्रियां विशिषन्तीत्यनेन कारकशक्तेरेव क्रियान्वययोग्यत्वं नतु शक्तिमतो द्रव्यस्य । ततश्च शक्तिमद्द्रव्याभिधायित्वे क्रियान्वयो न स्यादिति दोषं सूचयति । **ननु** पदस्यैकप्रसरत्वेन वषट्कर्तुः प्रथमभक्ष इत्यादिवदेकदेशेनानूद्यैकदेशान्तरेण विध्यसंभवात्कथमेकपदोपस्थितगुणविशिष्टकरणद्रव्यमध्ये विशेष्यभूतकरणद्रव्योद्देशेन विशेषणभूतगुणमात्रविधिरित्याशङ्कां निराकर्तुं विधिप्रकारमभिनयति—**येनयेनेति ।** अयं भावः—भवेदेवं यद्येकमेव पदमुद्देश्यविधेयोभयसमर्पकमित्यभिमतं स्यात् किंतु साकाङ्क्षत्वादरुणयेति पदेनान्वययोग्यं तृतीयान्तं प्राकरणिकद्रव्यवाचकं पदान्तरं कल्प्यते । कल्पितेन च पदेन प्राकरणिकं करणद्रव्यमनूद्य तेनारुणगुणकेनेत्येवमरुणयेत्यनेन पदेन गुणो विधीयते । नचैवं द्रव्यस्य कल्पितपदेनैव लाभादरुणयेति प्रातिपदिकस्य गुणविशिष्टद्रव्ये लक्षणाभ्युपगमवैयर्थ्यमिति वाच्यम् । कल्पनीयस्य द्रव्यवाचकशब्दस्य तृतीयान्तारुणापदसंबन्धयोग्यत्वार्थं तृतीयान्तस्यैव कल्पनीयतया तत्सामानाधिकरण्यसिद्ध्यर्थं अरुणाप्रातिपदिकस्य तद्गुणकद्रव्ये लक्षणावश्यंभावादिति । **नन्व**रुणाप्रातिपदिकस्य द्रव्यलक्षकत्वस्वीकारे लक्षितस्य द्रव्यस्य क्रये करणतया विधानसंभवात्किमिति वाक्यभेदेन प्राकरणिकद्रव्योद्देशेन गुणविधिर्स्वीकार इति शङ्कते—**नन्विति । श्रौतेति ।** अत्र हि वाक्ये एकहायनीश्रुत्या प्रतिपाद्यते अरुणगुणकद्रव्यं तु लक्षणया । श्रौतस्य च शीघ्रं प्रतीतिः लाक्षणिकस्य विलम्बेन । यच्च शीघ्रं प्रतीतं तत्क्रयेण झटित्यन्वीयते तेन चावरुद्धे क्रये विलम्बेन प्रतीतस्य द्रव्यस्य नास्त्यन्वययोग्यता । यथापदश्रुत्या प्रथमतो धात्वर्थस्य करणत्वेनान्वये तदवरुद्धायां भावनायामुपपदार्थस्य पश्चान्न करणत्वेनान्वयस्तद्वत् । तस्माच्छ्रौतैकहायन्यवरुद्धे क्रये लाक्षणिकद्रव्यान्तरविधानं न संभवतीत्यर्थः । **ननु** द्रव्यान्तरविध्यसंभवेऽपि यथा पिङ्गाक्षीशब्देन एकहायनीशब्देन च एकहायनीद्रव्यं विधीयते तथारुणाशब्देनापि विधीयतामित्यत आह—**एकहायनीति ।** पिङ्गाक्ष्येकहायनीशब्दयोरुभयोरपि श्रुतिवृत्तत्वाविशेषेण युगपत्प्रवृत्तेर्विनिगमनाविरहादुभाभ्यामेकहायनीद्रव्यविधानेऽपि अरुणाशब्देन तद्विधानं न संभवति । श्रुतिवृत्ताभ्यां पिङ्गाक्ष्येकहायनीशब्दाभ्यां प्रथमतो विहिततया विहितविध्ययोगादित्यर्थः । **नन्वस्तु** पिङ्गाक्ष्येकहायनीशब्दाभ्यामेवैकहायनीविधानं तथापि प्रतीतैकवाक्यताभङ्गं विनैवारुणाशब्दस्तत्रैव गुणविधितयान्वीयतामिति शङ्कते—**अथेति ।** अत्र हि अरुणैकहायनीशब्दयोर्विशेषणविशेष्यभावेनान्वयमङ्गीकृत्यारुण्यविशिष्टैकहायनीविधिरित्येवमरुणाशब्दस्य गुणविधित्वं न संभवति । तृतीयान्तस्यारुणाशब्दस्य क्रयान्वयपरित्यागेनैकहायनीविशेषणत्वे-

---

१ क्रियासंबन्ध. २ तृतीया. ३ चोपादानाद्द्रव्याणां. ४ करणभूतं

नीमेवानूद्य तत्रैव गुणो विधीयतां न भविष्यति वाक्यभेदः। नैवं शक्यम्। विधीयते ह्यत्रैकहायनी क्रयंप्रति गुणभूता च स्वार्था च, नासावेकस्मिन्नेवोच्चारणे[1]ऽनुवदितुं गुणंप्रति प्रधानीभवितुं परार्थे चोच्चारयितुं शक्यते[2], आवृत्तिप्रसङ्गात्। प्राकरणिकानि तु द्रव्याणि वाक्यान्तरविहितानि शक्यन्ते वाक्यान्तरेणानुवदितुम्। तस्मात्कृत्स्ने प्रकरणेऽरुणिमा निविशत इति प्राप्ते ब्रूमः। 'तृतीयया गुणस्यैव करणत्वं क्रयंप्रति॥ विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यते॥' यद्यप्यमूर्तत्वादयं न साक्षात्क्रियां साधयितुमलं तथापि द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुम्। नह्यपरिच्छिन्नं द्रव्यं क्रियां साधयति, गुणश्च तत्परिच्छिनत्तीति युक्तमस्य क्रये साधनत्वम्। गुणं हि साधनत्वेन विदधच्छब्दो यथानेन[3] शक्यते साधयितुं तथा कुर्यादित्याह। सच द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं नान्यथा। तेनायमर्थो भवति अरुणगुणपरिच्छिन्नेन[4] द्रव्येण कुर्यादिति। एवं संभवति श्रौतस्यैव गुणस्य क्रयैकवाक्यत्वेन लक्षणावाक्यभेदश्च न युज्यते। यदा च क्रयार्थत्वं तदा तदीयएव द्रव्ये निवेशादेकहायन्यामेवास्य निवेशः। **ननु** वासःप्रभृतीन्यन्यान्यपि क्रयद्रव्याणि तेष्वपि निविशेत। न। तेषां क्रयान्तरद्रव्यत्वात्। भिन्ना ह्येते प्रतिवाक्यं क्रयाः[5] विधिभेदात्, सर्वे ह्येते विधयोऽन्योन्यस्मिन्नुत्पत्तिशिष्टद्रव्यावरोधाद्द्रव्यान्तरं विधातुमशक्नुवन्तस्तत्तद्द्रव्यविशिष्टक्रयविधानार्थाः। नच विहितस्य विधानं संभवतीति सिद्धः क्रयभेदः। तदाह भाष्यकारः 'भिन्ने हि वाक्ये एकहायनीसाधनक एकः क्रयोऽवबुद्धो भवति। अरुणासाधनकमपि क्रयान्तर'मिति। एवंहि वदन् वाक्यभेदे

---

नान्वयानुपपत्तेः एवंचैकहायन्युद्देशेनैव गुणविधायकत्वं वाच्यम्। तथासत्येकस्मिन्वाक्ये एकहायन्याः क्रये एकहायन्यां गुणस्य च वाजपेयाधिकरणोक्तरीत्या विरुद्धत्रिकद्वयापत्त्या विधानासंभवाद्विध्यावृत्तिलक्षणो वाक्यभेदः स्यादेवेति परिहरति—**नैवमिति**। **ननु** तव वाक्यभङ्गलक्षणो वाक्यभेदः मम त्वावृत्तिलक्षण उभयोरपि वाक्यभेदाविशेषात्कथं निर्धारणमित्याशङ्कायां सर्वापेक्षया प्रधानभूतस्य विधेरावृत्त्यपेक्षया वाक्यभङ्गएव श्रेयानिति परिहारमभिप्रेत्य स्वपक्षे आवृत्त्यभावमुपपादयति—**प्राकरणिकानीति**। **नन्वे**वमपि संनिधानादेकहायन्यामेव निवेशः स्यान्न सर्वद्रव्येष्विति शङ्कामपवदितुमुपसंहरति—**तस्मादिति**। आनन्तर्यमचोदनेति न्यायादेतादृशसंनिधिरकिंचित्कर इति भावः। **गुणस्यैवेति**। **ननु** तद्गुणकद्रव्यस्येत्येवकारार्थः। **द्रव्यपरिच्छेदेति**। एतादृशमिदं द्रव्यमित्येवंलक्षण इतरव्यावृत्तद्रव्यप्रतीतिविशेषः परिच्छेदशब्दार्थः। **ननु** तृतीया साक्षात्साधनत्वं ब्रवीति नतु द्रव्यपरिच्छेदमुखेनेत्यत आह—**गुणं हीति**। साधनत्वमेव तृतीयार्थो नतु साक्षात्साधनत्वमिति भावः। **यथानेनेति**। अशक्येऽर्थे विध्ययोगादिति भावः। **नन्वेवं** द्रव्यगुणयोरेकार्थत्वाद्व्रीहियववद्विकल्पः स्यादिति शङ्कां परिहर्तुमाह—**तेनेति**। द्रव्यस्य साक्षात्क्रयनिर्वर्तकत्वाद्गुणस्य तत्परिच्छेदकत्वाच्चोभयोर्भिन्नद्वारत्वान्न विकल्पः किंतु समुच्चय एवेति भावः। **नन्वस्तु** क्रयार्थत्वमारुण्यस्य तथापि कथमेकहायन्यां निवेशः यत्किंचिद्द्रव्यद्वारापि क्रयसाधनत्वोपपत्तेरित्याशङ्क्य सूत्रोक्तं परस्परनियममुपपादयति—**यदाचेति**। एकहायन्याः परिच्छेदकापेक्षायाः स्ववाक्योपात्तगुणेन गुणस्य परिच्छेद्यापेक्षायाश्च स्ववाक्यगतद्रव्येणैव शान्तिसंभवे गुणान्तरेण द्रव्यान्तरेण च तच्छान्तिस्वीकारस्यायुक्तत्वादेकहायन्यारुण्ययोः परस्परनियम एवाभ्युपगन्तव्य इति भावः। नचैतावतारुण्यस्यैकहायन्यङ्गत्वमिति भ्रमः कर्तव्यः। आरुण्यस्य परिच्छेदकतया एकहायन्युपकारकत्ववदेकहायन्यो अपि परिच्छेद्यतया गुणोपकारकत्वेन वैपरीत्यस्यापि प्रसङ्गात्। आरुण्यवच्चतुरो मुष्टीर्निर्वपतीति चतुष्ट्वसंख्याया निर्वापान्वितायाअपि मुख्याङ्गत्वापत्त्या संख्यामुख्यधिकरणविरोधप्रसङ्गाच्च। अयं चारुण्यस्यैकहायन्यां निवेशो न शाब्दः। अरुणया क्रीणाति अरुणयैकहायन्येत्येवमेकस्य पदस्य युगपदुभयान्वयायोगात्। नच पर्यायेणोभयान्वयः। एकस्माद्वाक्यात्क्रमिकार्थद्वयप्रतीत्यसंभवात्किंत्वार्थिकः। नच वार्तिके एवंच वाक्यगतं सामानाधिकरण्यं समर्थितं भविष्यतीत्युक्त्या शाब्दत्वमेव तस्य प्रतीयत इति वाच्यम्। तस्य वाक्यस्यारुण्यैकहायन्योः आर्थिकान्वयसमर्थनानन्तरं प्रवृत्तत्वेन तत्रैवाभ्युच्चयमात्रपरत्वादिति ध्येयम्। एवमप्येकहायन्यामेवेति चावधारणासिद्धिरिति शङ्कते—**नन्विति**। ननु वासःप्रभृतिवाक्येषु क्रयविधेरेवाभावात्कथं विधिभेद इत्यत आह—**सर्वे हीति**। **एवमिति**। अरुणावाक्यस्याभेदेसति क्रयभेदः स्यादित्युक्ते यत्र वाक्यभेदः सिद्धस्तत्र क्रयभेद इति स्पष्टमवगमादित्यर्थः। **प्राभाकरास्तु** गुणकर्मणां साध्यभेदाद्भेदः प्रकृते च सोमस्यैव सर्वत्र साध्यत्वेन साध्यभेदाभावान्न क्रयभेद इत्याहुस्तन्मतमनूद्य दूषयति—**येत्विति**। **न्यायेति**। उत्पत्तिशिष्टद्रव्यावरोधेन द्रव्यविध्यसंभवात्सर्वत्र क्रयविधिनिश्चये सति हि विहितस्य विधानानुपपत्तिलक्षणभेदसाधकन्यायविरोधादित्यर्थः। **नचेति**। एक-

---

१ वेकोच्चारणे. २ शक्यन्ते. ३ यथाह्यनेन. ४ अरुणपरि. ५ क्रियाविधिभेदात्.

क्रयभेदं दर्शयति। तेन क्र- ये तु गुणकर्मत्वात्क्रयाणां भेदं नेच्छन्ति ते न्यायविरोधाद्भाष्यविरोधाच्चो-पेक्षणीयाः। नच गुणकर्मणां भेदो नास्तीति राजाज्ञा। ऐन्द्रवायवादिग्रहाणां भेदस्य पशुसोमाधिकरणे दर्शितत्वात्। अतोस्ति क्रयभेदः। 'क्रयणेषु[1] विकल्पः स्या'दित्यत्राधिकरणे क्रयाणामेव विकल्पसमुच्चयचिन्ता न द्रव्याणामित्यविरोधः॥

ग्रहसंमार्जनाधिकरणम्॥ ७॥

**एकत्वयुक्तमेकस्य श्रुतिसंयोगात्॥ १३॥ [सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्॥ १४॥ चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत॥ १५॥]**

**संमार्ष्टि ग्रहमित्येको ग्रहः शोध्य उताखिलः॥ एक उद्देश्यसंख्याया उपादेयवदादरात्॥ १३॥**
**प्राधान्यात्तद्गुणावृत्तेरेकत्वमनपेक्षितम्॥ तद्विधौ वाक्यभेदोऽतो ग्रहोक्त्या सर्वशोधनम्॥ १४॥**

एवं त्रिभिरधिकरणैः क्रमेण संस्कारद्रव्यगुणानां यथासंयोगं व्यवस्थोक्ता। संयोगएव त्विदानीं चिन्त्यते किं विवक्षितविशेषणेन शेषिणा शेषस्य संयोगः किमविवक्षितविशेषणेनेति। एवंहि श्रुतं 'ग्रहं संमार्ष्टी'ति। तत्र संशयः किमेकस्य ग्रहस्य संमार्ग उत सर्वेषामिति। तदर्थं च किमुद्देश्यगता संख्या विवक्षिता नेति।—'तत्र श्रुतिबलाद्यद्वत्संख्योपादेयगामिनी॥ विवक्षिता तथोद्देश्यगता श्रुत्यविशेषतः॥' इति प्राप्तेऽभिधीयते—'उद्देश्यलक्षणं जातिर्यद्द्रव्यं लक्ष्यते तया॥ तस्याङ्गमेष संमार्गः सर्वस्येति विनिश्चयः॥' यदि ग्रहत्वजातेरयं संस्कारः स्यात्ततस्तस्याः प्रतिव्यक्तिसमाप्तेर्यत्र क्वचिद्द्रव्ये संस्कृते सा संस्कृतैवेति न द्रव्यान्तरे संस्कारः क्रियेत, तस्यास्त्वमूर्तत्वादसाधनत्वाच्च तल्लक्षितानां द्रव्याणाम् ज्योतिष्टोमापूर्वसाधनानामयं संमार्गः। तत्रापि यदि द्रव्याणि संमार्गंप्रति गुणभूतानि स्युः पशुरिव यागंप्रति ततो येनकेनापि सिद्धेर्नावश्यं सर्वत्र क्रियेत। नहि यावद्गुणं प्रधानमावर्तयितव्यं प्रयोजनाभावात्। ततश्च कियता द्रव्येणायं संमार्गः कर्तव्य इत्यपेक्षा भवति। तस्यां चापेक्षायां परिच्छेदकत्वेन संख्या विधीयते पश्वेकत्ववत्, प्रधानानि त्विह द्रव्याणि संमार्गंप्रति

स्मिन्नपि साध्ये विकल्पेन समुच्चयेन वानेकसाधनान्वयसंभवात्साध्यभेदो न कर्मभेदप्रयोजकः किंतु विधिभेद एवेति भावः। **ऐन्द्रेति**। ऐन्द्रवायवादिग्रहानां सोमरसलक्षणसंस्कार्यात्मकसाध्यस्यैकत्वेऽपि दशैतानध्वर्युः प्रातःसवने गृह्णात्याश्विनो दशमो गृह्यते तं तृतीयं जुहोतीति क्रमसमुच्चयोपपादनाय तैरेव भेदस्य प्रदर्शितत्वादित्यर्थः। नन्वेवं 'क्रयणेषु तु विकल्पः स्या'दिति द्वादशाध्यायाधिकरणविरोधः, तत्र क्रयद्रव्याणामेकहायनीवासःप्रभृतीनां विकल्पसमुच्चयचिन्तनात्तस्य च क्रयैक्यं विनानुपपत्तेरित्यत आह—**क्रयणेष्विति**। सौत्रः क्रयणशब्दो भावसाधनो नतु करणसाधन इति भावः॥

**एकत्वयुक्तमेकस्य श्रुतिसंयोगात्॥ १३॥** ननूद्देशविशेषणविवक्षाऽविवक्षाविचारस्याध्याये न सङ्गतिरिति शङ्कामपवदितुमाह—**एवमिति**। संमार्गस्य तेषामर्थे नेत्यधिकरणन्यायाद्यथासंयोगं ग्रहशेषत्वे सिद्धे संयोगप्रकारविशेष इदानीं चिन्त्यत इति श्रौतविनियोगचिन्तारूपत्वादध्याये सङ्गतिर्यथासंयोगं शेषत्वे सिद्ध एव तद्विशेषचिन्ता सङ्गच्छत इत्यनन्तरसङ्गतिश्चेति भावः। **संख्येति**। इदंच प्रकृतोदाहरणमात्राभिप्रायेण उद्देश्यविशेषणमात्रस्यैवेहाविवक्षाप्रतिपादनादित्याहुः। **तत्रेति**। श्रुतत्वाद्यथोपादेयगतं विशेषणं विवक्षितं एवं श्रुतत्वविशेषादुद्देश्यगतमपि विशेषणं विवक्षितमित्यर्थः। यद्वा यथा पशुनेत्यादावुपादेयगतसंख्या प्रत्ययश्रुत्या कारकान्वितासती विवक्षिता तद्वदुद्देश्यगतापि संख्या प्रत्ययश्रुत्या कारकान्वितासती तद्वारेण क्रियान्वयाद्विवक्षितेति संख्यामात्राभिप्रायेण योज्यम्। नहि श्रुतत्वमात्रेण पश्वेकत्वादीनां विवक्षा किंत्वपेक्षया। प्रकृते च सर्वग्रहाणां संमार्गावधारणेनापेक्षाविरहाच्छ्रुतस्यापि न विवक्षेति सिद्धान्तमाह—**उद्देश्येति**। उद्देश्यानां ग्रहव्यक्तीनामुपलक्षणमित्यर्थः। यद्रीत्या जातेरुपलक्षणत्वं स्वीकृतं तद्विशदयन् श्लोकं व्याचष्टे—**यदीति**। **अमूर्तत्वादिति**। मूर्तद्रव्यमेव संमार्गक्रियाकर्मेत्यमूर्तत्वाज्जातेः संमार्गायोग्यत्वमिति भावः। **असाधनत्वादिति**। यद्यपि ग्रहविधिवाक्यगतस्य ग्रहशब्दस्याकृत्यधिकरणन्यायेन जातिवाचित्वात्तस्या व्यक्तिपरिच्छेदकतया साधनत्वमस्ति तथापि साक्षादुपयोगित्वादावश्यकत्वाच्च व्यक्तीनामेवायं संस्कार इति भावः। तस्याङ्गमित्यस्याशयं विवृणोति—**तत्रापीति**। गुणभूतत्वे येनकेनापि सिद्धिमेवोपपादयति—**नहीति**। द्वितीयानिर्देशः सक्तुसाधारण इति तद्वैषम्यार्थमाह—

[1] क्रयणेतु.

द्वितीयानिर्देशात्प्रयोजनवत्त्वाच्च, प्रतिप्रधानं च गुणावृत्तेः सर्वेषां समुच्चितानामयं संस्कार इति निश्चयान्न परिच्छेदकापेक्षा। तदभावाच्च न संख्या पूर्ववदादर्तव्या। परिच्छेदकतया हि तस्याः क्रियान्वयः। नच परिच्छेदोऽपरिच्छिन्ने संभवतीति द्वाराभावान्न क्रियान्वयः संख्याया विधातुं शक्यते। विधीयमानमप्येकत्वं सर्वद्रव्येषु समुच्चयेन संमार्गे प्राप्ते परिसंख्यार्थं स्यात्। साच त्रिदोषा। नचैकस्मिन्वाक्ये संमार्गविधिः परिसंख्या च संभवति वचनव्यक्तिभेदात्। नचास्य विधिरपि संभवति। कुतः—'ग्रहस्य संमृजेर्वैतत्प्रधानं गुण एव वा॥ सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता॥' विधीयमानं ह्येकत्वं यदि तावद्ग्रहद्रव्यस्य विधीयेत ततो ग्रहसंमार्गसंबन्धो ग्रहैकत्वसंबन्धश्चेत्यर्थद्वयविधानाद्वाक्यभेदः स्यात्। विहितमपि चैकत्वं ग्रहस्वरूपमात्रोपक्षयान्न संमार्गविशेषणमिति सर्वेषां संमार्गः स्यादित्यस्मत्पक्षाविरोध एव। अथ संमार्गान्वितस्य ग्रहस्यैकत्वं विधीयते न स्वरूपस्य। नैवं शक्यम्। नहि संमार्गो ग्रहविशेषणम्। निर्ज्ञातं हि विशेषणं भवति। संमार्गस्त्विहापूर्वो विधीयते। कथमसौ ग्रहविशेषणम्। युगपद्विधानविशेषणत्वयोरभ्युपगमे वाक्यभेदः, ग्रहं संमृज्यात्सं च संमृज्यात्स एक इति। अथैकत्वविशिष्टस्य ग्रहस्य संमार्ग एकोऽर्थो विधीयते तेन न कश्चित्पूर्वोक्तो दोषः स्यादिति मतं कस्तदा भवति वाक्यार्थः, यद्ग्रहजातीयमेकसंख्यं च द्रव्यं तस्य संमार्ग इति। एवमपि सर्वेषां प्रत्येकमेकत्वाद्ग्रहत्वाच्च संमार्गस्य च तद्गुणत्वात्सर्वत्र प्राप्तिः स्यात्। अपिच

---

**प्रयोजनवत्त्वाच्चेति। प्रतिप्रधानमिति।** यस्यैव प्रधानस्य गुणो न क्रियते तत्कार्यस्य वैगुण्यं स्यादिति गुणः प्रतिप्रधानमावर्तनीय इति भावः। **विधातुमिति।** यद्यपि पूर्वपक्षे संख्याया उद्देश्यकोटिनिवेशस्यैव वक्तुमुचितत्वेन विधेयत्वस्य पूर्वपक्षानभिमततया इदमनुचितं तथापि वक्ष्यमाणरीत्या संख्याया उद्देश्यकोटिनिवेशासंभवाद्विधेयतयैव संख्याविवक्षा वाच्या। सापि न संभवतीत्यभिप्रायेण विधेयत्वनिराकरणं बोध्यम्। यदि न्यायतः सर्वग्रहेषु संमार्गावगमेऽप्येकत्वविधिः स्यात्तदा परिसंख्यार्थ एव सः स्यात्सा च स्वार्थत्यागपरार्थस्वीकारप्राप्तबाधलक्षणदोषत्रययुक्तत्वादयुक्तेत्याह—**विधीयमानमपीति।** पश्वेकत्वादौ तु न न्यायतः सर्वत्र प्राप्तिः प्रागुक्तयुक्तेरिति न तत्र परिसंख्यार्थो विधिरिति वैषम्यमिति भावः। **नच** प्रातिपदिकेन सर्वग्रहसाधारण्येन संमार्गप्राप्त्यनन्तरमेकवचनेनेयं परिसंख्या न प्रवर्तते। प्रकृतिप्रत्यययोः सत्यपि पौर्वापर्ये पृथक्स्वस्वार्थविधायकत्वाभावात्, ततश्च प्रातिपदिकेन सामान्यतः प्राप्त्यनन्तरं परिसंख्याप्रवृत्त्यभावेनाप्राप्तपरिसंख्यात्वात्कथं त्रैदोष्यमिति वाच्यम्। एकं ग्रहं संमृज्यादित्येवं युगपद्विधौ ग्रहाणां प्रत्येकमेकत्वादिति वक्ष्यमाणरीत्या ग्रहान्तरव्यावृत्त्यसिद्धेरत्राप्राप्तपरिसंख्याया वक्तुमशक्यत्वेन परिसंख्यापक्षेऽगत्या ग्रहप्रातिपदिकात्सर्वग्रहेषु संमार्गप्राप्तिं प्रथमतः स्वीकृत्य पश्चादेव एकवचनेन शब्दवृत्त्या इतरपरिसंख्यायाः स्वीकार्यतया त्रैदोष्यस्यापरिहार्यत्वादिति भावः। इदमेवाभिसंधाय वाक्यभेदमप्याह—**नचेति। वचनेति।** ग्रहं संमृज्यात् एकमेव नतु ग्रहान्तरमित्येवं संमार्गविधिवचनव्यक्तेः परिसंख्यावचनव्यक्तेश्च भेदेन वाक्यभेदप्रसङ्गादित्यर्थः। **नन्वे**कत्वस्याविधेयत्वेऽपि ग्रहवद्विवक्षा किं न स्यादिति शङ्कायां युक्तं ग्रहस्याविधेयस्याप्युद्देश्यतया विधिसंस्पर्शाद्विवक्षितत्वं एकत्वस्य तु सर्वथा विधिसंबन्धाभावान्न विवक्षितत्वमिति परिहारमभिप्रेत्याह—**नचास्येति।** अत्र विधिशब्द उद्देश्यविधेयसाधारण्येन विधिसंस्पर्शमात्रपरः। एवमग्रे। अतो नास्य विधेयतेत्यस्यापि विधिसंस्पर्शमात्रनिषेधपरत्वमेव प्राधान्यपक्षे विधेयत्वासंभवेन यथाश्रुतानुपपत्तेरिति ध्येयम्। **ग्रहस्येति।** किमेकत्वं ग्रहसंबन्धि सत्, विधिसंस्पर्शिसंमार्गसंबन्धि सद्वा। यदाच संमार्गसंबन्धि तदा किं संमार्गापेक्षया प्रधानमुत गुणः सर्वथा वाक्यभेदः स्यादित्यर्थः। **सर्वेषामिति।** संमार्गानन्वयिना तेन ग्रहान्तरेषु संमार्गस्य व्यावर्तयितुमशक्यत्वादिति भावः। **न स्वरूपस्येति।** न ग्रहमात्रस्येत्यर्थः। ततश्च न सर्वेषां संमार्गप्रसक्तिरिति भावः। **निर्ज्ञातमिति।** ज्ञातं ह्युद्देश्यविशेषणं भवतीत्यर्थः। **ननु** संप्रत्येव विधिना ज्ञातत्वाद्विशेषणत्वमस्त्वित्यत आह—**युगपदिति।** नन्वेवमेकत्वस्य ग्रहविशेषणतया विध्यसंभवेऽपि संमार्गविधावुद्देश्यतावच्छेदकत्वेन ग्रहविशेषणत्वमस्त्विवति शङ्कते—**अथेति। न कश्चिदिति।** एकस्य संमार्गविधाने सर्वेषामप्रसक्तेर्लौकिको ग्रहैकत्वसंबन्धस्य निर्ज्ञातत्वाच्चेति भावः। एकमेव संमृजेत नतु ग्रहान्तरमिति वाक्यार्थस्वीकार एव ग्रहान्तरव्यावृत्तिर्भवति नान्यथा। एकत्वविशिष्टग्रहस्य संमार्गविधौ च न तथा वाक्यार्थ इत्याशयेन परिहरति—**कस्तदेति।** एकत्वविशिष्टस्य ग्रहस्य संमार्गविधाने ग्रहस्य प्रथमत एकत्वान्वयो वाच्यः। नचासौ संभवतीत्याह—**अपिचेति।** संमार्गान्वितं सद्विधिसंस्पर्शीति पक्षं सोपप-

---

१ ग्रहस्य. २ कत्वसंबन्धो विधीयते न स्वरूपमात्रस्य. ३ विधीयते न कश्चित्.

विभक्त्या युगपत्संख्या कारकं चोच्यते नतु प्रथमं संख्यां प्रातिपदिकार्थस्याभिधाय पश्चात्तद्विशिष्टस्य कारकत्वं, येनैकत्वविशिष्टस्य ग्रहस्य संमार्गंप्रति कर्मत्वं स्यात्, तत्र तावदेकत्वं ग्रहविशेषणम्। अथैतदपि पश्चेकत्ववद्विभक्तिश्रुत्या कारकं सत्क्रिययैव संबध्यते तत्रापि द्वयी गतिः स्यात्, एकत्वस्याङ्गं संमार्गः संमार्गस्याङ्गं चैकत्वम् । यदि तावदेकत्वाङ्गं संमार्गः स्यात्ततो ग्रहमेकत्वं चोद्दिश्य संमार्गविधानादुद्देश्ययोश्चोपादेयवत्क्रियया वशीकरणासंभवात्प्रत्येकमेव ताभ्यां क्रियासंबन्धात्प्रत्युद्देश्यं वाक्यसमाप्तेर्वाक्यभेदः । पुनरपि च ग्रहस्यैकत्वानपेक्षस्यैव संमार्गान्वयात्सर्वग्रहसंमार्गः स्यादित्यस्मत्पक्षसिद्धिः । अथैकत्वं संमार्गस्य गुण इत्युच्यते तदयुक्तम् । नहि द्वितीया गुणत्वं वदति। प्राधान्यवाचिनी हि सा । अथ सक्तुवल्लक्षणया गुणत्वमुच्यते नतु श्रुतिसंभवे सा युक्ता । किंच तथासति ग्रहस्यापि गुणत्वं स्यात् । अथैकत्वस्य गुणत्वं ग्रहस्य च प्राधान्यमुच्यते । न तच्छक्यम् । कथंहि सकृदुपात्ता द्वितीयाविभक्तिर्ग्रहापेक्षया प्राधान्यं श्रुत्याभिदध्यात् । एकत्वापेक्षया च गुणत्वं लक्षयेत् तत्र कथंचिदेकत्वं विवक्षितुं शक्यम् ॥

चमसादौ संमार्गाद्यप्रयोगाधिकरणम् ॥ ८ ॥

**संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ [व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १७ ॥**

चमसादि च संमृज्यान्नो वा तस्यास्ति मार्जनम् ॥ एकत्ववद्ग्रहत्वस्याप्यनादरणसंभवात् ॥ १५ ॥
अबाधोऽत्रादरे हेतुर्वाक्यभेदस्तु नैव हि ॥ चमसादौ न संमार्गः श्रुत्या तद्विषयार्पणात् ॥ १६ ॥

किमेकत्ववत्प्रातिपदिकार्थस्याप्यविवक्षितत्वाच्चमसानामपि संमार्गः कर्तव्य उताविवक्षाकारणाभावाद्ग्रहाणामेवेति विचारः । तत्र संमार्ष्टीत्येतावत्युक्ते सोमावसेकनिर्हरणप्रयोजनतया सोमपात्राणामित्यवगमाद्भूयः कस्येत्यपेक्षाभावादविवक्षितं ग्रहग्रहणमेकत्ववदुपलक्षणमात्रम् । अपिच सोमयागस्यैकत्वात्तदपूर्वमप्येकमेव । तत्साधननिवेशी च संमार्गश्चमसेष्वपि तत्साधनेषु भवितुमर्हति । नह्यत्र कर्मभेदोऽस्ति येनापूर्वभेदादवघातादिवद्व्यवस्था स्यात् । तस्माच्चमसेष्वपि स्यादिति प्राप्तेऽभिधीयते । —'नहि ग्रहविवक्षायां वाक्यभेदः प्रसज्यते । यागैकत्वेऽप्यपूर्वाणि भिद्यन्तेऽभ्यासभेदतः ॥' न तावदेकत्वविवक्षावद्ग्रहविवक्षायां वाक्यभेदः । अवश्यं हि संमार्गः कस्यचिद्विधातव्यः । तत्र शब्दोपनीतं ग्रहमुल्लङ्घ्य न युक्तं यत्सामर्थ्यलभ्यं सोमपात्रमात्रं गम्यते । एकस्यापि च यागस्याभ्यासभे-

---

त्तिकमुत्थापयति—**अथेति** । **तत इति** । एकत्वस्य कारकान्वये ग्रहस्यापि कारकेणैवान्वयादुभयोः परस्परवार्तानभिज्ञतया कारकान्वितयोरुभयोरपि प्रत्येकमुद्देश्यत्वादुद्देश्यनानात्वाद्वाक्यभेदः स्यादित्यर्थः । **नन्वेवं** पशुनेत्यत्रापि पशोरेकत्वस्य च करणकारकान्वयाद्वाक्यभेदः स्यादित्यतो वैषम्यमाह—**उद्देश्ययोरिति** । उपादेययोः पश्वेकत्वयोः पृथक्कारकान्वयेऽपि क्रियागुणत्वेन क्रियावशीकृतयोर्युगपदेव क्रियया संबन्धेसति उभयविशिष्टक्रियायां सकृदेव विधिव्यापारान्न विध्यावृत्तिलक्षणवाक्यभेदः । उद्देश्यस्थले तु क्रियाया एव ग्रहैकत्वे प्रतिगुणत्वात्तयोः प्रधानतया क्रियावशवर्तित्वाभावेन प्रत्येकमेव क्रियान्वयेसति विध्यन्वयदशायां पश्वेकत्वोभयविशिष्टक्रियावदेकस्य विशिष्टस्याप्रतीतत्वेन सकृद्विधिव्यापारेणानिर्वाहात् प्रत्येकमेव विधिव्यापारस्य वक्तव्यतया विध्यावृत्तिलक्षणवाक्यभेदः स्यादिति वैषम्यमिति भावः । **न श्रुतीति** । नन्वैकवचनानर्थक्याद्विभक्तेर्लक्षणा स्वीकार्येति वाच्यम् । वचनविभक्तिमध्ये विभक्तेः प्राधान्येन वचनानुसारेण विभक्तिलक्षणाया अनुक्तत्वाज्जात्यभिप्रायेणानुवादतया वचनस्योपपन्नत्वेनात्यन्तानर्थक्याभावाच्चेति भावः । सूत्रार्थस्तु—एकत्वसमभिव्याहृतं संमार्गादिकमेकस्यैव स्याच्छ्रुतिसंयोगादिति ॥

**संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ ननु** संमार्ष्टीत्येतावन्मात्रविधाने समिधो यजतीत्यादिवदारादुपकारकत्वापत्त्या ग्रहोद्देशेनैव विधेयस्य कथं चमससाधारण्येन पूर्वपक्ष इत्यत आह—**तत्रेति** । सोमग्रहणानन्तरं संमार्गविधिबलेन सोमावसेकनिर्हरणार्थतया सामवायिकत्वे संभवत्यारादुपकारकत्वं न भविष्यतीति भावः । अविवक्षितत्वेऽपि वाक्यसमन्वयस्य वक्तव्यत्वादाह—**उपलक्षणेति । ननु** श्रुतस्योपलक्षणार्थत्वे यथासंयोगं व्यवस्था क्वापि न स्यादित्यस्वरसादाह—**अपिचेति । नहीति** । सोमेन यजेतेत्युत्पत्तेरेकत्वादिति भावः । **ननु** मास्तु वाक्यभेदस्तथाप्यपेक्षाविरहान्न विवक्षेत्यत आह—**अवश्यमिति** । नन्वभ्यासानां प्रत्यक्षविध्यभावाद्विहितैकसाध्यमपूर्वं तेषामनुपपन्नमित्यत आह

---

१ विधानात्तदुद्देश्य.

दास्तेषां चापूर्वमन्तरेण संहत्यकारित्वायोगादवश्यं प्रत्यभ्यासमपूर्वाणि भिद्यन्ते, ततश्च ग्रहशब्दलक्षितापूर्वविशेषनिबन्धनः संमार्गो न चमसेषु कर्तव्यः ॥

सप्तदशारत्नितायाः पशुधर्मताधिकरणम् ॥ ९ ॥

**आनर्थक्यात्तदङ्गेषु ॥ १८ ॥**

भवेत्सप्तदशारत्निर्वाजपेयस्य यूपकः ॥ उन्मानं द्रव्यगं वाजपेयस्याङ्गं पशोरुत ॥ १७ ॥
आनन्तर्यात्प्रकरणात्कर्माङ्गं षोडशिन्यदः ॥ ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा ॥ १८ ॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः ॥ सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना ॥ १९ ॥

'सप्तदशारत्निर्वाजपेयस्य यूप' इति श्रूयते। तत्र संशयः। किं सप्तदशारत्नित्वं वाजपेयसाधनभूतोर्ध्वपात्रद्वारेण वाजपेयाङ्गमुत यूपद्वारेण पश्वङ्गमिति। तदर्थं च किं सप्तदशारत्निर्वाजपेयस्येति वचनव्यक्तिः उत सप्तदशारत्निर्यूप इति। तत्राव्यवहितत्वात्प्रधानत्वात्प्रकरणानुग्रहाच्च सप्तदशारत्निर्वाजपेयस्येति संबन्धः। परिमाणं च साक्षात्कर्मणि न संभवतीति तत्साधनभूतोर्ध्वपात्रद्वारेण संबध्यते। यूपशब्दश्चोर्ध्वपात्र एव सादृश्याद्वर्तते। यद्वा वाजपेयस्येति षष्ठ्या तत्संबन्ध्यूर्ध्वपात्रमुद्दिश्य सप्तदशारत्नित्वं विहितं तद्द्वारेण वाजपेयाङ्गं भवति। एवंच वाजपेयशब्दः श्रुतिवृत्तो भवति। यूपसंबन्धेतु वाजपेयस्य यूपाभावात्पशुयागसंबन्धित्वाद्यूपस्य वाजपेयशब्दः पशुलक्षणार्थः स्यात्। नन्वितरत्रापि यूपशब्दो गौणः सतु न दोषो जघन्यत्वाद्यूपशब्दस्य। वाजपेयशब्दस्य तु मुख्यत्वान्न लक्षणा युक्ता। तस्मादूर्ध्वपात्रे निवेशः—'स्यादेवं यदि यूपेन संबन्धे लक्षणा भवेत् ॥ वाजपेयश्रुतेर्नासौ श्रुतिवृत्त्यैव सा यतः ॥ षष्ठी संबन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते ॥ नाप्यव्यवधिसं-[1]

---

—**तेषांचेति**। अभ्यासानां क्षणिकानां क्रमिकाणां संहत्योत्पत्त्यपूर्वजनकत्वासंभवादित्यर्थः। प्रत्यक्षविध्यभावेऽपि देवतायुक्तग्रहणभेदान्यथानुपपत्तिकल्प्यविधिविहितत्वेनाभ्यासानामप्यपूर्वजनकत्वमुपपद्यत इत्याशयः। **नन्वेवमपि** ग्रहाभ्यासप्रयुक्तापूर्वसाधनोद्देशेन संमार्गस्य विधौ विशिष्टोद्देशदोषप्रसङ्गादपूर्वसाधनमात्रोद्देशेनैव विधेयत्वाच्चमससाधारण्यमवर्जनीयमित्यत आह—**ततश्चेति**। नहि ग्रहाभ्यासप्रयुक्तत्वेन प्रकारेणापूर्वं लक्ष्यते येनोक्तदोषः स्यात्किंतु अपूर्वत्वेनैव, तत्तु प्रत्यासत्तेर्ग्रहाभ्यासापूर्वमेव नत्वपूर्वमात्रमिति नोक्तदोष इति भावः। एवंच ग्रहचमसयोरप्यभ्यासापूर्वभेदवन्मैत्रावरुणादिग्रहाणामपि परस्परमभ्यासापूर्वभेदात्पयसा मैत्रावरुणं श्रीणातीत्यादिश्रपणानामपि व्यवस्थात्राधिकरणे सिद्धेति द्रष्टव्यम्। सूत्रार्थस्तु—गुणानां संमार्गादीनामव्यवस्था चमसादिसाधारण्यं स्यात्तेषां संस्कारत्वेन अपूर्वसाधननिवेशित्वेन चमसानामपि तत्साधनत्वाविशेषादिति ॥

**आनर्थक्यात्तदङ्गेषु ॥ १८ ॥** संस्कारविनियोगविशेषनिरूपणानन्तरं गुणविनियोगविशेषनिरूपणात्सङ्गतिरित्याहुः। **प्रधानत्वादिति**। प्रधानसंबन्धस्याभ्यर्हितत्वादिति भावः। **प्रकरणेति**। वाजपेयकथंभावाकाङ्क्षालक्षणप्रकरणानुग्रहादित्यर्थः। **न संभवतीति**। क्रियाया अमूर्तत्वादिति भावः। **तत्साधनेति**। चमसानामप्यूर्ध्वपात्रवत्सोमरसाधारत्वेन साधनत्वेऽपि तेषामूर्ध्वत्वस्यैवाप्राप्त्या तद्विशेषसप्तदशारत्नित्वविध्ययोगादूर्ध्वपात्रमात्रपर्यवसानमिति भावः। **सादृश्यादिति**। खादिरत्वोर्ध्वत्वसादृश्यादित्यर्थस्ततश्चोर्ध्वपात्रशब्दः षोडशिपात्रपरः। अतएव वार्तिके षोडशिग्रहे निवेश उक्तः। वस्तुतस्तु खादिरत्वस्य यूपे विकल्पितत्वेन यूपशब्देन खादिरत्वसादृश्यस्य नियतोपस्थित्यभावाद्यूपशब्देन नियतोपस्थितोर्ध्वत्वसादृश्यमात्रमेव ग्राह्यमिति ऊर्ध्वपात्रशब्दो न षोडशिपात्रपरः किंतु सकलोर्ध्वपात्रपर एवेति ध्येयम्। सप्तदशारत्निशब्दस्य बहुव्रीहितया विशेष्यसापेक्षत्वात्षष्ठ्यन्तवाजपेयशब्दस्य च तत्सामानाधिकरण्याभावेन तद्विशेष्यत्वासंभवेन साक्षाद्वाजपेयोद्देशेन सप्तदशारत्नित्वविधानमयुक्तमित्यरुचेराह—**यद्वेति**। षष्ठी संबन्धिपर्यन्ता नतु संबन्धमात्रपर्यवसितेति भावः। **तद्द्वारेणेति**। प्रथमपक्ष इव वाजपेयस्येति षष्ठ्या वाजपेयाङ्गत्वप्रत्यायनाभावेऽपि वाजपेयसंबन्धित्वेनोद्दिश्यविधानादस्मिन्नपि पक्षे ऊर्ध्वपात्रद्वारा वाजपेयाङ्गत्वमिति भावः। **यूपाभावादिति**। यद्यपि परम्परासंबन्धेऽपि षष्ठ्युपपन्ना तथापि यूपोद्देशपक्षे वाजपेयस्येत्यस्योद्देश्यविशेषणत्वं वाच्यम्। यूपमात्रस्योद्देश्यत्वे क्रत्वन्तरगतयूपेऽपि प्रसङ्गाद्विशेषणत्वं च साक्षात्संबन्धेनैव न्याय्यमिति तत्पक्षे च षष्ठ्याः साक्षात्संबन्धार्थकत्वाद्वाजपेयस्य च साक्षात्संबन्धियूपाभावाद्वाजपेयशब्दः पशुयागलक्षणार्थः स्यादित्यर्थः। जघन्यत्वाज्जघने भवत्वात्। पश्चाच्छ्रुतत्वादिति यावत्। मुख्यत्वात् मुखे भव-

---

[1] व्यधितसंबन्धं.

बन्धं देवदत्तस्य नप्तृवत् ॥ यूपस्य च पशुद्वारा वाजपेयोपकारतः ॥ संबन्धमात्रमस्त्येव क्रतुनातो न लक्षणा ॥ ऊर्ध्वपात्रेण संबन्धे यूपशब्दस्य गौणता ॥ अनन्तरेण संबन्धः प्रधानेन च सङ्गतिः ॥ प्रक्रियानुग्रहश्चैवं नादृत्यः श्रुतिबाधतः ॥ तेन सप्तदशारत्निर्यूप इत्येव सङ्गतिः ॥ साच प्रकरणाद्वाजपेयसंबन्धियूपगा ॥ तेनायं वाजपेयस्येत्यनुवादो भविष्यति ॥'

अभिक्रमणादीनां प्रयाजमात्राङ्गताधिकरणम् ॥ १० ॥

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥ [साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ]**

अभिक्रामं जुहोतीति युक्तं कर्त्राखिलस्य तत् ॥ किंवा प्रयाजमात्रस्य कृत्स्नकर्तृयुतं भवेत् ॥ २० ॥
प्रयाजाभिक्रमणयोः क्रियात्वादुभयोरपि ॥ मिथः संबन्धराहित्यान्मैवं तेऽपि समत्वतः ॥ २१ ॥
कर्तृयोगाददोषश्चेत्समानेयं समाहितिः ॥ ततः प्रयाजसांनिध्यात्तत्कर्त्रैवास्य संयुतिः ॥ २२ ॥
यद्वा बलित्वं सांनिध्यादस्ति प्रकरणे ततः ॥ दर्शादिप्रक्रियाधीते क्रमणे स्यात्तदङ्गता ॥ २३ ॥
अवान्तरप्रकरणं समिधो यजतीत्यतः ॥ तन्मध्यपाठात्तस्याङ्गं तद्द्वारा दर्शशेषता ॥ २४ ॥

दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते 'अभिक्रामं जुहोती'ति । तत्र भाष्यकारेण जुहोतेः संनिहितप्रयाजविषयत्वं सिद्धं कृत्वा किमभिक्रमणं तेनैकवाक्यं सत् तत्कर्त्रा संबध्यते किंवा ततो भिन्नं सत् कृत्स्नप्रकरणकर्त्रेति विचारितम् । एवंच पूर्वः पक्षः—'क्रियया कारकस्यैव नान्यस्यास्त्येकवाक्यता ॥ नचाभिक्रमणं मूर्तिवर्जितं कारकं भवेत् ॥' नचारुण्यवद्द्रव्यद्वारेण संभवति । तत्र ह्येकहायनीद्रव्यमुपात्तं युक्तं यद्द्वारतां प्रतिपद्यते । अत्र तु जुहोतिना कर्तुरनुपादानान्न द्वारत्वं, तस्माद्भिन्नं[1] प्रकरणेन गृह्यते । शक्यते च क्रियायाः प्रकरणेन ग्रहणं प्रयाजादिवत् । संभवति हि कर्मणः कर्मोपकारकत्वं, कारकत्वं तु न संभवति, तस्माद्दर्शपूर्णमासाङ्गं सत्सामर्थ्यात्कर्तृसंस्कारकं भवति ।

---

त्वात् । प्रथमश्रुतत्वादिति यावत् । **देवदत्तस्येति** । देवदत्तस्य नप्तेतिवदित्यर्थः । देवदत्तस्य नप्त्रा साकं पुत्रद्वारा परंपरैव संबन्धो नतु साक्षान्नच तत्रापि देवदत्तस्य नप्त्रा नान्वयः किंतु नप्तृशब्दार्थैकदेशेन पुत्रेण तेनच साक्षादेव संबन्ध इति वाच्यम् । पदार्थैकदेशेनान्वयस्य व्युत्पत्तिविरुद्धत्वादिति भावः । **संबन्धमात्रमिति** । उपकार्योपकारकभाव एव संबन्ध इति भावः । पूर्वपक्षसाधकहेतुत्रयं निरस्यति—**अनन्तरेणेति** । वाजपेयस्येत्यस्योद्देश्यविशेषणत्वमेवासिद्धं येन साक्षात्संबन्धस्यौचित्येन स्वीकार्यता स्यादित्याशयेनाह—**साचेति** । यूपमेवोद्दिश्य विधीयते । नचैवं क्रत्वन्तरे प्रसङ्गः । यूपमात्रस्योद्देशेऽपि प्रकरणाद्वाजपेयसंबन्धिनो यूपविशेषस्यैवोद्देश्यतापर्यवसानात्, एवंच वाजपेयस्येत्यस्योद्देश्यविशेषणत्वाभावेनानुवादमात्रत्वात्परम्परासंबन्धाश्रयणेऽपि न दोष इत्याशयेनाह—**तेनेति** । अत्रेदमवधेयम् । प्रकरणशब्देनेहेतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं नाभिधीयते किंत्वधिकारलक्षणमेव । यूपधर्मस्य सप्तदशारत्नित्वस्य पश्वङ्गतया वाजपेयकथंभावग्रहणायोग्यत्वादतएव यूपद्वारेण पश्वङ्गमित्येव सिद्धान्तकोटिः प्रागुपन्यस्ता । यत्तु **भवेदवे**नोक्तं सप्तदशारत्निता अपूर्वोपयोगिनीत्यवश्यं वाच्यम् । तत्र न पशुयागापूर्वोपयोगिनी । यतः सा न पशुयागीयत्वपुरस्कारेण यूपे विधीयते । पशुयागस्याश्रुतत्वात् किंतु वाजपेयस्येति श्रुतत्वात् वाजपेययागीयत्वपुरस्कारेणैव । ततश्च वाजपेयापूर्वोपयोगिन्येव सप्तदशारत्निता वाजपेयाङ्गमेवेति तन्न । वाजपेयविशेषितत्वाकारेण यूपस्योद्देश्यत्वाभावाद्यूपमुद्दिश्य च विधीयमानस्य धर्मस्य दीक्षणीयावाङ्नियमन्यायेन प्रत्यासत्त्या पशुयागापूर्वप्रयुक्तत्वस्य न्याय्यत्वेन वाजपेयश्रवणस्याकिंचित्करत्वादिति । सूत्रार्थस्तु—सप्तदशारत्नित्वादिकं प्रधाने वाजपेये आनर्थक्येनायोग्यत्वात्तदङ्गेषु निविशत इति ॥

**कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥** अभिक्रमणक्रियायाः साक्षाद्धोमार्थत्वासंभवेन पूर्वन्यायेन कर्तृरूपाङ्गावतारे स्थिते तद्विशेषविचारात्सङ्गतिः । जुहोतेः प्राकरणिकसर्वहोमविषयत्वे एकवाक्यत्वेऽपि प्रयाजमात्रे निवेशो न सिध्यतीति मत्वाह—**जुहोतेरिति** । मूर्तिवर्जितं मूर्तत्वरहितमित्यर्थः । **अनुपादानादिति** । आख्यातस्य कर्तृवाचकत्वाभावादिति भावः । **भिन्नमिति** । जुहोतिमात्रं चानुवादतया कथंचिन्नेयमिति भावः । **ननु** प्रकरणेनापि क्रियासंबन्धस्यैव बोधनीयत्वात्तत्राप्ययोग्यत्वं तुल्यमित्यत आह—**संभवतीति** । प्रकरणेन क्रियाकारकभावो न बोध्यते किंत्वङ्गाङ्गिभावः । सच क्रिययोः संभवत्येव वाक्येन तु क्रियासंबन्धः । कारकभावेनैव नान्यथेति वैषम्यमिति भावः । नन्वेवमप्यारादुपकारकत्वसंभवात्कथं कृत्स्नप्राकरणिककर्तृसंस्कारकत्वमित्यत आह—**सामर्थ्यादिति** । दृष्टार्थत्वस्य

---

[1] तस्माद्विच्छिन्नं.

कर्ता च सर्वप्रयोगाङ्गमिति सर्वप्रयोगसंबन्धोऽभिक्रमणस्येति । सिद्धान्तस्तु—'अनुपात्तोपि सद्भावमात्रेण द्वारतां व्रजेत् ॥ कर्ताभिक्रमणं तेन भवेद्धोमस्य साधनम् ॥' वार्तिककारस्तु णमुलन्तम-भिक्रमणं न क्रियातोऽन्येन संबध्यते । तस्माज्जुहोतिसंबन्धस्य स्पष्टत्वान्न ततो विच्छेदाशङ्केत्यन्यथाधिकरणं वर्णयांचकार । 'अभिक्रामं जुहोती'ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गं उत प्रयाजहोमस्यैवेति संशयः । तदर्थं च किमवान्तरप्रकरणमस्ति न वेति । तत्र—'फलवद्भावनोद्भूतकथंभावतिरोहिताः ॥ नैवाङ्गानां कथंभावाः प्रादुष्यन्ति तमन्तरा ॥ प्रादुष्युर्यदि चाङ्गानां कथंभावास्ततो मिथः ॥ तेषामङ्गाङ्गितापत्तेरव्यवस्था प्रसज्यते ॥' तस्मान्नावान्तरप्रकरणं, तदभावे च संनिधिमात्रेणाभिक्रमणं प्रयाजाङ्गं स्यात्, सच दुर्बलः प्रकरणात्, अतो दर्शपूर्णमासभावनया संबन्धात्तदीयसकलहोमाङ्गमभिक्रमणं बर्हिर्धर्मवत् । नन्वसत्यप्यवान्तरप्रकरणे वाक्येनैव प्रयाजाङ्गता स्यादभिक्रामं जुहोतीति । नैवं, जुहोतेः साधारणत्वेन प्रयाजोपस्थापनाभावात् । नन्वनुवादोयं संनिहितगामी प्रयाजाश्च संनिहिताः । नैवं, बुद्धिविपरिवृत्तिरनुवादस्यापेक्षिता न पाठप्रत्यासत्तिः । तथासत्यत्यन्तसंनिधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यान्न समिदादीनां तथा बर्हिषि हवींष्यासादयतीति यस्यैव हविषः कियानपि हि पाठतः संनिधिविशेषोऽस्ति तस्यैव बर्हिषि स्यादासादनं नान्येषाम् । बुद्धिविपरिवृत्तिश्च सर्वहोमानामविशिष्टा प्रकृतत्वादेव । अतो बर्हिर्हविःशब्दस्येव जुहोतिशब्दस्यापि संकोचायोगात्सर्वहोमाङ्गमभिक्रमणमिति । अत्राभिधीयते—'भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि ॥ तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा ॥ पश्चाच्च ये विधास्यन्ते तैः संदष्टमिदं श्रुतम् ॥ अभिक्रामं जुहोतीति न ततोऽन्यत्र गच्छति ॥' प्रयाजान्विधाय

---

ज्यायस्त्वादारादुपकारकत्वे तन्त्रेणानुष्ठेयतया 'आभीक्ष्ण्ये णमुल्चे'ति णमुलभिहितावृत्त्यानर्थक्यापत्तेश्च कर्तुराहवनीयसमीपदेशप्राप्त्याधायकत्वसामर्थ्यात्कर्तृसंस्कारकमित्यर्थः । **ननु** एवमपि प्रधानकर्तर्येव निवेशः स्यान्न कृत्स्नप्रकरणकर्तरीत्यत आह—**कर्ताचेति । सद्भावेति** । अतएव तिष्ठन्नन्वाहेत्यादावनुपात्तस्याप्यनुवचनकर्तुः स्थानादिद्वारत्वमिति भावः । **न क्रियात इति** । 'धातुसंबन्धे प्रत्ययाः' इत्यधिकृत्य णमुलो विधानेन क्रिययैव संबन्धनियमस्ततश्च प्रकरणेऽपि क्रियाभिरेव संबन्धो वाच्य इति श्रुतजुहोतिक्रिययैवान्वयो न्याय्यः । नच कारकस्यैव क्रियान्वयनियमः । मातुःस्मरतीत्यादौ शेषत्वेन विवक्षितस्यापि मात्रादेरन्वयदर्शनादभिक्रमणस्यापि समानकर्तृकतया जुहोत्यन्वयोपपत्तेरिति भावः । **अवान्तरेति** । अङ्गानामितिकर्तव्यताकाङ्क्षावान्तरप्रकरणशब्दार्थः । **फलवदिति** । दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति प्रधानवाक्येन फलवत्यां भावनायां प्रतिपादितायां तस्याः कथंभावाकाङ्क्षोद्भवति, तदनन्तरं च विधीयमानानां प्रयाजादीनामितिकर्तव्यताग्रहणव्यग्रप्रधानभावनाग्रस्तत्वेन,परार्थतयोपक्षीणत्वान्न तेषां स्वयं प्रधानभावमनुभूय स्वार्थमितिकर्तव्यताकाङ्क्षित्वं संभवतीति भावः । दर्शपूर्णमासभावनया संबन्धेऽपि भाष्यपूर्वपक्ष इव न होमाहोमसाधारण्यं जुहोत्यन्वयापरित्यागेनैव भावनासंबन्धादित्याशयेनाह—**तदीयेति । बर्हिरिति** । यथा बर्हिषि हवींष्यासादयतीति हविरासादनोद्देशेन विधीयमानस्य बर्हिषः प्रकरणात्प्रधानभावनान्वये तदीयाङ्गप्रधानहविरासादनार्थत्वं यथा वा बर्हिर्लुनातीति लवनादीनां प्रकरणाद्बर्हिर्द्वाराङ्गप्रधानार्थत्वं तद्वदित्यर्थः । **वाक्येनेति** । जुहोतेः संनिहितप्रयाजविषयत्वादिति भावः । संनिधानाच्छ्रुतिसंकोचो न युक्त इत्याशयेनाह—**नैवमिति । ननु** संकोचोनाम श्रुतिजनिताविशेषप्रत्ययस्य विशेषेऽवस्थापनं इहतु न श्रुत्या द्राक् सर्वविषयः प्रत्ययो जायते किंतु श्रुत्या प्रथमं जायमान एव प्रत्ययः संनिहितमात्रगोचरो जायत इति न श्रुतिसंकोचदोष इति शङ्कते—**नन्विति । तथासतीति** । नन्वभिक्रमणात्पूर्वं प्रयाजशब्दोच्चारणेन तत्र गुणविधिरस्ति ततश्चोत्तमप्रयाजमात्रस्य संनिधिरसिद्ध इतिचेदुत्पत्तिविध्यभिप्रायेणास्योक्तत्वात् । यद्वा एतदस्वरसादेवाह—**तथेति । नान्येषामिति** । ततश्च प्रकरणविशेषादसंयुक्तं प्रधानस्येत्यधिकरणे बर्हिरादिधर्माणामङ्गप्रधानार्थत्वं वक्ष्यमाणं विरुध्येतेति भावः । यत्रहि अङ्गोद्देशेन किंचिद्विधीयते तत्रावश्यं तदङ्गस्य कथंभावाकाङ्क्षोत्थापयितव्या । साच परस्तादपि यदि किंचिदङ्गोद्देशेन विधीयते तावत्पर्यन्तमनुवर्तत इति स्वीकर्तव्यम् । अन्यथा परस्ताद्विधिस्थलेऽपि पुनराकाङ्क्षोत्थापनापत्त्या गौरवप्रसङ्गात् । तयोश्च संयुक्तयोर्मध्ये यदङ्गमसंयुक्तं विहितं तदपि उद्भूताङ्गाकाङ्क्षानुवृत्तौ विधानात्संनिधिविशेषाच्च अङ्गस्यैवाङ्गं नतु प्रधानस्याभिक्रमणं च तादृशं, तस्मादवान्तरप्रकरणेनाभिक्रमणं प्रयाजाङ्गमिति सिद्धान्तयति—**भवेदेवमिति ।**

---

१ क्त्वान्तमभिक्रमणं.

समानयत उपभृत इत्यादिकं गुणं विधायाभिक्रामं जुहोतीत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद स समिधो बह्वीरिव यजती'त्यादि तत्प्रयाजानिष्ट्वा हवींष्यभिघारयतीति प्रयाजपरामर्शदर्शनान्नूनमेतावतादेशेन प्रयाजाः समाप्यन्त इत्यवगमात्तन्मध्यपतितमभिक्रमणं न तदतिक्रमेणान्यत्र गच्छति। यद्यपि विद्यते चाङ्गभावनानामप्यविज्ञातप्रकारत्वात्कथमित्याकाङ्क्षा तथापि—'न विद्यते तु संदंशो यत्र वाचनिकैर्गुणैः॥ तत्राङ्गानां कथंभावः सन्नप्यविनियोजकः॥ निष्फलत्वेन सर्वेषां न विशेषोऽवगम्यते॥ कः शेषः कस्य शेषित्वमतः सर्वं प्रधानगम्॥ अव्यवस्थाप्रसक्तिश्च योक्ता सैवं निराकृता॥ संदंशे सति संदष्टं तदङ्गमितरत्पुनः॥ सर्वं प्रधानगामीति नाव्यवस्था प्रसज्यते॥ यस्त्वाह साधिकाराणामितिकर्तव्यता स्थिता॥ नान्येषामिति तस्यापि प्रतिज्ञामात्रमेव तत्॥ अविज्ञातप्रकारत्वादुभयेषां हि सा भवेत्॥' तान्यपि ह्यनुष्ठेयानि नचेदनुष्ठानमेव न स्यात्। एतावांस्तु विशेषो यदेषामन्यार्थमनुष्ठानं साधिकाराणां तु स्वनिष्ठमिति। नह्येतावता विशेषः, अन्यार्थस्याप्यविज्ञातप्रकारस्यानुष्ठानासंभवात्। प्रयाजैरपूर्वं कृत्वा प्रधानस्योपकुर्यादित्युक्ते यो नाम प्रयाजैरपूर्वं कर्तुं न जानाति तस्य भवत्येव कथममीभिरपूर्वं कर्तव्यमिति प्रकारविशेषापेक्षा। सत्यामपि तस्यां यदि संदंशपतितमङ्गं न स्यात्ततो विशेषात्सर्वं फलवदङ्गं स्यात्। प्रकाराकाङ्क्षातु वाचनिकैर्गुणैरर्थापत्तिलभ्येन च स्वरूपनिष्पादनेनाचमनादिभिश्च दर्वीहोमवत्पूर्यते, अभिक्रमणं तु संदंशपतितत्वादवान्तरप्रकरणोद्भूतेः प्रयाजाङ्गं, एकदेशिनां त्ववान्तरप्रकरणाभावात्संनिधिबाधेन प्रकरणाविशेषात्सर्वार्थं स्यादित्यास्तां तावत्॥

---

**वचनेति**। प्रयाजशब्दयुक्तवाक्यविनियोज्या इति यावत्। **समानयत इति**। उपभृतः सकाशात् जुह्वामौपभृताज्यस्यार्धं समानयत इत्यर्थः। यद्यप्यस्मिन्वाक्ये प्रयाजशब्दसंयोगो नास्ति तथापि औपभृताज्यस्य यदुपभृति प्रयाजानूयाजेभ्यस्तदिति प्रयाजानूयाजार्थत्वात्तत्र च प्रयाजार्थस्यैव समानेयत्वात् प्रयाजशब्दस्य तुल्ययोगक्षेमत्वादिदमुदाहृतं **यो वा इति**। यद्यप्ययमर्थवाद इति न तत्र किंचिद्विधेयमस्ति तथापि प्रयाजशब्दसंयोगेन तदनुवृत्तिप्रकाशनार्थमिदमुक्तम्। यद्वा मिथुनं वेदेति वेदनं कर्माङ्गतया विधीयत इत्याशयेनेदम्। एवंच पूर्ववाक्य इत्यादिकं गुणं विधायेत्यादिशब्दोऽपि ते देवाः प्रयाजैरित्याद्यर्थवादाभिप्रायेण वा यस्यैवं विदुषः प्रयाजा इज्यन्त इति वेदनाभिप्रायेण वा शाखान्तराभिप्रायेण वा बोध्यः। **नन्वङ्गानां** कथंभावाकाङ्क्षायास्त्वयाङ्गीकारात्तन्मात्रेणैवाभिक्रमणं प्रयाजाङ्गमस्तु किं संदंशेनेति तटस्थशङ्कामाशङ्क्य निराकरोति—**यद्यपीत्यादिना**। **निष्फलत्वेनेति**। ततश्च तत्र विनिगमनाविरहेणाङ्गकथंभावाकाङ्क्षाया विनियोजकत्वशक्तिः कुण्ठीभवतीति भावः। एवंच न प्रयाजाज्यभागादीनां परस्पराङ्गत्वापत्तिरित्याह—**अव्यवस्थेति**। प्राभाकरास्तु साधिकारविधीनामेवेतिकर्तव्यताकाङ्क्षा तेषामेव स्वतःप्रयोजनतया पुरुषेणानुष्ठेयत्वादङ्गविधीनां च स्वतःप्रयोजनत्वाभावान्नेतिकर्तव्यताकाङ्क्षेत्याहुस्तन्मतमनुवदति—**यस्त्विति**। तेषामपि कार्यतया विधिना बोधितत्वात्कार्यस्य चानिर्ज्ञातप्रकारत्वमात्रेणैव कर्तव्यताविशेषलक्षणेतिकर्तव्यताकाङ्क्षित्वात्साधिकारत्वमप्रयोजकमिति दूषयति—**तस्यापीति**। स्वरसतः पुरुषेणानुष्ठेयत्वेऽपि क्रतूपकारसिद्ध्यर्थं तेषामप्यनुष्ठेयत्वमवश्यं वाच्यमित्याह—**तान्यपीति**। नन्वेवं संदंशाभावस्थलेऽपि अङ्गस्य प्रकाराकाङ्क्षया विनियोगः स्यादित्यत आह—**सत्यमिति**। कथं तर्हि संदंशाभावस्थले प्रकाराकाङ्क्षापूर्तिरित आह—**वाचनिकैरिति**। इन्द्र ऊर्ध्वोध्वर इत्याघारमाघारयतीति वाचनिकमन्त्रादिभिरित्यर्थः। **अर्थापत्तीति**। अनिष्पन्नस्योपकारकत्वाभावादिति भावः। **आचमनादिभिरिति**। तेषां सर्वकर्मसाधारण्यादिति भावः। **दर्वीति**। यथा दर्विहोमानामपूर्वत्वाद्वाचनिकाङ्गादिभिराकाङ्क्षत्वं तद्वदित्यर्थः। एतदधिकरणविरोधप्रसङ्गादप्यवान्तरप्रकरणं स्वीकार्यमित्याशयेनाह—**एकदेशिनामिति**। जुहोतिना एकवाक्यत्वेऽपि प्राकरणिकक्रतुजुहोत्यर्थत्वमेव स्यात् न प्रयाजार्थत्वं संनिधानात्प्रकरणस्य बलवत्त्वादित्यर्थः। नचास्याधिकरणस्य न प्रयाजमात्रार्थत्वव्युत्पादनपरत्वं येनोक्तदोषः स्यात् किंतु न वाक्यभेदेन होमाहोमात्मकसकलप्रयोगकर्तृनिवेशः किंतु जुहोत्येकवाक्यतयाङ्गप्रधानात्मकजुहोत्यन्वयमात्रमिति व्युत्पादनपरत्वम्। इदं चावान्तरप्रकरणाभावेऽपि जुहोत्यन्वयादेव सिध्यतीति नैतदधिकरणविरोध इति वाच्यम्। प्रयाजेष्वेव निवेश इति भाष्यस्वारस्यानुसारेण प्रयाजमात्रार्थत्वव्युत्पादनपरत्वस्यैव वक्तव्यत्वादिति भावः। **ननु** सत्यमङ्गविधीनां कार्यत्वमस्ति तथापि प्रधानापूर्वकार्यत्वस्यैवाङ्गविधिपर्यन्तत्वेन पृथक् तेषां कार्यत्वं नास्ति। अतएव तन्मतेऽङ्गविधीनामनुवादकत्वस्वीकारस्ततश्च न तेषामितिकर्तव्यताकाङ्क्षा स्यादित्यत आह—**आस्तामिति**। अङ्गविधीनामितिकर्तव्यताकाङ्क्षत्वाभावे वाङ्नि-

---

१ इत्यादिगुणान्विधाय. २ त्यादियावत्प्रयाजा. ३ प्रोक्ता सैव. ४ कथमाभिरपूर्वं. ५ त्सर्वं विधिबाधेन. ६ दित्यस्तु तावत्.

उपवीतस्य प्राकरणिकाङ्गताधिकरणम् ॥ ११ ॥

## संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥

**उपव्ययत इत्यस्य सामिधेन्यङ्गताथवा ॥ दर्शाङ्गता प्रक्रियैषावान्तरातोऽस्त्विहाग्रिमः ॥ २५ ॥ लिङ्गादग्नेरङ्गभूतैर्निवित्संज्ञकमन्त्रकैः ॥ विच्छेदे सति दर्शाङ्गं महाप्रकरणोक्तितः ॥ २६ ॥**

दर्शपूर्णमासयोः सामिधेनीर्विधाय तासां च त्रिःप्रथमामन्वाहेत्यादिवचनैः गुणान्विधाय ततो निविदो नाम मन्त्राः देवेद्धो मन्विद्ध इत्यादयो विहिताः । ततः काम्याः सामिधेनीकल्पा विहिताः । तदनन्तरं यज्ञोपवीतमाम्नातम् 'उपव्ययते[१] देवलक्ष्म[२]मेव तत्कुरुते' इति । ततः पुनरपि सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते अन्तरानूच्यं[३] सदेवत्वायेत्यादयः । तदत्रोपवीतंप्रति संदेहः सामिधेन्यङ्गमुत दर्शपूर्णमासाङ्गमिति । तदर्थं च किं सामिधेनीनां वाचनिकगुणोद्भूतमवान्तरप्रकरणमुपवीतविधावनुवर्तते अथवा विच्छिन्नमिदं निविद्भिरिति—'अनुवृत्तौ[४] तदङ्गत्वं विच्छिन्ने दर्शशेषता ॥ किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते ॥ पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम् ॥ विद्यते सामिधेनीनामतः प्रकरणास्तिता ॥' निविदस्तु पूषाद्यनुमन्त्रणमन्त्रवत्परप्रकरणपठिता इत्यवगन्तव्यम् । अथवा—'निविदामपि तादर्थ्ये तत्कथंभावसङ्गतेः ॥ नचाङ्गैर्व्यवधीयन्ते प्रधानानि कथंचन ॥ काम्येष्वप्याश्रयत्वेन तासामस्त्यनुवर्तनम् ॥ उपवीतमतस्तासामङ्गं प्रकरणाद्भवेत् ॥ एवंप्राप्ते वदामोऽत्र निविद्भिर्व्यवधानतः ॥ विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥' यस्तु संनिधानस्यैवा संबन्धिभिः पदैः व्यवधानं न प्रकरणस्येति वदति[५] तस्य सर्वकर्मणां सर्वप्रकरणानुवृत्तेः सर्वे

---

यमस्य दीक्षणीयार्थत्वं न स्यान्न च तत्रान्तरङ्गलक्षणया वाक्येनावान्तरापूर्वसंयोगात्तदर्थत्वमुपपाद्यत इति वाच्यम् । त्वदुक्तरीत्या स्वतःकार्यत्वाभावेनाङ्गविधीनामयोग्यतयान्तरङ्गलक्षणां परित्यज्य बहिरङ्गप्रधानापूर्वान्वये वाक्यतात्पर्यस्याकामेनापि स्वीकार्यत्वात् । यत्तु अधिकारविधेरेवोद्भूताकाङ्क्षा नाङ्गविधीनामन्यथाङ्गविधेरमध्यस्थधर्मग्राहकतापि स्यादिति भवनाथोक्तं तन्न । अङ्गविधीनामप्यनिर्ज्ञातप्रकारत्वेऽधिकारविधिवत् प्रकाराकाङ्क्षाया अवश्यवक्तव्यत्वादमध्यस्थग्रहणाभावस्तु प्रागुक्तविनिगमनाविरहादेवोपपद्यत इति । सूत्रार्थस्तु—अभिक्रमणे होमरूपकर्मसमवायानर्हत्वात्कर्तृगुणे सति वाक्यभेदः स्यात् । जुहोतिविच्छेदः स्यादिति भाष्यकारपक्षे । आचार्यपक्षे तु कर्तृगुणे अभिक्रमणेऽङ्गानामितिकर्तव्यताकाङ्क्षाविरहेण प्रयाजकर्मासमवायाद्वाक्यभेदः प्रयाजवाक्यानन्वयित्वं स्यादिति ॥

**संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥ सामिधेनीरिति** । यद्यपि हिंकरोतीति सामिधेनीगुण एव तैत्तिरीयशाखायां विहितो न सामिधेन्यः । नच सामिधेनीर्विधायेत्यस्य सामिधेनीगुणजातमुपक्रम्येत्यर्थ इति न दोष इति वाच्यम् । तथासति यत्रैव सामिधेनीविधिस्तत्रैव तासां प्रकरणस्य वक्तुमुचितत्वेन प्रकृते तदभावप्रसङ्गात् । अतएव तुल्यः सर्वेषां पशुविधिरित्यधिकरणे ग्रन्थकारो वक्ष्यति । 'कर्मणश्च विधिर्यत्र तत्र प्रकरणं भवेत् ॥ नतु यत्र गुणार्थेन श्रवणं तत्र विद्यते ॥' इति । तथापि शाखान्तराभिप्रायेणेदम् । **अन्तरेति** । क्रौंचमन्द्रोभयमध्यमस्वरेणेति यावत् । यद्यप्यभिक्रमणस्य णमुल्श्रुत्या क्रियान्तरार्थत्वावगमवदिह श्रुतिगन्धाभावाच्छ्रौतविनियोगविचारप्रस्तावे नास्य सङ्गतिस्तथाप्यवान्तरप्रकरणप्रसङ्गात्तदनुवृत्त्यननुवृत्तिविचार इत्याशयेन तदर्थसंशयमाह—**तदर्थमिति** । उभयत्रापि कीर्तनमेव विवृणोति—**पुरस्तादिति** । ननु निविद्भिर्व्यवधानान्न प्रकरणानुवृत्तिः । नच यथा अगन्म सुवः सुवरगन्मेत्यादेर्दर्शपूर्णमासफलप्रकाशनेन तदङ्गत्वं तथा निविदामपि देवेद्ध इति निष्ठाप्रत्ययबलेन इध्मप्रक्षेपफलाग्निनिष्पत्तिप्रकाशनलिङ्गेन इध्मप्रक्षेपार्थसामिधेन्यङ्गत्वान्न व्यवधायकत्वमिति वाच्यम् । एवमपि घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामित्यादिनिविदां सामिधेनीफलप्रकाशनगन्धाभावेन तासां सामिधेन्यङ्गत्वासंभवादित्यत आह—**निविदस्त्विति** । यथा दर्शपूर्णमासप्रकरणे श्रुतस्य पूष्णोऽहं देवयज्यया प्रजया च पशुभिश्च जनिषीय सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयमिति पूषसरस्वत्याद्यनुमन्त्रणमन्त्रस्य न प्रकरणविच्छेदकत्वं किंतु परप्रकरणे पाठमात्रं तद्वन्निविदामपि न व्यवच्छेदकत्वमित्यर्थः । लिङ्गाभावेऽप्यवान्तरप्रकरणादेव निविदां सामिधेन्यङ्गत्वसंभवादव्यवधायकत्वमित्याह—**अथवेति** । नन्वेवमपि गुणानां पुरुषार्थतया सामिधेन्यर्थत्वाभावात्तैर्विच्छिन्नं सामिधेनीप्रकरणमित्यत आह—**काम्येष्विति** । आश्रित्य विधानस्य च नाश्रयप्रकरणविच्छेदकत्वं तथात्वेऽतिप्रसङ्गादिति भावः । **यस्त्विति** । असंबन्धिपदानां श्रवणे तत्संबन्धयोग्यवस्त्वन्तरबुद्ध्युत्पादनेन पूर्ववस्तुगो-

---

१ उपव्ययनं उपवीतवद्वस्त्रधारणं. २ लक्ष्म चिह्नं. ३ अनुवाक्यां पठेत्. ४ मय्यनुवर्तनं. ५ मन्यते. ६ धातुसंबन्धे प्रत्यया इति श्रुतेः. ७ प्राप्ता वयं स्वर्गं.

धर्माः सर्वेषामुपदेशेनैव स्युः, ततो विश्वजिदादीनामपि क्रत्वर्थत्वं स्यात्। यत्तु निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गत्वादव्यवधायकत्वमित्युक्तं तदयुक्तम्। लिङ्गेन हि प्रकरणं बाधित्वा निविदोऽग्निसमिन्धनाङ्गं भवन्ति। नचाग्निः सामिधेन्यङ्गं भवति येन तद्द्वारेण निविदोऽपि तदङ्गं स्युः, किंतु सामिधेन्य एवाग्न्यङ्गं निविदोऽपि, न तासां मिथः संबन्धः। यथाच वक्ष्यति 'गुणानां च परार्थत्वादसंबन्ध' इति। तेनासंबन्धिभिर्निवित्पदैर्दर्शपूर्णमासाङ्गैर्विच्छिन्नं सामिधेनीनां प्रकरणं नोपवीतं गृह्णाति। नन्वेवं निविदङ्गमुपवीतं स्यात्, न तासां प्रकरणमस्ति अभितः कीर्तनाभावात्, संनिधिमात्रमपि नास्ति काम्यैर्व्यवधानात्, तर्हि काम्यानामेवाङ्गं स्यादव्यवधानात् फलवत्त्वेन च प्रकरणसद्भावात्। न। तेषां विकृतित्वात्। इह हि न नित्यसामिधेन्याश्रयणेन गुणमात्रं फलाय विधीयते। विच्छिन्नप्रक्रियाणां तासामाश्रयत्वानुपपत्तेः। वाक्येन चाश्रयसंबन्धे वाक्यभेदात् किंत्वनुवचनान्तराणि संख्याविशिष्टानि फले विधीयन्ते। तानिच संख्यायुक्तानुवचनत्वसामान्यान्नित्यानुवचनप्रकृतीनि। ततश्च तासामृचामन्येषां च तद्धर्माणां प्राप्तिः। अनुशब्देन च यस्तत्र नमःप्रवक्त्र इति निगदानन्तरभावः सामिधेन्यङ्गत्वेनोक्तः सोऽप्यत्रातिदिश्यते। सच निगदः क्रतुप्रयुक्तत्वान्न बहिःप्रयोगे लभ्यते। ततस्तद्वशेनानुवचनान्तराणामपि क्रतुमध्ये प्रयोगसिद्धिः। एतैरेव चाग्निसमिन्धनस्य प्रसङ्गात्सिद्धेर्नित्यानुवचननिवृत्तिः। तेनैतेषामनुवचनानां कॢप्तोपकारप्राकृतधर्मपरिपूरितानां कथंभावापेक्षाभावान्नास्ति प्रकरणं पाठसंनिधिमात्रं तु स्यात्, तच्च दुर्बलं प्रकरणादिति दर्शपूर्णमासाङ्गमेवोपवीतम्। येतु पश्चात्तना गुणास्ते दूरस्थानुवादेनैव द्वादशोपसत्त्ववद्विधातुं शक्या

---

चरबुद्धिविच्छेदावश्यंभावात्तत्रैव तेषां सामर्थ्यं नत्वाकाङ्क्षाविच्छेदेऽपीति भावः। **स्युरिति**। ततश्च यथाप्रकरणं धर्माणां व्यवस्थासिद्ध्यर्थमसंबन्धिपदं दृष्ट्वा ततः पूर्वभाविपदार्थैरेवाकाङ्क्षा शाम्यतीति कल्पनीयत्वादसंबन्धिपदानां प्रकरणविच्छेदकत्वमप्युपपद्यत इति भावः। **लिङ्गेनेति**। तासामग्निप्रकाशकत्वादिति भावः। नन्वेवमपि न सिद्धान्तसिद्धिरिति तटस्थः शङ्कते—**नन्विति**। परिहरति—**न तासामिति**। तटस्थएव पुनः शङ्कते—**तर्हीति**। अव्यवधानादित्यनेनान्यस्यैव काम्यस्याङ्गमिति शङ्काहृदयमप्याविष्कृतम्। **ननु** निविदामिव काम्यानामप्यभितः कीर्तनाभावात्कथं प्रकरणमिति शङ्कां निराकर्तुं फलवत्त्वेनेत्युक्तं, अफलानामेव प्रकरणोन्मेषायाभितःकीर्तनापेक्षा न सफलानामिति भावः। काम्यानां विकृतित्वान्नास्ति प्रकरणमिति परिहरति—**नेति**। यदुक्तं 'काम्येष्वप्याश्रयत्वेन तासामस्त्यनुवर्तन'मिति तदप्यर्थान्निराकुर्वन्विकृतित्वं विशदयति—**इह हीति**। **विच्छिन्नेति**। निविद्भिः सामिधेनीसंनिधेर्विच्छिन्नत्वादिति भावः। **ननु** संख्येयालाभेन साकाङ्क्षत्वान्न संख्याविशिष्टानुवचनान्तरविधिसंभव इत्यत आह—**तानिचेति**। अनुवचनसामान्यं पुरोनुवाक्यानुवचनातिप्रसक्तमिति संख्या युक्तेत्युक्तम्। ततश्च यस्य लिङ्गमर्थसंयोगादित्याष्टमिकन्यायात्सामिधेन्यनुवचनविकृतित्वमिति भावः। अनुवचनान्तरविधौ तेषां क्रतुमध्यप्रयोगं समर्थयति—**अनुशब्देनेति**। तत्र नित्यसामिधेन्यनुवचने पञ्चदशानुब्रूयादित्यनुशब्देन योयं निगदानन्तरभाव उक्तः सोऽप्यत्र काम्यानुवचनेऽपि त्रिःप्रथमामन्वाहेत्यादिधर्मान्तरवदतिदिश्यत इत्यर्थः। **ननु** तस्य निगदस्यापि सामिधेन्यङ्गत्वात्सामिधेनीनामिव बहिःप्रयोगसंभवान्निगदानन्तर्यमात्रेण कथं काम्यानां क्रतुमध्यप्रयोगसिद्धिरित्यत आह—**सचेति**। निगदो हि प्रकरणात्क्रत्वर्थो नतु सामिधेन्यर्थः येन बहिरपि निगदो लभ्येतेति भावः। **क्रतुमध्य इति**। यद्यपि क्रतुबहिःप्रयोगेऽपि न दोषः, नच तथासति क्रतुप्रयुक्ताग्निसमिन्धनार्थत्वाभावात्तासामृचां सामिधेनीत्वमेव न स्यादिति वाच्यम्। कदाचित्तदर्थतामात्रेण सामिधेनीसंज्ञोपपत्तेः सामिधेनीत्वाभावेऽपि प्रकृते हान्यभावाच्च तथापि वस्तुकथनमात्रमिदम्। **ननु** निगदानन्तर्यसिद्ध्यर्थं क्रतुमध्यप्रयोग इत्ययुक्तम्। क्रतुप्रयोगे निगदानन्तरं नित्यसामिधेन्यनुवचनस्य कर्तव्यतया तेन व्यवहितत्वेन काम्यानुवचनस्य निगदानन्तर्यासंभवादित्यत आह—**एतैरेवेति**। नन्वस्तूक्तरीत्या विकृतित्वं तथापि प्रकरणं किं न स्यादित्यत आह—**तेनेति**। विकृतयो ह्युपकारापेक्षायां कॢप्तोपकारत्वात्प्रथमं प्राकृतैरेव संबध्यन्ते नतु संनिहितैः प्रथमं संबध्यन्ते संनिहितत्वेऽपि तेषामकॢप्तोपकारत्वात्, एवंच प्राकृतैरेवोपकाराकाङ्क्षाशान्तेराकाङ्क्षालक्षणं प्रकरणं विकृतीनां नास्तीत्यर्थः। **संनिधिमात्रमिति**। विकृतेः प्रकरणाभावेऽपि यथोपहोमादीनां संनिधिर्विनियोजकस्तद्वदिति भावः। विकृतिष्वपि यत्प्राकृताङ्गमध्ये पठितं यदामनहोमादि तस्य यद्यपि प्रकरणविनियोज्यत्वमस्ति काम्यानुवचनानामुपवीतविषये तदपि नास्तीत्याशयेन मात्रशब्दः। **द्वादशेति**। ज्योतिष्टोमप्रकरणे द्वादशाहीनस्येति दूरस्थाहीनानुवादेन द्वादशोपसत्त्वविधिवदित्यर्थः। **नन्वेवमभिक्रमणा-**

---

१ फलावच्छेदेन. २ प्रकरणं संनिधि.

इति न तद्वशेनैकान्ततः प्रकरणानुवृत्तिर्विज्ञायते यतः परप्रकरणे पाठो निविदां स्यात् । यद्वा तिष्ठन्नन्वाहान्तरानूच्यमित्यादिष्वनुवचनमात्रं श्रूयते तत्र यदि सामिधेन्यनुवचनं प्रकृतं स्यात्ततस्तदेवावगम्येत तदभावात्त्वनुवचनमात्रमनुवाक्यादिसाधारणमिति न सामिधेन्यनुवृत्तिरवधार्यते । यदपि 'देवा वै सामिधेनीरनूच्य'त्यन्ते वचनं तदप्याघारार्थवादत्वान्न सामिधेन्यनुवृत्तिं सूचयति । तस्माद्दर्शपूर्णमासाङ्गमुपवीतं, एकदेशिनां त्ववान्तरप्रकरणाभावात्संनिधेश्च प्रकरणाद्दुर्बलत्वादसत्यपि विच्छेदे सामिधेनीनां दर्शपूर्णमासाङ्गत्वमुपवीतस्य सिद्ध्यतीति व्यर्थमिदमधिकरणं स्यात् । कश्चित्त्वाह उपव्ययत इत्येकं पदमन्विताभिधानाय कर्तारमपेक्षमाणं संनिहितेन कर्त्रान्वीयत इति । तदयुक्तम् । प्रत्ययार्थेनापूर्वेण धातोरन्विताभिधानसिद्धेः, अवश्यं चानेन प्रत्ययेन सत्यपि सामिधेनीनां संनिधानेऽधिकारापूर्वमेवाभिधातव्यं सामिधेनीनां संनिपातित्वेनापूर्वशून्यत्वादतः पदश्रुत्यैव तदङ्गमुपवीतं भवतीति किमर्थमिदमधिकरणम् । अपिचैवं पूर्वाधिकरणपूर्वपक्षेऽपि विच्छिन्नमप्यभिक्रमणमेकपदत्वात्संनिहितेनैव प्रयाजकर्त्रान्वीयत इति तदधिकरणवैयर्थ्यं स्यात् । **नन्वभिक्राममित्यस्यानाख्यातत्वात्सिद्धवत्प्रतीतेर्न** कर्त्राकाङ्क्षा किंतु शेषिभूतस्तत्र कर्तापेक्षितः, नच शेषिणान्विताभिधानमिति । नैवम् । अवघातादिषु शेषिणाप्यन्विताभिधानाभ्युपगमात् । अपिच सर्वाण्येव कार्यार्थानि पदानि कार्येण शेषिणान्वितमर्थमभिदधतीति यत्किंचिदेतत् । अपिच यदि न शेषिणान्विताभिधानं केन

---

नन्तरं प्रयाजधर्मविधेरपि दूरस्थानुवादेनोपपादयितुं शक्यत्वादवान्तरप्रकरणोच्छेद एव स्यात्तस्मान्नैवंभूतस्थले दूरस्थानुवादेन विधिः स्वीकर्तुमुचित इत्यस्वरसादाह—**यद्वेति** । **तदभावादिति** । निविद्भिर्व्यवहितत्वादेव तदभाव इति भावः । **आघारेति** । सामिधेनीकीर्तनस्य परार्थत्वान्न तद्बलात्सामिधेन्यनुवृत्तिरित्यर्थः । **एकदेशिनामिति** । निविद्भिर्हि विच्छे-

तर्ह्यन्वितमभिक्रमणमभिधातव्यम्। नह्यनन्वितस्याभिधानं संभवति। गुणभूतस्तु कर्ताऽनपेक्षितत्वान्न तेनान्विताभिधानं संभवतीति त्वयोक्तम्। संभवे वा संनिहितेनैव प्रयाजकर्त्रान्विताभिधानाद्ग्रंथैमेकवाक्यत्वप्रतिपादनम्। प्रधानविधिनाऽभिक्रमणमन्वितमभिधीयत इतिचेन्न। तस्यापि शेषित्वादुपवीतस्यापि तत्संभवान्न संनिहितेनापि सामिधेनीकर्त्रान्वयः स्यात्। अथानभिहितमभिक्रमणं ग्राहको गृह्णीयादुपवीतमपि गृह्णीयात्। यदि शेषिभूतः कर्तापेक्षितो नानुष्ठातृभूत इति। तदपि विपरीतम्। अनभिहितस्य शेष्यपेक्षाभावात्, कर्त्रपेक्षा तु क्रियास्वाभाव्यादेव स्यादित्यास्तां तावत्॥

गुणानां मिथोऽसंबन्धाधिकरणम्॥ १२॥

## गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्॥ २२॥

**वैकंकतादिकं पात्रं पवमानहविष्ष्वथ॥ यज्ञेऽखिले प्रकरणादाधानेऽन्वितमत्र तत्॥ २७॥**

**अनर्थकं तदङ्गेषु हविष्ष्वेवावतिष्ठते॥ नाधानहविषां साम्याद्वाक्याद्यज्ञेऽखिले भवेत्॥ २८॥**

आधानप्रकरणे वारणवैकंकतानि यज्ञसंयुक्तानि पात्राणि श्रूयन्ते। वारणो यज्ञावचरो वैकंकतो यज्ञावचर इति पवमानेष्टयोऽप्याधानप्रकरणएव प्रदेशान्तरे श्रुताः। तत्र पात्रेषु संदेहः किं पवमानेष्ट्यङ्गं उत यज्ञमात्राङ्गमिति। तदर्थं च किं पवमानहवींष्याधानाङ्गं उत तान्यप्याधानेन समप्रधानान्यभ्यर्थानीति। यद्यङ्गं ततो यज्ञसंयोगात्साक्षादाधानेऽसंभवन्त्यपि पात्राण्यानर्थक्यतदङ्गन्यायेन पवमानेष्टिषु भवन्ति। अनङ्गत्वे तु कथंचिदपि यज्ञसंयुक्तानां प्रकृताधाननिवेशासंभवादिष्टीनां च स्वयमप्रकृतत्वादनारभ्यवादरूपेण सर्वयज्ञेषु भवन्ति। तत्राधानस्य द्वितीयासंयुक्ताग्निसंस्कारार्थतया फलवत्त्वादफलानि पवमानहवींषि प्रकरणात्तदङ्गम्। तत्रोच्यते। यदाहवनीये जुहोतीति वाक्यादेषामप्यग्न्यर्थता। नन्वनारभ्यवादोऽयं सर्वहोमाङ्गमाहवनीयं विधत्ते नत्वाहवनीयाङ्गत्वं पवमानहविषाम्। अत्र कश्चिदाह अनारभ्यवादेन प्रकृतावाहवनीयोऽङ्गत्वेन विहितः पवमानेष्टिष्वतिदेशेन

---

तेनेति यच्छब्दाध्याहारेण योज्यम्। प्रकारान्तरेणान्विताभिधानानिर्वाहोऽसिद्ध इति शङ्कते—**प्रधानेति। ननु** मास्त्वभिधानं किं नश्छिन्नम्। नच तथात्वे ग्राहकग्रहणं न स्यादिति वाच्यम्। अनभिहितस्यापि ग्राहकान्वये बाधकाभावादिति शङ्कते—**अथेति**। तर्ह्युपव्यानस्यापि संनिहितकर्त्रन्वयो न स्यादिति परिहरति—**उपवीतमिति। अनुष्ठातृभूत इति**। निर्वर्तकत्वेन गुणभूत इति यावत्। **अनभिहितस्येति**। ग्राहकलिङ्ग प्रयोजनप्रयोजनिभावेनाभिधानोत्तरभावित्वात् शेष्यपेक्षाया इति भावः। **क्रियास्वाभाव्यादिति**। सिद्धत्वेनाभिधेयस्याप्यभिक्रमणस्य कर्तारंविना निष्पत्त्यभावादस्ति गुणभूतकर्त्रपेक्षा। यद्वा सिद्धस्याप्याश्रयत्वेन तदपेक्षेति भावः। किंच 'देवलक्ष्ममेव तत्कुरुत इति' स्तुतिपदैरेवान्विताभिधानसिद्धेर्नान्यापेक्षा। नच स्तुतिपदैः कर्तृविशेषाप्रतीतेरिदमयुक्तम्। अपेक्षिततयावदलाभेऽप्यन्वययोग्येन येनकेनाप्यन्विताभिधानस्यावश्यंवाच्यत्वादन्यथा षण्णामपि कारकाणां क्रियापेक्षितत्वात्कतिपयोपादानस्थलेऽन्विताभिधानं न स्यादित्याशयेनाह—**आस्तामिति**। **सूत्रार्थस्तु**—अवान्तरप्रकरणानुवृत्तिसंदेहे निविद्भिर्व्यवधानादुपव्ययत इत्यस्य सामिधेनीवाक्येनैकवाक्यत्वाभावः स्यादिति॥

**गुणानां च परार्थत्वात्०॥ २२॥** यज्ञावचरो यज्ञानुष्ठानहेतुरिति यावत्। **नन्वाधानप्रकरणे** श्रूयमाणानामाधानार्थत्वात्पवमानेष्ट्यायङ्गत्वविचार एवानुपपन्न इति शङ्कां निराकर्तुं यज्ञसंयुक्तानीत्युक्तम्। आधानस्य च विशिष्टदेशेऽभिनिधानरूपस्य यज्ञरूपत्वाभावेन साक्षादाधानार्थत्वासंभवादस्ति विचारावसर इति भावः। इष्टिसंनिधावाम्नानेऽनुवादस्य सति संभवे संनिहितगामित्वेन तदङ्गत्वापत्त्या सिद्धान्तासिद्धिः स्यादिति प्रदेशान्तर इत्युक्तम्। **आनर्थक्येति**। अनेनाभिक्रमणोपव्यानयोरानर्थक्यतदङ्गन्यायेन कर्त्रन्वयसिद्धिमुपजीव्य तद्विशेषे विचारिते संप्रति आनर्थक्यतदङ्गन्यायापवादः क्रियत इति सङ्गतिरिति सूचितम्। **अप्रकृतत्वादिति**। यद्यप्यनङ्गत्वपक्षे तासां प्राधान्यात्प्रकरणमस्ति तथापि प्रदेशान्तरे तासामाम्नानान्न पात्रस्थले तत्प्रकरणानुवृत्तिरिति भावः। **नन्विति**। अग्निहोत्रादिष्वाहवनीयाङ्गत्वस्य पवमानहविषामाहवनीयार्थत्वस्य च बोधने वैरूप्यापत्तेरिति भावः। यदाहवनीये जुहोतीत्यनारभ्यवाक्यस्य होमाङ्गतयाहवनीयविधायकत्वमेवाश्रित्य प्राभाकरोन्नीतं सिद्धान्तसमर्थनप्रकारं दूषयितुमनुवदति—**अत्रेति। अतिदेशेनेति। ननु** परमते पवमानहविष्षु किं नारिष्टहोमाद्यर्थतया आहवनीयोऽतिदिश्यते उत प्रधानहोमार्थतया। नाद्यः। इष्ट्यङ्गार्थतयाहवनीयातिदेशेऽतिदेशतः साक्षात्संबन्धालाभप्रसङ्गात्। न द्वितीयः। परमते प्रक्षेपस्य प्रधानावयवत्वाङ्गीकारेण प्रधानस्यातिदेशाभावेन

---

१ अविहितस्य. २ अप्रकृततयाऽनारभ्य. ३ संभवन्ति.

प्राप्तः सच पवमानहविषामनिष्पन्नत्वान्नाङ्गं संभवतीत्यङ्गत्वे निवृत्ते यस्तस्य प्रकृतौ दृष्टः साक्षात्संबन्धांशः स इह संभवे न बाधनीयः। अवश्यं च पवमानहविषामाधानाङ्गत्ववादिनाप्यग्निनिष्पादकत्वमभ्युपगन्तव्यम्। तत्र प्राकृतसाक्षात्संबन्धाबाधाय साक्षादेवास्तु किमाधानप्रणाड्या समाश्रीयत इति सिद्धमग्न्यर्थत्वम्। तदिदमसारम् यत्तावदुक्तमङ्गत्वं निवृत्तमिति तत्स्वसिद्धान्तप्रस्मरणात्। नहि चोदकावगतमङ्गत्वं निवर्तते। यद्यपि चानिष्पन्नत्वान्न साधयति तथाप्यसाधयत एवाङ्गत्वमवघातस्येव कृष्णलचराववतिष्ठते, तेन साक्षात्संबन्धस्याङ्गत्वेनैव प्रकृतिवदुपपन्नत्वान्न तत्सिद्ध्यर्थं साध्यत्वमङ्गीकर्तव्यम्। अपिचार्थिकः प्रकृतौ साक्षात्संबन्धोऽङ्गत्वमेव शास्त्रार्थः, न चार्थिकं चोदकः प्रतिदिशति यद्बलेन साध्यता स्यात्, प्रतिदिश्यतां वा संबन्धः। सतु येनकेनापि प्रकारेण सिद्ध्यतीति साध्यत्वविशेषः कुतो लभ्यते। यत्तु साध्यत्वमाधानाङ्गत्ववादिनाप्यभ्युपगन्तव्यमिति। सत्यमभ्युपगन्तव्यम्। अस्तिहि तस्य प्रकरणं प्रमाणं, भवतस्तु किं प्रमाणम्। प्रकरणमेवेति चेत्। तथासत्याधानाङ्गत्वद्वारेणैवाग्नीनां साध्यत्वं स्यात्। यदि ह्यविशेषितं साध्यत्वं प्रकरणात्सिद्ध्येत्ततोऽतिदेशवशेन साक्षात्तदित्याश्रीयेत। क्रत्वर्थत्वमेव तु प्रकरणादवगम्यते नाविशिष्टं साध्यत्वम्। तेन यदि प्रकरणमङ्गीक्रियेताधानाङ्गतैव स्यात्। नोचेत्साध्यत्वमेव न स्यात्। विश्वजिदा-

---

प्रक्षेपस्य विकृतावनुपदिष्टत्वेन च तदर्थतयाहवनीयातिदेशस्य दूरापेतत्वात्। नच प्रक्षेपस्य प्रकृतावगतत्वमात्रेण विकृतौ स्वीकारस्तेषां संभवति। तन्मते प्राकृतक्रमस्यानङ्गतयाऽतिदेशानर्हस्यापि विकृतौ स्वीकारादिति वाच्यम्। एवंसति प्रक्षेपस्यातिदेशिकत्वाभावेन वैकृतामनहोमादिष्विवाहवनीयस्योपदेशत एव प्राप्त्यापत्त्यातिदेशतः प्राप्त्यनुपपत्तेरिति चेन्नैवम्। वस्तुतोऽतिदेशतः प्रक्षेपस्य प्राप्तिविरहेऽपि प्रकृतिपर्यालोचनेन तस्य पवमानहविष्षु स्वीकार्यतया साक्षाज्जुहोतिचोदितामनहोमादितुल्यकक्षतयोपस्थितिविरहेण झटित्युपस्थितजुहोतिचोदितमात्रविषयस्याहवनीयोपदेशस्य पवमानहविःसाधारण्यासंभवेन तत्राहवनीयप्राप्तेरातिदेशिकत्वस्य वक्तुं शक्यत्वादिति भावः। **यस्तस्येति**। प्रकृताहवनीयस्य साक्षात्संबन्धेनैवाङ्गत्वादिहाङ्गत्वे निवृत्तेऽपि साक्षात्संबन्धांशमात्रं न निवर्तनीयम्। तस्याङ्गत्ववदसंभावितत्वाभावादित्यर्थः। **ननु** साक्षात्संबन्धांशसिद्धावपि कथमग्नेः पवमानहविःसाध्यत्वसिद्धिरित्याशङ्क्यावश्यकत्वात्साक्षात्संबन्धः साध्यत्वात्मक एव पर्यवस्यतीत्याह—**अवश्यंचेति**। कृष्णलचरौ चोदकावगतमवघातस्याङ्गत्वं न निवर्तत इति भवत्सिद्धान्तविस्मरणमूलमिह चोदकावगताङ्गत्वस्य निवृत्त्यभिधानमित्युपपादयति—**नहीति**। नन्वेतावता किमायातमित्यत आह—**तेनेति**। **ननु** कृष्णलचरावघातस्याङ्गत्वं संभवति उपदेशविरोधाभावादिह तु अग्नीनामुपदेशावगतसाध्यत्वविरोधान्नाङ्गत्वं संभवतीत्यस्ति वैषम्यमित्यस्वरसादाह—**अपिचेति**। **आर्थिक इति**। आनुषङ्गिक इत्यर्थः। **नचार्थिकमिति**। आर्थिकस्य प्राकृतेत्थंभावानन्तर्गतत्वेन वैकृतकथंभावान्वयानर्हत्वादतएव वाससि मिनोति वाससोपावहरतीति श्रुतमानोपावहरणवाससोरेकत्वस्य प्रकृतावार्थिकत्वेनानतिदेशादहीने वासोभेदो दशमे वक्ष्यत इति भावः। **ननु** क्रियाकारकान्वयपूर्वकात्यन्तगुणताशेषतेति परैरङ्गीक्रियते ततश्च प्रकृतावङ्गत्वबोधकशास्त्रस्य क्रियाकारकभावोऽप्यर्थ एव। तेनाहवनीये जुहोतीत्यनेनावगम्यमानः क्रियाकारकान्वयः साक्षात्संबन्धरूपः प्रकृतौ शास्त्रार्थ एव नत्वार्थिकः। ततश्चोपदिष्टसाध्यत्वविरोधाद्गुणत्वे निवर्तमानेऽपि क्रियाकारकान्वयस्य प्रवर्तमानत्वादन्वयप्रकारभूतं साक्षात्त्वमपि प्रवर्तयितुमर्हतीति युक्तः साक्षात्संबन्धातिदेश इत्यरुचेराह—**प्रतिदिश्यतां वेति**। साक्षात्संबन्धोऽतिदिश्यतां नाम तथापि तस्य यथाप्रकृतिकारकत्वेनैवोपपत्तेः साध्यत्वात्माविशेषः कुतो भविष्यति। नच पवमानहविर्वेलायामाहवनीयस्यानिष्पन्नत्वात्कारकत्वमेव नास्तीति वाच्यम्। तथा सति साक्षात्त्वाश्रयस्य क्रियाकारकान्वयस्यैव प्रवृत्त्यसंभवान्निराश्रयं साक्षात्त्वं कथमतिदिश्येत। अथ साक्षात्त्वप्रवृत्त्यर्थं पवमानहविर्वेलायामाहवनीयशब्दवाच्यसंस्कारसाकल्याभावेऽपि तदेकदेशस्याधानजन्यस्य सद्भावमात्रेण कथंचित्कारकत्वमस्तीति स्वीकुरुषे तर्हि साध्यत्वात्माविशेषो न सिद्ध्यति। प्रकृतिक्लृप्तक्रियाकारकभावस्यैव साक्षात्संबन्धस्य संभवादिति भावः। अत्र यदुक्तमावश्यकत्वात्साध्यत्वमङ्गीकर्तव्यमिति तदनूद्य निराकरोति—**यत्त्विति**। **नोचेदिति**। पवमानहविषामाधानप्रकरणग्रहणानङ्गीकारे तेषां विश्वजिन्न्यायेन फलकल्पनया प्राधान्यावश्यंभावादग्नीनामेव तदर्थत्वं स्यात् नत्वग्न्यर्थत्वं हविषां स्यादित्यर्थः। **ननु** न प्रकरणबलेनास्माभिरग्नीनां साध्यत्वं स्वीक्रियते येनोक्तदोषः स्यात् किंतु ग्राहकग्रहणेन। तथाहि अग्नीनादधीतेत्यनेनाग्नीनां साध्यत्वावगतौ सत्यां क्रतूपयोगित्वेन प्रमितप्रयोजनत्वादग्नीनामप्रमितप्रयोजनेष्टिग्राहकत्वसंभवे सति यथाधिकारविधिः स्वसंनिधिसमाम्नातसकलपदार्थानेव प्रयोजनप्रयोजनिभावेन स्वान्वितानभिद-

---

१ हविर्वेलायामनिष्पन्नत्वात्. २ प्राकृतसंबन्धाबाधाय. ३ सिद्धमत्यग्न्यर्थत्वम्. ४ विस्मरणात्.

दिवत्तु फलं कल्पयित्वाग्नीनामङ्गत्वमेव स्यात् । अस्तु वातिदेशावगतसाक्षात्संबन्धबलादेव साध्यत्वं तत्तूपदेशात्मकप्रकरणावगतक्रत्वर्थत्वविरोधाद्बाधितव्यम् । अपिच करणत्वेऽपीष्टीनां न भवति साक्षादिष्टिसाध्यत्वमग्नीनाम् । ताहि सकलप्राकृताङ्गाहितोपकारसचिवा अग्नीन्साधयन्ति, तेन सर्वाङ्गानुष्ठानादवस्थितमुत्पत्त्यपूर्वं द्वारभूतमङ्गीकर्तव्यं तत्प्रणाड्याग्नीनां साध्यत्वं न साक्षात्, अपिच न प्रकृतावाहवनीयस्य साक्षात्संबन्धः, अङ्गभूतेन हि प्रक्षेपेणाहवनीयस्य संबन्धो न साक्षाद्यागेन । तदिहापि प्रकृतिवदतिदेशात्प्रणाड्यैव संबन्धः स्यात्, तस्मान्नैवमभ्यर्थता सिद्ध्यतीत्यन्यदुत्तरं वाच्यम् । तदुच्यते । अयमभिप्रायो भाष्यकारस्य—'अनारभ्यविधानेन सत्यं नाभ्यर्थता भवेत् ॥ तत्तुल्यं वाक्यमस्त्यन्यत्पवमानेष्टिसंनिधौ ॥' तेनचाग्नेरनिष्पन्नस्यैव साधनत्वेन विधानासंभवात्तस्यैव निष्पादयितव्यस्य फलवतः साधनत्वेनाफलानि पवमानहवींषि विधीयन्ते । सप्तमी च लक्षणया साध्यत्वमेव प्रतिपादयति । तप्ते पयसि दध्यानयतीतिवत् । तस्माद्वाक्यादाधानवत्पवमानहविषामभ्यर्थत्वान्नाधानाङ्गत्वम् । अतः सर्वयज्ञार्थानि पात्राणीति । आचार्यैस्त्वसत्यपि पवमानहविषामभ्यर्थत्वे पात्राणां वाक्येन सर्वयज्ञार्थता सिद्ध्यतीति वाक्यद्वयपरिकल्पनाक्लेशं न ममृषे । व्रीहीनवहन्तीत्यादिषु यथाश्रुतव्रीहिमात्रार्थत्वेऽवघातस्यानर्थक्याद्युक्तः प्रकरणानुप्रवेशः । तद्दर्शनच व्रीहिशब्दस्य साधनरूपलक्षणाश्रयणम् । इहतु यथाश्रुतयज्ञार्थत्वेऽपि दीक्षणीयार्थस्येव वाङ्नियमस्यानर्थक्याभावान्न

धानः सर्वान्गृह्णाति । एवमग्नयोऽपि स्वसंनिधिसमाम्नातानि पवमानहवींषि प्रयोजनप्रयोजनिभावेन गृह्णन्ति । अनेन चान्विताभिधानलक्षणग्राहकग्रहणेनाग्नीनां सामान्यतः पवमानहविःसाध्यत्वसिद्धौ किंरूपं तदिति विशेषापेक्षायामतिदेशबलेन साक्षात्संबन्धरूपं तदित्याश्रयितुं शक्यते । ततएव चेष्टीनां निराकाङ्क्षत्वान्न विश्वजिन्न्यायात्फलकल्पनाप्रसक्तिरपीत्यस्वरसादाह—**अस्तुवेति** । ग्राहकग्रहणेन सामान्यतः संबन्धसिद्धावपि साक्षात्त्वरूपो विशेषश्चोदकादिह नाश्रयितुं शक्यते । उपदेशात्मकतया प्रबलेन प्रकरणेनाधानद्वारैव तत्साध्यत्वमित्यवगमादित्यर्थः । **ननु** परमते प्रकरणमेवात्र नास्ति स्वतःसाध्यस्यैवेतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य परैरङ्गीकारात्परतःसाध्यस्यापि प्रकरणाङ्गीकारेऽवान्तरप्रकरणस्यापि तैः स्वीकार्यत्वप्रसङ्गात् । स्पष्टंचात्र विषये प्रकरणं नास्तीति क्षीरसागरमिश्रेण तन्मतानुवर्तिना प्रतिपादितम् । तस्मात्प्रकरणस्यैवाभावान्न प्रकरणादाधानद्वारत्वप्रसक्तिरित्यस्वरसादाह—**अपिच करणत्व इति** । **ननु** साक्षात्त्वं करणान्तराद्वारकत्वं तच्चोत्पत्त्यपूर्वद्वारकत्वेऽपि संभवतीत्यस्वरसादाह—**अपिचेति** । **अङ्गभूतेनेति** । अवयवभूतेनेत्यर्थः । परमते प्रक्षेपस्याङ्गत्वाभावादेवंच प्रकृतावप्यवयवद्वारा आहवनीयस्यावयविभूतप्रधानसंबन्धो न साक्षादिति प्रकृतौ साक्षात्संबन्धस्याक्लृप्तत्वादिह साक्षात्त्वस्य नातिदेशः संभवतीत्यर्थः । यद्वा स्वमते प्रक्षेपस्याङ्गत्वात्स्वमताभिप्रायेणायं ग्रन्थो बोध्यः । वस्तुतस्तु पवमानेष्टिषु प्रक्षेप एव परमते न सिद्ध्यति प्रक्षेपस्याश्रौतत्वात् प्रधानस्यातिदेशाभावाच्च । यत्तु अतिदेशाभावेऽपि प्रकृताववगतत्वमात्रेण क्रमवत्स्वीकार इति तन्न । क्रमस्यानुष्ठानापेक्षिततया प्रकृतावगतत्वमात्रेण विकृतौ ग्रहणेऽपि पवमानेष्टिषु श्रुतस्य द्रव्यदेवतासंबन्धस्य प्रक्षेपंविनापि त्यागमात्रेणोपपन्नतया प्रक्षेपापेक्षाविरहेणानपेक्षितस्य ग्रहणानुपपत्तेः । तस्मात्प्रक्षेपस्यैवाभावादाहवनीयस्यातिदेश एवानुपपन्न इति कथमतिदेशबलात्साक्षात्संबन्धसिद्धिरित्यभिप्रेत्योपसंहरति—**तस्मादिति** । विधानासंभवादित्युपलक्षणम् । अनारभ्याधीतवाक्यप्राप्तानुवादकत्वासंभवाच्चेति द्रष्टव्यम् । **नन्वेवं** शेषत्वार्थकसप्तम्यनुपपत्तिरित्यत आह—**सप्तमीचेति** । नयतेर्द्विकर्मकत्वेनानीयमानदधिव्याप्यतया प्रधानकर्मत्वेन साध्यत्वेऽपि यथा पयसि सप्तमी तद्वदित्यर्थः । **नन्वग्नीनां** श्रौताधानावरुद्धत्वात्तत्र वाक्येन पवमानहविषां साधनत्वेनान्वयो न संभवतीत्यत आह—**तस्मादिति** । इतरथा वाक्यानर्थक्यापत्त्या दुर्बलेनापि वाक्येनाभ्यर्थत्वं हविषामिति भावः । अत्राचार्योक्तमधिकरणभङ्गमाह—**आचार्य इति** । पवमानहविषामाधानार्थत्वे आनर्थक्यतदङ्गन्यायेन पात्राणामाधानाङ्गहविरर्थत्वं स्यादिति तद्वारणेन सर्वयज्ञार्थत्वसिद्ध्यर्थं पवमानहविषां यदभ्यर्थत्वप्रतिपादनं तदफलं पात्राणां प्रबलेन वाक्येन यज्ञसंयुक्ततया श्रुतानां दुर्बलेन प्रकरणेनाधानाङ्गत्वस्याप्रसक्त्या हविषामाधानाङ्गत्वेऽपि पात्राणां तेष्वनवतारादेवं च वृथावाक्यान्तरकल्पनाक्लेश इत्यर्थः । **ननु** यथा प्रबलश्रुत्यवष्टब्धानामप्यवघातादीनां प्रकरणेन क्रतौ निवेशस्तद्वदाधाने निवेशः पात्राणां किं न स्यादित्यत आह—**व्रीहीनिति** । **इहत्विति** । यद्यप्यत्रापि यज्ञस्वरूपस्य लोकसिद्धतया तदर्थत्वे पात्रनियमानर्थक्यादपूर्वार्थत्वमेव पात्राणां वाच्यम् । तच्च लक्षणयैव निर्वहति । वाङ्नियमोऽपि दीक्षणीयावान्तरापूर्वार्थो न तत्स्वरूपार्थ-

१ द्वाक्येनाधानवत्. २ तद्बलेन च.

लक्षणाश्रयणेन प्रकरणानुप्रवेशकल्पना न्याय्या । यदिच पवमानेष्टिसंनिधौ पात्राणि यज्ञार्थानि श्रूयेरन् ततोऽनुवादस्य सतिसंभवे संनिहितगामित्वात्सप्तदशारत्निलमिव वाजपेयस्य प्रकृतिवच्छन्दसंनिधापिते यूपे कृष्णलहोमवत्सौर्यस्य प्रकृतिवच्छब्दसंनिधापितेषु प्रयाजेषु पवमानेष्ट्यनुवादेन विधानात्तास्वेव पात्राणि स्युः नतु तासामिह संनिधानमस्ति । तस्मात्प्रकरणात्पूषाद्यनुमन्त्रणवदुत्कृष्टानि पात्राणि सर्वार्थानीति नार्थोऽधिकरणेन । सूत्रं तु पूर्वाधिकरण एव पदोत्तरत्वेन व्याख्येयम् । निविद्भिर्व्यवायात्सामिधेनीवाक्यस्योपवीतवाक्यस्य च भेदः स्यादित्युक्तेः । ननु निविदां सामिधेन्यङ्गत्वादव्यवधायकत्वं स्यादिति ये वदन्ति तेषामुत्तरं 'गुणानां च परार्थत्वा'दिति निविदोऽपि लिङ्गेनाग्निसमिन्धने गुणभूताः सामिधेन्योऽपि । अतो न तासां मिथः संबन्धः ॥

वार्त्रघ्न्यधिकरणम् ॥ १३ ॥

## मिथश्चानर्थसंबन्धात् ॥ २३ ॥

**वार्त्रघ्न्यौ पूर्णमासे स्तो वृधन्वत्यौ तु दर्शगे ॥ इति प्रधानशेषत्वमुक्तं किंवा व्यवस्थितिः ॥ २९ ॥**
**क्रमेण प्रापिता मन्त्राश्चत्वारोऽप्याज्यभागयोः ॥ क्रमाद्वाक्यं बलीयोऽत एषां दर्भादिशेषता ॥ ३० ॥**
**न मुख्ये सोम एकोऽस्ति नाधारत्वादिकालयोः ॥ दर्शादेरव्यवस्थित्याऽप्राप्तौ वाक्याद्व्यवस्थितिः ॥ ३१ ॥**

दर्शपूर्णमासयोराग्नेयः सौम्यश्च द्वावाज्यभागौ विहितौ तयोः क्रमेणानुवाक्याचतुष्टयमाम्नातं आग्नेयीसौमीत्येकं युगलं, पुनराग्नेयीसौमीचेत्यपरं, तत्र प्रथमद्वितीये वार्त्रघ्न्यौ तृतीयाचतुर्थी च वृधन्वत्यौ, तत्रापरं वचनं वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति । तत्र संदेहः । किमाज्यभागयोः क्रमप्राप्ता मन्त्रास्ताभ्यामाच्छिद्य वचनेन प्रधानाङ्गतया विधीयन्ते उताज्यभागयोरेवाव्यवस्थया प्राप्तयोर्युगलयोर्व्यवस्थामात्रमिति । तदर्थं चास्मिन्वचने पौर्णमास्यमावास्याशब्दौ कर्मवचनावुत कालवचनाविति । तत्र 'कालस्यास्मरणीयत्वान्न मन्त्रेण प्रयोजनम् ॥ नापि प्रकरणं तस्य तेन नासाविहोच्यते ॥ कर्मणः प्रकृतत्वेन मन्त्रापेक्षितयापि च ॥ तत्पौर्णमास्यमावास्याशब्दाभ्याममभिधीयते ॥' सप्तमी च पूर्वेद्युरमावास्यायां वेदिमितिवत्प्रधानेऽप्यविरुद्धा । तस्माद्वाक्येन क्रमं बाधित्वा प्रधानार्था मन्त्रा इति । नैवम् । यद्यपि कर्मैव शब्दाभ्यां प्रतिपाद्यते तथापि सप्तमीश्रुत्या

---

स्तथापि यज्ञस्यापूर्वाव्यभिचारादेवापूर्वार्थत्वनिर्वाहोपपत्तौ दुर्बलप्रकरणेन प्रकृताधानसंबन्ध्यपूर्वफललक्षणा न स्वीकार्येत्यत्र तात्पर्यं बोध्यम् । एतेन च प्रकरणानुग्रहे वाक्यस्यात्यन्तबाधाभावात्कांस्यभोजिन्यायेनात्र प्रकरणानुग्रह एव युक्त इत्यपि निरस्तम् । प्रकरणानुग्रहे यज्ञशब्दस्य लक्षणापत्त्या श्रुतिबाधप्रसङ्गादिति । नन्वेवं 'सप्तदशारत्निर्वाजपेयस्य यूप' इत्यत्रापि सप्तदशारत्नित्वस्य यूपमात्रान्वयेऽप्यानर्थक्याभावात्प्रकृतवाजपेयसंबन्धियूपान्वयो न स्यात्तथा 'सौर्यचरौ प्रयाजे प्रयाजे कृष्णलं जुहोती'ति श्रुतकृष्णलानां सौर्यचरुसंबन्धिप्रयाजमात्रान्वयोऽपि न स्यादित्याशङ्कायां संनिधानासंनिधानकृतं वैषम्यं परिहारमभिप्रेत्याह—**यदीति । पदोत्तरत्वेनेति ।** शङ्कापदोत्तरत्वेनेत्यर्थः । शङ्कोत्तरत्वेनेति यावत् ॥

**मिथश्चानर्थसंबन्धात् ॥ २३ ॥ प्रथमेति ।** 'अग्निर्वृत्राणि जङ्घन'दिति प्रथमायाः 'त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहे'ति द्वितीयायाश्च वृत्रहननप्रकाशकशब्दयुक्तत्वात् 'अग्निः प्रत्नेन मन्मना शुंभमानस्तनुवं स्वां कविर्विप्रेणवावृधे' इति तृतीयायाः । 'सोम गीर्भिष्ट्वा वयं वर्धयाम' इति चतुर्थ्याश्च वृद्धिप्रकाशकपदयुक्तत्वाच्चेति भावः । किं मन्त्राणां प्रधानार्थत्वमुत आज्यभागार्थत्वमिति प्रधानसंशयं मनसि निधाय तदर्थसंशयमाह—**किमाज्यभागयोरिति ।** व्यवस्थामात्रमित्यस्यानन्तरं अनेन वचनेन विधीयत इति शेषो ज्ञेयः । **कालस्येति ।** कालस्य प्रयोगादौ स्मरणमात्रेण तत्र कर्मानुष्ठानोपपत्त्या इतराङ्गवत्प्रयोगमध्ये स्मरणस्यानपेक्षितत्वात् । अतएव कालाभिज्यापक्षे पार्वणहोमयोरारादुपकारकत्वमिति नवमे वक्ष्यते । ततश्च पौर्णमास्यमावास्याशब्दयोः कालवचनत्वेन मन्त्राणां साक्षात्कालार्थत्वासंभवात्तत्काले यावाज्यभागौ विल्याज्यभागोपलक्षकताप्रसङ्गात्स्वार्थपरत्वसिद्ध्यर्थं कर्मवचनत्वमेवाङ्गीकर्तव्यमित्यर्थः । **नापि प्रकरणमिति ।** यदि कालस्य प्रकरणं स्यात्तदा कथंचिददृष्टप्रयोजनकल्पनेनापि कालार्थता मन्त्राणां स्यान्नच तदस्तीत्यर्थः । **पूर्वेद्युरिति ।** तत्रामावास्याशब्दस्य प्रधानकर्मपरत्वेऽपि यथा सप्तमी तद्वदित्यर्थः । **वाक्येनेति ।** अनेन पूर्वत्र यथा वाक्येन प्रकर-

---

१ सौर्ये प्रकृतिवत्. २ दित्युक्तम्. ३ नर्थसंबन्धः.

न प्रधानवत्त्वसंभवः । पूर्वेद्युरमावास्यायामिति तु लक्षणा । नचेह तथा मुख्यार्थसंभवात् । नचेह सौम्यस्य मन्त्रस्य प्रधानेषु सामर्थ्यमस्ति, सोमस्य प्रधानदेवताया अभावात् । अग्नीषोमीयेऽप्यग्निसहितस्य देवतात्वं न केवलस्य । अमावास्यायां तु नास्त्येव सोमः । नच वचनादयथार्थत्वम् । लिङ्गं हि वाक्याद्बलीयः, वाक्याद्धि कर्मणः प्राधान्यं लक्षणाश्रयणान्न श्रुतेः । अथापि विधिवाक्यत्वान्मन्त्ररूपं बाधेत यद्यबाधेन नोपपद्येत । तत्तु व्यवस्थामात्रमपेक्षितमल्पं च विदधत्सुतरामबाधेनैव वर्तेते पौर्णमासीगतयोराज्यभागयोर्वार्त्रघ्न्यावमावास्यागतयोर्वृधन्वत्याविति । यद्वा कालद्वारेण कर्मणि शब्दप्रवृत्तौ काले मुख्य इति तद्द्वारेण व्यवस्था विधीयत इत्याज्यभागयोरेव मन्त्राः ॥

हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

## आनन्तर्यमचोदना ॥ २४ ॥ [वाक्यानां च समाप्तत्वात् ॥ २५ ॥]

**हस्तौ द्वाववनेनिक्ते स्तृणात्युलपराजिकाम् ॥ दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले ॥ ३२ ॥**
**तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्क्रमात् ॥ लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता ॥ ३३ ॥**

दर्शपूर्णमासयोराम्नायते 'हस्ताववनेनिक्ते उलपराजिं स्तृणाती'ति । तथा ज्योतिष्टोमे 'मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती'ति । तत्र हस्तावनेजनं हस्तसंस्कारार्थं, मुष्टीकरणवाग्यमने च मनःप्राणिधानार्थे । तेन तत्त्रयमपि लिङ्गात्करिष्यमाणकर्माङ्गं सत्किमनन्तरयोरुलपराजिस्तरणदीक्षितावेदनयोरङ्गं उत सर्वकर्माङ्गमिति संशयः । तत्रानन्तर्यादेकवाक्यत्वादवान्तरप्रकरणाद्वा तन्मात्राङ्ग-

---

णबाध एवमिह वाक्येन क्रमबाधस्य प्रसक्तस्य निराकरणात्सङ्गतिरिति सूचितम् । पौर्णमास्यमावास्याशब्दयोः कर्मपरत्वमभ्युपगम्याह—**यद्यपीत्यादिना** । किंच सप्तम्याः लक्षणाभ्युपगमेऽपि न मन्त्रविधिः प्रधाने संभवतीत्याह—**नचेति** । ऐन्द्यादिवदिति भावः । **लिङ्गं हीति** । ऐन्द्या गार्हपत्यमिति श्रुतिबलाल्लिङ्गं बाधित्वा मन्त्रस्य लक्षणाश्रयणेऽपि प्रकृते मन्त्रविनियोगस्य वाक्यगम्यत्वाद्वाक्यस्य च लिङ्गापेक्षया दुर्बलत्वान्न तद्बलेन लिङ्गं बाधित्वा मन्त्रस्य लक्षणाश्रयणं युक्तमित्यस्ति वैषम्यमित्यर्थः । **लक्षणेति** । लक्षणायाश्च समभिव्याहारमूलकत्वेन लक्षणागम्योऽर्थो वाक्यलब्ध इति भावः । वाक्यत्वेऽपि प्रकृते विधित्वात्प्राप्तार्थमन्त्रलिङ्गापेक्षया प्राबल्यमाशङ्क्याह—**अथेति** । **अपेक्षितमिति** । प्रधाने तु मन्त्रान्तरसद्भावात्तत्र मन्त्रविधिरनपेक्षित इति भावः । **अल्पमिति** । अत्यन्ताप्राप्तप्रापणापेक्षया प्राप्तव्यवस्थाया लघुत्वादिति भावः । **पौर्णमासीगतयोरिति** । पौर्णमास्याख्यकर्माङ्गभूतयोरित्यर्थः । एवममावास्यागतयोरित्यस्याप्यर्थो बोध्यः । इदानीमभ्युपगमं परित्यजति—**यद्वेति** । **तद्द्वारेणेति** । पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्न्यावित्यनेन प्रकारेणेति भावः । इदंत्ववधेयम्—पौर्णमास्यां काले इमौ मन्त्राविति व्यवस्थाविधिः । अव्यवस्थायां च प्राप्तायां व्यवस्था विधातव्या । सा चाज्यभागद्वारा प्राप्तेति साक्षात्कालोद्देशेन व्यवस्थाविधानेऽपि तत्कालकर्तव्याज्यभागयोर्व्यवस्था पर्यवस्यति । एवंच न विशिष्टोद्देशदोषप्रसङ्गः । पौर्णमास्यमावास्याशब्दयोः स्वयमुद्देश्यसमर्पकत्वान्न परार्थत्वप्रसङ्गश्चेति । सूत्रार्थस्तु—मिथो भूतानां युगलभूतानामनर्थसंबन्धात्प्रयोजनाभावात्प्रधानेनासंबन्ध इति ॥

**आनन्तर्यमचोदना ॥ २४ ॥ उलपेति** । ऊर्ध्वैस्तृणैर्दीर्घं वेदिस्तरणं उलपराजिस्तरणं द्रष्टव्यम् । **दीक्षितमिति** । अदीक्षिष्टायमिति दीक्षितत्वेनावेदयतीत्यर्थः । **ननु** प्रकरणेन हस्तावनेजनादेः प्रधानार्थत्वादानन्तर्येणोलपराजिस्तरणार्थत्वासंभवात्संशय एवानुपपन्न इति शङ्कां निराकुर्वन्संशयमाह—**तत्रेति** । अवनेजनस्य हस्तसंस्कारार्थत्वान्मुष्टीकरणवाङ्नियमनयोश्च मनःप्रणिधानद्वारा कर्तृसंस्कारार्थत्वान्मुष्टिवाग्विसर्गानन्तरं कर्तव्ये प्रधाने साक्षादुपयोगासंभवाच्च संशय उपपद्यत इति भावः । **किमनन्तरयोरिति** । दीक्षितावेदनस्याध्वर्युकर्तृकस्यापि दीक्षितसंस्काररूपत्वाद्यजमानकर्तृकमुष्टीकरणवाग्यमनयोर्दीक्षितावेदनेऽङ्गत्वं संभवतीति भावः । **सर्वकर्मेति** । सर्वशब्दोः मुष्टिवाग्विसर्गप्राक्कालिकसर्वपरो बोध्यः । आनन्तर्यादित्यनेन पूर्वत्र क्रमादाज्यभागार्थत्वे मन्त्राणामभिहिते इह क्रमोऽपोद्यत इति सङ्गतिः सूचिता । **वाक्यत्वादिति** । येन कर्मणेर्त्सेदित्यादिषु यच्छब्दादिकमाकाङ्क्षासंपादकत्वेनाख्यातद्वयस्यैकवाक्यतायामुपयुज्यते । प्रकृतेच यच्छब्दाद्यभावेऽप्युलपराजिस्तरणादेरितिकर्तव्यताकाङ्क्षायाः स्वतःसिद्धत्वादाख्यातद्वयस्याप्येकवाक्यता संभवतीति भावः । **अवान्तरेति** । इदमापाततः संदंशाभावेऽवान्तरप्रकरणाभावस्याभिक्रमणस्थल एव प्रतिपादनादिति ध्येयम् । **तन्मा-**

---

१ शब्दप्रवृत्तेः. २ कालो. ३ सर्वाङ्गमिति.

त्वे प्राप्तेऽभिधीयते—'लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते ॥ क्रमश्च दुर्बलस्ताभ्यामतः सर्वार्थता भवेत् ॥' नचाख्यातद्वयस्य यच्छब्दाद्युपबन्धरहितस्यैकवाक्यत्वं संभवति येन वाक्येनैव तादर्थ्यं स्यात्, नच श्रुत्यादिविहितानां संदंशोऽस्ति येनावान्तरप्रकरणं स्यात्तस्मात्सर्वार्थता स्यात् ॥

चतुर्धाकरणादीनामाग्नेयमात्राङ्गताधिकरणम् ॥ १५ ॥

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसंबन्धात् ॥ २६ ॥ [व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन संबन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥]

चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम् ॥ चतुर्धाकरणं सर्वशेषो वाग्नेयमात्रगम् ॥ ३४ ॥
उपलक्षणताग्नेये युक्तातः सर्वशेषता ॥ अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्वाग्नेयता ततः ॥ ३५ ॥
नाग्नेयत्वं तयोर्मुख्यं केवलाद्यनुपाश्रयात् ॥ तेनैकस्मिन्पुरोडाशे चतुर्धाकरणस्थितिः ॥ ३६ ॥

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयैन्द्राग्नाः पुरोडाशाः । तत्राग्नेयं चतुर्धा करोतीति चतुर्धाकरणं किं सर्वेषां भवत्युताग्नेयस्यैवेति भवति विचारः । तत्र 'अग्निः संबन्धमात्रेण भवेद्द्रव्योपलक्षणम् ॥ संबन्धश्चाविशिष्टोऽतः सर्वेषामुपलक्षणम् ॥' अग्निस्तावदत्र चतुर्धाकरणविषयद्रव्योपलक्षणमात्रं न स्वयं कार्ययोगी तेन नासौ यथाश्रुत एव ग्रहीतव्यो येन देवतात्मभूतेनैवोपलक्षणं स्यात् । किंतु यावता विना न शक्नोति द्रव्यं लक्षयितुं तन्मात्रमादर्तव्यम् । संबन्धमात्रेण चासौ शक्नोति तल्लक्षयितुम् । संबन्धश्चाग्नेरग्नीषोमीयेऽपि विद्यते । तस्मात्तस्याग्नेयशब्देन लक्षितत्वात्तस्यापि चतुर्धाकरणम् । अथवा देवतात्वमेवास्ति । यद्धि द्वाभ्यां दीयते दीयतएव तदेकस्मा अपि । यद्वा अग्नेरिदमिति संबन्धमात्रेऽप्याग्नेयशब्दो भवत्येव 'सर्वत्राग्निकलिभ्यां ढग्वक्तव्य'इतिस्मरणात्तस्मात्सर्वत्र चतुर्धाकरणमिति प्राप्ते ब्रूमः—'केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन् ॥ नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः ॥' देवताभूतस्तावदिहाग्निस्तद्धितेनोपलक्षणमुपादीयते । संभवति च तस्य यथाश्रुत्यैवोपलक्षणत्वं केवलाग्नेयस्यापि सद्भावादतो न शब्दानवगतेन संबन्धमात्रेणोपलक्षणत्वं युक्तम् । विनाकारणेन श्रुतिबाधप्रसङ्गात् । अग्नीषोमीयादौ तु समासादुत्पन्नस्तद्धितो द्वयोः सापेक्षयोर्देवतात्वमाह । तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वम् । नच सापेक्षस्य तद्धिते सामर्थ्यमस्ति । तेनाग्नेयशब्दो न शक्नोत्यग्नी-

---

**त्रेति** । आनन्तर्याविशेषादुत्तरपदार्थस्य पूर्वपदार्थाङ्गत्वं किं न स्यादिति शङ्कापरिहारो वार्तिके द्रष्टव्यः । **लिङ्गप्रकरणाभ्यामिति** । साक्षात्प्रधानार्थत्वासंभवादङ्गावतारेण सर्वाङ्गार्थत्वमेव प्रकरणाल्लभ्यत इति भावः । **नचेति** । उलपराजिस्तरणादेरितिकर्तव्यताकाङ्क्षा वाचनिकाङ्गादिभिः पूर्यतेति भावः । प्रयोजनं स्वकाले दैवाद्धस्तावनेजनायकृत्वा कतिपयपदार्थानुष्ठानानन्तरं तत्स्मरणे यत्र स्मृतं तदुत्तरपदार्थानामवैगुण्याय तत्र कर्तव्यं सिद्धान्ते । पूर्वपक्षे तु अनन्तरपदार्थस्यानुष्ठितत्वाद्धस्तावनेजनाकरणप्रायश्चित्तमात्रम् । सूत्रे अचोदना प्रमाणमित्यर्थः ॥

**शेषस्तु गुणसंयुक्तः साधारणः०** ॥ २६ ॥ व्यवस्थासंयोगं व्यवस्थाप्रसङ्गागतं समाप्येदानीं संयोगएव किमेकदेशेनोत समस्तेनेति विचार्यत इति सङ्गतिः । नचाग्नेयशब्दस्य देवतातद्धितान्तत्वादग्नेर्देवतात्वेनैवोपलक्षणत्वं वाच्यं नतु संबन्धमात्रेणेति शङ्कां व्यावर्तयितुं श्लोकं व्याचष्टे—**अग्निस्तावदिति** । **न स्वयमिति** । येनाग्नेयोऽष्टाकपाल इत्यादिवदग्निः स्वयं कार्ययोगित्वाद्यथाश्रुतो गृह्येतेति भावः । आग्नेयशब्दस्य देवतातद्धितान्तस्यापि प्रकृतेऽग्निसंबन्धमात्रपरत्वं तावतापि द्रव्योपलक्षणत्वसिद्धिरित्यभिधाय देवतापरत्वेऽपि अग्नीषोमीयादिसाधारण्यं संभवतीत्याह—**अथवेति** । इदानीं देवतातद्धितान्तएव नायमित्याह—**यद्वेति** । देवतातद्धितान्तस्यापि संबन्धमात्रपरत्वमिति प्रथमपक्षं निराचष्टे—**देवताभूतस्तावदिति** । नह्यत्राग्निरुपलक्षणं किंतु तद्धितार्थप्राधान्यादग्निदैवत्यत्वम् । अस्तु वाग्निरेवोपलक्षणं तथापि श्रुतेन देवतात्वेनैवासावुपलक्षणं नत्वश्रुतेन संबन्धमात्रेण । श्रुतबाधप्रसङ्गादश्रुतलक्षणाप्रसङ्गाच्चेति भावः । द्वितीयं पक्षं निराकरोति—**अग्नीषोमीयादाविति** । सापेक्षयोः परस्परसहितयोरित्यर्थः । **नचेति** । 'समर्थानां प्रथमाद्वे'तिस्मरणात्तद्धितः सामर्थ्यमपेक्षते सापेक्षमसमर्थमितिन्यायात्सोमसापेक्षस्याग्नेरसमर्थतया ततस्तद्धितोत्पत्त्यसंभवात् । तद्धितान्त आग्नेयशब्दः

---

१ विहिताङ्गसंदंशोस्ति. २ कार्योपयोगी. ३ माहर्तव्यं. ४ दिहासावग्निः.

षोमीयादिकमभिवदितुम् । यद्यपि च संबन्धमात्रेऽविरुद्धस्तद्धितस्तथाप्यत्र देवतार्थतैवाश्रयितव्या लक्षणार्थत्वात् । प्रसिद्धसंबन्धं हि लक्षणं भवति, प्रसिद्धिश्च विधिवाक्यादेवाप्तव्या, विधिवाक्ये चाग्नेर्देवतासंबन्ध एव पुरोडाशेनावगतो न संबन्धमात्रम् । तस्माद्देवतात्वमेवोपलक्षणं, तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्धाकरणम् । यदपि शतपथब्राह्मणे 'तं चतुर्धाकृत्वा पुरोडाशं बर्हिषदं करोती'ति सामान्यवचनं तदप्यनेनैव विशेषवचनेनोपसंह्रियत इति तस्यैव चतुर्धाकरणं युक्तम् ॥ इति शास्त्रपीपिकायां तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## तृतीयाध्याये द्वितीयः पादः ॥ २ ॥

मुख्यं विनियोगाधिकरणम् ॥ १ ॥

**अर्थाभिधानसामर्थ्यान्मत्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥ [संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥]**

**देवोपसदनं बर्हिर्दामिगीर्मुख्यगौणयोः ॥ तल्लिङ्गमर्थयोर्मत्रं नियुङ्क्ते मुख्य एव वा ॥ १ ॥**
**शब्दार्थत्वाद्वयोस्तत्र युज्यते विनियोजनम् ॥ प्रथमावगतत्वेन मुख्ये तद्विनियम्यते ॥ २ ॥**

पूर्वपादे श्रुतिविनियोगः प्राधान्येन चिन्तितः । अधुना लिङ्गादिविनियोगश्चिन्त्यते । विनियोजकत्वं च मत्रलिङ्गस्य मन्त्राधिकरणे सिद्धं, अर्थप्रकाशनेनोपकुर्वन्तीत्यभिधानात्, तद्विशेषस्त्विदानीं चिन्त्यते । लिङ्गं सामर्थ्यं तच्च मुख्यइव गौणेऽपि कथंचिद्विद्यते । तदिह संशयः किं मुख्य एवार्थे

---

केवलाग्निदेवताकमेवाभिधत्ते नान्यसहिताग्निदेवताकमित्यर्थः । तृतीयं पक्षमनूद्य निराचष्टे—**यद्यपीति । आश्रयितव्येति** । देवतातद्धितस्य प्रतिपदोक्तत्वादिति भावः । युक्त्यन्तरमाह—**लक्षणार्थत्वादिति** । अन्योपलक्षणार्थत्वादित्यर्थः । **तदपीति** । यद्यपि विशेषवचनत्वमात्रेण न सामान्यवचनप्राप्तोपसंहारकत्वं, तथात्वे न ब्राह्मणं हन्यादिति सामान्यवचनस्यापि नात्रेयं हन्यादिति विशेषवचनेनोपसंहारप्रसङ्गात् किंतु यत्र सामान्यवचनानुष्ठानाय विशेषापेक्षा तत्रैव विशेषे उपसंहारः । 'अग्नीषोमीयं पशुमालभेते'ति सामान्यवचनस्य 'छागस्य वपाया मेदस' इति मन्त्रवर्णोपस्थितिविशेषे उपसंहारः । उक्तंच 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ॥ स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते ॥' इति । अत्रास्पष्टत्वमनुष्ठानाय विशेषापेक्षत्वमित्याहुः । प्रकृतेच चतुर्धाकरणस्य प्रतिपत्तिरूपतया सर्वापेक्षिततत्वेन सामान्यवचनस्य पुरोडाशमात्रे चतुर्धाकरणानुष्ठापकत्वोपपत्त्याऽनुष्ठानाय विशेषापेक्षाविरहान्नोपसंहारकत्वं विशेषवचनस्य संभवति, तथापीह सामान्यवचनं न चतुर्धाकरणविधायकं किंतु लाघवाद्बर्हिषदत्वमात्रस्य क्रमस्य वा विधायकम् । ततश्चतुर्धाकरणांशेऽनुवादकत्वात्तस्य प्रापकाग्नेयवचनानुसारेण विशेषविषयत्वं पर्यवस्यतीत्यभिप्रायो बोध्यः । सूत्रार्थस्तु—अन्योपलक्षकतया गुणभूताग्निसंयुक्तः शेषोऽग्नीषोमीयादिसाधारणः प्रतीयते उपलक्षणानां विशेषणानां च परस्परमसंबन्धादिति ॥ **इति शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥**

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥** श्रुतिविनियोगलिङ्गविनियोगरूपार्थभेदात्पादभेदः लिङ्गस्य श्रुतिकल्पकतया विनियोजकत्वेन लिङ्गविनियोगस्य श्रुतिविनियोगोपजीवकत्वात्प्रबलश्रुतिविनियोगविचारानन्तरं तदपेक्षया दुर्बललिङ्गविनियोगविचारस्यावसरप्राप्तत्वाच्चानन्तर्यं चेत्याशयेनाह—**पूर्वेति** । नन्वभिक्रमणादेरवान्तरप्रकरणादिनाङ्गत्वस्यापि पूर्वपादे विचारिततत्वान्न श्रौतविनियोगः पूर्वपदार्थ इत्यत आह—**प्राधान्येनेति** । इदं चोत्तरत्राप्यनुषञ्जनीयम् । तेनैन्द्यादौ श्रुतिविनियोगविचारेऽपि तस्य प्राधान्याभावान्न लिङ्गविनियोगस्यैतत्पादार्थत्वानुपपत्तिः । **नन्वत्र** लिङ्गस्य विनियोजकत्वं न विचार्यते किंतु तद्विशेषः सचायुक्तः । विनियोजकत्वस्यैवासिद्ध्या तद्विशेषविचारानुपपत्तेरित्यत आह—**विनियोजकत्वंचेति । ननु** मन्त्राधिकरणे मन्त्राणां विवक्षितार्थत्वमात्रं प्रतिपादितं न विनियोजकत्वमित्यत आह—**अर्थप्रकाशनेनेति** । मन्त्राणां क्रमप्रकरणाभ्यां क्रत्वङ्गत्वंभवदृष्टेनार्थप्रकाशनेनोपकारेण भवतीति तत्र व्युत्पादनाल्लिङ्गस्य विनियोजकत्वं तत्रैव सिद्धमित्यर्थः । मन्त्राधिकरणसिद्धं लिङ्गस्य विनियोजकत्वमित्युक्ते मन्त्राधिकरणेऽर्थप्रकाशनसामर्थ्यस्य शब्दगतस्य विनियोजकत्वसिद्धेः शब्दसामर्थ्यमेव लिङ्गमिति भ्रमः स्यात्तद्व्युदासार्थमाह—**लिङ्गं सामर्थ्यमिति** । शब्दार्थोभयसाधारण्येन सामर्थ्यमात्रमेव लिङ्गं तथापि अत्र क्रियमाणवि-

---

१ मन्त्रेषु पूर्वपादे. २ त्वं लिङ्गस्य

मन्त्राणां विनियोगः किं वा गौणेऽपीति। कः पुनर्मुख्यः को वा गौणः। यः शब्दादेवं प्रतीयते स मुख्यः यथाग्निशब्दाज्ज्वलनः, बर्हिःशब्दाच्च कुशाः। यस्तु शब्दाभिहितार्थगुणसंबन्धात्तत्सदृशोऽर्थः प्रतीयते स गौणः यथाग्निशब्दान्माणवकः। स हि ज्वलनगुणपैङ्गल्ययोगाद्गम्यते तथा बर्हिःशब्देन तृणान्तरमुलपादि। ननु प्रयोगप्रतीत्यविशेषादुभयत्र वाचकत्वं कस्मान्न भवति नाविशेषः, विशेषप्रतीतेः अग्निरिव माणवक इति सादृश्यप्रत्ययाद्गुणादेव च प्रयोगप्रतीत्युपपत्तेरनेकार्थत्वमन्याय्यम्। परगुणाः परत्र न संभवन्तीतिचेन्न। प्रत्यभिज्ञानात्। येऽपि प्रतिद्रव्यं गुणभेदमातिष्ठन्ते तेऽपि सामान्यात्मनैक्यमिच्छन्त्येव। तेनोपपन्नो गौणमुख्यविभाग इति युक्ता चिन्ता। तत्र 'अर्थानां स्मरणार्हत्वान्मन्त्राणां चापि शक्तितः॥ प्रतिप्रधानमावृत्तेर्गुणानामुभयार्थता॥' उभयेषामपि तावदर्थानामनुष्ठेयत्वात्स्मरणमपेक्षितं मन्त्राश्चार्थप्रति गुणभूताः समर्थाश्चोभयत्रापि यथाकथंचित्स्मृतिमाधातुं, साक्षादभिधानस्यापि स्मरणमेव फलं नाधिकम्, तच्च गौणसामर्थ्येस्याप्यविशिष्टं, प्रतिप्रधानं च गुणावृत्तिर्न्याय्या, तस्मादुभयत्र विनियोग इति प्राप्तेऽभिधीयते—'गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना॥ आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥ तात्पर्यं च स्वतो मुख्ये गौणार्थपरता पुनः॥ प्रमाणान्तरविज्ञेया तदभावान्न सिद्ध्यति॥' नह्यग्निरित्येतावता प्रमाणान्तरमन्तरेण गौणे सामर्थ्यं तात्पर्यं वा कथंचिदपि लौकिकाः प्रतिपद्यन्ते। मुख्यार्थे तु श्रवणादेव शब्दस्योभयमवगच्छन्ति। नचेह प्रमाणान्तरमस्ति येन मन्त्राणां गौणे सामर्थ्यं तात्पर्यं वाभिव्यज्येत। नचानाविर्भूते सामर्थ्ये तात्पर्ये च शब्दादर्थः प्रतीयते। तेन गौणार्थो मन्त्रान्न प्रतीयत एव। कथमप्रतीयमाने विनियोगः स्यात्, मुख्यस्त्वर्थः शब्दादेवावगम्यत इति युक्तस्तत्र विनियोगः। यस्य तु

---

शेषविचारस्य शब्दसामर्थ्यरूपलिङ्गविनियोगविशेषविचाररूपत्वात्तदुपयुक्ततया शब्दगतस्य सामर्थ्यस्य विनियोजकत्वं मन्त्राधिकरणे सिद्धमित्युक्तं नतु तावता तदेव लिङ्गमिति भ्रमः कर्तव्य इति भावः। अर्थसामर्थ्यरूपस्य च लिङ्गस्य विनियोजकत्वमर्थाद्वा कल्पनेत्यधिकरणे वर्णितम्। तत्र 'स्रुवेणावद्यति स्वधितिनावद्यती'त्यवदानसामान्यसंयोगेन श्रुतानामपि स्रुवादीनां यथासामर्थ्यं द्रवाद्यवदाने व्यवस्थोक्तेरिति द्रष्टव्यम्। **ननु** शब्दो मुख्यमर्थं प्रत्याययति प्रतीतश्च मुख्यार्थः स्वसदृशमर्थं प्रत्याययति। ततश्च गौणार्थप्रत्यायने मुख्यार्थस्यैव सामर्थ्यं न शब्दस्य। तेन कथमयं विचार इत्यत आह—**तच्चेति**। अशब्दोपस्थापितस्य शाब्दान्वयविषयत्वाभावाद्गौणेऽप्यर्थे मुख्यार्थद्वारा शब्दस्यैव सामर्थ्यमाश्रयणीयमिति भावः। मुख्यार्थव्यवधानं कथंचिच्छब्दार्थः गौणमुख्ययोर्दुर्विवेचत्वेन संशयानुपपत्तिमभिप्रेत्य पृच्छति—**क इति**। उक्तो विशेषोऽसिद्ध इति शङ्कते—**नन्विति**। **प्रत्ययादिति**। प्रतीतिमूलत्वात्प्रयोगस्य। प्रयोगेऽपि तत एव विशेष इति भावः। प्रतिद्रव्यं गुणभेदाद्गुणात्प्रतीतिरनुपपन्नेति शङ्कते—**परगुणा इति**। अयं पिङ्गलोऽयमपि पिङ्गल इति प्रत्यभिज्ञानात्प्रतिद्रव्यं गुणभेदोऽसिद्ध इति परिहरति—**नेति**। **येपीति**। वैशेषिकादय इत्यर्थः। **सामान्यात्मनेति**। एकजातीयत्वेनानुगममित्यर्थः। शक्तितः समर्थत्वादित्यर्थः। **ननूभयत्र** विनियोगे उभयप्रकाशनाय तत्तदर्थानुष्ठानसमये मन्त्रावृत्तिः स्यादित्यत आह—**प्रतीति**। प्रधानानुसारेणावृत्तिरदोष इति भावः। **ननु** गौणस्यार्थस्य प्राधान्यमेवासिद्धं प्राथमिकमुख्यविनियोगमात्रेण मन्त्राकाङ्क्षाशान्त्या गौणे विनियोगस्यैवायोगादित्यत आह—**उभयेषामिति**। कुशादिलक्षणमुख्यार्थानामुलपादिलक्षणगौणार्थानां चेत्यर्थः। ततश्चानुष्ठेयोलपाद्यर्थाकाङ्क्षाबलान्मन्त्राणां गौणेऽपि विनियोग आवश्यकः। एवंच गौणमुख्ययोरुभयोरप्याकाङ्क्षाबलादनेन मन्त्रेण यत्प्राकरणिकं प्रतिपादयितुं शक्यते तत्कुर्यादित्येवं साधारण्येनैव विनियोगकल्पनान्मुख्यार्थविनियोगस्य प्राथमिकत्वमेवासिद्धमिति भावः। **साक्षादभिधानस्यापीति**। शक्तिपर्यायमुख्यसामर्थ्यस्यापीत्यर्थः। मन्त्रस्यार्थे विनियोगो न तत्प्रकाशनस्वरूपयोग्यत्वात्किंतु तत्प्रकाशनफलोपधानाद्वाच्यः। गौणार्थप्रकाशकत्वस्य च प्रमाणान्तरसापेक्षत्वादसति प्रमाणान्तरे गौणार्थप्रकाशनसामर्थ्यस्यैवानाविर्भावात्तत्प्रकाशनस्वरूपयोग्यत्वसद्भावेऽपि न तत्र विनियोग इति सिद्धान्तयति—**गौणे सदपीति**। **प्रमाणान्तरादिति**। मुख्यान्वयानर्हपदसमभिव्याहारवाचनिकविनियोगादिलक्षणादित्यर्थः। शब्दादेव, शब्दश्रवणमात्रादेवेत्यर्थः। **ननु** तात्पर्यबलादेव तत्सामर्थ्योन्मेषो भविष्यतीत्यत आह—**तात्पर्यं वेति**। ततश्च तत्र तात्पर्यस्यैवानिर्ज्ञातत्वान्न तद्बलाद्गौणे सामर्थ्योन्मेषसंभव इति भावः। **कथमप्रतीयमान इति**। तत्प्रतीतिनिबन्धनत्वात्तत्र विनियोगकल्पनस्येति भावः। **नन्वेवमपि** यस्य मुख्यार्थः प्रकरणे नास्ति तस्य गौणे विनियोगः स्यात्तत्र प्रकरणे मुख्यार्थानन्वयस्यैव प्रमाणान्तरस्य सद्भावादित्यत आह—**यस्येति**। प्रकरणेन

---

१ देवावगम्यते. २ यतेऽसौ गौणः. ३ पैङ्गल्यादिगुण. ४ भवति विशेषप्र. ५ तदभावोऽस्य सिध्यति. ६ मुख्ये तु.

मुख्योऽर्थः प्रकरणे नास्ति तस्योत्कर्षो यथा पूषाद्यनुमन्त्रणमन्त्राणां, यस्य तूत्कर्षोऽपि न सम्भवति मन्त्रस्य तस्य जपमात्रेणोपयोगो नतु गौणत्वम्, अत्यन्ताप्रामाणिकत्वात् । अपिच प्रथमावगतमुख्यविनियोगेनैव कृतार्थत्वान्मन्त्रस्य न तद्वशेन गौणे विनियोगः । अर्थोऽपि गौणो ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नात्माभिधायिनं मन्त्रमपेक्षते ततोऽप्रामाणिकस्तत्र विनियोगः । मुख्यविनियोगस्तु मन्त्राकाङ्क्षावशाद्भवतीति तत्रैव विनियोगः ॥

ऐन्द्रीन्याये(ऐन्द्यागार्हपत्ये)विनियोगाधिकरणम् ॥ २ ॥

**वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ [गुणाद्वाप्यभिधानं स्यात्संबन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥]**

ऐन्द्या निवेशनेत्यग्निं गार्हपत्यं भजेदिति ॥ प्रकाश्ये मुख्य इन्द्रे वा गौणे मुख्येऽस्तु पूर्ववत् ॥ ३ ॥
एकस्य गौणता ध्रौव्ये मन्त्रस्यैवानुवादतः ॥ गौणतातोऽप्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥ ४ ॥

अपवाद आरभ्यते, अग्नौ श्रूयते 'निवेशनः संगमनो वसूनामित्यैन्द्या गार्हपत्यमुपतिष्ठत' इति । तत्र संशयः किमनेन मुख्यस्येन्द्रस्य प्रकाशनं कर्तव्यं उत गौणस्य गार्हपत्यस्येति । तत्र—'पूर्वाधिकरणन्यायान्मुख्यस्येति प्रतीयते ॥ विनियोज्यानुसारेण विनियोगस्तु वर्ण्यते ॥ नखल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने ॥ शक्तिरस्ति नचाशक्तोऽशक्येऽर्थे विनियुज्यते ॥ तेन मन्त्रानुसारेण विनियोगार्थवर्णना ॥ इन्द्रो हि गार्हपत्येन गौण्या वृत्त्याभिधीयते ॥ यज्ञसाधनसाधर्म्याद्यद्वा गृहपतेर्यतः ॥

---

लिङ्गबाधस्यायुक्तत्वात्तादृशस्थलेऽपि न गौणेऽर्थे विनियोगः किंतूत्कर्ष एवेत्यर्थः । **न संभवतीति** । कर्मान्तरेऽप्यसमवेतार्थत्वादिनेति भावः । **नत्विति** । यद्यपि जपमन्त्रत्वे सत्यदृष्टार्थत्वापत्तेस्तदपेक्षया गौणत्वमेव न्याय्यं तथापि प्राकरणिकसर्वार्थेषु गौणत्वस्य कथंचिद्वक्तुं शक्यतया सर्वत्र विनियोगापत्तेरप्रामाणिकानेकावृत्तिकल्पनानेकनियमादृष्टकल्पना च स्यात्तद्वरं जपमन्त्रत्वकल्पनमित्याशयः । **प्रथमेति** । मन्त्रस्य प्रयोजनापेक्षया हि तस्य विनियोगः कल्प्यः । तद्दशायां च मन्त्राज्झटिति प्रतीयमानो मुख्यार्थ एव मनसि विपरिवर्तते न गौणार्थः ततश्च प्रथमप्रतीततया मनसि विपरिवर्तमानमुख्यार्थविनियोगएव प्रथमं कल्प्यते तन्मात्रेण मन्त्रस्य निराकाङ्क्षत्वान्न गौणार्थेऽपि पृथग्विनियोगस्तस्य तदा विपरिवृत्त्यभावादेव नोभयसाधारणविनियोगकल्पनापीति भावः । **ननु** मन्त्रस्य निराकाङ्क्षत्वेऽपि गौणार्थस्य स्मारकापेक्षया मन्त्रस्याकाङ्क्षामुत्थाप्य तत्र विनियोगः कल्प्यतामित्यत आह—**अर्थोऽपीति** । मुख्यार्थस्य तु ध्यानाद्युपायसंभवेऽपि मन्त्रस्य प्रयोजनाकाङ्क्षाबलात्तत्रावश्यं विनियोगः कल्प्य इत्याह—**मुख्येति** । प्रयोजनं मन्त्राणां गौणेऽपि विनियोगे प्राकृतानां मन्त्राणां गौण्यावृत्त्या वैकृतद्रव्यदेवतादिप्रकाशकत्वसंभवादूहासिद्धिः । सिद्धान्ते तु मुख्यार्थत्वायोहसिद्धिरिति । अतएव मुख्यत्वमूहसाधनेषु परिगणितमाचार्यैः—'मुख्ये दृष्टार्थता स्वार्थसमवेतार्थतादिभिः ॥ प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥ विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा ॥ अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते ॥' इति । सूत्रार्थस्तु—यतः कारणादर्थाभिधानसंयोगादर्थाभिधानलक्षणद्वारसंयोगान्मन्त्रेषु क्रतुशेषत्वं स्यात्तस्मादुत्पत्तिसंयोग औत्पत्तिकेन मुख्यार्थेनैव संयोगः स्यात्तेनार्थेन नित्यसंयोगादिति ॥

**वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥** श्रुतिविनियोगविचारस्याप्यस्य मुख्यार्थएव मन्त्राणां विनियोग इति पूर्वोक्तार्थापवादतयात्र सङ्गतिरित्याशयेनाह—**अपवाद इति** । अग्नौ चयनप्रकरण इत्यर्थः । किमयं मन्त्रो मुख्यस्येन्द्रस्य शेष उत गौणस्य गार्हपत्यस्येति संशयं फलत आह—**किमिति** । **ननु** श्रुत्या गार्हपत्ये विनियोगाद्गौणार्थप्रकाशनमकामेनापि स्वीकार्यं । नच गार्हपत्यशब्दस्येन्द्रपरत्वादित्यादिना वक्ष्यमाणप्रकारेण श्रुत्युपपत्तिः शङ्कनीया । विधौ गौणार्थत्वस्वीकारापेक्षया मन्त्र एव तत्स्वीकारस्य ज्यायस्त्वादित्यत आह—**विनियोज्येति** । तथाचान्यत्र विधेर्गौणार्थत्वानर्हत्वेऽपीह विनियोज्यशक्त्यनुसारेण विधेरेव गौणार्थत्वं वाच्यं न मन्त्रस्येति भावः । इन्द्राभिधानस्य इन्द्राभिधायकस्येति यावत् । गार्हपत्येनेत्यस्य साधर्म्येणान्वयः । यद्वा गार्हपत्यशब्देनेत्यर्थः । तेन यथाश्रुत एवान्वयः । **ननु** हविःश्रपणाद्यर्थगार्हपत्यसादृश्यमिन्द्रेऽभावान्न तत्र गौण्यपि संभवतीत्यत आह—**यज्ञेति** । यज्ञसाधनत्वमात्रस्योभयसाधारण्यान्न दोष इति भावः । गार्हपत्यशब्दस्य मुख्यावृत्तिरपि इन्द्रे संभवतीत्याह—**यद्वेति** । यतः इन्द्रो गृहपतेः संबन्धी तेनावयवयोगात्तस्येदमित्यर्थे विहितपत्युत्तरपदलक्षणण्यप्रत्ययान्तगार्हपत्यशब्दाभिधेय इन्द्र इत्यर्थः । गार्हपत्यशब्दस्य रूढार्थस्वीकारेणैव पक्षान्तरमाह

---

१ अतोऽप्रमाणकः. २ करणव्याख्यानात्.

**तेनायं गार्हपत्यः स्यादिन्द्रोऽवयवयोगतः ॥' द्वितीया वा सप्तम्यर्थं लक्षयति गार्हपत्ये स्थित्वोपतिष्ठत इति। यद्वा उपतिष्ठत इत्यत्र द्वे क्रिये उपपद्येते समीपस्थानमात्मनेपदानुमितं चाभिधानं तत्रैन्द्रमन्त्रकरणकेऽभिधाने गार्हपत्यस्य कर्मत्वं न संभवतीति समीपस्थानविशेषणं गार्हपत्यो भवति गार्हपत्यमुपेत्याभिधत्त इति। तस्मान्मुख्य एव विनियोगोऽत्रापीति प्राप्तेऽभिधीयते—'अग्नौ वचनसामर्थ्याद्विनियोगः प्रतीयते ॥ नचात्यन्तासमर्थत्वं गौणसामर्थ्यसंभवात् ॥ यत्र मानान्तरं नास्ति तत्र गौणो न गम्यते ॥ प्रमाणान्तरसद्भावे गौणे शब्दः प्रवर्तते ॥ पूर्वाधिकरणे ह्येतद्वर्णितं विद्यतेऽत्र च ॥ विस्पष्टं वचनं तेन गार्हपत्यार्थता स्फुटा ॥ अवश्यं कल्पनीयं हि मन्त्रस्य ब्राह्मणस्य वा ॥ गौणत्वं तत्र मन्त्रस्य प्राप्तार्थस्यैव युज्यते ॥ अप्राप्तार्थे विधौ नैव गौणत्वमुपपत्तिमत् ॥ नचावयवयोगेन वृत्ती रूढ्याग्निवेदनात् ॥ अभिधानक्रियायाश्च प्रधानत्वात्तदन्वयः ॥ गार्हपत्यस्य नान्यार्थसमीपस्थितिगामिता ॥'** तदिहास्ति तावद्गार्हपत्ये विनियोग इति स्थितम्। सतिच तस्मिन् लिङ्गादिन्द्रार्थतापि भवति नेति बलाबलाधिकरणे चिन्तयिष्यते ॥

आह्वानविनियोगाधिकरणम् ॥ ३ ॥

**तथाह्वानमपीति चेत् ॥ ५ ॥ [न कालविधिश्चोदितत्वात् ॥ ६ ॥ गुणाभावात् ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥]**

**हविष्कृदेहीत्यामन्त्र्य त्रिरवघ्नन्समाह्वयेत् ॥ विनियोगोऽवघाते स्यादाह्वाने वावघातके ॥ ५ ॥**
**ऐन्द्रीवन्मात्रमाह्वानं गौणं हन्तिर्वृथान्यथा ॥ पाठेन प्रापितं त्रित्वं ह्वयतेरुपचारगीः ॥ ६ ॥**
**त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः ॥ हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥ ७ ॥**
**विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ॥ नैन्द्रीन्यायः श्रुत्यभावाद्गार्हपत्येन मुख्यगः ॥ ८ ॥**

दर्शपूर्णमासयोराम्नायते हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति। तत्र संशयः किमयं हविष्कृदेहीति

---

**—द्वितीया वेति**। गार्हपत्य इति समीपिकमाधारत्वं बोध्यम्। प्रकृतिप्रत्यययोरुभयोरपि मुख्यत्वाश्रयणेनाह—**यद्वेति**। **आत्मनेपदेति**। 'उपान्मन्त्रकरणे'इत्यात्मनेपदविधानात्समीपस्थानस्य च स्वतो मन्त्रकरणकत्वासंभवान्मन्त्रकरणकाभिधानार्थत्वेन तस्य मन्त्रकरणकत्वं वाच्यमित्यात्मनेपदावगतं यत्समीपस्थानस्य मन्त्रकरणकत्वं तन्निर्वाहायाभिधानमनुमीयत इत्यर्थः। आत्मनेपदबलेनाभिधानस्यानुमानतएव लाभसंभवादुपतिष्ठतेरभिधाने शक्तिकल्पनं केषांचिद्व्यर्थमित्यनुमितशब्दं प्रयुञ्जानस्य भावः। **ननु** समीपस्थानस्याकर्मकत्वान्न तत्र द्वितीयान्तप्रतिपाद्यगार्हपत्यस्य विशेषणत्वमित्यतो गार्हपत्यस्य विशेषणत्वमभिनयति—**गार्हपत्यमिति**। गार्हपत्यमुपेत्य समीपे स्थित्वाऽभिदधीतेत्येवं प्राप्त्यङ्गकं समीपस्थानमिहोपस्थानं न समीपस्थानमात्रम्। तेन समीपस्थानस्याकर्मकत्वेऽपि तदङ्गभूतायाः प्राप्तेः सकर्मकत्वात्तदपेक्षया गार्हपत्यस्य कर्मत्वाद्विशेषणत्वं संभवति। यथा बलाहकाद्विद्योतते विद्युदित्यत्र निःसरणाङ्गके विद्योतने द्युतेः वृत्त्या द्योतनाङ्गभूतनिःसरणेऽपादानत्वाद्बलाहकस्य विशेषणत्वं तद्वदिति भावः। अग्नौ। गार्हपत्य इत्यर्थः। नचैन्द्रीति तद्धितश्रुत्या इन्द्रेऽपि विनियोगः प्रतीयत इति वाच्यम्। इन्द्रपदयोगमात्रेण वार्त्रघ्नीत्यादिवत्तद्धितश्रुत्युपपत्तेरिति भावः। यदुक्तमशक्यार्थे विनियोगो न संभवतीति तत्राह—**नचेति**। नचात्र पूर्वत्रेव गौणसामर्थ्यानुन्मेष इत्याह—**यत्रेति**। ननु तर्हि मन्त्रस्य गौणार्थस्वीकार एव दोष इत्यत आह—**अवश्यमिति**। **प्राप्तार्थस्येति**। प्राप्तार्थस्य यथा प्राप्तिर्वर्णनीयत्वादिति भावः। विधेस्त्वप्राप्तार्थत्वात्स्वरसतः शब्देन यः प्रतीयते तत्परत्वमेव न्याय्यम्। उक्तंच 'न विधौ परः शब्दार्थ' इति इत्याशयेनाह **—अप्राप्तार्थ इति**। अनेन गार्हपत्यशब्दस्येन्द्रे गौणत्वपक्षो द्वितीयायाः सप्तम्यर्थलक्षकत्वपक्षश्च दूषितः। **नन्ववशिष्टपक्षद्वये** ब्राह्मणस्य न गौणार्थत्वप्रसक्तिरित्यतस्तदपि क्रमेण निराकरोति—**नचेति**। **रूढ्येति**। ततश्च रूढ्यापहृतत्वान्न योगोन्मेष इति भावः। तदन्वयः अभ्यन्वयः। प्रधानान्वयस्याभ्यर्हितत्वादिति भावः। **नान्यार्थेति**। समीपस्थानेऽपि साक्षादनन्वयेन प्राप्तिद्वारा तदन्वयस्य क्लिष्टत्वाच्चेति भावः। **ननु** श्रुतिलिङ्गाधिकरणेऽपि मन्त्रस्येन्द्रशेषता नेति वक्ष्यमाणत्वात्तेनेदं पुनरुक्तमित्यत आह—**तदिहेति**। सूत्रार्थस्तु—वचनबलादैन्द्रीयमृगयथाश्रुतार्था स्यादिति। एवंच यदुक्तं न्यायसुधायां इन्द्रो न तस्थाविति नकारस्योपमार्थतयाग्निप्राधान्यमेवास्य मन्त्रस्य नत्विन्द्रप्राधान्यमिति। तदेतत्सूत्रविरोधात् 'गुणाद्वाप्यभिधानंस्या'दित्युत्तरसूत्रविरोधाद्भाष्यवार्तिकयोः स्पष्टमेव गौणत्वाभिधानान्नकारस्य लोकवेदोभयप्रसिद्धनिषेधार्थकत्वसंभवे तत्परित्यागेनोपमार्थीय उपरिष्टादुपचार इति निरुक्तमात्रमवलम्ब्य उपमार्थस्वीकारायोगाच्चानादरणीयम् ॥

**तथाह्वानमपीति चेत् ॥ ५ ॥ गौण इति**। हविष्करणे कर्तृभूतायां पत्न्यां मुख्यस्य हविष्कृच्छब्दस्य साधनत्वमा-

---

१ इति द्वे क्रिये विद्येते. २ प्येतत्. ३ प्राप्त्यर्थस्यैव.

मन्त्रो गौणेऽवघाते प्रयोक्तव्यः किंवा मुख्ये हविष्कृदाह्वाने इति । तदर्थमिति विचार्यते । किमस्मिन्वचनेऽवघ्नन्नित्यवघातमुद्दिश्य मन्त्रो विधीयते हविष्कृदेहीत्यवघ्नन्निति किंवा मन्त्रस्याह्वानेन संबन्धो हन्तिस्तु काललक्षणार्थो हविष्कृदेहीति त्रिराह्वयत्यवघातकाले इति । तत्र—'पूर्वाधिकरणन्यायाद्विधौ युक्ता न लक्षणा । मन्त्रस्य त्वयथार्थत्वं वचनान्नैव दुष्यति ॥' त्रिरिति कथं तर्हि विधीयत इतिचेत् प्राप्तावघातोद्देशेन मन्त्रस्य त्रिरभ्यासस्य च विधौ वाक्यभेदात् । पाठप्राप्तानुवादत्वाददोषः । मन्त्रसमाम्नाये हि मन्त्रं त्रिरभ्यस्तमेव केचिदामनन्ति । आह्वयति[1]रप्येहि[2]शब्दोच्चारणसामान्याद्गौणः । तस्मादवघाताङ्गं मन्त्र इति प्राप्तेऽभिधीयते—'त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित् ॥ द्विःपठ्यते सकृच्चापि तस्मान्[3]नायमनूद्यते ॥ न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः ॥ तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति ॥ मन्त्रस्य न विधिः शक्यो वाक्यभेदप्रसङ्गतः ॥ आह्वानेन तु मन्त्रस्य योगो हन्तेस्तु लक्षणा ॥' नन्वेवमप्याह्वानमनूद्य त्रिरभ्यासो हन्तिकालश्च विधीयत इति वाक्यभेदः स्यात् । न । अर्थप्राप्तत्वादवघातकालएव सहायाह्वानमर्थप्राप्तम् । ततोऽनुवाद-

---

त्रेणावघाते गौणत्वादिति भावः । **किमस्मिन्निति** । किमवघातेन मन्त्रस्य संबन्ध उताह्वानेनेति संशयनिष्कर्षः । तत्र पूर्वपक्षे मन्त्रस्यावघातसंबन्धस्तत्र मन्त्रविधिरूप इति तथोक्तं, सिद्धान्ते तु आह्वाने मन्त्रस्याविधेयत्वात्संबन्धमात्रमुक्तम् । आह्वानसंबन्धे च मन्त्रस्यावघाते विध्यभावेन गौणार्थे विनियोजकवचनाभावान्न गौणे विनियोगः किंतु मुख्ये इति सिद्धान्ते फलफलिभावः । वक्ष्यमाणपूर्वपक्षसौकर्यार्थं संशयकाल एव सिद्धान्तकोटाववघ्नन्नित्यस्यान्वयं वदन्नेव लक्षणामुपक्षिपति—**हन्तिस्त्विति** । शङ्कामेवोपपादयति—**प्राप्तेति** । परिहरति—**पाठेति** । यद्वाऽवघातोद्देशेन मन्त्रविधौ त्रिरित्यस्यान्वयो न संभवतीति शङ्कते—**त्रिरिति । कथमिति** । किमनुवादकत्वेनान्वयः उत विधायकत्वेन । नाद्यः । वचनान्तरेण त्रित्वस्याप्राप्तेरित्यर्थः । द्वितीयमुत्थापयति—**विधीयत इतिचेदिति प्राप्तेति** । ततश्च विधित्वेनानुवादत्वेन वान्वयासंभवात्त्रिरिति सर्वथानन्वितं स्यादिति शङ्कार्थः । वचनान्तरप्राप्तत्वाभावेऽपि पाठप्राप्तत्वादनुवाद उपपद्यत इति परिहरति—**पाठेति** । नन्वेवमध्वर्योः पत्न्याह्वायकत्वाभावादचेतनस्यावघातस्याह्वानकर्मत्वासंभवेन तदाह्वायकत्वाभावाच्चाह्वयतीत्यनुपपन्नं स्यादित्यत आह—**आह्वयतिरिति** । यो वस्तुगत्या आह्वयति सोऽपि एहीति शब्दमुच्चारयति अयमप्यध्वर्युरवघातार्थं मन्त्रं प्रयुञ्जानस्तत्कृतमेहीतिशब्दमुच्चारयतीति तत्साम्याद्गौणोपमाह्वयतिशब्द इत्यर्थः । नचैवं पूर्वपक्षिणोऽपि ब्राह्मणवाक्ये लक्षणादोषस्तुल्य इति वाच्यम् । ब्राह्मणवाक्यगतस्याप्याह्वयतेर्मन्त्रगतैहीतिशब्दप्रयोगमात्रलभ्यस्य विधेयत्वाभावेन विध्यन्वितपदे लक्षणाया अभावात्सिद्धान्तेतु अवघातकालस्यापि विधेयत्वाद्विधेयसमर्पकपदे लक्षणेति वैषम्यात् । एवंच विधौ युक्ता न लक्षणेति पूर्ववाक्यगतविधिशब्दस्य विधेयसमर्पकपरत्वं बोध्यम् । **नित्यान्वयेति** । त्रिरभ्यासस्य नित्यमन्वयप्रतीत्या तद्विरोधप्रसङ्गादित्यर्थः । **न विधिरिति** । नावघाते विधिरित्यर्थः । **आह्वानमनूद्येति** । **नन्वा**ह्वानस्यापि विधेयत्वावश्यंभावेन विशिष्टविधित्वात्कथं वाक्यभेदः । नच पत्न्येव हविष्कृदुपोत्तिष्ठति साभिद्रुत्यावहन्तीत्यवघातस्य पत्नीकर्तृकत्वावगत्याऽवघातार्थं तदाह्वानस्यार्थप्राप्तत्वान्न विधेयत्वमिति वाच्यम् । अनाहूतायाः स्वयमागताया अप्यवहन्तृत्वसंभवेनाह्वानस्य नित्यप्राप्त्यभावेन विधिसंभवादितिचेन्मैवम् । एहीति मन्त्रवर्णादेवाह्वानस्य नित्यप्राप्तिसंभवात् । यत्तूक्तं **न्यायसुधायां** मन्त्रवर्णतः प्राप्त्यभ्युपगमे आह्वानप्राप्तौ तत्र मन्त्रविनियोगः मन्त्रवर्णाच्चाह्वानप्राप्तिरित्यन्योन्याश्रयः स्यात् । किंच नित्यप्राप्तस्याप्याह्वानस्य उरुप्रथस्वेति पुरोडाशं प्रथयतीति पुरोडाशत्वान्यथानुपपत्त्या प्राप्तस्यापि प्रथनस्याध्वर्यवसमाख्याबलेनाध्वर्युकर्तृकत्वसिद्ध्यर्थं यजमानमेव तत्प्रजया पशुभिः प्रथयतीत्यर्थवादोपपत्त्यर्थं च विधेयत्ववदिहाप्यध्वर्युकर्तृकत्वप्राप्त्यर्थं वाचमेव तदाह्वयतीत्यर्थवादोपपत्त्यर्थं च विधेयत्वमावश्यकं तस्मात्त्रिरभ्यासविशिष्टाह्वानविधिरेवायमिति । तन्न । एहीति पदयुक्तस्य मन्त्रस्य नित्यवदाम्नातस्य नित्यं क्रतूपकारकत्वस्य वक्तव्यतया तस्य च मन्त्रस्य दृष्टार्थत्वलाभाय मन्त्रसामर्थ्यपर्यालोचनालभ्याह्वानस्यैव द्वारत्वौचित्येन च दृष्टद्वारा क्रतौ मन्त्रविनियोगबलादेव द्वारभूताह्वानस्य तत्र मन्त्रान्वयस्य च सिद्ध्यान्योन्याश्रयानवकाशो मन्त्रस्याध्वर्यवकाण्डे समाम्नानबलादेवाह्वानस्याध्वर्युकर्तृकत्वसिद्धौ तदर्थमाह्वानविधिवैयर्थ्याच्च । उरुप्रथस्वेति मन्त्रस्य तु आध्वर्यवकाण्डे समाम्नानमात्रात्प्रथनस्य नाध्वर्युकर्तृकत्वसिद्धिः । अध्वर्यूच्चारितमन्त्रेणान्यस्यापि तदर्थस्मृतौ सत्यां अन्येनापि प्रथनानुष्ठानसंभवात् । प्रकृते चैहीतिशब्दप्रयोक्तुरेवाह्वातृतया एहीतिपदयुक्तमन्त्रस्याध्वर्यवत्वे आह्वानस्याप्याध्वर्यवत्वमवर्जनीयमिति वैषम्यम् । अर्थवादश्च त्रिरभ्यासमात्रविधावपि कथंचिदुपपादयितुं शक्यत इति तदर्थमपि विशिष्टविधिगौरवदुष्टस्याह्वानविधानस्यानङ्गीकार्यत्वादिति । अवघ्नन्नि-

---

१ तत्राह्वयतीत्येव. २ एहीति शब्दोच्चारणसाम्यात्. ३ तस्मान्नैवम. ४ स्तद्गत.

मात्रमवहन्तिरनुवादत्वादेव लक्षणापि न दोषः। तवापि चाविशिष्टं ब्राह्मणे जघन्यवृत्त्याश्रयणमाह्वयतेर्गौणत्वात्, अपिच नात्रैन्द्र्येतिवच्छ्रौतो विनियोगः किंत्वितिकरणावमृष्टस्य मन्त्रस्यावघातस्य च समभिव्याहारात्संबन्धमात्रं गम्यते, तत्र सतिसंभवेऽङ्गाङ्गिभावः स्यात्, सतु वाक्यभेदान्मन्त्रलिङ्गविरोधाच्च न संभवतीति एककालतैव संबन्ध इति गम्यते। नखल्वेहीति परप्रेषणरूपस्य मध्यमपुरुषस्य हविष्कृदिति च संबोधनरूपस्याचेतनेऽवघाते सामर्थ्यमस्ति। तस्मात्त्रिरावृत्तिमात्रविधानादाह्वानाङ्गं मन्त्रो नायथार्थोऽवघाते॥

अग्निविहरणादिप्रकाशकमन्त्रविनियोगाधिकरणम्॥ ४॥

## तथोत्थानविसर्जने॥ १०॥

**उत्तिष्ठन्प्रवदेदग्नीदग्नीनित्यादिकं तथा॥ कृणुत व्रतमित्येवं पठन्वाचं विमुञ्चति॥ ९॥**
**मन्त्रौ विधेयौ कालौ वा मन्त्रावुत्थानमोकयोः॥ विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ॥ १०॥**
**मन्त्रार्थानन्वयात्तत्र तद्विधिर्नैव शक्यते॥ अगत्या लक्षणाप्यस्तु तेन कालो विधीयते॥ ११॥**

उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहरेति, व्रतं कृणुतेति वाचं विसृजतीति। अत्रापि पूर्ववत्संशयपूर्वोत्तरपक्षाः, वाक्यभेदस्त्विहाङ्गाङ्गित्वपक्षेऽपि नास्तीति तदेव युक्तमिति विशेषाशङ्का। श्रुतिविनियोगाभावात्तु मन्त्रलिङ्गविरोधादत्रापि कालार्थएव संयोगः, कालश्चेह विधीयते न पूर्ववदनूद्यत इति विशेषः॥

---

त्वस्य विध्यन्वयित्वाभावान्ममापि न विधौ लक्षणा। विध्यनन्वयिपदे च तवापि लक्षणा तुल्येत्याशयेनाह—**अनुवादत्वादेवेति**। नच मुख्येऽवघ्नन्निति पदे सिद्धान्तिनो लक्षणा, पूर्वपक्षिणस्तु जघन्ये आह्वयतिपदे इति वैषम्यं शङ्क्यम्। अवघातस्य 'लक्षणहेत्वोः क्रियायाः' इति क्रियान्तरलक्षकक्रियाकर्तरि विहितशतृप्रत्ययेन क्रियान्तरलक्षणार्थत्वावगमेनान्योपसर्जनतया स्वार्थसमर्पकेऽवघ्नन्निति पदएव प्रथमश्रुतेऽपि लक्षणाया न्याय्यत्वादिति भावः। **सतिसंभव इति**। 'ममाग्ने वर्चो विहवेष्वस्त्वित्याहवनीयमुपसमिंध' इत्यादिवदिति भावः। **वाक्येति**। मन्त्रस्यावघाताङ्गत्वेन विधौ प्रागुक्तवाक्यभेदप्रसङ्गादित्यर्थः। मन्त्रलिङ्गविरोधमेवमुपपादयति—**नखल्विति**। सूत्रार्थस्तु—आह्वानमाह्वानार्थमन्त्रोप्यैन्द्रीवदयथार्थः स्यात्॥

**तथोत्थानविसर्जने॥ १०॥ पूर्ववदिति**। किमनयोर्मन्त्रयोर्यथाक्रमं गौणे उत्थाने वाग्विसर्जने च विनियोगः किंवा मुख्येऽग्निविहरणबर्हिःस्तरणपुरोडाशाभिघारणप्रेषणे व्रतकरणप्रेषणे च विनियोगः। उत्थानवाग्विसर्गाभ्यां तु मन्त्रयोः कालार्थः संयोग इति संशयः। तत्रोत्थाने वाग्विसर्जने च मन्त्रयोर्वचनेन विनियोगात् 'वचनात्त्वयथार्थ'मिति पूर्वतराधिकरणन्यायेन गौणेऽर्थे विनियोगः। एवंच बहिष्पवमानदेशगतेनाध्वर्युणोत्थानंविनाग्नीन्धनस्याग्निविहरणादेशश्च कर्तुमशक्यतयाऽग्नीन्धनादिसाधनत्वेन गौण्यावृत्त्या उत्थानमेवाग्नीच्छब्देन अग्नीन्विहरेत्यादिना चाभिधीयते। तथा 'कृवि हिंसाया'मिति धातोः कृणुतशब्दं निष्पाद्य भक्षणस्यापि हिंसारूपत्वाश्रयणेन व्रतं पयोयवाग्वादिकं कृणुत भक्षयतेत्येवं विसर्जनकर्मभूतवागेवानेन मन्त्रेण कर्तृत्वोपचारादभिधीयते ताल्वाद्यधिष्ठानभेदाच्च तत्र बहुवचनोपपत्तेरिति पूर्वः पक्षः। ऐन्द्रीवदिह गौणेऽर्थे मन्त्रविनियोजकश्रुत्यभावात्समभिव्याहारावगतसंबन्धस्य कालार्थसंयोगत्वेनाप्युपपत्तेर्लिङ्गेन मुख्यएव विनियोग इति सिद्धान्तश्च पूर्ववदेव द्रष्टव्य इत्यर्थः। तर्हि तेनैव गतत्वात्किमर्थमिदमित्याशङ्क्य विशेषाशङ्कानिराकरणार्थत्वान्न वैयर्थ्यमित्याशयेनाह—**वाक्यभेद इति। नास्तीति**। मन्त्रमात्रस्यैव विधेयत्वादिति भावः। वाक्यभेदाभावेऽपि समभिव्याहारमात्रेण लिङ्गबाधासंभवान्न गौणे विनियोग इत्याशयेन परिहारमाह—**श्रुतीति। कालार्थ इति**। कालद्वारक इति पर्यवसितोऽर्थः। तत्रोत्थानस्य विधिपाठक्रमेण व्रतमन्त्रस्य मन्त्रपाठक्रमेण च निर्ज्ञातकालत्वादुत्थानकालेऽग्नीदिति मन्त्रः प्रयोज्यः। व्रतं कृणुतेति मन्त्रकाले च वाग्विसर्जनं कर्तव्यमित्येवंरूपः कालार्थः संयोगो बोध्यः। विशेषाशङ्कान्तरमाह—**कालश्चेति**। ततश्च न विधौ परः शब्दार्थ इति विधेयसमर्पके शब्दे लक्षणा न युक्तेति शङ्कार्थः। उत्तरंतु मन्त्रलिङ्गविरोधादगत्या विधावपि लक्षणा स्वीकार्या। ऐन्द्या गार्हपत्यमित्यत्र तु मन्त्रलिङ्गविरोधेऽपि न लक्षणा। श्रुतेर्लिङ्गापेक्षया बलवत्त्वेन तत्र लक्षणाया अयुक्तत्वादिह च लिङ्गाद्वाक्यस्य दुर्बलत्वाल्लक्षणेति वैषम्यमिति। इदंच श्रुतिविनियोगाभावादिति पूर्ववाक्येनैवोक्तप्रायमिति नोक्तम्। सूत्रार्थस्तु—उत्थानविसर्जने अप्याह्वानवत्र मन्त्रप्रकाश्ये इति॥

सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताधिकरणम् ॥ ५ ॥

**सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥ [उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ स देवतार्थस्तत्संयोगात् ॥ १३ ॥ प्रतिपत्तिरिति चेत्स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १४ ॥]**

प्रस्तरं सूक्तवाकेन प्रहरेदिति कालधीः ॥ अङ्गाङ्गिता वा स्यात्कालोऽजुषतेत्याद्यनन्वयात् ॥ १२ ॥
प्रहृतेरिष्टदेवार्थसंस्कारत्वात्तदन्वयः ॥ संपाद्यो देवताद्वारा तृतीयाश्रुतितोऽङ्गता ॥ १३ ॥

दर्शपूर्णमासयोः श्रूयते 'सूक्तवाकेन प्रस्तरं प्रहरती'ति । तत्र संशयः किं प्रस्तरप्रहरणस्य सूक्तवाकस्य च कालार्थः संयोगोऽथवाङ्गाङ्गिभाव इति । 'तत्र द्वयोः कृतार्थत्वान्नाङ्गाङ्गित्वं प्रकल्पते ॥ कालार्थस्तेन संयोगस्तयोर्दर्शादिवद्भवेत् ॥' यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्युभयोः कृतार्थत्वात्कालार्थः संयोगस्तथेहापि सूक्तवाकस्येष्टदेवताभिधानेन कृतार्थत्वात्, प्रहरणस्य च नानाकर्मोपयुक्तप्रस्तरप्रतिपादनेन प्रयोजनवत्त्वादङ्गाङ्गित्वापेक्षाभावात्कालार्थः संयोगः, तत्रापि निर्ज्ञातकालत्वात्सूक्तवाकः प्रस्तरप्रहरणकालं लक्षयति । तृतीयाचेत्थंभूतलक्षणे भविष्यति । नहि कथंचिदपि देवताभिधायिनः सूक्तवाकस्य प्रहरणाङ्गता संभवति । प्रहरणे देवताभावात्, अतः कालार्थ एव संयोगो[1] न करणत्वम् । एवंप्राप्ते ब्रूमः—'श्रुत्या प्रहरणाङ्गत्वं सूक्तवाकस्य गम्यते ॥ तेन तद्देवतायोगादेष होमो भविष्यति ॥' तृतीयाश्रुत्या सूक्तवाकस्य करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम् । नचेत्थंभूतलक्षणे तृतीयेयम् । कारकविभक्तेर्बलीयस्त्वात् । किं बलीयस्त्वं, सर्वो हि संबन्धः क्रियागर्भ एव । तेन सूक्तवाकप्रस्तरप्रहरणयो[2]र्लक्षणक्रियागर्भोयं संबन्धः । नचेह लक्षणक्रियोपात्ता तामनुपात्तामपेक्ष्यायं संबन्धः प्रत्येतव्य इति विप्रकृष्यते । क्रियाकारकसंबन्धस्तु नान्यापेक्ष इति बली-

---

**सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥** पूर्ववदिहापि कालार्थ एव संयोग इति प्रत्यवस्थानात्सङ्गतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति** । दर्शादिवदित्येतद्विशदयन् श्लोकं व्याचष्टे—**यथेति** । **उभयोरिति** । दर्शपूर्णमासयोः सोमस्य च तत्तत्फलार्थतया कृतार्थत्वादित्यर्थः । **इष्टेति** । आग्नेयादियागैरिष्टाग्न्यादिदेवताभिधानेनेत्यर्थः । **प्रहरणस्येति** । प्रहरणस्य सूक्तवाकाङ्गत्वे कालार्थसंयोगस्य पूर्वपक्षाभिमतस्यासिद्धिप्रसङ्गात्तत्सिद्ध्यर्थं सूक्तवाकाङ्गत्वाभावोक्तिः, एवंच प्रहरणस्य सूक्तवाकाङ्गत्वस्य सिद्धान्त्यनभिमतत्वात्तदभावोक्तिरयुक्तेति शङ्काया अनवकाश इति ध्येयम् । **निर्ज्ञातेति** । अनुयाजयाज्यानन्तरं तस्य पाठात्ततएवानुयाजानन्तरकालः सूक्तवाकस्यावगतः । प्रस्तरप्रहरणं तु बर्हिषि प्रस्तरसादनानन्तरं विहितम् । नच तदा प्रहरणं संभवति स्रुग्धारणादिप्रस्तरकार्यानिष्पत्तेरिति प्रहरणमनिर्ज्ञातकालमिति भावः । **ननु** तृतीययाङ्गत्वप्रतीतेः कथं कालार्थः संयोग इत्यत आह—**तृतीयेति** । **इत्थंभूतलक्षण इति** । अनेन सूत्रेण किंचित्प्रकारविशिष्टस्य यज्ज्ञापकं तत्र तृतीयाविधानादिहापि प्रह्रियमाणत्वावस्थाप्राप्तस्य प्रस्तरस्य ज्ञापकः सूक्तवाक इत्याश्रयणात्तृतीयोपपद्यते प्रह्रियमाणावस्थप्रस्तरज्ञापकत्वं च सूक्तवाकस्य सूक्तवाकप्रयोगकाले प्रस्तरप्रहरणे सति भवति नान्यथा । तेन सूक्तवाककाले प्रस्तरं प्रहरेदित्येवं कालार्थसंयोग एवायं पर्यवसित इति भावः । **ननु** कारकविभक्तेर्बलीयस्त्वात्करणतृतीयैव नेत्थंभूतलक्षणतृतीयेत्यत आह—**नहीति** । प्रहरणस्य यागरूपत्वाभावादिति भावः । नच देवताभिधानबलादेव तस्य होमत्वं कल्पयितुं शक्यम् । देवताभिधानेऽपि होमकल्पकस्य द्रव्यदेवतासंबन्धस्याभावात् । नचाग्निरिदं हविरजुषतेतीदंशब्दस्य संनिहितप्रस्तरपरतया सूक्तवाको द्रव्यदेवतासंबन्धमेवाभिदधातीति वाच्यम् । अजुषतेति भूतप्रयोगेण तत्रेदं हविरित्यस्याग्नेयादियागद्रव्यभूतपुरोडाशादिपरत्वस्यैव वाच्यतया प्रस्तरपरत्वाभावादिति भावः । अनुशासनाविशेषात्पृच्छति—**किमिति** । उत्तरमाह—**सर्व इति** । क्रियागर्भः क्रियाघटितः । क्रियाप्रयुक्त इति यावत् । यथा राज्ञःपुरुष इति राजपुरुषयोः संबन्ध एकस्यां दानक्रियायामुभयोर्दातृप्रतिग्रहीतृत्वभावात्तया दानक्रियया प्रयुज्यते तद्वत्सर्वोऽपि संबन्धः क्रियाप्रयुक्तः । उक्तंच 'न क्रियागर्भसंबन्धादृते संबन्धनं क्वचिदि'ति । तेन यद्यत्र तृतीया इत्थंभूतलक्षणे स्यात्तदा तृतीयया सूक्तवाकस्य प्रस्तरस्य च लक्ष्यलक्षकभावः प्रत्याय्यः सच लक्षणक्रियाप्रयुक्तः, लक्षणक्रियांविना लक्ष्यलक्षणभावस्यासंभवात् । लक्षणक्रियानाम ज्ञानक्रिया । नचात्र ज्ञानात्मिका क्रियोपात्ता । एवंच लक्षणक्रियां कथंचिद्धृदयमागमय्य ज्ञाप्यज्ञापकभावात्मको लक्ष्यलक्षणभावः प्रत्येतव्य इति तत्प्रतीतिर्विलम्बेन जायते । कारकभावेन संबन्धस्तु शब्दोपात्तक्रियायाः साक्षादेव संभवतीति

---

१ संयोगः एवंप्राप्ते. २ वाकप्रहरणयोः.

यस्त्वम् । तेन करणमेव सूक्तवाकः । यद्यपीष्टदेवताप्रकाशनेनासौ कृतार्थस्तथापि विनियुज्यते वचनात् । किं हि वचनं न कुर्यात् । कथं पुनर्देवताभिधायिनः प्रहरणाङ्गता, श्रुतिविनियुक्तमन्त्राङ्गत्वबलादेव तदभिधेयाभिरिष्टदेवताभिः संयोगः प्रहरणस्य कल्प्यते, तेनायं प्रहरतिरिष्टदेवतासंस्कारार्थो होमो भविष्यति । तेनोपपन्नमिष्टदेवताप्रकाशनं कुर्वत एव सूक्तवाकस्य प्रहरणाङ्गत्वम् ॥

सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् ॥ ६ ॥

**कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १५ ॥ [यथार्थं वा शेषभूतसंस्कारात् ॥ १६ ॥ वचनादिति चेत् ॥ १७ ॥ प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥१८॥]**

प्रहृतेरखिलः सूक्तवाकोऽङ्गं स्याद्विभज्य वा ॥ समाख्या कृत्स्नगा तेन विभक्तस्याङ्गता नहि ॥ १४ ॥
दर्शपूर्णिमयोर्देवाननुसृत्य विभज्य ताम् ॥ आख्यां लिङ्गेन बाधित्वा भागे नाम निरुच्यते ॥ १५ ॥

प्रहरणाङ्गं सूक्तवाक इति स्थितम् । इदानीमिदं संदिह्यते किं कृत्स्नः सूक्तवाकः पौर्णमास्याममावास्यायां च प्रयोक्तव्य उतेष्टदेवतानुरोधेन विभज्य प्रयोग इति । तत्र सूक्तवाकशब्दस्य समस्तानुवाकवचनत्वेनाध्येतृणां प्रसिद्धेराग्नेयादिभावनानां षण्णामप्यन्योन्यनिरपेक्षाणामेव कथंभावात्मकप्रकरणवत्त्वादेकैकस्य[1] कर्मणः सकलसूक्तवाकोऽङ्गं सत्वेककालवर्तिनां त्रयाणां तन्त्रेण प्रयाजादिवदुपकरोतीति न भेदेन प्रयोक्ष्यते । समुदायद्वये तु कालभेदात्सकलस्यैवावृत्त्या भवितव्यम् ।

---

क्रियान्तरानपेक्षत्वात्क्रियाकारकसंबन्धः शीघ्रं प्रतीयते । एवंच स्वस्वार्थप्रतीतिशैघ्र्यमान्द्यकृतं बलाबलमित्यर्थः । अङ्गाङ्गित्वापेक्षाविरहान्नाङ्गाङ्गित्वपरत्वमित्युक्तं निरस्यति—**यद्यपीति । श्रुतीति ।** क्रियां तत्संबन्धिनं वा प्रकाशयत एव मन्त्रस्य करणत्वात्सूक्तवाकस्य साक्षात्प्रहरणरूपक्रियाप्रकाशकत्वाभावेन तत्संबन्धिप्रकाशकत्वस्य वक्तव्यतया तद्बलेनैव सूक्तवाकप्रकाश्याग्न्यादीनां देवतात्वं प्रहरणे परिकल्प्यते । एवंच मन्त्रतो द्रव्यदेवतासंबन्धाप्रतीतावपि मान्त्रवर्णिकदेवतान्वयबलादेव होमत्वमस्य कल्प्यते । यथा इन्द्र ऊर्ध्वोऽध्वर इति मान्त्रवर्णिकदेवतासंबन्धादाघारस्य होमत्वं तद्वदित्यर्थः । वार्तिके तु इदं हविरिति यदनेन हविषेति चेदंशब्दस्य संनिहितपरत्वात्प्रस्तरपरत्वमेव । अजुषतेति भूतनिर्देशस्तु स्तुत्यर्थत्वेनोपपन्न इति सूक्तवाक एव द्रव्यदेवतासंबन्धप्रतीतिरुपपादिता । **तेनेति ।** प्रकृतप्रत्यभिज्ञया सूक्तवाकगताग्न्यादिशब्दैः प्रकृतानामेव प्रतिपाद्यतया होमरूपस्याप्यस्य न स्वातन्त्र्यं, किंतु इष्टदेवतासंस्कारार्थत्वम् । ततश्च यत्सूक्तवाकेनेष्टदेवताप्रकाशनं क्रियते न तत्सूक्तवाकस्याङ्गत्वविरोधि प्रत्युतानुकूलमेवेत्यर्थः । प्रहरणस्य प्रक्षेपरूपतया होम इत्युक्तम् । अनेन च होमकरणमन्त्रस्य याज्यात्वाभावाद्वार्तिके प्रपञ्चितः सूक्तवाकस्य याज्यात्वाभावोऽपि सूचितः । प्रयोजनं पूर्वपक्षे प्रहरणस्य होमरूपत्वाभावादुद्देशत्यागाभावः सिद्धान्ते तु तत्सद्भाव इति सूत्रे सूक्तवाके सूक्तवाकेन प्रस्तरमिति वाक्य इत्यर्थः ॥

**कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥१५॥** कालार्थसंयोगे विभज्यविनियोगस्याप्राप्तेरङ्गाङ्गित्वमुपजीव्यास्य विचारस्य प्रवर्तनीयत्वात्सङ्गतिरित्याशयेनाह—**प्रहरणेति । कृत्स्न इति ।** इदं द्यावापृथिवी इत्यादिर्नमोदेवेभ्य इत्यन्तो यथाम्नात इत्यर्थः । **इष्टेति ।** पौर्णमास्यां या इष्टा देवतास्तत्पदयुक्ततया पौर्णमास्याममावास्यायां च या इष्टदेवतास्तत्पदयुक्ततयामावास्यायामित्येवमित्यर्थः । सूक्तवाकशब्दस्यावयवव्युत्पत्तिपर्यालोचनया हीष्टदेवतानुरोधेन विभागो वाच्यः । सच न संभवति । अध्येतृणां कृत्स्ननिगदे सूक्तवाकप्रसिद्धेर्योगाश्रयणे तदनुपपत्तेः । तेन प्रसिद्धिबलात्कृत्स्ने निगदे सूक्तवाकशब्दस्य रूढिरेव । विभज्यविनियोगे च सूक्तवाकशब्दस्य तदेकदेशे लक्षणा स्यात्तस्मात्कृत्स्नविनियोग इति पूर्वपक्षयति—**तत्रेति ।** नन्वैकादशिनान्प्रायणीयोदयनीययोरालभेरन्नित्यत्रैकादशिनानां प्रायणीये उदयनीये च नावृत्तिः, किंतु विभज्यालम्भस्तद्वदिह किं न स्यादित्याशङ्कायां तत्र प्रायणीयोदयनीययोरैकादशिनोद्देशेन विधीयमानयोः साहित्यस्य विवक्षिततया सहितयोरेव तयोरैकादशिनान्वयाद्युक्तो विभागः । इह त्वाग्नेयादीनामङ्गोद्देशेन विधानाभावान्न सहितानां धर्मान्वयः, किंत्वाकाङ्क्षाबलात्प्रत्येकमेवेति वैषम्यमभिप्रेत्याह—**आग्नेयादीति ।** फलवाक्ये सहितानां फलान्वयेऽपि यथा प्रत्येकमेवाङ्गापेक्षित्वं तथा एकादशे उपपादयिष्यामः । **नन्वेवमेकस्मिन्नपि** पर्वणि प्रतिप्रधानं सूक्तवाकस्य भेदेन प्रयोगः स्यादित्यत आह—**सत्विति ।** एककालत्वे प्रस्तरैक्येन प्रहरणस्यावृत्त्यभावात्तदङ्गसूक्तवाकोऽपि तन्त्रेणोपकरोतीत्यर्थः । नच दृष्टार्थत्वात्सूक्तवाकस्य न तन्त्रानुष्ठानसंभव इति शङ्कनीयम् । उत्तमप्रयाजादीनामावृत्त्यभावात्तन्मन्त्राणां दृष्टार्थानामपि यथा नावृत्तिरेवं प्रहरणस्यावृत्त्यभावात्तदङ्गसूक्तवाकस्याप्यनावृत्तिरिति भावः । कालभेदे तु प्रहरणावृत्त्यावृत्तिरित्याह—**समुदायेति ।** ननु

---

१ प्रहरणवत्त्वात्.

**नन्विष्टदेवताप्रकाशनार्थोऽयं मन्त्रः, प्रहरणमपीष्टदेवतासंस्कारार्थमित्युक्तम्, तत्रामावास्यादेवतापदानि पौर्णमास्यां न प्रयोगार्हाणि प्रयोजनाभावात्, इतराण्यपीतरत्रेति विभागएव प्राप्नोति। नैवम् । वचनाद्धि सकलप्रयोगो गम्यते । तत्राविद्यमानार्थान्यपि पदान्यदृष्टाय प्रयोक्ष्यन्ते वचनादिति । उच्यते । विभज्यप्रयोगः प्रयोजनवशादित्युक्तो हेतुः । नहीन्द्राग्न्यादिशब्दानां पौर्णमास्यां प्रयोजनम् । नाप्यग्नीषोमादिशब्दानामितरत्र प्रयोजनम् । यत्तु वचनादित्युक्तं तन्न । सूक्तवाकशब्दस्यावयवव्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रवचनत्वात्सूक्तं वक्तीति सूक्तवाकः तेन यस्मिन्प्रयोगे यावत्यो देवता इष्टाः एका वा बह्वयो वा प्राकृत्यो वा वैकृत्यो वा तत्र तावद्देवतापदप्रयोगादेव संपूर्णः सूक्तवाकः । तदतिरिक्तानिष्टदेवतापदप्रयोगे प्रत्युत सूक्तवाकत्वं हित्वा दुरुक्तवाक एव स्यात्तस्मादिष्टदेवतानुरोधेन निष्कर्षः ॥**

काम्ययाज्यानुवाक्यानां काम्यमात्राङ्गताधिकरणम् ॥ ७ ॥

## लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ १९ ॥

**ऐन्द्राग्नादीष्टयः काम्या याज्या अभ्युदिताः क्रमात् ॥ काण्डयास्ता यथालिङ्गं संचार्या नियमोऽथवा ॥ १६ ॥**
**लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमूः ॥ अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥ १७ ॥**
**समाख्यानात्काण्डयोगः क्रमादिष्टिषु योजनम् ॥ अपेक्षते देवमात्रं शक्तिः, काम्यैकगास्ततः ॥ १८ ॥**

'ऐन्द्राग्नमेकादशकपालं निर्वपे'दित्यारभ्य इन्द्राग्न्यादिलिङ्गा इष्टयः समाम्नाताः। तेनैव लिङ्गक्रमेण **काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्यातम् । मन्त्रकाण्डसमाम्नातं'इन्द्राग्नी रोचना दिव'इत्यादि । तदिह मन्त्रकाण्डे संदेहः किं यत्रयत्र सामर्थ्यमस्ति तत्रतत्र सर्वत्र विनियोक्तव्या मन्त्राः क्रमसमाख्ये बाधित्वा उत तद्वशेन काम्येष्टिष्वेवेति । तदर्थंच किं लिङ्गमपि श्रुत्यादिवन्निरपेक्षमेव विनियोजकं उत क्रतुसंबन्धबोधकप्रमाणमन्यदप्यपेक्ष्य व्यापारविशेषमात्रे लिङ्गस्य प्रामाण्यमिति । तत्र—'लिङ्ग-**

---

प्रहरणाङ्गत्वान्नेष्टदेवताप्रकाशनार्थत्वमित्यत आह—**प्रहरणमिति** । प्रहरणस्य स्वाङ्गमन्त्रद्वारा इष्टदेवतासंस्कारार्थत्वस्य पूर्वाधिकरणे उक्तत्वान्मन्त्रस्येष्टदेवताप्रकाशनार्थत्वमित्यर्थः । **नैवमिति** । प्रयोजनस्य लैङ्गिकत्वाद्वचनविरोधेन लिङ्गस्यानादरणीयत्वान्न प्रयोजनवशेन व्यवस्था संभवति । तेन दृष्टप्रयोजनाभावेऽपि सूक्तवाकप्रकाश्यानां सर्वेषामपि प्रहरणे देवतात्वकल्पनानुसारेण प्रहरणनिर्वृत्तिद्वारा प्रहरणसाध्यादृष्टाय प्रयोक्ष्यन्त इत्यर्थः । दृष्टप्रयोजनसंभवेऽदृष्टप्रयोजनस्यायुक्तत्वात्, प्रकृतप्रत्यभिज्ञानाच्चेष्टदेवतासंस्कारएव प्रयोजनं न्याय्यमिति प्रयोजनवशाद्विभाग इति सिद्धान्तयति—**विभज्येति** । यत्तूक्तं 'श्रुतिविरोधे लिङ्गमनादरणीय'मिति तदनूद्य दूषयति—**यत्त्विति । अवयवेति** । अवयवव्युत्पत्त्यैव प्रयोगसंभवे रूढिर्न कल्पनीया । अध्येतृप्रसिद्धिरप्यध्ययनकाले प्रयोगभेदाकल्पनादवश्यं तदनाकलननिमित्तत्वेनान्यथासिद्धेति न ततोऽपि रूढिसिद्धिरिति भावः । **सूक्तमिति** । सुष्ठु उक्तं आज्यभागादिषु निर्दिष्टमग्न्यादिकमित्यर्थः । **यावत्य इति । ननु** यत्र द्वे बह्वयो वा देवतास्तत्र देवताप्रकाशकानां परस्परमेकवाक्यत्वाभावेन प्रतिदेवतापदं पूर्वोत्तरभागावृत्तौ सत्यां सूक्तवाकभेदापत्त्या कथं तावद्देवतापदप्रयोगात्संपूर्णः सूक्तवाक इति तावद्देवतापदयुक्तस्य सूक्तवाकस्यैकत्वमुच्यत इति चेन्मैवम् । यथारुणैकहायनीपदयोः परस्परासंबन्धेऽपि प्रधानक्रमेणोभयोरन्वयादेकवाक्यत्वं एवं यदनेन हविषेति प्रधानभूतप्रस्तरात्मकहविःसंबन्धात्प्रस्तरान्वयिदेवताप्रकाशनरूपैकप्रयोजनवत्त्वाच्चैकवाक्यतोपपत्त्या तत्र सूक्तवाकैक्योपपत्तेरिति । सूत्रे कृत्स्नोपदेशात्कृत्स्नस्यैव निगदस्य सूक्तवाकशब्देन निर्देशादित्यर्थः ॥

**लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम्** ॥ १९ ॥ इन्द्राग्न्यादिलिङ्गा इन्द्राग्न्यादिचिह्नास्तद्देवताका इति यावत् । **तेनैवेति** । काम्येष्टिविधिकाण्डपठिततत्तद्देवताककर्मक्रमेणैवेत्यर्थः । **इन्द्राग्नी रोचनेति** । तैत्तिरीयशाखायाम्'उभा वामिन्द्राग्नी'इत्याद्याम्नानादिदं शाखान्तराभिप्रायेण बोध्यम् । **यत्रेति** । काम्येष्टितदितरसाधारण्येन मन्त्रसापेक्षेन्द्राग्न्यादिदेवताककर्ममात्र इत्यर्थः । **श्रुत्यादिवदिति** । लिङ्गव्यतिरिक्तश्रुत्यादिप्रमाणपञ्चकवदित्यर्थः । तत्र वाक्यादीनां यद्यपि लिङ्गापेक्षास्ति तथापि क्रतुना सामान्यसंबन्धबोधनार्थं न तदपेक्षा, किंतु स्वस्वप्रमेयविनियोगबोधार्थमेव । एवंच श्रुत्यादिकं यथा सामान्यसंबन्धबोधने द्वारविशेषबोधने च व्याप्रियते तथा लिङ्गमपि किं व्यापरितुं समर्थमुत लिङ्गं द्वारविशेषमात्रबोधने समर्थं क्रतुसंबन्धाय तु प्रमाणान्तरं लिङ्गे नापेक्ष्यमिति तदर्थसंशयस्यार्थः । लिङ्गस्य क्रतुसंबन्धबोधकप्रमाणानपेक्षत्वे

**स्वाप्यनपेक्षस्य मन्यन्ते विनियोक्तृताम् ॥ तद्बलीयः क्रमाख्याभ्यामिति सर्वार्थता भवेत् ॥' स्वाध्या-यविध्यध्यापितस्य तावन्मन्त्रस्यावश्यंप्रयोजनेन भवितव्यम् । तत्र मन्त्रस्वरूपमेव दृष्ट्वास्यार्थस्य प्रकाश-कोऽयमतोऽत्र विनियोक्तव्य इति बुद्धिरुत्पद्यते । नेच निष्प्रयोजनस्य प्रकाशनमर्थवदिति तद्द्वारेण तत्संबन्धिकर्मापूर्वार्थत्वमपि ततएव गम्यते किमत्र प्रमाणान्तरेण । तच्च क्रमसमाख्याभ्यां प्रबल-मिति तद्बाधेन लिङ्गात्सर्वार्थत्वमिति प्राप्ते ब्रूमः—'सत्यं प्रयोजनापेक्षा मन्त्रस्यास्ति तथापि तु ॥ नैवं सामर्थ्यमात्रेण विनियोगोऽस्य संभवी ॥' नह्यपेक्षितमपि प्रयोजनं प्रमाणमन्तरेण लब्धुं श-क्यम् । नच सामर्थ्यमात्रेण प्रयोजनं किंचित्समर्थ्यते अग्न्यादिस्वरूपमात्रप्रतिपादनं सामर्थ्यादवग-म्यते । नच तावन्मात्रप्रकाशने फलमस्ति कर्मापूर्वसाधनरूपप्रकाशनार्थता तु न कर्मसंबन्धप्रमाण-मन्यदन्तरेण सामर्थ्यमात्रात्सिद्ध्यति। 'पूषा प्रपिष्टभाग' इत्यत्र तु भागशब्दस्य त्यागवचनत्वात्क्रतुसं-बन्धसिद्धिरिति वक्ष्यामः । नचाग्निसूर्यादीनां स्रुवादिवत्क्रत्वव्यभिचारो येन क्रतुरुपस्थाप्येत । लो-केऽपि तत्सद्भावात्, इन्द्रादीनामपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः । तस्मा-त्क्रतुसंबन्धप्रमाणमन्यदपेक्षितव्यम् । नच मन्त्रकाण्डस्य क्रमसमाख्याभ्यामन्यत्प्रमाणमस्ति । तेच काम्येष्टिष्वेवेति तत्रैव विनियोगो न कर्मान्तरेषु । नच कर्मान्तरेषु स्मरणापेक्षैयैषां मन्त्राणां तत्र**

---

च साते न क्रमाद्यनुरोधेन संकोचो युक्त इत्याशयेनाह—**तद्बलीय इति** । **ननु** लिङ्गं नामार्थप्रकाशनसामर्थ्यमात्रं, नच तन्मात्राद्विनियोगः संभवति । जपादिमन्त्राणां ब्राह्मणवाक्यानां च सत्यपि सामर्थ्ये स्वार्थे विनियोगाभावादित्यतः श्लोकं व्याचष्टे—**स्वाध्यायेति** । जपादिमन्त्राणां जपादिविनियोगेन ब्राह्मणवाक्यानां विधानेन चाध्ययनविध्यापादितप्रयोजनस्य सिद्ध्या निराकाङ्क्षत्वात्स्वार्थे विनियोगाभावेऽप्यैन्द्राग्न्यादिमन्त्राणां प्रयोजनाकाङ्क्षाया अन्यतोऽशान्त्या प्रकृते लिङ्गात्स्वार्थे विनियोग आवश्यक इति भावः । एवमपि कथं तत्संबन्धिकर्मार्थत्वसिद्धिरित्यत आह—**नचेति** । स्वार्थप्रकाशनमात्रेणा-पेक्षितप्रयोजनानवाप्तेस्तत्सिद्ध्यर्थं लिङ्गमेव कर्मसंबन्धपर्यन्तं व्याप्रियत इत्यर्थः । **सत्यमिति** । अध्ययनविधितो हिं भवितव्यं केनचित्प्रयोजनेनेत्यवगतेऽपि इदमेतादृशं तत्प्रयोजनमित्येवं प्रयोजनविशेषबोधकत्वाशक्तेः । ततः प्रयोजनाका-ङ्क्षामात्रमेव मन्त्राणां स्यान्नतु प्रयोजनविशेषः । नच सामर्थ्यमात्रात्तत्सिद्धिरतोऽस्ति क्रतुसंबन्धबोधकप्रमाणापेक्षेत्यर्थः । **अग्न्यादीति** । इन्द्राग्न्यादिस्वरूपमात्रप्रकाशनसामर्थ्यरूपाल्लिङ्गाद्धि कल्प्यमाना श्रुतिरनेन मन्त्रेण इन्द्राग्न्यादिप्रकाशनं कुर्या-दित्येवंरूपैव कल्पयितुं शक्यते नत्वनेन मन्त्रेण क्रत्वपूर्वसाधनप्रकाशनं कुर्यादिति अपूर्वांशे मन्त्रस्यासमर्थत्वेन ततः क-ल्प्यायाः श्रुतेरपूर्वसाधनप्रकाशनविषयत्वासंभवात्, ततश्च लिङ्गादर्थप्रकाशनस्य स्वरूपे शेषत्वं सिद्ध्यति नत्वपूर्वसाधनप्रका-शनरूपे, प्रमाणान्तरेण तु कर्मसंबन्धे सिद्धे स किंद्वारेत्यपेक्षायामपेक्षितद्वारविशेषमात्रे लिङ्गस्य विनियोजकत्वात्कर्मासंब-न्धिनः प्रकाशनस्य च मन्त्रकर्मसंबन्धानिर्वाहकत्वेन द्वारत्वासंभवेन क्रत्वपूर्वसंबन्धिप्रकाशनस्यैव द्वारत्वात्तद्विषयैव श्रुतिर्लि-ङ्गात्कल्प्येति सिध्यत्यपूर्वसाधनप्रकाशनार्थतेत्यर्थः। **ननु** दर्शपूर्णमासप्रकरणे श्रुतस्य 'पूषा प्रपिष्टभाग' इति पेषणस्य दर्शपूर्ण-मासयोः पूषाभावादुत्कृष्टस्य पूषदेवताकेष्टिसंबन्धबोधकप्रमाणान्तराभावेऽपि पूषसंबन्धित्वावगममात्राद्यथा तद्देवताकेष्ट्यन्व-यस्तद्वदिहापि स्वार्थे विनियोगमात्रादेव तद्देवताके कर्मणि विनियोगः किं न स्यादित्यत आह—**पूषेति** । मुख्यार्थासं-भवाद्यागलिलक्षयिषयात्र हि श्रूयते । भागशब्दोऽयमित्यग्रिमपादान्ते वक्ष्यमाणत्वात्तत्र तद्वाक्यादेव क्रतुसंबन्धो न पूषसंब-न्धमात्रादित्यर्थः । **नन्वेवमपि** यस्य खादिरः स्रुवो भवतीत्यनारभ्य श्रुतानां खादिरत्वादीनां स्रुवादिसंबन्धक्रत्वर्थत्ववदिन्द्रा-ग्न्यादिसंबद्धक्रत्वर्थत्वं मन्त्राणामस्त्वित्याशङ्क्य स्रुवादीनां क्रत्वव्यभिचरिततया क्रतूपस्थापकत्वाद्युक्तं खादिरत्वादीनां क्रत्व-र्थत्वम् । प्रकृते तु न क्रत्वव्यभिचार इत्याह—**नचेति** । पूषा प्रपिष्टभाग इत्यत्र खादिरः स्रुव इत्यादौ चाप्रकरणाधीत-वाक्यप्रमाणगम्यशेषत्वस्थले उक्तरीत्या द्वादशाहीनस्य 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्या'दित्यादौ चाप्रकरणाधीतश्रुतिगम्यशेषत्वस्थलेऽपि द्वादशाहादिशब्दोपस्थापितक्रत्वपूर्वार्थत्वं सिद्धमेवंच श्रुतिवाक्ययोः सामान्यसंबन्ध-मनपेक्ष्य विनियोजकत्वं, प्रकरणादीनां तु स्वयमेव सामान्यसंबन्धप्रमाणत्वान्नान्यापेक्षेति । लिङ्गस्य तदितरप्रमाणपञ्चक-स्यच वैषम्यम् । **नन्वेवमपि** इन्द्रादीनां न लोके संभव इत्यत आह—**इन्द्रेति** । मन्त्रार्थवादादिषु स्वर्गाधीश्वरत्वलोकपा-लत्वासुरजेतृत्वादिना प्रतिपाद्यमानत्वेनेन्द्रादीनामपि कर्मणो बहिरपि संभवावगमाल्लोके संभवोऽस्तीत्यर्थः । उपायान्तरेणा-त्मीयग्रहणवाक्यादिनेत्यर्थः । **नन्वेवमपि** तदेकोपायसाध्ये एकान्ततस्तदपेक्षणात्तत्र सामान्यसंबन्धबोधकप्रमाणं विनापि

---

१ तत्र निष्प्रयो. २ र्वार्थतेति. ३ तावतात्र प्रकाशने. ४ पेक्षमेषां.

विनियोगः। तेषामुपायान्तरेणापि स्मृतिसिद्धेरेकान्ततो मन्त्रानपेक्षणात्। यत्रत्वेकान्ततस्तत्र भवत्येव सामर्थ्यमात्रादपि तादर्थ्यम्। यथार्थज्ञानस्यानुष्ठानाङ्गत्वं नहि तद्विनाऽनुष्ठानं सिध्यति। यथा-त्मज्ञानस्य सांपरायिकफलकर्मानुष्ठानौपयिकत्वं, इहत्वेकान्ताभावान्न कर्मान्तरेषु विनियोगः। क्रमसमाख्याबलात्तु काम्येष्टिष्वेव यथाक्रमं यथासमाख्यं च याज्यानुवाक्यत्वेन विनियोगः। संभ-वतामसंभवतामपि तास्वेव सामिधेन्यादौ क्रमसहितेन लिङ्गेन विनियोगः॥

आग्नीध्रोपस्थाने प्रकृतानां मन्त्राणां विनियोगाधिकरणम्॥ ८॥

**अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्॥ २०॥ [तदाख्यो वा प्रकर-णोपपत्तिभ्याम्॥ २१॥ अनर्थकश्चोपदेशः स्यादसंबन्धात्फलवता॥ २२॥ सर्वेषां चोपदिष्टत्वात्॥ २३॥]**

**आग्नेय्याग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः॥ उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत॥ १९॥**
**साधारण्येन शब्दोक्तेः सर्वाभिस्तदुपस्थितिः॥ विशेषे विधिसंक्रान्त्या प्रकृताभिरितीष्यताम्॥ २०॥**

ज्योतिष्टोमे काश्चिदाग्नेय्य ऋचो 'अग्न आयाहि वीतय' इत्यादयो विशेषरूपेणासंयुक्ताः पठिताः। स्तोत्रादौ च वाक्यान्तरेण विनियुक्ताः। प्रदेशान्तरे च 'आग्नेय्याग्नीध्रमुपतिष्ठत' इति श्रुतं तत्र वि-चारः किं प्रकृताभिरप्रकृताभिर्वाग्नेयीभिरिदमुपस्थानं कर्तव्यं उत प्रकृताभिरेवेति।—'तत्राग्नेयीति शब्देन सर्वासामभिधानतः॥ अविशेषो न काचिद्धि प्रकृतग्रहणे प्रमा॥' प्रकरणाद्धि विशेषोऽव-गम्यत इतिचेन्न। प्रकरणस्याविशेषकत्वात्। यदि ह्याग्नेयीसंस्कारार्थमिदमुपस्थानं स्यात्ततोऽपूर्वसं-बन्धिनः संस्कारायोगात्तत्साधनभूताः प्रकृता गृह्येरन्। उपादीयते त्विहाग्नेयी तृतीयानिर्देशतः[१], शब्दार्थमात्रस्यैवाङ्गत्वोपपत्तेर्न प्रकृतनियमः संनिधानादितिचेन्न। तदभावात्। वेदान्तरे हि स्तोत्रादावाग्नेय्यो विहिता नतूपस्थानविधौ कस्याश्चिदाग्नेय्याः संनिधिरस्ति। यतस्तद्विषयोऽयमा-ग्नेयीशब्दः स्यात्, अस्तुवा संनिधानं, तथापि स्तोत्रादिकार्यान्तरार्थत्वान्निराकाङ्क्षा नात्र संबन्द्धुम-

---

लिङ्गस्य विनियोजकत्वं स्यादित्याशङ्कायामिष्टापत्तिरित्याशयेनाह—**यत्रेति**। आत्मज्ञानस्य देहादिव्यतिरिक्तात्मज्ञानस्ये-त्यर्थः। सांपरायिकेति। पारलौकिकेत्यर्थः। क्रममात्रादरे आग्नेयेष्टिक्रमे आम्नातानां मन्त्राणां तदिष्टौ अन्वयमात्रेण क्रम-स्योपपत्त्या तदिष्टौ प्रथमातिक्रमे कारणाभावात्सामिधेनीष्वेवान्वयः स्यात्, समाख्यामात्रादरे यत्रैकदेवताका नाना इष्टयः मन्त्राश्च नाना तत्र व्युत्क्रमेणाप्यन्वयः स्यात्, तद्वारणार्थमुभयादर इत्याशयेनाह—**क्रमसमाख्येति**। **असंभवता-मिति**। असंभवश्च क्वचित्प्रधानदेवताप्रकाशकत्वाभावाद्यथा सोमारौद्रेष्टिक्रमे आम्नातानां मानवीनामृचां प्रधानदेवताप्रका-शनसामर्थ्येऽपि बहुत्वात् क्वचिदसंभवो यथा 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपे'दित्येतदिष्टिक्रमे आम्नातानां 'कृणु-ष्व पाज'इत्यादीनामित्यवगन्तव्यम्। आदिशब्देनाज्यभागस्विष्टकृत्संग्रहः। सूत्रार्थस्तु—तत्तदिष्टिलिङ्गानुसारिक्रमात् समाख्या-नाच्च काम्येष्ट्यङ्गं इन्द्राग्नीत्यादिकाण्डाम्नानमिति॥

**अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात्॥ २०॥ असंयुक्ता इति**। कार्यविशेषसंबन्धरहिता इत्यर्थः। वाक्यान्तरेणेत्यनन्तरं विशेषरूपेणैवेत्यनुषञ्जनीयम्। पूर्वपक्षे वक्ष्यमाणासंनिधानार्थं प्रदेशान्तर इत्युक्तम्। प्रमा प्र-माणमित्यर्थः। **प्रकरस्येति**। इतिकर्तव्यताकाङ्क्षालक्षणस्य प्रकरणस्य विनियोगमात्रे समर्थत्वेन ज्योतिष्टोमेतिकर्तव्यताका-ङ्क्षासंबन्ध्याग्नेय्या उपस्थानं कर्तव्यमित्येवमाग्नेयीविशेषकत्वासंभवादित्यर्थः। **नन्वेवं** व्रीहीन्प्रोक्षतीत्यादावपि क्रतुसंबन्धिनां व्रीहीणां ग्रहणं न स्यादित्याशङ्क्य नहि तत्र प्रकरणस्य विशेषकत्वात्प्रकृतग्रहणं किंतु संस्कार्यत्वादेवेति मनसि निधायाह—**यदिहीति**। **ननु** यथा सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीत्यत्र पदशब्दस्य सामान्यवचनस्यापि संनिधानात्सोमक्रयणीपद-परत्वं तद्वदिहापि संनिधानात्प्रकृताग्नेयीमात्रपरत्वं किं न स्यादित्याशयेन शङ्कते—**संनिधानादिति**। प्रदेशान्तरत्वमिह चैकस्मिन्वेदे स्थानभेदादपितु वेदान्तरत्वादित्यत्यन्तासंनिधानस्फोरणार्थमाह—**वेदान्तर इति**। भाष्ये प्रदेशान्तर इत्य-युक्तेः कस्मिंश्चिद्वेदे संनिधानं संभाव्याह—**अस्त्विति**। **स्तोत्रादिकार्येति**। अनेनैव प्रकृतानां क्लृप्तक्रतुसंबन्धत्वात्क-ल्पनालाघवात्तासामेव ग्रहणमिति निरस्तम्। तस्य क्रतुसंबन्धस्य स्तोत्रादिकार्यविशेषबोधकवाक्यगम्यस्योत्पत्तावेव तन्मात्रे

---

१ निर्देशात्, अतः शब्दार्थ. २ प्रदेशान्तरे हि.

हेन्ति। नह्यन्यार्थेन संनिहितेनाप्यन्यो विशेष्यते यथाश्वेन गच्छति श्वेतेन पटेन प्रावृत इति पटसंबन्धेन निराकाङ्क्षेण संनिहितेनापि श्वेतगुणेनाश्वो न विशेष्यते तथेहापि। नचाग्नेयीशब्दस्याप्यस्ति विशेषापेक्षा यथाश्रुतस्याग्नेयीशब्दस्याश्वमात्रस्येव वाक्यार्थसमवायोपपत्तेः। तेनोभयोर्निराकाङ्क्षत्वात्सत्यपि संनिधौ न मिथः संबन्धः, अपेक्षितसंनिधिर्हि संबन्धकारणं न संनिधिमात्रम्। एवं सत्यपि यदि विशिष्येत श्रुतिजनिताविशेषप्रत्ययबाधाच्छ्रुतिरेव बाधिता स्यात्। **ननु** यौगिकत्वादाग्नेयीशब्दः संनिहितामेव व्यक्तिमवलम्बते। **नैवम्**। अवयवार्थसमन्वितव्यक्तिमात्रवचना यौगिका न संनिहितवचनाः प्रमाणान्तरेण तु विशेष्यमाणास्तत्रैव व्याप्रियन्ते। यथा वैश्वदेव्यामिक्षेति तद्धितः संनिहितामामिक्षामेवाभिधत्ते। नत्वत्र विशेषकमस्ति। सतोपि संनिधेरन्यार्थत्वेनाविशेषकत्वात्। न चात्र सोमस्यैवैन्द्रवायवत्वमृगनुवादेनाग्नेयीत्वं विधीयते येनानुवादस्य संनिधिगामित्वात्संनिहिता ऋचः प्रतीयेरन्। आग्नेयीनां तु सतीनामुपस्थानं प्रत्युपादानम्। तस्मात्सत्यपि संनिधावविशेषः। नच संनिधिरप्यस्ति प्रदेशान्तरगतत्वादित्युक्तम्। तस्मादाग्नेयीमात्रग्रहणमिति प्राप्तेऽभिधीयते—'प्रकृता एव गृह्येरन्प्रसिद्धक्रतुसंगमाः॥ तासां कार्यविशेषो हि सुखमत्रोपदिश्यते॥' आग्नीध्रोपस्थानस्य हि द्वे रूपे आग्नीध्रोपस्थानता ज्योतिष्टोमापूर्वसाधनौपयिकव्यापारता च। द्वयमपि च शास्त्रेणैवावगन्तव्यम्। अन्यतरेणाप्यन्यतरस्य सिद्ध्यभावात्। नहि ज्योतिष्टोमगतो यो व्यापारः स आग्नीध्रोपस्थानात्मक एवेति नियमः समस्ति। नाप्याग्नीध्रविषयमुपस्थानं ज्योतिष्टोमगतव्यापार एवेत्येषोऽपि नियमः समस्ति। ज्योतिष्टोमानौपयिकस्यापि स्पर्शादिवदभिधानस्याग्नीध्रविषयस्य संभवात्, तेनैकेन शास्त्रसिद्धेनान्यतरस्यार्थापत्त्यानुमानेन वा सिद्ध्यभावाद्द्वे अपि रूपे शास्त्रतोऽवगन्तव्ये। तद्यद्यप्रकृताभिरुपस्थानं विधीयेत ततस्तस्योपस्थानरूपमेव श्रुतेर्लभ्यते नतु ज्योतिष्टोमव्यापारत्वं अश्रुतत्वात्। नच कर्मानौपयिकेनोपस्थानमात्रेण फलमस्तीत्यनर्थकं वाक्यं स्यात्, फलं वा कल्प्येत। **नन्ववघातादिवदुपस्थानस्य** प्रकरणात्क्रतुव्यापारता सिध्यति। सत्यं सिद्ध्यति। नतु श्रुतिमकल्पयित्वा प्रकरणस्य स्वतःप्रमाणत्वाभावात्। नचाकल्पनयोपपत्तौ कल्पना युक्ता। तथा विधेरपि गौरवं स्यात्। श्रुतिसिद्धमुपस्थानरूपत्वं प्रकरणकल्पितं च क्रतूपकारव्यापारत्वम्।

---

नियमितत्वेन ततएव निराकाङ्क्षतया तस्योपस्थानसंबन्धनिर्वाहकत्वाभावेनोपस्थानसंबन्धाय प्रकृतानामपि अनुल्लिखितविशेषस्य संबन्धमात्रस्य कल्पनीयत्वादितिपदस्य तु ससंबन्धिकत्वेन संबन्ध्यन्तरापेक्षत्वाद्युक्तं संनिधानात्सोमक्रयणीविशेषितत्वम्। प्रकृते त्वनपेक्षितत्वान्नैवमित्याशयेनाह—**अपेक्षितेति**। **एवमिति**। अनपेक्षितत्वेपीत्यर्थः। प्रभाकरसिद्धान्तं शङ्कते—**नन्विति**। **न संनिहितवचना इति**। प्रमाणाभावादिति भावः। यदि स्वतएव यौगिकानां संनिहितपरत्वं तदा वैश्वदेवीपदस्य यौगिकत्वादेव संनिहितपरत्वसिद्धेः सेति तच्छब्देन विशेषणं व्यर्थं स्यादिति दूषणं सूचयन् पदान्तरसमभिव्याहारादिनैव यौगिकानां संनिहितपरत्वं न स्वत इत्याह—**प्रमाणान्तरेणेति**। ननु ऐन्द्रवायवादौ यौगिकत्वमात्रेण संनिहितपरत्वं दृष्टमित्याशङ्क्य तत्रापि न यौगिकत्वकृतं संनिहितपरत्वमित्याशयेनाह—**नचेति**। नन्वप्रकृतानामपि कार्यविशेषस्यानेन वाक्येन विधातुं शक्यत्वात्प्रसिद्धक्रतुसंबन्धकत्वमकिंचित्करमित्याशङ्क्य प्रसिद्धक्रतुसंबन्धानां प्रकृतानां ग्रहणे लाघवं अप्रसिद्धक्रतुसंबन्धानामप्रकृतानां ग्रहणे गौरवमित्येवंपरतया श्लोकं व्याचष्टे—**आग्नीध्रेत्यादिना**। नन्वस्तु द्वैरूप्यं ततः किमित्यत आह—**द्वयमपीति**। अन्यतरेणान्यतरस्य सिद्धिर्हि व्याप्तिनिबन्धना। नचात्र सास्तीत्याह—**नहीति**। नन्वाग्नीध्रमण्डपस्य क्रत्वव्यभिचारितया तदुपस्थानस्य ज्योतिष्टोमगतव्यापारत्वनियमोऽस्त्येवेत्यत आह—**ज्योतिष्टोमानौपयिकस्येति**। उपस्थानं नाम समीपे स्थित्वाऽभिधानम्। ततश्चाग्नीध्रमण्डपस्य क्रत्वव्यभिचारेऽपि यथा तस्य स्पर्शनवीक्षणादिः क्रत्वनुपयुक्तोऽपि व्यापारोऽस्ति एवमुपस्थानस्याप्यभिधानरूपस्य क्रत्वनुपयुक्तस्यापि संभवान्न तस्य ज्योतिष्टोमव्यापारत्वनियम इत्यर्थः। **ननु** तर्हि श्रुतमात्रमेव स्वीक्रियतामत आह—**नचेति**। फलं क्रतूपकार इत्यर्थः। **ननु** क्रतूपकारलक्षणफलासंभवेऽपि स्वातन्त्र्येण फलवत्त्वसंभवान्नानर्थक्यमित्याशङ्क्य तर्हि विश्वजिदादिवत्फलकल्पनैव दोष इत्याह—**फलं वेति**। ततश्च श्रुतमात्रविधानासंभवाज्ज्योतिष्टोमव्यापारत्वमप्यनेनैव विधिना विधेयमिति गौरवं स्यादिति भावः। **सिद्ध्यतीति**। ततश्च श्रुतमात्रविधानोपपत्तेर्न गौरवमिति भावः। एवमपि श्रुतिकल्पनागौरवमपरमप्यापतितमि-

---

१ संनिहितगामित्वात्. २ प्रत्युपादानात्. ३ सुखायात्रोपदिश्यते. ४ स्था... ज्योतिष्टो. ५ प्रामाण्याभावात्.

उभयमपि अनेनैव विधिना विधातव्यं आग्नेय्या क्रतुं प्रत्याग्नीध्रोपस्थानरूपं व्यापारं कुर्यादिति । नहि प्रकरणं विधायकम् । श्रुतिवत्संबन्धप्रमाणत्वात् । यथा व्रीहीनवहन्तीति श्रुतिसमर्पितव्रीह्यवघातसंबन्धं प्रकरणकल्पितं क्रत्वपूर्वसाधनावघातसंबन्धं च विधिरेवावहन्तीति विधत्ते तद्वदिहापि प्रकरणकल्पितं क्रतुसंबन्धमयमेव विधिर्विदध्यात् । श्रुत्युक्तं चोपस्थानरूपमिति गौरवं स्यात् । तदिदमवघातादिषु गत्यभावादङ्गीकृतम् । इहतु प्रकृतग्रहणेन गतौ सत्यां न गौरवाश्रयणमवकल्प्यते । तथाहि प्रकृतानां प्रागेव क्रतुगतो व्यापारः कर्तव्यत्वेनावधारितस्तस्यावधारितव्यापारस्याग्नीध्रोपस्थानात्मकविशेषरूपमेवात्र विधीयते य आग्नेय्या क्रतौ व्यापारः कर्तव्यः स आग्नीध्रोपस्थानरूप इति । तेन प्रागेव कल्पितं विहितं चाग्नेय्याः क्रतुव्यापारमनूद्य विशेषमात्रं श्रुत्युपात्तमिह विधीयते नत्विह क्रतुव्यापाररूपं कल्प्यते, नापि विधीयत इति लाघवात्प्रकृतग्रहणमेव युक्तम् । नन्वेवमग्निमुपनिधाय स्तुवीतेत्यत्रापि प्रसिद्धक्रतुसंबन्धानामाहवनीयादीनामेवोपनिधानं स्यान्न लौकिकस्याग्नेः । नैष दोषः । देशविशेषनिबद्धाह्याहवनीयादयो नाहत्यवचनमन्तरेणान्यत्र नेतव्याः । श्रूयते हि तेषामायतनाद्बहिर्गमने दोषः प्रायश्चित्तं च 'विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायती'त्यादि । तस्माल्लौकिकग्रहणं । इहतु प्रकृतानामेव लाघवादित्युक्तम् । ननु प्रकृतानां कार्यविशेषोऽपि स्तोत्रादिज्ञातएव । सत्यं, सामान्यरूपमपि तावत्प्रकरणपाठमात्रज्ञातं तन्मात्रेण निःप्रयोजनं । विशेषरूपं तु वाक्यान्तरविहितं विशेषान्तरेणानपेक्षितत्वादनादृत्य सामान्यरूपमपे-

---

त्याह—**सत्यमिति** । उभमविधानमभिनीय दर्शयति—**आग्नेय्येति** । ननु प्रकरणादेव तद्विधिसिद्धेर्न श्रुतविधेस्तत्र व्यापार इत्यत आह—**नहीति** । **श्रुतीति** । श्रुतिर्यथा स्वविषयस्य भावनाधात्वर्थादिभिः सह संबन्धमात्रे प्रमाणं नतु विधानेऽपि तद्वदित्यर्थः । प्रकरणस्य विधायकत्वाभावाद्विधेरेव तत्र व्यापारो वाच्य इति सदृष्टान्तमाह—**यथेति** । **अयमेवेति** । ननु संनिपातिनामपूर्वसाधनान्वयस्य नवमे वक्ष्यमाणत्वादुपस्थानस्य नाग्नीध्रस्वरूपेणान्वयः किंतु तदीयापूर्वसाधनरूपेण । ततश्च क्रत्वपूर्वसाधनार्थतया उपस्थानस्य विधानादेवोपस्थानस्य क्रत्वौपयिकत्वसिद्धेः क्रतुसंबन्धोऽप्यनेनैव विधिना विधेय इति निर्बन्धाभावाच्छ्रुतोपस्थानमात्रविधानोपपत्तेः कथं गौरवमिति चेत् सत्यम् । स्वरसतः पदार्थस्वरूपान्वयएव प्रतीयते नत्वपूर्वसाधनान्वयः । सतु लक्षणया वाच्यः । लक्षणा च विधीयमानस्योपस्थानस्यापूर्वसाधनान्वयाकाङ्क्षया वाच्या । साचाकाङ्क्षा तस्य क्रत्वन्वयसिद्धौ तन्निर्वाहाय भवति नान्यथेत्यपूर्वसाधनान्वयस्यापि क्रत्वन्वयपूर्वकत्वादवश्यं क्रत्वन्वयोऽनेन विधिना विधेय इति गौरवमवर्जनीयमिति भावः । **ननु** प्रकृतानां क्रतुगतव्यापारस्य कर्तव्यत्वेनावधारणेऽपि तस्य व्यापारस्यानेन विधिना आग्नीध्रोपस्थानात्मकविशेषरूपत्वं विधीयत इति कुतोऽवगम्यते । अस्मिन्वाक्ये तदनुवादकशब्दाभावादित्याशङ्क्याग्नीध्रोपस्थानस्य क्रतुगतव्यापारत्वापेक्षणात्क्रतुगतव्यापारस्य च सामान्येनावगतस्य विशेषापेक्षणाच्च परस्परापेक्षया क्रतुगतव्यापारानुवादेन विशेषरूपताविधिरेवायं पर्यवस्यतीत्याशयेनाह—**तस्येति** । उपनिधानं स्तोत्रदेशसमीपे निधानमित्यर्थः । आहवनीयादीनां स्तोत्रदेशनिधानासंभवाद्बाधकात्तत्र लौकिकग्रहणेऽपि प्रकृते तथाविधबाधकाभावात्प्रागुक्तलाघवात्प्रकृतग्रहणमिति वैषम्येण परिहरति—**नैष इति** । कुतो न नेतव्य इत्यत आह—**श्रूयत इति** । वीत्युपसर्गस्य ऋध्यत इत्यनेनान्वयः । विकलो भवतीत्यर्थः । अपक्षायति आयतनाद्बहिर्गच्छतीत्यर्थः । आदिशब्देन तं संभरेदिदंत एकमित्यादिप्रायश्चित्तवाक्यसंग्रहः । यद्युक्तं प्रकृतानां क्रतुगतव्यापारः स्तोत्रादिविनियोजकवाक्यादवगन्तव्यः सच विशेषरूपेणैव ततोऽवगम्यते न सामान्यरूपेणेति उपस्थानसंबन्धनिर्वाहाय सामान्यरूपेण क्रतुसंबन्धः प्रकृतानामपि कल्पनीय इति तदभिप्रायेण शङ्कते—**नन्विति** । भवेदेवं यदि स्तोत्रादिवाक्यावगम्यं क्रतुव्यापाररूपं स्यात्तु प्रकरणपठितानां प्रकरणादेवावगम्यते प्रकरणगम्यं च तद्रूपं स्तोत्रादिवाक्यैरिवोपस्थानवाक्येनाप्युपजीव्यत इति न पुनः कल्पनाप्रसङ्ग इति परिहरति—**सत्यमिति** । नचैवं विधिंविना प्रकरणमात्रात्कर्तव्यत्वानवगमात्प्रकरणेन विधिरपि कल्पनीयः स्यात्तद्वरं क्लृप्तस्तोत्रादिविधेरेव प्रकरणसाचिव्येन क्रतुव्यापाररूपेऽपि विधायकत्वस्वीकार इति वाच्यम् । स्तोत्रादिविधीनां बहूनां तत्तद्विशेषयुक्तक्रतुगतव्यापारविधायकत्वापेक्षया स्तोत्रादिसर्वविशेषविध्युपयुक्ततया प्रकरणादेकस्यैव सामान्यरूपविषयविधेः कल्पयितुं न्याय्यत्वादिति भावः । एतेनाहवनीयादीनां सामान्यतः क्रतुगतव्यापारबोधकस्य कस्यचित्प्रकरणादेरभावात् यदाहवनीये जुहोतीत्यादिभिर्विशेषरूपसंयोगेनैव क्रतुगतव्यापारात्मकसामान्यरूपावगमस्य स्वीकार्यतया तस्य च तद्विशेषमात्रोपक्षीणत्वेनाग्निमुपनिधाय स्तुवीतेति विधावनुपयुक्तत्वादप्यस्ति वैषम्यमिति सूचितम् । अनन्तरसङ्गतिमपि प्रासङ्गिकीं

---

१ पधानं. २ निषिद्धा.

क्षितं गृह्यते तस्मात्प्रकृताभिरुपस्थानं। पूर्वं लिङ्गस्य सामान्यसंबन्धापेक्षितत्वमुक्तं तत्प्रसङ्गाच्छ्रुतेरपि सतिसंभवे सामान्यसंबन्धमन्यतःसिद्धमपेक्ष्य विशेषमात्रपरत्वं संभवतीति प्रतिपाद्यत इति लिङ्गाधिकारेऽपि श्रुतिविनियोगश्चिन्तितः॥

भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम्॥ ९॥

**लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य॥ २४॥ [तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्॥ २५॥]**

भक्षेहीत्यनुवाकोऽयं सर्वो भक्षणगाम्युत॥ ग्रहणादौ यथायोगं विभज्य व्यवतिष्ठते॥ २१॥
अविधेर्ग्रहणादीनां भक्षणे निखिलोऽस्तु सः॥ अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते॥ २२॥

भक्षमन्त्रः श्रूयते 'भक्षे हि माविशे'त्यादिः तस्य कश्चिदंशो भक्षणं प्रतिपादयति। ग्रहणावेक्षणसम्यग्जरणप्रकाशकाश्चान्येंऽशाः। तत्र संशयः किं सर्वोयं भक्षणे विनियोक्तव्य उत ग्रहणादिष्वपि यथासामर्थ्यं विभज्य विनियोग इति। तदर्थं च किमर्थप्राप्तेषु मन्त्रस्य लिङ्गं विनियोजकं न वेति। तत्र 'सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात्॥ अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति॥ भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी॥ सामर्थ्यं चास्ति मन्त्रस्य भक्षणे तद्विशेषणात्॥' यद्यपि चावख्येषमित्येवमादेरवेक्षणादौ मुख्यं सामर्थ्यं क्लृप्तं तद्विशेषितभक्षणप्रतिपादने तु लक्षणया तदेकवाक्यत्ववशेन कल्प्यं, दुर्बलं च वाक्यं लिङ्गात्, तथापि मुख्यस्य ग्रहणादेरर्थप्राप्तस्याचोदितत्वेनाक्रत्वर्थत्वात्तादर्थ्ये मन्त्रस्य क्रत्वपूर्वानुपयोगितयानर्थक्यापत्तेरसंभवति लिङ्गविनियोगे सवित्रादिपदानामिव

---

सूचयन्पादसङ्गतिमाह—**पूर्वमिति**। सूत्रार्थस्तु—अधिकारे प्रकरणे यो मन्त्रविधिः स अतदाख्येषु प्रकरणानाख्यातेषु चकारात्प्रकरणाख्यातेषु च स्यात्। आग्नेयीशब्देन सामान्येन शिष्टत्वादिति॥

**लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य॥ २४॥ इत्यादिरिति**। उपहूतो भक्षयामीत्यन्तं इति शेषः। **कश्चिदिति**। वसुमद्गणस्येत्यादिर्भक्षयामीत्यन्त इत्यर्थः। **अन्य इति**। तत्र एहि वसो इत्यारभ्य वा अश्विनोस्त्वेत्यारभ्य वा राध्यासमित्यन्तांशो ग्रहणप्रतिपादकः। नृचक्षसमित्यादिरवख्येषमित्यन्तोऽवेक्षणप्रतिपादकः। राध्योतेर्हिंसार्थस्यापि प्रकृते ग्रहणार्थत्वस्य चक्षिङादेशस्य ख्याञोऽवेक्षणार्थत्वस्य च वार्तिके प्रतिपादनात् हिन्वम इत्यादिः अतिगा इत्यन्तः सम्यग्जरणप्रतिपादकः। हे हरितवर्ण सोम, मे गात्राणि प्रीणय मे गणान् पुत्रपौत्रादीन् मावितीतृषः सोमपानविषयकतृष्णारहितान् मा कुरु। शिवः सन् मे सप्तर्षीन् चक्षुर्नासाश्रोत्रास्याख्यान् सप्त प्राणानुपतिष्ठस्व व्याप्नुहि। मे नाभिमवाङ् नातिगाः नाभेरधस्तान्नातिगा इति प्रीणननाभ्यधोगमननिषेधाभ्यामत्र सम्यग्जरणावगमादिति भावः। अत्र भक्षेहीति भक्षमाह्रियमाणं प्रतीक्ष्याश्विनोस्त्वा बाहुभ्यां राध्यासमिति प्रतिगृह्येत्यापस्तंबसूत्रे संनिधानादाह्रियमाणभक्षप्रतिभक्षणे विनियुक्तस्यापि भक्षेहीति प्रथमांशस्य प्रतीक्षणैकान्तिकलिङ्गाभावाद्भक्षशब्दसामर्थ्यानुसारेण समाख्याबलेन च भक्षणएव विनियोगो युक्तो न प्रतीक्षणे इत्याशयेन प्रतीक्षणार्थः कश्चिदंश इति नोक्तमिति ध्येयम्। **सर्वस्येति**। ग्रहणादौ विनियोगे मन्त्रस्य क्रत्वर्थत्वमेव न स्यात्क्रत्वर्थत्वं हि मन्त्रस्य क्रत्वपूर्वसाधनान्वये भवति अविहितस्य च ग्रहणादेः क्रत्वपूर्वसाधनत्वाभावेन ग्रहणादिद्वारा मन्त्रस्य क्रत्वर्थत्वानिर्वाहात्तस्मात् कृत्स्नस्य भक्षार्थत्वमित्यर्थः। **ननु** ग्रहणादौ विनियोगासंभवमात्रेण कथं भक्षणे विनियोगस्तत्र प्रमाणाभावादत आह—**भक्षेति**। अनेन पूर्वत्र सामान्यसंबन्धबोधकप्रकरणेन श्रुतिस्वारस्यभङ्गवदिहापि सामान्यसंबन्धबोधकसमाख्यया लिङ्गस्वारस्यभङ्ग आश्रयणीय इति प्रत्यवस्थानात्सङ्गतिरिति सूचितम्। **ननु** समाख्ययाप्यसमर्थस्य कथं विनियोगोऽत आह—**सामर्थ्यंचेति**। **तदिति**। ग्रहणादेर्भक्षणविशेषणत्वादित्यर्थः। **लक्षणयेति**। ग्रहणप्रतिपादनसमर्थस्य तद्वारा तद्विशिष्टभक्षणप्रतिपादकत्वे स्वार्थव्यवधानेनार्थान्तरप्रतिपादकत्वाल्लक्षणेति भावः। **कल्प्यमिति**। एकवाक्यत्वस्य विशिष्टभक्षणप्रतिपादनसामर्थ्यं विनानुपपत्त्या वाक्येन विशिष्टभक्षणप्रतिपादने लक्षणयापि कथंचित्सामर्थ्यं कल्प्यमित्यर्थः। **ननु** अविहितस्यापि ग्रहणादेर्भक्षणद्वारा क्रतूपकारकत्वात्तदर्थत्वेऽपि मन्त्रस्य क्रतूपयोगान्नानर्थक्यमित्यत उक्तं **क्रत्वपूर्वानुपयोगितयेति**। एवंसति ग्रहणादिस्वरूपएव मन्त्रस्य शेषत्वं स्यात्तद् तदीयापूर्वसाधनरूपे ग्रहणादेरविहितत्वेन तद्विध्येकगम्यतद्रूपाभावात् ग्रहणादिस्वरूपं चोपायान्तरेण स्मरणादपि सिध्यति। तस्मादविहितग्रहणार्थत्वेऽपूर्वसाधनरूपद्वाराऽपूर्वोपयोगाभावान्मन्त्रानर्थक्यं दुर्वारमिति भावः। **सवित्रादीति**। 'देवस्य त्वा स वितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति मन्त्रगतसवित्रादिशब्दानां विशिष्टनिर्वापप्रति-

लक्षणया वाक्यवशेन प्रागूर्ध्वकालवर्तिग्रहणादिविशिष्टचोदितभक्षणार्थतैव युक्ता गृहीत्वावेक्ष्य सम्यग्जरणाय भक्षयामीति। एवं चानन्यविषयत्वाद्भक्षानुवाकसमाख्याप्युपपन्नतरा भवति। तस्मात्सर्वानुवाको भक्षणाङ्गमेकं वाक्यमिति प्राप्ते ब्रूमः 'ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः॥ वाक्यसंज्ञे हि नेशाते कर्तुं लिङ्गस्य बाधनम्॥ ग्रहणादि च शास्त्रेण साक्षाद्यद्यप्यचोदितम्॥ तथापि चोदितार्थेन कर्तव्यत्वात्प्रकाश्यते॥' नह्यसति ग्रहणादौ चोदितो भक्षः शक्यते कर्तुमित्यर्थात्तदपि कर्तव्यं, भक्षचोदनयैव वा चोदितमित्यपि शक्यं वक्तुम्। तच्चास्मृतमशक्यमनुष्ठातुमिति स्मारकापेक्षत्वाद्भक्षद्वारेण च क्रतूपयोगित्वाच्छक्नोति स्मारकं मन्त्रं ग्रहीतुम्। एवं संभवति[1] लैङ्गिके विभज्यविनियोगे वाक्यसमाख्याभ्यामेकवाक्यत्वापादनेन भक्षार्थता सर्वस्य न युज्यते, समाख्या च भक्षणसंबन्धमात्रं प्रतिपादयन्ती संबन्धस्य साक्षाद्वा ग्रहणादिद्वारेण वोभयथाप्युपपत्तेर्नानुपपन्ना, सम्यग्जरणपर्यन्तं च भक्षणं स्वरसतो लोकसिद्धं तादृशमेव च द्रवद्रव्यस्य भक्षणमिति सम्यग्जरणान्तमेव सोमप्रतिपत्त्यर्थतया विधीयते, अतो जरणमपि कर्तव्यम्। तच्चासनविशेषादिव्यापारसाध्यमिति युक्तस्तत्र मन्त्रविनियोगः, तस्माद्विभज्यविनियोगः॥

मन्द्राभिभूतिरित्यादेरेकमन्त्रताधिकरणम्॥ १०॥

## गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्॥ २६॥

**मन्द्रेति वसुमद्रेति द्वयं तर्पणभक्षयोः॥ विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे॥ २३॥**

**लिङ्गाद्विभागो नैवं नो तृप्तिर्भक्षणतोऽन्यतः॥ लिङ्गस्यासंभवे वाक्यशेषात्सर्वोऽस्तु भक्षणे॥ २४॥**

किं मन्द्राभिभूतिरित्यादितृप्यत्वित्यन्तं तृप्तौ विनियोक्तव्यं उत वसुमद्गणाद्येकं वाक्यं वाक् तृप्यत्विति भक्षयामीत्येकं भक्षणमेव तृप्तिविशिष्टं[2] प्रकाशयत्विति पूर्ववल्लिङ्गात्तृप्तिप्रकाशने प्राप्तेऽभिधीयते। 'तृप्तिर्भक्षानुनिष्पन्ना न व्यापारान्तरार्थिनी॥ तेन स्मृत्यनपेक्षत्वान्न मन्त्रोऽत्र प्रयुज्यते॥' नहि तृप्तिं

---

पादकत्ववदित्यर्थः। ऊर्ध्वेति जरणाभिप्रायम्। **उपपन्नतरेति**। भक्षेहीत्युपक्रमेण भक्षयामीत्युपसंहारेण चावगतमेकवाक्यत्वमप्युपपन्नं भवतीति तरपं प्रयुञ्जानस्य भावः। प्रकरणे सवित्रादिदेवतानामभावादुत्कर्षकल्पने तस्यैव दोषत्वाच्च तत्र एकवाक्यतानुसारात्कथंचिल्लक्षणया विशिष्टपरत्वस्वीकारेण लिङ्गविनियोगबाधेऽपि प्रकृते तथाविधबाधकाभावात् स्योनं ते मन्त्रवल्लिङ्गादेव वाक्यस्य बाध इत्याशयेनाह—**ग्रहणादाविति**। **तथापीति**। आहवनीयादिस्वरूपार्थाधानवन्मन्त्रस्य ग्रहणादिस्वरूपार्थत्वेपि तस्य क्रतूपयोगमात्रेण नानर्थक्यमित्यभिमानेनेदम्। **ननु** परहस्तगतस्यानवेक्षितस्यापि भक्षणसंभवात्कथं ग्रहणादेश्चोदितार्थेन कर्तव्यत्वमित्यत आह—**नहीति**। तादृशभक्षणस्य सुकरत्वाभावात्स्वरसतो ग्रहणादिकमेवाक्षेप्यमिति भावः। **नन्वाहवनीयादीनामलौकिकतया** उपायान्तरेण सिद्ध्यनवगमात्तत्स्वरूपार्थाधानस्यानर्थक्याभावेऽपि ग्रहणादिस्वरूपस्योपायान्तरसाध्यस्मरणेनापि सिद्धिसंभवादिहानर्थक्यं दुर्वारमित्यस्वरसादाह—**भक्षचोदनयेति**। यावताविना विधेयार्थो न सिध्यति तावति चोदनाया व्यापारात्तत एवापूर्वसाधनत्वं ग्रहणादेरिति भावः। **ननु** भक्षणोत्तरभाविजरणं न भक्षणाक्षेप्यमित्यत आह—**सम्यगिति**। यद्यपि वमनाद्यर्थमपि लोके भक्षणमस्ति तथापीह सोमवमनविरेकयोः प्रायश्चित्तविधानाद्भक्षणस्य देशविशेषनिक्षेपात्मकप्रतिपत्तिरूपत्वाच्च सम्यग्जरणपर्यन्तत्वमिति भावः। **ननु** भक्षणे कृतेऽनुनिष्पद्यमानस्य तस्य पृथगनुष्ठेयत्वाभावान्न स्मारकमन्त्रापेक्षेत्यत आह—**तच्चेति**। 'भुक्त्वा वै सुखमास्थाय तदन्नं परिणामये'-दिति सम्यग्जरणं सुखासनादियत्नसाध्यमित्यर्थः। सूत्रे लिङ्गशब्दो विशिष्टभक्षणसामर्थ्यपरः॥

**गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्०॥ २६॥ तृप्तिरिति**। तृप्तिर्यदि पुरुषप्रयत्नसाध्या स्यात्तदा तृप्तिप्रकाशनेन मन्त्रस्य तृप्तौ विनियोग उपपद्यते, नच पुरुषप्रयत्नसाध्या तृप्तिः, भक्षणे सति तस्याः स्वयमेवोत्पत्तेरतस्तृप्तिप्रकाशनस्यानर्थक्यान्न तत्र मन्त्रस्य विनियोग इत्यर्थः। एतेन पुरोडाशभक्षणवत्सोमभक्षणस्यापि भक्षयितृसंस्काररूपसामर्थ्यापादकतया तृप्तिवाचिना तर्पयतिना लक्षणया प्रोत्साहजननार्थं तस्य सामर्थ्यस्य प्रकाशनसंभवात्तत्र विनियोगः संभवतीति निरस्तम्। फलप्रकाशनं हि यथा सूक्तवाकेनायुरादिप्रकाशनं प्रस्तरप्रहरणात्मकयागानुष्ठानोपयोगितया तद्वदुत्साहजननद्वारा साधनानुष्ठानोपयोगीति वाच्यम् अनुष्ठानसामर्थ्यरूपकर्तृसंस्कारश्च प्रतिपत्त्यर्थेन सोमभक्षणेन पुरोडाशभक्षणवदेवानुनिष्पाद्यत इति तस्य भक्षणातिरिक्तव्यापारान्तरसाध्यत्वाभावेन तत्प्रकाशनस्योत्साहजननद्वाराप्यनुष्ठानोपयोगाभावाद्भक्षणानु-

---

१ संभवि लैङ्गिके. २ भक्षणतृप्तिविशिष्टं.

प्रकाश्य किंचित्कर्तव्यं तत्रादृष्टार्थं तत्प्रकाशनं स्यात्। तृप्तिविशिष्टभक्षणप्रकाशने तूत्साहजननादृष्टार्थता, तस्माल्लिङ्गासंभवाद्वाक्येन भक्षार्थत्वम्[१]॥

इन्द्रपीतस्येत्यादिमन्त्राणां विनियोगाधिकरणम्॥ ११॥

**लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्॥ २७॥ [यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति॥ २८॥]**

इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके॥ केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथाश्रुतम्॥ २५॥
ऐन्द्र एव समर्थत्वात्तूष्णीमेवान्यभक्षणम्॥ ऊहो वान्येषु कर्मैक्येऽप्यस्त्यूहो भक्षभेदतः॥ २६॥
इन्द्रेण यस्मिन्सवने सोमः पीत इतीरणात्॥ सवनस्थेषु सर्वेषु मन्त्रोऽनूहेन पठ्यताम्॥ २७॥

भक्षमन्त्र एवोदाहरणम्। तत्रेन्द्रपीतस्येति श्रूयते। सन्ति चैन्द्राण्यनैन्द्राणि च ज्योतिष्टोमे प्रदानानि। तत्र संशयः किमैन्द्रेष्वेवायं मन्त्रोऽनैन्द्राणाममन्त्रं भक्षणमुत तेष्वप्यूहेन मन्त्रः अथवा सर्वत्र यथाम्नातमेव मन्त्र इति। तदर्थं च किमैन्द्राणामनैन्द्राणां च प्रकृतिविकारभावोऽस्ति नवेति, तथेदमपरमपि चिन्त्यम्। इन्द्रपीतस्येति तत्पुरुषः सोमविशेषणमिन्द्रेण पीतस्य सत इति, किंवा बहुव्रीहिः सवनविशेषणं इन्द्रेण यस्मिन्पीतः सोमः तस्य प्रातःसवनस्येति—'तत्र तत्पुरुषे स्वार्थलाभः स्यादुत्तरेपदे॥ बहुव्रीहौ द्वयोरन्यपरत्वाद्दुर्बलत्वधीः॥ ऐन्द्रानैन्द्रप्रदानानि ह्यंशा एकस्य कर्मणः॥ प्रकृतिर्विकृतिश्चेष्टा नचात्मैवात्मनः क्वचित्॥' तेन समासबलीयस्त्वेन तत्पुरुषाश्रयणाद्यथाम्नातमन्त्रस्यानैन्द्रेष्वसामर्थ्यात्समाने च कर्मणि प्रकृतिविकारभावासंभवेनोहायोगादनैन्द्राणाममन्त्रकं भक्षणमित्येकः पक्षः। अपरस्तु सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः[२] प्रकृतिविकृतिभावः मानग्रहणमन्त्राच्चैन्द्रप्रदानविषयः सोमः। 'इन्द्राय वसुमते सोमं गृह्णामी'त्यादयो मन्त्रा नानैन्द्रेषु प्रदानेषु समर्थाः। भवति चाङ्गवशेन प्रधानस्य विषयव्यवस्था यथाहवनीयादिवशेनाग्निहोत्रादेराहिताग्निवि-

ष्ठाने एव तस्योपयोगाङ्गीकारे च मन्त्रस्यानुष्ठेयभक्षणफलप्रकाशनेन भक्षणाङ्गत्वमेव स्यादिति यत्किंचिदेतत्। अनुष्ठानोपयोगाभावेऽपि तत्प्रकाशनेन चादृष्टार्थत्वं स्यादित्याह—**तत्रेति**। ननु भक्षणस्य केवलस्य प्रकाशनेनाप्यनुष्ठानसिद्धेरस्त्वाप्यदृष्टार्थत्वं तुल्यमित्यत आह—**तृप्तिविशिष्टेति। वाक्येनेति**। तृप्यत्विति प्राप्तकाले लोट्। ततश्च वाक्तृप्तिः प्राप्तकालेतिभक्षयामीत्येवमेकवाक्यत्वमिति भावः। प्रयोजनं पूर्वपक्षे भक्षणानन्तरभावित्वात्तृप्तेः भक्षणानन्तरं मन्त्रः प्रयोज्यः, सिद्धान्ते तु भक्षणात्प्रागेवेति॥

**लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्॥ २७॥** मन्त्राणां सामर्थ्यानुसारेण विनियोगे निरूपिते भक्षमन्त्रस्य किमैन्द्रप्रदानशेषभक्षण एव सामर्थ्यमुतानैन्द्रप्रदानशेषभक्षणेऽपीत्येवं सामर्थ्यविषयविचारेण यथासामर्थ्यं विनियोगस्य स्थिरीकरणात्सङ्गतिः। **सन्ति चेति**। तत्र शुक्रग्रहप्रदानसवनमुखीयचमसप्रदानादीन्यैन्द्राणि आश्विनादीन्यनैन्द्राणीति द्रष्टव्यम्। ऐन्द्रेष्वेवेत्येवकारार्थविवरणमनैन्द्राणामिति। **तदर्थमिति**। तत्पुरुषे प्रकृतिविकारभावे चासति प्रथमः पक्षः तत्पुरुषे प्रकृतिविकारभावे द्वितीयः बहुव्रीहौ तृतीय इति चिन्ताद्वयस्य मिलित्वा प्रधानसंशयकोटित्रयफलकत्वं बोध्यम्। इन्द्रपीतशब्दस्य पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चयात्संशय एवानुपपन्न इति शङ्कां दशमे पृष्ठस्य युगपद्विधावेकाहवद्विसामत्वमित्यत्र परिहरिष्यामः। **ननु** परार्थाभिधानं वृत्तिरिति तत्पुरुषबहुव्रीह्योरुभयोरपि परार्थत्वाविशेषात्कथं तत्पुरुष इति पूर्वः पक्ष इत्यत आह—**तत्रेति**। तत्पुरुषस्योत्तरपदार्थप्राधान्यात्तत्र पूर्वपदस्यैव परार्थत्वं नोभयोरित्यस्ति विशेष इति भावः। तत्पुरुषबलीयस्त्वेन सिद्धान्तपक्षं निराकृत्योहपक्षं निराकरोति—**ऐन्द्रेति**। अनैन्द्राणामिन्द्रप्रदानविकृतित्वं तावन्न संभवति। उभयेषामपि सोमयागांशत्वेन तुल्यकल्पनया परस्परं प्रकृतिविकारभावासंभवान्नाप्यंशीभूतसोमयागविकृतित्वं अंशांशिनोरभेदेन प्रकृतिविकारभावासंभवादित्यर्थः। तुल्यकक्ष्यत्वं निराकरोति—**मानग्रहणेति**। मानमन्त्रवशाद्ग्रहणमन्त्रवशाच्चेत्यर्थः। तत्र ग्रहणमन्त्रमुदाहरति—**इन्द्रायेति**। इन्द्राय त्वा वृत्रघ्न इत्यादयो मानमन्त्रा आदिशब्दार्थः। ततश्चैन्द्रप्रदानस्य धर्मवत्त्वादितरेषामधर्मवत्त्वाच्च न तुल्यकक्ष्यत्वमित्यर्थः। **ननु** अङ्गानुसारेण कथं प्रधानस्य सोमस्येन्द्रविषयतया संकोच इत्यत आह—**भवतिचेति**। **ननु** सोमस्य तद्विषयत्वमात्रेण

१ भक्षणार्थत्वम्, २ भिन्नत्वान्न तदविरुद्धः प्रकृतिविकारभावः.

वचलं, अतो यत्र भक्षस्तत्र मानग्रहणे यत्र ते तत्र सोमः यत्र सोमस्तत्राभिषवादयो भक्षस्तन्मन्त्रश्च । प्रदानान्तराणि त्वधर्मकाणि चोदकेनैतान्धर्मान्गृह्णन्ति । तत्र देवताविशिष्टभक्षप्रकाशनेनोपकृतवतो भक्षमन्त्रस्य कार्यवशेन विकृतिमागतस्य यथादेवतं विकारो विज्ञायते । तस्मादनैन्द्रेष्वप्यूहेन मन्त्रवद्भक्षणम् । एवमूहेऽवस्थितमधिकरणमपरिसमाप्तं कृत्वान्तरा प्रसङ्गादूहविषयश्चिन्त्यते ॥

अभ्युन्नीतसोमभक्षणाधिकरणम् ॥ १२ ॥

**पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥ [अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३० ॥ ग्रहणाद्वापनयः स्यात् ॥ ३१ ॥]**

ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायपञ्चके ॥ इन्द्रे हुतेऽथ तच्छेषे होत्रकैश्चमसस्थिते ॥ २८ ॥
सोमोऽभ्युन्नीय देवेभ्यो हुत्वा संभक्ष्यते तदा ॥ इन्द्रो न लक्ष्यो लक्ष्यो वा न शेषेऽन्यार्थता यतः ॥ २९ ॥
उन्नीत एव संबद्धो न पूर्वो देवतान्तरैः ॥ अत इन्द्रस्य सिद्ध्यर्थं लक्ष्योऽसावितरैः सह ॥ ३० ॥

सवनमुखीयेषु चमसेष्वैन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेषु सशेषेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते तस्मिन्भक्ष्यमाणे भवति संशयः किं पूर्वप्रकृतप्रदाने[3] देवताभूत इन्द्रोऽप्युपलक्षणीय इन्द्रमित्रावरुणपीतस्येति, किंवा नेति । तदर्थं च किमैन्द्रोपि शेषो देवतान्तरसंबन्धी जातो नवेति । तत्रोन्नयनकाले देवतान्तरसंकल्पो न क्रियते । यदि क्रियेत तत उन्नीयमानस्यैव देवतान्तरसंबन्धो न पूर्वस्थितस्य शेषस्येति तस्य पूर्वदेवतासंबन्धो नापेयात् । उन्नयनमात्रं तु तदा क्रियते । देवतानिर्देशस्तु प्रदानकाले तदा च पूर्वशेषस्याभ्युन्नीयमानस्य[4] चोभयस्य चमसस्थत्वेन देवतान्तरसंबन्धात्पूर्वदेवतापेतसंबन्धत्वान्नोप-

---

कथमैन्द्राणां प्रकृतित्वमित्यत आह—**यत्र सोम इति** । अभिषवादिसंनिपातिपौष्कल्याद्युक्तं तेषां प्रकृतित्वमिति भावः । **चोदकेनेति** । एकयागावयवत्वादिसादृश्यनिबन्धनेनेति भावः । एवंच फलदेवतयोश्चेति नावमिकन्यायेन कर्मसमवेतदेवताप्रकाशनार्थत्वादिन्द्रपीतमन्त्रस्यानैन्द्रेष्वपि दशमाद्यन्यायेन कार्यमुखेनातिदिष्टस्य तद्गतदेवताप्रकाशनाय सिद्ध्यत्यूह इत्याह—**तत्रेति । एवमिति** । ऊहनिरासनेनाधिकरणे परिसमाप्ते पश्चादूहविशेषचिन्ताया अनवकाशादन्तरा चिन्तेति भावः । यद्यपि पुनरभ्युन्नीतेषु इन्द्रमित्रावरुणपीतस्येत्येवमिन्द्र उपलक्षणीयो न वेति विचारो नोहविशेषविचारात्मकः, तत्रेन्द्रमित्रावरुणसमुदायस्य दैवतात्वाभावेनेन्द्रपदस्थाने इन्द्रमित्रावरुणपदप्रयोगायोगेनोहपक्षे किं केवलमित्रावरुणपीतस्येत्येवंरूप ऊह उत इन्द्रमित्रावरुणपीतस्येत्येवंरूप इत्येवमूहविशेषविचारात्मकत्वस्य वक्तुमशक्यत्वात्, एवंच इन्द्रमित्रावरुणपीतस्येति प्रयोगे इन्द्रपदप्रयोग इन्द्रप्रदानस्यैव शेषः ऐन्द्रप्रदानं च प्रकृतिस्तस्मात् प्रकृतिभूतैन्द्रप्रदानार्थं इन्द्र उपलक्षणीयो नवेत्येवंरूपस्य तस्य विचारस्योहविशेषविचारात्मकत्वमयुक्तम् । तथापि सिद्धान्तानन्तरं पुनरभ्युन्नीतविचारस्यावकाशाभावादूहविशेषविचारात्मकपात्नीवतादिविचारवदयमपि विचारोऽन्तरा क्रियत इत्याशयः । **प्रसङ्गादिति** । वस्तुतस्तूहकोटेर्लिङ्गविनियोगविषयत्वाभावादत्रासङ्गतिशङ्कायां तत्परिहारार्थं पुनरभ्युन्नीतयागादिषु पूर्वशेषसहितस्य विनियोगः नतु पश्चाद्गृहीतमात्रस्य संसर्गिद्रव्ये तन्मात्रस्य निष्कर्षासंभवादित्येवं सामर्थ्येन विनियोगपर्यवसायिन्यूहकोटिरिति द्योतनायोहविषयचिन्तेति ध्येयम् । सूत्रे समानविधानेष्विति प्रकृतिविकारभावनिराकरणार्थम् ॥

**पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥** सौत्रपुनरभ्युन्नीतशब्दार्थं स्फोरयन्विषयमाह—**सवनमुखीयेष्विति** । सवनसंबन्धिचमसगणमध्ये प्रथमं हूयमाना नव सवनमुखीयास्ते नवापि प्रथममिन्द्राय हूयन्ते तत्र ये मैत्रावरुणब्राह्मणाच्छंसिनेष्टृपोत्राग्नीध्राख्याणां होत्रकाणां संबन्धिनः पञ्चचमसास्तेषु सकृदिन्द्राय हुतेषु अभक्षितेष्वेव सशेषेषु पुनरपि द्रोणकलशात्सोममभ्युन्नीय मित्रावरुणादिदेवतान्तरार्थं हुत्वा तदनन्तरं तेषु चमसेषु सोमशेषो भक्ष्यत इत्यर्थः । **तस्मिन्निति** । अत्र ब्राह्मणाच्छंसिचमसो नोदाहरणम् । तत्र पुनरभ्युन्नीतस्यापि सोमस्येन्द्रत्वात्वृषभमिति याज्यानुसारादिन्द्र एव देवतेति पक्षद्वयेऽपीन्द्रपीतस्येत्येव पयोज्यत्वादिति ध्येयम् । उन्नीतमात्रस्य देवतान्तरसंबन्धे प्रमाणाभावात्सर्वस्यापि तत्संबन्ध इति पूर्वपक्षमुपपादयति—**तत्रेति । यदीति** । इदंच प्रायदर्शनादभ्युपगमवादेनोक्तम् । अग्नये च त्वा पृथिव्यै चोन्नयामि वायवे च त्वान्तरिक्षाय चोन्नयामीत्युन्नयनकाले निर्दिष्टानामपि पृथिव्यादीनामग्निहोत्रे देवतात्वाभावादिति द्रष्टव्यम् । **तस्येति** । बुद्ध्या निष्कृष्य देवतान्तरोद्देशेन त्याज्यमित्यत्र मानाभावात्पात्रस्थत्वाविशेषात्सर्वमेव त्यागकाले

---

१ धर्मानाहरन्ति. २ प्रकाशकत्वेन. ३ पूर्वकृतप्रदानदेवता. ४ भ्युन्नीतस्य.

लक्षणीयेति प्राप्ते ब्रूमः। यद्यप्युन्नयनकाले न देवतासंकल्पस्तथाप्युन्नयनं तावत्करिष्यमाणयागार्थमित्यसंदिग्धम्। अतश्चाभ्युन्नीतस्य करिष्यमाणयागार्थतावगता न पूर्वशेषस्य प्रमाणाभावात्। यश्च करिष्यमाणयागार्थस्तस्यैव तदीयदेवतासंबन्धो नान्यस्य। तस्मात्पूर्वशेषस्य देवतासंबन्धानपायात्साप्युपलक्षणीया॥

पात्नीवतभक्षण इन्द्रादीनामनुपलक्षणाधिकरणम्॥ १३॥

## पात्नीवते तु पूर्ववत्॥ ३२॥ [ग्रहणाद्वापनीतं स्यात्॥ ३३॥]

द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम्॥ स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति॥ ३१॥
तद्भक्षणे द्विदेवाः किं साधं पात्नीवतेन ते॥ उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम्॥ ३२॥
अन्य आग्रयणात्पात्नीवतो नैतस्य विद्यते॥ आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते॥ ३३॥

द्विदेवत्यानामिन्द्रवायवादीनां शेषा आदित्यस्थालीमागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति पात्नीवतश्चाग्रयणपात्राद्गृह्यते। तस्मिन्भक्ष्यमाणे भवति संशयः किमिन्द्रवाय्वादयोऽप्युपलक्षणीया उत पत्नीवानेवेति। तदर्थंच किं द्विदेवत्यशेषोऽपीन्द्रवाय्वादिभ्योऽपनीय पत्नीवते गृहीतः किंवा नेति। तत्राग्रयणमात्रस्य पात्नीवतत्वं नान्यस्य तत्संसृष्टस्यापि। तस्माद्विदेवत्यशेषस्यापात्नीवतस्य पूर्वदेवतासंबन्धानपायादिन्द्रवाय्वादीनामप्युपलक्षणम्। नैतदेवम्। नह्यत्राग्रयणं पात्नीवतं श्रूयते। पात्नीवतमाग्रयणाद्गृह्णातीत्यपादानमात्रमाग्रयणम्। अतो यत्ततोपेतं तत्पात्नीवतं आग्रयणांशवच्चानाग्रयणमपि तत्संसृष्टं द्विदेवत्यं ततोपेतमिति पात्नीवतमेव। अतः पूर्वदेवतासंबन्धापेतः स भूतपूर्वत्वादुपलक्ष्येत। नच प्रकृतौ भूतपूर्वोपलक्षणं कृतमित्यनुपलक्षणमिन्द्रवाय्वादीनाम्॥

---

देवतान्तरोद्देशेन त्याज्यमिति सर्वस्य देवतान्तरसंबन्ध इत्यर्थः। **अपेतेति**। पूर्वदेवतानपाये देवतान्तरसंबन्धायोगादिति भावः। **अतश्चेति**। उन्नीतस्य यागार्थत्वाभावे उन्नयनस्यादृष्टार्थत्वं स्यादित्युन्नयनस्य दृष्टार्थत्वायोन्नीतस्य यागार्थत्वमवश्यं वाच्यमित्यर्थः। **प्रमाणेति**। आवश्यकोन्नीतमात्रादेव यागाकाङ्क्षाशान्तेः संसृष्टेऽपि यदत्रोन्नीतं तदस्यैव देवताया इत्युन्नीतमात्रस्य मनसा निष्कृष्य देवतान्तरोद्देशेन त्यागसंभवात्संसृष्टत्वमात्रेण पूर्वशेषस्य देवतान्तरसंबन्धापादनेन क्षममिति भावः॥

**पात्नीवते तु पूर्ववत्॥ ३२॥ द्विदेवत्यानामिति**। प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विना ग्रहा द्विदेवत्यास्तेषां होमानन्तरं तदीयाः शेषा 'आदित्यस्थाल्यां संपातमवनयती'तिवचनादादित्यस्थालीं प्राप्य तृतीयसवने आदित्यस्थालीत आग्रयणस्थालीं प्राप्नुवन्तीत्यर्थः। अत्र द्विदेवत्यग्रहणं प्रदर्शनार्थं। आदित्यग्रहसंपाताच्चतुर्थमिति वचनेनादित्यग्रहसंपातस्याप्याग्रयणसंसृष्टतया आदित्यग्रहदेवताया द्विदेवत्यग्रहदेवतातुल्ययोगक्षेमतया तस्या अप्यत्र विषयत्वसंभवादिति ध्येयम्। **इन्द्रेति**। अत्रादौ वायुरपि द्रष्टव्यः। ऐन्द्रवायवग्रहे वायोरिन्द्रवाय्वोश्च देवतात्वादिति ध्येयम्। **आग्रयणमात्रस्येति**। आग्रयणाद्गृह्णातीत्याग्रयणस्यापादानत्वं आग्रयणावयवं प्रत्येव युज्यते। ततश्च 'पात्नीवतमाग्रयणाद्गृह्णाती'ति वाक्यस्याग्रयणात्सोमात्तदवयवं पत्नीवते गृह्णातीत्यर्थपर्यवसानात् पात्नीवतग्रहणकाले बुद्ध्या निष्कृष्याग्रयणावयवमात्रस्यैव पत्नीवते संकल्पनीयत्वेन तन्मात्रस्यैव पात्नीवतत्वं नतु तत्संसृष्टस्यापि द्विदेवत्यशेषस्येति भावः। वृक्षात्पर्णं पततीति कंककुररादिपत्रेऽपि व्यवहारदर्शनेनापादानत्वेऽवयवावयविभावो न प्रयोजकः किंतु ततो विश्लेषमात्रम्। तन्मात्रं चाग्रयणसंसृष्टत्वाविशेषादाग्रयणावयवमात्रस्य विश्लेषयितुमशक्यत्वाच्चानाग्रयणस्याप्यस्ति। तस्मादुभयस्याप्याग्रयणापादानकं ग्रहणं संभवतीत्याशयेनाह **—अत इति**। ततोपेतं तदवधिकापाययुक्तं ततो विश्लिष्टमिति यावत्। **भूतेति**। पत्नीवल्लक्षणदेवतान्तरसंबन्धात्पूर्वं तस्य तद्देवताकत्वादित्यर्थः। सूत्रे पूर्ववत्पुनरभ्युन्नीतवत् पूर्वदेवतोपलक्षणीयेत्यर्थः। अनेन च पूर्ववत्प्रत्यवस्थानात्सङ्गतिरिति सूचितम्॥

---

१ मैन्द्रवायवा. २ पात्नीवत्त्वं.

पात्नीवतशेषभक्षे त्वष्टुरनुपलक्षणीयताधिकरणम् ॥ १४ ॥

## त्वष्टारं तूपलक्षयेत्पानात् ॥ ३४ ॥ [अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥]

**सह पत्नीवता त्वष्टा तद्ग्रहे लक्ष्यते न वा ॥ सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात्सोऽपि लक्ष्यते ॥ ३४ ॥**
**सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात् ॥ चोदनाया अभावाच्च न देवोऽतो न लक्ष्यते ॥ ३५ ॥**

तस्मिन्नेव पात्नीवते आध्वर्यवो होममन्त्रः 'अग्नाइ३पत्नीवान्सजूर्देवेन त्वष्ट्रा सोमं पिबस्वाहे'ति। तत्र संशयः किं त्वष्टापि देवता, [१]साप्युपलक्षयितव्या उत न देवता, नोपलक्षयितव्येति। तत्र मन्त्रवर्णेनाग्नेः पत्नीवतस्त्वष्ट्रा सह पानं गम्यते। नच तदुपपद्यते। यदि त्वष्टा न पिबेत नचादेवतायाः पानं संभवतीति त्वष्टापि देवतोपलक्षयितव्येति प्राप्तेऽभिधीयते। शब्दतस्तावदग्नेरेव पानं गम्यते, त्वष्टुः सह भावमात्रम्। नच सहभावस्तत्क्रियासंबन्धाव्यभिचारी विनापि तेन दर्शनात्। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'ति यद्यपि च पानं स्यात्तथापि देवतात्वमप्रमाणकम्। नहि देवता पिबति, उद्देशमात्रलक्षणत्वात्तस्याः। विस्पष्टं च चो[२]दनया तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं गम्यमानं न मान्त्रवर्णिक्या देवताया बाधविकल्पसमुच्चयान्सहते, अतो नोपलक्षणीयस्त्वष्टा॥

पात्नीवतशेषभक्षे त्रिंशतामनुपलक्षणाधिकरणम् ॥ १५ ॥

## त्रिंशच्च परार्थत्वात् ॥ ३६ ॥

**पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी ॥ लक्ष्या न वा याज्ययोक्तेर्देवत्वादुपलक्षणम् ॥ ३६ ॥**
**एकोऽग्निर्यजत्यानेन मादितोऽन्ये तु वह्निना ॥ अतोऽग्नेरेव देवत्वान्नान्येषामुपलक्षणम् ॥ ३७ ॥**

तस्मिन्नेव पात्नीवते याज्यामन्त्रः 'एभिरग्ने सरथं याह्यर्वाङ्नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वे'ति। तत्र संशयः किं त्रयस्त्रिंशदुपलक्षयितव्या उत नेति। [३]पूर्वमग्नेरेव पानं त्वष्टुस्तु सहत्वमात्रमित्यदेवतात्वमुक्तम्, इह तु विपरीतं अग्नेर्मादयितृत्वादितरे मा-

---

**त्वष्टारं तूपलक्षयेत्पानात् ॥ ३४ ॥ किमिति।** देवतात्वतदभावौ तदर्थसंशयकोटी बोध्ये। तत्र **मन्त्रवर्णेनेति** सजूःशब्दस्य सहार्थत्वादिति भावः। नच सजूःशब्दो 'जुषी प्रीतिसेवनयो'रितिधात्वर्थानुसारात्समानप्रीतिवचनो न सहार्थक इति वाच्यम्। तथात्वेऽपि त्वष्ट्रा समानप्रीतिः सन् पिबेत्युक्ते त्वष्टुरपि प्रीत्यवगमात्तस्याश्च पानं विनानुपपत्त्या त्वष्टुरपि पानावश्यंभावादिति भावः। **यदीति।** सहभावस्य देवदत्तेन सह यज्ञदत्तो भुङ्क्ते इत्यादौ तत्क्रियान्वये एव दर्शनादिति भावः। **त्वष्टापि देवतेति।** एवंच पूर्वत्रेन्द्रवाय्वादीनां देवतात्वाभावादनुपलक्षणत्वेऽप्यत्र त्वष्टुर्देवतात्वादुपलक्षणत्वमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या। **सहैवेति।** विद्यमानतावचनोऽत्र सहशब्दः। दशपुत्रेषु विद्यमानेष्वित्यर्थः। लोके प्रायेण तत्क्रियासंबन्धदर्शनादाह—**यद्यपीति।** ननु पानेन प्रतीयमानो हविःसंबन्ध उद्देश्यत्व एव पर्यवस्यतीत्यत आह—**विस्पष्टमिति। निरपेक्षस्येति।** त्वष्टुः सापेक्षस्य पत्नीवतो देवतात्वे सामर्थ्याभावात्तद्धितो न स्यादिति भावः। **न मान्त्रवर्णिक्येति।** मन्त्रवर्णस्य देवतात्वाभिधायकत्वाभावेन तत्कल्पकतया देवतार्थकतद्धितापेक्षया दुर्बलत्वादिति भावः। **बाधेति।** मन्त्रवर्णाद्यदि त्वष्ट्रसहितस्य पत्नीवतो देवतात्वं कल्प्यते तदा बाधविकल्पयोः संभवः, यदि तु पत्नीवतो देवतात्वं तद्धितादेवाश्रित्य मन्त्रवर्णात्त्वष्टृमात्रस्य देवतात्वं कल्प्यते तदा देवताद्वयसमुच्चयसंभव इत्याशयेन बाधविकल्पसमुच्चयानां त्रयाणामप्युपन्यासः कृतः। नच तस्मात्पत्नीवते त्वष्ट्रेऽपि गृह्यत इति वचनादेव त्वष्टुर्देवतात्वं किं न स्यादिति वाच्यम्। पत्नीवतस्तुल्यर्थं मन्त्रोपात्तो यस्त्वष्टृसहभावस्तदुपपादनार्थं प्रवृत्तार्थवादमात्रत्वात्तद्वचनस्येत्याशयेनोपसंहरति—**अत इति॥**

**त्रिंशच्च परार्थत्वात् ॥ ३६ ॥** पूर्वातिदेशात्संगतिः। अतिदेशस्याभ्यधिकाशङ्कानिरासार्थत्वात्तां दर्शयन्पूर्वपक्षमाह—**पूर्वमिति। इहत्विति।** हे अग्ने, एभिस्त्रयस्त्रिंशता देवैः समानरथं यथा तथाश्वानां विभुत्वान्नानारथं यथा तथा वा अर्वाङ् याहि। आगत्य च त्रिंशतस्त्रींश्च पत्नीवतो देवाननुष्वधं सोमरसरूपान्नमनु आवह ताननेनान्नेन मादयस्व चेत्येवं मन्त्रवर्णादग्नेर्मादयितृत्वावगमेन तस्य तृप्तिर्न प्रतीयते किंतु तेन माद्यतां त्रयस्त्रिंशतो देवानामेव सावगम्यते। तस्मात्तेषामेव देवतात्वं नाग्नेरिति विपरीतमित्यर्थः। नच पूर्वपक्षे अग्नेर्देवतात्वमिष्टमिति तेषामेव देवतात्वोक्तिरयुक्तेति वाच्यम्। अयं मन्त्रो याज्यात्वाद्देवताप्रकाशक इत्यवश्यं वाच्यम्। अस्मिंश्च मन्त्रे त्रयस्त्रिंशत एव देवानां देवतात्वं प्रतीयते नत्वग्ने-

---

१ सोऽप्युपलक्षयितव्यः—नोपलक्षयितव्य इति. २ चोदनायां. ३ पूर्वत्राग्नेरेव.

यन्तीति गम्यते। अतस्तेषामेव देवतात्वं चोदनया च पत्नीवन्मात्रस्य देवतात्वमुक्तं न तद्विशेषस्य। तत्र यथाग्ने पत्नीवन्निति मन्त्रगतसामानाधिकरण्यादग्नेः पत्नीवत्त्वेन देवतात्वमेवं त्रयस्त्रिंशतोऽपि देवानां पत्नीवतस्त्रिंशतं त्रींश्च देवानिति सामानाधिकरण्यादसति च प्रमाणान्तरे द्विवचनबहुवचनान्तानां वृत्तिर्नेष्यते। अस्ति चेह प्रमाणं मन्त्रगतसामानाधिकरण्यम्। अतः पत्नीवन्तो देवतास्येत्येवं चोदनार्थो भविष्यति। तस्मात्त्रयस्त्रिंशदुपलक्षणीया इति प्राप्ते ब्रूमः। यत एवाग्नेर्मादयितृत्वमतएव तस्यैव देवतात्वं मन्त्रवर्णाद्गम्यते। नह्यसौ यजमानस्य द्रव्येण त्रयस्त्रिंशतं मादयितुं शक्नुयात् न यदि यजमानोऽग्नये दद्यादतोऽग्नेरेव यजमानसंकल्पविषयत्वाद्देवतात्वं, इतरेत्वग्निदत्तेन कामं माद्यन्तु नतु यजमानस्तेभ्यो ददातीत्यदेवतात्वम्। एवंच यद्यपि पत्नीवन्तस्ते भवेयुस्तथापि तेषां मन्त्रवर्णाद्देवतात्वमनवगतमिति प्रमाणान्तराभावान्न चोदनायां बहुवचनान्तेन विग्रह इत्येक एवाग्निः पत्नीवानिह देवतेति तस्यैवोपलक्षणम्॥

भक्षणेऽनुवषट्कारदेवताया अनुपलक्षणाधिकरणम्॥ १६॥

**वषट्कारश्च कर्तृवत्[1]॥ ३७॥**

सोमस्याग्न इति प्रोक्तानुवषट्कारदेवता॥ लक्ष्या न वा देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा॥ ३८॥
प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः॥ उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा॥ ३९॥

अनुवषट्कारदेवताया अग्नेरसंदिग्धं देवतात्वमित्युपलक्षणं[2], प्रकृतौत्वसौ विद्यमानापि नोपलक्षिता प्रधानदेवतैव त्विन्द्र उपलक्षितः। विकृतावपि तत्कार्यापन्नप्रधानदेवतोपलक्षणीया[3] नानुवषट्कारदेवतेति॥

---

रेवंचाग्निपरत्वमादाय याज्यात्वानिर्वाहात्तन्निर्वाहाय तेषामेव देवतात्वस्य मन्त्रस्य तात्पर्यं वाच्यम्। ततश्चैतन्मन्त्रबलात्त्रयस्त्रिंशतोऽपि देवानामवश्यं पात्नीवतग्रहे देवतात्वं स्वीकर्तव्यमित्येतन्मन्त्राभिप्रायेणास्य ग्रन्थस्य प्रवृत्त्या आध्वर्यवमन्त्रबलप्राप्ताग्निदेवतात्वनिषेधाभावेन विरोधाभावादिति। अतएव मन्त्रान्तरसिद्धाग्निदेवतात्वदृष्टान्तेनैव तेषां देवतात्वं द्रढयति —**चोदनयेति**। ननु तेषामपि देवतात्वे सति पत्नीवन्तो देवतास्येति बहुवचनान्तात्पत्नीवच्छब्दात्तद्धितवृत्तिर्वाच्या। साचायुक्ता। द्विवचनबहुवचनान्तानां वृत्तेरनिष्टत्वादित्यत आह—**असतिचेति**। द्विवचनबहुवचनान्तानां वृत्त्यभाव औत्सर्गिको न नियत इति नोक्तदोष इति भावः। यतो हेतोर्विपरीतमित्युक्तं स एव हेतुर्विपरीत इत्याह—**यत इति**। **नहीति**। तत्रास्वामित्वात् स्वामिभूतयजमानप्रेरणानवगतेश्चेति भावः। नच तेषां तृप्त्यवगममात्रेण देवतात्वं देवतात्वस्य त्यज्यमानहविःप्रत्युद्देश्यत्वरूपत्वात्तेषां च यजमानेनानुद्देशादित्याह—**इतर इति**। एवंच मन्त्रगतसामानाधिकरण्यमप्यकिंचित्करमित्याह—**एवंचेति**। नन्वयं विचारो निष्फलः पूर्वपक्षे सिद्धान्ते च पत्नीवत्पीतस्येत्येव प्रयोज्यतया प्रयोजनभेदाभावात्। यत्तु न्यायसुधायामग्नित्रयस्त्रिंशद्देवपत्नीवत्पीतस्येत्येवं पूर्वपक्षे ऊहः कार्य इत्युक्तं तन्न। पूर्वपक्षे अग्नेस्त्रयस्त्रिंशतो देवानां च देवतात्वेऽपि न तद्रूपविशिष्टपत्नीवत्त्वेन देवतात्वं किंतु विधिवाक्यश्रुतेन पत्नीवत्त्वमात्रेणैव। नच पत्नीवच्छब्दार्थस्य विशेषणरूपतया विशेष्यापेक्षत्वादग्न्यादेश्च मन्त्रवर्णात्तद्विशेष्यत्वावगमादग्नित्वविशिष्टपत्नीवत्वादिनैव देवतात्वं न पत्नीवत्वमात्रेणेति वाच्यम्। पत्नीवच्छब्दस्य यौगिकस्यावयवार्थान्वितव्यक्तिमात्राभिधानेन निरपेक्षतया तस्यान्यापेक्षाविरहादतएव त्वाष्ट्रं पात्नीवतमालभेतेत्यत्र पत्नीवतस्त्वष्टुश्च पृथगेव देवतात्वमिति द्वितीये ग्रन्थकारेणोक्तम्। ततश्च पूर्वपक्षे अग्नेस्त्रयस्त्रिंशतो देवानां च देवतात्वं नाग्नित्वत्रयस्त्रिंशद्देवत्वविशिष्टपत्नीवत्त्वेन किंतु पत्नीवत्त्वेनैव। परंतु पत्नीवत्त्वेन देवतात्वं न सर्वेषां पत्नीवतां किंतु मन्त्रे पत्नीवच्छब्दसामानाधिकरण्येन निर्देशादग्न्यादीनामेवेत्येतावन्मात्रम्। एवं सिद्धान्ते अग्नेर्देवतात्वमपि नाग्नित्वविशिष्टपत्नीवत्त्वेन किंतु पत्नीवत्त्वेनैव। तस्मात्पक्षद्वयेऽपि पत्नीवत्पीतस्येत्येवमेव प्रयोज्यत्वान्नास्त्यूहस्वरूपे भेद इति चेत् सत्यं। तथापि पूर्वपक्षे पत्नीवद्भ्य इदं न ममेत्युद्देशत्यागः सिद्धान्ते तु पत्नीवत इदं न ममेति। तथा भक्षणकालेऽपि पूर्वपक्षे पत्नीवच्छब्देन त्रयस्त्रिंशतोऽपि देवानां स्मरणं संपाद्यं सिद्धान्ते त्वग्नेरेवेत्यस्ति प्रयोजनभेदः। सूत्रार्थस्तु—त्वष्टृवत्त्रिंशदपि देवा नोपलक्षणीयाः मन्त्रे तन्निर्देशस्य इत्थमयमग्निः प्रशस्तः यत्स्वकीयेन हविषान्यानपि तर्पयतीत्येवमग्निस्तुत्यर्थतया परार्थत्वेन ततस्तेषां देवतात्वाप्राप्तेरिति॥

**अनुवषट्कारश्च कर्तृवत्**॥ ३७॥ अनुवषट्कारदेवता किमुपलक्षणीया नवेति संशयं स्पष्टत्वादुपेक्ष्य पूर्ववैषम्येण सङ्गतिं सूचयन्पूर्वपक्षमाह—**अनुवषट्कारेति**। **असंदिग्धमिति**। 'सोमस्याग्ने ब्रूहीत्यनुयजती'त्यनेन विहितस्यानुवषट्कारयागस्य देवतापेक्षायां मन्त्रवर्णतोऽग्नेर्देवतात्वस्यावश्यकत्वादिति भावः। **प्रकृताविति**। अनुवषट्कारयागो हि ऐन्द्रवाय-

---

[1] वषट्कारश्च. [2] त्युपलक्षणं मन्यते. [3] पन्ना प्रधानदेवतैवोप.

कृत्वाचिन्तारूपे अनैन्द्राणाममन्त्रकभक्षणाधिकरणम् ॥ १७ ॥

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३८ ॥**

**अमन्त्रपक्षमाश्रित्यैं कृत्वाचिन्तान्तरत्रयम् ॥ ऊहोऽस्ति नो वा सोऽस्त्यत्र विकृतौ तस्य संभवात् ॥ ४० ॥**
**सोमेनेति विधेः सर्वप्रदानेषु समत्वतः ॥ अविकारेऽप्यनूहोऽतो नैन्द्रे निर्मन्त्रभक्षणम् ॥ ४१ ॥**

एवमूहं विचार्याधुना स्थितादुत्तरमुच्यते । नास्त्यूहः समानविधानत्वात्प्रदानानाम् । नह्यैन्द्रप्रदानविषयः सोमः । सहि सोमेन यजेतेति कर्मोत्पत्तौ श्रुतः कर्माङ्गं न प्रदानविशेषस्य । तदेव सर्वप्रदानेष्वभ्यस्यत इति सर्वाणि समानविधानानि, मानग्रहणमन्त्रौ तु लिङ्गादैन्द्रप्रदानविषयौ कामं भवेतां नतु सोमः । सह्युत्पत्तावेव श्रुत्या कर्मणा संबद्धो नाभ्यासविशेषविषयः शक्यः कर्तुम् । अतः समानविधानत्वादनूहः । भक्षमन्त्रस्तु लिङ्गादैन्द्रेष्वेवेत्यनैन्द्राणाममन्त्रकमेव भक्षणमिति । एवं प्रथमपक्षएव स्थितमधिकरणम् । एवंस्थिते पुनः कृत्वाचिन्ता ॥

ऐन्द्राग्नभक्षस्यामन्त्रकताधिकरणम् ॥ १८ ॥

**ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ३९ ॥ [एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४० ॥]**

**समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणम् ॥ ऐन्द्राग्नेऽपीन्द्रपीतत्वसंभवात्तत्समन्त्रकम् ॥ ४२ ॥**
**न पानमशरीरस्य युक्तं दानं तु मिश्रगम् ॥ मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम् ॥ ४३ ॥**

यदा नैन्द्राणाममन्त्रकं भक्षणं तदा यत्रान्यसहित इन्द्रो देवता यथैन्द्राग्नादिषु तत्र मन्त्रो भवति नेति विचारः । तदर्थं च किमत्र देवताव्यापारः पानमुपलक्षणं उत यजमानव्यापारो दानमिति ।

---

वादिग्रहयज्यादिवन्न सोमयागाभ्यासरूपः । सोमेन यजेतेति वाक्याद्वाक्यान्तरविहितस्य तस्य सोमयागात्कर्मान्तरत्वेन तदभ्यासरूपत्वासंभवात्किंतु सोमयागाङ्गभूतः । सच तत्तत्प्रदानेष्वावर्तनीय इह च प्रकृतिभूतैन्द्रप्रदानाङ्गभूतानुवषट्कारयागदेवता न विषयः प्रकृतावूहाभावात् किंतु विकृतिभूतानैन्द्रप्रदानाङ्गानुवषट्कारदेवता तस्याश्चोपलक्षणत्वं न संभवति । प्रकृतावङ्गदेवताया उपलक्षणत्वाभावात् वैकृताङ्गदेवतायाः प्राकृतप्रधानदेवताकार्यापत्त्यभावाच्चेत्यर्थः । अत्रकेचित् अनुवषट्कारे अग्नेर्देवतात्वेनोपलक्षणयोग्यतामात्रेण पूर्वपक्षकरणं मन्दमिति मन्वाना अनुवषट्कारयागः किमर्थकर्म उत गुणकर्मेति तदर्थचिन्तां कल्पयित्वार्थकर्मत्वात्प्रकृतिकार्यापत्तिरिति पूर्वपक्षं कृत्वा गुणकर्मत्वेन प्राकृतकार्यापत्त्यभावं सिद्धान्तयन्ति । तन्न । अर्थकर्मत्वेऽप्यङ्गत्वाविशेषेण तद्देवतायाः प्रधानदेवताकार्यापत्त्यसंभवान्न चार्थकर्मत्वपक्षे प्रधानयागनिर्वृत्तिलक्षणकार्यापत्त्यभावेऽपि प्रधानदेवतावदनुवषट्कारदेवताया अप्यनुवषट्कारयागे गुणत्वेन निर्वर्तकत्वमस्तीति तन्मात्रेण कार्यापत्तिः संभवति । प्रतिपत्तित्वपक्षे तु प्रतिपाद्यस्य प्राधान्येन. प्रधानदेवतावैलक्षण्यात्र कार्यापत्तिरिति वाच्यम् । प्रतिपाद्यस्य प्रधानत्वेऽपि वस्तुतो निर्वर्तकत्वमस्तीति तन्मात्रेण तत्रापि कार्यापत्तिसंभवात् । वक्ष्यते च नवमेऽभ्युदयेष्टौ दधिश्टतयोरार्थिकप्रणीताकार्यापत्तिमात्रेण प्रणीताधर्माणामूहेन प्राप्तिस्तस्मादर्थकर्मत्वं पूर्वपक्षे गुणकर्मत्वं सिद्धान्ते चाप्रयोजकमिति वृथा तदर्थचिन्तान्तरकल्पनाक्लेशः । सूत्रार्थस्तु—अनुवषट्कारदेवतापि नोपलक्षणीया होत्रध्वर्य्वादिकर्तृवदिति ॥

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३८ ॥ स्थितादिति** । अनैन्द्रेष्वूहेन मन्त्र इतिस्थितादित्यर्थः । उत्तरमवशिष्टमित्यर्थः । ऊह इति द्वितीयपक्षनिराकरणेन प्रथमपक्षमेव द्रढयति—**नास्तीति** । कथंभावाकाङ्क्षया हि धर्मान्वयः । सा च यजेतेति यागरूपेण फले विधानात्तेन रूपेण सर्वप्रदानसाधारण्येव नतु प्रदानानां प्रत्येकमितिकर्तव्यताकाङ्क्षेति सर्वेषां समानविधानत्वान्नास्त्यूह इत्यर्थः । **ननु** मानग्रहणमन्त्रवशादैन्द्रप्रदानविषयः सोम इत्युक्तमत आह—**नहीति** । तदेव सोमेन यजेतेतिवाक्योत्पन्नकर्मैवेत्यर्थः । **मानेति** । अङ्गानुसारेण प्रधानसंकोचस्यायुक्तत्वात्सोमस्योत्पत्तौ श्रुतत्वेन पश्चाद्भाविमन्त्रापेक्षया प्रबलत्वाच्च न मानग्रहणमन्त्रबलात्सोमसंकोचः । यदाहवनीये जुहोतीत्यनारभ्यविधानेन सर्वहोमार्थतयाऽऽहवनीयस्य विधानादाहवनीयैकोपायकत्वात्क्रतूनां तेन विनानुष्ठानासंभवादाहवनीयाद्यग्निलक्षणाङ्गानुसारेण क्रतुविधीनामाहिताग्निर्विषयतया संकोचेऽपि प्रकृते मन्त्रस्य सर्वप्रदानसाधारण्येन वचनविनियुक्तत्वाभावादनैन्द्रप्रदानानामुपायान्तरेणापि स्मरणसंभवेन मन्त्रैकोपायकत्वाभावाच्च नेह मन्त्रबलात्संकोच इति भावः । सूत्रार्थस्तु—सोमस्य सर्वप्रदानगामित्वादनूहः । तत्र यदूहस्य लिङ्गमुक्तं षोडशिनी अनुष्टुप्छन्दस इति भक्षमन्त्रं नयतीति तदपि न । यतः षोडशिनस्तृतीयसवनत्वेन जगतीछन्दस इति प्राप्तौ तत्प्रतिषेधोऽयमनुष्टुप्छन्दस इति नत्विदमूहे लिङ्गमिति । **एवंस्थित इति** । पूर्ववदियमन्तराचिन्ताप्रसङ्गादेवेति भावः ॥

**ऐन्द्राग्ने तु लिङ्गाभावात्स्यात् ॥ ३९ ॥** चतुर्धाकरणन्यायेन गतार्थताशङ्कां परिहर्तुं तदर्थसंशयमाह—**तदर्थमिति** । देवताव्यापारस्योपलक्षणत्वे तस्य प्रत्येकपरिसमाप्त्या ऐन्द्राग्नेऽपि तेनोपलक्षणसंभवेन चतुर्धाकरणन्यायानवतारेण

तत्र पीतस्येति पानश्रवणात्तद्देवोपलक्षणं मिश्रोद्देशेनापि दत्तः सोमोऽशतः प्रत्येकमुभाभ्यां पीयते तेन पानेऽन्योन्यनिरपेक्षत्वाद्वाभ्यामपि पीत इन्द्रपीत इति शक्यं वक्तुं डित्थमातृवत्। 'तस्मान्मन्त्रवदेव स्यादैन्द्राग्नादिषु भक्षणम्॥ स्यादेवं यदि पानं स्यात्तत्तु नास्तीति वक्ष्यते॥' तेन देवताधिकरणन्यायेन पानाभावात्पिबतिरत्र दानमुपलक्षणार्थः। दानंच मिश्रविषयं नान्यतरेण व्यपदेष्टुं शक्यमिति चतुर्धाकरणवदैन्द्राग्नादिषु मन्त्राभावः॥

मन्त्रविशेषाणामनेकच्छन्दस्के विनियोगाधिकरणम्॥ १९॥

## छन्दश्च देवतावत्॥ ४१॥ [सर्वेषु वाऽभावादेकच्छन्दसः॥ ४२॥

ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः॥ छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः॥ ४४॥

तत्रैव मन्त्रे गायत्रच्छन्दस इति श्रूयते तत्र विचारः किं यत्र प्रदाने गायत्रमेव छन्दस्तत्र स्यादुत यत्र छन्दान्तरमपीति। पूर्ववत्केवलगायत्रच्छन्दोविषयत्वं मन्वानस्योत्तरं केवलगायत्रच्छन्दःप्रदानं न विद्यते। सर्वत्र बहुमन्त्रसमवायेन छन्दोन्तराणामवश्यंभावात्, अतः सापेक्षत्वेऽप्यत्र नित्यसापेक्षत्वात्समासोपपत्तिः। नचात्र सापेक्षत्वमपि सर्वमन्त्राणामन्योन्यनिरपेक्षाणामेव कर्मसंबन्धात्, अतः सत्यपि छन्दोऽन्तरे गायत्रच्छन्दसस्तदनपेक्षत्वात्पूर्वाधिकरणपूर्वपक्षवत्समासाविधानान्नानाछन्दस्कोऽपि भवति मन्त्रः॥

एकादशाधिकरणोक्तस्य उपसंहाराधिकरणम्॥ २०॥

## सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तपानत्वात्सवनाधिकारो हि॥ ४३॥

द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित्॥ नानाच्छन्दस्यैन्द्र एव कृत्वाचिन्तेयमीरिता॥ ४५॥
सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितम्॥ तेन सर्वप्रदानेषु मन्त्रपाठो यथास्थितः॥ ४६॥

स्थितादुत्तरं 'यदि तत्पुरुषोयं स्यात्स्यादनैन्द्रेष्वमन्त्रकम्॥ भक्षणं लक्षणादोषान्नायं तत्पुरुषो मतः॥' तत्पुरुषत्वे हि संबुद्ध्यन्तेन सोमशब्देन 'ते' इति प्रत्यक्षविषयेण युष्मच्छब्देन च निर्दिष्टस्य

---

पूर्वपक्षप्रवृत्त्या न गतार्थत्वमिति भावः। **तद्देवेति**। ननु दानमश्रुतत्वादित्यर्थः। **नन्वेवमिन्द्रपीतस्येति** समासेन नैरपेक्ष्यावगमादैन्द्राग्नादेश्चोभयपीतत्वेन केवलेन्द्रेण कथमुपलक्षणमित्यत आह—**मिश्रेति**। क्रियास्वाभाव्यात्पानक्रिया प्रत्येकं परिसमाप्तेति भावः। नच नावमिकदेवताधिकरणन्यायेन देवतायाः पानाभावादिदमयुक्तमिति वाच्यम्। देवताधिकरणस्य देवतायाः फलदातृत्वनिषेध एव तात्पर्येण हविःस्वीकारादिनिषेधे तात्पर्यं नास्तीति पूर्वपक्ष्यभिमानादिति भावः। **तेन देवतेति**। भाष्यादौ प्रपञ्चनाद्विग्रहादिपञ्चकनिषेधेऽपि देवताधिकरणस्य तात्पर्यमस्त्येव। अस्तुवा देवतायाः पानं तथापि हुतशिष्टस्य पीतत्वाभावात्पानं नोपलक्षणं किंतु हुताहुतसमुदायस्य देवतायै दत्तत्वाद्धुतशिष्टोपि दत्त इति वक्तुं शक्यत इति दानमेवोपलक्षणम्। तस्मादग्नेर्देवमुखत्वेन मुखे प्रक्षेपमात्रेण पिबतिर्दानलक्षणार्थ इत्यर्थः। **चतुर्धेति**। आग्नेयं चतुर्धाकरोतीति चतुर्धाकरणं यथैन्द्राग्नपुरोडाशादिषु नास्ति तद्वदित्यर्थः। सूत्रार्थस्तु—ऐन्द्राग्नेऽपि लिङ्गसद्भावान्मन्त्रः स्यादिति॥

**छन्दश्च देवतावत्॥ ४१॥** सङ्गतिं सूचयन्पूर्वपक्षमाह—**पूर्ववदिति**। यदि कोऽपि सोमयागः केवलगायत्रच्छन्दस्को न स्यात्तदा सोमयागव्यतिरिक्ते केवलगायत्रच्छन्दस्कमन्त्रके यस्मिन्कस्मिंश्चित्कर्मणि कथंचिद्विनियोगः कल्प्यतामिति पूर्वपक्ष्याशय इत्यभिप्रायेण मन्वानस्येत्युक्तं **सर्वत्रेति**। नच बृहस्पतिसवे गायत्रमेतदहर्भवतीति केवलगायत्रच्छन्दस्त्वमस्त्विति वाच्यम्। गायत्रमेतदहरिति वाक्यस्य प्रधानमात्रविषयतया तत्राभिप्रातरनुवाक्याद्यङ्गेषु छन्दोन्तरावश्यंभावात् भक्षानुवाकसमाख्यादिना सोमभक्षार्थस्य मन्त्रस्य सोमयागव्यतिरिक्तकर्मणि विनियोगस्त्वत्यन्तानुपपन्न इति भावः। **नित्येति**। गायत्रस्य केवलस्य छन्दसोऽन्यपदार्थसंबन्धित्वाभावेन नित्यं छन्दोन्तरसहितस्यैवान्यपदार्थसंबन्धितया नित्यसापेक्षत्वमिति भावः। **सर्वेति**। स्वस्वावान्तरकार्यसाधने मन्त्राणामन्यनिरपेक्षत्वात्तद्वारककर्मसंबन्धेऽपि नान्यापेक्षेति भावः। सूत्रार्थस्तु—देवतावच्छन्दोऽप्यन्यसाहित्येन स्यादिति॥

**सर्वेषां त्वैकमन्त्र्यम्०॥ ४३॥** अधिकरणस्य बह्वन्तराचिन्तामिश्रत्वातिसिद्धान्तस्य सुखप्रतिपत्त्यर्थं सिद्धान्तसूत्रमिह पठितम्। लक्षणादोषं विशदयति—**तत्पुरुषत्व इति**। तत्पुरुषत्वपक्षे वसुमद्गणस्य सोमदेवत इति संबुद्ध्यन्तेन षष्ठ्यन्त-

---

१ भक्तिपानत्वात्.

हुतशिष्टस्य पात्रस्थस्य सोमस्य भक्षणार्थमुद्धृतस्यैन्द्रपीतशब्द इन्द्राय दत्तस्येत्येवं विशेषणं स्यात् । नचासाविन्द्राय दत्तः । पूर्वसंकल्पितो हि हुताहुतसमुदायस्तस्मै दत्तस्तदवयवस्त्वयमुपचारादेवाभिधीयते । नचासौ युक्तः, तस्माद्बहुव्रीहिः । इन्द्रेण यस्मिन्सवने पीतः सोमस्तस्य प्रातःसवनस्य यः संबन्धीयः सोमस्तस्य भक्षयामीति । सर्वे च सोमा एवंविधसवनसंबन्धिन इति सर्वेषां यथाम्नातमन्त्रकं भक्षणम् ॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

---

## तृतीयाध्यायस्य तृतीयः पादः ।

उच्चैस्त्वादीनां वेदधर्मताधिकरणम् ॥ १ ॥

**श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥ [वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ धर्मोपदेशाच्च नहि द्रव्येण संबन्धः ॥ ४ ॥ त्रयीविद्याख्या च तद्विदि ॥ ५ ॥ व्यतिक्रमे यथाश्रुतीति चेत् ॥ ६ ॥ न सर्वस्मिन्निवेशात् ॥ ७ ॥ वेदसंयोगान्न प्रकरणेन बाध्येत ॥ ८ ॥]**

कर्तव्यमुच्चैः सामर्ग्भ्यामुपांशु यजुषेत्यमी ॥ मन्त्राणां वाथ वेदानां धर्मा मन्त्रगता यतः ॥ १ ॥
विध्युद्देशे मन्त्रवाचिशब्दाः प्रोक्ता ऋगादयः ॥ ऋग्वेदोऽग्नेः समुत्पन्न इत्युपक्रमवेदगीः ॥ २ ॥
असंजातविरोधातत्तद्वशादुपसंहृतेः ॥ नयने सति वाक्येन धर्माणां वेदगामिता ॥ ३ ॥

पूर्वयोः पादयोः श्रुतिलिङ्गविनियोगौ चिन्तितौ । इदानीं वाक्यविनियोगश्चिन्त्यते । 'प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद'इत्युपक्रम्य श्रूयते ज्योतिष्टोमे 'तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ने'ति । तत्र संशयः । किमुच्चैष्ट्वादय ऋगादिजातानां धर्माः मन्त्राणामित्यर्थः । ऋचा मन्त्रेणोच्चैरिति । किंवा वेदधर्माः ऋग्वेदेनोच्चैरिति । उपक्रमे वेदश्रवणादुपसंहारे चर्गादिश्रवणात्संदेहः । वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मनो ग्रन्थविशेषस्य वक्ता नैकस्य मन्त्रवाक्यस्य ब्राह्मणवाक्यस्य वा वाचकः । प्रयोगाभावात् । नह्येकं द्वे त्रीणि वाक्यान्यधीत्य 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रम'मित्येतच्छास्त्रार्थमनुष्ठितं मन्यन्ते ।

---

युष्मच्छब्देन च निर्दिष्टो यो भक्षणार्थमास्यसमीपं प्रत्युद्धृतो हुतशेषस्तस्यायं विशेषणं स्यादित्यर्थः । **नचासाविति** । ननु बहुव्रीहेरन्यपदार्थलक्षकत्वात्तत्रापि लक्षणादोषस्तुल्य इति वाच्यम् । अरुणाधिकरणवार्तिके बहुव्रीहेरन्यपदार्थशक्तिरेव नतु लक्षणेति व्यवस्थापितत्वादिति भावः । **तस्मादिति** । वृत्तिपदार्थप्रधानस्य तत्पुरुषस्यासंभवादन्यपदार्थप्रधानतया जघन्योऽपि बहुव्रीहिरेव स्वीकार्य इति भावः । सूत्रार्थस्तु—सर्वेषामैन्द्रानैन्द्रप्रदानानामेकमन्त्र्यमविकृतमन्त्रकत्वमिति यावत् । हि यस्मात्कारणात् पानस्य भाक्तत्वेनेन्द्रपीतशब्दस्य सोमविशेषणत्वासंभवात्सवनाधिकारः सवनविशेषणमिति । ऐतिशायनग्रहणं पूजार्थम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥** वाक्यप्रमाणस्य श्रुतिलिङ्गसापेक्षत्वादानन्तर्यमभिप्रेत्याह—**पूर्वयोरिति** । तेपानात् तप्तवत इत्यर्थः । **उच्चैरिति** । वार्तिके तु 'यद्वक्त उल्बणं क्रियते गार्हपत्यं परेत्यभूः स्वाहेति जुहुयाद्यदि यजुष्टो यदि सामत' इति चोदाहृतम् । यद्यपि जातशब्दो जातिवचनस्तथापि ऋक्त्वादेर्जातिरूपत्वाभावादिहोपाधिपरः सन् ऋक्त्वाद्याश्रयमन्त्रेषु पर्यवस्यतीत्याशयेन जातशब्दार्थमाह—**मन्त्राणामिति** । ऋचेति ऋङ्मन्त्रेण यत्क्रियते तदुच्चैस्त्वधर्मकेण तेन कर्तव्यमिति पर्यवसितोऽर्थः । **ऋग्वेदेनेति** । ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैस्त्वगुणकं कर्तव्यमित्युक्ते कर्मणः साक्षादुच्चैस्त्वानन्वयादृग्वेदविहितकर्माङ्गमन्त्रेषु उच्चैस्त्वं पर्यवस्यतीति भावः । **ननु** उच्चैर्ऋचा क्रियते इति मन्त्रवाचकऋगादिशब्दश्रवणेन मन्त्रधर्मत्वस्यैव निश्चयेन वेदधर्मत्वकोटेरनुन्मेषात्संदेह एवानुपपन्न इत्यत आह—**उपक्रम इति । ननु** वेदयतीति व्युत्पत्त्या वेदशब्दस्य ऋगादिमन्त्रमात्रेऽप्युपपत्तेरेवमपि संशयोऽनुपपन्न इत्याशङ्क्य प्रयोगबलान्मन्त्रब्राह्मणसमु-

---

१ स्तस्य सवनस. २ आनर्थक्यतदङ्गन्यायेन.

तस्मात्समुदायो वेदः। ननु वेदयतीति व्युत्पत्त्या एकैकमेव वाक्यं वेद इति मूर्खप्रलपितमेतदनुसर्तव्यम्। ऋगादिशब्दास्तु मन्त्रवचनाः स्थापितास्तेनोपक्रमोपसंहारयोर्विप्रतिपत्तेरेकवाक्यत्वाच्चोभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतो वेदशब्दो वेदैकदेशमन्त्रपरो भवतु किंवोपक्रमगतार्थवादवशादुपसंहारस्थमृगादिपदमृगादिप्रायवेदपरं भवत्विति संदेहः। तत्र 'गुणत्वादनुवादत्वादर्थवादस्य लक्षणा ॥ मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः ॥ विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति ॥ मुख्यापि दीक्षणीया हि लभते न स्वधर्मताम् ॥ जघन्यस्यापि सोमस्य प्रधानत्वात्स्वधर्मता ॥ वक्ष्यते तद्वदत्रापि विध्युद्देशस्य सा भवेत् ॥' प्रधानत्वादप्राप्तविषयत्वाच्च विध्युद्देशे यथाश्रुतादन्यथात्वमप्रामाणिकं, अर्थवादस्तु प्रमाणान्तरप्राप्तानुवादत्वात्तद्वशेन लक्षणयापि नीयमानो न दुष्यतीति जाताधिकारा उच्चैस्त्वादय इति प्राप्ते ब्रूमः—'लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद्भवेत् ॥ विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते ॥' 'य इष्ट्या पशुना सोमेन वा यजेते'ति वचनात्सोमस्यापि कालोऽलब्धात्मा युक्तं यद्दीक्षणीयाकालं बाधते, विध्युद्देशस्त्विह मन्त्रविषयत्वेनालब्धात्मा कथमिवार्थवादं बाधेत। तथाहि—वेदशब्द उपक्रमगतोऽसंजातप्रतिपक्षत्वाद्यथाश्रुतार्थपर एव तावदवधार्यते। तस्मिंश्चावधारिते सत्युपसंहारगतमृगादिपदमुपसंजातप्रतिपक्षविज्ञानत्वाद्यथाश्रुतार्थं सत्तदेकवाक्यतामप्रतिपद्यमानं तदनुगुणवेदपरतयैवात्मानं लभते नान्यथा येन बाधकं स्यात्, उपक्रमएव वेदानां किंचिद्विधास्यत इत्यवगतं किंतु तद्विधेयमित्येतावदज्ञाने

---

...ये वेदशब्दस्य रूढत्वादुपपन्नः संशय इत्याह—**वेदशब्द इति**। प्राभाकरास्तु वेदयतीति यौगिक एव वेदशब्दो ननु रूढस्ततश्चैकैकमेव वाक्यं वेदशब्दार्थ इत्याहुस्तदप्येतेन निरस्तमित्याह—**नन्विति**। ननु ऋग्भ्यो जातं वैश्यं वर्णमाहुरित्यादौ वेदे प्रयोगादृगादिशब्दानां वेदवचनत्वादेवमपि संशयोऽनुपपन्न इत्यत आह—**ऋगादीति**। ऋग्भ्यो जातमित्यादिप्रयोगश्च गौण इति भावः। सत्यपि विरोधे भिन्नविषयत्वे संशयाभावादाह—**एकवाक्यत्वादिति**। **ननु** 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति द्वादशाध्यायाधिकरणे मुख्यजघन्ययोर्धर्मविप्रतिषेधे सति मुख्यधर्मानुग्रहस्य वक्ष्यमाणत्वात्तन्न्यायेन प्रकृतेऽप्यर्थवादस्य मुख्यत्वात्स एवानुरोद्धव्य इति कथं पूर्वपक्ष इत्यत आह—**तत्रेति**। गुणत्वाद्विध्यपेक्षितस्तुतिसमर्पकत्वेन विधिशेषत्वादित्यर्थः। मुख्यस्यापीत्यस्यार्थवादपदेनान्वयः। **ननु** मुख्यप्रधानयोर्विप्रतिपत्तौ प्रधानानुरोधो न मुख्यानुरोध इत्यत्र किं नियामकमित्यत आह—**मुख्यापीति**। द्वादशे'अङ्गगुणविरोधे च तादर्थ्या'दित्यधिकरणे 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेते'त्यनेन वाक्येन दीक्षणीयासोमयागयोरुभयोरपि पर्वकालत्वे सत्येका[हा]दिदीक्षासु उभयोः पर्वकालत्वासंभवात् अन्यतरस्य तद्बाधावश्यंभावे मुख्याया अपि दीक्षणीयाया अङ्गतया तत्कालत्वबाधेन प्रधानस्य सोमयागस्य तत्कालतया वक्ष्यमाणत्वान्मुख्यापेक्षया प्रधानं प्रबलमिति भावः। **सेति**। स्वधर्मतेत्यर्थः। मुख्यवृत्तिरेवात्र स्वधर्म इति भावः। अक्ताः शर्करा इत्युपक्रमस्थस्यापि विध्युद्देशस्य तेजो वै घृतमित्यर्थवादानुसारेण नयने कैमुतिकन्यायेनैवात्रोपसंहारस्थस्य विध्युद्देशस्यार्थवादानुसारेण नयनसिद्धेर्व्यर्थमिदमधिकरणमिति न शङ्कनीयम्। तत्रार्थवादानुसारेण विध्युद्देशनयनेऽपि सामान्यशब्दस्य विशेषे पर्यवसानमात्रं नतु लक्षणा। इहत्वर्थवादानुसारेण विध्युद्देशनयने विध्युद्देशस्थऋगादिशब्दानां तत्प्रायवेदे लक्षणा स्यात्। साचायुक्ता। गुणस्य मुख्यार्थत्वाय प्रधानस्य लक्षणाया अयुक्तत्वात्। एवंच तत्र कांस्यभोजिन्यायाद्विध्युद्देशस्यार्थवादानुवर्तित्वेऽपि प्रकृते न तदनुवर्तित्वमिति वैषम्यं सूचयन् प्रथमश्लोकं व्याचष्टे—**प्रधानत्वादिति**। अन्यथात्वं लाक्षणिकत्वमित्यर्थः। सत्यं मुख्यादिप्रधानं बलीयस्तथापि प्रकृते प्रधानस्य लब्धात्मकत्वाभावान्न मुख्यबाधकत्वमित्याह—**लब्धात्मन इति**। ननु विध्युद्देशमात्रश्रवणे लब्धात्मकत्वमस्तीत्यत उपपादयति—**तथाहीति**। विध्युद्देशमात्रश्राविणो योऽर्थप्रत्ययो जायते नासावर्थवादस्य गौणार्थत्वापादकः विध्युद्देशमात्रश्रवणदशायामर्थवादस्फूर्तेरेवाभावेन तस्यार्थवादगौणतापादनाक्षमत्वात्। एवंचोभयोरेकवाक्यताप्रतिसंधानकाले यद्विध्युद्देशजन्यं ज्ञानं तदेवार्थवादस्यान्यथात्वापादकं वाच्यम्। नच तद्दशायां विध्युद्देशेन ऋगादिमन्त्रविषयज्ञानं जनयितुं शक्यम्। विध्युद्देशस्यार्थवादाननुगुणार्थकत्वे तदेकवाक्यत्वानिर्वाहात्। तस्माद्विध्युद्देशस्यास्त्यलब्धात्मकत्वं अर्थवादस्य तु प्राथमिकस्यासंजातविरोधित्वात्स्वार्थपरतयैव लब्धात्मकत्वमिति भावः। विध्युद्देशस्यार्थवादानुगुणार्थकत्वं विना लब्धात्मकत्वाभावोक्त्या 'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवे'दित्याचार्योक्तमपच्छेदन्यायवैषम्यमपि सूचितम्। यदुक्तमप्राप्तविषयत्वाद्विध्युद्देशस्य यथाश्रुतार्थत्वमेव न्याय्यमिति तत्राह—**उपक्रमएवेति**। **नन्वेवं** श्येनेना-

---

१ प्राप्तार्थत्वात्तद्वशेन. २ शब्दः प्रक्रमगतो.

नवगतमपेक्षितं च, अतो विध्युद्देशगतोपि ऋगादिशब्दोऽवगतविषयत्वादनुवाद इति लक्षणां सहते, तस्माद्वेदधर्मं ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैरिति तदिहोपक्रमोपसंहारैकवाक्यतया वेदधर्मत्वमवधारितमिति वाक्यविनियोगः । एकदेशिनां त्वेकैकमेव वाक्यं वेदशब्दवाच्यमित्यभ्युपगमादुपसंहारवशेन मन्त्रवाक्यपरोऽपि वेदशब्दो व्याख्यायमानः श्रुत्यर्थान्न च्यवत इति सिद्धान्तो दुर्लभः स्यात् । अत्र यदुच्यते विधेयतया न विधायकवद्वेदकत्वमिति । तदयुक्तम् । यद्यपि हि विनियोगापेक्षं मन्त्रवाक्यं न विधायकवदनपेक्षवेदकं तथापि तावद्वेदयति तावच्च वेदशब्दप्रवृत्तौ निमित्तमित्यविशेषः । यथा शुक्लमानयेति यत् स्वभावशुक्लमुदकं यच्च पाकापेक्षं पार्थिवं तत्रोभयत्राप्यविशेषेण शुक्लशब्दः प्रवर्तते तथा वेदशब्दोऽपि । नहि विधिवाक्यमपि निरपेक्षं वेदयति पदार्थव्युत्पत्तिन्यायविचारादिसापेक्षत्वात्, तस्मात्साधारणो वेदशब्दः कांस्यभोजिवदुपसंहारवशान्मन्त्रपरः स्यादित्यधिकरणविरोधः स्यादित्यास्तां तावत् ॥

आधाने गानस्योपांशुताधिकरणम् ॥ २ ॥

## गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥

यजुर्वेदस्थमाधानं तदङ्गं साम तत्र किम् ॥ उच्चैरुपांशु वा गानमुच्चैः शीघ्रप्रतीतितः ॥ ४ ॥

उत्पत्तेर्विनियोगोऽत्र प्रबलोऽनुसृतिर्यतः ॥ मुख्यस्याङ्गेन कर्तव्या तस्माद्गान उपांशुता ॥ ५ ॥

आधानस्यात्र मुख्यत्वं गानस्य गुणताथवा ॥ विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणतास्त्विह ॥ ६ ॥

याजुर्वैदिकमाधानं, तस्य सामवेदे वारवन्तीयं गायतीत्यङ्गविधिः । तत्र वारवन्तीयस्य किं सामवैदिकः स्वरः उत याजुर्वैदिक इति संदेहः, प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धनएव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते प्रधानधर्मत्वादुपां-

---

भिचरन्यजेतेति प्रथमश्रुतविध्युद्देशस्थश्येनशब्दस्य यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इति चरमश्रुतार्थवादवशेन कर्मनामत्वं न स्यादितिचेन्मैवम् । नहि तत्रार्थवादवशेन श्येनशब्दस्य कर्मनामत्वं किंतु मत्वर्थलक्षणादिदोषप्रसङ्गेन गुणविध्यसंभवात्सामानाधिकरण्याच्च कर्मनामत्वम् । अर्थवादेन तु प्रवृत्तिनिमित्तसमर्पणेन तन्निर्वाहमात्रं क्रियते नतु तावतार्थवादबलादेवोपक्रमस्थविध्युद्देशस्य प्रसिद्धार्थत्याग इति भावः । नन्वेवं वेदस्यानुष्ठाने मन्त्रवत्करणत्वाभावात्क्रियत इत्यनुपपत्तिरित्यत आह—**विधीयत इति** । क्रियत इत्यस्यानुष्ठाप्यत्वमर्थ इत्याशयः । **ननु** मन्त्राणां मुख्यसामर्थ्यमेव विनियोजकं नतु गौणसामर्थ्यमितिवदिह कस्यचिदर्थस्यानिरूपणात्कथमयं वाक्यविनियोगविचार इत्यत आह—**तदिहेति** । एवंच वाक्येन वेदधर्मत्वे उच्चैस्त्वादीनां तत्तद्वेदविहितसर्वकर्मार्थत्वेन प्रकरणे निवेशासंभवाज्ज्योतिष्टोमप्रकरणबाधोऽपि न्यायप्राप्तत्वान्न दोष इति भावः । प्राभाकराणामेतदधिकरणसिद्धान्तो न सिद्ध्येदित्याह—**एकदेशिनामिति** । उपक्रमस्थवेदशब्दस्य लक्षणाप्रसङ्गेन हि सिद्धान्तो वर्णनीयो नच तत्पक्षे लक्षणाप्रसङ्ग इति भावः । ननु यद्यपि प्रत्येकमेव वाक्यं वेदशब्दार्थस्तथापि प्रकृते ऋगादिमन्त्रो न वेदशब्देन प्रतिपादयितुं शक्यते । मन्त्रस्य विधेयतया विध्यधीनं वेदकत्वं नतु विधायकवाक्यवदनपेक्षं । ततश्चानपेक्षं वेदकत्वं यस्य तस्यैव वेदयतीति व्युत्पत्त्या वेदशब्देन शीघ्रं प्रतीतेस्तस्यैव ग्रहणौचित्यान्मन्त्रपरत्वे लक्षणा स्यादेवेति तदीयैः सिद्धान्तसिद्धिरुपपादितेत्यत आह—**यदिति । तावदिति** । मन्त्रस्य वित्तिकरणत्वस्य विधिसापेक्षत्वेऽपि व्युत्पन्नस्य शब्दार्थावगतौ विशेषाभावात्सापेक्षानपेक्षत्वमकिंचित्करमित्यर्थः । **नन्वे**वमपि वेदशब्दस्य ब्राह्मणवाक्यसाधारणस्योपक्रमस्थतया प्रबलस्य मन्त्रमात्रविषयत्वाभावात्सिद्धान्तः सेत्स्यतीत्यत आह—**तस्मादिति** । किंच तन्मते व्यक्तिवचनानां संनिहितव्यक्तिवचनत्वाङ्गीकाराद्दगादिशब्दसंनिहितमन्त्ररूपव्यक्तिपरत्वमेव यौगिकस्य वेदशब्दस्य स्यादित्याशयेनाह—**आस्तामिति** । प्रयोजनं पूर्वपक्षे यजुर्वेदविहिते कर्माङ्गे ऋङ्मन्त्र उच्चैस्त्वं सिद्धान्ते तूपांशुत्वमित्यादि । सूत्रार्थस्तु—ऋगादिशब्दश्रुतेरुच्चैस्त्वादिजाताधिकार ऋक्त्वादिसामान्यविषयः स्यादिति ॥

**गुणमुख्यव्यतिक्रमे०** ॥ ९ ॥ **सामवेद इति** । नचैवमाधानप्रकरणे आधानाभावाद्वारवन्तीयस्य विधानाङ्गत्वमेव न स्यादिति वाच्यम् । प्रकरणे विध्यभावेऽपि सामवेदएव यजुर्वेदविहिताधानोद्देशेन वारवन्तीयविधौ सत्यङ्गत्वोपपत्तेरित्याहुः । **प्रधानेति** । प्रधानवेदनिबन्धनो हि स्वरः प्रधानवाक्यस्याङ्गविधायकत्वे सति भवति, तस्य प्रधानमात्रविधायकत्वे अङ्गस्य तद्वेदविहितत्वनिबन्धनप्रधानवेदस्वरस्याप्रसक्तेः । अङ्गवाक्यैकवाक्यतानिबन्धनं च प्रधानवाक्यस्याङ्गविधायकत्वम् ।

शुत्वमेव बलीयः। साङ्गं ह्याधानं विधिना विधीयते अतस्तादृशस्यैव याजुर्वैदिकत्वादुपांशुत्वं धर्मः। नचाङ्गेष्वक्रियमाणं तत्साङ्गस्य कृतं भवति तेनाङ्गस्योऽप्यसौ प्रधानधर्म इति विलम्बितप्रतीतिरपि बलीयान्। इतरथा प्रधानस्यैव वैगुण्यापत्तेः। अतोऽङ्गधर्ममुच्चैस्त्वं बाधित्वा प्रधानधर्मे उपांशुत्वं स्यादिति सिद्धान्तितम्। एवं 'त्वङ्गगुणविरोधे च तादर्थ्या'दित्यनेन गतप्रायं स्यात्। नचोदाहरणमपि युक्तम्। वारवन्तीयं गायतीत्यस्याङ्गविधेरपि याजुर्वैदिकत्वादित्यन्यथा व्याख्यातम्। यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिः वेदान्तरे च विनियोगविधिस्तस्य किमुत्पत्तिवेदनिबन्धनः स्वरोऽथवा विनियोगवेदनिबन्धन इति संशयः। तत्र—'उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि ॥ स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः ॥' नैतदेवम्—'न खल्वाम्नानमात्रेण मन्त्रस्य स्यात्प्रयोज्यता ॥ तेन क्रियत इत्येवमतो वक्तुं न शक्यते ॥ तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते ॥ विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः ॥' प्रयोज्यतयावधारितस्य मन्त्रस्य स्वरापेक्षा भवति न स्वरूपावगतिमात्रेण, तस्माद्वारवन्तीयादेः सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैस्त्वं, यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ॥

---

एवंच प्रधानवेदस्वरो विलम्बेनाङ्गमास्कन्दति अङ्गवेदस्वरस्तु निरपेक्षत्वात्प्रथमत एव प्रवर्तत इति सएव ग्राह्य इत्यर्थः। एवंच पूर्ववदिहापि प्रथमोपस्थितत्वादङ्गवेदस्वर एव ग्राह्य इति प्रत्यवस्थानात्सङ्गतिर्बोध्या। नच विलम्बितोपस्थितिकस्यापि प्रधानधर्मत्वात्प्रबलत्वमिति युक्तम्। प्रधानैकवाक्यतालभ्यस्यापि स्वरस्याङ्ग एवानुष्ठेयतया तस्याप्यङ्गधर्मत्वेन प्रधानधर्मत्वाभावादिति भावः। विलम्बितोपस्थितिकस्यापि यथापच्छेदस्थले परस्य प्राबल्यं तद्वदिह प्रधानवेदस्वरस्य विलम्बितस्यापि प्राबल्यं संभवतीत्याशयेनाह—**प्रधानधर्मत्वादिति**। ननु प्रधानवेदस्वरोऽङ्गेषु तद्वेदविहितत्वं विना न संभवति एवंचाङ्गानामपि तद्वेदविहितत्वाविशेषादङ्गधर्मएव सस्वरः किं न स्यादित्यत आह—**साङ्गमिति**। सत्यम्, यजुर्वेदविहितत्वादेवाङ्गेषूपांशुत्वप्राप्तिस्तथापि यजुर्वेदे वारवन्तीयविध्यभावात्प्रधानविधेरेव तद्विधायकत्वमाश्रित्य वारवन्तीयस्य यजुर्वेदविहितत्वं वाच्यम्। तथासति प्रधानधर्म एवायं नाङ्गधर्मः। यदि हि प्रधानविधिरङ्गमपि स्वातन्त्र्येण विदध्यात्तदा प्रधानवदेवाङ्गस्यापि स्वातन्त्र्येण तद्वेदविहितत्वादङ्गधर्मोऽपि स्वरः स्वातन्त्र्येण स्यान्नत्वेवं किंतु प्रधानविधिः साङ्गप्रधानं विधत्ते। साङ्गप्रधानविधिप्रयुक्तश्च स्वरः प्रधानस्यैव साङ्गस्य धर्मो न पृथगङ्गानां प्रधानविशेषणभावमापन्नानां साक्षाद्विध्यभावेन स्वतः स्वरान्वयानर्हत्वात्। एवंचाङ्गेषु तत्स्वरानुष्ठाने सत्येव साङ्गस्य प्रधानस्य स स्वरोऽङ्गं संपद्यते नान्यथेत्येवं प्रधानस्यैवाङ्गसाहित्यविशेषेण स्वरसंपत्त्यर्थमङ्गेष्वपि तत्स्वरानुष्ठानमात्रं नतु तावतायमङ्गधर्मस्तस्मात् प्रधानधर्मत्वात्तद्बाधे प्रधानवैगुण्यापत्तिः। यद्यपि सामवेदस्वरस्योच्चैस्त्वस्याप्यङ्गद्वारा प्रधानोपकारकत्वात्तद्बाधेऽपि प्रधानवैगुण्यमस्त्येव तथापि प्रधानवेदस्वरस्योपांशुत्वस्य बाधे साक्षात्प्रधानवैगुण्यं अङ्गवेदस्वरस्योच्चैस्त्वस्य बाधे तु परंपरयेति वैषम्यमित्युपांशुत्वं बलीय इत्यर्थः। याजुर्वैदिकदर्शपूर्णमासज्योतिष्टोमाद्यङ्गेषु याज्यापुरोनुवाक्यास्तोत्रशस्त्रादिषु वाचनिको मन्द्रमध्यमादिस्वर एव भवति नतूपांशुत्वमिति न तत्रातिप्रसङ्गशङ्कावकाश इति भावः। **सिद्धान्तितमिति**। भाष्यकारेणेति शेषः। इदमाचार्यैर्दूषयित्वाऽन्यथाधिकरणं वर्णितमित्याह—**एवमिति**। उत्पत्तिशब्दस्योत्पत्तिविधिपरत्वे उत्पत्तिविधिना कर्तव्यतयाऽवगतस्य क्रियत इति निर्देश्यत्वस्वरापेक्षयोः संभवेन तत्र वक्ष्यमाणसिद्धान्तोऽनुपपन्नः स्यादिति मन्यमान उत्पत्तिशब्दार्थमाह—**समाम्नानमिति**। ततश्च पाठमात्रमुत्पत्तिशब्दार्थो नतूत्पत्तिविधिरिति नोक्तदोष इति भावः। **पूर्वभावित्वादिति**। अपरिज्ञातस्वरूपस्य विनियोक्तुमशक्यत्वेन स्वरूपज्ञानस्य प्राथमिकत्वात्तद्वेदनिबन्धनस्वरः प्रथमभावीत्यर्थः। **नखल्विति**। आम्नानात्कर्तव्यतानवगमाद्यस्मिन्वेदे मन्त्रस्याम्नानमात्रं स मन्त्रस्तेन वेदेन क्रियत इति व्यपदेष्टुं न शक्य इति न तद्वेदस्वरप्रसक्तिरित्यर्थः। **तत्र चेति**। तद्दशायां च संनिहितत्वाद्विनियोगवेदस्वर एव ग्राह्य इति भावः। तत्र चापेक्षितः स्वर इत्यनेन व्यतिरेकमुखेन सूचितमाम्नानस्वरस्याग्राह्यत्वे हेत्वन्तरं विशदयति—**प्रयोज्यतयेति**। आम्नानमात्रेण स्वराकाङ्क्षाविरहादेव तत्स्वरप्राथम्यमप्यसिद्धमिति भावः। आचार्यमते वेदान्तरे विधेरनपेक्षितत्वात्सामवेदे विध्यभावेऽपि वारवन्तीयस्याम्नानमात्रेणोदाहरणत्वं संभवतीत्याशयेनाह—**तस्मादिति**। सूत्रार्थस्तु—गुणप्रधानयोर्व्यतिक्रमे धर्मविरोधे गुणस्य मुख्यार्थत्वान्मुख्येन निमित्तेन वेदसंयोगो वेदसंयुक्तः स्वरः स्यादिति। आचार्यमते तु गुणमुख्यशब्दयोरुत्पत्तिविनियोगविधिश्चार्थः ॥

---

१ प्रधानार्थो धर्म इति. २ सिध्यति.

ज्योतिष्टोमस्य याजुर्वैदिकाधिकरणम् ॥ ३ ॥

## भूयस्त्वेनोभयश्रुति ॥ १० ॥

**ज्योतिष्टोमो यजुःसामवेदयोरस्ति तत्र किम् ॥ उच्चैस्त्वमुत नीचैस्त्वं हेत्वभावादनिर्णयः ॥ ७ ॥**
**यजुष्यधिगते द्रव्यदेवते तत्र तद्विधिः ॥ तद्वशात्स्वरनिर्णीतेरुपांशु स्यादनुष्ठितिः ॥ ८ ॥**

यजुर्वेदे सामवेदे च ज्योतिष्टोमः समाम्नातस्तस्य कैतरवेदस्वरः स्यादिति विचारः । यत्र विधीयते तदीय एव स्वरो न यत्र गुणार्थं श्रवणं, अतः कास्य विधिरित्यनियमे प्राप्तेऽभिधीयते । यजुर्वेदे द्रव्यदेवतमस्य श्रूयते, तेन व्यवच्छिन्नं कर्मस्वरूपं गम्यमानं सुखेन विधीयते । वेदान्तरे तु नामयुक्तं क्रियामात्रं श्रूयत इति न विध्यवगतिः समाप्यते, अतो यजुर्वेदेनासौ क्रियत इत्युपांशुधर्मता ॥

प्रकरणस्य विनियोजकताधिकरणम् ॥ ४ ॥

## असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ ११ ॥

**न क्रत्वङ्गं प्रयाजादि क्रत्वङ्गं वा न चाङ्गता ॥ प्रक्रियाया अमानत्वान्नैराकाङ्क्ष्येण वाक्ययोः ॥ ९ ॥**
**प्रयाजादेः फलेऽपेक्षा कथंभावेऽपि च क्रतोः ॥ तेन प्रकरणाम्नानं तस्मादङ्गाङ्गिता तयोः ॥ १० ॥**

श्रुतिलिङ्गवाक्यैरुक्तो विनियोगः, अधुनाधिकरणत्रयेण प्रकरणस्थानसमाख्याभिर्विनियोगोऽभिधीयते । दर्शपूर्णमासयोः श्रूयते 'समिधो यजति', 'तनूनपातं यजती'त्यादि तद्दर्शपूर्णमासाङ्गं नवेति विचारः । यदि प्रकरणं नाम प्रमाणं भवेत्ततोऽङ्गमितरथा नाङ्गमिति । तत्र प्रकरणगताज्ञानसंदेहविपर्ययाणामन्यतमेन पूर्वः पक्षः । यावद्ध्येतन्न कथ्यते तावदज्ञानं भवति । सदपि चावसरा-

**भूयस्त्वेनोभयश्रुति ॥ १० ॥** यत्र विधिस्तद्धर्मत्व उक्ते तत्प्रसङ्गाज्ज्योतिष्टोमस्य क्व विधिरिति विचारणात्सङ्गतिः । **सामवेदेचेति ।** यद्यपि ऋग्वेदेऽपि समाम्नातस्तथापि ऋग्वेदसामवेदयोः स्वरभेदाभावादृग्वेदः पृथङ्नोक्तः, अनेनैवाभिप्रायेण सूत्रे उभयश्रुतीत्येवोक्तम् । **यत्रेति ।** किं ज्योतिष्टोमे याजुर्वेदः स्वर उतवा सामवेदः स्वर इत्यनियमः उत याजुर्वैदिक एवेति संशयस्तदर्थं च किमस्य कदाचित्कुत्रचिद्वेदे विधानं उत यजुर्वेदे एवेति । यत्र च विधिस्तद्वेदस्वरो भवति न यत्र गुणार्थं श्रवणं । ततश्चैकत्र विधावितरत्र श्रवणस्य गुणार्थत्वाद्वेदद्वयेऽप्यनियमेन विधाने स्वरद्वयस्याप्यनियमः यजुर्वेदएव विधाने तदीयस्वर एवेति फलफलिभावः । अत्रैव वेदे विधिर्नान्यत्रेति नियन्तुमशक्यत्वादनियमेन विधेयत्वात्स्वरस्याप्यनियम इति पूर्वपक्ष इत्यर्थः प्रतीयते । नत्वयं युक्तः, संतर्दनाधिकरणे नहि विधेर्विकल्पः वस्तुनि विकल्पासंभवादिति ग्रन्थकारेण वक्ष्यमाणत्वेन विधिविकल्पमादाय संशयपूर्वपक्षयोः प्रवर्तयितुमयुक्तत्वात्तस्मादन्यथा व्याख्यायते । किं ज्योतिष्टोमः सामवेदस्वरेण यजुर्वेदस्वरेण वानुष्ठेय इति अनियमः उत यजुर्वेदस्वरेणैवेति संशयस्तदर्थं च किं वेदद्वयेऽप्यस्य विधानं उत यजुर्वेद एवेति । यदि वेदद्वयेऽपि विधानं तदा स्वरद्वयस्यापि प्राप्तेरनुष्ठानदशायां येनकेनचित्स्वरेणानुष्ठानमित्यनियमः । यदिच यजुर्वेदएव विधानं तदा वेदान्तरे तच्छ्रवणस्य गुणार्थत्वाद्यजुर्वेदस्वर एवेति फलफलिभावः । तत्र शाखान्तरन्यायेन वेदद्वयेऽपि विधिसंभवादनुष्ठाने स्वरद्वयस्यानियम इति पूर्वः पक्ष इत्यर्थः । नच यजुर्वेदेऽङ्गभूयस्त्वात्तत्रैव विधिरिति शङ्क्यम् । गुणानां हीतिकर्तव्यतात्वेन प्रधानानुमापकत्वम् । नचानुमापकभूयस्त्वमनुमितावुपयुज्यते । स्थूलसूक्ष्मधूमयोर्वह्न्यनुमापकत्वे विशेषाभावादिति भावः । **यजुर्वेद इति ।** यत्र विधेयस्य कर्मणः पुष्कलस्वरूपप्रतीतिः संभवति तत्र तद्विधिर्भवति इतरव्यावृत्तकर्मस्वरूपानवगमे तस्य विध्यनुपपत्तेः । द्रव्यदेवतं च यागस्य स्वरूपं, तच्च यजुर्वेदे समस्ति सोमद्रव्यस्येन्द्रवाय्वादिदेवतानां च तत्र श्रवणात्तस्मात्तत्रैव कर्मविधिर्नतु सामवेदे । तत्र नामयुक्तक्रियामात्रश्रवणेन तत्र विधेयकर्मविशेषस्वरूपस्यानवगमेन विधिप्रतीतेरपर्यवसानात् किंतु तत्र स्तोत्रादिविधानार्थानुवादमात्रमिति न तत्स्वर इत्यर्थः । सूत्रार्थस्तु—वेदद्वयश्रुतं कर्म रूपभूयस्त्वेन विधेयतयाऽवगन्तव्यमिति ॥

**असंयुक्तं प्रकरणात्० ॥ ११ ॥** पूर्वपूर्वसापेक्षत्वादुत्तरोत्तरस्यानन्तर्यमित्याशयेनाह—**श्रुतीति । यदीति ।** अनेन प्रकरणसदसद्भावगोचरस्तदर्थसंशयः सूचितः । अज्ञानादित्रयमेवोपपादयति—**यावदित्यादिना ।** प्रकरणव्युत्पादनाभावे तत्स्वरूपस्याज्ञानं भवति । अज्ञाताच्च तस्मान्न विनियोगसंभवः प्रकरणस्याज्ञाने ततः श्रुतिपर्यन्तकल्पनया विनियोगासंभवादिति भावः । **सदपि चेति ।** किमवसराभावान्नोक्तमुतासत्वादिति संदेह इत्यर्थः । **अथवेति ।** अयमेव

१ कतरः स्वरः. २ संशयः. ३ यावदन्यन्न.

भावान्नोक्तं स्यादिति संदेहः। अथवा नैवाक्षरश्रवणसामर्थ्यानुसरणपदान्तरसमभिव्याहारात्मकेभ्यः श्रुतिलिङ्गवाक्येभ्योऽन्यः शब्दप्रमाणप्रकारोऽस्ति। तस्मान्न प्रकरणं प्रमाणमिति विपर्ययः। तथाहि स्वर्गकामस्य दर्शपूर्णमासौ कर्तव्याविति निरपेक्षं समाप्तवाक्यं तथा समिधो यजतीत्याद्यपि। नन्विदं फलाभावात्साकाङ्क्षम्। सत्यं साकाङ्क्षं, सात्वाकाङ्क्षा स स्वर्गः स्यादिति वा फलमात्रे यो निर्देशादिति वा दर्शपूर्णमासफलानुषङ्गेण वा निवर्तते न क्रत्वङ्गत्वं क्रतोरनाकाङ्क्षत्वादिति प्राप्ते ब्रूमः। क्रतोरप्यस्ति कथमितीतिकर्तव्यताकाङ्क्षा, तथा प्रयाजादेः प्रयोजनाकाङ्क्षेत्युभयोः साकाङ्क्षयोः संनिहितयोरप्रत्यक्षमप्येकवाक्यत्वं फलान्तरकल्पनाल्लघीयः तथोभयोर्निराकाङ्क्षत्वं। फलान्तरकल्पनेत्वितिकर्तव्यताकाङ्क्षा क्रतोरनिवृत्तैव स्यात्, अस्ति चासावाकाङ्क्षा। यदि हि यागं कुर्यादिति वाक्यार्थः स्याद्यागक्रियाया निर्ज्ञातप्रकारत्वात्स्यान्निराकाङ्क्षत्वम्। यागेन स्वर्गं कुर्यादिति तु वाक्यार्थः। तत्र न ज्ञायते केन प्रकारेण यागेन स्वर्गः कर्तव्य इति, तेनास्ति प्रकाराकाङ्क्षा। ननु यागानुष्ठानमेव प्रकारः अनुष्ठितो ह्यसौ फलं साधयति किमत्र न ज्ञायते। यदि मतं न यागः फलं साधयत्यननुगृहीतः सर्वसाधनानामनुग्रहापेक्षत्वदर्शनाच्चक्षुरादीनामालोकानुग्रहवदतः किमस्यानुग्राहकमित्यनुग्रहापेक्षायां प्रयाजविधिरिति। तदयुक्तम्। अननुगृहीतस्यापि केवलस्य कर्मणः संयोगविभागारम्भकत्वदर्शनात्। कश्चायमनुग्रहो नाम। सामर्थ्योद्बोध इतिचेत् कोऽयमुद्बोधो नाम। कार्यारम्भाभिमुख्यमितिचेत् नैवम्। समर्थमेव कर्म प्रागनुष्ठानादलब्धात्मकत्वात्कार्यारम्भानभिमुखं, अनुष्ठानात्तु लब्धात्मकत्वाद्भवत्येव कार्याभिमुखं किमत्रान्यापेक्षया। सहायापेक्षणमनुग्रहापेक्षणमितिचेन्न। असहायेनापि कर्मणा संयोगविभागोत्पत्तिदर्शनात्। अपिचाग्नेयादीनि परस्परं सहाया भवन्तु किमन्यदपेक्षन्ते, तस्माद्वक्तव्यमेतत् केयमितिकर्तव्यतापेक्षानामेति। तदभिधीयते प्रकाराकाङ्क्षेयम्।

---

मुख्यः पूर्वपक्ष इति ज्ञेयम्। **अक्षरेति**। अक्षरश्रवणमात्रेत्यर्थस्तेन वाक्येनातिप्रसङ्गः। स्वर्गकामो यजेतेत्यादिवाक्यस्थले साध्यसाधनभावबोधकाक्षराभावेनाक्षरश्रवणमात्रात्तत्र विनियोगबुद्ध्यसंभवात्। **तथाहीति**। यदि यागेन स्वर्गं कुर्यादिति वाक्यार्थस्तदा स्वर्गस्यालौकिकत्वात् कथं कुर्यादितीतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं स्यान्नत्वेवं किंतु यागं कुर्यादिति वाक्यार्थः। यागस्य च लौकिकक्रियात्मकस्य निर्ज्ञातप्रकारत्वान्न तत्र कथंभावाकाङ्क्षेत्यर्थः। **समिध इति**। ततश्च तदाकाङ्क्षाबलाद्दर्शपूर्णमासस्याकाङ्क्षोत्थाप्यतामित्यपि न शङ्कनीयमिति भावः। दर्शपूर्णमासवाक्य इव समिधो यजतीत्यत्रापि समियागं कुर्यादित्येवार्थस्तत्र च न फलापेक्षा, धात्वर्थस्य भाव्यत्वपक्षे क्वापि स्वर्गादिफलाकाङ्क्षाया वक्तुमशक्यत्वात्तथाप्यभ्युपगमवादेन परिहरति—**सत्यमिति**। विश्वजिन्न्यायात्स्वर्गफलकल्पनया वा रात्रिसत्रन्यायाद्यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञस्य क्रियते वर्म यजमानायेत्यार्थवादिकफलकल्पनया वा दर्शपूर्णमासवाक्यगतस्वर्गकामपदानुषङ्गेण वा फलाकाङ्क्षाशान्त्या दर्शपूर्णमासवाक्यस्याकाङ्क्षोत्थापनमयुक्तमित्यर्थः। वस्तुतस्तु धात्वर्थभाव्यतायाः स्वर्गकामाधिकरणे निराकरिष्यमाणत्वान्न तत्र पूर्वपक्षतात्पर्यं किंतु यागेन कुर्यादिति वाक्यार्थेऽपि यागानुष्ठानस्यैव प्रकारतया तस्य निर्ज्ञातत्वान्नास्त्यपेक्षेत्यत्रैव तात्पर्यं बोध्यम्। **अप्रत्यक्षमिति**। येन कर्मणेर्त्सेत्तत्र जयान् जुहुयादितिवद्यच्छब्दाद्युपबन्धाभावेनाख्यातद्वयैकवाक्यत्वस्य स्वरसतोऽनवगमादिति भावः। लघीयस्त्वमेवोपपादयति—**तथेति**। तथासतीत्यर्थः। **यागेनेति**। स्वर्गकामाधिकरणन्यायादिति भावः। **न ज्ञायत इति**। यागक्रियावल्लोकतोऽनवगतत्वादिति भावः। **नन्वेवमपि** न प्रकाराकाङ्क्षा संभवति प्रकारस्य निश्चितत्वादिति शङ्कते—**नन्विति**। **ननु** प्रकारोऽनुग्रहः स चानिश्चित इति शङ्कते—**यदि मतमिति**। सति कर्मण्यनुग्रहविलम्बेन संयोगविभागानुत्पत्त्यदर्शनान्न सर्वत्रानुग्रहापेक्षेति परिहरति—**तदयुक्तमिति**। अनुग्रहस्वरूपे पर्यालोच्यमानेऽपि न प्रयाजाद्यपेक्षा सिद्ध्यतीत्याह—**कश्चेति**। यथा कुठारादावुत्पन्ने पश्चात्तैक्ष्ण्यादिना कार्याभिमुख्यं संपाद्यते एवमिहोत्पन्ने यागे पश्चात्कार्याभिमुख्यं न संपाद्यते। उत्पत्तिदशायां कार्यारम्भाभिमुखस्यैवोत्पत्तेः। एवंचेहोत्पत्तेः प्रागेव परं कार्यारम्भानभिमुखत्वं नतूत्पत्त्यनन्तरमिति प्रकृते कार्यारम्भाभिमुख्यमुद्बोधश्चेत्तद्धेतुर्व्यापारोऽनुष्ठानमेव नातिरिक्तापेक्षेति परिहरति—**नैवमिति**। **सहायेति**। ततश्च नानुष्ठानमेव प्रकार इति भावः। **ननु** संयुज्यमानादिस्तत्रापि सहायोऽस्तीत्यस्वरसादाह—**अपिचेति**। सहायशब्दस्य सहकार्यर्थकत्वात्प्रयाजादीनां सहायत्वाभ्युपगमे आग्नेयादिषट्कवत्तेषामपि प्राधान्यमेव स्यान्नाङ्गत्वमित्यपि दूषणमनेन सूचितम्। **प्रकारेति**। यद्यपि तेनास्ति प्रकाराकाङ्क्षेति पूर्वमुक्तत्वादितिकर्तव्यताकाङ्क्षा प्रकाराकाङ्क्षेत्यवगतमेव तथापि इतिकर्तव्यताशब्दस्यावयवव्युत्प-

---

१ छितोत्पत्तौ. २ मुखमिति कात्रान्यापेक्षा.

इतिशब्दः प्रकारवचनः। कर्तव्यताप्रकारः क्रियाप्रकार इति यावत्। सामान्यस्य च भेदको विशेषः प्रकार इति तद्विदः। किंपुनरिह सामान्यात्मनावगतं विशेषरूपमपेक्षते क्रियाभावनेति यावत्। यागेन स्वर्गं कुर्यादित्यस्यायमर्थः। यथा व्यापृते यागात्स्वर्गो भवति तथा यागंप्रति व्याप्रियेतेति तत्र न ज्ञायते कोसौ व्यापारविशेषो येन यागात्स्वर्गो भवतीति। सेयं जिज्ञासेतिकर्तव्यताकाङ्क्षेत्युच्यते। **ननु** यागानुष्ठानमेवासौ व्यापारः किमत्र न ज्ञायते यथाक्रियानुष्ठानमेव संयोगविभागसंपादनं तन्न नहि मृत्पिण्डसंपादनमेव घटसंपादनमतो नायमेकान्ततः स्वरूपसंपादनमेव कार्यसंपादनमिति। नन्वत्र यागानुष्ठानमेवशब्देनोच्यते। मैवम्। नह्येवंशब्दोऽस्ति यागानुष्ठानमेव व्यापार इति। **ननु** यजेतेति यागविषयैव कृतिः शब्देनोच्यते किमिदं विषयत्वं, साध्यत्वमितिचेन्न। स्वर्गो ह्यत्र साध्यतया संबध्यते न यागः। नह्येवं संभवति स्वर्गं कुर्याद्यागमिति, अथ यागविषयया कृत्या स्वर्गं कुर्यादिति। स्यादेवं यदि प्रत्ययेन कृतिद्वयमुपात्तं स्यात् कुर्यादित्येतावत्तु प्रत्ययार्थः। कृत्या साधयेदिति कृत्यन्तरारोपेण व्याख्यातॄणामर्थकथनमात्रं, कुर्या-

---

त्तिप्रदर्शनाय पुनरुपक्षेपः कृतः। **कर्तव्यतेति।** कर्तव्यस्य भावो हि कर्तव्यता। सच विविच्यमानः कर्तव्यशब्दप्रकृतिभूतकृञ्धात्वर्थः पर्यवस्यति। कृञ्धात्वर्थश्च क्रिया। तस्मात्कर्तव्यताशब्दः क्रियावचन इति भावः। नन्वेवंसत्येवंप्रकारा क्रिया इतिकर्तव्यताशब्दार्थः स्यान्नतु क्रियाप्रकार इत्यत आह—**क्रियाप्रकार इति।** मयूरव्यंसकादेराकृतिगणत्वादितिकर्तव्यताशब्दः पूर्वपदार्थरूपप्रकारप्रधान इति भावः। प्रयाजादेः प्रकारत्वं संभावयितुं प्रकारस्वरूपमाह—**सामान्यस्येति।** भेदकः व्यावर्तको यो विशेषः स प्रकार इत्यर्थः। यागस्य धातुना यागत्वेन विशेषरूपेणैवावगतत्वात्पृच्छति—**किंपुनरिति। ननु** क्रियापि यागएवेत्यत आह—**भावनेति।** धात्वर्थो न क्रियेति भावाधिकरणे व्युत्पादितमिति भावः। **ननु** यागेन स्वर्गं भावयेदिति यागकरणकत्वेन स्वर्गभाव्यकत्वेन च विशेषरूपेणैवावगतत्वान्न भावनाया विशेषरूपापेक्षेत्यत आह—**यागेनेति।** भावनानाम भवितुर्भवनानुकूलप्रयोजकव्यापारः। तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावनेत्युच्यते। करणत्वंच फलोद्देशप्रवृत्तकर्तृव्यापारगोचरत्वम्। ततश्च यागकरणकस्वर्गकर्मकभावनां विदधतो यागेन स्वर्गं कुर्यादित्यस्य यागात्स्वर्गो यथा भवति तथा यागे व्याप्रियेतेत्यर्थः पर्यवस्यति। एवंच स व्यापारः यागगोचरत्वेन स्वर्गोत्पत्त्यनुकूलत्वेनावगतोऽपीदृशोऽयमसौ व्यापार इत्येवंविशिष्यानवगतस्तेन कोसौ व्यापार इत्यस्ति व्यापारविशेषापेक्षेत्यर्थः। अयमसौ व्यापार इति विशेषानवगमोऽसिद्ध इति शङ्कते—**नन्विति। नहीति।** ततश्च तत्र चक्रभ्रम्यादिवदिह स्वरूपसंपादनातिरिक्तव्यापारापेक्षा संभवतीति भावः। **ननु** लोके क्वचित्स्वरूपसंपादनमेव व्यापारः क्वचिद्व्यतिरिक्तो व्यापार इत्येवं दृष्टानुसाराद्द्वैविध्यसंभवेऽपि प्रकृते यागस्वरूपसंपादनंविना यागात्स्वर्गासिद्ध्या तत्र यागेन स्वर्गं कुर्यादिति वाक्यस्य तात्पर्यावश्यंभावे ततएव प्रकाराकाङ्क्षाशान्तेर्नातिरिक्तापेक्षास्तीति शङ्कते—**नन्वत्रेति।** स्वरूपसंपादने शब्दस्य तात्पर्यात्तस्यावश्यकत्वमात्रं सिध्यति नतु तन्मात्रेण कोसौ व्यापार इत्याकाङ्क्षा शाम्यतीति स्वरूपसंपादनमेवात्र व्यापार इत्येवंरूपशब्दाभावेन व्यापारगोचराकाङ्क्षायास्ततो निवृत्त्यसंभवादिति परिहरति—**मैवमिति।** ननु स्वर्गकामो यजेतेति वाक्यस्य स्वर्गकामस्य यागविषयकं कार्यमित्यर्थः। यागस्य च कार्ये विषयत्वं कार्यविशेषणीभूतकृतिविषयत्वमेव। ततश्च यागविषयैव कृतिः शब्दार्थो नतु यागकरणिका स्वर्गकृतिरत उक्तरीत्याऽऽकाङ्क्षोपपादनमयुक्तमिति प्राभाकरः शङ्कते—**नन्विति।** यागस्य कृतौ विषयत्वमेष दुर्निरूपमतो न यागविषयकं कार्यं लिङाद्यर्थः किंतु यागकरणिका स्वर्गादिकृतिरित्याशयेन विषयत्वं दूषयति—**किमिति।** नन्वपूर्वस्य स्वतःकृतिसाध्यत्वासंभवाद्यागद्वारा कृतिसाध्यत्वं वाच्यम्, एवंच कृतितत्साध्यमध्यस्थो यागादिः विषयो मत इति कृतिसाध्यात्मके कार्ये कृतिसाध्यताघटकत्वमेव विषयत्वमिति पक्षावलम्बनेन यागस्य कृतिसाध्यत्वमेव कृतिविषयत्वमिति शङ्कते—**साध्यत्वमिति। स्वर्ग इति** स्वरीत्योक्तं। तद्रीत्या तु स्वर्गपदमपूर्वपरं बोध्यम्। उभयथापि न यागस्य साध्यत्वं, साध्यद्वयपरत्वे वाक्यभेदप्रसङ्गादिति भावः। ननु स्वतन्त्रसाध्यभेदो हि वाक्यभेदावहः यागस्यापूर्वसाध्यतानुगुणत्वान्न वाक्यभेद इत्याशयेन शङ्कते—**अथेति। कृतिद्वयमिति।** यद्यपि तन्मते कृतिद्वयं नाङ्गीकृतं किंतु एकयैव कृत्या यागद्वाराऽपूर्वं साध्यत इत्येवाङ्गीकृतं ततश्च यागविषयकृत्याऽपूर्वं कुर्यादिति तदीयव्यवहारोऽपि व्याख्यातृव्यवहारवदेवोपपादयितुं शक्यत इतीदं दूषणं तन्मते अलग्नकं तथापि लिङादेः कार्ये धर्मिणि शक्तिर्नाङ्गीकर्तव्या किंतु कार्यविशेषणीभूतायां कृतावेव भावनापरपर्यायायां शक्तिः स्वीकर्तव्या लाघवात्, तस्यां च कृतौ कर्मत्वेन स्वर्गस्यैवान्वयो नत्वपूर्वस्य यागस्य वाऽपुरुषार्थत्वादिति स्वमतप्रक्रियामवतारयितुमिदमुक्तम्। अतएवाह—**कुर्या-**

दित्यस्मिंश्च स्वर्गस्य साध्यत्वाच्च यागस्य साध्यत्वम् । अथ विशेषणत्वं विषयत्वम् । सत्यम् । विशेषणमेव यागः केन संबन्धेनेति निरूपयामः । न तावन्नीलोत्पलादिवत्ताद्रूप्येण, यागभावनयोर्भेदादतः कारकत्वेन सोमादिवद्यागस्य क्रियाविशेषणत्वं, तत्र च साध्यत्वाभावात्साधनतयैव[1] संबन्धः तेन यागकरणिका स्वर्गकृतिरेव शब्दार्थः नतु यागानुष्ठानम् । एवंच नाम्ना सामानाधिकरण्यं संभवति नान्यथा, अतः किंरूपेयं कृतिरित्यस्त्यपेक्षा । तत्र तदाकाङ्क्षानुवृत्तौ समिधो यजतीति वचनादेवं ज्ञायते अयमसौ व्यापारो येन यागात्स्वर्गो भवतीति । संभवति च समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारं, अवघातादीनां तु दृष्टद्वारं, अननुष्ठितश्च यागोऽसत्वान्न फलं साधयितुं क्षम इत्यर्थाद्यागानुष्ठानं गम्यते न शब्दात् । तेनायं वाक्यार्थः । यागेन स्वर्गं[2] कुर्यात् कथं केन व्यापारेण[3] यागात्स्वर्गो भवतीति तत्राह समिधो यजति व्रीहीनवहन्तीत्यादि । तदयमर्थो भवति । समिदादिभिरदृष्टद्वारं[4] अवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारं, द्रव्यदेवतेन च स्वरूपसंपादनेन यागे व्याप्रियेत एवंभूतोऽसौ व्यापारः येन यागात्स्वर्गो भवति यागः फलारम्भाभिमुखो भवति कार्यारम्भाभिमुख्यकरणमेवोपकार इति समिदादेः क्रतूपकारः फलम् । नन्वेवं समिदादिभिरदृष्टं कुर्यादित्यत्रापि क्रियाविशेषापरिज्ञानादाकाङ्क्षा स्यात्, कस्यचैतदनिष्टं । अतएवावान्तरप्रकरणमिष्यते । नन्वेवं सौमिकधर्मातिदेशः स्यात् भवन्मते वा पितृयज्ञस्य साधिकारस्य किमिति सौमिकधर्मातिदेशो न भवति, वाचनिककालबाधप्रसङ्गादितिचेत् इहापि समानम् । अपिच सत्य-

---

**दित्यस्मिंश्चेति** । इदानीं कार्यघटकत्वं न विषयत्वं किंतु कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वमित्यवच्छेदकत्वपक्षावलम्बनेन यागस्य कृतौ विशेषणत्वमेव विषयत्वमिति शङ्कते—**अथेति** । **केनेति** । विशेषणत्वं व्यावर्तकत्वं तच्च व्यावर्त्यसंबद्धस्यैव भवति नत्वसंबद्धस्यान्यथातिप्रसङ्गादिति भावः । ताद्रूप्येण तादात्म्येनेत्यर्थः । एवंच यागस्य कृतौ विशेषणत्वस्वीकारे सिद्धमस्मदभिलषितमित्याह—**अत इति** । **साध्यत्वेति** । प्रागुक्तरीत्या साध्यत्वासंभवादिति भावः । **ननु** यथा कारकत्वेन विशेषणत्वमेवं विषयत्वेनैव विशेषणत्वं किं न स्यादित्याशङ्क्य सर्वथा विषयत्वेनान्वयो न संभवतीति तथात्वे दर्शपूर्णमासाभ्यामिति करणविभक्तिसमभिव्याहृतनामसामानाधिकरण्यानुपपत्तेरित्याशयेनाह—**एवंचेति** । यद्वा ननु यजेतेति यागविषयैव कृतिः शब्देनोच्यत इति ग्रन्थः । **ननु** स्वर्गकामाधिकरणरीत्या यागेन स्वर्गं कुर्यादिति वाक्यार्थो भवतु तथापि स्वर्गस्य साक्षात्कृतिसाध्यत्वाभावाद्यागगोचरकृत्यैव साधनीयत्वाद्यागानुष्ठानमेव शब्दार्थ इति शङ्कातत्परिहारार्थत्वेन स्वमन्तरीत्या योजनीयः । एवंच प्रत्ययेन कृतिद्वयानुपादानादित्यादिग्रन्थोऽपि सामञ्जस्येनोपपद्यत इति ध्येयम् । एवमाकाङ्क्षामुपपाद्य समिदादिभिस्तत्पूरणमुपपादयति—**तदाकाङ्क्षेति** । ननु यागविषयकव्यापारगोचराकाङ्क्षायाः कथं समिदादिभिः पूरणं तेषां तद्विषयत्वाभावादित्यत आह—**संभवतिचेति** । अनुष्ठानस्याशाब्दत्वात्स्वातन्त्र्येण प्रकाराकाङ्क्षापूरणसामर्थ्याभावात्तन्मात्रस्य प्रकारत्वाभावेऽपि तस्यापि प्रकारकोटावन्तर्भावमात्रमस्तीत्याशयेनाह—**अननुष्ठित इति** । प्रधानवाक्यस्याकाङ्क्षां समिदादिवाक्यस्य तत्पूरकत्वं चाभिनीय दर्शयति—**तेनेति** । कथमित्यस्य विवरणं **केनेति** । समिदादिवाक्यैर्व्यापारविशेषावगममभिनयति—**तदयमिति** । **द्रव्येति** । द्रव्यदेवतेन यत्स्वरूपसंपादनं तेनेत्यर्थः । अस्त्वेवं प्रधानवाक्यस्य प्रकाराकाङ्क्षाशान्तिस्तथापि प्रयाजादीनां कथं फलाकाङ्क्षाशान्तिरित्याशङ्क्य क्रतूपकारेण फलाकाङ्क्षाशान्तिरिति वक्तुं व्यापारविशेषान्वयं क्रतूपकारकत्वेनान्वये पर्यवसाययति—**याग इति** । अवहननादीनामप्याकाङ्क्षापूरकत्वेन तेषामपि समिदादिवत्प्रकरणविनियोज्यत्वमस्ति नतु श्रुत्यादिमात्रविनियोज्यत्वं, श्रुत्यादेर्व्रीह्यादिसंबन्धमात्रावगमेन क्रत्वपूर्वसंबन्धावगमस्य प्रकरणाधीनत्वादिति सूचितम् । प्राभाकरः शङ्कते—**नन्विति** । **अतएवेति** । प्रयाजादीनामाकाङ्क्षासद्भावादेवाङ्गाकाङ्क्षालक्षणमवान्तरप्रकरणमस्माभिरिष्यत इत्यर्थः । **ननु** यदि प्रयाजादीनामपीतिकर्तव्यताकाङ्क्षा तर्हि समिधो यजतीत्युत्पत्तौ देवताविरहादव्यक्तत्वेनाव्यक्तासु तु सोमस्येति न्यायेन प्रयाजादिषु सौमिकधर्मातिदेशः स्यादिति शङ्कते—**नन्वेवमिति** । **साधिकारस्येति** । विश्वजिन्न्यायेन तस्य स्वर्गफलकत्वादिति भावः । **नन्वमावास्यायामपराह्ण** इति वाचनिककाले दीक्षोपसदादेः कर्तुमशक्यत्वात्सौमिकधर्मातिदेशो तस्य बाधः स्यान्नच प्रधानमात्रे तत्कालोपपत्तिरितिवाच्यम्, एकादशे वक्ष्यमाणन्यायेन कालस्याङ्गप्रधानसाधारण्यादिति शङ्कते—**वाचनिकेति** । **इहापीति** । अमावास्यादिकालस्याप्यङ्गप्रधानसाधारण्यादिति भावः । **ननु** यत्र न वाचनिककालविरोधस्तदीयाङ्गे सौमिकधर्मातिदेशः स्यादित्यस्वरसादाह—**अपिचेति** । यत्र वाचनिकैरङ्गैराकाङ्क्षा न शाम्यति तत्रैव चोदनालिङ्गादतिदेश इह तु वाचनिकैरेव नैराकाङ्क्ष्या-

---

१ साधनेनैव संबन्धः. २ फलं कुर्यात्. ३ प्रकारेण. ४ समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारं.

त्याकाङ्क्षावाचनिकेन जौहवाज्यादिद्रव्येण तत्संस्कारैर्मान्त्रवर्णिक्या च देवतया वेदिबर्हिरग्नीध्रादि-भिस्तत्संस्कारैश्चाङ्गप्रधानसाधारणै'रभिक्रामंजुहोति' 'समानत्र होतव्या' इत्यादिभिश्च वाचनिकैरङ्गै-र्निर्वर्तेत इति न सौमिकधर्मातिदेशाद्याशङ्कनीयम् । सर्वे ह्यग्न्यन्वाधानादयः संनिपातिनोऽङ्गप्रधान-साधारणाः तेनोपांशुयाजवत्प्रयाजादयोऽपि कृत्स्नविधानाः । नच कृत्स्नविधानेष्वतिदेशोऽस्ति संनि-पत्योपकारकसामग्री तु कृत्स्नविधानतेत्यष्टमे वक्ष्यते । अतएव हि पितृयज्ञस्यापूर्वत्वं । अन्यथा सा-धिकारत्वाद्दुर्वारः सोमधर्मातिदेशः स्यात् । तस्मादस्तीतिकर्तव्यताकाङ्क्षा । तदनुवृत्तिश्च प्रकरणम् । 'अतः प्रधानवाक्यस्य प्रकाराकाङ्क्षतावशात् ॥ फलाकाङ्क्षं प्रयाजादि तदङ्गत्वं प्रपद्यते ॥'

क्रमस्य विनियोजकत्वाधिकरणम् ॥ ५ ॥

## क्रमश्च देशसामान्यात् ॥ १२ ॥

दब्धिर्नामेति मन्त्रोऽङ्गमुपांशुयजतेर्न वा ॥ साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता ॥ ११ ॥
मन्त्राणां कर्मणां चात्र क्रमेणाम्नानमीक्ष्यते ॥ प्रक्रियावत्क्रमो मानं यथासंख्यं ततोऽङ्गता ॥ १२ ॥
क्रमः समानदेशत्वं पाठादर्थाच्च पाठतः ॥ यथासंख्यं संनिधिश्च यथासंख्यमुदाहृतम् ॥ १३ ॥
शुन्धध्वमिति सांनाय्यपात्राङ्गं संनिधेर्मतम् ॥ पशुधर्मोऽर्थसादेश्यादग्नीषोमीयगो भवेत् ॥ १४ ॥

दर्शपूर्णमासयोरुपांशुयाजक्रमे दब्धिर्नामासीति[2] मन्त्रः पठ्यते । स किमुपांशुयाजाङ्गमुत नेति[3] संदेहे श्रुतिवाक्ययोरभावाल्लिङ्गप्रकरणयोश्चाग्नेयादिष्वविशेषादुपांशुयाजस्य विशेषाभावात्क्रमस्य चा-प्रमाणत्वादनङ्गमिति प्राप्ते[4] क्रमादुपांशुयाजस्येत्युच्यते । स्थानसामान्यात्कर्मणां मन्त्राणां च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रः समाम्नातस्तस्मिन्नवगते स्थानसामान्यात्तत्कर्मोपतिष्ठते कर्मोपलब्धावपि मन्त्रः तयोरेवं समानस्थानाम्नानं तन्नूनं संबन्धार्थमित्येवमाकाङ्क्षा[5] परिकल्प्यते तेनै-

---

मान्यकत्वरूपचोदनालिङ्गात्सौमिकधर्मातिदेश इत्यर्थः । **वाचनिकेनेति** । यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यादिवचनवि-हितेनेत्यर्थः । **मान्त्रवर्णिक्येति** । समिधोऽग्न आज्यस्येत्यादिमन्त्रवर्णप्राप्तयेत्यर्थः । **वेदीति** । वेद्यादेस्तद्धर्माणां चाङ्ग-प्रधानसाधारण्यस्यात्रैवाध्याये वक्ष्यमाणत्वादिति भावः । समानत्र समाने प्रदेश इत्यर्थः । सौमिकधर्मातिदेशादीत्यादिशब्देन समिदादीनां मिथोऽङ्गाङ्गिभावादिसंग्रहः । नन्वेतावद्भिराकाङ्क्षापूरणमित्यत्र नियामकाभावात्कथमुक्तैरेवाकाङ्क्षापूर्तिरित्यत आह —**सर्वे इति** । **उपांशुयाजेति** । अन्यथा तस्याप्युत्पत्तौ स्वार्थतया विनियुक्तदेवताविरहेण तत्रापि सौमिकधर्मातिदेशः स्यादिति भावः । **अष्टम इति** । प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यादित्यधिकरण इति शेषः । अतएव संनिपातिपौष्कल्या-देवेत्यर्थः । **अन्यथेति** । तत्रापीति शेषः । सिद्धान्तमुपसंहरति—**तस्मादिति** । तमेव श्लोकेन संगृह्णाति—**अत इति** । सूत्रार्थस्तु—श्रुत्याद्यसंयुक्तमपि प्रकरणाद्विनियोज्यं प्रधानस्येतिकर्तव्यताकाङ्क्षित्वात्प्रकरणसद्भावादिति ॥

**क्रमश्च देशसामान्यात्** ॥ १२ ॥ **दर्शेति** । दर्शपूर्णमासयोः प्रधानानि येन क्रमेणाम्नातानि तेनैव क्रमेणाग्नेरहं देवयज्ययान्नादो भूयासमित्याद्यनुमन्त्रणमन्त्रा अप्याम्नातास्तत्रोपांशुयाजक्रमे दब्धिर्नामासीति मन्त्र आम्नात इत्यर्थः । **स इति** । सोऽयं मन्त्रः किमुपांशुयाजस्याङ्गमुत सर्वेषामिति संदेह इत्यर्थः । **लिङ्गेति** । दब्धिशब्दस्य घातकार्थतया लिङ्गस्य क्वचिद्विशेषकत्वाभावात्सर्वसाधारण्यमिति भावः । **क्रमस्येति** । क्वचित्पठितव्यस्य मन्त्रस्य तत्र पाठ इत्येतावन्मात्रेण क्रमस्योपपत्त्या न तस्य विनियोगप्रमाणत्वमिति भावः । यत्र क्वापि पठितव्यस्य तत्र पाठ इत्युक्ते क्रमपाठस्यादृष्टार्थत्वापत्तेः क्रमस्य विनियोजकत्वमेव वक्तव्यमित्याशयेन सिद्धान्तमाह—**क्रमादिति** । क्रमस्य विनियोगसामर्थ्यमुपपादयति—**स्थानेति** । द्वितीयस्थाने पठितस्य दब्धिमन्त्रस्य स्थानसाम्येन द्वितीयस्थानपठितोपांशुयाजोपस्थापकत्वात्तस्यापि स्थान-साम्येन मन्त्रोपस्थापकत्वाच्च स्थानसाम्यादुपस्थितयोरुपांशुयाजमन्त्रयोः परस्परमाकाङ्क्षादिबलेनाङ्गाङ्गिभावसंभवात्तयोः क्रमेण समाम्नानं आकाङ्क्षालक्षणं प्रकरणं तद्द्वारा वाक्यलिङ्गश्रुतीश्च कल्पयित्वाङ्गत्वं बोधयितुं शक्नोतीति भवति क्रमो विनियोगे प्रमाणमित्यर्थः । **नच** क्रमापेक्षया प्रकरणलिङ्गयोर्बलवत्त्वात्ताभ्यां सर्वार्थतैव स्यादिति वाच्यम् । आग्नेयादीनामग्नेरहमि-त्याद्यनन्यथासिद्धमन्त्रान्तरावरोधेन लिङ्गप्रकरणाभ्यां सर्वार्थत्वासंभवेन क्रमादुपांशुयाजमात्रार्थत्वादिति भावः । **ननु** क्रमा-द्विनियोगो लिङ्गक्रमसमाख्यानादिस्वत्रैवोक्त इत्याशङ्क्यात्रैव क्रमप्रमाणव्युत्पादनमत्रत्यस्य तु क्रमस्य तत्र लिङ्गविनियोगेऽपेक्षित-त्वप्रतिपादनमात्रमित्याशयेनान्यत्रापीमं न्यायमतिदिशति—**एवमिति** । सूत्रे क्रमदेशसामान्ययोर्भिन्नविभक्तिनिर्देशाद्भि-

१ प्रसङ्ग इतिचेत्. २ दविर्नामासीति. ३ जाङ्गं नवेति संशयः. ४ प्राप्ते उच्यते. ५ मित्येवमाकाङ्क्षा.

कवाक्यता परिकल्प्यते, एवं काम्येष्टीनां याज्यानुवाक्यानां च क्रम इति च देशसामान्यमुच्यते। सच द्विविधः पाठसादेश्यमनुष्ठानसादेश्यं च । पाठसादेश्यमपि द्विविधं यथासंख्याम्नानं संनिध्याम्नानं च । यथासंख्यस्य दर्शितमुदाहरणं, संनिधिसमाम्नानस्यापि सान्नाय्यपात्रशुन्धनक्रमाच्छुन्धध्वमिति मन्त्रस्य तदङ्गत्वं, अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वं वक्ष्यते ॥

समाख्याया विनियोजकताधिकरणम् ॥ ६ ॥

## आख्या चैवं तदर्थत्वात् ॥ १३ ॥

**वेदत्रयोक्तधर्माणामृत्विग्भिः संगतिस्त्रिभिः ॥ अनियत्या नियत्या वा नियतिर्नानिरूपणात् ॥ १५ ॥**

**हौत्रत्वादिसमाख्यानं नियतेर्गमकं स्वतः ॥ निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम् ॥ १६ ॥**

दर्शपूर्णमासादिष्वाध्वर्यवहौत्रौद्गात्रादिसमाख्याताः पदार्थाः किमध्वर्य्वादिभिरेव कर्तव्या उतानियमेनेति श्रुत्यादिभिर्नियमाभावात्समाख्यायाश्च पदार्थमात्रविषयत्वेनाविधायकत्वेनाप्रमाणत्वादनियम इति प्राप्त उच्यते । अनादिस्तावदपौरुषेयी समाख्या । तेनाध्वर्यवादिशब्दाः पदार्थानां वाचका इति तावत्प्रमाणं, संबन्धनिमित्ता च समाख्या नासति संबन्धेऽवकल्प्यत इत्यस्ति नूनं कर्तॄणां पदार्थानां च कश्चित्संबन्ध इति निश्चिते ततः कर्तॄणां कार्यापेक्षत्वात्पदार्थानां च कर्त्रपेक्षत्वात्समा-

---

ऩार्थत्वभ्रमं वारयितुं क्रमसामान्यलक्षणमाह—**क्रम इति** । क्रमश्च विनियोगे प्रमाणं देशसामान्यरूपात्तस्मादाकाङ्क्षादिक्रमेण विनियोगसंभवादिति सूत्रार्थ इति भिन्नविभक्तिनिर्देशेऽपि नार्थभेद इति भावः । प्रसङ्गाद्विभजते—**सचेति** । पाठसादेश्यं पाठतः समानदेशत्वमित्यर्थः । **संनिधिसमाम्नानस्यापीति** । उदाहरणमुच्यत इति शेषः । **सान्नाय्येति** । नच सान्नाय्यपात्रशुन्धनाम्नानसंनिधौ शुन्धध्वमितिमन्त्रस्यानाम्नातत्वात्कथं मन्त्रस्य संनिध्याम्नानलक्षणः क्रम इति वाच्यम् । शुन्धनविधिसंनिध्याम्नानाभावेऽपि मातरिश्वनो धर्मोसीदित्याद्युत्तरमन्त्राणां कुम्भीपवित्रादिसान्नाय्यपात्रप्रकाशकत्वात्तत्संनिधौ चाम्नातस्य शुन्धध्वमिति मन्त्रस्य शुन्धनीयपात्रप्रकाशकस्यापि संनिधानात्सान्नाय्यपात्रशुन्धन एव विनियोगो नतु प्राकरणिकसर्वपात्रशुन्धन इत्येवमिह संनिधिसमाम्नानादङ्गत्वसंभवादिति भावः । शाखान्तराभिप्रायेण वेदं बोध्यम् । **अनुष्ठानेति** । यस्मिन्दिने अग्नीषोमीयपशुरनुष्ठीयते तस्मिन्दिने आम्नानात्पशुधर्माणामग्नीषोमीयार्थत्वमिति तुल्यः सर्वेषां पशुविधिरित्यधिकरणे वक्ष्यत इत्यर्थः ॥

**आख्या चैवं तदर्थत्वात्** ॥ १३ ॥ **दर्शेति** । दर्शपूर्णमासज्योतिष्टोमादिषु आध्वर्यवसमाख्याताः शाखाच्छेदनादयो दीक्षणीयादयश्च, हौत्रसमाख्याताः पुरोनुवाक्यानुवचनादयः शस्त्रादयश्च, औद्गात्रसमाख्याताः स्तोत्रादयश्चेत्यर्थः । **ननु** श्रुत्याद्यभावेऽपि समाख्ययैव नियमोस्तु अध्वर्योरिदमाध्वर्यवमिति समाख्यया तत्संबन्धप्रतीतौ सत्यां तस्या विनियोगकत्वोपपत्तेरित्यत आह—**समाख्याया इति** । समाख्याया यौगिकत्वात्सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयत इत्यङ्गीकारेण पदार्थमात्रविषयतया संबन्धस्यैवाप्रतिपादनाद्दूरापेतं विनियोजकत्वमित्यर्थः । संबन्धप्रतीतिमभ्युपगम्याप्याह—**अविधायकत्वेनेति** । अध्वर्योः पदार्थानां च संबन्धमात्रप्रतीतावपि अध्वर्युणाऽमी पदार्थाः कर्तव्या इत्येवंविध्यभावेन समाख्यामात्रान्न कर्तृनियमसिद्धिः । किंच सतिसंबन्धे समाख्याप्रवृत्तिः समाख्यायां च संबन्ध इति परस्पराश्रयप्रसङ्ग इति भावः । परस्पराश्रयं दूषयति—**अनादिरिति** । यदि सादिरियं समाख्या स्यात्तदा प्रथमतः संबन्धं ज्ञात्वा समाख्या प्रवर्तयितव्या, तत्प्रवर्तकस्य च पुरुषस्य संबन्धबोधने प्रमाणान्तराभावात्समाख्यैव तत्र प्रमाणमिति परस्पराश्रयः स्यादियंत्वाध्वर्यवादिसमाख्या अनादिः संकेतयितुरस्मरणात् वेदेऽपि प्रयुज्यमानत्वाच्च । तेन गवादिशब्दानां संकेतग्रह इवात्रापि न परस्पराश्रयप्रसक्तिरिति भावः । यदुक्तं पदार्थमात्रविषयत्वं नतु संबन्धविषयत्वमिति तन्निरस्यति—**संबन्धेति** । सत्यं यौगिकैर्द्रव्यमभिधीयते तथापि यौगिकशब्दैः संबन्धविशिष्टत्वेनैव द्रव्याभिधानं न स्वरूपेण, अस्तुवा स्वरूपेण द्रव्याभिधानं तथापि अध्वर्युहोत्रादिभिः संबन्धंविना पदार्थानामाध्वर्यवादिसमाख्यैव न संभवत्यतिप्रसङ्गात्तस्मादनभिहितोऽपि संबन्धो निमित्तेन स्वीकर्तव्य इति संबन्धनिमित्तत्वात्समाख्यायास्तया संबन्धानुमानं संभवतीत्यर्थः । तथापि कथं क्रियाकर्तृभावलक्षणविशेषसिद्धिरित्यत आह—**तत इति** । आध्वर्य्वादीनां विहितानां प्रयोजनापेक्षादशायां समाख्यावगतसंबन्धेन पदार्थोपस्थितेः तथा पदार्थानां कर्त्रपेक्षादशायां तेनैव संबन्धेनाध्वर्य्वाद्युपस्थितेः परस्परं संबन्धयोग्यत्वाच्च क्रियाकर्तृभावलक्षणसंबन्धविशेषसिद्धिरित्यर्थः । यद्यप्याध्वर्यवादिशब्देषु 'गुणवचनब्राह्मणादिभ्यः कर्मणिचे'त्यनुवर्तमाने 'प्राणिभृज्जातिवयोवचनोद्गात्रादिभ्योऽञि'त्यनेन विहितादञ्प्रत्ययबलादध्वर्योः कर्माध्वर्यवमित्येवं क्रियाकर्तृभाव एव समाख्यया लभ्य-

---

१ मपि द्वेधा. २ सान्नाय्यापात्र.

ख्यया मिथःपर्युपस्थापितानां योग्यतया क्रियाकर्तृसंबन्धमेव प्रयोगविधिर्विधत्त इति सिद्धः समाख्याया नियमः ॥

श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वाधिकरणम् ॥ ७ ॥

**श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥**

ऐन्द्र्योपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् ॥ समुच्चयो वोत शक्र एवाग्निः केवलोऽथवा ॥ १७ ॥
विकल्पः श्रुतिलिङ्गाभ्यां गुणावृत्त्या समुच्चयः ॥ श्रुतिः शक्त्यनुसारेति शक्र एकोऽत्र लिङ्गतः ॥ १८ ॥
शक्तिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् ॥ नैराकाङ्क्ष्यात्मके बोधे श्रुत्याग्नौ केवले स्थितिः ॥ १९ ॥
स्योनं त इति पूर्वार्धं तस्मिन्सीदेति चोत्तरम् ॥ सदने सादने चायं सर्वो वार्धे व्यवस्थिते ॥ २० ॥
तच्छब्दादेकवाक्यत्वे भवेद्बाधः श्रुतिं प्रति ॥ लिङ्गस्य संनिकृष्टत्वाद्वाक्यबाधे व्यवस्थितिः ॥ २१ ॥
उदाहृतिरियं वाक्यबाधे न त्वैन्द्रियेत्यसौ ॥ बाधादूर्ध्वं निरर्थत्वादप्रामाण्यप्रसङ्गतः ॥ २२ ॥
अग्नीषोमाविदं हव्यमजुषेतामितीरितात् ॥ अपच्छिद्येदमित्यादिः सर्वशेषो भवेन्न वा ॥ २३ ॥
प्रक्रियातो भवेन्नैवं प्रक्रियान्तरिता त्रिभिः ॥ वाक्यं द्व्यन्तरितं तेन भवेत्प्रकरणाद्बलि ॥ २४ ॥
राजसूयेऽभिषेच्याख्ययागे ये देवनादयः ॥ तच्छेषास्तेऽखिलार्था वा तच्छेषास्तस्य संनिधेः ॥ २५ ॥
राजसूयकथंभावानुवृत्तेः सर्वशेषता ॥ कल्प्याकाङ्क्षाभिषेच्यस्य प्रक्रिया प्रबला ततः ॥ २६ ॥
शुन्धध्वमिति मन्त्रोऽङ्गं पौरोडाशिकशोधने ॥ सांनाय्यपात्रशुद्धौ वा प्रथमोस्तु समाख्यया ॥ २७ ॥
पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा ॥ संनिध्यनुक्तितः कल्प्यः क्लृप्तत्वाच्चरमः क्रमात् ॥ २८ ॥
बाधो न युक्तो युक्तो वा प्राह्यप्राह्योर्न युज्यते ॥ अप्रवृत्तं प्रसक्तं यद्धिया तस्यास्तु बाध्यता ॥ २९ ॥
प्रमाणतः प्रसक्तस्य बाधो दाशमिकोऽत्र तु ॥ विभ्रमेण प्रसक्तस्य तस्मादप्राप्तबाधनम् ॥ ३० ॥

इदानीं श्रुत्यादीनामेकविषयसमवायेन विरोधे सति बलाबलं विचार्यते । प्रथमं तावच्छ्रुतिलिङ्गयोश्चिन्त्यते । एवं श्रूयते 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति । तत्र संशयः किमिन्द्रस्यैवोपस्थानं कर्तव्यमुतेन्द्रस्य वा गार्हपत्यस्य वा अथवा समुच्चयोऽथवा गार्हपत्यस्यैवेति । यदि लिङ्गं बलीयस्तत इन्द्रोपस्थानं, अथ तुल्यबलत्वं ततो विकल्पः । अथ तुल्यबलत्वेऽप्यविरोधः, ततः समुच्चयः । श्रुतिबली-

---

यितुं शक्यते तथापि होतृचमसादिसमाख्यानां संबन्धसामान्यप्रत्यायकत्वात्तदभिप्रायेण संबन्धसामान्यस्य विशेषपर्यवसानोपपादनमिदं बोध्यम् । अविधायकत्वेनेत्युक्तं निरसितुमाह—**प्रयोगेति** । सर्वपदार्थानुष्ठानविधायकस्य प्रयोगविधेरनुष्ठानापेक्षितकर्तृनियमविधायकत्वं संभवतीति भावः । सूत्रार्थस्तु—समाख्यापि क्रमवद्विनियोजिका तस्याः संबन्धार्थकत्वाद्विनियोज्यप्रयोजकत्वोपपत्तेरिति ॥

**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्** ॥१४॥ एवं श्रुत्यादिभिर्विनियोगप्रकारे कथिते सति अध्यायादावुपक्षिप्तो बलाबलविचारः प्राप्तावसर इत्याशयेनाह—**इदानीमिति**। व्रीहीन्प्रोक्षतीतिश्रुतेर्बर्हिर्देवसदनमिति लिङ्गस्य च बलाबलाप्रसक्तेर्विरोधे सतीत्युक्तं तत्र भिन्नविषयत्वान्न विरोध इति दर्शयितुं एकविषयसमवायो विरोधे हेतुत्वेनोक्तः । अत्र च एकसमवायमात्रं न विरोधे हेतुः । अरुणया क्रीणातीत्यत्र श्रुतिवाक्यप्रकरणानां त्रयाणामेकत्र समवायेऽपि आरुण्यस्य तृतीयाश्रुत्या क्रियासामान्यंप्रति शेषत्वं गम्यते । क्रीणातिसमभिव्याहारलक्षणवाक्येन क्रयरूपक्रियाविशेषंप्रति प्रकरणेन चापूर्वसाधनविशेषंप्रतीत्येवं भिन्नविषयत्वेन विरोधाभावात् किंतु एकविषयसमवाय इत्याशयेन विषयपदमुपात्तम् । **प्रथममिति** । सूत्रे सर्वेषामुपादानेऽपि वाचः क्रमवर्तित्वात्तयोः प्राधान्याच्चेति भावः । **ऐन्द्र्येति**। यद्यपि 'निवेशनः संगमनो वसूना'मित्यैन्द्र्या गार्हपत्योपस्थानं चयने श्रुतं, 'कदाचन स्तरीरसी'त्यैन्द्र्या गार्हपत्योपस्थानं चाग्निहोत्रे (महोपस्थाने) श्रुतं, तत्रोभयत्रापि इन्द्रोपस्थानस्यानुष्ठेयतया किमनेन मन्त्रेणेन्द्रोपस्थानं कर्तव्यमुत गार्हपत्योपस्थानमित्यादिविचारस्तत्र नोपपद्यते । तथापि उदाहरणस्य दिक्प्रदर्शनमात्रमिदम् । 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति तु मुख्यमुदाहरणम् । अग्निचयनप्रकरणेऽश्वरशनादानवद्गर्दभरशनादानस्याप्यनुष्ठेयतया तत्र करिष्यमाणविचारसंभवादिति । वस्तुतस्तु लिङ्गबलादेवेन्द्रोपस्थानकर्तव्यतापर्यन्तप्राप्तिसंभवान्नोदाहरणत्वानुपपत्तिरिति ध्येयम् । **किमिति** । अत्रेन्द्रशेषत्वगार्हपत्यशेषत्वयोरेव विचार्यत्वात्फलमुखेनेन्द्रशेषत्वादिगोचरसंशयोपन्यासे तात्पर्यं बोध्यम् । **ननु** गार्हपत्यमिति शब्दस्यार्थप्रकाशनसामर्थ्यरूपं लिङ्गं श्रुतिस्थलेऽप्यस्ति तथेन्द्रपदश्रवणरूपा श्रुतिरपि मन्त्रलिङ्गस्थलेऽस्ती-

---

१ नलीयस्तेन. २ तुल्यत्वं.

यस्त्वे तु गार्हपत्यस्यैवेति। यः शब्दस्य श्रवणादेव विनियोगः प्रतीयते स श्रौत इत्युच्यते। श्रवणं श्रुतिः गार्हपत्यमिति च ब्राह्मणगतद्वितीयान्तशब्दश्रवणादेव गार्हपत्यस्य प्राधान्यमुपस्थानं प्रति गम्यते। ऐन्द्र्याश्च तृतीयान्तायाः करणत्वमिति श्रौतोऽयं विनियोगः। मन्त्रगतात्त्विन्द्रपदादिन्द्रस्वरूपमात्रं श्रुत्यावगम्यते नतु मन्त्रंप्रतीन्द्रस्य प्राधान्यं मन्त्रस्य वा करणत्वं केनचिच्छब्देनोच्यते किंतु मन्त्रस्यैन्द्राभिधानसामर्थ्यमालोच्य नूनमनेन मन्त्रेणेन्द्र उपस्थेय इति कल्प्यत इति लैङ्गिकोऽयं विनियोगः। गृह्णीम एतदिन्द्रार्थत्वं लिङ्गादिति। ननु गार्हपत्यार्थत्वं मन्त्रस्य श्रौतं कथं शेषशेषित्वमात्रं हि श्रुत्यैन्द्रीगार्हपत्ययोरुक्तमन्योन्यविषयनियमस्त्वेकवाक्यतः। गार्हपत्यमिति हि शेषितामात्रमनिर्धारितशेषविशेषं श्रुत्योक्तमैन्द्रीविषयं तु तदिति वाक्यादवगन्तव्यम्। तथैन्द्र्येत्यनवगतशेषिविशेषं शेषत्वं श्रुतं वाक्याद्गार्हपत्यविषयं भवति। यत्तु श्रुत्युपात्तं सामान्यरूपं न तल्लिङ्गेन विरुध्यते। संभवतिहि गार्हपत्यस्य कांचिदाग्नेयींप्रति प्राधान्यं, ऐन्द्र्याश्चेन्द्रंप्रति शेषत्वम्। अन्योन्यान्वयस्तु वाक्यावगतो लिङ्गेन विरुध्यते। तेन लिङ्गवाक्ययोरेव विरोधो न श्रुतिलिङ्गयोः। अत्राभिधीयते—'सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते॥ सहिते हि विरुध्येते नतु लिङ्गेन केवले॥' यथैव हि श्रुतिमात्रमविरुद्धं एवं वाक्यमपि श्रुतिमनादृत्यालोच्यमानमविरुद्धमेव। यदिहि गार्हपत्यशब्द इन्द्रं लक्षयेत् द्वितीया वा सप्तम्यर्थं, ततो लिङ्गाविरोधेन गार्हपत्यपदमैन्द्र्योपतिष्ठत इत्यनेनैकवाक्यतां गच्छति। यस्तु द्वितीयान्तगार्हपत्यशब्दश्रवणादेवार्थः प्रतीयते गार्हपत्यप्राधान्यं स लिङ्गेन विरुध्यते। अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते, वाक्यसहिता तु श्रुतिर्विरुध्यते। कथं पुनरेवमुभयविरोधः सन्नयं श्रुतिविरोध एव व्यवह्रियते न वाक्यविरोधः। श्रुतेः प्राधान्यात्। विनियोगो हि प्रमेयः स च साध्यसाधनभावरूपः श्रुत्यैवोक्तः। वाक्यं तु प्रतियोगिविशेषसमर्पणेन श्रुतिमनुगृह्णद्गुणभूतं। प्रधानेन च विरोधो लक्ष्यते न गुणेन। अयं चापरो विशेषो येन श्रुतेरेवात्र लिङ्गेन विरोधो न वाक्यस्य। यस्य हि लिङ्गे बलीयसि बाधस्तल्लिङ्गेन विरुध्यते, नह्यत्र लिङ्गे बलीयसि वाक्यं शक्यते बाधितुम्। तद्बाधे हि पृथक्कृते गार्हपत्यैन्द्रीपदे न कंचिदर्थं प्रतिपादयतः पदमात्रस्याप्रामाण्यात्। तत्र श्रुतेरप्यत्यन्तबाधो वाक्यस्यच, यत्र तु पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते यथा स्योनादिषु तत्रैव वाक्यबाधो नैवंजातीयकेषु। ततश्चासंभवति

---

त्युभयोरपि श्रौतत्वाल्लैङ्गिकत्वाच्चायं विचार एवानुपपन्न इत्याशङ्क्य सत्यमुभयत्रोभयं वर्तते तथापि विनियोगे उभयत्राप्येकैकमेव व्याप्रियते इति श्रौतत्वलैङ्गिकत्वयोर्व्यवस्थितत्वाद्युक्तो विचार इत्याशयेनाह—**यः शब्दस्येति**। एवमपि श्रुतिलिङ्गयोरत्र विरोधाभावान्नेदं तद्विरोधोदाहरणमिति शङ्कते—**नन्विति**। ऐन्द्रीगार्हपत्ययोर्मिथः शेषशेषित्वमिति भ्रमं व्यावर्तयितुं श्लोकं व्याचष्टे—**गार्हपत्यमिति**। आग्नेय्या गार्हपत्यशेषत्वस्य ऐन्द्र्या इन्द्रशेषत्वस्य च लिङ्गादेव प्राप्तेः गार्हपत्यमिति श्रुत्युक्तं शेषित्वसामान्यमाग्नेयीव्यतिरिक्तविषयं ऐन्द्र्येति श्रुत्युक्तं च शेषत्वमिन्द्रव्यतिरिक्तविषयमित्यवश्यं वाच्यम्। अन्यथा वचनानर्थक्यप्रसङ्गात्। तस्मादस्ति श्रुत्युक्तसामान्यरूपस्यापि लिङ्गेन विरोध इति परिहारे सत्येव परिहारान्तरमाह—**सत्यमिति। तत इति**। ऐन्द्र्या इन्द्रं गार्हपत्यसमीपे वा स्थित्वा उपतिष्ठेतेत्येवमेकवाक्यता लिङ्गाविरोधेनैव संभवतीत्यर्थः। नन्वेवमुभयविरोध एवायं न श्रुतिविरोध इति कथमिदं श्रुतिविरोधोदाहरणमित्यभिप्रायेण शङ्कते—**कथमिति**। अत्र विनियोगः श्रुत्यैवावगम्यते वाक्येन तु विशेषणविशेष्यभावमात्रं लिङ्गस्य च विनियोगरूपविषय एव प्रमाणान्तरविरोधो न विशेषणविशेष्यभावात्मकविषये। तेन सत्यपि वाक्ये तस्य विनियोगप्रत्यायकत्वाभावान्न तद्विरोधोयं किंतु श्रुतेरेव तत्प्रत्यायकत्वाच्छ्रुतिविरोध एवायमिति युक्तमुदाहरणत्वमिति परिहरति—**श्रुतेरिति**। वाक्यविरोधहेत्वभावादपि श्रुतिविरोध एवायमित्याह—**अयंचेति**। ययोर्हि प्रबलदुर्बलभावे सति बाध्यबाधकभावो भवति तयोरेव विरोधो नान्यस्य। विरोधस्थले प्रबलेन दुर्बलस्य बाधावश्यंभावात्। यत्रच वाक्यस्य नाप्रामाण्यप्रसक्तिस्तत्रैव वाक्यस्य बाधः यथा 'स्योनं ते सदनं करोमी'त्यत्र। तत्र वाक्यस्य बाधेऽपि तदवयवयोः पृथग्भूतयोरपि स्वस्वार्थप्रतिपादनसंभवेनाप्रामाण्याभावात्। अप्रामाण्यप्रसक्तौ तु वेदाप्रामाण्यप्रसङ्गादेव न बाधसंभवस्ततश्च प्रकृते लिङ्गेन वाक्यबाधे श्रुतिवाक्ययोरुभयोरप्रामाण्यापत्त्या लिङ्गे बलवत्यपि वाक्यस्य बाधितुमशक्यत्वान्न लिङ्गवाक्यविरोधः। श्रुतिबाधे तु नाप्रामाण्यापत्तिः। श्रौतार्थपरित्यागेऽप्यर्थान्तरे

---

१ श्रुतिः कल्प्यत इति, २ साधनरूपः, ३ पृथग्भूते.

वाक्यस्य बाधे श्रुतिरेव बाध्येतेति श्रुतिलिङ्गयोरेवैष विरोध इति युक्तो विचारः किं बलीय इति । तदर्थं च किं श्रुतिवल्लिङ्गाद्यपि स्वतः प्रमाणमुत श्रुतिकल्पनेनेति—'तत्र स्वतःप्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम् ॥ सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते ॥ गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यैकक्षता ॥ तेन द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि ॥ प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ यद्यपि स्याद्बलीयस्त्वं श्रुतेर्लिङ्गात्तथापि तु ॥ अविरोधादबाधः स्यात्संभवी हि समुच्चयः ॥ यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात्प्रबलं श्रुतेः ॥ वस्तुशक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते ॥ अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता ॥ गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ गुणाद्वाप्यभिधानं स्यादित्यत्रैतद्धि साधितम् ॥ तत्र तावद्बलीयस्त्वं लिङ्गस्य नच तुल्यता ॥ विनियोगः श्रुतेः पार्श्वे लिङ्गस्यारादसौ स्थितः ॥ यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते ॥ तावदेव

प्रामाण्योपपत्तेस्तस्माल्लिङ्गे बलीयसि श्रुतिर्बाधितुं शक्यत इति श्रुतिविरोध एवायमित्यर्थः । **किं बलीय इति** । किं श्रुतिर्बलीयसी उत लिङ्गं अथवोभयं तुल्यबलमिति विचार इत्यर्थः । अयंच विचारस्तदर्थविचारात्मकः । इममेव संशयमभिप्रेत्य यदि लिङ्गबलीयस्त्वमित्यादिग्रन्थे हेतुहेतुमद्भावः पूर्वमुपपादित इति ध्येयम् । बलाबलविचारार्थं विचारान्तरमाह—**तदर्थंचेति** । **लिङ्गाद्यपीति** । अत्र श्रुतिव्यतिरिक्तानां पञ्चानामपि प्रमाणानां श्रुतिकल्पकत्वं प्रतिपाद्यते न्यायसाम्यात्तु लिङ्गमात्रस्येत्यभिप्रायेणादिशब्दः । अतएव वाक्यादेः श्रुतिकल्पकत्वं सिद्धवत्कृत्यैव लिङ्गवाक्यविरोधादिविचारः प्रवर्तत इति ध्येयम् । **सामर्थ्येति** । सामर्थ्यादिपर्यालोचनमात्रादेव साक्षाद्विनियोगप्रतीत्युपपत्तौ लिङ्गादेः श्रुतिकल्पकत्वे मानाभावादिति भावः । ननु द्वयोर्युगपदनुष्ठातुमशक्यत्वात्कथं समुच्चय इत्यत आह—**प्रतिप्रधानमिति** । उभयोर्युगपदनुष्ठानाभावेऽपि मन्त्रस्यावृत्त्योभयत्र प्रयोगसंभवादुपपन्नः समुच्चय इति भावः । एवंच मन्त्रावृत्त्या समुच्चयसंभवात् श्रुतिबलीयस्त्वेऽपि न लिङ्गबाध इत्याह—**यद्यपीति** । **वस्त्विति** । अशक्तस्य श्रुतिसहस्रेणापि विनियोक्तुमशक्यत्वाद्विनियोज्यशक्त्यनुसारेणैव विनियोगस्य वक्तव्यत्वाच्छ्रुतिविनियोगेऽप्युपजीव्यतया शक्तिरूपं लिङ्गमेव प्रबलमिति भावः । नहि प्रथमतः शक्तिं निरूप्य पश्चाद्विनियोगो ज्ञेयः येन शक्तेरुपजीव्यत्वं स्यात् । किंत्वशक्यस्य विनियोगानुपपत्तेः शक्त्या विनियोगस्य निर्वाहमात्रं क्रियते । ततश्च श्रुतिविनियोगे लिङ्गस्योपजीव्यत्वमसिद्धम् । नचात्र श्रौतविनियोगस्यानिर्वाहः । गौणसामर्थ्येनापि निर्वाहसंभवादित्यभिप्रेत्याह—**अत्रेति** । **गुणादिति** । मन्त्रगतेनेन्द्रशब्देनेन्द्रगुणयोगात् गार्हपत्याभिधानं स्यादिति वचनात्त्वयथार्थमित्यधिकरणगुणसूत्रावयवार्थः । पार्श्वे समीपे इति यावत् । आराद्दूरे । श्रुत्या विनियोगो झटिति प्रवर्तते लिङ्गेन तु विलम्बेनेत्यर्थः । तदेवोपपादयति—**यावदिति** । लिङ्गेन हि विनियोगः साक्षान्न प्रत्याय्यते किंतु श्रुतिं कल्पयित्वा । तत्कल्पनं च प्रथमतो मन्त्रतोऽर्थप्रतीतौ सत्यां तदनन्तरं मन्त्रस्य प्रयोजनाकाङ्क्षायामस्य मन्त्रस्येन्द्रोपस्थाने सामर्थ्यमस्ति । तस्मात्तत्र विनियोक्तुं योग्यस्तेनेन्द्रप्रकाशनमेवास्य प्रयोजनमिति सामर्थ्यं पर्यालोच्य नूनमस्य मन्त्रस्येन्द्रशेषत्वप्रत्यायिका श्रुतिरस्तीत्येवं प्रवर्तते । ततश्च लैङ्गिको विनियोगो विलम्बते । श्रौतविनियोगस्तु कल्पनीयाभावात्प्रत्यक्षश्रुत्या झटिति प्रवर्तत इत्यर्थः । ननु लिङ्गाद्विनियोगएव कल्प्यतां किं श्रुतिकल्पनेन । नच 'शेषः परार्थत्वा'दित्यत्र विध्येकगम्यं शेषत्वमिति प्रतिपादनाद्विधिं विना शेषत्वप्रतीत्यसंभवात्तत्कल्पनमावश्यकमिति वाच्यम् । अस्मिन्नधिकरणे हि श्रुत्यादीनामुत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वं प्रतिपाद्यते । ततश्च लिङ्गात्कल्प्यमाना श्रुतिर्न विधिप्रत्ययरूपा किंतु लिङ्गवाक्यादितुल्ययोगक्षेमा इदमनेनेत्येवं साध्यसाधनभावलक्षणसंबन्धप्रतिपादिकैव वक्तव्या । एवंच लिङ्गादेव साध्यसाधनभावावगमसंभवे किं श्रुतिकल्पनया । नचैवमपि विधिप्रत्ययकल्पनावश्यंभावे प्रत्ययमात्रस्य पदमात्रस्य चाप्रामाण्यादिदमनेन कुर्यादिति साध्यसाधनभावप्रतिपादकपदयुक्तस्यैव तस्य कल्पनीयत्वात्साध्यत्वादिप्रतिपादकश्रुतिरप्यवश्यकल्प्येति वाच्यम् । लिङ्गोपस्थितसाध्यसाधनभावस्य प्रयोगविधितएव विधानोपपत्तौ पृथग्विधिकल्पनाया एवाप्रसङ्गादितिचेत् । मैवम् । 'अर्थाद्वा कल्पनैकदेशत्वा'दित्यधिकरणे सामर्थ्याच्छब्दकल्पनाया व्युत्पादितत्वात् सिद्धान्ते शब्दाध्याहारस्वीकाराच्च प्रयोगविधिनापि शब्दोपस्थापितस्यैव साध्यसाधनभावस्य ग्राह्यतया तत्सिद्ध्यर्थमपि साध्यसाधनभावप्रतिपादकश्रुतिकल्पनावश्यंभावात् । किंच अङ्गस्य सतएव प्रयोगविधिग्रहणं भवति । अङ्गत्वं च प्रातिस्विकविधिंविना न निर्वहति । नचाविहितमङ्गं भवतीति न्यायात् । एवंच 'प्रधानविधिवाक्यं च ह्यङ्गवाक्यसमन्वितम् ॥ अङ्गप्रधानसंयुक्तां विधत्ते पूर्वभावना'मिति सप्तमाद्ये वक्ष्यमाणन्यायेन प्रधानविधेः प्रयोगविधिभावमापन्नस्य कृत्स्नाङ्गविधायकस्यापि प्रातिस्विकविधिमुपजीव्यैव प्रवृत्तिर्वाच्या । तेन प्रयोगविधिग्रहणसिद्ध्यर्थमेव प्रातिस्विकविधिः कल्पनीयः । तत्कल्पनायां च साध्यसाधनप्रतिपादकश्रुतिकल्पनमावश्यकम् । अयमेवार्थः 'चोदनालक्षणोऽर्थो धर्म' इत्युक्त्या 'अशब्दमनपेक्षं स्या'दित्युक्त्या च श्रुतिकल्पनामुपपादयतामाचार्याणामभिमत इति

१ स्तुल्यकालता । तत्र द्वयो. २ श्रुतेः पश्चाल्लिङ्गस्यारा.

श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत् ॥ मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च ॥ मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना ॥ श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना ॥ तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् ॥ शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः ॥ अविरोधादबाधो यो वर्णितः स न युज्यते ॥ लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम् ॥ तां च श्रुतिर्निकृन्तन्ती नाविरोधेन गच्छति ॥ विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥' **लिङ्गवाक्यविरोधे**। 'स्योनं ते सदनं करोमि। घृतस्य धारया सुशेवं कल्पयामि' 'तस्मिन्सीदामृते प्रतितिष्ठ' 'व्रीहीणां मेध सुमनस्यमान' इति । तत्र संदेहः किं सकलोऽयं सदनकरणे पुरोडाशप्रतिष्ठापने च विकल्पेन समुच्चयेन वा प्रयोक्तव्य उत सकलो वा विभज्य वाऽथवा विभज्यैव स्योनादिः कल्पयाम्यन्तःसदनकरणे तस्मिन्सीदेतिप्रतिष्ठापन इति । तत्र यदि वाक्यं बलीयस्ततः सकलमेवोभयत्र, तुल्यबलत्वे सकलो वा विभज्य वा, लिङ्गबलीयस्त्वे तु विभज्यैवेति । तत्र 'यावन्ति हि प्रयुज्यन्ते पदानि सतिसंभवे ॥ तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते ॥ तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते ॥ वाक्यैकत्वमतः सर्वमुभयत्र प्रयुज्यते ॥ यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः ॥ श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुतिनिराकृतम् ॥ कल्प्यश्रुतित्वमिह तु समानमुभयोरपि ॥ तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते ॥ सत्यं कल्प्या श्रुतिः किंतु लिङ्गादह्नाय कल्प्यते ॥ वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः ॥ कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते संनिकृष्टस्तु लिङ्गस्य तेनैतत्प्रबलं ततः ॥' 'स्योनं ते सदनं

---

संक्षेपः। **ननु** श्रुतेः शीघ्रप्रवृत्तिरस्तु नाम तथापि पश्चाल्लिङ्गेन विलम्बितेनापीन्द्रे विनियोगसंभवात्कथं श्रुतेर्लिङ्गबाधकत्वमत आह—**श्रुत्येति**। मन्त्राकाङ्क्षानुसारेण हि लिङ्गाच्छ्रुतिः कल्पनीया । मन्त्राकाङ्क्षा च प्रत्यक्षश्रुत्या गार्हपत्ये विनियोगादेव शान्तेति कल्पनामूलोच्छेदान्न लिङ्गतो विनियोग इत्यर्थः । **ननु** श्रुतिप्रवृत्तिदशायां लिङ्गस्याप्रवृत्त्या तस्य कथं श्रुत्या बाध इति शङ्कां दृष्टान्तकथनेन निरस्यति—**प्रत्यक्ष इति** । यथा वन्ह्यौष्ण्यप्रत्यक्षेण शीघ्रप्रवृत्तिकेन मन्थरप्रवृत्तिकं तदनौष्ण्यानुमानं स्वप्रवृत्तिप्रतिबन्धादेव बाध्यते, एवं लिङ्गस्यापि शीघ्रप्रवृत्तश्रुत्या प्रवृत्तिप्रतिबन्धाद्बाधः संभवतीत्यर्थः। श्रुतेर्बलीयस्त्वेऽपि लिङ्गबाधकत्वं नास्तीति यदुक्तं तन्निरस्यति—**अविरोधादिति** । ननु विषयापहाराभावात्कथं विरोध इत्यतो विरोधमुपपादयति—**लिङ्गस्य हीति**। लिङ्गप्रवृत्तिप्रयोजककाकाङ्क्षाविच्छेदकत्वादेव विरोधोऽस्तीत्यर्थः । लिङ्गापेक्षया श्रुतेः प्राबल्यादेव कैमुतिकन्यायेन वाक्यादिप्रमाणापेक्षया प्राबल्यं सिद्धम् । तत्र श्रुतेस्तत्प्रमाणविरोधोदाहरणप्रपञ्चो वक्ष्यमाणलिङ्गवाक्यविरोधाद्युदाहरणप्रपञ्चश्च वार्तिक एव द्रष्टव्यः। **लिङ्गवाक्यविरोधे**। **स्योनमिति** । हे पुरोडाश, स्योनं सुखहेतुं सदनं करोमि। घृतस्य धारया सुशेवं सुखशयनयोग्यं कल्पयामि । तस्मिन् सदने सीद । हे व्रीहीणां मेध सारभूत, सुमनस्यमानः प्रीयमाणः सन्नमृते मरणरहिते तस्मिन्प्रतितिष्ठेत्यर्थः । सकलस्योभयत्र विनियोग एव प्रकारद्वयमाह—**विकल्पेनेति**। **उतेति** । साकल्यविभागयोरनियम इत्यर्थः । पूर्ववदेव तदर्थसंशयमभिप्रेत्याह—**यदीति**। **तत्रेति**। सहप्रयोगमात्रेणार्थबोधमनपेक्ष्य प्रथमतः प्रतीयमानत्वाद्वाक्यमेव प्रबलमन्यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'त्यत्र सवित्रादिपदानामेकवाक्यतानुसारेण निर्वापप्रशंसार्थत्वं न स्यादिति भावः। **सापेक्षत्वादिति**। अनेन लिङ्गस्य प्राबल्ये सापेक्षत्वाद्विभक्तस्याबोधकत्वं स्यादिति सूचितम्। **ननु** तत्र प्रकरणे सवित्रादिदेवतानामभावात्सवित्रादिपदानां पृथग्भावे सत्यानर्थक्यापत्त्या निर्वापप्रकाशार्थता स्वीक्रियते । एवंच न तावता वाक्यस्य प्राबल्यसिद्धिः। वाक्यान्तरोपस्थितिमादायापि सर्वनामाकाङ्क्षाशान्तेर्नाप्यबोधकत्वप्रसङ्ग इत्यस्वरसादाह—**यद्वेति**। **समानमिति**। वाक्यप्रमाणेनापि मन्त्रस्य सदनकरणादेश्च साध्यसाधनभावाप्रतीत्या तत्रापि श्रुतिकल्पनावश्यंभावादिति भावः। अह्नाय शीघ्रम्। **ननु** वाक्येनापि साक्षाच्छ्रुतिरेव कल्प्यतां नत्वन्तरा लिङ्गकल्पनम् । एवंच कथं संनिकर्षविप्रकर्षावित्यतो व्याचष्टे—**स्योनमिति** । नह्यैन्द्र्येतिवत्सामर्थ्यमनालोच्य प्रवर्तमानः प्रत्यक्षविनियोगोऽस्ति अपितु कल्प्यः, विनियोज्यसामर्थ्यानुसारेण च विनियोगः कल्प्यो नान्यथा, तेन विनियोज्यस्य सामर्थ्यं पर्यालोच्यं, तस्मिंश्च पर्यालोच्यमाने प्रथमभागस्य सदनकरणएव सामर्थ्यं प्रत्यक्षमवगम्यते न प्रतिष्ठापन इति प्रतिष्ठापने तस्य विनियोगसिद्ध्यर्थं सदनकरणपूर्वकत्वरूपप्रतिष्ठापनविशेषसमर्पकतया गौणसामर्थ्यात्मकं लिङ्गं प्रथमतः कल्प्यम् । एवं द्वितीयभागस्यापि प्रतिष्ठापन एव प्रत्यक्षं सामर्थ्यमवगम्यते । सदनकरणे तु सादनकरणार्थत्वरूपविशेषसमर्पकतया गौणं सामर्थ्यं कल्प्यम् ।

---

१ पश्चाच्छाब्दं.

करोमीत्यस्य हि सदनकरणसामर्थ्यमन्यानपेक्षं स्वरूपतएव प्रत्यक्षमवगम्यते । ततश्च श्रुतिमनुमाय शीघ्रं विनियुज्यते, पुरोडाशप्रतिष्ठापने त्वस्य न स्वरूपत: सामर्थ्यं गम्यते । तस्मिन्सीदेत्यनेन प्रतिष्ठापनमुच्यते तदेकवाक्यतापेक्षया तु पूर्वार्धस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं लाक्षणिकं कल्पयित्वा ततः श्रुतिकल्पनमिति विप्रकर्षान्न तत्र विनियुज्यते । एवं तस्मिन्सीदेत्यस्यापि स्वार्थे क्लृप्तं सामर्थ्यमिति तत्रैव विनियोगो न सदनकरणे । कल्प्यसामर्थ्यत्वात् । एवमर्थभेदेन नानावाक्यत्वोपगमान्नैकवाक्यतासंभवः । तस्माद्विभज्य विनियोगः । **वाक्यप्रकरणविरोधे चिन्त्यते ।** दर्शपूर्णमासयोः सूक्तवाकनिगदः तत्र 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोक्राता'मित्यादि श्रुतं तत्राग्नीषोमादिदेवतापदं लिङ्गात्पर्वद्वये विनिष्कृष्य प्रयोक्तव्यमिति स्थितं तदेकवाक्यभूतानीदं हविरजुषेतामित्यादीनि यानि तानि ततो विच्छिद्यान्यत्रापि किं प्रकरणाविशेषात्प्रयुज्येरन्नुत देवतापदेनैकवाक्यतया तद्वदेव व्यवस्थितानीति । **नन्वारादुपकारकाणामेव प्रकरणं विनियोजकं न संनिपातिनाम्** । 'असंयुक्तं प्रकरणा'दिति ह्युक्तम् । संनिपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति, संनिपाती च सूक्तवाकः श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतास्मरणार्थत्वात् तदन्तर्गताश्चेदं हविरजुषेतामित्यादयः संयुक्तत्वान्न प्रकरणं तेषां विनियोजकम् । संभवति च विनियोजकत्वे विरोधो नासति । तस्मान्नात्र वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणत्वम् । स्यादेतदेवं यदि संनिपातिनां प्रकरणं न विनियोजकं स्यान्नतु तथा अवघातादीनामपि प्रकरणादेव क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम् । असंयुक्तमिति न प्रकरणग्राह्यस्य विशेषणं किंतु पूर्वपक्षवादी श्रुत्यादीनामेव विनियोजकत्वं तदसंयुक्तस्य नास्ति विनियोग इति मन्यते, तंप्रत्युच्यते श्रुत्याद्यसंयुक्तमपि प्रकरणेन विनियुज्यत इति । यद्वा प्रकरणविरोध्यर्थासंयोगाभिप्रायमसंयुक्तग्रहणं, तदप्येतदधिकरणसिद्धबलाबलाङ्गीकारेणोक्तम् । अतो युक्तमुक्तमुदाहरणम् । ये त्वारादुपकारकेष्वेव प्रकरणस्य व्यापारः संनिपातिनां तु ग्राहकग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेनापूर्वार्थत्वं, द्वारैदमर्थ्यं श्रुत्यादिभिरौपादानिकं क्रत्वर्थत्वं, प्रकरणस्य तु न कश्चिद्व्यापार इति मन्यन्ते तेषामेवायं सूक्तवाकपदानां श्रुत्या प्रहरणविनियुक्तानां प्रकरणावि-

तस्माद्वाक्येन लिङ्गं कल्पयित्वैव श्रुतिः कल्प्येति समभिव्याहारमात्रात्प्रथमप्रतीयमानेनापि वाक्येन श्रुतिकल्पना विप्रकृष्यते । लिङ्गेन तु प्रथमावगतेन प्रत्यक्षसामर्थ्यरूपेण साक्षादेव श्रुतिः कल्पयितुं शक्येति युक्तौ संनिकर्षविप्रकर्षावित्यर्थः । **एवमिति** । अर्थैकत्वनिबन्धनैकवाक्यत्वं न समभिव्याहारमात्रात्त्वध्यवसानमिति अर्थैक्याभावे एकवाक्यत्वस्यैवासिद्धतया । तेन श्रुतिकल्पनानुपपत्तेरेकवाक्यतानिर्वाहसिद्ध्यर्थं प्रथमतः सामर्थ्यकल्पनमावश्यकमित्यप्यनेन सूचितम् । **वाक्यप्रकरणविरोधे चिन्त्यते** । देवतापदनिष्कर्षे सत्येवायं विचारो घटते नान्यथेत्यतः द्वितीयसूक्तवाकाधिकरणार्थं स्मारयति—**तत्रेति** । इदं हविरजुषेतामित्यादीनां प्रकरणविनियोज्यत्वमेवासंभावितमिति नेदमुदाहरणं युक्तमिति शङ्कते—**नन्विति** । **तदन्तर्गता इति** । सूक्तवाकशब्दस्य कृत्स्ननिगदवाचित्वाद्देवतापदैकवाक्यभूतानामिदं हविरित्यादीनां देवतास्मरणसामर्थ्याच्च तेऽपि श्रुतिलिङ्गसंयुक्ता एवेति भावः । **अवघातादीनामिति** । नचावघातस्य व्रीहिस्वरूपार्थत्वे आनर्थक्यात् व्रीहिशब्देनापूर्वसाधनं लक्षयित्वा द्वितीयाश्रुत्या पूर्वसाधनार्थतयाऽवघाते बोध्यमानेऽपूर्वसाधनार्थत्वस्यापूर्वार्थत्वपर्यवसानादपूर्वार्थत्वं क्रत्वर्थत्वं च श्रुत्यैव सिद्ध्यति, तत्कथं प्रकरणात्क्रत्वर्थत्वमिति वाच्यम् । प्रथमत इतिकर्तव्यतात्वेनान्वयाभावे प्रकृतकर्मानन्वयिनोऽवघातस्यानर्थक्यपरिजिहीर्षाया एवाभावेनापूर्वसाधनलक्षणाया एवाप्रवृत्तेः । अयं चार्थ आग्नेय्यधिकरणे स्पष्टमस्माभिः प्रतिपादितस्तस्मात्संनिपातिनामप्यस्ति प्रकरणविनियोज्यत्वमिति भावः । **न प्रकरणेति** । असंयुक्तमेव प्रकरणग्राह्यं नेतरदित्येवमितरव्यावर्तकतयाऽसंयुक्तपदं नोपात्तमित्यर्थः । **ननु** प्रकरणाधिकरणप्रवृत्तिवेलायां बलाबलानिर्धारणात्कथं विरोध्यसंयोगपरत्वेनासंयुक्तपदं व्याख्यायत इत्यत आह—**तदपीति** । अनागतावेक्षणेन वस्तुकथनमात्रं कृतमिति भावः । **प्राभाकरास्तु** । प्रकरणस्यारादुपकारकेष्वेव व्यापारः प्रयाजादीनां करणैदमर्थ्यस्य प्रमाणान्तरेणालाभात्संनिपातिषु तु सप्तमाद्यव्युत्पाद्यं सर्वेषामपि पदार्थानां प्रधानापूर्वेण प्रयोजनप्रयोजनिभावेनान्विताभिधानरूपं यद्ग्राहकग्रहणाख्यं प्रमाणं तेनापूर्वार्थत्वं । तच्च ग्राहकार्थत्वं न करणतयाऽवघातादीनां संभवति । तस्य स्ववाक्यगतकरणान्तरावरो-

१ स्वार्थसामर्थ्यं क्लृप्तमिति. २ युक्तमुदाहरणं.

षयत्वान्नेदं वाक्यप्रकरणविरोधोदाहरणं युक्तमित्युपालम्भो नास्माकम् । तत्र द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वाच्छ्रुतिकल्पनाधीनत्वसाम्यादन्यस्य च विप्रकर्षकारणस्याद्याप्यकथितत्वात्तुल्यबलतां मन्यन्ते । यद्वा प्रधानाकाङ्क्षाप्रकरणं, प्रधानार्थं च सर्वमिति तन्निबन्धन एव विनियोगो बलीयानिति प्राप्तेऽभिधीयते—'येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक् ॥ सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽपरत्र तु ॥ पूर्वयोरेकवाक्यत्वं कल्प्यं स्यात्प्रक्रियावशात् ॥ ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः ॥' 'अग्नीषोमाविदं हविरजुषेता'मित्यग्नीषोमपदस्येदं हविरित्यादेश्चैकवाक्यत्वं क्लृप्तं एकवाक्यतयाग्नीषोमप्रकाशनसामर्थ्यमिदं हविरित्यादेः शीघ्रं कल्प्यते । ततश्च श्रुतिस्तया विनियोग इति संनिकर्षः, इन्द्राग्निपदेन त्वत्रत्यस्येदं हविरित्यादेरेकवाक्यत्वं न प्रत्यक्षतो गम्यते किंतु प्रकरणात्तावद्दर्शपूर्णमासाभ्यामिदं हविरित्यादेरेकवाक्यता कल्प्यते । अनेन दर्शपूर्णमासयोरुपकुर्यादिति, ततः कोऽस्योपकार इति तदीयदेवतापदैकवाक्यतया तत्प्रकाशनसामर्थ्यं चिरेण कल्पयित्वा ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलं वाक्यात्प्रकरणम् । **अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते ।** राजसूये बहवः पश्विष्टिसोमयागाः सर्वे फलवन्तः समप्रधानाः तत्राभिषेचनीयो नाम सोमयागस्तत्संनिधौ विदेवनादयः समाम्नातास्ते किं सर्वस्य राजसूयस्याङ्गमुताभिषेचनीयस्यैवेति । यदि संनिधिर्बलीयान्[2] तदाभिषेचनीयाङ्गम् । अथ प्रकरणं ततो राजसूयस्यैवेति । तत्र संनिधिविशेषादभिषेचनीयाङ्गत्वे प्राप्ते उच्यते । प्रकरणाविशेषात्सर्वार्थता । नन्वभिषेचनीयस्याप्यस्त्येव[3] फलवत्त्वात्प्रकरणं, यद्यप्यस्ति तथाप्यन्येषामप्यस्तीति तादर्थ्यमपि युक्तम् । यदि परमविशेषतः सर्वेषामाकाङ्क्षायामपि पाठसंनिधिविशेषादभिषेचनीयस्य विशेषत आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात्तत्तश्च वि-

धात्ततः पारिशेष्यात्करणोपकारकत्वेनैव निर्वहतीति नियोग एव तदन्वितः प्रतीयमानः करणोपकारकत्वं विना तदन्वयानुपपत्तेः करणोपकारं कल्पयन्करणैदमर्थ्यमाक्षिपति । तेनानुपपद्यमानावस्थनियोगापरनामकोपादानाख्यप्रमाणेन क्रत्वर्थत्वम् । तत्रच द्वारापेक्षायां यथायथं श्रुत्यादिभिस्त्रिभिः प्रमाणैर्व्रीह्यादिद्वारार्थत्वं चावगम्यत इत्येवमर्थत्रयस्याप्यन्यत एवावगमेन प्रकरणस्य संनिपातिषु व्यापारो नास्तीति मन्यन्ते तेषामेवायं दोषो नास्माकमित्याह—**येत्विति** । इदानीं पूर्वपक्षमाह—**तत्रेति । अन्यस्येति ।** श्रुतिकल्पनायां विप्रकर्षहेतोः कस्यचिदकथनादित्यर्थः । अकथनमात्रेण कथं वस्त्वभाव इति शङ्कमानंप्रति वस्त्वसिद्धिमेवाभिप्रेत्याह—**यद्वेति । येनेति** । इदं हविरित्यादेर्येनाग्न्यादिपदेन प्रत्यक्षमेकवाक्यता गम्यते तेन सामर्थ्यश्रुत्योर्द्वयोरेव कल्प्यत्वात्संनिकर्षः इन्द्राग्न्यादिपदेन त्वेकवाक्यतां कल्पयित्वा ततः सामर्थ्यश्रुतिकल्पनेति विप्रकर्ष इत्यर्थः । अत्रत्यस्याग्नीषोमाविदंहविरजुषेतामित्यग्नीषोमपदसंनिधौ पठितस्येत्यर्थः । नच प्रकरणेन साक्षात्सामर्थ्यमेव कल्प्यतां किमेकवाक्यताकल्पनेनेति वाच्यम् । इदंहविरित्यादीनां प्राकरणिकदेवताप्रकाशनद्वारा दर्शपूर्णमासयोरुपकुर्यादित्येवं प्रकरणेन विनियोगः कल्प्यः सचेदं हविरित्यादेः प्राकरणिकसर्वदेवताप्रकाशनसामर्थ्यंविना न संभवति तत्प्रकाशनसामर्थ्यं च शब्दस्य देवतानभिधायकस्य तत्पदैकवाक्यतानिबन्धनमिति प्रकरणेन प्रथममेकवाक्यताया अवश्यकल्प्यत्वात्तदेतदभिसंधायाह—**अनेनेत्यादि । स्थानप्रकरणयोर्विरोधे चिन्त्यते । पश्विति ।** आदित्यां मह्वां[4] गर्भिणीमालभत इत्यादिपशवः, अनुमत्यादिदेवताकेष्टयः, पवित्रादिसोमयागाश्चेत्यर्थः । **तत्संनिधाविति** । तैत्तिरीयशाखायामभिषेचनीयप्रयोगमध्ये 'दिशोभ्यर्यं राजाभूदिति पञ्चाक्षान्प्रयच्छन्ति' 'शौनःशेपमाख्यापयते' इति विदेवनादीनाम्नाय तदनन्तरं मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्याश्चामिक्षाया अग्नये स्विष्टकृते समवद्यतीत्यभिषेचनीयाङ्गेष्विष्टिविशेषमाम्नाय अपांनप्त्रे स्वाहोर्जोनप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोतीत्यभिषेचनीयाङ्गहोमविशेष आम्नायते । तेन विदेवनादीनामभिषेचनीयाङ्गसंदंश्यतयाम्नातानां तदवान्तरप्रकरणेनाभिषेचनीयमात्रार्थत्वात्तेषां क्रमप्रकरणविरोधोदाहरणत्वं नोपपद्यत इति । नच शाखान्तरेऽभिषेचनीयप्रयोगपरिसमाप्त्युत्तरमाम्नानात्तदभिप्रायेणोदाहरणत्वमुपपद्यत इति वाच्यम् । अवान्तरप्रकरणस्य बलवत्त्वेन क्वचिच्छाखायामवान्तरप्रकरणेनाभिषेचनीयमात्रार्थानां तेषां शाखान्तरे महाप्रकरणेन सर्वार्थत्वानुपपत्तेस्तस्मात्क्त्वाचिन्तयेदमुदाहरणमित्याहुः । **संनिधिविशेषादिति** । प्रकरणस्य सर्वार्थत्वेऽपि संनिधिविशेषादभिषेचनीयाङ्गत्वमित्यर्थः । **नन्विति ।** यद्यपि प्रकरणाविशेषवादिनो नेदमनिष्टं तथापि प्रकरणाविशेषमेव स्पष्टयितुं शङ्कामात्रमुद्भावितं बोध्यम् । **ननु** प्रकरणाविशेषेऽपि संनिधिविशेषादभिषेचनीयमात्राङ्गत्वं युक्तमत आह—**यदीति** । संनिधानस्य हि आकाङ्क्षाकल्पकत्वेनाङ्गत्वप्रत्यायकत्वं न साक्षात् । आकाङ्क्षाविरहे संनिहितेनाप्यन्वयायोगात्ततश्च संनिधानाद-

१ तद्दर्शपूर्ण. २ बलवानभिषेचनीयाङ्गं. ३ स्यापि फलवत्त्वादस्त्येव. ४ मह्वा गलस्तनीभजा.

प्रकर्षः, सर्वार्थता क्लृप्ताकाङ्क्षातः सुखं गम्यते अभिषेचनीयाङ्गत्वं स्वाकाङ्क्षाकल्पनयेति । एतेना-ग्नेयादीनां धर्मसाधारण्यं व्याख्यातम् । अपिच नास्त्यभिषेचनीयस्य प्रकरणं प्राकृतेनेत्थंभावेन कथ-म्भावाकाङ्क्षापूरणात् । नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम् । सत्यं, प्रातिस्विकेन रूपेण नास्ति राजसूयात्मना त्वस्त्येव कथं श्रुत्यादिविहिताङ्गसंदंशात् । तद्वशेन हि निवृत्ताप्याकाङ्क्षा पुनरुत्पत्स्यते पवित्रादारभ्य क्षत्रस्य धृतिं यावदङ्गविधिषु प्रायेण राजसूयाय श्रेता उत्पुनाति राजसूयेनेजानः सर्वमायुरेतीति राजसूयपरामर्शात्तावन्तं देशमनुवृत्तो राजसूयकथंभावः शक्नोति तन्मध्यपतितानि विदेवनादीनि ग्रहीतुम् । अतः प्रकरणाद्राजसूयार्था विदेवनादयः । क्रमसमा-ख्ययोर्विरोधे० । पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्रशुन्धनक्रमे समाम्नातः शुन्धध्वमिति मन्त्र उदाहरणम् । स किं पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमुतोभयाङ्गमिति वि-चारः । यदि समाख्या बलीयसी पुरोडाशाङ्गं । अथ तुल्यबलत्वमुभयार्थता । क्रमबलीयस्त्वेतु सान्ना-य्यार्थता । तत्र 'विशेषाग्रहणात्तुल्यबलत्वमुभयोर्भवेत् ॥ संबन्धवाचिनीत्वेन समाख्या वा बली-यसी ॥ नैतदेवं समाख्या हि न संबन्धाभिधायिनी ॥ यद्यपि त्वभिधात्री स्यात्प्रमाणं नतु तत्र सा ॥' नहि यौगिकैः शब्दैः संबन्धोऽभिधीयते दण्डीति प्रकृत्या दण्डस्वरूपमुक्तम् । प्रत्ययेनापि पुरुषः दण्डयुक्तस्तु पुरुषो न कस्यचिद्वाच्यः । तयोः समभिव्याहारादेव परस्परयोगो वाक्यार्थ इव पदा-र्थानां लभ्यमानो नाभिधानं प्रयोजयति तथा पाचकादिष्वपि । आहच—'पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचि'दिति । एवं पौरोडाशिकश-ब्देऽपि प्रकृतिप्रत्ययाभ्यां पुरोडाशरूपं काण्डस्वरूपं चोक्तम् । तयोश्च संबन्धोऽनभिहितएव कल्पयितव्यः क्रमे तु देशसामान्यलक्षणः संबन्धः प्रत्यक्षमिति बलीयस्त्वम् । अथापि समाख्यासंबन्धमभिदध्या-त्तथापि न सा तत्र प्रमाणं, पदस्य पदार्थे प्रामाण्याभावात् । अतः संबन्धनिमित्तां समाख्यामुच्च-रन्तीमुपलभ्य नूनमस्त्यनयोः कश्चित्संबन्ध इति संबन्धसामान्यं कल्प्यम् । ततोपेक्षा तत एकवा-

---

भिषेचनीयाङ्गत्वस्वीकारे तेन विशिष्याकाङ्क्षा कल्प्या, तथात्वे च क्लृप्ताकाङ्क्षालक्षणप्रकरणेन झटिति विनियोगाद्विप्रकृष्टस्य संनिधेर्बाध इत्यर्थः । वस्तुतोऽभिषेचनीयस्य प्रातिस्विकरूपेण प्रकरणविरहेऽपि तदभ्युपेत्य प्रातिस्विकप्रकरणाविशेषात्स-र्वार्थत्वव्युत्पादनम् । यत्र प्रातिस्विकरूपेण प्रकरणमस्ति तत्र संनिधिबाधेन सर्वार्थत्वसिद्ध्यर्थमिति मनसि निधायोक्तं न्यायं तादृशस्थलेऽतिदिशति—**एतेनेति** । इदानीं प्रातिस्विकरूपेणाभिषेचनीयस्यान्येषां च प्रकरणं नास्त्येव, राजसूयात्मकेनैव तेषां प्रकरणं तदविशेषाच्च विदेवनादीनां सर्वार्थत्वमिति प्रतिपादयितुमभिषेचनीयस्य प्रातिस्विकप्रकरणाभावमुपक्षिपति—**अपिच नास्तीति** । ननु निवृत्ताकाङ्क्षत्वादेव राजसूयात्मना वा कथं प्रकरणं स्यादिति पृच्छति—**कथमिति** । अभि-षेचनीयमात्राङ्गत्वसर्वार्थत्वयोः फलभेदं चतुर्थे वक्ष्यामः । **क्रमसमाख्ययोः०** । **संबन्धेति** । 'तस्य व्याख्यातव्यनाम्नः' इत्यधिकारे 'पौरोडाशपुरोडाशात्ष्ठन्नि'ति विहितष्ठन्नन्तपौरोडाशिकसमाख्यायाः पुरोडाशसंबन्धवाचित्वेन तस्याः श्रुतिव-द्विनियोगेऽन्यानपेक्षतया प्रामाण्यं संभवतीति क्रमापेक्षया प्राबल्यमिति भावः । ननु कृत्तद्धितसमासेषु भावप्रत्ययेन संब-न्धाभिधानाद्भावप्रत्ययवाच्यस्य च प्रकृतिवाच्यत्वनियमात्समाख्यायाः संबन्धवाचित्वमवश्यं वाच्यमित्यत आह—**नहीति** । यथाच कृत्तद्धितसमासेषु भावप्रत्ययस्य न संबन्धाभिधायकत्वं तथारुणाधिकरणवार्तिके स्पष्टमिति भावः । **ननु** संबन्ध-प्रतीतेस्तदभिधानमावश्यकमित्यत आह—**तयोरिति** । **नन्वन**भिहितस्यापि वाक्यविधया प्रतीयमानत्वान्न कल्पनाप्रस-क्तिरित्यस्वरसादाह—**अथापीति** । **पदस्येति** । प्रमाणाधीना वस्तुसिद्धिः । नच पदमात्रं प्रमाणं । तेन समाख्यासंबन्धे न स्वयं प्रमाणमिति समाख्यया संबन्धकल्पनमावश्यकमित्यर्थः । **ततोपेक्षेति** । नच संबन्धकल्पनात्पूर्वमपि पुरोडाश-पात्रशुन्धनस्यानुष्ठानाय स्मारकमन्त्रापेक्षासत्त्वात्संबन्धेनाकाङ्क्षा कल्प्यत इत्ययुक्तमिति वाच्यम् । अनुष्ठानाय हि स्मारकमा-त्रमपेक्षितं नतु तद्विशेषमन्त्रापेक्षा । तेन नियमेन मन्त्रान्वयसिद्ध्यर्थं समाकल्पितमन्त्रसंबन्धेन विशिष्यमन्त्रात्मकस्मारक-गोचराकाङ्क्षायाः कल्प्यत्वादिति भावः । **तत एकवाक्यत्वमिति** । व्रीह्यादिवत्पदार्थतया विनियोज्यस्य मन्त्रस्य प्रधान-

---

१ बलवती. २ बलवत्त्वे तु.

क्यत्वं ततः सामर्थ्यं ततः श्रुतिः ततो विनियोगः । क्रमस्तु संबन्धमात्रस्य [1]प्रत्यक्षक्लृप्तत्वात्तत आरभ्य श्रुत्यर्थं गच्छन्नेकं पदमगतां समाख्यां जयति, तदेवं श्रुत्यादीनां पूर्वपूर्वेणोत्तरोत्तरं श्रुत्यर्थं यावद्गतमलब्धप्रामाण्यावस्थमेव मूलच्छेदान्निराक्रियते सोयमप्राप्तबाधः । यत्तु शास्त्रप्रदेशेषु तत्रतत्रोच्यते इदमनेन बाध्यते इदमनेन बाध्यते प्राकृतं वैकृतेन सामान्यं विशेषेणेत्यादितद्बाधकविषयं प्राप्तं बाध्यते उताप्राप्तमिति । नतावत्तत्र श्रुतिलिङ्गादिवदप्राप्तबाधसंभवः । तथाच तद्वदेव प्रापकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः । ततश्च तस्यैकत्वात्कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात् । पदहोमवच्च होमान्तरेष्वप्याहवनीयो न स्यात् । अथ प्राप्तं तत्र श्रुत्यादिवैषम्यप्रसङ्गात् । एकरूपेण हि बाधेन [2]युक्तं भवितुं न विचित्रेण । नच शक्यं [3]शास्त्रेण प्राप्तं बाधितुम् । उच्यते । प्राप्तस्यैव तेषु बाधः, नावश्यमेकरूपेणैव तेन भवितव्यम् । वैचित्र्यमेव प्रमाणबलेन युक्ततरं स्यात् । प्राप्तमपि शक्यमेव बाधितुमिति दशमाद्ये [4]समर्थितम् । अथ यत्तत्र तत्रेत्यादिभाष्यस्य श्रुत्यादिविषयत्वं 'स्थिते चाप्राप्तबाधत्वे प्राप्तबाध्येपि नोत्तरमि'त्यनेन वार्तिकेन दूषितम् । केचनास्य दूषणस्य सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति विशेषावगमात्तेषां निवर्तत इत्यनेन न

---

विधिना एकवाक्यत्वाभावान्मन्त्राम्नानबलकल्प्यमन्त्रविध्येकवाक्यत्वमिहैकवाक्यत्वशब्देन विवक्षितं बोध्यम् । **ततः सामर्थ्यमिति** । यद्यपि मन्त्रस्य पात्रशुन्धनसामर्थ्यं स्वतःसिद्धं तथापि पात्रसामान्यशुन्धनप्रकाशनसमर्थस्य तस्य विशिष्यपुरोडाशपात्रशुन्धनप्रकाशनसामर्थ्यं कल्प्यमिति भावः । एकं पदमगतां एकां कक्ष्यामप्राप्तामिति यावत् । **ननु** श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरं किं स्वस्वविषयविनियोगं प्राप्तं बाध्यते उताप्राप्तम् । नाद्यः । तथासति श्रुतिकल्पनेनालौकिकस्वविषये प्रमाणभावं प्राप्तस्य तस्य बाधितुमशक्यत्वात् । न द्वितीयः । असतो बाधितुमशक्यत्वादिति शङ्कां निराकुर्वन् विचारपञ्चकार्थमुपसंहरति—**तदेवमिति** । 'निश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च ॥ एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥ एकः सोपानपङ्क्तिस्थो भूमिस्थश्चापरस्तयोः ॥ उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥ विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः ॥ प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुधे'त्यनेन प्रकारेण स्वरूपतः सत एवोत्तरोत्तरस्य स्वस्वविषयविनियोगे आकाङ्क्षादिलक्षणकल्पनामूलोच्छेदात् श्रुतिकल्पनाप्रतिबन्धेनालब्धप्रमाणभावस्य बाधनान्नोक्तदोष इति भावः । **ननु** सोयमप्राप्तबाध इत्ययुक्तम् । अथ यत्तत्र तत्राभिधीयते इदमनेन बाध्यते इदमनेन बाध्यत इति तत्र यद्बाध्यते किं तद्बाधकविषयमप्राप्तमुत प्राप्तम् । किंचातः यद्यप्राप्तं किं बाध्यते । अथ प्राप्तं कथं शक्यते बाधितुं प्राप्तं बाधकविषयं पूर्वविज्ञानमिति ब्रूमः इति भाष्ये प्राप्तबाधत्वस्योक्तेरित्याशङ्क्य भाष्यस्य प्राकृतवैकृतसामान्यविशेषनित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्वापर्यनिष्प्रयोजनसप्रयोजनाल्पभूयःसावकाशानवकाशाङ्गप्रधानाङ्गधर्मप्रधानधर्मादिविषयत्वात् श्रुतिलिङ्गादिबाधस्याप्राप्तबाधत्वं नानुपपन्नमित्याशयेन भाष्यस्य शङ्कोत्तरयोः प्राकृतवैकृतादिपरत्वस्फोरणाय स्वयं तद्विषये शङ्कोत्तरे दर्शयति—**यत्त्विति । तद्वदेवेति** । प्रापकस्य शास्त्रस्य सद्भावे प्राप्तबाधत्वप्रसङ्गादिति भावः । **एकत्वादिति** । चोदकस्य पदार्थभेदेन नानात्वाभावादिति भावः । **ननु** न्यायबलाद्वैचित्र्याभ्युपगमोऽपि न दुष्यतीत्यत आह—**नचेति** । तथात्वे प्रापकस्य शास्त्रस्याप्रामाण्यापत्तेरिति भावः । **प्राप्तमपीति** । शास्त्रस्य तात्पर्यविषयीभूतार्थबाधनेऽप्रामाण्यापत्तेः चोदकलक्षणशास्त्रस्य च प्रत्याम्नानलुप्तार्थादिव्यतिरिक्त एव तात्पर्यं तेन प्रकृतिवत्कुर्यादित्येवं सामान्यावगममात्रेण प्राप्तस्य प्राकृतस्य बाधेऽपि तात्पर्यविषयबाधाभावान्नाप्रामाण्यमिति दशमाद्ये समर्थितमित्यर्थः । **ननु** श्रुतिलिङ्गादिप्रस्तावादप्यथ यत्तत्रतत्रेत्यादिभाष्यस्य श्रुतिलिङ्गादिविषयत्वप्रतीतेः कथं तस्य प्राकृतवैकृतादिविषयत्वमित्यत आह—**अथ यदिति । स्थित इति** । अत्र बाधस्योक्तप्रकारत्वात्प्रश्नस्तावन्न युज्यत इति पूर्वार्धं द्रष्टव्यम् । ग्रन्थकारेण तु वक्ष्यमाणप्राभाकरोक्तस्योत्तरार्धमात्रविषयत्वात्तन्मात्रमुक्तम् । ततश्चायमर्थः—इदं भाष्यं श्रुत्यादिविषयं न भवति श्रुतिलिङ्गादिष्वर्थविप्रकर्षाद्बाध इत्युक्तत्वेन निर्ज्ञातेर्थे प्रश्नानुपपत्तेः कल्पनामूलोच्छेदेनाप्राप्तबाधस्यैव स्थितत्वेन तत्र प्राप्तबाध इत्युत्तरासंभवाच्चेति वार्तिके एव श्रुत्यादिविषयत्वमस्य भाष्यस्य नेति साधितमिति 'स्थिते चाप्राप्तबाधत्वे प्राप्तबाधोऽपि नोत्तर'मिति यदाचार्यैर्भाष्ये दूषणमुक्तं तत्प्राभाकरैः परिहृतं तदनूद्य निराकरोति—**केचनेत्यादिना** । अत्र सामान्यतः प्राप्तिमित्यारभ्य निवर्तत इत्यन्तो गुरुग्रन्थः ऋजुविमलायां तथा लेखनात् । तत्र च गुरुग्रन्थे अपेक्षितं पूरयितुं ग्रन्थकारेण केचनेत्युक्तं तस्यच व्यपदिशन्तीत्यनेनान्वयः । अस्य दूषणस्येत्येतन्न कश्चित्परिहारलेशोऽभिहित इत्यनेन संबध्यते । ततश्चायमर्थः—सामान्यतः लिङ्गविनियोज्यमन्त्रसामान्यादित्यर्थः । 'बर्हिर्देवसदनं दामी'त्यादिर्वस्तुतो लिङ्गविनियोज्यो यो

---

१ प्रत्यक्षप्रमितत्वात्. २ भवितुं युक्तं. ३ शास्त्राप्राप्तं. ४ वक्ष्यते.

कश्चिदपि परिहारलेशः। नहि विप्रकृष्टप्रमाणं संनिकृष्टप्रमाणात्प्राक् प्राप्तं व्यवहारमपि निर्वर्तयति। यतस्तन्निर्वर्तकतासंनिकृष्टस्य स्यादतो नेदमुपदेशबाधविदामभिधानमपि त्वतद्विदा(मेवतु तादृशामीदृशमभिधान)मित्युपरम्यते। 'श्रुत्यादीनामतः षण्णामेकार्थोपनिपातिनाम्॥ पूर्वं पूर्वं बलीयः स्याद्दुर्बलं चोत्तरोत्तरम्॥'

द्वादशोपसत्ताया अहीनाङ्गताधिकरणम्॥ ८॥

## अहीनो वा प्रकरणाद्गौणः॥१५॥ [असंयोगात्तु मुख्यस्य तस्मादपकृष्येत॥१६॥]

तिस्र एव हि साह्ने स्युरहीने द्वादशेत्यतः॥ ज्योतिष्टोमे द्वादशत्वमथवाहर्गणे भवेत्॥ ३१॥
अस्तु प्रकरणादाद्यो नाहीनत्वं विरुध्यते॥ प्रकृतित्वान्न केनापि हीनोऽतोऽत्र विकल्प्यताम्॥ ३२॥
साह्नाद्भिन्नाऽहीनसंज्ञा रूढैषाऽहर्गणे भवेत्॥ षष्ठीश्रुत्या द्वादशत्वं प्रक्रियातोऽपकृष्यताम्॥ ३३॥

एवं विरोधे श्रुत्यादेर्बलाबलमुदीरितम्॥ अतःपरं विरोधः क्व क्व नास्तीति विचार्यते॥ प्रथमं तावत्प्रकरणस्य श्रुत्यादिभिः सह चिन्ता। ज्योतिष्टोमप्रकरणे 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये'ति श्रुतं तत्र साह्नशब्देन सहाह्ना समाप्यमानत्वाज्ज्योतिष्टोमोऽभिधीयत इति त्र्युपसत्त्वं तावत्तदङ्गं, द्वादशोपसत्त्वमपि किं तस्यैवाङ्गमुत द्वादशाहादेरहर्गणस्येति संशयः। तदर्थं च किमहीनश्रुत्या प्रकरणं विरुध्यते नेति। 'तत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्वं प्रतीयते॥ तत्रैवाहीनशब्दोऽपि न हीन इति वर्तते॥' खप्रत्ययान्तो ह्यहर्गणवचनः स्यात्। नञ्समासस्त्वत्र प्रकरणाविरोधादङ्गीक्रियते। न हीयत इत्यहीनः। नह्यसौ केनचित्क्रतुना हीयते। सर्वे क्रतवस्तं प्रकृतित्वेनापेक्षमाणा न त्यजन्ति, तेन श्रुत्य-

मन्त्रः तत्सामान्यस्य अर्थप्रकाशनसमर्थमन्त्रत्वादिरूपस्यैन्द्र्यादौ दर्शनादिति यावत्। प्राप्तिं वस्तुतो लिङ्गविनियोज्यमन्त्रस्थलीयां प्राप्तिं मन्वानाः स्मरन्तः विशेषमैन्द्र्यादिमन्त्रगोचरग्रहणस्य बर्हिर्देवसदनमित्यादिमन्त्रगोचरप्राप्तिस्मरणस्य च स्वरूपतो विषयतश्च भेदमपश्यन्तः सन्तः। **स्मृतीति**। स्मृतित्वाभिव्यञ्जकतत्तोल्लेखप्रयोजकसंस्कारशक्तेः प्रमोषो यस्मिन्व्यपदेशे निमित्तं तद्यथा भवति तथा स्मृतिप्रमोषादिति यावत्। केचन भ्रान्ता जनाः प्राप्तिज्ञानं व्यपदिशन्ति प्राप्तिं जानीम इत्येवं प्राप्तिज्ञानं व्यवहरन्ति, यथा शुक्तिकायां रजतसाधारणं यद्रूपं तावन्मात्रेण गृहीतायां यद्रजतस्मरणं जायते तस्य ग्रहणाद्भेदमपश्यन्तः रजतं जानीम इति व्यवहरन्ति तद्वद्विशेषदर्शनाद्विनियोजकश्रुतिदर्शनकृतात्प्राप्तिस्मरणमेवेदं नतु प्राप्तिज्ञानमिति विशेषदर्शनात्तेषां जनानामयं प्राप्तिज्ञानव्यवहारो निवर्तत इति। एवंच वस्तुतः प्राप्तिज्ञानतद्बाधयोरभावेऽपि विवेकाग्रहनिबन्धनप्राप्तिज्ञानव्यवहारात्तद्बाधाच्च प्राप्तबाधस्य श्रुतिलिङ्गादिषु संभवेन भाष्यस्य श्रुतिलिङ्गादिविषयतयैवोपपत्तेर्वार्तिकोक्तं भाष्यदूषणमनुपपन्नमित्यर्थः। इत्यनेनेत्यादिः प्राभाकरग्रन्थदूषणार्थः। इत्यनेन गुरुग्रन्थेनास्य वार्तिकोक्तस्य दूषणस्य कश्चिदपि परिहारलेशो नाभिहित इत्यर्थः। कुत इत्यत आह—**नहीति**। प्रत्यक्षश्रुत्या विशेषदर्शनेसति लिङ्गात्प्राप्तिव्यवहार एवानुपपन्न इति भावः। नच प्रत्यक्षश्रुतिमपश्यतस्तादृशव्यवहारः संभवतीति वाच्यम्। तथासत्यर्थलोपादिकमपश्यतः पुरुषस्य चोदकादपि स्मृतिप्रमोषनिमित्तप्राप्तिव्यवहारमात्रमिति वक्तुंशक्यत्वेन तत्रापि वस्तुतस्त्वन्मते प्राप्तिज्ञानाभावप्रसङ्गात्तदभिसंधायाह—**अत इति**॥

**अहीनो वा प्रकरणाद्गौणः॥ १५॥** अध्यायाद्यसूत्रप्रतिज्ञातार्थमध्येऽन्त्यस्य निरूपणमिदानीं प्राप्तावसरमित्याशयेनाह—**एवमिति**। **प्रथममिति**। बहुविषयत्वादिति भावः। संज्ञाभेदादर्थान्तरं गम्यत इति सिद्धान्ते वक्ष्यमाणस्य सुखप्रतिपत्त्यर्थमाह—**साह्नशब्देनेति**। सहैवाह्ना संस्थापयन्तीति वाक्यशेषानुगतत्वादयमेव योगो ग्राह्य इति भावः। द्वादशाहादेरित्यादिशब्देन द्विरात्रादीनामेकादशरात्रान्तानां ग्रहणम्। षष्ठीश्रुतेः पक्षद्वयेऽप्युपपत्त्या तया स्वतःप्रकरणस्य विरोधाभावादहीनश्रुत्येत्युक्तम्। **तत्रैवेति**। ततश्च न प्रकरणस्य श्रुतिविरोध इति भावः। **ननु** रूढ्याहर्गणवचनस्य योगाज्ज्योतिष्टोमे वृत्तिरयुक्तेत्यत आह—**खप्रत्ययान्त इति**। 'तस्य समूह'इत्यधिकारे'अह्नः खः क्रतौ'वित्यहन्शब्दात् क्रतुसमूहे खप्रत्ययोपसंख्यानादिति भावः। ततश्चाहर्गणेऽपि योगादेव वृत्तिरिति रूढिरसिद्धेत्याशयः। **नन्वेवमपि** मध्योदात्तत्वात्खप्रत्ययान्ततैव स्वीकार्येत्यत आह—**नञ्समास इति**। व्यत्ययान्मध्योदात्तत्वमिति भावः। **नहीति**। अयं ज्योतिष्टोमः केनापि सोमयागेन न त्यज्यत इत्यर्थः। कुत इत्यत आह—**सर्व इति**। **साह्नादिति**। एकार्थविषयकशब्दद्वयप्रयोगानर्थक्यादहीनशब्दश्रवणे सति साह्नादर्थान्तरं स्वरसतः प्रतीयत इति न साह्नशब्दवाच्यज्योतिष्टोमाङ्गत्वं

१ प्राप्तं सत् व्यव. २ धानं किंत्वतद्विदा. ३ स्त्वयं. ४ नजहति.

विरोधाज्ज्योतिष्टोमाङ्गत्वे प्राप्ते ब्रूमः—'साह्लादर्थान्तरं तावदहीन इति गम्यते ॥ रूढिश्चेयं द्विरात्रादौ सा च योगाद्बलीयसी ॥ तत्रापि यौगिकत्वं चेन्न सत्रेष्वप्रयोगतः ॥ मध्योदात्तं पदं चेदमतः खप्रत्ययान्तता ॥' साह्नशब्देन ज्योतिष्टोममभिधाय पुनरहीन इत्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते। रूढ्या च द्विरात्रादिवचनत्वान्न योगेन ज्योतिष्टोमे वर्तितुमर्हति। ननु द्विरात्रादावह्नां समूह इत्येवं योगेनैव वृत्तिः। न, सत्रेष्वप्रयोगात्। किंच नञ्समासत्वेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यात्। मध्योदात्तं त्विदं पदम्। अतः खप्रत्ययान्तत्वम्। तथासति ह्यायन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमित्येवमीनादेशस्यैवोपदेशित्वात्प्रत्ययाद्युदात्तत्वेनेकारस्वरः सिद्धो भवति। तस्मादहीनश्रुतेरहर्गणवचनत्वात्तद्विषयमेव द्वादशोपसत्त्वं षष्ठीश्रुत्या गम्यते। तत्तु पृथग्विधीयते, वाक्यान्तरप्राप्तं वा त्र्युपसत्त्वस्तुत्यर्थमनूद्यते। सर्वथा तावद्द्वादशाहीनस्येत्येतदहर्गणविषयमिति सिद्धम्॥

कुलायादौ प्रतिपदोरुत्कर्षाधिकरणम्॥ ९॥

**द्विबहुत्वयुक्तं[3] चाचोदनात्तस्य ॥ १७॥ [पक्षेणार्थकृतस्येति चेत् ॥ १८॥ न प्रकृतेरेकसंयोगात् ॥ १९॥]**

युवं हीति द्वयोः कर्त्रोर्बहूनां चैत इत्यमूम्॥ कुर्यात्प्रतिपदं ज्योतिष्टोमे साहर्गणेऽथवा ॥ ३४॥
एकस्य शक्तिराहित्ये द्वाभ्यां बहुभिरेव वा ॥ ज्योतिष्टोमस्य कार्यत्वात्प्रकृतेऽत्रैव सा भवेत्॥ ३५॥
यजमानस्य नानात्वं साक्षाद्विकृतिषु श्रुतम्॥ उत्कृष्य प्रतिपत्तेन कुलायादिषु नीयताम्॥ ३६॥

ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, 'एते असृग्रमि-

---

द्वादशोपसत्त्वस्येत्यर्थः। अहीनशब्दस्य रूढत्वादपि न साह्ने वृत्तिरित्याह—**रूढिश्चेति**। **तत्रापीति**। ततश्च योगाविशेषात्प्रकरणानुग्रहाय नञ्समास एवाश्रयणीय इति भावः। **सत्रेष्विति**। ततश्चाहर्गणमात्रे प्रयोगाभावादहर्गणविशेषद्विरात्रादौ यजतिचोदिते योगरूढोऽयं शब्द इति भावः। किंच न हीनोऽहीन इति त्वदुक्तो योगोऽप्यत्र नावकाशं लभत इत्याह—**मध्योदात्तमिति**। अनाद्युदात्तमित्यर्थः। यद्वा पदं प्रातिपदिकमित्यर्थः। इत्थमेव श्लोकौ व्याचष्टे—**साह्नशब्देनेति**। **अव्ययेति**। 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्याः' इत्यनेन सूत्रेण तत्पुरुषे समासेऽव्ययादीनां पूर्वपदभूतानां प्रकृतिस्वरत्वं विधीयते। प्रकृतिस्वरत्वं नाम तेषां समासाभावदशायां यः स्वरः समासेऽपि तत्स्वरवत्त्वम्। ततश्चात्राव्ययस्य नञः पूर्वपदस्य प्रकृतिस्वरत्वे तस्य 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जे'मित्युदात्तत्वात्समासेऽपि नञएवोदात्तत्वमितरस्य तु सर्वस्य 'अनुदात्तं पदमेकवर्जे'मित्यनुदात्तत्वमित्यहीनपदमाद्युदात्तं स्यादित्यर्थः। ननु 'आद्युदात्तश्चे'त्यनेन सूत्रेण प्रत्ययसंज्ञासंनियोगेन विधीयमानमाद्युदात्तत्वमन्तरङ्गत्वादीनादेशात्पूर्वमेव भवति। ततश्च खप्रत्ययान्तत्वेऽन्तोदात्तत्वमेव स्यान्न मध्योदात्तत्वमित्यत आह—**तथासतीति**। 'आयनेयीनीयियः' इत्यादिसूत्रचतुष्कविहिता आदेशा आपन्नादयः तेषूपदेशिवद्भावः उपदेशः प्रत्ययोपदेशः सोऽस्यास्तीत्युपदेशी उपदेशिना तुल्यं वर्तेत इत्युपदेशिवत्। ततश्चोपदेशिवदिति वचनं कर्तव्यं स्वरसिद्ध्यर्थमित्येवमीनादेशस्याप्युपदेशिवद्भावानुशासनेन प्रत्ययोपदेशकाल एवोपदिष्टप्रायत्वात् प्रत्ययसंज्ञाप्रवृत्तिदशायामेवेनादेशस्य सद्भावात्तत्संज्ञासंनियोगेन विधीयमानमप्युदात्तत्वमीकारस्यैव भवतीति युक्तं मध्योदात्तत्वमित्यर्थः। **ननु** द्वादशोपसत्त्वं नाहीने विधातुमुचितं द्वादशाहे द्वादशदीक्षा द्वादशोपसद इति प्राकरणिकवाक्येन द्वादशोपसत्त्वस्य विधानादहीनान्तरेष्वपि ततएव चोदकप्राप्तेश्च। नचैवं मास्तु विधिर्यथाऽहीनस्य द्वादशोपसत्त्वमुचितमेवं साह्नस्य त्र्युपसत्त्वमुचितमित्यौचित्येन त्र्युपसत्त्वस्तुत्यर्थं द्वादशोपसत्त्वस्यानुवादोऽस्त्विति वाच्यम्। तथासति द्वादशोपसत्त्वस्य त्र्युपसत्त्वस्तुत्यर्थतया प्रकृतिज्योतिष्टोमोपयोगसंभवेनास्याधिकरणस्य प्रकरणविरोधाविरोधचिन्तारूपत्वाभावप्रसङ्गादित्यत आह—**तत्त्विति**। चोदकेन प्रत्यक्षवचनस्यान्यथयितुमयुक्तत्वाच्छाखान्तरत्वाद्वा स्वरसतः प्राप्तं विधित्वं संभवत्येव। अस्तुवा निवीतादिवदेकवाक्यतानुसारेण स्तुतित्वं, तत्र यद्यपि स्तुतेः प्रकरणसंबन्धोऽस्ति तथापि द्वादशोपसत्त्वस्य ज्योतिष्टोमप्रकरणेन विनियोज्यत्वं नास्ति। एवंच द्वादशोपसत्त्वं विधीयते इति पूर्वपक्षे प्रकरणेन विनियोगात्प्रकरणानुग्रहः, सिद्धान्ते तु प्रकरणविनियोज्यत्वाभावात्तद्बाध इत्येवं प्रकरणविरोधाविरोधचिन्तारूपत्वसंभवात्स्तुत्यर्थत्वं वार्तिकोक्तं युज्यत इति भावः॥

**द्विबहुत्वयुक्तं चाचोदनात्तस्य ॥ १७॥ युवं हीति**। यदि द्वौ यजमानौ यजेयातां तदा युवं हि स्थ इत्येता-

---

१ द्वावप्यह्नां. २ तथासत्यापन्नादिषु. ३ द्वित्वबहुत्व.

ध्वं' इति बहुभ्यो यजमानेभ्य इति । तत्र संशयः किमेते प्रतिपदौ ज्योतिष्टोमस्योत द्विबहुयजमानकेषु कुलायाहीनादिषूत्कष्टव्ये इति । तदर्थं च किं ज्योतिष्टोमे द्वौ बहवश्च यजमानाः संभवन्ति उत नेति । तत्र—'हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते ॥ तेनैकत्वं विहाय द्वौ बहवो वा प्रयुञ्जते ॥' यद्यपि नित्यवाक्येऽपि 'वसन्तेवसन्ते ज्योतिषा यजेते'ति आख्यातोपात्तगुणभूतोपादेयकर्तृगतमेकत्वं विवक्षितम्, तथापि नित्येऽशक्तिकृताङ्गत्यागाभ्युपगमाद्यदैको न शक्नुयात्तदाङ्गान्तरवदेकत्वं विहाय द्वौ बहवो वा यजेरन् तदाश्रयणेन प्रतिपद्विधानं प्रकृतावेवोपपन्नमिति नोत्कर्षः । 'नैतदेवमशक्याङ्गमुपादेयं हि लुप्यते ॥ अनुपादेयमेकत्वं यजमानस्य कालवत् ॥' 'सोमेन यजेत', 'वसन्तेवसन्ते ज्योतिषा यजेते'त्युत्पत्तिप्रयोगचोदनयोः श्रुतमेकत्वमपरित्यज्याङ्गान्तरस्यैव त्यागो युक्तः । किंच 'यत्खलूपादेयमङ्गं यजमानस्य कर्तव्यतया चोद्यते तद्विषय एव यथाशक्त्युपबन्धः । यत्त्वनुपादेयं कालवन्न तत्रैवमुपबन्धः । तदपेक्षस्तु विधिस्तद्वन्तमधिकृत्य प्रवर्तते । अनुपादेयं च यजमानस्यासीयमेकत्वं, अतएको यथा शक्नुयादित्युपबन्धादङ्गान्तरं दक्षिणापरिमाणादिपरित्यज्यैक एव प्रवर्तेत इति प्रकृतौ द्वित्वबहुत्वयोरभावात्षष्ठीश्रुत्या तत्संयुक्तयोः प्रतिपदोस्तद्वत्सु कुलायादिषूत्कर्षः । नच पत्न्यभिप्रायं द्वित्वबहुत्वं युक्तम् । यजमानशब्देन वेदे सर्वदा पुंस एवाभिधानात्, पत्न्यास्तु पत्नीशब्देनैवाभिधानात्, । बहुभ्य इति विरूपैकशेषस्य प्रमाणमन्तरेण दुरुप-

---

सूचं बहिष्पवमानस्तोत्रे प्रथमं कुर्यादित्यर्थः । **कुलायेति** । एतेन राजपुरोहितौ यजेयातामिति विहित एकाहविशेषः कुलायः । एकः द्वौ बहवो वाऽहीनेन यजेरन्निति वचनादहीनानां द्विबहुयजमानकत्वम् । आदिशब्दः सत्रादिपरः । **ननु** एकत्वस्याङ्गत्वमेव नास्ति तत्कथमङ्गत्वमभिप्रेत्य तद्धीनेन प्रयोग उच्यत इति तटस्थशङ्कानिराकरणाय षष्ठे स्वर्गकामो यजेतेति कामवाक्यमुदाहृत्य वक्ष्यमाणन्यायेन नित्यस्थलेऽप्येकत्वस्याङ्गत्वं द्रढयन् श्लोकं व्याचष्टे—**यद्यपीति** । **आख्यातेति** । आख्यातोपात्तो यो भावनांप्रति गुणभूतत्वादुपादेयः कर्ता तद्गतमेकत्वमुपादेयगतत्वाद्विवक्षितमित्यर्थः । **अभ्युपगमादिति** । सर्वशक्त्यधिकरणन्यायादिति भावः । **नोत्कर्ष इति** । अनेन पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **नन्वश**क्यस्याप्यङ्गस्य प्रयोगविधिवशादुपादातुं योग्यस्यैव त्यागो नानुपादेयस्य कालाद्यादेरित्यस्यार्थस्य षष्ठे निपुणतरं वक्ष्यमाणत्वात्ततएवैकत्वस्याप्यनुपादेयस्यापरित्याज्यत्वसिद्धेरिदं व्यर्थमित्याशङ्क्य युक्त्यन्तरप्रतिपादनार्थत्वान्नानर्थक्यमित्यभिप्रेत्य श्लोकासंगृहीतमपि तदेव युक्त्यन्तरं प्रथमत आह—**सोमेनेति** । उत्पत्तिकालेऽनुष्ठानाशक्तिहेतोर्दक्षिणाबाहुल्यादेरनवगमेनोत्पत्तिवाक्यश्रुतमेकत्वमनुपसंजातविरोधित्वान्न परित्याज्यम् । तथा यदशक्यमङ्गं तत्प्रयोगविधिर्न संगृह्णातीति हि तस्य परित्यागः । इदं त्वेकत्वं प्रयोगविधावपि श्रूयत इति न परित्याज्यमित्यर्थः । इदानीं श्लोकं व्याचष्टे—**किंचेति** । पुरुषप्रयत्नसंपाद्यं यदङ्गं प्रधानविधिना कर्तव्यतया चोद्यते तद्विषय इत्यर्थः । **उत्कर्ष इति** । नच प्रकृतावेव द्वित्वबहुत्वविशिष्टप्रतिपद्विधानसंभवान्नोत्कर्ष इति वाच्यम् । उत्पत्तिशिष्टैकत्वविरोधेन द्वित्वविध्यसंभवेन विशिष्टविध्ययोगाद्विशिष्टविधिगौरवप्रसङ्गाच्च । तस्मादनेन यजमानद्वित्वे तद्बहुत्वे च निमित्ते मन्त्रविशेषमात्रविधिरित्याश्रयणीयम् । नचात्रापि विशिष्टोद्देशाद्वाक्यभेदः स्यादिति वाच्यम् । यजमानमात्रस्य द्वित्वमात्रस्य च नित्यतया निमित्तत्वासंभवेन हविर्विशिष्टार्तैरिव विशिष्टयोद्देश्यत्वेऽपि दोषाभावान्नच तथासति प्रकृतौ निवेशः संभवतीति सिद्ध उत्कर्षः । **नन्वेवमप्येतद्विध्यन्यथानुपप**त्त्यैव द्वौ वा त्रयो वा ज्योतिष्टोमेन यजेरन्निति श्रुतिः कल्प्यताम् । ततएव चोत्पत्तिशिष्टस्यापि सोमेन यजेतेत्येकत्वस्य पाक्षिकत्वं स्वीक्रियताम् । एवंच द्वित्वबहुत्वपक्षे प्रतिपदन्तरविधानात् 'उपास्मै गायता नर'इति नित्यप्रतिपदेकत्वपक्षे सावकाशेति न काप्यनुपपत्तिरितिचेन्न । विकृतावुत्कर्षेणाप्यस्य विधानस्योपपत्त्याऽन्यथानुपपत्त्यभावेन श्रुतिकल्पनायोगादिति भावः । **नचेति** । आधानानन्तरं दारान्तरपरिग्रहनिषेधेऽपि ततः प्रागेवानेकदारत्वे बहुत्वमुपपद्यत इति भावः । **ननू**पहूतेयं यजमानेत्यादिदर्शनान्नायं नियम इत्यस्वरसादाह—**बहुभ्य इति** । यद्यपि संख्यावाचिनो बहुशब्दस्य नित्यबह्वर्थकत्वादेकार्थप्रतिपादनाशक्त्या प्रत्यर्थं शब्दनिवेशाप्रसङ्गान्न तत्रैकशेषप्रसक्तिः, तथापि बहुभ्य इत्यनेन तद्घटितवाक्यं लक्ष्यते । ततश्च बहुभ्यो यजमानेभ्य इत्यत्र द्वयोर्यजमानयोरित्यत्र च यजमानशब्दे विरूपैकशेषो वाच्यः । सच लाक्षणिकत्वाल्लक्षणायाश्च प्रमाणान्तरमूलकत्वादसति प्रमाणान्तरे दुरुपपाद इत्यर्थः । **नच** यजमानप्रातिपदिकेन यजमानत्वाकारेण स्त्रीपुंसयोरुभयोरपि प्रतिपादने कथं लक्षणेति वाच्यम् । यजमानेभ्य इति पुंस्त्वप्रत्यायकविभक्तिविशेषसमभिव्याहारात्पदश्रुत्या पुंगतमेव यजमानत्वं प्रत्याय्यमिति यजमानत्वाकारेण स्त्रीपुंसयोः प्रतिपादनासंभवात् वृत्तिवाक्ययोरेकार्थतया वाक्ये स्त्रीत्वपुरुषत्वरूपेण प्रतीतयोरेकशेषवृत्तावपि तेनैव रूपेण प्रतिपादनीयतया यजमानत्वमात्राकारेण प्रतिपादनस्यायुक्तत्वाच्च । तस्मादस्ति

---

१ गमाद्यदैको. २ यमङ्गं यजमानस्य चोद्यते. ३ यजत्यभिप्रायं.

पादत्वात्। अपिच यजमानयोरिति यजमानशब्दस्य कर्तृवचनत्वात्कर्तृद्वित्वं प्रतीयते। नच पत्न्य-भिप्रायेण कर्तृद्वित्वं संभवति, दंपत्योर्हि व्यासक्तं कर्तृत्वमग्नीषोमयोरिव देवतात्वम्, अतस्तत्रैकवच-नमेव स्यात् यथा फलवाक्ये स्वर्गकामो यजेतेति। अधिष्ठानाभिप्रायत्वे लक्षणा स्यात्तस्मादुत्कर्षः॥

जाघन्या अनुत्कर्षाधिकरणम्॥ १०॥

**जाघनी चैकदेशत्वात्॥ २०॥ [चोदना वाऽपूर्वत्वात्॥ २१॥ एकदेश इति चेत्॥ २२॥ न प्रकृतेरशास्त्रनिष्पत्तेः॥ २३॥]**

संयाजयन्ति जाघन्या पत्नीरेतत्पशावुत॥ दर्शादौ तत्पशौ युक्तं जाघन्याः समवायतः॥ ३७॥
जाघनी नाम भागोऽसौ दर्शादौ समवैति हि॥ नोत्कृष्टव्यं न संस्कार्या साधनत्वात्तृतीयया॥ ३८॥

दर्शपूर्णमासयोः पत्नीसंयाजान्प्रकृत्य श्रूयते 'जाघन्या पत्नीः संयाजयन्ती'ति। तत्र चिन्ता किमिदं विधानं पशावुत्कृष्यते[2] नेति। यदि जाघनीं कृतार्थामुद्दिश्य पत्नीसंयाजाः संस्कारा विधीयन्ते ततो वाक्यवशेनोत्कर्षः। अथ पत्नीसंयाजानां जाघनी द्रव्यं विधीयते ततोऽनुत्कर्षः। तत्रारादुपकारकात्सामवायिकस्य गरीयस्त्वाज्जाघनीशब्दस्य चोत्तरार्धादिशब्दवदेकदेशवचनत्वादेकदे-शद्रव्याणां च विद्यमानैकदेशिसंयोगाद्यत्र परप्रयुक्तपश्वनुनिष्पन्ना जाघनी विद्यते तत्र तस्याः संस्का-रत्वेन पत्नीसंयाजविधानमिति प्राप्तेऽभिधीयते—'जाघनी हि गुणत्वेन तृतीयोक्त्यावगम्यते॥ पत्नी-संयाजयागाश्च द्रव्यापेक्षाव्यवस्थिताः॥ तेन[3] तेषां गुणत्वेन जाघन्यत्र विधीयते॥ नच सापेक्षवृत्ति-त्वमुत्तरार्धादिशब्दवत्॥' उत्तरार्धादिशब्दा हि परापेक्ष्यैव स्वार्थमवबोधयन्तो युक्तं यत्परप्रयुक्तमे-

---

विरूपैकशेषे लक्षणा। उक्तंच भाष्ये 'य एकशेषः पुमान्स्त्रियेति स लक्षणाशब्दएवे'ति। **अपिचेति**। स्त्रीपुंसयोर्व्यास-क्तमेव यजमानत्वं न प्रत्येकमिति। यजमानद्वित्वं बहुत्वं च सर्वथा प्रकृतावनन्वयीत्यर्थः। सूत्रार्थस्तु—द्वित्वबहुत्वयुक्तं च प्रतिपद्यं विकृतावुत्कृष्येत तस्य द्वित्वबहुत्वस्य प्रकृतावचोदनादिति॥

**जाघनी चैकदेशत्वात्॥ २०॥** किं जाघन्यर्थाः पत्नीसंयाजा उत पत्नीसंयाजार्था जाघनीति तदर्थसंशयं मनसि निधाय फलफलिभावमाह—**यदीति**। **कृतार्थामिति**। कृतार्थां पशुसंपातायातामिति यावत्। **वाक्यवशेनेति**। द्वितीयाद्यभावेन जाघन्याः संस्कार्यत्वस्य वाक्यप्रमाणकत्वादिति भावः। **गरीयस्त्वादिति**। गरीयस्त्वं चेह दृष्टार्थत्वा-दिति भावः। **ननु** तृतीयाश्रुत्या जाघन्या गुणत्वप्रतीतेः सामवायिकत्वाभ्युपगमो न युक्त इत्यत आह—**जाघनीशब्द-स्येति**। यथोत्तरार्धात्स्विष्टकृते समवद्यतीत्युत्तरार्धशब्दस्यैकदेशवचनत्वात्कस्योत्तरार्धादित्यपेक्षायां प्रकृताग्नेयादिपुरोडाशस्ये-त्यवगमेन द्रव्यान्तराप्रयोजकत्वेन स्विष्टकृतः प्रतिपत्तित्वं तद्वज्जाघनीशब्दस्याप्येकदेशवचनत्वेन तद्द्रव्यकयागस्य स्वयं द्रव्य-प्रयोजकत्वाभावाद्यत्रैकदेशी विद्यते तदीयस्यैकदेशस्य ग्राह्यत्वादेशसद्भावस्थले च परप्रयुक्तैकदेशिसंपातायाततदेकदेशस्य प्रतिपाद्यत्वमेव न्याय्यमिति पत्नीसंयाजानामपि प्रतिपत्तित्वाद्यत्र पशुयागे पशुलक्षण एकदेशी वर्तते तत्र तदेकदेशभूतजा-घनीसंस्कारविधानमेवेदमिति तत्रोत्कृष्टव्यमित्यर्थः। **पश्वनुनिष्पन्नेति**। पाशुकहविर्भूतहृदयाद्यनुनिष्पन्नेत्यर्थः। एवंच यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र शेषश्रुतिबलात्प्रतिपत्तित्वावगमाद्यत्ययाश्रयणेन तृतीयासमर्थनं एवमिहाप्येकदेशवचनजा-घनीश्रुतिबलादेव प्रतिपत्तित्वावगमात्तदनुसारेण तृतीया नेतव्येति भावः। **जाघनीति**। वक्ष्यमाणोत्तरार्धादिशब्दवैषम्यादेव प्रयाजशेषवैषम्यं सिद्ध्यतीति भावः। **पत्नीसंयाजयागाश्चेति**। तेषां प्रतिपत्तित्वे पत्नीः संयाजयन्तीत्यनेन पाशुकपत्नी-संयाजानामभिधानं वाच्यम्। नच तत्संभवति तेषां प्रकरणान्तरगतत्वेनासंनिहितत्वात्किंतु बुद्धौ विपरिवर्तमानत्वाद्दार्श-पूर्णमासिकानामेव तेषामभिधानम्। ततश्च दार्शपूर्णमासिकानां पत्नीः संयाजयन्तीति द्रव्यविशेषासंयुक्ततया विहितानां द्रव्यापेक्षत्वाद्गुणत्वेनैव जाघनी विधीयत इत्यर्थः। एवंच दर्शपूर्णमासयोः प्रतिपत्त्यर्हजाघन्यभावाद्दार्शपूर्णमासिकपत्नीसंया-जानां प्रतिपत्तितया विधानानुपपत्त्या धात्वर्थविध्यसंभवाद्गुणविधानमेव न्याय्यमिति भावः। **ननू**त्तरार्धादिशब्दा अप्यव-यवविशेषवचनाः जाघनीशब्दोऽप्यवयवविशेषवचन इति तुल्यत्वात्कथमुत्तरार्धादिशब्दवत्सापेक्षवृत्तित्वाभाव इत्यत आह— **उत्तरार्धादिशब्दा इति**। सत्यं उभयोरवयवशब्दत्वं तथाप्युत्तरार्धादिशब्द उत्तरार्धत्वादिना प्रतियोगिसापेक्षरूपेणा-भिधत्ते, तेनाग्नेयादिपुरोडाशज्ञानंविना उत्तरार्धस्य ज्ञातुमशक्यत्वात्सापेक्षवृत्तित्वम्। जाघनीशब्दस्तु जातिवचनः। जाति-श्चानपेक्षा। तेनाग्नीषोमीयपशुज्ञानाभावेऽपि प्राणिमात्रस्य जाघनी ज्ञातुं शक्यत इति निरपेक्षवृत्तित्वमिति वैषम्यम्। एवंच

---

१ कर्तृत्वाधिष्ठानतच्छरीराभिप्रायेण द्वित्वे. २ उत नेति. ३ तेनैतेषां.

कदेशिनमपेक्षन्ते। जाघनीशब्दस्त्ववयवविशेषवचनो न किंचिदपेक्षते। अतो निर्मूला स्यादस्योत्कर्षकल्पनेति दर्शपूर्णमासयोरेव निवेशः ॥

संतर्दनस्य संस्थानिवेशाधिकरणम् ॥ ११ ॥

**संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २४॥ [उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥ क्रतुतो वार्थवादानुपपत्तेः स्यात् ॥ २७ ॥ संस्थाश्च कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उक्थ्यादिषु वार्थस्य विद्यमानत्वात् ॥२९॥ अविशेषात्स्तुतिर्व्यर्थेति चेत् ॥३०॥ स्यादनित्यत्वात् ॥३१॥**

संतृंद्येद्दीर्घसोमे तत्प्रकृतौ विकृतावुत ॥ दीर्घस्य सोम इत्युक्ते प्रकृतावस्तु तर्दनम् ॥ ३९ ॥
सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वतः ॥ दैर्घ्ययुक्तोक्थ्यसंस्थादावुत्कर्षोऽन्यत्र बाधनात् ॥ ४० ॥

ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य 'न संतृणत्त्यसंतृण्णे हि हनू' इत्यसंतर्दनं विधाय पुनः श्रुतं 'अथो खलु दीर्घसोमे संतृद्येत् धृत्या' इति। तत्र संशयः किमिदं संतर्दनं प्रकृतावेवाथोत्कृष्यत इति। यदि दीर्घसोमशब्दः प्रकृतावपि वर्तते ततोऽनुत्कर्षः। अथ न वर्तते ततो वाक्यादुत्कर्षः। यदाप्युत्कर्षस्तदापि किं द्विरात्रादिष्वेवोत्कर्षः, अथवा संस्थान्तरेषु द्विरात्रादिषु चाविशेषेणाग्निष्टोमाधिकमात्र इति। तत्र प्रकृतेरपीष्टिपशुबन्धाद्यपेक्षया दीर्घत्वोपपत्तेस्तत्रैव निवेशः। **नन्वसंतर्दनं तत्र** विहितं क्रयवद्विकल्पो भविष्यति। ननु च तत्र समुच्चय एव। सत्यम्। विधानविकल्पाभिप्रायमिदं न प्रयोगाभिप्रायमित्यदोषः। नैतद्युक्तम्। नहि विधेर्विकल्पः, वस्तुनि विकल्पासंभवात्।

---

नियतप्रतियोगिकत्वाभावाच्छागहरिणादेर्यस्य कस्यचिज्जाघनी सूनास्था क्रयेण संपाद्येति भावः। **अत इति**। अनेनोत्कर्षापवादात्सङ्गतिरिति सूचितम्। सूत्रे चशब्द उत्कर्षापकर्षकः॥

**संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात्** ॥ २४ ॥ **अधिषवणेति**। सोमो ययोः फलकयोर्निधायाभिषूयते ते अधिषवणफलके। 'हनू वा एते यज्ञस्य यदधिषवणे' इति फलके प्रस्तुत्येत्यर्थः। संतर्दनं परस्पराविश्लेषाय दृढसंश्लेषणम्। प्रकृतावेवेत्यनेनाविशेषेण दीर्घादीर्घयजमानकप्रकृतिमात्रे निवेश इति कोटेः, दीर्घयजमानकप्रकृतावेव निवेश इति कोटेश्च संग्रहः। **वाक्यादिति**। दीर्घसोम इति सप्तम्याः प्राधान्यप्रतिपादनाशक्तेरत्र शेषशेषिभावस्य वाक्यगम्यत्वादिति भावः। **अथवा संस्थान्तरेष्विति**। यद्यपि वार्तिकेऽथवोक्थ्यादिसंस्थास्विति कोट्यन्तरमुपन्यस्तं तथापि नच संस्थास्वेवेति भ्रमितव्यमिति सा कोटिराशङ्क्य निराकरिष्यत इति नात्र पृथगुपन्यस्ता पूर्ववदिहाप्यनुत्कर्ष इति प्रत्यवस्थानात्सङ्गतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति**। **ननु** न संतृणत्तीत्यसंतर्दनस्य प्रकृतौ विधानात्तद्विरोधेन संतर्दनस्य कथं **प्रकृतौ** निवेश इति शङ्कते—**नन्विति**। अत्राचार्यैः सौत्रं क्रयणवदित्येतदनर्थलोपे दृष्टान्तत्वेनाश्रित्य वासोहिरण्यप्रभृतिषु क्रयद्रव्येषु एकेनैव क्रयसिद्धावितराणि वचनसामर्थ्याद्दीयमानान्यपि सुतरामानर्तिं कुर्वन्तीति वासःप्रभृतिषु यथा नार्थलोपः एवं प्रकृतेऽल्पकालत्वादसंतृण्णयोरपि फलकयोरधिषवसंभवेऽपि वचनसामर्थ्यात्संतर्दनाश्रये सति अधिषवे सौकर्यमेव लभ्यते नत्वर्थलोप इत्यलुप्तार्थत्वात्संतर्दनं प्रकृतौ स्यादिति सूत्रं व्याख्यातम्। भाष्यकारेण तु संतर्दनमलुप्तार्थत्वात्प्रकृतौ स्यात् संतर्दनासंतर्दनयोः क्रयणवद्विकल्पसंभवेनासंतर्दने सत्यपि संतर्दनविशेषोपपत्तेरित्येवं विकल्पे क्रयणवदित्येव दृष्टान्तीकृत्य व्याख्यातम्। तत्र यथाभाष्यं क्रयणवदित्येतस्य विकल्पे दृष्टान्तत्वमवलम्बमानः परिहरति—**क्रयवदिति**। **ननु** तत्र समुच्चयस्य द्वादशे वक्ष्यमाणत्वाद्दृष्टान्तोऽनुपपन्न इति शङ्कते—**नन्विति**। तत्र प्राभाकररीत्या समाधानं शङ्कते—**सत्यमिति**। कदाचिद्वाससा क्रयः कर्तव्यः कदाचिद्धिरण्येन कदाचिदन्येनेत्येवं प्रयोगाभिप्रायविकल्पाभिधानं न संभवति येन सर्वथापि वासःप्रभृतिभिर्दशभिरपि क्रेतव्यतया विकल्पाभिधानमनुपपन्नं स्यात् किंतु गुणकर्मणां साध्यभेदाद्भेदस्य वक्तव्यत्वात् प्रकृते च सर्वत्रापि सोमस्य क्रेतव्यस्यैकतया साध्यभेदाभावेन वासःप्रभृतिषु क्रयभेदाभावादेकस्य च क्रयस्यैकेन वाक्येन विहितस्य पुनरपि वाक्यान्तरेण विध्यनुपपत्तेः सर्वत्र गुणश्रवणेन एकवाक्यं क्रयविधायकमन्यद्वाक्यं गुणविधायकमित्यप्यसंभवादगत्या कदाचिद्वासोवाक्येन विधानं कदाचिदन्येन वाक्येनेत्येवं विधानविकल्पस्य क्रये स्वीकार्यत्वात्तदभिप्रायं दृष्टान्तकथनमित्यर्थः। **नहीति**। यदि पुरुषकृतिसाध्यं तत्कर्तुमकर्तुं च शक्यत इति तत्र परं विकल्पः ननु पुरु-

१ फलकं शिला; अभिषवणे इत्यपपाठः. २ न मिलापयति. ३ दाढ इति भाषायां. ४ ततो न वाक्यात्. ५ विकल्पः संभवति. ६ तै. सं. कां. ६ प्र. २ अ. ११ इत्यत्र रुद्राध्यायेच 'अधिषवणेचमे' इत्येवपाठः.

तेन यद्यप्येककार्याणां संनिपातिनां भेदाभावादेकमेव क्रयकर्म तथैकेनैव विधीयतेऽन्ये गुणविधय: । तत्र विशेषो न गृह्यते सर्वत्र गुणश्रवणात्तथाप्यज्ञानमेव वक्तुं शक्यं न विकल्पाभिधानम् । अपिचारुणावाक्येऽनेकगुणश्रवणात्तत्रैव क्रयविधिरितरे गुणविधय इति विशेषग्रहणान्न विकल्प: । अथवा भिन्नान्येव क्रयकर्माणि गुणाद्गम्यन्ते । नह्येकेन विहितेऽन्ये गुणविधय: संभवन्ति उत्पत्तिशिष्टगुणावरोधात् । प्रमाणवत्त्वाच्च संनिपातिनामप्येककार्याणां भेद आपतन्न दण्डेन पराणुद्यते । तथाच गुणकर्मणामाघातादीनामेककार्याणां द्वितीये भेद उक्त:, तथा प्राकाशावध्वर्यवे ददातीति दानान्तरमेव प्राकृतकार्यं विधीयत इति वक्ष्यते । तथाच शतं ब्राह्मणा: सोमं भक्षयन्तीत्यत्र भक्षान्तरविधावपि प्राकृतकार्यार्थता निबन्धनकारेणैवोक्ता । तस्मात्क्रयवद्विकल्प इति पूर्वपक्षेण दृष्टान्त इति व्याख्येयम् । अत: प्रकृतावेव निवेश: । नैवम् । दीर्घशब्दो हि सोमस्य विशेषणम् । नचेष्ट्याद्यपेक्षया दीर्घत्वं सोमस्य विशेषणं भवति अव्यभिचारात् । अत: सोमान्तरापेक्षमेव दीर्घत्वम् । नच प्रकृते तदस्तीत्युत्कर्ष: । अन्य: पक्ष: । दीर्घसोम इति षष्ठीसमासोऽयं दीर्घस्य यजमानस्य सोम इति । स च प्रकृतावपि संभवतीत्यनुत्कर्ष: । नैवम् । समानाधिकरणसमासस्य बलीयस्त्वात् धृत्या इत्यर्थवादानुपपत्तेश्च । नहि यजमानदैर्घ्योद्धारणे कश्चिद्विशेषो भवति । तस्मात्कर्मापेक्षितमेव

---

यत्कृत्यसाध्ये स्वत:सिद्धे वस्तुनि तस्य द्वैरूप्यासंभवेन तत्र विकल्पानुपपत्तेर्विधानं च न पुरुषकृतिसाध्यमिति न तत्र विकल्प: संभवति । तस्माद्यद्वाक्यं विधायकं तत्र कदाचिदप्यविधायकमित्यर्थ: । यदभिसंधाय परैर्विधानविकल्पोऽङ्गीकृतस्तदनूद्य दूषयति—**तेनेति** । वस्तुनि विकल्पासंभवेनेत्यर्थ: । **तथापीति** । एवं स्वमतेऽभिनिविशमानेन त्वयास्मिन्वाक्ये विधिरिति न ज्ञायत इत्यज्ञानमेव वक्तुं शक्यं नतु विकल्प इत्यर्थ:। **ननु** अरुणावाक्ये क्रयविधावपीतरैस्तत्र गुणविधिर्न संभवति उत्पत्तिशिष्टगुणावरोधादित्याशङ्क्य तर्हि ततएव क्रयभेदं स्वीकुर्वित्याशयेनाह—**अपिचेति** । **प्रमाणेति** । उत्पत्तिशिष्टगुणावरुद्धे निवेशमलभमानो गुण एवात्र भेदे प्रमाणमिति भाव: । किंच प्राभाकरैरपि तत्रतत्रैककार्याणां गुणकर्मणां भेदस्योक्तत्वात्तेषां भेदो नास्तीति वचनं व्याहतमित्याह—**तथाचेति** । 'वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्य: शरदि वैश्य' इति वसन्तादिवाक्यविहिताधानानामग्निलक्षणसाध्यैक्येऽपि भेदो द्वितीये भवद्भिरेवोक्त इत्यर्थ: । द्वितीये तैरेवोक्तेन्द्रवायवादिग्रहणभेदसंग्रहार्थ आदिशब्द: । **ननु** आधानविधावात्मनेपदविवक्षायां ब्राह्मणकर्तृकाधाने ब्राह्मणसंबन्ध्याहवनीयोत्पत्ति: क्षत्रियकर्तृके च क्षत्रियसंबन्ध्याहवनीयोत्पत्तिरिति तत्तत्कर्तृभेदेन तत्तत्संबन्धितयोत्पाद्याहवनीयलक्षणकर्मकारकभेदेन प्रत्यभिज्ञाविरहाद्युक्तस्तत्राधानभेद: । इहतु वास:प्रभृतिकरणभेदेऽपि क्रेतृविक्रेत्रोरभेदात्क्रयस्य च स्वत्वोत्पत्तिपर्यन्तव्यापारत्वादेकदेशक्रयस्याचोदितत्वाच्च प्रतिकरणद्रव्यं स्वत्वोत्पत्तिभेदासंभवादानतिविशेषमात्रेण करणभेदोपपत्ते: कर्मकारकैक्येन प्रत्यभिज्ञानान्नास्ति क्रियाभेद इत्यस्वरसादाह—**तथेति** । दशमे हिरण्मयौ प्राकाशावध्वर्यवे ददातीत्यत्राध्वर्युहिरण्मयप्राकाशविशिष्टदानान्तरं विधीयते । तच्च प्राकृतं यदध्वर्य्वानतिलक्षणं कार्यं तदर्थं । तेनाध्वर्युभागमात्रस्य निवृत्तिर्नतु कृत्स्नक्रतुदक्षिणाया इति वक्ष्यते । ततश्च गुणकर्मणामेकसाध्यानां भेदो भवद्भिरपि तत्रोक्त इत्यर्थ: । **नच** तत्र प्राकाशाध्वर्युसंबन्धविधिरपि वक्ष्यते स एव च संमत:, दानान्तरविधिपक्षस्त्वनास्थयोक्त इति शङ्क्यम् । हिरण्मयत्वादिविधिसौकर्यार्थं दानान्तरविधिपक्षस्यैव संमतेरवश्यवाच्यत्वात् । उक्तंच दशमे भवनाथेन—'दानान्तरविधिपक्षे हिरण्मयताविधिसौकर्यं संबन्धविधिपक्षे तु क्लेशेन हिरण्मयत्वादिविधि'रिति । **शतमिति** । अत्र शतसंख्याब्राह्मणजातिविशिष्टभक्षान्तरविधावपि तस्य भक्षान्तरस्य प्राकृतकार्यार्थताया निबन्धनकारेणोक्तत्वादेककार्याणामपि संनिपातिनां भेदो निबन्धनकाराभिमत इत्यर्थ: । **नच** भक्षान्तरविधानेनापीति निबन्धनकारेणापि शब्दप्रयोगादयं गुरोरुपेत्यवाद इति वाच्यम् । तथापि भक्षान्तरविधिपक्षस्यैव विवरणकाराभिमतत्वेन तत्रोपेत्यवादत्वशङ्काभावादिति भाव: । इदानीमाचार्योक्तं भाष्यदृष्टान्तसमर्थनप्रकारमाह—**तस्मादिति** । **अव्यभिचारादिति** । सोममात्रस्येष्ट्याद्यपेक्षया दीर्घकालत्वाव्यभिचारादित्यर्थ: । ततश्च विशेष्यसोमशब्देनैव तद्व्यावृत्तिसिद्धेर्न दीर्घत्वं तद्व्यावर्तकतया विशेषणं भवितुमर्हतीति भाव: । **बलीयस्त्वादिति** । ततश्च श्रुत्यनुग्रहात्कर्मधारयस्य बलीयस्त्वम् । ततश्च प्रकरणानुगृहीतोऽपि षष्ठीसमास: श्रुतिबाधापत्त्या परित्याज्य इति भाव: । **कर्मापेक्षितमिति** । कर्माश्रितमित्यर्थ: । कर्मणश्च दैर्घ्ये सोमद्रव्यस्याप्याधिक्याद्दृढसंश्लेषणं विना

---

१ यागीये एकोत्पत्त्यपूर्वोपयुक्तानाम्. २ प्रमाणबलाच्च. ३ माधानादीनां. ४ सोमान्भक्षयन्ति.

दीर्घत्वमित्युत्कर्षः । सच द्विरात्रादिष्वेव न संस्थासु । तत्रापि चोदकप्राप्तस्य दशमुष्टेस्तावत एवाभिषवाद्धृत्या इति च वाक्यशेषानुपपत्तेः । ननु तत्रापि प्रदानविवृद्ध्यार्थात्प्रदेयविवृद्ध्या भवितव्यम् । न । चोदकप्राप्तत्वात्सोमपरिमाणस्य । प्रदेयविवृद्धिस्तु तोयादिना संपादनीया । तस्माद्विरात्रादिष्वेवोत्कर्ष इति प्राप्ते ब्रूमः । गृह्णीम एतदुत्कर्ष इति नतु द्विरात्रादिष्वेव किंत्वग्निष्टोमाधिकमात्रे दीर्घशब्दोपपत्तेरविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः । संस्थासु चास्त्यर्थात्प्रदेयविवृद्धिः । नच चोदकप्राप्तपरिमाणविरोधः । दीर्घपर्वसोमग्रहणेन दशमुष्टित्रिपर्वपरिमाणयोरविरोधात् । अपिच न दशमुष्टित्रिपर्वपरिमित एव । सोमः अवशिष्टानामंशूनामुपसमूहनवचनात्तत्र परिमाणाभावः । श्रूयते हि 'यद्वैतावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति सदस्यानेवान्वाभजती'ति । तस्मादस्ति प्रदेयवृद्धिरर्थात्संस्थासु । सत्यां च धृत्या इति वाक्यशेषोपपत्तिः । अतोऽविशेषेण संस्थासु द्विरात्रादिषु[२] चोत्कर्षः । नच संस्थास्वेवेति भ्रमितव्यम् । अविशेषादेव । नच प्रकरणाद्विशेषः संस्थानां प्रकरणाभावात् । अतो वाक्येनैव संबन्धः तद्वाविशिष्टमिति सर्वत्रगामिता ॥

प्रवर्ग्यनिषेधाधिकरणम् ॥ १२ ॥

## संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥ [नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥]

न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत ॥ प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याद्ययज्ञता ॥ ४१ ॥
प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात्क्रतौ विधिः ॥ आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः ॥ ४२ ॥

ज्योतिष्टोमेऽस्ति प्रवर्ग्यः 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ती'ति । तत्प्रकृत्य श्रूयते 'न प्रथमयज्ञे प्रवृञ्ज्या'दिति । तत्र संशयः किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः अथ प्रथमप्रयोगाङ्गमिति । यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनाम ततो वाक्यप्रकरणाभ्यां ज्योतिष्टोमाङ्गम् । अथ प्रयोगवचनस्ततो

---

तद्धारणासंभवाद्धृत्या इत्यर्थवाद उपपद्यत इति भावः । **प्रदानेति** । तत्राप्यग्निष्टोमापेक्षया सोमयागाभ्यासाधिक्येन सोमद्रव्यस्य दशमुष्टिपरिमाणबाधः स्वीकार्य इत्यर्थः । चोदकप्राप्तपरिमाणाद्यबाधेनैव प्रदेयरसवृद्धिः संपाद्येति परिहरति— **नेति । द्विरात्रादिष्विति** । तत्र प्रत्यहं दशमुष्ट्यादिपरिमितस्याभिषोतव्यत्वादिति भावः । **दीर्घेति** । पर्वदैर्घ्येणापि प्रकृतपरिमाणाद्यविरोधसंभवे तोयादिना रसमात्रवृद्धिरयुक्तेति भावः । **यद्वेति** । यदि दशमुष्टिपरिमित एव सोमः स्यात्तदा स यजमानस्यैव स्यान्नतु सदसि स्थितानामृत्विजां स्यादतः प्रजाभ्यस्त्वेत्यनेन मन्त्रेणावशिष्टानपि सोमांशूनुपसमूहति । दशमुष्टिपरिमितसोमेन संयोजयेदिति यावत् । तथासति सदस्याननुगृहीतवान्भवत्यध्वर्युरित्यर्थः । **तस्मादिति** । अवशिष्टानामंशूनां परिमाणनियमाभावात्संस्थास्वपि तत्तच्चमसगणानुरोधेनावशिष्टा अंशवो ग्राह्या इति सोमद्रव्याधिक्यात्तत्राप्यर्थवाद उपपद्यत इत्यर्थः । **नचेति** । प्रकरणादिति भावः । **अविशेषादिति** । अग्निष्टोमापेक्षया दीर्घत्वाविशेषादित्यर्थः । प्रकरणाद्दीर्घसोमशब्दसंकोचो न युक्त इति भावः । वस्तुतः संस्थानां प्रकरणाभावादपि न प्रकरणाद्विशेष इत्याह—**नचेति । संस्थानामिति** । तासां संस्थाधिकरणे गुणविकृतित्वस्य वक्ष्यमाणतया विकृतीनां चोदकेन नैराकाङ्क्ष्येणेतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं संस्थानां नास्तीति भावः ॥

**संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥ अस्तीति** । यद्यपि प्रवर्ग्योऽनारभ्याधीतस्तथापि वाक्येन ज्योतिष्टोमे विनियोगादस्ति ज्योतिष्टोमे प्रवर्ग्य इत्युक्तिरुपपन्ना । नचानारभ्याधीतत्वाभ्युपगमे वाक्यप्रकरणविरोधाविरोधविषयत्वाभावादस्य विचारस्य प्रकृतसङ्गतिर्न स्यादिति वाच्यम् । प्रवर्ग्यस्यानारभ्याधीतत्वेऽपि न प्रथमयज्ञे प्रवृञ्ज्यादिति वाक्यस्य प्रकरणाधीतत्वमात्रेण प्रकृतसंगत्युपपत्तेः । एवंच तत्प्रकृत्येत्यस्य तद्विषयीकृत्येत्यर्थः । यद्वा कौषीतकिब्राह्मणे प्रवर्ग्यस्य ज्योतिष्टोमप्रकरण एवाम्नानान्न कोऽपि दोषः । **यदीति** । अत्र प्रथमशब्दो ज्योतिष्टोमनामेत्येवाभिमतं नतु प्रथमयज्ञशब्द इति । नामत्वहेतुतया वक्ष्यमाणस्य यज्ञशब्दसामानाधिकरण्यस्य प्रथमशब्दमात्रनिष्ठत्वात्प्रथमशब्दस्य च नामत्वे सति प्रथमश्चासौ यज्ञश्चेति प्रथमयज्ञशब्दो ज्योतिष्टोममेवाभिधत्त इत्यभिप्रायेण यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनामेत्युक्तम् । भवतु पूर्वत्र

---

१ दशमुष्टेः सोमस्य तावतएव. २ दिष्वेवोत्कर्षः.

वाक्येन प्रकरणं बाधित्वा प्रयोगाङ्गतेति। तत्र यज्ञशब्दस्य यागवचनत्वात्प्रथमशब्दस्य तद्विशेषणत्वाद्यागनामता। तत्रापि प्रकरणाज्ज्योतिष्टोमनामत्वम्। विस्पष्टं च वाक्यान्तरे सामानाधिकरण्यं 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम' इति। प्रवृत्तिनिमित्तस्य च विद्यमानत्वात्, स हि प्रथमं प्रयुज्यते 'य एतेनानिष्ट्वे'ति वचनात्। तस्मात् 'वाक्यात्प्रकरणाच्चायं क्रतोरङ्गं तदुच्यते॥ वाक्यादेष प्रयोगाङ्गं प्रयोगः प्रथमो यतः॥' प्रथमशब्देन हि यदप्रवृत्तपूर्वस्य कर्तुराद्यं प्रवर्तनं तदुच्यते नतु क्रतुः कश्चित्। सतु प्रयोगविषयत्वाल्लक्षणया गम्येत। नन्वितरत्रापि यज्ञशब्देन लक्षणया प्रयोगे वर्तितव्यं स्यात्, नायं दोषः। जघन्यो हि यज्ञशब्दो लक्षणयापि नीयमानो न दुष्यति। मुख्यस्तु प्रथमशब्दः श्रुतिवृत्तो ग्रहीतव्यः। 'एष वाव प्रथम' इति 'य एतेनानिष्ट्वे'त्यस्यार्थवादत्वान्नाक्लृप्तशक्तिकल्पनया नामधेयत्वमवगमयितुमलम्। तस्मात्प्रयोगाङ्गं, प्रथमे[1] यज्ञप्रयोगे न प्रवृञ्ज्यादिति। यत्त्वग्निष्टोमे प्रवृणक्तीति वाक्यान्तरं तदनन्यार्थत्वात्[2]प्रतिषिद्धप्रथमप्रयोगविषयमेव प्रतिषिद्धप्रतिप्रसवार्थम्। तेनाग्निष्टोमप्रथम[3]प्रयोगे विकल्पः, स च व्यवस्थितः वचनान्तर[4]वशात्।

---

प्रकरणवाक्ययोर्विसंवादाद्वाक्येन प्रकरणबाधः। इहतु विसंवादाभावान्न प्रकरणं बाध्यमिति प्रत्यवस्थानात्सङ्गतिरिति वाक्यप्रकरणाभ्यामित्यनेन सूचितम्। **प्रथमशब्दस्येति**। आकृत्यधिकरणन्यायेनाप्रवृत्तपूर्वस्य कर्तुराद्यं प्रवर्तनमभिदधानोऽपि प्रथमशब्दः प्रकृते यागसामानाधिकरण्यात्प्रथमप्रवर्तनविषययागनामेत्यर्थः। **नन्वे**वमपि ज्योतिष्टोमशब्दसामानाधिकरण्याभावात्कथं तन्नामत्वमित्यत आह—**तत्रापीति**। प्रवृत्तिनिमित्तबलादपि ज्योतिष्टोम एव वृत्तिरित्याह—**प्रवृत्तीति**। **ननु** प्रवृत्तिनिमित्तं विकृतीनामपि साधारणं तासामपि तत्र पूर्वमप्रवृत्तस्य पुरुषस्याद्यप्रवृत्तिमादाय प्रथमं प्रयुज्यमानत्वस्य वक्तुं शक्यत्वादित्यत आह—**य एतेनेति**। विकृतीनां हि स्वस्वद्वितीयादिप्रकृतानेवापेक्ष्य प्राथम्यं नतु सर्वसोमयागानपेक्ष्य। ज्योतिष्टोमस्य तु य एतेनेति वचनात्पाथमिकन्यायेन सर्वसोमानपेक्ष्य प्राथम्यमिति तत्रैव प्रवृत्तिनिमित्तं नान्यत्रेति भावः। **प्रथमशब्देन हीति**। ततश्च प्रवर्तनापरपर्यायानुष्ठानात्मकप्रयोगस्यैव प्रथमशब्दमुख्यार्थत्वमिति भावः। **नन्विति**। नच यजनं यज्ञ इति भावसाधनत्वे यज्ञशब्दस्य यागानुष्ठानक्रियायां मुख्यत्वमेवेति वाच्यम्। प्रसिद्धिप्राचुर्येणानुष्ठानविषय एव यज्ञशब्दस्य मुख्यत्वादिति भावः। **ननु** प्रथमशब्दस्य 'एष वाव प्रथमो यज्ञ' इति सामानाधिकरण्यान्नामत्वे निश्चिते श्येनादौ मत्वर्थलक्षणावल्लक्षणापि न दोष इत्यत आह—**एष वावेति**। स्तुत्यर्थप्रवृत्तार्थवादगतप्रयोगस्य लक्षणयापि निर्वोढुं शक्यत्वाया शक्तिकल्पनासामर्थ्यान्नामत्वनिश्चय एवासिद्ध इति भावः। **नन्व**ग्निष्टोमे प्रवृणक्तीति तैत्तिरीयादिशाखासु वर्तते तद्वाक्यं न तावत्प्रवर्ग्यप्राप्त्यर्थं। यत्प्रवर्ग्यं प्रवृञ्जन्तीत्यनारभ्य विधित एव तत्सिद्धेः। नाप्यनारभ्योत्पन्नस्य प्रवर्ग्यस्य क्रतुसंबन्धार्थं। तस्यापि पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्तीति वाक्यादेव प्रकृतौ वा द्विरुक्तत्वादिति न्यायेन प्रकृतिगामितासिद्धेः। नच दर्शपूर्णमासादेरपि प्रकृतित्वात्तद्व्यावर्तनेन सोमयागात्मकप्रकृतिसिद्ध्यर्थं तदिति वाच्यम्। सोमयागाङ्गोपसदादिसंवलितप्रयोगस्य तस्य दर्शपूर्णमासाद्यर्थत्वानुपपत्तेः। तस्मादग्निष्टोमवाक्यमनन्यार्थत्वान्न प्रथमयज्ञ इति प्रतिषिद्धस्य प्रवर्ग्यस्य प्रतिप्रसवार्थं वाच्यम्। तत्र चाग्निष्टोमशब्दस्य तदीयप्रयोगपरत्वे लक्षणाप्रसङ्गात्प्रथमप्रयोगे प्रतिप्रसवार्थत्वानुपपत्तेः क्रतावेव प्रतिप्रसवार्थं तद्वाक्यं स्वीकार्यम्। तच्च निषेधस्य क्रतुविषयत्वे संभवति नान्यथा। तेन प्रतिप्रसवार्थवाक्यपर्यालोचनया निषेधस्यापि यज्ञविषयत्वमेव न प्रयोगविषयत्वमित्यत आह—**यत्त्विति**। सत्यमग्निष्टोमवाक्यमुक्तरीत्यानन्यार्थत्वात्प्रतिप्रसवार्थं, तथापि प्रतिप्रसवस्य न क्रतुविषयत्वं प्रयोजनाभावात् प्रतिप्रसवप्रयोजनस्य विकल्पस्य सामान्यविधितन्निषेधाभ्यामेव सिद्धेरतः प्रयोगविषय एवायं प्रतिप्रसवः। तत्र हि न प्रतिप्रसवात्प्राक् विकल्पसिद्धिः। सामान्यविधेः क्रतुविषयत्वान्न प्रथमयज्ञ इति निषेधस्य प्रयोगविषयत्वाच्च विधिनिषेधयोर्भिन्नविषयत्वात्। यथाहि दीक्षितो न ददाति न जुहोति न पचतीति पुरुषार्थदानादेः क्रत्वर्थतया निषेधेऽपि भिन्नविषयत्वान्न विकल्पस्तद्वत्तथाच तत्र विकल्पप्रयोजनकत्वात्प्रतिप्रसवोऽर्थवानिति प्रयोगविषय एव प्रतिप्रसव इत्यर्थः। तदेतदभिसंधायाह—**तेनेति**। विकल्पोऽप्ययं न व्रीहियवादिवदव्यवस्थितः किंतु उदितानुदितहोमवद्व्यवस्थित इत्याह—**सचेति**। अननूचानस्याश्रोत्रियस्य कर्मण्यनधिकारात्प्रशस्तानूचानपरोऽनूचानशब्द इति वार्तिके। तेनाग्निष्टोमेति नचाग्निष्टोमे प्रवृणक्तीति वाक्यलभ्यस्य विकल्पस्यानूचानवाक्ये नानूचानविषयतया व्यवस्थायां कृतायां अनूचानस्याग्निष्टोमे प्रथमप्रयोगे विकल्पः, अन्येषां तु नित्यं प्रयोग इत्येव सिद्ध्या अग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोग इत्ययुक्तमिति वाच्यम्। योऽनूचानस्तस्य प्रवृञ्ज्यादित्यत्र विकल्पवाचकशब्दाभावेन विकल्पस्यानूचानविषयत्वस्य ततोऽप्राप्त्या विकल्पे या प्रवर्ग्यानुष्ठानकोटिः सैवानूचानविषये व्यवस्थाप्यत इति वक्तव्यत्वेनानूचानप्रयोगे नित्यतायां

---

१ प्रथमयज्ञे प्रयोगे. २ र्थत्वात्प्रथमप्रयोग. ३ प्रथमयज्ञप्रयोगे. ४ नान्तरात्.

तथाहि श्रूयते 'कामं तु योऽनूचानः स्यात्तस्य प्रवृञ्ज्या'दिति । तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोगः अन्येषां नित्यमप्रयोगः । अतिरात्रप्रथमाहारे तु सर्वेषामेवाप्रयोगः प्रतिप्रसवाभावात् ॥

पौष्णपेषस्य विकृतौ विनियोगाधिकरणम् ॥ १३ ॥

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ ३४ ॥**

प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत ॥ इष्टिप्रकरणादेव प्रकृताविति युज्यते ॥ ४३ ॥
संतर्दनादिवद्वाक्याद्विकृतौ पूषसंभवात् ॥ सिद्धस्य पुनरप्युक्तिरधिकस्य विवक्षया ॥ ४४ ॥

दर्शपूर्णमासयोः 'पूषा प्रपिष्टभाग' इति पेषणप्रकरणे पूषाभावाद्यत्र पूषा तत्र वाक्यादुत्कृष्यते इति प्राप्तिसूत्रमेतत् ॥

पौष्णपेषणस्य चरावेव निवेशाधिकरणम् ॥ १४ ॥

**तत्सर्वार्थमविशेषात् ॥३५॥ [चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥ ३७ ॥ न पक्तिनामत्वात् ॥ ३८ ॥]**

चरौ पशौ पुरोडाशे चरावेवोत पेषणम् ॥ विशेषादर्शनादेतत्सर्वेष्वपि विधीयते ॥ ४५ ॥
प्राप्तत्वान्न पुरोडाशे हृदाद्याकारनाशनात् ॥ न पशौ पारिशेष्येण चरावेव हि पेषणम् ॥ ४६ ॥

तत्पेषणं किं चरौ पशौ पुरोडाशे च[1] विधीयते अथवा चरावेवेति संशयः । अविशेषेण सर्वत्र स्यादिति प्राप्ते उच्यते—'पुरोडाशेऽन्यतःसिद्धं पशावाकृतिनाशनम् ॥ पेषणं तेन न तयोर्विधातव्यं चरौ पुनः ॥ अविघातकमप्राप्तमिति तत्र विधीयते ॥' पुरोडाशे हि चोदकादेव सिद्धं पेषणं[2] न विधातव्यम् । ननु अन्यदिदं पेषणं श्रपणोत्तरकालं वचनबलाद्भविष्यति । न । अश्रवणात् । नहि

उपपत्तेरिति भावः । एवंसत्यतिरात्रेऽपि प्रकृतिभूताग्निष्टोमवद्व्यवस्थितो विकल्प इति भ्रमः स्यात्तं व्यावर्तयितुमाह—**अतिरात्रेति । प्रतिप्रसवेति ।** नच प्राकृतस्य प्रतिप्रसवस्य चोदकादतिरात्रेऽपि प्रवृत्तेरिदमयुक्तमिति वाच्यम् । प्रकृतौ हि अग्निष्टोमे प्रवृणक्तीति अग्निष्टोमसंस्थायां निमित्ते प्रतिप्रसवः क्रियते । अग्निष्टोमशब्दस्य संस्थायामेव मुख्यत्वादतिरात्रे चाग्निष्टोमसंस्थारूपनिमित्तस्याभावेन नैमित्तिकप्रतिप्रसवस्याप्यभावात् । एवंच प्रयोगे प्रतिप्रसवाङ्गीकारेऽग्निष्टोमशब्दस्य प्रयोगे लक्षणा स्यादिति वाचोयुक्तेरप्यनवकाशः । अग्निष्टोमशब्दस्य प्रयोगपरत्वानभ्युपगमात् परंतु प्रतिप्रसवबलादेव प्रतिषेधविषयप्रथमप्रयोगे पर्यवसानमात्रं नतु वाचनिकमग्निष्टोमवाक्यस्य प्रयोगविषयत्वम् । यद्यप्येवं सामान्यविधिनिषेधाभ्यामेव क्रतौ प्रवर्ग्यतदभावयोर्विकल्पसिद्धावपि प्रवर्ग्यस्य नैमित्तिकीकरणार्थत्वेनाग्निष्टोमवाक्यस्योपपत्त्या क्रतुविषयेऽपि निषेधेऽग्निष्टोमवाक्यवैयर्थ्यं नास्ति तथापि प्रथमशब्दस्य लक्षणाप्रसङ्गादेव तत्पक्षस्य परित्यागः, उक्तरीत्या च न प्रथमयज्ञ इति वाक्ये प्रतिषेधस्य सामञ्जस्येनोपपत्तावपि वृथा केषांचित्पर्युदासाश्रयणम् । नच पर्युदासः संभवति । न प्रथमयज्ञ इति वाक्यस्यानारभ्यवादसंनिधिसमाम्नातत्वाभावेन तदेकवाक्यत्वासंभवेन पर्युदासायोगात् । नच न प्रथमयज्ञवाक्ये प्रवृञ्ज्यादिति पदश्रवणेन परिपूर्णत्वात्पर्युदासेऽप्यनारभ्यवादेनैकवाक्यत्वं नापेक्षितमिति वाच्यम् । परिपूर्णत्वेऽपि पर्युदासविधेर्विशेषणसमर्पकतया तस्य विशेष्यप्रापकवाक्येन साकं 'वाक्ययोरेकवाक्यत्वं पुनः संहत्य जायत' इति न्यायेनैकवाक्यताया अवश्यवक्तव्यत्वादेकवाक्यताभावेऽपि पर्युदासाभ्युपगमे 'न तौ पशौ करोती'त्यत्रापि पर्युदासप्रसङ्गादित्यास्तां तावत् । सूत्रार्थस्तु—संख्यायुक्तं लक्षणया प्राथम्ययुक्तं न प्रथमयज्ञे इत्येतन्निषेधनं प्रकरणात्क्रतोः स्यादिति ॥

**पौष्णं पेषणं० ॥ ३४ ॥ पूषाभावादिति ।** प्रकरणानुसारेण पूषन्शब्दस्य प्राकारणिकाभ्यादौ लक्षणायोगाच्चेत्यपि द्रष्टव्यम् । **प्राप्तीति ।** प्रकरणानुसारेण दर्शपूर्णमासयोर्निवेश इति पूर्वपक्षस्य मन्दत्वान्नेदमधिकरणान्तरं किंतु किं सर्वत्र निवेश उत चरावेवेति करिष्यमाणविचारस्य विकृतावुत्कर्षविनानुपपत्तेः तत्सिद्ध्यर्थं तथा करिष्यमाणविचारस्य वाक्यप्रकरणविरोधाविरोधचिन्ताप्रस्तावे साक्षात्सङ्गतत्वाभावात्तस्य प्रासङ्गिकत्वसिद्ध्यर्थं पेषणस्य वाक्येनोत्कर्ष इति प्राप्तिमात्रमनेन सूत्रेण क्रियत इत्यर्थः ॥

**तत्सर्वार्थमविशेषात् ॥ ३५ ॥ अविशेषेणेति ।** पुरोडाशादरेऽपि पौष्णत्वाविशेषेणादन्तको हीति वाक्यशेषोक्तहेत्वविशेषेण चेत्यर्थः । **आकृतीति ।** हृदयादिनाशकत्वात्पेषणस्य तत्तादात्म्यापन्नाकृतिनाशकत्वोक्तिः । **ननु** चोदकात्फलीकरणानन्तरं पेषणं प्राप्यते इदं तु पाकोत्तरकालमन्यदित्यप्राप्तमेवेति शङ्कते—**नन्विति ।** प्रमाणाभावादन्यत्वमसिद्धमिति परिहरति—**नेति ।** विध्यन्यथानुपपत्तिरेव प्रमाणमिति शङ्कते—**नन्विति ।** विधेरन्यथोपपत्त्या परिहरति—**नेति ।** ननु सामान्यविषयविधेश्चरुमात्रे संकोचायोगात्सर्वविषयत्वेसति तद्बलादेव पुरोडाशेऽपि पेषणान्तरसिद्धिः स्यादित्यत

[1] च अथवा. [2] पेषणमिति न विधी.

पाकोत्तरकालमिदमन्यत्पेषणमिति वचनमस्ति । पेषणमात्रं श्रुतं, तच्च प्राप्तं न विधातव्यम् । ननु विधिबलादेवान्यत्स्यात् । न । तस्याप्राप्तपेषणे चरावर्थवत्त्वात् ईदृश्यां कल्पनायामसमर्थत्वात् । गौरवं चात्यन्ताप्राप्तपेषणविधौ स्यात् । एवं पशावपि सान्नाय्यविकारेऽत्यन्ताप्राप्तं 'हृदयस्याग्रेऽवद्यती'ति विहितहृदयाद्याकृतिविनाशनं च चरौ त्वविघातकं, पिष्टकचरावपि पाकवैशद्येन चरुशब्दस्य प्रयोगात्, चोदकप्राप्तं च तत्प्रयोजनाभावान्निवर्तमानं प्रतिप्रसूयत इति लाघवात्तत्रैव पेषणम् ॥

पौष्णपेषणस्यैकदेवत्ये निवेशाधिकरणम् ॥ १५ ॥

**एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ [धर्मविप्रतिषेधाच्च ॥ ४० ॥ अपि वा सद्द्वितीये स्याद्देवतानिमित्तत्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्विचरावपेषणं भवति ॥ ४३ ॥ एकस्मिन्वार्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥ हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥ ४६ ॥]**

द्विदेवकेऽपि किं पिंष्यादुत पूषैकदैवके ॥ द्विदेवकेऽपि तत्पूष्णः स्वत्वात्पेषणभागिनः ॥ ४७ ॥
देवता विफलत्वेन पेषणं न प्रयोजयेत् ॥ यागस्य तस्ये भागोत्ते[१] यागान्तरगामि तत् ॥ ४८ ॥

चरावेव पेषणमिति स्थितम् । तत्र संशयः किं यत्रान्यसंहिता[३] पूषादेवता तत्राप्येतत्पेषणमुत यत्रैव केवला[३] इति । तदर्थं च किं देवताप्रयुक्तमिदं पेषणमुत तद्देवत्ययागापूर्वप्रयुक्तमिति । तत्र—'यज्ञप्रकरणाभावाद्वाक्ये चाश्रवणादिदम् ॥ पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥' अन्ये हि धर्माः श्रुत्यादिभिः प्रकरणाद्वा यज्ञापूर्वसंयोगिनो गम्यमानाः युक्तं यत्तस्यैव फलवतोऽङ्गं भवन्ति न निष्फलाया देवतायाः । पेषणं त्विदं न यज्ञाङ्गं प्रकरणाभावाद्वाक्ये च पूषमात्रश्रवणात् । अतः 'तत्स्वरूप-

---

आह—**गौरवं चेति** । तथाच सर्वविषयत्वं गौरवपराहतमिति भावः । पुरोडाशविकारत्वाभावादत्यन्ताप्राप्तिरिति सूचनार्थं सान्नाय्यविकार इत्युक्तम् । **ननु** दशमे 'ओदनो वा प्रयुक्तत्वा'दिति चरुशब्दस्यौदनवाचित्वोक्तेरन्योन्यासंलग्नत्वलक्षणवैशद्ययुक्ततण्डुलनिष्पन्नान्नस्यौदनत्वप्रसिद्धेः पेषणे च सति वैशद्याभावात्पेषणं चरुत्वविघातकमेवेत्यत आह—**पिष्टेति** । ओदनशब्दस्यावस्रावितानवस्रावितोभयसाधारणत्वाच्चरुशब्दस्य चानवस्रावितमात्रे प्रयोगादोदनो न चरुशब्दार्थः । तथात्वे पिष्टकचरौ चरुशब्दस्य लक्षणाप्रसङ्गात् किंतु 'न पक्तिनामत्वा'दित्येतदधिकरणगुणसूत्रपर्यालोचनया पाकनिमित्तकत्वप्रतीतेरनवस्रावितान्तरूष्मपक्वविशेषवचनश्चरुशब्दः सच विशेषतः सूपशारादिव्यावृत्तः स्यात्पिष्टद्वारा वा तण्डुलप्रयोज्यत्वलक्षणः । दाशमिकसूत्रस्य च चरुशब्दस्य स्थालीवचनत्वव्यावृत्तावेव तात्पर्यं नतु ओदनवचनत्वेऽपीति तत्रत्यौदनशब्दस्याप्युक्तपक्वविशेष एव तात्पर्यं । तमेव पाकविशेषं दर्शयितुं पाकवैशद्येनेति वैशद्यशब्दप्रयोगः । एवंच पेषणस्य न चरुत्वविघातकत्वमिति भावः । **प्रयोजनेति** । विनापि पेषणं चरुनिष्पत्तिसंभवादिति भावः । **लाघवादिति** । अत्यन्ताप्राप्तप्रापणापेक्षया प्राप्तप्रापणस्य लघुत्वादित्यर्थः ॥

**एकस्मिन्नेकसंयोगात् ॥ ३९ ॥** प्रासङ्गिकत्वसूचनाय पूर्वसिद्धं कीर्तयति—**चरावेवेति** । **देवताप्रयुक्तमिति** । पूषप्रयुक्तमित्यर्थः । **ननु** नवमे देवता प्रयुक्ता न धर्माः तस्याः फलदातृत्वाभावेन धर्माणां तत्प्रयुक्तत्वासंभवात् किंतु सर्वे धर्मा अपूर्वप्रयुक्ता इति वक्ष्यमाणत्वेन पेषणस्याप्यपूर्वप्रयुक्तताया आवश्यकत्वात्कथं पूषदेवतास्वरूपप्रयुक्तत्वेन पूर्वःपक्ष इत्यत आह—**तत्रेति** । संतर्दनादेः परप्रकरणपठितस्यापि यागाङ्गत्वदर्शनादाह—**वाक्येचेति** । अन्यधर्मवदित्यस्य व्यतिरेकदृष्टान्ततां प्रकरणाभावादिहेतुद्वयस्य नापूर्वधर्म इत्यनेनान्वयं च दर्शयन् श्लोकं व्याचष्टे—**अन्ये इति** । **निष्फलाया इति** । फलदातृत्वरहिताया इत्यर्थः । **अत इति** । यद्यपि स्वरूपार्थत्वे आनर्थक्यात्पेषणमप्यपूर्वार्थमेव तथापि प्रकृते प्रकरणेनापूर्वोपस्थित्यभावाद्भागशब्देनैव तत्संबन्ध्यपूर्वोपस्थितेर्वक्तव्यत्वाद्भागशब्दस्य च तत्स्वामिकत्वपरत्वात्समानेनान्यसहितपूषोद्देशेन लक्षस्यापि प्रत्येकमेव स्वीकारात् पूषणमन्यं च प्रति स्वत्वेनान्यसहितपूषदेवताकयागजन्यापूर्वस्यापि पूषस्वामिकभागसंबन्ध्यपूर्वत्वाविशेषात्तत्रापि पेषणं स्यादेवेत्यत्र तात्पर्यम् । प्रोक्षणादीनां व्रीह्यादिस्वरूपार्थत्वे आनर्थक्यात्तथाऽपूर्वार्थत्वं तथा पेषणस्यापि पूषस्वरूपार्थत्वे सत्यानर्थक्यादपूर्वार्थत्वमेव नतु पूषदेवतास्वरूपार्थत्वमित्याह—

---

१ मसामर्थ्यात्. २ पेषणान्तरविधौ. ३ सहितः—केवल इति.

प्रयुक्तं सद्दिदेवत्येऽपि विद्यत' इति तत्रापि पेषणं स्यादिति प्राप्तेऽभिधीयते—'देवता निष्फला नैव पेषणस्य प्रयोजिका ॥ उपादानं च यज्ञस्य भागशब्देन विद्यते ॥ मुख्यार्थासंभवाद्यागलिलक्षयिषयात्र हि ॥ श्रूयते भागशब्दोऽयं नानुपादानमस्त्यत: ॥' स च यागो द्विदेवत्यो द्वयव्यासक्तत्वान्नैकेन पूष्णा वा शक्यते व्यपदेष्टुं ऐन्द्राग्नाविव ग्रहपुरोडाशावाग्नेयेन्द्रपीतशब्दाभ्याम् । यद्यपि चात्र तद्धित-समासानन्तर्गतत्वात्पूष्णो न वृत्त्यसामर्थ्यं तथापि भागशब्दार्थस्यैव द्विदेवत्ये पूषविशिष्टत्वाभावान्न तत्र पेषणम् । एकदेवत्ये तु तदिति सिद्धम् ॥ इति शास्त्रदीपिकायां तृतीयाध्यायस्य तृतीय: पाद: ॥३॥

---

## तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

निवीतस्यार्थवादत्वाधिकरणम् ॥ १ ॥

**निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ [अपदेशो वार्थस्य विद्यमानत्वात् ॥ २ ॥ विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥ स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यशेषत्वात् ॥ ५ ॥ तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रसंख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥ अर्थवादो वा प्रकरणात् ॥ ८ ॥ विधिना चैकवाक्यत्वात् ॥ ९ ॥]**

निवीतं तु मनुष्याणां विधिर्वैषोऽर्थवादकः ॥ अपूर्वत्वात्प्रकरणात्क्रतुः क्रतोर्वा विधीयते ॥ १ ॥
प्राप्तं निवीतं मर्त्येषु प्रायेणैतस्य दर्शनात् ॥ उपवीतविधावेकवाक्यत्वादर्थवादता ॥ २ ॥

दर्शपूर्णमासयो: श्रूयते 'निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते' इति । निवीतं मनुष्याणामिति किमयं विधिरुतार्थवादोऽयमुपवीतविधेरिति । अस्यार्थवादत्वमौदुम्बराधिक-

---

**देवतेति ।** निष्फलेत्यनेन फलदातृत्ववत्स्वीकारविरहस्यापि द्योतनादस्वीकर्तुश्च स्वामित्वाभावेन पूषस्वामिकभागस्यासंभवेन पूषस्वामिकभागसंबन्धियागापूर्वार्थत्वमादाय द्विदेवत्येऽपि पेषणं कर्तव्यमित्युक्तमपि निरस्तं वेदितव्यम् । प्रकरणाभावेऽपि वाक्येनैव यागसंयोग इत्याशयेनाह—**उपादानं चेति । मुख्यार्थेति** । उक्तरीत्या पूषस्वामित्वाभावेन पूषस्वामिकत्व-लक्षणमुख्यार्थाभावात्पूषोद्देश्यकत्वमालम्ब्य प्रपिष्टो भागः स्वोद्देशेन त्याज्यो यस्येत्येवं पूषोद्देशेन त्यागात्मकयागलक्षणार्थो भागशब्द इत्यर्थः । एवंच द्विदेवत्ये द्वयोर्व्यासक्तमुद्देश्यत्वं नतु पूषणि पर्याप्तमिति नासौ पूषोद्देश्यत्वव्यपदेशयोग्य इत्याशयेनाह—**सचेति । ऐन्द्राग्नाविति ।** आग्नेयं चतुर्धा करोतीत्याग्नेयशब्देन यथा ऐन्द्राग्नः पुरोडाशो न व्यपदेष्टुं शक्यते, यथावा इन्द्रपीतशब्देनैन्द्राग्नो ग्रहो न व्यपदेष्टुं शक्यते तद्वदित्यर्थः । **ननु** तत्रोभयत्रापि सापेक्षमसमर्थमित्यन्यसापेक्षस्याग्नेरिन्द्रस्य चासमर्थत्वेन सामर्थ्यापेक्षतद्धितसमासवृत्त्यसंभवादाग्नेयेन्द्रपीतशब्दाभ्यामैन्द्राग्नयोरग्रहणेऽपि प्रकृते पूषन्शब्दस्य तद्धितादिवृत्त्यभावेन सामर्थ्यानपेक्षणात्प्रपिष्टभागशब्देन बहुव्रीहिणा संबन्धमात्रप्रतिपादनाद्द्विदेवत्ये च पूष्णो देवतात्वाभावेऽपि देवतात्वाधिष्ठानतया संबन्धसद्भावात्तस्यापि ग्रहणं संभवतीत्याशङ्क्य परिहरति—**यद्यपीति । भागशब्दार्थस्येति ।** भागशब्दस्य यागलक्षकत्वायागेन च योग्यदेवतासंबन्धे संभवत्यनिर्धारितसंबन्धसामान्यग्रहणासंभवाद्देवतात्वेनैव पूष्णो भागान्वयादेकदेवत्यस्यैव ग्रहणमिति सिद्धमित्यर्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥**

**निवीतमिति मनुष्यधर्मः०** ॥ १ ॥ यद्यप्यत्रापि प्रकरणस्य श्रुत्यादिविरोधाविरोधविचार एव क्रियते तथापि अत्र प्रकरणेन क्रत्वर्थत्वं प्रायेण प्रतिपाद्यत इति पादान्तरत्वमित्याहुः । प्राचीनावीतं पितृणामित्येतन्न विषयस्तत्र पितृप्रधानकर्मणि विधिरिति पक्षसंभवेऽपि शुद्धपितृधर्मत्वादिपक्षासंभवादतो निवीतमेव विषय इत्याशयेनाह—**निवीतमिति ।** यद्यपि विध्यर्थवादचिन्तास्मिन्नध्याये न सङ्गता गतार्था च तथापि अध्यायसङ्गतताया मनुष्यधर्मत्वादिविचिन्तायाः क्रत्वाविचिन्तात्वस्फोरणार्थं भाष्ये तदुपन्यास इत्याशयवानाह—**अस्येति** । यथोर्जोवरुध्या इत्यस्य फलविधित्वासंभवाद्विधिप्रत्ययाश्रवणादुदुम्बरताविध्येकवाक्यत्वाच्चार्थवादत्वं तथेहापि तैरेव हेतुभिरर्थवादत्वमित्यनुपदमेव स्पष्टं तदा किं निवीतं शुद्धमनुष्यधर्मः उत क्रतुयुक्तमनुष्यधर्मः आहोस्वित्कर्मधर्मः अथवा प्राकरणिकमनुष्यप्रधानकान्वाहार्यदानादिधर्मः उताप्राकरणि-

---

१ यागस. २ इत्याभावात्.

रणेर्न सिद्धम्। यदा विधिस्तदा विचार्यते। कृत्वाचिन्तेयम्। तत्र षष्ठीश्रुत्या शुद्धमनुष्यधर्म इत्येकः पूर्वपक्षः। श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मो लोहितोष्णीषादिवदित्यपरः। प्रकरणाच्छुद्धक्रतुधर्मः प्रयाजादिवत्। मनुष्यग्रहणं तु कर्तृसंबन्धानुवाद इत्यन्यः। अनुवादस्यानर्थक्यात्प्राचीनावीतोपवीतावैषम्यात्प्रकरणाविरोधाय प्रकरणे यन्मनुष्यप्रधानकं कर्मान्वाहार्यदानादि तस्य धर्म इत्यपरः। प्राचीनावीतोपवीतयोः स्वतन्त्रपितृदेवताप्रधानकर्मविषयत्वात्तद्वैषम्यान्निवीतमपि स्वतन्त्रं यन्मनुष्यप्रधानमातिथ्यादिकर्म तद्धर्म इत्यपरः। सर्वेषामेषामशोभनत्वात् पुरुषार्थत्वे च फलकल्पनाद्विध्येकवाक्यत्वात्प्रकरणाविरोधाच्चार्थवादत्वमेव पूर्वोक्तं ज्याय इति कृत्वाचिन्तोद्घाटनम्॥

उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम्॥ २॥

## उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्॥ १०॥ [न वा प्रकरणात्तस्य दर्शनम्॥ ११॥]

**सर्वार्थमुत दर्शार्थमुपव्ययत इत्यदः॥ सर्वार्थमग्निहोत्रे स्यादुपवीतीति लिङ्गतः॥ ३॥**
**दर्शाद्यर्थं प्रकरणाल्लिङ्गे स्यात्सिद्धिरन्यथा॥ दोहं मृताग्निहोत्रस्य स्तोतुमेतदनूदितम्॥ ४॥**

दर्शपूर्णमासयोरुपवीतं श्रुतं उपव्ययत इति। तत्र संशयः किमिदं सर्वदैवकर्माङ्गमुत दर्शपूर्णमासाङ्गमिति। तत्र 'मृताग्निहोत्रे प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयती'ति सिद्धवद्दैवा-

---

कस्वतन्त्रमनुष्यप्रधानककर्मधर्म इति विचार्यत इत्यर्थः। **षष्ठीति**। द्वादशाहीनस्य दध्नेन्द्रियकामस्येत्यादिवत् षष्ठ्या प्राधान्यावगमात् श्रुत्या च प्रकरणबाधाच्छुद्धमनुष्यधर्म इत्यर्थः। **अविरोधादिति**। ततश्च श्रुत्या न प्रकरणबाध इति भावः। **लोहितेति**। लोहितोष्णीषादेः पुरुषसंस्कारद्वारा क्रतूपयुक्तत्वेन क्रतुयुक्तपुरुषधर्मत्वमिति भावः। **कर्तृसंबन्धेति**। उपव्यानवत्कर्तृतया प्राप्तपुरुषसंबन्धानुवाद इत्यर्थः। 'न लोकाव्यये'ति कर्तरिषष्ठीप्रतिषेधेऽपि नपुंसके भावेक्तस्य प्रयोगे शेषत्वविवक्षायां षष्ठी वाच्येति वस्तुतः कर्तृसंबन्ध एव शेषत्वविवक्षायां षष्ठ्यनुशासनात्कर्तृसंबन्धानुवाद उपपद्यत इति भावः। **प्राचीनेति**। पितॄणामित्यादिषष्ठ्याः पित्राद्युद्देश्यककर्मव्यतिरेकजनितत्वात्प्राचीनावीतादेः पित्राद्युद्देश्यककर्मधर्मत्वं तद्वैषम्यपरिहारार्थमुपवीतस्यापि मनुष्योद्देश्यककर्मधर्मत्वमित्यर्थः। आतिथ्यादिव्यावर्तनार्थमाह—**प्रकरणाविरोधायेति**। यद्बलान्मनुष्यप्रधानककर्मार्थत्वं ततएव प्रकरणमपि नानुरोध्यमित्याशयेनाह—**प्राचीनेति**। **सर्वेषामिति**। तत्र शुद्धपुरुषधर्मत्वेऽध्वर्युकर्तृकत्वावेदिका यजुर्वेदाम्नानबललब्धा या आध्वर्यवसमाख्या सा बाध्येत। क्रतुयुक्तपुरुषधर्मत्वे श्रुतिसंकोचः। आरादुपकारकतया क्रतुधर्मत्वेऽनुवादानर्थक्यादयो ग्रन्थोक्ता एव दोषाः। अन्वाहार्यदानादेर्धर्म इति पक्षे प्रकरणे यन्मनुष्यप्रधानं कर्म तद्धर्म इति शेषिणः प्रकरणेन विशेषणमेव दोषः। प्रकरणस्याविशेषकत्वमिति पशुसोमाग्नेय्यधिकरणयोः सप्तमाद्ये च ग्रन्थकारेणोक्तेः आतिथ्यादिधर्म इत्यवान्तरसिद्धान्ते च प्रकरणादुत्कर्षप्रसङ्गस्तस्मात्सर्वेषामेतेषामशोभनत्वमित्यर्थः। प्रथमपक्षे दोषान्तरमाह—**पुरुषार्थत्व इति**। अन्येषु तु पक्षेषु साक्षात्परंपरया वा कर्मान्वयात्तत एव नैराकाङ्क्ष्येण फलं न कल्पनीयमिति ध्येयम्। **विधीति**। उपव्यानविध्येकवाक्यत्वादित्यर्थः। **प्रकरणेति**। आतिथ्याद्यर्थतया विधौ प्रकरणविरोधप्रसङ्ग इति भावः। पर्जन्यस्य विद्युदिवास्य वरस्येयं कन्योचितेतिवदिहौचित्येनार्थवादत्वमिति भावः। **कृत्वेति**। अर्थवादत्वसिद्धान्तकथनं कृत्वाचिन्तोद्घाटनमित्यर्थः। निवीतं कण्ठलम्बितया धारणं, कर्मस्वव्यग्रत्वार्थं कटिसमीपे परिकरबन्धनं वा। तत्र कण्ठलम्बितया धारणमिति पक्षे ऋष्यात्मकमनुष्यप्रधानकर्मसंबन्धित्वेन शास्त्रप्राप्तं निवीतं स्तुत्यालम्बनं परिकरबन्धनम्। निव्यानमिति पक्षे तु लौकिककर्मसाधारण्याल्लोकत एव तत्प्राप्तिः। तत्रापि नवतन्तुकसूत्रस्यैव विन्यासविशेषो निवीतमिति पक्षे उपव्ययत इत्यनेन विधीयमानोपवीतवन्निवीतस्य वासोविन्यासात्मकत्वाभावेऽपि विन्यासविशेषमात्रेण स्तुत्यालम्बनत्वम्, अजिनवासःसूत्राणामन्यतमस्य विन्यासविशेषो निव्यानमितिपक्षे तु न काप्यनुपपत्तिः। सूत्रार्थस्तु—निवीतं मनुष्याणामिति वाक्ये निवीतं मनुष्यधर्मो विधीयते षष्ठ्यन्तमनुष्यशब्दस्य तत्प्राधान्यावगमकत्वादिति॥

**उपवीतं लिङ्गदर्शनात्०॥ १०॥** इतःप्रभृति षट्सूत्राणि भाष्यानुक्तान्यपि वृत्त्यन्तरे दर्शनादाचार्यैस्त्र्यधिकरणतया चतुरधिकरणतया च व्याख्यातानि। तत्र प्रथमं चतुरधिकरणपक्षाश्रयणेनाह—**दर्शेति**। प्रकरणादुपव्यानस्तुत्यर्थत्वं

---

१ करणन्यायेन. २ मेतेषामशोभमानत्वात्. ३ व्यतिरेको भेदः.

ग्निहोत्रे यज्ञोपवीतानुवादेन लिङ्गेन प्रकरणं बाधित्वा सर्वार्थत्वमवगम्यते। नच दर्शपूर्णमासस्थस्यैवायमनुवादः विप्रकृष्टत्वाद्देवेभ्य इति च बहुवचनानुपपत्तेः। वैकल्पिकेन्द्रमहेन्द्रदेवत्यत्वात्सान्नाय्यस्य। अग्निहोत्रे त्वग्निसूर्यप्रजापत्यभिप्रायमुपपन्नं बहुवचनमिति तद्गतस्यैवायमनुवादः। सच दर्शपूर्णमासप्रकरणोल्लङ्घनेन सर्वार्थत्वे घटत इति प्राप्ते ब्रूमः। प्रकरणाद्दर्शपूर्णमासाङ्गं, अग्निहोत्रगतं तु लिङ्गं यथाप्राप्तं वर्णयितव्यमिति संनिकृष्टाभावाद्विप्रकृष्टमपेक्ष्य प्रवर्तते। बहुवचनं च प्रकृतिविकृतिदेवताभिप्रायमित्यविरुद्धम्। सोऽयं लिङ्गप्रकरणविरोधाविरोधविचारः॥

उपवीतस्य विधित्वाधिकरणम्॥ ३॥

## विधिर्वा स्यादपूर्वत्वात्॥ १२॥

**उपव्यानेऽनुवादो वा विधिर्वाद्यो यतः स्मृतौ॥ प्राप्तं नैवमपूर्वत्वात्क्रतौ लेटा विधीयते॥ ५॥**

उपव्ययत इत्येतदुदाहरणं किमसौ विधिरुतानुवाद इति। 'नित्योदकी नित्ययज्ञोपवीती'ति स्मृतिप्राप्तत्वादनुवाद इति प्राप्ते विधिरपूर्वत्वादित्याह—पुरुषार्थतया हि स्मृतितः प्राप्तिः। अयं तु क्रत्वर्थतया विधिरप्राप्तत्वात् अथवैवमधिकरणम्। तत्र उपव्ययत इति स्मृतिप्राप्तानुवादः। स्मृतिश्चाविशेषेण स्थितेति सर्वकर्मार्थतया प्राप्तमनूद्यत इति पूर्वःपक्षः। संयोगभेदाद्विधिः। अतश्च प्रक-

---

निवीतस्येत्ययुक्तमुपव्यानस्यैव प्रकरणे निवेशाभावादिति प्रत्यवस्थानात्सङ्गतिः। **लिङ्गेनेति**। उपवीतस्य सर्वकर्मार्थत्वे सत्येव जीवदग्निहोत्रे तस्य सिद्धवन्निर्देश उपपद्यते नान्यथेति सिद्धवन्निर्देशसामर्थ्यमेव लिङ्गमित्यर्थः। **वैकल्पिकेति**। ततश्च तत्र देवेभ्य इति दोहस्य बहुदेवताकत्वनिर्देशानुपपत्तिरित्यर्थः। **नचाभ्युदयेष्टेर्दर्शा**पेक्षया कर्मान्तरत्वाभावात्तदीयदेवताभ्यां बहुत्वोपपत्तिरिति वाच्यम्। अभ्युदयेष्टेरनित्यत्वेन नित्यवच्छ्रुतबहुत्वस्य तथाप्यनुपपत्तेरिति भावः। **नन्वग्निहोत्रस्य** द्विदेवत्यत्वात्तत्रापि तदनुपपत्तिरित्यत आह—**अग्निहोत्र इति**। प्रकृते लिङ्गस्य प्रकरणबाधकत्वं न संभवति अनुवादस्य पुरोवादसापेक्षत्वात् पुरोवादस्य च दर्शपूर्णमासयोर्व्यवस्थिततया तदनुसारेणानुवादस्य वर्णनीयतयाऽनुवादलिङ्गात्सर्वार्थत्वप्राप्त्ययोगादित्याह—**अग्निहोत्रगतमिति**। इमं विचारं प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारपेटिकया संगमयति—**सोऽयमिति**। अत्रोपव्ययत इत्यनेन वासोविन्यासविशेष एवाभिधीयते 'संदिग्धे तु व्यवायाद्वाक्यभेदः स्या'दित्यधिकरणे भाष्यकारेण तथोक्तेः। एवंच 'यज्ञोपवीती हि देवेभ्यः' इत्यत्रापि यज्ञोपवीतशब्देनापि वासोविन्यासविशेष एवाभिधीयत इत्याश्रित्यायं विचारः प्रवर्तितः। नवतन्तुकत्रिसूत्रकत्रिवृद्ब्रह्मग्रन्थिकब्रह्मसूत्राभिधानेऽस्य विचारस्यानुपपत्तेरिति ध्येयम्॥

**विधिर्वा स्यादपूर्वत्वात्**॥ १२॥ उपव्यानस्य विधिरेव नास्ति तत्कथं तस्य दर्शाङ्गत्वमिति प्रत्यवस्थानात्सङ्गतिः। **स्मृतीति**। स्मृतिमूलभूतश्रुतिप्राप्तत्वादित्यर्थः। नचेयमेव श्रुतिः स्मृतेर्मूलमस्त्विति वाच्यम्। नित्ययज्ञोपवीतीति सदाधारणप्रतिपादकस्मृतिंप्रति तत्काले यज्ञोपवीतप्रतिपादनपरश्रुतेर्मूलत्वासंभवेन मूलान्तरस्यावश्यवाच्यत्वादिति भावः। **अपूर्वत्वादिति**। अप्राप्तत्वादित्यर्थः। उपवीतं हि वासोविन्यासः। यज्ञोपवीतं तु सूत्रविन्यासः। अतएव टुप्टीकायां यज्ञोपवीतेनोपवीतस्याविरोधात्समुच्चय इत्युक्तम्। तस्माद्भिन्नविषयत्वान्न स्मृतितः प्राप्तिरिति भावः। **नच** 'वस्त्रं यज्ञोपवीतार्थे सूत्रं वा त्रिगुणीकृत'मिति स्मृत्यन्तरपर्यालोचनया वासोविन्यासोऽपि स्मार्तयज्ञोपवीतशब्दार्थो भवतीति वाच्यम्। तथापि स्मृतितो वासोविन्यासस्य नित्यंप्राप्त्यभावेन तन्नियमविध्युपपत्तेरिति। अस्तुवा नियमेनापि प्राप्तिः, तथापि संयोगभेदाद्विधिरुपपन्न इत्याह—**पुरुषार्थतयेति**। क्रत्वर्थतावेदकप्रकरणाभावादिति भावः। **क्रत्वर्थतयेति**। दर्शपूर्णमासप्रकरणादिति भावः। प्रयोजनं पूर्वपक्षे कर्ममध्ये यज्ञोपवीतभ्रेषे तस्य कर्मार्थत्वाभावेन कर्मणो न वैगुण्यं स्मार्तं च प्रायश्चित्तम्। सिद्धान्ते तु कर्मणो वैगुण्यं श्रौतप्रायश्चित्तं च। एवमधिकरणचतुष्टयपक्षाभिप्रायेणाधिकरणद्वयमुक्त्वा इदानीमधिकरणत्रयपक्षानुसारेण तदेवाधिकरणद्वयमेकीकृत्याह—**अथवेति**। किमुपव्ययत इत्यनुवादः, सर्वकर्मार्थं चोपवीतमुत विधिः, दर्शपूर्णमासमात्रार्थं चोपवीतमिति संशयं स्पष्टत्वादुपेक्ष्य पूर्वपक्षमाह—**तत्रेति**। सर्वकर्मार्थत्वे हेतुमाह—**स्मृतिश्चेति**। स्मृतेः कर्मविशेषप्रकरणेनाम्नातत्वात्सर्वकर्मार्थतया प्राप्तिरित्यर्थः। **नच** कर्मविशेषप्रकरणाम्नानाभावे पुरुषार्थत्वमेव स्यान्नतु सर्वकर्मार्थत्वमिति वाच्यम्। यज्ञोपवीती हि देवेभ्यो दोहयतीति प्रागुक्तलिङ्गदर्शनेन कर्मार्थत्वावश्यंभावादिति भावः। **स्मार्तस्य** सर्वकर्मार्थत्वाभावेऽपि श्रौतदार्शपौर्णमासिकोपव्यानमादायैव लिङ्गदर्शनोपपत्त्या स्मृतेः कर्मार्थत्वे तात्पर्यानवश्यंभावात्स्वरसतः प्राप्तपुरुषार्थत्वपरत्वमेव। एवंच पुरुषार्थतया स्मृतिप्राप्तावपि क्रत्वर्थतया प्राप्त्य-

---

१ वादलिङ्गेन. २ केन्द्रदेवत्यत्वात्. ३ यथाप्राप्ति. ४ रुतार्थवाद इति.

रणाद्दर्शपूर्णमासाङ्गमिति सिद्धान्तः । एवंवा मृताग्निहोत्रे श्रूयते 'यज्ञोपवीती हि देवेभ्यो दोहयती'ति । किमयं दैवाग्निहोत्राङ्गतया यज्ञोपवीतस्य विधिरुत दर्शपूर्णमासादिषु प्राप्तस्य प्राचीनावीतस्तुत्यर्थोऽनुवाद इति । तत्र प्राचीनावीती दोहयतीत्यग्निहोत्रस्य मृतावस्थायां वचनाद्यज्ञोपवीती हि देवेभ्यो दोहयतीति तस्यैव जीवदवस्थायामुपवीतं गम्यते । तथाप्राप्तमित्यनुवादसरूपस्यापि हिशब्दपरित्यागेन विधित्वं गम्यते । स्थितं तावदपर्यवसितम् ॥

उपवीतोदगग्रत्वयोरनुवादताधिकरणम् ॥ ४ ॥

**उदक्त्वं चापूर्वत्वात् ॥ १३ ॥ [सतो वा लिङ्गदर्शनम् ॥ १४ ॥]**

उपवीती हि देवेभ्यः पुरोदञ्चो द्वयं विधिः ॥ वादो वास्यान्यतोऽप्राप्तेरपूर्वार्थो विधीयते ॥ ६ ॥
हियच्छब्दद्वयाद्वादः स्मृत्युपव्यानतो द्वयम् ॥ संप्राप्तं दक्षिणाग्रत्वप्राचीनावीतयोः स्तुतिः ॥ ७ ॥

तत्रैव श्रूयते 'ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रांस्तृणोया'दिति । ये पुरोदञ्च इति किं विधिरुतार्थवाद इति प्राप्त्यभावाद्यच्छब्दोपबन्धस्यापि व्यवहितकल्पनया वाक्यभेदेन च विधित्वं गम्यते । ये पुरा जीवदवस्थायां दर्भास्ते उदञ्चः कार्या इत्येकं वाक्यम् । तान्दक्षिणाग्रानिति च मृतावस्थायां वाक्यान्तरमिति प्राप्ते ब्रूमः । यच्छब्दोपबन्धाद्विध्यभावाद्विध्यन्तरैकवाक्यत्वाच्चानुवादकत्वम् । अस्तिच प्राप्तिः । 'अग्रवन्त्युदगग्राणी'ति स्मृतेः । नचेदमेव स्मृतेर्मूलम् । अस्याग्निहोत्रविषयत्वात्स्मृतेश्चाविशेषेण सर्वविषयत्वादवश्यं मूलान्तरं कल्पनीयम् । तस्मिंश्च कल्पिते ततएवाग्निहोत्रेऽपि प्राप्तेरयमनुवाद इति स्थितादुत्तरम् । 'यज्ञोपवीती हि देवेभ्यो दोहयती'ति हिशब्दोपबन्धात्प्राचीनावीतविधिशेषत्वादनुवादत्वं तावद्गम्यते । तद्यदि कथंचिदपि न प्राप्तिः स्यात्ततो भङ्क्त्वा रूपं विधित्वमध्यवसीयेत । अस्तिच दर्शपूर्णमासादिषु प्राप्तिरिति तदपेक्षत्वादनुवादोपपत्तौ न रूपभङ्गो युक्तस्तस्मादनुवादः ॥

---

भावात्संयोगभेदेन युक्तो विधिः । ततश्च प्रकरणाद्दर्शपूर्णमासमात्रार्थत्वमिति सिद्धान्तमाह—**संयोगेति** । इदानीं 'विधिर्वा स्यादपूर्वत्वा'दित्येतस्य सूत्रमात्रस्य वर्णकान्तरमाह—**एवंवेति** । **दर्शेति** । आदिशब्दस्तद्विकृतिपरः । अनुवादपक्षेऽपि न स्मृतिप्राप्तस्यानुवादः स्मृतितः पुरुषार्थतया प्राप्त्या कर्मार्थत्वेनानुवादायोगादित्याशयेन दर्शपूर्णमासादिषु प्राप्तस्येत्युक्तं **तत्रेति** । यज्ञोपवीती हि देवेभ्य इत्यस्य दर्शपूर्णमासविषयत्वं न संभवति, मृतावस्थापन्नाग्निहोत्रविषयप्राचीनावीतविधिसमभिव्याहारपर्यालोचनायां स्वरसतो यज्ञोपवीतीत्यस्य जीवदवस्थापन्नाग्निहोत्रविषयत्वप्रतीतेः । एवंच दार्शपौर्णमासिकानुवादासंभवादग्निहोत्रविषयत्वे सति तत्राप्राप्तत्वाद्विधिरेवेत्यर्थः । एवंचोपव्ययत इत्यत्रेवात्रापि विधिरिति प्रत्यवस्थानात्सङ्गतिः । ननु हिशब्दयोगादनुवादसरूपस्य विधित्वमनुपपन्नमित्यत आह—**अनुवादेति** । **हिशब्दपरित्यागेनेति** । हिशब्दमुपेक्ष्येति यावत् । विध्यनन्तरभाविप्रसिद्ध्यनुवादको हिशब्द इति भावः । दोहयतीत्याख्यातयुक्तस्यास्य वाक्यस्यानुवादत्वे सिद्धान्तिते आख्यातरहितस्य ये पुरोदञ्च इत्यस्य विधित्वपूर्वपक्षानुन्मेषादेकेनैव सूत्रेणोभयत्र सिद्धान्तसिद्धेश्चान्तरागर्भिणीत्वेनाधिकरणान्तरं सूत्रकारेण कृतं तद्दर्शयितुमाह—**स्थितं तावदिति** ॥

**उदक्त्वं चापूर्वत्वात्** ॥ १३ ॥ तत्रैव मृताग्निहोत्र एवेत्यर्थः । **प्राप्तीति** । स्मृतेः श्रुतिसापेक्षतया श्रुतेः स्मृतिप्राप्तानुवादत्वायोगात्स्मृतिमूलभूतश्रुतिप्राप्त्यभिधाने चावश्यकत्वादस्या एव श्रुतेः स्मृतिमूलत्वसंभवेनान्यतः प्राप्त्यभावादित्यर्थः । ये पुरेत्यस्य दर्भपदेनान्वय इति व्यवहितकल्पनां, ये पुरोदञ्चो दर्भा इत्येकं वाक्यम्, तानित्याद्यपरं वाक्यमिति वाक्यभेदं चोपपादयति—**य इति** । अप्राप्तार्थत्वाद्विधित्वनिश्चये विधिशब्दोऽप्यध्याहार्य इत्याशयेनाह—**कार्या इति** । ननु यच्छब्दोपबन्धात्स्वरसतः प्रतीयमानमप्यनुवादकत्वं, विध्यन्तरैकवाक्यत्वं चाप्राप्तार्थत्वात्परित्याज्यमित्यत आह—**अस्तिचेति** । **अग्रवन्तीति** । यानि अग्रवन्ति दर्भसमिदादीनि तान्युदगग्राणि कार्याणीति स्मृतेरर्थः । प्रयोजनं पूर्वपक्षे ये पुरोदञ्च इति विधेर्याजुर्वैदिकत्वात्क्रेषे यदि यजुष्टो भुवःस्वाहेति दक्षिणेऽग्नौ जुहुयादित्येतत्प्रायश्चित्तं, सिद्धान्तेत्वविज्ञातप्रायश्चितमिति । अन्तरागर्भिणीं समाप्य पूर्वाधिकरणसिद्धान्तमाह—**स्थितादिति** । स्ववाक्यगतहिशब्दावगतानुवादत्वबलाद्वाक्यान्तरसमभिव्याहारलभ्यजीवदवस्थापन्नाग्निहोत्रविषयत्वं यज्ञोपवीतीत्यस्य न स्वीकार्यमिति कथंचिदपीति वदतो भावः । प्रयोजनं पूर्वपक्षे जीवदग्निहोत्रदोहे वासोविन्यासात्मकोपवीताभावे वैगुण्यं सिद्धान्तेतु नेति ॥

---

१ स्तानुवाद इति. २ पबद्धस्यापि.

समिद्धारणस्य विधिताधिकरणम् ॥ ५ ॥

## विधिस्तु धारणेऽपूर्वत्वात् ॥ १५ ॥

**धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः ॥ विधिर्वार्थो श्रुतेः पित्र्ये प्रोक्तायाः पूर्ववत्स्तुतिः ॥ ८ ॥**
**ऊर्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः ॥ अतो हिशब्दसंत्यागादपूर्वार्थो विधीयते ॥ ९ ॥**

मृताग्निहोत्र एवं श्रूयते 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'ति। किमयं जीवदग्निहोत्रे विधिरुतानुवाद इति। पूर्वेण न्यायेनानुवादः। कुतश्च प्राप्तिः आचारात्। सर्वमभ्यर्हितं द्रव्यं प्रच्छाद्यैव देशान्तरं नेतव्यमित्याचारात्प्राप्तम्। अतोऽग्निहोत्रद्रव्यमपि गार्हपत्यादाहवनीयमानीयमानमाच्छादयितव्यं। तत्केनेति समिद्धारणविधानं तन्नियमाद्दृष्टार्थं भवति समिधा प्रच्छादयेदेति। साचोपरि धार्यमाणा प्रच्छादनक्षमा नान्यथेति प्राप्तमुपरिधारणमनूद्यत इति प्राप्ते ब्रूमः। विधिरपूर्वत्वात्। नह्याचारादुपरि प्राप्तिः। आच्छादनासमर्थत्वात्। स्रुग्दण्डे समिधमुपसंगृह्येतिच श्रवणाद्दण्डप्रदेशेऽसौ धारयितव्येति कुतोऽनया हविषः प्रच्छादनम्। अतोऽप्राप्तत्वाद्धिशब्दपरित्यागेन विधिः, अनुवादानुपपत्त्या हि विधिकल्पनम् ॥

दिग्विभागस्यार्थवादताधिकरणम् ॥ ६ ॥

## दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वात् ॥ १६ ॥

**दिशं प्रतीचीं मनुजा व्यभजन्तेत्यसौ विधिः ॥ वादो वात्र पुराकल्पस्तुत्यर्थो विधिमर्हति ॥ १० ॥**
**प्राचीनवंशवाक्योक्तेर्विधावस्यैकवाक्यतः ॥ दिग्विभागोऽर्थवादोयमुपवीते निवीतवत् ॥ ११ ॥**

'ज्योतिष्टोमे प्राचीनवंशं करोती'ति विधाय श्रूयते 'प्राचीं देवा व्यभजन्त दक्षिणां पितरः प्र-

---

**विधिस्तु धारणेऽपूर्वत्वात् ॥ १५ ॥ पूर्वेणेति।** हिशब्दयोगादधोधारणविषयविध्यन्तरैकवाक्यत्वाच्चेत्यनेन न्यायेनेत्यर्थः। पूर्वेणेत्यनेन सङ्गतिरपि सूचिता। अग्निहोत्रद्रव्यं अग्निहोत्रसाधनद्रव्यमित्यर्थः। **ननु** हस्तादिनाप्याच्छादनसंभवान्न समिध उपरिधारणप्राप्तिरित्यत आह—**तत्केनेति।** आचारप्राप्ताच्छादनस्य साधनापेक्षायां स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीति जीवदग्निहोत्रे स्रुग्दण्डे समिद्धारणविधिवाक्यमपेक्षितविधानाय स्रुग्बिलस्थितं हविः समिधैवाच्छादयेदिति नियमविधिमवलम्बते, समिधा च प्रच्छादने तस्या उपरिधारणमर्थप्राप्तमित्यर्थः। **नहीति।** आच्छादनार्थतया समिधः प्राप्तौ सत्यां हि स्रुग्दण्डे समिधमिति वाक्यं समिन्नियमार्थं स्यात्। नचाच्छादनार्थतया समिधः प्राप्तिः संभवति। तस्यास्तत्रासामर्थ्यात्। तस्मादाचारादाच्छादनप्राप्तावपि तत्र समिन्नियमाभावान्न समिधः स्रुग्बिलोपरिधारणमाचारात्प्राप्नोतीत्यर्थः। नच यथा औदुम्बरः सोमचमसो दक्षिणा, अश्वः श्यावो दक्षिणेत्यादौ साकल्येन ऋत्विगानत्यसमर्थस्यापि चमसादेर्वचनबलाद्दक्षिणात्वमेवमिहापि समिधएव वचनबलादाच्छादनार्थत्वमस्त्विति वाच्यम्। युक्तं तत्र दक्षिणाशब्दश्रवणादसमर्थस्यापि दक्षिणात्वं प्रकृते चाच्छादनशब्दाश्रवणादपेक्षितस्याप्यसमर्थस्यान्वयायोग्यतयापेक्षितविधित्वार्थमप्याच्छादने समिन्नियमविध्यसंभवान्न वचनात्समिध आच्छादनार्थत्वमिति वैषम्यादिति भावः। किंचोपरिधारणविध्यभावे कृत्स्नाया अपि समिधः स्रुग्दण्डएव धार्यता स्यात् स्रुग्दण्डे समिधमिति वाक्यस्वरसतस्तथाप्रतीतेः नतु बिलोपरि, ततश्च समिधाऽऽच्छादनमत्यन्ताप्रसक्तमित्याह—**स्रुग्दण्ड इति।** सति तूपरिधारणविधौ तदवरोधाय बिलसमीपस्रुग्दण्डप्रदेशे समिधो मूलांशस्य बिलप्रदेशे चाग्रांशस्य धारणमित्येवं स्रुग्दण्डे समिधमिति वाक्यस्यार्थः कल्पयितुं शक्यते इति सिध्यति बिलोपरिधारणमिति भावः। **ननु** लिङाद्यभावान्न विधिसंभव इत्यत आह—**अनुवादेति।** अप्राप्तस्यानुवादानुपपत्त्या विभक्तिविपरिणामेन विधित्वकल्पनमित्यर्थः। नच स्रुग्दण्डोपरि विहितायाः समिधोऽधस्ताद्धारणं मृताग्निहोत्रेऽधस्तादित्यनेन विधीयते, उपरिधारणवाक्यं बिलोपरीत्यश्रवणात्स्रुग्दण्डवाक्यप्राप्तदण्डोपरिधारणानुवाद इति किं न स्यादिति वाच्यम्। बिलशब्दाश्रवणेऽप्यनुवादस्यानर्थक्यादधस्ताद्धारणस्तुतेरनतिप्रयोजनत्वाच्चोपरिधारणवाक्यस्य बिलोपरिधारणपरतया विधित्वकल्पनात् शाखान्तरे बिलोपरिधारणवाक्यसद्भावात्समानार्थत्वायास्यापि बिलोपरिधारणपरत्वावश्यंभावाच्चेत्याहुः। प्रयोजनं पूर्वपक्षे आचारप्राप्तप्रच्छादनार्थतया दृष्टार्थत्वात्समिद्धारणस्य समिदलाभेऽन्येन तत्कार्यं संपादनीयम्। सिद्धान्ते तूपरिधारणस्यापूर्वत्वेनादृष्टार्थविध्यङ्गीकारादन्यस्यच तददृष्टजनकत्वे मानाभावान्नान्योपादानमित्याहुः ॥

**दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वात् ॥ १६ ॥ प्राचीनवंशमिति।** प्राचीनः प्रागायतः पृष्ठवंशो यस्य मण्डपविशेषस्य तमित्यर्थः। विध्यन्तरैकवाक्यत्वस्फोरणार्थं च प्राचीनवंशविध्युक्तिः। तत्र देवपितृरुद्राणां कर्मानधिकारेण

तीचीं मनुष्या उदीचीं रुद्रा' इति। तत्र 'प्रतीचीं मनुष्या' इत्यत्र निवीताधिकरणवत्सर्वे पक्षा रचयितव्याः, का पुनर्विशेषाशङ्का सोच्यते। निवीतं मनुष्याणामित्यत्र न स्तुतिरप्याश्रयेन गम्यत इति दूरापास्तं विधित्वम्। इह तु व्यभजन्तेति पुराकल्पेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते, तथाच सुकल्पो विधिरितातो विधित्वं युक्तमितीमामाशङ्कां निवर्तयितुमिदमधिकरणम्॥

परुषि दितादीनामनुवादताधिकरणम्॥ ७॥

## परुषि दितपूर्णघृतविदग्धं च तद्वत्॥ १७॥

**परुषि च्छिन्नमित्युक्त्या बर्हिषस्तु समूलताम्॥ घृतं दैवं मस्तु पित्र्यमित्युक्त्या नवनीतकम्॥ १२॥**

**यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम्॥ स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत्॥ १३॥**

'यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणा'मिति, तथा 'यत्पूर्णं तन्मनुष्याणामि'ति, तथा 'घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणा'मित्यत्र मनुष्यसंयुक्ता उदाहरणम्, तथा 'यो विदग्धः स नैर्ऋतः योऽश्रितः स रौद्र' इति। अत्रापि विध्यर्थवादादिपक्षा निवीतवदेव सर्वे योज्याः। विशेषाशङ्कात्वेषा—विधित्वेऽपि न फलकल्पनं लौकिकानामेव क्लृप्तफलानां लवनमानाभ्यञ्जनक्रियाणामन्तरा पूर्णनिष्पक्वमिति विशेषनियममात्रविधानान्नियमादृष्टमात्रं न निवीतवदत्यन्ताप्राप्तविधानेनादृष्टक्रियाफलकल्पना। यो विदग्ध इत्यपि प्रसिद्धयोरेव नैर्ऋतरौद्रयोर्विदग्धत्वाऽश्रृतत्वगुणमात्रविधानाल्लाघवमतो विधिरित्येतां शङ्कां निवर्तयितुमतिदेशः॥

---

निवीताधिकरणोक्तसर्वपक्षाणां देवादिसंयुक्तवाक्येष्वसंभवान्न तेषां विषयत्वमित्याशयेनाह—**तत्रेति**। निवीतं मनुष्याणामित्यत्रैव षष्ठ्यश्रवणेऽपि मनुष्या व्यभजन्तेति सामानाधिकरण्यादेव मनुष्यधर्मत्वादिपक्षोद्भावनमिति भावः। **निवीतं मनुष्याणामित्यत्रेति**। प्रत्यक्षविध्यश्रवणादर्थवादत एव विधिः कल्पनीयः। तथाच तत्र निवीतस्तुतेरेवाजस्येनाप्रतीतेरर्थवादेन निवीतविधिकल्पनं दूरापास्तमिति स्वतन्त्रविधित्वासंभवादस्तु तत्रोपव्यानस्तावकत्वं, प्रकृतेतु पूर्वे मनुष्याः प्रतीचीं व्यभजन्तेत्युक्तपूर्वपुरुषाचरितत्वेन प्रतीचीविभागस्य प्राशस्त्यावगतेस्तेन प्रतीचीदिग्विभागः कार्य इति विधिः सुकल्प इत्यभ्यधिकाशङ्केत्यर्थः। प्राचीनवंशविधिस्तुत्यर्थतया तदेकवाक्यत्वोपपत्तौ विध्यन्तरकल्पनायां मानाभावादर्थवादत्वमेवेत्याशयेनाह—**इतीमामाशङ्कामिति**। सूत्रार्थस्तु—दिग्विभागः प्रतीच्या दिशो मनुष्यकर्तृको विभागोऽपि निवीतवदर्थवादार्थः प्रायेण पूर्वाह्णे व्याप्रियमाणानां मनुष्याणामादित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्यार्थतःप्राप्तत्वेन तत्र विध्ययोगादिति। अत्र 'संबन्धस्यार्थहेतुत्वा'दिति सूत्रावयवो निवीताधिकरणद्वितीयसूत्रावयवोक्तार्थस्मारकत्वेनानतिप्रयोजनत्वाद्भाष्यकारैर्नोक्तस्तदनुसारेण ग्रन्थकृतापि न पठितः॥

**परुषि दितपूर्णघृतविदग्धं च तद्वत्॥ १७॥ यदिति**। इदंच दर्शपूर्णमासयोः 'पर्व प्रतिलुनाती'ति विधिसंनिधौ, महापितृयज्ञे 'समूलं बर्हिर्भवति व्यावृत्त्या' इति विधिसंनिधौ च श्रूयते। परुषि पर्वणि। दितं खण्डितम्। अन्तरा मूलपर्वणोर्मध्य इत्यर्थः। **यत्पूर्णमिति**। इदंच ज्योतिष्टोमे उपबिलाद्दृह्णातीत्यत्र, महापितृयज्ञेऽर्थ उपमन्थतीत्यत्र च श्रूयते **घृतमिति**। इदं ज्योतिष्टोमे नवनीताभ्यञ्जने श्रूयते। घृतमग्नौ विलीनमस्तु स्वयंविलीनं निष्पक्वं वस्त्वन्तरप्रक्षेपात्सौरभ्यसंपादनेन नितरां पक्वम्। अतएव ऋग्ब्राह्मणे सुरभिघृतं मनुष्याणामित्युक्तमिति ध्येयम्। **यो विदग्ध इति**। इदंच दर्शपूर्णमासयोस्तस्मादविदहता श्रृतं कृत्य इत्यत्र श्रूयते। विदग्धोऽतिपक्वः। अश्रृतोऽपक्वः। **अत्रापीति**। अत्र यो विदग्ध इत्यत्र शुद्धनिर्ऋत्यादिधर्म इति पक्षासंभवाद्विधिपक्षे किं प्राकरणिकहविषोः विदाहाऽश्रपणयोर्निमित्तयोरग्न्यादिदेवतापनयेन नैर्ऋतत्वरौद्रत्वविधिरुत यच्छब्दस्य व्यवहितान्वयमाश्रित्य यो नैर्ऋतः स विदग्धः कार्य इत्येव नैर्ऋते पुरोडाशादौ विदग्धत्वादिविधिरिति पक्षद्वयमेव बोध्यम्। **लौकिकानामिति**। लोके यद्दर्भलवनं क्रियते तदन्तरा कर्तव्यं, यच्च घृतधान्यादेर्मानं क्रियते तन्मानपात्रबिलं पूर्णं कृत्वा मातव्यम्, यच घृताभ्यञ्जनं क्रियते तन्निष्पक्वेन कर्तव्यमिति नियममात्रं विधीयते। तत्र यद्यपि नियमादृष्टं कल्प्यं तथापि तस्य नियमादृष्टस्य विघ्नपरिसमाप्त्यर्थतया लवनादिष्वेवोपयोगाददृष्टसाध्यस्वर्गादिफलं निवीतवन्न कल्प्यमित्यर्थः। **गुणमात्रेति**। ततश्च प्रसिद्धनैर्ऋताद्युपकारस्यैव फलत्वान्न फलं कल्प्यमिति भावः। इदमुपलक्षणम्। प्रकरणे नैमित्तिकदेवताविधिपक्षेऽपि अनेनैव न्यायेन न फलकल्पनाप्रसक्तिरिति बोध्यम्। **एतामिति**। लवनादिसौकर्यसिध्यर्थतया लोकतः प्राप्तानामन्तरादीनामनुवादः। निर्ऋतशब्दवाच्याया भूमेः कृष्णवर्णत्वात्कृष्णवर्णे विदग्धे औचित्यप्राप्तनैर्ऋतत्वानुवादः। अश्रृतस्य रोगप्रदत्वात्क्रूरतया प्राप्तरौद्रत्वानुवाद इति भावः। अतिदेशाविशेषेऽपि दिग्विभागस्याभजन्तेत्याख्यातेन विधित्वस्य झटिति प्रतीतेर्विधिप्रतीतितारतम्यादधिकरणद्वयस्य पौर्वापर्यं बोध्यम्। सूत्रे परुषि दितमिति वाक्यानुकरणत्वादलुक्। विदग्धशब्दोऽश्रृतोपलक्षणार्थश्च॥

अनृतवदननिषेधस्य क्रतुधर्मताधिकरणम् ॥ ८ ॥

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १८ ॥ [विधिर्वा संयोगान्तरात् ॥ १९ ॥]**

अनृतं न वदेद्वैधः पुंधर्मो वानुवादगीः ॥ स क्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥ १४ ॥
अनृतोक्तेः पुमर्थत्वात्तन्निषेधस्तथाविधः ॥ स्मार्तानुवादः पुंस्क्रत्वोः श्रुतिप्रक्रिययोर्वशात् ॥ १५ ॥
नाख्याते पुरुषानुक्तिः क्रतावेव प्रयाजवत् ॥ सत्योक्तिनियमादन्यः संयोगोऽतः क्रतौ विधिः ॥ १६ ॥

क्रतौ पुरुषे चार्थतः प्रसक्तं पदार्थं प्रतिषेधन्तः क्रतुप्रकरणगताः प्रतिषेधा इहोदाहरणम् । दर्शपूर्णमासयोर्हि 'नानृतं वदे'दिति हि श्रूयते । तत्र संशयः किमयं पुरुषधर्मो विधिरुत क्रतुयुक्तपुरुषधर्मोऽनुवादः किंवा क्रतुयुक्तपुरुषधर्मो विधिः उत शुद्धक्रतुधर्मोऽनुवादः अथवा शुद्धक्रतुधर्मो विधिरिति । तदर्थंच प्रतिषिध्यमाना क्रिया विचारयितव्या किमर्था सती प्रतिषिध्यते किं क्रत्वर्था किंवा पुरुषार्थेति । ततोऽपि पुनर्विचारयितव्यं किमाख्यातं कर्तारमभिधत्ते नवेति । तत्र 'प्रतीतेः स्मरणात्कर्तृविशेषैरपृथक्श्रुतेः ॥ कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते ॥' वदेदित्याख्यातात्कर्तावगम्यते । यश्च यतोऽवगम्यते स तस्यार्थः । तथा 'कर्तरि कृ'दित्यधिकृत्य 'लः कर्मणि चे'ति चकारेण कर्तृवाचित्वं स्मृतम् । पचतिदेवदत्त इति च कर्तृविशेषवचनैर्देवदत्तादिपदैः सामानाधिकरण्यात्कर्तृवाचिता । स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनंप्रति प्रधानभूत इति वदनं तावत्पुरुषार्थं, यदर्थं च वदनं तदर्थः प्रतिषेधोऽपि न्याय्यः । कुत एतत् प्रतिषेधस्यानिष्टबोधकत्वात् इष्टविपरीतं चानिष्टं यद्यदा यस्येष्टं तद्विपरीतं तदा तस्यानिष्टं भवति । तद्यदि प्रतिषेध्यभूतां वदनक्रियामनुवदन् वदेदिति शब्दः

---

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १८ ॥** पूर्वोक्तानुवादापवादात्सङ्गतिः । निषेधस्य क्रतुपुरुषोभयार्थत्वसंभावनार्थमाह—**क्रतौ पुरुषे चेति** । 'नातिरात्रे षोडशिनं गृह्णाती'त्यादिव्यावर्तनार्थमाह—**अर्थत इति** । पेटिकासङ्गतेः सिद्धान्तस्य च स्फोरणायाह—**क्रतुप्रकरणगता इति** । **किमयमिति** । किमयं विधिरुतानुवादः । विधिपक्षे किं शुद्धपुरुषधर्मः, किंवा क्रतुयुक्तपुरुषधर्मः, उत शुद्धक्रतुधर्मस्तथानुवादपक्षेऽपि किं क्रतुयुक्तपुरुषधर्मः उत शुद्धक्रतुधर्म इति संशयनिष्कर्षः । एवंच क्रतुयुक्तपुरुषधर्मो विधिरिति कोट्यन्तरमपि ग्रन्थे द्रष्टव्यम् । अतएव विधित्वस्थापनानन्तरं प्रवृत्तः इदानीं क्रतुयुक्तस्य पुरुषस्य वा धर्म उत शुद्धक्रतुधर्म इत्येतावदवशिष्यत इति ग्रन्थः संगच्छते । क्रतुयुक्तपुरुषधर्मो विधिरिति कोट्यभावे तद्ग्रन्थासङ्गतेरिति ध्येयम् । **किमाख्यातमिति** । आख्यातस्य कर्त्रभिधायित्वे पदश्रुत्या धात्वर्थस्य वदनस्य पुरुषार्थत्वात्तन्निषेधोऽपि पुरुषार्थस्तदनभिधायित्वे तु वदनस्य पुरुषार्थत्वप्रत्यायकश्रुत्यभावात्प्रकरणात्क्रत्वर्थत्वप्रतीतेः प्रतिषेधस्यापुरुषार्थत्वमिति फलफलिभावः । अपृथक्श्रुतेः सह प्रयोगात्सामानाधिकरण्यादिति यावत् । **चकारेणेति** । तेन 'कर्तरि कृ'दितिसूत्रस्थकर्तुरनुकर्षणादिति भावः । **सामानाधिकरण्यादिति** । कर्तृवाचित्वाभावे भिन्नार्थत्वात्सामानाधिकरण्यानुपपत्तिरिति भावः । **नन्वाख्यातस्य** कर्तृवाचित्वेऽपि कर्तुः कारकतया क्रियांप्रति गुणत्वमेव न प्राधान्यमित्यत आह—**सचेति** । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययः प्राधान्येनेति शाब्दिकैरुक्तत्वात्प्रत्ययार्थस्य कर्तुः प्राधान्यं युज्यते । यद्यपि पचतीत्यादौ क्रियापरपर्यायस्य भावस्य प्राधान्यं प्रतीयते तथापि भावार्थाधिकरणोक्तरीत्या धात्वर्थस्य क्रियात्वाभावात्प्रत्ययस्य क्रियावाचित्वमनि॑च्छतां शाब्दिकानां क्रियाप्राधान्यप्रतीतेरुपपादयितुमशक्यत्वात् आख्यातस्य कर्तृवाचित्वमभ्युपगच्छद्भिस्तैस्तस्य प्रत्ययार्थतया प्राधान्यमवश्यं स्वीकार्यमित्याशयः । **ननु** दीक्षितो न ददाति न जुहोति न पचतीति दीक्षितस्य दानपाकहोमानां पुरुषार्थानां प्रतिषेधः क्रत्वर्थ इति दशमे वक्ष्यते । एवंच प्रतिषेध्यप्रतिषेधयोरैकरूप्यानियमाद्यदर्थं वदनं तदर्थः प्रतिषेध इति कथमिति शङ्कते—**कुत इति** । **प्रतिषेधस्येति** । प्रतिषेध्यस्यानिष्टसाधनत्वाभावे प्रतिषेधानुपपत्त्या प्रतिषेधविधिरेव प्रतिषेध्यस्यानिष्टसाधनत्वं गमयतीति भावः । **नन्वेवमपि** पुरुषस्येष्टसाधनमपि वदनं क्रतोरिष्टविपरीतसाधनमिति बोधसंभवान्न किंचिदनुपपन्नमित्यत आह—**तद्यदीति** । **नन्वे**कस्मिन्वाक्ये वदनस्य पुरुषंप्रतीष्टसाधनत्वस्य तद्विपरीतसाधनत्वस्य

---

१ मानाया क्रिया. २ भेयमिति.

पुरुषार्थतया तामुपस्थापयेत्ततः प्रतिषेधोऽपीष्टविपरीतसाधनतां बोधयन्ननुवादावस्थापन्नस्यैवेष्टस्य विपर्ययं फलत्वेनावलम्बते नेष्टान्तरस्य, अप्रतिपन्नत्वात् । तदयमर्थः । यत्पुरुषोपकारितया प्रसक्तं वदनं तन्न तथा किंत्वपकारमेवास्य साधयतीति । तेन श्रुत्या प्रकरणं बाधित्वा पुरुषार्थः प्रतिषेधः । यस्तु स्मार्तः प्रतिषेधस्तस्याप्येतदेव मूलं भविष्यतीत्येकः पक्षः । श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मोयं जंजभ्यमानमन्त्रवचनवत्कर्मेकुर्वाणस्यानृतं वर्जयितव्यमिति । सोयं स्मृतिप्राप्तानुवादः । स्मृत्यैव हि पुरुषस्योपनयनप्रभृत्यामरणान्निषिद्धमनृतं तन्मध्यवर्तिनोश्च दर्शपूर्णमासयोस्तत एव वर्जनं प्राप्तमित्यनुवादः । नचास्मिन्पक्षे मूलमूलित्वं श्रुतेः क्रतुविषयत्वात्स्मृतेरविशेषावस्थानादिति द्वितीयः पक्षः । प्रयाजादिवत्क्रत्वर्थ एवारादुपकारकः प्रतिषेधः सोऽपि त्वनुवाद एव । पुरुषो हि स्वार्थमेवानृतं वर्जयतीति प्राप्तमेव क्रतावपि वर्जनम् । नहि पुरुषं विहाय क्रतावनृतं संभवति । पुरुषे च निषिद्धमिति कुतः क्रतौ प्राप्तिः । तस्मादनुवाद इति तृतीयः पक्षः । अत्राभिधीयते—'क्रत्वर्थत्वेऽपि यत्तावदनुवादत्वमीरितम् ॥ तत्र संयोगभेदेन विधिरेव हि गम्यते ॥' पुरुषार्थेन हि स्मार्तेन प्रतिषेधेनैतदवगतमनृतं वदतः पुरुषस्य प्रत्यवायो भवति वर्जनाच्च न स भवतीति न क्रतोः किंचित्तद्भावाभावयोर्वैगुण्यमवैगुण्यं वा । तेन यः प्रत्यवायमभ्युपेत्य क्रतुमविगुणं चिकीर्षति तस्य नानृतं वर्जनीयं स्यात् । क्रत्वर्थेन तु प्रतिषेधेन क्रतुगत एव प्रत्यवायोऽनृताद्भवतीति बोध्यत इत्यर्थभेदान्नानुवादः । तथातिक्रमेऽपि पुरुषार्थातिक्रमनिमित्तं प्रायश्चित्तं, क्रत्वर्थत्वे तु क्रतुदोषनिमित्तं

---

चावगमविरोध इति शङ्कां निवर्तयितुं वचनव्यक्तिप्रकारमभिनयति—**तदयमिति । श्रुत्येति** । वदेदिति पदश्रुत्या प्रतिषेध्यस्य पुरुषार्थत्वावगमिकया प्रतिषेधस्य पुरुषार्थत्वंविनानुपपन्नया प्रकरणबाध इत्यर्थः । दीक्षितो न ददातीत्यत्र पुरुषार्थतया शास्त्रचोदितस्य दानादेः पुरुषार्थतयैव निषेधे विकल्पापत्तेर्वस्तुनि विकल्पासंभवादगत्या पुरुषार्थस्यापि क्रत्वर्थो निषेधः स्वीक्रियते । इहत्वनृतवदनस्य शास्त्रचोदितत्वाभावेन पुरुषार्थतया निषेधेऽपि विकल्पाप्रसङ्गाद्वैषम्यमिति भावः । **ननु** स्मृतावेव पुरुषार्थतयानृतवदननिषेधसद्भावात्तद्विषयत्वे आनर्थक्यमत आह—**यस्त्विति** । यद्यप्यस्मिन्पक्षे फलं कल्प्यं तथापि श्रुतिमूलत्वान्न तद्दोषावहमित्याशयेनोपसंहरति—**इत्येक इति । जंजभ्यमानेति** । नच तस्य क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वर्थत्वम् । अनृतवदनप्रतिषेधस्य च पुरुषसंस्कारकतया क्रत्वर्थत्वं न संभवति । तथात्वे पुरुषसंस्कारकतया क्रत्वर्थत्वस्य स्मृतितः प्राप्त्यभावेनानुवादत्वानुपपत्तेः । तथाच जंजभ्यमानमन्त्रंप्रति पुरुषस्य शेषिता, क्रत्वपूर्वीयपुरुषत्वाकारेण अनृतवदननिषेधंप्रतितु क्रतुयुक्तस्यापि पुरुषस्य स्वरूपेणैव शेषितेत्यस्ति भेद इति वाच्यम् । क्रतुना हि स्वस्य फलसाधनत्वसिद्ध्यर्थं यजमानस्य फलाधारत्वयोग्यता अपेक्ष्यते । निषिद्धाचारवतश्च नास्ति फलाधारत्वयोग्यता । तेन पुरुषार्थतयानृतवदनं निषेधयन्त्यैव स्मृत्याऽर्थात्फलाधारत्वयोग्यतापादकतया पुरुषसंस्कारकत्वं प्रतिषेधस्य प्राप्तमिति न कश्चिद्विशेष इत्याहुः । भाष्योक्तं मूलमूलित्वनिराकरणमेतत्पक्षाभिप्रायेणेति द्योतयितुं अत्रपक्षे मूलमूलित्वं निराह—**नचेति । क्रत्विति** । क्रतुयुक्तपुरुषविषयत्वादित्यर्थः । **प्रयाजेति** । यद्यप्यस्मिन्नधिकरणे प्रयाजादीनामपि विषयत्वं तेष्वपि पदश्रुत्या पुरुषार्थत्वमिति पूर्वपक्षप्रवृत्तेः संभवात्तथापि तृतीयपक्षेऽनृतवदनस्य पुरुषार्थत्वाभावात्तद्वदेव प्रयाजादीनामपि पुरुषार्थत्वाभावेसति तेषामारादुपकारकत्वावश्यंभावात्तेषां दृष्टान्तीकरणमुपपन्नमिति भावः । सिद्धान्तपक्षाद्भेदमाह—**सोऽपीति । ननु** पुरुषार्थं यदनृतं तद्वर्जनं हि पुरुषः स्वार्थतयानुतिष्ठति तावता कथं वर्जनस्य क्रत्वर्थत्वं क्रत्वर्थस्य वदनस्य पुरुषेण स्वार्थतया वर्जनस्याकर्तव्यत्वादित्यत आह—**नहीति** । भवेदेवं यदि क्रत्वर्थं विहितं किंचिदनृतवदनं स्यात्, पुरुषस्तु स्वकार्यसिद्ध्यर्थमनृतं वदन् क्रतोरपि स्वकार्यत्वाविशेषात्तदर्थमपि यदनृतं वदति तदेतत्क्रत्वर्थमनृतवदनं वाच्यम् । तच्च कार्यान्तरार्थानृतवदनवत्पुरुषार्थतयैव वर्जनीयतया स्मृतितः प्राप्तमित्यर्थादेकविषयोपनिपाताद्युक्ता पुरुषार्थनिषेधादेव क्रत्वर्थनिषेधप्राप्तिरित्यर्थः । **संयोगेति** । क्रतुपुरुषसंयोगभेदेन विषयभेदादप्राप्तार्थतया विधिरेवेत्यर्थः । संयोगभेदमेवोपपादयति—**पुरुषार्थेनेति** । एवंच यदुक्तं पुरुषे च निषिद्धमिति कुतः क्रतौ प्राप्तिरिति तन्निरस्तमित्याशयेनाह—**तेनेति** । अनृतवदनेनापि क्रतौ निर्वर्तिते प्रायश्चित्तेन सुपरिहरं तत्पापमिति बुद्ध्या क्रत्वनुष्ठाने वैगुण्याप्रसङ्गात्सत्यपि पुरुषार्थनिषेधे क्रतौ वर्जनं न प्राप्नुयादित्यर्थः । संयोगभेदमेव फलभेदेन द्रढयति—**तथेति** । पुरुषार्थस्यातिक्रमे यत् आचमनसावित्रीजपतप्तकृच्छ्रादिरूपं प्रायश्चित्तं तत्तारतम्यानुसारेण भवति, क्रत्वर्थस्यातिक्रमे तु निषेधस्य याजुर्वैदिकत्वाद्यदि यजुष्टो भुव इति दक्षिणाग्नौ जुहुयादित्येतत्प्रायश्चित्तं भवतीति फलभेद इत्यर्थः । केवलक्रत्वर्थत्वपक्षे संयोगभेदेन विधित्व-

---

१ पुरुषेष्टसाधनतया. २ वस्याप्रतिपन्नस्यैव. ३ स्मृतेराद्युर्विशेषा. ४ अनृतवदनस्य पुरु. ५ प्रतिषेधस्य

प्रायश्चित्तमिति विशेषः । एवमेव क्रतुयुक्तपुरुषसंस्कारपक्षेऽपि क्रत्वर्थत्वतुल्यत्वात्संयोगान्तरं व्याख्येयम् । तन्न तावदनुवाद इदानीं क्रतुयुक्तस्य पुरुषस्य वा धर्मः उत शुद्धक्रतुधर्म इत्येतावदवशिष्यते । अत्रोच्यते—'आख्यातप्रत्ययाः सर्वे क्रियाया अभिधायकाः ॥ ततएव प्रतीतस्य न कर्तुरभिधेयता ॥ न स्मृतिः कर्तृवाचित्वे संख्यावाचित्वगोचरा ॥ सामानाधिकरण्यं च लक्षणातो गवादिवत् ॥' अनन्यलभ्यो हि शब्दार्थो भवति कर्ता चाख्याताभिहितभावनाऽविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति । स्मृतिरपि नास्याभिधेयतामाह किंतु तत्संख्यावाचिताम् । 'लः कर्तरी'ति विभक्तिशास्त्रस्य 'द्व्येकयोर्द्विवचनैकवचन' इत्यस्य च संख्याशास्त्रस्यैकवाक्यत्वात् । अत्र द्व्येकयोरिति द्विवचननिर्देशादसत्यपि भावप्रत्यये भावप्रधानो निर्देशो द्वित्वैकत्वयोरिति द्रष्टव्यम् । द्रव्यपरत्वे हि द्वयोरेकस्य च संनिपाते बहुत्वोपजननाद्बहुवचनं स्याद्व्येकेष्विति । तदयमर्थः । कर्तुरेकत्वे लकारैकवचनमिति । अनभिधेयोऽपि कर्ता धात्वर्थभावनाभ्यामेव प्रतिपन्न इति नानुपपन्नम् । तद्विशिष्टसंख्याभिधानं सामानाधिकरण्यं च गौः शुक्ल इतिवल्लाक्षणिककर्त्रभिप्रायमुपपन्नमिति नाभिधेयः कर्ता । तेन श्रुतिविरोधाभावात्क्रत्वर्थ एवायं प्रतिषेधः । सच संयोगान्तरत्वान्नानुवादः ॥

जंजभ्यमानधर्माणां प्रकरणे निवेशाधिकरणम् ॥ ९ ॥

## अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥ [प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२ ॥]

**जंजभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत ॥ वाक्यादाद्यः प्रक्रियया द्वितीयोऽस्त्वविरुद्धया ॥ १७ ॥**

दर्शपूर्णमासयोः श्रूयते 'जंजभ्यमानो ब्रूयान्मयि दक्षक्रतू' इति । तत्र संशयः किमेतन्मन्त्रवचनं

---

मुक्तं क्रतुयुक्तपुरुषधर्मत्वपक्षेऽप्यतिदिशति—**एवमिति** । यावन्निषिद्धाचारवर्जनस्य केनापि पुरुषेण कर्तुमशक्यत्वादस्य निषिद्धाचारवर्जनस्य फलाधारत्वयोग्यताधायकत्वे प्रमाणाभावात्क्रतुयुक्तपुरुषस्य प्रत्यवायाभ्युपगमेनानृतवदनेऽपि क्रतोः फलजनकत्वसंभवात् क्रतुयुक्तपुरुषसंस्कारकतयानृतवर्जनस्याप्राप्तेरुक्तप्रायश्चित्तभेदाच्च केवलक्रत्वर्थतुल्ययोगक्षेमतया संयोगान्तराद्विधिरेवेत्यर्थः । **आख्यातेति** । भावार्थाधिकरणोक्तरीत्या भावनावाचका आख्यातप्रत्यया इत्यर्थः । **अनन्येति** । ततश्च प्रतीतेरिति हेतुरकिंचित्कर इति भावः । **नन्वे**कवाक्यत्वेऽप्येकस्मिन्कर्तरि लकारैकवचनमित्यर्थः स्यान्नतु संख्यामात्रवाचित्वमित्यत आह—**अत्रेति** । 'बहुषु बहुवचन'मित्यस्यापि 'द्व्येकयो'रिति शास्त्रावैरूप्याय भावप्राधान्यमेव ! नचैवं 'द्व्येकयो'रित्यत्रेव वर्णाधिक्याप्रसङ्गाद्बहुत्वे बहुवचनमित्येव सूत्रयेदिति वाच्यम् । वैपुल्याद्यर्थकत्वभ्रमनिरासेन संख्याविशेषात्मकबहुत्वस्फोरणाय बहुवचनान्तबहुशब्देन सूत्रणोपपत्तेरिति भावः । लकारैकवचनं लकारादेशतिबाद्येकवचनमित्यर्थः । **ननु** कर्तृसंख्याभिधायित्वे विशेषणीभूतकर्त्रभिधायित्वमपि स्यादित्यत आह—**अनभिधेय इति** । कर्तुः संख्याया-मुपलक्षणत्वं नतु विशेषणत्वमिति भावः । **धात्वर्थभावनाभ्यामिति** । धात्वर्थग्रहणं मतान्तराभिप्रायेण स्वमते धात्वर्थस्य क्रियात्वाभावेन कारकविशेषकर्त्राक्षेपकत्वायोगादिति ध्येयम् । **गौरिति** । जातिगुणवाचिनोर्गोशुक्लशब्दयोर्यथा व्यक्तिगुणिलक्षकतया सामानाधिकरण्यं तद्वदित्यर्थः । **क्रत्वर्थ एवेति** । अत्रेदमवधेयम्—निषेधस्य यथा प्रकरणात्क्रत्वर्थत्वं तथा निषेध्यस्यापि अनृतं वदेदिति निषेध्यसमर्पकांशेनापि प्रकरणात्क्रत्वर्थानृतवदनस्यैवोपस्थितेस्ततश्च दर्शपूर्णमासयोरनृतवदनेनोपकुर्यादिति यत्तन्नेति निषेधवाक्यार्थः । तेन दर्शपूर्णमासयोः क्रत्वर्थानृतवदनएव क्रतोर्वैगुण्यं नतु पुरुषार्थानृतवदने । 'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् ॥ न क्रतोस्तस्य वैगुण्यं यथा चोदितसिद्धित' इति न्यायेन क्रतुमध्ये पुरुषार्थानृतवदनेऽपि क्रतुवैगुण्याभावादिति क्रत्वर्थानृतवदनं च क्रतूपयुक्तद्रव्याद्यर्जनविषयम् । व्रीहिभिर्यक्ष्ये इति संकल्प्य यवैर्यागसंकल्पवचनस्यानृतत्वात्तादृशं च बोध्यम् । प्रयोजनं शुद्धपुरुषधर्मो विधिरिति पक्षे पूर्वोक्तं स्मार्तप्रायश्चित्तम् । क्रतुयुक्तपुरुषधर्मोऽनुवाद इति पक्षे यजमानसंस्कारत्वाद्यजमानेनैवानृतं वर्जनीयम् । तथा स्मृतिप्राप्तानुवादत्वात्स्मृतेश्च मूलवेदस्याज्ञानात्'यद्यविज्ञाते भूर्भुवःसुवरिति सर्वा अनुद्रुत्याहवनीये जुहुया'दित्यविज्ञातवेदविहितयज्ञाङ्गभ्रेषनिमित्तं प्रायश्चित्तं शुद्धक्रतुधर्मोनुवाद इति पक्षे यजमानेन ऋत्विग्भिश्चानृतं वर्ज्यं । प्रायश्चित्तं तु यद्यविज्ञात एतदेव क्रतुयुक्तपुरुषधर्मो विधिरिति पक्षे यजमानेनैवानृतं वर्ज्यं किंतु तस्य याजुर्वैदिकत्वाद्यदि यजुष्ट इत्येतत्प्रायश्चित्तं । शुद्धक्रतुधर्मो विधिरिति सिद्धान्ते सर्वैर्वर्ज्यं यदि यजुष्ट इति प्रायश्चित्तं चेत्याद्यूह्यम् । सूत्रार्थस्तु—क्रतुप्रकरणाधीतं अकर्म अनृतवदनाद्यकरणं नित्यानुवादः स्यात्तस्य स्मृत्या उपनयनप्रभृतिपुरुषसंयोगादिति ॥

**अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥** पूर्वोक्तशुद्धक्रतुधर्मत्वस्येहापवादकरणात्सङ्गतिः । **तत्रेति** । शानच्प्र-

शुद्धपुरुषधर्म उत क्रतुयुक्तपुरुषसंस्कारः क्रतोरेवाङ्गमिति । तत्र—'जंजभ्यमानधर्मोयं वाक्यात्प्रकरणेन तु ॥ क्रत्वङ्गं दुर्बलं तच्च तेनास्य पुरुषार्थता ॥' नन्वेवं फलं कल्पनीयं । नैष दोषः । वाक्यावगतजंजभ्यमानपुरुषार्थत्वबलेन तत्कल्पनस्य न्याय्यत्वात्, सत्यां च फलाकाङ्क्षायां 'प्राणापानावेवात्सन्धत्ते' इति वाक्यशेषेणैव रात्रिसत्रवत्फललाभात् । 'सत्यं यदि विरोधः स्याद्वाक्यप्रक्रिययोरिह ॥ ततः फलं प्रकल्प्येत नत्वत्रास्ति विरोधिता ॥ जंजभ्यमानः पुरुषः क्रतावपि हि विद्यते ॥ तत्संस्कारमुखेनैव क्रत्वर्थत्वं भविष्यति ॥ अवश्यं हि फलं कल्प्यं तत्राध्याहारतो वरम् ॥ प्रकृतेनैव संबन्ध इति क्रत्वर्थता स्थिता ॥' एकदेशिनां तु नात्र क्रत्वर्थता सिद्ध्येत् । निमित्तं हि जृम्भिका, निमित्तं चाधिकारिविशेषणम् । अतो जृम्भिकानिमित्तयुक्तस्य पुरुषस्याधिकारिणोऽत्र वाक्ये श्रुतस्य लाभात्कार्यस्य च फलानपेक्षत्वादनपेक्षं संपूर्णं वाक्यं न प्रकृतसंबन्धमुपेयात्स्वतन्त्रमेव पुरुषार्थं स्यादित्यास्तां तावत् ॥

---

स्यस्याख्यातवन्न कर्तृसंख्यावाचित्वं किंतु कर्तृवाचित्वमेव 'कर्तरि कृ'दित्यनुशासनात् । तत्र कर्तरीत्यस्य लकारविधाविव संख्याविशेषणत्वाभावात् । नचैवमपि शानचो लादेशत्वाल्लकारविधौ च कर्तरीत्यस्य संख्याविशेषणत्वात्कथं शानचः कर्त्रर्थत्वमिति वाच्यम् । शतृशानच्प्रभृतीनामतिङ्रूपाणां लादेशानामेकवचनादिसंज्ञाविरहेण तत्र संख्याशास्त्रेणैकवाक्यत्वानुपपत्त्या तिङ्भाविनो ये लकारास्तच्छास्त्रमात्रस्यैव संख्याशास्त्रैकवाक्यत्वमिति वक्तव्यत्वेनातिङ्भाविलकारविध्यंशस्य कर्त्रर्थकत्वपरत्वस्यैव स्वीकार्यत्वादतएव 'कर्तरि कृ'दिति कृद्वाक्यशेषोऽयमनिर्दिष्टार्थेषु ण्वुल्तृजादिष्वेवोपतिष्ठते नतु शतृशानजादिषु । तेषां स्थान्यर्थनिर्देशेन निराकाङ्क्षत्वादाकाङ्क्षानुसारेण तदुपस्थानस्य न्याय्यत्वादित्यस्या अपि शङ्काया नावकाशः । अतिङ्भाविलकारविध्यंशस्योक्तरीत्या संख्याशास्त्रैकवाक्यत्वासंभवेन स्थानिनोऽर्थवत्त्वस्यैवासिद्ध्या शतृशानजादिष्वपि कृद्वाक्यशेषोपस्थानावश्यंभावात् । एवंचातिङ्भाविलकारविध्यंशस्य संख्याशास्त्रैकवाक्यत्वाभावात् क्रियमाणः पच्यमानः इत्यादिस्थलीयलकारविधानस्य स्वातन्त्र्ये सति तत्र लकारस्य कर्मार्थकत्वावश्यंभावात् स्थान्यर्थविरोधेन तत्र कृद्वाक्यशेषानुपस्थानान्न तत्र शानचः कर्त्रर्थत्वप्रसक्तिस्तेन जंजभ्यमानशब्दस्य जृम्भाकर्तृवाचितायामपि दक्षक्रतू इति मन्त्रवचनस्य वाक्येन पुरुषधर्मत्वमित्यर्थः । 'तीर्थे स्नाति तीर्थमेव समानानां भवती'ति भाष्यस्थोदाहरणान्तरे तु स्नानस्य मलापकर्षणार्थत्वात्सुखावरणार्थतीर्थविशेषणबलाच्च लिङ्गात्स्नानस्य तत्कर्तृपुरुषार्थत्वं बोध्यम् । पुरुषार्थत्वे विश्वजिन्न्यायेन फलकल्पनैव दोष इति शङ्कते—**नन्विति**। न्यायप्राप्तत्वात्फलकल्पना न दोष इति परिहरति—**नैष इति** । किंच यथा ज्योतिर्गौरायुरिति विहितरात्रिसत्रे 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ती'त्यर्थवादगतफलेन नैराकाङ्क्ष्यान्न विश्वजिन्न्यायेन फलकल्पना एवमिहाप्यर्थवादगतचिरजीवित्वफलेनैव नैराकाङ्क्ष्यान्नाश्रुतफलकल्पनाप्रसक्तिरित्याह—**सत्यांचेति** । सिद्धान्तमाह—**सत्यमिति** । **विद्यत इति** । ततश्च तद्विषयतया वाक्यस्योपपत्तेर्न विरोध इत्यर्थः । **ननु** तथापि पुरुषार्थत्वात्फलकल्पना दुर्वारेत्यत आह—**तत्संस्कारेति** । नास्य प्राधान्यं स्वीकृत्य क्रतुयुक्तपुरुषधर्मत्वमुच्यते अपितु तादृशपुरुषसंस्कारकत्वमिति नोक्तदोष इति भावः । **ननु** सामान्यविषयवाक्यस्य प्रकरणेन संकोच एव न युक्त इत्यत आह—**अवश्यमिति** । प्रबलमपि वाक्यमपेक्षितफललाभात्प्रकरणे न संकोचमनुमन्यत इति भावः । **अध्याहारत इति** । अर्थवादेऽपि कामशब्दादेरभावेन फलत्वप्रतीत्यभावेन तत्प्रत्यायकशब्दोऽध्याहार्य एवेति भावः । प्राभाकराणां क्रत्वर्थत्वसिद्धान्तो न सिद्ध्येदित्याह—**एकदेशिनामिति** । **निमित्तमिति** । सत्यां हि फलापेक्षायां प्रकृतसंबन्धस्य ज्यायस्त्वात्क्रत्वर्थता स्यात् तन्मते च विधेर्न स्वतः फलापेक्षा किंतु विषयनियोज्याधीनज्ञानत्वात्कार्यात्मकविधेर्नियोज्यविशेषणत्वेन फलापेक्षा, प्रकृते च जृम्भिकाया निमित्तत्वान्निमित्तस्य च नियोज्यविशेषणत्वाज्जृम्भिकावतः पुरुषस्य नियोज्यस्य स्ववाक्य एव श्रुतत्वेन विधिप्रतीतेः परिपूर्णत्वात् प्रकृतैकवाक्यतायां प्रमाणाभावात् स्वतन्त्रं नैमित्तिकाधिकारान्तरपरमेवेदं स्यादिति मन्त्रवचनस्य क्रत्वर्थता न सिद्ध्येदित्यर्थः । **ननु** सप्तम्याद्यश्रवणाज्जृम्भिकायाः कथं निमित्तत्वमित्यत आह—**इत्यास्तामिति** । 'लक्षणहेत्वोः क्रियाया' इति लक्षणे शानचो विधानाल्लक्षणत्वस्य च विविच्यमानस्य निमित्ततापर्यवसानाज्जृम्भिकाया युक्तं निमित्तत्वम् । किंच जृम्भिका नाम मुखव्यादानफलको निद्रालस्यादिकारणप्रयुक्तो वायुविकारभेद इति तस्या अनुपादेयत्वान्नियोज्यविशेषणत्वमेव युक्तमिति भावः । सूत्रार्थस्तु—यथा द्वादशाहीनस्येत्युपसद्द्वादशत्वं वाक्येनाहीनधर्मस्तथा मन्त्रवचनं तीर्थस्नानं च वाक्येन लिङ्गेन च पुरुषार्थत्वावगमात् शुद्धपुरुषधर्मः स्यादिति ॥

---

१ तदध्याहारतो.

अवगोरणादीनां पुमर्थताधिकरणम् ॥ १० ॥

## शंयौ च सर्वपरिदानात् ॥ २३ ॥

**विप्रायावगुरेत्सेति क्रत्वर्थो वा पुमर्थता ॥ फलवत्क्रतुसांनिध्यात्क्रत्वर्थः पूर्वमन्त्रवत् ॥ १८ ॥**
**यातनापरिहारस्य निषेधफलतोचिता ॥ निषेधोऽयं पुमर्थत्वात्प्रक्रियातोऽपकृष्यताम् ॥ १९ ॥**

दर्शपूर्णमासयोः श्रूयते 'यो ब्राह्मणायावगुरेत्तं शतेन यातयात्तस्माद्ब्राह्मणाय नावगुरेते'ति । तत्र संशयः किमेष प्रतिषेधः क्रत्वर्थ उत पुरुषार्थ इति । तत्र—'फलाभावात्क्रतोश्चापि प्रकृतत्वाच्चतदर्थता ॥ कॢप्तत्वात्तु फलस्यायं पुरुषार्थो नतु क्रतोः ॥' यातयादिति हि साध्यतया यातना गम्यते न पूर्वाधिकरणवत्प्राणापानधारणं वर्तमानतया निर्दिश्यते । साध्यत्वाभिधानादेव यातनायाः साध्यत्वं न स्वर्गादिवत्कामोपबन्धापेक्षम् । नहि प्रत्यवायः केनचित्काम्यते । तस्मात्फलवत्त्वात्पुरुषार्थमवगूरणं न क्रत्वर्थम् । एकदेशिनां त्ववगूरणस्य यातनाफलत्वं न सिद्ध्येत् । नञर्थपर्यवसायित्वात्प्रतिषेधविधेः । नञर्थविषयो हि कार्यात्मा विध्यर्थो वाक्यार्थः । कार्यं च न फलमपेक्षते । अपेक्षमाणमपि न यातनया संबध्यते । कर्तव्यस्य यातनाफलत्वायोगात् । नच तत्साध्यतयात्र यातना गम्यते किंत्ववगूरणसाध्यतया । तस्मान्न नियोगफलत्वं यातनायाः । अतएव न नियोज्यविशेषणतयापि स्वर्गादिवत्समन्वयः । नियोगफलं हि साध्यतया नियोज्यविशेषणं भवति नान्यत् । अतएव न विषयीभूतनञर्थफलं विधेयस्य, यातनाफलकत्वायोगात्, नावगूरणस्य फलम् । तदनुष्ठानस्य लौकिकत्वेन विधिसंस्पर्शाभावात् । उक्तंहि 'लौकिके चानुष्ठाने यदि लौकिकात्प्रमाणात्प्रत्यवायो नावगम्यते कुतोऽन्यतः शक्यतेऽवगन्तु'मिति । अतो न नञर्थविधिपरेण वाक्येन यातनायाः फलत्वं शक्यमव-[2]

---

**शंयौ च सर्वपरिदानात् ॥ २३ ॥ य इति** । यः ब्राह्मणं हन्तुमुद्युञ्जीत तं शतेन यातयात् । संवत्सरशतेन निस्तार्यां यातनामनुभावयेदित्यर्थः । निहनेत् ताडयेदित्यर्थः । **फलेति** । यातनायाः साध्यत्वावगमेऽपि तस्या अनिष्टतया फलत्वासंभवादिति भावः । अनेनैव पूर्ववदिहापि क्रत्वर्थत्वमिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **क्रतोरिति** । ऋत्विगानत्यर्थं कदाचित्तद्विद्वेषिवधोद्यमादेरपि क्रतौ प्रसक्तेस्तन्निषेधस्य युज्यते क्रत्वर्थत्वमिति भावः । सिद्धान्तमाह—**कॢप्तत्वादिति । नत्विति** । क्रतोरयं न क्रत्वर्थो नेति यावत् । **साध्यतयेति** । हेतुहेतुमतोर्लिङोऽनुशासनादवगुरेदिति लिङावगोरणस्य हेतुत्वप्रतीतेः 'लिङर्थे ले'डिति यातयादिति लेट् । यातनाया हेतुमत्त्वप्रतीतेश्चावगोरणसाध्यतयात्र यातना गम्यत इत्यर्थः । कामोपबन्धाभावाद्यातनायाः कथं साध्यत्वमिति न वाच्यमित्याह—**साध्यत्वाभिधानादिति** । न केवलमनपेक्षितः कामोपबन्धः किंत्वसंभावितश्चेत्याशयेनाह—**नहीति** । यातनाया अवगोरणसाध्यत्वावगमे सत्यर्थाद्यातनानिवृत्तेरवगोरणाभावसाध्यत्वावगमादवगोरणनिषेधः फलापेक्षः स्ववाक्य एवार्थात्साध्यत्वेनावगतयातनाभावमेव फलत्वेन स्वीकरोति नतु क्रतूपकारं, निषेध्यस्यावगोरणादेः पुरुषगतं नरकरूपमेवानिष्टं साध्यत्वेनावगतमिति निषेधस्यापि तन्निवृत्त्यर्थत्वौचित्यादित्याशयेनोपसंहरति—**तस्मादिति** । एवंच ऋत्विगानत्यर्थं प्रसक्तावगोरणादेरप्यर्थवादाविशेषेण यातनाजनकत्वावगमात्तस्यापि निषेधो न केवलपुरुषार्थावगोरणादिमात्रस्येति ध्येयम् । **नञर्थेति** । अवगोरणाभावविषयं कार्यमिति नञर्थविषयनियोगप्रतिपादनेन निषेधविधेः पर्यवसितत्वेन फलाकाङ्क्षाविरहादनपेक्षितस्यार्थवादोपस्थितस्यापि फलत्वासंभवादवगोरणस्य यातनाफलत्वं न स्यादित्यर्थः । अनेनैवाभिप्रायेणोपपादयति—**नञर्थविषय इति । कार्यं चेति** । न कार्यमन्यार्थमित्यभ्युपगमादिति भावः । **ननु** कार्यस्यान्यार्थत्वाभावेऽपि स्वार्थमेव फलमपेक्षते नियोज्यंविना कार्यासिद्धेः फलकामस्य नियोज्यत्वादेवंच विनियोज्यविशेषणतया कार्यस्याप्यस्ति फलापेक्षेत्यत आह—**अपेक्षमाणमिति** । अनिष्टसिद्ध्यर्थं कृत्ययोगादिति भावः । अवगोरणसाध्यस्य नञर्थविषयनियोगफलत्वमनुपपन्नं चेत्याह—**नचेति** । **ननु** मास्तु नियोगफलत्वं यातनायास्तथापि नियोज्यविशेषणत्वं किं न स्यादित्यत आह—**अतएवेति** । नियोगफलत्वाभावादेवेत्यर्थः । कुतइत्यत आह—**नियोगफलत्वमिति** । **ननु** अध्ययनविध्यादावर्थज्ञानादेरिव नियोज्याविशेषणत्वेऽपि यातनाया विषयफलत्वमस्त्वित्यत आह—**अतएवेति** । अतःशब्दार्थमाह—**विधेयस्येति** । **ननु** साक्षाद्विषयभूतनञर्थफलत्वाभावेऽपि प्रतियोगितया तद्विशेषणावगोरणफलत्वमस्त्वित्यत आह—**नावगूरणस्येति**। अवगोरणस्य विधिसंस्पर्शाभावान्न विधितो यातनाफलत्वावगमः, नापि लोकतस्तदवगमस्तस्य तत्रासामर्थ्यादिति भावः । **ननु** नञर्थविषयकार्यस्यापि नियोज्यंविनानुपपत्तेर्यातनानिवृत्तिकामस्य नियोज्यत्वं वाच्यम् । तच्चावगोरणस्य यातनाफलत्वं विनानु-

---

१ दितिवार्थः. २ मवबोधयितुम्.

**गन्तुं अनुपपत्त्यभावात्। वाक्येनैव तत्प्रतिपादने तु वाक्यभेदः स्यात्। अवगूरणाभावेनापूर्वे कुर्यादवगूरणं च प्रत्यवायफलमिति तस्मान्न फलत्वम्। ननु गम्यतेऽवगूरणसाध्यता यातनायाः। सत्यं गम्यते। किंमूला त्वियमवगतिरिति प्रमाणमस्यां मृगयमाणा न लभामहे। प्रत्यक्षादीनां दविष्ठत्वात् शब्दस्य चान्यपरत्वेन तत्र प्रामाण्यायोगात् निर्मूलावगतिः प्रतिपन्नापि प्रतिभावन्न समीचीना भवति। अथापि वाक्यभेदमङ्गीकृत्य शब्दस्यात्र प्रामाण्यमुच्यते तथाप्ययुक्तम्। कार्यपरत्वेन हि शब्दादीनां व्युत्पत्तिः। अवगूरणं च यातनाफलसाधनमिति सिद्धरूपो विनियोगः कथमिव शब्देन प्रतिपाद्येत व्युत्पत्तिविरहात्। कथं चावगूरणं क्षणिकं कालान्तरभाविनीं यातनां साधयेत्। अपूर्वद्वारेणेतिचेत्। न। अन्यद्वारेणान्यस्य साधनायोगात्। योगे वा यागादेरपि तथात्वोपपत्तेरपूर्वाभिधानमुत्सीदेत्। तदिहापि यागादिविषयमिवावगूरणविषयं कार्यात्मकमपूर्वमभिधेयमापद्येत। नचैवमिष्टं। तस्मादर्थवादमात्रमिदं नतु फलं स्यादित्यास्तां तावत्॥**

मलवद्वासःसंवादनिषेधाधिकरणम्॥ ११ ॥

## प्रागवरोधान्मलवद्वाससः॥ २४ ॥ [अन्नप्रतिषेधाच्च ॥ २५ ॥]

**न संवदेत मलवद्वाससेत्यपि पूर्ववत्॥ पुमर्थः स्यात्क्रतौ क्वापि संवादस्याप्रसक्तितः॥ २०॥**

**दर्शपूर्णमासयोः श्रूयते 'मलवद्वाससा न संवदे'दिति। किमयं प्रतिषेधः क्रत्वर्थ उत पुरुषार्थ इति, प्रकरणात्क्रत्वर्थत्वे प्राप्तेऽभिधीयते। तामवरुध्य यजेतेति वचनात्सर्वस्मादेव क्रतुव्यापारान्निवृत्ता**

---

**पपन्नं,** प्रतियोगिनो यातनाफलत्वंविना तन्निषेधकार्यस्य यातनानिवृत्तिकामनियोज्यकत्वानुपपत्तेरित्यत आह—**अनुपपत्तीति।** निषेधान्तरेष्विवात्रापि निवृत्तिरूपविषयसामर्थ्यादेव निवर्त्यकर्मप्रवृत्तस्य नियोज्यस्य लाभेनानुपपत्त्यभावात्तैरप्यवगोरणप्रवृत्तस्यैव नियोज्यत्वाङ्गीकाराच्च न यातनानिवृत्तिकामस्य नियोज्यत्वमिति नावगोरणसाध्यत्वं यातनाया इत्यर्थः। **ननु** अनुपपत्त्यभावेऽपि वाक्येन प्रतिपादनादेव तत्फलत्वं स्वीकार्यमत आह—**वाक्येनेति।** वाक्यभेदमेवाभिनयति—**अवगूरणाभावेनेति। ननु** वाक्ये प्रतीयमानस्य परित्यागायोगादवश्यमवगोरणसाध्यत्वं स्वीकार्यमिति शङ्कते—**नन्विति।** किं वाक्येनावगम्यमानत्वादस्त्यस्मिन्नर्थे किंचित्प्रमाणमिति मतमुतेदमेव वाक्यं तत्र प्रमाणमिति विकल्पं मनसि निधाय परिहरति—**सत्यमिति।** प्रतिभामरीचिषु तोयादेर्भानं तद्वदित्यर्थः। भवद्रीत्या वाक्यस्य तत्र प्रामाण्यमसंभावितमित्याह—**अथापीति।** यागादेः स्वर्गादिसाधनत्वायोगादपूर्वस्य लिङादिवाच्यत्वं भवद्भिरिष्यते तदेवं सत्युत्सन्नमित्याह—**योगेवेति।** एवंचावगोरणयातनयोः साध्यसाधनभावान्यथानुपपत्त्या दुरितापूर्वस्य कल्प्यत्वाभावात्तदपि वाच्यमेव स्यादित्याह—**तदिहापीति। नन्व**वगोरणप्रवृत्तस्य नियोज्यतया यातनानिवृत्तेः स्वर्गादिवन्नियोज्यविशेषणत्वाभावेऽपि प्रवृत्तेरुत्कटतायाः फलाधीनत्वेन प्रवृत्त्यर्थं फलावश्यंभावेऽर्थवादानुगुणत्वाद्यातनानिवृत्तिरेव फलं स्वीक्रियते इति तद्बलादवगोरणसाध्यत्वं यातनायाः सिद्ध्येदित्यत आह—**इत्यास्तामिति।** तथात्वे निषेधान्तरेषु नित्यादिषु च प्रवृत्तिसिद्ध्यर्थं फलं कल्पनीयं स्यान्नच तद्भवतामिष्टम्। यदिच तत्र फलस्याश्रुतत्वाद्विधित एव प्रवृत्तिरिष्यते तर्हीहापि यातनानिवृत्तेरश्रुतत्वाद्विधितएव प्रवृत्तिरिष्यतां, नह्यर्थवादे यातनानिवृत्तिः श्रूयते। नचार्थवादेऽवगोरणयातनयोः साध्यसाधनभावस्यावगमादर्थाद्यातनानिवृत्तेरवगोरणाभावसाध्यत्वमवगम्यते। एवंच तामेव यातनानिवृत्तिं विधिः स्वीकरोतीति वाच्यम्। अर्थवादो हि नञर्थयातनानिवृत्त्योः साध्यसाधनभावे न स्वयं प्रमाणमिति प्रमाणान्तरेण विषयफलत्वेन सिद्धां निवृत्तिमर्थादुपस्थापयति। उपस्थितत्वाच्च तदेव फलं प्रवृत्त्यर्थं विधिरनुमन्यत इति भवद्भिर्वाच्यम्। नच तत्संभवति। विषयफलत्वेन यातनानिवृत्तेः प्रमाणान्तरेणासिद्धत्वात्तस्यार्थात्किंचिदेतदित्यर्थः। सूत्रार्थस्तु—शंयौ ते शंयुं बार्हस्पत्यमब्रुवन्निति शंयूपक्रमे वाक्येऽवगोरणादेः यदकर्म तदपि पुरुषार्थं स्यात् सर्वस्य क्रतुगतत्वौदासीन्येन सर्वस्य पुरुषस्य परिदानात्खण्डनाभिधेधादिति॥

**प्रागवरोधान्मलवद्वाससः॥ २४॥** मलवद्वाससा रजस्वलयेत्यर्थः। **पूर्ववदिहापि** फलाभावात्क्रत्वर्थत्वमिति प्रत्यवस्थानात्सङ्गतिः **प्रकरणादिति। ननु** कथं क्रतौ संवादप्रसक्तिः। नच 'युक्ता मे यज्ञमन्वासाता'इति मन्त्रोच्चारणरूपः संवादः संभवतीति वाच्यम्। रजस्वलाया गार्हपत्यसमीपे पत्न्यायतनेऽवस्थित्ययोगेन तन्मन्त्रोच्चारणस्य तत्र दूरापेतत्वादिति चेन्नैवम्। पुरुषस्य स्वाच्छन्द्येन बहिरिव क्रतुप्रयोगमध्येऽपि रागातिशयात्संवादप्रसक्तिसंभवात्तस्य च संवादस्य वस्तुतः पुरुषार्थत्वेऽपि क्रतुमध्ये प्रसक्तिमात्रेण तन्निषेधस्य व्रत्येहनि मांसनिषेधस्येव क्रत्वर्थत्वमुपपद्यते। नचावरोधवचनात्तथावि-

रजस्वला, तेन नानया सह संवादस्य क्रतौ प्रसक्तिः । प्रसक्त्यभावाच्च प्रतिषेधानुपपत्तिः । पुरुषस्य हि स्वातन्त्र्येण प्रवर्तमानस्य रजस्वलया प्रसज्यते संवादः । तेन यत्र प्रसक्तिस्तत्र प्रतिषेध इति पुरुषार्थता ॥

सुवर्णधारणादीनां पुरुषधर्मताधिकरणम् ॥ १२ ॥

**अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥ [अद्रव्यत्वात्तु शेषः स्यात् ॥२७॥ वेदसंयोगात् ॥ २८ ॥ द्रव्यसंयोगाच्च ॥ २९ ॥ स्याद्वाऽस्य संयोगवत्फलेन संबन्धस्तस्मात्कर्मैतिशायनः ॥ ३० ॥]**

हिरण्यं वर्णवद्धार्यं क्रत्वङ्गं भरणं भवेत् ॥ हिरण्यसंस्कृतिर्वात्र वर्णो वोत पुमर्थता ॥ २१ ॥
वैदिकत्वात्क्रतुस्मृत्या तदङ्गं कर्मकारके ॥ प्राधान्यात्संस्कृतिर्वर्णो गुणोऽस्तु विधिलाघवात् ॥ २२ ॥
अनारभ्य श्रुतत्वेन नियता न क्रतुस्मृतिः ॥ अतः पुमर्थता स्वर्गः कल्प्योऽन्यद्वास्तु रात्रिवत् ॥ २३ ॥

अनारभ्य श्रूयते 'तस्मात्सुवर्णं हिरण्यंभार्य'मिति । तत्र संशयः किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणं संस्कारो विधीयते, अथवा हिरण्यं हस्ते भवतीति विहितधारणानुवादेन सुवर्णता शोभनरूपता विधीयते यद्धिरण्यंभार्यं तत्सुवर्णमिति, आहोस्विद्धिरण्यधारणं पुरुषार्थतया विधीयते इति। तत्र—'पुरुषार्थत्वपक्षे हि फलं कल्प्यमतः क्रतोः ॥ अङ्गं स्याद्वैदिकत्वेन क्रियात्वेन च साम्यतः॥' यद्यपि तावद्धिरण्यविशिष्टधारणविधिस्तथापि तस्य फलापेक्षायां वैदिकत्वक्रियात्वसामान्याद्वैदिकमेव कर्मोपतिष्ठत इति तादर्थ्यमेवारादुपक्रियारूपेणापि युक्तं, नात्यन्तानुपस्थितिफलकल्पना । अथवा धारणस्य स्वभावत एव धार्यमाणसंस्कारत्वात्कृत्यश्रुत्या च हिरण्यस्य प्राधान्यावगमान्निष्प्रयोजनस्य च लौकिकस्य संस्कारायोगात्क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानं, अथवा लाघवाद्धारणमप्यनूद्य सुवर्णताविधिः, त्रेधापि तावत्क्रत्वर्थमिति प्राप्तेऽभिधीयते—

---

थस्यापि संवादस्यासंभव इति वाच्यम् । अवरोधो हि नामौदासीन्यकरणं तेनावरोधविधिना रजस्वलाकर्तृकव्यापारनिषेधसिद्धावपि तस्याः संवादविषयत्वोपपत्तेरिति भावः । पत्नीकर्तृको वा पत्नीविषयको वा यावान् व्यापारः संभावितः सर्वोऽप्यवरोधवचनेन निषिध्यते विशेषाभावात् । ततश्च पत्न्याः संभाष्यत्वमपि क्रतावप्रसक्तमिति क्रत्वर्थत्वं न संभवतीत्याशयवानाह—**तामिति** । अनालम्भुकामित्यर्थः । **इति पुरुषार्थता इति** । नचाभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यमित्यभ्यञ्जनशब्दाभिधेयमैथुननिषेधैकवाक्यत्वेन संवादनिषेधस्य तच्छेषत्वात्संवादनिषेधस्य कथं ततः पुरुषार्थत्वमिति वाच्यम् । न संवदेतेति परिपूर्णस्य वाक्यस्यान्यशेषत्वे प्रमाणाभावात् 'नोदक्ययाभिभाषेते'ति स्मृतौ रजस्वलाभिभाषणस्य निषिद्धत्वेन तन्मूलापेक्षायां प्रत्यक्षस्यास्यैव वाक्यस्य तन्मूलत्वकल्पनौचित्येन तदर्थसंवादनिषेधस्य स्वातन्त्र्यावश्यंभावाच्चेति भावः । सूत्रार्थस्तु—मलवद्वाससः संवादनिषेधनमपि पुरुषार्थः तस्याः प्रयोगारम्भात्पूर्वमेवावरोधादिति ॥

**अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥ किमिति** । किं हिरण्यविशिष्टं धारणं क्रतावारादुपकारकत्वेन विधीयत इत्यर्थः । **हिरण्यमिति** । हिरण्यं हस्ते भवत्यथ गृह्णातीति ग्रहग्रहणसमये विहितधारणानुवादेनेत्यर्थः । धारणे सुवर्णताविधिसंभवं वचनव्यक्त्यभिधानेनोपपादयति—**यदिति** । ननु क्रतूपकारोऽपि कल्प्य इत्यत आह—**वैदिकत्वेनेति** । वैदिकत्वस्य स्वर्गसाधारण्यादाह—**क्रियात्वेनेति** । ततश्च वैदिकत्वक्रियात्वसामान्यात्क्रतोरुपस्थितेस्तदर्थत्वमेव न स्वर्गार्थत्वमिति न पुरुषार्थत्वमित्यर्थः । क्रतुसंबन्धिहिरण्यतद्धारणोपस्थापकाभावेन संस्कारस्य सुवर्णताया वा विध्यभावाद्विशिष्टविधिरेष्टव्य इति तं पक्षं स्थिरीकुर्वन्नारादुपकारकत्वमुपपादयति—**यद्यपीत्यादिना** । **अथवेति** । यद्यपि प्रथमतः क्रतुसंबन्धिहिरण्यं नोपस्थितं तथापि धारणस्य स्वभावाद्वितीयावत्कर्मणि विहितकृत्यप्रत्ययस्य प्राधान्यार्थकत्वाद्धारणस्य संस्कारत्वावगमे सति तदनुसारेण क्रतुगतहिरण्यानुवादो निश्चीयत इत्यर्थः । **लाघवादिति** । हिरण्यानुवादेन धारणविधौ सुवर्णपदानर्थक्यात्तस्यापि विधौ उभयत्र विधिव्यापारागौरवं स्यादतो लाघवात्सुवर्णतामात्रविधिरित्यर्थः । हिरण्यमेवानूद्य सुवर्णता विधीयते । योग्यताप्राप्तं च धारणमनूद्यते तेन न विशिष्टोद्देश इत्याहुः । **त्रेधेति** । फलकल्पनागौरवप्रसङ्गादेव तृतीयपक्षेऽपि क्रतुगतधारणानुवादसिद्धिरिति भावः । अनेनैव पूर्ववदिह फलस्यासिद्ध्या न पुरुषार्थत्वमिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारपेटिकायामनारभ्यविचारप्रस्तावसङ्गतिस्तूत्तरा-

---

१ हस्तेन भवतीति.

'न क्रतुस्तद्धिरण्यं वा धारणं वाऽत्र गम्यते ॥ तस्मान्न क्रतुशेषत्वं विधेस्तु पुरुषार्थता ॥' स्वर्गाद्युत्पत्तेरपि क्रियात्वादन्यत्र च वैदिकत्वादुभयमपि तुल्यं पर्युपस्थापकमिति नैकान्ततः क्रतोरुपस्थानं येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात् । नच क्रतुगतहिरण्यप्रतीतिर्येन तदनुवादेन संस्कारविधिः स्यात्, लौकिकेऽपि हिरण्यसद्भावात्, नहि क्रत्वर्थं द्रव्यार्जनं येन बहिःक्रतुद्रव्यमेव स्यात् । न । पुरुषार्थं हि तदिति चतुर्थे वक्ष्यामः । ननु क्रतुगतहिरण्यप्रतीतिः संस्कार्यत्वादितिचेत् । न । इतरेतराश्रयात् । क्रतुगतहिरण्यानुवादनिश्चये संस्कार्यत्वं, तन्निश्चये च निष्प्रयोजनस्य तदयोगात्क्रतुगतहिरण्यप्रतीतिरितीतरेतराश्रयत्वम् । नहि स्वाभावतः संस्कार्यत्वं, अदृष्टार्थत्वेऽपि धारणाविरोधात् । कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रमाह न शेषित्वम् । अतएव न धारणानुवादेनापि गुणविधिः । क्रतुगतधारणाप्रतीतेरन्यत्रापि धारणसंभवात् । अतो न क्रत्वर्थं विधिवशाच्चावश्यं भवितव्यं फलेन । तत्रार्थवादाभावे सः स्वर्गः स्यादिति, सद्भावे तु तद्गतमेव फलं यथेह भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपता तस्मात्पुरुषार्थत्वम् ॥

जयादीनां वैदिककर्माङ्गताधिकरणम् ॥ १२ ॥

**शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ ३१ ॥ [होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात् ॥ ३२ ॥ शेषश्च समाख्यानात् ॥ ३३ ॥]**

**येनेत्सेंत्कर्मणा तत्र जयाहोमेऽखिलार्थता ॥ वैदिकेष्वेव वा सर्वशेषोऽसंकोचकत्वतः ॥ २४ ॥**
**होम आहवनीये स्यात्कृष्यादिषु न सोऽस्ति हि ॥ तेनानारभ्यपाठेऽपि वैदिकेष्वेव ते जयाः ॥ २५ ॥**

क्रत्वर्थपुरुषार्थविचारप्रसङ्गात्पूर्वाधिकरणेऽनारभ्यवादः प्रस्तुतः । तत्प्रस्तावादेवानारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते 'येन कर्मणेर्त्सेत्तत्र जयान्जुहुया'दिति

---

धिकरणे ग्रन्थ एव स्फुटः । धारणं वा क्रतुगतधारणं वेत्यर्थः । **विधेस्त्विति** । प्रवर्तनात इत्यर्थः । पुरुषाभिलषितसाधनतां विना पुरुषस्य प्रवर्तयितुमशक्यत्वादिति भावः । स्वर्गादेः स्वरूपेणाक्रियात्वेऽप्युत्पत्तिमादाय तदुपस्थितिः संभवतीत्याह—**स्वर्गाद्युत्पत्तेरिति** । अन्यत्र ज्योतिष्टोमादिवाक्य इत्यर्थः । **उभयमिति** । वैदिकत्वं क्रियात्वं चेत्येतदुभयमप्युपस्थापकं स्वर्गादेरपि तुल्यमित्यर्थः । **ननु** प्रतिग्रहाद्युपायनियमवैयर्थ्यापत्त्या द्रव्यार्जनं क्रत्वर्थमिति नास्ति लोके हिरण्यमित्यत आह—**नहीति** । रागप्राप्तत्वाद्द्रव्यार्जनं पुरुषार्थं । नियमस्तूपायान्तरेणार्जने प्रत्यवायाभिप्रायेणोपपद्यत इति लिप्सासूत्रे वक्ष्याम इत्यर्थः । **ननु** क्रतुगतहिरण्यप्रतीतेः पूर्वमेव धारणस्वाभाव्यात्संस्कारत्वमिति नेतरेतराश्रयत्वमित्यत आह—**नहीति** । प्रधानकर्मत्वेऽपि धारणोपपत्तेर्न स्वाभावतः संस्कारत्वनिश्चय इत्यर्थः । **कृत्येति** । नच कृत्यप्रत्ययस्य शेषित्वार्थकत्वाभावेऽपि द्वितीयावद्विधिसहितस्य शेषित्वप्रत्यायकत्वात्तस्ते पयसीत्यादिवत्प्रथमत एव संस्कार्यत्वप्रतीतिः पश्चात्क्रतुगतहिरण्यप्रतीतिरिति न कोऽपि दोष इति वाच्यम् । क्रतुगतहिरण्यस्य संस्कारविधौ सुवर्णपदानर्थक्यापत्तेः । क्रतावक्लृप्तस्यैव हिरण्यस्य प्रथमं संस्कार्यत्वेऽवगते तद्बलात्संस्कृतहिरण्यस्य क्रतुविनियोगकल्पनास्वीकारे चेदृशः क्रतौ हिरण्यस्य विनियोग इति विशेषकल्पकाभावेन विनियोगानिर्वाहादिति भावः । अतःशब्दार्थमाह—**क्रतुगतेति** । नचात्र हिरण्योद्देशेन धारणोद्देशेन वा विधिर्निश्चितः । येनाश्वप्रतिग्रहेष्टौ यथा वैदिकत्वसामान्येन वैदिकमश्वदानं निमित्तं एवं वैदिकत्वसामान्येन वैदिकमेव हिरण्यमुद्देश्यं स्यात् । विशिष्टविधेरप्यत्र संभवादित्याशयेनोपसंहरति—**अत इति** । फलकल्पनं प्रामाणिकत्वान्न दोष इत्याशेनाह—**विधीति** । **सद्भाव इति** । रात्रिसत्रन्यायेनेति भावः । सूत्रार्थस्तु—अप्रकरणे आम्नातं हिरण्यभरणं सुवाससा भवितव्यं रूपमेव बिभर्तीति सुवासस्त्वादिकं च पुरुषधर्मः प्रकरणाम्नातादस्याप्रकरणाम्नातत्वरूपविशेषादिति ॥

**शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ ३१ ॥ क्रत्वर्थेति** । प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारप्रस्तावेऽपि क्रत्वर्थपुरुषार्थविचारप्रसङ्गात्पूर्वत्रानारभ्यविचारः प्रस्तुत इत्यर्थः । तत्प्रस्तावादित्यस्य तद्विशेषश्चिन्त्यत इत्यनेनान्वयः । **ईर्त्सेदिति** । ऋद्धिमिच्छेदित्यर्थः । यदजयन् तज्जयानां जयत्वमित्युक्तेश्चित्तंचेत्यादिमन्त्रकरणहोमा जयाः । **ननु** वैदिक-

---

१ हिरण्यसंभवात्.

किं सर्वेषां लौकिकवैदिककर्मणामङ्गं जयादय उत वैदिकानामेव येषामाहवनीयोऽस्तीति विचारः 'तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते ॥ तस्मात्कृष्यादिनापीत्सेत्तत्राग्नौ जुहुयाज्जयान् ॥' यद्यपि कृष्यादीनामाहवनीयो नास्ति जयादयश्चाहवनीये होतव्यास्तथापि ते स्वयमेव होमत्वादाहवनीय-प्रयोजका इति तदर्थमेवाहवनीयं प्रणीय तेषु हूयमाना न दुष्यन्ति। 'तस्मात्तत्राप्यवैगुण्यात्सर्वार्थाः स्युर्जयादयः ॥ नैवं प्रधानवैदेश्याद्वैगुण्यं जायते यतः ॥' यद्यप्याहवनीयाभावकृतं नास्ति वैगुण्यं तथापि प्रधानदेशत्वमङ्गानामवगतं तदलाभात्कृष्यादिषु क्रियमाणा विगुणा भवेयुः। क्षेत्रे कृषि-राहवनीये च होम इति वैदेश्यं, वैदिकेषु चाहवनीयादिमत्सु प्रधानसादेश्यं लभ्यत इत्यवैगुण्या-त्तत्रैव जयादयः ॥

वैदिकाश्वप्रतिग्रह इष्टिकर्तव्यताधिकरणम् ॥ १४ ॥

**दोषात्त्विष्टिर्लौकिके स्यात्, शास्त्राद्धि वैदिके न दोषः स्यात् ॥ ३४ ॥ [अर्थ-वादो वानुपपातात्, तस्माद्यज्ञे प्रतीयेत ॥ ३५ ॥]**

अश्वप्रतिग्रहेष्टिस्तु दातुरित्यभिधास्यते ॥ दानद्वये लौकिके वा वैदिके वा भवेदियम् ॥ २६ ॥
अविशेषाद्द्वयोर्यद्वा न देयः केसरीत्यतः ॥ निषेधाल्लौकिकात्तत्र प्रायश्चित्तिरियं भवेत् ॥ २७ ॥
न जलोदरहेतुत्वं प्रमितं लौकिके क्वचित् ॥ वैदिके तु श्रुतं तस्मात्तत्प्रायश्चित्तयेऽत्र सा ॥ २८ ॥

अत्राप्यनारभ्यवादस्यैव क्रत्वर्थत्वपुरुषार्थत्वविचारः। तैत्तिरीयका हि काम्येष्टिकाण्डे 'यावतो-ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपे'दिति समामनन्ति। सेयं दातुरिष्टिर्न प्रतिग्रहीतु-रिति वक्ष्यते। सा विचार्यते किं लौकिकेऽश्वदाने मित्रदायादेभ्यः स्नेहादिना विधिमनपेक्ष्य क्रिय-

---

त्वसामान्येन वैदिककर्मण एवोपस्थितेः कथं सर्वार्थत्वमिति पूर्वःपक्ष इत्यत आह—**तत्रेति**। सामान्यस्य संनिधानरूपस्था-नप्रमाणतया ततो वाक्यस्य संकोचायोगादविशेषात्सर्वार्थत्वं, अश्वप्रतिग्रहेष्टिस्थले तु लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति वैरूप्यप्रसङ्गात्सर्वग्रहणासंभवाद्विशेषापेक्षायां युक्तं वैदिकत्वसामान्यादुपस्थितिग्रहणमिति वैषम्यमिति भावः। आहवनीया-भावात्कृष्यादिषु जयानुष्ठानं न संभवतीति शङ्कते—**यद्यपीति**। **ननु** एवमङ्गगुणविरोधन्यायेनाहवनीयपरित्यागेन लौकिके हूयतामित्यत आह—**जयादय इति**। यथा तिर्यगधिकरणेऽङ्गानुसारेण प्रधानवाक्यसंकोच एवमिहाप्याहवनीयरूपाङ्गानु-सारेण जयहोमविधेर्वैदिककर्मविषयतया संकोचएवात्र युक्त इति नात्राङ्गगुणविरोधन्यायावतार इति भावः। प्रधानभूतकृ-ष्याद्यर्थाहवनीयाभावेऽपि जयहोमानामेवाहवनीयप्रयोजकत्वान्न जयानुष्ठानानुपपत्तिरिति परिहरति—**तथापीति**। **अव-गतमिति**। एकादशे वक्ष्यमाणन्यायादिति भावः। **नच** तत्र प्रयोगवचनबलेनाङ्गानां प्रधानदेशत्वं वक्ष्यते। कृष्यादेश्च लौकिकत्वान्नास्ति प्रयोगवचनमिति कथमत्र प्रधानसादेश्यमिति वाच्यम्। धर्मशास्त्रे कृष्यनुष्ठानेऽनेकनियमविधानेन तस्यैव तत्र प्रयोगवचनत्वपर्यवसानाददृष्टार्थाङ्गविधिबलादेव जयादियुक्ततया कृष्यादिकमनुष्ठेयमिति प्रयोगविधिकल्पनस्यावश्यक-त्वाच्चेत्याशयः। तस्मात्सादेश्यसंपादनसामर्थ्यानुसारेण वाक्यस्य वैदिकविषयतया संकोचएव न्याय्य इत्याह—**वैदिके-ष्विति**। सूत्रार्थस्तु—यः प्रकरणाधीतो वाक्यात्कर्मशेषः सोऽविशेषात्सर्वकर्मणां शेष इति ॥

**दोषात्त्विष्टिर्लौकिके स्यात्०** ॥ ३४ ॥ प्राभाकराः वैदिक्या अपि क्षामवतीष्ट्या लौकिकगृहदाहनिमित्तकत्वदर्श-नेन प्रकरणाध्ययनं विना वैदिकनिमित्तकत्वासिद्धेर्यावतोऽश्वानित्यश्वबहुत्वस्य पौण्डरीक एव संभवाच्च पौण्डरीके श्रूयत इति कृत्वाचिन्तामाहुस्तन्मतनिरासाभिप्रायेणानारभ्यवादस्यैवेत्युक्तिः। क्षामवत्यादौ वैदिकस्य गृहदाहस्याभावाल्लौकिकनि-मित्तकतेति न तावता सिद्धान्तासिद्धिः। यावतोऽश्वानित्यश्वसमसंख्याकत्वमात्रोक्तेः निमित्तगतबहुत्वस्याविवक्षितत्वाच्च बहुत्ववत्संख्यान्तरमपि ग्राह्यमेवेति वृथा पौण्डरीकप्रकरणगतत्वाश्रयणमिति भावः। निमित्तविशेषविचारस्याध्याये पेटि-कायां वासङ्गतिं वारयितुं क्रत्वर्थत्वाद्युक्तिः वैदिकस्य निमित्तत्वे क्रत्वर्थत्वं लौकिकस्य तु तत्त्वे पुरुषार्थत्वमिति भावः। यदि प्रतिग्रहीतुरिष्टिः स्यात्तदा तस्याधिकारसिद्धये तद्गाम्येव फलं कल्प्यमिति यजमानगामिफलकर्माङ्गत्वासंभवादुत्तराधि-करणोपजीवनेनैतदधिकरणप्रवृत्तिरित्याशयेनाह—**सेयमिति**। लौकिके इत्युक्तेः स्मार्त इति बुद्धिः स्याच्चेष्टापत्तिः। स्मृतिविहिते तस्मिन्दोषाप्रसक्त्या तत्र वक्ष्यमाणपूर्वपक्षप्रकारायोगादतस्तन्निरासार्थमाह—**मित्रेति**। एवं सिद्धान्तेऽपि न स्मार्तस्य संग्रहस्तस्य प्रत्यक्षवेदविहितत्वाभावेन प्रत्यक्षवेदविहितनैमित्तिकविसदृशतया लौकिकवदेव शीघ्रोपस्थित्यभावेन

माणे निमित्ते पुरुषार्थतया विधीयते उत वैदिके कर्माङ्गभूते ज्योतिष्टोमपौण्डरीकादिविषये क्रत्वर्थतया उतोभयत्रेति। तदर्थं च किं दोषनिर्घातार्थेयमुत नेति। तत्राविशेषादुभयत्रेति प्राप्तेऽभिधीयते—'दोषनिर्घातकार्येयं यत्रासौ तत्र गम्यते॥ लौकिके स च दोषोऽस्ति वैदिके न विधानतः॥' यद्यपि निमित्तावस्थायां दोषवान्योऽश्वप्रतिग्रह इत्यशक्यं विशेष्टुं, विशिष्टानुवादे वाक्यभेदात्तथापि कर्मणः फलापेक्षायां 'स एवैनं वरुणपाशान्मुञ्चती'ति वाक्यशेषाद्दोषनिर्घात एव फलमवसीयते। तेन यत्र दोषस्तत्रेष्टिः, लौकिके चाश्वदाने 'न केसरिणो ददाती'ति प्रतिषेधाद्दोषोऽस्ति, वैदिके तु कर्माङ्गदाने विशेषविधानात्तत्प्रतिषेधाप्रवृत्तेर्नास्ति दोषः। 'तस्मात्कार्यवशादिष्टिर्लौकिके स्यात्तदुच्यते॥ दोषनिर्घातकार्यत्वे स्यादेवं नतु तत्तथा॥ वरुणग्रहनिर्मोकः फलमत्रावगम्यते॥ लौकिकेनाश्वदानेन नासावस्तीति गम्यते॥' वरुणपाशान्मुञ्चतीति हि वरुणग्रहाज्जलोदरपर्यायान्निर्मोकः, नतु लौकिकमश्वदानं जलोदरनिदानमिति प्रत्यक्षादिना वैद्यसंहिताभिर्वा गम्यते। नापि प्रतिषेधेन न केसरिणो ददातीति पापमात्रकल्पनात्। नचानेनैव तत्प्रतिपादनम्। अस्य प्रसिद्धदोषानुवादेन तन्निर्मोकार्थं प्रायश्चित्तेष्टिविधिपरत्वात् तत्परत्वे वाक्यभेदात्। अतो योऽत्र दोषो निर्घात्यत्वेन गम्यते नासौ लौकिकेऽस्तीति न तद्वशेन लौकिकविषयत्वम्। अथ वृणोतीति व्युत्पत्त्या वरुणशब्दः पापमेव वदेत्ततः प्रसिद्धं परित्यज्य यथाकथंचिद्व्याख्यायमाने वैदिकेऽपि त्यागादुःखदर्शनात्तदेव वरुणशब्देन शक्यमभिधातुम्। इष्ट्याडम्बरादिविनोदेन तद्दुःखशमनात्स एवैनं वरुणपाशान्मुञ्चतीति चोपपन्नम्। तस्मान्न लौकिकविषयता। नाप्युभयत्र। कुतः प्रसिद्धं ह्यश्वदानं निमित्तत्वेनोद्दिश्य नैमित्तिकं कर्म विधीयते। तस्य प्रसिद्धावालोच्यमानायां नैमित्तिकस्य वैदिकत्वात्तत्सादृश्याद्वैदिकमश्वदानं शीघ्रमुपतिष्ठते। तेन तत्संबन्धिक्रतूपस्थानात्तादर्थ्यं गम्यते। ततश्च नैरपेक्ष्यान्न लौकिकस्य ग्रहः फलकल्पनं वा युज्यते। किंच 'लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता॥ न चैकस्योभयार्थत्वं वैरूप्यादुपपद्यते॥' क्रत्वर्थत्वे प्रधानविधिपरत्वादप्रयोजकता पुरुषार्थत्वे तु स्वातन्त्र्यात्प्रयोजकत्वमिति वैरूप्यम्। नच तदेकस्य विधेर्युक्तं तस्माद्वैदिक एव स्यात्॥

---

सिद्धान्तयुक्त्यविषयत्वादित्याशयेन कर्माङ्गभूत इत्युक्तम्। **ज्योतिष्टोमेति**। गौश्चाश्वश्चेति ज्योतिष्टोमे अश्वसहस्रमुत्तम इति पौण्डरीके चाश्वदक्षिणाविधानादिति भावः। **उभयत्रेति**। अस्मिन्पक्षे तु स्मार्तस्यापि संग्रहः बाधकाभावादिति ज्ञेयम्। **तदर्थं चेति**। यदि दोषनिर्घातार्था तदा लौकिकं निमित्तमितरथा तु वैदिकमुभयं वेति फलफलिभावः। **अविशेषादिति**। निमित्तस्य दानस्य लौकिकत्वेन वैदिकत्वेन वा विशेषयितुमशक्यत्वादित्यर्थः। दानत्वाकारेण निमित्तत्वेऽपि दोषवद्दानएव पर्यवस्यतीति परिहरति—**तथापीति**। **तेनेति**। अन्यत्र तत्फलाभावादिति भावः। **प्रतिषेधादिति**। तस्य दोषाविनाभावादिति भावः। **ननु** इदं वाक्यं विश्वजित्प्रकरणपठितं तत्र च केसरिव्यतिरिक्तं सर्वस्वं दद्यादिति सर्वस्वदानवाक्यशेषतया पर्युदासएव न लौकिकाश्वदानप्रतिषेधः। यत्तु न्यायसुधायामुक्तं विश्वजित्प्रकरणाधीतस्यापि न पर्युदासपरत्वं लक्षणाप्रसङ्गात् किंतु प्रतिषेधपरत्वमेव। प्रतिषेधश्चायं न सर्वस्वदानविधिप्राप्ताश्वदानप्रतिषेधः। तथासति विकल्पप्रसङ्गात्। एवंच प्रकरणबाधेन लौकिकस्यैवायं प्रतिषेध इति। तन्न। विश्वजित्प्रकरणप्राप्तस्य लौकिकदानप्रतिषेधार्थत्वे सर्वस्वदानविधेरश्वस्यापि विश्वजिति दानं स्यात्ततश्चाकार्यत्वाच्च ततः पुनर्विशेषः स्यादित्यश्वदाननिषेधपरषष्ठाध्यायाधिकरणविरोधप्रसक्तादितिचेत् सत्यम्। अनारभ्याधीतं न केसरिणो ददातीति लौकिकदाननिषेधपरं वाक्यान्तरमस्तीति न कोपि दोष इत्याशयः। **वैदिक इति**। हिंसानिषेध इव विहितेतरविषयोयमपि निषेध इति भावः। **कार्यवशादिति**। अनेन पूर्ववदिहाप्यार्थवादिकफलेन पुरुषार्थत्वमिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम्। **वरुणग्रहादिति**। वरुणपाशशब्दस्य वरुणग्रहाख्यजलोदरव्याधौ प्रसिद्धेरिति भावः। **अनेनैवेति**। अस्मिन्वाक्ये 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाती'त्यश्वदानस्य जलोदरपर्यायवरुणग्रहहेतुत्वश्रवणादिति भावः। **अस्येति**। नचात्र शंयुवत्साध्यसाधनभावप्रतीतिर्येनार्थवादादिकदोषनिर्घात एव फलं स्यादिति हृदयम्। **तदेवेति**। तत्रापि योगाविशेषादिति भावः। **नन्वेवमपीष्टेस्तुःखानिवर्तकत्वाभावान्न दुःखपरत्वमत आह—**इष्ट्याडम्बरेति**। यथा वरुणग्रहे सति तद्विमोचनसाधनमवश्यमनुष्ठेयं एवमश्वदाने कृते सतीयमिष्टिरित्यवश्यकर्तव्यतायां दृष्टान्ताभेदोपचारपरतयार्थवादो वर्णनीय इत्याशयेनोपसंहरति—**तस्मादिति**। **तादर्थ्यमिति**। ततश्च क्रतूपकार एव फलमिति भावः। वैरूप्यमेवोपपादयति—**क्रत्वर्थत्व इति**॥

दातुर्वारुणीष्ट्यधिकरणम् ॥ १५ ॥

## अचोदितं च कर्मभेदात् ॥ ३६ ॥ [सालिङ्गादार्त्विजे स्यात् ॥ ३७ ॥]

**यावतः प्रतिगृह्णीयादश्वांस्तावत्य इष्टयः ॥ प्रतिग्रहीतुर्दातुर्वा स्यादाद्योऽस्तु यथाविधि ॥ २९ ॥**

**असंजातविरोध्यर्थवादाद्दातुः प्रजापतेः ॥ इष्टिः श्रुता ततो दातुर्णिजर्थेऽपि विधिं नयेत् ॥ ३० ॥**

इयमेवेष्टिरुदाहरणं किमियं प्रतिग्रहस्य स्वतन्त्रकर्तुरुत हेतुकर्तुर्दातुरिति । तदर्थं च प्रक्रमस्थस्यार्थवादस्योपसंहारस्थविध्युद्देशस्य च विरोधे कस्य बलीयस्त्वमिति चिन्त्यते । विध्युद्देशबलीयस्त्वे प्रतिग्रहीतुः यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति वचनात् । अर्थवादबलीयस्त्वे दातुः प्रजापतिर्वरुणायाश्वमनयदिति प्रजापतिर्दाता संकीर्तितो वरुणः प्रतिग्रहीता स स्वां देवतामार्च्छेदिति । स इति समानविभक्तिनिर्दिष्टः प्रजापतिः स्वां देवतां पूर्ववाक्ये संप्रदाननिर्देशाद्वरुणं तेन प्रजापतिरश्वं दत्वा वरुणग्रहं प्राप्त इत्यर्थः । 'स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यते'ति सर्वत्र प्रजापतिरेव दातानुषज्यते । तेन परकृतिसरूपेऽर्थवादे दातुरिष्टिर्वर्णितेत्यन्योऽपि दत्वैवं कुर्यादिति दातुरिष्टिरवगम्यते । तदेवं विरोधे किं बलीय इति । तत्र विध्युद्देशस्य प्रधानत्वात्तदनुरोधेनार्थवादो व्याख्येयः । दातुरपि तावद्दोषः स्यात्किं पुनः प्रतिग्रहीतुरिति । तस्मात्प्रतिग्रहीतुरिति प्राप्तेऽभिधीयते—'असंजातविरोधित्वादर्थवादो यथाश्रुतः ॥ व्याख्येयस्तद्विरुद्धत्वाद्विध्युद्देशस्य लक्षणा ॥' प्रतिगृह्णीयादिति हेतुकर्तोच्यते, अस्ति हि तस्यापि हेतुकर्तृत्वं 'तत्प्रयोजको हेतुश्चे'ति चकारात्, तस्मादुपक्रमबलाद्दातुरिष्टिरिति । प्रपञ्चितं चैतद्बलीयस्त्वं 'श्रुतेर्जाताधिकारः स्या'दित्यत्र । किमर्थं तर्हीदमधिकरणम् । उच्यते—ऋगादिशब्दा वेदेऽपि बहुलं दृष्टप्रयोगाः, गृह्णातिस्तु दातृव्यापारे न क्वचिद्दृष्टस्तेन नासौ तत्परत्वेन व्याख्यातुं शक्यत इति विशेषाशङ्कानिवृत्त्यर्थमधिकरणम् । अथवा भाष्यकारान्तरैः 'सालिङ्गादार्त्विज्ये स्या'दिति सूत्रानुसारात्प्रतिग्रहीतुरिष्टिराश्रिता । तन्निवृत्त्यर्थमनेनैव सूत्रेण दातुरिष्टिं प्रतिपादयितुं भाष्यकारोऽधिकरणान्तरं चकार । सूत्रद्वयं तु पूर्वाधिकरण एव ( शेषत्वेन ) व्याख्येयम् । यज्ञेऽप्यचोदितमिदं

---

**अचोदितं च कर्मभेदात्** ॥ ३६ ॥ प्रसक्तानुप्रसक्तोऽयं विचार इति दर्शयति—**इयमेवेति** । हेतुकर्तुः हेतुसंज्ञकस्य प्रयोजककर्तुरित्यर्थः । **ननु** विध्युद्देशे स्पष्टं प्रतिग्रहीतुरिष्ट्यवगमात्संदेह एवानुपपन्न इत्याशङ्क्य तदर्थसंशयं फलफलिभावं च वदन् संदेहमुपपादयति—**तदर्थमिति । दातेति** । अनयदिति नयनस्य प्रापणस्य परस्वत्वापादनरूपत्वादिति भावः । **नन्वेवमपि** स वरुणः स्वां स्वात्मिकां देवतामार्च्छेदित्येवं प्रतिग्रहीतुरेवेष्टिरुपक्रमेपीत्यत आह—**स स्वामिति** । समानविभक्तिनिर्देशादेकस्मिन्कर्तृकर्मभावविरोधात् 'स्वो ज्ञातावात्मनि स्व'मित्यभिधानकोशस्मृतेः स्वमिति नपुंसकत्वप्रसङ्गाच्च न स्वामिति वाक्यस्य प्रतिगृहीतृपरत्वमिति भावः । **संप्रदानेति** । संप्रदानस्योद्देश्यत्वात्तदादाय देवतात्वनिर्देश उपपन्न इति भावः । पर्यदीर्यत वरुणग्रहणे सति जलवृद्ध्या श्वयथुना उदरं पर्यदीर्यत । प्रजापतेरुदरं परिदीर्णमासीदिति यावत् । परकृतिसरूपे परव्यापारप्रकाशक इति यावत् । **ननु** प्रजापतिव्यापारकथनमात्रेण दात्रा यष्टव्यमित्यस्य **कथं** लाभोऽत आह—**इत्यन्य इति** । दातृव्यापारकथनादुपक्रमएव नूनं दातुरिष्टिर्विधास्यत इत्यवगम्यत्न इति भावः । **तस्मादिति** । नच पूर्वाधिकरणोक्तकर्माङ्गत्वबलादेव दातुरिष्टिर्वाच्या । अन्यथा भिन्नकर्तृकत्वेन कर्माङ्गत्वमेव न स्यादिति वाच्यम् । एतदधिकरणोपजीवनेन पूर्वाधिकरणप्रवृत्तेस्तत्रैवोपपादितत्वादिति । **लक्षणेति** । प्रतिगृह्णातिर्दानलक्षक इत्यर्थः । वस्तुतस्तु लक्षणापि नेत्याह—**प्रतिगृह्णीयादितीति । चकारादिति** । चकारेण 'स्वतन्त्रः कर्ते'ति पूर्वसूत्रोक्तसंज्ञानुत्कर्षणादिति भावः । **नन्वङ्गगुणविरोधाधिकरणन्यायेन** प्रधानभूतविध्युद्देशानुसाराद्गुणभूतार्थवादस्यैव नयनं न्याय्यमत आह—**प्रपञ्चितमिति** । तदधिकरणवैषम्यं तत्रैवोक्तमित्यर्थः । मैत्रायणीयशाखायां दातुरुपक्रमाभावेऽपि तैत्तिरीयशाखायामुपक्रमबलान्निर्णये शाखान्तरेऽपि कर्माभेदाद्दातुरिष्टिः सिध्यतीति द्रष्टव्यम् । **ऋगादीति** । 'ऋग्भिः पूर्वाह्ण'इत्यादाविति भावः । **सूत्रानुसारादिति** । तत्रार्त्विज्यशब्दस्वारस्येन ऋत्विक्संबन्धिप्रतिग्रहप्रतीतेरिति भावः । **सूत्रद्वयमिति** । 'अचोदितं च कर्मभेदा'दिति सूत्रं 'सालिङ्गादि'ति सूत्रं च पूर्वाधिकरणएव शङ्कातदुत्तरत्वेन व्याख्येयमित्यर्थः । **यज्ञ इति** । इदं वारुणेष्टिरूपं कर्म यज्ञेऽप्यचोदितं यज्ञाङ्गभूतवैदिकदाननिमित्तकमपि न भवतीति यावत् । कुत इत्यत आह—

---

१ सालिङ्गादार्त्विज्येस्यादेतेन.

कर्मभेदेसति निर्णयाशक्तेः । अत उभयत्र स्यादिति चोद्यम् । तस्योत्तरं सालिङ्गाद्वैदिकत्वसामान्याद्वा-श्विज्ये ऋत्विक्संबन्धिनि वैदिके दाने स्यादित्यर्थः ॥

वैदिकपानव्यापदधिकरणम् ॥ १६ ॥

**पानव्यापच्च तद्वत् ॥ ३८ ॥ [दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यात् ॥ ३९ ॥**

सोमवामिवल्लोके वेदे वेन्द्रियसंक्षयः ॥ दृष्टदोषो लौकिकेऽतो वमने विहितश्चरुः ॥ ३१ ॥
अदोषो वमनायैव लोके पानं श्रुतौ पुनः ॥ जरणाय ततो वान्तिदोषशान्त्यै भवेच्चरुः ॥ ३२ ॥

**अनारभ्य श्रूयते 'सौमेन्द्रं चरुं निर्वपेद्यः सोमं वमती'ति । तत्रापि तथैव संशयः किं लौकिके सोमे रसायनार्थं पीते वान्ते पुरुषार्थतयेयमिष्टिरुत वैदिके क्रत्वर्थतया अथवोभयत्रेति । 'तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत् ॥ दोषो ह्यत्रास्ति वमनाद्व्यृद्धिरिन्द्रियवीर्ययोः ॥' भवति हि वमनादिन्द्रियवीर्यव्यृद्धिः न वरुणग्रहवदत्यन्ताविद्यमानता । तेन तत्संयोगाल्लौकिके स्यात्, वैदिके तु पानमात्रस्य शास्त्रार्थत्वाद्वमनेऽपि न कश्चिद्दोष इति न प्रायश्चित्तविधिरर्थवान् । एवं प्राप्ते ब्रूमः— 'लोके हि वमनायैव पानाद्दोषो न विद्यते ॥ सम्यग्जरणपर्यन्तं वेदे पानं विधीयते ॥ न तावल्लोके दोषोऽस्ति वमनार्थमेव पानात् । अतो न तद्वशेन लौकिक एवेति शक्यं वक्तुम् । वेदे तु सम्यग्जरणस्यापेक्षितत्वात्सम्यग्जरणपर्यन्तमेव पानं शास्त्रार्थः । तच्च वमनाद्विपद्यत इत्यस्ति दोषः । तेन दोषवशादेव वैदिके स्यात् । यद्यपि दोषश्रवणमर्थवादस्तथापि लोके दोषाभावात्प्रतीकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चित्तं—'वेदे तु क्रतुवैगुण्यात्समाधित्सोपजायते ॥ अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत् ॥ अपेक्षितविधिर्ज्यायाननपेक्षितचोदनात् ॥ तेन क्रत्वङ्गमेवेष्टिः फलं चैवं न कल्प्यते ॥' अश्वदानं तु वैदिकमेव शीघ्रमुपस्थितमिति असत्यामपि प्रतीकारापेक्षायां तत्रैव वारुणेष्टिः । लौकिकं तु प्रतिषिद्धत्वात्प्रतीकारापेक्षं सदप्यनुपस्थितत्वान्नेष्टिं गृह्णातीति विशेषः ॥**

---

**भेद इति ।** लौकिकवैदिकदानभेदे दानद्वये सतीति यावत् । वैदिकस्यैवाङ्गमिति निर्णेतुमशक्यत्वात्तस्मादुभयत्र स्यादित्यर्थः । 'अधिकरणान्तरत्वे चाचोदित'मिति सूत्रस्यायमर्थः । वारुणीष्टिरूपं कर्म दातुरचोदितं दानप्रतिग्रहयोर्भेदादस्य च प्रतिग्रहसंयोगादिति ॥

**पानव्यापच्च तद्वत् ॥ ३८ ॥** पेटिकासंगतिसिद्ध्यर्थमनारभ्येत्युक्तम् । वमनस्य वैदिकत्वाभावेन लौकिके वैदिके वा वमने इति संशयायोगात्तथाशब्देन विवक्षितमर्थं दर्शयति—**किमिति ।** रसायनशब्दो धातुसाम्यपरः । **उभयोरिति ।** वमनस्य वैदिकताभावेनाश्वप्रतिग्रहेष्टिवद्वैदिकस्य शीघ्रोपस्थित्यभावादिति भावः । **व्यृद्धिरिति ।** इन्द्रियवीर्ययोः समृद्ध्यभाव इत्यर्थः । **ननु लोके** वमनादिन्द्रियवीर्ययोर्ऋद्धिरेवान्यथा धातुसाम्यानुपपत्तेरित्यत आह—**भवति हीति ।** पश्चादिन्द्रियवीर्यसमृद्धावपि तात्कालिकेन्द्रियवीर्यशोषसद्भावादस्ति लौकिके इन्द्रियवीर्यव्यृद्धिरिति भावः । **न वरुणग्रहवदिति ।** अनेन सङ्गतिरपि सूचिता । **वैदिके त्विति ।** 'हिन्व मे गात्रा हरिव' इत्यादेः सम्यग्जरणे विनियोगात्सम्यग्जरणपर्यन्तमेव भक्षणं शास्त्रार्थ इति द्वितीयपाद एवोक्तत्वेन वैदिकेऽपि दोषसद्भावादविशेषादुभयत्रेति पक्षएवात्र मुख्यः पूर्वःपक्ष इति ध्येयम् । **वमनायैवेति ।** अन्तर्गतदोषनिःसारणाद्धातुसाम्यं भवतीति तात्कालिकेन्द्रियवीर्यशोषाभ्युपगमेनैव लोके वमने प्रवृत्तेरङ्गीकृता ग्लानिर्न दोषायेति न्यायाच्च तत्र दोषोऽस्तीत्यर्थः । **ननु** वमनप्रयुक्तेन्द्रियवीर्यव्यृद्धेरिष्ट्यनुष्ठानेनाप्यपरिहारेणेष्टेर्दोषनिर्घातार्थत्वासंभवात् 'विना एष इन्द्रियेण वीर्येणार्ध्यते यः सोमं वमती'ति दोषश्रवणमर्थवादमात्रमिति कुतस्तद्वशाद्वैदिके स्यादित्यत आह—**यद्यपीति ।** लोकेऽपि तात्कालिकेन्द्रियवीर्यव्यृद्धेरवर्जनीयतया दोषनिर्घातार्थत्वासंभवाद्दोषनिर्घातश्रवणं पूर्वपक्षिणाप्यर्थवादमात्रमित्येव स्वीकार्यमिति ततः फलाकाङ्क्षापरिपूरणाभावात्तत्पक्षे फलकल्पनागौरवं स्यादिति फलाकल्पनालाघवादपि वैदिक एव निवेश इत्याशयेनाह—**फलंचेति ।** नन्वेवं वैदिकाश्वदाने प्रतीकारापेक्षाविरहात्तत्र वारुणीष्टिर्न स्यात् प्रत्युत लौकिक एव तदपेक्षासद्भावात्स्यादित्यत आह—**अश्वेति ।** इहापि वमनस्य वैदिकत्वाभावेऽपि पानस्य वैदिकत्वात्तन्मुखेन वैदिकस्य शीघ्रोपस्थितिः संभवतीत्यपि बोध्यम् । सूत्रार्थस्तु—सोमपानस्य व्यापत्तिरप्यश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षवल्लौकिक्येव निमित्तमिति ॥

---

१ र्थत्वाभावात्. २ विपद्यते.

सौमेन्द्रचरुस्यजमानवमनव्याप्तिप्रयिताधिकरणम् ॥ १७ ॥

**तत्सर्वत्राविशेषात् ॥ ४० ॥ [स्वामिनो वा तदर्थत्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥]**

**ऋत्विजां वमनेऽप्येष कर्तुरेवोत वर्जनात् ॥ विशेषस्यामिनो नैवं कर्तुरेव निरूपितः ॥ ३३ ॥**

येयं वैदिके सोमवमने क्रत्वङ्गमिष्टिरवधारिता सा किं यजमानवमन एवोतर्त्विग्वमनेऽपीति विचारः । 'तत्राविशेषतः सर्ववमने स्यात्तदुच्यते ॥ सौमेन्द्रं स चरुं कुर्याद्यः सोमं वमतीति हि ॥ यच्छब्दादिष्टिवमने गम्येते तुल्यकर्तृके ॥ इष्टौ च क्रतुशेषत्वात्स्वाम्येव हि नियुज्यते ॥ कर्तृत्वेनेति वमनमपि तत्कर्तृकं ततः ॥ निमित्तमृत्विग्वमनं न निमित्तमिति स्थितम् ॥

आग्नेयाष्टाकपालचरोर्ध्ववदानमात्रस्य होतव्यताधिकरणम् ॥ १८ ॥

**सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ [निरवदानात्तु शेषः स्यात् ॥ ४४ ॥ उपायो वा तदर्थत्वात् ॥ ४५ ॥ कृतत्वात्तु कर्मणः सकृत्स्याद्द्रव्यस्य गुणभूतत्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥]**

**यागे हविस्यजेत्कृत्स्नं कोऽप्यंशः शिष्यतेऽपि वा ॥ देवार्थत्वाद्यजेत्सर्वं शिष्यते द्विरवत्ततः ॥ ३४ ॥**

वमनस्य हविःशेषविषयत्वात्तत्प्रसङ्गाद्धविःशेषो हृदयमागत इत्यतः प्रभृत्यापञ्चमपादपरिसमाप्तेर्हविःशेषविषया कथा प्रवर्तिष्यते । प्रथमं तावच्छेषसद्भाव एव प्रतिपाद्यते । दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालो भवती'ति । तथोपस्तृणाति अभिघारयति द्विर्हविषोऽवद्यति चतुरवत्तं जुहोतीति । तत्र संशयः किं सकलस्य पुरोडाशस्याहवनीये प्रदानमुत व्यवदानमात्रं प्रदायान्यच्छेषयितव्यमिति । यद्याग्नेयचोदना सकलहोमेन विना नोपपद्यते ततः सकलस्य, अथ व्यवदानमात्रेणापि तदुपपत्तिस्ततस्तन्मात्रस्य होमः, तत्राष्टाकपालशब्दस्यावयवपरत्वे लक्षणाप्रसङ्गात्तच्छ्रुत्या पुरोडाशावयव्येवानेन देवता संबन्धीक्रियते । नच प्रदानमन्तरेण देवतासंबन्धोपपत्तिरिति सकलस्य प्रदानम् ।

---

**तत्सर्वत्राविशेषात् ॥ ४० ॥** येयमिति प्रासङ्गिकत्वं सूचयति । **अविशेषत इति** । ऋत्विग्वमनेऽपि सम्यग्जरणपर्यन्तप्रतिपत्तिवैगुण्याविशेषेणापेक्षितविधानाविशेषादित्यर्थः । एवंच पूर्वाधिकरणसिद्धान्तहेतूपजीवनादपि सङ्गतिर्बोध्या । **इष्टौ चेति** । अङ्गप्रधानयोः समानकर्तृकत्वाद्द्रव्यत्यागात्मकायामिष्टौ द्रव्यस्वामिनएव कर्तव्यत्वावश्यंभावाचेति भावः । **इति वमनमपीति** । प्रतिपत्तिवैगुण्यनिर्हरणार्थकत्वपक्षेऽपि यच्छब्दबलेन स्वामिवमन एवेष्टेर्नियमनादृत्विग्वमनकृतं वैगुण्यं सर्वप्रायश्चित्तादिना परिहार्यम् । नच प्रतिपत्तिवैगुण्यपरिहारार्थत्वमनङ्गीकृत्यारादुपकारकं नैमित्तिकमङ्गमिष्टिरिति स्वीकारे निमित्तस्य स्वामिकर्तृकत्वेन विशेषयितुमशक्यत्वात्सर्वत्र प्राप्नोतीति वाच्यम् । तदानीमपि यच्छब्दात्प्राङ्निमित्तप्रतीतेरेवाभावेन यच्छब्दबललब्धसमानकर्तृकत्वस्य निमित्तस्वरूप एवान्तर्भावेन विशेषणत्वाभावाद्वमनमात्रस्य प्रथमं निमित्तत्वावगमेऽपि यच्छब्दबलेन नैमित्तिकेष्टेर्निमित्तसमानकर्तृकतया तद्बलादर्थात् स्वामिवमन एव निमित्तत्वपर्यवसानाच्च । तदुक्तं 'पूर्वं यच्छब्दसंबन्धान्निमित्तत्वं न जायते ॥ तत्संबन्धात्परस्ताच्च कर्तैकः संप्रतीयते ॥' इति जंजभ्यमानमन्त्रवत्क्रतुयुक्तपुरुषधर्मत्वमिष्टेरित्यादिपक्षेष्वपि यच्छब्दबलादेव स्वामिवमन एवेष्टिरिति भावः ॥

**सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥** करिष्यमाणविचाराणामनारभ्यवादप्रस्तावासङ्गतिमाशङ्क्याह—**वमनस्येति** । **प्रथममिति** । उपोद्घातत्वेनेति भावः । प्रदानं प्रक्षेप इत्यर्थः । व्यवदानमात्रं द्विरवत्तमात्रमित्यर्थः । **यदीति** । ततश्च तदर्थतयाऽऽग्नेयचोदनाया उपपत्त्यनुपपत्ती विचार्ये इति भावः । **तत्रेति** । अष्टाकपालशब्दस्य तदवयवव्यवदानपरत्वे लक्षणाप्रसङ्गात्सिद्धान्तानुपपत्तेरित्यर्थः । नचैवं दधित्वपयस्त्वयोरवयवावयविवृत्तित्वेन व्यवदानेऽपि दधिपयःशब्दयोर्मुख्यत्वात्तत्र कथं कृत्स्नस्य होमसिद्धिरिति वाच्यम् । तत्रापि स्वरसतोऽवयविन एव प्रतीत्या व्यवदानप्रतीतेर्विलम्बितत्वादिति भावः । **ननु** कृत्स्नस्य देवतासंबन्धोऽग्नयइदंनममेतिदेवतोद्देशेन त्यागमात्रेण होमंविनाप्युपपद्यतइत्यत आह—**नचेति** । अग्निमुखा वै देवा इत्यर्थवादबलेन देवतासंबन्धस्याग्न्यधीनत्वप्रतीतेः कृत्स्नस्याहवनीये प्रदानंविना देवतासंबन्धो न निर्वहतीत्यर्थः । **ननु** चतुरवत्तं जुहोतीति व्यवदानं जुहोतीति च व्यवदानस्य होमसाधनत्वं प्रत्यक्षं तद्विरोधा-

---

१ ग्येवाग्निदेवता.

यद्यपि व्यवदानस्य प्रत्यक्षश्रुतं होमसाधनत्वं अष्टाकपालस्य त्वनुमेयं तथाप्यनिवार्यमनुमानम्। अन्यथाष्टाकपालसंबन्धस्य श्रुतस्यानुपपत्तेः। उत्पत्तिशिष्टत्वाच्च पुरोडाशस्य व्यवदानादुत्पन्नशिष्टाद्बलीयस्त्वम्। अतो बलाद्व्यवदानवाक्यमुपायपरं व्याख्येयं। यत्सकलं जुहोति तद्धिरवदायेति। नचाभ्यासमन्तरेण सकलपुरोडाशसाधनको यागः शक्यते व्यवदानेन कर्तुमित्यर्थादभ्यस्यते सोमयागवत्। कथमिदानीं शेषकार्याणि स्विष्टकृदादीनि विद्यमानसंनिहितशेषाभावाद्धविरन्तरमाक्षेप्स्यन्ति। यद्वा भवतु यच्छेषकार्यवशाद्व्यवदानमात्रं हुत्वान्यच्छेष्यते तदभावे तु सकलहोमो न्याय्य इत्येतावान्पूर्वः पक्षः। कः पुनरयं पक्षद्वयस्यानुष्ठाने विशेषः। पूर्वपक्षे शेषकार्याणामपि प्रयोजकत्वात्तदर्थावदाननाशेऽपि प्रधानवद्धविरन्तरोत्पादः, सिद्धान्ते त्वप्रयोजकत्वाल्लोप इति प्रयोजनान्तरमप्युपरिष्टाद्वक्ष्यामः। अत्राभिधीयते—'यागः प्रधानमेकेन व्यवदानेन साधितः॥ द्रव्यमस्तीति कृत्वासौ नावृत्तिं प्रतिपद्यते॥ आग्नेयत्वं च कृत्स्नस्य तावतैवोपपद्यते॥ अग्नये व्यवदानं यत्तत उद्धृत्य दीयते॥' प्रधानभूतो हि यागो न युक्तं यद्द्रव्यवशेनावर्तेते। नच सोमयागवदभ्यासमन्तरेणानुपपत्तिः। उत्पत्तिशिष्टं हि पुरोडाशस्याग्नेयत्वमेतावतैवोपपन्नम्, यत्ततो गृहीतं व्यवदानमग्नये दीयते। अग्निदेवत्ययागसाधनता ह्याग्नेयता, साधनत्वं च प्रदेयप्रकृतितयाप्युपपन्नं व्रीहीणामिव पुरोडाशद्वारं, सोमस्येव रसद्वारं, पशोरिव हृदयादिद्वारं, अतो व्यवदानद्वारं पुरोडाशस्य साधनत्वमिति न सर्वप्रदानमिति भाष्याभिप्रायः। वार्तिककारस्तु मन्यते, सत्यं प्रणाड्याप्युपपन्नमाग्नेयत्वं, यदि प्रणाड्यां किंचित्प्रमाणमभविष्यत्। असति तु प्रमाणे साक्षादेव प्रदानं युक्तम्। नचात्र प्रमाणमस्ति येन व्रीहिपशुसोमवत्प्रणाडीमाश्रयामः। चतुरवत्तं जुहोतीतिवाक्यं प्रमाणमितिचेद्भवेत् तत्प्र-

---

कृत्स्नस्य देवतासंबन्धेन होमसाधनत्वानुमानमेव न प्रवर्तत इत्याशङ्कते—**यद्यपीति**। नन्वेवं सति विकल्पः स्यादित्यत आह—**उत्पत्तीति**। अनेकगुणश्रवणादाग्नेयवाक्यस्यैवोत्पत्तिपरत्वमिति भावः। **ननूत्पत्त्युत्पन्नशिष्टयोरपि** वचनद्वयबलादगत्या विकल्पः स्वीकार्योऽत आह—**अत इति**। **ननु** कृत्स्नस्य पुरोडाशस्य व्यवदानमात्रेण होमासंभवान्नोपायत्वसंभव इत्याशङ्क्य यतएव व्यवदानमात्रस्य नोपायत्वमतएव व्यवदानाभ्यासः स्वीक्रियत इत्याह—**नचेति**। **ननु** सर्वप्रक्षेपे शेषाभावात्कथं स्विष्टकृदाद्यनुष्ठानम्। नच द्रव्यान्तराक्षेपः संभवति स्विष्टकृदादीनामप्रयोजकत्वस्य चतुर्थे वक्ष्यमाणत्वादिति शङ्कते—**कथमिति**। यदि हि स्विष्टकृदादीनामेकद्रव्यकत्वं तदा परमेकद्रव्ये चोत्पत्तौ विद्यमानसंयोगादिति चतुर्थाध्यायाधिकरणन्यायेन द्रव्याप्रयोजकत्वं, सर्वप्रक्षेपे तु विद्यमानसंनिहितशेषाभावात्तदधिकरणन्यायाप्रवृत्त्या द्रव्यान्तराक्षेपकत्वं संभवतीति परिहरति—**विद्यमानेति**। अस्मिन्पक्षे द्रव्यस्य प्रतिपाद्यत्वाभावेन शेषकार्याङ्गत्वादेकाङ्गस्यापराङ्गत्वासंभवान्न सर्वेषामेकद्रव्याक्षेपकत्वं किंतु प्रत्येकमेकैकद्रव्याक्षेपकत्वमिति हविरन्तरमित्येकवचनं प्रत्येकाभिप्रायं बोध्यम्। **नन्वेवं** शेषात्स्विष्टकृतेऽवद्यतीत्यवशिष्टवाचिशेषशब्दानुपपत्तिः पर्यग्निकृतं पात्नीवतमुत्सृजत्याज्येन शेषमित्यत्रेव शेषशब्दस्य लक्षणास्वीकारे सैव दोष इत्यस्वरसादाह—**यद्वेति**। न्यायतस्तु सर्वस्यैव होम इत्येतावानेवात्र पूर्वः पक्षः। तत्र वचनबलेन शेषकार्यार्थं शेषमवस्थाप्य व्यवदानमात्रहोमेऽपि न पूर्वपक्षहानिरित्यर्थः। **ननु** शेषकार्यवशात्पूर्वपक्षिणापि व्यवदानमात्रहोमानुष्ठानाभ्युपगमे प्रयोजनभेदो न स्यादिति शङ्कते—**कः पुनरिति**। **पूर्वेति**। शेषकार्यवशेन शेषस्थापनपक्षे हविषः सर्वार्थत्वेनाष्टाकपालपुरोडाशस्यावयविनो व्यवदानस्विष्टकृदादिभिः सर्वैरपि प्रयोज्यतया स्वस्वार्थद्रव्यनाशे प्रधानवत्स्विष्टकृदादेरपि हविःप्रयोजकत्वादित्यर्थः। एवंच प्रधानस्विष्टकृदादीनां सर्वेषामपि तुल्यकक्ष्यतया द्रव्यप्रयोजकत्वात्तुषोपवापादिवत्परप्रयुक्तद्रव्योपजीवनादप्रयोजकत्वमिति शङ्काया अप्यनवकाशः। उक्तंच वार्तिके 'यथैव प्रधानं तस्य हविषः प्रयोजकं एवं स्विष्टकृदाद्यपी'ति। तस्माद्युक्तं द्रव्यप्रयोजकत्वमिति भावः। **लोप इति**। स्विष्टकृद्व्यतिरिक्तविषयं 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः परिसंख्याय यजेते'ति वचनबलेन स्विष्टकृत आज्येनानुष्ठेयत्वादिति ध्येयम्। **उपपद्यत इति**। ततश्चाष्टाकपालशब्दस्य न लक्षणाप्रसङ्गः। नापि कृत्स्नस्य होमानुमानावश्यंभाव इति भावः। तावच्छब्दार्थमाह—**अग्नय इति**। **सोमेति**। तत्र हि ऐन्द्रवायवादिग्रहाणां समुच्चयोऽभ्यासमन्तरेण नोपपद्यत इति भावः। **साक्षादिति**। तस्य स्वारसिकत्वादिति भावः। **व्रीहीति**। व्रीहिषु पुरोडाशावरुद्धे यागे साक्षात्साधनत्वानुपपत्तिः। सोमेऽभिषवादिविधिः पशौ विशसनादिविधिः अभिघाताभिषवविशसनादिभिर्व्रीह्यादीनां नाशश्च प्रणाड्यां प्रमाणमिति

माणं यदि होमानुवादेन चतुरवत्तं साधनं विधीयते। नत्वेवं। उत्पत्तिवाक्ये 'होमस्याप्राप्तत्वात्त्याग-मात्रेण होमाभावेऽपि पर्यग्निकृतानारण्यानुत्सृजन्तीतिवद्देवतासंबन्धोपपत्तेः। अतो नेयं वचनव्यक्तिर्यज्जुहोति तच्चतुरवत्तमिति, किंतु यच्चतुरवत्तमित्युपस्तरणादिवाक्यप्राप्तं चतुरवत्तं द्वितीयया संस्कार्यत्वेनोद्दिश्य तत्संस्कारो होमो विधीयते। होमश्च त्यागपूर्वः प्रक्षेपः। तत्र त्यागस्योत्पत्तिवाक्यप्राप्तत्वादप्राप्तः प्रक्षेपांशः संस्कारो विधीयते। अतो नानेनोत्पत्तिवाक्यविहितस्य कर्मणः साधन-विधानं येन पुरोडाशस्य तत्प्रकृतित्वं स्यात्। कर्मान्तरमिदमवघातादिवत्संस्काररूपं विधीयते, यागस्य तु साधनान्तराभावात्पुरोडाश एव साक्षात्साधनमिति सर्वप्रदानम्। नन्वाचारादेव होमः प्राप्तः। न। आचारस्य स्वतःप्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेनुपपत्तेः। यदि चाचार-प्रमाणको होमः स्यात्ततस्तस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिष्वप्यौपदेशिक एव होम इति प्रत्यक्षद्वारत्वादाहवनीयादयः पवमानेष्ट्यादिषूपदेशादेव प्राप्येरन्नग्नयश्च स्वकालत्वादिति न्यायात्। तत्र 'तासामग्निः प्रकृतितः प्रयाजवदि'ति सूत्रकारव्यवहारो नोपपद्यते। तस्माच्चतुरवत्तं जुहोतीति होमविधिः, यागस्तु सकलपुरोडाशद्रव्यक इति समञ्जसम्। अधिकरणं तु होमविषयं व्याख्ये-यम्। प्रायेण हविषां होमदर्शना'दग्निमुखा वै देवा' इति चार्थवादात्सकलस्य होमं मन्यते, चतुरवत्तं

---

भावः। **ननु** यदष्टाकपालं जुहोति तच्चतुरवदायेत्यर्थकं चतुरवत्तवाक्यमेवात्रापि प्रमाणमिति शङ्कते—**चतुरवत्तमिति**। **त्यागमात्रेणेति**। अग्नौ प्रक्षेपाभावेऽपि पदहोमादौ देवतासंबन्धस्यावश्यकत्वादग्निमुखा इत्यर्थवादमात्रान्न होमसिद्धिरिति भावः। **ननु** हविषो द्विरवदानेन चतुरवत्तस्याप्राप्तत्वान्नानुवादसंभव इत्यत आह—**उपस्तरणेति**। उक्तरीत्या चतुरव-त्तविध्यसंभवाद्विशिष्टविधिगौरवप्रसङ्गेन चतुरवत्तविशिष्टहोमान्तरविध्यसंभवाच्च चतुरवत्तानुवादेन होमविधिनिश्चये प्राप्त्यपे-क्षायां उपस्तरणादिवाक्यपर्यालोचनया प्राप्त्यवगमाद्यथाप्राप्त्यनुवादस्य वर्णनीयतयाज्यविषयाभ्यामप्युपस्तरणाभिघारणाभ्यां सह चतुरवत्तं स्वीकार्यमिति भावः। द्वितीयाबलादपि चतुरवत्तस्योद्देश्यत्वमेव न्याय्यमित्याशयवानाह—**द्वितीययेति**। संस्कार्यत्वेन प्राधान्येनेत्यर्थः। **ननु** आग्नेय इति तद्धितावगतदेवताया यागार्थत्वाद्धोमे देवताया अभावात्कथं होमनि-र्वाहः। प्रकृतत्वात्तद्देवतास्वीकारे नारिष्टपत्नीसंयाजादिहोमेष्वपि तत्स्वीकारप्रसङ्ग इत्यत आह—**होमश्चेति**। याज्यया जुहोति वषट्कृते जुहोतीति होमस्य स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं दीयत इति यागस्य च वषट्कारोत्तरकालत्वप्र-तीतेस्त्यागकाल एव प्रक्षेपः कार्यः नतु त्यागानन्तरं तथात्वे उभयोर्वषट्कारानन्तर्यानुपपत्तेः त्यागानन्तरं प्रक्षेपे स्वीक्रि-यमाणे प्रक्षेपस्य संस्कारतया स्वयं द्रव्यप्रयोजकत्वाभावात् अवदाननाशे होमार्थे हविरन्तरमुत्पाद्यमिति व्यवस्थापनार्थे 'शेषावदाननाशे स्यात्तदर्थत्व'दिति षष्ठाध्यायाधिकरणं विरुध्येत। एककालत्वे तु प्रक्षेपाभावदशायां यागस्याप्यननुष्ठाननि-यमाद्धोमात्पूर्वं द्रव्यनाशे होमार्थतया द्रव्यप्रयुक्त्यभावेऽपि यागार्थतया तत्प्रयुक्त्यवश्यंभावान्न षष्ठाधिकरणविरोध एवंच त्यागप्रक्षेपयोः पौर्वापर्यासंभवादिह त्यागपूर्वशब्देन त्यागप्रक्षेपयोर्वैशिष्ट्यमात्रं विवक्षितं नतु पौर्वापर्यमपीति बोध्यम्। यद्वा प्रकृते पौर्वापर्याभावेऽपि यत्र मुख्यो होमो जुहोतिचोदितेषु तत्र प्रक्षेपस्य त्यागपूर्वकत्वे बाधाभावात्त्यागपूर्वप्रक्षेपो होम इति ग्रन्थस्य प्रकृते जुहोतेर्लाक्षणिकत्वसिद्ध्यर्थं मुख्यार्थकथनपरतया प्रवृत्तत्वाच्च जुहोतिचोदिताभिप्रायस्त्यागपूर्वक-त्वनिर्देशो बोध्यः। **अवघातादीति**। इयांस्तु विशेषः। अवघातादिरुपयोक्ष्यमाणसंस्कारः। अयंतूपयुज्यमानसं-स्कारः। प्रधानसमकालस्यापि प्रधानानन्तरभाव्युत्पत्त्यपूर्वोपयोगित्वात्संस्कारत्वोपपत्तिरिति ध्येयम्। वार्तिकेतु प्रक्षेपस्य प्रतिपत्तित्वमप्युक्तम्। तस्मिन्पक्षे तु त्यागानन्तरं प्रक्षेपस्य कर्तुं शक्यत्वात्प्रागुक्तं पौर्वापर्यं प्रकृतेऽपि यथाश्रुतमेवोपपद्यते। अत्यन्तव्यवधानाभावेन त्यागानन्तरं प्रक्षेपात्प्राक् अवदाननाशस्यासंभावितत्तया तत्पूर्वमवदाननाशे च पूर्वोक्तप्रकारेण हविरन्तराक्षेपसंभवान्न षष्ठाधिकरणविरोध इत्यपि बोध्यम्। **प्राप्त इति**। ततश्च तदनुवादेन चतुरवदानविधिः संभवतीति भावः। **प्रकृतीति**। यथा प्रकृतावाचाराद्धोमप्राप्तिरेवं विकृतावप्याचारादेव तत्प्राप्तिसंभवादौपदेशिक एव स्यान्नत्वाति-देशिक इत्यर्थः। प्रत्यक्षद्वारत्वादुपदिष्टहोमद्वारकत्वादित्यर्थः। **नन्वनारभ्याधीतस्य** प्रकृतिगामितयाहवनीयद्वारस्य होमस्य विकृतिषु प्रत्यक्षमात्रेण कथमाहवनीयस्य तत्रोपदेशत एव प्राप्तिरित्यतआह—**अग्नयश्चेति**। यस्यहि विकृतावातिदेशिकं द्वारं तस्यैवानारभ्याधीतस्य प्रकृतिगामित्वं यथा पर्णतादेस्तत्र हि जुहूरूपस्य द्वारस्य विकृतावतिदेशतः प्राप्तिदशायामेव पर्णताविशिष्टतया प्राप्तेः पुनः पर्णताविधाने द्विरुक्तिदोषप्रसङ्गाद्द्वारस्यातिदेशिकत्वाभावे तु द्विरुक्तदोषाभावादुपदेशत एवा-हवनीयप्राप्तिरित्यग्नय इत्यधिकरणन्यायादित्यर्थः। इष्टापत्तिमाशङ्क्याह—**तत्रेति**। तथासति पवमानेष्टिषु पवमानेष्टयः कर्तव्या नवेति विचारे पवमानेष्टिषु प्रकृतित आहवनीयप्राप्तेस्तस्य च पवमानेष्टिसाध्यत्वात्पवमानेष्टिषु पवमानेष्टयः कर्तव्या

जुहोतीतिवचनात्तावत एव होमः, सकलस्य देवतासंबन्धस्त्यागमात्रादेवोपपन्नः । एवंच शेषात्स्विष्टकृत इत्यादि समञ्जसं भवति । नन्वग्न्यादिभ्यो दत्तं कथमिव पुनः स्विष्टकृते दीयते त्यक्तस्य हि पुनः स्वीकारे शिष्टाचारविरोधः स्यात् । प्रत्यक्षश्रुत्याचारं बाधित्वा तावन्मात्रं पुनः स्वीक्रीयत इत्यदोषः ॥

सर्वशेषैः स्विष्टकृदनुष्ठानाधिकरणम् ॥ १९ ॥

**अप्रयोजकत्वादेकस्मात्क्रियेरन्, शेषस्य गुणभूतत्वात् ॥ ४८ ॥ [संस्कृतत्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कारणाविशेषात्, संस्कारस्य तदर्थत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥]**

शेषात्स्विष्टकृदेकस्मात्सर्वेभ्यो वैकतः कृते ॥ शास्त्रार्थसिद्धिः सर्वेभ्यः कार्यः संस्कारसाम्यतः ॥ ३५ ॥

सति शेषे शेषकार्याणि स्विष्टकृदादीनि किमेकस्माद्धविषः कार्याण्युत सर्वेभ्य इति विचारः । तत्रैकस्मादेव शेषात्स्विष्टकृत इति शास्त्रार्थस्य कृतत्वादेकस्मादेव कार्याणि न सर्वेभ्य इति प्राप्त उच्यते । यदि शेषगुणकानि प्रधानकर्माण्येतानि ततः स्यादेवं । शेषस्य त्वाकीर्णकरस्यापेक्षितप्रतिपत्तेः प्रतिपत्तिनियमोऽयं विधीयते । स यस्यैव न क्रियते तस्यैव प्रतिपत्तिनियमलोपाद्वैगुण्यं स्यात् । तस्मात्सर्वेभ्यः प्रतिपत्तित्वं चैषां चतुर्थे वक्ष्यते । उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वाप्रतिपत्तिः स्यादिति । तेनैवच गतार्थत्वान्नेदमधिकरणान्तरम् । प्रयोजनसूत्राणि त्वेतानि पूर्वाधिकरणस्य यदा शेषकार्यवशात्पूर्वपक्षेऽप्यसर्वदानं किं तदा चिन्तायाः प्रयोजनं तत्राह । पूर्वपक्षेऽपि सर्वप्रदाने प्राप्ते स्विष्टकृदादिवशेन शेषः स्थाप्यते । प्रधानकर्म च तदा स्विष्टकृदादि भवति । तच्चैकस्मादेव [1]भवतीत्येकस्मादेव कर्तव्यम् । सिद्धान्ते त्वपेक्षितप्रतिपत्तेः स्थितस्य शेषस्य प्रतिपत्तिरियमिति सर्वेभ्यः स्यादिति प्रयोजनम् ॥

प्राथमिकशेषात्स्विष्टकृदनुष्ठानाधिकरणम् ॥ २० ॥

**एकस्माच्चेद्याथाकाम्याविशेषात् ॥ ५२ ॥ [मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥]**

यदैकस्मात्तदा मुख्यनियतिर्नोत विद्यते ॥ नाश्रुतेरस्ति मुख्यातिक्रमणे हेत्वभावतः ॥ ३६ ॥

कृत्वाचिन्तेयं यदा शेषकार्यवशादेव शेषं स्थापयित्वा एकस्मात्कार्याणि तदा किमनियमो यतः

---

इति पूर्वपक्षप्रतिपादनावसरे सूत्रकारस्य पवमानेष्टिष्वग्नेश्चोदकप्राप्तिव्यवहारो विरुध्येतेत्यर्थः । **सकलेति** । द्यवदानं तदपादानभूतं च सर्वं देवतायै त्याज्यमित्यर्थः । **समञ्जसमिति** । शेषशब्दमुख्यार्थत्वादित्यर्थः । **त्यक्तस्य हीति** । अवयविनि त्यक्तेऽवयवा न स्वीकारार्हा इति भावः । तावन्मात्रं शेषकार्यार्थमात्रमित्यर्थः । सूत्रार्थस्तु—सर्वस्य हविषः प्रदानं कृत्स्नस्य हविषो देवतार्थत्वादिति भाष्यकारपक्षे प्रदानशब्दो देवतोद्देशेन दानपरः । वार्तिककारपक्षे तु प्रक्षेपपरः ॥

**अप्रयोजकत्वादेकस्मात्क्रियेरन् ॥ ४९ ॥** पूर्वोपजीवनात्संगतिं सूचयति—**सतीति** । **तत्रेति** । स्विष्टकृदिडाभक्षणादीनां यदि प्रतिपत्तितया पुरोडाशशेषंप्रति गुणभावः स्यात्तदा प्रतिप्रधानं गुणावृत्त्या सर्वेभ्यो हविर्भ्यः शेषकार्याणि कर्तव्यानि स्युः । नत्वेवं तेषामर्थकर्मत्वात्तस्मादेकस्मादेव तत्कार्यसिद्धिरित्यर्थः । आकीर्णकरस्य आकीर्णं संकीर्णं करोतीत्याकीर्णकरस्तस्येत्यर्थः । आकीर्णकरत्वादेव रिक्तीकरणार्थं प्रतिपत्तेरपेक्षितत्वादपेक्षितविधानस्य ज्यायस्त्वात्प्रतिपत्तित्वमेवेत्यर्थः । एवं यथाभाष्यमधिकरणमुपवर्ण्य तत्र वार्तिकोक्तं दूषणमवतारयति—**प्रतिपत्तित्वमिति** । **उत्पत्ताविति** । उत्पत्तिसमये यद्द्रव्यं येन प्रयोजनेन संबद्धमुत्पद्यते तद्द्रव्यं तदर्थमेव तत्रैव कर्मणि शेषत्वेन श्रुतत्वात्तस्य तथाविधस्य द्रव्यस्यार्थान्तरगमने स्विष्टकृदादिलक्षणकार्यान्तरसंबन्धे सति उपयुक्तशेषत्वात्सदर्थान्तरं प्रतिपत्तिः स्यादिति चातुर्थिकसूत्रार्थः । इदानीमाचार्योक्तसूत्रतात्पर्यमाह—**प्रयोजनेति** । **एतानीति** । अप्रयोजकत्वादित्यादीनि चत्वारि सूत्राणीत्यर्थः । आह । सूत्रकार इति शेषः । आद्यं सूत्रद्वयं पूर्वपक्षप्रयोजनपरम् । द्वितीयं सूत्रद्वयं सिद्धान्तप्रयोजनपरमित्याशयेनाह—**पूर्वेति** । सूत्रार्थस्तु—एकस्मादेव शेषकार्याणि क्रियेरन् शेषस्य शेषकार्यंप्रति गुणभूततया तत्प्रयोजकत्वाभावादिति ॥

**एकस्माच्चेद्याथाकाम्याविशेषात् ॥ ५२ ॥** प्रतिपत्तित्वादेव सर्वेभ्यः कार्यत्वनिश्चयाच्चिन्तानुपपत्तिमाशङ्क्याह—**कृत्वेति** । तत्र वार्तिकानुसारेणाह—**यदेति** । ननु प्रथमोपस्थितत्वान्मुख्यस्यैव शेषः स्थाप्य इति कथं पूर्वःपक्षोऽत

---

१ सिद्ध्यतीत्येकस्मा.

कुतश्चिदुत मुख्यादिति विशेषाभावादनियम इति प्राप्ते ब्रूमः । मुख्यस्य प्राप्तनिमित्तत्वाच्छेषः स्थाप्यते । तस्मिंश्च स्थापिते ततएव शेषकार्याणामुपपत्तेर्निमित्तविघातान्नेतरेभ्यः शेषस्य स्थापनम् । तस्मान्मुख्यादेव कार्याणि ॥

पुरोडाशविभागस्य भक्षार्थताधिकरणम् ॥ २१ ॥

**भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ५४ ॥ [तत्संस्तवाच्च ॥ ५५ ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥ व्यादेशाद्दानसंस्तुतिः ॥ ५७ ॥]**

इदं ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा ॥ भक्षाश्रुतेः क्रयार्थातो यथेष्टं तैर्नियुज्यताम् ॥ १७ ॥
देवतायै समस्तस्य क्लृप्तत्वात्स्वामिता न हि ॥ शेषस्य प्रतिपत्त्यर्थं भक्षणं तत्र युज्यते ॥ १८ ॥

आग्नेयं चतुर्धा कृत्वा इदं ब्रह्मण इत्यादिव्यादेशैर्ऋत्विग्भ्यः समर्प्यते । तत्र संशयः किमिदं समर्पणमृत्विजां यथेष्टविनियोगार्थं परिक्रयायोत द्रव्यप्रतिपत्त्यर्थं भक्षणायेति । तत्र—'भक्षस्याश्रवणात्तावत्तादर्थ्यं नावगम्यते ॥ कियत्यप्यानतिस्तावद्भवतीति तदर्थता ॥' नह्यश्रुते भक्षे तादर्थ्यमध्यवसातुं शक्यम् । कर्मकरेभ्यश्च दीयते दीयमानं च कियतीमपि तावदानतिं करोतीति सोमचमसवत्परिक्रयार्थता । मैवम्—'स्वामी हि द्रव्यदानेन परिक्रीणीत नत्विह ॥ स्वामित्वं कस्यचिद्दत्तं देवतायै हविर्यतः ॥' सकलस्य हविषो देवतायै प्रदत्तत्वादनीशानो यजमानस्तुल्यः स ऋत्विग्भिः कथं परिक्रीणीत, तस्मान्न परिक्रयः । शेषस्य तु प्रतिपत्त्यपेक्षत्वाद्योग्यतया च पुरोडाशस्य भक्षणमेव प्रतिपत्तिरवगतेति कर्तृविशेषमात्रापेक्षायां ब्रह्मादयो नियम्यन्ते तन्नियमस्यापि दृष्टमेव प्रयोजनम् । तेषां करिष्यमाणकर्मप्रयोगकौशलम् । भक्षणाद्धि सामर्थ्यं न भवतीति भक्षणार्थता । इति शास्त्रदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

आह—**विशेषेति** । अन्त्यस्य शेषकार्यसंनिधिः प्रथमोपस्थितिर्मुख्यस्येत्यविशेष इत्यर्थः । **मुख्यस्येति** । मुख्येन प्रधानानुष्ठानसमय एव शेषकार्यार्थं शेषः स्थाप्य इति बुद्धेः शेषस्थापननिमित्तभूतायाः सत्वेन तस्यां सत्यां शेषस्थापनावश्यंभावात्ततएवाकाङ्क्षाशान्तेर्नेतरेभ्यः स्थापनमित्यर्थः । भाष्यकारपक्षेतु यद्यपि शेषकार्यवशेन शेषस्थापनाभावेन शेषस्थापनस्य नैमित्तिकत्वाभावान्निमित्तविघातो नास्तीति शेषकार्यसमये सर्वेषां युगपदुपस्थितेरविशेषस्तथापि प्रधानहविःशेषाणामेव शेषकार्ये विनियोगात्प्रधानपौर्वापर्यस्य शेषकार्यानुष्ठानसमयेऽवश्यानुसंधेयत्वात्प्रधानकर्मानुसारेण मुख्यशेषात् शेषकार्यस्य प्रथममनुष्ठेयत्वेसति तेनैव नैराकाङ्क्ष्यान्नेतरेभ्यः कार्याणीति द्रष्टव्यम् । पुरोडाशकपालेन तुषानुपवपतीति तुषोपवापः पूर्वपक्षे येनकेनचित्कपालेन कर्तव्यः । सिद्धान्ते तु प्रथमोपधेयेनेति क्त्वाचिन्ताप्रयोजनमाहुः । सौत्रयाथाकामीतिशब्दनिर्वाहो वार्तिके द्रष्टव्यः ॥

**भक्षाश्रवणाद्दानशब्दः परिक्रये** ॥५४॥ व्यादेशः विभज्यनिर्देशः । **किमिति** । किमिदं परिक्रयायोत भक्षणाय, तदर्थं च किमिदं तेषां यथेष्टविनियोगार्थमुत प्रतिपत्त्यर्थमिति संशय इत्यर्थः । ननु तर्ह्यश्रवणादेवानत्यर्थत्वमपि न स्यादित्यत आह—**कियतीति** । सामर्थ्यादानत्यर्थत्वमिति भावः । ननु योग्यतया प्रतिपत्त्यर्थत्वमाशङ्क्याह—**कर्मकरेभ्य इति** । कर्मकरे दानत्वादानत्यर्थत्वमेव योग्यमिति भावः । आनतेः स्वल्पत्वान्न तदर्थत्वमित्याशङ्क्याह—**सोमेति** । ऋत्विजां औदुम्बरसोमचमसस्याल्पानतिकरत्वेऽपि यथा परिक्रयार्थत्वं तद्वदित्यर्थः । देवताभ्यो दत्तस्यापि देवतया स्वीकृतत्वाभावात्तेन परिक्रयः संभवतीति भावः । देवतया स्वीकृतत्वाभावेऽपि यजमानस्य त्यागमात्रेण स्वत्वनिवृत्तेरस्वभूतेन परिक्रयो न संभवतीति सिद्धान्तमाह—**मैवमिति** । नन्वस्वामिकस्य द्रव्यस्य पुनः स्वीकारेण स्वत्वं किं न स्यादिति शङ्कां निराकर्तुं ऋत्विक्तौल्यमुक्तम् । एवंच परिक्रयार्थत्वासंभवाद्भक्षाश्रवणेऽप्यदनीयद्रव्यतया योग्यत्वाद्भक्षणार्थत्वमेवेत्याशयेनाह—**शेषस्य त्विति** । प्रतिपत्त्यपेक्षत्वादित्यनेन भाष्यकारपक्षे सर्वस्य देवतायै प्रधानाभावेन शिष्टे स्वामित्वसंभवेऽपि अपेक्षितत्वात्प्रतिपत्तिविधानमेव युक्तमिति दर्शयति । यदुक्तं कर्मकरसंबन्धात्परिक्रयार्थत्वमिति तत्राह—**कर्तृविशेषेति** । **तन्नियमस्यापीति** । यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यत्र हविराधारतानियमाद्धविःसंस्कारोऽपि भवति एवं प्रतिपत्त्यर्थभक्षणे कर्तृनियमात्कर्तृगतसामर्थ्याधायकत्वेन कर्तृसंस्कारत्वमप्यनुनिष्पादि भवतीत्यर्थः । प्रयोजनं तु आनत्यर्थत्वे सत्राङ्गभूताग्नेयविकारे न कर्तव्यं प्रतिपत्त्यर्थत्वे तु कर्तव्यमिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## तृतीयाध्यायस्य पञ्चमः पादः ।

ध्रुवाज्यादिभिः स्विष्टकृदादिशेषाननुष्ठानाधिकरणम् ॥ १ ॥

**आज्याच्च सर्वसंयोगात् ॥ १ ॥ [कारणाच्च ॥ २ ॥ एकस्मिन्समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ५ ॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अक्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥ चमसवदिति चेत् ॥ ८ ॥ न चोदनाविरोधाद्धविःप्रकल्पनाच्च ॥ ९ ॥ उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥ जातिविशेषात्परम् ॥ ११ ॥ अन्त्यमरेकार्थे ॥ १२ ॥]**

उपांशुयाजद्रव्येण शेषकार्यं भवेन्न वा ॥ भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः ॥ १ ॥
उक्ताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत् ॥ अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथम् ॥ २ ॥

शेषकार्याणि किमाज्यादप्युपांशुयाजद्रव्यात्कर्तव्यान्युत नेति संशयः । तत्राविशेषात्कर्तव्यानीति प्राप्ते उच्यते—कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य शेषस्य प्रतिपत्त्यर्थानि शेषकार्याणि । नचाज्यमेवंविधमस्ति यत्तावत् ध्रुवायामप्युपांशुयाजार्थे गृहीतेऽवशिष्टमाज्यं तत्पश्चाद्भाव्युपस्तरणाद्युपयोगित्यकृतार्थं न प्रतिपत्त्यर्हम् । सर्वान्ते च तेन निःशेषेण समिष्टयजुर्होमः क्रियत इति न ततः शेषकार्याणि । यत्तु जुह्वां चतुर्गृहीतं तदशेषं हुतमिति शेषाभावान्नाज्याच्छेषकार्याणि ॥

---

**आज्याच्च सर्वसंयोगात् ॥ १ ॥** शेषकार्याणि सर्वेभ्यः कर्तव्यानीति पूर्वपादोक्तस्यात्रापवादः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वमानन्तर्यं चेत्येके । सर्वप्रदानाधिकरणे सामान्यतः शेषसद्भावे उक्ते तद्विशेषचिन्तनात्पादान्तरत्वमानन्तर्यं चेत्यन्ये । **अविशेषादिति** । शेषात्स्विष्टकृतेऽवद्यतीत्यविशेषश्रवणात्प्रकरणाविशेषाच्चेत्यर्थः । प्रतिपत्त्यपेक्षत्वे हेतुः—**कृतार्थस्येति** । कृतस्वप्रयोजनस्येत्यर्थः । **यत्तावदिति** । उपांशुयाजो हि ध्रुवायां यदाज्यं ततो जुह्वां चतुर्गृहीत्वा क्रियते । तत्र ध्रुवात आज्यं गृहीत्वा उपांशुयाजे कृते ध्रुवायामवशिष्टे यदाज्यं तत्रापि शेषकार्याङ्गीकारे आग्नेयात्स्विष्टकृदर्थमवदायानन्तरं ध्रुवाज्यादप्यवदेयम् नच तदा ध्रौवाज्यं प्रतिपत्त्यपेक्षम् । तदनन्तरभाविनोऽपि ध्रौवकार्यस्योपस्तरणादेः सद्भावेन तदा तस्य कृतकरत्वनिबन्धनप्रतिपत्त्यपेक्षाविरहान्न तत्प्रतिपत्त्यर्हमित्यर्थः । यद्यपि स्विष्टकृदर्थावदानानन्तरमुपस्तरणं नास्ति तथापि द्विरभिघार्येति स्विष्टकृदर्थे द्विरभिघारणविधानात्प्राथमिकाभिघारणपर उपस्तरणशब्दो बोध्यः । नच 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य'मितिवचनाद्द्रव्यापेक्षयागार्थत्वमेव ध्रौवाज्यस्य नाभिघारणाद्यर्थत्वमिति वाच्यम् । उपस्तृणाति अभिघारयतीति वाक्यान्तरेण तदर्थत्वस्यापि बोधनादिति भावः । नचैवं स्विष्टकृदसंभवेऽपि इडादिशेषकार्यान्तरं संभवत्येव तदानीं ध्रौवकार्यान्तराभावादिति वाच्यम् । ध्रुवायामुपांशुयाजशेषवदाघाराज्यभागशेषस्यापि सद्भावेन ध्रौवाज्यादिडादिशेषकार्यकरणे इडादिशेषकार्यस्याग्नेयादौ प्रधानशेषप्रतिपत्त्यर्थत्वमाज्ये त्वङ्गप्रधानशेषप्रतिपत्त्यर्थत्वमिति वैरूप्यापत्तेः । नच कृतकरस्य ध्रौवाज्यस्य प्रतिपत्त्यपेक्षत्वादिदं वैरूप्यमप्यङ्गीकार्यमिति युक्तम् । तस्य प्रतिपत्त्यन्तरसद्भावेन ततएव नैराकाङ्क्ष्यादित्याशयेनाह—**सर्वान्ते इति** । अत्र केचित् समिष्टयजुषोऽपि ध्रौवकार्यत्वमेव न प्रतिपत्तित्वमित्याहुस्तन्मतनिरासाभिप्रायेण होम इत्युक्तं 'सर्वस्मै वा एतद्यज्ञाय गृह्यते' इति यज्ञार्थं ध्रौवं समिष्टयजुश्च होमः समिष्टयजुर्जुहोतीति जुहोतिचोदितत्वादतो न तदर्थत्वं ध्रौवस्य किंतु समिष्टयजुर्होमस्यैव दृष्टार्थत्वाय ध्रौवप्रतिपत्तित्वमिति भावः । अनन्तरं कार्याभावात्प्रतिपत्तित्वं संभावयितुं निःशेषेणेत्युक्तिः । **तदशेषमिति** । चतुर्गृहीतं जुहोतीति वचनेन तत्सर्वं होतव्यं, सोमे तु यद्ग्रहान्जुहोति यच्चमसान्जुहोतीति वचनसद्भावेऽप्यल्पं जुहोतीति वचनाच्छेषसद्भावोऽनुपदमेव वक्ष्यत इति भावः । सूत्रार्थस्तु—आज्यादपि शेषकार्याणि कर्तव्यानि तेषामविशेषेण सर्वप्रदानशेषसंयोगादिति ॥

---

१ तेन हविःशेषेण. २ गृहीतमाज्यं गृहीतं.

साकंप्रस्थायीये शेषकर्माननुष्ठानाधिकरणम् ॥ २ ॥

## साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् ॥ १३ ॥

**आक्रामन्सह कुम्भीभिरस्ति शेषक्रिया न वा ॥ जुह्वावदानात्प्रकृताविव शेषक्रियोचिता ॥ ३ ॥**

**कुम्भीषु शेषासंसिद्धेः साकंप्रस्थाय्यकर्मणि ॥ न स्विष्टकृदिडं कार्यमग्नीधः स्रुक्प्रदानतः ॥ ४ ॥**

साकंप्रस्थायीये श्रूयते 'सहकुम्भीभिरभिक्रामे'दिति। तत्र किं शेषकार्याणि कर्तव्यान्युत नेति। तदर्थं च किं कुम्भीषु शेषो विद्यते उत नेति। तत्राभिक्रमणमात्रं कुम्भीभिर्न होमः। स त्वभिक्रम्याप्याहवनीयमवदायैव जुह्वां यथाप्रकृति कर्तव्य इति शेषसद्भावात्कर्तव्यं स्विष्टकृदादीति प्राप्ते ब्रूमः। नेदमप्राकृतकार्यमपूर्वमभिक्रमणं कुम्भीभिर्विधीयते किंतु यदेव प्राकृतं होमार्थं जुह्वाभिक्रमणं तत्रैव जुहूमपहाय कुम्भ्यो निवेश्यमाना होमार्था विज्ञायन्ते। नह्यन्यथा होमार्थाभिक्रमणसंबन्धो युज्यते। तदनेन प्रकारेण कुम्भीभिर्होमो विधीयते। तद्विधौ चाभिक्रमणं प्राप्तमेवानुवदति। तस्मादत्रापि शेषाभावान्न शेषकार्याणि ॥

सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणम् ॥ ३ ॥

## सौत्रामण्यां च ग्रहेषु ॥ १४ ॥ [तद्वच्च शेषवचनम् ॥ १५ ॥]

**सौत्रामण्यां ग्रहे स्विष्टकृदाद्यस्ति न वास्ति तत् ॥ शेषणात्सुराक्षीरयोरन्यत्रोपयोगतः ॥ ५ ॥**

सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च। तत्र श्रूयते यथागृहीतान्ग्रहानृत्विज उपाददते उत्तरेऽग्नौ पयोग्रहाञ्जुह्वति दक्षिणेऽग्नौ सुराग्रहानिति। तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः। विशेषः सोमग्रहतुल्यश्रुतित्वात्। तत्र च शेषसद्भावादिहापि स्या[1]दित्येतावतीमाशङ्कां व्यावर्तयितुमतिदेशः ॥

---

**साकंप्रस्थायीये स्विष्टकृदिडं च तद्वत् ॥ १३ ॥ सहेति**। तत्र द्वौ सायंदोहौ द्वौ प्रातर्दोहाविति चतस्रः कुम्भ्यः सन्ति ताभिः सहाध्वर्युराहवनीयं दक्षिणाभिक्रामेदित्यर्थः। **ननु** कुम्भीभिः सहाभिक्रमणस्य दृष्टार्थत्वाय कुम्भीभिरेव होमस्य वक्तव्यत्वात्तथासति च शेषाभावात्कथं पूर्वःपक्षोऽत आह—**तत्रेति**। अभिक्रमणानन्तरं जुह्वामवदाय यथाप्रकृति जुह्वाहोमे तद्द्वाराभिक्रमणस्य दृष्टार्थत्वमुपपद्यत इति भावः। **नेदमिति**। विशिष्टविधिगौरवप्रसङ्गाददृष्टार्थत्वप्रसङ्गाच्चेति भावः। एवंच प्राकृतं यदभिक्रमणं तत्र कुम्भीसाहित्यमात्रं विधीयत इति वक्तव्यम्। तथासति प्राकृतस्य दार्शपौर्णमासिकस्याभिक्रमणस्य जुहूसाहित्यादिह कुम्भीसाहित्ये विधीयमाने कुम्भ्यः प्राकृतजुहूस्थाने निविशेरन् प्रकृतौ च जुहूर्होमार्था। तद्यदि कुम्भ्यो होमार्था भवेयुस्तदैव तासां होमार्थाभिक्रमणे जुहूस्थाने निवेशो घटते नान्यथा। तेन तासां होमार्थत्वं स्वीकार्यमित्यर्थः। एवंच यदुक्तं कुम्भीष्वभिक्रमणमेव श्रुतं नतु होम इति तदवहसितमित्याह—**तदनेनेति**। कुम्भीनां होमसाधनत्वे आवश्यके सति तत्र विधिरवश्यं वाच्य इति कुम्भीभिर्होम एवानेन विधीयत इत्यर्थः। **नन्वेवं** कुम्भीनां होमसाधनत्वमभिक्रमणं च विधेयमिति गौरवमित्यत आह—**तद्विधाविति**। अत्र हि कुम्भीनामभिक्रमणे साहित्यं श्रुतं होमसाधनत्वं तदन्यथानुपपत्त्याऽऽर्थिकं तत्रोभयविधौ गौरवप्रसङ्गादेवार्थिकं होमसाधनत्वमेव विधेयं स्वीक्रियते। तद्विधौ च प्रकृतौ जुह्वा सहाभिक्रमणात्कुम्भीभिः सहाभिक्रमणं प्राप्नोतीति श्रौतं सहाभिक्रमणमनूद्यते। यथा फलचमसस्य तस्मै भक्ष्यं प्रयच्छेदिति यागार्थद्रव्यसंस्काररूपभक्षणसंयोगान्यथानुपपत्त्या प्राप्तं यागसाधनत्वमेव विधीयते। श्रौतो भक्षणसंयोगस्त्वनूद्यते तद्वदित्यर्थः। द्वारलोपादिह शेषकार्यनिवृत्तेरित्याह—**तस्मादिति**। **सूत्रार्थस्तु**—साकंप्रस्थायीयेऽपि स्विष्टकृदादिकमुपांशुयाजवदेव न कर्तव्यमिति तद्वदित्यनेनैवातिदेशिकी सङ्गतिः स्फुटा ॥

**सौत्रामण्यां च ग्रहेषु ॥ १४ ॥ तत्रापीति**। किं स्विष्टकृदादिकं कर्तव्यमुत नेति संशयः। प्रकृतितः प्राप्तेः कर्तव्यमिति पूर्वःपक्षः। 'यथागृहीतानृत्विज उपाददते' इति यथागृहीतानामेवोपादानवचनात् 'उत्तरेऽग्नौ पयोग्रहान् जुह्वति। दक्षिणेऽग्नौ सुराग्रहा'निति यथोपात्तानां होमसंयोगाच्च शेषाभावान्न कर्तव्यमित्युत्तरपक्षश्च पूर्ववदेव द्रष्टव्य इत्यर्थः। अतिदेशस्य विशेषाशङ्कानिवारणार्थत्वात्तामाह—**सोमेति**। तत्र यद्ग्रहाञ्जुहोतीति श्रवणेऽपि अल्पं जुहोतीति वचनाच्छेषोऽस्तीति वैषम्यम्। नचात्रापि उच्छिनष्टि न सर्वं जुहोतीत्यस्ति वचनमिति वाच्यम्। तस्य 'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातार'मिति संनिहितवैशेषिकपानावरोधादिति भावः। स्विष्टकृदादिनिषेधान्वाकर्षकः सूत्रे चशब्दः ॥

---

१ प्रस्थाय्येस्विष्ट. २ कृदादीति. ३ स्यादिमामाशङ्कां.

सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ॥ ४ ॥

**द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥ [अविभागाच्च शेषस्य, सर्वान्प्रत्यविशिष्टत्वात् ॥ १७ ॥]**

रथंतरादिभिर्भिन्ना इन्द्रास्तेषां न भिद्यते ॥ पुरोडाशस्तत्र शेषकार्यं किं भिद्यते न वा ॥ ६ ॥
भिद्यते कर्मणां भेदाच्चोदकैः पृथगुक्तितः ॥ शेषस्य सर्वतुल्यत्वात्तत्कार्यं सकृदिष्यताम् ॥ ७ ॥

सर्वपृष्ठायां षट्कर्माणि इन्द्राय रथन्तराय निर्वपतीन्द्राय बार्हतायेत्येवमादीनीति तेषां षट्हवींषि क्रमेण यथादेवतं निरुप्य प्रकृतिवत्सहावघातपेषणे कृत्वा विभागे प्राप्ते तमकृत्वा वचनात्सर्वैरेकं पुरोडाशं कृत्वा ततः समन्तं पर्यवदाय प्रधानानि क्रियन्ते। तत्र किं प्रतिकर्मभेदेन स्विष्टकृदिडमवदेयं उत सकृदिति संशयः—'तत्र कर्मबहुत्वेन प्रतिकर्मावसायिभिः॥ चोदकैः शेषकर्मापि प्रतिकर्म प्रदिश्यते॥' तस्मात्प्रतिकर्मावदेयम्। तथाच प्रधानभेदे एकस्मिन्नपि शेषे शेषकार्यावृत्तौ सिद्धवद्धेतुं दर्शयति 'द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोती'ति तद्वदिहापीति प्राप्ते ब्रूमः—'सर्वसाधारणः शेषस्तस्मात्सकृदवद्यते॥ तावतैव हि सर्वेषां कृतं स्यादविशेषतः॥' ननु त्यक्तस्य पुनस्त्यागायोगान्न सकलः पुरोडाशः सर्वार्थः किंत्वेकैकावयव एकैकस्य यागस्य साधनम्। तथेनावयवेन यो यागः क्रियते तदुत्तरार्धादवदीयमाने तस्य शेषादवत्तं भवतीति भेद एव न्याय्यः। नैतदेवमवयवानामेव विशेषाग्रहणात्। नह्येतज्ज्ञायते अयमवयवोऽस्यायमस्येति विशेषे प्रमाणाभावात्। होमदेशा एव वचनाद्व्यवस्थिता न यागदेशाः। तेन यागावस्थायामेवं संकल्पयितव्यं योऽस्मिन्पुरोडाशे निर्वापदशायामिन्द्राय रथन्तराय दातुं प्रक्रान्तोंऽशस्तं तस्मै ददामीति। एवं सर्वेषु कृतेषु शेषस्य साधारणत्वादगृह्यमाणविशेषं शेषकार्यं तन्त्रेण सकृत्कर्तव्यम्। ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षो न प्रधानभेदात्। हेतुनिर्देशस्त्वर्थवादमात्रम्॥

---

**द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥** शेषकार्यप्रसङ्गात्सङ्गतिरित्याहुः। पूर्वोत्तरपक्षसौकर्यार्थं कर्मभेदं द्रव्यैक्यं च विशदयन्विषयमाह—**सर्वेति**। बृहद्रथन्तरवैरूपवैराजशाक्वररैवताख्यानां सर्वेषां पृष्ठानां देवताविशेषणभावेनान्वयो यस्यामिष्ट्यां सा सर्वपृष्ठा तस्यामिन्द्राय रथन्तरायेत्याद्युत्पत्तिविधिभेदात्षट्कर्माणि सन्तीत्यर्थः। **वचनादिति**। द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वाय समन्तं पर्यवद्यतीत्येतस्मादित्यर्थः। **ननु** द्रव्यैक्ये सत्यगृह्यमाणविशेषत्वात्तन्त्रतैव युक्तेति कथं पूर्वःपक्ष इत्याशङ्क्य प्रकृता 'उत्तरार्धात्स्विष्टकृतेऽवद्यती'त्यस्य प्रधानावदानदेशस्योत्तरार्धादवद्यतीत्यर्थः। तथाचेह समन्तं पर्यवद्यतीति प्रधानावदानदेशानां भिन्नत्वात्तदुत्तरार्धभेदेन प्रतिपाद्यभेदादावृत्तिर्युक्तेत्याशयेनाह—**तत्रेति**। किंच मास्तु प्रतिपाद्यभेदस्तथाप्यावृत्तिरवर्जनीयेत्याह—**तथाचेति**। ऐन्द्रवायवग्रहस्य वायवे एको वषट्कारः इन्द्रवायुभ्यामपरो वषट्कारः। द्वित्वहेतुना एकस्मिन्नेव शेषे द्विर्भक्षणोक्तौ हेतुबलेन यावत्कृत्वो यत्र वषट्क्रिया तत्र तावत्कृत्वा शेषकार्याणि कर्तव्यानीत्यवगमादिह शेषकार्याण्यावर्त्यानीत्यर्थः। भवेदेवं यदि प्रधानावदानदेशस्योत्तरार्धादवद्यतीत्येवं शास्त्रार्थः स्यान्नत्वेवं प्रधानादवदानदेशस्येत्यश्रवणात् किंतु कृतकरस्य द्रव्यस्य प्रतिपत्त्यपेक्षायां प्रवर्तमानमुत्तरार्धादिति वचनं यागीयस्य कृतकरस्य द्रव्यस्योत्तरार्धमेवालम्बते। प्रकृतौ च यदेव यागीयद्रव्यस्योत्तरार्धं तदेव प्रधानावदेशस्योत्तरार्धमित्यार्थिकमेव प्रधानावदानदेशस्योत्तरार्धात्स्विष्टकृतेऽवदानम्। तथाचेह षट्प्रधानेषु कृतेष्ववशिष्टस्य कृतकरस्य द्रव्यस्यैकत्वात्तदुत्तरार्धमप्येकं सर्वसाधारणं चेत्यगृह्यमाणविशेषत्वात्सकृदनुष्ठानमित्याशयवानाह—**सर्वसाधारण इति**। नन्वाचार्यमते सर्वप्रदानाङ्गीकारात्त्यक्तस्य च पुनस्त्यागायोगादवयवानां त्याज्यत्वेन तत्तदवयवसंबन्ध्युत्तरार्धादेवावदातव्यत्वादस्ति विशेषग्रहणमिति शङ्कते—**नन्विति**। अवयवानामपि संकीर्णत्वात्तन्मतेऽपि विशेषग्रहणमसिद्धमिति परिहरति—**नैतदिति**। होमदेशाः होमार्थावदानदेशा इत्यर्थः। तथाचेत्यादिनोक्तं निरस्यति—**ऐन्द्रवायव इति**। **अर्थवादेति**। हेतुर्वा स्यादित्यधिकरणोक्तरीत्येति भावः। तत्र किं प्रधानावदानदेशस्योत्तरार्धादवदानं शास्त्रार्थः उत कृतकरद्रव्यस्योत्तरार्धादित्येवात्र विचार्यं सकृदसकृद्विचारस्तु फलभूतस्तेन यतोऽवदीयते तच्छेषोऽवदानमिति शेषशेषिविचारात्मकत्वादव्यवधायसङ्गतिर्बोध्या। सूत्रार्थस्तु—द्रव्यैकत्वेऽपि कर्मभेदात्स्विष्टकृदादीनि प्रतिकर्मभेदेन क्रियेरन्निति॥

---

१ समन्ततः. २ देवंचावयवाना.

ऐन्द्रवायवग्रहे द्विःशेषभक्षणाधिकरणम् ॥ ५ ॥

**ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ १८ ॥**

**ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ॥ पूर्वन्यायात्सकृत्प्राप्तौ द्विर्भक्षो वचनाद्भवेत् ॥ ८ ॥**

ऐन्द्रवायवे तु किं सकृद्भक्षणमुत द्विरिति पूर्ववत्सकृदिति प्राप्ते वचनाद्विरिति सिद्धान्तः । सति वचने पूर्वपक्षासंभवात्पूर्वाधिकरण एव चोपवर्णनापरिहारार्थं सूत्रं नाधिकरणान्तरम् ॥

सोमे शेषभक्षणाधिकरणम् ॥ ६ ॥

**सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥ [स्याद्वाऽन्यार्थदर्शनात् ॥ २० ॥ वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २१ ॥ चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥]**

**सोमेऽस्त्वभक्षो भक्षो वा न भक्षो ग्रहहोमतः ॥ अल्पोक्तेरस्ति शेषोऽस्य भक्षोऽपूर्ववचोबलात् ॥ ९ ॥**
**किं मैत्रु होतुश्चमस इत्यभक्षोऽथ भक्षणम् ॥ अभक्षोऽनुक्तितो होतुश्चमसेत्याख्ययास्तु तत् ॥ १० ॥**

सोमे बहवो ग्रहाश्चमसाश्च पुरुषाश्च । तत्र संशयः किं न कश्चित्कस्यचिद्भक्षणमुत सर्वत्र सर्वेषामविशेषेण भक्षः उत यस्य यत्र प्रत्यक्षवचनं तस्य तत्र भक्षणं अथवा समाख्यावषट्कारहोमाभिषवप्रत्यक्षवचनैर्भक्ष इति । वार्तिके तु सर्वत्र सर्वेषां भक्ष इति पक्षमतिमन्दत्वादनुपन्यस्य त्रयः पक्षा इत्युक्तं । तदिदमतःप्रभृति होमाभिषवाभ्यामित्येवमन्तमेकमधिकरणम् । तत्र—'भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः । शेषे सत्यपि नैवात्र भक्षणं विध्यभावतः ॥' सोमे हि 'यद्ग्रहान्स्थापयति यच्चमसान्जुहोती'ति वचनात्सौत्रामणिसाकंप्रस्थायीयवच्छेष एव नास्ति कुतो भक्षणम् । अल्पं जुहोतीतिवचनमल्पत्वात्सोमपात्राणामनुवादमात्रमिति मन्यते । यस्त्वग्रबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वादशेषहोम इत्याह तस्य सौत्रामण्यादावपि तथैव स्यादुपांशुयाजे च जौहवस्य शेषः स्यात् ।

---

**ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः स्यात् ॥ १८ ॥ पूर्ववदिति ।** शेषस्यैकत्वात्तत्प्रतिपत्तिरूपं भक्षणमपि सकृदेवेत्यर्थः । **सतीति** । वर्तमानापदेशेऽप्यप्राप्तार्थत्वेन विधित्वाद्विर्भक्षणविधौ जाग्रति सकृत्त्वपूर्वपक्षो न संभावित इत्यर्थः । **उपवर्णनेति** । ऐन्द्रवायवदृष्टान्तमुपेत्य कृता या शङ्का तत्परिहारार्थमित्यर्थः । शङ्कातत्परिहारौ पूर्वाधिकरणपूर्वोत्तरपक्षग्रन्थयोः स्पष्टौ ॥

**सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥** वचनादैन्द्रवायवस्य द्विर्भक्षणमित्युपवर्णनापरिहारोऽनुपपन्नः सोमभक्षणस्यैवाभावादिति प्रत्यवस्थानात्सङ्गतिः । पक्षचतुष्टयोपन्यासस्य वार्तिकविरोधमाशङ्क्याह—**वार्तिक इति** । स्थालीपुलाकन्यायस्य सामान्यतो दृष्टमूलकत्वात्तस्य च वेदार्थविषये प्रवृत्त्यनुपपत्तेरयं पक्षो मन्द इति भावः । **ननु** समाख्यावषट्कारहोमाभिषवप्रत्यक्षवचनैर्भक्ष इति सिद्धान्तकोटिरनुपपन्ना । चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् वषट्काराच्च भक्षयेत् होमाभिषवाभ्यां चेत्यधिकरणान्तरेषु समाख्याहोमाभिषववषट्कारनिमित्तकभक्षव्यवस्थापनादत्राधिकरणे पुरस्तादैन्द्रवायवं भक्षयति पुरस्तान्मैत्रावरुणं सर्वतः परिहारमश्विनमित्यादिप्रत्यक्षवचनैरेव भक्षस्य व्युत्पाद्यत्वादित्यत आह—**तदिदमिति** । पुरस्तादैन्द्रवायवं भक्षयतीत्यादिभिर्वचनैर्यद्यत्र भक्षो व्युत्पाद्यस्तर्हि तेषां विशिष्टभक्षणविधित्वं वाच्यम् । नच तत्संभवति वक्ष्यमाणहोमाभिषवादिभिरेवैन्द्रवायवादिष्वपि भक्षणप्राप्त्या विशिष्टविध्ययोगात् । तस्माद्धोमाभिषवाभ्यामित्येतदन्तमेकमेवाधिकरणं स्वीकृत्य तत्र समाख्यादिभिश्चतुर्भिरपि कारणैर्भक्षो व्युत्पाद्य इत्येव वाच्यम् । भाष्ये च चमसेषु समाख्यानादित्यादिषु विषयसंशयाद्युपन्यासः समाख्यादिकारणेषु बुद्धिवैशद्यार्थत्वेनाप्युपपन्न इति न तावताधिकरणान्तरत्वशङ्कावकाशः । तस्मात्समाख्यावषट्कारहोमाभिषवप्रत्यक्षवचनैर्भक्ष इति सिद्धान्तकोटिरुपपन्नेति भावः । **यद्ग्रहानिति** । ग्रहचमसपात्रोद्देशेन होमविधानासंभवाद्धोमोद्देशेन ग्रहाश्चमसाश्च साधनतया विधीयन्ते ग्रहचमसपात्रैश्च होमे सौत्रामणीसाकंप्रस्थायीयवत्सर्वहोमएव स्वरसतः प्राप्नोतीति नास्ति शेष इत्यर्थः । **ननु** न्यायतः सर्वहोमप्राप्तावपि यथा सौत्रामण्यामुच्छिनष्टि न सर्वं जुहोतीति वचनादसर्वहोम एवमिहाप्यल्पं जुहोतीति वचनादसर्वहोमः स्यादित्यत आह—**अल्पमिति** । न सर्वहोम इति प्राभाकरमतमनूद्य निरस्यति—**यस्त्विति** । **तस्येति** । नचाग्राण्या धारया जुहोतीतिवचनादग्रबिन्दु-

---

१ स्याचेत्येव.

अथ शेषकार्यवशाच्छिष्येत ततस्तेषामपि प्रयोजकत्वाच्छेषनाशदोषापहारादावपि स्विष्टकृदादावपि हविरन्तरागमः स्यात्। तस्मादशेषत्वादभक्षणम्। यद्यपि चाल्पं जुहोतीति वचनस्यानन्यार्थत्वाच्छेषः स्यात्तथापि न भक्षो वचनाभावात् पुरस्तादैन्द्रवायवं भक्षयति वषट्कर्तुः प्रथमभक्षो हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्तीत्यादौ सर्वत्र गुणान्तरश्रवणात् तत्परो विधिर्न भक्षं विधत्ते। अथैतस्य हारियोजनस्य सर्वएव लिप्सन्त इति लिप्सामात्रं श्रुतं न भक्षस्तस्मान्नास्ति भक्ष इति प्रथमः पक्षः। शेषस्तावदल्पहोमविधानादस्त्येव। तस्य चासति भक्षे विशेषविधानं पुरस्तादैन्द्रवायवं भक्षयतीत्यनुपपद्यमानं भक्षं गमयति। तच्च लिङ्गं स्थालीपुलाकवदविशेषेण भक्षं गमयतीति सर्वत्र सर्वेषां भक्ष इति द्वितीयः पक्षः। स्यादेतद्यदि विशेषविधिरयम्। असत्यां तु भक्षणप्राप्तौ विशेषविधिर्न घटत इत्ययमेव विशिष्टभक्षविधिः। तस्माद्यत्रैन्द्रवायवादौ यस्याध्वर्य्वादेर्भक्षोपदेशस्तत्र तस्य भक्षो नातिप्रसज्यत इति तृतीयः पक्षः। सिद्धान्तस्तु—सत्यमेतद्यथोपदेशं भक्ष इति पुरस्तादैन्द्रवायवमित्येवमादिभिस्तु भक्षोपदेशो येषु तेष्वेव भक्ष इति न मृष्यामहे। कारणान्तरादेव भक्षप्राप्तेः पुरस्तादित्यादेस्तु विशेषमात्रपरत्वात् तच्च कारणान्तरमन्यत्राप्यस्ति, किं पुनः कारणान्तरं समाख्यावषट्कारहोमाभिषवा यथायथं प्रापकाः, हारियोजने तु वचनम्। तत्र चमसेषु तावत्समाख्यया चैमसिनां भक्षः, होतृचमस इत्यादिसमाख्या वेदे 'प्रैतु होतुश्चमस' इति मन्त्रे पठिताः सोमचमस इति लौकिकी समाख्या चमस इत्येषोदनार्थस्य

---

पात्रमात्रस्य शास्त्रार्थत्वं शङ्कनीयम्। न्यायप्राप्तसर्वहोमस्यैवाण्व्या धारया करणे विरोधाभावादिति भावः। अथेति। उत्तरार्धादित्यादिशेषकार्यं तु आग्नेयादौ सावकाशं सोमशेषविषयं भक्षणकार्यं तु निरवकाशमिति वैषम्यमिति भावः। शेषकार्यवशादवशेषणे शेषकार्याणामपि प्रयोजकत्वापत्त्या प्रतिपत्तित्वं व्याहन्येतेति परिहरति—तत इति। यद्यपीति। अनुवादस्यानर्थक्याद्विधिपरत्वमिति भावः। तत्पर इति। नच भक्षणाभावे पुरस्तात्प्राथम्यादिलक्षणतद्विशेषविधिरेवानुपपन्न इति वाच्यम्। भक्षणस्य विधितो नित्यप्राप्त्यभावेऽपि सतिशेषे रागतः कदाचित्प्राप्तिसंभवेन तदाश्रयणेन तत्र गुणविधिसंभवादिति भावः। हारियोजने भक्ष्यस्य वाचनिकत्वमाशङ्क्याह—अथैतस्येति। अनित्यभक्षे नित्यवच्छ्रुतगुणविध्ययोगान्नित्य एव भक्ष एष्टव्य इति पक्षान्तरमाह—शेषस्तावदित्यादिना। सर्वत्र सर्वेषां भक्षणं हि सर्वत्र सोमशेषे भक्षणे सति भवति नान्यथा। तेन प्रथमं सर्वत्र भक्षणं साधयति—तस्यचेति। विशेषविधानं गुणविधानमिति यावत्। ऐन्द्रवायवादिषु पुरस्तादित्यादिविशेषश्रवणमैन्द्रवायवादिषु भक्षणमवगमयति। तच्चावगतं भक्षणं स्थालीपुलाकन्यायेन सर्वत्रापि सोमशेषे भक्षणमवगमयतीत्यर्थः। यथा क्वचिद्भक्षणावगतौ स्थालीपुलाकन्यायेन सर्वत्र भक्षणावगतिरेवं क्वचिदैन्द्रवायवादौ कस्यचिदध्वर्य्वादेर्भक्षणश्रवणमपि स्थालीपुलाकन्यायेनैवाविशेषेणैन्द्रवायवतदितरसाधारण्येनाध्वर्युतदितराणां सर्वेषां सर्वत्र भक्षणं गमयतीत्याह—इति सर्वत्रेति। इति अनेन प्रकारेण। येन प्रकारेण सर्वत्र भक्षणमवगम्यते तेनैव प्रकारेण सर्वेषामपि सर्वत्र भक्षणमवगम्यत इत्यर्थः। भवेदेवं यदि पुरस्तादित्यादिविशेषश्रवणमैन्द्रवायवादिषु लिङ्गविधया स्वयमेव भक्षणं गमयेत्। नत्वेतदस्ति। एवंभूतलिङ्गस्य विधितात्पर्यनिश्चयमात्रहेतुत्वेन स्वातन्त्र्येणार्थगमकत्वानुपपत्तेः। तस्मान्नायं केवलगुणविधिः किंतु भक्षणप्राप्तिंविना गुणविध्यसंभवादेव पुरस्तादित्यादिः पुरस्तात्त्वादिविशिष्टभक्षणविधिस्तेन यत्र भक्षः श्रुतस्तत्रैव भक्षो नान्यत्र। एवंच क्वचिच्छ्रुताध्वर्य्वादिभक्षणस्य स्थालीपुलाकन्यायेन सर्वत्र सर्वेषां भक्षणगमकत्वानुपपत्तेर्यस्य यत्र भक्षः श्रुतस्तस्यैव तत्र भक्षणं नतु सर्वत्र सर्वेषामिति पक्षान्तरमाह—स्यादेतदिति। सत्यमिति। यथोपदेशं भक्षः कर्तृनियमश्चेत्येतदङ्गीक्रियत इत्यर्थः। पुरस्तादिति। पुरस्तादित्यादिभक्षोपदेशास्ततश्च ऐन्द्रवायवादिष्वेव भक्ष इत्येतत्तु न मृष्यामह इत्यर्थः। प्रैत्विति। होतुश्चमसः प्रैतु सदःप्रति गच्छत्वित्यर्थः। ननु द्रव्यान्तरस्य होत्रा तत्र भक्षणेनापि होतृचमससमाख्योपपत्तेः कथं तत्र सोमभक्षणलाभ इतिचेन्मैवम्। द्रव्यान्तरस्य तत्रासंनिहितत्वात् द्रव्यान्तरभक्षणे पात्रस्योच्छिष्टत्वापत्त्या तेन पुनर्होमासंभवाच्छुद्ध्यर्थं तक्षणाश्रयणे पूर्वं यस्य होतृचमसत्वमवधारितं तक्षणेन तन्नाशे होतृचमसस्यापि नाशप्रसङ्गात्पात्रान्तरोत्पादने चमससंख्याविरोधप्रसङ्गाच्च। सोमभक्षणे तु नोच्छिष्टत्वदोष इति भाष्यवार्तिकयोरेव प्रपञ्चितम्। एवंच यत्कैश्चियाज्ञिकैरुद्धृत्य भक्षणमुक्तं तदत्रत्यभाष्यवार्तिकविरोधादुपेक्ष्यम्। अदनेति। 'चमु

---

१ एतन्मंत्रयनपात्रं. २ वायवस्येत्येव. ३ चमसिनो ऋत्विजः.

चमेरौणादिकोऽधिकरणसाधनः प्रत्ययः । तस्मादत्र होत्रादिभिश्चमितव्यः सोमे इति सिद्धश्चमसेषु चमसिनां भक्षः ॥

उद्गातॄणां सह सुब्रह्मण्येन भक्षाधिकरणम् ॥ ७ ॥

**उद्गातृचमसमेकस्य श्रुतिसंयोगात् ॥ २३ ॥ [सर्वे वा सर्वसंयोगात् ॥ २४ ॥ स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः ॥ २५ ॥ सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात् ॥ २६ ॥]**

प्रोद्गातॄणामिति ह्येक उद्गाता भक्षयेदुत ॥ सर्वेऽपि किंवा सुब्रह्मण्येनोक्ताः सामगायिनः ॥ ११ ॥
सहितास्तेन ते वाद्य उद्गातृश्रुतितोऽखिलाः ॥ बहुत्वाद्गानयोगेन तृतीयो रूढिबाधिते ॥ १२ ॥
योगे समाख्यया दण्डिन्यायादन्त्योऽत्र भाष्यगः ॥ सदसि स्थित्यभावेन तृतीयो वार्तिकोदितः ॥ १३ ॥

संप्रति वषट्कारादिनिमित्तं भक्षमनुक्त्वाधिकरणमसमाप्यैवान्तरा समाख्याभक्षप्रसङ्गमेवानुसरति । तत्रैव मन्त्रे 'प्रोद्गातॄणां चमस' इति श्रूयते तत्रोद्गातृचमसमुद्गाता एको भक्षयेत् प्रातिपदिकार्थविरोधिनो बहुत्वस्य पाशवदन्याय्यकल्पनादिति प्रथमः कल्पः । युक्तं पाशबहुत्वस्य प्रकरणेऽत्यन्तासंभवादिह तु लक्षणयार्थपरत्वे संभवति न बहुवचनस्यात्यन्तबाधनं युक्तम् । तस्मादुद्गातृशब्दः पुरुषान्तरं लक्षयतीति, तत्र चाविशेषात्प्रकरणगतसर्वपुरुषलक्षणात्सर्वेषां भक्ष इति द्वितीयः । श्रुत्यर्थे संभवति न कस्यचिल्लक्षणा युक्ता । गानकारिषु च त्रिष्ववयवयोगेन वर्तमानं प्रातिपदिकं बहुवचनं च द्वयमपि श्रुत्यर्थं भवति । तस्मात् अपसुब्रह्मण्यानां त्रयाणां गानकारिणां छन्दोगानां भक्ष इति तृतीयः । नावयवव्युत्पत्त्यापि त्रिषु तद्वृत्तिः संभवति । नहि गानमात्रमुद्गानम् । साम्नो हि द्वितीया भक्तिरुत्पूर्वस्य गायतेरभिधेया । तां चोद्गातैवैको गायतीति बहुवचनानुपपत्तिः । तस्माल्लक्षणैव न्याय्या । सा च न सर्वेषां किंत्वौद्गात्रप्रवचनसंबन्धावान्तरसामान्यात्ससुब्रह्मण्यानां चतुर्णा-

---

अदने' इत्यदनार्थाच्चमेः 'अत्यमिचमितमिरमिनमितपिपणिपनिभ्योऽसजि'त्युणादिसूत्रविहितोऽधिकरणसाधनोऽसच् प्रत्यय इत्यर्थः । सूत्रे अवचनादिति च्छेदः ॥

**उद्गातृचमसमेकस्य श्रुतिसंयोगात् ॥ २३ ॥** अधिकरणान्तरारम्भात्पूर्वाधिकरणसमाप्तिशङ्कां वारयति—**संप्रतीति** । समाख्यानादिति सूत्रेण समाख्यानिमित्तभक्षे कथिते तत्प्रसङ्गादन्तरा चिन्तेत्यर्थः । **तत्रैवेति** । प्रैतु होतुश्चमस इति मन्त्र एवेत्यर्थः । प्रोद्गातॄणामिति प्रशब्दस्यैतु इत्यनेन संबन्धः । भाष्यवार्तिकसिद्धान्तयोर्वैमत्येन तदुभयसाधारण्येन सिद्धान्तकोटेर्वक्तुमशक्यत्वात् पृथगुक्तौ ग्रन्थगौरवप्रसङ्गाच्च तावत्पक्षोपदेशेन ततएव संशयमुन्नेष्यन्तीति मत्वा तमुपेक्ष्य पूर्वपक्षमाह—**तत्रेति । ननु** बहुवचनश्रवणात्कथमेको भक्षयेदत आह—**प्रातिपदिकेति । पाशवदिति ।** यथा अदितिः पाशानिति मन्त्रे प्रथमप्रतीतप्रातिपदिकार्थस्य प्रकृतिभूते अग्नीषोमीयपशावेकपाशकेऽपि समवायात्तद्विरोधिनो बहुवचनस्याविवक्षितार्थत्वकल्पना तद्वदित्यर्थः । प्रत्ययस्यात्यन्तबाधापेक्षया प्रातिपदिकस्याजहत्स्वार्थलक्षणैव युक्ता । अजहत्स्वार्थलक्षणायां मुख्यार्थस्य परित्यागाभावेन कांस्यभोजिन्यायेन तस्या एव न्याय्यत्वात्तदिहोद्गातृशब्दस्योद्गातृतदितरलक्षणयार्थवत्त्वे उपपद्यमाने बहुवचनस्यात्यन्तबाधनमयुक्तम् । पाशस्थले तु बन्धनसाधनं हि मोचनीयं बन्धनसाधनत्वं च पाशस्यैव नान्यस्येति पाशशब्दस्य पाशतदितरेष्वजहल्लक्षणया निर्वाहाभावाद्वचनस्यात्यन्ताविवक्षेति वैषम्यमिति पक्षान्तरमाह—**युक्तमिति । त्रिष्विति ।** उद्गातृप्रस्तोतृप्रतिहर्तृष्वित्यर्थः । उच्छब्दस्य प्रलम्बत इत्यत्र प्रशब्दवदनर्थकत्वमिति भावः । अपसुब्रह्मण्यानां सुब्रह्मण्याख्यऋत्विग्वर्जितानामित्यर्थः । भाष्यकारीयसिद्धान्तमाह—**नावयवेति** । उद्गातोद्गायेदिति प्रयोगबलेनोत्पूर्वस्य गायतेः सामद्वितीयभागे शक्त्यवगमात्र प्रलम्बत इत्यादिवदुच्छब्दस्यानर्थकत्वमित्याशयेनाह—**नहीति ।** नचोद्गीथशब्दस्य सामभक्तिविशेषे रूढेरवश्यवाच्यत्वादुत्पूर्वगायतेरपि तत्र रूढिस्वीकारो न युक्तः । अनेकशब्दत्वस्यान्याय्यत्वादिति वाच्यम् । उत्पूर्वगायतिशब्दशक्त्यैवोद्गानमुद्गीथ इत्युभयशब्दप्रयोगोपपत्त्या उद्गीथशब्दस्य पृथक्शक्तेरकल्पनीयत्वादिति भावः । **एको गायतीति** । एक उच्चारयतीति यावत् । **ननु** भवत्वुत्पूर्वस्य गायतेर्भक्तिविशेषे रूढिः । तथापि प्रकृते तदर्थपरिग्रहे बहुवचनानुपपत्तेरूर्ध्वगानमुद्गानमित्येतादृशो योग एव स्वीकार्य इत्यत आह—**तस्मादिति ।** यस्माद्रूढ्यर्थपरिग्रहे बहुवचनानुपपत्तिस्तस्मात्प्रथमप्रतीतरूढ्यनुग्रहाय रूढिपूर्वकलक्षणैव स्वीकार्या नत्वप्रतीतो योग इत्यर्थः । **औद्गात्रप्रवचनेति** । औद्गात्रप्रवचनं सामवेदस्तत्संबन्धादित्यर्थः । इदानीमाचार्यसिद्धान्तमाह—

---

१ साधनोऽसच्प्रत्ययः. २ सोमरग इति. ३ मेकः श्रुति. ४ न वचनस्य. ५ अपपरी वर्जने.

मपि छन्दोगानां अतश्चत्वारोऽपि भक्षयेयुः। नैवं। सत्यं लक्षणा। सा तु यथावान्तरसामान्या-च्चतुर्णामेव न सर्वेषाम्। एवमेकस्तोत्रसंबन्धः सदसि च संनिधानं भक्षणवेलायां च व्यापृतिरित्ये-तान्यवान्तरसामान्यानि स्तोत्रकारिणां सन्तीति तेषामेव त्रयाणां लक्षणा न्याय्या। किंच प्रैतुहो-तुश्चमस इति यत्र भक्षयितारः स्थितास्तत्र नयनं भक्षार्थं प्रेष्यते सदसि च नयनं, अतो ये सदसि स्थितास्तान्सर्वान्प्रति नीयत इति गम्यते। नच सुब्रह्मण्यस्तत्र स्थितः। नच बहुवचनबलात्तस्य सदसि स्थितिराक्षेप्तुं शक्यते। स्थितेष्वेव स्तोत्रकारिषु तदुपपत्तेः। अतो यत्केनचिदपनयादुक्तमप-सुब्रह्मण्यवादिनोऽपन्यायवादिन इति तदेवापमपनीतं चेति कृत्वा प्राज्ञैरुन्मत्तभाषितवदुपेक्षितव्यम्॥

ग्रावस्तुतोपि सोमभक्षणाधिकरणम्॥ ८॥

**ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात्॥ २७॥ [हारियोजने वा सर्वसंयो-गात्॥ २८॥ चमसिनां वा संनिधानात्॥ २९॥ सर्वेषां तु विधित्वात्तदर्था चम-सिश्रुतिः॥ ३०॥]**

किं स्याच्चमसिनामेव हारियोजनभक्षणम्॥ सर्वेषां वाऽग्रिमस्तेषां पूर्ववाक्येन संनिधेः॥ १४॥
लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः॥ ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणम्॥ १५॥

इदमपरं भक्षस्य कारणं 'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्तीत्युक्त्वाथैतस्य हारियोज-नस्य सर्वएव लिप्सन्त' इत्यभिधानाद्भक्षणमेव लिप्सतिना विधीयते। तेनैव तद्वचनं हारियोजने भक्षस्य कारणमिति स्थिते चिन्त्यते, किं चमसिनामेवात्र भक्षणमुत सर्वेषामृत्विजामिति। यदा चमसिनां तदा ग्रावस्तुतः कारणान्तराभावादभक्षणम्। सर्वविषयत्वे तु तस्यापि भक्ष इति। तत्र —'संनिधेः सर्वशब्दोऽयं चमसिष्वेव वर्तते॥ तेन तेषामयं भक्षो ग्रावस्तुन्नैव भक्षयेत्॥ उच्यते

---

**सत्यमिति**। तृतीयपूर्वपक्षाद्भेदस्फोरणाय सत्यं लक्षणेत्युक्तम्। **एकस्तोत्रेति**। नच एकप्रवचनसंबन्धनिमित्ता लक्षणा अन्तरङ्गेत्यत्र मानमस्ति येन सैव स्वीकार्या स्यात्। उद्गातृशब्दाद्विशिष्य प्रवचनोपस्थितौ हेत्वभावादिति भावः। **नन्वे-**कस्तोत्रसंबन्धस्यापि विशिष्योपस्थितौ हेत्वभावो विशिष्ट इत्यत आह—**सदसीति**। सुब्रह्मण्यस्य सदसि संनिधानाभा-वात्तस्य भक्षणं संनिधानं च विधेयमिति गौरवं स्यादिति भावः। **नचा**प्रयोगपरिसमाप्तेः कर्तृस्थितेरावश्यकत्वादिदमयुक्त-मिति वाच्यम्। तथापि सदसि स्थातव्यमित्यत्र मानाभावेन तत्र संनिधानस्यावश्यकल्प्यत्वात् दधिद्रव्यप्राशनस्याप्याग्नी-ध्रमण्डपे कर्तव्यत्वेन तदर्थमपि सदसि संनिधानस्याकल्प्यत्वात् भक्षवेलायामिति शेषप्रतिपत्त्यर्थेऽपि भक्षणे कर्तृनियम-स्यार्थवत्त्वाय कर्तृगतमपि किंचित्प्रयोजनं वाच्यम्। ततश्च भक्षवेलायां येषां व्यापारोऽस्ति तेषां भक्षणनियम आनुषङ्गि-कप्रीतिमुखेन तत्रोपयुक्तः। सुब्रह्मण्यस्य तु तदा व्यापाराभावात्तदंशे भक्षणनियमस्यादृष्टार्थत्वमिति वैरूप्यं स्यादित्यर्थः। दधिद्रव्यप्राशनव्यापारः सुब्रह्मण्यस्यास्तीति शङ्कां वारयितुं भक्षवेलायामित्युक्तं, कालान्तरभाविदधिद्रव्यप्राशनस्य भक्षप्रयो-जनविमर्शावस्थायामनुपस्थितत्वान्न तस्य प्रयोजनत्वं संभवतीति भावः। **नयनमिति**। प्रैत्वित्यनेनोच्यमानं गमनं नयनं विना स्वतोऽनुपपन्नमिति नयनमर्थात्प्रेष्यते इत्याशयेन नयनमित्युक्तम्। **अत इति**। एवंच भक्षणे विहितेऽर्थादेव सदसि संनिधानस्य प्राप्तेर्न गौरवमिति शङ्काया अप्यनवकाशः। प्रैषगतसमाख्याबलकल्प्यस्य भक्षणविधेः सदसि स्थितमात्रविष-यतया भक्षणविधितोऽर्थात्सदसि संनिधानस्य वक्तुमशक्यत्वादिति ध्येयम्। **केनचिदिति**। प्रभाकरेणेत्यर्थः। सूत्रा-र्थस्तु—एकस्योद्गातुरुद्गातृश्रुत्या चमससंयोगावगमात्स एकएवोद्गातृचमसं भक्षयेदिति॥

**ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात्॥ २७॥** अयमपि विचारो नाधिकरणविरोधी। सर्वे एव लिप्सन्त इत्यस्य वचनस्य हारियोजनभक्षप्रापकत्वं विना तत्र कर्तृविशेषविचारानुपपत्त्या तद्विचारस्य भक्षणे प्रत्यक्षवचनरूपकारणा-न्तरप्रतिपादनपरत्वादित्याशयेन प्रथमस्य वचनस्य भक्षणनिमित्ततामाह—**इदमिति**। सर्वे एव लिप्सन्त इति वचनमि-त्यर्थः। नन्वत्र लिप्सामात्रश्रवणात् भक्षणपरत्वमित्युक्तमत आह—**यथेति**। चमसिनो भक्षयन्तीति वाक्यशेषे भक्ष-स्यैव कीर्तनात् लिप्सतिर्भक्षणलक्षणार्थ इत्यर्थः। तदर्थसंशयमुक्त्वा ग्रावस्तुतो भक्षणमस्ति नवेत्यधिकरणाङ्गसंशयं फल-फलिभावमुखेन घातयति—**यदेति**। **संनिधेरिति**। चमसिनो भक्षयन्तीति स्ववाक्य एव संनिहितत्वात्प्रकरणसंनि-

---

१ वापन्याय्यमपनीतं.

सर्वशब्दोयं कृत्स्नार्थवचनो यतः ॥ तेन सर्वेषु वर्तेत न संकोचोऽस्य युज्यते ॥' सर्वशब्दोऽयं समस्तवचनोऽपि परमसर्वेण व्यवहारायोगात्केनचिदवच्छेदं सहते । सचावश्यं प्रकृतयागगतत्वेनावच्छेत्तव्यः । चमसिनामपि प्रकृतगामिनामेव ग्रहणात्तेन चेद्विशेषितस्तन्मात्रादेव सिद्धेर्न भूयश्चमसिशब्देन यथाचमससंबन्धकृतार्थेन श्रुतेः संकोचो युज्यते । तस्माद्ग्रावस्तुतोऽपि भक्षः ॥

वषट्करणस्य भक्षनिमित्तताधिकरणम् ॥ ९ ॥

## वषट्काराच्च भक्षयेत् ॥ ३१ ॥

आद्यभक्षो वषट्कर्तुर्विधिः प्राथम्य एव किम् ॥ किंवा तद्युक्तभक्षे स्याद्वषट्कारनिमित्तके ॥ १६ ॥

अप्राप्तेरग्रिमो मैवं समासस्थित्यसंभवात् ॥ विशिष्टस्य विधिस्तस्माद्वषट्कारोऽपि कारणम् ॥ १७ ॥

इदमपरं कारणं वषट्कर्तुः प्रथमभक्ष इति वचनात्समाख्याप्राप्तभक्षानुवादेन प्राथम्यमात्रं विधीयते न भक्षणमितिचेन्न । वषट्कर्तृविशिष्टभक्षानुवादेन प्राथम्यविधौ विशिष्टानुवाददोषात् । किंच प्रथमभक्ष इति समस्तमिदमेकं पदं । तस्य चैकप्रसरत्वान्नैकांशेन भक्षणमुद्दिश्यापरेण प्राथम्यं विधीयत इति वचनव्यक्तिद्वयं संभवति । तस्माद्वषट्कर्तुर्भक्षणं प्राथम्यविशिष्टं विधीयत इति वषट्कारोऽपि निमित्तम् ॥

होमाभिषवयोरपि भक्षनिमित्तताधिकरणम् ॥ १० ॥

## होमाभिषवाभ्यां च ॥ ३२ ॥

आख्यावचोवषट्कारा एव किं भक्षहेतवः ॥ किं वाऽभिषवहोमौ च तत्राद्योऽस्तूक्तया दिशा ॥ १८ ॥

हविर्धानेभिषुत्याथ हुत्वा सदसि भक्षयेत् ॥ इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे ॥ १९ ॥

अपरमपि कारणं होमाभिषवौ । एवंह्याह 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान्भक्षयन्ती'ति । अत्र हि हविर्धानेऽभिषवः । सच ग्रावभिः प्राग्भावी च होमा-

---

ध्यपेक्षया वाक्यसंनिधेः प्रबलत्वाच्चमसिपरः सर्वशब्द इत्यर्थः । **न संकोच इति** । संनिधिना श्रुतिसंकोचायोगादिति भावः । **ननु** श्रुत्यपेक्षितः संकोचः संनिधितः कर्तुं शक्य एवेति शङ्कां व्यावर्तयन् श्लोकं व्याचष्टे—**सर्वशब्द इति** । यदुक्तं प्रकरणसंनिधेर्वाक्यसंनिधिर्वलीयानिति तत्राह—**चमसिनामिति** । **न भूय इति** । प्रकृतगामित्वेन श्रुत्यपेक्षाशान्त्या पुनः संकोचस्यानपेक्षितत्वादिति भावः ॥

**वषट्काराच्च भक्षयेत्** ॥ ३१ ॥ इदं वषट्काराख्यमित्यर्थः । **ननु** भवेद्वषट्कारो निमित्तं यदि वषट्कर्तुः प्राथम्यविशिष्टभक्षविधिः स्यादिहतु लाघवात्प्राथम्यमात्रविधिः । नच वषट्कर्तुर्भक्षप्राप्त्यभावान्न तत्र प्राथम्यविधिः संभवतीति वाच्यम् । वषट्कर्तृत्वेन निमित्तेन भक्षणप्राप्त्यभावेऽपि वस्तुतो वषट्कर्तुरेव होत्रादेः समाख्यया चमसेषु भक्षणप्राप्तिसद्भावात् ततश्च समाख्यया यत्र वषट्कर्तुर्भक्षणं प्राप्तं तत्प्रथमं कर्तव्यमिति वाक्यार्थः । यत्र तु ग्रहेषु चमसान्तरेषु वा न समाख्यया भक्षणप्राप्तिस्तत्र सत्यपि वषट्कारे होत्रादेर्नास्ति भक्ष इति शङ्कते—**समाख्येति** । प्राथम्यविधौ हि भक्ष्यमात्रं नोद्देश्यं भवितुमर्हति । सर्वस्य भक्षस्य प्राथम्यासंभवादतो वषट्कर्तृविशिष्टभक्ष एवोद्देश्यो वाच्यस्तथाच विशिष्टोद्देशेन वाक्यभेदप्रसङ्गान्न प्राथम्यविधिसंभव इति परिहरति—**नेति** । किंच भक्षानुवादेन प्राथम्यविधौ उद्देश्यस्य प्रथमप्रतीत्यवश्यंभावाद्भक्षशब्देन स्वार्थः प्रथमं प्रतिपाद्यः पश्चाच्च प्रथमशब्देन तदर्थ इति वाच्यम् । नच तत्संभवति । पदद्वयस्यापि युगपदेव विशिष्टैकार्थप्रतिपादकत्वाभावे एकार्थीभावलक्षणसामर्थ्याभावेन समासस्यैवानुपपत्तेरित्याह—**किंचेति** । **वचनव्यक्तीति** । यो भक्ष इत्युद्देश्यपरा एका वचनव्यक्तिः सप्रथम इत्यपरेत्येवंरूपमित्यर्थः । एकं साम तृचे क्रियते इत्यत्र यथा पदार्थैकदेशत्रित्वमात्रविधिपर्यवसानं तथा नवम एव वक्ष्यामः । **तस्मादिति** । सप्तमीयच्छब्दणमुलाद्यभावान्निमित्ततया वषट्कारमुद्दिश्य न प्राथम्यविशिष्टभक्षणविधिः किंतु वषट्कर्तुरिति कर्तरिषष्ठ्या तन्मात्रकर्तृकं प्राथम्यविशिष्टं भक्षणं विधीयते । तथासति होमाभिषववदर्थाद्वषट्कारस्य निमित्तत्वमिति बोध्यम् ॥

**होमाभिषवाभ्यां च** ॥ ३२ ॥ **ननु** हविर्धानादिविधिपरत्वस्यापि संभवेन भक्षणान्तरविध्यसंभवात्कथं होमाभिषवयोर्निमित्तत्वमत आह—**अत्रेति** । 'सोममभिषुणोति, हविर्धानेऽभिषुणोति, ग्रावभिरभिषुणोति, ग्रहान् जुहोति, चमसान् जुहोति, आहवनीये जुहोती'तिवचनैरभिषवहविर्धानग्रावग्रहचमसहोमाहवनीयाः प्राप्ताः । अभिषवंविना सोमस्य होमासंभवात् । होमाभावे च कृतकरत्वाभावेन भक्षणरूपप्रतिपत्त्यनपेक्षत्वाच्चार्थादभिषवहोमभक्षाणां क्रमः प्राप्तः वषट्कर्त्रादीनां

---

१ कारणं वषट्कारोनाम.

द्धोमश्चाहवनीये। ततश्च प्रत्यग्गमनमिति सर्वमिदं वचनान्तरादर्थाच्च प्राप्तं न विधेयम्। अभिषव-होमसमानकर्तृकं भक्षणमेव विधीयत इति तयोरपि कारणत्वम्॥

वषट्कर्त्रादीनां चमसे सोमभक्षाधिकरणम्॥ ११॥

**प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे॥ ३३॥ [स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्॥ ३४॥ चमसे चान्यदर्शनात्॥ ३५॥]**

हेतुसंघे विकल्पः किं बाधो वाथ समुच्चयः॥ साम्याद्विकल्पो बाध्यन्तां सावकाशाः समाख्यया॥ २०॥
नैव वाचनिकं बाध्यं भक्षणेऽत्र विभागशः॥ सिद्धे विकल्पो नो युक्तः स्वीकार्योऽतः समुच्चयः॥ २१॥

इदानीं पूर्वाधिकरणोक्तानां भक्षकारणानां समवाये किं बाधोऽथ समुच्चय इति चमसेषु हि चमसिनां समाख्यया भक्षणम्। वषट्कर्तुर्वषट्कारेण होमाभिषवाभ्यामध्वर्योः प्राप्यते। तत्र समाख्यायाश्चमसैकविषयत्वाद्वषट्कारादेर्ग्रहेष्वपि सावकाशत्वात्प्रतिपत्तेश्चैकेनैव भक्षणेन सिद्धेश्चमसिनामेव चमसेषु भक्ष इति पूर्वःपक्षः। वाचनिकयोर्वषट्कारहोमाभिषवभक्षणयोः समाख्यया बाधायोगात्तस्याश्च निरवकाशत्वेन ताभ्यां बाधासंभवादवयवशश्च सर्वैर्भक्षैः प्रतिपत्तिसंभवेऽन्यतमस्यापि बाधो न युक्त इति समुच्चय एवेति सिद्धान्तः॥

होतुः प्रथमभक्षाधिकरणम्॥ १२॥

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्॥ ३६॥ [होता वा मन्त्रवर्णात्॥ ३७॥ वचनाच्च॥ ३८॥ कारणानुपूर्व्याच्च॥ ३९॥]**

एकपात्रे किमध्वर्युरग्यात्पूर्वमुतेतरः॥ तद्धस्ते पात्रसंस्थानात्तस्य प्रथमभक्षणम्॥ २२॥
पाहि होतेव नः पूर्वमिति मन्त्रेण पूर्वता॥ वषट्कर्तुस्तदुक्तेश्च न्यायबाध्यं वचो नहि॥ २३॥

सिद्धेऽनेकेषां भक्षणे क्रमश्चिन्त्यते किमध्वर्युः प्रथमं भक्षयेदुत वषट्कर्तेति। तत्राध्वर्युर्हस्ते पात्रस्यावस्थानात्स तावद्भक्षयेत्। ततो वषट्कर्ता चमसिनश्च। वषट्कर्तुः प्रथमभक्ष इति भक्षणपरं न प्राथम्यमपि विधत्ते वाक्यभेदात्। अथवाध्वर्योः प्राथम्यस्य न्यायतः स्थितत्वान्न तद्बाधनं युक्तम्। वषट्कर्तुः[3] चमसिनां चानवगतः क्रम आकाङ्क्षित इति तद्विषयमिदं वचनम् वषट्कर्तुश्चमसिभ्यः

---

सदसि स्थितत्वात्तत्र भक्ष्यनयनार्थमुपहवदानार्थमध्वर्योराहवनीयदेशात्सदःप्रतिगमनं प्रत्यक्त्वं चार्थादेव प्राप्तमित्यर्थः। नन्वेवं भक्षणस्यापि पूर्वोक्तनिमित्तैः प्राप्तेस्तदपि न विधेयम्। नचाभ्यासन्यायाद्भक्षणान्तरं विधेयमिति वाच्यम्। तथापि होमाभिषवयोः कथं निमित्तत्वं मानाभावादित्यत आह—**अभिषवहोमेति**। नह्यत्र भक्षणमात्रं विधीयते येन होमाभिषवयोः निमित्तत्वं न स्यात् किंतु अभिषुत्य हुत्वेति श्रवणादभिषवहोमसमानकर्तृकं भक्षणम्। तथाच होमाभिषवयोर्भक्षणप्रागभावनियमादर्थान्निमित्तत्वं सिध्यतीत्यर्थः॥

**प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे॥ ३३॥** प्रासङ्गिकसङ्गतिमभिप्रेत्याह—**इदानीमिति**। भक्षकारणानां समवाये कार्यभूतभक्षाणां बाधसमुच्चयौ चिन्त्येते इत्यर्थः। यद्यपि वचनापेक्षया समाख्या दुर्बला तथापि तस्या निरवकाशत्वेन तद्बाधे आनर्थक्यप्रसङ्गात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेन समाख्यायाः प्रकृते प्रबलत्वात्तया वचनबाध एव न्याय्य इति पूर्वपक्षमाह—**तत्रेति**। **ननु** वषट्कारादिनिमित्तभक्षणेऽपि चमसिभिश्चमसानां भक्षणमात्रेण समाख्याया उपपन्नत्वात्समुच्चय एव स्यान्न बाध इत्यत आह—**प्रतिपत्तेरिति**। एवंच ग्रहेषु वषट्कारेण होमाभिषवाभ्यां च प्राप्नुवतोर्भक्षयोस्तुल्यत्वाद्विकल्पोऽस्मिन्पूर्वपक्षे बोध्यः। यद्यप्येकेनापि भक्षणेन प्रतिपत्तिः सिध्यति तथाप्यबाधेनोपपत्तौ बाधस्यान्याय्यत्वादवयवशो भक्षणेनैव प्रतिपत्तिर्न्याय्येत्याह—**अवयवश इति**। सूत्रार्थस्तु—चमसानां चमसिनः प्रत्यक्षतो विशेषतः उपदेशात्तेन बाधितोऽव्यक्तः सामान्यविषयत्वाच्चमसविषयत्वेनास्फुटो वषट्कारादिनिमित्तको भक्षश्चमसव्यतिरिक्ते स्यादिति॥

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्॥ ३६॥** सङ्गतिमाह—**सिद्ध इति**। **तत्रेति**। अध्वर्योः होमकर्तृतया पात्रस्य तद्धस्ते स्थितत्वात्तस्य वषट्कर्तृहस्ते दत्वा पुनर्ग्रहणे प्रयोगविलम्बापत्तेः स प्रथमं भक्षयेद्यस्य हस्ते स जयतीति न्यायादित्यर्थः। **वाक्येति**। यद्यपि विशिष्टविधौ न वाक्यभेदस्तथापि गौरवे तात्पर्यम्। आर्थिकविशेषणविध्यभिप्राया वाक्यभेदोक्तिः। **ननु** प्रथमपदानर्थक्यप्रसङ्गाद्गौरवमपि सह्यमित्यस्वरसादाह—**अथवेति**। **होतेति**। यथा होता प्रथमं

---

१ कर्तृत्वं विधीयत इति. २ भिषवयोः. ३ ट्कर्तृचमसिनां.

**प्रथमभक्ष इति नाध्वर्य्वपेक्षया। तस्मादध्वर्योः प्रथमभक्ष इति प्राप्ते ब्रूमः। वचनस्याविशेषेण प्रवृत्तेर्न्यायमात्रेण संकोचायोगाद्विशिष्टविधानाच्च वाक्यभेदाभावात् 'होतेव नः प्रथमः पाही'ति मन्त्रवर्णात्कारणभूतस्य वषट्कारस्य च प्राथम्यात्तन्निमित्तं भक्षणं प्रथमं कर्तव्यम्। ये तु वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्तुः प्रथमं भक्षणं भवतीति प्रतिपादयितुमिदमधिकरणं वचनोपन्यासस्तु क्त्वाचिन्तोद्घाटनार्थं इत्याहुस्तेषां स्वव्यवहारविरोधः। तार्तीयः क्रमोऽभिधेयो विधेयश्चेति विस्रब्धं व्यवहरन्ति। अतएवासौ तृतीये चिन्त्यत इत्याहुः। अत्रैवाधिकरणे क्रमचिन्ता। वषट्काराच्च भक्षयेदित्यत्र वषट्कारोपि भक्षनिमित्तमित्युक्तं न क्रमः। सत्विहैव चिन्त्यते। स चेद्वचनमनादृत्य न्यायादेव चिन्त्यते सोऽप्यनभिधेयः पाञ्चमिकवदविधेयश्च स्यादिति सिद्धान्तहानिः पञ्चमे चासौ चिन्त्यः स्यात्। प्रसङ्गादिह चिन्त्यते युष्माकमिवेतिचेत्तर्हि तथैव ब्रूहि। विधेयत्वादसौ तृतीये चिन्त्यत इति पाञ्चमिकाद्विशेषाभिधानं प्रलापः। किंच यदि वचनादिति सूत्रं क्त्वाचिन्तोद्घाटनार्थं तर्हि तदधिकरणं समाप्य कर्तव्यम्। इदं तु 'कारणानुपूर्व्या'दिति सूत्रात्प्रागेव कृतमिति न क्त्वाचिन्तोद्घाटनं युज्यते। यदिच न्यायादेव प्राथम्यं लभ्यते ततो वचनमेवेदं न्यायानुवादमात्रं तत्र वचनादिति सूत्रानुपपत्तिः। नच शक्यमिदं न्यायाल्लब्धुम्। यदा वषट्कारः कृतस्तदा भक्षणं कर्तव्यं नच तदा भक्षणं क्रियते अहुतस्य भक्षणासंभवात् होमे तु कृते तन्निमित्तकमपि भक्षणमुपस्थितमेवेति न विशेषः प्रत्युत वषट्कारनिमित्तमुपस्थापनं भ्रष्टं होमनिमित्तं त्वभ्रष्टमिति तदेव**

---

भक्षयित्वा शेषप्रदानेनास्मान्पालितवान् तथा त्वमपि पाहीत्यध्वर्युंप्रति ऋत्विग्भिः प्रार्थनं क्रियत इति भावः। ततश्चोपमाननिर्देशेन होतुः प्रथमं पानं सिद्धवदवगम्यत इत्यर्थः। **ननु** मन्त्रवर्णादृत्विग्विशेषस्य होतुः प्रथमं भक्षणं प्रतीयते न वषट्कर्तुरिति शङ्कां निराकुर्वन्युक्त्यन्तरमाह—**कारणेति**। होमाभिषवयोः षष्ठे वक्ष्यमाणन्यायेन समुदितयोरेव निमित्तत्वात्समुदायस्य च होमोत्तरभावित्वादभिषवानन्तरभाविनोऽपि वषट्कारलक्षणस्य निमित्तस्य प्राथम्यम्। तथाच निमित्तप्राथम्याद्वषट्कर्तुरिति प्रत्यक्षवचनाच्च मन्त्रगतहोतृशब्दो वषट्कर्तृपरएव न ऋत्विग्विशेषपर इति भावः। एवंच वषट्कारनिमित्तो भक्षः प्रथमं ततो होमाभिषवनिमित्तक इति क्रमो बोध्यः। प्राभाकरास्तु वषट्कर्तुः प्रथमभक्ष इति वचनं न प्राथम्यविधायकं किंतु भक्षमात्रविधायकमिति क्त्वाचिन्तयेदमधिकरणमित्याहुस्तन्मतमनूद्य दूषयति—**येत्विति**। वचनोपन्यासः वचनादिति सूत्रमित्यर्थः। तदीयव्यवहारमेव दर्शयति—**तार्तीय इति**। तदीयव्यवहारं तदुक्त्यैव द्रढयति—**अतएवेति**। अनभिधेयादविधेयाच्च पाञ्चमिकक्रमादयं यत एवाभिधेयतया विधेयतया च विलक्षणोऽत एवेत्यर्थः। तदीयव्यवहारमुक्त्वा तद्विरोधमुपपादयति—**अत्रैवेति**। **नन्वत्रै**वेत्ययुक्तं वषट्काराच्च भक्षयेदित्यत्रापि तद्विचारादित्यत आह—**वषट्कारादिति**। वषट्काराच्च भक्षयेदिति सूत्रानुसारात्तदधिकरणं वषट्कारो भक्षनिमित्तमित्येवंपरमित्यर्थः। **इहैवेति**। पूर्वो भक्षयेदिति सूत्रे क्रमपरस्य पूर्वशब्दस्य प्रयोगादिति भावः। **सोऽपीति**। शब्देनाभिधानं विधानं चानपेक्ष्य न्यायत एवास्य क्रमस्य सिद्ध्यायमपि पाञ्चमिकवदविधेयोऽनभिधेयश्च स्यादित्यर्थः। **ननु** न्यायतः सिद्धावपि वस्तुतो वचनस्य सद्भावात्प्रथमशब्दाभिधेयत्वाच्चायं क्रमोऽभिधेयो विधेयश्च, वेदं कृत्वा वेदिं करोतीत्यत्र तु क्त्वाप्रत्ययस्य समानकर्तृकत्वमात्रार्थकतया क्रमाभिधायिशब्दाभावादनभिधेयः क्रमः, अनभिहितं च ग्राहको न ग्रहीतुमीष्टे, साधिकारस्य हि विधेः प्रयोजनरूपस्य संनिधिसमाम्नातैः स्वयमप्रयोजनभूतैः प्रयोजनप्रयोजनिभावेनान्विताभिधानं ग्राहकग्रहणमित्युच्यते। नचैवमनभिहितस्य संभवति ग्राहकग्रहणाभावेच विध्यैदमर्थ्याभावादैदमर्थ्यशून्यस्य च विधिनानुष्ठानाक्षेपाभावात्तदनाक्षिप्तानुष्ठानस्य विधेयत्वासंभवान्न विधेयत्वं संभवतीति पाञ्चमिकः क्रमोऽनभिधेयो विधेयश्चेत्युपपन्नमित्यस्वरसादाह—**पञ्चम इति**। वचनेन निर्णयाभावेऽन्यलभ्यत्वाविशेषादयमपि पञ्चमएव चिन्त्यः स्यादित्यर्थः। भक्षप्रसङ्गादत्र चिन्त्यते। यथा भवन्मते क्रममात्रस्य पञ्चमसङ्गतत्वेऽपि प्रसङ्गादयमत्र चिन्त्यते तद्वदिति शङ्कते—**प्रसङ्गादिति**। **ननु** पाञ्चमिकाद्विशेषकथनं वस्तुस्वरूपकथनमात्रं न तृतीयनिरूपणप्रयोजकत्वेनेति न दोष इत्यस्वरसादाह—**यदि वचनादिति**। अर्थक्रमात्सूत्रपाठक्रमबाधं मन्वान आह—**यदिचेति**। **ननु** भक्षणकाले होमाभावात्प्रतिसंधानमादाय तस्य निमित्तत्वं वाच्यम्। तथासति प्रतिसंधानं निमित्तोत्पत्तिक्रमेणैव युक्तमिति वषट्कारप्रतिसंधानस्य प्राथमिकत्वाद्वषट्कारनिमित्तभक्षणप्राथम्यमनिवार्यमित्यत आह—**प्रत्युतेति**। 'सायस्के सवनीयानुष्ठानसमये सहैव पशूनालभत' इति अग्निष्टोमीयसवनीयानुबन्ध्यानां त्रयाणामपि पशूनां सहालम्भने श्रुते प्रकृतितोऽग्नीषोमीयस्य प्रथममुपाकरणप्राप्तावपि सवनीयानुष्ठानकाले सहत्वस्य श्रुतत्वात् स्थाना-

---

१ ध्वर्य्वपेक्षिततया.

प्रथमं कृत्वा पश्चादन्यत्कर्तव्यम्। वक्ष्यति हि सहालम्भे सवनीयमुपाकृत्य पश्चादग्नीषोमीयोपाकरणमिति। तस्माद्वचनादेव प्राथम्यं वषट्कर्तुः। अभ्युच्चयमात्रं तु कारणानुपूर्व्यम्॥

भक्षस्यानुज्ञापूर्वकत्वाधिकरणम्॥ १३॥

## वचनादनुज्ञातभक्षणम्॥ ४०॥

नानुज्ञापूर्वको भक्षस्तत्पूर्वो वात्र लाघवात्॥ आद्यो नानुपहूतेन पेय इत्युक्तितोऽन्तिमः॥ २४॥

नानुपहूतेन सोमः पातव्य इत्यत्रोपहूतशब्देनानुज्ञानमुच्यत इति दर्शयितुमुत्तरचिन्तार्थं चैतत्सूत्रम्॥

वैदिकवचनेनानुज्ञापनाधिकरणम्॥ १४॥

## तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्॥ ४१॥

किमनुज्ञा लौकिकोक्त्या वेदोक्त्या वा यथा तथा॥ अविशेषादुपह्वानमन्त्रलिङ्गात्तु वैदिकी॥ २५॥

अनुज्ञाप्य भक्षयितव्यं वचनादिति स्थितम्। तल्लौकिकेन शब्देन मन्त्रेण वेति। उपहूत उपह्वयस्वेति लिङ्गवन्मन्त्राम्नानात्तेनैव कर्तव्यमिति। इदमपि प्राप्तिसूत्रमेव॥

वैदिकवाक्येन प्रतिवचनाधिकरणम्॥ १५॥

## तत्रार्थात्प्रतिवचनम्॥ ४२॥

उपह्वयस्वोपहूत इत्यशेषो द्वयोर्भवेत्॥ अनुज्ञानुज्ञापनयोरथवासौ विभज्यते॥ २६॥

विभागकरणाभावादशेषश्चेन्न लिङ्गतः॥ उपह्वयेत्यनुज्ञप्तावनुज्ञाने तथेतरः॥ २७॥

उपहूत उपह्वयस्वेति मन्त्रः स किं समस्त एवानुज्ञानानुज्ञापनयोरन्यतरत्र प्रयोक्तव्य इतरत्र लौकिकः शब्दः उतोभयत्रापि समस्तः, किंवा विभज्य यथायथमिति। तत्रानुज्ञापनपूर्वकत्वादनुज्ञायाः मन्त्रांशयोश्च तद्विपरीतत्वान्न विभज्य विनियोगः। तस्मात्समस्तोयमन्यतरत्रोभयत्र वेति प्राप्ते ब्रूमः। लिङ्गेन वाक्यं बाधित्वा विभाग एव मन्त्रयोः तत्रापि पाठक्रममर्थक्रमेण बाधित्वा पश्चात्पठितोऽप्युपह्वयस्वेति पूर्वभाविन्यनुज्ञापने प्रयोज्यः पूर्वपठितोप्युपहूतशब्दः पश्चात्तन्यामनुज्ञायाम्॥

---

त्सवनीयप्राथम्यमिति 'स्थानाच्चोत्पत्तिसंयोगा'दिति पञ्चमे वक्ष्यते। तद्वदिहापि वषट्कारनिमित्तत्वस्य होमनिमित्तजननेन भ्रंशात्स्थानाद्धोमनिमित्तकमेव भक्षणं प्रथमं कर्तव्यमित्यर्थः। **ननु** एवं कारणानुपूर्व्यस्याकिंचित्करत्वात्कारणानुपूर्व्याच्चेति सूत्रवैयर्थ्यमत आह—**अभ्युच्चयेति**। सूत्रे क्रमात् हस्तस्थिततया पात्रस्य संनिधानादित्यर्थः॥

**वचनादनुज्ञातभक्षणम्॥ ४०॥** अत्रापि प्रसङ्गएव सङ्गतिः। एकपात्रेऽनेकस्य भक्षणे सति यः प्रथमं भक्षयति स किं पश्चाद्भक्षयितॄनननुज्ञातो भक्षयेदुतानुज्ञात इति संशयः। प्रयोगप्राशुभावायाननुज्ञात इति पूर्वःपक्षः। नानुपहूतेन सोमः पातव्य इति वचनादनुज्ञात एव भक्षयेदिति सिद्धान्तश्च स्पष्टत्वान्नोक्तः। **ननु** वचनेसति पूर्वपक्षानुन्मेषात्किमर्थमिदमित्यत आह—**इत्यत्रेति**। विचारशास्त्रे शब्दार्थकथनासामञ्जस्यादाह—**उत्तरेति**। अनुज्ञाने सत्येव केनेति चिन्तोदयादिति भावः। वचनादनुज्ञानस्य कर्तव्यत्वे सत्यनुज्ञापनं विनानुज्ञानानुपपत्तेरर्थादनुज्ञापनमपि कर्तव्यं बोध्यम्॥

**तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्॥ ४१॥ तदिति**। अनुज्ञानमित्यर्थः। पूर्ववद्वचनाभावान्मन्त्रेणैवेत्यत्र नास्ति प्रमाणमिति प्राप्त आह—**उपहूत इति**। **इदमपीति**। मन्त्राम्नानान्मन्त्रेणैवेति विधिकल्पनायाः स्पष्टत्वेन पूर्वपक्षमान्द्यादिति भावः। सूत्रार्थस्तु—तदनुज्ञानमुपहूत उपह्वयस्वेत्यनेन मन्त्रेणानुज्ञापयेत् णिजर्थो न विवक्षितः। अनुजानीयात्तत्रापि धातोः पाकं पचतिवत्प्रयोगं कुर्यादिति यावत्। नच सूत्रे णिजर्थाविवक्षायां प्रमाणाभावादनुज्ञापनमेवात्र विषयः किं न स्यादिति वाच्यम्। एतत्सूत्रगततच्छब्देन वचनादनुज्ञातभक्षणमिति पूर्वसूत्रोपात्तानुज्ञानपरामर्शस्यैव वक्तव्यत्वात्तदुपह्वानं केन कर्तव्यमिति वार्तिकानुसाराच्चोपह्वानापरपर्यायानुज्ञानस्यैवात्र विषयत्वौचित्यादिति॥

**तत्रार्थात्प्रतिवचनम्॥ ४२॥** मन्त्रेणानुज्ञाने उक्ते तत्र मन्त्रनियमविचारात्सङ्गतिः। **इतरत्रेति**। द्वयोर्मध्ये यत्र मन्त्रस्ततोऽन्यत्रेत्यर्थः। **ननु** स्योनं ते मन्त्रवल्लिङ्गबलाद्विभज्य विनियोज्यत्वात्कथं पूर्वःपक्षोऽत आह—**तत्रेति**। क्रमविपर्ययात्स्योनंतेमन्त्रवैषम्यमिति भावः। **समस्त इति**। अनुज्ञाप्रतिपादकस्याप्यनुज्ञापने विशेषणप्रतिपादकतया विनियोगः। एवमनुज्ञापनप्रतिपादकस्यानुज्ञायामिति भावः। **उभयत्रेति**। प्रधानानुसारेण गुणाश्रुतेर्न्याय्यत्वादिति भावः। **तत्रापीति**। ततश्च पाठक्रमविपर्यासो न लिङ्गविनियोगबाधनक्षम इति भावः। सूत्रार्थस्तु—तत्र उपहूत उपह्वयस्वेत्यत्र। प्रतिवचनमर्थात्सामर्थ्यानुसारादुपहूत इत्यनेन कर्तव्यमिति॥

---

१ उपहूतः अनुज्ञाकृता मया इति तेनोच्यते इत्यर्थः, २ उपह्वयस्वेति अनुज्ञां कुरु इत्यर्थः. ३ पश्चात्तनायामनु.

एकपात्राणामनुज्ञापनाधिकरणम् ॥ १६ ॥

**तदेकपात्राणां समवायात् ॥ ४३ ॥**

उपह्वानमशेषाणामुत स्यादेकपात्रिणाम् ॥ अदृष्टहेतोराद्यः स्याद्दृष्टाधिक्यादितोऽन्तिमः ॥ २८ ॥

तदुपह्वानं किं सर्वपुरुषाणामुतैकपात्राणामेवेति । अविशेषात्सर्वेषामिति प्राप्ते ब्रूमः । दृष्टार्थमनुज्ञापनं व्यलीकं भागाधिक्यं च मर्षयितुं तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥

स्वयंयष्टुर्भक्षास्तित्वाधिकरणम् ॥ १७ ॥

**याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ४४ ॥ [यष्टुर्वा कारणागमात् ॥ ४५ ॥ प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥]**

होतुर्याज्यापनीतौ किं न वषट्कारभक्षयोः ॥ अपनीतिरुतापायो नापनीतिर्विभेदतः ॥ २९ ॥

यजमानेन यष्टव्यं न विनेष्टिर्वषट्कृतिम् ॥ वषट्कारो याज्ययाऽतः सहापैत्यदनं तथा ॥ ३० ॥

हौत्रप्रवचनाम्नाता याज्याः समाख्यया होतुः प्राप्तास्तत्र काचिद्धोतुरपनीय यजमानस्य विधीयते । तस्यामपनीयमानायां किं वषट्कारभक्षावपनीयेते उत होतर्येवावतिष्ठेते याज्यामात्रं त्वपनीयत इति संशयः । तत्र—'यजमानस्य याज्येति याज्यापनयचोदना ॥ वषट्कारस्य याज्यातो भिन्नत्वान्नापनीयते ॥' याज्याया अधिवषट्करोतीति याज्यातो वषट्कारस्य भिन्नत्वान्न तदपनयेनापनयः । यदपि स्वयं वा निषद्य यजतीति यष्टृत्वं यजमानस्योक्तं तदपि याज्यामात्रप्रयोगादेवोपपन्नम् । अतस्तेन प्रयुक्ताया याज्याया अधिहोतैव वषट्कुर्यात्तन्निमित्तश्च भक्षस्तस्यैवेति प्राप्ते ब्रूमः—'यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम् ॥ परिपूर्णं च यष्टृत्वं वषट्कारेण जायते ॥ याज्यामात्रप्रयोगे तु न्यूनं तच्च

---

**तदेकपात्राणां समवायात् ॥ ४३ ॥** प्रकृतानुज्ञानविषयत्वात्सङ्गतिरिति सूचनाय तदित्युक्तम् । अत्रानुज्ञानविधेरेकेनापि चारितार्थ्यात्सर्वैः पुरुषैरनुज्ञानं कर्तव्यमित्यत्र मानाभावात्सर्वपुरुषाणां मध्ये येनकेनचिदनुज्ञानं कर्तव्यमिति पूर्वपक्षकोटिर्बोध्या । सिद्धान्तकोटिस्तु एकस्मिन्पात्रे यावन्तो मिलितास्तन्मध्ये एकस्य भक्षणाय इतरैः सर्वैरप्यनुज्ञानं कर्तव्यमिति व्यलीकादिपरिहाररूपप्रयोजनस्य तत्पात्रमिलितसर्वपुरुषसाधारण्यादिति ध्येयम् । **व्यलीकमिति** । अन्योच्छेषणभक्षणनिमित्तमप्रियं वैमनस्यमिति यावत् । **भागाधिक्यमिति** । समं स्यादश्रुतत्वादितिन्यायेन एकस्मिन्पात्रे विद्यमानसोमस्य सर्वैः समांशतया भक्षणीयत्वाद्भागाधिक्यं न युक्तमिति तत्सहनार्थमित्यर्थः । सूत्रार्थस्तु—तदनुज्ञानमेकपात्राणामेव स्यात् । तत्रैव प्रयोजनसमवायादिति ॥

**याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ४४ ॥** ऋत्विजां भक्षे साङ्ग उक्तेऽनन्तरं स्वामिनो भक्षचिन्तेति पेटिकाभेदः सङ्गतिश्चेति केचित्तन्न । समाख्या–होमाभिषवादिविचारस्य ऋत्विग्यजमानसाधारण्येन पेटिकाभेदस्योक्तसङ्गतेश्चायोगात् । तस्माद्यथैकपात्रप्रसक्तपुरुषानुज्ञानमात्रेणानुज्ञानशास्त्रस्य चारितार्थ्यमेवमिहापि याज्यापनयमात्रेण यजमानस्य याज्येति शास्त्रस्य चारितार्थ्यान्न भक्षापनय इति प्रत्यवस्थानात्सङ्गतिरित्यन्ये । होतृप्रवचनशब्द ऋग्वेदपरः । समाख्यास्फोरणाय होतृप्रवचनशब्दप्रयोगः । **याज्या इति** । इदमुपलक्षणम् । वषट्कारा अपि होतुः प्राप्ता इति द्रष्टव्यम् । **तत्रेति** । ऋतुग्रहयागेषु यजमानस्य याज्या सोभिप्रेष्यति होतरेतद्यजेति स्वयं वा निषद्य यजतीति अग्निं गृहपतिं गार्हपत्यादित्येषा काचिद्याज्या होतुः सकाशादपनीयत इत्यर्थः । **तत्र यजमानस्येति** । **ननु** यदा यजमानो याज्यामाह तदायं विचारः । यजमानस्य च याज्या प्रयोक्तृत्वं न यजमानस्य याज्येत्येतद्वचनलभ्यं तद्वचनप्राप्तयाज्यासंबन्धस्य सोऽभिप्रेष्यति होतरेतद्यजेत्यनेन प्रत्यर्पितत्वात् । तस्मात्स्वयं वा निषद्य यजतीति वाक्यस्य याज्यामात्रापनयार्थकत्वप्रतिपादनमेव पूर्वपक्षोपयुक्तं ननु यजमानस्य याज्येतिवाक्यस्य तत्प्रतिपादनमिति चेन्नैवम् । स्वयं वा निषद्य यजतीति वाक्यमत्यन्ताप्राप्तं याज्यासंबन्धं न स्वयं प्रापयति किंतु यजमानस्य याज्येत्यनेन प्राप्तएव यजमानस्य याज्यासंबन्धः सोऽभिप्रेष्यति होतरेतद्यजेत्यनेनापोदितः । स्वयं वा निषद्य यजतीत्यनेन पुनः पक्षे प्रतिप्रसूयते । प्रतिप्रसवश्च प्राथमिकप्राप्त्यनुसारीति प्रथमं याज्यासंबन्धप्रापकस्य यजमानस्य याज्येति वाक्यस्य याज्यामात्रापनयार्थकत्वप्रतिपादनस्य पूर्वपक्षोपयोगसंभवात् । **ननु** वषट्कारस्य क्वापि पृथक्प्रयोगाभावेन नासौ याज्याभिन्नः किंतु याज्यावयव एव । ततश्च याज्यापनये तदपनयः स्यादेवेत्यत आह—**याज्याया इति** । याज्याया उपरि वषट्कारविधानेन भेदोऽवगम्यत इत्यर्थः । **ननु** स्वयं वा निषद्य यजतीति प्रतिप्रसववाक्ये यष्टृत्वश्रवणात्तदनुसारेण प्राप्तिवाक्यस्यापि वषट्कारयाज्यापनयपरत्वं वाच्यमित्यत आह—**यदपीति** । याज्या-

---

१ सर्वेषां पुरुषाणां. २ होतृप्रवचना. ३ भिन्नत्वात्तदपनयेऽपनयः. ४ अधिहोमेनैव.

न युज्यते ॥ अनवानं च यष्टव्यं याज्यामात्रं ब्रुवन्नसौ ॥ अवान्याद्यजमानो तो वषट्कुर्यात्स नेतरः ॥ भक्षोऽपि यजमानस्य वषट्कारनिमित्तकः ॥'

फलचमसस्येज्याविकारताधिकरणम् ॥ १८ ॥

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥ [इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैश्च तुल्यकालत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥]**

न्यग्रोधपिष्टं सोमस्य स्थाने क्षत्रियवैश्ययोः ॥ भक्षमात्रे विकुर्यात्तत्सोमयागेऽपि वा तथा ॥ ३१ ॥
बिभक्षयिषया वाक्यमुपक्रम्योपसंहृतम् ॥ भक्षं यच्छेदिति ततो विकारो भक्षमात्रगः ॥ ३२ ॥
फलाख्यचमसेनासौ यजेतेति श्रुतत्वतः ॥ इज्यायां च विकारोऽस्ति यागार्थो भक्षसंस्कृतिः ॥ ३३ ॥

यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युपमृज्य[1] तस्मै भक्षं प्रयच्छेन्न सोममिति राजन्यवैश्यनिमित्तेन सोमविकारः फलचमसः श्रुतः स किं भक्षमात्रे सोमं विकुर्यादुतेज्यायामिति[2] संशयः । तत्र बिभक्षयिषेदित्युपक्रमात् भक्षं प्रयच्छेदिति चोपसंहारात्तत्रैव विकारो नेज्यायाम् । अश्रवणात् । एवंप्राप्ते ब्रूमः—'यागार्थद्रव्यसंस्काररूपभक्षणसङ्गतेः ॥ स्तिभिनी चमसो यागे द्रव्यमित्यवधीर्यते[3] ॥' यदि सोमं बिभक्षयिषेदिति सोमभक्षमनुसंकीर्त्य[4] तत्र फलचमसो निक्षिप्यते प्रकरणाच्च सोमभक्षो न भक्षान्तरम् । सच यागद्रव्यसंस्कारत्वेन निर्ज्ञातस्तत्संबन्धित्वेन च श्रूयमाणः फलचमसोऽन्यथा तत्संबन्धायोगाद्यजमानचमसया-

---

मात्रप्रयोगेऽपि यष्टृत्वोपपत्तेः प्राप्तिवाक्यस्याश्रुतवषट्कारपरत्वकल्पकं नास्तीत्यर्थः । अनवानं च याज्याभिप्रायेणोपपन्नमित्याशयेनाह—**अत इति । न युज्यत इति ।** ततश्च प्रतिप्रसववाक्यगतयजतिश्रुतिमुख्यार्थत्वाय प्राप्तिवाक्येऽर्थलभ्यो वषट्कार इति स्वीकार्यमिति भावः । अनवानं अविच्छिन्नप्रयत्नं यथा भवति तथेत्यर्थः । अवान्यात् उपरतप्रयत्नः स्यादित्यर्थः । 'संततमृचा वषट्कृत्यं संतत्या' इति याज्यावषट्कारयोः सातत्यश्रवणाद्याज्यामात्रविषयतयाऽनवानसंकोचो न युक्त इति भावः । सूत्रार्थस्तु—यथा याज्यापनयेन याज्यार्थवरणलक्षणः प्रवरो नापनीतस्तद्वद्भक्षोपीति ऋतुयाज्यावरणस्य तन्त्रेण सकलयाज्योपकारकत्वादेकस्यां याज्यायां होतुरपनीतायां तदर्थं यजमानस्य वरणावश्यंभावेऽपि याज्यान्तरार्थं होतुरपि वरणस्यावश्यकर्तव्यत्वान्न तस्य होतुरपनय इति प्रवरवैषम्यं सिद्धान्ते बोध्यम् ॥

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥** न्यग्रोधस्तिभिनीर्न्यग्रोधफलानि । तद्यत्रैतत्सोमंक्रीणीयात्तदेतानि फलानि क्रीणीयादिति बह्वृचब्राह्मणात् राजन्यवैश्यनिमित्तेनेति नतु तद्बिभक्षयिषाया निमित्तत्वमित्याशयः । विकुर्याद्बाधेनेति यावत् । **तत्रैव विकार इति ।** अत्र यद्यपि पूर्वपक्षे फलचमसेज्यासाधनत्वाभावात्पशौ श्यङ्गाणामिवेज्यासाधनानुनिष्पन्नत्वाभावाच्च प्रतिपत्त्यनर्हतया भक्षणस्य प्रतिपत्तित्वाभावात्प्रतिपत्तिभूतसोमभक्षणबाधकत्वाभावेन भक्षे फलचमसस्य सोमविकारत्वमनुपपन्नं तथापि फलचमसभक्षणस्य सोमभक्षणनिवर्तकत्वाभावेऽपि न सोममिति निषेधबलादेवात्र सोमभक्षणस्याकर्तव्यतया तन्मात्रेण विकारत्वोक्तिरिति द्रष्टव्यम् । अश्रवणादित्यनेन पूर्वत्र संपूर्णयष्टृत्वश्रवणाद्यजमानस्य वषट्कारसंबन्धेऽपीह फलचमसस्य न यागसंबन्धोऽश्रवणादिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **ननु** फलचमसभक्षणस्य प्रतिपत्तित्वाभावस्योक्तत्वाद्यागार्थद्रव्यसंस्कारकत्वमेवासिद्धं तत्कथं भक्षसंबन्धाद्यागसाधनत्वमित्यतः श्लोकं व्याचष्टे—**यदीति ।** सोमभक्षणसंकीर्तनात् प्रकरणाच्च सोमसंबन्धी यो भक्षः स एवायं फलचमससंबन्धित्वेन तस्मै भक्षं प्रयच्छेदिति वाक्येन प्रतिपाद्यते । सच यागीयद्रव्यप्रतिपत्तिरूप इति तथाविधभक्षणसंबन्धात्फलचमसेऽपि यागसाधनत्वं संपद्यत इत्यर्थः । एवंच फलचमसस्य यागसाधनत्वं यजमानभक्षसंबन्धनिमित्तकमिति यजमानचमसयागाभ्यासस्यैव फलचमसः साधनं नतु कृत्स्नयागस्येत्यभिप्रायेण यजमानचमसयागाभ्याससाधनमित्युक्तम् । नच स्वयं वा निषद्य यजतीति वषट्कारनिमित्तभक्षो यजमानस्य ऋतुग्रहेऽप्यस्ति । तेन—तद्यागाभ्याससाधनत्वमपि किं न स्यात्ततश्च स्तिभिनीनां ग्रहचमससाधारण्यात्फलचमस इति सूत्रभाष्यादिव्यवहारोऽप्यनुपपन्न इति वाच्यम् । 'यदान्यांश्चमसानभ्युन्नयति अथैतं चमसमभ्युन्नयति यदान्यांश्चमसान् जुह्वति अथैतस्य दर्भतरुणकेनोपहत्य जुहोती'ति श्रुतिपर्यालोचनया स्तिभिनीनां चमसपात्रविषयत्वावगमात् ऋतुग्रहे चर्त्विग्भक्षाणामेव बहुत्वाद्भूयोऽनुग्रहन्यायेन तत्र सोमस्यैव युक्ततया स्तिभिनीनां प्रसक्त्य-

---

१ न्युन्मृज्य. २ दुत याज्यायामिति. ३ त्यवधार्यते. ४ मनुत्कीर्त्य, मनुकीर्त्य.

गाभ्याससाधनत्वं प्रतिपद्यते । तदेवं भक्षसंबन्धकथनव्याजेन तद्द्वाराभ्यगतयागसंबन्धित्वेन विधीयते तद्विधौ च भक्षसंबन्धः प्राप्त एवानूद्यते । तस्मादिज्याविकारत्वम् । एतेनाभिषवयुक्तपूतीकानां यागसाधनत्वं व्याख्यातम् ॥

ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् ॥ १९ ॥

## अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥ [ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥]

**राजसूये क्वचित्कर्तुश्चमसो दशभिर्जनैः ॥ भक्ष्यः किं तत्र राजन्या भक्षका ब्राह्मणा उत ॥ ३४ ॥**
**आद्यो भानात्संख्ययैकजातेर्विप्राः शतं दश ॥ चमसानद्युरित्युक्त्या राजपात्रं च विप्रगम् ॥ ३५ ॥**

राजसूये दशपेयः सोमविकारः तत्र राज्ञोऽधिकारः । ज्योतिष्टोमाच्च तत्र दशचमसाः प्राप्ताः । तेषु यजमानचमसस्य राज्ञो भक्षणं प्राप्तम् । तत्रेदं श्रूयते 'दशदशैकैकचमसमनुप्रसर्पेयुः शतं ब्राह्मणाः सोमान्भक्षयन्ती'ति । तत्र संशयः किं यजमानचमसं राजन्या दश भक्षेयुरुत ब्राह्मणा इति । तदर्थंच किं दशदशेति विधिः शतं ब्राह्मणा इत्यनुवादः उतायमपि विधिरिति । तत्रानुप्रसर्पेयुरिति विधिश्रवणात्प्रतिचमसं दशसंख्या विधीयते । तयाच संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्रकृतैवावतिष्ठते[1] । तत्रारुणैकहायनीन्यायेन जातिसंख्ययोर्मिथोनियमेसति ब्राह्मणचमसेषु ब्राह्मणा दश राजन्यचमसेषु राजन्या दश भवन्तीति शतं ब्राह्मणा भक्षयन्तीति वर्तमानापदेशात्प्रचयशिष्टशतसंख्यानुवादः । भूम्नाच ब्राह्मणा ब्राह्मणेषु ब्राह्मणशब्दः । अनुवादत्वाच्च लक्षणापि न दुष्यति । तस्माद्यजमानचमसं राजन्या[2] दश भक्षेयुरिति । 'उच्यते विधिरेवायमर्थवत्त्वाच्छ्रुतेस्तथा ॥ अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते ॥ नहि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम् ॥ संभवन्त्यां

---

भावात् । नन्वेवं फलचमसस्य यागसाधनत्वं भक्षसंबन्धश्च विधेय इति गौरवं स्यादित्यत आह—**तदेवेति** । इह हि फलचमसस्य भक्षसंबन्धः श्रौतः यागसाधनत्वमार्थिकं तत्र चार्थिकं यागसाधनत्वमेव विधिर्विधत्ते तद्विधौ च फलचमसस्य नैमित्तिकविकारत्वान्नित्यसोमसंबन्धिभक्षश्चोदकात्प्राप्नोतीति श्रौतभक्षसंबन्धस्यानुवादत्वान्न गौरवमित्यर्थः । एवंच फलचमसस्य यागसाधनत्वेसति यजमानचमसयागाभ्यासप्रयुक्तं भक्षणं फलचमसस्यैव प्राप्नोति न सोमस्य । तेन न सोम इत्यनुवाद एव । पूर्वपक्षे तु तद्विधित्वावश्यंभावाद्वाक्यभेदः स्यादिति सूचितम् । **एतेनेति** । यद्यपि 'पूतीकानां न यागसाधनत्वं किंतु प्रतिनिधिनियम एवायं' इति षष्ठे वक्ष्यते तथापि तत्पूर्वपक्षाभिप्रायेणेदं द्रष्टव्यम् । सूत्रे श्रुतिसंयोगात् श्रुतौ फलचमसस्य भक्षेणैव संयोगावगमादित्यर्थः ॥

**अनुप्रसर्पिषु सामान्यात्** ॥ ५२ ॥ फलचमसे राजन्यस्य भक्षणे उक्ते तस्य क्वचिदपवादः क्रियते इति सङ्गतिः । **राज्ञ इति** । राजसूयस्य राजाधिकारिकत्वादिति भावः । **भक्षेयुरिति** । अनुप्रसर्पणस्य दृष्टार्थत्वावश्यंभावादनुप्रसर्पेयुरित्यनेन लक्षणया भक्षणमेव विवक्षितमित्याशयेन भक्षेयुरित्युक्तम् । **तदर्थमिति** । दशवाक्यविधायकत्वस्य पक्षद्वयसाधारण्यात्किं शतं ब्राह्मणा इति विधिरुतानुवाद इति संशयनिष्कर्षः । **ननु** शतं ब्राह्मणा इति वाक्यमेव विधिस्ततश्च समं स्यादश्रुतत्वादिति न्यायेन प्रतिचमसं दशसंख्याप्राप्तेर्दशदशेति वाक्यमेवानुवादः किं न स्यादिति शङ्कानिराकरणाय दशदशेति वाक्यस्य विधित्वमुपपादयन्पूर्वपक्षमाह—**तत्रेति** । अत्र चमसमित्युद्दिश्य दशेति विधीयते । तेन चमसविशिष्टानुप्रसर्पणस्योद्देश्यत्वाभावान्न विशिष्टोद्देशदोषः । अनुप्रसर्पणं तु केवलमनूद्यते । तथाच प्रत्युद्देशं वाक्यपरिसमाप्तिन्यायादेव प्राप्तार्थत्वाद्दशपदवीप्सा एकैकमिति चानुवादएवेति । नानेकविधिप्रयुक्तवाक्यभेदावकाशश्चेति भावः । नच दशेति कर्तुश्चमसमिति कर्मान्वयायोगाच्चमसमित्युद्दिश्य दशेति विधिरनुपपन्न इति वाच्यम् । चमसमिति द्वितीयाबलादुपस्थितसंस्कारक्रियामादाय येच चमसं संस्कुर्युस्ते दशेत्येवं संबन्धोपपत्तेः । **अरुणेति** । नच तत्र द्रव्यगुणयोरेकवाक्योपादानान्नियमो युक्तः । इहतु जातिसंख्ययोरेकवाक्योपादानाभावान्न नियमः । यथा वाक्यान्तरविहितवासःप्रभृतिषु नारुण्यनियमस्तद्वदिति वाच्यम् । आरुण्यस्य स्ववाक्योपात्तैकहायनीद्रव्येणैव निराकाङ्क्षतया वासःप्रभृतिषु तन्नियमाभावेऽपि प्रकृते दशत्वसंख्यायाः परिच्छेद्यापेक्षाबलेन वाक्यान्तरोपात्तजातिनियमे बाधकाभावादिति । **प्रचयेति** । नचैकस्यैव ब्राह्मणदशकस्य सर्वेषु चमसेष्वन्वयसंभवात्कथं शतसंख्यायाः प्रचयशिष्टत्वमिति वाच्यम् । एकस्य दशकस्य प्रतिचमसमावृत्त्यङ्गीकारे प्रयोगविलम्बापत्त्या स्वरसतः प्रतिचमसं दशकभेदस्यैव न्याय्यत्वादिति भावः । **अनुवादत्वादिति** । नचाप्राप्तब्राह्मण्यविधित्वोपपत्ते-

---

१ प्राक्तस्येयावतिष्ठत इति. २ राजानो दश.

श्रुतौ नैव लक्षणाप्युपपद्यते ॥ तस्माच्छ्रुतानुवादेन ब्राह्मण्यमिह चोद्यते ॥ तत्रच न्यायतः प्राप्ता राजजातिर्निवर्तते ॥ स्यात्पञ्चमलकारेण विधिश्च समिदादिवत् ॥ ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः ॥' इति शास्त्रदीपिकायां तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## तृतीयाध्याये षष्ठः पादः ।

सुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम् ॥ १ ॥

**सर्वार्थमप्रकरणात् ॥ १ ॥ [प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ तद्वर्जे तु वचनप्राप्ते ॥ ३ ॥ दर्शनादिति चेत् ॥ ४ ॥ न चोदनैकार्थ्यात् ॥ ५ ॥ उत्पत्तिरिति चेत् ॥ ६ ॥ न तुल्यत्वात् ॥ ७ ॥ चोदनार्थकात्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥]**

प्रकृतौ विकृतौ वा स्यादस्य पर्णेत्यसौ विधिः ॥ प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ ॥ १ ॥
जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः ॥ चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किम् ॥ २ ॥

अनारभ्यवादविचारप्रस्तावागतशेषविषयं विचारं समाप्येदानीं तमेवानारभ्यवादमनुसंधत्ते । 'यस्य खादिरः स्रुवो भवति' 'यस्य पर्णमयी जुहूर्भवती'त्यनारभ्य जुह्वाद्युद्देशेन विधीयमानाः पर्णतादयो जुह्वादीनां क्रत्वव्यभिचारात्तद्द्वारेण क्रत्वर्था इति स्थिते चिन्त्यते । किं प्रकृतिविकृतिसाधारणं विधानं उत प्रकृतेरेवेति । तत्र—'जुह्वादिप्राप्तिमात्रं हि पर्णतादेरपेक्षितम् ॥ या चौपदेशिकी प्राप्तिः प्राप्तिर्या चातिदेशिकी ॥ सर्वा सा प्राप्तिरूपेण तुल्या तदनुवादतः ॥ विधीयमानं पर्णत्वं सर्वार्थमिति गम्यते ॥ ननु येनातिदेशेन विकृतौ प्राप्यते जुहूः ॥ तेनैव पर्णतापीति व्यर्थं तदुपदेशनम् ॥ नैवं

---

नानुवादत्वमिति वाच्यम् । ऋत्विक्चमसेषु ब्राह्मण्यस्य प्राप्ततया यजमानचमसे ब्राह्मण्यस्य विधिरितरत्रानुवाद इति विध्यनुवादवैरूप्यप्रसङ्गेन विधित्वानुपपत्तेरिति भावः । **श्रुतेरिति** । ब्राह्मणशब्दमुख्यार्थत्वादित्यर्थः । **तस्मादिति** । यथा पृष्ठ्यः षडहो बृहद्रथन्तरसामेत्यत्राद्ययोरह्नोरप्यन्तरसामत्वे सिद्धेऽपि षडहे समुदाये तद्विधानान्न वैरूप्यं तथात्रापि चमसान्तरभक्षकेषु ब्राह्मण्यप्राप्तावपि सर्वचमसभक्षकपुरुषसमुदाये ब्राह्मण्यस्याप्राप्तस्य विधानेऽपि न वैरूप्यमिति भावः । **समिदादीति** । यथा समिधो यजतीति वर्तमानापदेशेऽपि लेट्कल्पनेन विधित्वं तद्वदित्यर्थः । **ब्राह्मणानामिति** । अत्र राजन्यस्य भक्षणाभावाद्यजमानचमसः सोमचमस एव कार्य इति न भ्रमः कर्तव्यः । फलचमसे राजन्यस्यैव निमित्तत्वेन भक्षणस्य निमित्तत्वाभावेन भक्षणाभावेऽपि फलचमसस्यैव न्याय्यत्वात्तस्मात्सिद्धान्तेऽपि सोमशब्दः सोमासोमपर इति राजन्यचमस इति वदतो भावः । सूत्रार्थस्तु—अनुप्रसर्पिषु राजन्यचमसे राजन्या एव तुल्यजातीयत्वाद्भक्षयाः ॥ **इति शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां तृतीयाध्यायस्य पञ्चमः पादः ॥ ५ ॥**

**सर्वार्थमप्रकरणात् ॥ १ ॥** अस्मिन्पादेऽनारभ्याधीतानामङ्गत्वविचारः प्राधान्येन क्रियत इति पादान्तरत्वं हिरण्यभरणजपाद्यश्वप्रतिग्रहेष्टिपानव्यापत्तीनामनारभ्याधीतानां विचारे प्रस्तुते वमनस्य हविःशेषविषयत्वात्तत्प्रसङ्गागतहविःशेषविषयविचारसमाप्तौ पुनरनारभ्यविचारस्यैव बुद्धौ विपरिवर्तनादानन्तर्यं चेत्याह—**अनारभ्येति** । ननु पर्णतादीनां क्रत्वर्थत्वे श्रुत्यादिप्रमाणाभावेन जुहूस्वरूपार्थत्वस्यार्थवादिकपापश्लोकश्रवणार्थत्वस्य च वक्तव्यत्वेन क्रत्वर्थत्वस्यैवाभावात्तद्विशेषप्रकृत्यर्थत्वादिविचारोऽनुपपन्न इत्यत आह—**यस्येति** । आकृतिविशेषरूपजुहूस्वरूपस्य पर्णतांविनापि सिद्ध्या आनर्थक्यप्रसङ्गान्न स्वरूपार्थत्वं आर्थवादिकफलार्थत्वं तु चतुर्थे निराकरिष्यते । तस्माद्विधीयमानपर्णतादीनां जुह्वादिभिरव्यभिचारादुपस्थापितजुहूमदपूर्वार्थत्वमेव स्वीकार्यमित्येवं क्रत्वर्थत्वसिद्ध्यनन्तरमयं विचार इति नोक्तदोष इत्यर्थः । **ननु** प्रत्यक्षोपदेशात्प्राकृतजुहूपस्थितिः शीघ्रं भवति आनुमानिकत्वाच्च वैकृतजुहूपस्थितिर्विलम्बिता । तथाच शीघ्रोपस्थितप्राकृतजुहूद्वारा प्रकृत्यन्वय एव पर्णतादीनां न्याय्य इति कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । जुह्वादिप्राप्तिमात्रस्यैवापेक्षितत्वात्तच्छैघ्र्यमकिंचित्करमन्यथा प्रकृतावपि न सर्वत्र निवेशः स्यात् कस्यचित्पुरुषस्य प्रकृतिप्रयोगविशेषसंबन्धिजुह्वा अपि झटित्युपस्थितिसंभवादिति भावः । **नन्वा**तिदेशिकजुह्वा नोद्देश्यत्वं संभवति तथात्वे द्विरुक्तिदोषप्रसङ्गादिति शङ्कते—**नन्विति** । यथा सर्वपदार्थगोचरस्यापि चोदकस्य प्रत्याम्नातप्रतिषिद्धलुप्तद्वारान्पदार्थान्वर्जयित्वा पर्यवसानं तथा प्रत्यक्षाम्नातपर्णादिव-

---

१ प्युपयुज्यते. २ क्रत्वर्थता इति.

प्रत्यक्षसिद्धत्वात्पर्णत्वं नानुमानतः ॥ चोदकात्प्राप्यते तस्मात्सर्वार्था पर्णतादयः ॥ नैवं द्विरुक्तिदोषः स्यात्प्राप्तस्य हि पुनर्विधेः ॥ पृथक्त्वेन पदार्थानां भवेच्चोदकस्ततः ॥ तद्वर्जे युज्यते प्राप्तिः प्रकारस्त्वतिदिश्यते ॥ पदार्थानां खलु प्राप्तिस्तद्विशेषणभावतः ॥ समुच्चिताश्च ते सर्वे प्रकृतौ तद्विशेषणम् ॥ तेन यावज्जुहूप्राप्तिर्विकृतौ तावतैव च ॥ प्राप्तैव पर्णतापीति व्यर्थस्तस्य पुनर्विधिः ॥ अवश्यं च जुहूप्राप्तिः प्रतीक्ष्या पर्णताविधेः ॥ तया सहैव पर्णत्वं प्राप्तं नतु विधीयते ॥ प्रकृतावेव पर्णत्वविधिस्तेन व्यवस्थितः ॥'

सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताधिकरणम् ॥ २ ॥

## प्रकरणविशेषात्तु विकृतौ विरोधि[3] स्यात् ॥ ९ ॥

**सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ॥ पूर्ववत्प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते ॥ ३ ॥**
**विकृतौ साप्तदश्यं स्यात्प्रकृतौ प्रक्रियाबलात् ॥ पाञ्चदश्यावरुद्धत्वादाकाङ्क्षाया निवृत्तितः ॥ ४ ॥**

**सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रुतं साप्तदश्यं किं प्रकृतावुत विकृताविति संदेहः । तदर्थं च किं प्राकरणिकेन पाञ्चदश्येन तुल्यबलमुत ततो दुर्बलमिति । तत्र द्वयोरपि वाक्यसंयोगाविशेषात्तुल्यबलतां मन्यते । नच प्रकरणेन कश्चिद्विशेषः—'वाक्यात्तद्दुर्बलं यस्मात्तस्मात्प्रकृतिगामिता ॥ पूर्ववत्साप्तदश्यस्य तथा प्राप्तेऽभिधीयते ॥ सामिधेनीस्वरूपेण संबन्धो वाक्यतो भवेत् ॥ तन्मात्रसङ्गते चैते संख्ये स्यातामनर्थिके ॥ अपूर्वसाधनत्वांशे लक्षिते सङ्गतिर्भवेत् ॥ तल्ल-**

---

र्जेने तदितरत्र पर्यवसानसंभवान्न द्विरुक्तिदोष इति परिहरति—**नैवमिति** । सिद्धान्तयति—**नैवं द्विरिति । पृथक्त्वेनेति** । प्रयाजाः कर्तव्याः अनुयाजाः कर्तव्या इत्येवं प्रतिपदार्थं यदि पृथक्चोदको भवेत्तदा पर्णमयत्वव्यतिरिक्तपदार्थेष्वेव चोदकाश्रयणेन तद्वर्ज्यप्राप्तिर्युज्यत इत्यर्थः । **प्रकार इति** । तत्तत्पदार्थसाध्यदृष्टादृष्टावान्तरव्यापारनिचयात्मकाखण्डोपकाराख्यप्रकारः सर्वपदार्थविशिष्टोऽतिदिश्यत इति दशमाद्ये वक्ष्यमाणत्वादिति भावः । यदि पदार्थानां प्रकारविशेषणत्वं प्रत्येकं स्यात्तदा तद्वर्जातिदेशः पदार्थविशिष्टप्रकारातिदेशेऽपि शक्येत । नत्वेतदस्ति । एकादशे समुच्चितानामेव तद्विशेषणत्वप्रतिपादनादित्याशयेनाह—**समुच्चिता इति** । यदुक्तं प्रत्यक्षसिद्धत्वात्पर्णत्वं नानुमानतः प्राप्यते तत्राह—**अवश्यमिति** । प्रत्यक्षानुमानयोर्हि शीघ्रमन्थरप्रवृत्तिकृतबलाबलं प्रकृते च प्रत्यक्षस्यापि पर्णतोपदेशस्य जुहूप्राप्तिसापेक्षत्वान्न शीघ्रं प्रवृत्तिः किंतु प्रत्यक्षापेक्षितजुहूप्राप्तिसमय एव पर्णतादेरनुमानेन प्राप्तिरित्यनुमानस्यैव शीघ्रं प्रवृत्तिस्ततश्च प्रकृते प्रत्यक्षस्यानुमानिकचोदकबाधकत्वासंभवान्न प्रत्याम्नातप्रतिषेधद्वारलोपस्थलइव चोदकस्य तद्वर्जितेषु पदार्थेषु पर्यवसानमिति भावः । एवंच यस्यानारभ्यवादस्यातिदेशिकपदार्थानपेक्षत्वं तत्र प्रत्यक्षस्य शीघ्रप्रवृत्तेः प्रकृतिविकृतिसाधारण्यमेव यथा 'आश्रावयेति चतुरक्षरमस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्त' इत्यादौ तत्र विकृतिरूपयज्ञस्यातिदेशिकत्वाभावादिति ध्येयम् । प्रयोजनं यत्रानारभ्यविहितपदार्थाश्रिता गुणाः सन्ति तत्र गुणकामानां विकृतिषु प्रवृत्तिः पूर्वपक्षे, सिद्धान्ते तु आष्टमिकन्यायेनाप्रवृत्तिरिति । सूत्रार्थस्तु—पर्णतादिकं सर्वार्थं कस्यचित्प्रकरणेनाम्नातत्वेन सर्वार्थत्वस्य न्याय्यत्वादिति ॥

**प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥ प्राकरणिकेनेति** । पञ्चदशसामिधेनीरन्वाहेति दर्शपूर्णमासप्रकरणे विहितेनेत्यर्थः । **ननु** पाञ्चदश्यस्य प्रकरणेन दर्शपूर्णमासात्मकक्रतुविशेषसंबन्धो गम्यते, साप्तदश्यस्य तु सामिधेनीमुखेन क्रतुसामान्यसंबन्धस्ततश्च सामान्यतो विहितसाप्तदश्यस्य विशेषतो विहितपाञ्चदश्येन बाधान्नतुल्यबलत्वमित्यत आह—**नचेति** । इह सामान्यविशेषयोस्तुल्यप्रमाणकत्वाभावान्न बाध्यबाधकभाव इति भावः । नच प्रकरणेन पाञ्चदश्यस्य प्रथमभपूर्वार्थत्वावगमात्प्राबल्य वाच्यम् । प्रकरणस्य वाक्यापेक्षया विलम्बितप्रवृत्तिकत्वादित्याशयेनोपसंहरति—**तस्मादिति । पूर्ववदिति** । यथा द्विरुक्तिदोषप्रसङ्गात्पर्णतादेः प्रकृतिगामिता तद्वदित्यर्थः । अनेन सङ्गतिरपि सूचिता । यद्यपि द्वयोरपि संख्ययोर्वाक्यसंयोगस्तुल्यस्तथापि वाक्येन तयोः सामिधेनीस्वरूपमात्रसंबन्धावगमात्तन्मात्रार्थत्वे चानर्थक्यापत्तेरवश्यं सामिधेनीशब्देनापूर्वसाधनरूपं लक्षयित्वा तेन रूपेण सामिधेन्यन्वयः संख्ययोर्वाच्यः । अपूर्वसाधनरूपलक्षणा च पाञ्चदश्यवाक्ये प्रकरणबलेन झटिति प्रवर्तते साप्तदश्यवाक्ये तु विलम्बेनेति नानयोस्तुल्यबलत्वमित्याह—**सामिधेनीस्वरूपेणेति** । यद्यपि वाक्यमविलम्बितप्रवृत्तिकं तथाप्यानर्थक्यपरिहारायापूर्वार्थत्वसिद्धौ वाक्यस्य प्रकरण-

---

१ त्सर्वथा. २ तद्वच्च युज्यते. ३ विरोधित्वात्.

श्रणावबोधश्च शीघ्रं प्रकरणाद्भवेत् ॥' प्रकरणे हि विधीयमानस्य सर्वस्य प्रकृतापूर्वसाधनत्वं स्वर-सत इति पाञ्चदश्यमपि तत्रैव विधीयमानं तादर्थ्येन विधातव्यमिति गम्यते । तादर्थ्यं च तत्सा-धनरूपसंबन्धे घटते न सामिधेनीस्वरूपसंबन्ध इति स्वरूपातिक्रमेण साधनरूपलक्षणा तत्र लभ्यते। साप्तदश्यस्य तु स्वरूपमात्रं गम्यते नापूर्वार्थत्वम्। स्वरूपस्य च सामिधेनीस्वरूपेणापि संबन्धो घटते इति नान्वयोपपत्तये लक्षणा, किंतु विधीयमानस्य साप्तदश्यस्यानर्थक्यपरिहाराय प्रतिपन्नक्रतुसंब-न्धसामिधेनीलिङ्गवशादविपरिवर्तमानमेव क्रत्वपूर्वं कथंचिद्बुद्धयेमागतमपि तादर्थ्यसिद्ध्यर्थं तत्सा-धनलक्षणाश्रयणीयेति क्रतुसंबन्धविप्रकर्षाद्दौर्बल्यम् । अतः पूर्वनिविष्टपाञ्चदश्यावरुद्धत्वात्तेनैव च निराकाङ्क्षाप्रकृतिमलभमानं साप्तदश्यं विकृतिषु निवेक्ष्यते । तत्रापि न सर्वासु किंतु श्रुतसाप्तद-श्यासु मित्रविन्दादिष्वेवेति दशमे वक्ष्यते ॥

नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम् ॥ २ ॥

## नैमित्तिकं तु प्रकृतौ, तद्विकारः संयोगविशेषात् ॥ १० ॥

साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ॥ पूर्ववच्चेन्न संकोचान्नियये नैमित्तिकोक्तितः ॥ ५ ॥
गोदोहनेन प्रणयेत्कामीत्येतदुदाहरत् ॥ भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥ ६ ॥

सप्तदश वैश्यस्येति यद्वैश्यनिमित्तेन नैमित्तिकं साप्तदश्यं विधीयते तत्प्रकृतौ वा स्यादुत विकृ-ताविति । प्रकृतेः पाञ्चदश्यावरोधात्पूर्ववद्विकृतिषूत्कर्षे द्वयोर्वा प्रकरणाधीतत्वात्क्रत्वर्थत्वाच्च विकल्पे प्राप्तेऽभिधीयते । नैमित्तिकं साप्तदश्यं प्रकृतावेव नित्यं पाञ्चदश्यं विकृत्य निविशते—'तुल्यप्रक-रणत्वात्तन्नोत्कर्षं तावदृच्छति ॥ प्रकृतौ निविशेतातस्तत्रापि न विकल्प्यते ॥ पाञ्चदश्येन किंत्वस्य बाधकत्वेन वर्तते ॥ नित्यं सामान्यतः पूर्वं सावकाशं विधीयते ॥ नैमित्तिकं विशेषेण पश्चान्निरव-काशकम् ॥ नैमित्तिकमतो हेतुत्रयान्नित्यस्य बाधकम् ॥' सामान्येन हि सर्वप्रयोगाणां पाञ्चदश्यं

---

मपेक्ष्यैव प्रवृत्तिस्ततश्च प्रकरणसाचिव्यात्तत्र शीघ्रं लक्षणाप्रवृत्तिरित्युपपादयति—**प्रकरणेहीति** । साप्तदश्यवाक्यप्रवृत्ति-वेलायामपेक्षितापूर्वस्य झटित्युपस्थापकाभावान्न तत्र शीघ्रं लक्षणावगम इत्याह—**साप्तदश्यस्येति** । तस्य हि स्वरूप-मात्रेण विधेयत्वं प्रथमं गम्यते नापूर्वार्थतया तेन रूपेण विधेयत्वावगमकस्य प्रकरणस्याभावादपूर्वार्थत्वेनावगतौ च तस्य सामिधेनीस्वरूपान्वयानुपपत्तिर्न स्वरूपमात्रस्येति न प्रथमं लक्षणावश्यंभाव इत्यर्थः । नन्वेवं तर्हि लक्षणैव तत्र न स्यात्त-तश्च कथं विप्रकर्ष इत्यत आह—**किंत्वित्यादि** । **ननु** विकृतिष्वपि सामिधेनीप्राप्तिं प्रतीक्ष्य साप्तदश्यं निविशेत्। सामिधेन्यश्च प्राप्यमाणाः पाञ्चदश्यविशिष्टतयैव प्राप्यन्त इति । तत्रापि पाञ्चदश्यावरोधाविशेषात्कथं साप्तदश्यनिवेश इत्यत आह—**तत्रापीति** । ततश्च मित्रविन्दाध्वरकल्पादिषु तत्प्रकरणाम्नातसाप्तदश्येन पाञ्चदश्यबाधान्न तत्रावरोधदोष इति भावः । सूत्रार्थस्तु—प्रकरणकृतादपूर्वसाधनलक्षणाशैघ्र्यरूपविशेषात्पाञ्चदश्यादिकमेव प्रकृतौ स्यात्तद्विरोधिसाप्तदश्यादि तु विकृतौ स्यादिति ॥

**नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्** ॥ १० ॥ सङ्गतिं सूचयन्पूर्वपक्षमाह—**प्रकृतेरिति** । नच पाञ्चदश्यस्य वा किमित्युत्कर्षो न भवेद्विनिगमनाविरहादिति वाच्यम्। ब्राह्मणादिकर्तृकप्रयोगे बाधकाभावेन तस्य प्रकृतौ लब्धात्मकत्वस्यैव विनिगमकत्वात् । **नन्वेवं** विकृतीनामपि पाञ्चदश्यावरोधाविशेषात्कथं तत्रोत्कर्षः । नचात्र पूर्ववत् श्रु-तसाप्तदश्यास्वेव निवेश इति वक्तुं शक्यम् । राजन्यादिनिमित्तकफलचमसादीनामप्यत्र विषयतया तेषां विकृतिषु पुनः-श्रवणाभावेन पुनःश्रवणवद्विकृतिष्वेव निवेश इति वक्तुमशक्यत्वादिति चेत् सत्यम् । विकृतिष्वपि पाञ्चदश्यावरोधोऽस्ति तथापि प्रकृतौ पाञ्चदश्यस्यौपदेशिकत्वान्न तद्बाधनं युक्तं विकृतिषु तु पाञ्चदश्यस्यातिदेशिकत्वादौपदेशिकेन साप्तदश्येन तद्बा-धनं युक्तमिति तत्रोत्कर्षो न्याय्य इति भावः । **द्वयोर्वेति** । द्वयोरपि प्रकरणाधीतत्वात्पूर्ववत्क्रतुसंबन्धे शैघ्र्यभान्यकृतवि-शेषाभावाद्विकल्प इत्यर्थः । एवमपि प्रकृतावुभयोः समुच्चयः किं न स्यादिति शङ्काव्युदासार्थमाह—**क्रत्वर्थत्वाच्चेति** । क्रतूपकारलक्षणकर्मैक्यादेकार्थास्तु विकल्पेरन्निति न्यायेन विकल्पएव न समुच्चय इत्यर्थः । विकृत्येत्यबाध्येत्यर्थः । **ननु** नित्यस्य सोमादेरुत्पत्तिशिष्टतया तेन नैमित्तिकफलचमसादेरुत्पन्नशिष्टस्य बाधो न्याय्यइत्याशंक्य उत्पन्नशिष्टस्यापि नैमित्तिक-स्यैव प्राबल्यं नतूत्पत्तिशिष्टस्य नित्यस्येत्याशयेन नित्यनैमित्तिकयोः प्राबल्यदौर्बल्ये प्रतिपादयति—**नित्यमिति** । **हेतु-त्रयादिति** । नचानेन हेतुत्रयेणैव नैमित्तिकस्य नित्यबाधकत्वे नित्यनैमित्तिकप्रयुक्तस्य कस्यचिद्बाधहेतोरभावात्सामान्यं

---

१ प्रकृतावपूर्व. २ मागमय्य. ३ यद्वैश्य. ४ नैमित्तिकं प्रकृतावेव. ५ तिरमितो.

यावल्लक्षणया वैश्यकर्तृकं प्रयोगं नास्कन्दति तावत्तत्रैव साक्षाद्विधीयमानं साप्तदश्यं बलवद्भवति तथा—पूर्वमेव क्रतोः स्वाभाविकं नित्यं विधीयते। तेन तदसंजातप्रतिपक्षत्वान्न कस्यचिद्बाधक-त्वयावगम्यते। नैमित्तिकं तु निमित्तसंयोगेन विशेषतया विधीयमानं पश्चात्तनं भवति। ततश्च तदुत्पन्नप्रतिपक्षविज्ञानावस्थोत्पत्तित्वात्तदबाधेनात्मानं नालं लब्धुम्। लब्धव्यश्च तेनात्मा प्रत्यक्षव-चनात्। अतः पूर्वगुणबाधकतयैवात्मानं लभते। सावकाशं च नित्यं विप्रराजकर्तृके प्रयोगे। अतो न तेनावश्यं नैमित्तिकविषये निवेष्टव्यम्। नैमित्तिकमनवकाशं नित्याबाधेन न शक्यते विधातुं, विधीयते च तदिति बाधकत्वम्। एतेन काम्यस्यापि गोदोहनादेर्गुणस्य नित्यचमसादेर्बाधकत्वं व्याख्यातम्। पूर्वपक्षस्तु—नैमित्तिकेऽतिमन्द इति कृत्वा भाष्यकारः सूत्रितमपि नैमित्तिकमति-क्रम्य तुल्यन्यायं काम्यमुदाजहार। काम्यस्य हि क्रत्वर्थाभावात्क्रत्वर्थश्चमसस्ततो भिन्नविषयत्वान्न तेन बाधितुं शक्यते। तद्बाधे च क्रतोर्वैगुण्यात्फलं न स्यात् विगुणक्रत्वाश्रितात्[२]गुणादपि फलं न स्यात्। यो हि मधुन्येव दत्तदृष्टिर्दुर्बलां शाखामधिरोहति तस्य विनिपात एव भवति। तद्वदिहापि—'मधुदृष्टिवदेवास्य गुणकामं प्रपश्यतः॥ क्रियाफलविनाशात्मा विनिपातः प्रसज्यते॥' तस्मान्न प्रकृतौ निवेशः संभवतीति विकृतिरेव गतिः। अथवा क्रतवे चमसेन प्रणीय पुनः कामाय[३] गोदोहनेन प्रणेतव्यं नतु बाधसंभवः क्रतुवैगुण्यादिति भवत्येवाधिकाशङ्का तन्निराकरणाय काम्योदाहरणं निराकरणहेतवश्च नैमित्तिकवन्न्यायोऽप्यत्रानुसंधेयाः—'आसन्नपुरुषार्थत्वमपरं चापि कारणम्॥ येन काम्यं बलीयः स्यान्नित्यनैमित्तिकादपि॥' पुरुषार्थप्रयुक्ता हि सर्वस्य प्रवृत्तिः। काम्यं च फलस्य[४] प्र-त्यासन्नं शीघ्रं प्रयुज्यते गोदोहनं। क्रत्वर्थस्तु चमसश्चिरेणेति दुर्बलः। अनेन च हेतुना नैमित्तिका-दपि क्रत्वर्थात्साप्तदश्यात्पुरुषार्थस्यैकविंशत्याद्यनुवचनस्य बलीयस्त्वं भवति। तस्मात्तेन साप्तदश्यं

---

विशेषेण बाध्यते सावकाशं निरवकाशेन नित्यं नैमित्तिकेनेत्येवं सामान्यविशेषादिभिर्नित्यनैमित्तिकयोः पृथक्परिगणनं तान्त्रिकाणां न स्यादिति वाच्यम्। नित्यस्य प्रधानवाक्योपस्थितापूर्वप्रयुक्तेस्तदनुष्ठानं विलम्बितं नैमित्तिकस्य तु स्ववाक्य-गतनिमित्तात् शीघ्रं प्रयुक्तिरिति प्रयुक्तितारतम्यस्यापि बाधहेतोर्विद्यमानत्वेनानुपपत्त्यभावात्। सामान्यविशेषभावाद्युप-पादनपूर्वकं येनयेन हेतुना सामान्यविशेषपौर्वापर्यसावकाशनिरवकाशस्थलेषु बाध्यबाधकभावस्तेनतेन हेतुना प्रकृते बाधमु-पपादयन्नित्यं सामान्यत इत्यादिसार्धश्लोकं व्याचष्टे—**सामान्येनेति**। **लक्षणयेति**। पाञ्चदश्यविधिर्हि प्रकरणाविशेषा-द्दर्शपूर्णमासप्रयोगसामान्यविषयस्तत्तत्प्रयोगविशेषविषयत्वं विनानुष्ठानपर्यवसानाभावात्सामान्यमुखेन तत्तत्प्रयोगविशेषांल्लक्ष-यित्वा पर्यवस्यतीति वक्तव्यत्वाद्वैश्यकर्तृकप्रयोगे विलम्बेन तत्प्रवृत्तिरिति भावः। नित्यस्य पूर्वत्वे हेतुगर्भं विशेषणं स्वाभा-विकमिति। नित्यस्य निमित्तानपेक्षत्वात्पूर्वमेव प्रवृत्तिरिति भावः। **निमित्तसंयोगेनेति**। तत्प्रतिसंधानसापेक्षत्वाद्वि-लम्बिततत्वमिति भावः। एवं यथासूत्रं नैमित्तिकविषयतयाधिकरणमुपवर्ण्य न्यायसाम्यात्काम्येऽपि सिद्धान्तमतिदिशति—**एतेनेति**। गोदोहनादेरिति कर्तरि षष्ठी। चमसादेरिति कर्मणि। **नन्वेवंसति** न्यायसाम्यादेव काम्यस्य बाधकत्वसिद्धेः सूत्रातिक्रमेण काम्यविषयतया भाष्यकारीयाधिकरणोपवर्णनमयुक्तमित्यत आह—**पूर्वेति**। प्रकरणाम्नानानर्थक्याद्विकृता-वुत्कर्षपक्षो मन्दः सावकाशनिरवकाशादिस्थले विकल्पस्याप्रसक्तेर्विकल्पपक्षोऽपि मन्द इत्यर्थः। **ननु** तर्हि उक्तहेतुत एव काम्येऽपि पूर्वपक्षो मन्द इत्यतस्तत्र पूर्वपक्षमुपपादयति—**काम्यस्य हीति**। भिन्नविषयेण गोदोहनेन विरोधाभावाच्च चमसबाधस्ततश्चमसः सर्वेषु प्रयोगेषु प्रवर्तेत इति भावः। तद्वदिहापीत्युक्तमेवार्थं श्लोकेन विवृणोति—**मधुदृष्टिव-दिति**। **क्रियाफलेति**। आश्रयभूतायाः क्रियायाः गुणफलस्य च विनाशात्मेत्यर्थः। क्रियाया वैगुण्येन फलाभाव एव विनाशः। एवंच प्रकृतिप्रयोगे सर्वत्र चमसावरोधाद्गोदोहनस्य विकृतिरेव गतिरित्याह—**तस्मादिति**। **ननु** विकृता-वपि चमसबाधे क्रतुवैगुण्यादेव तत्रापि न निवेशसंभव इत्यस्वरसादाह—**अथवेति**। प्रणयनावृत्त्या उभयोरपि प्रकृतौ निवेशसंभवान्न बाधः। नवा क्रतुवैगुण्यादिरित्यर्थः। **नैमित्तिकादपीति**। अनेन नैमित्तिकस्य काम्येन बाधसूचनार्थ-मपि भाष्ये काम्योदाहरणमिति सूचितम्। पुरुषार्थप्रत्यासत्तेः प्राबल्यहेतुत्वमुपपादयति—**पुरुषार्थेति**। पुरुषाभिलषि-तफलप्रयुक्तेरित्यर्थः। प्रत्यासन्नमिति व्यवधानाभावादिति भावः। **क्रत्वर्थ इति**। क्रतूपकारद्वारा फलोपयोगेन साक्षात्फल-प्रयोज्यत्वाभावादिति भावः। **अनेनचेति**। नैमित्तिकस्यापि क्रत्वर्थतया तत्प्रयुक्तेरपि विलम्बितत्वादिति भावः।

---

१ विधीयमानं विशेषणतया. २ श्रितादपि गुणात्तत्र. ३ पशुकामाय. ४ फलभक्त्या.

पाश्वदश्यं च द्वयमपि बाध्यते । सत्यपि भिन्नविषयत्वे प्रणयनादिद्वारतुल्यतयास्ति विरोधः । ततश्च क्रत्वर्थस्य तस्मिन्प्रयोगे बाधः । प्रयोगान्तरे त्वसाववस्थाप्यते, सामान्येन हि स श्रुतः पशुकामप्रणयनप्रयोगे तु वाक्यान्तरगतश्चमसः संनिधिमात्रेण संबध्यते । गोदोहनं तु तत्रैव वाक्ये श्रुतमिति बलीयः । तदुक्तं 'पशुकामप्रयोगे च क्रमेण चमसाङ्गता ॥ श्रौताद्गोदोहनात्तत्र चमसस्य निराक्रिये'ति बाधितत्वादेव न तदानीं चमसादेरङ्गत्वमवघातादेरिव कृष्णलादौ । अतस्तल्लोपेन नास्ति वैगुण्यं येन क्रियाफलविनाशस्तद्भयाच्च प्रणयनाभ्यासः स्यात् । 'गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा ॥ गोदोहनं च न गुणः क्रतोः कामाय चोदनात् ॥ किंतु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा ॥ काम्यनैमित्तिके तस्मात्प्रकृतौ नित्यबाधके ॥'

आधानस्य पवमानेष्ट्यङ्गताधिकरणम् ॥ ४ ॥

**इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ [न वा तासां तदर्थत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥]**

**आधानं पवमानादेरिष्टेरङ्गं न वा भवेत् ॥ अग्नीनामिष्टिशेषत्वात्तद्द्वाराऽस्य तदङ्गता ॥ ७ ॥**

**अनारभ्य विधानात्तु नाङ्गं कस्यचिदाहितिः ॥ अग्न्यर्थत्वात्तत्समेष्टिरग्नयस्त्वग्निहोत्रगाः ॥ ८ ॥**

आधानं पवमानेष्टयश्च मिथः संनिहिताः समाम्नातास्तत्र किमाधानमिष्ट्यङ्गमुत नेति । तत्र प्रकरणादङ्गत्वम् । **ननु** फलवत्संनिधावफलं तदङ्गं, नचेष्टयः फलवत्यः आधानं सफलमग्निनिष्पादकतयाऽतो विपरीतमङ्गाङ्गित्वम्[1] । सत्यमेवं[2] । सत्वेवं पूर्वपक्षवादी मन्यते । अग्नयोऽतिदेशेनेष्ट्यङ्गं आधानं

---

**प्रणयनादीति** । फलार्थत्वमक्रियारूपस्य गोदोहनस्य स्वतो न संभवतीति प्रणयनकारकीभूतस्यैव तस्य फलसाधनत्वं वाच्यम् । ततश्च गोदोहनेन फले जननीये प्रणयनं द्वारमिव संपन्नं क्रत्वर्थत्वं तु प्रणयनद्वारेत्यत्र न विवाद इत्यस्ति तुल्यद्वारतेति भावः । **ननु** क्रत्वर्थस्य चमसस्य पशुकामप्रयोगे बाध इत्ययुक्तं गोदोहनेन पशुकामस्येत्यत्र चमसेनापः प्रणयेदित्यस्य संनिहितत्वेन संनिधिलक्षणप्रमाणेन चमसस्य पशुकामप्रयोगे विशिष्याङ्गत्वावगमादित्याशङ्क्य फलार्थमपि श्रुतेन गोदोहनेनैव प्रणयनकार्यं सिध्यति, ततश्च पशुकामप्रयोगस्थलीयः क्रतुप्रयोगविधिः स्वसिध्यर्थं प्रणयनसिद्धिं प्रतीक्षमाणस्तस्य गोदोहनेन सिद्धिं दृष्ट्वा चमसं न गृह्णाति । तस्मात्तत्र संनिधिनापि न चमसस्याङ्गत्वमित्याशयेनाह—**पशुकामेति** । वैगुण्याभावमेव विशदयति—**गुणहानिरिति** । अस्य चमसस्य । तदा पशुकाम समय इत्यर्थः । पशुकामप्रयोगे चेति वार्तिकश्लोके श्रौतेन गोदोहनेन संनिधिप्राप्तचमसबाधोक्त्या पशुकामप्रयोगे गोदोहनस्य प्रणयनाङ्गत्वं कश्चिद्भ्रान्त्या नित्यप्रयोगे गोदोहनाभावाद्वैगुण्यं शङ्केतेति मन्यमानस्तद्भ्रमं निवर्तयति—**गोदोहनं चेति** । गोदोहनं क्रतोर्न गुणः । वाक्यस्य फलार्थत्वपरत्वादुभयपरत्वे वाक्यभेदप्रसङ्गात् । किंतु प्रणीयतेऽनेनेति प्रणयनं द्रव्यं गोदोहनाख्यं तदा पशुकामप्रयोगे क्रतोरङ्गमुपकारकमित्यर्थः । यद्वा प्रणयनशब्दः कर्मसाधनः प्रणीतमब्लक्षणं द्रव्यमेव तदङ्गं नतु गोदोहनं चमसो वेत्यर्थः । एवंच उपकारकत्वमात्रतात्पर्यकं पशुकामप्रयोग इति वार्तिकमिति न काप्यनुपपत्तिरिति भावः । सूत्रार्थस्तु—नैमित्तिकं तस्य नित्यस्य विकारो बाधकं सत् प्रकृतावेव निविशेत निमित्तसंयोगकृतविशेषादिति ॥

**इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ ननु** प्रकरणं नामेतिकर्तव्यताकाङ्क्षा । साचेदं फलमनेन कथं कर्तव्यमिति फलवत एव भवति । ततश्चाफलानामिष्टीनामितिकर्तव्यताकाङ्क्षालक्षणप्रकरणमेव न संभवति । तथा प्रकरणेन विनियोगोऽपि फलाकाङ्क्षस्यैव भवति । नचाधानं फलाकाङ्क्षं अग्नीनादधीतेति स्ववाक्यश्रुताग्निभिरेव फलवत्त्वेन तथाकाङ्क्षाविरहादतः कथं प्रकरणादाधानस्येष्ट्यङ्गत्वं प्रत्युत विपरीतमेवाहमिति शङ्कते—**नन्विति । नचेति** । फलाश्रवणादिति भावः । फलाश्रवणेऽपि विश्वजिन्न्यायेन फलकल्पनायामिष्टीनां प्रकरणमुपपद्यते, आधानस्य च नाग्निभिः फलवत्त्वं किंतु प्रोक्षणादेर्व्रीहिसंस्कारकत्ववदग्निसंस्कारकत्वमेव । एवंच प्रयाजादिवदारादुपकारकत्वाभावात्साक्षात्प्रकरणविनियोज्यत्वाभावेऽपि यथा प्रोक्षणादेः श्रुत्या व्रीहिमात्रार्थत्वावगमेऽपि प्रकरणाद्दर्शपूर्णमासापूर्वीयव्रीह्यर्थत्वमेवमाधानस्यापि प्रकरणात्पवमानेष्ट्यङ्गभूताग्निसंस्कारकत्वावगम इति प्रकरणसनाथश्रुतिविनियोज्यत्वात्प्रकरणविनियोज्यत्वमाधानस्योपपद्यत इति परिहरति—**सत्यमिति । अतिदेशेनेति । ननु** यदाहवनीये जुहुतीत्यादिभिराहवनीयादीनां दर्शपूर्णमासयोर्विनियोगे सत्यतिदेशः ।

---

१ नविपरीतं. २ सत्यमेवं पूर्वपक्ष.

त्वाग्निसंस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्ट्यर्थमिष्टीनां तु वि-श्वजिदादिन्यायेन फलकल्पना भविष्यतीति । सिद्धान्तस्तु—फलवदग्निहोत्राद्यर्थत्वादग्नयः फलव-न्तस्तदर्थं चाधानं श्रुतिसंयोगात्, इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदग्न्यङ्गं प्रकरणाद्वाधा-नस्यैव फलवतोऽङ्गं विज्ञायमाना न कल्प्यफला भवितुमर्हन्ति । विनैव कल्पनया सर्वेषामर्थवत्त्वात् । यत्त्वातिदेशिकमग्नीनामिष्ट्यङ्गत्वं तदौपदेशिकेनेष्टीनामग्न्यङ्गत्वेनाधानाङ्गत्वेन वा विरुध्यमानं बाध्यत इति वक्ष्यते । तस्मान्नेष्ट्यर्थमाधानं अनारभ्यवादप्रस्तावादाधानवाक्यस्यानारभ्यवादत्वमे-वस्थितम् ॥

आधानस्य सर्वार्थताधिकरणम् ॥ ५ ॥

**तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १४ ॥ [सर्वार्थे वाधानस्य स्वकाल-त्वात् ॥ १५ ॥]**

आधानं किं प्रकृत्यर्थं वह्निमात्रेण वा युतम् ॥ संस्कृताग्निप्रनाड्यैतत्पर्णवत्प्रकृतौ स्थितम् ॥ ९ ॥
लौकिकाकारमात्रत्वे विफलत्वात्क्रतौ युतिः ॥ पर्णस्याऽऽहवनीयादौ शास्त्रीयेऽस्तु स्वतन्त्रता ॥ १० ॥

'स्थितेऽनारभ्यवादत्वे संप्रत्येतद्विचार्यते ॥ किमाधानं प्रकृत्यर्थमग्निमात्रार्थमेव वा ॥ तत्र पर्णमयी-न्यायात्प्राप्ता प्रकृतिगामिता ॥ उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता ॥ प्रसिद्धक्रतुशेषत्वं प्रकृता-वुपदिश्यते ॥ पर्णत्वमन्यथा दोषो द्विरुक्तिः स्यादितीह तु ॥ न कस्यचित्क्रतोरङ्गमिदं श्रुत्याद्यभावतः ॥ वाक्यं लक्षणया स्याच्चेन्नाग्न्यङ्गत्वोपपत्तितः ॥' स्यादेतत् । यथानारभ्याधीतमपि पर्णमयीत्वं जुहूस्व-रूपपरत्वे सत्यानर्थक्यात्क्रतुसाधनांशे लक्षणया विधीयमानं वाक्यादेव क्रत्वर्थं भवति एवमाधानम-पीति । मैवम् । जुह्वादयो ह्याकृतिविशेषा विनापि पर्णमयीत्वेनैतदाकारसंभवात्तत्स्वरूपार्थत्वे वि-ध्यानर्थक्याद्युक्ता तत्र साधनांशलक्षणा । इह त्वाहवनीयादिस्वरूपस्यादृष्टत्वाच्छ्रुत्यवगततत्स्वरूपार्थ-

---

आहवनीयादिशब्दाश्चाधानादिसंस्कारविशिष्टाग्निवाचकास्ततश्चाधानस्य पवमानेष्ट्यङ्गत्वाङ्गीकारे आहवनीयाद्यग्नीनामेव प्रकृतौ विनियोगायोगात्कथमत्रातिदेश इति चेत् सत्यम् । एवंतु मन्यते पूर्वपक्षवादी, आधानव्यतिरिक्तमन्थनादिसंस्कारमात्र-निमित्तका आहवनीयादिशब्दा इति । तस्मान्नातिदेशानुपपत्तिः । आधानं द्वितीयावगतसाध्यभावादग्न्यर्थमेव । नचाग्नी-नामपुरुषार्थत्वान्न फलत्वसंभव इति वाच्यम् । फलवदग्निहोत्राद्यर्थतया तेषां पश्वादिवत्फलवत्त्वोपपत्तेरतो नेष्ट्यर्थमाधान-मित्याह—**फलवदिति । प्राकरणिकेनेति** । पवमानेष्टिसंनिधौ यदाहवनीये जुह्वतीति किंचिद्वाक्यमस्ति तेन च वाक्येनानिष्पन्नस्याहवनीयस्य पवमानेष्टिषु साधनत्वेन विधानानुपपत्त्या लक्षणया सप्तम्या द्वितीयार्थत्वमाश्रित्येष्टीनामेवा-ग्न्यर्थत्वं विधीयत इत्यर्थः । वाक्यान्तरमनभ्युपगच्छतामाचार्याणां मतेनाह—**प्रकरणाद्वेति** । नन्वतिदेशादग्नीनामि-ष्ट्यङ्गत्वमवगम्यत इति कथमाहवनीयाद्यर्थत्वमिष्टीनामित्यत आह—**यत्त्विति । वक्ष्यत इति** । अत्रैवानुपदमिति शेषः । **अनारभ्यवादत्वमिति** । पवमानेष्ट्यर्थत्वे तत्प्रकरणाधीतत्वादनारभ्यवादत्वानुपपत्त्या इष्ट्यर्थत्वनिराकरणेन करिष्यमा-णोपोद्घाततयानारभ्यवादत्वं व्यवस्थापितमित्यर्थः । प्रयोजनं पूर्वपक्षे आधानस्य स्वर्गार्थपवमानेष्ट्यर्थत्वेनाग्निहोत्रदर्शपूर्णमा-सादिषु आधानकृतस्य कस्यचिदुपकारस्याभावाद्विनाप्याधानेनाग्निहोत्रादयः कर्तव्याः । सिद्धान्ते तु आधानस्याग्न्यर्थत्वाद-ग्निभिर्विनाग्निहोत्रानुष्ठानासंभवादाधानानन्तरमेवाग्निहोत्रादयः कर्तव्या इति ॥

**तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १४ ॥** संप्रतीत्यनेनावसरं सूचयति—**तत्रेति** । अत्रेदमवधेयम्—जुहू-द्वारा पर्णमयत्वस्येवाग्निद्वाराधानस्य क्रत्वर्थत्वेऽपि न प्रकृतिमात्रार्थत्वम् । यत्र विकृतिषु प्रत्यक्षोपदिष्टो होमस्तादृशविकृति-साधारण्यस्याग्नीनामग्निमपादे वक्ष्यमाणतया तद्द्वारस्याधानस्यापि तद्वदेव साधारण्यसंभवात्ततश्च यत्राग्नय उपदेशेन प्राप्नुवन्ति तदर्थत्वेन पूर्वपक्षः प्रवर्तयितुं युक्तो नतु प्रकृत्यर्थत्वेनेति । यस्य सामान्यतः क्रतुशेषत्वमवगतं तस्य किं क्रतुशेषत्वमित्य-पेक्षायां प्रकृतौ वा द्विरुक्तत्वादिति न्यायात्प्रकृत्यर्थत्वं स्यादाधानस्य त्वग्निमात्रशेषतया क्रतुशेषत्वमेव नास्तीति नास्य प्रकृति-गामित्वमित्याह—**श्रुतिसंयोगादिति** । वाक्यं लक्षणया स्यादिति शङ्कां विवृणोति—**स्यादेतदिति** । नाग्न्यङ्गत्वोपपत्तित इति परिहारं विवृणोति—**मैवमिति** । आकृतिविशेषो हंसमुखत्वादिलक्षणः । **इह त्विति** । अलौकिकस्याहवनीयादिस्वरू-पस्याधानेन विना सिद्ध्यनवगमादित्यर्थः । उत्तराधिकरणे वक्ष्यमाणस्य पवमानेष्टीनामतिदेशस्य सिद्धये उक्तन्यायं पवमा-

---

१ भूताग्नीनां संस्कारकमवगम्यमानं प्रकरणादिष्ट्यङ्गभूताग्निसंस्कारकतयावघातादिवदिष्ट्यर्थं, इष्टीनांतु.

त्रेऽपि विध्यानर्थक्याभावान्न साधनांशलक्षणया क्रत्वर्थत्वं युक्तमिति विशेषः। एतेन पवमानेष्टीनामप्यकर्मार्थत्वं व्याख्यातम् ॥

पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम् ॥ ६ ॥

## तासामग्निः प्रकृतितः प्रयाजवत्स्यात् ॥ १६ ॥ [न वा तासां तदर्थत्वात् ॥ १७॥]

**संस्कृते पवमानेष्ट्या वह्नौ सेष्टिर्न वेष्टयः ॥ वह्नौ तत्संस्कृते कार्याश्चोदकस्यानुरोधतः ॥ ११ ॥**
**चोदकः पवमानेष्टौ न तां प्रापयितुं प्रभुः ॥ अनङ्गत्वेष्ट्यसिद्धिभ्यामिष्टयस्तदसंस्कृते ॥ १२ ॥**

प्रासङ्गिकमिदं पवमानेष्टिषु किं पवमानेष्टयः कर्तव्या नेति—'तत्र प्रकृतितस्तासु पवमानेष्टिसंस्कृतः ॥ प्राप्नोत्यग्निस्तदर्थेन कार्यास्ताश्विष्टयोऽपि ताः ॥' **ननु** यास्तदर्थास्तासामप्यन्याः कार्यास्तासामप्यन्या इत्यनवस्थापत्तिः स्यात्। 'उच्यते नैष दोषोऽस्ति सामर्थ्येन व्यवस्थितेः ॥ यावतीः शक्नुयात्कर्तुं तस्मिन्नहनि तावतीः ॥ कुर्वतो नानवस्था[1] स्यादिति प्राप्तेऽभिधीयते ॥ न तावदतिदेशेन प्राप्तिस्तासामनङ्गतः ॥ नहि ताः प्रकृतेरङ्गमिति प्रागेव दर्शितम् ॥ प्रकृतौ[2] चोदनायां यत्कथंभावेन सङ्गतम् ॥ तदेव चोदनालिङ्गाद्विकृतावतिदिश्यते[3] ॥ चोदकेन ततस्तासां तासु प्राप्तिर्न विद्यते ॥ अङ्गत्वे सत्यपि त्वासां नातिदेशोऽवकल्प्यते ॥ विधीयन्ते यदा ता न प्रकृतौ सन्ति तास्तदा ॥' यदा हि पवमानेष्टयो विधीयमानाः कथंभावापेक्षिण्यः प्रकृतिमालोचयन्ति तदा प्रकृतेस्तच्छून्यत्वान्न ततस्ताः शक्यन्ते ग्रहीतुमिति तदतिरिक्तामेवेतिकर्तव्यतां गृहीत्वा संतुष्टाः पवमानेष्टयो न पुनरात्मानं गृह्णन्ति। यत्तूक्तमग्निप्राप्तेरर्थतस्तासामपि प्राप्तिरिति। अत्रोच्यते। सत्यं प्राप्यन्तेऽग्नयस्ते त्वसंभवाद्बाध्यन्ते। तेहीष्टीनां साध्यभूताः कथमिव तासां साधनीभवेयुः। **नन्व**तएवाग्न्यर्थमन्याः क्रियन्ते तत्साधितैश्चाग्निभिरन्या इष्टयः करिष्यन्त इत्युक्तं न सर्वथा तावत्प्रथमं काश्चिदिष्टयोऽत्रा-

---

नेष्टिष्वतिदिशति—**एतेनेति**। पवमानेष्टीनामग्न्यर्थत्वपक्षेऽपि न तद्द्वारा क्रत्वर्थत्वमित्यर्थः। प्रयोजनं पूर्वपक्षे आधानस्य क्रत्वर्थत्वेऽपि न क्रतुकालत्वं वसन्तादिकालविधानेन सर्वक्रतुप्रयोगाद्बहिरेवानुष्ठेयत्वात्ततश्चाधानानुष्ठानमात्रेण सर्वेषां प्रकृतिविकृतियागानां काम्यनित्यनैमित्तिकानामुपक्रान्तत्वात्काम्यानामप्यवश्यानुष्ठेयत्वप्रसङ्ग इति। सिद्धान्ते तु नेति ॥

**तासामग्निः प्रकृतितः प्रयाजवत्स्यात्** ॥ १६ ॥ **ननु** बाधविचारत्वादत्र नास्य सङ्गतिरित्यत आह—**प्रासङ्गिकमिति**। पवमानेष्टिप्रसङ्गात्सङ्गतिरित्यर्थः। **तस्मिन्निति**। अमावास्यायामादधीत पौर्णमास्यामादधीतेत्येवं विहितकाल इत्यर्थः। पवमानेष्टिसंस्कृताहवनीयाद्यग्नेरतिदेशेन प्राप्तौ पवमानेष्टीनामप्यग्निद्वारा क्रत्वर्थत्वात्तासामप्यतिदेशेन प्राप्तिर्यथा सामिधेनीप्राप्तौ पाश्वदश्यस्य तद्वदित्येवं पवमानेष्टीनां क्रत्वर्थत्वाश्रयणेन कश्चित्पूर्वपक्षप्रकारः संभाव्यते। तमिमं प्रकारं पूर्वपक्ष्याशयस्थं मत्वा प्रथमतो दूषयति—**न तावदिति**। नन्वनङ्गत्वेऽप्यग्निद्वारा उपकारकत्वादतिदेशः किं न स्यादत आह—**प्रकृताविति**। अतएव गोदोहनादीनामुपकारकत्वेऽप्यनतिदेश इति भावः। अभ्युपगमवादेनाह—**अङ्गत्व इति**। पवमानेष्टिविधिदशायां पवमानेष्टीनां दर्शपूर्णमासाङ्गत्वेनाक्लृप्तत्वान्न तासामतिदेश इत्यर्थः। **नन्वेवं** पवमानेष्टिविधिसमये दर्शपूर्णमासकथंभावस्यैवापरिपूर्णत्वात्ततः पवमानेष्टिषु प्रयाजादेरप्यतिदेशासंभवात्पवमानेष्टिविधिरपर्यवसित एव स्यात्। नच दर्शपूर्णमासविधेः स्वाङ्गेष्वेवापेक्षा नाङ्गाङ्गेषु। पवमानेष्टयश्चाङ्गाङ्गमिति तद्विधिदशायां स्वाङ्गैः प्रयाजादिभिर्दर्शपूर्णमासकथंभावपरिपूरणं संभवतीति वाच्यम्। उपकारमुखेन हि पदार्थानामतिदेशो न स्वरूपेण। उपकारश्च साक्षात्परंपरया वा सर्वाङ्गसंपाद्य एव स्वीकार्यः। अन्यथाङ्गाङ्गानामभिक्रमणदीक्षणीयावाङ्नियमादीनां विकृतिष्वनतिदेशापत्तेस्ततश्चाङ्गाङ्गान्यप्यपेक्ष्यैव कथंभावपूरणं वाच्यमिति पवमानेष्टिविधिदशायां दर्शपूर्णमासकथंभावस्यापरिपूरितत्वान्नास्ति प्रयाजादेरप्यतिदेश इति शङ्कां निराकर्तुमाह—**तदतिरिक्तामिति**। सत्यमेवं तथापि पवमानेष्टिविधिपर्यवसानार्थमेव दर्शपूर्णमासकथंभावस्य प्रयाजादिभिरेव पर्यवसानं कल्पयित्वा ततः प्रयाजादीनामतिदेशेन पवमानेष्टिविधौ पर्यवसिते तदनन्तरं पूर्वपरिकल्पिते दर्शपूर्णमासकथंभावे इष्टीनामप्यन्तर्भावः कल्प्यते। अन्यथा इष्टिविधेरानर्थक्याद्यथातिदिष्टपदार्थैः प्रथमं पूरितेपि वैकृतकथंभावे पश्चाद्विकृत्याम्नातपदार्थस्यापि तत्रानुप्रवेशः कल्प्यते तद्वदिति युक्तः पवमानेष्टिषु प्रयाजाद्यतिदेश इति भावः। इदानीं यथाश्रुतं पूर्वपक्षं दूषयितुमनुवदति—**यत्त्विति**। यद्यपि पवमानेष्टिविधितः पूर्वमाहवनीयाद्यग्नीनां प्रकृत्यङ्गत्वनिश्चय एव

---

१ नाव्यवस्था. २ प्रकृतिचोदनायां. ३ अतिदेश्यते.

नग्निष्वेव कर्तव्याः ताभिश्च किमग्नयो जायन्ते नवा । यदि नेत्याह किमर्थं ताः क्रियन्ते। अथ जायन्ते सिद्धेऽर्थे नान्याः कर्तव्याः । अग्न्यर्थमेव हि ताः क्रियन्ते । ते च सिद्धा इति नाऽऽभिः प्रयोजनम् । तस्मान्न पवमानेष्टिषु पवमानेष्टयः कर्तव्याः ॥

उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ॥ ७ ॥

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥ [स्थानाच्च पूर्वस्य ॥ १९ ॥ श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥ तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥ नैकदेशत्वात् ॥ २२ ॥ अर्थेनेति चेत् ॥ २३ ॥ न श्रुतिविप्रतिषेधात् ॥ २४ ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ अचोदना वा गुणार्थेन ॥ २७ ॥]**

अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी ॥ उपाकरणमुख्यास्तु धर्माः साधारणा न वा ॥ १३ ॥
ज्योतिष्टोमप्रकरणे पाठात्साधारणा अमी ॥ पशुधर्माग्रहात्सोमयागे ते स्युर्निरर्थकाः ॥ १४ ॥
अग्नीषोमीयधर्मत्वं तेषां स्थानात्प्रसिध्यति ॥ द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥ १५ ॥

एवं प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारं सप्रासङ्गिकं समाप्याधुना स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते पादाद्येन प्रकृतिविकृतीनां समानासमानविधानत्वं विचारितम्। अत्रापि तदेवानुवर्तते । ज्योतिष्टोमे त्रयः पशवः तत्राग्नीषोमीयः क्रयसंनिधावुत्पन्नो वचनादौपवसथ्येहन्यनुष्ठीयते, तस्मिन्नेवाहनि सवनीयाम्नानमाग्नेयः पशुरग्निष्टोम इत्यादि । तत्र च पशुधर्मा यूपच्छेदादयः पठिताः । सौत्येहनि पुनः सवनीयाम्नानं 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोती'ति । अनूबन्ध्यस्त्ववभृथान्ते समाम्नातः । तदिह विचार्यते किमेते धर्मास्त्रयाणामपि पशूनां साधारण्येन विधीयन्ते किंवा सवनीयस्यैव अथाग्नीषोमीयसवनीययोरुताग्नीषोमीयस्यैवेति । तदर्थंच किमग्नीषोमीयस्य स्थानं ज्यौतिष्टोमिकेन प्रकरणेन सवनीयावान्तरप्रकरणेन वा विरुध्यते नेति । तत्सिद्ध्यर्थं च किं सवनीयानामौपवसथ्येह्नि प्रकरणमस्ति नास्तीति चिन्तनीयम् ।

---

न संभवति पवमानेष्टिसंस्कृतानामेवाहवनीयादिशब्दार्थतया तदानीमाहवनीयादिशब्दार्थस्यैवानवगमेन यदाहवनीये जुहोतीत्यादिभिस्तेषां प्रकृत्यङ्गत्वस्य बोधितुमशक्यत्वादेवंच तेषामतिदेशोऽसंभावित एव तथाप्यभ्युपेत्याह—**सत्यमिति** । व्यक्तिभेदान्न साध्यसाधनभावानुपपत्तिरिति शङ्कते—**नन्विति** । अग्न्यर्थे पवमानेष्ट्यङ्गभूताग्निसिद्ध्यर्थमित्यर्थः । **सिद्धा इति** । अनवस्थापरिहाराय प्रथमतोऽग्नीन्विनैवानुष्ठिताभिः पवमानेष्टिभिरग्निसिद्धेरुपेयत्वात्तन्मात्रेणोपपत्तेस्तासां पुनरनुष्ठानमप्रमाणकमित्यर्थः ॥

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥** विरोधः क्वास्ति क्व नास्ति इति चिन्त्यते इत्यप्यादौ श्रुतिलिङ्गादीनां परस्परं विरोधाविरोधविचारस्योपक्षिप्तत्वात्तन्मध्येऽहीनाधिकरणमारभ्य प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारानन्तरं तदनन्तरप्रमाणस्य स्थानस्य पूर्वैः सह विरोधाविरोधौ विचार्येते इति पेटिकाद्वयस्य सङ्गतिमाह—**एवमिति** । अनारभ्याधीतविचारत्वाभावात्पादासङ्गतिमाशङ्क्याह—**पादेति** । पूर्वोत्तरपक्षप्रतिपत्तिसौकर्याय सप्रपञ्चं विषयमाह—**ज्योतिष्टोम इति । क्रयेति** । यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति वाक्यस्य क्रयसंनिध्याम्नानादिति भावः । **वचनादिति** । स एव उपवसथीयेहन् द्विदेवत्यः पशुरालभ्यत इति वचनात् सुत्याहापेक्षया पूर्वदिनलक्षणे औपवसथ्येऽहन्यनुष्ठीयत इत्यर्थः । **स्थानमिति** । यस्मिन्नग्नीषोमीयोऽनुष्ठीयते तस्मिन्नेव दिने धर्माम्नानादनुष्ठानसादेश्यलक्षणं संनिधानमित्यर्थः । **तत्सिद्ध्यर्थमिति** । सति सवनीयावान्तरप्रकरणे स्थानं तेन विरुध्यते तस्मिन्नसति तु न विरुध्यते इत्येवं पूर्वचिन्ताकोटिद्वयार्थत्वमेव तच्चिन्ताकोट्योर्न संभवति । सत्यप्यवान्तरप्रकरणे स्थानस्य तदविरोधेनैवोभयार्थत्वपक्षस्योन्मेषेणावान्तरप्रकरणसद्भावस्य तद्विरोधहेतुत्वाभावादेवंच यद्यवान्तरप्रकरणमस्ति तदा यदि तेन स्थानं विरुध्यते तदा स्थानबाधेन केवलसवनीयार्थत्वं यदि सत्यप्यवान्तरप्रकरणे तेन स्थानं न विरुध्यते तदोभयार्थत्वम् । यदि चावान्तरप्रकरणं नास्ति तदा यदि महाप्रकरणेन स्थानं विरुध्यते तदा सर्वार्थत्वम् । यदिच न विरुध्यते तदा केवलाग्नीषोमीयार्थत्वमित्येवं

---

१ नैव सिद्धा. २ सह विरोधविचारं. ३ तत्रैव.

**ततोऽप्येतद्विवेक्तव्यं किमौपवसथ्येह्नि सवनीयोत्पत्तिरुत सौत्येहनीति । तत्र प्रकरणाज्ज्योतिष्टोमगृहीता धर्मास्तदङ्गेषु पशुषु विज्ञायमानास्तत्प्रकरणाविशेषात्सर्वार्था भवन्ति । ज्योतिष्टोमद्वारेण हि पशूनां धर्मविधौ प्रकरणं न स्वतः कस्यचित्प्रकरणम् । अग्नीषोमीयस्यापि स्थानमात्रं तच्च प्रकरणाद्दुर्बलम् । सवनीयस्यापि सुत्यायामुत्पत्तिरितरत्र गुणार्थं श्रवणमिति नास्त्येव विशेषतः प्रकरणम् । अनूबन्ध्यस्य त्वनाशङ्कनीयमेव । तस्मात्सर्वार्थाः । स्यादेवमविशिष्टं प्रकरणं यदि ज्योतिष्टोमद्वारं स्यात् । सवनीयस्य तु स्वतएव विशेषतोऽवान्तरप्रकरणमस्ति । सौत्येहन्याश्विनग्रहणोत्तरकालगुणार्थं श्रवणमौपवसथ्येहनि गुणाभावात्सवनीयानामुत्पत्तिः । अतः प्रकरणात्तदर्थाः । येत्ववान्तरप्रकरणं नेच्छन्ति तेषां सूत्रभाष्यविरोधः । यच्चानिष्टप्रसञ्जनं समिदादिषु सौमिकधर्मप्राप्तिरिति तत् पितृयज्ञे**

---

द्वितीयतृतीयचिन्ताद्वयं मिलित्वा प्रथमचिन्तासिद्ध्यर्थमिति बोध्यम् । अत्राग्निष्टोमस्य यः सवनीयः पशुः स एवोदाहरणं नतूक्थ्यषोडश्यतिरात्रसंस्थागता अपि संस्थानां विकृतित्वेन पशुधर्माणां तदीयपशुसाधारण्याप्रसक्तेरतएव त्रयः पशव इत्येव विषयप्रदर्शनावसरे उक्तम् । एवंच किं सवनीयानामिति बहुवचननिर्देशोऽविवक्षित इति ध्येयम् । तृतीयचिन्तार्थे चिन्तान्तरमाह—**ततोपीति । ज्योतिष्टोमेति ।** नच यूपे पशुं नियुञ्जीत पशुमुपाकरोतीत्येवं पशुसंयुक्तानां ज्योतिष्टोमप्रकरणेन साक्षाद्ग्रहणं न संभवति प्रकरणस्यासंयुक्तेष्वेव साक्षाद्व्यापारात् । तथाच तद्द्वारा तदीयाङ्गावताराभावात्कथं नियोजनादीनां सर्वपशुसाधारण्यमिति वाच्यम् । तेषामपि पशुस्वरूपार्थत्वे आनर्थक्यापत्त्या लक्षणया पूर्वसाधनार्थत्वे सति प्रकरणाविशेषात्प्राकरणिकसर्वपशुयागापूर्वसाधनार्थत्वमेव वक्तव्यमिति सर्वार्थत्वसिद्धेरिति भावः । **तदङ्गेष्विति ।** ज्योतिष्टोमस्य सोमद्रव्यकतया तत्र पशुधर्माणामयोग्यत्वादानर्थक्यतदङ्गन्यायेन तदीयपशुयागेषु विज्ञायन्त इत्यर्थः । **ननु** अग्नीषोमीयस्य क्रयसंनिधावुत्पन्नस्य तत्र धर्माभावात्साकाङ्क्षस्य वचनादौपवसथ्येऽहन्युत्कृष्टस्य संनिधौ धर्माणां श्रवणात्तदानीमग्नीषोमीयस्येतिकर्तव्यताकाङ्क्षायाः सद्भावात्तस्य स्वतएव धर्मविधौ प्रकरणमस्ति तथा सवनीयस्याप्याग्नेयः पशुरग्निष्टोम आलभ्य इत्यौपवसथ्येहन्युत्पत्तेरस्ति प्रकरणं तत्कथं पशुधर्माणां ज्यौतिष्टोमिकमहाप्रकरणेन ग्रहणमित्यत आह—**ज्योतिष्टोमद्वारेण हीति ।** अग्नीषोमीयस्य हि धर्मविधिसंनिधौ नेतिकर्तव्यताकाङ्क्षास्ति येन प्रकरणं स्यात् । यदाह्यग्नीषोमीयः क्रयसंनिधावुत्पन्नस्तदैव तस्येतिकर्तव्यताकाङ्क्षा । साच चोदकेनैव पूरिता । ततश्च चोदकेन निराकाङ्क्षस्यैव सतस्तस्य वचनादौपवसथ्येहनि प्राप्तिरित्यौपवसथ्येहनि तस्येतिकर्तव्यताकाङ्क्षाविरहान्नास्ति प्रकरणं किंतु स्थानमेव । **नन्वे**वमपि यथा प्राकृताङ्गसंदष्टतया विकृत्याम्नातानामामनहोमादीनां स्थानप्रमाणेन न विकृत्यङ्गत्वं किंतु प्रकरणेनैव तद्वदिहापि पशुधर्माणां सामिधेन्याघारप्रयाजानूयाजादिसंदष्टतयाम्नातत्वात्तेषां प्रकरणेनैव स्वसंनिहिताग्नीषोमीयाङ्गत्वं किं न स्यादिति वाच्यम् । यदा हि विकृत्याकाङ्क्षया प्राकृताः पदार्थाश्चोदकतः संबध्यन्ते तदैव तत्संदष्टानामामनहोमादीनामपि संबन्धात्तत्र युक्तं प्रकरणेन विनियोग इति । इहतु प्राकृताः पदार्थाः अग्नीषोमीयेनोत्पत्तिस्थल एवान्वितास्तद्दशायां च पशुधर्माणामुपस्थितिरेव नास्तीति तेषां चोदकत ऐष्टिकानामग्नीषोमीयान्वयसमकालमन्वयासंभवान्नास्ति प्रकरणविनियोज्यत्वमिति वैषम्यात् । तथा सवनीयस्यापि वपाप्रचाररूपगुणविधानार्थमेवौपवसथ्येहनि श्रवणमिति नास्ति स्वतः प्रकरणमित्यर्थः । **ननु** सौत्येहनि आश्विनं ग्रहं गृहीत्वेति वाक्ये गुणार्थं श्रवणं न संभवति प्राप्तकर्मानुवादेनानेकगुणविध्ययोगादिति शङ्कां निराकर्तुमाश्विनोत्तरकालेत्युक्तं वपया प्रातःसवन इत्यादिना प्रधानोत्कर्षादेवाङ्गानां प्रधानकालकर्तव्यतया तेषामप्युत्कर्षेसति पूर्वेद्युर्विहितानां परिव्याणादीनामपि प्रातःसवने उत्कर्षे सिद्धे प्रातःसवनेपि कदेति विशेषापेक्षायां आश्विनं ग्रहं गृहीत्वा परिवीयेति परिव्याणस्य वा यदा त्रिवृता यूपं परिवीयोपाकरोति तदाश्विनं ग्रहं गृहीत्वेत्युपाकरणस्य वा आश्विनग्रहोत्तरकालविशेषमात्रं विधीयते । परिव्याणमुपाकरणं द्रव्यदेवते सवनसंबन्धश्च वाक्यान्तरप्राप्तेरनूद्यन्ते । परिव्याणोपाकरणक्रमश्च पाठप्राप्तोऽनूद्यत इति नास्ति वाक्यभेद इति भावः । **गुणाभावादिति ।** आग्नेय अग्निष्टोम आलभ्यत इति वाक्ये प्रचारविप्रकर्षस्याश्रवणात्तद्वाक्यं न प्रचारविप्रकर्षविध्यर्थं किंतूत्पत्तिपरमेवेत्यर्थः । प्राभाकरास्तु साधिकारविधेरेवेतिकर्तव्यताकाङ्क्षा तस्यैव स्वतः प्रयोजनतयानुष्ठेयत्वादङ्गविधीनां तु निरधिकारतयेतिकर्तव्यताकाङ्क्षाविरहान्नास्ति प्रकरणमित्याहुस्तन्मतं निराकर्तुमाह—**येत्विति ।** स्वतःप्रयोजनत्वाभावेऽपि प्रधानोपकारार्थमङ्गविधीनामप्यनुष्ठेयत्वादस्तीतिकर्तव्यताकाङ्क्षेत्यभिक्रमणाधिकरण एवोक्तमिति भावः । **सूत्रेति ।** सर्वेषामपि पशुयागानां पशुधर्मविधिः प्रकरणाविशेषाद्धि तुल्यः स्यादिह त्वस्ति प्रकरणविशेषः सवनीयस्यावान्तरप्रकरणसद्भावादिति सवनीयावान्तरप्रकरणपरत्वादेतदधिकरणाद्यसूत्रस्य तन्मते एतत्सूत्रविरोधः । अस्तितु प्रकरणविशेषः सवनीयस्य प्रकरणे पशुधर्माः समाम्नाता इति सवनीयस्य प्रकरणाद्भवन्तीति च भाष्ये स्पष्टमवान्तरप्रकरणव्यवहारात्तद्विरोधश्चेत्यर्थः । यद्यपीदं सूत्रं ज्यौतिष्टोमिकमहाप्रकरणाविशेषात्सर्वेषां पशुधर्मविधिस्तुल्य इति स्वर-

---

१ रिति तत्र.

साधिकारेऽपि तुल्यम् । अथ तस्य तस्मात्पितृभ्यः पूर्वेद्युः क्रियते इति देवताविधेर्नाव्यक्तत्वं समिदादिष्वपि मन्त्रवर्णाद्देवताविधिरुपांशुयाजवदस्त्येव माप्रापन्सौमिकधर्माः । दार्शपौर्णमासिकधर्मास्तु प्राप्नुयुः वैमृधवदितिचेत् । इदमपि पितृयज्ञे तुल्यम् । अथ तत्र द्रव्यदेवतादिसंनिपातिपौष्कल्याश्चातिदेशस्तत्समिदादिष्वपि तुल्यमिति दर्शितं प्रकरणाधिकरणे । तस्मादस्त्यवान्तरप्रकरणम् । यदि चैतन्नेष्यते ततः स्थानादेव सवनीयार्थता वक्तव्या स्यात्तच्चाग्नीषोमीयस्याप्यवशिष्टमिति केवलसवनीयार्थत्वपक्षोऽत्यन्तं निर्मूलः स्यात् । ननु तवाप्युभयार्थत्वपक्षो निर्मूलः यथा न निर्मूलस्तथा वक्ष्यामः । तस्मात्सवनीयार्था इति द्वितीयः पक्षः । गृह्णीम एतत्सवनीयार्था इति । स्थानादग्नीषोमीयार्था अपि भवेयुः । 'ननु प्रकरणात्स्थानं दुर्बलं तत्कथं ततः ॥ अग्नीषोमीयशेषत्वं धर्माणां स्यात्तदुच्यते ॥' यद्यपि प्राकरणिकेन सवनीयार्थत्वेन धर्मा निराकाङ्क्षास्तथाप्यग्नीषोमीयस्यापि पशुधर्मापेक्षित्वात्तेनापि संबध्यन्ते । यथोपदेशावगतप्रकृत्यङ्गभावा धर्मा दुर्बलेनाप्यतिदेशेन विकृतेरपि भवन्ति, एवमेतेऽप्युभयार्था इति प्राप्ते ब्रूमः—'अग्नीषोमीयशेषत्वं यदुक्तं सत्यमेव तत् ॥ सवनीयार्थतां तेषामवजानीमहे कुतः ॥ सवनीयस्य धर्मेषु नास्ति प्रकरणं यतः ॥ न खल्वौपवसथ्येऽह्नि सवनीयो विधीयते ॥ यतः प्रकरणं तत्र सवनीयस्य लभ्यते ॥ प्रचारविप्रकर्षाख्यगुणस्य तु विधित्सया ॥ कीर्त्यते सवनीयोऽत्र सौत्ये त्वेष विधीयते ॥ कर्मणश्च विधिर्यत्र[1] तत्र प्रकरणं भवेत् ॥ नतु यत्र गुणार्थेन श्रवणं तत्र

---

सतः प्रथमपक्षप्रतिपादनपरमेव भाति तथापि स्थानाच्च पूर्वस्य श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्थत्वाद्युत्तरसूत्राणामसांगत्यपरिहारायाद्यसूत्रं द्वितीयपक्षप्रतिपादनपरमेव । प्रथमपक्षस्तूत्सूत्रमेव प्रवर्तयितव्य इति वार्तिक एव प्रपञ्चितमिति भावः । निरधिकाराणामपीतिकर्तव्यताकाङ्क्षाभ्युपगमे समिदादिष्वितिकर्तव्यताकाङ्क्षायामव्यक्तासु तु सोमस्येति सौमिकधर्मातिदेशः स्यादिति यत्तैरवान्तरप्रकरणाभ्युपगमेऽनिष्टमापादितं तदनूद्य निराकरोति—**यच्चेति** । **ननु** मन्त्रवर्णतो देवतालाभेऽपि तद्धितेन चतुर्थ्या वा स्वार्थतया विनियुक्तदेवताविरहलक्षणाव्यक्तत्वस्य न हानिरिति शङ्कां दृष्टान्तकथनव्याजेन निराह—**उपांशुयाजवदिति** । उपांशुयाजस्याव्यक्ततापरिहारार्थं मन्त्रवर्णतोऽपि देवताविरहस्थल एवाव्यक्तत्वं स्वीकार्यमिति भावः । इदंच स्वमतरीत्योक्तम् । तन्मते उपांशुयाजे अर्थवादबलाद्देवतालाभाङ्गीकारादिति ध्येयम् । समिदादीनां दर्शपूर्णमासाङ्गत्वात्तत्र कथं दर्शपूर्णमासधर्मप्राप्तिः, समिदादिविधेः पूर्वं दर्शपूर्णमासकथंभावस्यैवापरिपूर्णत्वादित्यत आह—**वैमृधवदिति** । यथा तदितराङ्गैरेव दर्शपूर्णमासकथंभावपूरणाश्रयणेन वैमृधे दर्शपूर्णमासधर्मातिदेशस्तद्वदिहापि संभवतीत्यर्थः । **द्रव्येति** । चरुद्रव्यपितृदेवतासकृदाच्छिन्नबर्हिःस्थालीशूर्पादिसंनिपातिपौष्कल्यादित्यर्थः । **दर्शितमिति** । वेदिबर्हिरग्नीध्रादिभिस्तत्संस्कारैश्चान्वाधानादिभिश्चास्ति संनिपातिपौष्कल्यमिति प्रदर्शितमित्यर्थः । एवं परोक्तावनिष्टप्रसङ्गौ परिहृत्य स्वयं तन्मतेऽनिष्टमापादयति—**यदिचेति** । **कथमिति** । अवान्तरप्रकरणात्सवनीयार्थत्वं स्थानादग्नीषोमीयार्थत्वमित्येवं स पक्षस्त्वयोपपादनीयः । तच्च न संभवति । स्थानस्य प्रकरणाद्दुर्बलत्वादित्यर्थः । **तेनापीति** । अग्नीषोमीयस्याकाङ्क्षाबलाद्धर्माणामाकाङ्क्षामुत्थाप्य संबन्धः स्वीकार्य इत्यर्थः । **एवमेतेऽपीति** । अत्रास्मद्भ्रातरो गुरुचरणा वेङ्कटाद्रियज्वानः—एवंसति प्रथमतो ज्योतिष्टोमसंबद्धानामपि दीक्षणीयादीनां काम्योक्थादिसंस्थाकाङ्क्षया तदन्वयसंभवाद्दीक्षणीयादीनामपि क्रतुसंस्थोभयसाधारण्यं स्यात्तथाभिषवादिसंस्काराणां प्रथमतो नित्येन सोमेनान्वितानामपि नैमित्तिकफलचमसाकाङ्क्षया तेनाप्यन्वयसंभवादभिषवादीनामपि सोमफलचमसोभयसाधारण्यं स्यात्ततश्च संस्थानां फलचमसस्य च विकृतित्वं न स्यात् । यदि च तत्र प्रथमतो ज्योतिष्टोमेन सोमेन चान्वितानां दीक्षणीयादिविधीनामभिषवादिविधीनां च विरम्यव्यापारप्रसङ्गेन संस्थाभिः फलचमसेन चान्वयायोगात्साधारण्यानुपपत्त्या संस्थानां फलचमसस्य च विकृतित्वं तथा प्रकृतेऽपि प्रथमं सवनीयान्वितानां पशुधर्मविधीनां पश्चादग्नीषोमीयान्वये विरम्यव्यापारप्रसङ्गादग्नीषोमीयस्य सवनीयविकृतित्वमेव स्यादिति कथं पशुधर्माणामुभयार्थत्वम् । नच श्रुत्यादिप्रमाणषट्काभावेऽतिदेशाश्रयणं प्रकृते च संनिधिलक्षणप्रमाणसद्भावेनातिदेशायोगाच्च विकृतित्वमिति वाच्यम् । तर्हि संस्थादिविधौ ज्योतिष्टोमान्वितानां दीक्षणीयादीनां बुद्धौ विपरिवर्तमानत्वेन संनिधेस्तत्रापि सत्वादतिदेशो न स्यात् । नच फलचमसस्य सोमकार्यापन्नत्वात्कार्यापत्तेश्चातिदेशप्रापकत्वात्तत्रातिदेशः संभवतीति युक्तम् । उपदेशासंभवस्थल एव तस्या अतिदेशप्रापकत्वादन्यथा व्रीहिकार्यापत्त्या यवेष्वप्यतिदेशप्रसङ्गात् । तस्मादत्र वैषम्यस्य वक्तुमशक्यत्वादयं पक्षो दुर्बल एवेत्याहुः । **अवजानीमह इति** । यद्यप्यवपूर्वो जानातिरवमानार्थकस्तथापि प्रकृते ज्ञानार्थे गौणो बोध्यः । **अत्रेति** । औपवसथ्येऽह्नीत्यर्थः । **कर्मणश्चेति** । कर्मविधेर्हि इतिकर्तव्यताकाङ्क्षा । तेन

---

[1] विधिर्यावत्.

**विद्यते ॥ तस्मान्न सवनीयस्य प्रक्रिया गुणसंनिधौ ॥' यस्त्वौपवसथ्यवाक्ये गुणो नास्तीत्युक्तं, अस्ति प्रचारविप्रकर्षः । आग्नेयं पशुमित्याद्यनुकीर्त्य यथा वै मत्स्य इत्यादिना निन्दित्वा तत्परिहाररूपेण वपया प्रातःसवने चरन्तीत्यादिना प्रचारविप्रकर्षो विधीयते । शक्यते च सौत्येऽप्युत्पन्नं कर्मानूद्य प्रचारविप्रकर्षो विधातुमुपादेयत्वात्, सुत्यावाक्ये तु कालो गुणः । नचासावनुपादेयत्वादौपवसथ्योत्पन्नदूरस्थाविपरिवर्तमानकर्मानुवादेन विधातुं शक्यत इति । तत्र तावत्कर्मोत्पत्तिर्विधातव्या । नन्वौपवसथ्येऽप्युत्पन्नं कर्म प्रचारोत्कर्षादुत्कृष्टं प्रातःसवने विपरिवर्तत इति शक्यतएव कालविधिः । मैवम् । ये हि वपाप्रचारात्प्रत्यञ्चः पदार्थास्तेषामेव तदादिवाभिसंबन्धादिति न्यायेनोत्कर्षः स्यात् । अपूर्वत्वाद्वा तेषामपि न स्यात् । उपाकरणादीनां तु प्राचां पदार्थानां नास्त्येवोत्कर्षः ।**

---

**यत्र कर्म** विधीयते तत्रैव प्रकरणं नान्यत्रेत्यर्थः । **अस्तीति** । 'आग्नेयः पशुरग्निष्टोम आलब्धव्य आग्नेयो ह्यग्निष्टोम ऐन्द्राग्नः पशुरुक्थ्य आलब्धव्य ऐन्द्राग्नो ह्युक्थ्य ऐन्द्रो वृष्णिः षोडशिन्यालब्धव्य ऐन्द्रः षोडशी सारस्वतीमेष्यतिरात्र आलब्धव्या वाग्वै सरस्वती'त्यनेन वाक्येन सवनीयाननुकीर्त्य 'यथा वै मत्स्योऽविदितो जनमवधूनुते एवं वा एतेऽप्रज्ञायमाना जनमवधून्वत' इत्यनेन वाक्येन यथा मत्स्यो जलचरत्वादनवधारितः प्रेक्षकजनमवधूनुते किमितो गतः किं वा मृत इत्येवं संशयजननेन प्रेक्षकं तिरस्करोति एवमेतेऽपि पशवः क्व कर्तव्या इत्यविज्ञायमानाः कर्तारमृत्विग्जनमवमन्वते इति निन्दित्वा एभिः कथं सवनानि पशुमन्ति भवन्तीत्यनेन यस्मादनुष्ठानदेशविशेषयुक्ततया न ज्ञायन्ते तस्मात् क्वानुष्ठितैस्त्रीण्यपि सवनानि पशुमन्ति भवन्तीति प्रश्नमवतार्य 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने सवने अङ्गैस्तृतीयसवन' इत्यनेन प्रचारविप्रकर्षो विधीयते । ततश्च पशुसंकीर्तनदेशविशेषाज्ञानप्रयुक्तनिन्दार्थं निन्दा च प्रश्नार्था प्रश्नश्च प्रचारविप्रकर्षविध्यर्थमित्येवं पशुसंकीर्तनस्य निन्दाद्वारा प्रचारविप्रकर्षविध्येकवाक्यतापन्नत्वाद्गुणविधानार्थत्वमौपवसथ्यवाक्यस्योपपन्नमित्यर्थः । विषयप्रदर्शनावसरे भाष्यानुसारेणाग्नेयः पशुरग्निष्टोम इति प्रथमान्तपदयुक्तवाक्यमुदाहृतम् । इदानीं तु वार्तिककारैः शाखान्तरपाठानुसारेणाग्नेयं पशुमग्निष्टोमे आलभेतेति द्वितीयान्तपाठस्योदाहरणात्तदनुसारेणाग्नेयं पशुमित्याद्यनुकीर्त्येति द्वितीयान्तं पठितमिति न पूर्वापरविरोधः । विनिगमनाविरहमाशङ्क्यानुपादेयगुणसमभिव्याहृतवाक्य एव कर्मोत्पत्तिर्न तूपादेयगुणसमभिव्याहृतवाक्ये । उपादेयस्य दूरस्थकर्मानुवादेनापि यदाहवनीये जुहोतीतिवद्विधिसंभवादिति प्रकरणान्तरन्यायेन विनिगमकमाह— **शक्यतेचेति** । **नन्वत्र** दूरस्थस्यापि बुद्धौ विपरिवृत्तेरसन्निधानलक्षणप्रकरणान्तराभावात्पौर्णमास्यां पौर्णमास्या यजेतेतिवत्संनिहितकर्मानुवादेनानुपादेयस्यापि गुणस्य विधिः 'संनिधौ त्वविभागा'दिति न्यायेन संभवतीति शङ्कते—**नन्विति** । उपाकरणस्य परिव्याणस्य वा आश्विनग्रहोत्तरकालो विधेयो वाच्यः । तयोश्च नास्ति विपरिवृत्तिः । नच प्रचारोत्कर्षेण तयोरप्युत्कर्षाद्विपरिवृत्तिरिति वक्तुं शक्यम् । यतः एकोत्कर्षे अपरोत्कर्षो द्वेधा संभवति प्रधानोत्कर्षे अङ्गोत्कर्षाद्वा तदा दिवाभिसंबन्धादिति न्यायाद्वा तत्र औपवसथ्येऽहनि कर्मोत्पत्तिपक्षे तत्रैवाङ्गानां कर्तव्यत्वेन निर्ज्ञातकालत्वादनिर्ज्ञातकालानामेवाङ्गानां प्रधानोत्कर्षेणोत्कर्षादुपाकरणादीनामिह नास्त्युत्कर्षः । तदादिवाभिसंबन्धादितिन्यायस्तु उपाकरणादिष्वत्यन्ताप्रसक्तस्तस्मान्नोपाकरणपरिव्याणयोर्विपरिवृत्तिरिति परिहरति—**मैवमिति** । **तदादीति** । अग्नीषोमीयपशौ प्रकृतितो हविरासादनोत्तरकालानां प्रयाजानां तिष्ठन्तं पशुं प्रयजतीति श्रूयमाणोऽपकर्षः प्रयाजानामेव न तत्पूर्वपदार्थानामाघारादीनाम् । तथा सवनीयपश्वनुयाजानामग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्याग्निमारुतशस्त्रानन्तरमुत्कर्षोऽपि तन्मात्रस्यैव नतूत्तरपदार्थानां सूक्तवाकादीनामित्यङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षः स्यादित्यनेन सूत्रेण पूर्वपक्षं कृत्वा उत्कर्षस्तदादेरपकर्षश्च तदन्तस्य स्यान्नतु श्रुतमात्रस्य बद्धक्रमत्वात् श्रुतमात्रोत्कर्षापकर्षयोः क्रमविलोपप्रसङ्गादित्येव 'तदादिवाभिसंबन्धात्तदन्तमपकर्षे स्या'दित्यनेन सूत्रेण पञ्चमे सिद्धान्तितं तन्न्यायादित्यर्थः । **अपूर्वत्वादिति** । अक्लृप्तक्रमत्वादित्यर्थः । पञ्चम एव तथापूर्वमित्यत्र दर्शपूर्णमासयोर्हविरभिवासनोत्तरकालमाम्नाता वेदिरमावास्यायां वेदं कृत्वा वेदिरित्यपकृष्यमाणापि हविरभिवासनान्तान्पूर्वपदार्थान्नापकर्षति । यावद्धि पाठक्रमेण हविरभिवासनान्तानां वेदेश्च क्रमः कल्पयितुं प्रयत्यते ततः प्रागेव प्रत्यक्षवचनेन वेदेरपकर्षविधानादपकृष्यमाणावस्थायां वेदेर्हविरभिवासनादिपदार्थैरक्लृप्तक्रमतया तदपकर्षासंभवादिति व्यवस्थापितं तन्न्यायेनात्रापि पाठतः क्रमक्लृप्तेः पूर्वमेव प्रत्यक्षवचनतो वपाप्रचारोत्कर्षात् श्रुतिमात्रोत्कर्षो नतु तदाद्युत्कर्ष इत्यर्थः। राजसूये आभिषेचनीयाख्यसोमयागं विधाय श्रुतेषु विदेवनादिष्वभिषेकान्तेषु पदार्थेषु मध्ये माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इत्यभिषेकोपकृष्यमाणोऽक्लृप्तक्रमोऽपि विदेवनादीन्प्राचः पदार्थानपकर्षति । यतः पूर्वं क्रमात्क्लृप्तावपि संप्रति क्रमकल्पनायामभिषेकपूर्वभावित्वं, विदेवनादीनां प्रत्यक्षपाठप्रमाणकमभिषेचनीयस्य प्राकृताङ्गोत्तरकालत्वं तु तेषामन्ते तु बादरायण' इति न्यायप्रमाणकम् । न्यायश्चानुमानरूपः प्रत्यक्षपाठापेक्षया दुर्बल इति 'कृतदेशात्तु पूर्वेषा'मित्यत्र पञ्चमे व्यवस्थापनात् । तन्न्यायेन प्रकृतेऽपि अत्रैव क्रमकल्पनायां प्रत्यक्षपाठानुसारेण 'वपाप्रचारोत्कर्षे तदुत्तरपदार्थानामुत्कर्षोऽस्ती'ति वार्तिके प्रतिपादनाद्दाश-

तस्मादुपाकरणस्य प्रातःसवने विपरिवृत्त्यभावान्न तस्य कालविधिः संभवतीत्युत्पत्तिविधिरेवायं इतरस्तु गुणविधिरिति प्रकरणाभावान्न सवनीयार्थत्वम्। स्थानात्त्वग्नीषोमीयार्थत्वम्। यत्तु महाप्रकरणेन स्थानं बाधित्वा ज्योतिष्टोमगृहीताः सर्वपशूनामित्युक्तं तत्रोच्यते। पशुधर्मा हि पशुमाकाङ्क्षन्ति, ज्योतिष्टोमस्तु सोमयागो न पशुधर्मान्गृह्णाति। यदि न कश्चिदपि पशुधर्मान्ग्रहीतुं शक्नुयात्ततो गत्यभावाज्ज्योतिष्टोमगृहीताः सन्तस्तत्रानर्थक्यात्तदङ्गेष्ववतरेयुः, शक्नोति तु स्थानादग्नीषोमीयो ग्रहीतुमिति तदर्था धर्माः। 'न सर्वेषाममी नापि सवनीयस्य नोभयोः॥ अग्नीषोमीय एवातो विधेर्धर्मा व्यवस्थिताः॥ अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः॥ विधिस्तु दैक्ष एवेति सूत्रे विधिरुदाहृतः॥

शाखाहरणादीनामुभयदोहधर्मताधिकरणम्॥ ८॥

## दोहयोः कालभेदादसंयुक्तं शृतं स्यात्॥ २८॥ [प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम्॥ २९॥]

शाखाछेदादयो दोहे धर्माः सायं व्यवस्थिताः॥ प्रातश्च सन्ति वा सायं स्थानात्ते पूर्ववस्थिताः॥ १६॥
आनर्थक्यप्रतिहतिः पूर्ववन्नेह विद्यते॥ बलिनोऽतः प्रकरणात्प्रातर्दोहेऽपि सन्ति ते॥ १७॥

दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः प्रातर्दोहश्चापरेद्युर्दोहधर्माः शाखाहरणादयः पूर्वेद्युः क्रियन्ते ते किं सायंदोहार्था उतोभयार्था इति संदेहे पूर्ववदनुष्ठानसादेश्यादवान्तरप्रकरणाच्च सायंदोहार्था इति प्राप्तेऽभिधीयते। प्रकरणाविशेषादुभयार्थाः। नहि स्थानं प्रकरणस्येष्टे। नच दधियागस्यावान्तरं प्रकरणमत्रास्ति। नच स्थानमपि प्रधानस्य विद्यते। तस्यापरेद्युरेवानुष्ठानात्। दधिसिद्ध्यर्थास्तु

---

ब्दोऽनास्थायामिति द्रष्टव्यम्। **तस्मादिति**। उपाकरणस्येत्युपलक्षणं। परिव्याणस्य वेत्यपि द्रष्टव्यम्। सवनीयस्य प्रकरणनिरासेन द्वितीयतृतीयपक्षौ निरस्य प्रथमपक्षं निरसितुमनुवदति—**यत्त्विति**। **पशुधर्मा इति**। ततश्चायोग्यत्वान्न सोमप्रकरणेन ग्रहणमित्यर्थः। **ननु** स्वाङ्गद्वारा योग्यत्वान्नात्यन्तायोग्यतेत्यत आह—**यदीति**। साक्षात्स्वार्थतया ग्रहणायोग्यत्वात्प्रथमप्रवृत्तं प्रकरणं झटिति परावर्तते। तदनन्तरंच धर्माम्नानानर्थक्यं पर्यालोच्य परावृत्तमपि प्रकरणं पुनरभिमुखीभूय धर्मान्गृह्णातीत्यगत्या स्वीकर्तव्यम्। प्रकृते च परावृत्तेऽपि प्रकरणे संनिहिताग्नीषोमीयार्थतया धर्माणामर्थवत्त्वोपपत्तेर्नागतिकत्वमित्यर्थः। एवंच पशुधर्मेषु महाप्रकरणव्यापाराभावाद्यूपे पशुं नियुञ्जीतेत्यादौ संनिहिताग्नीषोमीयापूर्वसाधनमेव पशुशब्देन लक्षणीयमिति भावः। **नन्वेवं** सवनीयादिविधेः कथंभावपरिपूरणमेव न स्यादित्यत आह—**अन्यत्रेति**। सामान्यविध्यमेवात्र विचार्यते न धर्मसद्भावमात्रम्। ततश्चोपदेशतो धर्माभावेऽप्यतिदेशतः कथंभावपूरणमुपपद्यत इत्यर्थः। सामान्यविध्यमेवात्र विचार्यते इत्यत्र तुल्यः सर्वेषां पशुविधिरिति सौत्रविधिग्रहणमेव ज्ञापकमित्याशयेनाह—**इति सूत्र इति**। प्रयोजनं पूर्वपक्षे सवनीयानुबन्ध्ययोस्तत्तद्देवत्यपुरोडाशस्याप्रवृत्तिः। अग्नीषोमीयस्य वपया प्रचार्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीत्यग्नीषोमीयप्रयोगमध्ये अग्नीषोमदेवत्यस्यैव पुरोडाशस्याम्नानेन इतरत्र तत्प्राप्तौ प्रमाणाभावात्। नच पुरोडाशेन माध्यन्दिन इति सवनीयेपि पुरोडाशः श्रूयत इति वाच्यम्। तस्य पुरोडाशप्रचारविप्रकर्षमात्रविधायकत्वेन पुरोडाशविधायकत्वाभावात्पुरोडाशविधायकत्वेऽपि तस्य पुरोडाशस्य सवनीयपशुसमानदेवताकत्वे मानाभावाच्च प्रथमपक्षे स्त्रीपशुकायामनुबन्ध्यायां नावमिकन्यायेन मेध्यामिवाध्रिगुप्रैषस्य निवृत्तिश्च। सिद्धान्ते त्वग्नीषोमीयस्य प्रकृतित्वात्तत्र च पुरोडाशस्य दाशमिकन्यायेन संनिपातित्वात्संनिपातिनां च विकृतिषूहेन प्रवृत्तेः सवनीयादौ तत्तद्देवताकपशुपुरोडाशप्रवृत्तिरनुबन्ध्यायामप्यध्रिगुप्रैषस्योहेन प्रवृत्तिरिति॥

**दोहयोः कालभेदादसंयुक्तं शृतं स्यात्॥ २८॥** सङ्गतिं सूचयन्पूर्वपक्षमाह—**पूर्ववदिति**। **अवान्तरेति**। पूर्वेद्युः सायंदोहस्य विधानात्तस्य पूर्वेद्युरेवेतिकर्तव्यताकाङ्क्षासद्भावादिति भावः। **प्रकरणाविशेषादिति**। महाप्रकरणाविशेषादित्यर्थः। **नचेति**। शाखाहरणादयो हि न दोहमात्रपर्यवसिताः येन सायंदोहस्य पूर्वेद्युरुत्पत्त्यावान्तरप्रकरणेन तदर्थाः स्युः किंतु तद्द्वारा यागार्थाः। एवंच यदर्थास्ते तस्यावान्तरप्रकरणं स्थानं च वाच्यम्। नच दधियागस्य पूर्वेद्युरवान्तरप्रकरणमस्ति। ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति तस्यापरेद्युरेवोत्पत्तेः। न वा दधियागस्य पूर्वेद्युःस्थानमस्ति तस्यापरेद्युरेवानुष्ठानादित्यर्थः। एवंच सायंदोहस्य पूर्वेद्युरनुष्ठानमुत्पत्तिश्च स्थानस्यावान्तरप्रकरणस्य च न प्रयोजकमित्याशयेनाह—**दधिसिद्धीति**।प्रयोजनं पूर्वपक्षे प्रातर्दोहार्थं वत्सापाकरणं शाखयैव कर्तव्यमिति नियमाभावस्तथा सायं-

केचिद्धर्माः पूर्वेद्युः क्रियन्ते । नच तदर्थाः शाखाहरणादयः प्रधानार्थत्वात् । तस्मादुभयार्थो दोहधर्माः ॥

सादनादीनां सवनत्रयधर्मताधिकरणम् ॥ ९ ॥

**तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥**

**ग्रहधर्माः सादनाद्याः प्रातःसवन एव ते ॥ त्रिषु वा निश्चितस्थानादाद्यः पूर्ववदुत्तरः ॥ १८ ॥**

ज्योतिष्टोमे प्रातःसवनसंनिधौ ग्रहधर्माः समाम्नाताः 'उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुव' इत्यादयः । ते किं प्रातःसवनिकग्रहार्था उत प्राकरणिकसर्वग्रहार्था इति विचारः । पूर्वत्र स्थानमपि नास्तीत्युक्तं, इह त्वसंदिग्धं स्थानमिति विशेषाशङ्का । प्रकरणाविशेषात्तु सर्वार्था इति सिद्धान्तः ॥

रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणम् ॥ १० ॥

**रशना च लिङ्गदर्शनात् ॥ ३१ ॥**

**एकत्रैवोत सर्वत्र रशनावेष्टनादयः ॥ अग्नीषोमीय एवैते क्रमाल्लिङ्गादितोऽन्तिमः ॥ १९ ॥**

अग्नीषोमीये यूपपरिव्याणं विहितं परिव्ययत्यूर्ग्वै रशनेति सवनीये पुनः परिव्याणान्तरं विहितम् । आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति परिव्याणसाधनभूता रशना तद्धर्माश्चाग्नीषोमीयक्रमे विहिताः त्रिवृद्भवति दर्भमयीभवति प्रविष्टान्ता कर्तव्येत्यादयस्ते किमग्नीषोमीयपरिव्याणार्था उत सवनीयपरिव्याणार्था अपीति संशयः । तत्र क्रमादग्नीषोमीयार्था इति प्राप्ते ब्रूमः— 'श्रुत्यैतद्यूपसंबन्धिपरिव्याणाङ्गतां गताः ॥ नाग्नीषोमीयधर्माः स्युस्तावतैवार्थवत्त्वतः ॥ सवनीयपरिव्याणमप्येतद्यूपसङ्गतम् ॥ तस्मात्तत्रापि रशना सहधर्मैः प्रपत्स्यते ॥' इति ॥

---

दोहनिर्वृत्त्यनन्तरं शाखानाशे प्रातर्दोहार्थं न शाखान्तरं संपाद्यं, सिद्धान्ते तु तदुभयविपर्यय इति । सूत्रार्थस्तु—दोहयोः कालभेदात्सायंदोहस्यैव स्थानं न प्रातर्दोहस्य । तेन शृतं पयोधर्मैरसंयुक्तं स्यादिति ॥

**तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥** उपोप्ते उपरवपांसूपवापकृतस्थण्डिले खराख्य इत्यर्थः । **इहेति** । ऐन्द्रवायवादिग्रहयज्यभ्यासानां तत्रानुष्ठानादित्यर्थः । **प्रकरणेति** । प्रातःसवनिकग्रहयज्यभ्यासमात्रस्य प्रातिस्विकविध्यभावातफलवत्त्वाभावाच्च तन्मात्रस्य पृथगितिकर्तव्यताकाङ्क्षाविरहादवान्तरप्रकरणाभावान्महाप्रकरणेन सर्वार्था इत्यर्थः । सूत्रार्थस्तु— माध्यंदिनादिसवने आम्नातग्रहजातमपि श्रुतवद्धर्मयुक्तं स्यादिति ॥

**रशना च लिङ्गदर्शनात् ॥ ३१ ॥ परिव्याणान्तरमिति** । आश्विनग्रहोत्तरकालस्य आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपमिति सवनीयोत्पत्तिवाक्यादेव प्राप्तेरुपनिष्क्रमणस्यार्थात्प्राप्तेश्च विधेयान्तराभावादत्र परिव्याणं विधेयम् । तच्च पुनःश्रुतेः कर्मान्तरमिति । अत्र वाक्ये परिव्याणान्तरं विधेयमित्यर्थः । पशुधर्माणां सर्वेषामग्नीषोमीयार्थत्वस्य व्यवस्थापितत्वादयं विचारोऽनुपपन्न इति शङ्कानिराकरणार्थं परिव्याणान्तरतोक्तिः । तथा सिद्धान्ते द्विरुक्तिदोषाभावार्था च तदुक्तिः । नह्यत्र प्राकृतकार्यं परिव्याणं विषयः किंतु यूपसंस्कारार्थमप्राकृतकार्यमिति नोक्तदोष इति भावः । **प्रविष्टान्तेति** । रशनाया मध्येन यूपं परिवीयान्तद्वयं प्रवेष्ट्याणावन्ते प्रविष्टस्थूलान्ता कार्येत्यर्थः । अत्र रशना नोदाहरणं परिव्याणस्य लोकवेदप्रसिद्धिबलादेव रशनासाधनकत्वनिश्चयेन परिव्याणान्तरेऽपि रशनासिद्धेः किंतु तद्धर्मा एवेति वार्तिकमतमनुसृत्याह— **ते किमिति । क्रमादिति** । पूर्ववत्क्रमबाधकस्य प्रकरणस्याभावादित्यर्थः । अतएवच सङ्गतिः रशनातद्धर्माणां च परिव्याणस्वरूपार्थत्वे आनर्थक्यापत्त्या क्रत्वपूर्वानुप्रवेशावश्यंभावेसति क्रमादग्नीषोमीयार्थयूपार्थं यत्परिव्याणं तदर्था वाच्या इत्यग्नीषोमीयार्था रशनाधर्मा इत्याशयः । एवमप्यग्नीषोमीयार्थयूपार्थत्वेन परिव्याणं न विशेषणीयं किंत्वग्नीषोमीयसंबन्धियूपसंबन्धित्वमात्रेण तन्मात्रेणैव धर्मानर्थक्यपरिहारादग्नीषोमीयसंनिधेरपि तन्मात्रेणैवोपपत्तेरन्यथा सर्वसाधारण्येन प्रवर्तमानाया धर्मश्रुतेः संकोचप्रसङ्गादित्याशयेनाह— **श्रुत्येति । नन्वेवमपि** सवनीयपरिव्याणस्य सवनीययूपसंबन्धित्वोऽग्नीषोमीययूपसंबन्धित्वाभावान्न साधारण्यमित्यत आह— **सवनीयेति** । एकादशे यूपस्य सौमिकपशुत्रये तन्त्रताया वक्ष्यमाणत्वात्सवनीयपरिव्याणमप्यग्नीषोमीयसंबन्धियूपसङ्गतं भवतीत्यर्थः । सूत्रार्थस्तु—सधर्मा रशना च परिव्याणद्वयस्यापि साधारणी । त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति सवनीयोत्पत्तिवाक्ये त्रिवृत्त्वधर्मयुक्तरशनानुवादरूपलिङ्गदर्शनादिति ॥

अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाधिकरणम् ॥ ११ ॥

**आराच्छिष्टमसंयुक्तमितरैः संनिधानात् । ३२ ॥ [संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३ ॥ निर्देशाद्व्यवतिष्ठेत ॥ ३४ ॥]**

**ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वयेन हि ॥ विद्यन्ते वा प्रकरणादाद्यो वाक्यादिहान्तिमः ॥ २० ॥**

अतः परं प्रासङ्गिकी कथालक्षणसङ्गतिः स्पष्टैव । ग्रहधर्माणां साधारण्यं पूर्वमुक्तं ते किमनारभ्याधीतयोरंश्वदाभ्ययोरपि संभवन्त्युत प्राकरणिकानामेवेति संशयः । 'तत्र प्रकरणादेते तद्वर्तिग्रहमात्रगाः ॥ नाऽनारभ्यसमाम्नातग्रहार्थाः स्युरसंनिधेः ॥' उच्यते—'ग्रहाणां प्रक्रिया नास्ति यया धर्मव्यवस्थितिः ॥ नापि प्रकरणं तेषां विशेषणतयेष्यते ॥' नहि ये सोमप्रकरणगतास्तेषाममी धर्मा इति, किंतु—'यजेः प्रकरणं तेन प्रकृतेन विशेषणात् ॥ धर्मास्तत्साधनानां हि ग्रहाणां शेषतामियुः ॥ येचानारभ्यविहिता ये च प्रकरणे ग्रहाः ॥ सर्वे तत्साधनत्वात्तद्धर्मसंबन्धमाप्नुयुः ॥'

चित्रिण्यादीष्टकानामभ्यङ्गताधिकरणम् ॥ १२ ॥

**अभ्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥**

**अखण्डादीष्टकाधर्माश्चित्रिण्यादिषु नोचिताः ॥ सन्ति वा वाक्यमप्यत्रानारभ्योक्तं ततो न ते ॥ २१ ॥**
**प्रकृतापूर्वसंबन्धात्तादृशादपि वाक्यतः ॥ अखण्डत्वादयोऽभ्यर्थं चित्रिण्यादिषु सन्ति ते ॥ २२ ॥**

अग्निप्रकरणे समाम्नाता इष्टकाधर्मा अखण्डामकृष्णामित्यादयः किं प्राकरणिकीनामेवेष्टकानामुतानारभ्याधीतानामपि चित्रिणीरुपदधातीत्येवमादीनां । पूर्ववदेव संशयपूर्वोत्तरपक्षाः । पूर्वत्रांश्वदाभ्ययोरनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणस्पर्शाद्युक्तो धर्मसंबन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति । प्रकरणसंस्पर्शाभावान्न तद्धर्मसंबन्ध इति विशेषाशङ्का, प्रकरणसंस्पर्शाभावेऽपि प्रकृतापूर्वसंस्पर्शात्तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः ॥

---

**आराच्छिष्टमसंयुक्तमितरैः संनिधानात् ॥ ३२ ॥** वाक्यप्रकरणविरोधाविरोधचिन्तायाः स्थानस्य पूर्वैः सह विरोधाविरोधप्रस्तावासङ्गतिमाशङ्क्याह—**अतः परमिति** । समानविधानप्रसङ्गागतेत्यर्थः । **नन्व**स्मिन्नधिकरणेऽनारभ्याधीतग्रहसाधारण्ये सिद्धे सवनान्तरीयग्रहसाधारण्यस्य कैमुतिकन्यायेन सिद्धेः पूर्वतराधिकरणवैयर्थ्यमित्याशङ्क्य तत्र स्थानप्रकरणयोर्विरोधाविरोधविचारः, इहतु वाक्यप्रकरणयोरिति विचारभेदान्न वैयर्थ्यमिति द्योतयितुमुक्तं स्मारयति—**ग्रहधर्माणामिति** । किमारभ्याधीतग्रहमात्रानुगतप्रातिस्विकप्रकरणेन ग्रहधर्माणां तन्मात्रार्थत्वमुच्यते उत सौमिकमहाप्रकरणेनेति विकल्पं मनसि निधायाद्य आह—**ग्रहाणामिति** । आरभ्याधीतग्रहाणां फलार्थतया विधानाभावान्न तन्मात्रानुगतं प्रकरणमित्यर्थः । द्वितीय आह—**नापीति** । सौमिकमहाप्रकरणेन तन्मात्रार्थत्वमिच्छता ये सोमप्रकरणगता ग्रहास्तान् संमृज्यादित्येवंरूपेण प्रकरणस्य धर्मविधिषु विशेषणत्वं वक्तव्यम् । विशेषणत्वं विनानारभ्याधीतव्यावृत्तेरलाभान्न च तत्संभवति विनियोगमात्रप्रमाणस्य प्रकरणस्य परविशेषकत्वानुपपत्तेरित्यर्थः । इत्थमेवोत्तरार्धतात्पर्यं संक्षेपत आह—**नहीति** । नन्वेवं कर्मान्तरीयग्रहेष्वपि धर्मोपदेशसाधारण्यं स्यादित्याशङ्कते—**किंत्विति** । आरभ्याधीतग्रहाणां प्रकरणाभावेऽपि फले विहितस्य यजेरितिकर्तव्यताकाङ्क्षालक्षणप्रकरणसद्भावात्तस्य च विशेषकत्वाभावेऽपि धर्माणां तेन प्रकृतापूर्वसाधनार्थत्वप्रत्यायनान्न कर्मान्तरीयग्रहेष्वतिप्रसङ्ग इति परिहरति—**यजेरिति । तेन प्रकृतेन विशेषणादिति** । धर्मविधिषूद्देश्यग्रहशब्दार्थस्य प्रकरणेनापूर्वसाधनत्वरूपविशेषलाभादिति यावत् । **नन्वे**वमपि संनिधेर्विशेषकत्वात्संनिहितग्रहमात्रार्थत्वं स्यादित्याशङ्क्यापूर्वसाधननिवेशमात्रेणैव धर्माणामर्थवत्त्वोपपत्तेर्न भूयः संनिधिना विशेषणं न्याय्यमित्याशयेन साधारण्यमुपपादयति—**ये चेति** । सूत्रार्थस्तु—आराद्दूरे शिष्टमनारभ्याधीतमिति यावत्तदंश्वदाभ्यग्रहद्वयं धर्मैरसंबद्धं तेषां संनिधानादारभ्याधीतग्रहैरेव संबन्धादिति ॥

**अभ्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥ प्राकरणिकेनेति** । यस्यैवंविदुषोंशुर्गृह्यत इति वाक्येन यस्यैवं विदुषोऽदाभ्यो गृह्यते इति वाक्येन चेत्यर्थः । **अनारभ्येति** । यां कांचन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति वाक्येनेत्यर्थः । **सूत्रार्थस्तु**—अप्रकरणे यदभ्यङ्गं चित्रिण्यादिकं तदप्यंश्वदाभ्यग्रहवद्धर्मैर्युक्तं स्यादिति ॥

अभिषवादीनां सोममात्रधर्मताधिकरणम्॥ १३ ॥

## नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्॥ ३६ ॥

**विधयोऽभिषवाद्याः स्युः फलाख्ये चमसे न वा ॥ नैमित्तिकस्य नित्येन तुल्यत्वादस्ति तद्विधिः ॥ २३ ॥**
**नित्ये कृतार्थाः संस्काराः पश्चाज्जातनिमित्तजे ॥ न विधेयाः किंतु तत्र प्राप्यन्तामतिदेशतः ॥ २४ ॥**

ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन फलचमसश्चोदितः स चेज्याविकार इति स्थितम्। सन्त्यभिषवादिसंस्कारास्ते किं नैमित्तिकस्यापि फलचमसस्य समाना उत नित्यस्यैव सोमचमसस्य, नैमित्तिकं तु तद्विकार इति विचार्यते। तत्र 'अपूर्वसाधनत्वांशे संस्कारविधयो यतः॥ तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः॥' सोममभिषुणोतीत्ययमर्थः अभिषुतेन यजेतेति, फलचमसेनापि चेज्यते। अतस्तस्याप्यभिषव उपदिष्ट एव भवति—'तेन व्रीहियवा नित्याः समानविधयो यथा॥ नित्यनैमित्तिके द्रव्ये समानविधिनी तथा॥ उच्यते साधनेनैव नित्यसंस्कारसङ्गतिः॥ सरूपेण त्वसंयुक्ता[1] न विरूपेण युज्यते॥' संस्कारा हि निमित्तसंयोगाभावात्क्रतोः स्वाभाविकाङ्गत्वेन विधीयमानास्तदनुरूपमेव द्वारमाश्रयन्ते। व्रीहिवच्च यवा अपि प्राप्तिरूपेण क्रतौ नित्या एवेति धर्मविधेरवैरूप्याच्छक्नुवन्ति द्वारतामुपगन्तुम्। यदप्यनुष्ठानरूपेणानित्यत्वं तद्व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्यावघातादीनामनित्यद्वाराश्रयणं युक्तम्। आम्नातस्वरूपेण च नित्यत्वाद्व्रीहियवविध्योर्नित्यवदाम्नातसंस्कारविध्येकवाक्यत्वं शाब्दरूपसमानत्वाद्युज्यते। शक्यते हि वक्तुमवहतैर्व्रीहिभिर्यवैर्वा

---

**नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्॥ ३६॥** भक्षमात्रविकारत्वे संस्काराणामेवाप्रसक्ते विचारायोगं मन्वान इज्याविकारत्वमुक्तं स्मारयति—**सचेति**। **ननु** फलचमसस्यानित्यस्य नित्याभिषवसंस्कारद्वारत्वे नित्यानित्यसंयोगविरोधप्रसङ्गेन समानविध्यसंभवात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति**। यदि फलचमसत्वाकारेण वाक्यार्थान्वयी स्यात्तदा भवेन्नित्यानित्यसंयोगविरोधः। नत्वेवम्। अपूर्वसाधनत्वाकारेणैव द्रव्याणां संस्कारान्वयात्ततश्च फलचमसत्वाकारेणानित्यत्वेऽप्यपूर्वसाधनत्वाकारेण नित्यएव सर्वत्रापि प्रयोगे सोमस्य फलचमसस्य वाऽपूर्वसाधनस्य सद्भावात्। तस्मान्न नित्यानित्यसंयोगविरोध इति भावः। अनेनैव यथापूर्वसाधनत्वाविशेषादनारभ्याधीतानां सामानविध्यं तथा फलचमसस्यापीति प्रत्यवस्थानात्सङ्गतिरिति सूचितम्। **ननु** सोममभिषुणोतीति सोमशब्दश्रवणादपूर्वसाधनसोमसंबन्ध एव वाच्य इत्याशङ्क्य आवश्यकापूर्वसाधनान्वयेनैव धर्माकाङ्क्षाशान्तेर्न सोमविवक्षायां प्रमाणमस्ति। अन्यथा व्रीहीन्प्रोक्षतीति प्रोक्षणादीनामप्यपूर्वसाधनव्रीह्यर्थत्वापत्तौ यवसाधारण्याभावप्रसङ्गादित्याशयेनाह—**सोममित्यादि**। सत्यमपूर्वसाधनत्वाकारेणैव द्रव्यस्य संस्कारवाक्येऽन्वयस्तथापि यथा समिदादिवाक्यानां दर्शपूर्णमासादिवाक्यैकवाक्यत्वं तथा संस्कारवाक्यानां द्रव्यवाक्यैकवाक्यत्वमवश्यं वाच्यम्। 'प्रधानविधिवाक्यं हि अङ्गवाक्यसमन्वितम्॥ अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावना'मिति न्यायस्यात्रापि तुल्यत्वात्ततश्चायं क्रमः। प्रथमं द्रव्यवाक्येन द्रव्यस्यापूर्वसाधनत्वेऽवगते तदनन्तरं संस्कारवाक्येनापूर्वसाधनोद्देशेन संस्कारे विहिते पश्चादेतादृशसंस्कारविशिष्टद्रव्येण यजेतेति संस्कारवाक्यैकवाक्यतापन्नस्य द्रव्यवाक्यस्यार्थः पर्यवस्यति। एवंच प्रकृतेऽप्यभिषवादिवाक्यस्य द्रव्यविधिनैकवाक्यत्वमप्रत्यूहं तत्रयद्यभिषवादिवाक्यानां सोमवाक्येनेव फलचमसवाक्येनाप्येकवाक्यत्वं स्यात्तदा सामानविध्यं स्यान्न च तत्संभवति। संस्काराणां नित्यत्वेन फलचमसस्यानित्यत्वेन च तदुभयैकवाक्यत्वासंभवात्, तस्मादपूर्वसाधनत्वेनापि संस्कारवाक्ये सोमएव संबध्यते न फलचमस इत्याशयेन सिद्धान्तमाह—**उच्यते इति**। यद्यपि संस्कारवाक्ये साधनेनैव संस्कारसंगतिस्तथापि साधनेनापि नित्यतया सरूपेण सोमेनैव तत्सङ्गतिः नतु विरूपेण फलचमसेनेत्यर्थः। **ननु** कथं संस्काराणां नित्यत्वं नित्यत्वेऽपि वा कथं नित्येन सरूपेणैवान्वयनियम इत्याशङ्क्य तदुभयमुपपादयति—**संस्कारा हीति। तदनुरूपमेवेति**। अन्यथा नित्यत्वव्याघातादिति भावः। दृष्टान्तं विघटयति—**व्रीहिवदिति**। यथा सर्वत्रापि प्रयोगे व्रीहीणां प्राप्तिः शास्त्रेणावगम्यते व्रीहिशास्त्रे प्रयोगविशेषोपादानाभावादेवं यवा अपीत्युभयोरप्याम्नानतो नित्यप्राप्त्यवगमात्तेन रूपेण धर्मविधिसारूप्याद्युक्तं सामानविध्यमित्यर्थः। **नन्वेवमप्येकस्मिन्प्रयोगे** उभयानुष्ठानासंभवादस्त्यनित्यत्वमित्याशङ्क्यानुष्ठानप्रयुक्तानित्यत्वं न द्वारत्वविरोधीत्याशयेनाह—**यदपीति। नन्वाम्नानकृतनित्यत्वमेव** द्वारत्वे प्रयोजकं नानुष्ठानकृतमित्यत्र किं विनिगमकमित्याशङ्कानिराकरणार्थमाह—**शाब्देति**। नित्यत्वं हि धर्मविध्येकवाक्यत्वोपयोगित्वेन धर्मद्वारत्वे प्रयोजकं एकवाक्यत्वे चाम्नानकृतनित्यत्वमेवोपयुज्यते नित्यधर्मान्वये शाब्दस्यैव नित्यत्वस्योपयोगित्वान्न त्वनुष्ठानकृतमपि तस्य शब्दास्पर्शितत्वात्तस्मादनुष्ठाना-

---

१ त्वसौ युक्ता.

यजेतेति । फलचमसस्तु निमित्तसंयोगादाम्नानेनैवानित्यः कथं नित्यैर्यावत्क्रतुभाविभिरभिषवादिभिरेकवाक्यतामुपेयात् । विरुद्धं खल्वेतदभिषवेण नित्यं ज्योतिष्टोम उपकुर्यादनित्यफलचमसद्वारमिति । तथा नित्येन फलचमसेन नित्यकर्तव्याभिषवसंस्कृतेन यजेतेति । यच्चभिपुतेन फलचमसेनेत्युच्यते ततः फलचमसोऽपि नित्याभिषवद्वारमिति नित्यः स्यात् । सोमस्त्वाम्नानतः प्रयोगतश्च नित्यः । राजन्यवैश्यपक्षेऽपि यजमानचमसादेव सोमो निवर्तते अन्यत्र तु सोमः स्थित एव । तस्मात्तत्रैवाभिषवादिविधिः । अपिच नित्यं नैमित्तिकं च न युगपद्विधीयते किंतु नित्यं विधाय पश्चान्नैमित्तिकं विधेयम् । तद्धि निमित्ते सति क्रतोर्विशेषरूपेण चोद्यते निमित्ते त्वेतद्रूपः क्रतुरिति । एवं स्वारसिकरूपे प्राक्सिद्धे शक्यते वक्तुम् । तस्माद्यस्यां वेलायां क्रतोः स्वाभाविकं नित्याङ्गं विधीयते तस्यामेव संस्कारविधयस्तद्विशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकेनापि संबन्द्धुं आवृत्तिप्रसङ्गात् । तस्मान्नित्यार्था धर्मा नैमित्तिकस्य त्वतिदेशेन भविष्यन्ति ॥

प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

**प्रतिनिधिश्च तद्वत् ॥ ३७ ॥ [तद्वत्प्रयोजनैकत्वात् ॥ ३८ ॥ अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥]**

**नीवारादिप्रतिनिधेरतुल्यो वा विधिः समः ॥ पुरेवातुल्यता साम्यमाकाराद्व्रीहिता यतः ॥ २५ ॥**

मुख्याभावे प्रतिनिधिर्वक्ष्यते स किं मुख्येन समानविधानो नवेति मुख्याभावनिमित्तत्वात्पूर्ववद-

---

दनित्ययोरपि व्रीहियवयोराम्नानतो नित्यत्वमात्रेणावहतैर्व्रीहिभिर्यवैर्वा यजेतेत्येकवाक्यत्वसंभवाद्युक्तं द्वारत्वमित्यर्थः । **कथमिति** । नित्यानित्यसंयोगविरोधान्न नित्यानित्ययोरेकवाक्यत्वं संभवतीत्यर्थः । तदेतदाह—**विरुद्धमिति** । नित्यानित्यसंयोगविरोधस्यैकवाक्यताविघटकत्वमेव संभावितैकवाक्यतांव्यञ्जकवचनव्यक्त्यन्तरनिराकरणेन विशदयति— **यद्यभिषुतेनेति । प्रयोगतश्चेति** । इदं च प्रकृते संभवमात्राभिप्रायेणोक्तं, प्रयोगकृतनित्यत्वस्य शाब्दधर्मान्वये प्रयोजकत्वाभावस्य प्रागेवोक्तेस्तथात्वे चमसादेर्धर्मान्वयाभावप्रसङ्गाच्च गोदोहनादिप्रयोगे चमसादेरभावेन तस्य प्रयोगतो नित्यत्वाभावादिति द्रष्टव्यम् । **ननु** राजन्यवैश्यपक्षे सोमाभावात्कथं तस्य नित्यत्वमत आह—**राजन्येति** । पश्चाद्विधातव्यत्वमेवोपपादयति—**तद्धीति** । नैमित्तिकमित्यर्थः । **तस्यामेवेति** । संस्कारविधीनामनैमित्तिकतया तदानीमेव प्रवृत्तेरप्रत्यूहत्वात्प्रथमावगतापूर्वसाधनभावेन नित्येन प्रथममन्वीयन्ते । निवृत्तव्यापारा भवन्तीत्यर्थः । व्रीहियवशास्त्रयोस्तूभयोरपि नित्यतया एकस्य प्रथमं प्रवृत्तिरितरस्य पश्चात्प्रवृत्तिरिति वक्तुमशक्यत्वाद्युगपदेव संस्कारविधय उभाभ्यां संबध्यन्त इति वैषम्यमिति भावः । **ननु** फलचमसस्य धर्मान्वयसिद्ध्यर्थमावृत्तिरपि स्वीकार्या । नचातिदेशाद्धर्मान्वयः संभवति । एकस्मिन्कर्मण्यभ्यासभेदेन प्रकृतिविकारभावा न संभवन्तीति भक्षपेटिकायामेवोक्तत्वात् । नच कार्यापत्त्या धर्मप्राप्तिरुपदेशातिदेशव्यतिरिक्तस्य शास्त्रप्रवृत्तिप्रकारस्याभावेन कार्यापत्तेः पृथक्प्रामाण्याभावादित्यत आह—**नैमित्तिकस्यत्विति** । कर्मैक्येन सोमफलचमसाभ्यासयोः प्रकृतिविकारभावाभावेऽपि फलचमसेनापूर्वसाधनीभूतं यागं भावयेदित्युक्तेऽपूर्वस्यालौकिकत्वेन तत्साधनभावनाया निर्ज्ञातप्रकारत्वाभावात्कथं फलचमसेनापूर्वसाधनयागं भावयेदिति प्रकाराकाङ्क्षायां प्रकृतयागसाधनत्वरूपसादृश्यात्सोमेन यथा अपूर्वसाधनयागो भावितस्तथा फलचमसेनापि भावयेदित्येवं सोमद्रव्यधर्माणामभिषवादीनां फलचमसे तत्कार्यापन्नेऽतिदेशः संभवतीति कार्यापत्तिरप्यतिदेशप्रमाणप्रकारभेदएव । यथाभ्युदयेष्टौ दधिशृतयोः प्रणीताधर्माः कार्यापत्त्यातिदेशतो भवन्ति तद्वदिहापि । नच दधिशृतयोः प्रदेयतया तद्धर्मातिदेशावश्यंभावेऽष्टमाद्यन्यायेनैकस्मादेवातिदेशस्य वक्तव्यत्वात्प्रणीताधर्मातिदेशोऽनुपपन्न इति वाच्यम् । अभ्युदयेष्टेः कर्मान्तरत्वाभावेन प्रदेयधर्माणामुपदेशतएव प्राप्तेः प्रणीताधर्माणां तु एकस्मिन्नपि कर्मणि द्रव्यभेदेनातिदेश उपपद्यते । अस्तुवा द्वयोरपि धर्माणामतिदेशस्तथापि नाष्टमाद्यन्यायविरोधः । यत्रैकधर्मैर्नैराकाङ्क्ष्यसंभवस्तद्विषयो ह्यष्टमाद्यन्याय इहतु नैकधर्मैर्नैराकाङ्क्ष्यमिति न संकटं किंचिदिति भावः । प्रयोजनं पूर्वपक्षे फलचमसे गुणकामानां प्रवृत्तिः तथा व्रीहीणां मेधेत्यस्य यवेष्विव सोमं ते क्रीणामीत्यादेर्निवृत्तिश्च । सिद्धान्ते तु गुणकामानामप्रवृत्तिः सोमं ते इत्यादेरूहेन प्रवृत्तिश्चेति सूत्रे अतुल्यत्वान्नित्यधर्मसारूप्याभावादित्यर्थः ॥

**प्रतिनिधिश्च तद्वत् ॥ ३७ ॥ वक्ष्यत इति** । नित्यस्यावश्यकर्तव्यत्वात्प्रक्रान्तस्य काम्यस्यावश्यसमापनीयत्वाच्च

---

१ गतश्चानित्यः. २ मसादेवेति.

समानविधौ प्राप्त उच्यते। स्यादेवं यदि द्रव्यान्तरमिह यागस्य साधनत्वेनोपादीयते। व्रीह्यवयवास्त्विह सकलासंभवाद्विकला उपादीयन्ते, नीवारगतास्तदनुषङ्गादवर्जनीयतया नीवारोपादानं न साधनतया, साधनत्वे प्रमाणाभावात्। व्रीह्यंशाश्च व्रीहिगता इव नीवारगता अपि संस्कारविध्यन्विता एवेति समानविधानता॥

श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम्॥ १५॥

## नियमार्था पुनःश्रुतिः॥ ४०॥

पूतीकाभिषवोऽतुल्यस्तुल्यो वा सोमतुल्यता॥ नास्ति नैमित्तिकत्वेन तुल्यः प्रतिनिधित्वतः॥ २६॥

**अथ यत्र श्रुतः प्रतिनिधिः यथा 'यदि सोमं नविन्देत्पूतीकानभिषुणुयादि'ति तत्र वचनेन पूतीकानामेव साधनत्वं विधीयते न नीवारवदसाधनत्वम्। अतो द्रव्यान्तरमिदं सोमाभावे निमित्ते तत्साधनतापन्नं फलचमसवदसामानविधानम्। नैवम्। नह्यत्र पूतीका यागसाधनत्वेन विधीयन्ते सोमाभावे पूतीकैर्यागं कुर्यादिति, किं तर्हि सोमावयवोपलक्षणतया प्रतिनिधिनियमो ह्ययं, नाभावे विधिरिति वक्ष्यते। तदेषा वचनव्यक्तिः यत्सकलसोमावयवाभावे विकलानुपाददीत तत्पूतीकगतानिति। तस्मादत्रापि सोमावयवानामेव तत्साधनत्वात्पूर्ववत्सामानविध्यम्॥**

---

**मुख्याभावे प्रतिनिधिः षष्ठे वक्ष्यत इत्यर्थः। यदीति।** व्रीहिभिर्यजेतेत्यत्र व्रीहित्वजातिवाचिनोऽपि व्रीहिशब्दस्य जातेः साक्षात्साधनत्वाभावाद्व्रीहित्वजात्यवच्छिन्नव्यक्तेश्चावहननपेषणादिना नाशेन तस्या अपि साधनत्वासंभवाद्व्रीह्यवयवसाधनत्वएव पर्यवसानमिति व्रीहिशास्त्रतात्पर्यविषयीभूता व्रीह्यवयवा मुख्यालाभाद्यदा सकला न लभ्यन्ते तदा व्रीहिशास्त्रानुग्रहाय सकलाभावेऽपि विकला नीवारगता व्रीह्यवयवा एवोपादेया इति नीवारगतव्रीह्यवयवोपादानमात्रेण प्रक्रान्तकर्मावश्यसमापनीयत्वप्रयुक्ताक्षेपस्य चारितार्थ्येन नीवारद्रव्यस्य यागसाधनत्वे प्रमाणाभावाद्व्रीहिगतानामिव नीवारगतानामपि व्रीहिशास्त्रार्थत्वात्सामानविध्यमित्यर्थः। **नन्वेव**मपि व्रीहिगता एवावयवाः प्रथमं प्रतिपन्नाः नीवारगतास्तु मुख्याभावे कर्मणोऽवश्यसमापनीयत्वप्रयुक्ताक्षेपेण पश्चादिति फलचमसन्यायेनात्रापि सामानविध्यं न संभवतीति चेत् सत्यम्। पश्चादपि प्रतिपन्नानां तेषां धर्मनियमे संभवत्यनियमस्यायुक्ततया धर्माकाङ्क्षायां तदनुसारेण संस्कारवाक्यगतव्रीहिशब्दस्य व्रीहिनीवारगतावयवसाधारण्येन व्रीहिजननयोग्यावयवमात्रे लक्षणा स्वीकार्येति युक्तं सामानविध्यम्। किंचावहननपेषणादिना व्रीहीणां नष्टत्वेन यागनिष्पत्तिदशायामवयवानां व्रीहिगतत्वाभावाद्व्रीहिशास्त्रस्यावयवगतव्रीहिगतत्वरूपेण तात्पर्यासंभवाद्व्रीहिजननयोग्यावयवमात्रे तात्पर्यस्य वक्तव्यत्वात्तदनुसारेण संस्कारवाक्यगतस्यापि व्रीहिशब्दस्य व्रीहिजननयोग्यावयवमात्रपरत्वमेव न्याय्यं नतु व्रीहिगतावयवपरत्वमिति नात्र सामानविध्यानुपपत्तिरिति भावः। प्रयोजनं नात्र गुणकामप्रवृत्त्यप्रवृत्तिरूपं संभवति। यथा काम्यस्य कर्मणः प्रतिनिधिनोपक्रमो नास्ति तथा गुणकामानामपि प्रतिनिधिना उपक्रमासंभवात्। तस्मान्मुख्याश्रयेण प्रवर्तमानानां गुणकामानां प्रतिनिधौ प्रवृत्त्यसंभवाद्व्रीहीणां मेधेत्यादेरूहानूहावेव प्रयोजनमिति वार्तिके व्यक्तम्॥

**नियमार्थो पुनःश्रुतिः॥ ४०॥ विधीयत इति।** भक्षसंयोगात्फलचमसस्येवाभिषवसंयोगात् पूतीकानां यागसाधनत्वमेवानेन वाक्येन विधीयते। अभिषवसंयोगस्तु तद्बलप्राप्तोऽनूद्यत इति भावः। पूतीकानामप्राप्तसाधनत्वविध्यपेक्षया लघुत्वात्प्रतिनिधिनियममात्रमेवानेन वाक्येन विधीयत इति। सिद्धान्तयति—**नैवमिति। ननु** सुसदृशद्रव्यसंभवे मन्दसदृशानां पूतीकानां पक्षेऽपि प्राप्त्यभावान्नियमविधिर्न संभवतीत्यत आह—**इति वक्ष्यत इति।** सुसदृशप्रापकन्यायानुसंधानात्पूर्वं सादृश्यमात्रेण मन्दसदृशानामपि प्राप्तिरस्ति तत्र यावन्न्यायेन सुसदृशाः प्रवर्तन्ते तावत्प्रत्यक्षवचनेन मन्दसदृशानामपि नियमविधिः संभवतीति षष्ठे वक्ष्यत इत्यर्थः। अनेनैतच्छङ्कानिराकरणार्थं षष्ठाधिकरणमित्यपुनरुक्तिरपि सूचिता। पूतीकशब्दस्य सोमावयवोपलक्षणत्वं नियमविधिप्रकारं च वचनव्यक्त्यभिनयेन विशदयति—**तदेषेति।** प्रयोजनं सोमं ते क्रीणामीत्यादेः पूर्ववदूहानूहौ॥

---

१ पूतिकानेति हस्तमध्यपाठः. २ तेन सोमाभावे पूतीकैर्यागं कुर्यादिति. ३ विकलावयवानु. ४ समानविधानत्वम्.

दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ॥ १६ ॥

**संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ४१ ॥ [व्यपदेशश्च तुल्यवत् ॥ ४२ ॥ विकारास्तु कामसंयोगे नित्यस्य समत्वात् ॥ ४३ ॥ अपिवा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति ॥ ४४ ॥ वचनात्तु समुच्चयः ॥ ४५ ॥ प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४६ ॥ गुणविशेषादेकस्य व्यपदेशः ॥ ४७ ॥]**

उक्थ्यादिषु समो दीक्षणीयाद्यङ्गविधिर्न वा ॥ एकप्रकरणत्वेन फलवत्त्वाच्च तुल्यता ॥ २७ ॥
उक्थ्यादयः कामयोगाद्विकाराः प्रक्रिया ततः ॥ अग्निष्टोमात्मके ज्योतिष्टोममात्रे च तद्विधिः ॥ २८ ॥

नैमित्तिकं क्रत्वर्थे नित्येन समानविधानं न भवति नैमित्तिकस्यानित्यत्वात्तद्द्वारेण धर्माणां नित्यवत्क्रत्वर्थत्वानुपपत्तेरित्युक्तम् । इह काम्या गुणाश्चिन्त्यन्ते किमाश्रय[1]भूतक्रियया समानविधाना उतासमानविधानास्तद्विकारा इति । तत्र काम्यस्य फलवत्त्वात्क्रतुवदेव स्वयमितिकर्तव्यताग्राहित्वान्न तद्द्वारेण क्रत्वर्थत्वमङ्गानां, येन नैमित्तिकवद्विरोधः स्यात् । अतो न गतार्थमिदम् । संस्थाग्रहणं च प्रदर्शनार्थम् । अन्योऽपि दाक्षायणयज्ञादिरुदाहर्तव्यः । ज्योतिष्टोमस्य चतस्रः संस्थाः अग्निष्टोम उक्थः षोडश्यतिरात्र इति । अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोम इति । अत्र षोडशिग्रहणमत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति । वाजपेयश्च षोडशिन एव भेदः । अप्तोर्यामश्चातिरात्रस्य । एतद-

**संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ४१ ॥** पूर्ववदिहापि सामानविध्यमिति प्रत्यवस्थानात्सङ्गतिः । **नन्व**नित्यस्य धर्मान्वयो न संभवतीति 'नैमित्तिकमतुल्यत्वा'दित्यधिकरणे उक्तं । संस्थानामपि काम्यत्वेनानित्यानां नित्यधर्मान्वयाभावस्य तेनैव न्यायेन सिद्धत्वाद्गतार्थमिदमित्याशङ्क्य, तत्र हि नित्यधर्मैः क्रतोरुपकर्तव्यमनित्यफलचमसद्वारेत्येवमन्वयासंभवादनित्यस्य नित्यधर्माणां क्रत्वन्वयद्वारत्वं न संभवतीत्युक्तम् । इहतु संस्थानां तद्द्वारतया न धर्मान्वयः तासां क्रत्वर्थत्वाभावात् किंतु स्वयमेव धर्मग्राहित्वम् । ततश्च तत्राधिकरणे अनित्यस्य स्वयंधर्मग्राहित्वाभावस्याव्युत्पादनान्न गतार्थत्वमित्याह—**नैमित्तिकमित्यादि** । इह यस्य सामानविध्यं चिन्त्यते तस्य द्वारत्वाभावहेतुस्फोरणार्थं काम्या गुणाश्चिन्त्यन्ते इति काम्यत्वोक्तिः । **तद्विकारा इति । ननु** कथं सिद्धान्तेऽपि तद्विकारत्वं संस्थानामभावलक्षणसमाप्तिरूपाणां ज्योतिष्टोमक्रियया सारूप्याभावादेवं काम्यगुणान्तरस्यापि तत्तदाश्रयसारूप्याभावादतिदेशासंभवात् । नचातिदेशे सारूप्यमदृष्टद्वारा नोपयुज्यते किंतु प्रकृतिपर्युपस्थापनद्वारेण । तदुपस्थितिश्चात्राश्रयत्वप्रयोजकसंनिधानादेवास्तीति किं सारूप्येणेति वाच्यम् । तथात्वेऽस्यातिदेशस्य चोदनालिङ्गनिमित्तकत्वाभावेनातिदेशान्तरत्वापत्त्या प्रत्यक्षवचननामधेयचोदनालिङ्गनिमित्तकत्वेन सप्तमे वक्ष्यमाणातिदेशत्रैविध्यव्याघातप्रसङ्गादिति चेन्मैवम् । नहि चोदनालिङ्गशब्दस्य सादृश्यमेवार्थो येनोक्तदोषः स्यात् किंतु शब्दातिरिक्तप्रकृत्युपस्थापकमात्रम् । अतएवाष्टमे 'हविषा वा नियम्येत तद्विकारत्वा'दिति सूत्रे सुरावाजिनयोर्व्रीहिपयोजन्यत्वात्तद्धर्मातिदेशो वक्ष्यते । ग्रन्थकारेणापि 'पशुः पुरोडाशविकारः स्याद्देवतासामान्या'दित्यधिकरणे पशोः पशुप्रभवत्वसादृश्यात्सांनाय्यविकारत्वमुक्त्वा संबन्धित्वाच्च पशुसांनाय्ययोः पशुः प्रतीतः सांनाय्यमुपस्थापयतीति संबन्धित्वमात्रेणापि तद्विकारत्वमुपपादयिष्यते । ततश्च प्रकृतस्याप्यतिदेशस्य चोदनालिङ्गनिमित्तकातिदेश एवान्तर्भावान्नातिदेशत्रैविध्यविरोध इति भावः । इदंत्ववधेयम् । सत्यप्यतिदेशे न पृथगङ्गान्यनुष्ठेयानि आश्रयक्रियार्थमनुष्ठितैरेव गुणानां प्रसङ्गादुपकारसिद्धेरिति काम्यगुणमात्रस्योदाहरणत्वे सौत्रसंस्थाविरोधमाशङ्क्याह—**संस्थाग्रहणमिति** । संस्थास्वप्युक्थ्यादय एवोदाहरणं नत्वग्निष्टोमसंस्थेत्याशयेनाह—**ज्योतिष्टोमस्येति । अग्निष्टोमस्यैवेति** । ननु 'उक्थाग्निष्टोमसंयोगादस्तुतशस्त्रं स्यात्सति हि संस्थान्यत्व'मिति दाशमिकाधिकरणेऽत्यग्निष्टोमे 'राजन्यस्य गृह्णीया'दिति वचनस्यात्यग्निष्टोमसंस्थोपमर्दैन षोडशिसंस्थाविधायकत्वस्य वक्ष्यमाणत्वात्षोडशिग्रहयोगेनात्यग्निष्टोमस्य षोडशिसंस्थापत्त्या कथमग्निष्टोमेऽत्यग्निष्टोमस्यान्तर्भावः । अनेनैव न्यायेन वाजपेयस्यापि षोडशिन्यन्तर्भावोऽनुपपन्नस्तत्रापि षोडश्यनन्तरं स्तोत्रान्तरस्य सद्भावेन तस्य षोडशिसंस्थानुपपत्तेरितिचेत्सत्यम् । तथाप्यग्निष्टोमस्य यत्क्रतुकरणं तदेवात्यग्निष्टोमस्यापि क्रतुकरणं, यश्चाग्निष्टोमस्य सवनीयः क्रतुपशुः स एवात्यग्निष्टोमस्यापीति क्रतुकरणपश्वादिभेदाभावादग्निष्टोम एवात्यग्निष्टोमस्यान्तर्भावस्तथा वाजपेयस्यापि षोड-

१ भूतया क्रियया.

भिप्रायं सप्तसोमसंस्था इति स्मरणम्। तत्राग्निष्टोमसंस्था क्रत्वर्था। क्रतोस्तु फलं ज्योतिष्टोमेन स्वर्गकाम इति। उक्थ्यादयः संस्था ज्योतिष्टोमाश्रिताः फले विधीयन्ते 'पशुकाम उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं[1] याजये'दिति। ननु ग्रहणादीनामत्र फले विधानं न संस्थायाः। उच्यते। उक्थ्यशब्दोऽयं स्तोत्रविशेषवचनस्तत्संबन्धाद्ग्रहण उपचर्यते। नचेहोपचाराश्रयणं युक्तम्। समाप्तेश्च[2] स्तोत्रसंबन्धिन्या वाचक एव तत्संस्थाविशिष्टे क्रतौ प्रयोगादुक्थ्यो यज्ञ इति। तत्राकृत्यधिकरणन्यायाद्विशेषणभूता संस्थैवाभिधेया। स्तोत्रसंबन्धात्, समाप्तावपि लक्षणेतिचेन्न। तत्संबन्धिक्रतुमात्रे प्रयोगाभावात्। अस्तिहि षोडशिसंस्थे यज्ञेऽतिरात्रसंस्थे चोक्थ्यस्तोत्रम्। नच तत्र यज्ञेऽस्त्युक्थ्यशब्दप्रयोगः। लक्षणा चेत्तत्रापि प्रयुज्येत तत्संस्थएव प्रयोगादभिधेयैव संस्था, सैवात्र फलाय चोद्यते। पशुकाम उक्थ्यं गृह्णीयात् उक्थ्यात्मिकां संस्थां कुर्यादित्यर्थः। ग्रहणं तु फलवत्समाप्त्यङ्गत्वेन वाक्यान्तरप्राप्तमनूद्यते। एवं षोडशिशब्दस्यापि स्तोत्रवचनत्वं संस्थावचनत्वं च व्याख्येयम्। तत्र त्वियं व्यवस्था। यदा समाप्तिवचनः तदाश्रयतो लिङ्गलाभाद्यज्ञवत्पुंलिङ्गः स्तोत्रवचनस्तु नपुंसकः फलवाक्ये च पुंलिङ्गः षोडशिशब्दो वाक्यशेषादवगम्यत इति संस्थैव फले चोद्यते। स्तोत्रंतु पूर्ववदनूद्यते। अतिरात्र इति तु रात्रिमतीत्य यः संतिष्ठते यज्ञः स उच्यते। तत्र सत्यपि संस्थाविशिष्टयज्ञवचनत्वे विशे[3]ष्यस्य यज्ञस्य प्राप्तत्वादप्राप्तसंस्थैव

---

शिवदेव पशुरिति तस्यापि षोडशिन्येवान्तर्भावः। **ननु** संस्थानां चतुष्ट्वे सप्तसोमसंस्था इति स्मृतिविरोध इत्यत आह—**एतदिति**। **नन्विति**। ग्रहणादीनामित्यादिशब्देन षोडशिवाक्ये स्तुतेरतिरात्रवाक्ये क्रतोश्च संग्रहः। **न संस्थाया इति**। तद्वाचकशब्दाभावादिति भावः। उक्थ्यवाक्ये ग्रहणस्य फले विधिर्न संभवति, उक्थ्यशब्दस्य ग्रहणपरत्वे लक्षणाप्रसङ्गादित्याह—**उक्थ्यशब्दोऽयमिति**। एवं ग्रहणविधिं निरस्य संस्थाविधिमुपपादयति—**समाप्तेरिति**। स्तोत्रसंबन्धिन्या उक्थ्यस्तोत्रेण या क्रतोः समाप्तिस्तस्या इत्यर्थः। तावता संस्थाविशिष्टक्रतुवाचकत्वमेव स्यान्न संस्थावाचकत्वमित्यत आह—**तत्राकृतीति**। ननु उक्थ्यशब्दस्य स्तोत्रमात्रार्थकत्वेऽपि उक्थ्यसंस्थाविशिष्टे क्रतावुक्थ्यो यज्ञ इति प्रयोग उक्थ्यस्तोत्रसंबन्धाल्लक्षणया उपपद्यत इति शङ्कते—**स्तोत्रसंबन्धादिति**। समाप्तौ समाप्तियुक्तक्रतावित्यर्थः। यद्यपि संस्थावाचित्वेऽपि गवादिशब्दानां व्यक्ताविव लक्षणास्त्येव तथापि सा शक्तितुल्ययोगक्षेमेति न दुष्यतीति भावः। उक्थ्यस्तोत्रसंबन्धिक्रतुमात्रे उक्थ्यो यज्ञ इति प्रयोगाभावादुक्थ्यस्तोत्रेण समाप्यमानक्रतावेव प्रयोगादन्वयव्यतिरेकाभ्यां संस्थानिमित्तक एवोक्थ्यो यज्ञ इति प्रयोग इति संस्थावाचित्वमावश्यकमिति समाधत्ते—**नेति**। ननु उक्थ्यशब्दस्य संस्थावाचित्वेऽप्यत्र ग्रहणसामानाधिकरण्येन तदर्थत्वात्कथं संस्थाविधिरित्याशङ्क्योक्थ्यशब्दस्य नात्र धातुनान्वयः येन ग्रहणसामानाधिकरण्यं स्यादिति मनसि निधाय तद्वाक्यार्थमाह—**पशुकाम इति**। उक्थ्यात्मिकां संस्थां कुर्यादिति प्रदर्शनमात्रम्। उक्थ्यसंस्थारूपगुणस्य प्रत्ययवाच्यफलभावनायां करणत्वेन कर्मत्वासंभवात्तस्मादुक्थ्यसंस्थया पशून्कुर्यादित्यर्थो बोध्यः। उक्थ्यमितिद्वितीयानिर्देशश्चाग्निहोत्रं जुहुयादितिवदुपपादनीयः। गृह्णातेरिदानीं कथमन्वयः, ग्रहणस्य काम्यगुणात्मकसंस्थाश्रयत्वाभावेन दध्नेन्द्रियकामस्येत्यत्र जुहोतेरिवाश्रयसंबन्धानुवादकतयाऽन्वयायोगादित्याशङ्क्य सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति निर्वपत्यालभतिवत्प्रत्ययमात्रानुग्रहायानुवादकत्वेनान्वयं इत्याह—**ग्रहणमिति**। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति वाक्यान्तरेण ग्रहणस्य स्तोत्रसंबन्धोऽवगम्यते। ग्रहणबलादेव च तद्ग्रहयज्याभ्यासोऽप्यवगम्यते। ततश्च ग्रहणं स्तोत्रं तद्ग्रहयज्याभ्यासश्चेत्येतत्सर्वं प्रकृते संस्थायाः फलवत्त्वात्फलवदफलन्यायेन तदर्थं भवति। तदेवं न्यायानुगृहीताद्ग्रहं वा गृहीत्वेतिवाक्यात्समाप्त्यङ्गत्वेन ग्रहणं प्राप्तमनूद्यत इत्यर्थः। उक्तन्यायस्फोरणार्थमेव फलवदित्युक्तिः। एवं षोडशिशब्दस्यापि स्तोत्रवाचकत्ववत्षोडशिस्तोत्रेण समाप्यमानक्रतौ षोडशी यज्ञ इति प्रयोगात्संस्थावाचकत्वमप्यङ्गीकार्यमित्याह—**एवमिति**। नन्वेवमुभयत्र मुख्यत्वाविशेषादिह स्तोत्रविधानमेव किं न स्यादित्यत आह—**तत्रत्विति**। **आश्रयत इति**। गुणवचनानामाश्रयतो लिङ्गवचनभाक्त्वादिति भावः। **वाक्यशेषादिति**। न वै षोडशी नाम यज्ञ इत्यादि। अयंच प्रकार उक्थ्यशब्दस्य स्तोत्रसमाप्त्युभयवाचित्वेऽपि वाक्यशेषे पुंलिङ्गनिर्देशात्फलवाक्ये समाप्तिपरत्वमेव न स्तोत्रपरत्वमित्येवमुक्थ्यवाक्येपि योज्यम्। **तत्रेति**। अतिरात्रशब्दस्य यौगिकत्वादवयवार्थविशिष्टवाचित्वान्नात्राकृत्यधिकरणन्यायेन संस्थामात्रवाचित्वमिति भावः। **प्राप्तत्वादिति**। प्राप्तयज्ञस्य फलसंस्थोभय-

---

१ प्रजाकामो. २ समाप्तौ च स्तोत्रसंबन्धिन्यां. ३ विशेषे.

विधीयते विधेयस्य च फलमिति संस्थैव फलसाधनम् । एतदिह विचार्यते—किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य संस्थानां च समानमुत ज्योतिष्टोमस्यैवेति । तत्र—'तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः ॥ तुल्यमङ्गविधानं स्यादिति प्राप्तेऽभिधीयते ॥ वैरूप्यमङ्गवाक्यानां प्रसज्येतोभयान्वये॥ संभवत्येकगत्वे नानारूप्यं[1] न युज्यते ॥ नच क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः ॥ संस्थावधारणेनैव युज्यते क्रतुसङ्गतिः ॥' संस्था ह्यक्रियात्मकत्वाद्[2]ध्यादिवदाश्रयभूतां क्रियामपेक्ष्य फलं साधयति, साधननिवेशि चाङ्गजातं, तद्यदा संस्थाभिः संबद्धुं प्रस्थितं तदा तत्साधनत्वनिर्वाहिका क्रियापि तत्रैव दृश्यते । सा च स्वयमपि फलवत्त्वात्संस्थार्थमपि प्रस्थितमङ्गजातं किमिति न गृह्णाति । तस्मात्संस्थासंबन्धवादिना[3]प्यवर्जनीयः क्रतुसंबन्ध इति न केवलसंस्थार्थत्वं, क्रतुस्तु स्वयमेव फलसाधनत्वादनादृत्यैव संस्थां शक्नोत्यङ्गजात[4]मात्मसात्कर्तुमिति तदर्थमङ्गविधानं न संस्थार्थम् । अतएवागृह्यमाणविशेषत्वादुभयार्थमित्यपि न शक्यं वक्तुं, विशेषग्रहणात् । एवमपि संस्थार्थत्वं किं न भवति वैरूप्यादिति ब्रूमः । अङ्गविधयो हि न स्वार्थमात्रे पर्यवस्यन्ति, आनर्थक्यप्रसङ्गात् । प्रयोगवाक्ये तु विशेषणत्वेन स्वार्थं समर्पयन्ति तेन नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं बोधयन्तस्तात्पर्यभेदाद्भिद्येरन्[5]।यो ज्योतिष्टोमेन फलं कुर्यात्स एवं, यश्च ज्योतिष्टोमे(कदाचित्)संस्थाफलार्थी स एवमिति। किंच गुणः फलाय चोद्यमानः पूर्वप्राप्तां परप्रयुक्तां क्रियामाश्रित्य पश्चाच्चोद्यते, त्र्यंशयुक्ता च क्रिया प्रयुज्यते । तत्र प्राक्तनक्रियाविधिसमये व्याप्रृतानामङ्गविधीनां पश्चात्तनेऽपि गुणफलविधौ व्याप्रियमाणानां विरम्यव्यापारः प्रसज्यते, अयंचापरोऽत्र विशेषः । सोमस्तावच्छुत्या यागार्थस्तत्संस्कारार्थाश्च क्रयाभिषवग्रहणादयस्तद्द्वारत्वाद्यागार्था एव न संस्थाभिः संबध्यन्ते । सर्वंच प्रकरणं सोमसंस्कारविधिमिश्रमिति तैरसंबन्धिपदैर्विच्छिन्नं संस्थानां प्रकरणं न दीक्षणीयादिकमप्यङ्गमलं ग्रहीतुं, तस्मादसमानविधानाः संस्थाः ॥ इति शास्त्रदीपिकायां तृतीयाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

संबन्धविधाने वाक्यभेदप्रसङ्गात्प्राप्तयज्ञमाश्रित्य संस्थैव फलाय विधीयत इत्यर्थः । तुल्यप्रकरणत्वेन प्रकरणतौल्येनेत्यर्थः । सर्वेषामित्यनेन संस्थानामिव ज्योतिष्टोमस्यापि फलवत्त्वमस्तीति दर्शयति । तेन यदि संस्थानामपि काम्यत्वेनानित्यत्वान्न तदर्थं धर्मविधानं तदा ज्योतिष्टोमस्यापि नित्यस्यैव धर्मविधानं स्यान्नतु फलार्थस्येति प्रतिबन्दीं सूचयति । **ननु** तर्हि केवलसंस्थार्थत्वमेव किं न स्यात्तथापि वैरूप्याभावेन विनिगमनाविरहादित्यत आह—**नच क्रतुमिति । अक्रियात्मकत्वादिति ।** संस्थायाः क्रियासमाप्तिरूपत्वेन क्रियात्वाभावादित्यर्थः । समाप्तेः समाप्तिमदपेक्षत्वाच्चेत्यपि द्रष्टव्यम् । अस्तु फलसाधनत्वार्थं क्रियापेक्षा तथापि धर्मान्वयः क्रियामनादृत्य संस्थानां किं न स्यादित्यत आह—**साधनेति ।** धर्मान्वयो न स्वरूपेण किंतु साधनत्वरूपेण । ततश्च संस्थानां धर्मान्वयदशानां साधनत्वोपस्थित्यवश्यंभावात्साधनत्वोपस्थितेश्च तन्निर्वाहकक्रियोपस्थित्यधीनत्वात्क्रियोपस्थित्यवश्यंभावे क्रियाया अपि धर्मान्वययोग्यत्वात्तामनादृत्य केवलसंस्थाभिर्धर्माणामन्वयो न संभवति क्रियायास्तु साधनत्वोपस्थितिदशायां संस्थोपस्थित्यनपेक्षणात्संस्थानादरेण क्रियान्वयः संभवतीति वैषम्यमिति भावः । **ननु** वैषम्यं धर्माणां क्रतुसंस्थयोरेकतरार्थत्वे विनिगमकतयोपयुज्यते इहतूभयार्थत्वसंभवाद्विनिगमकापेक्षैव नास्तीति वैषम्यमकिंचित्करमिति शङ्कते—**एवमपीति ।** वैरूप्यमेवाह—**अङ्गेति ।** अङ्गविधयो नाङ्गस्वरूपकर्तव्यतामात्रपर्यवसिताः स्वातन्त्र्येणाङ्गस्वरूपानुष्ठाने प्रयोजनाभावेनानर्थक्यापत्तेः, किंत्वेतादृशाङ्गयुक्तेन प्रधानेनापूर्वं कुर्यादित्येवं प्रयोगवाक्ये विशेषणभावेन स्वार्थसमर्पका इत्यर्थः । तात्पर्यभेदमेव वचनव्यक्त्युपपादनेन विशदयति—**य इति ।** सोमेन यजेतेत्युत्पन्ने यागे 'वसन्तेवसन्ते ज्योतिषा यजेते'ति 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति च नित्यकाम्यद्वयसंबद्धार्थयोः विध्योः समत्वेन तुल्यवत्प्रवृत्त्या यो ज्योतिष्टोमेन प्रत्यवायपरिहारमन्यद्वा फलं कुर्यात्स एवमिति युगपदेव प्रयोगद्वयसाधारणज्योतिष्टोमस्वरूपे धर्मविधिभिः स्वार्थसमर्पणात्तत्र नित्यकाम्यप्रयोगभेदेन धर्मविधीनां तात्पर्यभेदाप्रसक्तेर्नित्यकाम्योभयविधज्योतिष्टोमसाधारण्यं धर्मविधीनामुपपद्यत इति न प्रागुक्तप्रतिबन्धावकाश इति भावः । क्रियाप्रयुक्त्युपजीवनमात्रेण धर्मविधीनां प्रथमतः कथं क्रियान्वये व्यापारसिद्धिरित्यत आह—**त्र्यंशेति ।** क्रियाप्रयुक्तेरितिकर्तव्यतान्वयानन्तरभावित्वात्प्रथमं क्रियासंबन्धे धर्मविधीनां व्यापार आवश्यक इत्यर्थः । संस्थादौ क्वचित्काम्यगुणे संभावितविशेषमाह—**अयंचेति । न संस्थाभिरिति ।** संस्काराणां संस्थासंबन्धे द्वाराभावादिति भावः । प्रयोजनं च गुणकामप्रवृत्त्यप्रवृत्तिरूपम् । **ननु** नेदं प्रयोजनं संभवति विकृतिषु हि यथाश्रुताश्रयाभावाद्गुणकामानामप्रवृत्तिः संस्थानां तु विकृतित्वेऽपि तदाश्रयभूत-

---

१ नानारूपं. २ त्वक्रियात्मकत्वात्. ३ वादिनोऽप्य. ४ मङ्गजातं. ५ संबध्येरन्.

# तृतीयाध्यायस्य सप्तमः पादः ।

## बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताधिकरणम् ॥ १ ॥

**प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥ [सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥२॥ आरादपीति चेत् ॥ ३ ॥ न तद्वाक्यं हि तदर्थत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च॥५॥]**

**मुख्याङ्गतैव वेद्यादेः प्रयाजाद्यङ्गतापि वा ॥ तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥ १ ॥**
**मुख्याङ्गस्यापि वेद्यादेः प्रयाजादिषु चाङ्गता ॥ मुख्यार्थत्वात्प्रयाजादेः स्वापूर्वव्यवधानतः ॥ २ ॥**

समानासमानविधानप्रसङ्गाद्वाक्यप्रकरणविरोधाविरोधविचारेण दर्शपूर्णमासयोर्वेद्यां हवींष्यासादयति वेदिं खनति बर्हिषि हवींष्यासादयति बर्हिर्लुनातीति श्रुता वेदिर्बर्हिस्तद्धर्माः किमङ्गप्रधानहविषां साधारणा उत प्रधानहविषामेवेति चिन्त्यते । तत्र वाक्यस्वातन्त्र्ये सत्यानर्थक्यात्क्रत्वन्तरे चातिप्रसङ्गादवश्यं प्रकरणेनैकवाक्यत्वमपेक्षितव्यं, प्रकरणं च प्रधानस्यैवेति प्रधानहविषामेव वेद्याद्यङ्गं न प्रयाजादिहविषामिति प्राप्ते ब्रूमः । सत्यं, प्रकृतैकवाक्यत्वं तत्त्ववच्छेदकतया[3] नतु ग्राहकतया । वाक्यस्यात्यन्तसंकोचप्रसङ्गात् । प्रधानगृहीता हि वेदिस्ततस्तदर्थेष्वेव हविःषु स्यात् । तत्र वाक्यस्यात्यन्तसंकोचः स्यात्, तस्मान्नायं वाक्यार्थः प्रधानार्थहविरासादनद्वारेण प्रधानापूर्वं वेद्यां कुर्यादिति, किं तर्हि यद्दर्शपूर्णमासोपकारिहविस्तद्वेद्यामिति । एवं हि नातिसंकोचः कृतः स्यात् । नचानर्थक्यम् । अङ्गहविरपि प्रधानस्योपकारकमेवेति तत्रापि वेदिः स्यात् । अथवास्तु प्रधानस्य ग्राहकत्वं, द्वारंतु

---

ज्योतिष्टोमस्य सद्भावात्तदर्थतयानुष्ठीयमानस्य सदोमानादेर्यथाश्रुताश्रयस्य सद्भावेन 'यदि कामयेत वर्षुकः पर्जन्यः स्या'दिति नीचैःसदो मिनुयादित्यादिगुणकामानामिह प्राप्त्यवश्यंभावादितिचेत्सत्यम् । सदोमानादिगुणकामप्रवृत्तावपि संस्थार्थे यदुक्थ्यादिग्रहयागाभ्यासान्तरं तत्र प्राकृतधर्माणामतिदेशतः प्राप्तौ ग्रहाद्याश्रितगुणकामप्रवृत्त्यप्रवृत्तिरूपं प्रयोजनं संभवतीति।

**इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां तृतीयाध्यायस्य षष्ठः पादः ॥ ६ ॥**

**प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥** ननु तुल्यः सर्वेषां पशुविधिरित्यधिकरणात्प्रागेव प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारसमाप्तेरत्र वाक्यप्रकरणविरोधाविरोधचिन्ता न संगतेत्याशङ्क्य चिन्तां संगमयन्विषयसंशयमाह— **समानेति** । 'आचाराच्छिष्टसंयुक्त'मित्यधिकरणेऽतःपरं प्रासङ्गिकी कथेत्युक्तेस्तत्र समानासमानविधानप्रसङ्गागतो यो वाक्यप्रकरणविरोधाविरोधविचारः सएवात्राप्यनुवर्तत इति नासंगतिरित्यर्थः । विचारेणेत्यस्य चिन्त्यत इत्यनेन संबन्धस्तद्विचाररूपेणेयं चिन्ता क्रियत इति यावत् । प्रकरणविरोधाविरोधविचारेणेत्यनेनैवेहैकप्रकरणगताङ्गप्रधानानां समानासमानविधानत्वविचारः प्राधान्येन क्रियत इति पादान्तरत्वमनारभ्य विचारानन्तर्यं च सूचितम् । **वेदीति** । वेदिर्बर्हिषी तद्धर्माश्चेत्यर्थः । **ननु** प्रकरणेन वाक्यसंकोचायोगात्कथं प्रधानमात्रार्थत्वमित्यत आह—**वाक्येति** । वाक्यस्य स्वातन्त्र्येसति लवनादीनां बर्हिरादिस्वरूपार्थत्वापत्त्यानर्थक्यप्रसङ्गादित्यर्थः । **अवश्यमिति** । आनर्थक्यातिप्रसङ्गपरिहारार्थं प्रकृतापूर्वसाधनार्थत्वं स्वीकार्यम् । तच्च प्रकरणतएव भवति नत्वन्यतस्तेन प्रकरणकृतमेकवाक्यत्वमवश्यमपेक्षितव्यमित्यर्थः । **अवच्छेदकतयेति** । साधनेन धर्मान्वयेऽपूर्वं व्यावर्तकतयोपयुज्यते नतु स्वयं धर्मग्राहकतयेत्यर्थः । **तस्मान्नायमिति**। प्रधानापूर्वस्य ग्राहकतयान्वये वेद्यां हविरासादनद्वारा प्रधानापूर्वं कुर्यादित्यर्थः स्यात्तत्र हविरासादनद्वारा प्रधानापूर्वं कुर्यादित्युक्तेर्थात्प्रधानहविरासादनमेव द्वारं स्यात्ततश्च प्रधानापूर्वस्य ग्राहकतयान्वये प्रधानार्थं हविर्वेद्यां सादयेदिति वाक्यार्थः पर्यवस्येत्तथासति स्वरसतः सर्वहविरर्थपरत्वेन प्रतीयमानस्य वाक्यस्य संकोचप्रसङ्गान्नायं वाक्यार्थ इत्यर्थः । **किंतर्हीति**। प्रधानापूर्वस्य व्यावर्तकतयान्वये तु यद्दर्शपूर्णमासापूर्वोपयोगि हविस्तदासादयेदित्यर्थः स्यान्नतु तादर्थ्येन प्रधानापूर्वोपयोगित्वमात्रेणैव व्यावृत्तिसिद्धिः । एवंच यावतातिप्रसङ्गस्यानर्थक्यस्य च परिहारो भवति तन्मात्र एव तात्पर्यं न्याय्यं नत्वधिक इत्यर्थः । अस्तु वा प्रधानस्य ग्राहकत्वं तथापि वेद्यां हविरासादनद्वारा प्रधानापूर्वं कुर्यादिति न वाक्यार्थप्रसक्तिः । नहि प्रधानोत्पत्तिविधिना धर्मविधीनामन्वयो येनोक्तो वाक्यार्थः स्यात् किंतु प्रयोगविधिना । प्रयोगविधिश्च साङ्गप्रधानविषयस्ततश्च प्रधानापूर्वोपयोगिहविरासादनद्वारा प्रधानस्योपकुर्यादित्येव वाक्यार्थ इत्यङ्गप्रधानार्थत्वेनानुपपत्तिरित्याशयेन

---

१ विधिप्रसङ्गात्. २ बर्हिर्धर्माः. ३ तत्तु व्यवच्छेदकतया वाक्यस्यात्यन्त. ४ वेदिस्तदर्थेष्वेव.

न तदर्थमेव हविः किंतु तदुपकारिहविर्मात्रं, वाक्यसंकोचपरिहारात् । संभवति चोपकारिमात्रस्यापि द्वारत्वम्, अतः प्रधानप्रयुक्तानामपि वेदिबर्हिस्तद्धर्माणां प्रयाजाद्यपूर्वस्वरूपनिर्वृत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रयाजाद्यङ्गत्वं वेद्यादेः ॥

स्वामिसंस्काराणां प्रधानार्थताधिकरणम् ॥ २ ॥

## फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य ॥ ६ ॥

वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत ॥ मुख्य एव द्वयोरस्तु कृत्स्नकर्तृगतत्वतः ॥ ३ ॥
युक्तः शास्त्रीयसंस्कारो मुख्यस्य फलभोजिनः ॥ विनापि संस्कृतिं दृष्टं कर्तृत्वं तत्र नास्ति सः ॥ ४ ॥

ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्काराः किमङ्गप्रधानार्था उत प्रधानार्था एवेति संशयः । तदर्थंच किमेते कर्तृत्वांशपातिनः किंवा भोक्तृत्वांशपातिन इति । तत्र भोक्तृत्वस्य प्रधानफलत्वात्तदर्थाः सन्तः संस्काराः प्रधानतुल्यकक्षतया न प्रधानार्था भवेयुः । तादर्थ्यं च प्रकरणाद्वगतमतः कर्त्रर्थाः, कर्ता चाङ्गप्रधानार्थः, संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युरिति प्राप्तेऽभिधीयते—'भोक्तृत्वस्य प्रधानत्वाददृष्टत्वाच्च तद्गुणाः ॥ संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः ॥' प्रधानं हि भोक्तृत्वं गुणभूतं कर्तृत्वं भोक्तृत्वार्थत्वात् । संस्काराश्च गुणभूतास्ते प्रधानार्था एव युक्ता न गुणार्थाः 'गुणानां च परार्थत्वा'दितिन्यायात् । अदृष्टंच भोक्तृत्वं शास्त्रगम्यमुपायमपेक्षते । कर्तृभावस्तु विनापि संस्कारैरुत्पद्यमानः प्रमाणान्तरादेव दृष्ट इति न तादर्थ्यमेषाम् । नच भोक्तृत्वार्थानां प्रधानाङ्गत्वविरोधः । नहि ते फलं जनयन्ति । यतः प्रधानतुल्याः स्युः किंतु तादृशं संस्कारं यजमाने कुर्वन्ति येन यजमाने प्रधानं स्वफलं जनयितुमलं तेन क्षेत्रसंस्काराणामिव बीजावपनार्थत्वं प्रधानार्थत्वं संस्काराणां, प्रधानफलं हि यजमानो भुङ्क्ते नाङ्गफलं, तस्य क्रत्वर्थत्वात् ॥

---

पक्षान्तरमाह—**अथवेति** । ननु तदर्थस्यैव द्वारत्वयोग्यत्वादगत्या संकोचोऽपि न्याय्य इत्यत आह—**संभवतीति** । अभ्युदयेष्टौ दधिशृतयोः प्रणीताकार्यार्थत्वाभावेऽपि प्रणीताधर्मप्राप्तेर्नवमे 'परार्थे त्वर्थसामान्यं संस्कारस्य तदर्थत्वा'दित्यधिकरणे वक्ष्यमाणत्वात्तादर्थ्याभावेऽप्युपकारमात्रस्यैव धर्मद्वारत्वं संभवतीत्यर्थः । वैमृधहविरासादनस्य तु दर्शपूर्णमासोपकारकत्वेऽपि तस्य चोदकतः प्राप्तिदशायामेव सधर्मकस्य प्राप्त्या पुनरप्युपदेशे द्विरुक्तिदोषप्रसङ्गान्न तत्साधारण्यमिति नातिप्रसङ्ग इत्यभिप्रेत्योपसंहरति—**इति सिद्धमिति** । सूत्रार्थस्तु—अङ्गार्थेन प्रधानार्थेन वा विशिष्यासंयुक्तं वेद्यादिकं प्रधानस्यैव स्यात् प्रकरणस्य प्रधानमात्रसंबन्धितया तत्कृतविशेषसद्भावादिति ॥

**फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य** ॥ ६ ॥ पूर्वापवादात्सङ्गतिः । केशश्मश्रुवपनादीनां समाख्यया आध्वर्यवत्वाद्द्रोःकर्त्रंशपातित्वाप्रसक्तेर्विचारोऽनुपपन्न इति न शङ्कनीयम् । तेषां याजमानत्वस्याग्रिमपादे वक्ष्यमाणत्वादित्याशयेन यजमानसंस्कारा इत्युक्तं द्वितीयाद्यश्रवणेऽपि सामर्थ्यादेव तेषां संस्कारत्वं बोध्यम् । **तदर्थमिति** । यजमानस्य हि कर्तृत्वं भोक्तृत्वं चास्ति तत्र किमेते धर्माः कर्तृत्वे उपयुज्यन्ते उत भोक्तृत्व इत्यर्थः । **भोक्तृत्वस्येति** । भोक्तृत्वं विवक्ष्यमानं कर्मजन्यफलभाक्त्वमेव । तथाच तेषां भोक्तृत्वार्थत्वे फलार्थत्वमेव स्यादिति प्रधानतुल्यकक्ष्यतया प्रधानाङ्गत्वं न स्यादित्यर्थः । **नन्वेवमपि** प्रयाजाद्यङ्गेषु अध्वर्य्वादिकर्तृकेषु यजमानस्य कर्तृत्वाभावाद्यजमानधर्माणां तेषां कथमङ्गप्रधानार्थत्वमित्यत आह—**कर्ता चेति** । प्रयोगान्वयाद्देशकालवदङ्गप्रधानार्थत्वाद्यजमानस्य प्रयाजादिष्वपि कर्तृत्वमस्ति संविधानादिनापि तत्संभवादिति भावः । **अदृष्टत्वादिति** । प्रत्यक्षादिप्रमाणागोचरत्वादित्यर्थः । ततश्च विनापि संस्कारैर्भोक्तृत्वं सिद्ध्यतीत्यनवगमात्तादर्थ्यं तेषामुपपद्यत इति भावः । कर्तृत्वस्य गुणभावे हेतुमाह—**भोक्तृत्वार्थत्वादिति** । शास्त्रफलं प्रयोक्तरीति न्यायात्कर्तृत्वं भोक्तृत्वार्थमित्यर्थः । यजमानस्य फलाधारत्वयोग्यत्वेसति तत्र प्रधानेन फलं जनयितुं शक्यते नान्यथा । तेन यजमानयोग्यताधानद्वारा प्रधानेन फले जननीये तेषामुपयोगात्प्रधानार्थत्वमुपपद्यत इत्याह—**तेनेति** । **ननु** साङ्गप्रधानजन्यत्वात्फलस्य फलाधारत्वयोग्यतार्थानां संस्काराणां प्रधानार्थत्ववदङ्गार्थत्वमपि स्यादित्यत आह—**प्रधानफलमिति** । अङ्गस्य क्रतूपकारजननोपक्षीणत्वान्न फलजनकत्वमिति नोक्तदोष इत्यर्थः । प्रयोजनं पूर्वपक्षे अग्नीषोमीयपशुविकारे निरूढपशुबन्धादौ तेषां प्रवृत्तिः, सिद्धान्ते तु नेति । सूत्रार्थस्तु—स्वामिसंयुक्तं वपनपयोव्रतादिकं प्रधानस्य धर्मः फलसंयोगात्फलभाक्त्वरूपभोक्तृत्वसंयोगादिति ॥

---

१ कक्षतया प्रधानार्था.

सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताधिकरणम् ॥ ३ ॥

**चिकीर्षया च संयोगात् ॥ ७ ॥ [तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ८ ॥]**

मुख्यार्थो सौमिकी वेदिरुभयार्थेति मुख्यगा ॥ चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्कृतिसंभवात् ॥ ५ ॥
मुख्यपौष्कल्यहेतुत्वात्तदङ्गं च चिकीर्षितम् ॥ मुख्यवत्तेन तद्वेदिरङ्गेष्वप्युपकारिणी ॥ ६ ॥

सौमिकी वेदिः किं प्रधानार्था उताङ्गार्थापीति चिन्ता । तत्रे[1]यैति शक्ष्यामहेऽस्यां कर्तुमिति तुमुना चिकीर्षितार्थता गम्यते । प्रधानं च फलवत्त्वाच्चिकीर्षितं नाङ्गानि । तस्मात्प्रधानार्था वेदिः । स्थितं तावदपर्यवसितम् ॥

अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ॥ ४ ॥

**त[2]थाभिधानेन ॥ ९ ॥ [गुणाभिधानात्सर्वार्थमभिधानम् ॥ १० ॥]**

चतुर्होत्रा पौर्णमासीं मृशेदाज्यादिमर्शने ॥ मन्त्रो मुख्य उताङ्गेऽपि मुख्ये तद्वाचि शब्दतः ॥ ७ ॥
शब्दस्य कर्मवाचित्वात्तत्र मर्शनवर्जनात् ॥ विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः ॥ ८ ॥

संयोगादित्यनुवर्तते तल्लिप्सयान्तरोपक्रमः । दर्शपूर्णमासयोर्हविरभिमर्शनार्थौ मन्त्रौ 'चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामि'ति । किं तावदङ्गप्रधानार्थावुत प्रधानार्थाविति पौर्णमास्यमावास्याशब्दयोः प्रधानवचनत्वात्प्रधानार्थत्वं स्थितादुत्तरं, सत्यं, चिकीर्षितार्था वेदिः साङ्गं चिकीर्षितं । तद्धि फलाय पुष्कलं न करणमात्रं, अतोऽङ्गप्रधानार्था वेदिरित्यग्नीषोमीयविकारे निरूढपशौ प्रवर्तते । नन्ववेदिमतामियमग्नीषोमीयस्य तु प्राकृती वेदिरस्त्येवेति न तदङ्गमियम् । नैवं वचनबलात्सर्वार्थत्वावगतेः प्राकृती न प्रयोक्ष्यते । द्वितीयस्योत्तरं पौर्णमास्यमावास्याशब्दौ कर्मवचनौ । नच कर्मणोऽभिमर्शनं संभवति, तस्माद्द्वितीयेयं सप्तम्यर्थे व्याख्यातव्या, पौर्णमासीप्रयोगे चतुर्होत्रा[3]भि-

---

**चिकीर्षया च संयोगात् ॥ ७ ॥** ननु 'षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन इयति शक्ष्यामहे' इति सौमिकी वेदिराम्नायते, तस्यां च क्रतौ चिकीर्षासंयोगानवगमात्कथं चिकीर्षासंयोगात्पूर्वःपक्ष इत्याशङ्क्य शक्तेः कृतिविषयतया इयति शक्ष्यामह इत्यस्याः श्रुतेरेतावत्यामस्यां कर्तुं शक्ष्यामहे इत्यर्थकत्वात्तत्र च तुमुना कृतिसाध्यत्वप्रतीतेः कृतेश्च चिकीर्षामूलकत्वाद्यदत्र कृतिसाध्यं तस्यास्ति चिकीर्षासंयोग इत्याशयेनेयति शक्ष्यामह इति श्रुतिं व्याचक्षाण एव पूर्वपक्षमाह—**तत्रेति । फलवत्त्वादिति ।** अनेन यथाप्रधानमात्रस्य फलवत्त्वात्फलसिद्ध्युपयोगिनां वपनादीनां प्रधानमात्रार्थत्वं तथा ततएव हेतोः प्रधानमात्रस्यैव चिकीर्षितत्वात्तत्संयुक्ता वेदिरपि तन्मात्रार्थेति प्रत्यवस्थानात्सङ्गतिरिति सूचयति—**नाङ्गानीति ।** चिकीर्षितप्रधानोपकारसिद्ध्यर्थं तानि परमनुष्ठीयन्ते नतु तावता तेषां चिकीर्षितत्वमिति भावः ॥

**तथाभिधानेन ॥ ९ ॥** प्रस्तुताधिकरणसिद्धान्तमनुक्त्वान्तराधिकरणान्तरपूर्वपक्षकरणे हेतुमाह—**संयोगादिति ।** प्रस्तुताधिकरणसिद्धान्तानन्तरमारम्भे तदु(द्यु)क्ते तु फलश्रुतिस्तस्मात्सर्वेचिकीर्षा स्यादिति सिद्धान्तसूत्रेण व्यवधानात्संयोगादित्यस्यानुवृत्तिर्दुर्लभेति भावः । **चतुरिति ।** पृथिवीहोतेत्यादिमन्त्रश्चतुर्होता, अग्निर्होतेत्यादिश्च पञ्चहोता । चतुर्होतृपञ्चहोतृनामनिर्वचनं च 'ब्रह्मात्मन्व'दित्यनुवाके द्रष्टव्यम् । **प्रधानवचनत्वादिति ।** प्रधानस्य च साक्षादभिमर्शनायोग्यत्वादानर्थक्यतदङ्गन्यायेन प्रधानार्थहविरभिमर्शनार्थत्वमिति भावः । **तद्धीति ।** फलार्थिनंप्रति यागः करणतयोपदिश्यते, अनुपकृतस्य च करणत्वायोगात्प्रयोगविधिना च साङ्गस्यैव प्रधानस्य फलार्थिनंप्रति विधानात्साङ्गमेव प्रधानं फलार्थं चिकीर्षति न प्रधानमात्रमिति भावः । पक्षद्वयेऽपि सोमे वेद्यनुष्ठाने विशेषाभावात्प्रयोजनाभावमाशङ्क्य सिद्धान्तप्रयोजनमाह—**अग्नीषोमीयेति ।** चोदकादुपदेशस्य संकोचो न युक्तः किंतूपदेशबलाच्चोदक एव वेदिव्यतिरिक्ते संकोच्य इत्याशयेन परिहरति—**नैवमिति ।** आनर्थक्यतदङ्गन्यायेनापि कर्मगतसाध्यत्वानिर्वाहान्न द्वितीयास्थले तन्न्यायप्रवृत्तिः । अतएव न सौम्येध्वर इति सप्तमीस्थले आनर्थक्यतदङ्गन्यायो नावतरतीति दशमे वक्ष्यत इत्याशयेन द्वितीयाधिकरणसिद्धान्तमाह—**द्वितीयस्येति । पौर्णमासीप्रयोग इति ।** पौर्णमास्यामिति वक्तव्येऽपि वस्तुतः प्रयोगद्वारेण कर्मणि मन्त्रान्वयपर्यवसानात्पौर्णमासीप्रयोग इत्युक्तम् । **ननु** लक्षणायामपि प्रातिपदिकापेक्षया विभक्तेः प्राधान्यान्मुख्यस्यापि

---

१ तत्रेयमतिशक्ष्यामहे. २ तथाप्रधानेन. ३ होत्रामभि.

मृशेदमावास्याप्रयोगे पञ्चहोत्रेति हविर्मात्रस्याभिमर्शनं वाक्यान्तरप्राप्तमासन्नानि हवींष्यभिमृशेदिति तस्मादङ्गप्रधानार्थौ मन्त्रौ ॥

दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥ ५ ॥

**दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥ [निवृत्तिदर्शनाच्च ॥ १२ ॥]**

दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम् ॥ द्वयार्थमुत मुख्यार्थं सोमस्येत्युक्तिसंभवात् ॥ ९ ॥
मुख्याङ्गद्वयगं मैवं पारम्पर्यविडम्बना ॥ वचनस्य न युक्तातः प्रधानार्थमिदं स्थितम् ॥ १० ॥

ज्योतिष्टोमे दीक्षा दण्डेन दीक्षयतीत्यादि, दक्षिणा 'तस्य द्वादशशतं दक्षिणे'ति तद्दीक्षादक्षिणमङ्गप्रधानार्थमुत प्रधानार्थमेवेति । तत्र दीक्षाणां यजमानसंस्कारत्वात्प्रधानार्थत्वे सिद्धेऽप्यग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का । दक्षिणा तु प्रयोगाङ्गत्वादङ्गप्रधानार्थैव । दीक्षाः सोमस्य दक्षिणाः सोमस्येति वचनं परम्परयापि षष्ठ्युपपत्तेर्नाङ्गार्थतां विरुणद्धीति प्राप्ते ब्रूमः । वचनात्प्रधानार्थत्वं, अन्यथा हि वचनं न्यायप्राप्तानुवादमात्रमनर्थकं स्यात् । नच साक्षादपेक्षिताङ्गाङ्गिभावपरत्वेऽर्थवत्त्वे च संभवति परम्पराश्रयणमानर्थक्यं च युक्तम् । तस्मात्प्रधानार्थत्वम् ॥

अन्तर्वेदेर्यूपामङ्गताधिकरणम् ॥ ६ ॥

**तथा यूपस्य वेदिः ॥ १३ ॥ [देशमात्रं वा शिष्येणैकवाक्यत्वात् ॥ १४ ॥]**

अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत् ॥ देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥ ११ ॥
बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ ॥ मीयमानस्य यूपस्य तावान्देशोऽत्र लक्ष्यते ॥ १२ ॥

यूपे श्रूयते 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदी'ति । तत्र चिन्ता किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन चोद्यते उत बहिर्वेदिसहितो यूपस्य मानदेशं लक्षयति । तत्र लक्षणाया अन्याय्यत्वाद्वेद्येकदेशस्य श्रुतस्य यूपार्धाङ्गत्वेन विधेरर्धे च मीयमानेऽर्धान्तरं बहिरेव भवतीत्यर्थाद्बहिर्वेदीत्यनुवादः स्यात् ।

---

प्रातिपदिकस्यैव लक्षणा न्याय्या न विभक्तेरिति शङ्कां निराकुर्वन्सर्वार्थत्वे युक्त्यन्तरमाह—**हविर्मात्रस्येति** । अविशेषेण सर्वहविषामभिमर्शनविधानात्तद्वाक्यस्य प्रधानहविर्मात्रे संकोचायोगात्तथात्वे तद्वाक्यानर्थक्यप्रसङ्गाच्च सर्वार्थत्वं द्वितीयाप्रतिपाद्यकर्मत्वस्य वचनान्तरादेव प्राप्तेर्द्वितीयाया एव कारकत्वसाम्यात्सप्तम्यर्थे लक्षणा न्याय्येति भावः । इदंत्ववधेयम् —नात्र वार्त्रघ्नवाक्यइव मन्त्रव्यवस्थामात्रविधिः दर्शपूर्णमासप्रकरणे मन्त्रयोरनाम्नातत्वेन तद्वदिह मन्त्रयोः क्रमप्रमाणेन प्राप्त्यभावात् किंत्वप्राप्तमन्त्रविधिरेवेति द्वितीयाधिकरणसूत्रेऽभिधानशब्दः प्रधानाभिधायकपौर्णमास्यादिशब्दपरः ॥

**दीक्षादक्षिणं तु वचनात्प्रधानस्य ॥ ११ ॥** वपनादिवद्दीक्षायाः प्रधानार्थत्वसिद्धेरनुदाहरणत्वमाशङ्क्याह— **दीक्षाणामिति । विनियोगादिति** । यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति दीक्षितः सोमं क्रीणातीत्यादिवचनादिति भावः । **परम्परयापीति** । साक्षात्परम्परासाधारणसंबन्धमात्रेणेतियावत् । वचनाविरोधप्रतिपादनेन यथा चतुर्होत्रादेरङ्गप्रधानार्थत्वेऽपि वचनाविरोध एवमिहापीति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **नचेति** । अपेक्षितसाक्षात्संबन्धसंभवे परम्परासाधारणसंबन्धसामान्यं न ग्राह्यमिति तात्पर्यम् । क्रयाग्नीषोमीयादीनां दीक्षानन्तरमाम्नानात्क्रमप्राप्तानुवादमात्रं यो दीक्षित इति दीक्षितग्रहणमित्याशयः । यद्यपि देवतोद्देशेन द्रव्यत्यागात्मके प्रधाने यजमानस्यैव कर्तृतया दक्षिणाया न तत्रोपयोगः तथापि प्रधानोत्पत्त्यर्थं संनिपात्यङ्गानामृत्विक्कर्तृकत्वात्तन्मुखेन दक्षिणोपयोगः प्रधाने बोध्यः । प्रयोजनं निरूढपश्वादौ प्रवृत्त्यप्रवृत्तीएव ॥

**तथा यूपस्य वेदिः ॥ १३ ॥** यूपस्यार्धमित्यर्थस्फोरणार्थमाह—**यूपे श्रूयत इति । यूपाङ्गत्वेनेति** । यूपार्धसामानाधिकरणत्वस्य यूपाङ्गत्वपर्यवसानादिति भावः । **नन्वेवमर्धं** बहिर्वेदीत्यस्यापि विधेयत्वाद्वाक्यभेद इत्यत आह— **अर्धेचेति** । तत्रार्धान्तरस्यान्तर्वेद्यपि मानसंभवात्परिसंख्याया बहिरेव प्राप्तिः संभवति । नच नियमेन कृत्स्नमानस्यान्तर्वेद्यप्राप्तेः कथं परिसंख्येति वाच्यम् । इयति शक्ष्यामहे इति वाक्येन सौमिकवेदेरङ्गप्रधानार्थतया यूपमानस्यापि वेद्यामेव प्राप्तेः । नच यूपमानस्य पश्वङ्गतया सोमाङ्गत्वाभावात्सोमाङ्गे प्रवर्तमानापि वेदिर्न यूपमाने स्यादिति वाच्यम् । वेदेः प्रयोगाङ्गतया साङ्गस्यैव पशोर्ज्योतिष्टोमोपकारकत्वेन पश्वङ्गस्यापि प्रयोगान्तर्गततया पश्वङ्गहविरासादनादिष्विव यूपमानेऽपि तत्प्राप्तिसंभवात् । नच हविरासादनादौ प्राकृतवेदिप्रसक्तौ तद्बाधेन सौमिकवेदिनिवेशः संभवति यूपमानस्य प्राकृतवेद्य-

---

१ याप्युपपत्तेः.

स्यादेवं यद्यर्धमेवान्तर्वेदीति वाक्यार्थः स्यात्, नत्वेवं, परिसंख्यादोषात्, किंत्वर्धं तावदन्तर्वेदि मातव्यमिति। ततश्चार्धान्तरं न विहितं न प्रतिषिद्धं तस्यान्तर्बहिर्वा मानं स्यात्। तत्रार्धं बहिर्वेदीत्यपि विधातव्यं तत्र वाक्यभेदः पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधः। नन्वर्धमिति विशेषणादर्धान्तरव्यावृत्तिः स्यात्। सत्यं, विधितो व्यावृत्तिः। यत्र हि विशेषणं श्रुतं तत एवान्यव्यावृत्तिर्भवति वेदिमानविधेश्चार्धं विशेषणमिति विधानादेवार्धान्तरं व्यावर्तते। इच्छातस्तु वेद्यामेव मानमर्धान्तरस्य को वारयेत्। तस्मादर्धं बहिर्वेदीत्यपि विधातव्यमिति वाक्यभेदः स्यात्। उभयलक्षितदेशविधाने त्वेकार्थविधानादवाक्यभेदः। तदयमर्थः—यत्र मीयमानस्य यूपस्यार्धमन्तर्वेदि भवत्यर्धं च बहिर्वेदि तत्र मिनुयादिति लौकिक एव देशविशेषो विधीयते न संस्कृतो वेदिदेशः॥

हविर्धानस्य सामिधेन्यङ्गताधिकरणम्॥ ७॥

**सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम्॥ १५॥ [देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य॥ १६॥ समाख्यानं च तद्वत्॥ १७॥]**

**हविर्धाने स्थितो ब्रूयात्सामिधेनीरिहाङ्गता॥ हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते॥ १३॥**
**वाक्यात्स्यादङ्गता मैवं प्रकृत्या पश्चिमेऽग्नितः॥ देशः प्राप्तो लाघवेन लक्ष्यः शकटसंनिधिः॥ १४॥**

**उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति दक्षिणे[१]स्मिन्हविर्धानेऽभिषवस्तत्र स्थित्वा सामिधेनीरनुब्रूया-**

---

प्रसक्तेस्तत्र तद्बाधेन सौमिकवेदिनिवेशो न संभवतीति वैषम्यं युक्तम्। सौमिकवेदेः प्राकृतबाधेनैव प्रवृत्तिरिति नियन्तुमशक्यत्वात्। नचात्र यूपावटास्तरणबर्हिर्न्यायः। तत्र हि कार्यद्वारा धर्मप्राप्तिरित्यप्राकृतकार्यस्याधर्मकत्वम्। सौमिकेतु वेदिर्न प्राकृतकार्यमुखेन प्रवर्तत इति तस्याः सर्वसाधारण्येन प्रवर्तमानाया यूपमाने प्रवृत्तिं को वारयेत्। तस्मात्कृत्स्नस्य यूपमानस्य वेद्यां प्राप्तेः परिसंख्या संभवतीति भावः। इयति शक्ष्यामह इति वचनेन कृत्स्नमानप्राप्तार्धान्तरपरिसंख्यास्वीकारे प्राप्तपरिसंख्यात्वात्त्रिदोष्यादेवायं पक्षोऽत्यन्तदुष्टस्तस्मादर्धमन्तर्वेदीत्यस्य नियमविधित्वमेव। इयति शक्ष्यामह इत्यविशेषेण श्रुताया अपि यूपमानमात्रे उपसंहार इत्येव पूर्वपक्षिणा स्वीकार्यम्। तथात्वे चार्धान्तरस्य बहिरेव प्राप्त्यभावादनुवादासंभव इति सिद्धान्तमाह—**स्यादेवमिति**। नन्वेवमपि कदाचित्प्राप्तेरनुवादोऽस्तु पाक्षिकानुवाद इत्येवात्र मुख्यः पूर्वःपक्षः। नियमपरिसंख्ययोः नियमस्य ज्यायस्तया नियमविधौ सति पाक्षिकानुवादस्यैव न्याय्यत्वादित्याशङ्क्याह—**पाक्षिकेति। नन्विति**। अन्यथा विशेषणोपादानवैयर्थ्यप्रसङ्गादिति भावः। सत्यं व्यावृत्तिफलकं विशेषणं तथापि विशेषणं स्वविरोधिसंबन्धं विशेष्ये व्यावर्तयति। यथा नैल्यमुत्पलस्य रूपान्तरसंबन्धम्। प्रकृते चार्धमितीदं गुणस्य स्वतो विधेयत्वासंभवेन भावनाद्वारैव विधेयत्वाद्विधीयमानाया वेदिमानभावनाया विशेषणं वाच्यम्। तथाच सति तद्विशेषणं विधीयमानाया वेदिमानभावनाया अर्धान्तरसंबन्धं व्यावर्तयेत्ततश्चार्धान्तरस्य विधीयमानभावनासंबन्धव्यावृत्त्या विहितत्वं व्यावर्त्येत। तद्व्यावृत्त्या च विधितोऽर्धान्तरमानस्य वेद्यां कर्तव्यताभावेऽपीच्छया प्राप्नुवतः कर्तव्यत्वस्य निवारकाभावात्तन्निवृत्तिर्दुर्लभा। एवंचैकस्यार्धस्य बहिर्वेदिसंबन्धव्यावर्तनमात्रेण विशेषणमर्थवदिति परिहरति—**सत्यमिति**। उभाभ्यां देशस्य लक्षणाप्रकारं तद्विधिं चाभिनयति—**तदयमिति**। इयति शक्ष्यामह इत्यस्मिन् यूपमानविषयतयोपसंहारे चाष्टाविंशत्यूनसहस्रप्रक्रमपरिमिताया वेदेः सहस्रतमांशेनैव यूपमानोपपत्तेस्तावत्प्रमाणायास्तस्या अदृष्टार्थत्वं स्यात्, स्वपक्षे तु संस्कृताया वेदेरङ्गत्वेनाविधानात्सोऽपि दोषो नास्तीत्याशयेनाह—**लौकिक एवेति**। अन्तर्वेदीत्यस्य यूपमानदेशोपलक्षणार्थतयोपादानाल्लौकिक एव यूपमानदेश इति भावः। लौकिक एवेत्यनेनैवोद्धननादिसंस्कृतवेदेरङ्गत्वाभावात्तीव्रसुताख्ये उक्थ्ये ज्योतिष्टोमविकृतिभूतेऽग्निष्टे यूपमारभ्य यूपैकादशिन्यां प्राचीनतया मीयमानायां तदङ्गतया यावद्यूपं वेद्युद्धननादिकं न कर्तव्यमिति सिद्धान्तप्रयोजनं च सूचितम्। पूर्वपक्षे तु संस्कृताया वेदेर्यूपमानाङ्गत्वाद्यावद्यूपमुद्धननादिकं कर्तव्यमिति प्रयोजनं बोध्यम्। सूत्रार्थस्तु—यथा दीक्षादक्षिणं वचनात्प्रधानार्थं तथा वेदिरपि वचनाद्यूपार्थेति। एवंच पूर्ववत्प्रत्यवस्थानात्सङ्गतिर्बोध्या॥

**सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम्॥ १५॥** नन्वत्र श्रुतौ हविर्धानाश्रवणाद्वि[२]चारानुपपत्तिरित्यतः श्रुत्यर्थमाह—**दक्षिणस्मिन्निति**। सोमे हि हविर्धानाख्ये शकटे हविर्धानाख्यमण्डपगते दक्षिणोत्तरे[३] तिष्ठतस्तत्र दक्षिणस्मिन्हविर्धाने अभिषवः क्रियते। तत्रैव हविर्धाने स्थित्वा सामिधेन्योऽनुवक्तव्या इत्यर्थः। यत्तच्छन्दस-

---

१ उपलक्षितदेश. २ वेदिं अर्धं बहिर्वेदि भवति. ३ इरिति यस्मिन्.

दित्यर्थः। तत्र संशयः किं हविर्धानं सामिधेन्यङ्गमुत तल्लक्षितो देश इति। तत्र पूर्ववद्वाक्यभेदाभावाल्लक्षणापरिहाराय हविर्धानमेवाङ्गमिति प्राप्तम्। तदुच्यते। हविर्धानस्य हविर्धारणाद्यर्थत्वान्न प्रयोजनान्तरापेक्षा, प्रकृतेश्चाहवनीयप्रत्यग्देशः सामिधेन्यङ्गत्वेन प्राप्तः, सच दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति, तत्र नियममात्रं लाघवाद्विधेयम्, हविर्धानस्य त्वत्यन्ताप्राप्तमङ्गत्वमनपेक्षितं च न युक्तं विधातुं, तदिहापि देशलक्षणा॥

अङ्गानामन्यद्वारानुष्ठानाधिकरणम्॥ ८॥

**शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयंप्रयोगे स्यात्॥ १८॥ [उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात्॥ १९॥ अन्यो वा स्यात्परिक्रयाम्नानादिप्रतिषेधात्प्रत्यगात्मनि॥ २०॥]**

यजमानेन कर्तव्यं निखिलं त्याग एव वा॥ कर्तृगामिफलश्रुत्या युज्यते सर्वकर्तृता॥ १५॥
प्रयोजकेऽपि कर्तृत्वमस्ति नो चेत्क्रयो वृथा॥ कार्यं तेन त्यागमात्रमृत्विजोऽन्यत्र कर्तृता॥ १६॥

'प्रासङ्गिकी कथा वृत्ता समाख्यायास्ततः परम्॥ विचिचारयिषुः पूर्वैर्विरुद्धत्वाविरुद्धते॥ तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु॥ नानाकर्तृसमावेशं वक्तुमारभतेऽधुना॥' दर्शपूर्णमासज्योतिष्टोमादिकर्तृफलदक्षिणायुक्तं कर्म किं सर्वं यजमानेनैव कर्तव्यमुत द्रव्योत्सर्गमात्रे हविस्त्यागदक्षिणादानादिके यजमाननियमोऽन्यत्रानियमो यजमानोऽन्यो वा अथवोत्सर्ग एव यजमानोऽन्यत्रान्य एवेति विचारः। तत्र स्वर्गकामो यजेतेति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलावगमादर्थात्सर्वं कुर्यात् दक्षिणादानं तु धर्ममात्रम्। ननु प्रधानस्यैव सामानाधिकरण्यात्मनेपदाभ्यां फलार्थिकर्तृकत्वं नाङ्गानाम्। तत्र भावनाया एव हि प्रत्ययवाच्यायास्ताभ्यां तत्कर्तृकत्वं, साच त्र्यंशेत्यङ्गा-

सम्याश्छान्दसो लुगिति भावः। सङ्गतिं सूचयन्पूर्वपक्षमाह—**पूर्ववदिति। हविर्धानमेवेति**। हविर्धानशब्दायोगेन हविर्धारणार्थतया प्रतीतस्यापि पुरोडाशकपालवदधिष्ठानलक्षणयाङ्गत्वेन विधिः संभवतीति भावः। **ननु** तर्हि सामिधेन्यपेक्षयैव तदङ्गविधिरस्त्वित्यत आह—**प्रकृतेश्चेति**। अपरेण वेदिमिति दर्शपूर्णमासयोर्वचनादाहवनीयप्रत्यग्देशः प्राप्त इत्यर्थः। ततश्च सामिधेनीनामपि न तदपेक्षेत्यर्थः। तर्ह्यनपेक्षिततत्वाद्देशस्यापि विधिर्न संभवतीत्याशङ्क्य तत्र नियमस्यापेक्षितत्वात्तद्विधिः संभवतीत्याशयेनाह—**सचेति। लाघवादिति**। अत्यन्ताप्राप्तविध्यपेक्षया पक्षप्राप्तस्य नियमविधाने लाघवादित्यर्थः। **ननु** पूर्वपक्षे विकृतिपशुषु सामिधेन्यङ्गत्वेन हविर्धानं संपाद्यं, सिद्धान्ते तु हविर्धानस्य देशोपलक्षणार्थत्वाद्धविर्धानाभावेऽपि तदुपलक्षितदेशः संभवति। उपलक्षणापायेऽप्युपलक्ष्यानपायन्यायात्, तेन तत्र सामिधेन्यर्थं हविर्धानं न संपाद्यमिति प्रयोजनं न संभवति। हविर्धारणादिप्रयुक्तस्य हविर्धानस्य वचनबलात्सामिधेनीषु विनियोगेऽपि परप्रयुक्तोपजीवित्वेन पुरोडाशकपालस्य तुषोपवापवत्सामिधेनीनां तत्प्रयोजकत्वाभावेन पूर्वपक्षेऽपि विकृतिपशुषु हविर्धानसंपादनाप्रसक्तेरतः किमत्र प्रयोजनमिति चेदुच्यते—पूर्वपक्षे हविर्धानाख्यशकटे स्थित्वा सामिधेन्यनुवचनं कर्तव्यं, सिद्धान्ते तु तत्समीपदेशे इति प्रयोजनम्। इदं च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवतीत्यादिग्रन्थकारव्यवहारादेव सूचितम्। सूत्रार्थस्तु—सामिधेनीस्तदन्वाहुरिति वचनाद्धविर्धानयोर्मध्ये यस्मिन्नभिषवस्तद्धविर्धानं सामिधेन्यङ्गं स्यादिति॥

**शास्त्रफलं प्रयोक्तरि०॥ १८॥ प्रासङ्गिकीति**। तुल्यः सर्वेषां पशुविधिरित्यारभ्याधिकरणचतुष्टयेन स्थानस्य पूर्वैः सह विरोधाविरोधविचारे तत्प्रसङ्गादाराच्छिष्टमित्यारभ्य या प्रासङ्गिकी कथा प्रसक्ता तत्समाप्तौ क्रमप्राप्तं समाख्यायाः पूर्वैः सह विरोधाविरोधविचारं ते सर्वार्थाः प्रयुक्तत्वादित्यादिना चिकीर्षुस्तदुपोद्घातमारभत इत्यर्थः। कर्तृनानात्वे सति समाख्यया होत्रादीनां व्यवस्थाविचारो घटते नान्यथेत्युपोद्घातत्वं बोध्यम्। **कर्तृफलेति**। कर्तृगामिफलेन दक्षिणया च युक्तमित्यर्थः। यथाक्रमं पूर्वोत्तरपक्षस्फोरणाय विशेषणोपन्यास उत्सर्गशब्दार्थमाह—**हविरिति**। प्रधानहविषः प्रयाजादिहविषश्च यस्त्यागस्तस्मिन्दक्षिणादानादिके चेत्यर्थः। आदिशब्देन वरदानादेर्ग्रहणम्। **सामानाधिकरण्येनेति**। यजेतेत्याख्यातेन हि कर्ताक्षिप्यस्तच्च स्वर्गकामपदसामानाधिकरण्यात्तस्यैव कर्तृत्वमाक्षिपतीति भावः। **आत्मनेपदेनेति**। कर्तृगामिनि क्रियाफले तद्विधानादिति भावः। धर्ममात्रं केवलादृष्टार्थमित्यर्थः। **भावनाया इति**। क्रियारूपतया तस्या-

१ धारणार्थत्वात्. २ प्रकृतिश्चा.

नामपि स एव कर्ता। उच्यते सत्यमर्थिनः साङ्गे कर्तृत्वं तत्तु प्रयोजकत्वेनापि संभवति। 'तत्प्र-योजको हेतुश्चे'तिस्मरणात्, षड्भिर्हलैः कृषतीति प्रयोगाच्च। तत्रासति परम्पराप्रमाणे साक्षादेव कर्तृत्वं स्यात्। अस्तितु प्रमाणं परिक्रयवचनं तच्च कर्त्रन्तरसद्भावे दृष्टार्थं भवति। सर्वश्च स्वयम-शक्तोऽन्येन कार्यं कारयेति तद्यजमानोऽपि शक्तः स्वयं कुर्यात् अशक्तस्त्वन्येन कारयेत्। परिक्रयश्चै पक्षे भविष्यति द्रव्योत्सर्गे त्वन्यस्याशक्यत्वात्स्वयमेव कुर्यादिति प्राप्ते ब्रूमः। संभवति प्रयोजकत्वे-नापि कर्तृत्वे परिक्रयस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगान्नित्यमुपसंहर्तुमुत्सर्गादन्यदन्येनैव कार-यितव्यम्॥

परिक्रीतानामृत्विजां संख्याविशेषनियमाधिकरणम्॥ ९॥

**तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात्॥ २१॥ [अपि वा श्रुतिभेदा-त्प्रतिनामधेयं स्युः॥ २२॥ एकस्य कर्मभेदादिति चेत्॥ २३॥ नोत्पत्तौ॥२४॥]**

**न क्रीतकर्तृसंख्याया नियमोऽस्त्यस्ति वा न हि॥ अविशेषादस्ति यावत्कार्यं तावन्त एव हि॥ १७॥**

उत्सर्गादन्यत्रान्ये इत्युक्तं तत्र कति तेऽन्य इति संशये विशेषाभावादनियमः। सर्वथा परिक्र-यसिद्धेः। अथवा यजमानस्यैव कर्तृत्वे प्राप्ते परिक्रयवशादन्योपादानं सच्चैकेनापि सिद्ध्यतीत्येक एवान्यः स्यात्, अध्वर्य्वादिसंज्ञास्तु कर्मनिमित्ताः। अध्वरं युनक्तीतिअध्वर्युः, आवहयतीति होता, तथान्येपि। तथाच दर्शयति—'यदेवामुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्व'मिति। ततश्चै-कस्यापि तत्तत्कर्म कुर्वतः पाचकलावकवदुपपन्ना नानासंज्ञाः तस्मादेकः स्यात्। स्यादेवं यदि प्रवृ-त्तिसमये तदुत्तरकालं वैताः संज्ञाः श्रूयेरन्। वरणं त्वप्रवृत्ताभ्यर्थनं तत्रैताः श्रूयन्ते 'स ब्रह्माणं वृणीत' इत्यादि। नच तदा कर्मनिमित्तत्वं संभवतीति वरणनिमित्तत्वं, भिन्नानि च वरणानि 'एकस्यैवं पुनः श्रुति'रितिन्यायात्। नचैकस्मिन्पुरुषे बहूनि वरणानि समवयन्ति दृष्टार्थत्वात्। नहि वृतस्य वरणं दृष्टार्थं, तेन वरणानां तन्निमित्तानां च संज्ञानामसंकीर्णविषयत्वाद्यावद्वरणं यावत्संज्ञं च कर्तृभेदः

---

एव कर्तृकारकान्वये योग्यत्वादिति भावः। द्वितीयपूर्वपक्षमाह—**उच्यत इति**। **तत्प्रयोजक इति**। तस्य स्वतन्त्र-कर्तुः प्रयोजकः प्रेरको हेतुसंज्ञश्चात्कर्तृसंज्ञश्चेति प्रयोजकस्यापि कर्तृत्वस्मरणादित्यर्थः। **षड्भिरिति**। साक्षात्कर्तृत्वे षण्णां यौगपद्यासंभवात्प्रयोजकपरोयं प्रयोग इति भावः। **नन्वे**वमप्यौत्सर्गिकं साक्षात्त्वमेव न्याय्यमित्यत आह—**तत्रेति**। एवंतर्हि परिक्रयबलान्नियमेनान्यकर्तृकत्वं स्यादित्यत आह—**सर्वश्चेति**। सहायसंपादनार्थं परिक्रयस्य शक्तविषये नोप-योग इति भावः। **संभवतीति**। परिक्रयस्य पाक्षिकत्वपरिहारार्थं शक्तोऽपि न स्वयं कुर्यादिति भावः। सूत्रार्थस्तु—शास्त्रीयकर्मफलं यस्मात्प्रयोक्तरि भवति तस्माद्यजमानः स्वयमेव प्रयोगे कर्ता स्यादिति॥

**तत्रार्थात्कर्तृपरिमाणं॰॥ २१॥** सङ्गतिसूचनार्थमाह—**उत्सर्गादिति**। **नन्वे**कत्वेऽनेकसंज्ञानुपपत्तेर्नानासंज्ञा-बलाद्भेदोऽङ्गीकार्य इत्यत आह—**अध्वर्य्वादीति**। **आवहयतीति**। अग्निर्देवानावहति होता चाग्निमग्न आवह सोम-मावहेत्येवमग्निना देवानावाहयतीत्यर्थः।**अन्येऽपीति**। ब्रह्ममैत्रावरुणादिसंज्ञास्वपि ब्रह्मादिकर्तृकानुज्ञादिक्रियैव निमित्तं तत्र च यौगिकत्वासंभवे रूढिरस्त्विति भावः। सिद्धान्तमाह—**स्यादेवमिति**। तत्तत्क्रियाप्रवृत्तिसमये तदनन्तरं वा यद्येताः संज्ञाः श्रूयेरन् तदा तत्तत्क्रियाणामुपस्थितत्वात्तन्निमित्तत्वं स्यात्। इमास्तु वरणसमये श्रूयन्ते तदानीं च तत्क्रियाणामनुप-स्थितत्वान्न तन्निमित्तत्वं संज्ञानामित्यर्थः। **ननु** वरणनिमित्तत्वेऽपि ऋत्विजो वृणीत इत्यनेन विहितस्य वरणस्यैकत्वात्कथ-मृत्विग्भेद इत्यत आह—**भिन्नानीति**। अध्वर्युं वृणीते ब्रह्माणं वृणीत इत्यादीनां बहूनां वाक्यानामानर्थक्यात्परमेकस्य ऋत्विजो वृणीत इति वाक्यस्यानुवादकत्वमिति अध्वर्य्वादिवाक्यानामेव विधायकत्वाद्विहितस्य विधानानुपपत्त्याभ्यासन्या-याद्वरणभेद इत्यर्थः। **नन्वे**कस्मिन्नेव तावद्वरणोपपत्तेरेवमपि न ऋत्विग्भेद इत्यत आह—**नचैकस्मिन्निति**। दृष्टार्थत्वात् आनत्यर्थत्वादित्यर्थः। **ननु** दृष्टार्थत्वेऽपि तत्तत्कार्यसिद्ध्यर्थं पुनःपुनर्वरणं एकस्यैव संभवतीत्यत आह—**नहीति**। नहि वरणं कार्यसमये क्रियते येन यत्कार्यसमीपे क्रियते तन्मात्रार्थं भवेत्। किं त्ववृतावस्थायामेव क्रियते ततश्चावृतमाणवि-

---

१ यति यजमानोपि. २ श्चान्यपक्षे. ३ योगात्तन्नित्य. ४ दन्यत्रान्येनैव. ५ यदेवामुमावहा. ६ पावक. ७ दुपपन्ना.

कर्माङ्गं, अतस्तावत्संख्यैः कर्तृभिर्ज्योतिष्टोमस्य निर्वृत्तिः किं पुनरिदं वरणं उक्तं प्रार्थनमिति, तत्र महर्त्विजां होत्रकाणां च मन्त्रेण 'अग्निर्होतासौ मानुष' इत्यादिना, अन्येषां तु लौकिक्या वाचा प्रतिप्रस्थाता मे भवानस्त्वित्यादि। किमेतावता होत्रादित्वं भवति को दोषः। नह्येताः संज्ञाः प्राग्दृश्यन्ते वरणोत्तरकालं च य एवं वृतः स्वयं चैवमसानीति मनसा संकल्पयति तत्र होत्रादिसंज्ञाः प्रसिद्धवद्वेदे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टाः, तस्माद्य एवं वृतः एवंच संकल्पयति सएव होत्रादिसमाख्यां लभते। सत्रेषु तु दृष्टार्थत्वाद्वरणस्यार्थलोपान्निवृत्तिस्तदभावे चाध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिव्यवहारदर्शनात्संकल्पादेव होत्रादित्वसिद्धिः। प्रकृतावपि हि संकल्पो निमित्तमेव। यो हि व्रियमाणो नेच्छति न स होतेत्युच्यते। तस्मात्प्रकृतौ वरणविधानात्तन्मिश्रः संकल्पो निमित्तं सत्रेषु तु संकल्पमात्रं प्रयोगदर्शनात्। नचैवं वैरूप्यादशोभनमिति मन्तव्यम्। प्रमाणबलादीदृशस्यैव शोभनत्वात्। नहि सत्रे होत्रादिशब्दानां गौणत्वे किंचित्प्रमाणमस्ति। अथाप्यत्यन्तमैकरूप्येण कार्यं। ततः संकल्प एव निमित्तं, य एव क्रतुप्रक्रमे तदौपयिकं होत्रादिभावमात्मनः संकल्पयति स एव होत्रादिशब्दैरुच्यते। तथाच वक्ष्यति—सत्रेतु स्वयंकर्तृकत्वाद्वरणभरणयोरनपेक्षितयोरग्रहणाद्विनैव ताभ्यामवैगुण्यमिति योग्यतामात्रेणाध्वर्युत्वादिसिद्धिरिति। नन्वदृष्टमध्वर्युत्वादिकं कथमविहितेन संकल्पेन जायते विहितमेव तु वरणं तस्य जनकं युक्तम्। यद्यदृष्टमध्वर्युत्वादिकं तदर्थं च वरणं तदा सत्रेऽपि तदृतुयाज्यावरणवत्कर्तव्यमिति सुतरां तत्राध्वर्य्वादित्वसिद्धिः। नचादृष्टाध्वर्युत्वादिसद्भावे प्रमाणमस्ति, वरणविधिर्हि दृष्टार्थतयोपपत्तेर्नादृष्टकल्पनायालम्। यदि चादृष्टमिदं विहितोपायसाध्यं च ततो दर्शपूर्णमासयोर्होता वृतः सामिधेनीरन्वाहेति वचनात्प्रागेव वरणात्सामिधेनीषु प्रवृत्तस्य प्रसिद्धहोतृभावस्य पश्चाददृष्टार्थं वरणं न होतृत्वोपयोगीति होतृत्वं न स्यात्। तस्मादध्यवसायादेव होतृत्वमङ्गीकर्तव्यमिति सत्रेऽपि होत्रादित्वसिद्धिः। ननु होतृशब्दवाच्यः स्यामित्यध्यवसायादेव तद्वाच्यो भवतीत्येतदलौकिकमेव तच्छब्दवाच्यो भवेति प्रार्थनादेव तच्छब्दवाच्यो भवतीत्येतद्वा किं लौकिकं। तत्सिद्धं संज्ञया कर्तॄणां भेदः। माभूत्संज्ञया वरणानां तु बहूनां युगपत्प्रयोगवचनपरिगृहीतानां दृष्टार्थत्वेनैकपुरुषासमवायाद्यावद्वरणं वरीतव्याः कर्तारो भिद्यन्ते॥

---

शेषत्वात्सर्वकार्यार्थत्वमेव तद्वरणमिति एकस्य पुनर्वरणं दृष्टार्थं न भवतीत्यर्थः। महर्त्विजां ब्रह्माध्वर्युहोत्रुद्गातॄणामित्यर्थः। होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकनेष्टृपोत्राग्नीध्राणामित्यर्थः। प्रार्थनामात्रेण तच्छब्दवाच्यत्वादर्शनात्पृच्छति—**किमेतावतेति**। अन्यत्रादर्शनेऽपीहान्वयव्यतिरेकाभ्यां तथात्वमेष्टव्यमित्युत्तरमाह—**को दोष इति**। **अर्थलोपादिति**। सर्वेषां यजमानत्वेन स्वतएवानुक्तत्वादिति भावः। **नन्वेवं** सति क्वचिदुभयं निमित्तं क्वचिदेकमेवेति नानार्थत्वं स्यादित्याशङ्क्याह—**नचेति**। ननु नानार्थत्वाद्वरं क्वाचित्कव्यवहारस्य प्राकृताध्वर्युकर्मकरणनिमित्तकतया गौणत्वमित्यत आह—**अथापीति**। **वक्ष्यतीति**। 'कर्मकार्यात्सर्वेषामृत्विक्त्व'मित्यधिकरणे वार्तिककार इति शेषः। योग्यतामात्रेणेत्यनेन संकल्पएव वार्तिके उपलक्ष्यत इति भावः। **यदीति**। सत्रे वरणाभावादध्वर्य्वादित्वं मुख्यं न संभवतीति तवाभिमतं तत्र यद्यध्वर्य्वादित्वमलौकिकमाश्रित्य तदर्थं वरणमिति ब्रवीषि तदा त्वदिष्टसिद्धिर्न स्याददृष्टार्थत्वे वरणस्य सत्रेऽप्यवश्यं कर्तव्यत्वादित्यर्थः। **ऋतुयाज्येति**। इन्द्रं होत्रादित्यादिभिः ऋतुयाज्यावयवैः क्रियमाणं वरणमृतुयाज्यावरणं तत्सत्रे कर्तव्यमदृष्टार्थत्वादिति भावः। दर्शपूर्णमासयोर्विहितवरणात्पूर्वमेव होतृत्वदर्शनात्तत्र विहितोपायं वरणंविनाप्यध्यवसायादेव होतृत्वं स्वीकर्तव्यं तद्वत्तत्रापीत्याह—**तस्मादिति**। **प्रार्थनादेवेति**। ततश्चान्वयव्यतिरेकाभ्यां तदर्थत्वं त्वया वाच्यम्। तच्च ममापि तुल्यमिति भावः। **नन्वध्यवसायोऽपि** न निमित्तं यजमानप्रार्थनांविना स्वयमेवाध्वर्युरस्मीत्यध्यवस्यति तत्र तद्व्यवहाराभावादेवंच कथमध्यवसायनिमित्तकसंज्ञाभेदात्कर्तृभेद इति मन्वानं प्रत्याह—**माभूदिति**। विकल्पेनैकस्मिन्पुरुषे संभवं वारयितुमाह—**युगपदिति**। सूत्रार्थस्तु—तत्र कर्त्रन्तरसद्भावे सति यावद्भिर्यत्र प्रयोगकार्यं निर्वर्त्यते तत्र तावन्त इति कार्यतः कर्तॄणां परिमाणं स्यान्नत्वेतावन्त इति नियमः विशेषानवगमादिति॥

---

१ दृष्टानत्यर्थतयो. २ प्रसिद्धस्य, ३ त्संज्ञायां.

चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥ १० ॥

**चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥**

**चमसाध्वर्यवो नान्य ऋत्विग्भ्योऽन्येऽथवाग्रिमः ॥ यौगिक्या संज्ञया नैवं वक्षया तेभ्यो विभेदनात् ॥१८॥**

ज्योतिष्टोमे पूर्वाधिकरणे षोडश कर्तारः सिद्धाः। सन्ति च चमसाध्वर्यवो नाम ते। किं तेषामेवान्यतमा उत तेभ्योऽन्य इति यौगिकत्वात्संज्ञाया अध्वर्युपुरुषा एव चमसाध्वर्यव इति प्राप्ते ब्रूमः— 'संज्ञा नामास्तु योगेन वरणं तु पृथक् श्रुतम् ॥ तत्तेष्वसंभवात्तेषां तेभ्यो भेदं करिष्यति ॥' एतेन सदस्यो व्याख्यातः तस्यापि वरणसमाम्नानात्[1] ॥

चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ॥ ११ ॥

**उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥**

**तान्वृणीतेति बहुता नास्ति वास्ति ग्रहैक्यवत् ॥ नेति चेन्नात्र वैषम्यादुत्पत्तौ बहुता श्रुतेः ॥ १९ ॥**

तेषु संदेहः कति चमसाध्वर्यव इति बहुवचनस्य संस्कार्यगतत्वेनाविवक्षितत्वादनियम एको द्वौ बहवो वा। उच्यते। वरणाङ्गतया सत्यमविवक्षितं बहुत्वं, क्रत्वङ्गतया तु तेषामुपादेयत्वाद्विवक्षितमेव बहुत्वम्। नह्यन्यत्र[2] सिद्धक्रतुसंबन्धानुद्दिश्य वरणमात्रं ग्रहसंमार्गवद्विधीयते, किंत्वनेनैव वचनेन प्रकरणसहायेन वरणसंस्कारयुक्ताश्चमसाध्वर्यवः क्रतुंप्रति विधीयन्ते, वरणेन चमसाध्वर्यून्नाम कर्तॄन्क्रत्वङ्गत्वेनोपाददीतेति। तस्मादुपादेयत्वात्तेषां कर्माङ्गतया विवक्षितं बहुत्वम्। तथाच स्वाध्यायोऽध्येतव्य इत्यध्ययनसंस्कार्यस्यापि स्वाध्यायस्यार्थावबोधंप्रत्युपादेयत्वाद्विवक्षिता संख्येति शाखा-

---

**चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥** प्रासङ्गिकीं सङ्गतिमभिप्रेत्याह—**ज्योतिष्टोम इति । यौगिकत्वादिति ।** यौगिकत्वबलादेव चमसाध्वर्यून्वृणीत इति वरणमपि तेषामेव वाच्यमिति न ततोऽपि भेद इत्यर्थः । एवंच पूर्ववत्संज्ञया भेदो न संभवतीति शङ्कानिराकरणार्थत्वान्न गतार्थत्वमित्याशयः । अध्वर्युपुरुषाः प्रतिप्रस्थात्रादय इत्यर्थः । संज्ञया स्वतो भेदप्रतीत्यसंभवेऽपि वरणस्य दृष्टार्थत्वेन वृतानां पुनर्वरणानुपपत्त्याऽन्यत्वावश्यंभावे ततएव संज्ञाया यौगिक्या अप्यध्वर्युपुरुषेष्वसंभवादन्यपरत्वं स्वीकार्यम् । ततश्च नाध्वर्युपुरुषाणां चमसाध्वर्युत्वमित्याशयेनाह—**संज्ञा नामेति ।** ब्रह्मातिरिक्तः सदस्यो नास्तीति प्राभाकरमतनिरासदृष्ट्यातिदिशति—**एतेनेति ।** सूत्रार्थस्तु—चमसाध्वर्यवश्च भिन्ना मध्यतःकारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यव इति ऋत्विग्भिः सह भेदव्यपदेशादिति ॥

**उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥** प्रासङ्गिकी सङ्गतिः कतीति । किमेको द्वौ बहवो वेत्यनियमः उत बहव एवेति चिन्त्यत इत्यर्थः । **ननु** चमसाध्वर्यून्वृणीत इति बहुत्वश्रुतेः कथमनियम इति पूर्वःपक्षः । नचोद्देश्यगतत्वादविवक्षितं बहुत्वमिति युक्तम् । असिद्धक्रतुसंबन्धानां चमसाध्वर्यूणामुद्देश्यत्वासंभवेन क्रत्वर्थतया तेषामुपादेयत्वस्य वाच्यतया तद्गतसंख्याया विवक्षोपपत्तेरित्यत आह—**बहुवचनस्येति ।** सत्यं क्रत्वर्थतया उपादेयत्वं तेषां तथापि चमसाध्वर्यून्वृणीत इति वरणएव बहुत्वं श्रूयते न क्रतौ, चमसाध्वर्यूणां च द्वितीयया वरणंप्रति संस्कार्यत्वेनानुपादेयत्वाद्बहुत्वं न विवक्षितुं शक्यमित्यर्थः । वरणार्थतया बहुत्वविवक्षाया असंभवेऽपि क्रत्वर्थतया तद्विवक्षावश्यंभावादर्थाद्बहूनामेव वरणसिद्धिरित्याह—**सत्यमिति । ननु** कथमत्रोपादेयत्वमस्मिन्वाक्ये क्रतुवाचकशब्दाभावात्, यदि च प्रकरणकल्पितेन प्रयोगवचनेन सर्वेषां ग्रहणात्तत्र क्रत्वर्थतया चमसाध्वर्यूणामुपादेयत्वमस्तीति मन्यसे तदा ग्रहं संमार्ष्टीत्यादावप्येकत्वं विवक्षितं स्यात् । प्रयोगवचनोपादेयत्वस्य तत्राप्यविशेषादित्यत आह—**नहीति ।** नहि प्रयोगवचनोपादेयत्वं वदामो येनोक्तातिप्रसङ्गः स्यात् किंतु अस्मिन्नेव वाक्ये तत्र यद्यपि क्रतुवाचकः शब्दो न श्रूयते तथापि चमसाध्वर्यूणां प्राक् क्रतुसंबन्धासिद्ध्या तदुद्देशेन वरणमात्रविध्यसंभवादिदमेव वाक्यं प्रकरणसाचिव्येन क्रतुवाचकशब्दकल्पनया वरणसंस्कृतैश्चमसाध्वर्युनामकैः कर्तृभिः क्रतुं कुर्यादित्येवं चमसाध्वर्यून्क्रत्वर्थतया विधत्ते इत्युपादेयत्वात्संख्याविवक्षा युक्ता । एवंच यदुक्तं वरण एव संख्या श्रूयते न क्रताविति तदसिद्धमिति भावः । **नचा**ध्वर्युत्वादेरिव चमसाध्वर्युत्वस्याप्यदृष्टरूपत्वाभावेन चमसाध्वर्युशब्दार्थस्य लौकिकत्वेसति चमसांश्चमसाध्वर्यव इत्यादिशास्त्राच्चमसाध्वर्यवः सिद्धक्रतुसंबन्धा एवेति वाच्यम् । अदृष्टरूपत्वाभावेऽपि वरणविधिप्रवृत्तेः पूर्वमध्यवसायविशेषरूपचमसाध्वर्युपदप्रवृत्तिनिमित्ताभावेन चमसांश्चमसाध्वर्यव इति शास्त्रस्यापि वरणशास्त्रानन्तरप्रवृत्तिकतया वरणशास्त्रप्रवृत्तेः पूर्वं चमसाध्वर्यूणां क्रतुसंबन्धासिद्धेरेवमध्वर्य्वादित्वस्य लौकिकत्वेऽपि

---

१ वरणं समाम्नातम्. २ नह्यत्र.

न्तराधिकरणे दर्शितम् । एतेन पुरोहितं वृणीत इत्यत्राप्येकत्वविवक्षा व्याख्याता । तथाध्वर्युं वृणीत इत्यादावेकत्वमध्वर्युकार्यार्थम् । अतः सर्वमाध्वर्यवमेकेन कर्तव्यमध्वर्युणा च कर्तव्यमित्यरुणैकहायनीन्यायेन मिथो नियमः पश्वेकत्वयोरिव, तथा हौत्रादिकमपि । हौत्राध्वर्यवयोस्तु मिथो भिन्नकर्तृत्वमङ्गं समाख्याभेदात् ॥

चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम् ॥ १२ ॥

**दशत्वं लिङ्गदर्शनात् ॥ २७ ॥**

**नेयत्तास्त्यस्ति वा तेषां न नियामकवर्जनात् ॥ चमसानां दशत्वेन चमसाध्वर्यवो दश ॥ २० ॥**

स्थिते बहुत्वे कियन्तो बहव इत्यनियमे त्रित्वे वा प्राप्ते चमसदशत्वाद्दशभिस्तावद्भवितव्यम्, आधिक्ये प्रमाणाभावाद्दशैव ॥

शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

**शमिता च शब्दभेदात् ॥ २८ ॥ [प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥]**

**तेभ्योऽन्यः शमितानन्यो वान्यः संज्ञापृथक्त्वतः ॥ वरणाभावतो नान्यः संज्ञाभेदस्तु यौगिकः ॥ २१ ॥**

अस्ति शमिता, स किं प्रकृतेभ्योऽन्यस्तेषां वाऽन्यतम इति संशये संज्ञाभेदादन्यत्वं यौगिकत्वात्संज्ञाया वरणाभावाच्च तेषामेवान्यतमः तत्राध्वर्योः 'पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादिति वचनादसामर्थ्यादन्ये तत्पुरुषाः संज्ञपयेयुः ॥

---

वरणविधिप्रवृत्तेः पूर्वमध्वर्य्वादिविनियोगशास्त्रस्याप्यप्रवृत्त्याध्वर्य्वादीनामप्यसिद्धक्रतुसंबन्धत्वं बोध्यम् । तद्विधौ तेषामुपादेयत्वं पर्यवसितमभिनयति—**वरणेनेति** । **दर्शितमिति** । आचार्यैरिति शेषः । **एतेनेति** । पुरोहितं वृणीत इति यत्राहुः पुरोहितवरणविधानं तत्रापि वरणात्प्राक् पुरोहितत्वव्यवहाराभावाद्वरणशास्त्रप्रवृत्त्यनन्तरमेव पुरोहितविनियोगशास्त्रप्रवृत्तेर्वाच्यतया वरणेन राजा तदुचितकार्यार्थं पुरोहितमुपाददीतेत्येवं पुरोहितस्योपादेयत्वादेकत्वसंख्या विवक्षितेत्यर्थः । **अध्वर्युकार्यार्थमिति** । वरणेनाध्वर्योः क्रत्वर्थतयोपादाने सत्यध्वर्युकार्यद्वारा क्रत्वर्थत्वनिर्वाहात्पर्यवसानाभिप्रायेणाध्वर्युकार्यार्थमित्युक्तिः । उपादेयत्वादुक्तामेव विवक्षां द्रढयति—**अत इति** । यथा पशुना यजेतेति पश्वेकत्वयोरेककरणकारकान्वितयोररुणैकहायनीन्यायेन मिथो नियमः तथेहाध्वर्युतदेकत्वयोरेककर्तृकारकान्वितयोर्मिथो नियम इत्यर्थः । **हौत्राध्वर्यवयोरिति** । होतृकार्यस्य होतृकर्तृकत्वमध्वर्युकार्यस्याध्वर्युकर्तृत्वं च समाख्याभेदादङ्गम् । तथासत्यर्थाद्भिन्नकर्तृकत्वमावश्यकमित्याशयः । सूत्रार्थस्तु—चमसाध्वर्यून्वृणीत इत्युत्पत्तौ बहुत्वश्रुतेः बहवएव चमसाध्वर्यव इति ॥

**दशत्वं लिङ्गदर्शनात् ॥ २७ ॥** पूर्वत्रैव विशेषविचारात्सङ्गतिरित्याशयेनाह—**स्थित इति** । **त्रित्वेवेति** । कपिञ्जलन्यायादिति भावः । **चमसदशत्वादिति** । नचैकेन पुंसा हस्तद्वयेन द्वयोश्चमसयोर्होतुं शक्यत्वात्कथं चमसदशत्वेऽपि चमसाध्वर्यूणां दशत्वमिति वाच्यम् । दक्षिणाचारेण कर्तव्यमिति नियमेन हस्तद्वयेन होमायोगादिति भावः । सूत्रार्थस्तु—दशपेये ज्योतिष्टोमविकृतिभूते दशदशैकैकं चमसमनुप्रसर्पन्तीति विधिशेषे दशदशचमसाध्वर्यव इति दशत्वानुवादाल्लिङ्गात्प्रकृतौ दशत्वं स्यादिति ॥

**शमिता च शब्दभेदात् ॥ २८ ॥** संज्ञाभेदात्प्राप्तान्यत्वापवादात्सङ्गतिः । **संज्ञेति** । 'यौगिकत्वेऽप्यन्याय्यथानेकशब्दत्व'मिति न्यायेन संज्ञाभेदाद्भेद एव स्वीकार्य इति भावः । सिद्धान्तमाह—**यौगिकत्वादिति** । शमयति पशुं हिनस्तीति योगादृत्विक्ष्वेव संज्ञोपपद्यते । नहि संज्ञामात्रं भेदकं किंतूत्पत्तौ श्रुता न चेयं संज्ञा उत्पत्तौ श्रूयते, वरणाभावेन शमितुरध्वर्य्वादिवदुत्पत्तेरभावात्, तस्मान्न संज्ञात्र भेदिकेति भावः । तत्र यद्यपि शामित्रस्याध्वर्यवसमाख्यानादध्वर्योरेव शमितृत्वं युक्तं तथापि संज्ञप्यमानात्पशोरध्वर्योः पराङावृत्तिवचनेन तस्य शमितृत्वानुपपत्तेस्तत्प्रत्यासन्नः प्रतिप्रस्थात्रादिः कश्चित्स्यादित्याह—**तत्रेति** । क्लोम चार्धवैकर्तनं शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यादिति वचनं च यदि यजमानोऽब्राह्मणः क्षत्रियादिः स्यादित्यर्थकं यजमानप्रकरणादिति न तद्बलादपि ऋत्विगन्यत्वप्रसक्तिरिति ध्येयम् ॥

---

१ पराङ्वर्ततेऽध्वर्युस्तु.

उपगस्यापृथक्त्वाधिकरणम् ॥ १४ ॥

**उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥**

**अन्ये स्युरुपगातार ऋत्विग्भ्यो न वा यथा ॥ लोकेऽत्रापि तथा नैवं नाध्वर्युरिति लिङ्गतः ॥ २२ ॥**

सन्त्युपगाः, ते किं प्रकृतेभ्योऽन्ये उत न एवेति, तत्र गातॄणां गुणभूता उपगातारो लोकवत्। नर्त्विजामृत्विजस्तुल्यकक्षा गुणभूता भवितुमर्हन्तीत्यन्ये इति प्राप्ते उच्यते । उत्पत्तौ वरणाभावा-त्संज्ञायाश्च यौगिकत्वादृत्विजामेव प्रैषप्रैषार्थकारित्ववत्परस्परोपकारसंभवादृत्विज एवोपगायेयुः ॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥ १५ ॥

**विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥**

**सोमविक्रय्येक एषु न वा वरणवर्जनात् ॥ एकः क्रत्वर्थता नास्ति विक्रयस्येति भिद्यते ॥ २३ ॥**

अस्ति सोमविक्रयी, स किं तेषामन्यतम उतान्य इति पूर्ववद्वरणाभावात्तेषामन्यतमः । नैवम्। विक्रयस्याक्रत्वर्थत्वात्क्रत्वर्थोपात्ता ऋत्विजो न तं कुर्युः । तस्मादन्यो विक्रयी ॥

ऋत्विगितिनाम्नोऽसर्वगामिताधिकरणम् ॥ १६ ॥

**कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥ [न वा परिसंख्यानात् ॥३३॥ पक्षेणेति चेत् ॥ ३४ ॥ न सर्वेषामधिकारः ॥ ३५ ॥]**

**किमृत्विङ्नाम सर्वेषु समानमुत केषुचित् ॥ क्रतौ यजनमेतेषां तुल्यमित्यस्ति नाम तत् ॥ २४ ॥**
**सौम्याध्वरस्य सप्त स्युर्दश चेत्यादिसंख्यया ॥ न सर्वेषां समं नाम केषांचिद्योगरूढितः ॥ २५ ॥**

ब्रह्मादयश्चमसाध्वर्यवश्च बहवः कर्तारः समधिगताः ते सर्वे किमृत्विक्शब्दवाच्या उत केचिदे-वेति । तत्र—'क्रतौ कार्यं हि सर्वेषां तेनर्तुयजनादमी ॥ सर्वे तदभिधेयाः स्युरविशेषेण यष्टृवत् ॥' ऋतुयजननिमित्तोऽयमृत्विक्शब्दः कृदन्तः । सर्वे च ते तत्कार्यकरणादृतौ यजन्तीति यष्टृशब्द-स्येव ऋत्विक्शब्दस्याप्यभिधेयाः सप्तदशर्त्विज इति वचनमवयुत्यानुवाद इति प्राप्ते ब्रूमः—'ऋतु-यागनिमित्तत्वे भवेत्सर्वाभिधायिता ॥ संख्याश्रुतिविरोधात्तु तन्नैवं संश्रयामहे ॥ वरणं तन्निमित्तं स्याद्ब्रह्माध्वर्य्वादिशब्दवत् ॥ ततो नातिप्रसङ्गः स्याद्वचनं त्वेवमर्थवत् ॥' ऋत्विजो वृणीत इति, यूपं

---

**उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥** पूर्वातिदेशात्सङ्गतिः । अतिदेशस्याभ्यधिकाशङ्कानिराकरणार्थत्वात्तामाह—**तत्रेति । लोकवदिति ।** लोके उपगातॄणां प्रधानं गायिनं प्रति गुणभावदर्शनादिति भावः। **परस्परेति ।** तथाच नैतावता तुल्यकक्ष्यत्वहानिरिति भावः । सूत्रार्थस्तु—उपगाश्च नान्ये, नाध्वर्युरुपगायेदिति लिङ्गात् । अन्यत्वेऽध्वर्योरुपगानाप्रसक्त्या निषेधायोगान्नित्यानुवादत्वकल्पनस्यागतिकत्वादिति ॥

**विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥** सङ्गतिं सूचयन्पूर्वपक्षमाह—**पूर्ववदिति ।** वरणाभावादित्यु-पलक्षणं संज्ञाया यौगिकत्वाच्चेत्यपि द्रष्टव्यम् । नच यजमानस्य यत्कर्तव्यं तदर्थः परिक्रयः क्रत्वर्थं च यजमानस्य कर्तव्यं विक्रयश्च क्रत्वर्थत्वाभावान्न यजमानकर्तव्य इति परिक्रीतानामृत्विजामपि न कर्तव्य इति वाच्यम् । क्रयस्य नित्यवत्कर्तव्यत-या विक्रयंविना क्रयाभावेनार्थात्तस्यापि यजमानकर्तव्यत्वेसति तत्र ऋत्विगन्वयोपपत्तेरिति भावः । द्रव्यलोभेन विक्रये प्रवृत्त-पुरुषमादायैव क्रयसिद्ध्याऽर्थादपि विक्रयस्य कर्तव्यत्वं नेत्याशयेन सिद्धान्तमाह—**नैवमिति ॥**

**कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥** प्रासङ्गिकीं सङ्गतिं सूचयितुमाह—**ब्रह्मेति ।** ऋतौ वसन्ता-दावित्यर्थः । यजन्ति यागानुकूलव्यापारं कुर्वन्तीत्यर्थः । यागस्य द्रव्यत्यागरूपस्य यजमानकर्तृकत्वादिति ध्येयम् । **ननु** सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज इति वचनात्कथं सर्वेषामृत्विक्त्वमत आह—**सप्तदशेति ।** दर्शपूर्णमासयोश्च-त्वारश्चातुर्मास्यानां पञ्च पशुबन्धस्य षट् सौम्यस्य त्वध्वरस्य ऋत्विजामेकदेशसंख्यैव सप्तदशत्वात्मिका इति स्तोतुमवयुत्यानु-वाद इत्यर्थः । यत्र महासंख्योपात्ता तत्र परमवयुत्यानुवादत्वं संभवति । महासंख्यानुपादाने त्वेकदेशसंख्यात्वस्यैवाप्रती-तेरवयुत्यानुवादत्वमनुपपन्नम् । नचात्र महासंख्योपात्ता तस्मादवयुत्यानुवादत्वासंभवात्पूर्वपक्षे वचनमनर्थकं स्यात् । स्वपक्षे तु नायं दोष इत्याशयेनाह—**वचनमिति ।** ननु ऋत्विजां सतां वरणविधानात्कथमृत्विक्त्वस्य निमित्तं वरणमित्यत आह—**ऋत्विजो वृणीत इति । नन्विति ।** ननु वरणेनर्त्विजः कुर्यादित्येवं ऋत्विजो वृणीत इति वाक्यस्य ऋत्वि-

---

१ वचनं त्वेवम.

छिनत्तीतिवद्वरणेनार्त्विजः कुर्यादित्यर्थः, नतु प्रसिद्धानृत्विजो वृणीत इति । ननु वरणनिमित्तत्वेऽप्यतिप्रसङ्गः स्यात् चमसाध्वर्यूणामपि वरणसद्भावात् । उच्यते । न वरणमात्रं निमित्तं किंतु ब्रह्मादिगतो वरणविशेषः । ननु ब्रह्मादिष्वनुवृत्तं चमसाध्वर्युभ्यो निवृत्तं वरणावान्तरसामान्यं न किंचित् । माभूदवान्तरसामान्यं विशेष एव निमित्तम् । योयमृत्विक्शब्दो ब्रह्मादिशब्दवदेकैकस्यैव न वाचकः सोयं साधारणशब्दो न सामान्यशब्द इति यथाश्रुतभाष्यार्थः । नत्वेवं युक्तम् । क्लृप्तावयवशक्तिपरित्यागाददृष्टशक्त्यन्तरकल्पनाप्रसङ्गात् । स्मृतिविरुद्धंच किन्नन्तत्वेन निपातनात् 'कर्तरि कृदि'ति वचनात् । तथान्यदपि स्मरणं 'ऋत्विग्यज्ञकृदुच्यते' इति । एवमपि वरणनिमित्तताश्रीयेत यद्यन्यथा सप्तदशश्रुतिर्नोपपद्येत, सा तु यथा वरणनिमित्तत्वे तद्विशेषनिमित्तत्वादुपपन्ना तथर्तुयजनमपि ब्रह्मादिगतमेव ऋत्विक्शब्दस्य निमित्तं दृतिहरिशब्दस्येव पशुगतं दृतिहर्तृत्वम् । एवंच प्रसिद्धावयवशक्तित्यागः स्मरणविरोधश्च न कृतो भवति । श्रुतिश्चोपपादिता वरणविधिश्चैवं प्रसिद्धपदार्थको भवति यावदुक्तं भवति याजकान्वृणीते इति तावदृत्विजो वृणीते इति । तेन नाप्रसिद्धपदार्थकत्वं, वरणनिमित्तकत्वे तु यूपादिवदप्रसिद्धपदार्थकत्वं वचनव्यक्तिविपर्यासश्चैवं स्यात् । नचैतद्न्याय्यम् । अध्वर्य्वादिशब्दानां तु प्रसिद्ध्यभावाद्यएव वरणेन प्रकरणान्तरेण वाध्वर्युत्वेन क्रतुस्वामिभिः परिकल्पितः सएवाध्वर्युरिति युक्तम् । ऋत्विक्शब्दस्तु प्रसिद्धावयवत्वात्संख्याश्रुतेश्च ऋतुयजनविशेषनिमित्त इति विवेकः ॥

---

क्रत्वार्थवरणविधायकत्वे उक्तेसति चमसाध्वर्युवाक्यविहितवरणमादाय चमसाध्वर्युष्वतिप्रसङ्गशङ्कानुपपन्ना । नच वाक्यान्तरविहितवरणमादाय चमसाध्वर्युष्वतिप्रसङ्गो न शङ्क्यते किंतु ऋत्विजो वृणीत इति वाक्यविहितवरणसंबन्धो यथा ब्रह्मादौ एवं चमसाध्वर्युष्वपि संभवतीति तद्वाक्यविहितवरणमादायैवेति न दोष इति वाच्यम् । तथासति परिहारग्रन्थासामञ्जस्यं स्यात्तत्र प्रातिस्विकविहितवरणाभिप्रायेणैव परिहारकथनादिति चेन्मैवम् । ऋत्विजो वृणीत इति वाक्ये हि वरणान्तरं न विधीयते ब्रह्मादिवाक्यविहितवरणप्रत्यभिज्ञानेन वरणान्तरविधायकत्वासंभवात् किंतु प्रातिस्विकतत्तद्वाक्यविहितवरणमेव ऋत्विक्त्वरूपफलार्थतया सामान्येन विधीयते इत्यभिप्रायेण शङ्कापरिहारयोरुपपत्तेरिति । नच मध्यतःकारिणां चमसाध्वर्यव इति समाख्यया चमसाध्वर्यूणां तत्तदृत्विग्वरणीयतया यजमानवरणाभावाद्यजमानकर्तृकवरणत्वं चमसाध्वर्युवरणव्यावृत्तमस्तीति वाच्यम्।तत्तदृत्विक्त्वसंबन्धिपदार्थकरणमात्रेण समाख्योपपत्त्या तेषामपि यजमानवरणीयत्वादिति भावः । ऋत्विक्शब्दस्य नानार्थत्वाङ्गीकारान्न दोष इति परिहरति—**माभूदिति। सोयमिति।** ऋत्विक्शब्दः प्रवृत्तिनिमित्तभेदेन बहूनां वाचकत्वात्साधारणः नतु सर्वार्थानुगतैकसामान्यनिमित्तक इत्यर्थः । **किन्नन्तत्वेनेति।** 'ऋत्विग्दधृ'गित्यादिसूत्र इति शेषः । तावतापि कथमृतुयजनकर्तृपरत्वमत आह—**कर्तरीति। निमित्तमिति** आदायेतिशेषः।उपपन्ना संख्याश्रुतिरिति पूर्वेणान्वयः । अस्मिन्नपि पक्षे नानार्थत्वमेव ब्रह्मादिष्वनुगतानतिप्रसक्तसामान्याभावादिति ध्येयम् । **नन्वेवं** नागृहीतविशेषणान्यायाद्ब्रह्मत्वादिकमेव ऋत्विक्शब्दार्थः स्यादित्याशङ्क्य नहि ब्रह्मत्वादिकं प्रवृत्तिनिमित्तनिविष्टं येनोक्तदोषः स्यात् । किंतूपाधिमात्रं यथा 'हरतेर्दृतिनाथयोः पशा'विति स्मरणादृतिहरिपदे पशुत्वं तद्वदित्याह—**दृतीति । श्रुतिरिति ।** सप्तदशत्वश्रुतिरित्यर्थः । **वरणविधिश्चेति ।** वरणवाक्यमित्यर्थः । भाष्यकारपक्षे वरणान्तरस्य वा प्रातिस्विकवरणानामेव वा ऋत्विजो वृणीत इत्यनेन ऋत्विक्त्वार्थतया विधिसंभवेप्याचार्यपक्षे वरणस्य ऋत्विक्त्वार्थत्वाभावेन केवलानत्यर्थतया नतेध्वाध्वर्युं वृणीत इत्यादिभिरेव सिद्ध्या ऋत्विजो वृणीत इत्यस्यानुवादकत्वस्यैव न्याय्यत्वेन विधित्वानुपपत्तेः । उक्तंच 'तत्रार्थात्कर्तृपरिमाणंस्या'दित्यधिकरणे । नहि वृतस्य वरणं दृष्टार्थं भवतीति ध्येयम् । **नन्वेवमध्वर्य्वादिशब्दानामपि** यौगिकत्वं स्यादित्याशङ्क्य वैषम्यमाह—**अध्वर्य्वादीति ।** प्रकरणान्तरेण संकल्पेनेत्यर्थः । प्रयोजनं पूर्वपक्षे 'ऋत्विज उपवसन्ति, अग्नीध्रे एतां रात्रिमृत्विजो वसन्ति, ऋत्विजस्तानूनप्त्रं समवमृशन्ती'त्यादिऋत्विग्धर्मैः सर्वेषाम् । सिद्धान्ते तु ब्रह्मादीनामेवेति । सूत्रे कर्मकार्याद्यज्ञकरत्वादिति यावत् ॥

---

१ व्यावृत्तम्. २ प्रकारान्तरेण.

दीक्षादक्षिणावाक्योक्तब्रह्मादीनामेव सप्तदशर्त्विक्त्वाधिकरणम् ॥ १७ ॥

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥ [उक्त्वा च यजमानत्वं तेषा दीक्षाविधानात् ॥ ३७ ॥]**

**संख्याता अपि ये केचिन्नियता वा विशेषतः ॥ आद्यो न दक्षिणादाने दीक्षायां च विशेषतः ॥ २६ ॥**

सप्तदशेत्युक्तं के त इत्यनियमे प्राप्ते ऋत्विग्भ्यो दक्षिणां ददातीत्युक्त्वाग्नीधे ददाति ब्रह्मणे ददातीत्यादिना ब्रह्मादीनां षोडशानां कीर्तनात्तेषामृत्विक्त्वम् ॥

ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥ १८ ॥

**स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥**

**सदस्ये यजमाने वा साप्तदश्यं वृतत्वतः ॥ सदस्ये कुरुते किंचिन्नासौ स्वामिनि तत्त्वतः ॥ २७ ॥**

अथ सप्तदशः[1] कः किं सदस्य उत यजमान इति संशयः। तत्र कर्मकरत्वात्सदस्यः। नचासौ नास्तीति मन्तव्यं वरणाम्नानात्। नच ब्रह्मण एवेदं वरणं, तस्य हि ब्रह्माणं वृणीत इति वरणं विहितं न पुनर्विधातुं शक्यम्, अनुवादेचानर्थक्यमध्वर्य्वादिष्वपि तथा प्रसङ्गः। नच सदस्यवरणव्यतिरेकेण[2] ब्रह्मवरणं नास्ति। ब्रह्माणं वृणीत इति वचन[3]मृत्विग्बहुत्वसाधनाधिकरणे भाष्यकृतोदाहृतम्। तस्मात्सदस्यः सप्तदश इति प्राप्ते ब्रूमः। सदस्यवरणमदृष्टार्थं नतु कश्चिदपि पदार्थस्तेन कर्तव्यो येन यजमानादन्य ऋत्विक् स्यात्। तस्मात् स्वामी सप्तदशः ॥

आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृतानियमाधिकरणम् ॥ १९ ॥

**ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥ [तत्संयोगात्कर्मणो व्यवस्था स्यात्, संयोगस्यार्थवत्त्वात् ॥ ४० ॥ तस्योपदेशसमाख्यानेन निर्देशः ॥ ४१ ॥ तद्वच्च लिङ्गदर्शनम् ॥ ४२ ॥]**

**न कार्यं नियतं तेषां नियतं वाग्रिमो यतः ॥ शक्ताः केन किमित्यत्र नियतिः स्यात्समाख्यया ॥ २८ ॥**
**प्रकृत्यर्थोऽथ सर्वार्थो वह्निराद्योऽस्तु पर्णवत् ॥ पर्णन्यायोऽतिदिष्टे स्यादुपदिष्टे तु सर्वगः ॥ २९ ॥**

'नानाकर्तृषु सिद्धेषु सांप्रतं संप्रधार्यते ॥ किमव्यवस्थितं तेषां कार्यं किंवा व्यवस्थितम् ॥' तत्र

---

**नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥ अनियम इति।** अग्नीधे ददाति ब्रह्मणे ददातीत्यादिकीर्तनं क्रमार्थं, तथाच तेषां तेन क्रमेण दानमन्येषां तु क्रमनियमाभावमात्रं नतु तावतान्येषामृत्विक्त्वाभाव इति भावः। ततश्च प्रयोगभेदेन सर्वेषामृत्विक्त्वात्पूर्वोक्तः सर्वेषामृत्विक्त्वाभावोऽसिद्ध इति प्रत्यवस्थानात्सङ्गतिर्बोध्या। भवेदेवं यद्यन्येषां दक्षिणादानमृत्विक्त्वं वा प्रमाणान्तरसिद्धं स्यान्न त्वेवमस्ति। एवंच दक्षिणावाक्ये संकीर्तनादेव सप्तदशवाक्यस्य तन्मात्रव्यवस्थावगत्या नास्त्यनियम इति सिद्धान्तमाह—**ऋत्विग्भ्य इति।** सूत्रार्थस्तु—ऋत्विग्भ्यो दक्षिणां ददात्यग्नीधे ददाति ब्रह्मणे ददातीत्येवं दक्षिणाभिः सहाम्नाते अग्नीधे ऋत्विजे ददाति ब्रह्मण ऋत्विज इति पर्यवसानात्सामानाधिकरण्यलक्षणो यः ऋत्विक्शब्दरूपश्रुतिसंयोगः तस्मादग्नीत्प्रभृतीनामेवर्त्विक्त्वमिति नियमः स्यादिति ॥

**स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥** सप्तदशस्यानिर्धारणे केचिदेवर्त्विजो न सर्वे इत्यस्यार्थस्यास्थिरत्वात्तत्स्थिरीकरणार्थं सप्तदशस्य निर्धारणात्सङ्गतिमभिप्रेत्याह—**अथेति। कर्मेति।** 'कर्मणिभृता'विल्यनुशासनाद्भृत्यर्थे ततश्चैकधर्मसंबन्धिष्वेव सप्तदशत्वसंख्यान्वयस्य न्याय्यत्वात्सदस्य एव सप्तदशो न यजमान इत्यर्थः। चमसाध्वर्यूणां कर्मकरत्वेऽप्येकतमावधारणे प्रमाणाभाव इति भावः। प्रभाकरमतं निरस्यति—**नचेति।** सदस्यं वृणीत इति वरणाम्नानात्सदस्योऽन्योस्तीत्यर्थः। सदसि भवः सदस्य इति योगाद्ब्रह्मपरः सदस्यशब्द इत्याशङ्क्याह—**नन्वेति। ननु** सदस्यस्य कार्यार्थं ब्रह्मण एव पुनर्वरणमस्त्वित्यत आह—**अध्वर्य्वादिष्विति। ब्रह्माणमिति।** 'चन्द्रमा मे ब्रह्मा। आकाशो मे सदस्य' इति पृथग्वरणमन्त्राम्नानादपि सदस्यब्रह्मणोः पृथग्वरणमावश्यकमिति द्रष्टव्यम्। कृताकृतप्रत्यवेक्षणक्रतूपयुक्तकार्यकरणात्तस्याप्यृतुयजनमस्तीत्याशयेनोपसंहरति—**तस्मादिति। येनेति।** नहि यागोपयुक्तपदार्थकरणमात्रं ऋतुयजनं सोमविक्रयिप्रभृतिष्वतिप्रसङ्गात्, किंतु क्रत्वङ्गकरणं कृताकृतप्रत्यवेक्षणं च विध्यभावान्नाङ्गं शेषभक्षणं च क्रत्वङ्गत्वेपि क्रत्वनुपयुक्तत्वान्न यजनमिति भावः ॥

**ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥** 'शास्त्रफलं प्रयोक्तरी'त्यादिना प्रवृत्तस्योपोद्घातस्य तत्प्रसक्तानुप्रसक्तस्य च समाप्त्या प्राप्तावसरोयं विचार इत्याह—**नानेति।** ननु यथा स्फ्यादीनां लिङ्गप्रकरणाविशेषेपि यथा-

---

१ दशः किं सदस्य. २ सदस्यव्यतिरेकेण. ३ वरणवचनम्.

प्रकरणाविशेषात्सामर्थ्याच्च यद्येन शक्यं कर्तुं सं सर्वमव्यवस्थया कुर्यात् । दुर्बला हि लिङ्गप्रकरणाभ्यां समाख्या न तद्विरोधेन नियमं कर्तुमलम् । ततः सर्वे सर्वार्थाः स्थितं तावदपर्यवसितम् । अग्निषु चिन्ता । ते ष्वनारभ्यवादेन 'यदाहवनीये जुहुती'त्यादिना होमार्थतया विहितास्ते किं प्रकृत्यर्था उत वैकृतानामप्यामनहोमादीनां साधारणा इति पर्णतादिवत्प्रकृत्यर्थत्वं मन्यमानस्योत्तरम् । अग्नयश्च सर्वार्था इत्यनुवर्तते । तदनुवृत्त्यर्थं चानन्तरसूत्रकरणं, स्वकालत्वात्स्वतन्त्राम्नानादप्रकरणाधीतत्वादित्यर्थः । नचात्र द्विरुक्तिदोषः प्रकृतिसमकालमेव विकृतावप्युपदिष्टत्वाद्धोमस्य । यत्रतु यागमात्रे चोदिते प्रकृतित एव चतुरवत्तं जुहोतीत्येतदतिदेशात्प्राप्यमाणं प्रतीक्षितव्यं तत्र पर्णमयीन्यायः । उपदिष्टेषु तु वैकृतेष्वपि होमेषु समानमेवाग्निविधानं स्थितादुत्तरं लिङ्गप्रकरणाभ्यां हि न सर्वेषां समुच्चितं कर्तृत्वं प्राप्तं येन समाख्याविरोधः स्यात्, किंत्वनियमेन । तत्र किं केनेत्यस्ति व्यवस्थापेक्षा । तां च कुर्वती समाख्याऽनुगुणत्वान्न बाधितव्या । तस्माद्यथासमाख्यं नियमः हौत्रं होत्रा आध्वर्यवमध्वर्युणा तथा किमेष एवोत्सर्गः सर्वं हौत्रं होत्रा आध्वर्यवमध्वर्युणेति न कचिदपोद्यते । यत्र प्रत्यक्षं वचनं यथा मैत्रावरुणः प्रेष्यति चान्वाहेति । यत्रच विशेषसमाख्या यथा पौत्रीयं नेष्ट्रीयं याजमानमिति तत्र विशेषसमाख्याबलाद्वचनबलाच्च सामान्यसमाख्यापोद्यते । तदुक्तं

---

संयोगं व्यवस्था तथात्र यथासमाख्यं व्यवस्था किं न स्यादित्यत आह—**दुर्बलेति** । युक्ता स्फ्यादीनां स्फ्येनोद्धन्तीत्यादिवचनेन व्यवस्था तस्य लिङ्गप्रकरणापेक्षया प्रबलत्वादिह तु समाख्याया दुर्बलत्वान्न तया व्यवस्थेत्यर्थः । कदाचित्प्राप्ताध्वर्य्वादिसंबन्धानुवादिनी च समाख्येति भावः । लिङ्गप्रकरणाभ्यां समाख्याया दुर्बलत्वोक्त्यैव यत्तदपेक्षया प्रबलेन वचनेन संयुक्तं 'मैत्रावरुणः प्रैष्यति चान्वाहे'त्यादि तत्र वचनाद्व्यवस्थैव पूर्वपक्षिणोऽप्यभिमतेति सूचितम् । नचाध्वर्युं वृणीत इत्यध्वर्यूत्पत्तेः सहायार्थतया उत्पत्तिदशायामेवाध्वर्य्वादीनां सर्वार्थत्वावगमात्तदनुसारेण विनियोगस्य वर्णनीयत्वाद्वचनमेवावयुत्यानुवादतया नेयमिति वचनसंयुक्तस्यापि पूर्वपक्षे सर्वार्थत्वमेवेति वाच्यम् । नहि स्वतएवाध्वर्य्वाद्युत्पत्तेः सहायार्थता किंतु तस्याः प्रयोजनापेक्षायां दृष्टार्थत्वाय सहायार्थताकल्पनमात्रं, स्वत एव सहायार्थत्वे 'शास्त्रफलं प्रयोक्तरी'त्यधिकरणपूर्वपक्षानुत्थितेः । एवंच यावन्न्यायात्सर्वार्थता कल्प्यते तावद्वचनेन व्यवस्थावगमे पश्चान्न्यायेन तत्कल्पनानवकाशः । तस्माद्वचनसंयुक्तं पूर्वपक्षेपि व्यवस्थितमेवेति भावः । **आमनेति** । सांग्रहणीष्ट्यामामनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीति विहिता होमाः । **अनन्तरेति** । ते सर्वार्था इत्यस्य अग्नय इत्यस्य सूत्रस्य नैरन्तर्येण करणमित्यर्थः । स्वकालत्वस्य यथाश्रुतस्य सर्वार्थतासाधकत्वाभावाद्व्याचष्टे—**स्वतन्त्रेति** । स्वतन्त्राम्नानशब्दस्य प्रधानत्वेनाम्नानार्थकत्वं व्यावर्तयितुमाह—**अप्रकरणेति** । यद्यग्नयः प्रकृतिप्रकरणे आम्नाता भवेयुस्तदा परं प्रकृत्यर्था भवेयुः, नचात्र तथात्वं तस्मात्सर्वार्थाः । पर्णतावैषम्यमाह—**नचेति** । पर्णताविधेर्वैकृतजुहूसाधारण्यं विकृतौ जुहूप्राप्तिमपेक्ष्य भवति, चोदकेनच तत्र जुहू प्राप्या । साच पर्णताविशिष्टैव प्राप्यते इति पुनः पर्णताविधाने द्विरुक्तिदोषः स्यादिति पर्णतायाः प्रकृत्यर्थत्वं, आमनहोमादयस्तु विकृतौ उपदिष्टा एवेति तेषामतिदेशेन विकृतिषु प्राप्त्यभावान्न पुनरुक्तिदोषः । तस्मात्प्रकृत्युपदिष्टहोमवद्विकृत्युपदिष्टहोमानामप्याहवनीयविधिस्तुल्य इत्यर्थः । **ननु** विकृत्यङ्गभूतामनहोमानां विकृतावुपदेशेऽपि तत्र विकृत्यर्थतया आहवनीयातिदेशस्यावर्जनीयतया ततएवामनहोमादिष्वपि तत्प्राप्तिसंभवादवर्जनीयो द्विरुक्तिदोषः, उपदेशस्य प्राथम्येऽपि पश्चादपि प्राप्स्यतोऽर्थस्य पूर्वं वचनवैयर्थ्यादिति चेन्मैवम् । आमनहोमादीनामप्राकृतकार्यत्वेन तत्र पश्चादपि यूपावटस्तरणबर्हिर्न्यायेन चोदकादाहवनीयप्राप्त्यभावादिति भावः । एवंच पूर्वपक्षे आमनहोमेषु उपदेशातिदेशाभ्याममिप्राप्त्यभावाच्च तत्राहवनीय इति प्रयोजनं बोध्यम् । **नन्वेवं** विकृतिष्वतिदेशेन प्राप्नुवन्ति ये चतुरवत्तहोमनारिष्टहोमादयस्तत्साधारण्यमाहवनीयस्य न स्यात्, नचेष्टापत्तिः सर्वार्था इति सूत्रविरोधादित्यत आह—**यत्रेति**। इदमुपलक्षणं वैकृतपुरोडाशश्रपणादेरातिदेशिकत्वेन तद्वारस्य गार्हपत्यादेरपि न सर्वार्थत्वमिति द्रष्टव्यम् । एवंच सूत्रे सर्वपदं संकोच्यमिति भावः । **न सर्वेषामिति** । एकेन कृतेऽपरस्य कर्तृत्वासंभवादिति भावः । **किंत्विति** । प्रकरणाविशेषात्सामर्थ्यादविशेषाच्च यः कश्चन पुरुषो यंकंचन पदार्थं कुर्यादित्यनियम एव लिङ्गप्रकरणाभ्यां भवतीत्यर्थः । उत्सर्गः नियम इत्यर्थः । **तस्येति** । तत्संयोगात्कर्मणां व्यवस्था स्यात् । संयोगस्यार्थवत्त्वादिति पूर्वसूत्रे प्रस्तुतस्याध्वर्य्वादिपुरुषसंयोगस्य आध्वर्यवादिसमाख्यानस्येति यावत् । तस्योपदेशेन वचनेन विशेषसमाख्यानेन निर्देशो निष्कर्षः अपवाद इति यावदिति सूत्रार्थः । प्राभाकरैरिदं सूत्रं सामान्यसमाख्याया वचनविशेषसमाख्याभ्यां बाधव्युत्पादनार्थमधिकरणान्तरत्वेन व्याख्यातम् । तदनुपपन्नं । समाख्याया वचनापेक्षया सामान्यस्य विशेषापेक्षया च दुर्बलत्वस्यान्यत्र सिद्धत्वेन पूर्वपक्षानुन्मेषात् । तस्मात्प्रकृताधिकरणशेषभूत-

---

१ तत्सर्वमव्य. २ चान्तरा सूत्र. ३ समुदितं.

—'तत्स्योपदेशसमाख्यानेन निर्देश' इति । तदिदं समाख्याविनियोगस्यैवातिप्रसङ्गनिवारणेन 'शेषीभूतं सूत्रं नाधिकरणान्तरम् । अतएव तस्यैव लिङ्गं पश्चादुच्यते प्रातरनुवाके हौत्रदर्शनादिकम् ॥

समाख्याबाधनाधिकरणम् ॥ २१ ॥

**प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४३ ॥ [पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात् ॥ ४४ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४५ ॥]**

यन्मैत्रावरुणः प्रैष्यत्यनु चाहेति बाधनम् ॥ हौत्रादिकसमाख्यायास्तत्सर्वत्रोत कुत्रचित् ॥ ३० ॥

आद्योऽस्तु वचनान्नैवं साहित्योक्त्युपलम्भनात् ॥ प्रैषानुवचने यत्र सहिते तत्र बाधनम् ॥ ३१ ॥

उपदेशात्सिद्धे समाख्याबाधे तद्विशेषचिन्ता । मैत्रावरुणः प्रैष्यति चान्वाहेति किं प्रैषमात्रेऽनुवचनमात्रे च मैत्रावरुणोपदेशेन हौत्रादिसमाख्याबाधोऽथवा यानि प्रैषान्तान्यनुवचनानि होतायक्षदग्निमित्यादीनि तेष्वेवेति संशयः । तत्र 'प्रैषानुवचनोद्देशात्साहित्यमविवक्षितम् ॥ विधीयते प्रशास्ताऽतः समस्तव्यस्तयोस्तयोः ॥ नैवं समस्तयोरेव मैत्रावरुणचोदना ॥ अज्ञातकर्तृकत्वेन व्यस्ते हि ज्ञातकर्तृके ॥' प्रैषाणामध्वर्युरनुवचनानां च होता निर्ज्ञात इत्यनपेक्षितं कर्तृविधानम् । यानि तु प्रैषान्तान्यनुवचनानि तेपु प्रैषांशेनाध्वर्योरनुवचनांशेन होतुः प्राप्तेरेकमन्त्रत्वेन नानाकर्तृसमावेशासंभवाद्धोतुरध्वर्योश्च प्रच्युतानामज्ञातकर्तृकाणां मैत्रावरुणविधानमपेक्षितार्थं भवति । तदधिकारे चेदं वचनमिति तत्रैव मैत्रावरुणविधिः ॥

चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृताधिकरणम् ॥ २२ ॥

**चमसांश्चमसाध्वर्यवः समाख्यानात् ॥ ४६ ॥ [अध्वर्युर्वा तन्न्यायत्वात् ॥ ४७ ॥ चमसे चान्यदर्शनात् ॥ ४८ ॥ अशक्तौ ते प्रतीयेरन् ॥ ४९ ॥]**

चमसैश्चमसाध्वर्युर्जुहोत्यध्वर्युरेव वा ॥ संज्ञाविशेषादाद्योऽस्तु मैवमध्वर्युसंज्ञया ॥ ३२ ॥

विशेषस्यानपेक्षत्वात्तेनान्यस्या अपेक्षणात् ॥ अध्वर्युर्जुहुयाच्छक्तेस्तदशक्तौ परोऽपि वा ॥ ३३ ॥

चमसेषु संशयः किं तैश्चमसाध्वर्यवो जुहुयुरुताध्वर्युरिति । तत्राध्वर्यवसमाख्यां सामान्यभूतां

---

मेवेदमित्याह—**तदिदमिति** । यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयादिति प्रातरनुवाके होतुर्दर्शनादुद्गीथ उद्गातॄणामृचः प्रणव उक्थ्यशंसिनां प्रतिगरोऽध्वर्यूणामित्युद्गीथादिषूद्गात्रादिदर्शनाच्च समाख्याव्यवस्थापि केत्येवमर्थकं तद्वच्च लिङ्गदर्शनमित्युत्तरसूत्रं तत्पक्षेऽनुपपन्नं स्यादित्याशयेनाह—**अतएवेति** । प्रथमसूत्रे प्रयुक्तत्वात् ऋत्विजां सर्वपदार्थकरणशक्त्या पदार्थैः सर्वेषां प्रयुक्तत्वादित्यर्थः ॥

**प्रैषानुवचनं मैत्रावरुणस्योपदेशात्** ॥ ४३ ॥ **सिद्ध इति** । समाख्याप्रयुक्तव्यवस्थापवादप्रदर्शनार्थमुक्त इत्यर्थः । **किमिति** । उक्थशा यज सोमस्येत्यादयो व्यस्ताः प्रैषाः प्रातरनुवाकानुवचनादीनि व्यस्तान्यनुवचनानि होतायक्षदग्निमित्यादीनि प्रैषानुवचनोभयात्मकानि तत्र किं व्यस्तसमस्तात्मकेषु प्रैषेष्वनुवचनेषु च मैत्रावरुणोपदेश उत प्रैषानुवचनोभयात्मकेष्वेवेत्यर्थः । **प्रैषान्तानीति** । येषामनुवचनानामन्ते यजेति प्रैषो वर्तते तानीत्यर्थः । **ननु** प्रैष्यति चान्वाहेति चशब्देनेतरेतरसाहित्यावगतेः प्रैषानुवचनोभयात्मकेष्वेव मैत्रावरुणान्वयात्कथं पूर्वपक्षोऽत आह—**तत्रेति** । नच प्रत्येकमुद्देश्यत्वे वाक्यभेदः । आख्यातद्वयेन प्रत्येकमुभयोरुपस्थित्या प्रैषान्तानुवचनोपस्थापकाभावादेकस्योद्देश्यत्वासंभवे वाक्यभेदस्य न्यायप्राप्तत्वादेवंच प्रत्येकमेव मैत्रावरुणान्वयेऽप्येकस्यैव मैत्रावरुणस्योभयत्रान्वयमात्राच्चशब्दोऽनुवाद इति भावः । अपेक्षितविधिबलादुभयात्मकेष्वेव मैत्रावरुणविधिरिति सिद्धान्तमाह—**नैवमिति** । **निर्ज्ञात इति** । समाख्याबलादिति भावः । नच समाख्यापेक्षया वचनस्य शीघ्रप्रवृत्तिकत्वात्तेष्वपि मैत्रावरुणविधिरवर्जनीय इति वाच्यम् । प्रैषानुवचनयोरुभयोः प्रत्येकं मैत्रावरुणविधौ वाक्यभेदापत्त्या चशब्दसहिताख्यातद्वयेनाप्यनुवचनविशेषस्यैव लक्षणीयतया उभयात्मकेष्वेव तद्विधानाद्वाक्यभेदापेक्षया लक्षणाया ज्यायस्त्वादिति । **मैत्रावरुणविधानमिति** । नच 'होतुः प्रच्यवे इतरमन्यस्तेषां यतः शेषः स्या'दिति न्यायेन तत्प्रत्यासन्नस्य मैत्रावरुणस्य निश्चयाद्विधानमनर्थकमिति वाच्यम् । होतुः प्रच्यवेन मैत्रावरुणप्राप्तिवदध्वर्योः प्रच्यवेन प्रतिप्रस्थातुरपि प्राप्त्योभयोरेकत्र कर्तृत्वासंभवेन मैत्रावरुणनिर्णयासंभवात् । **तदधिकार इति** । प्रैषान्तानुवचनसंनिधान इत्यर्थः । सूत्रार्थस्तु—सर्वे प्रैषाः सर्वाण्यनुवचनानि च मैत्रावरुणस्य कर्तव्यानि स्युरुपदेशादिति ॥

**चमसांश्चमसाध्वर्यवः समाख्यानात्** ॥ ४६ ॥ पूर्ववत्सामान्यसमाख्याबाध इति प्रत्यवस्थानात्सङ्गतिः ।

---

१ तत्संयोगात्कर्मणां व्यवस्थानात इत्यस्य शेषभूतम्. २ तद्वच्च लिङ्गदर्शनं इत्यग्रिमसूत्रे. ३ ज्ञातृकर्तृके. ४ इत्यनेनापेक्षितं.

बाधित्वा विशेषसमाख्यया चमसाध्वर्यवएव तैर्जुहुयुः । मैवम् । 'सामान्यनिरपेक्षो हि विशेषस्तस्य बाधकः ॥ चमसाध्वर्युसंज्ञेयमध्वर्युप्राप्त्यपेक्षिणी ॥ चमसेऽध्वर्युवद्भावाच्चमसाध्वर्यवो यतः ॥ ततः साध्वर्यवपेक्षत्वान्न तद्बाधेन वर्तते ॥' तद्बाधे हि चमसाध्वर्युसंज्ञैव न स्यादतद्भावात् । काममजुह्वतामेव तद्भावः स्यात् । अतोऽध्वर्युर्जुहुयात् तस्य ग्रहहोमादिव्यापृतत्वेनाशक्तौ सत्यां ते जुहुयुः ॥

श्येनवाजपेययोरनेककर्तृकताधिकरणम् ॥ २३ ॥

**वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥ [तद्गुणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तः शेषे ॥ ५१॥]**

श्येन उद्गातृवेदोक्तो वाजपेयो यजुष्यमू ॥ उद्गात्राध्वर्युणा कार्यौ यथाप्रकृति वाग्रिमः ॥ ३४ ॥
आख्याविशेषादाख्यायाः पूर्वभावी हि चोदकः ॥ प्रकृताविव कर्तारस्तत्तद्धर्मे व्यवस्थिताः ॥ ३५ ॥

औद्गात्रे समाम्नातः श्येनो वाजपेयश्चाध्वर्यवे द्वावपि ज्योतिष्टोमविकारौ । तत्र किं प्रधानवेदसमाख्यात उद्गाताऽध्वर्युश्चेतरत्रेतरत्र च सर्वपदार्थानतिदिष्टान्कुर्यादुत प्रकृतिवन्नाना कर्तार इति । तत्र प्रधानविधिविधेयत्वादङ्गानां तत्समाख्यालाभात्तस्याश्चोपदेशरूपत्वेनातिदेशाद्बलीयस्त्वात्तत्समाख्यात एक एव कर्ता सर्वं कुर्यात् प्रकृतौ तु प्रत्यक्षवचनैरेव नानर्त्विग्विधानात्सत्यामपि प्रधानद्वारेणाध्वर्यवसमाख्यायां नानैव कर्तारः, इहतु चोदकदौर्बल्यात्तद्बाधेन समाख्याप्राप्त एव कर्ता स्यात् । 'अत्रोच्यते भवेदेवं चोदको यदि दुर्बलः ॥ सतु प्रथमभावित्वात्समाख्यां बाधते बलात् ॥ अङ्गानां हि समाख्यानं प्रयोगवचनाश्रयम् ॥ चोदकप्राप्त्यपेक्षस्तु प्रयोगविधिसंग्रहः ॥' प्राकृतानामङ्गानां वैकृतप्रयोगविधिसंस्पर्शोत्तरकालं तत्समाख्या भवेत्, तत्संस्पर्शश्च चोदकप्रापितानां स्यात्, तेनच ते प्राप्यमाणाः सकर्तृका एव प्राप्यन्त इति कर्त्रपेक्षाभावादपेक्षानिबन्धनश्रुतिकल्पनासमाख्यानकर्त्रन्तरमलं कल्पयितुम् । नचात्र शरमयं बर्हिरितिवत्प्राप्तबाधः, कल्प्यत्वात्समाख्याविनियोगस्य, कल्पनायाश्चापेक्षाधीनायास्तदभावेऽनुदयात् । अपिच पाठनिमित्ताध्वर्यवादिसमाख्या न विधिनिमित्ता । नचौद्गात्रे पदार्थानां पाठः । 'तेन नास्ति समाख्यैषां विद्यमानापि दुर्बला ॥ श्येनादौ तेन नानैव कर्तारः प्रकृताविव ॥' इति शास्त्रदीपिकायां तृतीयाध्यायस्य सप्तमः पादः ॥ ७ ॥

---

**बाधित्वेति ।** ग्रहेषु यथाध्वर्युर्होमकर्ता तथैते चमसेष्वित्येवमध्वर्युवद्भावोपपत्त्या विशेषसमाख्यायाः सामान्यसमाख्यानपेक्षणाद्बाध उपपद्यत इति भावः। संनिधानाच्चमसहोतृत्वेनैवाध्वर्योः सादृश्यनिरूपकत्वं न ग्रहहोतृत्वेनेत्याशयेन सिद्धान्तमाह —**मैवमिति। अपेक्षिणीति।** अध्वर्युप्राप्तिश्च आध्वर्यवमिति सामान्यसमाख्ययेति सामान्यसापेक्षत्वं विशेषस्येति भावः। **नन्वेवं** चमसाध्वर्यूणां होतृत्वमेव नास्तीति तेषामध्वर्युवद्भावोऽपि न स्यादित्यत आह—**तस्येति** । शुक्रामन्थिप्रचारादिष्विति भावः ॥

**वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥** चमसहोमस्य समाख्ययाध्वर्युकर्तृवदिहापि समाख्यया कर्तुः परिग्रह इति प्रत्यवस्थानात्सङ्गतिः। औद्गात्राध्वर्यवशब्दौ तत्समाख्याते सामवेदे यजुर्वेदे च । **ननु** तत्र श्येनवाजपेययोः प्रधानयोरेव पाठो नाङ्गानामित्यङ्गेषु समाख्याया अभावात्कथं पूर्वःपक्ष इत्यत आह—**तत्रेति** । प्रधानप्रयोगविधिना साङ्गस्यैव तस्य विधानादिति भावः। चोदकतो नानाकर्तृकत्वमाशङ्क्याह—**तस्या इति** । नन्वेवं प्रकृतावपि प्रधानवेदनिबन्धनसमाख्याकपुरुषकर्तृकत्वापत्त्याऽनेककर्तृकत्वं न स्यादित्यत आह—**प्रकृताविति** । येषु चाङ्गेषु प्रत्यक्षवचनं नास्ति प्रधानवेदाद्वेदान्तरे च पाठस्तेष्वपि स्वस्ववेदनिबन्धनसमाख्याया आनर्थक्यापत्त्या तत्तत्समाख्यातकर्तृकत्वमिति ध्येयम्। चोदकस्योपजीव्यत्वादिह न दौर्बल्यमित्याशयेनाह—**भवेदिति** । अङ्गेषु समाख्याया अलब्धप्रमाणभावत्वादपि न तत्र कर्त्रन्तरबोधकत्वमित्याह—**तेनचेति । नचेति ।** शरमयं बर्हिरित्यादौ यथा चोदकप्राप्तस्यापि कुशादेर्बाधः एवमिह चोदकप्राप्तस्य नानाकर्तृत्वस्य बाधो न संभवति । समाख्यारूपोपदेशस्य कल्प्यप्रमाणभावत्वेनाक्लृप्तत्वादित्यर्थः । **पाठेति ।** मन्त्ररूपाङ्गेष्वाम्नानलक्षणपाठनिमित्ता तदितराङ्गेषु प्रातिस्विकविधिलक्षणपाठनिमित्तेत्यर्थः। न विधिनिमित्ता न प्रधानविधिनिमित्तेत्यर्थः। प्रधानविधेरङ्गविषयत्वस्य कल्प्यत्वेन तत्र पाठाभावेनाध्वर्युकाण्डे पठितत्वनिबन्धनाध्वर्यवसमाख्यायाः प्रधानविधिनिबन्धनत्वानुपपत्तेरिति भावः । सूत्रार्थस्तु—वेदस्योपदेशादौद्गात्रादिसमाख्यानात्प्रधानवेदस्यान्यत्वेसति यथासमाख्यं पदार्थानां कर्तारः स्युरिति ॥ **इति शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां तृतीयाध्यायस्य सप्तमः पादः ॥ ७ ॥**

---

१ तद्भावः स्यात्. २ नानिर्देशात्. ३ एक एव कर्ता.

# तृतीयाध्यायस्याष्टमः पादः।

क्रयस्य स्वामिकर्मताधिकरणम् ॥ १ ॥

## स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥ [वचनादितरेषां स्यात् ॥ २ ॥]

दक्षिणादिपरिक्रीतिर्ऋत्विजः स्वामिनोऽथवा ॥ परिक्रयः समाख्यानादृत्विजः स्वाद्यथेतरत् ॥ १ ॥
परिक्रयात्पुराध्वर्युहोत्रादीनामभावतः ॥ परिक्रयणकर्तृत्वं यजमानस्य नर्त्विजः ॥ २ ॥
इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः ॥ स्वामिनः पूर्ववन्नैवमध्वर्योर्वचनादयम् ॥ ३ ॥

अस्ति हि परिक्रयो ज्योतिष्टोमे द्वादशशतदानमाध्वर्यवे समाम्नातं औद्गात्रे च। दर्शपूर्णमासयोश्चान्वाहार्यदानमाध्वर्यवे। ते किमध्वर्य्वादिना कर्तव्ये उत यजमानेनेति संशये समाख्यानादध्वर्य्वादिना। यथाचाध्वर्युः स्वद्रव्येणेतरान्परिक्रीणीते तमुपायं यजमानः कुर्यादिति प्राप्तेऽभिधीयते। स्वामिकर्तृकत्वे सर्वत्र प्राप्ते परिक्रयवशात्परम्परया यागकर्तृत्वमाश्रितम्। नहि समाख्यामात्रात्साक्षात्कर्तृत्वं प्रधानवाक्यस्वरसावगतं शक्यते बाधितुम्। नहि 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुया'दित्यादिष्वध्वर्य्वाश्रयणमिति। अतः परिक्रयात्प्रागध्वर्य्वादेरभावान्न तत्कर्तृकत्वं परिक्रयस्य, यजमान एव कर्ता तस्य चात्मनि परिक्रयविरोधात्कर्त्रन्तराणि प्राप्नुवन्त्यन्यत्रैव भवन्ति नियममात्रं समाख्यया क्रियत इति न परिक्रयेऽध्वर्युः समाख्यया भवति। किंच सत्यपि कर्त्रन्तरप्रवेशेऽवश्यं स्वयं यजमानेन किंचित्कर्तव्यं तन्नियम एवायं परिक्रयविधिर्लाघवादध्वर्य्वादेरत्यन्ताप्राप्त एव विधेयः। तस्माद्याजमानं दानम्। यत्रतु वचनमस्ति 'य एतामिष्टकामुपदध्यात्स त्रीन्वरान्दद्या'दित्यादि तत्र ऋत्विजामपि स्यात्, वचनस्यातिभाराभावात्। अन्यत्र यजमानस्यैव ॥

---

**स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥** अस्मिन्पादे पूर्वोक्तसमाख्यानिबन्धनाध्वर्य्वादिकर्तृकत्वापवादेन स्वामिकर्तृकत्वं प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वमानन्तर्यं चेत्याहुः। **ननु** परिक्रयस्याध्वर्यवत्वे परिक्रयद्वारापि यजमानस्याङ्गेषु कर्तृत्वाभावाद्यजेत स्वर्गकाम इति सामानाधिकरण्यात्मनेपदाभ्यामवगतं साङ्गे कर्मणि यजमानस्य कर्तृत्वं व्याहन्येतेत्यत आह—**यथाचेति**। अध्वर्युकर्तृकपरिक्रयानुकूलाचरणेनापि यजमानस्याङ्गेषु कर्तृत्वं संभवतीति भावः। नचैवमप्यध्वर्युपरिक्रयस्याध्वर्युकर्तृकत्वासंभवात्तत्र याजमानत्वं स्यादिति वाच्यम्। तस्यापि समाख्यानुगुणप्रतिप्रस्थात्रादिकर्तृकत्वोपपत्तेरिति। समाख्यायाः कर्त्रन्तरप्रापकत्वाभावान्न समाख्ययाध्वर्योः परिक्रये प्राप्तिरित्याशयेनाह—**स्वामीति**। सर्वेष्वपि पदार्थेषु यजमानस्यैव कर्तृत्वे सामानाधिकरण्यादिना प्राप्ते सति परिक्रयाम्नानादङ्गेष्वन्यकर्तृकत्वमित्युक्तं शास्त्रफलं प्रयोक्तरीत्यत्रेत्यर्थः। **ननु** आध्वर्यवादिसमाख्ययैवान्यकर्तृकत्वं सर्वत्र न परिक्रयादित्यत आह—**नहि समाख्येति**। समाख्यामात्रादन्यकर्तृकत्वाश्रयणे परिक्रयाभावस्थलेऽपि समाख्ययान्यकर्तृकत्वं स्यादित्याशयेनाह—**नहि य इति**। एवंच परिक्रयाधीनमन्यकर्तृकत्वं न परिक्रये भवति तदा परिक्रयप्राप्त्याध्वर्य्वादेरेवाभावात् किंतु तदितराङ्गेष्वेवेत्याह—**अत इति**। कथं तर्हि समाख्ययाध्वर्य्वादेस्तत्तत्पदार्थे कर्तृत्वमित्याशङ्क्य समाख्यायाः प्रापकत्वाभावेऽपि नियामकत्वसद्भावान्नानुपपत्तिरित्याशयेनाह—**इतीति**। अस्तुवा समाख्यामात्रादेव कर्त्रन्तरानुप्रवेशस्तथापि न परिक्रयेऽध्वर्युः कर्ता। यजमानद्रव्ये अध्वर्योः स्वामित्वाभावेन तदीयद्रव्येणाध्वर्योः परिक्रेतृत्वस्यात्यन्ताप्राप्त्या तत्प्रापकत्वे विधेरत्यन्तगौरवप्रसङ्गात्, स्वामिकर्तृकत्वे तु विधेर्नात्यन्तगौरवम्। यजेतेत्यनेन स्वामिनापि कस्यचित्पदार्थस्य कर्तव्यत्वे सति परिक्रयनियममात्रविधानादतो विधिलाघवाद्यजमान एव परिक्रये कर्तेत्याह—**किंचेति**। एवंच न्यायसामान्याद्भृतिरूपपरिक्रयवद्देवतोद्देशेन द्रव्यत्यागे आत्रेयहिरण्यदानादौ च यजमानस्यैव कर्तृत्वं सूत्रेच परिक्रयशब्द उपलक्षणमित्याशयेनाह—**तस्मादिति**। अत्र दानं स्वत्वत्यागमात्रमित्यर्थः। **ननु** दानमात्रस्य याजमानत्वे यदुक्तमिष्टकोपधातुरविद्वद्ब्राह्मणस्य वरदानकर्तृत्वं तन्न स्यादित्यत आह—**यत्रेति। वचनमिति**। 'गौर्वै वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान्वरोऽतिवरोऽन्य'इत्यापस्तम्बाचार्योक्तो वरशब्दार्थो द्रष्टव्यः। स्वयमातृण्णोपधातुरविद्वद्ब्राह्मणस्यर्त्विक्त्वाभावादनड्वान्होत्रा देय इत्यादिकमुदाहरणं बोध्यम्। सूत्रार्थस्तु—परिक्रयः स्वामिकर्म साङ्गस्य कर्मणः स्वाम्यर्थत्वात्परिक्रयस्य स्वामिकर्तृकत्वाभावेऽङ्गानां तत्कर्तृकत्वानुपपत्तेरिति ॥

वपनादिसंस्काराणां याजमानताधिकरणम् ॥ २ ॥

**संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ [याजमानास्तु तत्प्रधानत्वात्कर्मवत् ॥ ४ ॥ व्यपदेशाच्च ॥ ५ ॥ गुणत्वेन तस्य निर्देशः ॥ ६ ॥ चोदनां प्रति भावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥]**

संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथवा ॥ अध्वर्योस्तत्र शक्तत्वात्तद्वेदोक्तेश्च तस्य ते ॥ ४ ॥
संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः ॥ क्रीणात्यतः क्रिया तेषां संस्क्रिया यजमानगा ॥ ५ ॥

पुरुषसंस्काराः केशश्मश्रुवपनादयः किमाध्वर्यवा उत याजमाना एवेति समाख्यानादाध्वर्यवत्वे प्राप्ते ब्रूमः । संस्काराः संस्कृतस्य कार्ययोग्यतामाधातुं क्रियन्ते न कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते स्वयमेव योग्यत्वात् स तस्य कार्यंप्रति गुणभावेन परिक्रीणीते तेन गुणतयैव परिक्रीतानां कर्तॄणां प्राप्तेर्यथाप्राप्तानामेव च समाख्यया व्यवस्थानाद्यत्रैव पुरुषाणां गुणभावस्तत्रैव समाख्यानियमः । संस्कारास्तु याजमानाः वचनादृत्विजामपि भवन्ति हिरण्यमालिन ऋत्विज इतिवत् ॥

तपसो याजमानताधिकरणम् ॥ ३ ॥

**तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥ [वाक्यशेषश्च तद्वत् ॥ १० ॥ वचनादितरेषां स्यात् ॥ ११ ॥]**

नाश्नाति त्र्यहमित्येतत्तपः कस्य तयोर्द्वयोः ॥ दुःखत्वाद्वेदोक्तसंस्कारादध्वर्योर्युज्यते तपः ॥ ६ ॥
फलान्तरायपापस्य नाशकत्वेन संस्कृतिः ॥ लिङ्गात्तपः स्वामिगामि संस्कारान्तरवत्ततः ॥ ७ ॥

अस्ति ज्योतिष्टोमे तपः कायशोषणं कर्म त्र्यहं नाश्नातीत्यादि तदाध्वर्यवमुत याजमानमिति समाख्यानादाध्वर्यवं दुःखात्मकत्वेन च कर्तृप्रतिकूलत्वान्नासौ संस्कार इति मन्यते । दुःखात्मकत्वा-

---

**संस्कारस्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ समाख्यानादिति** । परिक्रयबलात्प्राप्तानामृत्विजामिह समाख्यया नियमसंभवादिति भावः । एवंच पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिः । यद्यपि परिक्रयादृत्विजः प्राप्नुवन्ति तथापि वपनादिसंस्कारानुष्ठानसिध्यर्थं न परिक्रयः संस्काराणां योग्यताजननार्थत्वात् । नहि परस्यातिशयजननार्थं तदुपादानं, किंतु पदार्थानुष्ठानमात्रार्थं स्वस्य कार्ये प्रत्ययोग्यत्वे पदार्थानां स्वकर्तव्यत्वाभावेन स्वकर्तव्यपदार्थानुष्ठानार्थपरिक्रयस्यैवाप्रसक्तेः स्वस्मिन्नेव योग्यताधानस्यापेक्षितत्वाद्योग्यतासंजननार्था वपनादयः स्वस्यैव न ऋत्विजामित्याह—**संस्कारा इति । ननु** संस्काराणां स्वामिगतयोग्यताधायकत्वेऽपि ऋत्विक्षु कृतानामेव तेषां स्वामिनि योग्यताधायकत्वं समाख्याबलादस्त्वित्यत आह—**स तस्येति** । सः स्वामी । तस्य स्वस्येत्यर्थः । गुणभूतकर्तॄणां परिक्रयः स च यत्र स्वामिनो गुणभावस्तत्रैव भवति । ततश्च स्वामिप्रधानकपदार्थानुष्ठानाय परिक्रयाभावान्न परिक्रीतेषु कृतानां स्वामियोग्यताधायकत्वमिति तत्र परिक्रीतानामप्राप्तेर्न समाख्या व्यवस्थापिकेत्यर्थः । **ननु** हिरण्यमालित्वादिवत् ऋत्विजां वपनादयः किं न स्युरित्यत आह—**वचनादिति** । नह्यत्र साक्षाद्वचनमस्ति येनर्त्विजां भवेयुः, किंतु संस्कारमात्रं श्रुतं, तन्मात्रश्रुतौ च प्रधानकर्तुर्यजमानस्यैवाभ्यर्हितत्वात् संस्कारा युक्ता नाङ्गकर्तुरध्वर्य्वादेः । समाख्या च न प्रापिका किंतु व्यवस्थापिकेति वचनसमाख्ययोर्वैषम्यमिति भावः । सूत्रार्थस्तु—संस्काराः कर्मवत्तत्तद्वेदसमाख्यया व्यवतिष्ठेरन् तेषां कर्तृपुरुषसामर्थ्यजनने उपयोगादिति ॥

**तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥** पूर्वापेक्षया विशेषाशङ्कया प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**दुःखात्मकत्वेनेति** । ततश्च दुःखात्मकतपःकरणाय परिक्रयणोपपत्तेर्युक्ता समाख्यया व्यवस्थेत्यर्थः । यत एवास्य दुःखात्मकत्वमतएव दुःखफलकमधर्मं क्षपयितुमस्य सामर्थ्यमस्ति अधर्मस्य दुःखरूपफलनाश्यत्वादेवंच यो ज्योतिष्टोममनुतिष्ठति तस्य नियमेनास्मिन्वा जन्मनि जन्मान्तरे वा विहिताकरणनिषिद्धसेवनकृताधर्मसंभवात् तस्य च क्रतुफलविपरीतफलोत्पादकत्वेन क्रतुफलप्रतिबन्धकत्वात्प्रकरणेन क्रत्वर्थतयावगतस्य तपसोऽध्वराकाङ्क्षायामधर्मनिवर्तकत्वसामर्थ्यलक्षणलिङ्गेन 'यदा वै पुरुषे न किंचनान्तर्भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवती'त्यादिवाक्यशेषानुगुण्यात्पापनिवृत्तिरेव द्वारत्वेन कल्प्यते इति दर्पणादेर्मालिन्यनिवर्तकभस्मोद्वर्तनादिवत्तत्संस्कारत्वसंभवाद्याजमानत्वमेवेति सिद्धान्तमाह—**दुःखात्मकत्वादिति** ।

---

१ नाश्नीयादिति.

दस्य दुःखफलं कार्यविरोधिनमधर्मं क्षपयितुं योग्यतास्तीति क्रतुफलप्रतिबन्धकपापक्षपणेनैवास्य क्रत्वर्थत्वं लिङ्गप्रकरणाभ्यामवगम्यते। यजमाने च फले नोत्पत्तव्यम्। अतोऽस्यापि फलिसंस्कारत्वाद्याजमानत्वं वचनादृत्विजामपि स्याद्यथर्त्विज उपवसन्तीति ॥

लोहितोष्णीषतादीनां सर्वर्त्विग्धर्मताधिकरणम् ॥ ४ ॥

## गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

**हिरण्यमालितायास्तु संस्कारा वचनान्मताः ॥ ऋत्विजां ते यथाख्यानं कर्तव्या निखिलैरुत ॥ ८ ॥**
**आद्य आख्यावशान्नैवं सर्वसंनिधिपाठतः ॥ प्रतिमुख्यं गुणावृत्तेः कर्तव्या निखिलैरपि ॥ ९ ॥**

ये च संस्कारा वचनादृत्विजां जाता हिरण्यमालित्वादयः किं ते समाख्यया तैस्तत्पुरुषैः कार्या उत सर्वैर्ऋत्विग्भिरिति समाख्यया तैस्तत्पुरुषैरिति प्राप्ते ब्रूमः। यत्र पुरुषस्य गुणभावस्तत्र केनचिदेकेन तत्सिद्धेः कः कुर्यादित्यपेक्षितो नियमः समाख्यया क्रियते, संस्काराणां तु यावत्संस्कार्यमावृत्त्यवगमात्तद्विरुद्धमनपेक्षितं च नियमं न शक्नोति समाख्याकर्तुमिति सर्वविषयता ॥

वृष्टिकामनाया याजमानताधिकरणम् ॥ ५ ॥

## तथा कामोऽर्थसंयोगात् ॥ १३ ॥ [व्यपदेशादितरेषां स्यात् ॥ १४ ॥]

**वृष्टिकामी सदो नीचैर्मिनुयादिति कामना ॥ अध्वर्योः स्वामिनो वाद्यो वाक्यान्मातुस्तदुच्यते ॥ १० ॥**
**परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ॥ प्रतीतातो वाक्यबाधे तपोवत्स्वामिनोऽस्तु तत् ॥ ११ ॥**

ज्योतिष्टोमे सदोमाने गुणकामश्रुतयः 'यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुया'दिति स किमाध्वर्यवः यदि कामयेताध्वर्युरिति, उत याजमानः यदि कामयेत यजमान इति। तत्र मिनुयादित्यध्वर्योर्वचनात्तत्सामानाधिकरण्यादाध्वर्यवे च प्रवचनेऽध्वर्योः समाख्ययाधिकृतत्वात्स[२] एव कामयतिना निर्दिश्यत इति तस्यैवेदं फलम्। नैवम्। मिनुयादिति परस्मैपदश्रुत्याध्वर्युव्यापारः परार्थः

---

**वचनादिति।** ऋत्विगुपवासश्च कर्मकर्तृत्वयोग्यताधायकः। यद्यपि कर्तृत्वं संस्कारैर्विनापि संभवति तथापि वचनबलादिह तथात्वमङ्गीकार्यमिति भावः। सूत्रार्थस्तु—तपश्च याजमानं फलोत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन फलसिद्ध्यर्थत्वाद्यथा लोके स्वल्पेनापि प्रायश्चित्तेन महतो दुरितस्य निवृत्तिरिहापि तथा स्वल्पेनापि तपसा महतोऽपि दुरितस्य निवृत्तिसंभवादिति ॥

**गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥** इदं सूत्रं पूर्वाधिकरणगुणसूत्रत्वेन व्याख्यायाधिकरणान्तरत्वेनापि व्याख्यातं भाष्ये तत्राधिकरणान्तरं दर्शयति—**य इति। समाख्ययेति।** हिरण्यमालिन इत्यविशेषेण श्रुतावपि यजुर्वेदे समाम्नानादाध्वर्यवसमाख्ययाध्वर्योरेवायं संस्कारस्तथा सामवेदे समाम्नातं 'लोहितोष्णीषत्वमौद्गात्रसमाख्यया उद्गातुः संस्कार' इत्यवगमात् तत्तत्समाख्यातपुरुषैरेव संस्काराः कार्या इत्यर्थः। एवंचास्तु तर्ह्यत्र समाख्यया व्यवस्थेति प्रत्यवस्थानात्सङ्गतिः। समाख्यया वचनसंकोचायोगाद्वचनात्सर्वेषामेवायं संस्कार इत्याशयेनाह—**यत्रेति। केनचिदिति।** अतएव द्वादशे 'परार्थान्येको यजमानगुण' इति सूत्रकारो वक्ष्यतीति भावः। सूत्रार्थस्तु—संस्काराणां ऋत्विगपेक्षया गुणत्वात्तद्वेदसमाख्यया न व्यवस्था स्यादिति ॥

**तथा कामोऽर्थसंयोगात् ॥ १३ ॥ नीचैरिति।** सदोनामकमण्डप उदगायतस्तत्र दक्षिणत आरभ्योदगपवर्गाष्ठ मध्यमासु स्थूणास्वौदुम्बरी यजमानसंमिता इतरा औदुम्बरीसंमिताः तासां पश्चात्पुरस्ताच्च याः स्थूणास्ताः पर्यन्तस्थूणास्तास्तु नाभिदघ्न इति नित्ये प्रमाणम्। वृष्टिकामस्य त्वौदुम्बरीमपि नीचैःकृत्वा सदो मातव्यमित्यर्थः। तदुक्तं धूर्तस्वामिना 'औदुम्बर्यपि नीचेति'। **तत्रेति।** माने अध्वर्योः समाख्यया कर्तृत्वात्तत्सामानाधिकरण्यात्कामनायामपि स एव कर्तेत्यर्थः। किंच कामयेतेत्युक्ते क इत्यपेक्षायां वेदस्याध्वर्यवसमाख्यातत्वात्समाख्योपस्थितोऽध्वर्युरेव संबध्यत इत्याह—**आध्वर्यवे चेति।** एवंचात्र समाख्यायाः वचनानुगुणत्वान्न बाध इति प्रत्यवस्थानात्सङ्गतिः। **परार्थ इति।** इतरथा 'डुमिञ्प्रक्षेपणे'इतिधातोर्ञित्वात्कर्तृगामिनि क्रियाफले आत्मनेपदप्रसङ्गादिति भावः। **नन्वेवं** यत्र कर्तृगामिनि क्रियाफले आत्मनेपदप्रसक्तिर्नास्ति 'यदि कामयेत वर्षुकः पर्जन्यः स्यादि'ति, 'नीचा हस्तेन निमृज्यादि'त्यादौ तत्राध्वर्यवत्वं स्यादि

---

१ तत्पुरुषैः. २ समाख्याधिकृत.

श्रूयते तया श्रुत्या विरोधाद्वाक्यगम्यं तत्सामानाधिकरण्यं कामयतेर्बाध्यते । किंचान्यो गुणो नित्यतया विहितः नाभिदघ्नाः पर्यन्ता इत्यादिः स क्रत्वर्थत्वाद्यजमानस्य कर्तव्यः। तद्यदि काम्योपि गुणस्तस्यैव चोद्यते ततः स तेन नित्यस्य बाधमनुमन्यते । अध्वर्य्वर्थेन तु गुणेनात्मार्थस्य गुणस्य बाधं यजमानो नानुमन्येत । नहि तस्याध्वर्युस्थेन काम्यगुणज्ञानेनात्मस्थं ज्ञानं नित्यविषयं निवर्तते । तस्माद्यदि कामयेत यजमान इति संबन्धाद्याजमानं गुणफलं, यत्र तु पृथगुपदेशो यथाऽऽत्मने यजमानाय वा यं कामं कामयते तेमुद्गायेदिति तत्र पृथग्यजमानग्रहणाद्वाशब्दाच्चात्मेत्युद्गातैवोच्यते । वचनस्य चातिभाराभावात्तस्यैव फलम् ॥

आयुर्दाइत्यादिमन्त्राणां याजमानताधिकरणम् ॥ ६ ॥

## मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥ [विप्रयोगे च दर्शनात् ॥ १६ ॥]

आयुर्दा इति मन्त्रोक्तिः कल्याध्वर्योः समाख्यया ॥ तद्बाधे लिङ्गतः स्वामिगामिता कामवन्मता ॥ १२ ॥

इहाकरणभूताः प्रत्यगाशिषो मन्त्रा उदाहरणं 'आयुर्दा अग्नेऽस्यायुर्मे देही'त्यादयः ते किमध्वर्युणा प्रयोक्तव्या उत यजमानेनेति समाख्ययाध्वर्यवत्वे प्राप्ते ब्रूमः । कर्मफलमत्राशास्यं न ऋत्विक्फलं, अक्रत्वर्थत्वप्रसङ्गात्, यजमानाच्चार्त्विक्फलं दक्षिणालाभात्मकमाशास्यं नाग्नेः । कर्मफलं च यजमानगामित्वात्प्रत्यगात्मविषयत्वेन प्रार्थ्येत इति लिङ्गात्समाख्यां बाधित्वा यजमान एव प्रयुञ्जीत ॥

द्व्याम्नातस्योभयप्रयोज्यताधिकरणम् ॥ ७ ॥

## द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा कृतार्थतः ॥ एकः काण्डद्वये पाठादध्वर्युस्वामिनावुभौ ॥ १३ ॥

दर्शपूर्णमासयोः केचिन्मन्त्राः सामान्यरूपेणाध्वर्यवे पुनश्च विशेषरूपेण याजमाने काण्डे समाम्नाताः 'वाजस्य मा प्रसवेने'त्यादयः, ते किं येनकेनचित्प्रयोक्तव्याः उत यजमानेनैवाध्वर्युणैव वा-

---

त्यरुचेराह—**किंचेति** । **ननु** काम्येन नित्यबाधात्परकीयेणापि तेन यजमानः स्वीयनित्यबाधमनुमन्यतामत आह—**नहीति** । परकीयकाम्यगुणेन यजमानस्य प्रयोगे प्रसङ्गादुपकाराभावाद्यजमानस्य नित्यगुणोऽवश्यं प्रयोज्य इति न तत्राध्वर्युकाम्यगुणप्रयुक्त्यवकाश इति भावः । आत्मने इत्यनेन यजमाननिर्देशमाशङ्क्याह—**पृथग्यजमानेति** । **नन्वत्रापि** प्रसङ्गसिद्ध्यभावतौल्यात्कथं परकीयकाम्यगुणप्रयुक्तिरित्यत आह—**वचनस्येति** । वचनबलादत्र प्रयोगविधिः प्रसङ्गसिद्धिमनुमन्यत इति कल्प्यत इति भावः । अधिकारचिन्तापीयं काम्यगुणशेषत्वपर्यवसितेत्यध्यायसङ्गतिर्बोध्या । सूत्रार्थस्तु—कामोपि तथा याजमान एव अर्थेन क्रतुफलेन यजमानस्य नित्यसंयोगात्तदर्थे नित्यगुणस्य प्रयोज्यत्वे तत्र परकीयकाम्यगुणानवकाशादिति ॥

**मन्त्राश्चाकर्मकरणास्तद्वत्** ॥ १५ ॥ ऋत्विक्कर्तृकक्रियाकरणभूतानामार्त्विजत्वात् यजमानकर्तृकक्रियाकरणभूतानां याजमानत्वाच्चात्र करणमन्त्राणां विषयत्वासंभवादाह—**अकरणेति** । अकरणानामपि न सर्वेषां विषयत्वं फलाशासनरहितेषु सिद्धान्ताप्रवृत्तेरित्याशयेनाह—**प्रत्यगाशिष इति** । अस्मच्छब्दोत्तमपुरुषस्य वा योगात्प्रत्यगात्मसंबन्धिफलाशासनपरा इत्यर्थः । **समाख्ययेति** । सूक्तवाकप्रकाश्यानामायुरादीनामिव नात्रायुरादीनां फलत्वे किंचित्प्रमाणमस्ति । सूक्तवाकवत्करणमन्त्रत्वाभावात् । तस्मात्फलप्रकाशकत्वाभावान्न याजमानत्वमिति भावः । एवंच फलार्थगुणकामवैषम्येण प्रत्यवस्थानात्सङ्गतिर्बोध्या । **कर्मेति** । आयुरादीनां फलत्वाभावेऽपि आयुरादिशब्दैर्लक्षणया कर्मफलमेव प्रकाशनीयं तत्प्रकाशनोत्साहजननेन दृष्टार्थत्वलाभादिति भावः । **ननु** लक्षणायां समाख्यानुगुण्यादृत्विक्फलमेव लक्ष्यतामित्यत आह—**नर्त्विगिति** । ऋत्विक्फलप्रकाशनस्य यजमानसंबन्धिनि क्रतावुपकारकत्वाभावादिति भावः । तस्याप्यृत्विगुत्साहद्वारा कथंचिदुपकारकत्वं संभाव्याह—**यजमानाच्चेति** । **ननु** तर्हि यजमानफलमेव ऋत्विजा प्रार्थ्यतामित्याशङ्क्य लिङ्गविरोधान्नैवमित्याशयेनाह—**कर्मफलं चेति** । सूत्रे तद्वत् कामवद्याजमाना इत्यर्थः ॥

**द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात्** ॥ १७ ॥ समाख्याबाधापवादात्सङ्गतिः । **केचिदिति** । केचिन्मन्त्राः सामान्यरूपेणाध्वर्यवत्वेन समाख्याते काण्डे विशेषरूपेण याजमानत्वेन समाख्याते काण्डे च समाम्नाता इत्यर्थः । **इत्यादय इति** । आदिशब्देन 'पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामी'त्यादीनामाज्यग्रहणादिमन्त्राणां संग्रहः ।

---

१ नानुमन्यते. २ कामयेदेनमुद्गातोद्गायेदिति.

ऽथवोभाभ्यामपीति संशयः। तत्र मन्त्रैकत्वादेकेनैव सिद्धेर्यः कश्चिद्ब्रूयाद्विशेषसमाख्याबलीयस्त्वाद्वा यजमान एवाथवार्थस्य स्रुग्व्यूहनादेराध्वर्यवत्वान्मन्त्रोऽपि तेनैव प्रयोक्तव्य इति प्राप्ते ब्रूमः। सत्यपि हि मन्त्रैकत्वे पाठद्वयं प्रयोगवचनेन गृहीतं कर्तारमपेक्षते नच मन्त्रस्वरूपमेव प्रकरणिना गृह्यते, किंतु पाठविशिष्टमेव, तादृशस्यैव प्रकरणे विपरिवृत्तेः, अपेक्षितश्च मन्त्राणां प्रकाशनोपायः। नह्यप्रकाशिताः स्वार्थमभिदधति, तत्र पाठस्य विपरिवृत्तेस्तदतिक्रमे कारणं नास्तीति। अतएव प्रयोगकाले मन्त्राणां पाठसिद्धिः। अन्यथाहि स्मृतिस्थैरर्थप्रकाशनसंभवान्नैकान्तेनोच्चारणं सिध्येत्। अतो यत्र पाठद्वयं तत्र समाख्याद्वयेन कर्तृद्वयं प्राप्नुवद्भिन्नविषयत्वेनाविरोधात्समुच्चीयते॥

अभिज्ञस्यैव वाचयितव्यताधिकरणम्॥ ८॥

## ज्ञाते च वाचनं नह्यविद्वान्विहितोऽस्ति॥ १८॥

**वाचयेत्स्वामिनं ज्ञाज्ञौ वाचनीयौ ज्ञ एव वा॥ अविशेषादुभौ ज्ञस्य स्वामित्वाद्वाचयेदमुम्॥ १४॥**

वाजपेये 'क्लृप्तीर्यजमानं वाचयती'ति श्रुतं तत्र किं ज्ञश्चाज्ञश्च द्वावपि वाचयितव्यौ उत ज्ञ एवाथवाऽज्ञएवेति याजमानमन्त्रप्रसङ्गाच्चिन्त्यते। तत्र 'अविशेषादुभौ यद्वा स्वयमेव वदेद्बुधः॥ अज्ञस्तु वाच्यते नैवं नह्यज्ञो विद्यते क्रतौ॥ अधिकारो हि विदुषां नान्येषामिति निश्चयः॥ ब्रूहीति स्मारणाज्ज्ञस्य संभविष्यति वाचनम्॥'

द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम्॥ ९॥

## याजमाने समाख्यानात्कर्माणि याजमानानि स्युः॥ १९॥ [अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम्॥ २०॥]

**वत्सं चोपसृजेत्तद्वदुखां चाधिश्रयेदिति॥ द्वादशद्वंद्वकर्मैतत्स्वामिनो वेतरस्य वा॥ १५॥**

**आद्यः पाठात्स्वामिकाण्डे तादर्थ्येन परिक्रयात्॥ महाकाण्डोक्तितोऽन्त्योऽस्तु द्वन्द्वतैवात्र कीर्त्यते॥ १६॥**

दर्शपूर्णमासयोर्वत्समुपावसृजत्युखामधिश्रयति व्रीहीनवहन्तीत्यादिभिः प्रत्येकं कर्माणि सामा-

---

**एकेनैवेति**। एकत्र पाठः स्वरूपज्ञानार्थोऽन्यत्र विनियोगार्थ इत्येवमुभयत्र पाठ उपपन्न इति भावः। **विशेषेति**। स्रुग्व्यूहनादेरनुष्ठेयस्यैकत्वात्तदादाय समाख्याद्वयस्यापि समानविषयत्वमस्तीति भावः। गृह्णामीति वाजस्यमेति च लिङ्गविरोधाद्विशेषसमाख्याबाधमभिप्रेत्याह—**अथवेति**। स्वरूपज्ञानविनियोगयोरुभयोरप्येकत्र पाठेनैव सिद्धे पाठान्तरवैयर्थ्यं स्यादित्याशयेनाह—**सत्यपीति**। **ननु** मन्त्रस्वरूपस्यैव प्रयोगवचनेन ग्रहणमङ्गत्वान्नतु पाठस्यानङ्गत्वादित्यत आह—**नच मन्त्रेति**। विपरिवृत्तेः स्वरूपज्ञानार्थतयान्यथासिद्धिमाशङ्क्याह—**अपेक्षित इति**। **ननु** संस्कारादिनापि प्रकाशनं संभवतीत्यत आह—**तत्रेति**। **अतएवेति**। पाठविशिष्टस्यैव प्रयोगवचनेन ग्रहणादित्यर्थः। **नन्व**प्रकाशनार्थतया प्रयोगकाले पाठसिद्धिरस्त्वित्यत आह—**अन्यथेति**। नचैवं यस्य मन्त्रस्य प्रतीकग्रहणेन विनियोगः नतु प्रकरणे पाठस्तस्य प्रयोगकाले पाठो न स्यात्तस्य प्रकरणे पाठाभावेन स्वरूपमात्रस्यैव प्रयोगवचनग्राह्यत्वादिति वाच्यम्। तत्रापि कृत्स्नमन्त्रस्य ज्ञानार्थं मन्त्राम्नानस्थलस्यावश्यंपर्यालोच्यतया मन्त्रस्य प्रयोगवचनेन ग्रहणदशायां पाठस्य बुद्धिविपरिवृत्तिनियमे सत्यपेक्षितपाठविशिष्टस्यैव मन्त्रस्य ग्रहणादिति भावः। **भिन्नेति**। अनुष्ठेयस्य स्रुग्व्यूहनादेरेकत्वेऽप्यध्वर्योः मन्त्रोच्चारणमनुष्ठानसिद्ध्यर्थं यजमानस्य त्वप्रमादार्थं प्रत्यवेक्षणमित्यस्ति भिन्नविषयत्वमिति भावः॥

**ज्ञाते च वाचनं नह्यविद्वान्विहितोऽस्ति॥ १८॥ क्लृप्तीरिति**। 'आयुर्यज्ञेन कल्पता'मिति क्लृप्त्यर्थकशब्दयुक्तान्मन्त्रानित्यर्थः। ज्ञ इति मन्त्रतदर्थाभिज्ञ इत्यर्थः। समाख्यायाः पूर्वैः सह विरोधाविरोधविचारप्रस्तावासङ्गतिमाशङ्क्याह—**याजमानेति**। **तत्रेति**। ज्ञपक्षे ब्रूहीति स्मारणं वाचनमज्ञपक्षे च खण्डशः पाठनम्। नच सकृदुच्चरितस्य नानार्थत्वं दोषः। उभयोरपि वचनानुकूलव्यापारत्वेनैव बोधने तदभावात्तस्मादुभयोरधिकार इति भावः। ज्ञपक्षे वाचनस्यादृष्टार्थत्वप्रसङ्गात्र ज्ञस्य वाच्यमित्यभिप्रेत्याह—**यद्वेति**। **ननु** वाचनबलादत्राविदुषोऽप्यधिकारः कल्प्यत इत्यत आह—**ब्रूहीति**। यथा प्रोक्षणीरासादयेत्यादिप्रैषः ज्ञंप्रत्येव स्मारणार्थतयोपयुज्यते एवं वाचनमपि। एवंच नादृष्टार्थत्वदोषोऽपीति भावः। ब्रूहीत्युक्त्या तन्मात्रेणैव स्मरणोपपत्त्या तदर्थं याज्ञिकैः क्रियमाणं कृत्स्नमन्त्रोच्चारणं नावश्यकमिति सूचितम्। नच क्लृप्तीरिति द्वितीयया कृत्स्नशः स्मारणव्याप्यत्वावगमात्कृत्स्नमन्त्रोच्चारणं विना कार्त्स्न्येन व्याप्यत्वाशक्तेस्तदावश्यकमिति वाच्यम्। ब्रूहीत्यनेनापि कृत्स्नमन्त्रगोचरसमूहालम्बनरूपस्मृतिसंभवात्तन्मात्रेणैव कृत्स्नमन्त्रस्मारणोपपत्तेरिति भावः॥

**याजमाने समाख्यानात्कर्माणि याजमानानि स्युः॥ १९॥** पूर्वत्र ज्ञनियमवदिह यजमाननियम इति

---

१ याजमानं स्युः.

न्यरूपेणाध्वर्यवे विहितानि पुनश्च याजमाने 'वत्सं चोपावसृजत्युखां चाधिश्रयती'त्याद्यनुकीर्त्य 'एतानि वै द्वादश द्वन्द्वानि दश यज्ञायुधानि दर्शपूर्णमासयोस्तानि संपाद्य यजेते'ति श्रुतम् । तदेतेषां व्याम्नातमश्ववदुभयकर्तृकत्वं न संभवति । एकेन कृतानामितरेण कर्तुमशक्यत्वादत एकः कुर्यादिति स्थिते कः कुर्यादिति विशेषसमाख्यानाद्यजमान इति प्राप्त उच्यते—'कर्माणि यत्र चोद्यन्ते तत्रैषां कर्त्रपेक्षिता ॥ आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवत्राण्यतः ॥' याजमाने तु द्वन्द्वतासंपादनमात्रं विहितानां निर्ज्ञातकर्तृकाणां विधीयते, द्वयोर्द्वयोर्मिथःप्रत्यासन्नत्वसंपादनमित्यर्थः । नतु कर्मणां विधिः । नचान्येन क्रियमाणानामन्येन द्वन्द्वत्वसंपादनं शक्यम् । ननु द्वन्द्वानि संपाद्य यजेतेति क्त्वाप्रत्ययेनात्मनेपदसमानकर्तृकत्वाद्द्वन्द्वतासंपादनम्, वचनादेव याजमानं तद्बलात्कर्मणामपि सएव कर्ता स्यात् । न । प्रयोजकत्वेनापि कर्तृत्वसंभवात् अतोऽध्वर्युणैव क्रियमाणानां द्वन्द्वतां यजमानोऽध्वर्युं स्मारयिष्यतीत्यदोषः ॥

होतुराध्वर्यवकरणानुष्ठातृत्वाधिकरणम् ॥ १० ॥

## विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥२१॥

**यो होताध्वर्युरेष स्यादित्याध्वर्यवमाचरन् ॥ हौत्रं कुर्यान्न वा त्यागहेत्वभावात्करोति तत् ॥ १७ ॥**

**होतैको युगपत्कर्मद्वयं कर्तुं नहि प्रभुः ॥ त्यजेच्चोदकतः प्राप्तं हौत्रं वाचनिकार्थकृत् ॥ १८ ॥**

ज्योतिष्टोमेऽग्नीषोमीये पशौ युगपदध्वर्युणा होत्रा च प्रयुक्तौ परिव्याणकरणक्रियमाणानुवादिनौ 'परिवीरसि' 'युवासुवासा' इति मन्त्रौ चोदकपरम्परया कुण्डपायिनामयनं सत्रं प्राप्तौ तत्र ऋत्विक्समासः समाम्नातो यो होता सोऽध्वर्युरिति । तत्रैको होता तौ प्रयोक्तुमशक्तः किं हौत्रं ब्रूयादुताध्वर्यवमिति संशयेऽनियमोऽथवा होतुः सतोऽध्वर्युत्वविधानादपरित्यक्तस्वधर्मो होता नाध्वर्युधर्मैः

प्रत्यवस्थानात्सङ्गतिः । **द्वादशेति** । यद्यपि वत्सं चोपावसृजत्युखां चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्त्यधिवयते कपालानि चोपदधाति पुरोडाशं चाधिश्रपयत्याज्यं च स्तम्भयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीश्च संनह्यति प्रोक्षणीश्चासादयत्याज्यं चेति चतुर्दशानां पदार्थानां कीर्तनात्सप्तैव द्वन्द्वानि, तथापि पूर्वानुवाके स्फ्यश्च कपालानि चेत्यादिना दशानां पदार्थानां कीर्तनात्तैः सह द्वादश द्वन्द्वानि बोध्यानि । उक्तंच कर्मान्ते बोधायनाचार्यैः 'स्फ्यश्च कपालानि चेति पञ्च वत्सं चोपावसृजत्युखां चाधिश्रयतीति सप्त तानि द्वादशे'ति । **ननु** तेषां पूर्वतराधिकरणन्यायेनोभयकर्तृकत्वादयं विचार एवानुपपन्न इत्यत आह—**एतेषामिति** । **विशेषेति** । याजमाने कर्मणामपि विधिं मन्यते ततश्च तत्र कर्मणां कर्त्राकाङ्क्षासंभवाद्विशेषसमाख्याबलाद्यजमान एव कर्तेत्यर्थः । **आध्वर्यव इति** । विधेयान्तराभावात्तत्रैव कर्मविधिर्याजमाने तु गुणार्थं श्रवणमिति भावः । **ननु** पदार्थसंपादनातिरिक्तं द्वन्द्वतासंपादनमेव न पश्यामो यस्य याजमाने विधिः स्यादित्यत आह—**द्वयोरिति** । द्वन्द्वतासंपादनस्य हि याजमाने समाम्नानाद्यजमानकर्तृकत्वं यद्यपि न्याय्यं तथापि अन्येन क्रियमाणानां पदार्थानामन्येन द्वन्द्वतासंपादनासंभवादङ्गगुणविरोधन्यायेन यजमानकर्तृकत्वबाधात्तदप्यध्वर्युकर्तृकमेवेत्याशयेनाह—**नचेति** । **ननु** वचनबलाद्द्वन्द्वतासंपादनस्य याजमानत्वं वाच्यम् । वचनस्य निरवकाशत्वादेवं च कर्मणामेवाध्वर्युकर्तृकत्वं समाख्याप्राप्तं बाध्यमिति शङ्कते—**नन्विति** । परिक्रयबलाद्वचनस्य प्रयोजककर्तृत्वपरत्वान्न निरवकाशत्वमिति परिहरति—**नेति** । कारयिष्यतीति स्मारणेनेति शेषः । एवंच वचनवद्याजमाने समाम्नानमपि प्रयोजकत्वेनोपपन्नमिति भावः ॥

**विप्रतिषेधे करणं समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् ॥ २१ ॥ चोदकेति** । ज्योतिष्टोमाद्द्वादशाहे ततो गवामयने ततः कुण्डपायिनामयन इत्येवं चोदकपरम्परयाग्नीषोमीयस्य पशोः कुण्डपायिनामयनप्राप्त्या तदङ्गमन्त्रावपि प्राप्तावित्यर्थः । ऋत्विक्समास एकस्यर्त्विजोऽनेकर्त्विक्कार्यसंबन्ध इति यावत् । **अशक्त इति** । परिव्याणसंकल्पप्रभृति वा तदुत्तररशनादानप्रभृति वा परिव्याणस्य क्रियमाणतावस्थापन्नत्वात्तत्प्रभृत्यापरिसमाप्तेः क्रियमाणानुवादिनः कालः करणमन्त्रस्य तु रशनादानानन्तरं यूपसमीपं गत्वा प्रयोग इति क्रियमाणानुवादिमध्यकालत्वं, तथा 'यूपाय परिवीयमाणायानुब्रूही'ति संप्रैषं दत्वा करणमन्त्रः प्रयोज्यस्तदानीं च क्रियमाणानुवाद्यप्युपस्थित इत्युभयोरेककालत्वात्क्रमेण च प्रयोगे यौगपद्यासंभवादशक्तिरिति भावः । परिधेः सतो यूपकार्यनियोजनविधानात्परिधिधर्माविरोधिनो यूपधर्मा भ-

१ आध्वर्यववाधतः. २ कारयिष्यतीत्य. ३ परिवीरसि. ४ मयनसत्रे प्राप्तौ. ५ होताध्वर्युधर्मैः. ६ पत्नी च.

संबन्द्धुमर्हति परिधिरिव स्वधर्माविरोधेन यूपधर्मैरिति, क्रियमाणानुवादिनमेव वदेत् । एवं प्राप्ते ब्रूमः—'प्रत्यक्षवचनात्प्राप्तिर्होतुराध्वर्यवेषु हि ॥ हौत्रेषु चोदकाद्वाक्यं चोदकाद्बलवत्तरम् ॥' यो होता सोऽध्वर्युरिति मुख्यत्वाच्छ्रुतिवृत्तो होता जघन्याध्वर्युलक्षितेषु कार्येषु प्रत्यक्षेण वाक्येन विधीयते । हौत्रेषु तु चोदकतः प्राप्तिरिति वाक्यबलादाध्वर्यवमेव वदेत् । परिधौ पशुं नियुञ्जीतेति नियोजनमात्रे परिधिर्वचनेन विधीयते न यूपधर्मेष्विति वैषम्यम् । यस्तु सत्रेषु होत्रादयो न सन्ति तदभावाच्च न हौत्रादिषु चोदकतः प्राप्तिरित्याह, तस्य हौत्रेण होतुश्चोदकात्समवाय इति भाष्यविरोधः । सत्रं हि कुण्डपायिनामयनम् । वक्ष्यति हि 'सत्रे चोपेयिचोदना'[1] दिति । किंचैवं यो होता सोऽध्वर्युरिति वचनेन किं विधीयते । नहि होतास्ति योऽध्वर्युकार्ये विधीयेत[2] । अथ हौत्रमाध्वर्यवं चैकः कर्ता कुर्यादित्येतावद्विधीयते तदोभयोरपि प्रत्यक्षवचनादिष्टत्वेन तुल्यत्वादाध्वर्यवस्य[3] बलीयस्त्वं न स्यादित्यधिकरणविरोधः । प्रत्यक्षविधानादिष्टमिति च निबन्धनग्रन्थतो विरुध्यत इत्यास्तां तावत् ॥

प्रोक्षण्यासादनादीनामनाध्वर्यवताधिकरणम् ॥ ११ ॥

## प्रैषेषु च पराधिकारात् ॥ २२ ॥

**प्रोक्षण्यासादनं कुर्यादध्वर्युरितरोऽथवा ॥ आख्ययाद्यः सादयेति प्रेषितोऽन्योऽस्तु लिङ्गतः ॥ १९ ॥**

प्रोक्षणीरासादयाग्नीदग्नीन्विहरेत्यादयः प्रैषाः प्रोक्षण्यासादनाग्निविहरणादयः प्रैषार्थाः किमध्वर्युणैकेन कर्तव्या उतान्यः प्रेषितुस्तदर्थानां कर्तेति संशये समाख्यानादुभयत्राध्वर्युः प्राप्तकालतायां च लोड्विष्यति न प्रैषे समाख्याबलादिति प्राप्ते ब्रूमः । मध्यमपुरुषस्याग्नीदिति च संबोधनस्य चेत-

---

वन्ति नतु सत्वक्त्वादिपरिधिधर्मविरोधिनस्तक्षणोच्छ्रयणनिखननादय इति द्वादशे वक्ष्यमाणमभिप्रेत्याह—**परिधिरिवेति**। वैपरीत्यमाशङ्क्य श्लोकं व्याचष्टे—**यो होतेति** । होत्रध्वर्युशब्दयोरुभयोर्वृत्तित्वत्तयोः सामानाधिकरण्याभावादन्यतरस्य कार्यलक्षणावश्यंभावे जघन्याध्वर्युशब्दस्यैव सा न्याय्येति अध्वर्युकार्ये प्रत्यक्षवचनात्प्राप्तिरित्यर्थः । **न यूपधर्मेष्विति**। तेतु कार्यापत्त्यातिदेशतः प्राप्ताः ततश्चोभयोरातिदेशिकत्वेसति प्रथमोपस्थिताः परिधिधर्मा एव ग्राह्या न यूपधर्मा इति वैषम्यमित्यर्थः । सत्रे वरणाभावेन तदुत्पाद्यहोत्रादीनामेवासत्वान्न होतुश्चोदकतः प्राप्तिरिति प्राभाकरमतमनूद्य निराचष्टे—**यस्त्विति । ननु** कुण्डपायिनामयनस्योभयतोऽतिरात्रत्वाभावान्न सत्रत्वमत आह—**सत्रं हीति । वक्ष्यतीति ।** अष्टमद्वितीयपादान्त्याधिकरणसिद्धान्ते सूत्रकार इति शेषः। एते पञ्चदशरात्रकुण्डपायिनामयने सत्रे एव नत्वहीनौ । ये काममिच्छन्ति त एनं पञ्चदशरात्रमुपेयुरिति भूतिकामा उपेयुरिति चोभयोरुपेयिचोदनाचोदितत्वादिति तत्सूत्रार्थः । ततश्चोभयतोऽतिरात्रत्वं न सत्रत्वप्रयोजकं किंतु आस्युपेतिचोदना(?)चोदितत्वमेवेति भावः । न केवलं भाष्यविरोधः वचनविरोधोऽपीत्याह—**किंचेति**। ननु वचनमिदं न होतुरध्वर्युकार्ये विधिपरं येन तद्विरोधः स्यात् किंतु होतृकार्याध्वर्युकार्ययोरेककर्तृकत्वविधिपरमित्याशङ्क्य तर्ह्यधिकरणविरोध इत्याह—**अथेति** । होत्रध्वर्युशब्दयोरुभयोरपि कार्यलक्षणाप्रसङ्गादयं पक्षो नोन्मिषतीति एतावच्छब्देन सूचयति । उभयोरेककर्तृकत्वविधौ वचनतात्पर्याङ्गीकारे आतिदेशिकहोतृकार्यादौपदेशिकाध्वर्युकार्यस्य प्राबल्यप्रतिपादनपरनिबन्धनग्रन्थविरोधोऽपीत्याह—**प्रत्यक्षेति** । वरणविधेर्दृष्टार्थत्वेन सार्थक्याद्धोत्रादीनां वरणोत्पाद्यत्वमेवासिद्धमित्याशयेनाह—**आस्तामिति** । सूत्रार्थस्तु—विरोधे होता करणमन्त्रं ब्रूयात् प्रत्यक्षवचनकृततत्समवाये आनुमानिकापेक्षया विशेषसद्भावात् । न चैतावता क्रियमाणानुवादिनः परित्यागः किंतु तमन्यो ब्रूयात् सोऽपि न सर्वः किंतु तेषामृत्विजां मध्ये यस्य मैत्रावरुणादेः प्राधान्यविशेषो होतृप्रत्यासत्तिलक्षणोऽस्ति स ब्रूयादिति ॥

**प्रैषेषु च पराधिकारात् ॥ २२ ॥** पूर्वत्र वचनबलादातिदेशिकस्य प्राकृतसमाख्यालब्धस्य कर्तुर्बाधेऽपीह वचनाभावान्न समाख्यालब्धकर्तृबाध इति प्रत्यवस्थानात्सङ्गतिः । प्रैषार्थलोट्बलात्समाख्याबाध इत्याशङ्क्याह—**प्राप्तेति ।** 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'ति प्रैषप्राप्तकालयोरुभयोरपि लोडर्थत्वस्मरणादिह समाख्यानुसारात्प्राप्तकालतार्थकत्वं स्वीक्रियत इत्यर्थः । मध्यमपुरुषश्च साधुत्वार्थः । यद्वा क्रियायामेव चेतनवदुपचारान्मध्यमपुरुष इति भावः । संभवत्यर्थसाधुत्वे शब्दसाधुत्वस्यान्याय्यत्वान्मुख्ये संभवत्युपचारायोगात्, केषुचित्प्रैषेषु अग्नीदित्यादिसंबोधनविभक्तिसामानाधिकरण्याच्च प्राप्तकालत्वार्थकत्वेऽपि पुरुषान्तरं प्रत्येव तवेदं कर्म कर्तुं प्राप्तः काल इत्येवमर्थस्य स्वीकार्यतया तदाप्यन्यकर्तृ-

---

१ चोपायच्चोदनात्. २ विधीयत्ते. ३ तुल्यबलत्वात्.

न्यान्तरविषयत्वात्तेऽनुपपत्तेः प्राप्तकालतापि पुरुषान्तरंप्रति वक्तव्या । तद्वरं प्रैष एवायं प्रैषसमाख्यानात्, सचात्मनि न संभवतीति लिङ्गेन समाख्यां बाधित्वान्यः प्रेषिताऽन्यश्च प्रैषार्थकर्ता ॥

प्रैषमन्त्राणामाध्वर्यवत्वाधिकरणम् ॥ १२ ॥

**अध्वर्युस्तु दर्शनात् ॥ २३ ॥ [गौणो वा कर्मसामान्यात् ॥ २४ ॥]**

**अग्नीत्प्रेष्येतुताध्वर्युरग्नीदस्त्वविरोधतः ॥ आख्याविरोधादध्वर्युः प्रैषद्वारार्थकृद्यतः ॥ २० ॥**

प्रेषितुरन्यः प्रैषार्थकर्तेति स्थितं स किमध्वर्युः प्रैषार्थकर्ता अग्नीच्च प्रेषिता उत विपरीतमिति संशयेऽर्थानां प्रधानत्वाद्भूयस्त्वाच्च न तत्राध्वर्युबाधो युक्तः । प्रैषस्य त्वेकत्वाद्गुणत्वाच्चाध्वर्युं बाधित्वाऽग्नीत्कर्ता भवत्विति प्राप्त उच्यते । अध्वर्युरेव प्रेषिता स्यात् । एवं हि तेनैव प्रयोजकेन[3] प्रैषार्था अपि कृता भवन्तीति न कचित्समाख्या बाधिता स्यात् । इतरथा प्रैषेत्यन्तबाधिता स्यात् । नचाबाधसंभवे तद्युक्तम् । अतोऽध्वर्युः प्रैषमग्नीत्प्रैषार्थान्कुर्यादिति ॥

करणमन्त्रेषु स्वामिफलस्याशासितव्यताधिकरणम् ॥ १३ ॥

**ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ [स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ लिङ्गदर्शनाच्च ॥ २७ ॥]**

**ममाग्न इति कस्यात्र फलं लिङ्गेन वक्तृगम् ॥ श्रुत्या स्वामिनि न क्रीते लिङ्गं तत्रोपचर्यताम् ॥ २१ ॥**

अकरणभूताः[4] प्रत्यगाशिषो मन्त्राः लिङ्गाद्याजमाना इत्युक्तं । ये तु करणमन्त्राः 'ममाग्ने वर्चो विहवेष्वस्त्वि'त्यादयः ते प्रत्यगाशिषोऽपि क्रियाकर्त्राध्वर्युणैव वक्तव्याः । नह्यन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति । नच मन्त्रवशेन प्रधानभूतक्रियायामध्वर्युबाधो युक्तः, तेन मन्त्रस्तावदाध्वर्यव एव तद्गतं च वर्चःप्रभृति सूक्तवाकगतायुरादिवत्फलमिति स्थिते किं तत्फलमध्वर्योरुत यजमा-

---

त्वमपरिहार्यमित्याह—**मध्यमेति** । एवंसति प्रैषार्थत्वमेव न्याय्यमित्याह—**तद्वरमिति** । **सचेति** । स्वात्मनि भेदकल्पनया कथंचित्प्रैषसमर्थनं तु क्लिष्टमिति भावः । सूत्रार्थस्तु—प्रैषेषु प्रैषार्थमन्यः कुर्यात्तेषां स्वभावतः परविषयत्वादिति ॥

**अध्वर्युस्तु दर्शनात् ॥ २३ ॥** सङ्गतिसूचनार्थमाह—**प्रेषितुरिति** । **किमिति** । येषु प्रेष्यपुरुषो न निर्दिष्टस्तद्विषयोयं विचारस्तन्निर्देशयुक्तेषु तु अग्नीदग्नीन्विहर, नेष्टः पत्नीमुदानय, प्रतिप्रस्थातः सवनीयान्निर्वपेत्यादिषु समाख्यया लिङ्गबाधासंभवेन तदर्थेषु तत्तत्पुरुषकर्तृकत्वावश्यंभावादिति ध्येयम् । अध्वर्योरुभयत्र कर्तृत्वासंभवादन्यतरत्र तद्बाधावश्यंभावमभिप्रेत्य पूर्वपक्षमाह—**अर्थानामिति** । यत्रैक एव प्रैषार्थस्तत्राङ्गगुणविरोधन्यायादध्वर्युबाधः । यत्र तद्बहुत्वं तत्र भूयोऽनुग्रहन्यायादपीत्यर्थः । भवेदेवमध्वर्योरुभयत्र कर्तृत्वं यदि न संभवेत् तत्तु साक्षात्परंपराभ्यां संभवतीत्याह—**अध्वर्युरेवेति** । सूत्रार्थस्तु—अध्वर्युः प्रैषार्थकर्ता स्यात् यदन्वञ्चं धारयेत् वज्रोऽध्वर्युं क्षिण्वीतेत्यध्वर्योर्हिंस्यत्वावगमेन तदन्यस्य स्फ्यधारयितृत्वदर्शनात्स्फ्यहस्तस्यव प्रैषकर्तृत्व दिति वज्रेऽध्वर्युः क्षास्वीतेति तैत्तिरीयपाठेपि शाखान्तरीयपाठानुसारात्कर्मणि कर्तृप्रयोगादध्वर्योर्हिंस्यत्वं बोध्यम् ॥

**ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥** नन्वेतेषामपि प्रत्यगाशीष्ट्वादायुर्दा अग्न इत्यादिमन्त्रवद्याजमानत्वाद्विचार एवायमनुपपन्न इत्यत आह—**अक॰णेति** । **नहीति** । तथाच तेषां करणत्वमेव न स्यादिति भावः । **नन्वेवं मन्त्र**साध्यक्रियापि यजमानेनैवानुष्ठीयतां एवंमति करणत्वं न व्याघानिष्यत इत्यत आह—**नचेति** । एवमपि मन्त्रप्रकाश्यवर्चःप्रभृतेः फलत्वाभावे विचारानुपपत्तितादवस्थ्यमाशङ्क्याह—**तद्गतं चेति** । क्रियां तत्संबन्धिनं वा प्रकाशयतो मन्त्रस्य करणत्वं भवतीति मन्त्रस्य करणत्वनिर्वाहार्थं तत्प्रकाश्यवर्चःप्रभृतेः फलत्वं, नचेन्धाना इत्यन्वाधानक्रियाप्रकाशकत्वात्तत्संबन्ध्यग्निप्रकाशकत्वाच्चास्य करणत्वमुपपद्यत इति वाच्यम् । कृत्स्नस्य मन्त्रस्य करणत्वान्यथानुपपत्त्या तत्प्रकाश्यवर्चःप्रभृतेरपि फलत्वावश्यंभावादन्यथा सूक्तवाकस्याप्यग्न्यादिदेवताप्रकाशकत्वमात्रेण करणत्वोपपत्ता तद्गतायुरादेः फलत्वं न स्यादिति

---

१ र्युस्तद्दर्शनात्. २ प्रधानभूतत्वात्. ३ प्रयोजकत्वेन. ४ अकारणभूताः. ५ भूतायां क्रियायां.

नस्येति। ममेति लिङ्गादध्वर्योरिति प्राप्ते प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्ग-फलानामपि यजमानगामित्वं युक्तमिति तद्विरुद्धं लिङ्गं नर्त्विग्गामित्वं बोधयितुमलमतो ममेति यजमानव्यतिरेकजनिता षष्ठी। मम यो यजमानस्तस्य वर्च इति यजमान एव वोपचारान्ममेति निर्दिश्यते, अतस्तस्यैव फलम्॥

करणमन्त्रेषु कर्मार्थफलस्यर्त्विग्धर्मताधिकरणम्॥ १४॥

**कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्स्यात्॥ २८॥**

**मा मा संतास्मित्येतत्कस्मिन्स्वामिनि पूर्ववत्॥ अध्वर्यावस्तु तत्तेन स्वामिकर्मोपयोगतः॥ २२॥**

यत्तु मा मा संताप्तमित्यसंतापनादिकं फलं कर्मानुष्ठानौपयिकं तद्यजमानस्यात्मीयकर्माविघातार्थ-मृत्विग्गामित्वेनैवेष्टमित्यात्मनेपदानुगुण्यादृत्विग्गामीति युक्तम्॥

भद्रमित्यस्योभयगामिताधिकरणम्॥ १५॥

**व्यपदेशाच्च॥ २९॥**

**भद्रं तन्नौ सहेत्येतत्कस्मिन्स्वामिनि युज्यते॥ द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः॥ २३॥**

यत्र व्यपदेशो भवति तन्नौ सहेति तत्रापि द्विवचनस्यात्यन्तानुपपत्तेर्ऋत्विग्गामित्वम्॥

द्रव्यसंस्कारस्याङ्गप्रधानार्थताधिकरणम्॥ १६॥

**द्रव्यसंस्काराः प्रकरणाविशेषात्सर्वकर्मणाम्॥ ३०॥ [निर्देशात्तु विकृतावपूर्व-स्यानधिकारः॥ ३१॥]**

**धर्माणां प्रकृतिस्थानां विकृतावतिदेशतः॥ प्राप्तिर्विशेषतो वाच्यो विशेषस्यानिरूपणात्॥ २४॥**
**प्रकृतौ कार्यकृद्धर्मा विकृतौ स्युर्न चेतरे॥ यूपावटास्तृतिः कार्यं न हि प्राकृतबर्हिषः॥ २५॥**

बर्हिर्धर्माणामङ्गप्रधानार्थत्वं पूर्वमुक्तमुत्तरविवक्षया प्राप्यते अथवा पूर्वपक्षसूत्रमिदं, यस्मात्प्रकृ-

---

भावः। **ममेति लिङ्गादिति**। नचाङ्गाश्रितगुणफलस्येवास्यापि न्यायसाम्याद्यजमानगामित्वं शङ्कनीयम्। वर्चःप्रभृतेः फलस्याध्वर्युगामित्वेऽपि मन्त्रस्य क्रत्वङ्गतया मन्त्रप्रयोगार्थमध्वर्युफलस्यापि यजमानेनावश्यानुमन्तव्यतया तद्वैष्म्यात्तन्मा-त्रेण च प्रधानवाक्यगतात्मनेपदमप्युपपन्नं। आत्मनेपदस्य स्वरसतो यजमानगामित्वप्रवणत्वात्तद्रूपश्रुतिविरोधाल्लिङ्गं बाध्यमि-त्याशयेनाह—**प्रधानेति**। यजमानव्यतिरेकेति व्यतिरेकशब्देन भेदवाचिना तत्प्रयुक्तसंबन्धलक्षणया यजमानसंबन्ध-प्रयुक्तेत्यर्थः। ममेत्यस्य प्रतिसंबन्धी यजमानो न वर्च इति यावत्। प्रयोजनमनुष्ठानसमये मन्त्रात्फलमृत्विग्गततया ज्ञातव्यं पूर्वपक्षे। सिद्धान्ते तु यजमानगततयेति। सूत्रार्थस्तु—करणमन्त्रेषु ऋत्विक्फलं प्रकाश्यं मन्त्राणां मुख्यार्थप्रकाशक-त्वादिति॥

**कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्स्यात्॥ २८॥** पूर्वन्यायाद्यजमानगामित्वमिति पूर्वपक्षमभिप्रेत्य सिद्धान्तमाह—**मामेति**। अग्नाविष्णू युवयोर्मध्यगमनेन मां मा संताप्तमित्यर्थः। **कर्मेति**। संतप्तेनाध्वर्युणा कर्मणः कर्तुमशक्यत्वादिति भावः॥

**व्यपदेशाच्च॥ २९॥** पूर्ववत्कर्मोपयुक्तत्वाभावादात्मनेपदानुगुण्यात्केवलयाजमानं फलम्। नचात्रात्मने यजमानाय वा यं कामं कामयत इतिवत्तन्नौ सहेत्युभयव्यपदेशादुभयगामित्वं शङ्कनीयम्। तत्र हि कर्मसंयोगात्फलत्वं क्लृप्तमिह तु मन्त्रप्रकाश्यत्वात्कल्प्यम्। कल्पनायां च लाघवादेकं प्रत्येव फलत्वकल्पना युक्तेति वैषम्यादिति पूर्वपक्षमभिप्रेत्य सिद्धान्त-माह—**यत्रेति**। तत्पूर्वमन्त्रप्रस्तुतं भद्रमित्यर्थः। **अत्यन्तेति**। ततश्च प्रामाणिकत्वाद्गौरवं न दोषायेति भावः॥

**द्रव्यसंस्काराः प्रकरणाविशेषात्सर्वकर्मणाम्॥ ३०॥ उत्तरेति**। केवलप्रधानार्थत्वे यूपावटस्तरणबर्हिषि कर्तव्यत्वाकर्तव्यत्वविचारायोगादिति भावः। आचार्योक्तसूत्रयोजनामाह—**अथवेति**। बर्हिषा यूपावटमवस्तृणातीति श्रुते यूपावटास्तरणबर्हिषि बर्हिर्धर्मो लवनादयः कर्तव्या न वेति विचार एव पूर्वपक्षसूत्रमिदं नतु तदर्थं प्राप्तिसूत्रमित्यर्थः। अतिदेशविषयेयं चिन्ता प्रसङ्गात्सङ्गतेत्याहुः। **ननु** प्रकरणाविशेषादिति सौत्रहेतोरन्वयान्नास्य पूर्वपक्षसूत्रत्वं संभवतीति शङ्कां निराकुर्वन्पूर्वपक्षमुपपादयति—**यस्मादिति**। प्रकृतावङ्गप्रधानार्थत्वमिह पूर्वपक्षहेतुः प्रकरणाविशेषादिति। हेतुश्च

---

१ फलभावनानामपि. २ प्रत्यर्थवत्त्वम्.

तावङ्गप्रधानार्था बर्हिर्धर्मास्तस्माद्विकृतावपि यूपावटस्तरणबर्हिषि कर्तव्या इति प्राप्ते सिद्धान्तसूत्रम् । तन्निर्देशात्तु विकृतावपूर्वस्यानधिकारः (इति) । प्रकृतौ यद्बर्हिःकार्यं तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति न स्वरूपतः । तेन प्राकृतकार्यसाधन एव धर्मा विकृतौ कर्तव्याः, नच यूपावटस्तरणं प्राकृतं बर्हिःकार्यं । अतो न तत्साधने बर्हिर्धर्माः ॥

पवित्रस्य परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥ १७ ॥

## विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥

यद्बर्हिस्तत्पवित्रार्थं न वाच्यस्तस्य संभवात् ॥ संस्कृतं स्तरणे क्षीणं पवित्रं त्वन्यतो भवेत् ॥ २६ ॥

इदानीं प्रकृतावपि नातीव सर्वार्थतेत्युच्यते । दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थं च यद्बर्हिस्तदपि धर्मवत्स्यादविशेषादिति प्राप्ते ब्रूमः । धर्मवतः कृत्स्नस्य बर्हिषो यथा लूनस्य संनद्धस्यासादितस्यास्तरणे विनियोगान्नान्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ॥

प्राकृतपुरोडाशादीनां निधानाधिकरणम् ॥ १८ ॥

## अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

पुरोडाशस्य शकलमैन्द्रवायवपात्रके ॥ अवदध्यात्पुरोडाशो नवोऽथ सवनीयकः ॥ २७ ॥
सिद्धस्य यजनार्थत्वान्नवं संपाद्य तत्क्रिया ॥ सवनीयेन तत्कार्यं संस्कार्यत्वाद्द्वितीयया ॥ २८ ॥

(ज्योतिष्टोमाधिकारे) पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधातीति [आमिक्षा मैत्रावरुणस्य धाना आश्विनस्य पात्रे इत्यादि] किं संनिहितात्सवनीयपुरोडाशादपनीय शकलः पात्रे निधातव्यः उत पुरोडाशान्तरमुत्पाद्य तच्छकलस्यावधानमिति विचारे पूर्ववद्यागार्थस्यावधाने विनियोगासंभवादन्योत्पादनम् । स्यादेवं यद्यन्यत्र विनियोगः स्यात्, यागार्थस्यैव तु शकलस्य संस्कारोयं द्वितीयानिर्देशात् । अतः प्रकृतैकदेशस्यायमपनयः । एवं पयस्यादिष्वपि । पयस्याद्यर्थं चेदमधिकरणं पुरोडाशशकलावधानविधेरेकदेशद्रव्यत्वेनाप्रयोजकत्वस्य सिद्धत्वात् ॥

---

प्रकृतावङ्गप्रधानार्थत्वेनान्वित इति नोक्तदोष इति भावः । **कार्यद्वारेणेति** । दशमाद्यन्यायेनेति भावः । सामान्यतो दृष्टस्य वैदिकार्थे प्रवृत्त्यभावात्प्रकृतौ साधारण्येऽपि नापूर्वाङ्गसाधारण्यमित्याशयेनोपसंहरति—**अत इति** । धर्माणां प्रकृतौ कार्यविशेषसाधनार्थत्वेन निर्देशादपूर्वस्याप्रकृतकार्यस्य यूपावटस्तरणबर्हिर्यूपाञ्जनार्थाज्यादेरनधिकारो धर्मसंबन्धाभाव इति द्वितीयसूत्रार्थः ॥

**विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥** प्रसङ्गं सूचयति—**इदानीमिति** । **विधृतीति** । 'समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति । अरत्निमात्रे विधृती' इति श्रुतं यद्विधृत्याद्यर्थं बर्हिरित्यर्थः । **अविशेषादिति** । बर्हिर्लुनातीत्यादिविधिषु स्तरणार्थत्वविशेषाश्रवणादिति भावः । धर्मविधिषु बर्हिःसामान्यश्रवणेऽपि त्रिधातु पञ्चधातु वा बर्हिर्लुनातीति यल्लूनं तस्य सर्वस्य त्रिधातु पञ्चधातु वा वेदिं स्तृणातीति स्तरणे विनियोगादर्थात्स्तरणार्थस्यैव धर्मविधिः पर्यवस्यतीत्याह—**धर्मवत इति** । ननु विधृत्यादेरपि बर्हिर्विनानुपपत्तेरत्रापि बलाद्विनियोगः स्वीकार्य इत्याशङ्क्य संस्कृतस्य परिभोजन्याख्यदर्भमुष्टिविशेषस्य सद्भावात्तत एव विधृत्याद्युपपत्तेर्न तत्र संस्कृतविनियोग इत्याह—**इति बलादिति**। सूत्रार्थस्तु—त्रिधातु श्रुतिविशेषादिति संस्कृतस्य स्तरणादन्यत्र विनियोगे विरोधे सति शेषे विधृत्यादिकार्येऽव्यक्तो धर्मरहितः परिभोजनीयः स्यादिति ॥

**अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥** ऐन्द्रवायवादिपात्रसंस्कारार्थतायामदृष्टार्थत्वं स्यात् प्रतिपत्तित्वे त्वाकीरणकरस्य देशादपनयादृष्टार्थत्वमित्यपनयशब्देन सूचयन्नुपसंहरति—**अत इति** । यद्ययमुपयोक्ष्यमाणसंस्कारः पूर्वपक्षे भवेत्तदा तस्याभ्यर्हितत्वाददृष्टार्थत्वमपि सोढव्यं स्यात् । नच तदस्ति । ऐन्द्रवायवादियागस्य जातत्वेन तदाप्युपयुक्तसंस्कारत्वादिति बोध्यम् । **पयस्येति** । पयस्यां मैत्रावरुणपात्रे धाना आश्विनपात्रे इत्यर्थः । **एकदेशेति** । शकलशब्दस्यैकदेशवाचकत्वात्कस्यैकदेश इत्यपेक्षायां संनिहितेनैकदेशिनान्वयान्न द्रव्यान्तरप्रयोजकत्वमित्येकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगादिति चतुर्थन्यायादेव ऐन्द्रवायवादिपात्रसंस्कारे विनियोगेऽपि द्रव्यान्तरप्रयोजकत्वाभावस्य सिद्धत्वादित्यर्थः । पयस्यादिशब्दश्च शकलशब्दवदेकदेशशब्दो न भवतीति वैषम्यमिति भावः ॥

---

१ कलस्यावधानमिति.

काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ॥ १९ ॥

**विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥३४॥ [मुख्यार्थो वाङ्गस्याचोदितत्वात् ॥३५॥]**

काम्या उपांशु यष्टव्याः किं तदङ्गप्रधानयोः ॥ प्रधान एव वा नात्र विशेषोक्तिरतो द्वयोः ॥ २९ ॥

मुख्यानामेव काम्यत्वात्तेष्वेव परिचोदना ॥ अङ्गानामतथाभावादुपांशुत्वं प्रधानगम् ॥ ३० ॥

यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या इति श्रुतमुपांशुत्वं किमङ्गप्रधानार्थमुत प्रधानार्थमिति संशयः । तत्र—'मन्त्रोच्चारणसद्भावाद्द्वयोरङ्गप्रधानयोः ॥ तद्विशेष उपांशुत्वं बर्हिस्तद्धर्मवद्द्वयोः ॥ उच्यते बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः ॥ उपांशुना च वाक्येन काम्यानामेव चोद्यते ॥' कामप्रयोजनानि प्रधानान्येव काम्यशब्देनोच्यन्त इति तेषामेवोपांशुत्वम् । ननु यथा प्रवर्ग्यशब्दसंयुक्तस्योच्चैष्ट्वस्यावभृथशब्दसंयुक्तानामप्यपामङ्गप्रधानार्थतेष्यते तथोपांशुत्वमपि स्यात् विषम उपन्यासः । तत्र ह्युच्चैः प्रवर्ग्येण प्रचरन्ति अप्स्ववभृथेन चरन्तीति तृतीयासंयोगात्प्रवर्ग्यावभृथकरणिकायां भावनायामुच्चैष्ट्वमापश्च विधीयन्ते तदन्तर्गतानि चाङ्गानि युक्तं यदुच्चैष्ट्वमापश्चाङ्गं लभन्ते । अत्रतु काम्या उपांशुकर्तव्या इति कर्तव्यत्वनिर्देशात्प्रधानक्रियायामेवोपांशुत्वं विहितं न तत्करणिकायां फलक्रियायामिति विशेषः ॥

श्येनाङ्गानां नवनीताज्यताधिकरणम् ॥ २० ॥

**संनिधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥ [आधानेऽपि तथेति चेत् ॥ ३७ ॥ नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥]**

नवनीतं श्येन आज्यं मुख्येऽङ्गे वास्तु मुख्यगम् ॥ विधेयमाज्यमप्राप्तं दृतिस्थनवनीतकम् ॥ ३१ ॥

मुख्यः सोमविकारोऽङ्गे चोदकप्राप्तमाज्यकम् ॥ अनूद्य दृतिसंस्थानं नवनीतगुणो विधिः ॥ ३२ ॥

श्येने श्रूयते दृतिनवनीतमाज्यं[3] भवतीति । तत्किं प्रधानार्थमुताङ्गार्थमिति संशयः । तत्राज्यस्याप्रकृतत्वान्न तदनुवादेन दृतिनवतीतत्वं विधीयते किंतु दृतिनवनीतत्वविशिष्टमाज्यं विहितं प्रकरणा-

---

**विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ यज्ञेति** । यथाथर्ववेदविहितमभिचारादिकं गोप्यमेवं काम्या इष्टयोऽतीव गोप्या इति यज्ञेष्वथर्वणतुल्यास्तत एवोपांशु कर्तव्या इत्यर्थः । **मन्त्रेति** । उपांशुत्वं हि न साक्षात्कर्मान्वयि किंतु मन्त्रोच्चारणधर्मत्वात्तद्द्वारा मन्त्रोच्चारणं चाङ्गप्रधानयोरस्तीत्यविशेषात् अङ्गप्रधानार्थं यथाङ्गानामपि हविरासादनसद्भावाद्बर्हिस्तद्धर्माणामङ्गसाधारण्यं तद्वदित्यर्थः । एवंच यथा पूर्वत्र द्वितीयाश्रुतिबलात् शकलसंस्कारकत्वमेवमुपांशुत्वस्य मन्त्रोच्चारणद्वारकत्वसामर्थ्यबलादङ्गप्रधानार्थत्वमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या । **नन्वङ्गै**र्विना कामानिष्पत्तेरङ्गानामपि कामप्रयोजनकत्वाद्वाक्यं तत्साधारणमेवेत्यत आह—**कामप्रयोजनानीति** । अङ्गानां क्रतूपकारमात्रफलकत्वात्कामप्रयोजनकत्वमसिद्धमिति भावः । अङ्गानां काम्यत्वाभावेन तत्साधारण्याभावोपपादनादिष्टिशब्दोऽङ्गसाधारण इति गम्यते । नचैवमुद्देश्यानामिष्टीनां काम्यत्वविशेषणे वाक्यभेदप्रसङ्गादङ्गसाधारण्यं स्यादिति वाच्यम् । ता इत्येकेन शब्देन काम्यत्वविशिष्टोद्देशे वाक्यभेदाभावात् यथाचैतत्तथा नवमे द्रव्यसंख्याहेतुसमुदयमित्यत्र वक्ष्यामः । **तथेति** । इतरथा प्रधानसंयोगाविशेषात्त्रापि केवलप्रधानार्थत्वमेव स्यादिति भावः । भावनान्वयद्वारा पदार्थान्वयित्वाद्धर्माणां यत्र यद्भावना श्रुता तत्र तद्भावनान्वयः । प्रवर्ग्येणेत्यादौ च तृतीयाश्रवणात्प्रवर्ग्यकरणकभावना श्रूयते । सा चाङ्गप्रधानव्याप्तेति तदन्वितस्योच्चैस्त्वादेरपि युक्तमङ्गप्रधानार्थत्वम् । प्रकृते तु तव्यप्रत्ययस्य कर्मार्थत्वादिष्टिकर्मकभावनाप्रतीतेस्तस्याश्चाङ्गप्रधानव्याप्त्यभावान्नाङ्गसाधारण्यमिति वैषम्यमुपपादयति—**तत्रहीति** ॥

**संनिधानविशेषादसंभवे तदङ्गानाम् ॥ ३६ ॥** पूर्वत्र वाक्यादिवेह प्रकरणात्प्रधानार्थत्वमिति प्रत्यवस्थानात्सङ्गतिः । **तत्किमिति** । आज्यप्रकृतित्वेन विधीयमानं दृतिगतं प्रधानार्थमुताङ्गार्थमित्यर्थः । **तत्रेति** । प्रकरणात्प्रधानसंबन्धः प्रतीयते । प्रधाने चोपदेशेनातिदेशेन वाज्यं नास्तीत्याज्यानुवादेन दृतेर्नवनीतस्य वा विध्यसंभवाद्गौरवमप्यङ्गीकृत्य

---

१ कामशब्देन. २ क्तानामपामङ्गं. ३ नीताज्यं.

प्रधानार्थं सोमप्रत्याम्नानेनेति प्राप्तेऽभिधीयते । विशिष्टविधिगौरवादुपदेशतोऽप्रकृतस्याप्याज्यस्यातिदेशतः प्राप्तिसंभवात् तदनुवादेन दृतिनवनीतत्वं गुणो विधीयते यदाज्यं तद्दृतौ नवनीतं प्रकृत्यर्थस्य तत्स्यात् अङ्गेषु चाज्यप्राप्तिरिति तत्रैव दृतिनवनीतत्वम् ॥

सर्वश्येनाङ्गानां नवनीताज्याधिकरणम् ॥ २१ ॥

**तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥ [सर्वेषां वाऽविशेषात् ॥ ४० ॥ न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥ ]**

सुत्याकालगताङ्गेषु गुणः सर्वेषु वोदितः ॥ आद्यो वैशेषिकाङ्गत्वाद्वाक्यात्सर्वाङ्गसंगतिः ॥ ३३ ॥

स्थितमङ्गेषु दृतिनवनीतमिति किं सुत्याकालेष्वेवाङ्गेषु स्यादुत सर्वेष्विति संशये सामान्यतो दृष्टात्सुत्याकालानां पशुसाहित्यं हि सहपशूनालभत इति श्येनाङ्गत्वेन विहितं सुत्याकालं दृष्टमग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशामिक्षाभ्यामनुग्रहवचनेन पशुशून्यत्वावगमात्तद्वद्दृतिनवनीतमपि श्येनवैशेषिकाङ्गत्वात्सुत्याकालमेव भवितुमर्हति । मैवम् । नहि वाक्येन सर्वार्थं गम्यमानमनुमानेन व्यावर्तयितुं शक्यम् । अप्रयोजकश्च हेतुः । नहि पशुसाहित्यस्यैतदर्थत्वात्सुत्याकालता, किं तर्हि न्यायान्तरात्साहित्यमवश्यं कस्यचिदेकस्य स्थाने कर्तव्यम् । तत्प्रधानप्रत्यासत्तिलिप्सया सवनीयस्थाने कृतं नत्विहैव किंचित्कारणमस्तीति वाक्याविशेषात्सर्वार्थता ॥

सवनीयानां मांसमयताधिकरणम् ॥ २२ ॥

**मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ [भक्तिरसंनिधावन्याय्येति चेत् ॥ ४३ ॥ स्यात्प्रकृतिलिङ्गाद्वैराजवत् ॥ ४४ ॥]**

शाक्त्यायने पुरोडाशास्तरसा इति मांसता ॥ सर्वत्र सवनीये वा सर्वत्र नवनीतवत् ॥ ३४ ॥

तरसाः सवनीयाः स्युरिति तत्संनिधिः श्रुतः ॥ पुरोडाशस्य मांसत्वं तेष्वेवातो नियम्यते ॥ ३५ ॥

शाक्त्यानामयनंनाम सत्रं षट्त्रिंशदाब्दिकं तत्रैतच्छ्रूयते वाक्यं 'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति स यान्मृगान्हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ती'ति, किमिदं तरसं सर्वपुरोडाशानामुत सवनीयानामिति संशयः । तत्र—'नह्युद्देश्यः पुरोडाशः सवनीयेन शक्यते ॥ विशेष्टुं तेन सर्वार्थं तरसं नवनीतवत् ॥' सवनीयपदं त्ववयुत्यानुवादः । सृष्टिशब्दवद्वा लिङ्गसमवा-

---

विशिष्टविधिरेष्टव्य इति प्रकरणसनाथेन वाक्येन विधीयमानमाज्यं चोदकप्राप्तसोमबाधेन प्रधान एवावतिष्ठत इत्यर्थः । अङ्गसंबन्धेऽपि प्रकरणोपपत्तेर्विशिष्टविधिगौरवं न युक्तमित्याशयेनाह—**विशिष्टेति । दृताविति ।** चर्मभस्त्रिकायामित्यर्थः । यद्यपि नवनीतस्याज्यकार्ये तत्पुरुषोऽपि संभवति तथापि तथासत्याज्यशब्दस्याज्यकार्ये लक्षणा स्यात् साच जघन्यापि न युक्तेति बहुव्रीहिराश्रितः । सूत्रार्थस्तु—प्रधानेऽसंभवेऽङ्गानां स्याच्चोदकत आज्यसंनिधिलक्षणविशेषान्नवनीतविध्युपपत्तिरिति ॥

**तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥** प्रसङ्गं सूचयति—**स्थितमिति ।** कथं पशुसाहित्यस्य सुत्याकालत्वं सुत्याकाल इत्यश्रवणादत आह—**अग्नीषोमीयेति ।** अग्नीषोमीयस्य स्थानेऽग्नीषोमीयः पुरोडाशः अनुबन्ध्यायाः स्थाने मैत्रावरुणीयपयस्येति चाग्नीषोमीयानुबन्ध्यास्थानयोः पशुशून्यत्वावगमात्परिशेषात्सुत्याकालत्वं साहित्यस्येत्यर्थः । **तद्वदिति ।** लोहितोष्णीषत्वादेरपि प्रधानधर्मतया सुत्याकालत्वान्न व्यभिचारः । तदुक्तं कपर्दिस्वामिना 'प्रधानधर्म एवायमि'त्यादि । **दृतीति ।** दृतिनवनीतस्य प्रधानार्थत्वाभावेन तत्प्रत्यासत्तेरनपेक्षणादिति भावः । सूत्रार्थस्तु—सुत्याकालाङ्ग एवेदं स्यात् पशुसाहित्यस्य श्येनाङ्गत्वेन विहितस्य सुत्याकालत्वरूपलिङ्गदर्शनादिति ॥

**मांसं च सवनीयानां चोदनाविशेषात् ॥ ४२ ॥ शाक्त्यानामिति ।** शक्तिनामकस्य ऋषेरपत्यसंबन्धिपूर्वैस्तदनुष्ठितत्वादित्यर्थः । अतएवोक्तमापस्तंबाचार्यैः 'एतेन ह वै शाक्त्यो गौरवीतिस्तरसपुरोडाश आभावीते'ति । शाक्त्यशब्दस्य शक्तिनामक ऋष्यपत्यार्थकत्वं च 'अप्यसंकृतिपूतिमाषाणां आर्षेयः शाक्त्यसांकृत्यगौरवीतेति गुरुवीतवत् संकृतिवत् शक्तिवदि'त्यापस्तम्बीयप्रवरपाठाद्बोध्यम् । सवनीयशब्दस्य विशेष्यसापेक्षत्वात् । निरपेक्षं पुरोडाशपदमेवोद्देश्यसमर्पकमित्याशयेन पूर्वपक्षमाह—**नहीति ।** नवनीतवदित्यनेनैव संगतिरपि सूचिता । अवयुत्यानुवादत्वे पुरोडाशपदसामानाधिकरण्यासामञ्जस्यादाह—**सृष्टीति ।** प्रतिप्रस्थाता सवनीयान्निर्वपतीत्यादिप्रयोगात्सवनीयशब्दोऽपि निरपेक्षएव । ततश्च मुख्यस्य

---

१ त्याम्नायेनेति, २ संभवान्न तदनु.

येन सवनीयासवनीयेषु वर्तेत इति प्राप्तेऽभिधीयते—'पुरोडाशं समुद्दिश्य तरसं चोद्यते यदि ॥ ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥ उद्दिश्यसवनीयांस्तु मांसमत्र विधीयते ॥ पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥ पुरोडाशपदे तद्धि जघन्यं लक्षणां व्रजेत् ॥ प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥ सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत् ॥ दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥ अव्यवायाच्च तेनैव युक्ता तरससङ्गतिः ॥ तद्व्यवेतः पुरोडाश इति तेन न सङ्गतिः ॥' सवनीयपदं खलु संनिहितं तदतीत्य पदान्तरमेति, नहि तरसं नवनीतविधर्मतया सवनीयहविर्विकरोति तेत उक्तः शेषस्तद्विनियोगस्य विधौ मानं श्रुत्याद्यत्र विरोधे[2] परमानं पूर्वस्मात्स्याद्दुर्बलमत्रास्ति विरोधो नात्रेत्येवं शेषकथोक्ता परिपूर्णा ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां तृतीयाध्यायस्याष्टमः पादः ॥ ८ ॥

---

तस्यैवोद्देश्यसमर्पकत्वं नतु जघन्यस्य पुरोडाशशब्दस्येत्याशयेनाह—**पुरोडाशमिति । प्रकृतौ चेति ।** प्रकृतौ पुरोडाशानलंकुर्विति प्रैषे पुरोडाशशब्दस्य पुरोडाशापुरोडाशसमुदाये लक्षणा दृष्टेत्यर्थः । अलंकुरु अभिघारयेत्यर्थः । नच संबन्धानुपपत्तेरेव लक्षणाबीजत्वात्प्रकृतौ दर्शनमकिंचित्करमिति वाच्यम् । नहि प्रकृतौ दर्शनं लक्षणाबीजत्वेनोच्यते किंतु जघन्यत्वं पुरोडाशपदस्य लक्षणायां विनिगमकत्वेनोच्यत इति न दोष इति भावः । एवंच भाष्यपाठे पुरोडाशपदस्याभावेऽपि प्रकृतौ दर्शनावलम्बनेन सिद्धान्तोपपत्तेरिति ध्येयम् । आनन्तर्यादपि तस्यैवोद्देश्यकत्वमित्याह—**अव्यवायादिति ।** नवनीतविधर्मतया तद्वैलक्षण्येनेत्यर्थः । नवनीते उद्देश्यसमर्पकस्याज्यपदस्य सर्वसाधारण्यमिह तु सवनीयपदस्य न तथेति वैलक्षण्यमिति भावः । अध्यायार्थं संगृह्णाति—**शेष इति ।** तद्विनियोगस्य तस्य शेषस्य यो विनियोगः शेषशेषिभावः तस्य विधौ प्रकार इत्यर्थः । सूत्रार्थस्तु श्रौततरसशब्दव्याख्यानं मांसमिति तद्दानादीनां सवनीयानामेव नतु सवनीयासवनीयपुरोडाशानां सन्निहितान्वयरूपविशेषलाभादिति ॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकासंज्ञायां तृतीयाध्यायस्याष्टमः पादः ॥ ८ ॥**

## इति तृतीयाध्यायः समाप्तः ॥

---

१ ततः शेषो हेतुस्तद्विनियोगे मानं श्रुत्याद्यत्र. २ निरोधे.

# चतुर्थाध्यायः ॥ ४ ॥

## चतुर्थाध्याये प्रथमः पादः ।

क्रत्वर्थप्रतिज्ञाधिकरणम् ॥ १ ॥

### अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

शेषशेषित्वसिद्धौ किं प्रयोज्यं किं प्रयोजकम् ॥ इत्यपेक्षोदयाद्वक्ति चतुर्थं तत्प्रयुक्तये ॥ १ ॥
चिन्ता न कार्या कार्या वा क्रत्वर्थपुरुषार्थयोः ॥ अफलत्वान्न कर्तव्या प्रयुक्तौ क्रियतामियम् ॥ २ ॥
क्वचिदेतद्विचारेण क्वचित्फलविधेर्वशात् ॥ क्वचित्साक्षादिहाध्याये प्रयुक्तिर्बहुधोच्यते ॥ ३ ॥

**प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते ॥ शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता[1] ॥ यद्यपि न सर्वः शेषी शेषस्य प्रयोजकः, तुषोपवापादेः कपालादिप्रयोजकत्वाभावात्, तथापि शेषिणएव तावच्छेषाणां[2] प्रयोक्तार इति भवति शेषलक्षणस्य प्रयुक्तिलक्षणंप्रति हेतुतेति ततः परसारम्भः । ननु विधिरेव प्रयोजकः, सर्वश्च विधिः स्वविषयस्य प्रयोजक एव, अप्रयोजकस्य विधित्वानुपपत्तेः । तदेकरसत्वाद्विधेः । अथ प्रधानविधिरेव प्रयोजको नाङ्गविधयः अन्यतः सिद्धत्वात् । तुल्यमिदमामिक्षाविधेर्वाजिनविधेश्च द्वयोरप्यङ्गविधित्वादतः किमत्र चिन्त्यते । उच्यते । सत्यं, विधिरेव प्रयोजकः**

---

**अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥** हेतुहेतुमद्भावसंगत्या शेषलक्षणानन्तरं प्रयुक्तिलक्षणमारभ्यत इति प्रतिजानीते—**प्रसिद्ध इति** । पूर्वस्मिन्नध्याये पदार्थानां शेषशेषिभावे सिद्धे सत्ययं पदार्थोऽनेनानुष्ठाप्यतेऽयमनेनेत्येवमस्मिन्नध्यायेऽनुष्ठापनापरपर्यायप्रयुक्तिरुच्यत इत्यर्थः । प्रसिद्धे शेषशेषित्वे इत्यनेन विवक्षितस्य हेतुहेतुमद्भावस्य शङ्कयानुपपत्तिं मत्वा समर्थयते—**शेषिणैवेति** । तामेव शङ्कां प्रदर्शयन् तदुत्तरत्वेनोत्तरार्धं व्याचष्टे—**यद्यपीत्यादिना । तुषेति** । पुरोडाशकपालेन तुषानुपवपतीति तृतीयया पुरोडाशकपालादेस्तुषोपवापादौ शेषत्वेऽपि तुषोपवापादेः कपालादिप्रयोजकत्वाभावादित्यर्थः । तथाच सत्यपि शेषशेषिभावे प्रयुक्त्यभावान्न शेषशेषिभावस्य प्रयुक्तिहेतुत्वमिति भावः । **तथापीति** । शेषशेषिभावाभावे प्रयुक्त्यभावाच्छेषशेषिभावः प्रयुक्तिहेतुरेव । पुरोडाशकपालादेस्तुषोपवापादिप्रयुक्त्यभावस्तु विनियोगात्पूर्वमेव परप्रयुक्तत्वनिश्चयकृतोऽन्यथासिद्ध इति न तावता शेषशेषिभावस्य प्रयुक्तिहेतुत्वाभाव इति भावः । **ननु** किं दध्यानयनमामिक्षयैव प्रयुज्यते उत वाजिनेनापीत्येवं हि प्रयुक्तिविचारः कर्तव्यः । नचैवं संभवति दध्यानयनस्य 'तप्ते पयसि दध्यानयती'ति विधिप्रयुक्ततया आमिक्षादिप्रयुक्तत्वायोगात्, अतः प्रयुक्तिनिरूपणं न घटत इत्याक्षिपति—**नन्विति । तदेकेति** । प्रवर्तनात्मकतया विधेः प्रयुक्त्यैकरसत्वादित्यर्थः । **ननु** न सर्वो विधिः स्वविषयस्य प्रवर्तकः अङ्गानुष्ठानस्य प्रधानोपकारसिद्ध्यर्थतया स्वविषयोपकारसिद्ध्यर्थं प्रधानविधित एवाङ्गानुष्ठानसिद्ध्या अङ्गविधीनां स्वविषयप्रयुक्तावुदासीनत्वात्प्रवर्तनात्मकविधित्वं च तेषां प्रयुक्तिफलोपधानाभावेऽपि तच्छक्तिसद्भावमात्रेणोपपद्यते । एवंच दध्यानयनमामिक्षाविधिप्रयुक्तमामिक्षार्थत्वान्न वाजिनविधिप्रयुक्तं वाजिनार्थत्वाभावादित्येवं प्रयुक्तिनिरूपणं घटत इति शङ्कते—**अथेति** । तर्हि यागापेक्षयामिक्षावाजिनयोरुभयोरङ्गत्वेन तद्विध्योः स्वस्वविषयप्रयोजकत्वस्यैवाभावात्स्वविषयोपकारसिद्ध्यर्थं दध्यानयनप्रयुक्तिकथा दूरापेतेत्याक्षेप्ता परिहरति—**तुल्यमिति** । यद्यपि सा वैश्वदेव्यामिक्षेत्यामिक्षाविधेः द्रव्यदेवताविशिष्टयागविधित्वात्प्रधानविधित्वं तथापि विशेषणभूतामिक्षांशेन तस्य प्रधानविधित्वाभावादङ्गविधित्वोक्तिः । यद्वा विशिष्टविध्याक्षिप्तो यो विशेषणभूतामिक्षामात्रगोचरो विधिस्तदभिप्रायक आमिक्षाविधिशब्दो बोध्यः । सर्वस्य विधेः स्वविषयप्रयोजकत्वेऽपि न प्रयुक्तिविचारानुपपत्तिरित्याह—**सत्यमिति** । कस्मै नेत्यनन्तरं इति विचार्यत इति शेषः । उक्तमेवो-

---

१ हेतुना. २ तच्छेषाणां.

**प्रयोजनाय तु कस्मै किमनुष्ठापयति कस्मै न, किं दध्यानयनविधिरामिक्षार्थतयैवानयनमनुष्ठापयति उत वाजिनार्थतयापि । एवं कपालादिष्वपि द्रष्टव्यम् । यदर्थं चानुष्ठापयति तत्प्रयोजकमित्युच्यते । यत्तु साध्यमपि साधनमन्यतः सिद्धमुपजीवति नतु स्वयमनुष्ठापयति तदप्रयोजकमुच्यते । यद्वा विधिः क्रियायामेव साक्षात्प्रयोजको विशेषणेषु त्वर्थात् । तद्यत्र परप्रयुक्तमेव विशेषणत्वेनाङ्गीक्रियते, यथैकहायनी क्रयप्रयुक्ता पदग्रहणस्य, पुरोडाशकपालं च पुरोडाशप्रयुक्तं तुषोपवापस्य तत्र तुषोपवापादि, विधेः परप्रयुक्तविशेषणोपजीवित्वात्तद्विषया प्रयुक्तिशक्तिर्लुप्यते । कपालेषु श्रपयत्येकहायन्या क्रीणातीत्यादयस्तु विधयः स्वतन्त्रकपालैकहायन्यादिग्राहित्वाद्भवन्ति प्रयोजकाः । तत्र किं कस्य प्रयोजकं, किं कस्य नेति युक्ता चिन्ता । सर्वस्मिंश्चाध्याये क्रत्वर्थपुरुषार्थादिविचारद्वारेण**

---

दाहरणविशेषनिष्ठतया विवृणोति—**किं दध्यानयनेति । एवमिति ।** विशिष्टविध्याक्षिप्तः कपालमात्रगोचरो यो विधिः स किं पुरोडाशार्थमेव कपालं प्रयुङ्क्ते उत तुषोपवापार्थमपीत्येवं विचारस्तत्रापि द्रष्टव्य इत्यर्थः । **नन्वयं** न प्रयोजकत्वाप्रयोजकत्वविचार इत्याशङ्क्यामिक्षावाजिनयोः साधनानुष्ठानोद्देश्यत्वानुद्देश्यत्वे एव प्रयोजकत्वाप्रयोजकत्वे इत्याह—**यदर्थमिति ।** स्वयं स्वार्थमित्यर्थः । यदर्थं विधिः स्वविषयं नानुष्ठापयतीति यावत् । **नन्वङ्ग**विधीनां स्वस्वविषयानुष्ठापकत्वमेवासिद्धं प्रधानविधिनैव तद्विषयानुष्ठानसिद्धेः । अतएव जंजभ्यमानमन्त्रवचनादिषु भाष्यकारेणोक्तं पुरुषप्रयत्नोऽनुवाद इति । उक्तंच न्यायरत्नमालायाम् 'एवमङ्गीभूतेषु तेषु विषयविशिष्टप्रधानविधिनैव प्रयोगसिद्धेस्तस्मिन्नंशेऽङ्गविधिरनुवादोऽभिधीयते' इति । तस्माद्दध्यानयनविधेः स्वविषयानुष्ठापकत्वस्यैवाभावात्किमानयनविधिरामिक्षार्थतयानयनमनुष्ठापयत्युत वाजिनार्थतयेत्यादिविचारोऽनुपपन्न इत्यस्वरसादाह—**यद्वेति । क्रियायामेवेति ।** तस्या एव साक्षाद्विधिगोचरत्वादिति भावः । **अर्थादिति ।** अर्थापत्त्येत्यर्थः । विशेषणप्रयुक्त्यभावे तद्विशिष्टक्रियानिष्पत्तेरिति भावः । **एकहायनीति ।** सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीति किमीयपदस्य ग्रहणमित्यपेक्षायामेकहायनीपदस्येत्येवं क्रयप्रयुक्तैकहायनी तद्विशेषणत्वेनाङ्गीक्रियत इत्यर्थः । अत्र ग्रहणस्यैकहायनीप्रयोजकत्वस्यैवाभावादेकहायनीनयनप्रयोजकत्वं दूरापेतमित्याशयेनैकहायन्या विशेषणत्वोक्तिः । **लुप्यते इति ।** परप्रयुक्तोपजीवनेनैव पदग्रहणस्य तुषोपवापस्य च सिद्ध्या तत्रानुपपत्त्यभावेनार्थापत्तिक्षयादिति भावः । विशेषणत्वेन श्रूयमाणस्यापि कपालादेस्तुषोपवापादिविध्यप्रयोज्यत्वोक्त्या विशेषणत्वेनाश्रूयमाणस्यार्थिकस्य साधनस्य दध्यानयनादेर्वाजिनाप्रयोज्यत्वं कैमुत्यादेव सिद्ध्यतीत्युक्तप्रायं बोध्यम् । **इत्यादयस्तु विधय इति । ननु** तेषामप्यङ्गविधित्वात्कथं प्रयोजकत्वम् । नच प्रधानयागापेक्षया तेषामङ्गविधित्वेऽपि कपालैकहायन्यपेक्षया प्रधानविधित्वात्प्रयोजकत्वं संभवतीति वाच्यम् । तथापि प्रधानविध्यपेक्षयाङ्गविधित्वेसति साङ्गप्रधानविधिनैवाङ्गानुष्ठानसिद्ध्या तेषां स्वविषयक्रियाप्रयोजकत्वस्यैवाभावेन तद्विशेषणप्रयोजकत्वस्यासंभावितत्वादितिचेन्मैवम् । अङ्गानां प्रधानविधिप्रयुक्तत्वे सत्यप्यङ्गाङ्गानां संनिकृष्टतयाङ्गविधिप्रयुक्तत्वस्यैव न्याय्यत्वात् । अन्यथा 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूया'दिति वाङ्नियमस्य दीक्षणीयापूर्वप्रयुक्तत्वं न स्यात् सोमापूर्वप्रयुक्तत्वमेव स्यादिति भावः । यद्वा प्रधानविधेरेवाङ्गेषु अङ्गाङ्गेषु च प्रयोजकत्वेऽपि प्रधानविधिः कपालादिकं प्रयुञ्जानः श्रपणाद्यर्थमेव प्रयुङ्क्ते न तुषोपवापाद्यर्थमपि । तुषोपवापादौ तु परप्रयुक्तस्यैव कपालादेर्विशेषणत्वमनुमन्यत इत्यभिप्रायेण श्रपणादिविधीनां प्रयोजकत्वं तुषोपवापादिविधीनामप्रयोजकत्वं चोक्तमिति न कोपि दोषः । **नन्वे**कनिष्पत्तेः सर्वं समं स्यादित्यारभ्य कतिपयाधिकरणेष्वेव प्रयुक्तिर्विचार्यते, अन्यत्र तु सर्वत्र क्रत्वर्थत्वपुरुषार्थत्वयज्ञाङ्गत्वापूर्वसद्भावनियमविधिव्युत्पादनफलविध्यर्थवादत्वफलवदफलत्वकालार्थाङ्गप्रधानत्वसमप्रधानत्वादीन्येव चिन्त्यन्ते, तत्कथं प्रयुक्तेरध्यायार्थत्वमित्यत आह—**सर्वस्मिन्निति ।** क्रत्वर्थत्वे क्रतुप्रयुक्तत्वं, पुरुषार्थत्वे तत्प्रयुक्तत्वं, एकत्वादेर्यज्ञाङ्गत्वे तत्प्रयुक्तत्वं, स्विष्टकृदादौ त्यागांशेऽपूर्वसद्भावे तत्प्रयुक्तत्वं, नियमविधौ सति दर्शादेर्नियमेन समदेशादिप्रयोजकत्वमपापश्लोकश्रवणादीनां फलविधित्वे पर्णमयत्वादीनां फलप्रयुक्तत्वमर्थवादत्वे क्रतुप्रयुक्तत्वं विश्वजिदादीनामफलत्वे प्रयुक्तिरेव दुर्लभा फलवत्त्वे तत्प्रयुक्तत्वं दर्शपूर्णमासाभ्यामिष्ट्वेत्यस्य कालार्थत्वे सोमस्य न दर्शपूर्णमासप्रयुक्तत्वं सौत्रामण्यादेरग्न्यङ्गत्वे तत्प्रयुक्तत्वमनुमत्यादीनां विदेवनादीनां च समप्राधान्ये सर्वेषां फलमेव प्रयोजकं विदेवनादीनामङ्गत्वे क्रतुप्रयुक्तत्वमित्यादिरूपेण सर्वस्मिन्नध्याये प्रयुक्तेरेव चिन्तनाद्युक्तं तस्या अध्यायार्थत्वमित्यर्थः । **ननु** विषयसंशयपूर्वोत्तरपक्षप्रयोजनैः कस्यचिदर्थस्यानिरूपणादिदं सूत्रमनर्थकं स्यात् । नच तदभावेऽपि प्रतिज्ञासूत्रत्वात्सार्थक्यम् । सूत्रे प्रयुक्तिगन्धस्याप्यभावेन प्रतिज्ञासूत्रत्वानुपपत्तेरित्यत आह—**तदेतदिति ।** क्रत्वर्थत्वे क्रतुप्रयुक्तत्वं पुरुषार्थत्वे पुरुषप्रयुक्तत्वमिति क्रत्वर्थपुरुषार्थशब्दस्य प्रयुक्तिपरत्वाद्युक्तं प्रतिज्ञासूत्रत्वम् । सर्वापि प्रयुक्तिः क्रतुपुरुषान्यतरनिबन्धनेति फलविध्यर्थवादादिविचारद्वारकप्रयुक्तेरपि संग्रहः । यद्वा प्रायेण पुरुषार्थः प्रयोजक इति पुरुषार्थ-

प्रयुक्तिरेव चिन्त्यते । तदेतत्प्रतिज्ञासूत्रम् । यत्पुनर्भाष्ये श्रुत्यादिकीर्तनं तेनान्यच्छेषप्रमाणं तृतीयस्याध्यायस्याविषयभूतमस्तीति गम्यते । अन्यथा हि नानाकर्मलक्षणं वृत्तमितिवच्छेषलक्षणं वृत्तमित्येवावक्ष्यत् । अथ तत्र द्वितीयेऽध्याये इत्यनुक्त्वा इह तृतीयेऽध्याये इति किमर्थमुक्तं, वक्तृविवक्षावैचित्र्यादिति । इदमेव श्रुत्यादिकीर्तनेऽप्युत्तरम् ॥

॥ क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ॥ २ ॥

## यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

क्रत्वर्थादेर्नास्ति वास्ति लक्ष्म नास्त्यनिरूपणात् ॥ क्रतवे यस्तदर्थोऽसाविति तस्य निरूपणम् ॥ ४ ॥
फलं विधेयं नो वाद्यो भावनांशत्वतोऽन्यवत् ॥ न भाव्यांशो विधेयः स्याद्रागात्तत्र प्रवर्तनात् ॥ ५ ॥
गोदोहनं द्वयार्थं स्यान्न वा भानाद्द्वयार्थता ॥ अन्यथापि क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥ ६ ॥
द्रव्यार्जनं स्यात्क्रत्वर्थं पुमर्थं वा क्रताविदम् ॥ नियतत्वात्पुमर्थोऽयं दृष्टं क्रत्वर्थतार्थिकी ॥ ७ ॥

**वक्ष्यमाणयोः क्रत्वर्थपुरुपार्थयोर्लक्षणार्थमिदं सूत्रम् । यद्भावना कथंभावपूरणं विधीयते तत्क्रत्वर्थम्, अन्यत्करणं फलं च पुरुपार्थम् । अथवा फलांशस्य किं विधिः प्रयोजको नेति चिन्त्यते । विधेयभावनाविशेषणत्व,त्करणादिवत्फलस्यापि विधेयत्वशङ्का । रागतस्तु प्रवृत्तिसिद्धेरविधेयत्वम् ।**

---

शब्देन प्रयोजको लक्ष्यते क्रत्वर्थशब्देन च तत्प्रतिपक्षवाचकेनाप्रयोजको लक्ष्यत इति सूत्रयोजनिका । प्राभाकरास्तु तृतीये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तमिति भाष्ये श्रुत्याद्युक्त्या उपादानाख्यं श्रुत्यादिव्यतिरिक्तं शेषत्वे प्रमाणान्तरमस्तीत्यवगमादुपादानाख्यप्रमाणगम्यं शेषत्वप्रयुक्त्यधिकारोत्पत्त्याख्यं चतुष्टयमध्यायार्थ इति वदन्ति । तन्मतमुत्थापयति—**यत्पुनरिति** । भाष्ये श्रुत्यादिकीर्तनं विवक्षावैचित्र्यादुपपन्नं न प्रमाणान्तरसद्भावगमकं, विवक्षावैचित्र्यं च परैरप्यङ्गीकार्यमित्याशयेन प्रतिबन्दीमुद्घाटयति—**अथेति** । शङ्कते—**वक्तृविवक्षेति** । उत्तरमाह—**इदमेवेति** । उपादानप्रमाणनिरासस्य न्यायरत्नमालादौ प्रपञ्चनादिह दिङ्मात्रं प्रदर्शितं बोध्यम् ॥

**यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥ ननु** लक्षणाभिधानं प्रयुक्त्यननुगुणमित्यत आह—**वक्ष्यमाणयोरिति** । करिष्यमाणक्रत्वर्थपुरुषार्थविचारोपयोगित्वान्नासङ्गतमिति भावः । यस्मिन्कृते प्रीतिरुत्पद्यते स पुरुषार्थ इति सौत्रं लक्षणमनुपपन्नं तत्र प्रीतिशब्देनेच्छाविषयमात्रोक्तौ क्रत्वर्थातिव्याप्तेः स्वारसिकेच्छाविषयोक्तौ पश्वादिफलकर्मण्यव्याप्तेः । अतः क्रत्वर्थभिन्नत्वघटितमेव लक्षणं वाच्यमित्यतः सूत्रानुपात्तमपि क्रत्वर्थलक्षणं प्रथममाह—**यदिति** । गोदोहनादेर्वस्तुतः क्रतूपकारकत्वेऽपि क्रतूपकारोद्देशेन विधानाभावेन भावनाकथंभावपरिपूरणार्थत्वेन विधानस्याभावान्न क्रत्वर्थत्वमेवमाधानाध्ययनयोरप्यग्न्यर्थज्ञानमात्रार्थत्वेन विधीयमानतया क्रत्वपूर्वसाधनोद्देशेन विधानाभावेनावहननादेरिव कथंभावपरिपूरणार्थत्वाभावान्न क्रत्वर्थत्वमिति भावः । **ननु** क्रत्वर्थान्यत्वं न पुरुषार्थलक्षणं आधानाध्ययनयोरतिव्याप्तेरिति शङ्कां निराकर्तुं करणफलं चेत्युक्तम् । अयं भावः—तत्तच्छास्त्रानपेक्षेच्छाविषयभाव्यकभावनांशत्वे सति क्रत्वर्थभिन्नत्वं पुरुषार्थलक्षणं विवक्षितमिति नाधानाध्ययनयोरतिप्रसङ्गः तयोरग्न्यर्थज्ञानभाव्यकभावनाकरणत्वेऽप्यग्नेरर्थज्ञानस्य चाहवनीये जुहोतीत्यादिशास्त्राधीनेच्छाविषयत्वेन तदनपेक्षेच्छाविषयत्वाभावेन तादृग्भाव्यकभावनांशत्वाभावादिति भावः । सूत्रार्थस्तु—यस्मिन्पदार्थे कृते पुरुषस्य प्रीतिः स्वर्गादिलक्षणोपजायते स दर्शपूर्णमासादिः पुरुषार्थः यतस्तस्य लिप्सानुष्ठानमर्थलक्षणं पुरुषार्थस्य प्रीत्याऽविभक्तत्वादिति सत्यन्तविशेपणस्य यस्मिन्कृते प्रीतिर्भवतीति सूत्रप्रसादलभ्यत्वादुक्तलक्षणस्य सूत्रानुगुण्यं बोध्यम् । विचारशास्त्रे लक्षणकथनं नात्यन्तसङ्गतमित्यनुशयेन भाष्यानुक्तमपि वर्णकान्तरमाह—**अथत्रेति** । नच फलस्याविधेयत्वं द्वितीय एवोक्तमिति वाच्यम् । अनुपादेयसमभिव्याहृतासंनिधेः कर्मभेदकतया तत्र कर्मभेदसिद्ध्यर्थं फलस्यानुपादेयत्वमेव वक्तव्यं नत्वविधेयत्वमपि । विधेयत्वेऽपि देशादिवत्कर्मभेदकत्वोपपत्तेः । तस्मादिहैव प्रयुक्तिविशेषसिद्ध्यर्थं तद्विचार्यमिति भावः । फलांशस्य विधेयत्वाभावे चोदनागम्यत्वमेव न स्यात्तस्मात्करणेतिकर्तव्यतांशवत्फलांशस्यापि विधेयत्वादंशत्रयविशिष्टगोचरो विधिरितरांशवत्फलांशेऽपि प्रयोजक इति पूर्वपक्षमाह—**विधेयेति** । ज्योतिष्टोमादेः स्वरूपेण लोकसिद्धस्यापि फलसाधनत्वस्य विधिप्रमाणकत्वाच्चोदनागम्यत्वमेव फलस्यापि तत्साध्यत्वस्यान्यतोऽनवगमाद्विध्येकप्रमाणतया चोदनागम्यत्वमुपपद्यते । नचैतावता विधेयत्वापत्तिः । नह्यज्ञातज्ञापनं विधिः किंतु अप्रवृत्तप्रवर्तनं, तेन यत्र प्रथमं पुरुषो विधिवशात्प्रवर्तते तद्विधेयं, फले च प्रथममेव रागात्प्रवृत्तिर्मनसि संजाता । नहि फले मानसप्रवृत्तेरन्या काचन चेष्टारूपा प्रवृत्तिर्विध्यधीनापि संभवति । विशिष्टगोचरोऽपि च विधिर्यद्विशेषणे प्रवृत्तिरन्यतो न लभ्यते तत्रैव प्रवर्तको नान्यत्रेति न फलस्य विधेयत्वमिति । सिद्धान्तमाह—**रागत इति** । प्रयोजनं पूर्वपक्षे इयेनया-

---

१ वैचित्र्यादिति । इदमेव. २ पूरणार्थ. ।। लिप्साधिकरणम्

एवं वा दर्शपूर्णमासयोः श्रूयते 'गोदोहनेन पशुकामस्य प्रणये'दिति । तत्र संशयः किं गोदोहनं क्रत्वर्थमपि उत पुरुषार्थमेवेति । तत्र षष्ठीश्रुत्या पुरुषार्थं क्रतूपकारकत्वाच्च क्रत्वर्थमित्युभयार्थत्वम् । नैवम् । उपकारलक्षणशेषत्वनिराकरणात् । अन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् । श्रुत्या पुरुषार्थमेवेति फलप्रयुक्तमेवैतन्न क्रतुप्रयुक्तम् । एवं वा किमिहोदाहरणम् । द्रव्यार्जनमेव द्रव्यस्य प्राप्तिरित्यर्थः । येयं पुरुषस्य तेन तेन नियमेन द्रव्यप्राप्तिः—ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना, शूद्रस्य सेवादिना, सर्वेषां दायादिनेति, सैव चिन्त्यते—किं क्रत्वर्था पुरुषस्य द्रव्यप्राप्तिरुत पुरुषार्थेति । तत्र—'नियमस्यार्थवत्त्वाय क्रत्वर्थो द्रव्यसंग्रहः ।। पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत् ।।' प्रतिग्रहाद्युपायनियमस्तावद्द्रव्यार्जनोद्देशेन ब्राह्मणादीनां विधीयमानस्तदङ्गं विज्ञायते, स्वरूपे कार्ये चोपयोग्यङ्गं भवति तत्रे नियमो न तावदर्जनस्वरूप उपयुज्यते, अन्तरेणापि नियममर्जनसंभवात् । अतः कार्योपयोगी, पुरुषार्थत्वे च दृष्टमेव प्रयोजनं क्षुत्प्रतिघातादि द्रव्यार्जनस्य कार्यं स्यात्तदपि च विनापि नियमेन निष्पद्यत इति तादर्थ्ये सत्यर्जनस्य नियम-

---

गफलस्याभिचारस्य हिंसात्मकस्य विधेयत्वेन तत्र न हिंस्यादिति निषेधाप्रवृत्तिः सिद्धान्ते तु तत्प्रवृत्तिरिति यस्मिन्स्वर्गादावनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति तस्य लिप्सार्थलक्षणा स्वारसिकीति यावत् । फलस्य प्रीत्याऽविभागादिति । एवं वा गोदोहनेनेति गावो यस्मिन् पात्रे दुह्यन्ते तेनेत्यर्थः । **किमिति** । किं क्रतुपुरुषोभयार्थं उत केवलपुरुषार्थमित्यर्थः । फलरूपविशेषणे क्रतुविधेरप्रयोजकत्वेऽपि गोदोहनरूपविशेषणे प्रयोजकत्वमस्त्विति प्रत्यवस्थानात्सङ्गतिः । **षष्ठीति** । षष्ठ्याः संबन्धमात्रार्थत्वेऽपि प्रकृते कर्मिसमभिव्याहाराच्छेषित्वार्थकत्वमिति भावः । **क्रतूपकारकत्वेति** । नचोपकारकत्वलक्षणं शेषत्वं न संभवतीति तृतीये निराकरणेन विधित एव तादर्थ्यस्य वक्तव्यत्वात्कथमुपकारकत्वात्क्रत्वर्थत्वमुच्यत इति वाच्यम् । सत्युपकारकत्वे सर्वपदार्थग्राहिणा प्रयोगविधिना क्रतूपकाराय गोदोहनस्याप्यवश्यविधेयतया क्रत्वर्थत्वोपपत्तेरिति पूर्वपक्षी मन्यत इति भावः । भवेदेवं क्रत्वर्थत्वं यदि क्रत्वर्थप्रयोगविधिर्गोदोहनं विदध्यात् सतु पुरुषार्थेनैव गोदोहनेन प्रसङ्गात्क्रतूपकारसिद्धिं दृष्ट्वान्यथासिद्धत्वान्न तत्र व्याप्रियते । तेन सत्यप्युपकारकत्वे न गोदोहनस्य क्रत्वर्थत्वमित्याशयेन सिद्धान्तमाह—**नैवमिति** । **पुरुषार्थमेवेति** । **ननु** यथा 'हीषीति वृष्टिकामाय निधनं कुर्यात् ऊगित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति । अनेन वृष्ट्यादिफलार्थं यत्सौभरं तदर्थतया हीषादयो विधीयन्ते तथा सर्वेभ्यः कामेभ्य इत्यनेन दर्शपूर्णमासयोः पश्वर्थत्वस्यापि सद्भावात्पशुफलार्थदर्शपूर्णमासप्रणयनार्थतया गोदोहनविध्युपपत्तेः कथमस्य पुरुषार्थत्वमिति चेन्मैवम् । तत्र हीषादीनां फलाय विधीयमानानामाश्रयो न लभ्यते प्रकृतस्य सौभरस्याश्रयत्वायोग्यत्वात् योग्यस्य च निधनस्याप्रकृतत्वादित्याश्रित्य विधानासंभवात्सौभरस्यानियमेन हीषादिनिधनसंबन्धस्य प्राप्तत्वेन तन्नियममात्रविधाने लाघवाच्च तत्र वृष्ट्यादिसाधनसौभरार्थतया हीषादिविधानसंभवेऽपि प्रकृते प्रणयनस्याश्रयत्वयोग्यस्य प्रकृतत्वेन तदाश्रित्य साक्षात्फलार्थतया गोदोहनस्य विधिसंभवे पशुकामशब्दस्य तत्साधनदर्शपूर्णमासलक्षणामङ्गीकृत्य क्रत्वर्थतया विध्ययोगात्क्रतोश्चमसावरुद्धतया गोदोहनस्यात्यन्ताप्राप्तस्य विधेयत्वासंभवाच्च फलायगुणविधिरेवायमिति वैषम्यादिति भावः । इमं विचारमध्याये सङ्गमयति—**इति फलेति** । इदं चापाततः गोदोहनादेः क्रत्वर्थत्वेऽपि क्रतुप्रयुक्त्यभावात्फलस्य पुरुषाभिलषितत्वेन फलप्रयुक्तेः शीघ्रतया फलप्रयुक्त्यैव क्रतूपकारसिद्ध्या क्रतोस्तत्प्रयुक्तावुदासीनत्वात् । एवंच पूर्वोत्तरपक्षयोः फलप्रयुक्तमेव गोदोहनं नतु क्रतुप्रयुक्तमिति नातीवायं विचारोऽत्र सङ्गत इति द्रष्टव्यम् । एवं वा । **ननु** न तावदत्र द्रव्यार्जनमुदाहरणं तस्याविहितत्वेन विध्यैकगम्यक्रत्वर्थत्वायोग्यत्वात् । नापि तन्नियमः वक्ष्यमाणदोषदुष्टत्वादिति पृच्छति—**किमिहेति** । द्रव्यार्जनस्याविहितत्वेऽपि तदुपायस्य प्रतिग्रहादेर्विहितत्वेन तद्विधेश्च प्रतिग्रहाद्यर्जितद्रव्येणैव क्रतोरुपकुर्यादित्येवमर्थपर्यवसानात्तदादायार्जनस्य क्रत्वर्थत्वयोग्यत्वं संभवतीत्याशयेनोत्तरमाह—**द्रव्यार्जनमिति** । अर्जनशब्दस्य करणसाधनत्वभ्रमं व्युदस्यति—**द्रव्यस्येति** । **पुरुषार्थेति** । अत्र सिद्धान्ते पुरुषार्थत्वं न पुरुषंप्रति पारार्थ्यलक्षणं शेषत्व संभवति तस्य विध्यैकसमधिगम्यत्वेनाविहितस्यार्जनस्य तदसंभवात्तस्मात्क्रत्वर्थत्वाभावएव सिद्धान्तकोटेरर्थो द्रष्टव्यः। गोदोहनवदिह पुरुषार्थत्वावेदकश्रुत्यभावादप्रत्यूहं क्रत्वर्थत्वमिति प्रत्यवस्थानात्सङ्गतिः । **ननु** नियमस्य पुरुषार्थत्वेनाप्यर्थवत्त्वं संभवतीति शङ्कां निराकुर्वञ्श्लोकं व्याचष्टे—**प्रतिग्रहेति** । अर्जनोद्देशेन विधीयमाननियमस्यार्जनमतन्त्रीकृत्य स्वातन्त्र्येण पुरुषार्थत्वं न संभवतीति भावः । नियमस्यार्जनाङ्गत्वमात्रेण कथमर्जनस्य क्रत्वर्थत्वमित्यत उपपादयति—**स्वरूपे इति** । **ननु** नियमाभावेऽपि क्रतुनिष्पत्तिसंभवात्तत्राप्यानर्थक्यं तुल्यमित्याशङ्क्य भवेदेवं क्रतुस्वरूपार्थत्वे, क्रत्वपूर्वार्थत्वे

---

१ क्रतूपकरणत्वाच. २ सोऽयं नियमो.

तदङ्गं न स्यात्, अतो नियमविध्यनुपपत्त्या नूनं द्रव्यप्राप्तिः क्रत्वर्थेत्यनुमीयते । तथासति हि क्रत्वपूर्वस्यादृष्टत्वान्नियतोपायमेवार्जनं, तन्निष्पादयतीति कल्पनान्नानर्थक्यं नियमविधेः । नचार्जनविशेषोद्देशेनायं नियमविधिः विशेषाश्रवणात्, प्रकरणाद्यभावाच्च । तस्मादर्जनमात्रोद्देशेन विधीयमानो नियमस्तन्मात्रस्य क्रत्वर्थत्वं गमयति । तस्मात्सर्वमेव पुरुषस्य स्वं क्रत्वर्थम् । एवंच क्रत्वर्थैकान्तहिरण्यादिसंबन्धात्क्षामवत्यादीनां खादिरवत्क्रत्वर्थत्वात्फलं न कल्पनीयं भवति । तस्मात्सर्वं द्रव्यं क्रत्वर्थम् । तथाच स्मृतिः 'यज्ञार्थं पशवः सृष्टाः' इति । एवंप्राप्ते ब्रूमः—'पुरुषार्थत्वमेतस्य प्रत्यक्षेणावगम्यते ॥ क्रत्वर्थतानुमानेन प्रत्यक्षात्तच्च दुर्बलम् ॥' रागप्राप्तं तावदर्जनं न शास्त्रीयम् । रागतश्च पुरुषार्थतया प्राप्तिः । प्रत्यक्षेण चार्जितं द्रव्यं पुरुषं प्रीणयत्पुरुषार्थं विज्ञायते न तदनुमानेन क्रत्वेकशेषतया शक्यं विज्ञातुम् । तस्मात्पुरुषार्थं द्रव्यं, क्रतुरपि पुरुषार्थकार्याणामन्यतम इति कार्यान्तर इव क्रताव[1]प्युपयुज्यत इत्येतावान्विशेषः, नतु तस्यैवाङ्गम् । तथाच सति जीवनलोपात्क्रतुरेव न संवर्तेत, द्रव्यप्राप्तिमात्रादेव च क्रतूपक्रमात् 'अपि वा एष सुवर्गाल्लोका'दित्यनुपक्रमदर्शनं नोपपद्येत । तस्मात्पुरुषार्थम् । एवंच दृष्टार्थं भवति । नियमस्तु दृष्टकार्याभावात् काममदृष्टार्थः स्याददृष्टमपि

---

तु नायं दोष इत्याशयेनाह—**तथासतीति** । अदृष्टत्वादेव क्षुत्प्रतिघातादिवन्नियमंविना निष्पत्तिरपूर्वस्य नावगन्तुं शक्येति भावः । **ननु** नार्जनमात्रस्य नियमोऽङ्गं किंतु क्रत्वर्थार्जनस्यैव, तथाच नियमबलादर्जनमात्रस्य न क्रत्वर्थत्वसिद्धिरित्यत आह—**नचेति** । अर्जनमात्रस्यैव श्रवणात्क्रत्वर्थस्यैवार्जनस्य न नियमविधावुद्देश्यत्वमित्यर्थः । यदि द्रव्यार्जनं क्रतुप्रकरणे पठितं स्यात्तदा व्रीहीन्प्रोक्षतीत्यादौ व्रीहिमात्रस्योद्देश्यत्वश्रवणेऽपि व्रीहिभिर्यजेतेति प्रकृतानां व्रीहीणामुद्देश्यत्ववत्क्रत्वर्थस्यैवोद्देश्यत्वं स्यान्नच तदस्तीत्याशयेनाह—**प्रकरणेति** । संनिधिपरिग्रहार्थ आदिशब्दः । एवंच विशिष्य कस्यचिद्द्रव्यार्जनविशेषस्य क्रत्वर्थतया विहितस्योद्देश्यत्वाभावादर्जनमात्रमेवोद्देश्यमित्यर्जनमात्रस्यैव नियमोऽङ्गं तेन तद्बलात्क्रत्वर्थत्वमप्यर्जनमात्रस्यैव न्याय्यमित्याह—**तस्मादिति । एवंचेति** । सर्वस्यापि द्रव्यार्जनस्य क्रत्वर्थत्वे सति 'यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपे'दितिः क्षामवतेष्टे 'एतामेव निर्वपेद्यस्य हिरण्यं नश्ये'दित्यादीनां च क्रत्वर्थगृहहिरण्यादिदाहनाशादिनिमित्ते विधीयमानानां भिन्ने जुहोतीत्यादिवत्क्रतुनैमित्तिकाङ्गत्वोपपत्तेः पृथक्फलं न कल्पनीयमिति लाघवमस्मिन्पक्षे, पुरुषार्थत्वपक्षे तु क्षामवत्यादीनां क्रत्वर्थत्वे प्रमाणाभावात्फलकल्पनागौरवं स्यादित्यर्थः । **ननु** क्रत्वर्थत्वेऽप्यार्थवादिकं फलमवर्जनीयमित्याशङ्कां निराकर्तुं खादिरादित्युक्तं 'यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यती'ति यथा खादिरत्वादीनां क्रत्वङ्गत्वान्नार्थवादिकफलापेक्षा तद्वदिहापीत्यर्थः । नचैवं क्रतुमध्य एव द्रव्यार्जनं स्यात् अङ्गानां प्रधानकालकर्तव्यत्वादिति वाच्यम् । याजनाध्यापनयोः क्रतुमध्येऽनुष्ठातुमशक्यत्वात् प्रतिग्रहस्यापि नियमेन क्रतुमध्ये दुर्लभत्वाच्च क्रतुविलोपप्रसङ्गादङ्गस्याप्यस्य सामर्थ्याद्बहिरनुष्ठानोपपत्तेरित्याशयेनोपसंहरति—**तस्मादिति** । ननु 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका' इति स्मृतेः पुरुषार्थत्वमेवेत्यत आह—**तथाचेति** । न्यायोपबृंहितत्वाद्यज्ञार्थमिति स्मृतिः प्रबला, षण्णांत्विति स्मृतिस्तु जीवनलोपे क्रतुलोपप्रसङ्गात्क्रतुरेव स्वसिद्ध्यर्थं जीवनमात्रे द्रव्यविनियोगमनुमन्यत इति तद्बलप्राप्तानुवाद इत्यर्थः । **अनुमानेनेति** । उपायनियमविधिमूलकानुमानेनेत्यर्थः । चशब्दसूचितं युक्त्यन्तरं वदन् श्लोकं व्याचष्टे—**रागेति । नन्वेवं** द्रव्यस्य क्रतावविनियोज्यत्वात्क्रतुनिर्वृत्तिरेव न स्यादित्यत आह—**क्रतुरपीति । ननु** क्रतुः स्वसिद्ध्यर्थमेव जीवनमात्रे द्रव्यविनियोगमनुमन्यत इत्युक्तमित्यस्वरसादाह—**द्रव्येति** । यत्किंचिदङ्गानुष्ठानस्यैव प्रधानोपक्रमत्वेन द्रव्यार्जनस्यैव दर्शपूर्णमासोपक्रमत्वात् 'अपि वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयती'त्यनुपक्रमदर्शनं नोपपद्यत इत्यर्थः । इदं चातिपादनमनुपक्रम इत्याश्रित्योक्तं अननुष्ठानमतिपादनमित्याश्रियमाणेऽङ्गानुष्ठानेऽपि प्रधानानुष्ठानाभावेनोक्तदोषाभावादिति द्रष्टव्यम् । दृष्टार्थत्वबलादपि पुरुषार्थत्वमेव न्याय्यमितरथा क्रत्वपूर्वलक्षणादृष्टार्थत्वं स्यादित्याशयेनाह—**एवंचेति** । नन्वेवं नियमानर्थक्यं स्याद्यथाकथंचिदर्जितेनापि क्षुत्प्रतिघातादिकार्यसिद्धेरत आह—**नियम इति** । नन्वदृष्टार्थत्वे सत्यश्रुतप्रत्यवायपरिहाररूपादृष्टकल्पनापेक्षया यथाश्रुतेन क्रत्वपूर्वेणैकवाक्यताया ज्यायस्त्वात्क्रत्वर्थत्वमेव नियमस्यापतेदित्यत आह—**अदृष्टमपीति** । क्रत्वपूर्वस्य श्रुतत्वेऽपि न तन्नियमफलकल्पनासमये उपस्थितं तदुपस्थापकप्रकरणाद्यभावात्, पुरुषगतं तु प्रत्यवायपरिहाररूपमदृष्टफलं नियमस्य पुरुषार्थार्जनविषयत्वात्तद्वारा उपस्थितं तेनाश्रुतमपि पुरुषगतमेवादृष्टं परिकल्प्य तदर्थत्वमेव नियमस्य स्वीकार्यमित्यर्थः । एवंच नियमो द्रव्यार्जनोद्देशेम न विधीयते किंतु द्रव्यार्जनमाश्रित्य पुरुषगतादृष्टार्थतयैव विधीयत इति नियमस्य द्रव्यार्जे-

---

१ वप्युपजायते.

पुरुषार्थार्जनविषयत्वान्नियमस्य तदङ्गमेव कल्प्यते। तेनासावुपायान्तरेणार्जयन्प्रत्यवैतीति कल्प्यते। तस्मात्पुरुषार्थो द्रव्यपरिग्रहः। केचित्तु नियम एवात्र चिन्त्यत इत्याहुस्तदयथाभाष्यम्। तथाच सति पुरुषार्थस्यापि द्रव्यस्य पूर्वपक्षेऽपि सद्भावात्सिद्धान्तवत्पूर्वपक्षेऽपि क्षामवत्याः क्रत्वर्थता न सिद्ध्यतीति तदुपन्यासो नावकल्प्येत। तथा द्रव्यार्जनप्रक्रमादेव क्रतुप्रक्रमे दोषो यः सिद्धान्तिना पूर्वपक्षिणं प्रत्यापादितः सोऽपि न स्यादित्यास्तां तावत्॥

प्रजापतिव्रतानां पुरुषार्थताधिकरणम्॥ ३॥

**तदुत्सर्गे कर्माणि पुरुषार्थानि शास्त्रस्यानतिशङ्क्यत्वान्न च तद्द्रव्यं विचिकीर्ष्यते तेनार्थेनाभिसंबन्धात्क्रियायां पुरुषश्रुतिः॥ ३॥ [अविशेषात्तु शास्त्रस्य यथाश्रुतिफलानि स्युः॥ ४॥ अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात्॥ ५॥ तथा च लोकभूतेषु॥ ६॥]**

**नेक्षेतोद्यन्तमादित्यं क्रत्वर्थं तन्न वाग्मिमः॥ फलस्याकल्पनीयत्वात्क्रतौ प्राप्तं निषिध्यते॥ ८॥**
**व्रतोक्त्या पर्युदासत्वे संकल्पोऽनीक्षणेऽत्र सः॥ न क्रत्वङ्गममानत्वात्पुमर्थः पापहानये॥ ९॥**

तस्य व्रतमित्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेते'ति श्रुतम्। तत्र विचार्यते किं क्रत्वर्थमुत पुरुषार्थमिति। तथा किं प्रतिषेधः पर्युदास इति। तत्र 'प्रतिषेधे श्रुतिः शब्दः पर्युदासे तु लक्षणा॥ प्रतिषे-

---

नाङ्गत्वमेव नास्तीति न तदङ्गतानिर्वाहार्थं द्रव्यार्जनं क्रत्वर्थं वाच्यमिति भावः। **ननु** प्रत्यवायस्य प्रतिग्रहक्षपणीयत्वे अजस्रमेव यथाशक्ति प्रतिग्रहीतव्यं स्यात्। नच तद्युक्तम्। 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जये'दिति निषेधादित्याशङ्क्य नियमस्तु काममदृष्टार्थ इत्यस्य तात्पर्यमाह—**तेनेति**। प्रतिग्रहादिनियमविधेरुपायान्तरप्रतिषेधपरत्वादुपायान्तरेणार्जयन्पुरुषः प्रत्यवैतीत्येतावन्मात्रं कल्प्यते नतु प्रतिग्रहात्किंचिददृष्टमिति नोक्तदोष इत्यर्थः। प्राभाकरमतं दूषयितुमनुवदति—**केचिदिति**। **तदिति**। किं क्रत्वर्थो द्रव्यपरिग्रह उत पुरुषार्थ इति द्रव्यपरिग्रहशब्दितायाः द्रव्यप्राप्तेरेव भाष्ये विचारणादिति भावः। **तथाच सतीति**। नियमस्यैव विचार्यत्वे नियमार्जितस्यैव क्रत्वर्थतया द्रव्यमात्रस्य पूर्वपक्षेऽपि क्रतुव्यभिचाराभावात्क्षामवत्यादीनां क्रत्वर्थत्वसिद्ध्युपन्यासः पूर्वपक्षिणोऽसङ्गतः स्यादित्यर्थः। **ननु** यद्यप्यनियमार्जितं द्रव्यं पुरुषार्थं भवति तथापि तदापत्तिमतः क्षामवत्यादावधिकारः तथात्वे नैमित्तिकाधिकारे सति प्रयुक्त्यन्तरकल्पनाप्रसङ्गादतः प्रयुक्तिकल्पनागौरवपरिहाराय क्रतुप्रयुक्तिसिद्ध्यर्थं क्रत्वर्थधनापत्तिमतएव क्षामवत्यादावधिकारात्तदुपन्यासो युक्त इतिचेन्मैवम्। तथासति सिद्धान्तेऽपि प्रयुक्तिलाघवात्क्रत्वर्थतैव स्यात्। यदि च नैमित्तिकाधिकारस्य व्यक्तत्वात्सिद्धान्ते नैमित्तिकाधिकारोऽङ्गीक्रियते तर्हि पूर्वपक्षेऽपि ततएव नैमित्तिकाधिकारतापत्त्या क्रत्वर्थत्वं न स्यात्। तस्मात्परमते क्षामवत्यादीनां पूर्वपक्षे क्रत्वर्थत्वं सिद्धान्ते नैमित्तिकाधिकारत्वमिति विशेषो दुर्लभः। नच सिद्धान्ते क्रत्वर्थत्वाभावाद्द्रव्यस्य क्रत्वर्थद्रव्यापत्तिमतोऽधिकारो न संभवतीति वाच्यम्। सिद्धान्ते पूर्वपक्षवन्नियमोपार्जितस्य सर्वस्य द्रव्यस्य क्रत्वर्थत्वाभावेऽपि हिरण्येन क्रीणाति हिरण्यपाणिरभिषुणोतीत्यादिप्रातिस्विकवचनैः क्रतौ विनियुक्तस्य द्रव्यस्य क्रत्वर्थत्वावश्यंभावेन तादृशद्रव्यापत्तिमादाय क्रत्वर्थत्वोपपत्तेरिति भावः। **सोऽपि न स्यादिति**। पुरुषार्थद्रव्यस्य पूर्वपक्षेऽपि संभवादित्ययमेव हेतुरनुषञ्जनीयः। **ननु** पुरुषार्थद्रव्यसंभवेऽपि पवमानेष्ट्यनुष्ठानसमये यत्क्रत्वर्थं द्रव्यार्जनं तत्प्रक्रमादेव दर्शपूर्णमासादेरपि प्रक्रान्तत्वादनुपक्रमदर्शनं न स्यादित्यापादनं संभवतीत्यत आह—**इत्यास्तामिति**। पवमानेष्टिसमये क्रियमाणस्यार्जनस्य तन्मात्रार्थत्वेन गृह्यमाणविशेषतया सर्वक्रत्वर्थत्वाभावेन तत्प्रक्रममात्रान्न सर्वक्रतुप्रक्रमप्रसक्तिरिति भावः। प्रयोजनं पूर्वपक्षे प्रतिग्रहाद्यर्जितस्यैव द्रव्यस्य क्रतावुपयोगः सिद्धान्ते तु यथाकथंचिदर्जितस्यापीति॥

**तदुत्सर्गे कर्माणि पुरुषार्थानि॰**[1]॥ ३॥ अत्र पर्युदासपक्षे क्रत्वर्थत्वं दुर्लभं क्रतूपस्थापकाभावात्। नचानीक्षणसंकल्पस्येक्षणद्वारा क्रतूपस्थापकत्वं संभवतीति वाच्यम्। ईक्षणस्य क्रत्वव्यभिचाराभावेन क्रतूपस्थापकत्वाभावात्फलकल्पनाभयस्य च लाघवतर्कमात्रतया स्वतःप्रमाणत्वाभावेन तन्मात्रेण क्रत्वर्थत्वासिद्धिश्च। अतः पर्युदासपक्षेऽपि पूर्वपक्षोक्तिः प्रौढिवादमात्रमिति मनसि निधाय तदर्थसंशयमाह—**तथेति**। **प्रतिषेध इति**। ईक्षणं कर्तव्यमिति यत्तन्नेत्येवं कस्यापि पदस्य लक्षणांविनैव कर्तव्यतानिषेधात्प्रतिषेधे सर्वशब्दः श्रुतिवृत्त इत्यर्थः। **पर्युदास इति**। अनीक्षणसंकल्पो हि पर्युदासपक्षे विधेयः स चेक्षणविरोधित्वादीक्षतिधातुना नञा चोभाभ्यां लक्षयितव्य इत्यर्थः। यद्यपि 'चतुर्विधे पदे चात्र

---

१ कर्मणि पुरुषार्थाय.

**श्च सन् प्राप्तिं मार्गमाणः क्रतुं व्रजेत् ॥' पर्युदासे नञीक्षतिभ्यां क्रियान्तरं लक्ष्यते । प्रतिषेधे त्वाख्यातेन श्रुत्यभिहितामीक्षणकर्तव्यतां श्रुत्यैव नञ्प्रतिषेधतीति न लक्षणा । स च प्राप्त्यपेक्षो वैदिकत्वसामान्याद्वैदिकीमेव प्राप्तिं शीघ्रमनुगच्छतीति । तेन यत्र कर्माङ्गभूतमादित्येक्षणं विहितं तत्रोद्यतोऽस्तंयतश्च प्रतिषेधः।[2]फलं चैवं न कल्प्यम्। अथापि पर्युदासस्तथापि फलकल्पनाभयात्क्रत्वर्थ इति प्राप्ते ब्रूमः—'उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः ॥ तदन्वयबलात्कर्मविशेषोऽतोत्र चोद्यते ॥ तेन लक्षणयाप्यत्र पर्युदासः स च क्रतोः ॥ बहिः श्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति ॥ श्रुत्यादिक्रतुसंबन्धे प्रमाणं नात्र विद्यते ॥ पुरुषापेक्षितार्थत्वं विधिना चावबोधितम् ॥ साक्षादपेक्षितं तस्य फलमेव नतु क्रतुः ॥ अतः फलार्थता तच्च वाक्यशेषादघक्षयः ॥'**

---

द्विविधस्यार्थनिर्णयः 'क्रियते संशयोत्पत्तिर्नोपसर्गनिपातयोः ॥ तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ॥ यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥' इत्याकृत्यधिकरणवार्तिकरीत्या निपातत्वान्नञः श्रुतिवृत्तत्वं लक्षकत्वं चानुपपन्नं, तथापि धातोर्निषेधवाचकत्वविरोधिलक्षकत्वयोर्नञ्पदोपसंदानकृतत्वान्नञः श्रुतिवृत्तत्वलक्षकत्वोक्तिरिति ध्येयम् । **ननु** ब्राह्मणो न हन्तव्य इत्यादिवत्प्रतिषेधेऽपि पुरुषार्थत्वं किं न स्यादित्यत आह—**सचेति । शीघ्र मनु गच्छतीति** । शीघ्रमवलम्बते तस्या एव शीघ्रमुपस्थितेः, ब्राह्मणो न हन्तव्य इत्यत्र तु वैदिकस्य वधस्याभावादगत्या पुरुषार्थत्वमिति भावः । **ननु** उद्यन्तमादित्यमीक्षेतेति यत्तन्नेति नेषेधो नोपपद्यते । निषेधे निषेध्यस्यादित्येक्षणस्यानूद्यत्वेन तस्योद्यतत्वेन विशेष्टुमशक्यत्वादित्याशङ्क्यादित्यमीक्षेतेति यत्तन्नोद्यन्तमिति वचनव्यक्त्यङ्गीकारान्न विशिष्टानुवाददोष इत्याशयेनाह—**तेनेति । ननु** कर्माङ्गभूतस्यादित्येक्षणस्य निषेधे विहितप्रतिषिद्धत्वाद्विकल्पः स्यान्न च विधेरादित्यमात्रविषयतया प्रतिषेधस्योद्यदवस्थादित्यविंषयतया भिन्नविषयत्वान्न विकल्प इति वाच्यम् । सामान्यविशेषभावेन भिन्नविषयत्वेऽपि विकल्पस्यावर्जनीयत्वाद्दशमे पर्युदासाधिकरणे सामान्यविषयस्यापि विधेरुपजीव्यतया विशेषविषयप्रतिषेधेन तुल्यबलत्वाद्विकल्पस्य ग्रन्थकारेणैव वक्ष्यमाणत्वात् । नच दिक्कालविशेषादिज्ञानार्थतयाऽनृतवदनवत्क्रतूपकारकतामात्रेण प्रसक्तं यदीक्षणं तस्यायं प्रतिषेधस्तेन विहितस्य प्रतिषेधो न भवतीति न विकल्पापत्तिरिति वाच्यम् । क्रत्वर्थतया विहितत्वाभावे क्रतूपकारकतामात्रेण वैदिकत्वाभावेन वैदिकत्वसामान्यादुक्तस्य क्रतुनिवेशस्यासिद्धिप्रसङ्गादिति चेन्मैवम् । श्रुत्यनुग्रहाय प्रतिषेधे सति विकल्पस्य न्यायप्राप्ततया दोषत्वाभावादिति भावः । पुरुषार्थत्वे फलकल्पनागौरवापत्तेरपि क्रत्वर्थत्वमेवेष्टव्यमित्याशयेनाह—**फलंचेति । अथापीति** । क्रत्वर्थपक्षेऽप्यादित्यानीक्षणसंकल्पं कुर्यादित्येवमेव पर्युदासः नतूद्यदवस्थाद्यनापन्नादित्येक्षणं कुर्यादित्येवंरूपः । आदित्येक्षणविधिसंनिध्याम्नानाभावेन तदेकवाक्यत्वाभावेन तथापर्युदासासंभवादेकवाक्यत्वाभावेऽपि पर्युदासाश्रयणे 'न तौ पशौ करोती'त्यादावपि पर्युदासप्रसङ्गादिति ध्येयम् । फलकल्पनाभयात्क्रत्वर्थत्वस्य विश्वजिद्रात्रिसत्रहिरण्यभरणादावपि वक्तुं शक्यत्वात्तेषामप्येतदधिकरणविषयत्वमित्याहुः । **उपक्रम इति** । उपक्रमे व्रतमित्यनेन सामान्यतः किंचित्कर्म कर्तव्यमित्युच्यते तच्च सामान्यं विशेषमन्तरेण न पर्यवस्यतीति कीदृशं तत्कर्मेति विशेषापेक्षायां नेक्षेतोद्यन्तमित्यस्य तदिदमस्य व्रतमित्येवं व्रतशब्देनान्वये सति तदन्वयबलात्कर्मविशेषपरत्वावश्यंभावादभावस्य कर्मसामान्यवाचिव्रतशब्देनान्वयानुपपत्त्या निषेधानुपपत्तेरित्यतस्तदविनाभावसंबन्धेन लक्षणाप्यङ्गीकृत्य पर्युदास एव वाच्य इत्यर्थः । नचोपक्रमश्रुतकर्मसामान्यापेक्षतो विशेष आक्षेपाल्लब्धुं शक्यत इति वाच्यम् । कर्मणां यागदानतपोजपाद्यनन्ततया प्रमाणमन्तरेणेदृशोऽयं कर्मविशेष इत्यवधारणायोगेनाक्षेपात्तदलाभादिति भावः । क्रतोर्बहिःश्रुतः क्रतुप्रकरणानाम्नात इत्यर्थः । ततश्च प्रकरणाद्यभावेन क्रतूपस्थित्यभावात्तदर्थत्वं न संभवति, पुरुषस्तु क्रियया कर्त्राक्षेपादत्रैव वाक्ये उपस्थित इति तदर्थत्वमेवेति भावः । **ननु** क्रतोर्बहिःश्रवणेऽपि जयाहवनीयादेः क्रत्वर्थत्वं दृष्टमत आह—**श्रुत्यादीति** । तथापि फलकल्पनाभयात्क्रत्वर्थत्वमस्तु तत्राह—**पुरुषेति** । प्रवर्तकस्य विधेः स्वरसतः साक्षात्पुरुषापेक्षितफलसाधनताबोधकत्वात्स्वारस्यभङ्गप्रसङ्गात्क्रत्वर्थत्वमाश्रयितुं न युक्तमित्यर्थः । नचात्रात्यन्ताश्रुतकल्पनापि वाक्यशेषश्रुतत्वादित्याह—**तच्चेति** । एतावता हैनसा युक्तो भवतीति वाक्यशेषे एतावताऽनीक्षणसंकल्पमात्रेणायुक्त एवैनसा भवतीति पापक्षयश्रवणाद्वर्तमानापदेशेऽपि रात्रिसत्रन्यायेन तस्यैव फलत्वम् । यद्वा एतावतेक्षणमात्रेणैनसा युक्तो भवतीति ईक्षणस्य पापहेतुत्वे सत्यर्थादनीक्षणसंकल्पस्य पापक्षयफलत्वं बोध्यम् । एवंचोद्यन्तमिति शतृप्रत्ययेनादित्योदयस्य निमित्तत्वावगमान्नित्यवदुदयावस्थ आदित्येऽनीक्षणसंकल्पः कार्य इति संध्यावन्दनादितुल्यत्वमस्येति भावः । सूत्रार्थस्तु—तस्याप्रीतेरुत्सर्गेऽपि द्रव्यार्जनादिवत्प्रीत्यनुपलम्भेऽपि प्रजापतिव्रतादीनि पुरुषार्थानि शास्त्रस्यानतिशङ्क्यत्वाच्छास्त्रेण पुरुषार्थत्वे बोध्यमाने प्रीत्यभावप्रयुक्ताशङ्काया अनवकाशादिति यावत् । शास्त्रस्य क्रत्वर्थत्वेऽप्युपपत्तिमाशङ्क्याह—**नचेति** । नचैभिः कर्मभिः क्रतुसंबन्धिद्रव्यं चिकीर्ष्यते क्रत्वर्थद्रव्यसंबन्धो नैषामिति या-

---

१ शीघ्रमेव गच्छतीति. २ फलं च न.

यज्ञायुधानामनुवादताधिकरणम् ॥ ४ ॥

**द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥ ७ ॥ [स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात्, तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चार्थकर्मसु ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥]**

**दश यज्ञायुधानीति हविष्ट्वेन विधिर्न वा ॥ आग्नेयोऽष्टाग्नेः पुरोडाशे समुच्चयविकल्पने ॥ १० ॥**
**सार्धमुत्पत्तिशिष्टेन विकल्पादिर्न युज्यते ॥ स्फ्येनोद्धन्तीति यत्प्राप्तं तदत्रानूद्य संस्तवः ॥ ११ ॥**

स्फ्यश्च कपालानि चेत्यनुक्रम्य[1] एतानि वै दश यज्ञायुधानीति श्रुतम्। किमयं प्रधानयागहविष्ट्वेन[2] स्फ्यादीनां विधिरुत स्फ्येनोद्धन्तीत्यादिवाक्यप्राप्तानुवाद इति संशये 'अर्थवत्त्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम् ॥ यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते ॥ गौणेनायुधशब्देन तत्प्रधानतया[3] ततः ॥ स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडाशादिभिः सह ॥ समुच्चयो विकल्पो वा स्यादिति प्राप्त उच्यते ॥ नह्यत्राख्यातशब्दोऽपि श्रूयते नतरां विधिः ॥ विकल्पोऽपि न वैषम्यात्पुरोडाशादिभिः सह ॥ समुच्चयोऽपि नैकार्थ्यान्निरपेक्षश्रुतेरपि ॥' यज्ञायुधानि संभरन्तीति चानन्तरश्रुतेन विधिनैकवाक्यत्वा[4]च्छेषोऽयमुद्धननादिद्वारा प्राप्त[5]यज्ञसाधनत्वानुवादः ॥

---

वत्। येन तद्वारा क्रत्वर्थता स्यात् अतस्तेनार्थेन पुरुषार्थेन संबन्धादीक्षणादिक्रियायां पुरुषस्य कर्तृत्वेन शेषित्वेन वा श्रुतिरिति तदुत्सर्ग इत्यनेनैव द्रव्यार्जनवत्प्रत्यक्षेण प्री॰ानवगमात्क्रत्वर्थमेवेति प्रत्यवस्थानात्सङ्गतिरिति सूचितम ॥

**द्रव्याणि त्वविशेषेण०** ॥ ७ ॥ किं स्फ्यादिद्रव्याणि हविष्ट्वेन प्रधानयागस्य साधनान्युतोद्धननादेरेव, तदर्थं च किं यज्ञायुधवाक्यं विधिरनुवादो वेति संशयद्वयमेकत्वेनाह—**किमिति**। यथा पूर्वत्र व्रतशब्दबलान्नेक्षेतेति न प्रतिषेध एवमिहापि यज्ञायुधशब्दबलान्नोद्धननादिमात्रसाधनमिति प्रत्यवस्थानात्सङ्गतिः। **ननु** विधिप्रत्ययाभावाद्विधिप्रतिबन्धकवैशब्दाच्च कथं विधिरिति पूर्वःपक्षोऽत आह—**अर्थवत्त्वादिति**। प्रवृत्तिविशेषकरत्वादित्यर्थः। तद्बलादेव विधिप्रत्ययः कल्प्यः। वैशब्दश्च यदाग्नेयमित्यादौ यच्छब्दादिवन्न विधिं विहन्तीति भावः। **नन्वेवमपि** यज्ञशब्दस्य प्रयाजादिसाधारण्यात्कथं प्रधानहविरर्थत्वमत आह—**यज्ञशब्द इति**। यज्ञस्यायुधयोगाभावादाह—**गौणेनेति**। साधनपर आयुधशब्दः सिद्धान्त इवेति भावः। **ननु** हविरासादनोद्देशेन विधीयमानवेदितद्धर्माणामङ्गप्रधानार्थत्ववद्यज्ञोद्देशेन तत्साधनतया विधीयमानानां स्फ्यादीनामप्यङ्गप्रधानार्थत्वमेव स्यान्न प्रकरणात्प्रधानमात्रार्थत्वं यज्ञशब्दस्य साधारण्यादस्तु वा यज्ञशब्दः प्रधानमात्रपरस्तथापि यज्ञमनूद्य तत्साधनतया स्फ्यादिविधिर्न संभवति। समासान्तर्गतयोः पदयोरेकमुद्देश्यकमितरद्विधायकमित्यस्य त्र्यङ्गैः स्विष्टकृदित्यादौ निराकरणादिति चेन्मैवम्। एतानीति स्फ्यादीननूद्य तानि यज्ञसाधनानि कर्तव्यानीत्येवं विधिस्वीकारेणोक्तदोषाभावादिति भावः। **नन्वेवमप्याग्नेयादेरुत्पत्तिशिष्टपुरोडाशाद्यवरुद्धत्वेन** तत्साधनत्वविध्ययोगात्प्रकरणाद्दर्शपूर्णमासाङ्गतया यागान्तरविधिरेव स्यादित्यत आह—**पुरोडाशादिभिरिति**। देवताया अलाभाद्यागान्तरविधिर्न संभवति। नचाव्यक्तत्वेन सौमिकधर्मप्राप्तेर्देवतालाभः। दर्शपूर्णमासयोः साङ्गयोर्ध्यहमात्रसाध्यतया दीक्षोपसदादिसौमिकधर्मप्राप्तौ तद्विरोधापत्तेर्वैमृधवत्पृथक्तन्त्रत्वेऽपि प्रधानकाल एव कर्तव्यताया अपरिहार्यत्वात्। नच पर्यग्निकृतं पात्नीवतमुत्सृजत्याज्येन शेषं संस्थापयतीत्यत्राज्यहविष्कयागेऽनुषङ्गात्पत्नीवद्देवतालाभवदत्राप्यनुषङ्गात्प्रकृताग्न्यादिदेवतालाभ इति युक्तम्। असंबन्ध्यनेकवाक्यव्यवधानेनात्रानुषङ्गायोगादन्यथा देवताया अलाभाद्विद्वद्वाक्यस्य कर्मान्तरविधायकत्वासंभवादनुवादत्वमिति दर्शपूर्णमास्याधिकरणसिद्धान्तो विरुध्येत तत्राप्यनुषङ्गेण देवतालाभसंभवात्। तस्मादिहापि यागान्तरविध्यसंभवादगत्या उत्पत्तिशिष्टे॰ऽपि पुरोडाशादिभिः विकल्पः समुच्चयो वाङ्गीक्रियत इत्यर्थः। **वैषम्यादिति**। उत्पन्नशिष्टत्वेनोत्पत्तिशिष्टपुरोडाशवैषम्यादित्यर्थः। इदं चापातत उपांशुयाजे उत्पत्तिशिष्टद्रव्याभावेन तत्र द्रव्यविधेः पूर्वपक्षिणोऽनुमतत्वेन तत्रोक्तदोषाभावादिति ध्येयम्। **ऐकार्थ्यादिति**। 'एकार्थास्तु विकल्पेरन्'निति द्वादशन्यायेनैकार्थानां समुच्चयासंभवादिति भावः। **निरपेक्षेति**। समुच्चये परस्परसापेक्षाणामेव साधनत्वान्निरपेक्षत्वावगमकश्रुतिर्विरुध्येतेति भावः। **नन्वनुवादानर्थक्याद्विधित्वे** सति इदं सर्वं सोढव्यमित्याशङ्क्य संभरणविध्येकवाक्यतया तत्स्तुत्यर्थत्वान्नानर्थक्यमित्याशयेनाह—**यज्ञायुधानीति**। सूत्रार्थस्तु—स्फ्यादिद्रव्याणि प्रदीयेरन् प्रदेयहवींषि भवेयुः इतरथा यज्ञायुधवाक्यानर्थक्यात्प्रदेयत्वे च सत्यविशेषणश्रुतान्यपि प्रकरणात्प्रधानमात्रार्थानीति ॥

---

१ चेत्युपक्रम्य. २ हविःशब्देन. ३ तत्साधनतया. ४ त्वात्तच्छेपः ५ द्वारप्राप्त.

पश्वेकत्वाधिकरणम् ॥ ५ ॥

**तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥ [एकश्रुतित्वाच्च ॥ १२ ॥ प्रतीयत इति चेत् ॥ १३ ॥ नाशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥ शब्दवत्तूपलभ्यते, तदागमे हि तद्दृश्यते तस्य ज्ञानं हि यथान्येषाम् ॥ १५ ॥ तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥]**

पशुरालभ्य इत्यत्र पश्वैक्ये यजनाङ्गता ॥ नास्त्यस्ति वाद्यः स्वपदे श्रुत्या पश्वङ्गतागतेः ॥ १२ ॥

आद्यो स्वप्रत्ययोपात्त आसन्नतरकारके ॥ योगः क्रतौ पशौ चेति क्रमे यागाङ्गतोचिता ॥ १३ ॥

उपादेयभूतपश्वादिगतविभक्त्यभिहितैकत्वादिका संख्या किमयज्ञाङ्गमविवक्षिता उत यज्ञाङ्गं विवक्षितेति संशयः । तत्र—'श्रुत्या पश्वङ्गता तस्याः समानपदरूपया ॥ पदान्तरस्थयागाङ्गभावो वाक्यात्प्रतीयते ॥ दुर्वलं च श्रुतेर्वाक्यमित्ययज्ञाङ्गमेकता ॥ तदभावे च यज्ञावैगुण्यात्तदविवक्षितम् ॥' उच्यते—'समानप्रत्ययस्थेन कारकेणात्मसात्कृता ॥ क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ॥' समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि संनिहिततरेण प्रधानभूतेन कारकेणावरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमापतेन क्रियाविशेषणेन च संबध्य पश्वादरुणैक-

---

**तत्रैकत्वमयज्ञाङ्ग०** ॥ ११ ॥ प्रहैकत्वादिव्यावृत्त्यर्थमाह—**उपादेयेति** । चतुरो मुष्टीर्निर्वपतीति प्रातिपदिकाभिहितसंख्याया विवक्षावश्यंभावात्तद्व्यावृत्त्यर्थमाह—**विभक्तीति**। नन्वेकत्वस्याविवक्षितत्वेऽपि प्रथमं वा नियम्येत कारणादतिक्रमः स्यादिति कपिञ्जलाधिकरणन्यायेनैकस्यैव प्रयुक्तिसिद्धेरफलो विचार इत्यत एकत्वादिसंख्येत्यादिशब्दः । अनड्वाहौ युनक्ति कपिञ्जलानालभेतेति द्वित्वबहुत्वयोरपि विषयत्वात्तद्विषये सफलो विचार इति भावः । किमविवक्षिता उत विवक्षिता, तदर्थं च किमयज्ञाङ्गमुत यज्ञाङ्गमिति संशयद्वयं संकलय्याह—**किमिति** । ननु एकप्रत्ययरूपायाः श्रुतेः मदश्रुत्यपेक्षया प्रबलत्वात्तया संख्यायाः कारकान्वये सति क्रियाङ्गत्वात्कथं पूर्वःपक्ष इत्यत आह—**तत्रेति** । 'सत्वप्रधानानि नामानी'ति यास्कस्मृतेः प्रातिपदिकार्थस्य प्राधान्यात्प्रधानान्वयस्याभ्यर्हितत्वात्पदश्रुत्या पश्वन्वय एव संख्याया नतु प्रत्ययश्रुत्या कारकान्वयः । नच प्रत्ययार्थप्राधान्यमपि शाब्दिकैः स्मर्यत इति वाच्यम् । तस्याख्यातविषयत्वेनाप्युपपत्तेः । संख्यादीनामपि प्राधान्यवारणाय तत्स्मृतेः संकोचावश्यंभावादिति भावः । एवंच संख्यायाः प्रत्ययश्रुतिगम्यकारकान्वयस्यापि परित्याज्यत्वे सति वाक्यमादाय यज्ञाङ्गत्वं दूरापेतमित्याशयेनाह—**पदान्तरेति** । एवंच यथा स्फ्येनोद्धन्तीत्यादिश्रुत्योद्धननाद्यर्थानां यज्ञायुधवाक्येन न यज्ञार्थत्वं तथात्रापि पदश्रुत्या पश्वर्थस्यैकत्वस्य न यज्ञार्थत्वमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या । नचैकत्वस्य पश्वन्वये पशोः कारकान्वयदशायामेकत्वविशिष्टस्यैव तस्यान्वयादेकत्वस्यापि यज्ञाङ्गत्वं शङ्कनीयम् । विरम्यव्यापारायोगेन प्रत्ययेन प्रथममेकत्वस्य पशुसंबन्धं बोधयित्वा तदनन्तरमेकत्वविशिष्टस्य तस्य कारकान्वयबोधनायोगाद्युगपदेव संख्याकारकाभ्यां पशोरन्वयेन संख्याविशिष्टवेषेण कारकान्वयानुपपत्त्या केवलस्यैव पशोः कारकान्वयादिति भावः । **ननु** कारकान्वयेऽपि कथं यज्ञाङ्गत्वमत आह—**क्रियाया इति** । कारकस्य क्रियानिर्वृत्त्येकस्वभावत्वात्तदन्वयेन सामान्यतः क्रियाङ्गत्वे सिद्धे यजिसमभिव्याहारेण यागरूपत्वावगमाद्यागाङ्गत्वमित्यर्थः । यदुक्तं प्रातिपदिकार्थस्य प्राधान्यात्तदन्वय एवेति तन्निराकरणायाह—**प्रधानभूतेनेति** । यदि प्रातिपदिकार्थस्य प्राधान्यं तदा तस्य कारकेण वशीकरणाभावात्कारकस्य तद्गुणभावेसति कृदन्ताभिहितस्येव कारकस्य क्रियान्वयो न भवेत् । अतो न प्रातिपदिकार्थः प्रधानं किंतु प्रत्ययार्थ एव । तत्रापि वाक्यस्य क्रियाप्रधानत्वात्तदर्थत्वाच्च कारकस्य तस्यैव प्राधान्यं न संख्यादेः । यत्र तु गौः शुक्ल इत्यादौ न क्रियान्वयस्तदभिप्रायं यास्कस्मरणम् । नचैवं प्रत्ययश्रुत्या संख्यावरुद्धे कारके दुर्वलया पदश्रुत्या पशोरन्वयो न स्यादिति वाच्यम् । एकसंख्येन कारकेण यष्टव्यमित्युक्ते किंजातीयं तदिति विशेषापेक्षासत्वेनानुगुणतया दुर्वलप्रमाणकस्यापि पशोरन्वयाविरोधादिति भावः । प्रत्ययेन कारकसंख्ययोः पृथगभिधानमाश्रित्यैकपदोपात्तप्रातिपदिकार्थापेक्षया एकप्रत्ययोपात्तकारकस्य संनिहिततरत्वात्प्रधानत्वाच्च कारकेणैव संख्यासंबन्धो न प्रातिपदिकार्थेनेत्युक्तम् । वस्तुतस्तु संख्याकारकयोर्न पृथगभिधानं किंतु संख्यान्वितमेव कारकमभिधीयते । ततश्चाभिधानदशायामेव कारकान्वितत्वात्संख्याया न पश्चात्प्रातिपदिकान्वयप्रसक्तिरिति द्रष्टव्यम् । उक्तंच न्यायरत्नमालायां 'विभक्त्यैव हि लिङ्गसंख्यांकारकाणां तत्र तेषामन्वितानामेवाभिधानमनन्वितानामनेकेषामर्थानामेकेन शब्देन युगपदभिधानस्यैकशेषमन्तरेणासंभवादक्षशब्देनेव विदेवनादीनाम् । अन्यथा गामानयेत्यादिवद्यां कांचिद्व्यक्तिमक्षमानयेत्युक्तो विदेवनादीनामन्यतममानयेत् । संदिग्धे च किंपरोऽयं प्रयुक्त इति ।

हायनीन्यायेन पशुना विशेषणत्वेनार्थात्संबध्यते। तादर्थ्यं तु यज्ञं प्रत्येवेति विवक्षितमेकत्वम्। उक्तंच —'यथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते ॥ समानप्रत्ययश्रुत्या बलीयस्याः क्रियाङ्गतेति ॥'

पशुलिङ्गविवक्षाधिकरणम् ॥ ६ ॥

## तथा लिङ्गम् ॥ १७ ॥

**न पुंलिङ्गे विवक्षा वा विवक्षानुपयोगतः ॥ भावोऽनुष्ठित्यपेक्षत्वात्संख्यावत्तद्विवक्ष्यताम् ॥ १४ ॥**

एवं वा लिङ्गं त्वलिङ्गे विपरीतलिङ्गे वृक्षादौ मक्षिकादौ च शब्दप्रयोगादशब्दार्थ इत्यविवक्षितत्वाशङ्का, सिंहः सिंहीत्यादावनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयतीति शब्दार्थत्वात्संख्यावल्लिङ्गं विवक्षितम् ॥

आश्रयिणामदृष्टार्थताधिकरणम् ॥ ७ ॥

## आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ [चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यनेन विधीयते ॥ १९ ॥ स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतत्वाश्रयाद्धि गुणीभावः ॥ २० ॥]

**स्विष्टकृत्संस्कृतौ क्षीण उतापूर्वोपयोग्यपि ॥ प्रयोजनैक्यमेकस्मिन्युक्तं कर्मण्यतः क्षयः ॥ १५ ॥**
**मन्त्रेण देवसंस्कारः प्रक्षेपाद्द्रव्यसंस्कृतिः ॥ त्यागादपूर्वमुत्पन्नं प्रधानापूर्वगं च तत् ॥ १६ ॥**

उत्तमः प्रयाजः पशुपुरोडाशः स्विष्टकृदित्यादयोंऽशेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किं तदर्था एवोतापूर्वार्था अपीति चिन्त्यते। तत्र 'एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् ॥ दृष्टे च सति नादृष्टं

---

अतस्तेषामन्वितानामेवाभिधानम्। तत्रापि प्रतीतिबलेन कारकं प्रधानतः। लिङ्गसंख्ये गुणत इति। **ननु** एकत्वस्य पशुना संबन्धाभावे प्रत्ययानां प्रकृत्यर्थगतस्वार्थबोधकत्वं प्रसिद्धं व्युत्पत्तिसिद्धं बाध्येतेत्यत आह—**पश्वादिति**। पार्ष्णिकसंबन्धेन तदुपपद्यत इति भावः ॥

**तथा लिङ्गम् ॥ १७ ॥ एवं वेति।** अनेन भाष्ये संख्याया विवक्षितत्वे तत्समानश्रुतिकं लिङ्गमपि विवक्षितं स्यात्। तथाच 'वसन्ते प्रातराग्नेयीं कृष्णग्रीवीमालभेते'त्यादिना विहितपश्वनुवादेन गर्भिण्यो भवन्तीति गर्भलक्षणस्त्रीगुणविधानमुपपन्नं भवतीति पूर्वाधिकरणशेषत्वेनापीदं सूत्रं व्याख्यातमिति सूचयति। अतिदेशस्य विशेषाशङ्कानिराकरणार्थत्वात्तामाह —**लिङ्गमिति। अलिङ्ग इति।** नच सकलस्य प्रपञ्चस्य सत्वरजस्तमोगुणात्मकत्वमाश्रित्य शाब्दिकैः सत्वरजस्तमोगुणानां तत्परिणामभूतशब्दस्पर्शरूपरसगन्धानां चाविर्भावः पुंलिङ्गं तेषां तिरोभावः स्त्रीलिङ्गं तेषां साम्यं नपुंसकमिदं च लिङ्गत्रयं सर्वेषामपि वस्तूनामस्ति तथापि केनचिच्छब्देन किंचिल्लिङ्गमभिव्यज्यत इत्युक्तत्वात् वृक्षादावपि पुंलिङ्गादेर्विद्यमानत्वादिदमयुक्तमिति वाच्यम्। लोकप्रसिद्ध्यनुसारेण 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यत्तदभावे नपुंसक'मिति स्तनकेशादेर्वा, 'हस्तिन्यां वडवायां च स्त्रीतिबुद्धेः समन्वयः ॥ अतस्तां जातिमिच्छन्ती'ति स्तनकेशाद्यभिव्यङ्ग्यजातिविशेषस्य वा लिङ्गत्वादाविर्भावादेस्तु शाब्दिकैः शब्दानुशासनाय लिङ्गत्वेन परिभाषणमात्रमिति न तस्य लोकव्यवहारगम्यशब्दार्थत्वसंभव इति नात्र तादृशस्य लिङ्गस्य विचार्यत्वमिति न दोषः। अतएव 'संस्थानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तत' इति शाब्दिकैरेव तिरोभावाविर्भावलक्षणस्य लिङ्गस्य पारिभाषिकत्वं स्पष्टमुक्तमिति भावः। **शब्दस्येति।** ङीभावादिविभक्तिविकाराणां तिङादिप्रातिपदिकविकाराणां च यथासंभवं वाचकत्वमित्यर्थः ॥

**आश्रयिष्वविशेषेण० ॥ १८ ॥ ननु** त्यागांशस्य दृष्टप्रयोजनाभावेनापूर्वार्थत्वस्यावश्यंवाच्यत्वात्कथं पूर्वःपक्ष इत्यत आह—**एकस्येति।** यागो हि चोदितो न तदेकदेशः सचैकेनैव देवतास्मरणादिना दृष्टेन प्रयोजनेन निराकाङ्क्ष इति त्यागांशस्याचोदितत्वेन पृथक्फलापेक्षाविरहान्न तस्यादृष्टफलकत्वमित्यर्थः। **दृष्ट इति।** अनेन यथा द्रव्यपरिच्छेदरूपदृष्टद्वारा लिङ्गसंख्ययोः साधनत्वं एवमुत्तमप्रयाजादीनामपीति प्रत्यवस्थानात्सङ्गतिरिति सूचितम्। **देवतेति।** स्वाहाकारपशुपुरोडाशस्विष्टकृत्सु मन्त्रेण यो देवतोद्देशांशः स यथायथं यक्ष्यमाणानामिष्टानां च देवतानां स्मरणलक्षणसंस्कारप्रयोजनक

---

१ तथा लिङ्गमित्यतःपरं सूत्रान्तरत्वेन एवं वा इति दृश्यते.

कल्प्यं नापूर्वमस्त्यतः ॥' उच्यते—'देवतास्मरणं मन्त्रात्प्रक्षेपाद्द्रव्यसंस्कृतिः ॥ त्यागांशस्य तु नादृष्टाद्दते किंचित्प्रयोजनम् ॥' तस्मात्त्यागांशेनादृष्टार्था अपीत्युभयार्थाः ॥

प्रयुक्तिविचारप्रतिज्ञाधिकरणम् ॥ ८ ॥

## अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ २१ ॥

शेषत्वमुपरिग्रन्थे चिन्तनीयमुतेतरत् ॥ शेषो मानान्न तस्यात्र प्रयुक्त्याख्यफलेरणात् ॥ १७ ॥

ऐवं तावत्फलभूतं प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितमतःपरमेतदेव साक्षाच्चिन्त्यते । हेतुत्वेन तु शेषशेषिविचारः क्वचित्करिष्ये । तदेतद्वृत्तवर्तिष्यमाणविवेककथनमात्रार्थं सूत्रम् ॥

आमिक्षाप्रयुक्तताधिकरणम् ॥ ९ ॥

## एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥ [संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥]

आमिक्षा वाजिनं च स्याद्दध्यानीतेः प्रयोजकम् ॥ उतामिक्षैव सामर्थ्यं द्वयोस्तुल्यं ततोऽग्रिमः ॥ १८ ॥
आमिक्षा पय एवात्र तच्छब्दान्मन्त्रतो रसात् ॥ प्रयोजिकैका प्राधान्यादनुनिष्पादि वाजिनम् ॥ १९ ॥

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मिति श्रुतं । तत्र संशयः किमामिक्षायागेनैव दध्यानयनं प्रयुज्यते उत वाजिनयागेनापीति । तदर्थं च किमुभयार्थमुतामिक्षार्थमिति । ततोऽपि पुनर्विचारयितव्यं किमामिक्षाख्यं दधिपयोभ्यामर्थान्तरं वैश्वदेवयागस्य हविः उत पय

---

इत्यर्थः । **प्रक्षेपादिति** । स्विष्टकृति यः प्रक्षेपांशः स कृतकरस्याकीर्णकरस्य द्रव्यस्य प्रतिपत्तिलक्षणसंस्कारप्रयोजनक इत्यर्थः । यद्यपि प्रक्षेपो देवतोद्देशवद्यागशब्दार्थान्तर्गतत्वाभावान्न यागांशस्तथापि प्रक्षेपस्य देवतोद्देशेन त्यज्यमानतादशायां कर्तव्यत्वात्सोऽपि यागांशइव प्रतीयत इत्येतावता प्रक्षेपाद्द्रव्यसंस्कृतिरित्युक्तम् । यद्वा उत्तमप्रयाजपशुपुरोडाशस्विष्टकृदित्येवमादय इति विषयप्रदर्शकवाक्ये आदिशब्दसंगृहीतपिष्टलेपफलीकरणहोमाद्यभिप्रायेणेदं तेषां होमत्वेन तत्र प्रक्षेपस्यांशत्वसंभवादिति ध्येयम् । **त्यागांशस्येति** । अवयवस्य स्वरूपेणाचोदितत्वेऽप्यवयवान्तरानर्थक्ये अवयविचोदना सर्वावयवगोचरा न सार्थक्यं लभत इति त्यागांशस्याप्यस्ति प्रयोजनापेक्षेति तस्यादृष्टं प्रयोजनमवश्यं वाच्यमित्यर्थः । **ननु** स्वाहाकारस्य केवलदृष्टार्थत्वे, वान्तरापूर्वाभावेनाङ्गापूर्वप्रयुक्ताभिक्रमणाद्यसिद्धेस्तत्रापूर्वसद्भावव्युत्पादनस्याभिक्रमणादिलक्षणं प्रयोजनं पशुपुरोडाशे चापूर्वाभावेऽपूर्वप्रयुक्तदार्शपूर्णमासिकधर्मातिदेशाभावात्तदतिदेशलक्षणं च प्रयोजनं संभवति स्विष्टकृति तद्व्युत्पादनस्य तु न किंचित्प्रयोजनं, यथा पूर्वपक्षे प्रतिपत्तित्वात्तदर्थावदाननाशे लोपस्तथा सिद्धान्तेऽपि एकदेशद्रव्यत्वेन द्रव्यप्रयोजकत्वाभावाल्लोपाविशेषादितिचेत्सत्यम् । उत्तरार्धादिद्रव्यप्रयोजकत्वाभावेऽपि अदृष्टार्थत्वे सति अदृष्टस्य संपादनार्थं 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येन ता देवताः प्रतिसंख्याय यजेते'ति हविर्नाशे विहितेनाज्येन स्विष्टकृत्कर्तव्य इत्यस्ति प्रयोजनम् । एवं पिष्टलेपफलीकरणहोमयोरपि द्रष्टव्यम् । सूत्रार्थस्तु—ये अंशेन परकीयं द्रव्यदेवतं संस्कारकत्वेनाश्रयन्ते ते आश्रयिणस्तेषु भाव्यते इति भावोऽर्थोऽपूर्वं प्रतीयते अन्यैर्यजतिजुहोतीत्यादिभिरपूर्वार्थैरविशेषेणेति ॥

**अर्थे समवैषम्यं०** ॥ २१ ॥ ननु अस्य सूत्रस्य न्यायव्युत्पादकत्वाभावादसांगत्यम् । नच प्रतिज्ञार्थत्वं शङ्कनीयम् । अध्यायादावेव प्रतिज्ञायाः कृतत्वेन पुनरपि तदनुपपत्तिरित्याशङ्क्याह—**एवमिति** । **एतदेवेति** । प्रयोजकत्वाप्रयोजकत्वमेवेत्यर्थः । **क्वचिदिति** । दध्यानयनादिष्वित्यर्थः । गोदोहनादिष्वङ्गत्वस्यैव विचारणात्तस्यैवाध्यायार्थत्वमिति शङ्काम्, प्रयुक्तेरध्यायार्थत्वे तद्विचारासाङ्गत्यशङ्कां च व्युदसितुमिदं सूत्रम् । अनेन हि सूत्रेण मैत्रावरुणदण्डादिद्रव्याणां दध्यानयनादिक्रियाणां चार्थे प्रयोजने साम्यमुभयप्रयुक्तिवैषम्यमेकेनैव प्रयुक्तिरित्यतः साक्षाच्चिन्तयिष्यत इत्युक्तेः प्राक्प्रयोजकाप्रयोजकत्वं फलतया चिन्त्यमिति लाभाद्वृत्तवर्तिष्यमाणयोरेवं विवेके सत्युक्तशङ्काद्वयवारणादिति भावः ॥

**एकनिष्पत्तेः सर्वं समं स्यात्** ॥ २२ ॥ पूर्वसूत्रोपक्षिप्तार्थविचारणात्सङ्गतिः । **उभयेति** । आमिक्षावाजिनोभयार्थमित्यर्थः । **किमामिक्षेति** । यद्यर्थान्तरं तदा विनिगमनाविरहादुभयार्थत्वे सत्युभयप्रयोज्यत्वं पयस एवामिक्षात्वे तु तन्मात्रार्थत्वाद्दध्यानयनस्यामिक्षायागमात्रप्रयोज्यत्वमिति फलफलिभावः । एवंचात्र यद्यप्यामिक्षायाः पयोपेक्षयार्थान्त-

---

१ द्रव्यसंस्कृतिम्. २ य एवं तावत्. ३ तु शेषिविचारः. ४ मिक्षा दधि.

एव दधिसंसृष्टमिति। तत्र--'मधुराम्लरसामिक्षा घनरूपा च तेन सा ॥ पयसोऽर्थान्तरं तद्धि मधुरैकरसं द्रवम् ॥' वैश्वदेवयागस्य तावदामिक्षा हविः । साच रूपरसान्यत्वादर्थान्तरं क्षीरादतो यद्दध्यानयनमसंयुक्तमामिक्षया विहितं केवलं तज्जननसामर्थ्याल्लिङ्गादामिक्षार्थं स्यात् । सामर्थ्यं च वाजिनेऽप्यस्तीति तादर्थ्यमपि युक्तम्। अत उभयप्रयुक्तमानयनमिति। उच्यते—'पयस्तदा परामृष्टं वैश्वदेवं विधीयते ॥ मन्त्रवर्णाच्च पयसो हविष्ट्वमवगम्यते ॥ पयस्त्वं न द्रवापेक्षं रसमात्रनिमित्तकम् ॥ पय एव घनीभूतमामिक्षेत्यभिधीयते ॥' आस्तां तावत् १आमिक्षापदं,सा वैश्वदेव्यामिक्षेति यत्तच्छब्दपरामृष्टं तद्धविः स च पयः परामृशति तद्धि पूर्ववाक्ये प्रधानभूतं, प्रकृतं तादर्थ्येनानयतेर्विधानात्कथं तादर्थ्यमानयनं द्विकर्मकं, यदानीयते तत्प्रथमं कर्म, यत्प्रत्यानीयते तद्द्वितीयं, तच्चेह पयः। तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानं प्रधानपरामर्शि च सर्वनामेति तच्छब्दः पय एव विश्वैर्देवैः संबध्नाति तदेव हविः । तथाच मन्त्रः 'जुषन्तां युज्यं पयः' इति। पय एव च घनीभूतमामिक्षेत्यामिक्षापदं नित्यानुवादः। तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम्। सोऽपि नित्यानुवाद-

---

रत्वतदभावावेव चिन्तयितुं युक्तौ नतु दध्यपेक्षयापि दध्न आमिक्षात्वेऽपि वाजिनयागप्रयुक्त्यभावेन दध्यपेक्षयार्थान्तरत्वस्य प्रकृतानुपयोगात्। तथाच किमामिक्षा दधिपयोभ्यामर्थान्तरमित्युक्तं तथाप्यामिक्षोभयभाव्यत्वादुभयविकारः स्यादित्यत्राष्टमे आमिक्षायाः प्रातर्दोहविकारत्वसिद्ध्यर्थं दध्यपेक्षयार्थान्तरत्वं यद्वक्ष्यते तदेव वस्तुगतिमनुरुध्यात्राप्युच्यते इति न दोषः। **दधिसंसृष्टमिति**। दधिसंस्कृतमित्यर्थः। **तत्रेति**। नच सान्द्रेऽपि पयस्त्वप्रतीतेः काठिन्यस्य पयस्त्वविरोधित्वाभावादम्लरसस्य संस्कारकदधिगतत्वेनाप्युपपत्तेरिदमयुक्तमिति वाच्यम् । इदं पयः इयमामिक्षेति भेदव्यवहारात्तस्यै शृतं तस्यै रसस्तस्यै दधि तस्यै मस्तु तस्यै नवनीतं तस्यै आमिक्षा तस्यै वाजिनमिति शृतशब्दवाच्यात्पयस आमिक्षाया भेदव्यपदेशात् 'गोपयसोर्यदि'ति विकारार्थकयत्प्रत्ययान्तपयस्याशब्दसमानार्थकत्वाच्च भेदस्यैव न्याय्यत्वादिति भावः। **ननु** प्रकृतपयःपरामर्शकतच्छब्दसामानाधिकरण्यादामिक्षाया अर्थान्तरत्वमनुपपन्नमित्यतः श्लोकं व्याचष्टे—**वैश्वदेवेति**। काठिन्यात्मकरूपस्य रसस्य च भेदेनामिक्षाया अर्थान्तरत्वेसति तस्यैव हविष्ट्वादिह तच्छब्दो न प्रकृतपरामर्शी अथैष ज्योतिरित्येतच्छब्दवदिति भावः। **अत इति**। पयस एवामिक्षात्वे हि दध्यानयनं पयःसंयोगात्पयःसंस्कारकं सदामिक्षायागार्थमेव स्यात्, अर्थान्तरत्वे तु तत्संयोगाभावेन तत्संस्कारकत्वाभावादुत्पादकतामात्रेण तदर्थं स्यादुत्पादकत्वं च वाजिनं प्रत्यप्यविशिष्टमित्युभयार्थत्वादुभयप्रयुक्तमेव स्यादित्यर्थः। नच संनिधानादामिक्षार्थतालिङ्गस्य प्रबलत्वादिति भावः। तदा तच्छब्देनेत्यर्थः। **पयस्त्वमिति**। पयस्त्वजातिर्द्रवत्वाभिव्यङ्ग्या न भवति किंतु माधुर्यविशेषव्यङ्ग्या। तेन घनीभूतपयस एवामिक्षात्वादामिक्षापदबलादपि पयस एव हविष्ट्वमित्यर्थः। **ननु** पयसस्तच्छब्देन परामर्शोऽनुपपन्न आमिक्षाया वस्त्वन्तरत्वेनामिक्षापदसमानाधिकरणस्य तच्छब्दस्य पयःपरामर्शकत्वाभावादित्युक्तमित्याशङ्कां व्युदस्यञ्श्लोकं व्याचष्टे—**आस्तामिति**। यदामिक्षापदं पूर्वपक्षिणोऽवलम्बस्तत्पदं तिष्ठतु तावत्तस्य वक्ष्यमाणरीत्या स्वपक्षेऽप्युपपत्तेरिति भावः । **सेति**। सा वैश्वदेवीति वाक्ये आमिक्षोद्देशेन वैश्वदेवत्वं न विधीयते चरमश्रुतस्यामिक्षापदस्योद्देश्यसमर्पकत्वासंभवात् किंतु तच्छब्दार्थोद्देशेनैव तच्छब्दस्य प्राथम्येन तस्य चोद्देश्यसमर्पकत्वौचित्यादित्यर्थः। एवंच पूर्वपक्षिणा यदुक्तं वैश्वदेवयागस्य तावदामिक्षा हविरिति तत् भग्नमित्याशयः । **ननु** दध्येव पूर्ववाक्ये प्रधानं निर्दिष्टं न पय इत्यत आह—**तादर्थ्येनेति**। तथाच शब्दतो दध्नः प्राधान्येऽप्यर्थतः पयस एव प्राधान्यमित्यर्थः । **ननु** द्वितीयया दध्नः कर्मत्वादानयनं दध्यर्थमेवेत्याशयेन पृच्छति—**कथमिति**। आनयनस्य द्विकर्मकत्वात्पयसोऽप्यस्ति कर्मत्वमित्युत्तरमाह—**आनयनमिति** । **तत्प्रथममिति**। साक्षात्क्रियया व्याप्यमानत्वादिति भावः। **द्वितीयमिति**। प्रथमेन व्याप्यमानत्वादिति भावः । **ननु** तथापि कर्मत्वाविशेषात्पयसः प्राधान्ये किं विनिगमकं प्रत्युत पयसः सप्तम्या गुणत्वमेवेत्यत आह—**तच्च प्रथमेनेति** । यथा मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र कर्मणाभिप्रेयमाणस्य संप्रदानस्य प्राधान्यमेवमिहापि प्रथमेन कर्मणा व्याप्यमानस्य द्वितीयस्य कर्मणः पयस एव प्राधान्यमित्यर्थः। उभयत्र द्वितीयानिर्देशे केन किं व्याप्यत इति व्याप्यमानत्वस्य निश्चेतुमशक्यतया सप्तमीनिर्देशे सत्याधारस्याधेयव्याप्यतया पयसो दध्ना व्याप्यमानत्वं स्वध्यवसानमिति पयसः प्राधान्यानुकूल एव सप्तमीनिर्देश इति भावः। ननु 'अस्त्येष राज्ञः पुरुषस्तमानये'त्यादौ शब्दतः प्रधानस्यैव निर्देशादिहापि दध्न एव तच्छब्दनिर्देशः स्यादित्याशङ्क्य मन्त्रवर्णविरोधान्नैवमित्याह—**तथाचेति** । नन्वामिक्षापदस्योद्देश्यसमर्पकत्वाभावे तस्य वाक्ये कथं समन्वय इत्यत आह—**पय एवेति** । पयसः प्रतिनिर्देशे नपुंसकत्वापत्तिमाशङ्क्याह—**तत्सामानाधिकरण्यादिति**। नन्वेवमपि स्त्रीलिङ्गतच्छब्देनोद्देशादामिक्षाया एवोद्देश्यत्वं बलादापतितमित्याशङ्क्य प्रातिपदिकस्यैवोद्देशकत्वात्-

---

१ नानयनविधानात्.

एव । नच पयस्त्वं द्रवापेक्षम् । रसविशेषमात्रापेक्षं तदतितापेन सान्द्रीभूतेऽपि पयसि पयस्त्वप्रतीतेः । यस्त्वम्लो रसः स संस्कारकस्य दध्नः, नत्वसावामिक्षापदस्याभिधेयः । यस्त्वत्र मधुरः पयोंशः स एवामिक्षा, पयःप्रतिनिर्देशकतच्छब्दसामानाधिकरण्यान्मन्त्रवर्णाच्च । तस्मात्पय एवामिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनं न वाजिनयागप्रयुक्तम् ॥

गवानयनस्य पदकर्मप्रयुक्तताधिकरणम् ॥ १० ॥

## पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

**सोमक्रयण्या नयने पदकर्म प्रयोजकम् ॥ न वाचोऽक्षाञ्जनस्यापि क्रयवत्संनिकर्षतः ॥ २० ॥**

**तृतीयया क्रयार्था गौस्तद्द्वारानयनस्य च ॥ तादर्थ्यात्तत्प्रयुक्तं तत्र प्रयोजकता पदे ॥ २१ ॥**

एकहायन्या क्रीणातीति प्रकृत्य श्रूयते षट्पदान्यनुनिष्क्रामति सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति यर्हि हविर्धाने प्राचीप्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति । तत्र संशयः किं यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यं, तदर्थमप्येकहायनीनयनं तेनापि प्रयुज्यते उत क्रयार्थमेव नयनं तेनैव प्रयुज्यते इति । तत्र—'द्वयोर्नयनसाध्यत्वाद्वाक्ये चाश्रवणात्तथा ॥ संनिधानात्क्रयार्थत्वं तथैव पदशेषता ॥' दध्यानयनमामिक्षासंयुक्तं न वाजिनेनानयनं तु द्वाभ्यामसंयुक्तं द्वयोरपि संनिधानान्नयनसाध्यत्वाच्चा-

---

स्वारस्यमेव पुरस्कार्यमित्याशयेनाह—**सोऽपीति** । एवंच दध्ना व्याप्यमानस्य पयसः नान्तरीयकोऽधिकरणभावः सप्तम्या अनूद्यते । तस्मं पयो दध्यानयनेन संस्कुर्यात् तत्र वैश्वदेवं कुर्यादित्येतावन्मात्रं विवक्षितमिति पयएव हविरिति भावः । **नन्वम्लरसबलाद्दध्येवामिक्षा मधुररसस्तु तत्संसृष्टपयस इति वैपरीत्यं किं न स्यादित्यत आह—नत्विति** । काञ्जिकादिनापि घनीभूते आमिक्षाशब्दप्रयोगादिति भावः । **पयःप्रतिनिर्देशकेति** । अतएव हेतुद्वयान्न वस्त्वन्तरत्वमपीति भावः । एवंच द्रवत्वकाठिन्यकृतवैलक्षण्यमात्रेण इदं पय इयमामिक्षेति लोके, तस्यै शृतं तस्या आमिक्षेति वेदे च भेदव्यपदेशस्य विकारार्थयत्प्रत्ययान्तपयस्याशब्दवाच्यत्वस्याप्युपपत्तेः पय एवामिक्षेति । उपसंहरति—**तस्मादिति** । तन्मसारे च कटकादेर्हेमविकारत्वेऽपि हेमत्ववद्घटादेर्मृद्विकारत्वेऽपि मृत्त्ववच्च पयोविकारत्वे सत्येवामिक्षायाः पयस्त्वं नत्वामिक्षापयसोरत्यन्ताभेद इत्युक्तम्—**न वाजिनेति** । ततश्च वाजिनयागात्पूर्वं वाजिनापचारे पुनर्दध्यानयनेन वाजिनं न संपाद्यमिति प्रयोजनमिति भावः । तत्र पुनर्द्रव्यप्रयुक्त्यभावाद्वाजिनयागस्य लोप इति न्यायः । यस्य सर्वाणीति वचनात्तु स्विष्टकृद्वदाज्येन तदनुष्ठानमिति । सूत्रार्थस्तु—एकस्माद्दध्यानयनादुभयोर्निष्पत्तेः सर्वमामिक्षा वाजिनं च दध्यानयनप्रयुक्तौ समं स्यादिति । यद्वा एकनिष्पत्तेरित्यनेन युगपन्निष्पत्तिर्विवक्षिता । नच सिद्धान्ते वाजिनस्यानुनिष्पादित्वाद्युगपन्निष्पत्तिरसिद्धा । नहि पश्चान्निष्पादित्वमनुनिष्पादित्वं किंतु परनिष्पत्त्यर्थयत्नेनैव स्वार्थयत्नं विना निष्पद्यमानत्वं । तच्च युगपन्निष्पत्तावपि संभवतीति युगपन्निष्पत्तेः सिद्धान्तेऽप्यविरोधात्तस्या हेतूकरणं नानुपपन्नम् ॥

**पदकर्माप्रयोजकं० ॥ २५ ॥ षडिति** । उत्तरवेदिदेशे उपरवदेशे वा सोमक्रयः तमिमं क्रयदेशं प्राग्वंशात्सोमक्रयणीं नयन्नध्वर्युर्नीयमानायास्तस्याः षट्पदान्यनुनिष्क्रामति । अनुनिष्क्रमणं पदोपरि पदनिधानम् । यत्र सोमक्रयणी पदं निदधाति तत्राध्वर्युरपि पदं निदध्यादिति यावत् । यर्हि यदा । हविर्धाने हविर्धानाख्ये शकटे । तेन सप्तमपदेन । यत्र सप्तमं पदं निहितं तत्पांसुभिरिति यावत् । अक्षं धुरमित्यर्थः । **द्वयोरिति** । षट्पदानुनिष्क्रामतीति वाक्यावगतस्य नयनस्य प्रयोजनाकाङ्क्षायां संनिधानाद्वाक्यान्तरश्रुतक्रय इव सप्तमपदपांसुग्रहणेऽपि विनियोगः देशविशेषे कर्तव्यक्रयस्य नयनंविनानुपपत्त्या तत्साध्यत्ववत्सप्तमपदपांसुग्रहणस्यापि नयनं विनानुपपत्त्या तत्साध्यत्वाविशेषादित्यर्थः । वाक्ये चाश्रवणादिति हेतुं दध्यानयनवैधर्म्यार्थत्वेन व्याकुर्वाणस्तत एव सङ्गतिं सूचयन् श्लोकं व्याचष्टे—**दध्यानयनमिति** । **असंयुक्तमिति** । षट्पदानुनिष्क्रामतीति नयनपरवाक्ये क्रयपांसग्रहणयोरुभयोरप्यश्रवणादिति भावः । नच संनिधानस्य नयनसाध्यत्वस्य चाविशेषेऽपि एकहायन्या क्रीणातीति तृतीयया एकहायन्याः क्रयार्थत्वात्तत्संस्कारकस्यापि नयनस्य तद्द्वारा क्रयार्थत्वमेव न पांसुग्रहणार्थत्वमिति वाच्यम् । सप्तमं पदं गृह्णातीत्युक्ते कस्य पदमिति पदापेक्षायां प्रकृतैकहायन्याः पदेनाप्यन्वयावश्यंभावात् । अन्यथा वाक्यस्यापरिपूरणात् । तस्मादेकहायन्या उभयार्थत्वान्नयनमप्युभयार्थमिति पूर्वपक्षाशयमाहुः । अत्रेदमवधेयम्—प्रकृतैकहायन्याः क्रयार्थायास्तदर्थत्वानादरेण स्वरूपेण विनियोगात्पांसुग्रहणार्थत्वसंभवेऽप्यग्रिमाधिकरणन्यायेन पुरोडाशकपालस्य तुषोपवापवत्पांसुग्रहणमेकहायन्या एव न प्रयोजकमिति कथं तद्द्वारा नयनस्य प्रयोजकम् । नच शाखान्तरे तस्याः सप्तमं पदमिति श्रवणात्तत्र च तस्या इत्यनेनैकहायन्याः परामर्शादेकहायन्याः सप्तमपदग्रहणार्थत्वेसति विनिगमनाविरहान्नयनस्योभयमपि

---

१ तत् । तापेन. २ संनिधानक्रयार्थत्वं.

विशेषः । 'नैवं तृतीयया तावत्क्रयार्थैवैकहायनी ॥ यदर्था सा तदर्थश्च तत्संस्कारात्मको नयः ॥ नयनस्य परार्थत्वात्पदकर्माप्रयोजकम् ॥ परार्थानुष्ठितं तत्तु पदकर्मोपजीवति ॥'

कपालानां तुषोपवापाप्रयुक्तताधिकरणम् ॥ ११ ॥

## अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

श्रपणं तुषवापश्च कपालस्य प्रयोजकौ ॥ उत श्रपणमेवाद्यो वापार्थत्वात्तृतीयया ॥ २२ ॥
पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता ॥ प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापे प्रसञ्जनम् ॥ २३ ॥

पुरोडाशकपालेन तुषानुपवपतीति कपालेषु श्रपयतीति च श्रुतम् तत्र संशयः किं पुरोडाशश्रपणं तुषोपवापश्चोभयं प्रयोजकं कपालस्योत तुषोपवापो न प्रयोजक इति । 'तत्रोपवापशेषत्वं कपालस्य तृतीयया ॥ निर्विवादमतः सोऽपि कपालस्य प्रयोजकः ॥ सत्यमस्ति तदङ्गत्वं तथापि त्वप्रयोजकः ॥ पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् ॥' पुरोडाशार्थेनोपात्तमासादितं च कपालं तुषोपवापे चोद्यते न कपालमात्रं, नच प्रयुक्तस्य पुनः प्रयुक्तिः संभवतीत्यप्रयोजकस्तुषोपवापः ॥

---

प्रयोजकमेवेति वाच्यम् । तत्रापि ह्येकहायनी न स्वरूपेण प्रकृता किंतु एकहायन्या क्रीणातीति क्रयार्थत्वेनैवेति परप्रयुक्तत्वेन निर्ज्ञाताया एव विनियोगादिति विनिगमनाविरहासिद्धेः । तस्मादयं पूर्वपक्षो मन्द इति । **क्रयार्थैवेति** । यासौ क्रयार्थैकहायनी क्रयसिद्ध्यर्थं नीयते तस्याः सप्तमं पदं गृह्णातीति क्रयार्थाया एवैकहायन्या बुद्धौ विपरिवर्तमानायाः प्रसङ्गात्पांसुग्रहणोपकारकतामात्रेण संबन्धेऽपि सप्तमपदवाक्यनिराकाङ्क्षतया तदर्थत्वावेदकप्रमाणाभावात्क्रयार्थैकहायनी नतु पदपांसुग्रहणार्थेत्यर्थः । प्रयोजनं पूर्वपक्षे सप्तमपदस्य प्रावणि प्रक्षेपे तत्पांसोरपचारे च पुनर्नयनं कार्यम् । सिद्धान्ते तु पांस्वन्तरेणाक्षाञ्जनं कर्तव्यम् । नच वाजिनयागवदक्षाञ्जनस्य सिद्धान्ते लोप एव न्याय्य इति कथं पांस्वन्तरेणानुष्ठानमिति वाच्यम् । वाजिनयागस्य परप्रयुक्तद्रव्योपजीवित्वाद्युक्तो लोपः । इह तु न द्रव्यं परप्रयुक्तं किंतु पांसुरूपस्य द्रव्यस्य यः संस्कार एकहायन्याः सप्तमपदनिधानात्मकः स एव परप्रयुक्तः । तथाच संस्कारस्य परप्रयुक्तस्यालाभेऽप्यसंस्कृतैरेव पांसुभिरक्षाञ्जनं कर्तव्यमिति वैषम्यात् ॥

**अर्थाभिधानकर्म च०** ॥ २६ ॥ पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिं सूचयन्पूर्वपक्षमाह—**तत्रेति** । अन्यार्थत्वेनावगतस्य निराकाङ्क्षतया तुषोपवापान्वयायोगात्पुरोडाशपदमतन्त्रीकृत्य कपालेन तुषानुपवपतीत्येवं कपालमेव केवलं तुषोपवापे विनियुज्यते । एवंच कपाले श्रपयति कपालेनोपवपतीत्यनयोस्तुल्यत्वादुभाभ्यामपि कपालं प्रयुज्यते । तत्तु प्रयोगदशायां लाघवादेकमेवोभाभ्यां प्रयुज्यते । तद्वशप्राप्तपुरोडाशसंबन्धानुवादकश्च पुरोडाशशब्द इति भावः । पुरोडाशपदमतन्त्रीकृत्य केवलं कपालं विधीयत इत्ययमर्थः श्लोके केवलकपालशब्दप्रयोगादेव स्फोरितो बोध्यः । भवेदेवं यदि केवलकपालशब्दस्यैव विधेयसमर्पकत्वेन कपालमात्रविधिः स्यात् । नचैवं संभवति । तथात्वे पुरोडाशपदस्य निरर्थकानुवादतयानर्थक्यात् । तस्मात्पुरोडाशकपालशब्देन समुदायेनैव विधेयं समर्पणीयम् । तत्र पुरोडाशसंबन्धित्वेन वेषेण निराकाङ्क्षतयाऽन्यसंबन्धायोग्यत्वेऽपि पुरोडाशकपालशब्देन पुरोडाशार्थत्वाधिष्ठानं कपालं स्वरूपेण लक्षयित्वान्यत्र विनियोक्तुं शक्यते । एवंच न कपालमात्रस्य विनियोगः किंतु पुरोडाशार्थत्वाधिष्ठानस्यैव कपालस्य । तत्राधिष्ठानलक्षणया स्वरूपेण विनियोगात्पूर्वमेव पुरोडाशार्थत्वेन रूपेण विनियोगाभावेऽपि पुरोडाशार्थत्वरूपमुख्यार्थसंबन्धज्ञानानन्तरं तदधिष्ठानस्य लक्षणीयत्वेन तुषोपवापे विनियोगात्पूर्वमेव पुरोडाशार्थत्वज्ञानावश्यंभावेन पुरोडाशप्रयुक्तमेव तुषोपवाप उपजीवति नतु स्वयं प्रयुङ्क्ते प्रयुक्तस्य पुनःप्रयोगायोगादिति सिद्धान्तमाह—**सत्यमिति । ननु** पुरोडाशार्थत्वसंबन्धं प्रयोगान्तरे भूतमप्यादाय लक्षणोपपत्तेरस्मिन्प्रयोगे तुषोपवापेन कपालप्रयुक्तिः किं न स्यादिति शङ्कायां वर्तमानसंबन्धसंभवे भूतसंबन्धो न न्याय्यः । अग्निहोत्रहवण्या हवींषि निर्वपतीत्यत्र तु वर्तमानसंबन्धाभावादगत्या भूतसंबन्धाश्रयणम् । नच पुरोडाशस्य भविष्यत्त्वात्तत्संबन्धस्य वर्तमानत्वं तवापि न संभवतीति वाच्यम् । पुरोडाशस्य भविष्यत्त्वेऽपि पात्रासादनकाल एव पुरोडाशात्मकं प्रयोजनं मनसि निधाय तन्निर्वृत्तीच्छया संपाद्यासादितत्वादाद्यपरिस्पन्दप्रभृति फलनिष्पत्तिपर्यन्तकालस्य वर्तमानकालत्वेन वर्तमानपुरोडाशार्थत्वसंबन्धोपपत्तेरिति परिहारं सूचयन् श्लोकं व्याचष्टे—**पुरोडाशार्थेनेति** । अग्निहोत्रहवणीवद्भूतसंबन्धाश्रयणेऽप्यासादनस्य भूतत्वमात्रेण भूतसंबन्धोपपत्तिरिति दशमे वक्ष्यामः । प्रयोजनं पूर्वपक्षे चरुष्वपि कपालं संपाद्य तेन तुषोपवापः कर्तव्यः, सिद्धान्ते तुषोपवापस्य कपालप्रयोजकत्वाभावान्न कपालेन तुषोपवापः किंतु हस्तेन । नचात्र वाजिनयागवल्लोपः संभवति पुरोडाशकपालरूपसाधनविशेषाभावेऽपि 'गुणलोपेऽपि मुख्यस्ये'ति न्यायेन हस्तेन संभवतः तुषोपवापस्य कपालप्रयोजकत्वाभावाल्लोपायोगादिति । सूत्रार्थस्तु—अर्थेन पुरोडाशलक्षणप्रयोजनेन सहाभिधीयमानं यत्पुरोडाशकपा-

शकृल्लोहितयोः पशावप्रयोक्तृताधिकरणम् ॥ १२ ॥

**पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥**

**हृदादिः शकृदादिश्च पश्वालम्भप्रयोजकः ॥ हृदादिरेव वाद्योऽस्तु प्रकृतत्वेन साम्यतः ॥ २७ ॥**

**हविषो यागशेषत्वाच्छकृदादेर्हविरात्मनः ॥ प्रयोजकत्वं तस्यैव नेतरस्यातथात्वतः ॥ २५ ॥**

'अग्नीषोमीयं पशुमालभेते'ति प्रकृत्य 'हृदयस्याग्रेऽवद्यती'ति श्रुतं, तथा 'शकृत्संप्रविध्यति लोहितं निरस्यती'ति श्रुतम् । तत्र संशयः किं हृदयादि शकृल्लोहितं च द्वयमपि पश्वालम्भस्य प्रयोजकं उत हृदयाद्येवेति । उभयत्र पशोरश्रवणात्प्रकृतसंबन्धे चाविशेषादुभयं प्रयोजकम् । नैवम् । 'यागार्थः पशुरुत्पन्नो हविःप्रकृतिभावतः ॥ हवींषि हृदयादीनि तैरेवातः प्रयुज्यते ॥' यद्यपि हृदयादिवाक्ये पशोरश्रवणं यागार्थतया तु श्रूयते । तादर्थ्यं च न हविष्ट्वेन विशसनश्रवणात् किंतु हविःप्रकृतित्वेन । हृदयादीनि हवींषि नान्यदिति दशमे स्थितम् । अतस्तदर्थ एव पश्वालम्भः । शकृल्लोहितकर्म तु प्रतिपत्तिमात्रम् ॥

पुरोडाशस्य स्विष्टकृदप्रयुक्तताधिकरणम् ॥ १३ ॥

**एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥ [निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसंनिधानात् ॥ ३० ॥ कर्मकार्यात् ॥ ३१ ॥ लिङ्गदर्शनाच्च ॥ ३२ ॥]**

**प्रयोजकः स्विष्टकृत्किं पुरोडाशोत्तरार्धयोः ॥ यद्वा प्रयुक्तोपजीवी स्यादाद्यः स्वस्य सिद्धये ॥ २६ ॥**

**उत्तरार्धेतिशब्दस्य प्रकृताकाङ्क्षणे सति ॥ अग्न्याद्यर्थं पुरोडाशमुपजीव्यैव वर्तताम् ॥ २७ ॥**

उत्तरार्धात्स्विष्टकृते समवद्यतीति स्विष्टकृत् किमुत्तरार्धपुरोडाशयोरन्ययोः प्रयोजक उताग्नेयादि-[1]

---

लादि तत्साधनकं तुषोपवापादिकर्माप्यप्रयोजकम् । नन्व कथं कपालस्य पुरोडाशसंबन्धः संप्रति तदभावादिति वाच्यम् । भविष्यतापि पुरोडाशेन तदुद्देशेन आसादनमात्रात्संबन्धोपपत्तेः तस्य च संबन्धस्य पुरोडाशनिमित्तकत्वात्तदर्थस्यैव सतः कपालस्य तुषोपवापे विधानेन पुरोडाशप्रयुक्तत्वात्कपालस्येति ॥

**पशावनालम्भात्० ॥ २७ ॥ उभयत्रेति ।** यथा दध्यानयनस्य पयःसंबन्धित्वेन श्रुतत्वात्पयोरूपामिक्षार्थत्वं एवं पशोः हृदयादिष्वश्रवणान्न तन्मात्रार्थत्वमित्याशयः । अनेनैव कपालस्य पुरोडाशे श्रुतस्य तुषोपवापे विनियोगाद्युक्तं पुरोडाशमात्रप्रयुक्तत्वमिह तु न हृदयादिमात्रप्रयुक्तत्वं तत्संबन्धेन श्रुतस्यान्यत्र विनियोगाभावादिति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **ननु** उभयत्राश्रवणेऽपि यथा नयनस्य केवलक्रयार्थत्वं न पांसुग्रहणार्थत्वं तद्वदिह किं न स्यादित्याशङ्क्य नयनस्योभयत्र संबन्धित्वेनाश्रवणेऽपि एकहायन्यास्तृतीयया क्रयार्थत्वान्नयनस्यापि तत्संस्कारकतया तादर्थ्यं युक्तम् । प्रकृते तु न तथा किंचिन्नियामकमस्ति किंतु हृदयादेः प्रतिसंबन्ध्यपेक्षायां संनिधानादग्नीषोमीयवाक्यगतपशुसंबन्ध इत्येतावन्मात्रं च शकृल्लोहितयोरपि तुल्यमित्युभयार्थत्वमेवेत्याशयेनाह—**प्रकृतेति । विशसनेति ।** विशसनेन पशोर्नाशेन तस्य हविष्ट्वासंभवादिति भावः । **ननु** एवमपि हृदयादिद्वारेव शकृल्लोहितद्वारापि यागार्थत्वं स्यात्, एवंच संप्रव्यथनं निरसनं च यागार्थत्वाद्देवतोद्देशेन संत्यक्तस्य शकृल्लोहितस्य प्रतिपत्तिरस्त्वित्यत आह—**हवींषीति ।** हृदयस्याग्रेऽवद्यतीति हविःसंस्कारकावदानसंयोगात्तेषामेव हविष्ट्वमित्यर्थः । **नन्वेवं** तर्हि हृदयादिद्वारा यागार्थत्वे तत्प्रयुक्तएव पशुः स्यादिति शकृल्लोहितप्रयुक्तत्वाशङ्कानवकाशात् किमर्थमिदमधिकरणमित्याशङ्क्य शकृल्लोहितसंप्रव्यथननिरसनात्मकं कर्मार्थकर्म । शकृल्लोहितयोर्भूतभाव्युपयोगाभावेन प्रतिपत्तित्वासंभवात् । ततश्च तस्याविशसनविधित्वात्प्राण्यपेक्षायां संनिहितपशोरेव तत्संबन्धित्वेनान्वयात्तद्द्वारापि पशोर्यागसाधनत्वमवर्जनीयम् । एवंच शकृल्लोहितस्य हविष्ट्वाभावेऽपि शकृल्लोहितकर्मणोऽर्थकर्मतया प्रयोजकत्वशङ्कायां भूतभाव्युपयोगविधुरत्वेऽपि हृदयाद्यनुनिष्पादितया आकीर्णकरत्वेन प्रतिपत्त्यर्हत्वाच्छकृदादेस्तत्कर्मणः प्रतिपत्तित्वम् । ततश्चाप्रयोजकत्वमित्येवं प्रतिपत्तित्वव्युत्पादनार्थमिदमधिकरणमित्याशयेनाह—**शकृदिति ।** एवंच तुषोपवापफलीकरणहोमवाजिनयागादेः प्रतिपत्तित्वं न्यायसाम्याद्बोध्यम् । वाजिनयागस्य तु प्रतिपत्तित्वं विशेषतः सप्तमे प्रतिपादयिष्यामः । प्रयोजनं पूर्वपक्षे हृदयाद्यर्थं विशस्तस्य शकृदाद्यपचारे तदर्थं पश्वन्तरं संपाद्यं सिद्धान्ते तु लोप इति । सूत्रार्थस्तु—पशौ विषये लोहितशकृतोरकर्मत्वमप्रयोजकत्वं तदर्थं पश्वनालम्भादिति ॥

**एकदेशद्रव्यं चोत्पत्तौ० ॥ २८ ॥** ननु लोके इक्षुखण्डमस्मै प्रयच्छेत्युक्ते रात एवेक्षोः खण्डः प्रतीयते तद्वदुत्तरार्ध-

---

१ उताग्र्यादि.

प्रयुक्तोपजीवीति संशये, 'नाग्न्याद्यर्थस्य हविषो देवतान्तरसङ्गतिः । कृत्वा ह्यन्यद्धविस्तस्मादवद्येतोत्तरार्धतः ॥' उच्यते—'उत्तरार्धादिशब्दानां साकाङ्क्षार्थाभिधायिनाम् ॥ नापेक्षणीयसंबन्धात्प्रागर्थोऽध्यवसीयते ॥' उत्तरार्धादिशब्दा हि प्रतिसंबन्ध्यपेक्षा न स्वातन्त्र्येणार्थं बोधयन्ति । स्ववाक्ये च न प्रतिसंबन्धी श्रुतोऽस्योत्तरार्धादिति । तेनविना साकाङ्क्षं वाक्यं प्रकृतसंबन्धेन निराकाङ्क्षीभवति । प्रकृतं चाग्न्यादिप्रयुक्तं हविरिति तदुत्तरार्धग्रहणादप्रयोजकत्वम् । अन्यार्थस्याप्यन्यसंबन्धो वचनात्प्रतिपत्तित्वाच्चाविरुद्धः ॥

अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम् ॥ १४ ॥

**अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात् ॥ ३३ ॥ [न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥ हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥ अभावदर्शनाच्च ॥ ३६ ॥ सति सव्यवचनम् ॥ ३७ ॥ न तस्येति चेत् ॥ ३८ ॥ स्यात्तस्य मुख्यात् ॥ ३९ ॥]**

**अभिघार्यं प्रयाजानां शेषेण हविरत्र किम् ॥ शेषधारणतत्पात्रे कार्ये नो वाभिघारणम् ॥ २८ ॥**
**नान्यथा तेन ते कार्ये न कार्ये प्रतिपत्तितः ॥ प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात् ॥ २९ ॥**

वाजपेये क्रतुपशवः प्राजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते । पर्यग्निकरणान्ते कृते प्राजापत्यानामालम्भनस्योत्कर्षः श्रूयते ब्रह्मसाम्न्यालभत इति क्रतुपशवः प्रातःसवन एवालभ्यन्ते, प्रयाजाश्च तत्रैवानुष्ठिताः प्रकृतौ प्रयाजशेषेण हवींष्यभिघारयतीति श्रुतम् । तदिह प्राप्तं संदिह्यते किं प्रातःसवनानुष्ठितानां प्रयाजानां शेषो माध्यंदिनकाले प्राजापत्यवपाभिघारणाय धारयितव्यः । तदर्थं च पात्रान्तरमुत्पाद्यं जुह्वाव्यापृतत्वात् उत नेति । तदर्थं च किं हविःसंस्कारार्थमभिघारणमुत शेषस्य प्रतिपत्तिरिति । संस्कारत्वे[4] प्राजापत्यवपासंस्कारो माविलोपीति धारणं स्यात् । प्रतिपत्तित्वे तु

---

शब्दादपि प्रकृतस्योत्तरार्धप्रतीतेः कथं हविरन्तरप्रयुक्तिः । अन्यथा इडाद्यर्थमपि हविरन्तरं स्यादिति शङ्कां निराकुर्वन्पूर्वपक्षमाह—**नाग्न्यादीति** । सर्वप्रदानाधिकरणोक्तरीत्या कृत्स्नस्य च पुरोडाशस्याग्नेयताकरणाद्यजमानस्य तत्र स्वामित्वाभावेन तस्य देवतान्तरोद्देशेन त्यागायोगात्तदर्थं पुरोडाशान्तरं संपाद्य तस्योत्तरार्धात्स्विष्टकृद्यष्टव्य इडादौ तु देवतान्तरसंगत्यभावात्प्रकृतग्रहणं न दुष्यति । नच पुरोडाशान्तरग्रहणे शेषात्स्विष्टकृतोऽवद्यतीति शेषशब्दविरोधः । आज्येन शेषं संस्थापयतीत्यत्र कर्मान्तर इव शेषशब्दस्य पुरोडाशान्तरेऽप्युपपत्तेरिति भावः । अनेनैव पूर्वत्र हृदयाद्यर्थस्य पशोः शकृल्लोहितग्रहणसंभवात्तस्याप्रयोजकत्वेऽपीह प्रकृतपुरोडाशोत्तरार्धग्रहणासंभवात्स्विष्टकृतः प्रयोजकत्वमिति प्रत्यवस्थानात्संगतिरिति सूचितम् । यदि प्रकृतसंबन्धमनपेक्ष्यैवोत्तरार्धादिति वाक्यं स्वार्थबोधनक्षमं स्यात्तदा द्रव्यान्तरप्रयोजकत्वं स्यात् । नत्वेतदस्ति । उत्तरार्धशब्दस्य सापेक्षतयाऽस्योत्तरार्धादिति संबध्य ज्ञाने वाक्यार्थबोधापर्यवसानात् । एवंच कस्येत्यपेक्षायां संनिहिताग्नेयस्येत्येवमुत्तरार्धवाक्यं प्रकृतसंबन्ध्युत्तरार्धमेवावलम्बत इति न पुरोडाशान्तरप्रयुक्तेरवकाश इति सिद्धान्तयति—**उत्तरार्धादिशब्दानामिति । स्ववाक्य इति** । यदि पुरोडाशस्योत्तरार्धादिति श्रूयेत तदा नैरपेक्ष्यं स्यान्नैतदस्तीत्यर्थः । त्यक्तस्यापि देवतास्वत्वाभावात्पुनःस्वीकृत्य देवतान्तरार्थं त्यागः संभवति । नच त्यक्तस्य पुनःस्वीकार आचारविरोधः । प्रत्यक्षश्रुत्या आचारबाधनादित्याशयवानाह—**अन्यार्थस्यापीति** । विद्यमानशेषस्य प्रतिपत्त्यपेक्षत्वादपि प्रकृतसंबन्ध एव न्याय्य इत्याशयेनाह—**प्रतिपत्तित्वादिति** । सूत्रार्थस्तु—एकदेशद्रव्यकं स्विष्टकृदादि कर्माप्रयोजकं कर्मोत्पत्तिदशायामेव विद्यमानेनाग्नेयपुरोडाशादिना संबन्धादिति ॥

**अभिघारणे विप्रकर्षात्० ॥ ३३ ॥ क्रतुपशव इति** । आग्नेयैन्द्राग्नादय इत्यर्थः । तन्त्रेणोपक्रमे तदानीमेवालम्भनीयत्वाद्विचारानुपपत्तिमाशङ्क्यालम्भोत्कर्षपक्षस्यापि सद्भावात्तत्पक्षेऽयं विचार इत्याह—**पर्यग्नीति** । प्रकृताविति दर्शपूर्णमासयोरित्यर्थः । **प्राप्तमिति** । चोदकपरम्परयेति भावः । **व्यापृतत्वादिति** । आज्यभागादाविति शेषः । **उतेति** । उत न धारयितव्य इति पात्रान्तरं नोत्पाद्यमित्यर्थः । **तदर्थं चेति** । अयमेवाधिकरणाङ्गसंशयः । पूर्वस्तु फलसंशयः । तत्संशयकोटिद्वयस्य तन्त्रसारादौ पूर्वोत्तरफलत्वेन लेखनादिति ध्येयम् । **ननु** हविःसंस्कारकल्पेऽपि पुरोडाशकपालवत्परकीयद्रव्योपजीवनादभिघारणं न प्रयोजकमित्यतः पूर्वपक्षे फलफलिभावमुपपादयति—**संस्कारत्व इति** । परप्रयुक्तद्रव्योपजीवनाद्द्रव्यप्रयोजकत्वाभावेऽपि तद्धारणप्रयोजकत्वमस्त्येव, धारणंविना संस्कारासंभवादतएव प्रणीतानिनयनकाले यद्वाज

---

१ त्वन्यद्धविः. २ शब्दा न स्वातन्त्र्येण. ३ संबन्धे निरा. ४ संस्कारत्वपक्षे.

संनिहितास्वेव क्रतुपशुवपासु तत्सिद्धेर्न धारणम्। 'तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा॥ हविषामेव संस्कारो न शेषस्य विपर्ययात्॥' उपयोक्ष्यमाणसंस्कारो ह्युपयुक्तसंस्कारादभ्यर्हितः। हवींषि च तथा शेषस्तूपयुक्तः किं तस्य संस्कारेण। द्वितीयया च हविषामेव प्राधान्यं न शेषस्य विपरीतविभक्तिनिर्दिष्टस्य। तस्मान्न्यायतः शब्दतश्च हविःसंस्कारोऽभिघारणम्। 'सत्यमेवं तथापीह शेषस्य प्रतिपादनम्॥ न्याय्यं दृष्टार्थतालाभादन्यथाऽदृष्टकल्पनात्॥' शेषस्य प्रतिपत्तिरपेक्षिता तादर्थ्येऽभिघारणं दृष्टार्थं भवति। हविःसंस्कारस्त्वनपेक्षितोऽदृष्टं कल्प्येत। नच दृष्टेसति तद्युक्तम्। अतः प्रयाजशेषं हविःषु क्षारयतीति वाक्यार्थः। 'हविराघारनियमात्तत्संस्कारोऽपि गम्यते॥ तस्मादुभयसंस्कारः स्विष्टकृत्सूक्तवाकवत्॥' यस्तु हविःसंस्कारं नेच्छति प्रतिपत्तौ च द्रव्यस्याधारत्वा-

---

सनेयिभिराम्नातं तुषनिरसनं तत्पुरोडाशकपालोपादानस्याप्रयोजकमपि तत्पालनस्य प्रयोजकमेवेति भावः। **ननु** प्रतिपत्तित्वेऽपि धारणप्रयोजकत्वं संभवत्येव। परिधानीये कर्मणि विहितप्रतिपत्तेर्यावज्जीवं पात्रधारणप्रयोजकत्ववदित्यतः सिद्धान्ते हेतुहेतुमद्भावमुपपादयति—**प्रतिपत्तित्व इति**। परिधानीये कर्मणि विहितप्रतिपत्तेर्यावज्जीवधारणं विनानुपपत्तेस्तत्प्रयोजकत्वेऽपि प्रयाजशेषप्रतिपत्तेः संनिहितहविर्मात्रेणापि सिद्ध्या धारणं विनानुपपत्त्यसंभवान्न धारणप्रयोजकत्वमिति वैषम्यमिति भावः। **द्वितीयेति**। अनेन यथा पूर्वत्रोत्तरार्धशब्दबलात्प्रकृतग्रहणं तथेह द्वितीयाविभक्तिबलाद्धविःसंस्कारकत्वमिति प्रत्यवस्थानात्सङ्गतिरिति सूचयति—**अभ्यर्हित इति**। उपयुक्तसंस्कार उत्पन्नस्योत्पत्त्यपूर्वस्यातिशयाधाने उपयुज्यते। उपयोक्ष्यमाणसंस्कारस्तु तदुत्पत्तावेवोपयुज्यत इत्यर्थः। तथा उपयोक्ष्यमाणानीत्यर्थः। **विपरीतेति**। तृतीयाविभक्तिनिर्दिष्टस्येत्यर्थः। **दृष्टेति**। आकीर्णकरस्य प्रतिपत्तौ स्रुचो रिक्ततापत्तेरिति भावः। **ननु** हविःसंस्कार्यत्वावेदकद्वितीयाश्रुतिबलाददृष्टार्थत्वमपि स्वीकार्यमिति शङ्कायां द्वितीयादयो हि विभक्तयो न साक्षाच्छेषशेषिभावाभिधायिकाः किंतु साध्यसाधनत्वमात्रमभिधाय विध्यपेक्षितं समीहितं समर्पयन्तीत्येतावन्मात्रम्। प्रकृते च शेषस्य प्रतिपत्तिरेवापेक्षिता न हविःसंस्कार उपस्तरणादेस्तत्संस्कारस्य सद्भावात्। एवंचापेक्षितत्वात्प्रतिपत्तिमेव विधिः फलत्वेन स्वीकुरुते न हविःसंस्कारम्। अतएव सक्तून् जुहोतीत्यत्र सत्यामपि द्वितीयायां न सक्तूनां संस्कार्यत्वमिति परिहारं सूचयन् श्लोकं व्याचष्टे—**शेषस्येति**। एवंच सक्तुवदेवात्रापि विभक्तिव्यत्ययाश्रयणेन तृतीयाया द्वितीयार्थवृत्तित्वं द्वितीयायाश्च सप्तम्यर्थवृत्तित्वमित्याह—**अत इति**। एवंचात्रापेक्षाबलाद्विभक्तेरन्यथानयनं न प्रातिपदिकानुरोधेनेति विभक्त्यन्यथानयनस्य प्रातिपदिकानुरोधनिबन्धनत्वाभावाद्यथा प्रोद्गात्रीणामित्यत्र प्रातिपदिकस्य वचनानुसारेण लक्षणा तथात्र तृतीयानुसारेण प्रयाजशेषशब्दस्याधिष्ठानलक्षणया हविःसंस्कारे तद्विनियोगः किं न स्यादिति शङ्कायाः, तथानेनैव न्यायेनादितिः पाशानित्यत्रापि प्रातिपदिकानुरोधे सिद्धे पाशाधिकरणस्य पौनरुक्त्यमिति शङ्कायाश्च नावकाश इति ध्येयम्। **नन्वेवं** प्रयाजशेषस्यैकस्मिन्हविषि प्रक्षेपेणापि प्रतिपत्तिसिद्धेः संनिहितानां सर्वेषामभिघारणं न स्यात्। नच हविषां गुणत्वेन तद्गतबहुत्वस्य विवक्षितत्वात्सर्वेषामभिघारणसिद्धिरिति वाच्यम्। प्रधानयागार्थानां हविषां प्रयाजशेषंप्रति गुणत्वमत्यन्तायुक्तमिति वक्ष्यमाणत्वेन तद्बहुत्वविवक्षानुपपत्तेः, तद्विवक्षायामपि बहुत्वस्य कपिञ्जलवत्त्रित्वपर्यवसानेन संनिहितानां त्र्यधिकानां क्रतुहविषामभिघारणाभावप्रसङ्गादित्याशङ्क्य हविःसंस्कारस्याप्यङ्गीकारात्संनिहितसर्वहविरभिघारणोपपत्तिरित्याशयेनाह—**हविरिति**। नच तत्र प्रक्षेपत्यागवदिहांशस्याभावः। इहापि हविराघारनियमांशस्य सत्वात्। नचैवं प्राजापत्यवपानां संस्कारो माविलोपाति पात्रान्तरोत्पादनं स्यादिति वाच्यम्। हविःसंस्कारो हि नियमफलमित्युक्तम्। यत्र च प्राग्विधेरनियमप्रसक्तिस्तत्र नियमविधिः प्रवर्तते। प्रयाजानन्तरं कर्तव्याज्यभागद्रव्यासंसर्गार्थं च संनिहितेष्वेव यत्र क्वचन शेषस्य प्रतिपादनं नासंनिहितेष्वित्यसंनिहितानां नियमविषयत्वाभावेन न तदर्थं पात्रान्तरोत्पत्तिप्रसक्तिरिति भावः। प्राभाकरास्तु केवलप्रतिपत्तिरेव न हविःसंस्कारः। एवंच एकाभिघारणेनापि प्रतिपत्तिसिद्धेर्न संनिहितसर्वहविरभिघारणम्। नचैवं हविषां गुणत्वात्तद्बहुत्वविवक्षापत्तिः। नहि शेषगतत्वाद्बहुत्वस्य विवक्षा किंतूपादेयगतत्वात्। इह च हविषां प्रधानार्थमुपात्तानां प्रयाजशेषंप्रति शेषत्वेन तदर्थमुपादेयत्वाभावान्नास्ति विवक्षा। अस्यैव हविषः सर्वप्रयोगेष्वभिघारणमिति विशेषनियमाभावेन कदाचित्कस्यचिदभिघारणमित्यनियमेन सर्वहविषामभिघारणाभिप्रायं बहुवचनमित्याहुस्तन्मतमनूद्य निरस्यति—**यस्त्विति**। तन्मते सर्वै ध्रुवामेवाग्रेऽभिघारयति। ततो हि प्रथममाज्यभागौ यक्ष्यन्भवतीत्येतदनुपपन्नं स्यात्। अत्र हि ध्रौवाज्यस्य प्रथममुपयोक्ष्यमाणत्वहेतुना प्रथममभिघारणं समर्थ्यते, तच्चाभिघारणस्योपयोक्ष्यमाणहविःसंस्कारकत्वे सत्येवावकल्प्यते नान्यथा। तथा अग्रे

---

१ वपास्वभिघारणसिद्धेः.

देकस्मिन्नेव हविषि सर्वक्षारणं बहुवचनं त्वनियमाभिप्रायमित्याह, स कथं स वै ध्रुवामेवाग्रेऽभिघारयति ततो हि प्रथमावाज्यभागौ यक्ष्यन्भवतीति लिङ्गं समर्थयेत् । अनेन हविषां संस्कार्यत्वं समुच्चयश्चावगम्यते । प्रधानयागाद्युपयोगिनां हविषामपि प्रयाजशेषंप्रति गुणत्वमत्यन्तानुपपन्नमित्यास्तां तावत् ॥

समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥ १५ ॥

## समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥४०॥ [वचने हि हेत्वसामर्थ्यं ॥४१॥]

**चतुर्थस्य प्रयाजस्य होमायौपभृतं घृतम् ॥ जुह्वामानयतीत्यौपभृतं नैषा प्रयोजयेत् ॥ ३० ॥**
**प्रयोजयेदुतानीतिः प्रयाजाद्यखिलार्थता ॥ श्रुतौपभृत आज्येऽतो जौह्वेन विकल्पनात् ॥ ३१ ॥**
**न प्रयोजकता मैवं नियतार्थं तु जौह्वम् ॥ अतिहायेड इत्युक्ते चतुर्थे सा प्रयोजयेत् ॥ ३२ ॥**

दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रूयते 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्त'दिति । तथातिहायेडोबर्हिःप्रति समानयति जुह्वामौपभृतमिति । तत्र विचारः यदेतच्चतुर्थप्रयाजोपक्रमे समानयनं तत्किमौपभृतस्याज्यग्रहणस्य प्रयोजकमुत नेति । तदर्थं च किमुपभृति यत्प्रयाजार्थमाज्यं तस्येदं समानयनं उत यदनूयाजार्थं तस्येति । तत्र 'सर्वार्थं हि प्रयाजार्थमविशेषाद्बहुश्रुतेः ॥ सर्वादौ तत्समानीतमिदानीं नोपभृत्यदः ॥' प्रयाजानूयाजेभ्यस्तदित्यविशेषश्रवणात्सर्वप्रयाजार्थमौपभृतं प्रयाजशब्दाच्च विभक्त्यश्रवणात् अनूयाजशब्दात्परा या विभक्तिः सानुषज्यते

---

शब्दार्थक्रमोऽपि बह्वभिघारणंविनानुपपन्नस्तस्मात्तन्मतमयुक्तमित्याह—**स कथमिति** । स्यादेवं यदि प्रयाजशेषवाक्यविहितं यदभिघारणं तस्य ध्रौवाज्यविषये प्राथम्यमनेनोच्येत, नत्वेवं, किंत्वग्रतः विशिष्टाभिघारणान्तरमेवानेन विधीयते । ततश्च प्रयाजशेषवाक्यविहिताभिघारणस्य केवलप्रतिपत्तित्वे न किंचिद्बाधकमिति शङ्कां निराकर्तुं लिङ्गमित्युक्तम् । अयं भावः—इदं हि प्रकरणाविशेषादसंयुक्तं प्रधानस्येति तार्तीयाधिकरणे 'लिङ्गदर्शनाच्चे'ति सूत्रेण बर्हिस्तद्धर्माणामङ्गप्रधानार्थत्वे तत्समानन्यायस्य प्रयाजशेषाभिघारणस्य क्रमानुवाद इति स्वीकर्तव्यम् । नचैतदधिकरणपूर्वपक्षे स्थित्वा तल्लिङ्गोपन्यासः । यद्वा तद्वाक्यं नास्तीति कृत्वाचिन्तास्त्विति वाच्यम् । तदुभयस्याप्यगतिकगतित्वादिति । किंच हविषां संस्कार्यत्वाभावे प्रयाजशेषंप्रति गुणत्वमेव स्यात्तच्च तत्संभवतीत्याह—**प्रधानेति** । ननु हविःसंस्कारत्वे तेषामुद्देश्यत्वादेकस्मिन्वाक्ये उद्देश्यद्वयासमवायाद्धविःसंस्कारकत्वं न युक्तम् । किंच हविःसंस्कारकत्वे प्रागुक्तविभक्तिव्यत्ययोऽपि निष्फलः, हविःषु द्वितीयाया एवोपपत्तेः । तस्मात्प्रधानार्थानामपि हविषां पुरोडाशकपालवदधिष्ठानलक्षणया गुणत्वमेव न्याय्यमित्यत आह—**इत्यास्तामिति** । अधिष्ठानलक्षणाङ्गीकारे आवश्यकत्वाद्द्वितीयातृतीयाविभक्त्यननुगुणत्वाच्च प्रयाजशेषशब्दस्यैवाधिष्ठानलक्षणा स्यात् । प्रधानवाचकहविःशब्दलक्षणापेक्षया मुख्यत्वेऽपि प्रयाजशेषशब्दस्य लक्षणाया ज्यायस्त्वादेकस्मिन्वाक्ये । श्रौतमेवोद्देश्यद्वयं न समवैति इहतु प्रतिपत्तिरेव श्रौती विधेर्दृष्टपक्षपातित्वादपेक्षितत्वाच्च, हविःसंस्कारस्त्वार्थिक इति न तद्द्वयसमावेशविरोधः । नचैवं दृष्टेनैव विधेश्चारितार्थ्याददृष्टहविःसंस्कारे मानाभाव इति वाच्यम् । हविराधारनियमांशस्यानर्थक्यापत्तेरेव तत्र मानत्वात्तन्नियमांशस्य प्रयोजनजिज्ञासायां प्रत्यासत्त्या हविर्गतसंस्कारस्यैव प्रयोजनत्वकल्पनौचित्यात् । एवंच व्यत्ययाश्रयणमपि सार्थकमेव । तेनविना प्रतिपत्तिश्रौतत्वस्य हविःसंस्कारार्थिकत्वस्य चासिद्धेरिति भावः । सूत्रार्थस्तु—यथा पशावनूयाजार्थपृषदाज्यधारणार्थं पात्रभेदस्तथा प्राजापत्यवपाभिघारणे निमित्ते तदर्थं पात्रभेदः स्यादिति । यद्यपीदं सूत्रमग्नीषोमीयहृदयाद्यभिघारणपरतयापि व्याख्यातुं शक्यते तथापि हेतुत्वाच्च सहप्रयोगस्येत्याद्यग्रिमसूत्राणां प्राजापत्यविषयत्वात् भाष्ये तद्विषयतयैवेदमपि व्याख्यातम् ॥

**समानयनं तु मुख्यं०** ॥ ४० ॥ अतिहायेति बहुवचनान्त इट्शब्दस्तृतीयप्रयाजवचनः । तृतीयप्रयाजमिष्ट्वा बर्हिःप्रति बर्हिराख्यचतुर्थप्रयाजोपक्रमकाले उपभृति विद्यमानमाज्यं जुह्वां समानयत इत्यर्थः । **तदर्थं चेति** । यदि प्रयाजार्थस्य समानयनं तदा यदाज्येन प्रयाजानुष्ठानं तत्समानयनद्वारकं स्यात् । ततश्च प्रयाजाः स्वकीयमाज्यं प्रयुञ्जानाः समानयनद्वारा प्रयुञ्जीरन्निति द्वारभूतं सत्समानयनमाज्यतद्धर्माणां प्रयोजकं, यदि चानुयाजार्थस्य तदा परप्रयुक्तद्रव्यसंस्कारत्वादप्रयोजकमिति फलफलिभावः । **ननु** प्रयाजद्वयचिकीर्षया क्रियमाणं तदर्थस्यैव न्याय्यमिति कथं पूर्वःपक्ष इत्याशङ्क्य, भवेदेवं यदि चतुर्थोत्तमप्रयाजमात्रार्थमौपभृतं स्यान्नत्वेवमित्याह—**सर्वार्थमिति । प्रयाजशब्दादिति** । सुबन्तस्य समासविधानादस्ति काचित्प्रयाजशब्दात्सुब्विभक्तिः सा समासत्वाल्लुप्तेति वाच्यम् । साच बहुवचनरूपैव नतु द्विवचनरूपा । तस्या अत्यन्ताश्रुतत्वेन तदपेक्षया श्रुतबहुवचनात्मकविभक्तिकल्पनस्यैव युक्तत्वादित्यर्थः । **इदं** चाभ्युच्चयमात्रम् । प्रयाजशब्दाद्बहुवचनक-

प्रयाजेभ्य इति । ततश्च बहुवचनात्सर्वार्थं न चतुर्थोत्तमयोरेव । अतः सर्वप्रयाजादावानीतमिदानीमुपभृति न तदस्ति केवलमनुयाजार्थमेवास्ति तस्येदं समानयनमनुयाजप्रयुक्तस्य संस्कारमात्रार्थत्वादप्रयोजकम् । उभयोरपि जौहवौपभृतयोः प्रयाजार्थयोर्ग्रहणयोः सर्वप्रयाजविषययोरेकार्थत्वाद्विकल्पः । उच्यते—'समानयनमुद्दिश्य कालमात्रं विधीयते ॥ अदृष्टकल्पनानेकविधानं चान्यथा भवेत् ॥' यदुपभृति प्रयाजार्थे गृहीतं तस्य प्राप्तमेव जुह्वामानयनमनूद्य कालमात्रं विधीयते अतिहायेडोबर्हिःप्रतीति । तथाहि सति अल्पार्थविधानं दृष्टार्थं च समानयनं भवति । अनूयाजार्थस्य त्वदृष्टार्थमत्यन्ताप्राप्तं क्षारणं विधीयते । तस्य च काल इत्यनेकार्थविधिदोषोऽदृष्टकल्पनं च स्यात् । अतः प्रयाजार्थस्येदं समानयनं प्रयाजद्वयं कर्तुं क्रियत इति प्रयोजकमेवाज्यस्य प्रयाजानूयाजेभ्य इत्यविशेषश्रवणं कालविधिबलादुपरितनप्रयाजद्वयविषयमुपसंह्रियते । एवंच जौहवमाद्यानामेव त्रयाणां भवतीति विषयभेदात्समुच्चयः ॥

औपभृतजौहवयोः क्रमेणोभयानुभयार्थताधिकरणम् ॥ १६ ॥

**तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ [तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥ औपभृतं तथेति चेत् ॥ ४४ ॥ स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥]**

**जुहूपभृद्ध्रुवास्वाज्यं सर्वार्थं वा व्यवस्थितिः ॥ सर्वार्थमविशेषात्स्यात्प्रयाजार्थं हि जौहवम् ॥ ३३ ॥**

**प्रयाजानूयाजहेतुः स्यादौपभृतमाज्यकम् ॥ ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ ३४ ॥**

चतुर्जुह्वां गृह्णात्यष्टावुपभृति चतुर्ध्रुवायामित्युत्पन्नान्याज्यानि सर्वाणि[3] किमविशेषेण सर्वकार्या-

ल्पनेऽपि प्रयाजानूयाजेभ्य इत्यस्योद्देश्यसमर्पकतया तत्र प्रयाजबहुत्वविवक्षानुपपत्तेरिति ध्येयम् । **अनुयाजप्रयुक्तस्येति** । अनेन यथाभिघारणस्य परप्रयुक्तद्रव्यसंस्कारकत्वादप्रयोजकत्वमेवं समानयनस्यापीति प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **ननु** चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रीनितः प्राचीनं प्रयाजान्यजतीति प्राथमिकप्रयाजत्रयस्य जौहवचतुर्गृहीतावरुद्धत्वादौपभृतस्यावशिष्टद्वयार्थत्वमेवेत्यत आह—**उभयोरिति** । यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्यविशेषेण विनियोगाज्जौहवमपि सर्वप्रयाजार्थमेव । त्रीनितः प्राचीनमिति वाक्यं तु अवयुत्यानुवादत्वेनोपपन्नं सिद्धान्तेऽपि न तद्विधायकं। समानयनकालविधित एव जौहवस्याद्यप्रयाजत्रयार्थत्वसिद्धेः सिद्धान्तेऽपि वक्ष्यमाणत्वादिति भावः । **प्राप्तमेवेति ।** जुह्वा जुहोतीति जुह्वैव होमस्य विधानात्तस्य च समानयनं विनानुपपत्तेः प्राप्तमित्यर्थः । अनूयाजार्थस्य समानयनपक्षे हि यदनूयाजार्थं तस्य प्रयाजार्थवन्न सर्वस्य समानयनं संभवति अनूयाजानां संप्रत्यननुष्ठानात् जुह्वा अन्यत्र व्यापृतत्वाच्च, किंतु तदेकदेशस्य जुह्वां क्षारणमात्रं, ततश्चात्यन्ताप्राप्तत्वमदृष्टार्थत्वं चावर्जनीयमिति क्षारणमिति वदतो भावः । स्वपक्षे दृष्टार्थत्वं स्फोरयति—**प्रयाजद्वयं कर्तुमिति । कालेति** । तत्काले समानीयमानस्य प्राचीनत्रयार्थत्वासंभवादिति भावः । एवं चाष्टदोषदुष्टविकल्पोऽपि परिहृतो भवतीत्याह—**एवंचेति** । क्वचित्कोशेषु दृश्यते येत्वर्थादेव समानीतस्येत्यादि तस्यायमर्थः । प्राभाकरा जौहवं सर्वेषां प्रयाजानां द्रव्यमौपभृतं तु तत्संस्कारकत्वमात्रेण सर्वप्रयाजार्थं, ततश्च पूर्वपक्षेऽपि तयोः समुच्चयएव । एवंचौपभृतस्य स्वयं द्रव्यत्वाभावेन प्रयाजानुष्ठानार्थमर्थादादौ समानेयमिति निर्बन्धाभावात्प्रयाजार्थत्वेऽपीदानीमेव तस्य समानयनं, तच्च जुह्वाज्यगतार्द्रताजननेन कृतकरिष्यमाणसर्वप्रयाजार्थमिति औपभृतस्य समानमुखेन प्रयाजेष्वदृष्टं कार्यं अनूयाजेषु दृष्टमेव, तेनानूयाजप्रयुक्तमेवौपभृतमिति न समानयनं तस्य प्रयोजकमिति पूर्वपक्षयन्ति, तन्मतमनूद्य निरस्यति—**येत्विति । किमिति** । तेषामिहादृष्टार्थानयनस्य प्रयोजकत्वेसति किमयुक्तं न किमपीत्यर्थः । तस्यापि प्रयोजकत्वमुपपद्यत इति यावत् । ततश्च समानयनमदृष्टार्थत्वादप्रयोजकमौपभृतस्येति पूर्वपक्षकरणमनुपपन्नमित्यर्थः । तदेवोपपादयति—**तदपीति** । तथाच प्रयोजनत्वाविशेषादनूयाजवत्समानयनमपि प्रयोजकमेव स्यादिति भावः । प्रयोजनं पूर्वपक्षे उपभृति यत्प्रयाजार्थं तत्सर्वमादौ समानीय बर्हिःप्रयाजकालेऽनूयाजार्थस्य जुह्वां किंचित्क्षारणं कदाचिज्जौहवेनैव पञ्चापि प्रयाजाः । अत्रापि बर्हिःकाले औपभृतस्य किंचित्क्षारणं सिद्धान्ते तु जौहवेन त्रीनिष्ट्वा औपभृतार्धेनावशिष्टाविति । सूत्रार्थस्तु—समानयनमौपभृतप्रयोजकं स्यात् । आतिथ्यायां चतुर्गृहीतान्याज्यानि । नह्यत्रानूयाजान्यक्ष्यन्भवतीति चतुर्गृहीतबहुत्वलिङ्गात्, तद्धि जौहवौपभृतयोः प्रयाजेषु समुच्चये घटते इतरथा जुहूपभृतोरन्यतरदेकं प्रयाजार्थं चतुर्गृहीतं ध्रुवायां चापरमिति चतुर्गृहीतद्वयमेव स्यात् तस्मादातिथ्यायां चतुर्गृहीतबहुत्वलिङ्गाज्जौहवौपभृतयोः प्रयाजेषु समुच्चयेसति समानयनस्योपरितनप्रयाजद्वयार्थकत्वात्प्रयोजकत्वमिति ॥

**तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥** समानयनस्य प्रयाजार्थत्वेन परकीयद्रव्यसंस्कारत्वाभावात्प्रयोजकत्वं यदुक्तं

१ तथाह्यल्पार्थं. २ दृष्टार्थे च. ३ स सर्वाणि.

र्थानि उत जौहवं प्रयाजार्थमौपभृतमनूयाजार्थं अथवा जौहवं प्रयाजार्थमौपभृतमुभयार्थं ध्रौवं तद्व्यतिरिक्तविषयमिति संशये 'उत्पत्तावविशेषेण सर्वार्थप्रतिभोद्गमः ॥ अवयुत्यानुवादश्च प्रयाजाद्यर्थता-वचः ॥' यदि तु 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्त'दिति वचनात्तत्केवलप्रयाजार्थं स्यात्, ततो 'यदुपभृति अनुयाजेभ्यस्त'दिति वचनात्तदपि केवलानुयाजार्थं प्रसज्येत । अथ तदनुवादमात्रं प्रयाजवाक्यमपि तथास्तु अविशेषादित्येतावानत्र प्रथमः पक्षः । 'नानार्थकं वचो युक्तमर्थवत्त्वस्य संभवे ॥ तेन जुह्वां प्रयाजार्थमितरार्थं तथेतरत् ॥' नहि प्रमाणबलादायातमनिष्टमिति शक्यमुत्स्रष्टुं, अतो भवत्वौपभृतं केवलानूयाजार्थं जौहवं च प्रयाजार्थमिति द्वितीयः पक्षः । 'जौहवस्य प्रयाजैकशेषत्वं युक्तमीरितम् ॥ अनूयाजैकशेषत्वमितरस्य न मृष्यते ॥' 'यदुपभृति प्रयाजानूयाजेभ्यस्त'दिति वचनादुभयार्थं तत् । अनूयाजेभ्यस्तदिति वचनमगत्याऽवयुत्यानुवादः ॥

उपभृति द्विचतुर्गृहीताचरणाधिकरणम् ॥ १७ ॥

**तदष्टसंख्यं श्रवणात् ॥ ४६ ॥ [अनुग्रहाच्च जौहवस्य ॥ ४७ ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥]**

**अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधिः ॥ चतुर्द्वयग्रहे वाथः स्यादष्टश्रुतिमुख्यतः ॥ ३५ ॥**
**चतुर्गृहीतं होमाङ्गं फलवत्त्वान्न बाध्यते ॥ चतुर्द्वित्वं लक्ष्यतेऽतः सहानीत्यर्थमष्टता ॥ ३६ ॥**

अष्टावुपभृति गृह्णातीति किमष्टसंख्यैकग्रहणविधिः उत चतुःसंख्यग्रहणद्वयविधिरिति विचारः । 'विधीयतेऽष्टसंख्याकं ग्रहणं श्रूयते हि तत् ॥ लक्ष्यते तु चतुःसंख्याद्वयमत्राष्टसंख्यया ॥' नच श्रुतिसंभवे लक्षणा युक्ता । चतुर्गृहीतं जुहोतीति सामान्यवचनं प्रयाजानूयाजयोर्विशेषतोऽष्टगृहीतविधानाद्बाध्यते । उच्यते—'चतुर्गृहीतं होमाङ्गमष्टसंख्याश्रुतिः पुनः ॥ ग्रहणे तेन होमाङ्गं चतुष्ट्वं

---

तदनुपपन्नम् । जौहवौपभृतध्रौवाणां प्रयाजेषु समुच्चयेसति समानयनस्य वैकल्पिकत्वेन यदौप्रभृतेन प्रयाजा इज्यन्ते तदा सर्वादावेव प्रयाजार्थौपभृतैकदेशस्य जुह्वां समानेयतया चतुर्थप्रयाजोपक्रमसमये उपभृति प्रयाजार्थाज्याभावेन परकीयद्रव्यस्यैव तदानीं समानयनमिति समानयनस्य प्रयोजकत्वाभावादिति वौपभृतं केवलानुयाजार्थं तत्प्रयुक्तमेवेति समानयनस्य तत्प्रयोजकत्वासंभवादिति वा पूर्वाक्षेपेण प्रत्यवस्थानात्सङ्गतिः । एवंच शेषत्वचिन्तापीयं पूर्वाधिकरणसिद्धान्तसमर्थनरूपत्वात्प्रयुक्तिविचारप्रस्तावे उपपन्नेति ध्येयम् । **उत्पत्ताविति** । प्रयोजनविशेषासंयोगात्प्रकरणेन सर्वार्थत्वावगम इत्यर्थः । **ननु** यावत्प्रकरणेन सर्वार्थत्वं कल्प्यते ततः प्रागेव प्रत्यक्षवचनेन नैराकाङ्क्ष्यान्न कल्पनावकाश इत्याशङ्क्याह—**यदीति** । प्रयाजानूयाजेभ्यस्तदित्युभयार्थवाक्यप्राप्तत्वादनूयाजवाक्यमनुवादकं युक्तं नतु प्रयाजवाक्यम् । वाक्यान्तरेण जौहवस्य प्रयाजार्थत्वाप्राप्तेः प्रकरणस्य दुर्बलत्वेन तत्प्राप्त्या प्रत्यक्षवचनस्यानुवादकत्वायोगात् । नच प्रयाजेषु जौहवबाधप्रसङ्गान्नोभयार्थवाक्यं विधिः व्रीहियववाक्यवत्पाक्षिकबाधेऽपि विधित्वोपपत्तेरतोयं पक्षो दुर्बल इति सूचयति—**एतावानिति** । **वच इति** । प्रयाजवाक्यमनूयाजवाक्यं चेत्यर्थः । नचोभयार्थवाक्यप्राप्तत्वात्कथमनूयाजवाक्यस्यार्थवत्त्वमिति वाच्यम् । उभयार्थवाक्येनौपभृतस्योभयार्थत्वप्राप्तावपि केवलानूयाजार्थस्याप्राप्त्याऽनूयाजवाक्यस्य केवलानूयाजार्थत्वविधित्वेनार्थवत्त्वसंभवात् । एवंचौपभृतं कदाचिदुभयार्थं कदाचित्केवलानूयाजार्थमिति विकल्प एव द्वितीयपूर्वपक्षे बोध्यः । **अगत्येति** । उभयार्थत्वं यद्यौपभृतस्य पाक्षिकं स्यात्तदा कदाचिज्जौहवेनैव पञ्चापि प्रयाजा यष्टव्याः स्युरिति जौहवं चतुर्थोत्तमयोर्विकल्पितं स्यात् । तथाच यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वाक्यं त्रिष्वाद्येषु नित्यं जौहवं विधत्ते अन्त्ययोस्तु विकल्पेनेति वैरूप्यं स्यात् । तस्मादौपभृतस्य नित्यमेवोभयार्थत्वं वाच्यमित्यनूयाजवाक्यस्य केवलानूयाजार्थत्वविधायकत्वासंभवादगतिकत्वमिति भावः । सूत्रार्थस्तु—तत्र जौहवाद्याज्ये उत्पत्तिः कार्यविशेषासंयुक्ता अतः सर्वार्था स्यादिति ॥

**तदष्टसंख्यं श्रवणात् ॥ ४६ ॥** औपभृताज्यप्रसङ्गात्सङ्गतिः । **लक्ष्यते इति** । अष्टसंख्यायाश्चतुःसंख्याद्वयाविनाभावादिति भावः । **ननु** प्रयाजानूयाजयोश्चतुर्गृहीतावरुद्धत्वादष्टसंख्याविधिः कथमत आह—**चतुर्गृहीतमिति** । **सामान्येति** । चतुर्गृहीतवाक्यस्यानारभ्यवादत्वेन सर्वहोमविषयत्वात्प्रयाजानूयाजव्यतिरिक्तविषयं तद्वाक्यमिति भावः ।

बाधते न सा ॥' ननु ग्रहणस्य होमार्थत्वादर्थात्तुल्यार्थतां प्राप्य बाधः स्यात्। केवलग्रहणाङ्गत्वे हि अष्टसंख्या निष्फला स्यात्। उच्यते—'प्रधानाङ्गं चतुःसंख्या ग्रहाङ्गमितरा पुनः ॥ प्रधानाङ्गं च गाङ्गाङ्गमलं भवति बाधितुम् ॥' तेनेयमष्टसंख्या प्रधानाङ्गभूतां चतुःसंख्यां बाधितुमशक्नुवन्ती ग्रहणमात्राङ्गतां च निष्फलत्वादनासादयन्ती चतुःसंख्याद्वयलक्षणार्था विज्ञायते ॥ इति शास्त्रदीपिकायां चतुर्थाध्यायस्य प्रथमः पादः ॥

---

भिन्नविषयत्वाभिप्रायकं श्लोकं मत्वा शङ्कते—**नन्विति**। ननु ग्रहणस्य होमार्थत्वेऽपि संख्याया ग्रहणमात्रार्थत्वान्नार्थादपि तुल्यविषयत्वमित्यत आह—**केवलेति**। ततश्च ग्रहणद्वाराऽष्टसंख्याया अपि होमाङ्गत्वादार्थिकतुल्यविषयत्वमस्तीति भावः। श्लोकतात्पर्यमाविष्करोति—**उच्यते इति**। अङ्गाङ्गस्य प्रधानोपयोगित्वेऽपि अङ्गगुणविरोधाधिकरणन्यायेन भाष्यकारोक्तगुणमुख्यव्यतिक्रमाधिकरणन्यायेन च बाध्यत्वादिति भावः। **अशक्नुवन्तीति**। ततश्च ग्रहणद्वारा न होमपर्यन्तधावनक्षमेति भावः। **ननु** तर्हि ग्रहणएव पर्यवस्यत्वित्यत आह—**ग्रहणमात्रेति**। **चतुःसंख्याद्वयेति**। नन्वत्र यद्यष्टसंख्यया चतुःसंख्याद्वयं लक्ष्यते तदौपभृतमष्टसंख्याकमेव हविर्न भवति किंतु चतुःसंख्याकं हविर्द्वयमिति पर्यवसितम्। तथाच सति यदुपभृति प्रयाजानूयाजेभ्यस्तदित्येतद्वाक्यं प्रयाजार्थमेकं चतुर्गृहीतमनूयाजार्थमपरं विदधातीति स्यात्। ततश्चेडान्तायामातिथ्यायामनूयाजाभावेनोपभृति एकस्यैव चतुर्गृहीतस्य प्रयाजार्थे चोदकतः प्राप्तेश्चतुर्गृहीतान्याज्यानि भवन्तीति वचनं व्यर्थं स्यात्। अष्टसंख्याग्रहणविधौ तु प्रयाजार्थमेवाष्टसंख्याकग्रहणप्राप्तौ तद्व्यावर्तनार्थत्वेनातिथ्यायां चतुर्गृहीतवचनमर्थवत्। अथ चतुर्गृहीतद्वयस्याप्येकं प्रयाजार्थमपरमनूयाजार्थमिति प्रकृतौ व्यवस्थासिद्धिरेवातिथ्यागतवाक्यस्य फलम्। असति हि तस्मिन् यदुपभृतीति अविशेषविधानेन चतुर्गृहीतद्वयस्यापि प्रयाजानुयाजार्थत्वप्राप्तेरनिवार्यत्वात्। नचैकस्मिन्यागे हविर्द्वयं नान्वेतीति वाच्यम्। पशुयागस्य हृदयाद्यनेकहविष्ट्ववद्वचनबलाच्चतुर्गृहीतद्वयरूपहविर्द्वयस्याप्येकैकयागार्थत्वोपपत्तेः। आतिथ्यागतवाक्यसद्भावे तु अननूयाजायां तस्यां चतुर्गृहीतान्तरव्यावृत्तिबलात्प्रकृतावेव चतुर्गृहीतं प्रयाजार्थमपरमनूयाजार्थमिति व्यवस्था सिद्ध्यति। यथा चैतत्तथा विधिरसायनकृद्भिः प्रपञ्चितमितिचेन्न। सिद्धान्ते हि अष्टावुपभृतीत्यनेन चतुःसंख्याकग्रहणद्वयं न विधीयते येन तद्वाक्यविहितचतुर्गृहीतद्वयस्यापि यदुपभृतीत्यनेन प्रयाजानूयाजार्थतायां प्राप्तायामातिथ्यावाक्यं व्यवस्थार्थं स्याच्चतुःसंख्याया अनारभ्यवाक्येनैव प्राप्तेस्तथा ग्रहणमपि न विधेयम्। ग्रहणंविना चतुःसंख्याया होमाङ्गत्वानुपपत्त्या ततएवार्थाद्ग्रहणस्यापि प्राप्तेः आज्यं गृह्णातीति वचनाद्ग्रहणस्य प्राप्तिरिति केचित्। एवं चतुःसंख्याया ग्रहणस्य चान्यतः प्राप्तेरष्टसंख्यया चतुःसंख्याद्वयं लक्षयित्वा यच्चतुर्गृहीतद्वयं तदुपभृतीति चतुर्गृहीतद्वयस्यापि एकपात्रतामात्रं विधीयते। अनारभ्यविधितश्चतुःसंख्यायाः निरपेक्षाया एव होमाङ्गत्वावगमाद्यथाप्राप्तानुवादादत्रानूद्यमानमपि चतुर्गृहीतद्वयं परस्परनिरपेक्षमेव होमद्वयार्थमवगम्यते। तथाचाष्टावुपभृतीत्यत्रैवौपभृतस्य चतुर्गृहीतद्वयस्य प्रत्येकं होमार्थत्वावगमात्तदनुसारेण यदुपभृतीत्यस्यैव वर्णनीयत्वाद्यदुपभृतीतिवाक्यं प्रयाजार्थं एकं चतुर्गृहीतमनूयाजार्थमपरमिति व्यवस्थयैव होमद्वयार्थत्वमौपभृतस्य विधत्ते इति वक्तव्यम्। एवंच प्रकृतौ व्यवस्थाया अन्यथासिद्धत्वादातिथ्यावाक्यमनर्थकमेव सिद्धान्ते स्यात्। तस्मादष्टसंख्याकग्रहणविधिरावश्यक इतिचेत्। उच्यते—आतिथ्यावाक्यस्य प्रयाजार्थमष्टगृहीतप्राप्तौ तन्निवृत्तिफलकत्वमनुपपन्नमेव येन तत्सिद्ध्यर्थं प्रकृतावष्टावुपभृतीत्यनेनाष्टसंख्याकग्रहणविधिः स्यात्। तथासति नह्यत्रानूयाजान्यक्ष्यन्भवतीति उपभृति चतुर्गृहीतान्तराभावे अनूयाजाभावलक्षणहेतुकथनपरवाक्यशेषानन्वयापत्तेः। एतेन यथा पश्ववदानेषु पञ्चावत्तैव वपा कार्येत्यनेन चतुरवत्तानामपि पञ्चावदानविधिरेवमिह पञ्चावत्तानामपि चतुर्ग्रहणविधानार्थत्वेनातिथ्यावाक्यमर्थवदिति तन्त्रसारोक्तमनुपपन्नम्। तत्रापि वाक्यशेषानन्वयस्य तुल्यत्वात्। तस्मादातिथ्यावाक्यं न विधिः किंतु लाघवेनेडान्ततास्तुत्यर्थमिति न काप्यनुपपत्तिः। एवंचोक्तरीत्या चतुर्गृहीतद्वयस्य व्यवस्थायां सत्यां ततएव यत्रानुयाजाभावस्तत्रोपभृति चतुर्गृहीतान्तराभावस्य बर्हिःप्रयाजोपक्रमे प्रयाजार्थमौपभृतादाज्यादर्धसमानयनस्य च सिद्धेरातिथ्यायां चतुर्गृहीते विधीयमानेऽनूयाजाभावस्य हेतुत्वाभिधानबलेनानूयाजाभावे चतुर्गृहीतान्तरनिवृत्तिफलकत्वात्प्रयाजार्थे जुह्वां समानयने नियोगतोऽर्धसमानयनसिद्धिफलकत्वाच्च। नह्यत्रेति वाक्यं पारमार्थिकहेतुपरमेव न हेतुपरं निगद इति हेत्वधिकरणे न्यायसुधायां पारमार्थिकहेतुत्वाभिधानं चिन्त्यमिति दिक्। प्रयोजनं पूर्वपक्षे वरुणप्रघासेष्वग्नीषोमौ स्विष्टकृदर्थे यजति नोत्तरं क्रियते इत्यनूयाजाभावेऽप्यष्टगृहीतं सिद्धान्ते तु अनूयाजाभावे चतुर्गृहीतमिति सूत्रे तच्छब्द औपभृताज्यपर इति ॥

**इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥**

# चतुर्थाध्याये द्वितीयः पादः।

स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

**स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ [जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोतिशब्दः ॥ ६ ॥]**

स्वरुं कुरुत इत्यत्र स्वरुर्यूपात्पृथक्छिदाम् ॥ प्रयोजयेन्न वाद्योऽस्तु विशिष्टस्य विधानतः ॥ १ ॥
आद्यस्य यूपखण्डस्य स्वरुत्वाख्यविशेषणे ॥ विहिते लाघवं तस्मादनुनिष्पन्न एव सः ॥ २ ॥

अग्नीषोमीये पशौ श्रूयते 'यूपस्य स्वरुं करोति स्वरुणा पशुमनक्ती'ति। तत्र विचारः किमेष स्वरुर्यूपात्पृथङ्निष्पन्नः छेदनादीनां यूपधर्माणां खादिरादेश्च वृक्षस्य प्रयोजकः उत यूपमनुनिष्पन्नः शकलो ग्रहीतव्य इति। तदर्थमिदं चिन्त्यते किं स्वरुं करोतीति स्वरुभावना विधीयते। तस्याश्च करणेतिकर्तव्यताकाङ्क्षायां यूपस्य स्वरुमित्यनेन यूपशब्दो लक्षणया खादिरादिवृक्षं करणत्वेन छेदनादीनि च कर्माणीतिकर्तव्यतात्वेन समर्पयति। तथोत्पन्नश्च स्वरुः स्वरुणा पशुमनक्तीति विनियुज्यते उतानेन वाक्येनाञ्जनसाधनं स्वरुरित्यवगते कुतोऽसावुपादेय इत्यपेक्षायां यूपस्य स्वरुमित्यनेन यत्स्वरुमुपादत्ते तद्यूपादिति विधीयते। तत्र 'करोतिर्भावनावाची सा च श्रुत्या विधीयते ॥ वाक्यार्थे-विधिरन्याय्यो लक्षणा चान्यथा भवेत् ॥' अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधौ वाक्यार्थविधानं करोतिश्चापूर्वभावनावचनः सन्नुपादानं लक्षयेत्। स्वरुभावनाविधिस्तु श्रुत्या भवति। करोतिश्च श्रौत इति स एव न्याय्यः। तस्याश्च करणेतिकर्तव्यता[1] स्ववाक्य-गतेनैव[2] यूपशब्देन शेषत्वेन समर्प्येत[3] इति प्रयोजकः स्वरुः। नैवम् 'बह्वर्थविधिरेवं स्यान्मुख्यशब्दस्य

**स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥** पूर्वस्मिन्पादे साक्षाद्यागसाधनहविरादेः प्रयोक्तृता चिन्तिता। इहतु पारम्पर्येण तत्साधनस्वर्वादेरिति पादान्तरत्वमानन्तर्यं चेत्याहुः—**किमिति**। किमेष स्वरुः छेदनादीनां खादिरादेश्च प्रयोजक उत नेति। तदर्थं च किमेष यूपात्पृथङ्निष्पन्नः उत यूपानुनिष्पन्नः शकलो गृहीतव्यः। तदर्थं च किं स्वरुं करोतीति स्वरुभावनाविधिरुत स्वरूपादानापादानविधिरिति संशयः। तत्र स्वरुकर्मकभावनापेक्षितेतिकर्तव्यताविरहे तद्विध्ययोग्यस्य स्वरोर्विनियोगाभावे तद्भावनाविध्यानर्थक्यस्य च परिहारेण स्वरुभावनाविधियोग्यतार्थं तस्याश्चेत्याद्युक्तिः स्वरूपादानापादानविधिं संभावयितुमनेन वाक्येनेत्याद्युक्तिश्चेति द्रष्टव्यम्। **साचेति**। श्रुत्या पदश्रुत्येत्यर्थः। यद्यपि स्वरुं भावयेदिति स्वरुकर्मकभावनायाः स्वरुपदसमभिव्याहारगम्यत्वादत्रापि पक्षे वाक्यार्थविधिरेव तथापि करोत्यर्थभावनासामान्यस्यावच्छेदकसमर्पणेन स्वरुशब्दो विशेषरूपावगतिमात्रनिमित्तं नतु स्वरुशब्देन विधेयान्तरं किंचित्समर्प्यत इति करोत्यर्थभावनाया एव विधानाच्छ्रुत्यर्थविधिरुपपन्न इति भावः। **अञ्जनेति**। स्वरुणा पशुमनक्तीति यः प्रथमः शकलः परापतेत् स स्वरुः कार्य इति वाक्यद्वयपर्यालोचनयाञ्जनसाधनशकलविशेषः स्वरुशब्दार्थ इत्यवगमात्तस्य चानुपात्तस्याञ्जनसाधनत्वानुपपत्त्यार्थप्राप्तं यदुपादानं तदनूद्य यूपादित्येवमपादानविशेषविधिरिति सिद्धान्तपक्षे करोतिपरेण प्रत्ययेन करोत्यर्थे यूपादानकत्वविधानाद्वाक्यार्थविधिः स्यादित्यर्थः। **लक्षयेदिति**। सर्वेषामपि भावनान्वयित्वेन भावनावाचिकरोतेः प्राधान्याज्जघन्यस्यापि तस्य लक्षणा न युक्तेति भावः। **यूपशब्देनेति**। यूपशब्देन स्वार्थे संबन्धात्खादिरादिकाष्ठस्य जोषणादिक्रियाणां च लक्षणयोपस्थितौ सत्यां योग्यतानुसारेण काष्ठस्य करणतया जोषणादीनामितिकर्तव्यतात्वेन चान्वय इति भावः। एवंच यथा यूपाय तक्षतीति यूपार्थतया च्छेदनादिविधानाद्यूपस्तत्प्रयोजकस्तथा स्वरुवाक्यगतेन यूपशब्देन स्वरुभावनार्थतयापि विधानात्स्वरुरपि तत्प्रयोजक इत्याह—**इतीति**। नचात्र पुरोडाशकपालन्यायः तत्र पुरोडाशार्थत्वाधिष्ठानमेव कपालं स्वरूपेण विनियुज्यते। न केवलकपालं पुरोडाशपदानर्थक्यप्रसङ्गात्। इहतु केवलं तक्षणादय एव यूपशब्देन लक्षयित्वा विनियुज्यन्त इत्यर्थाभिधानकर्मत्वाभावादस्ति प्रयोजकत्वमिति वैषम्यादिति भावः। **मुख्यशब्दस्येति**। नच त्वत्पक्षेऽपि यूपशब्दलक्षणा तुल्या अदृष्टदृष्टसंस्कारनिचयरूपयूपस्यापादानत्वासंभवेन तदाश्रयखादिरादिकाष्ठलक्षणावश्यंभावादधिका च तव षष्ठ्या अपादाने लक्षणेति वाच्यम्। यूपस्येति षष्ठ्यर्थसंबन्धसामान्यस्य यूपाश्रयकाष्ठापादानत्वरूप

१ निष्पन्नः. २ व्यता वाक्यगतेनैव. ३ समर्थंत इति.

लक्षणा ॥ अल्पार्थविधिरस्माकं जघन्यस्य च लक्षणा ॥' स्वरुभावनायां हि करणेतिकर्तव्यताविशिष्टायां विधीयमानायामतिभाराद्वरं विशेषणमात्रविधानम्, मुख्यस्य च यूपशब्दस्य त्वत्पक्षे लक्षणा, मत्पक्षे जघन्यस्य करोतेः प्राप्तस्वरूपादानानुवादेन यूपानुनिष्पन्नशकलस्योपादानादप्रयोजकः स्वरुः ॥

शाखाया आहार्यताधिकरणम् ॥ २ ॥

## शाखायां तत्प्रधानत्वात् ॥ ७ ॥

प्राचीमाहरतीत्यत्र दिक्शाखा वास्तु दिक्श्रुतेः ॥ आहार्यत्वं दिशो नास्ति शाखा तेनोपलक्ष्यते ॥ ३ ॥

शाखामधिकृत्य 'प्राचीमाहरती'ति श्रुतं तत्र किमयं दिग्वाद उत शाखावाद इति संशयः । तत्र —'श्रुत्या दिग्वचनः शब्दः शाखायां लक्षणा भवेत् ॥ आहर्तव्याभिधानात्तु शाखावादत्वनिश्चयः ॥' प्राचीमाहरतीत्याहर्तव्यवचनः प्राचीशब्दः । नच शक्या दिगाहर्तुं । अथ दिशं प्रत्याहरतीत्युच्यते प्रतिशब्दाध्याहार एव दोषः । प्रकृतशाखापदसामानाधिकरण्याच्च शाखावाद एवायं वृक्षस्य या प्राची शाखा तामिति ॥

छेदनस्य शाखाप्रयुक्तताधिकरणम् ॥ ३ ॥

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ॥८॥ [श्रुत्यपायाच्च ॥९॥]

शाखां छित्त्वोपवेषं च मूले कुर्वीत शाखया ॥ नुदेद्वत्सान्कपालानि स्थापयेदुपवेषतः ॥ ४ ॥
द्वयं प्रयोजकं छित्तेर्वत्सापाकृतिरेव वा ॥ आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः ॥ ५ ॥
उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः ॥ पूर्यतेऽतोऽनुनिष्पादी स तस्माद्युज्यतेऽन्तिमः ॥ ६ ॥

'शाखां छिनत्ति शाखामाहरति मूलतः शाखां परिवास्योपवेषं करोति, उपवेषेण कपालान्युपदधाति शाखया वत्सानपाकरोती'ति श्रूयते । तत्र संशयः किं शाखाच्छेदनाहरणपरिवासनानां

---

विशेषपर्यवसानमात्रस्वीकारेण लक्षणाया अभावादिति भावः । **जघन्यस्येति** । भावना हि प्रत्ययवाच्यैव सती कारकैः संबध्यते न करोतिधातुवाच्या । धात्वर्थस्य कारकान्वयायोग्यत्वस्य भावार्थाधिकरणे प्रपञ्चितत्वात् । तथाच करोतिधातोः प्राधान्याभावाज्जघन्यस्यैव तस्य लक्षणा युक्तेति भावः । एवं पूर्वपक्षे केवलप्रत्ययप्रयोगानुपपत्तेः प्रत्ययानुग्रहार्थता करोतेः स्यात् । तद्वरं लक्षणयोपादानपरत्वमित्यपि द्रष्टव्यम् । **यूपानुनिष्पन्नेति** । यूपार्थच्छेदनानुनिष्पन्नप्रथमशकलस्य स्वरुत्वेनोपादेयत्वात्स्वरुनाशे येनकेनचिच्छकलेनाञ्जनं कार्यं नतु स्वर्वर्थं पुनस्तक्षादिप्रयुक्तिरित्यर्थः । सूत्रार्थस्तु—स्वरुर्यूपात्पृथङ्निष्पत्तिकः स्याद्यूपस्य स्वरुं करोतीति स्वक्रियाविधायकशब्दवत्त्वादिति ॥

**शाखायां तत्प्रधानत्वात्** ॥ ७ ॥ यूपशब्दवत्प्राचीशब्दस्यापि न लक्षणेति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**श्रुत्येति** । मुख्यस्य प्रातिपदिकस्य मुख्यार्थत्वाय जघन्यद्वितीया सप्तम्यर्थे व्याख्येया दिशश्चाधारत्वमाधारदेशावच्छेदकत्वादुपपन्नम् । यद्वा दिशं प्रत्याहरतीत्यर्थः । नच प्रतिशब्दाध्याहारदोषः । हरतेर्द्विकर्मकतया प्राच्या अप्रधानकर्मतयापि प्रतिशब्दं विनापि तदर्थलाभात् । नचाहर्तव्याभावात्साकाङ्क्षत्वं प्रकृतशाखाया एवाहर्तव्यत्वेनान्वयात् । नचैवमप्यवध्यनिर्देशात्प्राचीशब्दस्य साकाङ्क्षत्वं । प्राच्यां दिशि राजानं क्रीणातीतिवद्विहारदेशस्यैवावधित्वसंभवात् । एवंच प्राचीदिगाहरणाङ्गत्वात्तत्प्रयुक्तेति भावः । विनियोगश्रुतेः प्राधान्यात्तदनुसारेण मुख्याप्यभिधात्री श्रुतिर्नेयेत्याशयेन सिद्धान्तमाह—**आहर्तव्येति** । आहरणक्रियायाः कर्मापेक्षायां स्ववाक्यगतकर्मलाभे वाक्यान्तरगतग्रहणायोगादाहर्तव्याभिधायकः प्राचीशब्द इति भावः । **प्रतिशब्देति** । प्रथमं स्वरसतः प्रधानकर्मत्वप्रतीतेस्तद्व्यावृत्त्यर्थं प्रतिशब्दाध्याहार आवश्यक इति भावः । **ननु** विशेष्यसापेक्षत्वान्न प्राचीशब्दस्याहर्तव्याभिधायकत्वमित्याशङ्क्य शाखामाहरतीति समानविभक्तिनिर्दिष्टप्रकृतशाखासत्त्वान्न दोष इत्याशयेनाह—**प्रकृतेति** । शाखाया वृक्षावयवत्वादुपस्थितस्य वृक्षस्यैवावधित्वं न्याय्यं नत्वनुपस्थितविहारदेशस्य । एवंच प्राच्या दिशः शाखाविशेषणत्वाच्छाखाप्रयुक्तैव दिक् । ततश्च वृक्षस्य या प्राचीशाखा साहर्तव्या नतु या काचिच्छाखा विहारप्राग्देशे आहर्तव्येत्याह—**वृक्षस्येति** । सूत्रार्थस्तु—प्राचीशब्दः शाखायां स्यात् तत्प्रधानत्वात्तस्याः प्रकृतत्वेन प्राचीशब्दस्य तत्प्राधान्यादिति । इदं न पृथक्सूत्रं किंत्वग्रिमसूत्रावयव एवाधिकरणान्तरत्वेन भाष्ये व्याख्यात इत्याहुः ॥

**शाखायां तत्प्रधानत्वात्, उपवेषेण विभागः स्याद्वैषम्यात्** ॥ ८ ॥ प्राच्या दिशः केवलशाखाप्रयोज्यत्वेऽपि छेदनादीनां न केवलाग्रप्रयोज्यत्वं किंतु मूलाग्रोभयप्रयोज्यत्वमिति प्रत्यवस्थानात्सङ्गतिः । परिवास्य छित्त्वेत्यर्थः ।

---

१ द्वैषम्यं तत. २ वत्समपा.

वत्सापाकरणं कपालोपधानं च द्वयमपि प्रयोजकं उतोपधानमप्रयोजकमिति । तदर्थमिदं चिन्त्यते किं मूलार्थमपि च्छेदनादिकमुताग्रार्थमेवेति । तत्र—'शाखाशब्दः समूलस्य नाग्रमात्रस्य वाचकः ॥ छेदनादि च शाखार्थं द्वयं तस्मात्प्रयोजकम् ॥' शाखां छिनत्तीति द्वितीयया शाखार्थं छेदनादिकं द्वयमपि मूलमग्रं च सहैव शाखाशब्दोऽभिधत्ते नाग्रमात्रम् । अतो यदुपवेषसंज्ञस्य मूलस्य कार्यमुपधानं यच्चाग्रकार्यं वत्सापाकरणादिकं तयोरुभयोरपि छेदनादिकमङ्गं परिवासनं च द्वयोर्विभागार्थं तस्मादुभयं प्रयोजकम् । उच्यते—'मूलापादानकं ह्यत्र परिवासनमुच्यते ॥ तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिवासनम् ॥ तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता ॥ अन्यार्थेन तु मूलेन कपालमुपधीयते ॥' यद्यपि छेदनादिवाक्ये समूलमग्रमाचष्टे शाखाशब्दः । परिवासनवाक्ये अग्रमेव मूलतः । परिवासनं हि तत्र विधीयते न परिवासनमात्रम् । नच मूलस्य मूलतः परिवासनं संभवतीत्यग्रमेव परिवासनवाक्ये शाखाशब्देनोच्यते । तदर्थं च परिवासनं परिवासनविशेषणं च मूलं तद्द्वारेणाग्रार्थमेव, समूलस्य छेदनमाहरणं च कथं नाम मूलतः परिवासनं शाखायाः स्यादित्येवमर्थम् । नह्यनाहृते मूले मूलतः परिवासनं संभवति । तस्मात्परिवासनं समूलमाहरणं छेदनं च सर्वमग्रकार्यार्थम् । नच परिवास्येति क्त्वाप्रत्ययादुपवेषकरणार्थं परिवासनं वाक्यसंयोगाद्बलीयः स्याद्द्वितीयया शाखाभिधानाग्रार्थत्वावगमादुपवेषं करोतीति साकाङ्क्षमन्यार्थानुनिष्पन्नेन मूलेन निराकाङ्क्षीक्रियते । करोतिश्च पूर्ववदादाने वर्तते । यदिदमग्रार्थपरिवासनानुनिष्पन्नं तत्कपालोपधानसाधनतयावगतोपवेषत्वेनोपादत्त इति न च शाखां परिवास्य मूलत उपवेषं करोतीत्यन्वयः येन मूलस्योपवेषार्थता लभ्येत । व्यवहितकल्पनाप्रसङ्गात् । तस्मादग्रार्थत्वात्सर्वस्य तदेव प्रयोजकम् ॥

अपाकरोति मातृसकाशात्पृथक्करोतीत्यर्थः । **किमिति** । यद्यपि मूलाग्रगोचरो विचारः प्रवर्तनीयस्तथापि मूलाग्रप्रयुक्तेस्तत्कार्यकपालोपधानादिप्रयुक्तिपर्यवसानात्तद्गोचर एव स प्रवर्तितः किं मूलार्थमपीति । मूलार्थत्वे तद्द्वारा तत्कार्यार्थत्वात्तत्प्रयुक्तिः फलतीति भावः । **समूलस्येति** । समूलस्याग्रस्य वाचको नाग्रमात्रस्येत्यर्थः । **नाग्रमात्रमिति** । तथात्वेऽग्रमात्रस्यैव छेदनाहरणादि स्यान्न मूलस्येति भावः । तथापि कथमुपधानाद्यर्थत्वमित्याशङ्क्य मूलाग्रद्वारेत्याशयेनाह—**अत इति** । ननु शाखामाच्छिनत्तीति छेदनादिवाक्येषु शाखाशब्दस्य समूलवाचकत्वेऽपि परिवासनवाक्ये मूलत इति श्रवणान्मूलस्य मूलापादानकपरिवासनासंभवादग्रमात्रवचनत्वात्परिवासनस्य तादर्थ्ये सति छेदनादीनामपि तादर्थ्यमेवेत्यत आह—**परिवासनंचेति** । परिवासनवाक्ये शाखाशब्दस्याग्रमात्रवाचित्वेऽपि न तन्मात्रार्थत्वं परिवासनस्य । मूलत इति सार्वविभक्तिकतसेराश्रयणेन मूलस्यापि द्वितीयान्ततया परिवासनस्य मूलार्थत्वस्यापि संभवात्ततः परिवासनं मूलाग्रविभागद्वारा उभयार्थमेव नाग्रमात्रार्थमित्यर्थः । प्रयोगप्राचुर्याद्विशेषविधानाच्चापादानार्थक एव तसिर्नतु सार्वविभक्तिक इत्याशयेनाह—**मूलापादानकमिति** । ननु भवतु परिवासनमग्रार्थं तथापि मूलं छेदनादेः प्रयोजकं किं न स्यादित्यत आह—**तद्विशेषणेति । इत्यग्रमेवेति** । नचैवं शाखाशब्दस्य लाक्षणिकत्वप्रसङ्गः । मूलाभावेऽपि शाखाव्यवहारस्य लोके शाखया वत्सानपाकरोतीति शाखया गाः प्रस्थापयति शाखया गां दोग्धि त्रिवृत्पलाशशाखायां दर्भमयं भवतीति वेदे च दर्शनेन छिन्नावशिष्टाग्रभागस्यापि शाखाशब्दमुख्यार्थत्वात्, ततश्च यावत्परिवासनं न कृतं तावत्समूलाग्रवचनः शाखाशब्दः। कृते तु परिवासनेऽग्रमात्रार्थवचनः । यथाङ्गुल्यादिकिंचिदवयवविच्छेदे छिन्नावशिष्टवचनो देवदत्तशब्दस्तद्वदिति भावः। समूलस्य छेदनादाहरणाच्च मूलार्थत्वमपि किं न स्यादिति मन्दाशङ्कां निराकरोति—**समूलस्येति । नचेति** । ततश्च परिवासनविशेषणं मूलमपि तद्द्वारा उपवेषकरणार्थमेवेति भावः । **वाक्यसंयोगादिति** । उपवेषमिति द्वितीया न परिवासनक्रियामपेक्ष्येति न तया परिवासनस्योपवेषार्थत्वप्रसक्तिः । क्त्वाप्रत्ययश्च पौर्वापर्यमात्रेणाप्युपपन्न इति भावः । **ननूप**वेषं करोतीति कर्मतया भाव्यमानस्य करणाकाङ्क्षायां मूलस्यैव संनिहितस्य करणत्वेनान्वयादुपवेषार्थत्वमपि मूलस्य स्यादग्रमात्रार्थत्वमित्युभयप्रयुक्तत्वमेवेत्यत आह—**उपवेषमिति** । वाक्यसंयोगात्स्ववाक्यश्रुताग्रार्थमेव मूलं ततश्च यदग्रार्थपरिवासनानुनिष्पन्नं मूलं तेनोपवेषं करोतीति परकीयोपजीवनात्रोपवेषकरणप्रयुक्तिर्मूलस्येत्यर्थः । वस्तुतस्तु यूपस्य स्वरुं करोतीत्यत्रेव करोतेरादानार्थत्वादुपवेषस्य भाव्यत्वमेवासिद्धम् । ततश्च स्वरुवदेवाप्रयोजकत्वं तस्येत्याह—**करोतिश्चेति** । ननु मूलस्योपवेषार्थत्व एव वाक्यसंयोगो न त्वग्रार्थत्व इत्याशङ्क्य निराह—**नचेति** । प्रयोजनं पूर्वपक्षे उपवेषनाशे पुनः शाखाहर्तव्यता । पौर्णमास्यादावपि शाखाहर्तव्या सिद्धान्ते तूभयत्रापि न शाखाहर्तव्या। ततश्च तत्रोपवेषाभावायेनकेनचित्काष्ठेन कपालोपधानमिति । सूत्रार्थस्तु—शाखायां शाखाप्रधाने मूलतः शाखां परिवास्येति वाक्ये उपवेषेण परिवासनस्य विभागोऽसंबन्धः स्यात् द्वितीयया शाखायाः करोतिक्रियापेक्षत्वेन शाखावैषम्यादुपवेषस्येति ॥

शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ४ ॥

**हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात् ॥ १० ॥ [प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेत् ॥ १२ ॥ न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥]**

**प्रस्तरं शाखया सार्धं प्रहरेत्प्रहृतिस्त्वियम् ॥ शाखाया अर्थकर्मत्वं प्रतिपत्तिस्ततोचिता ॥ ७ ॥**
**विहितः प्रस्तरे यागः शाखायाः साहचर्यतः ॥ तथात्वादर्थकर्मत्वे हृतिः शाखां प्रयोजयेत् ॥ ८ ॥**
**हरतिर्यागवाची नो प्रतिपत्तिस्ततो भवेत् ॥ पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत् ॥ ९ ॥**

'सूक्तवाकेन प्रस्तरं प्रहरती'ति हरतिर्यागात्मा मान्त्रवर्णिको देवताविधिरिति स्थितम् । इदमपरं श्रूयते—सह शाखया प्रस्तरं प्रहरतीति। तत्र संशयः किं शाखाप्रहरणं [यागस्यैवोपलक्षणं] शाखायाः प्रयोजकमर्थकर्मोत प्रतिपत्तिरप्रयोजकमिति । 'तत्र प्रस्तरतुल्यत्वाच्छाखा यागस्य साधनम् ॥ निर्वापवच्च हरणं यागस्यैवोपलक्षणम् ॥' प्रस्तरप्रहरणं तावद्यागः स चार्थकर्म । तत्साधनभूतः प्रस्तरः शाखा च [३]सहशब्दात्प्रस्तरेण समाना गम्यते। तेन सापि यागंप्रति गुणभूता । हरतिश्चाविवक्षितो निर्वापालम्भादिवद्यागोपलक्षणार्थः । तस्माच्छाखाप्रहरणं होमोऽर्थकर्मद्रव्यकर्मसंयोगन्यायादिति प्राप्तेऽभिधीयते—'यागे यदि सहत्वं स्यात्स्यादेवं हरतौ तु तत् ॥ तत्र च प्रतिपाद्यत्वात्प्रस्तरस्य तथैव सा ॥' सूक्तवाकेन प्रस्तरं प्रहरतीत्यत्र मान्त्रवर्णिकदेवताविधिबलाद्यागः कल्पितो नतु हरतिर्यागवचनोऽत्र तु

---

**हरणे तु जुहोतिः० ॥ १० ॥** पौर्णमास्यादिषु शाखा नाहर्तव्येत्ययुक्तं कपालोपधानार्थं तदनाहरणेऽपि प्रस्तरप्रहरणार्थं तदाहरणावश्यंभावादिति पूर्वाधिकरणप्रयोजनाक्षेपात्सङ्गतिरिति । तन्त्ररत्ने प्रस्तरप्रहरणस्य होमरूपत्वाभावे प्रस्तरसहभावेन शाखाप्रहरणस्य पूर्वपक्षे वक्ष्यमाणमर्थकर्मत्वं न सिद्ध्येदिति तत्सिध्यर्थं तृतीयोक्तं तस्य होमरूपत्वं स्मारयति—**सूक्तवाक्येनेति** । यागात्मा यागसहितात्मेत्यर्थः । यद्वा यागशब्दो होमपरः । एवमग्रेऽपि अग्न्यादीनां सूक्तवाक्यप्रतिपाद्यानां प्रहरणे देवतात्वं विना सूक्तवाक्यस्य तत्र करणत्वानुपपत्तेस्तेषां देवतात्वेसति द्रव्यदेवतासंयोगाद्यागो हरतिरिति स्थितमित्यर्थः । **तत्रेति** । सहशब्देन शाखायाः प्रस्तरतुल्यत्वात्प्रस्तरस्य च यागसाधनत्वाच्छाखापि यागसाधनम् । अन्यथा सह भावबाधापत्तिरित्यर्थः । **ननु** प्रस्तरस्य यागसाधनत्वं सूक्तवाक्येन प्रस्तरं प्रहरतीति वाक्येन वाच्यम् । तत्र च न यागसाधनत्वं प्रस्तरस्यावगम्यते प्रहरणमात्रश्रवणात्, तत्कथं सहभावाच्छाखा यागसाधनमित्यत आह—**निर्वापवदिति ।** नच सौर्यं चरुं निर्वपेदित्यादौ द्रव्यदेवतासंबन्धकल्पितो यागो विधीयते, निर्वपतिस्तु चोदकप्राप्तानुवाद इत्यङ्गीकारान्निर्वापस्य यागोपलक्षकत्वमसिद्धमिति वाच्यम् । नह्यत्र यागविधायकेषु सौर्यादिवाक्येषु विद्यमानो निर्वापो दृष्टान्तः येनोक्तदोषः स्यात् किंतु यत्र निर्वपतियुक्तवाक्ये यागविधानानन्तरं तस्मिन्यागे गुणविधिपरवाक्ये विद्यमानः यथा 'यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सोमारौद्रं चरुं निर्वपे'दिति विहिते सोमारौद्रयागे गुणविधिपरे 'तिष्यापौर्णमासे निर्वपे'दित्यादौ । तत्र यागे गुणविधिसिद्ध्यर्थं निर्वपतेर्यागोपलक्षणार्थत्वस्यावश्यकत्वात्प्रकृतशाखावाक्यस्य यागविधायकत्वाभावेन तथाविधस्यैव दृष्टान्तत्वौचित्यादिति ध्येयम् । **ननु** अत्र शाखावाक्ये प्रहरतिर्मुख्यार्थ एवास्त्वित्याशङ्क्य नह्यस्मिन्वाक्ये प्रहरणं विधीयते येन मुख्यार्थविधेर्यागोपलक्षणं न भवेत् किंतु सूक्तवाक्यगतप्रहरणानुवादेन शाखासहभावमात्रमत्र विधीयते । सूक्तवाकवाक्ये च प्रहरणं न केवलप्रक्षेपमात्रं किंतु मान्त्रवर्णिकदेवतासंबन्धबलाद्यजिप्रयुक्तप्रक्षेपरूपं तदवगतं यथावगतं चानुवाद इति शाखावाक्ये प्रहरणं तदुपलक्षणार्थमवश्यं वाच्यमित्याशयेन श्लोकं व्याचष्टे—**प्रस्तरेति** । **द्रव्येति** । द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध इति षष्ठाद्यपूर्वपक्षोक्तद्रव्यकर्मसंयोगन्यायेन शाखारूपद्रव्यस्य प्रहरणरूपक्रियार्थत्वात्प्रहरणमर्थकर्मैवेत्यर्थः । अनेन शाखाप्रहरणस्य होमरूपत्वाभावेऽप्यर्थकर्मत्वमवश्यं स्वीकार्यमित्यपि सूचितमिति सूक्तवाकवाक्ये होमकल्पनेऽपि प्रहरणरूपत्वस्याबाधात्प्रहरणरूपत्वमपि तत्रावगतमस्तीति मुख्यतन्मात्रानुवादेन शाखासहभावविध्युपपत्तेर्न शाखावाक्ये प्रहरणस्य होमोपलक्षणत्वमित्याशयेनाह—**यागे यदीति** । केचित्तु शाखावाक्येन शाखाप्रस्तरोभयप्रहरणमेव विधीयते नतु सूक्तवाकवाक्यविहितप्रहरणानुवादेन शाखासहभावमात्रविधिः येन यथावगतानुवादाद्धोमरूपस्यैवानुवादः स्यात् । सूक्तवाकवाक्येन तु सूक्तवाकप्रस्तरसंबन्धमात्रविधानं प्रहरणस्य शाखावाक्यप्राप्तेरनुवाद एव । तथाच मान्त्रवर्णिकदेवतासंबन्धः प्रस्तरस्यैव नतु शाखाया इति न शाखाप्रहरणस्य होमरूपत्वप्रसक्तिरित्याहुः । **ननु** सूक्तवाकमुच्चार्य प्रस्तर-

---

१ योगसामान्याद्द्रव्याणां वार्थ. २ योगो मान्त्रव. ३ सहत्वशब्दात्.

हरणमात्रं श्रुतं सहशाखया प्रस्तरं प्रहरतीति । नच शाखाप्रहरणे सूक्तवाकः साधनं येन मान्त्रवर्णिकदेवताविधिबलाद्यागः स्यात्। तस्माद्धरतिमात्रे शाखायाः सहभावाद्धरतौ च प्रस्तरस्य प्रतिपाद्यत्वाच्छाखाया अपि प्रतिपत्तिः। यथा हरतौ सहभावे प्रतिप्रत्तिर्न गुणत्वं शाखायास्तथा षष्ठे वक्ष्यते। अत्र हरतावेव साहित्यं न याग इत्येतावत्स्थितम् ॥

निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ५ ॥

**उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥ १४ ॥ [संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥]**

प्रणीताभिस्तु संयौति वेद्यां निनयतीति किम् ॥ अपां द्वे प्रापके किं वा हविःसंयवनं तथा ॥ १० ॥
अपःप्रणयतीत्युक्तेः समत्वादुभयार्थता ॥ श्रुत्या संयवनार्थास्ता निनीतेः प्रतिपत्तिता ॥ ११ ॥

दर्शपूर्णमासयोरपःप्रणयतीति प्रयोजनासंयुक्ताः प्रणीता उत्पाद्य तत्र श्रूयते 'प्रणीताभिर्हवींषि संयौती'ति तथा'अन्तर्वेदि प्रणीता निनयती'ति। तत्र संदेहः किमासां संयवनं निनयनं चोभयं प्रयोजकम्। उभयार्थाः प्रणीताः उत संयवनार्था एव तदेव प्रयोजकं निनयनं प्रतिपत्तिरिति । 'तत्रोत्पत्तावसंयोगात्कैमर्थ्यस्याभिलाषिणीः ॥ स्वीकुर्वाते उभे तस्मादुभयार्थास्तदुच्यते ॥ हविःसंयवने तासां गुणभावस्तृतीयया ॥ द्वितीयया निनयनं प्रतिपत्तिर्विधीयते ॥' उत्पत्तावसंयुक्तानामपि प्रयोजनेन प्रणीतानां कैमर्थ्याभिलाषिणीनां तृतीयया संयवनार्थत्वं गम्यते। निनयनं तु द्वितीयाश्रुत्या तासां प्रतिपत्त्यर्थमप्रयोजकम् ॥

---

शाखयोः सहप्रहरणे मान्त्रवर्णिकदेवतान्वयाविशेषात् शाखाप्रहरणमपि होमः स्यादित्यत आह—**नच शाखेति** । सूक्तवाकेन प्रस्तरं प्रहरतीति प्रस्तरप्रहरणमात्रे साधनत्वेन विनियोगान्न शाखाप्रहरणे मन्त्रः साधनं किंत्वर्थसमाजमात्रं। तस्मान्मन्त्रे यदनेन हविषेति प्रस्तरस्यैव निर्देश्यत्वान्न शाखाया देवतासंबन्ध इति भावः। **नन्वे**वमपि न शाखायाः प्रतिपाद्यत्वं किंतु यत्प्रस्तरं प्रहरति तत्सहशाखयेति प्रस्तरप्रहरणे गुणभाव एव शाखाया इत्यत आह—**यथेति**। शाखाया वेदिदेशरिक्तीकरणार्थं प्रतिपत्तेरपेक्षितत्वात्प्रहरणाङ्गत्वेऽदृष्टार्थत्वप्रसङ्गात् उत्सर्गतस्तुल्यरूपयोरेव सहभावेन सहशब्दस्वारस्याच्च शाखाप्रहरणं प्रतिपत्तिरेवेति वक्ष्यत इत्यर्थः। द्रव्यकर्मसंयोगन्यायोऽपि अपेक्षितत्वादिहेतुभिरेव प्रत्युक्तः। **ननु** तर्हि प्रतिपत्तित्वस्य तत्रैव सिद्धेः किमर्थमिदमित्यत आह—**अत्रेति**। हरतौ साहित्यप्रतिपादनस्य प्रयुक्तिपर्यवसानाय तत्रत्यमेव प्रतिपत्तित्वमिहाश्रितं 'हरणे तु जुहोतिः स्या'दिति। पूर्वपक्षसूत्रस्वारस्यानुसारात् 'प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वा'दिति सिद्धान्तसूत्रमपि फलमुखेन हरतिसाहित्यपरमेवेति न कोऽपि दोष इति भावः। प्रयोजनं पूर्वपक्षे उद्देश्यत्यागे इदमा शाखाया अपि निर्देशः पौर्णमास्यादिष्वपि शाखासंपादनं, सिद्धान्ते तु प्रस्तरमात्रस्यैव निर्देशो नापि पौर्णमास्यादिषु शाखासंपादनमिति। सूत्रार्थस्तु—प्रहरणेऽपि होम एव स्यात् सहशब्देन जुहोतिसाधनप्रस्तरेण यागसाम्यावगमाद्द्रव्याणामर्थक्रियांप्रति द्रव्यकर्मसंयोगन्यायेन शेषत्वाच्चेति ॥

**उत्पत्त्यसंयोगात्०** ॥ १४ ॥ संयवनसंयोगेनोत्पत्तौ तेनैव प्रयोजनेन नैराकाङ्क्ष्येण निनयनप्रयोजनान्वयायोगान्निनयनं प्रतिपत्तिरेव स्यात्। नचेह संयवनसंयोगेनोत्पत्तिरित्येवं पूर्वपक्षसौकर्यार्थमाह—**प्रयोजनासंयुक्ता इति। तत्रेति**। नच द्वितीयासंयोगान्निनयनं प्रतिपत्तिः स्यादिति वाच्यम्। कार्यान्तरोपयुक्तस्य हि प्रतिपत्तिर्भवति। इहतु या संयवनोपयुक्ताः न तासां निनयनं किंतु तत्सहगृहीतानामवशिष्टानाम्। ततश्च संयवनोपयुक्तावशिष्टानामपां कार्यान्तरोपयुक्तत्वाभावेन प्रतिपत्त्यनर्हत्वात्सक्तुवद्विभक्तिव्यत्ययेनार्थकर्मैव निनयनम्। अन्यथा कुशलेनाध्वर्युणा संयवनमात्रोपयुक्तानामेव ग्रहणसंभवादधिकानां ग्रहणमेव न स्यादिति भावः। एवंच शाखाया उपयुक्तत्वात्प्रहरणस्य प्रतिपत्तित्वेऽपि निनीयमानानामपामन्यत्रोपयुक्तत्वाभावान्निनयनं न प्रतिपत्तिरिति प्रत्यवस्थानात्सङ्गतिर्बोध्या। अत्यन्तकौशलेऽपि यत्किंचिन्न्यूनाधिकभावस्यावश्यकत्वाभावान्न्यूनग्रहणे चापर्याप्तेरन्तरा पुनर्ग्रहणे क्रमलोपादिवैगुण्यप्रसङ्गादधिकानां ग्रहणमवर्जनीयमित्यधिकानां स्वयमन्यत्रोपयुक्तत्वाभावेऽप्युपयुक्तानुनिष्पन्नतया लोहितशकृदादिवत्प्रतिपत्त्यर्हत्वमस्त्येवेति सक्तुवैषम्यान्नेह विभक्तिव्यत्यय इत्याशयेनाह—**तदुच्यत इति। उत्पत्ताविति**। प्रयोजनेनासंयुक्तानामित्यन्वयः। प्रयोजनं पूर्वपक्षे संयवनानन्तरं निनयनात्पूर्वं प्रणीतानाशे पुनरुत्पत्तिः। तथा 'आदित्यः प्रायणीयः पयसि चरु'रित्यादिष्वपि निनयनार्थमापः प्रणेयाः, सिद्धान्ते तु नेति। सूत्रार्थस्तु—उत्पत्तौ कार्यविशेषासंयोगात्प्रणीतानां ध्रौवाज्यस्येवानेकत्र विभज्य विनियोगः स्यादिति ॥

---

१ नच प्रहरणे. २ तासामेव.

दण्डदानस्यार्थकर्मताधिकरणम् ॥ ६ ॥

**प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥ [अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥]**

**मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता ॥ उतार्थकर्मतायोस्तु धारणे कृतकृत्यतः ॥ १२ ॥**

**युक्तोपयुक्तसंस्कारादुपयोक्तव्यसंस्क्रिया ॥ स्थित्वा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत् ॥ १३ ॥**

दीक्षितस्य दण्डधारणं विधाय पुनराम्नातं 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती'ति । किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म उत प्रतिपत्तिकर्माप्रयोजकमिति । तत्र—'द्वितीयाश्रुतिसंयोगात्कृतार्थत्वाच्च धारणे ॥ मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥' दीक्षितधारणे कृतार्थो दण्डः प्रतिपत्त्यपेक्षः । द्वितीयया च तत्प्राधान्यं गम्यते न दानस्य । अतो मैत्रावरुणहस्ते प्रक्षिप्यते । उच्यते—'चतुर्थ्या संप्रदानत्वं प्रशास्तुरवगम्यते ॥ कर्मणा यमभिप्रैति संप्रदानं तदुच्यते ॥' तेन दीयमानेन दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य तत्प्रधानं दानम् । द्वितीया तु 'तथायुक्तं चानीप्सित'मिति भविष्यति । अथ सक्तुवद्विभक्तिव्यत्ययोऽत्र न भवति । तत्र हि सक्तुसाधनकेन होमेनापूर्वं, इह तु दानकर्मभूतेन दण्डेन संस्कारो नतु दण्डसाधनकेन दानेनेति वैषम्यम् । 'उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया ॥ गरीयसी प्रशास्तुश्च दृष्टं तेन प्रयोजनम् ॥' स्थित्वा हि प्रैषानुवचने

---

**प्रासनवन्मैत्रावरुणाय०** ॥ १६ ॥ **दण्डधारणमिति** । दण्डेन दीक्षयतीत्यनेनेति शेषः । दण्डदीक्षायास्तद्धारणरूपत्वादिति भावः । पूर्ववत्प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**तत्रेति** । **द्वितीयेति** । अभ्यर्हिततया तस्याः स्वरसत ईप्सितार्थत्वादिति भावः । **ननु** चतुर्थ्या संप्रदानत्वावगमान्मैत्रावरुणः प्रधानमित्यर्थकर्म दानं द्वितीया च जघन्यत्वादनीप्सितेऽस्त्वित्याशङ्क्यापेक्षितविधेः प्रतिपत्तित्वमेव न्याय्यम् । एवंच चतुर्थी मुख्यापि षष्ठ्यर्थतया नेया । यद्वा यथा प्रयाजशेषेणाभिघारणं हविराघारनियमाद्धविःसंस्कारोऽपि भवति तथा मैत्रावरुणनियमात्तदर्थमपि दानमिति मैत्रावरुणस्यापि दण्डप्रतिपत्तौ अनुनिष्पादिप्राधान्यमस्तीति तदभिप्राया चतुर्थीत्याशयेन श्लोकं व्याचष्टे—**दीक्षितेति** । प्रतिपत्तित्वे मैत्रावरुणहस्ते प्रक्षेपमात्रेण शास्त्रस्य कृतार्थत्वाद्दण्डी प्रैषानन्वाहेत्यादावत्यन्तमप्राप्तदण्डविधिः स्यात् । अर्थकर्मत्वे तु मैत्रावरुणेन यत्क्रियते तदर्थं दानं स्यात् । तत्र च प्रकरणाविशेषात्सर्वमैत्रावरुणकार्यार्थत्वप्राप्त्या प्रैषानुवचनयोस्तदुपसंहारमात्रार्थं दण्डी प्रैषानन्वाहेति वचनमिति विधिलाघवं स्यात् । तस्माद्दण्डी प्रैषानन्वाहेति विधिलाघवार्थमर्थकर्माप्यपेक्षितमेव । तस्माच्चतुर्थ्यनुसारेणार्थकर्म दानमित्याशयेनाह—**चतुर्थ्येति** । **द्वितीयात्विति** । नेष्टं परनिष्पत्तय इति न्यायेनेप्सिततमेनान्यस्याभिप्रेयमाणत्वायोगात् 'कर्मणा यमभिप्रैती'ति सूत्रे कर्मशब्देनानीप्सितकर्मण एव विवक्षणीयत्वादिति भावः । नचैवं द्वितीयाया लक्षणैव दोषः, ईप्सितानीप्सितसाधारणं साध्यत्वमेव द्वितीयार्थ इति द्वितीये उपपादनेनानीप्सितेऽपि मुख्यत्वात्तत्र शेष्यन्तराभावे तदेव साध्यं शेषि भवति, इहतु मैत्रावरुणस्य सर्वापेक्षया प्रधानत्वात्स एव शेषी नतु साध्यत्वेनावगम्यमानो दण्ड इति न कोऽपि दोष इति भावः । **अथेति** । इह व्यत्ययो न शङ्कार्हः । अनीप्सितद्वितीयातः तस्यात्यन्तजघन्यत्वात् । तथाच सक्तुष्वप्येवमनीप्सितद्वितीयोपपत्तेः किमिति तत्र व्यत्ययः । जुहोतेस्त्यागविशिष्टप्रक्षेपवचनत्वेन त्यज्यमानानां प्रक्षिप्यमाणानां च सक्तूनामनीप्सितकर्मत्वसंभवादिति तात्पर्यं बोध्यम् । **तत्रेति** । ततश्च तत्र साधनत्वप्रत्ययार्थे द्वितीयार्थे तृतीयेति व्यत्ययः । इहतु कर्मार्थतैव द्वितीयाया उपपद्यते इति न व्यत्यय इत्यर्थः । तन्त्ररत्ने तु जुहोतेस्त्यागप्रक्षेपवचनत्वेऽपि शब्दशक्तिस्वाभाव्येन गमनार्थकचलतिवत्कर्मनिष्ठतया तदनभिधायकत्वेनाकर्मकत्वात्तत्र व्यत्यय इत्युक्तम् । केचित्तूद्देशत्यागप्रक्षेपसमुदायो जुहोत्यर्थः । तत्र सक्तूनां न समुदायजन्यफलशालित्वमस्ति भस्मतायाः प्रक्षेपमात्रात्, प्रहीणतायास्त्यागमात्रात्, द्रव्यदेवतासंबन्धस्य देवतोद्देशेन त्यागमात्राच्च निर्वृत्तेरतः समुदायजन्यस्य कस्यचित्फलस्यासंभवाज्जुहोतेरकर्मकत्वाद्व्यत्ययमाहुः । **उपयुक्तेति** । उपयोक्ष्यमाणसंस्कारस्य कार्यनिष्पत्त्युपयोगित्वाद्गरीयस्त्वमुपयुक्तसंस्कारस्य तु उत्पन्ने कार्येऽतिशयाधानमात्रार्थत्वान्न गरीयस्त्वमिति भावः । **नन्वा**कीर्णकरत्वाद्दण्डस्य तत्प्रतिपत्तित्वे दृष्टार्थत्वं मैत्रावरुणार्थत्वे त्वदृष्टार्थत्वं स्यादित्यत आह—**प्रशास्तुरिति** । एतेनाभिघारणस्य संस्कारार्थत्वेऽदृष्टार्थत्वप्रसङ्गादृष्टार्थत्वलाभेन प्रयाजशेषप्रतिपत्त्यर्थत्वे सति हविराघारनियमाद्धविःसंस्कारार्थत्वं युक्तमिह तूभयथापि दृष्टार्थत्वाच्छब्दस्वारस्येनैवार्थनिश्चये कर्तव्ये प्रथमश्रुतचतुर्थ्यनुसारेणार्थकर्मत्वमेव युक्तं न चरमश्रुतद्वितीयानुसारेण प्रतिपत्तित्वमित्यपि

---

१ दण्डप्रदानं.

कुर्वत आलम्बनं भवन् दृष्टार्थ एव दण्ड इति मैत्रावरुणार्थं दण्डदानं प्रयोजकं दण्डस्येत्यग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डोपादानसिद्धिः ॥

प्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ७ ॥

**उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमनशेषत्वात्प्रतिपत्तिः स्यात् ॥ १९ ॥**

**चात्वाले कृष्णशृङ्गस्य प्रासो यः सोऽर्थकर्म वा ॥ प्रतिपत्तिः सार्थकत्वादाद्योऽन्त्योऽस्तूपयोगतः ॥ १४ ॥**

'कृष्णविषाणया कण्डूयत' इति विधाय श्रूयते 'चात्वाले कृष्णविषाणां प्रास्यती'ति । तत्र संशयः किं चात्वाले प्रासनमर्थकर्म उत प्रतिपत्तिरिति । तत्र 'न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम् ॥ प्रतिपत्तिरतो नेयमिडा स्विष्टकृदादि च ॥' चात्वाले प्रासनमिडाभक्षणं स्विष्टकृदित्येवमादि यत्किंचित्कृतकरद्रव्याश्रयं कर्म तत्सर्वमर्थकर्म । निर्वृत्तेऽर्थे संस्कारेण प्रयोजनाभावात् । उच्यते— 'कृतार्थमपि तु द्रव्यमाकीर्णकरमित्यतः ॥ प्रतिपत्तिमपेक्षेत तद्विधानमतो वरम् ॥' अपेक्षिततया प्रतिपत्तिविधौ निश्चिते तद्बलादेव तल्लोपे निर्वृत्तमपि प्रयोजनं विपद्यत इति कल्प्यते ॥

---

सूचितम् । **प्रयोजकमिति** । ततश्च प्रैषानुवचनपूर्वं दण्डनाशे पुनस्तत्प्रयुक्तिः फलतीति भावः । प्रयोजनान्तरमाह— **इत्यग्नीषोमीयेति** ॥

**उत्पत्तौ येन संयुक्तं०** ॥ १९ ॥ इदं सूत्रं पूर्वाधिकरणे दण्डप्रदानं कृष्णविषाणाप्रासनवत्प्रतिपत्तिः स्यादिति पूर्वपक्षे दृष्टान्तीकृतप्रासनवैषम्यपरतया व्याख्याय ऋत्वन्तःपातिसकलकण्डूयनस्य विषाणाकार्यतया प्रासनानन्तरमपि कण्डूयनसद्भावेन विषाणायाः कृतार्थत्वाभावान्न प्रासनं प्रतिपत्तिरिति पूर्वपक्षं कृत्वा द्वितीयासंयोगात्प्रासनं प्रतिपत्तिः । नच तावता विषाणासंस्कार एव प्रासनमस्तु नतु प्रतिपत्तिरिति वाच्यम् । तथात्वे प्रासनात्पूर्वभाविषु कण्डूयनेषु केवलविषाणायाः विनियोगः तदनन्तरभाविषु प्रासनसंस्कृताया इति विषाणया कण्डूयते इति विधिवैरूप्यप्रसङ्गात् । नचैवमगारे गावो वास्यन्तामितिवच्चात्वालसंस्कारः प्रासनमस्तु द्वितीया चानीप्सितेऽस्त्विति वाच्यम् । तथात्वे सप्तम्या लक्षणापातात्तस्माद्द्वितीयाबलात्प्रतिपत्तिः प्रासनं तद्बलाच्च प्रासनात्प्राचीनेष्वेव कण्डूयनेषु विषाणाविनियोगपर्यवसानात्कृतार्थत्वमुपपद्यत इत्यधिकरणान्तरत्वेनापि भाष्यकारेण व्याख्यातम् । आचार्याणां तु इडाप्राशित्रचतुर्धाकरणसंयुवाककालभक्षरूपविशेषकार्याणामुत्पत्तौ येन संयुक्तमित्यनेन प्रतिपत्तित्वस्य स्थितत्वादिति वदतामिदमधिकरणान्तरमिडाभक्षणस्विष्टकृदादिसर्वविषयमेवाभिमतमिति सर्वसाधारणन्यायमाह—**न द्रव्यस्येति** । द्रव्यस्य संस्कारो हि न द्रव्यस्वरूपार्थः किंतु द्रव्यकार्यार्थः । द्रव्येण तु कार्ये निष्पत्स्यनन्तरं क्रियमाणस्य प्रयोजनाभावान्न प्रासनं प्रतिपत्तिरित्यर्थः । निष्पन्नस्य कार्यस्य विपत्तिकल्पने च नास्ति प्रमाणमिति भावः । इडास्विष्टकृदादि चेत्यनेन संशये प्रासनग्रहणमुपलक्षणमिति सूचितम् । नच द्वितीयासंयोगात्प्राधान्यावगतेः प्रतिपत्तित्वमिति वाच्यम् । नहि सर्वत्र द्वितीया । यत्रापि सास्ति तत्रापि प्रयोजनाभावात्प्रतिपत्तित्वाभावनिश्चये सति क्वचिदनीप्सितार्थतया क्वचिद्व्यत्ययाश्रयणेन च द्वितीया नेयेति भावः । अर्थकर्मत्वप्रतिपत्तित्वविचारसमाप्त्यनन्तरं प्रतिपत्तेरेवासंभावितत्वात्कथमर्थकर्मत्वप्रतिपत्तित्वविचार इति प्रत्यवस्थानात्सङ्गतिः । यद्यप्यग्रिमाधिकरणेऽपि प्रतिपत्तिविचारः क्रियते तथापि सोमलिप्तनयनस्यार्थकर्मत्वेऽप्यर्थाभिधानकर्मतया प्रयोजकत्वाभावात्प्रयुक्तिपर्यन्तस्तद्विचारः समाप्त एव । अतएव तत्र सोमलिप्तचिन्तायाः प्रासङ्गिकत्वमुक्तमिति ध्येयम् । **आकीर्णकरमिति** । आकीर्णं संकीर्णं करोतीत्याकीर्णकरम् । आकीर्णकरत्वात्किमिदं द्रव्यं देशान्तरं नेयं उत यथेष्टविनियोज्यमुतोपेक्ष्यमिति यन्नदेशरिक्तार्थं प्रतिपत्तिमपेक्षत इत्यर्थः । यदुक्तं निष्पन्नस्य कार्यस्य विपत्तिकल्पने प्रमाणं नास्तीति तत्राह—**अपेक्षिततयेति** । तल्लोपे प्रतिपत्तिलोपे विपद्यते स्वकार्यं कर्तुं न क्षमते । प्रतिपत्तिजनितातिशयेन तु स्वकार्यजननसमर्थं भवतीत्यर्थः । प्रतिपत्तिर्नाम सत्कारः । ततश्च राजनिर्माल्यस्रगादीनां परेण शिरसा धारणरूपसत्कारे कृते राज्ञः स्वात्मन्यतिशयबुद्धेर्मानसप्रत्यक्षसिद्धत्वादिहापि निष्पन्नस्यापि कार्यस्य तदीयद्रव्यप्रतिपत्त्या संभवत्यतिशयः । दृष्टंच निष्पन्नस्यापि वाजपेयापूर्वस्य बृहस्पतिसवेनातिशय इति न काप्यनुपपत्तिरिति भावः । सूत्रार्थस्तु—उत्पत्तिसमये यद्येन संयुक्तं तत्तदर्थमेव स्यात् । तादर्थ्यस्य श्रुतिहेतुकत्वात् तस्योत्पत्तिसंयुक्तकार्योपयुक्तत्वादर्थान्तरसंबन्धे तदर्थान्तरं प्रतिपत्तिः स्यात् । अत्रोत्पत्तिग्रहणं प्रदर्शनार्थमन्यत्र कृतार्थानामन्यत्र गमनं प्रतिपत्तिरित्येव लक्षणमन्यथा प्रणीतानिनयनादेरप्रतिपत्तित्वापत्तिः ॥

---

१ तदर्थं तत्.

अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ८ ॥

**सौमिके च कृतार्थत्वात् ॥ २० ॥ [अर्थकर्म वाभिधानसंयोगात् ॥ २१ ॥ प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थावभृथश्रुतिः ॥ २२ ॥]**

**पात्रस्यावभृथे सोमलिप्तस्य नयनं तु किम् ॥ साधनं प्रतिपत्तिर्वा यन्ति तेनेत्यतः श्रुतेः ॥ १५ ॥**
**प्राप्ता साधनता नैवं पुरोडाशहविष्ट्वतः ॥ पात्रस्य तदसंबन्धात्प्रक्षेपः प्रतिपत्तये ॥ १६ ॥**

'वारुणेनैककपालेनावभृथमभ्यवयन्ती'ति विधाय पुनराम्नायते 'यत्किंचित्सोमलिप्तं तेनावभृथं यन्ती'ति किमवभृथसाधनं सोमलिप्तमुतावभृथदेशे नयनमस्य प्रतिपत्तिरिति । 'तत्रावभृथशब्देन श्रुत्या कर्माभिधीयते ॥ तत्साधनतया सोमलिप्तमुक्तं तृतीयया ॥ देशेऽवभृथशब्दस्य [1]प्रवृत्तौ लक्षणा भवेत् ॥ सोमलिप्तं हविष्ट्वेन चोद्यतेऽवभृथंप्रति ॥' उच्यते—'उत्पत्तिवाक्यविहितपुरोडाशावरोधतः॥ हविष्ट्वेन तु संबन्धुं सोमलिप्तं न शक्नुयात् ॥' यन्तीत्यनेन च सोमलिप्तावभृथयोः संबन्धविधौ सत्यत्यन्तं वाक्यं स्यात् । 'उद्दिश्य सोमलिप्तं तु यानमात्रं विधीयते ॥ [2]धात्वर्थोऽवभृथपदं [3]तद्देशं लक्षयिष्यति ॥' अवभृथदेशं गच्छन्तः सोमलिप्तान्यादाय गच्छेयुः । तानि तद्देशे प्रक्षेप्तव्यानीत्यर्थः ॥

कर्तृदेशकालविधीनां नियमार्थताधिकरणम् ॥ ९ ॥

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥२३॥ [नियमार्था वा श्रुतिः ॥२४॥]**

**समे यजेत देशादेरनुवादोऽथवा विधिः ॥ प्रयोगानुपपत्त्येव प्राप्तत्वादनुवादता ॥ १७ ॥**
**समे वा विषमे वेति पाक्षिकत्वनिवृत्तये ॥ अप्राप्तांशानुपातेन नियमोऽत्र विधीयते ॥ १८ ॥**

दर्शपूर्णमासयोश्चत्वार ऋत्विजः । 'समे यजेत, पौर्णमास्यां पौर्णमास्यया यजेत, व्रीहिभिर्यजेत, सोमेन

---

**सौमिके च कृतार्थत्वात् ॥ २० ॥** पूर्वोक्तप्रतिपत्तिलक्षणस्यातिव्याप्तिमाशङ्क्य निराकरणात्सङ्गतिरित्याहुः—**तत्रेति** । अवभृथशब्दस्य श्रुत्या इष्टिविशेषवचनत्वात्तस्य चार्थकर्मतया प्रतिपत्तित्वासंभवात्कृतार्थानामपि सोमलिप्तानां तृतीयया साधनत्वमेव । सोमार्थस्यैव सोमलिप्ततया सोमलिप्तशब्देन तादर्थ्यपर्यन्तप्रतीत्यभ्युपगमेऽपि पुरोडाशकपालवदधिष्ठानलक्षणयान्यत्र विनियोगसंभवाल्लक्षणापीयं स्वार्थगोचरैव नत्ववभृथशब्दस्य देशलक्षणावत्परार्थगोचरेति न दुष्टेति भावः । अवभृथदेशनयनं प्रतिपत्तिरिति सिद्धान्तपक्षे दोषमाह—**देश इति** । **हविष्ट्वेनेति** । सोमलिप्तस्य तृतीयावगतं साधनत्वं न धात्वर्थयानंप्रति संभवति अश्वादिवत्सोमलिप्तस्य यानसाधनत्वासंभवात् अतो नामार्थमवभृथंप्रत्येव कारकयोरपि मिथः संबन्धः यन्तीत्याख्यातोपात्तक्रियाद्वारोपपद्यते । अत्रच स्रुगादिवत्साधनताप्रकारस्य ऋजीषग्रावाभिषवणफलकग्रहचमसादिसर्वसोमलिप्तानुगतस्य कस्यचिदसंभवात्परिशेषाद्धविष्ट्वमेव वचनबलादुत्पत्तिशिष्टगुणावरुद्धेऽपि गुणान्तरविधिरुपपद्यते । नच सोमलिप्तस्य हविष्ट्वेपि स्विष्टकृद्वत्प्रतिपत्तिताप्यवभृथस्य सिद्ध्यतीति युक्तम् । यदा पुरोडाशेनावभृथो निर्वर्त्यते तदा प्रधानभूतः, यदा तु सोमलिप्तेन तदा तु गुणभूत इति वैरूप्यप्रसङ्गादिति भावः । उत्पत्तीतिवचनं प्रतिपत्तिविधानेन सावकाशमिति भावः । **यन्तीत्यनेनेति** । यन्तीत्यनेन प्रत्ययेन भिन्नपदस्थयोः सोमलिप्तावभृथयोः संबन्धविधाने धात्वर्थस्य विधेयताया उद्देश्यतायाश्चाभावेन श्रुत्यनुग्रहाभावादत्यन्तं वाक्यं स्यादित्यर्थः । नच सोमलिप्तविशिष्टमवभृथधर्मकं कर्मान्तरमेव विधीयतां तथासति नोत्पत्तिशिष्टगुणावरोधदोषो न वात्यन्तवाक्यापत्तिरिति वाच्यम् । तथाप्यवभृथशब्दलक्षणावश्यंभावेनापरिहार्यायां लक्षणायां देशलक्षणया प्रतिपत्तिविधानस्यैव न्याय्यत्वात् । अन्यथा प्रकृतप्रत्यभिज्ञाबाधाप्रकृतकल्पनाविशिष्टविधिगौरवविनियुक्तविनियोगादिदोषप्रसङ्गादिति भावः । प्रतिपत्तिविधौ तृतीयाऽननुगुणेत्याशङ्क्य वाक्यार्थमाह—**अवभृथदेशमिति** । सहार्था तृतीयेति भावः । उक्तं तन्त्रसारे 'अवभृथदेशगमनेन सोमलिप्तसाहित्यं तत्प्रतिपत्त्यर्थं विधीयते' इत्यवभृथदेशं गच्छतां सोमलिप्तेन सह गमने यज्ञदेशात्सोमलिप्तस्य देशान्तरप्रापणात्संभवति तस्य प्रतिपाद्यत्वमित्याशयेनाह—**तानीति** । अप्स्ववभृथेन चरन्तीत्यपामवभृथदेशत्वात्तासु प्रक्षेप्तव्यानीत्यर्थः । केचित्तु तृतीयाया व्यत्ययेन द्वितीयार्थत्वं यन्तीत्यस्य णिजर्थपरत्वं च कल्पयन्तीति । सूत्रार्थस्तु—सौमिकेऽवभृथे सोमलिप्तेन सह यानं प्रतिपत्तिः स्यात्तस्य कृतार्थत्वादिति ॥

**कर्तृदेशकालानां० ॥ २३ ॥** प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थावभृथश्रुतिरिति पूर्वोक्तेऽवभृथदेशप्रसङ्गादन्यस्य समादिदेशस्य तत्समानन्यायस्य कालकर्तृव्रीहिसोमादेरपि बुद्धिविपरिवर्तनात्प्रासङ्गिकी सङ्गतिः । सूत्रे कर्त्रादिग्रहणं प्रदर्शनार्थमि-

---

१ प्रकृतौ लक्षणा. २ धात्वर्थेऽवभृथ. ३ तं देशं.

यजेते'त्यादियत्किंचित्कारकश्रवणं तत्सर्वमुदाहृत्य विचार्यते किमनुवादमात्रमुत विधिरिति । तत्र 'सर्वं क्रियाविधेरेव कारकं प्राप्यते यतः ॥ ततस्तन्न विधातव्यमप्राप्ते ह्यर्थवान्विधिः ॥ विषमादिनिवृत्त्यर्थं समादिश्रवणं यदि ॥ परिसंख्या प्रसज्येत नातोऽन्यास्ति विधेर्विधा ॥' समादिस्वरूपं विषमादिनिवृत्तिर्वा विधीयते, स्वरूपं तावन्न विधातव्यं प्राप्तत्वात् । विषमादिनिवृत्तिविधौ परिसंख्या प्रसज्येत । साच त्रिदोषा । नच प्रकारान्तरं विधेरुपलभामहे येनैते परिसंख्यादोषमनासाद्यैव विधिं लभेरन् । तस्मादनुवादः । नैवम् । 'नियमेन नहि प्राप्तिः समादीनां क्रियाविधेः ॥ समे वा विषमे वापि सोमेनान्येन वा यजिः ॥ प्राप्नोति तेन सोमादेः प्राप्तिर्न स्यादपि क्वचित् ॥ यस्मिन्पक्षे न सोमादेः प्राप्तिस्तत्र विधिर्भवेत् ॥ नैषामतोऽनुवादत्वं परिसंख्या च नासजेत् ॥ अप्राप्तिपक्षसद्भावान्नियमार्थो विधिः स्थितः ॥'

द्रव्यगुणविधानस्य नियमार्थताधिकरणम् ॥ १० ॥

## तथा द्रव्ये गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥

**श्वेतालम्भोऽनुवादो वा श्वैत्यस्य विधिरग्रिमः ॥ द्रव्यद्वारेण तत्प्राप्तेः पूर्ववन्नियम्यते ॥ १९ ॥**

'श्वेतं पशुमालभेत शुक्लानां चरु'मित्यादौ गुणानाममूर्तानां क्रियासाधनत्वासंभवान्न तादर्थ्येन नियमः संभवतीति द्रव्योपादानानुषङ्गे प्राप्तानामनुवादमात्रं गुणश्रवणं । शुक्लानां चरुमित्यादौ चापरो विशेषः शुक्लस्य चरुविशेषणत्वाच्छब्दतोऽपि न क्रियासंबन्धोऽवगम्यते इति । उत्तरम् । असत्यपि शुक्लत्वस्य साक्षात्क्रियान्वये द्रव्यद्वारेण तदुपपत्तेः शुक्लत्वविशिष्टचरोः क्रियार्थत्वादत्रापि नियमविधिः ॥

---

त्याशयेनाह—**व्रीहिभिरिति । अनुवादमात्रमिति** । पाक्षिकानुवादमात्रमित्यर्थः । **प्राप्यते इति** । क्रियायाः कारकंविनाऽनिष्पत्तेराक्षेपात्प्राप्यत इत्यर्थः । **साचेति** । विषमादिनिवृत्तिविधिर्हि समे यजेतेत्यस्य समे यजेत न विषमे इत्यर्थकत्वे भवति नान्यथा । ततश्च स्वार्थहान्यादिदोषत्रयं स्यादित्यर्थः । **नचेति** । नियमविधेरपि इतरपरिवर्जनार्थत्वात्सम एव यजेतेत्येवकारेण फलविवरणाच्च नियमविधिस्वरूपं विविच्यमानं परिसंख्यायामेवान्तर्भवति न ततो भिद्यत इति भावः । **क्वचिदिति** । क्वचित्प्रयोग इत्यर्थः । **तत्रेति** । तस्मिन्पक्षे तदंशे प्राप्त्यर्थं विधिर्भवेदित्यर्थः । दर्शपूर्णमासप्रयोगावच्छेदेन समविधौ सर्वांशेषु तत्प्राप्तेरिति भावः । एवंच नियमपरिसंख्ययोरितरपरिवर्जनाविशेषेऽपि यत्र प्रयोगे समादेरप्राप्तिस्तत्रापि प्रापणस्य शास्त्रेणाकरणे विध्याक्षेपात्प्राप्नुवतो विषमादेर्वर्जनालाभेन प्रथमोपस्थिततत्वाद्विधेयसमादिगततया प्रत्यासन्नत्वाद्भावरूपत्वेन लघुशरीरत्वाच्चाप्राप्तांशपरिपूरणमेव फलं, विषमादिनिवृत्तिस्तु तद्वैपरीत्यादप्राप्तांशपरिपूरणरूपनियमानुनिष्पादित्वाच्च न फलं, परिसंख्यायां तु उभयोरपि नित्यप्राप्तत्वेनाप्राप्तांशपरिपूरणस्य फलत्वासंभवादितरपरिवर्जनमेव फलं, एवंच सम एव यजेतेत्येवकारेण फलविवरणमयोगव्यवच्छेदार्थं नतु परिसंख्यायामिवान्ययोगव्यवच्छेदार्थमिति नियमपरिसंख्ययोः फलभेदादवर्जनीयस्तृतीयो विधिप्रकार इत्याशयेनाह—**अप्राप्तिपक्षेति** । सूत्रार्थस्तु—कर्त्रादीनामचोदनमनुवाद एव स्यात्प्रयोगे कर्त्रादिसामान्यस्य नित्यसमवायादिति ॥

**तथाद्रव्ये गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥** अतिदेशस्य विशेषाशङ्कानिराकरणार्थत्वात्तामाह—**गुणानामिति** । नन्वारुण्यस्यामूर्तस्यापि द्रव्यपरिच्छेदकतया क्रियासाधनत्वादिदमयुक्तमितिचेत्सत्यम् । तत्रारुणयेति तृतीयाश्रुत्या आरुण्यस्य कारकत्वमवगम्यमानं कथं निर्वोढव्यमिति द्रव्यपरिच्छेदकत्वेन निर्वाहेऽपि गुणे नियमविधिर्न संभवति । यत्र हि पक्षप्राप्तिस्तत्र नियमविधिर्भवति । नच यथा व्रीह्यादिद्रव्यस्य क्रियाक्षेपात्पक्षे प्राप्तिरेवमारुण्यादेराक्षेपात्प्राप्तिः संभवति । लोके मूर्तस्यैव साधनत्वावगमेनामूर्तस्यारुण्यादेः क्रियया साधनत्वेनानाक्षेपादित्याशयः । **ननु** क्रिययाऽनाक्षेपे प्राप्तेरेवाभावात्कथमनुवाद इत्यत आह—**द्रव्योपादानेति** । शुक्लानामितिशब्देन चरुसंबन्धस्यैवावगमादित्यर्थः । ततश्च नियमस्य द्रव्यस्वरूपार्थत्वापत्तेरानर्थक्यं स्यादिति भावः । अमूर्ततया द्रव्यवत्साक्षात्साधनत्वस्यासंभवेऽपि द्रव्यपरिच्छेदद्वारा साधनत्वस्यापि लोकसिद्धत्वात्क्रियया स्वसाधनद्रव्यपरिच्छेदार्थं गुणस्याप्याक्षेपात्संभवति पक्षप्राप्त्या नियमविधिरित्याह—**असत्यपीति । शुक्लत्वस्येति** । ततश्च विशेषणस्याप्यर्थात्क्रियार्थत्वेन विधानान्न नियमानर्थक्यमिति भावः । **सूत्रार्थस्तु**—द्रव्ये गुणश्रुतिरपि नियमविधिः उत्पत्त्या क्रियोत्पादकेन द्रव्येण तत्परिच्छेदकतया संयोगादिति ॥

---

१ प्राप्यते पुनः. २ विधिर्वा. ३ शुक्लानां व्रीहीणां. ४ असत्यपि साक्षात्.

अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणम् ॥ ११ ॥

**संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥**

**अवघातेऽपि नियमो देशादाविव तेन सः ॥ प्रधानेन प्रयुक्तः स्यात्संबन्धः प्रक्रियोक्तितः ॥ २० ॥**

व्रीहीनवहन्तीति नावघातस्य यागार्थतया श्रवणं देशादिवत् । नच चरुवद्विशिष्टद्रव्यं क्रियासंबन्धि श्रूयत इति तण्डुलाक्षिप्तप्रक्रियानुवादमात्रमित्यधिकाशङ्का । उत्तरम् । यद्यपि न श्रवणमस्ति तथापि प्रकरणवशादेव प्रधानसाधनं लक्षयित्वा तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येवेत्यव्याहतैव प्रयुक्तिः ॥

यागहोमस्वरूपनिरूपणाधिकरणम् ॥ १२ ॥

**यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥ [तदुक्तेः श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥]**

**अनिरूप्या निरूप्या वा यागहोमददातयः ॥ त्यागादाद्यो यजिस्त्यागः प्रक्षेपो होम इष्यते ॥ २१ ॥**
**आकाङ्क्षा यागशब्दस्य त्यागेनैव निवर्तते ॥ यागस्योपरि होमस्य विधेः क्षेपावसानता ॥ २२ ॥**
**स्वीयं द्रव्यं परित्यज्य परकीयं यथा भवेत् ॥ तथा संपादनं दानं त्यागेऽप्येषामियं भिदा ॥ २३ ॥**

यागाङ्गभूतानां देशादीनां नियमविधौ स्थिते तत्प्रसङ्गाद्यागादिलक्षणं क्रियते । देवतोद्देशेन स्वद्रव्यपरित्यागो यागः । स एव प्रक्षेपाधिको होमः । स्वीयस्य परकीयत्वापादनं दानमिति । आचार्यस्तु लोकसिद्धपदार्थव्यवहारिण्यां मीमांसायां तल्लक्षणमनुचितमिति यागाद्यनुष्ठानप्रकारकथनमिति व्याख्यातवान् । यो देवतामुद्दिश्य द्रव्यं त्यजति तेन यागचोदनार्थः संपादितो भवति । प्रक्षेपं त्वधिकं

---

**संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥ ननु** अवहननपेषणादेस्तण्डुलपिष्टादिसिद्ध्यर्थं क्रिययापेक्षणान्नियमविध्युपपत्त्या तत्राधिकाशङ्काविरहादतिदेशोऽनर्थक इत्याशङ्क्य तथापि नात्र नियमविधिः संभवति स हि न द्रव्यस्य स्वरूपे । तत्र नियमस्यानर्थक्यात् । नापि यागे । अवघातस्य व्रीहीनवहन्तीति द्रव्यनिष्ठतयैव श्रवणेन देशादिवद्यागसंबन्धित्वानवगमात् । नच यथा शुक्लादेः साक्षाद्यागसंबन्धानवगमेऽपि तद्विशिष्टचरुद्रव्यस्य यागान्वयादर्थाद्विशेषणस्यापि यागान्वयः । तथावहननस्य यागान्वयः संभवति । तत्र गुणविशिष्टद्रव्यस्येव प्रकृते संस्कारविशिष्टद्रव्यस्य यागसंबन्धाश्रवणात् व्रीहिभिर्यजेतेति द्रव्यस्वरूपमात्रस्यैव तच्छ्रवणादित्यधिकाशङ्कामाह—**व्रीहीनिति** । व्रीहीनवहन्तीत्यत्र यागवाचकशब्दाभावेऽपि प्रकरणबलाद्यागार्थत्वमुपपद्यत इति । परिहारस्तु स्पष्टत्वादुपेक्षितः । सूत्रार्थस्तु—संस्कारेऽपि श्रुतिर्नानुवादः नियमप्रधानविधिसंभवादिति ॥

**यजतिचोदना द्रव्यदेवता० ॥ २७ ॥ तदुक्तेःश्रवणात्० ॥ २८ ॥** यजतिचोदनाद्रव्यदेवताक्रियमभिधत्ते तत्समुदाये यजतिशब्दस्य कृतार्थत्वात् लोके समुदायप्रत्यापनरूपकार्यस्य यजतिशब्देन कृतत्वादिति सूत्रे समुदायस्य यागशब्दार्थत्वं प्रतीयते । तत्र क्रियाया एव वाच्यत्वप्रसिद्धा समुदायस्य लोके यजतिशब्दवाच्यत्वप्रसिद्ध्यभावात्समुदायाभिधायकत्वे चैकस्य शब्दस्य युगपदनेकार्थाभिधानदोषप्रसङ्गात् पुष्पवन्तपदाद्दिवाकरनिशाकरयोरिव द्रव्यस्य देवतायाः क्रियायाश्च स्वातन्त्र्येण प्रतीत्यापत्तेस्तस्माद्यथाश्रुतमयुक्तमिति मन्वानस्तात्पर्यमाह—**देवतोद्देशेनेति** । द्रव्यप्रतिग्रहरहितत्वे सति द्रव्योद्देश्यतया चोदितत्वं देवतात्वं स्वर्गकामो यजेतेति चोदनास्थयजतिना नाभिधानयोग्यं, यजीत्यस्य चोदनाभिधायकत्वाभावात् । अतो देवताशब्दार्थान्तर्गतः चोदनांश उपाधिरेव नतु यजत्यर्थ इति द्रष्टव्यम् । द्वितीयसूत्रमपि आसेचनाधिको यागो जुहोतिर्होमः स्यात्तदुक्ते यजत्यभिहिते आसेचनाधिक्येन जुहोतिश्रवणात् यथा चतुर्होत्रा याजयेत् चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत पूर्वेण सग्रहेणार्धं जुहुयादुत्तरेणार्धमित्येवं यथाश्रुतमयुक्तं मारुताञ्जुहोतीति कठिनद्रव्येऽपि जुहोतिदर्शनेन तत्रासेचनाभावादित्याशङ्क्यासेचनग्रहणं प्रक्षेपलक्षणार्थमिति व्याचष्टे—**स एवेति** । सौत्रं यागहोमलक्षणकथनमुपलक्षणमित्याशयेनाह—**स्वीयस्येति** । त्यागांशानुप्रवेशाद्यागहोमाभ्यां भेदकथनाय दानस्य लक्षणं वाच्यं नतु जपादेरिति भावः । इदं भाष्यकारव्याख्यानं दुष्टमित्याचार्यैरन्यथा सूत्रद्वयं व्याख्यातमित्याह—**आचार्यस्त्विति । अनुचितमिति** । नच यज्यादिशब्दार्थज्ञानार्थं तदिति युक्तं गवाश्वादिशब्दार्थज्ञानवल्लोकत एव सिद्धेरिति भावः । यद्यप्याचार्यैस्तथा च तयोर्लक्षणं वक्ष्यतीति द्वितीये उक्तत्वाल्लक्षणकथनं तदनुमतमेव तथापि न लक्षणकथनमात्रपर्यवसितमिदं सूत्र-

---

१ क्वचित्प्रधान. २ मस्त्येवेति तत्प्रयुक्तिरविहतेति.

कुर्वता होमविध्यर्थ इति। एवंच चोदनाग्रहणमर्थवद्भवति न लक्षणपरत्वे। प्रदेशान्तरे त्विदं सूत्रमन्यथा व्याख्यातमाचार्येण। पूर्वं दर्शादियागानुवादेन देशादयो नियम्यन्त इत्युक्तम्। तत्रेयमाशङ्का। कथं तु दर्शादेर्यागत्वम्। नह्युत्पत्तिचोदनास्वाग्नेयादिषु यजिः श्रूयत इति। तत्रेदमुच्यते। द्रव्यदेवताक्रियं श्रूयमाणं यजिचोदनेति मन्तव्यम्। तदविनाभावात्तस्येत्येकस्यार्थः। इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जुहोतिश्रवणं चतुरवत्तं जुहोतीति तत्कथमुपपादनीयं। यागहोमयोर्भेदादत आह—आसेचनाधिकः स्यात् प्रक्षेपमात्रं तत्राप्राप्तं चतुरवत्तसंस्कारार्थं विधीयते यागांशस्तु प्राप्तानुवाद इत्यक्षरानाञ्जस्यं सूत्रयोर्भवति॥

बर्हिष आतिथ्यादिसाधारण्याधिकरणम्॥ १३॥

**विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात्॥ २९॥ [अपि वोत्पत्तिसंयोगादर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात्॥ ३०॥]**

यदातिथ्याबर्हिरेतदुपसत्स्वतिदेशनम्॥ साधारण्यविधिर्वाथ्यस्तदीयस्योपसंहृतेः॥ २४॥

बर्हिःश्रुत्यैकताभानाच्चातिदेशस्य लक्षणा॥ आतिथ्ययोपसन्निश्च बर्हिरेतत्प्रयुज्यते॥ २५॥

यदातिथ्यायां बर्हिस्तदुपसदामिति किमिदमाच्छिद्य विधानमुत निरिष्टकोपदेशः अथवा धर्मातिदेशः अथवा बर्हिःसाधारण्यविधिरिति। 'डित्थस्य गौर्डपित्थाय तत आच्छिद्य दीयताम्॥ ईदृग्वचनसारूप्यादाच्छिद्यविधिरिष्यते॥ एवंचाच्छिद्यमानस्य बर्हिषः स्यादनर्थकः॥ आतिथ्यायां विधिस्तस्मान्निरिष्टकविधिर्वरम्॥ शिष्टाचारविरोधात्तु नैतदप्युपपद्यते॥ तस्माद्धर्मातिदेशोऽयमातिथ्यायां हि यादृशम्॥ अश्ववालादिभिर्बर्हिस्तादृगेवोपसत्स्वपि॥ बर्हिःशब्देन धर्माणां लक्षणैवं भवे-

---

द्वयमित्यत्र तात्पर्यं बोध्यम्। **एवंचेति**। यजतिचोदना द्रव्यदेवताक्रियासमुदायमनुष्ठापयतीत्येवमनुष्ठानप्रकारकथनपरत्वे चोदनाशब्दोऽर्थवान्भवति नतु लक्षणपरत्वे, तदा यागस्यैव लक्षणकथनेन चोदनाशब्दानर्थक्यादित्यर्थः। **प्रदेशान्तर इति**। प्रथमसूत्र इत्यर्थः। यजतिचोदनेत्येतत्सङ्गतिं दर्शयन्नवतारयति—**तत्रेति**। द्रव्यदेवताक्रियमिति क्रियाशब्दः संबन्धपरो बोध्यः। अत एव द्वितीये यजतिस्तु द्रव्यफलभोक्तृसंयोगादिति सूत्रकारेण व्यवहृतमिति न पौनरुक्त्यमिति भावः। **तदुक्त इति**। सूत्रस्य पातनिकामाह—**यजत्यभिहित इति**। नच यजत्यभिहिते जुहोतिश्रवणस्य प्रागप्रसक्तेरियं शङ्का न प्रकृतसङ्गतेति वाच्यम्। आग्नेयोऽष्टाकपाल इत्यस्य यागचोदनात्वे उक्ते चतुरवत्तं जुहोतीति जुहोतिश्रवणाद्धोमचोदना वा किं न स्यादित्याक्षेपे तस्य याग एव जुहोतिश्रवणोपपत्तेर्नाग्नेयादिचोदना जुहोतिचोदना इति समाधातव्यत्वात्तत्समाधानानन्तरं यागहोमयोर्भेदात्कथं यागएवेदं जुहोतिश्रवणमिति शङ्कायाः प्रकृतसङ्गतत्वादिति भावः। **प्रक्षेपमात्रमिति**। चतुरवत्तवाक्ये होमानुवादेन चतुरवत्तं न विधीयते तेन यागचोदनया होमस्याप्राप्तेरनुवादासंभवाज्जुहोतिश्रवणमनुपपन्नं स्यात् किंतु तद्ध्यवदानादिवाक्यप्राप्तचतुरवत्तानुवादेनाप्राप्तप्रक्षेपविधिः। ततश्च संप्रति विधीयमानप्रक्षेपांशाधिक्याद्यागेऽपि जुहोतिश्रवणमुपपद्यत इत्यर्थः। **अक्षरेति**। अनेन पूर्वव्याख्याने प्रथमसूत्रे अनुष्ठापयतिशब्दकल्पनाद्द्वितीयसूत्रे जुहोतिना तत्प्रयोगस्य लक्षणीयत्वादनाञ्जस्यं सूचितम्॥

**विधेः कर्मापवर्गित्वादर्थान्तरे०॥ २९॥** यथा प्रसिद्धचतुरवत्तानुवादेन प्रक्षेपविधिरेवमिहापि यच्छब्दयोगात्प्रसिद्धातिथ्यासंबन्धस्यैव बर्हिषोऽग्नीषोमीयादिसंबन्धविधिर्वाच्यः। ततश्च बर्हिःसाधारण्यविधौ सर्वार्थतया बर्हिषः संप्रति विधीयमानत्वे प्रसिद्धातिथ्यासंबन्धस्यान्यत्र विध्ययोगान्न बर्हिःसाधारण्यविधिरित्याच्छिद्य विधानाद्यन्यतमपक्ष एव स्वीकार्य इति प्रत्यवस्थानात्सङ्गतिः। **निरिष्टकेति**। निरवशेषमिष्टं यस्य तन्निरिष्टकम्। अन्यत्रोपयुक्तमितियावत्। **डित्थस्येति**। यथा डित्थस्य या गौः सा डपित्थाय दीयतामित्युक्ते डित्थादाच्छिद्य डपित्थाय दीयते तथेहापि तादृग्वचनसारूप्यादातिथ्यार्थमुपात्तं यद्बर्हिस्तत्र तदीयहविरासादनादौ विनियोज्यं किंतूपसदग्नीषोमीयहविरासादनादावित्येवमातिथ्यात आच्छिद्योपसदग्नीषोमीययोर्विधीयत इत्यर्थः। आतिथ्यायां बर्हिर्विधिश्चातिथ्यायामदृष्टार्थे बर्हिरुपादानं कर्तव्यमित्येतावन्मात्राभिप्रायक इति भावः। दृष्टसंभवेऽदृष्टार्थत्वस्यान्याय्यत्वादातिथ्यायामुपात्तं बर्हिस्तदीयहविरासादनादौ विनियोज्यमेव किंतु तत्र विनियुक्तस्यैवोपसदादावपि विनियोगः वचनबलादाचारोऽपि बाध्यत इत्याशयेनाह—**एवंचेति**। वचनस्य सावकाशत्वादाचारबाधकत्वमित्यभिप्रेत्याह—**शिष्टेति**। **धर्मेति**। यद्धर्मकमातिथ्यायास्तद्धर्मकमुपसदग्नीषोमीययोरित्यातिथ्याधर्मा उपसदग्नीषोमीययोरतिदिश्यन्त इत्यर्थः। नन्वेवं धर्मलक्षणैव दोषः। अन्यार्थस्यान्यत्र विनियोगसिद्ध्यर्थं पूर्वप्राप्यधिष्ठान-

---

१ नह्युपपत्ति. २ श्रूयमाणे यजतिचोदनेति. ३ अस्यैवाध्यायस्य प्रथमसूत्रे.

ष्ट्रत: ॥ साधारण्यविधिर्ज्यायांस्तत्र दोषो न कश्चन ॥ आतिथ्यार्थमुपादेयं यद्बर्हिस्तन्न केवलम् ॥ तदर्थत्वेन संप्राप्तं तदेवोपसदामपि । बर्हिर्धर्माश्च तद्द्वारा तद्वत्सर्वाङ्गतामियु: ॥' इति श्रीशास्त्रदीपिकायां चतुर्थाध्यायस्य द्वितीय: पाद: ॥ २ ॥

# चतुर्थाध्यायस्य तृतीय: पाद: ।

द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम् ॥ १ ॥

**द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवाद: स्यात् ॥ १ ॥ [उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥ फलं तु तत्प्रधानायाम् ॥ ३ ॥]**

जुह्वा: पर्णमयीत्वेन न पापश्रुतिरञ्जनात् ॥ वैरिदृग्वृञ्जनं, वर्म प्रयाजै:, पुरुषाय किम् ॥ १ ॥
क्रतवे वाग्निमो भानात्फलस्य न हि साध्यता ॥ विभाति क्रतवे तस्मादर्थवाद: फलं भवेत् ॥ २ ॥

'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकं शृणोती'ति । तत्र संशय: किं पर्णमयीत्वं क्रत्वर्थमुत पुरुषार्थमाहोस्विदुभयार्थमिति । तत्र फलश्रवणात्पुरुषार्थत्वम् । यद्यपि चैवंजातीयकस्य फलविधित्वमौदुम्बराधिकरणे निराकृतं, तथापि विहितस्य पर्णत्वस्य फलापेक्षायां क्रतुप्रयोगवचनात्संनिहितमपापश्लोकश्रवणमेव रात्रिसत्रप्रतिष्ठावद्विपरिणामेन फलमाश्रयितुं युक्तम् । अथवा साधनांशमा-

---

लक्षणावश्यंभावादिति भाव: । साधारण्यविधौ यच्छब्दानुपपत्तिं निरसितुं वाक्यार्थमाह—**आतिथ्यार्थमिति । बर्हिर्धर्माश्चेति** । आतिथ्याप्रकरणाम्नातानामपि वाक्येन प्रकरणबाधात्सर्वार्थत्वमिति भाव: । **ननू**पसदामपूर्वत्वेन बर्हिरेव नास्ति तेन चत्वारोऽप्यमी पक्षा अनुपपन्ना इति चेन्मैवम् । उपसदामपूर्वत्वादुपसदङ्गतया बर्हि:प्राप्त्यभावेऽपि बर्हिस्तद्धर्माणामङ्गप्रधानसाधारणतयोपसदङ्गत्वेन विहितस्रौवाघारार्थत्वेनोपसत्सु बर्हि:सद्भावात् आच्छिद्यविधाने बर्हिरुपादानमात्रमातिथ्याप्रयुक्तं, तेन तदेवातिथ्यायामनुष्ठेयं इतरे तु संस्कारा उपसदग्नीषोमीयप्रयुक्ता इति तत्रैव तदनुष्ठानं कृत्वा हविरासादनादिकं तस्मिन्बर्हिषि कार्यं, निरिष्टकोपदेशे त्वातिथ्यायां कृतहविरासादनादिकार्यस्यापि बर्हिष उपसदग्नीषोमीयौ धारणं प्रयुञ्जाते तस्य चोपसदग्नीषोमीययोरपि उपादानव्यतिरिक्ता: संस्कारा: कर्तव्या: । पूर्वकृतसंस्काराणामातिथ्याकार्यापवर्गेणापवर्गादुपात्तस्योपादानायोगादुपादानमात्रं न कर्तव्यं, धर्मातिदेशे तु त्रयाणामपि पृथक्सधर्मकबर्हि:प्रयोजकत्वादातिथ्यादिषु त्रिष्वप्यन्यदन्यदाश्ववालादिधर्मकं बर्हि: कर्तव्यम् । सिद्धान्ते तु सर्वप्रयुक्तमेकं बर्हिरिति त्रिष्वप्येकमेव बर्हिरिति लक्षणसङ्गतिप्रयोजने द्रष्टव्ये । सूत्रार्थस्तु—विधे: विधिगम्यातिथ्यासंबन्धस्य तत्कर्मातिथ्यापवर्गेऽपवर्गित्वादुपसदादिसंबन्धकाले आतिथ्यासंबन्धाभावाद्भूतपूर्वगत्याश्रयणे लक्षणाप्रसङ्गाल्लक्षणायां धर्मलक्षणैव शिष्टाचारानुग्रहाज्ज्यायसीत्यर्थान्तरे उपसदादौ विधिप्रदेश आतिथ्याविहितधर्मातिदेश: स्यात् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां चतुर्थाध्यायस्य द्वितीय: पाद: ॥ २ ॥**

**द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवाद: स्यात् ॥ १ ॥** 'क्रत्वर्थपुरुषार्थयोर्जिज्ञासे'ति सूत्रे प्रथमोपात्तक्रत्वर्थपदसूचिता क्रतुप्रयुक्ति: पादद्वयेन विचारिता । इदानीं चरमोपात्तपुरुषार्थपदसूचितफलप्रयुक्तिर्विचार्यत इति पादान्तरत्वमानन्तर्यं च बोध्यम् । **एवंजातीयकस्येति** । कमिसंबन्धरहितस्येत्यर्थ: । श्येनेनाभिचरन्यजेतेत्यादौ शतृप्रत्ययेनाभिचारस्य लक्षणत्वं प्रतीयते । तच्च क्रतुविशेषणतया न संभवति । तथात्वेऽभिचारविशिष्टकर्तृविशिष्टक्रियाविधाने गौरवप्रसङ्गात् । अप्राप्तत्वेनाबध्नन्नित्यादिवत्काललक्षणार्थत्वायोगात् फलान्तरकल्पनागौरवप्रसङ्गाच्च । तस्मात्फलितया प्रधानभूतपुरुषविशेषणतयैव लक्षणत्वं निर्वोढव्यमिति कमिपदसमभिव्याहाराभावेऽपि शतृप्रत्ययोक्तलक्षणत्वबलादभिचारस्य फलत्वं भ्रातृव्यवान्यजेतेत्यादावप्यपकारिभ्रातृव्यापनयनस्य समीहितत्वात्फलान्तराभावाच्च फलत्वं बोध्यम् । **क्रतुप्रयोगेति** । पर्णताया अनारभ्याधीतत्वात्प्रयोगवचनोपस्थाप्यक्रतूपकारो विप्रकृष्ट: अपापश्लोकश्रवणं तु स्ववाक्यगतत्वात्संनिहितमित्यर्थ: । **रात्रीति** । यथा रात्रिसत्रे 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ती'त्यस्य ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरित्येवं विपरिणामेन रात्रिसत्रस्य प्रतिष्ठाफलं तथा य: पापं न शुश्रूषति स पर्णमयीं जुहूं कुर्यादित्येवं विपरिणामेनापापश्लोकश्रवणं फलमाश्रीयत इत्यर्थ: । भवतीत्यस्य वर्तमानापदेशत्वेन विधिप्रत्ययाभावादसति विधावुदुम्बरतैव संनिधानाद्भाव्या स्यादित्युदुम्बरताया: साधनत्वं न संभवति । विधौ हि सति प्रवर्तनात्मकविधिबलात्समीहितस्यैव भाव्यत्वं स्यान्न त्वौदुम्बरताया: । तस्माद्विध्यभावादौदुम्बरता न साधनमित्यूर्जं पशूनाप्नोतीत्यादे: साध्यसमर्पकत्वमङ्गीकृत्यौदुम्बरतादीनां

---

१ सर्वाङ्गमायवु:.

त्रमौदुम्बराधिकरणे विचारितं विधिरहितस्य भवतीत्येतावन्मात्रस्य साधनप्रतिपादकत्वं न संभवतीति विध्युन्मीलनायैवार्थवादत्वं 'ऊर्जोपशूनाप्नोति न स पापं श्लोकं शृणोती'त्यादेराश्रयितव्यम् । इह तु तदुपेक्ष्याभ्युपेत्य वा साध्यांशो विचार्यते । तत्रैवंजातीयकमपि फलप्रतिपादकं लोके दर्शनात् । अतः पुरुषार्थमित्येकः पक्षः । क्रत्वर्थजुहूद्देशेन विधीयमानं भवतु क्रत्वर्थं फलसंयोगात्तदर्थमपि स्याद्दध्यादिवदित्यपरः । सिद्धान्तस्तु युक्तं दध्नः संयोगपृथक्त्वादुभयार्थत्वम् । इह त्वेकवाक्यं तदुभयपरत्वे भिद्येत । तन्न तावदुभयार्थम् । न च शृणोतीति वर्तमानापदेशात्साध्यत्वं शक्यं प्रतिपत्तुम् । नच विपरिणामेन फलपरत्वं, यथास्थितस्वरूपहानिप्रसङ्गात् । पर्णतायाश्च जुहूपस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपस्य बाधनम् । नच पर्णत्वस्य फलंप्रति विधीयमानस्याश्रयः प्रकृतोऽस्ति तत्र वाक्येनैवाश्रये दीयमाने वाक्यभेदः । तस्मादपापश्लोकश्रवणस्यार्थवादत्वात्क्रत्वर्थमेव पर्णमयीत्वम् ॥

नैमित्तिकानामनित्यार्थत्वाधिकरणम् ॥ २ ॥

## नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥ ४ ॥

**मृन्मये प्रणयेत्कामी नित्येऽप्येतदुतेतरत् ॥ आकाङ्क्षा संनिधिश्चास्ति तस्मान्नित्येऽपि मृन्मयम् ॥ ३ ॥**
**कामार्थत्वादयोग्यत्वं सामान्यविहितेन च ॥ आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत् ॥ ४ ॥**

'अपः प्रणयती'ति प्रकृत्य श्रूयते 'मृण्मयेन प्रतिष्ठाकामस्य प्रणयेत्' इति, तथा 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्या'दिति । तत्र संशयः यदेतत्काम्यं मृण्मयं नैमित्तिकं च बार्हद्गिरं तदेव नित्यार्थे उतान्यदुपादेयमिति । तत्र नित्येऽपि प्रयोगे प्रणयनब्रह्मसामादेः साधनापेक्षत्वादश्रुतसाधनान्तरकल्पनाद्वरं कामनिमित्तयोरपि श्रुतस्य मृण्मयादेः संनिहितस्य नित्यार्थेऽप्युपादानम् । वैारणाभीवर्तादिनि-

---

साधनत्वं न भवतीति साधनांशस्तत्र विचारितः । इह साधनांशमनादृत्यौदुम्बरतापर्णतादेः साधनत्वमुपेत्य वा 'ऊर्जेपशूनाप्नोति न स पापं श्लोकं शृणोती'त्यादेः साध्यसमर्पकत्वं न संभवतीति प्रत्यवस्थीयत इति न पुनरुक्तिरिति पक्षान्तरमाह—**अथवेति । लोक इति** । य औषधं पिबति स उल्लाघो भवतीत्यादावित्यर्थः । स्ववाक्यस्थजुहूपदेनैव क्रत्वपूर्वस्योपस्थापितत्वान्नास्ति विप्रकर्षः । तेन जुह्वाः परिच्छेदकत्वापेक्षायां पर्णत्वं तत्परिच्छेदकतया क्रत्वर्थमपापश्लोकश्रवणस्य फलस्य साधनापेक्षायां पर्णत्वमेव साधनमित्युभयार्थमिति पक्षान्तरमाह—**क्रत्वर्थेति । संयोगेति** । क्रतुफलसंबन्धबोधकवाक्यद्वयसद्भावादित्यर्थः । **तन्न तावदिति** । वक्ष्यमाणरीत्या अपापश्लोकश्रवणस्य साध्यत्वप्रतिपत्त्यभावेन तस्य साधनापेक्षायां तेनापि संबध्यत इत्यस्यासंभवदुक्तिकत्वात्केवलक्रत्वर्थमेवेति भावः । प्रथमपक्षं निराकरोति—**नचेति** । लोके तु पुमभिप्रायवशात्साध्यत्वप्रतीतिरिति भावः । **निराकाङ्क्षत्वादिति** । रात्रिसत्रे तु साकाङ्क्षत्वाद्विपरिणाम इति भावः । **नचेति**। पर्णत्वस्याक्रियारूपत्वेन स्वयं फलभावनाकरणत्वायोगात्तन्निर्वाहार्थमाश्रयापेक्षायां गोदोहनस्य प्रणयनवत्संनिहिताश्रयो नास्तीत्यर्थः । **ननु** संनिहितस्याश्रयस्याभावेऽपि जुहूशब्देनैव लक्षणया जुहूसंबन्धिव्यापार आश्रयत्वेन समर्प्यतामत आह—**तत्र वाक्येनेति** । पर्णत्वाश्रयसंबन्धस्य पर्णत्वफलसंबन्धस्य च बोधनाद्वाक्यभेद इत्यर्थः । 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानूयाजा इज्यन्ते वर्म वा तद्यज्ञाय क्रियत' इत्यादावञ्जनप्रयाजादेः क्रियात्वादाश्रयापेक्षाविरहेऽपि न स्वातन्त्र्येण फले विधिः संभवति । तथात्वे प्रकरणपाठस्यात्यन्तबाधप्रसङ्गात् । अत आश्रित्य विधाने स्वीकर्तव्ये सत्याश्रयः संनिहितो न लभ्यत इति हृदयम् । सूत्रार्थस्तु—यस्य पर्णमयीति द्रव्ये यदाङ्क्ते इति संस्कारे यत्प्रयाजा इज्यन्त इत्यर्थकर्मणि च फलश्रुतिरर्थवादस्तेषां क्रत्वर्थत्वादिति ॥

**नैमित्तिके विकारत्वात्० ॥ ४ ॥ बार्हद्गिरमिति** । बार्हद्गिराख्यसामसाधनकं ब्रह्मसामाख्यं स्तोत्रं कुर्यादित्यर्थः । **ननु** नित्ये कामनिमित्तयोरभावात्तत्संयुक्तमृण्मयाद्ययोगात्कथं पूर्वःपक्ष इत्यत आह—**तत्रेति** । प्रणयनादेः साधनापेक्षायां श्रुतस्य संनिहितस्य मृण्मयादेः मृण्मयेन प्रणयेदित्येवमनुषङ्गेण प्रकरणेन वा कामाद्यनपेक्ष्य केवलप्रणयनार्थत्वस्यापि संभवाद्युक्तं नित्यार्थत्वमित्यर्थः । एवंच फलार्थत्वेऽपि क्रत्वर्थत्वात्पर्णतादेः फलश्रुतिरर्थवाद इत्युक्तमयुक्तमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या । **ननु** वारणो यज्ञावचरः अभिवर्तो ब्रह्मसामेति च वारणाभिवर्ताभ्यां नित्यविधेर्निराकाङ्क्षत्वान्न मृण्मया

---

१ मूर्जेपशूना. २ मन्यत् इत्यन्तमेव सूत्रपाठः. ३ वरणा वृक्षस्तद्विकारो वारणाः. ४ नीरोगः 'उल्लाघो निर्गतो गदात्' ५ वारणश्रमसः, यज्ञावचरः साधनं.

त्यविधिमदृष्ट्वा पूर्वःपक्षः। भवन्ति हीदृशान्यप्यधिकरणानि । 'ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षः स्या'दित्यादीनि, नित्यविधिर्वा नास्तीति कृत्वाचिन्त्यते। अथवा वारणो यज्ञावचर इति, अभीवर्तो ब्रह्मसामेति च सामान्यविधिरयम्। मृण्मयं बार्हद्गिरं च विशेषतः प्रणयने द्वादशाहे च । ततस्तदेव नित्यार्थेपि संनिधिविशेषाद्युक्तमिति मन्यते। 'ब्राह्मणेन निमित्तेन बार्हद्गिरमिति श्रुतम् ॥ मृण्मयं च प्रतिष्ठायां नित्ये स्यातामतो न ते ॥' नह्यन्यत्र श्रुतं संनिहितमप्यन्येन संबद्धुमर्हति। साधनाकाङ्क्षा च नित्यस्यार्थाक्षिप्तेन सामान्यविहितेन वा निवर्तते नतु नैमित्तिकेन, संनिधिमात्रस्य संबन्धकारणत्वाभावात्, निमित्तश्रुतिविरोधाच्च। सति चासति च निमित्ते क्रियमाणस्य कीदृशं नैमित्तिकत्वम्। तस्मादन्यन्नित्यार्थम् ॥

संयोगपृथक्त्वन्याये दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम् ॥ ३ ॥

**एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ [शेष इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥ ७ ॥]**

**दध्ना त्विन्द्रियकामस्य नित्येऽन्यदुत तद्दधि ॥ अन्यत्स्यात्पूर्ववन्नैवं संयोगस्य पृथक्त्वतः ॥ ५ ॥**

अग्निहोत्रे 'दध्नेन्द्रियकामस्य जुहुया'दिति श्रूयते। तत्र किं काम्यार्थमेव दधि नित्येऽपि स्यादुत ततोऽन्यन्नित्यमिति संशये 'पूर्वाधिकरणन्यायात्काम्यत्वेन श्रुतं दधि ॥ न नित्यार्थमुपादेयमतोऽन्यन्नित्यमिष्यताम् ॥' नन्वत्र दध्येव नित्यार्थे श्रूयते दध्ना जुहोतीति 'नैवमेतस्य वाक्यस्य कामवाक्यैकवाक्यता ॥ गम्यतेऽतो न नित्यार्थे पृथग्दधि विधीयते ॥' दध्नेन्द्रियं कुर्यादित्युक्ते किमाश्रितेनेत्यपेक्ष्यते। होमसंयुक्तस्य च दध्नः फलापेक्षा तयोरेवमाकाङ्क्षावशादेकवाक्यता । यद्दध्नेन्द्रियं कुर्यात्तद्धोमाश्रितेन, यच्च दध्ना जुहोति तदिन्द्रियार्थमिति । तस्मान्नित्ये दध्यविधानात्काम्यमेव स्यात्। मैवम्। 'द्वयोरेकस्य वाकाङ्क्षा भवेद्यदि ततस्तयोः ॥ प्रकल्प्येतैकवाक्यत्वं निराकाङ्क्षं त्विहोभयम् ॥'

---

देर्नित्यार्थमित्यत आह—**वारणेति। ऐन्द्रवायव इति**। तत्र सकृद्भक्ष इति पूर्वपक्षस्य द्विरैन्द्रवायवं भक्षयतीतिवचनादर्शनमूलकत्वादिति भावः। उक्तप्रकारद्वयस्याप्यगतिकत्वमित्यनुशयान आह—**अथवेति । सामान्येति** । वारणस्य प्रणयनतदितरसाधारण्येन यज्ञसाधनत्वमात्रश्रवणादभिवर्तस्यापि कर्मविशेषानादरेण श्रुतस्य द्वादशाहतदितरसकलकर्मसाधारण्यादित्यर्थः। अभिवर्तविधेर्द्वादशाहमात्रविषयत्वाभ्युपगमे तु ब्राह्मणतदितरप्रयोगविषयतया साधारण्यम्। नचैवं बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात् पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति ब्राह्मणादिप्रयोगत्रयस्यापि नैमित्तिकावरुद्धत्वादभिवर्तस्य सिद्धान्ते निर्विषयत्वापत्त्या तस्य द्वादशाहविषयत्वं न संभवतीति वाच्यम् । निर्विषयत्वापत्तेरेव नैमित्तिकैरपि विकल्पाश्रयणादिति भावः। नच चमसेनापःप्रणयेदिति विशेषतोऽपि प्रणयने पात्रविधिरस्तीति वाच्यम् । चमसशब्दस्याकारविशेषमात्रवाचित्वेन तस्य मृण्मयविरोधित्वाभावान्मृण्मयस्यापि तदाकारसंभवादिति । एवंच चमसाविरोधि मृण्मयकंसादिकमेवास्मिन्पक्षे उदाहरणं नतु गोदोहनादिकम्। तस्य विशेषविहितचमसविरोधित्वात् । पूर्वोक्तपक्षद्वये तु तदप्युदाहरणम्। चमसवचनादर्शनेन कृत्वाचिन्तया वा पूर्वपक्षस्य गोदोहनेऽपि संभवादिति ध्येयम् । **नहीति** । निराकाङ्क्षत्वानुषङ्गाभावाद्वाक्येन फलनिमित्तसंयुक्तस्य प्रकरणेन नित्यार्थत्वायोगाच्चेति भावः। **ननु** मृण्मयादेर्निराकाङ्क्षत्वेऽपि प्रणयनादेः साधनाकाङ्क्षत्वादनुषङ्गोऽस्त्वित्यत आह—**साधनेति। संनिधिमात्रस्येति** । अतिप्रसङ्गादिति भावः । **निमित्तेति**। नच ब्राह्मणस्येत्येतन्न निमित्तपरं किंतु बार्हद्गिरस्य ब्राह्मणाब्राह्मणसाधारण्यादवयुत्यानुवादमात्रमिति वाच्यम् । स्वरसतः प्रतीयमाननिमित्तपरत्वपरित्यागस्यावयुत्यानुवादस्य चात्यन्तायुक्तत्वादिति भावः । सूत्रार्थस्तु—नैमित्तिकेसति ततोऽन्यदेव कत्वर्थं स्यान्नैमित्तिकस्य विकारत्वाद्विशेषश्रुतत्वादसति विशेषे तदयोगादिति। नैमित्तिकग्रहणं च न्यायसाम्यात्काम्यस्याप्युपलक्षणम् ॥

**एकस्य तूभयत्वे संयोगपृथक्त्वम्** ॥ ५ ॥ किमिति दधि कामार्थं नित्यार्थं चेत्युभयार्थं उत केवलकामार्थं। नित्ये तु दध्नोऽन्यत्पयःप्रभृति स्यादिति संशय इत्यर्थः । **ननु** पृथगाख्यातश्रवणान्नास्त्येकवाक्यतेत्याशङ्क्य 'वाक्ययोरेकवाक्यत्वं पुनः संहत्य जायते' इति न्यायेनाख्यातभेदेऽप्याकाङ्क्षावशादस्त्येकवाक्यतेति श्लोकं व्याचष्टे—**दध्नेति** । दध्नोऽक्रियारूप-

---

१ श्रुतं हविः. २ नित्यमिष्यते. ३ तस्मात्.

कामवाक्यं तावद्विपरिवृत्तिलब्धहोमाश्रयं नाश्रयसंबन्धकरं प्रमाणमपेक्षते । दधिस्वरूपमपि लोकसिद्धं नोक्थ्यव्यूढादिवदलौकिकम्, अतो न तदर्थमन्यापेक्षा । दध्नोऽपि फलवद्धोमसंयुक्तस्य न फलान्तरापेक्षा । तस्मात्पृथक्संयोगादुभयार्थं दधि स्यात् ॥

पयोव्रतादीनां क्रतुधर्मताधिकरणम् ॥ ४ ॥

**द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ८ ॥ [पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥]**

**पयोव्रतं ब्राह्मणस्य पुंसे तत्क्रतवेऽथ वा ॥ पुंयोगादग्रिमो मैवं नैष्फल्यात्क्रतुशेषता ॥ १ ॥**

ज्योतिष्टोमे 'पयोव्रतं ब्राह्मणस्ये'त्यादि श्रूयते । तत्पुरुषार्थमुत क्रत्वर्थमिति संशये पुरुषसंयोगाद्व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य जंजभ्यमानमन्त्रवचनन्यायासंभवात्पयोनियमस्यापि व्रतसंयुक्तस्य तत्फलनिराकाङ्क्षत्वान्न प्रकरणग्रहणमिति पुरुषार्थत्वम् । उच्यते—'नियममन्तरेणापि पुरुषप्रीतिदर्शनात् ॥ नियमस्य फलं कल्प्यं तच्च प्रकरणात्क्रतोः ॥' कल्पनीये हि फले प्रकृतक्रतुफलसिद्धिरेव तदधिकृतपुरुषसंस्कारद्वारेणैव पयोनियमस्य फलं युक्तमाश्रयितुमिति क्रत्वर्थता ॥

---

स्येन्द्रियभावनाकरणत्वासंभवात्तन्निर्वाहार्थं दधि पुरुषव्यापारात्मकमाश्रयमपेक्षत इत्यर्थः । **विपरिवृत्तीति** । बुद्धिसंनिधानेत्यर्थः । नन्वेवं ज्योतिष्टोमप्रकरणे पशुकामः उक्थ्यं गृह्णीयादिति फलार्थत्वेनोक्थ्यसंस्थाविधेर्यदुक्थ्यो गृह्यत इत्याद्युक्थ्यस्वरूपप्रदर्शकवाक्यापेक्षा न स्यात् । तथा द्वादशाहप्रकरणे 'यत्कामो व्यूढच्छन्दसा द्वादशाहेन यजेत सोऽस्मै कामः समृध्यते' इति फलार्थतया व्यूढविधेरैन्द्रवायवाग्रौ प्रापणीयोदयनीयावथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथ द्वे अग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति व्यूढस्वरूपप्रदर्शकवाक्यापेक्षापि न स्यादित्याशङ्क्य तत्राश्रयलाभार्थमन्यापेक्षाविरहेऽपि उक्थ्यादिस्वरूपस्यालौकिकत्वेन तत्स्वरूपापरिज्ञाने तस्य फले विध्यसंभवात्स्वरूपज्ञानाय वाक्यान्तरापेक्षा युक्ता । इह तु दध्यादेर्लोकसिद्धत्वान्न स्वरूपज्ञानार्थमन्यापेक्षेत्याह—**दधिस्वरूपमपीति** । दध्नोऽपि क्रतूपकारेणैव नैराकाङ्क्ष्यमित्याह—**दध्नोपीति** । नचैवं पयःप्रभृतिभिर्विकल्पापत्तिः । तृतीयाश्रुत्या होमार्थपरस्य वाक्यस्य केवलमाश्रयसंबन्धपरत्वायोगाच्छ्रुतबाधाय विकल्पस्य न्याय्यत्वादिति भावः । सूत्रार्थस्तु—एकस्योभयार्थत्वे संयोगस्य संयुज्यते तादर्थ्येन बोध्यतेऽनेनेति व्युत्पत्त्या वाक्यस्य पृथक्त्वं नानात्वं कारणं तदिहाप्यस्तीति दधित्वादिरादिकमुभयार्थमिति ॥

**द्रव्याणां तु क्रियार्थानां०** ॥ ८ ॥ यवागू राजन्यस्यामिक्षा वैश्यस्येत्यादिशब्दार्थः । **तदिति** । किं क्रतुयुक्तपुरुषार्थमुत केवलपुरुषार्थमिति संशयतात्पर्यं बोध्यम् । सिद्धान्तेऽपि ब्राह्मणस्येति षष्ठीश्रुत्या पुरुषधर्मत्वस्यावश्यवाच्यतया केवलक्रतुधर्मत्वाभावात् । नच बार्हद्गिरं ब्राह्मणस्येतिवदिह ब्राह्मणस्येत्यस्य निमित्तार्थत्वोपपत्तेः केवलक्रत्वर्थत्वमेव किं न स्यादिति वाच्यम् । नैमित्तिकत्वेऽपि प्रयोजनजिज्ञासायां पुरुषं प्रीणयतो व्रतस्य लिङ्गेन ब्राह्मणगतक्रत्वनुष्ठानजननसामर्थ्यस्यैव प्रयोजनतया तदापि पुरुषसंस्कारकत्वानपायात् । अतएव सिद्धान्ते वक्ष्यति तदधिकृतपुरुषसंस्कारद्वारेणैवेति । **ननु** पुरुषसंयोगेऽपि 'जंजभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू' इति जंजभ्यमानमन्त्रवचनस्येव प्रकरणात्क्रत्वर्थता स्यादित्यत आह—**व्रतस्येति** । तत्र फलकल्पनापत्त्या क्रत्वनुप्रवेशः । इहतु सामर्थ्येन पुरुषप्रीतिलक्षणस्य फलस्य क्लृप्तत्वान्न क्रत्वनुप्रवेश इत्यर्थः । **ननु** एवं पुरुषप्रीतेरन्येनापि संभवान्नियतभोज्यार्थकव्रतशब्दात्प्रतीयमानो नियमोऽनर्थकः स्यादित्यत आह—**पयोनियमस्येति** । यद्यपि नियमस्य फलं कल्प्यं तथापि व्रतसामर्थ्यलब्धमेव फलं तद्व्रतनियमस्यापि युक्तमित्यन्येन द्रव्यान्तरेण फलमर्जयन्प्रत्यवैतीति कल्प्यत इति भावः । एवंच पूर्ववदिह क्रत्वर्थसंयोगाभावान्न क्रत्वर्थतेति प्रत्यवस्थानास्यप्रतिर्बोध्या । **प्रकरणादिति** । क्रतूपकारस्य प्रकरणोपस्थितत्वात्तस्यैव फलत्वमित्यर्थः । प्रकरणपरिग्रहेऽपि ब्राह्मणस्येति पुरुषसंयोगस्य सामर्थ्यस्य चोपपत्तेर्न प्रकरणबाधनं युक्तमित्याशयेनाह—**कल्पनीय इति** । सूत्रार्थस्तु—पयोव्रतं क्रियार्थानां द्रव्याणां पुरुषाणां बलाधानार्थत्वात्संस्कार इति क्रत्वर्थता स्यादिति ॥

---

१ संभ्या—यज्ञः. २ कृतसंस्कार.

विश्वजिदादीनां सफलत्वाधिकरणम् ॥ ५ ॥

**चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयेत न ह्यशब्दं प्रतीयते ॥ १० ॥ [अपि वाग्दानसामर्थ्याच्चोदनार्थेन गम्यते, अर्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते, अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धः, तस्माच्छ्रुत्येकदेशः ॥ ११ ॥ वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥]**

**नैवास्ति विश्वजिद्यागे फलमस्युत नाश्रुतेः ॥ भाव्यापेक्षाद्विधेः कल्प्यं फलं पुंसः प्रवृत्तये ॥ ७ ॥**

विश्वजिता यजेतेत्यादिषु अश्रुतफलासु चोदनासु फलमस्ति नेति संशयः । 'नास्त्येव फलमेतस्यां चोदनायां फलाश्रुतेः ॥ शब्दगम्यमदृष्टं हि फलं तेन विना कथम् ॥ प्रत्येतुं शक्यते तच्चेदध्याहारेण लभ्यते ॥ परिपूर्णमिदं वाक्यं नाध्याहारमपेक्षते ॥' **ननु** यागेन कुर्यादित्युक्ते किं कुर्यादित्यपेक्षणादध्याहारोऽवकल्प्यते । सत्यं यदि यागेन कुर्यादित्युच्येत । यागं कुर्यादिति तूक्ते परिपूर्णत्वान्नाध्याहारापेक्षा । फलश्रवणे हि सति विध्यानुगुण्यात्समानपदोपात्तधात्वर्थातिक्रमेण वाक्यसमर्पितं फलं भाव्यत्वेन भावनावलम्बते । 'तदभावे तु धात्वर्थभाव्यत्वं को निवारयेत् ॥ तथाच सति संपूर्णं वाक्यं नाध्याहृतिक्षमम् ॥' **नन्वेवं** यागमात्रकर्तव्यतायामुच्यमानायां न कश्चित्प्रवर्तेत । सत्यम् । को दोषः । विध्यानर्थक्यं तदपि भवतु । निष्फलस्य कर्तव्यत्ववचनमप्रमाणं स्यादित्येवमप्यस्तु क्षेमोयं पन्था गच्छतु भवानित्याद्यनाप्तवाक्यवत्किं कुर्मः । नच कर्तव्यताबलादेव फलमुपकल्पयितुं शक्यं । तदात्वे दुःखदर्शनात् प्रत्यक्षविरोधादायत्यां च फलं न कृतमात्रविनष्टेन यागेन शक्यते कर्तुम् । नचापूर्वद्वारेण संभवति तदभावात् । श्रुते हि फले शृङ्गग्राहिकतया धात्वर्थस्य तत्साधनत्वे शब्देन प्रतिपादिते तद्बलाददृष्टमप्यपूर्वं कल्प्यते । यागक्रियामात्रपर्यवसिते तु शब्दे कथमपूर्वसिद्धिस्तदभावे च कथं कालान्तरभाविफलकल्पनं तदितरेतराश्रयं फलाधीनमपूर्वं

---

**चोदनायां फलाश्रुतेः०** ॥ १० ॥ व्रतवदेव फलाश्रवणाद्विश्वजिदादेरपि न फलार्थत्वमिति प्रत्यवस्थानात्सङ्गतिः । अत्र 'सर्वेभ्यो वा एष देवेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते यः सत्रायागुरते स विश्वजितातिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेते'ति भाष्योदाहृतो विश्वजिन्नोदाहरणं, तस्य वाक्येनैव सत्रफलार्थत्वात् । तस्मादेकाहकाण्डे यः फलसंयोगंविना श्रुतो विश्वजित्स उदाहरणमिति भाष्योदाहृतादन्यदुदाहरति—**विश्वजितेति** । पिण्डपितृयज्ञादिरादिशब्दार्थः । **शब्देति** । संप्रत्यदृष्टं कालान्तरभाविफलं शब्दैकगम्यमिति शब्देनविना तत्फलं प्रत्येतुं न शक्यमित्यर्थः । **ननु** समानपदोपात्तस्यापि धात्वर्थस्य भाव्यत्वं नास्तीति स्वर्गकामाधिकरणे वक्ष्यमाणत्वाद्यागं कुर्यादिति न वाक्यार्थ इत्यत आह—**फलश्रवण इति** । एतेन श्रुतफलानां कर्मणां फलवत्त्वं स्वर्गकामाधिकरणप्रतिपाद्यमिह त्वश्रुतफलानामिति न तेनास्य गतार्थत्वमिति सूचितम् । फलकामपदाध्याहारेणेह फलवत्त्वेऽभिहिते यत्रापि स्वर्गकाम इति फलं श्रूयते तत्रापि फलसाधनकामनानुवादत्वान्नास्ति फलं किमुत फलाश्रवणे इत्येतदधिकरणाक्षेपेण तत्प्रवृत्तेस्तदप्यनेनागतार्थं बोध्यम् । **ननु** प्रवर्तनात्मको विधिः प्रवृत्तिफलकश्च व्यापारः प्रवर्तनेत्युच्यते पुरुषप्रवृत्तिश्च स्वाभिलषितसाधन एव भवति । ततश्च प्रवर्तनात्मकशब्दभावनारूपविध्यानुगुण्यादेवार्थभावनायां प्रकृतेऽपि पुरुषार्थस्यैव भाव्यत्वं नत्वपुरुषार्थस्येति शङ्कते—**नन्विति** । सत्यपि प्रवर्तनासंबन्धे तन्निर्वाहकफलाश्रवणाद्धात्वर्थमेव भाव्यत्वेन भावनावलम्बत इति परिहरति —**सत्यमिति** । नन्वध्ययनविधिपरिगृहीतस्याप्रामाण्यं न युक्तमित्यत आह—**किं कुर्म इति** । अध्ययनविधिरपि तदंशेऽदृष्टार्थोऽस्त्विति भावः । कल्पयितुमनुमातुमित्यर्थः । **ननु** तदानीं फलानुपलम्भात्प्रत्यक्षविरोधेऽपि कालान्तरे तदप्रत्यूहमित्यत आह—**आयत्यांचेति**। प्राभाकरास्तु लिङर्थः कार्यात्मा नियोगः कार्यं च कृतिनिरूपणाधीननिरूपणं कृतिश्च पुरुषव्यापाररूपा व्यापारिपुरुषनिरूप्या । ततश्च ममेदं कार्यमित्येवं कार्यस्य कृतिमुखेन कृतिसंबन्धिव्यापारिपुरुषमन्तर्भाव्यैव प्रतीतिरिति ममेदं कार्यमिति बोद्धा पुरुषो वाच्यः स एव च नियोज्य इत्युच्यते । एवंच कस्य यागविषयकं कार्यमिति नियोज्यापेक्षणात्फलकामाध्याहारः । नचाशक्तस्याजीवतश्च कार्यकरणायोगाच्छक्तो जीवन्नेव नियोज्योऽस्त्विति वाच्यम् । तथात्वे नियोगबलात्कर्मणि प्रवृत्तिरिति नियोगस्य प्रयुक्तिशक्तिः कल्पनीयेति गौरवं स्यात् । फलकामस्य नियोज्यत्वे तु फलार्थे प्रीतेरुत्कटत्वात् रागादेव प्रवृत्तिसिद्धेर्न प्रयुक्तिः कल्पनीयेति प्रयुक्तिलाघवेन फलकामस्यैव नियोज्यत्वादित्याहुः

---

१ यागकर्तव्य. २ कर्तव्यवचन. ३ तदात्वे यागकाले. ४ आयत्यां उत्तरकाले. ५ श्रयं भवति.

तदधीनं च फलमिति। असत्यपि भाव्यापेक्षणे कस्य यागः कर्तव्य इति नियोज्यापेक्षणात्फलकामस्याध्याहार इति चेन्न। अध्याहारमन्तरेणापि तल्लाभात्। यथा निषेधाधिकारेष्वप्रवृत्तस्य निवर्तनासंभवान्नञर्थावच्छेदकतयोपयुक्तापि प्रवृत्तिरेव विशेषणमिति तद्विशिष्टस्य नियोज्यत्वावगमात् न प्रयुक्तिलाघवमाश्रित्य फलकामोऽध्याह्रियते। तथा प्रवृत्त्युपदेशेऽप्यशक्तस्याजीवतश्च तदसंभवाच्छक्तो जीवंश्चाधिकारी लब्ध इति किमध्याहारेण। तस्मान्निष्फलमेवेदं कर्मेति प्राप्ते उच्यते—'विधियुक्ता क्रिया नैव धात्वर्थं भाव्यमृच्छति॥ भाव्येन च विना वाक्यं नैवैतत्परिपूर्यते॥ वाक्यसंपूरणायातः फलमध्याहरिष्यते॥' असत्यपि फलश्रवणे चेतनप्रवर्तनात्मकविध्यवरुद्धा भावना धात्वर्थं तावन्न कथंचिद्भाव्यमङ्गीकरोति तदतिरिक्तभाव्यापेक्षणादतल्लाभादपरिपूर्णं वाक्यं फलपदाध्याहारमपेक्षते। तच्च लौकिकमपि वेदवाक्यैकदेशतयाऽध्याहृतं वैदिकमेव भवति किमुत यदा वैदिकमेवान्यत्र स्थितमध्याह्रियते, कथं पुनर्व्यवेतस्यानुषङ्गाभ्युपगमः। नायमनुषङ्गः किंत्वध्याहारः। स च यत्र क्वचिदपि व्यवस्थितस्याविरुद्धः। 'तेनाश्रुतफलानामप्यध्याहृतफलान्वयात्॥ सर्वेषां कर्मणामत्र फलवत्त्वमवस्थितम्॥

विश्वजिदादीनामेकफलताधिकरणम्॥ ६॥

## तत्सर्वार्थमनादेशात्॥ १३॥ [एकं वा चोदनैकत्वात्॥ १४॥]

**सर्वं फलमुतैकं स्यात्सर्वमस्त्वविशेषतः॥ एकेन तन्निराकाङ्क्षमतोऽनेकं न कल्प्यते॥ ८॥**

स्थिते फलार्थत्वे किं सर्वफलार्थमुतैकार्थमिति विशेषानिर्देशात्सर्वार्थत्वे प्राप्तेऽभिधीयते—'येनैवैकेन तद्वाक्यं साकाङ्क्षं परिपूरितम्॥ तेनैवैतन्निराकाङ्क्षमिति नानेकै[1]कल्पना॥'

---

तन्मतमाशङ्कते—**असत्यपीति**। कस्य यागः कर्तव्य इति। कस्य यागविषयकं कार्यमित्यर्थः। यदि प्रयुक्तिलाघवेन फलकामस्य नियोज्यत्वं तर्हि ब्राह्मणो न हन्तव्य इति निषेधेष्वपि फलकामस्यैव नियोज्यत्वं स्यात्। यदि च तत्र सामर्थ्यान्नियोज्यलाभस्तदा प्रकृतेपि तुल्यमिति प्रतिबन्द्याभिप्रायेणाह—**यथेति**। अन्यत्रोपयुक्ताया अपि प्रवृत्तेर्नियोज्यविशेषणत्वस्वीकारे शक्तिजीवनयोः कैमुतिकन्यायेन तद्विशेषणत्वमित्याशयेनाह—**नञर्थेति**। प्रवृत्तिगोचरस्यैव हननस्य निषेध्यत्वात्प्रवृत्तिरपि नञर्थावच्छेदकेति भावः। **विधीति**। विधिः शब्दभावना तद्युक्ता तद्भाव्या क्रियार्थभावनेत्यर्थः। **न कथंचिदिति**। अपुरुषार्थे पुरुषस्य प्रवर्तयितुमशक्यत्वेन धात्वर्थस्य भाव्यत्वे प्रवर्तनात्वव्याघातादिति भावः। **नच** फलाश्रवणात्प्रवर्तनासंबन्धानिर्वाहः अध्याहारेण तन्निर्वाहात्। एवंचाध्ययनविधेर्दृष्टादृष्टकृतवैरूप्यं वेदवाक्याप्रामाण्यं चात्यन्तायुक्तं न स्वीकार्यमिति। **ननु** फलाध्याहारे तस्य वेदोक्तत्वाभावाद्वैदिकत्वं न स्यादित्यत आह—**तदिति**। अध्याहारेऽन्यत्र समाम्नातस्यानुपयोगादन्यत्र स्थितमित्युक्त्यानुषङ्गभ्रान्त्या शङ्कते—**कथमिति**। 'व्यवायान्नानुषज्यत'इति न्यायाद्व्यवहितस्यानुषङ्गोऽनुपपन्न इत्यर्थः। अध्याहारो नापूर्वपदस्योत्पत्तिः किंतु अन्यत्र लोके वेदे वा समाम्नातस्यैव प्रकृतैकवाक्यताकल्पनम्। नचैवमनुषङ्गाभेदः। अनुषङ्गोनामानेकसंनिधावाम्नातस्यासंबन्धिपदाव्यवेतस्याम्नानं सर्वार्थमिति परिकल्प्य सर्वैः संनिहितैरेकवाक्यत्वकल्पनम्। अध्याहारस्तु यत्र क्वचिदवस्थितस्य पदस्य तत्रैव कृतार्थस्यान्यत्राविपरिवर्तमानस्यापि ध्यानादिना विपरिवृत्तिमाश्रित्य यदेकवाक्यत्वकल्पनमित्युभयोर्भेदात्। तस्मादन्यत्राम्नानमध्याहारेप्युपयुज्यत इति परिहरति—**नायमिति**। **ननु** तदुत्सर्गे कर्माणीत्यधिकरण एव 'नेक्षेतोद्यन्त'मित्यादिप्रतिषेधानां विश्वजिदादीनां च पुरुषार्थत्वसाधनादिह पुनः फलवत्त्वसाधनं व्यर्थमित्यत आह—**तेनेति**। इह हि फलवत्त्वमात्रं साध्यते तदुत्सर्गे कर्माणीत्यत्र तु तत्फलं न क्रतूपकाररूपं किंतु पुरुषार्थरूपं किमपीत्येतावन्मात्रं। तद्विशेषचिन्ता च तत्सर्वार्थमित्यादिषु हिरण्यं भार्यमित्यत्र हिरण्यभरणनये तु तदुत्सर्गे कर्माणीत्यत्रोक्तं पुरुषार्थत्वं न संभवति कृत्यप्रत्ययावगतसंस्कारत्वस्य क्रत्वर्थत्वनिर्वाह्यत्वादित्याशङ्क्य निराक्रियत इति न कस्यापि वैयर्थ्यमिति भावः॥

**तत्सर्वार्थमनादेशात्॥ १३॥** पूर्वोक्तस्य विशेषपर्यवसानकथनेन निर्वाहात्सङ्गतिमभिप्रेत्याह—**स्थित इति**। **येनैवेति**। यस्य ह्यनेकेन फलेन संबन्धस्तस्यावश्यंभाव्ये केन संबन्धः। एवंच येनैवैकेन प्रथमं संबन्धस्तेनैव विधेर्नैराकाङ्क्ष्यान्नानेकफलत्वकल्पनेत्यर्थः। **ननु** यदि प्रत्येकं तत्तत्फलकामशब्दाध्याहारः स्यात्तदोक्तदोषो भवेत्। सर्वकामशब्दाध्याहारेण तु सर्वेषां फलानां युगपदन्वयान्नायं दोष इतिचेत् सत्यम्। तथाप्यनेकेषां फलानां प्रयुक्तिशक्तिकल्पनायां गौरवं स्यादिति लाघवादेकफलकत्वमिति भावः। सूत्रेऽनादेशात्फलविशेषानिर्देशादित्यर्थः॥

---

[1] कल्पनम्.

विश्वजिदादीनां स्वर्गफलताधिकरणम् ॥ ७ ॥

**सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ १५ ॥ [प्रत्ययाच्च ॥ १६ ॥]**

**एकं यत्किंचिदथवा नियतं न नियामकम् ॥ तस्मादाद्यः सर्वपुंसामिष्टत्वात्स्वर्ग एव तत् ॥ ९ ॥**

एकं फलमित्युक्तं तदेकं किमिति न ज्ञायते अतः पुनरपि सर्वार्थत्वमप्रामाण्यं वानध्यवसायात्प्राप्नोति । तदुच्यते—'स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्जितः ॥ भूयांसोऽभिलषन्त्येनमल्पे त्वल्पसुखं नराः ॥ सतिसंभवे शास्त्रस्य भूयोविषयत्वं न्याय्यमविशेषप्रवृत्तस्यातिसंकोचपरिहारात् । स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः । पश्वादिसुखं तु दुःखानुषक्तमल्पं च केचिदेव प्रार्थयन्ते । प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया कियतापि विलम्बेन हृदयमागच्छति । 'ततस्तु सुकरज्ञानं सुखमेव परं फलम् । तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम् ॥'

रात्रिसत्रस्यार्थवादिकफलकताधिकरणम् ॥ ८ ॥

**क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ [फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥]**

**स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहादिमः ॥ पूर्ववत्स्यात्प्रतिष्ठा च श्रुता तेनाश्रुताद्वरम् ॥ १० ॥**

'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'तिश्रुतम् । रात्रिशब्देन ज्योतिर्गौरायुरित्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते । तदिदं रात्रिसत्रं स्वर्गार्थमुत प्रतिष्ठार्थमिति संशयः । तदर्थं च प्रतितिष्ठन्तीति किमयं फलविधिरुतार्थवाद इति । 'अपापश्लोकवत्तत्र वर्तमानापदेशतः ॥ फलविध्यसमर्थत्वात्तद्वदेवार्थवादता ॥ अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता ॥ निर्देशात्तु प्रतिष्ठैव फलत्वेन विनम्यते ॥ जुहूवन्नैव कर्मैतन्निराकाङ्क्षं फलं प्रति ॥ कल्पनीयं फलं तत्र विनामोध्याहृतेर्वरम् ॥' स्वर्गस्याध्याहारे तत्स्वरूपं तस्य च श्रुतकर्मसंबन्धः फलत्वं च कल्प्यम् । प्रतिष्ठायास्तु स्वरू-

---

**सः स्वर्गः स्यात्०** ॥ १५ ॥ अप्रामाण्यं वेत्यनास्थावादः । सर्वार्थत्वेन प्रामाण्योपपत्तावप्रामाण्यायोगात् । **स्वर्ग इति** । 'यन्न दुःखेन संभिन्न'मित्यादिवचनादिति भावः । यद्यप्यनतिशयप्रीतिरूपत्वं मोक्षस्यैव न स्वर्गस्य तथापि पश्वादिप्रीत्यपेक्षया विशेषकथनमात्रे तात्पर्यम् । **भूयांस इति** । इहामुत्रार्थफलभोगविरक्ताभिलषणीयो मोक्षः । तादृशाश्च कतिपय एवेति न तस्यापि भूयोऽभिलषितत्वम् । अस्तु वा तस्य भूयोऽभिलषितत्वं तथापि तस्य ज्ञानफलत्वेन कर्मफलत्वं न संभवतीत्याहुः । भूयोविषयत्वं बहुपुरुषविषयत्वमित्यर्थः । **ननु** तर्हि मुमुक्षुसाधारण्यात्प्रत्यवायपरिहार एव फलमस्त्वित्यत आह—**प्रत्यवायेति** । एतेन दुःखनिवृत्तेरपि फलत्वं प्रत्युक्तम्—यदेकं फलं सः स्वर्गः स्यात् सर्वपुरुषान्प्रत्यविशिष्टत्वादिति सूत्रार्थः ॥

**क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ वर्तमानेति** । प्रतितिष्ठन्तीति वर्तमानापदेशेन प्रतिष्ठायाः साध्यत्वानवगमात्फलविधित्वं न संभवतीत्यर्थः । वर्तमानापदेशतः इत्यनेनैवोपयन्तीत्यस्य वर्तमानापदेशत्वात्सत्यपि प्रतिष्ठायाः साध्यत्वावगमे फलविधिर्न संभवतीत्यपि संगृहीतम् । **तस्मादिति** । विश्वजिन्न्यायादित्यर्थः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति कर्मसंबन्धेन स्वर्गस्य फलत्वं स्वरूपं च क्लृप्तमेव प्रकृतकर्मसंबन्धित्वमात्रं कल्प्यमिति न गौरवम् । प्रतितिष्ठन्तीति गौण्या स्वर्गस्यैवानुवाद इति नार्थवादासङ्गतिश्चेति भावः । जुहूवत् पर्णतावदित्यर्थः । विनामो विपरिणाम इत्यर्थः । **स्वरूपमिति** । स्वरूपस्य प्रदेशान्तरे क्लृप्तत्वेऽपि तस्यात्रानुपस्थिततया स्वरूपोपस्थितिरवश्यं कल्प्येति भावः । **फलत्वमिति** । परस्त्रीकामः प्रायश्चित्तं कुर्यात् 'स्त्रीकामा वै गन्धर्वा' इति कर्मसंयोगेपि फलत्वाभावादन्यत्र फलपरत्वेन क्लृप्तस्यापि स्वर्गकामशब्दस्याध्याहृतस्य प्रकृते फलपरत्वं विध्याकाङ्क्षानिबन्धनमिति फलत्वमपि कल्प्यमिति भावः । **सनन्ततयेति** । सनन्ततया विपरिणामेसति सन्प्रत्ययाभिहितेच्छासंबन्धात्कर्मसंबन्ध इव साध्यत्वं स्वध्यवसानमिति भावः । तस्मात् 'सुवर्णं हिरण्यंभार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवती'त्यत्र सनन्ततया विपरिणामेन साध्यत्वलाभासंभवात्तदुक्तिर्दिक्प्रदर्शनपरा । ततश्च 'लृट्शेषेचे'ति क्रियार्थायां क्रियायामुपपदे विहितलृडन्ततया विपरिणामो सर्वसाधारणो बोध्यः । यदुक्तं

---

१ ज्योतिर्गौरित्यादि. २ नात्रगम्यते.

पमेकवाक्यत्वं च क्लृप्तं फलत्वसिद्ध्यर्थं सनन्ततया विपरिणाममात्रं लघीय:। उपयन्तीत्यपि वर्तमानापदेशो विधिरूपेण विपरिणम्यते। यच्छब्दश्च व्यवहितान्वय:। तदयमर्थ:—ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति। एवं हि धर्ममात्रकल्पनालाघवमितरथा तु सर्वस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्ट: कल्पनीय:। स्वर्गकामा एता रात्रीरुपेयुरिति कल्पितोऽप्यसौ प्रतिष्ठार्थवादे न सुखं संगच्छते। यस्मात्प्रतितिष्ठन्ति तस्मात्स्वर्गकामा उपेयुरिति किं केन संगच्छते। ततश्च यद्यप्यध्याहार: स्यात्तथाप्यर्थवादसङ्गत्यर्थं प्रतिष्ठैवाध्याहर्तव्येति प्रतिष्ठार्थता॥

काम्यानां यथोक्तकाम्यफलताधिकरणम्॥ ९॥

**काम्ये कर्मणि नित्य: स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थ:॥ २०॥ [वीते च कारणे नियमात्॥ २१॥ कामो वा तत्संयोगेन चोद्यते॥ २२॥ अङ्गे गुणत्वात्॥२३॥ वीते च नियमस्तदर्थम्॥ २४॥]**

**श्रुताश्रुते श्रुतं वैकं सौर्ये सर्वप्रवृत्तये॥ आद्यो मैवं श्रुतेनैव फलाकाङ्क्षानिवर्तनात्॥ ११॥**

यत्र स्वर्गादन्यत्फलं श्रुतं 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति तत्किं स्वर्गार्थं श्रुतफलार्थं च उत श्रुतफलार्थमेवेति संशय:। तत्र—'विधि: सामान्यरूपेण सर्वेषां हि प्रवर्तक:॥ स्वर्गश्चाभ्यर्थित: सर्वैरिति तादर्थ्यनिश्चय:॥' कतिपयाभिलषितब्रह्मवर्चसाद्यर्थत्वे विधेरविशेषत: सर्वपुरुषान्प्रति प्रवर्तकत्वमवगतं बाध्येत। सर्वाभिलषितस्वर्गाद्यर्थत्वे तु तदनुग्रह: स्यादिति स्वर्गार्थता। ब्रह्मवर्चसादिश्रवणं त्वन्वाचयत्वेन व्याख्येयम्। काष्ठाहरणइव शाकाहरणम्। सौर्येण स्वर्गं कुर्याद्ब्रह्मवर्चसमपि भवतीति। एवंच विधित एव स्वर्गार्थत्वेन परार्थत्वाद्रात्रिसत्रे फलश्रवणमर्थवाद: पर्णमयीन्यायादिति पूर्वाधिकरणमप्याक्षिप्तम्। अत्रोच्यते—'अविशेषप्रतीतिर्या पदमात्रेण जायते॥ पदान्तरैकवाक्यत्वाद्विशेषे स्थाप्यते हि सा॥ ब्रह्मवर्चसकामादिविषयोऽयमतो विधि:॥ स्याच्चेदन्वाचयस्तस्य भवेदन्योन्यसंश्रय:॥' स्वर्गार्थत्वे हि निश्चिते स्यादन्वाचय:। तन्निश्चये च सति फलान्तरापेक्षायां स्वर्गकल्पना। तस्माद्ब्रह्मवर्चसाद्येव फलम्॥

---

सत्यपि साध्यत्वावगमे उपयन्तीति वर्तमानापदेशेन विध्यभावान्न फलविधिरिति तत्राह—**उपयन्तीत्यपीति**। ननु यच्छब्दोपबन्धान्न विधिविपरिणामसंभव इत्यत आह—**यदिति**। **सकल इति**। रात्रिसत्रविधेरध्याहृतफलपदैकवाक्यतामात्रकल्पनायामपि फलविशिष्टविध्युद्देश: कल्पितप्रायो भवतीत्याशय:। अर्थवादस्य स्वर्गपरत्वे गौणत्वमेव दोष इत्याशयेन सुखशब्दप्रयोग:। यद्यपीत्यभ्युपगमवाद:। श्रुतपदैरेव नैराकाङ्क्ष्यसंभवेऽध्याहारायोगात्। नच श्रुतपदानामुत्पत्तिविध्यपेक्षितप्राशस्त्यसमर्पकत्वान्न फलपरत्वं संभवति वाक्यभेदप्रसङ्गादिति वाच्यम्। विधेरेव द्वे शक्ती कल्पयिष्याम इति विधित एव प्राशस्त्यावगमसिद्धेरिति। सूत्रार्थस्तु—क्रतौ रात्रिसत्रादिके फलश्रुतिं पर्णतादावङ्ग इव फलार्थवादं कार्ष्णाजिनिराचार्यो मन्यते इति॥

**काम्ये कर्मणि नित्य: स्वर्गो०॥ २०॥ विधिरिति**। विधिप्रत्यय: प्रवर्तनासामान्यमभिदधान: अविशेषात्सर्वेषां प्रवर्तक:। तत्वंच स्वर्गार्थत्व एवोपपद्यते तस्य सर्वपुरुषाभिलषितत्वादिति श्रौतप्रवर्तनासंबन्धबललभ्यं स्वर्गार्थत्वमवश्यं स्वीकार्यमित्यर्थ:। आर्थवादिकफलेन स्वर्गफलार्थत्वस्य पूर्वत्र निराकरणादिह स्वर्गार्थत्वं कैमुतिकन्यायापहतमित्यत आह—**एवंचेति**। प्रतिष्ठाया: कर्मसंयोगाभावेन फलत्वस्य कल्पनीयत्वाद्ब्रह्मवर्चसादिवदन्वाचयत्वासंभवात्फलश्रवणमर्थवाद इति भाव:। श्रुतिर्न साक्षात्स्वर्गार्थत्वमाह येन वाक्यगम्यं ब्रह्मवर्चसार्थत्वं न प्राप्तं स्यात् किंतु प्रवर्तनासंबन्धबलात्स्वर्गार्थत्वं कल्पनीयम्। प्रवर्तनासंबन्धश्च श्रुतफलार्थत्वमात्रेणाप्युपपद्यत इति स्वर्गार्थत्वमप्रमाणमित्याशयेनाह—**अविशेषेति। तन्निश्चय इति**। अन्वाचयत्वनिश्चये हि यथा काष्ठाहरणार्थं प्रवृत्तौ दैवाच्छाकलाभे तदाहरणमिति शाकाहरणं न नियतं तथान्यार्थे यागेऽनुष्ठीयमाने ब्रह्मवर्चसकामनायां तदपि भवतीत्येवमन्वाचयफलस्यानित्यत्वेन तेन न फलाकाङ्क्षाया: शान्तिरिति भाव:। सूत्रार्थस्तु—काम्ये कर्मणि स्वर्ग: नित्यफलं ब्रह्मवर्चसादिकमन्वाचयफलं यथा प्रस्तरप्रहरणादौ यज्ञाङ्गे क्रतूपकारो नित्य:, सूक्तवाकप्रकाश्यायुरादिकं त्वन्वाचयफलं तद्वदिति। भाष्ये तु क्रतौ क्रतुकामं कामयेत यज्ञाङ्गादौ तु यज्ञाङ्गकाममित्यादिकल्पसूत्रकारव्यवहाराद्यज्ञाङ्गशब्दो गोदोहनादिपरतया व्याख्यात:॥

---

१ संबन्धस्यैवार्थ.

दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥ १० ॥

**सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ [फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥]**

**दर्शादिः सर्वकामेभ्योऽनुवादो वा फले विधिः ॥ अङ्गोपाङ्गोदितः कामो विध्यभावादनूद्यते ॥ १२ ॥**
**उत्पत्तिचोदनासिद्धे आश्रित्य विधिभावने ॥ फलसंयोगबोधेन भवेदेष फले विधिः ॥ १३ ॥**

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति किमयमनुवाद उत विधिरिति संशये विधिभावनयोरश्रवणात्तदभावे च साध्यसाधनसंबन्धायोगाद्वाजपेययूपयोरिव गोदोहनादिगुणकामैः पश्वादिभिर्दर्शपूर्णमासयोः संबन्धसद्भावात्तदपेक्षोऽयमनुवादो दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते ब्रूमः-'षष्ठीसंबन्धमात्रेऽपि वर्तमाना न दुष्यति ॥ तादर्थ्ये च चतुर्थ्यर्थस्तच्च प्राप्तं न केनचित् ॥ स्यात्प्रधानफलार्थत्वमङ्गानां तदनुग्रहात् ॥ नत्वङ्गफलशेषत्वं प्रधानस्य कथंचन ॥ सर्वकामार्थता तस्मादप्राप्तेह विधीयते ॥ कर्तव्याविति चाहार्यं[1] विधिभावनयोः पदम् ॥ उत्पत्तिचोदनाभ्यो वा प्रसिद्धे विधिभावने ॥ आश्रित्य फलसंबन्धमात्रमत्रोपदिश्यते ॥' यद्दर्शपूर्णमासौ कर्तव्यौ तत्तत्सर्वकामार्थेनेति । तस्मात्फलविधिः ॥

---

**सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥** पूर्ववदिहापि नानेकफलार्थत्वमिति प्रत्यवस्थानात्सङ्गतिः । **ननु** विधिभावनयोरभावेऽपि चतुर्थ्या साध्यत्वप्रतीतेः सर्वफलार्थत्वप्रत्यायकमेवेदं नानुवादकमित्यत आह—**तदभाव इति ।** कारकयोर्मिथः संबन्धाभावात्तत्संबन्धघटकक्रियाया अभावात्साध्यसाधनत्वप्रत्यायकत्वं न संभवतीत्यर्थः । **गोदोहनेति ।** प्रकरणाद्गोदोहनादिफलपरः सर्वशब्दः । गुणफलानां दर्शपूर्णमाससाध्यत्वाभावेऽपि तदुपकार्यत्वसद्भावात्तन्मात्राभिप्राया चतुर्थीति भावः । उपकार्यत्वं न चतुर्थ्यर्थः लक्षणाप्रसङ्गात् । ततश्च वाजपेयस्य स्वाङ्गपशुयागद्वारा यूपसंबन्धसद्भावात्संबन्धमात्रार्था वाजपेयस्य यूप इति षष्ठी न दुष्यति । प्रकृते तु दर्शपूर्णमासयोः स्वाङ्गाश्रितगुणद्वारा गुणफलसंबन्धेऽपि तादर्थ्याभावाच्चतुर्थी नोपपद्यत इत्याह—**षष्ठीति ।** नन्वङ्गानां प्रधानफलोपकारकतामात्रेण तादर्थ्यवद्गुणफलार्थत्वं प्रधानस्य प्राप्तमित्यत आह—**स्यात्प्रधानेति ।** युक्तमङ्गानां प्रधानफलार्थत्वं फलार्थप्रधानार्थत्वात्, प्रधानस्य त्वङ्गोपकारकत्वेऽप्यङ्गार्थत्वाभावान्न तद्द्वाराङ्गफलार्थत्वमित्यर्थः । **कर्तव्याविति ।** उक्तरीत्यानुवादासंभवादन्यशेषत्वाभावेनानुवादानर्थक्याच्चाध्याहारो न्याय्य इति भावः । अत्र सर्वज्ञत्वादयः शशविषाणादयश्च न फलं भवितुमर्हन्ति तेषां लोके वेदे वा काम्यत्वेनाप्रसिद्धेः । अतः तद्व्यतिरिक्तं यल्लौकिकं वैदिकं वा काम्यं तत्परः सर्वशब्दः । वस्तुतस्तु वैदिकस्य प्रत्यासन्नत्वाद्वेदे यत्र कामशब्दप्रयोगस्तेषामेवात्र सर्वकामशब्देन निर्देशो नतु लौकिकस्य । नचैवं बह्वायाससाध्याश्वमेधादिवैयर्थ्यम् । फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यादित्यनेन प्रकारेणाग्निहोत्रस्य स्वर्गार्थत्वेऽपि तदपेक्षया बह्वायाससाध्यदर्शपूर्णमासयोरिव ततोऽपि बहुतरायाससाध्यज्योतिष्टोमस्येव च सार्थकत्वोपपत्तेः । **नन्वेवं** सर्वकामवाक्येनैव स्वर्गार्थत्वस्यापि सिद्धेः स्वर्गकामवाक्यमनर्थकम् । नच स्वर्गकामवाक्यस्य समिदादीनामङ्गत्वसिद्धिरेव फलम् । सति हि तस्मिन्दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति भावनाप्रतिपादने कृते कथं भावयेदिति भवति प्रकाराकाङ्क्षा । प्रयाजादीनामप्यस्ति प्रयोजनाकाङ्क्षेत्युभयाकाङ्क्षालक्षणप्रकरणेनाङ्गाङ्गिभावावगमो भवति । असति तु तस्मिन्सर्वकामवाक्ये प्रकाराकाङ्क्षिण्या भावनाया अश्रवणाच्चतुर्थ्यवगततादर्थ्यबलेन भावनां कल्पयित्वा तस्याः प्रकाराकाङ्क्षोपपादनीया । तथासति प्रयाजादीनामपि भ्रातृव्याभिभूत्या इति चतुर्थ्या भ्रातृव्याभिभवार्थत्वावगमात्प्रयोजनाकाङ्क्षाशान्तेर्न दर्शपूर्णमासाङ्गता स्यात् । तस्मादङ्गत्वसिद्धिरेव स्वर्गकामवाक्यफलमिति युक्तम् । सर्वकामवाक्ये हि भावनावश्यं कल्पनीया । अन्यथा तद्वाक्यानर्थक्यापत्तेः । विध्यन्तरविशेषत्वाभावेनार्थवादतयाऽर्थवत्त्वासंभवात् । तस्मात्सर्वकामवाक्ये भावनाकल्पनाऽवश्यंभावे तदङ्गतया प्रयाजादीनां नैराकाङ्क्ष्योपपत्त्या भ्रातृव्याभिभूत्या इत्यस्य फलभावनापरत्वकल्पनायां प्रयोजनाभावात्तस्य प्रयाजविधिशेषस्यार्थवादत्वोपपत्तेरेकत्र भावनाकल्पनामात्रेणोपपत्तावुभयत्र कल्पनानौचित्यात् । तस्मादनर्थकमेव स्वर्गकामवाक्यमितिचेत्सत्यम् । वाक्यद्वयाम्नातबलादुभाभ्यां वाक्याभ्यां फलसंबन्धित्वेन ज्ञातमेव कर्माभ्युदयकारीति कल्प्यते । यथा सप्तदशसामिधेनीरनुब्रूयादिति मित्रविन्दादिप्रकरणाम्नातवाक्यादेव साप्तदश्यस्य सामिधेनीसंबन्धस्य क्रतुसंबन्धस्य च सिद्धावप्यनारभ्याधीतसाप्तदश्यवाक्यस्यानर्थक्यपरिहारार्थं मित्रविन्दादिप्रकरणाम्नातवाक्यात्क्रतुसंबन्धस्यानारभ्यवाक्यात्सामिधेनीसंबन्धस्य च ज्ञानमभ्युदयकारीति कल्प्यते तद्वदित्याहुः ॥

---

[1] चाहार्ये.

दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥ ११ ॥

**तत्र सर्वेऽविशेषात् ॥ २७ ॥**

**ज्योतिष्टोमश्च सर्वार्थः सर्वे सकृदनुष्ठितेः ॥ यथात्पृथक्प्रयोगाद्वा सकृत्तस्याविशषेतः ॥ १४ ॥**

**एकैकस्यानपेक्षस्य फलस्यैव हि साधनम् ॥ चोदितं तेन कामास्ते पर्यायेण भवन्त्यमी ॥ १५ ॥**

किमेकस्मिन्नेव प्रयोगे सर्वे कामाः भवन्ति उत प्रयोगभेदेनेति संशये—'सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः ॥ यादृङ्निमित्तमेकस्य तादृगेवापरस्य हि ॥' कामनावशाद्विशेषो यदेव यदा काम्यते तदेव तदा भवति नान्यदितिचेन्न । अनङ्गत्वात् । नहि कामना कर्मणः फलस्य वाङ्गं येन तदभावे फलानुत्पत्तिः[1] स्यात् । ननूपादेयस्य[2] कर्तुर्विशेषणभूता कामना कर्माङ्गमेव न कामिन उपादानम् । उद्दिश्य हि कामिनं कर्मोपदिश्यत इति षष्ठे वक्ष्यते । अतएव लिङ्गस्याविवक्षा । योऽपि कर्मण्यनुपादेयस्यापि कामिनोऽपूर्वंप्रति गुणभूतत्वात्कामनापि नियोगसिद्धावङ्गमितीच्छति[3] तस्यापि लिङ्गविवक्षा दुर्वारैव । अत्र चायमपरो विशेषः । यदत्र[4] फलकामो न श्रूयते फलान्येव चतुर्थ्यन्तेन निर्दिश्य तादर्थ्येन कर्म विधीयते । कामोपबन्धस्तु फलत्वसूचनार्थः न स्वयं तत्त्वम् । अपिच ये युगपत्काम्यन्ते तेषामनिवार्यैव युगपदुत्पत्तिः स्यात् तस्माद्युगपत्स्युः । एवं प्राप्ते ब्रूमः—'कामोद्देशेन कर्मैव साधनत्वेन चोद्यते ॥ तेषां चोद्दिश्यमानानां साहित्यं न विवक्षितम् ॥ एकैकस्यैव कामस्य

---

**तत्र सर्वेऽविशेषात् ॥ २७ ॥** प्रासङ्गिकीं सङ्गतिमभिप्रेत्याह—**किमिति** । किं सकृदनुष्ठितादेव कर्मणः सर्वे कामाः स्युरुत तत्तत्फलार्थं पृथक्पृथगनुष्ठितादिति संशय इत्यर्थः । **युगपदिति** । सकृदनुष्ठानादेवेति यावत् । निमित्तस्य फलोत्पत्तिनिमित्तस्य कर्मस्वरूपस्येत्यर्थः । **ननु** न कर्मस्वरूपमात्रं निमित्तं किंतु तत्तत्फलकामनायुक्तम् । ततश्च कामनाकृतोऽस्ति विशेष इति शङ्कते—**कामनेति । तदेवेति** । तदेव फलं तदानुष्ठितात्कर्मणो भवतीत्यर्थः । भवेदेवं यदि कामनाङ्गं स्यान्न त्वेवमित्याह—**नेति** । आख्यातावगतकर्तृविशेषणत्वं कामपदस्य मत्वा शङ्कते—**नन्विति** । न कर्तृविशेषणं कामपदं किंतु यः फलकामः स एतेन यजेतेत्येवमुद्देश्यसमर्पकमिति परिहरति—**नेति । अतएवेति** । कामपदस्योपादेयकर्तृविशेषणत्वे तद्गतलिङ्गस्य विवक्षितत्वापत्त्या लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायन इत्यधिकरणोक्तत्र्यधिकारो विभज्येतेति भावः । प्राभाकरास्तु यद्यपि कर्मण्युपादेयस्य कर्तुः कामना न विशेषणं तथापि नियोज्यस्य विशेषणं कामनानियोगश्च नियोज्यसमवायी नियोज्यो नियोगं प्रति गुणभूतः । ततश्च नियोज्यविशेषणं कामनापि नियोगाङ्गमिति कामनाविरहे तत्कामनियोज्यकत्वाभावान्नियोगस्य तत्फलसाधनत्वमेव न स्यात् । नहि नियोगस्य स्वयं फलापेक्षया स्वर्गादेर्नियोगफलत्वं किंतु तत्साधनत्वं विना तत्कामनियोज्यकत्वानुपपत्त्या स्वर्गादेर्नियोगफलत्वम् । ततश्च कामनाविरहे तत्फलकनियोगासिद्धेर्न सर्वयौगपद्यमित्याहुः । तदयुक्तम् । स्वर्गकामस्य नियोगंप्रति गुणत्वे तद्विशेषणलिङ्गविवक्षापत्तेरतः कामनायास्तद्विशेषणत्वमादाय फलानामयौगपद्यं दुर्वचमित्याह—**योऽपीति** । स्वर्गकामो यजेतेत्यादौ कर्मणि कामिनो नियोज्यत्वं न संभवति । नियोज्यत्वं नाम ममेदं कार्यमिति बोद्धृत्वम् । कामी च काम्याव्यवहितसाधनमेव कर्तव्यतया बोद्धुमर्हति । कर्म च विशरारुत्वान्न काम्यस्वर्गादेरव्यवहितसाधनम् । तस्मात्कामिनियोज्यान्वयबलान्नियोगस्य वाच्यत्वं तैरङ्गीक्रियते । प्रकृतेच फलकामस्याश्रवणात्तद्रीत्यापि न नियोगपरमिदं वाक्यं भवितुमर्हति । तेन नियोज्याभावादिह कामना न नियोगविशेषणमित्याह—**अत्रचेति** । ननु कामिनोऽश्रवणेऽप्यवश्यं स कल्पनीयः, अन्यथा सर्वकामानां फलत्वमेव न स्यात् । स्वर्गकामो यजेतेत्यादौ स्वर्गादेः फलत्वस्य नियोज्यविशेषणकामनासंबन्धनिबन्धनत्वादित्यत आह—**कामोपबन्धस्त्विति** । नियोगस्य वाच्यत्वे हि स्वर्गादेः फलत्वं नियोज्यविशेषणीभूतकामनासंबन्धनिबन्धनं स्यात् । नियोगस्य वाच्यत्वमेव न्यायरत्नमालादिषु बहुधा निरस्तम् । तस्मात्स्वर्गकामो यजेतेत्यादावपि कामनोपबन्धो न नियोज्यविशेषणत्वद्वारा फलत्वार्थः किंतु भावनायाः प्रवर्तनावशेन समीहितभाव्यकत्वात्कामनोपबन्धः साक्षादेव फलत्वसिद्ध्यर्थः । प्रकृते च चतुर्थ्यैव फलत्वप्रतीतेर्न कामिनः कल्पनीयत्वमित्यर्थः । कामानामुद्देश्यत्वादुद्देश्यसाहित्यस्याविवक्षितत्वात्प्रत्येकं साधनत्वेन कर्मावगम्यते । ततश्च प्रयोगविधिना प्रत्येकफलोद्देशेन प्रयोगविधानान्नैकस्मिन्प्रयोगेऽनेकफलसिद्धिरित्याह—**कामोद्देशेनेति** । नच काम्यदर्शादेः सकृत्प्रयोगादेव स्वर्गादिफलपापक्षयवदिहानेकफलोत्पत्तिरस्त्विति वाच्यम् । तत्र नित्यानवरुद्धस्य कामविषयस्याभावादनवकाशतया स्वर्गादेः पापक्षयसापेक्षतया च पापक्षयसापेक्षस्यैव स्वर्गादेः फलत्वकल्पनात्, इह तु न तथा, कामानां

---

१ नुपपत्तिः. २ देयभूतस्य. ३ मिति वदति. ४ यत्फलकामो

निरपेक्षस्य साधनम् ॥ कर्मेदं चोद्यते तच्च सापेक्षत्वे विरुध्यते ॥' यादृशं हि कारणं यादृशकार्यस्य निरपेक्षस्य निष्पादकं तदेकमेव युगपज्जनयति, यथा मृत्पिण्डो युगपदेकमेव घटमुत्पादयति नानेकम्। कामनावशाच्च विशेषः । विधिर्हि चेतनप्रवर्तनात्मकः समीहितस्यैव फलत्वमुपकल्पयति न पश्वादि-स्वरूपस्य । येष्वपि युगपत्कामना तेष्वपि कर्मणो युगपदसमर्थत्वाद्यदुद्दिश्य यदा प्रयुज्यते तदा तदेव भवति नान्यत् । यथा ह्येकफलानि कर्माणि यथाविधस्य फलस्य स्वर्गस्य पशोर्वा साधनत्वेन चोदितानि युगपदेकमेव तथाविधं फलं जनयन्ति नानेकम् । इतरथा सकृदेव यावदिष्टफलं सिद्ध-मिति न काम्यमेकं कर्म पुनः प्रयुज्येत । इष्यते च पुनः प्रयोगस्तथेहाप्येकमेव युगपत्फलम् । नच साहित्येनैवात्र कामानां फलत्वं नैकैकस्येति वाच्यम् । साहित्यस्याविवक्षितत्वादित्युक्तं अतः पर्यायेण कामः ॥

काम्यानामैहिकामुष्मिकफलवत्त्वाधिकरणम् ॥ १२ ॥

## योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात् ॥ २८ ॥

**चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा ॥ आद्यः स्वर्गेण तुल्यत्वाद्देहस्योत्पादकत्वतः ॥ १६ ॥**

**चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पनम् ॥ पुंस्प्रवृत्त्यादिनापेते प्रतिबन्धे भवेत्फलम् ॥ १७ ॥**

इदानीमैहिकामुष्मिकत्वं फलानां चिन्त्यते । स्वर्गस्तावदामुष्मिक एव वृष्टिरभिचारो वैश्वानरफलं च पुत्रगतब्रह्मवर्चसाद्यैहिकमेव कामनावशात् । पश्वादयस्तु चिन्त्यन्ते किमामुष्मिका एव उतानि-यताः । तत्र—'प्रतिग्रहादिकं दृष्टं पश्वादेः कारणान्तरम् ॥ देहारम्भकतैवातश्चित्रादेः फलहेतुता ॥' पश्वादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनाददृष्टानपेक्षत्वाद्देहस्य तु मातापितृसंयोगमात्रेणानुत्पत्तेः कारणान्तरापेक्षणाद्विशिष्टफलोपभोगार्हशरीरारम्भकत्वमेव चित्रादेः पश्वादिहेतुत्वमित्यामुष्मिका-ण्येव पश्वादीनीति प्राप्तेऽभिधीयते—'साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते ॥ अमुत्र वेह वेत्येवं

---

परस्परनैरपेक्ष्यादित्याशयेनाह—**निरपेक्षस्येति** । विनिगमनाविरहमाशङ्क्याह—**कामनावशादिति** । **न पश्वादीति** । ततश्चासमीहितस्य फलत्वाभावान्न तदुत्पत्तिप्रसक्तिः । **ननु** युगपत्कामनायां कामनावशादपि न विशेष इत्यत आह—**येष्वपीति** । कर्मणो निरपेक्षप्रत्येकफलसाधनत्वावगमानुसाराद्युगपदनेककामनास्थलेऽपि एकमेव फलमुद्दिश्य कर्म प्रयो-ज्यमित्युद्देशाद्विशेषलाभ इत्यर्थः । **यथेति** । तत्र यथा फलभूयस्त्वेच्छायामपि यथा चोदितमेवोद्दिश्य कर्म प्रयोज्यं तथेहा-पीत्यर्थः । **इष्यत इति** । कर्मण्यारम्भभाव्यत्वादित्येकादशे पुनःपुनः प्रयोगव्यवस्थापनादिति भावः । **ननु** सर्वेभ्यः का-मेभ्य इत्यत्रोद्देश्यसमर्पकः सर्वशब्द एव मुख्यत्वान्न कामशब्दः जघन्यत्वात् । ततश्च ग्रहत्ववत्सर्वत्वस्य विवक्षितत्वान्न प्रत्येकं कामानां फलत्वं किंतु साहित्येनैवेत्याशङ्क्याह—**नचेति** । इहहि मुख्योऽपि सर्वशब्दो नोद्देश्यसमर्पकः सापेक्षत्वा-त्किंतु निरपेक्षत्वात्कामशब्द एव । ततश्च ग्रहत्ववत्सर्वत्वस्योद्देश्यप्रतीतिपर्यवसानार्थत्वाभावादुद्देश्यविशेषणत्वमेवेति ग्रहैक-त्ववदविवक्षितत्वान्न साहित्येन फलत्वमित्यर्थः ॥

**योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात्** ॥२८॥ अत्र भाष्ये 'तत्र सर्वेऽविशेषात्, योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात्' इति सूत्रद्वयं यौगपद्यायौगपद्यपरतया व्याख्याय एवंवेत्यादिनैहिकामुष्मिकत्वपरतयापि व्याख्यातम् । तत्र वर्णकान्तरोपक्रमे यथाभाष्यं एवंवेत्येवमेव ग्रन्थकारेण सर्वत्र लिख्यते। इहतु वैचित्र्यायोगसिद्धिर्वेति सिद्धान्तसूत्रं लिखितं बोध्यम्। **इदानी-मिति** । दर्शादेः पर्यायेण सर्वफलार्थत्वे उक्ते प्रसङ्गादिदानीं तेषां फलानामैहिकामुष्मिकत्वं चिन्त्यत इत्यर्थः । एवंच दर्शपूर्णमासज्योतिष्टोमादिफलानामेवोदाहरणौचित्येऽपि चित्राद्युदाहरणं विषयव्याप्त्यर्थं बोध्यम् । भाष्ये काम्यानि कर्माण्यु-दाहरणमित्युक्तेः सर्वेषामुदाहरणत्वभ्रमं वारयति—**स्वर्गस्तावदिति** । वाक्यशेषे स्वर्गस्य निरतिशयप्रीतिरूपत्वावगमा-त्तस्याश्च निरतिशयप्रीतेर्ज्योतिष्टोमादिकर्मानुगुण्याय दीर्घकालानुभवनीयत्वादिह च दुःखसंभेदावश्यंभावेन तथाविधप्रीत्ययो-गात्तस्याः कर्मभूमिव्यतिरिक्तदेशानुभवनीयत्वात् 'फलभूमिरियं ब्रह्मन्कर्मभूमिरितोऽपरे'त्यादिशास्त्राच्चेति भावः। **कामनेति** । शुष्यत्सस्यसंजीवनाद्यर्थमेव वृष्ट्यादेः काम्यमानत्वादित्यर्थः । **प्रतिग्रहेति** । प्रतिग्रहे सति पश्वादिप्राप्तिव्यतिरेकादर्शनात्तत्र तन्मात्रमेव कारणमित्यर्थः । **आमुष्मिकाण्येवेति** । ततश्चामुष्मिकफलकामेनैवानुष्ठेयमित्यर्थः । **अप्रमाणकमिति** ।

---

१ यद्यपि. २ कर्माणि फलस्य स्वर्गस्य. ३ यदेकमेव. ४ स्योपपत्त्यसं. ५ स्वर्गः सर्वदा. ६ णानुपपत्तेः.

नास्ति शब्दो नियामकः॥ देहारम्भमुखत्वं च फलानामप्रमाणकम्॥ विपाकः कर्मणां येषां प्राग्देहविनिपाततः॥ प्राप्तस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे॥ दैवं पुरुषकारश्च पश्वादेः कारणद्वयम्॥' तदुक्तं भाष्यकारेण, तथैव हि कारणं शब्दश्चेति तस्मादनियमः॥

सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणम्॥ १२॥

**समवाये चोदनासंयोगस्यार्थवत्त्वात्॥ २९॥ [कालश्रुतौ काल इति चेत्॥ ३०॥ नासमवायात्प्रयोजनेन स्यात्॥ ३१॥]**

**इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत्॥ कालं वा बोधयेद्वाक्यमुताङ्गत्वस्य बोधकम्॥ १८॥**

**क्त्वाश्रुत्या भाति कालोऽत्र नैवमङ्गत्वबोधनम्॥ श्रुतेर्मुख्यं प्रक्रिया च तथासत्यनुगृह्यते॥ १९॥**

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति किमङ्गप्रयोजनसंबन्धोयं वाजपेयाङ्गत्वेन बृहस्पतिसवस्य विधिरुत कालार्थः संयोगो वाजपेयोत्तरकालत्वं बृहस्पतिसवस्योपदिश्यत इति संशये—'उभयोर्वाजपेयस्य बृहस्पतिसवस्य च॥ प्रज्ञातफलयोर्नैव मिथोऽङ्गाङ्गित्वसंभवः॥ नच कर्मान्तरं युक्तं लक्षणा हि तथा भवेत्॥ क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा॥' प्रसिद्धस्य तावद्बृहस्पतिसवस्य पुरोधआदिफलार्थत्वान्न वाजपेयाङ्गत्वं, तद्धर्मककर्मान्तरविधौ तु बृहस्पतिसवशब्दो धर्मलक्षणार्थः स्यात्, कालविधौ तु तस्य क्त्वार्थत्वान्न काचिल्लक्षणा। तस्मात्प्रसिद्धस्य बृहस्पतिसवस्य वाजपेयपूर्वकत्वं विधीयत इति प्राप्ते ब्रूमः—'वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता॥ तत्प्रक्रिया च बाध्येत न च दूरगतंप्रति॥ कालः शक्य उपादातुं काले कर्म हि चोद्यते॥ काले च चोद्यमानं सत्कर्मोवि-

---

प्रतिग्रहादेः पश्वादेः प्राप्तिनियमेऽपि प्रतिग्रहादेरेव कादाचित्कतया तत्रैवादृष्टोपयोगसंभवात्पश्वादिप्राप्तेस्तदुपभोगपर्यन्ताया एव शास्त्रतात्पर्यविषयतया तदुपभोगप्रतिबन्धकदुरितनिवृत्तौ वाऽदृष्टोपयोगादित्याहुः। **नन्वेवमक्षपादमत** इव केवलमैहिकत्वमेव स्यादित्याशङ्क्य चित्राद्यनुष्ठानेऽपि क्वचित्पश्वदर्शनादनियम एव युक्तः। नच कारीर्यादाविव फलाभावो वैगुण्यकल्पनया समर्थनीयः। तद्वदैहिकत्वनिश्चयाभावेन वैगुण्यकल्पनानुपपत्तेः कदाचिदिह पश्वादयः कदाचिदमुत्रेत्यत्र पश्वादिप्रतिबन्धकदुरितसदसद्भावयोरेव नियामकत्वान्न कश्चिद्दोष इत्याह—**विपाक इति**। विपाकः परिपाकः फलौन्मुख्यमिति यावत्। पश्वादिप्रतिबन्धकदुरिताभावे इहैव चित्रादिकं परिपक्वं भवतीति तत्फलमिहैव भुज्यते। तत्सद्भावे तु जन्मान्तरे तदनुभव इत्यर्थः। एवं कल्पनायां वृष्ट्यादिवत्कामनात ऐहिकत्वाभावः स्वर्गादिवत्स्वभावत आमुष्मिकत्वाभावश्च हेतुरिति भावः। दैवमदृष्टम्। पुरुषकारोनाम दृष्टम्। **उक्तमिति**। तर्कपादे चित्रापरिहारग्रन्थ इति शेषः। शब्दः शब्दप्रमाणं चित्रादिकमित्यर्थः। यथाच परिधानीयकर्मणि करिष्यमाणपात्रप्रतिपत्तेः संप्रत्यभावेऽप्यैहिकफलत्वं नानुपपन्नं तथैकादशे वक्ष्यामः। सूत्रार्थस्तु—इहाप्येषां फलयोगस्य सिद्धिः स्यान्नत्वमुत्रैवार्थस्य फलस्य जन्मान्तरोत्पत्तियोगित्वानवगमादिति॥

**समवाये चोदनासंयोगस्यार्थवत्त्वात्॥ २९॥** कालविध्यर्थः संयोगः कालार्थसंयोग इति व्याचष्टे—**वाजपेयेति**। नन्वत्र बृहस्पतिसवशब्देन बृहस्पतिसवधर्मकं कर्मान्तरमेव विधीयते तस्य चानिर्ज्ञातफलत्वादङ्गत्वं नानुपपन्नमित्यत आह—**नचेति**। वाजपेयस्य फलार्थत्वाद्बृहस्पतिसवानङ्गत्वोक्तिः, श्लोके दृष्टान्तार्थेत्याशयेन व्याचष्टे—**प्रसिद्धस्येति। पुरोध इति**। 'यः पुरोधःकामः स्यात्स बृहस्पतिसवेन यजेते'ति वचनादिति भावः। **ननु** कालविधित्वे बृहस्पतिसवस्य वाजपेयोत्तरकालविधिर्वाच्यः नतु वाजपेयस्य बृहस्पतिसवापेक्षया पूर्वकालविधिः बृहस्पतिसवपरेण यजेतेति प्रत्ययेन तदङ्गकालस्यैव विधातुं युक्तत्वात्। उत्तरकालश्च न क्त्वाप्रत्ययार्थः समानकर्तृकयोः पूर्वकाले एव तदनुशासनात्। अतः कालविधावपि क्त्वाप्रत्ययस्योत्तरकाललक्षणा तुल्येत्यत आह—**तस्मादिति**। वाजपेयपूर्वकत्वमेव बृहस्पतिसवस्य विधीयते वाजपेयपूर्वकत्वं च तदुत्तरकालपर्यवसितमिति न कश्चिद्दोष इति भावः। एवंच यथा पूर्वत्र पश्वादिफलकत्वमात्रावेदकशब्दस्वारस्यादनियम एवमिह क्त्वास्वारस्यात्कालविधिरिति प्रत्यवस्थानात्सङ्गतिर्बोध्या। अत्र प्रकरणान्तरन्याये जाग्रति प्रसिद्धबृहस्पतिसवस्य वाजपेयोत्तरकालविधिरिति पूर्वपक्षो न प्रवर्तयितुं युक्तः किंतु प्रकरणान्तरन्यायात्कर्मान्तरत्वमङ्गीकृत्यैव तस्य कर्मान्तरस्य विश्वजिन्न्यायात्स्वर्गफलकस्य वाजपेयोत्तरकालविधिः कालवाचकक्त्वाप्रत्ययश्रवणात् नतु तस्य वाजपेयाङ्गत्वविधिः अङ्गत्ववाचकशब्दाभावादित्येवं पूर्वःपक्षः प्रवर्तनीय इति ध्येयम्। वाजपेयाङ्गविधावपि वाजपेयशब्दस्य विधेयसमर्पकत्वाभावात्। स्वार्थपरविध्यर्थं स्वोच्चारणमिति किंचित्पारार्थ्यसद्भावादुक्तमत्यन्तेति। **नचेति**। आहवनीया-

परिवर्तनात् ॥ प्रसिद्धात्कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् ॥ वाजपेयाङ्गभावेन वाक्येनैव विधीयते ॥' वाजपेयप्रयोगं यथोक्तं निर्वर्त्य न तावत्येव कृती स्यात् इदमपरमङ्गं तस्य पश्चात्कर्तव्यमिति । एवंच वाजपेये किंचिद्विधानात्तच्छब्दानुग्रहोऽन्यथा त्वसावत्यन्तपरार्थः स्यात् कालोपलक्षणार्थत्वात्, वाजपेयप्रकरणं च बाध्येत । स्थिते च कर्मान्तरत्वे धर्मलक्षणायां मासाग्निहोत्रवददोषः ॥

वैमृधादेः पौर्णमास्याद्यङ्गताधिकरणम् ॥ १४ ॥

**उभयार्थमिति चेत् ॥ ३२ ॥ [न शब्दैकत्वात् ॥ ३३ ॥ प्रकरणादिति चेत् ॥ ३४ ॥ नोत्पत्तिसंयोगात् ॥ ३५ ॥]**

**संस्थाप्य पौर्णमासीं तामनु वैमृध ईरितः ॥ द्वयोरङ्गमुतैकस्य द्वयोः स्यात्प्रक्रियावशात् ॥ २० ॥**

**उत्पत्तिवाक्यतः पूर्णमाससंयोगभासनात् ॥ तस्यैवाङ्गं न दर्शस्य प्रक्रिया वाक्यबाधिता ॥ २१ ॥**

संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति किं पौर्णमास्याः वैमृधस्याङ्गप्रयोजनसंबन्धः पौर्णमास्यङ्गं वैमृधः उत कालार्थः संयोगः तस्मिन्काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति संशये संस्थासंयोगात्संस्थितस्य पुनरङ्गासंभवान्नाङ्गप्रयोजनसंबन्धः । कालार्थस्तु संयोगः प्रकरणाविशेषादुभयार्थमिति प्राप्ते उच्यते—'पौर्णमास्या हि संयुक्तो वाक्येनानेन वैमृधः ॥ तस्य प्रकरणं नेष्टं तद्धसंयुक्तगोचरम् ॥' यत्तु संस्थिताया नाङ्गं संभवतीति तदुभयाङ्गत्वेऽपि तुल्यम् । नचामावास्याङ्गमेवेदमिति युक्तम् । प्रकरणाविशेषादिति त्वयैवोक्तम् । अतो यद्दार्शपौर्णमासिकं तन्त्रं द्वयोः

---

दिवत्कालस्योपादेयत्वाभावादिति भावः । **अनिर्ज्ञातप्रयोजनमिति** । ततश्च फलवदफलन्यायेनाङ्गत्वमेव कर्मान्तरस्य न्याय्यं नतु विश्वजिन्न्यायात्फलकल्पनमिति भावः । **वाक्येनेति** । अङ्गत्वावेदकश्रुत्यभावेऽपि न काचिद्धानिरिति भावः । किंच न पूर्वकालत्वमात्रं क्त्वार्थः किंतु समानकर्तृकत्वविशिष्टं पूर्वकालत्वमनुशासनाविशेषात्समानकर्तृकत्वं चाङ्गत्व एवोपपद्यते अङ्गप्रधानयोरेककर्तृकत्वस्यैकादशे वक्ष्यमाणत्वात्, अङ्गाङ्गित्वाभावे तु समानकर्तृकत्वं कर्तृत्वाधिष्ठानपुरुषैक्येन गौणतयोपपादनीयं स्यात् । नच तद्युक्तम् । पूर्वकालत्वं त्वङ्गाङ्गित्वेऽपि मुख्यमेव तस्मादुभयमुख्यत्वानुसारादङ्गाङ्गित्वमेव स्वीकार्यमित्याशयेनाह—**वाजपेयप्रयोगमिति** । श्लोकगततत्प्रक्रियाशब्दार्थमाह—**वाजपेयप्रकरणमिति** । सूत्रार्थस्तु—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' 'अग्निं चित्वा सौत्रामण्या यजेते'त्यादिषु समवायेऽङ्गाङ्गिभावलक्षणे चोदना स्यात् वाजपेयादिसंयोगस्यार्थवत्त्वादिति ॥

**उभयार्थमिति चेत् ॥ ३२ ॥** पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**संस्थासंयोगादिति** । नच प्रधानसमाप्तिमात्रात्संस्थासंयोगोपपत्तिः 'स वै पौर्णमासेन हविषेज्यते' इति तृतीयानिर्देशेन करणत्वावगमात्साङ्गप्रधानगोचरभावनासमाप्तिपरत्वात्संतिष्ठतेः । अयंचार्थः संकर्षे समानतन्त्रो वैमृध इत्यधिकरणे प्रतिपादितः । नचैवमपि प्रत्ययार्थप्राधान्यात्तदर्थसमानकर्तृकत्वानुसारादङ्गाङ्गित्वावगमेसति प्रकृतेर्वैमृधेतराङ्गयुक्तप्रधानसमाप्त्यर्थकत्वमिति वाच्यम् । 'धातुसंबन्धे प्रत्ययाः' इत्यधिकृत्य क्त्वाप्रत्ययस्य विहितत्वाद्धातुसंबन्धस्य च धात्वर्थसंबन्धमन्तरेणानुपपत्तेः । प्रत्ययार्थप्राधान्ये च तत्र गुणतयाऽन्वितस्य धात्वर्थस्य धात्वन्तरार्थसंबन्धायोगात् इह क्त्वाप्रत्ययार्थापेक्षया प्रकृत्यर्थस्यैव प्राधान्यावश्यंभावात्प्रकृत्यनुसारेण प्रत्ययस्यैवात्र पूर्वकालतामात्रपरत्वादित्याहुः । **उभयेति** । नच पौर्णमासस्य संस्थोत्तरकालमङ्गसंबन्धासंभवात्कथमुभयार्थतेति वाच्यम् । कालो हि प्रयोगाङ्गं, प्रयोगश्च साङ्गप्रधानविषयः । अङ्गसंबन्धश्च प्रयोजनान्वयानन्तर्भावित्वेन कालान्वयात्प्रागेव वैमृधस्य प्रयोजनाकाङ्क्षायां प्रकरणादुभयार्थत्वे सति तदनुसारेण कालसंबन्धस्य वैमृधेतराङ्गसमाप्त्युत्तरकालत्वाभिप्रायेण नेयत्वादेवं च यद्यपि प्रकृत्यर्थसंकोच आवश्यकस्तथापि प्रत्ययार्थानुसारेण न तत्संकोच इति न पूर्णमासमात्रार्थत्वं किंतु प्रकरणानुसारेण तत्संकोच इत्युभयार्थतेति विशेषो बोध्यः । प्रकरणेन विनियोगः प्रधानैकवाक्यताकल्पनया भवति । एकवाक्यता चावान्तरवाक्यस्य स्वार्थबोधनेन समाप्त्यनन्तरं कल्पनीया । तत्समाप्तिश्च समभिव्याहृतपौर्णमास्यन्वयानन्तरं न ततः प्राक् । तथाच प्रथममेव पौर्णमासीसंयोगेन निराकाङ्क्षस्य वैमृधस्य प्रकरणेन सर्वार्थत्वमेवाशक्यमित्याह—**पौर्णमास्या हीति** । **तुल्यमिति** । ततश्च संस्थायाः संकोचादुभयार्थत्वं वक्तव्यम् । एवंचेत्स्ववाक्यगतपौर्णमासीसंयोगनिबन्धन एव संकोचो युक्त इति भावः । **ननु** संस्थाश्रुतेरसंकोचाय केवलामावास्यार्थत्वमेव किं न स्यादि-

---

१ लक्षणापि.

साधारणं विहितं तद्युक्तां पौर्णमासीं समाप्य पुनरिदमङ्गं कर्तव्यमिति वाक्यार्थः । तथाच वाक्यशेषः वैमृधः पौर्णमासे तु निर्वापो भवति तेन पौर्णमासः सेन्द्रो भवतीति इन्द्राभावेन पौर्णमास्या वैगुण्यमिवाशङ्क्य तत्समाधानार्थतां दर्शयन् पौर्णमास्यङ्गत्वं दर्शयति ॥

अनूयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम् ॥ १५ ॥

## अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन संबन्धात् ॥ ३६ ॥

**किमाग्निमारुतादूर्ध्वमनुयाजैश्चरेदिति ॥ अङ्गं कालोऽथवाऽङ्गं स्यादतिपारार्थ्यमन्यथा ॥ २२ ॥**

**पुराग्निमारुतस्यास्य ज्ञाता सोमार्थता तथा ॥ अनुयाजाश्च पश्वर्थाः संयोगः कालसिद्धये ॥ २३ ॥**

आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्यत्रापि कालार्थत्वेन संयोगस्यात्यन्तपारार्थ्यं स्यादित्यङ्गप्रयोजनसंबन्धं मन्वानस्योत्तरं । आग्निमारुतस्य सोमार्थत्वेनोपदिष्टस्यानूयाजानां च पश्वर्थतयातिदिष्टानां विपरिवर्तमानत्वान्न कर्मान्तरत्वम्।[1] तेषां तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावात्कालार्थः संयोगः॥

सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम् ॥ १६ ॥

## उत्पत्तिकालविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥

**किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यागकः ॥ अङ्गाङ्गिभावः कालो वा ह्यपारार्थ्याय चाङ्गता ॥ २४ ॥**

**दर्शादिलक्षिते काले सोमयागो विधीयते ॥ स्वतन्त्रफलवत्त्वेन न युक्ताङ्गाङ्गिता तयोः ॥ २५ ॥**

ज्योतिष्टोमे श्रूयते 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति । तत्र दर्शपूर्णमासशब्दस्यात्यन्तपा-

---

स्याशङ्क्य वाक्यशेषानुसारात्संस्थाश्रुतिसंकोच आवश्यक इत्याशयेनाह—**तथाचेति** । इन्द्रस्य पौर्णमास्यर्थत्वेनाविधानाद्द्युतो वैगुण्याभावादाह—**इवेति** । ननु पूर्वपक्षेऽपि पौर्णमास्यामेव वैमृधोऽनुष्ठेयः नतु दर्शेऽपि । तथात्वे कालार्थसंयोगबाधापत्तेः । तत्र वचनात्पौर्णमास्यामनुष्ठितोऽपि प्रकरणाविशेषादुभयाङ्गमित्येतावन्मात्रम्। अत एव संशयप्रदर्शनावसरे ग्रन्थकारेणोक्तं तस्मिन्काले क्रियमाणं प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति । ततश्च पक्षद्वयेऽप्यनुष्ठानैकरूप्यात्किं प्रयोजनं चिन्ताया इतिचेदुच्यते । यत्र पौर्णमास्यतिपाते प्रायश्चित्तं कृत्वा केवलं दर्शोऽनुष्ठीयते तत्र दर्शाङ्गतया वैमृधः कार्यः पूर्वपक्षे, सिद्धान्ते तु नेति ॥

**अनुत्पत्तौ तु कालः स्यात्०** ॥ ३६ ॥ पूर्ववदिहाप्यङ्गाङ्गित्वपरतेति प्रत्यवस्थानात्सङ्गतिः । **अत्यन्तेति** । आग्निमारुतस्यानूयाजकालोपलक्षणार्थतयाऽत्यन्तपारार्थ्यं स्यादित्यर्थः । किं कर्मान्तरत्वमाश्रित्याङ्गाङ्गित्वमुच्यते उत तदनाश्रित्य आद्ये आह—**आग्निमारुतस्येति** । आग्निमारुतस्यानूयाजाङ्गत्वमनूयाजानां चाग्निमारुताङ्गत्वमित्यनियमो न पूर्वपक्षे शास्त्रार्थस्याव्यवस्थापत्तेः । अतोऽनूयाजानामाग्निमारुताङ्गत्वमिति व्यवस्थैव वाच्या । नच विनिगमनाभावः । अनूयाजयजेः परं विधिप्रत्ययश्रवणस्यैव नियामकत्वाद्विधिप्रत्ययसमभिव्याहृतस्य विधेयत्वौचित्यात् । एवंचाग्निमारुतस्याकर्मान्तरत्वाभिधानं दृष्टान्तार्थं बोध्यम् । द्वितीये आह—**तेषामिति** । आग्निमारुतस्य सोमोपकारकत्वादनूयाजानां पशूपकारकत्वाच्चेति भावः । अत्र कर्मान्तरत्वमिति पूर्वपक्ष एव ज्यायान् । प्रसिद्धानामनूयाजानामाग्निमारुताङ्गत्वस्य तदूर्ध्वकालत्वस्य च विधाने वाक्यभेदप्रसङ्गादिति ध्येयम् । प्रयोजनं प्रथमपूर्वपक्षे आग्निमारुतार्थानामनूयाजानामन्यत्वात्सवनीयपश्वर्थानूयाजाः स्वकाले कर्तव्याः द्वितीयपूर्वपक्षे सवनीयपश्वर्थतया चोदकप्राप्तानामनूयाजानां तत आच्छिद्याग्निमारुताख्यशस्त्राङ्गतया विधानात्सवनीयपशावनूयाजाभावात्तद्विकृतिष्वनूयाजाभावः । सिद्धान्ते तु सवनीयपश्वर्थानामेवाग्निमारुतोत्तरकालविधानान्न स्वकाले पृथगनूयाजानामनुष्ठानं नवा सवनीयविकृतिष्वनूयाजाभाव इति । सूत्रार्थस्तु—कर्मानुत्पत्तिपरे आग्निमारुतादिवाक्ये काल एव स्यादनूयाजानां प्रयोजनान्तरसंबन्धिनामाग्निमारुतार्थतया विध्ययोगादिति ॥

**उत्पत्तिकालविषये०** ॥ ३७ ॥ अत्र केचिद्दर्शपूर्णमासाभ्यामिष्ट्वेति वाक्यं दर्शपूर्णमासप्रकरणगतमित्याहुः । तदयुक्तम् । तथासति प्रकरणान्तरन्यायेन सोमयागान्तरत्वावश्यंभावेन तस्य दर्शपूर्णमासाङ्गतया विधानापत्त्या सिद्धान्तासिद्धिप्रसङ्गात् । नच बृहस्पतिसववन्नामधेयस्य धर्मातिदेशकस्याभावाद्देवताभावेनारूपत्वान्न कर्मान्तरविधिः संभवतीति वाच्यम् । द्रव्यसारूप्याद्व्यक्तत्वाद्वा ज्योतिष्टोमधर्मातिदेशोपपत्तेः । तत्र यद्यपि द्रव्यसारूप्याददतिदेशेऽतिदेशसिद्ध्यर्थत्वात्सोमपदसार्थक्येऽप्यव्यक्तत्वादतिदेशेऽतिदेशादेव सोमस्यापि प्राप्तेः सोमपदानर्थक्यं तथाप्याख्यातस्य प्रकरणान्तरन्यायेन स्वरसतः कर्मान्तरविधिपरत्वात्तदनुसारेण सोमपदं नेयम्, नतु सोमपदानुसारेण प्रधानभूताख्यातान्यथाकरणमिति कर्मान्तरत्वमवर्जनीयमेव । तस्मात्सिद्धान्तासिद्धिप्रसङ्गान्नेदं दर्शपूर्णमासप्रकरणगतमित्याशयेनाह—**ज्योतिष्टोम इति** । ननु

---

१ कर्माङ्गत्वम्.

राध्र्यपरिहारायाङ्गप्रयोजनसंबन्ध एव न्याय्यः । नैवम्—'दर्शोपलक्षिते काले सोमयागो विधीयते ॥ सच प्रकृत एवेति न कर्मान्तरसंभवः ॥' दर्शोत्तरकालमनुपादेयं प्रत्युपादीयमानोऽपि सोमः 'संनिधौ त्वविभागा'दिति न्यायान्न कर्मान्तरम् । प्रकृतश्चासौ फलार्थत्वान्न दर्शाङ्गतां प्रतिपद्यते । अतो न तावत्सोमस्य दर्शाङ्गत्वम् । नापि दर्शादेः सोमाङ्गत्वमविधीयमानत्वात् । नह्यविधीयमानमङ्गं भवति । नचात्र दर्शपूर्णमासौ विधीयेते विधायकाभावात्, दर्शोत्तरकाले हि सोमस्य विधिर्न दर्शस्य, नचाकृतयोः दर्शपूर्णमासयोस्तदुत्तरकालः सोमः शक्यते कर्तुमिति अर्थात्तयोरपि विधिः स्याद्विध्यन्तरविहितयोस्तु तयोर्लाभान्नानुपपत्तिः । तदुत्तरकाले तु सोमश्चोद्यते सच चोद्यमानोऽपि[1] संनिधेर्न कर्मान्तरमित्युक्तम् । तस्मात्सोमस्यायं कालविधिः ॥

जातेष्टिन्यायान्तर्गतवैश्वानरेष्टेः पुत्रगतफलकत्वाधिकरणम् ॥ १७ ॥

**फलसंयोगस्त्वचोदितेन स्यादशेषभूतत्वात् ॥३८॥ [अङ्गानां तूपघातसंयोगो ॥३९॥]**

**वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वाग्रिमः ॥ कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि ॥ २६ ॥**
**जाते यस्मिन्निष्टिमेतां निर्वपेत्तस्य पूतता ॥ तच्चेप्सितं पितुस्तेन पिता तत्र प्रवर्तते ॥ २७ ॥**
**जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते ॥ निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः ॥ २८ ॥**
**जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात् ॥ प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा ॥ २९ ॥**
**जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा ॥ निमित्तसंनिधेराद्यः कर्तृशुद्ध्यर्थमुत्तरः ॥ ३० ॥**

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति विधायाम्नायते 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती'ति तदिदं पूतत्वादिकं रात्रिसत्रप्रतिष्ठावत्फल-

---

सोमयागविधावपि तत्र तस्यानुपादेयकालसमभिव्याहारात्कर्मान्तरत्वाभावेऽपि प्रकृतस्यैव सोमेनयजेतेत्युत्पन्नस्य स्वर्गकामवाक्येन स्वर्गसंबन्धवदनेन वाक्येन दर्शपूर्णमासयोः संबन्धोऽपि किं न स्यादित्यत आह—**प्रकृत इति** । उत्पन्नस्य फलाकाङ्क्षायां कमिपदसमभिव्याहारेण झटिति फलित्वावगतेः प्रथमं स्वर्गसंबन्धित्वेनैव निराकाङ्क्षत्वान्न दर्शपूर्णमाससंबन्धः, निर्ज्ञातप्रयोजनस्याप्यङ्गतया संबन्धेऽनूयाजानामप्याग्रिमारुताङ्गतया संबन्धप्रसङ्गादिति भावः । **अत इति** । 'संनिधौ त्वविभागा'दिति न्याये जाग्रति सोमस्य कर्मान्तरत्वासंभवात्पूर्वाधिकरण एव निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावादित्युक्तत्वाच्च सोमयागस्यैव दर्शपूर्णमासाङ्गत्वपक्षः संभवमात्रेण निरस्तः । नत्वसौ मुख्यः पूर्वपक्ष इति द्योतयितुं तावच्छब्दप्रयोगः । एवंच दर्शपूर्णमासयोः सोमाङ्गत्वमिति पक्षस्यैव मुख्यपूर्वपक्षत्वात्पूर्ववदिह विपरिवृत्त्यभावेन कर्मान्तरत्वादङ्गप्रयोजनसंबन्धपरत्वमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या । इदानीं मुख्यपूर्वपक्षनिरासार्थत्वेन पूर्वार्धं व्याचष्टे—**नापीति । नहीति ।** प्रमाणाभावादिति भावः । **विधायकेति ।** दर्शपूर्णमासाभ्यामिष्ट्वेत्यंशे विधिप्रत्ययाभावादित्यर्थः । **ननु** तदंशे विधिप्रत्ययाभावेऽपि सोमेन यजेतेत्यत्रत्य एव विधिप्रत्ययः सोमयागस्य विहितस्य प्रकृतस्य बुद्धौ विपरिवर्तमानत्वात्तं विधातुमशक्नुवन्व्यवहितावपि दर्शपूर्णमासावेव विधास्यतीत्यत आह—**दर्शोत्तरेति** । कालस्यानुपादेयतयोद्देश्यत्वात्कालविशेषणीभूतदर्शपूर्णमासयोरप्युद्देश्यकोटितया विधेयत्वासंभवाच्च न तद्विधिः किंतु तदुत्तरकाले सोमविधिरित्यर्थः । **नन्वेवमप्यर्था**पत्त्या तद्विधिरावश्यक इत्यत आह—**नचेति** । कालस्योद्देश्यतया यो दर्शपूर्णमासोत्तरकालस्तत्र सोमेन यजेतेति प्रसिद्धवन्निर्देशात्तद्विशेषणदर्शपूर्णमासयोरपि प्रसिद्धवन्निर्देशात्प्रसिद्धयोरेव तयोरिह ग्रहणं नापूर्वयोः । यदि हि कालविशेषणं प्रसिद्धं न लभ्यते तदा परमगत्या प्रसिद्धवन्निर्देशगोचरस्यापि तस्य कथंचिदर्थापत्त्या विधेयत्वं स्यादिहतु वाक्यान्तरविहितयोर्लाभान्नागतिकत्वं दर्शपूर्णमासशब्दश्चाख्याताभावेनाख्यातपारतन्त्र्याभावात्स्वतन्त्रः प्रसिद्धावेव दर्शपूर्णमासावुपस्थापयतीति ततोऽपि प्रसिद्धयोरेव ग्रहणमिति भावः । प्रयोजनं पूर्वपक्षे सोमारम्भे दर्शपूर्णमासधर्मकं कर्मान्तरमनुष्ठेयं सिद्धान्ते तु नेति । सूत्रार्थस्तु—कर्मान्तरोत्पत्तिकालविधिसंदेहे कालः स्याद्दर्शपूर्णमासाभ्यामिष्ट्वेति वाक्यस्य कालप्राधान्यादिति ॥

**फलसंयोगस्त्वचोदितेन०** ॥ ३८ ॥ सोमस्य दर्शपूर्णमासोत्तरकालत्वेऽभिहिते तत्प्रसङ्गादुत्तराधिकरणे वैश्वानरेष्टेः कालो निरूपयिष्यते । तत्र कुमारविपत्तिप्रसङ्गाज्जातकर्मानन्तरमिति करिष्यमाणः सिद्धान्तः पूतत्वादेः पुत्रगतत्वं विना नोपपद्यत इति तदुपयोगितया पुत्रगतत्वनिरूपणात्सङ्गतिः । **ननु** पुत्रजननिमित्तकत्वादस्या **इष्टेः** प्रत्यवायपरिहार एव फलं नतु पूतत्वादिकं, नच यावज्जीवमिति जीवननिमित्तकस्यापि दर्शादेः स्वर्गवत्पूतत्वादिकं फलं संभवति तद्वत् कमिसंयोगाभावात् । अतो विचार एवायमनुपपन्न इत्यत आह—**तदिदमिति** । प्रत्यवायपरिहारो हि न श्रुतः किंतु विश्वजिति स्वर्गवदश्रुत एव कल्प्यः । तत्र विधेः फलाकाङ्क्षायां श्रुतत्वाद्रात्रिसत्रे प्रतिष्ठावदर्थवादिकं पूतत्वादिकमेव फलत्वेन स्वीकि-

---

[1] सोमश्चोद्यमानोपि.

मिति स्थितम् । तत्किमिष्टिकर्तुः पितुः फलमुत पुत्रस्येति विचारेऽन्यफले कर्मण्यन्यस्य प्रेरणासंभवान् पितुरेव प्रेर्यत्वादाधानगतादात्मनेपदादग्निसाध्यकर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम्। नैतदेवम् । 'येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते ॥ तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा ॥' 'यस्मिञ्जाते निर्वपति स पूतो भवती'ति स्पष्टं पुत्रगामित्वम् । पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधः । एवं वा इयमेव वैश्वानरीया चिन्त्यते किं जननानन्तरमेव कर्तव्या उत कृते जातकर्मणीति । निमित्तानन्तरं नैमित्तिकमुपसंप्राप्तं विनाकारणेन नातिक्रमितव्यमतोऽनन्तरमेव स्यात् । सत्यम् । इह त्वस्ति कारणम् । पुत्रफलार्थं हीदं कर्म । तस्य च कृते जातकर्मणि स्तनप्राशनं न पुनः प्राक्, अकृते जातकर्मणि इष्टिर्निरूप्यमाणा स्तनप्राशनमुत्कर्षेत् । तत्र कुमारविपत्तिप्रसङ्गादिष्टिरेवेयमनर्थिका स्यात् । तस्मात्कृते जातकर्मणि कर्तव्या । पुनश्चिन्त्यते किं जातकर्मानन्तरं[1] कर्तव्या उताशौचापगमे स्वकाले वागत इति 'निमित्तानन्तरं प्राप्ता प्रयोजनविरोधतः ॥ उत्कृष्टा तदभावात्तु पुनर्नोत्क्रष्टुमर्हति ॥ शौचाङ्गेन विनाप्येषा कर्तव्यैव[2] निमित्ततः ॥ अपिवाप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते ॥' उच्यते—'निमित्तस्वरसात्प्राप्तिर्या तावत्सा निवारिता ॥ प्रयोजनविरोधेन तस्मादङ्गोपसंग्रहः ॥' निमित्तानन्तर्यं तावत्प्रयोजनविरोधादेव बाधितमित्युत्कृष्टेष्टिः । उत्कृष्टा चेदवैगुण्याय शौचकालप्रतीक्षया आशौचापगमे पौर्णमास्यादिकाले कर्तव्या ॥

---

यते, पूतत्वादिफलसंबन्धानन्तरं तावता नैमित्तिकत्वानिर्वाहात्तन्निर्वाहार्थं पश्चात्प्रत्यवायपरिहारोऽश्रुतोऽपि फलत्वेन कल्प्यत इति पूतत्वादिकं प्रत्यवायपरिहारश्चेत्युभयमप्यत्र फलम् । तत्र चोत्पत्तौ निमित्तसंयुक्तस्यैव पूतत्वादिकं फलमिति निमित्तप्रयुक्तानुष्ठानानुसारितया पूतत्वादेः स्वातन्त्र्याभावादेकस्मिन्नेव प्रयोगे पूतत्वादिफलपञ्चकं भवति नतु योगसिद्धिन्यायादेकैकं फलं क्वचिदिन्द्रियावित्वाद्यदर्शनं च कारीर्यादिवद्वैगुण्यकल्पनया समर्थनीयमिति भावः । **आधानेति** । अग्नीनादधीतेत्यात्मनेपदेनाधानफलानामग्नीनामाधातृगामित्वं प्रतीयमानं तेषां फलवदग्निहोत्राद्यर्थत्वेनैव समीहितत्वादग्निसाध्याग्निहोत्रादिफलानां कर्तृगामित्वं पर्यवसितमिति भावः । **पितुरेवेति** । ततश्च यस्मिन्निति व्यत्ययाश्रयणेन यो निर्वपति स पूतो भवतीति व्याख्येयम् । यद्वा 'आत्मा वै पुत्रनामासी'त्यादिवचनात् पुत्रजननं पितुरेव जननमिति यस्मिन् जात इत्यनेन पुत्रात्मना जातस्य पितुरेव निर्देश इति भावः । **येनेति** । अत्र विध्युद्देशे फलस्याश्रवणादर्थवादतः फलं कल्प्यं कल्पनासमये चार्थवादस्वरसावगतं पुत्रगतमेव फलं कल्पयितुं युक्तमित्यर्थः । **पुत्रफलमपीति** । 'पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिमेतेषां विदध्या'दित्यादिशास्त्रात्पुत्रगतपूतत्वादिकं पितुरभिलषितमेव । अपूतस्य कर्मानधिकारात् । अन्नादत्वादिहीनस्य कर्मस्वशक्तत्वादाधानादिसंस्कारासिद्धेस्तेजोहीनस्य वृत्त्यलाभाच्चेति भावः । **आत्मनेपदस्येति** । शत्रोः कर्तृसंबन्धित्वमात्रेण शत्रुवधस्येव पुत्रस्य कर्तृसंबन्धितामात्रेण तद्गतपूतत्वादेः कर्तृगामित्वमुपपद्यत इति भावः । सूत्रार्थस्तु—वाक्यशेषगतफलभाक्त्वेनाचोदिते पितरि फलसंयोगो न स्यात्तद्गतत्वेनाप्रतिपादितस्य फलस्य तंप्रति शेषत्वाभावादिति । एवं वा भाष्ये 'अङ्गानां तूपघातसंयोगो निमित्तार्थ' इति सूत्रं यथा 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्रमीयेत द्यावापृथिव्यमेककपालं निर्वपे'दिति नष्टे कपाले श्रूयमाणाया इष्टेर्न कपालार्थत्वम्, एवं जाते पुत्रे श्रूयमाणाया वैश्वानर्या अपीत्याशङ्कोत्तरत्वेन पूर्वशेषतया व्याख्यायाधिकरणान्तरपरतयापि व्याख्यातं तदधिकरणान्तरं दर्शयति **—एवंवेत्यादिना** । यदर्थं पुत्रगतत्वं फलस्योक्तं तन्निरूपणात्सङ्गतिः । **ननु** जननाव्यवहितानन्तर्यमशक्यं क्षणादिसूक्ष्मकालव्यवधानस्यावर्जनीयत्वात् अवर्जनीये च व्यवधाने जातकर्मव्यवधानमपि स्यादित्यत आह**—विनेति** । अशक्यत्वात्क्षणलवादिव्यवधानस्वीकारेऽपि जातकर्मव्यवधानमप्रामाणिकं, स्तनप्राशनस्य जातकर्मानन्तर्यस्मृतिश्च निमित्तश्रुतेर्बाध्यत इति भावः । भवेदेवं स्मृतिबाधः यदि निमित्तश्रुतिर्विरुध्येत सा तु न विरुध्यते । निष्ठाया भूतसामान्यवाचितया भूतजननस्य निमित्तत्वप्रतिपादकश्रुतेर्जातकर्मानन्तर्येऽप्यविरोधात् । यद्यपि स्वरसतः प्रतीयते निमित्तानन्तर्यं तथापि स्मृतिविरोधात् स्वारस्यपरित्यागो न दुष्यतीत्यभिप्रेत्य सिद्धान्तमाह**—सत्यमिति । कृते इति** । उत्तरया दक्षिणं स्तनं प्रतिधाप्येत्यापस्तम्बवचनात् 'प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते । स्तनप्राशनतः पूर्वं छिन्ने नाभौ तु सूतक'मिति वचनाच्च स्तनपानस्य जातकर्मानन्तर्यमिति भावः । तस्यैव सूत्रस्य वर्णकान्तरमाह**—पुनरिति । स्वकाल इति** । पौर्णमास्यादिकाल इत्यर्थः । पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिं सूचयन्पूर्वपक्षमाह**—निमित्तेति** । तदभावात्प्रयोजनविरोधाभावादित्यर्थः । **अपिवेति** । 'अपिवाप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वा'दिति सर्वशक्त्यधिकरणसिद्धान्तसूत्रेण कृत्स्नाङ्गानुष्ठानाशक्तावपि निमित्तवशादङ्गैकदेशयुक्तस्यापि प्रधानस्य प्रयोगो वक्ष्यत इत्यर्थः । एवंच य इष्ट्या पशुनेति वाक्यविहितः पौर्णमास्यादिकाल इतरेष्टिविषयतया संकोच्य इति भावः । असंकोचेनैवोपपत्तौ तत्कल्पनमयुक्तमित्याशयेनाह**—उच्यत इति । अशौचापगम इति** । पत्न्याः भाण्डस्पर्शानर्हत्वापगम इत्यर्थः ॥

---

१ नन्तरमन्तर्दशाहमेव कर्तव्या. २ कर्तव्याच.

सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताधिकरणम् ॥ १८ ॥

**प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥ [अप्रवृत्ते तु चोदना तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥]**

अग्निं चित्वा यजेत्सौत्रामण्येत्यङ्गेष्टिरीदृशी ॥ अङ्गिकाले स्वकाले वा स्यादाद्योऽन्याङ्गवन्मतः ॥ ११ ॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः ॥ स्वकाले चोदकप्राप्ते तदनुष्ठानमास्थितम् ॥ १२ ॥

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति वाजपेयाङ्गत्वेन चोद्यमानो बृहस्पतिसवः किं प्रधानकाले शरदि तेन सहैकप्रयोगः कर्तव्यः उतातिदेशप्राप्ते स्वकाले वसन्त इति संशयः । तत्र—'साङ्गस्य हि प्रधानस्य विधानं देशकालयोः ॥ अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया ॥' नहि वाजपेयः शरदि कर्तव्यश्चोद्यते किंतु वाजपेयकरणको यः फलार्थो व्यापारः प्रयोगः फलभावनाख्यस्तस्यायं कालविधिः, शरदि वाजपेयेनेति तृतीयानिर्देशात्तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षितत्वात् स च व्यापारोऽङ्गप्रधानव्यासक्त इति तुल्यः प्रधानस्याङ्गानां च तत्कालयोग इति वाचनिककालविरोधादतिदिष्टः कालो बाध्येत । **नन्वयं** कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थ इति नातिदेशं बाधितुमुत्सहते तर्ह्यतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थ इति न वचनसंकोचायालम् । तस्मात्प्रधानकालत्वमेवं प्राप्तेऽभिधीयते—'सत्यं वाचनिकः कालो बाधेतैवातिदेशिकम् ॥ बृहस्पतिसवे त्वेष शरत्कालो न चोद्यते ॥ यस्य कालविधिस्तस्माद्बहिष्ठेन हि स श्रुतः ॥' वाजपेयकरणको यः स्वकार्यं प्रति व्यापारः शरदि विहितस्तमेवेहापि समभिव्याहृतेन क्त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चात्तनत्वेन बृहस्पतिसवश्चोद्यमानस्तत्प्रयोगबहिर्भावान्न तत्कालं लभते । यदि परं वाजपेये कृते कर्तव्यः सन्नतिक्रमकारणाभावादनन्तरमेव क्रियेत । अस्ति त्वतिक्रमकारणं कालोपसंहारः । क्त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये । तस्मात्स्वकाले प्रयोगः, निर्वृत्तमपि च वाजपेयापूर्वमनेनाङ्गेन बलवत्क्रियते ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां चतुर्थाध्यायस्य तृतीतः पादः ॥ ३ ॥

---

**प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम्** ॥ ४० ॥ वैश्वानर्यामातिदेशिककालाबाधेऽपि इह तद्बाध इति प्रत्यवस्थानात्सङ्गतिः । **अतिदेशेति** । बृहस्पतिसवनाम्नातिदेशप्राप्त इत्यर्थः । **साङ्गस्येति** । अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन् । तस्मात स्यादेकदेशत्वमङ्गेष्वित्येकादशे देशकालकर्तृणां साङ्गप्रधानसंबन्धस्य वक्ष्यमाणत्वादिति भावः । एकादशन्यायस्फोरणार्थमेव देशकालयोरिति दृष्टान्तार्थतया देशोपादानम् । तमेवैकादशन्यायं विवृणोति—**तस्यैवेति** । चिकीर्षितस्य हि कस्मिन्काले कर्तव्यमिति कालापेक्षा । फलार्थिनश्च फलसामग्रीभूतसाङ्गप्रधानगोचरः फलभावनाख्यो व्यापार एव चिकीर्षितो न प्रधानमात्रम् । अङ्गानुष्ठानाभावे फलानिष्पत्तेः । अत आकाङ्क्षावशात्साङ्गप्रधानस्यैव कालसंबन्धो न प्रधानमात्रस्यानाकाङ्क्षितत्वादित्यर्थः । **ननु** यथा 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति वाक्ये सत्यपि तृतीयानिर्देशे बृहस्पतिसवव्यतिरिक्ताङ्गेषु क्त्वाप्रत्ययोक्तकालस्य संकोचः एवं शरत्कालस्यापि बृहस्पतिसवव्यतिरिक्ताङ्गेषु संकोचोऽस्त्वित्याशयेन शङ्कते—**नन्विति** । बृहस्पतिसवस्य वाजपेयाङ्गत्वात्सर्वाङ्गप्रयुक्तप्रयोगग्रहणे बृहस्पतिसवस्यापि बृहस्पतिसवपूर्वकालत्वं स्यान्न च तत्संभवतीति बाधाद्वाजपेयेनेष्ट्वेति क्त्वाप्रत्ययोक्तपूर्वकालस्य बृहस्पतिसवातिरिक्ताङ्गेषु युक्तः संकोचः । शरदि वाजपेयेनेत्यत्र तु संकोचे न किंचित्कारणम् । अतिदेशस्योपदेशापेक्षया दुर्बलत्वेन तत्संकोचकत्वायोगात । तस्मादतिदेशस्यैव संकोच इति परिहरति—**तर्हीति** । सत्यम् । शरद्वाक्येन वाजपेयकरणकफलव्यापारस्य कालविधिरिति । तथापि वाजपेयेन स्वफले परमापूर्वे निष्पादिते पश्चाद्बृहस्पतिसवविषयत्वमित्याह—**यस्येति** । नन्वेवमपि क्त्वाप्रत्ययबलात्तदनन्तरमेव कर्तव्यो न स्वकाल इत्याशङ्क्य क्त्वाप्रत्ययस्य नानन्तर्यार्थकत्वमित्याशयेनाह—**क्त्वाचेति** । वैमृधस्य तु संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीत्यानन्तर्यार्थकानुशब्दबलात्तदानीमेव कर्तव्यत्वमिति भावः । **ननु** यदि वाजपेयेन स्वकार्यं कृतं तर्हि बृहस्पतिसववैयर्थ्यमित्यत आह— **निर्वृत्तमपीति** । निर्वृत्तेऽपि वाजपेयफलापूर्वे बृहस्पतिसवाख्याङ्गविधायकवचनबलाद्वचनस्यातिभाराभावादेवं कल्प्यत इति भावः । यथा पौर्णमास्यमावास्याख्ययोः समुदाययोरन्यान्यसाहित्यं विना फलापूर्वासाधनत्वेऽपि 'पौर्णमास्यां पौर्णमास्या यजेताममावास्यायाममावास्यया यजेते'ति तृतीयया समुदायापूर्वसाधनत्वावगमस्तथा वाजपेयस्यापि बृहस्पतिसवाङ्गं विना परमापूर्वासाधनत्वादिहापि तृतीयया समुदायापूर्वसाधनत्वमेव बोध्यते ।

---

१ पश्चात्तनबृहस्पति.

# चतुर्थाध्याये चतुर्थः पादः।

राजसूयेज्यानां देवनाद्यङ्गत्वाधिकरणम्॥ १॥

**प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥ [अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात्॥ २॥]**

**राजसूयेऽनुमत्यादि देवनादि च ते उभे॥ मुख्ये उतैकमुख्यत्वं स्यादाद्यः प्रक्रियैक्यतः॥ १॥**
**यागानां राजसूयत्वादङ्गित्वं फलवत्त्वतः॥ देवनाद्यफलं यत्तदङ्गं फलवतो यजेः॥ २॥**

**अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य श्रूयते 'राजसूयेन स्वाराज्यकामो यजेते'ति। तत्र संशयः किं सर्वाण्येव फलवन्ति समप्रधानानि पुरुषार्थानि उतायागाः क्रत्वर्था इति। तत्र—'सर्वेषां प्रकृतत्वेन फलापेक्षितया तथा॥ राजसूयपदस्यापि समानत्वात्फलान्वयः॥' राजसूयप्रातिपदिकं यद्यप्यप्रसिद्धं तथापि तृतीयान्तत्वात्फलसाधनाभिधायित्वेन निर्णीतं प्रकृतानां फलापेक्षिणामविशेषात्सर्वेषां नामेत्यध्यवसीयते। एवं साधनत्वेऽवगते स्वाराज्ये च फले भावनामात्रं विधियुक्तादाख्यातात्प्रतिपाद्यमपेक्षितमिति तन्मात्रपरमाख्यातम्। केवलप्रत्ययप्रयोगासंभवात्तु यत्र क्वचन धातावुपादातव्ये छत्रिन्यायेन यागायागसमुदाये यजिरनुवादभूतः प्रयुज्यते। ततः सर्वेषां फलान्वयात्प्राधान्यम्। उच्यते—'धात्वर्थानां फलैर्योगो न नाम्नामिति हि स्थितम्॥ यजिश्च याग-**

---

तेन बृहस्पतिसवानुष्ठानात्पूर्वं समुदायापूर्वमेव निष्पद्यते। परमापूर्वं तु बृहस्पतिसवानुष्ठानानन्तरमेवेति भट्टसोमेश्वरमतिः। एवम् 'ग्निं चित्वा सौत्रामण्या यजेते'त्यत्रापि चयनेनाग्निसंस्कारनिष्पत्त्यनन्तरं विधानादग्निसंस्कारस्य चयननिष्पन्नस्थण्डिलेऽग्निनिधानरूपस्य स्वरूपेण फलवत्त्वाभावेन तत्फलतायाः क्रत्वपूर्वनिष्पत्तिपर्यन्तव्यापनादेः संकर्षे सौत्रामण्याः साग्निकक्रत्वङ्गत्वमेव नतु चयनाङ्गत्वं नवाभ्यङ्गत्वमिति व्यवस्थापनात्साग्निक्रत्वनुष्ठानानन्तरं सौत्रामण्या अनुष्ठेयत्वे सति आतिदेशिककालबाधाय स्वकाले पर्वण्यनुष्ठानं बोध्यम्। सूत्रार्थस्तु—अङ्गानां बृहस्पतिसवादीनां **प्रधानेनैककालत्वाभिसंवन्धान्मुख्यकालत्वं** प्रधानकालत्वमेवेति॥ **इति शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां चतुर्थाध्यायस्य तृतीयः पादः॥ ३॥**

**प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥** पूर्वस्मिन्पादे फलप्रयुक्तिर्विचारिता, इदानीं फलप्रयुक्त्यपवादः प्राधान्येन विचार्यत इति पादान्तरत्वमानन्तर्यं च। **अनुमत्यादीति**। 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपती'त्यादीनि इष्टिरूपाणि 'आदित्यां मह्नां गर्भिणीमालभत' इत्यादीनि, पशुयागात्मकानि पवित्रादिसोमयागात्मकानि वल्मीकवपायां होम इत्यादीनि दर्विहोमरूपाणि चेत्यर्थः। **विदेवनादीनीति**। विदेवनं पष्ठौहीर्दीव्यतीत्यक्षदेवनम्। आदिपदेन राजन्यं जिनाति, शौनःशेपमाख्यापयते, अभिषिच्यत इत्यादीनां संग्रहः। **किमिति**। किमिमानि समप्रधानानि उत यागा एव प्रधानाः अयागास्त्वङ्गभूताः, तदर्थं च किमनेन स्वाराज्यफलेन सर्वाणि फलवन्त्युत यागा एवेति संशय इत्यर्थः। अस्य विचारस्याध्यायसङ्गत्यर्थं पुरुषार्थानीत्युक्तिः, फलप्रयुक्तानीति च तदर्थः। **ननु** यजेतेति यागानामेव फलसाधनत्वबोधनात्कथं पूर्वपक्ष इत्यत आह—**सर्वेषामिति**। नात्र यजिः फलकारणसमर्पकः किंतु राजसूयशब्दः फलपदसंनिधानेन तृतीयान्तत्वेन च तस्यैव करणसमर्पणसमर्थत्वात् स च संनिहितानां सर्वेषां साधारण इति सर्वेषां फलान्वय इत्यर्थः। **ननु** राजसूयशब्दस्य सर्वसाधारण्यमेव कथमाग्नेयादौ पौर्णमास्यादिशब्दवत्प्रकृतेषु सर्वेषु प्रसिद्धत्वाभावादिति शङ्कते—**यद्यपीति**। फलापेक्षिणां रूपवतां प्रकृतानां कर्मणां संनिधौ श्रूयमाणस्यारूपस्य तस्य प्रकृतसर्वकर्मपरत्वौचित्येन तेष्वेव राजा सूयते इत्येवं प्रकृतकर्मसमुदायान्तःपात्यभिषेचनीयाख्यसोमयागगतराजाभिषेकेण वा राजा सूयत इति राजकर्तृत्वेन वा राजसूयशब्दवृत्तेर्वक्तव्यत्वात्। ततश्च तृतीयान्तेन तेन सर्वेषामेव फलसंबन्धो बोध्यत इति परिहरति—**तथापीति**। विधियुक्ताच्छब्दभावनाप्रतिपादकादिति यावत्। **नन्वेवं** यजेः लक्षणादोष इति शङ्कां निवर्तयितुमाह—**अनुवादभूत इति**। राजसूयशब्दस्यैव करणसमर्पकत्वेन यजेः विध्युद्देशान्वयाभावे केवलानुवादत्वाल्लक्षणापि न दोष इति भावः। **वस्तुतस्तु** भावार्थाधिकरणन्याये जाग्रति राजसूयशब्दस्य तृतीयान्तस्यापि करणसमर्पकत्वासंभवान्नैवं पूर्वःपक्षः किंतु यजेः करणसमर्पकत्वमभ्युपेत्यैव प्रकृतानां सर्वेषामुत्पत्तावेव फलसामान्यसंबन्धित्वेनावगतानां तद्विशेषमपेक्षमाणानामनेन फलविशेषः समर्प्यत इति यजिरयं यागायागपर एव। किंच मुख्यस्य राजसूयशब्दस्य सर्वप्रकृताभिधायित्वात्तत्समानाधिकरणस्य यजेरपि सर्वप्रकृतार्थत्वमेव मुख्यानुसारेण जघन्यलक्षणाया न्याय्यत्वात्। **इतरथा** राजसूयशब्दस्य यागमात्रे संकोचाद्बाधः स्यात्। यजेस्तु नैव बाधः। यागानां फलसंबन्धानिवारणात्। अतः सर्वेषां फलार्थत्वमित्येवं पूर्वःपक्षः प्रवर्तत

मेवाह यजेस्तेन फलान्वयः ॥ राजसूयपदं चापि यज्ञैकाधिकरण्यतः ॥ यागानामेव तेनात्र यागानां स्यात्प्रधानता ॥' इतरत्तु फलवत्संनिधानात्तदङ्गं भवति ॥

देवनस्य कृत्स्नराजसूयाङ्गताधिकरणम् ॥ २ ॥

**मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ [सर्वासां वा समत्वाच्चोदनातः स्यान्नहि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥]**

**एकस्यैवाभिषेच्यस्य तदङ्गं निखिलस्य वा ॥ राजसूयस्यापकर्षादाद्यः प्रक्रिययोत्तरः ॥ ३ ॥**

स्थितमयागानामङ्गत्वं, तत्र विदेवनादयोऽभिषेचनीयाख्यसोमयागविध्यनन्तरं समाम्नातास्तदीयमाहेन्द्रस्तोत्रकालेऽपकृष्टाः माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इति । अयंच विदेवनादीनामभिषेकान्तानामपकर्ष इति । त इमे अभिषेचनीयाङ्गमुत राजसूयाङ्गमिति संदेहे कथंभावगृहीतप्राकृताङ्गमध्यपातादवान्तरप्रकरणेनाभिषेचनीयाङ्गतामाशङ्क्यमानस्योत्तरम्—'तत्र प्रयोजनापेक्षा कर्मणां यत्र चोदना ॥ विदेवनादिकानां तु न मध्ये प्रकृतो विधिः ॥' अभिषेचनीयानन्तरं विहिताः प्रयोजना-

---

इति ध्येयम्। **राजसूयपदमिति** । राजसूयशब्दस्य यागसामानाधिकरण्यंविना प्रकृतपरत्वमेव न स्वध्यवसानं, राजा क्षत्रियः सूयते गर्भाद्विमुच्यत इति व्युत्पत्त्या उत्पद्यमानावस्थक्षत्रियद्रव्यवाचित्वस्य राजा सोमः सूयते अभिषूयत इति व्युत्पत्त्याभिषूयमाणावस्थसोमद्रव्यवाचित्वस्यापि संभवात् । तस्माद्यागसामानाधिकरण्याधीनमेव प्रकृताभिधायित्वमिति सोऽपि यागनामैव । एवंच प्रथमं राजसूयपदस्य प्रकृतसर्वपरत्वानिश्चयान्न तदनुसारेण यजेः लक्षणेति भावः—**इतरत्त्विति** । ततश्चेतरेषां क्रतूपकारेणैव फलाकाङ्क्षाशान्तेर्न तद्बलाद्यजेः सर्वपरत्वमिति भावः। अत्र क्वचित्पुस्तकेषु ननु तेनापूर्व एव यागो विधीयते राजसूयाख्यः । नह्येकेन वाक्येन प्राप्तानां कर्मणां राजसंबन्धः फलसंबन्धश्च शक्यो विधातुम् । सत्यं। द्वे एते वाक्ये 'राजा राजसूयेन यजेते'त्येकं 'राजसूयेन स्वाराज्यकामो यजेते'त्यपरं। द्वयमपि समाहृतार्थमेकवाक्यतया भाष्यवार्तिकयोः। अतएवासति ब्राह्मणादिविधावन्नाद्यफलावेष्टे राजकर्तृकत्वप्रतीतिरवेष्ट्यधिकरणे दर्शितेति दृश्यते तस्यायमर्थः। **नन्वस्य** कर्मान्तरविधायकत्वात्प्रकृतानां फलसंबन्धविधायकवाक्यान्तरमेव कल्प्यम् । तच्च सर्वेषां फलाकाङ्क्षानुसाराद्यागायागसाधारणमेव कल्पनीयमिति सर्वेषां समप्राधान्यमिति शङ्कते—**नन्विति** । ननु भाष्यवार्तिकयोरेकवाक्यतयैव लेखनान्न वाक्यद्वयमित्यत आह—**द्वयमपीति** । असत्यपि वाक्यद्वयरूपेण पाठेऽस्यैव वाक्यस्य द्वैविध्येन फलसमर्पकत्वोपपत्तौ फलसमर्पकवाक्यान्तरकल्पना प्रकृतहान्यप्रकृतकल्पनाविशिष्टविध्यपूर्वान्तरकल्पनादिकं न युक्तमित्याहुः । **अतएवेति** । यदीदं वाक्यं कर्मान्तरविधायकं स्यात्तदा प्रकृतानां कर्मणां राजकर्तृकत्वविध्यभावात्प्रकृतकर्ममध्यपठितायाः अवेष्टेस्त्रैवर्णिकाधिकारित्वं स्यादिति ब्राह्मणादिविध्यभावे तस्या राजकर्तृकत्वाद्ब्राह्मणादिश्रवणस्य निमित्तार्थत्वं न संभवतीत्यवेष्ट्यधिकरणोक्तं विरुध्येतेति भावः । प्रयोजनं कर्मप्रयोगारम्भेऽस्मै फलायेमानि कर्माणि करिष्य इति फलोद्देशेन कर्मणां संकल्प्यत्वात्पूर्वपक्षे प्रकृतानि कर्माणि फलोद्देशेन संकल्प्यानि सिद्धान्ते यागात्मकान्येवेति । सूत्रार्थस्तु—प्रकरणे श्रूयमाणः राजसूयशब्दः प्रकरणशब्दस्तस्य साधारण्याच्चोद्यमानानामनङ्गत्वं सर्वेषां समप्राधान्यमिति ॥

**मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥** विदेवनादीनामङ्गत्वं यदुक्तं तस्य विशेषव्यवस्थापनेन स्थिरीकरणात्सङ्गतिं सूचयितुमाह—**स्थितमिति** । सिद्धान्तसौकर्यार्थमाह—**तत्र विदेवनेति** । पूर्वपक्षसौकर्यार्थमाह—**तदीयेति** । नन्वनेनाभिषेकस्यैवापकर्षो न विदेवनादेरित्यत आह—**अयंचेति** । **अवान्तरेति** । निष्फलानुष्ठाने प्रवृत्त्ययोगेनानुष्ठानान्यथानुपपत्त्यधीनत्वाच्च प्रयोजनापेक्षाया यत्रानुष्ठानं तत्र प्रयोजनापेक्षा नतु यत्र चोदना तत्र अनुष्ठानं च विदेवनादीनामभिषेचनीयप्राकृताङ्गमध्य इति तत्संदंशादुद्भूतेनावान्तरप्रकरणेनाभिषेचनीयाङ्गत्वमित्यर्थः । **तत्रेति** । अनुष्ठानं ह्यंशत्रययुक्तभावनावगत्यनन्तरमुपनिपतति । तेनानुष्ठानावगमात्प्रागेव भावनाया भाव्यनिष्ठत्वस्वाभाव्यात्प्रयोजनाकाङ्क्षेति यत्रोत्पत्तिस्तत्रैव प्रयोजनं न यत्रानुष्ठानं तत्रेत्यर्थः । **विदेवनादिकानामिति** । यद्यपि तैत्तिरीयशाखायामभिषेचनीयप्रयोगमध्ये दिशोऽभ्ययं राजाभूदिति पञ्चाक्षान्प्रयच्छन्ति शौनःशेपमाख्यापयत इति विदेवनादीनाम्नाय मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यै चामिक्षाया अग्नये स्विष्टकृते समवद्यतीत्यभिषेचनीयाङ्गेष्टिविशेषमुक्त्वा अपाम्नप्त्रे स्वाहोर्जोनप्त्रे स्वाहाग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोतीत्यभिषेचनीयाङ्गहोमविशेषाम्नानाद्विदेवनादीनामुत्पत्तिरभिषेचनीयाङ्गसंदंशेऽस्त्यवान्तरप्रकरणमिहानिवार्यं तथापि शाखान्तरे तदाम्नानं नास्तीति कृत्वाचिन्तयेदमिति तृतीय एवास्माभिः प्रतिपादितम् । **ननु** विदेवनादीनामनुष्ठानसमये प्रयोजनाकाङ्क्षाविरहेऽपि योत्पत्तिसमये तदपेक्षा ततएवाभिषेचनीयावान्तरप्रकरणमात्रत्वं किं न स्यादित्याशङ्क्य उत्पत्तिकालीनप्रयोजनाकाङ्क्षायाः प्रागेव शान्तेर्नैवमित्याह—**अभिषेचनीयानन्तरमिति** । **बाधेनेति** । श्रुति-

पेक्षाः संनिधिप्राप्ताभिषेचनीयाङ्गत्वबाधेन प्रकरणाद्राजसूयाङ्गतां नीता नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते येनावान्तरप्रकरणविषयतां प्रतिपद्येरन्। तस्माद्राजसूयाङ्गम्॥

सौम्यादीनामुपसत्कालकत्वाधिकरणम्॥ ३॥

**प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम्॥ ५॥ [अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य॥ ६॥]**

किं पुरस्तादुपसदां सौम्येन प्रचरेदिति॥ अङ्गाङ्गिभावः कालो वा वाक्यादाद्यः प्रतीयते॥ ४॥
पुरस्तादिति कालोऽत्र भाति कालविधिस्ततः॥ नाङ्गं कस्यापि सौम्यादि प्रधानमितरेष्टिवत्॥ ५॥

राजसूय एव सौम्यं चरुं बभ्रुर्दक्षिणेति विधाय श्रूयते—'पुरस्तादुपसदां सौम्येन प्रचरन्ती'ति। किमयं चरुरुपसदामङ्गं अङ्गप्रयोजनसंबन्धोऽयं उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग इति चिन्त्यते।— 'तत्र प्रकरणापेक्षात्सामान्यवचनादयम्॥ स्वाराज्ये विनियुज्येत साक्षादुपसदं गता॥' नहि सौम्येनेति स्वशब्देन तृतीयान्तेन षष्ठीनिर्दिष्टोपसदङ्गत्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षेण सामान्येन राजसूयवाक्येन फलसंबन्धं लभते पुरस्ताच्छब्दश्चाङ्गस्य तत्समीपेऽनुष्ठानाद्यथाकथंचिदनुवादः।—'अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी॥ दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः॥ अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम्॥ प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते॥ तथाच सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः॥' नह्युनुत्पत्तिविधयोऽनेकार्थव्याप्तिक्षमाः। तस्मात्कालार्थ एव संयोग इति फलार्थः सौम्यः॥

आमनहोमानां सांग्रहण्यङ्गताधिकरणम्॥ ४॥

**फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात्॥ ७॥**

मुख्यतामनहोमस्य सांग्रहण्यङ्गताथ वा॥ मुख्यत्वमविरुद्धत्वात्फलाय स्यात्तदङ्गता॥ ६॥

'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः' इति प्रकृत्य 'आमनमस्यामनस्य देवा'[1] इति तिस्र आज्याहुतीर्जु-

---

लिङ्गाधिकरणन्यायेनेति भावः। एतेनैव तत्र संनिधिना पूर्वःपक्षः, इहावान्तरप्रकरणेनेत्यपुनरुक्तिः सूचिता। प्रयोजनं पूर्वपक्षे दैवादभिषेचनीयप्रयोगमध्ये विदेवनादीनामननुष्ठाने तत्प्रयोगपरिसमाप्त्यनन्तरं स्मरणे न तेषां पुनरनुष्ठानं, सिद्धान्ते तु अभिषेचनीयप्रयोगसमाप्त्यनन्तरमपि क्रमविपर्यासप्रायश्चित्तपूर्वकं विदेवनादीनामनुष्ठानम्। यद्वा कस्यचिदङ्गस्यान्तरायशङ्कापरिहारार्थं कर्मारम्भे परिगणनस्य शास्त्रपरिमाणत्वादिनाचार्यैरुक्तत्वात्पूर्वपक्षेऽभिषेचनीयारम्भे परिगणनीयानि विदेवनादीनि सिद्धान्ते तु राजसूयारम्भ इति। सूत्रार्थस्तु—विदेवनादिकं यस्याभिषेचनीयस्य प्रयोगमध्यस्थं तदङ्गं तन्मध्येपातादिति॥

**प्रकरणाविभागे च०॥ ५॥** एवमधिकरणद्वयेन यागानां प्राधान्येऽयागानामङ्गत्वे स्थापिते यागानामपि न सर्वेषां प्राधान्यमित्याक्षेपात्सङ्गतिः। **ननु** स्वाराज्यवाक्येनैव प्रयोजनाकाङ्क्षाशान्तेरङ्गाङ्गित्वसंबन्धोऽनुपपन्न इति शङ्कां निराकुर्वन्पूर्वपक्षमाह—**तत्रेति**। प्रकृतसर्वयागपरत्वाय प्रकरणापेक्षत्वमिति भावः। **साक्षादिति**। निरपेक्षेण स्वशब्देनेत्यर्थः। **षष्ठीनिर्दिष्टेति**। इयं हि षष्ठी 'षष्ठ्यतसर्थप्रत्ययेने'तिविहिता दिग्योगलक्षणा पञ्चमी समानार्था न भवति। तस्या उपपदविभक्तित्वेन तदपेक्षया पदान्तरमनपेक्ष्य संबन्धवाचिन्याः शेषषष्ठ्याः प्रबलत्वात्ततश्च षष्ठीप्रतिपाद्यसंबन्धसामान्यस्य विशेषापेक्षायां योग्यताबलादङ्गाङ्गिभावसंबन्धित्वे सत्यप्युपसदां चोदकात्प्राप्तिसमयएव पराङ्गत्वेनावगतानां सौम्यचर्वर्थत्वासंभवादपूर्वस्य सौम्यस्यैवोपसदङ्गत्वमित्युपसत्प्राधान्यपरा षष्ठीति भावः। **यथाकथंचिदिति**। सामीप्यलक्षणया वा सामीप्ये पाक्षिकपूर्वत्वालंबनेन वेत्यर्थः। उपपदविभक्तेरुक्तं दौर्बल्यं निरस्यति—**अङ्गाङ्गिभावमात्र इति**। पदान्तरानर्थक्याद्वरं षष्ठीस्वारस्यहानमिति भावः। **ननु** तर्ह्युभयानुग्रहाय कालोऽङ्गत्वं चेत्युभयं विधीयतामित्यत आह—**तथाचेति**। प्रयोजनं पूर्वतराधिकरणवत्। सूत्रार्थस्तु—पुरस्तादुपसदां सौम्येन प्रचरन्ति। अन्तरा त्वाष्ट्रेणोपरिष्टाद्वैष्णवेनेति सौम्यत्वाष्ट्रादेः प्रकृतयागत्वाविशेषे'प्युपसदङ्गतैव। उपसदङ्गत्वपुरस्तात्त्वोभयविधानस्य वाक्यभेदप्रसङ्गेन प्रतिषिद्धत्वेसति षष्ठीतृतीयाभ्यामङ्गत्वस्यैव न्याय्यत्वादिति॥

**फलवद्वोक्तहेतुत्वा०॥ ७॥** यथा सौम्यस्य फलार्थत्वादनङ्गत्वमेवमिहापीति प्रत्यवस्थानात्सङ्गतिः। **तिस्र इति**।

---

[1] मनस्यामदेवा.

होती'त्यामनहोमा विहिताः किं ग्रामकामपदानुषङ्गेण सांग्रहणीवत्फलार्थाः समप्रधानाः उत सांग्रहण्यङ्गमिति संशये सांग्रहण्याः प्राकृताङ्गनिराकाङ्क्षायाः पुनरङ्गापेक्षाभावात् आमनहोमानां च फलपदानुषङ्गेण प्रयोजनावाप्तेरनपेक्षत्वात्। संभवति च प्राधान्येऽङ्गत्वायोगात्फलार्थत्वे प्राप्तेऽनुषङ्गे सकृदाम्नातस्य पुनरनुसंधानात्, तथाच सति सकृदाम्नात[2]रूपव्याघातादत्यन्तागतिकतया तदाश्रयणादिह त्वानपेक्षतया सांग्रहण्याः प्रकरणाभावेऽपि संनिधेरेव तदङ्गत्वसंभवादामनहोमानां च प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि संभवादगतिकत्वाभावादनुषङ्गानाश्रयणात्परिधिमन्त्रव्यवायाश्रयणे तदसंभवादङ्गत्वमेव न्याय्यम् ॥

दधिग्रहस्य नित्यताधिकरणम् ॥ ५ ॥

**दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ [नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥ सार्वरूप्याच्च ॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥]**

**नित्यनैमित्तिकत्वे वा नित्यतैव दधिग्रहे ॥ देवान्तरायाज्ज्यैष्ठ्याच्च स्यादस्योभयरूपता ॥ ७ ॥**
**निमित्तत्वद्योतिनोऽत्र यदिशब्दादयो न हि ॥ अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता ॥ ८ ॥**

ज्योतिष्टोमे श्रूयते 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीया'दिति। सोयं दधिग्रहः किं नैमित्तिकः उत नित्यो नैमित्तिकश्चाप्यनित्य एवेति संशये 'देवतान्तरितो यागो निमित्तेयं विधीयते ॥ तस्मान्नैमित्तिकः सत्यं नित्योऽपि ज्येष्ठशब्दतः ॥' नैमित्तिक

---

'आमनमस्यामनस्य देवा ये सजाताः कुमाराः समनसस्तानहमि'ति मन्त्रस्यामनस्यामनस्य देवा ये सजाताः समनसस्तानहं आमनमस्यामनस्य देवा ये कुमाराः समनसस्तानहमित्येवं द्वैविध्यात्संख्यासंपत्तिः। **समप्रधाना इति**। यथा सांग्रहणीप्रधानमेवमिमेऽपि प्रधानभूता इत्यर्थः। नत्वाग्नेयादिवत्समप्राधान्यं तद्वत्संहत्यैकफलसाधनत्वाभावात्। इममेवार्थं सूचयितुमाह—**ग्रामेति**। **सांग्रहण्या इति**। विकृतिभावनायाः कथंभावमपेक्षमाणायाः संनिधमपि पदार्थमक्लृप्तोपकारकत्वात्परित्यज्य प्राकृतैरेव प्रथमं संबध्य निराकाङ्क्षत्वादिति भावः। **नन्वेवमपि** नक्षत्रेष्ट्युपहोमवदामनहोमानामाकाङ्क्षया सांग्रहण्याकाङ्क्षामुत्थाप्यान्वयोस्त्वित्यत आह—**आमनेति**। परिधिमन्त्राणां संनिध्यविशेषेणामनहोमाङ्गत्वस्यापि संभवान्न व्यवधायकत्वम्। **एवं** 'यत्प्रयाजानां पुरस्ताज्जुहुयाद्बहिरात्मन्सजातां दध्यादनूयाजायामुपरिष्टात्स्वर्गं लोकमुपक्रामेदि'ति मध्येजुहोतीति कीर्त्यमानप्रयाजानूयाजयोरपि आमनहोमार्थत्वोपपत्तेर्न सांग्रहणीसंस्पर्शप्रसक्तिरिति भावः। **तथाच सतीति**। पुनरनुसंधानस्य पुनराम्नानप्रायत्वात्सकृदाम्नानरूपबाध इत्यर्थः। **अनपेक्षितयेति**। चोदकप्राप्तैरेव कथंभावाकाङ्क्षाशान्तेस्तदाकाङ्क्षालक्षणप्रकरणाभावेऽपि संनिधिलक्षणप्रमाणेनोपहोमादिवदङ्गत्वसंभवान्नागतिकत्वमित्यर्थः। **आमनेति**। आमनहोमानां दर्विहोमत्वेन प्रयाजानूयाजाभावादत्यन्ताप्राप्ततद्विधाने गौरवादेवं कीर्त्यमानाः प्रयाजानूयाजाः सांग्रहण्यर्था एव। तेच प्राकृताः। प्राकृताश्च पदार्था विकृत्याम्नाता अप्याकाङ्क्षयैव गृह्यन्ते। ततश्च यावत्प्राकृतग्रहणं सांग्रहिण्याकाङ्क्षाया अनुवृत्तेराकाङ्क्षया प्राकृतेषु गृह्यमाणेषु तन्मध्यपतितामनहोमा अपि संग्राह्या इत्यवर्जनीयं तेषामपि प्रकरणग्राह्यत्वमित्यर्थः। **परिधीति**। प्रकृतौ परिधेरङ्गप्रधानार्थत्वेऽपि दर्विहोमानामपूर्वत्वेन तदनिदेशाभावात्परिध्यनुवादेन मन्त्रमात्रविधानानुपपत्तेर्विशिष्टविधौ गौरवाच्च परिधिमन्त्राणामपि सांग्रहण्यर्थत्वे सति सजातेषु भूयांसमिति परिधीन्परिदधातीति तैत्तिरीयशाखायां परिधिमन्त्रविधायकैरसंबन्धिपदैः शाखान्तरे परिधिमन्त्रैर्वा व्यवधानाद्व्यवायान्नानुषज्यते इति न्यायेन तदसंभव इत्यर्थः। **नचानुषङ्गासंभवेऽप्यार्थवादिकफलवत्त्वेन प्राधान्यं युक्तम्**। तथासति प्रयाजादीनामपि ततएव प्राधान्यापत्तेः। सूत्रार्थस्तु—फलवत्सांग्रहण्यादिकमितरस्याफलस्यामनहोमादेः प्रधानं स्यात् कुतस्तेषामफलत्वं व्यवायान्नानुषज्यत इत्यनुषङ्गाभावस्योक्तहेतुत्वादनुषङ्गासंभवेन फलवत्त्वासंभवादिति ॥

**दधिग्रहो नैमित्तिकः०** ॥ ८ ॥ अन्तरितः यागाद्बहिष्कृतः यष्टुं विस्मृत इति यावत्। आवृश्च्येते वृश्च्येते इति यावत्। **देवतान्तरित इति**। यच्छब्दान्निमित्तत्वमिति भावः। एवंचामनहोमानां फलश्रुतिसंयोगाभावात्फलार्थत्वाभावेऽपि दधिग्रहणस्य निमित्तश्रुतिसंयोगान्नैमित्तिकत्वमिति प्रत्यवस्थानात्सङ्गतिर्बोध्या। **ननु** ज्यैष्ठ्यं प्राथम्यं तेन कथं नित्यत्वमित्याशङ्क्य

---

१ फलार्था उत सांग्र. २ रूपबाधादत्यंता.

इति सत्यं नित्योऽपि स्यात् । कुतः । ज्येष्ठशब्दसंस्तवात् । 'ज्येष्ठो वा एष ग्रहाणामि'ति प्रशस्तवचनो ज्येष्ठशब्दो हि नित्यश्च प्रशस्तो न चञ्चलः । अथवा प्राथम्यनिमित्तं ज्यैष्ठ्यं नित्यश्च सन्नयं पाठक्रमाद्ग्रहान्तरेभ्यः प्रथमं गृह्यमाणो भवति ज्येष्ठः । नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतो ज्येष्ठः स्यात्तस्मादुभयरूपः स्यात् । नन्वेवं नित्य एव स नतु नैमित्तिकः । कस्मान्निमित्तत्वाश्रुतत्वात: । नह्यन्तरयो निमित्तत्वेन श्रूयते यदिशब्दाद्यभावात् । यच्छब्दस्य चाकर्तृसमानाधिकरणस्य तत्प्रतिपादकत्वाभावात् । अर्थवादमात्रमन्तरायश्रवणमिति नित्य एव स्यात् ॥

वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ॥ ६ ॥

**वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ १२ ॥ [पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥]**

**नित्यो नैमित्तिको वा स्याद्यागो वैश्वानरश्रितौ ॥ नित्यः पुरेव यच्छब्दादविरोधाच्च पश्चिमः ॥ ९ ॥**

अग्नौ श्रूयते 'यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामि गर्भो विपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपे'दिति । तत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते । यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयतीति नैमित्तिकतैव स्थिता ॥

षष्ठचितेर्नैमित्तिकत्वाधिकरणम् ॥ ७ ॥

**षट्चितिः पूर्ववत्स्यात्[1] ॥ १४ ॥ [ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥ विप्रतिषेधात्ताभिः समानसंख्यम् ॥ १८ ॥]**

**नित्या षष्ठी चितिर्नो वा पञ्चापेक्षत्वतोऽग्रिमः ॥ अपवृक्तावप्रतिष्ठानिमित्तीकृतितोऽन्तिमः ॥ १० ॥**

'योऽग्निं चित्वा न प्रतितिष्ठति पञ्चपूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते प्रतिष्ठित्या' इति ।

---

नात्र प्राथम्यं ज्यैष्ठ्यशब्दार्थः किंतु प्रशस्ततमत्वमित्याह—**प्रशस्तेति** । चञ्चलः कादाचित्कः । ततश्च कादाचित्कनैमित्तिकापेक्षया सार्वत्रिकत्वान्नित्यः प्रशस्त इत्यर्थः । अस्तुवा प्रसिद्धिप्राचुर्यात्प्राथम्यमेव ज्यैष्ठ्यशब्दार्थः, तथापि तद्बलादेव नित्यत्वं सिध्यतीत्याह—**अथवेति** । नियोगतः नियमतः । **यदिशब्दादीति** । सप्तम्यादिरादिशब्दार्थः । **यच्छब्दस्येति** । कादाचित्कं हि निमित्तं भवति । तच्चोद्देश्यमधिकारिविशेषणं च । ततश्च यादृशेन यच्छब्देन कादाचित्कत्वमधिकारिविशेषणत्वमुद्देशश्च भवति तादृशयच्छब्दान्निमित्तावगतिर्वाच्या । तादृशश्च कर्तृसमानाधिकरण एव 'यस्य गृहान् दहति, यस्याश्विने शस्यमाने सूर्यो नाविर्भवति, य आहिताग्निः सन्नव्रत्यमिव चरेयं रक्षांसि सचेरन्नि'त्यादिषु यजमानात्मककर्तृसमानाधिकरणयच्छब्देन गृहदाहादेर्यजमानान्तरव्यावृत्त्यवगमेनासार्वत्रिकत्वप्रत्यायनाद्यस्य गृहान्दहति स निर्वपेदिति कर्तृसमानाधिकरणस्य यच्छब्दस्यैवाधिकारिविशेषणसमर्पकत्वशक्तेः यस्येति यच्छब्देनोद्देशाच्च । इह च देवतासमानाधिकरणस्य यच्छब्दस्य तस्या आवृश्च्येते इति तदीयद्रोहप्रतिपादनमात्रोपक्षीणत्वेन कादाचित्कत्वेन वाधिकारिविशेषणत्वेन वा तत्समर्पणासमर्थत्वाद्देवतासंबन्धिनः कस्यचिदविधानेन देवताविशेषणयच्छब्दस्योद्देश्यसमर्पकत्वाभावाच्च न निमित्तत्वावगम इत्यर्थः । **अर्थवादेति** । इत्थमयं ग्रहः प्रशस्तो यदनेन देवतान्तरप्रयुक्तो दोषोऽपि निहन्यते इत्येवमर्थवादमात्रमित्यर्थः । सूत्रे श्रुतिसंयोगाद्देवतान्तराय निमित्तश्रुतिसंयोगादित्यर्थः ॥

**वैश्वानरश्च नित्यः स्यात्०** ॥ १२ ॥ उख्यं उखायांभवमग्निं पूर्ववदिति वर्तमानापदेशात्पूर्ववत्संवत्सराभरणनिमित्तार्तिपरिहारकीर्तनमर्थवादमात्रमित्यर्थः । इहापि यच्छब्दो नोद्देश्यसमर्पकः यः संवत्सरमभृत्वाग्निं चिनुते स आर्तिं प्राप्नोतीत्येवमन्वितस्य यच्छब्दस्योद्देश्यसमर्पकत्वायोगादिति भावः । **यच्छब्द इति** । अप्राप्तस्याभरणस्यानुवादायोगादालस्यादिना प्राप्तस्याभरणस्याभृत्वेत्यनेनानुवादे सति यो न बिभृयात्स निर्वपेदित्यर्थपर्यवसानेन यच्छब्दस्योद्देश्यसमर्पकत्वं संभवतीति भावः । सूत्रार्थस्तु—त्रीण्येतानि हवींषि भवन्ति त्रय इमे लोका एषां लोकानां रोहायेति नित्यैर्लोकैराग्नावैष्णवादित्यवैश्वानराणां हविषां समानसंख्यत्वोक्त्या लोकवदेव हविषां नित्यत्वावगमाद्वैश्वानरो नित्यः स्यादिति ॥

**षट्चितिः पूर्ववत्स्यात् ॥ १४ ॥** आतिदेशिकी सङ्गतिः सूचिता । चितयः इष्टकाप्रस्तराः । नित्या नैमित्तिकी

---

१ पूर्ववत्त्वात्.

किमियं षष्ठी चितिर्नित्या नित्य एवाग्निः षट्चितिकः उत स पञ्चचितिक एव । इदं तु चयनान्तरमे-कचितिकमप्रतिष्ठायां निमित्ते विधीयते इति । तत्र—'पूरणप्रत्ययो न स्यात्षट्संख्यापूरणाद्विना ॥ पञ्चभिः सहिता चैषा पूरयेत्तां न केवला ॥' नहि केवला चितिः षष्ठीति शक्या वक्तुम् । तस्मा-न्नित्य एवाग्निः षट्चितिकः । नैवम् ।—'यच्छब्दो ह्यप्रतिष्ठायाः स्पष्टमाह निमित्तताम् ॥ अभि-धानक्रियापेक्षं षट्संख्यापूरणं भवेत् ॥' नित्याः पञ्चचितयः प्रागभिहिताः ततः परमियं नैमित्तिक्य-भिधीयत इत्यभिधानापेक्षं षष्ठीत्वमुपपन्नमिति न यच्छब्दावगतनिमित्तापह्नवः शक्यते कर्तुमिति नैमित्तिकीयम् ॥

पिण्डपितृयज्ञस्यानङ्गताधिकरणम् ॥ ८ ॥

**पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ [तुल्यवत्प्रसंख्यानात् ॥ २० ॥ प्रतिषिद्धे च दर्शनात् ॥ २१ ॥]**

**क्रत्वङ्गं स्यान्न वा पिण्डपितृयज्ञः क्रतौ हि सः ॥ अमावास्योक्तितो मैवं तत्कालोक्तेः पुमर्थता ॥ ११ ॥**

अमावास्यायामपराह्णे पितृयज्ञेन चरन्तीत्यनारभ्याधीतः पितृयज्ञः क्रत्वर्थः उत पुरुषार्थ इति संशये कर्मवचनेनामावास्याशब्देन समभिव्याहारात्तदङ्गत्वम् । यद्यपि कालस्यापि साधारणो-ऽयं शब्दस्तथापि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गीक्रियते । तस्मात्क्रत्वर्थ एवायमाहिताग्नेः । अनाहिताग्नेरप्यनाहिताग्निना कार्य इति विहितः । तस्य क्रत्वभावाद्भवतु पुरुषार्थः । तथाच भगवता मनुना 'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन' इति वदता दर्शाङ्गत्वं प्रदर्शितम् । अनङ्गं हि तेन विना क्रियते तस्माद्दर्शाङ्गम् । 'नैवं साधारणत्वेऽपि सामानाधिकरण्यतः ॥ कालवाचित्वमेव स्यात्त-त्सापेक्षश्च कर्मणि ॥' यद्यपि तावत्साधारणोऽमावास्याशब्दस्तथाप्यपराह्णसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते । नचायमतीतसाधारणः । काले हि निरपेक्षोयं कालसंबन्धापेक्षया तु

---

वेति संशयं फलभेदं सूचयन्नाह—**किमिति । पूरणेति ।** 'तस्य पूरणे डडि'ति पूरणार्थे विहितः प्रत्ययः षट्संख्यापूर-कत्वं विना न स्यादित्यर्थः । **नन्वे**कचितिकस्यापि चयनान्तरस्य पूर्वकृतपञ्चचितिकप्रयोगानन्तराप्रतिष्ठानिमित्तकत्वेन पूर्वप्र-योगसापेक्षत्वात्तद्गता पञ्चचितीरपेक्ष्य पूरणप्रत्ययोऽस्त्वित्यत आह—**नहीति ।** द्वित्वादिसंख्यायाः एकोपाध्यवच्छेदमन्त-रेणानुपपत्तेरिहोपाध्यन्तराभावात्प्रयोगस्यैवोपाधित्वे सत्येकस्मिन्नेव प्रयोगे षण्णामपि चितीनामनुष्ठेयत्वात्र प्रयोगान्तरस्थचिती-रपेक्ष्य संख्यापूरणम् । एवंचोपसंहारस्थपूरणप्रत्ययस्य ऋगादिशब्दवन्नेतुमशक्यत्वादुपक्रमगतस्यापि यच्छब्दस्यैवार्थवादार्थतया नेयत्वमिति भावः । एकचितिप्रयोगस्याग्निं चित्वेत्यनेनाग्निं चित्वा सौत्रामण्या यजेतेत्यादिवत्साग्निचित्यक्रतुप्रयोगानन्तर्यप्र-तीतेरेकस्मिन्प्रयोगे षण्णां चितीनामनुष्ठेयत्वानुपपत्तेः पृथक्प्रयोगे सत्यार्थवादिकफलं नैमित्तिकं चित्यन्तरमेव न्याय्यमित्याह —**यच्छब्द इति । अभिधानेति ।** अभिधानक्रियोपाधिका या षट्संख्या तत्पूरणार्थकत्वेन पूरणप्रत्यय उपपद्यत इति नोपसंहारान्यथानयनाशक्यत्वमिति भावः । तदेवोपपादयति—**नित्या इति ।** सूत्रार्थस्तु—षट्चितिकोऽग्निः पूर्ववद्धि-ग्रहवन्नित्यः स्यात् । यद्वा पूर्ववत्पञ्चचितिवत्पञ्चचितय इव षष्ठ्यपि चितिर्नित्या स्यादिति यावदिति ॥

**पितृयज्ञः स्वकालत्वात्०** ॥ १९ ॥ प्रकरणेनाङ्गत्वं व्यावर्तयितुमाह—**अनारभ्येति । कर्मवचनेनेति ।** आ-गारे गावो वास्यन्तामितिवत् शेषिण्यपि सप्तम्युपपद्यत इति भावः । **फलेति ।** अनेन पूर्वत्रार्थवादोपनीतत्वात्फलस्यास्तु नैमित्तिकत्वं प्रकृते त्वत्यन्तानुपस्थितं फलं कल्पनीयमित्ययुक्तमनङ्गत्वमिति वैषम्येण प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । नच कर्मपरत्वे लक्षणादोषः कालवाचित्वे उद्देश्यस्य कालस्यापराह्णविशेषणायोगेनापराह्णपदानर्थक्यप्रसङ्गेन तदानर्थक्यापे-क्षया लक्षणाया ज्यायस्त्वादिति भावः । **नन्वे**वमप्यनाहिताग्नेर्दर्शाभावेन कथं पितृयज्ञस्य दर्शाङ्गत्वम् । नचानाहिताग्नि-विषयस्य पुरुषार्थत्वमाहिताग्निविषयस्य क्रत्वर्थत्वं च संभवति । तथात्वेऽमावास्यायामपराह्ण इत्यमावास्याशब्दस्याहिताग्नि-पिण्डपितृयज्ञे कर्मपरत्वमनाहिताग्निपिण्डपितृयज्ञे कालपरत्वमिति वैरूप्यापत्तेरित्यत आह—**अनाहिताग्नेरिति ।** अना-हिताग्निविहिताग्रयणादिवत्तस्य स्मार्ताग्निसाध्यकर्मान्तरत्वान्न कोऽपि दोष इति भावः । **सामानाधिकरण्येति ।** कर्मवा-चित्वेऽमावास्यापराह्णशब्दयोरेकार्थपरत्वाभावात्सामानाधिकरण्यं न स्यादिति भावः । कालस्योद्देश्यत्वेऽपि विधेयत्वेन तद्विशे-षणविवक्षाया ग्रहाधिकरणे भट्टसोमेश्वरेणोक्तत्वादमावास्याशब्दस्य कालवाचित्वेऽपि नापराह्णशब्दानर्थक्यम् । यद्वा पराह्णशब्द एवोद्देश्यकः । तस्य च सापेक्षत्वात्तद्विशेषणामावास्याविवक्षोपपद्यत इति ध्येयम् । **कालसंबन्धेति ।** अमावास्याशब्दस्य

कर्मणि वर्तते। तस्मात्कर्मसमभिव्याहाराभावादनङ्गम्। मनुवचनस्य त्वयमर्थः। श्राद्धशब्देन मासिमासि श्राद्धमुच्यते। दर्शशब्देनाप्यमावास्याकालः। तदयमर्थः—अमावास्यायामेवाहिताग्निः श्राद्धं कुर्यान्न तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणः पितॄन्प्रीणातीति स्मृत्यन्तरवशादन्येष्वप्यहःसु कुर्यादिति। एवंच स्मृत्यन्तरमनाहिताग्निविषयं भविष्यति। तत्सिद्धं पितृयज्ञस्यानङ्गत्वम्॥

रशनाया यूपाङ्गताधिकरणम्॥ ९॥

**पश्वङ्गं रशना स्यात्तदागमे विधानात्॥२२॥ [यूपाङ्गं वा तत्संस्कारात्॥२३॥ अर्थवादश्च तदर्थवत्॥ २४॥]**

रज्जुर्द्वितीया पश्वर्था यूपार्था वान्वयात्पशौ॥ पश्वर्था त्रिवृता यूपं परिवीयेति यूपगा॥ १२॥

'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोती'ति येयं सवनीयस्याङ्गभूता द्वितीया रशना सा किं पशुबन्धनार्था उत यूपसंस्कारार्थेति संशये—'यूपार्था सत्यदृष्टार्था दृष्टार्था पशुबन्धनी॥ अनपक्रमणात्तेन पश्वङ्गं रशना भवेत्॥' नहि यूपस्य रशना किंचिद्दृष्टं करोति पशोस्त्वनपक्रमणं कुर्वती भवति दृष्टार्था। तेन त्रिवृत्प्रातिपदिकाभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते त्रिवृद्युक्तमाग्नेयमुपाकरोतीति। सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते। येयं त्रिवृच्छब्दे तृतीया याच यूपं परिव्ययतीति द्वितीया तत्सर्वं प्राप्तानुवादः। यूपे हि पशुबन्धश्चोदकप्राप्तः[१]। यश्च रशनया यूपे पशुं बध्नाति सोऽवश्यं यूपे रशनां व्यापारयति। यश्च व्यापारयति स शक्यते तया यूपं परिव्ययतीति वक्तुमतोऽयमनुवादः इति पश्वर्था रशना चोदकप्राप्ता चान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते। ततः पश्वर्था रशना तदर्थं च परिव्याणं यूपे

---

कर्मविशेषसंज्ञात्वेऽपि तत्र यथाकालसंबन्धमपेक्षाप्रवृत्तिस्तथोद्भिदधिकरण एवोक्तमस्माभिः। **मनुवचनस्येति**। अत्रापि दर्शशब्द उक्तयुक्तेः कालपरो न कर्मपरः। कालपरत्वे च सति श्राद्धशब्दो न पिण्डपितृयज्ञपरः। अस्य प्रत्यक्षश्रुतितोऽमावास्यायामेव विहितत्वेन तदन्यत्राप्राप्त्या तन्निषेधायोगात्। तस्मात् कालवाचिदर्शशब्दानुगुण्याच्छ्राद्धशब्दोऽपि मासिश्राद्धपर इति भावः। **ननु** मासिमासि यदा दर्श इत्यादिस्मृतेर्मासिश्राद्धस्याप्यमावास्याव्यतिरिक्तकालो न प्रसक्त इत्याशङ्क्यापस्तम्बवचनात्प्राप्तिमाह—**सर्वेष्विति**। प्रयोजनं पूर्वपक्षे दर्शविकारेषु प्रवृत्तिः, सिद्धान्ते तु न प्रवृत्तिः। 'आधानं पौर्णमास्यां चेद्वृत्तं दर्शे करिष्यते॥ अनङ्गं पितृयज्ञश्चेत्सत्रे च न करिष्यते' इति भाष्योदाहृतश्लोकोक्तं च। सूत्रार्थस्तु—अमावास्याशब्दस्य कालवाचित्वेन स्वशब्दाभिहितकालयोगित्वात्पितृयज्ञो नाङ्गं स्यादिति॥

**पश्वङ्गं रशना स्यात्०॥ २२॥** पितृयज्ञस्य दर्शाङ्गत्वे कालवाचकशब्दबाधवदिह कस्यचिद्बाधाभावात्पश्वङ्गं रशनेति प्रत्यवस्थानात्सङ्गतिः। द्वितीया चोदकप्राप्तरशनातो द्वितीयेत्यर्थः। **ननु** त्रिवृतेति तृतीयान्तस्य पश्वन्वयायोग्यत्वान्न पश्वङ्गत्वमित्यत आह—**तेनेति**। तृतीयां पृथक्कृत्य केवल त्रिवृत्प्रातिपदिकार्थस्यैव पश्वन्वय इष्यते। नच तत्रायोग्यत्वम्। नच तृतीयापृथक्करणे प्रातिपदिकार्थस्य पश्वङ्गत्वबोधकश्रुत्यभावात्तदनङ्गत्वापत्तिः। समभिव्याहारलक्षणाद्वाक्यादेव तदङ्गत्वसंभवादित्यर्थः। तदेवाभिनीय दर्शयति—**त्रिवृद्युक्तमिति**। ननु त्रिवृद्युक्तमाग्नेयमित्युक्ते त्रिवृतोऽपि देवतान्वयात् प्रदेयत्वं स्यादित्याशङ्क्य पशोर्युगपदेव त्रिवृता देवतया चान्वयेन त्रिवृद्युक्तत्वाकारेण देवतान्वयाभावान्न त्रिवृतः प्रदेयत्वं तस्माद्बन्धनद्वारा पश्वङ्गत्वमेव त्रिवृतः। नचैवमपि श्रुतोपाकरणद्वारैव तदङ्गतास्तु किमश्रुतबन्धनेनेति वाच्यम्। चोदकप्राप्तबर्हिर्भ्यामेवोपाकरणसिद्ध्या तादर्थ्ये सत्यदृष्टार्थत्वापत्तेः। तस्माद्दृष्टेनैव बन्धनेन तदङ्गत्वमित्याह—**साचेति**। **नन्वेवं** त्रिवृतेति तृतीयाया अनन्वयः। नच तथासतीत्थंभूतलक्षणां तृतीयामाश्रित्य तृतीयान्तस्यैव पशुनान्वयोऽभिधीयतामिति वाच्यम्। कारकविभक्तौ संभवन्त्यामित्थंभूतलक्षणतृतीयास्वीकारायोगात्। एवमपि यूपं परिवीयेत्यंशस्यानन्वयश्चेत्यत आह—**येयमिति**। व्यापारयति लिङ्गयतीति यावत्। एवंच यूपे रशनां व्यापार्येत्यर्थपर्यवसानाद्यूपमिति द्वितीयानुवादत्वात्सप्तम्यर्था। यद्वा पश्वर्थापि हि रशना यूपे व्यापारिता सती तस्य दृढिमानं जनयत्येवेत्यार्थिकसाध्यत्वाभिप्राया द्वितीयेति भावः। **ननु** पशुबन्धनार्था चेत्तस्यैव चोदकप्राप्तरशनास्तीत्यत आह—**अन्येति**। सिद्धान्तेऽपि चोदकप्राप्तयूपसंस्कारकरशनान्तरस्याग्नीषोमीयकालिकस्य विद्यमानत्वाद्द्वितीयस्यां रशनायां समुच्चयस्यावश्यंवाच्यतया आवश्यके च समुच्चये सति दृष्टार्थत्वाय पशुरशनयैव समुच्चय इति भावः। यूपार्थत्वं हि रशनायाः परिव्याणद्वारा वाच्यम्। तदेव त्वसिद्धम्। परिव्याणस्यैव रशनार्थत्वादित्याशयेनाह—**तदर्थं चेति**। रशनाया भाव्यमानमपि परिव्याणं न यूपार्थं अदृष्टार्थत्वप्रसङ्गात्,

---

१ पशुर्बन्धव्यश्चोदकप्राप्तेः.

तस्याः प्रतिमोचनम् । प्रतिमुक्ता हि सा अनपक्रमणाय कल्प्यते । यूपो हि स्थाणुस्थानीयः तदर्थं एवेति सर्वमेव दृष्टार्थं भवति । तस्मात्पश्वर्थेत्येवं प्राप्ते ब्रूमः—'यद्यदृष्टार्थता यूपे स्यादेवं क्लिष्टकल्पना ॥ यूपार्थो सत्यपि त्वेषा दृष्टार्था दार्ढ्यजन्मनः ॥ परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते ॥ रशना च परिव्याणशेषभूता तृतीयया ॥ सर्वं तद्विपरीतं स्यात्पश्वर्था रशना यदि ॥ यूपार्था रशना तस्माद्भवेन्न पशुबन्धनी ॥' केचित्तु पूर्वपक्षेऽपि न पशुबन्धनार्था रशना किंतु यूपस्यैव परिव्याणं पशूपाकरणस्यारादुपकारकमिति पूर्वः पक्षः । सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः । तथासत्यनुष्ठानाविशेषान्निष्प्रयोजना चिन्ता स्यात् । पशुगणे त्वेकयूपे सकृत्कृतमेव परिव्याणमगृह्यमाणविशेषत्वात्तन्त्रेण सर्वेषामुपकुर्यादिति प्रतिपशु रशना कार्येति प्रयोजनं न सिद्ध्येदित्यास्तां तावत् ॥

स्वरोः पश्वङ्गताधिकरणम् ॥ १० ॥

**स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥ [निष्क्रयश्च तदङ्गवत् ॥ २६ ॥ पश्वङ्गं वा तदर्थः स्यात् ॥ २७ ॥ भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥]**

स्वरुर्यूपे पशौ वाङ्गं यूपस्येत्युक्तितोऽग्रिमः ॥ स्वरुणा पशुमअ्ज्यादित्युक्तेः पश्वङ्गता स्फुटा ॥ १३ ॥

**यूपस्य स्वरुं करोति स्वरुणा पशुमनक्तीति, किं यूपार्थः स्वरुः तस्य पश्वञ्जनं प्रतिपत्तिः उत पश्वर्थस्तस्य यूपादुपादानमिति संशये यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्यं मन्यते । 'स्वरुणा**

---

किंतु दृष्टार्थत्वाद्रशनार्थमेव परिव्याणमित्यर्थः । एवंच परिव्याणस्य यूपार्थत्वासंभवाद्यूप एव परिव्याणार्थः सन् रशनार्थ इत्याह—**यूपो हीति** । यत्र क्वचन स्थाणौ प्रतिमुक्ता हि रशना पश्वनपक्रमणाय कल्प्यते नान्यथा तेन स्थाणुस्थानीयत्वाद्यूपोऽपि रशनार्थ इत्यर्थः । **दार्ढ्येति** । यूपस्यापि किंचिच्छिद्रदेशशङ्कायां रशनया परिव्याणे सति तत्परिहाराद्दार्ढ्यं जायत इति भावः । **सर्वमिति** । इदंचोपलक्षणं पूर्वपक्षे आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति वाक्यान्तरमनर्थकं स्यात् । परिव्याणस्य यूपसंस्कारार्थत्वस्य पूर्वपक्ष्यनभिमतत्वेन तद्विधायकत्वेनार्थवत्वासंभवादिति द्रष्टव्यम् । सिद्धान्ते तु तद्वाक्यं यूपसंस्कारकत्वेन परिव्याणविधायकं इदं तु वाक्यं तद्वाक्यप्राप्तमाश्विनग्रहणोत्तरकालं परिव्याणं तत्रार्थप्राप्तां रशनां तस्याश्च रशना च लिङ्गदर्शनादित्यधिकरणन्यायेन रशनाधर्मसाधारण्यप्राप्तं त्रिवृत्तं चानूद्य परिव्याणोत्तरकाले यागं विधत्ते इत्युभयोरपि सार्थक्यमिति । **ननु** पशुबन्धनार्थत्वाभावे बन्धनद्वारा पश्वङ्गत्वासंभवात्कथं प्राभाकरपक्षे पूर्वपक्षे रशनायाः पश्वङ्गत्वमिति पृच्छति—**किंत्विति** । उत्तरमाह—**यूपस्येति** । पश्वर्थतया सप्रयोजनं यदुपाकरणं तस्यारादुपकारकं यूपपरिव्याणं क्त्वाप्रत्ययार्थसमानकर्तृकत्वबलात् । रशना च तृतीयया परिव्याणार्था न त्वस्मदीयपूर्वपक्ष इव परिव्याणं रशनार्थम् । ततश्च पश्वर्थोपाकरणार्थपरिव्याणद्वारा रशनायाः पश्वङ्गत्वमिति पूर्वः पक्ष इत्यर्थः । यूपएव पशोर्बन्धनीयतया बन्धनार्थत्वेऽपि यूपे परिव्याणसंभवात्तद्व्यावृत्त्यर्थं यूपस्यैवेत्येवकारः । **सिद्धान्तस्त्विति** । परिव्याणस्य क्त्वाप्रत्ययादेककर्तृकत्वावगतौ तस्य प्रयोगैक्यविमर्शाधीनाङ्गत्वधीरिति परिव्याणस्योपाकरणाङ्गत्वं विलम्बितप्रतीतिकं यूपाङ्गत्वं तु द्वितीयया झटित्यवगम्यत इति तदेव युक्तम् । ततश्च रशनापि परिव्याणद्वारा यूपार्थैव न पश्वर्थेति सिद्धान्त इत्यर्थः । **तथासतीति।** यूपस्यैवानया रशनया परीव्याणं नत्वनया यूपे पशुर्बन्धनीय इति पूर्वपक्षकरणे पूर्वपक्षसिद्धान्तयोश्चोदकप्राप्तयैकयैव रशनया पशोर्बन्धनमिति नास्त्यनुष्ठानविशेष इत्यर्थः । स्वमते तु ताभ्यामुभाभ्यां पशुर्बध्यत इति पूर्वपक्षवाक्येनैवानुष्ठानविशेषो दर्शितो बोध्यः । किंच भाष्ये साग्निकक्रतौ एकयूपे एकादशपशूनां नियोजने प्रतिपशु रशना कार्या पूर्वपक्षे । सिद्धान्ते तु यूपसंस्कारार्थाया रशनाया भेदहेत्वभावादैकरशन्यमेवेति । सवनीयविकृतिष्वेकादशिनेषु यत्प्रयोजनमुक्तं तदपि न सिध्येत् । परिव्याणमुपाकरणस्यारादुपकारकमङ्गमिति तदीयपूर्वपक्षे सकृत्कृतस्यैव परिव्याणस्यागृह्यमाणविशेषतया तन्त्रेण सर्वपशूपाकरणेषूपकारकत्वसंभवेनावृत्तौ प्रमाणाभावात्प्रतिपशु रशनाभेदानुपपत्तेरित्याह—**पशुगण इति** । स्वपक्षे तु बन्धनार्थत्वेन दृष्टार्थत्वात्तत्रत्यपशुबन्धनार्थं रशनाभेद आवश्यक इति भावः । **ननु** परिवीयोपाकर्तव्यं नान्यथा तेनैकस्मिन्परिवीयोपाकृते परस्यापि तथैवोपाकर्तव्यत्वात्तदर्थं परिव्याणावृत्तौ रशनाभेदः सिध्येदित्यत आह—**इत्यास्तामिति ।** एकस्मिन्परिव्याणे सर्वेभ्यः पूर्वमनुष्ठिते सर्वे परिवीयोपाकृता भवन्त्येव । न चानन्तर्यार्थं परिव्याणावृत्तिर्युक्तेति तन्त्ररत्न एवोक्तमिति भावः । सूत्रार्थस्तु—पश्वङ्गं रशना स्यात् पश्वागमे विधानात् वाक्ये पशुसंबन्धमागमय्य विधानादिति यावदिति ॥

**स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥** रशनावत्स्वरुरपि यूपाङ्गमिति प्रत्यवस्थानात्सङ्गतिः । **तस्य यूपादिति ।** इह स्वरोर्यूपादुपादानमित्येवं न व्युत्पाद्यम् । तथासति यूपस्य स्वरुं करोतीत्यस्य यूपात्स्वरोरुपादानार्थकत्वस्यात्र स्थिततया द्वितीयपादाद्यपूर्वपक्षानुत्थितेः । तस्मादिह स्वरुः पश्वञ्जनार्थमित्येतावन्मात्रमेव व्युत्पाद्यमित्येतदधिकरणसिद्धं पश्वञ्जनार्थत्वमङ्गीकृत्यैव तत्र स्वरोः खदिरतक्षणादिप्रयोजकत्वादिविचारः । एवं च मुख्यस्य यूपशब्दस्य लक्षणाप्रसङ्गाद्यत्करोतेरुपादाना-

**पशुमित्येवं शेषशेषिविभक्तितः ॥ स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता ॥' यूपस्येत्यवयवव्यतिरे-कजनिता षष्ठी न तादर्थ्यं गमयतीति पश्वर्थः स्वरुः ॥**

आघारादीनामङ्गताधिकरणम् ॥ ११ ॥

**दर्शपूर्णमासयोरिज्याप्रधानान्यविशेषात्[1] ॥ २९ ॥ [अपि वाङ्गानि कानिचित्, येष्वङ्गत्वेन संस्तुतिः सामान्यो ह्यभिसंबन्धः ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥ अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥ पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वम्, तत्संनिधावसंयुक्तं तदङ्गं स्यात्, भागित्वात्कारणस्याश्रुतश्चान्यसंबन्धः ॥ ३४ ॥ गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसंबन्धः ॥ ३६ ॥ उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥]**

**आघारादेश्च मुख्यत्वं न वाग्नेयादिवत्तु तत् ॥ षण्मुख्या नामतः सिद्धाः शेषा अन्येऽङ्गसंस्तुतेः ॥ १४ ॥**

दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यमुताग्नेयादीनामेककालयोगिनामितरेषां तदङ्गत्वमिति चिन्त्यते । य एवंविद्वानित्येवं संयुक्तावनुवादकौ न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्थितं द्वितीये । अधुना तु तदेव प्रयोजनं सिद्ध्यति नेति चिन्त्यते—'तत्राख्यातानुसारित्वात्संज्ञाया राजसूयवत् ॥ तस्या विशेषतो वृत्तेः सर्वयागप्रधानता ॥' नामधेयं तावदाख्यातानुसारि यत्राख्यातं तत्र वर्तते नतु यत्र नाम तत्राख्यातम् । आख्यातं चाविशेषात्सर्वानेव रूपवतः प्रकृतान्यागानुपादाय फले विनियुङ्क्ते । अतो नामाऽव्युत्पन्नं द्विवचनान्तप्रतिरूपकं सर्वत्र वर्तेत इति सत्यामप्यनुवादेन समुदायद्वयसिद्धौ सर्वेषां प्राधान्यम् । उच्यते—'यद्धि नामाप्रसिद्धार्थं तदाख्यातवशं भवेत् । इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् ॥ प्रातिपदिकं तावत्कालद्वयसंयोगादाग्नेयादिषु प्रसिद्धार्थं द्विवचनमपि य एवं विद्वानित्येवं संयुक्तानुवादद्वयपरिकल्पि-

---

र्थत्वं तत्र व्युत्पादितं तदेवात्र सिद्धान्ते वस्तुगतिमनुरुध्योक्तं बोध्यम् । स्वरूपत्तिवाक्य एव शेषिलाभे वाक्यान्तरगतशेषिपरिग्रहायोगाद्यूपस्येति षष्ठी शेषित्वपरैव स्वीकार्येत्याशयेनाह—**यूपस्येति** । स्पष्टशेषित्वार्थकविभक्तौ सत्यां संबन्धसामान्यार्थकषष्ठ्या शेषित्वप्रतिपादनायोगात् । स्वरोर्यूपार्थतायामदृष्टार्थत्वप्रसङ्गाच्चाञ्जनार्थ एव स्वरुरित्याह—**स्वरुणेति । अवयवेति ।** व्यतिरेकशब्देन तत्सहचरितसंबन्धलक्षणयावयवसंबन्धनिबन्धना षष्ठीत्यर्थः । यद्यपि दृष्टादृष्टसंस्कारसमूहात्मकयूपावयवत्वं स्वरोर्न संभवति तथापि तदाधारवृक्षावयवत्वाभिप्राया षष्ठीत्याशयः । प्रयोजनं पूर्वपक्षे सोमेऽग्नीषोमीयपश्वञ्जनेनैव प्रतिपत्तित्वे सिद्धे नानुबन्ध्यार्थे धारणं तथा पशुगणे यस्य कस्यचित्पशोरञ्जनम् । सिद्धान्ते तु यावदनुबन्ध्याञ्जनं धारणं पशुगणे च सर्वेषामञ्जनमिति । सूत्रार्थस्तु—स्वरुश्चापि यूपाङ्गं स्यात् यूपस्य स्वरुं करोतीत्यस्य षष्ठीबलेन स्वरुमन्तं यूपं करोतीत्यर्थपर्यवसानेन यूपैकदेशतया तदङ्गत्वौचित्यादिति ॥

**दर्शपूर्णमासयोः०** ॥ २९ ॥ इतरेषां कालयोगरहितानामाघारप्रयाजादीनामित्यर्थः । पौर्णमास्यधिकरणपौनरुक्त्यमाशङ्क्याह—**य एवमिति** । राजसूयवदित्यनेन पादादौ राजसूयवाक्ये प्रक्रान्तो योयं समप्रधानाङ्गाङ्गित्वविचारस्तत्प्रसक्तविचारान्तराणि परिसमाप्य इदानीं स एव विचारः क्रियत इति सङ्गतिमपि सूचयति । **नन्वव्युत्पन्नत्वाद्राजसूयनाम्नो** यजिपारतन्त्र्यं युक्तम् । नच (तु) दर्शपूर्णमासनाम्नः । तस्य विद्वद्वाक्येन व्युत्पादितत्वेन प्रसिद्धार्थतया प्रधानभूतस्याप्याख्यातस्य कांस्यभोजिन्यायेन नामानुवृत्तेरेव न्याय्यत्वादित्यत आह—**नामेति** । विद्वद्वाक्येन समुदाय एव नाम्नो व्युत्पादनात्समुदायस्य च यागत्वाभावेन तत्परत्वे यजेर्लक्षणाप्रसङ्गेन प्रधानस्याख्यातस्य स्वार्थपरित्यागापत्त्या प्रकृते कांस्यभोजिन्यायानवतारेणाख्यातस्य नामानुवर्तनासंभवात्फलवाक्यगतं नामाव्युत्पन्नं द्विवचनप्रतिरूपकमाख्यातानुरोधात्सर्वेषु प्रवर्तेत इत्येव स्वीकार्यमिति भावः । समुदायसमुदायिनोरनतिभेदात्समुदायव्युत्पन्नस्यापि नाम्नः समुदाय्युपस्थापकत्वे सत्याख्यातमपि तत्रैव वर्तितुमर्हति । इतरथा विद्वद्वाक्येन नामव्युत्पादनस्यात्यन्तमेव वैयर्थ्यापत्तेरित्यभिप्रेत्य श्लोकं व्याचष्टे—**प्रातिपदिकमिति** । ननु विद्वद्वाक्ये पौर्णमास्यमावास्याशब्दावेव व्युत्पन्नौ नतु पूर्णमासशब्दो दर्शशब्दश्च तत्कथं नाम्नः

---

१ रिज्यप्राधान्यप्रविशेषात.

तत्समुदायद्वयाभिप्रायं प्रसिद्धार्थमेव। नच दर्शशब्दस्याप्रसिद्धार्थत्वमन्वारम्भणीयावाक्यशेषेऽमावास्यापर्यायत्वेन प्रसिद्धत्वात्। तदेव प्रसिद्धार्थविशेषवाचि नामधेयं शक्नोत्याख्यातं सामान्यवचनं स्वविषयेऽवस्थापयितुमिति षण्णामेव प्राधान्यमितरेषां तु प्रकरणात्तदङ्गत्वम्॥

ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम्॥ १२॥

**ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम्॥ ३९॥ [गुणानां तूत्पत्तिवाक्येन संबन्धात्कारणश्रुतिः, तस्मात्सोमः प्रधानं स्यात्॥ ४०॥ तथा चान्यार्थदर्शनम्॥ ४१॥]**

मुख्या न वा दीक्षणीया मुख्या स्यात्सोमसाम्यतः॥ ज्योतींषि यस्य स्तोमाः स्युरिति सोमैकमुख्यता॥१५॥

दीक्षणीयाग्नीषोमीयादीनिष्टिपशुयागान्[1]सोमयागं च प्रकृत्य श्रूयते 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति। तत्र चिन्त्यते किं सर्वयागानां फलसंबन्धेन प्राधान्यं उत सोमयागस्यैवेतरेषां तदङ्गत्वमिति। 'तत्राख्याताविशेषेण सर्वयागप्रधानता॥ नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि॥ ज्योतिराख्या नहि स्तोमाः प्रसिद्धाः कस्यचिद्यजेः॥ यत्रावयवशो वृत्तिर्नामधेयस्य गम्यते॥ त्रिवृदादिषु तच्छब्दः स्तुतिमात्रतयोदितः॥ ननु स्तोमाभिधायित्वं ज्योतिःशब्दस्य तावता॥ अस्तु वा त्रिवृदादीनां ज्योतिःशब्दाभिधेयता॥ तथापि सर्वयागानां तत्संबन्धात्प्रधानता॥ स्तोमा हि सर्वयागानामङ्गं स्युरविशेषतः॥ सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते॥ अतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः॥ सोमयागेन संयुक्ताः स्तोमा वाक्येन चेन्न तत्॥ ग्रहणस्तोत्रयोर्वाक्ये कालार्थासङ्गतिर्यतः॥ द्वयोरपि कृतार्थत्वात्स्तोत्रस्य ग्रहणस्य च॥' स्तोत्राणि तावदाज्यैः स्तुवत इत्यादिवाक्योत्पन्नानि प्रकरणाद्यागा-

---

प्रसिद्धार्थत्वमित्यत आह—**दर्शशब्दस्येति**। इदमुपलक्षणं पूर्णमासशब्दस्यापि। तद्वाक्यशेषे पौर्णमासीपर्यायत्वेन प्रसिद्धार्थत्वादित्यपि द्रष्टव्यम्। तथाच 'दर्शो वा एतयोः पूर्वः पूर्णमास उत्तरः अथ यत्पौर्णमासीं पूर्वमारभते तदयथापूर्वं क्रियते तत्पूर्वमारभमाणः सरस्वत्यै चरुं निर्वपेत् सरस्वते द्वादशकपालममावास्या वै सरस्वती पूर्णमासः सरस्वानुभावेतौ यथापूर्वं कल्पयित्वारभत' इत्यत्र दर्शो वा एतयोरिति दर्शशब्देन निर्दिष्टस्यामावास्या वै सरस्वतीत्यमावास्याशब्देन पुनः परामर्शादमावास्यादर्शशब्दयोः पर्यायत्वेन तथात्वात्पौर्णमासीं पूर्वमारभते इति पौर्णमासीशब्दनिर्दिष्टस्य पूर्णमासः सरस्वानिति पूर्णमासशब्देन पुनः परामर्शात्पौर्णमासपूर्णमासीशब्दयोरपि पर्यायत्वेन प्रसिद्धार्थत्वान्नाम्नः प्रसिद्धार्थत्वमित्यर्थः। प्रयोजनं पौर्णमास्यधिकरणवत्॥

**ज्योतिष्टोमे तुल्यान्य०॥ ३९॥** पूर्ववदाख्यातस्य नामधेयपरतन्त्रत्वशङ्कां वारयति—**नामधेयमिति**। तद्वदिह वाक्यान्तरे प्रसिद्धत्वाभावादिति भावः। ततश्च पूर्ववैलक्षण्येन प्रत्यवस्थानात्सङ्गतिः सूचिता। **ननु** वाक्यान्तरप्रसिद्धत्वाभावेऽपि ज्योतींषि स्तोमा अस्येति योगस्य सोमयाग एव संभवात्तदनुसारेणाख्यातस्यापि कांस्यभोजिन्यायेन तत्रैव वृत्तिर्युक्तेत्यत आह—**ज्योतिराख्या इति**। ज्योतिराख्यास्तोमा एव प्रसिद्धाः तथा ज्योतिराख्यस्तोमप्रसिद्धावपि ते स्तोमाः प्रकृतयागानां मध्ये यत्किंचिद्यागविशेषसंबन्धित्वेन न प्रसिद्धा इत्यर्थः। ननु 'त्रिवृत्पञ्चदशः सप्तदशः एकविंशः एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा' इति वाक्ये त्रिवृदादिषु ज्योतिःशब्दप्रयोगात्त्रिवृदादयः स्तोमा एव ज्योतिराख्याः प्रसिद्धा इत्यत आह—**त्रिवृदादिष्विति**। त्रिवृदादिषु ज्योतिःशब्दप्रयोगमात्रान्न तेषां ज्योतिराख्यत्वं तस्य कर्मदीप्तिहेतुत्वादिना गौणत्वेनाप्युपपत्तेरित्यर्थः। नच पूर्वपक्षे ज्योतिष्टोमशब्दो न गुणविधिः किंतूद्भिदादिवद्यौगिकनामधेयमेव। ततश्च ज्योतिराख्यस्तोमाभावे कथं यौगिकत्वमिति वाच्यम्। ज्योतिषामाहवनीयाद्यग्नीनां स्तोमोऽस्मिन्निति यौगिकत्वोपपत्तेरिति भावः। तत्संनिधौ स्तुत्यन्वययोग्यविध्यन्तराभावान्नायं स्तुत्यर्थो निर्देश इत्यनुशयादाह—**अस्तुवेति**। ननु त्रिवृदादयः स्तोत्रीयासंख्यारूपत्वात् स्तोत्रयुक्तयागस्यैवाङ्गं न प्रकृतसर्वयागानामित्यत आह—**स्तोमाहीति**। प्रकरणाविशेषेण स्तोत्रस्य सर्वयागाङ्गत्वात्स्तोत्रीयासंख्यात्मकाः त्रिवृदादयः स्तोमा अपि प्रकृतसर्वयागाङ्गमिति भावः। **नन्विदमयुक्तम्**। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति वाक्ये न स्तोत्रं सोमसंस्कारस्य ग्रहग्रहणस्य चमसोन्नयनस्य चाङ्गमित्यवगमाद्वाक्यसंयुक्तस्य स्तोत्रस्य प्रकरणेन सर्वयागार्थत्वायोगात्। एवंच स्तोमा अपि स्तोत्राङ्गभूताः तद्द्वारा सोमयागाङ्गमिति शङ्कते—**सोमयागेनेति**। तदिदं हि वाक्यं स्तोत्राणां ग्रहणाङ्गत्वं विधातुं न क्षमते। तथासति ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तूयादित्येवंरूपता वाक्यस्य स्यात्। तस्मादुपाकुर्यादित्युपाकरोति धातुप्रयोगायोगेनास्य वाक्यस्य

---

[1] दीष्टिपशुयागात्.

ङ्गानि कृतार्थानि। ग्रहणमप्यैन्द्रवायवादिवाक्ये विहितं सोमसंस्कारतया कृतार्थमेव। अतोऽत्र कालार्थ एव संयोगः। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति, नलङ्गाङ्गिभावः। अङ्गत्वं तु प्रकरणाविशेषात्सर्वयागान्प्रत्यवगम्यते। स्तोत्रीयासंख्या च स्तोमशब्देनोच्यते इति तत्संबन्धः सर्वेषामविशिष्टः।—तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः॥ प्राधान्यं सर्वयागानामिति प्राप्तेऽभिधीयते॥ ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम्॥ ज्योतिष्टोमपदं चेदं वाक्यशेषे निरुच्यते॥' 'ज्योतिष्टोमपदविवेचनार्थं ह्येतद्वचनं–त्रिवृत्पञ्चदशः सप्तदश एकविंश:,एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा' इति। तदिह यदि त्रिवृदादिकस्य स्तोत्रीयासंख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः अथापि न वाचकः सर्वथा तावत्तत्संबन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्तेत इत्येतावद्विस्पष्टमवगतम्। अतस्तत्संबन्धिन एव यागस्य फलमिदं नान्यस्य। नच दीक्षणीयादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसंबन्धः प्रसिद्धो यागानां स्तोत्राणां च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः। फलसंबन्धोत्तरकालभाविप्राकरणिकस्तोमसंबन्धाभिप्रायं छेदनादिविधाविव यूपपदं ज्योतिष्टोमपदमित्याश्रयणीयं स्यात। तत्र प्रसिद्धनिर्देशसरूपः शब्दो बाध्येत। सोमयागस्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावसंबन्धः स्तोत्रैरसिद्ध एव तथापि सोमग्रहणस्य स्तोत्रोपाकणरस्य च कालार्थोऽपि तावत्संयोगः प्रसिद्धः। ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति। तावता च सोमयागस्य स्तोमानां च संबन्धमात्रं सिद्धम्। तन्मात्रनिमित्तश्च बहुव्रीहिरिति शक्यते ज्योतिष्टोमपदेन सोमयागोऽभिधातुमिति। तद्विशेषितो यजिस्तस्यैव फलसंबन्धं करोति प्रसिद्धरूपे सति सोमयागेन दीक्षणीयादिषु वर्तेते तत्। ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां चतुर्थाध्यायस्य चतुर्थः पादः॥ ४॥

## इति चतुर्थाध्यायः समाप्तः॥

---

स्तोत्राणां ग्रहणाङ्गत्वविधायकत्वाभावाद्वाक्यसंयोगाभावेन स्तोत्राणां प्रकरणविनियोज्यत्वमव्याहतमेव। एवंचेदं वाक्यं कालार्थसंयोगपरमित्याशयो बोध्यः। स्तोत्राणां सर्वयागाङ्गत्वेऽपि कथं त्रिवृदादीनां सर्वयागसंबन्धसिद्धिरित्यत आह— **स्तोत्रीयासंख्येति**। त्रिवृच्छब्दस्य स्तोत्रीयानवकार्थत्वात्पञ्चदशादिशब्दानामपि 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति विहितडप्रत्ययान्तत्वेन स्तोमवाचकत्वात् स्तोमशब्दस्य च स्तोत्रसाधनीभूततद्गतसंख्यार्थत्वात् तस्याः स्तोत्राङ्गत्वात्स्तोत्रीयासंख्यात्मकाः त्रिवृदादयः स्तोत्रद्वारा सर्वेषां प्रकृतयागानामविशिष्टा इत्यर्थः। **ननु** फलवाक्ये फलसंयुक्तो याग उत्पद्यते तस्य च सोमवाक्येन द्रव्यं विधीयते तत्कथंभावापेक्षया च स्तोत्राद्यन्वय इति सोमयागस्यैव प्राधान्यम्। नच फलवाक्यस्य फलसंबन्धमात्रे तात्पर्यं लाघवात्। नतु कर्मोत्पत्तावपीति वाच्यम्। सोमवाक्यस्य सोममात्रविधायकत्वं लाघवान्न तु द्रव्यविशिष्टकर्मोत्पादकत्वमित्यपि वक्तुं शक्यत्वात्। नचैवमुत्पत्तिसंयुक्तफलावरोधात्सर्वेभ्यो ज्योतिष्टोम इति फलान्तरसंबन्धानुपपत्तिस्त्वापि पक्षे सर्वेभ्यो ज्योतिष्टोम इति वाक्ये उत्पत्तिवाक्यावगतकर्मरूपावगमकं न किंचित्पदमस्ति। ज्योतिष्टोमपदं च स्वर्गकामवाक्ये श्रुतं तत्फलयुक्तमेव प्रत्यभिज्ञायेदिति फलान्तरसंबन्धानुपपत्तेस्तुल्यत्वात्। तस्मात्स्वर्गफलयुक्ततया प्रत्यभिज्ञानेऽपि तदवगतितिरस्कारेण कर्मस्वरूपमात्रपरत्वमवलम्ब्य सर्वकामवाक्येन फलान्तरसंबन्धो बोध्यते इति त्वया वक्तव्यं तदेतन्ममापि तुल्यमिति चेदुच्यते। सति संभवे सर्वत्र भावार्थविधिर्न्याय्यः। फलवाक्यस्य कर्मोत्पादनार्थत्वे द्रव्यवाक्ये नामार्थस्य विधेयत्वं स्यात्। सोमवाक्यस्य द्रव्यविशिष्टकर्मोत्पादकत्वे तु फलवाक्ये फलस्याविधेयत्वात्कर्मैव विधेयमित्युभयत्र भावार्थविधिसिद्धिरित्यतः सोमवाक्ये एव कर्मोत्पत्तिर्न फलवाक्ये। भट्टसोमेश्वरस्तु फलवाक्ये यागविधौ भावनायाः फलंप्रति गुणत्वाद्यागंप्रति प्राधान्याच्च वैरूप्यं स्यात्। उद्भिदादौ तु गत्यभावादिदं वैरूप्यमङ्गीकृतं नत्विह गत्यन्तरसंभवादित्याह—**ज्योतिष्टोमपदमिति**। तदाहुः—कतमानि तानि ज्योतींषि य एतस्य स्तोमा इति प्रक्रमानुसारादिदं वाक्यं नामनिर्वचनार्थं नतु स्तुत्यर्थमिति भावः। ज्योतिःशब्दस्य गौणत्वेऽपि तद्योगेन ज्योतिष्टोमनामनिर्वचनोपपत्तिमभिप्रेत्याह—**अथापीति**। **अनिष्पत्तेरिति**। अनेनेदं फलं कर्तव्यमित्यवगमानन्तरभावात्कथमिदं कर्तव्यमित्याकाङ्क्षालक्षणप्रकरणस्येति भावः। **प्रसिद्धनिर्देशेति**। शब्दस्य स्वरसतः प्रसिद्धार्थप्रत्यायकं स्वाभाविकमिति भावः। **तन्मात्रेति**। बहुव्रीहेर्मत्वर्थे विधानात्संबन्धमात्रमपेक्षितं नाङ्गाङ्गित्वमिति भावः। दीक्षणीयादीनां विकृतिष्वनतिदेशातिदेशौ प्रयोजनम्। सूत्रार्थस्तु—यजिस्वरूपकारणाविशेषात्सर्वाणि कर्माणि समप्रधानानीति॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकासंज्ञायां चतुर्थाध्यायस्य चतुर्थः पादः॥ ४॥**

# पञ्चमोऽध्यायः ॥ ५ ॥

## पञ्चमाध्याये प्रथमः पादः ।

क्रमनिरूपणाधिकरणे श्रुतिबलीयस्त्वम् ॥ १ ॥

### श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ॥ १ ॥

द्वितीयादित्रये प्रोक्तं भेदशेषप्रयुक्तिभिः ॥ अनुष्ठेयमनुष्ठानक्रमः पञ्चम ईर्यते ॥ १ ॥
पदार्थानां क्रमो नैव नियतोऽथ नियम्यते ॥ अमानत्वादिनियतिर्नियतिर्वेदमानतः ॥ २ ॥
न विधेयो विधेयो वा क्रमो नैवाक्रियात्वतः ॥ क्रियाविशेषणत्वेन द्रव्यवद्युज्यते विधिः ॥ ३ ॥
दीक्षयित्वा गृहपतिं ब्रह्माणं दीक्षयेदिति ॥ क्रमः पाठाद्विधेयो वा पाठाद्दीक्षाविधिः श्रुतेः ॥ ४ ॥
द्वादशाहस्य सत्रत्वात्सर्वेषां याजमान्यतः ॥ चोदकेनैव दीक्षायाः प्राप्तेः क्रमविधिर्मतः ॥ ५ ॥

प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः । प्रयोज्यगोचरः क्रमस्ततः परं निरूप्यते । प्रथमं तावच्छ्रुतिलक्षणो वेदविहितः क्रमः पदार्थानामाश्रयणीयोऽथवाऽनियम इति संशये प्रयोगप्राशुभावादनियममाशङ्क्य वेदप्रामाण्यात्तद्विहित एव क्रमः समाश्रयणीय इति प्राक् सिद्धचोदनाप्रामाण्यमेव बहुकृत्वोपि पथ्यं वेदितव्यमित्येवं पुनः कथितमनेन सूत्रेण । अथवा भवति केषांचिन्मन्दधियामयं भ्रमः क्रमस्याभावार्थत्वेन स्वतो विधिर्न संभवति । नच द्रव्यादिवत्तद्विशेषणतया, क्रमस्यैकैकपदार्थाश्रयत्वेनानवगमात् संघातविशेषणत्वात्तस्य चाविधेयत्वादशब्दाभिहितत्वाच्च क्रमस्य विध्यन्वयासंभवादविधेय एव क्रम इति । तदपनोदनार्थमिदं सूत्रं आनुपूर्व्यं विधिलक्षणं द्रव्यादिवत् क्रियावि-

---

**श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात्** ॥ १ ॥ ननु यथा द्वितीये उत्पत्तिविधिव्यापारो व्युत्पाद्यस्तृतीये विनियोगविधिव्यापार इति भिन्नभिन्नविधिव्यापारव्युत्पादनाद्द्वितीयतृतीययोर्भेदः । एवं चतुर्थपञ्चमयोर्भेदो न संभवति । उभयत्रापि प्रयोगविधिव्यापारस्यैव व्युत्पादनात् । तस्मात्कथमध्यायभेदः कथं वा पौर्वापर्यं यथा विनियोगविधिप्रवृत्तेरुत्पत्तिविधिप्रवृत्तिपूर्वकत्वात्तद्द्वितीयतृतीययोः पौर्वापर्यमेवमिह पौर्वापर्यासंभवात्प्रयोगविधेः स्वप्रतिपाद्यार्थद्वये विरम्यव्यापाराभावेन युगपदेव प्रवृत्तेरिति शङ्कां निराकर्तुं वृत्तकथनपूर्वकं हेतुहेतुमद्भावं सूचयन् वर्तिष्यमाणं प्रतिजानीते—**प्रयुक्तिलक्षण इति** । सत्यमुभयत्रापि प्रयोगविधिव्यापार एव व्युत्पाद्यस्तथापि चतुर्थे केषामङ्गानां प्रयोगविधिः प्रयोजक इति प्रयोज्यविशेषविचारः । इहतु किं क्रमविशिष्टं प्रयोगं विधत्त इति तद्विधेयक्रमविशेषविचार इत्यर्थभेदादध्यायभेदः । तत्र यद्यपि प्रयोगविधिः प्रयोज्यवर्गे तद्गतक्रमे च युगपदेव व्याप्रियते तथापि इयन्ति अनेन प्रयोगवचनेन प्रयोज्यानीति यावदेकप्रयोगवचनप्रयोज्यमङ्गजातं नावधार्यते तावदनेन क्रमेणामीषामयं प्रयोगं विधत्त इति ज्ञातुं न शक्यते। क्रमस्य प्रयोज्यगोचरत्वेन तदनवधारणे क्रमज्ञानासंभवात् । तस्मादियन्ति अनेन प्रयोगवचनेन प्रयोज्यानीत्यवधारणाधीनं क्रमावधारणमिति प्रयोगविधेः प्रयोज्येष्वङ्गेषु तत्क्रमे च युगपत्प्रवृत्तावपि तत्प्रवृत्तिहेतुभूतयोः प्रयोज्यपरत्वक्रमविशेषपरत्वावधारणयोः परस्परं हेतुहेतुमद्भावात्तदवधारणार्थाध्याययोः पौर्वापर्यमित्यर्थः । श्रुतिलक्षणमित्येतत्सूत्रं भाष्ये त्रेधा वर्णितं तत्राद्यं तावदाह—**प्रथममिति** । अध्यायारम्भसिद्ध्यर्थतयेति शेषः । श्रुतिशब्दस्य श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यप्रमाणषट्कान्तर्गतक्त्वाप्रत्ययादिलक्षणश्रुतिपरत्वावधारणार्थमाह—**वेदविहित इति । प्रयोगेति** । नियमाश्रयणे तद्भेदपरिहारार्थं क्रमनियमानुसंधानयत्नादिना प्रयोगविलम्बात्तत्र प्राशुभावो न स्यादिति भावः । चोदनासूत्रेण पौनरुक्त्यमाशङ्क्याह—**प्रागिति** । अथवा **अभावार्थत्वेनेति** । अभावार्थस्य स्वतोऽनुष्ठेयत्वाभावादित्यर्थः । **तस्यचेति** । समिदादिविधीनामेकैकपदार्थगोचरत्वादिति भावः । नच प्रयोगविधेः सकलपदार्थगोचरत्वात्क्रमविधायकत्वं शङ्कनीयम् । अविनियुक्तस्य प्रयोगविध्यप्राप्यत्वादिति भावः । **अशब्देति** । ननु शब्दाध्याहाराङ्गीकारात् श्रुत्यर्थादिभिरुपस्थितस्य क्रमस्याध्याहृतशब्दाभिहितस्यामेयादिवाक्ये द्रव्यदेवतासंबन्धाक्षिप्तयागवद्विधेयत्वसंभवादिदमयुक्तमितिचेन्न । अध्याहारे मानाभावात् । यद्वा न स्वमतरीत्यायं ग्रन्थः प्रवृत्तः किंतु ग्रन्थकारस्य प्राभाकरमतनिरसनव्यग्रत्वात्तन्मतं निराचिकीर्षुः पूर्वपक्षव्याजेन तद्रीत्या इत्थं ग्रन्थं प्रवर्तितवान् । ते खल्वेवमाहुः । विधिः कार्यात्मा स्वस्य कार्यतासिद्ध्यर्थं यस्यानुष्ठानमाक्षिपति तद्विधेयम् । विधिश्च यस्य ग्राहक-

शेषणत्वात्। नचासौ संघातविशेषणं तस्यैकत्वेनाक्रमभाजनत्वात्। पदार्थाः यद्यपि प्रत्येकं न क्रममनुलम्बन्ति परस्परं मिलितास्तु संयोगादिवद्वितततिरूपं क्रमं बिभ्रति। बहवश्च ते प्रयोगविधिना विधीयन्त इति तद्विशेषणतया श्रुत्यादिसमर्पितः क्रमः सुखं विधीयते। अनभिहितोऽपि कथंचिद्बुद्धिमागतोऽपेक्षितो योग्यश्चेति प्राकृतोपकारवद्विकृतौ शक्यते विधातुमिति विधिलक्षणमेवानुपूर्व्यमाश्रयितव्यं भवति। अथवा न सर्वक्रमोऽत्र चिन्त्यन्ते किंतु श्रुतिक्रम एव क्वचिदुदाहरणे चिन्त्यते। द्वादशाहे सत्रभूते श्रूयते 'अध्वर्युः गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'ति। तदिदं किं दीक्षा विधीयते क्रमस्तु पाठतो लभ्यते, अथवा क्रम एव विधीयते श्रुतिक्रमोयमिति। तत्र 'वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे॥ तस्माद्दीक्षाविधिः पाठाद्दीक्षाणां लभ्यते क्रमः॥' उच्यते—'सर्वेषां यजमानत्वाद्दीक्षाप्राप्तैव चोदकात्॥ क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते॥' कर्तृनियमः कस्मान्न भवति। अध्वर्युरिमानिति चोदकप्राप्तत्वादेव। नन्विह यजमानानामेवार्त्विज्यकारित्वादध्वर्युर्नास्ति कथमस्य दीक्षायां प्राप्तिः। असतो वा कथं नियमः। नियमानुपपत्त्यैवाध्वर्यवं

---

ग्रहणेन विध्यैदमर्थ्यमवगतं तस्यानुष्ठानमाक्षिपति। ग्राहकग्रहणं नाम साधिकारस्य विधेः प्रयोजनरूपस्य संनिधिसमाम्नातैः स्वयमप्रयोजनभूतैः प्रयोजनप्रयोजनीभावेनान्विताभिधानम्। नचैवंभूतं ग्राहकग्रहणं शब्दानभिहितस्य क्रमस्य संभवति। तस्मात्तेषां क्रमो न विधेय इति। ततश्च तन्मतरीत्युपक्षेपपरत्वादस्य ग्रन्थस्येति न काप्यनुपपत्तिरिति विधिलक्षणमिति। एवं चास्मिन्वर्णके सूत्रस्थश्रुतिशब्दो विधिपर इति भावः। **विततिरूपमिति**। यथा तृणादिप्रचयस्यैकस्मिन्देशे पूर्वापरभावापन्नतद्देशावयवशो विस्तार एवमेकस्मिन्पौर्णमास्यादिकालेऽनुष्ठेयक्रियाप्रचयस्य पूर्वापरभावापन्नानेकक्षणेषु विस्तारो विततिस्तद्रूपमित्यर्थः। संघातस्य विधिर्नास्तीति यदुक्तं तत्राह—**बहव इति**। अविनियुक्तत्वनिराकरणाभिप्रायेणाह—**श्रुत्यादिसमर्पित इति**। यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्थाः प्रयोगविधिना विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात्क्रमोऽपि प्रयोगविधिना विधीयते। नच तार्तीयैः श्रुतिलिङ्गादिभिरेव सर्वस्य विनियोज्यत्वनियमः। तन्नियमस्य पदार्थविनियोगमात्रविषयत्वेन क्रमस्य पाञ्चमिकश्रुत्यर्थादिभिर्विनियोगेऽप्यविरोधात्, यथासंभवमेतेषामपि तार्तीयेष्वन्तर्भावस्य वक्तुं शक्यत्वाच्चेति भावः। एककर्तृकानेकपदार्थानुष्ठापकस्य प्रयोगविधेः क्रमापेक्षत्वादाकाङ्क्षादिकमेवाध्याहारे मानमित्याशयेनाह—**अनभिहितोऽपीति**। पठितशब्दानभिहितोऽपीत्यर्थः। यद्वा प्राभाकररीत्याप्यविधेयत्वं दुर्लभमित्याह—**अनभिहितोऽपीति**। आकाङ्क्षायोग्यतासंनिधानानि हि ग्राहकग्रहणाख्येऽन्विताभिधाने प्रयोजकानि नतु शब्दोपात्तत्वमपि। तथात्वे शब्दानभिहितस्य प्राकृतोपकारस्य वैकृतविधिनान्विताभिधानाभावप्रसङ्गात्। उक्तंच शालिकानाथेन 'प्राकृतेनोपकारेण पदार्थश्चैव वैकृतः॥ प्रयोगविधिनान्वेति विधिरन्वित उच्यते॥ यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते॥ तेन तेनान्वितः स्वार्थः स्वशब्देनैव भण्यते॥ साध्यरूपश्च विध्यर्थ उपकारमपेक्षते॥ वाक्यादिभिः प्राकृतश्च स योग्यः संनिधाप्यते॥' इति। 'अन्वितस्याभिधानं च न शब्दोपस्थितैः परम्॥ दर्शनात्पितृयज्ञादौ कल्प्येनाप्यधिकारिणा' इति च। यदि च क्रमस्यानुष्ठीयमानपदार्थावस्थारूपत्वेन प्रयत्नसाध्यत्वाभावान्न विधेयत्वं तदा तदङ्गीकृतं तार्तीयक्रमस्य विधेयत्वं विहन्येत। तस्य पौर्वापर्यलक्षणस्य शब्दाभिधानमस्ति। पाञ्चमिकस्य तु विततिलक्षणक्रमस्य नास्ति शब्दाभिधानमिति वैरूप्यं चोक्तरीत्या अन्विताभिधाने शब्दाभिधानस्याप्रयोजकत्वादकिंचित्करम्। इदं च न्यायरत्नमालायां प्रपञ्चितमिति भावः। एवमध्यायारम्भं समर्थ्यार्थपाठाद्यपेक्षया श्रुतेः प्रबलत्वेन श्रुतिक्रमस्य प्रथमं विचार्यतया तद्विषयत्वेन प्रवर्तितवर्णकान्तरमाह—**अथवेति**। 'वेदं कृत्वा वेदिमैन्द्रवायवाग्रान् गृह्णीयाद्वषट्कर्तुः प्रथमभक्ष आश्विनो दशमो गृह्यते' इत्यादौ क्रमविध्यवश्यंभावेन पूर्वपक्षाप्रवृत्तेराह—**क्वचिदिति**। किमयं पाठप्रमाणकः क्रमः उत श्रुतिप्रमाणकः। तदर्थं च किमिह दीक्षा विधीयते उत क्रम इति संशयद्वयं संकलय्याह—**किमिति**। **पाठादिति**। ततश्च पाठप्राप्तानुवादः क्त्वाप्रत्यय इति भावः। किं दीक्षास्वरूपेण विधीयते उत गृहपत्याद्यर्थतया, उभयथापि तद्विधिर्न संभवतीत्याह—**सर्वेषामिति**। **क्रमस्त्विति**। दीक्षाविध्यभावे पाठतस्तत्प्राप्त्यभावादिति भावः। प्राभाकरः शङ्कते—**कर्तृनियम इति**। **इमानिति**। गृहपतिब्रह्मोद्गातृहोतॄनित्यर्थः। **ननु** ये यजमानास्ते ऋत्विज इत्यनेन ऋत्विक्कर्मणि यजमानविधानादृत्विजां सत्रे निवृत्त्याध्वर्योरेवाभावान्न चोदकप्राप्तिः। एवंच सर्वेषां कर्तृत्वाद्दीक्षाया अनियमे प्रसक्तेऽध्वर्युर्दीक्षायां नियम्यते। नचासत्यध्वर्यौ कथं नियम इति वाच्यम्। येन पुरुषेण दीक्षापूर्वभावी कश्चिदाध्वर्यवपदार्थः कृतः तस्य पुरुषस्य तन्मात्रेणाध्वर्युशब्दव्यपदेशभाजो नियमसंभवादिति शङ्कते—**नन्विति**। यदि चोदकेन नाध्वर्युर्लभ्यते तदा दीक्षापूर्वभाविनामाध्वर्यवपदार्थानामेकेनैवानुष्ठेयत्वे प्रमाणाभावेन कस्यचित्पदार्थस्य केनचिदनुष्ठाने सति तत्पदार्थानुष्ठातॄणां सर्वेषामप्यध्वर्युव्यपदेशभाक्त्वाविशेषेणाध्वर्युशब्दस्याव्यवस्थितार्थकत्वान्न तन्नियमः संभवतीत्याशयेन परिहरति—**असतोवेति**। भवेदेवं यद्य-

सर्वमेकेनैव कर्तव्यम् । तथा ब्राह्मादिकमप्येकैकेनेति कल्प्यते । तत्कारिणश्चाध्वर्य्वादिशब्दैर्गौणैरभिधीयन्त इतिचेत् सुतरां नियमानुपपत्तिः । सर्वस्याध्वर्यवस्यैकस्मिन्कर्तरि कल्पिते दीक्षायामपि नियमेन तस्यैव कर्तुः प्राप्तत्वान्न नियमविधिरवकल्पते । तदेवं नियमविधेरुपघातकं कथं नाम बालिशाः कल्पयन्ति । यदि परं व्यवस्थितविषया अध्वर्य्वादिसंज्ञाव्यवहारसिद्ध्यर्थमेव कल्प्यते तथा कल्पिते च ततएव दीक्षायामध्वर्योः प्राप्तत्वात्क्रमार्थ एव विधिरवशिष्यते । किंचाध्वर्य्वादिष्वसत्स्वपि प्रकृतित एव सर्वस्याध्वर्यवस्यैककर्तृकत्वं प्राप्तम् । उक्तंहि प्रकृतावाध्वर्यवेऽप्येककर्तृकत्वं अध्वर्युं वृणीत इति ह्युत्पत्तौ बहुत्वाश्रुतेरिति । एवं चमसाध्वर्युबहुत्वन्यायेनोपादीयमानस्याध्वर्योरेकत्वं विवक्षितम् । तस्याध्वर्युकार्यार्थमन्यथाऽऽनर्थक्यात् । तेनाध्वर्यवस्याध्वर्युकर्तृकत्वमेककर्तृकत्वं च प्रकृतावनगतम् । तत्र सत्रे अध्वर्य्वाद्यभावात्तत्कर्तृत्वे बाधितेऽप्येककर्तृकत्वं संभवन्न बाधितव्यमिति सर्वथाध्वर्यवस्यैककर्तृकत्वाद्दीक्षायामपि स एव कर्ता प्राप्तः । सन्ति चाध्वर्य्वादयः सत्रे इति दर्शितं तृतीये । अध्वर्युदीक्षायां तु चित्पतिस्त्वा पुनात्विति मन्त्रलिङ्गविरोधादुत्तरेषु च न पूतः पावयेदिति प्रतिषेधादध्वर्योः कर्तृत्वासंभवादितरमन्यस्तेषां यतो विशेषः स्यादित्येवं प्रतिप्रस्थातुरध्वर्य्वार्द्धिषु च

---

ध्वर्युत्वरूपेण नियमः स्यात्, किंतु गृहपत्यादीन् चतुर एको दीक्षयेदित्येवं नियम्यते । नचैवमपि नियतविषयत्वमध्वर्य्वादिशब्दप्रयोगस्य न स्यादिति वाच्यम् । यतोयं नियमविधेः प्राकृतानामाध्वर्यवब्राह्मादिपदार्थानामेकैककर्तृकत्वनियमो न विषयः ब्रह्मादिशब्दार्थानध्यवसायेन ब्रह्मादिदीक्षायामेककर्तृकत्वनियमविध्यन्यथानुपपत्त्या ब्राह्मादिषु एककर्तृकत्वस्य सिद्धिसंभवेऽपि ब्रह्मादीनां सत्रे नियतैककर्तृत्वं गमयतीति तद्बलादेव तेषु नियतोऽध्वर्युब्रह्मादिशब्दव्यपदेश उपपद्यत इति शङ्कते—**नियमेति** । गृहपत्यादिदीक्षायामेककर्तृकत्वस्याध्वर्यवपदार्थान्तरस्यान्यकर्तृकत्वेऽप्युपपत्त्या न दीक्षायामेककर्तृकत्वनियमात्सर्वस्याध्वर्यवस्यैककर्तृकत्वसिद्धिः । नचैवं दीक्षाकर्तरि प्रयुज्यमानस्याध्वर्युशब्दस्य नियतविषयत्वसिध्यर्थमेव सर्वस्याध्वर्यवस्यैककर्तृकत्वमस्त्विवति वाच्यम् । एवं सत्यध्वर्युशब्दस्य नियतविषयताया एव सर्वस्याध्वर्यवस्य एककर्तृकताकल्पकत्वं न कर्तृनियमविधेः । तथाचाध्वर्युशब्दस्य नियतविषयत्वसिद्ध्यर्थमेव प्राथमिकाध्वर्यवपदार्थकर्तुरेव दीक्षायामपि कर्तृत्वसिद्धेः किं नियमविधिनेति परिहरति—**सुतरामिति** । तस्मादध्वर्युशब्दस्य तत्कार्यकरत्वमादाय प्रवृत्तस्य व्यवस्थितविषयसिद्ध्यर्थमाध्वर्यवस्य सर्वस्यैककर्तृकत्वकल्पनं नियमविधिव्याघातकं कथं तदुपपादकमित्याह—**तदेवमिति** । ननु तर्हि सत्रे वस्तुतोऽध्वर्योरभावेऽपि य आध्वर्यवकर्माणि कर्तुमध्यवस्यति तद्विषयतयैव सत्रेऽध्वर्युशब्दस्य नियतव्यवहारस्तथाच स एव एको गृहपत्यादिदीक्षायां नियम्यतामित्याह—**यदि परमिति** । आध्वर्यवकर्माणि सर्वाणि कर्तुमध्यवसाये कस्यचित्प्रथमत एवाभ्युपगम्यमाने तथाध्यवसिते पदार्थान्तरे इव दीक्षायामपि विनावचनं प्राप्तेर्नियमार्थत्वाभावात्क्रमार्थमेव स्यादिदं वचनमित्यर्थः । किंच गृहपत्यादीन् एको दीक्षयेदिति कर्तृनियमो न युक्त एव चोदकत एव प्राप्तेरित्याह—**किंचेति** । अध्वर्युं वृणीते इत्येकत्वस्योद्देश्यगतत्वादविवक्षितत्वशङ्कां वारयति—**उत्पत्ताविति** । चमसाध्वर्यून्वृणीते इत्यत्र चमसाध्वर्यूणां क्रतुसंबन्धस्य प्रागसिद्धतया चमसाध्वर्यूद्देशेन वरणमात्रविधानानुपपत्त्या चमसाध्वर्यून्नामकर्तॄन् क्रत्वर्थतयोपाददीतेत्यनेनैव वाक्येन चमसाध्वर्यूणामुत्पाद्यत्वादुत्पत्तौ श्रूयमाणबहुत्वमुपादेयगतत्वाद्विवक्षितमिति । उत्पत्तौ तु बहुश्रुतेरित्यत्र तृतीये व्युत्पादितं तन्न्यायेनाध्वर्युं वृणीते इत्यत्रापि एकत्वं विवक्षितं । अध्वर्योरपि प्राक् क्रतुसंबन्धासिद्ध्यास्मिन्वाक्ये उपादेयत्वादित्यर्थः । एवं वरणसाध्यमदृष्टरूपमध्वर्य्वादित्वं सत्रे च वरणाभावादध्वर्य्वाद्यभाव इति परीत्या सत्रेऽध्वर्य्वाद्यभावादपि नियमविधिरनुपपन्न इत्युक्तमिदानीं स्वरीत्या सत्रेऽध्वर्य्वादयः सन्त्येवादृष्टरूपाध्वर्युत्वादिसद्भावे प्रमाणाभावेन वरणाभावेऽपि सत्रे मुख्यमेवाध्वर्युत्वादिकं संभवतीति तृतीये व्यवस्थापितं स्वरीतिमनुसृत्य चोदकादेवाध्वर्युकर्तृकत्वप्राप्तेर्न नियमविधिः संभवतीत्याह—**सन्तिचेति** । नन्वेवमध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारमित्यत्राध्वर्युलक्षणकर्तृविध्यसंभवेऽपि ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्द्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः प्रस्तोतारमुद्गातुर्मैत्रावरुणं होतुरिति अध्वर्य्वादिदीक्षायामप्राप्तस्य प्रतिप्रस्थातुर्विधिः किं न स्यादित्याशङ्क्याध्वर्य्वनुपपत्तौ तत्प्रत्यासन्नत्वादेव प्रतिप्रस्थातृप्राप्तेर्नैवमित्याह—**अध्वर्युदीक्षायामिति** । त्वेति युष्मच्छब्दस्याभिमुख्यपरत्वेन स्वस्य स्वदीक्षाकर्तृत्वे मन्त्रलिङ्गविरोध इति भावः । नन्वेवं ब्राह्मणाच्छंस्यादिदीक्षायामध्वर्युरेव प्राप्नुयान्नतु प्रतिप्रस्थाता । नच न पूतः पावयेदिति निषेधान्नैवमिति वाच्यम् । ब्राह्मणाच्छंस्यादिदीक्षानन्तरमध्वर्युदीक्षोपपत्त्या निषेधाप्रवृत्तेरित्यत आह—**उत्तरेष्विति** । ब्रह्मादीनामहर्त्विजां दीक्षाक्रम एवाध्वर्योरपि दीक्षणीयत्वादिति भावः । **इतरमिति** । अयं च विप्रतिषेधे करणं समवाये विशेषः स्यादितरमन्यस्तेषां यतो विशेषः स्यादिति सूत्रैकदेशस्तृतीय एव व्याख्यातः । एवं ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति ।

प्राप्तिरेवमेव तृतीयिषु पादिषु च नेष्टृन्नेत्रोः प्राप्तिरतो विधेयान्तराभावात् गृहपतिं दीक्षयति ब्रह्माणं दीक्षयतीत्येवमानुपूर्व्येण कीर्त्यमानानां दीक्षाणां विततिविशेषः प्रतीयते स एव विधीयते। अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इत्युच्यते । अर्थादिषु प्रयोगविधिसंग्रहमात्रमिति विवेकः। एवंचाध्वर्युर्गृहपतिमित्यादिब्रह्मचारी वाचार्यप्रेषित इत्येव मन्तं विततिम् विशेषैकार्थविधानादेकं वाक्यम्। यदा तु पौर्वापर्यं क्रमस्तदा क्त्वाशब्देन तदभिधानादनभिधानं नास्ति। प्रतिदीक्षं च तद्भेदान्नानावाक्यानीति विवेकः। तस्माच्छ्रुतिक्रमोयम् ॥

क्रमस्य क्वचिदार्थिकत्वाधिकरणम् ॥ २ ॥

## अर्थाच्च ॥ २ ॥

**अग्निहोत्रं जुहोतीति यवागूं पचतीति च ॥ क्रमः पाठादर्थतो वा पाठात्सर्वत्र दर्शनात् ॥ ६ ॥**

**होमद्रव्यसमुत्पत्त्यै पूर्वपाकोऽवगम्यते ॥ यवाग्वेति श्रुता होमद्रव्यताऽतोर्थतः क्रमः ॥ ७ ॥**

अग्निहोत्रं जुहोति यवागूं पचतीति यवागूपाकहोमयोः किमनियमोऽथवा पूर्वं पाकस्ततो होम इति नियमे प्रमाणाभावाद्विध्योः पाकहोममात्रपर्यवसानान्न क्रमोऽत्र पूर्ववद्विधीयते अतोऽनियमः। प्रयोजनवशात्तु नियमः। होमद्रव्यं हि यवागूः। तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः सपश्चात्क्रियमाणोऽनर्थकः स्यात्। होमोप्यसति द्रव्ये न निर्वर्तेतातः पक्त्वा होमः ॥

---

आग्नीध्रं ब्रह्मणः प्रतिहर्तारमुद्गातुरच्छावाकं होतुरित्यत्रापि न नेष्टुर्विधिः । ततस्तमुन्नता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुः ग्रावस्तुतं होतुरित्यत्राप्युन्नेतुर्न विधिः प्रत्यासत्त्यैव प्राप्तेरित्याह—**एवमिति**। एवं तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाचार्यप्रेषित इत्यत्रापि न कर्तृविधिः। अर्थादेव प्राप्तेरित्याशयेनाह—**अत इति**। ननु विततिविशेषवाचकशब्दाभावात्कथमयं श्रुतिक्रम इत्यत आह—**अनभिहितोऽपीति** । यत्र क्रमस्तद्विशिष्टपदार्थान्तरं वा विधीयते तत्र श्रुतिक्रमो नतु यत्र क्रमाभिधायकशब्दस्तत्र श्रुतिक्रम इति भावः । **नन्वेवमर्थपाठादिक्रमोऽपि** श्रुतिक्रमः स्यात्तस्यापि प्रयोगविधिविधेयत्वादित्यत आह—**अर्थादिष्विति** । अर्थादिक्रमस्य प्रातिस्विकविध्यभावात्केवलप्रयोगविधिविधेयत्वं श्रुतिक्रमस्य प्रातिस्विकविधिविधेयत्वमप्यस्ति । तेन प्रातिस्विकविधिविहितः क्रमः श्रुतिक्रम इति नातिप्रसङ्ग इति भावः। **ननु** क्त्वा ततः शब्दार्थविधिमुल्लङ्घ्य किमिति क्त्वा। ततः शब्दबलात्कथंचित्प्रतीयमानविततिविशेषविधिः स्वीक्रियत इत्याशङ्क्य एकवाक्यत्वलोभादित्याशयेनाह—**एवंचेति** । अनेकाख्यातानुगुण्यादाह—**यदेति** । पौर्वापर्यं क्त्वा ततः शब्दबलात्पूर्वापरत्वेन प्रतीयमानयोस्तद्बललब्धनैरन्तर्यमित्यर्थः । यथाश्रुते पौर्वापर्यस्यान्तरालेऽनेकपदार्थानुष्ठानेऽप्यविरोधेन पौर्वापर्यस्य प्रयोगप्राशुभावाननुगुणत्वात्तद्विधावदृष्टार्थत्वप्रसङ्गादिति प्रयोजनं पाठक्रमत्वे पाठस्य श्रुतितो दुर्बलत्वाद्यत्रैतादृशस्थले विपरीतक्रमबोधकश्रुतिरस्ति तत्र पाठक्रमस्य बाधः श्रुतिक्रमत्वे तु तुल्यबलत्वाद्विकल्प इति ॥

**अर्थाच्च ॥ २ ॥** ननु अध्वर्युर्गृहपतिमिति वाक्ये विततिविशेषवाचकशब्दाभावेऽपि कथंचिदुपस्थितत्वाद्यथाविधिरेवं प्रयोजनवशादुपस्थितस्य क्रमस्य प्रकृतविधिविधेयत्वात्प्रमाणाभावोऽसिद्ध इत्यत आह—**विध्योरिति** । पूर्वत्र विधेयान्तराभावात्कथंचिदुपस्थितार्थविधायकत्वं युक्तम्। नत्विह विधेयान्तरसद्भावादिति भावः। अनेनैव सङ्गतिः सूचिता। **अत इति**। नचैवमपि पाठतः क्रमान्तरसद्भावात्कथमनियम इति वाच्यम्। पाठस्येदानीमपि प्रामाण्यासिद्धेः प्रयोजनतः संभवत्क्रमनियमानामनारभ्याधीतानामप्यत्र विषयत्वेन तत्र पाठतः क्रमान्तराभावाच्चेति भावः । प्रकृतविध्योः पाकहोममात्रविधायकत्वेऽपि प्रयोजनवशादुपस्थितस्य क्रमस्य क्रमापेक्षप्रयोगविधिना विधेयत्वान्नानियम इति सिद्धान्तमाह—**प्रयोजनेति**। ननु पाकस्य होमप्रयोजनकत्वबोधकत्वप्रमाणाभावात्कथं प्रयोजनवशान्नियम इत्यत आह—**होमद्रव्यमिति**। यवागूं पचतीति द्वितीयाश्रुत्या पाकस्य यवाग्वर्थत्वं प्रतीयते । तत्र यवागूस्वरूपार्थत्वे सत्यानर्थक्यप्रसङ्गाद्धोमापूर्वीययवाग्वर्थत्वमेव वाच्यमिति पाकस्य होमः प्रयोजनमिति भावः। जातमञ्जलिना गृह्णाति जाते यजमानो वरं ददाति जातमभिप्राणितीत्यादौ श्रुत्या प्रयोजनानवगमात्तत्साधारण्यार्थमाह—**लिङ्गेनेति** । होमद्रव्ययवागूसाधनसामर्थ्येनेत्यर्थः । अभिप्राणनस्याग्न्युद्दीपनसमर्थत्वेनाञ्जलिग्रहणप्रयोजनत्वमिति भावः। **होमोऽपीति**। ततश्च सिद्धयवागूपरित्यागेन द्रव्यान्तरसंपादनगौरवं चेति भावः। सूत्रे चशब्देन पूर्वसूत्रस्थसाध्याकर्षः ॥

क्रमस्य क्वचिदनियमाधिकरणम् ॥ ३ ॥

**अनियमोऽन्यत्र ॥ ३ ॥**

**स्याद्वसन्तादिमन्त्राणां क्रमो नो वान्यवद्भवेत् ॥ शाखान्तरे व्यत्ययेन न क्रमो नियतोऽत्र हि ॥ ८ ॥**

यत्रोक्तवक्ष्यमाणनियमकारणाभावस्तत्रानियम एव क्रमस्य यथा 'वसन्तमृतूनामेको ममैकास्तस्ये'-त्येवमादीनां च शाखाभेदेनाम्नातानां प्रयाजानुमन्त्रणानाम् । यच्छाखागतेनानुमन्त्रणेन समित्प्रथममनुमन्त्रितस्तच्छाखागतेनैव तनूनपादपि प्रवृत्तिक्रमादितिचेन्न । प्रत्यासत्त्यनुग्रहाय हि प्रवृत्तिक्रमो वक्ष्यते। नचेहानेकशाखागतानामनुमन्त्रणानां मिथः प्रत्यासत्तिर्हि विहिता यद्वशात्प्रवृत्तिराश्रीयेतातोऽत्रानियमः॥

क्रमस्य क्वचित्पाठानुसारताधिकरणम् ॥ ४ ॥

**क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ [अशाब्द इति चेत्स्याद्वाक्यशब्दत्वात् ॥ ५ ॥ अर्थकृते वानुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात्, स्वेन त्वर्थेन संबन्धः, तस्मात्स्वशब्दमुच्यते ॥ ६ ॥ तथा चान्यार्थदर्शनम् ॥ ७ ॥]**

**प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते ॥ श्रुत्यार्थाभावतो नैवं क्रमः पाठान्नियम्यताम् ॥ ९ ॥**

'समिधो यजति', 'तनूनपातंयजती'तिक्रमेण पठितानां यागानामनियमेनानुष्ठानमुत पाठक्रमेणेति । श्रुत्यर्थयोरभावात्पाठस्याविधायकत्वाद्विधीनां च पदार्थमात्रपर्यवसानादनियम इति प्राप्ते ब्रूमः—'यथापाठमनुष्ठानं तथैव प्रतिपत्तितः ॥ स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥' क्रमपठितेषु

---

**अनियमोऽन्यत्र ॥ ३ ॥** सूत्रेऽन्यत्रेत्यनेनोक्तयोः श्रुत्यर्थयोरभावमात्रं न विवक्षितं किंतु वक्ष्यमाणप्रमाणाभावोऽपि । ततश्च सर्वप्रमाणाभावो यत्र तस्यैव विषयत्वमित्याशयेन विषयविवेकसिद्ध्यर्थं सूत्रार्थमाह—**यत्रेति । वसन्तमिति ।** तैत्तिरीयशाखाधीतानां वसन्तमृतूनां ग्रीष्ममृतूनामित्यादीनां शाखान्तराधीतानामेको ममैकास्तस्य योऽस्मान्द्वेष्टि द्वौ ममेत्यादीनां चेत्यर्थः । शाखाद्वयगतानां समुच्चयं विना विचारायोगात्समुच्चयं सूचयितुमाह—**अनुमन्त्रणानामिति ।** अनुमन्त्रणमन्त्रत्वाद्द्वादशन्यायेन समुच्चय इति भावः । **ननु** क्रमनियामकाभावे क्रमाभावस्य स्पष्टत्वात्किमर्थमिदमित्याशङ्क्य पूर्वपक्षतात्पर्यमाह—**यच्छाखेति ।** प्रथमप्रयाजस्य तैत्तिरीयकमन्त्रेण प्रथममनुमन्त्रणे कृते द्वितीयस्यापि तच्छाखागतेनैवानुमन्त्रणं प्रथमतः कर्तव्यं तैत्तिरीयशाखागतमन्त्रानुमन्त्रणस्य प्रथमप्रवृत्तत्वेन प्रथमपदार्थप्रवृत्तिक्रमेणेतरेषां क्रमनियमादित्यर्थः । ततश्च श्रुत्यादेरत्रासंभावितत्वेऽपि संभावितप्रवृत्तिक्रमनिराकरणार्थत्वान्न वैयर्थ्यमिति भावः । **प्रत्यासत्तीति ।** प्राजापत्यपशुषु उपाकरणनियोजनादीनामित्यर्थः । प्रत्यासत्त्यनुग्रहाय यस्य पशोः प्रथममुपाकरणं कृतं तस्यैव प्रथमं नियोजनं कार्यमिति प्रथमपदार्थप्रवृत्तिक्रमाद्द्वितीयादिषु क्रमो वक्ष्यते । इहतु तैत्तिरीयशाखागतानां पञ्चानां मन्त्राणां परस्परं प्रत्यासत्तिर्न शास्त्रचोदिता एवं शाखान्तरमन्त्राणामपि । यदिहि सा चोदिता स्यात्तदा शाखाद्वयमन्त्राणां समुच्चयबलादेकशाखागतमन्त्रयोर्मध्ये शाखान्तरगतमन्त्रप्रयोगावश्यंभावादेकशाखागतस्य प्रथमस्य शाखान्तरीयैकव्यवहिता प्रत्यासत्तिः परिग्राह्येति यच्छाखागतेन प्रथममनुमन्त्रणं कृतं तच्छाखागतं विहाय द्वितीयादिप्रयाजेषु शाखान्तरगतेन प्रथममनुमन्त्रणे एकशाखागतयोः प्रथमद्वितीययोर्मध्ये शाखान्तरगतमन्त्रद्वयापत्त्या एकशाखागतानां या विजातीयैकमन्त्रव्यवहितप्रत्यासत्तिस्तद्बाधः स्यादिति प्रवृत्तिक्रम आदर्तव्यः स्यान्नत्वेवम् । तथा विधिप्रत्यासत्तिप्रमाणाभावेनैकैकशाखागतानां पाठक्रमस्य प्रधानक्रमवशसंपन्नतयान्यथासिद्धस्य मिथः प्रत्यासत्तौ प्रामाण्याभावादित्यर्थः । यद्यपि सर्वप्रमाणव्युत्पादनानन्तरमनियमोऽन्यत्रेति वक्तुं युक्तं तथापि नानाशाखागतानां श्रुत्यर्थावेव क्रमनियमे कारणं तदभावे त्वनियम एव तस्य तत्राप्रवृत्तेरिति ज्ञापनाय प्रमाणद्वयव्युत्पादनानन्तरमेतत्सङ्गतमित्याहुः ॥

**क्रमेण वा नियम्येत० ॥ ४ ॥** पूर्ववदनियम इति प्रत्यवस्थानाच्छ्रुत्यर्थापेक्षया जघन्यप्रमाणाद्वा सङ्गतिः । श्रुत्यर्थयोरित्युपलक्षणं पाठव्यतिरिक्तप्रमाणमात्रस्येत्येव । **पाठस्येति ।** पाठोपस्थितः क्रमो न कस्यचिच्छब्दस्यार्थ इत्यविधेय इत्यर्थः । बहूनां युगपत्पाठासंभवेन पाठक्रमस्यावर्जनीयतयोपपन्नत्वान्न प्रयोगविधिरपि तं विधत्त इति भावः । सतिसंभवेऽवर्जनीयतयाऽन्यथासिद्धिवर्णनमयुक्तमित्याशयेनाह—**यथापाठमिति ।** लोके स्नायादनुलिम्पेद्भुञ्जीतेत्यादौ पाठानुसारेणैवानुष्ठानप्रतिपत्तेरिहापि यथापाठमनुष्ठानमित्यर्थः । लोके विवक्षाधीनतया क्रमप्रतीतेरन्यथासिद्धिमाशङ्क्याह—**स्मृतिरिति ।** प्रयोगवेलायां पदार्थस्मरणमपेक्षितं तच्च वेदवाक्येनैव संपाद्यम् । वाक्यं च स्मृतं पदार्थस्मरणं जनयति । वाक्यं च यत्प्रथमं पठ्यते तत्प्रथमं स्मर्यते इति पाठक्रमेणानुष्ठानमित्यर्थः । तथैव प्रतिपत्तित इति पादं व्याचष्टे—**क्रमपठितेष्विति ।**

हि पदार्थेषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते । वेदाद्ध्ययनोपात्ताद्यत्प्रयोजनं शक्यते कर्तुं तस्य सर्वस्यार्थेन वेदोपादानम् । शक्यते च विधिवाक्येभ्योऽपि संबन्धनिमित्तं स्मरणं प्रयोगकाले पदार्थानां कर्तुमिति तदपि प्रयोजनम् । स्वाध्यायविधिविहितश्च पाठक्रमो विध्यवस्थायामनुपयुज्यमानः स्मृत्यवस्थायामुपयुज्यते । यथापाठं च क्रियमाणं स्मरणं तत्क्रममेव भवति । स्मृतिकार्यं चानुष्ठानमिति तस्यापि स एव क्रमः । तस्मात्पाठक्रमेणात्र क्रमनियमः ॥

क्रमस्य क्वचित्प्रथमप्रवृत्त्यनुसारिताधिकरणम् ॥ ५ ॥

**प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ [सर्वमिति चेत् ॥ ९ ॥ नाकृतत्वात् ॥ १० ॥ क्रत्वन्तरवदिति चेत् ॥ ११ ॥ नासमवायात् ॥ १२ ॥]**

**उपाकृतानां किं सप्तदशानां यूपबन्धने ॥ क्रमो नास्त्यस्ति वा नास्ति नियामकविवर्जनात् ॥ १० ॥**
**आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि ॥ क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका ॥ ११ ॥**

वाजपेये प्राजापत्याः पशवः सह क्रियन्ते तत्रोपाकरणनियोजनादयः संनिपातिनः प्रतिपश्वावर्तनीयास्तेषां चावृत्तिर्नैकस्य पशोः कार्त्स्न्येन कृत्वा परस्यापि तथैव क्रियते इत्येवं । किं तर्हि सर्वेषां यतः कुतश्चित्पशोरारभ्य कृत्वा ततो नियोजनमिति वक्ष्यामः । तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य यत्र कचित्समाप्यते । नियोजनादौ तु संदेहः किं तत्राप्यनियमः उत येन क्रमेणोपाकरणं प्रवृत्तं स एवोत्तरत्रापीति । नियामकाभावात्प्रथमवद्द्वितीयादावप्यनियमः ।—'प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात् ॥ अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि ॥' एकैकस्य हि पशोः पदार्था मिथः

---

ननु वाक्यस्य विधायकत्वात्प्राथमिकक्रमावबोध एव प्रयोजनं न प्रयोगकालस्मरणमप्यधीतेन स्वाध्यायेनार्थज्ञानं प्रयोगकालीनस्मरणं च भावयेदिति विधौ वाक्यभेदप्रसङ्गादित्याशङ्कां निराकुर्वन्नुत्तरार्धं व्याचष्टे—**वेदादिति** । यदनेन कर्तुं शक्यते तद्भावयेदित्येकरूपेणैव प्रयोजनद्वयबोधसंभवान्न वाक्यभेद इति भावः । यद्यप्यनुष्ठानापेक्षस्मृत्युपयोगिनो मन्त्रा एव, यद्यपि च प्रथमावगतस्य स्मरणमप्यनियतं व्युत्क्रमेणापि स्मरणदर्शनात्तथाप्यध्ययनविधिना क्रमविशिष्टवाक्याध्ययनविधानात्क्रमांशेऽध्ययनविधेः सतिसंभवे दृष्टार्थत्वाय प्रकृते स्मरणस्य वाक्यजन्यत्वनियमो यथावगतनियमश्चाङ्गीकर्तव्य इत्याशयेनाह—**शक्यते चेति** । पाठक्रमस्य विधानावस्थायामनुपयोगात्कथं दृष्टार्थत्वमित्याशङ्क्य दृष्टार्थत्वमुपपादयन्पाठक्रमादनुष्ठानक्रमनियममुपपादयति—**स्वाध्यायेति** । सूत्रार्थस्तु—एकक्रतुगतत्वे पाठक्रमेणैवानुष्ठानं नियम्येत गन्धो देयः पुष्पाणि देयानीत्यादौ पाठक्रमस्य पदार्थक्रमबोधकतया गुणत्वावगमादिति ॥

**प्रवृत्त्या तुल्यकालानां०** ॥ ८ ॥ पशूनां भेदेनानुष्ठानेऽसहानुष्ठानेऽप्यारादुपकारकवत्संनिपातिनामपि तन्त्रत्वे आवृत्तावपि काण्डानुसमये च विचारानुपपत्तेः । सहत्वं च संनिपातिनामावृत्तिं तेषां पदार्थानुसमयं च दर्शयति—**वाजपेय इति** । 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वैश्वदेव्युत्तरकालं प्रत्युपादीयमानानां पशूनां साहित्यस्य विवक्षितत्वादिति भावः । **आवर्तनीया इति** । एकस्मिन्पशौ कृतेनोपाकरणादिना पश्वन्तरोपाकरणासिद्धेरिति भावः । **वक्ष्याम इति** । द्वितीयपादाय इति शेषः । प्रवृत्तिक्रमस्य प्राथमिकपदार्थप्रवृत्त्यधीनत्वात्तां दर्शयन्प्राथमिकपदार्थस्याविषयत्वं चाह—**तत्रेति** । नियामकान्तराभावादेव प्रथमस्यानियम्यतेति भावः । सङ्गतिं सूचयन्नाह—**नियामकाभावादिति** । प्रयोगविध्यनन्तरभाविप्रथमपदार्थप्रवृत्तिनिबन्धनक्रमस्य प्रयोगविधिसंग्रहायोगात्प्रवृत्त्या क्रमनियमोऽनुपपन्न इति भावः । प्रथमपदार्थप्रवृत्तिर्हि स्वयं निष्पन्ना सती पश्चात्क्रमं न नियच्छति किंतु प्रयोगविधिप्रवृत्तेः प्रागेव प्रतिसंहिता सती । तथाच यदि प्रथमपदार्थप्रवृत्त्यनुसारेण द्वितीयाद्यनुष्ठानं स्यात्तदा तेषां प्रत्यासत्तिरनुगृहीष्यत इत्येवं प्रयोगविधिः श्रुत्या पदार्थान्प्रत्यासत्त्यापन्नान्विदधत् तत्प्रत्यासत्त्यानुग्रहाय प्राक्प्रतिसंहितप्रथमपदार्थप्रवृत्त्युपस्थितमितरपदार्थक्रमं संगृहीतुं शक्नोत्येवेत्याशयेन सिद्धान्तमाह—**प्रवृत्त्या वेति । अन्यथेति** । प्रथमपदार्थो येन क्रमेण कृतस्तेनैव क्रमेण द्वितीयाद्यनुष्ठाने प्रतिपदार्थं षोडशभिरेव व्यवधानं भवति इतरथा प्रथमपदार्थानुष्ठाने यः प्रथमस्तस्य पशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने द्वात्रिंशता व्यवधानं, द्वितीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने एकत्रिंशता व्यवधानं, तृतीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने त्रिंशतेत्येवमतिव्यवधानं स्यादित्यर्थः । **ननु** नेदमतिव्यवधानं दोषः अन्तिमपशोः प्रथमद्वितीयपदार्थानुष्ठानेऽत्यन्तसंनिकर्षः उपान्त्यादिष्वेकद्वित्रादिमात्रान्तरित इति क्वचित्संनिधानविशेषावहत्वादित्यत आह—**अनुज्ञाताधिकैरिति** । षोडशभिर्व्यवधानस्य शास्त्रानुमतत्वेन तन्न्यूनसंनिकर्षस्याशास्त्रीयत्वान्न तल्लाभोऽनुसर्तव्यः किंत्वधिकव्यवधानमेव परिहर्तव्यमित्यर्थः । **नन्वे**ककालत्वमेव शास्त्रार्थो न प्रत्यासत्तिरित्यतो व्याचष्टे—**एकैकस्येति** । एककाले साङ्गप्रधानं

प्रत्यासन्नाः कर्तव्याः। 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वचनावगतपश्वन्तरसाहित्यबलादन्यदीयैः षोडशभिः पदार्थैर्व्यवधिमनुजानाति नाधिकैः। प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवत्यन्यथाधिकैरपि स्यात्। तस्मात्प्रवृत्त्या नियमः॥

क्रमस्य क्वचित्स्थानानुसारिताधिकरणम्॥ ६॥

## स्थानाच्चोत्पत्तिसंयोगात्॥ १३॥

प्राथम्यमग्नीषोमीये साद्यस्काख्यक्रतावुत॥ सवनीयेऽग्रिमो यस्माद्प्रकृतौ तदपेक्षितम्॥ १२॥
आश्विनग्रहसामीप्ये सवनीयपशोः स्थितिः॥ नियते तत्क्रमे स्थानाच्छिष्टयोः प्राकृतो नयः॥ १३॥

'साद्यस्के सह पशूनालभते' इति श्रुतं। साहित्यं च सवनीयस्थाने इति स्थितम्। तत्रोपाकरणादीनां प्रतिपशु भेदे किमनियमः क्रमस्योताग्नीषोमीयस्य प्रथममुपाकरणमथवा सवनीयस्येति। नियामकाभावादनियमे प्रकृतिदर्शनाद्वाग्नीषोमीयस्य प्राथम्ये प्राप्ते सवनीयस्येत्याह—'आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः॥ इतरश्चलितस्थानान्नोपस्थाप्येत केनचित्॥' अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानम्। स तेनोपस्थितोऽपि सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितोऽत्र तु न तस्य किंचिदुपस्थापकमस्ति। सवनीयः स्वस्थानादस्खलितः आश्विनग्रहणादुपस्थितत्वात्तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यमितरयोस्तु मिथःक्रमेऽनियम एव। तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टं पौर्वापर्यमात्रमसति बाधकेऽनुगृहीतव्यमित्यग्नीषोमीयमुपाकृत्यानुबन्ध्योपाकरणम्॥

---

कर्तव्यमित्युक्ते एकस्मिन्क्षणे कर्तुमशक्यतया नैरन्तर्ये तत्पर्यवसानादिति भावः। **वैश्वदेवीमिति**। तद्वचने तृतीयाबलेन करणभूतानां प्राजापत्यानां साहित्यावगमात्सेतिकर्तव्यतानामेव करणत्वात्साङ्गानां पशूनां साहित्ये सति पदार्थानुसमयात्षोडशिभिः पदार्थैर्व्यवहितिः प्रत्यासत्तिः शास्त्रार्थ इति भावः। सूत्रार्थस्तु—तुल्यकालानां नियोजनादीनां प्रवृत्त्या क्रमो नियुज्येत तदुपक्रमात्तेषामङ्गानां प्रधानसमीपेऽनुष्ठाननियमादङ्गानां प्रधानप्रत्यासन्नत्वादिति यावत्॥

**स्थानाच्चोत्पत्तिसंयोगात्॥ १३॥** प्राथम्यादग्नीषोमीयस्थाने साहित्ये विचारानुपपत्तेराह—**साहित्यं चेति**। प्रधानप्रत्यासन्नत्वादग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशाभ्यामनुग्रहवचनाच्च सवनीयस्थान एवेदं साहित्यमिति तृतीयोपान्त्ये स्थितमित्यर्थः। यद्यपि तत्र श्येनयागे श्रुतस्य साहित्यस्य सवनीयस्थानत्वमुक्तं तथापि हेतुसाम्यात्साद्यस्के श्रुतस्यापि तथात्वमिति भावः। **उपाकरणादीनामिति**। अत्रोपाकरणमेव विषयः नतु नियोजनादयोऽपि। तेषां पूर्वाधिकरणन्यायेन क्रमसिद्धेः। अतएव संशयादिषूपाकरणमेव ग्रन्थे निर्दिश्यते। एवंचोपाकरणस्यैव प्रतिपशु भेदेनानुष्ठानं वक्तव्यं नतूपाकरणादीनाम्। ततश्चोपाकरणस्यैवावृत्तिदार्ढ्यार्थमुपाकरणादीनां तदुक्तिरिति ध्येयम्। **नियामकेति**। नच प्रकृतौ प्रथममग्नीषोमीयस्योपाकरणात्प्रवृत्तिक्रमो नियामकोऽस्त्विति वाच्यम्। यत एकस्मिन्प्रयोगे साहित्यसिद्ध्यर्थं प्रवृत्त्या क्रमनियमः नच प्रकृतिविकृत्योरेकप्रयोग इति भावः। **प्रकृतीति**। दृष्टस्य प्रथमस्य विनाकारणं परित्यागायोगादिति भावः। सहत्ववचनात्त्विह कर्तव्यत्वेनावगतानां त्रयाणामपि मध्ये यस्य प्रथममुपस्थितिस्तस्य प्रथमोपाकरणं प्रथमोपस्थितिश्च सवनीयस्येति तस्यैव प्राथम्यमित्याह—**आश्विनग्रहणेनेति**। नन्वेवं सवनीयस्योपस्थितत्वमेव क्रमे नियामकं स्यान्नतु स्थानमित्याशङ्क्योपस्थितेः स्थाननिबन्धनत्वात्स्थानं प्रमाणं भवतीत्याशयेन श्लोकं व्याचष्टे—**अग्नीषोमीयेति**। अग्नीषोमीयप्रणयनानन्तरमग्नीषोमीयपशोरनुष्ठानकाल इत्यर्थः। सः अग्नीषोमीयः पशुः। तेन अग्नीषोमीयप्रणयनेन। **अत्रेति**। आश्विनोत्तरकाल इत्यर्थः। यदत्राचार्यैरग्नीषोमीयानुबन्ध्ययोः क्रमविषयं विचारान्तरं कृतं तद्दर्शयति—**इतरयोरिति**। पूर्वपक्षमाह—**अनियम इति**। प्रकृतावग्नीषोमीयानुबन्ध्ययोः पौर्वापर्यस्याविहितत्वेनार्थिकतयानतिदेशान्नानुग्राह्यत्वमिति भावः। सत्यम्। नास्त्यतिदेशस्तथाप्यर्थादपि प्रकृतौ दृष्टत्वात्तस्येह परित्यागे कारणाभावात्तत्परित्यागो न युक्त इति सिद्धान्तमाह—**अथवेति**। सूत्रे उत्पत्तिसंयोगात् आश्विनग्रहणोत्तरकाललक्षणसवनीयस्थानस्य प्रकृतौ आश्विनं ग्रहं गृहीत्वेति सवनीयोत्पत्तिदशायामवगमादित्यर्थः॥

अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणम् ॥ ७ ॥

## मुख्यक्रमेण वाङ्गानां तदर्थत्वात् ॥ १४ ॥

**स्त्रीपुंसदेवकौ सारस्वतौ तद्धर्मगः क्रमः ॥ नास्त्यस्ति वात्र नास्त्येष तन्नियामकवर्जनात् ॥ १४ ॥**
**याज्यानुवाक्यापाठेन स्त्रीप्राथम्यं हि मुख्ययोः ॥ मुख्यार्थत्वेन धर्माणां स्यान्मुख्यक्रमतः क्रमः ॥ १५ ॥**

'सारस्वतौ भवत' इति यागद्वयं विहितं स्त्रीपुंदैवत्यमेतद्वै दैव्यं मिथुनमिति वाक्यशेषात्,तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानं ततः पुंदेवत्यस्य । याज्यानुवाक्यापाठक्रमात् । तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्तव्य उत स्त्रीदेवत्यं निरूप्य ततः पुंदेवत्यमिति । नियमकारणाभावादनियमः । मुख्यक्रमात्तु स्त्रीदेवत्यं प्रथममिति स्थितम् । **ननु** च प्रवृत्त्या नियमः सिद्ध्यति येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिः स एव निर्वापादीनामुपाकरणक्रम इव नियोजनादीनाम् । पूर्वपदार्थप्रवृत्त्योत्तरेषां नियमः नोत्तरप्रवृत्त्या पूर्वेषामिति चेत् । न । प्रत्यासत्त्यनुग्रहाविशेषात्तन्निबन्धनत्वाच्च क्रमनियमस्य । सत्यम् । मुख्यक्रमादपि क्रमनियमः सिद्ध्यतीत्युदाहरणम् । अन्यतोऽपि सिद्ध्यत्यर्थे किमर्थं कारणान्तरमुपन्यस्तम् । यद्यपीह प्रमाणयोः संकरः नतु सर्वत्र गते प्रमाणे संकीर्णे । अस्ति हि तदुदाहरणं यत्रासिद्ध्यन्प्रवृत्त्या नियमो मुख्यक्रमादेव सिद्ध्यति । दर्शपूर्णमासयोः दध्नः पूर्वं धर्माः प्रवर्तन्ते शाखाहरणादयः । तत आग्नेयस्य निर्वापादयः । याज्यानुवाक्ययोस्तु विपरीता प्रवृत्तिः पाठवशात्तत्र भूतभाविप्रवृत्तिद्वयवशात्प्रयाजशेषाभिधारणेऽनियमः प्राप्नोति । मुख्यक्रमात्त्वाग्नेयस्य प्रथममभिघारणम् । तदेतच्चतुर्थे पादे वक्ष्यामः । तस्मादनवद्यम् । किंपुनः कारणं मुख्यक्रमेणाङ्गानां नियमे प्रत्यासत्त्यनुग्रहः । एवं ह्यङ्गप्रधानयोर्यावदनुज्ञातमेव व्यवधानं भवति । इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथममङ्गं क्रियमाणं प्रधानेनात्यन्तं व्यवहितं स्यात् । तस्मान्मुख्यक्रमेण नियमः। अत्र प्रधानप्रत्यासत्तिरङ्गानां नियमकारणं, प्रवृत्तिक्रमे त्वङ्गानां मिथः प्रत्यासत्तिरित्येतावान्विशेषः ॥

---

**मुख्यक्रमेण वाङ्गानां तदर्थत्वात् ॥ १४ ॥ यागद्वयमिति** । देवताभेदेन द्रव्यपृथक्त्वेन च द्रव्यदेवतासंबन्धभेदाद्यागभेद इति भावः । उभयत्राप्यवैरूप्याय सरस्वतः सरस्वत्या वा देवतात्वे संप्रतिपन्नदेवतात्वाद्धिपयोवत्सहप्रदाने सति प्रदानक्रमाभावमाशङ्क्याह—**स्त्रीपुंदैवत्यमिति । याज्येति** । 'प्राणो देव्यानो दिव' इति स्त्रीदैवत्यानुवाक्यायाज्ययोः पाठानन्तरं 'पीपिवांसं सरस्वते ते सरस्वदूर्मे' इति पुंदैवत्यानुवाक्यायाज्ययोः पाठादिति भावः । अत्राप्यारादुपकारकाणां तन्त्रत्वात्संनिपातिष्वपि निर्वापव्यतिरिक्तेषु निर्वापप्रवृत्तिक्रमादेव क्रमसिद्धेः परिशेषात्संनिपातिषु प्रथमो निर्वाप एव विषय इत्याशयेन तत्रैव संशयमाह—**तत्रेति । नियमेति** । मुख्यक्रमेऽपि तन्मुख्यसंबन्धिभिरन्यैरङ्गैर्व्यवधानस्यावर्जनीयतया मुख्यक्रमस्य प्रत्यासत्त्यनुग्राहकत्वाभावान्न प्रामाण्यमिति भावः । सत्यपि व्यवधाने तस्य शास्त्रानुमतत्वेन परकीयाङ्गव्यवधानस्यैव दोषत्वात् तन्निवारकत्वेन मुख्यक्रमस्य प्रत्यासत्त्यनुग्राहकत्वं संभवतीत्याशयेन सिद्धान्तमाह—**मुख्यक्रमादिति** । प्रवृत्तिक्रमादेव क्रमसिद्धेर्नेदं मुख्यक्रमोदाहरणमिति शङ्कते—**नन्विति** । युक्तमुपाकरणस्य नियोजनाद्यपेक्षया पूर्वभावित्वात्तत्प्रवृत्तेर्नियोजनादिक्रमनियामकत्वम् । प्रकृते तु याज्यानुवाक्ययोः पश्चाद्भावित्वेन तत्प्रवृत्तेर्निर्वापानुष्ठानदशायामसत्त्वान्न तस्याः निर्वापक्रमे नियामकत्वमिति निष्पन्नप्रवृत्तेः क्रमनियामकत्वं मन्वानो वैषम्यं शङ्कते—**पूर्वेति** । नह्यनुष्ठानकाले निष्पन्ना प्रवृत्तिः क्रमं नियच्छति येनोत्तरप्रवृत्तेरस्याः क्रमनियामकत्वं न स्यात् किंतु प्रयोगविधिदशायां प्रतिसंहिताप्रवृत्तिः प्रयोगविध्यवगम्यप्रत्यासत्त्यनुग्राहकत्वेन क्रमनियामिका । ततश्च पूर्वपदार्थप्रवृत्तिवदुत्तरपदार्थप्रवृत्तेरपि प्रतिसंहितायाः प्रत्यासत्त्यनुग्राहकत्वाविशेषात्संभवति क्रमनियामकत्वमिति परिहरति—**प्रत्यासत्तीति** । प्रवृत्त्या क्रमनियमः सिद्ध्यतीति वदतः किमिह मुख्यक्रमस्य क्रमनियामकत्वं न संभवतीत्यभिमतमुतान्यथासिद्धेर्मुख्यक्रमस्य प्रमाणत्वमेव न संभवतीति । नाद्य इत्याह—**सत्यम् । मुख्येति** । उभयोरप्यत्रावधृतप्रमाणभावतयैकेनापरनिराकरणायोगादिति भावः । द्वितीयं शङ्कते—**अन्यत इति । तदेतदिति** । प्रवृत्तिक्रमादरे बहूनां विप्रकर्षप्रसङ्गान्मुख्यएव न्याय्य इति वक्ष्याम इत्यर्थः । **एवंहीति** । यागद्वयस्य सहानुष्ठेयत्वादेकैकस्य परकीयव्यवहितं प्रत्यासन्नत्वं शास्त्रेऽनुमतं तदेतन्मुख्यक्रमादरेण सिद्ध्यति । तदनादरे तु पश्चाद्भाविप्रधानाङ्गस्य प्रथममनुष्ठाने तस्य प्रथमभाविप्रधानेन तदङ्गेन च व्यवधानात्पश्चाद्भाविप्रधानतदङ्गयोरत्यन्तव्यवधानं स्यादित्यर्थः । **ननु** प्रवृत्तिक्रमेऽपि प्रत्यासत्त्यनुग्रह एव नियमे कारणमिति कथं प्रमाणभेद इत्यत आह—**तस्मादिति** । एतच्च सर्वेषां क्रमाणां प्रयोगविधिविधेयत्वाविशेषेऽपि मुख्यप्रवृत्तिक्रमयोः प्रयोगविध्यव-

अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणम् ॥ ८ ॥

**प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥**

**उपांशुयाजे पूर्वत्वमग्नीषोमीयकेऽथवा ॥ धर्मानुष्ठान आद्योऽस्तु मुख्ययोस्तादृशक्रमात् ॥ १६ ॥**
**युक्तमौषधधर्माणां प्राथम्यं पूर्वपाठतः ॥ पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः ॥ १७ ॥**

दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः ततोऽग्नीषोमीयः पुरोडाशहविः । तत्र किं मुख्यक्रमादाज्यनिर्वापः पूर्वमुत पाठक्रमादग्नीषोमीयनिर्वाप इति ।—'तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरःक्रिया ॥ पाठतस्त्वौषधस्यैव प्राथम्यमनपेक्षतः ॥' मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसंपत्तयेयेषु कल्प्यमानो विलम्बते । पाठतस्त्वन्यानपेक्षादङ्गानामेवक्रमावधारणाद्बलीयस्त्वमतः प्रथममौषधधर्मास्तत आज्यधर्माः ॥

ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ॥ ९ ॥

**मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ १६ ॥**

**अग्नीषोमीय आग्नेयात्पूर्वो नो वास्तु पूर्वता ॥ ब्राह्मणक्रमतो नैवं मन्त्रक्रमबलित्वतः ॥ १८ ॥**
**स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः ॥ प्राबल्यं ब्राह्मणस्यास्ति विधिनापि कृतार्थता ॥ १९ ॥**

इदानीं पाठयोरेव मन्त्रब्राह्मणगतयोर्बलाबलचिन्ता । दर्शपूर्णमासयोरग्नीषोमीयस्य प्रथमं ब्राह्मणं तत आग्नेयस्य। विपरीतं मन्त्राम्नानम् । तत्र—'विधिक्रमबलीयस्त्वमुत्पत्ताववधारणात् ॥ उत्पन्नेषु विमुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् ॥' विधिक्रमो ह्युत्पत्तिदशायामेव पदार्थानां गम्यते । मन्त्रक्रमस्तूत्पन्नेषु

---

गतसाहित्यबलेन क्रमनियामकत्वमिति प्रामाण्यमपि प्रयोगविध्यधीनमितरेषां तु प्रामाण्यं न प्रयोगविध्यायत्तमिति विशेषो बोध्यः । तदुक्तमाचार्यैः 'प्रयोजकवशेनेष्टौ मुख्यप्रावृत्तिकौ क्रमा'विति ॥

**प्रकृतौ तु स्वशब्दत्वात्** ॥ १५ ॥ मुख्यक्रममाह—**आग्नेयेति** । इदं चोपलक्षणम् । अग्नीषोमीयनिर्वापानन्तरमाज्यनिर्वापः पठित इत्यपि बोध्यम् । **तत्रेति** । प्रधानार्थत्वादङ्गानां प्रधानानुसारेण क्रमो न्याय्यः । तथा पूर्वाधिकरणोक्तप्रधानप्रत्यासत्त्यनुग्रहादपि स एव युक्त इति भावः । अतएव संगतिः । अङ्गानां प्रधानार्थत्वेऽपि प्रकृते प्रधानक्रमोऽङ्गानामनुष्ठानक्रमं नियन्तुमसमर्थः । तदपेक्षया झटिति प्रवृत्तिपरपाठेनैव क्रमावगतावाकाङ्क्षाविरहेण तस्येह क्रमनियामकत्वायोगात्प्रधानप्रत्यासत्तिश्चाङ्गावगत्यनन्तरं कल्प्यते, इह चाङ्गमवगम्यमानं पाठात्क्रमयुक्तमेवावगम्यते । तेन तदविरोधिन्येव प्रत्यासत्तिरिह वाच्येति न प्रत्यासत्त्यनुग्रहादपि मुख्यक्रमस्य नियामकत्वमित्याशयेन सिद्धान्तमाह—**पाठतस्त्विति** । कल्प्यमान इत्यनेन मुख्यक्रमेणाङ्गानां क्रमस्यानुमेयत्वात्तस्य दौर्बल्यं प्रत्यक्षपाठावगम्यक्रमस्तु प्रत्यक्षत्वात्प्रबल इत्यपि सूचयति । सूत्रार्थस्तु—प्रकृतौ यथाक्रमं यथापाठक्रमं निर्वापक्रमः प्रतीयते पाठक्रमस्य स्वशब्दत्वात् अङ्गावगमकशब्दधर्मतया प्रत्यक्षेण झटित्यवगमादिति ॥

**मन्त्रतस्तु विरोधे स्यात्** ॥ १६ ॥ पेटिकासङ्गतिमाह—**इदानीमिति** । अनेनैव किं ब्राह्मणपाठादग्नीषोमीयः प्रथममनुष्ठेयः उत मन्त्रपाठादाग्नेय इति संशयोऽपि सूचितः । नच मन्त्रपाठान्मन्त्रयोः क्रमः सिध्येत् नतु मन्त्रसाध्ययोः प्रधानयोः । तथाच कथमित्थं संशय इति वाच्यम् । द्वादशन्यायेन मन्त्रान्ते कर्मादिसंनिपातनियमे सति मन्त्रानन्तरं प्रधानानुष्ठानावश्यंभावे मन्त्रपाठक्रमस्य प्रधानानुष्ठानं प्रापयतस्तन्मुखेन प्रधानक्रमपर्यन्तं व्यापारावश्यंभावादिति भावः । **अग्नीषोमीयस्येति** । तैत्तिरीयशाखायां संहितायां द्वितीये काण्डे विश्वरूप इत्येतस्मिन्पञ्चमप्रपाठके 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ'दित्यग्नीषोमीयवर्णनात्, षष्ठे च 'समिधो यजती'त्यस्मिन्प्रपाठके 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्याग्नेयाम्नानाच्चेति भावः । **विपरीतमिति** । तस्यामेव शाखायां तृतीयकाण्डे 'सत्वं प्रपद्य' इत्येतस्मिन्पञ्चमप्रपाठके प्रथमं 'अग्निर्मूर्धा दिव' इति प्रथममाग्नेययाज्यापुरोनुवाक्यायुगलस्य तत उपांशुयाजमन्त्राम्नानानन्तरं 'अग्नीषोमा सवेदसा युवमेतानी'त्यग्नीषोमीययाज्यानुवाक्यायुगलस्य चाम्नानादिति भावः । तत्रानियमपूर्वपक्षं भाष्याद्युक्तमपि दुर्बलत्वादुपेक्ष्य प्रकारान्तरेण पूर्वपक्षमाह—**तत्रेति** । **उत्पत्ताविति** । एवंच प्रथमावगततत्वाद्यथापूर्वत्र पाठक्रमस्य प्राबल्यमेवमिहापीति प्रत्यवस्थानात्सङ्गतिर्बोध्या । **मन्त्राश्चेति** । ततश्च मन्त्राणामनुष्ठेयावस्थपदार्थस्मरणाय प्रयोगकाले उच्चारणावश्यंभावे सति प्रथममन्त्र उच्चारितो द्वितीयं मन्त्रं स्मारयति । तस्माच्च द्वितीयपदार्थस्य स्मृतिर्झटिति निष्प-

पदार्थेषु विनियुक्तेषु च पश्चादिति दुर्बलः।—'नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत्॥ स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते॥ मन्त्राश्चानन्यकार्यत्वात्स्मृत्यर्था विधयः पुनः॥ विधिनैव कृतार्थत्वान्नावश्यं स्मारका मताः॥' तस्मान्मन्त्रक्रमेणैवानुष्ठानं तदभावे तु विधिरपि स्मारक इति तत्रैव तत्क्रमस्य प्रामाण्यम्॥

प्रयोगवचनाच्चोदकस्य बलवत्त्वाधिकरणम्॥ १०॥

**तद्वचनात्तु विकृतौ यथाप्रधानं स्यात्॥ १७॥ [विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति॥ १८॥]**

सारस्वताज्ये पूर्वत्वं बार्हस्पत्यचरावुत॥ धर्माणामाज्यनिष्ठानां प्राथम्यमुपदेशतः॥ २०॥
सक्रमाणां पदार्थानां चोदकप्रापितत्वतः॥ प्राथम्यमन्तरङ्गत्वादाग्नेयविकृतौ चरौ॥ २१॥

'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरि'ति। तत्रोपांशुयाजाग्नेयविकृत्योराज्यबार्हस्पत्ययोः कस्य धर्माः प्रथममनुष्ठेयाः। किं प्रयोगविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहान्मुख्यक्रमेणाज्यधर्माणां प्रथममनुष्ठानमुत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्यौषधधर्माः कर्तव्या इति।—'तत्रौपदेशिकत्वेन प्रयोगवचनाश्रयः॥ मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम्॥' नैवम्—'प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम्॥ ते च सक्रमका एव प्राप्यन्ते चोदकादिह॥ नैराकाङ्क्ष्यात्क्रमस्तेषां न भूयोऽन्यः प्रक्लृप्यते। शरवत्प्राप्तबाधोऽत्र कल्प्यत्वान्नोपपद्यते॥' शरमयं बर्हिरिति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते। कल्प्यस्तु प्रयोगवचनाश्रयः क्रमः। कल्पना चाकाङ्क्षाधीना निराकाङ्क्षाश्चेह पदार्था इति न कल्पनं संभवति॥

---

यते। एवंच मन्त्रपाठक्रमानुसारेण प्रयोगकाले पदार्थस्मृतिः शीघ्रं लभ्यते। ब्राह्मणवाक्यं तु प्रयोगाद्बहिरेव विधानमात्रेण चरितार्थत्वान्न प्रयोगकाले समुच्चार्यमिति न मन्त्रवज्झटिति प्रयोगकाले पदार्थस्मारकं किंतु पदार्थानुष्ठानानन्तरं मयायं पदार्थोऽनुष्ठित इति प्रथमं पदार्थ आलोकिते पश्चादयं पदार्थोऽनेन वाक्येन विहित इति तद्वाक्ये स्मृते तेन च तदुत्तरवाक्यस्मरणे तेन च वाक्येनायं पदार्थो विहित इति स्मरणेनोत्तरपदार्थानुष्ठानमित्येवं प्रयोगकाले पूर्वोत्तरवाक्यद्वयं प्रयोगदशायामप्रयोज्यमपि कथंचिद्धृदयमानीतं सत् पदार्थस्मारकम्। तदपि स्मरणं पदार्थस्वरूपमात्रस्य नत्वनुष्ठेयावस्थस्य। अनुष्ठाने चानुष्ठेयावस्थपदार्थस्मरणमेवातितरामुपयुज्यते। तथाच ब्राह्मणक्रमस्य प्रथमभावित्वेऽप्यनुष्ठाने विप्रकृष्टत्वाद्दुर्बलत्वं मन्त्रक्रमस्य त्वनुष्ठानसंनिकर्षात्प्राबल्यमित्यर्थः। **तदभावे इति**। गत्यन्तराभावात्तद्विप्रकर्षोऽप्याश्रीयत इति भावः। सूत्रार्थस्तु—मन्त्रब्राह्मणक्रमविरोधे मन्त्रपाठक्रमात्पदार्थक्रमः स्यात्प्रयोगसामर्थ्यात् मन्त्रस्य प्रयोज्यपदार्थस्मारणे सामर्थ्यात् तद्ब्राह्मणपाठस्तूत्पत्तिदेश इति न प्रयोगकाले स्मृत्युपयुक्त इति॥

**तद्वचनात्तु विकृतौ०॥ १७॥** औपदेशिकक्रमयोर्बलाबलविचारानन्तरमौपदेशिकातिदेशिकयोस्तद्विचारात्सङ्गतिः। आग्नावैष्णवधर्माणामौषधीनां प्राथम्ये न विवादस्तत्र चोदनाप्रयोगवचनयोर्विमत्यभावादतस्तद्व्यावृत्त्यर्थमाह—**आज्यबार्हस्पत्ययोरिति। चोदकेति**। प्रकृतावाज्यधर्मापेक्षया औषधधर्माणां पाठतः प्राथम्यादिति भावः। **तत्रेति**। ननु प्रयोगवचनश्चोदकापेक्षया दुर्बल इति द्वादशे जैमिनेः परतन्त्रत्वापत्तेः 'स्वतन्त्रप्रतिषेधः स्या'दित्यधिकरणे वक्ष्यते तत्कथमिह प्रयोगवचनप्राबल्येन तत्पूर्वपक्ष इति चेत्। सत्यम्। अन्यत्र प्रयोगविधिर्दुर्बलः क्रमविषये तु स एव प्रबलः सर्वत्र क्रमक्लृप्तेः प्रयोगविध्यधीनत्वादिति पूर्वपक्ष्याशयः। **प्राप्तानामिति**। पदार्थप्राप्त्यधीनत्वात्प्रयोगविधेः तत्प्राप्तेश्चोदकाधीनत्वाच्चोदकोपजीवितया प्रयोगविधिर्दुर्बल इति भावः। **ननु** प्रयोगविधिः पदार्थप्राप्त्यर्थमेव चोदकमपेक्षते नतु क्रमार्थं। पाठक्रमेण मुख्ययोः क्रमं विदधतः प्रयोगविधेः स्वत एव पदार्थेष्वपि मुख्यक्रमेण क्रमकल्पने शक्तत्वात्। एवंच यथा 'शरमयं बर्हि'रित्यत्र बर्हिःकार्ये शरविधानार्थं तत्कार्यप्राप्तये चोदकस्योपजीव्यत्वेऽपि कुशप्राप्तेरनपेक्ष्यत्वाच्चोदकप्राप्तकुशबाध एवमिहापि क्रमांशे चोदकस्यानपेक्षितत्वाच्चोदकप्राप्तक्रमबाधः किं न स्यादित्यत आह—**नैराकाङ्क्ष्यादिति**। एवंच स्वयं कल्पनाशक्तस्यापि प्रयोगविधेः कल्पनामूलोच्छेदान्न क्रमान्तरकल्पकत्वमिति क्रमविषयेऽपि प्रयोगविधिर्दुर्बल इति भावः। द्वितीयं श्लोकं व्याचष्टे—**शरमयमिति**। सूत्रार्थस्तु—विकृतौ यथाप्रधानं क्रमः स्यात् पदार्थानां यथाप्रधानक्रमवचनप्रयोगविधिबलादिति॥

विकृतौ क्वचित्प्रकृतिधर्मानतिदेशाधिकरणम् ॥ ११ ॥

**विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥ [अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥ कालोत्कर्ष इति चेत् ॥ २१ ॥ न तत्संबन्धात् ॥ २२ ॥]**

साकमेधेष्टयस्तिस्रो त्र्यहे स्युः सद्य एव वा ॥ प्रातरादेर्द्वयोरह्नोः सत्त्वात्प्रकृतिवद्व्यहे ॥ २२ ॥
साङ्गमुख्यानुरोधेन प्रातरादेर्विधानतः ॥ श्रौतं सद्यस्त्वमन्यत्तु चोदकात्तेन दुर्बलम् ॥ २३ ॥

चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तत्र श्रूयते 'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सांतपनेभ्यो माध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सायमि'ति । किमेता त्र्यहकाला इष्टयः उत सद्यःकाला इति ।—'तत्रातिदेशतस्तासां प्राप्नोति त्र्यहकालता ॥ प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव ॥' य इष्ट्येति वचनं साङ्गानि कर्माण्यमावास्याकालं प्रत्युपाददानं द्वयोरह्नोस्तत्कालासंभवाद्युक्तं यदातिदेशिकं त्र्यहकालत्वं बाधते । प्रातरादिश्रुतिस्त्वहर्द्वयेऽपि प्रातःकालसंभवादतिदेशाविरोधिनी न तद्बाधं कर्तुमुत्सहते । तस्मादद्यतनेषु प्रातरादिषूपक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते ब्रूमः —'साङ्गं प्रारिप्सितं कर्म प्रातःकाले विधीयते ॥ स चाविशेषात्तन्त्रेण सर्वस्यैको भविष्यति ॥' चिकीर्षितार्थेन हि कालो विधीयते सर्वाङ्गयुक्तप्रधानभावना विचिकीर्षिता नैकदेशमात्रम् । अतो य एवैकः प्रातरादिकालः प्रयोगाय संगृह्यते स एव सर्वप्रारिप्सायां संगृह्यमाणः प्रारम्भापरनाम्नः प्रक्रमस्याविशेषात्तन्त्रेणैक एव सर्वाङ्गयुक्तप्रधानार्थेनोपात्तो भवति न प्रातर्द्वयस्यावकाशः तस्मादुपदेशात्सद्यःकालाः ॥

अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ॥ १२ ॥

**अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥ [तदादि वाऽभिसंबन्धात्, तदन्तमपकर्षे स्यात् ॥ २४ ॥]**

प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्यमू ॥ श्रुतामात्रे तदन्तेषु तदाद्येषु च वाग्रिमः ॥ २४ ॥
अन्येषां मुख्यकालत्वान्मैवं व्युत्क्रमशक्तितः ॥ प्रयाजान्ते ह्यनुयाजादिके चैतौ समूहके ॥ २५ ॥

अग्नीषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः 'तिष्ठन्तं पशुं

---

**विकृतिः प्रकृतिधर्मत्वात्०** ॥ १९ ॥ इहापि चोदक एवानुग्राह्य इति प्रत्यवस्थानात्सङ्गतिरिति सूचयन्पूर्वपक्षमाह —**तत्रेति** । यथा य इष्ट्यादिवाक्येन पौर्णमास्यादिकालविधानादितरासामिष्टीनां सद्यःकालत्वमेवं प्रातरादिकालविधानादेतासामपि सद्यःकालता किं न स्यादित्यत आह—**प्रातःश्रुतेरिति** । ननु तत्रापि नामावास्याश्रुतिविरोधः । अङ्गप्रधानयोरन्यतरत्रामावास्यासंबन्धमात्रेण तच्छ्रुत्युपपत्तेरित्याशङ्कां निराकुर्वन्व्याचष्टे—**य इष्ट्येति** । नन्वेवं सति कर्मणि कर्मान्तरायोगादनीकवतेष्टिसमाप्त्यनन्तरं सांतपनीयोपक्रमः स्यात् । तथाच यथा देवदत्तः प्रातरपूपान्भक्षयति माध्यंदिने विविधमन्नमश्नाति सायं मोदकान्भक्षयतीत्युक्ते एकस्मिन्नहनि प्रातरादाविति प्रतीयते, तथेहाप्येकस्मिन्नेवाहनि प्रातरादावनीकवतादीनां त्रयाणामपि कर्तव्यत्वं प्रतीयमानं विरुध्येतेत्यत आह—**तस्मादिति** । सति प्रमाणे कर्ममध्येऽपि कर्मान्तरारम्भो युज्यते दर्शकर्ममध्येऽनुष्ठितनिशीष्टिवत् । ततश्च त्र्यहकालत्वप्रापकबलादेकदिनसंबन्धिप्रातरादिकर्तव्यत्वावगमबलाच्च पूर्वेद्युःप्रातरादिष्विष्टित्रयमुपक्रम्य परेद्युःप्रातरादिषु समापनीयमिति न कश्चिद्विरोध इति भावः । कालस्य प्रयोगापरनामधेयसाङ्गप्रधानभावनयान्वयेनाङ्गप्रधानयोरेककालत्वमेकादशे वक्ष्यते तदिह त्र्यहकालत्वे बाध्येत । तस्मादौपदेशिककालत्वबलादातिदेशिकत्र्यहकालत्वं बाध्यमिति व्याचष्टे—**चिकीर्षितेति** । एकस्मिन्नहनीत्युपपदाभावेन दिनद्वयसंबन्धिप्रातरादि वा ग्रहणं किं न स्यादिति शङ्कां निराकर्तुं प्रारम्भाख्यप्रक्रमाविशेषोक्तिः । सर्वचिकीर्षायां विधीयमानस्य कालस्य चिकीर्षाविशेषादेव सर्वार्थत्वप्राप्तेरुपपदाभावेऽप्येकदिनसंबन्धित्वं लभ्यत इति भावः । त्र्यहकालत्वे त्वन्यादृशः क्रमः सद्यःकालत्वे चान्यादृश इति क्रमविशेषपर्यवसानादध्यायसङ्गतिः । सूत्रार्थस्तु—यथा प्रकृतिस्त्र्यहकाला शिष्टा तथानीकवतादिविकृतिरपि तत्काला स्याद्विकृतेः[1] प्रकृतिधर्मत्वादिति ॥

**अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात्** ॥ २३ ॥ सूत्रे उत्कर्षग्रहणमपकर्षस्याप्युपलक्षणं न्यायसाम्यादि-

---

१ विकृतीनां.

**प्रयजन्ती'ति, तथोत्कर्षः 'सवनीयेऽनूयाजानामग्निमारुतादूर्ध्वमनूयाजैश्चरन्ती'ति। तत्र किं श्रुतमात्रनिष्ठावुत्कर्षापकर्षावुत तदाद्युत्कर्षस्तदन्तापकर्ष इति संशये—'श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः ॥ न तदन्ततदादीनां भवेतामप्रमाणकौ ॥ प्रधानसंनिधिश्चैवं बाधितो न भविष्यति ॥ ऊर्ध्वेपूर्वपदार्थानामेवंप्राप्तेऽभिधीयते ॥ पूर्वेणोपस्थितं कार्यमुत्तरं कर्म चोदकात् ॥ प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥' अनूयाजोपस्थितास्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः। अनूयाजेपूत्कृष्टेष्वनुत्कृष्टाः पूर्वं क्रियमाणा विगुणाः स्युः, एवमाघारोत्तरकाले कर्तव्याः प्रयाजाः केवला अपकृष्यमाणाः क्रमलोपाद्दुष्येयुः। तस्मात्तदादीनामुत्कर्षस्तदन्तानां चापकर्षः ॥**

प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणम् ॥ १३ ॥

## प्रकृत्या कृतकालानाम् ॥ २५ ॥ [शब्दविप्रतिषेधाच्च ॥ २६ ॥]

**सावनेष्वैष्टिकानां किं सौमिकेभ्यो न पूर्वता ॥ पूर्वता वात्र नियमो नास्ति तद्धेतुवर्जनात् ॥ २६ ।**

**प्रतिप्रस्थातृकर्तृत्वे ह्यध्वर्योरपि कर्तृता ॥ प्रोक्षणाद्याः पुरः पश्चात्सौमिकाः स्युः प्रवृत्तितः ॥ २७ ॥**

**प्रातरनुवाकप्रैषं होत्रे दत्वानन्तरं 'प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रेष्यती'ति विधायानन्तरं प्रचरणीहोमादयः सौमिकाः पदार्थाः पठितास्तत्र प्रैषवशान्निर्वापस्तावत्तदैव कर्तव्यः तदनन्तरं सौमिकाः पदार्थाः कर्तव्याः 'अग्नीदग्नीन्विहर, बर्हिः स्तृणीहि, पुरोडाशानलंकुर्वि'त्येतत्प्रैषान्तास्तत ऐष्टिकाः प्रोक्षणादयः उत प्रोक्षणादीन्प्रागलंकरणात्कृत्वा ततः सौमिका इति निर्वापः प्रतिप्रस्थातृकर्तृकत्वान्ना-**

---

त्याशयेनोदाहरति—**अग्नीषोमीय इति। सवनीय इति**। तत्र प्रकृतितोऽग्नीषोमीयादिडाप्राशनानन्तरं प्राप्तानामनूयाजानामाग्निमारुतशस्त्रानन्तर्यं श्रूयत इत्यर्थः। स्वस्थानात्पूर्वत्वमपकर्षः। ततः परत्वं चोत्कर्षः। **नन्वेवं** प्रयाजानां स्वपूर्वपदार्थानन्तर्यलक्षणस्यानूयाजानां स्वोत्तरपदार्थपूर्वभावलक्षणस्य च क्रमस्य लोपः स्यादित्यत आह—**प्रधानेति।** तवापि प्रयाजपूर्वपदार्थानामनूयाजोत्तरपदार्थानां च प्रधानप्रत्यासत्तिबाध इति तुल्यतायां श्रुत्यनुग्रहात् श्रुतमात्रोत्कर्षापकर्षावित्यर्थः। एवंच यथाश्रुत्यनुग्रहादेकदिनसंबन्धिप्रातरादौ साङ्गकर्मानुष्ठानमेवमिहापि श्रुत्यनुग्रहात् श्रुतमात्रोत्कर्षापकर्षाविति प्रत्यवस्थानात्सङ्गतिः। श्रुतिर्हि प्रयाजानूयाजयोरुत्कर्षापकर्षौ बोधयति नतु पूर्वोत्तराणां वारयति। प्रधानप्रत्यासत्तिश्च प्रयोगवचनगम्या, प्रयोगवचनश्च चोदकापेक्षया दुर्बलत्वाच्चोदकावगतक्रमाविरोधिनीमेव प्रधानप्रत्यासत्तिमङ्गानां बोधयति नतु तद्विरोधिनीमत्यन्तसंनिकर्षलक्षणाम्। तस्माच्चोदकावगतक्रमानुरोधेन तदन्तापकर्षस्तदाद्युत्कर्षश्च न्याय्य इत्याशयेनाह—**पूर्वेणेति।** पूर्वोत्तरपदार्थयोः क्रम एव तदन्तत्वतदादित्वनियामकः, क्रमपरिग्रहहेतुतया च श्लोके पूर्वेणोत्तरस्योपस्थित्यभिधानमित्याशयेन व्याचष्टे—**अनूयाजेति ॥**

**प्रकृत्या कृतकालानाम् ॥ २५ ॥ प्रातरिति**। प्रातरनुष्टेयानुवाकार्थं प्रातर्यावभ्यो देवेभ्योऽनुब्रूहीति प्रैषमित्यर्थः। **प्रचरणीति**। जुहूसदृशपात्रविशेषः तत्साधनकः 'श्रृणोत्वग्निः समिधा हव'मिति मन्त्रकरणको होमः। तत्र यद्यपि सौमिकानां ऐष्टिकानां चावान्तरप्रयोगवचनभेदोऽस्ति तथापि महाप्रयोगवचनैक्यात्तत्परिगृहीतानामेककर्तृकाणामवश्यंभाविनि क्रमे तद्विशेषविचारो युज्यत इत्याशयेन संशयमाह—**तदनन्तरमिति। एतत्प्रैषान्ता इति**। प्रैषपर्यन्ता इत्यर्थः। नतु प्रैषसहिता इत्यर्थः। तथासति प्रेषितेनाग्नीध्रेण पुरोडाशालंकरणं 'देवस्त्वा सविता मध्वानक्ति'त्यभिघारणाख्यं तदानीमेव कर्तव्यं स्यान्नच तत्संभवति। प्रोक्षणावहननादिष्वकृतेषु पुरोडाशस्यानिष्पन्नत्वेनाभिघारणासंभवादिति ध्येयम्। **नाध्वर्योरिति**। ननु प्रोक्षणादिकमपि प्रतिप्रस्थातृकर्तृकमेव होत्रा प्रातरनुवाकेऽनूच्यमाने 'मनसा ते वाचं प्रतिगृणामी'त्यध्वर्युणा मनसा प्रतिगरं कुर्वता होतुः समीपे प्रातरनुवाकसमाप्तिपर्यन्तमासितव्यमिति। एवं यावत्प्रातरनुवाकोपास्तौ व्यापृतस्याध्वर्योः प्रोक्षणादिकर्तृत्वासंभवेनाध्वर्युपुरुषस्य प्रतिप्रस्थातुरेव तत्र कर्तृत्वात्। एवंचैककर्तृकत्वान्निर्वापः कथं प्रोक्षणं नोपस्थापयतीतिचेदुच्यते। प्रातरनुवाकोपास्तिरध्वर्योर्विकल्पिता। इदं चाधिकरणं प्रातरनुवाकोपास्त्यभावपक्षे न तदुपास्तिपक्षे। तथात्वे प्रातरनुवाकप्रैषानन्तरमेव निर्वापप्रैषमुक्तवतोऽध्वर्योः प्रातरनुवाकोपास्त्या निर्वापसंस्कारस्य चिरनिवृत्तत्वेन निर्वापतः प्रोक्षणाद्युपस्थित्यसंभवेन सिद्धान्तासिद्धिप्रसङ्गादनुपास्तिपक्षे चाध्वर्योरन्यत्र व्यापृतत्वाभावेन चोदकप्राप्तमध्वर्युकर्तृकत्वमेव

ध्वर्योः प्रोक्षणमुपस्थापयति । सौमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकं तस्मादनियमः । उच्यते—निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति प्रयोजकत्वात् । अतोऽसौ प्रोक्षणादीनुपस्थापयति । अतस्ते तावत्कर्तव्यास्ततः सौमिकाः ॥

वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ॥ १४ ॥

## असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत् ॥ २७ ॥

**यूपच्छेदापकर्षः किं तदन्ते श्रुत एव वा ॥ प्रयाजवत्तदन्तत्वान्नयनं चापकृष्यताम् ॥ २८ ॥**
**अग्नीषोमप्रणयनं सौमिकं पाशुकी छिदा ॥ प्रयाजाघारवैषम्याच्छ्रुतमात्रापकर्षणम् ॥ २९ ॥**

ज्योतिष्टोमेऽग्नीषोमीयप्रणयनात्परतो यूपच्छेदनं पश्वङ्गमाम्नातं । दीक्षासु यूपं छिनत्तीत्यपकृष्यमाणमग्नीषोमीयप्रणयनादीनपकर्षति उत नेति संशये प्रयाजवदाघारादीनपकर्षतीति प्राप्ते उच्यते—'सौमिकेन पदार्थेन पाशुकस्य नहि क्रमः । अङ्गं तदपकर्षेण सौमिको नापकृष्यते ॥' आघारोत्तरकालत्वं प्रयाजादीनामङ्गं तन्माबाधीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते । पाशुकस्यतु यूपच्छेदनस्य न सौमिकाग्नीषोमप्रणयनानन्तर्यमङ्गं यत्सिद्ध्यर्थं प्रणयनमपकृष्येत । भिन्नप्रयोगवचनपरिगृहीतत्वात्तयोः । एकप्रयोगान्तर्गतानां हि मिथः क्रमोऽङ्गं भवति तस्माच्छ्रुतमात्रापकर्षः ॥

दक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥

## प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

**सवनीये पिष्टलेपफलीकरणहोमकौ ॥ उत्कृष्टव्यौ न वाऽद्यः स्यादनुयाजोत्तरत्वतः ॥ ३० ॥**
**पश्वर्थाः स्युरनूयाजाः पुरोडाशगताविमौ ॥ उभौ होमौ प्रयोगस्य भेदान्नोत्कर्षमर्हतः ॥ ३१ ॥**

सवनीयपशुतन्त्रं सवनीयपुरोडाशेषु प्रसज्यते। दाक्षिणाग्निकौ तु पिष्टलेपफलीकरणहोमौ पशाववियमानौ पशुपुरोडाशार्थं कर्तव्यौ । तौ पाशुकैरनूयाजैराग्निमारुतादूर्ध्वमुत्कृष्यमाणैरुत्कृष्येते उत नेति संशये प्रकृतौ तत्परत्वेन दाक्षिणाग्निकयोः क्लृप्तक्रमत्वादुत्कर्षे प्राप्तेऽत्रापि प्रयोगभेदादनुत्कर्षः। पाशुकै-

---

प्रोक्षणादेः । तस्माद्भिन्नकर्तृकत्वमिति भावः । **निर्वापव्यवहितानामिति** । निर्वापप्रैषव्यवहितानामित्यर्थः । एवंच पूर्वत्रानूयाजानन्तरं सूक्तवाकाद्युपस्थितिनियमात्तेषामनूयाजानन्तरं कर्तव्यत्वनियमेऽपि नेह निर्वापानन्तर्यनियमः । उपस्थितिनियमाभावादिति प्रत्यवस्थानात्सङ्गतिः । **तस्मादिति** । नच यदा निर्वापानन्तरं सौमिकास्तदा यदास्य होतुर्विजानाति 'अभूदुषारुशत्पशु'रिति तत्प्रचरण्या जुहोतीति श्रुतं प्रातरनुवाकपरिधानीयात्मकाया 'अभूदुषारुशत्पशु'रित्येतस्या ऋचः काले प्रचरणीहोमकर्तव्यत्वं बाध्येतेति वाच्यम् । तद्विधेरनुपास्तिपक्षाभिप्रायत्वादित्याशयः । सूत्रार्थस्तु—कृतकालानां ज्ञातकालानां पदार्थानां प्रकृत्या नियमः स्यात् । प्रयुज्यमान एव पूर्वः पदार्थ उत्तरमुपस्थापयति ॥

**असंयोगात्तु वैकृतं०** ॥ २७ ॥ पूर्ववदिहापि पूर्वपदार्थस्योत्तरपदार्थोपस्थापकत्वं पाठतः क्रमे सति बद्धक्रमत्वाविशेषादिति प्रत्यवस्थानात्सङ्गतिः । **अग्नीति** । औपवसथ्येहनि शालामुखीयाग्नेः प्राग्वंशगतसोमस्य चाग्नीध्रे हविर्धाने च प्रणयनानन्तरमित्यर्थः । **प्रयाजेति** । अवान्तरप्रयोगवचनभेदेऽपि महाप्रयोगवचनैक्यात्क्रमापेक्षत्वात्पाठावगतक्रमोऽवश्यकः स्वीकर्तव्य इति तदन्तापकर्ष इत्यर्थः । **एकेति** । एकापूर्वसाधनानां हि पदार्थानां केन क्रमेणानुष्ठितानाममीषामेतदपूर्वसाधनत्वमित्येवं क्रमापेक्षा भवतीत्यनुष्ठानं च प्रयोगस्तेनैकप्रयोगवचनपरिगृहीतानामेव मिथःक्रमोऽङ्गं न भिन्नप्रयोगवचनपरिगृहीतानां तेषां भिन्नापूर्वसाधनत्वेनैकापूर्वसाधनताप्रयुक्तानुष्ठानक्रमापेक्षाविरहादित्यर्थः । महाप्रयोगवचनो ह्यपकर्षविधानानन्तरमेव प्रवर्तते न ततः पूर्वम् । ततश्च महाप्रयोगवचनापेक्षाबलात्क्रमक्लृप्तेरपकर्षविधानदशायामभावान्न महाप्रयोगवचनैक्यबललभ्यक्रममादाय तदन्तापकर्षोऽत्र संभवतीति भावः । सूत्रार्थस्तु—वैकृतं प्रतिकृष्यमाणं तदेव प्रतिकृष्येत न तदन्तं तस्य पूर्वेण सह क्रमलक्षणसंयोगाभावादिति ॥

**प्रासङ्गिकं च नोत्कर्षेदसंयोगात्** ॥ २८ ॥ **प्रसज्यत इति** । सवनीयपशुप्रयोगस्य सवनत्रयव्यापितया तदीयक्रममध्ये विहितेषु सवनीयपुरोडाशेषु सवनीयपश्वनुष्ठिताङ्गजातस्य प्रसङ्गादुपकारकत्वादिति भावः । दाक्षिणाग्निकौ दक्षिणाग्नौ कर्तव्याविति यावत् । **कर्तव्याविति** । पशाववियमानतया प्रसङ्गादुपकारभावेऽसति पौरोडाशिकप्रयोगविधिना तयोः पुरोडाशार्थतया कर्तव्यत्वबोधनादिति भावः । पूर्ववैषम्येण सङ्गतिं सूचयन्नाह—**प्रकृताविति** । दर्शपूर्णमासयोरित्यर्थः । अनूयाजानां पुरोडाशार्थानुष्ठानाभावेऽपि तदुपकारकत्वात्तदुत्कर्षे तदाद्युत्कर्षः स्यादिति भावः । **पाशुकैरिति** ।

र्थानूयाजैर्न पौरोडाशिकयोर्होमयोः क्रमोऽङ्गं यत उत्कृष्येयाताम् । पौरोडाशिकास्त्वनूयाजा नैव क्रियन्ते नोत्कृष्यन्ते यैरुत्कृष्यमाणैर्दाक्षिणाग्निकहोमयोरुत्कर्षः। तस्मात्तयोः स्वस्थान एवानुष्ठानम्॥

पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम्॥ १६॥

**तथाऽपूर्वम् ॥ २९ ॥**

**पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके ॥ न वाद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये ॥ ३२ ॥**

**अभिवासात्परा वेदिरिति तत्क्रमबोधतः ॥ प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् ॥ ३३ ॥**

दर्शपूर्णमासयोर्हविरभिवासनोत्तरकाला वेदिराम्नाता पूर्वेद्युरमावास्यायामपकृष्यमाणा हविरभिवासनान्तान्पदार्थानपकर्षति नेति संशये एकप्रयोगसंबन्धित्वात्पाठतश्च क्रमक्लृप्तेरनपकर्षे क्रमलोपेन विगुणा वेदिः स्यादिति प्राप्ते ब्रूमः—'सामान्येन क्रमोऽङ्गं स्यात्पाठतः प्रक्रियावशात् ॥ विशेषतः श्रुतं वाक्यादमावास्ये क्रमान्तरम् ॥' हविरभिवासनोत्तरकालता हि दर्शपूर्णमासयोः सामान्यप्राप्त्यामावास्यायां स्यात् । पाठश्च तस्य प्रमाणं प्रकरणाच्च विनियोगः । पूर्वेद्युरनुष्ठानं त्वमावास्यायां विशेषतो विहितम् । श्रौतश्चायं क्रमः । वाक्येन चामावास्यायां विनियोगः । तत्र यावदेव हविरभिवासनोत्तरकालतारूपः क्रमो दुर्बलप्रमाणको नैव कल्प्यते तावत्पूर्वेद्युरनुष्ठानं चोद्यमानमक्लृप्तक्रमस्य वेदिमात्रस्य चोद्यते न ततः प्राचाम् । तस्मादत्रापि श्रुतमात्रापकर्षः ॥

सांतपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम्॥ १७॥

**सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ ३० ॥ [अव्यवायाच्च ॥३१॥ असंबन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ प्रापणाच्च निमित्तस्य ॥ ३३ ॥ संबन्धात्सवनोत्कर्षः ॥ ३४ ॥]**

**दैवात्सांतपनी सायं प्राप्ता चेदग्निहोत्रकम् ॥ उत्कर्षेति न वोत्कर्षः पौर्वापर्यस्य भावतः ॥ ३४ ॥**

**भिन्नप्रयोगप्राप्तत्वादग्निहोत्रं स्वकालके ॥ इष्टिमध्येऽपि हुत्वाथ यागशेषः समाप्यताम् ॥ ३५ ॥**

'मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुमि'ति श्रुता सांतपनीया मध्यंदिने उपक्रान्ता दैवान्मानुषाद्वा प्रतिबन्धात्सायंकालं यावदुत्कृष्टाऽग्निहोत्रमुत्कर्षेति नेति संशयः । यद्यपि चात्र भिन्नप्रयोगयोः सांतपनीयाग्निहोत्रयोर्न मिथः क्रमोऽङ्गं तथापि सायंकाले द्वयोः संनिपतितयोरवश्यंभाविनि पौर्वापर्ये

---

पाशुकानामुपकारित्वेऽप्युपकारकाणां संभूयग्रहणेन तेन तेषु क्रमापेक्षाभावादुपकारकपदार्थेष्वेव क्रमापेक्षा। ते चात्र परकीया न तैः पौरोडाशिकयोः क्रमोऽङ्गम् । यैस्तु पौरोडाशिकैः क्रमोऽङ्गं संभाव्यते न तेषामत्रानुष्ठानमुत्कर्षो वास्ति येन तदाद्युत्कर्षः स्यादित्यर्थः । सूत्रार्थस्तु—प्रसङ्गादुपकारकं प्रासङ्गिकं पाशुकानूयाजादिकं दाक्षिणाग्निहोमादीन्नोत्कर्षेदसंयोगादिति ॥

**तथाऽपूर्वम् ॥ २९ ॥ एकेति** । अनेन पाशुकानुयाजपौरोडाशिकदाक्षिणाग्निकहोमवत्प्रयोगभेदाभावेन पूर्ववैषम्यात्सङ्गतिः, अग्नीषोमीयप्रणयनवत्प्रयोगभेदाभावाद्यूपाधिकरणेनागतार्थत्वं च सूचितम् । **नन्वेवमप्यक्लृप्तक्रमत्वान्नापकर्ष** इत्यत आह—**पाठत इति** । अन्यथा पौर्णमास्यां वेदेरभिवासनोत्तरकालत्वं न स्यादिति भावः । अमावास्यायां हविरभिवासनं कृत्वा वेदिः कर्तव्येत्येवं क्रमक्लृप्तेः पूर्वमेव वेद्यपकर्षविधिप्रवृत्तेरक्लृप्तक्रमत्वात्तन्मात्रापकर्ष इत्याह—**सामान्येनेति** । श्रुतं श्रुतिगम्यमित्यर्थः । **श्रौतश्चेति** । पूर्वेद्युरमावास्यायामिति वाक्यस्य क्रमविधिपरत्वेन स्वपरशब्दविहितत्वादिति भावः । **तावदिति** । ततश्च पाठक्रमः पौर्णमास्यामिति भावः । अभिवासनं पुरोडाशमभितोऽग्नेर्निवासनम् । ततश्चाभिवासनान्तापकर्षेऽपरेद्युरनुष्ठेयाङ्गारापोहनपर्यन्तं पुरोडाशमभितोऽग्नेरवस्थाने पुरोडाशस्य भस्मतापत्त्या प्रधानविरोधः स्यात् । नचैवमर्थक्रमादभिवासनमात्रानपकर्षेऽपि ततः पूर्वेषामपकर्षोऽस्त्विति युक्तम् । तेषां वेद्यासंबद्धक्रमत्वाभावेनाभिवासनापकर्षादेव तेषामपकर्षस्य वाच्यतयाऽभिवासनानपकर्षे तेषामप्यपकर्षासंभवात् । तस्माद्यत्रैवं प्रधानविरोधो नास्ति तादृशमुदाहरणान्तरं द्रष्टव्यमित्याहुः । अप्रकृतिपूर्वककर्मपरेणापूर्वशब्देनाक्लृप्तक्रमत्वमुपलक्षितं तादृशं वेदिकरणं प्रासङ्गिकवन्नापकर्षेदिति ॥

**सांतपनीया० ॥ ३० ॥ उत्कर्षतीति** । नचोत्कर्षे मध्यंदिनात्मस्वकालाभावात्सांतपनीयापरित्याग एवेति कथं विचार इति वाच्यम् । प्रक्रान्तकर्मणः प्राप्त्यवश्यंभावेन परित्यागायोगादिति भावः । अधिकरणारम्भमाक्षिपति—**यद्यपीति** । प्रयोगभेदादङ्गभूतक्रमासंभवेऽपि दैवादापततः क्रमस्य संभवादधिकरणारम्भं समर्थयते—**तथापीति । न तस्या इति** ।

सांतपनीयां कृत्वा क्रियमाणस्य चाग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति किं न्याय्यमिति युक्ता चिन्ता। तत्र सांतपनीया तावत्स्वकालं मध्यंदिनमतिपन्नैव न तस्याः कश्चिदुभयथापि विशेषः। अग्निहोत्रस्य तस्मिन्काले क्रियमाणस्य प्रणयनलोपः स्यात्। उत्कर्षेतु काललोपः। तत्र कस्यानुग्रहः कस्य लोप इति चिन्त्यते। तत्र मुख्यत्वात्प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते उच्यते—कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्तमग्निहोत्रं किंचिदङ्गमपहायापि कर्तव्यम्। तस्मादग्निहोत्रं हुत्वा सांतपनीया समापनीया॥

उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम्॥ १८॥

## षोडशी चोक्थ्यसंयोगात्॥ ३५॥

**उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथ वा॥ स्तोत्रकालाय नोत्कर्षः पूर्ववत्षोडशिग्रहे॥ ३६॥**
**ग्रहं पराञ्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वभासनात्॥ सस्तोत्रे ग्रह उत्कृष्टे स्तोत्रकालः प्रबाध्यताम्॥ ३७॥**

ज्योतिष्टोमे षोडशिनं प्रकृत्यामनन्ति 'तं पराञ्चमुक्थ्येभ्यो निगृह्णाति षोडशिन'मिति। तद्यदा दैवादुक्थ्यानामुत्कर्षो भवति किं तदा षोडश्युत्कृष्यते नेति संशयः।—'तत्र नोत्कर्षणं युक्तं स्तोत्रकालोपसंग्रहात्॥ उत्कर्षपक्षे हीयेत स्वकालात्स्तोत्रमस्य हि॥' यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत ततः प्रधानकालत्वादङ्गानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति वचनात्तदङ्गभूतं स्तोत्रमप्युत्कृष्येत। 'तत्र समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति विहितः कालो बाध्येत। नन्वनुत्कर्षपक्षेऽप्युक्थ्यपरभावो बाध्येत बाध्यतां क्रममात्रं हि तत्कालस्तु बलीयानित्युक्तम्। तस्मा-

---

यद्यप्यन्तराऽग्निहोत्रकरणे सांतपनीयापदार्थानां क्रमहानिरस्ति तथाप्यग्निहोत्रवत्पदार्थवैगुण्यं नास्तीति तात्पर्यम्। **प्रणयनलोप इति।** सांतपनीयार्थं प्रागेवाग्नेः प्रणीतत्वेन सायंकाले पुनरग्निहोत्रार्थं प्रणयनासंभवादिति भावः। **साङ्गेति।** कालस्यैकादशन्यायेन प्रयोगान्वयादिति भावः। जघन्यत्वेनेत्यनेन पूर्वत्र जघन्यपाठक्रमवदिह जघन्यकालस्य बाध इति प्रत्यवस्थानात्सङ्गतिः सूचिता। नच कालस्याधिकारिविशेषणत्वात्तदभावेऽधिकाराभावात्कथमग्निहोत्रानुष्ठानमिति वाच्यम्। कालस्याधिकारिविशेषणत्वेनाश्रवणादिति भावः। अश्रवणेऽपि कालस्यानुपादेयतया यदा स्वयमेव काल आपतति तदा कर्म कर्तव्यमित्यर्थात्कालतोऽधिकारपर्यवसानादार्थिकं कालस्याधिकारिविशेषणत्वमित्याशयेनाह—**कालस्येति।** सूत्रार्थस्तु—यथा प्रातःसवनमुत्कृष्यमाणं माध्यंदिनसवनमुत्कर्षति एवं सांतपनीयाप्युत्कृष्यमाणाग्निहोत्रमुत्कर्षेत्तदाग्निहोत्रस्य प्रणयनाभावेन वैगुण्यादिति॥

**षोडशी चोक्थ्यसंयोगात्॥ ३५॥** कालतः पदार्थबाधे क्रमबाधः कैमुत्या सिद्ध इति प्रत्यवस्थानात्सङ्गतिः। **ननु** प्रातिस्विककालरहितानामेवाङ्गानां प्रधानकालत्वं न सर्वेषाम्। तथाच प्रधानकालमनादृत्यापि स्वकाले स्तोत्रसंभवान्न तस्य कालसंभव इत्यस्वरसादाह—**ग्रहं वेति।** नचास्य सामान्यविषयस्य षोडशिस्तोत्रव्यतिरिक्तविषयत्वमस्त्विति युक्तम्। विरोधाभावे सामान्यस्य सर्वविषयत्वात्। नच दैवान्मानुषाद्वा प्रातबन्धादुक्थ्योत्कर्षे स्तोत्रकालोपसंग्रहादस्ति विरोध इति वाच्यम्। नहि शास्त्रं दैवमानुषप्रतिबन्धकृतविरोधमपेक्ष्य विशेषेण सामान्यबाधं करोति किंतु स्वरूपकृतविरोधम्। नचात्र स्वरूपतो विरोधोऽस्ति दैवमानुषप्रतिबन्धाभावे विरोधाभावादिति भावः। समयाध्युषिते अर्धास्तमित इत्यर्थः। **क्रममात्रमिति।** नन्विदमयुक्तं 'तं पराञ्चमुक्थ्येभ्य' इत्यस्योक्थ्योत्तरकालविधिपरत्वात्। वक्ष्यति च दशमे स्वयमेव ग्रन्थकारः। तस्माद्दिक्शब्दोयं कालवचनः। तन्निमित्ता चेयं पञ्चमी उक्थ्यानामूर्ध्वकाले षोडशिनं गृह्णातीति। नचैवमपि नात्र षोडशिनोऽनुत्कर्षपक्षे कालबाधः। उक्थ्येषूत्कृष्टेष्वप्यनपायो हि 'कालस्य लक्षणं हि पुरोडाशा'विति न्यायेनैकपुरोडाशायां पुरोडाशद्वयोपलक्षितान्तरालकालवदुक्थ्योपलक्षितकालस्यानपायात्। कालबाधासंभवात्क्रममात्रस्यैवानुत्कर्षपक्षे बाध इत्येवमभिप्रायकत्वान्नानुपपत्तिरिति वाच्यम्। एवं तर्हि सिद्धान्तासिद्धिप्रसङ्गात् कालस्यानपाये कालस्य प्रबलतया कालानुरोधेन तदानीमेव षोडशिग्रहयागाभ्यासस्यानुष्ठेयतयोक्थ्योत्कर्षेपि तदुत्कर्षासंभवात्। तस्माद्यदि कालोऽनपेतस्तदा सिद्धान्तासिद्धिर्यदि चोक्थ्योत्कर्षे उक्थ्यानन्तरकालस्यापि पश्चादेव संपत्त्या ततः पूर्वं तादृशकालाभावमाश्रित्य सिद्धान्तं समर्थयसे तदा प्रधानकालस्य प्रबलत्वात्तद्बाधप्रसङ्गादङ्गकालानुसारेण पूर्वपक्षानुत्थितिरित्युभयतःपाशा रज्जुरिति चेन्मैवम्। वस्तुत उक्थ्यानन्तरकालस्य पश्चात्संपत्तावपि पूर्वमप्युपलक्षणीयानपायन्यायेन संभवमात्रेण पूर्वपक्षप्रवृत्त्युपपत्तेः। यदि च **वस्तुतः** कालविधेरुपलक्ष्यानपायन्यायेनानुत्कर्षस्थलीयसमयविशेषे एव तात्पर्यादुत्कर्षे कालबाधस्तदा नायं कालविधिः किंतु क्रममात्रविधिरित्यभिप्रेत्याधिकरणप्रवर्तनान्न कश्चिद्दोष इति भावः। **ननु** 'पराञ्चमुक्थ्येभ्यः' इति षोडशिग्रहणस्योक्थ्यपरभावो

दनुत्कर्षः । उच्यते—'क्रमोपि तु प्रधानाङ्गभूतत्वाद्बलवानसौ ॥ कालः स्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हति ॥' तं पराचमुक्थ्येभ्य इति वचनात्षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्गं सोनुत्कृष्यमाणे प्रधानाङ्गं सद्बाध्येत । नचैतद्युक्तमतो वरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्षः ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥

## पञ्चमाध्याये द्वितीयः पादः ।

वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानाधिकरणम् ॥ १ ॥

**संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥ [सर्वेषां वैकजातीयं कृतानुपूर्वत्वात् ॥ २ ॥ कारणादभ्यावृत्तिः ॥ ३ ॥]**

**वाजपेये किमेकैकपशौ सर्वसमापनम् ॥ सर्वेषु वैकैकधर्म आद्यः साहित्यसिद्धये ॥ १ ॥**
**वचनात्पशुसाहित्यं प्रयोगोक्त्या तु कल्प्यते ॥ धर्मसाहित्यमेतच्च सिद्धान्तेऽपि न हीयते ॥ २ ॥**
**प्रतिग्रहे तु बहुत्वे पूर्वन्यायोऽस्ति वा न वा ॥ अस्ति तत्साम्यतो मैवं पुरोडाशस्य शेषतः ॥ ३ ॥**

वाजपेये प्राजापत्याः पशवः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'त्येकस्मिन्काले विहिताः सह प्रयोक्तव्याः तेषामारादुपकारकाणां तन्त्रं द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रतिपशु भेदेन कर्तव्याः ते किमेकैकस्य कार्त्स्न्येन कृत्वा ततोऽपरस्य कर्तव्याः किंवोपाकरणं सर्वेषां कृत्वा ततो नियोजनमिति । तत्र—'एकैको हि पशुः स्वाङ्गान्यव्यपेतान्यपेक्षते ॥ चोदकोऽप्येवमेवातः काण्डानुसमयो भवेत् ॥' प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्तव्याः प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतमिहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते । अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्तव्यम् । वाचनिकं तु साहित्यमारादुपकारकतन्त्रत्वादप्युपपन्नम् । उच्यते—'वचनेनैककालत्वं पशूनामिह चोदितम् ॥ न तत्प्रयोगवचनाच्चोदकाद्वापि बाध्यते ॥' काल्पनिकं प्रयोगवचननिबन्धनं साहित्यं चोदकं चानुमानम् । प्रत्यक्षवचनेन तु 'वैश्वदेवीं

---

विधीयते ग्रहणं चाङ्गमेव न प्रधानं तथाच नोक्थ्यपरभावस्य प्रधानधर्मत्वमित्यत आह—**तं पराचमिति** । अगृहीत्वा यागासंभवात् ग्रहणस्य प्रधानयागोपक्रमरूपत्वाच्च ग्रहणे चोद्यमान उक्थ्यपरभावस्तद्ग्रहयागाभ्यास एव पर्यवस्यतीत्यस्ति प्रधानधर्मत्वमिति भावः । वस्तुतस्तु उक्थ्यपरभावस्य केवलग्रहणाङ्गत्वेऽपि ग्रहणस्य संनिपातित्वेनारादुपकारकस्तोत्रापेक्षयान्तरङ्गत्वादन्तरङ्गधर्मत्वेन क्रमस्य बहिरङ्गस्तोत्रकालापेक्षया प्रबलत्वात्तदनुग्रहायोत्कर्ष आवश्यक इति ध्येयम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां पञ्चमाध्यायस्य प्रथमः पादः ॥ १ ॥**

**संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥** पूर्वस्मिन्पादे श्रुत्यादिभिः प्रमाणैः क्रमो निरूपितः । इह तु यथायथं पूर्वोक्तप्रमाणावगम्यं क्रमं स्वीकुर्वन्प्रयोगविधिरनुष्ठेयानुष्ठातृस्वरूपनिरूपणन्यायोपबृंहणेन क्वचित्पदार्थानुसमयं गृह्णाति क्वचित्काण्डानुसमयमिति श्रुत्यादिप्रमाणगम्यस्यैव क्रमस्य विशेषपर्यवसानव्युत्पादनात्पादान्तरत्वमानन्तर्यं च । **वैश्वदेवीमिति** । अनेन वाक्येन चरन्तीत्यनुष्ठानापरपर्यायप्रयोगाभिधानात्प्राजापत्यैरिति तन्त्राभिधानेन साहित्यावगमात् क्त्वाप्रत्ययेन वैश्वदेव्युत्तरकालावगमाच्चैकस्मिन्काले सर्वे पशवः प्रयोक्तव्या इत्यर्थः । **तन्त्रमिति** । ततश्च न तेषामत्र विषयत्वमिति भावः । कार्त्स्न्येन कृत्वा सर्वान्कृत्वेत्यर्थः । **काण्डेति** । काण्डं पदार्थवर्गः । अनुसमयः पश्चात्सङ्गतिः 'इण् गतौ'विति धातुनिष्पन्नत्वादनुसमयशब्दस्य । ततश्चैकस्य पशोः कृत्स्नोपाकरणादिपदार्थवर्गं कृत्वा परस्य तथा कर्तव्यमित्यर्थः । **ननु** प्राजापत्यपशूनां संप्रतिपन्नदेवताकत्वेन तन्त्रेणैव प्रधानमनुष्ठेयमतएव श्रूयते 'एकधा वपा जुहोति एकदेवत्या हि एत' इति । तथा चैकैकस्य प्रधानस्य स्वाङ्गव्यवहितस्यानुष्ठानासंभवात्पदार्थानुसमये यावद्भिः क्षणैर्व्यवधानं काण्डानुसमयेऽपि तावद्भिः क्षणैर्व्यवधानस्यावर्जनीयत्वात्कथं प्रयोगवचनावगताव्यवधानबलात्काण्डानुसमय इत्याशङ्क्य कारिकायां प्रधानस्य स्वाङ्गैः सहाव्यवधानं न विवक्ष्यते किंत्वेकपशुसंबद्धानामङ्गानामेव परस्परपशन्तराङ्गव्यवधानराहित्यमित्यभिप्रायेण व्याचष्टे—**प्रयोगेति** । आनन्तर्यम् नैरन्तर्यमित्यर्थः । **काल्पनिकमिति** । एवंच प्रयोगवचनेन कल्पनीयं साहित्यं प्रत्यक्षवचनाविरोध्येव कल्प्यमिति भावः । प्रकृतावुपाकरणं कृत्वा नियोजनं कर्तव्यमिति क्रमशास्त्रस्यो-

कृत्वा प्राजापत्यैश्चरन्ती'त्येककालप्रयोगः पशूनामवगम्यते । अतो यस्मिन्नेव क्षण एकस्योपाकरणं कर्तव्यमापतति तस्मिन्नेवापरस्योपाकरणं कर्तव्यं सद्दशक्यतया केवलं न क्रियते । द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पश्वन्तरं नोपाक्रियेतातः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्तव्यः । एवं दर्शपूर्णमासादिष्वनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यो नतु काण्डानुसमय इति स्थितम्. यत्र तु प्रधानविरोधो भवति पदार्थानुसमये तत्र काण्डानुसमय एवेति । यथाश्वप्रतिग्रहेऽष्टौ शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वाऽऽद्यस्योद्वासनं क्रियेत ततः स दह्येत । तस्मात्तत्र प्रधानविरोधेन न पदार्थानुसमयः ॥

मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ॥ २ ॥

**मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकैकेन ॥ ४ ॥ [सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥]**

**निर्वापे तु किमेकैकमुष्टेरस्त्यङ्गता न वा ॥ अस्त्येकैकप्रतिष्ठानात्कपालादिषु तत्समम् ॥ ४ ॥**

**चतुरो निर्वपेन्मुष्टीनिति निर्वापसंश्रयात् ॥ एकैकमुष्टेरंशत्वात्पदार्थत्वं चतुष्टये ॥ ५ ॥**

दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते संशयः किमेकैकेन मुष्टिनानुसमय उत चतुर्मुष्टिभिरिति । यद्येकैको मुष्टिः पृथक्पदार्थस्तत एकैकेनानुसमयः । अथ चतुर्मुष्टिनिर्वाप एकः पदार्थस्ततश्चतुर्मुष्टिभिरिति । 'प्रतिमुष्टि यतीभावः पर्यवस्यन् हि दृश्यते ॥ मुष्टिना मुष्टिरेवातोऽनुसमायो न संघशः ॥' उच्यते—'अङ्गत्वं चोदनागम्यं पदार्थश्चाङ्गमेव नः ॥ चतुर्णामिह मुष्टीनां

पाकरणोपस्थापितं नियोजनं कर्तव्यमित्येतावानेवार्थस्तस्येहापि न बाधः । उपाकरणस्य सर्वपशुष्वभ्यासानन्तरं नियोजनकरणेऽपि नियोजनस्योपाकरणोपस्थितत्वाहानेः । यत्तु तत्रोपाकरणनियोजनयोर्नैरन्तर्यं तत्तु तत्र पशोरेकत्वेन प्रयोगप्राशुभावबलायातत्वादार्थिकम् । नचार्थिकं चोदकः प्रतिदिशति । भवतु वा नैरन्तर्यातिदेशस्तथापि प्रत्यक्षवचनावगतसाहित्यबलेना षोडशक्षणव्यवधानावश्यंभावात्तत्परित्याज्यमित्याशयेनाह—**चोदकमिति** । **एवमिति** । तत्र क्वचित्पौर्णमास्यां पौर्णमास्या यजेतेति कालविधानेन, क्वचित्प्राचीनप्रवणे वैश्वदेवेन यजेतेति देशविधानेन, क्वचित्फलवाक्यगतत्राभिधानानुसारिप्रयोगवचनेन वानेकेषां प्रधानानां साङ्गानां साहित्यावगमात्तन्निर्वाहाय पदार्थानुसमय इति भावः । अत्र भाष्ये 'कारणादभ्यावृत्ति'रिति सूत्रं बहुषु पुरोडाशेषु यथाकाण्डानुसमय एवमिहापीति पूर्वपक्षोक्तदृष्टान्तवैषम्यकथनार्थत्वेन व्याख्याय बहुपुरोडाशेष्वप्युक्तन्यायेन पदार्थानुसमयं प्रापय्य प्रधानलोपप्रसङ्गात्काण्डानुसमय इत्यधिकरणान्तरपरतयापि व्याख्यातं तदुभयं संगृह्णाति—**यत्रत्विति** । अत्रापि द्वित्रादिपुरोडाशेषु विरोधाभावात्पदार्थानुसमय एवेति दर्शयितुमाह—**शते इति** । शतत्वादिकमविवक्षितम् । यावत्पुरोडाशेषु पदार्थानुसमये प्रधानविरोधस्तावत्सु तात्पर्यम् । तत्रापि निर्वापादौ पदार्थानुसमय एवेति द्योतयितुमाह—**श्रप्यमाणेष्विति** । अत्र यद्यप्यश्वदाने निमित्ते चतुष्कपालेष्टिर्विधीयते तत्र यावत इति विधेयसंख्योपलक्षणीभूतनिमित्तेयत्ताप्रतिपादनेनैव नैमित्तकेयत्ताया अवगतत्वादवगतविषयतया 'सत्रादुदवसाय पृष्ठसवनीयेन यजेर'न्नित्यत्र बहुत्ववच्चतुष्कपालबहुत्वस्याविवक्षितत्वाद्यावतोऽश्वानिति बहुत्वस्य निमित्तगतत्वादेवाविवक्षितत्वाच्चैकस्मिन्द्वयोर्बहुषु वाऽश्वेषु दत्तेषु तावत्संख्या वारुणेष्टिः कर्तव्येति वाक्यार्थः । तथाच साहित्यस्याविवक्षितत्वान्न सहप्रयोगः किंतु भेदेनेति काण्डपदार्थानुसमयाप्रसक्तेरिदमयुक्तम् । तथापि साहित्यविधायकं वचनान्तरमिति तन्त्ररत्ने समर्थितमिति भावः । सूत्रार्थस्तु—प्रधानानां संनिपाते साहित्ये एकैकस्य पशोः गुणानां सर्वकर्मसर्वत्वेन कात्स्न्र्येन सर्वत्र क्रिया स्यादिति ॥

**मुष्टिकपालोपधानावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकैकेन ॥ ४ ॥** पदार्थानुसमयप्रसङ्गात्कियानेकः पदार्थ इति चिन्तेति सङ्गतिः । **किमिति** । अयंच फलसंशयः । अधिकरणाङ्गसंशयस्तु किमेकमुष्टिनिर्वापः पृथक्पदार्थ उत चतुर्मुष्टिनिर्वाप एकपदार्थ इति । तदेतदभिप्रेत्य फलफलिभावमाह—**यदीति** । **प्रतिमुष्टीति** । एकस्मिन्मुष्टौ निरुप्तेऽपि निर्वपतिभावः पर्यवसितो भवत्येव । इतरथैकस्मिन्मुष्टौ निरुप्ते न किंचिन्निरुप्तमिति व्यवहारप्रसङ्गादेवंच निर्वापस्वरूपमात्रस्य प्रतिमुष्टिप्रयत्नभेदेन भेदावगमादेकैकमुष्टिनिर्वापः पृथक्पदार्थ इत्यर्थः । निर्वापस्वरूपभेदस्य लोकतोवगमेऽपि न पदार्थभेदो लोकावगम्यः । अङ्गत्वापरपर्यायपदार्थत्वस्य शास्त्रैकसमधिगम्यतया तद्भेदस्य लोकानवगम्यत्वादित्याह—**अङ्गत्वमिति** । ननु निर्वापस्य धान्यराशितो यागोपयुक्तपृथक्करणात्मकस्यार्थादेव प्राप्त्या तद्विध्यसंभवान्न शास्त्रगम्यमङ्गत्वं संभवति । चतुरो मुष्टीनिति वाक्यं तु सत्यां कारकविभक्तौ द्रव्यैकांगां दद्यादित्यादौ यथा गवानुवादेन संख्यामात्रविधिरेवं मुष्ट्यनुवादेन संख्यायाः संख्यानुवादेन मुष्टेर्वा विधायकमित्यत आह—**चतुर्णामिति** । यत्र यागोपयुक्तमात्रा एव व्रीहयो

१ यतीभावो निरुप्तिमप्राप्तिभवनम् ।

निर्वापः शास्त्रचोदितः ॥' अङ्गपर्यायो हि पदार्थशब्दः। तेन ययोः प्रधानयोः सहानुष्ठानं तयोर्यदङ्गं तदेकस्य कृत्वा परस्य कर्तव्यं चतुरोमुष्टीर्निर्वपतीतिशास्त्राच्च चतुर्मुष्टिनिर्वापोऽङ्गम्। एकैकस्तु मुष्टिस्तदवयवो न पदार्थस्तथाविधानात् पदार्थेन चानुसमयो न तदवयवैरतश्चतुर्भिरनुसमय एवं कपालोपधानेऽपि नैकैकेनानुसमयः किंत्वाग्नेयकपालानि सर्वाण्युपधायाग्नीषोमीयस्योपधानम्। एवं 'द्विर्हविषोऽवद्यती'त्यत्रापि नैकावदानेनानुसमयः। एवमञ्जनादिष्वपि योज्यम् ॥

अवदानस्य प्रदानान्तानुसमयाधिकरणम् ॥ ३ ॥

## संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

**अवदानेऽनुसमयो होमान्ते वावदानके ॥ पदार्थत्वं विधेयत्वात्तेनानुसमयस्ततः ॥ ६ ॥**

**अवद्यतिः प्रदानार्थस्तोऽवदानस्य तदर्थता ॥ अतोऽनुसमयस्तत्र होमान्तान्न तु केवलात् ॥ ७ ॥**

दर्शपूर्णमासयोर्द्विर्हविषोऽवद्यतीति श्रुतम्। तत्र नैकेनावदानेनानुसमय इति स्थितमिदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयोऽथवावदानादिप्रदानान्तेनेति चिन्त्यते। तत्र—'वचनेन द्विसंख्याकमवदानं विधीयते ॥ तावानेकः पदार्थोऽतस्तावतानुसमीयते ॥ नैवं होमविधेरर्थात्खण्डने प्रापिते सति ॥ विशेषमात्रं हविषो द्विरित्यत्र विधीयते ॥' चतुरवत्तं जुहोतीत्यवत्तहोमो विधीयते। नचाकृत्वावदानमवत्तहोमसंभव इत्यर्थप्राप्तमवदानं न विधातव्यम्। द्विर्हविषोऽवद्यतीत्यर्थप्राप्तस्यावदानस्य

---

नाधिकारस्तत्र निर्वापस्याप्राप्तेर्धात्वर्थो निर्वाप एव विधेयः। नचैवमपि द्वितीयया मुष्टीनां प्राधान्यात्प्रतिप्रधानं गुणावृत्तिन्यायेन चतुर्षु मुष्टिषु चत्वारो निर्वापा विहिताः संपन्ना इति मुष्ट्यनुसमय एवेति वाच्यम्। मुष्टीनामप्राप्तत्वेन तदर्थतया निर्वापविध्यसंभवात्। एवंच संख्याया अप्यप्राप्ततयान्यतरानुवादेनान्यतरविधिर्न संभवति। तस्माद्द्वितीयासक्तुन्यायेन भङ्क्त्वा चतुर्भिर्मुष्टिभिर्निर्वपेदिति संख्यामुष्ट्युभयविशिष्टनिर्वापविधानाच्चतुर्मुष्टिनिर्वाप एव शास्त्रार्थ इति तावानेकः पदार्थ इत्यर्थः। नन्वस्तु चतुर्मुष्टिनिर्वापस्याङ्गत्वं तथापि तदवयवस्यैकैकमुष्टिनिर्वापस्यैवानुसमयः किं न स्यादिति शङ्कां निराकुर्वन्व्याचष्टे—**अङ्गपर्याय इति**। प्रयोगविधेरङ्गग्राहित्वादङ्गपौर्वापर्यमेव तदपेक्षितं नतु तदेकदेशपौर्वापर्यमिति भावः। **एवमिति**। कपालान्युपदधातीति कपालानामुपधानसंस्कार्यत्वमङ्गत्ववेषेण न कपालत्ववेषेण। अङ्गत्वं चाष्टकपाल इति मिलितानामेवावगम्यते न प्रत्येकमिति व्रीहीणां प्रोक्षणादिकमिव मिलितानामेव कपालानामुपधानं संस्कारः। नचैवं तद्वदेव युगपन्मिलितानामुपधानं स्यादिति वाच्यम्। प्रतिकपालं मन्त्रभेदाम्नानेन प्रत्येकमुपधानोपपत्तेः। एवं द्विरिति मध्यादवद्यति पूर्वार्धादवद्यतीत्यनयोर्द्विर्हविषोऽवद्यतीति वाक्यप्राप्तावदानोद्देशेन देशमात्रविधायकत्वं नावदानविधायकत्वमिति नैकैकावदानं शास्त्रार्थः किंतु द्विरवदानमेवेति भावः। **एवमिति**। त्रिरङ्क्ते त्रिरभ्यङ्क्ते क्षुरेण त्रिर्वपति एकविंशत्या पावयतीति तत्संख्यायुक्तानामेवाञ्जनादीनां यजमानसंस्कारत्वाद्द्विबहुयजमानककुलायाहीनादिषु तावत्संख्याकाञ्जनाद्यनुसमयो न प्रत्येकमित्यर्थः ॥

**संयुक्ते तु प्रक्रमात्०** ॥ ६ ॥ ननु पूर्वत्र द्व्यवदानेनानुसमय इत्युक्तं इहतु न द्व्यवदानेनानुसमयः किंतु प्रदानान्तेनेत्युच्यते तदेतद्विरुद्धमित्याशङ्क्याह—**तत्रेति**। पूर्वाधिकरणस्य न द्व्यवदानानुसमयप्रतिपादनपरत्वं किंतु एकैकावदानानुसमयनिषेधमात्रपरत्वम्। अतएव पूर्वाधिकरणे नैकेनावदानेनानुसमय इत्येतावन्मात्रमेव ग्रन्थे उक्तं, नतु चतुर्भिर्मुष्टिभिरनुसमय इतिवदाग्नेयकपालानि सर्वाण्युपधायाग्नीषोमीयस्योपधानमितिवच्च द्व्यवदानेनानुसमय इत्युक्तमिति। **प्रदानान्तेनेति**। प्रक्षेपान्तेनेत्यर्थः। यथा चतुर्मुष्टिनिर्वापस्य विधानात्तावदनुसमय एवमिहापि द्व्यवदानेनानुसमय इति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**तत्रेति**। चतुरवत्तवाक्ये हि अवत्तानुवादेन होमो विधेयः नतु होमानुवादेनावत्तम्। होमस्याप्राप्तत्वेनानुवादासंभवात्। चतुरवत्तविशिष्टहोमविधाने चावत्तस्य होमार्थत्वापत्त्या सर्वप्रदानाधिकरणोक्तं होमस्यावत्तसंस्कारत्वं भज्येत। तथाच होमविधितोऽवदानस्याप्राप्तेरवदाने हविष इति अवदानस्य द्विरिति संख्यायाश्च विधाने वाक्यभेदप्रसङ्गाच्च द्विर्हविषोऽवद्यतीत्यस्य विशिष्टावदानविधिपरत्वावश्यंभावे द्व्यवदानमेव पदार्थ इति भावः। **नैवमिति**। चतुरवत्तवाक्येऽवदानविशिष्टो होमो विधीयते तत्र चावदानस्य होमार्थत्वेऽपि होमस्यावत्तसंस्कारार्थत्वं न विरुध्यते। ततश्चावदानविशिष्टहोमविधानादर्थादवदानस्य विशेषणस्य प्राप्तेर्द्व्यवदानवाक्यं न तद्विधायकमित्यर्थः। अवत्तहोमोऽवदानविशिष्टहोम इति

विशेषमात्रस्य विधानं हविषो द्विरिति यद्यपि विधीयते तथापि च दृष्टार्थत्वाच्चतुरवत्तं जुहोतीत्यस्यावयवत्वेनैव विधेयत्वं न स्यात्क्रयेणातोऽवदानादिप्रदानान्तेनानुसमयः ॥

अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम् ॥ ४ ॥

**वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ ॥ [कारणाद्वाऽनवसर्गः स्याद्यथा पात्रवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥ ९ ॥]**

यूपाञ्जनादिरेकैकः संघो वानुसमीयते ॥ एकैकः पूर्ववन्मैवं वचनात्काण्डसंगतेः ॥ ८ ॥

अग्नीषोमीये पशौ यूपधर्माः अञ्जनमुच्छ्रयणं संमानं परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्या उताञ्जनादिपरिव्याणान्तेनानुसमय इति संशये पूर्वेण न्यायेन पदार्थानुसमयः । नन्वञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशोऽनुसमीयमाने शक्यते कर्तुम् । एवं मन्यते प्रकृतावार्थिकोऽनवसर्गो यजमानेनाध्वर्योः साहाय्यमाचरतानुष्ठितस्तदनुवादमात्रं वचनं, नचार्थिकं चोदकः प्रतिदिशति अतः पदार्थानुसमयः । 'नैवं नियमतोऽप्राप्तेरनुत्सर्गो विधीयते ॥ वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम् ॥ गणेऽपि चोदकेनातः प्राप्यतेऽनवसर्जनम् ॥ तेनाञ्जनादिसङ्घोऽत्र सङ्घेनानुसमीयते ॥'

दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥ ५ ॥

**पशुगणे एकैकस्यापवर्जयेत्पश्वेकत्वात् ॥ १० ॥ [दैवतैर्वैककर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥]**

किं दैवाद्यवदानेषु काण्डानुसमयोऽथ वा ॥ एकानुसमयोऽस्त्वाद्यः प्रकृतौ तस्य दर्शनात् ॥ ९ ॥
पश्वैक्यात्प्रकृतौ सोऽस्तु विकृतौ तद्वहुत्वतः ॥ सजातीयपदार्थानुसमयोऽनन्तरत्वतः ॥ १० ॥

अग्नीषोमीये पशाववदानानन्तरं प्रदाने प्राप्ते वचनमिदमाम्नायते दैवतान्यवदाय न तावत्येव होत-

---

यावत् । **हविषो द्विरिति** । चतुरवत्तवाक्ये जुहोतिना देवतोद्देशत्यागांशानुवादेन प्रक्षेपोऽवत्तसंस्कारो विधीयते तेनायं प्रक्षेपो हविषोऽवत्तस्यैव भवति इतरथा देवतोद्देशत्यागाप्राप्त्या तदनुवादायोगादितरद्रव्यावदानसाधनकत्वे होमस्य संस्कारत्वानुपपत्तेश्च । एवंच हविषोऽवदानस्य प्राप्तत्वाद्धविषो द्विरिति संख्यामात्रमेव विधेयमिति न वाक्यभेद इति भावः । चतुरवत्तवाक्ये यच्चतुरवत्तमित्यनूद्य तत्संस्कारतया होमविधिपक्षमवत्तविशिष्टहोमविधिपक्षं च दशमे वक्ष्यति तत्रावत्तविशिष्टविधिपक्षाश्रयणेन प्रदानान्तत्वं प्रस्तुताधिकरणप्रतिपाद्यमुक्त्वा चतुरवत्तानुवादेन होमविधिरिति पक्षेऽपि द्यवदानवाक्ये द्यवदानविध्यवश्यंभावेऽपि चतुरवत्तहोमावयवतया विधानान्न पृथक्पदार्थत्वमिति नानाबीजेष्ट्यधिकरणन्यायेन लभ्यं प्रदानान्तानुसमयमत्र बुद्धिसौकर्यार्थमाह—**यद्यपिचेति** । एवं चोपस्तरणाभिघारणयोः पृथक्त्वसद्भावेऽपि न पृथक्पदार्थत्वं चतुरवत्तं जुहोतीत्येतदवयवत्वेनैव विधानादिति ध्येयम् । सूत्रार्थस्तु—अवदानसंयुक्ते होमे विधीयमानेऽवदानस्य होमार्थत्वादवदानेनैव होमप्रक्रमाद्धोमान्तमवदानं स्यादिति ॥

**वचनात्तु परिव्याण०** ॥ ७ ॥ **यूपगण इति** । यूपैकादशिन्यादावित्यर्थः । **पूर्वेणेति** । पादाद्यन्यायेनेत्यर्थः । तथैव वक्तव्ये इयानेकः पदार्थ इति निर्णयस्य पदार्थानुसमयफलकतया तन्न्यायस्य पूर्वपर्यन्तानुवृत्तेः सङ्गतिस्फोरणार्थं पूर्वेणेत्युक्तिः । **साहाय्यमिति** । अन्येन धृते यूपेऽञ्जनादेः सुकरत्वादिति भावः । **नन्वतिदेशाभावेऽपि** विकृतावेव प्रकृतिवत्साहाय्यकरणाधीनानवसर्गस्य स्वीकार्यत्वान्न प्रत्येकानुसमय इत्याशङ्क्य विकृतौ प्रयोगवचनावगतसाहित्येन पदार्थानुसमयस्य न्याय्यत्वे सति तद्विरोधे साहाय्यकरणसौकर्यं नादर्तव्यमित्युपसंहरति—**अत इति** । **नियमत इति** । अध्वर्योरतिकुशलत्वे साहाय्यानपेक्षणात्प्रतिप्रस्थात्रादिनापि साहाय्यकरणसंभवाच्च यजमानस्य नियमतोऽनवसर्गाप्राप्तेरित्यर्थः ॥

**पशुगणे एकैकस्या०** ॥ १० ॥ प्रकृतावग्नीषोमीयेऽवदानस्य प्रदानान्तत्वे विचारानुपपत्तेराह—**अग्नीषोमीय इति** । **प्राप्त इति** । न्यायत इति शेषः । नानादैवत्यानामैकादशिनादिपशुगणानां न विषयत्वं । तत्रैकस्य पशोर्दैवतसौविष्टकृतैडान्यवदाय दैवतस्य होमं च कृत्वा ततः पश्वन्तरस्यापि तथैव कर्तव्यत्वेन तत्र पूर्वोत्तरपक्षयोरुभयोरप्यप्रवृत्तेः । अन्यथा जुह्वां भिन्नदेवताकहविर्मेलनेन विपर्यासप्रसङ्गादेकदेवताकेषु तु प्रदानस्य तन्त्रतया न विपर्यासदोषः । अतएव संप्रतिपन्नदेवताके सांनाय्यादाववदानस्य न प्रदानान्ततेति चतुरवदानमात्रस्यानुसमयः । तस्मादेकदेवताकाः प्राजापत्यादय एव विषय इत्याह

व्यम् सौविष्टकृतान्यवद्यति सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् । ऐडान्यवद्यतीति तदेकदेव-तेषु पशुगणेषु विचार्यते । किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायापरस्यापि त्रयमवदातव्यं उत सर्वेषां दैवतान्यवदाय ततः सौविष्टकृतानि तत ऐडानीति । तत्र 'प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत् ॥ एकैकस्य पशोः कार्यः काण्डानुसमयस्ततः ॥' यद्येकस्य पशोर्दैवतान्यवदायापरस्य दैवतान्य-वदीयेरन् ततः प्रथमस्य पशोर्यद्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तं तद्बाध्येत तस्मात्काण्डानुसमयः । नैवम्—'पश्वैक्यात्प्रकृतावर्थादानन्तर्यमनुष्ठितम् ॥ इह त्वनेकसाहित्यात्साजात्यात्तु समीयते ॥' या-वन्तः पदार्थाः कर्तव्यास्ते मिथः संश्लिष्टाः कर्तव्या इत्येतावत्प्रकृतौ विवक्षितं तत्रैकत्वात्पशोर्दैवतसौ-विष्टकृतानन्तर्यमर्थात्संजातं नतु तदिह प्राप्यते । अत्र तु साहित्यसंपत्तये समानजातीयैः समान-जातीयानामनुसमयो दैवतैर्दैवतानामित्येवं कर्तव्यम् ॥

नानाबीजेष्टावुलूखलादीनां तन्त्रताधिकरणम् ॥ ६ ॥

## नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥ [विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥]

नानाबीजेषु नानात्वमुलूखल उतैकता ॥ अजिनास्तरणादीनां भिन्नत्वात्स्यादनेकता ॥ ११ ॥
स्तरणादौ तण्डुलान्ते पदार्थैक्यादनुक्रमात् ॥ उलूखलैक्यं नीवारश्यामाकादिष्ववस्थितम् ॥ १२ ॥

राजसूये नानाबीजेष्टिः 'अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरु'रित्यादि । तत्र प्रकृतितः प्राप्तमुलूखलं किं तन्त्रमुत भिन्नमिति विचारः । फलविचारश्चायम् । अधिकरणशरीरं तु किं कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापावघातपरावपनविवेचनफलीकरणा-नि पृथक्पदार्थत्वादेकैकशोऽनुसमेतव्यानि उत कृष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थस्तावता चानुसमय इति । 'तत्र नानापदार्थत्वं विधिभेदेन मन्यते ॥ तण्डुलीकरणांशत्वादपृथक्त्वं तु ग-म्यते ॥' यद्यपि कृष्णाजिनमधस्तादवस्तृणाति शूर्पेण विविनक्तीति विधिभेदस्तथापि तण्डुलभावना-वयवत्वेन तद्विधानं न स्वातन्त्र्येणादृष्टार्थत्वप्रसङ्गादेका चासौ तण्डुलभावना कृष्णाजिनस्तरणादिफली-

---

—एकदेवतेष्विति । पूर्ववदिहापि वचनात्काण्डानुसमय इति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—प्रकृताविति । पश्वैक्यादिति । प्रकृतौ दैवतादीनामानन्तर्यं न वाचनिकं तद्वाचकशब्दाभावाद्दैवतान्यवदायेति ल्यपः न तावत्येव होत-व्यमित्यनेनान्विततयाऽवदानस्य न्यायप्राप्तप्रदानान्तत्वानिषेधोपक्षीणत्वेन तस्य सौविष्टकृतावदाने दैवतानन्तर्यप्रतिपादना-शक्तेरवदानानन्तरं प्रदाने प्राप्ते वचनमिदमिति ग्रन्थेन दैवतान्यवदायेति वचनस्यावदानानन्तरं प्रदाननिषेधपरत्वोक्त्यान-न्तर्यपरत्वाभावस्य स्पष्टीकरणाच्च । तस्मादार्थिकमेवात्रानन्तर्यमिति भावः । नन्वेवमपि प्रकृतौ प्रयोगवचनेनानन्तर्यबोध-नाद्वाचनिकमेवानन्तर्यमित्यतो व्याचष्टे—यावन्त इति । प्रयोगवचनस्य दैवतानन्तरं सौविष्टकृतं कुर्यादित्येवं दैवतसौ-विष्टकृतत्वविशेषेणानन्तर्ये न तात्पर्यं किंतु सकलपदार्थग्राहिणस्तस्य ये स्वग्राह्याः पदार्थास्ते निरन्तरं कर्तव्या इत्येव, तत्र च प्रकृतौ पशोरेकत्वादर्थात्संपन्नं दैवतसौविष्टकृतत्वरूपप्रातिस्विकविशेषेणानन्तर्यमित्यर्थः । सूत्रार्थस्तु—पशुगणे तस्य तस्य पशोर्दैवतादित्रिकमपवर्जयेत्प्रतिव्यक्ति पश्वेकत्वात्, यथाप्रकृत्येकैकत्र त्रिकस्य प्राप्तेरिति ॥

नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥ तन्त्रावापचिन्तायाः क्रमाध्याये सङ्गतिमाशङ्क्याह—फलेति । तत्रेति । दृष्टार्थत्वमात्रेण नावयवत्वं तथात्वेऽवहननादेर्यागावयवत्वापत्तौ अवहननादियागान्तेनानुसमयप्रसङ्गात् । तस्मा-त्पृथक्पदार्थत्वेऽपि दृष्टार्थत्वोपपत्तेर्विधिभेदात्पृथक्पदार्थत्वमित्यर्थः । ततश्च पूर्ववदिहापि प्रत्येकमनुसमय इति प्रत्यवस्था-नात्सङ्गतिः । इह हि सर्वौषधान्यवहन्तीतिवदवहननस्वरूपमात्रं न विधीयते । तथात्वे तद्वदेवादृष्टार्थत्वापत्तेः, किंतु अवह-ननेन व्रीहीन् तण्डुलीकुर्यादिति । एवं चावहननकरणकतण्डुलभावनायाः पदार्थत्वे कृष्णाजिनास्तरणादीनामवहननकरणकत-ण्डुलभावनावयवत्वेन स्वतन्त्रत्वाभावान्न पृथक्पदार्थत्वमवहननादेस्तु देवतोद्देशद्रव्यत्यागात्मकयागशब्दार्थासंस्पर्शान्नावयवत्व-मिति वैषम्यमभिप्रेत्य सिद्धान्तमाह—तण्डुलीकरणेति । ननु संयुक्ते तु प्रक्रमादित्यत्र द्व्यवदानस्य चतुरवत्तं जुहोती-त्येतदवयवत्वे विधानान्न पृथक्पदार्थत्वमित्युक्तेः पौनरुक्त्यमित्याशङ्क्य न तस्य तत्र तात्पर्यं किंतु विध्यभावान्न पृथक्पदा-

करणपर्यन्तं प्रततेति तावानेकः पदार्थ इति तावतानुसमयः । 'संयुक्ते तु प्रक्रमा'दित्यत्र चतुरवत्तचोदनयार्थप्राप्तावदाने संख्यामात्रं द्विर्हविष इति विधीयते, नतु द्वित्वविशिष्टमवदानमित्येकपदार्थत्वं निराकृतम्, इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते । यत्तु तत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तं तदिह सिद्धमेवोक्तमित्यनवद्यम् ॥

अग्नीषोमीयपशौ प्रयाजानूयाजयोः पात्रभेदाधिकरणम् ॥ ७ ॥

## विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥ १६ ॥

**प्रयाजानूयाजसिद्ध्यै पात्रैक्यमुत भिन्नता ॥ एकोपभृद्द्वयोरर्थे दृष्टातो विकृतौ तथा ॥ १३ ॥**
**विकृतौ पात्रभेदोऽस्तु शुद्धाज्यपृषदाज्ययोः ॥ एकपात्रे महाशक्तेर्मैक्यैक्यं प्रकृतौ द्वयोः ॥ १४ ॥**

दर्शपूर्णमासयोः'अष्टावुपभृति गृह्णाती'ति प्रयाजानूयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तं तत्रानूयाजानां द्रव्यविकारः श्रूयते 'पृषदाज्येनानूयाजान्यजती'ति । प्रयाजाज्यं त्वविकृतमेव । तत्र द्वयोरसंकरेऽवश्यंभाविनि चिन्त्यते किं कालभेदेन तस्यामेवोपभृति द्वयं गृहीतव्यमुत तस्मिन्नेककाले पात्रभेदेनेति । तत्र—'पदार्थत्वाच्छ्रुतत्वाच्च पात्रैकत्वस्य संग्रहः ॥ गुणत्वात्पाठकल्प्यत्वात्क्रममात्रं तु बाध्यते ॥' 'अष्टावुपभृति गृह्णाती'ति श्रुतमेकपात्रत्वं पदार्थश्च । क्रमस्तु पदार्थानां गुणः पाठकल्प्यश्च । तत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं गृहीतव्यमित्येवं प्राप्ते उच्यते—'उभयोर्ग्रहणाङ्गत्वात्पात्रैक्यस्य क्रमस्य च ॥ विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् ॥' एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानूयाजाज्यग्रहणस्याकरणे न किंचित्कारणमस्तीति तदैव पात्रान्तरमुपादाय गृहीतव्यम् ॥

---

र्थत्वमित्यत्रैवेत्याह—**संयुक्त इति** । द्विर्हविष इति वाक्यस्य संख्यामात्रविधायकत्वपक्षेऽवयवत्वेन ह्यवदानविधानाभावादेतन्न्यायेन तत्र पृथक्पदार्थत्वनिराकरणासिद्धेस्तत्र विध्यभावान्न पृथक्पदार्थत्वमिति न्यायव्युत्पादनमावश्यकमिति न तद्वैयर्थ्यमिति भावः । पूर्वपक्षेऽप्येकस्मिन्नेव कृष्णाजिने बहूनामुलूखलानामधिवर्तनसंभवादेकेनैव मुसलेन शूर्पेण च पर्यायतोऽवहननपरावपनादिसिद्धेः कृष्णाजिनमुसलशूर्पाणां तन्त्रत्वमेवेत्याशयेन सूत्रे उलूखलमात्रनिर्देशः ॥

**विकारे त्वनूयाजानां०** ॥ १६ ॥ प्रकृतौ पात्रैक्यं यौगपद्यं च विनाविचारानुपपत्तेराह—**दर्शेति** । अष्टावुपभृतीत्यनेन चतुर्गृहीतं जुहोतीत्यनारभ्य विधिप्राप्तप्रयाजानूयाजार्थं चतुर्गृहीतद्वयमष्टसंख्यया लक्षणयानूद्य तत्रोपभृल्लक्षणैकपात्रविधिरिति पक्षे पात्रैक्यं साक्षाद्विधेयत्वादेव सिद्धं यौगपद्यं तु चतुर्गृहीतद्वयस्य वाचकशब्देनानुवदितुमुचितत्वेप्यष्टसंख्यया लक्षणया तदनुवादः । श्रुताष्टत्वं यथा संपत्स्यते तथा चतुर्गृहीतद्वयं संपादनीयमित्येतदर्थं इति लक्षणया चतुर्गृहीतद्वयानुवादबलात्सिद्धम् । उपभृदादिविशिष्टग्रहणविधिरिति पक्षे चोपादेयत्वेनोपभृत्संख्याया विवक्षितत्वात्पात्रैक्यम् । यौगपद्यं तु पूर्ववल्लक्षणाबलाद्विधीयमानचतुर्गृहीतद्वयसाहित्यविवक्षणाद्वा सिद्धमिति भावः । नन्वेवमपि विचारोऽनुपपन्नः पृषदाज्यस्याप्याज्यत्वेन मर्यादाकरणेन वा यथाप्रकृति युगपद्ग्रहणसंभवादित्यत आह—**तत्र द्वयोरिति** । दृष्टार्थोत्पवनविध्यवगतद्रव्यान्तरासंसर्गस्य दधिसंसर्गे वैगुण्यान्मर्यादाकरणे चाकारविनाशापत्तेः होमार्थं जुह्वां समानयनदशायां पुनः संसर्गप्रसङ्गाच्च न यथाप्रकृति यौगपद्यं संभवतीति भावः । यथाङ्गानां प्रधानकालत्वाद्यौगपद्येनान्वयेऽपि कर्तुरेकत्वात्प्रयोगवचनेन विप्रकर्ष एवाश्रीयते न कर्त्रन्तरमुपादीयते एवमिहापीत्याशयेन पूर्वपक्षमाह—**तत्रेति** । ततश्च पूर्वत्रोलूखलैक्यवदिह उपभृदैक्यमिति प्रत्यवस्थानात्सङ्गतिः । **श्रुतत्वादिति** । विकृतौ शाखाणामप्यतिदेशाच्छ्रुतत्वं संभवतीति भावः । **ग्रहणाङ्गत्वादिति** । ततश्चोभयोरप्यङ्गत्वात्परस्परं गुणप्रधानभावाभावात्तुल्यबलत्वमेवेति भावः । **विकृतौ चेति** । श्रुतत्वं हि झटिति प्राप्तिद्वारा प्राबल्यहेतुः । तच्च प्रकृतावेव घटते नतु विकृतौ । तत्रोपकारमुखेन सर्वपदार्थप्राप्त्यनन्तरं तत्पृष्ठभावेन शाखातिदेशात् तथाच विकृतौ शाखातिदेशात्सदपि श्रुतत्वं न प्राबल्यहेतुरिति भावः । नन्वेवं कथं विनिगमकमित्यत आह—**एवंचेति** । सकलपदार्थप्राप्त्यनन्तरं प्रवर्तमानः प्रयोगवचनः कर्त्रैक्याविरोध्येव प्रधानकालत्वमापादयतीति न तत्रात्यन्तिकायौगपद्यमिति वैषम्यमिति भावः । सूत्रार्थस्तु—विकारे पशावनूयाजानामर्थभेदाद्द्रव्यभेदात्पात्रभेदः स्यादिति ॥

नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ॥ ८ ॥

**प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥ [मुख्यानन्तर्यमात्रेयः, तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायः स्यात् ॥ १८ ॥ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥ तथा चान्यार्थदर्शनम् ॥ २० ॥]**

नक्षत्रेष्ट्युपहोः किं नारिष्टेभ्यः पुरा न वा ॥ प्रत्यक्षपाठान्मुख्यस्य सामीप्यायास्तु पूर्वता ॥ १५ ॥
प्राकृते प्रथमो बोधो वैकृते चरमस्ततः ॥ नारिष्टहोमाः पूर्वं स्युरुपहोमास्तु पृष्ठतः ॥ १६ ॥

'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदि'ति नक्षत्रेष्टिं विधायोपहोमा विहिताः 'सोऽत्र जुहोति अग्नयेस्वाहा कृत्तिकाभ्यः स्वाहे'ति । प्रकृतौ च प्रधानानन्तरं नारिष्टहोमास्ते चोदकेनात्र प्राप्तास्तत्र संशयः, किमुपहोमान्हुत्वा ततो नारिष्टा विपरीतं वेति । 'तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान् ॥ उपहोमाननुष्ठाय नारिष्टानामनुष्ठितिः ॥' उच्यते—'क्लृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः ॥ गृह्णाति वैकृतं पश्चात्तदाकाङ्क्षावशीकृता ॥' प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि संनिहितमक्लृप्तोपकारं परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्संनिध्याम्नाताङ्गप्रयोजनापेक्षावशेन वैकृतं गृह्णाति । तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा । तत्रावगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्तव्यम् । नच प्रत्यक्षपाठविरोधः । प्रधानवाक्यशेषेण हि प्रकृतिवच्छब्देन प्रापितात्प्राकृतात्पश्चादेव वैकृतं पठितं भवति । तस्मान्नारिष्टान्कृत्वा पश्चादुपहोमाः कार्याः ॥

विदेवनादीनामभिषेकपूर्वताधिकरणम् ॥ ९ ॥

**कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् ॥२१॥**

अभिषेच्यप्राकृताङ्गसमाप्तौ देवनादिकम् ॥ मध्ये वा पूर्ववत्सर्वसमाप्तौ देवनादयः ॥ १७ ॥
अभिषेकोऽपकृष्टोऽस्मात्पूर्वं प्रत्यक्षपाठतः ॥ देवनाद्यास्ततो मध्ये माहेन्द्रस्तोत्रतः पुरा ॥ १८ ॥

राजसूयेऽभिषेचनीयं सोमयागं विधायानन्तरं विदेवनादयोऽभिषेकान्ताः पदार्था विहितास्तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो 'माहेन्द्रस्तोत्रंप्रत्यभिषिच्यते' इति सोऽपकृष्यमाणः प्राचो

---

**प्रकृतेः पूर्वोक्तत्वात्०** ॥ १७ ॥ पूर्वत्र प्राकृतक्रमादरेऽपि नेह तदादर इति प्रत्यवस्थानात्सङ्गतिः । **ननु** विकृतिभावनया प्राकृतपदार्थान्वयानन्तरं स्वसंनिध्याम्नातपदार्थान्वय इति दशमे वक्ष्यमाणत्वात्प्रथमं नारिष्टान्वयोऽवगतिक्रमात्ततस्तएव प्रथमं कर्तव्या इति कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । यद्यपि प्रथमं प्राकृतपदार्थान्वयस्तथापि प्रत्यक्षप्राबल्यात्प्रत्यक्षपाठावगतक्रमेणानुमानिकक्रमो बाध्यः । नच प्रथमं प्राकृतपदार्थान्वये प्रकृतिवच्छब्दस्य प्रधानविधिदेशत्वसंपत्त्या वैकृतानां पाठोऽपि प्राकृतानन्तरमेव संपन्न इति पाठादेव प्राकृतप्राथम्यमिति वाच्यम् । उत्पत्तिपाठो हि क्रमनियामकः प्राकृताश्च प्रकृतावेव संपन्ना इति सत्यपि प्रधानदेशपाठे तस्य क्रमनियामकत्वाभावादिति भावः । ननूपकारापेक्षायां प्राकृतोपकारमात्रान्वयेऽपि प्राकृतपदार्थान्वयो वैकृतपदार्थान्वयानन्तरमेव किं न स्यादित्यत आह—**उत्पादकेति** । उपकारविशेषान्वयं विना तदाकाङ्क्षाशान्त्यभावादुपकारे चान्वीयमाने स्वजनकपदार्थान्तराव्यतिरेकेण विशेषाभावात्पदार्थविशिष्ट एवोपकारोऽन्वीयते न केवल इति भावः । **नन्वेवं** नैराकाङ्क्ष्याद्वैकृतान्वयो न स्यादित्यत आह—**पश्चादिति** । संनिध्याम्नातपदार्थानां प्रयोजनाकाङ्क्षायाः पुनर्विकृतेराकाङ्क्षोद्भाव्यत इति भावः । **पठितं भवतीति** । प्रकृतावुत्पन्नानामपि विकृतौ पुनरवगमस्यैवोत्पत्तिस्थानीयत्वादीदृशोऽपि पाठः क्रमनियामकः गुणविधानार्थपाठस्यापि क्रमनियामकत्वस्याव्यवधानेन वक्ष्यमाणत्वादुत्पत्तिपाठस्यैव क्रमनियामकत्वमसिद्धमिति भावः । सूत्रार्थस्तु—अनुत्पन्नस्य कर्मणः शेषाम्नानासंभवेन वैकृतशेषाम्नानस्योत्पत्त्यनन्तरभावित्वे प्रकृतेः प्राकृतस्य पूर्वोक्तत्वादुत्पत्तिदशायामेवान्वयादपूर्वं वैकृतमन्ते स्यादिति ॥

**कृतदेशात्तु पूर्वेषां स देशः०** ॥ २१ ॥ प्रयाजापकर्षे तत्पूर्वपदार्थोऽपकृष्यते तद्वदेव विदेवनाद्यपकर्षः स्यादिति शङ्कां निराकुर्वन्नाह—**तत्रेति** । अपूर्वो प्रकृतिपूर्वको क्लृप्तक्रम इति यावत् । **तथात्रापीति** । अभिषेचनीयाभिषेकोभयमध्यगतप्रत्यक्षपाठस्याभिषेचनीयानन्तर्य्येप्युपपत्त्या ततो विदेवनादीनामभिषेकपूर्वभावित्वासिद्धेर्नैतेषामपकर्ष इति भावः । **अन्ते**

विदेवनादीनपकर्षति नेति संशयः । तत्र—'अपूर्वो ह्यभिषेकोऽतो न तदन्तापकर्षणम् ॥ करोति वेदिभ्रत्तस्मात्तन्मात्रमपकृष्यते ॥' 'तथा पूर्वमित्यत्र' ह्येतदवस्थितं अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचामपकर्षाय कल्प्यत इति । तेन यथा 'पूर्वेद्युरमावास्यायां वेदिं करोती'ति वेदिमात्रापकर्षोऽक्लृप्तक्रमत्वान्न पूर्वेषां तथात्राप्यभिषेकस्यैवापकर्षोऽन्ये त्वन्ते तु बादरायण इति न्यायादभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्तव्या इति प्राप्तेऽभिधीयते—'अभिषेकेण पूर्वेषां क्रमः प्रत्यक्षपाठतः ॥ परत्वं प्राकृताङ्गेभ्यस्त्वनुमानेन गम्यते ॥' यद्यप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवदक्लृप्तक्रमस्तथाप्यत्रैव क्रमकल्पनायामभिषेकपूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठनिमित्तमभिषेचनीयप्राकृताङ्गोत्तरकालता तु तेषामनुमानात्तच्च दुर्बलम् । अतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानादन्तापकर्षः ॥

सावित्रहोमादीनां दीक्षणीयपूर्वप्रयोगाधिकरणम् ॥ १० ॥

**प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥**

**चयने दीक्षणीयादि सावित्राद्यथवा पुरा ॥ प्राकृतत्वाद्विहाद्यः स्यादन्त्यः प्रत्यक्षपाठतः ॥ १९ ॥**

अग्नौ सावित्रहोमोखासंभरणाद्यपूर्वपदार्थान्विधाय पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः । तत्र दीक्षणीयादीन्कृत्वा सावित्रादयो विपरीतं वेति संदेहः । तत्र—'प्रकृतेः पूर्वविज्ञानात्प्राकृतानां पुरः क्रिया ॥ पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात् ॥' दीक्षणीयादिपुनःश्रवणं तु गुणार्थत्वात् न पश्चादनुष्ठानं दीक्षणीयादीनां गमयति । गुणानां परतन्त्रत्वाद्यत्र गुणी तत्र तेषां विधानमतः प्राकृतानां पूर्वमनुष्ठानम् । उच्यते—'गुणार्थं श्रूयमाणानामपि प्रत्यक्षपाठतः ॥ पश्चादवगतेस्तेषां युक्ता पश्चादनुष्ठितिः ॥ गुणवाक्येऽपि कीर्त्यमानानां दीक्षणीयादीनां तत्र तावदवगतिर्जायते । सा च प्रत्यक्षपाठनिमित्ता गुणगुणिनोः समानस्थानत्वात्तत्रैव गुणानामनुष्ठानं गमयतीत्यानुमानिकपाठनिमित्तं पूर्वानुष्ठानमनादरणीयम् ॥

---

**त्विति ।** 'अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वा'दिति पूर्वाधिकरणगुणसूत्रोक्तन्यायादित्यर्थः । अनेनैव सङ्गतिः सूचिता । **अप्रकृतीति ।** प्रकृतिपूर्वकत्वाभावेन प्रयाजादिवत्प्रकृतिक्लृप्तक्रमत्वाभावादित्यर्थः । **अत्रैवेति ।** विकृतावेवाभिषेकापकर्षोत्तरकालमनुष्ठानाय क्रमापेक्षायां प्रत्यक्षपाठाद्विदेवनादीनामभिषेकपूर्वत्वमेव कल्प्यते । यद्यपि पूर्वपदार्थेनापि समं प्रत्यक्ष एव पाठस्तथापि अभिषेचनीयप्रधानेनैव प्रत्यक्षः न तदङ्गैस्तेषामातिदेशिकत्वात् । एवंचाभिषेचनीयप्रधानविधेश्चोदकेन विना पर्यवसानाभावाच्चोदकस्य च प्रधानविधिवाक्यशेषत्वादभिषेचनीयानन्तरपाठोऽपि तदीयचोदकानन्तरपर्यवसितः । चोदकश्चानुमानिक इति चोदकावगम्याभिषेचनीयप्राकृताङ्गोत्तरकालत्वमानुमानिकं न प्रत्यक्षमिति प्रत्यक्षपाठस्यान्यथोपपत्त्यभावाद्विदेवनादीनामभिषेकपूर्वत्वमेव । वेद्यां तु प्रत्यक्षपाठस्य पौर्णमास्यां चरितार्थत्वान्न तद्बलेनामावास्यायां वेदेर्हविरभिवासनोत्तरकालत्वमिति वैषम्यम् । तथाच विदेवनादीनामभिषेकात्पूर्वमेवानुष्ठानमिति तदन्तापकर्षः पर्यवस्यतीत्यर्थः । सूत्रार्थस्तु—माहेन्द्रस्तोत्रंप्रति अभिषिच्यते इति कृतदेशादभिषेकात्पूर्वेषां विदेवनादीनां स एवाभिषेकदेश एव स्यात् । तेन प्रत्यक्षसंयोगादितरदभिषेचनीयप्राकृताङ्गोत्तरकालत्वप्रापकं तु न्यायमात्रम् अनुमानमात्रमित्यर्थः ॥

**प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥** इह प्रत्यक्षोपि पाठो न नियामक इति प्रत्यवस्थानात्सङ्गतिः । ननु दीक्षणीयादीनामिह प्रत्यक्षपाठेन केवलानुमानिकत्वाभावान्नात्रान्ते तु बादरायण इति न्यायप्रवृत्तिरित्यत आह—**दीक्षणीयादीति ।** नन्वेवमपि प्रत्यक्षपाठाद्गुणानां तद्देशत्वेसति तेषां स्वतस्तद्देशत्वासंभवादर्थाद्गुणिनोऽपि तद्देशत्वं स्यादित्यत आह—**गुणानामिति ।** ननूत्पत्तिपाठस्यैव क्रमनियामकत्वं तस्यैव कर्मस्वरूपोपस्थितिपरत्वात्, तत्कथं गुणार्थपाठस्य नियामकत्वमित्यतो व्याचष्टे—**गुणेति ।** उपस्थापकत्वमात्रं हि पाठस्य क्रमनियामकतायां तन्त्रम् । तच्च गुणार्थस्याविशिष्टमित्यन्यार्थस्यापि तस्य नियामकत्वमुपपन्नमिति भावः । **ननु** एवमप्यनन्यार्थत्वाद्गुणार्थपाठापेक्षयोत्पत्त्यर्थपाठस्य प्रबलत्वाच्चोदकप्राप्तेश्चोत्पत्तिस्थानीयत्वाच्चोदकानुसारेण प्रथमत एव दीक्षणीयादयः स्युरित्यत आह—**साचेति ।** चोदकपाठस्यानुमानिकत्वादुत्पत्तिस्थानीयस्यापि तस्य बाध्यत्वमेवेत्यर्थः । सूत्रार्थस्तु—यद्वैकृतं प्राकृतात्पुरस्तात्पठितं तस्यापि स देशः स्यादिति ॥

याजमानसंस्काराणां रुक्मप्रतिमोकात्पूर्वभाविताधिकरणम् ॥ ११ ॥

**संनिपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥**

**चयने रुक्मभृत्यादिः पुरोत स्वामिसंस्कृतिः ॥ पाठाद्याद्योऽन्तिमः क्लृप्तक्रमात्पाठस्य न क्षतिः ॥ २० ॥**

तत्रैव दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनाद्याम्नातं, प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः। तदिह किं रुक्मप्रतिमोचनादि कृत्वा दीक्षितसंस्काराः कार्या विपरीतं वेति संशयः। —'तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरम् ॥ रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः ॥' उच्यते—'दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात् ॥ तेषामुपस्थितानां च नाक्रियाहेतुरस्ति नः ॥' प्रकृतिक्लृप्तक्रमवशेनानन्तरमुपस्थितान्दीक्षितसंस्कारान्कृत्वा पश्चात्क्रियमाणस्य रुक्मप्रतिमोचनादेः पश्चात्पाठोपपत्तौ नावश्यमनन्तरानुष्ठानम्। अनन्तरपाठो ह्यवश्यपठितव्यतयाप्युपपन्नो नानन्तर्यं गमयति। सावित्रहोमादेस्तु पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## पञ्चमाध्याये तृतीयः पादः।

प्रयाजादीनामेकादशादिसंख्यायाः सर्वसंपाद्यताधिकरणम् ॥ १ ॥

**विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥ [अपिवा सर्वसंख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥]**

**एकादश प्रयाजाः किं प्रत्येकं स्यादुतान्यथा ॥ संख्यावृद्धिरिहाद्योऽस्तु प्रतिमुख्यं गुणो यतः ॥ १ ॥**

**प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति ॥ संख्यावृद्धिः प्रयोगात्तु साऽऽवृत्त्या संभविष्यति ॥ २ ॥**

'एकादशप्रयाजान्यजति षडुपसद' इति प्राकृतानां संख्याविवृद्धिर्विकृतौ श्रूयते। सा किं प्रत्येकं भवत्युत सर्वसंपादिनीति चिन्त्यते।—'तत्रोद्दिश्यप्रयाजादिसंख्या तस्योपदिश्यते ॥ उद्देश्यानां च साहित्यं शक्यते न विवक्षितुम् ॥' तत्प्रतिप्रयाजं प्रत्युपसदं च संख्या स्यादिति प्राप्तेऽभिधीयते—'प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते ॥ अशक्यत्वात्प्रयोगे तु लक्षिते सोपदिश्यते ॥' नह्येकै-

---

**संनिपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥ रुक्मेति**। उख्याग्नेः शिक्ये आसज्य कण्ठेधारणे क्रियमाणे उरःप्रदेशदाहाभावाय व्यवधानार्थं रुक्ममन्तरं प्रतिमुञ्चत इति विहितमेकविंशतिनिर्बाधसौवर्णाभरणविशेषधारणं रुक्मप्रतिमोचनशब्दार्थः। संस्कारा एकविंशत्या दर्भपिञ्जूलैः पावयतीत्यादयः। **तदिहेति**। अत्र भाष्योक्तोऽप्यनियमपक्षो मन्दत्वान्नोक्तः। पूर्ववत्प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**तत्रेति**। पदार्थज्ञापनार्थमावश्यकतया पाठोपपादने सावित्रहोमादेरपि तथापाठोपपत्तेस्तेषां पूर्वत्वमपि न स्यादिति भावः। **ननु** पाठादानन्तर्यप्रतीतेर्न पश्चाद्भावमात्रेण तदुपपत्तिरित्यत आह—**अनन्तरपाठ इति**। पठनीयानन्तराभावादवर्जनीयतयानन्तरपाठ उपपन्न इत्यर्थः। सावित्रादिपाठस्तु नैवं भवति। तत्र दीक्षणीयागुणानां पठितव्यानां सद्भावादिति भावः। वैषम्यान्तरमाह—**सावित्रेति**। सूत्रार्थस्तु—संस्काराणां रुक्मप्रतिमोचनादेश्च संनिपातश्चेदन्ते वैकृतमिति यथोक्तमेव स्यादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां पञ्चमाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥** एवं पादद्वयेन नानापदार्थाश्रितः क्रमश्चिन्तितः। अस्मिन्पादेऽभ्यासाश्रितः क्रमश्चिन्त्यत इति पादान्तरत्वं भिन्नपदार्थाश्रितक्रमापेक्षया आवृत्तिनिबन्धनक्रमस्य सूक्ष्मत्वादानन्तर्यं च। **विकृताविति**। पशावग्नौ चेत्यर्थः। **सर्वसंपादिनीति**। सर्वेषु संपत्तुं शीलमस्या इति समुदितान्वयिनीति यावत्। **तत्रेति**। प्रयोगे संख्यान्वयेऽपि प्रत्येकप्रयोग एव तदन्वयः स्यान्नतु समुदितप्रयोग इत्याशयः। **ननु** घटादिवत्स्वरूपेण संख्यान्वयः किं न स्यादित्यतो व्याचष्टे—**नहीति**। द्वित्वादिसंख्यान्वयो ह्येकावच्छेदापेक्षस्तत्र यथानिष्पन्नरूपाणां घटादीनां दश घटा आनीयन्तामित्यादावानयनादिक्रियावच्छेदादिहशरवसंख्यान्वयः, एवमिह प्रयाजानां निष्पन्नरूपाणामभावेनोत्पत्तिव्यतिरिक्तक्रियान्तरावच्छेदात्संख्यान्वयानुपपत्तेर्दश घटाः कर्तव्या इतिवदुत्पत्तिलक्षणक्रियावच्छेदात्संख्यान्वयो वाच्यः। तत्र च स्वरूपे संख्यान्वयस्वीकारे प्रत्येकस्वरूपे संख्यान्वये एकःसन्नेकादश कर्तव्या इति समुदितस्वरूपे च तदन्वये पञ्च सन्त एकादश कर्तव्या इति चार्थः स्यात्। नचैकस्य सतः पञ्चानां वा सतां तथाकरणं संभवति। तस्मा-

कश: समुदितानां वा स्वरूपेण संख्यान्वय: संभवत्येकस्य पञ्चानां चैकादशत्वासंभवादत: संख्यान्वयसिद्धये प्रयाजा: स्वप्रयोगं लक्षयन्ति । ते च तं लक्षयन्तस्तत्राभिधानात्सहावगतास्तथैव लक्षयन्ति । संख्या चेयमनेकवृत्तिस्वभावा समस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम् । अत: सर्वं संपादनीयं स्यात् ॥

प्रथमोपसत्त्रयस्य स्वस्थानावृत्त्यधिकरणम् ॥ २ ॥

## स्वस्थानात्तु विवृद्ध्येरन्कृतानुपूर्व्यत्वात् ॥ ३ ॥

**आवृत्तिरुपसत्स्वेषा संघस्यैकैकगाथ वा ॥ त्रिरध्यायं पठेत्यादाविव स्यात्समुदायगा ॥ ३ ॥**
**प्रथमा मध्यमान्त्येति प्राकृतक्रमसिद्धये ॥ एकैकस्या द्विरभ्यासे षट्संख्यापि प्रसिध्यति ॥ ४ ॥**

षडुपसद इत्यत्र सर्वसंपादनी संख्येत्युक्तमतस्तिसृणामुपसदां द्विरभ्यास: । तत्र किं दण्डकलितवदावृत्तिरुत स्वस्थानविवृद्धिरिति चिन्तायामावृत्तिन्यायानां लोके त्रिरनुवाक: पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात् ।—'अत: सर्वा: सकृत्कृत्वा पुन: स्यादादित: क्रिया ॥

---

दशक्यत्वान्न स्वरूपे संख्यान्वय इत्यर्थः । **ननु** प्रयोगमपि प्रत्येकमेव किमिति न लक्षयेयुरित्यत आह—**तेचेति । ननु** समुदितैः प्रयाजैर्लक्षितप्रयोगे संख्यान्वये समुदितानामेकादशवारं प्रयोगः स्यात् । किंच प्रयोगे संख्यान्वये संख्याप्रयोगाङ्गं स्यात न प्रयाजाङ्गमित्यत आह—**संख्या चेति ।** एकादश प्रयोगाः कर्तव्या इत्येवं प्रयोगे साक्षान्न संख्यान्वयः येनैकादशवारं समुदितप्रयोगाः स्युः, किंत्वेकादशवारं प्रयाजाः प्रयोज्या इत्येवं प्रयोगमुखेन प्रयोगविषयप्रयाजेष्वेव संख्यान्वयः । एवंच प्रयाजानां स्वरूपेण संख्यान्वयाभावेऽपि प्रयोगद्वारा तेषामपि संख्यान्वयात्संख्यायाः प्रयाजाङ्गत्वमुपपद्यते । तत्र यद्यपि प्रयाजा एव प्रयोज्यमानत्वविशेषेणोद्देश्यास्तथाप्येकादशत्वसंख्यायाः प्रत्येकं निवेशितत्वाभावात् सहितनिवेशितत्वस्वाभाव्याद्विधेयस्वभावानुसारेणोद्देश्यविशेषणविवक्षाया 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदयाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यादौ दर्शनात्तत्साहित्यं विवक्षितमिति सर्वसंपाद्या संख्येत्यर्थः । **नन्वेवं** पञ्चदशानीत्यादिग्रन्थः क्वचित्कोशेषु दृश्यते तं व्याख्यास्यामः । एवं तर्हि पञ्चदशत्वसंख्यापि चतुर्णामाज्यस्तोत्राणां समुदितानामेव स्यान्नैकैकस्येति शङ्कते—**नन्विति ।** तत्र प्राभाकरोक्तं परिहारमाह—**तत्र केचिदिति ।** पृथक्त्वनिवेशार्थं साहित्यस्य विवक्षितत्वात्सर्वसंपाद्यत्वमिष्यते । पञ्चदशानीति संख्या च न पृथक्त्वनिवेशिनी । स्तोमावृत्तौ डप्रत्ययस्य विधानात् स्तोमश्च स्तुतिस्तेन पञ्चदशान्याज्यानीत्यस्य पञ्चदशावृत्तिकस्तुतियुक्तान्याज्यस्तोत्राणीत्यर्थसंपत्त्या स्तुत्यावृत्तिपृथक्त्वमात्रमेवापेक्षितं, स्तुत्यावृत्तिपृथक्त्वस्य चैकस्मिन्नेवाज्यस्तोत्रे संभवादुद्देश्यसाहित्यादिविवक्षाकारणाभावान्न सर्वसंपाद्यत्वमित्यर्थः । तमिमं परिहारं दूषयति—**तथासतीति ।** यदि डप्रत्यय आवृत्तौ स्यात्तदेकविंशेनेत्यादावपि डप्रत्ययान्तेनावृत्तिगतसंख्याया एव बोधनात्तत्संपत्त्यर्थं प्रकृतानां सामादीनामभ्यास एव स्यात्ततश्च विवृद्धिस्तोमकेष्वागमेन संख्यापूरणं दशमे वक्ष्यमाणं विरुध्येतेत्यर्थः । **स्तोत्रीयेति ।** स्तोत्रीयाणामृचां संख्येत्यर्थः । **प्रयोगादिति ।** ततश्चोक्तप्रयोगानुसाराड्डप्रत्ययविधिगतस्तोमावृत्तिशब्देन स्तोत्रीयासंख्यैवोपलक्ष्येत्यर्थः । सूत्रार्थस्तु—यथा पृषदाज्येनानूयाजानिति पृषदाज्यं प्रत्येकं तथा एकादशत्वादिसंख्यावृत्तिरपि तस्य तस्य प्रयाजादेरुपदिश्येतेति । सिद्धान्ते तु संख्यायाः पृथक्त्वनिवेशित्ववत् पृषदाज्येनानूयाजानित्यत्र साहित्यविवक्षाकारणं न किंचिदस्तीति तस्य प्रत्येकान्वयो युक्तः नतु संख्याया इति वैषम्यं बोध्यम् ॥

**स्वस्थानात्तु विवृध्येरन्०** ॥ ३ ॥ पूर्वोपजीवनेन विशेषविचारात्सङ्गतिं सूचयन्नाह—**षडिति ।** एकादश प्रयाजानित्यस्य नात्र विषयत्वम् । तत्र हि 'होतायक्षदग्निं समिधा सुषमिधा समिद्ध'मित्यनुवाके पाशुकप्रयाजार्थाः प्रैषाः पठ्यन्ते । तत्र 'होता यक्षद्बर्हिः सुष्टरीमोर्णं म्रदा'इत्येतदन्ताः प्राकृतदेवत्याः प्रैषाः । तदनन्तरं 'होतायक्षदुरऋष्वा'इत्यारभ्य 'होता यक्षद्वनस्पति'मित्यन्ता अप्राकृतदेवत्याः । अन्तिमस्तु 'होता यक्षदग्निं स्वाहाज्यस्ये'त्ययमप्राकृतदेवत्यः । एतदुत्तरानुवाके च 'समिद्धो अद्य मनुषो दुरोण' इत्यस्मिन् आप्रयोऽनेनैव प्रकारेण पठ्यन्ते । तत्राप्राकृतदेवत्यानामभ्यासेषु विनियोगो वक्तव्यः प्राकृतदेवत्यानां लिङ्गादेव प्राकृतेषु पञ्चस्वपि व्यवस्थितत्वात् । तदेवंसति यद्याद्यानामभ्यासस्तदा बर्हिःप्रैषानन्तरपठितानामप्राकृतदेवत्यानामपकर्षापत्त्या तेषां प्रत्यक्षपाठक्रमबाधः स्यात् । तस्माच्चतुर्थोत्तमयोरेव षडप्यप्राकृतदेवत्याः । समं स्यादश्रुतत्वादितिन्यायेन क्रमशोऽङ्गमिति तयोरेवाभ्यास इति निश्चयात्तथा पूर्वाधिकरणे भाष्योक्तस्यैकादशानुयाज्यान्यजतीत्युदाहरणान्तरस्यापि नात्र विषयत्वम् । तत्रापि 'देवं बर्हिः सुदेव'मित्याद्यनुवाकद्वयगतप्रत्यक्षमन्त्रपाठादेवाद्यानां चतुर्णां दशमस्य च प्रथमानूयाजाभ्यासत्वं, पञ्चमप्रभृत्यष्टमान्तानां द्वितीयाभ्यासत्वं, नवमैकादशयोस्तृतीयाभ्यासत्वमिति निश्चयादतः पूर्वोदाहृतमध्ये षडुपसद इत्येतदेवोदाहरणमित्याशयेन तन्मात्रोक्तिः । **दण्डकलितवदिति ।** यथा क्षेत्रमाने क्वचित्क-

स्वस्थानात्तु विवृद्ध्येरन्क्रमबाधोऽन्यथा भवेत्॥ तृतीयां कृत्वा प्रथमायां क्रियमाणायां प्राकृतक्रमबाधः स्यात्। अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्या ॥

सामिधेनीष्वागन्तूनामन्ते निवेशाधिकरणम्॥ २॥

## समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात्॥ ४॥ [तच्छब्दो वा॥ ५॥ उष्णिक्ककुभोरन्ते दर्शनात्॥ ६॥]

सामिधेन्येकविंशत्यामागन्तोर्मध्यतः स्थितिः॥ अन्ते वा मध्यतो धाय्याशब्दितानां तथेक्षणात्॥ ५॥
इध्यमानेद्धवत्योस्ता मध्ये धाय्या विधानतः॥ आगन्तूनामधाय्यानां निवेशोऽन्ते हि युज्यते॥ ६॥

'एकविंशतिमनुब्रूया'दिति सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सत्यागम्यमानानामृचां देशश्चिन्त्यते। किमन्ते निवेशोऽथवा समिध्यमानवतीं समिध्यवतीं चान्तरा उत या धाय्याशब्दोक्तास्तास्तयोर्मध्येऽन्या त्वागन्तवोऽन्ते इति। तत्र 'अन्तेतु बादरायण' इति न्यायात्सर्वाः प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः। 'इयं वै समिध्यमानवती असौ समिध्यवती यत्तदन्तरा तद्धाय्या' इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्तुतयोः समिध्यमानसमिध्यवत्योर्मध्ये तासां निधानमनुमापयति सर्वाश्चागन्तवो निधीयमानतया धाय्या इति सर्वासां तन्मध्ये निवेश इति द्वितीयः। सिद्धान्तस्तु न निधीयमानमात्रवचनो धाय्याशब्दः स्तुतिशस्त्राद्यर्थतया निधीयमानास्वपि तच्छब्दाभावात्। अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः 'पृथुयाजवत्यौ धाय्ये' इत्यादिस्ता एव धाय्या नत्वागन्तुमात्रमतस्तासामेव तन्मध्येऽन्यासां त्वागन्तूनामन्त एव निवेशः। एवंच त्रैधातव्यायामधाय्याशब्दिकाया 'अग्ने त्री ते वाजिने'त्येतस्याः त्रिष्टुभोऽन्ते निवेशात्त्रिष्टुभा परिदधातीत्यादिदर्शनमुपपन्नं भवति। तस्मादधाय्याशब्दिकानामन्त एव निवेशः॥

---

त्स्नमेव मानदण्डं निवेश्य तदनन्तरदेशेऽपि तथैव कृत्स्नं निवेश्य क्षेत्रं मीयते, तथा आरभ्योपसत्त्रयं प्रथमतः कृत्वा पश्चादपि तथैवावर्तनीयं उत प्रथमानन्तरमेव तस्या आवृत्तिरिति। एवं प्रथमादीनां स्वस्वस्थाने वृद्धिरित्यर्थः। **इहापीति।** ततश्चोपदेशबलाद्दण्डकलितवदावृत्त्यवगमादातिदेशिकक्रमबाधो न्याय्य इति भावः। लोकेऽनुवाकशब्दस्य कृत्स्नार्थकतया तत्र तथैवावृत्तावपि प्रत्येकमुपसच्छब्दवाच्यत्वेनोपदेशस्य स्वस्थानविवृद्धावप्यविरोधान्नातिदेशिकक्रमबाधो युक्त इति सिद्धान्तमाह—**स्वस्थानादिति। प्रथमायामिति।** तृतीयानन्तरमुपस्थितप्रवर्ग्योद्वासनपरित्यागेन प्रथमानुष्ठाने क्रमबाधः स्यादित्यर्थः। सूत्रार्थस्तु—कृतानुपूर्व्यात्प्रकृतौ क्लृप्तक्रमत्वादित्यर्थः॥

**समिध्यमानवतीं समिध्यवतीं०॥ ४॥** प्राकृतानामभ्यासेन संख्यापूरणे विचाराप्रवृत्तेराह—**आगमे कर्तव्य इति।** दाशमिकन्यायेनागमेनैव संख्यापूरणस्य कर्तव्यत्वादिति भावः। **अथवेति।** 'समिध्यमानोऽध्वर' इत्यस्याः 'समिद्धो अग्न आहुत' इत्यस्याश्च मध्ये सर्वासामृचां निवेश इत्यर्थः। **तत्रेति।** इयं वै समिध्यमानवतीत्यस्य केवलस्तुतित्वेन विध्यभावात्प्राकृतानां क्लृप्तक्रमत्वात्तदबाधायागन्तूनामन्तएव निवेश इत्यर्थः। एवंच पूर्ववदिहापि प्राकृतक्रमाबाध इति प्रत्यवस्थानात्सङ्गतिः। स्तुतेर्विध्यन्तरशेषत्वाभावेन ततोऽवश्यं विधेः कल्प्यत्वादयं पक्षो मन्द इत्याशयेनाह—**उपक्रममात्रेणेति। निधीयमानतयेति।** धाय्याशब्दो हि न पृथुयाजवत्यादिषु रूढस्तथासति तन्मात्रानुगतधर्माभावेन नानार्थत्वप्रसङ्गादतो निधीयमानत्वयोगेनैव धाय्याशब्दप्रवृत्तिरिति सर्वागन्तूनां निधीयमानत्वाविशेषात्सर्वासामपि मध्य एव निवेश इत्यर्थः। **ता एवेति।** वेदे धाय्याशब्दप्रयोगविषयत्वस्यैकस्यैवानुगतधर्मस्य तटस्थस्य संभवान्न नानार्थत्वप्रसङ्गः। 'साम्नाय्यनिकाय्यधाय्या मानहविर्निवा ससामिधेनीष्वि'ति पाणिनिस्मरणं च सामिधेनीष्वेव धाय्याशब्दः साधुर्नान्यत्रेत्येवंपरमिति न ततः सामिधेनीपर्यायत्वं धाय्याशब्दस्य शङ्कनीयमिति भावः। उष्णिक्ककुभोश्चान्ते दर्शनादिति लिङ्गदर्शनसूत्रे उष्णिक्ककुप्शब्देन कार्यवाचिना उष्णिक्ककुप्कारणत्वेनार्थवादेषु श्रुता त्रिष्टुप् विवक्षितेति स्फोरयितुं लिङ्गदर्शनमाह—**एवंचेति।** धाय्याशब्दितानां मध्ये निवेशे सति त्रैधातवीयायामुष्णिक्ककुभौ धाय्ये इति धाय्याशब्दितयोः 'प्रसो अग्ने तवोतिभिः प्रहोत्रे पूर्व्य'मित्येतयोरेवमध्ये निवेशादधाय्याशब्दितायाः 'अग्ने त्री ते वाजिना' इत्यस्याः सर्वान्ते निवेशात्तस्याः 'त्रिष्टुभा परिदधाती'ति परिधानीयत्वं दृश्यमानमुपपद्यते। इतरथा तस्या अपि मध्ये निवेशेन प्राक्तन्या 'आजुहोता दुवस्यते'त्यस्या एव परिधानीयत्वप्रसङ्गात्त्रिष्टुभः परिधानीयत्वदर्शनमनुपपन्नं स्यात्। त्रिष्टुभो वैशेषिकतया परिधानीयत्वविधौ च गौरववाक्यभेदादिदोषप्रसङ्ग इति भावः। सूत्रार्थस्तु—धीयमानतया धाय्या सकला आगन्तवः स्युः समिध्यमानवतीं समिद्धवतीं चान्तरेण द्यावापृथिव्योरन्तरालसंस्तवादिति॥

बहिष्पवमान आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे ॥ ७ ॥ [पर्यास इति चान्ताख्या ॥ ८ ॥ अन्ते वा तदुक्तम् ॥ ९ ॥ वचनात्तु द्वादशाहे ॥ १० ॥ अतद्विकारश्च ॥ ११ ॥ तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥]**

स्तोमवृद्धौ किमागन्तोर्मध्येऽन्ते वास्तु मध्यतः ॥ द्वादशाहवदन्यत्र मध्यानुक्तेर्न मध्यतः ॥ ७ ॥

ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचाः स्तोत्रीयोऽनुरूपः पर्यासश्च ते विवृद्धस्तोमकेषु प्राप्तास्तत्रागमेन संख्यापूरणं वक्ष्यते । तत्रागम्यमानानामृचामन्ते निवेशः प्राग्वा प्राकृतात्पर्यासादिति संशयः । 'तत्र प्रत्यक्षपाठेन द्वादशाहे वृषण्वतां ॥ प्राक्पर्यासां निविष्टत्वादन्यत्राप्यनुमीयते ॥' द्वादशाहेऽप्याहिके द्वितीयेहि विवृद्धस्तोमके प्राकृतौ स्तोत्रीयानुरूपौ पठित्वा तत आगन्तवो वृषण्वत्य ऋचः पठिताः । ततः पश्चात् प्राकृतः पर्यासः पठितः । तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनादन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेश इति सामान्यतो दृष्टमात्रेण पूर्वपक्षप्रतिज्ञापर्यासशब्दश्चान्तवचनो लोके वेदे च प्रसिद्धः क्षेत्रपर्यासः नदीपर्यास इत्येवमादिः । तद्यद्यागन्तवोऽन्ते स्युः पर्याससमाख्याप्राकृतस्य तृचस्य बाध्येतातोपि प्राक्पर्यासान्निवेशः । उच्यते—'नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते ॥ समाख्याप्रकृतावेव चरितार्थेति साध्यतः ॥ अन्ते निवेशमागन्तोर्न्यायप्राप्तं न बाधते ॥ द्वादशाहविकारेऽपि केवलानां वृषण्वताम् ॥ प्राक्पर्यासान्निवेशः स्यादतिदेशविधेर्बलात् ॥ अन्ये त्वागन्तवोऽन्ते स्युर्बादरायणदर्शनात् ॥'

बहिष्पवमान एवागन्तूनां साम्नां मध्ये निवेशाधिकरणम् ॥ ५ ॥

**अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ [अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥]**

आर्भवे साम्न आगन्तारेन्ते मध्येऽथवाग्रिमः ॥ पूर्ववत्त्रीणि यज्ञस्येत्युक्त्या मध्ये निवेशनम् ॥ ८ ॥

विवृद्धस्तोमकेष्वेव क्रतुषु उत्तरयोर्माध्यंदिनार्भवपवमानयोः सामागमो वक्ष्यते । तत्रागम्यमानानां साम्नां किमन्त्ये तृचे निवेशोऽथवा गायत्रीबृहत्यनुष्टुप्स्विति । तत्रागन्तुत्वादन्त्ये निवेशः । यत्तु 'त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहदनुष्टुप् चात्र ह्येवावयन्ति अत एवोद्वयन्ती'ति तत्त्वविधिरूपत्वाद्यथाकथंचिन्नेयमिति । अपूर्वत्वात्तु वचनमेवेदमनारभ्याधीतं सर्वयज्ञविषयमतो गायत्र्यादिष्वेव नि-

---

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे ॥ ७ ॥ विवृद्धेति ।** 'एकविंशेनातिरात्रेण प्रजाकामं याजये'दित्यादिष्वित्यर्थः । सामागमेन ऋगभ्यासेन वा संख्यापूरणे प्रकृतविचाराप्रसक्तेराह **—तत्रेति ।** एकं सामेति बहिष्पवमाने सोमैक्येन सामागमासंभवात् 'पराक् बहिष्पवमानेन स्तुवते' इत्यनभ्यासवाचिपराक्शब्देन ऋगभ्यासनिषेधाच्च 'ऋगागमेनैव संख्यापूरण'मिति दशमे वक्ष्यते इत्यर्थः । **ननु** स्तोत्रीयानुरूपौ तृचौ भवतः वृषण्वन्तः स्तृचा भवन्ति तृच उत्तमः पर्यास इति वृषण्वतां वाचनिकत्वात्पाठेन प्राप्तिकथनमयुक्तमित्याशङ्क्य नहीदं वचनं विधायकं किंतु पाठप्राप्तानुवादकमित्याशयेन श्लोकं व्याचष्टे—**द्वादशाह इति ।** द्वादशाहावयवभूतपृष्ठ्यषडहमध्ये द्वितीयेहि पञ्चदशस्तोम इत्यर्थः । पूर्वत्र धाय्याशब्दवदिह पर्यासशब्दोऽस्तीति प्रत्यवस्थानात्संगतिं सूचयन्युक्त्यन्तरमाह— **पर्यासशब्द इति ।** आदिशब्देन उत्तमस्तृचः पर्यास इति वैदिकप्रसिद्धिसंग्रहः । **बाध्येतेति ।** समाख्यायाः प्रकृतिमात्रसंकोचकल्पने न किंचित्प्रमाणमस्तीति भावः । अनुरूपपर्यासयोः प्रकृतिक्लृप्तक्रमबाधप्रसङ्ग एव समाख्यायाः प्रकृतिमात्रसंकोचे प्रमाणमित्याशयेन न्यायप्राप्तमित्युक्तम् । **नन्वेवमपि** द्वादशाहविकृतिषु सर्वेषामप्यागन्तूनां प्राक्पर्यासान्निवेशः स्यात् । प्रकृतौ द्वादशाहे आगन्तूनां वृषण्वतां तथात्वदर्शनादिति शङ्कामात्रमपनुदति—**द्वादशाहविकार इति ॥**

**अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ वक्ष्यते इति ।** अभ्यासे मुख्यपृथक्त्वाभावात्पृथक्त्वनिवेशिसंख्यासंपत्त्यर्थमागम एव वाच्यः । स तु साम्नामेव न ऋचाम् । ऋचां गायत्र्यादिऋगाधारत्वासंभवादिति दशमे वक्ष्यत इत्यर्थः । पूर्ववदन्ते निवेश इति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**तत्रेति । अविधिरूपत्वादिति ।** वर्तमानापदेशत्वादित्यर्थः । अपूर्वत्वात् अप्राप्तत्वादित्यर्थः । **अनारभ्येति ।** प्राभाकरोक्तद्वादशाहप्रकरणाम्नातत्वं तन्त्ररत्न एव निराकृतमिति भावः । दशमे हि पव-

वेश: । अथवा नैवात्र विचारः पूर्वोक्तबहिष्पवमानग्रहणप्रत्युदाहरणमात्रमिदम् । बहिष्पवमान एवान्ते निवेशः उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति ॥

ग्रहेष्टकादीनां क्रत्वमिशेषताधिकरणम् ॥ ६ ॥

**ग्रहेष्टिकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥ [क्रत्वग्निशेषो वा चोदितत्वादचोदनानुपूर्वस्य ॥ १६ ॥]**

अदाभ्यग्रहचित्रिण्यावङ्गे किं सवने चितौ ॥ यागेऽग्नौ वात्र दृष्टत्वादाद्य आवर्त्यतां ततः ॥ ९ ॥

यागाग्न्योः फलवत्त्वेनानारभ्योक्ते तदङ्गके ॥ सवने सवने तस्मान्नैवावृत्तिश्चितौ चितौ ॥ १० ॥

'अंशुं गृह्णाति, अदाभ्यं गृह्णाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाती'त्यनारभ्याधीतं ग्रहेष्टकं किं सवनचितिशेषोऽतश्च प्रतिसवनं प्रतिचिति वावर्तनीयमुत यागाग्न्यङ्गं सकृदेव कर्तव्यमिति । प्रत्यक्षेण ग्रहैरिष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात्तादर्थ्यं मन्यते पूर्वपक्षवादी निष्फलत्वात्सवनचितीनां फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणामिष्टकानां च फलवदग्न्यङ्गत्वं युक्तं इष्टकाभिरग्निं चिनुते इति च वाचनिकमेवाग्न्यङ्गत्वम् ॥

चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ॥ ७ ॥

**अन्ते स्युरव्यवायात् ॥ १७ ॥ [लिङ्गदर्शनाच्च ॥ १८ ॥ मध्यमायां तु वचनाद्ब्राह्मणवत्यः ॥ १९ ॥]**

चित्रिण्यादेरुत्तमायामुपधानं पुराऽथवा ॥ अव्यवायादुत्तमायां मध्यमायां तु वाक्यतः ॥ ११ ॥

स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते किं चित्रिण्यादीनामुत्तमायामुपधानमुत मध्यमायामिति—'क्ऌप्तक्रमाव्यवायार्थमन्तेऽनारभ्य चोदिताः ॥ यां कांचिदितिवाक्यं तु विधये न भवत्यलम् ॥' सर्वासामिष्टकानां पठितेन कल्पितेन ब्राह्मणेन वा तद्वत्त्वात्सर्वासां च मध्यमायामुपधानासंभवाद्यासां मध्यमायामुपधानं प्राप्तं तदनुवादमात्रमिदं यांकांचिद्ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिताविति नतु विधायकमतः क्ऌप्तक्रमाणां प्राकरणकीनामव्यवायार्थमनारभ्याधीतानामुत्तमायां निवेशः । उच्यते—'वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः ॥ जानातिरभिपूर्वोयं प्रत्यक्षे वर्तते यतः ॥ वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम् ॥ चित्रिण्यादेर्निवेशोऽतो मध्यमायां चितौ भवेत् ॥'

---

माने स्यात्तस्मिन्नावापोद्वापदर्शनादित्यधिकरणेऽस्य वचनस्य विधित्वं स्थापयिष्यते । एवंच पूर्वपक्षाभावान्नेदमधिकरणं युक्तमित्याशयेनाह—**अथवेति** ॥

**ग्रहेष्टिकमौपानुवाक्यं०** ॥ १५ ॥ त्रीणि ह वा इत्यस्य विधेयत्वेऽपि यां वै कांचनेत्यस्य विधित्वासंभवाच्चित्रिण्यादीनामन्तिमायां चितौ निवेशः स्यादिति पूर्वसङ्गत्या प्रवर्तयिष्यमाणाग्रिमाधिकरणोपोद्घाततत्वादस्य सङ्गतिः । आरभ्याधीतत्वे यत्रैवाध्ययनं तत्रैव सकृदनुष्ठेयतया पूर्वोत्तरपक्षयोर्वक्ष्यमाणानुष्ठानविशेषासिद्धेराह—**अनारभ्येति । प्रतिचितीति** । प्रतिप्रस्तारमित्यर्थः । **प्रत्यक्षेणेति** । द्वितीयान्तयोरंश्वदाभ्ययोर्यागानुप्रवेशः सवनद्वारकत्वेऽप्युपपद्यते । इष्टकाभिरग्निभिरिति वचनं सामर्थ्यानुसाराच्चितिद्वारकमेव संबन्धमनुमन्यते । सवनचित्योरपि फलवत्त्वात्तादर्थ्येऽपि नानर्थक्यं चेति भावः । **निष्फलत्वादिति** । साक्षात्फलवदर्थत्वसंभवे परम्पराश्रयणं न न्याय्यमिति भावः । **वाचनिकमिति** । सामर्थ्येन श्रुत्यन्यथाकरणायोगादग्न्यर्थत्वेऽपि सामर्थ्याविरोधाच्चेति भावः । अंश्वदाभ्ययोरपि द्वितीयाध्यायेऽस्मदुदाहृतप्राकरणिकवचनाद्ग्रहणाङ्गत्वमेवेत्यपि बोध्यम् । सूत्रार्थस्तु—केवलैःपानुवाक्यान्नाता अंश्वादिग्रहाः अग्न्यौपानुवाक्याम्नाता वज्रिण्यादीष्टकाश्च यथाक्रमं सवनस्य चितेश्च शेषः स्यादिति ॥

**अन्ते स्युरव्यवायात् ॥ १७ ॥ उत्तमायामिति** । पञ्चम्यां चितावित्यर्थः । **क्ऌप्तेति** । पाठादिनेति शेषः । **कल्पितेनेति** । लिङ्गादेः श्रुतिकल्पनेन विनियोजकतया लिङ्गप्रकरणादिविनियोज्यानामपि कल्पितब्राह्मणवत्त्वमित्यर्थः । इष्टकाभिरग्निं चिनुत इत्यनेन सर्वासामग्न्यर्थत्वेन विधेयत्वात्सर्वासामपीष्टकानां प्रत्यक्षब्राह्मणवत्त्वमपि सुवचमिति भावः । **असंभवादिति** । तथात्वे चित्यन्तराभावेन मध्यमात्वाभावप्रसङ्गादिति भावः । **जानातिरिति** । अभेराभिमुख्यार्थकत्वाद्विषयाभिमुख्यस्यान्यत्रासंभवादभिपूर्वो जानातिः प्रत्यक्षज्ञानार्थक इत्यर्थः । अभिपूर्वस्य जानातेः प्रत्यक्षे रूढिरित्यप्याहुः । **वाक्यं चेति** । एवंच वाक्यार्थस्याबाधे प्रत्यक्षप्रातिस्विकब्राह्मणपरत्वमेव वाच्यमिति भावः ॥

लोकंपृणातःपूर्वं चित्रिण्याद्युपधानाधिकरणम् ॥ ८ ॥

**प्राग्लोकंपृणायास्तस्याः संपूरणार्थत्वात् ॥ २० ॥**

**लोकंपृणात ऊर्ध्वं स्याच्चित्रिण्युत ततः पुरा ॥ बादरायणदृष्टयोर्ध्वं पूरणोक्तेस्ततः पुरा ॥ १२ ॥**

स्थितं मध्यमायां निवेश इति, तत्रापि किं प्राकरणिकीनामन्ते चित्रिण्यादीनां निवेशोऽथवा लोकंपृणायाः प्रागिति । तत्राव्यवायार्थमन्ते स्युर्लोकंपृणायास्तु यदेवास्योनं यच्छिद्रं तदेतया पूरयति । लोकंपृणच्छिद्रंपृणेति यत्पूरणार्थत्वं तच्चित्यन्तरेऽपि सावकाशम् । नहि सा मध्यममामात्रविषया । मन्त्रमात्रस्य प्रत्यक्षविधानादिष्टकायास्तु कल्प्यं विधानमतश्चित्यन्तरेऽपि सावकाशत्वान्न न्यायप्राप्तचित्रिण्यादीनामन्ते निवेशः शक्यते बाधितुमित्यन्ते निवेशः । नैवमविशेषश्रुतस्य न्यायमात्रेण संकोचासंभवात् । 'मध्यमायामपि चितावन्ते लोकंपृणा भवेत् ॥ पूरणार्थेति तस्याः प्राक् चित्रिण्यादेर्निवेशनम् ॥'

इष्टिसंस्कृतेष्वाग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ९ ॥

**संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥२१॥ [ अनन्तरं व्रतं तद्भूतत्वात् ॥२२॥ पूर्वं च लिङ्गदर्शनात् ॥ २३ ॥ अर्थवादो वार्थस्य विद्यमानत्वात् ॥ २४ ॥ न्यायविप्रतिषेधाच्च ॥ २५ ॥]**

**आहिते पवमानेष्टिसंस्कृते वाग्निहोत्रकम् ॥ आधानेनाग्निनिष्पत्तेस्तन्मात्रे कर्म संभवेत् ॥ १३ ॥**

**आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता ॥ समुच्चितस्य हेतुत्वात्कर्म स्यादिष्टिसंस्कृते ॥ १४ ॥**

आधानप्रकरणे पवमानहवींषि विहितानि तान्याधानाद्विप्रकृष्यन्ते द्वादशसु रात्रीष्वनुनिर्वपेदित्यादिभिस्तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तन्ते उत तेषु कृतेष्विति विचारे कर्तव्यान्याहव-

---

**प्राग्लोकंपृणायाः० ॥ २० ॥** पूर्वोक्तोपजीवनेन विशेषविचारात्सङ्गतिं सूचयति—**स्थितमिति । तत्रेति ।** लोकंपृणाया अग्निप्रकरणाम्नातत्वेन प्राकरणिकेष्टकान्तरैः क्लृप्तक्रमत्वात्तदबाधार्थं लोकंपृणानन्तरं चित्रिण्यादयः स्युरित्यर्थः । **ननु** लोकंपृणाया यदेवास्योनमिति प्रत्यक्षब्राह्मणवत्त्वेन मध्यमचितिविधेयतया चित्यन्तरे लोकंपृणाया एवाभावात्तस्याः पूरणार्थत्वं न चित्यन्तरे सावकाशमित्यत आह—**नहीति ।** यदेवास्योनमिति प्रत्यक्षब्राह्मणेन मन्त्रमात्रविधानादित्यर्थः । **ननु** तत्सिद्धिपेटिकायां सृष्टीरुपदधातीत्यत्र केचित्तु मन्त्रविधिमेव समर्थयन्त इत्युपक्रम्य एकया स्तुवत इत्यादिमन्त्राणामुपधानैकान्तिकलिङ्गाभावादुपधानार्थतयास्ति विधेरवकाश इत्युक्त्वा सत्यामुपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवदित्युक्तम् । ततश्च मन्त्रस्य प्रत्यक्षब्राह्मणविधानमात्रेण तन्मन्त्रोपधेयेष्टकानां मध्यमचितिसंबन्धाङ्गीकारात्कथमिहेष्टकाया मध्यमचितिविषयत्वाभावावधारणमिति चेत्सत्यम् । तथापि न मन्त्रस्य प्रत्यक्षब्राह्मणविधानमात्रेणेष्टकायाः प्रत्यक्षब्राह्मणवत्त्वं किंतु प्रत्यक्षब्राह्मणे तन्मन्त्रोपधेयतयेष्टकाया निर्देशेनापि भवितव्यम् । 'चित्रिणीरुपदधाती'त्यादिषु चित्रिण्यादिशब्दैरिष्टकानामभिधानस्यापि सद्भावात् । एवंच सृष्टीरुपदधातीत्यत्र सृष्टिशब्देन सृष्टिशब्दवन्मन्त्रोपधेयेष्टकावचनेन विशेषणभूतमन्त्रविधानेऽपि विशेष्यभूतानामिष्टकानामपि प्रत्यक्षब्राह्मणे निर्देशादुपपन्नो मध्यमचितिसंबन्धः । इहतु लोकंपृणच्छिद्रंपृणेति मन्त्रमात्रस्यैव प्रत्यक्षब्राह्मणे श्रवणं नतु तन्मन्त्रोपधेयतयेष्टकाश्रवणमिति न काप्यनुपपत्तिरिति भावः । **कल्प्यमिति ।** यद्यपीष्टकाभिरग्निं चिनुत इत्यत एवेष्टकानां सर्वासां सिद्ध्या क्वापीष्टकाविधेरनुपेयत्वादिह तत्कल्पनमनपेक्षितं तथापीष्टकानां प्रातिस्विकविध्यभ्युपगमवादेनेदम् । **सावकाशत्वादिति ।** ततश्च न वचनबाध इति भावः । **संकोचेति ।** संकोचस्याप्येकदेशबाधरूपत्वात्स न न्याय्य इति भावः ॥

**संस्कृते कर्मसंस्काराणां तदर्थत्वात् ॥ २१ ॥** पूरणार्थकत्ववचनादागन्तूनां लोकंपृणानन्तर्येऽपीह वचनाभावान्न पवमानहविरानन्तर्यमिति प्रत्यवस्थानात्सङ्गतिः । **अनन्तरमेवेति ।** ननु भाष्यकारमते पवमानहविषामप्यग्निनिष्पादकत्वस्य वार्तिककारमते तेषामाधानाङ्गत्वस्य च तृतीये प्रतिपादनान्मतद्वयेऽप्याधानस्य पवमानहविःसापेक्षत्वादिह कथं निरपेक्षत्वालम्बनेन पूर्वपक्षप्रवृत्तिरिति चेदुच्यते—भाष्यकारमते पवमानहविषामप्यग्न्युत्पादकत्वेऽप्याधानेन विकल्पसंभवात्, वार्तिककारमतेऽपि यथा बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि स्वकाले वसन्ते कर्तव्यबृहस्पतिसवात्पूर्वमेव शरदि वाजपेयानुष्ठानमात्रेण तत्साध्यं परमापूर्वमुत्पद्यते । उत्पन्नं च परमापूर्वं बृहस्पतिसवेन पश्चात्फलमुखीक्रियते तथेहाप्याधानमात्रादेवाग्नयो निष्पद्यन्ते पवमानहविर्भिस्तु तेषां फलवत्त्वसंपादनमात्रमित्यपि संभवात् मतद्वयेऽपि पूर्वपक्षप्रवृत्तिरप्रत्यूहैव । एवं

नीयस्य निष्पन्नत्वात् आधानमात्रस्य निरपेक्षस्य तदुत्पादकत्वात्, पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य संस्कारमात्रं क्रियते । पूर्वमेव त्वाहवनीयादयो निष्पन्नाः, निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्ते उच्यते—न निरपेक्षमाधानमग्नीनामुत्पादकं पवमानहविषामपि तदुत्पादकत्वात् । न च विकल्पस्तेषामाधानोत्तरकाले विधानादतः समुच्चितानां तदुत्पादकत्वान्न तेभ्यः प्रागाहवनीयनिर्वृत्तिः । यदाप्याधानाङ्गं पवमानहवींषि तदाप्यनङ्गेन प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः । यत्तूक्तं निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति । तथाप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्याक्षमत्वात्तदुत्तरकालैव कर्मणां प्रवृत्तिः ॥

अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

**संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ [क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ अग्नेः कर्मत्वनिर्देशात् ॥ २८ ॥]**

**न धावेद्वर्षतीत्यादि चितौ सत्यां क्रतावुत ॥ आधश्चितेर्निमित्तत्वान्न क्रतावग्निचिद्वतः ॥ १५ ॥**

**अग्निचिद्व्रतानि 'वर्षति न धावये'दित्यादीनि चयनानन्तरमेव भवन्ति क्रत्वन्ते वेति संशये—'धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् ॥ व्रतान्यतः प्रवर्तेरन्नाहिताग्निव्रतादिवत् ॥' नैवम्—'भावनाया निमित्तत्वं धातुस्तदुपसर्जनम् ॥ तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते ॥' नह्यत्र चयनस्वरूपनिर्वृत्तिर्निमित्तं तत्करणिका त्वग्निकर्मिका भावना भूतानिमित्तं तस्याश्चाग्न्युपकारो भाव्यः । सोऽपि च क्रतुं साधयतोऽग्नेर्धारणं तच्चाक्रतुसमाप्तेर्विततं न ततः प्राङ्निर्वृत्तं भवति तन्निर्वृत्त्या च विना न भावनानिर्वृत्तिः फलापवर्गित्वाद्भावनानामाधानस्य त्वग्निगतमदृष्टं भाव्यम् । तच्चानन्तरमेव निर्वृत्तमिति विशेषः ॥**

---

मतद्वयाविरोधेन पूर्वपक्षप्रवृत्त्युपपत्तावपि प्रौढ्या प्रकारान्तरमाह—**पवमानहविर्भिस्त्विति** । प्रथमं भाष्यकारमते सिद्धान्तमाह—**निरपेक्षमिति** । वार्तिककारमतमाह—**यदापीति** । **तदुत्तरकालमेवेति** । वाजपेयेनेष्ट्वेति तृतीयासमभिव्याहृतक्त्वाप्रत्ययेन फलवाक्यावगतवाजपेयकरणकफलार्थव्यापारसंपादनानन्तरं बृहस्पतिसवविधानाद्युक्ता बृहस्पतिसवंविनापि वाजपेयपरमापूर्वनिष्पत्तिरिह तु तथाविधिनियामकाभावान्नाङ्गेन विनाग्निनिष्पत्तिरित्यर्थः । **कार्योपयोगित्वादिति** । स्वातन्त्र्ये संस्कारत्वानुपपत्तेः फलान्तरकल्पनागौरवप्रसङ्गाच्चाग्निसिद्ध्यर्थ एव संस्कारो वाच्य इति भावः । सूत्रार्थस्तु—पवमानेष्टिसंस्कृतेऽग्नौ अग्निहोत्रादिकर्म, आहवनीयशब्दस्य संस्कारवाचितया पवमानसंस्काराणामप्यग्निहोत्रार्थत्वादिति ॥

**संचिते त्वग्निचिद्युक्तं०** ॥ २६ ॥ क्रत्वन्तेऽग्निचिद्व्रताङ्गीकारे आहिताग्निव्रतान्यप्यग्निसाध्यक्रत्वन्ते स्युरिति प्रतिबन्द्याशयेन दृष्टान्तमाह—**आहितेति** । यथा 'आहिताग्निर्न क्लिन्नं दार्वभ्यादध्या'दित्याहिताग्निव्रतान्याधानानन्तरमेव प्रवर्तन्ते तद्वदित्यर्थः । अनन्तरं व्रतं 'तद्भूतत्वा'दिति पूर्वाधिकरणोक्तगुणसूत्रे यदग्निहोत्रादिवैषम्येणाधानानन्तरकर्तव्यत्वमाहिताग्निव्रतस्योक्तं तद्दृष्टान्तेन प्रत्यवस्थानात्सङ्गतिरिति सूचितम् । **भावनाया इति** । तत्रैव क्रियात्वेन स्वरसतो भूतत्वान्वयादिति भावः । **नन्वेवमपि** चयनकर्मकभावनानिर्वृत्तेर्निमित्तत्वेन समनन्तरमेव व्रतं स्यादित्यतो व्याचष्टे—**नहीति** । कर्मणिभूत इति चाधिकृत्य 'अग्नौ चे'रिति कर्मण्यग्नौ उपपदे चिनोतेर्धातोः क्विप्प्रत्ययविधानादग्निकर्मिका चयनकरणिका भावना भूता सती निमित्तं नतु चयनकर्मिका । भावना च फलनिष्पत्त्या भूता भवति । क्रियायाः फलापवर्गित्वात् । फलं चात्राङ्गप्रधानार्थस्याग्नेर्धारणरूपं तेन साङ्गक्रतुसमाप्तिपर्यन्तं चयनकरणकाग्निसंस्कारभाव्यकभावनानिर्वृत्त्यभावेन निमित्ताभावाच्चयनानन्तरमेव व्रतप्रवृत्तिरिति न युक्तमित्यर्थः । आधानस्य तु चयनवत्क्रत्वर्थत्वाभावेन क्रत्वपूर्वसाधनसंस्कारत्वाभावात्स्वतन्त्रमेवाग्निगतमदृष्टं फलमिति नाहिताग्निव्रतेषु क्रत्वन्तप्रतीक्षेत्याह—**आधानस्येति** । नन्वेवमप्याधानफलभूताहवनीयादिनिष्पत्तेः पवमानहविरनन्तरभावित्वात्तदनन्तरमाहिताग्निव्रतानि स्युरित्यत आह—**तच्चेति** । नह्यत्राहवनीयादिनिष्पत्तिर्निमित्तं किंत्वाहिताग्नित्वं । कृतमात्र एव चाधानेऽग्निगतस्यादृष्टस्य निर्वृत्त्या भवत्याहिताग्नित्वम् । एवं च पवमानहविषामकरणादाहवनीयानिष्पत्तावपि आधानेनोत्पत्त्यपूर्वतुल्ययोगक्षेमस्याग्निगतस्यादृष्टस्य जननात् तन्मात्रेणैवाहिताग्नित्वरूपनिमित्तसद्भावादाहिताग्निव्रतानि प्रवर्तन्ते । अग्निचिद्व्रतानि तु चयनेनाग्निं संस्कृतवतो विधीयमानानि चयनावान्तरकार्यस्थण्डिलस्थापनादिमात्रेणाग्निचित्त्वाभावात्क्रत्वन्त एव प्रवर्तन्ते इति वैषम्यमित्यर्थः । सूत्रार्थस्तु—अग्निचित्संयुक्तं व्रतं चितिमात्रे एव स्वाभिमितस्य प्राप्तेरिति ॥

दीक्षाया इष्टिसिद्धताधिकरणम् ॥ ११ ॥

**परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसंबन्धात् ॥ २९ ॥ [इष्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात् ॥ ३० ॥ समाख्यानं च तद्वत् ॥ ३१ ॥]**

**इष्टिदण्डादिभिर्दीक्षा किं वेष्टयैवोक्तितोऽग्रिमः ॥ युक्तः संस्कार इष्टयैव दण्डादेर्व्यञ्जकत्वतः ॥ ११ ॥**

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण'इतीष्टिः । 'दण्डेन दीक्षयती'त्यादिच श्रूयते । तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यैव, दण्डादीनि तु तद्व्यञ्जनानीति । सर्वेषां तादर्थ्यावगमाददृष्टार्थानां चैकप्रयोगविधिसंग्रहात्समुच्चयसिद्धेः सर्वान्ते दीक्षासंग्रह इति प्राप्तेऽभिधीयते—'निरपेक्षैव वाक्येन दीक्षार्थेष्टिर्विधीयते ॥ दण्डादित्वक्रियारूपं तद्व्यञ्जनतयोच्यते ॥' दीक्षिष्यमाण इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते । तेन दीक्षार्थत्वमिष्टेः । दीक्षाच क्रत्वङ्गभूतयमनियमपरिग्रहस्तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः । साच निरपेक्षाऽवगम्यते । तद्यदि दण्डादिश्रवणमन्यथा नोपपद्येत ततो नैरपेक्ष्यं बाध्येत । तत्तु व्यञ्जनतयाप्युपपन्नं न निरपेक्षश्रुतिं बाधितुं क्षमते । किंच दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति । नचैषामाश्रयभूतेतिकर्तव्यताभूता वा काचित्क्रिया श्रूयते । ततः कथं दण्डादिभिः संस्कारो जन्येतेति न ज्ञायते । अभिव्यक्तिस्तु दृष्टत्वात्प्रमाणान्तरदृष्टसंयोगादिवशेनैव शक्यते संपादयितुम् । तस्मादिष्ट्यन्त एव दीक्षितस्य अभिव्यञ्जनमात्रार्था दण्डादय इतीष्ट्यन्त एव दीक्षितधर्माः प्रवर्तेरन् ॥

---

**परेणावेदनात्० ॥ २९ ॥ सर्वेषामिति ।** इष्ट्या दीक्षिष्यमाण इति समभिव्याहारेण दण्डादीनां तृतीयया च दीक्षार्थत्वादित्यर्थः । वाक्यान्तरे दण्डादीनां धारणश्रवणात्तदवलम्बनेन द्रव्याणामपि दीक्षाजनकत्वं संभवतीति भावः । नन्वेवमेकार्थत्वाद्व्रीहियववद्विकल्पः स्यात्ततश्च कथं सर्वान्ते दीक्षितत्वमित्यत आह—**अदृष्टार्थानामिति** । युक्तं व्रीहियवयोर्दृष्टद्वारा पुरोडाशनिष्पत्त्यर्थत्वाद्व्रीहिभिरेव यवकार्यस्यापि प्रसङ्गात्सिद्धेः प्रयोगविधिना व्रीहियवयोः पर्यायेण ग्रहणाद्विकल्प इति । इह तु इष्टेर्दण्डादीनां चादृष्टद्वारा दीक्षार्थत्वादिष्टेर्येन द्वारेण दीक्षार्थत्वं तेनैव द्वारेण दण्डादीनां तदर्थत्वमित्यत्र प्रमाणाभावेन प्रसङ्गसिद्धकार्यत्वाभावात्सर्वपदार्थग्राहिणा प्रयोगवचनेन युगपद्ग्रहणात्समुच्चय इति सर्वान्ते दीक्षितत्वमित्यर्थः । अनेनैव यथा चयनमात्रान्नाग्निचित्त्वमेवमिष्टिमात्रान्न दीक्षितत्वमिति प्रत्यवस्थानात्सङ्गतिः सूचिता । ननु दीक्षिष्यमाण इति शानचा कर्तुरभिधानाद्दीक्षिष्यमाणपुरुषसंस्कारार्थैवेयमिष्टिर्नतु दीक्षार्थे इत्याशङ्क्य, सत्यं पुरुषसंस्कारार्था तथापि न तन्मात्रपर्यवसिता, किंतु तद्वारा दीक्षितार्थैव 'लृट् शेषेच'त्यनेन क्रियाप्रयोजनायां क्रियायामुपपदे प्रयोज्यीभूतक्रियावचनाद्धातोर्विहितलृट्प्रत्ययेनेष्टिरूपक्रियाया दीक्षार्थत्वावगमात् । यथा दर्शपूर्णमासावारप्स्यमाण इति विहिताया अन्वारम्भणीयायाः पुरुषसंस्कारद्वारा आरम्भार्थत्वं तथेहापि पुरुषसंस्कारद्वारा दीक्षार्थत्वमिति व्याचष्टे—**दीक्षिष्यमाण इति ।** नन्विष्टिजन्यपुरुषसंस्कारव्यतिरिक्ताया दीक्षाया एवाभावात्कथं पुरुषसंस्कारद्वारा दीक्षार्थत्वमिति तटस्थशङ्कां निराकुर्वन्नाह —**दीक्षा चेति ।** परिग्रहः परिग्रहानुकूलव्यापार इत्यर्थः । **निरपेक्षेति** । क्रियार्थायां क्रियायामित्यत्र निरपेक्षतया क्रियार्थत्वावगमादिति भावः । **ननु** तृतीयाश्रुत्या जनकत्वमेव युक्तं दण्डादीनामित्याशङ्क्य जनकत्वाभावाद्व्यञ्जकत्वं स्वीकार्यमित्याह—**किंचेति ।** दण्डेन दीक्षां संपादयेदित्युक्ते तत्प्रकारस्यालौकिकत्वादितिकर्तव्यतानुपदेशादपरिपूर्णं वाक्यं स्यादित्याशयेनाह—**इतिकर्तव्यता वेति ।** नच धारणमाश्रय इतिकर्तव्यता वा भवितुमर्हति, तथासति दण्डधारणस्य सोमक्रयावधिकतया तावत्पर्यन्तं दीक्षानुत्पत्तिप्रसङ्गात् । तथा मेखलया दीक्षयति वाससा दीक्षयतीति विहितमेखलादीनामाभृथं धार्यत्वेन ततःप्राक् दीक्षानवकाशप्रसङ्गात् । नच धारणापरिसमाप्तावपि धारणोपक्रममात्रेण दीक्षोत्पत्त्यवगमकं किंचित्प्रमाणमस्तीति भावः । नचालौकिकसंस्कारस्योत्पत्तिवदभिव्यक्तिरपि न संभवतीति वाच्यम् । अतीन्द्रियार्थस्यापि लिङ्गादभिव्यक्तिदर्शनात् । अतएवापस्तम्बसूत्रे यावदुक्तं 'पत्न्या दीक्षितव्यञ्जनानी'ति व्यञ्जकत्वमेव व्यवहृतमित्याशयेनाह— **अभिव्यक्तिरिति** । ननु दीक्षासंस्कारप्रयोजनक्रतुसिद्धिपर्यन्तत्वेन पक्षद्वयेऽपि दीक्षितो न ददातीत्यादिधर्माणामग्निचिद्वत्क्रत्वन्तेऽनुष्ठेयत्वादफलो विचार इत्यत आह—**इष्यन्त इति** । सत्यं, दीक्षासंस्कारप्रयोजनं क्रतुसिद्धिपर्यन्तं तथाप्यग्निं संस्कृतवानग्निचिदिति चयनवदिह न दीक्षासंस्कारत्वेन निमित्तं कीर्त्यते किंतु स्वरूपेणैव । ततश्च दीक्षामात्रनिर्वृत्त्यैव दीक्षितधर्माः प्रवर्तेरन्निति पूर्वपक्षे दण्डादिसर्वान्ते दीक्षितधर्माः सिद्धान्ते इष्ट्यन्त इति सप्रयोजनत्वमिति भावः । सूत्रार्थस्तु—सर्वैरिष्टिदण्डादिभिर्दीक्षाभिसंबन्धादावेदनात्परेणावेदनानन्तरं दीक्षितः स्यात् । 'एनपा द्वितीये'त्यत्र 'पञ्चम्यपि दृश्यत' इति वक्तव्यं कल्पयित्वा परेणावेदनादिति प्रयोगः समर्थनीय इति तत्त्वरत्ने ॥

काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ॥ १२ ॥

**अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ [न वाऽसंबन्धात् ॥ ३३ ॥ काम्यत्वाच्च ॥ ३४ ॥ आनर्थक्यान्नेति चेत् ॥ ३५ ॥ स्याद्विद्यार्थत्वाद्यथापरेषु सर्वस्वारात् ॥ ३६ ॥]**

**काम्यनैमित्तिकाः कार्या यथापाठं न वाग्रिमः ॥ पाठस्य क्रमहेतुत्वान्न प्रयोगपृथक्त्वतः ॥ १७ ॥**

क्रत्वन्तराणामैन्द्राग्नादीनां काम्यानां नैमित्तिकानां च क्रमेण पठितानामङ्गानामिव पाठवशात्क्रमनियममाशङ्क्य स्वयमभिधायकत्वाद्विधायकस्य चैषामेकस्याभावान्नानाप्रयोगवचनेनैकैकश्येन विधीयमानानां मिथोऽनपेक्षणादनियमेन कामानां निमित्तानां चोपनिपातान्नास्ति क्रमनियम इति स्थितम् ॥

यज्ञानामग्निष्टोमपूर्वताधिकरणम् ॥ १३ ॥

**य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ [लिङ्गाच्च ॥ ३८ ॥]**

**एतेनानिष्ट्वेति सर्वसंस्थोऽग्निष्टोम एव वा ॥ अविशेषात्सर्वसंस्थो ज्योतिष्टोमोऽत्र वर्ण्यताम् ॥ १८ ॥**

**अग्निष्टोमप्रक्रियात्र तस्य प्रथमयज्ञतः ॥ तेनेष्ट्वान्येन यष्टव्यं संस्था आगन्तवोऽपराः ॥ १९ ॥**

क्रत्वन्तराणामनियम इति स्थितं क्वचिद्वचनबलात्पौर्वापर्यं भवति । तथाहि श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमस्तस्मादेतेनेष्ट्वान्येन यजेते'ति । तत्र किमेतच्छब्दः सर्वसंस्थं ज्योतिष्टोमं निर्दिशत्युताग्निष्टोमसंस्थमेवेति ।—'तत्राविशेषतः सर्वसंस्थोऽनेन विमृश्यते ॥ अग्निष्टोमस्तु नित्यत्वात्संस्था ह्यागन्तवो यतः ॥' ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्था नैजं रूपमिति तादृश एव प्रतीयते न संस्थान्तरयुक्तः । तेषामागन्तुत्वादपि च एतेनेतिकरणनिर्देशाज्ज्योतिष्टोमकरणिका भावना इष्ट्वेतिशब्देन कथ्यते । नच संस्थासु तस्य करणत्वमाश्रयमात्रत्वात् । नच संस्थानां क्रतुभावनान्तर्भावः फलार्थत्वात् । अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गतेति तत्संस्थस्यैव परामर्शः ॥

ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकताधिकरणम् ॥ १४ ॥

**अथान्येनेति संस्थानां संनिधानात् ॥ ३९ ॥ [तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥ प्रशंसा वा विहरणाभावात् ॥ ४१ ॥ विधिप्रत्ययाद्वा नह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥]**

**अन्येनेत्यत्र संस्थानामुक्तिः सर्वस्य वाग्रिमः ॥ संनिधेस्तद्विकारस्य सर्वस्योक्तिर्हि वाक्यतः ॥ २० ॥**

एतच्छब्दार्थे निरूपिते तदपेक्षोऽन्यशब्दः किं संस्थासु वर्तते उताग्निष्टोमान्यमात्र इति संशये

---

**अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥** दीक्षितधर्माणामिष्टिसाध्यदीक्षालक्षणनिमित्तानन्तर्यनियमेऽपि पाथिकृतादीनां नैमित्तिकानां न निमित्तानन्तर्यनियम इति प्रत्यवस्थानात्सङ्गतिः । **अङ्गानामिवेति** । यद्यपि समिदादीनामिव नात्र प्रयोगवचनैक्यं तथाप्येककर्त्रा युगपदनेकानुष्ठानासंभवनिबन्धना क्रमापेक्षा प्रकृतेऽप्यस्तीति प्रत्येकप्रयोगवचनैरपि पाठोपस्थितक्रमविशेषाणामेव कर्मणां विधिः स्वीकार्य इति भावः । **ननु** कर्तृपुरुषैक्यनिबन्धना क्रमापेक्षास्तीत्युक्तमत आह—**अनियमेनेति** । काम्यानां कर्मणां कामनानुसारेण नैमित्तिकानां निमित्तानुसारेण चानुष्ठेयतया तद्बलेनानियतक्रमस्वीकारेणैव एकेन कर्त्रानेककर्मानुष्ठानस्य वाच्यत्वान्नात्र पाठक्रमो नियामक इति भावः ॥

**य एतेनेति० ॥ ३७ ॥** एतच्छब्दार्थविचारस्य पूर्वापवादव्यवस्थापनपर्यवसानात्सङ्गतिमभिप्रेत्याह—**क्रत्वन्तराणामिति** । सिद्धान्तमाह—**अग्निष्टोमस्त्विति** । **नैजमिति** । अग्निष्टोमसंस्थायाः क्रत्वर्थत्वादिति भावः । **ननु** अग्निष्टोमसंस्थाया नित्यत्वेऽपि न क्रतोर्नित्यस्तत्संबन्धः । काम्येन संस्थान्तरेण कदाचित्संबन्धविधानात् । एवंच क्रत्वविनाभावाभावात्तस्या अपि संस्थान्तरतुल्यतैवेत्यत आह—**अपिचेति** । ननु संस्थास्वाश्रयमात्रस्यापि ज्योतिष्टोमस्य स्वफलभावनाकरणत्वं न हीयते । सर्वत्र परप्रयुक्तस्यैव कर्मणः काम्यगुणेष्वाश्रयत्वात् । तथाच संस्थान्तरयोगेऽपि न कारणनिर्देशानुपपत्तिरित्यत आह—**नच संस्थानामिति** । इतिकर्तव्यतायुक्तस्य करणत्वाद्यत्संस्थेतिकर्तव्यतान्तर्गता तत्संस्थस्यैव करणनिर्देशग्रहणं न्याय्यमिति भावः । सूत्रार्थस्तु—एतेनेति अग्निष्टोमसंस्थानिर्दिश्यते तत्संस्थायुक्तस्यैव प्रकरणित्वादिति ॥

**अथान्येनेति० ॥ ३९ ॥** पूर्वोपजीवनेन सङ्गतिमभिप्रेत्याह—**एतदिति** । **प्रकृता इति** । यद्यपि संस्थानां स्वाश्र-

'संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः ॥ नत्वेवं स्यान्न संस्थानामस्ति प्रकरणं यतः ॥ ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्तनात् ॥ यज्ञानामिति शब्देन सर्वे संनिहिता हि ते ॥' तस्माज्ज्योतिष्टोमान्यत्वाविशेषात्संस्थानामेकाहाहीनसत्राणां चायमन्यवाद इति सर्वेषां तेषां ज्योतिष्टोमात्पश्चाद्भावोऽङ्गमनेन वाक्येन विधीयते ॥

सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वकताधिकरणम् ॥ १५ ॥

## एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥ [सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम् ॥ ४४ ॥]

**एकस्तोमेऽन्यशब्दः स्याद्बहुस्तोमेऽपि वाग्रिमः ॥ त्रिवृदन्येत्यर्थवादात्सामान्यमात्रस्य संभवात् ॥ २१ ॥**

**पूर्वाक्षेपेणेदमारभ्यते न सर्वनिर्देशः किंत्वेकस्तोमानां त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः एकविंशः षोडशीत्यादीनामेव । कुतः । वाक्यशेषात् । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते इत्यादेरविशेषश्रवणं वाक्यशेषेण विशेषेऽवस्थाप्यते—'नत्वेवमन्यशब्देन ह्यविशेषः प्रतीते ॥ वाक्यशेषस्तु संयोगमात्रेणैवोपप-**

---

यज्ज्योतिष्टोमसमानविध्यभावात्क्रतोरेव प्रकरणं न संस्थानां तथापि संनिधिलक्षणमेवात्र प्रकरणं पूर्वपक्षिणोऽभिमतं तस्यैवानेनेति सर्वनाम्ना परामर्शे प्रयोजकत्वात् । ततश्च य एतेनेति पूर्वप्रकृताग्निष्टोमस्योक्थ्यादय एव संनिहिता न क्रत्वन्तराणीति पूर्वप्रकृतादितरथत्संनिहितं तद्वाचिनान्यशब्देन संस्थानामेव निर्देश इत्यर्थः । संनिधानस्य वक्ष्यमाणरीत्या सर्वसाधारण्यात्संस्थामात्रनिर्देशमिच्छता प्रकरणमेव वाच्यम्, नच तत्संभवतीत्याह—**नत्विति । ज्योतिष्टोमाधिकारोऽयमिति ।** ज्योतिष्टोमप्रकरणमित्यर्थः । यद्वा **ननु** ज्योतिष्टोम इति ज्योतिष्टोमशब्देनान्यशब्दान्वयेऽग्निष्टोमान्येन ज्योतिष्टोमेनेत्येवमुक्थ्यादिसंस्थज्योतिष्टोमस्यैव निर्देशः स्यान्नतु क्रत्वन्तराणामित्यत आह—**ज्योतिष्टोमेति ।** अयं भावः—ज्योतिष्टोमशब्दोऽयमेतेनेत्यत्रान्वयेन निराकाङ्क्षत्वान्नान्यशब्देन संबध्यते येनोक्तरीत्या विशेषणविशेष्यभावः स्यात्, किंतु कस्मादन्येनेत्यपेक्षायां प्रकृताग्निष्टोमसंस्थज्योतिष्टोमादन्येनेत्येवं संनिहितो ज्योतिष्टोमः प्रतियोगितया संबध्यते । ततश्चाग्निष्टोमसंस्थाज्ज्योतिष्टोमादन्यत्वं सर्वेषामस्तीति सर्वनिर्देश एवायमिति । **वाक्यशेष इति ।** 'प्रजापतिर्वा अग्निष्टोमः स उत्तरानेकाहानसृजते'त्यादिवाक्यशेषे क्रत्वन्तराणां कीर्तनादित्यर्थः । यदुक्तमुक्थ्यादीनामेव संनिधानाद्ग्रहणमिति तत्राह—**यज्ञानामिति ।** नन्वेवंसति संस्थानां यागत्वाभावाद्यजिसमानाधिकृतेनान्यशब्देन कथं निर्देश इति संस्थातद्वतोरनतिभेदाद्यजिसामानाधिकरण्योपपत्तेः । अतएवोक्तं तन्त्ररत्ने 'यज्ञानामग्निष्टोम उक्थ्यषोडश्यतिरात्राप्तोर्यामाहीनसत्राणां मध्ये एष प्रथमः प्रयोज्य'इति । दृष्टश्च 'प्रजापतिर्यज्ञानसृजत,' 'यज्ञं व्याख्यास्याम'इत्यादिश्रुतिकल्पसूत्रयोः संस्थासाधारणो यज्ञशब्दप्रयोग इति । अत्राचार्यैः किमनेनाग्निष्टोमस्य प्राथम्यं विधीयते उत यज्ञान्तराणामग्निष्टोमोत्तरत्वमिति संदिह्य प्रकरणानुग्रहायाग्निष्टोमप्राथम्यविधिं प्राप्य, 'तस्मादेतेनेष्ट्वान्येन यजेते'ति यजिपरप्रत्ययेनैतच्छब्दार्थाग्निष्टोमे प्राथम्यविधावत्यन्तं वाक्यं स्यात्, यज्ञान्तराणामग्निष्टोमोत्तरकालत्वविधौ तु धात्वर्थविधेः श्रुत्यनुग्रहः । तस्मात्प्रकरणानादरेणाग्निष्टोमानन्तर्यमितरेषां विधीयते । नच प्रकरणान्तरन्यायाद्यज्ञान्तराणामिह कालविधिर्न संभवतीति शङ्क्यम् । यज्ञानामिति शब्देन यज्ञान्तराणामपि विपरिवर्तमानत्वेनाविपरिवर्तमानत्वलक्षणप्रकरणान्तरस्याभावादिति । उत्सूत्रभाष्यमधिकरणान्तरं वर्णितं तत्सिद्धमर्थमाह—**इति सर्वेषामिति ॥**

**एकस्तोमे वा० ॥ ४३ ॥ एकेति ।** त्रिवृदादिस्तोमानां मध्ये एक एव येषां क्रतूनां स्तोमस्तेषामित्यर्थः । **यो वा इति ।** यो वै त्रिवृदाख्यस्तोमः प्रकृतज्योतिष्टोमादन्यं यज्ञक्रतुं प्राप्नोति स तं दीपयतीति वाक्यशेषे त्रिवृदादेर्दीपकत्वश्रवणात्कृत्स्नप्राप्तिं विना कृत्स्नदीपकत्वासंभवात्त्रिवृदादेः कृत्स्नक्रतुव्याप्त्यवगमाद्वाक्यशेषे एकस्तोमकानामेव क्रतूनां निर्देश इति भावः । **अन्यशब्देनेति ।** अथान्येनेत्यनेनेत्यर्थः । अक्ता इत्यत्रैकेनैवाञ्जनसिद्धेः केनाञ्जनमिति संदेहाद्युक्तं वाक्यशेषाद्विशेषपरत्वम् । इहतु न तथा संदेहः । अन्यशब्दस्य सर्वपरत्वेऽपि विरोधाभावादिति भावः । ज्योतिष्टोमस्य प्रथममनुष्ठाने तत्राभ्यस्तास्त्रिवृदादयः पश्चात्क्रत्वन्तरेऽनुष्ठीयमाना अभ्यस्तत्वात्क्रत्वन्तरं दीपयन्ति, इतरथा क्रत्वन्तर एव त्रिवृदादीनां प्रथमानुष्ठानापत्त्यानभ्यस्तत्वात्क्लेशेनानुष्ठेयैस्तैः क्रत्वन्तरदीप्तिर्न स्यादिति । एवं ज्योतिष्टोमप्राथम्यस्तुत्यर्थं प्रवृत्ते वाक्यशेषे त्रिवृदादीनां क्रत्वन्तरदीपकत्वं ज्योतिष्टोमेऽभ्यस्तत्वनिबन्धनं कीर्त्यते नत्वालोकादिवत्प्रकाशकत्वम् । ततश्चैकदेशसंबन्धिनामपीतरेषां ज्योतिष्टोमाभ्यस्तत्वाविशेषात्स्वसंबन्धिक्रत्वन्तरदीपकत्वमुपपद्यत इति वाक्यशेषस्य सर्वसाधारण्येनोपपत्तेर्न

ष्यते ॥' यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयतीति विनापि व्याख्या संयोगमात्रेण त्रिवृदादीनामनेकस्तोमकेष्वपि दीपकत्वं संभवतीत्यविशेषात्सर्ववाद इति स्थितम् ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## पञ्चमाध्याये चतुर्थः पादः ।

पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ॥ १ ॥

### क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

**आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः ॥ नियतो वाग्रिमः पाठश्रुत्यर्थानां समत्वतः ॥ १ ॥**

**पाठात्क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः ॥ हूत्विनं शक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः ॥ २ ॥**

किं श्रुत्यर्थाभ्यां तुल्यबलः पाठ उत दुर्बल इति चिन्त्यते । तत्र 'आश्विनो दशमो गृह्यते' इति श्रुतं किमाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणमुत श्रुतिबलाद्दशम इति । तथा 'अग्निहोत्रं जुहोति, यवागूं पचती'ति किं पाठवशाद्धुत्वा पक्तव्यमुतार्थवशाद्विपर्यय इति प्रामाण्याविशेषादनियमं मन्वानस्योत्तरम्—'क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत् ॥ प्रयोजनविरोधे वा कः पाठमनुरुध्यते ॥ हुत्वा हि पचमानस्य भवेद्धूयमनर्थकम् ॥ पाकश्चैव यवागूश्च तां पक्त्वा जुहुयादतः ॥'

मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ॥ २ ॥

### अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ [यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥]

**अवदानादि सांनाय्ये पूर्वमाग्नेयकेऽथवा ॥ धर्मप्रवृत्तिक्रमतः सांनाय्ये पूर्वतोचिता ॥ ३ ॥**

**प्रदानं पूर्वमाग्नेयेऽवदानं च तथोचितम् ॥ अङ्गानां मुख्यतन्त्रत्वान्मुख्यक्रमबलित्वतः ॥ ४ ॥**

दर्शपूर्णमासयोः सांनाय्यधर्माः पूर्वं प्रवर्तन्ते पश्चादाग्नेयधर्माः । प्रदानं त्वाग्नेयस्य प्रथमं पश्चात्सांनाय्यस्य । ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं वेद्यामासादनं च किं प्रवृत्तिक्रमात्सांना-

---

ततो विशेषपरत्वमित्याह—**वाक्यशेषस्त्विति** । सूत्रे क्रतुसंयोगादेकस्यैव त्रिवृदादेर्वाक्यशेषे क्रतुसंयोगादित्यर्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां पञ्चमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

**क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च** ॥ १ ॥ इह श्रुत्यादिप्रमाणानां बलाबलं चिन्त्यते, पूर्वं तु क्वचित्तद्विचारः प्रासङ्गिक इति पादान्तरत्वमानन्तर्यं च । तत्र श्रुत्यर्थयोर्विरोध एव न संभवति यथाश्रुत्यैव प्रयोजनस्य कल्पनीयत्वात् । तदुक्तम्—'श्रुत्यर्थयोर्विरोधस्तु नैवं वचनसंभवे ॥ यथा श्रुत्यैव हि न्याय्यमर्थस्य परिकल्पनम् ॥ हुत्वाग्निहोत्रं पक्तव्या यवागूरिति च श्रुतेः ॥ पाको दृष्टार्थ एव स्यादनुष्ठानं च पश्चिम'मिति । तस्माच्छ्रुत्यर्थयोर्बलाबलविचारासंभवात्पाठस्य ताभ्यां बलाबलं चिन्त्यत इत्याह—**किमिति** । **आश्विनस्येति** । तृतीयस्थानेऽपि ग्रहणमुत दशमे एवेत्यर्थः । विततिलक्षणक्रमस्य श्रुत्यनभिधेयत्वात् श्रुतेरपि पाठतुल्यतेत्याशयेनाह—**प्रामाण्येति** । **क्रम इति** । पौर्वापर्यात्मक इत्यर्थः । विततिक्रमस्वीकारेऽपि श्रुत्यवगतदशमत्वभङ्गप्रसङ्गात् श्रुत्यनुगुणविततिरेव स्वीकार्येत्याशयः । **अनर्थकमिति** । पाकस्तु द्वितीयाश्रुत्यवगतयवाग्वर्थत्व एव निर्वहति नान्यथेति यवाग्वानर्थक्ये पाकोऽप्यनर्थक इति भावः । सूत्रार्थस्तु—प्रयोजनश्रुतिभ्यां पाठक्रमस्य बाधः श्रौतक्रमस्य श्रुत्या प्रत्यक्षश्रवणेन कल्पनीयपाठक्रमाद्विशेषसद्भावात्सर्वस्य प्रयोजनार्थत्वाच्चेति ॥

**अवदानाभिघारणासादनेषु०** ॥ २ ॥ श्रुत्यर्थपाठानां मुख्यत्वात्तद्बलाबलचिन्तानन्तरं जघन्यप्रमाणानां बलाबलचिन्तनात्सङ्गतिः । सांनाय्यधर्माः शाखाहरणादय इत्यर्थः । आग्नेयधर्माः निर्वापादय इत्यर्थः । **प्रदानं त्विति** । पाठक्रमादिति भावः । **ननु** प्रयोगवचनेनाङ्गानां मिथः साहित्यमवगम्यते तत्प्रवृत्तिक्रमादरे घटते, मुख्यक्रमादरे तु दधिधर्माणां प्रथमप्रवृत्तशाखाहरणादीनां पश्चात्क्रियमाणासादनादीनां च मध्ये आग्नेयासादनापत्त्या दधिधर्माणां मिथः प्रत्यास-

व्यस्य पूर्वं भवत्युत मुख्यक्रमादाग्नेयस्येति प्रवृत्तिमुख्ययोः बलाबलाज्ञानात्संदेहे अनियमे प्राप्ते मुख्यक्रमो बलीयानित्याह—तस्मिन्किलाश्रीयमाणे प्रथम एकः पदार्थः प्रधानाद्विप्रकृष्यते । अन्ये सर्वे संनिकृष्टा भवन्ति । प्रवृत्तिक्रमे पुनराश्रीयमाणे बहूनां विप्रकर्षः । तस्मान्मुख्यक्रमो बलीयान् । नचात्र प्रधानावदानमुदाहरणमित्युक्तं तत्ररत्ने ॥

इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ॥ २ ॥

**वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ [सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदन्तेनानर्थकं हि स्यात् ॥ ६ ॥ तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥ ७ ॥ अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशादानन्तर्याद्विशङ्का स्यात् ॥ ८ ॥ इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम् ॥ ९ ॥]**

**दर्शादीष्टा सोमयागः क्रमोऽयं नियतो न वा ॥ वक्तेराद्यो न सोमस्याधानानन्तरता श्रुतेः ॥ ५ ॥**

**इष्टिपूर्वत्वं** सोमस्याम्नातं 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति, तत्किं नियतमुत विपर्यासोऽपि लभ्यते इति । वचनादिष्टिपूर्वत्वम् सोमपूर्वत्वस्य तु नैवं साक्षाद्वचनमस्ति । तस्मादिष्टिपूर्वत्वमेव स्यात् । सत्यम् ‡ न साक्षादस्ति वचनं।आधानानन्तर्यं तु सोमस्य श्रुतं तद्वशाच्चार्थादिष्टेः सोमपूर्वत्वं संजायते । नह्याधानानन्तर्यं सोमस्येष्टिपूर्वत्वे संपादयितुं शक्यम् । तत्र श्रुतं 'सोमेन यक्ष्यमाणोऽग्नि-

---

तिभङ्गः स्यात् । अतः प्रवृत्तिक्रम एव बलवानित्यत आह—**तस्मिन्निति** । साङ्गप्रधानविधायिनैकेन प्रयोगवचनेन प्रथममङ्गानां प्रधानसाहित्यं गम्यते । मिथः साहित्यं तु पश्चात्तद्द्वारेण । ततश्च मिथः प्रत्यासत्त्यपेक्षयाङ्गानां प्रधानप्रत्यासत्तिर्बलीयसीति प्रधानप्रत्यासत्त्यनुसारेणैव बलाबलनिर्णयः कार्यः । साच प्रत्यासत्तिराग्नेयसहत्वबलात्प्रतिपदार्थमेकैकाग्नेयधर्मव्यवधिं सहते । तत्र यदि मुख्यक्रम आश्रीयेत तदा प्रथमं शाखाहरणादयस्ततो निर्वापादयस्तदनन्तरमाग्नेयासादनं ततः सांनाय्यासादनं ततः कश्चिदाग्नेयधर्मस्ततः सांनाय्यधर्म इत्येवं प्रधानपर्यन्तास्तदनन्तरमाग्नेयस्ततः सांनाय्ययाग इत्येवमनुष्ठानं भवति । तत्र प्रथममनुष्ठिता ये शाखाहरणादयः कतिपयपदार्थास्तेषामेव परं स्वप्रधानेन सांनाय्ययागेन शास्त्रानुमतो यावद्भिः क्षणैर्विप्रकर्षस्ततोऽधिको विप्रकर्षो भवति । निर्वापाद्यनन्तरमाग्नेयासादनस्याधिकस्य प्रवेशात् । इतरे तु आसादनादयः परेद्युरनुष्ठेयाः । सर्वेऽपि स्वप्रधानेन सांनाय्ययागेन संनिहिता एव भवन्ति । अन्तराग्नेयपदार्थद्वयसमावेशाभावेन शास्त्राननुमतविप्रकर्षाभावात् । यदि च प्रवृत्तिक्रम आश्रीयेत तदा प्रथमं शाखाहरणादयः ततो निर्वापादयस्ततः सांनाय्यासादनं तत आग्नेयासादनं ततः सांनाय्यधर्मः कश्चित्तत आग्नेयधर्म इत्येवं प्रधानपर्यन्तास्तत आग्नेययागस्तदनन्तरं सांनाय्ययाग इत्येवमनुष्ठानं भवति । तत्र सर्वे सांनाय्यधर्माः स्वप्रधानेन सांनाय्ययागेन सह विप्रकृष्टा भवन्ति । अन्तिमसांनाय्यधर्मानन्तरमाग्नेयान्तिमधर्मस्याग्नेयप्रधानस्य च समावेशेन शास्त्राननुमतव्यवधानस्यावर्जनीयत्वात् । तस्माद्बहूनां प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रम एव स्वीकर्तव्य इत्यर्थः । अत्र प्रथमे कतिपयपदार्थाः प्रधानाद्विप्रकृष्यन्त इति वक्तव्ये प्रथम एकः पदार्थ इत्युक्तिरत्यन्ताल्पीयस्त्वद्योतनार्था । प्रधानानन्तरभाविषु स्विष्टकृदिडाद्यवदानादिषु प्रवृत्तिक्रमादरे सांनाय्ययागानन्तरं तदीयहविषः स्विष्टकृदवदानं तत आग्नेयस्येत्येवमनुष्ठाने सति सांनाय्ययागस्य तदीयस्विष्टकृदवदानाख्यपदार्थस्य च नैरन्तर्यादाग्नेयधर्माणां स्विष्टकृदवदानादीनां सर्वेषामुत्तरेषां स्वप्रधानेनाग्नेयेनात्यन्तविप्रकर्षापत्त्या उत्तरेषामपि धर्माणां स्वस्वप्रधानेन शास्त्रानुमतसंनिकर्षसिद्ध्यर्थं तेष्वपि मुख्यक्रम एव स्वीकार्य इति । तस्मिन्खल्वाश्रीयमाण इत्याद्युक्त्यैवोक्तप्रायं बोध्यम् । **ननु** सूत्रेऽवदानाभिघारणमात्रश्रवणेन प्रधानावदानप्रधानाभिघारणयोरुदाहरणत्वसंभवे तदतिलङ्घनेन किमिति स्विष्टकृदवदानं प्रयाजशेषाभिघारणं चोदाहृतमित्यत आह—**नचेति** । अवदानग्रहणमभिघारणस्याप्युपलक्षणम् । पूर्वमेवावदानादेः प्रदानान्तस्यैकपदार्थत्वसाधनेन प्रधानावदानस्य प्रधानाभिघारणस्यापि प्रधानात्पृथग्भावासंभवेन तत्र विचारायोगादित्युक्तमित्यर्थः ॥

**वचनादिष्टिपूर्वत्वम् ॥५॥ नैवं साक्षादिति** । पवमानेष्टिभिर्व्रात्यपशुना च व्यवधानावश्यंभावेनाधानानन्तर्यविध्यसंभवादर्थादपि सोमस्य न दर्शपूर्णमासापेक्षया पूर्वत्वमित्यर्थः । एवंचात्र वाचनिकक्रमस्य न केनापि बाध इति प्रत्यवस्थानासङ्गतिः । सोमेन यक्ष्यमाण इति वाक्ये सोमस्य चाधानस्य चान्यतः प्राप्तेर्लक्षणया सोमस्याधानानन्तर्यमेव विधेयमन्यथा वाक्यानर्थक्यात् । तत्र पवमानेष्टीनामाधानाङ्गत्वाद्व्रात्यपशोः सोमाधिकारसिद्ध्यर्थत्वाच्च न व्यवधायकत्वमित्याशयेनाह—

माऽधीते'ति । सर्वश्चाऽऽदधानः सोमेन यक्ष्यमाण एव नित्यत्वात्सोमस्य । अतः सोमेनानन्तरं यक्ष्यमाण इत्येतदभिप्रायमिदमतः सोमपूर्वत्वमपि स्यात् ॥

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ॥ ४ ॥

**उत्कर्षाद्ब्राह्मणस्य सोमः स्यात् ॥ १० ॥ [पौर्णमासी वा श्रुतिसंयोगात् ॥११॥ सर्वस्य वैककर्म्यात् ॥ १२ ॥ स्याद्वा विधिस्तदर्थेन ॥ १३ ॥ प्रकरणात्तु कालः स्यात् ॥ १४ ॥ स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥ अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्ध्वं सोमात्, ब्राह्मणस्य वचनात् ॥ १७ ॥ एकं शब्दसामर्थ्यात्प्राकृतत्वविधानात् ॥ १८ ॥]**

**विप्रस्य सोमपूर्वत्वं नियतं वा न वाग्रिमः ॥ उत्कर्षतो नैवमग्नीषोमीयस्यैव तच्छ्रुतेः ॥ ६ ॥**
**नर्तूनित्याहितेः कालो बाध्यः सोमस्य वाग्रिमः ॥ भङ्क्तस्याऽऽपुरैवास्य बाधात्सोमीयबाधनम् ॥ ७ ॥**

स्थिते कल्पद्वये चिन्त्यते किं ब्राह्मणस्य सोमपूर्वत्वमेवोत तस्यापीतरवद्द्वावेव कल्पाविति । तदर्थं च चिन्त्यते किम् 'आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवती'त्यनेन वचनेन कृत्स्नौ दर्शपूर्णमासौ ऊर्ध्वं सोमादुत्कृष्येते अथवा कर्मान्तरविधिरयमुत पौर्णमासीमात्रोत्कर्षः अथवैकहविरुत्कर्ष इति । यदि कृत्स्नोत्कर्षो ब्राह्मणस्य सोमपूर्वत्वमेव भवति । पक्षान्तरेषु तु तस्याप्युभौ कल्पाविति । तत्र—'इष्टेरुत्कर्षणं यस्माद्ब्राह्मणस्य विधीयते ॥ तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः ॥' यद्यपि 'यदेवादः पौर्णमासं हवि'रित्येकदेशोत्कर्षः श्रूयते तथापि समस्तसाध्यत्वेन श्रुतं फलं नैकदेशान्तरादुत्पत्तुमर्हति । नचाफलस्यानुष्ठानमस्तीति तस्याप्युत्कर्षः । कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य क्षत्रियवैश्ययोरेव कल्पद्वयमिति पूर्वःपक्षः । अत्र सिद्धान्त्येकदेश्याह—कर्मान्तरमिदं पौर्णमासीधर्मकं तन्नामकं वा विधीयते । एवं धात्वर्थविधिर्भवत्यश्रुतस्य चोत्कर्षो न कल्पितो भवतीति । नत्वेतत्कर्मान्तरं विशिष्टविधिगौरवात् नाम्नश्चानेकार्थकल्पना धर्मलक्षणा वा युक्ता । प्रकरणात्तु पौर्णमास्या एवायं कालविधिः तत्संयोगाद्दर्शस्याप्युत्कर्ष एव इत्येवमपर्यवसितेऽधिकरणे अनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते । 'सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं प्रतीक्षेन्न नक्षत्र'मिति किमयमृतुनक्षत्रातिक्रम आधानस्योत सोमस्येति।प्रकरणादाधानस्येति प्राप्ते वचनान्तरेणास्यामेव शाखायां यदहरेवैनमित्या-

---

**सत्यमिति** । आनन्तर्यलक्षणायां यक्ष्यमाण इति विशेषणमेव बीजमित्युपपादयति—**सर्वश्चेति** । नित्यत्वादित्यनेनैव नित्यैः पश्वादिभिरपि यक्ष्यमाणत्वाद्विशिष्य सोमेन यक्ष्यमाण इति निर्देशोऽपि यथाश्रुतेऽनुपपन्न इति सूचितम् ॥

**उत्कर्षाद्ब्राह्मणस्य० ॥ १० ॥** पूर्वत्र विशेषचिन्तनात्सङ्गतिं सूचयति—**स्थित इति । आग्नेय इति ।** 'स मुखतस्त्रिवृतं निर्मिमीत तमग्निर्देवतान्ववसृजत गायत्रीच्छन्दो रथंतरं साम ब्राह्मणो मनुष्याणा'मिति प्रजापतिमुखादग्नेर्ब्राह्मणस्य च सृष्टत्वाद्ब्राह्मणोऽग्निदेवतः स ब्राह्मणः सोमयागानन्तरमग्नीषोमदेवतस्तस्माद्यदेव पौर्णमासं हविस्तददस्तर्हि सोमादूर्ध्वमनुनिर्वपेन्न ततः पूर्वं यस्मात्सोमानन्तरमेव ब्राह्मण उभयदेवत इत्यर्थः । तदर्थसंशयकोटिचतुष्टयस्य द्विशः पूर्वकोटिद्वयहेतुत्वभ्रमनिरासार्थं फलफलिभावमाह—**यदीति** । द्वितीयपक्षेऽपि ब्राह्मणस्यापि कल्पद्वयाविरोधात्तस्य सिद्धान्तप्रतिपक्षत्वाभावाच्च द्वितीयपक्षः पूर्वपक्षिपक्ष इत्याशयेनाह—**सिद्धान्त्येकदेशीति । पौर्णमासीधर्मकमिति ।** 'मासमग्निहोत्रं जुहोती'त्यग्निहोत्रशब्दवत्पौर्णमासशब्दः धर्मलक्षक इति भावः । एकदेशिपक्षं पूर्वपक्षी प्रतिक्षिपति—**नत्विति** । **विशिष्टेति ।** अग्नीषोमदेवताविशिष्टस्य पौर्णमासपदलक्षितधर्मविशिष्टस्य संज्ञापक्षे चोदनालिङ्गोपस्थितधर्मविशिष्टस्य च कर्मणो विधिरिति भावः । प्रकरणादित्यनेन प्रकृतप्रत्यभिज्ञाबाधादपि न कर्मान्तरमिति सूचितम् । अन्तराचिन्तायां **हेतुमाह—पूर्वेति** । यथा प्रकरणात्पौर्णमासकालविधिस्तथा प्रकरणादाधानस्यैव ऋतुनक्षत्राद्यतिक्रमविधिरिति पूर्वोक्तोपजीवनेन पूर्वपक्षप्रवृत्तिसौकर्यादित्यर्थः । ततश्च स्वकालः स्यादविप्रतिषेधादित्यन्तराचिन्ता । पूर्वपक्षसूत्रे प्रकरणात्तुल्यकालः स्यादिति पूर्वसूत्रात्प्रकरणादित्येतदनुषञ्जनीयमिति भावः । **नर्तुमिति** । ऋतुं नाद्रियेतेत्यर्थः । **यदहरिति** । यदहरेनं श्रद्धोपनमेत्तदहरेवादधी-

दिनाधानकालानादरस्योक्तत्वात्सोमकालबाध एवायम् । यद्यपि शतपथे 'अपहतपाप्मानो वा ऋतवोऽसौ खलु वाव आदित्य उद्यंस्तेषां पाप्मानमपहन्ति । तस्माद्यदैवैनं श्रद्धा चोपनमेदथादधीताथ यजे-त्'त्युक्तं तथाप्यस्यां शाखायामाहित इति तत्पर एवायं सोमेनाधानानन्तरं यक्ष्यमाण अग्नदधीत । तथा कुर्वन् सोमस्यर्तुनक्षत्रसंपदादिकं च नाद्रियेतेति स्थितादुत्तरं न कृत्स्नोत्कर्षः । पौर्णमासीमात्रश्रवणात् । यत्तु नैकदेशात्फलमिति समुदायादेव विहितात्फलमित्यदोषस्तस्मात्कृत्स्नोत्कर्षाभावाद्ब्राह्मणस्याप्युभौ कल्पौ । सिद्धान्तस्तु गृह्णीम एतन्न कृत्स्नोत्कर्षो विप्रस्यापि द्वौ कल्पाविति । यत्तु पौर्णमास्युत्कर्ष इति तन्न मृष्यामहे । न सकलपौर्णमास्युत्कर्षः, किंतु—'अदःशब्दपरामृष्टमग्नीषोमीयमेव हि ॥ हविरुत्कृष्यतेऽन्यत्तु यथाप्राप्तमवस्थितम् ॥ तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत् ॥ तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत् ॥'

आज्यस्य सोमादनुत्कर्षाधिकरणम् ॥ ५ ॥

**पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥ [आज्यमपीति चेत् ॥ २० ॥ न मिश्रदेवतत्वादैन्द्राग्नवत् ॥ २१ ॥]**

**आज्यं चोत्कृष्यते नो वा तस्याग्नीषोमयोगतः ॥ आद्यः प्रजापतिं विष्णुं वा यष्टुं शक्तितोऽन्तिमः ॥ ८ ॥**

स्थितमग्नीषोमीयस्योत्कर्ष इति, स किं पुरोडाशस्योताज्यस्यापीति चिन्तायां तत्र—'अग्नीषोमाभिसंबन्धादाज्यस्यापीति मन्यते ॥ विष्णुप्रजापतिभ्यां तु सोमात्प्रागपि तद्भवेत् ॥' यद्यप्यग्नीषोमौ यष्टुमनर्हो यजमानस्तथापि नाज्यमुत्क्रष्टुमर्हति । स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति तस्मान्नाज्योत्कर्षः ॥

विकृतानामैन्द्राग्नादीनां सद्यःकालताधिकरणम् ॥ ६ ॥

**विकृतेः प्रकृतिकालत्वात्सद्यःकालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ [द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥ वचनाद्वैककाल्यं स्यात् ॥ २४ ॥]**

**द्व्यहकालाः किमैन्द्राग्नाद्याः सद्यःकालगा उत ॥ आद्यः प्रकृतिवन्मैवं विकृत्युक्तिविशेषतः ॥ ९ ॥**

विकृतयोद्व्यहकालाः सद्यःकाला वेति संशये प्रकृतिवद्द्व्यहकालाः । नच वचनविरोधः प्रकृति-

---

तेत्यनेनेत्यर्थः । **अस्यामिति** । यस्यां शाखायामृत्वाद्यनादरवचनं तस्यामित्यर्थः । इह सोमेन यक्ष्यमाण इति विशेषणाद्वचनादिष्टिपूर्वत्वमित्यधिकरणोदाहृतवचनाद्यदाधानानन्तर्यं प्राप्तं तद्युक्तस्य सोमस्यायमृत्वाद्यनादरः न सोममात्रस्य । ततश्च वसन्तादिविधिरिष्टिपूर्वत्वे पर्यवसित इत्याह—**सोमेनाधानानन्तरमिति** । संपदादीत्यादिशब्देन क्षेमादेर्देवनक्षत्रस्य च संग्रहः । **स्थितादिति** । ऋत्वादिचिन्तापूर्वपक्षावसरे स्थितादुत्तरं तच्छेष उच्यत इत्यर्थः । सिद्धान्तैकदेशिपक्षान्तरोपवर्णनमुखेन पूर्वपक्षनिरासमाह—**न कृत्स्नेति** । विहितात् विभक्तादवयवशःकृतादिति यावत् । **अदःशब्देति** । 'स सोमेनेष्ट्वाग्नीषोमीयो भवती'त्युपक्रमाददःशब्देनाग्नीषोमीयमेव परामर्शनीयमिति भावः । न प्राभाकरवद्ब्राह्मणस्यैव कल्पद्वयं किंत्वविशेषात्त्रयाणामपि । अविशेषश्च तन्त्ररत्न एव प्रपञ्चित इत्याशयेनाह—**तेनेति** । सूत्रार्थस्तु—ब्राह्मणस्य प्रथमं सोमः स्यात् कृत्स्नदर्शपूर्णमासोत्कर्षादिति ॥

**पुरोडाशस्तु०** ॥ १९ ॥ एकहविरुत्कर्ष इत्ययुक्तमिति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**अग्नीषोमेति** । यद्यप्याज्यं वैष्णवं प्राजापत्यमपि भवति तथाप्याज्यहविषो भेदाभावेनैकस्यैवाज्यस्य देवतात्रयसंबन्धाद्यदग्नीषोमसंबद्धं हविः तत् सोमानन्तरं कुर्यादित्युक्ते कदाचिदग्नीषोमसंबन्धमात्रेणाज्यस्याप्यग्नीषोमीयत्वसद्भावात्तस्याप्युत्कर्षादसोमयाजिन उपांशुयाज एव न संभवतीत्यर्थः । अग्नीषोमीयस्य हविष उत्कर्षे हि ब्राह्मणस्य सोमादूर्ध्वमग्नीषोमीयत्वं हेतुः ब्राह्मणस्याग्नीषोमीयत्वं चाग्नीषोमोद्देशेन त्यागार्हत्वम् । ततश्च सोमानन्तरमेव ब्राह्मणस्याग्नीषोमोद्देश्यकहविस्त्यागार्हत्वादग्नीषोमदेवताकं हविः सोमानन्तरं कर्तव्यमित्युक्ते यद्धविरग्नीषोमावेवोद्दिश्य त्यक्तव्यं तस्यैवोत्कर्षः, नतु यद्धविर्देवतान्तरोद्देशेनापि त्यक्तुं शक्यं तस्याप्युत्कर्षः । तदुत्कर्षे हेतोरसामर्थ्यात् । एवंच ब्राह्मणेनाज्यस्याग्नीषोमावुद्दिश्य त्यक्तुमशक्यत्वेऽपि विष्णुं प्रजापतिमेववोद्दिश्य त्यक्तुं शक्यत्वेनाज्यस्योत्कर्षाभावादसोमयाजिनोऽप्यस्त्युपांशुयाज इति सिद्धान्तमाह—**विष्णिवति** । सूत्रार्थस्तु—विशिष्यानिर्देशे पुरोडाश एव स्यात् तद्युक्ते हविर्युक्ते देवतोद्देशेन हविस्त्यागार्हे पुरुषे अग्नीषोमयोर्देवतात्वादिति ॥

**विकृतेः प्रकृतिकालत्वात्०** ॥ २२ ॥ विकृतयः दर्शपूर्णमासविकृतय इत्यर्थः । **वचनान्तरेति** । पूर्वेद्युरग्निं गृह्णाति

**वदेव। प्रकृतौ हि 'पौर्णमास्यां पौर्णमास्या यजेते'ति वाचनिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा व्यहकालत्वमेवाश्रितम्। तथा विकृतावपि य इष्ट्या पशुनेत्यादिविहितः काल एकदेश एव स्यात्। व्यहकालस्य प्रकृतितः प्राप्तत्वात्। वचनं त्विदं व्यवस्थानिवृत्त्यर्थम्। प्रकृतितो हि पौर्णमासीविकाराणाममावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायामव्यवस्थार्थं य इष्ट्या पशुनेत्यादिवचनम्। संभवति च द्वयोरपि प्रकृतिविकृत्योर्व्यहकालत्वमेकस्याश्चतुर्दश्यां उपक्रमसंभवादतो व्यहकालाः। उच्यते—'न प्रत्यक्षश्रुतः कालः संकोचं चोदकाद्व्रजेत्॥ सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत्॥'**

सोमात्सांनाय्यविकारादीनामुत्कर्षाधिकरणम्॥ ७॥

## सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत्॥ २५॥

**आमिक्षादेरनियतिः स्यात्सोमादूर्ध्वमेव वा॥ अविशेषादग्निमोऽन्त्यो नासोमेति विशेषतः॥ १०॥**

**नासोमयाजी संनयेदाग्नेयो वै ब्राह्मण इतिवचनाभ्यां सांनय्याग्नीषोमीययोः सोमोत्तरकालत्वं तद्विकाराणामप्यतिदेशात्तत्कालत्वमिति सुहृद्भूत्वोपदिष्टवान्॥**

---

उत्तरेद्युर्देवता यजेतेति वचनान्तरेत्यर्थः। **ननु** वाचनिकस्य कालस्य चोदकात्संकोचो न युक्त इत्याशङ्क्य, स्यादेवं यदि वचनं साङ्गाया विकृतेः पौर्णमासीकालविधिपरं स्यात्। तत्तु व्यवस्थानिवृत्त्यर्थमेव। एवंचान्यार्थे प्रवृत्ते वचने उपात्तस्य पौर्णमास्यमावास्याकालस्यैकदेशयोजनेऽपि न दोषः। एकदेशयोजनेऽपि वचनतात्पर्यविषयव्यवस्थानिवृत्तेरविरोधादित्याशयेनाह—**वचनं त्विति। प्रकृतित इति।** अत्र पौर्णमासीविकाराणाममावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायामव्यवस्थार्थं य इष्ट्या पशुनेत्यादिवचनमिति पाठो बोध्यः। नन्वेककर्ममध्ये कर्मान्तरासंभवात्प्रकृतिविकृत्योरुभयोर्व्यहकालत्वे उभयोरपि पर्वसंबन्धो दुर्लभ इत्यत आह—**संभवतीति। एकस्या इति।** विकृतेरित्यर्थः। एवंच वचनस्य पूर्वत्र पुरोडाशोत्कर्षसामर्थ्यवदिह सद्यःकालतायामसामर्थ्यमिति प्रत्यवस्थानात्सङ्गतिः। य इष्ट्येति वाक्ये तृतीयानिर्देशात्साङ्गस्य कर्मणः पौर्णमास्यादिकालसंबन्धः प्रतीयते। तथा सर्वविकृतीनां पर्वद्वयसंबन्धश्च प्रतीयते। ततश्च पर्वद्वयसंबन्धबलाद्यथा व्यवस्थानिवृत्त्यर्थमिदं वचनं तथा साङ्गस्य कर्मणः पौर्णमास्यादिकालसंबन्धबलात्सद्यःकालतार्थमपि नतु व्यवस्थार्थमेव। विनिगमनाविरहात्। एवंच कालो न वचनतात्पर्यविषय इत्युक्तमित्याशयेनाह—**न प्रत्यक्षेति।** ननु पौर्णमासीशब्दो यस्मिन्क्षणे चन्द्रः संपूर्णस्तद्वाचकः। अमावास्याशब्दश्च यस्मिन्क्षणे सूर्याचन्द्रमसौ सह वसतस्तद्वाचकः। स च पञ्चदश्यास्तिथेरन्तिमः क्षणः। तथाच साङ्गस्य कर्मणः क्षणमात्रेऽनुष्ठातुमशक्यत्वात्संकोचस्त्वयापि वाच्य इति शङ्कां निराकर्तुं पञ्चदश्यामित्युक्तम्। नैतौ शब्दौ क्षणविशेषमात्रवचनौ किंतु वेदे 'सोमस्य वैराज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्। तासाममावास्यां च पौर्णमासीं च नोपैदि'ति विशेषप्रयोगाल्लौकिकव्यवहाराच्च पञ्चदश्यात्मकतिथिविशेषवाचकाविति तन्त्ररत्ने व्यवस्थापितमिति भावः। याज्ञिकास्तु तिथिविशेषवाचित्वेऽपि तादृशक्षणसंयोगोऽवश्यं निमित्तं स्वीकर्तव्य इत्यावश्यकत्वात्क्षणविशेषवाचकावेव। एकस्मिन्क्षणे कर्मकरणाशक्त्या च तत्क्षणयुक्ताहोरात्रपरत्वं स्वीक्रियते सोमस्य वैराज्ञ इत्यादिव्यवहारश्च प्रायेण पञ्चदश्यां तत्क्षणयोगादुपपन्नः। एवंच यत्र प्राक्सूर्यावर्तनात्प्रतिपत्पञ्चदशी च तस्मिन्नेव दिने विकृतयः कार्या नतु तत्पूर्वदिने पञ्चदश्यामित्याहुः। सूत्रार्थस्तु—विकृतेः प्रकृतितः प्राप्तव्यहकालत्वाच्चोदकबाधः स्यात्तत एव ततिर्विकृतिः सद्यःकाला स्यात्। प्रकृतौ तु तयोर्व्यहकालत्वपर्वकालत्वयोः प्रत्यक्षशिष्टत्वादुभयमङ्गीकृतमिह त्वेकस्यानुमानिकत्वाद्बाध एवेति॥

**सांनाय्याग्नीषोमीयविकाराः०॥ २५॥ तद्विकाराणामिति।** सांनाय्यविकाराणां 'यः पाप्मना गृहीतः स्यात्तस्मा एतां मैत्रावरुणीं पयस्यांनिर्वपे'दित्यादीनामग्नीषोमीयविकाराणां'अग्नीषोमीयमेकादशकपालं निर्वपेद्वसन्ते ब्रह्मवर्चसकाम' इत्यादीनां चेत्यर्थः। अत्र भाष्ये सांनाय्यविकारत्वेन पशुरुदाहृतः तत्तु टुप्टीकायां दूषितम्। तथाहि प्रकृतिभूतोऽग्नीषोमीयपशुस्तावन्नोदाहरणं तस्य सोमाङ्गतया सोमप्रयोगमध्ये 'स एष उपवसथीयेऽह्नि द्विदेवत्यः पशुरालभ्यत' इति विहितकालविरोधेन सोमोत्तरकालत्वस्य चोदकतः सिद्धान्तयितुमशक्यत्वात्। नापि तद्विकारा निरूढपश्वादयः। तेष्वपि प्रकृतिभूताग्नीषोमीयपशावविद्यमानस्य सोमोत्तरकालत्वस्य चोदकप्राप्त्यसंभवात्तस्मादिह पशुर्नोदाहरणमिति। **सुहृदिति।** विकृतिकालनिरूपणप्रस्तावात्सांनाय्यादिविकृतिकालं सुहृद्भावेनोक्तवानिति नात्र पूर्वपक्षे यत्नः कार्य इत्यर्थः॥

सोमविकाराणां दर्शपूर्णमासात्प्रागकर्तव्यताधिकरणम् ॥ ८ ॥

## तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

एकाहानामनियमो दर्शादेरूर्ध्वमेव वा ॥ सोमवत्प्रथमो नैवमनुक्तेः स्याच्चदूर्ध्वता ॥ ११ ॥

इष्टिपूर्वत्वं सोमपूर्वत्वं चोभयमस्तीत्युक्तम् । अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं संभवं मन्यते । नत्वेवम्—'नहीष्टेः प्रागनुष्ठानं सोमस्याहत्य चोदितम् ॥ आधानानन्तरोक्त्या तु संजातं प्राक्त्वमर्थतः ॥ आधानानन्तरत्वं च विकृतीनां न सिद्ध्यति ॥ ज्योतिष्टोमोर्ध्वकालत्वाद्वयोश्च तदसंभवात् ॥' 'एष वा व प्रथमो यज्ञो यज्ञाना'मित्यनेन ज्योतिष्टोमानन्तरकालत्वाद्विकृतीनां नाधानानन्तर्यं संभवति । एकश्चायमनन्तरकालो न द्वाभ्यां प्रकृतिविकृतिभ्यामवरोद्धुं शक्यः । प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति न विकृतेः संभवति । तदसंभवाच्च न विकृतयः प्राग्भावमिष्टेः लभन्ते । नचाहत्य प्रकृतेरिष्टेः प्राक्त्वमुक्तं यदतिदिश्येत । इष्ट्युत्तरकालत्वं तु साक्षादुक्तं प्रकृताविति तदेव विकृतिष्वतिदिश्यते ।—'अतः सोमविकाराणां दर्शादेः परतः क्रिया ॥ एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः॥' इति श्रीमहोपा० पार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां पञ्चमाध्यायस्य चतुर्थः पादः ॥४॥

---

**तथा सोमविकाराः०** ॥ २६ ॥ **अत इति** । नच सांनाय्यस्यापि 'तदु समवनयेदि'ति वचनात्सोमात्प्राग्भावोऽप्यस्तीति तद्विकाराणामपि सोमोत्तरकालीनत्वं न स्यादिति वाच्यम् । सांनाय्यस्य सोमात्प्राग्भावो नास्तीति कृत्वाचिन्तया पूर्वाधिकरणप्रवर्तनात् । एवंच पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिर्बोध्या । **अर्थत इति** । ततश्चार्थिकत्वान्न तस्यातिदेश इति भावः । **नन्वेवमपि** प्रकृतौ वाचनिकस्याधानानन्तर्यस्य विकृतिष्वतिदेशात्प्रकृतिवद्विकृतीनामप्यार्थिकमिष्टेः प्रागनुष्ठानमस्त्वित्यत आह—**आधानानन्तरत्वमिति** । **द्वयोश्चेति** । प्रथमानुष्ठितेन व्यवहिततया द्वितीयस्याधानानन्तर्यविघातादिति भावः । सूत्रार्थस्तु—यथासांनाय्यादिविकाराः सोमादूर्ध्वं भवन्ति तथा सोमविकारा दर्शपूर्णमासाभ्यामूर्ध्वं स्युरिति ॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकासंज्ञायां पञ्चमाध्यायस्य चतुर्थः पादः॥४॥**

# षष्ठाध्यायः ॥ ६ ॥

## षष्ठाध्यये प्रथमः पादः ।

यागादिकर्मणां स्वर्गादिफलसाधनताधिकरणम् ॥ १ ॥

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥ [असाधकं तु तादर्थ्यात् ॥२॥ प्रत्यर्थं चाभिसंयोगात्, कर्मतो ह्यभिसंबन्धः, तस्मात्कर्मोपदेशः स्यात् ॥३॥]**

**अनुष्ठानक्रमः सर्वः पञ्चमे सुनिरूपितः ॥ कोऽनुष्ठातेत्यपेक्षायामधिकारोऽत्र वर्ण्यते ॥ १ ॥**
**कर्माधिकारः कर्तुर्नो किं वास्ति न पदश्रुतेः ॥ धात्वर्थभाव्यताभानात्फलभोगविवर्जनात् ॥ २ ॥**
**बलीयस्या विधिश्रुत्याऽवरुद्धा भावनात्र च ॥ भाव्यः स्वर्गः पुमर्थत्वात्कर्मियोगाच्च सोऽस्त्यतः ॥ ३ ॥**

'भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ॥ कोऽनेनाधिक्रियेतेति सांप्रतं संप्रधार्यते ॥ तदुपोद्घातरूपेण[1] स्वादावेतद्विचार्यते ॥ कर्मभिः पुरुषः कर्ता किमधिक्रियते नवा ॥' सत्यधिकारे कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति तत्सिद्ध्यर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'चित्रयायजेत पशुकामः' इत्यादिषु किं पुरुषस्याधिकारः स्वाम्यं कर्मजन्यफलभोक्तृत्वमस्ति नेवेति[2] चिन्त्यते । तदर्थमिदं विचार्यते । येयं प्रत्ययोपात्ता भावना

---

**द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥** ननु क्रमनिरूपणस्य प्रातिस्विकरूपेणाधिकारनिरूपणहेतुत्वाभावात्कथं क्रमनिरूपणानन्तरमधिकारलक्षणारम्भः । नच क्रमनिरूपणस्य प्रातिस्विकरूपेण हेतुत्वाभावेऽपि द्वितीयाद्यध्यायचतुष्टयस्यानुष्ठेयवर्गनिरूपणात्मकतयानुष्ठेयनिरूपणाधीनेऽधिकारनिरूपणे हेतुत्वाद्द्वितीयाद्यध्यायचतुष्टयानन्तरमधिकारलक्षणारम्भो युक्त इति वाच्यम् । तथासति हि साधिकारस्यैव विधेरितिकर्तव्यताकाङ्क्षा । आकाङ्क्षाधीनश्च विनियोग इति विनियोगविधिस्तावदधिकारविध्यपेक्षः । तथा साधिकारस्यानुष्ठेयप्रयोगापेक्षा नतु निरधिकारस्येति कर्मानुष्ठापकः प्रयोगविधिरप्यधिकारविध्यपेक्ष एव । तस्माद्विनियोगविधिप्रमेयशेषशेषिभावव्युत्पादनपरस्य तृतीयस्य प्रयोगविधिगम्यप्रयुक्तिक्रमव्युत्पादनपरयोश्चतुर्थपञ्चमयोश्चाधिकारविधिप्रमेयव्युत्पादनपराधिकारलक्षणोपजीवकत्वेनास्य तृतीयाद्यपेक्षया पूर्वभाव एव किं न स्यादित्यत आह—**भेदेति** । शक्त्यपेक्षोऽधिकारः । अशक्तस्य तिर्यगादेरनधिकारात् । शक्तिश्च विषयनिरूपणाधीननिरूपणा । विषयश्चाध्यायचतुष्टयप्रतिपाद्योऽनुष्ठेयवर्गः । इत्यनुष्ठेयवर्गनिरूपणपरस्याध्यायचतुष्टयस्य हेतुत्वं संभवत्येव । उक्तंचाचार्यैः 'भारो यो येन वोढव्यः स प्रागवगतो यथा ॥ तथा कृत्स्नस्य वोढेति शक्यं कर्तृनिरूपणम् ॥' इति । यद्यपि लोकेऽयं वोढा अस्य को भार इति वोढृतोऽपि भारनिरूपणमस्ति तथापि लोकेऽप्ययं एतावत्पूर्वमूढवान् इदानीमप्येतावद्वोढुं शक्नोतीत्येवं वोढृत्वं निश्चित्यायं वोढा अस्य को भार इति वोढृतो भारनिरूपणं वाच्यम् । एतावद्वोढुं शक्त इति निश्चयश्च वोढव्यस्यैतावत्तानिश्चयाधीनः । एवंच लोकेऽयं वोढा अयमस्य वोढुर्भार इतीदं निरूपणं विविच्यमानमेतावद्वोढुमिति यद्द्रव्यसामान्यमवगतं तस्य द्रव्यस्यायं भार इत्येवं विशेषनिरूपणमात्ररूपं पर्यवसितमिति लोकेऽपि नास्ति वोढृतो भारनिरूपणम् । शेषशेषिभावादयश्च स्वर्गकामस्याधिकार इत्यधिकारसद्भावमेवापेक्षन्ते नतु तिर्यगादिव्यतिरिक्तस्य त्रैवर्णिकस्याप्रतिसमाधेयाङ्गवैकल्यरहितस्य स्वर्गकामस्याधिकार इत्येवंरूपमधिकारविशेषम् । अधिकारविशेषश्चाध्यायार्थो नाधिकारसद्भावमात्रं तस्य प्रथमाधिकरणमात्रप्रतिपाद्यस्याध्यायार्थत्वानुपपत्तेः । अतः शेषशेषिभावादिनिरूपणस्याधिकारविशेषनिरूपणानपेक्षत्वात्तन्निरूपणापेक्षयाऽस्य पूर्वभावित्वप्रसक्तिरिति भावः । **नन्वेवमधिकारसद्भावप्रतिपादकस्य प्रथमाधिकरणस्याध्यायासङ्गतिः** स्यादित्यत आह—**तदुपोद्घातेति** । नन्वेवं शेषशेषिभावनिरूपणादिष्वप्युपोद्घातत्वसंभवात्तत्रैवाधिकारसद्भावसंपादनं किं न स्यादित्याशङ्क्य सर्वत्रोपोद्घातत्वसंभवेऽपि सामान्यविशेषभावप्रत्यासत्त्याधिक्यादिहैव तन्निरूपणं युक्तमित्याशयेन व्याचष्टे—**सत्यधिकार इति । स्वाम्यमिति ।** अधिरत्रोपर्यर्थकः । ततश्चाधिकार उपरिभावेनावस्थितिरित्यर्थः । उपरिभावेनावस्थितिश्च स्वाम्यपर्यायः । यो यस्य स्वामी स तस्योपरि भवतीति । एवंच कर्मभिः पुरुषोऽधिक्रियते इत्यादेः कर्मभिः स्वभूतैरुपरिभावेनावस्थाप्यते स्वामीक्रियते इत्यर्थो बोध्यः । स्वामिभवनस्य स्वाधीनत्वात् । तदुक्तम् 'यद्यस्य स्वं तत्तमधिकरोति स्वामिनं करोतीत्यर्थ' इति । अत्र व्युत्पाद्यस्वर्गादिफलत्वस्याधिकारसद्भावफलकत्वस्फोरणाय स्वामित्वं विविच्य दर्शयति—**कर्मजन्येति** । स्वजन्यफलभोक्तुरेव स्वामित्वादिति भावः । किं धात्वर्थो भाव्य उत स्वर्गादिस्तदर्थं च किं धात्वर्थः

---

१ तद्रूपोद्घात. २ नेति चिन्त्यते.

तस्याः किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु साधनतया गुणभूतं उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यस्तत्साधनं च धात्वर्थ इति। ततोऽप्येतद्विवेक्तव्यं योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः संबन्धस्तत्र किं क्रियाप्रधानतः पुरुषो गुणतः ततो विपरीतं वेति । यदि गुणतः पुरुषस्ततस्तस्य गुणभावं क्रियाक्षेपादेव सिद्धमनूद्य स्वर्गादिद्रव्यं साधनत्वेन विधीयते । कामयतिश्च साधनकामनानुवादः । तदयमर्थः—स्वर्गं साधनत्वेन कामयमानो यजेत, स्वर्गेण यागं कुर्यादित्यर्थः । यद्वा स्वर्गकामनैव समुद्रमनोध्यानवद्गुणभूतकर्तृविशेषणं सती यागाङ्गमुपदिश्यत इति द्वेधा पूर्वपक्षः । अथ प्रधानतः पुरुषस्ततस्तस्यात्मार्था स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते साधनतया च याग उपदिश्यते । स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्तिमिति स्वर्गकामस्य[3] चात्मार्था प्रवृत्तिः स्वर्गविषयैवेति स्वर्गभावनैवानेन प्रकारेणोपदिष्टा भवति । तदयमर्थः—स्वर्गं यः प्राप्तुमिच्छति स यागेन कुर्यादभिलषितं स्वर्गश्च तस्याभिलषित इति स्वर्गं भावयेद्यागेनेत्युक्तं भवति । स्वर्गकामोदाहरणे तु प्रथमपूर्वपक्षौपयिकतयेदमपि चिन्त्यते । स्वर्गशब्दो द्रव्यवचनः प्रीतिवचनो वेति । प्रीतिवचनत्वे तु तस्याः साधनत्वासंभवादत्यन्तानालम्बनः प्रथमः पक्षः स्यादिति । तत्र पूर्वः पक्षः—'धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ॥ स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥ भूतं च स्वर्गपश्वादिद्रव्यं भव्याय कर्मणे ॥ उपदेश्यं न भूताय भव्यकर्मोपदेशनम् ॥' स्वर्गशब्दश्चन्दनादिषु प्रयोगाद्द्रव्यवचन इति न साधनत्वासंभवः । पश्वादेस्त्वसंदिग्धमेव द्रव्यवचनत्वं, अथवा स्वर्गादि-

---

प्रधानमुत स्वर्गादिरिति संशयद्वयमभिप्रेत्याह—**तदर्थमिति** । ननु स्वर्गशब्दस्य समासे उपसर्जनीभूतस्याख्यातसंबन्ध एव नास्ति तत्कथं तस्य गुणप्रधानभावसंदेह इत्याशङ्क्य पर्यवसितमर्थमादायायं संशय इत्यभिप्रेत्य तद्धेतुभूतं श्रूयमाणार्थगोचरं संशयान्तरमाह— **ततोऽप्येतदिति । क्रियाकर्तृरूप इति** । नच क्रियाकर्तृरूपसंबन्धाभ्युपगमे कर्तुर्गुणत्वनैयत्यात्प्राधान्यकोटेरनुन्मेष इति वाच्यम् । मलिनेन स्नातव्यं क्षुधितेनाशितव्यमित्यादौ कर्तुः प्राधान्यात्कर्तरि व्रतस्य, करणे प्रयाजशेषाभिघारणस्य, कर्मणि प्रोक्षणस्य, संप्रदाने पशुपुरोडाशयागस्य, अपादाने अग्नेस्तृणान्यवचिनोतीत्येतस्य, अधिकरणे दध्यानयनस्य च संस्कारजनकत्वेन कारकमात्रेऽपि गुणत्वनियमासिद्धेश्चेति भावः । प्रधानतः गुणत इति सार्वविभक्तिकस्तसिल् प्रथमार्थे । शब्दतः पुरुषे प्रतीयमानं गुणत्वं प्रधानत्वं च स्वर्गे पर्यवसाययन्फलफलिभावमुपपादयति— **यदीति । आक्षेपादिति** । नच गुणभूतपुरुषंविना क्रियानुपपत्तेः पुरुषसामान्यसिद्धावपि स्वर्गकामशब्देन पुरुषविशेषविधिः किं न स्यादिति वाच्यम् । स्वर्गकामः कदाचिदस्वर्गकामोऽपि भवतीति स्वर्गकामशब्दस्य ब्राह्मणादिशब्दवत्पुरुषविशेषसमर्पकत्वाभावेन ब्राह्मणो बृहस्पतिसवेनेत्यादिवत्पुरुषविशेषविध्यनुपपत्तेः । यदा स्वर्गकाम इति कालोपलक्षणार्थत्वे तु स एव दोषः । तस्माल्लोहितोष्णीषादिवद्विशेषणस्वर्गपर एवायं शब्द इति भावः । एवंच पूर्वपक्षे क्रियाकर्तृसंबन्धो निष्पन्न इत्याह—**तदयमिति** । स्वर्गं साधनत्वेन कामयमानो यजेतेत्येतच्च क्रियाक्षेपादेव यत्किंचिद्द्रव्यस्य साधनत्वेन कामनासिद्धेः द्रव्यविशेषस्वर्गविधौ पर्यवस्यतीत्याह—**स्वर्गेणेति** । सति संभवे कामयतेरनुवादकत्वमयुक्तं मन्वान आह— **यद्वेति** । स्वर्गकामनाया गुणत्वेन विधाने समुद्रमनोध्यानादिवददृष्टार्थत्वापत्तेः स्वर्गविशेषितकामनाविधाने गौरवाच्चायं पक्षः संभवमात्रेणोपन्यस्तः । स्वर्गरूपद्रव्यस्य तु क्रियानिर्वर्तकत्वेन दृष्टार्थत्वाल्लाघवाच्च प्रथमपक्ष एव ज्यायानिति तत्त्वरत्ने । **विशेषणमिति** । यो यजते स स्वर्गकामः संनित्येवमित्यर्थः । **आत्मार्थेति** । अस्वार्थे पुरुषस्य प्रेरयितुमशक्यतया सिद्धान्ते वक्ष्यमाणप्रवर्तनाख्यविधिसंबन्धात्प्रवृत्तेरात्मार्थत्वमिति भावः । **नन्वेवमपि** प्रवृत्तेः कथं स्वर्गगोचरत्वं स्वर्गशब्दस्य कामविशेषणत्वेनोपक्षीणस्य प्रवृत्तिविशेषकत्वासंभवादित्याशङ्क्यार्थात्तत्सिद्धिमाह—**स्वर्गकामस्येति** । ननु यथाकथंचित्स्वर्गं य इच्छति तस्य सर्वस्यापि स्वर्गकामत्वात्तदर्थतामात्रेण कथं स्वर्गगोचरत्वसिद्धिरित्याशङ्क्यात्मार्थं यः स्वर्गमिच्छति स एव स्वर्गकामशब्दार्थो नान्यः विधिसंबन्धात् कामनास्वरसाच्च स्वर्गस्य काम्यमानस्य कामयितृपुरुषार्थत्वावगमात्तादृशपुरुषशेषप्रवृत्तेश्च स्वर्गभाव्यकत्वं यद्यपि स्वर्गकामस्यार्थान्तरविषयेत्यादिना सिद्धान्ते वक्ष्यमाणप्रकारेण सिध्यतीत्यभिप्रेत्याह— **तदयमर्थ इति । प्रथमेति** । प्रीतिवचनत्वे द्रव्यवचनत्वे च तत्कामनाया अङ्गत्वोपपत्त्या द्वितीयपूर्वपक्षोपयोगाभावादिति भावः । भूतं निष्पन्नं । भव्याय साध्याय । ततश्च वस्तुसामर्थ्यादपि स्वर्गादिद्रव्यस्य साधनत्वं यागस्य भाव्यत्वं च स्वीकार्यमितरथा क्रियाया द्रव्यार्थतायामदृष्टार्थता स्यादिति भावः । **न साधनत्वासंभव इति** । नचोत्पत्तिशिष्टपुरोडाशाद्यवरोधाद्द्रव्यान्तरस्य साधनत्वं न संभवतीति वाच्यम् । पुरोडाशादिष्वेव स्वर्गशब्दवाच्यत्वाय रूपरससौरभादिकमा-

---

१ तस्यां किं. २ क्षेपसिद्धमनूद्य. ३ कामस्यात्मार्था. ४ पयिकत्वादिदमपि.

कामनैव यागाङ्गमिति सर्वथा याग एव भाव्यो न तेनान्यत्फलम्। असति च फलेऽधिकाराभावादनारम्भणीयमधिकारलक्षणम्। नन्वेवमफले कर्मणि न कश्चित्प्रवर्तेत। मा प्रवर्तिष्ट किंनः छिन्नम्। नैतावता शक्यं फलमुपगन्तुम्। अफलस्य च कर्मणोऽधर्मत्वं न सिद्ध्यतीत्येतदपि भवतु। तथासति 'चोदनालक्षणो धर्म' इति प्रत्युक्तं स्यादित्येतदपि सत्यम्। तदधीनं च सकलं शास्त्रमिति सकलशास्त्राक्षेपेणेदमधिकरणमारब्धम्। विधिरपि पुरुषं प्रवर्तयति नतु फलवत्तां गमयति। नच प्रवर्तितोऽपि कश्चिदफले प्रवर्तेत इति व्यर्थ एव विधिरिति प्राप्तेऽभिधीयते—'पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना॥ अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा॥ स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते॥ स्वरसात्पुरुषाणां हि कामना फलगोचरा॥' लिङादयो विधिं भावनां चाभिदधति। तेन प्रकृत्युपात्तयागसंबन्धात्पूर्वमेव विधिसंबन्धो भावनायाः प्रतीयते। प्रवर्तनारूपश्च विधिः प्रवृत्तिहेतुश्च व्यापारः प्रवर्तना तद्योगिता चापुरुषार्थभाव्याया भावनाया न संभवतीति यागातिक्रमेण पुरुषार्थस्यैव

---

सज्य यष्टव्यमिति पुरोडाशादीनामेव स्वर्गशब्देन विधानात्। यद्वा स्वर्गकामवाक्ये वाजिनन्यायेन चन्दनादिद्रव्यविशिष्टकर्मान्तरविधानान्न कश्चिद्दोष इति भावः। **न सिद्ध्यतीति**। अलौकिकश्रेयःसाधनस्यैव धर्मत्वादित्यर्थः। **तदधीनमिति**। धर्मस्य चोदनालक्षणत्वाधीनमित्यर्थः। **नतु फलवत्तामिति**। नच प्रवर्तकत्वान्यथानुपपत्त्या विधितः फलावगम इति वाच्यम्। प्रथमतः पदश्रुत्या यागस्य भाव्यत्वेसति तयैव भाव्याकाङ्क्षाशान्तेर्भाव्यद्वये वाक्यभेदापत्त्या फलकल्पनानुपपत्तेः। नच एकपदलक्षणश्रुत्यपेक्षया प्रबलया एकप्रत्ययलक्षणश्रुत्या प्रथममेव भावनायाः विध्यन्वयादपुरुषार्थस्य यागस्य भाव्यत्वं न संभवतीति युक्तम्। यदि हि भावना प्रथममेव विधिना संबध्येत ततो भावनाविशेषणानां करणादीनां विधेयत्वं न स्यात्। विशिष्टभावनाविध्यधीनं हि तेषां विधेयत्वं नतु स्वातन्त्र्येण। तस्मात्करणादिसंबन्धात्पूर्वं भावनाया विधिसंबन्धविरहात्करणादिसंबन्धस्य च क्रियायाः कर्मप्रवणतया भाव्यसंबन्धानन्तरभावित्वात्प्रथमं यागस्य भाव्यत्वं निष्प्रत्यूहमिति भावः। प्रथमं तावदेकप्रत्ययोपात्तयोर्विधिभावनयोः प्रत्यासत्त्या संबन्धः प्रतीयते तथापि भावनायाः करणाद्यननुरक्तायाः शुद्धाया अनुष्ठानायोग्यत्वात्स संबन्धो न निर्व्यूढो भवति। अंशत्रययुक्तायास्तु तस्या अनुष्ठेयत्वादनुष्ठापकविधिसंबन्धो निर्वहतीति प्रथमप्रतीतविधिसंबन्धो न केवलं तत्स्वरूपेण किंतु करणादिविशिष्टवेषेणेत्येवं प्रथमप्रतीतसंबन्धापरित्यागेन तन्निर्वाहः कल्प्यः। ततश्च प्रथमप्रतीतविधिसंबन्धबलाद्भावनायाः पुरुषार्थभाव्यकत्वं विशिष्टवेषेण तत्संबन्धपर्यवसानाद्विशेषणानां विधेयत्वं चोपपन्नमित्याशयेनाह—**पदश्रुतेरिति**। **बलीयस्या इति**। अन्तरङ्गत्वादिति भावः। स्वर्गादेः साधनत्वस्य व्रीहिभिर्यजेतेत्यादिवत्कामनासंयोगविरहेऽप्युपपत्तेः। तत्र कामनासंयोगोऽनर्थकः। फलत्वं तु कामशब्दोच्चारणं विना न सिद्ध्यति। इदमस्याभिलषितमिति ज्ञानाभावे फलत्वबुद्ध्यनुदयात्ततः कामसंयोगसार्थक्यादपि स्वर्गादेरेव भाव्यत्वमित्याह—**स्वर्गादिरिति**। कामनायोगस्य फलत्वप्रत्यायकत्वे युक्त्यन्तरमाह—**स्वरसेति**। ननु लिङादीनामाख्यातान्तरवदर्थभावनामात्रवाचकत्वेन विधिवाचकत्वस्यैवाभावात्कथं भावनायाः प्रत्ययश्रुत्या विध्यवरोध इत्यत आह—**लिङादय इति**। लिङादयो हि प्रवर्तकज्ञानजनकाः। प्रवृत्तिश्च द्वेधा स्वेच्छया परप्रेरणया च। आचार्यप्रेरितो गामानयामि बालप्रेरिता स्तन्यं ददामीति न स्वेच्छयेत्यादिव्यवहारदर्शनात्तत्र शब्दश्रवणपूर्विकायां प्रवृत्तावन्वयव्यतिरेकाभ्यां प्रेरणाज्ञानस्य प्रवर्तकत्वाद्विधिनिमन्त्रणेत्याद्यनुशासनाच्च लिङादीनां प्रेरणात्मकविध्यभिधायकत्वमावश्यकमित्यर्थः। **ननु** भवतु प्रथमं विधिसंबन्धस्तथापि कथं पुरुषार्थभाव्यकत्वम्। नच विधेः प्रवर्तनात्मकत्वादपुरुषार्थभाव्यकत्वे प्रवर्तनानुपपत्तेः विधिसंबन्धादेव पुरुषार्थभाव्यत्वमिति वाच्यम्। लिङादयो हि गामानयेत्यादिलौकिकवाक्यस्थले आचार्यादिरिव मामेते प्रवर्तयन्तीत्येवंरूपं पुरुषस्य स्वकीयप्रवर्तनाज्ञानमात्रमुत्पाद्य चरितार्थास्तत्र यदि प्रवर्तनीयः पुरुषः प्रवृत्तिविषयस्य कर्मणः फलसाधनत्वं जानाति तदा प्रवर्तते न चेत्सत्यपि लिङादयो मां प्रवर्तयन्तीति प्रवर्तनाज्ञानेनैव प्रवर्तते। यदिहि लिङादिभिरवश्यं पुरुषः प्रवर्तनीय इति निर्बन्धो भवेत्तदा लिङादयः प्रवर्तनां बोधयित्वा फलाभावे पुरुषस्य प्रवर्तयितुमशक्यत्वात्प्रवृत्तिविषयस्य फलसाधनतामापाद्य प्रवृत्तिपर्यन्तं व्याप्येरन्। नच तथा निर्बन्धे प्रमाणमस्ति। लिङादिशक्तिमात्रात्संजातं प्रवर्तनाज्ञानमदृष्टार्थमपि सार्थकं भवेत् नतु तावता फलवत्त्वसिद्धिरित्यत आह—**प्रवर्तनारूपश्चेति**। अयं भावः—अध्ययनविधिनाधीतैरक्षरैः यथाशक्ति पुरुषस्योपकर्तव्यमिति शक्त्यनुसारेण स्वाध्यायाक्षराणि विनियुञ्जानेन सर्वे वैदिकाः लिङादयः पुरुषप्रवृत्तिसंबन्धबोधनेन विधिज्ञानेन वा करणेन स्वस्वसंनिहितार्थवादसमर्पितप्ररोचनानुगृहीतेन भावयेयुरिति प्रवर्तनायां विनियुज्यन्ते। ततो ज्योतिष्टोमादिवाक्यगतानां प्रवर्तनाबोधजननमात्रेण चारितार्थ्यं न संभवति। अध्ययनविधिना ज्योतिष्टोमादिवाक्यगतलिङादिप्रवर्तनायाः स्वभाव्यप्रवृत्तिपर्यन्ताया लिङादीन्प्रति विधानेन कर्मसु पुरुष-

---

१ न भवतीत्येतदपि. २ तथाच चोदना. ३ इत्येतदपि प्रत्युद्धृतं. ४ स्वारस्यात्. ५ यद्यप्येकप्रत्यय.

भाव्यत्वं विधिश्रुतिबलादध्यवसीयते। कस्य पुनरसौ प्रवर्तनारूपो व्यापारः। शब्दस्येति ब्रूमः। तस्य संनिहितत्वादन्यस्य चाप्रतीतेः। यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासंभवः तथापि योऽस्य व्यापारः संभवति तस्यैव यथा प्रवर्तनारूपत्वं संपद्यते तथा यतितव्यम्। अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः। तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति नान्यथा। तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं संपादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते। स्वर्गादिश्च कामनायोगाद्भाव्यतया गम्यते। भाव्यविषया हि मुख्यरूपेण कामना। साधनेषु तु तत्संबन्धनिमित्ता गौणी। नचात्र गौ[1]ण्या ग्रहणे प्रमाणमस्ति। तस्माद्विधिश्रुतेः कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वं। यागश्च तत्साधनं\प्रीति[2]वचनश्च स्वर्गशब्दस्तामनभिधाय नद्विशिष्टद्रव्याभिधानासंभवात् द्रव्यस्वरूप[3]मात्रे चाप्रयोगात्। अतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते। यद्यपि च स्वर्गकामस्यार्थान्तरविषया प्रवृत्तिः शेषत्वेन संभवति तथापि पुरुषान्तरशेषत्वस्यापि संभवात्स्वर्गकामस्य च कदाचित्फलान्तरमनिच्छतस्तच्छेषित्वासंभवान्न स्वर्गकामार्थप्रवृत्तित्वेन निर्दिश्यते। यैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गप्रवृत्तिः सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं सहते। अतः स्वर्गकामार्थप्रवृत्त्युपदेशात्तत्साधनत्वेन विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति। फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति लक्षणमारब्धव्यम्॥

---

प्रवृत्तेरपि लिङादिभिरवश्यं संपाद्यत्वात्। तस्मात्स्वर्गकामवाक्ये प्रवर्तनामात्ररूपेणावगम्यमानस्याप्यस्य विधेरध्ययनविधिना कर्तव्यत्ववेषेणावगमाद्युक्तं प्रथमावगतविधिसंबन्धबलात्पुरुषार्थभाव्यकत्वमिति। **ननु** भवेदेवमाचार्यादिवद्वेदे प्रवर्तकपुरुषाभावान्निराश्रया प्रवर्तना न संभवतीति शङ्कते—**कस्येति**। प्रवर्तना हि लोके प्रवर्तयितृधर्मत्वेनावगता अहमेनं प्रवर्तयामीत्याचार्यादेः प्रवर्तयितुः स्वगतत्वेन प्रवर्तनानुभवात्तत्त्वश्च वेदे शब्दस्यैव प्रवर्तकत्वात्तद्धर्म एव प्रवर्तना। **नन्वेवं** वैदिकलिङादिव्यापारस्य लोके व्यवहारानुपातित्वाभावात्कथं तत्र लिङादेः संबन्धग्रहः। उच्यते—क्षुधितस्य बालस्य रोदनेन स्तन्यदाने प्रवर्तमानाया मातुः प्रवृत्तेर्बालप्रवर्तनाहेतुकत्वाध्यवसायात्तद्दृष्टान्तेन गामानयेत्यादिवाक्यश्रवणानन्तरभाविमध्यमवृद्धप्रवृत्तौ प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणं जिज्ञासमानो व्युत्पित्सुर्लिङादिश्रवणानन्तर्यात्तस्यैव प्रवर्तनायां शक्तिं कल्पयति। तत्र चाज्ञादीनां विशेषाणामानन्त्यव्यभिचाराभ्यां वाच्यत्वासंभवात्सर्वविशेषानुयायिप्रवर्तनासामान्यस्यैव वाच्यत्वे स्थिते गोत्वादिसामान्यवाचि गवादिशब्दश्रवणे व्यक्तिविशेष इव वैदिकलिङादिश्रवणेऽपि तद्वाच्येन प्रवर्तनासामान्येन शब्दनिष्ठाज्ञादिविशेषान्तरविलक्षणः प्रवर्तनाविशेषो लक्षणया लभ्यत इति न संकटं किंचिदिति भावः। तमेव शब्दनिष्ठव्यापारं विशेषतः प्रतिपादयन्पुरुषार्थभाव्यकत्वसिद्धिमुपपादयति—**यद्यपीत्यादिना। भावनाप्रतिपादनमिति**। नचैवं तादृशभावनाप्रतिपादनस्य तादृशभावनाज्ञानरूपस्य स्वरूपेणैवानुष्ठानोपयोगितया तज्ज्ञानानपेक्षणात्कथं तस्य शब्दवाच्यत्वं, कथं वा सर्वाख्यातसाधारणस्य तादृशभावनाप्रतिपादनस्य लिङादिमात्रवाच्यत्वाभ्युपगम इति वाच्यम्। तादृशभावनाप्रतिपादनं हि न तत्वेन रूपेण लिङादिवाच्यमभ्युपगम्यते अपि तु प्रवर्तनात्वरूपेण। ततश्च प्रवर्तनात्वरूपेण तज्ज्ञानस्याप्युपयोगसंभवादाख्यातान्तरस्थलीयतत्प्रतिपादनस्य प्रवर्तनात्वाभावेन तेन रूपेणासाधारण्याच्च नोक्तदोष इति भावः। यद्यप्यर्थवादानां शब्दभावनेतिकर्तव्यताभूतप्ररोचनासमर्पकत्वेन प्रामाण्यस्य शब्दभावनानिर्वाह्यत्वादेतन्निरूपणं तत्रैव कर्तव्यम्। अतएवाचार्यैस्तत्रैव कृतं तथापीह प्रवर्तनाप्रसङ्गात्कृतं बोध्यम्। एवंच चोदनामात्रेऽपि ग्रन्थकाराणां तन्निरूपणं वस्तुगतिमनुरुध्यांशत्रयविशिष्टभावनाप्रतिपादकत्वेनापि चोदनात्वोपपत्त्या शब्दभावनानिरूपणस्य तत्रावश्यकत्वाभावादित्याहुः। एवं धात्वर्थस्य भाव्यत्वात्प्रच्युतस्य भावार्थाधिकरणन्यायेन करणत्वमित्याह—**यागश्चेति**। **ननु** प्रीतिविशिष्टद्रव्यं नाभिधेयं किंतु द्रव्यमात्रमेवेति नोक्तदोष इत्यत आह—**द्रव्यस्वरूपमात्रे चेति**। प्रीतिसाधनत्वाज्ञाने चन्दनादौ स्वर्गादिशब्दाप्रयोगादित्यर्थः। **ननु** स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्तिमिति स्वर्गकामपुरुषंप्रति शेषत्वेन प्रवृत्तिविधानमेव वाक्यार्थः तत्कथं स्वर्गभाव्यकभावना विधीयत इत्युच्यत इतीत्याशङ्क्य, सत्यं स एवार्थस्तस्यैव तु स्वर्गभावनाविधिपर्यवसानात्स्वर्गभावनाविधिरित्युच्यत इत्याशयेन स्वर्गकामशेषत्वेन प्रवृत्तिविधेः स्वर्गभावनाविधिपर्यवसानमाह—**यद्यपीत्यादिना**। नन्वेवमपि स्वर्गकामार्थप्रवृत्तेर्यागशिष्टाया उपदेशाद्यागो भावनायामेव साधनं न स्वर्ग इति यागस्य फलसाधनत्वाभावान्न तत्र पुरुषस्याधिकारसिद्धिरित्यत आह—**अत इति**। सूत्रार्थस्तु—द्रव्याणां स्वर्गपश्वादीनां कर्मभिः संयोगे श्रूयमाणे द्रव्याणां कर्मजननसामर्थ्याद्गुणत्वेन संबन्ध इति॥

---

१ गौणग्रहणे. २ वचनः ३ मात्रेणाप्रयोगात्. ४ स्वर्गार्था प्र.

अशक्तानामधिकारनिराकरणाधिकरणम् ॥ २ ॥

**फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥ [कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥]**

अन्धादेरस्त्यसौ नो वा स्वर्गेच्छुत्वात्स विद्यते ॥ प्रधानोक्त्यनुसारेण यथाशक्त्यङ्गवर्णनम् ॥ ४ ॥

**नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना ॥ क्रतुं प्रति विधिस्तस्मान्नाशक्तस्याधिकारिता ॥ ५ ॥**

सिद्धेऽधिकारे स किं[१] समग्रानुष्ठानासमर्थानामन्धबधिरपङ्गुमूकदेवतिरश्चामपि, किंवा समर्थानां मनुष्याणामेवेति संशयः। तत्र यदि यथाधिकारमङ्गविनियोगस्ततः सर्वेषामपि। अथ यथाविनियोगमधिकारस्तदा समग्रानुष्ठानसमर्थानामेवेति—'तत्र प्रधानवाक्येन सर्वेषामधिकारधीः ॥ जायते तद्वशेनाङ्गवाक्यानामुपवर्णनम् ॥' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति प्रधानवाक्येन सर्वेषां स्वर्गकामाधिकारं कर्मावगतं तदनुसारीणि चाङ्गवाक्यानि न तत्संकोचायालम्। अतश्चक्षुष्मन्तं प्रत्याज्यावेक्षणविधिरचक्षुष्मतस्तु तद्विध्यभावात्तद्रहितमेव फलसाधनम्। एवं बधिरस्यापि वाचनरहितं, मूकस्य मन्त्रोच्चारणरहितं, पङ्गोश्च विष्णुक्रमणरहितमिति सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः। स्यादेवमर्थिनाम्, तिरश्चां तु सांपरायिकफलकामनाभावात्कथमधिकारशङ्का। तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते। अत्रोच्यते—'नैवाज्यावेक्षणादीनां पुरुषंप्रति चोदना ॥ यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाऽधिकारभाक् ॥' पुरुषंप्रति हि विधीयमानमसमर्थं प्रत्यविहितत्वादनङ्गमेवेति तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत्—'क्रतुंप्रति विधिस्तेषां तादृशं तं च शक्नुवन् ॥ कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया ॥' नहि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः संबध्यन्ते प्रधानवाक्यशेषत्वात्तेषां, तेयुक्तेन[२] तु प्रधानवाक्येन तदङ्गयुक्तः[३] क्रतुः पुरुषैः संयुज्यमानोऽसमर्थानपहाय समर्थान्प्रति विज्ञायते। अतोऽन्धस्य क्रतुरेवाविहितो नत्वाज्यावेक्षणमेवाविहितमितरच्च विहितमिति मन्तव्यम्। नच प्रधानवाक्यविरोधात्सर्वाधिकारनिश्चयः। विशेषाभावाद्धि सर्वाधिकारः स्यात्। अस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम्। अतः समर्थानामेवाधिकारः। यत्र तु प्रधानवाक्यविरोधः यावज्जीवादौ तत्र भवत्येव यथाशक्ति प्रयोगादपि फलमिति वक्ष्यते। तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम्। तिरश्चां तु प्रधानमात्रेऽप्यसा-

---

**फलार्थत्वात्० ॥ ४ ॥ तद्वशेनेति।** नचात्र कांस्यभोजिन्यायः अङ्गवाक्यानां शक्तविषयेऽर्थवत्त्वेन गुणस्य निरवकाशत्वाभावादिति भावः। **तत्संकोचायेति।** अङ्गानुसारेण प्रधानसंकोचे इन्द्रायत्वेति मन्त्रबलादैन्द्रप्रधानमात्रेण सोमसंकोचापत्तेरिति भावः। **चक्षुष्मन्तमिति।** यद्यपि पुरुषंप्रति क्रतुरेव विधीयते नाङ्गं तथापि चक्षुष्मन्तंप्रति विधीयमानः क्रतुरेवावेक्षणाङ्गसहितो विधातव्यः नतु अन्धंप्रति विधीयमानः। एवंच पर्यवसानगत्या चक्षुष्मन्तं प्रत्यवेक्षणं विहितमेव भवतीत्याशयेन तथोक्तिः। **सांपरायिकेति।** परलोकभोग्येत्यर्थः। शुनश्चतुर्दश्यामुपवसतः पश्यामः श्येनांश्चाष्टम्यामिति प्रसिद्धेराह—**तेषामपीति।** तथाचोपवासफलइवाग्निहोत्रादिफलेऽपि जन्मान्तरवासनोद्भवात्कामनासंभवादिति भावः। यद्यपि देवतोद्देशे चतुर्थ्यन्तनिर्देशात्मके तिरश्चां नास्ति सामर्थ्यं तथापि देवतोद्देशो यज्यर्थ उपाधिमात्रं, त्याग एव तु मानससंकल्पको यज्यर्थ इति तिरश्चामपि क्रतुविध्यवगत्या यागानुष्ठाने शक्तिरविकलेत्याहुः। **अविहितत्वादिति।** विधेरनुष्ठानपर्यवसायित्वेनाशक्तस्य तदसंभवादिति भावः। **नन्वन्धस्य** क्रतुरेव न विहित इति न युक्तम्। प्रधानवाक्येन स्वर्गकामत्वाविशेषेण तंप्रत्यपि। ततश्चान्धेन संबध्यमानः क्रतुरवेक्षणरहित एव संबध्यते।' इतरथा प्रधानवाक्ये विरोधापातादित्यत आह—**नच प्रधानेति। अस्तिचेति।** अङ्गानां नित्यवदाम्नातानामनित्यचक्षुष्मत्क्रतुसंबन्धायोगान्नित्येन क्रतुमात्रेणैव संबन्ध इति भावः। यथा सोमस्य न मन्त्रबलादैन्द्रप्रधाने संकोचः। तथा 'संदिग्धे तु वाक्यशेषादि'त्यत्रैवोक्तमस्माभिः। **तत्रेति।** जीवनादेर्निमित्ततया तस्मिन्सति नैमित्तिकावश्यंभावादिति वक्ष्यत इत्यर्थः। **तिरश्चामिति।** चतुर्दश्युपवासादे रोगनिमित्तारुच्याप्युपपत्तेस्तन्मात्रेण यागादिफलकामना तदनुष्ठानादिष्वपि जन्मान्तरीयवासनोद्भवकल्प-

---

१ किमनुष्ठान. २ तत्प्रयुक्तेन. ३ तदङ्गेन युक्तः.

मन्थ्योश्च कश्चिदधिकारः। ऋषीणां त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसंभवादस्त्येवाधिकार इति ऋष्युदाहरणमनादर्तव्यम्। देवतानां त्वात्मोद्देशेन त्यागासंभवाद्विग्रहाभावाच्चाशक्तेरनधिकारः॥

स्त्रिया अनधिकारनिराकरणाधिकरणम्॥ ३॥

**लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः॥ ६॥ [तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते॥ ७॥ जातिं तु बादरायणोऽविशेषात्, तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्॥ ८॥ चोदितत्वाद्यथाश्रुति॥ ९॥ द्रव्यवत्त्वात्तु पुंसां स्यात्, द्रव्यसंयुक्तं क्रयविक्रयाभ्याम्, अद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात्॥ १०॥ तथा चान्यार्थदर्शनम्॥ ११॥ तादर्थ्यात्कर्मतादर्थ्यम्॥ १२॥ फलोत्साहाविशेषात्तु॥ १३॥ अर्थेन च समवेतत्वात्॥ १४॥ क्रयस्य धर्ममात्रत्वम्॥ १५॥ स्ववत्तामपि दर्शयति॥ १६॥]**

**स्त्रिया न सोऽस्त्यस्ति वा नो पुंलिङ्गेन तदीरणात्॥ प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम्॥ ६॥**
**अस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः॥ यद्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु॥ ७॥**

इदानीं किं पुंस एवाधिकारः उत स्त्रिया अपीति संशयः।—'तत्र पुंलिङ्गनिर्देशात्पुंस एवाधिकारिता॥ प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम्॥' विभक्त्यर्थस्य हि संख्याया ग्रहाधिकरणेऽविवक्षितत्वमुक्तम्। लिङ्गं तु प्रातिपदिकार्थो ग्रहवद्विवक्षितः। उद्देश्योऽपि फलकामो विवक्षितलिङ्गः। अतः पुमानेव स्यात्। अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागासयागानुष्ठानासंभवादननुष्ठाने चाधिकारासंभवादनधिकारः। तथा—'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः' इति स्मरणादतः पुंस एवाधिकारः। उच्यते—'प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य विशेषणम्॥ संख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते॥' ग्रहस्तूद्देश्यत्वा[3]द्विवक्षितो न प्रातिपदिकार्थत्वात्। लिङ्गं तु प्रातिपदिकार्थोऽप्युद्देश्यविशेषणत्वादविवक्षितं वाक्यभेदप्रसङ्गात्। अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य। नचायं प्रातिपदिकार्थो विभक्तिविकाराणां टाबादीनां चान्वयव्यतिरेकाभ्यां लिङ्गाभिधायित्वात्। अतः संख्यावदविवक्षितमिति स्त्रिया अप्यधिकारः। नचाद्रव्यत्वमस्याः कर्तनादिभिरर्जनसंभवात्, पित्रादिदत्तसंभ-

नानुपपत्तेश्चेति भावः। **अनादाविति**। सिद्धान्ते सृष्टिप्रलयानङ्गीकारादिति भावः। **असंभवादिति**। कर्तृकर्मभावविरोधादात्मोद्देशकत्यागस्य स्वत्वनिवृत्तिफलकत्वासंभवाच्चेति भावः। **विग्रहेति**। विग्रहादिपञ्चकाभावस्य देवताधिकरणे प्रतिपादनादिति भावः। अन्धपङ्ग्वादिविचारवद्देवतातिर्यगधिकारविचारस्तत्प्रवृत्तिसफलकत्वाभावादनुष्ठानविशेषफलकत्वरहितोऽपि न्यायसाम्यमात्रात्सह प्रवर्तित इति ध्येयम्॥

**लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः॥ ६॥** ननु ग्रहैकत्ववदुद्देश्यविशेषणत्वाल्लिङ्गमविवक्षितमित्यत आह—**प्रकृतीति**। उद्देश्यविशेषणमात्रस्याविवक्षायां ग्रहव्यक्तेरेवोद्देश्यतया तद्विशेषणग्रहत्वस्याप्यविवक्षा स्यादतो विशेषणस्यापि प्रातिपदिकार्थस्य विवक्षा वाच्येति भावः। **अत इति**। एवंच यथान्धादिकंप्रति क्रतोरविधानात्तस्यानधिकार एवं स्त्रिया अपीति प्रत्यवस्थानात्सङ्गतिर्बोध्या। असामर्थ्यादप्यनधिकारमाह—**अद्रव्यत्वादिति**। **अननुष्ठान इति**। 'शास्त्रफलं प्रयोक्तरी'तिन्यायेनानुष्ठातुरेव फलस्वाम्यादिति भावः। अद्रव्यत्वे हेतुमाह—**भार्येति**। येनविनोद्देश्यप्रतीतिर्न पर्यवस्यति तद्विवक्षितम्। नच ग्रहत्वंविना व्यक्त्युद्देश्यका प्रतीतिः पर्यवस्यति व्यक्तिमात्रस्यातिप्रसक्तेरतो ग्रहत्वं विवक्षितम्, इह तु लिङ्गं विनापि स्वर्गकामपदेनोद्देश्यप्रतीतिपर्यवसानं उद्देश्यपरिच्छेदकान्तरापेक्षणादविवक्षितं, लिङ्गमुद्देश्यप्रतीतिपर्यवसाने सत्यपि तद्विवक्षाभ्युपगमेऽपि पुंसोऽपि स्वर्गकामादिवत्पृथगुद्देश्यत्वापत्तौ वाक्यभेदप्रसङ्ग इत्याह—**ग्रहस्त्विवति**। ग्रहत्वविशिष्ट इत्यर्थः। **न प्रातिपदिकार्थत्वादिति**। तथात्वे 'यस्योभयं हविरार्तिमार्च्छती'त्यत्रोभयत्वं प्रातिपदिकार्थत्वाद्विवक्षितं स्यादिति भावः। लिङ्गस्य प्रातिपदिकार्थत्वेऽप्यविवक्षोक्ता, इदानीं तदेवासिद्धमित्याह—**नचायमिति**। ननु 'तस्माच्छसो नः पुंसी'त्यादौ पुंसि यत्प्रातिपदिकमित्येवं शसादिप्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वेन 'अजायतष्टाबि'त्यादौ स्त्रियामित्यस्याधिकृतप्रातिपदिकविशेषणत्वेन चोपपन्नतया कथं विभक्तिविकाराणां टाबादीनां च लिङ्गवाचकत्वमित्याशङ्क्य तदनुशा-

१ मनादेयम्. २ विवक्षितम्. ३ त्वाद्वि विवक्षितो.

दायाद्यादिसंभवाच्च । पुत्राभावे दुहितेत्यादिस्मरणात् पत्याजितस्य चोभयसाधारणत्वात् 'धर्मे चार्थे च कामे च नातिचरितव्या पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहेषु चे'त्यादिवचनात् । 'ये यज्ञपत्नीं वर्द्धान्'इत्यादिमन्त्रवर्णेभ्यश्च स्पष्टः स्त्रिया अधिकारः । पत्नीशब्दस्य स्वामिवचनत्वात् । 'भार्यापुत्रश्चे'तिवचनं तु बहुश्रुतिस्मृतिविरुद्धत्वादस्वातन्त्र्यपरं व्याख्येयम् ॥

याने दंपत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

**स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ [लिङ्गदर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः ॥ २० ॥ फलवत्तां दर्शयति ॥ २१ ॥]**

**दंपतिभ्यां पृथक्कार्यं सह वाख्यातसंख्यया ॥ पृथक्चैवमवैगुण्यात्कर्त्रैक्यं दैवतैक्यवत् ॥ ८ ॥**

सिद्धे द्वयोरधिकारे किं दंपती पृथक् यजेयातामुत सहेति चिन्तायां आख्यातोपात्ताया: संख्याया गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते सहेति ब्रूमः । तथाहि कर्म समग्रं भवतीतरथा वैगुण्यं स्यात् । यजमानप्रयोगे पत्न्यवेक्षणान्वारम्भादिलोपात् तत्प्रयोगे च यजमानावेक्षणादिलोपात् । नचार्त्विग्वत्परिक्रियेण यजमानः पत्नीं सा च तमुपादातुं शक्नुतः । स्वामिवचनत्वात्पत्नीयजमानशब्दयोः, स्वामिनश्च परिक्रयेणासंपत्तेः । अतोऽङ्गसाकल्यालोचनया सहप्रयोगमध्यवस्यामः । संसृष्टद्रव्यत्वाच्च तयोर्विभागप्रतिषेधाच्च न पृथक् यजित्वसंभवः । परस्परसापेक्षयोरेवाग्नी-

---

सनस्यान्यथाप्युपपत्त्या तथाप्यावापोद्वाभ्यां शक्तिनिष्कर्षे लिङ्गस्य विभक्तिविकारादिवाच्यत्वमेवेत्याशयेनान्वयव्यतिरेकाभ्यामित्युक्तम् । दायसंभवमेवाह—**पुत्राभाव इति** । स्त्रीधनं दुहितॄणामित्यादिरादिशब्दार्थः । **पत्नीशब्दस्येति** । 'पत्युर्नो यज्ञसंयोगे' इति स्वामिवचनात्पतिशब्दाद्यज्ञसंयोगे प्रत्ययस्य प्रातिपदिकान्तस्य नकारादेशस्य च विधानेन पत्नीशब्दव्युत्पादने तस्य स्वामिवाचित्वमित्यर्थः । सूत्रार्थस्तु—स्वर्गकाम इति लिङ्गविशेषनिर्देशात्पुमधिकारकमैतिशायन आचार्यो मन्यत इति ॥

**स्ववतोस्तु वचनात्०** ॥ १७ ॥ स्ववतोरिति सूत्रं पूर्वाधिकरणसूत्रमध्यपठितमन्तराचिन्तात्वेन भाष्ये व्याख्यातं तद्दर्शयति—**सिद्ध इति** । निमित्तसप्तमी चेयम् । पूर्वाधिकरणे विचार्यस्य द्वयोरधिकारस्य सिद्ध्यर्थमित्यर्थः । उक्तंच तन्त्ररत्ने 'अपर्यवसितेऽस्मिन्नधिकरणेऽस्यैव स्थेम्नेऽन्तरा चिन्तान्तरं प्रस्तूयते स्त्रीपुंसयोः पृथक् सह वानुष्ठान'मिति । तत्र पृथक्त्वेसति अविद्यत्वात्स्त्रिया नाधिकारः स्यात् सहत्वे तु सिद्ध्यत्यधिकार इति । **ननु** स्वर्गकाम इत्यत्र लिङ्गवत्संख्याया अप्युद्देश्यविशेषणत्वेनाविवक्षितत्वात्कथं पूर्वपक्ष इत्याशङ्क्य न स्वर्गकामगतैकत्वबलेन पूर्वः पक्षः किंत्वाख्यातोपात्तसंख्याबलेनेत्याह—**आख्यातेति** । सहानुष्ठाने च ऋद्धिकामा इत्यादिवत्कर्तृभेदादेकत्वं न स्यादिति भावः । यजमानकर्तृकप्रयोगाभिप्रायो यजमानावेक्षणादिविधिः पत्नीकर्तृकप्रयोगापेक्षश्च तदवेक्षणादिविधिरिति पूर्वपक्षाशयः । 'पत्न्यवेक्षते' 'यजमानश्चे'तिनिस्वरश्रुतयोर्यजमानपत्न्यवेक्षणयोः पाक्षिकत्वं न युक्तमित्याशयेनाह—**इतरथेति । अन्वारम्भणेति** । सपत्नीयहोमातिथ्यानिर्वापादौ पत्न्यन्वारम्भः स्रुत्याघारशुक्रग्रहादौ यजमानान्वारम्भोऽपि बोध्यः । **स्वामीति** । पत्नीशब्दस्य स्वामिवचनत्वं पूर्वत्रैवोक्तं यजमानशब्दस्यापि कर्त्रभिप्राये क्रियाफले विहितात्मनेपदान्ततया स्वामिवाचित्वमिति भावः । **स्वामिनश्चेति** । परिक्रीतस्याध्वर्य्वादिवत्कर्मकरत्वेन स्वामित्वासंभवादिति भावः । पृथक्प्रयोगाशक्तेरपि सहत्वमाह—**संसृष्टेति** । न संसृष्टद्रव्यमेकेन त्यक्तुं शक्यमिति भावः । **विभागेति** । न भर्त्रासह विभजेदिति वचनादिति भावः । एवंच पत्न्या न प्राभाकरमत इवानुमतिमात्रेण कर्तृत्वमनुमतेर्यजिधात्वर्थत्वाभावेनानुमत्या तदनुकूलाचरणेप्यध्वर्य्वादिवद्यागकर्तृत्वानुपपत्तेः । अतो न केवलं यजमानेनैव देवतोद्देशेन द्रव्यत्यागः कर्तव्यः किंतु पत्न्या अपीति व्यासक्तमेव तयोः कर्तृत्वमित्याह—**परस्परेति । अग्नीषोमयोरिवेति** । नचाग्नीषोमयोर्न स्वव्यापारकृतं देवतात्वं किंतु यष्टुश्चतुर्थ्यन्तनिर्देशकृतं सच निर्देशस्त्वयोरेक इति युक्तं तत्र देवतात्वस्यैक्यम् । प्रकृते तु दंपत्योः स्वसमवेतव्यापारभेदात्कथं कर्तृत्वस्यैक्यमिति वाच्यम् । इहापि संसृष्टस्यान्यतरत्यागमात्रान्न स्वत्वं निवर्तते किंतूभयत्यागेनेति प्रत्येकसमवेतव्यापारस्यावयवरूपतया वाच्यत्वेन कृत्स्नायाः क्रियायाः प्रत्येकपर्यवसानाभावेन तस्या उभयत्र व्यासक्तत्वात्कर्तृत्वस्याप्यैक्योपपत्तेरिति भावः । एवंच पूर्वपक्ष-

---

१ परिग्रहे चेत्यादि. २ यष्टृत्वसंभवः.

ष्टोमयोरिव देवतात्वं दंपत्योः कर्तृत्वं कर्तृरूपैक्याख्यातोपात्तैकत्वसंख्याग्नीषोमौ देवतेतिवत्सहप्रयो-
गोऽप्यविरुद्धा तस्मात्सहप्रयोगः ॥

आधाने पुरुषद्वयकर्तृकत्वनिराकरणाधिकरणम् ॥ ५ ॥

**आधानं च द्वियज्ञवत् ॥ २२ ॥ [गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥]**

पुंसोरेकस्य वाधानं वसानावित्यतो द्वयोः ॥ एष क्षौमविधिर्द्वित्वं दंपत्योरेकता ततः ॥ ९ ॥

आधानं प्रकृत्य 'क्षौमे वसानावग्निमादधीयाता'मिति श्रुतं । तत्र संशयः किमाधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्यातामुतैक इति । तत्र—'पूर्वत्राख्यातसंख्यायाः कर्तृरूपान्वयः स्थितः ॥ तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत् ॥ वसानाविति चौकारात्पुंद्वयं संप्रतीयते ॥ द्वित्वपुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥' यद्यपि पुंद्वयवत्स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टं कुक्कुटश्च कुक्कुटी च कुक्कुटाविति तथाप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वं चास्याभिधेयम् । तयोश्चाभिधेययोरसति स्त्रीसद्वितीयत्वप्रमाणे परस्परनियमात्पुमांसावेव द्वौ गम्येते । तयोश्चोत्पत्तावप्राप्तेस्तद्विधानार्थमेवेदं वचनम् । उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थं भविष्यति । क्षौमशब्दश्च 'टुक्षु शब्दे' इत्यस्माद्धातोरुत्पन्नः शब्दवत्त्वादनुवादः । मलिनत्वेन क्षौमसादृश्याद्वा गौणः । तस्माद्द्वौ पुमांसौ ।

---

बीजं निरस्तमित्याह—**कर्तृरूपेति** । वृद्धिकामानां तु पृथग्द्रव्यतया पृथगेव शक्तिरस्ति किंतु वाचनिकानेककर्तृत्वसिध्यर्थं कर्तृणां साहित्यमात्रं नतु दंपत्योरिव सहकर्तृकत्वमिति वैषम्यमिति भावः । सूत्रार्थस्तु—स्ववतोर्द्रव्यवतोराज्यावेक्षणान्वारम्भादिवचनादेककर्म्ये सहप्रयोगः स्यादिति ॥

**आधानं च द्वियज्ञवत् ॥ २२ ॥ सस्त्रीकाविति** । पूर्वाधिकरणन्यायेन स्त्रीसाहित्यस्यावश्यकत्वादिति भावः । **तेनेति** । दंपत्योराज्यावेक्षणान्वारम्भाणादिवचनादेकं कर्तृत्वमिति तदभिप्रायत्वे द्विवचनानुपपत्तेर्द्विवचनावगतकर्तृद्वयबलाद्द्वयाधिकारः । कर्त्रधिष्ठानद्वित्वाभिप्रायकत्वे द्विवचनममुख्यार्थं स्यादिति भावः । **नन्वस्त्वाख्यातसंख्यायाः** कर्तृरूपान्वयः तथाप्येकस्मिन्पदे धातुनाधानमुद्दिश्य तत्राख्यातेन कर्तृद्वयविधिरनुपपन्न इत्याशङ्क्य वसानावित्यनेन पुंद्वयविध्यवगमान्न दोष इत्याशयेनाह—**वसानाविति** । अस्यार्थं शङ्कोत्तरत्वेन व्याचष्टे—**यद्यपीति** । ननु स्त्रियामपि द्वितीयायां गृहीतायां पुंसः सत्वेन द्वित्वस्य पुंस्त्वस्य चोपपत्तेः कथं पुंद्वयावगम इत्याशङ्क्य एकवाक्योपात्तयोरप्यारुण्यद्रव्ययोः परस्परनियमे एकप्रत्ययोपात्तयोर्द्वित्वपुंस्त्वयोः कैमुतिकन्यायेन परस्परनियमात्पुंद्वयावगममाह—**तयोश्चेति** । नन्वेवं दंपतिपूजाप्रकरणादावपि स्त्रीसद्वितीयत्वप्रतीतिर्न स्यादित्यत आह—**असतीति** । अत्र यद्यपि द्वित्वपुंस्त्वे वाच्ये, ते च स्त्रीसद्वितीयस्थलेऽपि स्तः, तथापि द्वित्वपुंस्त्वयोर्वाच्ययोः परस्परनियमेसति प्रथमतः पुंद्वयप्रतीत्यवश्यंभावात्प्रमाणान्तरेण स्त्रीसद्वितीयत्वतात्पर्यावगमे परस्परनियमांशपरित्यागेन केवलयोर्द्वित्वपुंस्त्वयोरभिधानं न शक्त्या संभवति किंतु लक्षणयैव शक्तिलभ्याभिधानस्य परस्परनियमापेक्षत्वेन प्रमाणान्तरेण स्त्रीसद्वितीयत्वतात्पर्यावगमदशायां पुनः शब्दव्यापाराभ्युपगमे शब्दस्य पुनरनुसंधानकल्पनागौरवप्रसङ्गात् । लक्षणापक्षेतु नायं दोषः । परस्परनियतपुंस्त्वद्वित्वरूपार्थप्रतीतेः केवलपुंस्त्वद्वित्वलक्षणांप्रति द्वारत्वेन द्वारेसति द्वारिणः शब्दानुसंधानस्य पुनरनपेक्षणात् । शक्त्या केवलपुंस्त्वद्वित्वोपस्थितेस्तु परस्परनियततदुपस्थितिर्न द्वारमिति पुनः शब्दानुसंधानमावश्यकमिति वैषम्यम् । नचैवं पुंद्वयस्य वाच्यत्वेऽपि लक्षणया स्त्रीसद्वितीयस्थलीयप्रयोगोपपत्तेर्द्वित्वपुंस्त्वयोर्वाच्यत्वाङ्गीकरणं व्यर्थं स्यादिति वाच्यम् । तथात्वे प्रयोगाविशेषेण स्त्रीपुंसयोरपि वाच्यत्वापत्तिभयेन पुंद्वयाभिधानपरित्यागेन द्वित्वपुंस्त्वयोर्वाच्यत्वाङ्गीकारादुक्तयुक्तेरेव द्वित्वपुंस्त्वयोर्वाच्यत्वाङ्गीकरणमिति तत्त्वरत्ने स्पष्टम् । अतएव च तृतीये द्वित्वबहुत्वयुक्तं चोदनात्तस्येत्यधिकरणे य एकशेषः 'पुमांस्त्रियेति लक्षणाशब्द एवे'ति भाष्यकारेणोक्तं तस्मादत्र लक्षणैव न्याय्येति ध्येयम् । **ननू**त्पत्तिशिष्टैकत्वविरोधान्न पुंद्वयविधिरित्यत आह—**उत्पत्तीति** । वक्ष्यमाणरीत्या क्षौमवसानसंबन्धविध्यनुपपत्त्या विधेयान्तराभावेन वाक्यानर्थक्यप्रसङ्गात्पुंद्वयमात्रमवश्यं विधेयमिति तदनुरोधेनोत्पत्तिवाक्य एकवचनं साधुत्वार्थमिष्यत इत्यर्थः । **नन्वप्राप्त**क्षौमविध्यवश्यंभावेसति कथं पुंद्वयविधिः प्राप्तकर्मानुवादेनानेकविध्ययोगादित्यत आह— **क्षौमेति** । कर्मणि व्याप्रियमाणत्वदशायां वस्त्रे शब्दवत्त्वं मालिन्यं च संभावितमिति भावः । **नन्वाधाने** पुंद्वयविधाने धात्वर्थस्याविधेयतया वाक्यार्थविध्यविशेषात्केन विशेषेण क्षौमशब्दोऽनुवादक इष्यते

---

१ पात्तैकसंख्या. २ तयोश्चाभिहितयोः. ३ इत्यस्मादुत्पन्नः.

एवंचात्यन्तसंनिकृष्टार्थविधानाच्छ्रुत्यनुग्रहः क्षौमवसानसंबन्धविधावत्यन्तमनुपपन्नं वाक्यं स्यादिति प्राप्तेऽभिधीयते। एकएव। कुतः—'क्षौमशब्दो न मुख्यः सन् मुख्यमर्थं परित्यजेत् ॥ नापि धात्वर्थयोगेन वर्तेते रूढिसंभवात् ॥ वसानक्षौमशब्दौ च तेन स्यातामनर्थकौ ॥ द्वित्वमात्रविधायित्वात्तस्मात्क्षौमं विधीयते ॥ तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते ॥ उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः ॥ संनिकर्षश्च शब्दस्य धर्मो न तदनुग्रहात् ॥ प्रधानभूतशब्दार्थपरित्यागोऽत्रकल्पते ॥ कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः ॥ युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते ॥ अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते ॥ वसानावादधीयातामित्येतावनुवादकौ ॥ अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः ॥ तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥ एकएव पुमांस्तस्मादादधीत सह स्त्रिया ॥ उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम् ॥'

पुंसएवोपस्थानाद्यधिकाराधिकरणम् ॥ ६ ॥

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यवात् ॥ २४ ॥

उपस्थानादि दंपत्योरुत पुंसो द्वयोरिदम् ॥ यजमानत्वसाम्येन विद्वत्त्वात्पुंस एव तत् ॥ १० ॥

दंपत्योः सहप्रयोगः स्थितः। तत्र 'पत्न्यवेक्षत' इत्यादिषु पत्न्येव कर्त्री। 'यजमानोऽन्वारभत' इत्यादिषु चोपादेयस्य यजमानस्य विवक्षितलिङ्गत्वात्पुमानेव कर्ता। येतु फलिसंस्कारावचनेनापि न व्यवस्थापितास्ते द्वयोरपि फलित्वादावर्तन्ते। अतो न तेषु चिन्ता। यानि तु परार्थान्युपस्थानानुमन्त्रणादीनि याजमानसमाख्यया यजमानकर्तृकाणि तेषु किं दंपत्योरन्यतरः कर्ता उत पुमानेवेति चिन्त्यते। तत्र—'याजमानसमाख्यानं यजमानपदाद्यथा ॥ निष्पद्यते तथैवैतद्यजमानापदादपि ॥'

---

न वसानाविति शब्द इत्यत आह—**एवंचेति**। यद्यप्युभयत्र वाक्यार्थविधिस्तुल्यस्तथाप्याधाने पुंद्वयसंबन्धविधाने आधानस्य विधायकप्रत्ययेन सहैकपदोपात्तत्वात्तत्संबन्धः प्रत्ययस्यात्यन्तसंनिकृष्टो विहितो भवतीति श्रुत्यनुग्रहः। क्षौमवसानसंबन्धविधाने तु धात्वर्थस्योद्देश्यतयापि विधिसंबन्धाभावेन केवलपरपदसंबन्धविधानादत्यन्तविप्रकृष्टार्थविधानात्केवलवाक्यं स्यादित्यर्थः। क्षौमाधानसंबन्धविधानेऽपि वसानपदव्यवधानाद्विप्रकृष्टत्वमिति भावः। जघन्याख्यातस्य मुख्यार्थपरित्यागो न दोष इति मुख्यः सन्निति वदतो भावः। द्वित्वमात्रविधायित्वादित्युपलक्षणम्। कर्मव्यापारदशायामपि नियमतः शब्दवत्त्वमालिन्याप्राप्त्या पाक्षिकानुवादप्रसङ्गाच्चेत्यपि द्रष्टव्यम्। **क्षौमं विधीयते इति**। सामान्योक्त्या वसानोद्देशेन क्षौमं विधीयते प्रकरणाच्चाधानसंबन्धिवसाने निवेशः, यद्वा आधानोद्देशेन क्षौमं विधीयते। नच क्षौमे आदधीयातामित्यन्वये क्षौमशब्दस्य सप्तम्यन्ततापत्त्या क्षौमस्याधिकरणत्वं स्यादिति वाच्यम्। नह्यत्राप्राप्तं क्षौमं विधीयते किंतु पक्षे प्राप्तं विधीयते। प्राप्तिश्च पुरुषसंबन्धित्वेनेति तादृशस्यैव नियमानाधिकरणत्वप्रसङ्गः। एवंचाधानाङ्गतया वाक्येन प्रातिपदिकार्थः क्षौममात्रं विधीयते। तद्गता च द्वितीया कृत्स्नं च द्वितीयान्तं वसानपदमनुवाद इति पक्षद्वयमपि संगृहीतं बोध्यम्। यदुक्तं श्रुत्यनुग्रह इति, तत्र श्रुत्यनुग्रहो विधिश्रुतिसंनिकर्षानुग्रहात्मको वाच्यस्तत्र च क्षौमशब्दार्थपरित्यागापेक्षया विधिश्रुतिसंनिकर्षपरित्यागो ज्यायानित्याह—**संनिकर्षश्चेति**। नन्वादधीयातामिति द्विवचनस्य कर्त्रधिष्ठानाभिप्रायकत्वमेव दोषः तथा वसानावित्यौकारस्य सत्त्रीद्वितीयाभिप्रायकत्वमपि, तस्य स्वरसतः पुंद्वयार्थत्वादित्यत आह—**अप्राप्तत्वादिति**। **विवक्षितमिति**। एतद्वाक्यस्य क्षौमविधायकत्वेनार्थवत्तया तदविवक्षाकारणाभावादिति भावः। एतेन राजपुरोहितौ यजेयातामिति द्वियज्ञवदाधानं पुंद्वयाधिकारमिति सूत्रार्थः॥

**तस्या यावदुक्तं०** ॥ २४ ॥ **स्थित इति**। तथाच तद्विशेषविचारात्सङ्गतिः। पूर्वाधिकरणे आख्यातोपात्तसंख्यायाः कर्तृरूपान्वयस्य क्षौमपदार्थैक्यबाधकेनापवादव्युत्पादनस्यान्यत्र तत्स्थिरीकरणफलकत्वान्न व्यवधायकत्वमिति भावः। 'किं सर्वं याजमानं पत्न्या कर्तव्य'मिति भाष्यदर्शनात्सर्वेषां विषयत्वभ्रमं वारयितुं विषयं विविनक्ति—**तत्रेति**। **येत्विति**। अञ्जनस्नानादय इत्यर्थः। फलिसंस्कारेष्वपि वपनस्य नावृत्तिः। केशश्मश्रुवपत इति केशश्मश्रुणोर्भूतभाव्युपयोगविधुरयोः संस्कार्यत्वाभावाद्वपने उपादेयतया द्वन्द्वावगतसाहित्यस्य विवक्षितत्वादितरेतरयुक्तकेशश्मश्रुसाध्यवपनस्य शास्त्रार्थत्वेन पुंस्येव तस्य व्यवस्थितेरतएवमादिव्यावृत्त्यर्थं वचनेनाप्यव्यवस्थापिता इत्युक्तम्। **यजमानापदादपीति**। नन्वेकस्य याजमानसमाख्यानस्य यजमानपदाद्यजमानापदाद्वा व्यवस्थया निष्पत्तेर्वाच्यत्वादिदमयुक्तमितिचेत्। सत्यम्। इह कृतैकशेषायजमानशब्दान्निष्पत्तिर्विवक्षिता। तथाच यजमानशब्दः प्रकृतिर्व्यवस्थितैव कृतैकशेषयजमानशब्दान्निष्पन्नं स्त्रीपुंसक-

---

१ वत्यन्तं वाक्यं स्यात्. २ नच स्याता.

तेन समाख्यानाविशेषादविशिष्टं द्वयोरपि कर्तृत्वम् ।—'विद्वत्तया पुमानेव कुर्यादविदुषीतरा ॥ वेदाध्ययनशून्यत्वात्प्रतिषिद्धं हि तस्त्रियः ॥' यद्यप्युपनयनमष्टवर्षस्य संस्कार्यत्वेनाविवक्षितलिङ्गत्वात्स्त्रिया अपि भासते अतएवाध्ययनमप्यनिर्दिष्टकर्तृकत्वात्प्रकृतमुपनीतं कर्तारमाश्रयत्स्त्रिया अपि स्यादित्यधिकारबुद्धिर्भवति तथाप्याहत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्तुम् । नच तदन्यथानुपपत्त्या तस्या अपि विद्वत्ता संपादयितुं शक्यते । संपन्नविधेन पुंसा तेषामनुष्ठानसिद्धेरतः पुमानेव कर्ता ॥

शूद्रस्यानधिकाराधिकरणम् ॥ ७ ॥

**चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ [निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ निमित्तार्थेन बादरिः,तस्मात्सर्वाधिकारं स्यात् ॥ २७ ॥ अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥ निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ वैगुण्यान्नेति चेत् ॥ ३० ॥ न काम्यत्वात् ॥ ३१ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥ अपि वा वेदनिर्देशादपशूद्राणां प्रतीयते ॥ ३३ ॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ संस्कारस्य तदर्थत्वात्, विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥ अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥ ३८ ॥]**

शूद्रोऽपि यष्टा नो वा स्यादवैधाध्ययनेन वा ॥ उपदेष्टृमुखाद्वास्य क्रतुविरवेन यष्टृता ॥ ११ ॥
त्रिवर्णैर्वेदविद्भिः कृतार्था विधयः क्रतोः ॥ नाक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टृता कुतः ॥ १२ ॥

किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकार उतापशूद्राणां त्रयाणामिति । तदर्थमिदं विचार्यते किं कामश्रुतिप्रयुक्तं विद्यार्जनं उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति द्वेधा चात्र पूर्वः पक्षः । एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानसाधनज्ञानौपयिकतया विहितं क्रत्वङ्गं क्रतुविधि-

---

तृकत्वसाधारणमित्येतावन्मात्रेण यजमानापदादपियुक्तमिति न कश्चिद्दोषः । सिद्धान्तमाह—**विद्वत्तयेति** । ननु प्रतिषेधात्स्त्रिया अध्ययनशून्यत्वमित्ययुक्तम्, 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'ति पुंलिङ्गश्रवणेन पुंस एवाध्ययनसिद्धिरित्याशङ्क्य पुंलिङ्गाविवक्षया स्त्रिया अध्ययनप्राप्तेः प्रतिषेधादित्येव वाच्यमित्याशयेन लिङ्गाविवक्षया स्त्रिया अध्ययनप्राप्तेः शङ्कापूर्वकं चतुर्थचरणं व्याचष्टे—**यद्यपीति । संस्कार्यत्वेनेति** । द्वितीयात इति भावः । **अनिर्दिष्टेति** । 'स्वाध्यायोऽध्येतव्य' इत्यत्र कर्तुरनिर्देशात्तमध्यापयीतेत्यस्मिन्नध्यापनविधौ तच्छब्देन कर्तुर्निर्देशेऽपि सर्वनामत्वात्प्रकृतोपनीताश्रयणमिति भावः । **प्रतिषेधादिति** । धर्मशास्त्र इति शेषः । **नन्वेवमप्यमन्त्रकेषु** यजमानसमाख्यातेषु तस्याः कर्तृत्वमनिवार्यमित्याशङ्क्य 'पात्नीवते तु पूर्वव'दित्यत्रोक्तन्यायेन वृत्तौ यजमानद्वित्वावगत्यसंभवेन कृतैकशेषात्तद्धितोत्पत्त्यनुपपत्तेः यजमानपदाद्यजमानापदाद्वा तद्धितोत्पत्तौ वाच्यायां समन्त्रकोपस्थानादिपदार्थानुसारेण पुंलिङ्गाद्यजमानपदादेव तद्धितोत्पत्तिनिश्चयान्न स्त्रियाः कर्तृत्वमित्याशयेनोपसंहरति—**अत इति** । सूत्रार्थस्तु—तस्याः पत्न्या यावदुक्तमाज्यावेक्षणादिकमाशीःशब्देनायुर्दाअग्नेस्यायुर्मे देहीत्यादयः प्रत्यगाशिषो मन्त्रा न विवक्षिताः अध्ययनराहित्येन स्त्रियास्तदसंभवात्, किंतु ये फलिसंस्कारास्तेच तथा ब्रह्मचर्यस्यापि फलिसंस्कारत्वादेव ग्रहणे सिद्धे ब्रह्मचर्यशब्देन कार्ये करणवदुपचारात्कामा उच्यन्ते तेच नान्यदिति ॥

**चातुर्वर्ण्यमविशेषात्** ॥ २५ ॥ यजमानविषयानुष्ठानसिद्धेः स्त्रिया विद्यानाक्षेपान्मन्त्रवत्कर्मकर्तृत्वासंभवेऽपि शूद्रस्य विद्याक्षेपसंभवादस्त्वधिकार इति प्रत्यवस्थानात्सङ्गतिः । **ननु** शूद्रस्याध्ययनसाध्यविद्यायाः क्रतुविधिभिरप्याक्षेप्तुमशक्यत्वात्कथं पूर्वपक्ष इत्यत आह—**द्वेधेति । क्रत्वनुष्ठानेति** । यद्यप्यध्ययनमनारभ्य विधीयते तथापि तस्य प्रयोजनाकाङ्क्षायां सामर्थ्यादर्थज्ञानस्य प्रयोजनत्वसिद्धौ अर्थज्ञानस्वरूपार्थत्वे तस्य पुस्तकनिरीक्षणादिनापि संभवेनाध्ययननियमानर्थक्यात्स्वरूपातिक्रमेणापूर्वीयत्वरूपेणार्थज्ञानस्य फलत्वं वाच्यमिति क्रत्वपूर्वीयार्थज्ञानोपयुक्तमध्ययनमपूर्वीयसाधनार्थतयावघातादिव-

---

१ विद्वत्त्वाद्वा. २ तदर्थमेवं वि. ३ द्विधाचात्र. ४ नुष्ठानज्ञानौपयिक.

भिरेव प्रयाजादिवत्प्रयुज्यते, क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते। तत्र त्रयाणां 'वसन्ते ब्राह्मणमुपनयीते'त्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितः। चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य विद्यां लब्ध्वाधिक्रियत इति। द्वितीयस्तु न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावात्तदक्षरग्रहणादिदृष्टकार्यपरम्परया वाक्यार्थज्ञानं यावद्गतं ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते न तद्द्वारेण क्रतौ। तेनाध्ययनमाधानमिवाग्न्यर्थं ज्ञानाङ्गं न क्रत्वङ्गम्। अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नधिक्रियते। क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते। शूद्रस्य त्वन्यतःसिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते। अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वस्तेषामेवाध्ययनं विधत्ते न शूद्रस्य, तथाप्यसावविहितेनैवाध्ययनेनोपायान्तरेण वा विद्यां लब्ध्वाधिक्रियेतेति—'सत्यमध्ययनं नाङ्गं तत्कृतात्वङ्गमर्थधीः॥ तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम्॥' क्रतुविधयोऽन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति। यदा तु स्वाध्यायाध्ययनोपात्तविद्यान्द्विजन्मनो लभन्ते तदा तैरेव लब्धात्मानोऽनुपपत्तिक्षयान्न चतु-

---

द्भवति क्रत्वर्थमित्यर्थः। ननु 'वसन्ते ब्राह्मणोऽग्निमादधीते'त्येवमादीनामाधानप्रापकत्ववत् 'वसन्ते ब्राह्मणमुपनयीते'-त्यादीनामुपनयनप्रापकत्वस्यापि द्वितीये प्रतिपादनात्तस्य च वसन्तादिवाक्यप्राप्तस्य प्रयोजनापेक्षायां संनिहिताध्ययनाङ्गत्वादुपनयनसाध्यमध्ययनमिति शूद्रस्योपनयनाभावे कथमध्ययनप्रयुक्तिरित्यत आह—**तत्रेति**। ननु गुरुमनुपेत्याध्ययनस्य कर्तुमशक्यत्वादुपनयनाभावेऽध्ययनमपि न स्यादित्याशङ्क्य स्वकर्तृकोपनयनमात्रेणाध्ययनसिद्धेराचार्यकर्तृकोपनयनाभावेऽपि नाध्ययनानुपपत्तिरित्याशयेनाह—**चतुर्थ इति**। नन्वव्यवहितमक्षरग्रहणं वा व्यवहितमपि साक्षात्पुरुषार्थरूपं स्वर्गादिकं वा फलं युक्तं न तदुभयरूपरहितमर्थज्ञानमित्यत उक्तं **अक्षरग्रहणादीत्यादि**। अध्ययनं प्रयोजनापेक्षं सदक्षरग्रहणस्याव्यवहितत्वेऽपि तस्य प्रथमं फलवत्त्वेनानवगमान्न प्रयोजनं भवितुमर्हति तथा पदज्ञानपदार्थस्मरणादिकमिति तत्सर्वं परित्यज्यार्थज्ञानपर्यन्तं गत्वा र्थज्ञानं प्रागेव क्रत्वनुष्ठानौपयिकतया फलवत्त्वेनावगतं प्रयोजनीभवितुमर्हतीति तदेव प्रयोजनत्वेन स्वीकरोति। ततएव च प्रयोजनाकाङ्क्षाशान्तेर्न स्वर्गपर्यन्तं गच्छतीति युक्तं वाक्यार्थज्ञानस्य प्रयोजनत्वमित्यर्थः। नन्वेवमप्यर्थज्ञानस्वरूपेऽध्ययननियमानर्थक्यात्क्रत्वपूर्वीयार्थज्ञानार्थतामाश्रित्य ज्ञानद्वारा क्रतौ तद्विधिः स्वीकार्य इत्यत आह—**न तद्द्वारेणेति**। अनारभ्याधीतत्वेन क्रत्वनुप्रवेशे प्रमाणाभावात्केवलज्ञानस्वरूपार्थमेवाध्ययनं, नियमस्तु द्रव्यार्जननियमवददृष्टार्थतयोपपन्न इति भावः। एवंच तल्लोपेऽप्युपायान्तरेण ज्ञानस्वरूपोपपत्तेस्तन्मात्रेण क्रतुनिर्वृत्तेश्च न क्रतोर्वैगुण्यमित्याह—**अत इति**। **अनधीतेति**। विहिताध्ययनरहित इत्यर्थः। नन्वेवमध्ययनविधिसिद्धविद्यैस्त्रैवर्णिकैरेव क्रत्वाकाङ्क्षाशान्तेर्न शूद्रस्य विद्याप्रयुक्तिरित्यत आह—**क्रतव इति**। अध्ययनविधिसिद्धविद्यया शूद्रस्याधिकारानिर्वाहात्तदंशे आकाङ्क्षाशान्त्यभावादस्ति विद्याप्रयुक्तिरित्यर्थः। अस्मिन्पक्षेऽध्ययनस्य क्रत्वर्थत्वाभावेन प्रथमपक्षवद्विहितमध्ययनं न प्रयुज्यते किंत्वविहितमेवाध्ययनं, विहितं तु त्रैवर्णिकमात्रविषयमिति विशेषं दर्शयन्नुपसंहरति—**अत इति**। यतएवानङ्गमध्ययनं अतएवाध्ययनाभावेऽपि वैगुण्याभावादनधीतवेद एव शूद्रोऽधिक्रियत इति द्वितीयपूर्वपक्षोपयोगित्वेनोक्तमध्ययनानङ्गत्वं प्रथमपूर्वपक्षनिराकरणार्थत्वेनाभिमतत्वादनुमन्यते—**सत्यमिति**। कथं तर्हि द्वितीयपूर्वपक्षनिराकरणमत आह—**तत्कृतेति**। अध्ययनकृतैवार्थधीर्नार्थधीमात्रमिति तादृशज्ञानसाध्यक्रतुषु शक्त्यभावान्न शूद्रस्याधिकार इत्यर्थः। नन्वर्थज्ञानमात्रमेवाङ्गं न त्वध्ययनकृतं मानाभावात्ततश्च चतुर्थस्यापि विद्याक्षेपादधिकारसिद्धिरित्यत आह—**तद्वत इति**। उत्तरार्धं व्याचष्टे—**क्रतुविधय इति**। यथा गोदोहनमाश्रयक्रियापेक्षं प्रसङ्गात्क्रत्वर्थत्वेनाप्प्रणयनेन निराकाङ्क्षत्वान्न क्रियान्तरमाक्षिपति, तथा क्रतवोऽप्यध्ययनविधिविहिताध्ययनेन निराकाङ्क्षत्वान्नोपायान्तरेण शूद्रस्य विद्यामाक्षिपन्तीत्यर्थः। **ननु** त्रैवर्णिकानामपि 'स्वाध्यायोऽध्येतव्य' इति पितृपितामहादिपरम्परागतस्वशाखामात्र एवाध्ययनस्य विहितत्वेन शाखान्तरगताङ्गमन्त्रोपसंहारार्थं शाखान्तरगतवाक्यार्थग्रहणाक्षेपावश्यंभावेन तथैव शूद्रस्यापि विद्याक्षेपोऽस्तु। नच शूद्रस्य ज्ञानं कार्त्स्न्येनाक्षेप्यम्। त्रैवर्णिकानां तु शाखान्तरगतमात्रगोचरमित्याक्षेपलाघवात्त्रैवर्णिकानेवाधिकुर्वन्ति कर्मविधयो न शूद्रमिति वाच्यम्। एवं तर्हि यस्य कर्मण एकस्यां शाखायां भूयसामङ्गानां विधानं 'भूयस्त्वेनोभयश्रुती'ति न्यायेन प्रधानस्यापि तत्रैव विधानं शाखान्तरे तु स्वल्पाङ्गमात्रविधानं तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारः स्यात्। तस्मात्तल्लाघवस्याप्रयोजकत्वादाक्षेपावि-

---

१ तेनाधानमिवा. २ द्रष्टृवचनात्. ३ कर्तॄन्स्वीकुर्वन्. ४ विद्यामाक्षि. ५ स्वाध्यायविधिविहिताध्ययनोपात्त.

श्वस्य विद्यामाक्षिपन्ति । यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति तदा तदेव ज्ञानप्रकर्मकालोपात्तमप्यग्निवत्क्रतूनामङ्गमिति तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिद्ध्यत्यधिकारः । मन्त्रवत्सु चानधीतवेदस्य कुतोऽधिकारः । कुतस्तरां चानग्नेरग्निसाध्येषु । तस्मात्त्रयाणामधिकारः ॥

निर्धनाधिकाराधिकरणम् ॥ ८ ॥

**त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥ [अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥]**

धन्येव कर्तोतान्योऽपि धन्येव विधिसाध्यतः ॥ अन्योऽधिकुरुते द्रव्यमाक्षिपेद्भुक्तिवत्क्रतुः ॥ १३ ॥

किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकार उताद्रव्योऽपि कर्मार्थेन द्रव्यमर्जयित्वानुतिष्ठन्नधिक्रियत इति संशये पुरुषार्थोपात्तद्रव्यवतां लाभान्नाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते । अतो विदुषामिव द्रव्यवतामधिकारः । नैतत्तुल्यम् । विद्या हि प्रत्यक्षविधिसिद्धा त्रयाणामिति तैरेवोपपन्नाः क्रतवो न शूद्रस्याक्षिपन्तीति[1] युक्तं । द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेवाक्षेप्तव्यं तत्राविशेषाद्भोजनादिवत्क्रतूनामपि तदाक्षेपकत्वं न वार्यते । अतोऽद्रव्योपि द्रव्यमर्जयित्वा कुर्यात् ॥

अङ्गहीनाधिकाराधिकरणम् ॥ ९ ॥

**अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥**

अङ्गहीनो न कुरुते कर्ता वा नाक्षमत्वतः ॥ समाधायाङ्गवैकल्यं करोति द्रव्यहीनवत् ॥ १४ ॥

अङ्गहीनोऽपि द्रव्यहीनेवत्प्रतिसमाधानेन[2] तत्कुर्यात् द्रव्यहानिर्बहिरङ्गमधिकारं व्यरौत्सीत् अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का । अथवा[3] द्रव्यवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयानुवदतीत्यपुनरुक्तम्[4] ॥

---

शेषात्रैवर्णिकसाम्यं शूद्रस्येति चेन्मैवम् । आक्षेपलाघवादेव त्रैवर्णिकाधिकारात्स्वल्पाङ्गमात्रविधायकशाखाध्यायिनां तु तदध्ययनस्य तत्कर्माधिकारंविनार्थज्ञानफलकत्वानिर्वाहात्तदनुपपत्त्यैव शाखान्तराम्नातबह्वङ्गयुक्तकर्मण्यधिकारः । नचैवं किंचिच्छूद्रस्याधिकारंविनानुपपद्यमानमस्तीति न तस्याधिकार इति भावः । एवंच क्रतूनामध्ययनविधिप्रसङ्गोपजीवनादध्ययनस्य क्रत्वङ्गत्वाभावेप्यध्ययनकृतविद्या क्रत्वङ्गं न विद्यामात्रमित्यवगम्यते । तत्र यथा क्रतुगतमेवाप्प्रणयनं गोदोहनस्याश्रयो न प्रणयनमात्रमिति बहिःप्रणयने गोदोहनस्य वैगुण्यमेवमुपायान्तरेण विद्यार्जने क्रतोर्वैगुण्यान्न शूद्रस्याधिकार इति द्वितीयचरणतात्पर्यम् । अध्ययनसिद्धज्ञानं प्रधानकालत्वाभावान्नाङ्गमिति शङ्कां निराकुर्वन्नाह—**यदा चैवमिति । मन्त्रवत्सु चेति ।** सामान्योक्त्या द्वितीये वसन्तादिवाक्यानामाधानपरत्वोक्तेर्ब्राह्मणादिकर्तृकाधानसाध्याहवनीयाद्यग्न्यभावादेवानधिकारसिद्धेरस्य गतार्थत्वमित्याशङ्कानवकाशः । अनग्निसाध्ये 'दशहोतारं मनसानुद्रुत्य दर्भस्तंबे जुहुया'दित्यादावनधिकारस्यासिद्धत्वादिति सूचितम् । द्वितीयं सिद्धाग्न्यभावमभ्युच्चयत्वेनाह—**कुतस्तरामिति** । कामश्रुत्यविशेषाच्चातुर्वर्ण्यमधिकृतमिति सूत्रार्थः ॥

**त्रयाणां द्रव्यसंपन्नः० ॥ ३९ ॥ नाद्रव्यस्येति** । द्रव्यार्जनस्य क्रतुभिराक्षेपेऽर्जननियमस्य क्रत्वर्थत्वापत्तिरिति भावः । **विद्या हीति ।** विध्यन्तरसिद्धविद्यैस्त्रैवर्णिकैरेव क्रत्वनुष्ठानसिद्धेर्न शूद्रस्य तदाक्षेपः संभवति द्रव्यवत्ता तु न विध्यन्तरेण केषांचित्कॢप्ता । यतः तानेव क्रतवोऽधिकुर्युरित्यर्थः । **ननु** विध्यन्तराभावेऽपि भोजनाद्यर्थमुपात्तं यस्य द्रव्यमस्ति तत एव क्रत्वनुष्ठानसिद्धेरद्रव्यस्य न क्रतुभिर्द्रव्याक्षेप इत्यत आह—**द्रव्यार्जनंत्विति** । भवेदेवं यदि भोजनादिभिरेव द्रव्यमाक्षेप्यं न क्रतुभिरिति नियमे किंचित्प्रमाणं स्यात्, भोजनादयोऽपि हि द्रव्यकार्यत्वाद्द्रव्यमाक्षिपन्तीत्येतावन्मात्रम् । तथासति क्रतोरपि द्रव्यकार्यत्वाविशेषेण भोजनादितुल्यतया द्रव्याक्षेपकत्वमवर्जनीयम् । नचैतावतार्जननियमस्य क्रत्वर्थत्वप्रसङ्गः । श्रुत्याद्यभावादर्जनस्य क्रतुव्यभिचाराच्चेति भावः ॥

**अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥ अन्तरङ्गमिति ।** आत्मवर्तित्वादिति भावः । सत्यप्यन्तरङ्गबहिरङ्गभावे तत्समाधानेन क्रत्वनुष्ठानस्योभयत्र तुल्यत्वान्नास्त्यधिकारविरोधित्वम् । नहि द्रव्यहानेरङ्गहानेश्च प्रतिसमाधानमनपेक्ष्यास्माभिः प्राभाकरवदनुष्ठानमिष्यत इति परिहारः । अतएवान्तरङ्गस्याकिंचित्करत्वं स्पष्टमित्यपरितोषादाह—**अथवेति । उत्तरेति ।** प्रतिसमाधेयाङ्गप्रत्युदाहरणत्वेनोत्तरं प्रवर्तयितुमित्यर्थः । सूत्रे तद्धर्मा द्रव्यरहितधर्मा तत्तुल्य इति ॥

---

१ शूद्रस्य नाक्षिपन्तीति. २ हीनवत्तत्प्रति. ३ द्रव्यहीनवदद्रव्यस्य. ४ पौनरुक्त्यम्.

अचिकित्स्याङ्गवैकल्यस्यानधिकाराधिकरणम् ॥ १० ॥

## उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

**असमाधेयवैकल्ये कथं काम्येष्वकर्तृता ॥ नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति करोति हि ॥ १५ ॥**

**यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं स न कथंचिच्छक्नोति कर्तुमिति न काम्येऽधिक्रियते । नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ॥**

दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाधिकाराधिकरणम् ॥ ११ ॥

## अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

**विधिर्वरण एकादावपि स्यात्त्रिक एव वा ॥ अविशेषात्पक्ष आद्यो वाक्यभेदाय तूत्तरः ॥ १६ ॥**

**दर्शपूर्णमासयोः 'आर्षेयं वृणीत' इति विधाय पुनःश्रुतं 'एकं वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिवृणीत' इति । तत्र विचारः किं दर्शपूर्णमासयोरेकार्षेयद्व्यार्षेययोरप्यधिकारः उत त्र्यार्षेयस्यैवेति । तत्रार्षेयं वृणीत इति वरणमात्रे विहिते चतुर्णां षडादीनां च प्रतिषेधे कृतेऽर्थादेकद्वित्रिपञ्चानां प्राप्तं वरणमिति तच्छ्रवणमनुवादः । अथवार्षेयं वृणीत इति सामान्यं यथा त्रीन्वृणीत इत्यनेन त्वत्पक्षे विशेष्यते तथैकं वृणीते द्वौ वृणीत इत्याभ्यामपि विशेषाभावादुभयथापि हि द्वित्वैकत्वयोस्त्रित्वेनाविशेषादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियेतेति प्राप्तेऽभिधीयते—'असंख्याकविधौ तावत्प्रतिषेधद्वयाश्रयात् ॥ वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम् ॥ एकद्वित्रिविधानं चे[2] ततो वाक्यत्रयं भवेत् ॥ विकल्पश्च भवेत्तस्मात्रित्वमेव विधीयते ॥' एकं वृणीत इत्यादौ विध्यश्रवणादर्थवादेन**

---

**उत्पत्तौ नित्यसंयोगात्** ॥ ४२ ॥ आधाने सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारान्न तत्राप्रतिसमाधेयाङ्गवैकल्पयुक्तस्याधिकार इति सूचयति—**आहिताग्निश्चेदिति** । वक्ष्यते च सर्वशक्त्यधिकरणे तन्त्ररत्ने । एवंचाप्रतिसमाधेयाङ्गवैकल्योऽपि अग्न्यादिमानधिक्रियत एवाधानं तु न कुर्यात्तस्य नैमित्तिकत्वादिति । सूत्रार्थस्तु—उत्पत्तावेव येषामङ्गवैकल्यं जात्यन्धादीनामिदमुपलक्षणं सर्वेषामप्रतिसमाधेयाङ्गवैकल्यानां ते नाधिक्रियन्ते आज्यावेक्षणादिभिः क्रतोर्नित्यसंयोगादिति ॥

**अत्र्यार्षेयस्य हानं स्यात्** ॥ ४३ ॥ एकार्षेयद्व्यार्षेययोरप्रतिसमाधेयाङ्गवदसामर्थ्याभावादस्त्यधिकार इति प्रत्यवस्थानात्सङ्गतिः । आर्षेयं यजमानगोत्रप्रवर्तकमृषिमिति पर्यवसितोऽर्थः । **न पञ्चेति** । पञ्चातिक्रम्य न वृणीते षडादीन्न वृणीत इत्यर्थः । **उतेति** । अत्रैकार्षेयद्व्यार्षेययोरेव व्यावृत्तिः न चतुःपञ्चार्षेयादीनाम् । तेषां स्वीयऋषिमध्ये ऋषित्रयवरणेनाधिकारस्य सिद्धान्ते संमतत्वादित्यार्षेयमित्येकत्वं चमसाध्वर्युबहुत्वतुल्ययोगक्षेममपि न विवक्षितम् । तथासति चतुरादिप्रतिषेधस्य वा संख्याविशेषविधेर्वानुपपत्तेः । संख्याविशेषाविवक्षायामेकवचनमुत्सर्ग इति शाब्दिकमर्यादयैकवचनमुपपादनीयमित्याशयेन वरणमात्र इत्युक्तम् । **प्रतिषेध इति** । पर्युदासइत्यर्थः । प्रतिषेधे विधिप्रतिषेधाभ्यां विकल्पापत्तेः । **तच्छ्रवणमिति** । तच्छब्दः पञ्चव्यतिरिक्तपरः । पञ्चवरणाश्रवणादेकत्वादिभिरार्षेयवरणविशेषणेऽर्थाच्चतुरादिनिषेधप्राप्ते निषेधद्वयं वानुवाद इति पक्षान्तरमाह—**अथवेति** । **पञ्चेति** । प्रथमपक्षे तत्र पञ्चानां प्रतिषेधाभावेनैकादितुल्ययोगक्षेमत्वाद्द्वितीयपक्षे तु सामान्यविधेरेकत्वादिसंख्ययैव पञ्चसंख्यया विशेषणाभावेन पञ्चवरणाप्रसक्तेरत्रोपक्रमोपसंहाराभ्यामेकवाक्यत्वाप्रतीतेर्नोपांशुयाजाधिकरणेन गतार्थत्वमिति ध्येयम् । **वाक्यद्वयमिति** । यद्यपि पर्युदासद्वयविशिष्टवरणविधानान्न वाक्यभेदः तथापि द्वयोरपि पर्युदासयोर्विशेषणत्वे विशिष्टविधानाद्विशेषणद्वयेऽपि विधेः कल्प्यत्वात्तदभिप्रायेण द्वयमित्युक्तम् । अतएव वाक्यद्वयं कल्प्यं स्यादित्येवाग्रे वक्ष्यति—**इत्यादाविति** । आदिशब्दः प्रकारवचनः । तेनार्षेयं वृणीत इत्यस्यापि संग्रहः । **अर्थवादेनेति** । अर्थस्य वादेनेत्यर्थः । सिद्धवन्निर्देशान्यथानुपपत्त्या इति यावत् । नच न चतुरो वृणीत इति चतुःषडादिवरणाभावलाघवेन स्तवनात्तस्मादर्थवादाद्द्विविकल्पनादित्यर्थः किं न स्यादिति वाच्यम् । न चतुरो वृणीत

---

१ काम्येष्वधिक्रियते. २ चेत्ततो.

विधिः कल्प्यः। तत्र यदि वरणमात्रे विहिते चतुर्णां षडादीनां च प्रतिषेधः स्यात्ततः प्रतिषेधद्वयाश्र यणाद्वाक्यद्वयं कल्प्यं स्यात्। तदेकादिपक्षे च त्रयाणामभावात्त्रीनिति नित्यवच्छ्रवणमुपरुध्येत। अ-थैकादिभिः सर्वैर्विशेष्येत तथापि संख्यात्रयविधानायवाक्यत्रयं कल्प्यम्। त्रित्वस्य च पाक्षिकत्वं त-दवस्थमेव। त्रित्वमात्रविधौ त्वेकार्थविधानादेकवाक्यत्वं तदन्तर्गतत्वाच्च द्वित्वैकत्वश्रवणं नित्यानुवादः। चतुरादिप्रतिषेधश्चानुवाद एव। तस्मात्त्रित्वविशिष्टवरणविधानात्तदुपसंहारसमर्थस्यैवाधिकारः॥

रथकाराधिकाराधिकरणम्॥ १२॥

**वचनाद्रथकारस्याऽऽधानस्यासर्वशेषत्वात्॥ ४४॥ [यान्यो वा कर्मसंयो-गात्, शूद्रस्य प्रतिषिद्धत्वात्॥ ४५॥ अकर्मत्वात्तु नैवं स्यात्॥ ४६॥ आन-र्थक्यं च संयोगात्॥ ४७॥ गुणार्थेनेति चेत्॥ ४८॥ उक्तमनिमित्तत्वम्॥ ४९॥ सौधन्वनास्तु हीनत्वात्, मन्त्रवर्णात्प्रतीयेरन्॥ ५०॥]**

**विप्रादिरेव रथकृदन्यो वाद्योऽस्तु योगतः॥ रूढेर्वर्णान्तरं तस्याधाने वर्षासूच्यते॥ १७॥**

'वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इति विधाय श्रूयते 'वर्षासु रथका-रोऽग्निमादधीते'ति। तत्किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाविधिरयमुत रथकारसंज्ञकस्या-वान्तरवर्णस्याधानान्तरविधानमिति संशये द्विजानां विद्वत्त्वात्कालमात्रविधाने च लाघवात्तेषामेव कालविधिर्नाविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधिरिति प्राप्ते रूढिबलेन योगबाधाद्वचनबलाच्चावि-दुषोऽप्यधिकारप्रतीतेरविघातात् 'ऋभूणां त्वे'ति च मन्त्रवर्णादृभुसौधन्वनपर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते॥

---

इत्यादेरिदानीमर्थवादत्वानिश्चयादतएव तत्र यदीत्यादिना निषेधकत्वं निराकरिष्यति—**कल्प्य इति**। कल्पनायां च लाघवादेकत्रैव कल्प्य इति भावः। संख्यात्रयविधानात्, संख्यात्रयविशिष्टवरणविधानादित्यर्थः। **त्रित्वविशिष्टेति**। 'आर्षेयं वृणीते'इत्यनेन वरणं विधीयते तदनुवादेन 'त्रीन् वृणीते'इत्यनेन त्रित्वं विधीयत इति स्वीकारेऽपि वाक्यद्वयाव-गत्या 'आर्षेयं वृणीते, त्रीन् वृणीते' इति चोभयमेकवाक्यं सत्त्रित्वविशिष्टवरणविधायकमित्येक एवात्र विधिर्न विधिद्वय-मिति त्रित्वविशिष्टविधानादिति वदतो भावः। आर्षेयं वृणीते इति सामान्यं यथा त्रीन् वृणीत इत्यनेन त्वत्पक्षे विशिष्यत इत्यादिविशेषकत्वव्यवहारश्चोक्तविधया त्रित्वविशिष्टवरणपक्ष एव सामञ्जस्येनोपपद्यते। तथा संख्याकविधौ तावदिति निर्दे-शोऽपि सिद्धान्ते त्रित्वविशिष्टविधिमेव संमतं दर्शयति। एवंच तस्मात्त्रित्वमेव विधीयते इति श्लोके 'त्रित्वमात्रविधौ त्वे-कार्थविधाना'दिति वाक्ये च एवकारस्य मात्रशब्दस्य च एकादिविधिव्यावृत्तावेव तात्पर्यम्। तेन न तद्बलात्केवलत्रित्वविधे-रभिमतत्वशङ्कावकाशः। एतदेवाभिप्रेत्याध्यायान्ते तन्त्ररत्ने तथा वाक्यान्तरस्थयोरपि शब्दयोः भवति। यथा 'आर्षेयं वृणीते त्रीन् वृणीत इति विशेषणविशेष्यभाव इत्युदाहरिष्यते इति यद्यपि ताण्डिशाखाविहितमनुवत्पक्षे एकार्षेयादीनाम-प्यधिकारोऽस्ति तथापि आर्षेयवरणपक्षे तेषामनधिकारप्रदर्शनार्थं तथा त्रिचतुराद्यार्षेयाणामपि एकस्य द्वयोर्वा वरणेन नाधिकारः किंतु नित्यं आर्षेयवरणेनैवेति प्रदर्शनार्थं चेदमधिकरणमर्थवत्॥

**वचनाद्रथकारस्य०॥ ४४॥** ब्राह्मणाद्याधानस्य वसन्तादिकालावरुद्धत्वान्न तत्र वर्षाविधिसंभव इति शङ्कां निरा-कर्तुमाह—**रथकरणे निमित्त इति**। नैमित्तिकाद्वर्षाकालान्नित्यवसन्तादिबाध इति भावः। **नन्ववयवार्थापेक्षाद्योगाद्रू-**ढेर्बलवत्त्वान्न द्विजातिपरो रथकारशब्द इत्यत आह—**विद्वत्त्वादिति**। विद्याप्रयुक्तिभयाद्रूढिः परित्याज्येति भावः। अनेनात्रार्षेयवदविदुषोप्यसामर्थ्यादनधिकार इति प्रत्यवस्थानात्सङ्गतिः सूचिता। **ननु** वाक्यार्थविध्यापत्तेः न काल-विधिः किंतु श्रुत्यनुग्रहादाधानविधिरेव। किंच वसन्तादिवाक्यानां प्रापकत्वात्तद्वैषम्यायास्याप्याधानप्रापकत्वमेव नतु प्राप्ताधाने कालविधायकत्वमित्याशङ्क्य विद्वत्त्वादेवेदं सर्वं सोढव्यमित्याशयेनाह—**नाविदुष इति**। उपनयनपूर्वक-त्वतःसिद्धविद्याभावेऽपि 'न वचनस्यालभ्यं नामे'ति न्यायाद्वचनबलाद्विद्याकल्पनयाधिकारमाह—**वचनबलादिति**। त्रैव-र्णिके मन्त्रवर्णविरोधश्चेत्याह—**ऋभूणामिति**। ऋभुसौधन्वनापरपर्यायस्येत्यनेन 'माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयो-र्नृपात्। शूद्रायां करणो वैश्यात्'। 'माहिष्येण करण्यां तु रथकारः प्रजायत' इति प्रतिपादितो यो रथकारः न तस्यात्र ग्रहणं

---

१ कल्प्यते. २ विधानात्, विधायक. ३ विधानादेकवाक्यत्वं तदुप. ४ वर्षाभिधानमुत.

निषादस्थपत्यधिकरणम् ॥ १२ ॥

**स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥ [लिङ्गदर्शनाच्च ॥ ५२ ॥]**

**द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः ॥ कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत् ॥ १८ ॥**

'ऐन्द्रं वास्तुमयं चरुं निर्वपे'दिति प्रकृत्य श्रूयते 'एतया निषादस्थपतिं याजये'दिति । तत्र संशयः किं द्विजातिरेव यो निषादानामाधिपत्यं करोति तस्यात्राधिकारः, षष्ठीसमास एवायमुत निषाद एव यः स्थपतिस्तस्य कर्मधारयश्चायमिति । तत्र—'पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते ॥ तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ आहिताग्नेश्च यदि तु कर्मधारय इष्यते ॥ अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता ॥ तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते ॥ निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ नहि षष्ठी श्रुता येन तत्संबन्धी विधिर्भवेत् ॥ निषादपदमेवातः षष्ठ्यर्थे लक्षयेदिदम् ॥ कर्मधारयपक्षे तु न काचिदपि लक्षणा ॥ निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥ तेन श्रुतिबला-

---

ऋभूणां त्वेति मन्त्रवर्णस्य तस्मिन्नसमवेतत्वात् 'सौधन्वना ऋभवः सूरचक्षस' इति मन्त्रे सामानाधिकरण्यनिर्देशेन ऋभूणां त्वेतिमन्त्रस्य सौधन्वनपरत्वात् । अतः 'व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्यएवच । मारुषश्च विजंघश्च मैत्रः सात्वत एव-चे'ति प्रतिपादितस्य ऋभुसौधन्वसात्वताद्यपरनामधेयस्य रथकारजातिविशेषस्य 'छागो वा मन्त्रवर्णा'दितिन्यायेनात्र ग्रहण-मिति दर्शयति । इदमित्यनेन वसन्तादिवाक्यविहिताधानवैलक्षण्यं दर्शयति । तद्धि अग्निसंस्कारार्थं, इदं तु न संस्कारार्थं । रथकारस्याधानसद्भावेऽप्याधानमात्रोपक्षीणेनाधानविधिना क्रतुविधाकल्पनासंभवादविद्याभावेनोत्तरक्रत्वधिकारानुपपत्त्या अग्नीनां भाव्युपयोगराहित्येन संस्कारानर्हत्वात्, नहि प्राभाकरवदस्माभिः रथकारस्य क्रत्वधिकारोऽङ्गीक्रियते। तस्मादग्निगुण-कमर्थकर्मेदमाधानम् । तच्च विश्वजिन्न्यायेन कल्प्यफलमिति । सूत्रार्थस्तु—वचनाद्रथकारस्येदमाधानं तथास्याधानस्य सर्वत्रैवर्णिकाधानापेक्षया परिशिष्टत्वादत्रैवर्णिकरथकारस्यैवेदम् ॥

**स्थपतिर्निषादः स्यात्०** ॥ ५१ ॥ वास्तुमयं, वास्तुशाकबीजप्रकृतिकमित्यर्थः । **योगादेवेति** । अनेन पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिरिति प्रदर्शितम् । **अनाहिताग्नेरिति** । ब्राह्मणादिकर्तृकाधानासामर्थ्यादित्यर्थः । ततश्चाधानसाध्या-हवनीयादेश्चोदकप्राप्तस्य बाधः स्यादिति भावः । नच षष्ठीसमासे लक्षणादोषो मानाभावात् । नच विग्रहसमासयोरेकार्थ-त्वम् । पाणिनिना विभाषारम्भाज्ज्ञापितमितरथा विनापि विभाषारम्भं स्वस्वार्थप्रतिपादनाय व्याससमासयोः सिद्धेः विभाषारम्भोऽनर्थकः स्यादेकार्थत्वे तु समासेन विग्रहवाक्यस्य निवृत्तिर्माभूदिति तत्सार्थक्यम् । ततश्च राज्ञःपुरुष इति विग्रहे संबन्धप्रतीतेः समासेऽपि तत्प्रतीत्यर्थं लक्षणेति युक्तं । कर्मधारयेऽभेदस्येव वाक्यार्थविधयैव संबन्धस्य प्रतीत्युप-पत्तेः । अथ कर्मधारये विग्रहवाक्येऽपि अभेदो वाक्यार्थविधयैव प्रतीयते तत्राभेदवाचकशब्दाभावात् षष्ठीसमासे तु विग्रहवाक्ये संबन्धो न वाक्यार्थः किंतु षष्ठीश्रवणात्पदार्थ एव । अपदार्थसंबन्धश्च वाक्यार्थः । तेन तत्र संबन्धसंबन्धएव वाक्यार्थविधया प्रतीयते नतु संबन्ध एव । तथाच विग्रहवत्समासेऽपि संबन्धसंबन्धप्रतीतिसिद्ध्यर्थं लक्षणा । किंच नामा-र्थयोर्भेदेनान्वयस्य विभक्त्यर्थद्वारकत्वाद्विभक्त्यर्थसंबन्धोऽवश्यं लक्षणीय इति चेदेवमपि दधिपश्येत्यादाविव लुप्ताया एव विभक्तेस्तदर्थप्रतीत्युपपत्तेः । घटः कर्मत्वमानयनं कृतिरिति वाक्ये क्रियाकर्मभावेनान्वयाभावाद्विभक्त्या तदुपस्थितेरेव प्रयोजकत्ववद्दधिपश्येत्यादौ लुप्ताया एव विभक्तेः द्वितीयायाः स्वार्थबोधकत्वस्वीकारे प्रकृतेऽपि राजासंबन्धः पुरुष इत्य-न्वयाभावेन संबन्धस्यापि विभक्त्युपस्थितेरेव स्वीकार्यत्वान्नच समासे विभक्तिलोप एवासिद्धः । 'एकदेशविकारे हि नित्यत्वं नोपपद्यत' इति शाब्दिकमुख्यसिद्धान्तात् । तथाच रेखागवयन्यायेनानुशासनाय कल्पिते प्रक्रियावाक्य एव विभक्तिलोप इति समासे लुप्तविभक्तेरेवाभावान्न तस्याः संबन्धोपस्थापकत्वमिति वाच्यम् । एवंसति तुल्यन्यायतया दधिपश्येत्यादावपि लुप्तविभक्त्यसंभवाल्लक्षणा स्याद्यदि च तत्र लुप्तविभक्त्यसद्भावेऽप्यध्याहृतविभक्तिसंभवान्न लक्षणा तदा समासेप्यध्या-हृतविभक्तिरेवास्तु, नीलं च तदुत्पलं चेति समुच्चयवाचिचशब्दश्रवणेनाप्यन्यत्र समुच्चयस्याभेदपर्यवसानेन कर्मधारयवि-ग्रहवाक्येऽपि अभेदः पदार्थ एव, निपातत्वेन चशब्दस्यावाचकत्वेऽपि तदुपसंदानेन तत्समभिव्याहृतपदान्तरस्य तत्र शक्तेरवर्जनीयत्वात् पर्वतो वह्निमान् दण्डी पुरुष इत्यादौ मत्वर्थोपस्थितसंबन्धवद्विग्रहवाक्ये षष्ठ्युपस्थितसंबन्धस्यापि संस-र्गमर्यादयैव भानं चोपपद्यत इत्यलमतिप्रसङ्गेन । **निषादपदमिति** । 'समर्थः पदविधि'रिति समासः सामर्थ्यापेक्षः । सामर्थ्यं चैकार्थीभावलक्षणं तच्च यदि निषादशब्देनापि स्थपतिरेवाभिधीयते तदैवं संभवति, निषादस्यैवाभिधाने भिन्नार्थ-त्वेनैकार्थीभावाभावात् । तेन सामर्थ्यसिद्ध्यर्थं निषादशब्दः षष्ठीसमासे स्थपतिलक्षकः स्यात् । नचैवं षष्ठीसमासोच्छेदः । पदद्वयस्यापि सामानाधिकरण्येन कर्मधारयप्रसङ्गादिति वाच्यम् । यत्र षष्ठ्यर्थलक्षणया सामानाधिकरण्यं तत्र षष्ठीसमासः ।

वृद्धो नाहिताग्निश्च सन्नपि ॥ निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥' इति श्रीमहोपाध्याय-पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्य प्रथमः पादः ॥ १ ॥

## षष्ठाध्याये द्वितीयः पादः ।

सत्रे प्रत्येकस्य सत्रिणः फलसंबन्धाधिकरणम् ॥ १ ॥

**पुरुषार्थैकसिद्धत्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥ [अपि चोत्पत्तिसंयोगो यथा स्यात्सत्त्वदर्शनम्, तथाभावो विकल्पे स्यात् ॥ २ ॥]**

सत्रे फलांशः प्रत्येकं सर्वं वाद्यः समूहके ॥ कर्तृत्वादन्त्य एकैकस्यापि तत्त्वाद्बहुत्वतः ॥ १ ॥

अनेककर्तृकेषु कर्मसु 'ऋद्धिकामाः सत्रमासीर'न्नित्यादिषु किमेकैकस्य कृत्स्नं फलं भवति ततश्च प्रत्येकं कृत्स्नफलकामानामधिकारः उत समुदायस्य कृत्स्नं फलं प्रत्येकं तु फलावयवः । ततश्च फलावयवकामानामधिकार इति संशयः । तत्र—'समुदायस्य कर्तृत्वात्तस्य कृत्स्नफलान्वयः ॥ फलावयवयोगः स्यात्प्रत्येकं समुदायिनाम् ॥' यद्यपि कामपदे बहुत्वमुद्देश्यगतत्वादविवक्षितमिति कामिनः प्रधानभूतानुद्दिश्य गुणत्वेन विधीयमानं कर्म प्रतिप्रधानावृत्तेरेकैकस्यैव स्वफलं साधयतीति प्रतिभाति तथाप्याख्यातोपात्तस्य कर्तृबहुत्वस्योपरितनाधिकरणन्यायेन विवक्षितत्वात्संहत्य कामिभिः कर्तव्यम् । नचैकस्मिन्कर्मणि बहूनां प्रत्येककर्तृत्वं संभवति । एकेन कृतेऽपरस्य कर्तृत्वायोगादतः समुदितानां व्यासज्यकर्तृत्वं कर्तृगामि च फलमतस्तदपि समुदायस्यैव । तदंशं तु समुदायिनः प्राप्नुवन्तीत्यवयवकामानामधिकार इति प्राप्तेऽभिधीयते—'समुदायस्य कर्तृत्वं यद्यपि स्यात्तथापि तु ॥ प्रत्येकमधिकारित्वात्तथैव फलमाप्नुयुः ॥' यद्यथावगम्यते तत्तथैवाङ्गीकर्तव्यम् । इह चाधिकारावस्थायां साहित्यस्याविवक्षितत्वात्प्रत्येकमधिकारः प्रतीयते कर्तृत्वं च सहितानाम्, अतः संहत्य प्रयुक्तं कर्म

---

यत्र तु षष्ठ्यर्थलक्षणांविनैव सामानाधिकरण्यं तत्र कर्मधारय इत्याश्रयणात् । एवं च समासे षष्ठ्यभावात्समासानन्तरभूतस्य च विग्रहे प्रयोगायोगात् राजा चासौ पुरुष इत्येव विग्रहः । राज्ञः पुरुष इति व्याख्यातॄणां विग्रहप्रवर्तनं तु अर्थविस्पष्टीकरणार्थमिति भावः । **अज्ञ इति** । अध्ययनविधिसिद्धज्ञानरहित इत्यर्थः । उपायान्तरेण ज्ञानं संपाद्याधिक्रियते इति भावः । निषादो नाम ब्राह्मणाच्छूद्रायामुत्पन्नः सतु शूद्रधर्मयुक्तः । अत एवापस्तंबाचार्यैः 'हविष्कृदाधावे'ति शूद्रस्येत्ययं निषाद एव शूद्रपदेन व्यवहृतः । एवंच शूद्रयाजनस्य निषिद्धत्वादतिक्रान्तनिषेधानामेव याजकत्वं बोध्यम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य प्रथमः पादः ॥ १ ॥**

**पुरुषार्थैकसिद्धत्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥** पूर्वस्मिन्पादे स्वर्गकामनिषादस्थपत्यादिभिरधिकारिनिरोपस्थापकशब्दैरधिकारो निरूपितः । इहत्वाख्यातेनाधिकारो निरूप्यते । आख्यातं चानवगतसंख्यामात्रप्रतिपादकं तद्वारा नरप्रतीतिर्विलम्बितेति पादान्तरत्वमानन्तर्यं चेत्याहुः । **नन्वे**कस्य कृत्स्नं फलं भवत्युत फलावयव इति विचारो निष्फलः उभयथापीतरेतरयुक्तानामेवानुष्ठातृत्वेनानुष्ठानविशेषाभावादिति शङ्कां निराकर्तुं कोऽत्युपन्याससमय एव फलभेदमाह—**ततश्चेति । समुदायस्येति** । समुदितानामित्यर्थः । यथाश्रुते समुदायस्यैकत्वेन तत्राख्यातोपात्तबहुत्वानुपपत्तेः । **ननू**द्देश्यसाहित्यस्याविवक्षितत्वान्न समुदितानां फलं किंतु प्रत्येकमेवेत्याशङ्कते—**यद्यपीति** । उद्देश्यसाहित्यस्याविवक्षितत्वेऽप्युपादेयकर्तृसाहित्यबलादर्थात्सहितानामेव फलमिति परिहरति—**तथापीति** । ननु कर्तृबहुत्वाभ्युपगमे प्रत्येकमेव कर्तृत्वं पर्याप्तं स्यात्, सहितानां व्यासज्यकर्तृत्वे च कर्त्राश्रयद्रव्यबहुत्वेऽपि कर्तृबहुत्वाभावादित्याशङ्क्य बहूनां प्रत्येकं कर्तृत्वे प्रयोगभेदापत्त्या एकस्मिन्प्रयोगे तदनुपपत्तेरिह कर्तृरूपबहुत्वासंभवात्कर्त्राश्रयद्रव्यबहुत्वमेवाख्यातार्थो वाच्यस्तेन व्यासज्यकर्तृत्वमुपपन्नमित्याह—**नचेत्यादिना** । ननु व्यासज्यकर्तृत्वेऽपि प्रत्येकमेव फलं किं न स्यादित्याशङ्क्य येन रूपेण कर्तृत्वं तेन रूपेण फलान्वयस्य स्वारसिकत्वात् कर्तृवत्समुदितान्वय्येव फलमित्याह—**कर्तृगामीति** । प्रथममभ्युपगमवादेनाह—**समुदायस्येति** । ननु समुदितरूपेण कर्तृत्वे सत्येकैकस्याकर्तुरधिकारानुपपत्तेरधिकारोऽपि समुदितरूपेण स्यादित्यत आह—**यद्यथेति । तेष्वेवेति** । कामशब्देन कृत्स्नफलकामानामेवाधिकारः साहित्याविवक्षया प्रतीयते इति प्रथमावगत-

---

१ सिद्धित्वात्. २ मुद्देश्यपरत्वात्.

प्रत्येकं फलं साधयतीत्यभ्युपगन्तव्यम्। नचैवमत्यन्ताकर्तृगामित्वं तेष्वेव व्यासज्यवृत्तिकर्तृत्वं प्रत्येकवृत्तिफलमिति प्रकारभेदमात्रम्।—'कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते॥ कर्तृगामि बहुत्वं हि द्रव्यगाम्यन्यथा भवेत्॥' कर्तृबहुत्वं साक्षादभिधीयते न कर्तृरूपाश्रयद्रव्यबहुत्वं व्यासज्यवृत्तिनि कर्तृत्वे न कर्तॄणां बहुत्वं स्यात् किंतु द्रव्यमात्रस्य तत्र कर्तृबहुत्वाभिधानमनञ्जसं स्यात्। संभवति च सर्वेषां प्रत्येकं युगपत्कर्तृत्वं पर्याये हि विरोधः स्यात्। एकेन कृते परस्य कर्तृत्वायोगान्नयौगपद्येन। तस्मात्प्रत्येकमधिकारः॥

दर्शादौ कर्त्रैक्यनियमाधिकरणम्॥ २॥

**प्रयोगे पुरुषश्रुतेर्यथाकामि प्रयोगे स्यात्॥ ३॥ [प्रत्यर्थं श्रुतिभाव इति चेत्॥४॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुः प्रधानभूतत्वात्॥ ५॥ अपि वा कामसंयोगे संबन्धात्प्रयोगोऽपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत्॥ ६॥ अन्यस्य स्यादिति चेत्॥ ७॥ अन्यार्थेनाभिसंबन्धः॥ ८॥ फलकामो निमित्तमिति चेत्॥ ९॥ न नित्यत्वात्॥१०॥ कर्म तथेति चेत्॥ ११॥ न समवायात्॥१२॥]**

**दर्शे कर्त्रैक्यनियमो नास्त्युतास्ति न कामिनि॥ उद्देश्ये ग्रहवत्संख्या यतो नैव विवक्षिता॥ २॥**
**आख्यातोपात्तसंख्याऽत्र विधेयस्य विशेषणम्॥ विवक्षितातः सेत्यत्र कर्त्रैक्यं विनियम्यते॥ ३॥**

दर्शपूर्णमासादिषु किमेको द्वौ बहवो वा कर्तारः उत एक एवेति संशयः। तदर्थं च किमाख्यातोपात्ता कर्तृसंख्या विवक्षिता नेति चिन्त्यते। तत्र—'फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात्॥ उद्देश्यगामिनी संख्या ग्रहवन्न विवक्षिता॥' स्यान्मतं, यद्यपि कामपदगता संख्या उद्देश्यगतत्वात्तद्गतलिङ्गवद्ग्रहैकत्ववच्चाविवक्षिता तथाप्याख्यातोपात्ता संख्या विधीयमानक्रियाक्षिप्तगुणभूतकर्तृगामित्वाद्विवक्षितेति। तदसत्। अविधेयत्वात्क्रियायाः यागेन स्वर्गमाप्नुयादित्येतावदुच्यते नानुष्ठानं तदर्थप्राप्तम्। स्वर्गप्राप्तौ च पुंसः प्रधानत्वादविवक्षिता संख्या यदि स्वर्गं कुर्यादित्युच्येत ततोऽन्योऽपि

---

प्रत्येकाधिकारबलात्कर्तृत्वाश्रयगामित्वमात्रं फलस्य स्वीकार्यं नतु येन रूपेण कर्तृत्वं तेन रूपेण तथात्वमिति भावः। इदानीं वस्तुगत्या पक्षान्तरमाह—**कर्तृत्वमपिचेति**। नन्वाख्यातवाच्यं कर्त्रधिष्ठानबहुत्वमेव किं न स्यादित्यत आह—**कर्तृबहुत्वमिति**। 'लः कर्मणि चे'ति शास्त्रस्य द्व्येकयोरित्यादिशास्त्रस्य चैकवाक्यतयाख्यातानां कर्तृसंख्यावाचित्वं नतु कर्त्राश्रयद्रव्यसंख्यावाचित्वमिति भावः। **संभवतिचेति**। अध्वर्युणा प्रक्षिप्यते यद्द्रव्यं तत्र सर्वेषामंशाः सन्ति स्वस्वांशत्यागे च सर्वेषां स्वातन्त्र्यमेवेत्येकस्मिन्नेव प्रयोगे प्रत्येकं कर्तृत्वं न विरुद्धमित्यर्थः। एवंचैकस्मिन्नेव प्रयोगे प्रतिप्रधानावृत्तिन्यायेन प्रत्येकं फलावश्यंभावान्न योगसिद्ध्यधिकरणन्यायेनाप्यत्र फलस्यैक्यं शङ्कनीयमित्युपसंहरति—**तस्मादिति**। सूत्रार्थस्तु—तस्य तस्य पृथगधिकारः स्यात् पुरुषार्थस्य फलस्यैकसिद्धत्वात् प्रत्येकसिद्धत्वादिति॥

**प्रयोगे पुरुषश्रुतेः०॥ ३॥ फलार्थिनमिति**। 'स्वर्गकामो यजेते'त्यनेन यः स्वर्गं प्राप्तुमिच्छति स यागेन तं प्राप्नुयादित्येवं स्वर्गार्थिनं पुरुषंप्रति यागेन तत्प्राप्तिरुपदिश्यते। तत्र च पुरुष उद्देश्य एव न गुणभूतः। एवंच गुणभूतपुरुषस्यैवाभावादाख्यातोपात्तापि संख्या प्रधानपुरुषगामिन्येव वाच्या, प्रधानगामिनी च संख्या ग्रहैकत्वन्यायेन न विवक्षितुं शक्येति द्वयोर्बहूनां वाधिकार इत्यर्थः। **ग्रहवदिति**। सप्तम्यन्ताद्वतिः। ग्रह इवेत्यर्थः। उक्तमेव श्लोकाशयं विवरीतुं यथाश्रुतार्थावलम्बेन शङ्कते—**स्यान्मतमिति**। **विधीयमानेति**। विधीयमाना भावनाख्या क्रिया तया स्वनिर्वृत्त्यर्थमाक्षिप्तो यो गुणभूतः कर्ता तद्गामिनी संख्या उपादेयगतत्वाद्विवक्षितेत्यर्थः। भवेद्भावनाविधौ तद्गुणभूतकर्तृसंख्याविवक्षा, स एव त्वसिद्धः स्वर्गप्राप्तिपरत्वाद्वाक्यस्येति श्लोकाशयं विवृण्वन्परिहरति—**तदसदिति**। नन्वनुष्ठानापरपर्यायभावनाविध्यभावेऽनुष्ठानमेव न स्यादसति चानुष्ठाने स्वर्गप्राप्त्यसंभवाद्वाक्यमेवानर्थकं स्यादित्यत आह—**तदिति**। यागलक्षणसाधनानुष्ठाने फलप्राप्त्यनुपपत्तेरर्थादेवानुष्ठानं सिध्यतीत्यर्थः। **अविवक्षितेति**। एवंच यथापूर्वत्रोद्देश्यगतत्वेन साहित्यमविवक्षितं एवमिहापि संख्येति प्रत्यवस्थानात्सङ्गतिः। **नन्वा**ख्यातस्य भावनावाचित्वात् श्रुतभावनाविधिपरित्यागेनाश्रुतप्राप्तिपरत्वकल्पनमनुपपन्नमित्यत आह—**यदीति**। श्रुतानुपपत्तेः न श्रुतार्थपरत्वमिति भावः। अस्तु श्रुत्यनुग्रहाय प्रत्य-

---

१ यतीति स्वीकर्तव्यम्. २ कर्त्राश्रय. ३ वर्तिनिच. ४ नत्वर्थप्राप्तम्. ५ तदा अन्यस्यापि स्वर्गः स्यान्न कर्तुः यद्यपि.

स्वर्गमाप्नुयान्न कर्त्तैव । यद्यपि स्वर्गं कुर्यादित्युच्यते तथाप्यविधेयैव क्रिया यो हि यदिच्छति स तत्करोति इत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव तां प्रत्ययेनानूद्य प्रकृत्यर्थो यागादिः करणतया विधीयते। प्रत्ययार्थश्च कर्तृसंख्या तेनासावनुवाद्यगतत्वादविवक्षिता। नह्येकेन प्रत्ययेन फलकामस्य रागप्राप्तां फलभावनामुद्दिशता कर्तृसंख्याभावनां यागं वा प्रत्युपादातुं शक्यते वैरूप्यप्रसङ्गात्। अथ मतं यद्यपि यागाननुरक्ता फलक्रिया प्राप्तैव तथापि यागक्रियाया अप्राप्तत्वेन विधेयत्वात्तद्विशेषणभूता संख्या विधेयगतत्वाद्विवक्षितेति। तदयुक्तम्। यद्यपि यागानुरक्ता क्रिया न प्राप्ता तथापि क्रियास्वरूपं तावत्प्राप्तमेव। तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति। नहि फलक्रियातः क्रियान्तरं यागेनानुरज्यते। सा चेत्प्राप्तैव तद्विशेषणं च संख्या न साक्षाद्यागगता प्रत्ययार्थत्वात्तस्मादविवक्षितेति। अत्रोच्यते—'रागप्राप्ता फलप्राप्तिर्न सा शब्देन बोध्यते॥ प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत्॥ उपग्रहविशेषाच्च नाकर्तुः फलसङ्गतिः॥ विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसंभवः॥ स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते॥ यागादियुक्ता संख्या च तद्गतत्वाद्विवक्षिता॥ फलक्रियानियोगेन नहि पुंसां फलार्थिनाम्॥ रागप्राप्ता यतो ह्येषा शब्देन न विधीयते॥' अर्थिपदेन तावदर्थितामात्रमुच्यते न प्रवृत्तिः। आख्यातमपि यच्छब्दाद्युपबन्धाभावाद्यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते। ततश्च यः स्वर्गो मे स्यादित्येवं कामयते स तं यागेन भावयेदिति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते। नचावश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता, येन बलात्तत उत्तार्य विधिर्यागानुरागमात्रपरत्वेनैव व्यवस्थाप्येत। नच फलकामः प्राग्वचनादिदं जानाति प्रवृत्तस्य मे स्वर्गः सिद्ध्यति न त्वप्रवृत्तस्य दैवात्कारणान्तराद्वेति। तदज्ञानात्स्वर्गप्राप्तिमभिलषंस्तद्विषयप्रवृत्त्यप्रवृत्त्योर्मध्यस्थ उदास्ते। यदा तु वचनमस्य यागादिविशिष्टं व्यापारं विधत्ते तदा तस्येप्सितोपायतां विधिप्रामाण्यादवगम्य तत्र

---

यस्य भावनापरत्वं तथापि तद्विध्यभावान्न संख्या विवक्षितेत्याह—**यद्यपीति**। तथापि संख्याविधिः किं न स्यादित्यत आह—**प्रत्ययार्थश्चेति**। तदेवोपपादयति—**नहीति**। **वैरूप्येति**। प्रत्ययस्यैकव्यापारेणोद्देशोपादानासंभवेनावृत्त्यवश्यंभावादिति भावः। न यागभाव्यकक्रिया यागक्रिया तस्या अर्थादेव सिद्ध्या त्वयापि प्रत्ययेन तद्विध्यनङ्गीकारात् किंतु फलस्य साक्षात्कृतिगोचरत्वाभावात्फलक्रियैव यागानुरक्ता यागक्रियावाच्या। सा च न विधेयेति परिहरति—**तदयुक्तमिति**। क्रियाविध्यभावेऽपि याग एव विशिष्टो विधीयतामित्यपि न वाच्यम्। यागस्य संख्यावैशिष्ट्यासंभवादित्याह—**तद्विशेषणमिति**। अस्मिन्नपि पक्षे पूर्वोक्तवैरूप्यं बोध्यम्। लिप्सासूत्रोक्तन्यायेन फलप्राप्तेरविधेयत्वाद्यागेन स्वर्गं प्राप्नुयादित्यर्थवर्णनमनुपपन्नमित्याह—**रागेति**। प्रत्ययस्य लक्षणातोपीत्याह—**प्रत्ययश्चेति**। भावनाविधिपक्षेऽन्योऽपि स्वर्गमाप्नुयादित्युक्तं दोषमुद्धरति—**उपग्रहेति**। यजेतेत्यात्मनेपदात्क्रियाफलस्य कर्तृगामित्वादित्यर्थः। यत्र तर्ह्यात्मनेपदं नास्ति 'सौर्यं चरुं निर्वपे'दित्यादौ तत्रान्यस्य स्यादिति चेत्तत्राप्याधानगतात्मनेपदादेव फलस्य कर्तृगामित्वसिद्धिः। आधानस्य हि यत् साक्षात्फलमग्निगतादृष्टरूपं तस्य कर्तृगामित्वासंभवादाहवनीयाद्यग्निसाध्यक्रतुफलस्य कर्तृगामित्व एवाधानवाक्यगतात्मनेपदपर्यवसानादेव दर्शादिष्वपि फलस्य कर्तृगामित्वसिद्धेः यजेतेत्यात्मनेपदं क्रतुगतानग्निसाध्यगोदोहनादिगुणफलस्य कर्तृगामित्वार्थमिति भावः। **नन्वेवमपि** यत्र नात्मनेपदं नाप्यग्निसाध्यत्वं जपादिषु तत्र फलस्य कर्तृगामित्वं न स्यादित्यत आह—**विधेरिति**। चेतनप्रवर्तनात्मको हि विधिः। नचान्यफलसाधने कश्चित्प्रवर्तयितुं शक्यत इति विधित एव सर्वत्र फलस्य कर्तृगामित्वमित्यर्थः। एवंच यजेतेत्यादावात्मनेपदं विधिप्राप्तानुवादकमेवेति भावः। क्रियाविधौ च तदाक्षिप्तकर्तुः परिच्छेदापेक्षायां तत्परिच्छेदकत्वेन संख्या विवक्षितेत्याह—**संख्या चेति**। **अर्थिपदेनेति**। यद्यपि पूर्वपक्षिणा प्रत्ययेनैव क्रियानुवादाङ्गीकारात्स्वर्गकामपदेन तदनुवादोऽनङ्गीकृतस्तथाप्यर्थिपदवत्प्रत्ययस्यापि तदनुवादकत्वमत्यन्तासंभावितमिति द्योतनार्थमिदं बोध्यम्। **मे स्यादिति**। आत्मार्थं स्वर्गकामस्यैव स्वरसतः स्वर्गकामपदात्प्रतीतेरिति भावः। एवंच स्वर्गकामपदस्वारस्यादपि नान्यस्य फलप्रसक्तिरिति सूचितम्। यो हि यदिच्छेदिति न्यायेनाप्रवृत्तप्रवर्तनप्राप्तिमुक्तां निरस्यति—**नचेति**। **नत्विति**। अप्रवृत्तस्यैव मे वृष्ट्यादिवत् दैवाद्वा पुरुषान्तरीययत्नरूपकारणाद्वा न सिद्ध्यतीति न जानातीति पूर्वेण संबन्धः। यो हि यदिच्छतीति न्यायश्च प्रवृत्तस्यैव सिद्ध्यति नाप्रवृत्तस्येति निश्चयवद्विषय इति

---

१ करणं विधीयते. २ यद्यपि फलक्रिया. ३ प्रतिग्रहविशेषाच्च.

प्रवर्तेते। तस्माद्विधेयैव भावना यागादिविशिष्टा संख्या च तद्विशेषणमिति विवक्षितैव। लिङ्गं तु कामपदगतमुद्देश्यविशेषणत्वादविवक्षितमिति विशेषः। ये तु स्वर्गकामस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते वेदैवासौ मयैवैतत्कर्तव्यमिति। 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'त्यादिभाष्यवार्तिकयथाश्रुतग्रहणाद्भावनाया अविधानमाहुस्तेषामनूद्यमानविशेषणस्याविवक्षितत्वादिदमधिकरणं विरुध्यते। सर्ववाक्येषु च क्रियामविधाय गुणमात्रविधानात्। चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्येवमनेकगुणविधानं कचिदपि न स्यात्। ततश्च 'रेवतीषु वारवन्तीयं कृत्वा पशुकामो ह्येतेन यजेते'त्यादिषु प्राप्तभावनोद्देशेन यागस्य रेवतीवारवन्तीयसंबन्धस्य च विधानाद्गुणविधिपक्षवद्वाक्यभेदः स्यात्। नच यागविशेषणत्वं गुणानां येन तस्यैकस्य विशिष्टस्य विधानाद्वाक्यभेदः परिह्रियेत। सर्वेषां भावनागामित्वात्। यथोक्तं—'धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणासंबध्यभावनासंबद्धानामुत्तरकालं परस्परोपकारित्व'मिति सप्तमनवमाद्ययोर्वक्ष्यतीति। तस्माद्भावनाविधिकृतमेवानेकगुणविधानं प्रस्तुतं चाधिकरणं समर्थनीयम्। यथाह—यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैवगृह्यते तदार्थाद्विशेषणविधौ सत्यवाक्यभेदः। यदा तु तद्विशेषणार्थं तदानेकविशेषणयोगे सति यदर्थं विधित्वं तस्यैवैकस्य विधानं नेतरस्येति वाक्यभेदः स्यात्। अल्पं चेदमुच्यते सर्वत्र भावनाविध्यभिधानात्। तस्माद्वेदैवासौ मयैवैतत्कर्तव्यम्। 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'त्यादिभाव्यस्वरूपप्राप्त्यभिप्रायं न भावनाभिप्रायमिति व्याख्येयम्। अतो भावनाया विधेयत्वात्तद्विशेषणभूता कर्तृसंख्योपादेयगतत्वाद्विवक्षितेति सिद्धम्॥

आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम्॥ ३॥

**प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात्॥ १३॥ [फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते॥ १४॥ नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात्॥ १५॥]**

**असमाप्यं समाप्यं वा काम्यं कामे निवर्तिते॥ आद्यः प्रयोजनाभावादन्त्यो निन्दादिसंश्रवात्॥ ४॥**

**काम्यं कर्म कामार्थेन प्रक्रान्तं वीतायां फलेच्छायामवाप्ते वा फले किं नियोगतः समापनीयं**

---

भावः। **नन्वे**वमाख्याते गुणभूतः पुरुषः स्वर्गकामपदेऽपि गुणभूतएव स्यादितरथा भिन्नार्थप्रवृत्तित्वेन सामानाधिकरण्यानुपपत्तेरेवंच लिङ्गमपि विवक्षितमित्यत आह—**लिङ्गं त्विति**। पदार्थपूर्वकत्वाद्वाक्यार्थस्य प्रथममाख्याते पुरुषस्य गुणभावे स्वर्गकामपदे च प्राधान्ये चावगते तदविरोधेनैव सामानाधिकरण्यस्य वाच्यत्वात् सत्यपि गुणप्रधानभावेन भिन्नार्थत्वे स्वर्गकामपदेनानियतसंख्याकत्वेन प्राप्तस्याख्यातेन नियतसंख्याया विशेषणे सति कर्त्रधिकारिणोरैक्यादाख्यातोपात्तसंख्यार्थादधिकारिणमप्यवच्छिनत्तीत्येवं विशेषणविशेष्यभावादुपपन्नं सामानाधिकरण्यम्। यथा 'पुरोधाकामो ब्राह्मणो बृहस्पतिसवेन यजेते'त्यत्र गुणप्रधानभावेन प्रकारभेदे सत्यप्यार्थिकैकार्थवृत्तितया पुरोधाकामपदब्राह्मणपदयोः सामानाधिकरण्यमेवमिहापि। ततश्च स्वर्गकामस्य प्राधान्याल्लिङ्गमविवक्षितमित्यर्थः। वार्तिकव्याख्यातॄणामेवान्येषां मतमनूद्य निराकरोति—**येत्विति। चोदिते हीति**। वाक्यान्तरेण चोदिते कर्मणि गुणानां कर्मार्थत्वात्परस्परार्थत्वाभावेन परस्परवैशिष्ट्याभावे सति एकगुणविशिष्टगुणान्तरविध्यसंभवात्तस्य तस्य गुणस्य कर्तव्यत्वमुपदिश्यत इति पौर्णमास्यधिकरणगुणसूत्रोक्तन्यायेनेत्यर्थः। इष्टापत्तिमाशङ्क्याह—**ततश्चेति। वाक्यभेदः स्यादिति**। ततश्च वाक्यभेदप्रसङ्गेन प्रकृतेऽग्निष्टुति फलाय गुणविध्यसंभवाद्गुणविशिष्टकर्मान्तरविधिरिति रेवत्यधिकरणसिद्धान्तः प्रत्युद्धृतः स्यादिति भावः। **ननु** भावनाविध्यभावेऽपि गुणविशिष्टयागविध्युपपत्तेर्नोक्तदोष इत्यत आह—**नचेति**। यागस्यापि धात्वर्थस्य क्रियात्वेन गुणतुल्ययोगक्षेमत्वान्न तदीयविशेषणत्वं गुणानामिति भावः। **अवाक्यभेद इति**। विशिष्टभावनागोचरस्य विधेर्विशेषणेषु पृथग्व्यापाराभावादिति भावः। **वाक्यभेद इति**। इतरस्य विध्यर्थं विध्यावृत्त्यवश्यंभाव इति भावः। **अभिधानादिति**। वार्तिकभाष्ययोरिति भावः। सूत्रार्थस्तु—प्रयोगे पुरुषमात्रश्रवणात्तस्य गुणभावाश्रवणात्संख्याविवक्षाया अभावात् यथाकामि प्रयोगे स्यादिति॥

**प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात्॥ १३॥** पूर्वत्र क्रियाफलोपायत्वेन कामिनो विधीयत

---

१ कामो यजेतेत्या. २ विशेषत्वं.

नेति चिन्त्यते—'तत्राभीप्सितसिद्ध्यर्थं साधनेषु प्रवर्तते॥ सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्तते॥' यदि मन्येत न फलार्थं कर्म किंतु फलकामनायां निमित्ते कर्मैव कर्तव्यं, तस्य हि भाव्यतापदंश्रुत्यावगम्यते वाक्यात्कामस्य तत्र दुर्बलं। नचोपक्रममात्रेण चोदितं कृतं भवति, समाप्तेः शास्त्रार्थत्वात्। नच पूर्वाधिकरणोक्तरीत्या नित्यानित्यसंयोगविरोधः काम्यानां नित्यत्वाभावात्। अतः काम्ये निष्पन्ने निवृत्तेऽपि तन्निमित्तं कर्म कर्तव्यमिति। नैतदेवम्। नह्यपुरुषार्थं कर्म भाव्यं भवतीत्युक्तम्। नच फलान्तरं कल्पयितुं शक्यं। श्रुतहान्यश्रुतकल्पनयोरन्याय्यत्वात्। शिष्टविगर्हणं त्वनृतवादनिमित्तम्। नच परमार्थतोऽनृतमस्ति। शास्त्रार्थस्य संकल्पितत्वात्। निवृत्तायां च कामनायामशास्त्रार्थत्वात्। तस्मादसमापनीयमिति प्राप्ते ब्रूमः—'नहि संभावनामात्राद्भ्रान्तिः कल्पयितुं क्षमा॥ सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात्॥ तथाच निन्दावचनं प्रायश्चित्तं च श्रूयते॥ तस्मात्क्रतुमुपक्रान्तं नियोगेन समापयेत्॥' तैत्तिरीया हि समामनन्ति 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते। त्रैधातवीयेन यजेत न देवताभ्य आवृश्च्यत' इति॥

लौकिककर्मणि समाप्त्यनियमाधिकरणम्॥ ४॥

**लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम्॥ १६॥ [अपराधेऽपि च तैः शास्त्रम्॥ १७॥ अशास्त्रा तूपसंप्राप्तिः, शास्त्रं स्यान्न प्रकल्पकम्, तस्मादर्थेन गम्येत, अप्राप्ते शास्त्रमर्थवत्॥ १८॥]**

**समाप्यमसमाप्यं वा लौकिकं शास्त्रकल्पनात्॥ आद्यो नो गृहकृष्यादौ शास्त्रकल्पकवर्जनात्॥ ५॥**

रथगृहकर्मादिप्रक्रान्तं किमवश्यं समाप्यं नेति संशये तेषामपि शास्त्रीयत्वाद्विहितमुपक्रान्तं निय-

इत्युक्तं तर्हि सिद्धे फले तदिच्छाविच्छेदे वा फलोपायानपेक्षणान्न क्रियानुष्ठानमिति प्रत्यवस्थानात्सङ्गतिः। किं प्रवर्तते। किमिति प्रवर्तेत इत्यर्थः। सिद्धान्तैकदेशिमतं शङ्कते—**यदीति**। **समाप्तेरिति**। आरम्भमात्रस्य शास्त्रार्थत्वे क्वापि समाप्तिर्न स्यादतः फलकामनायां निमित्ते समाप्तिरेव शास्त्रेण साक्षाद्विधीयते आरम्भमध्ययोस्तु अर्थात्प्राप्तिः। तौ विना तत्पश्चाद्भाविसमाप्त्यनुष्ठानासंभवादित्यर्थः। **ननु** कामनाया निमित्तत्वं पूर्वाधिकरण एव 'फलकामो निमित्तमितिचे'दित्यनेन सूत्रेणाशङ्क्य नित्यत्वादित्यनेन परिहृतमित्याशङ्क्य पूर्वत्र दर्शपूर्णमासादेर्नित्यस्यानित्यकामनानिमित्तकत्वं न संभवति नित्यानित्यसंयोगविरोधादिति हि परिहृतमिह तु 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम' इत्यादीनां नित्यत्वाभावात् नित्यानित्यसंयोगविरोधाप्रसक्तेर्नैमित्तिकत्वं न विरुद्धमित्याह—**नचेति**। नन्वेवमपि कामनानिवृत्तौ निमित्ताभावान्न कर्तव्यमत आह—**अत इति**। गृहदाहादिवदनुष्ठानसमयासत्वेपि निष्पत्तिमात्रेण निमित्तत्वं कामनाया उपपन्नमिति भावः। **उक्तमिति**। स्वर्गकामाधिकरण इति शेषः। **अनृतवादेति**। यक्ष्य इति संकल्प्यायं नेष्टवान् तस्मादनृतवाद्ययमित्येवंरूपं भ्रान्तिनिमित्तमित्यर्थः। भ्रान्तिमेवोपपादयति—**नचेति**। **निवृत्तायां चेति**। कामिनं प्रति फलोपायतया कर्मविधिः नत्वकामिनंप्रति। तेन कामनायां सत्यामेव तदनुष्ठानं शास्त्रार्थो नासत्यामित्यर्थः। **नहीति**। शास्त्रार्थेऽत्यन्तावहितचित्तानां शिष्टानां न शास्त्रार्थगोचरा भ्रान्तिः कल्पनार्हा तथापि यदि भ्रमप्रमादादेः पुरुषेषु संभावनामात्राद्भ्रान्तिः कल्प्यते तर्हि सर्वस्मृत्याचाराणामपि भ्रान्तिमूलत्वादप्रामाण्यं स्यादतो गर्हारूपशिष्टाचारादसत्यामपि कामनायां समाप्तिशास्त्रानुमानात्समापनीयमेवेत्यर्थः। एवंच निष्फलस्य कर्मणोऽनुष्ठानासंभवाद्वीतायां च स्वर्गादिफलेच्छायां तत्फलासंभवान्नित्यकर्मवत्पापक्षय एवात्रापि फलम्। स्पष्टं चेदमुत्पत्त्यधिकरणे टुप्टीकातन्त्ररत्नयोरिति ध्येयम्। निन्दाप्रायश्चित्ते क्रमेण दर्शयति—**तैत्तिरीया हीति**। आवृश्च्यते द्रुह्यतीति यावत्। सत्यामेव स्वर्गादिफलेच्छायां दैवान्मानुषाद्वा विघातात्यागाकरणमात्रविषयतया तयोर्निन्दाप्रायश्चित्तयोः संकोचे नास्ति प्रमाणमिति भावः। सूत्रार्थस्तु—प्रक्रमात्समाप्तिर्नियम्येतारम्भस्य क्रियानिमित्तत्वात्क्रियायाश्च समाप्तिपर्यन्तत्वादिति॥

**लोके कर्माणि०॥ १६॥ शास्त्रीयत्वादिति**। गृहादिकर्मणस्तक्षशास्त्रप्रतिपाद्यस्य तक्षशास्त्रानुमितवेदविहितत्वादित्यर्थः। नच गृहादीनां दृष्टार्थत्वात्तक्षणशास्त्रमन्वयव्यतिरेकमूलं न वेदमूलमिति वाच्यम्। दृष्टकार्यस्य यथाकथंचिन्निर्मितगृहादिनाप्युपपत्त्या तत्र संनिवेशविषयनियमस्यादृष्टार्थतया वेदमूलत्वावश्यंभावात्। उक्तंचाचार्यैः स्मृत्यधिकरणे 'गृहसन्निवेशविषये वास्तुविद्याया वेदानुमापकत्वम्। ईदृशा विधयः सर्वत्रानुमापयितव्याः ईदृशे गृहशरीरादिसंनिवेशे सत्येतच्च

१ श्रुत्यैवावगम्यते. २ वादभ्रान्तिनिमित्तम. ३ युज्यते.

मेन समापनीयमिति श्रुतिकल्पनात् 'देवताभ्यो वा एष आवृश्च्यत' इति देवताश्रयव्यापारमात्रस्या-वश्यसमापनीयत्वावगमाद्गृहादीनामपि प्रक्रान्तानामावश्यकं समापनमिति प्राप्ते ब्रूमः—'अशास्त्रा-देव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु ॥ तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता ॥' पुरुषार्था हि देवता गृहप्रदेशेषु निवेश्यते। नतु गृहकर्म देवताश्रयं तस्मान्न नियमः[1] ॥

प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टापाताधिकरणम् ॥ ५ ॥

**प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९॥**
**[शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते, तयोरसमवायित्वात्तादर्थ्ये विध्यति-क्रमः ॥ २० ॥]**

पर्युदासो निषेधो वा नाद्याद्भञ्जनमित्यसौ ॥ नञ्धात्वोरन्वायदाद्यः कल्प्यं संकल्पतः फलम् ॥ ६ ॥
पदान्वयात्तु नञ्विध्योर्निषेधोऽनर्थहानये ॥ संकल्पे लक्षणाप्राप्तिर्नैव काम्यविधिस्तथा ॥ ७ ॥

'न कलञ्जं भक्षयेत्' इत्येवमादिषु संशयः। किं प्रजापतिव्रतवत्पर्युदासाश्रयणेनाभक्षणं भक्षणा-भावसंकल्पः कल्प्यफलो विश्वजिदादिवद्विधीयते उत भक्षणं प्रतिषिध्यते प्रत्यवायपरिहारायेति। यदि नञ्विशिष्टं भक्षणं विधिना संबध्यते ततः पर्युदासः। अथ नञ्विध्योः संबन्धस्ततः प्रतिषेधः। तत्र—'भक्षणव्यवधानेन नञ्विध्योर्नास्ति सङ्गतिः ॥ भक्षणं तु नञा युक्तमव्यवायाद्विधीयते ॥ श्रुत्या च विधिसंबन्धो भक्षणस्य नञः पुनः ॥ पदान्तरत्वाद्वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥ तस्मा-

---

प्रतिपत्तव्यमिति। **ननु** शिष्टगर्हया समापनमुक्तं पूर्वत्र शिष्टाश्च गृहेष्वसमाप्तेष्वपि न गर्हन्ते तत्कथमिह समापनमत आह—**विहितमिति**। सत्यमिह शिष्टगर्हा नास्ति तथापि पूर्वाधिकरणविषये शिष्टगर्हा न स्वयं प्रमाणं किंतु वेदानुमा-नद्वारा, तत्र च वैदिके कर्मणि अनुमेयवेदस्य विहितं कर्म प्रक्रान्तं नियमेन समापनीयमित्येवंरूपस्यापि वा सर्वधर्मः स्यात्त-न्न्यायत्वाद्विधानस्येत्यनेन न्यायेन गृहादिसाधारण्यात्तदपि समापनीयमित्यर्थः। एवंच पूर्ववत्प्रत्यवस्थानात्सङ्गतिः। **देव-ताश्रयेति**। अस्यां दिशीयं देवतेति गृहे दिग्भेदेन देवतास्थानविशेषनिर्देशाद्गृहकर्मणोपि देवताश्रयत्वमित्यर्थः। नच पुरुषार्थदेवतानामेव विभेदेन स्थाननिर्देशः। नतावता गृहकर्मणो देवताङ्गं देवताभ्य इति वाक्यं च देवताङ्गकर्मविषयं कथं गृहादिसाधारणं भवेदिति शङ्क्यम्। वास्तुदेवतापूजाया गृहनिर्माणार्थत्वेन विधानात्स्वाङ्गदेवतायुक्तत्वस्य गृहकर्मण्यपि संभ-वात्। **नन्वेवमपि** यो यक्ष्य इत्यस्य यागमात्रविषयत्वान्न गृहकर्मसाधारण्यमिति शङ्कां व्यावर्तयितुं देवताश्रयव्यापारमा-त्रस्येत्युक्तं देवताभ्य इत्युपक्रमानुसारेण यक्ष्य इत्येतद्देवताश्रयव्यापारमात्रोपलक्षणमिति भावः। **अशास्त्रादेवेति**। भोजनाश्रितप्राङ्मुखत्वादिवत् गृहकर्माश्रितसंनिवेशविशेषनियमस्यादृष्टार्थत्वेऽपि भोजनवद्गृहकर्मणो नादृष्टार्थत्वमिति भावः। **नतु गृहकर्मेति**। अदृष्टार्थवास्तुपूजाया दृष्टार्थगृहकर्मार्थत्वायोगात्तदाश्रित्य पुरुषार्थतैवेति वास्तुपूजामुखेनापि गृहकर्मणो न देवताश्रयत्वमिति भावः। एवमपि गृहरथादावरे भग्ने इन्द्रबाहुर्बद्धव्य इति प्रायश्चित्तविधानमपि पुरुषार्थमेवेति न तद्ब-लादपि गृहकर्मणः शास्त्रीयत्वमिति बोध्यम्। सूत्रार्थस्तु—लोके कर्माणि गृहादीनि वेदवत्समाप्यानि पुरुषमधिकुर्वन्तील्य-धिपुरुषाणि लौकिककर्माणि तेषां ज्ञानं ततएव शास्त्रादेवेति हेतोरिति ॥

**प्रतिषेधेष्वकर्मत्वात्** ॥ १९ ॥ यथा गृहादिफलेच्छावतामेव कर्तव्यमेवं न कलञ्जं भक्षयेदित्यादिकमपि फले-च्छावतामेव कर्तव्यमिति प्रत्यवस्थानात्सङ्गतिः। **प्रजापतिव्रतवदिति**। 'नेक्षेतोद्यन्तमादित्य'मित्यादिवदित्यर्थः। **तत्रेति**। नञ्विधिसंबन्धो न संभवति भक्षणव्यवधानात् भक्षणस्य तु विधिसंबन्धे न किंचिद्व्यवधायकं तेन भक्षणमेव विधिना संबध्यते नञ्तु विधिसंबन्धात्प्रच्युतं विधिसंनिकृष्टेनैव भक्षणेन संबध्यत इति नञ्युक्तभक्षणार्थो विधीयत इत्यर्थः। **ननु** सर्वपदानामरुणादिवत्संनिकर्षविप्रकर्षावतन्त्रीकृत्य प्रधानभूतप्रत्ययार्थभावनया संबन्धो युक्तः। नचारुण्य-द्रव्ययोः पदान्तरार्थत्वाद्युक्तः क्रीणातिसंबन्ध इहतु प्रकृत्यर्थभक्षणावरुद्धायां भावनायां पदान्तरीभूतनञर्थान्वयो न युक्त इति वाच्यम्। तर्हि प्रकृत्यर्थसंबद्धभावनायां पदान्तरसंबन्धस्य क्वाप्यसंभवे सर्वविशेषणविशिष्टभावनासिद्धिरिति सिद्धान्त-व्याकोपः स्यादितिचेत्। नञ्विधिसंबन्धे विधिरेव निहन्येत निषेधप्रसङ्गादतो न तस्य विधिसंबन्ध इति भावः। **ननु** येन नञ् संबध्यते तद्विपरीतार्थप्रतिपादकत्वं तस्य स्वभाव इति विधिव्याघातो न दोषोऽन्यथा तस्य धात्वर्थसंबन्धोऽपि न स्यात्तत्रापि तद्विघातापत्तेस्तुल्यत्वादित्यतो युक्त्यन्तरमाह—**श्रुत्या चेति**। इह यदि नञ्विधिसंबन्धस्तदा भक्षणमनुवा-

---

१ नसमापननियमः.

भक्षणमेवेह नञा युक्तं विधीयते ॥' ततश्च भक्षणाभावोऽननुष्ठेयत्वादविधेय इति तद्धेतुः संकल्पो विधीयते। सचाश्रुतफलः कल्प्येन फलेन संबध्यते। अतः फलकामाधिकारमेवंजातीयकमिति नि-ष्कामाणां याथाकाम्यम्। अत्रोच्यते—'नञ्भक्षयत्योरेवं तु स्वार्थहानिः प्रसज्यते ॥ संकलपलक्षणा-तत्र श्रुतेरत्यन्तबाधनम् ॥' मत्पक्षे पुनः प्रत्यासत्तिमात्रबाधनं। नञा तदपि किं तर्हि भक्षयेदिति एवं परिपूर्णे नञा संबध्यते भक्षयेन्नेति, भक्षयेदिति च भक्षणभावनायां प्रवर्तना गम्यते नञा संब-द्धेन विधिना तद्विपरीतनिवर्तनाप्रतीतिः। निवर्तना च निवृत्तिफलो व्यापारः। नच प्रेक्षापूर्वकारी पुरुषो रागतः प्रवर्तमानोऽसति प्रत्यवायफलत्वे निवर्तयितुं शक्यते इति श्रुतनिवर्तनान्यथानुपपत्त्या

---

द्यत्वान्न विधेयं भक्षणस्य विधिसंबन्धे नञो भक्षणविशेषणत्वान्नास्ति विधिसंबन्ध इत्यन्यतरस्यैव विधिसंबन्धो नोभयोस्तत्रच समानपदश्रुतिगम्यत्वाद्भक्षणविधिसंबन्धो न्याय्यः नतु वाक्यगम्यो नञ्विधिसंबन्ध इत्यर्थः। **नन्वेवं** नञ्युक्तेन भक्षय-तिना भक्षणाभावप्रतिपादनान्न पर्युदासः सिद्ध्येदित्यत आह—**ततश्चेति**। भक्षणाभावोऽत्र भक्षणप्रागभावः स चानादि-त्वादननुष्ठेय इति तल्लक्षितसंकल्पो विधीयत इत्यर्थः। क्रियान्तरपरित्यागेन संकल्पलक्षणायां कारणमाह—**तद्धेतुरिति**। ननु तद्धेतुरित्यत्र तच्छब्देन भक्षणमुच्यते तदभावो वा। आद्ये भक्षणसंकल्पविधिः स्यान्न भक्षणाभावसंकल्पविधिः। अभा-वसंकल्पस्य भक्षणहेतुताभावात्। न द्वितीयः। अभावस्याननुष्ठेयत्वे तद्धेतुसंकल्पस्यालीकत्वादिति चेदुच्यते। भक्षणं कुर्वन् प्रथमं संकल्पं करोतीति भक्षणहेतुस्तावत्संकल्पोऽस्ति। तस्य च नञ्संबन्धबलाद्भक्षणहेतुत्वांशपरित्यागेन सर्वक्रियानु-स्यूतं यत्संकल्पसामान्यरूपं तत्परिगृह्यमाणं नञ्संबन्धानुगुण्याद्भक्षणाभावसंकल्परूपं पर्यवस्यतीति तच्छब्देन भक्षणाभि-धाने तावन्न दोषः। तथा भक्षणाभावः स्वयमननुष्ठेयोऽपि भक्षणवर्जनात्परिपाल्यः। वर्जनं च संकल्पपूर्वकमिति संकल्प-स्याभावपरिपालनहेतुत्वादभावाभिधानेऽपि न कश्चिद्दोष इति भावः। **अश्रुतफल इति**। 'नेक्षेतोद्यन्तमादित्य'मित्यस्य तु एतावता हैनसाऽयुक्तो भवतीति वाक्यशेषे फलश्रवणाच्छ्रुतफलस्यैनोनिबर्हणस्य सर्वदा सर्वैरपेक्षितत्वात् पर्युदासत्वेऽपि तस्य नित्यत्वं नास्त्येति वैषम्यमिति भावः। **श्रुतेरिति**। नञ्श्रुतेर्भक्षयतिश्रुतेरित्यर्थः। **ननु** भक्षयेन्नेत्यन्वये भक्षयेदिति यत्तन्नेत्यर्थः स्यात्ततश्च भक्षयेदित्यस्य भक्षणविध्यर्थत्वाद्भक्षणविधिर्नास्तीति स्यान्नचैतावता निवृत्तिः सिद्ध्यतीत्यत आह— **भक्षयेदिति**। भक्षणस्य कर्तव्यता त्वयावगता या सा वस्तुतो नास्ति संनिहितसुखलवदर्शनात्तु तस्य मोहात्कर्तव्यता त्वया-वगता तस्मान्निवर्तस्वेत्येवं क्रियाकर्तव्यताभावप्रतिपादनपूर्वकं भक्षणक्रियायां निवर्तनैव प्रवर्तना विपरीतस्वभावा नञ्सं-बद्धेन विधिप्रत्ययेन प्रतिपाद्यते। ततश्च शब्दपूर्वकप्रवृत्तौ प्रवर्तनाज्ञानस्यैव तत्पूर्वकनिवृत्तावपि निवर्तनाज्ञानस्य हेतुत्वा-न्निवृत्तिरुपपद्यते। इयंच निवारणा वेदे नञ्समभिव्याहृतविधिप्रत्ययधर्मः न त्वं गामानयेत्यादावाचार्यस्येवापौरुषेये वेदे निवारणाश्रयस्यान्यस्याभावात्। येतु विधिप्रत्ययसमभिव्याहृतनञर्थो निवारणा नतु नञ्समभिव्याहृतविधिप्रत्ययार्थ इत्या-हुस्तन्मते नञ्धर्म एव निवारणेति ध्येयम्। **नन्वे**वमपि कथं प्रत्यवायपरिहारफलकत्वं वर्जनस्येत्याशङ्क्य तत्सिद्ध्यर्थं भक्ष-णस्य प्रत्यवायफलकत्वमुपपादयति—**निवर्तना चेत्यादिना**। स्वाध्यायाध्ययनविधिना निषेधवाक्यस्थलिङादीनां निव-र्तनायां विनियोगात्तैरवश्यं पुरुषो निवर्तनीयः। नच चेतनः पुरुषोऽनिष्टसाधनत्वं विना निवर्तयितुं शक्यते। तेन विश्वजिदादौ प्रवर्तनान्यथानुपपत्त्या इष्टफलकल्पनादिवदिह निवर्तनान्यथानुपपत्त्या निषेध्यस्यानिष्टफलकल्पनम्। यदि च भावनागतेष्ट-साधनत्वमेव प्रवर्तनेति पक्षस्तदा निवर्तना तदनिष्टसाधनत्वमेवेति श्रुत्यैवानिष्टसाधनत्वमवगम्यते। प्रत्यवायात्मकत्वमा-त्रमेव तु कल्प्यमिति ध्येयम्। **ननु** यदि क्रियायां निवर्तनानिषेधस्तर्हि विधिनिषेधयोरेकविषयत्वाद्भेदो न स्यादितिचेत् सत्यपि विषयैक्ये परस्परप्रत्यनीकतया स्वरूपत एव भेदोपपत्तेः। उक्तंच न्यायसुधायाम् 'पञ्चधात्यन्तभिन्नत्वाद्भेदो विधि-निषेधयोः ॥ विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः ॥ प्रेरितोऽस्मीति पूर्वे धीर्वारितोऽस्मीति चापरे ॥ विषयस्येष्टहेतुत्वं विधिना च प्रमीयते ॥ निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ॥ विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम् ॥ रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥ नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् ॥ लिङाद्यनुगृहीतस्तु नञ्निषेधस्य बोधकः ॥' एतदेवाभिप्रेत्य वृद्धटीकायामुक्तं—'अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः ॥ दृश्यते तादृगेवेदं विधानप्रतिषेधयो'रिति। प्राभाकरास्तु सर्वत्र कार्यवाक्यार्थवादिनो निषेध्यस्य प्रत्यवायफलकत्वं न प्रमाणवत्तेन विनापि विषयनियोज्यान्वितनियोगस्य वाक्यार्थस्य परिपूर्णत्वेन तत्कल्पकाभावात्। तथाहि निषेधवाक्यस्थलिङा कार्यमभिधीयते तस्य च नञर्थो विषयः। नच विषयत्वं कृत्यवच्छेदद्वारा कार्यावच्छेदकत्वं तच्च कृतिविषयस्यैव संभवति नञर्थश्चौदासीन्यात्मा न कृतिसाध्य इति न तस्य

---

१ तत्र भक्षणाभावो.

विषयीभूतभक्षणव्यापारस्य प्रत्यवायफलत्वं कल्प्यतेऽतस्तत्परिहाराय सर्वेषामेवंजातीयकं वर्ज्यम्। ये तु नञर्थविषयस्य नियोगस्य भक्षणप्रवृत्तस्य नियोज्यस्य च लब्धत्वान्न प्रत्यवायकल्पना प्रमाणवतीत्याहुस्ते श्रुतार्थापत्तेः प्रमाणत्वोपपादनान्निरस्ताः। किंच भक्षणं नञर्थविशेषणत्वेनोपक्षीणं न नियोज्यविशेषणम्। आख्यातेन कर्तुरनभिधानात्। उभयविशेषणत्वे चावृत्तिप्रसङ्गात्। ननु न ब्रूमः श्रुत्या नियोज्यविशेषणत्वं नञर्थविशेषणस्यैवार्थान्नियोज्यविशेषणतामाचक्ष्महे। भक्षणप्रवृत्त एव हि तदभावे नियोक्तुं शक्यते नान्यः। सत्यमेवं तथापि न नियोज्यविशेषणत्वे भक्षणस्य प्रमाणमस्ति। यदि ह्येतावतैव नियोज्यविशेषणत्वमाश्रीयते ततः सर्वत्र जीवनं शक्तिश्च नियोज्यविशेषणं स्याताम्। ततश्च तदवच्छिन्नस्य नियोज्यस्य लब्धत्वाद्विश्वजिदादौ स्वर्गकामादेरकल्पनं स्यात्। तत्र यत्किंचित्केनचिदुच्यते प्रवृत्तिलाघवाय फलकल्पनमिति तन्निषेधाधिकारेष्वपि समानमित्यास्तां तावत्॥

---

विषयत्वमिति वाच्यम्। औदासीन्यस्यापि प्रागभावरूपस्य केवलात्मस्वरूपावस्थापरपर्यायस्य प्रचलितावस्थपुरुषेणानुपाल्यतया कृतिविषयतोपपत्तेः। प्रचलितत्वं नाम निषेध्यकार्यताबोधस्तदुपायचिकीर्षा वा तदवस्थस्य पुरुषस्य भक्षणप्रागभावपरिपालनमुत्तरकालसंबन्धित्वलक्षणमुक्तचिकीर्षाविघातकानुपाल्यत्वबुद्ध्युत्पादनं विना न संभवति। ततश्चानुपाल्यत्वबुद्ध्युत्पादनेनोक्तचिकीर्षापनयनद्वारानुपाल्यस्य प्रागभावस्य कथंचित्कृतिसाध्यत्वाद्युक्तं विषयत्वं भक्षणप्रवृत्तश्च भक्षणाभावविषये कार्ये नियोज्यस्तस्माद्विषयस्य नियोगस्य नियोज्यस्य च प्रत्यवायपरिहारानपेक्षयैव लब्धात्मकत्वेनानुपपत्त्यभावान्न प्रत्यवायः कल्प्य इत्याहुः। तन्मतमनूद्य निरस्यति—**येत्विति। श्रुतेति**। प्रेक्षावतां हीष्टानिष्टप्राप्तिपरिहारौपयिकप्रवृत्तिरिति विधिविषयस्य नञर्थस्य प्रत्यवायपरिहारार्थत्वाभावे तत्र प्रवृत्तेरेवासंभवात्तद्विषयकार्यस्यात्मलाभो नेति श्रुतनञर्थविषयकार्यसिद्ध्यर्थमेव तैरपि निषेध्यस्य प्रत्यवायफलकत्वं स्वीकार्यमित्यर्थः। **ननु** कार्यविधित एव प्रवृत्तिसिद्धेर्न प्रवृत्त्यर्थमपि तत्कल्पनं सर्वत्र कार्यधिय एव प्रवर्तकत्वात्। नच कार्यधीर्लोके फलोपायतया दृष्टेति तदभावे सैव न स्यादिति वाच्यम्। लोके तथात्वेऽपि वेदेऽनपेक्षाद्विधित एव कार्यबुद्धिसंभवादिति तद्रीतिमभ्युपेत्य तथापि प्रत्यवायपरिहारकाम एवात्र नियोज्यो वाच्य इति नियोज्यसिद्ध्यर्थं प्रत्यवायकल्पनमावश्यकमित्यभिप्रेत्य भक्षणप्रवृत्तस्य नियोज्यत्वं दूषयति—**किंचेति**। ननु भक्षणस्य नञर्थसंबन्धे प्रतियोगित्वेनान्वयादुपलक्षणत्वं स्यान्नियोज्यपुरुषान्वये तु विशेषणत्वं विशेषणत्वसंभवे चोपलक्षणत्वस्यान्याय्यत्वान्नियोज्यविशेषणमेव तद्युक्तमित्यत आह—**आख्यातेनेति**। आख्यातेन कर्तुरनभिधानेन। भक्षणप्रवृत्तपुरुषस्याक्षेपलभ्यत्वादाक्षेप्यपुरुषविशेषणत्वाद्वरं श्रुतनञर्थोपलक्षणत्वमिति भावः। अर्थादित्येतदेवोपपादयति—**भक्षणप्रवृत्त एवेति**। अप्रवृत्तस्य स्वतो निवृत्तस्य नियोक्तुमशक्यत्वात्प्रवृत्त एव नियोज्य इत्यर्थः। **एतावतेति**। अप्रवृत्तस्य नियोक्तुमशक्यतामात्रेणेत्यर्थः। **तत इति**। अजीवतोऽशक्तस्य च नियोक्तुमशक्यत्वादिति भावः। **प्रवृत्तिलाघवायेति**। फलस्य प्रवृत्तावुत्कटत्वादिति भावः। किंचोपलक्षणत्वपरिहाराय नियोज्यविशेषणत्वाङ्गीकारे पूर्वपक्षेऽपि भक्षणस्य संकल्पलक्षकत्वे स्वार्थहानिप्रसङ्गान्नियोज्यविशेषणत्वमेव स्यात्। संकल्पस्तु केवलेन नञा लक्षणीयः स्यात्। नच केवलस्य नञो भक्षणाभावप्रतिपादनाशक्तेर्भक्षणाभावसंकल्पलक्षणानुपपत्तेरुभाभ्यामेव तल्लक्षणा स्वीकार्येति वाच्यम्। यथा तव सिद्धान्ते नियोज्यविशेषणत्वेऽप्यर्थाद्भक्षणस्याभावप्रतियोगित्वेनोपस्थितेर्भक्षणाभावरूपविषयधीस्तथा पूर्वपक्षेऽपि नियोज्यविशेषणत्वेऽप्यर्थात्प्रतियोगित्वेनोपस्थित्या भक्षणाभावप्रतीतौ सत्यां केवलनञैव भक्षणाभावसंकल्पलक्षणोपपत्तेः। एवं भक्षणं श्रुत्या नञर्थविशेषणमर्थात्तु नियोज्यविशेषणमित्यप्यत्यन्तासङ्गतम्। तथासति हि धात्वर्थो नञर्थेन संबध्यते नञर्थश्च प्रत्ययार्थेन कार्येण विषयतया संबध्यते इति धातुप्रत्यययोरेकार्थत्वाभावेन परस्परसामर्थ्याभावादैकपद्यं न स्यात्। 'समर्थः पदविधि'रिति पदविधिमात्रस्य सामर्थ्यापेक्षत्वात्। यदि कार्यपरस्य प्रत्ययस्य प्रकृत्यन्वयासंभवान्नञन्वयो न दुष्यति इतरथा भक्षणापूर्वं कार्यं न भवतीति वाक्यार्थप्रसङ्गात्। नचैवं संभवति भक्षणापूर्वकार्यस्य मानान्तराप्राप्त्या निषेधायोगादिति मन्यसे त्यज तर्हि कार्यपरत्वाभिनिवेशं शाब्दन्यायविरुद्धमिति तदेतदभिसंधायाह—**आस्तामिति**। सूत्रार्थस्तु—प्रतिषेधत्वेन सिद्धान्त्यभिमतेषु न कलञ्जं भक्षयेदित्यादिष्वकर्मत्वाद्भक्षणकर्मव्यतिरिक्तसंकल्पविधित्वात्प्रतिषिद्धानां भक्षणादीनां निष्कामपुरुषैः क्रियापि स्यादकर्मणां संकल्पानां विभक्तत्वात्कर्मनिषेधान्यत्वात् अत्र कर्मनिषेधाभावादिति॥

---

१ भक्षणे प्र.

गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥ ६ ॥

**तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥ [अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥]**

**प्राङ्मुखत्वादिनियम उपनीतेः पुराप्युत ॥ ऊर्ध्वं मन्त्राद्यसाध्यत्वादाद्योऽन्त्योऽस्तु तथा स्मृतेः ॥ ८ ॥**

स्मार्ता यमनियमाः 'प्राङ्मुखो भुञ्जीत उदङ्मुखो मूत्रं कुर्या'दित्येवमादयः किं जननप्रभृति प्रवर्तन्ते जातो यदा शक्नुयात्तदेत्यर्थः, उतोपनयनप्रभृतीति संशये अनग्निसाध्यत्वादमन्त्रसाध्यत्वाच्चैषां शक्तमात्राधिकारित्वे प्राप्ते ब्रूमः—उपनयनप्रभृति स्युरिति। कुतः स्मरणात्। स्मरन्ति हि 'उपनयनादिर्नियम' इति तस्मादुपनीताधिकारः ॥

अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यताधिकरणम् ॥ ७ ॥

**अभ्यासो वा कर्मशेषत्वात्पुरुषार्थो विधीयते ॥२३॥ [तस्मिन्नसंभवन्नर्थात् ॥२४॥ न कालेभ्य उपदिश्यन्ते ॥ २५ ॥ दर्शनात्काललिङ्गानां कालविधानम् ॥ २६ ॥]**

**यावज्जीवेति सातत्यं स्वकाले वा निमित्ततः ॥ कालाङ्गलोपादाद्यः स्यादवैधात्यागतोऽन्तिमः ॥ ९ ॥**

'यावज्जीवमग्निहोत्रं जुहोती'ति 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति श्रूयते। तत्र संशयः किं सातत्येनानुष्ठानमुत सायंप्रातरग्निहोत्रं पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासाविति। तत्र जीवने निमित्ते कर्मविधानान्नैमित्तिके चासंभाविताङ्गत्यागेऽप्यवैगुण्यात् कालस्य चाङ्गत्वात्तल्लोपेन संततानुष्ठानं न्याय्यमिति प्राप्ते ब्रूमः—'अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कुतः ॥ अनुपादेयरूपत्वात्तस्मिन्कर्मविधिर्यतः ॥' यद्धि प्रयोगविधिवशादुपादेयं तद्धि यथाशक्तीत्युपबध्यते कालस्य पुनरनुपादेयत्वात्। एषा हि तत्र वचनव्यक्तिः अस्मिन्काले प्राप्ते कर्म कर्तव्यमिति। ततश्चार्थात्तत्कालमेव जीवनं निमित्तं[1] भवतीति न कालान्तरेऽनुष्ठानमिति। एतेनाग्निविद्ये व्याख्याते। तयोरप्यध्ययनाधानविधिसिद्धयोः स्वीकरणात्प्रयोगविधिनाननुष्ठाप्यत्वादेषा वचनव्यक्तिः ± अग्निमान् विद्वांश्चाधिक्रियेतेति प्रत्यक्षमेव च विद्यावतोऽधिकारश्रवणं 'य एवंविद्वानग्निहोत्र'मित्येवं सर्वत्र श्रवणात्। तस्मात्तत्काले प्राप्ते विदुषोऽग्निमतश्चाङ्गान्तराणि यथासंभवमुपसंहृत्यानुष्ठानम् ॥

---

**तस्मिंस्तु शिष्यमाणानि० ॥ २१ ॥** आदिपदेन न कलञ्जं भक्षयेदित्यादिसंग्रहः। एवंच पूर्वत्राधिकारिविशेषविचारात्सङ्गतिः। **ननु** जातमात्रस्य शक्त्यभावान्नाधिकारसंभव इत्यत आह—**जात इति**। नचोपनयनादिर्नियम इति स्मरणे जाग्रति कथं पूर्वपक्षप्रवृत्तिरिति वाच्यम्। सिद्धान्तेऽपि हि 'ब्राह्मणो न हन्तव्यः' 'न सुरां पिबे'दित्यादीनां शक्तमात्राधिकारत्वमिष्यते तद्वदन्येषामपि तथात्वमिष्यतामिति प्रतिबन्द्या कृत्वाचिन्तया वा तत्प्रवृत्तेः। **तस्मादिति**। 'ब्राह्मणो न हन्तव्य' इत्यादीनां सर्ववर्णसाधारणानां स्त्रीशूद्रादिष्विव नोपनयनापेक्षा। न कलञ्जं भक्षयेन्नानृतं वदेदित्यादीनां तु प्रागुपनयनात्कामचारवादभक्षा इति वचनादुपनीताधिकारिकत्वमेवेति भावः। सूत्रे तस्मिन्पुरुष इत्यर्थः ॥

**अभ्यासो वा० ॥ २३ ॥** स्मृतिबलादुपनीताधिकारित्ववत् यावज्जीवश्रुतेः संततानुष्ठानमिति प्रत्यवस्थानात्सङ्गतिः। **तत्रेति**। जीवनस्य निमित्तत्वं यावज्जीवाधिकरणे उक्तमिति भावः। कालस्यापि प्रयोगविधिविधेयत्वात्तत्रापि यथाशक्त्युपबन्ध इत्यभिमानः, कालविधिश्च काम्यप्रयोगे चरितार्थ इति भावः। **संततेति**। आवश्यकाहारादिकालं वर्जयित्वेति शेषः। **यद्धीति**। न प्रयोगविधिविधेयतामात्रेण यथाशक्त्युपबन्धः किंतु प्रयोगविधिना यत्कर्तव्यतया बोध्यते तत्रैव। कर्तव्यं हि यथाशक्ति कुर्यादिति वक्तुं शक्यते नाकर्तव्यं। ततश्च प्रयोगविधिना यदुपादीयते अनुष्ठाप्यते पुरुषकर्तव्यतया बोध्यत इति यावत्। तत्रैव यथाशक्त्युपबन्धात्कालस्य चातथात्वान्न तत्र यथाशक्त्युपबन्ध इत्यर्थः। **ननु** निमित्ते जीवने सति नैमित्तिकं कालाभावेऽप्यवश्यमनुष्ठेयमेवेतरथा निमित्तत्वव्याघातादित्यत आह—**ततश्चेति**। काले सत्येव कर्मणः कर्तव्यत्वात्कालजीवनमेवार्थान्निमित्तमित्यर्थः। इदमधिकरणं न कालमात्रविषयं किंतु प्रयोगविध्यनुपादेयाङ्गमात्रविषयमित्याशयेनाह—**एतेनेति**। तयोः स्वरूपेणोपादेयत्वात्कालवैषम्यमाशङ्क्याह—**तयोरिति**। एवं त्र्यार्षेयस्य सतोऽङ्गान्तरपरित्यागेनाधिकारः अत्र्यार्षेयस्य प्रयोगविधिना त्र्यार्षेयवरणसंपादनाशक्तेरिति ध्येयम्। सूत्रार्थस्तु—वाशब्दो निषेधे। नायमभ्यासः अकर्मशेषत्वात्किंतु नियमः पुरुषार्थमित्युक्तं ततश्च सातत्येनानुष्ठानमिति ॥

---

१ निमित्तमिति न कालान्तरा.

अग्निहोत्रादीनां स्वकालावृत्त्यावृत्त्यधिकरणम् ॥ ८ ॥

**तेषामौत्पत्तिकत्वादागमेन प्रवर्तेरन् ॥ २७ ॥ [तथा हि लिङ्गदर्शनम् ॥ २८ ॥]**

**सकृत्कृतिस्तावृत्तिर्दर्शादेः शास्त्रसार्थ्यतः ॥ सकृत्स्यात्कालसंयुक्तजीवनावृत्तितोऽन्तिमः ॥ १० ॥**

यदि कालशास्त्रानुरोधेन निमित्तसंकोचस्ततः कालशास्त्रस्य सकृदनुष्ठानेन संपादितत्वात्तद्वशेन सकृदेव सायंप्रातःकालयोः पौर्णमास्यमावास्ययोश्च कृतः शास्त्रार्थ इति न पुनःपुनरनुष्ठातव्यं स्यात्। **मैवम्**। नहि कालवशाज्जीवनस्य निमित्तत्वं हीयते, किंतु तत्कालीनमेव जीवनं निमित्तं न कालान्तरीयमित्येतावत्। ततश्च तादृशस्यैव जीवनस्य पुनःपुनरावृत्तौ शास्त्रमपि पुनःपुनर्नैमित्तिकेषु पुरुषं नियुङ्क्ते अतो निमित्तावृत्तावावृत्तिर्नैमित्तिकानाम् ॥

दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणम् ॥ ९ ॥

**तथाऽन्तःक्रतुसंयुक्तानि ॥ २९ ॥**

**क्रतौ सकृद्भेदहोमोऽसकृद्वा क्रतुसिद्धितः ॥ सकृन्निमित्तभेदस्यावृत्तौ होमोऽसकृद्भवेत् ॥ ११ ॥**

युक्तं पुरुषार्थेषु नैमित्तिकेषु निमित्तावृत्तावावृत्तिरिति। तत्र हि प्रत्यावृत्ति फलमन्यदन्यच्च निष्पत्स्यते। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारस्यैव साध्यत्वात्तत्सकृत्कृतेनैव तत्सिद्धेरेकस्मिन्प्रयोगे भेदनावृत्तावपि न होमावृत्तिरिति विशेषं मन्यमानस्योत्तरं—क्रत्वर्थेष्वपि शास्त्रेण निमित्तावृत्तावावृत्त्यवगमादावृत्तौ निमित्तस्यावृत्तेनैव होमेन सगुणः क्रतुः स्वफलाय पर्याप्नोतीति कल्पनादेषामपि निमित्तावृत्तावावृत्तिरिति ॥

गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

**आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥ ३० ॥**

**याथाकाम्यमुतावृत्तिर्गुरोरनुगमादिषु ॥ स्यादाद्यः प्रीतिहेतुत्वान्नियमाद्दृष्टतोऽन्तिमः ॥ १२ ॥**

गुर्वनुगमनादीनामाचारप्रमाणकानां गुरुगमनादिनिमित्तानां[३] किंनिमित्तावृत्तावावृत्तिः स्यान्नेति संदेहे[४]। तत्र दृष्टार्था ह्येते अनुगमनाभ्युत्थानाभिवादनादिभिः प्रीतो गुरुः सम्यक् विद्यां ददातीति।

---

**तेषामौत्पत्तिकत्वात्० ॥ २७ ॥ तत इति**। कालशास्त्रानुसारात् तत्कालजीवनस्यापि सकृदेव निमित्तत्वमन्यथा एकस्मिन्नपि दर्शादिकाले कर्मावृत्तिः स्यादिति भावः। कालशास्त्रस्य सकृत्कृतेप्युपपत्तिरित्येतावन्मात्रं नतु तत्र सकृत्त्वं श्रौतम्। तेन पुनःपुनरनुष्ठानेऽपि न कालशास्त्रस्य विरोधः। सकृदनुष्ठाने तु निमित्तत्वं विरुध्यत इत्याशयेनाह—**नहीति**। षष्टिघटिकादिव्यापककालस्य दर्शादिशब्दार्थत्वात्तत्कालव्याप्तं जीवनमेकमेव नतु नाना, तथाविधं च निमित्तं नतु दर्शाद्यवयवव्याप्तमित्येकस्मिन्दर्शादिकाले तथाविधनिमित्तावृत्त्यभावान्न पुनःपुनरनुष्ठानमिति भावः। सूत्रार्थस्तु—तेषां कालानामौत्पत्तिकत्वात्कर्मोत्पत्तिनिमित्तत्वात्कालस्य पुनः पुनरागमेन कर्माणि प्रवर्तेरन्निति ॥

**तथान्तःक्रतुसंयुक्तानि ॥ २९ ॥** अतिदेशस्य विशेषाशङ्कानिराकरणार्थत्वात्तामाह—**युक्तमिति**। **अन्यदिति**। प्रतिप्रयोगं प्रत्यवायपरिहारभेदादित्यर्थः। **सकृदिति**। एकेनैव क्रतूपकारेणेष्टसिद्धेस्तन्नानात्वानपेक्षणादेकस्य च सकृत्प्रयोगादेव सिद्धेरावृत्तिरनर्थिकेत्यर्थः। **शास्त्रेणेति**। निमित्तत्वप्रत्यायकशास्त्रस्य निमित्तावृत्तावावृत्तिपर्यन्तव्यापारादितरथा निमित्तत्वव्याघातादिति भावः। **आवृत्तेनेति**। नैमित्तिकावृत्तावपि न क्रतूपकारो भिद्यते येनोपकारान्तरवैयर्थ्यं स्यात् किंत्वेक एवोपकारोऽसति निमित्ते विनैव नैमित्तिकं जायमानोपि यथा सति निमित्ते नैमित्तिकेन जायते तथा निमित्तावृत्तिस्थले आवृत्तेनैव नैमित्तिकेन जन्यते न सकृदनुष्ठितेनेति कल्पनादावृत्तिरर्थवतीत्यर्थः ॥

**आचाराद्गृह्यमाणेषु० ॥ ३० ॥** अस्याप्यतिदेशत्वात्पूर्ववद्विशेषाशङ्कामाह—**तत्रेति**। नच दृष्टार्थत्वेऽपि नैमित्तिकत्वे निमित्तावृत्तावावृत्तिः स्यादितरथा निमित्ते सत्यवश्यकर्तव्यात्मकनैमित्तिकत्वव्याघातादिति वाच्यम्। गुरुगमनस्य निमित्तत्वाभावेपि गुरुगमनंविनानुगमनासंभवेन गुरुगमनकालेऽनुष्ठानोपपत्तेः गुरुगमनस्य निमित्तत्वमेव नास्ति प्रमाणाभावादिति पूर्वपक्ष्याशयात्। एवंच पूर्ववाक्ये गुरुगमनादिनिमित्तानामिति पक्षद्वयसाधारण्येन गुरुगमनाद्यानन्तर्यमात्राभिप्रायं बोध्यम्।

---

१ रनुष्ठानं स्यात्. २ नैमित्तिकेषु पुरुषार्थेषु. ३ निमित्तकानां. ४ संशये.

तत्र यथानुष्ठिते प्रीतिर्भवति तथा कर्तव्यं सकृदसकृद्वा नत्ववश्यमावर्तनीयमिति प्राप्ते ब्रूमः । दृष्टार्थेष्वपि नियमादृष्टाभ्युपगमात्तस्य च शास्त्रप्रमाणकत्वात्तद्वशेन निमित्तावृत्तावावृत्तिः ॥ .

ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यताधिकरणम् ॥ ११ ॥

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥

**सोमाधीतिप्रजं काम्यं नित्यं वा कामतोऽग्रिमः ॥ वीप्सानुष्ठेयविज्ञानलोकैस्तन्नित्यतेष्यते ॥ १२ ॥**

'सोमेन यजेत' 'स्वाध्यायमधीयीत' 'प्रजामुत्पादये'दिति श्रुतं सोमविद्याप्रजं किं नित्यमुतानित्यमिति संशयः। तत्र यावज्जीवादितुल्यनिर्देशाभावात् 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति च फलश्रवणात् 'वसन्ते वसन्ते ज्योतिषा यजेते'ति चास्य कालविधिपरत्वादध्ययनप्रजयोस्तु विश्वजिद्वत्स्वर्गकल्पनात् सप्तमे ब्रह्मवर्चसकाम इत्येवमादीनां चोपनयनगतानां फलानामुपनयनस्याध्ययनाङ्गत्वेन स्वयं फलानपेक्षत्वादध्ययनफलत्वमेव न्याय्यम् । अतः फलकामाधिकारत्वमेवैषामिति प्राप्ते ब्रूमः—नित्यानीति कुतः—'वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते ॥ यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते ॥ यावद्वसन्तमभ्यासः कामस्यैवाथ नोद्यते ॥ यजेतेतिपदेनैवं प्राप्नोत्यभ्यासलक्षणा ॥' तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः । अध्ययनमप्यश्रुतफलमक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलकत्वात्तस्य चावश्यकत्वादावश्यकं । ब्रह्मवर्चसादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तवर्षादिगुणफलत्वादध्ययनफलमनाशङ्क्यमेव । प्रजोत्पादनमप्यमृणत्वफलश्रवणादनुत्पाद्य तथा सुतानधो गच्छतीति प्रत्यवायस्मरणादावश्यकं तस्मान्नित्यमेव सोमविद्याप्रजम् ।

---

**नियमेति** । उपायान्तरेणापि गुरुप्रीतेः संपादयितुं शक्यत्वादनुगमनादिनैव गुरुप्रीतिः संपादनीयेति नियमस्तददृष्टं चावश्यमभ्युपेयमित्यर्थः । **ननु** तावता कथमावृत्तिसिद्धिरित्यत आह—**तस्यचेति** । नियमादृष्टस्य च शास्त्रैकसमधिगम्यत्वाद्गुर्वनुगमनाचारेण तद्विध्यनुमानादनुमितस्य च विधेरधिकारिविशेषणापेक्षायामुपस्थितस्य गुरुगमनस्यैव निमित्तभावेनाधिकारिविशेषणत्वनिश्चयान्नैमित्तिकतया निमित्तावृत्तावावृत्तिरित्यर्थः । एवंच नैमित्तिकत्वात्प्रत्यवायपरिहार एव गुर्वनुगमनादीनां वैधं फलं गुरुप्रीतिस्त्वानुषङ्गिकं फलम् । अतएवोक्तमाचार्यैः 'गुर्वनुगमनादीनां नैमित्तिकत्वादक्रियायां भवति प्रत्यवायः करणे न भवति । दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादिनिष्पद्यते । नियमाच्चाविघ्नपरिसमाप्त्यर्था पूर्वसिद्धिरिति न्यायसुधायां च निष्पद्यत इत्यानुषङ्गिकत्वं दर्शितमिति व्याख्यातमिति ध्येयम् ॥

**ब्राह्मणस्य तु०** ॥ **३१** ॥ गुर्वनुगमनादेर्नित्यत्वेऽपि न सोमादेर्नित्यत्वमिति प्रत्यवस्थानात्सङ्गतिः । **यावदिति** । यावज्जीवमग्निहोत्रं जुहोतीत्यत्रेवात्रावश्यकत्वप्रत्यायकशब्दाभावादित्यर्थः । **ननु** इहापि वसन्तेवसन्त इत्यस्ति तत्तुल्यनिर्देश इत्यत आह—**वसन्त इति** । फलभूयस्त्वार्थाभ्यासाभिप्रायेण वीप्सोपपन्नेति भावः । अध्ययनस्य विश्वजिन्न्यायेन फलार्थत्वस्य प्रथमसूत्र एव निराकरणात्प्रकारान्तरेण फलवत्त्वमाह—**सप्तम इति** । नित्यानित्यत्वविचारमध्याये सङ्गमयति—**अत इति** । **वीप्सेति** । कर्माङ्गत्वेन वीप्सार्थविधिरत्र न संभवति एकस्मिन्नेव वसन्ते पञ्चाहादिसमाप्यस्य सर्वेषु वसन्तेष्वनुष्ठानुमशक्यत्वादतोऽनुवादो वीप्सा । नच कालविधिपक्षेऽनुवादः संभवति । अप्राप्तार्थत्वात् फलभूयस्त्वार्थाभ्यासस्यानियतत्वात्। तस्माद्वसन्त इति सप्तमी 'यस्य च भावेन भावलक्षण'मिति विहिता भावलक्षणार्था वाच्या । कर्तव्यरूपं च भावं प्रति लक्षणत्वं निमित्तत्वेसति घटते नान्यथेति वसन्तः सप्तमीबलान्निमित्तं [1] तथा सति निमित्तत्वबलात्प्राप्तनैमित्तिकव्याप्त्यनुवादो वीप्सोपपद्यत इति वीप्सायोगात्कालस्य निमित्तत्वमित्यर्थः । **ननु** काम्यस्यैव यावद्वसन्तमभ्यासविधावपि वीप्सोपपत्तेर्न ततो नित्यत्वमित्यत आह—**यावदिति** । धर्मावबोधफलकत्वेऽपि नैमित्तिकत्वाभावात्कथमावश्यकत्वमत आह—**तस्य चेति** । अवश्यापेक्षितसाधनत्वमेव हि कर्मणामावश्यकत्वं नान्यदिति भावः । **अनाशङ्क्यमिति** । स्ववाक्य एव गुणफलत्वेनोपपन्नस्य वाक्यान्तरगताध्ययनफलकल्पनानौचित्यादिति भावः । **अनृणत्वेति** । 'एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारीवासी'त्यनृणत्वफलश्रवणादित्यर्थः । **नन्ववदानवाक्यशेषत्वादनृणत्वश्रवणं न फलपरमिति** मन्वान आह—**अनुत्पाद्येति** । एवंच तत्र फलाकाङ्क्षाशान्तेर्न विश्वजिन्न्यायात्प्रजोत्पादनविधेः फलकल्पनमिति भावः ।

---

१ चोद्यते. २ शङ्कनीयमेव. ३ स्मरणान्नित्यमेव.

ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति । नच तत्र ब्राह्मणश्रवणात्तद्विषयमेवावश्यकत्वम् । विधिवाक्येषु विशेषाश्रवणात् ब्राह्मणग्रहणस्योपलक्षणार्थत्वात् । अतस्त्रयाणामप्यावश्यकाः सोमादयः ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## षष्ठाध्याये तृतीयः पादः ।

नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम् ॥ १ ॥

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥ [अपि वाप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥ तदकर्मणि च दोषः, तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात् ॥ ३ ॥ कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यादिति ॥ ४ ॥ सर्वस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥]**

**नित्ये सर्वाङ्गसंहारः शक्त्या वाधः फलित्वतः ॥ शक्त्या त्यागासंभवेन निमित्ते जीवने स्थिते ॥ १ ॥**

'यावज्जीवमग्निहोत्रं जुहुयात्' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'वसन्ते वसन्ते ज्योतिषा यजेते'ति किमत्र सर्वाङ्गोपसंहारेणैवाधिकार उत यदा यावन्ति[1] शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति संशयः । तत्र—'समुच्चितानामङ्गानामित्थंभावेन संग्रहः ॥ सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥' नचाफलसाधनेऽधिकारोस्ति । अतो न हीनाङ्गस्य प्रयोगः । उच्यते—'नैमित्तिकं नियोगेन कर्तव्यमवगम्यते ॥ निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥' यावच्छब्दोपबद्धं हि जीवनं धातुसंबन्धविहितणमुल्प्रत्ययेन संबन्धान्तरासंभवान्निमित्तत्वेन यागानुरक्तां[2] भावनां प्रत्य

---

**ऋणश्रुतिरिति ।** 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति ऋणश्रुतेरवश्यकर्तव्यत्वाभावेऽनुपपत्तेरिति भावः । अत्र भाष्ये किं सोमादिकं ब्राह्मणस्यैव नियतमुत त्रयाणामपि वर्णानामिति वर्णान्तरमुक्तं तच्छङ्कोत्तरव्याजेन संगृह्णाति—**नचेति ।** तत्र ह्यर्थवादाद्विशेषग्रहणं यत्र विध्यर्थवादयोरेकवाक्यत्वमिह तु 'जायमानो वै ब्राह्मण' इत्यस्यावदानविधिशेषत्वेन सोमविद्याप्रजविधिशेषत्वाभावान्नार्थवादगतविशेषग्रहणं किंत्वर्थवाद एवोपलक्षणतया नेय इत्याशयेनाह—**विधिवाक्येष्विति ।** द्वितीयवर्णके ऋणवाक्येन संयोगात्खलु सोमविद्याप्रजं ब्राह्मणस्यैवावश्यकमिति मन्यते । नैतद्युक्तं विधिवाक्येष्वविशेषश्रवणादिति सूत्रार्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥** नित्ये यथाशक्त्यङ्गोपसंहारसमर्थस्याधिकारोऽस्मिन्पादे व्युत्पाद्यते । सच पूर्वपादद्वयोक्तकाम्यनित्यनैमित्तिकाधिकारनिरूपणाधीननिरूपण इति पादान्तरत्वमानन्तर्यं च । **समुच्चितानामिति ।** एकादेशे समुच्चितानामङ्गानां करणोपकारकत्वस्य वक्ष्यमाणत्वादिति भावः । **ननु** यत् फलसाधनं तत्रास्तु सर्वाङ्गोपसंहारेणाधिकारः । नित्यस्य तु न फलमस्ति जीवनादेर्निमित्तस्य फलस्य चैकस्मिन्कर्मण्यसमवायात्तथासति निमित्तफलयोरुभयोरप्यनुपादेयत्वेन तदुद्देशेन कर्मोपादाने प्रत्युद्देश्यं वाक्यपरिसमाप्त्या वाक्यभेदप्रसङ्गात् । अतो धात्वर्थ एव नित्यस्थले भाव्यो न भाव्यान्तरमस्ति यदर्थं कृत्स्नाङ्गानुष्ठानं स्यादिति सिद्धान्तैकदेशिमतमाशङ्क्याह—**नचेति ।** यावज्जीवमिति श्रुतं वाक्यं निमित्ते कर्म विधत्ते, प्रवर्तनारूपविधेः पुरुषार्थफलं विनानुपपत्तेः श्रुतार्थापत्तिकल्पितं वाक्यं पापक्षयरूपफले विधत्ते, इत्येकस्मिन्वाक्ये निमित्तफलरूपानुपादेयद्वयोद्देशेन कर्मविध्यभावान्न कश्चिद्दोष इति भावः । एवंच निमित्तवशप्राप्तावश्यकर्तव्यत्वं कृत्स्नाङ्गोपसंहारसमर्थविषयं भविष्यतीत्याशयवानाह—**अत इति । धात्विति ।** 'धातुसंबन्धे प्रत्यया'इत्यधिकारे 'यावति विन्दजीवो'रित्यनेन यावच्छब्द उपपन्ने 'जीव प्राणधारण'इत्यस्माद्धातोर्विहितेन

---

१ यावन्त्यङ्गानि. २ नुरक्तभावनां.

गम्यते । दर्शपूर्णमासशब्दविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचको नाङ्गादीनामिति निमित्तस्य चैतद्रूपं यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम् । अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकत्वानुरोधेन यथासंभवमङ्गानि गृह्णाति तावतैव च शास्त्रवशात्फलसिद्धिरिति यथाशक्तिप्रयोगेनैवाधिकारः । अयंच न्यायस्तन्त्ररत्ने न्यायमालायां च प्रपञ्चितस्तीर्थान्तरं च निराकृतमित्युपरम्यते ॥

अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ॥ २ ॥

**काम्येषु चैवमर्थित्वात् ॥ ८ ॥ [असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ अकर्मणि चाप्रत्यवायात् ॥ १० ॥]**

**काम्ये शक्त्योत सर्वाङ्गं शक्त्या लोपस्य संभवात् ॥ मैवं लोपे निष्फलत्वाच्छाब्दमङ्गं न लुप्यते ॥ २ ॥**
**प्रधानानुष्ठितौ यद्वज्जीवनस्य निमित्तता ॥ कामस्य न तथा यस्मात्काम्यं त्यक्तुं च शक्यते ॥ ३ ॥**

काम्यानि कर्माणि 'ऐन्द्राग्नमेकादशकपालं निर्वपे'दित्यादीन्युदाहरणं । प्रकृतावपि काम्यः प्रयोग उदाहरणमेव । तत्रापि किं यथाशक्तिप्रयोगेनाप्यधिकारः उत सर्वाङ्गोपसंहारेणेति विचारः । तत्रासत्यपि निमित्ते प्रजाकामादिशब्दैरविशेषप्रतीतेरसमर्थानामप्यधिकार इति स्थितेऽपि तिर्यगधिकरणे पूर्वाधिकरणोपजनिताङ्गलोपकालुष्यबुद्धिः काम्येष्वपि लोपं मन्यते । अत्रोच्यते—प्रजाकामादिशब्दाः समर्थेऽप्यविरुद्धाः । नच कामनानिमित्तं येनावश्यकत्वं शाब्दं स्यात् । अङ्गानि तु शाब्दानि न शक्यन्ते बाधितुं । नैमित्तिके पुनः शाब्दमावश्यकत्वं प्रधानस्येति तदविरोधेनाङ्गानि यथाशक्ति गृह्यन्त इति विशेषः ॥

---

णमुल्प्रत्ययेन जीवनस्य यजेतेति समभिव्याहृतयजिधात्वर्थसंबन्धो निमित्तनैमित्तिकभावात्मकोऽवगम्यत इत्यर्थः । निमित्तस्य च न कर्मस्वरूपेण संबन्धः किंतु निमित्ते सति कर्म कर्तव्यमिति कर्तव्यतया । अतएव निमित्तस्य कर्मानुष्ठापकत्वमुपपद्यते । एवंच धात्वर्थसंबन्धोऽत्र कर्तव्यतात्मकतदनुरक्तभावनासंबन्धपर्यवसन्न इत्याशयेन यागानुरक्तभावनांप्रतीत्युक्तम् । नन्वेवमपि साङ्गमेवानुष्ठेयं दर्शपूर्णमासशब्दस्य कालयुक्तकर्मपरत्वात् 'पौर्णमास्यां पौर्णमास्या यजेते'ति प्रयोगवचनेन साङ्गस्य कालविधानादित्यत आह—**दर्शेति** । उत्पत्तिविधौ कालयोगिनां दर्शपूर्णमासशब्दो वाचको नतु प्रयोगविधाविति भावः । **ननु** निमित्तवशप्राप्तावश्यकर्तव्यत्वमप्यङ्गानुसारात्संकोच्यमित्यत आह—**अत इति** । निमित्ते हि नैमित्तिकमवश्यकर्तव्यमिति प्रधानवाक्यस्याङ्गवाक्यानुसारात्संकोचनस्यायोग इति भावः । **नन्वे**वमपि हीनाङ्गस्य फलसाधनत्वाभावादफलसाधने कथमधिकार इत्यत आह—**तावतैवेति** । प्रधानानुरोधेनाङ्गनयनाद्यथाशक्त्यङ्गोपसंहारादेव फलसिद्धिरिति निमित्तशास्त्रादवगम्यत इत्यर्थः । **नन्वेवं समर्थस्यापि** नाङ्गादरः स्यादित्यत आह—**अयंचेति** । अङ्गोपदेशनिमित्तोभयपर्यालोचनया यदा यावन्त्यङ्गानि संपादयितुं शक्नोति तदा तावद्भिरङ्गै[१]रुपेतं प्रधानमेनःक्षपयतीति शास्त्रार्थावसायात् । सत्यां शक्तावङ्गत्यागे वैगुण्यान्न फलसिद्धिरित्यादि प्रपञ्चितमित्यर्थः । **तीर्थेति** । केचित्तु विषयीभावः करणीभावपूर्वकः काम्ये । तेनाङ्गसाकल्यमाहुः । नित्ये विपर्यय इत्यादिना प्राभाकरमतं विस्तरेण न्यायरत्नमालायामनूद्य निराकृतमित्यर्थः । सौत्रतथाभूतोपदेशादित्यस्य व्याख्यानषट्कं टुप्टीकायां द्रष्टव्यम् ॥

**काम्येषु चैवमर्थित्वात् ॥ ८ ॥** भाष्ये विकृत्युदाहरणं न्यायसाम्यादुपलक्षणमभिप्रेत्याह—**प्रकृताविति** । नन्विहावश्यकर्तव्यत्वाभावान्न यथाशक्त्युपबन्ध इत्यत आह—**असत्यपीति** । तिर्यगधिकरणे प्रधानवाक्यजनिताविशेषप्रत्ययबाधेन सर्वाङ्गोपसंहारसमर्थस्याधिकार उक्तः सच पूर्वाधिकरणे नैमित्तिकेष्वपोदितः कामविषयतया व्यवतिष्ठते तेन काम्ये सर्वाङ्गोपसंहारावश्यभावादिह कथं पूर्वपक्षप्रवृत्तिरित्यत आह—**स्थितेऽपीति** । ननु प्रजाकामादिशब्दवन्निमित्तश्रुतेरपि समर्थे न विरोध इत्यत आह—**नैमित्तिक इति** । कस्यापि पुरुषस्य यावज्जीवं सर्वाङ्गोपसंहारसमर्थस्यासंभावितत्वेन यथाशक्त्युपबन्धाभावेऽस्ति निमित्तश्रुतिविरोध इति भावः । सूत्रार्थस्तु—काम्येष्वपि यथाशक्तिप्रयोगः स्यादशक्तस्याप्यर्थित्वाविशेषादिति ॥

---

१ नाङ्गानां निमित्तस्य. २ सचायं न्यायः. ३ नैवेति.

द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

**क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥ [अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥]**

**नीवारादिद्रव्यभेदात्कर्मान्यत्स्यात्तदेव वा ॥ द्रव्यकर्मैक्यतः पूर्वस्तत्रैवाभेदतोऽन्तिमः ॥ ७ ॥**

अतः परमतिप्रसङ्गनिराकरणेन नैमित्तिके स्थापितस्य यथाशक्तिप्रयोगस्य शेषत्वेन प्रतिनिधिविचाराः प्रस्तोष्यन्ते । तदुपोद्घातत्वेन त्विदं चिन्त्यते—किं दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तरं क्रियमाणं कर्मान्तरत्वमापादयति उत द्रव्यान्तरेऽपि तदेव कर्मेति । यद्यन्यत्ततो न प्रतिनिधिरथ तदेव तदा द्रव्यान्तरं प्रतिनिधाय प्रयोक्तव्यं कर्म । तत्र—'द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः ॥ तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम् ॥ उच्यते—'तदात्मनोऽपि त्वस्यैव व्यतिरेकः कियानपि ॥ जातिवद्गुणवच्चातस्तद्भेदेऽपि न भिद्यते ॥' क्रियापि जात्यादिवद्देवदत्तादिभेदेऽपि चलति यजति दर्शपूर्णमासावनुतिष्ठतीत्येवमेकबुद्धिवेदनीया न भेदं प्रतिपद्यते । नह्यत्यन्ताभिन्नत्वं द्रव्यात्क्रियायाः येन तद्भेदाद्भेदः स्यात् भेदोऽपि त्वस्त्येवानैकान्ताभ्युपगमात् । अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात्सिद्धः प्रतिनिधिः ॥

द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ॥ ४ ॥

**श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥ [क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ नियमार्थः क्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥]**

**द्रव्ये प्रतिनिधिर्नास्ति विद्यते वा न विद्यते ॥ मानाभावादस्ति कर्मचोदनाक्षेपिका यतः ॥ ५ ॥**

दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्तव्यो नेति विचारे न कर्तव्य इत्याह । सर्वशक्त्यधिकरणेऽशक्याङ्गत्याग उक्तः न पुनरङ्गान्तरागमः । नच द्रव्यान्तरागमे प्रमाणमस्ति कर्मचोदना तावत् न द्रव्यं प्रयुङ्क्ते । यत्तु द्रव्यस्य प्रयोजकं व्रीहिभिर्यजेतेति तद्व्रीहीणामेव प्रयोजकं नान्यस्यातो नान्यागमः । स्यादेवं यदि व्रीहिशास्त्रं द्रव्यस्य विधायकं स्यात् । कर्मचोदनया त्वाक्षिप्तं

---

**क्रियाणामाश्रितत्वात्०** ॥ ११ ॥ ननु क्रियाभेदाभेदविचारः पूर्वेण न सङ्गतः । नच वक्ष्यमाणोपोद्घाततया सङ्गतिः । वक्ष्यमाणस्यापि पूर्वेण न सङ्गतिरित्याशङ्क्याह—**अतःपरमिति** । पूर्वस्य नैमित्तिके यथाशक्तिप्रयोगस्थापन एव दृष्टेर्वक्ष्यमाणस्य पूर्वतरसङ्गतिरेवापेक्षिता नतु पूर्वसङ्गतिरिति भावः । उपोद्घातत्वमेवोपपादयति—**यदीति** । **द्रव्यस्येति** । क्रिया नाम द्रव्यस्यैव रूपं स्वरूपमित्यर्थः । **तद्भेद इति** । नचैवं प्रतिप्रयोगं द्रव्यभेदात्क्रियाभेदः स्यादिति वाच्यम् । तत्र द्रव्यव्यक्तिभेदेऽपि एकजातीयत्वेन तदात्मना द्रव्यस्यैक्यान्नास्ति क्रियाभेद इति भावः । सर्वेष्वपि प्रयोगेषु कर्तृदेशकालभेदेपि आग्नेयक्रियाऽव्यतिरेक एवमग्नीषोमीयादिक्रियाव्यक्तिरपि । ततश्च कर्त्रादिभेदाद्यथा न क्रियाभेद एवं द्रव्यभेदेपीत्याशयेनाह—**क्रियापीति** । नचैवमनेन न्यायेनाग्नेयाग्नीषोमीययोरपि कर्मणोरैक्यं स्यात्ततश्च षड्यागा इत्यनुपपन्नं स्यादिति वाच्यम् । तत्र शब्दान्तरादिभिर्भेदसिद्धेः । यत्र तु न शब्दान्तरादिभेदकप्रमाणमस्ति तत्र प्रत्यभिज्ञायाः क्रियाव्यक्तिरेकैव । भेदप्रत्ययस्तु कर्त्रादिभेदालम्बनः । सततानुपलब्धिश्च व्यञ्जकाभावादुपपद्यते । ततश्च शब्दवत्क्रियाया अपि नित्यत्वमस्तु वा सर्वत्रैलोक्यवर्तिकर्ममात्रस्यैकव्यक्तिकत्वादाग्नेयाग्नीषोमीययोरप्यैक्यं यावदेकापूर्वानुबद्धमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म अन्यत्तु भिद्यत इत्याग्नेयाग्नीषोमीययोर्वस्तुत ऐक्येपि शास्त्रद्वयेन भिन्नापूर्वानुबद्धतया उत्पादितत्वाद्भेदव्यवहार इति भावः । **नहीति** । तथात्वे व्रीहियवलक्षणद्रव्यभेदादपि क्रियाभेदः स्यादिति भावः । सूत्रार्थस्तु—क्रियाणां द्रव्याव्यतिरेकात्तद्द्रव्यान्तरे विभागो भेदः स्यादिति ॥

**श्रुतिप्रमाणत्वात्०** ॥ १३ ॥ **ननु** सर्वशक्त्यधिकरणन्यायेनाशक्यव्रीहित्यागेनापि कर्मण आवश्यकत्वात् कथं न कर्तव्य इत्यत **आह—सर्वेति** । द्रव्याभावे च कर्मणोऽशक्यानुष्ठानत्वादगत्या नित्यमपि कर्म नारब्धव्यं तथारब्धमपि नित्यं काम्यं च न समापनीयमिति भावः । **न द्रव्यमिति** । व्रीहिशास्त्रादेव तल्लाभादिति भावः । **यत्त्विति** । व्रीहिशास्त्रस्य कर्मचोदनाक्षिप्तद्रव्यनियमवत्त्वेपि नियमादृष्टस्य व्रीहिसाध्यत्वात्तदभावे तददृष्टाभावात्तत्सापेक्षफलानिष्पत्तेरुत्त

---

१ माश्रयत्वात्.

द्रव्यं तद्व्रीहिशास्त्रेण नियम्यते—'यदा स्वलाभाद्व्रीहीणामुदास्ते व्रीहिचोदना ॥ कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवम् ॥' तस्मादस्ति प्रतिनिधिः ॥

देवतामन्त्रक्रियापचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

**न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥१८॥ [देवतायां च तदर्थत्वात् ॥१९॥]**

**देवाग्निमन्त्रप्रोक्षणादावस्ति प्रतिनिधिर्न वा ॥ पुरेवास्तीह यन्मुख्ये कार्यं तन्नेति नास्त्यसौ ॥ ६ ॥**

देवताग्नीन्द्रादिः, अग्निराहवनीयादिः, शब्दः मन्त्रः, क्रिया प्रयाजप्रोक्षणादिरदृष्टार्था । दृष्टार्थेषु त्ववघातादिष्वस्त्येव प्रतिनिधिः । नखनिर्लुञ्चनादिभिरपि तत्कार्यसिद्धेः[1] । तदेषां देवतादीनामपि विस्मरणादिनापचारे किं देवतान्तरं, अग्न्यन्तरं, शब्दान्तरं, क्रियान्तरं च प्रतिनिधेयमुत नेति पूर्वेण न्यायेन प्रतिनिधौ प्राप्ते ब्रूमः—यत्र हि प्रतिनिधीयमानं मुख्यस्य कार्यं साधयति तत्र प्रतिनिधिर्न त्विह तथा संभवति । देवता तावद्विधिलक्षणा । नचान्यानीयमाना देवता भवति । नचादेवतायै संकल्प्यमाने यागो भवति । अतो न देवताकार्यमन्यतः संभवति । तथाहवनीयादिरदृष्टार्थो विनाप्याधारेण प्रक्षेपसंभवात् । नच तददृष्टमन्येन सिद्ध्यतीति प्रमाणमस्ति नीवारादिना तु पुरोडाशनिर्वृत्तिः प्रत्यक्षमनुभूयते[2] । मन्त्रस्तु यद्यपि प्रकाशनार्थत्वाद्दृष्टार्थस्तथापि[3] तस्य ध्यानादिनापि सिद्धेर्न मन्त्रान्तरं शब्दान्तरं वा प्रतिनिधेयम् । अवश्यं हि तदर्थप्रकाशकं शब्दान्तरं प्रतिनिदधता पूर्वं तदर्थः स्मर्तव्यः । तस्मिंस्तु स्मृते कृतकरत्वान्न शब्दान्तरं प्रतिनिधेयम् । येतु मन्त्रनियमकृतमदृष्टं न तदन्येन सिद्ध्यतीत्यप्रतिनिधिमाहुस्तेषां व्रीह्याद्यपचारेऽपि तत्कृतनियमस्यान्यथाऽसिद्धेर्द्रव्यान्तरं प्रतिनिधिर्न सिद्ध्येत् । प्रयाजादिकार्यस्याप्यन्यतःसिद्ध्यनवगमान्नास्ति प्रतिनिधिः ॥

---

एव कर्मण इति भावः । **नियम्यत इति** । नियामकस्य चतुर्थे व्यवस्थापितत्वादिति भावः । **तदेति** । नित्यस्यावश्यककर्तव्यत्वात्प्रक्रान्तस्यावश्यसमापनीयत्वाच्च नियमादृष्टमविगणय्य प्रधानमवश्यं कर्तव्यमित्यर्थः । सूत्रार्थस्तु—श्रुतिप्रमाणकत्वाद्व्रीह्यादिद्रव्यकर्मणः श्रुतिप्रमाणावगतत्वाच्छिष्टस्य व्रीह्यादेरभावेऽन्यस्यानागमस्तस्याशिष्टत्वादिति ॥

**न देवताग्निशब्दक्रियं० ॥१८॥ पूर्वेणेति** । उद्देश्यतया अग्न्यादिदेवता यागसाधनम् । तत्त्वं चानीयमानदेवतान्तरस्यापि संभवति, तथाहवनीयादेर्देशरूपत्वेन दृष्टार्थत्वमदृष्टार्थत्वे पदेनाहवनीयबाधो न स्यात्, किंतु भिन्नादृष्टार्थत्वेनोभयोर्विरोधाभावात्समुच्चय एव स्यात् । एवं मन्त्रस्य स्मरणार्थत्वाच्छब्दान्तरेणापि तदुपपत्तिः । क्रियोदाहरणं तु केवलसिद्धान्तसाम्यमात्रायत्तं प्रयाजादेरदृष्टार्थत्वस्य कथंचिदपि वक्तुमशक्यत्वेन पूर्वपक्षस्य मन्दत्वादिति ध्येयम् । **देवता तावदिति** । नह्युद्देश्यत्वमात्रं देवतात्वमुद्देश्यमात्रे देवताव्यवहाराभावात् किंतु यत्र या उद्देश्यतया विधीयते सा तत्र देवतेति विध्युपलक्षितमेव देवतास्वरूपमित्यर्थः । इदं च स्पष्टं दशमे 'तद्वच्च देवतायां स्यादि'त्यत्र वक्ष्यामः । **नचान्येति** । तस्यास्तत्रोद्देश्यत्वेन विधानाभावादित्यर्थः । **नचेति** । नहि त्यागमात्रं यागः किंतु देवतोद्देशेन त्याग इत्यदेवताकत्यागे याग एव न स्यादित्यर्थः । एवंच देवतापचारे प्रधानस्य यज्यर्थस्यासंपत्त्या लोप एवेति भावः । **अत इति** । अग्निलक्षणदेवताकार्यमन्यस्मात्सूर्यादेर्न भवतीति नाग्निस्थाने सूर्यादिः प्रतिनिधेय इत्यर्थः । एवमग्निशब्दविस्मरणेऽपि आग्नेययागस्य लोप एव नतु वह्निशब्देनाग्निमुद्दिश्य यागानुष्ठानम् । विध्यधीनं हि देवतात्वं विधिश्चाग्निशब्देनैवोद्देश्यत्वमाह । तेनाग्निशब्दोद्देशाभावे देवतात्वाभावान्न यागसंपत्तिरिति द्रष्टव्यम् । **तथेति** । अदृष्टार्थत्वेऽपि यथा पदेनाहवनीयबाधस्तथा दशमे वक्ष्यामः । **ध्यानादिनेति** । एवंच मन्त्रकार्यस्मरणार्थं ध्यानादिसाधनान्तरोपादानावश्यकत्वेऽपि न शब्दान्तरोपादानमित्येतावता मन्त्रोदाहरणं बोध्यम् । **तत्कृतनियमस्येति** । नीवारेषु कतिपयव्रीह्यवयवसद्भावेऽपि व्रीहित्वजातेस्तद्व्यक्तेस्तद्व्यक्त्यारम्भकक्त्स्नावयवानां चाभावाद्व्रीहिनियमादृष्टं नास्ति प्रतिनिधाविति भावः । सूत्रार्थस्तु—देवतादिकं न प्रतिनिधेयमन्यार्थसंयोगात् प्रतिनिधिन्यायान्न्यायान्तरसंयोगादिति ॥

---

१ निर्भेदनादिभिरपि. २ प्रत्यक्षेणोपलभ्यते. ३ ज्ञानत्वाद्दृष्टार्थः

प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम् ॥ ६ ॥

## प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

मापाद्याः प्रतिनिध्यर्हा न वाधस्तदवारणात् ॥ नार्हा अयज्ञियत्वोक्तेरर्थात्तद्विनिवारणात् ॥ ७ ॥

'अयज्ञिया वै माषा वरकाः कोद्रवा' इति प्रतिषिद्धयज्ञसाधनभावानां माषादीनां प्रतिनिधित्वेनोपादानं न वेति संशयः । यज्ञाङ्गत्वं माषादीनां प्रतिषिध्यते । प्रतिनिधित्वे तु न माषस्य यज्ञाङ्गत्वं किंतु तद्गतस्य व्रीह्याद्यंशस्यातः प्रतिनिधेया माषादयः । नैतदेवम् । अयज्ञिया इति यज्ञार्हतामात्रं प्रतिषिध्यते प्रतिनिधित्वे चावर्जनीयं साधनत्वं अतो नैतेषां प्रतिनिधित्वम् ॥

स्वामिनः प्रतिनिध्यभावाधिकरणम् ॥ ७ ॥

## तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ २१ ॥

स्वामिनोऽस्ति प्रतिनिधिर्न वा द्रव्यवदस्ति सः ॥ न मृते प्रेरकाभावाज्जीवनेऽप्यफलित्वतः ॥ ८ ॥

प्रोषिते कार्यान्तरव्यापृते मृते वा यजमाने किं याजमानपदार्थकरणाय पुरुषान्तरं प्रतिनिधेयमुत नेति प्रतिनिधौ प्राप्ते उच्यते । मृते तावत् कः पुरुषान्तरं प्रतिनिदध्यात् को वाध्वर्य्वादीन्प्रवर्तयेत् । स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्तुः फलं सिद्ध्यति । यदितु प्रतिनिहित एव फलमपि लभते ततोऽसौ मुख्य एव स्यान्न प्रतिनिधिः । पत्नी त्वस्वतन्त्रा अनग्निश्च मृते पत्यौ पुरुषान्तरं प्रतिनिधाय प्रयोक्ष्यतीत्यनाशङ्कनीयमेव । प्रोषितेऽन्यव्यापृते वा यजमाने एतावत्पदार्था आज्यावेक्षणादयस्तेषु यथासमाख्यमध्वर्य्वादय एव कर्तार इति न प्रतिनिधिना कार्यम् । फलिसंस्कारास्त्वन्येन क्रियमाणा न यजमानस्य योग्यतां जनयन्तीत्यनर्थकः प्रतिनिधिः ॥

---

**प्रतिषिद्धम्०** ॥ २० ॥ इह तत्कार्यकरत्वस्य प्रत्यक्षत्वादस्तु प्रतिनिधानमिति प्रत्यवस्थानात्सङ्गतिः । प्रतिषिद्धयज्ञसाधनभावानामिति सिद्धान्तरीत्योक्तिः । **व्रीह्यादीति** । आदिशब्दग्राह्यमुद्गांशाभिप्राया माषगतत्वोक्तिर्बोध्या । मुद्गवत्साधनत्वमपि माषगतावयवानामेव । माषोपादानं तु संपातायातमिति माषाणां साधनत्वाभावात्साधनत्वनिषेधेऽपि न प्रतिनिधित्वानुपपत्तिरिति द्रष्टव्यम् । **यज्ञार्हतेति** । 'तदर्हती'त्यर्थे 'यज्ञर्त्विग्भ्यां घखञा'विति विहितघप्रत्ययान्तत्वायज्ञियशब्दस्येति भावः । **अवर्जनीयमिति** । माषैर्विना तद्गतमुद्गावयवैर्यष्टुमशक्यत्वात्तेषामपि यज्ञसंबन्धोऽस्ति स एवेह साधनशब्देनोच्यते तस्यैव चानुषङ्गिकतया प्राप्तस्य प्रतिषेध इत्येतद्बलादेव च माषगतावयवानामङ्गत्वमर्थाद्व्यावर्तत इति भावः । सूत्रार्थस्तु—प्रतिषिद्धं माषादिकमपि न प्रतिनिधेयं यस्मादविशेषेण यज्ञसंबन्धमात्रे निषेधश्रुतिरिति ॥

**तथा स्वामिनः०** ॥ २१ ॥ आतिदेशिकी सङ्गतिः । **प्रतिनिधाविति** । नच संसृष्टद्रव्यस्यैकमात्रत्याज्यत्वासंभवेन सहाधिकारस्य व्यवस्थापितत्वात्कथं स्वामिनः प्रतिनिधिरिति वाच्यम् । यदा द्रव्यपरित्यागं कृत्वाऽन्यत्र लौकिके कार्यान्तरे व्यापृतस्तत्र स्वामिनः प्रतिनिधिसंभवान्मृते केवलपत्न्या एव द्रव्यस्वामितया तत्रोक्तबाधकाभावाच्चेति भावः । **अकर्तुरिति** । संविधातृत्वाभावादकर्तृत्वमिति भावः । **ननु** प्रतिनिहित एव दक्षिणादानेन ऋत्विजः प्रवर्तयिष्यतीत्याशङ्क्य तर्हि तेनैव हविःप्रदानमपि कर्तव्यमिति स एव फलभाक् नतु मृत इति स मुख्य एव स्यादित्याह—**यदीति** । **अस्वतन्त्रेति** । मृते पुत्राद्यधीनत्वादिति भावः । **अनग्निश्चेति** । अनेन पत्न्यां मृतायां यजमानस्याप्यनग्नित्वात्तेनापि न पत्नी प्रतिनिधेयेति सूचितम् । नच यत्र पत्न्यर्थमग्नयो न दत्तास्तत्र यजमानस्य सामित्वात्पत्नी प्रतिनिधिः शङ्कनीयः । तत्र 'अपत्नीकोऽप्यग्निमाहरे'दिति वचनेनाग्निहोत्रेऽपत्नीकस्याधिकारेऽपि दर्शपूर्णमासादावाचारविरोधेनापत्नीकस्यानधिकृततया तत्रापि पत्नीप्रतिनिध्यप्रसक्तेः । उक्तंच तन्त्ररत्ने 'आचारप्रामाण्यान्नापत्नीकस्य दर्शपूर्णमासाद्यनुष्ठान'मिति । **एतावदिति** । यजमानकर्तृकाः क्रत्वर्थाः पदार्था इत्यर्थः । प्रोषिते ऋत्विग्वरणं पत्न्या कार्यमिति भावः । **फलिसंस्कारा इति** । ब्रह्मचर्यादय इत्यर्थः । **न यजमानस्येति** । ततश्च ते बहिरवस्थितेनापि यजमानेनैव कर्तव्या इति भावः । सूत्रार्थस्तु—फलस्य कर्मयोगित्वात्कर्मप्रयोक्तृगामित्वात् प्रतिनिहितस्यैव फलसमवायापत्तेः स्वामिनस्तथा न प्रतिनिधिरिति ॥

सत्रे कस्यचित्स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम् ॥ ८ ॥

**बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २२ ॥**

**मृते सत्रिणि नान्यः स्यात्स्याद्वा नात्रापि पूर्ववत् ॥ स्यादस्वाम्येऽपि कर्त्रंशे साप्तदश्यस्य सिद्धये ॥ ९ ॥**

'सप्तदशावराः सत्रमासीर'न्निति सप्तदशसु प्रवृत्तेषु यदा कश्चिन्म्रियते तदा तत्स्थानेऽन्यः प्रतिनिधेय उत नेति। न स्वामिनः प्रतिनिधिरित्युक्तम्। एवं प्राप्तेऽस्ति प्रतिनिधिरित्याह। काम्यमपि कर्म यदा प्रवृत्तं भवति तदावश्यं समापनीयमित्युक्तम्। आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम्। अतो यद्यपि ये यजमानास्ते ऋत्विज इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वादेकपदोपात्तयोश्च स्वामिकर्तृत्वयोरार्त्विज्योद्देशेन विधिसंभवात्स्वामिभिरेवार्त्विज्यं कर्तव्यम्। आनीयमानश्चोपरितनाधिकरणन्यायेन स्वामी न भवति तथापि तन्मात्रं हित्वा कर्त्रंशे साप्तदश्यं समापयितुमागमयितव्यं पुरुषान्तरम् ॥

प्रतिनिहितस्यास्वामित्वाधिकरणम् ॥ ९ ॥

**स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥ [कर्मकरो वा भृतत्वात् ॥ २४ ॥ तस्मिंश्च फलदर्शनात् ॥ २५ ॥]**

**स स्वाम्यप्युत कर्तैव स्वामी तत्स्थानगत्वतः ॥ अनारब्धुः फलाभावादस्वामी कर्तृमात्रता ॥ १० ॥**

योऽसावानीतः स किं स्वामी फलभागी स्यादुत कर्तृमात्रमिति संशये स्वामिस्थानोपनिपातात्स्वामित्वं मन्यमानस्योत्तरं योह्यारभ्य समापयति तस्य फलम्। अयं पुनर्मध्ये प्रविष्टो न फलं प्राप्नुम-

---

**बहूनां तु प्रवृत्ते० ॥ २२ ॥ एवमिति** । अवश्यं कर्तव्यं समापनमवशिष्टैरप्युपमयत इति भावः। यथाविधं प्रक्रान्तं तथाविधमेव समापनीयं अयथारम्भसमापने वैगुण्यात्। सप्तदशकर्तृकं च प्रक्रान्तं न षोडशकर्तृकमित्यतोऽवश्यसमापनार्थमन्यः प्रतिनिधेय इत्याह—**अस्तीति** । यदभिप्रायेण यथाशक्तीत्युक्तं तद्विशदयति—**अतो यद्यपीत्यादिना** । नच प्राप्तार्त्विज्योद्देशेन स्वामित्वकर्तृत्वविधाने वाक्यभेदः एकप्रसरेण स्वामित्वविशिष्टकर्तृत्वविधौ वाक्यभेदाभावादित्याह **—एकेति** । नच शानचः कर्तृत्वमेवार्थः स्वामित्वं फलित्वापरपर्यायं न तद्वाच्यं, किंतु आत्मनेपदोपाधिकत्वात्तत्प्रतीतिरिति वाच्यम्। कर्तृविशेषापेक्षाबलादुपाधितयाप्युपस्थितस्य स्वामित्वस्यावश्यं विधेयत्वात् उपाधितयोपस्थितौ पदस्य पृथक्प्रसरानपेक्षणेन तद्विधावपि वाक्यभेदाप्रसङ्गात्। नच प्रकरणात्प्रधानकर्तृरूपविशेषज्ञानान्नापेक्षेति वाच्यम्। स्ववाक्योपस्थितविशेषपरित्यागेन प्राकरणिकविशेषग्रहणायोगादिति भावः। **तथापीति** । असंभवात्स्वामित्वपरित्यागेऽपि संभवत्कर्तृसाप्तदश्यं न परित्याज्यम्। नच प्रयोगात्प्रागेव साधारणीकृतद्रव्ये प्रतिनिहितपुरुषंप्रति स्वत्वाभावेन तस्य यागकर्तृत्वमेव न संभवतीति वाच्यम्। क्रयादिना तद्द्रव्यांशस्वीकारेण तस्य कर्तृत्वसंभवादिति भावः। नच 'यदि सत्राय दीक्षितानां म्रियेत योऽस्य नेदिष्ठः स्यात्तं तत्स्थाने दीक्षयित्वा तेन सह यजेरन्नि'ति वचनादेव प्रतिनिधिसिद्धेरिदमधिकरणमनर्थकमिति वाच्यम्। वचनस्य न्यायप्राप्तप्रतिनिध्यनुवादेन नेदिष्ठत्वगुणविधानार्थत्वादिति भावः। सूत्रार्थस्तु—बहूनां संबन्धिनि कर्मणि प्रवृत्ते कस्मिंश्चिद्यजमानेऽपचरितेऽन्यमागमयेत्तथा सत्यवैगुण्यादिति ॥

**स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥ स्वामिस्थानेति** । तथाच योऽपि प्रतिनिधिः स्यात् सः फलभागपि स्यादिति। तस्मान्नास्ति प्रतिनिधिरिति पूर्वाक्षेपे पूर्वपक्षपर्यवसानात्सङ्गतिः। स्वामित्वे सति स्वतन्त्राधिकारापत्त्या प्रतिनिधित्वमेव न स्यात्ततो मन्दोयं पूर्वपक्ष इति दर्शयति—**मन्यमानस्येति** । सफलकर्मानुष्ठानायत्तत्वात्फलसिद्धेरिति भावः। **ननु** स्वामिकर्तृसाप्तदश्याभावाद्यथाशक्तिप्रयोग इति पूर्वाधिकरण एवोक्तम्। नच काम्ये यथाशक्तिप्रयोगात्फलमस्ति, तस्मादितरेषामपि फलाभावेन स्वामित्वाभावाद्विशिष्य प्रतिनिहितस्य स्वामित्वाभावव्युत्पादनमसङ्गतमिति चेत्। मैवम्। प्रतिनिधिना प्रयोगेऽपि यथोक्तफलसद्भावात्। तथाहि यः स्वर्गपश्वादिफलं कर्म प्रारभ्य तत्साधनव्रीह्याद्यलाभादुत्सिसृक्षति तं प्रति नैतदुत्स्रष्टव्यं किंत्ववश्यं समापनीयमित्याचारानुमितविधिना विहितं किमर्थं समापनीयमिति फलापेक्षायां यदेव तस्य मनसि वर्तते स्वर्गपश्वादि तदेव बुद्धिविपरिवृत्तेरपेक्षितत्वाच्च फलत्वेन संबध्यते। नचैवं वीतायां फलेच्छायामवाप्ते वा फलेऽवश्यसमाप्तेः पापक्षयफलकत्वं पूर्वपादोक्तं विरुध्येतेति वाच्यम्। तत्रावश्यसमाप्तेः फलापेक्षायां प्रकृतस्वर्गपश्वादिफलस्यानपेक्षितत्वाद-

---

१ देकवचनो. २ कर्तैवेति.

ईति । नचासौ विधिवशात्प्रवृत्तो येन विधिप्रामाण्यात्फलं लभेत इतरैरिह स्वामिभिरसौ सामादिभिः संख्यासंपत्त्यर्थमानीतस्तस्मान्नास्य स्वामित्वम् ॥

सत्रे प्रतिनिहितस्य यजमानधर्मग्राहिताधिकरणम् ॥ १० ॥

## तद्धर्मा स्यात्तत्संयोगात् ॥ २६ ॥

**नास्य स्युः फलिसंस्काराः कार्या वा नाफलित्वतः ॥ अन्येषां साप्तदश्यार्थमफलिन्यपि ते मताः ॥ ११ ॥**

किमानीतस्य फलिसंस्काराः कर्तव्या नेति विचारः । फलप्रतिग्रहणयोग्यताजननार्था हि ते, नचानीतस्य फलमित्युक्तम् । अतो नास्य फलिसंस्कारा इति । सत्यं नास्ति फलम्, इतरेषां तु सप्तदशकर्तृकैः संस्कारैर्योग्यता जन्यते, सर्वत्र कर्त्रंशे साप्तदश्यनिवेशात्, ततस्तत्सिद्ध्यर्थं प्रतिनिधिरपि संस्कारान्कुर्यात् ॥

श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ ११ ॥

## सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

**किंचित्प्रतिनिधेयं स्याच्छ्रुततुल्यमुताग्रिमः ॥ आक्षेपान्न समद्रव्ये मुख्यांशानुगमो यतः ॥ १२ ॥**

श्रुतापचारे प्रतिनिध्युपादानं स्थितं तत्र यत्किंचित्प्रतिनिधातव्यमुत सदृशमेवेति संशयः । तत्र —'आग्नेयचोदना तावद्यत्किंचिद्द्रव्यमाक्षिपेत् ॥ व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम् ॥ अतः केन प्रमाणेन सदृशस्योपसंग्रहः ॥ व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते ॥ सा च द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति । तच्च द्रव्य परिच्छिन्नमनेकावयवात्मकम् ॥' अवयवा एव ह्येकद्रव्यतामापन्ना अवयविशब्दाभिधेया जात्या परिच्छिद्यन्ते नात्यन्तमर्थान्तरम् । अतस्तैरवयवैर्जात्याश्रयभूतैः कर्म साधनीयम् । तत्र यदि सदृशमुपादीयते ततस्तेषामवयवानां कतिपया लभ्यन्ते जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवति । विसदृशोपादाने पुनः समस्तपरित्यागः स्यात् । अतो व्रीहिशास्त्रमपि यथासंभवमुपपादयितुं सदृशोपादानम् । एवंच सुसदृशलाभे मन्दसदृशं नोपादेयं किंतु सुसदृशमेव, तत्र बह्ववयवानुग्रहात् ॥

---

विपरिवर्तमानस्यापि पापक्षयस्यैव फलत्वौचित्यात् । एवंच प्रकृतेऽप्यन्येषामृद्धिलक्षणं फलं प्रतिनिहितपुरुषमवलम्ब्य यथाशक्तिप्रयोगेऽप्यस्तीति प्रतिनिहितस्यैव स्वामित्वाभावव्युत्पादनमुपपन्नम् । यदिच विगुणत्वादृद्धिलक्षणं फलमन्येषामपि नास्तीत्येवं मन्यसे तथापि पापक्षयलक्षणफलस्य तेष्ववर्जनीयत्वात्प्रतिनिहिते तस्याप्यसंभवात् तत्फलविषयोयं विचार इति संतोष्टव्यम् । तदेतदभिसंधायेतरैः स्वामिभिरिति स्वामिशब्दप्रयोगः सूत्रे तत्संयोगात् तेन स्वामिस्थानेन योग्यताधानसिद्ध्यर्थमपि न प्रतिनिहितेन संस्काराः कार्या इति भावः । **सर्वत्रेति** । प्रधानभूतस्यापि संस्कारेषु स्वामिनः कर्तृकत्वसंयोगादित्यर्थः ॥

**तद्धर्मा स्यात्० ॥ २६ ॥ अत इति** । संस्कारेषु स्वामिनः प्राधान्येन गुणभूतकर्तृत्वाभावान्न संस्कारेषु सप्तदशकर्तृकत्वमितीतरेषां फलयोग्यताधानसिद्ध्यर्थमपि न प्रतिनिहितेन संस्काराः कार्या इति भावः । **सर्वत्रेति** । प्रधानभूतस्यापि संस्कारेषु स्वामिनः कर्तृकत्वमस्तीति तत्रापि साप्तदश्यं निवेशितमिति भावः । सूत्रे तत्संयोगात्स्वामिकार्यसंयोगादित्यर्थः ॥

**सामान्यं तच्चिकीर्षा हि ॥ २७ ॥** पूर्वोक्तप्रतिनिधौ विशेषविचारात्सङ्गतिं सूचयन्नाह—**श्रुतेति । नान्येति** । व्रीहिशास्त्रस्यावयवपर्यन्तत्वेऽपि अवयवा व्रीहिजातिपरिच्छिन्ना एव यागसाधनं नीवारगतास्तु जात्यन्तरपरिच्छिन्ना इति न तदुपादानेन व्रीहिशास्त्रानुग्रह इति भावः । **अनेकावयवात्मकमिति** । अत्रावयवातिरिक्तोऽवयवी नास्ति किंत्ववयवा एव अवयवीति न भ्रमः कर्तव्यः । नवमेऽतिरिक्तावयविद्रव्यस्य साधनात्ततश्चास्त्येवावयवातिरिक्तमवयविद्रव्यं किंत्ववयवावयविनोस्तादात्म्यादवयवात्मकं तदित्युक्तं, अतएवाह—**नात्यन्तमर्थान्तरमिति । तत्र यदीति** । नहि व्रीहिजातिपरिच्छिन्नत्वाकारेणावयवानां साधनता पेषणादिनां द्रव्यनाशेनावयवानां तज्जात्यवच्छिन्नत्वाभावादवयवानां जात्यवच्छिन्नत्वस्य द्रव्यात्मकतानिबन्धनत्वात् द्रव्यनाशे तदात्मकत्वासंभवात् । अतो व्रीहिजात्यवच्छेदयोग्यतामात्रेण साधनता वाच्या । सा च नीवारगतावयवेष्वप्यस्तीति कियान् व्रीहिशास्त्रानुग्रहः संभवतीति भावः । नन्वेवमप्यवयवद्वारा यस्य साधनत्वं व्रीहिसोमादेस्तत्र भवतु सदृशप्रतिनिधिनियमः यूपादेस्त्ववयविनो विनाशाभावेन तस्यैव नियोजनसाधनत्वेन तच्छास्त्रस्यावयव-

---

१ इतरैस्तु. २ स्यात्तत्कर्मसं. ३ नत्वत्यन्त.

द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥ १२ ॥

**निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥२८॥ [अशब्दमिति चेत् ॥२९॥ नानङ्गत्वात् ॥३०॥]**

**यवाः प्रतिनिधेयाः किं व्रीह्यर्थे तत्समा उत ॥ मुख्यलाभादग्रिमोऽन्त्यो व्रीहिपक्षे यवा विधेः ॥ १३ ॥**

वैकल्पिकेषु व्रीहियवादिष्वेकेन व्रीहिणा प्रक्रान्ते प्रयोगे यदि तस्यापचारो भवति तदा किं वैकल्पिकान्तरमुपादेयमुत व्रीहिसदृशमिति संशये मुख्ये सति प्रतिनिध्ययोगाद्यवोपादाने प्राप्ते ब्रूमः—वैकल्पिकेषु यावदेकमनुपक्रान्तं तावदितरेषां प्राप्तिः, उपक्रान्ते तु तस्मिन्प्रयोगे तदेवाङ्गमितरदनङ्गमेव, व्रीहिभिश्च संकल्प्य यवैः कुर्वाणो नानृतं वदेदिति क्रत्वङ्गभूतप्रतिषेधमतिक्रामेत्। अतो व्रीहीणामेवाङ्गत्वात्तत्सदृशमेवोपादेयम् ॥

पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ॥ १३ ॥

**वचनाच्चन्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥**

**सोमाभावे भवेत्पूतीविधिः प्रतिनिधाद्युत ॥ नियमो वचनादाद्यो लाघवात्तन्नियम्यते ॥ १४ ॥**

'यदि सोमं न विन्देत पूतीकानभिषुणुया'दिति किमयमभावे विधिः सोमाभावे पूतीकैर्यागं साधयेदिति सोमजातिवत् पूतीकजातिर्यागसाधनपरिच्छेदकत्वेन विधीयते उत प्रतिनिधिनियमः, यः सोमजातिपरिच्छिन्नानवयवान्सकलानुपादातुमशक्तो विकलानुपादित्सते स पूतीकगतानिति, पूतीकत्वं सोमावयवोपलक्षणं न साधनोपलक्षणमिति तत्राभावे विधिरिति प्राप्ते नियम इत्याह। साधनत्वं हि पूतीकानामत्यन्ताप्राप्तं विधातव्यं प्रतिनिधिनियमे तु पाक्षिकप्राप्तानां नियममात्रं विधीयत इति लाघवं भवति। ननु सुसदृशानामन्येषां संभवादीषत्सदृशाः पूतीका नैव पक्षेऽपि प्राप्नुवन्तीति कथं नियम्यन्ते। उच्यते—सौसादृश्यं हि न प्रतिनिधेः प्रापकं किं तर्हि नियामकं, मुख्याभावात्तु प्रतिनिधेः प्राप्तिस्तस्यां चावस्थायां यावन्न्यायेन सुसदृशं नियन्तुमुपक्रम्यते तावद्वचनेनासुसदृशाः पूतीका नियम्यन्तेऽतः प्रतिनिधिनियमोऽयम् ॥

---

पर्यन्तत्वाभावात्तत्र सदृशप्रतिनिधिनियमो न स्यादिति वाच्यम्। तत्रावयवेष्वव्याप्रियमाणेषु अवयविनो व्यापारायोगेन सहावयवैरवयविनः कार्यसाधनतयाऽवयवसहितस्यैवावयविनः प्रधानचोदनया क्षेपे सति यथाक्षेपं खादिरादिशास्त्रेण नियमविधानात्तस्यापि शास्त्रस्यावयवेषु तात्पर्यमवर्जनीयमिति तत्राप्यस्ति सदृशनियम इति। सूत्रार्थस्तु—यत्र सामान्यं सादृश्यमस्ति नीवारेषु तदेव द्रव्यं प्रतिनिधेयं यस्माद्व्रीह्यादिमुख्यशास्त्रार्थचिकीर्षेति ॥

**निर्देशात्तु विकल्पे यत्प्रवृत्तम्०** ॥ २८ ॥ इह न सदृशोपादानमिति प्रत्यवस्थानात्सङ्गतिः। **मुख्य इति**। वैकल्पिकेष्वेकप्रवृत्तावितरानङ्गत्वं प्रवृत्तद्रव्यसद्भावस्थल एव, तदपचारे तु प्रयोगविधिर्वैकल्पिकान्तरमेव प्रयुङ्क्ते इत्याशयः। यथाब्धं समापनीयतया व्रीहिसाधनकप्रयोगप्रक्रमे प्रयोगविधिरपि प्रक्रमानुसारेण प्रतिनिधिमेवावलम्बते न वैकल्पिकान्तरम्। तथासत्ययथारम्भं समापनप्रसङ्गात्ततः प्रवृत्तद्रव्यापचारेऽपि वैकल्पिकान्तरमनङ्गमेवेत्याशयेनाह—**वैकल्पिकेष्विति**। सूत्रार्थस्तु—यत्प्रवृत्तं द्रव्यं तत्सदृशमुपादेयं तत्प्रयोगे प्रवृत्तस्याङ्गत्वेन निर्देशादिति ॥

**वचनाच्च न्याय्यमभावे०** ॥ ३१ ॥ प्रक्रान्तेऽपि प्रयोगे वचनाद्द्रव्यान्तरमङ्गमिति प्रत्यवस्थानात्सङ्गतिः। **ननु** पक्षद्वयेऽपि पूतीकैर्यागानुष्ठानाविशेषादनर्थकमिति शङ्कां व्यावर्तयितुं सोमजातिवदित्यादिना सोमजातिपरिच्छिन्नानित्यादिना च पूर्वोत्तरपक्षद्वयेऽपि निष्कर्षः कृतः। एवंच पूर्वपक्षे पूतीकानां साधनत्वात्पूतिकापचारे पूतीकसदृशोपादानं, सिद्धान्ते तु पूतीकानां साधनत्वाभावात्पूतीकापचारेऽपि सोमसदृशोपादानमिति प्रयोजनभेद इति भावः। **तत्रेति**। सोमस्योत्पत्तिशिष्टत्वात्सोमानुरक्तरूपेणैव करणत्वात्तदभावे करणस्वरूपाभावेन प्रतिनिधिर्न संभवति व्रीह्यादेस्तूत्पन्नशिष्टत्वात्तदभावेऽपि दर्शादेरुत्पत्तिवाक्यावगतरूपानपायात्संभवति प्रतिनिधिस्तस्मादभावे विधिरित्यर्थः। उत्पत्तावपि धातुना केवलयागावगमे तदाकाङ्क्षया द्रव्यान्वयः। अनाकाङ्क्षितस्यान्वयायोगादेवंच धातूपात्तरूपेणैव यागस्य करणत्वं नतु सोमानुरक्तरूपेण। एवंच सोमाभावेऽपि यागस्य करणस्य सद्भावात्तदाकाङ्क्षयात्रापि संभवति प्रतिनिधिरित्याशयेनाह— **नियम इति**। **मुख्याभावादिति**। मुख्याभावे यागस्य द्रव्यापेक्षया येनकेनचिद्द्रव्येण यागः कर्तव्य इति प्रथमत एव सुसदृश-मन्दसदृश-विसदृश-साधारण्येन द्रव्यमात्रस्यास्त्यनियमप्राप्तिरित्यर्थः। सूत्रार्थस्तु—मन्दसदृशत्वादन्याय्यमपि पूतीकद्रव्यं वचनात्प्रतिनिधिः स्याद्वचनस्याभावेऽपीतरस्य मुख्यस्याभावात्तत्सामान्येन प्रतिनिधिरिति ॥

---

१ न्नान्सकलानवयवानुपा.

प्रतिनिध्यपचारे उपात्तद्रव्यसदृशस्य पुनःप्रतिनिधित्वाधिकरणम् ॥ १४ ॥

**न प्रतिनिधौ समत्वात् ॥ ३२ ॥**

**प्रतिनिध्यपचारे तु तेन मुख्येन वा समम् ॥ प्रक्रान्तत्वादग्रिमोऽन्त्यः श्रुतांशसमलाभतः ॥ १५ ॥**

यदा प्रतिनिधिना प्रयोगे प्रक्रान्ते सति तस्यापचारो भवति तदा किं प्रतिनिधिसदृशमुपात्तव्य-मुत मुख्यसदृशमिति संशये वैकल्पिकन्यायेन प्रक्रान्तस्यैव तस्मिन्प्रयोगेऽङ्गत्वात्तत्सदृशमेवोपादेयं न मुख्यसदृशम्। मैवम्। नहि नीवाराणामङ्गत्वमस्ति प्रमाणाभावात्। व्रीह्यवयवांस्तु तद्गतानुपाद-दानो नान्तरीयकतया नीवारानुपादत्ते नाङ्गतया। अतस्तदपचारे पुनरपि श्रुतावयवलाभाय व्रीहि-सदृशमेवोपादेयम् ॥

श्रुतस्यापि प्रतिनिधेरपचार उपात्तसदृशस्य पुनःप्रतिनिधित्वाधिकरणम् ॥ १५ ॥

**स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥ [न तदीप्सा हि ॥ ३४ ॥]**

**पूतीकस्यापचारे स्यात्तेन सोमेन वा समम् ॥ आद्यः श्रुतांशसादृश्यात्पूतीकाविधितोऽन्तिमः ॥ १६ ॥**

यद्यपि प्रमाणाभावान्नीवारादीनामनङ्गत्वं श्रुतिलक्षणस्य तु पूतीकादेरङ्गत्वात्तस्य प्रक्रान्तस्यापचारे तत्सदृशमेवोपादेयं न सोमसदृशम्। मैवम्। नहि श्रुतिः पूतिकानामङ्गत्वमाह किं तर्हि तद्गतानां सोमावयवानां प्रतिनिधिनियमोऽयं नामाभावे विधिरित्युक्तं अतस्तदपचारेपि सोमसदृशस्यैवोपादानम् ॥

मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १६ ॥

**मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३५ ॥**

**प्रतिनिध्युद्यमे मुख्यलाभे ग्राह्यं तु किं द्वयोः ॥ संकल्पेन प्रतिनिधिर्मुख्यं शास्त्रार्थलाभतः ॥ १७ ॥**

यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रस्थितः यद्यन्तरा मुख्यं लभते तदा किं मुख्यमे-वोपाददीताथवा प्रतिनिधिमिति प्रतिनिधेः संकल्पितत्वाल्लब्धं मुख्यमनादृत्य प्रतिनिधिमेवोपाददीत। अन्यथा मिथ्यासंकल्पापत्तेः। उच्यते—यथाशक्ति शास्त्रार्थं संपादयामीत्येवं संकल्पयितव्यं न प्रतिनिधिस्वरूपं। नच मुख्ये संभवति प्रतिनिधिः शास्त्रार्थो भवति, अतो मुख्याधिगमे तदेव स्यात् ॥

---

**न प्रतिनिधौ समत्वात् ॥ ३२ ॥ वैकल्पिकेति।** यथा व्रीहिभिः प्रयोगे प्रक्रान्ते व्रीहीणामेवाङ्गत्वं न यवानां एवं प्रतिनिधिना प्रक्रान्ते प्रयोगे तस्यैवाङ्गत्वात्तत्सदृशमेवोपादेयमित्यर्थः। यद्यपि नीवारा नाङ्गं तथापि तस्मिन्प्रयोगे नीवारगता एव व्रीह्यवयवा अङ्गं न व्रीहिगताः। नीवारगतत्वं च नीवारावयवसहचरितत्वं। नीवारसदृशोपादाने च तथा-विधावयवा लभ्यन्ते इति नीवारसदृशमेवोपादेयमित्याशयः। एवंच पूतीकानां प्रतिनिधित्वेऽपि तदपचारे पूतीकसदृशो-पादानमेव नतु सोमसदृशोपादानमिति पूर्वाधिकरणप्रयोजनाक्षेपात्सङ्गतिः। भवेदेवं यदि नीवारगतत्वेन व्रीह्यवयवानामङ्गता स्यात् स्वरूपेणैव तु तेषामङ्गत्वमतो न नीवारसदृशोपादानमित्याशयेनाह—**अत इति**। सूत्रार्थस्तु—प्रतिनिधावपचरिते न तत्सदृशः प्रतिनिधिः प्रतिनिध्यपचारेपि श्रुतावयवलिप्सया द्रव्यान्तरोपादानस्य तुल्यत्वादिति ॥

**स्याच्छ्रुतिलक्षणे० ॥ ३३ ॥ श्रुतिलक्षणस्य त्विति।** यद्यपि श्रुतिः पूतीकानामङ्गत्वं नाह तथापीह पूतीकनियमा-त्तद्गतत्वेनैवाङ्गत्वमित्यत्र नास्ति विवाद इति तत्सिद्ध्यर्थं पूतीकसदृशमेवोपादेयमित्याशयः। सत्यमिह तद्गतत्वेनैवाङ्गत्वं तथापि पूतीकापचारे तद्गतत्वसोमावयवोभयसिद्ध्यर्थमुभयसदृशोपादेयं न केवलपूतीकसदृशं, यत्र चोभयसदृशं न लभ्यते तत्र सोमावयवानां प्राधान्यात्तद्गतत्वस्य तदवयवसहचरितत्वलक्षणस्य मैत्रावरुणग्रहस्य पयःसंसर्गवत् सोमावयवगुणत्वान्मु-ख्यावयवानुरोधेन सोमसदृशमुपादेयं न पूतीकसदृशमित्याशयेनाह—**अत इति**। श्रुतिलक्षणे प्रतिनिधावपचरिते तत्स-दृशः प्रतिनिधिः स्यादिति सूत्रार्थः ॥

**मुख्याधिगमे० ॥ ३५ ॥** पूर्वत्र वैकल्पिकन्यायानवतारेपीह तदवतारान्मुख्यानादर इति प्रत्यवस्थानात्सङ्गतिः। **न प्रतिनिधिस्वरूपमिति।** तस्यानङ्गत्वादिति भावः। सूत्रार्थस्तु—मुख्यलाभे तदेव यतो मुख्याभावादमुख्यागम इति ॥

प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्यलाभे श्रुतद्रव्येणैव समापनाधिकरणम् ॥ १७ ॥

## प्रवृत्तेऽपीति चेत् ॥ ३६ ॥

**अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः ॥ अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणात्पुनः ॥ १८ ॥**

यदा पुनर्मुख्यखदिरमलब्ध्वा प्रतिनिधिं कदरमुपादाय तक्षणादिषु कतिचित्सु संस्कारेषु कृतेषु प्राक् पशुनियोजनात् खदिरं लभते तदा किमुपात्तेन प्रतिनिधिना कार्यं कुर्यात् उत तत्त्यागेन मुख्यमेवोपादाय संस्कारांश्च पुनः कृत्वा तत्रैव पशुं नियुञ्जीतेति संशयः । तत्रोपात्ते प्रतिनिधौ निवृत्तव्यापारं शास्त्रं नान्यदुपादापयति । तस्मान्न मुख्यसंग्रह इति प्राप्ते उच्यते—नोपादानपरं शास्त्रं येन तस्मिन्कृते निवृत्तव्यापारं स्यात् । प्रधानानुष्ठानार्थं शास्त्रं, तच्च प्रधानं सति मुख्ये प्रतिनिधिना क्रियमाणं विगुणं स्यादतः संस्कृतमपि कदरं हित्वा खदिरे एव पशुर्नियोज्यः । एवं व्रीह्यादिषु द्रष्टव्यम् ॥

प्रतिनिधौ पशौ नियुक्ते श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनाधिकरणम् ॥ १८ ॥

## नानर्थकत्वात् ॥ ३७ ॥

**पशौ नियुक्ते खदिरलाभे कार्यं पुनर्नवा ॥ साद्गुण्याय पुनः कार्यं मुख्यावृत्तिर्गुणान्न हि ॥ १९ ॥**

कृते प्रतिनिधिना नियोजने यदा मुख्यमेव लब्धं तदा कृतमपि नियोजनं साद्गुण्याय पुनः खदिरे कर्तव्यमिति मन्यमानस्योत्तरं । कृते नियोजने लब्धोऽपि खदिरोऽनर्थक एव । नियोजनार्थं हि तदुपादानं तच्च कृतं न गुणानुरोधादावर्तयितव्यमतो नादर्तव्यः खदिरः । अथवा सूत्रद्वयमिदमेकाधिकरणम् । प्रवृत्तेऽपि प्रधाने मुख्योपादानं स्यादितिचेन्नानर्थकत्वादिति ॥

संस्कारायोग्यस्यापि मुख्यस्यैवोपादानाधिकरणम् ॥ १९ ॥

## द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३८ ॥

**अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा नु किम् ॥ आद्यो बहुगुणालोपान्न मुख्यायास्तु लोपनम् ॥ २० ॥**

यदा तु पुनस्तनुत्वात्तक्षणादिसंस्काराणामयोग्यः खदिरो नियोजनमात्रे योग्यः कदरश्च महान्संस्कारयोग्यः तदा कस्योपादानमिति खदिरोपादाने संस्काराणां बहूनामत्यन्तहानिः स्यात् कदरे पुनस्तेषामनुग्रहः खदिरशास्त्रमपि किंचिन्न्यूनं संपादितं भवति ततस्तस्योपादानम् । नैतदेवं बह्वोपि हि—'द्रव्यार्था एव संस्कारास्तेषां नान्यत्प्रयोजनम् ॥ तद्वशेन ततो द्रव्यपरित्यागो न युज्यते ॥ ततः संस्कारहीनेऽपि खदिरे स्यान्नियोजनम् ॥ तक्षणादीनि लुप्येरन्प्रधानेन विरोधतः ॥

---

**प्रवृत्तेऽपीति चेत् ॥ ३६ ॥** इह तु न मुख्यं स्यादिति प्रत्यवस्थानात्सङ्गतिः । **पुनरिति** । प्रतिनिधौ कृतानां मुख्यानुपकारकत्वादिति भावः । **तत्रेति** । विधेः प्रवर्तनास्वभावस्य स्वविषयप्रवृत्तिमात्रेण चारितार्थ्यात्प्रतिनिधौ प्रवृत्ते शास्त्रं निवृत्तमिति विकल्पेनापि प्रतिनिधिनैव कार्यं संपाद्यमिति भावः । नहि खदिरशास्त्रं खदिरसिद्ध्यर्थं खदिरमुपादापयति किंतु नियोजनरूपप्रधानार्थं । तथाचाङ्गशास्त्रस्यापि प्रधानसिद्धावेव तात्पर्यात्तदनुरोधेन स्वयं व्याप्रियत इति प्रधानसाद्गुण्यार्थं सति मुख्ये पुनस्तत्प्रयुङ्क्ते इत्याह—**नेति** । नोपादानमात्रपरमित्यर्थः । **प्रधानेति** । प्रधानानुष्ठानोद्देशेनाङ्गानुष्ठापकमित्यर्थः । सूत्रार्थस्तु—चेदिति पूर्वसिद्धान्तपरामर्शः । मुख्याधिगमे मुख्यमितिचेन्न्यायस्ततः प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादेयमिति चेदित्यसंदिग्धे संदिग्धवचनम् ॥

**नानर्थकत्वात् ॥ ३७ ॥** पूर्वप्रत्युदाहरणमात्रमिदं नात्यन्तं पूर्वपक्षे यतितव्यमिति सूचयति—**मन्यमानस्येति** । सूत्रार्थस्तु—प्रतिनिधिना कृते प्रयोजने न मुख्यं स्यादानर्थक्यादिति । प्रवृत्तेपीतिचेन्नानर्थकत्वादिति सूत्रद्वयस्वारस्यमनुरुध्याचार्यकृतव्याख्यानप्रकारमाह—**अथवेति** ॥

**द्रव्यसंस्कारविरोधे० ॥ ३८ ॥ अनुग्रह इति** । अनेन पूर्वत्र गुणाननुरोधेऽपीह तदनुरोध इति प्रत्यवस्थानात्सङ्गतिः सूचिता । **खदिरशास्त्रमपीति** । संस्काराणां बहूनामत्यन्तहान्यपेक्षया वरं प्रधानस्यैकस्य किंचिन्न्यूनतेति भावः । प्रधानन्यूनताप्रसक्तौ गुणबहुत्वमपि परित्याज्यमित्याह—**बह्वय इति** । नच कांस्यभोजिन्यायाद्गुणानुरोधः प्रधानपीडायां तन्न्यायानवतारादिति भावः । सूत्रे तदर्थत्वात्संस्काराणां द्रव्यार्थत्वादित्यर्थः ॥

मुख्यस्य कार्यासाधकत्वे प्रतिनिधेरेवोपादेयताधिकरणम् ॥ २० ॥

**अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥**

नियोजनेऽप्ययोग्यश्चेत्खदिरः किं तदा भवेत् ॥ मुख्यत्वेन स एव स्यात्तद्वैयर्थ्येन हीतरः ॥ २१ ॥

यदा पुनरतितनुत्वान्नियोजनस्याप्ययोग्या खदिरलता भवति तदापि किं मुख्यत्वात्सैवोपादेया नेत्याह—नहि तयोपात्तयापि कश्चिदर्थः कार्याक्षमत्वात् । अतस्तादृशे लब्धेऽपि तदनादरेण प्रतिनिधिरेव कदरः कार्यक्षम उपादातव्यः ॥

प्रधाननिर्वाहकत्वेऽङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानाधिकरणम् ॥ २१ ॥

**विधिरप्येकदेशे स्यात् ॥ ४० ॥ [अपि वार्थस्य शक्यत्वादेकदेशेन निर्वर्तेतार्थानामविभक्तत्वाद्गुणमात्रमितरत्तदर्थत्वात् ॥ ४१ ॥]**

शेषकार्येष्वपूर्णाश्चेद्व्रीहयः किं तदेतरत् ॥ व्रीहयो वा सर्वसिद्ध्यै नीवारादिकमिष्यते ॥ २२ ॥
पुरोडाशतया व्रीहेः प्रधानत्वादलोप्यता ॥ शेषकार्याणि लुप्यन्तां मुख्यवैगुण्यतो वरम् ॥ २३ ॥

दर्शपूर्णमासयोर्यदाऽश्वशफपरिमाणशेषकार्येभ्यश्चापर्याप्ताः पुरोडाशजातिमात्राभिव्यक्तिसमर्था व्रीहयो लभ्यन्ते तदा किं तैरेव पुरोडाशः कर्तव्य उत नीवारैरिति संशये तत्र—'भूयसां शेषकार्याणां माभूदत्यन्तबाधनम् ॥ एकस्य व्रीहिशास्त्रस्य किंचिद्बाधस्तु युज्यते ॥' नीवारोपादाने व्रीहिशास्त्रमेकं विकलं भवति व्रीह्युपादाने पुनर्भूयसामत्यन्तबाधः स्यात् । नच व्रीहीणां प्रधानाङ्गत्वं येन द्रव्याङ्गभूतेभ्यः शेषकार्येभ्यः अङ्गगुणविरोधन्यायेन बलीयस्त्वं स्यात् व्रीहीणामपि पुरोडाशप्रकृतितया तदङ्गत्वात् । उच्यते—'व्रीहयोपि पुरोडाशभूता यागस्य साधनम् ॥ तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते ॥' व्रीह्यवयवा एव पुरोडाशभावापन्ना यागं साधयन्ति ते च नीवारोपादाने विकलाः स्युस्ततश्च प्रधानवैगुण्यं स्यात् । तस्माच्छेषकार्याण्यनादृत्य व्रीहिभिरेव पुरोडाशः कर्तव्यः ॥ इति श्रीपार्थसारथिविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

**अर्थद्रव्यविरोधे०** ॥ ३९ ॥ **मुख्यत्वादिति** । काष्ठान्तरोपसंधानेन प्रयोजनं संपाद्यमिति भावः । तर्हि काष्ठान्तरमेव प्रयोजनसाधनं मुख्यं त्वदृष्टार्थं स्यादित्याह—**नेत्याहेति** । प्रत्युदाहरणमात्रत्वात्पूर्वपक्षे नात्यर्थमादरः कृतः । सूत्रार्थस्तु—प्रयोजनद्रव्यविरोधे प्रयोजनं बलवदतो द्रव्याणां प्रयोजनशेषत्वाद्द्रव्याभावे प्रतिनिध्युत्पत्तिः कार्येति ॥

**विधिरप्येकदेशे स्यात्** ॥ ४० ॥ पूर्ववदिहापि प्रतिनिधिरिति प्रत्यवस्थानात्सङ्गतिः । **शेषकार्येभ्य इति** । स्विष्टकृदिडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षणरूपेभ्य इत्यर्थः । **किंचिदिति** । प्रतिनिध्युपादानेपि व्रीह्यवयवानां साधनत्वाद्व्रीहिशास्त्रस्य नात्यन्तबाधः किंतु अवयवसाकल्याभावात्किंचिद्बाधमात्रमित्यर्थः । **ननु** 'व्रीहिभिर्यजेते'ति यागसाधनत्वेन श्रवणाद्व्रीहीणां प्रधानाङ्गत्वं शेषकार्याणां च प्रतिपत्तित्वात्पुरोडाशाङ्गत्वं तथाश्वशफपरिमाणस्यापि पुरोडाशाङ्गत्वं ततश्च 'अङ्गगुणविरोधे च तादर्थ्यादि'ति न्यायेन प्रधानगुणस्य प्रबलत्वात्तदनुग्रहेणाङ्गगुणानां शेषकार्याणां परिमाणस्य च बाध एव न्याय्य इत्याशङ्क्याह—**नचेति** । **व्रीहीणामपीति** । उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे व्रीहीणां साक्षात्साधनत्वासंभवाद्यागोद्देशेन व्रीहिविधेः पुरोडाशप्रकृतित्व एव पर्यवसानाद्व्रीहीणामपि पुरोडाशाङ्गतया शेषकार्यादितौल्ये भूयोनुग्रहो न्याय्य इत्यर्थः । अनेनाङ्गगुणविरोधाधिकरणेनागतार्थत्वमपि सूचितम् । सत्यं व्रीहीणां प्रकृतित्वं तथापि न पुरोडाशनिष्पत्तिमात्रे व्रीहिशास्त्रपर्यवसानं किंतु तद्द्वारा यागनिष्पत्तावेव व्रीहिभिर्यजेतेति यागसाधनत्वश्रवणात्पुरोडाशस्य साक्षात्साधनता व्रीहीणां तु तद्द्वारेत्युभयोरप्यविरोधात् । एवंच शास्त्राद्व्रीहीणां प्रधानाङ्गत्वं तथा वस्तुतोऽपि व्रीह्यवयवानामेव पुरोडाशभावमापन्नानां यागसाधनत्वादित्याशयेनाह—**व्रीह्यवयवा इति** । सूत्रार्थस्तु—एकदेशेऽपि पुरोडाशमात्रसमर्थव्रीहिद्रव्येऽपि प्रतिनिधिः स्याच्छेषकार्यादिविधेरिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य तृतीयः पादः** ॥ ३ ॥

## षष्ठाध्याये चतुर्थः पादः ।

अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ॥ १ ॥

**शेषाद्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥ [निर्देशाद्वान्यदागमयेत् ॥ २ ॥]**

**अवत्तनाशे तच्छेषात्पुरोडाशादवद्यति ॥ यजेदाज्येन बाधोऽत्र मध्यपूर्वार्धसंभवात् ॥ १ ॥**

**कृत्स्नस्य मध्यपूर्वार्धे ये शेषस्ये न ते ततः ॥ हविर्नाशादाज्यविधिः सुतरां सर्वनाशने ॥ २ ॥**

पूर्वस्मिन्पादे [१]यथाशक्त्यनुष्ठानगतो विचारः वृत्तः । अतःपरं पादद्वयेन प्रायश्चित्ताधिकारश्चिन्त्यते-कीदृशेन निमित्तेन कस्मिन्नैमित्तिके प्रायश्चित्तेऽधिक्रियत इति । [२]तदिह तावदिदं चिन्त्यते । दर्शपूर्णमासयोः 'मध्यादवद्यति, पूर्वार्धादवद्यती'ति श्रूयते । यदा चावत्तस्य नाशदोषापहारादि भवति तदा किं यस्य सर्वाणि हवींषि [३]दुष्येयुर्नश्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेतेति हविर्विनाशादिनिमित्तेन चोदिताज्ययागेनाधिक्रियते उत तस्यामवस्थायां शेषादेव पुनरवदेयं, आज्यं तु निःशेषप्रनष्टे हविषि चोद्यत इति । किं प्राप्तं । विनष्टे ह्यवदाने पुनर्मध्यपूर्वार्धसंभवात् तावन्मात्रस्य च शास्त्रार्थत्वात्तत एवावदेयं न हविरन्तरापेक्षा । हविरन्तरापेक्षायां चाज्यं विधीयते न स्थित एव हविषि [४]चोदना । तस्माच्छेषादवदेयम् । एवं प्राप्ते ब्रूमः—'कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः ॥ मध्यादवद्यतीत्येतद्विकलान्नावगम्यते ॥' कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेशस्तदपादानको यस्तस्योपरितनोऽङ्गुलिपर्वमात्रोऽवयवः सोऽवदातव्यः । यस्तु तस्याधस्तनोऽवयवः सोऽवदेयस्यापादानभूतः नत्वसाववदातव्यः । अतो नासौ हविः । यत्तु हविस्तद्विनष्टम् । तद्विनाशे च हविरन्तरमुत्पाद्यम् । यदापि समस्तपुरोडाशसाध्यो यागस्तदापि ह्यवदाननाशे तस्य विकलत्वादविकलं हविरन्तरमुत्पाद्यं, तत्तु न्यायतः पुरोडाशान्तरम् । वचनात्त्वाज्यं भवति । नच 'यस्य सर्वाणी'ति वचनात्सर्वेषां हविषां विनाश आज्यमिति भ्रमितव्यम् । हविर्विनाशस्य निमित्तत्वात् सर्वशब्देनाविशेषणात् ॥

---

**शेषाद्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥** ननु पूर्वस्मिन्पादे द्रव्यापचारे सत्यनुष्ठानप्रकारो विचारितः इहापि स एव विचार्यते इति कथं पादभेद इत्याशङ्क्याह—**पूर्वस्मिन्निति** । न द्रव्यापचारानुष्ठानस्थलीयानुष्ठानप्रकारः पूर्वपादार्थः किंतु यथाशक्त्यनुष्ठानगतः प्रकारः । द्रव्यापचारे प्रतिनिधिनानुष्ठानविचारस्यापि यथाशक्त्यनुष्ठानविचार एव पर्यवसानात् । इह तु पादद्वये प्रायश्चित्ताधिकारो विचार्यते । तत्रास्मिन्पादे द्रव्यापचारनिमित्तप्रायश्चित्ताधिकारः प्राधान्येन प्रतिपाद्यते । स च पूर्वपादोक्तद्रव्यापचारानुषङ्गागत इति पादान्तरत्वमानन्तर्यं चेत्यर्थः । **पुनर्मध्येति** । शिष्टस्य मध्यपूर्वार्धसंभवादित्यर्थः । ननु कृत्स्नस्य पुरोडाशस्य मध्यात्पूर्वार्धादवदेयम् । नच शिष्टः कृत्स्नपुरोडाशो भवतीति न ततोऽवदेयमित्यत आह—**तावन्मात्रस्येति** । 'मध्यादवद्यति, पूर्वार्धादवद्यती'ति मध्यपूर्वार्धाभ्यामवदानमात्रं शास्त्रार्थः नतु कृत्स्नस्याकृत्स्नस्य वेति तद्विशेषोपीत्यर्थः । **कृत्स्नमिति** । प्रथमतो मध्यादवद्यतीति शास्त्रप्रवृत्तिवेलायां कृत्स्नपुरोडाशस्यैव बुद्धिस्थत्वादित्यर्थः । यदि कृत्स्नपुरोडाशमध्यपूर्वार्धावदानं शास्त्रार्थ इति नेष्यते तर्हि यत्र नावदाननाशस्तत्रावदानापादानभूतस्य तन्नाशस्थलेऽवदेयत्वमिति मध्यादवद्यतीति शास्त्रमेकस्यैव कदाचिदपादानत्वं कदाचिदवदेयत्वं च बोधयेदिति वैरूप्यं स्यादित्यभिप्रायेणाह—**कृत्स्नस्य हीति** । नचाचार्यपक्षे न ह्यवदानं हविः किंतु पुरोडाश एव । ततश्च ह्यवदाननाशेऽपि पुरोडाशसद्भावात्तन्मत एतत्सिद्धान्तो विरुध्येतेत्यत आह—**यदापीति** । तन्मतेऽपि कृत्स्नपुरोडाश एव हविः ह्यवदाननाशे च तस्याकृत्स्नत्वाद्धविरन्तरमुत्पाद्यमित्यर्थः । **ननु** पूर्वमाज्ययागेनाधिक्रियत इत्युक्तं इदानीं हविरन्तरमुत्पाद्यमित्युच्यते तदेतत्परस्परविरुद्धमित्यत आह—**तत्त्विति । अविशेषणादिति** । हविर्नाशमात्रस्य निमित्तत्वं प्रत्युद्देश्यं वाक्यपरिसमाप्तिन्यायेन प्राप्तानुवादः सर्वशब्द इति भावः । सूत्रार्थस्तु—अवदाननाशे शेषादवदेयं स्यात्तस्य यागार्थत्वादिति ॥

---

१ यथाशक्तिप्रयोगगतो. २ तत्र तावत्. ३ नश्येयुर्दुष्येयुः. ४ आज्यचोदना.

स्विष्टकृदर्थावत्तनाशे पुनरवदाननिराकरणाधिकरणम् ॥ २ ॥

**अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥**

**इडाद्यर्थस्य नाशेऽन्यः शेषाद्धाद्यो न चाग्रिमः ॥ शेषसत्वान्न शेषेऽन्यप्रतिपत्त्यवरोधनात् ॥ ३ ॥**

स्विष्टकृदिडार्थस्य नाशः किं शेषावदानस्य निमित्तमुत नेति । तन्नाशे[1] शेषादवदेयं यागशेषप्रतिपत्त्यर्थत्वात् विनष्टेऽपि तद्द्रव्ये पुनःशेषसद्भावात्पुनरवदाय संस्कर्तव्यम् । सत्यम्, विद्यते शेषः स त्वागामिप्रतिपत्त्यन्तरगृहीतत्वान्न नष्टावयवपूर्वप्रतिपत्त्या संबध्यते । यस्त्वंशस्तस्य प्रतिपाद्यः स विनष्टः । नच द्रव्यान्तरोत्पत्त्याशङ्का, शेषप्रतिपत्त्यर्थानां द्रव्यान्तरे क्रियमाणानामानर्थक्यात् । स्विष्टकृत्तु यद्यप्यपूर्ववांस्तथाप्येकदेशद्रव्यत्वाद्द्रव्यान्तरस्याप्रयोजकः । वाचनिकेन तु हविर्विनाशादिनिमित्ते चोदितेनाज्येन तदनुष्ठानमिष्टमेव, इडाद्यर्थगृहीतस्य तु हविष्ट्वाभावात्, प्रतिपत्तिव्यतिरिक्तापूर्वाभावाच्च लोप एव न्याय्यः ॥

ऋत्विजामेव शेषभक्षणाधिकरणम् ॥ ३ ॥

**निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ [सर्वैर्वा समवायात्स्यात् ॥ ५ ॥ निर्देशस्य गुणार्थत्वम् ॥ ६ ॥ प्रधाने श्रुतिलक्षणम् ॥ ७ ॥ अर्थवदिति चेत् ॥ ८ ॥ न चोदनाविरोधात् ॥ ९ ॥]**

**शेषभक्षाः किमन्येषामृत्विजां वान्यभक्षणम् ॥ ऋत्विजां परिसंख्यानात्स्वाम्यप्राप्तोक्तितोऽन्तिमः ॥ ४ ॥**

शेषप्रसङ्गादिदमधिकरणम् । दर्शपूर्णमासयोः शेषभक्षाः[2] किमृत्विग्भ्योऽन्यैः कर्तव्या उत ऋत्विग्भिरेवेति संशयः । तत्र कर्मकरत्वादृत्विजां सर्वभक्षेषु प्राप्तानामिडायां पुनः श्रवणमस्ति 'यजमानपञ्चमा इडां भक्षयन्ती'ति । तद्भक्षान्तरपरिसंख्यार्थमिडामेव ते भक्षयन्तीति । तस्मादन्येष्वन्ये भक्षयितार इत्याशङ्क्य निराक्रियते । यजमानस्याकर्मकरत्वेनाप्राप्तस्य प्रापकमिदं वचनम् । अतोऽपरिसंख्यातत्वाद्भक्षान्तराणां तेष्वपि प्रकृता एव कर्तारः ॥

---

**अपि वा शेषभाजां०॥ ३ ॥ सद्भावादिति ।** शेषसद्भावमात्रेण 'शेषात्स्विष्टकृते समवद्यती'ति शास्त्रप्रवृत्तेरवर्जनीयत्वादिति भावः । सद्भावादित्यनेन पूर्ववदिह नास्त्यवदेयाभावः । येन पुनरवदानं न भवेदिति प्रत्यवस्थानात्सङ्गतिः सूचिता । **सत्यिति** । प्रतिपत्त्यन्तरावरोधादेव[3] तत्र शेषात्स्विष्टकृत इति शास्त्रं न प्रवर्तत इत्याशयः । किंच पुरोडाशस्य साकल्यदशायां य उत्तरार्धलक्षणोऽवयवः स्विष्टकृत्संस्कार्यः स विनष्ट एव, न चेदानीं विद्यमानमुत्तरार्धं तादृशमिति न ततोऽवदेयमित्याह—**यस्त्विति** । ननु विद्यमानशेषस्य प्रतिपत्त्यन्तरावरोधेऽपि पूर्ववद्द्रव्यान्तरप्रयोजकत्वं किं न स्यादित्यत आह—**नचेति । आनर्थक्यादिति** । द्रव्यान्तरे क्रियमाणानां शेषसंस्कारत्वायोगादिति भावः । **ननु** स्विष्टकृत आश्रयित्वेनापूर्वार्थत्वस्यापि सद्भावात्तत्सिद्ध्यर्थं द्रव्यान्तरप्रयुक्तिः स्यादित्यत आह—**यद्यपीति । एकदेशेति** । परप्रयुक्तद्रव्योपजीवित्वादपूर्वमपि न द्रव्यान्तरप्रयोजकमिति स्विष्टकृदर्थावत्तनाशे स्विष्टकृतः लोप एव न्यायात्सिद्ध इत्यर्थः । **नन्वेवं** स्विष्टकृतो द्रव्याप्रयोजकत्वे आज्येनापि तदनुष्ठानं न स्यादित्यत आह—**वाचनिकेनत्विति** । नहि द्रव्यान्तरप्रयुक्तौ सत्यामाज्यं विधीयते किंतु तदाकाङ्क्षामात्रसद्भावे । तथाच परकीयद्रव्योपजीवनाद्द्रव्यान्तराप्रयोजकत्वेऽप्यपूर्वसिद्ध्यर्थं द्रव्यापेक्षासंभवादविशेषविहितमाज्यं प्रवर्तत इत्यर्थः । सूत्रार्थस्तु—पुनरवदानव्यावृत्त्यर्थोऽपि वाशब्दः । लोपशब्दश्चाप्यध्याहार्यः । तथाच शेषभाजां स्वार्थावत्तनाशे नावदानं किंतु लोपः स्यात्प्रतिपत्तिरूपविशिष्टप्रयोजनकारणकत्वात्तदनुष्ठानस्य प्रतिपाद्याभावे प्रतिपत्त्ययोगादिति ॥

**निर्देशाच्छेषभ० ॥ ४ ॥** ननु भक्षणे कर्तृविशेषचिन्ता नात्र सङ्गता । नचास्याश्चिन्तायाः किमन्यकर्तृमतोऽधिकार उत प्रकृतकर्तृमत एवेत्यधिकारचिन्तापर्यवसानात्सङ्गतिरिति वाच्यम् । तथापि प्रायश्चित्ताधिकारप्रस्तावसङ्गत्यभावादित्यत आह—**शेषप्रसङ्गादिति । परिसंख्यार्थमिति** । यजमानस्यापि कर्तृत्वसद्भावादृत्विग्वत्तस्यापि प्राप्तत्वान्न तद्विध्यर्थं वचनमिति भावः । **अन्येष्विति** । शंयुवाककालभक्षेष्वित्यर्थः । चतुर्धाकरणभक्षणस्य इदं ब्रह्मण इत्यादिनिर्देशसामर्थ्येन ऋत्विक्कर्तृकत्वात् प्राशित्रभक्षणस्यापि 'प्राशित्रं ब्रह्मणे परिहरती'ति ब्रह्मकर्तृकत्वाच्च तत्रान्यकर्तृकत्वासंभवाद्यजमानस्येति । नहि भक्षणं कर्तृसंस्कारः येन कर्तृत्वमात्रेण यजमानस्यापि स्यात् किंतु द्वितीयानिर्देशाद्द्रव्यप्रतिपत्तिः । एवंच प्रतिपत्त्यर्थस्य

---

१ तत्र तन्नाशे. २ भक्षास्ते किं. ३ वरोधनादेव.

कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

**अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥ [न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥ स्याद्वा प्राप्तिनिमित्तत्वादतद्धर्मो नित्यसंयोगात्, नहि तस्य गुणार्थेनानित्यत्वात् ॥ १२ ॥ गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥ भेदार्थमिति चेत् ॥ १४ ॥ शेषभूतत्वात् ॥ १५ ॥ अनर्थकश्च सर्वनाशे स्यात् ॥ १६ ॥**

कपालभेदने होमो भग्ने घृष्टेऽथवोभयोः ॥ आद्यो भेदस्य भङ्गत्वात्संस्कार्यत्वेन मध्यमः ॥ ५ ॥
संस्कृतावनिमित्तत्वान्नित्यानित्यविरोधनम् ॥ निमित्तता समा भङ्गे घर्षे वाऽतो द्वयोर्हुतिः ॥ ६ ॥

दर्शपूर्णमासयोः कपालमधिकृत्य श्रूयते 'भिन्ने जुहोती'ति, तत्र संशयः किं कृत्स्नभेदो निमित्तमुतैकदेशभेद उतोभयमिति—'तत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता ॥ कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेन्निमित्तताम् ॥' भिदुराणा हि द्रव्याणां मिथः संघर्षेण नित्यः केनाप्यंशेन भेद इति न निमित्तत्वं संभवति । अतः कृत्स्नभेद एव निमित्तम् । नैवम् । नहि संघर्षणमात्राद्भिन्नबुद्धिर्भवति, संघृष्टमिति हि तदा बुद्धिर्भवति न भिन्नमिति । भेदनं चेह निमित्तं, तच्चैकदेशेऽप्यनित्यत्वान्निमित्तं भवत्येव । द्वितीयपक्षवादी तु मन्यते—'होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात् । संनिपत्योपकारित्वं तथासति हि लभ्यते ॥ आरादुपक्रियातश्च न्याय्या स्यात्संनिपातिता ॥ संनिपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम् ॥ आरादुपक्रियात्वे तु प्रक्रिया विनियोजिका ॥ कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम् ॥' नहि सर्वथा भिन्नं कपालमधिश्रयणयोग्यं भवति । अकार्योपयोगिनश्चानर्थकः संस्कारः । तस्मात्तत्कार्याविरोधेन यदा कियताप्यंशेन भेदो भवति तदैव होमः[3] इति प्राप्ते ब्रूमः—'संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया ॥ संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते ॥ निमित्ताभावतो होमो नित्यमङ्गं क्रतोर्भवेत् ॥ नित्यश्चानित्यसंस्कार्यसंबन्धं लभते कथम् ॥' यदा हि भिन्नं संस्कार्यत्वेनोद्दिश्य तत्संस्कारार्थत्वेन होमो विधीयते तदा भिन्नशब्दस्य संस्कार्यप्रतिपादनोपक्षयान्न निमित्तपरत्वं स्यात् । असति च निमित्ते होमोऽयं नित्याङ्गं स्यात्तदेवमापद्यते, नित्यं दर्शपूर्णमासयोर्होमेनोपकुर्यात् भिन्नकपालसंस्कारद्वारेणेति । नचैतत्संभवति । भिन्नस्य कादाचित्कत्वेन नि-

---

भक्षणस्य कर्त्रपेक्षायां कर्मकरत्वेनोपात्तानामृत्विजामेव तत्र प्राप्तिर्न यजमानस्येति भावः । सूत्रार्थस्तु—शेषभक्षोऽन्यैः कार्यः 'यजमानपञ्चमा इडा'मिति निर्देशाद्यथा सर्वस्य होमे प्राप्ते द्व्यवदानमात्रस्य निर्देशाद्धोमस्तद्वदिति ॥

**अर्थसमवायात्०** ॥ १० ॥ पूर्वत्र कादाचित्कानामन्येषामग्रहणेऽपीह कादाचित्कः कृत्स्नभेद एव ग्राह्य इति प्रत्यवस्थानाद्भक्षणस्य द्रव्यसंस्कारत्ववद्धोमस्य भिन्नसंस्कारत्वमिति प्रत्यवस्थानाच्च सङ्गतिः । **भिदुराणामिति** । संघर्षे यत्किंचिदवयवविश्लेषस्यावर्जनीयत्वादिति भावः । प्रथमपक्षं सिद्धान्ती दूषयति—**नहीति** । नन्विह भेदो न निमित्तं किंतु भेदनविशिष्टं कपालं भिन्न इत्यनेन भिदिक्रियाप्रधानद्रव्यप्रतीतेः । विशेषणत्वं च विशेष्यव्यापकस्य नत्वेकदेशगतस्येति कृत्स्नभेद एव होमो नैकदेशभेदे इत्यत आह—**भेदनं चेति** । विशेष्यस्य कपालस्य नित्यत्वेन निमित्तत्वासंभवात् आवश्यकविशेषणपर एव भिन्नशब्द इति भेदनमेव निमित्तं 'यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वाये'दित्यत्र तु एकदेशविस्फुलिङ्गाद्युद्वानस्य नित्यत्वादुद्वानव्याप्तोऽग्निर्निमित्तं नोद्वानम् । इह तु एकदेशभेदनस्याप्यनित्यत्वाद्भेदनमेव निमित्तं नतु भेदनव्याप्तं कपालमिति वैषम्यमिति भावः । इदंच भेदनस्य निमित्तत्वं वस्तुगतिमनुरुध्योक्तम्। यदि रथंतरसामेत्यादिवदव्यापकस्यापि भेदनस्य सत्तयैव विशेषणत्वसंभवेन भिन्नस्य निमित्तत्वेऽप्येकदेशभेदने होमानिवारणादिति ध्येयम् । **भेदेति** । भेदने यो दोषस्तन्निबर्हणार्थत्वादित्यर्थः । यद्यपि भेदने दोषोऽस्तीति न प्रत्यक्षं वचनं चास्ति तथापि वक्ष्यमाणन्यायेन संनिपातित्वे सिद्धे तन्निर्वाहार्थं दोषः कल्प्यत इत्याशयः । **ननु** सप्तमीबलान्निमित्तत्वमेव नतु संस्कार्यत्वं द्वितीयाविरहादित्यत आह—**संनिपत्येति** । द्वितीयार्थे सप्तमी । नचैवं सप्तम्या लक्षणैव दोषः । प्रबलसंनिपातित्वलाभे लक्षणाया अपि 'अगारे गावो वास्यन्तां, तप्तेपयसी'त्यादिवच्छ्याप्यत्वादिति भावः । **वाक्यमिति** । नच सप्तम्या द्वितीयार्थत्वे विभक्तिश्रुतिरेव विनियोजिका न वाक्यमिति वाच्यम् । लक्षणा हि समभिव्याहारमूला । तेन लक्षणास्थले तन्मूलवाक्यगम्य एव विनियोगो न लाक्षणिकविभक्तिगम्य इति भावः । **तदैवेति** । एवंचास्मिन्पक्षे निमित्तत्वाभावात्संदेहोपन्यासस्समय उतैकदेशभेदनमि-

---

१ भेदनमुतोभय. २ निमित्तं संभ. ३ होमो भवतीति. ४ भवत्येवं.

त्यवत्कृतावभावात् । सोऽयं नित्यानित्यसंयोगविरोधः । तस्माद्भेदने निमित्ते होमो विधीयते सत्वाविशेषादेकदेशभेदे कृत्स्नभेदेऽपि स्यात् ॥

क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ५ ॥

**क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥ [दर्शनाद्वैकदेशे स्यात् ॥ १८ ॥ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १९ ॥ तद्धविःशब्दान्नेति चेत् ॥ २० ॥ स्यादन्यायत्वादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥ २१ ॥]**

**क्षामे यागो द्वयोः सर्वदाहे वा पूर्ववद्द्वयोः ॥ अंशदाहस्य नित्यत्वात्सर्वदाहे पुनर्यजिः ॥ ७ ॥**

'यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति यदा तद्धविः संतिष्ठते अथ तदेव हविर्निर्वपद्यज्ञो यज्ञस्य प्रायश्चित्ति'रिति पुरोडाशक्षाणनिमित्तः पुनःप्रयोगः कृत्स्नैकदेशक्षाणयोरविशेषेण भेदनहोमवत्स्यादिति प्राप्ते उच्यते । क्षामे हविषि यत्प्रायश्चित्तं तन्न पूर्ववत् किंतु सर्वदाहे स्यात् । कुतः। एकदेशक्षाणस्यावर्जनीयत्वेन नित्यत्वान्निमित्तत्वायोगात् । अथावर्जनीयदाहातिरिक्तो दाह एकदेशेऽपि वर्तमानो निमित्तं स्यादित्युच्यते । तन्न । अपरिज्ञानादिहावर्जनीयो दाहो नाधिक इति । तस्मात्सर्वक्षाणमिह निमित्तम् ॥

॥ एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम् ॥ ६ ॥

**यथाश्रुतीति चेत् ॥ २२ ॥ [न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥]**

**आर्तौ पञ्चशरावो यः स दोहद्वयसंक्षये ॥ एकनाशेऽपि वाद्योऽस्तु हविर्यदुभयोक्तितः ॥ ८ ॥**

**हविरार्त्युक्तिमात्रेण निमित्तं पर्यवस्यति ॥ उभयोक्त्यविवक्षायामेकनाशेऽप्यसौ भवेत् ॥ ९ ॥**

दर्शपूर्णमासयोर्होमौ प्रकृत्य श्रूयते 'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे'दिति । तत्र संशयः किमुभयार्तौ पञ्चशराव उतान्यतरार्तावपीति । ग्रहाधिकरणन्यायेनोद्देशस्य निमित्तस्य विशेषणमविवक्षितमिति स्थितमेव नतु निमित्तस्वरूपमप्यविवक्षितम्[3] । इह तु यथा नार्तिमात्रं नि-

---

त्येकदेशभेदनस्य निमित्तत्वोक्तिः होमप्रयोजकत्वाभिप्राया बोध्या न निमित्तपरत्वं स्यादिति द्वितीयपूर्वपक्षिणा निमित्तत्वानङ्गीकारान्भेदं तं प्रत्यनिष्टापादनं किंतु नित्यत्वोपपादनमात्रपरमिति बोध्यम् । सूत्रार्थस्तु—एकदेशेऽपि भिन्ने प्रायश्चित्तं स्यादर्थस्य भेदनस्य तत्रापि समवायादिति ॥

**क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥** क्षायति दग्धो भवतीत्यर्थः । **अविशेषेणेति ।** पुरोडाशेऽदनीयत्वफलकपाकनान्तरीयकदाहोऽवर्जनीय इत्यवर्जनीयस्य ज्ञातुं शक्यत्वात्तदतिरिक्तैकदेशदाहो निमित्तं भविष्यतीति भावः । **अपरिज्ञानादिति ।** यदाभिज्ञः पक्त्वा कपालानां च साम्यमुदकसेचनादिकं चापेक्षितपरिमाणं तदाल्पांशदाहादेवादनीयत्वफलकपाकोत्पत्तिः । यदा पक्त्रादिकमनेवंविधं तदा क्वचिद्बहिर्बह्वंशदाहादन्तरदनीयत्वं क्वचिच्चैकस्यार्धस्यात्यन्तदाहादर्धान्तरस्यादनीयत्वमिति सर्वत्रैकदेशदाहस्यादनीयत्वफलकपाकनान्तरीयकतया तद्विलक्षणस्यैकदेशदाहस्य वक्तुमशक्यत्वान्न निमित्तत्वम् । एवंच यत्र मध्यपूर्वार्धमात्रमतिदग्धमितरत्त्वदनीयपक्वं तत्रापि मध्यपूर्वार्धयोरवदानदेशमात्रतया स्वयं हविष्ट्वाभावात्पुरोडाशस्यैव हविष्ट्वात्तस्य च सद्भावाद्यथावत्पक्वांशे द्विरवदाय होतव्यमिति भावः । **तस्मादिति ।** नच सर्वक्षाणे तस्य हविष एवाभावात् 'यदा तद्धविः संतिष्ठत' इत्येतत्कथमुपपद्यत इति वाच्यम् । पुरोडाशो हविर्यस्येति बहुव्रीहिणा तद्धविःशब्दस्य यागपरत्वाद्यागस्य संस्थासंबन्धात्, तथाच सर्वक्षाणेऽपि 'यस्य सर्वाणि हवींषि' इति वचनादाज्येन तद्धविरुपलक्षितयागस्य समाप्तिः संभवतीति न कश्चिद्दोष इति भावः ॥

**यथाश्रुतीतिचेत् ॥ २२ ॥** ननु यस्योभयमिति वाक्यं 'यस्य सायं दुग्धं हविरार्तिमार्च्छे'दिति प्रकृत्याम्नायते तत्र च यस्योभयमित्येतावन्मात्रमेव विवक्षितं । हविरार्तिमार्च्छेतीति प्रकरणप्राप्तानुवादः । एवंच प्रकरणलभ्येऽर्थे शब्दव्यापाराभावाद्वाक्यभेदप्रसङ्गादुभयहविरार्तावेव पञ्चशरावयागः कर्तव्यः । तेन सिद्धान्ताभावादयं विचारोऽनुपपन्न इत्याशङ्क्य नेदं यस्य सायंदुग्धमित्यत्राम्नायते किंतु दर्शपूर्णमासप्रकरणे सायंप्रातर्दोहावाम्नायेदमाम्नायते इति कृत्वाचिन्त्यते । तत्र च हविरार्तिमार्च्छेदित्यस्याप्रकृतत्वात्प्रकरणात्तल्लाभासंभवान्नोक्तदोष इत्याशयेनाह—**दर्शेति ।** ननु ग्रहाधिकरणेनेदं पुनरुक्तमुद्देश्यविशेषणाविवक्षायास्तत्रोक्तेरित्याशङ्क्योभयत्वस्य विशेषणत्वमङ्गीकृत्य तद्विवक्षितमविवक्षितं वेति न विचार्यते किंतूभयत्वं

---

१ प्राप्तेऽभिधीयते. २ दोहौ प्रकृत्य. ३ अविवक्षितमिति. ॥६ आर्त्यधिकरणम

मित्तं न हविर्मात्रं मिलितं तु निमित्तं एवमुभयशब्दाम्नानात्त्रयमपि मिलितं निमित्तमस्तु । तस्मादुभयार्तौ पञ्चशराव इति प्राप्ते उच्यते—'यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति ॥ तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम् ॥' यस्यार्तिमाच्छेदित्येतावता यत्किंचिदिति गम्यते । तच्च नित्यं न निमित्तं भवितुमर्हति । सर्वस्य हि सर्वदा यत्किंचिदार्तं भवति अन्ततश्चिन्तितनिमिषितादि । तथा यस्य हविरिति हविषोऽपि नित्यत्वादतोऽवश्यमार्त्या हविर्विशेष्टव्यम् । तावता च निमित्तप्रतीतिपर्यवसानादुभयपदं निमित्तरूपे न प्रविष्टम् । अथोभयविशिष्टमेव हविर्निमित्तं नार्तिविशिष्टमित्युच्येत तदपि नित्यम् । अथयस्योभयमार्तमित्यार्तिविशिष्टमुभयं तद्विशिष्टा वा आर्तिर्निमित्तं न हविः तदयुक्तम् । यस्योभयमार्तमिति किं तदुभयमित्याकाङ्क्षा स्यात् । तस्माद्धविःशब्दार्तिशब्दौ तावदवश्यं विवक्षितौ । भवतु हविर्विवक्षा तत्तूभयपदसंनिधानात्तद्विशिष्टं सदार्त्या संबध्यते न स्वरूपेणेति चेत् । न । यथैव हविःशब्द आच्छेदित्यन्तेनाख्यातेन संबध्यते तथोभयपदमप्यसमस्तत्वात्तेनैव संबध्यते न हविषा । नामपदानां परस्परासंबद्धानामाख्यातेन संबन्धात् । तत्र यदि यस्य हविरार्तं यस्योभयमार्तमिति द्वयं निमित्तीकृत्य पञ्चशरावो विधीयते । तथासति निमित्तयोरुपादेयानामिवारुणादीनां क्रियया वशीकारासंभवान्निमित्ताभ्यामेव क्रियायाः वशीकृतायाः प्रत्येकसंबन्धनिमित्तो वाक्यभेदः पुनरपि हविरार्तिश्चान्यतरार्तावविशिष्टेति तत्रापि नैमित्तिकं स्यादिति सिद्धं नः समीहितम् । उभयार्तिमात्रमनिरूपितं न निमित्तं भवतीत्यविवक्षैवावशिष्यते । यद्यपि चोभयपदमाख्यातं हित्वा

---

निमित्तान्तर्गतं नवेति निमित्तान्तर्गतत्वे निमित्तस्वरूपस्य विवक्षितत्वात्तदन्तर्गतमुभयत्वं विवक्षितं नचेन्नेति, तस्मान्न पुनरुक्तिरित्याशयेनाह—**ग्रहेति । एवमिति ।** प्रथमं यस्येत्येतत्पदश्रवणे निमित्तबुद्धिरुपजायते, तत्र च यस्येत्यस्य किमित्यपेक्षायामुभयमिति संबध्यते । किं तदुभयमित्यपेक्षायां हविरिति । एवमपि निमित्तबुद्धेरपर्यवसानादार्तिमाच्छेदित्यनेन संबन्ध इति सर्वस्यापेक्षितत्वात्सर्वमेव निमित्तशरीरान्तर्गतमिति भावः । आम्नानादित्यनेनार्थिकस्य कात्स्न्र्यस्य निमित्तशरीरान्तर्गतत्वे श्रुतत्वादुभयत्वस्य किं वक्तव्यमिति प्रत्यवस्थानात्सङ्गतिः सूचिता । **तस्मादिति ।** ननु हेलाराजीये—'एकत्वं वा बहुत्वं वा केषांचिदविवक्षितम् ॥ तद्विजात्यभिधानाय द्वित्वं तु स्याद्विवक्षित'मिति हविर्ग्रन्थव्याख्यानावसरे । तथासति यस्योभयमित्यत्रापि द्वित्वस्य विवक्षायामन्यतरार्तौ नैमित्तिकाभावप्रसङ्ग इत्याशङ्क्य तत्र द्वित्वमात्रं न श्रुतं किंतु ध्वयवः समुदायः 'संख्याया अवयवे तयबि'ति संख्याविशेषयुक्तावयवघटितसमुदायार्थतयप्प्रत्ययादेशायजन्तत्वादुभयशब्दस्य । ततश्चात्रोभयशब्दार्थस्यावयवद्वयारब्धसमुदायस्यैकावयवनाशेऽपि नाशादन्यतरनाशेऽपि नैमित्तिकानुष्ठानमुपपद्यत इत्युक्तत्वादुभयत्वविवक्षायामप्येकनाशेऽपि पञ्चशरावः स्यादिति चेत्सत्यम् । समुदायाभिधानेऽपि हविःपदसामानाधिकरण्याद्वस्तुतो हविःप्राधान्याद्धविर्द्वयनाश एव प्रायश्चित्तं नैकनाश इति भावः । येन विना निमित्तप्रतीतिर्न पर्यवस्यति तदेव निमित्तस्वरूपान्तर्गतमितरत्तु प्रथमावगतमप्यनपेक्षितत्वादविवक्षितमित्याशयेनाह—**यच्छब्देति ।** तथा यस्य हविरिति हविर्मात्रं न निमित्तं संभवति हविषो नित्यत्वादित्यर्थः । यत्संबन्धाद्यद्यापद्यते तत्प्राधान्येन निमित्तमितरत्तद्विशेषणम्, इह चार्तिसंबन्धाद्धविर्व्यापद्यते नतु हविःसंबन्धादार्तिस्तेनात्र हविर्विशिष्टार्तिर्न निमित्तं किंत्वार्तिविशिष्टं हविरित्यार्त्या हविर्विशेष्यमिति वदतो भावः । इत्याकाङ्क्षा स्यादित्युपलक्षणम् । यस्य कस्यचिदार्तेर्नित्यत्वादित्यपि द्रष्टव्यम् । **ननु** हविःपदं प्रथममुभयपदेन विशेषणविशेष्यभावेनान्वीय पश्चादार्त्या संबध्यते, एवंचोभयत्वविशिष्टवेषेणार्तिसंबन्धात्तेनैव रूपेण निमित्तता न स्वरूपेण । तेन रूपेणार्तिसंबन्धाभावादार्तिसंबद्धस्यैव तस्य निमित्तत्वादिति शङ्कते—**भवत्विति । असमस्तत्वादिति ।** समासे ह्येकार्थीभावात्परस्परान्वयनियमो नतु व्यास इति भावः । **ननू**भयोराख्यातसंबन्धेऽप्यरुणैकहायनीवदेकक्रियान्वितयोः परस्परमन्वयादुभयत्वविशिष्टमेव निमित्तमित्याशङ्क्य नह्यत्राख्यातं विशेष्यमार्तेर्निमित्तत्वाभावस्योक्तत्वात्, किंतु हविःशब्दार्थंप्रति विशेषणं, विशेषणं च प्रति विशेष्यमावर्तनीयमिति । इह सत्यप्येकक्रियान्वये नास्ति परस्परवैशिष्ट्यमिति नामार्थद्वयं प्रत्येकमेव निमित्तं स्यात् । तथाभ्युपगमे दोषमाह—**तत्र यदीति ।** नन्वार्तिक्रियावशाद्वैशिष्ट्याभावेऽप्यत्र वाक्ये विधेयपञ्चशरावयागक्रियावशाद्वैशिष्ट्यमप्यस्त्वित्यत आह—**निमित्तयोरिति । असंभवादिति ।** निमित्तयोरुद्देश्यत्वेन प्राधान्यादिति भावः । **प्रत्येकेति ।** प्रतिनिमित्तं नैमित्तिकबोधनाय वाक्यावृत्तेरपेक्षितत्वात्प्रत्युद्देश्यं वाक्यसमाप्तिरिति भावः । **ननु** यत्र नामार्थानां कारकत्वेन विभक्त्युपस्थाप्यत्वं तत्रैव परस्परासंबद्धानामाख्यातसंबन्धः कारकाणां मिथः संबन्धाभावादिह तु प्रातिपदिकानतिरिक्तार्थप्रथमान्तपदोपस्थाप्यत्वान्मिथोऽप्यन्वयो न विरुद्ध इत्यत आह—**यद्यपिचेति ।** तद्विशिष्टं सदार्त्या संबध्यत इति विशिष्टवेषेणान्वये शङ्कावादिनोक्तेऽपि वस्तुतो विशिष्टवेषेणान्वयस्या-

हविषा संबध्यते तथापि यदि उभयपदं हवि:स्वरूपेण संबध्यते हवि:स्वरूपं चार्त्या तथासति हविरार्तिसंबन्धस्य निमित्तत्वात्पुनरस्मत्पक्षसिद्धिः। अथ तूभयपदानुरक्तमार्त्या संबध्यते तदनुरक्तं चोभयपदेन तत्र। नहि पदद्वयं हविषा संबध्यमानमितरसंबन्धं यावद्विलम्बते कारणाभावाद्धवि:स्वरूपेणैव संबन्धसंभवात्। अथार्तिरेवोभाभ्यां विशिष्टा निमित्तं स्यात्तथाप्येकैकेनेतरेतरनिरपेक्षेण विशेषणान्निमित्तत्वे चाविवक्षितसाहित्यत्वाद्धविरार्तिमात्रमुभयार्तिमात्रं च निमित्तं स्यात्। अन्यतरानुरक्तायास्त्वन्यतरेण संबन्धे द्विरुच्चारणाद्वाक्यभेदः स्यात्। अतो नोभयं निमित्तसंनिपाति। तत्र चार्ते हविर्मात्रमुद्दिश्य पञ्चशरावे विधीयमाने यद्युभयत्वं हविषि विधीयेत ततो वाक्यभेदः, परिच्छेदकत्वेन च विधीयमानं च विधीयेत। यावन्निमित्तं च नैमित्तिकानुष्ठानस्य निश्चितत्वान्न परिच्छेदकाकाङ्क्षा। निश्चिते च सर्वत्र नैमित्तिके विधीयमानमप्युभयत्वं परिसंख्यार्थं स्यात्। नचैकेन वाक्येन विधिः परिसंख्या च संभवतीत्यादिदूषणजातं ग्रहाधिकरणोक्तमनुसंधातव्यम्। तस्माद्धविरार्तिमात्रं निमित्तम्। उभयपदं त्वेवं योज्यम्। न सायंदोहार्तिरेव निमित्तं न प्रातर्दोहार्तिरेव किंतूभयमपि परस्परानपेक्षनिमित्तमिति ॥

होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥ ७ ॥

## होमाभिषवभक्षणं च तद्वत् ॥२४॥ [उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥२५॥]

**अभिषुत्य ततो हुत्वा खादेदेकैकहेतुता ॥ संहत्य वा निमित्तोक्तौ साहित्याविधितोऽग्रिमः ॥ १० ॥**
**होमाभिषवकर्तात्र भक्षाङ्गत्वेन चोद्यते ॥ निमित्ततार्थिकी तस्मात्साहित्यं हेतुगं मतम् ॥ ११ ॥**

ज्योतिष्टोमे श्रुतं 'अभिषुत्य हुत्वा भक्षयन्ती'ति, तत्र किमभिषवो होमश्च प्रत्येकं भक्षस्य कारणमुत संहत्येति—'उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् ॥ ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥' नह्येकेनैव वाक्येनाभिषवहोमौ निमित्तत्वेनोद्दिश्य भक्षणं विदधता तत्साहित्यमपरं शक्यं विधातुं वाक्यभेदप्रसङ्गात्। अतः प्रत्येकमेव निमित्तत्वम्। उच्यते—'निमित्तत्वे भवेदेवमेकैकस्य निमित्तता ॥ होमाभिषवकर्ता तु भक्षाङ्गत्वेन चोद्यते ॥' द्वितीयानिर्दिष्टसोमसंस्कारार्थो भक्षः तंप्रति

---

युक्तत्वाद्धविष उभयत्वान्वयेऽपि स्वरूपेणैवार्तिसंबन्धो नतूभयत्वविशिष्टवेषेणेति वस्तुगतिमनुरुध्येष्टसिद्धिमुक्त्वा शङ्कावादभिमतं प्रकारमुपपादयति—**अथत्विति**। ननु तर्हि आर्तिरेव निमित्तं स्वीक्रियते तत्र चार्तिविशेषणत्वादुभयहवि:शब्दार्थयोः परस्परमन्वयसंभवादुभयविशिष्टं हविरार्तिनिमित्तमिति न कोऽपि दोष इति शङ्कते—**अथार्तिरेवेति**। आर्तिक्रियाणां विशेषणत्वेऽपि न परस्परमन्वयः, तस्याः क्रियायाः निमित्तत्वेन तद्विशेषणयोः साहित्यस्य विवक्षितुमशक्यत्वेन परस्परवैशिष्ट्यायोगात्। एवंचोपादेयक्रियासंबन्धिनामेव परस्परान्वयो नोद्देश्यक्रियासबन्धिनाम्। उक्तंचाग्रिमाधिकरणे तत्रत्ने—उपादेयानां ह्येककर्म्यान्नियमो नोद्देश्यानामिति तत्र तत्र क्षुण्णमिति परिहरति—**तथापीति**। **द्विरुच्चारणादिति**। आर्तेरिति शेषः। **ननु** निमित्तसंनिपाताभावेऽपि उभयत्वं विधेयतया विवक्षितमस्त्विति तटस्थशङ्कायामाह—**यदीति**। अनपेक्षितत्वादपि न विधिरित्याह—**परिच्छेदकत्वेनेति**। **इत्यादीति**। उभयत्वं न हवि:स्वरूपे विधेयं सिद्धत्वान्नाप्यार्तिविशिष्टे विशिष्टोद्देश्यदोषात्तथार्तावपि न तद्विधेयं तत्रापि वाक्यभेदादिदोषानतिवृत्तेरित्यादयो ग्रहैकत्वविधिपक्षे ये दोषास्तत्रोक्तास्ते सर्वे उभयत्वविधिपक्षेऽप्यनुसंधेया इत्यर्थः। **ननु** हविरार्तिमात्रस्य निमित्तत्वे सर्वत्रोभयत्वाभावेनानुवादतयाप्यन्वयायोगाद्वाक्ये उभयपदसमन्वय एव न स्यादित्यत आह—**उभयपदं त्विति** ॥

**होमाभिषवभक्षणं०** ॥ २४ ॥ हविष उभयत्वेनेव होमाभिषवयोरपि न परस्परेण विशेषणमिति प्रत्यवस्थानात्सङ्गतिः। **भक्षणंप्रतीति**। भक्षणंप्रति प्रत्येकमेव निमित्तत्वेनास्थीयत इत्यर्थः। **ननु** भक्षणस्य कर्तृसंस्कारत्वाभावेन होतुरभिषोतुश्च संस्कार्यत्वाभावात्कथं तद्विशेषणयोर्होमाभिषवयोरुद्देश्यत्वमित्याशङ्क्य निमित्तत्वेनोद्देश्यत्वं श्लोके विवक्षितमिति दर्शयन्नाह—**नहीति**। **वाक्यभेदेति**। यद्यपि निमित्तभेदे प्रतिनिमित्तं वाक्यपरिसमाप्तेरवर्जनीयो वाक्यभेदस्तथापि भिन्नं वाक्यं पुनरपि भिद्येतेति तात्पर्यम्। यदि भक्षणेनैव होमाभिषवौ प्रयुज्येयातां तदार्थादपि निमित्तत्वं न सिद्ध्येदित्यत

---

१ यदि हवि:स्वरूपमुभयपदेन संबध्यते. २ चोच्यते.

प्रयोजनान्तरप्रयुक्ताभिषवहोमकर्ता गुणत्वेनोपादीयमानो विवक्षितविशेषणो भवति, तत्रार्थिकं होमाभिषवयोर्निमित्तत्वं । नतु शाब्दम् । अभिषवहोमसमानकर्तृकं तु भक्षणं शाब्दम् । तेनाभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्वं च द्वयं विवक्षितसाहित्यं भक्षणाङ्गम् । अतो येनोभयमनुष्ठितं स एव भक्षयेत् ॥

पुनराधेयंप्रति वह्न्यनुगमनद्वयस्य निमित्तताधिकरणम् ॥ ८ ॥

**पुनराधेयमोदनवत् ॥ २६ ॥ [द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २७ ॥]**

**एकोऽपि वह्न्यनुगमः पुनराधेयकारणम् ॥ द्वावेव वाद्यो द्वित्वोपेक्षणात्पञ्चशराववत् ॥ १२ ॥**
**द्वयोरुत्पादकत्वेन पुनराधेयचोदना ॥ नैकस्यातो ह्यनुगमो हेतुः सूर्योदयादि वा ॥ १३ ॥**

'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रिति किमुभयानुगमो निमित्तमुतान्यतरानुगमोऽपीति । समस्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्ते उच्यते—'सत्यं निमित्तवेलायामुभावित्यविवक्षितम् ॥ नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम् ॥' पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं तादृशमेव गार्हपत्याहवनीययोरुदयाभिनिम्लोचनवेलायामनुगतयोरुत्पादकत्वेन चोद्यते, तच्च सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य । अतस्तादृशमेवात्र विधीयमानमन्यतरानुगमेन कार्यं कर्तुं न क्षममित्युभयानुगमे स्यात् ॥

पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ॥ ९ ॥

**पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥ [चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ २९ ॥]**

**द्रव्यप्रतिनिधिः पञ्चशरावो भिन्नकर्म वा ॥ दोहद्वयार्तितो दर्शे द्रव्यं स्यादीप्सितत्वतः ॥ १४ ॥**
**प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते ॥ शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥ १५ ॥**

'यस्योभयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपे'दिति किमार्तिदोहप्रतिनिधित्वेन पञ्चशरावोऽमावास्याकर्मण एव साधनं विधीयते उत कर्मान्तरं हविरार्तिनिमित्ते चोद्यत इति । 'आर्तत्वाद्द्व्योरन्यत्कर्मणो द्रव्यमीप्सितम् । लाघवं च विधेरेवमतो द्रव्यविधिर्भवेत् ॥' ननु पञ्चशरावप-

---

उक्तम्—**प्रयोजनान्तरप्रयुक्तेति** । प्रयोजनान्तरार्थमनुष्ठितयोः सतोस्तत्कर्ता भक्षणमनुतिष्ठति चेत्तयोः सतोरेव भक्षणं नान्यथेत्येवमर्थात्तयोर्निमित्तत्वं भवतीत्यर्थः । **नतु शाब्दमिति** । यच्छब्दाद्यभावादिति भावः । **नन्वेवमभिषवकर्तुर्होमकर्तुश्च** भक्षणेनैवान्वयो भवेत् न परस्परं, क्त्वान्तयोः साकाङ्क्षत्वाविशेषेण परस्परान्वयायोगान्निराकाङ्क्षाख्यातेनैवान्वयस्य न्याय्यत्वादिति प्रत्येकमेव निमित्तत्वं स्यादित्याशङ्क्याह—**अभिषवेति** । सत्यमुभयोर्भक्षणान्वयः तथाप्युभयसमानकर्तृकत्वविशिष्टभक्षणविधावर्थात्सहितयोरेव निमित्तत्वं पर्यवस्यतीति भावः । सिद्धान्तप्रयोजनमाह—**अत इति** । तथाच मध्यतःकारिणां चमसेषु चमसाध्वर्यूणां होमकर्तृत्वेऽपि न भक्षणं तथाध्वर्युप्रतिप्रस्थात्रादीनां न सर्वत्रापि भक्षणमित्यर्थः । सूत्रे तद्वदार्तिवदित्यर्थः ॥

**पुनराधेयमोदनवत् ॥ २६ ॥** पूर्वत्रार्थिकत्वान्निमित्तभावस्य पञ्चशरावन्यायानवतारेऽपि इह तत्संभवान्न विशेषणविवक्षेति प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—**पञ्चशरावेति** । आधानादग्निद्वयोत्पादेऽपि एकस्य परित्यागसंभवादन्यतरानुगमेऽपि भवतीति भावः । तथाप्यर्थादुभयत्वविवक्षेत्याह—**नैमित्तिकमिति** । ननु कर्मान्तरमिदमेकाग्न्युत्पत्तावपि समर्थमिति शङ्कां निराकुर्वन्नाह—**पुनराधेयमिति** । पुनराधेयमेव तस्य प्रायश्चित्तिरित्येवकारेण पयसा भुक्त्वा पयसैव भुङ्क्ते इतिवत्प्रसिद्धाभेदज्ञापनेन कर्मान्तरत्वं न संभवतीति भावः । नन्वग्नी आदधीतेत्यग्निद्वित्वस्य तत्साहित्यस्य चोद्देश्यगतत्वादविवक्षेत्येकाग्न्युत्पादनेऽपि तत्समर्थमेवेत्यत आह—**तच्चेति** । आहवनीयाद्युद्देश्यस्वरूपस्य प्रागविज्ञातत्वेनाविज्ञातोद्देश्यगतसंख्यासाहित्ययोश्चमसाध्वर्युबहुत्वन्यायेन विवक्षितत्वान्नैकाग्न्युत्पादनसामर्थ्यमिति भावः । **न क्षममिति** । एकस्याग्नेर्विनाशात्तत्परित्यागे वीरहत्यादिदोषश्रवणादाधेयमानयोरेव द्वयोरुत्पादनशक्तस्य एकस्मिन्विद्यमाने स्वकार्यासामर्थ्याच्चेति भावः ॥

**पञ्चशरावस्तु० ॥ २८ ॥ ईप्सितमिति** । द्रव्यविधानमपेक्षितविधानं संभवतीति भावः । **लाघवं चेति** ।

---

१ अनुगतौ नष्टौ. २ साधनत्वेन. ३ हविरार्तौ.

रिमाणमोदनद्रव्यमिन्द्रश्च देवतेति बहवोऽर्थाः प्राप्ते कर्मण्येवं[1] विधीयेरन्। न पञ्चशरावशब्दार्थमेकं विधास्यामः। तेन बहुव्रीहिणान्यपदार्थ[2] ओदन एव परिमाणविशिष्टो विधीयते, सांनाय्यस्थानापत्त्या च तद्देवताप्राप्तेरैन्द्रं पदं नित्यानुवादस्तस्माद्द्रव्यविधिः। उच्यते—'स्थानापत्त्या हि नैकान्तात्प्राप्तिरिन्द्रस्य लभ्यते॥ महेन्द्रस्यापि सद्भावात्तस्मादिन्द्रो विधीयते॥ प्राप्ते कर्मणि नैकेन विधिना द्रव्यदेवते॥ शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते॥'

पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताधिकरणम्॥ १०॥

## स प्रत्यामनेत्स्थानात्॥ ३०॥ [अङ्गविधिर्वा निमित्तसंयोगात्॥ ३१॥]

दर्शे प्रत्याम्नाय एतदङ्गं वा हविरार्तितः॥ दर्शयागे निवृत्तेऽस्य प्रत्याम्नायतया विधिः॥ १६॥
पूर्वद्रव्यविनाशेऽपि द्रव्यस्यान्यस्य संभवात्॥ अनिवृत्तेस्तदङ्गं स्यादार्तिवैगुण्यहानये॥ १७॥

तदिदं कर्मान्तरं किममावास्यायां प्रत्यामनेत् उत तस्याङ्गमिति संशयः। तत्र पञ्चशरावः कार्यमपेक्षते। दोहयोश्चार्तत्वादमावास्यानिवृत्तेति[3] तत्कार्यं साधनमपेक्षते। तयोराकाङ्क्षावशात्संबन्धः। तस्मादमावास्ये कार्ये विधीयमानः पञ्चशरावयागस्तस्याः प्रत्याम्नायः स्यात्।—'स्यादेवं यद्यमावास्या निवृत्ता नतु सा तथा॥ पूर्वद्रव्यविनाशेऽपि[4] द्रव्यस्यान्यस्य संभवात्॥' संभवति ययोरन्तरे दध्यन्तरे च नामावास्यानिवृत्तिः। अनुवृत्तायां च तस्यां न तत्कार्यं साधनमपेक्षते द्रव्यविनाशोपजनितवैगुण्यसमाधानं त्वपेक्षितव्यम्। अतस्तदुपकारेणामावास्याङ्गं पञ्चशरावः॥

---

विशिष्टकर्मान्तरविध्यपेक्षयेति शेषः। **बहुव्रीहिणेति**। यद्यपि पञ्चशरावाः परिमाणमस्येति 'तदस्य परिमाण'मिति तद्धितार्थे विवक्षिते 'तद्धितार्थोत्तरपदे'ति समासे ततः तदस्य परिमाणमि'त्यर्थे उत्पन्नस्यार्हीयस्य प्रत्ययस्य 'अध्यर्धे'ति लुकि पञ्चशरावशब्दो निष्पन्नः। तथापि मत्वर्थमात्रविवक्षायां बहुव्रीहेरपि संभवाद्बहुव्रीहितद्धितवृत्त्योर्वाक्यभेदाभावोपायत्वतौल्याच्च बहुव्रीहिणेत्युक्तम्। विधिसंबन्धात्पूर्वमेव बहुव्रीहिणा परिमाणविशिष्टौदनावगतौ तस्य विशिष्टस्य सकृद्विधिव्यापारेण विधातुं शक्यतया तत्र विध्यावृत्तिप्रयुक्तवाक्यभेदाप्रसक्तिः। यथा 'विश्वजित्सर्वपृष्ठ' इत्यत्र प्राप्ते विश्वजिति सर्वत्वविशिष्टपृष्ठविधानमित्यर्थः। एवंच पूर्वत्र विशिष्टोद्देशेऽपि यथा न वाक्यभेद एवमिहापीति प्रत्यवस्थानात्सङ्गतिः। **स्थानापत्त्येति**। यद्यपि दोहप्रतिनिधिः पञ्चशरावस्तथैव सूत्रभाष्यतन्त्ररत्नेषु व्यवहारः तथाच न स्थानापत्तिसंभवस्तथापि तत्कार्यकरत्वमात्रेण स्थानापत्तिशब्दप्रयोगः। **नित्यानुवाद इति**। महेन्द्रस्यापीन्द्रत्वादित्यभिमानः। **महेन्द्रस्येति**। इन्द्रमहेन्द्रभेदः स्तुतशस्त्राधिकरणे स्फुट इति भावः। नच पूर्वपक्षेऽपि प्रक्रान्तकर्मणो नैमित्तिकद्रव्यान्तरेण समापनेऽपि 'अथोत्तरस्मै हविषे वत्सानपाकुर्या'दिति पुनःकरणावश्यंभावादनुष्ठानाविशेषादिदं निष्फलमिति वाच्यम्। पूर्वपक्षे पञ्चशरावौदने सांनाय्यधर्माः कार्याः सिद्धान्ते त्वौषधधर्माः इति प्रयोजनभेदस्य स्पष्टत्वात्॥

**स प्रत्यामनेत्स्थानात्॥ ३०॥** प्रासङ्गिकत्वं सूचयति—**तदिदमिति**। प्रत्यामनेत् स्वयं तत्कार्यं निर्वर्तयेदित्यर्थः। **ननु** कार्यापत्तौ प्रत्यक्षमनुमानं प्रत्यक्षवचनं प्रत्यक्षवचनावगतानुवृत्त्यनुमितशब्दोऽभावविधिरिति पञ्च प्रमाणानि नवमे वक्ष्यते, तदन्यतराभावान्न पञ्चशरावयागस्य दर्शकार्यापत्तिरिति कथं पूर्वःपक्ष इत्यत आह—**तत्रेति**। परस्पराकाङ्क्षाबलाद्द्रव्याभावेनामावास्याभावे तत्कार्यार्थं पञ्चशरावयागं कुर्यादिति विधिपर्यवसानादभावविधिरेवात्र स्थानापत्तौ प्रमाणमिति भावः। निवृत्तेत्यनेन निवृत्तस्य कर्मणोऽङ्गानर्थक्यादङ्गविधिरनुपपन्न इति सूचितम्। नच लौकिकयोर्दधिपयसोः संभवान्न कर्मनिवृत्तिरिति वाच्यम्। संस्काराभावेन विगुणतया लौकिकयोः कर्मानर्हत्वादिति भावः। **ययोरन्तर इति**। आरब्धं कर्मावश्यं समाप्यमिति विगुणेनापि लौकिकेन द्रव्येण समापयितुं शक्यते इह तु 'अथोत्तरस्मै हविषे वत्सानपाकुर्या'दिति वचनात्संस्कृतमेव तदस्तीत्यर्थः। **नन्वेवं** पञ्चशरावयागो विश्वजिन्न्यायात्स्वतन्त्रफलः स्यान्नतु दर्शाङ्गमित्यत आह—**द्रव्येति**। प्रकरणाच्चाङ्गत्वं बोध्यम्। अत्रापि 'अथोत्तरस्मै हविषे वत्सानपाकुर्या'दिति वचनबलेन पुनःप्रयोगस्य पक्षद्वयेप्यावश्यकतया पुनःप्रयोगाप्रयोगाभ्यामनुष्ठानविशेषाभावेऽपि पूर्वपक्षे दर्शस्थानापत्त्या तद्धर्मनियमः नतु सिद्धान्ते। तथा पञ्चशरावयागभ्रेषे पूर्वपक्षे प्रधानभ्रेषप्रायश्चित्तमित्येवं विशेषो बोध्यः॥

---

१ कर्मणि कथं विधीयेरन्. २ णात्रान्यपदार्थ. ३ निवृत्तेस्तत्कार्यं. ४ नाशेऽप्यन्यस्य द्रव्यस्य.

सत्रायावगूर्याप्रवृत्तस्य विश्वजिदावश्यकताधिकरणम् ॥ ११ ॥

**विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ३२ ॥ [निष्क्रयवादाच्च ॥ ३३ ॥]**

**सत्रायागुरते योऽयं यजेद्विश्वजितेत्यसौ ॥ यः कोऽप्युत प्रवृत्तः स्यादप्रवृत्तोऽथ वाऽग्रिमः ॥ १८ ॥**

**अविशेषादप्रवृत्तोऽस्तु सत्राङ्गं हि तथा भवेत् ॥ निमित्तोक्तेरप्रवृत्तः प्रायश्चित्तं चरेदिदम् ॥ १९ ॥**

'यः सत्रायागुरते स विश्वजिता यजेते'ति किमागूर्य प्रवृत्तस्य विश्वजित् उताप्रवृत्तस्योतोभयोरिति संशयः । 'द्वयोरपि भवेत्कस्माद्विशेषस्याश्रुतत्वतः ॥ प्रवृत्त एव वा कुर्यात्सत्राङ्गं हि तथा भवेत् ॥' तत्र फलं न प्रकल्पयितव्यं भवति । 'निमित्तश्रुतिवैयर्थ्यान्न त्वेतदपि युज्यते ॥ साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥' यच्छब्देन ह्यागुरणं निमित्तं प्रतीयते प्रवृत्तस्य चागुरणं नित्यं न निमित्तं भवितुमर्हति । तत्र निमित्तश्रुतिरुपरुध्येत साधारण्यपक्षे तु प्रवृत्तं प्रतिक्रत्वर्थत्वादप्रवृत्तं प्रति पुरुषार्थत्वाद्वैरूप्यं स्यात् । अथोभौ प्रति पुरुषार्थत्वेन विधीयेत । तथासति फलकल्पना तावदवश्यंभाविनी । तत्र प्रवृत्तस्यानपेक्षितविधानं स्यात् । नहि सत्रमागूर्य कुर्वतः किंचिदपेक्षितम् । यस्तु सत्रफलाय सत्रमागूर्य कुतश्चित्कारणात्तत्राप्रवृत्तस्तस्य सत्रफलप्राप्तये प्रारब्धाकरणदोषपरिहाराय च साधनमपेक्षमाणस्य विश्वजिद्विधानमपेक्षितार्थं भवति । तस्मात्सत्रमागूर्याकुर्वतः प्रायश्चित्तमिदम् ॥

बर्हिर्वत्सयोः कालोपलक्षकताधिकरणम् ॥ १२ ॥

**वत्ससंयोगे व्रतचोदना स्यात् ३४ ॥ [कालो वोत्पन्नसंयोगात् ॥ ३५ ॥ अर्थापरिमाणाच्च ॥ ३६ ॥ वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३७ ॥ कालस्तु स्यादचोदना ॥ ३८ ॥ अनर्थकश्च कर्मसंयोगे ॥ ३९ ॥ अवचनाच्च स्वशब्दस्य ॥ ४० ॥ ]**

**वत्सैर्दर्शे सवत्सस्य वत्समात्रस्य वा विधिः ॥ व्रतकालं लक्षयेद्वा वत्सयुक्ते व्रते विधिः ॥ २० ॥**

**भाति रागावृतप्राप्तेर्वत्समात्रं विधीयते ॥ व्रतस्याकरणं वत्सः कालगीस्तदपाकृतेः ॥ २१ ॥**

क[1]: पुनः प्रायश्चित्ताधिकारेऽस्य संबन्धः । उच्यते । विश्वजित्सत्रे प्रवृत्तस्याथाप्रवृत्तस्येति विचारिते तत्प्रसङ्गाद्वत्सापाकरणलक्षितो व्रतकालः किं सांनाय्ये प्रवृत्तस्योतासांनाय्ययाजिनोऽपीति चिन्तापतिता । तदुपोद्घातत्वेन प्रथमं काललक्षणैव प्रतिपाद्यते बर्हिषा पूर्णमासे व्रतमुपैति[2] । वत्सैरमा-

---

**विश्वजित्त्वप्रवृत्ते भावः० ॥ ३२ ॥** आगुरते उद्युङ्क्ते इत्यर्थः । **प्रवृत्त एवेति** । 'सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः आत्मानमागुरते यः सत्रायागुरते' इति ह्याम्नायते । तत्र यच्छब्दस्य यः सत्रायागुरते एष सर्वदेवतादिभ्य आत्मानमागुरत इति पूर्वेणान्वयसंभवान्नात्र निमित्तश्रुतिवैयर्थ्यदोष इति भावः । सत्राङ्गं हीत्यनेन पूर्ववदिहाप्यङ्गत्वमिति प्रत्यवस्थानात्सङ्गतिः सूचिता । स विश्वजिता यजेतेति तच्छब्दस्य साकाङ्क्षत्वेन यच्छब्दस्योत्तरेणावश्यमन्वयाद्यच्छब्दावगतनिमित्तविरोधान्नैवमित्याह—**निमित्तेति । सत्रफलप्राप्तय इति** । नचैवं सत्रविश्वजितोर्विकल्पः स्यादिति भ्रमितव्यम् । व्रीहियववदुभयोः ऋद्धिफलाय तुल्यकक्ष्यतया विधानाभावात्सत्रं हि प्रथमतः साधनत्वेन विधीयते तत्संकल्प्य दैवान्मानुषाद्वा विघ्नात्तत्राप्रवृत्तस्य विश्वजिद्विधीयते । तस्य च विधीयमानस्य प्रयोजनाकाङ्क्षायां सत्रमागूर्याशक्त्या तत्फलार्थं साधनमपेक्ष्यमाणस्य मनसि प्रवर्तमानं यत्सत्रफलं तदेव संबध्यते इति सत्राशक्तौ तत्फलार्थं विधीयमानस्य सत्रसमानकक्ष्यत्वाभावात् । तदुक्तं तन्त्ररत्ने 'सत्रं करणत्वेनागूर्य तदशक्त्या विश्वजितं तत्फले मनसि विपरिवर्तमाने उपायत्वेन कुर्यादित्ययं वाक्यार्थ' इति । अतएव न्यायसुधायामभावे विधानाद्विश्वजितः सत्रस्थानापत्तिरुक्ता । **प्रारब्धेति** । इदंचानुषङ्गिकं फलं बोध्यम् । सूत्रार्थस्तु—अप्रवृत्ते विश्वजित्स्यायतः भावः सत्रफलभवनं कर्मणि विश्वजिति स्यादिति ॥

**वत्ससंयोगे० ॥ ३४ ॥** वत्सो व्रताङ्गं वत्सलक्षितः कालो वेत्येवमङ्गाङ्गित्वविचारपर्यवसितस्यास्य नात्र सङ्गतिरिति शङ्कते—**कः पुनरिति । नहीति** । वत्से निधाय व्रतने तृतीयानुपपत्तिरिति भावः । विशसने च मांसमेव व्रत्यं स्याम

---

१ कः प्रायश्चित्ता. २ व्रतमुपैति भोजनं करोति.

वास्यायां किमयं वत्सविशिष्टव्रतविधिरुत व्रतानुवादेन वत्सविधिरुत वत्सापाकरणं व्रतकालोपलक्षणमिति संशयः। तत्र वत्सविशिष्टव्रतविधानं रागप्राप्तत्वाद्वा भोजनस्य तदनुवादेन वत्सविधिः। नहि वत्सस्य व्रते पाण्यादिवत्करणत्वं संभवति। अथ वत्समेव व्रतयेत् तदशक्यम्। विशसने च वत्सव्याघातः विध्यन्तरं च पुरा वत्सानपाकर्त्तोर्दंपती अश्नीयातामिति विद्यते तेनैतदेकं वाक्यम्। अतो व्रतोपायनस्य वत्सापाकरणेन कालो लक्ष्यते॥

वत्सापाकरणकालस्य संनयदसंनयदुभयसाधारणताधिकरणम्॥ १३॥

## कालश्चेत्संनयत्पक्षे तल्लिङ्गसंयोगात्॥ ४१॥ [कालार्थत्वाद्वोभयोः प्रतीयेत॥ ४२॥]

**सांनाय्यिनः स कालः स्यादितरस्यापि वाऽग्रिमः॥ वत्सस्वाल्लक्ष्यकालो ह्यन्यस्याप्यस्त्यतोऽन्तिमः॥ २२॥**

किमयं कालः सांनाय्ययाजिन एवाथासंनाय्ययाजिनोऽपीति विचारस्तत्रासांनाय्ययाजिनो वत्सापाकरणाभावान्न तल्लक्षितकालसंभवः। ननु चैकपुरोडाशायामप्यनपायो हि कालस्येति वक्ष्यते तेनैव गतार्थम्। सत्यम्। तत्राग्नीषोमीयाभावेऽपि आग्नेयेन तदुपलक्षणसंभवः। इह वत्सापाकरणमेवोपलक्षणं। तदभावे केन कालो लक्ष्येतेति विशेषाशङ्का। उच्यते—सर्वथा तावदुपलक्षणमेव वत्सापाकरणम्। तच्च स्वकालद्वारेण व्रतकालं लक्षयति। तदयमर्थः—यो वत्सापाकरणकालस्ततः पूर्वकाले व्रतमिति। स चायमभ्यन्वाधानात्पश्चात्तनकालोऽसांनायिनोऽपि संभवति। तस्मात्तस्याप्यनेन कालेनाधिकारः॥

---

वत्स इत्याह—**विशसनेचेति**। विध्यन्तरैकवाक्यताभङ्गप्रसङ्गादपि नास्य वत्सविधायकत्वमित्याह—**विध्यन्तरं चेति**। अपाकर्त्तोरपाकरणादित्यर्थः। एवंच पुरा वत्सानपाकर्त्तोरिति विधिप्राप्तकालानुवादेन तदेकवाक्यत्वमस्य वाच्यमिति काललक्षणैवेत्याह—**अत इति**। नचैवमस्य वत्सविधायकत्वेऽपि पुरावत्सानिति वाक्यविहितकालमादाय सकालः कस्येत्येवमग्रिमविचारसंभवादस्य तदुपोद्घातत्वं न स्यादिति वाच्यम्। वत्सैरिति वाक्यस्य कालपरत्वं न कालविधायकतया किंतु पुरावत्सानिति वाक्यस्य विधायकत्वनिबन्धनमिति पुरावत्सानिति वाक्ये वत्सापाकरणं व्रताङ्गतया विधीयते इति शङ्कानिराकरणेन कालविधिस्थिरीकरणेऽस्य पर्यवसाने उपोद्घातत्वसंभवात्। नच 'बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्याया'मिति तैत्तिरीयवाक्यमेवात्र विषय इति स्वीकृत्य तेनैकवाक्यमिति ग्रन्थस्य शाखान्तरगतेन पुरावत्सानित्यनेनैकार्थकं तैत्तिरीयवाक्यमित्यर्थं चाश्रित्य कालविधायकत्वमेव सिद्धान्त्यत इति किं न स्यादिति वाच्यम्। 'कालस्तु स्यादचोदने'ति सूत्रविरोधात्। नचैषा चोदना 'बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्याया'मिति कथमवगम्यते विधिनैकवाक्यत्वात् परस्ताद्विधिराम्नायते 'पुरा वत्सानपाकर्त्तोर्दंपती अश्नीयाता'मिति। यद्येष विधिः स्याद्वाक्यं भिद्येतानुवादश्च तथाभूतस्यार्थस्य भवति नच वत्साङ्गता प्राप्ता प्राप्तस्तु काल इति भाष्यविरोधेन च तैत्तिरीयवाक्यस्योदाहरणत्वानुपपत्तेः। किंच तैत्तिरीयं वाक्यं न भोजनपरं किंतु व्रतमुपैष्यन्ब्रूयात् 'अग्ने व्रतपते व्रतं चरिष्यामी'ति पूर्ववाक्ये यद्भोजनव्यतिरिक्तं व्रतोपायनं प्रस्तुतं तत्परमिति तस्योदाहरणत्वमत्यन्तासंभावितमेव। सूत्रार्थस्तु—वत्सैरमावास्यायामिति वत्सव्रतसंयोगे वत्सविशिष्टव्रतविधिः स्यादिति॥

**कालश्चेत्संनयत्०॥ ४१॥ नन्विति**। असोमयाजिनोऽग्नीषोमीयाभावादेकपुरोडाशा इष्टिस्तत्र 'यदन्वग्नौ पुरोडाशावुपांशुयाजमन्तरा यजती'ति पुरोडाशद्वयान्तरालकाले विहित उपांशुयाजः कर्तव्यः पुरोडाशद्वयाभावेऽपि तदुपलक्षितान्तरालकालस्यानपायादिति दशमे वक्ष्यते। तेन न्यायेनात्रापि वत्सापाकरणाभावे तल्लक्षितकालसंभवादसन्नयतोऽपि व्रतं स्यादित्यर्थः। **आग्नेयेनेति**। आग्नेयोत्तरकालस्योभयान्तरालकालत्वात्स कालस्तत्राग्नेयेनोपलक्षयितुं शक्यत इत्यर्थः। यदि वत्सापाकरणं स्वरूपेणोपलक्षणं स्यात्तदा तदभावे उपलक्षणान्तराभावादुपलक्षितकालो दुर्ज्ञेयः स्यात्। नच स्वरूपेणोपलक्षणं संबन्धाभावात् किंतु स्वकालद्वारा। तथाच स्वस्याभावेऽपि यस्मिन्काले स्वयं कर्तव्यतया विहितं तस्य स्वकालस्य विद्यमानत्वात्तेन कालेन तत्पूर्वकालस्य ज्ञानमित्याह—**तच्चेति**। सूत्रे तल्लिङ्गसंयोगात्तस्य कालस्य यल्लिङ्गं चिह्नं तत्संयोगादित्यर्थः॥

---

१ वत्सानामपाकर्त्तोः.

सांनाय्यरहितस्य शाखाहरणनिराकरणाधिकरणम् ॥ १४ ॥

**प्रस्तरे शाखा श्रयणवत् ॥४३॥ [कालविधिर्वोभयोर्विद्यमानत्वात् ॥४४॥ असंस्कारार्थत्वाच्च ॥४५॥ तस्माच्च विप्रयोगे स्यात् ॥४६॥ उपवेषश्च पक्षे स्यात् ॥४७॥]**

**प्रस्तरं शाखया युक्तं हरेच्छाखा विधीयते ॥ कालो वा प्रतिपत्त्यर्थः प्रवृत्याऽत्रोपलक्ष्यते ॥ २३ ॥**
**आद्योऽङ्गत्वविधेर्भानात्प्रतिपत्तिमपेक्षते ॥ शाखोपयुक्ता तेनान्त्यः प्रस्तरे प्रतिपादनात् ॥ २४ ॥**

'सह शाखया प्रस्तरं प्रहरती'ति वचनं किं प्रस्तरप्रहरणाङ्गत्वेन शाखां विधत्ते उत शाखाप्रतिपत्तिः प्रहरणं प्रस्तरप्रहरणकाले विधीयत इति प्रहरणाङ्गत्वेऽसंनयतापि शाखा हर्तव्या, प्रतिपत्तित्वे तु नेति चतुर्थे हरतेर्यजतिरूपत्वात्तत्र प्रस्तरस्य गुणभावात् शाखाया अपि सहशब्देन तत्तुल्यत्वावगमाद्गुणभावमाशङ्क्य न शाखाया यजौ साहित्यं प्रहरणमात्रे श्रवणाद्धरतौ च प्रस्तरस्य प्राधान्याच्छाखाया अपि प्राधान्यमित्युक्तम् । इह तु पुनर्भवतु प्रहरणे सहभावस्तथापि न प्राधान्यम् । अयं हि वाक्यार्थो यत्प्रस्तरं प्रहरति तत्सहशाखया नान्यथेति शाखासंसर्गः प्रस्तरस्य प्रह्रियमाणस्याङ्गं मैत्रावरुणग्रहस्येव पयःसंसर्गः । यदि प्रस्तरप्रहरणकाले शाखाप्रहरणं विधित्सितं स्यात्तदा प्रस्तरेण सह शाखां प्रहरेदितीदृशं वचनं स्यात् । तस्मात्प्रस्तराङ्गं शाखा । ततश्चासंनयतोऽपि प्रस्तरार्थत्वेन शाखा हर्तव्येति पूर्वः पक्षः । सिद्धान्तस्तु प्रस्तरं प्रहरेदित्ययमर्थः । प्रस्तरं प्रहरणेन प्रतिपादयेत्सहशाखयेति । यदि च शाखापि प्रतिपाद्यते ततः शाखया सह प्रस्तरः प्रतिपादितो भवति नान्यथा । तेन शब्दस्वारस्यात्तावच्छाखापि प्रतिपाद्येति गम्यते । नच प्रकारान्तरमस्ति येन प्रतिपत्तिर्बाध्येत । किंच तत्रोपयुक्ता शाखा प्रतिप्रत्तिमपेक्षते नोपयोगान्तरमतोऽपि प्रतिपत्तिः । सहवचनं तु तत्काले[1] प्रतिपत्तिः शाखायाः कथं स्यादित्येवम् । अतः संनयत एव शाखाप्रहरणम् । इदमपि प्रासङ्गिकमेवाधिकरणं व्रतकालोऽसंनयतोऽपीत्युक्तम् । शाखाप्रहरणं तु नैवं किंतु संनयत एवेति । यद्वा वत्सापाकरणं कालोपलक्षणमित्युक्तं प्रस्तरप्रहरणमपि काललक्षणमित्युच्यते ॥ इति शास्त्रदीपिकायां षष्ठाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

**प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥** अनुष्ठानविशेषाभावादप्रयोजनत्वमाशङ्क्याह—**प्रहरणाङ्गत्व इति ।** ननु चतुर्थ एव शाखाप्रतिपत्तिः प्रहरणमित्युक्ते पुनरुक्तिरित्याशङ्क्य तत्र हि शाखाया न यजौ साहित्यं किंतु हरतावित्येव तात्पर्यम् । अत्रत्वमेव प्रतिपत्तित्वं प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वादिति तत्र व्यवहृतमित्याशयेनाह—**चतुर्थ इति । यजतिरूपत्वादिति ।** तृतीयाविनियुक्तमन्त्रसंयोगे तत्प्रतिपाद्याग्न्यादिदेवतासंयोगाद्यजित्वस्य तृतीये प्रतिपादनादिति भावः । **नन्वेवं** सहशब्दावगतं प्रस्तरतौल्यं विरुध्येतेत्यत आह—**अयमिति ।** एवंच सहशब्दः क्रियान्वयमात्रे तौल्यपरः ननु प्राधान्येऽपि 'सह युक्तेऽप्रधाने' इति तृतीयाविधिबलादिति भावः । **ननु** शाखया प्रस्तरप्रहरणे कस्यचिदुपकारस्याभावात्कथं तदङ्गत्वमित्यत आह—**शाखासंसर्ग इति ।** दृष्टोपकाराभावेऽपि शाखासाहित्याददृष्टोपकारः पयसा मैत्रावरुणं ग्रहं श्रीणातीति वदिति भावः । **ईदृशमिति ।** प्रस्तरप्रहरणस्य निर्ज्ञातकालत्वादिति भावः । व्यत्ययाश्रयणे तु स एव दोषः । **ननु** सहशब्दो निपातत्वाद्यथाकथंचिन्नेष्यते इत्यस्वरसादाह—**किंचेति । अपेक्षते इति ।** वेदिदेशरिक्तीकरणार्थं प्रतिपत्तिरपेक्षितेत्यर्थः । **अतोपीति ।** अदृष्टार्थत्वदोषसमुच्चयार्थोऽपिशब्दः । एवंच शाखां प्रहरतीत्येतावति वक्तव्येऽपि तावदुक्ते शाखाप्रहरणमनियतकालं स्यादिति प्रस्तरप्रहरणकाले शाखां प्रहर्तुं सहवचनं तत्रच शाखाप्रहरणं प्रस्तरप्रहरणं च सह कुर्यादित्येतावन्मात्रं शब्दतः प्रतिपाद्यते । तथाच सति निर्ज्ञातकालस्य प्रस्तरप्रहरणस्यानिर्ज्ञातकालशाखाप्रहरणकालोपलक्षकत्वमार्थिकमेवेति शब्दतस्तथाप्रतीतेरविवक्षितत्वान्न प्रस्तरेण सह शाखां प्रहरेदितीदृशी वचनप्रसक्तिरित्याशयेनाह—**सहवचनंत्विति ।** भाष्ये तु यासौ शाखायां तृतीया सा द्वितीयायाः, या प्रस्तरे द्वितीया सा तृतीयाया अर्थ इति व्यत्ययमाश्रित्य शाब्दमेव लक्षकत्वमुक्तं फलद्वारा प्रासङ्गिकत्वमुक्त्वा साक्षादधिकरणप्रतिपाद्यार्थस्य तदाह—**यद्वेति ।** नचैवं पूर्वेतरेणाधिकरणेन सङ्गतिः स्यान्न पूर्वेणेति वाच्यम् । वत्सापाकरणोपलक्षितकालस्य पूर्वाधिकरणविषयतयोपलक्षितसंबन्धस्य पूर्वाधिकरणेऽपि सत्वेनोपलक्षणप्रसङ्गागतस्य पूर्वेणसङ्गतत्वादिति भावः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

---

[1] प्रस्तरप्रहणं तु तत्काले.

## षष्ठाध्याये पञ्चमः पादः ।

दर्शेऽभ्युदयेष्टौ नैमित्तिकदेवतापनयाधिकरणम् ॥ १ ॥

**अभ्युदये कालापराधादिज्याचोदना स्यात्, यथा पञ्चशरावे ॥ १ ॥ [अपनयो वा विद्यमानत्वात् ॥ २ ॥ तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥ आतञ्चनाभ्यासस्य दर्शनात् ॥ ४ ॥ अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥ पयोदोषात्पञ्चशरावेऽदुष्टं हीतरत् ॥ ६ ॥ सांनाय्येऽपि तथेति चेत् ॥ ७ ॥ न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥ लक्षणार्था शृतश्रुतिः ॥ ९ ॥]**

इष्टिरभ्युदये दर्शात्कर्मान्यदुत देवताः ॥ पूर्वास्त्याज्या विशिष्टस्य विधानादन्यकर्म तत् ॥ १ ॥
प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना ॥ देवताः प्रकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते ॥ २ ॥

अकाले प्रक्रान्ते दर्शे प्रायश्चित्तमाम्नातं 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दध्नश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु'मिति । तत्रसंशयः किं कर्मान्तरमिदमुत प्रक्रान्तस्यैव दर्शस्य पूर्वदेवताभ्योपनयो देवतान्तरसंयोगश्च चोद्यत इति । 'अनेकार्थविधायित्वात्कर्मान्तरविधिर्भवेत् ॥ प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः ॥' अग्न्यादयो देवतास्तद्गुणाश्च दातृत्वादयो दधिशृतयोश्चाधिकरणत्वं स्थविष्ठाणिष्ठादीनां च चरुत्वमिति बहवोऽर्था नापूर्वविधिमन्तरेण शक्यन्ते विधातुम् । तस्मात्कर्मान्तरमेवाकालोपक्रमप्रायश्चित्तत्वेन विधीयत इति प्राप्ते उच्यते— 'प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना । प्राकृतीभ्यस्तदाच्छिद्य द्रव्यमन्याभ्य उच्यते ॥' नतावत्संभवन्त्यां गतौ प्रकृतहानाप्रकृतकल्पनाविशिष्टविधानापूर्वकर्मान्तरकल्पनं न्याय्यम् । संभवति चात्र प्रक्रान्तएव गुणविधानम् । तथाहि त्रेधा तण्डुलान्विभजेदित्यनेन तावन्मध्यमादिभावेन तण्डुलानां विभागो न विधीयते मध्यमादिविनियोगवशेनैवार्थसिद्धत्वात् । अतस्तण्डुलशब्देन प्रकृतं हविस्त्रयमुपलक्ष्य तस्यापरित्यक्तयागान्वयस्य पूर्वदेवताभ्यो विभागोपनयो विधीयते । ततश्चापनीतानां हविषां देवतान्तरसंयोगोऽपेक्षितो मध्यमादिश्रवणैर्विधीयते । मध्यमानां तण्डुलानामग्निर्दाता स्थविष्ठानां

---

**अभ्युदये कालापराधात्०** ॥१॥ तृतीयपादोक्तद्रव्यापचारानुषङ्गागतद्रव्यापचारनिमित्तप्रायश्चित्ताधिकारनिरूपणानन्तरं परिशिष्टकालाद्यपचारनिमित्तप्रायश्चित्ताधिकारनिरूपणात्पादान्तरत्वमानन्तर्यं च । **अकाल इति** । चतुर्दश्याममावास्याभ्रान्त्या प्रक्रान्त इत्यर्थः । **इदमिति** । मध्यमादिवाक्यविहितमित्यर्थः । **उतेति** । त्रेधा वाक्येनापनयो मध्यमादिवाक्येन प्रक्रान्तदर्शप्रयोगसंबन्धिनो हविषो देवतान्तरसंयोगश्च चोद्यत इत्यर्थः । मध्यमादिवाक्ये देवतान्तरसंयोगः इत्येव सिद्धान्तकोटिरपनयविधिस्तु तद्धेतुत्वादुक्त इति विवेकः । **अग्न्यादयो देवता इति** । स्थविष्ठानां दध्नश्चेन्द्रो देवतेति विधावपि उद्देश्यभेदात्प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्वाक्यभेदः स्यादिति भावः । **तद्गुणाश्चेति** । यथा 'यदग्नये च प्रजापतये चे'त्यत्राग्निप्रजापत्योः प्राप्तकर्मानुवादेनैकेन वाक्येन विधिर्न संभवति एवमिहापि देवतातद्गुणयोर्नैकेन विधिः संभवतीति भावः । **अधिकरणत्वमिति** । सहश्रपयतीति वाक्यस्य सहत्वमात्रविधायित्वाद्येषां श्रपणं तेषां सहत्वविधानेऽपि दध्नः श्रपणाभावेन तत्र सहश्रपणवाक्यव्यापाराभावादधिकरणत्वमप्राप्तमित्यवश्यं विधेयमिति भावः । **चरुत्वमिति** । असश्रयतोपीदं नैमित्तिकमिष्यते । नच तस्य दधिशृते स्त इति सहश्रपणविधेस्तत्र चरुत्वमप्राप्तमिति चरुत्वं विधेयमिति भावः । **ननु** श्रुतत्वान्मध्यमादिभावेन विभागस्त्रेधा विधेय इति पूर्वदेवतापनयाभावे देवतान्तरविध्यसंभवात्कर्मान्तरविधिरेव न्याय्य इत्यत आह—**त्रेधेति । अत इति** । विभजेदित्यस्य कर्मापेक्षायां सामर्थ्यात्संयुक्तं गम्यते । तस्य च विशेषापेक्षायां प्रकृतं हविरिति केन संयुक्तमित्यपेक्षायां पूर्वदेवताभिरित्येतदर्थस्यावगतत्वात्तण्डुलशब्दोऽवगतार्थानुवादत्वात्प्रकृतदेवतासंबन्धिहविर्मात्रोपलक्षकस्तस्य च हविषस्तण्डुलदधिपयोरूपेण वा यागत्रयसंबन्धेन वा त्रित्वात्त्रेधेत्यनुवाद इति भावः ।

---

१ दध्नीत्यर्थः

**दध्नश्चेन्द्रः प्रदाता अग्निष्ठानां शृतस्य च विष्णुः शिपिविष्टः । नचानेकार्थविधानं दातृप्रदातृशिपिविष्टशब्दानां यौगिकानां श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात्पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकेन विधिना शक्यं विधातुम् । अभ्युदयेष्टिप्रकरणे च 'सह श्रपयती'ति वचनमस्ति । तेन संप्रतिपन्नदेवताकयोर्दधिस्थविष्ठयोः शृताग्निष्ठयोश्च सहपाकादर्थप्राप्तं चरुत्वम् । दधिशृतयोश्चाधिकरणत्वमिहानूद्यते । तस्मादवाक्यभेद इत्यकर्मान्तरत्वम् । एवंचातञ्चनाभ्यासदर्शनमुपपन्नं भवति । तथा हि श्रूयते 'यदि बिभियादभिमोदेष्यतीति महारात्रे हवींषि निर्वपेत्फलीकृतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न,यद्यभ्युदियात्तेनातञ्च्य प्रचरेद्यदि न, प्रातरन्येद्युरेतेन ब्राह्मणं भोजये'दिति । तद्यदि कर्मान्तरमभ्युदयेष्टिः स्यात्ततस्तत्र दधिशृतयोरधिकरणत्वेन प्रणीता-**

---

**स्थविष्ठानां दध्नश्चेति ।** यद्यप्यत्र प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्वाक्यभेदोऽस्ति तथापि कर्मान्तरविधिपक्षे हविष उपादेयतया प्रकृतग्रहणे प्रमाणाभावेन पूर्वदेवतापनयविधेरनपेक्षितत्वात्रेधा तण्डुलानिति वाक्यमनर्थकं स्यात् विधेयान्तराभावात् । एवंचवाक्यानर्थक्याद्वरमेतादृशवाक्यभेदस्वीकारः । अनेनैवाभिप्रायेणोक्तं तन्त्ररत्ने 'प्रत्युद्देश्यं वाक्यपरिसमाप्तिः स्यादेव साचाङ्गीक्रियते' इति न कश्चिद्दोष इति । दातृत्वादिगुणाधिकरणत्वचरुत्वविधिनिबन्धनं वाक्यभेदमुद्धरति—**नचेत्यादिना ।** अग्निप्रजापतिशब्दयोर्भिन्नार्थयोः सामानाधिकरण्याभावात्तत्र शब्दद्वयं न विशिष्टमेकमर्थं प्रतिपादयति । किंतु प्रत्येकमेव स्वस्यार्थमिति । तत्तदर्थविधानार्थमावृत्त्यवश्यंभावाद्युक्तो वाक्यभेद इह तु सामानाधिकरण्याच्छब्दद्वयेन विशिष्टार्थस्यैव प्रतीतौ स विशिष्टार्थो नावृत्तेनैव विधिना विधातुं शक्यते इति नास्ति वाक्यभेद इत्याह—**दातृप्रदात्रिति ।** नन्वेवमपि यथारुणैकहायन्योः सामानाधिकरण्यबाधेन कारकविभक्त्या क्रियया संबन्धात्र मिथो विशेषणविशेष्यभावः एवमिहापि किं न स्यादिति शङ्कां निराकर्तुं यौगिकानां श्रुत्यैवेत्युक्तं तत्र गुणमात्रवचनस्यारुणापदस्य द्रव्यवचनेनैकहायनीशब्देन सामानाधिकरण्यं लक्षणया । क्रियासंबन्धस्तु श्रुत्येति युक्तं सामानाधिकरण्यबाधेन क्रियासंबन्धः । इहतु दात्रादीनां यौगिकानां दानकर्त्रादिद्रव्यवाचकानां संनिहिताग्न्यादिपदसामानाधिकरण्यं श्रुत्यैवेति संभवत्सामानाधिकरण्यस्य बाधो न युक्त इत्यर्थः । श्रपणस्य समानदेवताकहविरन्तरसाहित्ये विहिते तण्डुलश्रपणस्य दधिसाहित्येनैव कर्तव्यतया दध्नोपि श्रपणं सिध्यति । वस्तुतस्तु सहश्रपयतीति वाक्यं साहित्यविशिष्टं श्रपणमेव विधत्ते इतरथा तण्डुलावस्थायां देवतान्तरसंयोजनात्तण्डुला एव प्रदेया इति चित्रेष्टिगततण्डुलवदिह तण्डुलेष्वपि श्रपणस्याप्रसङ्गात् । एवंच सह श्रपणे प्रभूतस्य द्रवद्रव्यस्याधिकरणत्वं चरुत्वं चार्थप्राप्तमित्याह—**अभ्युदयेष्टिप्रकरण इति । संप्रतिपन्नेति ।** एकदेवताकयोरित्यर्थः । एवंच तण्डुलानां दध्ना सह श्रपणे पुरोडाशस्य संपादयितुमशक्यत्वात्तदर्थपेषणस्य निवृत्तिर्बोध्या । **यदीति ।** यजमानो यदि किं चतुर्दश्यामेव मया प्रक्रान्तस्ततश्चन्द्रमा मामभ्युदेष्यतीति विभियात्तदा महारात्रे त्रिभागावशिष्टायां तत्र महारात्रे बुध्वा 'अग्ने नयेत्याग्नीध्रमभिमृशति' इति कल्पसूत्रस्य तथा व्याख्यानात् तत्र बुध्वा प्रयोगं प्रक्रम्य फलीकरणपर्यन्तं कृत्वा उदयतदभावौ प्रतीक्षमाणः आसीत्तदा सायंदोहनिष्पन्नं च यद्दधि तद्द्वेधा विभज्यार्धं प्रतिपदि स्वकाले कर्तव्यदर्शार्थे यद्धविस्तदातञ्चनार्थं निदध्यात् । अर्द्धान्तरं नातञ्चनार्थं निदध्यात् । तूर्णीं परिपालयेदिति यावत् । तदेवंसति यद्यभ्युदयात्तदातञ्चनार्थं निहितेन परेद्युरमावास्यायां रात्रावातञ्च्य तत्कृतेन दध्ना प्रति पदि प्रचरेत् यदि नाभ्युदियात्तदातञ्चनार्थं निहितेनार्धेन तेन ब्राह्मणान्भोजयेदित्यर्थः । **अर्द्धं नेति ।** यत्तूर्णीं निहितमर्धं तदभ्युदये दध्नश्चरुमिति नैमित्तिके विनियोज्यम् । अभ्युदयाभावेच यथाश्रुतदर्श एवेति भावः । **यदीति ।** यदि कर्मान्तरमेवाभ्युदये निमित्ते विधीयते तदा दधिशृतयोः प्रदेयत्वाभावात्सप्तम्या प्रणीताकार्ये हविर्निष्पत्त्यनुगुणपाकलक्षणे विधानाच्चर्वर्थमुपादेयत्वेन प्रकृतग्रहणानुपपत्तेर्लौकिक एव दध्नि श्रपणं कृत्वा नैमित्तिकस्यानुष्ठेयत्वात् यच्चतुर्दश्यां संपादितं दधि तेनैव प्रतिपदि दर्शस्यानुष्ठेयत्वाद्ध्यन्तरोत्पत्तेरनपेक्षितत्वात्तेनातञ्च्येत्यातञ्चनान्तरमनुपपन्नम् । नचाकालकृतत्वात्तद्दधि न प्रतिपदि दर्शयोग्यमिति वाच्यम् । नैमित्तिकप्रायश्चित्तानुष्ठानेन कालापराधदोषपरिहारादित्यर्थः । नच प्रायश्चित्तेनाकालकृतप्रणयनदेवतापरिग्रहाद्यपचार एव निर्हण्यते नतु द्रव्यस्य कर्मार्हत्वमपि तेन क्रियते । स्तेनप्रायश्चित्तेन स्तेयदोषनिर्हरणेऽपि स्तेयलब्धद्रव्यस्य कर्मार्हत्वाभावादिति वाच्यम् । प्रकृते द्रव्यस्य कर्मानर्हत्वं कालापराधप्रयुक्तमेव नान्यप्रयुक्तं कालापराधश्च प्रायश्चित्ते परिहृत एव इति तु कथं

---

१ निर्वपेदित्यूरीकृतैस्तण्डुलैः.

**कार्ये विधानादुपादेयत्वेन प्रकृतग्रहणे प्रमाणाभावात् लौकिक एव दध्निश्रपणं कृत्वा सायंदोहेनाकालेऽपि प्रक्रान्तेन प्रायश्चित्तनिर्हृतकालापराधदोषेणैकान्तरितोऽपि दर्शः कर्तव्यो न दध्यन्तरमुत्पाद्यम्। तत्रातञ्चनमनर्थकं। तत्र प्रक्रान्तस्य दध्नस्त्यागे दध्यन्तरोत्पादे चादृष्टद्वयं कल्प्यम्। असमत्पक्षे तु तेन दध्ना प्रक्रान्तस्य प्रयोगस्यानुष्ठितत्वादवश्यं श्वो दध्यन्तरमुत्पाद्यमित्यर्थवदातञ्चनम्। तत्र सायंदोहार्धेनैवातञ्च्यान्नान्येनेत्येतावन्मात्रं विधेयमिति लाघवम। तस्मादकर्मान्तरम्॥**

---

कर्मानर्हत्वं भवेत्। स्तेयद्रव्यस्य तु स्वत्वाभावनिबन्धनं कर्मानर्हत्वं न स्तेयप्रयुक्तमिति भावः। प्रकृतग्रहणे प्रमाणाभावेनार्धस्यापि नैमित्तिककर्मान्तरे विनियोगायोगादर्धे नेति यदर्धान्तरं तदप्यनर्थकं स्यादिति द्रष्टव्यम्। **ननु** तेनातञ्च्येति वचनदर्शनादेव चतुर्दश्यां संपादितं दधि परित्याज्यं दध्यन्तरं चोत्पाद्यमित्यत आह—**तत्रेति। एतावन्मात्रमिति।** नियममात्रमित्यर्थः। ततश्च न स्वतन्त्रादृष्टकल्पनाप्रसङ्गः। एवंच तेन दध्ना प्रक्रान्तप्रयोगं आतञ्चनं चोभयमनुष्ठेयमित्युभयार्थं दध्नो विभागादर्धद्वयविधानं चार्थवदिति भावः। **नन्वत्र** चरुत्वसप्तम्यर्थयोः पाक्षिक एवानुवाद असन्नयतोप्यभ्युदयेष्टेर्वक्ष्यमाणत्वेन नित्यप्राप्त्यभावादेवं **चैन्द्रं** पञ्चशरावमित्यत्राप्यैन्द्रमिति पाक्षिकानुवादेन प्रकृतदर्शकर्मण्येव हविरार्त्या द्रव्यापेक्षायां पञ्चशरावद्रव्यविधिसंभवान्न कर्मान्तरविधिः स्यात्। नच तत्र द्रव्यापेक्षा यस्य सर्वाणि हवींषीति हविर्विनाशसामान्ये विहितादाज्यादपि शाम्यति। इहतु प्रकृतद्रव्याणां देवतापेक्षा नान्यतः शाम्यतीति वैषम्यं युक्तम्। सामान्यविहितद्रव्यंहि विशेषविहितद्रव्याभावे भवति नतु तत्सद्भावे। तेन सामान्यतो विहितद्रव्येणाकाङ्क्षाशान्तेर्विशेषविहितद्रव्याभावनिबन्धनत्वात्सामान्यविहितद्रव्येण विशेषविधिनिवारणं न युक्तमिति पाक्षिकानुवाददोषेणैवात्र द्रव्यनिराकरणं वाच्यम्। नचेदिहाङ्गीक्रियते तत्राप्यस्त्विवति तौल्यमिति चेन्नैवम्। इह कर्मान्तरत्वे प्रागुक्तरीत्या त्रेधा तण्डुलानिति वाक्यानर्थक्यप्रसङ्गात्पाक्षिकानुवादोऽङ्गीक्रियते। तत्र नैवं किंचित्प्रबलं बाधकमस्तीति पाक्षिकानुवाददोषात्कर्मान्तरमिति वैषम्यात्। नच मध्यमादिवाक्यैः देवतान्तरसंयोगविधावर्थसिद्धः पूर्वदेवतापनय इति तवाप्यानर्थक्यं तुल्यमिति वाच्यम्। पूर्वदेवतापनयाभावे आकाङ्क्षाविरहेण मध्यमादिवाक्यैर्देवतान्तरसंयोगविध्यनुपपत्तेः। नचानाकाङ्क्षितोऽप्यपनयो यथा विधीयते तथा देवतान्तरसंयोगो विधीयतामिति वाच्यम्। असत्यपनये मध्यमादिवाक्यस्य कर्मान्तरविधायकत्वापत्त्या अपनयविध्यभावे देवतान्तरसंयोगविध्यसंभवात्। नच ये मध्यमा इति यच्छब्दोपबन्धबलात्तण्डुलानां प्राकृतानां ग्रहणे तत्समभिव्याहाराद्धिशृतयोरपि प्राकृतयोरेव ग्रहणे सत्यपनयविधिं विनैव देवतान्तरसंयोगविधिः संभवतीति वाच्यम्। कर्मान्तरविधावपि 'यः पशुकामः स्यात्सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्याद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठा' इत्यादि पशुकामेष्टिवाक्यइव यच्छब्दोपपत्त्या तन्मात्रेण प्रकृतद्रव्यस्य देवतान्तरसंयोगविध्यसंभवात्पशुकामवाक्यसारूप्येण कर्मान्तरविधेरेव प्रसङ्गेन देवतान्तरसंयोगविधिसिद्ध्यर्थमपनयस्यावश्यापेक्षणीयत्वात् अपेक्षितविधायकत्वेन त्रेधा वाक्यमर्थवत्। कर्मान्तरविधौ तु तदानर्थक्यमपरिहार्यमिति त्रेधा वाक्यानर्थक्यापत्त्या न कर्मान्तरविधिरपि तु देवतान्तरविधिरेवेति सिद्धम्। **नन्वेवमपि** लिङ्गदर्शनं नानुपपन्नं कर्मान्तरविधावपि प्रकृतग्रहणसंभवात् 'फलीकृतैस्तण्डुलैरुपासीते'ति फलीकरणपर्यन्तमेव कृत्वा तण्डुलभावविनाशकं पेषणमकृत्वा प्रतीक्षणविधिर्ये मध्यमा इति विहितकर्मान्तरे प्रकृतानामेव तण्डुलानां ग्राह्यत्वं गमयति। इतरथा पेषणात्प्रागवहननस्यादृष्टार्थत्वापत्तेस्तथार्धे नेत्यातञ्चनार्थादन्यस्यार्धान्तरस्य यत्तूष्णीं निधानं तदपि कर्मान्तरस्य प्रकृतदधिसाध्यत्वं गमयति। कर्मान्तरस्य लौकिकदधिसाध्यत्वे तन्न निदध्यादतः कर्मान्तरविधिपक्षेऽपि प्रकृतग्रहणात्तदातञ्चनाभ्यासदर्शनमुपपन्नमिति चेन्नैवम्। त्वया हि कर्मान्तरविधिपक्षे प्रकृतग्रहणे लिङ्गमुपन्यस्य तेन तु वचनम्। नच विना वचनं कर्मान्तरसंबन्धिद्रव्याणां लिङ्गमात्रेण कर्मान्तरसंबन्धः संभवति। अन्यार्थदर्शनरूपलिङ्गस्य स्वयं क्वचिदप्यर्थे प्रामाण्याभावात्। अस्माभिस्तु देवतान्तरार्थद्रव्यस्य देवतान्तरार्थत्वमपनयवचनोपोद्बलितान्मध्यमादिवचनादेवाङ्गीक्रियते न लिङ्गमात्रादिति वैषम्यम्। तस्मादुक्तमपि लिङ्गं प्रकृतग्रहणं साधयदस्माकमेवानुगुणमित्यास्तां विस्तरः। एवंच प्रत्येकं द्रव्ययुग्मेन पटु घटयितुं देवतां वाक्यमेकं सारूप्यस्यापि भङ्गः पशुफलवचसा केवलं तद्विधाने तस्मात्तावद्विशिष्टान्वयिनि सति विधावार्तिवाक्योक्तिरीत्या वक्तव्ये देवतानामपनयनविधेः कल्पनं क्वोपयुक्तमिति विधिरसायनं चिन्त्यम्। प्रयोजनं पूर्वपक्षेऽकालोपक्रान्तदर्शप्रयोगं त्यक्त्वा संकल्पप्रभृति कर्मान्तरं कर्तव्यम्। सिद्धान्ते त्वकालोपक्रान्तदर्शप्रयोग एव देवतान्तरसंयोजनरूपविकारयुक्तः समापनीयः। तथा पूर्वपक्षे चरुत्वस्य विधेयत्वादसंनाय्ययाजिनोऽपि इन्द्राय प्रदात्रे विष्णवे शिपिविष्टाय चरुर्भवति। सिद्धान्ते तु पुरोडाश एव तन्त्ररत्ने संनाय्यसंयोगान्नासंनयतः स्यादित्यधिकरणे। यत्तु भाष्यकारेणोक्तं असंनयदर्थादप्सु श्रपयिष्यतीति न तच्चरुश्रपणाभिप्रायं चरुत्वस्याविवक्षितत्वात्किंतु प्रणीताभिः पुरोडाशश्रपणं संपादयतीत्यर्थ इति व्याख्यास्यते॥

उपांशुयागेऽपि देवतापनयाधिकरणम् ॥ २ ॥

**उपांशुयागेऽवचनाद्यथाप्रकृति॥ १० ॥[अपनयो वा प्रवृत्त्या यथेतरेषाम्॥११॥]**

**देवत्यागस्तथोपांशावश्रुते देवतान्तरे ॥ यागलोपोऽप्रसक्तत्वात्कृत्वाचिन्तेयमिष्यताम् ॥ ३ ॥**

तत्रैवं चिन्ता। किमुपांशुयाजद्रव्यस्याप्याज्यस्य प्राकृतीभ्योपनयो नेति । अमावास्यायामप्युपांशुयाजोऽस्तीति कृत्वाचिन्तेयं नत्वमावास्यायामुपांशुयाजोऽस्ति । वाचनिको हि तस्य पौर्णमासीकालः । 'उपांशु पौर्णमास्यां यजन्नि'ति कालविधिपरं हीदं वचनमिति सूत्रकारस्थितिः । तदुक्तम् सूत्रकारेणामावास्यायामुपांशुयाजमनिच्छता । एतदेव पौर्णमासीविधिपरत्वेनोपन्यस्तमिति। तथाच त्रयोदशामावास्यायामिति लिङ्गमुपपद्यते । अन्यथा चतुर्दशत्वापत्तेः । तदप्युक्तम्—'पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये सदा ॥ प्रधानाहुतयः सन्ति तदा संख्योपपद्यते ॥' इति । तस्मात्कृत्वाचिन्तैवेयम् । उपवर्षस्तु वृत्तिकारो बह्वृचब्राह्मणेऽमावास्यायामप्युपांशुयाजो विहित इति । तदभिप्रायेणेयं चिन्तेत्याह । तत्राज्यस्य देवतान्तरसंयोगावचनान्न प्राकृतीभ्योपनयनं। तण्डुलग्रहणेन तु प्रकृतहविर्मात्रस्य प्राकृतीभ्योपनयविधानादाज्यस्याप्यस्त्येवापनयस्तत्र ताभ्योऽपनीतं देवतान्तरेण वचनाभावादसंयुक्तं प्रहीणं भवति । नच देवताभावे यागः संभवतीत्युपांशुयाजो लुप्यते ॥

अनिरुप्तेप्यभ्युदयेष्ट्यधिकरणम् ॥ ३ ॥

**निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥ प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥ लक्षणमात्रमितरत् ॥ १४ ॥ तथा चान्यार्थदर्शनम् ॥ १५ ॥]**

**ऊर्ध्वं चन्द्रोदये सेष्टिर्निर्वापात्पूर्वमप्युत ॥ उक्तेराद्योऽन्तिमः पक्षो निरुप्तेरविवक्षया ॥ ४ ॥**

यदा निरुप्ते हविषि चन्द्राभ्युदयो जायते तदैव किं प्रायश्चित्तमुत कर्मोपक्रममात्र इति । तत्रावश्यं तावद्धविषा चन्द्राभ्युदयो विशेष्टव्यः । नच तदुदासीनं तद्विशेषणं भवतीत्यवश्यं या काचित्क्रियापेक्षिता तत्र निर्वापस्य श्रुतत्वात्तद्विशिष्टमेव हविरभ्युदयविशेषणमिति नानिरुप्ते प्रायश्चित्तम् । नैवं हविरभ्युदियादित्येतावतैवाप्रवृत्तस्याभ्युदयसंबन्धासंभवात्प्रवृत्तं हविरिति ज्ञायते । तावता च निमित्तत्वोपपत्तेरविवक्षितो हविरुभयत्ववन्निर्वापः । तस्मादकालप्रवृत्तिमात्रं निमित्तमिति प्रागपि निर्वापादभ्युदये ज्ञाते कर्तव्यमेव नैमित्तिकम् ॥

---

**उपांशुयागे०** ॥ १० ॥ पूर्वोक्तदेवतापनयो हविर्विशेष आक्षिप्य समाधीयत इति सङ्गतिः । कृत्वाचिन्तात्वे निमित्तं स्वयमेवाह—**नत्विति** । नन्वस्मिन्वचनेऽग्नीषोमदेवताया आज्यद्रव्यस्योपांशुत्वस्य गुणस्य च श्रवणात्कथं कालविधिपरत्वावधारणमित्यत आह—**कालविधिपरमिति** । 'अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगा'दिति दशमे सूत्रणादिति भावः । **त्रयोदशेति** । सवषट्काराहवनीयाहुतिसंख्येयम् । परिगणनं तु दशमे करिष्यामः । **ननूपवर्षः** कृत्वाचिन्तां न सहते इत्याशङ्क्य तदभिप्रायमाह—**उपवर्ष इति** । अत्र तन्त्ररत्ने कथं तर्हि दाशमिकमनपेक्षितवचनं न्यायमात्रं तदित्युक्तम् । **तत्रेति** । नच लोपः संभवति प्रक्रान्तस्यावश्यसमापनीयत्वात् । एवंच देवतापनय आज्यव्यतिरिक्तविषये संकोच्य इति भावः । प्रथमप्रवृत्तस्यापनयस्य चरमश्रुतदेवतासंयोगवचनानुसारेण संकोचो न युक्त इत्याशयेन सिद्धान्तमाह **तण्डुलग्रहणेन त्विति । लुप्यत इति** । अपनयवचनकृतत्वादसमापनं न दोष इति भावः । सूत्रार्थस्तु—उपांशुयाजे देवतान्तरसंयोगस्यावचनाद्यथाप्रकृतिदेवतासंयुक्तमेव द्रव्यं स्यादिति ॥

**निरुप्ते स्यात्०** ॥ १२ ॥ उपांशुयाजस्येवेहाप्यक्रियेति प्रत्यवस्थानात्सङ्गतिः । **विशेष्टव्य इति** । यथा यस्य कस्यचिदुदयस्य नित्यत्वात् उदयश्चन्द्रमसा विशेषणीय एवं तस्यापि नित्यत्वाद्धविषा विशेषणीय इत्यर्थः । तदुक्तं तन्त्ररत्ने 'नच कदाचिदपि चन्द्रमा नोदेती'ति । **नचेति** । 'अभिरभागे' इति लक्षणे अभिः कर्मप्रवचनीयत्वेन तद्योगनिमित्तद्वितीयान्तपदप्रतिपाद्यं हविर्लक्षणत्वेन चन्द्राभ्युदयस्य विशेषणं भवति । नच लक्षणत्वमुदासीनस्य संभवतीत्यर्थः । **श्रुतत्वादिति** । अश्रुतत्वान्न प्रवृत्तिक्रियावत्त्वेन विशेषणत्वमिति भावः । देवतार्थमसंकल्पितस्य यजमानद्रव्यमात्रस्य हविष्ट्वाभावात् हविःपदाद्देवतासंकल्पप्रतीतेरर्थादपि स्वपदप्रतीतक्रियालाभे श्रुतापि पदान्तरोपस्थापिता क्रिया विलम्बितोपस्थितत्वान्न ग्राह्येत्याशयेनाह—**नैवमिति । अकालप्रवृत्तिमात्रमिति** । अकाले कर्मोपक्रममात्रमित्यर्थः । कर्मोपक्रमस्य देवतासंकल्पसज्जीकरणादिति क्रियाव्याप्तेस्तस्य निमित्तत्वाद्यविरोधः ॥

---

१ यथा प्रकृतौ. २ प्रकृतीभ्यो देवताभ्योऽपनयो.

अनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम् ॥ ४ ॥

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥ [व्यूर्ध्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य ॥ १७ ॥]**

**प्राक्प्राकृतीभ्यो निर्वापो वैकृतीभ्योऽपि वाऽग्रिमः ॥ तण्डुलोक्तेर्वैकृतीयो हविर्मात्रोपलक्षणात् ॥ ५ ॥**

कर्मप्रवृत्तिमात्रमिति स्थितं नैमित्तिकस्तु देवतापनयो देवतान्तरसंयोगश्च किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्तव्यो निर्वापस्तु प्राकृतीभ्य एव स्यात् ज्ञातेऽभ्युदये उत वैकृतीभ्य एव निर्वाप इति संशये तण्डुलग्रहणात्तदवस्थएवापनयः। नैतत्। तदेवं हविर्मात्रोपलक्षणार्थं तण्डुलग्रहणं न स्वरूपेण विवक्षितम्। तद्विवक्षायां हि दधिशृतयोरनपनयाद्देवतान्तरसंयोगवचनमनुपपन्नं स्यात्। तस्मात्प्राग्निर्वापादभ्युदये वैकृतीभ्य एव निर्वापः ॥

किंचिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम् ॥ ५ ॥

**विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥ [अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १९ ॥ अभावाच्चेतरस्य स्यात् ॥ २० ॥]**

**प्राकृतीभ्योऽल्पनिर्वापेऽभ्युदये शिष्टतण्डुलान् ॥ प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह ॥ ६ ॥**

**प्राकृतीभ्यः प्रवृत्तत्वाद्वैकृतीभ्यो निमित्ततः ॥ शिष्टांशस्यापदार्थत्वादसंयोगादिहान्तिमः ॥ ७ ॥**

एकस्मिन्द्वयोर्वा मुष्ट्योः प्राकृतीभ्यो निरुप्तयोर्यदाभ्युदयोऽवगम्यते किं तदा शेषं प्राकृतीभ्यो निर्वप्तव्यं उत वैकृतीभ्योऽथवा तूष्णीमिति संशये प्राकृतीनां प्रवृत्तत्वात्ता एवावशिष्टेऽपि स्युः। अथवा निमित्तानन्तरं नैमित्तिकोपनयः। संयोगश्च कर्तव्यस्तस्माद्वैकृतीभ्यः शेषं स्यात्। सत्यम्। निमित्तानन्तरं नैमित्तिकं, तत्र विभागस्य संयोगमात्रापेक्षित्वेनावयवेऽपि संभवादवशिष्टो निर्वापांशः प्राकृतीभ्यस्तावदपनेतव्य इत्येतद्ब्रूमः। वैकृतीभिस्तु संयोगस्तस्यामवस्थायां न संभवति। ता हि प्राकृतीनां स्थाने संयोज्याः। पदार्थेन च प्राकृतीनां संयोगो विहितो नावयवेन। तेन वैकृत्योऽपि पदार्थेन संयोजयितव्याः नावयवेन। नच सामिकृते निर्वापे वैकृतीनां पदार्थसंयोगः संभवति। तस्मात्प्राकृतीभ्योऽपनीतो वैकृतीभिश्चासंयुक्तोऽवशिष्टो निर्वापांशस्तूष्णीं कर्तव्यः ॥

---

**अनिरुप्तेऽभ्युदिते०** ॥ १६ ॥ निमित्तगतनिरुप्तपदस्य प्रवृत्तिक्रियोपलक्षकत्वोक्त्यनन्तरं नैमित्तिकगततण्डुलस्याप्युपलक्षकत्वकथनात्सङ्गतिं सूचयन्नाह—**कर्मेति**। **प्राकृतीभ्य इति**। अग्नये इन्द्राग्निभ्यां चेत्यर्थः। **वैकृतीभ्य इति**। दात्रभ्यादिभ्य इत्यर्थः। **तण्डुलग्रहणादिति**। नच तण्डुलग्रहणं हविर्मात्रोपलक्षणमिति पादाद्यएवोक्तेः पूर्वपक्षानुत्थितिरिति वाच्यम्। तण्डुलग्रहणस्य हविर्मात्रोपलक्षकत्वेऽपि ये मध्यमा इति देवतासंयोगवाक्ये तण्डुलग्रहणादपनयोऽपि तदवस्थायामेव युक्त इति पूर्वपक्षोत्थितिसंभवादिति। **नैतदिति**। प्रवृत्तिमात्रे हविषि देवतापनये सति अपेक्षितत्वात्तदानीमेव देवतान्तरसंयोगात्तण्डुलावस्थायां देवतान्तरसंयोगेऽपि प्रवृत्तिमात्रेण पूर्वदेवतापनयात्, अपनीताभ्यो निर्वापासंभवात्, अग्रे यद्देवताभ्यो हविस्त्यज्यते तद्देवताभ्य एव निर्वापस्य न्याय्यत्वाच्च वैकृतीभ्य एव निर्वाप इत्याशयः ॥

**विनिरुप्ते०** ॥ १८ ॥ इह प्रवृत्तेऽपि हविष्यभ्युदयेन पूर्वदेवतापनयो देवतान्तरसंयोगो वेति प्रत्यवस्थानात्सङ्गतिः। **प्राकृतीनामिति**। चतुर्मुष्टिनिर्वापस्यैकपदार्थत्वात्पदार्थावयवापनयायोगात्प्रथममुष्टिनिर्वापे प्राकृतीनां प्रवृत्तत्वात्ताभ्य एवावशिष्टनिर्वाप इत्यर्थः। **अथवेति**। एकदेशनिर्वापेपि निमित्तस्य संजातत्वान्नैमित्तिकोपनयः कर्तव्य इति खलु सिद्धान्तिनाऽपनय इष्यते तर्हि संयोगोऽपि तथेष्यतां अर्धजरतीयत्वायोगादिति भावः। **सत्यमिति**। प्रथमं कृत्स्नं निर्वापपदार्थमभिसंधाय प्रवृत्तः पदार्थ इति कृत्वा निर्वापः प्राकृतीभिः संयुज्यते। तस्मादेकदेशनिर्वापसमये चतुर्मुष्टिनिर्वापात्मकः पदार्थः साकल्येन प्राकृतीभिः संयुज्यस्थितः अवयविसंयोगे चावर्जनीयोऽवयवसंयोगः तेनावशिष्टनिर्वापस्य पदार्थत्वाभावात् शास्त्रतः प्राकृतीभिः संयोगाभावेऽप्यवर्जनीयतया तत्संयोगाद्विभागे च संयोगमात्रस्यापेक्षितत्वाद्विनाशात्मं संयोगेऽप्यवयवस्य विभागः संभवत्येव। देवतान्तरसंयोगस्तु न संभवति तस्य प्राकृतदेवतास्थानापत्तिनिबन्धनत्वात् प्राकृतीनां च शास्त्रतः कृत्स्नेनैव पदार्थेन संयोगादित्यर्थः। **नचेति**। तदा कृत्स्ननिर्वापप्रतिसंधानस्याप्यभावादिति भावः। सूत्रार्थस्तु—विनिरुप्ते सामिनिरुप्ते चतुर्मुष्टीनामेकदेशस्य न पूर्वदेवतापनयः कृत्स्ननिर्वापस्य देवतागुणत्वादेकदेशापनयासंभवादिति ॥

---

१ दद्यात्. २ वैकृतीभ्यश्च.

संनयदसंनयदुभयसैषाभ्युदये प्रायश्चित्ताधिकरणम् ॥ ६ ॥

**सांनाय्यसंयोगान्नासंनयतः स्यात् ॥ २१ ॥ [औषधसंयोगाद्वोभयोः ॥ २२ ॥ वैगुण्यान्नेति चेत् ॥ २३ ॥ नातत्संस्कारत्वात् ॥ २४ ॥]**

सेष्टिः सांनाय्यिनो वा स्यादन्यस्यापि दधिश्रुतेः ॥ नान्यस्येत्यग्रिमोऽन्त्यः स्याद्देवमात्रविधानतः ॥ ८ ॥

किमियमभ्युदयेष्टिः संनयत एव स्यादुतासंनयतोऽपीति संशये 'शृते चरुं दध्नि चरु'मिति श्रवणादसंनयतश्च दधिशृतयोरभावान्नास्ति नैमित्तिके सामर्थ्यं तस्मात्संनयत एवाधिकारः । सत्यम् । यदि दधिशृते चरोरधिकरणत्वेन चोद्येयाताम् । नत्वेवम् । वाक्यभेदप्रसङ्गात् । नह्येकं वाक्यं स्थविष्ठांस्तण्डुलानुद्दिश्य देवतान्तरं दध्यधिकरणत्वं च शक्नोति विधातुम् । अतस्तण्डुलान्दधिशृते चोद्दिश्य देवतामात्रं विधीयते । नचोद्देश्यानां साहित्यं विवक्षितम् । अतोऽसंनयतो दधिशृताभावेऽपि तण्डुलानां देवतान्तरसंयोगः कर्तव्यः ॥

सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणम् ॥ ७ ॥

**साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥ [प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥ आदेशार्थेतरा श्रुतिः ॥ २७ ॥]**

सत्राय दीक्षितानां चेत्साम्युत्थानाभिवाञ्छनम् ॥ यजेद्विश्वजिता क्रीते राजन्ये तत्पुरापि वा ॥ ९ ॥
आद्यः सोमविभागोक्तेरक्रीते तदसंभवात् ॥ अर्थप्राप्तविभागस्यानुवादादन्तिमो भवेत् ॥ १० ॥

'यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममपभज्य विश्वजिता यजेते'ति किमयं विश्वजित्क्रीतराजकस्यैवोत्थाने उताक्रीतराजकस्यापीति विचारः । तत्र—'नैमित्तिकमिदं सोमविभागेन विशेषितम् ॥ नाक्रीतराजकस्यैतच्छक्यं क्रीते भवेदतः ॥' उच्यते—'यदि सोमविभागोऽयमङ्गत्वेन विधीयते ॥ तत एवं भवेदेष त्वर्थप्राप्तो न चोद्यते ॥' क्रीतराजकस्य तावदर्थप्राप्तः सोमविभागोऽर्थान्तरविभागवन्न विधातव्यः । अक्रीतराजकस्य त्वशक्यत्वादेवं विधेयो विभागः । तस्माद्रागप्राप्तद्रव्यविभागानुवादमात्रमिदं, सोमग्रहणं तु प्रदर्शनार्थं, विश्वजिन्मात्रं तु विधीयत इत्यक्रीतराजकस्यापि स्यात् ॥

ज्योतिष्टोमे दीक्षापरिमाणानां वैकल्पिकत्वाधिकरणम् ॥ ८ ॥

**दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥**

ज्योतिष्टोमे द्वादश स्युर्दीक्षा एकादयोऽथवा ॥ स्याद्कृतेर्वचनादाद्यः प्रत्यक्षश्रुतितोऽन्तिमः ॥ ११ ॥

नैमित्तिकप्रसङ्गाद्दीक्षानिमित्ता धर्माः कियन्तं कालमनुवर्तन्त इत्येवमर्थं दीक्षापरिमाणं चिन्त्यते ।

---

**सांनाय्यसंयोगात्०** ॥ २१ ॥ सामिकृते वैकृतीनां पदार्थसंयोगासंभवान्निर्वापनिवृत्तिवदसंनयतो दधिशृतयोरसंभवान्नैमित्तिकनिवृत्तिरिति प्रत्यवस्थानात्सङ्गतिः । **श्रवणादिति** । यद्यपि प्रथमाधिकरण एवेदमनुवाद इत्युक्तम्; तथाप्यनुवादोऽप्यसंनयतो न संभवति दधिशृतयोरभावात् । एवंच दधिशृतयोरधिकरणत्वानुवादबलादेव नैमित्तिकं संनयद्विषयतया व्यवतिष्ठते; यथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेय'मित्यत्र गिरापदनिषेधबलादिरापदं तत्स्थाने निविशते तद्वत् । किंच सहश्रपयतीति वाक्यं सहत्वविशिष्टश्रपणविधायकमित्युक्तं; असंनयतश्च द्रव्यान्तरसहितपाकोपसंहारासामर्थ्यान्नास्त्यभ्युदयेष्टिरिति । **ननु** तथापि दधिशृतसहितानामेव तण्डुलानां उद्देश्यत्वादसंनयतो नैमित्तिकाभावतादवस्थ्यमित्यत आह—**नचेति** । **अत इति** । विधेरवशेषावगमादनुवादः सहत्वविशिष्टपाकश्च संनयत्पक्षे भविष्यतीति भावः ॥

**साम्युत्थाने०** ॥ २५ ॥ यथाऽसंनयतोऽप्यभ्युदयेष्टिरेवमक्रीतराजकस्यापि विश्वजिदिति प्रत्यवस्थानात्सङ्गतिः । **सत्रायेति** । सत्रार्थं दीक्षितानां मध्ये यदि कश्चिदर्धप्रयोगसमये प्रयोगं परित्यज्य गन्तुमिच्छेत्तदा समीहितसत्रफलार्थं प्रारब्धसत्रापरिसमाप्तिनिमित्तदोषापवादाय विश्वजिता यजेतेत्यर्थः । **तत्रेति** । सत्रोत्थाने निमित्ते सोमविभागविशिष्टविश्वजितो विधानात् अक्रीतराजकस्य च सोमविभागाशक्तेरर्थात्क्रीतराजकोत्थानमेव निमित्तमिति तस्यैवायं विश्वजिदित्यर्थः । नन्वेवं पाक्षिकानुवादः स्यादित्यत आह—**तस्मादिति** ॥

**दीक्षापरिमाणे०** ॥ २८ ॥ परिमाणविचारस्य प्रायश्चित्ताधिकारविचारप्रस्तावासङ्गतिमाशङ्क्याह—**नैमित्तिकेति** ।

---

१ देवाविधेयो.

ज्योतिष्टोमे श्रुतानामेका दीक्षा तिस्रो दीक्षा द्वादश दीक्षा इत्येवमादीनां सर्वेषां किं ज्योतिष्टोमे विकल्पेन निवेशः उत द्वादशपरिमाणमेव तत्र स्यादेकादीनां तूत्कर्षो विकृतिष्विति संशयः । तत्र भाष्यकारो 'यथाकाम्यविशेषा'दित्यनेन पूर्वपक्षमुक्त्वा 'द्वादशाहस्तु लिङ्गा'दित्यनेन 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते'ति श्रुतस्य भृतिवननस्य पक्षान्तरेष्वसंभवाद्द्वादशाहपरिमाणमेव सिद्धान्तितवान् । वार्तिककारस्त्वयुक्तमिति मत्वा सूत्रद्वयमपि द्वयोरधिकरणयोरुत्सूत्रपूर्वपक्षयोः सिद्धान्तसूत्रत्वेन व्याचख्यौ । तत्र भृतिवननसामार्थ्याद्द्वादशाहपरिमाणं मन्वानस्योत्तरम् । नहि प्रत्यक्षश्रुतानामेकादिपक्षाणां भृतिवननवशेन दौर्बल्यं येन तदनुग्रहार्थमुत्कृष्येरन् । तस्माद्यथाकाम्येव स्यात्, भृतिवननं तु द्वादशपक्षे भविष्यति । यद्वा 'दीक्षितो भृतिं वन्वीते'त्येतावद्विधीयते । द्वादशग्रहणं तु प्रदर्शनार्थमिति व्याख्येयम् ॥

द्वादशाहे दीक्षापरिमाणनियमाधिकरणम् ॥ ९ ॥

## द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥

द्वादशाहे किमेकादिविकल्पा द्वादशैव वा ॥ आद्यः प्रकृतिवत्षण्णां द्विकानामुक्तितोऽन्तिमः ॥ १२ ॥

द्वादशाहे किं दीक्षापरिमाणानां विकल्पः अथवा द्वादशपरिमाणमेवेति प्रकृतिवद्विकल्पे प्राप्त उच्यते—'षट्त्रिंशदहो वा एष यद्द्वादशाह' इति लिङ्गादुपसत्सुत्यानां च प्रतिस्वं द्वादशत्वाद्दीक्षा अपि द्वादशेति गम्यते । तथा भिद्यतएव दीक्षाभिरिति दीक्षाबहुत्वं व्याख्याय तद्वाक्यशेषे 'द्वाभ्यां लोमावद्यति द्वाभ्यां त्वचं द्वाभ्यामसृक् द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जान'मिति षण्णां द्विकानामनुक्रमणाद्विध्युद्देशगतं बहुत्वं द्वादशस्वेव स्थाप्यते ॥

---

**इत्येवमर्थमिति** । करिष्यमाणो यो विचारस्तदर्थमित्यर्थः । **एकादीनां त्विति** । नच तत्रापि चोदकाद्द्वादशपरिमाणप्राप्तेः कथमेकनिवेश इति वाच्यम् । उपदिष्टेनातिदिष्टबाधादिति भावः । **अविशेषादिति** । सर्वपरिमाणानामाम्नाततौल्यादित्यर्थः । **असंभवादिति** । नच वननं संभजनं 'वन षण संभक्ता'विति धातुपाठात् तच्चार्जनं द्रव्यप्राप्त्यपरपर्यायं परिक्रयविधिसामर्थ्यप्राप्तत्वादविधेयं तेन प्राप्तवनने द्वादशानां रात्रीणां दीक्षितस्य च विध्यसंभवाद्द्वादशरात्रीरित्यस्याविवक्षिततया कथं पक्षान्तरेषु भृतिवननस्यासंभव इति वाच्यम् । अर्जनस्य प्राप्तत्वेऽपि तदर्थयाचनस्याप्राप्ततया यः परिक्रयार्थं द्रव्यं प्राप्नुयात्स द्वादशरात्रीर्दीक्षितः सन् याचनेनैव प्राप्नुयादिति विधिसंभवात् । एवंच याचनपूर्वकमर्जनमेव धातुपाठे संभक्तिशब्दार्थः प्रसिद्धिबलान्नत्वर्जनमात्रम् । तत्र विशेष्यार्जनस्य प्राप्तावपि उपायो विशेषणं याचनं विधीयते 'वनु याचन' इति धातोर्वा वन्वीतेत्यस्तु । सर्वथा द्वादशरात्रिदीक्षितकर्तृकयाचनविधेर्न कश्चिद्दोष इति भावः । **अयुक्तमिति** । भृतिवननस्य पक्षान्तरेष्वसंभवे एकस्य भृतिवननस्यैवोत्कर्षो न्याय्यः, नतु बहूनामेकादिपरिमाणानाम् । नच भृतिवननं मुख्यं; मानाभावात् । सत्यपि मुख्यत्वे मुख्यस्य बहूनां च विप्रतिषेधे बह्वनुग्रह एव न मुख्यानुग्रह इति द्वादशे वक्ष्यमाणत्वेन मुख्यत्वस्याप्रयोजकत्वात् । तस्माद्भृतिवननानुरोधेनैकादीनामुत्कर्ष इत्यत्यन्तायुक्तमित्यर्थः । **प्रत्यक्षश्रुतानामिति** । नच 'वैश्वानरं द्वादशकपाल'मित्यत्र यदष्टाकपाल इत्यादिवद्द्वादशपरिमाणविधाववयुत्यानुवादतयैकादिश्रवणोपपत्तेर्नास्त्येकादिविधिपक्ष इति वाच्यम् । तद्वदिहोपक्रमोपसंहाराभ्यामेकवाक्यत्वाभावेन पृथग्विधित्वे बाधकाभावात् 'यदा दीक्षितः कृशो भवति यदस्मिन्नन्तर्न किंचन भवति यदास्य कृष्णं चक्षुषो नश्यती'त्यादिपक्षान्तराणामप्याम्नानात् तेषां द्वादशपरिमाणावयवत्वानियमेनावयुत्यानुवादत्वासंभवात् द्वादशपरिमाण एव विधिरित्यस्य दुरध्यवसानत्वात् । भाष्यकारपक्षेऽप्युत्कर्षाङ्गीकारेणैकादिपरिमाणविध्यवश्यंभावाच्चेति भावः । **ननु** लिङ्गस्यानर्थक्यात् 'आनर्थक्यप्रतिहताना'मिति न्यायेन प्राबल्यमित्यत आह—**भृतिवननंत्विति** । पाक्षिकत्वमेव दोषं मत्वाह—**यद्वेति** । द्वादशरात्रीरिति वाक्ये दीक्षितकर्तृकयाचनमेव विधीयते नतु द्वादशरात्रिदीक्षितकर्तृकं गौरवादिति पक्षान्तरेष्वपि भृतिवननमुपपद्यते ॥

**द्वादशाहस्तु०** ॥ २९ ॥ सङ्गतिं सूचयन्नाह—**प्रकृतिवदिति** । ननु 'द्वादशरात्रीर्दीक्षितः स्यात् द्वादशमासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्वावैष' इति प्रत्यक्षवचने सति कथं पूर्वपक्ष इति चेत् अत्रोक्तं तन्त्ररत्ने 'एतन्नास्तीति कृत्वाचिन्तेति षट्त्रिंशदह' इति वाक्यं न विधायकमन्यशेषत्वादतो नास्माद्वचनादाहत्य दीक्षाद्वादशत्वप्राप्तिरित्याशयेन लिङ्गादित्युक्तम् । **ननु** लिङ्गमात्रान्न वस्तुसिद्धिरित्यत आह—**तथेति** । नच वाक्यशेषे षण्णां द्विकानामनुकीर्तनं त्रिचतु-

---

१ अयुक्तमिदमिति. २ वननवचनवशेन.

गवामयने माघपौर्णमास्याः पुरस्ताद्दीक्षाधिकरणम् ॥ १० ॥

**पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ [आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥ माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥ अन्या अपीति चेत् ॥ ३३ ॥ न भक्तित्वादेशा हि लोके ॥ ३४ ॥ दीक्षापराधे चानुग्रहात् ॥ ३५ ॥ उत्थाने चानुप्ररोहात् ॥ ३६ ॥ अस्यां च सर्वलिङ्गानि ॥ ३७ ॥]**

गवामयन उक्ता तु या काचित्पूर्णिमाथवा ॥ चैत्री माघ्युत काचित्स्यादविशेषात्प्रशंसया ॥ १३ ॥
चैत्री स्यात्क्रय एकाष्टकायामित्युपवर्णितम् ॥ माघकृष्णाष्टमी त्वेकाष्टकाऽतो माघपूर्णिमा ॥ १४ ॥

दीक्षाप्रसङ्गादिदमधिकरणं गवामयने 'चित्रापौर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न काचन निर्या भवती'त्येवं चैत्रीं स्तुत्वा तत उक्तं 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयः संपद्यत' इति । तत्र विचारः किमेषां या काचित्पौर्णमासी किंवानन्तरश्रुता चैत्री उत माघीति । तत्राविशेषाद्या काचित्स्यात् । चैत्रीस्तुतिस्तु चित्रापूर्णमासे दीक्षेरन्नित्यस्य शेषो न चतुरहे पुरस्तादित्यस्य । नचैकाष्टकश्रुतिवशान्माघीविषयत्वम् । द्वादशानामपि कृष्णाष्टमीनामेकाष्टकाशब्दवाच्यत्वात् ।' तथाहि श्रूयते—'द्वादशपौर्णमास्यो द्वादशैकाष्टका' इति । तस्मादविशेषः । सत्यम् । एकाष्टकाशब्दो न विशेषकः । चैत्र्यास्त्वनन्तरमेव कीर्तितत्वात्सामान्यविषयः । पौर्णमासीशब्दस्तद्विषयो भवति तस्माच्चैत्री स्यात् । स्यादेतदेवं यद्येकाष्टकाशब्दः सर्वत्र स्यात् । सच माघ्याः पौर्णमास्या उपरितने कृष्णपक्षे याष्टमी तस्या एव वाचको वृद्धव्यवहारेषु सिद्धोऽन्यासु तु गौणः प्रयोगः । किंचोपक्रमे 'एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी'ति तस्यां दीक्षामुक्त्वा तत्र दोषमभिधायान्ते 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्नि'त्युक्त्वा दीक्षातः प्रच्युतामेकाष्टकां क्रयसंपत्त्यानुगृह्णाति तेषामेकाष्टकायां क्रयः संपद्यते । तेन 'एकाष्टकां न च्छम्बट् कुर्वन्ती'ति । संवत्सरपत्नी च माघ्याः पौर्णमास्या उपरितन्येवाष्टमी नान्या[3] । तद्विषयो हि मन्त्रः श्रूयते 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली'ति । किंच 'आर्तं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्ते तन्नामानावृतू भवत' इति शिशिरगतामष्टमीमेकाष्टकां दर्शयति । तस्मान्माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गवानयनिकी दीक्षेति ॥

---

रादिपक्षे तत्रत्ययोरेव द्वयोः पुनःपुनः निर्देशादुपपद्यत इति वाच्यम् । स्वरसतः प्रतिवाक्यं द्विकान्तरप्रतीतेरेकस्यैव द्विकस्य पुनःपुनः निर्देशकल्पने प्रमाणाभावादिति भावः ॥

**पौर्णमास्यां०** ॥ ३० ॥ कस्मिन्काले गवामयनदीक्षा कार्येति कालविनियोगचिन्तायाः अत्रासङ्गतिमाशङ्क्याह—**दीक्षेति** । द्वितीयपक्षोन्मेषार्थं चैत्रीं स्तुत्वेत्युक्तिः । **चैत्र्यास्त्विति** । चैत्रीस्तुतेः चित्रापूर्णमासे दीक्षेरन्नित्येतच्छेषत्वेऽपि समनन्तरमेव कीर्तितत्वेन संनिहितत्वाच्चैत्र्यां बुद्धौ विपरिवर्तमानायां श्रूयमाणः पौर्णमासीशब्दः तद्विषयएव भवति न सर्वपौर्णमासीविषय इत्यर्थः । **वृद्धेति** । अतएवापस्तंबाचार्यैर्या माघ्याः पौर्णमास्या उपरिष्टादष्टमी तामेकाष्टकेत्याचक्षते इत्युक्तमिति भावः । अस्तु सर्वासामपि कृष्णाष्टमीनामेकाष्टकात्वं तथापि तेषामेकाष्टकायां क्रयः संपद्यत इत्यत्र न सर्वासां ग्रहणम् । उपक्रमे संवत्सरपत्नीत्वेन या श्रुता तस्या एवात्र ग्राह्यत्वात् संवत्सरपत्नी च माघकृष्णाष्टम्येव मन्त्रवर्णात्तस्या एव क्रयवाक्यगतैकाष्टकाशब्दार्थतेत्याह—**किंचेति** । **क्रयसंपत्त्येति** । पौर्णमास्याः पुरस्ताच्चतुरहेति वाक्यादेकादश्यां दीक्षायामेकादशीमारभ्य सप्तमीपर्यन्तेषु द्वादशदीक्षानिर्वृत्तेति दीक्षानन्तरं कर्तव्यस्य क्रयस्यैकाष्टकायां संपत्त्येत्यर्थः । न च्छम्बट् कुर्वन्ति । न व्यर्थां कुर्वन्तीत्यर्थः । किंच यस्मिन्काले आर्ता जना भवन्ति स आर्तकालः तं कालमभिदीक्षन्त इति शीतार्तिकालाभिधानात् । यद्वा आर्तं संवत्सरविनाशमभिदीक्षन्त इति संवत्सरान्तिमकालाभिधानात् माघकृष्णाष्टम्येवेत्याह—**किंचेति** । **तस्मादिति** । अत्र संवत्सराय दीक्षिष्यमाणा इत्यादेः कृत्स्नस्यैकवाक्यत्वादेक एव विधिरिति एकाष्टकायां दीक्षेरन्नित्येकाष्टकायां दीक्षावचनस्य 'आर्तं वा एते' 'व्यस्तं वा एते' इति च तन्निन्दायाः फल्गुनीपूर्णमासे दीक्षेरन्नित्यस्य तस्यैकैव निर्या एक एव दोष इति तन्निन्दा, यच्चित्रापौर्णमासे दीक्षेरन्नित्यस्य तस्य न काचन निर्या

---

१ तत्र संशयः. २ हारे प्रसिद्धो. ३ नान्यास्तद्विषयो.

दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधिकरणम्॥ ११॥

**दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात्॥ ३८॥**
**[उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम्॥ ३९॥]**

**कुतोऽप्यवभृथोत्कर्षे जुहुयादग्निहोत्रकम्॥ न वाद्योऽप्रतिषिद्धत्वान्नैवं दीक्षानुवर्तनात्॥ १५॥**

दीक्षितस्याग्निहोत्रादयो निषिद्धाः, अवभृथे च कृते दीक्षातो मुक्तिः। तद्यदि केनचित्कारणेनावभृथोत्कर्षो भवति तदा किमग्निहोत्रादि कर्तव्यं न वेति संशयः। तत्र 'दीक्षितो न जुहोती'ति यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिस्तावन्न जुहोतीति शास्त्रार्थं मत्वावभृथोत्कर्षेण शास्त्रकृता दीक्षानुवृत्तिः। अतः कर्तव्यमग्निहोत्रादि मन्यते। न काललक्षणायां प्रमाणमस्ति। दीक्षाया एव प्रतिषेधे निमित्तत्वोपपत्तेः। अतो येनकेनापि हेतुना दीक्षानुवर्तमाना प्रतिषेधमप्यनुवर्तयति। तस्मादकर्तव्यमग्निहोत्रादि प्रागवभृथात्॥

दीक्षानुवृत्तौ प्रतिहोमनिराकरणाधिकरणम्॥ १२॥

**तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम्॥ ४०॥ [कालप्राधान्याच्च॥ ४१॥]**

**दीक्षानुवृत्तौ कर्तव्यः प्रतिहोमो न चाग्रिमः॥ पुंदोषान्न तथाप्यस्य दीक्षायां शास्त्रवारणात्॥ १६॥**

अवभृथोत्कर्षकृता दीक्षानुवृत्तिः पुरुषापराधकृता न विधिकृता। अतस्तत्काले पुरुषापराधकृतमग्निहोत्राननुष्ठानमिति प्रतिहोमः कर्तव्यः। नैवम्। यथातथा वा दीक्षा तावदनुवृत्ता तावता चानधिकारादग्निहोत्रमकर्तव्यं। कर्तव्याकरणे च प्रतिहोमः। तस्मान्न प्रतिहोमः॥

उदवसानीयोत्कर्षेऽपि प्रतिहोमनिराकरणाधिकरणम्॥ १३॥

**प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः॥ ४२॥**

**दैवादुदवसानीयोत्कर्षे होमे कृतिर्न वा॥ कृतिर्दीक्षोन्मोचनान्नो पुनराधेयसंमितेः॥ १७॥**

कृतेऽवभृथे यद्युदवसानीयोत्कर्षो दैवाद्भवति तदा किमग्निहोत्रं कर्तव्यमकरणे च प्रतिहोमः

---

भवतीति तत्स्तुतेश्च सर्वस्यापि विधेयमाघीपुरस्ताच्चतुरहकालस्तुत्यर्थत्वाच्चैत्रीस्तुतिरपि फल्गुनीपूर्णमासोक्तदोषाभावाच्चैत्री यद्यपि प्रशस्ता तथापि तदपेक्षया माघ्याः पुरस्ताच्चतुरहकालः प्रशस्ततर इत्युपपादनीयेति भावः॥

**दीक्षाकालस्य०॥ ३८॥** दीक्षाप्रसङ्गागतविचारानन्तरं यदर्थं दीक्षापरिमाणं निरूपितं तद्विचारात्सङ्गतिः। **निषिद्धा इति।** 'दीक्षितो न ददाति न जुहोति न पचति' इत्यस्य निषेधकत्वं दशमे वक्ष्यते इत्याशयः। **अवभृथे चेति।** 'शुक्रादीक्षायै तपसो विमोचनी'रित्यादेरवभृथस्य दीक्षाविमोचकत्वावगमादित्याशयः। **यावन्तमिति।** यत्राग्निहोत्रादिप्रसक्तिः तत्र निषेधः। प्रसक्तिश्च सायं जुहोतीति वचनात्काल एवेति दीक्षितशब्देन कालं लक्षयित्वा तत्काले न जुहोतीत्यर्थे सति शास्त्रदृष्ट्या यावान्कालः तावदेव निषेधो नान्यत्रेत्यर्थः। दीक्षितनिषेधेऽपि दीक्षाकालेऽननुष्ठानसिद्धेः पुरुषेऽपि प्राप्तिसंभवाच्च दीक्षितशब्दस्य मुख्यार्थोपपत्तेः न काललक्षकत्वमिति सिद्धान्तमाह—**नेति।** सूत्रार्थस्तु—दीक्षाकालस्य निषेधाङ्गतया शिष्टत्वात् शास्त्रीयदीक्षाकालातिक्रमे नियतानामग्निहोत्रादीनां प्राप्तकालत्वादनुत्कर्ष इति॥

**तत्र प्रतिहोमः०॥ ४०॥** मास्त्वग्निहोत्रानुष्ठानं तथापि प्रतिहोमः कर्तव्य इति प्रत्यवस्थानात्सङ्गतिः। **पुरुषापराधकृतेति।** यद्यपि दीक्षितो न जुहोतीति शास्त्रकृतमेवाननुष्ठानं तथापि तत्र शास्त्रप्रवृत्तौ पुरुषापराधस्यैव तत्कारणत्वात्स एवाननुष्ठाने मूलमित्यभिमानः। **प्रतिहोम इति।** अतिपन्नस्य प्रतिकृष्य होमः प्रतिहोमः कर्तव्य इत्यर्थः। नचातिपन्नहोमस्य कालाभावात् काले जीवत एवाधिकारात् कालान्तरेऽनधिकारात् न युक्तमनुष्ठानमिति वाच्यम्। अवश्यकर्तव्यश्राद्धादाविव कालान्तरे कर्तव्यत्वस्य शाखान्तरे आम्नानादित्याहुः। भवनाथस्तु प्रतिहोमो वा प्रायश्चित्तं वा यथाश्रुति कर्तव्यमिति पूर्वपक्षतात्पर्यमाह। पुरुषापराधमप्युपजीव्यशास्त्रप्रवृत्तौ सत्यां शास्त्रत एवाकर्तव्यत्वं न पुरुषापराधादित्याशयेनाह—**नैवमिति।** सूत्रार्थस्तु—तत्र पुरुषापराधादवभृथोत्कर्षे पुरुषापराधप्रभृत्यवभृथपर्यन्तकालेषु प्रतिहोमो न विद्यते यथा पुरुषापराधात्पूर्वेषां दीक्षाकालानां तद्वदिति॥

**प्रतिषेधाच्चोर्ध्वं०॥ ४२॥** दीक्षामोचकत्वादित्यनेन पूर्ववैषम्येण सङ्गतिः सूचिता। एतया पुनराधेयसंमितयेति

---

१ नयदा. २ त्कर्षे न शास्त्र.

स्यात्, अथवा न कर्तव्यं प्रतिहोमश्च न कर्तव्य इति । तत्रावभृथस्य दीक्षोन्मोचनत्वात्तदुत्तरकालं कर्तव्यमग्निहोत्रमकरणे च प्रतिहोमः स्यात् । सत्यम् । दीक्षा निवृत्ता, तथापि 'एतया पुनराधेयसंमितयेष्ट्येष्ट्वाग्निहोत्रं जुहोती'ति वचनेन कृतोदवसनीयस्याग्निहोत्राधिकारप्रतिपादनात्ततः प्रागधिकाराभावादकर्तव्यमग्निहोत्रमकृते च न प्रतिहोमः ॥

प्रतिहोमे सायमग्निहोत्रप्रभृत्यारम्भाधिकरणम् ॥ १४ ॥

**प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥४३॥ [प्रातस्तु षोडशिनि ॥४४॥]**

**कृत्वाचिन्ताक्रमो नो चेत्प्रतिहोमेऽतिपातिनः ॥ क्रमोऽस्त्वग्निष्टोमकादौ सायं षोडशिनीतरः ॥ १८ ॥**

कृत्वाचिन्तेयं यदि प्रतिहोमाः स्युः कस्तेषां क्रम इति युगपदुपस्थितानामनियमः । येनैव क्रमेणातिपन्नास्तेनैव कर्तव्यास्तेनाग्निष्टोमादिषु सायमग्निहोत्रप्रभृतयः प्रतिहोमाः षोडशिनि प्रातःप्रभृतयः ॥

भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ १५ ॥

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥ [प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥ अतद्विकारश्च ॥ ४७ ॥]**

**भिन्ने होमो यत्र तत्र प्रकृते वा निमित्ततः ॥ सर्वत्र स्यात्फलित्वाय प्रकृतैकवाक्यता ॥ १९ ॥**

गतं प्रासङ्गिकं पुनः प्रायश्चित्ताधिकारमनुसंधत्ते—दर्शपूर्णमासयोः श्रुतो 'भिन्ने जुहोती'ति होमः किं यत्र यत्र भेदस्तत्र तत्र सर्वत्र स्यादुत प्रकरण एव निविशत इति संशये वाक्येन यावन्निमित्तं नैमित्तिकमवगम्यमानमशक्यं प्रकरणेन प्रकृतेऽवस्थापयितुम् । तस्मात्सर्वत्र स्यादिति मन्वानस्योत्तरम् । नैमित्तिकस्यापि तावदवश्यं फलेन भवितव्यं तदभावे विध्ययोगात्तत्राप्रतीतफलकल्पनातः प्रकृतैकवाक्यतैव बलीयसीति तत्रैव निवेशः ॥

व्यापन्नशब्दार्थनिर्णयाधिकरणम् ॥ १६ ॥

**व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥**

**व्यापन्नमप्सु किं तत्स्यादनिश्रेयमहेतुतः ॥ आर्याभोज्यं केशकीटदूषितं तत्प्रसिद्धितः ॥ २० ॥**

'व्यापन्नमप्सु प्रहरती'ति श्रूयते तत्र व्यापन्नशब्देन किमुच्यत इति प्रश्नेनैवोपक्रमः । तत्रोत्तरं यदार्याणामभोज्यं केशकीटावपन्नादि तद्व्यापन्नं प्रतीयेत ॥

---

वाक्यं क्रमपरम् । क्रमश्च पश्चात्प्रतिहोमानुष्ठानेऽप्यनुगृह्यते । नचेदं न क्रमपरं किंतु इष्ट्यनन्तरमेव होमः न तु पूर्वमिति प्रतिषेधकमिति वाच्यम् । तथासति परिसंख्यात्वेन त्रैदोष्यापत्तेरिति भावः । नेदं क्रममात्रे पर्यवस्यति अर्थादेव तत्सिद्धेः किंतु कृतेष्टेरग्निहोत्राधिकारप्रतिपादनपरमित्याह—**तथापीति** । सूत्रार्थस्तु—अवभृथादूर्ध्वमिष्टेः प्राक् न होमः इष्ट्यनन्तरमधिकारप्रतिपादकवचनेनार्थात्पूर्वं प्रतिषेधादिति ॥

**प्रतिहोमाश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ ४३ ॥ प्रातस्तु षोडशिनि ॥ ४४ ॥** प्रासङ्गिकी सङ्गतिः । **युगपदिति** । उपस्थितिक्रमो ह्यनुष्ठानक्रमे तन्त्रं । ततश्च क्रमेणातिपन्नानामपि युगपदुपस्थितत्वादनियम इत्यर्थः । अतिपत्तिसमाधानार्था होमा एकस्मिन्नपि काले अतिपातक्रमेणैवोपतिष्ठन्ते न युगपदिति अतिपत्तिप्रवृत्त्या क्रमनियम इति सिद्धान्तमाह—**येनेति । अग्निष्टोमादिष्विति** । तेषामह्न्येवावभृथादिति भावः । **षोडशिनीति** । तस्य रात्राववभृथादिति भावः । यद्यपि प्रातस्तु षोडशिनीति सूत्रान्तरकरणात् भाष्ये पृथगेव षोडशिनिविचारः कृतः तथापि न्यायस्यैकत्वादुदाहरणभेदात्फलभेदमात्र एव सूत्रभाष्ययोस्तात्पर्यमित्याशयः ॥

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥** सर्वत्राग्निहोत्र ज्योतिष्टोमादिष्वपीत्यर्थः । **वाक्येनेति** । प्रकृतत्वेन निमित्तस्य विशेष्टुमशक्यत्वात् भेदनमात्रस्य निमित्तत्वे सत्यश्रुतफलकल्पनापि स्वीकार्येति भावः । नहि प्रकृतत्वेन निमित्तं विशेष्यते किंतु अर्थादेव तथाविधनिमित्तं पर्यवस्यतीत्याह—**उत्तरमिति** । सूत्रार्थस्तु—अधिकारे दर्शपूर्णमासादिप्रकरणे श्रुतं प्रायश्चित्तं दोषसामान्यात्सर्वत्र स्यादिति ॥

**व्यापन्नस्या० ॥ ४८ ॥ प्रश्नेनैवेति** । शब्दार्थनिरूपणमात्रपरत्वेन पूर्वपक्षे नातीव यतितव्यमित्यर्थः । शब्दार्थनिरूपणमपि प्रायश्चित्तप्रसङ्गात्सङ्गतमित्याशयः ॥

---

१ न्मोचनत्वात्. २ माग्निहोत्र. ३ इदं सूत्रमधिकरणान्तरत्वेन व्याचख्यौ भाष्यकारः. ४ यदि होमाः स्युः. ५ कल्पनात्.

अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणम् ॥ १७ ॥

**विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥ [स्याद्वा प्राप्तनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥]**

उद्गातुः प्रतिहर्तुश्च सहापच्छेदनेऽस्ति न ॥ प्रायश्चित्तमुतास्त्यत्र न निमित्तविघाततः ॥ २१ ॥

एकैकस्यैव विच्छेदकर्तृत्वान्नु विहन्यते ॥ कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ २२ ॥

ज्योतिष्टोमे बहिष्पवमानं प्रसर्पतां[1] 'यदि प्रस्तोतापच्छिन्द्याद्ब्रह्मणे वरं दद्यात् यदि प्रतिहर्ता सर्ववेदसं दद्यात् यद्युद्गातापच्छिन्द्याददक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादिति तेषु[2]यदोद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो[3] भवति तदा किं प्रायश्चित्तं कर्तव्यं नवेति संशयः । तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते । तस्माद्यौगपद्ये निमित्तविघातात्प्रायश्चित्तं न कर्तव्यम्—'स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत् ॥ एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥ विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः ॥ कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत्' ॥

यौगपद्ये दाक्षिण्यसर्वस्वदाक्षिण्यविकल्पाधिकरणम् ॥ १८ ॥

**तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥५१॥ [प्रयोगान्तरे वोभयानुग्रहः स्यात् ॥५२॥ न चैकसंयोगात् ॥ ५३ ॥]**

समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः ॥ अदक्षिणत्वं पूर्वस्मिन्प्रयोगेऽन्यत्तु पश्चिमे ॥ २३ ॥

प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयम् ॥ प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद्विकल्प्यते ॥ २४ ॥

यौगपद्ये प्रायश्चित्तद्वयमापतति तत्किं समुच्चीयतेऽथ विकल्प इति विचारः । तत्र विकल्पस्यान्याय्यत्वात्तेन पुनर्यजेतेति प्रयोगद्वयसंभवात्पूर्वस्मिन्नदाक्षिण्यं उत्तरस्मिन् सर्ववेदसमपीत्युभयसंभवात्समुच्चयः[4] । नैतदेवम् । यत्रहि प्रयोगे निमित्तं तस्यैव नैमित्तिकं प्रायश्चित्तमङ्गं न प्रयोगान्तरे क्रियमाणेन प्रायश्चित्तेन निमित्तवतः प्रयोगस्य साद्गुण्यं भवति । तस्मादेकस्मिन्नेव प्रयोगे द्वयमापतति तदशक्यं समुच्चेतुमिति विकल्पः ॥

---

**विभागश्रुतेः०** ॥ ४९ ॥ पूर्वस्य शब्दार्थनिरूपणमात्रत्वान्न तेन सङ्गतिः । पूर्वतरेण च यथाभिन्ने जुहोतीति प्रायश्चित्तं न सर्वत्र एवमपच्छेदनिमित्तमपि न यौगपद्य इति प्रत्यवस्थानात्सङ्गतिः । **बहिष्पवमानमिति** । बहिष्पवमानस्तोत्रार्थं हविर्धानाद्बहिष्पवमानदेशं गच्छतां परस्परमन्वारम्भः श्रुतः 'अध्वर्युं प्रस्तोता संतनुयात् प्रस्तोतारमुद्गाता उद्गातारं प्रतिहर्ता प्रतिहर्तारं ब्रह्मा ब्रह्माणं यजमानः यजमानं प्रशास्ते'ति । एवं क्रमेण परस्परमन्वारभ्य गच्छतां मध्य इत्यर्थः । सर्ववेदसं सर्वस्वमित्यर्थः । **उद्गातृप्रतिहर्त्रोरिति** । प्रदर्शनार्थमन्ययोरपि संयुक्तयोर्युगपदपच्छेदे विचारप्रवृत्तिसंभवात् । **तत्रेति** । अपच्छेदो नाम विभागः । सचोभयसमवेतोऽपि यद्गतक्रियया जन्यते तत्कर्तृकत्वेन व्यपदिश्यते । प्रकृते च पुरुषद्वयगतक्रियाद्वयेन विभागो जायते इति एकैकस्य निरपेक्षकर्तृत्वाभावादयमपच्छेदो नैककर्तृकतया व्यपदेशार्ह इत्यर्थः । अन्यत्रैकैकक्रियाया नैरपेक्ष्येण विभागहेतुत्वदर्शनादिह दैवात्समावेशेऽपि नैरपेक्ष्याव्याहतेः प्रत्येकमेव कर्तृत्वं कर्त्रोस्तु समावेशमात्रमित्याह—**स्यादेवमिति** । सूत्रार्थस्तु—विभागश्रुतेः विभक्ते प्रत्येककर्तृकेऽपच्छेदे प्रायश्चित्तश्रुतेरित्यर्थः ॥

**तत्र विप्रतिषेधात्०** ॥ ५१ ॥ पूर्वोपजीवनात्सङ्गतिमाह—**यौगपद्य इति** । **तत्किमिति** । अत्र च ययोरपच्छेदयोः प्रायश्चित्ते परस्परविरोधः तयोर्विषयत्वं बोध्यम् । विरुद्धयोः समुच्चयासंभवमाशङ्क्याह—**तेन पुनरिति** । प्रयोगभेदेपि कर्मण एकत्वात्प्रयोगान्तरे क्रियमाणेनापि साद्गुण्यमिति भावः । नैमित्तिकं हि कर्म स्वरूपमात्रे न समवैति किंतु यस्मिन्प्रयोगे निमित्तमुपजनितं तस्मिन्नेव प्रयोगे । ततश्च प्रयोगान्तरे क्रियमाणेन नास्ति साद्गुण्यमित्याह—**नैतदिति** ॥

---

१ सर्पतां. २ तद्यद्युद्गात्रो. ३ हर्त्रोरपच्छेदो युगपत्. ४ वेदसमितीत्युभय.

आनुपूर्व्येणापच्छेद उत्तरापच्छेदनिमित्तप्रायश्चित्तानुष्ठानाधिकरणम् ॥ १९ ॥

**पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥**

अपच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः ॥ असंजातविरोधेन पूर्वेणोत्तरबाधनम् ॥ २५ ॥
निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया ॥ न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥ २६ ॥

यदानुपूर्व्येणोद्गातृप्रतिहर्त्रोरपच्छेदो भवति तदा किं पूर्वोत्पन्ननिमित्तं प्रायश्चित्तं कार्यमुतोत्तरनिमित्तमिति संशयः । तत्र पूर्वनिमित्तमसंजातविरोधं निर्विघ्नमवगम्यते तद्विरुद्धत्वादशक्यमवगन्तुमुत्तरम् । अतः पूर्वबलीयस्त्वं विकल्पो वेत्येवं प्राप्ते उच्यते । नात्र पूर्वेणोत्तरस्य ज्ञानस्योत्पत्तिः शक्यते निरोद्धुं । प्रत्यक्षेण वाक्येन तदवश्यमुत्पाद्यत एव । तच्चोपजायमानं स्वविरुद्धं पूर्वज्ञानं बाधमानमेवोत्पद्यते । तेनोत्पन्नमपि पूर्वप्रायश्चित्तज्ञानं मिथ्या भवति बाधितत्वात् । उत्तरस्य तु न किंचिद्बाधकमस्ति । नहि पूर्वविज्ञानमुत्तरबाधेनोत्पद्यते तस्यामवस्थायामुत्तरस्यानुपजातत्वात् । जाते तूत्तरविज्ञाने जायमानेनैव तेन बाधितं पूर्वविज्ञानमसत्कैर्मीभूतं नोत्तरं बाधितुं क्षमते । तस्मात्पूर्वदौर्बल्यम् । नैमित्तिकशास्त्राणां ह्ययमर्थः । निमित्तोपजननात्प्रागन्यथा कर्तव्योऽपि क्रतुर्निमित्ते सत्य-

---

**पौर्वापर्ये०** ॥ ५४ ॥ **तत्रेति** । वेदोपक्रमाधिकरणन्यायेन पूर्वस्यैव प्राबल्यमिति भावः । उपसंहारस्योपक्रमाननुगुणार्थकत्वे तदेकवाक्यत्वानिर्वाहात् उपक्रमपर्यालोचनयैवोपसंहारस्यात्मलाभादुपक्रमप्राबल्येपीहपूर्वमनपेक्ष्यैवोत्तरस्यात्मलाभ इति न पूर्वस्य प्राबल्यमिति वैषम्यमभिप्रेत्य तुल्यबलत्वाश्रयणेन पक्षान्तरमाह—**विकल्पो वेति** । ततश्च पूर्ववदिहापि विकल्प इति प्रत्यवस्थानात्सङ्गतिः । **नात्रेति** । येन श्रुतिलिङ्गादिवत्पूर्वप्राबल्यं स्यादिति भावः । **बाधमानमेवेति** । आख्यातप्रत्ययः शक्तिसहकारेणार्थविधायकत्वात्पूर्वस्मिन्नैमित्तिके सत्युत्तरस्य कर्तुमशक्यत्वात् पूर्वप्रतीतविरुद्धार्थमुत्तरं । नैमित्तिकं बोधयितुमशक्नुवन् पूर्वज्ञानं बाधमान एव स्वार्थं विधत्त इत्यर्थः । **ननु** कोयमुत्पन्नस्य पूर्वज्ञानस्य बाध इत्यत आह—**तेनेति** । मिथ्यात्वबुद्धिरेव बाध इत्यर्थः । [ शास्त्रप्रैवृत्तिवेलायां तुल्यकक्ष्यत्वाद्विकल्प एव न्याय्य इति शङ्कते—**नन्विति** । प्राभाकरास्तु स्यादेतदेवं यदि कर्मज्ञापकशास्त्रवदिदं सकृदेव बोधकं स्यात् । नैवं किंतु नैमित्तिकशास्त्रं निमित्तोपजनने प्रवर्तमानं निमित्तस्याधिकारिविशेषणत्वात् अधिकारिद्वारकं सत् प्रयोगशास्त्रमिति प्रतिप्रयोगमावृत्त्यैवबोधकमितिप्रयोगभेदाश्रितेन पौर्वापर्येण संभवति बाध इत्याहुस्तन्मतमनुवदति—**येपीति** । प्रतिप्रयोगं शास्त्रप्रवृत्तौ प्रतिप्रयोगमेकैकशास्त्रव्यक्तिः संपन्नेति तत्तत्प्रयोगप्रवृत्तशास्त्रव्यक्तेर्निरवकाशतया सुतरां बाधासंभव इति दूषयति—**तेषामिति** । **अथेति** । यदीत्यर्थः । परैरप्रामाण्यानङ्गीकरणेन परकीयशङ्कानुपपत्तिः । 'यजतिषु येयजामहं करोति नानुयाजेष्वित्यत्र प्रतिषेधे विकल्पः स्यात् प्रतिषेध्यप्राप्तिं विना प्रतिषेधासंभवात् 'यजतिषु येयजामह'मित्यनेनानुयाजेषु येयजामहप्राप्त्यनंतर नानूयाजेष्विति निषेधप्रवृत्त्यानूयाजेषु येयजामहप्रवृत्तेः सामान्यशास्त्रकृताया अपि शास्त्रकृतत्वेनात्यन्तबाधायोगादिति विकल्पप्रसङ्गान्नानुयाजेष्विति पर्युदास इति दशमे व्युत्पाद्यं तन्मते तदयुक्तम् । पूर्वप्रवृत्तशास्त्रस्याप्रामाण्ये प्रतिषेधपक्षेऽपि नित्यमननुष्ठानोपपत्त्या पाक्षिकानुष्ठानापादकविकल्पाप्रसङ्गादित्याह—**तत इति** । **साहसमिति** । अप्रामाण्यस्य परतस्त्वेन दोषनिमित्ततया तदभावेनासंभवादिति भावः । किंच प्रवृत्तस्य पूर्वशास्त्रस्यार्थज्ञानजनकतानियमात् जातस्यानुभवरूपज्ञानस्य प्रामाण्यनियमाच्च तन्मते शास्त्रात्प्रामाण्याभ्युपगमः सुतरामयुक्त इत्याह—**स्मृतिरिति** । ननु श्रुतौ सत्यां लिङ्गस्येव पूर्वशास्त्रस्याप्रवृत्तिः किं न स्यादित्यत आह—**तद्धीति** । श्रुतौ सत्यां ग्राहकग्रहणपदार्थाग्रानाचाकृतार्थत्वरूपसामग्रीहीनत्वाल्लिङ्गस्याप्रवृत्तिर्युक्ता । इहतु निमित्तस्य विद्यमानत्वात्संभृतसामग्रीकं शास्त्रं किमिति न प्रवर्ततेत्यर्थः । ] **ननु** निमित्तानन्तरं पूर्वशास्त्रं पुष्कलसामग्रीकत्वात्स्वार्थनिश्चयं करोत्येव स च निश्चयो ज्ञानस्य मिथ्यात्वानङ्गीकारात्प्रमाणमेव । प्रमाणस्यापि तस्य संभृतसामग्रीकप्रबलशास्त्रान्तराद्बाधः । नच पूर्वनैमित्तिकप्रयोगरूपविषयाभावे निर्विषयज्ञानासंभव इति वाच्यम् । स्वविषयपरमार्थीकरणसामर्थ्यमेव हि ज्ञानानां सविषयत्वं, तच्चात्रापि प्रबलोत्तरशास्त्रप्रतिबन्धाद्विषयानुत्पत्तावपि बाध उपपद्यत इति चेत् इदमपि नानुयाजेष्वित्यत्र प्रतिषेधेऽपि पूर्वसामान्यशास्त्रं निश्चयं करोति, सच निश्चयः प्रबलनिषेधबलाद्विषयानुत्पत्तावपि स्वविषययथार्थीकरणासमर्थतया न सविषय इत्याश्रित्य परेण पूर्वस्य प्रतिषेधेन सामान्यविषये नित्यबाध इति पर्युदासप्रतिपादनानर्थक्यादेव दत्तोत्तरमिति भावः । यदिशब्दो निपात आहत्य निमित्तत्वमेव प्रतिपादयति न संशयवचनः । तेन निश्चितेपि निमित्ते शास्त्रप्रवृत्तिर्न विहन्यत इति परेण वक्तुमशक्यत्वाभ्रातीवेत्युक्तिः । **निमित्तोपजननात्प्रागिति** । ननु प्रागन्यथाकर्तव्यत्वेनावगतस्य निमित्तोपजननानन्तरमन्यथा कर्तव्यत्वावगमे द्वयोरपिज्ञानयोर्बदरीफले पौर्वापर्येण श्यामत्वरक्तत्वज्ञानयोरिव

---

१ यस्त्वं एवं प्राप्ते. २ तदेवमुत्पाद्यत. ३ मसत्वाद् बाधितुं नोत्तरं. ४ [ ] ईदकुचिह्नितव्याख्याभागस्य मूलमस्मदुपलब्धलिखितग्रन्थे काशीमुद्रितग्रन्थेप्यनुपलब्धं । ने विद्यष्टीकानन्विता त्रुटितो वा मूलभाग इति ।

न्यथा कर्तव्य इति। ततश्च यथा नित्यं द्वादशशतज्ञानमुत्पन्नं पाश्चात्येनैव नैमित्तिकेन सर्ववेदसदाना-दिज्ञानेन बाध्यते तथा नैमित्तिकमपि पूर्वनिविष्टमुत्तरेण बाध्यते ॥

उद्गात्रुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम् ॥ २० ॥

**यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥**

उद्गातुः पश्चिमच्छेदे पुनर्यागस्य दक्षिणा ॥ शतं द्वादशयुक्तं स्याद्यदि वा सर्ववेदसम् ॥ २७ ॥
तद्दद्यात्पुरा दित्सुरित्युक्तेः शतदक्षिणा ॥ प्रतिहर्तुः पुरा छेदात्सर्ववेदसबाधितम् ॥ २८ ॥
शतदानं पूर्वयागे सर्ववेदसदित्सुता ॥ प्रासीत्यूर्ध्वं प्रयोगे तद्दातव्यं सर्ववेदसम् ॥ २९ ॥

पौर्वापर्ये जघन्यनिमित्तं प्रायश्चित्तमिति स्थितं, तद्यदोद्गाता जघन्यो भवति किं[1] पुनर्यज्ञे सर्ववे-दसं देयमुत द्वादशशतमिति संशयः। तत्र यत्पूर्वस्मिन्दास्यन्स्यादिति यदेव क्रतुस्वभावतो देयं तदेव प्रतीयते तच्च द्वादशशतं तस्मात्तदेव पुनः प्रयोगे देयमित्येकः पूर्वः पक्षः। पूर्वस्मिन्प्रयोगे प्रथमं द्वाद-शशतं दास्यन्नासीत्। प्रतिहर्तरि त्वपच्छिन्ने सर्ववेदसमत उभयमपि पुनःप्रयोगे यत्पूर्वस्मिन्दास्य-न्स्यादिति शक्यं वक्तुं तस्माद्विकल्प इति द्वितीयः पक्षः। सिद्धान्तस्तु—द्वादशशतं सर्ववेदसेन बाधितमतो न तद्दास्यन्भवति। (सर्ववेदसमेव तु दास्यन्भवति) तस्मात्तदेव पुनःप्रयोगे स्यात्। ननु तदप्यदाक्षिण्येन बाधितं, नेति ब्रूमः। नह्युद्गात्रपच्छेदेन पूर्वदक्षिणा बाध्यते किं तर्हि पूर्वस्मिन्प्रयोगे दातव्या सती दक्षिणा तत उत्कृष्य उत्तरस्मिन्प्रयोगे निक्षिप्यते। पूर्वप्रयोगे चोद्गात्रपच्छेदवेलायां द्वादशशतं बाधित्वा सर्ववेदसमेव दातव्यमासीत्। अतस्तदेव पुनःप्रयोगे देयम् ॥

---

प्रामाण्यं न संभवति बदरीफले रूपद्वयस्य कालभेदेन सत्ववदिह पौर्वापर्येणोत्पन्ननिमित्तद्वयवति क्रतौ नैमित्तिकरूपकर्तव्यता-द्वयस्याभावात् उत्तरनिमित्तोपजननेन पूर्वनैमित्तिककर्तव्यतापहारात्। तथाच कथं पूर्वशास्त्रप्रामाण्यमितिचेत्सत्यम्। नहि पूर्वशास्त्रस्य प्रकृतप्रयोगे प्रामाण्यमभिमतं येनोक्तदोषः स्यात् किंतु प्रामाण्यमात्रम्। तच्च प्रयोगान्तरेऽप्युपपद्यते न्याया-भावाद्या पूर्वशास्त्रस्य सर्वविषयत्वप्रतीतिः तद्बाधेऽपि तात्पर्यविषयप्रयोगान्तरे प्रामाण्ये बाधकाभावात्। तदुक्तं न्यायरत्न-मालायाम् 'तत्रैवंसति शास्त्रार्थो भवति पश्चाद्भाव्युद्गात्रपच्छेदाविषयं प्रतिहर्त्रपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गं एवमुद्गा-त्रपच्छेदेपि द्रष्टव्य'मिति। एवंच शास्त्रार्थावधारणवेलायां प्रायोगिकपौर्वापर्यमालोच्य शास्त्रार्थावधारणमात्रं नतु प्रतिप्रयोगं शास्त्रप्रवृत्तिरिति न काप्यनुपपत्तिरिति भावः। सूत्रे प्रकृतिवत् यथाप्राकृतस्य कुशादेर्वैकृतशराद्यपेक्षया दौर्बल्यं तद्वदित्यर्थः ॥

**यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥** परनिमित्तप्रायश्चित्तस्य कर्तव्यत्वं विना एतद्विचारासंभवेन पूर्वापेक्षत्वात्सङ्गतिं सूचयितुं वृत्तं कीर्तयति—**पौर्वापर्य इति। तद्येति**। तस्य निमित्तान-पेक्षतया ज्ञाटित्यवगमादिति भावः। **शक्यमिति**। पूर्वस्मिन्नित्यनेन पूर्वत्वाविशेषात्प्रयोगद्वयोपस्थितेरिति भावः। **बा-धितमिति**। पूर्वस्मिन्नित्यनेन कर्म नोच्यते कर्मण एकत्वेन पौर्वापर्याभावात्किंतु प्रयोगस्तत्र स्वरसतः समनन्तरप्रयोग एव पूर्वशब्देन प्रतीयते न व्यवहितः। अव्यवहिते च प्रयोगे परिमाणान्तरोपदेशाद्द्वादशशतं बाधितमित्यर्थः। **नन्विति**। यथा सर्ववेदसोपदेशात् अर्थाद्द्वादशशतबाधस्तद्वददाक्षिण्योपदेशात्तस्यापि बाधस्तुल्य इति बाधितस्यैव प्रसक्तिमात्रेण प्रयो-गान्तरे विधिरित्युभयोस्तुल्यत्वाद्विकल्प इत्यर्थः। यद्यदाक्षिण्ये सति सर्ववेदसं नोपपद्येत ततोर्थान्निवर्तेत इह तु साभ्यास-त्वात्क्रतोरुभयसंभवान्न सर्ववेदसबाधः किंतु प्रतिहर्त्रपच्छेदात्पूर्वस्मिन्प्रयोगे कर्तव्यत्वेन प्राप्तस्य वचनबलात्प्रयोगान्तरे निक्षे-पमात्रं द्वादशशतस्य तु कथंचिदप्यनुग्रहाभावात्सर्वथा बाध एव। तेन तस्मिन्प्रयोगेऽनुतिष्ठासितमेव वचनात्प्रयोगान्तरे अनुष्ठेयं सर्ववेदसं पूर्वस्मिन्प्रयोगे दास्यन्निति व्यपदेशार्हं नतु सर्वथा बाधितं द्वादशशतमित्याह—**नेति ब्रूम इति**। सूत्रार्थस्तु—यद्युद्गाता पश्चादपच्छिन्नस्तदा पुनःप्रयोगे सर्ववेदसं दद्याद्यथेतरस्मिन्प्रतिहर्त्रपच्छेदवति प्रयोग इति ॥

---

१ तदा पुनर्यज्ञे किं.

अहर्गणेऽपच्छेदे सर्वावृत्तिनिराकरणाधिकरणम् ॥ २१ ॥

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात् ॥ ५६ ॥**

अहर्गणे चेदुद्गातृच्छेद आवर्त्यतां गणः ॥ किं वा यत्र दिने छेदस्तदेवावर्त्यतां दिनम् ॥ ३० ॥
गणावृत्तिः प्रयोगैक्यात्प्रयोगोऽवान्तरः पृथक् ॥ तेनाह्नरेकमावर्त्यमनङ्गत्वान्न हीतरत् ॥ ३१ ॥

द्वादशाहादिष्वहर्गणेषु यदा कस्मिंश्चिदहन्युद्गात्रपच्छेदो भवति तदा किं कृत्स्नस्याहर्गणस्यावृत्तिरुत तदेवाहरावर्तेत इति संशये साधननिवेशित्वाद्धर्माणां गणस्य च साधनत्वात्तस्यैवादक्षिणस्य संस्थापनं पुनःप्रयोगश्चेति प्राप्त उच्यते—'अशाब्दत्वात्समूहस्य न फलं प्रति चोदना ॥ यागस्य चोदना तत्र यागाः प्रत्येकमेव ते ॥ अतो मिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः ॥ फलं संहत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः ॥ तेन यस्मिन्नपच्छेदस्तदावृत्तिंगुणान्वितम् ॥ अनावृत्तिगुणैरन्ये संहत्य कुरुते फलम् ॥' ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठाध्यायस्य पञ्चमः पादः ॥ ५ ॥

---

## षष्ठाध्याये षष्ठः पादः ।

सत्रे समानकल्पानां सहाधिकाराधिकरणम्[१] ॥ १ ॥

**संनिपातेऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ [वचनाद्वा शिरोवत्स्यात् ॥ २ ॥ न वाऽनारभ्यवादत्वात् ॥३॥ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥४॥ न तत्प्रधानत्वात् ॥ ५ ॥ औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥ अन्येनापीति चेत् ॥ ७ ॥ नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥ संनिपातात्त निमित्तविघातः स्याद्बृहद्रथंतरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥ ९ ॥ अपि वा कृत्स्नसंयोगादविघातः प्रतीयेत स्वामित्वेनाभिसंबन्धात् ॥ १० ॥ साम्नोः कर्मवृद्धैकदेशेन संयोगे गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥]**

भिन्नप्रयाजादिकल्पा अपि सत्रेऽधिकारिणः ॥ तुल्यकल्पा एव वाद्यो वसिष्ठादिविधानतः ॥ १ ॥
नाराशंसाद्यङ्गतायां स्वामित्वोद्देशपूर्वकम् ॥ नाराशंसविधौ संनिकर्षात्साद्गुण्यतोऽन्तिमः ॥ २ ॥

दर्शपूर्णमासयोः पुरुषभेदेन कल्पभेदः समाम्नातः, राजन्यवासिष्ठादीनां नाराशंसो द्वितीय., प्रयाजस्तनूनपादन्येषामित्यादिः स दीक्षणीयादिष्वनिर्दिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तस्तत्र संदिह्यते किं

---

**अहर्गणे०॥ ५६ ॥ गणस्येति** । यागानां साधनत्वेपि पूर्वस्मिन्नित्यनेन प्रयोगाभिधानेन प्रयोगस्यैवावर्तनीयत्वावगमाद्द्वादशानामपि यागानां प्रयोगैक्याद्गणस्यैवावृत्तिरिति भावः । एवंच पूर्वस्मिन्नित्यनेन प्रयोगाभिधानेऽपि इह प्रयोगावृत्तिः स्यादतः प्रयोगाभिधानमनुपपन्नमिति पूर्वपक्षे पर्यवसानात्संगतिः । **अशाब्दत्वादिति** । यजिसामानाधिकरण्याभावात्समूहस्य यागत्वाभावात्समूहिनामेव फलंप्रति चोदनेति भावः । **ननु** फलसंबन्धवदङ्गसंबन्धोऽपि सहैव स्यादिति नैमित्तिकाङ्गसंबन्धोऽपि प्रत्येकं स्यादित्यत आह—**अत इति** । अङ्गानि प्रति यागानामुद्देश्यत्वादविवक्षितं साहित्यमिति भावः । **तदावृत्तिगुणान्वितमिति** । गणस्यैकत्वेन पौर्वापर्याभावेन पूर्वस्मिन्नित्यनेन प्रयोगोक्तावपि तेन पुनर्यजेतेत्यनेन कर्मण एवावृत्तिर्विधीयते नतु प्रयोगस्येति भावः । प्रयोगावृत्तिपरत्वेपि अवान्तरप्रयोगभेदात्तन्मात्रावृत्तिरित्याहुः । अत्र पूर्वप्रयोगे दक्षिणादानाभावाद्द्वितीयप्रयोगेऽपि न किंचिद्देयमिति केचित् । द्वादशाहे दीयमानाया दक्षिणायाः सर्वाहःसाधारण्यादेकस्याप्यहः कृत्स्नाद्द्वादशाहदक्षिणा देयेत्यन्ये ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य पञ्चमः पादः ॥ ५ ॥**

**संनिपातेऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥** पूर्वेषु पादेषु प्रकृतिष्वधिकारः प्राधान्येन निरूपितः इह विकृत्यधिकारः प्राधान्येन निरूप्यते इति पादान्तरत्वमानन्तर्यं च । **इत्यादिरिति** । त्वं वरुण इति वासिष्ठराजन्यानां आजुहोतेति इतरेषामित्यादिपरिधानीयादिकल्पभेद आदिशब्दार्थः । **सत्रेष्विति** । सत्रादिष्वित्यर्थः । न्यायसाम्येनाने-

१ गुणान्विनः.

**भिन्नकल्पा अपि संहत्य सत्रमासीरन्नुत तुल्यकल्पा एवेति । तदर्थमिदं विचार्यते किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते उत वासिष्ठादीनुद्दिश्य नाराशंसादि तादर्थ्येन विधीयत इति । तत्र वासिष्ठार्थत्वेन विधाने फलकल्पनाप्रसङ्गात्प्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते । षष्ठी च संबन्धवाचिनी । सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत्क्रियत एवेति । अविगुणस्तथा तनूनपादप्यन्यैरतोऽयं कंचित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन्नित्येवं प्राप्ते ब्रूमः—वासिष्ठादीन्स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयते । तादर्थ्यं च क्रतूपकारद्वारेणाप्युपपन्नमिति न फलकल्पनापत्तिः । एवंच धात्वर्थस्यान्यत्र विधानात्संनिकृष्टविधिर्भवति । प्रयाजोद्देशेन तु वासिष्ठादिविधौ धात्वर्थेऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात् । ततश्च सत्रेऽन्यतरकल्पाश्रयणेऽन्येषां तेन क्रतूपकारालाभाद्विगुणः क्रतुर्न फलं साधयेत् । तस्मात्तुल्यकल्पानामेवाधिकारः ॥**

भिन्नकल्पयोरपि राजपुरोहितयोः कुलाययज्ञेऽधिकाराधिकरणम् ॥ २ ॥

**वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ [अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः ॥ १४ ॥ पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥]**

**सायुज्यकामौ यजतोऽनेन राजपुरोहितौ ॥ राज्ञः पुरोहितौ राज्ञोस्तौ वा राजात्मकावुभौ ॥ ३ ॥**
**द्वयोर्द्वन्द्वसमासो वा तुल्यत्वायाभिमो द्वयोः ॥ सिद्धे द्वितीयो राजोक्तिसार्थत्वाय तृतीयकः ॥ ४ ॥**
**अध्याहृत्यै चतुर्थः स्याद्वचनाद्भिन्नकल्पता ॥ तनूनपान्नराशंसौ विकल्प्येते समत्वतः ॥ ५ ॥**

**एतेन 'राजपुरोहितौ सायुज्यकामौ यजेयाता'मित्यत्र संशयः किमयं षष्ठीतत्पुरुषैकशेषः राज्ञः पुरोहितो राजपुरोहितः राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति । ततश्च राजद्वयसंबन्धिनोर्द्वयोः पुरोहितयोरधिकारः । उतकृतैकशेषेणोत्तरपदेन तत्पुरुषो राज्ञः पुरोहितौ राजपुरोहिताविति । ततश्चैकराजसंबन्धिनोर्द्वयोरधिकार उत कर्मधारयो राजात्मकौ पुरोहिताविति । अथवा**

---

ककर्तृकक्रतुमात्रस्योदाहरणत्वात् । **फलेति** । वासिष्ठाद्यर्थत्वे स्वरसतः साक्षादेव तथात्वं भवेन्नतु क्रतूपकारद्वारेति स्वारसिकसाक्षात्त्वनिर्वाहार्थं फलकल्पनमिति भावः । **ननु** दध्नेन्द्रियकामस्येतिवत्षष्ठ्या स्वामित्वावगमान्नाङ्गत्वेन विधिः संभवतीत्यत आह—**षष्ठीति** । संबन्धमात्रमेव षष्ठ्यर्थ इन्द्रियकामादौ तु न्यायात्संबन्धविशेषे पर्यवसानम् । एवंच तद्वदिहाप्युक्तफलकल्पनागौरवादिन्यायात्कर्तृत्वे पर्यवसानमिति भावः । नन्वेवमपि वासिष्ठावासिष्ठकर्तृको न वासिष्ठकर्तृकतया व्यपदेशार्ह इत्याशङ्क्याह—**सत्रेषुचेति** । **प्रत्येकमिति** । न्यायस्य तावत्सर्वैः करणादिति भावः । **स्थितमिति** । अत्रैव द्वितीयपादाय इति शेषः । **अत इति** । यत्किंचित्कल्पाश्रयणेऽपि क्रतोः साङ्गत्वादिति भावः । **तादर्थ्यमिति** । साक्षात्तादर्थ्ये प्रकरणबाधप्रसङ्गादेव क्रतूपकारद्वारा तादर्थ्यमाश्रीयतामिति भावः । **धात्वर्थस्येति** । नच 'राजन्यात्रिवध्र्यश्ववैश्यशुनकानां क एव काश्यपसंकृतिकानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषा'मिति वाक्ये धातोरेवाभावात्कथं धात्वर्थविधानमुच्यते इति वाच्यम् । अत्रावश्यं विधिप्रत्ययस्य कल्पनीयत्वात्तस्य च प्रकृतिंविनानुपपत्त्या प्रकृतेरपि कल्पनायां एतेषां नाराशंसं द्वितीयं प्रयजेदित्येवंरूपं वाक्यं संपन्नमिति धात्वर्थविधानोपपत्तेः द्वितीयः प्रयाजः कार्य इति कल्पनायामपि कृतिसामान्यवाचकस्य प्रयाजएव पर्यवसानाद्धात्वर्थविधिरुपपद्यत इति भावः । **ततश्चेति** । राजन्याद्युद्देश्येन नाराशंसविधानस्य नाराशंसोपकृतक्रतुर्वासिष्ठादीनामेव फलद इति पर्यवसानादितरेषां फलालाभ इत्यर्थः । सूत्रार्थस्तु—बहूनां संनिपाते तुल्यकल्पा एव यजेरन् तथात्व एव प्रकृतिवदवैगुण्यादिति ॥

**वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ युगपदिति** । अधिकरणं द्रव्यमभिधेयमिति यावत् । तस्य पदद्वयेनापि युगपदभिधाने द्वन्द्व इत्यर्थः । तथाचैकेन पदेनार्थद्वयप्रतिपादने द्वन्द्व इति कात्यायनोक्तेर्द्वन्द्वे पदद्वयलक्षणा स्यादित्यर्थः । **तदर्थस्येति** । राजसंबन्धिपुरुषस्य समासार्थत्वात्तस्यैव द्वित्वमित्यर्थः । **पुरोहितपदादिति** । यद्यपि समासादेव द्विवचनं तथापि विवक्षितविवेकेन समासादुत्पन्नद्विवचनस्य पुरोहितशब्दैकशेषादेवोपपत्तौ समुदायैकशेषकल्पनं

---

१ घानुद्दिश्य. २ अतः सत्रे.

द्वन्द्वो राजा च पुरोहितश्चेति । तत्र युगपदधिकरणे द्वन्द्वः तेन पदद्वयमपि लक्षणावृत्तिः स्यात् । अतस्तत्पुरुषोऽयं समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह । तस्माद्राजद्वयसंबन्धिनौ द्वौ । यद्वा पुरोहितपदाद्द्विवचनं तदर्थस्यैव द्वित्वमाह राज्ञः पुरोहितौ द्वाविति । एतस्मिंस्तु पक्षद्वये पूर्वपदं लक्षणावृत्तिः स्यात् । किंच नैकस्य राज्ञः पुरोहितद्वयमस्ति पुरोहितं वृणीत इत्युपादीयमानस्यैकत्वस्य विवक्षितत्वात् । प्रथमपक्षे राजपदमनर्थकं राज्ञ एव पुरोहितोऽस्ति नान्यस्यातोऽव्यभिचारादविशेषणं तदनर्थकं राजपदं स्यादतः कर्मधारयोऽस्तु । सोऽपि न । राज्ञः पुरोहितत्वाभावाद्ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रूयते । तस्माद्द्वन्द्व एवायम् । नच तत्र कस्यचिल्लक्षणा युगपदधिकरणे द्वन्द्व इत्यस्यापवादादित्युक्तं[1] तन्त्ररत्ने । तस्माद्राज्ञः पुरोहितस्य चात्र भिन्नकल्पयोरेव सतोर्वचनादधिकारः ॥

सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ॥ ३ ॥

**सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥ [लिङ्गदर्शनाच्च ॥ १७ ॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥ वचनादिति चेत् ॥ १९ ॥ न स्वामित्वं हि विधीयते ॥ २० ॥ गार्हपते वा स्यानामविप्रतिषेधात् ॥ २१ ॥ न वा कल्पविरोधात् ॥ २२ ॥ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥]**

**सत्रं वर्णत्रयस्योत विप्रस्यैवाविशेषतः ॥ त्रयस्य नैवं स्वामित्वं विप्राणामृत्विजां यतः ॥ ६ ॥**

**सत्रेषु** किं त्रयाणामपि वर्णानामधिकारः उत ब्राह्मणानामेवेति विचारः । तदर्थं च किं 'ये यजमानास्त ऋत्विज' इत्यनेनार्त्विज्यं यजमानसंस्कारत्वेन विधीयते उत यजमाना आर्त्विज्याङ्गत्वेनेति चिन्त्यते—'सत्राणि सर्ववर्णानां भवेयुरविशेषतः ॥ ऋद्धिकामादिवाक्येषु विशेषः श्रूयते नहि ॥ प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात् ॥ संस्कारार्थतया तेषामार्त्विज्यमुपयुज्यते ॥' प्रधानभूतैरेव च तैः क्रियामाणमार्त्विज्यं न गुणभूतानध्वर्यून्कर्तॄनपेक्षते गुणभूतकर्तृपरिच्छेदेन ब्राह्मण्यमार्त्विज्याङ्गं तदभावे तदपि द्वाराभावान्न सत्रे प्राप्नोति तस्मात्त्रयाणामधिकार इति प्राप्ते ब्रूमः—'नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते ॥ तथाह्यप्राकृतं कार्यमार्त्विज्यस्य प्रसज्यते ॥ तेन यच्छब्दयोगेऽपि

---

न युक्तमिति तात्पर्यम् । एवंच वचनबलात्पुरोहितमित्येकत्वं न विवक्षितमिति भावः । द्वितीयपक्षे दोषान्तरमाह—**किंचेति** । वचनस्यान्यथाप्युपपत्तेरविवक्षितत्वमप्रामाणिकमिति भावः । **प्रथमेति** । द्वितीयपक्षे एकराजसंबन्धित्वलाभार्थत्वेनानर्थक्याभावात्प्रथमपक्ष इत्युक्तम् । **ननु** द्वन्द्वे लक्षणाप्रसङ्गात्कर्मधारयस्यैवाश्रयणीयत्वे तत एव राज्ञोऽपि पुरोहितत्वं स्वीकार्यमित्यत आह—**नचेति** । **युगपदिति** । प्रत्येकपदाभिहितयोरपि द्वित्वान्वयोपपादनेन तन्त्ररत्ने 'ब्याधानं च द्वियज्ञव' दित्यधिकरणे युगपदधिकरणवचनत्वं प्रपञ्चेन निराकृतमित्यर्थः । **भिन्नकल्पयोरेवेति** । यद्यपि प्रयाजादिषु तुल्यकल्पो राजपुरोहितयोरपि संभवति तथापि हविष्कृदागहीति राजन्यस्य विशेति राजन्यस्य ब्रूयात् । तस्मै भक्षं प्रयच्छन्न सोममिति । एवं बहुशो राजन्यस्य कल्पान्तराम्नातेन राजन्यपुरोहितयोरेकरूपप्रयोगस्यात्यन्तमसंभावितत्वाद्भिन्नकल्पत्वमवर्जनीयमिति भावः । भिन्नकल्पयोरित्यनेन पूर्वापवादात्सङ्गतिः सूचिता । सूत्रार्थस्तु—वचनादेवास्य राज्ञः पुरोहितद्वयसंयोगो यथा सव्यपाणेः कर्मानुपयोगित्वेऽपि अञ्जलिना जुहोतीति वचनादेकपुरुषसंबन्धिपाणिद्वयं गृह्यते इति ॥

**सत्राणिसर्ववर्णानामविशेषात्** ॥ १६ ॥ पूर्ववदिहापि राज्ञोऽधिकार इति प्रत्यवस्थानात्सङ्गतिः । **आर्त्विज्यमिति** । ऋत्विजामध्वर्य्वादीनां कर्म । तत्कर्तृकाः पदार्था इति यावत् । **तेषामिति** । यच्छब्दयोगप्राथम्याभ्यामेवोद्देश्यत्वमिति भावः । **ननु** प्रकृतितो ब्राह्मणकर्तृकत्वमार्त्विज्ये प्राप्तमिति तथाविधस्यैव यजमानसंस्कारत्वाद्यजमानसंस्कारत्वेपि न राजन्यवैश्यप्राप्तिरित्यत आह—**प्रधानभूतैरिति** । **अप्राकृतमिति** । यजमानसंस्कारस्य प्रकृतिष्वसत्वाभावा-

---

१ ब्राह्मणस्यैवेति. २ गुणकर्तॄ.

नोद्देशः स्वामिनामिह ॥ आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत् ॥' प्रकृतितश्च द्वौ धर्मावार्त्विज्याङ्गत्वेन प्राप्तौ अन्यकर्तृकता ब्राह्मणकर्तृकता च । तत्रान्यकर्तृकता 'ये यजमानास्त ऋत्विज' इत्यनेन बाधिता । ब्राह्मणकर्तृकतायास्तु न किंचिद्बाधकमस्ति । ऋद्धिकामादिशब्दानां ब्राह्मणत्वाविरोधात् । तस्मात्प्रकृतितः प्राप्तं ब्राह्मणकर्तृकत्वं वाचनिकं च यजमानकर्तृकत्वमुभयं संपादयितुं ब्राह्मणा एव सत्राण्यासीरन्निति ॥

विश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् ॥ ४ ॥

**वासिष्ठानां वा ब्रह्मत्वस्यनियमात् ॥ २४ ॥ [सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥ विश्वामित्रस्य हौत्रनियमाद्भृगुशुनकवसिष्ठानामनधिकारः ॥ २६ ॥]**

**विप्रस्य सत्रं सर्वस्य वासिष्ठस्यैव वा भवेत् ॥ विश्वामित्रस्यैव वाथ ऋद्धीच्छुत्वेन मध्यमः ॥ ७ ॥**

**ब्रह्मत्वाय ह्यवासिष्ठे ब्रह्मता स्तोमभागतः ॥ वैश्वामित्रसमानानामेव होतृत्वसिद्धये ॥ ८ ॥**

ब्राह्मणानामपि किं सर्वेषामधिकारः उत वासिष्ठानां तत्समानकल्पानां च अथवा वैश्वामित्राणां तत्समानकल्पानां चेति संशयः । तत्राविशेषात्सर्वेषां वासिष्ठो ब्रह्मेति प्रकृतौ श्रवणाद्ब्रह्मत्वस्यावैगुण्यायावश्यं वासिष्ठेन भवितव्यम् अतस्तत्समानकल्पानामधिकारः । यएव कश्चित्स्तोमभागानधीयीत स एव वासिष्ठ इत्यवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वस्यानुज्ञानान्नावश्यंभावी वासिष्ठः । वैश्वामित्रो होतेति वचनात् हौत्रमवश्यं वैश्वामित्रेणैव कर्तव्यम् नच भिन्नकल्पानामधिकारोऽस्तीति स्थितमाद्ये । तस्माद्वैश्वामित्रस्य तत्समानकल्पानां च सत्रेऽधिकारः ॥

सत्र आहिताग्नेरेवाधिकाराधिकरणम् ॥ ५ ॥

**विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥ [सारस्वते च दर्शनात् ॥२८॥ प्रायश्चित्तविधानाच्च ॥ २९ ॥ साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥ स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥ संनिवापं च दर्शयति ॥ ३२ ॥]**

**अनाधातुश्च तत्किं वाधातुरेवाग्निमो यतः ॥ एकस्याग्निषु तत्सिद्धिर्न स्वाग्निष्वात्मनेपदात् ॥ ९ ॥**

किमनाहिताग्नीनामपि सत्रेष्वधिकारः अथाहिताग्नीनामेवेति संशयः । 'तत्राग्नीनां परार्थत्वाद्यस्य कस्यचिदग्निषु ॥ साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् ॥ औदुम्बरी च येनकेनचिद्यजमानेन

---

दित्यर्थः । **आर्त्विज्यमेवत्विति** । यजमानऋत्विक्शब्दयोर्भिन्नार्थयोः श्रुत्या सामानाधिकरण्याभावादेकस्य लक्षकत्वे जघन्यऋत्विक्शब्दस्य तत्कार्यपदार्थलक्षणामाश्रित्य तेषु यजमानाकर्तृत्वेन विधीयन्ते । नच ऋत्विक्शब्दः ऋतुयजननिमित्त इति मुख्यमेव सामानाधिकरण्यं संभवतीति वाच्यम् । वस्तुतः ऋत्विक्शब्दस्य ऋतुयजननिमित्तकत्वेऽप्यस्मिन्वाक्ये तत्परत्वे यजमानानां तत्सत्वेन विध्यनर्हतया वाक्यानर्थक्यापत्तेः । ये परार्थमृतौ यजन्ति तत्परतया मुख्यसामानाधिकरण्याभावात्, एवंच ऋतुयजननिमित्तेन ऋत्विजामेव सतां यजमानानाम् । ऋत्विग्विशेषकार्येषु परार्थेषु विधिरित्यर्थः ॥

**वासिष्ठानां वा ब्रह्मत्वस्य नियमात् ॥ २४ ॥** पूर्वत्र विशेषविचारात्सङ्गतिं सूचयति—**ब्राह्मणानामिति । सर्वेषामिति** । समुच्चयासंभवाद्वासिष्ठसमानकल्पानां वैश्वामित्रसमानकल्पानां वेत्यविशेष इत्यर्थः । द्वितीयपक्ष उपक्रममात्रं वचनद्वये सति वैश्वामित्रनिराकरणायोगादुपक्रमत्वादेवच सूत्रकारेण स एव पक्षः प्रथमनिर्दिष्ट इति ध्येयम् । **स्तोमभागानिति** । 'रश्मिरसि क्षयाय त्वे'त्यादिमन्त्रानित्यर्थः । **अनुज्ञानादिति** । नन्वनुज्ञानादित्युक्तेः ब्रह्मत्वस्य वासिष्ठकर्तृकत्वं मुख्यः कल्पः । अवासिष्ठकर्तृकत्वमनुकल्प इति प्रतीयते । भाष्ये तु वासिष्ठोपदेशस्तर्हि किमर्थ इति चेत् स्तोमभागप्रशंसार्थ इत्युक्तत्वाद्वासिष्ठकर्तृकत्वपक्ष एव नास्ति किंतु यो वा कश्चित्स्तोमभागान्वेद स एव ब्रह्मा भवेदिति स्तोमभागवित्कर्तृकत्वपक्ष एव प्रतीयते । तथाचेदं भाष्यविरुद्धमिति चेन्नैवम् । इहाप्येकस्यैव स्तोमभागवित्कर्तृकपक्षस्याङ्गीकारात् । अनुज्ञानादित्येतत्त्ववासिष्ठस्य निराकरणं नास्तीत्येतावन्मात्राभिप्रायमिति न कश्चिद्विरोध इति ॥

**विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥** पूर्ववत्सङ्गतिः । **परार्थत्वादिति** । यजमानसंस्कारार्थत्वे हि यदीयाग्नयस्तस्यैव संस्कारसिद्धिर्नान्येषामिति सर्वेषां संस्कारसिद्ध्यर्थं सर्वेपि चाहिताग्नयो भवेयुः नत्वेते संस्कारार्थाः । तथाच 'परार्थेष्वेको यजमानगण' इति न्यायेनौदुम्बरीसंमाननवद्यस्यकस्यचिदग्निषु कृतमपि कर्म सर्वेषां फलिष्यतीत्यर्थः ।

---

१ वचनात्. २ भागमधीयीत. ३ सत्राधिकारः.

संमिता, तस्माद्येनकेनचिदाहिताग्निना संहत्यानाहिताग्नयोऽप्यासीरन्। नैवम्। 'इष्टिपूर्वकता सोमविकाराणामवस्थिता॥ इष्टौ चानाहिताग्नीनां न कथंचिदधिक्रिया॥ आधातुरग्नयः कार्यं नान्येषां साधयन्ति च॥ उपग्रहविशेषेण कर्तुरेव फलान्वयात्॥' आदधीतेत्यात्मनेपदादाधातुरेवाधानफलेन भवितव्यम्। कर्मयोग्यता चाग्नीनां फलम्। अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति तस्मादनग्नीनामनधिकारः। यजमानसंमितौदुम्बरीति तु शास्त्रार्थो येनकेनचिदपि प्रकृतप्रयोगगतेन यजमानेन संपाद्यत इति वैषम्यम्॥

जुह्वादीनां साधारण्याधिकरणम्॥ ६॥

**जुह्वादीनामप्रयुक्तत्वात्संदेहे यथाकामी प्रतीयेत॥ ३३॥ [अपि वाऽन्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात्॥ ३४॥ प्रायश्चित्तमापदि स्यात्॥ ३५॥]**

जुह्वादयो यस्य कस्य कार्याः साधारणा उत॥ अविरोधादग्निमोऽन्त्यो मृतदाहे विरोधतः॥ १०॥

जुह्वादिपात्रेषु चिन्ता किं यस्यकस्यचित्पात्रैः सत्रं प्रयोक्तव्यं उतान्यानि साधारणान्युत्पाद्यानीति। तत्राग्निवदुपग्राहविशेषविरोधाभावाद्यस्य कस्यचित्पात्राणि भवेयुः। सत्यम्। अयं विरोधो नास्ति। किंतु 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च'[1] इति तथा 'दक्षिणे हस्ते जुहूमासादये'दित्यादिवचनैः पात्राणां दाहे गुणभावः सादनप्रतिपत्तिश्च विधीयते। तद्यदि कस्यचित्पात्रैरुपक्रान्ते प्रयोगे तस्य यजमानस्य दिष्टं गतिः स्यात्ततस्तस्य संस्कारः, पात्राणां च प्रतिपत्तिर्हीयेत। यदि तु तैर्दह्येत तदा प्रक्रान्तः प्रयोगो विगुणः स्यात्। तस्मात्साधारणान्युत्पाद्येरन्॥

विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणम्॥ ७॥

**पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात्॥ ३६॥ [लिङ्गाच्चेज्याविशेषवत्॥ ३७॥ न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना॥ ३८॥ इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत॥ ३९॥]**

सामिधेनीसाप्तदश्यं वैकृतं वैश्यगाम्युत॥ वर्णत्रयस्य वाद्योऽस्तु वैश्यकर्तृविधानतः॥ ११॥
प्रकृतौ पाञ्चदश्यस्य बाधकं वैश्य ईरितम्॥ विकृतौ त्रयगं वाक्यं त्रयोऽतोऽत्राधिकारिणः॥ १२॥

यास्विष्टिष्वध्वरकल्पादिषु 'सप्तदश सामिधेनीरनुब्रूया'दिति श्रुतं तासु किं वैश्यस्यैवाधिकारः।

---

सोमविकाराणामिष्टिपूर्वत्वेऽग्नीनामाधातृसंबन्धितयोपयोगित्वे च सिद्धेपि 'परस्यैर्वा एते स्वर्गं यान्ति येऽनाहिताग्नयः सत्रमासते' इति सारस्वतसत्रेऽनाहिताग्नीनामधिकारदर्शनात्सत्रमात्रेऽधिकार इति पूर्वःपक्ष इति ध्येयम्। वचनात्सारस्वतसत्रेऽधिकारेऽपि नान्यत्राधिकारः प्रमाणवानित्याशयेनाह—**नैवमिति**। इष्टिपूर्वकतेत्युपलक्षणम्। अग्निष्टोमपूर्वकतेत्यपि द्रष्टव्यम्। **अवस्थितेति**। प्रकृतौ विद्यमानाया अपि आधानपूर्वकताया आर्थिकत्वान्न विकारेषु निर्दिश्यते किंतु श्रुतत्वादिष्टिपूर्वकतैव। तेन सर्वेषां सोमविकाराणामिष्टिपूर्वकता नियतेति पञ्चमेऽवस्थितेत्यर्थः। **अत इति**। एवंचाहिताग्नय एव यस्य कस्यचिदग्निषु यजन्तामिति शङ्काया अप्यनवकाश इति भावः। सूत्रार्थस्तु—विहारस्याग्नीनामन्यदीयानामन्यस्योपकारे प्रभुत्वादनाहिताग्नीनामपि सत्रं स्यादिति॥

**जुह्वादीनामप्रयुक्तत्वा०॥ ३३॥** स्वार्थेनच प्रयुक्तत्वादित्यनेन सूत्रेणाग्नीनामाधानगतात्मनेपदादाधातृसंबन्धितयोपयोगित्वे उक्ते तद्व्यतिरेकेण पूर्वपक्षसौकर्यादिदमधिकरणमन्तरा प्रवर्तितमिति सूचयन्नाह—**तत्रेति**। अन्तरा मरणेऽन्यस्य जीवतः पात्राणि भवन्तु मध्ये साधारणानि वा संपाद्यन्तामिति भावः। दिष्टं गतिः मरणमित्यर्थः। **संस्कार इति**। नचाभिनवैरपि संस्कारः संभवतीति वाच्यम्। तेषां यज्ञसंबन्धाभावेन यज्ञपात्रशब्दस्य लक्षणाप्रसङ्गादिति भावः। **विगुणः स्यादिति**। पुरुषान्तरीयपात्रादाने मध्ये साधारणपात्रसंपादने च प्रयोगप्राशुभावो भज्येतेति भावः। सूत्रार्थस्तु—जुह्वादीनां स्वार्थेन प्रयुक्तत्वाभावात्तद्विषये यथाकामं प्रतीयेतेति॥

**पुरुषकल्पेन०॥ ३६॥** सत्रेऽनाहिताग्निवद्ब्राह्मणक्षत्रिययोर्नाध्वरकल्पादावधिकार इति प्रत्यवस्थानात्सङ्गतिः। आग्न-

---

१ उपग्राह. २ पात्रैश्च दहन्तीति.

अथ त्रयाणामपीति संशये दर्शपूर्णमासप्रकरणपठितेन 'सप्तदश वैश्यस्ये'ति वाक्येन साप्तदश्याङ्गत्वेन वैश्यो विधीयते कर्ता । नच प्रकृतौ साप्तदश्यमस्तीति यत्राध्वरकल्पादौ तद्विहितं तत्रैव वैश्यविधिस्तेन वैश्यकर्तृकसाप्तदश्याङ्गत्वादध्वरकल्पादौ वैश्यस्यैवाधिकारः । मैवम् । 'प्रकृतौ हि श्रुतं वाक्यं ततो नोत्कर्षमर्हति ॥ तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते ॥ तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकम् ॥ वैकृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते ॥ तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते ॥ तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥' इति शास्त्रदीपिकायां षष्ठाध्यायस्य षष्ठः पादः॥६॥

---

## षष्ठाध्याये सप्तमः पादः ।

विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

### स्वदाने सर्वमविशेषात् ॥ १ ॥ [यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥ २ ॥]

**सर्वस्वदाने पित्रादावपि तद्धन एव वा ॥ स्वत्वादाद्यः पितृत्वादावत्यागाद्धन एव तत् ॥ १ ॥**

विश्वजिति सर्वस्वं ददातीति श्रुतं तत्र किं ज्ञात्यादीनामपि स्वशब्दवाच्यानां दानमुत धनस्यैव यत्रास्य स्वामित्वमिति संशये सर्वेषां स्वशब्दवाच्यानां दानमविशेषात् । शक्यन्ते च पित्रादयोपि परैर्विधेयीकर्तुम्[1] । परस्वत्वापादनं च दानम् । अतः पित्रादयोऽपि देयाः । नैतदेवम् । नहि शक्यन्ते दातुम् । स्वत्वत्यागपूर्वकं हि परस्वत्वापादनं दानम । नच दीयमानोऽपि पिता नैअपिता भवति । यत्र तु प्रभुत्वयोगेन स्वशब्दप्रवृत्तिः[2] तच्छक्यं दातुम् । तस्मिन्हि दत्ते पूर्वस्य स्वामित्वं निवर्तते परस्य च स्वामित्वमुपजन्यते[3] । किंचायं स्वशब्दोऽपि भिन्नया शक्त्यात्मीयज्ञातिधनेषु वर्तते ।

---

यणपश्वादिरादिशब्दार्थः । **साप्तदश्याङ्गत्वेनेति** । यथा यजमानस्य याज्येति षष्ठ्या याज्याङ्गत्वेन यजमानो विधीयते तद्वदिति भावः । **वैश्यस्यैवेति** । तस्यैव साङ्गाध्वरकल्पोपसंहारसामर्थ्यादिति भावः । प्रकृतेः पाञ्चदश्यावरुद्धत्वात्तत्र साप्तदश्यविध्यसंभवमाशङ्क्याह—**तच्चेति** । नन्वेवमपि 'सप्तदशो वै वैश्य' इति वचनाद्वैश्यस्यैवाधिकारः स्यादित्याशङ्क्य प्राकरणिकवचनविरोधान्न स्थलान्तरीयार्थवादमात्रेण वैश्यमात्रकर्तृकत्वमित्यभिप्रेत्याह—**वैकृतैरिति** । अध्वरकल्पादिप्रकरणाम्नातैर्वाक्यैर्नियमतः क्रत्वङ्गतया साप्तदश्यं विधीयते तदुपसंहारसामर्थ्यं च सर्वेषामप्यस्तीति सर्वेषामधिकार इत्यर्थः । स्थिते चास्मिन्प्रकरणवशाद्वैश्यस्योद्देश्यत्वे प्रकरणानुग्रहान्नाराशंसकर्तृत्वेन वासिष्ठविधिरित्याशङ्कानिराकरणार्थं पादाद्यमित्यपुनरुक्ततेति तन्त्ररत्ने । सूत्रार्थस्तु—पुरुषविशेषकर्तृकत्वेनाम्नातसाप्तदश्यकल्पेन विकृतावध्वरकल्पादौ कर्तृनियमः स्यात्तस्याध्वरकल्पादेः साप्तदश्यगुणत्वादितरान्ब्राह्मणादीन्प्रति तदभावात् साप्तदश्याम्नानात् एकस्मिन्वैश्यएव विधिकात्स्न्यादनुष्ठेयसाकल्यात्सप्तदशो वैश्य इति लिङ्गाच्च वैश्यस्तोमवद्वैश्याधिकार इति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य षष्ठः पादः ॥ ६ ॥**

**स्वदाने सर्वमविशेषात् ॥ १ ॥** पूर्वेषु पादेषु एकपदपर्यालोचनादविशेषतः प्रसक्तस्याधिकारस्य पदान्तरवाक्यान्तरादिबलाद्व्यवस्था कथिता । इह तु यत्पदपर्यालोचनादविशेषतः प्रसक्तिस्तत्पदबलादेव विशेषे व्यवस्थाप्यते इति पादान्तरत्वमस्य सूक्ष्मत्वादानन्तर्यं च । **सर्वेषामिति** । धनमात्रस्य दानासंभवेनावश्यमात्मीयमेव धनमिह स्वशब्देन प्रतिपादनीयम् । तथासति चावश्यकत्वादात्मीयपर एवास्त्वात्मीयत्वं च ज्ञात्यादीनामप्यस्तीति तेपि देया इत्याशयः । **ननु** परंप्रति पितृत्वापादनाशक्त्या न परस्वत्वापादनं दानं संभवतीत्यत आह—**शक्यन्ते इति** । पितृत्वापादनासंभवेऽपि दासादिवद्विधेयतयैव परस्वत्वापादनसंभवान्नानुपपन्नं दानमित्यर्थः । **ननु** तथापि स्वत्वत्यागासंभवात्तत्त्यागपूर्वकं परस्वत्वापादनात्मकं दानं न संभवीत्याह—**परस्वत्वापादनमिति** । परस्वत्वापादनमेव दानं धने तु स्वत्वत्यागंविना परस्वत्वापादनासंभवादार्थिक एव स्वत्वत्यागो न ददात्यर्थः । कन्यादानपुत्रदानविद्यादानादौ स्वत्वत्यागासंभवादित्यर्थः । **स्वत्वत्यागपूर्वकमिति** । त्यागंविना व्यापारान्तराभावात्परस्वत्वापादनेऽपि दानव्यवहाराभावात्त्यागपूर्वकमेव परस्वत्वापादनं दानम् । कन्यादानादौ तु पराधीनत्वकरणादिना गौणो दानव्यवहारः। अतएव कन्या पितृव्यतिरिक्तस्य सकुल्यादेरपि कन्यादानेऽधिकारः स्मर्यमाण उपपद्यत इति भावः । **प्रभुत्वयोगेनेति** । स्वामित्वयोगेनेत्यर्थः । **भिन्नयेति** । नह्येकेनात्मीयत्वाकारेणैव ज्ञातिधनादिषु स्वशब्दप्रवृत्तिः संभवति अनात्मीयेऽपि धने ज्ञातौ प्रयोगादतो ज्ञातिधनात्मीयेषु भिन्नैव

---

१ विधेयाः कर्तुं. २ शब्दवृत्तिः. ३ जायते.

तत्रैकस्मिन्प्रयोगेऽस्यैक एवार्थः। तत्र धनस्य दानसंभवात्तद्विषय एव स्वशब्दः तस्माद्धनस्यैव दानं न पित्रादीनाम्॥

विश्वजिति भूमेरदेयत्वाधिकरणम्॥ २॥

**न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात्॥ ३॥**

देया न वा महाभूमिः स्वत्वाद्राजा ददातु ताम्॥ पालनस्यैव राज्यत्वान्न स्वं भूर्दीयते न सा॥ २॥

येयं महापृथिवी सेयं देया नवेति। सापि सार्वभौमस्य धनमिति मन्यमानो दानमाह नासौ कस्य चित्स्वं। राज्यं हि स्वविषयपरिपालनकण्टकोद्धरणभृतिवृत्तित्वेन कर्षकादिभ्यः करादानं दण्ड्येभ्यश्च दण्डादानमित्येतावान्संबन्धः नहि स्वामित्वम्। अतो न सार्वभौमो महापृथिवीं दद्यात् माण्डलिकश्च मण्डलम्॥

विश्वजित्यश्वादीनामदेयताधिकरणम्॥ ३॥

**अकार्यत्वाच्च ततः पुनर्विशेषः स्यात्॥ ४॥**

दानं केसरिणां नो वा, विहितप्रतिषेधतः॥ विकल्पः पर्युदासोऽयं ये यजामहनीतितः॥ ३॥

विश्वजित्येव 'न केसरिणो ददाती'ति हि श्रुतं तत्र केसरिणो दानं नेति विहितप्रतिषिद्धत्वात्पक्षे दानम्॥ पर्युदासस्त्वयमपि तु वाक्यशेषः स्यादित्यनेन न्यायेनायं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः॥

विश्वजित्यविद्यमानसर्वस्वदाननिराकरणाधिकरणम्॥ ४॥

**नित्यत्वाच्चानित्यैर्नास्ति संबन्धः॥ ५॥**

अर्जयित्वाऽपि किं सर्वं देयं यद्वा यदस्ति तत्॥ सर्वोद्देशविधेराद्यो न प्राप्ते सर्वताविधेः॥ ४॥

सर्वस्वं ददातीति किं यत्पुरुषोपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि तत्सर्वं ददातीति शास्त्रार्थः। ततश्च यस्यापि यन्नास्ति सोऽपि तदर्जयित्वा दद्यादुत यद्यस्य विद्यते तत्सर्वं ददातीति संशये यत्सर्वं स्वं तद्दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते। चोदकेन तु दानस्य प्राप्तत्वा-

---

शक्तिरित्यर्थः। **तत्रैकस्मिन्निति**। धनमात्रस्य दानासंभवादात्मीयत्वमर्थादेव लभ्यते। नतु तावता वाक्ये आत्मीयतापरः स्वशब्द इति भावः। **तस्मादिति**। तथाच धनेनैव विश्वजित्यधिकारो न ज्ञात्यादिनेति भावः॥

**न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात्॥ ३॥** वास्तुक्षेत्रादिदाने नास्ति विवादः। तेषु तत्पुरुषस्वत्वसद्भावादन्यथा धर्मशास्त्रे भूमिदानविधेर्निर्विषयत्वापत्तिरिति तद्व्यावर्तनार्थमाह—**येयं महापृथिवीति**। **सापीति**। करादानाद्युपयोगात्सार्वभौमः स्वामीति भावः। धनमित्यनेन पित्रादीनां धनत्वाभावाददानेपि भूमेर्धनत्वाद्दानं स्यादिति प्रत्यवस्थानात्सङ्गतिः सूचिता। धारणचंक्रमणादीनांसर्वपुरुषसाधारण्यात्सर्वपुरुषोऽपि महापृथिव्याः स्वामी सार्वभौमस्य तु परिपालकत्वात्करादानं न तावता स्वत्वेतु कश्चिद्विशेष इत्याह—**नहीति**। एवं ग्रामाधिपतिरपि कृत्स्नग्रामस्वामी गोष्पदादौ[3] हितस्यापि संचारमात्रेण स्वामित्वं तच्च सर्वसाधारणं तेन ग्रामदानविधिरपि गोपथव्यतिरिक्तप्रदेशविषय एवेत्याहुः॥

**अकार्यत्वाच्च ततः पुनर्विशेषः स्यात्॥ ४॥** इह स्वत्वादस्तु दानमिति प्रत्यवस्थानात्सङ्गतिः। केसरिणः केसराः सटास्तद्वतोऽश्वानित्यर्थः। **विहितेति**। सर्वस्वं ददातीति विधिना विहितेत्यर्थः। दशमाष्टमपादाद्यन्यायेन पर्युदासत्वेन केसरिव्यतिरिक्तं सर्वस्वं ददातीति तद्वाक्यशेषत्वान्नियमेनैवादानमिति सिद्धान्तमाह—**पर्युदास इति**। सूत्रार्थस्तु—अश्वादिदानस्याकर्तव्यत्वात्तत इतरधनादश्वादीनां पुनर्विशेषः स्यादिति॥

**नित्यत्वाच्च०॥ ५॥** पूर्ववदिह नास्ति पर्युदास इति प्रत्यवस्थानात्सङ्गतिः। सुवर्णरजतभिन्नं धनं कुप्यशब्दार्थः। **तत्सर्वमिति**। ततश्च सर्वविषयस्वकर्मकदानस्यैव क्रतूपकारत्वादविद्यमानमपि संपाद्य देयमित्यर्थः। **सर्वमेवेति**। नन्वस्मिन्पक्षे प्रकृतौ यानि द्रव्याणि देयानि तेषां सर्वताविधिरित्यभ्युपगमे प्रकृतौ च गौश्चाश्वेत्यादिना कतिपयद्रव्याणामेवाम्नानाद्भूम्यादेरनाम्नानात्तद्विषयाणि सर्वाण्यधिकरणान्यनुपपन्नानि स्युः। किंच यद्यस्य विद्यते तत्सर्वं देयमिति सिद्धान्तकोटिपर्यालोचनया सिद्धान्तेऽप्राकृतद्रव्यस्य दानमिष्टमिति गम्यते। प्राकृतेष्वेव द्रव्येषु सर्वताविधिरित्यभ्युपगन्तुं न

---

१ प्रतिषेधात्. २ पुरुषस्योप. ३ गोष्पथादावित्यर्थः.

धस्य यदस्ति स तस्मिन्द्वादशशतमात्रं दातुं प्रवृत्तः सन् सर्वमेव दद्यादिति सर्वता विधीयते। किंचायं सर्वशब्दः प्रसिद्धस्वत्वेष्वेव सर्वेषूपपन्नत्वान्नासिद्धस्वत्वानामाक्षिपत्यर्जनम्। तस्मान्नार्जयित्वा देयम् ॥

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणम् ॥ ५ ॥

**शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥**

**धर्मार्थसेवकः शूद्रो देयो नो वा, स दासवत् ॥ देयोऽस्वत्वात्पराधीनत्वाभावाच्च न दीयते ॥ ५ ॥**

धर्मार्थं परिचारकत्वेन यजमानमुपस्थितो यः शूद्रः स किं देयो न वेति सर्वशब्दानुग्रहात्परविधेयीकरणसंभवाच्च देयः। स्वत्वाभावादनिच्छया परवश्यत्वानभ्युपगमसंभवाच्चादेयः। दासस्तु देय एव ॥

विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयताधिकरणम् ॥ ६ ॥

**दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥**

**भूतं भावि च देयं स्यात्कालेऽवस्थितमेव वा ॥ आद्यः सर्वश्रुतेरन्त्योऽसंभवादन्ययोस्तदा ॥ ६ ॥**

किं दक्षिणाकालात्प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयं यदपि भावित्वेन निश्चितं तदसदपि देयमुत यद्दक्षिणाकालेऽवस्थितं तदेव देयमिति संशये सर्वशब्दानुग्रहाय भूतभाविनोरपि दानम् दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारणप्रयुक्तिः। भाविनश्च तदानीं स्वत्वाभावादशक्यमेव दानम् ॥

विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधिकरणम् ॥ ७ ॥

**अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥ [अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषं तु समञ्जसादानेन शेषकर्म स्यात् ॥ ११ ॥ नादानस्य नित्यत्वात् ॥ १२ ॥ दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात् ॥ १३ ॥]**

**दक्षिणाक्रतुभुक्त्यर्थं त्रयं देयमुतेष्टये ॥ शिष्टाऽथवा दक्षिणार्थमेवाद्यः सर्वशब्दतः ॥ ७ ॥**
**क्रतुशेषस्तदा बाध्यः प्रधानत्वादबाधनात् ॥ मध्योऽन्त्यो दक्षिणार्थस्यानुवादात्सर्वताविधेः ॥ ८ ॥**

प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनबलाद्व्यवस्थापितम्—इदं मे भक्षार्थमिदं

---

शक्यते किंतु प्रकृतितः प्राप्तदाने प्राकृताप्राकृतौदासीन्येन द्रव्यमात्रस्य सर्वता विधीयते इति वक्तव्यम्। तथासति असतो द्रव्यस्य निवारणमशक्यमिति चेन्मैवम्। द्रव्यमात्रस्य सर्वताविधानेपि प्रकृतौ विद्यमानस्यैव दानदर्शनात् इहापि विद्यमानस्यैव सर्वता भवति नाविद्यमानस्येत्यङ्गीकारात्। तदुक्तं तन्त्ररत्ने 'विद्यमानस्य च दानं प्राप्त'मिति तस्यैवेयं सर्वता विधीयते। इहापि ग्रन्थे यस्य यदस्तीत्युपक्रम्य सर्वता विधीयते इत्युक्तेर्विद्यमानस्यैव सर्वताविधिरिति स्पष्टं प्रतीयत इति न काप्यनुपपत्तिः। अस्तु वा धनमात्रस्य दानविधिस्तथापि धनमात्रस्य दानासंभवादात्मीयस्यैव दानं वाच्यम्। तथाचासतोऽनात्मीयत्वान्नास्ति दानमित्याह—**किंचेति**। सूत्रार्थस्तु—दानस्य नित्यत्वादर्जनीयानां द्रव्याणां कदाचिदलाभेनानित्यत्वाच्च तैर्दानस्यास्ति संबन्ध इति ॥

**शूद्रश्च धर्मशास्त्रत्वात्** ॥ ६ ॥ धर्मशासनार्थमुपनतस्य शूद्रस्य तदानीं विधेयतया स्वत्वसद्भावाद्दानं स्यादिति प्रत्यवस्थानात्सङ्गतिः। **स्वत्वाभावादिति**। स्वस्य धर्मशिक्षार्थं शिश्रीषामात्रं स्वयमेवाङ्गीकृतवानित्येतावता नासौ कस्यचित्स्वमित्यर्थः। ननु तर्हि शिश्रीषुवद्दासस्याप्यनिच्छासंभवान्न दानं स्यादित्यत आह—**दास इति**। तस्य परतन्त्रतयाऽनिच्छा न युक्तेति भावः। सूत्रार्थस्तु—शूद्रश्च न देयः धर्मशास्त्रत्वात्। धर्मशासनार्थमुपनतत्वादिति यावत् ॥

**दक्षिणाकाले०** ॥ ७ ॥ **प्रागिति**। क्रतुकर्तव्यताध्यवसायानन्तरमिति शेषः। **सर्वशब्देति**। भाविनोऽवश्यंभावनिश्चयवदेव स्वत्वं, सतिच स्वत्वे देशान्तरस्थस्यैव दानमुपपद्यत इति पूर्ववदिह सर्वशब्दस्वारस्यं न परित्याज्यमित्यर्थः। **धारणेति**। धारणयत्नं विनापि शास्त्रोपपत्तौ धारणे मानाभावादिति भावः। **भाविन इति**। निश्चितस्यापि दैवान्मानुषाद्वा विघ्नसंभवान्निश्चयस्य स्वत्वोपायत्वेनापरिगणनाच्चेति भावः ॥

**अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात्** ॥ ८ ॥ इह त्रिविधस्यापि स्वत्वेन भाविवैषम्येण प्रत्यवस्था-

---

१ तदन्ते.

क्रत्वर्थमिदं दक्षिणार्थमिति । तत्र यद्दक्षिणार्थं तन्मध्ये द्वादशशतं दत्तं इह तु किं त्रिविधमपि दातव्यं कर्मशेषं चोत्स्रष्टव्यमुत यावता क्रतुशेषं निर्वर्तते तावच्छिष्टान्यत्सर्वं देयमुत यद्दक्षिणार्थं निहितं तदेव सर्वं देयमिति संशयः । 'प्रत्यक्षवचनादिष्टसर्वदानविरोधतः ॥ चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् ॥ किंचित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥ दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनूद्य तु ॥ विधेयं सर्वतामात्रं लाघवं हि तथा विधेः ॥'

अहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

**अहर्गणे च तद्धर्मो स्यात्सर्वेषामविशेषात् ॥ १४ ॥ [द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥ अतद्गुणत्वात्त नैवं स्यात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥]**

विश्वजित्यष्टरात्रादौ किं शतं द्वादशाधिकम् ॥ सर्वं वाद्यश्चोदकोक्तेरन्त्यो नामातिदेशतः ॥ ९ ॥
एतद्भाष्ये वार्तिके तु सप्ताहानुजिघृक्षया ॥ आद्यः सिद्धान्तितः प्राप्तिमात्रत्वेनेदमीरितम् ॥ १० ॥

अस्त्यष्टरात्रोऽहीनः, तस्य विश्वजित् प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित् । तत्र विश्वजिति संशयः किं द्वादशशतं दक्षिणा स्यादुत सर्वस्वं दक्षिणेति । तत्र—'गणेषु द्वादशाहस्य विध्यन्तः स्थापयिष्यते ॥ द्वादशं च शतं ज्योतिष्टोमात्तत्रातिदिश्यते ॥ विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी ॥ नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा ॥' इदं च प्राप्तिमात्रपरमधिकरणं प्राप्तं विश्वजिति सर्वस्वं बाधित्वेतरेषां सप्तानामह्नां द्वादशशतदक्षिणानां भूयसां साधर्म्याद्द्वादशशतमेव देयमेकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक्पृथक् प्रदातव्या । तस्माद्भूयोनुग्रहाय द्वादशशतमेव देयम् ॥

विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥ ९ ॥

**विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥ [अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥]**

न्यूनेऽप्युक्तशतात्किं स्यात्सर्वताधिक एव वा ॥ संभवादग्रिमोऽन्त्यः स्यादानन्त्ये सर्ववर्णनात् ॥ ११ ॥

सर्वस्वदान एव संशयः किं यस्य द्वादशशतान्न्यूनं धनं सोऽपि तावन्मात्रं सर्वस्वं दत्वाधिक्रियते

---

नात्सङ्गतिः । सर्वताविधेः आत्मीयस्वमात्रगोचरतया भागत्रयसाधारण्यमित्याशयेनाह—**प्रत्यक्षेति** । **चोदकावगतमिति** । नच सर्वसोमयागाभ्यासानां प्रधानत्वात्प्रधानस्य वैकृतवाक्यविधेयत्वात्कथं चोदकावगम्यत्वमिति वाच्यम् । 'विश्वजिता यजेते'ति यागमात्रं श्रूयते नाभ्यासः । चोदकादैन्द्रवायवादिदेवताकग्रहणादिप्राप्त्या त्वभ्यासंविना तदुपसंहाराशक्तेश्चोदकादिनैवाभ्यासकल्पना । तथाच प्रत्यक्षसर्वस्वदानविधिबलाद्दक्षिणादानात्परस्य कर्मशेषस्य लोपे अर्थात्तत्पूर्वं कर्तव्याभ्यासमात्रे वैकृतविधेः पर्यवसानमिति पूर्वपक्ष्यभिमानादिति भावः । दक्षिणापेक्षया इतराङ्गानामपि प्राधान्याद्दक्षिणानुसारेणाङ्गकलापशेषलोपो न युक्तः । प्रमाणबलाबलात्प्रमेयबलाबलं ज्याय इति शिष्टाकोपे पूर्वं प्रतिपादितत्वादिति पक्षान्तरमाह—**प्रधानत्वादिति** । अत्यन्ताप्राप्तदानके भागान्तरेऽपि सर्वताविधौ विधिबलादेव तत्र दानप्रवृत्त्या विधेर्गौरवं स्यादिति यज्ञार्थनिर्दिष्टभागमात्रगोचरत्वं तस्येति सिद्धान्तमाह—**दक्षिणार्थेनेति** । सूत्रार्थस्तु—कर्मणो द्रव्याधीनसिद्धिकत्वादशेषत्वात्कर्मशेषलोपात्तदन्तं दक्षिणादानान्तं स्यादिति । यद्वा शेषत्वाद्द्रव्यशेषत्वाभावादिति ॥

**अहर्गणे च तद्धर्मो स्यात्०** ॥ १४ ॥ एकाहविश्वजिति सर्वस्वदानेऽहर्गणान्तर्गतेऽपि तथेतिप्रत्यवस्थानात्सङ्गतिः । **अभिप्लव इति** । 'ज्योतिर्गौरायुरायुर्गौर्ज्योति'रिति षडहानीत्यर्थः । **स्थापयिष्यत इति** । 'गणेषु द्वादशाहस्ये'त्यष्टम इति शेषः । **अतिदिश्यत इति** । इदंच द्वादशाहदक्षिणोपलक्षणपरमन्वहं द्वादशशतं ददातीत्यादीनां बहूनां दक्षिणाकल्पानां द्वादशाह आम्नानेन ज्योतिष्टोमातिदेशासंभवादिति ध्येयम् । **ननु** विश्वजितस्तदितरेषामह्नां च दक्षिणाभेदो न संभवति चिकीर्षितप्रयोगाङ्गत्वाद्दक्षिणायाः प्रयोगस्य च गणगोचरस्यैकत्वादेकैवात्र दक्षिणा । नच सा सर्वस्वात्मिका संभवति । तथात्व इतरेषां सप्तानां धर्मबाधप्रसङ्गात्, मुख्यापेक्षया भूयसामेव प्राबल्यमिति द्वादशे वक्ष्यमाणत्वात् । नच मुख्यप्राबल्यं क्त्वाचिन्तयेति वाच्यम् । तथापि चोदकापेक्षया नामप्राबल्यस्य सप्तमे वक्ष्यमाणत्वेन तत एव गतार्थत्वादित्यत आह—**इदं चेति** । वस्तुतो नामप्राबल्यात्सर्वस्वप्राप्तिरस्तीत्येवं प्रतिपादनमात्रेऽस्य तात्पर्यमित्यर्थः । **सूत्रार्थस्तु—अहर्गणे विद्यमानोऽपि** विश्वजित् सर्ववेदसधर्मयुक्तः सर्वेषां विश्वजितामविशेषादिति ॥

**विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥** यथा सर्वविश्वजितामविशेष एवं सर्वस्वदाने सर्वपुरुषाणामविशेष इति

उत यस्याधिकं स एवेति । 'तत्र न्यूनेऽधिके वापि सर्वशब्दोपपत्तितः ॥ उभयोरधिकारः स्यान्न न्यूनाधिकदायिनोः ॥ इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते ॥ तत्र चानतिसिध्यर्थमधिकं सर्वमीरितम् ॥' ज्योतिष्टोमे हि द्वादशशतं विधाय पश्चादुक्तं 'यद्येतावता ऋत्विजो न नमेयुरपि सर्वस्वेने'ति द्वादशशतादसिद्धां चानतिं ततोऽधिकमेव सर्वस्वं साधयितुं शक्नुयात् न न्यूनमतः प्रकृतौ तावद्द्वादशशताधिकमेव सर्वस्वं, यच्च प्राकृतं तस्यैव नियममात्रमिह क्रियते । तस्मादधिकदानेनैवात्राधिकारः ॥

अपरिमितशब्दस्य संख्यान्तरत्वाधिकरणम् ॥ १० ॥

**अपरिमाणे शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥ [कल्पान्तरं वा तुल्यवत्प्रसंख्यानात् ॥ २२ ॥]**

देयैका षद्शतं वाऽपरिमितं त्विति वारयेत् ॥ एकादिकां पूर्वसंख्यां यद्वा संख्यान्तरे विधिः ॥ १२ ॥
नञ्प्रयोगान्निषेधः स्याद्व्युत्पत्त्या मानशून्यता ॥ रूढ्या बहुत्वं नैकादिनिषेधोऽन्यविधिस्ततः ॥ १३ ॥

आधाने श्रुतं 'एका देया षट् देया द्वादश देयाश्चतुर्विंशति र्देयाः शतं देयं सहस्रं देयं अपरिमितं देय'मिति । तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेधः उतायमपि संख्यान्तरविधिरिति संशयः । तत्रावयवव्युत्पत्त्या परिमाणशून्यमुच्यते । नच परिमाणशून्यस्य दानं संभवति । अतः प्रकृतपरिमाणशून्यमुच्यते, ततस्तस्य प्रतिषेधः । उच्यते—बह्वर्थवचनोऽयं समुदायप्रसिद्ध्या । साचावयवप्रसिद्धेर्बलीयसी । नचालब्धात्मिका रूढिः । निर्ज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमितशब्दप्रयोगात् । तस्मादयमपि संख्यान्तरविशिष्टो दानविधिः ॥

अपरिमितशब्देन सहस्राधिकग्रहणाधिकरणम् ॥ ११ ॥

**अनियमोऽविशेषात् ॥ २३ ॥ [अधिकं वा स्याद्बह्वर्थत्वादितरेषां संनिधानात् ॥ २४ ॥ अर्थवादश्च तद्वत् ॥ २५ ॥]**

अर्वागपि बहुत्वं तत्सहस्रादूर्ध्वमेव वा ॥ संभवादग्रिमोऽन्त्यः स्यात्सहस्रानन्तरोक्तितः ॥ १४ ॥

बहुत्वविधिरपरिमितशब्द इति स्थितं किं तत्सहस्रान्न्यूनमधिकं वा उताधिकमेवेति संशये अर्वागपि बहुत्वसंभवादनियमः । नैवम् । 'आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् ॥ तस्यानन्तरनिर्देशात्सहस्रादधिकस्ततः' ॥

इतिहसेत्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम् ॥ १२ ॥

**परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ [तद्युक्ते च प्रतिषेधात् ॥ २७ ॥ निर्देशाद्वा तद्धर्मः स्यात्पञ्चावत्तवत् ॥२८॥ विधौ तु वेदसंयोगादुपदेशः स्यात् ॥२९॥ अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥३०॥]**

माषान्मे पचतेत्येतद्वार्ष्णिष्वेवाखिलेषु वा ॥ उक्तेर्विधेश्च तौ पक्षौ कृत्वाचिन्तार्थवादतः ॥ १५ ॥

दर्शपूर्णमासयोः श्रुतम् 'इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचते'ति स विधिरुतार्थवाद

---

प्रत्यवस्थानात्सङ्गतिः । तत्र न्यून इति वचनस्य बहुविषयत्वायापूर्वविधिरस्त्वित्याशयः । नियमविधिसंभवेऽपूर्वविध्ययोगान्न्यायागतं सर्वविषयत्वमपि न दोष इति सिद्धान्तमाह—**इदं तु प्रकृतेरिति** । सूत्रार्थस्तु—सर्वस्वधर्मः प्रकृतिविकारः सन्नुभयतो न्यूनेऽधिके च स्यादविशेषादिति ॥

**अपरिमाणे०** ॥ २१ ॥ अत्र यथा सर्वस्वं ददातीति नापूर्वविधिः एवमिह न संख्यान्तरविधिरिति प्रत्यवस्थानात्सङ्गतिः । **अवयवेति** । तत्परिमाणविरहादेवाज्ञातपरिमाणं भवति । तद्गताज्ञातपरिमाणत्वगुणयोगादेव बहुष्वपि प्रयोगोपपत्त्या नास्ति रूढिरिति भावः । **नचेति** । अशक्यत्वादिति भावः । एवंच परिमाणशून्यस्य दानासंभवान्नञः परिमितशब्देनान्वयासंभवात् 'असूर्यंपश्या राजदारा' इत्यादिवदसमर्थसमासमप्याश्रित्याख्यातेनैवान्वयात्प्रकृतस्यैकादिपरिमाणस्यात्र निषेध इत्याह—**अत इति** । ततश्चैकादिपरिमाणस्य विहितप्रतिषिद्धत्वाद्विकल्प इति भावः । अपरिमितमस्य धनमित्यादौ निर्ज्ञातपरिमाणेऽपि प्रयोगात्र पूर्वोक्तरीत्या गौणत्वं संभवति तेन कुशलप्रवीणाश्वकर्णादिवद्रूढिरेवेत्याह—**निर्ज्ञातेति** । सूत्रार्थस्तु—अपरिमाणे श्रूयमाणे शिष्टस्यैकादेर्या संख्या एकत्वादिका तत्प्रतिषेधः स्यादिति ॥

**अनियमोऽविशेषात्** ॥ २३ ॥ पूर्वोक्ते विशेषविचारात्सङ्गतिं सूचयति—**बहुत्वेति** । **अर्वागपीति** । विनाकारणं पूर्वापेक्षया संकोचायोगादिति भावः । बहुत्वस्य स्वत आपेक्षिकत्वात्तदपेक्षानुसारादावश्यके संकोचे सन्निहितसहस्रापेक्षयाधिकं बहुत्वं ग्राह्यमित्याह—**आपेक्षिको हीति** ॥

**परकृतिपुराकल्पं०** ॥ २६ ॥ **पचतेति** । भोजनार्थमिति शेषः । **विधिरिति** । औपवसथ्येहनि आरण्यभो-

---

१ ततो न्यूने. २ सुज्ञातपरि. ३ शब्दे प्रयोगात्तस्मादयमपि इति स्थितं.

इति संशये 'विधिरर्थवत्त्वाद्वादमात्रं ह्यनर्थकं' इत्येतदुदुम्बराधिकरणपूर्वपक्षे स्थितं तमेव पूर्वपक्षं मनुष्यधर्मः स्यादिति स्मारयित्वा कृत्वाचिन्तयाधिकारश्चिन्त्यते यदा विधिस्तदा किं वृष्णिगोत्राणामुत सर्वपुंसामिति। वार्ष्णिकर्तृकत्वसंस्तवात्तद्गोत्राणामेव स्यात्। मैवम्। स्तुत्यस्य विधिर्न स्तुत्युपाधेः। अत्र च न वार्ष्णिकर्तृको माषपाकः स्तूयते अन्यस्य स्तावकस्याभावात्, किंतु वार्ष्णिकृतत्वेन कारणेन माषपाकस्य स्तुतिः। अतो माषपाकमात्रविधानात्सर्वपुंसामधिकारः स्यात्। अर्थवादो वेति कृत्वाचिन्तोद्घाटनम्॥

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणम्॥ १३॥

**सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु॥ ३१॥ [अपि वा तदधिकारान्मनुष्यधर्मः स्यात्॥ ३२॥ नासामर्थ्यात्॥ ३३॥ संबन्धादर्शनात्॥ ३४॥ स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात्॥ ३५॥ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात्॥ ३६॥ विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः॥ ३७॥ संवत्सरो विचालित्वात्॥ ३८॥ सा प्रकृतिः स्यादधिकारात्॥ ३९॥ अहानि वाऽभिसंख्यत्वात्॥ ४०॥]**

सहस्रवत्सरं सत्रं गन्धर्वादेर्नृणामुत॥ रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः॥ १६॥
तदायुर्वाऽथ सार्धद्विशतानामुत मासगा॥ वत्सरोक्तिरुत द्वादशरात्रेषु दिनेषु वा॥ १७॥
आद्यो दीर्घायुषः सत्त्वान्नृणामेवाग्निसंभवे॥ द्वितीयोऽस्तु रसस्यायुरहेतुत्वे तृतीयकः॥ १८॥
कृत्स्नकर्तुः फलित्वेऽस्तु तुर्योऽर्थासंभवे सति॥ पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि॥ १९॥
षष्ठोऽस्तु यो मास एव संवत्सर इतीरणात्॥ सहस्रमासा नाधानादूर्ध्वं चेदस्तु सप्तमः॥ २०॥
वत्सरप्रतिमा द्वादश रात्रय इति श्रुतेः॥ न रात्रिष्वब्दशब्दोऽत्र प्रतिमाया विशेषणात्॥ २१॥
स्वारस्यात्रिवृदाद्युक्तेरष्टमः पक्ष इष्यते॥ त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते॥ २२॥
नाहःसंघस्ततोऽहःसु गौणी संवत्सराभिधा॥ तस्माद्विश्वसृजां सत्रं सहस्रदिनमिष्यते॥ २३॥

'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशाः विश्वसृजामयनं सहस्रसंवत्सर'मिति किमस्मिन्सत्रे ये गन्धर्वादयः सहस्रायुषस्तेषामधिकार उत मनुष्याणामेव। यदा मनुष्याणां तदा किं रसायनादिसंपादितसहस्रायुषामुत कुलकल्पः, उत विश्वसृजामयनं कुर्वतां सहस्रायुष्ट्वम्, अथवार्धतृतीयानां शतानामधिकारः, उत मासेषु

---

जनादिना सह विकल्पितमाषभोजनस्य विधिरित्यर्थः। ननु सर्वेषां विधिसरूपाणामर्थवादत्वमौदुम्बराधिकरण एवोक्तमिह तद्व्युत्पादनं पुनरुक्तमित्याशङ्क्य नेह विधिरिति पूर्वपक्षं कृत्वाऽर्थवादो व्युत्पाद्यते किंतु विधित्वपक्षे चिन्तान्तरं क्रियत इति नोक्तदोष इत्याह—**स्थितमिति। वार्ष्णिकर्तृकत्वेति।** तत्कर्तृकत्वसंस्तवात्कल्प्यमानो विधिस्तन्मात्रविषयो भवतीति भावः। ततश्चापरिमितशब्दवदिहापि नाविशेष इति प्रत्यवस्थानात्सङ्गतिः। वृष्णिकर्तृकत्वं स्तावकत्वेनोपात्तं न स्तुत्यं भवितुमर्हतीति तेन विशिष्टपुरुषाचरितत्वेन माषपाकमात्रमेव स्तोतव्यमिति तत्कल्प्यविधेः सर्वविषयत्वमितरथा बटकुवार्ष्णिव्यतिरिक्तवृष्णिगोत्रविषयत्वमपि न स्यादित्याह—**मैवमिति। अर्थवादो वेति।** 'अर्थवादो वा विधिशेषत्वा'दिति सूत्रेणारण्याशनविधिशेषत्वादर्थवादः जर्तिलयवागवादिवदिति कृत्वाचिन्तोद्घाटनमित्यर्थः। सूत्रार्थस्तु—'इतिहस्माह बटकुवै'त्यायेककर्तृकमुपाख्यानं परकृतिः। 'उल्मुकैः सह पूर्वे समाजग्मुस्तानसुरा रक्षांसि निजघ्नु'रित्यादिकमनेककर्तृकोपाख्यानं पुराकल्पः। तदिदं द्वयमपि मनुष्यधर्मः मनुष्यधर्मत्वेन विधेयं स्यात् तथासति तत्कीर्तनं प्रयोजनाय भवतीति। यद्यपि पुराकल्पोदाहरणे कृत्वाचिन्ता नास्ति तथापि 'ग्रहपतेरेवाग्निषु निर्मथ्य निर्वपेरग्नि'ति विध्यन्तरशेषत्वादग्निसंसर्गस्तुत्यर्थमुल्मुकसंसर्गनिन्देति निन्दा कल्प्या। निषेधबलेन पूर्वपुरुषाचरितत्वेन वा विधिः कल्पनीय इत्येव विधित्वार्थवादत्वप्रकारमात्रेसारूप्येण सूत्रभाष्ययोः सहोदाहरणम्। नच विधित्वे किं केवलमनुष्यधर्मः उत सत्रप्रकरणात्क्रतुयुक्तपुरुषधर्मः केवलक्रतुधर्मो वेति तत्रापि चिन्तान्तरं संभवतीति वाच्यम्। निवीताधिकरणेन गतार्थत्वादिति। तदुक्तं न्यायसुधायां—न तु पुराकल्पोदाहरणे कृत्वाचिन्ता काचिदस्तीति॥

**सहस्रसंवत्सरं०॥ ३१॥** पूर्वत्र वृष्णिगोत्राणामेवेति नियमाभावेपि इह गन्धर्वाद्यधिकारनियमोऽस्तीति प्रत्यव-

---

१ सर्वेषामिति. २ कारणेन माषपाकः स्तूयते.

संवत्सरत्वमाश्रित्य सुखेनैवायं मनुष्याधिकारः, उत द्वादशरात्रिषु संवत्सरशब्दः, उत दिवसेष्विति पक्षाः। तत्र मनुष्याणां सहस्रायुष्ट्वासंभवाच्छ्रुतिबलाद्गन्धर्वाधिकारस्तेषां त्वग्न्युपसंहारासामर्थ्यान्मनुष्याणामेव रसायनलब्धसहस्रायुषां। रसायनस्यैतावदायुःसंपादनासामर्थ्यात् 'शतायुः पुरुष' इति श्रुतेः कुलकल्पः 'शास्त्रफलं प्रयोक्तरी'ति न्यायात् समग्रकर्मानुष्ठायिनां फलं न विकलानुष्ठायिनाम्। अतो न कुलकल्पः। सत्रारम्भादेव तु सहस्रायुष्ट्वं कल्प्यतामितीदमप्यर्थासंभवादेवानुपपन्नम्। तस्मात्पञ्चपञ्चाशत इति यजमानाभिप्राया संख्या। एकोऽपि त्रिवृत्स्तोमकयागयुक्तः संवसरः पञ्चपञ्चाशत्संख्याकैः प्रत्येकं कर्तव्यभूतैः संबध्यमानस्तत्संख्यो भवति, तथा पञ्चदशादयोपीति। तेन चतुःसंवत्सरमिदं सत्रमर्धतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसंवत्सरमिति कथ्यते। अयमपि पक्षोऽयुक्तः बुद्धावत्यन्तमनारूढः 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीर'न्निति वचनविरुद्धो दुरभ्युपगमः। तस्मात्संख्याशब्दं संवत्सरशब्दं वा गौणमाश्रित्यात्र मनुष्याधिकारः समाश्रयितव्यः। तत्रापि संख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः। संवत्सरपदं तु जघन्यत्वात्सौरचान्द्रमसाद्यनेकार्थसाधारणत्वेन चार्थनिश्चयासामर्थ्याद्गौणं भवति। तत्र यो मासः स संवत्सर इति दर्शनान्मासेषु (तत्राप्यशक्तिस्तदवस्थैव। नह्याधानादूर्ध्वं सहस्रमासं जीवनं संभवति तस्मात् 'संवत्सरप्रतिमा वै द्वादशरात्रय' इति प्रयोगाद्द्वादशरात्रिषु संवत्सरशब्दः। प्रतिमाविशेषणं त्वत्र संवत्सरशब्दः। न तस्य द्वादशरात्रिषु प्रयोगः। तस्मात्त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु संवत्सरशब्दः। 'त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते॥ नाहःसङ्ख्यस्ततोऽहःसु गौणी संवत्सराभिधा॥' इति श्रीशास्त्रदीपिकायां षष्ठाध्यायस्य सप्तमः पादः॥ ७॥

---

स्थानात्संगतिः। **श्रुतिबलादिति**। संवत्सरशब्दस्य दिवसपरत्वे लक्षणाप्रसङ्गाच्छ्रुतिबलादेवाग्न्याद्यभावेऽप्यधिकारः कल्प्यस्तेषां च पुराणादितोऽधिकायुष्ट्वमिति भावः। कल्पनावश्यंभावेऽग्न्युपसंहारानुगुण्याद्रसायनादेस्तादृगायुःकल्पनमेव न्याय्यमित्याह—**अग्न्युपसंहारेति**। **असामर्थ्यादिति**। रसायनादेरप्यारोग्यहेतुत्वमात्रं दृष्टं न त्वायुर्वृद्धिहेतुत्वमपि लोके कुत्रापि तथात्वाभावादित्यर्थः। **ननु** वैद्यके रसायनस्याधिकायुर्हेतुत्वमङ्गीक्रियत इत्याशङ्क्य श्रुतिविरोधात्तत्कीर्तनमर्थवादमात्रमित्याशयेनाह—**शतायुरिति**। **कुलकल्प इति**। येनारब्धं तत्पुत्रादिभिः समापनीयमित्यर्थः। तर्हि 'शास्त्रफलं प्रयोक्तरी'ति न्यायानुगुणत्वात्सत्रानुष्ठानमात्रेण तदनुष्ठातॄणां फलं कल्प्यतामिति पक्षान्तरमाह—**सत्रारम्भादिति**। **असंभवादिति**। मानाभावात्सत्रविधेरन्यथाप्युपपत्तेरिति भावः। **यजमानेति**। एवंच 'पञ्चपञ्चाशतो यजमानास्त्रिवृत्स्तोमकसोमयागमेकं संवत्सरं पञ्चदशस्तोमकमेकं संवत्सरं सप्तदशस्तोमकमेकं संवत्सरमेकविंशस्तोमकमेकं संवत्सरमुपेयु'रिति वाक्यार्थो विवक्षितस्तथाप्येकैकसंवत्सरः पञ्चपञ्चाशत्संख्यैः यजमानैः संबन्धात्स्वयमपि तावत्संख्य इति चतुर्णामपि संवत्सराणामेवं पञ्चपञ्चाशत्संख्यात्वे सहस्रवत्सरमुपपद्यते। एकस्यैव त्रिवृत्संवत्सरस्य तावत्संबन्धेन तत्संबन्धप्राप्तबहुत्वानुवादः। त्रिवृतः संवत्सरा इति बहुवचनमिति भावः। **अर्धतृतीयैरिति**। तृतीयमर्धमेव न पूर्णमित्यर्धाधिकद्विशतसंख्याकैरित्यर्थः। **अयुक्त इति**। त्रिवृत्संवत्सरशब्दसमानाधिकृतस्य पञ्चपञ्चाशच्छब्दस्य यजमानसंख्यार्थकत्वायोगादिति भावः। **बुद्धाविति**। यजमानस्यात्रानुपात्तत्वेन तद्गतत्वेन संख्याबुद्धिर्न संभवतीत्यर्थः। तस्मात्संख्यासंवत्सरशब्दयोः सामानाधिकरण्यमेव न्याय्यमित्याशयेनाह—**तस्मादिति**। **मासेष्विति**। विश्वसृजामयनप्रकृतौ गवामयने मासानां संख्येयत्वदर्शनाद्विकृतसंख्यायाः प्राकृतमासगतसंख्यावदाम्नानौचित्यादिति भावः। **नहीति**। उपनयनाध्ययनदानप्रतिग्रहपुत्रजननोत्तरकालत्वादाधानस्येति भावः। **आधानादूर्ध्वमिति**। सोमादूर्ध्वमित्यर्थः। **इष्टप्रथमयज्ञानामेव सत्राधिकारात्**। **प्रयोगादिति**। तथाच प्रसिद्धिप्राचुर्यात्तत्परत्वमित्यर्थः। **ननु** द्वादशसु रात्रिषु प्रयोगाभावेऽपीहैव तत्परत्वमस्तु यथान्यत्र प्रयोगाभावेऽपि दिवसपरत्वं तद्वदित्यत आह—**तस्मादिति**। तत्र त्रिवृदादिशब्दानां स्तोत्रीयासंख्यावाचकानां द्वादशरात्रिष्विव दिवसेऽपि लक्षणातौल्यात्कथं सामञ्जस्यमित्याह—**त्रिवृदादिपदैरिति**। त्रिवृदादियुक्ते दिवसे लक्षणा तत्सङ्घे तु लक्षितलक्षणेत्यस्ति विशेष इत्यर्थः। **ननु** सर्वत्र पञ्चाशच्छब्दः संख्याप्रधानः नतु संख्येयप्रधानस्तथा सति पञ्चाशत्संख्यावच्छिन्नानां पञ्चसंख्यासंबन्धायोगेन पञ्चशब्दानन्वयापत्तिः। संख्याप्राधान्ये तु तद्विशेषकत्वेन पञ्चशब्दान्वयः संभवति। एवंच संवत्सरशब्देन संख्येयवचनेन सामानाधिकरण्यमनुपपन्नम्। नच वैयधिकरण्येनान्वयः संभवति। त्रिवृदादिसंवत्सराणां पञ्चपञ्चाशत इति षष्ठ्यभावादिति चेत्सत्यम्। संख्येयवचनस्य त्रिवृदादिसंवत्सरशब्दस्य लक्षणया सामानाधिकरण्यमिति गृहाण। सूत्रार्थस्तु—सहस्रसंवत्सरं सत्रं मनुष्येष्वसंभवात्सहस्रायुषां गन्धर्वादीनाम्॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां षष्ठाध्यायस्य सप्तमः पादः॥७॥**

१ त्सरशब्दमा. २ कर्तृभूतैः. ३ रण्येनार्थनिश्चया.

## षष्ठाध्यायेऽष्टमः पादः।

चतुर्होतृहोमेऽनाहिताग्नेरेवाधिकाराधिकरणम् ॥ १ ॥

**इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ [इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ स सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥ जपो वानग्निसंयोगात् ॥ ६ ॥ इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोः पितृयज्ञवत् ॥ ८ ॥ निर्देशो वानाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥]**

चतुर्होत्राख्यमन्त्रेण होमः साग्नेरुतोभयोः ॥ अनग्निके विधिर्वाद्यो होमस्त्वाक्रतुहोमवत् ॥ १ ॥
उभयोः पुरुषार्थत्वात्तृतीयो वचनात्तु तत् ॥ अनाहिताग्नेरेषा वा इत्यग्नौ लौकिके द्रुतिः ॥ २ ॥

सन्ति चतुर्होतृसंज्ञका मन्त्रास्तैर्जपहोमाः पुरुषार्थतया विहिताः 'चतुर्होतारं प्रयुञ्जीत चतुर्होत्रा प्रजाकामो जुहुया'दिति ये होमास्ते किमाहिताग्न्यधिकारा आहवनीये कार्या उतानाहिताग्न्यधिकारा लौकिकेऽग्नौ स्युरथवोभयाधिकारा इति संशयः। तदर्थमिदं विचार्यते—'एषा वानाहिताग्नेरिष्टि'रिति वचनं जपाभिप्रायमनुवादमात्रमनाहिताग्नेर्वा होमेष्वधिकारप्रतिपादनपरमिति[1]। तत्र विध्यश्रवणादनुवादो जपविषयः। इष्टिशब्दश्च जपविषय एव स्तुत्यर्थतया प्रयुक्तः। तदत्रैषा वचनव्यक्तिः यैषानाहिताग्नेः क्रिया जपात्मिका सेष्टिरिति। सत्यम्। एषा संभवति वचनव्यक्तिरियमपि तु संभवति यैषा चतुर्होतृहोमात्मिकेष्टिः सा अनाहिताग्नेरिति पूर्वस्यामाहिताग्न्यधिकारा होमा उत्तरस्यामनाहिताग्न्यधिकाराः। नचान्यतरा वचनव्यक्तिर्निर्धार्यते। [2]उभयाधिकारा इति प्राप्त उच्यते—'वचनस्यार्थवत्त्वायानाहिताग्नेरधिक्रिया ॥ आहत्य च तदर्थास्ते चोदिता नान्यगामिनः ॥' षष्ठीश्रुत्यानाहिताग्नेः शेषत्वेन गम्यं नार्थप्राप्तमाहिताग्निमवलम्बते[3]। तस्मादनाहिताग्न्यधिकाराः ॥

---

**इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥** चतुर्होतृहोमादिषु आहिताग्नेर्नास्त्यधिकार इत्येवमधिकारापवादोऽत्र प्राधान्येन व्युत्पाद्यत इति पादान्तरत्वमानन्तर्यं च 'ग्रहान्गृहीत्वा ससहोतारं जुहोती'त्यादीनां क्रत्वर्थानां क्रत्वधिकाराहिताग्न्यधिकारः तेषां विषयत्वव्युदासार्थमाह—**पुरुषार्थतयेति**। स्वातन्त्र्येणेति शेषः। तेन 'यः स्वर्गकामः स्यात्स पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुया'दित्येवमादीनां क्रत्वाश्रयणेन पुरुषार्थानां व्यावृत्तिरुभयाधिकारा इत्यनन्तरमुभयोरप्यग्न्योः कार्या इति शेषः। **ननु** सादृश्यादयमिष्टिशब्दो होमे युज्यते न जपे इत्यत आह—**इष्टीति**। धर्मसादृश्येनेष्टिशब्दो जपेऽप्युपपद्यत इति भावः। **तदत्रेति**। वचनव्यक्त्यन्तरसंभवेऽप्यनिर्धारितशास्त्रार्थायोगेनान्यतरनिर्धारणावश्यंभावे विध्यश्रवणेनार्थवादत्वे सति अनुगुणैव वचनव्यक्तिः स्वीकार्येति भावः। **नचान्यतरेति**। अप्राप्तार्थत्वाद्विधित्वं निर्धार्यत एव। तथाच वचनबलादनाहिताग्नेरधिकारः। आहिताग्निष्वग्निमत्त्वादिसामर्थ्यादर्थप्राप्तोऽधिकार इत्युभयोरधिकार इत्यत्र तात्पर्यम्। **नार्थप्राप्तमिति**। श्रुतेः प्रबलत्वाच्छ्रुतिविनियोगेन होमनैराकाङ्क्ष्याचेति भावः। सूत्रार्थस्तु—दर्वीहोमवदपूर्वोऽप्यक्रतुशेषश्चतुर्होतृहोमः संस्कृतेष्वग्निषु स्यात्। नचापूर्वत्वे कुतश्चित्प्रकृतेराहवनीयाप्राप्तेः कथं संस्कृतेष्विति वाच्यम्। आधानस्य सर्वहोमोपकारकत्वात्सर्वेषामपि होमानां पवमानेष्टिपूर्वत्वादाहवनीये जुहोतीत्यनारभ्य विधानात्सर्वहोमसाधारण्येनाहवनीयप्राप्तेरिति ॥

---

१ प्रदर्शनपरमिति. २ युक्तस्तस्यैवं वचन. ३ नार्थसामाजिकमाहि.

आहिताग्निपूपनयनहोमाधिकरणम् ॥ २ ॥

**उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ [स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ आधानं च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥ श्राद्धवदिति चेत् ॥ १५ ॥ न श्रुतिविप्रतिषेधात् ॥ १६ ॥ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १८ ॥ पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत ॥ १९ ॥]**

यस्तूपनयने होमो वैदिके वा स लौकिके ॥ वह्नौ पूर्ववदत्रोक्तेरभावाद्वैदिकेऽस्तु सः ॥ ३ ॥
आधानं विदुषो विद्याऽनुपनीतस्य नास्त्यतः ॥ असंभवो वैदिकाग्नेर्होमोऽग्नौ लौकिके ततः ॥ ४ ॥

उपनयनाङ्गभूता माणवककर्तृका आचार्यकर्तृकाश्च होमाः किमाहवनीये स्युरुत लौकिकेऽग्नाविति संशये पूर्ववद्वचनाभावादाहवनीये स्युः माणवकार्थाश्चैते होमास्तदधिकारा अध्ययनाङ्गभूतोपनयनार्थत्वात् । अतएवच ते माणवकाग्नौ कर्तव्या इति माणवकः प्रागुपनयनादादधीत तदर्थेन च भार्यां चोद्वहेत् । यत्तु 'स्नात्वा भार्यामधिगच्छे'दिति स्नानोत्तरकाला दारक्रिया सापत्यार्था भविष्यतीति प्राप्ते ब्रूमः—आधानस्य विद्वदधिकारित्वाद्विद्यायाश्चोपनयनाधीनत्वान्नोपनयनात्प्रागाधानाधिकारसंभवः । किंच कर्मार्थैरेव दारैरपत्यमपत्यार्थैश्च कर्म सिध्यतीति नार्थः पृथक्दारक्रियया । किंच य एव त्यपत्यकर्मार्थेन दारसंग्रहः प्राप्तस्तस्यैवायं कालविधिः स्नात्वा भार्यामधिगच्छेदिति । तस्मान्न प्राग्दारसंग्रहः तदभावे चाधानासंभवाल्लौकिक एवाग्नावुपनयनहोमः ॥

अनाहितेऽग्नौ स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २० ॥ [अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥]**

स्थपतीष्टिर्वैदिकेऽग्नौ लौकिके वाद्य आक्षिपेत् ॥ आधानमिष्टिरन्त्यः स्यादवैधेनाग्न्यसंस्कृतेः ॥ ५ ॥

'एतया निषादस्थपतिं याजये'दिति स्थपतीष्टिः किमाहितेष्वग्निषु स्यात् उत लौकिक इति संशये प्रकृतेराहवनीयादिप्राप्तेराहवनीयादीनां चाधा[3]नसाध्यत्वादसत्यपि स्थपतेराधानविधावियमेवेष्टिराधानं

---

**उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ माणवकार्था इति ।** आचार्यकर्तृकहोमानामङ्गत्वान्माणवकार्थत्वमेव । आचार्यस्तु ऋत्विक्स्थानीय इति भावः । **ननु** 'स्नात्वा भार्यामधिगच्छे'दिति वचनान्नोपनयनात्पूर्वं दारपरिग्रहः संभवति । नचोपनयनहोमस्याहवनीयरूपपदार्थसिध्यर्थं पदार्थगुणभूतक्रमबाधेन प्रागपि दारपरिग्रहः संभवतीति वाच्यम् । एवंच सति 'स्नात्वा भार्यामधिगच्छे'दिति वचनमप्रमाणमेव स्यात् । तस्मात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबल'मिति न्यायेनात्र क्रमबाधासंभव इत्यत आह—**यत्त्विति ।** विवाहान्तरविधायकमेव तद्वाक्यमिति नोक्तदोष इति भावः । **ननु** प्रागुपनयनाद्विद्याप्रयुक्तिरस्तु इत्यत आह—**विद्यायाश्चेति ।** कर्मविधीनामध्ययनसिद्धविद्योपजीवित्वमेव नतु स्वयंविद्याप्रयोजकत्वमिति भावः । **नार्थ इति ।** ततश्चाधानस्य न पृथग्दारक्रियाप्रयोजकत्वमिति भावः । **नन्वाधानस्य** पृथग्दारक्रियाप्रयोजकत्वाभावेप्यपत्यकर्मार्थदारपरिग्रहः प्रागुपनयनादस्त्वित्यत आह—**किंच य इति । कालविधिरिति ।** कर्मार्थदारैरेवापत्यसिद्धेरुक्तत्वेन दारक्रियान्तरा विधायकत्वात् कालविधिरेवायमित्यर्थः ॥

**स्थपतीष्टिः० ॥ २० ॥** इहाधानं संभवतीति पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिः । **ननु** वसन्तादिवाक्यैः ब्राह्मणादिकर्तृकत्वेन श्रुतमाधानं न निषादस्थपतेः संभवति । नचेयमेवेष्टिराधानं प्रयोक्तुमीष्टे क्रतुविधीनां वसन्तादिवाक्यसिद्धाग्न्युपजीवित्वेनाप्रयोजकत्वादित्यत आह—**असत्यपीति ।** येषामन्यतः सिद्धमाधानं त्रैवर्णिकानां तदीयक्रतूनामप्रयोजकत्वेऽपि स्थपतीष्टेः प्रयोजकत्वं संभवति । नचाविहितस्याधानस्याहवनीयादिजनकत्वानुपपत्तिः । 'नक्तं गार्हपत्यमादधाति दिवाहव-

---

१ वचनादाहवनीये. २ तदर्थेच भार्यां. ३ नाधीनत्वादस.

प्रयोजयेदिति प्राप्ते उच्यते—यदा ह्याधानस्य न साक्षाद्विधिरभविष्यत्तदा याज्ञिकलोकप्रयोगात् 'नक्तं गार्हपत्यमादधाति दिवाहवनीय'मित्यादिवेदवाक्यपर्यालोचनेनाधानक्रियानिमित्तत्वं पाचकादिवदाहवनीयादिशब्दानामाश्रित्य स्थपतिराहवनीयार्थमाधानमकरिष्यत् । यदा तु वसन्तादिविधानान्याधानस्य विधायकानीति द्वितीये स्थितं तदा तद्विहिताधानजन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेन चाधानेनाविहितेन तत्संस्कारसिध्यनवगमान्नाधानस्याक्षेपसंभवस्तस्माल्लौकिके स्यात् ॥

अनाहितेऽग्नावकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

**अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥**

**अवकीर्णिपशुः कुत्र विप्राग्न्याधानसंभवात् ॥ वैदिके लौकिके ब्रह्मचारिण्याधानवर्जनात् ॥ ६ ॥**

'यो ब्रह्मचार्यवकिरेत्स नैर्ऋतं गर्दभं पशुमालभेते'ति किमयं याग आहवनीयादिषु लौकिके वेति संशयः । ब्रह्मचारिणस्त्रैवर्णिकत्वाद्विद्यावत्त्वाद्दार्याधिगमसंभवाच्चाधानमुपपन्नम् । अत आधायाग्निं प्रायश्चित्ते प्रवर्तेत । नैवम् । नह्यस्यावकरकृतं ब्रह्मचर्यस्य विप्लवमसमाधाय गार्हस्थ्यप्रवेशः संभवति । 'अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसे'दिति विधानात् । नचापत्नीकस्याधानमस्ति । तस्माल्लौकिकेऽग्नावयं पशुर्लौकिकश्च सदाचारात्प्राप्तः ॥

दैवकर्मणामुदगयनादिकालताधिकरणम् ॥ ५ ॥

**उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥**
**[अहनि च कर्मसाकल्यम् ॥ २४ ॥]**

**चौलादि सर्वदा पुण्याहादौ वाऽत्राविशेषतः ॥ आद्योऽन्त्यपूर्वपक्षादौ दैवानां स्मृतितो विधेः ॥ ७ ॥**

उपनयनचौलादीनि किं सर्वकाले स्युरुतोदगयनादिष्विति संशये विशेषाभावात्सर्वदैवाधिकारः । स्मृतेस्तूदगयनादिष्वेव स्युर्दैवानि ॥

---

नीय'मित्यादिव्यवहारानुसारेण सामान्यत आधानमात्रजन्यस्याहवनीयादित्वावगमेनाविहितस्यापि तत्संभवादित्यर्थः । अभ्युद्देशेनाधानविधिर्यदि नैव स्यात्तदैव सामान्यत आधानमात्रजन्यस्याहवनीयत्वाध्यवसायो भवेत् । आधाने विधिसत्त्वे तु याद्दगाधानमभ्युद्देशेन विहितं तस्यैवाहवनीयादिजनकत्वं नान्यस्य । अन्यस्यापि जनकत्व आधानविधिवैयर्थ्यापत्तेः । नचेष्टापत्तिः । वसन्तादिवाक्यानामाधानविधित्वस्योक्तत्वात्तस्मादाक्षेपो विफल इत्याहवनीयाद्यभावाल्लौकिक एवेत्याह—**यदात्वित्यादिना** । सूत्रार्थस्तु—स्थपतीष्टिः यथा प्रयाजं प्रयोजयत्येवमभ्याधेयमपि प्रयोजयेत् एवंसत्यग्निमत्त्वादितरेष्वपि कर्मस्वधिकारः स्यादिति कस्यचिच्छङ्का स्यादिति मत्वाह—**तादर्थ्याच्चापवृज्येतेति** । तेनाधानस्य संस्कारापवर्गादग्निमत्त्वाभावान्न कर्मान्तरेष्वधिकार इति ॥

**अवकीर्णिपशुश्च० ॥ २२ ॥ अवकिरेदिति** । स्त्रीगमनात्क्षतव्रतः स्यादिति भावः । अतिदेशस्य विशेषाशङ्कानिराकरणार्थत्वात्तामाह—**ब्रह्मचारिण इति** । हेतुद्वयेन निषादानुपनीतवैषम्यगीतिः । यदि ब्रह्मचर्ये विवाहाद्दार्याधिगमो न संभावितः तदा ययावकीर्णी तया वाधानमस्त्विति भावः । **नचेति** । पापान्निवृत्तस्य प्रायश्चित्तश्रवणाद्ययावकीर्णी तत्त्यागएव प्रायश्चित्ताधिकारः न तत्साहित्ये । किंच न ययाकयाचिदाधानं किंतु विवाहसंस्कृतयेति नान्ययाधानं संभवतीति भावः । **ननु** लौकिकेऽपि नायं संभवति 'तस्मिन्गृह्याणि कर्माणी'ति गौतमेन लौकिकाग्नौ गृह्यकर्मणामेव स्मरणादित्यत आह—**सदाचारादिति** । न गृह्यपदं केषुचिदेव रूढं, गृहाय हितं गृह्यमिति यौगिकमिति श्रौतस्यापि कर्मण आहवनीयाभावे आचारप्राप्ते लौकिकेऽनुष्ठानमविरुद्धमित्यर्थः ॥

**उदगयनपूर्वपक्षाहःपुण्याहेषु० ॥ २३ ॥** ब्रह्मचर्यप्रसङ्गादुपनयनादिकालनिरूपणमिति सङ्गतिः । सूत्रे दैवानीति सामान्योक्त्याप्यग्निहोत्रदर्शपूर्णमासादीनां श्रुतिबलाद्यथायोगं दक्षिणायनादिष्वपि कर्तव्यत्वान्न तेषां विषयत्वमित्याशयेनाह—**उपनयनेति** । **विशेषाभावादिति** । अष्टवर्षं ब्राह्मणमिति श्रुतौ विशेषाश्रवणाच्छ्रुतेः प्रबलत्वात्स्मार्तोदगयनादिकं न ग्राह्यमित्यर्थः । उदगयनादिपरिग्रहेऽपि श्रुतेर्बाधाभावात्स्मार्तपरित्यागो न युक्त इति सिद्धान्तमाह—**स्मृतेरिति** । सूत्रार्थस्तु—उदगयने पूर्वपक्षेऽहनि पुण्याहे 'तत्पुण्यं तेजस्व्यह'रित्युक्तेः, 'तेषु कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुते' इत्युक्तेर्वा दैवानि कार्याणि तत्कालस्मरणात् 'एतद्वै देवानां रूपं यदुदगयनं पूर्वपक्षाहरितरथा पितृणा'मिति स्मृतिरूपदर्शनात् 'पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितृणा'मित्यन्यार्थदर्शनाच्चेति ॥

---

१ लोचनयाधान. २ माविशेदिति.

पित्र्यकर्मणोऽपरपक्षतादिकालताधिकरणम् ॥ ६ ॥

## इतरेषु तु पित्र्याणि ॥ २५ ॥

पित्र्याणि तु श्राद्धादीनि अपरपक्षादिषु स्मृतेरेव ॥

ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणम् ॥ ७ ॥

## याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥ [नियतं वार्थवत्त्वात्स्यात् ॥२७॥]

**याच्ञाक्रयावभावे स्तो विद्यमानेऽपि वाग्रिमः ॥ द्रव्यार्थत्वादपूर्वार्थं कुर्यात्तौ द्रव्यवानपि ॥ ८ ॥**

ज्योतिष्टोमे याच्ञाक्रयणमाम्नातं 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीते'ति याच्ञा। 'अरुणया पिङ्गाक्ष्या क्रीणाती'ति क्रयः। तत्र संशयः किं यस्य दक्षिणाद्रव्यं नास्ति सोमश्च तस्येदं याच्ञाक्रयणमुत विद्यमानेऽपीति। तत्र द्रव्यार्थं याच्ञाक्रयणमविद्यमानद्रव्यस्य स्यात्। द्रव्यवतस्त्वनर्थकं तस्मान्न तस्य याच्ञादावधिकारः। स्यादेवं यदि द्रव्यमात्रप्रयुक्तं स्यात्। अपूर्वप्रयुक्तं त्विदम्। अतोऽनेन विना पूर्वमेव वैगुण्यान्नोत्पद्यते तस्मान्नित्यं याच्ञाक्रयणम् ॥

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ॥ ८ ॥

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥

**अन्याभावेऽथ भावेऽपि पयोभक्षादयोऽग्रिमः ॥ निमित्ते सत्यनुष्ठानान्नियमाद्दष्टतोऽन्तिमः ॥ ९ ॥**

'पयोव्रतं ब्राह्मणस्ये'ति भक्षः किमविद्यमाने भक्षान्तरे उत भक्षसद्भावे च, तथा 'अग्नीदग्नीन्विहरे'ति प्रैषः किमन्यतोऽनवबुद्धे प्रैषार्थे 'अहतं वासः परिधत्त' इति च वासोन्तराभावे, तथा 'यत्पशुर्मायुमकृते'ति संज्ञप्तहोमो मायुकरणे, तथा 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रो द्वेष्यसद्भावे उत सर्वमिदं नित्यमिति संशये सामर्थ्यादेषां निमित्तसद्भावेऽनुष्ठानमिति निमित्ताश्रवणात्सत्यपि चान्यस्मिन्नियमाद्दृष्टसिद्धेरनन्योपायत्वान्नित्यम् ॥

अपररात्रे व्रतस्यानित्यताधिकरणम् ॥ ९ ॥

## अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

**अजीर्णसंभवे कार्यं व्रतं नो वाग्रिमो विधेः ॥ रोगोत्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम् ॥ १० ॥**

यदा पुनर्व्रत्यमानं पयो न जीर्यतीत्याशङ्क्यते तदापि किमवश्यं व्रतयितव्यम्, नेत्याह[1]। तथा यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव संभाव्येत। तेन प्रधानविरोधान्न व्रतयितव्यं नेत्याह ॥

---

**इतरेषु तु पित्र्याणि** ॥ २५ ॥ पित्र्यमपि पिण्डपितृयज्ञाहरहःश्राद्धादिकं कालविशेषसंयुक्तं नोदाहरणमिति द्रष्टव्यम्। पूर्वाधिकरणतुल्यन्यायतया गतार्थत्वेन वक्तव्याभावात्सूत्रार्थमाह—**पित्र्याणीति** ॥

**याच्ञाक्रयणं०** ॥ २६ ॥ इहापि सामान्यश्रुतेर्विशेषेप्यविरोधाद्विशेषविषयत्वमिति प्रत्यवस्थानात्सङ्गतिः। **द्रव्यार्थमिति**। प्रकरणाम्नानादपूर्वार्थत्वेऽपि सामर्थ्यबलान्नैमित्तिकत्वेन वचनमिति भावः। **अनर्थकमिति**। तथाचादृष्टार्थत्वं स्यादिति भावः। निमित्ताश्रवणादवहननादिवत्संस्कारस्यापि नित्यवदङ्गत्वं नचादृष्टार्थत्वम्, इत्थमर्जितमेव द्रव्यमपूर्वं साधयति नान्यदिति नियममात्रस्वीकारादित्याशयेनाह—**अत इति** ॥

**तथा भक्षप्रैषाच्छादन०** ॥ २८ ॥ मायुं शब्दमित्यर्थः। **सामर्थ्यादिति**। पयोव्रतप्रैषाच्छादनानां पुरुषसंस्कारार्थत्वादन्येनापि तत्संस्कारसिद्धेर्यत्पशुर्योऽस्मानिति मन्त्रयोश्च किंद्वारा क्रत्वङ्गत्वमित्यपेक्षायां सामर्थ्यान्मायुकरणादिजनितदोषनिर्घातद्वारेत्यवगमादेतेषां सर्वेषामनित्यत्वमिति विशेषाशङ्केत्यर्थः। नित्यवदाम्नानात्पयोव्रतादिसंस्कृत एव पुरुषः क्रतोरङ्गं नान्यथेति कल्पनान्मन्त्रयोरपि नित्यविहितयोरनित्यद्वारत्वानुपपत्तेः श्रुत्यननुगुणसामर्थ्यापरित्यागादेतेषां नित्यवदेवाङ्गत्वमिति परिहारमाह—**निमित्तेति** ॥

**अनर्थकं त्वनित्यं स्यात्** ॥ २९ ॥ **तदापि किमिति**। पूर्वप्रत्युदाहरणमात्रत्वान्नात्र पूर्वपक्षे यतितव्यमित्याहुः। सूत्रार्थस्तु—यत्तु प्रधानलोपप्रसङ्गादनर्थकं तदनित्यं स्यादिति ॥

---

1 तदाहि.

छागस्यैवाग्नीषोमीयपशुताधिकरणम्॥ १०॥

**पशुचोदनायामनियमोऽविशेषात्॥ ३०॥ [छागो वा मन्त्रवर्णात्॥ ३१॥ न चोदनाविरोधात्॥ ३२॥ आर्षेयवदिति चेत्॥ ३३॥ न तत्र ह्यचोदितत्वात्॥३४॥ नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात्॥ ३५॥ अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम्॥ ३६॥ रूपालिङ्गाच्च॥ ३७॥ छागे न कर्माख्या रूपलिङ्गाभ्याम्॥ ३८॥ रूपान्यत्वान्न जातिशब्दः स्यात्॥ ३९॥ विकारो नौत्पत्तिकत्वात्॥ ४०॥ स नैमित्तिकः पशोर्गुणस्याचोदितत्वात्॥ ४१॥ ज्ञातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम्॥ ४२॥]**

**अग्नीषोमीयकः कोऽपि च्छाग एवोत चोदिते॥ अविशेषेण कोऽपि स्याच्छागो मन्त्रे विशेषणात्॥ ११॥**

'अग्नीषोमीयं पशुमालभेते'ति किं यः कश्चित्पशुरालब्धव्य उत छाग एव चोदनायां सामान्यश्रवणान्मन्त्रवर्णे च 'छागस्य वपाया मेदसोऽनुब्रूहि' इति छागशब्दश्रवणात्संशयः। तत्र—'सामान्यावसिता तावच्चोदना वाक्यभेदतः॥ मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा॥' विधिस्तुल्योरेकवाक्यत्वात्प्राक्स्तुतेरपर्यवसितोऽञ्जनविधिरर्थवादगतघृतविषय एव पर्यवस्यति, मन्त्रचोदनयोस्तु वाक्यभेदादप्रतिबद्धं विधिवाक्यं पशुसामान्ये पर्यवसितं न मन्त्रानुरोधेन शक्यं विशेषं नेतुं, मन्त्रस्तु चोदितार्थप्रकाशनात्परतन्त्रवृत्तिश्चोदनावगतं गवाश्वादिजातं निगमादिवशलब्धावयवयोगेन प्रकाशयिष्यति। यदा वा छागस्तदा वा प्रयोक्ष्यते तस्मादनियमः। उच्यते—'चोदना पशुसामान्यमङ्गत्वेनावबोधयेत्॥ छागेप्यविकलं तत्तु प्रतिव्यक्तिसमाप्तितः॥ मन्त्रप्रकरणाम्नानान्नित्यमङ्गं प्रतीयते॥ क्लृप्तया रूढिशक्त्या च स छागस्यैव वाचकः॥ तेन तं तादृशं गृह्णन्विधिरात्माविरोधिनम्॥ विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः॥' 'अधिकृतिरिति सिद्धा भेदशेषप्रयुक्तिक्रमनियमविचारैरेतया चाधिकृत्या। सुविदित उपदेशोऽनन्तरं चातिदेशो विकृतिषु तत ऊहो बाधतन्त्रप्रसङ्गाः॥' इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायांषष्ठाध्यायस्याष्टमः पादः॥ ८॥

## इति षष्ठाध्यायः समाप्तः॥

---

**पशुचोदनायां०॥ ३०॥** ननु 'पशुमालभेते'ति वाक्यादुभयथा प्रतीत्यभावात्कथं संशय इत्यत आह—**चोदनामिति। सामान्यावसितेति।** चोदनामन्त्रापेक्षया भिन्नवाक्यत्वात्पशुत्वसामान्येऽवसिता पर्यवसितेत्यर्थः। **नन्वक्ता** इत्यञ्जनविधेरार्थिकघृतविषयत्ववत्पशुसामान्यविधेरपि मान्त्रवर्णिकछागविषयत्वमिति शङ्कानिराकरणार्थत्वेन व्याचष्टे—**विधिस्तुल्योरिति। निगमादीति।** छदेर्गमेश्च छागशब्द इत्याश्रयणेन छन्नगमनयोगात्प्रकाशयिष्यतीति भावः। **यदा वेति।** यथा व्रीहीणामिति मन्त्रो व्रीहिपक्षे तद्वदित्यर्थः। एवंच पूर्ववदिहाप्यनित्यत्वमिति प्रत्यवस्थानात्सङ्गतिः। उत्पत्तिविधेर्मन्त्रेण विना पर्यवसानेऽपि प्रयोगवचनान्मन्त्रस्य नित्यग्रहणादनेन मन्त्रेण प्रकाशितं पशुमालभेतेत्येवमुभयोरेकवाक्यतापर्यवसानान्मन्त्रानुरोधेऽपि विधिवाक्यविरोधाभावात्कांस्यभोजिन्यायेन विधेः छागविषयत्वमित्याह—**चोदनेति। पशुसामान्यमिति।** पशुशब्दस्य पशुत्वसामान्यार्थकत्वं तन्त्ररत्ने प्रपञ्चितमिति भावः। **नित्यमिति।** यवानां प्रातिस्विकविधिविधेयत्वात्तत्प्रकाशनासामर्थ्येन तत्र प्रकरणावगतं नित्यत्वं परित्यज्यते। इहतु पश्वन्तराणां प्रातिस्विकविध्यभावात्प्रकरणावगतं नित्यत्वं विनाकारणं न परित्याज्यमिति भावः। **तस्मादिति।** तथाच छागेनैव पशुयागेऽधिकार इति भावः। अध्यायार्थमुपसंहरन् शिष्यहितार्थं वृत्तवर्तिष्यमाणषट्कद्वयार्थं संगृह्णाति—**अधिकृतिरिति॥ इति श्रीनिट्ठलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां षष्ठाध्यायस्याष्टमः पादः॥ ८॥**

---

१ अप्रतिद्वन्द्वि.

# सप्तमोऽध्यायः ॥ ७ ॥

## सप्तमाध्याये प्रथमः पादः ।

प्रयाजादिधर्माणामपूर्वप्रयुक्ताधिकरणम् ॥ १ ॥

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥ [उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥ चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन् उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्मभेदः स्यात् ॥ ७ ॥ यदि वाप्यभिधानवत्सामान्यात्सर्वधर्मः स्यात् ॥ ८ ॥ अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेत् ॥ १० ॥ न पूर्ववत्त्वात् ॥ ११ ॥ अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥]**

प्रमाणाद्यधिकारान्तैः षड्विचारैर्निरूपिते ॥ उपदेशोऽतिदेशोऽथ तत्सापेक्षो निरूप्यते ॥ १ ॥
सर्वार्थं प्रकृतार्थं वा प्रयाजाद्युपदेशनम् ॥ यज्यन्वयेन सार्वार्थ्यान्नातिदेशो विचार्यताम् ॥ २ ॥
अङ्गप्रधानयोर्मुख्यापूर्वभेदसमन्वयात् ॥ प्रकृतार्थं ततः कार्यमतिदेशविचारणम् ॥ ३ ॥

उपदेशविचारे समाप्तेऽधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते । तदुपोद्धातत्वेन प्रथममिदं विचार्यते—ये धर्मा दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च प्रकरणे समाम्नाताः प्रयाजादयो दीक्षणीयादयश्च ते किं सर्वयागार्थत्वेनोपदिश्यन्ते उत यथाप्रकरणं व्यवतिष्ठन्त इति । यदि सर्वार्थास्ततः सौर्यश्येनादीनामप्युपदेशत एवाङ्ग[१]लाभान्नातिदेशविचार आरब्धव्यो भवति । व्यवस्थितेषु तु सौर्यादीनां साकाङ्क्षत्वादतिदेशेन धर्मसद्भा[२]वात्तद्विशेषतदूहतद्बाधादिविचारार्थमुत्तरोऽध्यायगण आरब्धव्यः ।

---

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥** वृत्तकथनपूर्वकं सङ्गतिं दर्शयन् वर्तिष्यमाणं प्रतिजानीते—**उपदेशविचार इति** । पूर्वे षट्के उपदेशविचारं परिसमाप्य इदानीमुत्तरषट्केऽतिदेशविचारो हेतुहेतुमद्भावसंगत्या प्रस्तोष्यत इत्यर्थः । इत्थं कुर्यादित्युपदेशपूर्वकत्वात्तद्वत्कुर्यादित्यतिदेशस्य तद्विचारयोरपि हेतुहेतुमद्भावः । इदंच षट्कद्वयार्थकथनं प्रायिकाभिप्रायम् । तेन प्रमाणस्योपदेशातिदेशसाधारणस्य पूर्वषट्के विचारेऽपि नानुपपत्तिः । नवा तन्त्रप्रसङ्गयोरुपदेशातिदेशसाधारणयोरुत्तरषट्के च विचारेपीति बोध्यम् । प्रमाणस्य तन्त्रप्रसङ्गयोश्चोपदेशातिदेशसाधारण्येऽपि प्रमाणस्य पूर्वषट्के तन्त्रप्रसङ्गयोश्चोत्तरषट्के कथने नियामकमेकादशाद्ये वक्ष्यामः । अत्र यद्यप्यध्यायान्तरारम्भ इव पूर्वोत्तराध्याययोरेव सङ्गतिर्वक्तुमुचिता तथापि षट्कयोः प्रत्येकमुपदेशातिदेशरूपैकैकार्थप्रतिपादकतयैकतामापन्नयोः परस्परषट्कत्वेन समुदायरूपेणैव संबन्धापेक्षा तदवयवयोरध्याययोस्तु पूर्वाध्यायान्त्योत्तराध्यायाद्याधिकरणयोरिव नापेक्षेति षट्कसङ्गतिरेवोक्ता । तत्राद्याधिकरणमवतारयति—**तदुपोद्धातत्वेनेति** । उपोद्धातत्वमेवोपपादयति—**यदि सर्वार्था इत्यादिना** । यथाप्रकरणं दर्शपूर्णमासादिषु धर्मव्यवस्थायां साधितायां धर्माकाङ्क्षेषु सौर्यादिष्वतिदेशेन धर्मप्राप्त्यर्थं सप्तमः । अस्मात्कर्मण इमे धर्मा अत्र भवन्तीति तद्विशेषसिद्ध्यर्थमष्टमः । ततोऽतिदिष्टपदार्थप्रयोगविकारात्मकोहसिद्ध्यर्थं नवमः । ततोऽतिदिष्टपदार्थबाधसिद्ध्यर्थं दशमः । इत्युत्तराध्यायगण आरब्धव्य इत्युपोद्धातत्वमस्येत्यर्थः । बाधादीत्यादिशब्देनाभ्युच्चयो गृह्यते न तन्त्रप्रसङ्गौ । तयोरुपदेशातिदेशसाधारण्यात् । यद्वातिदिष्टपदार्थविषयतन्त्रप्रसङ्गाभिप्राय आदिशब्दः । **ननु** नास्योपोद्धातत्वं 'धर्माणां पारिप्लवत्वेऽपि समानमितरच्छ्येनेने'त्यादिषु प्रत्यक्षवचनादिसिद्धमतिदेशमादायोहबाधादि-

---

१ लाभसंभवात्. २ सद्भावः तद्विशेष.

तदर्थमिदं विचार्यते—किं यजिप्रयुक्ता धर्मा यज्यर्थाः प्रथमं यजिभावनोद्देशेन विहिताः सन्तः पश्चात्तत्करणिकयाऽपूर्वभावनया तद्द्वारेण संभन्त्स्यन्ते उतापूर्वप्रयुक्ता अपूर्वार्थाः, अपूर्वभावनया प्रथममित्थंभावेनान्विताः पश्चात्तत्करणभूतस्य यजेरनुग्राहका भवन्तीति । किं प्राप्तम्—'धर्माणां करणाङ्गत्वे विचारो नैव विद्यते । भावनान्वयपक्षे च तादर्थ्यं नावकल्प्यते ॥' अपूर्वभावनया हि संबध्यमाने करणेतिकर्तव्यते तुल्यकक्षे स्यातां न करणाङ्गत्वमितिकर्तव्यतायाः स्यात्, तस्मात्करणोद्देशेन विधातव्याः । केन पुनः करणमुद्दिश्यते । केचिदाहुः—प्रकरणाम्नानानुमितेन वाक्येनेति । ननु तेन प्रकृतस्यैव दर्शपूर्णमासादेरुद्देशात्कथं सर्वार्थत्वम् । उच्यते—प्रकृतस्याप्युद्देशकत्वेन यजिरे-

विचारसंभवेन तदर्थमुत्तराध्यायगणस्यावश्यारम्भणीयत्वादितिचेन्न । धर्माणां पारिप्लवत्वपक्षे समानमितरदित्यादेः पारिप्लवत्वप्राप्तधर्मसाधारण्यानुवादकतयातिदेशकत्वाभावात् । तस्माद्युक्तमुपोद्घातत्वम् । **तदर्थमिति** । अयमत्र चिन्ताक्रमः—उत्तरषट्कः किमारम्भणीयो नेति । तदर्थमियं चिन्ता किं सौर्यादिष्वतिदेशेन धर्मा भवन्ति उत नेति । तदर्थमन्या चिन्ता किं प्रयाजादयो धर्माः सर्वयागार्थत्वेनोपदिश्यन्ते उत यथाप्रकरणं व्यवतिष्ठन्त इति । तदर्थमपरा चिन्ता किं यजिप्रयुक्ता धर्मा उतापूर्वप्रयुक्ता इति । तदर्थमपरा चिन्ता किं यज्यर्था धर्मा उतापूर्वार्था इति । **ननु** यज्यर्था अपूर्वार्थावेति नेमे कोटी विरुद्धे । इतिकर्तव्यतायाः करणार्थत्वेनैवापूर्वभावनयापेक्षितत्वेन सिद्धान्तेऽपि करणार्थत्वस्याङ्गीकारात् यज्यर्थत्वेऽपि यजिद्वारा पूर्वसंबन्धाभ्युपगमेन पूर्वपक्षिणाप्यपूर्वार्थत्वाङ्गीकाराच्च । अतएव पूर्वपक्षेऽनुपदमेव ग्रन्थकारो वक्ष्यति 'धर्माणां करणाङ्गत्वे विवादो नैव विद्यत' इति न करणाङ्गत्वमितिकर्तव्यतायाः स्यात् इतिचेत्त्राशङ्क्य यज्यर्थत्वकोटेस्तात्पर्यमाह—**प्रथममिति** । करणत्वेन सिद्धतयावगतस्य व्यापारविशेषात्मकेतिकर्तव्यतान्वयायोग्यत्वादाह—**यजिभावनेति** । प्रथममसाधितस्य करणत्वाभावादर्थाक्षिप्तयागकर्मकभावनोद्देशेन विहितास्तद्द्वारा यागकरणकापूर्वभाव्यकभावनया संबध्यन्त इत्यर्थः । पूर्वोक्तशङ्कयैवापूर्वार्थत्वकोटेरपि तात्पर्यमाह—**अपूर्वभावनयेति** । तथाच किं यज्यर्था धर्मा उतापूर्वार्था इति चिन्ताया अयं निष्कर्षः—किं यागसंबन्धपूर्वकोऽपूर्वभावनासंबन्धः उत तत्पूर्वको यागसंबन्ध इति । अयं चार्थः तन्त्ररत्ने स्पष्टीकृतः । यदाच यागसंबन्धपूर्वकोऽपूर्वभावनासंबन्धस्तदोद्दिश्य विधानमन्तरेण प्रथमं यागसंबन्धस्यासंभवादुद्देश्यस्य च यागस्य दर्शपूर्णमासादिना विशेषयितुमशक्यत्वात्सर्वयागार्थतया पारिप्लवा भवन्ति । यदा त्वपूर्वभावनासंबन्धपूर्वको यागसंबन्धस्तदा विधीयमानैव भावना धर्मैः संबध्यते नोद्देश्या । तथाच शब्दान्तरादिभिर्भावनानां भिन्नत्वाद्यद्भावना यद्धर्मविशिष्टा विहिता तद्भावनाकरण एव तद्धर्मा भवन्ति न भावनान्तरकरण इति अपूर्वभावनासंबन्धे सिद्ध्यति व्यवस्थेति । **ननु** कथंभावाकाङ्क्षिण्या भावनयैवान्वयो युक्तो न करणेनेति कथं पूर्वपक्ष इत्यत आह—**धर्माणामिति** । इतिकर्तव्यतायाः करणाङ्गत्वे विचारो नैव विद्यते करणानुग्राहकत्वेनेतिकर्तव्यतायाः करणाङ्गत्वमविचारितसिद्धमित्यर्थः । विवादो नैव विद्यत इति पाठः सुगमः । तथाच करणाङ्गत्वनिर्वाहाय करणान्वये सिद्धे तद्द्वारा भावनायाः कथंभावाकाङ्क्षाशान्तिरिति भावः । **ननु** अपूर्वभावनासंबद्धाया एवेतिकर्तव्यतायाः अरुणैकहायनीन्यायेन पश्चात्करणान्वये तादर्थ्यमुपपद्यत इत्यत आह—**अपूर्वभावनयेति** । नच केन कथमितिकरणत्वेनेतिकर्तव्यतात्वेन चान्वयात् कथं तुल्यकक्ष्यत्वमिति वाच्यम् । नहीदं करणमियमितिकर्तव्यतेति वैलक्षण्यं न स्यादित्युच्यते किंतु इतिकर्तव्यतात्वेन कामं भावनया संबध्यतां तथापि न करणान्वयः । प्रधानभूतभावनान्वयेन तुल्यत्वादिति । एवंच युक्त अरुणास्थले गुणस्य परिच्छेदापेक्षत्वाद्द्रव्यान्वयः । इहतु धर्माणामपूर्वभावनासंबन्धमात्रेणाकाङ्क्षाशान्तेर्न करणान्वयः स्यादिति भावः । तस्माद्भावनान्वयद्वारा करणान्वयस्यासंभवाद्यागमुद्दिश्य विधानादेव करणाङ्गत्वमित्याह—**तस्मादिति** । स्यादेतदेवं यदि वाक्यान्तरमुद्देशकं स्यात् । नच तदस्ति । दर्शपूर्णमासवाक्यस्य फलसंबन्धपरत्वात् । नच विश्वजिन्न्यायेन फलसिद्धिः संभवति । तथासति समिदादीनामपि तथैव फलसंबन्धेऽङ्गत्वमेव न स्यादिति पृच्छति—**केनेति** । दर्शपूर्णमासवाक्यस्य फलसंबन्धपरत्वेपि धर्माणां करणस्य चाकाङ्क्षाबलात्प्रकरणानुमितमेवोद्देशकमित्याह—**केचिदिति** । अत्र प्रकरणशब्देन निर्ज्ञातस्वरूपस्यापि यागस्य फलभावनाकरणत्वेनानिर्ज्ञातस्य या आकाङ्क्षा या च प्रयाजाद्याकाङ्क्षा सा विवक्षिता नतु फलभावनाया इत्थंभावापेक्षा विवक्षिता । तथासति तद्बलकल्पितवाक्येन फलभावनामेवोद्दिश्य धर्मविधानस्य वक्तुमुचितत्वेन प्रथमं यागसंबन्धासिद्धिप्रसङ्गादिति बोध्यम् । **ननु** यदि फलभावनाकरणत्वेन यागस्य कथंभावाकाङ्क्षा तदा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति विशेषस्यैव फले चोदितत्वात्तदाकाङ्क्षया कल्प्यमुद्देशकं विशेषविषयमेव स्यान्न सामान्यविषयम् । तथाच कथं पारिप्लवत्वमिति शङ्कते—**नन्विति** । **उच्यत इति** । सत्यं प्रकृतोद्देश इति तथापि प्रकरणस्य स्वयं विनियोजकत्वाभावाच्छ्रुतार्थापत्तेः शब्दगोचरत्वाच्च प्रकृतः

१ यागद्वारेण. २ अपूर्वसाध्यका भावना. ३ पश्चात्करण. ४ तादर्थ्यं यागार्थत्वम्. ५ तुल्यकल्पे. ६ समिदादिदर्शपूर्णमासाद्युद्देशेन विधीयन्ते तत्प्रकरणाम्नानात्. ७ यजतिरेव.

वात्र कल्प्यः। सच सामर्थ्यात्सर्वयागानुपस्थापयन् सर्वार्थतां कल्पयति। नचैतस्मिन्पक्षे दर्शपूर्णमासवाक्यस्य समिदादिवाक्यानां चैकवाक्यता संभवति, येन सर्वैः संहृत्य समिदादिविशिष्टदर्शादिविधानाद्यागान्तरे धर्मा न स्युः। तथासति करणस्य फलं प्रत्युपादानादङ्गानि प्रत्युद्देशाद्वैरूप्यं स्यात्। तस्मात्फलवाक्ये फलंप्रति यागं विधाय पर्यवसिते पृथग्वाक्यैः समिदादिभिरनुमितयज्युद्देशकशब्दयुक्तैरङ्गानि विधीयन्ते। नच प्रकरणादुद्देश्यो यजिर्विशेष्टुं शक्यते। आकाङ्क्षारूपस्य प्रकरणस्याविशेषत्वात्, संनिधेश्च यजिश्रुतिजनिताविशेषप्रत्ययेन बाध्यमानत्वात्। तस्मात्सर्वार्था इति। भाष्यानुसारिणस्त्वाहुः—दर्शपूर्णमासादिवाक्यमेव यजीनामुद्देशकं नहि तद्यागोत्पत्तिपरम्। आग्नेयादिवाक्यैरेवोत्पन्नत्वात्। नच फलसंयोगार्थं 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोम' इति च स्वर्गकामार्थत्वस्यापि सिद्धत्वात्। तस्मादनन्यार्थत्वादनेन फलवतो यागानुद्दिश्य धर्मा विधीयन्ते। नचोद्देश्यं दर्शपूर्णमासशब्दः स्वर्गकामशब्दो वा शक्नोति विशेष्टुम्। तस्मादधिकृतमात्रोपलक्षणं स्वर्गकामशब्दः दर्शपूर्णमासशब्दश्च प्रायेण पर्वकालत्वाद्यागानामनुवादः। नच संनिधेराग्नेयादीनामेवोद्देशः श्रुतिजनिताविशेषप्रत्ययविरोधादित्युक्तं प्राक्। तस्माद्यजिप्रयुक्ता धर्माः सर्वार्थाः। किंच

विषयः शब्द एव कल्पनीयः सच न दर्शपूर्णमासशब्दः। तस्य कर्तव्यत्वेन यागसमर्पकतया कर्तव्यताविशेषरूपेतिकर्तव्यतान्वयायोग्यत्वात् यजेतेत्याख्यातमेव कल्पनीयम्। तच्च सर्वयजिसाधारणमिति पारिप्लवत्वमित्यर्थः। **ननु** दर्शपूर्णमासवाक्यस्य समिदादिवाक्यानां चैकवाक्यतामात्रं प्रकरणात्कल्प्यतां न वाक्यान्तरमुद्देशकं कल्प्यम्। तथाच तेन समिदादिवाक्यैकवाक्यतापन्नेन दर्शपूर्णमासवाक्येन समिदादिविशिष्टस्य यागस्य विधानादपारिप्लवत्वमत आह—**नचैतस्मिन्निति**। एतस्मिन्कल्पे(पक्षे) भावनान्वयंविना प्रथमत एव धर्माणां यागार्थत्वपक्षे इत्यर्थः। **तथासतीति**। कर्तव्यत्वेनोपस्थितिं विना धात्वर्थस्येतिकर्तव्यतान्वयो न संभवति। तथाच सिद्धतया करणत्वेन फलंप्रत्युपादानात् साध्यतयेतिकर्तव्यतांप्रति उद्देशाद्वैरूप्यं विरूपता विरुद्धत्रिकद्वयं स्यादित्यर्थः। एकेन वाक्येन धर्मविशिष्टयागविधानासंभवात्फलवाक्यपर्यवसानानन्तरं पृथक्वाक्यैरेव सद्भिः समिदादिवाक्यैः फलवाक्येन करणतया विहितं यागमनूद्य धर्मा विधेयास्तत्रापि उद्देशकं न वाक्यान्तरं कल्प्यं किंतु यजेतेतिपदमात्रमतो नातीव गौरवमित्यभिप्रायेणाह—**तस्मादिति**। ननु कल्पितयजेः साधारण्येऽपि प्रकरणविशेषितस्य विशेषविषयत्वमस्त्वित्याशङ्क्य निराकरोति—**नचेति**। **आकाङ्क्षारूपस्येति**। प्रकरणं हि आकाङ्क्षा। सा चान्वयबोधे समर्थापि न विशेषणे समर्था। तथाहि सा न तावद्विशेषणान्तरमुपस्थापयति। आकाङ्क्षाया वस्त्वन्तरोपस्थापनेऽसामर्थ्यात्। नापि स्वयं विशेषणभावमनुभवति अयोग्यत्वादाकाङ्क्षन् यागः इत्थं कर्तव्य इत्यन्वयबोधाभावात् सौर्यादिसाधारण्याद्विशिष्टोद्देशदोषप्रसङ्गाच्च। अस्तु तर्हि संनिधानाद्विशेषलाभ इत्यत आह—**संनिधेश्चेति**। श्रुत्यपेक्ष्या संनिधेर्दुर्बलत्वान्न तेन श्रुतिसंकोचो युक्त इत्यर्थः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति श्रुतस्यैवोद्देशकत्वे संभवति अश्रुतं न कल्पनीयमित्यभिप्रायेणाह—**भाष्यानुसारिण इति**। उत्पत्तेः फलसंबन्धस्य चान्यतःसिद्धत्वादिदमेवोद्देशकमित्यर्थः। **अनेनेति**। एतद्वाक्यस्थयजिना यागानुद्दिश्य समिदादिवाक्यस्थविधिभिर्धर्मा विधीयन्ते इत्यर्थः। तेन विधायकप्रत्ययसमभिव्याहृत धात्वर्थविधिलाभान्न धातोः पारार्थ्यदोषः फलवाक्यस्थेन विधिप्रत्ययेन यजिमुद्दिश्य तत्र समिदादिसंबन्धविधानेऽविधायकप्रत्ययसमभिव्याहृतस्य धातोः पारार्थ्यं स्यात्। फलवतो यागानिति प्रायिकाभिप्रायं नोद्देश्यविशेषणमतो न विशिष्टोद्देशदोषः प्रत्युत दीक्षणीयादिसाधारण्यमपि सिद्ध्यतीति द्रष्टव्यम्। **प्रायेण पर्वकालत्वादिति**। जयाद्यादीनामपर्वकालत्वात्तथाङ्गगुणविरोधाधिकरणन्यायेन दीक्षणीयादीनामप्यपर्वकालत्वात्प्रायेणेत्युक्तम्। प्रकरणाम्नानानुमितवाक्यपक्ष इवात्रापि संनिधिरविशेषक इत्याह—**नच संनिधेरिति**। किंच व्रीह्यादिद्रव्याणामग्न्यादिदेवतानां च प्रत्यक्षेण यागनिर्वर्तकत्वमेवावगम्यते नापूर्वनिर्वर्तकत्वम्। द्रव्यदेवतासंस्काराश्च संनिपातिनः तद्द्वारा यज्यर्था इत्यविवादम्। तत्सामान्यादारादुपकारका अपि यज्यर्था एवेति सर्वेषामपि यज्यर्थत्वमेव नापूर्वार्थत्वमित्याह—**किंचेति**। तत्सामान्यादितरेषु तथात्वमित्यौदुम्बराधिकरणगुणसूत्रं त्रिपाद्यामेवं व्याख्यातम्। **ननु** एतद्वाक्यपर्यालोचनया अवघातादयोऽपीत्यादिसिद्धान्तवाक्यपर्यालोचनया च संनिपातिनामप्येतदधिकरणविषयत्वान्नवमे पुनरपूर्वार्थत्वप्रतिपादनं पुनरुक्तमितिचेन्न। अत्रोभयविधानमपि धर्माणामपूर्वार्थत्वसाधनेऽपि संनिपातिषु प्रबलश्रुत्याद्यवगतव्रीह्याद्यर्थत्वमेव युक्तं न प्रकरणेनापूर्वार्थत्वमित्यधिकाशङ्कानिराकरणार्थं पुनस्तत्प्रतिपादनोपपत्तेः। **ननु** यज्युद्देशेन धर्मविधावपि न पारिप्लवत्वमनुवादस्य सतिसं

१ सर्वयागार्थतां. २ दर्शादि. ३ प्रतिचोद्देशाद्वैरूप्यं. ४ विशेषकत्वात्. ५ लक्षणं, दर्शपूर्णमासशब्दः स्वर्गकामशब्दो वा। दर्श.

व्रीह्यादिभिर्द्रव्यैः प्रत्यक्षं यजिर्निर्वर्त्यते नापूर्वम् । अवघातादयोऽपि यजिनिर्वृत्तावेव व्रीह्यादीनामेवो-पकुर्वन्ति । तस्मात्ते तावद्यज्यर्थास्तत्सामान्यादितरेषु तथात्वम् । यद्यपि यजिविशेषंप्रति धर्मविधि-र्यद्यपि च भावनया संबन्धस्तथापि पारिप्लवः तद्रूपत्वाद्यागान्तराणां भावनान्तराणां च । तद्यथा लोके वाहीकोऽयमतिथिर्यवान्नेन परिवेष्टव्य इत्युक्ते यद्यपि वाहीकविशेषंप्रति यवान्नं श्रुतं तथाप्यन्ये-षामपि वाहीकानां यवान्नप्रियत्वं गम्यते तद्वद्यजिरूपस्य व्यक्तिविशेषस्य यजिकरणकस्य च भावना-विशेषस्योक्ता धर्मास्तद्रूपाणामन्येषामपि साधारणा इति शक्यमवगन्तुम् । तस्मात्सर्वार्था धर्मा इत्यनारभ्योऽतिदेशविचार इति प्राप्तेऽभिधीयते—'प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् ॥ अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥ भावनान्वयतः पश्चादंशयोरार्थिकोऽन्वयः ॥ ततः कर्मा[1]-न्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुतः ॥ भावनान्वयितामात्रान्नांशयोस्तुल्यकल्पना[2][3] ॥ अपरित्यक्तरूपत्वा-द्गुणप्राधान्यसंभवात् ॥' यथा फलं भावनयाप्यन्वीयमानं[4] फलत्वापरित्यागात्प्राधान्यं प्रतिपद्यते तथा करणमपि करणात्मना संबद्धं फलंप्रति गुणत्वमितिकर्तव्यतांप्रति प्राधान्यम् । इदमेव हि करणं यत्फलोद्देशेप्रवृत्तकर्तृव्यापारेण[5] फलसाधनतामापद्यते । इतिकर्तव्यता तु येन व्यापारविशेषेण कर-

भवे संनिहितगामित्वात् । नच संनिधानाच्छ्रुतिसंकोचो न युक्त इति वाच्यम् । संकोचो हि श्रुतिजनिताविशेषप्रत्ययबाधेन विशेषविषयत्वकल्पनम् । इहत्वनुवादत्वनिश्चयात्प्रथमं जायमान एव प्रत्ययो विशेषविषय एव जायते नतु सामान्यविषयः अतो यज्यर्थत्वेऽपि न पारिप्लवत्वमित्यत आह—**यजीति** । यद्यनुवादस्य संनिहितगामित्वाद्यजिविशेषं प्रति धर्मविधिः यदि वा सिद्धान्ते वक्ष्यमाणरीत्या भावनासंबन्धाद्विशेष एव धर्मविधिपर्यवसानं तथापि वाहीकयवान्नवदनुमानेन साधार-ण्यसिद्धिरिति भावः । **तस्मात्सर्वार्था इति** । नन्विदमयुक्तम् । यदि सर्वे धर्माः सर्वार्थाः स्युस्तदा श्रुतिविहिता यावन्तो यागास्तावत्संबन्धिनां द्रव्यदेवतादितत्संस्कारकदीक्षोपसदादीनां स्तोत्रशस्त्रादिलक्षणानां धर्माणामनन्ततया क्वापि कर्मणि केनाप्यनुष्ठातुमशक्यतयाऽप्रामाण्यप्रसङ्गात्परस्परविरोधिनां विकल्पेऽप्यविरोधिधर्माणामप्यानन्त्यादितिचेन्न्यायप्राप्तेऽर्थे किं कुर्मः । यद्वा यो यावद्धर्मयुक्तमनुष्ठातुं शक्नोति तेन तावद्धर्मयुक्तं कर्मानुष्ठेयमिति शक्त्या व्यवस्थायामप्रामाण्याभावान्न्याय-प्राप्तत्वेन काम्येऽपि यथाशक्त्युपबन्धो न दोषः । अन्यथा शब्दान्तराधिकरणपूर्वपक्षादौ का गतिरिति । अत्र प्रयोजना-काङ्क्षाणामेव धर्माणां यज्युद्देशेन विधानं उत्पत्तिशिष्टधर्माश्च स्वविशिष्टयजिनैव निराकाङ्क्षा इत्युत्पन्नशिष्टधर्मविषयं पारिप्लवत्वं बोध्यम् । **प्रधानेति** । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यं समिदादिवाक्यसहितं करणेतिकर्तव्यताविशिष्टाम-पूर्वभावनां विधत्ते । एकभावनान्वितयोः करणेतिकर्तव्यतयोः पश्चादरुणैकहायनीन्यायेनार्थतोऽन्वयः । तत एकभावना-न्वितधर्माणां तदीयकरण एव निवेशान्न भावनान्तरकरणसंबन्ध इति न पारिप्लवत्वमित्यर्थः । विधत्त इत्यनेन भावना-न्वयोऽपि नोद्दिश्यविधानात् येन यज्युद्देश इव पारिप्लवता स्यात् किंतु विधानेनेति दर्शितम् । एतदुक्तं भवति—सर्वेभ्यः कामेभ्य इति सामान्यवचनापेक्षया शीघ्रप्रवृत्तविशेषवचनमेव फलसंबन्धं बोधयितुं प्रवृत्तं फलभावनाया इतिकर्तव्यताकाङ्क्षां प्रयाजादीनां प्रयोजनाकाङ्क्षां च पर्यालोच्योभयाकाङ्क्षालक्षणप्रकरणबलेन समिदादिवाक्यैः 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुया'-दितिवद्यत्तच्छब्दभावेनाप्रत्यक्षमप्येकवाक्यभावमनुभूय करणेतिकर्तव्यताविशिष्टां फलभावनां विदधाति । एवंच दर्शपूर्ण-मासशब्दस्य प्रायिकानुवादत्वं तृतीयाया व्यत्ययेन सप्तम्यर्थत्वं स्वर्गकामपदस्याधिकृतमात्रोपलक्षकत्वं च न कल्पनीयं, न वा प्रथमं पूर्वपक्षरीत्या प्रकरणेनोद्देशकशब्दकल्पनाक्लेश इति । नच सिद्धान्तेऽप्येकवाक्यतार्थं यत्तच्छब्दकल्पनावश्यकीति वाच्यम् । यत्तच्छब्दौ हि आख्यातद्वयस्य स्वातन्त्र्यनिराकरणायाकाङ्क्षार्थं कल्पनीयौ । इह त्वाकाङ्क्षा स्वतःसिद्धैव । कल्पनायामपि सिद्धान्ते सकृद्यत्तच्छब्दमात्रं कल्पनीयं, पूर्वपक्षे समिदादिषु प्रतिवाक्यमुद्देशकल्पनेति महद्गौरवम् । एतद्रीत्योद्देशकवाक्यकल्पनायां स एव दोषः । यदुक्तं भावनान्वये तुल्यकक्ष्यतयेतिकर्तव्यतायाः करणार्थत्वं न स्यादिति तत्राह—**भावनान्वयितेति** । भावना ह्यपेक्षमाणा किं मे फलं किं फलस्य साधनं को वा साधनानुग्रह इति परस्परयुक्तमेवापेक्षते यथापेक्षं च संबन्ध इति गुणप्रधानरूपापरित्यागात्करणानुग्राहकत्वं युक्तम् । अन्यथा फलकरणयोरपि गुणप्रधानभावो न स्यादित्यर्थः । एवंच भावनायाः करणानुग्राहकत्वेनैवेतिकर्तव्यताकाङ्क्षाप्रतिपादनेनारुणान्यायवैषम्यं परिहृतं भवति । **प्राधान्यमिति** । प्रति-पद्यत इत्यनुषज्यते । किंच करणेतिकर्तव्यतयोस्तुल्यकक्ष्यतयान्वये करणस्य करणत्वमितिकर्तव्यताया इतिकर्तव्यतात्वं च न स्यादित्यभिप्रायेणोभयं विविनक्ति—**इदमेवेति** । परशोरुद्यमननिपातनव्यापारविषयतया करणत्वस्योद्यमननिपातनयोः परशुनिष्ठफलसाधनतापादकत्वेन व्यापारत्वस्य च दर्शनादित्यर्थः । यजेर्धर्मान्वयायोग्यत्वादपि न तदुद्देशेन धर्मविधानमि-

१ कर्मान्तराङ्गानां. २ मात्रं नांशयोः. ३ तुल्यकल्पनाः. ४ भावनायामप्यन्वीयमानं फलं चापरि. ५ फलोद्देशेन प्रवृत्तक-र्तृव्यापा.

णस्य फलसाधनरूपत्वमुपजन्यते सा उच्यते । तस्मान्न तुल्यकल्पत्वम् । नच यजिः स्वयमितथंभावापेक्षः, नापि यागभावना निर्ज्ञातप्रकारत्वात् । अपूर्वभावनायास्त्वनिर्ज्ञातप्रकारत्वात्तद्भावना कीदृशीति न ज्ञायते । यागेनापूर्वं कुर्यादित्ययमर्थः—यथा व्याप्टते यागादपूर्वं भवति तथा व्याप्रियेतेति कीदृशोसौ व्यापार इति भवति व्यापारविशेषाकाङ्क्षा । तद्विशेषत्वेन समिदादिव्यापारविधानमाकाङ्क्षासंनिधियोग्यत्वैरध्यवसीयते । तस्मात्प्रकृतभावनाविशेषत्वात्समिदादीनां न पारिप्लवत्वम् । व्रीह्यादिद्रव्यमपि फलभावनांशेन संबध्यते । यया हि क्रियया यागात्स्वर्गापूर्वं भवति सा फलभावना। यागस्वरूपसंपादनमपि तद्व्यापार एव । अनिष्पन्नस्य फलसाधनभावासंभवात्, अवघातादयोऽपि तत्रैव व्रीहीणां योग्यतामादधाना भावनार्था एव । नच वाहीकयवान्नवत्साधारण्यानुमानम् । लोके हि प्रमाणान्तरवशात्तथावगम्यते । शब्दैकप्रमाणे तु विशेषान्वये शब्देनावगम्यमाने पारिप्लववाक् साहसमात्रम् । तस्माद्यथाप्रकरणं व्यवस्थिता धर्माः, तथाचानुपदिष्टधर्मकेषु सौर्यादिष्वतिदेशेन धर्मसद्भावादि विचारयितव्यम् । अन्यधर्मत्वेनावगतानां तत्संबन्धादरेणान्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति सोऽतिदेशो नाम । तथाचोक्तम्—'प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ॥ धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः ॥' इति । अयमत्रान्वयः—प्राकृतात्कर्मणो धर्मप्रदेशो येन स्यात्सो-

---

त्याह—**नचेति** । स्वयं भावनामनपेक्ष्य कर्तव्यताविशेषो हीतिकर्तव्यता । साच व्यापारविशेषरूपा । द्रव्यदेवतादेरपि व्यापारविशेषापत्त्यैवेतिकर्तव्यतात्वं न स्वरूपेण । सामान्यस्य भेदको धर्मः प्रकारः । तथाच व्यापारसामान्यात्मकभावनाया एव व्यापारविशेषात्मकेतिकर्तव्यतालक्षणप्रकाराकाङ्क्षा नतु यागस्य कथं याग इत्यपेक्षाभावादिति भावः । अस्तु तर्हि यागभावनाद्वारैव यागस्येतिकर्तव्यतापेक्षा कथं यागः कर्तव्य इत्यपेक्षासत्वादन्यथा कथमपूर्वमित्यपेक्षाभावादपूर्वान्वयोपि न स्यादित्याशङ्क्य वैषम्यमाह—**नापि यागभावनेति** । फलभावनाकरणत्वेनानिर्ज्ञातत्वमादायाकाङ्क्षोपपादने विवक्षितविवेकेन फलभावनाया एवाकाङ्क्षा पर्यवस्यतीति भावः । **ननु** यागेनापूर्वं कुर्यादिति यागेऽनुष्ठितेऽपूर्वं भवतीत्यवगम्यते नात्रान्यव्यापारापेक्षां पश्याम इत्यत आह—**यागेनापूर्वं कुर्यादित्ययमर्थ इति** । कर्तृव्यापारविषयस्यैव करणत्वायागेनेति करणत्वबोधकतृतीयासमभिव्याहृतप्रत्ययेन यथा व्याप्टते यागात्स्वर्गो भवति तथा व्याप्रियेतेत्यर्थः प्रतीयत इत्यर्थः । तथाच यागेनापूर्वं कुर्यादिति वाक्यसमानार्थतया यजेतेत्यस्यापि स एवार्थ इति भावः । **तद्विशेषत्वेनेति** । अपूर्वभावनाप्रकारविशेषत्वेन समिदादिविधानमपेक्षादिवलाद्युक्तं न यागार्थतयानपेक्षितविधानापत्तेरित्यर्थः । **ननु** कथं स्वर्गस्य श्रुतत्वफलत्वाभ्यां स्वर्गभावनासंबन्धद्वारा स्वर्गप्रयुक्ततया व्यवस्थायामुपपादनीयायामपूर्वभावनासंबन्धद्वारा पूर्वप्रयुक्ततया व्यवस्थोपपाद्यत इति चेदुच्यते । क्षणिकस्य साधनत्वानुपपत्त्यावश्यकल्प्यमपूर्वम् । तथाच श्रुतानुमितैकदेशनिष्पन्नेन वाक्येन यागेनापूर्वं कृत्वा स्वर्गं भावयेदिति बोधितेऽपूर्वे कृते स्वयमेव फलं भवतीति निश्चित्य सांप्रतिकं प्रयोगसमवाय्यपूर्वमेव चिकीर्षतीति फलभावनाऽनिर्ज्ञातस्वरूपेऽपूर्वे संक्रान्तेतिकर्तव्यतामपेक्षत इत्यपूर्वभावनासंबन्ध इतिकर्तव्यतायाः प्रयुज्यते । भावनायाः करणापूर्वाभ्यां संबन्धे सत्यपि भावनाया भाव्यनिष्ठत्वाद्भाव्यनिष्पत्त्यर्थमेवेतिकर्तव्यतामपेक्षत इति भाव्यरूपापूर्वप्रयुक्तमेवाङ्गजातं न करणप्रयुक्तमिति बोध्यम् । **आकाङ्क्षासंनिधीति** । अनिर्ज्ञातप्रकारत्वनिबन्धनया कीदृशोऽसौ व्यापार इत्याकाङ्क्षया संनिधिना व्यापारसामान्यस्य व्यापारविशेषान्वययोग्यतया चेत्यर्थः । **ननु** भावनान्वयद्वारा करणान्वयपक्षेऽपि यजिश्रुत्या सर्वयागानां करणत्वावगमात्करणानुग्राहकाया इतिकर्तव्यतायाः सर्वयागान्वयः स्यादित्याशङ्क्य चतुर्थे प्रसिद्धनाम्नो दर्शपूर्णमासशब्दस्य यजिसंकोचकत्वव्यवस्थोपपादनात्तद्बलेन यजेर्विशेषविषयत्वेनाग्नेयादिकरणिकभावनायामेव संबन्धान्न पारिप्लवत्वमित्युपसंहरति—**तस्मादिति** । परितः प्लवन्त इति परिप्लवाः ते एव पारिप्लवास्तेषां भावः पारिप्लवत्वमव्यवस्थेति यावत् । द्रव्यादीनां प्रत्यक्षेण यजिनिर्वर्तकत्वेऽपि यागसंपादकस्यापि फलभावनांशत्वात्फलभावनान्वयः सुलभ इत्याह—**व्रीह्यादीति** । प्रमाणान्तरवशाद्व्याप्त्यादिनिश्चायकप्रत्यक्षादेरित्यर्थः । **ननु** 'नानुमानिकवचनत्वमतिदेशत्वं समानमितरच्छयेनेने'त्यादावव्याप्त्यापत्तेः लिङ्गादिकल्पितवचनेष्वतिव्याप्त्यापत्तेश्चातस्तद्विचारो न युक्त इत्यत आह—**अतिदेशो नामेति** । अन्यधर्मत्वेनावगतानां तत्संबन्धादरेणान्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति सोऽतिदेशः । अतीत्य देश अतिदेशः । व्यापारस्यातिदेशत्वे तद्वतः शास्त्रस्य करणव्युत्पत्त्या शास्त्रेऽतिदेशत्वव्यवहार इति द्रष्टव्यम् । **ननु** प्राकृतात्कर्मणस्तत्समानेषु धर्मप्रापको व्यापारोऽतिदेश इति श्लोकोक्तं लक्षणमनुपपन्नं वचनानामनिमित्तातिदेशस्थले विकृतौ प्रकृतिसाम्येन भवितव्यमिति निर्बन्धाभावादित्याशङ्क्य अन्यधर्माणामन्यत्र प्रापकव्यापारोऽतिदेश

---

१ विशेषापेक्षा. २ विधानमपेक्षा. ३ भावनांशत्वात्. ४ अनिष्फलस्य. ५ साधनत्वाभावात्. ६ माणकेषु. ७ वाक्यं.

ऽतिदेशः । क धर्मप्रदेश इत्यपेक्षयामाह—यस्मात्तत्समानेष्विति । यस्मात्प्राकृतादाग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु सौर्यादिषु कर्मस्विति त्रिविधश्चातिदेशः प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्चेति । तत्र प्रत्यक्षवचनात्तावच्चिन्त्यते ॥—

इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ॥ २ ॥

**समानेऽपूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥ [श्येनस्येति चेत् ॥ १४ ॥ नासंनिधानात् ॥ १५ ॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥]**

इषौ समानमितरच्छ्येनेनेत्यनुवादकम् ॥ श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकः ॥ ४ ॥
ज्योतिष्टोमविकारत्वात्तद्धर्माश्चोदकात्समाः ॥ श्येनेष्वोरितरत्वोक्तिरिषुवैशेषिकं प्रति ॥ ५ ॥
इषुवैशेषिकादुक्तादितरच्छ्येनगं स्फुरेत् ॥ वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते ॥ ६ ॥

—ईषावेकाहे ज्योतिष्टोमविकारे 'इषुं विष्टुतिं करोति सप्ताहं भवती'ति प्राकृतानां स्तोत्राणां विकारं विधाय श्रूयते 'समानमितरच्छ्येनेने'ति । तत्र संशयः किमयमनुवादः उत श्येनवैशेषिकाणामतिदेशविधिरिति । तत्रेतरच्छब्दस्य संनिहितवचनत्वाच्छ्येनवैशेषिकाणां चासंनिहितत्वान्न तद्वाचकः । चोदकप्राप्तास्तु ज्योतिष्टोमधर्मास्ते च श्येनेऽपि विद्यमानास्तत्सादृश्यमिषोरापादयन्तीति तदपेक्षोऽयमनुवाद इति प्राप्ते ब्रूमः—सत्यमितरच्छब्दः संनिहितमभिधत्ते नतु तन्मात्रं किंतु पूर्वनिर्दिष्टसदृशं संनिहितं च यद्द्वयं तदभिधत्ते । तदिह यत्संनिहितं ज्यौतिष्टोमिकं न तत्पूर्वोक्तसदृशम् । अप्राकृतानां सप्ताहादीनां पूर्वमुक्तत्वात् । यत्त्वप्राकृतं लोहितोष्णीषादि श्येनवैशेषिकं तद्यद्यप्यसंनिहितं तथापि सादृश्यमस्तीत्यवश्यं हातव्येऽन्यतरस्मिन्वचनार्थवत्त्वाय संनिधिं हित्वा सादृश्यपरि-

---

इत्येव लक्षणं, तत्समानेष्विति तु प्रायिकस्वरूपकथनम् । अतएव श्लोके यत्तच्छब्दयुगलद्वयमित्यभिप्रेत्य वाक्यभेदेन व्याचष्टे—**अयमत्रेति । नामधेयादिति** । नामधेयस्य प्रत्यक्षत्वेऽपि वत्यर्थस्याप्रत्यक्षत्वेन वचनत्वस्य तिरोहितत्वात्पृथङ्निर्देशः। अर्थापत्तेरपि पश्चान्मानमनुमानमिति व्युत्पत्त्यानुमानत्वात्तद्गम्येप्यनुमितिशब्दप्रयोगः। सूत्रार्थस्तु—मुख्यानामपूर्वाणां भेदे यथाधिकारं यथाप्रकरणं धर्माणां भाव्ये व्यवस्थानं स्यात् कुतः श्रुतिप्रमाणत्वाच्छेषशेषिभावस्य श्रुत्येकगम्यत्वादिति ॥

**समानेऽपूर्ववत्त्वात्० ॥ १३ ॥** संशयोपयोगितया परिष्कुर्वन्विषयं दर्शयति—**इषाविति**। 'इषुणाभिचरन्यजेते'ति विहिते एकाहत्वेन ज्योतिष्टोमविकारे इत्यर्थः । **इषुं विष्टुतिमिति** । विष्टुतिः कुशास्तरणमिष्वाकारेण कर्तव्यमित्यर्थः । इषुभिरेव कर्तव्यमित्यन्ये । **सप्ताहमिति** । सप्ताहाख्यं साम स्तोत्रसाधनं भवतीत्यर्थः । **स्तोत्राणामिति** । यद्यपि इष्वाकारत्वं विष्टुतेर्विकारः न स्तोत्राणां तथा सप्ताहमपि साम स्तोत्रसाधनं न स्तोत्रविकारस्तथापि साक्षात्परम्परया वा स्तोत्रसंबन्धित्वेन तद्द्वलात्स्तोत्रे विकारः पर्यवस्यतीत्यभिप्रायेणेदमुक्तम् । **अनुवाद इति** । ज्यौतिष्टोमिकधर्मप्रयुक्तश्येनसादृश्यानुवाद इत्यर्थः । **ननु** वचनस्यार्थवत्त्वाय विधायकत्वे वक्तव्ये कथमनुवादकतया पूर्वपक्षोऽत आह—**तत्रेति** । संनिहितवचनत्वात्पूर्वोक्तादन्यद्यत्संनिहितं तद्वाचित्वात्तत्रैव प्रयोगात्तथाच संनिहितवाचिना इतरशब्देनासंनिहितानां श्येनवैशेषिकाणां परामर्शासंभवेन विधायकत्वासंभवादनुवाद एवाङ्गीकर्तव्य इत्यर्थः । **चोदकेति** । इषौ श्येने च चोदकप्राप्तज्यौतिष्टोमिकधर्माः साधारणाः सन्तः इषोः श्येनसादृश्यं संपादयन्तीत्यर्थः । धर्मेषु साम्ये प्रतीयमानेऽपीषोः साम्यमापादयन्तीति इषो साम्यकथनेन सदृशोऽयमिषुरतस्तद्वदेवादरेणाभिचरता कर्तव्य इति इषुस्तुत्यर्थत्वान्न वैयर्थ्यमनुवादस्येति सूचितमनेन स्तुत्यर्थत्वकथनेन । समानमितरदित्युक्तेर्योऽर्थः स एव समानमितरच्छ्येनेनेत्युक्तेरपीति श्येनपदवैयर्थ्यमित्यपि शङ्का परिहृता । प्रथमं भाष्यकारोक्तरीत्या सिद्धान्तमाह—**सत्यमिति । किंत्विति** । देवदत्ताय क्षौमं यज्ञदत्ताय कौशेयमितरद्विष्णुमित्रायेत्युक्ते पूर्वोक्तसदृशं वस्त्रमेव संनिहितं प्रतीयते न हिरण्यादिकमित्यर्थः । **तदिति** । अप्राकृतं वैशेषिकधर्ममादाय सादृश्यं विवक्षितं तच्च चोदकप्राप्ते नास्तीत्यर्थः । **वचनार्थवत्त्वायेति** । संनिहितवचनत्वेऽपि मुख्यार्थत्यागसाम्यादानर्थक्यावहमनुवादकत्वमयुक्तमिति भावः । प्रदेशान्तराम्नातत्वेनेषुवाक्यैकवाक्यत्वाभावात्स्तुत्यर्थत्वमप्ययु-

---

१ इषौ यागे. २ प्रकृतौ सामपर्वाणां गणनार्थं वल्के कुशकीला निधाप्यन्ते, विकृताविषवः.

ग्रहेण श्येनवैशेषिकाणां वादः । यद्वा चोदकप्राप्तानां विष्टुत्यादीनां विकार इषुं विष्टुतिमित्यादिना पूर्वं विहितस्तत इतरच्चोदकप्राप्तमितरच्छब्देनोद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते। एवंच संनिहितवचनत्वमर्थवत्त्वं च वचनस्य भविष्यति ॥

पञ्चहविष्षु सार्थवादविध्यतिदेशाधिकरणम् ॥ ३ ॥

**पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् ॥ १७ ॥ [सर्वस्य वैकशब्द्यात् ॥ १८ ॥ लिङ्गदर्शनाच्च ॥ १९ ॥ विहिताम्नानान्नेति चेत् ॥ २० ॥ नेतरार्थत्वात् ॥ २१ ॥]**

वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रगः ॥ स वादाङ्गविधिस्थो वा हविर्विध्यन्वयाद्भवेत् ॥ ७ ॥
अर्थवादैकनिष्ठोऽसौ मैवमङ्गविधेरपि ॥ समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम् ॥ ८ ॥

चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेवं वरुणप्रघासाः साकमेधाः शुनासीरीयमिति । तत्र वैश्वदेविकानामाद्यानां पञ्चानां हविषां यद्ब्राह्मणं तद्वारुणप्रघासिकेषु पञ्चस्वतिदिष्टं एतद्ब्राह्मणान्येव पञ्च हवींषीति । तत्र संशयः किं यस्तेषामर्थवादः 'वार्त्रघ्नानि वा एतानि हवींषी'त्यादिस्तन्मात्रस्यायमतिदेशः सैवैषां प्रशंसेति उतार्थवादस्याङ्गविधीनां च 'नवप्रयाजा इज्यन्त' इत्यादीनामतिदेश इति —'पूर्वेषां ब्राह्मणं यत्तदुत्तरेष्वतिदिश्यते ॥ चोद्यन्ते येन वाक्येन तत्तेषां ब्राह्मणं मतम् ॥' अङ्गविधिभिः स्वाङ्गान्येव विधीयन्ते न हवींषि । सार्थवादकं तु वाक्यं तेषां विधायकमिति भवत्यर्थवादस्य तत्संबन्धः तस्मात्तन्मात्रातिदेशः । नैवम् । यद्यप्यङ्गत्वविधिभिर्हविषां न विधेयता तथाप्यस्त्येव

---

कमिति ध्येयम् । **श्येनवैशेषिकाणां वाद इति** । समानमित्यादेरयमर्थः—यादृगत्र क्रियमाणं श्येनेन समानं भवति तादृगितरदधिकं कर्तव्यमिति श्येने यद्विहितमधिकं तदिहापि कर्तव्यमिति पर्यवस्यति । तेन श्येनवैशेषिकाणां प्राकृतविकाराणां लोहितोष्णीषत्वादीनामप्राकृतकार्याणां कण्टकवितोदनादीनां प्रापकोऽयं वाद इत्यर्थः । अत्रेतरच्छब्दस्य भाष्यकारोक्तरीत्या वैशेषिकधर्ममादाय सादृश्यं नार्थः मानाभावात् । **ननु** इतरद्विष्णुमित्रायेत्यत्र पूर्वोक्तसदृशं वस्त्वेव प्रतीयते इत्युक्तत्वादिदमयुक्तमिति चेन्न । अयमिहेतरशब्दार्थनिर्णयः—किंचिद्धर्मपुरस्कारेण बुद्धिस्थमध्ये एकस्मिन्नुपयुक्ते तदवशिष्टं यत्तदितरशब्दवाच्यं, तस्य च यद्धर्मपुरस्कारेण प्रथमं बुद्धिस्थता तद्धर्ममादाय सादृश्यं संनिहितत्वं चास्तीतीत्थमितरशब्दस्य संनिहितसदृशपरत्वं लोकसिद्धम् । भाष्यकारेणाप्यमुमेवार्थमङ्गीकृत्य सप्ताहादीन्विशेषानुक्रम्येतरदिति प्रयोगाद्वैशेषिकतया सदृशेन संनिहितेन च भवितव्यम् । तत्र चोभयासंभवादन्यतरपरिग्रहे वचनार्थवत्त्वाय सादृश्यं परिगृह्यत इत्युक्तम् । एवंच चोदकप्राप्तत्वेन प्राकृतं धर्मजातं पुरस्कृत्य तन्मध्ये विष्टुत्यादीनां विकारं विधायेतरदित्युक्ते चोदकप्राप्ततया संनिहितं च विष्टुत्याद्यतिरिक्तमितरच्छब्देन निर्दिश्य तत् श्येनेन समानमिति लोहितोष्णीषादिविकारविधाने न कस्यापि हानं वचनं चार्थवदिति भाष्यकारीयसिद्धान्ते(स्वरसाद्वार्तिककारीयमाह—**यद्वेति** । चोदकप्राप्ताङ्गमध्ये विष्टुत्यादेर्विकारविधानार्थमुपयुक्तत्वेन तदितरज्ज्योतिष्टोमिकं तच्छ्येनेन समानं कर्तव्यं श्येने यादृशविकारयुक्तं तादृशविकारयुक्तं कर्तव्यमिति संनिहितसदृशवचनतोपपत्तेः संनिहितत्वं न परित्याज्यमित्यर्थः । अस्मिन्पक्षे प्राकृतोद्देशेन विकारमात्रोपदेशात् श्येनगतविकारमात्रस्यातिदेशो नाप्राकृतकार्याणां कण्टकवितोदनादीनामिति द्रष्टव्यम् । सूत्रार्थस्तु—समाने समानमितरदिति **वाक्ये** उत्पाधिकारश्चोदकावगतनिर्देशः स्यात्, कुतः पूर्ववत्वाद् इषोर्ज्योतिष्टोमलक्षणप्रकृतिमत्त्वादिति ॥

**पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् ॥ १७ ॥** पूर्वाधिकरणे भावनया साक्षादपेक्षितधर्मगोचरोऽतिदेशो निरूपितः । इदानीं ततो जघन्यः धर्मबोधकब्राह्मणातिदेशो विचार्यते इति सङ्गतिः । **तत्रेति** । वैश्वदेवे पर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपाल'मिति अष्टौ हवींष्याम्नातानि । तथा वरुणप्रघासेष्वपि । तेष्वाद्यानि पञ्च हवींष्याम्नाय तेष्वेतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणीत्यनेनेतराणि वैश्वदेविकानि यद्ब्राह्मणानि एतद्ब्राह्मणान्येव वारुणप्राघासिकानि पञ्च हवींषीति ब्राह्मणमतिदिष्टमित्यर्थः । अर्थवादस्य शब्दरूपस्यानपेक्षितस्यातिदेशे वैयर्थ्यं परिहरति—**सैवैषामिति** । शब्दभावनापेक्षितस्तुतेरर्थवादेन समर्पणान्न वैयर्थ्यमित्यर्थः । ब्राह्मणशब्दस्य साधारण्यात्कथमर्थवादमात्रपरतया पूर्वपक्ष इत्यत आह—**पूर्वेषामिति** । नन्वर्थवादानामपि विधायकत्वाभावेन ब्राह्मणत्वाभावादतिदेशो न स्यादित्यत आह—**सार्थवादकमिति** । साक्षादविधायकानामपि विध्येकवाक्यतया विध्यन्तरगतानां विधायकत्वं युज्यत इत्यर्थः । **तथापीति** । मत्व-

---

१ हविर्विधिः. २ यद्यपि ह्यङ्गविधिभिः.

संबन्धस्तत्संबन्ध्यङ्गचोदनात् । किंचाङ्गवाक्यैकवाक्यतामापन्नं प्रधानवाक्यं हविषां समग्राणां विधायकमिति विधायकत्वेनाप्यस्त्येवाङ्गविधीनां संबन्धः । तस्मात्सर्वेषामतिदेशः ॥

एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् ॥ ४ ॥

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

श्रुतमेककपालस्य ब्राह्मणस्यातिदेशनम् ॥ तत्पूर्ववत्तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥ ९ ॥

वैश्वदेवे तावद्द्यावापृथिव्य एककपालो वरुणप्रघासेषु काय एक कपाल ऐन्द्राग्नो द्वादशकपालश्च । ततः साकमेधेषु श्रूयते—'ऐन्द्राग्न एकादशकपालो वैश्वकर्मण एककपाल' इति । तत्र 'एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपाल' इति श्रुतं तत्पूर्ववत्सार्थवादकस्य साङ्गविधिकस्य कृत्स्नस्य काण्डस्यातिदेशकमित्युत्तरविवक्षया प्राप्यते ॥

साकमेधे वारुणप्रघासिकैककपालातिदेशाधिकरणम् ॥ ५ ॥

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥

किं वैश्वदेविकादेककपालादतिदेशनम् ॥ साकमेधेषु वरुणप्रघासस्थादुताग्रिमः ॥ १० ॥
प्रकृतावर्थबाहुल्यादन्तिमः संनिधानतः ॥ ऐन्द्राग्नसाहचर्याच्च सार्थत्वमधिकत्वतः ॥ ११ ॥

'एतद्ब्राह्मण एककपाल' इति किं वैश्वदेविकस्यैककपालस्य ब्राह्मणमतिदिश्यते किंवा वारुणप्राघासिकस्येति संशये वारुणप्राघासिकेऽल्पमप्राकृतं वैश्वदेविके बहु, तस्मात्तदतिदेशोयं वचनस्य बहुफलत्वायेति प्राप्ते ब्रूमः—वारुणप्राघासिकस्याव्यवहितत्वादेतद्ब्राह्मण ऐन्द्राग्न इत्यनेन निःसंदिग्ध-

---

र्थवृत्तिबहुव्रीहिणा संबन्धमात्रं प्रतीयते अङ्गविधीनामपि परम्परासंबन्धोऽस्त्येवेत्यर्थः । अर्थवादानामपि न साक्षाद्विधायकत्वं किंतु विध्येकवाक्यतया । साचाङ्गविधीनामप्यविशिष्टेति भावः । **किंचेति** । सर्वविषयस्य ब्राह्मणशब्दस्य संकोचोऽपि न कल्पनीय इत्युपसंहरति—**तस्मादिति** । सूत्रार्थस्तु—आग्नेयादीनि पञ्च हवींषि सर्वेषु पर्वसु संचरन्तीति पञ्चसंचराणि तेष्वर्थवादातिदेशः हविर्विध्यन्तर्गततया हविःसंनिधानादिति ॥

**एककपालैन्द्राग्नौ च तद्वत्** ॥ २२ ॥ नन्वतुल्यरूपे न्यायातिदेशो युक्तः नतु तुल्यरूपे उदाहरणान्तरे न्यायप्राप्तेः स्वतःसिद्धत्वादित्याशङ्क्य नात्र सूत्रकृतोऽतिदेशे व्यापारः किंतूत्तरविवक्षया प्राप्तिमात्रे । नच एककपाल एव न्यायव्युत्पादनं क्रियताम् । तथाच सूत्रकृत उत्तरविवक्षया प्राप्त्यर्थं यत्नान्तरमपि न भवेदिति वाच्यम् । वैश्वदेवे त्रिंशत्संपद्यन्त इत्याहुतीनां त्रिंशत्त्वमुक्तं वरुणप्रघासे वाजिनो यजत्याहुतीनां संपत्त्यै त्रिंशत्त्वायेति आहुतित्रिंशत्त्वादिलिङ्गबलेन स्फुटतया पञ्चसंचरेष्वेव न्यायव्युत्पादनस्य युक्तत्वादित्यभिप्रायेण विषयप्रदर्शनपूर्वकं तात्पर्यमाह—**वैश्वदेव इत्यादिना** ॥

**एककपालानां०** ॥ २३ ॥ **एतद्ब्राह्मण इति** । साकमेधीयप्रकरण इति शेषः । यथा एतद्ब्राह्मणान्येव पञ्च हवींषीत्यत्र वचनस्य बहुविषयत्वलाभाय साङ्गविधिकस्य सार्थवादकस्य कृत्स्नस्य काण्डस्यातिदेशः तथात्रापि बहुविषयत्वलाभाय वैश्वदेविकातिदेशः इत्युत्थानात्पूर्वं सामान्यतःसिद्धस्य कृत्स्नकाण्डातिदेशस्य विशेषविचाराद्वा सङ्गतिः । **वारुणप्राघासिक इति** । शमीमय्यः स्रुचो भवन्तीत्यादि अल्पमेव वैश्वदेविके तु प्रतिष्ठितो होतव्यः बह्वानीयाविःपृष्ठं कुर्यादित्यादयो बहवो वैशेषिका इत्यर्थः । नचोत्तरविहारस्य संपन्नस्रुक्त्वेन शमीमयत्वादिकं दक्षिणविहारार्थमेवेति शमीमयत्वादेर्वारुणप्राघासिकैककपालधर्मत्वमेवासिद्धमिति याज्ञिकोक्तं युक्तम् । वरुणप्रघासावान्तरप्रकरणेऽविशेषाम्नानात् । शमीमयत्वस्य सर्वविषयत्वेन प्राकृतस्रुचां बाधस्यैव युक्तत्वात् । नच स्वरसामैककपालेतिन्यायादेव वैश्वदेविकधर्मप्राप्तिः संभवतीति वाच्यम् । न्यायाद्वचनस्य शीघ्रप्रवृत्तेरित्युपसंहरति—**तस्मादिति** । एतद्ब्राह्मण ऐन्द्राग्न इति ऐन्द्राग्नसमभिव्याहारात् एककपालस्यापि वारुणप्राघासिकविकारत्वमित्येतदर्थमेव पूर्वसूत्रे ऐन्द्राग्नेपि प्राप्तिरुक्तेति द्रष्टव्यम् । **ननु** वचनस्य बहुविषयत्वलाभाय व्यवहित-

---

१ कः प्रजापतिः.

वारुणप्राघासिकब्राह्मणनिर्देशेन समभिव्याहाराद्वैश्वदेविकस्य तु व्यवहितत्वात्तद्धर्माणां च स्वरसामैककपालामिक्षमिति वक्ष्यमाणादेव न्यायाल्लाभात्तद्विषयत्वे वचनानर्थक्यप्रसङ्गाद्वारुणप्राघासिकैककपालब्राह्मणस्यायमतिदेशः ॥ इति शास्त्रदीपिकायां सप्तमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## सप्तमाध्याये द्वितीयः पादः ।

रथंतरादिशब्दानां गानविशेषार्थताधिकरणम् ॥ १ ॥

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥ [शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात्पृथग्भावात्क्रियाया ह्यभिसंबन्धः ॥ २ ॥ स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावे- नोपदिश्येरन् ॥३॥ शब्दमात्रमिति चेत् ॥४॥ नौत्पत्तिकत्वात् ॥ ५ ॥ शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥ स्वरस्येति चेत् ॥ ७ ॥ नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ८ ॥ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥९॥ लिङ्गदर्शनाच्च ॥ १० ॥ अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥ शब्दानां चासामञ्जस्यम् ॥ १२ ॥ अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ अद्रव्यं चापि दृश्यते ॥ १४ ॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥ तस्मिन्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥ योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥ अयोनौ चापि दृश्यतेऽतथायोनि ॥१८॥ ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥१९॥ स्यादर्थान्तरेष्वनिष्पत्तेर्यथा लोके ॥ २० ॥ शब्दानां च सामञ्जस्यम् ॥ २१ ॥]**

अतिदेश्यं विनिश्चेतुं कवतीषु रथंतरम् ॥ गायतीत्यृग्गानयुक्ता शब्दार्थो गानमेव वा ॥ १ ॥

इति चिन्ता गानयुक्ता त्वभि त्वेत्यृक्प्रसिद्धितः ॥ लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् ॥ २ ॥

'कवतीषु रथंतरं गायती'त्यत्रानेन रथंतरशब्देन किं कवतीष्वतिदिश्यत इति परिज्ञानार्थं रथंतरादिशब्दाः किं गीतिविशिष्टानां 'अभि त्वा शूर नोनुम' इत्यादीनां वाचका उत गीतिमात्रस्येति चिन्त्यते । द्वितीये तु मन्त्रलक्षणं कुर्वता गीतिः सामेत्येतावदुक्तं नतूपपादितम् । इहत्वतिदेशविष-

---

विषयत्वमेव युक्तं साहचर्यं च न सार्वत्रिकमित्यभ्युच्चयेऽस्वरसान्मूलयुक्तिमाह—**तद्धर्माणामिति** । स्वरसामैककपालामिक्षं च लिङ्गदर्शनादित्यनुपदमेव वक्ष्यमाणन्यायेन विलम्बितप्रवृत्तिकेनापि वैश्वदेविकधर्मप्राप्तेर्वचनं विना संभवादन्यलभ्यतया तद्विषयत्वे वचनमनर्थकं स्यादिति भावः । सूत्रार्थस्तु—एककपालानां सर्वेषां वैश्वदेविकः प्रकृतिः आग्रयणे 'यत्सर्वहुतं करोति सात्वेका परिचक्षा यद्धुतो हुतः पर्यावर्तते सा द्वितीया तस्मादाज्यस्यैव द्यावापृथिव्यौ यजेते'त्याज्यविधिपरे सर्वहोमस्यापर्यावृत्तेश्च दर्शनादवभृथे चेदमेवैककपालस्य द्विरवद्यतीति द्विरवदानवचनात् अन्यत्र न द्विरवदानमिति गम्यते । ततएव चैककपालानां सर्वेषां वैश्वदेविकः प्रकृतिरिति सिद्धत्वात् । तद्विषयत्वे वचनानर्थक्यं स्यादिति वारुणप्राघासिकातिदेश इति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां सप्तमाध्यायस्य प्रथमः पादः॥१॥**

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥** ननु रथंतरादिशब्दस्य किं गीतिविशिष्टऋग्वचनत्वमुत गीतिवचनत्वमिति विचारस्यातिदेशविचारात्मकेऽध्याये कथं सङ्गतिरित्याशङ्क्य सङ्गतिप्रदर्शनपूर्वकं संशयमाह—**कवतीष्विति** । कशब्दयुक्तासु कयानश्चित्र इत्यादिषु ऋक्षु 'रथंतरं गायती'ति द्वादशाहे अविवाक्यगतश्रुतेरर्थः । तथाच गीतिवचनत्वविचारस्यातिदेशार्थत्वेन तन्मुखेनातिदेशस्यैव विचार्यत्वादध्यायसङ्गतिः । आद्याधिकरणे पारिप्लवत्वविचारानन्तरं तत्सापेक्षश्येनादिवचनातिदेशः प्रथमपादे विचारितः । इदानीं तन्निरपेक्षो वचनातिदेशो निरूप्यत इति पादान्तरत्वमानन्तर्यं च । **ननु** 'गीतिषु सामाख्ये'ति रथंतरादिशब्दानां गीतिवचनत्वं द्वितीय एव सिद्धमित्यत आह—**द्वितीयेत्विति** । 'अहेबुध्नियमन्त्रं मे गोपाय । यमृषयस्त्रयीविदा विदुः । ऋचः सामानि यजूंषी'ति उपक्रमात्त्रैविध्यार्थे गीतिः

---

१ सिकस्यैककपाल. २ सामेत्युक्तम्.

थसिद्ध्यर्थं गीतिविषयत्वमेव न्यायेन दृढीक्रियते । तत्र गीतिविशिष्टायामृचि प्रयोगादृग्वचनत्वम् । विशिष्टवचनत्वे विशेषणभूतगीत्यभिधानस्यावश्यकत्वात्तदभिधाने च तत एव तदविनाभूतायामृचि प्रतिपत्तिसिद्धेरभिधानशक्तिकल्पनानुपपत्तेर्गीतिमात्रमेषामभिधेयम् । अतोऽभिवत्यां यो गीतिविशेषस्तस्य कवत्यादिष्वतिदेशः ॥ इति श्रीशास्त्रदीपिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## सप्तमाध्याये तृतीयः पादः ।

### अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम् ॥ १ ॥

**उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ [अपूर्वे वापि भागित्वात् ॥ २ ॥ नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥ प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्, तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥]**

मासं जुहोत्यग्निहोत्रमिति नामाग्निहोत्रतः ॥ नित्यान्मासाग्निहोत्रेऽस्मिन्धर्माणां नातिदेशकम् ॥ १ ॥
उतातिदेशकं नैव द्वयोर्नाम्नः समत्वतः ॥ अग्नये होत्रमित्यस्य नित्ये संपादितत्वतः ॥ २ ॥
तत्र मुख्यं ततोऽन्यत्र गौणत्वस्य प्रसिद्धये ॥ नित्याग्निहोत्रगान्धर्मांस्तन्नामातिदिशेदिह ॥ ३ ॥

इदानीं नामातिदेशः प्रस्तूयते । कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोती'ति तत्रैयमिकाग्निहोत्रात्कर्मान्तरमिति स्थिते संशयः किमयमग्निहोत्रशब्दो नैयमिकाग्निहोत्रधर्माणामतिदेशक उत नेति—'उभयोरविशेषेण सामानाधिकरण्यतः ॥ नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति ॥

---

सामेत्यत्रत्यमेवोक्तं तत्र गीतिविशिष्टऋग्वचनत्वेऽपि मन्त्रत्रैविध्यसिद्धेर्नात्यन्तमाग्रहः कर्तव्य इति तत्रोपपादितं किंत्विहैवातिदेशविषयनिर्णयार्थं तत्रार्थादुक्तमेव गीतिवचनत्वं न्यायेन स्थूणानिखननवद्दृढीक्रियत इत्यर्थः । तत्र पूर्वपक्षमाह—**तत्रेति** । अत्र पूर्वपक्षे रथंतरादिशब्दवाच्यानामभिवत्यादीनामृचां कवतीष्वतिदेशासंभवात्तल्लक्षितधर्मातिदेशः, तथा कवतिकार्येऽभिवतीविधिः कवतीषु वाङ्गत्वेनाभिवतीविधिरित्यादि द्रष्टव्यम् । नागृहीतविशेषणान्यायेन गीतिमात्रवचनत्वमेवेति सिद्धान्तमाह—**विशिष्टेति** । कथं तर्हि रथंतरमधीते इत्यादौ रथंतरादिशब्दैः ऋक्प्रतिपत्त्या तदध्ययने प्रवृत्तिरत आह—**तदभिधानेचेति** । ननु नागृहीतविशेषणान्यायस्याकृत्यधिकरण एव व्युत्पादनात्किमर्थमिदमधिकरणमितिचेदधिकाशङ्कानिराकरणार्थत्वात् । इयमत्राधिकाशङ्का यदि तस्यामेवर्चि सत्यां गीतौ सामप्रयोगोऽसत्यां चाप्रयोगस्तदा नागृहीतविशेषणान्यायः । इहतु गीतिवियोगे ऋगेव सा नास्ति ऋग्वर्णान्यत्वेन प्रत्यभिज्ञावियोगात् । यदि बहुतरवर्णभेदेऽपि प्रत्यभिज्ञा तदा सर्वासामृचामेकत्वं स्यात् । तस्मादृगन्यत्वान्नात्र नागृहीतविशेषणान्याय इति । निराकरणं तु ऋक्स्वरूपं पुरस्कृत्यापीभावादेः प्रयोगस्ततस्तत्प्रयोगकाले आपीभावादिप्रकृतिभूताः मन्त्रवर्णाः स्मृत्युपारूढाः । ततः सर्ववर्णप्रत्यभिज्ञाबलाद्युक्तमृगेकत्वम् । अन्यथा आपीभावप्रयोगकाले स्मृत्यभावे साम्नो ऋगक्षराभिव्यञ्जकत्वाभावेऽदृष्टार्थता स्यादिति, तदेतदभिसंधाय पूर्वमेवोक्तं दृढीक्रियते इति । सूत्रार्थस्तु—साम्न अभिधायकेन रथंतरादिशब्देन यथाशिष्टमध्यापकैः शिष्येभ्यः यदनुशिष्यते गीतिविशिष्टमन्त्ररूपं तदनतिक्रम्य प्रवृत्तिर्व्यवहारः स्यादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**उक्तं क्रियाभिधानं०** ॥ १ ॥ प्रत्यक्षवचनस्य प्रथमं बुद्धावारोहात्तन्निमित्तमतिदेशं पादद्वयेन विचार्य कल्पनीयवत्यर्थतया ततो विलम्बितो नामधेयनिमित्तोऽतिदेशस्तृतीयपादे प्रस्तूयत इत्याह—**इदानीमिति** । अग्निहोत्रशब्दस्यातिदेशकत्वं कुण्डपायिनामयनगतस्य कर्मान्तरत्व एव संभवति अन्यथोभयत्राप्युपदेशादेव धर्मसंभवादित्यभिप्रायेण द्वितीयसिद्धं कर्मान्तरत्वं स्मारयति—**तदिति** । 'नाम्ना धात्वर्थमात्रं च संनिधायोत शक्तितः ॥ भावना त्वनुपस्थानाद्भिद्यमाना न वेयत' इति वार्तिकोक्तरीत्या प्रकरणान्तराधिकरणे भावनाभेदव्युत्पादनपक्षे नैयमिकाग्निहोत्र इवात्र प्रकरणे प्रत्यक्षदेवताविध्यभावेनाग्निहोत्रनामत्वमस्फुटमित्यभिप्रायेणात्राधिकरणेऽतिदेशकत्वाभिधानमित्याहुः । **उभयोरिति** । एकत्र मुख्यत्वमन्यत्र गौणत्वमित्यत्र विशेषाभावेन जुहोतिसामानाधिकरण्यान्नामधेयमित्यर्थः । यद्वा द्वितीयान्तस्य न धातुसामानाधिकरण्यमिति शङ्कानिराकरणार्थमुक्तं—**अविशेषेणेति** । नैयमिकेऽपि द्वितीयान्ततया तृतीयार्थलक्षणया सामानाधिकरण्यस्योभयत्र वक्तव्यत्वेन सामानाधिकरण्ये विशेषाभावेन नामधेयमित्यर्थः । **तस्मादिति** । धर्मातिदेशकत्वं हि कल्प्यर्थ-

एकस्य त्वभिधेयत्वे गौणत्वेनापि संभवात् ॥ नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥' नचागृह्यमाणविशेषत्वं नैयमिके अग्नये होत्रमित्येवं प्रवृत्तिनिमित्तं संभवति । इतरस्य त्वग्निदेवत्यत्वं नावगतं अधर्मकश्च कौण्डपायिनस्तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते । नैयमिकस्तु धर्मवान् अतस्तन्नामेदं तत्सादृश्यविधित्सयान्यत्र प्रयुज्यते । सादृश्यं च धर्मनिमित्तमतो धर्मातिदेशोऽयं मासमग्निहोत्रं जुहोतीति ॥

प्रायणीयनाम्ना धर्मानतिदेशाधिकरणम् ॥ २ ॥

## अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

**गवामयन आद्योऽह्नि प्रायणीयेति नाम यत् ॥ तद्द्वादशाहिकादह्नो धर्मानतिदिशेन्न वा ॥ ४ ॥**
**पूर्वन्यायेनातिदेशो नैवं प्रथमता द्वयोः ॥ अह्नोस्तुल्येति मुख्यत्वं समं नातिदिशेदतः ॥ ५ ॥**

'द्वादशाहे प्रथममहः प्रायणीयोऽतिरात्रः गवामयनेऽपि प्रथमेऽहनि वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती'ति प्रायणीयशब्दः प्रयुज्यमानः किं द्वादशाहिकधर्मानतिदिशेन्नेति संशये पूर्ववदतिदेशे प्राप्तेऽभिधीयते—'प्रायणीयपदं येन निमित्तेन प्रवर्तते ॥ प्राथम्येन तदस्त्येव गवामयनिकेऽपि नः ॥ तस्मात्सिद्धनिमित्तेन श्रुत्या नामत्वसंभवात् ॥ न गौणत्वेन धर्माणामतिदेशोऽवकल्पते ॥'

---

लक्षणया नामत्वे च तदसंभवान्न धर्मातिदेश इत्यर्थः । सिद्धान्तमाह—**एकस्य त्विति । नचेति** । नामत्वं न सामानाधिकरण्यमात्रादग्निर्माणवक इत्यादावतिप्रसङ्गात् किंतु सति प्रवृत्तिनिमित्ते । तच्च नैयमिक एवेति भावः । नच प्रकृतस्य होमत्वादाधारतयाहवनीयरूपाग्निसंबन्धमादायाग्नौ होत्रमस्मिन्निति प्रवृत्तिनिमित्तं भवतीति वाच्यम् । आधारतयाग्निसंबन्धस्य व्यावर्तकतया विशेषणत्वासंभवात् । **अधर्मकश्चेति** । गुणयोगनिमित्ता गौणी । अस्य चाधर्मकत्वेन गुणा एव न सन्ति । ततश्चात्र मुख्यत्वनैयमिके गौणत्वं च न संभवति किंतु दोहनादिगुणवति नैयमिक एव मुख्यत्वं तद्योगादत्रैव गौणत्वमित्यर्थः । एतेनास्याधर्मकत्वकथनेन अग्निहोत्रशब्दस्यातिदेशकत्वाभावे प्रकृते धर्मा एव न प्राप्नुवन्ति उपदेशाभावाच्चोदनालिङ्गातिदेशस्य चाष्टमान्त्याधिकरणन्यायेन जुहोतिचोदितेष्वसंभवादित्यपि सूचितम् । नचाग्निहोत्रस्योक्तरीत्या प्रकृतनामत्वासंभवेऽपि गुणविधित्वसंभवाद्वैष्णवादिवदनतिदेशकत्वमिति वाच्यम् । चतुर्थीतत्पुरुषचतुर्थीगर्भबहुव्रीह्योरसंभवान्नैयमिके नामधेयत्वपक्षे तत्संभवः तत्प्रख्याधिकरणे प्रपञ्चितः । **ननु** प्रवृत्तिनिमित्तस्याक्लृप्तत्वान्नामत्वासंभववदग्निर्माणवक इति वत्सादृश्यस्याक्लृप्तत्वाद्गौणत्वमपि न संभवतीत्यत आह—**तत्सादृश्येति** । सिद्धसादृश्याभावेऽप्यमी पिष्टपिण्डाः सिंहाः क्रियन्तामितिवत्साध्यसादृश्यविवक्षया प्रयुज्यते, ततश्चानेनैव सादृश्यं विधीयत इत्यर्थः । **ननु** सादृश्यविधानेऽपि कथं धर्मलाभ इत्यत आह—**सादृश्यमिति** । सूत्रार्थस्तु—अग्निहोत्रशब्दः कर्मनामधेयमित्युक्तं तत्प्रख्यस्थले तस्याग्निहोत्रशब्दस्य प्रकरणान्तरे श्रवणे विधीयमानधर्माणां प्रदेशोऽतिदेशः स्यात् ॥

**अपि वा सत्रकर्माणि०** ॥ ५ ॥ वैश्वानर इति वैश्वानरेण दृष्टो ज्योतिष्टोमः प्रायणीयमहर्भवतीत्यर्थः । **नन्वग्निहोत्र**शब्दस्य प्रवृत्तिनिमित्ताभावेन नामत्वाभावाद्युक्तमतिदेशकत्वमिह तु प्राथम्यलक्षणप्रवृत्तिनिमित्तसंभवेन नामत्वमेवेति कथं पूर्वपक्ष इत्यत आह—**पूर्ववदिति** । अन्याय्यश्चानेकार्थत्वमित्येकत्रैव मुख्यत्वं नोभयत्रेति युक्तमतिदेशकत्वमिति भावः । एतेनापवादिकी सङ्गतिरपि सूचितेति द्रष्टव्यम् । **प्रायणीयपदमिति** । प्रयन्ति प्रारभन्तेऽनेनेति प्रायणीयः । बाहुलकात्करणे अनीयर्प्रत्ययः । प्रायणमारम्भस्तत्र भव इति वा प्रायणीयः । गहादिषु वेणुकादेराकृतिगणत्वाच्छण् । तथाच प्राथम्यं प्रायणीयशब्दप्रवृत्तिनिमित्तम् । तच्च द्वादशाहिकगवामयनिकयोस्तुल्यमिति उभयत्रापि नामधेयमिति न गौणत्वेन धर्मातिदेशकत्वमित्यर्थः । यत्रार्थभेदेन पृथक्शक्तिकल्पनं तत्रैवान्याय्यश्चानेकार्थत्वमिति न्यायः । नैकशक्तिविषयार्थभेदमात्रेणेति भावः । एवंच यत्र चतुर्थे पञ्चमे वाह्नि प्रायणीयशब्दः तत्र प्राथम्यरूपप्रवृत्तिनिमित्तासंभवाद्गौण्या वृत्त्या धर्मातिदेशकत्वमित्युक्तं तन्त्ररत्ने । एतेन चतुर्विंशः प्रायणीयो भवतीति चतुर्विंशाख्ये द्वितीयेऽह्नि प्रयुक्तस्य प्रायणीयशब्दस्य विधास्यमानषडह्नावृत्तिलक्षणमासापेक्षया प्राथम्यमादाय मुख्यत्वादनतिदेशकत्वमिति वेदभाष्ये माधवोक्तं चिन्त्यम् । सर्वापेक्षया प्राथम्य एव प्रायणीयशब्दस्य मुख्यत्वं, मासादि किंचिदपेक्षया तु प्राथम्ये गौणत्वमेव । तथाचावश्यंभाविनि गौणत्वे धर्मविधिलिप्सयातिदेशकत्वस्यैव युक्तत्वादिति । सूत्रार्थस्तु—यत्र कर्मणि गवामयने एषा श्रुतिः प्रायणीयशब्दः गुणार्थः अवयवयोगार्थः स्यादिति ॥

---

१ अग्निहोत्रं. २ स्तोत्रेण समापनीयः.

सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम् ॥ ३ ॥

**विश्वजित्सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ६ ॥ [षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ लिङ्गाच्च ॥ ८ ॥ उत्पन्नाधिकारो ज्योतिष्टोमः ॥९॥ द्वयोर्विधिरिति चेत् ॥१०॥ न व्यर्थत्वात्सर्वशब्दस्य ॥११॥]**

विश्वजित्सर्वपृष्ठः किमनुवादो रथंतरम् ॥ बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् ॥ ६ ॥
अतिदेश्यानि तत्राद्यो माहेन्द्रादिचतुष्टये ॥ पृष्ठशब्दाच्चोदकेन सर्वेषामिह संभवात् ॥ ७ ॥
समुच्चयो वा विषये सर्वत्वं बह्वपेक्षया ॥ न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥ ८ ॥

'विश्वजित्सर्वपृष्ठो भवती'त्यत्र संशयः किमयं सर्वपृष्ठशब्दोऽनुवाद उत बृहद्रथंतरयोर्विकल्पेन प्राप्तयोः समुच्चयविधिरथवा षाडहिकानां रथंतरबृहद्वैरूप्यवैराजशाक्वररैवतानामतिदेश इति। तत्र ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु स्तोत्रेषु सप्तदशानि पृष्ठानीति पृष्ठशब्दप्रयोगात्सर्वेषां पृष्ठत्वं तेषां चेह चोदकात्प्राप्तेः सर्वपृष्ठत्वं निर्ज्ञातमेव विश्वजितः तस्मादयमनुवादः। नैवम्। बृहद्रथंतरसाधनकमाहेन्द्रस्तोत्रवचन एव पृष्ठशब्दो[3] लिङ्गसमवायाच्चतुर्षु प्रयुक्तः, तस्मान्न तेषां पृष्ठशब्दवाच्यत्वमित्यप्राप्ता सर्वपृष्ठता चोदकेनातो नानुवादः। चोदकेन तु विकल्पेन प्राप्तयोर्बृहद्रथंतरयोः पृष्ठयोः सर्वत्वं समुच्चयो विधीयते। नैवमपि युक्तम्। सर्वशब्दस्य बह्वपेक्षत्वाद्द्वयोरप्रवृत्तेः। तस्मात्षाडहिकानां पृष्ठानां

---

**विश्वजित्सर्वपृष्ठे० ॥ ६ ॥ षाडहिकानामिति**। अत्र षाडहिकानां स्तोत्राणामतिदेश इति वक्तव्ये बृहद्रथंतरादिसामकीर्तनेन सिद्धान्तेऽपि पृष्ठशब्दो बृहद्रथंतरादिसामपर एव न स्तोत्रपरः। विश्वजित्प्रकरणे 'रथंतरं पवमाने कुर्यात् आर्भवे बृहन्मध्यत इतराणि वैरूपं होतुः सामे'त्यादिना षाडहिकानां साम्नामेव व्यवस्थाविधिदर्शनात्। अतएव तन्त्ररत्ने पृष्ठशब्दश्चात्र पृष्ठसाधनभूतरथन्तरादिसामाभिधायी न स्तोत्राभिधायीति वेदितव्यमित्युक्तम्। वस्तुतस्तु पृष्ठशब्देन षाडहिकपृष्ठस्तुतीनामतिदेश इति कल्पना युक्ता नतु साम्नां पृष्ठशब्दस्य लक्षणाप्रसङ्गात्। लक्षणाङ्गीकारे च माहेन्द्रादिषु चतुर्षु सप्तदशानि पृष्ठानि, 'पृष्ठैः स्तुवत'इत्यादिषु निरूढाया एव स्वीकर्तुमुचितत्वेन लक्षणाप्रसङ्गेन प्रथमपूर्वपक्षनिराकरणमनुपपन्नं स्यात्। नच रथंतरं पवमान इति साम्नामेव व्यवस्थावचनबलात्सामपरत्वं शङ्कनीयम्। यथाप्राप्ति व्यवस्था वक्तव्येति प्राथमिकपृष्ठशब्दमुख्यत्वानुसारेण स्तुतीनामेव प्राप्तौ निश्चितायां व्यवस्थावाक्यस्थरथंतरादिशब्दानामेव स्तुतिपरत्वस्य युक्तत्वात्। किंच साम्नां स्तोत्रान्तरसाधनत्वेन व्यवस्थायामप्राकृतकार्यत्वं स्यात् स्तोत्राणां त्वदृष्टार्थतया नाप्राकृतकार्यत्वापत्तिरिति। यदपि सर्वशब्देन पृष्ठशब्दादित्यत्र दशमे तन्त्ररत्न एवोक्तं स्तुतेर्बहुत्वाभावात् तत्साधनभूतानि षाडहिकानि रथंतरादीन्पृष्ठशब्देन लक्षयित्वा विहितानीति। तदपि न सामभेदेन, स्तुतिव्यक्तिभेदे बहुत्वसंभवात्। नच सामबहुत्वेन स्तुतेर्बहुत्वमौपाधिकं न मुख्यमिति वाच्यम्। मन्त्रभेदेन वस्तुतः स्तुतिव्यक्तीनां भिन्नत्वात् प्रत्युत पृष्ठचोदनार्थत्वकृतमेकत्वमेव गौणमिति प्रतिभाति। अतएव च टुप्टीकायां षाडहिकानि सर्वाणि पृष्ठानि विधीयन्ते इत्युक्तम्। अत्रापि सिद्धान्ते तस्मात्षाडहिकानां पृष्ठानामित्येवोक्तम्। तस्मात्पृष्ठशब्दः स्तोत्रपरएव न सामपरः। **ननु** माहेन्द्रस्तोत्रमात्रस्य पृष्ठत्वेन पृष्ठबहुत्वाभावात्कथं सर्वपृष्ठशब्दोऽनुवाद इत्यत आह—**तत्रेति। सप्तदशानि पृष्ठानीति**। माहेन्द्रादिषु चतुर्षु स्तोत्रेषु पृष्ठशब्दप्रयोगान्माहेन्द्रस्तोत्रपरत्वे बहुवचनानुपपत्तेः सर्वेषां पृष्ठत्वाद्युक्तमनुवादकत्वमित्यर्थः। **माहेन्द्रस्तोत्रवचन एवेति**। सप्तदशानि पृष्ठानीति सप्तदशताविधानार्थं माहेन्द्रादिस्तोत्राण्यनूद्यन्ते नात्र पृष्ठता विधीयते। अनेकार्थविध्यनुपपत्तेरनुवादश्च लिङ्गसमवायेन लक्षणयाप्युपपद्यते इति सप्तदशानीति वाक्यपर्यालोचनया न चतुर्णां पृष्ठत्वम्। नच लक्षणैव दोष इति वाच्यम्। उत्पत्तिवाक्ये 'रथंतरं पृष्ठं भवति बृहत्पृष्ठं भवती'ति वैकल्पिकपृष्ठद्वयस्यैव विधानात्। नच 'पृष्ठैः स्तुवते' इत्यस्योत्पत्तिवाक्यतया चित्राधिकरणे वार्तिककारेणोदाहृतत्वात्तत्र बहुत्वमस्त्येवेति वाच्यम्। सर्वथा नोत्पत्तिवाक्यमुदाहरणं किंतु गुणवाक्यमित्यभिप्रायेणानादरेण 'पृष्ठैः स्तुवत' इत्यस्योत्पत्तिवाक्यतया उदाहृतत्वादिति भावः। द्वितीयपक्षमाह—**चोदकेनत्विति। बृहद्रथंतरयोरिति**। बृहद्रथंतरसामसाधनकयोरित्यर्थः। नच वैकल्पिकपृष्ठद्वित्वमप्रामाणिकमेकस्मिन्नेव पृष्ठे बृहद्रथंतरयोः साम्नोर्विकल्पसंभवादिति वाच्यम्। 'रथंतरं पृष्ठं भवति', 'बृहत्पृष्ठं भवती'ति वाक्यद्वयेऽपि गुणश्रवणेन एकत्र पृष्ठस्तोत्रविधिः अन्यत्र सामरूपगुणविधिरिति नियन्तुमशक्यत्वेनोत्पत्तिशिष्टगुणावरुद्धे गुणान्तरविधानासंभवेन चोभयोरपि वाक्ययोः पृष्ठविधायकत्वेन पृष्ठद्वित्वस्य प्रामाणिकत्वात् अदृष्टार्थयोरपि पृष्ठाख्यस्तोत्रयोर्वचनबलाद्विकल्प इति विकल्पेन प्राप्तयोः समुच्चयोऽपि विधीयत इत्यर्थः। **तस्मादिति**। अत्र 'विश्वजिता यजेते'ति

---

१ तानामिहातिदेशः. २ चोदकप्राप्तेः. ३ शब्दो न लिङ्ग.

ज्योतिष्टोमविकार एव विश्वजिति वचनादतिदेशः। कः पुनर्वचनातिदेशस्यात्र संबन्धः। नहि सर्वपृष्ठशब्दः षडहनामधेयं सदिह गुणवृत्त्या प्रयुक्तम्। यतस्तन्निमित्तोऽतिदेश इह संगच्छेत। सत्यमेवं कर्मसमानाधिकरणपदनिमित्तोऽयमतिदेश इति नामाधिकारे चिन्तितः। परमार्थतस्तु वाचनिक एवायमतिदेशः॥

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम्॥ ४॥

**तथावभृथः सोमात्॥ १२॥ [प्रकृतेरिति चेत्॥ १३॥ न भक्तित्वात्॥ १४॥ लिङ्गदर्शनाच्च॥ १५॥]**

**निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते॥ नीरोत्सेकः कर्मणो वा विधिः सौमिकधर्मणः॥ ९॥**
**यो दर्शपूर्णमासाभ्यां वारुण्यां चोदकागतः॥ व्युत्सेकोऽनूद्यतामेष मैवं कर्मणि सौमिके॥ १०॥**
**मुख्यावभृथशब्दो यस्तत्सादृश्यविवक्षया॥॥ धर्मानतिदिशन्कर्म विधत्ते धर्मसंयुतम्॥ ११॥**

**वरुणप्रघासेषु श्रूयते—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'ति। तत्र किमवभृथशब्देनापां व्युत्सेकं दार्शपौर्णमासिकं चोदकप्राप्तमनूद्य तत्र तुषनिष्कासं विधीयते, अथवा सौमिकावभृथधर्मकं कर्मान्तरं विधीयत इति संशये, अपां व्युत्सेकेऽप्यवभृथशब्दप्रयोगात्तदनुवादः। ननु तत्र गौणोऽवभृथशब्दः। न चेह गौणग्रहणं न्याय्यम्। तुल्यमिदं तवापि गौणत्वम्। अपिच ममानुवादे**

---

उत्पन्ने विश्वजिति पृष्ठानां सर्वतायाश्च विधावपि न वाक्यभेदः विशेषणवैशिष्ट्यांशे विशेष्यांशे च यदि विधिव्यापारस्तर्हि वाक्यभेदः, इहतु विधिव्यापारं विनैव समासबलादेव षडहप्रसिद्धविशिष्टार्थप्रतीतेः 'वषट्कर्तुः प्रथमभक्ष' इत्यत्र प्राथम्यविशिष्टभक्षविधाविव 'विष्णवे शिपिविष्टाये'ति व्याप्तेर्विनापि समासं सामानाधिकरण्यमात्रलब्धविशिष्टविधाविव च न वाक्यभेद इति वार्तिककारीयाः। पृष्ठगतसर्वताविधौ पृष्ठानामर्थात्प्राप्तिरिति भाष्यकारीयाः। नच सर्वतामात्रस्य न पृष्ठाविनाभाव इति नार्थात्पृष्ठप्राप्तिसंभवः। पृष्ठगतविशिष्टसर्वताविधौ स एव वाक्यभेद इति वाच्यम्। पृष्ठगतत्वेनाविधानेऽपि पृष्ठशब्दसमभिव्याहारबलेन वस्तुतः पृष्ठगताया एव सर्वताया विधानादाक्षेपोपपत्तेः। अव्यक्तत्वरूपचोदनालिङ्गाज्ज्योतिष्टोमविकार एव विश्वजिति षाडहिकपृष्ठानां वचनादतिदेशो नैतावता विश्वजितः षडहविकारत्वं गुरुमत इवेत्यभिप्रायेण ज्योतिष्टोमविकार एवेत्युक्तम्। **वचनादतिदेश इति।** नचान्यसंबन्धपूर्वकत्वाप्रतीतेर्नातिदेश इति वाच्यम्। पृष्ठबाहुल्यस्य षडहे प्रसिद्धत्वेन सर्वपृष्ठशब्दप्रयोगे तत्रत्यसर्वपृष्ठप्रतीत्याऽतिदेशत्वोपपत्तेः वचनातिदेशस्य तृतीयपादेऽसङ्गतिमाशङ्कते—**कः पुनरिति। सत्यमिति।** प्रसङ्गात्सङ्गतिरिति भावः। सूत्रार्थस्तु—विश्वजिति सर्वपृष्ठो भवतीति ज्यौतिष्टोमिकानि पृष्ठान्यनूद्यन्ते विश्वजितो ज्योतिष्टोमपूर्वकत्वात्। अस्ति च माहेन्द्रादिषु चतुर्षु पृष्ठशब्दः। तथाच पृष्ठबहुत्वं ज्योतिष्टोमे उपपन्नमिति तदनुवाद इति॥

**तथावभृथः सोमात्॥ १२॥ वारुण्या इति।** वारुण्या आमिक्षायाः निष्कासेन पात्रलग्नेन शेषेण पुरोडाशानां तुषैश्चावभृथं कुर्यादित्यर्थः। यन्तीति प्रकृत्यंशश्च प्राप्तावभृथदेशगमनानुवादः। 'सौर्यं चरुं निर्वपे'दित्यादौ चोदकप्राप्तनिर्वापानुवादवदिति द्रष्टव्यम्। तत्रावभृथशब्दः सौमिकावभृथधर्मातिदेशको न वेति मूलचिन्तामभिप्रेत्य तदर्थचिन्तामाह—**तत्रेति।** प्रणीतानामपां संयवने विनियुक्तानामन्तर्वेदि यो व्युत्सेकः तं चोदकप्राप्तमनूद्य किं तत्र तुषनिष्कासगुणौ विधीयते उत सौमिकावभृथधर्मकं तुषनिष्कासद्रव्यकं कर्मान्तरं विधीयत इति विचार इत्यर्थः। प्राप्तकर्मानुवादेन कथं तुषनिष्कासाख्यगुणद्वयविधिर्वाक्यभेदापत्तेरिति शङ्कां निराकर्तुं तुषनिष्कासयोर्न पृथग्भूतगुणयोर्विधानं किंतु गौश्चाश्वश्चेत्यादिवच्चशब्देन समुदायीकरणादेकतामापन्नयोरेव विधानं तथाचैकार्थविधानान्न वाक्यभेद इत्यभिप्रायेण तुषनिष्कासमित्येकवद्भावनिर्देशः। **अपां व्युत्सेक इति।** 'एष वै दर्शपूर्णमासयोरवभृथ' इत्यत्रेति शेषः। यद्यपि लक्षणायां प्रयोगदर्शनमकिंचित्करं तथापि सिद्धान्ते सौमिकावभृथस्यैवात्राप्यपां व्युत्सेकस्यापि प्रयोगबलाज्झटिति प्रतीतिरस्तीत्यभिप्रायेण प्रयोगः प्रदर्शितः। **तुल्यमिति।** परत्र परशब्दप्रयोगाद्गौणत्वं तुल्यमित्यर्थः। नच विनिगमनाविरह इत्याह—**अपि चेति।** ननु यत्किंचित्सोमलिप्तं तेनावभृथं यन्तीतिवदवभृथदेशे तुषनिष्कासविधिः प्रतिपत्तिविधिः किं न स्यात्। नच तत्र वारुणैककपालेनावभृथं यन्तीति वचनान्तरेणावभृथस्य विहितत्वाद्युक्तं तद्देशनयनविधिः सोमलिप्तप्रतिपत्तिविधिरिति। इहतु वाक्यान्तरेणावभृथाप्राप्तेर्न प्रतिपत्तिविधिः संभवतीति वैषम्यमिति वाच्यम्। अवभृथाख्यकर्मान्तराभावेऽप्यवभृथशब्देनापां व्युत्सेकं लक्षयित्वा तद्देशे नयनरूपप्रतिपत्तिविधानसंभवादितिचेन्न। अवभृथशब्देनापां व्युत्सेकं लक्षयित्वा तेन च देशलक्षणायां लक्षितलक्षणाप्रसङ्गात्। तस्मादपां व्युत्सेक एव तुषनिष्कासगुणविधिः न तुषनिष्कासयोरपां व्युत्सेकदेशे

गौणः तव तु विधौ तस्मादपां व्युत्सेके गुणविधिः—'सत्यं ममापि तुल्यत्वमस्ति तत्तु प्रमाणवत् ॥ कर्मान्तरे प्रयुक्तत्वाद्भवतस्त्वप्रमाणकम् ॥ गौणत्वं नहि शब्दस्य स्वरसादवगम्यते ॥ अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत् ॥' नचेहापां व्युत्सेकपरत्वेऽवभृथशब्दस्य प्रमाणमस्ति । यन्तीत्यनेन तु प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते । तत्र प्रयुज्यमानोऽवभृथशब्दो मुख्यावभृथसादृश्यं विदधत्तद्धर्मानतिदिशतीति न्याय्यम् ॥

वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

## द्रव्यादेशे तद्द्रव्यं श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

तत्र द्रव्यं पुरोडाशस्तुषनिष्कासकाद्युत ॥ प्राप्तोऽवभृथशब्देन पुरोडाशोऽतिदेशतः ॥ १२ ॥
तुषनिष्कासयोरत्र साक्षाच्छ्रुत्युपदेशतः ॥ अतिदेशप्रापितस्य पुरोडाशस्य बाधनम् ॥ १३ ॥

यदिदं कर्मान्तरं तत्किं पुरोडाशद्रव्यकमुत तुषनिष्कासद्रव्यकमिति विचारः । तत्रावभृथशब्देन प्रत्यक्षेण पुरोडाशादिधर्मप्राप्तेस्तद्विशिष्टकर्मपरेण च तुषनिष्कासस्य वाक्यभेदाद्विधातुमशक्तेः पुरोडाश एव द्रव्यं स्यात्—'अपूर्वकर्मविधिनानेकेषामपि चोदनात्[3] ॥ अन्यथा तुषनिष्कासपदानर्थक्यदोषतः ॥ तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् ॥ श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥' अवभृथशब्देन तु गौणेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिस्तस्मात्तस्य बाधः ॥

वैष्णवशब्दादातिथ्यधर्मानतिदेशाधिकरणम् ॥ ६ ॥

## गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः ॥ धर्मातिदेशः स्यान्नो वा विद्यतेऽग्निहोत्रवत् ॥ १४ ॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ॥ न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ १५ ॥

'आतिथ्यायां वैष्णवो नवकपालो भवती'ति श्रूयते । तत्र चाश्ववालादयः केचिद्धर्मा विहिताः । राजसूये 'वैष्णवस्त्रिकपाल' इति श्रुतो वैष्णवशब्दः किमातिथ्यादिधर्माननतिदिशेन्नेति संदेहेऽग्निहोत्र-

---

नयनरूपप्रतिपत्तिविधिरित्यभिप्रायेणोपसंहरति—**तस्मादिति** । गौणत्वाविशेषेऽपि तात्पर्याद्धि वृत्तिः न वृत्तेस्तात्पर्यमिति कर्मान्तरविधिपक्षे सामानाधिकरण्येन तत्परत्वनिश्चयात्सिद्धान्ते गौणत्वं संभवति । पूर्वपक्षे तु अपां व्युत्सेकपरत्वस्य प्रमाणान्तरेणानिश्चयाद्गौणत्वं न संभवतीति वैषम्येण सिद्धान्तमाह—**सत्यमिति । गौणत्वं नहीति** । स्वरसत एव शब्दस्य गौणप्रत्यायकत्वे गौणमुख्ययोर्बलाबलविवेको न स्यादिति भावः । यथा सर्वपृष्ठशब्दः षाडहिकातिदेशकस्तथावभृथशब्दोऽपि सौमिकावभृथधर्मानतिदिशतीति सूत्रार्थः ॥

**द्रव्यादेशे तद्द्रव्यं०** ॥ १६ ॥ पूर्वोक्तकर्मान्तरप्रसङ्गादिदमित्यभिप्रेत्य संशयमाह—**यदिदमिति । तत्रेति** । यद्यपि तुषनिष्कासशब्दोऽपि प्रत्यक्षस्तथाप्यवभृथशब्देन पुरोडाशादिविशिष्टकर्मान्तरपरेण स्वपदोपात्तकर्मणि द्रव्यविधिः तुषनिष्कासशब्देन तु पदान्तरोपात्त इत्यभिप्रायेणेदम् । यद्वा तुषनिष्कासयोः कर्मान्तरोपयुक्तद्रव्यसंबन्धित्वान्न द्रागवभृथद्रव्यत्वं प्रतीयते पुरोडाशस्य त्ववभृथद्रव्यत्वं झटिति प्रतीयत इत्याशयः । तुषनिष्कासद्रव्यं किं विशिष्टविधिविधेयं उत वाक्यभेदेन । नाद्यः । गौरवादित्यभिप्रेत्य द्वितीयं दूषयति—**तद्विशिष्टेति । पुरोडाश एव द्रव्यमिति** । यद्यपि यज्यश्रवणान्न द्रव्यतयान्वयस्तथाप्यवभृथशब्दादेव द्रव्यदेवतातिदेशायागत्वलाभ इति पुरोडाशो द्रव्यतयैव विधीयते, तुषनिष्कासपदं तु यथाकथंचिन्नेयमिति भावः । **अपूर्वेति** । 'यदाग्नेयोऽष्टाकपाल' इत्यादिवदनेकगुणविशिष्टकर्मविधानसंभवान्न वाक्यभेदः । विशिष्टविधिगौरवं तु तुषनिष्कासपदानर्थक्याद्वरमिति भावः । अस्तुतर्हि तुषनिष्कासस्य पुरोडाशस्य च द्रव्यत्वमत आह—**तेनेति** । तुषनिष्कासशब्दस्य मुख्यत्वाद्विशेषविषयत्वेन निरवकाशत्वात् गौणेन धर्मान्तरे सावकाशेनावभृथशब्देन प्राप्तस्य पुरोडाशस्य बाधान्न तस्य द्रव्यत्वमित्यर्थः । सूत्रार्थस्तु—द्रव्यस्य तुषनिष्कासस्यादेशे उपदेशे तदेव द्रव्यं प्राह्यं श्रुतिसंयोगात् । द्रव्योपदेशाभावे हि सौमिकावभृथप्रकृतित्वात्ततः पुरोडाशप्राप्तिरिति ॥

**गुणविधिस्तु०** ॥ १७ ॥ यथावभृथशब्दस्यातिदेशकत्वं एवं वैष्णवशब्दस्येत्युत्थानात्सङ्गतिः—**आश्ववालादय इति** । 'आश्ववालः प्रस्तरो भवति ऐक्षवी विधृति'रित्यादय इत्यर्थः । **अग्निहोत्रन्यायेनेति** । नच प्रायणीयादिवद्यौगिकत्वान्नातिदेशकत्वमिति वाच्यम् । प्रायणीयशब्दस्य विधायकत्वं विनैव पाठादिप्राप्तप्राथम्यरूपयोगार्थानुवादेन नामधेय-

---

१ द्रव्यातिदेशे. २ कर्मविधिपरेण. ३ चोदना. ४ गौणत्वेन. ५ श्रुतौ. ६ नतिदिशति नेति संशये.

न्यायेनातिदेशं मन्वानस्योत्तरं—'श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ॥ न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥'

निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणम् ॥ ७ ॥

## निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

**निर्मन्थ्येनेष्टकापाके बर्हिषाऽवटसंस्कृतौ ॥ अतिदेशो न वाच्योऽस्तु धर्मार्थं तत्र पूर्ववत् ॥ १६ ॥**

'निर्मन्थ्येनेष्टकाः पचन्ति,' 'बर्हिषा यूपावटमवस्तृणाति', 'आज्येन यूपमनक्ती'ति बर्हिराज्यनिर्मन्थ्यशब्दाः पाशुकस्य निर्मन्थ्यस्य दार्शपूर्णमासिकयोश्च बर्हिराज्ययोर्धर्मानतिदिशेयुर्नेति संदेहे वैष्णवशब्दस्यानतिदेशकत्वेऽपीष्टित्वेन दर्शपूर्णमासधर्मलाभाद्युक्तमनतिदेशकत्वम्। बर्हिरादिशब्दानां त्वनतिदेशकत्वेऽन्यतो धर्मालाभात्साकाङ्क्षाविधयः स्युस्तस्मादतिदेशका इति विशेषाशङ्का। लोकतोऽपि मथनादिप्रकारलाभान्न श्रुत्यर्थसंभवे गौणत्वं न्याय्यम् ॥

प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम् ॥ ८ ॥

## सौमिकं तु प्रणयनमवाच्यं हीतरत् ॥ १९ ॥ [उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ प्राकृतं वाऽनामत्वात् ॥ २१ ॥ परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥]

**सौमिकं प्राकृतं वा स्याद्द्वयोः प्रणयनं श्रुतम् ॥ आद्योऽप्राप्तत्वतो मैवमनामत्वेन वादगीः ॥ १७ ॥**

चातुर्मास्येषु चत्वारि पर्वाणि। तत्र श्रूयते 'द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेवैती'ति। तत्र भाष्यकारः सौमिकं तु प्रणयनमित्यादिभिः सप्तभिः सूत्रैरधिकरणद्वयं व्याचख्यौ। प्रथमं तावदिदं चिन्त्यते

---

त्वसंभवादनतिदेशकत्वेऽपि वैष्णवशब्दस्य विष्णुदेवताकत्वस्यान्यतोऽप्राप्त्यावश्यंभाविनि विधायकत्वेऽनेकार्थविधिलिप्सयातिदेशकत्वसंभवात्। **ननु** वैष्णवशब्दस्यातिथ्यायां न कर्मसामानाधिकरण्यम्। नवकपालरूपद्रव्यसामानाधिकरण्यादत्रापि त्रिकपालरूपद्रव्यसामानाधिकरण्यमेव न कर्मसामानाधिकरण्यमतः कथं कर्मधर्मातिदेशकत्वमिति चेत् सत्यम्। 'त्रिकपालं वैष्णववत्कुर्या'दिति त्रिकपाले सादृश्यप्रतिपादने तद्द्वारा त्रिकपालद्रव्यकं कर्म वैष्णवद्रव्यकवत्कुर्यादिति कर्मणि पर्यवस्यति। यथा 'सप्तदशप्राजापत्यानी'ति द्रव्ये श्रूयमाणा संख्या कर्मणि। तस्माद्युक्तमातिथ्याधर्मातिदेशकत्वम्। **श्रुत्येति**। अनेकार्थविधिरपि यत्र श्रुतिविरोधो नास्ति तत्रैवेति भावः। अतएव 'एतद्ब्राह्मण एककपाल' इत्यत्र बहुधर्मलिप्सयापि न वैश्वदेविकैककपालब्राह्मणातिदेशः किंतु वारुणप्राघासिकैककपालब्राह्मणातिदेशविधिरन्यथावचनानर्थक्यप्रसङ्गादित्युक्तम्। अत्र वैष्णवशब्दस्यानतिदेशकत्वे सिद्धान्ते एकदेवताकत्वमौषधद्रव्यकत्वं चादायाग्नेयधर्मः कर्तव्य इति ग्रन्थकारस्याभिमतम्। अतएवाग्रिमाधिकरण इष्टित्वेन दर्शपूर्णमासधर्मलाभादिति वक्ष्यति। अन्येतु सिद्धान्तेऽपि विष्णुदेवताकत्वमवान्तरसामान्यमादायातिथ्याधर्मा एव कर्तव्याः तथाचास्मिन्नुदाहरणे पूर्वोत्तरपक्षयोः प्रयोजनसाम्यादुदाहरणान्तरे प्रयोजनमित्याहुः। सूत्रार्थस्तु—विष्ण्वादिदेवतालक्षणविधिस्तु धर्मान्न गृह्णीयादुभयत्रापि देवतासंबन्धरूपप्रवृत्तिनिमित्तस्य तुल्यत्वात् ॥

**निर्मन्थ्यादिषु चैवम् ॥ १८ ॥ निर्मन्थ्येनेति**। अग्नौ श्रूयत इति शेषः। **बर्हिषेति**। पशाविति शेषः। **पाशुकस्येति**। पशौ 'अग्नेर्जनित्रमसीत्यधिमन्थनशकलं निदधाती'त्यादिना निर्मन्थ्यस्य धर्मा आम्नाताः। तथा दर्शपूर्णमासयोराज्यस्योत्पवनादयो बर्हिषो लवनादयश्च तानित्यर्थः। पूर्वन्यायातिदेशात्सङ्गतिः। अतिदेशोऽयं विशेषाशङ्कानिराकरणार्थ इत्यभिप्रेत्य विशेषाशङ्का तन्निराकरणं च वदन्पूर्वन्यायेनैवात्राप्यतिदेशकत्वमाह—**वैष्णवशब्दस्येत्यादिना**। तृतीये 'बर्हिषा यूपावटमवस्तृणाती'त्यत्र बर्हिर्धर्मा लवनादयः पशौ चोदकप्राप्ता अङ्गप्रधानसाधारणा अप्यप्राकृतकार्यत्वान्न भवन्तीत्युक्तम्। इहतु बर्हिःशब्दस्यातिदेशकत्वाभावाद्धर्मा न भवन्तीत्युच्यत इति विवेकः ॥

**सौमिकं तु० ॥ १९ ॥ द्वयोरिति**। द्वयोः पर्वणोरग्निं प्राचि देशे नयन्तीत्यर्थः। **तत्रेति**। 'सौमिकं तु प्रणयनमवाच्यं हीतरत्, उत्तरवेदिप्रतिषेधश्च तद्वत्, प्राकृतं वा नामत्वात्, परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा, प्रथमोत्तमयोः प्रणयन उत्तरवेदिप्रतिषेधात्, मध्यमयोर्वा गत्यर्थवादात्, औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' एतैः सप्तभिः सूत्रैरधिकरणद्वयं भाष्यकारो व्याचख्यौ। तत्राद्यं चतुर्भिर्द्वितीयं त्रिभिरिति विवेकः। तत्राद्यमाह—**प्रथमं तावदिति**। किं सौमिकधर्मकमिदं प्रणयनमुत प्राकृतमिति प्रथमं विचार्यत इत्यर्थः। निर्मन्थ्यादीनामनतिदेशकत्वेऽपि प्रणयतिशब्दस्यातिदेशकत्वं

किं सौमिकमिदं प्रणयनमुत प्राकृतमिति । तत्र प्राकृतस्य चोदकप्राप्तत्वेन वचनानर्थक्यात्प्रणयनमा-त्रवचनोऽपि शब्दोऽर्थवत्त्वाय सौमिकधर्मवति प्रणयने लक्षणया वर्तते । तस्मात्तत्सौमिकमिति प्राप्ते ब्रूमः । प्राकृतं स्यान्नहि प्रणयतिशब्दः सौमिकस्य नामधेयं येन तदुपस्थापयेत्, प्रणयनमात्रं तु ब्रूते तच्च चोदकत एव प्राप्तं तस्मात्प्राकृतस्यैवायमनुवादः । स किमर्थः परिसंख्यार्थो वा, द्वयोः प्रणयन्ति न चतुर्ष्विति गुणविधानार्थो वा, परिसंख्यायास्त्रिदोषत्वात् अर्थवादार्थो वा, तस्माद्वाभ्यामेवैतीति गुणाश्रवणादर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यामः ॥

मध्यमयोर्द्वयोरेव प्रणयनाधिकरणम् ॥ ९ ॥

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥ [मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥]**

**आद्यन्तयोर्मध्ययोर्वा पर्वणोस्तत्प्रसञ्जकात् ॥ आद्यन्तयोरुक्तया मध्ययोः पर्वणोर्भवेत् ॥ १८ ॥**

**अनामत्वाच्च वैधर्म्यात्सौमिकं प्राकृतं न वा ॥ अपूर्वं तत्प्रणयनं शाखान्तरसमोक्तितः ॥ १९ ॥**

तत्रैवं चिन्त्यते कतरयोर्द्वयोरिदं प्रणयनं किमनियम उत प्रथमोत्तमयोरुत मध्यमयोरिति, विशेषाभावादनियमः । 'न वैश्वदेवउत्तरवेदिमुपवपन्ति न शुनासीरीये' इत्युत्तरवेदिप्रतिषेधस्य प्रथमोत्तमयोर्दर्शनात्तयोरेवेदं प्रणयनम् । प्रणयनाङ्गं ह्युत्तरवेदिः, तद्यदि प्रथमोत्तमयोरिदं

---

भविष्यतीत्युत्थानात्सङ्गतिः । **लक्षणयेति** । सौमिके संभारादिधर्मवति लक्षणया वर्तते ततो वत्यर्थे लक्षितलक्षणया सौमिकप्रणयनसदृशं प्रणयनं विधीयत इत्यर्थः । वचनानर्थक्याद्वरं पदमात्रस्य लक्षणा । यद्यपि चतुरवत्ती यजमानः पञ्चा-वत्तैव वपा कार्येतिवदिति भावः । **ननु** प्राकृतस्य पुनर्विधानं चोदकपरिलोपकमस्तु, गृहमेधीये 'आज्यभागौ यजती'-तिवत्, यद्वा प्राकृततुल्यं प्रणयनान्तरं विधीयते । तच्च प्राकृतेन प्रणयनेन समुच्चीयत इति क्रियतां तथाच न वचनानर्थक्यं नवा लक्षितलक्षणादोष इति चेन्न । आरादुपकारकस्यैव साक्षादुपकारसंबन्धित्वेनारादुपकारकाज्यभागविधानस्योपकाराव-च्छेदकतया चोदकपरिलोपकत्वेऽपि प्रणयनस्य संनिपातितया तदसंभवात् । प्रणेयासत्त्यर्थं हि प्रणयनं नादृष्टार्थं । प्रणेया-सत्तिश्चैकेनैव कृतेति न प्रणयनद्वयसमुच्चयसंभवः । भवेदेवं लक्षितलक्षणाश्रयणं यदि प्राकृतपरत्वे वचनानर्थक्यं स्यात् । नच तदस्ति । वक्ष्यमाणरीत्यार्थवादाद्यर्थतया सार्थकत्वादित्यभिप्रायेण सिद्धान्तमाह—**प्राकृतमिति । नामधेयमिति ।** अभिधायकमित्यर्थः सुबन्तत्वाभावेन नामत्वासंभवादनुवाद इत्युपलक्षणं विधिर्वेत्यपि द्रष्टव्यम् । तेन परिसंख्यार्थो वेत्य-ग्रिमग्रन्थः संगच्छते । **परिसंख्यार्थो वेति** । द्वयोरेव न चतुर्ष्वपीति परिसंख्यार्थः । **गुणविधानेति** । तत्संनिधौ 'उत्तरवेद्यामग्निं निदधाती'ति श्रवणादुत्तरवेदिलक्षणगुणविधानार्थमित्यर्थः । **परिसंख्याया इति** । स्वार्थत्यागः परार्थ-स्वीकारः प्राप्तबाधश्चेति दोषत्रयप्रसङ्गादित्यर्थः । **ननु** द्वयोरेव प्रणयनमिति परिसंख्यायामितरयोः प्रणयनाभावादाहवनीय एव न स्यात् । नच द्वयोरेव सधर्मकं प्रणयनमितरयोरधर्मकमिति धर्मपरिसंख्येति वाच्यम् । दार्शपौर्णमासिकप्रणयनस्य धर्माभावेन धर्मपरिसंख्याया अप्यसंभवात् । तथाच परिसंख्याया उन्मेष एव नास्तीति कथं परिसंख्याप्रसक्तिमङ्गीकृत्य त्रैदोष्येण निराकरणमितिचेत् सत्यम् । द्वयोरेव न चतुर्ष्वित्यस्य प्रदर्शनार्थत्वेन द्वयोः प्रणयनमेव नाङ्गान्तरमित्यपि वाचनि-कपरिसंख्याया विवक्षितत्वेन तदभिप्रायेण त्रैदोष्यकथनोपपत्तेः । **अर्थवादार्थो वेति** । यस्माद्द्वयोः प्रणयनमस्ति तस्मा-त्ताभ्यां गमनं संभवति, ततश्च यज्ञः समाप्तिं गच्छतीति स्तुत्यर्थ इत्यर्थः । **गुणाश्रवणादिति** । उत्तरवेदिलक्षणगुणश्च वाक्या-न्तरे श्रूयते नतु दध्ना जुहोतीत्यादिवत्स्ववाक्य इति भावः । **सूत्रार्थस्तु**—सौमिकं सौमिकसदृशं प्रणयनमितरत्प्राकृतं चोद-कप्राप्तं त्ववक्तव्यमिति ॥

**प्रथमोत्तमयोः०** ॥ २३ ॥ प्रासङ्गिकीं सङ्गतिमभिप्रेत्याह—**तत्रैवेति** । द्वयोः प्रणयन्तीत्यस्मिन्नेव वाक्ये कतरयोर्द्वयोरिदं प्रणयनमिति चिन्त्यत इत्यर्थः । तत्रैवेत्यनेन प्रसङ्गः सूचितः । **ननु** पूर्वाधिकरणे प्राकृतमिदमित्युक्तं प्राकृतं च सर्वपर्वसु चोदकप्राप्तमिति कतरयोर्द्वयोरिति विचारोऽनुपपन्न इतिचेत्, नहि प्रणयनं कतरयोर्द्वयोः कर्तव्य-मिति चिन्त्यते येनोक्तदोषः स्यात्, किंतु प्राकृतस्य पुनःश्रवणं कतरयोर्द्वयोरिति चिन्त्यते । तथाचायमिह **ग्रन्थार्थः** । द्वयोः प्रणयन्तीत्यनुकीर्तितं यदिदं प्रणयनं तत्कतरयोरिति द्वितीयं पक्षं गृह्णाति—**नेति** । चात्वालात्पुरीषमाहृत्य वेद्यां यथोत्तरवेदिर्भवति तथा वैश्वदेवे शुनासीरीये च पर्वणि पुरीषं न निर्वपेदित्यर्थः । चात्वालान्मृदाहृत्योत्तरवेदिं न कुर्यादिति यावत् । ननूत्तरवेदिप्रतिषेधस्योत्तरवेदिप्राप्तिगमकत्वेऽपि न प्रणयनव्यवस्थापकत्वमित्यतस्तदेवोपपादयति—**प्रणयनाङ्ग-मिति** । न वैश्वदेव इति प्रतिषेधः प्रणयनाङ्गभूताया उत्तरवेदेः प्रसक्तिं सूचयन् प्रथमोत्तमयोरेवोत्तरवेदिशेषीभूतं प्रणयनं

---

१ मेतीति.

प्रणयनं स्यात्ततस्तयोरुत्तरवेदिः प्राप्नोति। प्राप्तौ च सत्यां प्रतिषेधो घटते नान्यथा। तस्मात्प्रथमोत्तमयोरिति प्राप्तेऽभिधीयते—मध्यमयोः स्याद्गत्यर्थवादवाक्यशेषात्। तस्माद्वाभ्यामेतीति गतिसाधनभूतयोरिदं प्रणयनमिति गम्यते। गतिसाधनत्वं च मध्यमयोः पर्वणोरूरुत्वसंस्तवादवगतम्। तस्मान्मध्यमयोरिदं तदर्थवादस्य प्रयोजनम्। तद्वशेन हि मध्यमयोः प्रणयनं व्यवतिष्ठते। भवतु व्यवस्थानं किमर्थं तु प्राप्तस्य प्रणयनस्य मध्यमयोरनुकीर्तनम्। गुणार्थमिति ब्रूमः। अस्मिन्हि प्रणयने 'उत्तरवेद्यामग्निं निदधाती'ति श्रुतम्। यदा चैतदर्थवादवशान्मध्यमयोः प्रणयनं व्यवस्थापितं तदोत्तरवेद्यामग्निं निदधातीत्येतदपि मध्यमयोरेव स्यादन्यथा चतुर्ष्वपि स्यात्। तस्मादुत्तरवेदिं मध्यमयोरुपसंहर्तुं सार्थवादकस्य प्रणयनस्य पुनः श्रवणम्। यत्तु 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय' इति तत् 'उपात्र वपन्ती'ति वचनान्तरेणाविशेषविहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधार्थमिति न किंचिदनर्थकम्। इदं तु व्याख्यानं वार्तिककारो नानुमेने। यत्तावदुक्तमर्थवादार्थो पुनः श्रुतिरिति तन्न। नाविधीयमानेऽर्थवादः संभवति। 'विधिनात्वेकवाक्यत्वा'दिति न्यायादविधिशेषस्यानर्थक्यात् नचोत्तरवेद्युपसंहारः प्रयोजनं तदसंभवात्। सत्यपिहि द्वयोः पर्वणोः सार्थवादप्राकृतप्रणयनानुवादे वाक्यान्तरेणाग्निनिधानानुवादेन विनियुज्यमानोत्तरवेदिश्चतुर्ष्वपि चोदकप्राप्ताग्निविधानसंभवा-

---

व्यवस्थापयतीत्यर्थः। यद्यपि प्राकृतमिदं प्रणयनं प्रकृतौ च प्रणयनस्योत्तरवेदिर्नाङ्गं तथापि अत्र प्रकरणे उत्तरवेद्यामग्निं निदधातीति विधानात्प्राकृतेऽप्यस्मिन्प्रणयने उत्तरवेदिरङ्गमिति भावः। तथाच प्रणयनाङ्गतया प्रथमोत्तमयोरुत्तरवेदिविधानान्न वैश्वदेव इति प्रतिषेधाच्चोत्तरवेदेर्विकल्पः। **गत्यर्थवादेति**। द्वाभ्यां पर्वभ्यां चातुर्मास्यपुरुष एति गच्छति समाप्तिं गच्छतीति गतिसाधनत्वेन स्तुत्यर्थवाक्यशेषादित्यर्थः। **ऊरुत्वसंस्तवादिति**। 'ऊरू वा एतद्यज्ञस्य यद्वरुणप्रघासाः साकमेधाश्चे'त्यनेनेति शेषः। यदुक्तमर्थवादस्य प्रयोजनं वक्ष्यत इति तदिदमेवेत्याह—**तदर्थवादस्येति**। द्वयोः प्रणयन्तीत्यनूदितस्य व्यवस्थायामपि इतरयोरपि पर्वणोश्चोदकप्राप्तप्रणयनसद्भावादुत्तरवेदिरपि चतुर्ष्वपि स्यादिति पुनः कीर्तनं व्यर्थमिति शङ्कते—**भवत्विति**। **गुणार्थमिति**। पूर्वाधिकरणोक्तरीत्या स्ववाक्ये गुणाश्रवणात् गुणविध्यर्थत्वासंभवेऽपि वाक्यान्तरविधीयमानस्य उत्तरवेदिलक्षणस्य गुणस्य मध्यमयोः पर्वणोरुपसंहारार्थमित्यर्थः। तदेवाह—**अस्मिन्हीति**। 'उत्तरवेद्यामग्निं निदधाती'त्यग्निनिधानानुवादेन विधीयमानोत्तरवेदिः द्वयोः प्रणयन्तीतिसंनिहिताग्निनिधानार्थैवेत्युत्तरवेदिरपि मध्यमयोरेव व्यवतिष्ठते। असति तु द्वयोः प्रणयन्तीत्यस्मिन्विशिष्य संनिहितालाभे चतुर्ष्वपि चोदकप्राप्ताग्निनिधानसंभवाच्चतुर्ष्वपि स्यात्तस्मादुत्तरवेद्युपसंहारः पुनःश्रवणप्रयोजनमित्यर्थः। यत्तु न वैश्वदेव इति प्रतिषेधबलात्प्रथमोत्तमयोः प्रणयनं, अन्यथा प्रणयनस्य मध्यमपर्वद्वयविषयत्वे उत्तरवेदेरपि तत्रैव व्यवस्थितत्वात्प्रथमोत्तमयोः प्रसक्त्यभावात्प्रतिषेधानर्थक्यमिति तत्राह—**यत्त्विति**। अग्निनिधानार्थतया प्रसक्ताया उत्तरवेदेर्नायं निषेधः किंतु पर्वविशेषमनारभ्य 'उपात्र वपन्ती'ति विहिता या उत्तरवेदिस्तस्याः। तथाच प्रतिषेधस्यान्यथोपपत्तेर्न तद्बलात्प्रथमोत्तमविषयत्वं द्वयोः प्रणयन्तीत्यस्येति भावः। प्रतिषेधार्थमित्यत्र प्रतिषेधशब्देन पर्युदासो विवक्षितः। अन्यथा विहितप्रतिषिद्धत्वेन विकल्पापत्तेरिति ध्येयम्। नच 'उपात्रवपन्ती'त्यस्य श्रुत्यादिविहितवारुणप्राघासिकाङ्गसंदंशवशादवान्तरप्रकरणेन वरुणप्रघासाङ्गतया पर्वचतुष्टयसाधारण्याभावात्कथं तत्प्राप्तप्रतिषेधो 'न वैश्वदेव' इत्यादिरिति वाच्यम्। प्रतिषेधानर्थक्यप्रसङ्गेनावान्तरप्रकरणं बाधित्वा सर्वविषयत्वकल्पनात् 'उत्तरवेद्यामग्निं निदधाती'त्यस्य सार्थवादप्रणयनपुनःश्रुत्या मध्यमपर्वविषयत्वनिश्चयेन तद्बलप्राप्तोत्तरवेदिनिषेधकत्वेन सार्थक्यासंभवात्। **नाविधीयमान इति**। क्लेशात्मके कर्मणि पुरुषं प्रवर्तयितुमुद्यते विधौ साहाय्यमाचरतोऽर्थवादस्य विध्यभावे आनर्थक्यादित्यर्थः। एवमर्थवादत्वमेव न संभवतीत्युक्त्वा ततो वेद्युपसंहारलक्षणं प्रयोजनमपि न लभ्यत इत्याह—**नचेति**। मध्यमपर्वव्यवस्थितस्य द्वयोः प्रणयन्तीत्यस्य संनिधानादुत्तरवेद्यामग्निं निदधातीति मध्यमपर्वविषयत्वमुक्तं तदयुक्तं संनिधानात्प्रकरणस्य बलवत्त्वात्। यदि च 'द्वयोः प्रणयन्ती'त्यनेनैकवाक्यताभावेनोत्तरवेदिर्विधीयते तदा प्रकरणादपि वाक्यस्य बलवत्त्वान्मध्यमपर्वविषयता स्यान्नच तदस्ति, वाक्यान्तरेण विनियुज्यमानत्वादुत्तरवेदेस्तस्मात्सर्वेषु स्यादित्यर्थः। ननु 'उत्तरवेद्यामग्निं निदधाती'त्यविशेषेण प्रकरणबलाद्विनियुज्यमानाया उत्तरवेदेः संनिधानान्मध्यमविषयत्वं न ब्रूमः, किंत्वविशेषेण विनियोग एव न संभवति। अनुवादस्य सति संभवे संनिहितगामित्वात्, तथा चाविशेषेण विनियोगस्यैवाभावाद्युक्ता मध्यमविषयतया वेदिव्यवस्थेतिचेन्न। नूनं भवाननुवादस्य संनिहितगामित्वं न सम्यग्विचारितवान्। तथाहि संनिहितशब्देन बुद्धिसंनिधानमेव विवक्षितं नतु पाठसंनिधानमपि, तथासति 'अभिक्रामं जुहो'

---

१ धायेति.

त्सर्वेषु स्यात् । अपिच 'उपात्र वपन्ती'त्ययमुत्पत्तिविधिरनारभ्याधीतोऽपि 'न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय'इत्यनेन प्रथमोत्तमाभ्यां पर्युदस्तो मध्यमयोरेव व्यवस्थित उत्पत्त्यपेक्षश्च विनियोग इत्युत्तरवेद्यामग्निं निदधातीत्ययमपि विधिर्मध्यमयोरेव व्यवतिष्ठते इति नार्थो द्वयोः प्रणयन्तीत्यस्य । यस्तु प्रणयनान्तरमिदं प्रकृतितुल्यं विधीयत इत्यर्थवादं समर्थयते तस्यापि तुल्यमेवानर्थक्यम् । यत्तु 'न वैश्वदेव उत्तरवेदिमुपवपन्ती'त्ययं प्रतिषेधः पर्युदासो वा न संभवतीति प्रलप्यते तद्बालसंमोहनमात्रत्वादुपेक्षणीयम् । यदि च कथंचिद्द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्युपसंहारः सिद्ध्यति तत 'उपात्र वपन्ती'त्ययमपि विनियोगापेक्षत्वाद्विनियोगव्यवस्थया मध्यमयोरेव व्यवतिष्ठते न प्रथमोत्तमयोः । ततश्च न वैश्वदेव उत्तरवेदिमिति वचनमनर्थकं स्यात् । अस्त्विति चेन्न । 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्रविरोधात् । इदं हि तत्प्रयोजनकथनार्थं सूत्रम् । तस्मात्सर्वमिदमेकमधिकरणमेवं वर्णयितव्यम् । द्वयोः प्रणयन्तीति किं प्राकृतं प्रणयनमुत सौमिकमुतापूर्वमिति त्रिधा संशयः । तत्र प्रणयनमात्रश्रवणात्तस्य चातिदेशतः प्राप्तेस्तस्यैवेयं पुनःश्रुतिः परिसंख्यार्थो गुणार्थो अर्थवादार्थो वा । परिसंख्याद्यसंभवात् । आनर्थक्यपरिजिहीर्षया सामान्यवचनोऽपि प्रण-

---

ती'ति होमानुवादेन विधीयमानमभिक्रमणं संनिहितप्रयाजहोमविषयं वाक्येनैव सिद्धमिति तदर्थमवान्तरप्रकरणव्युत्पादनमसंगतं स्यात् । बुद्धिसंनिहितगामित्वमनुवादस्येत्युक्तौ तु प्राकरणिकसर्वहोमानुवादेन विधानान्न वाक्येन प्रयाजार्थता सिद्ध्यतीति तदर्थमवान्तरप्रकरणव्युत्पादनमावश्यकम् । तथा 'बर्हिषि हवींष्यासादयती'ति यस्यैव हविषः कियानपि पाठसंनिधिस्तस्यैव बर्हिष्यासादनं स्यादिति दिक् । तस्मात्सर्वपर्वस्वपि चोदकप्राप्ताग्निनिधानसद्भावाद्बुद्धिसंनिहिताग्निनिधानानुवादेन विधीयमानोत्तरवेदिः सर्वपर्वसु स्यादेवेति । **अपिचेति** । न वैश्वदेव इति प्रथमोत्तमपर्युदासबलेन 'उपात्र वपन्ती'त्युत्तरवेद्युपपत्तेर्मध्यमपर्वविषयत्वे निर्णीते यथोत्पत्तिविनियोग इति उत्तरवेद्यामग्निं निदधातीति विनियोगस्य मध्यमविषयतया व्यवस्थितत्वादन्यथासिद्धतया वेद्युपसंहारो प्रयोजनमित्यर्थः । प्राभाकरास्तु—'तस्माद्द्वाभ्यामेती'त्यर्थवादस्य विध्येकवाक्यतासिद्ध्यर्थं प्राकृतं प्रकृतितुल्यं प्रणयनान्तरं विधीयते न प्राकृतमेवानूद्यत इति सिद्धान्तयन्ति । तन्मतेऽपि विध्येकवाक्यतयार्थवादसमर्थनेऽपि न वैश्वदेव उत्तरवेदिमुपवपन्ति न शुनासीरीय इति वाक्यबलादुपात्र वपन्तीत्यस्य मध्यमविषयत्वव्यवस्थितौ द्वयोः प्रणयन्तीत्यस्यानर्थक्यं तुल्यमित्याह—**यस्त्विति** । अत्र तैरेवोक्तं न वैश्वदेव इति न प्रतिषेधस्तथात्वे प्रतिषेधविषये पर्वद्वये विधिप्रतिषेधबलेनोत्तरवेदेः विकल्पः प्रतिषेधरहितपर्वद्वये नित्यमुत्तरवेदिरिति वक्तव्यम् । तथाचोपात्र वपन्तीत्यस्य पर्वद्वये विकल्पेनोत्तरवेदिविधायकत्वं पर्वद्वयेच नित्यतयेति वैरूप्यापत्तेः । नापि पर्युदासः अविशेषेण पर्वचतुष्टयसंबन्धबाधापत्तेः । तथाच न वैश्वदेव इति नित्यानुवाद एवेति तद्बलादुपात्र वपन्तीत्यस्य मध्यमपर्वविषयत्वासिद्ध्या द्वयोः प्रणयन्तीत्यस्यैव व्यवस्थापकतया न वैयर्थ्यमिति तन्निराकरोति—**यत्त्विति** । प्रतिषेधासंभवेऽपि पर्युदासः संभवत्येव । नचाविशेषेण प्राप्तपर्वचतुष्टयसंबन्धबाधः पर्युदासबाधकः । सामान्यप्राप्तसंबन्धबलात्पर्युदासपरित्यागेनार्षेयमित्यादौ क्वापि पर्युदासो न स्यादिति बालसंमोहनमात्रमिदमित्यर्थः । एवं द्वयोः प्रणयन्तीत्यस्यानर्थक्यमुक्तमिदानीं द्वयोः प्रणयन्तीत्यस्योपदेशतयोपदेशश्चोपदेशमुपोद्बलयतीतिन्यायेनोत्तरवेद्यामग्निं निदधातीत्युपदेशोपोद्बलकतया स्वविषयपर्वद्वय एवोत्तरवेदिव्यवस्थापकत्वमिति प्राभाकरोक्तरीत्या व्यवस्थासंभवेऽपि न वैश्वदेव इत्यस्यानर्थक्यमित्याह—**यदि चेति** । उपात्र वपन्तीत्युत्पन्नाया वेदेः प्रकरणबलेन सर्वपर्वविषयविनियोजकश्रुतिकल्पनापेक्षया झटिति प्रवृत्तेन पर्वद्वयविनियोगविषयेणोत्तरवेद्यामग्निमिति प्रत्यक्षवचनेन निराकाङ्क्षीकरणेन सर्वपर्वसु विनियोगप्राप्त्यभावेन न वैश्वदेव इति वचनमनर्थकं स्यादित्यर्थः । **ननु** नित्यानुवादत्वाङ्गीकारान्नेदं दूषणमिति शङ्कते—**अस्त्वितिचेदिति** । **औत्तरवेदिक इति** । इदं हि सूत्रं यदि प्रणयनं मध्यमयोः स्यात्तदा तद्बलादेवोत्तरवेदेरपि मध्यमयोर्व्यवस्थितत्वेन प्रथमोत्तमयोः प्राप्त्यभावात्प्रतिषेधानर्थक्यमिति शङ्कायामुपात्र वपन्तीत्यविशेषेण विहितोत्तरवेदिप्रतिषेधार्थतया न वैश्वदेव इति वाक्यमुपपन्नमिति तत्प्रयोजनकथनार्थं तच्चानुवादत्वेऽनर्थकं स्यात्तस्मान्नित्यानुवादत्वे सूत्रविरोधः स्यादित्यर्थः । नच सूत्रमप्यनुवादत्वपरमेवास्त्विति वाच्यम् । तथा सत्युत्तरवेद्युपसंहारबललब्धार्थिकनिषेधानुवादकत्वसंभवेन न वैश्वदेव इत्यादिनिषेधार्थतया सर्वपर्वसाधारणप्रसक्तिसंपादनायोपात्र वपन्तीत्येतस्य सूत्रेऽनारभ्यवादत्वप्रतिपादनवैयर्थ्यापातात् । **सर्वमिति** । सप्तसूत्रमित्यर्थः । अत्र भाष्यकारीयसिद्धान्तः प्रथमः पक्षः । तदीयपूर्वपक्षो द्वितीयः । **परिसंख्येति** । परिसंख्यार्थत्वतदसं-

---

१ त्ययमुत्तरवेद्युत्पत्ति. २ प्रकृत्यर्थवादं समर्थयते.

यनशब्दः सधर्मकं सौमिकं प्रणयनं लक्षणया प्रतिपादयति । तथाचोत्तरवेदिप्रतिषेधोऽवकल्पते न वैश्वदेव इति। नचायम् 'उपात्रवपन्ती'त्यस्य प्रतिषेधः। तस्यावान्तरप्रकरणेन केवलवरुणप्रघासविषयत्वात्प्रथमोत्तमयोरप्राप्तेः प्रतिषेधानर्थक्यात् । अस्मिंश्च पक्षे प्रथमोत्तमयोरिदं सौमिकं प्रणयनमुत्तरवेदिप्रतिषेधस्य तद्विषयत्वात् । यदि च मध्यमयोः स्यात्ततस्तद्वशेनैव मध्यमयोरुत्तरवेदिसिद्धेः 'उपात्रवपन्ती'त्ययं प्रथमोत्तमविषय एव स्यात्तयोरेव च प्रतिषेध इति व्याघातः स्यात् । तस्मात्प्रथमोत्तमयोः सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयत इति प्राप्तेऽभिधीयते—'नहि प्रणयतीत्येतत्सौमिकस्याभिधायकम् ॥ प्राकृतस्यानुवादे च वचनं स्यादनर्थकम् ॥ तस्मात्प्रणयतीत्येतदप्राकृतमसौमिकम् ॥ अपूर्वमग्नेर्नयनं वदत्याहवनीयतः ॥' यद्यपि प्रणयनमात्रं श्रुतं तथापि शाखान्तरे 'आहवनीयाद्द्वावग्नी प्रणयत' इति वचनात्तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादभ्यन्तरस्य प्रणयनं पशुबन्धवद्विधीयते । तच गत्यर्थवादवशान्मध्यमयोः पर्वणोर्भवति । परिसंख्यार्थमित्यादिसूत्रत्रयं त्रयाणामपि पक्षाणां यथाक्रमेण प्रयोजनकथनार्थम्। उत्तरवेदिप्रतिषेधस्तु 'उपात्रवपन्ती'त्यस्य सामान्यविषयस्य पर्युदासार्थः । सामान्यविषयत्वं चास्य भाष्य एव समर्थितम् ॥

स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् ॥ १० ॥

## स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥ [चोदनासामान्याद्वा ॥२७॥]

**न विकारा विकारा वा स्वरसामादयो न हि ॥ वैष्णवन्यायतो नैवमनन्यगतिलिङ्गतः ॥ २० ॥**

गवामयने 'स्वरसामान उक्थाः-सप्तदश स्वरसामान' इति । अन्यत्रापि श्रूयते 'पृष्ठ्यः षडहो

---

भवौ पूर्वमेव प्रपंचितौ । **तथाचोत्तरवेदीति** । सौमिकप्रणयनधर्मतया प्रणीयमानानुवचनसंभारादिवदुत्तरवेदेरपि सौमिकधर्मलक्षकप्रणयतिशब्दात्प्राप्तावेव न वैश्वदेव इति पर्युदासः संगच्छते नान्यथेत्यर्थः । **ननु** सौमिकप्रणयनपरत्वेन वैश्वदेव इत्यादि न लिङ्गं तस्योपात्र वपन्तीति वाचनिकोत्तरवेदिनिषेधकत्वेनाप्युपपत्तेरित्यत आह—**नचेति** । ननु सौमिकमपीदं प्रणयनं गत्यर्थवादवशान्मध्यमपर्वद्वयविषयं तदङ्गभूता चोत्तरवेदिरपि तत्रैवेति कथं न वैश्वदेव इति प्रतिषेधोपपत्तिरित्यत आह—**अस्मिन्निति** । सौमिकमिदं प्रणयनमिति पक्षे सौमिकप्रणयनाङ्गभूताया उत्तरवेदेः प्रथमोत्तमयोः पर्युदासबलादङ्गीभूतं प्रणयनमपि तद्विषयमिति निश्चीयते । तथाच प्रथमोत्तमयोः पर्युदस्तोत्तरवेदिके प्रणयने सत्युपात्र वपन्तीत्युत्तरवेद्यामग्निं निदधातीति च मध्यमविषयं संपद्यते । यदि च प्रणयनमेव गत्यर्थवादबलान्मध्यमयोः स्यात्तदा तदङ्गभूतोत्तरवेदेरपि मध्यमयोरेव प्राप्त्या उपात्र वपन्तीत्यस्य मध्यमविषयत्वे वैयर्थ्यप्रसङ्गेन प्रथमोत्तमविषयत्वं स्यात्तयोरेव च प्रतिषेध इति व्याघातः स्यात्। विकल्पाङ्गीकारे तु स एव दोषः गत्यर्थवादश्चोरुमात्रौ मध्यमौ न ताभ्यां गमनं संभवति किंतु पादभूताभ्यां प्रथमोत्तमाभ्यामेवेति यथाकथंचिन्नेय इति भावः । विधिबलात्प्रणयनान्तरत्वनिश्चयेऽपि प्राकृतापेक्षया विशेषाश्रवणात्कथमपूर्वत्वमित्याशङ्क्य प्राकृतापेक्षया विशेषं दर्शयति—**यद्यपीति** । द्वौ अध्वर्युप्रतिप्रस्थातारावित्यर्थः । प्राकृतप्रणयनोत्तरकालमित्यनेन प्राकृतस्य गार्हपत्यापादानकत्वादस्य चाहवनीयापादानकत्वान्न प्राकृतबाध इति दर्शयति । यद्यपि शाखान्तरीयवचनं वरुणप्रघासमात्रविषयं द्वाविति अग्नी इति च वचनात्, तथापि शाखान्तरे आहवनीयापादानकस्य वरुणप्रघासेषु दर्शने तदेकार्थत्वाय द्वयोरित्यस्य प्रणयनान्तरवचनत्वेऽविशेषात् साकमेधेऽप्याहवनीयापादानकत्वं सिद्ध्यतीति भावः । **ननु** प्राकृतप्रणयनाङ्गीकारेऽपि परिसंख्यार्थमित्यादिसूत्राणां का गतिरित्यत आह—**परिसंख्येति** । परिसंख्यार्थं श्रवणं गुणार्थोऽर्थवादो वेति सूत्रं प्राकृतपक्षस्य प्रयोजनकथनपरं प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति सूत्रमुत्तरवेदिवर्जं सौमिकं प्रणयनं प्रथमोत्तमयोः कर्तव्यमित्यर्थकं सन्मध्यमपक्षप्रयोजनकथनपरं 'मध्यमयोर्वा गत्यर्थवादा'दिति सूत्रं गत्यर्थवादवशादपूर्वं प्रणयनं मध्यमयोरनुष्ठेयमिति सिद्धान्तप्रयोजनकथनपरमित्यर्थः । उत्तरवेदिप्रतिषेधबलात्सौमिकमिदं प्रणयनमिति युक्तं तत्राह—**उत्तरवेदीति** । ननु प्रणयनाङ्गतया प्राप्तोत्तरवेदिपर्युदासार्थः येन तद्बलेन सौमिकमिदं प्रणयनं स्यादिति भावः । अवान्तरप्रकरणाद्वरुणप्रघासार्थत्वमुक्तं निराकरोति—**सामान्येति** । सामान्यविषयत्वं चोपात्र वपन्तीत्यस्य पर्युदासबलात्, एवंच मध्यमविषयत्वे उत्तरवेद्यामग्निं निदधातीति साधारण्येन प्रतीयमानोऽपि विनियोगस्तत्रैव व्यवतिष्ठत इत्यपि बोध्यम् ॥

**स्वरसामैककपालामिक्षं०** ॥ २६ ॥ चोदनालिङ्गाद्विशेषातिदेशस्याष्टमिकस्यापि नामधेयापवादप्रसङ्गादत्र सङ्गतिरि-

द्वौ स्वरसामाना'विति । किमेतौ स्वरसामानौ गवामयनिकस्वरसामविकारावुत न । तथा वैश्वदेवे पर्वणि 'वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपालः' । अन्यत्रापि 'मैत्रावरुण्यामिक्षा वारुण एककपाल' इत्यादावेककपालामिक्षा वैश्वदेविकैककपालामिक्षाविकार उत नेति संशये स्वरसामादिशब्दानां गुणविधित्वाद्वैष्णवशब्दवदनतिदेशकत्वान्न तद्विकारत्वमिति प्राप्ते ब्रूमः । अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामत्वादिचोदनाशब्दोपबृंहितेभ्यस्तद्विकारत्वं लिङ्गानि च भाष्य एव दर्शितानि ॥

वासो ददातीत्यादौ वासआदिशब्दानामाकृतिनिमित्तताधिकरणम् ॥ ११ ॥

## कर्मजे कर्म यूपवत् ॥ २८ ॥ [रूपं वाऽशेषभूतत्वात् ॥ २९ ॥]

**वासोनसी वानतक्षणातिदेशकरे न वा ॥ आद्यः क्रियानिमित्तत्वाजातिवाचित्वतोऽन्तिमः ॥ २१ ॥**

कर्मनामधेयानामग्निहोत्रादिशब्दानामुक्तमातिदेशकत्वं यौगिकानां प्रायणीयादिशब्दानां गुणवि-

---

त्यभिप्रेत्य विषयं दर्शयति—**गवामयन इति** । स्वरसामात्मका हर्विशेषा उक्थसंस्थाः सप्तदशस्तोमकाः गवामयने विश्ववदाख्यदिवाकीर्त्यस्याह्नः पुरस्तात्परस्ताच्च त्रयस्त्रय आम्नाताः उक्थाः सप्तदशाः स्वरसामानः अभितो दिवाकीर्त्यमहस्त्रयः स्वरसामानो भवन्तीत्यनेनेत्यर्थः । **अन्यत्रापीति** । अहर्गणान्तरेऽष्टरात्रादावपीत्यर्थः । **अन्यत्रापीति** । अनूबन्ध्यायाः स्थाने मैत्रावरुण्यामिक्षा अवभृथे वारुणएककपालश्च श्रूयत इत्यर्थः । **स्वरसामेति** । स्वराणि स्वराख्यानि सामानि ययोस्तौ स्वरसामानाविति स्वरसामशब्दः स्वराख्यसामलक्षणगुणविधिः एककपालामिक्षाशब्दावपि द्रव्यलक्षणगुणविधी । ततस्त्रयाणामप्यनतिदेशकत्वमित्यर्थः । गुणविधित्वात्स्वरसामादिशब्दानामतिदेशकत्वाभावेऽपि चोदनालिङ्गादतिदेशमादाय गवामयनिकादिविकारत्वं युक्तमिति सिद्धान्तमाह—**अनन्यगतिभ्य इति** । **स्वरसामत्वेति** । स्वरसामत्वचोदनैककपालामिक्षाशब्दोपबृंहितेभ्य इत्यर्थः । स्वरसामत्वैककपालत्वामिक्षात्वचोदनासामान्यादिति यावत् । अत्र यद्यपि लिङ्गानामेव तद्विकारत्वनिश्चायकत्वं चोदनासामान्यमुपबृंहकमिति प्रतीयते तथाप्यन्यार्थदर्शनरूपस्य लिङ्गस्य स्वतो निश्चायकत्वं तान्त्रिकाणामसंप्रतिपन्नमिति स्वरसामत्वचोदनाशब्द उपबृंहितो यैस्तेभ्य इति बहुव्रीहिणा चोदनासामान्यमेव निश्चायकं लिङ्गानि तूपबृंहकाणीति व्याख्येयम् । **लिङ्गानि चेति** । स्वरसामस्तु तावत् 'पृष्ठ्यः षडहो द्वौ स्वरसामाना'वित्युक्त्वाह 'तत्र यत्तृतीयं सप्तदशमहस्तत्त्रयस्त्रिंशस्य स्थानमभिपर्याहरति षडुत्तराणां सोमानामव्यवायाय त्रयाणां सप्तदशानामनूचीनताया' इतीदं लिङ्गम्, अस्यार्थः त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशाख्यो यः पृष्ठ्यः षडहस्तत्र यत्सप्तदशाख्यं तृतीयमहस्तत्त्रयस्त्रिंशानन्तरं कर्तव्यम् । एवंसति त्रिवृदपेक्षया पञ्चदशः षडधिकस्तदपेक्षयैकविंशः षडधिकस्तदपेक्षया त्रिणवस्तदपेक्षया त्रयस्त्रिंश इति पञ्चाप्यहानि षडुत्तरस्तोमकान्यव्यवहितानि संपद्यन्ते । तथा तृतीयस्य सप्तदशस्य त्रयस्त्रिंशानन्तरभावात्स्वरसाम्नोश्च सप्तदशत्वात्त्रयाणां सप्तदशानामनूचीनता सिद्धा भवतीति । इदंच प्रकृतयोः स्वरसाम्नोर्गावामयनिकस्वरसामविकारत्वेन सप्तदशत्वप्राप्तौ घटते नान्यथेति त्रयाणां सप्तदशानामनूचीनतादर्शनं स्वरसाम्नोर्गावामयनिकविकारत्वे लिङ्गम् । अत्र माधवीये त्रयस्त्रिंशस्य स्थानमभिपर्याहरतीति व्यत्यासविधिरित्युक्तम्, तस्यापि सप्तदशस्योत्कर्षविधावेव तात्पर्यं न विनिमय इति द्रष्टव्यम् । आग्रयणे 'द्यावापृथिव्यमेककपालं विधाय यत्सर्वेहुतं करोति सात्वेका परिचक्षा यद्धुतो हुतः पर्यावर्तते सा द्वितीया तस्मादाज्यस्यैव द्यावापृथिव्यौ यजती'ति आज्यविधिपरे वाक्ये वैश्वदेविकैककपालधर्मयोः सर्वहोमपर्यावृत्त्योरनुवाद एककपालानां वैश्वदेविकविकारत्वे लिङ्गं परिचक्षा निन्देत्यर्थः । मैत्रावरुण्यामामिक्षायां 'न वाजिनेन प्रचरन्ती'ति वैश्वदेविकामिक्षाङ्गवाजिनयागनिषेधः सर्वामिक्षाणां वैश्वदेविकविकारत्वे लिङ्गमित्येतानि लिङ्गानि भाष्ये दर्शितानीत्यर्थः । अत्र वाजिनयागस्य प्रधानतयाङ्गत्वाभावेनानतिदेशाद्वाजिनयागप्रतिषेधदर्शनरूपं लिङ्गमयुक्तमिति कृत्वाचिन्तयेदमिति केचिदाहुस्तदयुक्तम् । वाजिनयागस्य वाजिनापचारे द्रव्यप्रयोजकत्वाशक्ततयाऽनित्यस्य नित्यैरामिक्षायागादिभिः सहाधिकारविधिविषयत्वाभावेन वाजिनः प्रतिपत्त्यर्थतया स्विष्टकृदादिवदङ्गत्वस्यैव युक्तत्वात् । अतएव तन्त्ररत्नेऽष्टमे वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यादित्यधिकरणे लिङ्गबलादेवाङ्गेष्वतिदेश इति, प्राभाकरमते चातुर्मास्याङ्गे वाजिनयागे दार्शपौर्णमासिकविध्यन्तद्योतकलिङ्गाभावादतिदेशो न स्यादिति दूषणमुक्तम् । तत्रैवाधिकरणे वाजिने दार्शपौर्णमासिकविध्यन्तातिदेशेऽपि प्रधानामिक्षायागार्थानुष्ठिताङ्गैरेव तदङ्गभूतवाजिनयागेऽपि पश्वर्थानुष्ठितैः पुरोडाश इव प्रसङ्गादुपकारसिद्धेर्न पृथगनुष्ठेयानीति वाजिनस्याङ्गतामङ्गीकृत्यैव प्रसङ्ग उक्तः । यदाह—सत्यपि चातिदेशे न पृथगङ्गानि कर्तव्यानि पशुपुरोडाशस्येव प्रधानार्थैरङ्गैरुपकारसिद्धेरिति । तस्मात्तन्त्ररत्नविरोधादपीदमयुक्तमिति । सूत्रार्थस्तु—स्वरसामैककपालामिक्षं च प्राग्युक्तलिङ्गदर्शनात् गावामयनिकवैश्वदेविकधर्मग्राहकमिति ॥

**कर्मजे कर्म यूपवत्** ॥ २८ ॥ अस्याधिकरणस्य प्रासङ्गिकीं संगतिमभिप्रेत्य वृत्तं कीर्तयति—**कर्मनामधेयाना-**

---

१ विकारा उत. २ सामादिचोदना. ३ होत्रादीनामुक्त.

धीनांच वैष्णवादिशब्दानां गुणविधित्वात् लिङ्गविशेषशून्यानां नास्त्यतिदेशनिमित्तत्वमित्युक्तम्। कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशनिमित्तत्वम्। इदानीं वासःप्रभृतीनां संस्कारनिमित्तत्वमेवास्ति नास्तीति चिन्त्यते—'वासो ददाति अनो ददाती'ति किं वानं तक्षणं च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्यमुत यथासिद्धमेव दातव्यमिति संशयः। तत्र वानतक्षणक्रियायां सत्यां शब्दप्रयोगात्क्रियानिमित्तो वासःशब्दोऽनःशब्दश्च क्रियामेव दानाङ्गतया विधत्ते[1]। तस्मात्सानुष्ठेया दानं कुर्वता। एवं प्राप्ते ब्रूमः—जातिशब्दावेतौ जात्यन्वयव्यतिरेकानुविधानात्। जातिस्तु क्रियाभिव्यङ्ग्येति तदुत्तरकाले शब्दप्रयोगो नतु शब्दः क्रियावाची, तस्मान्न क्रियातिदेशकत्वं शब्दयोः॥

गर्गत्रिरात्रे लौकिकेऽग्नावुपनिधानाधिकरणम्॥ १२॥

**विशये लौकिकः स्यात्सर्वार्थत्वात्॥ ३०॥ [न वैदिकमर्थनिर्देशात्॥ ३१॥ तथोत्पत्तिरितरेषां समत्वात्॥ ३२॥]**

**वैदिको लौकिको वाग्निर्निधेयः संस्कृतेर्वशात्॥ आद्यो होमाय संस्कारो जात्यर्थत्वेन लौकिकः॥ २२॥**

'अग्निमुपनिधाय स्तुवीते'ति किमाधानसंस्कृतोऽग्निराहवनीयादिरुपनिधेय उत लौकिक इति संशये संस्कृतस्य प्रयोजनापेक्षत्वात्सामान्यवचनोऽप्यग्निशब्दस्तद्विषयत्वेन गम्यमानः संस्कारमुपनिधानाङ्गत्वेनातिदिशतीति प्राप्ते ब्रूमः—'वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम्॥ होमादिभिः फला-

---

मिति। स्वरसामाद्यभिप्रायेणाह—**लिङ्गविशेषेति**। इदमपि स्वरसामादिशब्दानामनतिदेशकत्वेऽपि तद्विषयेऽतिदेशोऽस्तीत्येतावता बोध्यम्। **संस्कारेति**। यद्यपि यूपादिशब्देन संस्कारवाचिना स्फ्यो यूपो भवतीत्यादिना संस्काराः श्रुत्या विधीयन्ते नतु स्फ्योऽग्नीषोमीययूपवत्कार्य इति वत्यर्थलक्षणयाऽतिदिश्यन्ते, तथाप्यग्नीषोमीये यूपधर्माणामुपदेशाद्यूपशब्दः श्रुतमात्र एव तत्रत्यधर्मानेव श्रुत्यापि विधत्त इत्यतिदेशकत्वम्। यद्वाऽदृष्टसंस्कारवाचकेन यूपशब्देन तज्जनकक्रियाणामाक्षेपाभिप्रायातिदेशकत्वोक्तिः। ननु 'स्फ्यो यूपो भवती'ति यूपकार्ये स्फ्यस्य विधानेन कार्यप्रयुक्ता धर्माः परिधाविव यूपशब्दं विनापि सिध्यन्तीति न तदतिदेशको यूपशब्द इतिचेत् स्फ्यो यूपः कार्य इति सामानाधिकरण्येन श्रुत्या विधानसंभवे लक्षणया कार्ये विधानायोगात् शरमयमित्यादौ तु सामानाधिकरण्यासंभवाल्लक्षणया बर्हिःकार्ये शरविधानमेवेति ध्येयम्। **सिद्धमेवेति**। अतएव यूपवदिति सूत्रे दृष्टान्तीकृतमिति भावः। **वासःप्रभृतीनामिति**। इह संस्कारशब्देन लौकिकी वानादिक्रिया विवक्षिता। संस्कारनिमित्तत्वमेवास्ति नास्तीति चिन्त्यत इत्यनेनैवाधिकरणाङ्गचिन्ता उक्तप्रायेति मत्वा फलचिन्तामाह—**वासो ददातीति**। इदमुपलक्षणं पुरुषव्यापारसाध्यानामेवार्थानां वैदिके कर्मणि विनियोगात्तद्वाचकाः सर्व एव रूढशब्दा उदाहरणं पूर्वोत्तरपक्षन्यायसाम्यात्। अतएव सूत्रेऽपि कर्मजे कर्मेति सामान्येनैवोक्तम्। अतएव पूर्वं वासःप्रभृतीनामित्युक्तम्। एवंच बर्हिराज्यादीनामत्र लौकिकक्रियानिमित्तत्वाभावसाधनेऽपि लवनादिवैदिकसंस्कारपरत्वनिराकरणेन जात्यर्थत्वं बर्हिराज्यनयादिव्युत्पाद्यमिति बोध्यम्। **तत्रेति**। क्रियान्वयव्यतिरेकानुविधानात् पाचकादिवत्क्रियानिमित्तत्वम्। तथाच वानादिक्रियायाः शब्देन दानाङ्गतया विधानात्प्रयोगमध्येऽनुष्ठानं सिध्यतीत्यर्थः। क्रियान्वयव्यतिरेकयोर्जातिव्यञ्जकतयान्यथासिद्धत्वादनन्यथासिद्धजात्यन्वयव्यतिरेकानुविधानेन जातिशब्दत्वमिति सिद्धान्तमाह—**जातिशब्दाविति**। सूत्रार्थस्तु—कर्मजे क्रियाजन्ये कर्मक्रिया ग्राह्या यूपवदिति॥

**विशये लौकिकः०**॥ ३०॥ वासःप्रभृतिषु संस्कृतवचनत्वनिराकरणप्रसङ्गादग्निशब्दस्यापि संस्कृतवचनतानिराकरणात्सङ्गतिः। **अग्निमिति**। गर्गत्रिरात्रे आज्यदोहाख्यसामानि प्रकृत्य श्रूयत इति शेषः। तत्र किमाधानसंस्कृताहवनीयादिपरोऽग्निशब्दः ततश्च स एवोपधेयः किंवा लौकिकाग्निपर इति स एवोपधेय इति संशय इत्यर्थः। नन्वग्निशब्दस्य सामान्यवचनस्य कथं संस्कृतवचनतया पूर्वःपक्ष इत्यत आह—**संस्कृतस्येति**। अमीनादधीतेति प्रयोजनविशेषासंबी-

---

१ विधत्तः.

वेक्षा संस्कृतानां निवर्तिता ॥' 'यदाहवनीये जुहोति गार्हपत्ये हवींषि श्रपयती'त्यादिभिरोहत्य प्रयोजननिर्देशान्न प्रयोजनान्तरमाहवनीयादयोऽपेक्षन्ते । अग्निशब्दोऽपि जातिमात्रवचनत्वात्तज्जातीयं यत्किंचिदाक्षिपल्लोकसिद्धमेवोपादाय कृतार्थो न संस्कृतमपेक्षते । तस्माल्लौकिक उपनिधेयः ॥

यूपशब्दस्य संस्कारप्रयोजकताधिकरणम् ॥ १३ ॥

**संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ [भक्त्या वाऽयज्ञशेषत्वाद्गुणानामभिधानत्वात् ॥ ३४ ॥]**

**संस्कारः स्यादुपशये न वा यूपोक्तितोऽग्रिमः ॥ न स्यान्नियोजनाभवात्तूर्ष्णीछेदेन यूपता ॥ २३ ॥**

'उपशयो यूपो भवती'त्यत्र संशयः किमुपशये यूपसंस्काराः परिव्याणादयः कार्या नेति । तत्र यूपशब्द उपशये प्रयुज्यमानस्तानतिदिशेत् । सत्यम् । यदि यूपत्वं विधीयते विधायकाभावाद्वर्तमानापदेशोऽयं यूपो भवतीति । तस्मादनुवादोऽयमुपशयस्तुत्यर्थो न संस्कृतिमपेक्षते तस्माल्लौकिका यूपधर्माश्च केचिच्छेदनादय उपशये वचनादनुष्ठीयन्ते तेन निमित्तेन गौणोऽयं वादः ॥

---

गेनोत्पन्नानां संस्कृतानामग्नीनां प्रयोजनापेक्षाबलात्सामान्यवचनोऽप्यग्निशब्दस्तद्विषयो व्यवतिष्ठते । ततश्चाग्निशब्दः संस्कृतवचनः सन् संस्कारमुपधानाङ्गत्वेन प्रापयतीत्यर्थः । एतेनाहवनीयादेर्वाक्येनैवोपधानाङ्गत्वप्रतिपादनेन विहाराधिकरणाविरोधः सूचितः । तत्रहि संस्कृतानां प्रयोजनापेक्षायां लिङ्गाल्लौकिकवैदिकं वा यदग्निसाध्यं तत्र सर्वत्र विनियोग इत्याशङ्क्याहवनीये जुहोतीत्यादिभिर्निराकाङ्क्षत्वान्न लिङ्गाद्विनियोगः संभवतीत्युक्तं, इहतु लिङ्गमनपेक्ष्याहवनीये जुहोतीत्यादिभिर्होमादिविधानेन वाक्येनोपधानेऽपि विनियोग इति पूर्वपक्षे प्रतिपाद्यत इति न तद्विरोधः । नन्वत्र किमग्निशब्दस्य संस्कृतवचनत्वमग्निशब्दाकाङ्क्षाबलादुताहवनीयादीनां प्रयोजनापेक्षाबलात् । नाद्यः । जातिमात्राभिधानेनापि निराकाङ्क्षत्वात् । न द्वितीयः । होमादिभिराहत्य विहितैः प्रयोजनाकाङ्क्षाशान्तेरिति सिद्धान्तमाह—**वह्निमात्रेति** । ननु सामान्यवचनत्वेऽप्यग्निशब्दस्याहवनीयादिपरत्वमपि स्यादविशेषात्तथाच न लौकिकमात्रपरत्वमिति शङ्कां निराकुर्वन्पूर्वार्धं व्याचष्टे—**अग्निशब्दोऽपीति** । यत्किंचिदुपादानेऽप्यग्निशब्दस्य कृतार्थत्वादाहवनीयादेर्देशान्तरे नयने 'विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षापयती'ति दोषश्रवणाच्च न तत्परत्वं किंतु लौकिकमात्रपरत्वमित्यर्थः । सूत्रार्थस्तु—लौकिकं वैदिकं वा इति विशये लौकिकं स्यात् कुतः सर्वार्थत्वान्नतु वैदिकमर्थनिर्देशात् । होमादिप्रयोजननिर्देशेन निराकाङ्क्षत्वादत्र न वैदिकमर्थनिर्देशादिति गुणसूत्रमप्येकीकृत्य लिखितम् ॥

**संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ उपशय इति** । यूपैकादशिन्यां श्रूयते इति शेषः । सर्वेषां यूपानां दक्षिणत उपशेत इत्युपशयः काष्ठविशेषः स यूप इत्यर्थः । **अत्रेति** । अयं फलसंशयः । अधिकरणाङ्गसंशयस्तु यूपशब्दः धर्मातिदेशको न वेति द्रष्टव्यः । संस्कारनाम्नोऽतिदेशकत्वमुक्तं क्वचिदपोद्यत इति सङ्गतिः । **उपशये प्रयुज्यमान इति** । ननु न परत्र प्रयोगमात्रेणातिदेशकत्वं 'एष वै दर्शपूर्णमासयोरवभृथ' इत्यादावभावात् किंतु विधेयार्थकतया । नचात्र यूपशब्दो विधेयार्थकः वर्तमानापदेशेन विध्यश्रवणादिति चेदित्थं मन्यते पूर्वपक्षी । अर्थवादमात्रस्यानर्थक्याद्वर्तमानापदेशेऽपि 'आग्नेयोऽष्टाकपालो भवती'तिवद्विधिपरत्वमेव वाक्यस्य । तथाच यूपशब्दः संस्कारातिदेशक इति । नैतद्युक्तम् । 'आरण्यं पशुमाश्नं वे त्यादिविध्येकवाक्यताभङ्गप्रसङ्गात् पुरुषव्यापाराश्रवणाद्वर्तमानापदेशाच्च । तस्मान्न वाक्यभेदेन विधायकत्वं किंत्ववगतैकवाक्यतार्थं स्तुत्यर्थत्वमेव । एवंच वर्तमानापदेशोऽप्युपपद्यते तस्मान्न धर्मातिदेशकत्वं यूपशब्दस्येति सिद्धान्तमाह—**सत्यमिति** । ननु यूपधर्माभावे सादृश्याभावात्स्तुत्यर्थतापि न निर्वहेदित्यत आह—**यूपधर्माश्चेति** । सर्वेषां यूपशब्दवाच्यानां धर्माणामभावेऽपि कतिपयधर्मसद्भावमात्रेण गौण्या स्तुत्यर्थत्वं युक्तमित्यर्थः । सूत्रार्थस्तु—उपशयद्रव्यं संस्कृतं यूपशब्दाभिधेयसंस्कारयुक्तं स्यात् संस्कारवाचकयूपशब्दश्रवणादिति ॥

---

१ अहुति. २ वलात.

पृष्ठशब्दस्यसदृशवाचित्वाधिकरणम् ॥ १४ ॥

**कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३५ ॥ [अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३६ ॥**

**पृष्ठैरुपस्तुतौ स्तोत्रधर्माः सन्ति न वाग्निमः ॥ अग्निहोत्रनयान्मैवं मन्त्रोक्तेरात्मनेपदात् ॥ २४ ॥**

अग्नौ श्रूयते 'पृष्ठैरुपतिष्ठते' इति किं पृष्ठशब्दो ज्यौतिष्टोमिकपृष्ठधर्मातिदेशकः पृष्ठधर्मकानि[1] कर्माणि कुर्यादिति। तानिच पृष्ठसादृश्यादेव स्तुत्यात्मकानि भवन्ति उत पृष्ठसाधनेषु रथन्तरादिषु पृष्ठशब्दस्तैरग्नेरभिधानं चोद्यते इति। तत्र—'उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते ॥ पृष्ठशब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम् ॥' उपतिष्ठतिधातुः समीपस्थितिवचनः[2]। प्रत्ययो भावनावाची। तदयमर्थः—अग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यादिति[3]। यदि त्वभिधानं विधीयते ततै उपतिष्ठतिः समीपस्थितिवचनः सन्नभिधानं लक्षयेत्, पृष्ठशब्दोऽपि तत्साधनमित्युभयोर्लक्षणा स्यात्। अस्मत्पक्षे पुनः पृष्ठशब्द एव धर्मलक्षणेति ज्यायानयं पक्षः। उच्यते—'जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोः समा ॥ उपतिष्ठतिधातुश्च समीपस्थितिवाचकः ॥' न वयं धातुनाभिधानं लक्षयामः किंतु समीपस्थितिरेव धातुनाभिधीयते। सा तु समीपस्थितिरभिधानार्थेति ब्रूमहे। कथम्। मन्त्रकरणेऽर्थे वर्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवति। समीपस्थितिश्चानेनाभिधीयते। तेन यथा समीपस्थितौ मन्त्रः करणं तथा यतितव्यम्। नचाभिधानादन्यत्र साक्षान्मन्त्रः करणम्। तद्यदि इयं समीपस्थितिरभिधा-

---

**कर्मणः पृष्ठशब्दः० ॥ ३५ ॥ ज्यौतिष्टोमिकेति**। इह पूर्वपक्षे पृष्ठशब्दस्य सदृशपरतया पृष्ठगतबहुत्वानपेक्षणात्सर्वत्र प्रकृतिभूतज्योतिष्टोमगतपृष्ठसादृश्यमेव युक्तं न षडहगतपृष्ठसादृश्यमित्यभिप्रायेणेदम्। अतिदेशस्य पर्यवसानमाह—**पृष्ठसदृशानि कर्माणीति**। अत्र यद्यपि पूर्वपक्षेऽपि पृष्ठसदृशकर्मणामभ्युपकारे करणत्वमेव विवक्षितं न कर्मत्वम्। अत एवाग्रे वक्ष्यति पृष्ठसदृशकर्मभिः कुर्यादिति, तथापि पृष्ठसदृशैः कर्मभिः कुर्यादित्युक्तेः पृष्ठसादृश्यं सिद्धमुपादीयते इति भ्रमः स्यात्तथासति पृष्ठशब्दस्यातिदेशकत्वं न स्यात्तद्वारणार्थं पृष्ठसादृश्यमपि साध्यं विवक्षितमिति प्रदर्शनायेत्थं वचनव्यक्तिरुपदर्शिता। **ननु** विधिविषयकर्मविशेषापरिज्ञानान्न सदृशकर्मविधिरिति शङ्कामिहैव परिहरति—**तानिचेति। रथंतरादिष्विति**। तदाश्रयेषु 'अभि त्वा शूरे'त्यादिमन्त्रेष्वित्यर्थः। अर्थवादगतयूपशब्दस्यानतिदेशकत्वेऽपि विध्युद्देशगतपृष्ठशब्दस्यातिदेशकत्वमस्त्वित्युत्थानात्सङ्गतिः। **ननु** प्रसिद्धपृष्ठशब्दाभिधेयस्तुतिविधानमेवास्तु किमिति लक्षणया सदृशकर्मविधिरित्याशङ्क्य प्रकरणान्तरन्यायात्कर्मान्तरविधिरेवेत्याह—**उपतिष्ठतिनेति**। ननु कर्मान्तरविधिपरत्वे उपतिष्ठतेः कथमन्वय इत्याशङ्क्य प्रकृतिप्रत्ययार्थकथनपुरःसरं पर्यवसितमाह—**उपतिष्ठतिधातुरिति**। अत्र वाक्यस्य कर्मान्तरपरत्वे निश्चिते तद्बललब्धं कर्मान्तरमेव करणं तत्र तु पृष्ठपदं सदृशपरं विशेषसमर्पकमात्रं नतु पृष्ठपदमेव करणसमर्पकमिति कर्मभिः कुर्यादिति वदतो भावः। **ननु** पृष्ठशब्दः सदृशपरत्वे गौणः तद्वरं लक्षणया मन्त्रपर इत्याशङ्क्य शब्दद्वयलक्षणापेक्षया एकस्य गौण्येव ज्यायसीत्याशयेनाह—**यदित्विति**। भवेदेवं यदि शब्दद्वयलक्षणा स्यात् किंत्वेकस्यैव। सा च गौण्या ज्यायसीत्यभिप्रायेण सिद्धान्तमाह—**उच्यत इति**। समीपस्थितेः पृष्ठशब्दलक्षितमन्त्रकरणकत्वानुपपत्तिमाशङ्क्याह—**सा त्विति**। इह समीपस्थितेरभिधानार्थत्वे 'उपान्मन्त्रकरणे' इति व्याकरणसूत्रं प्रमाणयति—**मन्त्रकरण इति**। ननु यत्राभिधानं साक्षान्निर्दिश्यते तत्र सावकाशं व्याकरणमित्याशङ्क्य न क्वाप्यभिधानमुपतिष्ठतेरर्थः किंतु सर्वत्रापि समीपस्थितिरेव। तथाचास्याभिधानार्थतामादायैव व्याकरणस्मृतेर्निर्वाह इत्युपपादयति—**समीपस्थितिश्चेत्यादिना**। नन्वेवमप्यभिधान एव मन्त्रः करणं न समीपस्थितौ। तथाच मन्त्रकरणार्थे विद्यमानाद्धातोरात्मनेपदविधानं न समर्थितमित्यत आह—**प्रधानेति**। प्रधानप्रयोजनसिध्यर्थत्वादङ्गानुष्ठानस्य प्रधानभूतसमीपस्थितिकार्यं साधयन्मन्त्रः समीपस्थितौ करणं तस्मादभिधानार्थसमीपस्थितेर्मन्त्रकरणकत्वाद्युक्तमात्मनेपदमिति भावः। नन्वेवमभिधानवाचकशब्दाभावाच्चाभिधानविधिरित्यत आह—**तेनेति**। काममनुमीयतां तथापि कथं विधेयमित्याशङ्क्य द्रव्यदेवतासंबन्धानुमितयागवदनुमिताभिधानं विधेयमित्याह—**तदयमिति। समीपे स्थित्वेति**। अत्र समीपस्थितिर्न विधेया विशिष्टविधिगौरवात् किंतु अभित्वा शूरेति संबोधनेन त्वेति द्वितीयान्तयुष्मच्छब्दनिर्देशेन च क्रियमाणमग्नेरिन्द्रत्वेनाभिधानं समीपस्थितावेव संगच्छते नान्यथेति अर्थप्राप्तानुवाद इति ध्येयम्। अत्र भाष्यादौ 'उपान्मन्त्रकरणे' इति मन्त्रकरणार्थे वर्तमानादुपपूर्वा-

---

१ पृष्ठसदृशानि. २ वाचकः. ३ तदोपतिष्ठतिः. ४ अत्रबहुव्रीहिः. ५ प्रयोजनमभिधानम्.

नार्था स्यात्ततोऽस्याः करणं मन्त्रः संपद्यते प्रधानाधीनं हि तदङ्गानुष्ठानं भवति । अतोऽभिधानार्थत्वे समीपस्थानस्याभिधानं कुर्वन्मन्त्रः समीपस्थितेः करणमिति शक्यं वक्तुम् । अतोऽभिधानाय समीपस्थितिं यदनुपतिष्ठतिर्मन्त्रकरणार्थो भवन्नात्मनेपदं लभते । तेनात्मनेपददर्शनादुपस्थानप्रयोजनभूतमभिधानमनुमीयते । तदयमर्थः—पृष्ठसाधने रथन्तरादिभिः समीपे स्थित्वाग्निमभिदध्यादिति, तस्मादभिधानचोदनेति सिद्धम् ॥ इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां सप्तमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## सप्तमाध्याये चतुर्थः पादः ।

सौर्ये चराविति कर्तव्यताधिकरणम् ॥ १ ॥

**इतिकर्तव्यताविधेर्यजतेः पूर्वत्वम् ॥ १ ॥ [स लौकिकः स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ अपि वाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियम्येत गुणानामभिधानत्वात्संबन्धादभिधानवत्, यथा धेनुः किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥ उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥ लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥]**

सौर्ये चरौ न धर्माः स्युः स्युर्वा मानविवर्जनात् ॥ न स्युः स्युः करणं यागोऽपेक्ष्यते ह्युपकारिणः ॥ १ ॥
विध्यन्तोऽपेक्षितस्तत्र लौकिको वाथ वैदिकः ॥ आद्यो निबन्धराहित्यादन्त्यो धीसंनिकर्षतः ॥ २ ॥

गतो नामातिदेशः, इदानीमानुमानिकेन वचनेनातिदेश उच्यते—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्याद्युदाहरणम् । तत्र प्रथमं तावदिदं चिन्त्यते किमत्र कुतश्चिद्धर्माः प्रतिदिश्यन्ते[३] नेति ।

---

त्तिष्ठतेरात्मनेपदविधानादुपतिष्ठते इत्यात्मनेपदं पृष्ठसदृशकर्मविधिरिति पूर्वपक्षो नोपपद्यते । तथाच तत्र 'व्यत्ययो बहुल'मिति व्यत्ययोऽङ्गीकार्यः स चान्याय्यः । नचाकर्मकादित्यात्मनेपदं संभवतीति वाच्यम् । बृहद्रथंतराभ्यां पक्षावृतुस्था यज्ञायज्ञियेन पुच्छमित्यादावस्यैवोपतिष्ठते इति पदस्यानुषञ्जनीयत्वेनाकर्मकत्वाभावादित्यात्मनेपदस्य सर्वथा पूर्वपक्षेऽनुपपत्त्या तद्बलादेव पृष्ठसाधनमन्त्रकरणकाभिधानविधिरिति सिद्धान्तितं तदनुपपन्नम् । पूर्वपक्षेऽपि पृष्ठसदृशकर्माणि स्तुतिरूपाण्येवाङ्गीकर्तव्यानि अन्येषां पृष्ठसादृश्यासंभवात्, तथाच स्तुतीनां गुणिनिष्ठगुणाभिधानरूपतया तासां मन्त्रकरणत्वनियमेन तदर्थसमीपस्थितिप्रतिपादकस्योपतिष्ठतेः सिद्धान्त इव मन्त्रकरणार्थे वृत्तिसंभवेनात्मनेपदानुपपत्त्यभावात्, तस्मादात्मनेपदानुपपत्तिर्न पूर्वपक्षे दोष इति मत्वा ग्रन्थकारेणात्मनेपदमस्पृष्ट्वैव पूर्वपक्षे जघन्यगौणीप्रसङ्ग इत्यभिप्रायेण सिद्धान्तमुक्त्वोपतिष्ठतेरभिधानलक्षणां परिहर्तुमुपतिष्ठतिनाभिधानमनुमीयत इति प्रतिपादयितुमात्मनेपदमुपयोजितं नत्वात्मनेपदानुपपत्तिः सिद्धान्तयुक्तितयेति ध्येयम् । सूत्रार्थस्तु—पृष्ठशब्दः कर्मणि स्यात् स्तोत्रकर्मवाचकः पृष्ठशब्दः स्यात्तथाभूतस्य रथंतरं पृष्ठं भवतीत्यादौ स्तोत्रवाचकस्याप्यत्राप्युपदेशादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां सप्तमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

**इतिकर्तव्यताविधेर्यजतेः पूर्वत्वम् ॥ १ ॥** प्रत्यक्षवचननिमित्तातिदेशविचारानन्तरं कल्प्यश्रुतिकतया ततो विलम्बितनामधेयनिमित्तातिदेशं विचार्यानन्तरं कृत्स्नस्य वचनस्यैव कल्प्यतया नामापेक्षयापि विलम्बितेन चोदनालिङ्गानुमितशब्देनातिदेशो विचार्यते इति पादभेदमानन्तर्यं चाभिप्रेत्याह—**गत इति** । सामान्यतः कुतश्चित्कर्मणोऽतिदेशेनेतिकर्तव्यतायां सिद्धायां लौकिकी वैदिकी वेति करिष्यमाणविचारस्यात्रसरः नान्यथेत्याशयेनाह—**प्रथमं तावदिति** । प्रति-

---

१ नार्थत्वं समीपस्थानं कुर्वन्. २ लभतेत्यात्मने. ३ प्रदिश्यन्ते.

प्रमाणाभावान्नातिदेशः । उच्यते—'यागेन भावयेद्ब्रह्मवर्चस'मिति भावनामितिकर्तव्यतापेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्या इतिकर्तव्यताया असमर्पणान्नूनमन्यतः सिद्धेतिकर्तव्यतात्र शास्त्रेणाङ्गीकृतेति निश्चीयते । अस्तिचान्यत्र लौकिके पार्वणस्थालीपाकादौ वैदिके दर्शपूर्णमासादौ तयोरन्यतरादिह प्रतिदिश्यते इति स्थिते इह चिन्त्यते लौकिकी वैदिकी वेति—'वैदिकी हि निबद्धत्वान्नेतुं नान्यत्र शक्यते ॥ लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते ॥' वैदिकीतिकर्तव्यता प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धा नान्येन संबन्द्धुं शक्यते । नहि सकृच्छ्रुतमितिकर्तव्यताब्राह्मणं दर्शपूर्णमासयोरितिकर्तव्यतां विधाय पुनः सौर्यादावपि विदधातीति संभवति । नच साधारण्येन विधानं, प्रकरणेन व्यवस्थितत्वाद्विधानस्य । नच शास्त्रमन्तरेणेतिकर्तव्यतान्वयः संभवति, तस्मान्न वैदिकी । लौकिकी तु पार्वणाष्टकादिषु बहुषु प्रवृत्ता साधारणं शास्त्रमनुमापयति । तेन सैव सौर्यादिषु स्यात् । प्रयाजादिदर्शनं तु यत्र नित्यानुवादवचनानीत्येवं परिहृतम् । तस्माल्लौकिकीति प्राप्ते उच्यते—'वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ॥ लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥' वैदिकस्य तु कर्मणः

---

दिश्यन्ते अतिदिश्यन्त इत्यर्थः । **प्रमाणाभावादिति** । अन्यदीयाया इतिकर्तव्यताया अन्यसंबन्धे समानमितरदित्यादिवत्प्रत्यक्षवचनाद्यभावादित्यर्थः । **यागेनेति** । द्रव्यदेवतासंबन्धानुमितयागस्यैव विधानाद्यागेन भावयेदित्युक्तं करणफलविशिष्टायां भावनायां विहितायां तस्या इतिकर्तव्यताकाङ्क्षायामितिकर्तव्यताया उपदेशाभावान्नूनमन्यतः सिद्धेतिकर्तव्यता सौर्यादिशास्त्रेणाङ्गीकृता अन्यथा फलकरणवत्साप्युपदिश्येतेति निश्चीयत इत्यर्थः । **लौकिक इति** । स्मार्त इत्यर्थः । **सूत्रार्थस्तु**—इतिकर्तव्यताया उपदेशेनाविधानाद्यागस्य सौर्यादेः पूर्ववत्त्वं प्रकृतिमत्त्वमस्ति काचित्प्रकृतिरिति सामान्यतः प्रकृतिमत्त्वमित्यर्थः । पूर्वस्मिन्नेव विषये विशेषविचाररूपत्वादुत्तरविचारस्य लौकिकः स्यादृष्टप्रवृत्तित्वादिति पूर्वपक्षसूत्रमलिखित्वैवाधिकरणान्तरमारभते—**इति स्थित इति** । नन्वश्वप्रतिग्रहेष्ट्यधिकरणोक्तरीत्या वैदिक्या एव शीघ्रोपस्थितिकत्वाद्ग्रहणं युक्तं न लौकिक्या इति कथं पूर्वपक्ष इत्याशङ्क्य युक्तमश्वप्रतिग्रहेष्टिस्थले वैदिकत्वसादृश्येन शीघ्रोपस्थितिकस्य ग्रहणं योग्यत्वादिहतु निबद्धत्वाद्वैदिक्या ग्रहणयोग्यतैव नास्तीति वैषम्यमभिप्रेत्य पूर्वपक्षमाह—**वैदिकी हीति** । प्रकरणादिना नियमितत्वाद्वैदिकीतिकर्तव्यता प्रकरणान्तरे नेतुं न शक्यते । लौकिकी तु तथा नियमाभावात्सर्वत्र संबध्यत इत्यर्थः । आनुमानिकस्य साधारण्यं संभवतीति द्योतयितुं प्रत्यक्षेणेत्युक्तम् । **ननु** प्रकरणविशेषे पठितस्यैवेतिकर्तव्यताशास्त्रस्य सौर्यादावपि स्वार्थसमर्पकतास्त्वित्याशङ्क्य किमितिकर्तव्यताशास्त्रं दर्शपूर्णमासयोः सौर्यादौ च क्रमेणेतिकर्तव्यतां विधत्ते उत साधारण्येन । नाद्य इत्याह—**नहि सकृदिति** । विरम्य व्यापारायोगादिति भावः । न द्वितीय इत्याह—**नचेति** । व्यवस्थाया अध्यायादौ प्रतिपादनादिति भावः । **ननु** शास्त्रेण व्यवस्थयैव चोद्यतां तथाप्याकाङ्क्षाबलादितिकर्तव्यता कल्प्यतामित्यत आह—**नचेति** । शास्त्रैकसमधिगम्येऽर्थे कल्पना न प्रवर्तत इति भावः । **ननु** लौकिक्या अपि गृह्यादौ निबद्धत्वान्न साधारण्यमित्याशङ्क्योत्तरार्धं व्याचष्टे—**लौकिकी त्विति** । गृह्यादेः स्वतःप्रामाण्याभावाद्वेदानुमापकत्वं वक्तव्यं तत्र गृह्यादावेव लौकिक्या बहुकर्मान्वयदर्शनेन प्रतिकर्मवचनकल्पनायां गौरवप्रसङ्गात्साधारणं वचनं कल्पनीयं तदेवाविशेषात्सौर्यादिष्वितिकर्तव्यतासमर्पकमिति भावः । **ननु** यदि वैदिकीतिकर्तव्यता न स्यात्कथं तर्हि 'प्रयाजे प्रयाजे कृष्णलं जुहोती'ति प्रयाजादिदर्शनमित्यत आह—**प्रयाजादीति** । 'अपिवाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादयोग्यतावचनानि स्यु'रितिसूत्रेणैव परिहृतमित्यर्थः । अस्यायमर्थः—प्रयाजादिदर्शनं न वैदिकीतिकर्तव्यताया लिङ्गमन्यायपूर्वकत्वात् न्यायपूर्वकं हि लिङ्गं, नचेदं न्यायपूर्वकं वैदिक्या निबद्धतया न्यायाभावात् किंतु यत्र प्रयाजा दर्शपूर्णमासयोस्तत्रोत्कर्षः । 'नार्षेयं वृणीते'त्यादि नित्यानुवादः । 'पृषदाज्येनानूयाजान्यजती'ति पृषदाज्यविशिष्टानूयाजविधिरित्येवं यथासंभवं सौर्यादौ प्रयाजादिदर्शनमुपपादनीयमिति । **वैदिकीति** । विकृतिभावनापेक्षिता इतिकर्तव्यता उपस्थिता ग्राह्या । उपस्थितिश्च नानुमानेन नचानुमानेनेति निराकरिष्यमाणत्वात्किंतूपमानेन संभवति चेतिकर्तव्यतायाः उपमानगम्यत्वं परैरिवास्माभिर्वाच्यवाचकभावस्योपमानगम्यत्वानङ्गीकारात् । उक्तंच प्रथमपादे भाष्ये 'उपमानमपि सादृश्यविज्ञानमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयती'ति । उपमानं च सादृश्यमूलकम् । तथाच वैदिकीतिकर्तव्यता वैदिकत्वसामान्येनोपस्थितेति सैव ग्राह्या । लौकिकी त्वसमानत्वादुपमानादनुपस्थितेति न ग्राह्येत्यर्थः । लौकिक्या अपि यथाकथंचित्सादृश्यमस्तीत्यत आह—**वैदिकस्येति** । वैदिकत्वसादृश्यमुद्भूतमिति तद्बलात् झटित्युपस्थितं वैदिकमङ्गकलापं विहाय यथाकथंचित्सादृश्यमादाय वि-

---

१ प्रदिश्यते. २ नहि श्रुतमिति. ३ बहुष्वनुवृत्ता.

कथंभावापेक्षाया वैदिक एवेत्थंभावः शीघ्रमुपतिष्ठते । तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तम् । 'यद्यप्यनुमिताद्वेदाल्लौकिकोऽपितु वैदिकः ॥ प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः ॥' ननु सोऽपि वेदः केषांचित्प्रत्यक्ष एव नित्यानुमेयमूलत्वनिराकरणात् । सत्यम् । तथाप्यसदृश एव । कथम् । वैतानिककर्माधिकारे हि त्रयी प्रवर्तते तत्प्रसङ्गादवैतानिकं किंचिदुच्यते । तेन दर्शपूर्णमासादीनां सौर्यादीनां च तदधिकारेण त्रयीप्रवृत्तिर्नामावान्तरसादृश्यमस्तीति वैदिकस्योपस्थानम् । किंच सौर्यादीनि वैतानिकेऽग्नौ प्रवर्तन्ते लौकिकी त्वितिकर्तव्यताचारादौपासने कर्तव्या । तत्र प्रधानवैदेश्यमङ्गानामापद्येत तस्मादपि वैदिकी । नच निबद्धत्वादसौ नान्यत्र नेतुं शक्येति मन्तव्यम् । समानविधानत्वे ह्ययं दोषः स्यात् । अतिदेशेन त्वन्यत्र गतौ निबद्धत्वं गुण एव । नहि कचिदनिबद्धा अन्यत्रातिदेष्टुं शक्यन्ते । नचानुमानेन लौकिकी शक्या कल्पयितुम् । गणयागादिषु तदभावेनानैकान्तिकत्वात् । तस्माद्वैदिक इत्थंभावः सौर्यादिष्वतिदिश्यते । स चावघातप्रयाजादिपदार्थजन्यदृष्टादृष्टावान्तरोपकारवर्गरूषितस्तेषामुपकाराणां पदार्थानां च प्रापको भवति तद्विधायि च शास्त्रमर्थात्सौर्यादिवाक्यस्य शेषभावमुपागतं भवतीत्यनेनाभिप्रायेण विध्यन्तो वा प्रकृतिवच्चोदनायामित्युक्तम् । अस्तुवा विध्यन्तस्यैवात्रातिदेशस्तथापि प्रकृतिसंबन्धितया निरूपितरूपस्यातिदेशो नतु यथापाठमेव

---

म्बितोपस्थितिकलौकिकग्रहणमयुक्तमिति भावः । **ननु** वैदिकत्वं लौकिकस्याप्यविशिष्टं स्मृत्यादीनां वेदमूलतयैव प्रामाण्यादित्याह—**यद्यपीति । प्रत्यक्षेति** । प्रत्यक्षवेदविहितस्य सौर्यादेः प्रत्यक्षवेदविहित एव सदृशो नान्य इत्यर्थः । **ननु** प्राभाकरैरिवास्माभिरनुमितवेदमूलकत्वानङ्गीकारात्प्रत्यक्षवेदविहितत्वमपि लौकिकसाधारणमिति शङ्कते—**नन्विति** । अत्र यद्यपि केषांचित्प्रत्यक्षत्वेऽप्यन्येषामनुमेयतया विलम्बितत्वमस्त्येव तथाप्यभ्युपेत्याह—**सत्यमिति । वैतानिकेति** । वितानो यज्ञः वितान एव वैतानिकं विनयादित्वात्स्वार्थे ठक् । तदेवाधिकृत्य त्रयी प्रवर्तते । दर्शपूर्णमासावारभ्य विश्वसृजामयनपर्यन्तानां यज्ञानामेव प्रतिपादनादिति भावः । कथं तर्हि मलवद्वासोव्रतकलापादिविधानमित्यत आह—**तत्प्रसङ्गादिति । तेनेति** । स्वाधिकारप्रवृत्तत्रयीकत्वमवान्तरसामान्यमित्यर्थः । **ननु** सामान्येनादृष्टार्थकर्ममात्राधिकारेण त्रयीप्रवृत्तिः न वैतानिककर्ममात्राधिकारेणान्यथाऽवैतानिकस्य प्रासङ्गिकत्वे वेदस्य तत्र तात्पर्याभावशङ्कया वेदमूलत्वानुमानं प्रशिथिलमूलं स्यादित्यस्वरसादाह—**किंचेति** । वैतानिकेऽग्नौ वितानप्रयोजनेऽग्नौ । 'तदस्य प्रयोजन'मिति ठक् । आहवनीयादावित्यर्थः । **आचारादिति** । अत्र गृह्यादिति नोक्तं गृह्यस्याप्याचारमूलत्वात् । अतएव 'आचारायानि गृह्यन्ते' इत्यापस्तम्बैरुक्तम् । अश्वप्रतिग्रहेष्ट्यधिकरणवैषम्यमुद्धरति—**नच निबद्धत्वादिति** । एकत्र प्रकरणे निबन्धनं हि उपदेशस्य साधारण्यं निवर्तयदुपदेशं व्यवस्थापयति नत्वतिदेशं निवर्तयति । तत्र तस्यानुगुणत्वादित्यर्थः । तदनुगुणत्वमेवाह—**नहीति** । ननूपमानाभावेऽपि सौर्यादिकं कर्म पार्वणस्थालीपाकेतिकर्तव्यतायोगि इतिकर्तव्यतोपदेशशून्यादृष्टार्थकर्मत्वात् अष्टकावदित्यनुमानाल्लौकिक्यस्त्वित्याशङ्क्याह—**नचेति । गणेति** । स्मार्तगणयागादीनां स्थालीपाकेतिकर्तव्यताशून्यानां बहुलमुपलम्भाद्व्यभिचारान्नानुमानमित्यर्थः । **इत्थंभाव इति** । यागगतो व्यापारः प्रकाराख्य इत्यर्थः । अत्र प्राभाकराः पदार्थानामपि पृथगतिदेशमिच्छन्ति तन्मतनिराकरणमभिप्रेत्याह—**सचेति** । दर्शपूर्णमासवत्कुर्यादिति संनिपात्यारादुपकारकलक्षणनिखिलपदार्थजनितदृष्टादृष्टरूपावान्तरोपकारवर्गविशिष्टतयातिदिश्यमानः प्रकारात्मक इत्थंभाव एव स्वविशेषणभूतोपकारतज्जनकपदार्थप्रापकोऽर्थाद्भवति विशिष्टविधिरिव विशेषणानां नतूपकाराणां पदार्थानां वा पृथगतिदेश इत्यर्थः । ननूक्तरीत्या पदार्थानामेवातिदेशाङ्गीकारे विध्यन्तो वेति सिद्धान्तसूत्रविरोधः स्यादित्यत आह—**तद्विधायीति** । पदार्थानामतिदेशः प्रकृतौ पदार्थक्लृप्त्यनन्तरं भवति पदार्थक्लृप्तिश्च शास्त्रेण । तथाच शास्त्रं प्रकृतौ पदार्थप्रापकं सत् अतिदेशे उपकरोतीत्यभिप्रायेण 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शन'मिति सूत्रं नतु शास्त्रस्यैवातिदेश इत्यभिप्रायेणेत्यर्थः । सूत्रस्य चायमर्थो विध्यन्तः प्रधानविधिव्यतिरिक्तं कृत्स्नं पौरोडाशिकं काण्डं सौर्यादिचोदनायां दर्शपूर्णमासादिवदतिदिश्येत, तथासति प्रयाजादिलिङ्गमुपपद्यते प्रयाजादेरुत्कर्षादिकं न कल्पनीयमित्यभ्युपगमवादेनाह—**अस्तुवेति** । विध्यन्तपदस्वारस्यादस्तु शास्त्रातिदेशस्तथापि नानिष्टं किंचिदित्यर्थः । **ननु** यदि शास्त्रातिदेशस्तर्हि कृष्णलादिष्वप्यवहननादीनां शास्त्रचोदितत्वाद्दृष्टासंभवेऽपि सर्वौषधानवहन्ति इतिवददृष्टं कल्पयित्वानुष्ठेयं स्यात्ततश्च सौर्यादावप्यग्नये जुष्टमित्यविकृत एव मन्त्रः प्रयोज्यः स्यादग्निपदयुक्तस्यैव मन्त्रस्य शास्त्रेण चोदितत्वात् तथाचोहबाधौ न स्यातामित्यत आह—**तथापीति** । भवेदेवं यदि शास्त्रं यथापाठं प्रकृतिसंबन्धानादरेणातिदिश्येत, नत्वेवं किंतु प्रकृतौ यच्छास्त्रं यत्प-

---

१ मूलनिरा. २ तन्मध्ये तु प्रसङ्गा. ३ रूषितो विशिष्टः. ४ वाक्यशेषत्वमुपगतं. ५ अङ्गशास्त्रस्य.

शास्त्रं प्रकृतिवद्विकृतेरपि संभवति यत ऊहबाधौ न स्यातामिति चोद्येत । यत्रापि ब्राह्मणमेव साक्षादतिदिष्टं 'एतद्ब्राह्मणान्येव पञ्च हवींषी'ति तत्राप्यन्यसंबन्धिनः सतस्तेनैव रूपेणातिदेशादूहादिसिद्धिः । यदि हि 'अग्नये जुष्टं निर्वपामी'त्यनेन रूपेण सौर्ये प्राप्यते ततोऽग्निपदस्य देवतापदस्य चासंप्रतिपन्नरूपत्वाद्देवतापदविवक्षयैव तत्पठितमग्निपदं रूपं त्वविवक्षितमिति न शक्यमास्थातुम्। अन्यथाग्निपदरूपमेव विवक्षितमित्यापद्येत । ततो न सूर्यपदं प्रक्षिप्येत । नाग्निपदं बाध्येत । ततो नोहः सिद्ध्येन्न बाधः । यदि तु प्रकृतौ निरूपितरूपस्य शास्त्रस्य विकृतिसंबन्धस्तदा प्रकृतावग्निपदस्य देवतापदरूपसंप्रतिपत्तेर्देवतापदरूपमात्रं विवक्षितं दृष्टार्थत्वान्नाग्निपदरूपम् । अदृष्टार्थत्वाद्देवतापदाधिजिगीषया नान्तरीयकत्वादग्निपदमधीतमिति निश्चीयते, तत्र सौर्ये तादृग्रूपयुक्तमन्त्रातिदेशादग्निपदस्य चातद्रूपत्वात्स्वरूपस्य चाविवक्षितत्वात्तन्निवृत्तौ सत्यां देवतावाचिनः सूर्यपदस्य प्रक्षेपादूहबाधौ सिद्धौ भवतः, तस्माद्वैदिकातिदेशः ॥

गवामयन ऐकाहिकेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ २ ॥

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥ [लिङ्गाच्च ॥ १४ ॥ न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥१५॥ लिङ्गं संघातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥ न वाऽर्थधर्मत्वात्संघातस्य गुणत्वात् ॥ १७ ॥ अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥ प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥ विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥]**

गावामयनिके ज्योतिरादौ किं द्वादशाहिकी ॥ ऐकाहिकी वाऽनुमानादाद्योऽन्त्यो नामबाधनात् ॥ ३ ॥

इदानीमानुमानिकवचननामधेययोर्बलाबलं चिन्त्यते । गवामयने ज्योतिर्गौरायुरित्यादिसंज्ञा युक्ता

---

दार्थे यदुपकारबोधकं तत्पदार्थे तदुपकारबोधकरूपविशेषेणैव तच्छास्त्रमतिदिश्यते प्रकृतिवच्छब्देन तथैव चोदनात्। तथाच रूपविशेषस्य विवक्षितत्वात्तदनुसारेणोहबाधौ सिध्यत इत्यर्थः । प्रत्यक्षवचनातिदिष्टब्राह्मणविषये यदवश्यमुक्तप्रकारेणैवोहबाधौ उपपादनीयौ तदा किमु वक्तव्यमनुमितवचनातिदिष्टब्राह्मणविषय इति कैमुतिकन्यायमभिप्रेत्याह—**यत्रापीति** । प्रकृतिसंबन्धत्वेन निरूपितरूपस्यातिदेशे ऊहबाधसिद्धिं स्वरूपेणातिदेशे तदसिध्या द्रढयति—**यदीति** । प्रकृतिसंबन्धिरूपमनादृत्य 'यदग्नये जुष्टं निर्वपामी'त्यनेनैव पठितरूपमात्रेणातिदेशः स्यात्तदा सौर्ये अग्नेर्देवतात्वाभावेन देवतापदस्याग्निपदस्य च परस्परवैमत्यात् देवतापदरूपविवक्षया पठितत्वादग्निपदमविवक्षितमिति निश्चेतुं न शक्यते प्रत्युत पाठबलादग्निपदरूपमेव विवक्षितमिति विपरीतं स्यात्ततश्च सूर्यपदप्रक्षेपलक्षण ऊहः अग्निपदबाधश्च न स्यादित्यर्थः । अत्राग्निपदरूपमेव विवक्षितमित्यन्यथा आपद्येतेत्यन्वयः । अन्यथापद्येत विपरीतमापद्येतेत्यर्थः । **संप्रतिपत्तेरिति** । एकत्वेन विमत्यभावादित्यर्थः । **दृष्टेति** । देवतात्वादग्निप्रकाशनं चेद्दृष्टार्थमग्नित्वादग्निप्रकाशनं चेद्यागेऽग्नित्वस्यानुपयोगाददृष्टार्थं स्यादिति भावः । कथं तर्हि अग्निपदपाठोऽतआह—**देवतेति** । **तादृग्रूपेति** । देवताप्रकाशकरूपेत्यर्थः । **स्वरूपस्येति**। अग्नित्वस्येत्यर्थः । **ननु** यदि शास्त्रातिदेशः स्यात्तर्हि यथार्थभावनाकाङ्क्षानुसारादितिकर्तव्यताविधायकशास्त्रस्यातिदेशस्तथा शब्दभावनाकाङ्क्षानुसारादर्थवादानामप्यतिदेशः स्यात्तथाच विश्वजिदादावपि रात्रिसत्रन्यायादार्थवादिकमेव फलं स्यात्तत्व विश्वजिन्न्यायः प्रत्युद्धृतः स्यादिति चेन्नैवम् । विधिर्हि त्र्यंशपरिपूर्णां भावनां प्राप्य पश्चात्पुरुषं प्रवर्तयितुं प्राशस्त्यमपेक्षमाणोऽतिदेशेनार्थवादैः संबध्यते । ततश्च शब्दभावनाया भाव्यरूपांशत्रययुक्तार्थभावनासंबन्धस्य प्राथमिकत्वात्तद्दशायामेवार्थभावनाभाव्यमपेक्षते तदानीमुपदेशेनातिदेशेन वार्थवादसंबन्धाभावान्न विश्वजिन्न्यायप्रत्युद्धारः । किंच शास्त्रातिदेशपक्षेऽप्यर्थवादभागस्य न सर्वत्रातिदेशः किंत्वेतद्ब्राह्मणानीत्यादौ यत्रार्थवादवाचकब्राह्मणपदयुक्तं प्रत्यक्षवचनं तत्रैवान्यत्र तु विधेरेव द्वे शक्ती कल्पयिष्याम इत्यङ्गीकारात्प्राशस्त्यज्ञानं विधित एव । तस्माद्विश्वजिन्न्याये नानुपपत्तिः । परमप्रकृतमुपसंहरति—**तस्मादिति** ॥

**द्वादशाहिकमहर्गणे०॥ १३ ॥** चोदकनामधेययोरतिदेशप्रामाण्यनिरूपणानन्तरं प्राप्तावसरतया तयोर्बलाबलं चिन्त्यत इति सङ्गतिमभिप्रेत्याह—**इदानीमिति** । यद्यप्यानुमानिकवचनप्रामाण्यं विशेषातिदेशनिरूपणं विना न पर्यवस्यतीति तदनन्तरमेव बलाबलचिन्ता युक्ता तथाप्यनागतावेक्षणन्यायेन भाविपर्यवसानमाश्रित्येह क्रियते बलाबलचिन्तार्थमुभयोरेकविषयप्राप्तिं विषयप्रदर्शनपूर्विकामाह—**गवामयन इति** । गवामयनेऽभिप्लवषडहे ज्योतिर्गौरायुरिति त्र्यहा

---

१ भिन्नार्थत्वात्. २ देवताप्रकाशकपदस्य. ३ अग्निपदरूपमेव. ४ पदादिजिज्ञासया. ५ रूपमन्त्राति.

यागा उत्पन्नास्तेषां गणान्तःपातित्वाद्गणेषु द्वादशाहस्येति द्वादशाहविध्यन्तः प्राप्तः, नामधेयाज्ज्योतिरादेकाहविध्यन्तः तत्राविरुद्धाः द्वयेऽपि क्रियन्ते । विरुद्धेषु किं द्वादशाहिकाः कर्तव्याः चोदको बलवान् उत नामबलीयस्त्वादैकाहिका इति संशये विशेषाभावादनियमः । अथवा चोदको बलवान् फलसंबन्धोत्तरकाला चेतिकर्तव्यताकाङ्क्षा । प्रयोगवाक्ये च फलसंबन्धो नच नामानि तत्र श्रूयन्ते यान्यपेक्षितं विध्यन्तमतिदिशेयुः । गणसामान्यात्तु द्वादशाहिकधर्मातिदेश एव तत्रावगम्यते । यासु तूत्पत्तिचोदनासु नामानि श्रुतानि तत्रालब्धफलत्वादसत्यामित्थंभावापेक्षायां नातिदेशः। फलसंबन्धं तु प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं पूर्वावगतगणधर्माविरोधेन प्रवर्तते । तस्माच्चोदको बलीयानिति प्राप्तेऽभिधीयते—'प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः ॥ न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते ॥' यद्यपि फलसंबन्धाधीनेतिकर्तव्यताकाङ्क्षा प्रयोगवाक्ये प्रस्तूयते तथापि प्रयोगवाक्यमुत्पत्तिचोदनावगतरूपाणि कर्माण्यालोच्य फले विनियुङ्क्ते तानि चालोच्यमानानि संज्ञाविशिष्टान्येवालोच्यन्त इति तन्निमित्तोऽतिदेशः प्रत्यक्षनिमित्तत्वाच्छीघ्रं गम्यते । किंचोत्पत्तिवाक्येष्वपि भावनास्वाभाव्याज्जायत एवापेक्षा । तस्मान्न बलीयः । 'वचनादभिधानतस्तथा विविदं कृत्स्नमिहातिदेशनम् । अनुभावश्चसापि सत्तया भविता तस्य विशेषचिन्तनम् ॥' इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

भवन्तीत्यादिना ज्योतिरादिसंज्ञका यागा उत्पन्नास्तेषां गवामयनाख्याहर्गणान्तःपातित्वात् 'गणेषु द्वादशाहस्ये'त्याष्टमिकन्यायेन द्वादशाहविध्यन्तः ज्योतिरादिनामधेयाच्चैकाहविध्यन्त इत्युभयोरेकत्रास्ति प्राप्तिरित्यर्थः । तत्र चोदकनामधेययोर्बलाबलनिर्णयेऽपि नान्यतरस्य सर्वथा बाधः किंतु व्यवस्थितविषय एवेत्याशयेनाह—**तत्रेति** । **विरुद्धेष्विति** । अत्र किं द्वादशाहिकाः कर्तव्या उतैकाहिका इति फलसंशयः । किं चोदको बलवानुत नामधेयमित्यधिकरणाङ्गसंशयश्च द्रष्टव्यः । **विशेषाभावादिति** । एतद्बलात्संशयेऽनियमपक्षोऽपि द्रष्टव्यः । अविरुद्धांशे उभयोः प्रापकत्वावश्यंभावादन्यतरस्यैव प्रापकत्वमिति विशेषानवगमादनियम इत्यर्थः । **ननु** प्रत्यक्षत्वान्नामधेयमेव बलवन्न चोदकः आनुमानिकत्वादित्याशङ्क्य प्रत्यक्षानुमानयोः शीघ्रमन्थरगामित्वकृतो बलाबलभावः तच्च प्रकृते विपरीतमानुमानिकस्यापि चोदकस्येतिकर्तव्यताकाङ्क्षासमये प्रयोगवाक्ये झटित्युपस्थितेरित्याशयेनाह—**फलेति** । इतिकर्तव्यतायाः फलसिद्ध्यर्थमेव भावनापेक्षितत्वादिति भावः । **प्रयोगेति** । 'प्रजाकामा गवामयनमुपेयु'रिति वाक्य इत्यर्थः । ततः किमित्यत आह—**नचेति** । इतिकर्तव्यतापेक्षे प्रयोगवाक्ये गम्यमानमहर्गणत्वसामान्यं आकाङ्क्षाप्रत्यासन्नं प्रबलमिति तन्निमित्तो द्वादशाहविध्यन्त एव, नामधेयं तूत्पत्तिवाक्येषु श्रूयमाणमाकाङ्क्षाप्रत्यासत्तिविरहाद्दुर्बलमिति न तन्निमित्तैकाहिकविध्यन्त इत्यर्थः । **ननु** विलम्बितमपि नामधेयमवश्यं धर्मानतिदिशत्येवान्यथा नैरर्थक्यादित्यत आह—**फलसंबन्धमिति** । सत्यमानर्थक्यापत्त्या धर्मातिदेशकं तथापि प्रथमप्रवृत्तचोदकानुसारेणाविरुद्धधर्मानेवातिदिशति न विरुद्धानित्यर्थः । **ननु** न नामधेयमाकाङ्क्षानुसारेणातिदिशति येनोत्पत्तावाकाङ्क्षाविरहादनतिदेशकं स्यात् किंतूत्पत्तावेव परत्र परशब्दप्रयोगबलाद्धर्मविशिष्टमेव कर्मोत्पद्यते, तथाच करणेतिकर्तव्यताविशिष्टा भावनोत्पत्तावेवगता पश्चात्फलेन संबध्यत इति चोदकस्यैव दौर्बल्यमिति चेन्मैवम् । उत्पत्तौ श्रूयमाणमपि नामधेयमाकाङ्क्षानुसारेणैव धर्मातिदेशकं वाच्यम् । अन्यथा सिद्धसादृश्यमादायापि नामप्रवृत्तिः संभाव्येत । तस्मात्साध्यसादृश्यपरत्वमादाय धर्मातिदेशकत्वमाकाङ्क्षानुसारेणैव वाच्यमिति युक्तं चोदकस्य प्राबल्यं तदेतदभिसंधायाह—**तस्मादिति** । यदुक्तमानुमानिकस्यैव शीघ्रप्रवृत्तिकत्वादातिदेशकत्वमिति तत्राह—**यद्यपीति** । तथाच फलवाक्य एवाकाङ्क्षास्वीकारेऽपि फलवाक्यमुत्पत्तिवाक्यगतनामविशिष्टकर्मालोच्यैव फले विनियुङ्क्त इति फलवाक्येऽप्युपस्थितमेव नाम तच्च प्रत्यक्षतया शीघ्रप्रवृत्तिकमिति नामधेयस्य प्रबलत्वात्तदेवातिदेशकमित्यर्थः । **किंचेति** । उत्पत्तिवाक्येऽपि प्रवर्तनासंबन्धबलाद्भावनायाः समीहितभाव्यकत्वमवगम्यत एव तद्बलाच्चेतिकर्तव्यताकाङ्क्षास्तीति तत्र श्रूयमाणनामधेयमेवातिदेशकमित्यर्थः । इदं चापाततः सामान्येन समीहितभाव्यकत्वावगतावपि भाव्यविशेषापरिज्ञाने इतिकर्तव्यताकाङ्क्षाभावात् । नहीत्थमाकाङ्क्षास्ति किंचित्समीहितं कथं कर्तव्यमिति किंविदं समीहितं कथं कर्तव्यमिति । साच भाव्यविशेषज्ञानानन्तरमेवेति फलवाक्य एवेतिकर्तव्यताकाङ्क्षा युक्तेति । **तस्मादिति** । अत्रोक्तरीत्या नामधेययुक्तेष्वहस्स्वाकाङ्क्षापूरणेऽपि सर्वाहःसाधारणेतिकर्तव्यताकाङ्क्षापूर्तये चोदकप्रवृत्तिरपि वाच्या । तत्रायं विशेषः—नामधेययुक्तेष्वहस्स्वविरुद्धा

---

१ बहुवचनम्. २ संबन्धान्नतु तत्र नामानि.

द्वयेऽपि कर्तव्याः विरुद्धास्तु नामप्रापिताः विरुद्धा अपि अतुल्याकाला ये सर्वेषामह्नां तन्त्रेणानुष्ठेया धर्मास्ते भूयोऽनुग्रहन्यायेन चोदकप्रापिता एव कर्तव्याः न नामप्रापिता इति । सूत्रार्थस्तु—अहर्गणे गवामयने द्वादशाहिकमेव धर्मजातं प्राप्यते अहर्गणस्य द्वादशाहप्रकृतिकत्वात् एकाहिकज्योतिरादिनाम तु ज्योतिष्टोमादधिकानां धर्माणां सद्भावान्मुख्ये ज्योतिरादौ प्रवृत्तमिहापि द्वादशाहिका अधिकाः सन्तीत्येकाहवदधिकागमसामान्यादनुवादो नातिदेशकमिति बुद्धिसौकर्यार्थं वृत्तवर्तिष्यमाणाध्यायद्वयार्थं संगृह्णाति वचनादिति ॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां सप्तमाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## इति सप्तमाध्यायः समाप्तः ॥



# अष्टमोऽध्यायः ॥ ८ ॥

## अष्टमाध्याये प्रथमः पादः ।

विशेषचिन्ताधिकरणम् ॥ १ ॥

### अथ विशेषलक्षणम् ॥ १ ॥

सामान्येनातिदेशो योऽनुमानात्स निरूपितः ॥ विशेषेणातिदेशो यः सोऽष्टमेऽथ निरूप्यते ॥ १ ॥
कस्माच्चिदतिदिश्यन्ते नियतात्कर्मणोऽथ वा ॥ अविशेषादादिमोऽन्त्यः शास्त्रार्थस्य व्यवस्थितेः ॥ २ ॥

विध्यन्ताधिकरणे सौर्यादिष्वानुमानिकवचनेन वैदिकीतिकर्तव्यतास्तीत्युक्तं तस्येदानीं विशेष उच्यते कस्य विध्यन्तः क्व प्रवर्तेत इति । प्रथमं तावदिदं चिन्त्यते किमेकस्मिन्कर्मणि सर्वधर्मातिदेश उत नेति । ननु विध्यन्ताधिकरण एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य 'मिथो विप्रतिषेधात्' इत्यनेन सूत्रेण कथंभावापेक्षायामेकेनैवेत्थंभावपूरणान्न द्वयोः सह प्रवृत्तिरित्युक्तं तेन गतमेतत् । सत्यम् । समुच्चयस्तत्र निराकृतः । इह तु सर्वविध्यन्तानामेकत्र विकल्पेन प्राप्तिरिति पूर्वः पक्षः । उत्तरस्तु नियेत एकस्मिन्नेकः प्रवर्तते अन्यथा ह्यव्यवस्थितः शास्त्रार्थः स्यात् । तस्मान्नियमेनैकस्यैव दर्शपूर्णमासादेर्विध्यन्त एकस्मिन्सौर्यादौ प्रवर्तते । सत्यमेवं युक्तं, कथं त्विदमवगम्यतेऽस्य विध्यन्तोऽत्र प्रवर्ततेऽस्य नेति तदभिधीयते ॥

विशेषकर्मणो धर्मातिदेशाधिकरणम् ॥ २ ॥

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

तद्धितोक्त्यादिलिङ्गं किं न विशेषनियामकम् ॥ भवेद्वा न ह्यशब्दत्वान्नवेच्छब्दे प्रवेशतः ॥ ३ ॥

यस्य कर्मणो लिङ्गं चिह्नमुपस्थापकं शब्दगतमर्थगतं वा यस्यां विकृतौ दृश्यते तस्य विध्यन्त-

---

**अथ विशेषलक्षणम्** ॥ १ ॥ सङ्गतिमाह—**विध्यन्तेति** । सामान्यतोऽतिदेशनिरूपणानन्तरं तद्धेतुको विशेषातिदेशो निरूप्यत इत्यर्थः । हेतुहेतुमद्भाव एवानन्तर्याभिधायिनाथशब्देन सूत्रेऽपि स्पष्टीकृतः । कस्य विध्यन्तः क्व वर्तेत इति करिष्यमाणविचारोपोद्घातत्वेनाद्यं प्रवर्तयन् किं विशेषलक्षणमारभ्यं उतानारभ्यमिति प्रधानसंशयं मनसि निधाय तदर्थसंशयमाह—**प्रथममिति** । ननु विध्यन्ताधिकरणे लौकिकवैदिकेतिकर्तव्यताद्वयं प्रवर्ततामित्याशङ्क्य मिथो विप्रतिषेधाद्यथार्थकल्पना स्यादिति सूत्रेणोभयोरपि निरपेक्षतया इतिकर्तव्यताकाङ्क्षापूरणसमर्थतया एकप्रवृत्तौ विप्रतिषेधादितराप्रवृत्तिः । ततश्चाकाङ्क्षापूरणरूपप्रयोजनमनतिक्रम्यैकैवेतिकर्तव्यता प्रवर्तेत इत्युक्तम् । तेनैव न्यायेन वैदिकेतिकर्तव्यताप्येककर्मगतैव ग्राह्या न सर्वकर्मगतेति सिद्धे व्यर्थमिदमधिकरणमिति शङ्कते—**नन्विति । समुच्चय इति** । आकाङ्क्षापूरणे निरपेक्षसाधनतामूलविप्रतिषेधोक्तिबलात्समुच्चय एव तत्र निराकृत इत्यर्थः । **इह त्विति** । नच वक्ष्यमाणरीत्या नियतप्रकृतिविशेषनिश्चायकानां लिङ्गानां विद्यमानत्वात्कथं विकल्प इति वाच्यम् । लिङ्गानामनुमानविधया निश्चायकत्वं नान्यथा । तच्च न संभवति । वैदिकेऽर्थे व्याप्त्यादिनिश्चायकप्रमाणाभावात् अप्रयोजकत्वाच्च । ततश्चाकाङ्क्षाबलादनियतग्रहणं युक्तमिति भावः । **अव्यवस्थित इति** । वक्ष्यमाणरीत्या व्यवस्थायां संभवन्त्यामव्यवस्थास्वीकारो न युक्तः । लिङ्गानां च नानुमानविधया निश्चायकत्वं किंतु विध्यन्ताधिकरणोक्तरीत्या उपमानविधया । तत्र च व्याप्त्याद्यनपेक्षेति भावः । अधिकरणार्थमुपसंहरति—**तस्मादिति** । 'सामान्यातिदेशलक्षणानन्तरं विशेषलक्षणं वक्ष्याम' इति भाष्ये सूत्रं व्याख्यातम् । वार्तिके तु विशेषशब्दस्यासाधारणार्थतामङ्गीकृत्यैकैवेतिकर्तव्यता प्रवर्तते इत्यर्थे व्याख्यातमुत्तरसूत्रे । अस्य विध्यन्तोऽत्र प्रवर्तते इत्यत्र चिह्नमात्रमुच्यते, न तत्र संशयादिना कार्यमित्यभिप्रेत्य तत्सूत्रमवतारयति—**सत्यमिति । तदभिधीयत इति** । अस्य विध्यन्तोऽत्रेत्यत्र नियामकमभिधीयत इत्यर्थः ॥

**यस्य लिङ्ग०** ॥ २ ॥ **शब्दगतमिति** । निर्वपतिस्तद्धितेन देवतानिर्देश इत्यादिकमित्यर्थः । **अर्थगतमिति** ।

---

१ तस्यैवेदानीं. २ नियत एव एक.

स्तस्यां प्रवर्तते। यथाग्नेयस्य सौर्ये। तथाहि निर्वपतिस्तद्धितेन देवतानिर्देश एकदेवतात्वमौषधद्रव्यकत्वमित्यादीन्याग्नेयचोदनया दृष्टसंबन्धानि सौर्यवाक्ये विध्यन्तापेक्षे दृश्यमानानि तामुपस्थापयन्ति सा च स्वार्थम्। त्र्यंशा च भावना तस्याः स्वार्थः। ततः साध्यसाधनांशाविहानपेक्षितत्वादनादृतस्तृतीयोंऽश इत्थंभावरूपोऽपेक्षासंनिधियोग्यत्वैर्वाक्यशेषत्वेनात्र संबध्यते। तदयमर्थः—यथाग्नेयेन स्वर्गः कृतस्तथा सौर्येण ब्रह्मवर्चसमिति। एवमनेकदैवतेष्वग्नीषोमीयैन्द्राग्नविध्यन्त आज्यद्रव्यकेषूपांशुयाज्यस्य, पयोदध्यामिक्षादिषु दैक्षपशौ च सांनाय्यस्य, पश्वन्तरेषु दैक्षस्य, एकादशिनेषु सवनीयस्य पशुगणान्तरेष्वैकादशिनस्य, अव्यक्तेषु सोमस्य, अहर्गणेषु सत्रेष्वहीनेषु च द्वादशाहस्य, संवत्सरादिषु गावामयनिकस्येत्यादि द्रष्टव्यम्। एवमिह विशेषातिदेशः। उत्तरस्तस्यैव प्रपञ्चः॥

सोम ऐष्टिकधर्मानतिदेशाधिकरणम्॥ ३॥

**प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात्॥ ३॥ [लिङ्गदर्शनाच्च॥ ४॥ कृत्स्नविधानाद्वाऽपूर्वत्वम्॥ ५॥ स्रुगभिघारणाभावस्य च नित्यानुवादात्॥ ६॥ विधिरिति चेत्॥ ७॥ न वाक्यशेषत्वात्॥ ८॥ शङ्कते चानुपोषणात्॥ ९॥ दर्शनमैष्टिकानां स्यात्॥ १०॥]**

विध्यन्त ऐष्टिकः सोमे स्यान्नो वा स्यात्प्रवृत्तितः॥ उपदिष्टैर्नैरपेक्ष्याद्विध्यन्तो नैष्टिकोऽत्र हि॥ ४॥
इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि॥ अस्ति वा नालौकिकत्वादियत्तानवधारणात्॥ ५॥
लोकवत्संनिपत्यारादुपकारिद्वयश्रुतेः॥ इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु॥ ६॥

अग्निहोत्रे दर्शपूर्णमासयोर्ज्योतिष्टोमे च दोहनावघाताभिषवादिदृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थानि, तैश्च निराकाङ्क्षत्वादतिदेशो नास्ति तथापि सोमे दार्शपौर्णमासिकधर्मातिदेशं केनचिद्धेतुना शङ्कमानं निराकर्तुमिदमधिकरणम्। कः पुनरसौ हेतुः दीक्षणीयादिष्ववभृथपर्यन्तास्विष्टिषु पशुषु च

---

एकदेवताकत्वादिकमित्यर्थः। **निर्वपतिरिति**। निर्वपेदिति शब्द एव लिङ्गं नतु तदर्थः। अर्थस्य चोदकप्राप्यत्वादिति भावः। आदिपदेन व्यक्तचोदनात्वादिपरिग्रहः। आग्नेयचोदनाशब्देन प्रयोगविधिर्विवक्षितः 'यदाग्नेऽयोऽष्टाकपाल'इत्युत्पत्तिचोदनायां निर्वपतिशब्दाभावात्। अतएव त्र्यंशा च भावना तस्याः स्वार्थ इत्यनुपदमेवाह—**उपस्थापयन्तीति**। उपमानविधयेति शेषः। ततः किमित्यत आह—**सा चेति**। ननु साध्यसाधनांशवदुपस्थितोऽपीतिकर्तव्यतांशो न संबध्यत इत्यत आह—**तत इति**। नन्वाग्नेयान्विताया इतिकर्तव्यताया नान्यान्वय इत्याशङ्क्य तत्संबन्धादरेणान्वयात्र दोष इत्यभिप्रायेणाह—**तदयमिति**। **एवमिति**। तत्रापि द्व्यक्षरत्र्यक्षरेष्वैन्द्राग्नविध्यन्तः, चतुरक्षरादिष्वग्नीषोमीयविध्यन्त इति याज्ञिकाः। उत्तरग्रन्थवैयर्थ्यमाशङ्क्याह—**उत्तर इति**। सूत्रार्थस्तु—यस्याग्नेयादेर्लिङ्गं चिह्नं सदृशधर्म इति यावत्तद्यस्यां विकृतौ दृश्यते तस्यां तदीयविध्यन्तः स्यादर्थस्य लिङ्गस्य तेन विध्यन्तेन संयोगादभिधानवदग्निहोत्रादिनामवत्। नाम यथान्यत्र दृश्यमानमितिकर्तव्यतामुपस्थापयति तद्वदित्यर्थः॥

**प्रवृत्तित्वात्०॥ ३॥** अत्र प्राभाकरैरग्निहोत्रदर्शपूर्णमाससोमानुदाहृत्य तेषूपदेशेनोपकारसमाप्तिलक्षणं मूलप्रकृतित्वं चिन्त्यत इत्युक्तं तदयुक्तं, संनिपातिवर्गपौष्कल्येन निराकाङ्क्षतयातिदेशाप्रसङ्गेनोपदेशेनोपकारसमाप्तिलक्षणमूलप्रकृतित्वस्याविचारितसिद्धतयाधिकरणवैयर्थ्यात्। नच न संनिपातिवर्गमात्रादुपकाराकाङ्क्षाशान्तिः किंत्वारादुपकारकवर्गादपि। तस्य च इयत्तानिश्चायकाभावादतिदेशप्रसङ्गे तन्निराकरणेन मूलप्रकृतित्वसाधनायाधिकरणमावश्यकमिति वाच्यम्। तथासत्यारादुपकारकरहितस्याग्निहोत्रस्य सिद्धान्तेऽपि निराकाङ्क्षत्वाभावप्रसङ्गात्। तस्मात्तदीत्याधिकरणं व्यर्थमित्यभिप्रायेणाह—**अग्निहोत्र इति**। **नास्तीति**। तथाच तन्निराकरणार्थं नेदमधिकरणमित्यर्थः। किमर्थं तर्हीदमित्यत आह—**तथापीति**। सोममात्र एव दार्शपौर्णमासिकविध्यन्तातिदेशनिराकरणार्थमित्यर्थः। व्यक्ताव्यक्तचोदनयोर्विसदृशतया चोदनालिङ्गाभावात्पृच्छति—**कः पुनरिति**। चोदनालिङ्गस्यापि कर्मविशेषगतविध्यन्तोपस्थापकतयातिदेशहेतुत्वमुपस्थितिश्चात्र दीक्षणीयादिष्वतिदेशतः प्रवृत्तिबलादेव तत्संवलिते सोमेऽस्तीति चोदनालिङ्गाभावेऽपि तद्विकारत्वं युक्तमित्याह—**दीक्षणीयेति**। एतेन पूर्वत्र लिङ्गादतिदेश इत्युक्तं, इहतु लिङ्गाभावेऽपि प्रवृत्त्यातिदेशमाशङ्क्य निराक्रियत इति सङ्गतिरपि सूचिता।

---

१ मित्याग्नेय. २ वादीनि दृष्टा.

दर्शपूर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्तते । तन्मध्यवर्तित्वाच्च सोमस्य तत्रापि तदन्वयं शङ्कते । 'तस्यैकशतं प्रयाजानुयाजा' इति च दर्शनमवकल्प्यते । तस्मादिष्टिः सोमे प्रवर्तेतेति । सेयं निराक्रियते । नानपेक्षे प्रवृत्तिर्युक्ता । प्रयाजादिकं तु दीक्षणीयाद्यङ्गवर्तिवाजपेययूपन्यायेनैकशतसङ्ख्यं प्राप्तमनूद्यत इति नास्ति सोमेऽतिदेशः ॥

ऐन्द्राग्नादावैष्टिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

**ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा द्वयोरिह ॥ संभवादैच्छिकोऽन्त्योऽत्र स्यात्कपालादिलिङ्गतः ॥ ७ ॥**

'सौर्यं चरुं निर्वपे'दित्यादिषु इष्टिषु निर्वपत्यादिसामान्येन दर्शपूर्णमासविध्यन्तोपस्थानात्तस्यातिदेशः । इदंच यस्य लिङ्गमित्यस्य प्रपञ्च इति नातीव पूर्वपक्षे यतितव्यम् । एवमुत्तरत्रापि सर्वत्र ॥

अग्नीषोमीयपशौ दार्शपूर्णमासिकधर्मातिदेशाधिकरणम् ॥ ५ ॥

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥

**न पशावैष्टिकः स्याद्वा न कपालाद्यभावतः ॥ स्याद्व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यतः ॥ ८ ॥**

पशावप्यग्नीषोमीये तद्धितेन देवतानिर्देश आलभतिश्च दर्शपूर्णमाससादृश्यं इष्टावप्यालभतिर्विद्यते 'ईषामालभेते'ति । इष्यतेच पशोरालम्भनादिदृष्टार्थाङ्गसिद्ध्येऽतिदेशापेक्षा । तस्मात्तत्रैष्टिको विध्यन्तः ॥

---

उत्कार्थे लिङ्गदर्शनमप्याह—**तस्येति** । इष्टिविकारत्वे हि प्रयाजादिप्राप्तिर्नान्यथेति भावः । पत्न्युत्या नियमोऽपि सत्यामितिकर्तव्यताकाङ्क्षायामिह तु संनिपातिपौष्कल्यान्नाकाङ्क्षेत्यभिप्रायेण सिद्धान्तमाह—**सेयमिति** । लिङ्गदर्शनमन्यथयति—**प्रयाजेति** । वाजपेयस्य यूप इति वाजपेयाङ्गपशुयागगतयूपवद्दीक्षणीयादिगतं प्रयाजादिकं परम्परासंबन्धमाश्रित्य तस्यैकशतमित्यनूद्यत इत्यन्यथोपपन्नं लिङ्गमित्यर्थः । साक्षात्संबन्धसंभवे परम्पराश्रयणमयुक्तमिति शङ्कानिराकरणार्थमनूद्यत इति यथाप्राप्त्यनुवाद इति परम्पराश्रयणं न दोषः । विधायकत्वे लिङ्गत्वमेव न स्यादिति भावः । ऐष्टिकविध्यन्तस्य दीक्षणीयादिषु प्रवृत्तत्वात्सोमेऽपि प्रवृत्तिः स्यादिति सूत्रार्थः ॥

**इष्टिषु दर्शपूर्ण०** ॥ ११ ॥ सौर्यं चरुं निर्वपेदित्यादिष्विष्टिषु चिन्त्यते किं दार्शपूर्णमासिकः सौमिको वा विध्यन्त इत्यनियमः उत दार्शपूर्णमासिक एवेति विशेषाभावादनियम इति । पूर्वपक्षस्य मन्दत्वात्तमुपेक्ष्य सिद्धान्तमाह—**सौर्यमित्यादि** । निर्वपत्यादिसामान्यस्य नियामकस्य विद्यमानत्वान्नानियम इत्यर्थः । ननूक्तनियामके जाग्रति कथमनियमपूर्वपक्ष इत्यत आह—**इदमिति** । यस्य लिङ्गमित्येतत्प्रपञ्चत्वादेव सौर्यादिषु दर्शपूर्णमासयोर्विध्यन्तः स्यादित्येव सूत्रे उक्तं नतु हेतुरुपन्यस्तः । प्रपञ्चत्वादेव सङ्गतिः । एवमुत्तरत्र यथासंभवं संशयसंगतिपूर्वपक्षा उन्नेयाः । विशेषमात्रं तु कथ्यत इत्यभिप्रायेणाह—**एवमिति** ॥

**पशौ च लिङ्गदर्शनात्** ॥ १२ ॥ ननु युक्तमिष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरिति लिङ्गसद्भावात्, पशौ तु लिङ्गासद्भावान्नैष्टिकविध्यन्तप्राप्तिः । नच तद्धितेन देवतानिर्देश इष्टिलिङ्गं, उपांशुयाजेऽसतस्तस्येष्टिलिङ्गत्वायोगात् । नाप्यालभतिर्दर्शपूर्णमासयोस्तददर्शनादिति शङ्कानिराकरणार्थं लिङ्गमुपपादयति—**पशाविति** । उक्तशङ्कयोत्थानात्संगतिः स्पष्टा । उपांशुयाजे तस्यासत्वेऽप्याग्नेयादिषु बहुषु दर्शनात्तद्धितेन देवतानिर्देशस्य लिङ्गत्वम् । आलभतिसत्तामाह—**इष्टावपीति** । ईषां लाङ्गलाधारभूतं शकटदण्डमित्यर्थः । **ननू**पाकरणनियोजनादिसंनिपातिवर्गाम्नानान्नैराकाङ्क्ष्यमित्यत आह—**इष्यते चेति** । कतिपयसंनिपात्याम्नानेऽप्यावाहनादिलक्षणसंनिपात्यर्थमस्त्याकाङ्क्षेत्यर्थः । यद्वा परैरङ्गत्वादग्नीषोमीयस्य न स्वत आकाङ्क्षा किंतु लिङ्गदर्शनोत्थाप्येत्युक्तं तदयुक्तम् । अङ्गत्वेऽप्यावाहनादिसंनिपात्यर्थं स्वत एवाकाङ्क्षासंभवादित्याह—**इष्यते चेति** । किंच यत्रायं पशुरुत्पन्नः क्रयसंनिधौ न तत्र धर्मा आम्नाताः किंतु औपवसथ्येहनि । तत्रोत्पत्ताविति कर्तव्यताकाङ्क्षायाः प्रदेशान्तराम्नातैर्धर्मैरशान्तेस्तदर्थमैष्टिकविध्यन्तप्रवृत्तिरप्रत्यूहेति ध्येयम् । सूत्रार्थस्तु—'स्रुच्यमाघार्य जुह्वा पशुं समनक्ति, एकादशप्रयाजान्यजति, पृषदाज्येनानूयाजान्यजती'त्यादिलिङ्गदर्शनोपोद्बलिताचोदनालिङ्गादैष्टिकविध्यन्त इति ॥

सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥

**दैक्षस्य चेतरेषु ॥ १३ ॥**

**सवनीयादिके दार्शो दैक्षो वा प्रकृतिस्त्वतः ॥ आद्योऽन्त्यो लिङ्गतोऽन्यत्र विकृतिः प्रकृतिर्भवेत् ॥ ९ ॥**

इतरेषु सवनीयनिरूढादिषु पशुषु प्राणिद्रव्यकत्वसादृश्यस्य विशेषाद्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यन्तः ॥

ऐकादशिनपशौ समानधर्मातिदेशाधिकरणम् ॥ ७ ॥

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥**

**स्यादैकादशिने दैक्षात्सौत्याद्वाद्योऽस्तु पूर्ववत् ॥ रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः ॥ १० ॥**

ऐकादशिनेषु तु सुत्याकालत्वसामान्यातिरेकाद्द्वैरशन्यदर्शनाच्च द्वे द्वे रशने यूपमृच्छत इति सवनीयस्य विध्यन्तः ॥

पशुगणेष्वैकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

**तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥**

**ललामादिगणे दैक्षादैकादशिनतोऽथ वा ॥ आद्यो विशेषराहित्यान्न गणत्वाविशेषतः ॥ ११ ॥**

सौत्रामण्यादिषु पशुगणेषु गणत्वसामान्यातिरेकादैकादशिनविध्यन्तः ॥

अव्यक्तपशौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

**अव्यक्तासु तु सोमस्य ॥ १६ ॥**

**इष्टेः सोमस्य वा धर्मा विश्वजित्प्रमुखेष्विह ॥ अविशेषादैच्छिकाः स्युः सोमस्य व्यक्तिसाम्यतः ॥ १२ ॥**

'विश्वजिता यजेते'त्यादिष्वेकाहेषु द्वादशाहे च किं दार्शपौर्णमासिको विध्यन्त उत सौमिक इति

---

**दैक्षस्य चेतरेषु ॥ १३ ॥** पूर्वेण न्यायेन सवनीयादिष्वैष्टिकविध्यन्तप्राप्तेः संगतिपूर्वपक्षौ । सिद्धान्तं सूत्रव्याख्ययाह—**इतरेष्विति** । 'यो दीक्षितो यदग्नीषोमीयं पशुमालभत' इति दीक्षासंबन्धाद्दैक्षपदेन सूत्रेऽग्नीषोमीयो विवक्षित इत्याशयेनाह—**अग्नीषोमीयस्येति** ॥

**ऐकादशिनेषु० ॥ १४ ॥** नन्वैकादशिनेषु दैक्षस्यैव विध्यन्तो न सवनीयस्य तस्य स्वयमधर्मकत्वात् । नह्याढ्ये वदान्येऽवतिष्ठमाने क्षुत्क्षामो भिक्षुको भिक्षुकान्तरं याचितुमर्हतीति न्यायात् । नच सवनीयेऽप्यनेनैव न्यायेनैष्टिकविध्यन्तप्राप्तिः स्यान्न दैक्षस्येति वाच्यम् । अपेक्षितानां पशुधर्माणामिष्टावसत्वादित्यभिप्रायेणाह—**ऐकादशिनेष्विति** । उक्ताशङ्कयोत्थानात्सङ्गतिः । ऐकादशिनेषु 'प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोती'त्यादिना विहितेषु 'आग्नेयः कृष्णग्रीवः सारस्वती मेषी'त्यादिना विहितेषु वा सुत्याकालत्वसामान्याधिक्यात्सवनीयविकारत्वमित्यर्थः । सुत्याकालत्वं च क्रतुपशव ऐकादशिनाश्च विकल्प्यन्त इति विकल्पविधानादवगम्यत इति ध्येयम् । अर्थगतं चोदनासामान्यमुक्त्वा सौत्रं लिङ्गदर्शनं व्याचष्टे—**द्वैरशन्येति** । सवनीये 'त्रिवृता यूपं परिवीये'त्येका रशना दैक्षविकारत्वाचापरेति द्वैरशन्यमिहापि 'द्वे द्वे रशने यूपमृच्छतः' इति द्वैरशन्यदर्शनात्सवनीयविध्यन्तः। ततश्चाग्नीध्रीये 'सवनीयस्याज्यानि गृह्णाती'त्यादिधर्मप्राप्तिरित्यर्थः ॥

**तत्प्रवृत्तिर्गणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥** ननु सौत्रामण्यादिपशुगणेष्वग्नीषोमीयविध्यन्त एव युक्तः। नच गणत्वसामान्यादैकादशिनप्राप्तिरिति वाच्यम् । प्रत्येकमेव पशूनामितिकर्तव्यताकाङ्क्षत्वात् प्रत्येकं गणत्वाभावादतो मूलप्रकृतितया अग्नीषोमीयविध्यन्त एवेत्युत्थितेः सङ्गतिपूर्वपक्षौ । सिद्धान्तमाह—**सौत्रामणीति** । अत्र भाष्योदाहृतललामादिगणं विहाय सौत्रामण्युपादानं सूत्रोक्तप्रतिपशुयूपदर्शनाख्यलिङ्गदर्शनाभिप्रायेण । आदिपदात् 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रु'मित्यादिगणानां ग्रहणम् । यद्यपि प्रत्येकमेव पशूनामाकाङ्क्षा तथापि गणान्तर्गतानामेवेति भवति गणत्वं सामान्यम् । ततश्च ऐकादशिनगतानां दक्षिणत ऐकादशिनानीत्यादीनां धर्माणां प्राप्तिरिति भावः । सूत्रार्थस्तु—पशुगणेष्वैकादशिनविध्यन्तप्रवृत्तिः स्यात्सौत्रामण्यां त्रिपशुकायां 'यत्त्रिषु यूपेष्वालभेत बहिर्धास्मादिन्द्रियं वीर्यं दध्या'दिति यूपत्रयनिषेधबलेन प्रतिपशु यूपप्राप्त्यवगमात् ऐकादशिनेषु पशुभेदेन यूपभेदसद्भावादिति ॥

**अव्यक्तासु तु सोमस्य ॥ १६ ॥** इष्टिषु प्रकृतिचिन्तानन्तरं स्वाङ्गदीक्षणीयादिषु तदपेक्षया जघन्यस्य सोमस्य

---

१ द्रव्यकत्वसाम्याद्विशसनादि. २ पशु दर्शनात्. ३ सामान्याधिक्यादैका.

संशये विशेषाभावादनियमे प्राप्ते उच्यते—सौमिकः स्यादव्यक्तत्वसामान्यात् । केयमव्यक्तता स्वार्थतया विनियुक्तदेवताविरहः । यत्र तद्धितचतुर्थीमन्त्रवर्णैर्यागार्थतयैव देवता विनियुक्ता तद्व्यक्तम् इतरत्त्वव्यक्तम् । तथाच विश्वजिदादयः सोमश्च । ननु—'ऐन्द्रवायवं गृह्णाती'ति तद्धितेनैव देवतापि सोमे विहिता । न यागे देवतानेन विधीयते किंतु ग्रहणे । तद्गतायास्तु पश्चादार्थिको यागसंबन्धो नतु प्रथममेव यागान्वय इत्यव्यक्तत्वम् । अतः सोमस्य विध्यन्तो विश्वजिदादिषु ॥

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

## गणेषु द्वादशाहस्य ॥ १७ ॥

**अहर्गणेषु सौमस्य द्वादशाहस्य चाग्रिमः ॥ पूर्ववद्दिनसंघादिविशेषैरन्तिमो भवेत् ॥ १३ ॥**

द्विरात्रादिष्वहर्गणेष्वव्यक्तत्वं गणत्वं चाधिकं विद्यते तस्माद्द्वादशाहविध्यन्तः । एवंच पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते इत्यादयो गणधर्मा लभ्यन्ते ॥

संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

## गव्यस्य च तदादिषु ॥ १८ ॥

**द्वादशाहस्य गव्यस्य वादित्याद्यङ्कितायने । पुरैवाद्यो गव्यधर्मा वत्सरत्वादिलिङ्गतः ॥ १४ ॥**

संवत्सरसत्रेष्वादित्यानामयनप्रभृतिषु संवत्सरसत्रत्वसामान्यात्संवत्सरनियमलिप्सया च गवामयनविध्यन्तः ॥

---

विकृतिपरम्परा चिन्त्यत इति पेटिकासंगतिः । पूर्ववद्विशेषनियामकाभावादनियम इत्युत्थितेरवान्तरसंगतिरित्याहुः । **विशेषाभावादिति ।** नच विशेषनियामकाभावे दर्विहोमवदपूर्वत्वं किं न स्यादिति वाच्यम् । दर्विहोमानामपूर्वत्वेऽपि वाचनिकद्रव्यदेवतासद्भावेन संभवति शास्त्रपर्यवसानम्, इहतु यजेतेत्येतावन्मात्रं श्रूयते, यागश्च द्रव्यदेवतानिर्वाह्यः । तथाच कुतश्चित्प्रकृतेर्द्रव्यदेवतयोरलाभे यागनिर्वाहाभावाच्छास्त्रमपर्यवसितं स्यादिति तत्पर्यवसानायानियमस्यैव युक्तत्वादिति भावः । **ननु** व्यक्तत्वं यागस्य द्रव्यदेवताभ्यां भवति ततश्चाव्यक्तत्वं द्रव्यदेवताभावलक्षणं वाच्यं तच्च सोमयागे सिद्धमिन्द्रवाय्वादिदेवतानां सोमरूपद्रव्यस्य च सत्वात् । नचोत्पत्तिवाक्ये देवताविरहो व्यक्तत्वं तच्च सोमयागेऽप्यस्तीति वाच्यम् । उपांशुयाजेऽपि तत्सत्वात् । किंच विनिगमकाभावादुत्पत्तौ द्रव्याभावो व्यक्तत्वं स्यात् । उपांशुयाजविध्यन्त एव प्राप्नोतीति शङ्कते—**केयमिति । स्वार्थतयेति** । सोमयागे च न स्वार्थतया विनियुक्ता देवता 'ऐन्द्रवायवं गृह्णाती'ति **ग्रह**णार्थतयैव विनियोगादिति भावः । **नन्विदमयुक्तम्** । ग्रहणार्थाया अपि देवताया यागापेक्षा वर्तते यागादन्यत्र देवताया असंभवात्, सोमेन यजेतेति यागस्यापि देवतापेक्षा विद्यते तयोश्च नष्टाश्वदग्धरथवत्परस्परसंबन्धावश्यंभावादित्यत आह **—यत्रेति ।** अत्रैवकारेण प्राथम्यं लभ्यते । तथाच तद्धितचतुर्थीमन्त्रवर्णैर्यागार्थतया प्रथमं देवताविनियोगराहित्यमव्यक्तत्वं विवक्षितं तच्च सोमयागेऽप्यस्त्येवेति भावः । एवकारमदृष्ट्वा शङ्कते—**नन्विति । नेति** । प्रथममेव यागे देवतानेन न विधीयते किंतु ग्रहण एव । पश्चात्तु देवताविशिष्टं ग्रहणमात्मीयतया स्वीकुर्वन् यागः परस्परापेक्षावलाद्देवतयापि संबध्यत इति प्राथम्यघटिता व्यक्तत्वस्य न हानिरित्यर्थः । उपांशुयाजे च मन्त्रवर्णेन स्वार्थतयैव देवताविनियोगान्नातिप्रसङ्ग इति भावः । केचित्तु ग्रहणार्थाया देवतायाः प्रसङ्गाद्यागे उपकारकत्वं न तादर्थ्यमित्याहुः । तन्न । तथासति गोदोहनादिवद्विकृतिष्वतिदेशाभावप्रसङ्गात् सूत्रे चोदनाभिप्रायेणाव्यक्तास्विति स्त्रीलिङ्गनिर्देशः ॥

**गणेषु द्वादशाहस्य ॥ १७ ॥** ननु द्विरात्रादिष्वव्यक्तत्वात्सौमिक एव विध्यन्तः । नच गणत्वाद्द्वादशाहविध्यन्तप्राप्तिः । तथात्वे गणत्वाविशेषात् पशुगणलक्षणैकादशिनीविध्यन्तस्यापि प्रसङ्गादित्युत्थितेः सङ्गतिपूर्वपक्षौ । सिद्धान्तमाह **—द्विरात्रेति । गणत्वं चाधिकमिति ।** अव्यक्तत्वेसति गणत्वं लिङ्गं तच्च न सोमैनैकादशिन्यामित्याशयः । नचाहरुपहितोऽन्यथागणो द्वादशाहः । रात्र्युपहितोऽन्यथागणो द्विरात्रादिरिति वैसादृश्यात्कथं तद्विकारत्वमिति वाच्यम् । अहःशब्दस्य रात्रिशब्दस्य चाहोरात्रपरत्वेनोभयोरप्यहोरात्रनिमित्तगणत्वेन वैसादृश्याभावात् । अतएव द्वादशाहे 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते'ति द्वादशरात्रशब्दः द्विरात्रादिष्वहीनशब्दश्च प्रयुज्यते । द्वादशाहविध्यन्तप्राप्तेः फलमाह **—एवंचेति ॥**

**गव्यस्य च तदादिषु ॥ १८ ॥** नन्वादित्यानामयनादिष्वपि गणत्वसामान्याद्द्वादशाहविध्यन्त एव युक्तः । नचायनैत्वाद्गवामयनविध्यन्त इति वाच्यम् । दाक्षायणयज्ञविध्यन्तस्यापि प्रसङ्गादिति सङ्गतिपूर्वपक्षौ । सिद्धान्तमाह—**संवत्सरेति ।** इदमुपलक्षणम् । अयनशब्दो लक्षणया अयनद्वयाख्ये अब्दे वर्तते । तथाचाब्दपरायनशब्दसामान्याच्चेति द्रष्टव्यम् । **संवत्सरनियमेति ।** 'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेर'न्नित्यादिलिप्सयेत्यर्थः । सूत्रार्थस्तु—**गव्यस्य** गवामयनस्य

---

१ यागार्थतया.

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥**

**साद्यस्के सौमिकः पूर्वधर्मो वाऽव्यक्तभावतः ॥ सौमिकः स्यादेकनामैकसंघस्थत्वतोऽन्तिमः ॥ १५ ॥**

**साहस्राः** साद्यस्का इत्येकसंज्ञया युगपत्प्रस्तुत्य पश्चात्क्रमेण विहिता यागा निकायिन इत्युच्यन्ते[1] तेषां प्रथमो धर्मवान्। उत्तरेषु किं ततो धर्माः प्रवर्तन्ते उत सौमिका इति संशये अव्यक्तत्वात्सौमिका इति प्राप्ते एकनिकायवर्तित्वमेकनामकत्वं चावान्तरसामान्यमधिकमस्तीति पूर्वविध्यन्तः उत्तरेषु तथा यावदस्य साहस्रस्येत्यादिसाहस्रादिधर्मदर्शनं पूर्वधर्मप्राप्तिं दर्शयति ॥

फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

**कर्मणस्त्वप्रवृत्तत्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्॥ २० ॥**
**[प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ अश्रुतित्वाच्च ॥ २२ ॥]**

**फलं च नियमः कर्ता संघः सौर्ये न चाग्निमः ॥ प्रयाजवन्न विध्याविविध्यन्तत्वविभेदतः ॥ १६ ॥**

**फलं** स्वर्गः, नियमो यावज्जीवकता, कर्ता स्वर्गकामः, समुदाय आग्नेयादीनां षण्णां मिथः साहित्यम्। किमेते विकृतिषु सौर्यादिषु मिथः प्रदिश्यन्ते नेति संशयः—'तत्र प्रकृतिसंबन्धाद्विकृतावतिदेशनम् ॥ प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते ॥ प्रकृत्यैव निबद्धत्वाद्विकृत्या सह नान्वयः ॥ नचातिदेशतः प्राप्तिरित्थंभावान्वयादृते ॥' कथंभावापेक्षा हि विकृतिभावना यदेव प्रकृतावित्थंभावेन गृहीतं तदेवापेक्षते। नच फलादीनामित्थंभावनान्वयः। फलनियमयोः पुरुषार्थत्वात्। स्वर्गकामोऽपि न कर्मार्थः कर्मैव तदर्थमित्युक्तं स्वर्गकामाधिकरणे। तथाग्नेयादीनि षडपि तुल्यवत्फलं-

---

विध्यन्तस्तदादिषु संवत्सरादिषु सत्रेषु स्यादिति। गव्यशब्दो यद्यपि 'गोपयसोर्य'दिति गोः पयोव्यतिरिक्तविकारावयवयोर्व्युत्पन्नस्तथापि 'गावो वा एतत्सत्रमासते'त्यर्थवादावगतगोसंबन्धमात्रेणोपचारात्सूत्रे गवामयने प्रयुक्त इति द्रष्टव्यम् ॥

**निकायिनां तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥** सूत्रस्थनिकायशब्दार्थं वदन्विषयमाह—**साहस्रा इति।** साहस्रा इत्येकसंज्ञया युगपत्प्रस्तुत्य तथा साद्यस्का इत्येकसंज्ञया प्रस्तुत्येत्यन्वयः। ननु साहस्रादिसंज्ञया युगपद्विधाने क्रमनियामकाभावेन नियमेन कस्यचित्प्राथम्याभावात्प्रथमधर्मा इतरेष्विति सिद्धान्तकोटेरनुन्मेष इत्यत उक्तं—**क्रमेणेति।** एकसंज्ञयोपक्रममात्रं पश्चात्क्रमेण विहिता इत्यर्थः। क्रमेण विधानाभावेऽपि याज्यापुरोनुवाक्याक्रमादपि क्रमः संभवतीति ध्येयम्। **निकायिन इत्युच्यन्त इति।** निकायः सङ्घः स एषामस्तीति यागेनेति शेषः। पूर्वो धर्मवानितीदमपि सिद्धान्तकोटिसंभवार्थमुक्तं पूर्ववद्विशेषनियामकाभावादव्यक्तत्वेन सौमिकविध्यन्त एवेत्युत्थितेः संगतिः। **अव्यक्तत्वादिति।** नच निकायित्वलिङ्गादाद्यधर्मप्राप्तिरिति वाच्यम्। तथात्वे साद्यस्के निकायवर्तिनि साहस्रनिकायवद्धर्मप्रसङ्गादिति भावः। **एकेति।** न निकायवर्तित्वमात्रं लिङ्गं येनोक्तातिप्रसङ्गः स्यात् किंत्वेकनिकायवर्तित्वमिति भावः। **एकनामेति।** ननु नाम्नो न लिङ्गत्वं तथासत्यग्निहोत्रादिनाम्नोऽपि चोदनालिङ्गत्वं स्यादिति चेन्नैवम्। साद्यस्कादिनाम्नो युगपत्सर्वत्र प्रवृत्त्या एकत्र मुख्यत्वमन्यत्र गौणत्वमिति विशेषानवगमाद्धर्मलक्षणयातिदेशकत्वाभावे चोदनालिङ्गस्यैव वक्तव्यत्वात्। अग्निहोत्रादिनाम्नस्तु युगपदुभयप्रवृत्त्यभावेन नैयमिके मुख्यस्यान्यत्र धर्मातिदेशकत्वसंभवान्न लिङ्गत्वमिति विशेषः। लिङ्गदर्शनमाह—**तथेति।** प्रथमे साहस्रे सहस्रदक्षिणां विधायोत्तरस्मिन्यावदस्य सहस्रस्योत्तराधरा गौर्गवि समूहिता भवतीति तावदस्माल्लोकादसौ लोक इति साहस्रादिधर्मदर्शनं पूर्वनिकायिधर्मप्राप्तिं दर्शयतीत्यर्थः ॥

**कर्मणस्त्वप्रवृत्तत्वात्० ॥ २० ॥** सूत्रोक्तफलादिलक्षणविषयविवेचनपूर्वकं संशयमाह—**फलमित्यादिना।** अङ्गवत्फलादीनामप्यतिदेश इत्युत्थितेः संगतिः। **तत्रेति।** प्रकृतिसंबन्धित्वमेव ह्यतिदेशनियामकं नाङ्गत्वमपि, प्रमाणाभावात्। प्रकृतिसंबन्धित्वं च फलादीनामप्यविशिष्टमिति तेषामप्यतिदेश इत्यर्थः। उत्तरार्धं प्रथमतो व्याचष्टे—**कथंभावेति।** प्रयाजादीनां न प्रकृतौ सद्भावमात्रेणातिदेशः किंत्वाकाङ्क्षाबलात्। तथाच श्रुतेन ब्रह्मवर्चसादिना सौर्यादिना च फलकरणाकाङ्क्षाशान्तेरितिकर्तव्यतामात्रमपेक्षमाणा विकृतिभावना प्रकृतौ यदितिकर्तव्यतात्वेनान्वितं तेनैवापेक्षाबलात्संबध्यत इति तस्यैवातिदेशो नान्यस्येत्यर्थः। **फलनियमयोरिति।** यावज्जीविको नियमः सन् पुरुषार्थः न त्वभ्यासः सन् क्रत्वर्थ इति यावज्जीवाधिकरणे स्थितमिति भावः। **स्वर्गकामोऽपीति।** नच स्वर्गकामस्य कामार्थत्वाभावेऽप्या-

---

[1] उच्यन्ते.

प्रति करणत्वेनोपदिष्टानि नान्योन्यस्याङ्गम् । तेन नैकस्योपकारेऽन्यानि प्रवर्तन्ते । नचाप्रवर्तमानेषु तत्साहित्यं संभवति तस्मान्न फलादीनामतिदेशः । माभूदित्थंभावांशेनातिदेशः । फलापेक्षयैव विश्वजिदादिष्वश्रुतफलेषु फलमतिदेश्यमिति चेन्नैवम् । तद्धि फलं विकृतावतिदेशेन विधीयमानमङ्गमेव स्यान्न फलम् । न फलं प्रकृतिं प्रति विधीयते । फलमेव प्राकृतं यथावस्थितमुद्दिश्य विकृतिर्विधीयतामितिचेत् । न । तस्य विकृतिः साधनं भवितुमर्हति प्रकृत्यैव स्ववाक्यावगतयावरुद्धत्वात् । तस्मान्न विकृतेः प्राकृतफलसंबन्धः ॥

गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् ॥ १४ ॥

**गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥२३॥ [निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥ अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥]**

गोदोहनाद्यस्ति नो वा भवेत्प्रणयनाश्रयात् ॥ अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते ॥ १७ ॥

इह गुणफलानि 'गोदोहनेन पशुकामस्य प्रणये' दित्येवमादीनि, तत्साधनभूताश्च गोदोहनादयः किं विकृतिषु प्रवर्तन्ते नेति संशयः । तत्र प्रधानफलं प्रधाननिबन्धनत्वात्तस्य च विकृतिष्वप्रवृत्तेर्मा नाम प्रवर्तिष्ट, गुणफलं तु गुणप्रवृत्त्या प्रवर्तितुमर्हति । तथाहि प्रणयनं तावदतिदिश्यते, तत्साधनभूतं च गोदोहनमनङ्गमपि साधनत्वाच्चमसवत्प्रवर्तते । तत्प्रवृत्त्या च तत्साध्यं फलमपि प्रवर्तते । यथा प्रधानाश्रितदध्यादिसाध्यमिन्द्रियादि दध्यादेर्होमसाधनत्वेन विकृतिषु प्रवृत्तेः प्रवर्तते । उच्यते —'नहि गोदोहनादीनामित्थंभावेन संग्रहः ॥ इत्थंभावातिदेशेन तेषां नातोऽतिदेशधीः ॥' नहि

---

ख्यातोपात्तस्य कर्तुः कर्माङ्गतयातिदेशः किं न स्यादिति वाच्यम् । बहुकर्तृकेषु 'ऋद्धिकामाः सत्रमासीर'न्नित्यादिषु विरोधात् । एककर्तृकेषूपदेशादेवैकस्य लाभेऽतिदेशवैयर्थ्यात् । अनेनैवाभिप्रायेण पूर्वमुक्तं कर्ता स्वर्गकाम इति । **ननु** समुदायस्य कर्मपरिच्छेदकतया गुणत्वादस्त्वतिदेश इत्यत आह—**तथेति** । समुदायः साहित्यम् । तच्च सर्वप्रवृत्तिं विना न भवति । नचैकविकारे इतरप्रवृत्तौ प्रमाणम् । नच साहित्यं स्वयं प्रवर्तमानमितराण्यपि प्रवर्तयितुं शक्नोति । गुणानुरोधेन प्रधानप्रवृत्त्यसंभवात् । अतो न समुदायस्याप्यतिदेश इत्यर्थः । **ननु** मास्तु श्रुतफले सौर्यादौ फलस्यातिदेशः अश्रुतफले तु विश्वजिति भविष्यतीति शङ्कते—**माभूदिति** । **तद्धीति** । फलं यद्यतिदेशेन विकृतिभावनां नीयते तदा तत्फलमङ्गमेव स्यात् प्रधानत्वाद्गुणभूतकर्मापेक्षानुसारेणान्यत्र नयनासंभवादिति भावः । एवमुत्तरार्धं व्याख्याय पूर्वार्धं व्याख्यातुं शङ्कामुपस्थापयति—**न फलमिति** । फलापेक्षाबलाचोदनासामान्योपस्थितप्रकृतिगतफलोद्देशेन विकृतिकर्मैव विधीयतां, तथाच न प्राधान्यहानिरित्यर्थः । दर्शपूर्णमासगतफलोद्देशेन विकृतिविधानेऽपि न फलस्यातिदेशः अन्यदीयस्यान्यत्र नयनरूपत्वादतिदेशस्य, तस्यचात्राभावात्, तथाप्यन्यत्र श्रुतेन संबन्धमात्रमतिदेश इत्यभ्युपेत्यान्यत्र श्रुतफलंप्रति कर्मविधानमेव न संभवतीत्याह—**तस्येति** । स्ववाक्यगतदर्शपूर्णमासावरुद्धे फले वाक्यान्तरगतविश्वजितो विषमशिष्टतया विकल्पोऽप्यनुपपन्न इत्यभिप्रायेण स्ववाक्यगतयेत्युक्तम् । तथाच प्रकृत्यैव संबद्धत्वाद्विकृत्यन्वयो न संभवतीति भावः । **सूत्रार्थस्तु**—कर्मणः करणस्य विकृतावप्रवृत्तेः फलादीनां तन्नियतसंबन्धादप्रवृत्तिरिति ॥

**गुणकामेषु०** ॥ २३ ॥ तदर्थसंशयगर्भमधिकरणाङ्गसंशयमाह—**इहेति** । इहेत्यस्य संशय इत्यनेनान्वयः । अत्र गोदोहनेन पशुकामस्येत्यादीनि गुणफलानि किं विकृतिषु प्रवर्तन्ते उत नेत्यधिकरणाङ्गसंशयः । तदर्थे च किं तत्साधनभूता गोदोहनादयः प्रवर्तन्ते नेति संशय इति विवेकः । पूर्वाधिकरणवैषम्यकथनेन सङ्गतिं सूचयन्पूर्वपक्षमाह—**तत्रेति** । ननु गुणप्रवृत्त्या तत्फलप्रवृत्तिरित्ययुक्तं अनङ्गतया गुणस्यैव प्रवृत्त्यसंभवादित्यत आह—**तथाहीति** । उपकारकत्वमेवातिदेशे प्रयोजकं नाङ्गत्वं, तथाच चमसवत्प्रणयनोपकारकत्वाविशेषाद्गोदोहनप्रवृत्तौ तत्फलमपि प्रवर्तते इत्यर्थः । **केवलपुरुषार्थ**गोदोहनादेः क्रतूपकारकतयातिदेशं प्रसाध्य तन्मुखेन फलप्रवृत्तिरुपपादिता । इदानीं तु क्रत्वर्थपुरुषार्थोभयरूपदध्याद्यतिदेशे विरोधाभावात्तत्फलप्रवृत्तिरयत्नसिद्धेत्याशयेनाह—**तथेति** । अत्र प्रधानाश्रितत्वमविवक्षितम् । यूपादिलक्षणाङ्गाश्रितखदिरत्वादिफलस्यापि न्यायसाम्यात्प्रवृत्त्यविरोधादिति ध्येयम् । साधनत्वेन अङ्गत्वेनेत्यर्थः । **कथंभावापेक्षया** विकृतिभावनायामङ्गस्यैवान्वयो नोपकारिमात्रस्य । तथाच प्रणयनप्रवृत्त्या तदङ्गस्य चमसस्यातिदेशो न गोदोहनस्येत्यभिप्रायेणाह—**उच्यत इति** । **नहि गोदोहनादीति** । यद्यपि दध्नोऽप्यङ्गत्वमस्ति नोपकारकत्वमात्रं तथापीन्द्रियका-

---

१ विकृतिं प्रति. २ वाक्यगत. ३ प्रकृतिफल. ४ सगुणफलानि. ५ तथा.

यात्किंचिद्यथाकथंचिदपि प्रकृतेः साधनं तत्सर्वमतिदिश्यते । कथंभावापेक्षा हि विकृतिचोदनासादृश्योपस्थापितां प्रकृतिचोदनामालोच्य तस्यारूयंशायाः साध्यसाधनांशावनाकाङ्क्षितत्वादनादृत्य तृतीयमित्थंभावांशं वाक्यशेषत्वेन गृह्णाति तत्र यत्प्राकृत्यां चोदनायामित्थंभावरूपेणागृहीतं प्रमाणान्तरेण कथंचित्साधनभावमुपनीतं दधिगोदोहनादि तस्य कः प्रसङ्गो विकृतौ माभूदतिदेशः प्रणयनस्य त्वाश्रयभूतस्य विकृतावपि सद्भावात्तदाश्रितं गोदोहनमपि पुरुषकामनावशात्प्रयुक्तमितिचेन्न वैगुण्यात् । अतिदिष्टस्याङ्गभूतस्य चमसस्य विनाशास्त्रेण न पुरुषेच्छामात्रेण युक्तो बाधः, तद्बाधे हि वैगुण्यं स्यात् । अवैगुण्ये तु भवतु कामस्यापि प्रवृत्तिः । तथाह भाष्यकारः 'तस्मिंश्च प्रवर्तमाने कामोपि प्रवर्तेत' इति। किंच यद्दर्शपूर्णमासापूर्वसाधनभूतं प्रणयनं तदेवाश्रयस्तादृशस्यैव प्रकृतत्वात्। नच विकृतौ तादृगस्ति तस्मादाश्रयाभावादपि न गोदोहनतत्फलयोः प्रवृत्तिः ॥

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ॥ १५ ॥

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

**स्पर्शद्वयं व्यवस्थाप्यं विकल्प्यं वा व्यवस्थितिः ॥ प्रकृताविव नो तत्र तस्याः शाब्दत्ववर्जनात् ॥ १८ ॥**

सौर्ये आग्नेयविकार इति वक्ष्यते आग्नेयश्च पौर्णमास्यमावास्ययोरुत्पन्न उभयसंज्ञः तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनं तत्र सौर्ये मन्त्रद्वयं किं पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्यमुताव्यवस्थयेति—'व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि ॥ प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते' ॥ चतुर्होत्रा पौर्णमासीं पञ्चहोत्रामावास्यामिति समुदायद्वारेण मन्त्रयोरुपदेशः प्रकृतत्वान्न कालद्वारेण तस्याप्रकृतत्वात् । अतः समुदायद्वयवर्तिन आग्नेयस्यैव मन्त्रावङ्गं एकार्थत्वाच्च

---

मप्रयोगे तदर्थस्य दध्नो होमे उपकारकत्वमेव नाङ्गत्वमपीत्यभिप्रायेणैतदुक्तम् । एतेन यत्पूर्वपक्षे अयत्नसिद्धा दध्यादिफलप्रवृत्तिरित्युक्तं तन्निरस्तम् । क्रत्वर्थपुरुषार्थोभयरूपस्यापि दध्नः क्रत्वर्थांशेनेहातिदेशः नतु पुरुषार्थांशेनेति फलप्रवृत्त्यसंभवात् । **ननु** माभूदतिदेशः प्रणयनमात्रमाश्रित्य फलाय विधीयमानं गोदोहनं विकृतावतिदिष्टप्रणयनसद्भावात्तदाश्रितमुपदेशत एव प्रवर्तते इति कामनाबलात्तत्प्रयुक्तिर्युक्तेति शङ्कते—**माभूदिति** । अतिदिष्टप्रणयनं नाश्रयं तथासत्यतिदिष्टचमसबाधप्रसङ्गात् तथाच शास्त्रस्यातिदिष्टप्रणयनाश्रयत्वे तात्पर्याभावात्पुरुषेच्छामात्रादेव प्रवृत्तिर्वक्तव्या साचातिदिष्टचमसबाधप्रयुक्तवैगुण्यप्रसङ्गादयुक्तेति परिहरति—**नेति** । यत्र तु दध्यादौ क्रत्वर्थपुरुषार्थे चमसादिवत्क्रत्वर्थबाधाभावान्न वैगुण्यं तत्र भवतु गुणकामप्रवृत्तिरित्यभ्युपगमवादेनाह—**अवैगुण्येत्विति** । अस्मिन् खादिरे प्रवर्तमाने कामोऽपि तदाश्रितः प्रवर्तेत इति भाष्यार्थः । प्रागुक्तरीत्या पुरुषार्थांशेनातिदेशाभावाद्भाष्यमप्यभ्युपगमवादेनेति ध्येयम् । **ननु** प्रणयतिशब्दाविशेषेणोपदिष्टातिदिष्टप्रणयनमात्रस्यैवाश्रयत्वावगमाच्छास्त्रबलादेवातिदिष्टचमसबाधो न पुरुषेच्छामात्रात्, अन्यथा चमसबाधप्रसङ्गाविशेषात् उपदिष्टप्रणयनस्याप्याश्रयत्वं न स्यादित्यत आह—**किंचेति** । संनिधिप्राप्ताश्रयानुवादकत्वात्प्रणयतिशब्दस्य न तद्बलादुपदिष्टातिदिष्टप्रणयनमात्रस्याश्रयत्वं संनिधिश्च दार्शपौर्णमासिकस्यैवेति तस्यैवाश्रयत्वेन विकृतौ तद्रूपाभावेनाश्रयाभावान्न गोदोहनतत्फलयोः प्रवृत्तिरित्यर्थः । अत्रेदमवधेयम्—फलस्यातिदेशेन प्रवृत्तिरिति न पूर्वःपक्षः । पूर्वपक्षिणाप्यनुपकारकस्यातिदेशानङ्गीकारात्, किंतु फलसाधनभूते गोदोहनेऽतिदेशेन प्रवर्तमाने साधनसद्भावात्फलं भवितुमर्हतीति । एवंचातिदेशचिन्तारूपत्वाभावादध्याये प्रसङ्गात्संगतिर्द्रष्टव्येति । केचित्तु अध्यायसंगत्यर्थं फलसाधनीभूतगोदोहनादीनां प्रवृत्तिरस्ति नवेति चिन्ताया एवाधिकरणाङ्गत्वं फलप्रवृत्तिचिन्ता तु तत्प्रयोजनचिन्तेत्याहुः । अत्राधिकरणे उपकारकतामात्रेण नातिदेशः किंत्वङ्गस्यैवेति स्थिते तृतीये पवमानेष्ट्यधिकरणे उपकारकस्यापि यथा उपदेशस्तथातिदेशोऽपि किं न स्यादित्याशङ्क्योपदेशवैषम्येण सिद्धान्तितमित्यपुनरुक्तिः । सूत्रार्थस्तु—गुणकामानां प्रणयनाश्रितगोदोहनाश्रितत्वात्तत्प्रवृत्त्या विकृतौ प्रवृत्तिः स्यादिति ॥

**एककर्मणि०** ॥ २६ ॥ व्यवस्थाविचाराय मन्त्रद्वयप्रसक्तिं संपादयति—**सौर्य इत्यादिना** । सौर्यस्याग्नेयविकारत्वादाग्नेयस्य च कालद्वये संभवात्तत्र 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्या'मित्यभिमर्शने मन्त्रद्वयाम्नानादस्ति सौर्येऽपि मन्त्रद्वयप्रसक्तिरित्यर्थः । गोदोहनादीनामनतिदेशेऽपि व्यवस्थाया अतिदेशादित्युत्थानात्संगतिः । व्यवस्थाया आर्थिकत्वेन शास्त्रगम्यत्वाभावान्नातिदेश इति सिद्धान्तमाह—**प्रकृताविति** । आर्थिकत्वमेवोपपादयति—**चतुर्होत्रेत्यादिना** । पृथिवीहोतेत्यादिश्चतुर्होता अग्निर्होतेत्यादिः पञ्चहोतेत्यादि बोध्यम् । **न कालेति** । कालपरत्वे द्वितीयायाः

---

१ नीतं गोदो. २ पुरुषः कामनावशात्प्रयुक्ताग्.

विकल्प्येते। तत्र पौर्णमासीकाले पौर्णमासिकैर्हविरन्तरैः सहाभिमृश्यमानमाग्नेयमविरोधाच्चतुर्होत्राभिमृष्टम् । एवममावास्याकाले पञ्चहोत्रा नतु कालकृता व्यवस्था तत्र शास्त्रार्थः तस्माद्विकृतावव्यवस्था ॥

सौर्यचरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

**लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ [ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ अश्रुतित्वान्नेति चेत् ॥ २९ ॥ स्याल्लिङ्गभावात् ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥]**

षट्सु कस्याप्युताग्नेयस्यैव सौर्येऽग्निमो यतः ॥ अविशेषो, न देवैक्यादौषधद्रव्यकत्वतः ॥ १९ ॥

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तं तत्र षण्णामाग्नेयादीनां कस्य क्व प्रवृत्तिः विशेषाभावादनियमः सादृश्यविशेषात्त्वेकदेवत्ये सौर्यादावेकदेवत्यस्याग्नेयस्य प्रवृत्तिः, अनेकदेवतेष्वग्नीषोमीयैन्द्रा-

---

सप्तम्यर्थलक्षणाप्रसङ्गाच्चेति भावः । इदंच हविषः प्रकृतत्वात्समुदायद्वारेण तत्परत्वमेव पौर्णमास्यमावास्याशब्दयोः न कालपरत्वमिति वस्तुकथनमात्रं, व्यवस्थाया आर्थिकत्वं तु कालपरत्वेऽपि संभवत्येव । नच कालपरत्वे 'वार्त्रघ्नी पौर्णमासेऽनूच्येते वृधन्वती अमावास्याया'मितिवद्व्यवस्था वाचनिकी स्यादिति वाच्यम् । युक्तं तत्र मन्त्रयोराज्यभागक्रमाम्नानबलादव्यवस्थया प्राप्तौ व्यवस्थापरत्वं वचनस्य । इहतु हवींषि आसन्नान्यभिमृशेदिति प्राप्ताभिमर्शनानुवादेन मन्त्रयोर्व्यवस्थायाश्च विधाने वाक्यभेदापत्तेः । तस्मात्कालपरत्वेऽपि व्यवस्थाया आर्थिकत्वमेव कालपरत्वे द्वितीयाया लक्षणा इतरथा प्रकृतेरिति लक्षणापि तुल्यैवेति बोध्यम् । **ननु** समुदायपरत्वे तत्प्रयुक्तत्वात्पार्वणहोमवद्विकृतावतिदेश एव न स्यादिति शङ्कानिराकरणार्थं द्वारेणेत्युक्तम् । तथाच समुदायस्याभिमर्शनायोग्यत्वात्तद्द्वारेण समुदायिनां आग्नेयादिहविषामेव धर्मो न समुदायस्य । पार्वणहोमस्तु समुदायस्यैव संस्कारो न समुदायिनामिति वैषम्यमिति भावः । **ननु** आग्नेयाभिमर्शने मन्त्रयोर्विकल्पे अमावास्यायां चतुर्होता पौर्णमास्यामपि पञ्चहोता स्यादित्यत आह—**तत्रेति** । आग्नेयस्योभयथा विरोधाभावेऽपि अग्नीषोमीयसांनाय्यलक्षणहविरन्तरानुग्रहाय व्यवस्थयाभिमर्शनं कृतं नत्वेतावता व्यवस्थायाः शास्त्रार्थत्वमित्यर्थः । तत्र केचित् पौर्णमास्याममावास्यायां चाग्नेयो भिद्यते असंभवद्विकल्पसमुच्चयन्यायात् । तथाहि 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवती'त्याग्नेयोत्पत्तिवाक्येऽमावास्यापौर्णमासीरूपकालद्वयस्य न समुच्चयः असंभवात्, नापि विकल्पः चशब्दविरोधात् । तस्माद्विकल्पसमुच्चयायोग्यगुणद्वयश्रवणात्कर्मभेदः । तथाच पौर्णमास्यामुत्पन्नस्याग्नेयस्य चतुर्होताङ्गममावास्यायामुत्पन्नस्य पञ्चहोतेति व्यवस्था कालभेदेन कर्मभेदाच्छास्त्रीयैव नतु हविरन्तराविरोधप्रसक्तत्वादार्थिकी । एवंच सौर्यस्य भाष्यकारीयक एव रथंतराधिकरणन्यायेनाग्नेयद्वयविकारत्वान्मन्त्रद्वयप्राप्त्याभिमर्शने निरपेक्षसाधनयोः समुच्चयासंभवेन विकल्पादव्यवस्था सिद्ध्यतीति इदमधिकरणं प्रपञ्चार्थमित्याहुः । अन्ये त्वेकस्मिन्नेव कर्मणि कालद्वयसंबन्धमात्रेण चशब्दोपपत्तेरेक एवाग्नेयस्तत्र मन्त्रद्वयस्य कालभेदेन व्यवस्थायाः शास्त्रीयत्वे सौर्येऽपि व्यवस्थैव प्राप्नोति अतोऽत्राधिकरणे व्यवस्थाया आर्थिकत्वं प्रतिपादनीयम् । आग्नेयश्च पौर्णमास्यमावास्ययोरुत्पन्न उभयसंज्ञकस्तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनमित्यादिग्रन्थस्वरसादपि एकत्वमेव प्रतीयते । तन्त्ररत्नेऽप्येकस्यैवाग्नेयस्य मन्त्रद्वयेनाभिमर्शनद्वयं विहितमदृष्टार्थत्वात्समुच्चीयते, तत्कथं विकल्प इत्याशङ्क्य 'आसन्नानि हवींष्यभिमृशती'ति वाक्यान्तरेणाभिमर्शने विहिते तत्र मन्त्रस्य करणत्वाद्दृष्टार्थत्वादैकार्थ्याच्च विकल्प इत्युक्तं तद्बलादप्याग्नेयस्यैकत्वमवगम्यते । अन्यथा कर्मभेदे समुच्चयशङ्कैवानुपपन्नेत्याहुः । सूत्रार्थस्तु—एककर्मणि सौर्ये चोदनैकत्वादविभागः । आग्नेयवद्व्यवस्थाहेतुकर्मभेदाभाव इति ॥

**लिङ्गसाधारण्यात्०** ॥ २७ ॥ सौर्यस्याग्नेयविकारत्वं सिद्धं कृत्वा पूर्वं विचारः प्रवर्तितः तदेवेदानीं चिन्त्यत इति संगतिः । **प्रवृत्तिरिति** । अनन्तरमिति चिन्त्यत इति शेषः । **विशेषाभावादिति** । आग्नेयं सौर्यमिति तद्धितान्तस्य द्वित्वबहुत्वसाधारण्येनैकदेवताकत्वरूपसादृश्यविशेषानवगमादित्यर्थः । नच तद्धितादिवृत्तौ स्वरसत एकत्वं प्रतीयते द्वित्वबहुत्वादि तु प्रमाणान्तरगम्यमिति विशेष इति वाच्यम् । संख्याविशेषमात्रस्यैव वृत्तौ प्रतीत्यभावात् । अतएवाभेदैकत्वसंख्यावगम इति वदद्भिः शाब्दिकैरप्यभेदैकत्वसंख्यानाम एकत्वादीनां भेदतिरोधानमेकत्वादिसंख्यासाधारणसंख्यान्तरं वा प्रतीयते इत्येवोक्तं, नत्वेकत्वस्य प्रतीतिरिति । अतएव कैय्यटेन शौर्पिक इत्यादौ परिमाणार्थतद्धितबलादेवैकत्वप्रतीतिः । तावक इत्यादावादेशबलादेकत्वप्रतीतिरित्येकत्वप्रतीतावपि यत्न एवाश्रित इति भावः । सिद्धान्तमाह—**सादृश्येति** । वृत्तौ संख्याविशेषानवगमेऽपि संख्यापेक्षायां प्रथमातिक्रमे कारणाभावात्कपिञ्जलाधिकरणन्यायेनैकत्वं प्रतीयते । ततश्चैकदेवताकेष्वाग्नेयस्य अनेकदेवतेष्वग्नीषोमीयैन्द्राग्नयोस्तत्राप्यवान्तरनियमस्तु यस्य लिङ्गमित्यत्रैवोक्तः । **ननु** तत्र

प्रयो: आज्यादिद्रव्यकेषु उपांशुयाजादेः कथं पुनरेकदेवतात्वमाग्नेयसौर्ययोः वाक्यशेषादिति दर्शितं भाष्ये ॥

हविर्देवतयोः संनिपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥

**विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ [तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन देवताश्रुतिः ॥ ३४ ॥]**

**देवो बली हविर्वैन्द्रे पुरोडाशेऽग्निमो यतः ॥ देवो मुख्योऽन्तरङ्गं तद्धविः कर्मण्यतो बलि ॥ २० ॥**

ऐन्द्रे पुरोडाशे किं देवतासामान्यात्सांनाय्यविध्यन्त उत हविःसामान्यादौषधविध्यन्त इति संशयः तथाग्नेये पयसि देवतासामान्यादौषधस्य हविःसामान्याद्वा सांनाय्यस्येति देवतासामान्यहविःसामान्ययोः किं बलीय इति चिन्त्यते । विशेषाभावादनियमः । मुख्यत्वप्राधान्याभ्यां वा देवतायाः प्राबल्यं मन्वानस्योत्तरम्—'हविषस्त्यज्यमानत्वात्प्रत्यासत्तिर्हि कर्मणि ॥ उद्देश्यमात्ररूपत्वाद्देवताराद्दुपस्थिता ॥' यत्र प्रत्यासन्नं तेनैवोपस्थितं विध्यन्तमासाद्य निराकाङ्क्षं कर्म न बहिरङ्गभूतत[2]देवतोपस्थापितमपेक्षते । यद्यपि प्र[3]तिपादितार्थकत्वाद्देवता मुख्या तथापि तत्स्वरूपवेलायामाकाङ्क्षाभावादनतिदेशः, कर्मविध्युत्तरकालं तु प्रत्यासत्तेर्हविःसामान्यं बलीयः, प्राधान्यं तु देवताया नवमे निराकरिष्यते । किंचौषधे सांनाय्यधर्मास्तत्र चौषधधर्माः सर्वे बाध्येरन् असंभवात् । यथायथं तु प्राप्तौ न कस्यचिद्बाधः तस्माद्धविः सामान्यं बलीयः ॥

---

कपिञ्जलनयः यत्रैकमनुपादाय द्विबहूपादानाशक्तिः, इहत्वेकानुपादानेऽपि द्विबहूपादानं संभवति । देवताया उपादानं हि शब्देनोद्देशः । ततश्चैकवचनान्तशब्दानुपादानेऽपि द्विबहुवचनान्तशब्दोपादानसंभवान्न कपिञ्जलाधिकरणन्याय इति शङ्कते —**कथमिति** । **वाक्यशेषादिति** । 'अग्नये भ्रियस्वेति सोऽग्नये भ्रियत' इति वाक्यशेषादग्नेरेकत्वं तथा 'अमुमेवादित्यं स्वेन भागधेयेनोपधावती'तिवाक्यशेषादादित्यस्यैकत्वमिति भाष्ये उक्तमित्यर्थः । सूत्रार्थस्तु—लिङ्गस्य प्रयाजादेराग्नेयादिसाधारण्यात्सौर्यादिष्वाग्नेयविध्यन्तविकल्पः स्यादिति ॥

**विप्रतिपत्तौ० ॥ ३२ ॥ ऐन्द्र इति** । 'ऐन्द्रमेकादशकपालं निर्वपे'दित्यैन्द्रपुरोडाशे आग्नेये पयसि च किमौषधसांनाय्यविध्यन्तयोरनियम उतैन्द्रे सान्नाय्यस्याग्नेये चौषधस्याथवा विपरीतमिति संशयः । तदर्थंच किं देवतासामान्यहविःसामान्ययोः समबलत्वमुत देवतासामान्यं बलीयः अथवा हविःसामान्यमिति संशयनिष्कर्षः । यदि सौर्यादौ देवतासामान्यादाग्नेयविध्यन्तस्तदैन्द्रपुरोडाशादावपीत्युत्थितेः संगतिः । **विशेषेति** । द्रव्यदेवतयोर्योगनिर्वर्तकत्वेन विशेषाभावादित्यर्थः । **मुख्यत्वेति** । प्रथमोपस्थितप्रातिपदिकार्थत्वेन देवताया मुख्यत्वं 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति कर्मणो देवतातृप्तिहेतुत्वश्रवणाद्देवतायाः दातृत्वश्रवणाच्च प्राधान्यं ततो देवतायाः प्रबलत्वात्तत्साद्दश्यमेव प्रबलमित्यर्थः । **हविष इति** । देवतोद्देशेन द्रव्यत्यागात्मके यागे त्याग एव प्रधानं उद्देशस्तु गुणभूतः । तथाच प्रधानभूतत्यागान्वयाद्द्रव्यस्य कर्मणा प्रत्यासत्तिः देवतायास्तु गुणभूतोद्देशान्वयात्कर्मविप्रकर्ष इत्यर्थः । **उद्देशेति** । उद्देशमात्रेण रूप्यते निरूप्यत इत्युद्देशमात्ररूपं तत्वाद्देवता आराद्दूरे उपस्थितेत्यर्थः । उद्देशमात्रेण देवता उपकरोति हविस्तु स्वरूपेणैव यागशरीरं निर्वर्तयतीत्यपि प्राबल्यमनेन सूचितम् । अस्तु प्रत्यासत्तिरतः किमित्यत आह—**यत्रेति** । **तथापीति** । पदार्थप्रतीतिसमये प्रातिपदिकार्थत्वाद्यद्यपि देवतायाः प्रथमप्रतीतिरिति मुख्यत्वं तथापि तद्दशायामितिकर्तव्यताकाङ्क्षाभावान्न तत्सामान्यप्रयुक्तविध्यन्तातिदेशः । यदा चेतिकर्तव्यताकाङ्क्षाकर्मविध्युत्तरकाले तदा प्रत्यासत्त्या हविष एव प्रथमोपस्थितिरिति तत्सामान्यं बलीय इत्यर्थः । **किंचेति** । पुरोडाशे सर्वेषां सांनाय्यधर्माणां दोहनादीनां पयसि च सर्वेषामौषधधर्माणामवहननादीनामाकाङ्क्षितत्वेन द्वारासंभवाद्बाधः स्यात् पुरोडाशे औषधधर्माणां पयसि सांनाय्यधर्माणां च प्राप्तौ सर्वेषामपेक्षितत्वेन न कस्यापि बाध इत्यर्थः । सूत्रार्थस्तु—देवतासामान्यहविःसामान्यबलाबलविप्रतिपत्तौ हविषः सामान्येन विध्यन्तो नियम्येत कर्मणो हविस्त्यागस्य त्यज्यमानहविर्निरूप्यत्वादिति ॥

---

१ दौषधस्येति संशयः तदर्थं च. २ भूतदेवतोप. ३ प्रातिपदिकार्थत्वात.

शतकृष्णलाख्यहिरण्य औषधधर्मातिदेशाधिकरणम् ॥ १८ ॥

**हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥ [धर्मानुग्रहाच्च ॥ ३६ ॥ औषधं वा विशदत्वात् ॥ ३७ ॥ चरुशब्दाच्च ॥ ३८ ॥ तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥]**

**कृष्णलेषु घृतस्योत व्रीहेस्तेजोयुतेर्भवेत् ॥ घृतस्य नैवं वैशद्याच्चरुशब्दयुतेस्तथा ॥ २१ ॥**

कृष्णलचरावाज्यौषधयोः कस्य विध्यन्तः स्यादुज्ज्वलत्वसामान्यादाज्यस्य विशदत्वादौषधवाचिचरुशब्दप्रयोगाच्चौषधधर्माः ॥

मधूदक उपांशुयाज्यधर्मातिदेशाधिकरणम् ॥ १९ ॥

**मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥ ४० ॥ [आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ धर्मानुग्रहाच्च ॥ ४२ ॥ पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥]**

**क्षीरस्याज्यस्य वा नीरे मधुन्यप्यग्रिमो यतः ॥ द्रवत्वं न घृतेऽप्यस्य सत्वाद्वर्णाच्च संभवात् ॥ २२ ॥**

'दधि मधु घृतमापो धानास्तण्डुला उदक'मित्यत्र मधूदकयोः पयः प्रवर्तेतोताज्यं वेति संदेहे स्वाभाविकद्रवत्वसामान्यात्पयः। नैवम्। असत्यपि च स्वाभाविकद्रवत्वेऽग्निसंयोगादाज्येऽपि द्रवत्वसद्भावाद्वर्णसामान्याधिक्यात्पयोधर्माणां च दोहनादीनामसंभवादुत्पवनादीनां च संभवादाज्यविध्यन्तः—'वर्णसाम्यस्य चाधिक्याद्द्रवत्वस्याविशेषतः ॥ अनुग्रहाच्च धर्माणामाज्यधर्मं मधूदकम् ॥' इति श्रीशास्त्रदीपिकायामष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

---

**हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥ कृष्णलेति।** 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति कृष्णलचरौ उज्ज्वलत्वविशदत्वरूपस्याज्यौषधोभयसाम्यस्य विद्यमानत्वात्कस्य विध्यन्तः स्यादिति विचार्यत इत्यर्थः। यदि धर्मबाधप्रसङ्गान्नैन्द्रपुरोडाशे सांनाय्यविध्यन्तस्तर्हि कृष्णलचरावपि तत एव नौषधविध्यन्न इत्युत्थितेः संगतिः। **उज्ज्वलत्वेति।** औषधविध्यन्तप्राप्तौ अवहननादिधर्मबाधः स्यादिति धर्मबाधोपोद्बलितत्वादुज्ज्वलत्वं विशदत्वापेक्षया प्रबलमित्युपांशुयाजधर्म इति भावः। उज्ज्वलत्वं च 'तेजो वा आज्य'मिति तेजस्त्वसंस्तवात्स्निग्धत्वाच्चावगम्यत इति द्रष्टव्यम्। विशदत्वस्योपोद्बलकमाह—**औषधेति।** चरुशब्दस्य चौदनगतत्वेन प्रथमोपस्थितत्वात्तदुपोद्बलितेन विशदत्वेन प्रथममौषधविध्यन्ते निश्चिते पश्चाद्भाविधर्मबाधो न्यायप्राप्तत्वाददोष इत्यर्थः। विशदं विभक्तावयवमिति 'भक्ष्येण मिश्रीकरण'मित्यत्र हरदत्तः। सूत्रार्थस्तु—हिरण्यमाज्यधर्मः स्यात्तेजस्त्वात् हिरण्यमश्वानां तेजः, आज्यमपि गवां तेजः सारभूतमिति तेजस्त्वं भवति साधारणम् ॥

**मधूदके० ॥ ४० ॥ दधीति।** चित्रायामिष्टौ श्रूयमाणे 'दधि मधु घृतमापो धानास्तण्डुला उदकं तत्संसृष्टं प्राजापत्य'मित्यत्र मधूदकयोः किं सांनाय्यविध्यन्तः उतोपांशुयाजविध्यन्त इति संशयः। **हिरण्यवन्मधूदकयोरपि नाज्यधर्मप्रवृत्तिरि**त्युत्थितेः संगतिः। **स्वाभाविकेति।** द्रवत्ववद्वर्णतो नातिसाम्यमिति भावः। नच यो गुण उत्पत्तौ दृश्यते स तस्य स्वाभाविकः यथा घटस्य श्यामता तथाज्यस्यापि द्रवत्वं स्वाभाविकमेवेति वाच्यम्। करकाकाठिन्यादौ व्यभिचारान्नैवमिति। हविरवस्थायां हि साम्यमपेक्षितम्। विलीनावस्थापन्नमेव हविरिति तद्दशायां द्रवत्वस्य सद्भावात्स्वाभाविकत्वकृतो विशेषोऽकिंचित्कर इति भावः। एवं द्रवत्वतौल्ये वर्णसाम्यमधिकमित्याह—**वर्णेति।** उक्तमर्थं संगृह्णाति—**वर्णसाम्यस्येति ॥**
**इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायामष्टमाध्यायस्य प्रथमः पादः ॥ १ ॥**

---

१ चरुशब्दसंयोगाच्च तद्धर्माः. २ प्रवर्तेतामाज्यं वेति स्वाभा.

# अष्टमाध्याये द्वितीयः पादः।

ऐष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥

**वाजिनेषु सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ [अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥ ८ ॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥]**

**सुरावाजिनयोः सोमस्येष्टेर्वा सोमशब्दतः ॥ आद्यो नैवं हविःसाम्यात्सोमशब्दः प्रशस्तये ॥ १ ॥**

वाजिनयागे सौत्रामण्यङ्गभूतेषु चाश्विनग्रहादिषु किं सौमिको विध्यन्त उतैष्टिक इति संशये 'सोमो वै वाजिनं सुरासोम'इत्यसोमे सोमशब्दस्तद्धर्मातिदेशार्थोऽग्निहोत्रशब्दवत्। तस्मात्सौमिकः। प्रशंसार्थस्त्वयं सोमशब्दो न विधानार्थो विध्यश्रवणात्तद्धविःसामान्यादैष्टिके वाजिने पयोविध्यन्तः सुराग्रहेषु चौषधः ॥

पशौ सांनाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

**पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ [प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥ १२ ॥ सांनाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥]**

**पुरोडाशस्य सांनाय्यस्य वा धर्माः पशौ यतः ॥ देवैक्यमाद्यस्तस्मान्नो हविर्जन्मादिसाम्यतः ॥ २ ॥**

पशावग्नीषोमीये दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तं तत्र देवतासामान्यादग्नीषोमीये पुरोडाशः प्रवर्तते हविःसामान्यमपि पुरोडाशेनैव विद्यते द्वयोरपि घनत्वात् सांनाय्यं वा प्रवर्तते हविःसामा-

---

**वाजिनेषु सोमपूर्वत्वं० ॥ १ ॥** पूर्वपादे स्पष्टलिङ्गातिदेश उक्तः। तद्धितेन देवतानिर्देशैकदेवताकत्वनिर्वपत्यादीनां स्पष्टत्वादिह त्वस्पष्टलिङ्गातिदेश इति पादान्तरत्वमानन्तर्यं च। वाजिनादौ वक्ष्यमाणलिङ्गानां यथाकथंचिदुपपादनीयत्वात् झटित्यप्रतीतेश्चास्पष्टता। **वाजिनेति**। चातुर्मास्येषु 'वाजिभ्यो वाजिन'मिति विहिते वाजिनयागे सौत्रामण्यङ्गभूतेषु 'आश्विनं गृह्णाति' 'सारस्वतं गृह्णाति' 'ऐन्द्राग्नं गृह्णाती'ति श्रुतेषु ग्रहेषु चेत्यर्थः। सोमो वा इति नामधेयस्य प्रबलत्वात्तद्विरोधे चोदनालिङ्गातिदेशो न प्रवर्तेत इति भावः। अर्थवादगतस्य सोमशब्दस्य वाचनिककतिपयधर्मनिबन्धनं वा प्रत्यक्षाद्यवगतं वा सिद्धमेव सादृश्यमादाय स्तुत्यर्थतयोपपत्तेः विध्युद्देशगताग्निहोत्रशब्दवत्साध्यसादृश्यपरत्वे प्रमाणाभावान्नातिदेशकत्वमिति सिद्धान्तमाह—**प्रशंसेति**। **हविरिति**। वाजिनस्य पयोजन्यत्वात्सुरायाश्च व्रीहिजन्यत्वादित्यर्थः। यद्यपि पयोजन्यत्वं पयस्येवासत्वान्न सामान्यधर्मस्तथाप्युत्तराधिकरणे वक्ष्यमाणरीत्या संबन्धित्वेन स्मारकं भवतीति द्रष्टव्यम्। तदेतदभिप्रेत्य सूत्रकारेणोक्तं 'हविषा वा नियम्येत तद्विकारत्वा'दिति। अत्र सोमशब्दस्यार्थवादगतत्वादनतिदेशकत्वमिति स्थितेऽपि सप्तमे 'उपशयो यूपो भवती'त्यत्र पृथगाख्यातश्रवणाद्विधायकतयैव यूपशब्दस्यातिदेशकत्वमाशङ्क्य पृथगाख्यातश्रवणेऽपि पुरुषव्यापाराद्यश्रवणाद्विध्यन्तरैकवाक्यत्वाच्च विधायकत्वाभावादनतिदेशकत्वमित्यपुनरुक्तिः। सूत्रार्थस्तु—वाजिने सौत्रामणिग्रहेषु च सोमप्रकृतिकत्वं सोमशब्दवत्त्वात् ॥

**पशुः पुरोडाशविकारः स्यात्० ॥ १० ॥** सामान्यत इष्टिविकारत्वे सिद्धे तद्विशेषचिन्तावसर इत्यभिप्रेत्येष्टिविकारत्वमुक्तं स्मारयति—**पशाविति**। वाजिनस्य सांनाय्यविकारत्वेऽपि पशोर्न तद्विकारत्वं किंतु सुराग्रहवदौषधविकारत्वमित्युत्थानात्संगतिः। **तत्रेति**। नच देवतासामान्याद्धविःसामान्यस्य बलवत्त्वात्पयोविकारत्वं शङ्कनीयम्। पयःसदृशः पशुरिति कस्यापि प्रतीत्यभावेन पयःसाम्यस्यैवासिद्धेरिति भावः। **ननु** देवतासामान्यादप्युपांशुयाजविध्यन्तः किं न स्यादित्यत आह—**हविरिति**। हविःसामान्याधिक्यात्पुरोडाशविध्यन्त एवेत्यर्थः। नहि प्रत्यक्षमेव सादृश्यं प्राह्यमिति

---

१ चाश्विनादिग्रहेषु.

न्यात्। सांनाय्यं हि पशुतः प्रभवति पशुरपि पशुप्रभवः संबन्धित्वाच्च पशुसांनाय्ययोः पशुः प्रतीतः सांनाय्यमुपस्थापयति। सांनाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति॥

पशौ पयोधर्मातिदेशाधिकरणम्॥ ३॥

**दध्नः स्यान्मूर्तिसामान्यात्॥ १५॥ [पयो वा कालसामान्यात्॥ १६॥ पश्वानन्तर्यात्॥ १७॥ द्रवत्वं चाविशिष्टम्॥ १८॥]**

दध्नोऽत्र पयसो वाद्यो घनत्वस्य समत्वतः॥ द्रवत्वासत्तिकालेभ्यो धर्मः स्यात्पयसः पशौ॥ ३॥

तत्रापि दध्नो विकारः स्याद्घनत्वसामान्यात्पयसो वा। तद्धि साक्षात्पशुप्रभवं दधि तु तद्व्यपेतम्। पशुर्हि साक्षात्पशुप्रभवः। गतिमत्त्वं च पशुपयसोस्तुल्यं तदधिकं दधितः पयसः॥

आमिक्षायां पयोधर्मातिदेशाधिकरणम्॥ ४॥

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात्॥ १९॥ [एकं वा चोदनैकत्वात्॥ २०॥ दधिसंघातसामान्यात्॥ २१॥ पयो वा तत्प्रधानत्वाल्लोकवत्, दध्नस्तदर्थत्वात्॥ २२॥ धर्मानुग्रहाच्च॥ २३॥]**

द्वयोर्दध्नोऽथ पयस आमिक्षायां द्विजत्वतः॥ द्वयोर्दध्नो घनत्वेन प्राधान्यात्पयसो भवेत्॥ ४॥

आमिक्षायागः सांनाय्यविकार इत्यसंदिग्धं दध्नः पयसो वेति चिन्त्यते—'दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते॥ उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका॥ विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत्॥ तप्ते पयसिवाक्ये तु सप्तम्या गुणतः पयः॥ दधि द्वितीयानिर्देशात्प्रधानं तेन सा पदम्॥ दध्येव प्रतिनिर्दिश्य तेन बध्नाति देवताम्॥ दध्येवातो हविस्तस्मात्सायंदोहविकारता॥ पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः॥ दध्ना हि नीयमानेन तदेव व्याप्यते पयः॥ कर्मतोऽपि प्रधा-

---

नियमः किंतु सादृश्यमात्रमित्यभिप्रेत्याह—**सांनाय्यं हीति**। ननु अस्तु हविःसामान्यस्य तुल्यत्वं तथापि देवतासामान्याधिक्यात्पुरोडाशविध्यन्त एव युक्त इत्यत आह—**संबन्धित्वाच्चेति**। जन्यजनकभावेनेति शेषः। तथाच हविःसामान्यं तुल्यं देवतासामान्यं च दुर्बलं हविर्गतसंबन्धित्वं चाधिकम्। यद्यपि जन्यजनकत्वाभावेन संबन्धित्वं सादृश्यरूपत्वाभावान्न लिङ्गं तथापि प्रकृतिविशेषस्मारकतया विध्यन्तनियामकमिति भावः। लिङ्गदर्शनमप्याह—**सांनाय्यपात्रं चेति**। यदि पशूखाश्रयेदित्युखा श्रूयमाणा सांनाय्यप्रकृतित्वं सूचयतीत्यर्थः॥

**दध्नः स्यात्०॥ १५॥** पूर्वोक्तसांनाय्यविकारत्व एव विशेषचिन्तनात्संगतिः। **घनत्वेति**। पशुप्रभवत्वस्य तुल्यत्वाद्घनत्वस्य चाधिक्याद्दधिविध्यन्त इत्यर्थः। पशुप्रभवत्वमात्रं न लिङ्गं किंतु साक्षात्पशुप्रभवत्वमित्यभिप्रायेणाह—**पयसो वेति**। **तदधिकमिति**। दध्नो घनत्वमात्रं पयसस्तु साक्षात्पशुप्रभवत्वं गतिमत्त्वं चोभयमित्यर्थः॥

**आमिक्षोभयभाव्यत्वात्०॥ १९॥** पशोर्दधिविकारत्वाभावेऽप्यामिक्षाया दधिविकारत्वं स्यादित्युत्थितेः संगतिः। **नन्वनेक**देवताकत्वेनामिक्षाया अग्नीषोमीयादिविकारत्वादियं चिन्तानुपपन्नेत्यत आह—**आमिक्षेति**। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यामिक्षायागे द्रव्यसामान्यात्सांनाय्यविकारत्वेन संदेह इत्यर्थः। **दध्न इति**। किमुभयविकार उत दध्नोऽथवा पयस इति चिन्त्यत इत्यर्थः। **ननु** विध्यन्तद्वयसमुच्चयस्य विध्यन्ताधिकरणे विकल्पस्याध्यायाद्ये च निराकरणादुभयविकारत्वपक्षोऽनुपपन्न इत्याशङ्क्य यत्र हविष एकत्वं तत्र माभूद्विध्यन्तद्वयमिह तु हविष एव द्विरूपत्वाद्युक्तं विध्यन्तद्वयमित्यभिप्रेत्याह—**दधीति**। मधुराम्लोभयरूपदर्शनादामिक्षा दधिपयोरूपद्रव्यद्वयात्मिका, तस्मादुभयाकाङ्क्षाबलाद्विशेषाभावादुभयविकारत्वमित्यर्थः। अविशेषे हि उभयरूपत्वादुभयविकारत्वं स्यात्। अस्ति तु विशेष इति द्वितीयपक्षं गृह्णाति—**तप्ते पयसीति**। अस्मिन्वाक्ये सप्तम्या पयोगुणतः सार्वविभक्तिकस्तसिर्गुण इत्यर्थः। दधि तु द्वितीयया प्रधानं प्रधानपरामर्शि च सर्वनाम तेन सा वैश्वदेवीत्यत्र तत्पदं दध्ना देवतां संबध्नाति संयोजयति तस्माद्देवतासंयोगाद्दध्येव हविरिति दधिविकारत्वमेवेत्यर्थः। सिद्धान्तमाह—**पयसस्त्विति**। भवेदेवं यदि दधि प्रधानं स्यात् न त्वेतदस्ति कर्मभूतस्यापि दध्नः पयस्येव पर्यवसानादित्यर्थः। तदेवाह—**दध्नाहीति**। 'मैत्रावरुणाय दण्डं प्रयच्छती'त्यत्र दण्डेनाभिप्रीयमाणमैत्रावरुणवत्पयसश्च दधितोऽपि प्राधान्यं तस्यैव सर्वनामनिर्देश इत्यर्थः। सप्तमी चागारे गावो वास्यन्तामितिव-

नत्वं तस्य स्यात्संप्रदानवत् ॥ सर्वनाम्ना परामर्शस्तस्यैवातोऽत्रकल्पते ॥ तदेव दधिसंयोगाद्धनीभूतमतो हविः ॥ तस्यैव देवतायोग आमिक्षापि तदेव नः ॥ प्रातर्दोहविकारत्वमामिक्षायास्ततः स्थितम् ॥

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

**सत्रमहीनश्च द्वादशाहः, तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ [अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्, प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥ लिङ्गाच्च ॥ २८ ॥]**

अहीनसत्रयोर्द्वादशाहान्तावव्यवस्थितौ ॥ व्यवस्थितौ वाविशेषादाद्योऽन्त्यः स्वस्वलिङ्गतः ॥ ५ ॥

गणेषु द्वादशाहस्येत्युक्तं, द्विविधाश्च गणाः सत्राण्याहीनाश्च । द्वादशाहोऽप्युभयात्मा । तस्योभयविधस्याप्यनियतात्मना सर्वत्र प्रवृत्तिर्विशेषाभावात् । 'सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः ॥ तथाऽहीनेष्वहीनस्य सुसदृक्त्वादिति स्थितम्' ॥

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥

**अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ [अहीनवचनाच्च ॥ ३० ॥ सत्रे वोपायिचोदनात् ॥ ३१ ॥ सत्रलिङ्गं च दर्शयति ॥ ३२ ॥]**

किं पञ्चदशरात्रस्य कुण्डपाय्ययनस्य च ॥ अहीनत्वं सत्रता वाऽतिरात्रैकत्वतोऽग्रिमः ॥ ६ ॥
उपायिलिङ्गतः सत्रे प्रबलं विधिवाक्यगम् ॥ सत्रान्तरेभ्योऽहीनत्वलिङ्गेनैतत्प्रशस्यते ॥ ७ ॥

पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च किं सत्रविकारत्वमुताहीनविकारत्वमिति चिन्त्यते । तदर्थं च किमनयोरहीनत्वमुत सत्रत्वमिति विचार्यते । 'तत्रोपर्यतिरात्रत्वाद्द्विरात्रादिवदेतयोः ॥

---

द्वार्ष्टिकाधारत्वमादाय प्रधानेऽप्यविरुद्धेति ध्येयम् । पयस एवामिक्षात्वे काठिन्यं न स्यादित्यत आह—**दधिसंयोगादिति** । पयस एव दधिसंयोगाद्घनीभूतामिक्षाभावः । नैतावता दध्न आमिक्षात्वम् । तथाच तस्यैव घनीभूतस्यामिक्षाशब्दवाच्यस्य तच्छब्देन तद्देवतासंयोगात्पयोविकारत्वमित्यर्थः । प्रातर्दोहविकारत्वमित्यनेनामिक्षायागस्य सद्यस्कालत्वमप्युपपन्नमिति दर्शयति । चतुर्थे दध्नः प्राधान्येऽपि आमिक्षैव दध्यानयनप्रयोजिका न वाजिनमिति सिद्धे पयःप्राधान्यमत्रत्यमेव वस्तुगतिमनुसृत्य व्यवहृतमिहैव विशेषातिदेशसिद्ध्यर्थं पयःप्राधान्यं साधनीयमित्यपुनरुक्तिः । सूत्रार्थस्तु—आमिक्षादधिपयोजन्यत्वादुभयविकार इति ॥

**सत्रमहीनश्च०** ॥ २४ ॥ **द्विविधाश्चेति** । सत्राहीनविवेकश्चानुपदमेव वक्ष्यमाणो ज्ञेयः । आमिक्षाया विशेषग्रहणादुभयविकारत्वाभावेऽपि अहर्गणेषूभयविकारत्वमव्यवस्थयेत्युत्थितेः संगतिः । **विशेषाभावादिति** । द्वादशाहवदिति कल्प्यमानस्य प्रकृतिवच्छब्दस्य सत्राहीनोभयसाधारण्यादुभयधर्माणामव्यवस्थया सौर्यादावभिमर्शनद्वयवत्प्राप्तिरित्यर्थः । **सत्रस्यैवेति** । सदृशत्वात्प्रकृतिवच्छब्दः कल्प्यमानः सत्रात्मकाहर्गणेषु सत्रद्वादशाहवदिति अहीनात्मकेष्वहीनद्वादशाहवदिति च भेदेनैव सादृश्यात्कल्प्यते अभिमर्शने तु नैवं व्यवस्थापकमिति भावः । **सूत्रार्थस्तु**—सत्राहीनोभयरूपस्यापि द्वादशाहस्य गणेष्वव्यवस्थया प्रवृत्तिः स्याद्द्वादशाहरूपकर्मण एकत्वादिति ॥

**अन्यतरतोऽतिरात्रत्वात्०** ॥ २९ ॥ अहीनत्वात्कुण्डपायिनामयने पञ्चदशरात्रे च पूर्वाधिकरणन्यायेनाहीनधर्मप्राप्तिरित्युत्थितेः संगतिः । **तत्रेति** । पञ्चदशरात्रे इदमाम्नायते 'त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदयनीयोऽतिरात्र' इति । कुण्डपायिनामयनेऽपि 'मासमग्निहोत्र'मित्यारभ्यान्ते 'दशरात्रो महाव्रतं उदयनीयोऽतिरात्र' इत्येवमाम्नायते । तयोरुभयोरप्यन्त एवातिरात्र आम्नायते नादौ । उपर्यतिरात्रत्वं पञ्चद्विरात्रादौ अहीने दृष्टमित्यनयोरप्यहीनत्वमेव । नच सत्रे यज्ञे येयं काममिच्छन्ति ते पञ्चदशरात्रमुपेयुरिति पञ्चदशरात्रे कुण्डपायिनामयनेऽपि 'भूतिकामा उपेयु'रित्युपेयचोदनाचोदितत्वात्सत्रत्वमिति वाच्यम् । यदन्यतरतोऽतिरात्रः तेनाहीन इति श्रुत्यैवाहीनत्वचोदनेनाहीनत्वलिङ्गस्य प्रबलत्वादिति भावः । यदन्यतरतोऽतिरात्रस्तेनाहीन इत्यस्यार्थवादगतस्य पञ्चदशरात्रे स्वयं सत्रात्मकेऽन्यतरतोऽतिरात्रत्वेनाहीनत्वादुभयरूपत्वादित-

अहीनत्वं भवेन्नैवमासनोपायचोदनात् ॥ सत्रसंज्ञान्तकाण्डे च समाम्नातमिदं द्वयम् ॥ तस्मात्सत्रमत: सत्रविध्यन्तोऽत्र प्रवर्तते ॥' इति श्रीशास्त्रदीपिकायामष्टमाध्यायस्य द्वितीय: पाद: ॥ २ ॥

---

## अष्टमाध्याये तृतीयः पादः ।

शुचिदेवक आग्नेयस्य आग्नावैष्णवे चाग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ॥ १ ॥

**हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ [देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥]**

आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः ॥ अग्नीषोमीयविकृतिरथवा व्यत्ययो द्वयोः ॥ १ ॥
प्रथमस्त्वद्वितीयत्वसाम्यादाद्योऽन्तिमो भवेत् ॥ द्विदेवत्वैकदेवत्वसाम्यस्य श्रुतिमत्त्वतः ॥ २ ॥

'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सारस्वतं चरुं बार्हस्पत्यं चरु'मिति । तत्र संशय: किं प्रथमस्याग्नेयविध्यन्तस्तृतीयस्याग्नीषोमीयविध्यन्त उत विपरीतमिति । स्थानसामान्यात्प्रथमतृतीययो: प्रथमतृतीयविध्यन्तप्राप्तावुच्यते—प्रथमस्य द्विदेवत्यत्वादाग्नीषोमीयविध्यन्त:, तृतीयस्य चैकदेवत्यत्वादाग्नेयविध्यन्त:, देवतासामान्यमुत्पत्तिवेलायामेव शीघ्रं गम्यते, स्थानसामान्यं तु अन्यापेक्षितत्वाद्विलम्बितत्वाद्दुर्बलं, तस्माद्देवतासामान्यात्प्रथमतृतीययोस्तृतीयस्य प्रथमविध्यन्त: ॥

जनकसप्तरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

**गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ [नानाहानि वा संघातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥]**

त्रिवृत्स्वहःस्वादिमस्य द्वादशाहस्य वाग्रिमः ॥ शाब्दत्रिवृत्त्वतोऽन्त्यः स्यादहःसंघानुसारतः ॥ ३ ॥

जनकसप्तरात्रे श्रूयते 'चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानी'ति, तत्र किमेषु पार्ष्ठिक: स्याद्यस्याह्नस्त्रिवृतो विध्यन्तश्चतुर्ष्वप्यावर्तनीय उत त्रिवृदादीनां चतुर्णामपि क्रमेण चतुर्ष्वपि प्रवृत्तिरिति संशये पूर्ववत्संघातसामान्यस्य दुर्बलत्वात्त्रिवृत्त्वसामान्येनाद्यस्यैव प्रवृत्ति: । नैवम् । इह सहचोदितानां

---

रेभ्य: प्रशस्त इति प्रशंसार्थतयोपपत्तेर्न ततो लिङ्गस्य प्राबल्यमित्याशयेन सिद्धान्तमाह—**नैवमिति** । यद्यप्युभयत्राप्युपेयिचोदने प्रागुदाहृतश्रुतौ दृश्येते । भाष्येऽपि तथैव । सूत्रेपि 'सत्रं वा उपेयिचोदना'दित्येवोक्तम्, तथापि शाखान्तरे 'पञ्चदशरात्रमासत'इत्यासिचोदनाप्यस्तीत्यभिप्रायेणासनोपायिचोदनादित्युक्तम् । **नन्वन्यतरतोऽतिरात्रत्वादहीनत्वं** किं न स्याद्विनिगमनाविरहादित्याशङ्क्योपोद्बलकमाह—**सत्रेति** । समाख्याबलादपि सत्रत्वमित्यर्थ: । सूत्रार्थस्तु—पञ्चदशरात्रस्य कुण्डपायिनामयनस्य चान्यतरतोऽतिरात्रत्वादहीनत्वमन्यतरतोऽतिरात्रभूतेष्वहीनत्वदर्शनादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायामष्टमाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**हविर्गणे०** ॥ १ ॥ पूर्वत्रास्फुटलिङ्गादनिर्देशो निरूपित:, इहतु प्रबलादतिदेश इति पादभेद: । स्फुटास्फुटलिङ्गज्ञानानन्तरमेतत्प्राबल्यज्ञानमित्यानन्तर्यं च, गणविशेषविषयत्वात्पादान्तरत्वमित्यप्याहु: । चरुमित्यनन्तरमध्वरकल्पायां श्रूयत इति शेष: । **स्थानेति** । क्रमस्य हवि:समवेततया देवतासामान्यात्प्राबल्यमिति भाव: । **देवतेति** । प्रथमद्वितीयभावस्येतरनिरूप्यत्वेन विलम्बितत्वान्निरपेक्षतयोत्पत्तिवेलायामेव प्रथमप्रतीतदेवतासामान्यं प्रबलमिति देवतासामान्यात्प्रथमस्थानेऽप्याग्नावैष्णवे तृतीयस्थानाग्नीषोमीयविध्यन्त: तृतीयस्थानेऽपि बार्हस्पत्ये प्रथमस्थानाग्नेयविध्यन्त इत्यर्थ: । **सूत्रार्थस्तु**—हविर्गणे परं हवि: उत्तरस्य हविषो विकार: स्याद्देशसामान्यादिति ॥

**गणचोदनायां०** ॥ ३ ॥ **जनकसप्तरात्र इति** । कुसुरुबिन्दादयोऽष्टौ सप्तरात्रास्तेष्वयमष्टमो जनकसप्तरात्रस्तत्रेत्यर्थ: । **किमेष्विति** । द्वादशाहे पृष्ठ्य: षडहस्त्रिवृत्पञ्चदशसप्तदश एकविंशस्त्रिणवत्रयस्त्रिंशस्तोमकस्तत्र किं त्रिवृद्विकारत्वमेषां सप्तरात्रगतानां चतुर्णामह्नां उत त्रिवृदाद्यहश्चतुष्टयविकारत्वमिति संशय इत्यर्थ: । **पूर्ववदिति** । यद्यपि पूर्वाधिकरणे ग्रन्थकारेण स्थानसामान्यस्य दौर्बल्यमुक्तं न संघातसामान्यस्य तथापि प्रथमादिलक्षणस्थानसामान्यस्यापि संघातवर्तितानिबन्धनत्वादेवमुक्तमित्यविरोध:, यद्वा मूलग्रन्थेषु संघातसामान्यस्यापि पूर्वत्र दौर्बल्यमुक्तमिति तदभिप्रायमिदम् । अनेनैव **पूर्वपक्षोत्थितेः** संगतिरपि सूचिता । पूर्वत्रापि संघातस्य न संघातत्वेन दौर्बल्यं किंत्वशाब्दतया प्रचयगम्यत्वादिह तु न प्रचयगम्य: संघात: किंतु चत्वारीति शब्दगम्यस्ततो न दुर्बल इति सिद्धान्तमाह—**नैवमिति** । ननु संघातत्रिवृत्त्वयोरुभयो-

सघातोऽपि शाब्दः त्रिवृत्त्वमपि । तत्र संघातसामान्यं प्रधानगतं तदङ्गभूतस्तोत्रीयागतात्त्रिवृत्त्वाद्बलीय इति तद्वशेन चतुर्णामपि पृष्ठ्यषडहानां चतुर्षु प्रवृत्तिः । एवंचाग्निष्टोममुखानीत्येष वादो युज्यते आद्यस्याग्निष्टोमत्वात् । अन्यथा सर्वेषामग्निष्टोमत्वं स्यात् । तत्राग्निष्टोममुखानीति न घटते ॥

षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

**कालाभ्यासे च बादरिः कर्मभेदात् ॥ ६ ॥ [तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् ॥ ७ ॥]**

**चत्वारः षडहा द्वादशाहस्य षडहस्य वा ॥ चतुर्विंशतिसंवार्थमाद्योऽन्त्यः षडहश्रुतेः ॥ ४ ॥**

षट्त्रिंशद्रात्रे श्रूयते 'षडहा भवन्ति चत्वारो भवन्ती'ति । तत्र विचार्यते—किमेतेषु चतुर्विंशत्यामहःसु द्वादशाहिकस्य दशरात्रस्य विध्यन्तस्य प्रवृत्तिरुत षडहस्यैव चतुरावृत्तिरिति । तत्र—'चतुर्विंशतिरेतानि चत्वारः षडहा इति ॥ चोद्यन्तेऽहानि तेनैषु द्वादशाहः प्रवर्तते ॥' उच्यते—'चतुर्विंशतिसंख्योऽत्र गणः साक्षान्न चोद्यते ॥ चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते ॥ चतुःसंख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः ॥ तस्मात्षडहविध्यन्तः शीघ्रमत्रावगम्यते ॥'

संस्थाशब्देषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

**संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥ [अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥]**

**शतोक्थ्ये ज्योतिषो यद्वा द्वादशाहस्य नामतः ॥ आद्यः समाप्तिनामैतत्संघत्वादन्तिमो भवेत् ॥ ५ ॥**

'शतोक्थ्यं भवति शतातिरात्रं भवती'ति श्रुतं तत्र संशयः—किं ज्योतिष्टोमस्य शतकृत्वोऽभ्यास

---

रपि शाब्दत्वाद्विनिगमनाभाव इत्यत आह—**तत्रेति** । **अङ्गभूतेति** । त्रिवृत्त्वस्य स्तोत्रीयासंख्यारूपत्वादिति भावः । **अन्यथेति** । षडहे आद्यस्याग्निष्टोमत्वात्तस्यैव चतुर्षु प्रवृत्तौ चतुर्णामप्यग्निष्टोमत्वादग्निष्टोममुखानीति वादो न स्याच्चतुर्णां प्रवृत्तावाद्यस्यैवाग्निष्टोमत्वमित्यग्निष्टोममुखानीति वाद इत्यर्थः । अत्र चतुर्णां प्रवृत्तावपि वाचनिकत्रिवृत्त्वविरोधात्पञ्चदशत्वादयो न प्रवर्तन्ते किंतु तद्व्यतिरिक्तो विध्यन्त इति ध्येयम् । सूत्रार्थस्तु—चत्वारि त्रिवृन्तीत्यादिगणचोदनायां यस्य त्रिवृदादेर्लिङ्गं तस्यैवावृत्तिः प्रतीयते आग्नेयवत् यथा पूर्वत्र बार्हस्पत्य आग्नेयविध्यन्तस्तद्वदिति ॥

**कालाभ्यासे च** ॥ ६ ॥ पूर्वत्र यथा चतुर्णां द्वादशाहिकानामह्नां प्रवृत्तिस्तथात्रापि द्वादशाहिकदशरात्रस्येत्युत्थानात्संगतिः । **तत्रेति** । तत्राह्नां चतुर्विंशतिसंख्यां स्वाभाविकीं सिद्धां कृत्वा किं तेषु चतुर्विंशतिसंख्याकेष्वहःसु द्वादशाहिकदशरात्रविध्यन्तप्रवृत्तिरुत षाडहिकविध्यन्तप्रवृत्तिरिति न विचारः । सिद्धान्ते प्रसिद्धषडहाभ्यासेन संख्यापूरणमित्यङ्गीकारात् । नच सिद्धान्तेऽपि प्रकरणान्तरन्यायेन प्रसिद्धषडहापेक्षया कर्मान्तरत्वान्न षडहावृत्तिः किंतु कर्मान्तरेष्विव तेषु षडहविध्यन्तमात्रस्यैवावृत्तिः । एवंच चतुर्विंशतिसंख्यापि मुख्यैव नाभ्यासनिबन्धनेति वाच्यम् । एवंजातीयकेषु कर्मभेदाभावात् । उक्तंहि—'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः । नाम्ना हि तदुपादानमासनोपायिचोदने' इति । ततश्च कर्मभेदाभावात्षडहस्यैव चतुर्वारमावृत्तिर्न विध्यन्तमात्रस्य । तस्मादयमत्र विचारनिष्कर्षः—किमत्र चतुर्विंशतिसंख्याकान्यहानि विधीयन्ते, ततश्च तेषु द्वादशाहिकदशरात्रविध्यन्तप्रवृत्तिरिति, उत नात्राहानि विधीयन्ते किंतु प्रसिद्धषडहस्यैव चतुर्वारमावृत्तिमात्रमिति । चतुर्विंशत्यामहःस्विति न धर्मिनिर्देशः किंत्विदमपि पूर्वपक्षकोट्यन्तर्गतं बोध्यम् । **चतुर्विंशतिरिति** । षडहावयवभूतषट्शब्दात्षट्संख्या प्रतीयते, तेषां च षट्संख्यायुक्तानां चत्वार इति पुनश्चतुष्ट्वबलात्प्रतीतानि चतुर्विंशतिसंख्याकान्यहान्येवात्र चोद्यन्ते तेषु द्वादशाहविध्यन्तः प्रवर्तते, तत्रापि दाशमिकन्यायेन प्रायणीयोदयनीयौ वर्जयित्वा मध्यमो दशरात्रः प्रवर्तत इत्यर्थः । **उच्यत इति** । साक्षाच्चतुर्विंशतिवाचकशब्दाभावाच्चतुःसंख्यैः षडहैश्चतुर्विंशतिसंख्योऽहर्गणोऽनुमानेन विधेयः । अनुमानं च प्रत्यक्षश्रुतेन षडहशब्देन तत्प्रवृत्तौ निश्चितायां न प्रवर्तते । ततश्च चत्वारो भवन्तीत्यपि प्रथमप्रतीतषडहानामेवावृत्तिपरमिति चतुःसंख्याः प्रसिद्धषडहा एव विधीयन्ते न चतुर्विंशतिसंख्यो गण इत्यर्थः । **तस्मादिति** । षडहानामेवावृत्तिविधौ स्वयमेव षडहविध्यन्तो गम्यते इत्यर्थः । **नत्वेतद्वाक्यपर्यालोचनया** षडहविकारत्वभ्रमः कर्तव्यः कर्मभेदाभावस्य प्रागुपपादितत्वादिति भावः । सूत्रार्थस्तु—कालाभ्यासे कालशब्देन षडहादिभिरहोभिः संमतानि कर्माण्युच्यन्ते तेषामभ्यासेऽपि बादरिराचार्यः कर्मभेदाद्द्वादशाहिकानां प्रवृत्तिरिति मन्यत इति ॥

**संस्थागणेषु०** ॥ ८ ॥ **तत्रेति** । शतोक्थ्यमित्यादौ किं ज्योतिष्टोमानुवादेन क्रत्वर्थतया शतकृत्वोऽभ्यासो विधीयते

उत द्वादशाहप्रवृत्तिरिति। तत्रोक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य शताभ्यास उपादेयो गुणो विधीयत इति मन्वानस्तस्यैवाभ्यासमाह—'संस्थानिमित्तास्त्वेते न क्रतोः कस्यापि वाचकाः॥ संनिध्यभावतः संस्थाविशिष्टगणचोदना॥' तस्माद्द्वादशाहविध्यन्तः॥

शतोक्थ्यादौ ज्योतिष्टोमात्स्तोत्रोपचयाधिकरणम्॥ ५॥

## गणादुपचयस्तत्प्रकृतित्वात्॥ १०॥ [एकाहाद्वा तेषां समत्वात्स्यात्॥११॥]

**शतोक्थ्यादौ स्तोत्रवृद्धिर्गणादेकाहतोऽथ वा॥ आद्यो गणविकारत्वादन्त्योऽत्र स्तोत्रजन्मतः॥ ६॥**

शतोक्थ्यं भवतीत्यत्र द्वादशाहिको दशरात्रो दशकृत्वः प्रवर्तते इत्युक्तं तस्मिंश्च दशरात्रेऽभितो द्वावग्निष्टोमौ तत्र शतोक्थ्ये प्रतिदशकं द्वौ द्वावग्निष्टोमावुक्थ्यसंस्थया वर्धयितव्यौ तत्रागम्यमानेषूक्थ्यस्तोत्रेषु संशयः किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते उत ज्योतिष्टोमोक्थ्यविकारा इति। तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहःसु यान्युक्थ्यस्तोत्राणि तद्विकारत्वमेवास्मिन्नागन्तूनामुक्थ्यस्तोत्राणां युक्तम्। नैतद्युक्तम्। ज्योतिष्टोमे ह्युक्थ्यस्तोत्राणामुत्पत्तिः, द्वादाशाहे तु अतिदेशप्राप्तानां तेषामेव विशेषा विहिताः यत्र चोत्पत्तिस्तत एवागमनं युक्तं न यत्रातिदिष्टाः। नहि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके। तस्माज्ज्योतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः॥

---

उत तत्संख्याककर्मान्तरं गणो विधीयते। तत्र गणसामान्याद्द्वादशाहप्रवृत्तिरिति संशय इत्यर्थः। पूर्ववदिहावृत्तिः। इयांस्तु विशेषः—पूर्वत्र षडहावृत्तिः न प्रसिद्धषडहार्था इह तु प्रसिद्धज्योतिष्टोमार्थेत्युत्थितेः संगतिः। **उपादेय इति।** अनुपादेयत्वे 'फलं चाकर्मसंनिधा'विति न्यायेन कर्मान्तरविधिरेव स्यान्नाभ्यासविधिरिति भावः। **संस्थेति।** ज्योतिष्टोमस्यासंनिहितत्वान्न तत्राभ्यासविधिः। नचोक्थ्यादिशब्दैस्तदनुवादसंभवस्तेषां ज्योतिष्टोमनामत्वाभावादित्यर्थः। सूत्रार्थस्तु—शतोक्थ्यादिषु संस्थागणेषु ज्योतिष्टोमाभ्यासः प्रतीयेतोक्थ्यादिभिः कृतलक्षणस्य कृततत्संज्ञस्य ज्योतिष्टोमस्य ग्रहणादनुवाद इति॥

**गणादुपचयः०॥ १०॥** यदि शतोक्थ्यादौ गणे द्वादशाहविध्यन्तस्तर्ह्युक्थ्यस्तोत्राण्यपि तदीयोक्थ्यस्तोत्रविकारा इत्युत्थितेः संगतिः। **उक्तमिति।** यद्यपि पूर्वत्र द्वादशाहविध्यन्त इत्येतावन्मात्रमुक्तं तथापि दाशमिकन्यायेन तदीयो दशरात्र एव प्रवर्तते। स च संख्यापूरणार्थं दशकृत्व आवर्तनीय इत्युक्तप्रायमित्यर्थः। **तस्मिन्निति।** दशरात्रे अभितो द्वावग्निष्टोमौ मध्येऽष्टौ उक्थ्याः केषांचित्सप्तोक्थ्याः तृतीयः षोडशी तत्र प्रतिदशकं द्वावग्निष्टोमौ। तथाच विंशतिरग्निष्टोमाः ते उक्थ्यसंस्थया वर्धयितव्याः। अग्निष्टोमस्तोत्ररूपयज्ञायज्ञीयानन्तरमुक्थ्याख्यस्तोत्रत्रययुक्ता कार्या इतियावत्। तेष्वागम्यमानेषूक्थ्यस्तोत्रेषु किं द्वादशाहिकविकारत्वमुत ज्योतिष्टोमविकारत्वमिति संशय इत्यर्थः। 'सप्तोक्थ्या एकः षोडशी'ति पक्षे च षोडशिन उक्थ्यसंस्थयोपचये कर्तव्येऽपि द्वादशाहस्यैव षोडशिस्तोत्ररहितस्य प्रवृत्तिर्नतु ज्यौतिष्टोमिकस्येति न तत्र विचार इत्यभिप्रेत्याग्निष्टोमेष्वेव संशय उपन्यस्त इति द्रष्टव्यम्। **तत्रेति।** गणेषु द्वादशाहविध्यन्तस्य संनिहितत्वात्तदीयोक्थ्यविकारत्वमेव युक्तमित्यर्थः। **नैतदिति।** उक्थ्यशब्दश्रवणमात्रेण प्रकृत्यनपेक्षज्योतिष्टोमगतानामेव प्रथमप्रतीतिरिति तद्विकारत्वमेव न तत्सापेक्षद्वादशाहगतोक्थ्यविकारत्वम्। **नहि भिक्षुक इति** न्यायादित्यर्थः। नचैवमतिदिष्टविध्यन्तग्रहणं क्वापि न स्यादिति वाच्यम्। आकाङ्क्षाबलाल्लिङ्गविशेषाच्च तदुपपत्तेः। इहतु गणत्वं प्रधानानामह्नामेव लिङ्गं नतु तदङ्गभूतस्तोत्राणामिति भावः। **उक्थ्यादीनामिति।** आदिशब्दः शतातिरात्रं भवतीत्यतिरात्राद्यभिप्रायः। सूत्रार्थस्तु—गणाद्द्वादशाहादुपचय उक्थ्यस्तोत्रादीनाम्। कुतः। द्वादशाहविकृतित्वात्सर्वेषामहर्गणानाम्। ततः संनिधानादुक्थ्यस्तोत्रोपचयोऽपि तत एव ग्राह्य इति॥

गायत्रीषूत्पत्तिगायत्रीणामतिदेशाधिकरणम् ॥ ६ ॥

**गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्, संख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ [तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेत् ॥ १४ ॥ ऐकसंख्यमेव स्यात् ॥ १५ ॥ गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १६ ॥ गोत्ववच्च समन्वयः ॥ १७ ॥ संख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥ इतरस्याश्रुतित्वाच्च ॥ १९ ॥ द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ २० ॥ अशास्त्रलक्षणत्वाच्च ॥ २१ ॥ उत्पत्तिनामधेयत्वाद्भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥ वचनमिति चेत् ॥ २३ ॥ यावदुक्तम् ॥ २४ ॥ अपूर्वे च विकल्पः स्याद्यदि संख्याविधानम् ॥ २५ ॥ ऋग्गुणत्वान्नेति चेत् ॥ २६ ॥ तथापूर्ववति स्यात् ॥ २७ ॥ गुणावेशश्च सर्वत्र ॥ २८ ॥ निष्पन्नग्रहणान्नेति ॥ २९ ॥ तथेहापि स्यात् ॥ ३० ॥ यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छन्देष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥ दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ तथा शरेष्वपि ॥ ३३ ॥ भक्त्येति चेत् ॥ ३४ ॥ तथेतरस्मिन् ॥ ३५ ॥ अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३६ ॥**

**अहर्गायत्रमित्यत्र वर्णलोप ऋचोऽथवा ॥ आद्यः संख्योक्तितो मैवं गवादौ तत्प्रसङ्गतः ॥ ७ ॥**

बृहस्पतिसवे प्रकृतितो[1] गायत्रत्रैष्टुभादिषु नानाछन्दःसु प्राप्तेषु छन्दोन्तराणि व्युदस्य गायत्रीनियता गायत्रमेतदहर्भवतीति । तत्र संशयः किं त्रिष्टुभादिष्वेव चोदकप्राप्तेष्वक्षरलोपं कृत्वा गायत्री संपादयितव्या उत दाशतयीभ्य[2] उत्पत्तिगायत्र्य आनेतव्या इति । तत्र संख्यामात्रवाचकत्वाद्गायत्रीशब्दस्य प्राकृतीष्वेव चोदकप्राप्तास्वक्षरलोपो न विरुध्यते । तस्मात्तास्वेवाक्षरलोपः । तथाच तिस्रोऽनुष्टुभः चतस्रो गायत्र्य इत्याद्युपपद्यते । अत्रोच्यते—'संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते ॥ मन्त्रान्तरे घटादौ च तस्मात्संख्यान्वितामृचम् ॥ अष्टाक्षरैस्त्रिभिः पादैर्युक्तामभिदधात्यसौ ॥ तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः ॥' तस्मादुत्पत्तिगायत्र्य आनेयाः । पूर्वाधिकरणे उपचयश्चिन्तितस्तत्प्रसङ्गादपचयोऽयं चिन्तितः ॥ इति श्रीशास्त्रदीपिकायामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

**गायत्रीषु०** ॥ १२ ॥ **संख्येति** । संख्यायां सत्यामेव ऋक्षु प्रयोगो नान्यथेत्यन्वयव्यतिरेकाभ्यां चतुर्विंशतिसंख्यैव गायत्रीशब्दवाच्येत्यर्थः । **चोदकेति** । अन्यथा चोदकबाधः स्यादिति भावः । यद्यप्यक्षरलोपेऽपि चोदकबाधस्तुल्यस्तथापि नात्यन्तबाध इति ध्येयम् । अत्रार्थे लिङ्गदर्शनमाह—**तिस्र इति** । अनुष्टुप् द्वात्रिंशदक्षरा । तथाच तिस्रोऽप्यनुष्टुभः षण्णवत्यक्षराः एवंच तिसृणामनुष्टुभां गायत्रीचतुष्टयात्मकत्वं गायत्रीशब्दस्य संख्यावाचकत्व एव संभवति ऋग्वाचकत्वे तु ऋचामृगन्तरात्मकत्वासंभवादनुपपन्नं स्यादिति भावः । आदिशब्देन ये हि द्वे गायत्र्यौ सैका जगतीत्यादिकं गृह्यते । **घटेति** । चतुर्विंशतिसंख्यायुक्त इति शेषः । **तस्मादिति** । ऋचमित्यनेन घटादिव्यावृत्तिः । अष्टाक्षरैरित्यादिना मन्त्रान्तरव्यावृत्तिः । **गौण इति** । अनुष्टुप्छन्दःसमभिव्याहारात् गायत्रीशब्दः संख्यामात्रे गौण इत्यर्थः । उपदेशेनातिदेशबाधे न दोष इति भावः । विशेषातिदेशविचारत्वाभावादध्यायसंगतिमवान्तरसंगतिं चाह—**पूर्वेति** । सूत्रार्थस्तु—गायत्रं भवतीति गायत्रीषु श्रुतासु प्राकृतीनां त्रिष्टुभादीनामवच्छेदः अक्षरावलोपः चोदकेन प्राकृतीनामधिकारात्संनिधानात् । नच प्रत्यक्षाभिस्ताभिः प्राकृतीनां बाधनं शङ्कनीयम् । संख्यात्वाद्गायत्रीशब्दार्थस्य संख्यामात्ररूपत्वे तद्विरोधाभावात् । यथा शताग्निष्टोमं भवतीत्यत्र द्वादशाहिकानामहामुक्थ्यावलोपस्तथात्राप्यक्षरावलोप इति । गायत्रीशब्दस्य संख्यावाचित्वं च संख्याया अव्यभिचारात् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

---

[1] प्रकृतितो ज्योतिष्टोमात्. [2] दाशतयी ऋग्वेदसंहिता.

# अष्टमाध्याये चतुर्थः पादः ।

दर्विहोमस्य कर्मनामधेयताधिकरणम् ॥ १ ॥

**दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥ [स लौकिकानां स्यात्कर्तुस्तदाख्यत्वात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ जुहोतिचोदनायां वा तत्संयोगात् ॥ ४ ॥ द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ६ ॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ तथाऽग्निहविषोः ॥ ८ ॥ उक्तश्चार्थसंबन्धः ॥ ९ ॥]**

दर्विहोमो गुणो नाम वा गुणो दधिहोमवत् ॥ गुणासंभवतो लोकवेदयोर्नाम तद्भवेत् ॥ १ ॥
लौकिकस्योत सर्वस्य नामाद्योऽम्बष्ठवाक्यतः ॥ निमित्तसाम्याद्वेदेऽपि तदुक्तेः सर्वनाम तत् ॥ २ ॥
यजतेरपि नाम स्याज्जुहोतेरेव वाऽग्रिमः ॥ अविशेषेण मुख्यत्वाज्जुहोतेर्लक्षणान्यथा ॥ ३ ॥

प्रपञ्चितेऽतिदेशेऽपवादत्रिविक्षया दर्विहोमा हृदयमागतास्तत्प्रसङ्गेन च 'यदेकया जुहुयाद्दर्विहोमं कुर्या'दित्यर्थवादगतो दर्विहोमशब्दो बुद्धिमागतः किं गुणविधिर्नामधेयं वा । नामापि किं लौकिकानामेवोत वैदिकानामपि । वैदिकानामपि किं यज्युत्पत्तीनामपि किंवा जुहोत्युत्पत्तीनामेवेति प्रसङ्गाच्चिन्त्यते । तत्र होमशब्दसंयोगात्तस्य च कर्मवचनत्वात्तत्प्रधानत्वादस्य समासस्य कर्मनामत्वम् । तत्र लौकिकानां स्थालीपाकादीनां कर्तरि दार्विहौमिकशब्दप्रयोगात्तेषामेव स्यात् वैदिकेऽपि वास्तुहोमे प्रयोगाद्धोमत्वाविशेषाद्वैदिकानामपि । तत्र यज्युत्पत्तीनामपि 'चतुरवत्तं जुहोती'त्यादिना होमत्वापत्तेस्तेषामपि न यागस्य होमत्वापत्तिः यागात्कर्मान्तरं प्रोक्षणादिवत्संस्काररूपं विधीयते । अतो

---

**दर्विहोमो यज्ञाभिधानं० ॥ १ ॥** अतिदेशापवादविचारात्मकतया पादान्तरत्वमानन्तर्यं च । अत्र प्राभाकरैः करिष्यमाणातिदेशापवादार्थतया गुणविध्यादिविचार इत्युक्तं तदयुक्तम् । अर्थवादगतस्य दर्विहोमशब्दस्यातिदेशकत्वाप्रसङ्गेनापवादार्थत्वाभावात् । तस्मात्प्रसङ्ग एवात्र संगतिरित्यभिप्रेत्य संगतिं दर्शयन्संशयमाह—**प्रपञ्चित इति** । गुणविधित्वपक्षस्य दुर्बलत्वान्नामत्वमेवोपपादयति—**तत्रेति** । दर्व्या होमो दर्विहोम इति तत्पुरुषस्योत्तरपदार्थप्रधानत्वादुत्तरस्य च होमशब्दस्य कर्मवचनत्वाद्दर्विहोमशब्दस्य कर्मनामत्वमेवेत्यर्थः । एवं नामत्वे सिद्धे लौकिकानामिति पक्षमुत्थापयति—**तत्र लौकिकानामिति** । 'शिबीनां दार्विहोमिको ब्राह्मणोऽत्रशिष्टानां दार्विहोमिको ब्राह्मण' इति स्मृत्यादिषु स्थालीपाकाष्टकादिकर्तरि दार्विहोमिकप्रयोगः स्थालीपाकादीनां दर्विहोमत्वमवगमयतीति तेषामेव नामधेयमित्यर्थः । यथा लौकिके प्रयोगान्नाम एवं वैदिके वास्तुहोमेऽपि प्रयोगबलादुभयनाम न केवललौकिकानां नामेति सिद्धान्तयति—**वैदिकेऽपीति** । एकयर्चा यदि जुहुयादिमं वास्तुहोमं दर्विहोममेव कुर्यादतः 'पुरोनुवाक्यामनूच्य याज्यया जुहोती'ति पुरोनुवाक्यायाज्योभयविषयेऽर्थवादे वास्तुहोमे दर्विहोमत्वापादनार्थं प्रयुक्तो दर्विहोमशब्दो वैदिकानामपि दर्विहोमत्वप्रसक्तावेवावकल्पते नान्यथेत्यस्मादेव प्रयोगाद्वैदिकानामपि नामेत्यर्थः । **तत्रेति** । यज्युत्पत्तिकयोरपि दर्शपूर्णमासयोः 'चतुरवत्तं जुहोती'ति यज्युत्पत्तिकस्यापि सोमस्य 'यद्ग्रहाञ्जुहोती'ति च जुहोतिशब्दप्रयोगाद्धोमत्वावगतेर्यज्युत्पत्तीनामपि नामधेयमित्यर्थः । यद्यपि यदेकयेत्यादिपर्यालोचनया याज्ञिकप्रसिद्धिपर्यालोचनया चावषट्कारहोमानां स्वाहाकारप्रधानानामेव दर्विहोमत्वम् । दर्शादयश्च वषट्कारप्रधानास्तथाच तेषां सत्यपि होमत्वे न तत्साधारण्यसंभवस्तथापि यज्युत्पत्तिकेषु होमत्वसाधनार्थमिदमुक्तम् । एवंचानेनैव प्रकारेण यज्युत्पत्तिकानां सवषट्काराणामपि होमत्वसंभवात्तेषामपि नामधेयं न जुहोत्युत्पत्तिकानामेवेति भावः । 'चतुरवत्तं जुहोती'ति यज्युत्पत्तिकं जुहोतिनानूद्य न चतुरवत्तं विधीयते येन तेषामपि होमत्वं स्यात्, किंतु कर्मान्तरमेव चतुरवत्तस्य संस्कारकं होमरूपं विधीयते इत्युक्तं तृतीये । ततश्च यज्युत्पत्तिनामत्वे दर्विहोमपदगतहोमशब्दासामञ्जस्यं स्यादित्याशयेन सिद्धान्तयति—**नेति** । **यत्त्विति** । 'गुणाभिधानं स्याद्द्रव्योपदेशा'दिति सूत्रकारेण दर्व्याख्यद्रव्यविधिरिति यदाशङ्कितं तद्योगमात्रं सूत्रमात्रं न युक्तिसहमित्यर्थः । चोद्यमात्रमिति बहुशः पाठः । अयुक्तिसहत्वमेव

---

१ हृदयमागतः.

जुहोत्युत्पत्तीनामेवाग्निहोत्रादीनां नाम स्यात्। यत्तु गुणविधित्वमाशङ्कितं तद्योगमात्रं तत्र तत्प्रख्यन्यायसिद्धमेवोत्तरमुपसंहृतम् ॥

दर्विहोमशब्दस्यापूर्वताधिकरणम् ॥ २ ॥

**तस्मिन्सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ [न वा स्वाहाकारेण संयोगात्,वषट्कारस्य च निर्देशात्, तन्त्रे तेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनःप्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥ अनुत्तरार्थो वाऽर्थवत्त्वात्, आनर्थक्याद्धि प्राथम्यस्योपरोधः स्यात् ॥ १५ ॥ न प्रकृतावपीति चेत् ॥ १६ ॥ उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना वेष्टेः प्रवृत्तित्वात्तद्विधिः स्यात् ॥ १८ ॥ शब्दसामर्थ्याच्च ॥ १९ ॥ लिङ्गदर्शनाच्च ॥ २० ॥ तत्राभावस्य हेतुत्वाद्गुणार्थे स्याददर्शनम् ॥ २१ ॥ विधिरिति चेत् ॥ २२ ॥ न वाक्यशेषत्वाद्गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां वाऽपरयोर्होमः, तेषां स्यादविरोधात् ॥ २४ ॥ तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन् ॥ २५ ॥ लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ प्रतिपत्ती तु ते भवतः, तस्मादतद्विकारत्वम् ॥ २७ ॥ संनिपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्वचनादतिदेशः स्यात् ॥ २८ ॥]**

**दर्विहोमे सोमधर्मा अपूर्वत्वमुताग्रिमः ॥ अव्यक्तैर्यज्यभावाच्च स्वाहोक्त्यादेरपूर्वता ॥ ४ ॥**

प्रासङ्गिकं परिसमाप्य किं दर्विहोमाः पूर्ववन्त उतापूर्वा इति विचार्यते। तत्राश्रुतेतिकर्तव्यताकत्वादव्यक्तत्वाच्च सौमिको विध्यन्तः प्रवर्तेत न यागहोमत्वेन। अत्यन्तविसदृशत्वात्। होमानामेवाग्निहोत्रनारिष्टादीनां धर्मवतां सद्भावान्न तदतिक्रमेण सोमयागाश्रयणं युक्तम्। अतस्तत्प्रकृतिकत्वमेव। नैवं नारिष्टाङ्गभूतानामिध्मादीनां [२]त्र्यम्बकहोमेष्वभावहेतुदर्शनाल्लिङ्गान्तराणि च दर्शितानि दर्विहोमाना-

सूचयन्नुत्तरतात्पर्यमाह—**तत्प्रख्येति**। लौकिके आघारगृहीता दर्वी प्राप्ता न्यग्बिलया मूलदण्डया दर्व्या जुहोतीति। तथा वैदिकेऽपि क्वचिद्दर्व्या ब्रह्मौदनादुद्धृत्य 'प्रवेधसे कवये मेध्यायेति जुहोती'ति दर्वी प्राप्ता। अतस्तत्प्रख्यन्यायेन नामत्वंसिद्धं तदेव 'न लौकिकानामाचारग्रहणत्वा'दिति सूत्रेणोपसंहृतमित्यर्थः। इदमुपलक्षणं वैदिकेऽपि स्रुवेण जुहोतीत्यादौ पात्रान्तरस्य प्राप्तत्वेन दर्व्या विधानासंभवान्नामत्वमित्यपि द्रष्टव्यम्। 'दर्विहोमो यज्ञाभिधान'मिति प्रथमसूत्र एवोक्तत्वादुपसंहृतत्वोक्तिः। नामत्वस्य तत्प्रख्यन्यायसिद्धत्वादेव गुणविधित्वमयुक्तिसहमिति सूचितम्। सूत्रार्थस्तु—दर्विहोमशब्दो यज्ञाभिधानं कर्मनामधेयं होमसंयोगादिति ॥

**तस्मिन्सोमः प्रवर्तेत०** ॥ १० ॥ इदानीमपवादविचारः प्रस्तूयते इत्याह—**प्रासङ्गिकमिति**। किं 'भिन्ने जुहोति स्कन्ने जुहोती'त्यादयो दर्विहोमाः प्रकृतिमन्त उत तद्रहिता इति चिन्तार्थः। **तत्रेति**। अश्रुतेतिकर्तव्यताकत्वादितिकर्तव्यताकाङ्क्षायामव्यक्तत्वात्सौमिकविध्यन्तः प्रवर्तेत इत्यर्थः। **नेति**। अव्यक्तत्वं सति सादृश्ये विशेषनियामकमिति भावः। **नन्वा**काङ्क्षाबलादगत्याऽव्यक्तत्वमेव सादृश्यमस्त्वित्यत आह—**होमानामेवेति**। आदिशब्देन पत्नीसंयाजपिष्टलेपफलीकरणहोमादीनां ग्रहणम्। अग्निहोत्रस्य न दर्विहोमप्रकृतित्वं विशेषनियामकाभावात्, होमत्वस्य नारिष्टादिसाधारण्यान्नारिष्टानां तु वेद्यादिदर्शनबलात्प्रकृतित्वं संभवति। तथाहि अग्निहोत्रे 'यदि कीटोऽवपद्येतान्तःपरिधि निनये'दिति परिधिर्नारिष्टलिङ्गं दृश्यते तथाग्नौ सावित्रहोमे 'अन्तर्वेदि तिष्ठन्सावित्राणि जुहोती'ति वेदिर्दृश्यते। दार्शपौर्णमासिकपरिधिवेद्योरङ्गप्रधानार्थतया नारिष्टलिङ्गत्वं युज्यते तस्मादग्निहोत्रप्रकृतिकत्वमुपेक्ष्य नारिष्टप्रकृतिकत्वं निराकरोति—**नैवमिति**। 'अप्रतिष्ठिता वै त्र्यम्बका इत्याहुर्नेध्माबर्हिः संनह्यते न प्रयाजानूयाजा इज्यन्ते न सामिधेनीरन्वाहे'ति त्र्यम्बकहोमेष्वप्रतिष्ठितत्वदोषोत्कीर्तनपूर्वकं 'आदित्यं चरुं निर्वपेत्पुनरेत्य ग्रहेष्वियं वा अदितिरियं प्रतिष्ठा यदादित्योऽस्यामेव प्रतितिष्ठती'त्यादित्यचरु-

१ तच्चोद्यमात्रं. २ त्र्यम्बकहोमा दर्विहोमाः.

अपूर्वत्वं सूचयन्ति । तस्मादपूर्वाः । 'ससंक्षेपविस्तारकः सापवादः सद्दकत्वानुमानात्तथा नामधेयात् ॥ अधीताश्च वाक्यात्प्रसिद्धोऽतिदेशः करिष्यामहेऽतःपरं तूहचिन्ताम् ॥' इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामष्टमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

विधिपरे वाक्ये त्र्यम्बकहोमेष्विध्मादीनामङ्गप्रधानार्थतया नारिष्टाङ्गभूतानामभावदर्शनं नारिष्टप्रकृतिकत्वेनोपपद्यते, तथात्वे इध्मादीनामेव प्राप्तेरन्यविधिपरे वाक्ये तदभावतात्पर्याभावेन बाधायोगादित्यर्थवादगतेध्माद्यभावदर्शनबलान्नारिष्टप्रकृतिकत्वाभावे निश्चिते 'अन्तःपरिधि निनयेदन्तर्वेदि तिष्ठन्नि'ति परिधिदेशं वेदिदेशं च लक्षयतीति द्रष्टव्यम् । पत्नीसंयाजानामाज्यहविष्कत्वादौषधहविष्कत्र्यंबकादिषु प्रकृतित्वासंभवात्पिष्टलेपफलीकरणहोमयोश्च प्रतिपत्तितया धर्माप्रयोजकतया प्रकृतित्वासंभवाच्च न कस्यापि होमस्य दर्विहोमप्रकृतित्वम् । एवं तर्हि सुसदृशालाभान्मन्दसदृशः सोम एव प्रकृतिरस्त्विति चेद्दर्विहोमेषु मन्त्रवर्णतो देवतालाभेन तद्धितचतुर्थीमन्त्रवर्णैः स्वार्थतया विनियुक्तदेवताराहित्यलक्षणाव्यक्तत्वाभावात् । किंच यदि सोमः प्रकृतिः 'घृतेन द्यावापृथिवी आपृणेथामित्यौदुंबर्यां जुहोति भूमिगते स्वाहाकारं करोती'त्यादिषु 'पृथिव्यै स्वाहान्तरिक्षाय स्वाहे'त्यादिषु च स्वाहाकारदर्शनं न स्यात् सोमप्रकृतिकत्वे वषट्कारस्यैव प्राप्तेरित्येतत्सर्वमभिप्रेत्याह—**लिङ्गान्तराणीति** ॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेंकटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां अष्टमाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## इति अष्टमाध्यायः समाप्तः ॥



# नवमोऽध्यायः ॥ ९ ॥

## नवमाध्याये प्रथमः पादः ।

अग्निहोत्रादिधर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ॥ १ ॥

**यज्ञकर्म प्रधानम्, तद्धि चोदनाभूतम्, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

अतिदेशोऽष्टमेऽध्याये समाप्तो नवमे पुनः ॥ अतिदिष्टपदार्थानामूहानूहविचारणा ॥ १ ॥
इष्ट्यग्निहोत्रसोमानां धर्मः किं यजयेऽथवा ॥ अपूर्वायात्र निर्णीतिः स्मार्यते सप्तमोदिता ॥ २ ॥
अवघाते व्रीहिरूपं विवक्ष्येत न वा श्रुतेः ॥ आद्यः साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते ॥ ३ ॥
नापूर्वस्य निमित्तत्वमस्ति वा न प्रयोक्तृतः ॥ अस्ति शाब्दप्रयोक्तृत्वमार्थिकी तु निमित्तता ॥ ४ ॥

सिद्धेऽतिदेशेऽधुनातिदिष्टानां पदार्थानां मन्त्रसामसंस्काराणां द्वारान्तरसंबन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते । तस्य चातिदिष्टविषयत्वादतिदेशोत्तरकालमारम्भः । अतिदेशाधीनत्वमेव दर्शयितुं सप्तमाद्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति । यजिप्रयुक्तत्वे हि पारिप्रवा:

---

**यज्ञकर्म प्रधानं, तद्धि चोदनाभूतं, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥** वृत्तकथनपूर्वकं सङ्गतिं दर्शयन् वर्तिष्यमाणं प्रतिजानीते—**सिद्ध इति** । अतिदेशसिद्ध्यनन्तरं अतिदिष्टपदार्थविषयतया तत्सापेक्ष ऊहो हेतुहेतुमद्भावसंगत्या चिन्त्यत इत्यर्थः । 'यद्योन्यां तदुत्तरयोर्गायती'त्यादौ वक्ष्यमाणस्य सामोहस्याष्टमिकचोदनालिङ्गविशेषातिदेशानपेक्षत्वेऽपि सप्तमद्वितीयपादोक्तातिदेशाधीनत्वेन कृत्स्नस्याप्यूहस्यातिदेशाधीनत्वमस्तीत्यभिप्रायेण सिद्धेऽतिदेश इत्यतिदेशमात्रस्य सिद्धत्वमुक्तम् । **ननु** 'ऊह वितर्के' इति धातुनिष्पन्नस्योहशब्दस्य तर्कज्ञानार्थकत्वात्तस्य चाचोदनालक्षणत्वेन धर्मत्वाभावाच्छास्त्रे व्युत्पाद्यत्वमयुक्तम् । नचोह्यत इति व्युत्पत्त्योह्यमानपदार्थपरत्वेन तस्य शास्त्रव्युत्पाद्यत्वमस्तीति वाच्यम् । कृत्स्नशास्त्रार्थस्याप्यूह्यमानत्वेन नवमासाधारणार्थत्वानुपपत्तेरित्याशङ्क्योहस्वरूपं विवेचयति—**द्वारान्तरेति** । नन्विदमनुपपन्नम् । नीवारादाववहननादेर्यथाप्रकृत्येवानुष्ठानेनान्यथाभावाभावेन संस्कारोहेऽव्याप्तिः । नच नीवाराणां प्राकृतद्रव्यविलक्षणतया कठिनत्वमृदुत्वकृततीव्रमन्दाघातलक्षणान्यथाभावोऽस्तीति वाच्यम् । तथापि व्रीहितुल्यकठिनत्वादिमद्यत्र वैकृतं द्रव्यं तत्रोहो न स्यात् । एवमपि नीवारादौ नखेषु प्रोक्षणाद्यूहेऽव्याप्त्यपरिहाराच्चेति चेन्नैवम् । कारकभेदेन क्रियावैलक्षण्यावश्यंभावेन नीवारलक्षणकारकभेदादन्यथाभावसत्वेनाव्याप्त्यनवकाशात् । प्रयाजादेस्तु सौर्यादिलक्षणद्वारान्तरसंबन्धेऽप्यनुग्राह्यत्वमेव सौर्यादेर्नतु प्रयाजादौ कारकत्वमिति न तेषामूहप्रसङ्गः । नच कारकभेदात्क्रियान्यथाभावे वैकृतद्रव्यभेदात्प्रयाजादेरपि विकारः स्यादिति वाच्यम् । क्रियायाः कर्मावसायित्वेन कर्मकारकनिरूपणीयतया तद्भेद एवान्यथाभावो न कारकान्तरभेद इति दिक् । सामोहे द्वारान्तरमभिव्यञ्ज्यान्तरं विवक्षितम् । यथाश्रुते 'रथन्तरमुत्तरयो'रित्यादौ प्राकृतद्वारात् द्वारान्तराभावेनाव्याप्त्यापत्तिरिति ध्येयम् । विषयभेदादूहस्य त्रैविध्यमभिप्रेत्योहविषयमाह—**मन्त्रेति** । साम्नां मन्त्रत्वे संस्कारत्वे च सत्यपि वक्ष्यमाणसामोहप्रविकारस्योभयविलक्षणत्वात्पृथक्ग्रहणम् । **नन्व**'ग्नयेजुष्टं निर्वपामी'ति मन्त्रः सौर्ये सूर्यायेति प्रयोक्तव्य इत्येवं प्रयोगविकारात्मक ऊहः । उक्तंच भाष्ये 'कथं प्रयोक्तव्या इति नवमे चिन्त्यत' इति । तथाच प्रयोगविधिविषयविकारात्मकत्वचतुर्थपञ्चमसंनिधावेव तद्विचारः किमिति न कृत इत्यत आह—**तस्येति** । प्रयोगविकारात्मकत्वेऽपि अतिदिष्टपदार्थविषयत्वान्न ततः प्राक् निरूपणं संभवतीत्यर्थः । **नन्वनेन** सूत्रेणापूर्वप्रयुक्तत्वं धर्माणामुच्यते, तच्च सप्तमाद्य एव सिद्धम्, पुनः स्मरणस्य प्रयोजनं न पश्याम इत्यत आह—**अतिदेशेति** । अतिदेशाधीनत्वार्थमेवोपपादयति—**यजीति** । यजिप्रयुक्तत्वे यज्युद्देशेन विधीयमानाः सौर्यादावग्न्यादिपदयुक्ता एव मन्त्रा उपदिष्टाः । ततश्च तथैव प्रयोज्या इत्यूहो न स्यादित्यर्थः । वस्तुतस्तु यजिप्रयुक्तत्वपक्षे सर्वसाधारण्येनोपदेशात् आग्नेयादावग्न्यादिपदयुक्तानां समवेतार्थत्वं तत्रैव प्रवृत्तिः । सौर्यादौ त्वसमवेतार्थतया पशुसामान्यविध्यपेक्षस्य मेष्याम'

---

१ अतिदेशाधीनत्वं ऊहस्य. २ यथाप्रकृति प्रकृतिमनतिक्रम्य. ३ प्रकृतौ व्रीहिप्रोक्षणं, विकृतौ नीवारेषु। प्रकृतावुलूखलमुसलयोः प्रोक्षणं, विकृतौ नखेषु.

धर्माः सर्वत्रोपदिष्टा नान्यथाकर्तुं शक्यन्ते । अपूर्वप्रयुक्तत्वे तु प्रतिप्रकरणं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टाः युक्तं यदूहं भजन्ते, तस्मादूहविवक्षयाऽपूर्वप्रयुक्तिः स्मारिता । तदीयौ पूर्वोत्तरपक्षौ तत्रैव प्रदर्शिताविति नेह प्रदर्श्येते । तथान्यदिह चिन्त्यते—किमवघातमन्त्रादयो विवक्षित[1]व्रीह्यग्न्यादिद्वाराऽपूर्वस्योपकुर्वन्ति उताविवक्षिततत्स्वरूपसाधनविशेषमात्रद्वारेति । स्वरूपविवक्षायां हि तदभावान्नीवारादि[2]पूहो न स्यात् । अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सिद्ध्यत्यूहः । ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वाद्विकृतौ च तदभावात्कथमूहः । यस्यापूर्वस्यावघातोऽङ्गं तदीयं साधनं द्वारमितिचेत्तथा[3]सत्याज्यौषधसांनाय्यानां धर्मसंकरः स्यात् । त्रयाणामपि प्रदेयसाधनत्वात् । अथाग्नेयादिद्वारभेदेन सा[4]धनत्वभेदाद्व्यवस्था ततो विकृतौ द्वारा[5]भावादवघातादेरप्रवृत्तिः । उच्यते—अवहतैरपूर्वं कुर्यादिति शास्त्रार्थः । साधनप्रयुक्तिपक्षे तद्वत्कुर्यादित्यतिदेशे अवहतैः कुर्यादित्यर्थो भवति तस्मात्सिद्ध्यति विकृताववघातः । तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादिकुशकाशावलम्बनमनर्थकं [6]यत्परं धर्मसांकर्याय स्यादित्यास्तां तावत् । एवं प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यत्र 'अगन्म सुवः सुवरगन्मे'त्यत्र चावहन्तिस्वरूपं स्वर्गस्वरूपं च संस्कारम-

---

ध्रिगुप्रैषस्येव निवृत्तिः स्यादिति बोध्यम् । **अपूर्वेति** । अपूर्वप्रयुक्तत्वपक्षे धर्माणां व्यवस्थितत्वाद्विकृत्याकाङ्क्षयातिदेशे प्रकृतौ समवेतार्थत्वादूहः सिद्ध्यतीत्यर्थः । **ननु** अपूर्वप्रयुक्तत्वेऽतिदेशसिद्धावपि स्वरूपेणातिदिष्टानां पदार्थानां यथासंभवं दृष्टादृष्टप्रयोजनकल्पनयानुष्ठानस्य वक्तव्यत्वान्नोहः सिद्ध्येदित्यत आह—**दशमेति** । भवेदेवं यदि स्वरूपेणातिदेशः स्यान्नत्वेवं किंतु दशमाद्यन्यायेनोपकारमुखेनैवातिदेशः । एवंचाग्नय इति मन्त्रोऽपूर्वसंबन्धिदेवताप्रकाशनमुखेनैवातिदिश्यत इति अग्निपदयुक्तमन्त्रस्य विकृत्यपूर्वसंबन्धिसूर्यप्रकाशनाशक्ततया सिद्ध्यत्यूह इत्यर्थः । एवंच दशमाद्यमुभयार्थत्वान्मध्ये कृतमिति बोध्यम् । **तदीयाविति** । अपूर्वार्थत्वे इतिकर्तव्यतायाः करणानुग्राहकत्वानुपपत्त्या तत्सिद्ध्यर्थं यज्युद्देशेनैव विधेया । उद्दिश्यमानस्य च यजेर्दर्शपूर्णमासादिना विशेषणासंभवात्सर्वयज्यर्थतया सर्वत्रोपदेशेनैव प्राप्तिरिति पूर्वः पक्षः । **करणेति**-कर्तव्यताविशिष्टापूर्वभावनाविधानेऽपि अरुणान्यायेन करणानुग्राहकत्वसिद्धेरुद्दिश्यविधानानपेक्षणात् यदितिकर्तव्यताविशिष्टा यद्भावना विहिता तद्भावनाकरण एव तदितिकर्तव्यतानिवेशाद्यज्यन्तरेऽतिदेश इति सिद्धान्तश्च तत्रैव प्रदर्शिताविल्यर्थः । 'यज्ञकर्म प्रधान'मित्यनेन सूत्रेण सप्तमाद्यसिद्धमपूर्वप्रयुक्तत्वं स्मार्यत इत्युक्त्वा भाष्यकारेणाथवेति वर्णकान्तरं कृतं तस्य तात्पर्यं विवक्षन्नाह—**तथेति** । सत्यप्यपूर्वप्रयुक्तत्वेऽपूर्वार्थत्वमवघातादेर्मन्त्राणां च न प्रयाजादिवददृष्टद्वारा 'तानि द्वैधम्'-मिति मन्त्राधिकरणादौ निरस्तत्वात् किंतु व्रीह्यग्न्यादिद्वारा । तत्र किं व्रीह्यग्न्यादिस्वरूपं विवक्षितमुतापूर्वसाधनविशेषमात्रमेव विवक्षितमिति चिन्त्यत इत्यर्थः । अवघातादीनामसांकर्यार्थं विशेषेत्युक्तम् । तण्डुलनिष्पत्तिद्वारापूर्वसाधनेत्यर्थः । व्रीह्यादिस्वरूपविवक्षाविचारस्य फलमाह—**स्वरूपेति** । नन्वेवमपि प्रकृतत्वाद्दार्शपौर्णमासिकापूर्वसाधनविशेषस्यैव द्वारत्वं स्यात्तथाच कथमूह इति शङ्कते—**नन्विति** । अत्र प्राभाकररीत्या समाधानं शङ्कते—**यस्येति** । धर्माणां ग्राहकार्थत्वादवघातो यद्ग्राहकाङ्गं तदीयसाधनं द्वारमिति ग्राहकीयत्वेनैव साधनरूपद्वारत्वं नतु नान्तरीयकेण दार्शपौर्णमासिकत्वेनापि । तथाच वैकृतस्यापि तादृशत्वादूहः सिद्ध्यतीति भावः । **तथासतीति** । आज्यादीनां त्रयाणामपि प्रदेयतया ग्राहकापूर्वसाधनत्वाविशेषाद्धर्मसंकरः स्यादित्यर्थः । **नन्वौषधादीनां** ग्राहकीयत्वं न साक्षात्किंतु करणीभूताग्नेयादिनिर्वृत्तिद्वारा । ततश्च तत्तत्करणद्वारा ग्राहकापूर्वसाधनं द्रव्यं धर्माणां द्वारमिति न संकर इति शङ्कते—**अथेति** । तर्हि विकृतावाग्नेयद्वारा परमापूर्वसाधनद्रव्यलक्षणद्वाराभावादूहो न स्यादित्याह—**तत इति** । **उच्यत इति** । 'व्रीहीनवहन्ती'ति श्रुतव्रीह्यर्थत्वे वक्ष्यमाणरीत्यानर्थक्याद्व्रीहिपदेनापूर्वसाधनं लक्षयित्वा तदर्थतया धर्मा विधीयन्ते । तत्र यद्यपि दर्शपूर्णमासापूर्वं प्रकृतं तथापि न प्रकृतापूर्वसाधनत्वेन व्रीहिपदं लक्षयति किंत्वपूर्वसाधनत्वमात्रेण । तावतैवाकाङ्क्षाशान्तेः । नचापूर्वसाधनमात्रोद्देशेन धर्मविधाने नीवारादावप्युपदेशत एव धर्मप्राप्तिः स्यादिति वाच्यम् । प्रकृतौ धर्मविधिसमये नीवारादीनामपूर्वसाधनत्वानवगमादवगमेऽप्यनुवादस्य सतिसंभवे संनिहितगामित्वेन प्रकृतानामेव तेन रूपेणोद्देशात्तथाचावघातादीनां साधनरूपार्थत्वेऽवहतैरपूर्वं कुर्यादिति शास्त्रार्थः पर्यवसन्नः । एवंच 'व्रीहिभिर्यजेते'ति शास्त्रावगतं यद्धविःप्रकृतितयाऽपूर्वसाधनं तत्रावघातपर्यवसानेनासांकर्यं तेषामर्थाधिकरणोक्तरीत्या प्रत्यासत्तिबलेनावान्तरापूर्वप्रयुक्तत्वाद्वा न सांकर्यम् । **तथाच** तद्वत्कुर्यादित्यतिदेशेऽपि अवहतैरपूर्वं कुर्यादित्येवार्थलाभात्सिध्यत्यूह इत्यर्थः । **तेनेति** । उक्तरीत्यैवोहसिद्धेस्तदर्थं धर्मसांकर्यावहं यस्यापूर्वस्येत्यादिप्राभाकरोक्तमनर्थकमित्यर्थः । श्रुतिसंयुक्तेषूक्तं न्यायं वाक्यलिङ्गसंयुक्तेष्वप्यतिदिशति—**एव**-

---

१ व्रीहित्वादिद्वारा. २ नीवारमिति. ३ सत्यौषधाज्यसांनाय्यानां. ४ तदीयसाधन. ५ तद्वाराभावात्. ६ यदि परं.

अयोरपूर्वार्थयोर्द्वारमुतापूर्वसंबन्धिविशेष इति तुल्यो विचारः । तत्र व्रीह्यादीनां श्रुतानामविवक्षाकारणाभावात्तद्द्वारेणैवापूर्वार्थत्वं साधनरूपस्यावर्जनीयत्वादन्यथावघातादेरानर्थक्यात्तन्मात्रमेव विवक्षितमिति सिद्धान्तः । तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते । सेयं द्वितीयस्य वर्णकस्यैका व्याख्या । तथान्यापि । सप्तमाद्ये हि यज्यर्थत्वेऽपि धर्माणामपूर्वविशेषनिमित्ततामात्रेण व्यवस्थासिद्धेर्नैकान्ततोऽपूर्वार्थत्वं व्युत्पादनीयम् । इह त्वपूर्वार्थत्वमन्तरेणोहासिद्धेरपूर्वार्थत्वं प्रतिपाद्यते । यजिस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघातादीनां व्रीह्यादिस्वरूपार्थत्वं स्यात्तदभावाच्च नीवारादावूहो न स्यादिति । तस्यैवापरा व्याख्या । सप्तमाद्ये साधारण्येनापूर्वार्थत्वमिह त्वारादुपकारकाणामपूर्वार्थत्वं प्रकरणात्संनिपातिनां तु श्रुत्यादिसंयुक्तव्रीह्याद्यर्थत्वावगमान्न तत्प्रयुक्तत्वमित्याशङ्क्य तेषामपि व्रीह्यादिस्वरूपपर्यवसायिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते । तदेतेषु त्रिष्वपि पक्षेषु अथवेत्यादिभाष्यमस्माभिस्तन्त्ररत्न एव व्याख्यातम् । अथवान्यामित्यादिना भाष्येण पुनर्वर्णकान्तरमारब्धम् । तदुच्यते—सप्तमाद्येऽपूर्वार्थत्वं सिद्धमिह तु किमपूर्वार्थानां धर्माणां यजिर्निमित्तमुत निमित्तमप्यपूर्वमेवेति चिन्त्यते । नचा[1]निमित्तवृत्तिः कादाचित्कत्वात् । येन विचार एव न स्यात् तत्रापूर्वस्य साध्यत्वान्निमित्तता न युक्ता । तस्माद्यजिरेव निमित्तं तत्तुल्यन्यायत्वाच्चावघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तमिति तदभावान्नीवारादिषु न स्यादिति प्राप्ते ब्रूमः—'यजेस्तावन्निमित्तत्वं न केनचिदिहोच्यते ॥ अपूर्वस्यापि तन्नोक्तमर्थात्तस्य निमित्तता ॥' साध्यं हि साधनानुष्ठाने निमित्तमनि-

---

मिति । एवं चिन्तायाः फलमुपपाद्य पूर्वपक्षं गृह्णाति—**तत्रेति** । श्रुतव्रीह्याद्यर्थत्वे सौर्यादौ तत्स्वरूपाभावादूहो न स्यादिति भावः । एवंच सप्तमाद्येऽवघातादीनामपूर्वार्थतामात्र एव यत्न एतावतैव व्यवस्थासिद्धेः । ननु व्रीह्यादिस्वरूपाविवक्षया साधनार्थत्वेऽपीति न पुनरुक्तिरिति ध्येयम् । **ननु** अत्रैव साधनविशेषार्थत्वसिद्धौ 'संस्कारे युज्यमानाना'मित्याद्यधिकरणत्रयानर्थक्यमित्यत आह—**तदेतदिति** । एवं धर्माणां साधनविशेषार्थत्वविचारप्रतिपादकतयाथवेति भाष्यं व्याख्यातम् । इदानीं तदेव भाष्यं प्रकारान्तरेण व्याचष्टे—**तथेति** । सप्तमाद्ये व्यवस्थामात्रं व्युत्पाद्यम् । व्यवस्था चापूर्वार्थत्वाभावेऽपि भिन्ने जुहोतीतिवदपूर्वे सति धर्माः कर्तव्या इति निमित्ततामात्रेणापि सिध्यति । सत्यां च व्यवस्थायां विकृत्याकाङ्क्षयातिदेशोऽपि सिध्यतीत्यपूर्वार्थत्वं तत्र न व्युत्पाद्यं किंत्विहैवोहसिद्ध्यर्थं व्युत्पाद्यत इत्यर्थः । **ननु** यजिस्वरूपप्रयुक्तत्वेऽपि नीवारादिलक्षणद्वारान्तरसंबन्धानपायादूहसिद्धिः किं न स्यादित्यत आह—**यजिस्वरूपेति** । यजिस्वरूपप्रयुक्तत्वे नीवारादिसंबन्ध एव दुर्लभ इति भावः । एवमपूर्वार्थत्वं धर्माणामत्रैव व्युत्पाद्यमित्येवंपरतया व्याख्याय सर्वेषां धर्माणामपूर्वार्थत्वस्य सप्तमाद्ये व्युत्पादनेऽपि संनिपातिष्वधिकाशङ्कानिराकरणार्थं पुनरपूर्वार्थत्वं व्युत्पाद्यत इत्येवंपरतया तदेव भाष्यं व्याचष्टे—**तस्यैवेति** । भवत्वारादुपकारकाणां प्रकरणादपूर्वार्थत्वं, संनिपातिनां तु श्रुत्यादिसंयुक्तानां प्रकरणादपूर्वार्थत्वं न संभवति 'असंयुक्तं प्रकरणा'दिति श्रुत्याद्यसंयुक्तस्यैव प्रकरणविनियोज्यत्वादिति शङ्कायां श्रुत्यादिबलेन व्रीह्यादिस्वरूपमात्रार्थत्वे विनाप्यवघातादीन् तत्स्वरूपसंपत्त्यानर्थक्यात् श्रुत्यादिभिर्व्रीह्याद्यर्थत्वावगमेऽपि न तन्मात्रेण पर्यवसानं किंतु तद्द्वाराऽपूर्वार्थत्वमप्यस्तीत्येवंप्रकरणेन श्रुत्याद्यवगतव्रीह्याद्यर्थतानिर्वाहायैवापूर्वार्थताबोधनेनानुगुणतया प्रकरणादपूर्वार्थत्वं संगच्छत इति प्रतिपाद्यत इत्यर्थः । ऊहस्य संनिपातिमात्रविषयतया तदुपयोगितयेहैव तत्प्रतिपादनं, सप्तमे त्वविकृतव्रीह्याद्यर्थत्वेऽपि व्यवस्थासिद्धेर्न प्रतिपादनं संगच्छत इति ध्येयम् । श्रुत्यादिसंयुक्तानामपि प्रकरणविनियोज्यत्वं प्रकरणाधिकरण एवोक्तं तत एवावगन्तव्यम् । एवं भाष्यतात्पर्यार्थमुक्त्वा अक्षरार्थस्तन्त्ररत्न एवोक्त इत्याह—**तदेतेष्विति** । एवमथवेत्यादिभाष्यं व्याख्याय भाष्यान्तरव्याख्यामुखेन विचारान्तरं प्रस्तौति—**अथवान्यामित्यादिनेति** । ननु यच्छब्दाद्यभावान्निमित्तस्यैवाप्रतीतेस्तद्विशेषविचारो न युक्त इत्यत आह—**नचेति** । कादाचित्कप्रवृत्तिप्रयोजकमेव निमित्तमिति भावः । **तत्रेति** । अपूर्वस्य साध्यतया प्रतीयमानस्य निमित्तत्वं न संभवति सिद्धतयावगम्यमानस्यैव भेदनादेर्भिन्ने जुहोतीत्यादौ निमित्तत्वात्, यागस्य तु वस्तुतः साध्यस्यापि करणतया सिद्धत्वेनावगम्यमानत्वाद्युक्तं निमित्तत्वमित्यर्थः । **ननु** यजेर्निमित्तत्वेऽप्यूहे किमायातमित्यत आह—**तुल्येति** । **यजेरिति** । इह यच्छब्दाद्यभावाद्यजेरपूर्वस्य वा निमित्तत्वं न केनापि शब्देनोच्यते किंतु धर्मप्रवृत्तेः कादाचित्कतयाऽऽर्थिकं निमित्तत्वम् । तदपि अपूर्वस्यैव तस्य साध्यतया साधनानुष्ठाने निमित्तत्वौचित्यात्, यजेस्तु सिद्धतयावगम्यमानस्य तदयोगादपूर्वस्य चानिष्पन्नस्यापि बुद्धौ विपरिवृत्तिमात्रेण

---

१ विशेषनिष्ठता.

पन्नमपि मनसि साध्यतया विपरिवर्तमानम्। तस्मादपूर्वार्थाः धर्मास्तन्निमित्ताश्च। विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिद्ध्यत्यूहः ॥

प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् ॥ २ ॥

**संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥ [तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥]**

**मुसलाद्युक्षणं हन्त्यै स्यादपूर्वाय वोक्षितः ॥ आद्यप्रकरणादन्त्यो व्यर्थं तत्स्यादिहान्यथा ॥ ५ ॥**
**मन्द्रादिकमपूर्वाय परायावान्तराय वा ॥ फलादाद्यो नो समं तल्लक्षणा तु विशिष्यते ॥ ६ ॥**

पूर्वाधिकरणे धर्माणामपूर्वार्थत्वं सप्तमाद्यसिद्धं स्मारितम्। ततएव च द्रव्यसंस्कारोऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम्। इदानीं तु तदेव श्रुत्यादिविरोधान्न संभवतीत्याशङ्क्योपपाद्यते। तत्रेह वाक्यसंयुक्तानां फलदेवतयोश्चेत्यत्र लिङ्गसंयुक्तानां द्रव्यसंख्याहेतुसमुदायमित्यत्र श्रुतिसंयुक्तानामपूर्वार्थत्वं प्रतिपाद्यते। दर्शपूर्णमासयोः श्रूयते 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टी'ति। तत्र प्रोक्षितशब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूतयोरुलूखलमुसलयोर्दृषदुपलयोश्च संस्कारकं गम्यमानं प्रोक्षणं यत्तयोः साध्यं तदर्थमित्यविवादम्। इदंतु चिन्त्यते यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं सत् प्रोक्षणं हन्तिपिष्यर्थमुत यदपूर्वसाधनत्वं तदर्थत्वादपूर्वार्थमिति। तत्र—'अवहन्तिश्रुतेस्तावदवघातः प्रतीयते ॥ तत्साधनत्वमेवातस्तृतीयातोऽवग-

---

'चर्मणि द्वीपिनं हन्ती'तिवन्निमित्तत्वं संभवतीत्यर्थः। अपूर्वनिमित्तत्वसाधनस्य फलमाह—**विकृतीति**। प्रकृतावपूर्वस्य निमित्ततायाः साध्यत्वावगमनिबन्धनत्वाद्विकृत्यपूर्वस्याप्यतिदेशेन धर्मसाध्यत्वावगमात्तदेव विकृतावघाताद्यनुष्ठापकं नतु व्रीह्यादिस्वरूपमिति सिद्ध्यत्यूह इत्यर्थः। यद्यपि प्रकृतौ यजेरुपादीयमानस्योद्देशासंभवेन निमित्तत्वाभावेऽपि व्रीह्यादीनामवघातादिषूद्दिश्यमानानां निमित्तत्वं नानुपपन्नं तथापि व्रीह्यादिस्वरूपस्य निमित्तत्वे आनर्थक्यापत्तेः प्रयाजादिषु क्लृप्तनिमित्तभावस्यापूर्वस्यैव निमित्तत्वमिति भावः। सूत्रार्थस्तु—यज्ञकर्मयजतिकार्यमपूर्वमित्यर्थः। तत्प्रधानं सर्वे धर्मास्तदर्था इत्यर्थः। हि यस्मात्तदेव चोद्यते तस्यापूर्वस्य द्रव्येषु संस्कारः अवघातादिस्तत्प्रयुक्तोऽपूर्वप्रयुक्तः अपूर्वार्थत्वादित्यपूर्वप्रयुक्तत्वं स्मार्यत इति पक्षे द्रव्यसंस्कारग्रहणं सर्वधर्मोपलक्षणार्थम्। एवं द्वितीयवर्णकद्वितीयव्याख्यानेऽपि प्रथमव्याख्याने तत्प्रयुक्तः अपूर्वसाधनत्वप्रयुक्तः तदर्थत्वादित्यर्थः। तृतीयव्याख्याने तु यथाश्रुतमेव। अथवान्यामित्याद्यन्तिमपक्षे तत्प्रयुक्तस्तन्निमित्त इति बोध्यम् ॥

**संस्कारे प्रयुज्यमानानां०** ॥ २ ॥ पुनरुक्तिं परिहरति—**पूर्वेति**। **तत इति**। तत्रैवेत्यर्थः। यद्यपि पूर्वाधिकरण एव सप्तमाद्यसिद्धमपूर्वार्थत्वं स्मारितं यद्यपि च तत्रैव संनिपातिनां प्रोक्षणादीनामप्यपूर्वार्थत्वं विशिष्याप्युक्तं तथापि तत्र संक्षेपेण प्रतिज्ञामात्रेण सिद्धं इहाशङ्कानिराकरणेन दृढीक्रियत इत्यर्थः। एवं सामान्येनाधिकरणत्रयस्यापुनरुक्तिमुक्त्वा परस्परमप्याह—**तत्रेति**। यद्यपि पूर्वाधिकरणे व्रीह्यादिस्वरूपं न विवक्षितं किंतु साधनविशेषमात्रमिति द्वितीयवर्णकप्रथमव्याख्यानोक्तमेवाधिकरणत्रये प्रपञ्च्यते इत्युक्तं, इह तु तृतीयव्याख्यानोक्तमपूर्वार्थत्वं प्रपञ्च्यत इति विरोधस्तथापि अपूर्वार्थत्वस्य साधनविशेषविवक्षापर्यन्तस्यैव प्रपञ्चनादुभयाविरोधः। **ननु** किं प्रोक्षणं हन्तिपिष्यर्थमुतापूर्वार्थमिति विचारो न युक्तः। प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्युलूखलमुसलविशेषणेन प्रोक्षितशब्देन तदर्थत्वस्यैव प्रतीतेर्हन्तिपिष्यर्थत्वकोटेरनुन्मेषादित्यतः संशयोपपादकत्वेनाह—**तत्रेति**। उलूखलमुसलयोर्दृषदुपलयोश्च वाक्यान्तरेणार्थाद्वा प्राप्तत्वात्तदुपसर्जनप्रोक्षणपरोयं शब्दः। तत्र यद्यपि उलूखलाद्यर्थं प्रोक्षणं प्रतीयते तथापि न तत्स्वरूपार्थं किंतु तृतीयान्तेन निर्देशादन्यसाधनभूतोलूखलाद्यर्थम्। तथाच तन्मुखेनोलूखलादिसाध्यं यत्तदर्थत्वे विवादाभावाद्धन्त्यादेरपूर्वस्य च साध्यत्वाविशेषाद्युक्तो विचार इत्यर्थः। अत्र किं प्रोक्षणं हन्तिपिष्यर्थमुतापूर्वार्थं, तदर्थं च किं तयोर्हन्तिपिषिसाधनत्वप्रयुक्तं प्रोक्षणमुतापूर्वसाधनत्वप्रयुक्तमिति चिन्ताद्वयमभिप्रेत्याह—**इदं त्विति**। पूर्वाधिकरणोक्तापूर्वार्थत्वाक्षेपात्संगतिः। **ननु** हन्त्यर्थत्वेऽपि प्रोक्षणस्यापूर्वार्थत्वं न विरुद्धं हन्तिशब्दस्यापूर्वसाधनत्वेनावघातसमर्पकत्वादित्याशङ्क्य पूर्वपक्षमुपपादयति—**तत्रेति**। अपूर्वसाधनपरत्वे लक्षणा स्यात्ततश्च तृतीयाबलेनावगम्यमानं साधनत्वमवघातत्वेनावघातविषयं निश्चीयते तेनैव रूपेणावघातस्य श्रुतत्वात्, एवंच तत्साधनीभूतोलूखलादिसंस्कारकत्वेन विधीयमानं प्रोक्षणं वाक्येन तदर्थमेव भवति। अपूर्वार्थत्वं तूक्तरीत्या वाक्येनालाभात्प्रकरणात्स्यात् तच्च दुर्बलमिति हन्तिपिष्यर्थमेवेत्यर्थः। **ननु** प्रकरणस्य दुर्बलत्वेऽपि विरोधाभावान्न बाधः हन्तिपिष्यर्थत्वेऽपि तद्द्वारापूर्वार्थत्वसंभवादिति शङ्कते—**हन्तीति**। **उभयेति**। हन्तिपदेनेवापूर्वप-

म्यते ॥ सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् ॥ एवं हन्त्यर्थतापूर्वशेषत्वं प्रक्रियावशात् ॥' नच वाक्यसंयुक्तस्य प्रकरणमीष्टे। हन्तिपिषिद्वारेणापूर्वार्थत्वादुभयमविरुद्धमिति चेदुभयान्वयासंभवात्। नहि प्रकरणाधीनत्वमात्रेण प्रकृतार्थता संभवति किं तर्हि प्रकृतेनैकवाक्यतां कल्पयित्वा। नच हन्तिपदेन प्रधानवाक्येन च युगपदेकवाक्यता संभवति। तत्रान्यतरे च ह्यातव्ये प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः। नच प्रोक्षणस्यानर्थक्यं हन्तेरपूर्वार्थत्वात्तदर्थमपि प्रोक्षणमपूर्वस्योपकरोत्येव। यथाधानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते तथा प्रोक्षणमपूर्वार्थस्य हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न क्रतुविध्येकवाक्यतां गच्छति। यच्च प्रधानवाक्यशेषभूतं तदेव विकृतावतिदिश्यते ततश्चावघातः क्रत्वङ्गत्वादतिदिश्यते न प्रोक्षणमतच्छेषत्वात्। अवघातस्तु गच्छन् स्वाङ्गं प्रोक्षणमाकर्षतीतिकृत्वा विकृतिषु[1] प्रोक्षणमनुष्ठीयते। नखनिर्भिन्ने तु चराववघातस्याभावान्न प्रोक्षणस्याकर्षणमस्तीति न नखेषु प्रोक्षणमूहितव्यम्। अथाप्यवघातद्वारेण क्रत्वङ्गप्रोक्षणं तथापि तत्स्वरूपमेव द्वारमिति तदभावान्नखेषु नास्ति प्रोक्षणमिति प्राप्तेऽभिधीयते —'अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम् ॥ विनापि प्रोक्षणं हन्ति रूपनिष्पत्तिदर्शनात् ॥ तद्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत् ॥ नहि तेन विना तस्य निष्पत्तिरवगम्यते ॥' तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्तमप्यवघातमतिक्रम्यापूर्वार्थतां प्रकरणादर्थयते। नच तदेकवाक्यतामन्तरेण तादर्थ्यं संभवति। नच हन्तिनापूर्वेण च पृथक्पृथगेकवाक्यता संभवति। प्रोक्षिताभ्यां हन्तिप्रोक्षिताभ्यामपूर्वं भावयेदिति वाक्यं हि तथा भिद्यते। तस्मादेवं द्रष्टव्यम्। हन्तेर्द्वे रूपे हन्तिरूपं तण्डुलनिर्वृतिप्रणाड्या चापूर्वजननव्यापारविशेषता। तत्र वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातः श्रौतस्य स्वरूपस्यान्यथापि संभवात्तेनात्मनाप्राधान्यासंभवादपूर्वजननव्यापारात्मना प्राधान्यं प्रतिपद्यते। तद्रूपस्य विनाप्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्तिशब्दः। एवमुलूखलमुसलयोरपि द्रष्टव्यम्। स्वरूपं हन्तिसाधनरूपं च विनापि प्रोक्षणं संभवतीति यत्तयोर्हन्तिश-

---

देनापि प्रोक्षणस्यैकवाक्यत्वाभावान्नोभयार्थत्वमित्यर्थः। **ननु** विनाप्येकवाक्यतां प्रकरणादेवापूर्वार्थतास्त्वित्यत आह—**नहीति**। तथासति गोदोहनादेरपि क्रत्वर्थत्वप्रसङ्गादिति भावः। अस्तु तर्ह्युभाभ्यामेकवाक्यतयोभयार्थत्वमत आह—**नचेति**। सिद्धान्ते वक्ष्यमाणरीत्या वाक्यभेदप्रसङ्गात्सकृच्छ्रुतस्योभयार्थत्वायोगाच्च युगपदुभयान्वयाभावादवश्यं ह्यातव्येऽन्यतरस्मिन्विलम्बितं प्रकरणं हित्वा झटिति प्रवर्तमानं वाक्यमेव स्वीकृत्य हन्तिनैवान्वय इत्यध्यवसीयत इत्यर्थः। प्रकरणं बाधित्वेत्यनेनैतद्दर्शयति क्रमेणापि नोभयान्वयः झटिति प्रवृत्तवाक्येन निराकाङ्क्षीकरणेन प्रकरणस्यैवानुन्मेषादिति। **नचेति**। येन दुर्बलमपि प्रकरणमनुरोध्यं स्यादिति भावः। **नन्वेवमपूर्वार्थत्वं** स्यादित्यत आह—**यथेति**। उपकारकत्वं शेषत्वं न भवतीति तृतीयसिद्धमित्यर्थः। **ननूपकारकतामात्रेणाप्यूहसिद्धिः** किं न स्यादित्यत आह—**यच्चेति**। अतिदेशाधीनो ह्यूहः अतिदेशश्चाङ्गभूतस्यैव नोपकारकमात्रस्येति गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यादित्यष्टमे प्रतिपादितत्वान्नास्योहः संभवतीत्यर्थः। **नन्वेवं** विकृतिषु क्वापि प्रोक्षणं न स्यादित्यत आह—**अवघातस्त्विति**। विकृतावपि यत्रावघातोऽस्ति तत्र प्रोक्षणानुष्ठानं नानुपपन्नमित्यर्थः। एवं प्रोक्षणस्यावघातार्थत्वसाधनफलमाह—**नखेति**। 'कृष्णानां व्रीहीणां नखनिर्भिन्नाना'मिति विहिते राजसूयान्तर्गत इति शेषः। अभ्युपगमवादेनाह—**अथापीति**। **स्वरूपमेवेति**। नत्वपूर्वसाधनरूपमिति शेषः। **तद्द्वारेणेति**। अत्रावघातस्य न स्वरूपेण द्वारत्वं विवक्षितं, तथासति द्वारभूतस्यावघातस्य विनापि प्रोक्षणं निष्पत्तिसंभवेन तत एवापूर्वस्यापि निष्पत्तेः। नहि तेन विना तस्य निष्पत्तिरवगम्यत इति हेत्वनन्वयप्रसङ्गात् किंतु वक्ष्यमाणेनापूर्वजनकव्यापारविशेषरूपेणेति ध्येयम्। अत्र न प्रयाजादिवत्प्रोक्षणस्य प्रधानवाक्येनैकवाक्यतयापूर्वार्थत्वं किंतु प्रोक्षिताभ्यामवहन्तीति। इदमेव वाक्यं प्रकरणसनाथमपूर्वार्थतां प्रतिपादयतीति वक्तुं पूर्वपक्षोक्तमनुमन्यते—**नचेति**। **तद्रूपस्येति**। तस्यालौकिकत्वादिति भावः। **तत्स्वरूपेति**। अपूर्वजननव्यापारविशेषस्वरूपेत्यर्थः। **ननु** हन्तिशब्दस्यापूर्वजननव्यापारविशेषपरत्वेऽपि प्रोक्षणस्य साक्षाद्धन्त्यर्थत्वेनाविधानादुलूखलमुसलसंस्कारकस्य तस्य कथमपूर्वार्थत्वमित्यत आह—**एवमिति**। अत्र उलूखलमुसलरूपप्रातिपदिकार्थो न विवक्षितः। तथा सति साधनविशेषविशिष्टोलूखलादेरुद्देश्यत्वे विशिष्टोद्देशदोषापत्तेः, साधनविशेषमात्रेणैवोद्देश्यप्रतीतिपर्यवसानाच्च, किंतु तृतीयार्थसाधनत्वमा-

---

[1] विकृतिष्वति.

ब्दावगतापूर्वव्यापारविशेषंप्रति साधनत्वं तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते । तदेष वाक्यार्थः—र्थेन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वं क्रियते तं व्यापारं प्रोक्षितेन साधनेन कुर्यादिति । तत्र नखनिर्भिन्ने चरौ विदलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वान्नखानां च तत्साधनत्वात्प्रोक्षणं सिद्ध्यति । **नन्वेवमवहन्तिशब्दे** उलूखलमुसलशब्दौ च लक्षणावृत्तयः[1] स्युः । सत्यम् । आनर्थक्याद्वरं लक्षणा । तस्मादपूर्वप्रयुक्तं प्रोक्षणम् ॥ **एवं वा** ॥ 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूया'दिति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्त उत दीक्षणीयापूर्वप्रयुक्त इति विचारः । तत्र—'फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत् ॥ स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवद्यतः ॥ फलवच्छेषता युक्ता नतु निष्फलशेषता ॥ तस्मात्तत्साधने रूपे स्वरभेदो विधीयते ॥' उच्यते—'एवमाश्रीयमाणे हि भवेल्लक्षितलक्षणा ॥ स्वापूर्वे लक्षणामात्रं तस्मात्तच्छेषता वरम् ॥ तच्छेषत्वेऽपि धर्मस्य नानर्थक्यं प्रसज्यते ॥ तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः ॥' फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेव न तादर्थ्येऽप्यानर्थक्यम् । **अदृष्टत्वाच्च** तद्रूपस्य[2] विनाधर्मैरवघातादिवत्सिद्ध्यनवगमात्संभवति प्रयोजकत्वमिति तादर्थ्यमेव युक्तम् । दीक्षणीया हि केनात्मना धर्मं गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रं गम्यते । तद्द्वारं तु परमापूर्वसाधनत्वं विलम्बितं, तस्मादवान्तरापूर्वप्रयुक्ता एवंजातीयकाः । एतेन प्रोक्षणाद्यङ्गानामुत्पवनादीनां तज्ज-

---

न्मम्, अतो विकृतावुलूखलमुसलस्वरूपाभावेऽपि सिध्यति प्रोक्षणमित्याशयेन वाक्यार्थं विशदयति—**तदेष इति** । प्रोक्षणस्यापूर्वार्थत्वसाधनफलमाह—**तत्रेति** । विदलनस्य तुषभेदनस्येत्यर्थः । **उलूखलेति** । नच हन्तिसमभिव्याहृततृतीयावगतसाधनोद्देशेन प्रोक्षणविधौ उलूखलमुसलशब्दयोरविवक्षैव न लक्षणेति वाच्यम् । तृतीयाया निष्कृष्य कारकशक्तिमात्राभिधायकत्वाच्छक्तेश्च संस्कार्यत्वायोगेनोलूखलमुसलशब्दयोस्तदाश्रयद्रव्यलक्षकत्वावश्यंभावादिति भावः । सूत्रार्थस्तु—संस्कारे हन्त्यादौ युज्यमानानां साधनत्वेन संबध्यमानानां प्रोक्षणादीनां हन्त्यादिप्रयुक्तता स्यात्तदर्थत्वादिति ॥ **एवं वा** ॥ वर्णकान्तरमाह—**यावत्येति** । पूर्वत्र हन्तिपिष्यर्थत्वे आनर्थक्यात्प्रोक्षणस्यापूर्वार्थत्ववदिहापि निष्फलदीक्षणीयापूर्वार्थत्वे आनर्थक्यात्फलवज्ज्योतिष्टोमापूर्वार्थत्वमित्युत्थितेः संगतिः । **फलवदिति** । दीक्षणीयार्थत्वे आनर्थक्यप्रसङ्गाद्दीक्षणीयाशब्देनावश्यमपूर्वं लक्षणीयं, तच्च परमापूर्वमेव नत्ववान्तरापूर्वमानर्थक्यतादवस्थ्यादिति भावः । आनर्थक्यं किं तेन विनापि सिद्ध्यवगमादुत निष्फलत्वात् । नाद्य इत्याह—**तस्यापीति** । न द्वितीय इत्याह—**फलापूर्वेति** । यजमानसंस्काररूपेत्यनेनापूर्वपदेन संस्कार एव विवक्षित इति सूचयन् दीक्षणीयायाः क्रत्वङ्गभूतनियमपरिपालनविषयकात्मनः संकल्पात्मकदीक्षाकर्तृभूतयजमानसंस्कारार्थतयापूर्वार्थत्वाभावाद्दीक्षणीयापूर्वप्रयुक्त इति सिद्धान्तः सर्वथा न युक्त इति शङ्कां परिहरति । वस्तुतस्तु संस्कारार्थत्वेऽपि दीक्षणीयाया अङ्गसाहित्यसिद्ध्यर्थमुत्पत्त्यपूर्वमवश्यं वाच्यमिति तदभिप्रायेणापि सिद्धान्तः संभवतीति ध्येयम् । **नन्वपूर्वार्थत्वाभावात्संस्कारस्य** कथं तदर्थत्वे आनर्थक्याभाव इत्याशङ्क्यापूर्ववत्संस्कारस्यालौकिकत्वाविशेषात्तदर्थत्वेऽपि नानर्थक्यमित्याह—**अदृष्टत्वादिति** । प्रागुक्तं लक्षितलक्षणमुपपादयति—**दीक्षणीयाहीति । केनेति** । स्वरूपेण धर्मग्राहकत्वे आनर्थक्यप्रसङ्गादस्ति केनेत्यपेक्षेति भावः । अत्र भाष्यकारेण पूर्वपक्षे 'त्रैधातवीया दीक्षणीये'त्यश्वमेधे आग्नावैष्णवलक्षणप्राकृतदीक्षणीयास्थानापन्नायामयं वाङ्नियमः प्रवर्तते । सिद्धान्ते तु त्रैधातवीयाया आग्नावैष्णवापूर्वसाधनत्वाभावात्तत्प्रयुक्तोऽयं न प्रवर्तते इति प्रयोजनमुक्तं, तत्तु आश्वमेधिकत्रैधातवीयायां नामधेयेन काम्यत्रैधातवीयाधर्मस्योपांशुत्वस्यैव प्राप्त्या दुर्बलेन चोदकेन स्वरविशेषप्राप्त्यसंभवादयुक्तम् । नच दुर्बलप्रमाणकस्यापि स्वरविशेषस्य प्रधानाङ्गतया प्रबलत्वान्नामधेयप्राप्तमुपांशुत्वं बाधित्वा स एव पूर्वपक्षे प्रवर्तते । सिद्धान्ते तु उभयोरपि दीक्षणीयार्थतया तुल्यत्वे नामधेयप्राबल्यमादायोपांशुत्वमेव प्रवर्तेत इति युक्तमेव प्रयोजनमिति वाच्यम् । वस्तुत आश्वमेधिकत्रैधातवीयायाः काम्यत्रैधातवीयापेक्षया प्रकरणान्तराम्नाने सत्यपि 'भिद्यते भावनामात्रं धात्वर्थो नाथजिश्रुते'रिति न्यायेन कर्मान्तरत्वाभावेन यथासिद्धकाम्यत्रैधातवीयाया एव दीक्षणीयायाः कार्ये यजमानसंस्कारे विधानेन पूर्वपक्षेऽपि त्रैधातवीयायामुपांशुत्वस्यैव प्राप्तेः स्वरविशेषप्राप्त्यसंभवादिति वार्तिककारेण दूषितम् । तस्मादत्रोदाहरणे प्रयोजनाभावादुदाहरणान्तरे प्रयोजनं द्रष्टव्यमित्यभिप्रायेणोक्तम् । **एवंजातीयका इति । एतेनेति** । प्रत्यासन्नत्वेनेत्यर्थः ।

---

१ लक्षणावृत्त्या स्युः. २ अदृष्टरूपत्वाच्च.

न्यव्रीह्यादिसमवेतापूर्वप्रयुक्तत्वं व्याख्यातम् । आरादुपकारकप्रयाजाद्यङ्गानां तदपूर्वप्रयुक्तत्वम् । संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते ॥ प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम् ॥

फलदेवतासंबद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् ॥ ३ ॥

## फलदेवतयोश्च ॥ ४ ॥ [न चोदनातो हि ताद्गुण्यम् ॥ ५ ॥]

**अगन्मादेः स्वर्गदेवौ हेतू यद्वात्र चोदितम् ॥ आद्यो लिङ्गान्मैवमङ्गस्यापूर्वाकाङ्क्षितत्वतः ॥ ७ ॥**

'अगन्म सुवः सुवरगन्म, अग्नेरहमुज्जितिमनूज्जेष'मिति दर्शपूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ उत यद्दर्शपूर्णमासापूर्वसाध्यं स्वरूपं फलस्याग्नेश्च तदीयदेवतास्वरूपं तच्छेषौ सन्तावेतौ मन्त्रावपूर्वप्रयुक्ताविति—'तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः ॥ फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ अग्न्यादेर्याच्यमानस्य फलदायित्वसंभवात् ॥ तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ सत्यं फलस्य सर्वस्मात्प्राधान्यं नतु तावता ॥ मन्त्रस्तद्रूपशेषः स्यादानर्थक्यप्रसङ्गतः ॥' नहि मन्त्रेण प्रकाशितमात्रं फलं सिद्ध्यतीति प्रमाणमस्ति । तेन क्रतुमतिलङ्घ्य स्वार्थत्वं तावन्मन्त्रस्यानाशङ्क्यम् । प्रकरणाम्नानात्तु प्रकृतक्रतुशेषः संस्तद्द्वारेण फलार्थः स्यात्ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते । नहि क्रत्वङ्गं तदपूर्वातिलङ्घनेन फलं यावन्नेतुं युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि मन्त्रेण प्रकाशितमात्रात्फललाभो निष्प्रमाणक एवेति क्रत्वन्वयित्वेनैव प्रकाश्यत्वमङ्गीकर्त-

---

**प्रयाजेति**। प्रयाजादेस्तदङ्गानां चेत्यर्थः । **ननु** व्रीह्यादिसमवेतस्य संस्कारस्य कथमपूर्वत्वं तदभावे वा कथं प्रयोजकत्वमित्याशङ्क्याह—**संस्कारोऽपीति** । अलौकिकत्वादपूर्वोक्तिः गौणी अलौकिकत्वादेव च प्रयोजकत्वमपीत्यर्थः । अत्र वर्णके सूत्रे संस्कारशब्देन दीक्षारूपो यजमानसंस्कारो विवक्षितः तच्छब्देन च परमापूर्वं विवक्षितमिति बोध्यम् ॥

**फलदेवतयोश्च** ॥ ४ ॥ पूर्वत्र यथा परमापूर्वार्थदीक्षणीयापूर्वार्थत्वं वाङ्नियमस्य न परमापूर्वार्थत्वं एवं मन्त्रस्याप्यग्न्याद्यर्थत्वं न तद्द्वारा दर्शपूर्णमासापूर्वार्थत्वमित्युत्थितेः संगतिः । **किमिति** । किं स्वर्गत्वादग्नित्वाच्च मन्त्रप्रकाश्यत्वं ततश्च तत्स्वरूपार्थौ सन्तौ तत्प्रयुक्तौ उत दर्शपूर्णमासापूर्वसाध्यत्वात्तदीयदेवतात्वाच्च स्वर्गाग्न्योर्मन्त्रप्रकाश्यत्वमित्यपूर्वार्थौ सन्तावपूर्वप्रयुक्ताविति संशय इत्यर्थः । **ननु** स्वर्गादिस्वरूपमात्रशेषत्वे आनर्थक्याद्दुर्बलेनापि प्रकरणेनापूर्वशेषत्वं वाच्यमत आह—**फलस्येति** । लोकेऽदृष्टस्वरूपेण स्वर्गार्थत्वेऽप्यानर्थक्याभावादपूर्वापेक्षयापि प्रधानस्यापूर्वसंबन्धानादरेण स्वयमेव मन्त्रान्वयसंभवाच्च तदर्थत्वेऽपि नानर्थक्यमित्यर्थः । **अग्न्यादेरिति** । यद्यपि 'अग्नेरुज्जितिमूर्ध्वलोकविषयं जयमहमनूज्जेषमनुसृत्योर्ध्वं जयेयं यादृशमैश्वर्यमग्नेरूर्ध्वलोके तादृशं ममात्र भूयादिति स्वजय एव प्रार्थ्यते नाग्निः तथापि स्वजयोऽप्यनेनाग्नियागेन प्रार्थ्यत इति अग्नेर्याच्यमानत्वं, ततश्च क्रत्वपूर्वासंबन्धिनोऽप्यग्नेः स्वयं फलदातृत्वसंभवान्नानर्थक्यमित्यर्थः । **सत्यमिति** । फलस्य प्राधान्यात्क्रतुसंबन्धानादरेण साक्षात्फलार्थत्वे मन्त्रेण प्रकाशनमात्रेण फलसिद्धिः स्यान्नच सास्तीत्यानर्थक्यात्फलार्थत्वमिच्छतापि प्रकरणबलात्क्रत्वपूर्वं द्वारमेष्टव्यम् । ततश्चावश्यकतच्छेषत्वसंभवान्न तदुल्लङ्घनेन फलशेषत्वमिति न तत्प्रयुक्तत्वमित्यर्थः । **एवमिति** । अग्न्यादेरप्युत्तराधिकरणरीत्या फलदातृत्वमेव नास्ति । अस्तु वा फलदातृत्वं तथापि मन्त्रेणाशासनमात्रेण फलं ददातीत्यत्र प्रमाणाभावादग्निस्वरूपार्थत्वे आनर्थक्यं स्यादेव । ततश्च क्रत्वपूर्वान्वयित्वेनैव प्रकाश्यत्वमङ्गीकार्यमिति तच्छेषत्वमेवेत्यर्थः । **ननु** क्रत्वन्वयित्वेन स्वरूपेण मन्त्रप्रकाश्यत्वे स्वर्गाग्न्यादिस्वरूपमात्रप्रकाशकस्य मन्त्रस्य लक्षणा स्यात्ततश्च मन्त्राणां मुख्य एवार्थे विनियोग इति तृतीयन्यायो निर्विषयः स्यादित्याशङ्क्य न वयं क्रत्वपूर्वीयत्वेन रूपेण मन्त्रो बोधयतीति वदामः येन लक्षणा स्यात् किंत्वग्नित्वादिनैव । इदं तु परं वदामः अग्नित्वेनाग्निप्रकाशनमपि न तत्स्वरूपप्रयुक्तं आनर्थक्यप्रसङ्गात् किंत्वपूर्वीयदेवतात्वप्रयुक्तमिति । तेनानेन मन्त्रेण फलदेवताप्र-

---

१ स्वर्गस्यादृष्टरूप, २ भवतीति, ३ स्वर्गार्थत्वं.

व्यम् । तस्मादेवं द्रष्टव्यम् । मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति । ततश्च विकृतौ फलान्तरदेवतान्तरवत्यां 'अगन्मह्यवर्चसं सूर्यस्याह मुज्जितिमनूज्जेष'मित्यूहनीयम् । तथाहि प्रकृतिवत्कृतं भवतीति ॥

धर्माणामदेवताप्रयुक्तत्वाधिकरणम् ॥ ४ ॥

**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ [आर्थापत्त्यात् ॥ ७ ॥ ततश्च तेन संबन्धः ॥ ८ ॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥]**

देवः प्रयोजकोऽपूर्वं वाद्योऽस्य फलदत्वतः ॥ न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥ ८ ॥

एवं तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणेत्युक्तम् । इदानीं तु नास्याः फलदायित्वं नापि प्राधान्यमिति प्रतिपाद्यते । सर्वपूर्वोक्ताक्षेपेणेदमारभ्यते पूर्वापह्नवात्तदिहैतद्विचार्यते— किं यागो देवताराधनार्थः, अस्याश्चाराधितायाः फलं उतापूर्वद्वारं यागस्य साधनत्वमिति । तत्र— 'इन्द्रादेः संप्रदानत्वात्कर्मणोऽपि प्रधानता ॥ यागः पूजा तदङ्गः स्यादतिथेर्भोजनं यथा ॥' कर्मकारकं हि क्रिययेप्सिततमं प्रधानम् । तेनापि व्याप्यमानं संप्रदानम् । ततोऽपि प्रधानं संप्रदानं च देवता । तस्मात्प्रधानं यागश्च देवतापूजा । साच लोके पूज्यमानार्था अतिथिभोजनादिवत् । अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति युक्तम् । एवंच लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति । अवश्यं च यागस्यापि फलसाधनत्वं केनचिद्द्वारेणाश्रयितव्यं स्वरूपस्य भङ्गुरत्वात्, तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तं नत्वत्यन्ताप्रतीतापूर्वकल्पनम् । श्रूयते हि 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति'[2] इति 'दधत्पोषं

---

काशनद्वारापूर्वं कुर्यादिति मन्त्रविनियोगः पर्यवस्यतीत्याशयेनाह—**तस्मादिति** । एवंच ग्रन्थेषु क्वचिल्लक्षणोक्तिरपूर्वपर्यवसानाभिप्रायेति बोध्यम् । केचित्तु अपूर्वसाधनत्वेन रूपेण लक्षणया मन्त्रप्रकाश्यत्वमग्न्यादीनामित्याहुः । तन्न । तथासति सूर्यादिशब्दस्यापि विकृतावपूर्वीयत्वेन सूर्यादिलक्षकत्वं स्यात्तश्च लक्षणावश्यंभावे प्रकृतिक्लृप्ताग्न्यादिपदस्यैवापूर्वीयत्वेन लक्षणया सूर्यादिप्रतिपादकत्वसंभवादविकृत एव प्रयोगः स्यात् । किंच सत्यप्यूहे तरसमयेषु मांसशब्दस्येव शक्त्याऽपूर्वीयत्वेन रूपेण वैकृतदेवताप्रतिपादकशब्दस्यैव प्रयोगात्मक ऊहः स्यात्सर्वथा सूर्यादिपदप्रक्षेपात्मक ऊहो न स्यात् । किंच 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रस्य यवेषु निवृत्तिर्न स्यात् । उक्तंच तन्त्ररत्ने 'मुख्ययैव वृत्त्या प्रकाशयतीति । विचारस्य फलमाह—**ततश्चेति** । फलदेवतयोश्च प्रयोजकत्वमिति सूत्रार्थः ॥

**देवता वा प्रयोजयेत्०** ॥ ६ ॥ अवान्तरसंगतिमाह—**एवमिति** । फलदायित्वेपि देवतायाः स्वरूपेण प्रयोजकत्वं नेत्युक्तमित्यन्वयः । **प्राधान्यमिति** । प्राधान्येऽपि प्रयोजकता न स्यादिति पूर्वोक्तापूर्वप्रयोजकत्वमाक्षिप्य समर्थ्यत इति संगतिः । प्रकारान्तरमाह—**सर्वेति** । एवंच यद्यपि सर्वोपयुक्तत्वादादावेवायं विचारो युक्तस्तथाप्युक्तावान्तरसंगतिवशादिह कृत इति भावः । **तदिहेति** । किं देवताराधनार्थो याग उत फलार्थः । यदा फलार्थः तदा किं देवताप्रसादो द्वारमुतापूर्वमिति चिन्त्यत इत्यर्थः । **इन्द्रादेरिति** । यत्र चतुर्थी तत्र तद्बलादेव संप्रदानत्वं यत्रापि तद्धितस्तत्रापि तस्य देवतार्थकत्वाद्देवतात्वस्य त्यज्यमानहविःप्रत्युद्देश्यत्वरूपत्वादस्तीन्द्रादेः संप्रदानत्वम् । एवं मन्त्रवर्णेऽपि द्रष्टव्यम् । तथाचेन्द्रादेः संप्रदानत्वेन क्रियाप्रधानभूतकर्मकारकापेक्षयापि प्रधानत्वाद्यागस्य पूजारूपत्वाच्च देवताङ्गत्वमित्यर्थः । **यागश्चेति** । 'यज देवपूजासंगतिकरणदाने'ष्विति शाब्दस्मरणात्तत्रापि प्रसिद्धिप्राचुर्यात्पूजार्थत्वं यजेरित्यर्थः । **अत इति** । पूजा याग इत्युक्तं पूजा चाराधना । ततश्च देवताराधनात्मको यागो नाराधनार्थः, तथापीहाराधनाशब्देन पूजाजन्य आराध्यगतप्रीतिरूपव्यापारविशेषो विवक्षित इति न दोषः । कथं तर्हि फलसिद्धिरित्यत आह—**सेति** । आराधितायाः देवतायाः फलदातृत्वे प्रमाणमाह—**एवंचेति** । पूजितस्य फलदातृत्वं गुर्वादौ दृष्टमिति तद्वदेव प्रकृतेऽपीति भावः । एवं यागस्य देवताराधनार्थत्वमेव, अस्तु वा फलार्थत्वं तथापि देवताप्रसाद एव द्वारं अर्थवादावगतप्रसादस्यैव द्वारत्वौचित्यात् नतु सर्वथानवगतापूर्वस्य । अतएव रात्रिसत्रे अर्थवादावगतप्रतिष्ठाया एव फलत्वमङ्गीकृतं नत्वत्यन्तानवगतस्वर्गस्येत्याह—**अवश्यं चेति** । नच देवताप्रसादार्थत्वे धर्माणामानर्थक्यं येनापूर्वकल्पना स्यादित्याशयेनाह—**शब्देति** । अलौ-

---

१ वक्तव्यम्, २ तर्पयति, दधन्.

रयिम'पीतिशब्दैकगम्यत्वाच्च देवताप्रसादस्य स एवापूर्ववद्धर्माणां प्रयोजकः फलसाधनं चेत्येवं प्राप्ते ब्रूमः—'यागस्यैव पदश्रुत्या फलसाधनतोच्यते ॥ देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ॥ यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् ॥ गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥' प्रत्ययाभिहिता हि भावना पुरुषार्थं भाव्यमपेक्षमाणा पदगतमपि यागमयोग्यत्वादुपेक्ष्य वाक्यादुपनीतं स्वर्गादि गृहीत्वा तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणं गृहीत्वेत्थंभावापेक्षायां द्रव्यं देवतभूतं भव्ययागनिर्वर्तनसमर्थं तादर्थ्येन गृह्णन्ती देवतां यागार्थां करोति। नच प्रागवगतदेवतायाः फलार्थत्वं येन तदाराधनाय यागविधिः स्यादेवंच शब्देन तावद्यागात्फलं गम्यते। यत्त्वतिथिवदित्युक्तं युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात्। अपिच तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि। नह्यसौ स्वर्गादिप्रदानायेष्टे। तस्माद्यागवद्भोजनादेव फलम्। एवं विशिष्टसंप्रदानकदानेऽपि तथा यागेऽपि। यद्यपि देवता विग्रहवती परिगृह्य भुक्त्वा तृप्यति प्रसीदति च तथापि यागादेव फलं विग्रहवती चानित्या स्यात्। तथाच नित्यवेदविषयत्वं न स्यात्। सत्यपि विग्रहे प्रवृत्तस्य हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम्। नचाभुञ्जाना प्रसीदतीति युक्तम्। अतएवाप्रतिपन्नापूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तम्। नहि तस्याः प्रसादः संभवतीत्युक्तम्। यत्त्वस्या यागसाधनद्वारा फलनिर्वृत्त्युपयोगित्वं तदभिप्रायादेव देवतायाः फलदायित्ववादः सेनापतिना ग्रामो दत्त इत्यादिवत्। तत्तन्मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरणक्रत्वनुष्ठानब्रह्मास्त्रादिमन्त्रतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मण एव फलं गम्यते। मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम। किंच स्तोकमण्डूकादीनां तिरश्चामचेतनानां चौषधिवनस्पतीनामश्वानां गवां च हनुदन्तानामश्वरूपाणां च कृष्णश्वेतादीनामश्वचरितानां चैंकारशकृत्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्दधीत। किंच 'सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रियं ददाति पयसा पशु'मिति को हेतुरन्यदतो वस्तुस्वभावात्। यावकभोजनानशनादिभिश्च किमिति देवतास्तृप्यन्ति किमिति वा सुरापानादिभिः क्रुध्यन्ति येनाभ्युदयं

---

किकत्वस्योभयत्र तुल्यत्वात्स एव प्रयोजक इत्यर्थः। **फलसाधनमिति**। तथाच स एव द्वारमिति भावः। **यागस्यैवेति**। नतु देवताया इत्यर्थः। यागस्य फलसाधनत्वेन देवतायाः प्राधान्यासंभवाद्यागार्थत्वमेवेत्याह—**देवताया इति**। ननु देवतासंप्रदानत्वात्प्रधानमित्युक्तमित्यत आह—**यागश्चेति**। पदश्रुत्या फलसाधनत्वेनावगतस्य यागस्यानिष्पन्नस्य साधनत्वायोगान्निष्पत्त्यपेक्षायां सिद्धतया देवताया निष्पादकत्वेनैवान्वय इति गुणभाव एव प्राधान्यं तु कारकभावापत्तार्थिकं न चोदनागम्यं पदश्रुतिगम्ययागकरणत्वविरोधादिति भावः। यागस्य पूजात्वात्पूज्यमानदेवताराधनार्थत्वमुक्तं निरस्यति—**नचेति**। तथाच तदर्थत्वे आनर्थक्यप्रसङ्ग इति भावः। शाब्दस्मृतिश्चोद्देश्यत्वमात्रनिबन्धनेति द्रष्टव्यम्। **प्रमाणान्तरादिति**। प्रत्यक्षादेर्भोजनेन तृप्त्यनवगमादित्यर्थः। विग्रहादिमत्त्वेऽपि न प्राधान्यमित्युक्तम्। संप्रतीन्द्रादिशब्दानां वज्रहस्ताद्युपलक्षितविग्रहविशिष्टात्मविशेषवाचित्वेऽपि विग्रहस्य कृतकत्वेनानित्यतया तद्विशिष्टदेवताप्यनित्येति न नित्यवेदविषयः स्यादित्याह—**विग्रहवतीति**। ननु 'बबरः प्रावाहणि'रित्यादिवद्वेदविषयत्वमनित्यत्वेऽपि स्यादित्यत आह—**सत्यपीति**। प्रत्यक्षेणाग्नौ भस्मीभावावगमान्मधुकरन्यायेन रसमात्रग्रहणे प्रमाणाभावाच्चेति भावः। **नहीति**। तथाचाप्रतिपन्नत्वेऽपि प्रमाणान्तराविरोधादपूर्वस्यैव द्वारत्वमिति भावः। कथं तर्हि मन्त्रार्थवादादौ दातृत्ववादोऽत आह—**यत्त्विति**। यागनिर्वृत्तिद्वारा फलौपयिकत्वमात्रेण गौणोऽयं वादः। एवं विग्रहवत्त्वादिवादोऽप्यौपचारिक इति बोध्यम्। **तत्तन्मन्त्रार्थवादेति**। देवतानां देवतान्तराभावात्कर्मणएव फलमित्यर्थः। कथं तर्हि लोके देवतायाः फलदातृत्वप्रसिद्धिरित्यत आह—**मन्देति**। **श्रूयमाणानामिति**। अश्वमेधे इति शेषः। **ननु** तदभिमानिदेवतामादाय तन्निर्वाह इत्यस्वरसादाह—**किंचेति**। **अन्यदत इति**। स्वपक्षे च दध्यादिद्रव्यभेदेन फलभेदस्य चोदनाप्रमाणकत्वान्न स्वभावमूलकत्वमिति भावः। तस्माद्देवतायाः विग्रहहविःस्वीकारतद्भोजनतृप्तिप्रसादलक्षणविग्रहादिपञ्चकाभावाद्देवताप्रयुक्तत्वाभाव-

---

१ रयिं धनम्. २ तस्माद्भोजनादेव. ३ ततश्च. ४ तथाच स्तोगमण्डू. ५ किंचासौ चाग्नि. ६ कुप्यन्ति.

प्रत्यवायं च कुर्वन्ति कर्तुः । अप्येवमादिषु कर्मण एवापूर्वद्वारं फलं तथा सर्वत्रास्तु । तस्मादपूर्वप्रयुक्ता धर्माः ॥

प्रोक्षणादीनामपूर्वप्रयुक्तताधिकरणम् ॥ ५ ॥

**द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥ [अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥ अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥ अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥ तद्युक्तस्येति चेत् ॥ १६ ॥ नाश्रुतित्वात् ॥ १७ ॥ अधिकारादिति चेत् ॥ १८ ॥ तुल्येषु नाधिकारः स्यादचोदितश्च संबन्धः । पृथक्सतां यज्ञार्थेनाभिसंबन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥]**

व्रीह्यादयः प्रयोक्तारोऽपूर्वं वा प्रोक्षणादिषु ॥ वाक्यश्रुतिभ्यामाद्यः स्याच्चोदिताकाङ्क्षयान्तिमः ॥ ९ ॥

वाक्यसंयुक्तानां लिङ्गसंयुक्तानां चापूर्वप्रयुक्तिर्व्याख्याता । यत्त्वत्यन्तबलीयस्या श्रुत्या संयुक्तं तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामप्यपूर्वार्थता प्रतिपाद्यते । अथवा स्वरूपातिक्रमेण साधनसंबन्धे स्रुवादिष्वतिप्रसङ्गमाशङ्क्य निराक्रियते । दर्शपूर्णमासयोः श्रूयते 'व्रीहीन्प्रोक्षती'ति । तत्र संशयः किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणमुतापूर्वप्रयुक्तमिति । यद्व्रीहिपदाभिधेयं स्वरूपं तन्मात्रपर्यवसितं प्रोक्षणं विधीयते, तन्मात्रं च क्रत्वङ्गमुत यत्तेषां साधनरूपं व्रीहिभिर्यजेतेत्यनेनावगतं तेन प्रोक्षणं संबध्यते प्रोक्षितैर्यजेतेति| स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादतद्विशेषणस्य च तद्विकारेष्वतिदेशाभावान्न प्रोक्षणस्य विकृतिष्वतिदेशः । व्रीहिमात्रं त्वतिदिश्यते तदतिदिष्टं स्वाङ्गभूतं प्रोक्षणमनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव । नीवारादिभिस्तु विनिवर्तितेषु व्रीहिषु प्रोक्षणमुपदेशातिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति । यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणं तदायमर्थः प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कु[र्या]दिति । ततश्च नीवारहविष्कायां विकृतिभावनायां तद्वच्छब्देन प्राकृतभावनेत्थंभावे सकलेऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निवर्तितेऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशादेषोऽर्थो भवति प्रोक्षितैर्नीवारैर्यजेतेति । ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति ।

---

दपूर्वप्रयुक्तत्वमित्युपसंहरति—**तस्मादिति** । प्रयोजनं देवतायाः प्राधान्ये तत्सामान्यमेव बलवदितीन्द्रपुरोडाशे सांनाय्यविधयन्तः । सिद्धान्ते तु हविःसामान्यादाग्नेयविधयन्तः । तथा पूर्वपक्षे मन्त्राणां देवतास्वरूपप्रयुक्तत्वादनूहः । सिद्धान्ते त्वपूर्वप्रयुक्तत्वादूहः । किंचास्याधिकरणस्यापूर्वद्वारतासाधकत्वादपूर्वाधीनं सर्वं प्रयोजनमिति । सूत्रार्थस्तु—देवतैव सर्वान्धर्मान्प्रयोजयेत् भोजनस्य यागस्य इदं हविः देवता भोक्ष्यत इति क्रियमाणत्वाद्यागस्य भोजनशब्देन निर्देशः । देवतार्थत्वाद्भोजनस्य भोक्त्रर्थत्वे दृष्टान्तोऽतिथिवदिति ॥

**द्रव्यसंख्याहेतुसमुदायं०** ॥ ११ ॥ पदश्रुतिबलाद्यागस्य साधनत्ववद्द्वितीयाश्रुतिबलाद्व्रीहिस्वरूपार्थत्वमित्युत्थितेः संगतिः । हन्तिपिष्यधिकरणेन फलदेवताधिकरणेन चगतार्थतामाह—**वाक्येति** । ननु प्रकरणापेक्षया वाक्यलिङ्गयोरपि बलवत्त्वमस्त्येवात्यन्तविशेषणकृतः श्रुतेर्न कश्चिद्विशेष इत्यस्वरसादाह—**अथवेति** । अस्मिन्पक्षे तदप्यत्रोदाहरणमिति ध्येयम् । अत्र स्रुवादिष्वित्यनेनाज्यौषधिसांनाय्यधर्माणामुत्पत्त्यपूर्वप्रयुक्ततया यथासंयोगं व्यवस्थां तृतीयसिद्धामङ्गीकृत्योत्पत्त्यपूर्वसाधनत्वस्य स्रुवादिष्वपि सत्त्वादतिप्रसङ्गमाशङ्क्य निराक्रियत इति तेषामर्थाधिकरणेनाप्यगतार्थत्वं सूचितम् । ननु व्रीहिद्वारैवापूर्वार्थत्वाङ्गीकारेण सिद्धान्तेऽपि व्रीह्यर्थत्वानपायादयं संशयोऽनुपपन्न इत्याशङ्क्य संशयस्य तात्पर्यमाह—**यदिति । तन्मात्रेति** । नत्वपूर्वपर्यवसितमित्यर्थः । **तन्मात्रं चेति** । व्रीहिस्वरूपमात्रं क्रत्वङ्गं न प्रोक्षणमित्यर्थः । साधनान्वयपक्षे तु प्रोक्षणस्यापि क्रत्वङ्गमित्याशयेनाह—**प्रोक्षितैरिति** । चिन्तायाः प्रयोजनमाह—**स्वरूपेति** । स्वरूपमात्रपर्यवसितप्रोक्षणस्य क्रतुभावनेत्थंभावसंबन्धाभावेन तद्विशेषणत्वाभावादतिदेशो न स्यादित्यर्थः । **नन्वेवं** क्वापि विकृतौ प्रोक्षणं न स्यादित्यत आह—**तदिति । यदात्विति** । साधनप्रयुक्तत्वपक्षे प्रधानभावनेत्थंभावगृहीतत्वान्नीवारादिभिः प्रत्याम्नातैः व्रीहिषु निवर्तितेष्वपि प्रोक्षणस्य व्रीह्यर्थत्वाभावेन तन्निवृत्त्या निवृत्त्ययोगात्क्रत्वर्थतया प्रवृत्तिरप्रत्यूहेति

---

१ तत्र नैवारहविष्कायां भावनायां.

तथा 'त्रीन्परिधी'निति मन्त्रः किं त्रित्वसंख्याप्रयुक्त उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्त इति । इदं तु लिङ्गविनियोगत्वादिहानुदाहरणम् । अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणम् । तथा 'चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्या'मित्यभिमर्शनं किं पौर्णमास्यमावास्यासमुदायप्रयुक्तं उतापूर्वप्रयुक्तमिति । तथा चातुर्मास्ये श्रूयते 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति किमन्नकरणप्रयुक्तो होमोऽन्नकरणानां शूर्पदार्विपिठरादीनामङ्गं उतारादुपकारकोऽपूर्वार्थ इति विचारः । ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य शङ्कितव्या । उच्यते 'तेन ह्यन्नं क्रियते' इति हेतुनिर्देशोऽयं हिशब्दश्रुत्या गम्यते । व्याप्यश्च हेतुर्भवति प्रधानं चाङ्गेन व्याप्यते नाङ्गं प्रधानेन । यत्र प्रधानं तत्राङ्गं न यत्राङ्गं तत्र प्रधानम् । तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमानमन्नकरणं प्राधान्येनावसीयत इति होमस्तदर्थ इत्याशङ्का । 'तत्र श्रुतिबलीयस्त्वाद्व्रीह्यादिद्रव्यशेषता ॥ प्रक्रियावगता पूर्वशेषत्वस्यावबाधिनी ॥ व्रीह्यादिरूपशेषत्वे सत्यानर्थक्यमापतेत् ॥ प्रोक्षणस्य विनाप्यस्मात्तत्स्वरूपस्य सिद्धितः ॥ तस्मात्साधनरूपं यद्व्रीहीणां शास्त्रचोदितम् ॥ तेन रूपेण संबन्धः प्रोक्षणादेर्विधीयते ॥' शक्नुवन्ति हि व्रीहयः शास्त्रान्तरावगतमात्मीयमपूर्वसाधनत्वं हवीरूपत्वं च लक्षणयावगमयितुम् तेनात्मना प्रोक्षणं गृह्णन्ति। हवीरूपस्य च विवक्षितत्वान्नातिप्रसङ्गः। यदि पुनरे-

---

सिद्ध्यत्यूह इति भावः । सूत्रोपात्तद्रव्यप्रयोजकत्वमुदाहृत्य संख्यादिप्रयोजकत्वं क्रमेणोदाहरति—**तथेति** । **त्रीनिति** । 'त्रीन्परिधीन्, तिस्रः समिध' इत्यादि मन्त्र इत्यर्थः । **अपूर्वप्रयुक्त इति** । तथाच परिधिद्वययुक्ते महापितृयज्ञादावूह इति भावः । **इदं त्विति** । त्रीनिति मन्त्रस्य त्रित्वविशिष्टपरिधिप्रकाशनसामर्थ्येन तत्र विनियोगः न तत्र विनियोजिका श्रुतिरस्ति । त्रीनिति मन्त्रगताया द्वितीयायाः श्रुतेः स्वात्मनि क्रियाविरोधेन मन्त्रविनियोजकत्वाभावादिति भावः । **अतिप्रसङ्गेति** । अत्र केचिदपूर्वीयमात्रनिवेशेऽप्यस्य मन्त्रस्यान्यत्र सामर्थ्याभावेनातिप्रसङ्गाभावात्तन्निराकरणपक्षेऽप्युदाहरणत्वं न युक्तम् । नचाग्नेन्द्रीन्यायः वाचनिकविनियोगाभावात्तस्मादिदं चिन्त्यमित्याहुः । तत्र मास्तु वाचनिकविनियोगस्तथापि लिङ्गबलाच्छ्रुतिः कल्पनीया । साचास्मिन्पूर्वपक्षे त्रीन्परिधीनित्यनेन मन्त्रेणापूर्वीयं प्रकाशयेदिति वाऽपूर्वीयसंख्यां प्रकाशयेदिति वा कल्पनीया । तत्त्वपूर्वीयपरिधित्रित्वसंख्यां प्रकाशयेदिति विशिष्टानुवाददोषप्रसङ्गात् । यत्रापि व्रीहीन्प्रोक्षतीत्यादौ श्रौतो विनियोगस्तत्राप्यपूर्वीयमात्रमेवोद्देश्यं नतु तण्डुलनिष्पत्तिप्रनाडिकयापूर्वीयं विशिष्टानुवाददोषप्रसङ्गात् । तथाच स्रुवादिष्वतिप्रसङ्ग इति पूर्वःपक्षो वर्णनीयः । अयं च प्रकारो लैङ्गिकविनियोगेऽपि तुल्यस्तथाचैन्द्रीन्यायेनापूर्वीयमात्रे गौणो विनियोगः स्यादेवेत्यतिप्रसङ्गनिराकरणपक्षे युक्तमुदाहरणत्वमिति । **तथेति** । समुदायप्रयुक्तत्वे पार्वणहोमवदनतिदेश इतरथा त्वतिदेश इति प्रयोजनं द्रष्टव्यम् । **नन्विति** । प्रत्युत शूर्पस्य गुणत्वमेवावगम्यत इति भावः । ननु धूमाग्न्यादिवदिह व्याप्तिर्न प्रमाणसिद्धेत्याशङ्क्य हिशब्दश्रुतिबलादेव यद्यदन्नकरणं तत्तद्धोमेन संबद्धयितव्यमिति व्याप्तिवचनं कल्प्यमित्याशयेनाह—**तस्मादिति** । सिद्धान्तमाह—**व्रीह्यादीति** । ननु साधनरूपवाचकशब्दाभावान्न तादर्थ्यमित्यत आह—**शक्नुवन्तीति** । नन्वपूर्वसाधनशेषत्वे स्रुवादिष्वतिप्रसङ्गः । नच व्रीहिस्वरूपमपि शक्यं विवक्षितुं, सकृदुच्चरितव्रीहिशब्दस्योभयपरत्वासंभवात् यवसाधारण्याभावप्रसङ्गाच्च । नच तण्डुलपिष्टादिप्रणाडिकया यदपूर्वसाधनत्वं तच्छेषत्वमिति न दोष इति वाच्यम् । तथासति चरौ पेषणाभावेन प्रोक्षणं न स्यात् । नच तण्डुलनिष्पत्तिद्वारकत्वमेव विवक्षितम्, एवमपि लाजेषु प्रोक्षणं न स्यात् सर्वेष्वपि पक्षेषु विशिष्टानुवाददोषप्रसङ्गाच्चेति । तस्मात्स्रुवादिष्वतिप्रसङ्ग इति द्वितीयपूर्वपक्षं निराकरोति—**हवीरूपस्येति** । हविःप्रकृतित्वस्येत्यर्थः । तेन यवसाधारण्यसिद्धिः । नापि स्रुवादावतिप्रसङ्गः । नचैवमपि विशिष्टानुवाददोषः । गङ्गापदाद्वस्तुतो गङ्गातीरस्य तीरत्वेनेव स्रुवादिव्यावृत्तस्यापूर्वसाधनविशेषस्यापूर्वसाधनत्वेनैव प्रतीत्यभ्युपगमात् । किंच यत्र शब्दद्वयोपस्थापितयोर्विशेषणविशेष्यभावमादाय विशिष्टस्योद्देश्यभावः 'ग्रहं संमार्ष्टि' 'यस्योभयं हविरार्तिमार्च्छती'त्यादौ तत्रैव वाक्यभेदप्रसङ्गाद्विशिष्टोद्देशदोषः । यत्रत्वेकेनैव शब्देन युगपदेव विशिष्टतयावगतस्योद्देश्यत्वं न तत्र विशिष्टोद्देशो दोषः । अतएव 'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशुचरन्ती'त्यत्रैकेन तच्छब्देनाग्नीषोमीयप्राचीनपदार्थत्वेनावगतस्य विशिष्टस्योद्देशेपि न दोषः । एवमेकेन व्रीहिशब्देनैव विशिष्टस्यावगमान्न दोषः । किंच 'भिन्ने जुहोती'त्यादौ यथा भेदनमात्रस्योद्देश्यत्वप्रतीतावपि फलकल्पनाभिया प्राकृतभेदन एव पर्यवसानं तथावहननादौ अपूर्वीयमात्रस्योद्देश्यत्वे स्रुवादिसाधारण्यापत्तौ तत्रादृष्टं कल्पनीयं स्यादिति तद्भीत्या स्रुवादिव्यावृत्त एवापूर्वीयत्वे पर्यवसानं भविष्यतीति । 'त्रीन्परिधी'नित्यादौ त्वयमतिप्रसङ्गपरिहारो यद्यपि तत्रापि अपूर्वसाधनपरिधीयत्तां प्रकाशयेदिति विधौ

---

१ होत्रां पौर्णमासीं. २ होत्राममावास्यां. ३ मास्येषु. ४ स्यापबाधनी. ५ शास्त्रान्तरावगमात्.

केनैव वाक्येन संस्कारो द्रव्यं च विधीयते 'प्रोक्षितैर्व्रीहिभिर्यजेते'ति तदापि किं सिद्ध्यति। साधनरूपान्वयः प्रोक्षणस्य सुतरां सिद्ध्यतीति ब्रूमः। नहि तत्र व्रीहिसंबन्धः प्रोक्षणस्य साधनत्वेनैवोपदिश्यमानं द्रव्यं संस्कारेण व्रीहित्वेन च विशेष्यत इति व्यक्तः साधनसंबन्धः। अयं हि तत्रार्थः—व्रीहिजातीयं प्रोक्षणसंस्कृतं च यत्तेन यजेतेति। ततश्च यवनीवारादिषु विरोधाद्व्रीहिसाधनत्वे निवर्तितेऽपि प्रोक्षितसाधनताऽनिवर्तितेति सिद्धं तत्रापि प्रोक्षणम्। यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य सर्वनाम्ना च तद्द्रव्यं परामृश्य यागे विनियुज्यते 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'ति तत्र कथम्। तत्रापि यद्यपि न प्राक् पयसः साधनत्वं विदितं नापि संस्कारवेलायां गम्यते, तथापि भाविविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिः। अन्यथानर्थक्यात्। ननु साधनत्वं पूर्वानवगतं कथं पयसा लक्षयितुं शक्यते। न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं प्रतिपादयतीति ब्रूमः, किं तर्हि प्रथमं पयःशब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति। तद्रूपस्य च कार्यान्तरौपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते। तदर्थं च पूर्वं विहितः संस्कार इति पश्चादवगम्यते। तदयमर्थः—दध्यानयनसंस्कृतं पयो वैश्वदेवमिति।

---

विशिष्टोद्देशस्तथापि स न दोषः। विधेयमन्त्रगतपरिधीयत्ताप्रकाशनसामर्थ्यानुसारेणोद्देश्यविशेषणविवक्षाया न्याय्यत्वात्। अतएव 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यादौ विधेयपुनराधेयस्याग्निद्वयजननसामर्थ्येन तदनुसारेणाग्न्युभयत्वं विवक्षितमित्युक्तं षष्ठ इति। एतेन 'व्रीहीणां मेध सुमनस्यमान'इत्यस्य मन्त्रस्य यवेषु निवृत्तिर्व्याख्याता। विधेयमन्त्रसामर्थ्यानुसारेण यवव्यावृत्तस्यापूर्वविशेषसाधनत्वस्य विवक्षितत्वाद्यवेषु तत्प्रवृत्त्यसंभवादिति। नच व्रीहिषु यवव्यावृत्तापूर्वविशेषसाधनत्वासंभवः। तथासति व्रीहियवयोर्भिन्नापूर्वसाधनत्वेन विकल्प एव न स्यादिति वाच्यम्। वस्तुगत्या व्रीहियवप्रयोगयोरवान्तरापूर्वव्यक्तिभेदे सत्यपि 'व्रीहिभिर्यजे'दित्यादिशास्त्रेण तदसंस्पर्शेन शास्त्रार्थीभूतापूर्वैकतामात्रेण विकल्पोपपत्त्या तत्तद्द्रव्यप्रयोगभेदनिबन्धनापूर्वभेदस्यापरिहार्यत्वात्। अवहननादौ तु शास्त्रार्थीभूतापूर्वसाधनत्वमेव विवक्षितं नतूक्तापूर्वभेदोऽपि[1]। तावतापि 'व्रीहीनवहन्ती'त्यादिश्रुत्युपपत्तेरिति तेषां यवसाधारण्यं 'व्रीहीणां मेधे'त्यस्य चोक्तापूर्वभेदविवक्षां विना न लिङ्गनिर्वाह इति न तस्य यवसाधारण्यमिति। ननु भवतु प्रोक्षणादीनामपूर्वसाधनान्वयः, व्रीहिपदेन शास्त्रान्तरावगतापूर्वसाधनविशेषस्य लक्षयितुं शक्यत्वात्। यत्र तु द्रव्यं संस्कारश्चैकेन वाक्येन विधीयते तत्र द्रव्यस्य शास्त्रान्तरेणापूर्वसाधनत्वानवगमेन संस्कारस्य तादर्थ्यं न स्यादित्यभिप्रायेण पृच्छति—**यदि पुनरिति**। तत्रापि तृतीयासमभिव्याहृतस्य प्रोक्षणस्य न व्रीहिद्रव्येणान्वयः, किंतु क्रिययैव कारकत्वेनान्वयः। पश्चात्त्वरुणैकहायनीन्यायेन भवेद्व्रीहिद्रव्यान्वयस्तत्क्रियासाधनरूप एवेत्ययत्नसिद्धस्तत्र साधनान्वय इत्याह—**सुतरामिति**। नन्वेकस्मिन्व्रीहिद्रव्ये साधनत्वं संस्कारश्चेति द्वयं प्रतीयते नत्वेतावता साधनसंबन्धः संस्कारस्येत्याशङ्क्य पर्यवसितमर्थमाह—**अयंहीति**। तथाच प्रोक्षितत्वविशेषेणैव साधनत्वान्वयात्प्रोक्षणस्यापि साधनरूपान्वय इति भावः। **यद्वेति**। अत्र 'प्रोक्षितैर्व्रीहिभिर्यजेते'ति प्राप्तयागानुवादेन द्रव्यसंस्कारोभयविधानानुपपत्त्या विशिष्टविधौ निश्चिते उत्पत्तिशिष्टव्रीह्यवरुद्धे च यागे यवानां साधनत्वानुपपत्त्या तेषां यागान्तरसाधनत्वेन प्रोक्षणस्य तत्साधारण्यानुपपत्त्या यवग्रहणं चिन्त्यम्। विकृत्युपदिष्टयवाभिप्रायं तदिति केचित्। **नन्वेवमपि** 'तप्ते पयसि दध्यानयती'त्यत्र पयसस्तस्मिन्वाक्ये साधनत्वेनाविधीयमानत्वाद्वाक्यान्तरेण प्राक्साधनत्वाप्राप्तेश्च संस्कारार्थता न स्यादिति शङ्कते—**यत्रेति**। परिहरति—**तत्रापीति**। अत्रापि 'सा वैश्वदेव्यामिक्षे'ति वाक्यान्तरे द्रव्यस्य साधनत्वेन यो विनियोगो भावी तदपेक्षस्तदर्थः संस्कारः न पयोरूपमात्रार्थः। आनर्थक्यादित्यर्थः। **ननु** तादर्थ्ये पयःशब्देन लक्षणया तदुद्दिश्य विधानाद्वाच्यम्। नच तत्संभवेति। तस्य पूर्वानवगतत्वादिति शङ्कते—**नन्विति**। उद्दिश्याविधानेऽपि तादर्थ्यं संभवतीति परिहरति—**न पदमिति**। **तच्छब्देति**। नयतेर्द्विकर्मकत्वेऽपि आनीयमानेन दध्ना व्याप्यमानत्वाद्द्वितीयस्य कर्मणः पयस एव प्राधान्यात्तदेव तच्छब्देन निर्दिश्यत इति भावः। वाक्यद्वयलब्धमर्थमाह—**तदयमिति**। अपूर्वार्थत्वस्यैव वक्तव्यात्तस्य च लक्षणया विनापि सिद्धेर्ल-

---

१ संस्कारत्वेन,

नह्यवश्यं पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः साधनरूपार्थाः संस्कारा इत्येतावन्न प्रतिपाद्यम्। तच्चैवंविधेष्वयत्नेनैव सिद्ध्यति। श्रुत्यैव संस्कारस्य साधनरूपान्वयात्। व्रीहीनित्यादिके तु लाक्षणिकं रूपम्। नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारात्कथं लक्षणावाचोयुक्तिः। सत्यम्। व्रीहिपयःप्रभृतीनां द्रव्याणामेव संस्कारः सतु साधनरूपसिद्ध्यर्थो न स्वरूपसिद्ध्यर्थः। तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः। व्रीहीनित्यादि तु लाक्षणिकं रूपं तच्च रूपं व्रीह्यादिष्विव यवेषु नीवारादिषु चाविशिष्टमिति तत्रापि प्रोक्षणादयः सिद्धा भवन्ति। तस्मात्सर्वेषामेव भूतभवद्भाविविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावनाशेषभूतास्तद्विकृतिषु प्राकृतार्थकरेषु द्रव्यान्तरेषु संस्कारेषूहितव्याः। शूर्पेहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वादारादुपकारक इति दूरापास्तम्। तस्य द्रव्यप्रयुक्तत्वमन्नकरणत्वं त्वर्थवादो न हेतुरित्युक्तम्॥

---

क्षणाभावो न दोष इत्याह—**नहीति**। **लक्षणावाच इति**। ग्रन्थेष्विति शेषः। **अशाब्दमिति**। न पयःशब्दगम्यमित्यर्थः। **नन्वेवं** प्रोक्षणावहननादेरपि दध्यानयनवद्व्रीहिस्वरूपमात्रान्वयोपपत्तेः किमर्थं लक्षणास्वीकारः। तत्र सा वैश्वदेवीति संस्कारस्यापूर्वार्थत्वबोधकतच्छब्दश्रुतिवदिह श्रुत्यभावेऽपि अधिकारवाक्यस्य प्रकाराकाङ्क्षया प्रोक्षणादिवाक्यस्य फलाकाङ्क्षया चाधिकारवाक्येन समिदादिवाक्यवदेकवाक्यताकल्पनावश्यंभावेन तेन च प्रोक्षणादिना व्रीहिद्वारेण दर्शपूर्णमासापूर्वं प्रति व्याप्रियेतेति बोधनादर्थादपूर्वसाधनव्रीहिविषयत्वसिद्धिरित्यत आह—**व्रीहीनिति**। अयं भावः—न तावदवहननस्य साक्षात्प्रयाजादिवत्प्रकरणविनियोज्यत्वं संभवति, तथासति आरादुपकारकत्वप्रसङ्गेन श्रुतव्रीह्यर्थत्वबाधापत्तेः किंतु व्रीहिद्वारा। उक्तंच त्वयापि व्रीहिद्वारा दर्शपूर्णमासयागापूर्वं प्रति व्याप्रियेतेति बोधनादिति। तत्र च 'व्रीहीनवहन्ती'ति श्रुतिसिद्धमवहननशेषित्वमादाय व्रीहीणां द्वारत्वं वक्तव्यम्। एवंच सति व्रीहीणां तुषविमोकरूपलौकिकफलविशिष्टतया द्वारत्वं न संभवति। तथासति नियमांशवैयर्थ्यापत्तेः। अतः साधनविशेषरूपेण द्वारत्वं वाच्यम्। तच्च तेन रूपेण व्रीहीणां शेषित्वे सति भवतीति तदर्थमवश्यं लक्षणा स्वीकार्या। **ननु** तुषविमोकविशिष्टत्वाकारेण शेषित्वेऽपि द्वारत्वमपूर्वसाधनत्वेन भवतु तदप्युक्तैकवाक्यताबलादार्थिकमिति चेत् भवेदेवं यदि अवहननस्यैकवाक्यता व्रीहिलक्षणद्वारमनपेक्ष्य सिध्येत्, नत्वेतदस्ति। आरादुपकारकत्वाभावस्योक्तत्वात् तस्मादन्यतः सिद्धसाधनरूपेण शेषित्वमुपजीव्यैव द्वारत्वं वक्तव्यम्। तच्च लक्षणां विना न सिध्यतीति युक्ता लक्षणा। किंच त्वत्पक्षेऽवहननं तुषविमोकविशिष्टतण्डुलनिष्पत्त्यैव निराकाङ्क्षं न प्रकरणेनैकवाक्यतां भजेत, किंतु तुषविमोकविशिष्टानां व्रीहीणामेव प्रकरणग्राह्यता स्यात्। यथाधानमग्निमात्रनिष्पत्त्यर्थं न प्रकरणेन गृह्यते किंतु तत्साध्यानामग्नीनामेव एवमिहापि। तस्मात्तुषविमोकविशिष्टत्वाकारेण साध्यत्वेऽधिकारवाक्येनैकवाक्यत्वासिद्ध्या कथं तद्बलादपूर्वीयाणां द्वारत्वं कथं वावहननस्यापूर्वार्थत्वं स्यात्। तस्मात्तत्सिद्ध्यर्थमपूर्वसाधनत्वेनैव व्रीहीणां साध्यत्वमङ्गीकरणीयमिति। दध्यानयनस्य तु सा वैश्वदेवीति संस्कारविशिष्टपरामर्शकतच्छब्देनापूर्वार्थत्वावगमबलादार्थिकद्वारलाभे न काप्युपपत्तिरिति वैषम्यमिति। केचित्तु एकवाक्यतायां तन्निर्वाहकतया प्रयाजादिष्विव प्रोक्षणादिष्वप्यश्रुतशब्दकल्पनावश्यकतया तदपेक्षया श्रुतशब्दस्यैव लक्षणाकल्पना ज्यायसीत्याहुः। तन्न। प्रयाजादिष्वपि शब्दकल्पनाभावात् किं तर्हि परस्पराकाङ्क्षाबलादेकवाक्यतामात्रं कल्प्यते। नच 'येन कर्मणेर्त्सेत्तत्र जयान्जुहुया'दितिवदाख्यातद्वयस्य यत्तच्छब्दाभावे कथमेकवाक्यतासिद्धिरिति वाच्यम्। यत्तच्छब्दौ हि परस्परनिरपेक्षार्थकत्वशङ्कानिराकरणमुखेनाकाङ्क्षासिद्ध्यर्थमेव कल्पनीयौ। प्रकृते चाकाङ्क्षा स्वतएवास्तीति किं तत्कल्पनेन। नचार्थयोराकाङ्क्षासत्वेप्यभिधानतोऽन्यतरस्यान्यतरविशेषणत्वयोग्यत्वरूपेणाख्यातद्वयस्योपस्थापकत्वाभावाद्यः शब्दस्तथोपस्थापनसमर्थः स शब्दोऽवश्यं कल्पनीय इति वाच्यम्। 'मृगो धावति पश्य पचति भवति अस्ति भवती'त्यादौ लोके 'तीर्थे स्नाति तीर्थमेव समानानां भवति अपोऽश्नाति अन्तरत एव मेध्यो भवती'त्यादौ वेदे च बहुलमाख्यातद्वयस्यापि तथोपस्थापकत्वदर्शनात्। अपूर्वीयत्वेन धर्मविधानेऽपि यथा सोमधर्माणां फलचमससाधारण्यं न भवति तथा तृतीय एव व्युत्पादितं तत्तत एवावगन्तव्यम्। अपूर्वार्थत्वसाधनफलमाह—**तस्मादिति**। व्रीहीन्प्रोक्षतीत्यादौ द्रव्यस्य भूतोपयोगित्वं, 'प्रोक्षितैर्व्रीहिभिर्यजेते'त्यत्र भवदुपयोगित्वं 'तप्ते पयसी'त्यत्र भाव्युपयोगित्वमिति विवेकः। अत्र भूतत्वादिकं वाक्यान्तरावगतत्वादिरूपं बोध्यम्। हेतुनिर्देशबलाद्द्रव्यार्थत्वं होमस्योक्तं निरस्यति—**अन्नेति**। **उक्तमिति**। हेत्वधिकरण इति शेषः। इह द्रव्यस्य तृतीयानिर्देशबलाद्धोमस्यापूर्वार्थत्वे स्थिते हेत्वधिकरणे शूर्पशब्दमवयुत्यानुवादं स्वीकृत्यान्नकरणमात्रं होमसाधनत्वेन न विधीयते, किंत्वन्नकरणत्वं शूर्पविधेरेव स्तुतिरित्युक्तमिति अपुनरुक्तिरिति ध्येयम्। संख्यासमुदाययोरपि द्रव्यन्यायेनैवाप्रयोजकत्वं द्रष्टव्यम्। सूत्रार्थस्तु—द्रव्यादिप्रयोजकं द्वितीयाश्रुतेर्हिशब्दश्रुतेश्च संयोगाद्वाशब्दो वाक्यलिङ्गसंयुक्तापेक्षया श्रुतेर्विशेषद्योतनार्थः॥

---

१ द्रव्यान्तरेषूहितव्याः।

अग्निष्टोम उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ॥ ६ ॥

**देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ [यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ अनुवादश्च तदर्थवत् ॥ २२ ॥ प्रणीतादि तथेति चेत् ॥ २३ ॥ न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ तद्देशानां वा संघातस्याचोदितत्वात् ॥ २५ ॥]**

प्राचीनोपांशुताऽपूर्वे परमेऽवान्तरेऽपि वा ॥ यज्ञायोगादादिमोऽन्त्यो देशबन्धश्रुतत्वतः ॥ १० ॥
प्रणीतावाग्यमे पक्षौ योजनीयौ पुरेव तौ ॥ पुरा हविष्कृदाह्वानाद्ये तत्रापूर्वकारिता ॥ ११ ॥

ज्योतिष्टोमे श्रूयते 'त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती'ति । तत्र संशयः किमिदमुपांशुत्वं सोमयागस्य यः प्राग्भागस्तद्धर्मः सन्परमापूर्वप्रयुक्तम् । ततश्च विकृतिषु तद्भागारम्भकेऽप्राकृतेऽपि पदार्थे ऊहितव्यमुताग्नीषोमीयात्पशोर्ये प्राचीनाः पदार्था दीक्षणीयादयस्तेषां धर्मस्तदवान्तरापूर्वप्रयुक्तम् । ततश्चाप्राकृते पदार्थे यूपावटस्तरणबर्हिर्धर्मवन्नोहितव्यमिति । तत्र वाग्यमवदवान्तरापूर्वप्रयुक्तत्वे प्राप्ते पूर्वपक्षोऽभिधीयते । यज्ञस्येतिशब्दः प्राचीनशब्दस्य विशेषणं व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणशेषत्वे स्यात् । त्सराशब्दविशेषणत्वे ह्यप्रवृत्तिविशेषकरः स्यात्तस्माद्यज्ञस्य यत्प्राचीनं तदुपांश्विति संबन्धः ततश्च यज्ञभागधर्मता । प्राचीनशब्दोऽपि देशं निमित्तीकृत्य पदार्थेषु वर्तते तथाच सति प्रथमं देशे वर्तितुमर्हति तदतिक्रमे कारणाभावात्तद्धर्म एवोपांशुत्वम् । वाग्यमनं तु यज्ञसंयोगाभावदवान्तरापूर्वप्रयुक्तं तदिदमुक्तम्—'प्रणीतादि तथेतिचेत्, न यज्ञस्याश्रुतत्वा'दिति । अथवानेन सूत्रद्वयेनाधिकरणान्तरं प्रस्तुताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थम् । तदीयपूर्वपक्षन्यायेन च पूर्वपक्षं वक्तुमन्तरागर्भिणीन्यायेन विचार्यते ।

---

**देशबद्धमुपांशुत्वं० ॥ २० ॥** संनिपातिनामपूर्वप्रयुक्तत्वे व्यवस्थापिते तत्प्रसङ्गात्संनिपातिविशेषे अवान्तरापूर्वलक्षणापूर्वविशेषप्रयुक्तत्वं व्यवस्थाप्यत इति संगतिः । **त्सरेति** । या उपांश्वनुष्ठितिः सैषा छद्मगतिरित्यर्थः । यथा छद्मगत्या शकुनिर्गृह्यते तथानेन यज्ञो वशीक्रियत इति यावत् । अत्र किमुपांशुत्वं परमापूर्वप्रयुक्तं उत दीक्षणीयाद्यवान्तरापूर्वप्रयुक्तम्, तदर्थं च किं यज्ञस्य प्राग्भागस्तद्धर्म उपांशुत्वं उताग्नीषोमीयात्पशोर्ये प्राचीनाः पदार्थास्तेषां धर्म इति संशयं फलं च दर्शयति—**किमिति** । **ततश्चेति** । प्राग्भागधर्मत्वे राजसूयादौ तद्भागारम्भका ये अप्राकृताः पदार्थाः 'पुरस्तादुपसदां सौमेन प्रचरन्ती'त्यादयस्तेऽप्यूहितव्यमित्यर्थः । अत्राप्राकृतशब्देन प्राकृतावान्तरपदार्थस्थानापत्त्यभावो विवक्षितः । **यूपावटेति** । 'बर्हिषा यूपावटमवस्तृणाती'त्यत्र हविरासादनार्थदार्शपौर्णमासिकबर्हिःस्थानापत्त्यभावेन यथा बर्हिर्धर्मा लवनादयो न भवन्ति एवमित्यर्थः । सूत्रभाष्ययोरिदमधिकरणं सिद्धान्तेनोपक्रान्तमिति सूचयितुं सिद्धान्तेनोपक्रमते—**तत्र वाग्यमवदिति** । यथा 'प्रणीताः प्रणेष्यन् वाचं यच्छती'ति वाग्यमः प्रणीताप्रणयनानन्तरभाविप्रोक्षणाद्यर्थः सन् तदपूर्वप्रयुक्तः न दर्शपूर्णमासापूर्वप्रयुक्तः । प्रोक्षणाद्यवान्तरापूर्वसंबन्धे लक्षणामात्रं, परमापूर्वसंबन्धे तु पदार्थैः स्वापूर्वाणि लक्षणीयानि तैश्च परमापूर्वमिति लक्षितलक्षणाप्रसङ्गादेवमिहापीत्यर्थः । **नन्वत्र** यज्ञस्य यः प्राग्भागस्तद्धर्म उपांशुत्वमिति पूर्वपक्षोऽनुपपन्नः । यज्ञशब्दस्याव्यवहितत्सराशब्दविशेषणत्वेन व्यवहितप्राचीनशब्दविशेषणत्वाभावेन यज्ञस्य यत्प्राचीनं तेनोपांश्वित्यन्वयाभावात्तथा प्राचीनशब्दस्य प्राग्भागवर्तिपदार्थवाचकतया प्राग्भागमात्रपरत्वासंभवाच्चेत्याशङ्क्य पूर्वपक्षमुपपादयति—**यज्ञस्येति । व्यवहितोऽपीति** । यद्यपि त्सराशब्दविशेषणत्वेऽपि व्यवधानं तुल्यं तथापि स न दोषः एकवाक्यत्वात् । तस्मादित्यनेन तु वाक्यान्तरत्वाद्व्यवधानं दोष इत्यभिप्रायेणेदमुक्तम् । **प्रवृत्तीति** । विकृतिषूहप्रयोजकतयेति शेषः । **प्राचीनशब्दोऽपीति** । ततश्च नागृहीतविशेषणान्यायाद् भागवाच्येव प्राचीनशब्दो न तद्भागवर्तिपदार्थवाचीति भावः । **वाग्यमनमिति** । यज्ञसंयोगाभावश्च वक्ष्यमाणरीत्या द्रष्टव्यः । **प्रणीतादीति** । 'प्रणीताः प्रणेष्यन्वाचं यच्छती'ति विहितो वाग्यमो यथावान्तरापूर्वप्रयुक्तः, एवमुपांशुत्वमपि स्यादिति चेदित्याद्यसूत्रार्थः । उत्तरसूत्रार्थः स्पष्टः । एवं सूत्रद्वयं प्रस्तुताधिकरणशेषत्वेन व्याख्यायाधिकरणान्तरत्वेनापि व्याचष्टे—**अथवेति** । नन्वधिकरणान्तरं प्रस्तुताधिकरणसमाप्त्यनन्तरं कर्तुमुचितं नतु तन्मध्य इत्याशङ्क्याह—**प्रस्तुतेति** । नासिद्धो दृष्टान्तो भवतीति तत्सिद्ध्यर्थत्वादन्तरा चिन्ता युक्तेत्यर्थः । नन्वेवमपि सिद्धान्ते दृष्टान्तसिद्ध्यर्थस्य विचारस्य न पूर्वपक्षे संगतिरित्यत आह—**तदीयेति** ।

---

१ वर्तमानो वर्तते. २ प्रकृताधि.

दर्शपूर्णमासयोः श्रूयते 'यज्ञं तन्विष्यन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूयंगतौ यज्ञं तन्वाते तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छती'ति । तत्रायं वाग्यमः किं परमापूर्वप्रयुक्त उतावान्तरापूर्वप्रयुक्त इति संशयः । किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्त उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्तदपूर्वप्रयुक्त इति । यज्ञसंयोगाद्य-ज्ञार्थत्वे प्राप्ते ब्रूमः—यज्ञस्यात्र विस्तारेण संबन्धो न वाग्यमविषयविशेषणत्वं यज्ञस्य यो भागस्तत्र वाग्यम इति किं तर्हि यज्ञं तनितुं वाचं यच्छेदिति[1] । वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गं तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तारो भवत्युपपन्नोऽङ्गार्थत्वेऽपि यज्ञसंयोगः । अतस्तद्देशानां पदार्थानां साक्षादवैकल्यकरणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात् । भाष्येऽपि प्रथमं यदुक्तमित्यादिना नात्र यज्ञशब्दः श्रूयत इत्यन्तेन प्रत्यनुभाषणत्वेन[3] तत्परिहारत्वेन सूत्रद्वयं व्याख्याय नन्वित्यादिनान्तराग-र्भिणीत्वेन व्याख्यातम् । एवंहि स्थितादुत्तरमित्यादिभाष्यमुपपद्यते नान्यथा । तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभावाक्षेपेणान्तरागार्भिणीत्वेन पूर्वपक्षमाह—यज्ञसंयोगोऽत्राप्यस्तीति । उच्यत इत्यादिना सिद्धान्तं दर्शितवान् । स्थितादुत्तरमुच्यते—यज्ञशब्दोऽत्र त्सराशब्दविशेषणम् । अव्यवधानान्न प्राचीनशब्दस्य विशेषणं व्यवधानात् । अपिच भागस्यैकत्वाद्यत्किंचिदित्यनेकापेक्षः शब्दो नावकल्पते । तस्मादग्नीषोमीयात्प्राचीनानामङ्गानामुपांशुत्वम् ॥

---

प्रस्तुताधिकरणपूर्वपक्षन्यायेनेत्यर्थः । **उतेति** । यद्यपि प्रणीताः प्रणेष्यन्निति प्रणीताप्रणयनमात्रार्थत्वमेव वाग्यमस्याव-गम्यते न तदुत्तरभाविनो हविष्कृदाह्वानात्पूर्वभाविनश्चये तादर्थ्यं तथापि प्रणेष्यन्निति शत्रभिहितकर्तृसंस्कारतयाभिहितस्य वाग्यमस्य 'तां सह हविष्कृता वाचं विसृजत' इति वचनेन तावत्कालानुवृत्त्यवगमात्स्वसंस्कार्यपुरुषकर्तृकप्रणीताप्रणयनहवि-ष्कृदाह्वानमध्यवर्तिसर्वपदार्थार्थत्वावश्यंभावादेवमुक्तम् । **ननु** यज्ञविस्तारार्थत्वमपि वाग्यमस्य यज्ञप्रयुक्तत्वंविना न निर्वह-तीत्यत आह—**वाग्यम इति** । एवंच यज्ञसंयोगाभावात्प्रत्यासन्नत्वाभावाच्चावान्तरापूर्वप्रयुक्तत्वमेवेत्याह—**अत इति** । ननु भाष्ये इदं सूत्रद्वयं द्वेधा न व्याख्यातमित्याशङ्क्योक्तव्याख्यानद्वयपरतां भाष्यस्य दर्शयति—**भाष्येऽपीति** । प्रथम-मित्येतद्याख्यायेत्यनेन संबध्यते । **ननु** न यज्ञस्याश्रुतत्वादिति यज्ञसंयोगाभावे उक्ते नन्वित्यादिना यज्ञसंयोगाशङ्कां कृत्वा उच्यत इत्यादिना तत्परिहार उक्तः, कथमेतावताधिकरणान्तरपरत्वं भाष्यस्येत्याशङ्क्याह—**एवमिति** । अधिकरणान्त-रत्व एवोच्यत इत्यादिग्रन्थानन्तरं स्थितादुत्तरमित्युक्तिः संगच्छते नान्यथेत्यर्थः । एवंच भाष्यस्याधिकरणान्तरपरत्वे स्थिते नन्वित्यादेरधिकरणान्तरपूर्वपक्षपरत्वमुच्यत इत्यादेः सिद्धान्तपरत्वमेव युक्तमित्याशयेनोपपादयति—**तत्रेति** । प्रस्तुता-धिकरणसिद्धान्तमाह—**स्थितादिति** । ननु प्रवृत्तिविशेषकरत्वाय व्यवधानमाश्रयणीयमित्युक्तमित्यस्वरसादाह—**अपि-चेति** । **अनेकेति** । यत्किंचिच्छब्दस्य वीप्सार्थपर्यवसायित्वादिति भावः । एवंच प्राथमिकयत्किंचिच्छब्दमुख्यत्वानुसा-रेण जघन्यप्राचीनशब्दस्य भागवाचकस्य तद्वर्तिपदार्थेषु लक्षणापि न दोष इति भावः । अत्रायं स्वरनिवेशक्रमः—प्रथमं तावद्दीक्षणीयाया याजुर्वेदिकत्वात्साङ्गाया उपांशुत्वं प्राप्तं, तच्च चोदकप्राप्तेन प्राक्स्विष्टकृतः प्रथमस्थानेन मध्यमेनेडायाः शेषं तृतीयस्थानेनेत्यनेन बाध्यते । प्रयोगवचनाश्रितयजुर्वेदस्वरापेक्षया चोदकाश्रितस्य बलवत्त्वात्तदपि यत्किंचित्प्राचीन-मिति वाचनिकोपांशुत्वेन बाध्यते । तदपि यावत्या वाचा कामयेदित्यनेन बाध्यते । यद्यप्युभयोरपि वाचनिकत्वं विशेषवि-षयत्वं च तुल्यं यत्किंचिच्छब्दस्य प्रातिस्विकरूपेणैवाशेषपदार्थवाचित्वात्तथापि यत्किंचिदित्यस्य सावकाशत्वान्निरवकाशेन यावत्येत्यादिस्वरेणैव बाधो युक्तः । तथाच दीक्षणीयादिशब्दानां प्रधानमात्रवाचकतया तन्मात्र एव यावत्येति स्वरः, अङ्गेषु तु यत्किंचिच्छब्दप्रापितोपांशुत्वमेव भवति । उच्चैः प्रवर्ग्येणेति स्वरस्तु तृतीयानिर्देशात्प्रवर्ग्यकरणकभावनान्वयि-तया साङ्गप्रवर्ग्यार्थः । ननु दीक्षणीयावाङ्नियमवत्प्रधानमात्रार्थः । एवंच यत्किंचिदित्यनेनैवोपांशुत्वप्राप्ते उपांशूपसत्स्विति दीक्षणीयास्वरस्तुत्यर्थो नित्यानुवाद इति । सूत्रार्थस्तु—प्राग्भागरूपदेशसंबद्धमुपांशुत्वं तद्भागवर्तिपदार्थानां धर्मः स्यात् श्रुतिनिर्देशात् । अयमर्थः प्राचीनशब्दः साकाङ्क्षत्वादवश्यं निराकाङ्क्षीकर्तव्यः । तत्र यज्ञशब्देन श्रुतेन निराकाङ्क्षीकरणं न संभवति त्सराशब्दसंबन्धित्वात्तस्य । ततश्चाश्रुतोऽन्यो यज्ञशब्दः कल्पनीयः । तस्माच्छ्रुतेनाग्नीषोमीयशब्देन निराकाङ्क्षीक्रि-यते । ततश्चाग्नीषोमीयस्यानवयवित्वेन प्राचीनशब्दस्यावयवलक्षणभागपरत्वासंभवाद्भागवर्तिपदार्थपरत्वावश्यंभावात्तद्धर्म उपांशुत्वं तदपूर्वप्रयुक्तं तस्यापूर्वस्य तेषु भागसंबन्धिपदार्थेषु भावादिति ॥

---

१ यच्छेदिति वाग्यम इति. २ भाष्येपि हविष्कृता वाचं विसृजति प्रथमं इति. ३ तत्प्रत्यनु.

इष्टकासु सकृद्विकर्षणाद्यनुष्ठानाधिकरणम् ॥ ७ ॥

**अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥ २६ ॥ [अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥ चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥२८॥]**

विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा ॥ आद्योऽवयव्यसत्त्वेन नैवं भूदेशसत्त्वतः ॥ १२ ॥

अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षती'ति किं प्रोक्षणं सकृदेव स्यादुत प्रतीष्टकं भेदेनेति । यदीष्टकाव्यतिरिक्तोऽवयव्यग्निशब्दाभिधेयस्ततः सकृत् । अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्निशब्देनाभिधीयन्ते । ततस्तदर्थं प्रोक्षणं प्रतीष्टकं कर्तव्यम् । यत्रैकावयवाकर्षणेऽवयवान्तरमाकृष्यते संधिश्च न दृश्यते तत्रैव देवदत्तघटादाववयव्यभ्युपगम्यते । नचेहैकेष्टकाकर्षणेऽन्यासामाकर्षणम् । संधिश्चात्र पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यते । तस्मान्नास्त्यवयवी 'पक्वामसंयोगे च न द्रव्यान्तरारम्भ' इति काश्यपीयाः । तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात् । नैवम् । एकबुद्धिरेव हि देशकालादिभेदेऽप्यबाधितावयविद्रव्यसाधनी । साचेहापि विद्यते । वृक्षादिषु चावयविसद्भावेऽप्याकर्षणं न दृष्टमित्यतत्रं तदवयविसद्भावेऽपि संधिदर्शनं च पटादावनैकान्तिकम् । तस्मात्प्रत्यक्षबलात्पक्वामसंयोगेऽप्यस्त्यग्न्यवयवीति तस्येदं प्रोक्षणं सकृदेव कर्तव्यम् । पूर्वाधिकरणे ग्रहयज्ञभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता, समुदायप्रसङ्गात्प्रोक्षणं विचार्यत इति प्रासङ्गिकी संगतिः ॥

---

**अग्निधर्मः प्रतीष्टकं० ॥ २६ ॥ प्रोक्षणमिति ।** इदमुपलक्षणं मण्डूकेनाग्निं विकर्षतीति विकर्षणं चेति द्रष्टव्यम् । अत्र किमिष्टकाव्यतिरिक्तोऽवयवी अग्निशब्दाभिधेयः उतेष्टका एव संहता अग्निशब्दाभिधेया इति तदर्थसंशयमभिप्रेत्य फलफलिभावमुपपादयति—**यदीति । अथेति ।** यद्यपि वनादिवदिष्टकासङ्घ एवाग्निशब्दवाच्य इति पूर्वपक्षेऽपि वक्तुं युक्तं नतु संहता इष्टका इति तथापि सङ्घस्यामूर्तस्य प्रोक्षणानर्हत्वात्संहतानामिष्टकानामग्निशब्दवाच्यत्वमुक्तम् । **नन्व**ग्निशब्देन ज्वलनवाचिना कथमिष्टकानामभिधानमत आह—**अग्निधारणेति । प्रतीष्टकमिति ।** प्रतिप्रधानं गुणावृत्तिन्यायादिति भावः । **नन्व**वयवातिरिक्तोऽवयव्यवश्यमङ्गीकर्तव्यः । अन्यथा इष्टकानामप्यपलापः स्यात्तथा तदवयवतदवयवानामिति परमाणुषु प्रोक्षणं पर्यवस्येत् । नच प्रतिपरमाणु शक्यं प्रोक्षणं कर्तुमित्यनर्थकं प्रोक्षणविधानमापद्येत । तस्मादवयवेभ्य इष्टकाभ्योऽतिरिक्तोऽप्यवयवी अकामेनाप्यङ्गीकर्तव्यः । तथाच कथं पूर्वपक्ष इत्यत आह—**यत्रेति ।** नहि सर्वत्रावयव्यपलापः क्रियते किंतु यत्रावयव्याकर्षणाभावः संधिदर्शनं च तत्रैव । ततश्चेष्टकादीनामपलापाभावान्नोक्तदोष इति भावः । **नन्विह** संधिर्नोपलभ्यत इत्यत आह—**संधिश्चेति ।** पुरीषच्छन्नत्वात्प्रत्यक्षेणानुपलभ्यमानोऽपि संधिरनुमानगम्य इत्यर्थः । अत्र संप्रत्यप्रत्यक्षस्यापि प्रत्यक्षयोग्यस्यैव संधेर्विवक्षितत्वाद्घटादौ केवलमानुमानिकमेव संधिमादाय नातिप्रसङ्गः । अत्र चेत्थमनुमानं सूचितम्—इमाः संहता इष्टका न स्वारब्धद्रव्यवत्यः एकाकर्षणेप्यनाकृष्यमाणापरवत्समुदायवृत्तित्वात् प्रत्यक्षयोग्यसंधिमत्त्वाद्वा व्यतिरेकेण करादिवत्कपालादिवच्चेति । **पक्वामेति ।** इष्टकानां पक्वत्वं पुरीषस्य चामत्वं बोध्यम् । अत्यन्तसंश्लेषाभावात्संधिदर्शनप्रसङ्गादेव पक्वामयोरपि नावयव्यारम्भकत्वमिति भावः । **प्रत्येकमिति ।** नतु यथा व्रीहिषु न प्रत्येकं प्रोक्षणं एवमिष्टकानामग्निशब्दवाच्यत्वेऽपि न प्रत्येकं प्रोक्षणं, तस्मादिदमनुपपन्नमिति चेन्नैवम् । शास्त्रार्थो हि प्रोक्षणान्वयी । शास्त्रार्थता च व्रीहीणां हविःप्रकृतितया एकसाधनतावच्छिन्नानां चतुर्मुष्टिपरिमितानामेव न प्रत्येकं तेन तत्र न प्रत्येकं प्रोक्षणमिष्टकानां तु 'वज्रिणीरुपदधाती'त्यादिषु भेदेनैव शास्त्रार्थत्वात्प्रत्युद्देश्यं भेदेनैव प्रोक्षणं ग्रहेषु संमार्ग इव । तथाच 'व्रीहिभिर्यजेते'ति शास्त्राद्बहूनां साधनत्वमिह तु साधनानां बहुत्वमिति वैषम्यम्। किंच 'उक्ष सेचने' इति यद्यप्यविशेषेण शाब्दिकाः स्मरन्ति तथापि एकदेशस्य जलसंयोग एव लोके प्रयोगः । नच प्रत्येकं व्रीहिष्वेकदेशस्य जलसंयोगः शक्यानुष्ठान इति विधेयानुरोधात्सहितव्रीह्यन्वयः । यथैकादशत्वस्य सहितप्रयाजान्वयः । किंच प्रत्येकं व्रीहिषु प्रोक्षणे जलसंबन्धाधिक्यादवहननायोग्यता स्यादिति प्रधानकार्यविरोधः, नैवमिष्टकासु प्रत्युतेष्टकासु संयोगदार्ढ्योपादकत्वादनुकूलमेव प्रोक्षणमिति प्रतिप्रधानं प्रोक्षणस्यावृत्तिरेव युक्तेति दिक् । **एकेति ।** एकमिदं द्रव्यमिति बुद्धिरतिरिक्तावयविनमवगाहते । अवयवानां बहुत्वेनैकबुद्धिविषयत्वाभावादित्यर्थः । **ननु** सकृदसकृत्त्वविचारस्य कथमत्र संगतिरित्यत आह—**पूर्वेति । ज्योतिष्टोमेति ।** परमापूर्वप्रयुक्तिर्ज्योतिष्टोमप्रयुक्तौ पर्यवस्यतीति भावः । **प्रासङ्गिकीति ।** अध्यायेऽनन्तरं चेति शेषः । सूत्रार्थस्तु—अग्निधर्मः प्रोक्षणादिः प्रतीष्टकं स्यात् संघातस्यैवाग्निशब्दवाच्यत्वात् चतुर्होत्रा पौर्णमासीमभिमृशेदितिवदिति ॥

---

१ कर्षणेनावयवा. २ तन्त्रम् अवयवि.

उत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् ॥ ८ ॥

**पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥ [लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ अनुवादो वा दीक्षा यथा नक्तंसंस्थापनस्य ॥ ३१ ॥ स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात् ॥ ३२ ॥]**

पत्नीसंयाजसंस्था किं सर्वेष्वन्त्येतरेषु वा ॥ अविशेषादादिमोऽन्त्योऽसंस्थितत्वोक्तिलिङ्गतः ॥ १३ ॥

द्वादशाहे श्रूयते पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते न बर्हिरनुप्रहरति असंस्थितो हि तर्हि यज्ञ इति । तत्र संशयः किं सर्वेषामप्यह्नां पत्नीसंयाजान्तत्वमुतोत्तमवर्जमिति । 'तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः ॥ असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः ॥' स्यादेतत् । 'असंस्थितो हि तर्हि यज्ञ' इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः । साच नोत्तमेऽहनि । तस्माद्धेतुवशात्पूर्वेषामेव स्यात् । अथाप्ययमर्थवादः तथापि वाक्यशेषवशादेवान्त्यवर्जं पत्नीसंयाजान्तता व्यवस्थाप्यते अञ्जन इव घृत इति । नैवम् । असंस्थितशब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेर्नाविशेषप्रवृत्तो विधिः संकोचमर्हति । यथा लोके यश्चिरेण भुङ्क्ते तत्र वक्तारो भवन्ति नास्य भोजनं परिसमाप्यत इति, तथेहापि दीर्घकालोसौ यज्ञो न संतिष्ठत इति यावत् । अतो लाघवार्थं पत्नीसंयाजात्परं शेषमशेषं लुप्यताम् । समग्रानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः । तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते ब्रूमः—'अपेक्षितविधानाय प्रागुत्तममयं विधिः ॥ मुख्यत्वसंभवाद्वाक्यशेषस्य नच गौणता ॥' द्वादश यागाः सह कर्तव्यास्तत्र पूर्वमहः कस्मिंश्चित्पदार्थे व्यवस्थाप्य परमुपक्रमितव्यं, तत्र कस्मिन्पदार्थेऽवस्थानमित्यपेक्षायां पत्नीसंयाजान्तानि पूर्वपूर्वाण्यहानि कृत्वोत्तरमुत्तरमारभेतेत्येवंविधीयमानेऽपेक्षितविधिर्भवति । चोदकश्च न बाध्येत । शेषलोपे तु चोदको बाध्येत अनपेक्षितश्च विधीयेत । तस्मादयमर्थः । पत्नीसंयाजान्तानि सर्वाण्यहानि कृत्वा हारियोजनाद्यहःशेषं तन्त्रेण सर्वेषामुपरि-

---

**पत्नीसंयाजान्तत्वं०** ॥ २९ ॥ समुदायप्रसङ्गादहःसमुदायात्मकद्वादशाहगतपत्नीसंयाजान्तत्वं चिन्त्यत इति संगतिः । **तर्हीति** । तदेत्यर्थः । **उत्तमेति** । अन्त्यं वर्जयित्वेत्यर्थः । 'द्वितीयायां चे'ति णमुल् । तत्र परीप्साग्रहणस्य प्रायिकाभिप्रायत्वादिति 'अनुदात्तं पदमेकवर्ज'मित्यत्र हरदत्तः । **अविशेषादिति** । 'अहस्त्वाविशेषादुत्तमवर्जे'मित्यत्र विशेषनियामकाभावाच्चेत्यर्थः । उत्तरार्धं शङ्कोत्तरत्वेन व्याचष्टे—**स्यादेतदित्यादिना । साचेति** । उत्तमेऽहनि यज्ञस्य समाप्तिसद्भावादिति भावः । **ननु** 'तेन ह्यन्नं क्रियत'इतिवदयमर्थवादो न हेतुरित्यत आह—**अथापीति** । 'असंस्थितो हि तर्हि यज्ञ' इत्यस्य स्तुत्यर्थत्वेऽपि निरालम्बनस्तुतेरभावात्स्तुत्यालम्बनभूतसंस्थाभावो येष्वहःसु संभवति तेष्वेव पत्नीसंयाजान्तत्वं स्तुत्यर्थवाक्यशेषबलाद्व्यवतिष्ठते नोत्तम इत्यर्थः । **अञ्जन इति** । 'अक्ताः शर्करा उपदध्या'दित्यत्राञ्जने 'तेजो वै घृत'मित्यादिवाक्यशेषे स्तूयमानं घृतं यथा साधनत्वेन व्यवतिष्ठते एवमित्यर्थः । भवेदेवं व्यवस्था यद्युत्तमेऽहनि स्तुत्यालम्बनं न स्यात् । नत्वेतदस्ति । असंस्थितशब्दस्य चिरसंस्थाभिप्रायत्वे तत्राप्यालम्बनसंभवात् । नचैवमसंस्थितशब्दस्य गौणत्वं स्यादिति वाच्यम् । अविशेषप्रवृत्तविधिसंकोचापेक्षयार्थवादगतासंस्थितशब्दगौणताया एव न्याय्यत्वादित्याशयेन परिहरति—**नैवमिति** । लक्षणापि निरूढत्वान्नात्यन्तदोष इत्यभिप्रायेणाह—**यथेति । शेषमिति** । पत्नीसंयाजानन्तरभाविहारियोजनादि यदहःशेषं तल्लुप्यतामित्यर्थः । **अशेषमिति** । इदमेवाहःशेषमशेषं लुप्यतामित्यर्थः । एवंच पूर्वपक्षे उत्तमेऽहनि हारियोजनादिकमहःशेषं वर्जयित्वाऽवभृथादिकमेव कर्तव्यं सिद्धान्ते त्वहःशेषोऽपि कर्तव्य इति भेदः । अपेक्षितविधित्वमेवोपपादयति—**द्वादशेति** । 'द्वादशाहेन प्रजाकामं याजये'दिति द्वादशाहयागाः सहचोदितत्वात्सह कर्तव्या इत्यर्थः । **तत्रेति** । साङ्गानां प्रधानानां सहानुष्ठानं चोदितं तत्राग्नीषोमीयान्तानि पूर्वाण्यङ्गानि, अवभृथादीन्युत्तराङ्गानि च तन्त्रेणानुष्ठेयानि । अग्नीषोमीयान्तपूर्वाङ्गावभृथाद्युत्तराङ्गयुक्ततया पृथक्पृथगेकैकस्याह्नोऽनुष्ठाने सहत्वविरोधान्मध्यवर्तिनस्त्वावर्तनीयाः । तत्र पूर्वोत्तराङ्गतन्त्रतामात्रेण न सहत्वं किंतु मध्यवर्तिष्वप्याग्नेयाग्नीषोमीयादिष्वदेकैकस्य प्रधानस्यैकैकमङ्गमनुष्ठायापरस्याप्येकैकानुष्ठानमित्येवं व्यतिषङ्गेण यद्यनुष्ठीयेत तदानीमेव सहत्वं निर्वहति । इह चाहर्भेदेनानुष्ठेयानां प्रधानानां व्यतिषङ्गेणानुष्ठानासंभवान्मध्यवर्तिपदार्थे कस्मिंश्चित्पूर्वपूर्वमहरवस्थाप्योत्तरमुत्तरमहरुपक्रम्यानुष्ठितं चेदेवं सहत्वनिर्वाहः । तत्र च कस्मिन्पदार्थेऽवस्थाप्यमित्यपेक्षायां पत्नीसंयाजान्तवाक्यं प्रवर्तत इत्यर्थः । **एवं** सति चोदकानुग्रहश्चेत्याह—**चोदक इति** । नन्वस्मिन्नपि पक्षे पूर्वेषामह्नां पत्नीसंयाजानन्तरभाविपदार्थानुष्ठानाभावाच्चो-

---

१ शेषं लुप्यते. २ शेषलोपस्तु चोदकबाधेनानपेक्षितश्च.

ष्ठादनुष्ठेयमिति। तस्मात्प्रागुत्तमात्पत्नीसयाजान्तता। तथाचासंस्थितशब्दोऽपि मुख्यो भवति। अविशेषप्रवृत्तोऽपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वम्। कः पुनरूहोपयोगश्चिन्तायाः। पूर्वपक्षे विकृतिषु नोहः। सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहर्द्वितीयं तृतीयं वा तत्प्रकृतौ पत्नीसंयाजान्तमप्यनुष्ठितमूहित्वा सकलमनुष्ठीयते॥

सामिधेनीनामभ्यासस्य स्थानधर्मताधिकरणम्॥ ९॥

## अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात्॥ ३३॥

**त्रिरनूक्तिर्ऋचो धर्मः स्थानधर्मोऽथवाग्रिमः॥ स्त्रीलिङ्गत्वान्न तत्प्रातिपदिकप्रबलत्वतः॥ १४॥**

दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय एकादशर्चः पठित्वा 'त्रिःप्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश संपद्यन्त' इति श्रुतम्। तत्र संशयः किमयं त्रिरभ्यासः प्राथम्यलक्षिताया ऋचः प्रवोवाजीयाया धर्मस्तत्कार्यार्थस्ततश्च यत्र तत्रस्था प्रवोवाजीया त्रिरभ्यसितव्या उत प्रथमस्थानधर्मस्तत्स्थानगतकार्यप्रयुक्तः। ततश्च प्रवोवाजीयाया अन्यापि या विकृतिषु प्रथमुच्यते साप्यूहेन त्रिरभ्यसितव्येति। 'तत्र स्त्रीलिङ्गनिर्देशादृगनेनाभिधीयते॥ तस्या एव त्रिरभ्याससंबन्धोऽत्र विधीयते॥' उच्यते—'श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते॥ ऋक्तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता॥' प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते यत्प्रथममुच्यते तत्त्रिरिति। तच्च प्राथम्यमृगाश्रयत्वेनैव प्राप्तं 'गुणवचनानां च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति नित्यानुवादः स्त्रीलिङ्गनिर्देशः। नच प्राथम्यसंबद्धस्य पदमात्रस्य पादमात्रस्य वा त्रिरभ्याससंबन्धसंभवान्न नित्यानु-

---

दकलोपस्तुल्य इत्याशङ्क्याह—**तस्मादिति**। नह्यत्र पक्षे लोपः किंतूत्तमेहनि सर्वाहःसाधारण्येनाहःशेषोऽनुष्ठीयत इति चोदकानुग्रह इत्यर्थः। **अविशेषेति**। यदि 'अक्ताः शर्करा' इत्यादौ अविशेषप्रवृत्तो विधिः 'तेजो वै घृत'मिति वाक्यशेषस्य द्रवद्रव्यमात्रोपलक्षकत्वे गौणत्वं स्यादिति तन्मुख्यत्वाय वाक्यशेषावगते विशेषे स्थाप्यते तदा किं वक्तव्यं न्यायादेव विशेषविषयस्य वाक्यशेषमुख्यत्वाय विशेषविषयत्वमित्यर्थः। **कः पुनरिति**। हारियोजनाहःशेषलोपविचारस्य बाधलक्षणे संगतत्वादिति भावः। **पूर्वेति**। द्विरात्रादिविकृतिषु द्वादशाहिकदशरात्रगतानां द्वितीयादीनामन्त्यत्वेऽपि यथा प्रकृतिपत्नीसंयाजान्ततयैवानुष्ठानमिति पूर्वपक्षे नोहः, सिद्धान्ते तु प्रकृतौ द्वितीयतया पत्नीसंयाजान्तस्यापीहान्त्यतया सकलानुष्ठानमिति प्रयोगविकारादूह इत्यर्थः॥

**अभ्यासः सामिधेनीनां०॥ ३३॥ विधायेति**। 'पञ्चदशसामिधेनीरन्वाहे'त्यनेनेति शेषः। **ननु** प्रथमाशब्दस्य प्रवोवाजीयावाचकत्वाभावात्कथं प्रवोवाजीयाधर्मत्वकोटेरुन्मेष इत्यत आह—**प्राथम्येति**। ननु स्वरूपेण प्रवोवाजीयाधर्मत्वे आनर्थक्यं स्यादित्यत आह—**तत्कार्येति**। पूर्वपक्षकोटेः फलमाह—**यत्रतत्रेति**। **तत्स्थानेति**। प्रथमस्थानगतस्य यत्कार्यं तत्प्रयुक्त इत्यर्थः। सिद्धान्तकोटेः फलमाह—**ततश्चेति**। यद्यपि प्रकृतौ प्रथमस्थानगतकार्यं प्रवोवाजीयाकार्यमप्येकं तथापि प्रवोवाजीयाकार्यत्वेन न प्रयोजकता किंतु प्रथमस्थानगतकार्यत्वेनेति विकृतौ तत्स्थानगतऋगन्तरे त्रिरभ्यासलक्षणसंस्कारा ऊहितव्या इत्यर्थः। **ननु** श्रुत्या प्रथमस्थानमात्रवाचकस्य ऋक्परत्वे लक्षणाप्रसङ्गादृग्धर्मतया कथं पूर्वःपक्ष इत्यत आह—**तत्रेति**। स्त्रीलिङ्गनिर्देशादृक्परत्वमवश्यं वाच्यम्। अन्यथा प्राथम्यस्य पदवर्णादिसाधारण्येन प्रथमशब्दार्थस्य स्त्रीत्वं नियमेन न प्राप्तमित्यनुवादासंभवात्तदपि विधेयम्। तथाच त्रिरभ्यासं स्त्रीत्वं चेत्यनेकार्थविधानाद्वाक्यं भिद्येत तस्मात्स्त्रीलिङ्गनिर्देशादृक्परत्वं ऋचश्च स्त्रीत्वात्स्त्रीलिङ्गमनुवाद इति भावः। **ननूक्तं** स्त्रीलिङ्गनिर्देशबलाल्लक्षणाश्रीयत इति तत्राह—**प्राथम्येति**। प्राथम्यस्याभ्यासायोग्यत्वात्तदेकार्थसमवाय्यभ्यासो विधीयत **इत्यर्थः**। **तच्चेति**। तथाच प्राथम्याश्रय ऋग्गतस्त्रीत्वानुवादः स्त्रीलिङ्गमिति भावः। **नन्वेवमपि** प्रातिपदिकार्थरूपप्राथम्यगतस्त्रीत्वाप्राप्तेर्न लिङ्गमनुवाद इत्यत आह—**गुणेति**। महाभाष्ये 'विशेषणानां चाजाते'रिति सूत्रं यथाश्रुतं प्रत्याख्याय विशेषणशब्दस्य गुणवाचित्वाभिप्रायेण 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ती'त्येतदर्थकतया व्याख्यातत्वादाश्रयतो लिङ्गमुपपन्नमिति भावः। यद्यपि शाब्दिकैर्गुणविशिष्टाभिधानदशायामेवाश्रयतो लिङ्गवचनप्राप्तिर्व्यवह्रियते नतु केवलगुणाभिधानदशायां तथापि गुणशब्दानां विशेषणशब्दत्वाद्गुणविशिष्टद्रव्याभिधाने वचनेन विनापि विशेष्यभूताश्रयवाचकशब्दान्तरसामानाधिकरण्येन लिङ्गवचनप्राप्तिसंभवादिदं सूत्रं वाक्यसंस्कारपक्षेऽनुवादकं स्यात्। तस्मादस्य सूत्रस्य विधा-

---

१ प्रथमं पठ्यते.

वादत्वं स्त्रीलिङ्गस्येति मन्तव्यम्। ऋच एव कार्यसमर्थाया वचनस्य प्राप्तत्वात्ताः पञ्चदश संपद्यन्ते इति च वादात्तस्मात्स्थानधर्मः॥

आरम्भणीयेष्ट्यधिकरणम्॥ १०॥

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया॥ ३४॥ [सकृद्वारम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात्॥ ३५॥]**

प्रतिप्रयोगमारम्भयजिरस्ति न वास्त्यसौ॥ अङ्गत्वेन न तत्सर्वधर्मे आधानवद्भवेत्॥ १५॥
अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः॥ फलवत्त्वादादिमोऽन्त्यः पुंयोगान्न पृथक्फलम्॥ १६॥

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीयाम्नाता 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः सरस्वत्यै चरुं सरस्वते चरु'मिति। सा किं दर्शपूर्णमासावृत्तावावर्तेत उत सकृदेवादौ स्यादिति संशयः—'आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया॥ दर्शाद्यङ्गमियं तस्मादावर्तेत प्रयाजवत्॥' उच्यते—'आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः॥ तस्य साधारणत्वेन सापि साधारणी भवेत्॥' आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिर्न साक्षाद्दर्शपूर्णमासाङ्गम्। आरम्भश्चेदं मया कर्तव्यमित्यध्यवसायः स च सर्वप्रयोगाणां साधारणः। सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्णमासौ पर्वणि पर्वणि कर्तव्याविति। तस्मादारम्भसाधारण्यात्तदङ्गभूतान्वारम्भणीयापि साधारणी न प्रतिप्रयोगमावर्तनीया। एवं वृत्तिकारमतेनाधिकरणं व्याख्याय तत्रापरितोषाद्व्याख्यान्तरं भाष्यकारेण कृतम्। कस्य हेतोरपरितोषः। नाध्यवसायवचनोऽयमारम्भशब्दः। प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः। यद्यपि चाध्यवसायवाची स्यात्तथापि यद्यदा कार्यमुपस्थितं तस्यैव तदाध्यवसायो न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः। नह्ययमेकः प्रयोगोऽभ्यस्तरूपः पर्वकालीनं तु जीवनं दर्शानुष्ठाननिमित्तम्। तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्तादृश-

---

यकत्वसिद्ध्यर्थं केवलगुणाभिधानदशायामपि विशेष्यभूतादाश्रयतो लिङ्गवचने भवत इत्यत्रापि सूत्रस्य तात्पर्यं वक्तव्यम्। अतएवारुणयेत्यादावाकृत्यधिकरणन्यायेन गुणमात्रवाचकत्वेऽपि स्त्रीलिङ्गमिति द्रष्टव्यम्। **ऋच एवेति**। अर्थप्रतिपत्तिलक्षणकार्यार्थमनुवचनं त्रिरभ्यासोऽपि तदर्थः। अर्थप्रतिपत्तिलक्षणकार्यार्थत्वं च वाक्यभूताया ऋच एव न प्रथमपदवर्णमात्रस्येति नित्यप्राप्तं स्त्रीलिङ्गमित्यर्थः। **ता इति**। ताः पञ्चदश संपद्यन्त इत्यनेन प्रथमोत्तमयोस्त्रिरभ्यासे सामिधेनीनां पाञ्चदश्यं भवतीत्युच्यते तच्च पदवर्णाभ्यासे न संभवतीति ऋगेवाभ्यसितव्या। एवंचापेक्षितपाञ्चदश्यसिद्ध्यर्थं ऋच एवाभ्यासविधिरिति स्त्रीलिङ्गं नित्यानुवादः। एतेन पूर्वत्र यथापेक्षितविधिलोभेन पत्नीसंयाजान्तत्वमुत्तमवर्जमित्युक्तम्। एवं पाञ्चदश्यसिद्ध्यर्थमपेक्षितऋगभ्यास एव विधीयत इति प्रतिपादनात्संगतिरपि सूचिता। सूत्रार्थस्तु—सामिधेनीनां मध्ये प्रथमोत्तमाभ्यासः प्राथम्यसंबन्धात्प्रथमशब्देनोपस्थितत्वाद्वा स्थानधर्म इति॥

**इष्ट्यावृत्तौ प्रयाजवत्०॥ ३४॥** अभ्यासप्रसङ्गाच्चिन्तेति संगतिः। **उतेति**। प्रथमप्रयोग एवेत्यर्थः। **आवृत्तौ हीति**। यद्यप्यङ्गानि दर्शपूर्णमासकर्मार्थतया विनियुक्तानि तथापि यदा कार्यमपूर्वं प्रति कर्मणा व्याप्रियते तदाङ्गैरुपकर्तव्यं व्यापृतिश्च प्रयोग इति प्रयोगाङ्गीभूतान्येव प्रयाजादीन्यङ्गानीति प्रतिप्रयोगमावृत्तिरसंशयेत्यर्थः। **दर्शादीति**। 'दर्शपूर्णमासावारप्स्यमान' इति वचनात्प्रकरणाच्च दर्शपूर्णमासाङ्गं ननु स्वतन्त्रेत्यर्थः। **आरम्भेति**। सत्यं दर्शपूर्णमासाङ्गमिष्टिः तथापि न साक्षात् किंतु आरम्भद्वारा। आरम्भश्च सर्वप्रयोगसाधारण इति तद्द्वारिकेष्टिरपि साधारणीत्यर्थः। **ननु** प्रतिप्रयोगमारम्भभेदात्कथमारम्भस्य साधारण्यमित्याशङ्क्योपपादयति—**आरम्भश्चेति**। यद्यपि प्रतिप्रयोगं तत्तत्प्रयोगारम्भो भिद्यते तथापि यावज्जीवमिमौ कर्तव्यावित्यध्यवसायात्मक आरम्भः सर्वसाधारण इत्यर्थः। **प्रथमेति**। यद्यपि प्रथमप्रवृत्तिवाचित्वेऽपि सकृत्प्रयोगः सिद्ध्यति तथापि वृत्तिकारोक्ताध्यवसायवाचित्वनिराकरणे तात्पर्यमिति न दोषः। **ननु** 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्येकशास्त्रचोदितत्वाद्यावज्जीविकानामपि प्रयोगाणां युगपदुपस्थितिर्भविष्यतीत्यत आह—**नहीति**। यावज्जीववाक्ये कर्मार्थोऽभ्यासविधिर्न भवतीति द्वितीये व्युत्पादनादिति भावः। **पर्वकालीनं त्विति**। यावज्जीववाक्यस्याभ्यासविधायकत्वाभावेन निमित्तपरत्वात्पौर्णमास्यादिवाक्येन चैकवाक्यतायां पर्वकालीनजीवनं निमित्तमवगम्यत इत्यर्थः। **नन्वभ्यासस्याविधाने कथं प्रतिपर्वानुष्ठानमित्यत आह—तस्मिन्निति**। तथाच प्रयोगाणां क्रमेणैवोपस्थितिरिति न सर्वप्रयोगगोचरमेकमध्यवसानमित्यर्थः। एवंचाधानानन्तरं मया नित्यानि नैमित्तिकानि काम्यानि च यथासंभवं कर्तव्यानीति बुद्धिमात्रं कस्यचिज्जायमानमपि न कस्यचित्कर्मणोऽङ्गमिति भावः। एतेन सर्वप्रयो-

निमित्तवशान्नैमित्तिकमापतितमिति पुनः क्रियते। यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मन्यपि पुनर्निर्वपति तादृगेतत्। तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाप्यावर्तेतेति तत्सिद्धान्तसिद्धिः। तस्मादेवं व्याख्यायते—किं प्रथमस्याग्न्यन्वाधानात्मकस्य पदार्थस्याङ्गमियमुत दर्शपूर्णमासावारभमाणस्य प्रथमं प्रवर्तमानस्य पुरुषस्याङ्गमिति। तत्र—'पुरुषार्थत्वपक्षेऽपि फलक्लृप्तिः प्रसज्यते॥ तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्यतः॥ तस्यावृत्तौ तदङ्गत्वादेषाप्यावृत्तिमश्नुते॥ प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते॥ नखल्वारम्भशब्देन पदार्थः कश्चिदुच्यते॥ यदेव ह्यप्रवृत्तस्य कर्तुराद्यप्रवर्तनम्॥ तत्रायं वर्तते शब्दस्तद्योगात्तु पदार्थधीः॥ आरप्स्यमाणशब्दस्तत्कर्तुः श्रुत्यैव वाचकः॥ लट्प्रत्ययोऽपि श्रुत्यैव तादर्थ्यस्याभिधायकः॥ आद्या प्रवृत्तिरेकैव बह्व्यो नैकस्य कर्मणः॥' प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमनेन प्रतिपाद्यते न श्रुत्या। नच श्रुतिसंभवे लक्षणा युक्ता। तस्मान्नाग्न्यन्वाधानसंबन्धः। दर्शादिकर्तुः पुरुषस्य शानचाभिहितस्य संस्कारिकेयमारम्भार्थतया लट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेनं प्रतिपाद्यते। अतो न पुरुषार्थत्वेऽपि फलकल्पना। नचैकस्यैव कर्मणो बह्व्यः प्रथमप्रवृत्तयः संभवन्ति किंत्वेकैव। ननु द्वितीयादीनपि प्रयोगानसावारभत एव। सत्यम्। प्रयोगानारभते नतु दर्शपूर्णमासावारभते। दर्शपूर्णमासारम्भाङ्गं चेयं प्रथमप्रवृत्तिश्चारम्भः। नच द्वितीयादि प्रयुञ्जानः प्रथमं प्रयुङ्क्त इति शक्यते वक्तुम्, तस्मात्तदारम्भाङ्गत्वात्तस्य चावृत्त्यभावादारम्भणीया नावर्तते॥

निर्वापादिमन्त्रे सावित्रादिपदानामनूहाधिकरणम्॥ ११॥

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात्॥ ३६॥ [ततश्चावचनं तेषामितरार्थं प्रयुज्यते॥ ३७॥]**

सवित्रश्व्याद्यूहनीयं न वाऽर्थः संगतस्ततः॥ ऊहो नाविकृतस्यैव निर्वापान्वयसंभवात्॥ १७॥

दर्शपूर्णमासयोर्निर्वापमन्त्रः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी'ति। तत्र सवित्रश्विपूषशब्दाः किं समवेतदेवताप्रकाशनार्थास्ततश्च विकृतावूहितव्याः उतासमवेतवचना निर्वापविशेषणमात्रार्था नोहितव्या इति।—'तत्र दृष्टार्थतालाभाद्देवतावाचिता

---

गाणां युगपत्कर्तव्यताध्यवसायाभावप्रतिपादनेन दर्शपूर्णमासावारप्स्ये ताभ्यां यावज्जीवं यक्ष्य इति याज्ञिकोक्तः संकल्पोऽपि न न्यायमूलक इत्युक्तं भवति। भाष्यकारमते किमारम्भशब्दो दर्शपूर्णमासाद्यं पदार्थमग्न्यन्वाधानाख्यमभिधत्ते ततस्तदर्थान्वारम्भणीया उत यदप्रवृत्तस्य पुरुषस्याद्यप्रवर्तनं तदभिधत्ते। ततश्च तत्कर्तुः शानचाभिहितस्य संस्कारिकेति तदर्थसंशयमभिप्रेत्य पूर्वपक्षमाह—**प्रथमस्येति**। आरम्भशब्दस्य प्रथमपदार्थपरत्वादिति भावः। **नन्वप्रवृत्तप्रवृत्तिवाचकस्यारम्भशब्दस्य** तद्विषयतयाऽऽद्यपदार्थपरत्वं वाच्यम्। तथासति लक्षणा स्यात्। अत आरम्भशब्दस्याद्यप्रवृत्तिपरत्वमेवाङ्गीकृत्य तत्कर्तृतया शानजभिहितपुरुषार्थत्वमेव युक्तमित्यत आह—**दर्शेति**। आरभमाणस्येत्यस्य विवरणं—**प्रथममिति**। फलकल्पनापेक्षया लक्षणैव ज्यायसीति भावः। **स ह्यारम्भ इति**। अग्न्यन्वाधानमारभ्यत इत्यारम्भः प्रथमपदार्थ इति यावत्। **तद्योगादिति**। लक्षणयेति शेषः। **तत्कर्तुः** आरम्भकर्तुरित्यर्थः। शानचः कृत्त्वेन कर्तृवाचकत्वादिति भावः। **लट्प्रत्यय इति**। यद्यपि क्रियार्थायां क्रियायामुपपदे विहितलट्प्रत्ययबलादारम्भार्थत्वमेव प्रतीयते तथापि कृदन्ततयाऽऽरभमाणपुरुषसंस्कारकत्वमेवावगम्यत इति लट्प्रत्ययः श्रुत्या पुरुषसंस्कारकत्वमवगमयतीत्युक्तम्। एवंचारम्भार्थायास्तस्या आरम्भभेदे आवृत्तिः स्यान्नचात्र सोऽस्तीत्याशयेनाह—**आद्येति**। श्लोकतात्पर्यमाह—**प्रथमेति**। **अत इति**। पुरुषार्थत्वेऽपि क्रतुप्रकरणादारम्भयोगाच्च स्वतन्त्रपुरुषार्थत्वाभावेनारम्भयुक्तपुरुषसंस्कारकतया दीक्षणीयादिवत्क्रत्वङ्गतया न फलकल्पनाप्रसङ्ग इति भावः। **तस्मादिति**। आरम्भार्थतया सर्वप्रयोगबहिर्भूताया अगृह्यमाणविशेषत्वेन सर्वार्थत्वान्न प्रतिप्रयोगमावृत्तिरिति भावः॥

**अर्थाभिधानसंयोगात्०॥ ३६॥** उपोद्घातप्रसक्तानुप्रसक्तं समाप्येदानीमध्यायार्थं ऊहश्चिन्त्यत इति संगतिः। तदर्थसंशयगर्भमधिकरणाङ्गसंशयमाह—**तत्रेति**। ननु प्रशंसाद्वारा निर्वापप्रकाशकत्वात्कथमसमवेतवचना इति सिद्धान्तकोटिरित्यतस्तात्पर्यमाह—**निर्वापेति**। प्रशंसाद्वारा निर्वापविशेषणत्वेऽपि न स्वार्थस्य सवित्रादेः समवेतत्वमिति भावः। **अदृष्टार्थतामिति**। प्रशंसाया दृष्टप्रयोजनाभावात्तथाच मन्त्राणां दृष्टार्थत्वमिति मन्त्राधिकरणोक्तं विरुध्येतेति भावः।

---

१ सिद्धान्त. २ पक्षे हि. ३ अनयोः दर्शपूर्णमासयोः. ४ तदर्थस्या. ५ धानेन संबन्धः. ६ विहितेनेयं.

भवेत् ॥ निर्वापस्य प्रशंसार्थाः सन्तोऽदृष्टार्थतामियुः ॥ सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते ॥ अग्निना वा विकल्पेत सविता मान्त्रवर्णिकः ॥ उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्पते ॥ वैषम्यान्न सवित्रादिपदमग्नेश्च वाचकम् ॥ मन्त्रवाक्यानि चैतानि भिद्येरन्प्रतिदैवतम् ॥ जुष्टनिर्वापशब्दौ च भजेतामनुषङ्गिताम् ॥ सर्वेश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते ॥ जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम् ॥' तस्मान्निर्वापमेवैते प्ररोचयितुमनुष्ठानकाले प्रशंसितुं प्रकाशयन्तीति नोहितव्याः ॥

वर्णकद्वयसहिताधिकरणम् ॥ १२ ॥

## गुणशब्दस्तथेति चेत् ॥ ३८ ॥ [न समवायात् ॥ ३९ ॥]

**तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः ॥ सवित्रादिवदाद्यो नो समवेतार्थवर्णनात् ॥ १८ ॥**
**नोह्य ऊह्योऽथवा धान्यशब्दो नासंगतोक्तितः ॥ ऊह्यो लक्षणयार्थस्य गोपानस्येव संगतेः ॥ १९ ॥**

तस्मिन्नेव मन्त्रे 'अग्नये जुष्टं निर्वपामी'त्यग्निशब्दोऽपि किमसमवेतवचनो नोहितव्य उत समवेतवचन ऊहितव्य इति । 'तत्रायं समवेतोऽग्निरस्मिन्कर्मणि यद्यपि ॥ मन्त्रे त्वत्राग्निशब्दो न समवेताभिधायकः ॥' जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं तदुच्यते । नच निर्वापवेलायामग्निना सेवितं द्रव्यम् । तस्माज्जुष्टशब्दस्तावदसमवेतवचनस्तद्विशेषणं चाग्निपदमतोऽसमवेतवचनं सवित्रा-

---

**ननु** सवित्रादिशब्दानामग्न्यभिधायकत्वं लक्षणया वाच्यम् । तथासति विकृतावपि लक्षणया सूर्यादिप्रकाशकत्वसंभवादस्मिन्पक्षे कथमूहसिद्धिरितिचेन्न । प्रकृतौ लक्षणाया आर्थिकत्वेन विकृतौ लक्षकशब्दोपादानस्यायुक्तत्वात् । एतच्च धान्यशब्दोहनिरूपणावसरे निपुणतरमुपपादयिष्यामः । तथापि लिङ्गवचनोहावश्यंभावाच्चेति भावः । **अग्निना वेति ।** यद्यपि विषमशिष्टतया विकल्पायोगात्सवित्रादिमन्त्रवर्णैः पृथग्भूतैः सवित्रादिदैवत्यकर्मान्तरकल्पनैवेति परोक्तपूर्वपक्ष एव युक्तस्तथापि वाक्यान्तरपक्षे तेषां प्रयाजादितुल्ययोगक्षेमत्वात् अविकृतस्वमन्त्रदेवतायुक्तानामेव विकृतावनुष्ठेयतया ऊहासिद्धिप्रसङ्गाद्विषमशिष्टविकल्पमप्यङ्गीकृत्य पूर्वपक्षः कृत इति द्रष्टव्यम् । सिद्धान्तमाह—**उत्पत्ताविति** । यदाग्नेय इति उत्पत्तिशिष्टेन तद्धितोक्तेन चाग्निना उत्पन्नशिष्टत्वान्मन्त्रवर्णप्राप्तत्वात्सवित्रादयो न विकल्प्यन्ते उत्पत्तिशिष्टादुत्पन्नशिष्टस्य तद्धितोक्तान्मन्त्रवर्णोक्तस्य दुर्बलत्वेन विषमशिष्टत्वादित्यर्थः । एतद्दोषपरिहारार्थं सवित्रादीनामुत्कर्षकल्पने तु स एव दोष इति भावः । **वाचकम् ।** प्रतिपादकमित्यर्थः । लक्षणाप्रसङ्गादिति भावः । **मन्त्रेति ।** सवित्रादिशब्दानामग्निपरत्वपक्षेऽपि स्वशब्देनाभिहितस्याग्नेः पुनर्लक्षणया सवित्रादिशब्दैरभिधानानपेक्षणान्मन्त्रभेदानुषङ्गयोः पक्षद्वयसाधारण्येनोपन्यासः । नच 'स्योनं ते सदनं करोमी'त्यादिवल्लिङ्गबलान्मन्त्रवाक्यभेदो न दोष इति वाच्यम् । युक्तं तत्र सदनकरणप्रतिष्ठापनयोर्वचनादर्थाद्वा प्राप्तत्वाल्लिङ्गान्मन्त्रविभाग इति । इह तु मन्त्रभेदे सिद्ध एव तद्बलाद्देवताप्राप्तिर्वाच्या । ततश्च देवताप्राप्तिपूर्वप्रतीतैकवाक्यताभञ्जकं न किंचिदपीति भावः । इष्टापत्तिमाशङ्क्याह—**सर्वश्चेति । सकृदिति ।** यद्यपि सकृदाम्नातस्थल एवानुषङ्गस्तथापि सकृदाम्नातस्यैकान्वयमात्रेण निराकाङ्क्षत्वान्नानुषङ्गो युक्त इति भावः । प्रशंसायामदृष्टार्थत्वमुक्तं परिहरन्नुपसंहरति—**तस्मादिति । अनुष्ठानेति ।** अनुष्ठानकाले च प्रशंसोत्साहजननार्थेति नादृष्टार्थेति भावः । **नोहितव्या इति ।** विकृतावपि प्रकृतिवदेव स्वार्थाभिधायकस्यैव प्रशंसार्थत्वसंभवादिति भावः । सूत्रार्थस्तु—मन्त्राणामर्थाभिधानद्वारा कर्मणि शेषभावात्सवित्रादीनामपि स्वार्थाभिधानेन शेषभावे समवेतार्थत्वादूह इति अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यादित्यनेन पूर्वपक्षः प्रतिपाद्यते । तत्रोत्तरमचोदितमचोदितार्थकं सवित्रादि ऊहमप्राप्तं मन्त्रस्य चोदिताभिधायकत्वात् ॥

**गुणशब्दस्तथेति चेत् ॥ ३८ ॥** तस्मिन्नेवेत्यनेन तत्रैव मन्त्रेऽग्निशब्दस्य विचारात्संगतिरपि सूचिता । सवित्रादिशब्दवदग्निशब्दस्यापि नोह इत्युत्थानाद्वा संगतिः । **ऊहितव्य इति ।** विचार्यत इति शेषः । **नन्वत्र** कर्मण्यग्नेर्देवतात्वात्तत्प्रकाशकस्याग्निशब्दस्य कथमसमवेतार्थकत्वमित्याशङ्क्य पूर्वपक्षमुपपादयति—**तत्रेति । मन्त्रेत्विति ।** अस्मिन्मन्त्रे जुष्टविशेषणतयाग्निशब्दस्य श्रवणाद्विशेष्यभूतजुष्टशब्दस्यैवासमवेतवचनत्वात्तद्विशेषणस्य सुतरामसमवेतवचनत्वमित्याशयेनाह—**जुष्टमिति । भूतेति.।** निष्ठाया भूते विधानादिति भावः । यद्यपि चतुर्थीनिर्देशादग्नेर्न कर्तृतयान्वयस्तथाप्याग्निना यत्सेवितमित्ययुक्तं, तथापि जुष्टमित्यस्य कर्त्रपेक्षायां संनिधानादग्नेरेव कर्तृत्वमित्यभिप्रायेणाग्निना सेवितमित्युक्तम् । यद्यपि जुषिधातुः प्रीतिसेवालक्षणार्थद्वयवाचकस्तथापि प्रीत्यर्थत्वेऽकर्मकत्वेन प्रकृते कर्मणि निष्ठानुपपत्त्या सेवार्थकतया व्याख्यातः । **नचेति ।** पुरोडाशावस्थायां तत्सेवनादिति भावः । **तद्विशेषणमिति ।** नच निर्वापक्रियायैवाग्नेरन्वयोऽ-

द्विपदवत्प्रशंसार्थं कीर्तितमित्यनूहः। उच्यते—'नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते ॥ निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना ॥' नायमर्थः यज्जुष्टं तस्य निर्वापं करोमीति किं तर्हि निर्वापेणाग्नये जुष्टं करोमीति। यथा जुष्टं भवति तथा करोमीत्यर्थः। तस्मात्समवेतवचनत्वादग्निशब्दस्योहः ॥ एवं वा ॥ यस्तु मुख्यवृत्त्या समवेतं न वदति यथा 'धान्यमसि धिनुहि देवा'निति तण्डुलेषु धान्यशब्दः सतुषद्रव्यवचनः स किमसमवेतवचनत्वादनूह्य उतोह्य इति संशये समवेतप्रकाशनासामर्थ्याद्दृष्टार्थोऽयं तस्मादनूहः। लक्षणया तु प्रकृतिवदुपचाराद्विकृतिं प्रकाशयन्नादृष्टार्थः कल्पयितुं न्याय्यः। तस्मात्तण्डुलानेव प्रकृतिशब्देन शालयो भुज्यन्त इतिवत्प्रकाशयतीति तरसमये हविषि शाक्यानामयने मांसमसीत्यूहितव्यम्। आर्थिकी च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा नतु सैव विवक्षिता। विकृतौ तु लक्षणाकारणाभावान्मुख्य एव मांसशब्दः प्रयोक्तव्यो न मृगशब्दः ॥

इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम् ॥ १३ ॥

## चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥४०॥ [विकारस्तत्प्रधाने स्यात् ॥४१॥

**ऊह्यो यज्ञपतिर्नो वा वृद्ध्यर्थोऽस्त्याहतोऽग्रिमः ॥ प्रत्यक्षोक्त्या कृत्स्नमन्त्र इडार्थो नोहनं ततः ॥ २० ॥**
**यजमानो नोहितव्य ऊह्यो वा नहि पूर्ववत् ॥ मन्त्रः फलप्रधानोत ऊह्यः सर्वफलिस्वतः ॥ २१ ॥**

दर्शपूर्णमासयोरिडानिगदे श्रुतं 'उपहूता मनुष्या ये यज्ञपतिं वर्धा'निति। किमेतद्यज्ञपतिवृद्धि-

---

स्त्विति वाच्यम्। अकारकत्वात् 'कर्मणा यमभिप्रैती'त्यत्र ददातिकर्मणेति व्याख्यानेन दानक्रियायामेव संप्रदानान्वयो न निर्वापक्रियायामिति संप्रदानत्वाभावात्। तस्मादग्नय इति तादर्थ्यचतुर्थ्येवेति जुष्टशब्दविशेषणमेवाग्निशब्दः। तथाचायमर्थः—अग्निना सेवितं यदग्न्यर्थं तन्निर्वपामीति। एवंच निर्वापवेलायामग्निसेवितत्वाभावात्तद्विशेषणमग्निशब्दोऽप्यसमवेतवचन इति भावः। **निर्वापकरणेति**। जुष्टसाध्यकक्रृतिर्निर्वापकरणिका कीर्त्यत इति भावः। तदेव विशदयति—**निर्वापेणेति**। निर्वपामीत्यत्र निर्वापः कृतिश्च प्रतीयते। तत्र नायमर्थः निर्वापं करोमीति। तथासति निर्वापे जुष्टस्य साधनत्वं स्यात्तच्चानुपपन्नम्, निर्वापात्पूर्वं जुष्टत्वाभावात् किंतर्हि निर्वापेण करोमीति, तत्र च जुष्टस्य कर्मत्वमिति निर्वापेण जुष्टं करोमीति मन्त्रार्थः। **नन्वेवमपि** निष्ठया भूतत्वप्रतीतेरसमवेतवचनत्वं तदवस्थमित्यत आह—**यथेति**। 'धातुसंबन्धे प्रत्यया' इति निष्ठापि वर्तमानार्थैवाग्न्युद्देशेन निरूप्यमाणत्वमेवाग्निजुष्टत्वमिति जोषणस्य वर्तमानत्वोपपत्तिः। यद्वा 'आशंसायां भूतवच्चे'ति भविष्यति निष्ठेति भावः। सूत्रार्थस्तु—जुष्टविशेषणीभूतोऽग्निशब्दोऽपि सवित्रादिवन्नोह्य इति ॥ **एवंवा** ॥ सूत्रस्थगुणशब्दपदस्य गौणार्थशब्दपरतया वर्णकान्तरमभिप्रेत्य गुणशब्दार्थं सूचयन्नेव विषयं दर्शयति—**यस्त्विति**। **सतुषेति**। अनेन च तण्डुलेष्वपि धान्यशब्दस्य मुख्यत्वमिति शङ्का निरस्ता सतुषद्रव्यनिरूढत्वादिति। **उतेति**। समवेतवचनत्वादिति शेषः। **समवेतेति**। नच लक्षणया धान्यशब्दस्य तण्डुलप्रकाशनसमर्थत्वादिदमयुक्तमिति वाच्यम्। लक्षणायाः पदतात्पर्याधीनत्वात् तण्डुले धान्यशब्दतात्पर्यानवगमात्, किंतु 'धान्यमसि धिनुहि देवानिति दृषदि तण्डुलानधिवपती'ति कृत्स्नस्य मन्त्रस्याधिवापशेषत्वमवगतम्। तच्चादृष्टद्वाराप्युपपन्नमिति न लक्षणाया मूलमिति भावः। सिद्धान्तमाह—**लक्षणयेति**। लक्षणयेत्यस्य विवरणं **प्रकृतिवदुपचारादिति**। लक्षणयापि दृष्टार्थत्वसंभवेऽदृष्टार्थत्वं न कल्पनीयमित्यदृष्टार्थत्वप्रसङ्गरहितो विनियोग एव धान्यशब्दस्य तण्डुले तात्पर्यग्राहक इति भावः। **तरसमय इति**। शाक्यानामयने 'गृहपतिर्मृगयां याति स यान्मृगान् हन्ति तेषां तरसमयाः पुरोडाशा भवन्ती'ति विहित इति शेषः। **नन्व**-स्तूहस्तथापि न मांसमसीत्यूहः किंतु मृगोऽसीत्येव युक्तः, प्रकृतिवाचकेन धान्यशब्देन विकृतिभूततण्डुलप्रकाशनवदिहापि प्रकृतिवाचकमृगशब्देनैव विकृतिभूतमांसप्रकाशनस्य युक्तत्वात् प्रकृतिवाचकधान्यशब्दाम्नानबलेन लक्षणया विकृतिप्रकाशनस्यैव शास्त्रार्थत्वावगमादित्यत आह—**आर्थिकी चेति**। प्रकृतौ धान्यशब्दाम्नानबलादार्थिकी लक्षणा। मांसे तु प्रकृतिक्लृप्तलक्षणया वैकृततण्डुलेष्विव धान्यशब्दस्य प्रवृत्त्यसंभवात्तन्निवृत्तौ मांसप्रकाशनाय शब्दान्तरेऽवश्यमुपादेये वाचको मांसशब्द एवोपादेयो नतु लाक्षणिको मृगशब्दः। नहि धान्यशब्दाम्नानस्य प्रकृतिवाचकेन विकृतिप्रकाशनं कर्तव्यमिति नियमकल्पने सामर्थ्यं किंतु धान्यपदयुक्तमन्त्रस्याङ्गतामात्रे। तथाच न लक्षणायाः शास्त्रार्थत्वमिति भावः। **इदंच मांसस्याप्य**-धिवापोऽस्तीति कृत्वाचिन्तयोक्तम्। वस्तुतस्तु पेषणार्थत्वादधिवापस्य मांसे च पेषणाभावात्तदर्थोधिवापस्तन्मन्त्रश्च निवर्तेत इति द्रष्टव्यम् ॥

**चोदिते तु परार्थत्वाद्विधिवद्विकारः स्यात् ॥ ४० ॥ उपहूता इति**। यद्यपि 'दैव्या अध्वर्यव उपहूता

१ किमेते यज्ञ.

प्रकाशनेन प्रोत्साहकरणेन तत्संस्कारार्थं सदनेकयजमानकेषु कर्मसूहितव्यमुतेडास्तुत्यर्थो यज्ञपति-शब्दो नोहितव्य इति—'इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत् ॥ स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते ॥ वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम् ॥ उत्साहकरणात्स्तुत्यामदृष्टार्थत्वमापतेत् ॥ यजमानेषु बहुषु सर्वसंस्कारसिद्धये ॥ ऊहो यज्ञपतिं वर्धानित्येवं प्राप्त उच्यते ॥ प्रत्यक्षादेव वचनादिडोपाह्वानशेषता ॥ कृत्स्नस्य निगदस्योक्ता तन्मध्यपतितं ततः ॥ न पृथग्भवितुं शक्तमतः स्तुत्यर्थता वरम् ॥ वृद्धिप्रकाशने कल्प्यं लिङ्गेन विनियोजकम् ॥ यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्या विधीयते ॥ लिङ्गादपि ततो वृद्धेर्न स्वार्थेन प्रकाशनम् ॥' सत्रेषु चैकयजमानवृद्धिप्रकाशनेनेडास्तुतिसिद्धेर्नोहः। यत्र पुनर्यजमानस्य प्राधान्यं न पारार्थ्यं, यथा सूक्तवाके 'अयं यजमान आयुराशास्ते' इति तत्र भवत्येवोहः। तदिदमुक्तं **'विकारस्तत्प्रधाने स्यादि'**ति। तदिदं पूर्वस्य परार्थग्रहणस्य प्रत्युदाहरणार्थं सूत्रम्। अथवाधिकरणान्तरम्। सूक्तवाकेऽयं यजमान आयुराशास्ते इति यजमानशब्दः किं सत्रेषूहितव्यो नेति। प्रहरणाङ्गत्वात्सूक्तवाकस्य तद्गतमायुरादिकीर्तनं यज्ञपतिवृद्धिवत्स्तुत्यर्थमतो नोहः।

---

उपहूता मनुष्या य इमं यज्ञमवान् ये यज्ञपतिं वर्धान्'इत्येवमिदं पठ्यते। भाष्ये च तथैवोदाहृतं तथापि दैव्या अध्वर्यव उपहूता इत्यस्य य इमं यज्ञमवानित्यनेनान्वयः। उपहूता मनुष्या इत्यस्य ये यज्ञपतिं वर्धानित्यनेनान्वयः, नतु कृत्स्नस्याप्येकार्थत्वमित्यभिप्रायेणेत्थमुदाहृतम्। **किमेतदिति**। किमेतदनेकयजमानकेषूहितव्यमुत नेति। तदर्थं च किं यज्ञपतिशब्दाभिधेययजमानसंस्कारार्थमिदमुतेडास्तुत्यर्थमिति संशयनिष्कर्षः। सामान्यापेक्षया एतदिति नपुंसकनिर्देशः। **ननु** न प्रकाशनमात्रात्संस्कार इत्यत आह—**प्रोत्साहेति**। ये मनुष्या यज्ञपतिं वर्धयन्तीति यजमानवृद्धिप्रकाशनेन यजमानः प्रोत्साह्यत इति प्रोत्साहजनकत्वेन युक्तं संस्कारत्वमित्यर्थः। प्रकृतौ लाक्षणिकस्यापि धान्यशब्दस्य यद्यूहस्तदा किमु वक्तव्यं प्रकृतौ मुख्यस्य यज्ञपतिशब्दस्येत्युत्थानात्संगतिः। **ननु** 'इडोपहूतेतीडामुपह्वयत' इति श्रुत्या इडोपाह्वाने विनियोगात्कथं लिङ्गेन वृध्यर्थत्वमिति पूर्वः पक्ष इत्यत आह—**इडामन्त्रेति**। इह हि उपहूता मनुष्या इत्यादिकं साक्षादुपादाय श्रुतिर्न विनियुङ्क्ते किंतु प्रतीकेन। प्रतीकेन विनियोगश्च परिमाणज्ञानाधीनः। परिमाणं च प्रश्लिष्टपठितानां यजुषाम् 'अर्थैकत्वादेकं वाक्य'मित्यनेन न्यायेन ज्ञेयम्। वृद्धिप्रकाशनसमर्थस्यास्य तु स्वरसत इडोपहूतेत्यादेर्ब्रह्मदेवकृतमुपहूतमित्यन्तादिडोपाह्वानार्थाद्भेद एव प्रतीयते इति श्रौतो विनियोग एतद्व्यतिरिक्तविषय एव स्यात्, ततश्च श्रुतिविनियोगाभावे इडामन्त्रैकवाक्यत्वबलादेवेडास्तुत्यर्थं वाच्यम्। तच्च लिङ्गाद्दुर्बलमिति लिङ्गेन विभज्यैव स्योनादिमन्त्रवद्यज्ञपतिवृद्धौ विनियोग इति युक्तः पूर्वपक्ष इति भावः। **स्तुत्यामिति**। नच स्तुतेरपि इडाप्रचारार्थतया सवित्रादिपदसाध्यस्तुतिवन्नादृष्टार्थतेति वाच्यम्। मानवीघृतपदीत्यादिभिरेवात्र स्तुतेः सिद्धतया उपहूता मनुष्या इत्यादिस्तुतेरदृष्टार्थत्वावश्यंभवादिति भावः। **सर्वेति**। विशेषनियामकाभावेऽप्येकवचनान्तेन नियमेनाप्येकस्यैव प्रकाश्यतयाऽन्येषां संस्कारो माविलोपीत्येतदर्थं बहुवचनान्ततयोहः कर्तव्य इत्यर्थः। **प्रत्यक्षादिति**। प्रत्यक्षवचनकृतविनियोगस्य यज्ञपतिमन्त्रानन्तरपठितोपहूते द्यावापृथिवी इत्यादिमन्त्रविषयकत्वमवश्यं वाच्यम्। अन्यथा तस्य लिङ्गेनान्यत्रापि विनियोगाभावेनानर्थक्यापत्तेरत इदं मे देवा हविर्जुषतामिति तस्मिन्नुपहूत इत्यन्तस्य कृत्स्नस्य निगदस्यैकवाक्यतामङ्गीकृत्य प्रतीकेन कृत्स्नविनियोग इत्यङ्गीकार्यम्। ततश्च तन्मध्यपतितस्य यज्ञपतिमन्त्रस्यापि श्रुत्या इडोपाह्वान एव विनियोगादिडास्तुत्यर्थत्वमित्यर्थः। **कल्प्यमिति**। लिङ्गस्य श्रुतिकल्पनयैव विनियोजकत्वादिति भावः। इदमुपलक्षणमिडोपाह्वानं विहितं वृद्धिस्तु न विहित इति लिङ्गबलादेव तत्रापि विधिः कल्पनीयः स्यादित्यपि बोध्यम्। **यच्छब्देनेति**। वर्धानित्याख्यातस्य यच्छब्दोपबन्धबलेन ये यज्ञपतिं वर्धयितुं समर्थास्ते मनुष्या ऋत्विज उपहूता इति मनुष्यविशेषणतयैव वृद्धिप्रकाशकत्वेन लिङ्गबलादपि स्वार्थतया न वृद्धेः प्रकाश्यता। तद्विशेषणं च यज्ञपतिशब्दः सुतरां परार्थ इति भावः। एतेन स्योनं ते मन्त्रे यच्छब्दाभावेन स्वार्थतयैव सदनकरणप्रतिष्ठापनयोः प्रकाश्यतया युक्तो लिङ्गबलाद्विभज्य विनियोग इति वैषम्यमिति द्रष्टव्यम्। **एकेति**। एकयजमानवृद्धिप्रकाशनमात्रेणापीत्यर्थः। सूत्रार्थस्तु—चोदितेऽपि यज्ञपतिशब्दे परार्थत्वादिडास्तुत्यर्थत्वादविकारो नोहः स्याद्विश्ववत्, यत्र परार्थतया यजमानो विधीयते 'शुकं यजमानोऽन्वारभत' इत्यादौ तत्र यथैकेनापि तत्सिद्धिरेवमिहाप्येकयजमानवृद्धिप्रकाशनेनापि स्तुतिसिद्धिरिति 'विकारस्तत्प्रधाने स्या'दित्युत्तरसूत्रं प्रत्युदाहरणार्थतया व्याख्यातुमाह—**यत्रेति**। **यथेति**। अत्र यच्छब्दाद्यभावान्न पारार्थ्यमिति भावः। प्रत्युदाहरणेपि पूर्वपक्षस्यं मन्दतयाऽधिकरणान्तरत्वासंभवादिति भावः। **विकारस्तत्प्रधाने स्यात्**। एवं प्रत्युदाहरणतया व्याख्याय यथाभाष्यमधिकरणान्तरत्वेन व्याचष्टे—**अधिकरणेति**। **प्रहरणेति**। 'सूक्तवाकेन प्रस्तरं प्रहरती'ति कृत्स्नस्य सूक्तस्य प्रहरणे विनियोगात्प्रमाणान्तरेणायुरादीनां

---

१ तन्मध्यापतितं.

उच्यते—सर्वाण्येतान्यायुरादीनि श्रुतिविनियुक्तसकलसूक्तवाककरणत्वान्यथानुपपत्त्या प्रस्तरप्रहरणस्य फलानि कल्प्यन्ते क्रियां तत्संबन्धि वा प्रकाशयतो मन्त्रस्य करणतावकल्प्यते। तस्मात्प्रहरणसाध्ययजमानफलप्रकाशनमस्य कार्यम्। सत्रेषु तु यस्यैव यजमानस्य फलं नोच्यते तस्यैव न सूक्तवाकः करणं स्यात् नच फलं प्राप्नुयात्तस्मादूहः ॥

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् ॥ १४ ॥

**असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥४२॥ [कर्माभावादेवमिति चेत् ॥४३॥ न परार्थत्वात् ॥ ४४ ॥]**

हरिवच्छब्द ऊह्यः स्यान्नो वेन्द्रे समवायतः ॥ ऊह्यो मैवं स्तावकत्वादसता स्तुतिसंभवात् ॥ १२ ॥
ऊह्यं तस्यै श्रुतं नो वा भाविवृत्त्या समन्वयात् ॥ एकाब्दायां साण्ड ऊहो नोहः साम्यात्स्तुतिर्द्वयोः ॥ १३ ॥

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः 'इन्द्रा आगच्छ हरिव आगच्छे'त्यादिः सोऽग्निष्टुत्यतिदिष्टस्तत्राग्नेयी सुब्रह्मण्येति वचनादिन्द्रपदस्थानेऽग्निपदं निक्षिप्यते। हरिवदादिशब्दा अपि किमूहितव्या नेति संशयः। तदर्थं च किं समवेतवचना नेति। तत्र 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी' इत्यादिभिरेते गुणा इन्द्रे सन्तीति गम्यते। सन्तिचेत्स्वगुणद्वारेणेन्द्रमेव प्रकाशयितुममीषामुच्चारणं दृष्टार्थं भवति। तेनाग्निरपि स्वगुणद्वारेण प्रकाश्यत इति हरिवदादिशब्दानपोद्धृत्य रोहित-

---

प्रहरणफलत्वानवगमेन यज्ञपतिवृद्धिवदविवक्षिततयाऽऽयुराद्याशिषा विशिष्टयजमानप्रकाशनमदृष्टद्वारा प्रहरणार्थमित्यवगमादेकयजमानप्रकाशनेऽप्यदृष्टसिद्धेर्न बहुषूह इत्यर्थः। अनया च विशेषाशङ्कयोत्थानादधिकरणान्तरत्वसंभवः। न केवलं प्रत्युदाहरणत्वं तथा पूर्ववदनूह इत्युत्थितेः संगतिश्चेति ध्येयम्। **सर्वाणीति**। प्रहरणाङ्गत्वं सूक्तवाकस्य तृतीयानिर्देशात्करणतयैव वाच्यम्। करणत्वं च तत्प्रकाश्यानामायुरादीनां फलत्व एव संभवति नान्यथा इति प्रमाणान्तरानवगतमपि फलत्वं करणत्वान्यथानुपपत्त्यैव कल्प्यत इत्यर्थः। नचैवं पूर्वत्रापि करणत्वान्यथानुपपत्त्यैव वृद्धेः फलत्वं स्यादिति वाच्यम्; यच्छब्दोपबन्धेन परार्थतया प्रकाश्यमानवृद्धेः फलत्वासंभवेन स्तुतिद्वारा क्रियाप्रकाशनेनैव करणत्वस्य निर्वाह्यत्वेन वैषम्यात् अदृष्टद्वारकत्वे तु जपमन्त्रादिवत्करणत्वमेव न स्यादित्याशयेनाह—**क्रियामिति**। तथाच तत्प्रकाश्यानामग्न्यादीनां देवतात्वेन साधनतया संबन्धित्ववदायुरादीनामपि साध्यतया संबन्धित्वमिति भावः। अत्रत्यमेवायुरादीनां फलत्वमन्यार्थतया तृतीयेऽनूदितमिति न पुनरुक्तिरित्युक्तं तन्त्ररत्ने। **नन्वस्त्वायुरादिफलं** तथापि यजमान आयुराशासने कर्तृत्वेन गुणतयैव मन्त्रात्प्रतीयते न प्राधान्येन। ततश्चैककर्तृकतया प्रकाशितमपि फलं प्रहरणेनाविशेषात्सर्वेषूत्पद्यत इति सर्वेषां प्रकाशनानपेक्षणात्कथमूह इत्यत आह—**सत्रेष्विति**। अयं भावः—आयुरादीनां फलत्वस्य प्रमाणान्तरासिद्धतया मन्त्रप्रकाश्यत्वादेव फलत्वं कल्पनीयं तच्च फलितया प्राधान्येन यजमानप्रकाशन एव संभवति न कर्तृत्वेन। ततश्च य एव फलितया न प्रकाशितस्तस्य प्रहरणं प्रति सूक्तवाको न करणमिति तेन प्रस्तरो न प्रहृतः स्यात्ततश्च न फलमाप्नुयादिति सर्वप्रकाशनाय सिध्यत्यूह इति। एवंच तृतीय एव फलत्वसिद्धावप्युक्तरीत्योहासिद्धिशङ्कायां तत्सिद्ध्यर्थतयाप्यपुनरुक्तिः संभवतीति ध्येयम्। यजमानप्रधाने ऊहः स्यादिति सूत्रार्थः ॥

**असंयोगात्तदर्थेषु०** ॥ ४२ ॥ **देवतेति**। **इदं** चेन्द्रपदस्योहोपयोगित्वेनोक्तम्। **ननु** सुब्रह्मण्यानिगदस्य न देवताप्रकाशनार्थत्वं ज्योतिष्टोमे महेन्द्रस्यैव देवतात्वेनेन्द्रस्य देवतात्वाभावात्। अतएव स्तुतशस्त्राधिकरणे स्तुतशस्त्रयोर्देवताप्रकाशकत्वपक्षे ऐन्द्रस्तुतिहत्कृष्येतेत्युक्तं संगच्छत इति चेन्नैवम्। ज्योतिष्टोम इन्द्रस्यापि देवतात्वावश्यंभावात्कथमन्यथाभक्षपेटिकायामनैन्द्रेषु इन्द्रपीतशब्दस्य निवृत्तिपक्षस्योहपक्षस्य चोत्थितिः, कथंवा इन्द्रस्य देवतात्वाङ्गीकारेणैव सिद्धान्ते इन्द्राय दत्तः सोमो यस्मिन्सवने इति सवनविशेषणतामादायाविकारेण प्रवृत्तिसमर्थनं माहेन्द्रग्रहयजिसंनिध्याम्नाताया इन्द्रस्तुतेस्तत्कर्मोल्लङ्घनेनेन्द्रयागशेषता स्यादित्यभिप्रायेणोत्कर्षोक्तिरित्याहुः। **आग्नेयीति**। वस्तुतस्तु देवताप्रकाशनार्थसुब्रह्मण्यानिगदे प्रकृतिगतेन्द्रलक्षणदेवतापेक्षयाऽग्निरूपदेवतान्तरवत्यग्निष्टुतीन्द्रपदस्थानेऽग्निपदप्रक्षेपस्य न्यायादेव सिद्धेर्न्यायप्राप्तानुवादो वचनमिति ध्येयम्। इदंच तद्विशेषणानामूहोपयोगितयोक्तम्। यजमानपदवदिहाप्यूह इत्युत्थितेः संगतिः। **पूर्वेति**। 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां ह्येष सर्वं हरति मेधातिथिर्मेषेति मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार वृषणश्वस्य मेन इति वृषणश्वस्य मेनका नाम दुहिता बभूव तामिन्द्रश्चकम' इत्यादिभिरित्यर्थः। **इन्द्रमेवेति**। ननु गुणमात्रं प्रकाशयितुममीषामुच्चारणमदृष्टार्थत्वप्रसङ्गादित्येवकाराशयः। **रोहितेति**। 'अग्न आगच्छ रोहितव बृहद्भानो'इत्या-

---

१ योगादर्थेषु.

वदादिशब्दा ऊहितव्या इति प्राप्ते ब्रूमः—'सत्स्वेतेषु गुणेष्वेवं तत्सद्भावे तु न प्रमा ॥ वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते ॥' इति । तस्माददृष्टार्थमेवाविद्यमानैरेव गुणैः संबध्येन्द्रः प्रकाश्यत इत्यग्निरपि तैरेव गुणैः संबद्धव्य इत्यनूहः ॥ एवंवा ॥ अथेदमन्यदुदाह्रियते । ज्योतिष्टोमे एकहायन्या मन्त्रः'तस्यै शृतं तस्यै दधी'त्यादिः स साण्डस्के त्रिवत्सेऽतिदिष्टः किमूहितव्यो नेति संशये यद्यप्येकहायन्यवस्थायां न विद्यन्ते शृतादयः तथापि भावित्वेनापि तावत्संभवद्भिः स्वगुणैरेकहायन्येव प्रकाश्यते दृष्टार्थत्वात् । त्रिवत्से त्वभावादूहः । नैतदेवं कर्माङ्गभूतायामेकहायन्यवस्थायां तावन्न सन्त्येव भावित्वमपि नैकान्तिकं मरणसंभवात् । अतो यथाकथंचित्प्ररोचनार्थं कीर्त्यन्ते । तावच्च साण्डेपि संभवति साण्डादपि या गौर्निष्पद्यते तस्या एते ऽवाप्यमानाः साण्डादेवाप्ता भवन्तीति । तस्मादनूहः ॥

सारस्वत्यां मेष्यामग्निगुवचनानूहाधिकरणम् ॥ १५ ॥

## लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ [पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥ पशुत्वं चैकशब्द्यात् ॥ ४८ ॥ यथोक्तं वा संनिधानात् ॥ ४९ ॥]

**दैव्या इत्यस्ति मेष्यां नो वाऽस्मा इति पशूक्तितः ॥ अस्ति मैवं पश्वनुक्तेः पुंव्यक्तित्वविवक्षया ॥ २४ ॥**

ज्योतिष्टोमे सवनीयाः पशवः 'आग्नेयमग्निष्टोम आलभते ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीं चतुर्थीमतिरात्र' इति । तत्र पशुधर्मा यदा सर्वेषां साधारणास्तदा

---

इयोऽग्निगतगुणप्रकाशनसमर्थाः शब्दा ऊहितव्या इत्यर्थः । **न प्रमेति** । न प्रमाणमस्तीत्यर्थः । **स्तुतिमात्रेति** । पूर्वपक्षापरपक्षौ वा इन्द्रस्येति वैशब्दाद्युपबन्धान्निगदविधिशेषत्वात्पूर्वपक्षापरपक्षाविन्द्रस्य तौ च हरी इत्यादिविधिस्वीकारे वाक्यभेदप्रसङ्गाच्चेति भावः । **तैरेवेति** । अविद्यमानैरेव हरिवदादिभिरित्यर्थः । अत्र तन्त्ररत्ने न्यायेनानूहेऽप्यग्निष्टुति हरिवदादिपदयुक्तनिगदान्तरपाठबलात्तस्यैवानुष्ठानं न प्राकृतस्याविकृतस्येतीदमधिकरणं न्यायव्युत्पादनपरमित्युक्तम् । सूत्रार्थस्तु—हरिवदादिशब्दानां तदर्थेषु हरिवदादिष्वसंयोगात्तेषामसमवेतार्थत्वादिति यावत् । तद्विशिष्टं हरिवदादिविशिष्टमेव प्रतीयेत नतूहितव्यमिति ॥ **एवंवा** ॥ एवंवेत्यादिभाष्ये वर्णकान्तरमुक्तं तदाह—**अथेति** । **त्रिवत्स इति** । 'त्रिवत्सः साण्डः सोमक्रयण' इति चोदित इति शेषः । त्रिवत्सस्त्रिवर्ष इति याज्ञिकैर्व्याख्यातम् । **किमूहितव्य इति** । अत्र यद्यपि सिद्धान्तेऽपि 'तस्यै शृतं तस्यै दधि' इत्येवंरूपो लिङ्गोहोऽस्त्येव तथापि किं लिङ्गवच्छृतादीनामप्यूह उत न शृतादीनामूहः, किंतु लिङ्गमात्रस्येति संशय इत्यर्थो बोध्यः । अतएव भाष्ये किं गोशब्दस्य स्थाने ऊहं कृत्वावशिष्टानां पदार्थानामविकार उत सर्वेषामूह इति संशय उक्तः । गोशब्दस्य स्थाने इत्यस्य गोवाचकतच्छब्दस्य स्थान इत्यर्थः । तच्छब्दमात्रविशिष्टे उहः स्यादित्यर्थः । इत्यस्मदुक्तरीत्यैव क्षीरसागरवासिनापि भाष्यं व्याख्यातम् । **यद्यपीति** । तथाचासमवेतवचनत्वादनूह इति भावः । **तथापीति** । अनेन शृतादीनां सद्भावप्रतिपादनेन हरिवदादिवैषम्यलाभात्संगतिरपि सूचिता । **दृष्टार्थत्वादिति** । विक्रेतृप्ररोचना नातीव दृष्टप्रयोजनं, अभिधानमेव तु दृष्टं प्रयोजनमित्यभिप्रायः । **ऊह इति** । शृतदध्यादिशब्दानपोह्य त्रिवत्सगतगुणप्रतिपादकाः शब्दाः प्रक्षेप्तव्या इत्यर्थः । **नैतदिति** । यद्यपि भावित्वं तथापि यस्यामवस्थायां शृतादिसंभवः न सावस्था कर्माङ्गं, या.चैकहायन्यवस्था कर्माङ्गे न तस्यां शृतादिसंभव इति समवेताभिधानलक्षणप्रयोजनाभावात्प्ररोचनार्थमेवेत्यर्थः । अभ्युपगम्यभावित्वमुक्तं तदेव त्वनिश्चितं मरणसंभवात्तथाच संभावितम।त्राद्गुणात्राभिधानं गुणिनः संभवति किंतु निश्चितादेव । स्तुतिस्तु यथाकथंचित्संभवतीत्याशयेनाह—**भावित्वमिति** । ननु प्ररोचनापि त्रिवत्से निरालम्बना न संभवतीत्यत आलम्बनसद्भावमाह—**तावच्चेति** । तावन्मात्रं यथाकथंचिच्छृतादिसंभावनामात्रमित्यर्थः । **साण्ड इति** । अनुत्कालितपौंस्न इत्यर्थः । सूत्रंतु हरिवदादिष्विव शृतादिषु योजनीयम् ॥

**लिङ्गविशेषनिर्देशात्०॥४५॥ ननु** पशुधर्माणामग्नीषोमीयार्थत्वस्य तृतीये व्यवस्थापनादतिदेशेन मेष्यां प्रवृत्तेरयं विचारोऽनुपपन्न इत्यत आह—**तत्रेति** । 'अस्य तुल्यः सर्वेषां पशुविधि'रित्यधिकरणपूर्वपक्षस्य प्रयोजनविचाररूपत्वान्नानुपपत्तिरिति

---

१ जनिष्यते.

किमध्रिगुवचनं मेष्यां भवति उत नेति संशये प्रकरणाविशेषात्'प्राऽस्मा अग्निं भरते'ति च पुंलिङ्गस्यास्मैशब्दस्य नियतलिङ्गपशुशब्दाभिधेयपशुत्वाभिप्रायेण प्रास्मै पशव इत्येवं स्त्रियामप्युपपत्तेर्लिङ्गविरोधाभावात्तस्यामपि स्यादध्रिगुवचनमिति प्राप्तेऽभिधीयते—'पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः ॥ तस्मात्प्रयोगकाले यदपरोक्षतया स्थितम् ॥ द्रव्यं तत्र प्रयुक्तोऽयं पुंलिङ्गं वदितुं क्षमः ॥ न स्त्री द्रव्यमतो मेष्यामशक्तेर्न प्रवर्तते ॥' तेन सामानविध्यपूर्वपक्षेऽध्रिगोर्मेष्यामप्रवृत्तिः । सिद्धान्ते त्वग्नीषोमीयार्थत्वाद्धर्माणामतिदेशेन पश्वन्तरगमनादूहेन प्रवृत्तिः ॥

यज्ञायज्ञीये गिराशब्दस्य स्थान इराशब्दस्यैव कर्तव्यताधिकरणम् ॥ १६ ॥

**आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० ॥ [द्वैधं वा तुल्यहेतुत्वात्सामान्यविकल्पः स्यात् ॥ ५१ ॥ उपदेशाच्च साम्नः ॥ ५२ ॥ नियमो वा श्रुतिविशेषादितरत्सासदश्यवत् ॥ ५३ ॥]**

**इरागिराविकल्पः स्यात्तुतेरैवाविशेषतः ॥ आद्यो मैवं बाधपूर्वमिराया विहितत्वतः ॥ २५ ॥**

**साम्नामिदानीमूहमारिप्स्यमानस्तदुपोद्घातं चिन्तयति । तानिश्चक्षरान्तरेषु समाम्नातानि अक्षरा-**

---

भावः। संस्थानामपि समानविध्यं कृत्वाचिन्त्यत इत्यपीति बोध्यम्। **अध्रिगुवचनमिति**। अध्रिगुर्देवशमिता 'अध्रिगुश्चापापश्च उभौ देवानां शमितारा'विति वचनात्तत्संबोधनेन प्रवृत्तो 'देव्याः शमितार' इति निगदोऽध्रिगुवचनं बोध्यम्। **प्रकरणेति**। प्रकरणाविशेषेण सर्वपश्वर्थत्वादध्रिगुवचनस्य मेष्यामपि प्रवृत्तिरित्यर्थः। **ननु** प्रकरणाविशेषेऽपि लिङ्गासमवायान्न प्रवृत्तिरित आह—**प्रास्मा इति**। इदंशब्देन पशुत्वमेवोच्यते नतु व्यक्तिः । पशुत्वं च पशुशब्दाभिधेयं पुंलिङ्गं दृष्टमितीदंशब्दाभिधेयमपि तल्लिङ्गं भविष्यतीति नानुपपत्तिर्लिङ्गस्येत्यर्थः । **ननु** नियतलिङ्गत्वात्पशुशब्दस्य तेन पशुत्वगतपुंलिङ्गाभिव्यक्तिरस्तु नतु तत्समानार्थकतामात्रेणेदंशब्दस्यापि तल्लिङ्गाभिव्यञ्जकत्वमित्याशङ्क्येदंशब्दस्य पशुशब्दविशेषणतया युक्तं तल्लिङ्गाभिव्यञ्जकत्वमित्याशयेन विशेषणविशेष्यभावमभिनीय दर्शयति—**प्रास्मै पशव इति** । तथाच पशुत्वाभिधायकत्वेऽपि आकृत्यधिकरणोक्तदिशा व्यक्तिलाभात्स्त्रियामपि पुंलिङ्गप्रवृत्तेरप्रत्यूहत्वान्मेष्यामपि निगदः स्यादित्यर्थः । **पशुशब्देति**। पशुशब्दश्रुतौ तद्विशेषणमिदंशब्दः स्यान्नचात्र पशुशब्दः श्रुत अध्याहारे च स एव दोष इत्यर्थः । यद्वा यद्यत्र पशुशब्दः श्रूयेत तदा संनिहितवाचिन इदंशब्दस्य समभिव्याहृतशब्दसंनिहिते स्वतःप्रवृत्त्या पशुत्वाभिधायकत्वं स्यान्नतु श्रूयत इत्यर्थः । **ननु** पशुत्वस्यात्र संनिधानाभावेऽपि 'अग्नीषोमीयं पशुमालभेते'त्यादिविधिवाक्यादुपस्थितत्वमादाय तदभिधायक इदंशब्दः स्वीक्रियते इत्यत आह—**तस्मादिति** । यथाकथंचित्संनिध्यङ्गीकरणे प्रयोगकालीनसंनिधिमङ्गीकृत्य साक्षात्प्रयोगसमवायिव्यक्तेरेवाभिधानं युक्तं नतु तदसमवायिपशुत्वसामान्याभिधानमित्यर्थः । **यदिति** । यदपरोक्षतया अस्मै शब्दापरोक्षतया संनिहितत्वेनेदंशब्दाभिधेयत्वयोग्यतयेति यावत् । **द्रव्यमिति**। द्रव्यव्यक्तिरित्यर्थः। **ननु** मेष्या अपि प्रयोगकाले संनिधानाविशेषात्तदभिधायित्वमपि स्यादित्यत आह—**पुंलिङ्गमिति** । न संनिहितमात्रं सर्वनामार्थः किंतु यत्र शक्तिः । न च पुंलिङ्गस्य मेष्यां शक्तिरित्यर्थः । **न प्रवर्तत इति** । नच पाशानिति बहुत्ववद्विभक्तिवाच्यलिङ्गस्याविवक्षया प्रवृत्तिः स्यादिति वाच्यम् । त्रिकं प्रातिपदिकार्थ इति लिङ्गस्यापि प्रातिपदिकार्थत्वाद्विभक्तिविकाराणां स्मै इत्यादीनां टाबादीनां च वाच्यं लिङ्गमिति पक्षेऽपि मेषीव्यतिरिक्तपशुषु लिङ्गस्य समवायेन विवक्षायां संभवत्यामविवक्षाकल्पनस्यायुक्तत्वादिति भावः । इदमत्रावधेयम्—अतिरात्रे आग्नेयैन्द्राग्नैन्द्रसारस्वतीलक्षणाश्चत्वारः पशव इत्येकः पक्षः । सारस्वतमेषीलक्षण एक एव पशुरित्यपरः । तत्रैकपशुपक्षे मेष्यामध्रिगुवचनस्य निवृत्तिरेव । चतुःपशुपक्षे तु तेषां समुचितानां सहालम्भ्यतयाऽध्रिगुवचनस्य प्रतिपश्वावृत्त्यभावेन चेतरपश्वर्थतया वचनमनादृत्य प्रवृत्त्यवश्यंभावादप्रवृत्तिशब्देन मेष्यनभिधानमेव विवक्षितं नतु सर्वात्मना प्रवृत्त्यभाव इति । **ननु** निवृत्तिविचारस्य दशमे संगतस्य कथमत्रं संगतिरित्यत आह—**सिद्धान्त इति**। अग्नीषोमीयार्थत्वमिति सिद्धान्त इत्यर्थः । तथाच पुंलिङ्गस्य पशुत्वाभिप्रायत्वे पूर्वपक्षे यथा मेष्यां प्रवृत्तिस्तथा सिद्धान्तेऽपि तदभिप्रायेणैव पुंलिङ्गोपपत्तेरविकारेणैव प्रयोगः स्यादिति सिद्धान्ते ऊहस्याप्येतदधिकरणव्युत्पाद्यपुंलिङ्गासमवायाधीनत्वेनात्रैवास्य संगतिरिति भावः । एवंच पूर्वाधिकरणस्य लिङ्गोहोपगमेन प्रवृत्त्या इहापि लिङ्गोहव्युत्पादनादवान्तरसंगतिरपि द्रष्टव्या । सूत्रार्थस्तु—समानविधानेषु पशुषु सारस्वतीमेषी अध्रिगुवचनमप्राप्ता तस्मिन् पुंलिङ्गनिर्देशादस्याश्च स्त्रीत्वादिति ॥

**आम्नातादन्यत्०** ॥ ५० ॥ सामप्रदेशे विकार इत्येतत्पर्यन्तं करिष्यमाणविचारस्य संगतिमाह—**साम्नामिति**। उत्तरपादे सामप्रदेश इत्यारभ्य सामोहं प्रतिपिपादयिषुरिदानीं तदुपोद्घातं चिन्तयतीत्यर्थः । **ननु** न साम्नामूहः संभवति

न्तरेषूह्यन्ते । तत्रेह गिरापदगीतेरिरापदे स्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति । ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेय'मिति । किमिरापदस्य गिरापदस्थानापत्तिः पाक्षिकी, गिरापदमिरापदं वा प्रयोक्तव्यं उत नियता स्थानापत्तिरिरापदमेव प्रयोक्तव्यमिति । तत्रेरापदमात्रं वचनेन विधीयते नोद्गानसंबन्धः स्तोत्रसंबन्धो वा । प्रकरणात्तु स्तोत्राङ्गता भवति, तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानमात्रसंबन्धः प्राप्त एवानूद्यते । ततश्च काल्पनिकमेव स्तोत्राङ्गत्वम् । गानसंबन्धश्च गिरापदस्यापि चास्त्येव काल्पनिकाङ्गत्वमित्यविशेषादुभयोर्विकल्पः । नैतदेवम् । इरापदस्य हि प्रकरणसनाथया श्रुत्याऽग्निष्टोमस्तोत्रसाधनभूतोद्गानसंबन्धित्वेन विधीयमानस्य श्रुत्या गानसंबन्धः प्रकरणाच्च स्तोत्राङ्गत्वम् । गिरापदस्य तु प्रगाथैकवाक्यतया गानसंबन्धः स्यात् क्रमाच्च स्तोत्राङ्गत्वम् । स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानास्वृक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यते इति तदेकदेशस्य गिरापदस्यापि क्रमात्स्तोत्राङ्गत्वं प्रकरणाच्चेरापदस्य । क्रमाच्च प्रकरणं बलीयः श्रुतिश्च वाक्यात्[2] । अपिच गिरापदस्याम्नानमात्रं न विधिः । इरापदं तु प्रत्यक्षविहितमतोऽपि बलवत् । ननु च 'यज्ञायज्ञीयेन स्तुवीते'ति प्रत्यक्षमेव यज्ञायज्ञीयं स्तोत्राङ्गत्वेन विधीयते[3] । सत्यम् । साम्नां[4] प्रत्यक्षमृचस्त्वनुपपत्त्या कथं एतदेव हि साम्नां स्तुतिसा-

प्राकृतद्वारा तद्वारान्तरसंबन्धाभावादित्यत आह—**तानीति** । द्वारान्तरपदेनाभिव्यञ्जयान्तरस्यैव सामोहे विवक्षितत्वाभानुपपत्तिरिति भावः । अस्याधिकरणस्य संगतिमाह—**तत्रेति** । यथाग्रिगुवचनस्य मेध्यामप्राप्तिरेवमिरापदे गिरापदगीतेरप्राप्तौ गिरापदस्थानापत्त्या तत्प्राप्तिमुत्तराधिकरणे प्रतिपादयितुमिह तदुपयोगितया स्थानापत्तिर्विचार्यत इत्यर्थः । उक्तसंगतिलोभात्सामोहोपोद्घातस्याप्यत्र करणमिति ध्येयम् । **यज्ञायज्ञीय इति** । 'यज्ञायज्ञा वो अग्नये' इत्यस्यां यज्ञायज्ञशब्दयुक्तायामुत्पन्नमग्निष्टोमसाम यज्ञायज्ञीयं तत्सांनिध्यादग्निष्टोमस्तोत्रप्रकरण इत्यर्थः । **ननु** 'ऐरं कृत्वोद्गेय'**मिति** इरापदस्य वाचनिको गानसंबन्धो गिरापदस्य तु काल्पनिक इत्यतुल्यबलत्वात्कथं विकल्प इति पूर्वः पक्ष इत्यत आह—**तत्रेति** । तथाच वचनस्येरापदोत्पत्तिमात्रपरतया गानसंबन्धस्य वाचनिकत्वाभावात्तुल्यबलत्वमिति भावः । **स्तोत्रसंबन्धो वेति** । यद्यप्यत्र वचने स्तोत्रशब्दो न श्रूयते तथाप्युद्गेयमित्यनेन प्रकरणात्स्तोत्रापूर्वसाधनगानं लक्षयित्वा इरापदविधिरिति सिद्धान्तिनाङ्गीकारात्तन्निराकरणाभिप्रायेणेदमुक्तं, गानसंबन्धस्यैवाविधानाद्दूरापेतं स्तोत्रसंबन्धविधानमित्याशयः । कथं तर्हि स्तोत्राङ्गत्वं तत्राह—**प्रकरणादिति** । एवमपि कथं गानसंबन्धः कथं वा उद्गेयमित्यस्योपपत्तिरित्यत आह—**तदङ्गेति** । प्रकरणात्स्तोत्राङ्गस्यैवेरापदस्य 'यज्ञायज्ञीयेन स्तुवीते'ति स्तोत्राङ्गतया विहितगानसंबन्धोऽर्थप्राप्तः, अप्रगीतस्य गानसाध्यस्तुतिसाधनत्वानुपपत्तेरतस्तदनुवाद उद्गेयमिति शब्द इत्यर्थः । **काल्पनिकमेवेति** । न वाचनिकमित्यर्थः । **गिरापदस्यापीति** । यद्यपि सिद्धान्ते वक्ष्यमाणरीत्या क्रमाद्गिरापदस्य स्तोत्राङ्गत्वं कल्प्यमित्यतुल्यबलत्वं तथापि 'यज्ञायज्ञीयेन स्तुवीते'ति वचनसामर्थ्यबलादेव गिरापदस्य स्तोत्राङ्गत्वं कल्प्यं न क्रमादित्याशयः । **श्रुत्येति** । यद्यपि 'ऐरं कृत्वोद्गेय'मिति पदद्वयसमभिव्याहारलक्षणवाक्येनैव गानसंबन्धो नतु श्रौतो गानसंबन्धस्तृतीयादेरभावात्तथापि यथा गिरापदस्य विशिष्य स्ववाचकशब्दाभावात्प्रगाथैकवाक्यतया गानसंबन्धो नैवमिरापदस्य किंतु तस्य विशेषतः स्वाभिधायकेराश्रुत्यैव गानसंबन्ध इत्यभिप्रायेणेदम् । अनेनैवाशयेनाग्रिमवाक्ये वक्ष्यति 'गिरापदस्य तु प्रगाथैकवाक्यतये'ति । नच वचनस्येरापदोत्पत्तिमात्रपरत्वमित्युक्तमिति वाच्यम् । इरापदस्य दध्यादिवल्लोकप्रसिद्धस्वभावस्योत्पत्तिविध्यनपेक्षतया गानविनियोगपरत्वस्यैव युक्तत्वात् । अस्तुवा उत्पत्त्यपेक्षा तथापि शृङ्गग्राहिकया विनियोगबलादेवोत्पत्तेरपि सिद्धेरुत्पत्तिमात्रपरत्वे चैरं भवतीति स्यान्नत्वैरं कृत्वोद्गेयमिति । तथाच विधायकत्वे संभवत्यनुवादकत्वमन्याय्यमिति भावः । **प्रगाथेति** । प्रगाथस्य गानसंबन्धे तदेकवाक्यतापन्नत्वाद्गिरापदस्यापि गानसंबन्धो नतु स्वशब्दोपादानेनेत्यर्थः । यत्र द्वयोरेव ऋचोः पादं पुनराददीतेति प्रकारेण प्रग्रथनेन तृचत्वसंपत्तिः स प्रगाथशब्दार्थः । **प्रकरणादिति** । उद्गेयमित्यस्य स्तोत्रसाधनीभूतगानलक्षकत्वस्य प्रकरणलभ्यत्वादिति भावः । **क्रमादिति** । यथासंख्याम्नानलक्षणादित्यर्थः । यज्ञायज्ञीयसाम्नः स्तोत्रसाधनत्वं यत्किंचिदृगक्षराणां व्यञ्जकत्वेनाप्युपपन्नमिति न तद्बलाद्गिरापदस्य स्तोत्राङ्गत्वसिद्धिरिति क्रमादेव स्तोत्राङ्गत्वमवश्यं वाच्यमिति भावः । **नन्वेवं** न प्रप्रेति ब्रूयात् पप्रीति ब्रूयादिति पप्रीशब्दस्य गानसंबन्धाभावात् प्रप्रशब्दस्य पप्रीशब्दस्य च विकल्पः स्यादित्यस्वरसादाह—**अपिचेति** । **न विधिरिति** । न प्रत्यक्षविधिराम्नानेन कल्पनीयत्वादित्यर्थः । तथाचासत्यपि गानसंबन्धे प्रत्यक्षविधानात्पप्रीशब्दस्य नियमसिद्धिरिति भावः । **नन्विति** । यज्ञायज्ञीयशब्दस्य लक्षणया सामविशिष्टप्रगाथपरत्वाश्रयणेन ऋचोऽप्यनेनैव विधानमिति भावः । **एतदेवेति** । अभि-

१ गानसंबन्धः. २ वाक्याद्बलीयसी. ३ विहितम्. ४ साम्नः.

धनत्वं यद्गुणाभिधानपराणामृगक्षराणां व्यक्तिः। अतो 'यज्ञायज्ञीयेन स्तुवीते'त्येतस्यायमर्थः यज्ञायज्ञीयाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेति। तत्रापि समाम्नातसिद्ध्यक्षरव्यक्तिरेव सति संभवेऽङ्गीकरणीया नान्यकल्पनं युक्तमिति यज्ञायज्ञीयप्रगाथस्यैवायं स्तुतौ विनियोग इति प्रकल्प्यते। तत्रापि सर्वपदानां साधारण्येन विनियोगो न विशेषतो गिरापदस्यैवेरापदस्य तु साक्षाद्विशेषरूपेण विनियोग इति बलवत्ता॥

इरापदस्य प्रतीतताधिकरणम्॥ १७॥

**अप्रगाणाच्छन्दान्यत्वे तथाभूतोपदेशः स्यात्॥ ५४॥ [यत्स्थाने वा तद्गीतिः स्यात्, पदान्यत्वप्रधानत्वात्॥ ५५॥ गानसंयोगाच्च॥ ५६॥ वचनमिति चेत्॥ ५७॥ न तत्प्रधानत्वात्॥ ५८॥]**

**इरापदं न गेयं स्याद्गेयं वा गीत्यनुक्तितः॥ न गेयं गीयमानस्य स्थाने पातात्प्रगीयते॥ २६॥**

नियतमिरापदमिति स्थिते किं तदप्रगीतं प्रयोक्तव्यमुत प्रगीतमिति संशयः। तत्र—'न प्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात्॥ प्रगीतात्तद्धितोत्पत्तावायीरीयं प्रसज्यते॥' यदि तावदैरमिति स्वार्थे तद्धितस्तत इरां कृत्वोद्गेयमित्येतावानेवार्थः स्यात्। अप्रगीतात्खल्विरापदादयं तद्धितः प्रगीतात्तदुत्पत्तौ वृद्धं तालव्यप्रथमस्वरं चेत्येवमिकारस्यायीभावे सति 'वृद्धाच्छ' इति प्रत्ययोत्पत्तेरायीरीयमिति रूपं स्यादैरमिति रूपमप्रगीतादुत्पत्तौ सिद्ध्यति तस्मादप्रगीतस्योपदेशादप्रगाणम्। अथापि विकारार्थोऽयं तद्धितस्तथापि प्रगाणाप्रगाणयोरुभयोरप्यक्षरविकारत्वादन्यतरावधारणे प्रमाणमन्यन्मृग्यम्। ततश्चेरापदे विहिते यत्प्राप्तं प्रगाणमप्रगाणं वा तस्यैवायमनुवाद इत्यापद्यते। तद्विधिना

---

धानरूपस्तुतेः शब्दसाध्यत्वेन गानक्रियायाः साक्षात्तत्साधनत्वानुपपत्तेरिति भावः। **नन्वेवमपि** ऋगन्तराभिव्यञ्जकत्वेनापि साम्नः स्तोत्रसाधनत्वोपपत्तेर्न प्रकृतप्रगाथग्रहणं स्यादित्यत आह—**तत्रेति**। **प्रगाथस्येति**। तथाचान्यत एव प्रकृतप्रगाथस्य स्तुत्यङ्गत्वसिद्धेर्न लक्षणा स्वीकार्येति भावः। अभ्युपेत्याह—**तत्रापीति**। लक्षणया विनियोगेऽपीत्यर्थः। यद्वा कल्पिते विनियोगेऽपीत्यर्थः। **साक्षादिति**। ननु लक्षणया न वार्थादित्यर्थः। सूत्रार्थस्तु—ज्योतिष्टोमाधिकारे आम्नाताद्गिरापदादन्यदिरापदं प्रत्यक्षवचनविहितत्वान्नित्यं गिरापदविकारस्तद्बाधक इति॥

**अप्रगाणात्०॥ ५४॥ नियतमिति**। तथाच प्राप्तावसरोऽयं विचार इति भावः। **कस्मादिति**। अप्रगीतात्तद्धितोत्पत्तावप्यप्रगीतत्वस्य शब्दार्थत्वाभावेनेरापदमात्रस्यैव विधेयतया तस्य च प्रगाणाप्रगाणसाधारण्यात्कथमप्रगीतत्वनियम इति भावः। **अप्रगीतस्येति**। अप्रगीतत्वस्य शब्दार्थत्वाभावेऽपि प्रगाणग्रहणे विशेषनियामकाभावेन शब्दोच्चारणमात्रादुपस्थितमप्रगाणमेव गृह्यत इत्याशयः। भवेदेवमप्रगीतात्तद्धितोत्पत्तौ, तदेव कुत इत्यत आह—**प्रगीतादिति। स्वार्थ इति**। प्रज्ञादेराकृतिगणत्वादिति भावः। **वृद्धमिति**। छन्दोगानां क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्यलक्षणाः सप्त स्वराः। तत्र क्रुष्टप्रथमद्वितीया उत्क्षेपिण आयामदारुण्यादिभिरुत्क्षेपकारणैरुत्क्षिप्यमाणत्वात्। चतुर्थमन्द्रातिस्वार्यास्तावत्स्वरा अवक्षेपिणः अन्ववसर्गमार्दवादिभिरवक्षिप्यमाणत्वात्। तृतीयस्तूत्क्षेपावक्षेपावधित्वेन स्थितो मध्यमस्वरस्तथाच तृतीयनामकान्मध्यमस्वराद्द्वितीय उत्क्षिप्तः द्वितीयात्प्रथम उत्क्षिप्ततरः क्रुष्ट उत्क्षिप्ततमः **एवमपक्षे**पिष्वपि तारतम्यं द्रष्टव्यम्। अतश्चोत्क्षिप्तस्य द्वितीयनामकस्योदात्तत्वादुत्क्षिप्ततरस्योदात्ततरत्वं पर्यवस्यति। तथा वृद्धं वृद्धो वृद्धिः प्लुत इति त्रिमात्रभूतानां वर्णानां पर्यायसंज्ञा इति फुल्लसूत्रव्याख्यातृभिरुक्तम्, तथाच तालव्यमुक्तलक्षणप्रथमस्वरं च वृद्धं भवति प्लुतं प्राप्नोतीति इरापदे इकारस्य तालव्यत्वादूहगाने 'योनिवत्स्वरा'इति सूत्रेणातिदेशाद्गिरापदगतप्रथमस्वरप्राप्त्या प्रथमस्वरत्वाच्च प्लुतलक्षणवृद्धौ सत्यां वृद्धं तालव्यमायी भवतीति वचनान्तरेणायीभावे आयीराशब्दस्य 'वृद्धिर्यस्याचामादिस्तद्वृद्ध'मिति वृद्धत्वात् 'वृद्धाच्छ' इति छप्रत्यये सति आयीरीयमिति प्रसज्येतेत्यर्थः। यद्यपि वृद्धाच्छोऽयं शैषिकः न स्वार्थिकः नापि वक्ष्यमाणविकारार्थकः, 'तस्य विकार'इत्यतः प्रागेव शेषाधिकारस्य निवृत्तेः। प्रगीतात्तद्धितोत्पत्तिपक्षे प्रगीतस्यैव प्रकृतित्वेन तद्धितार्थविकारान्तरासंभवाच्च, तथापि स्वार्थस्यैव भेदं परिकल्प्य 'तस्येद'मित्यर्थे वृद्धाच्छः प्राप्नोतीत्येवं कथंचिद्योजनीयम्। वस्तुतस्तु प्रगीतात्तद्धितोत्पत्तिपक्षे स्वार्थकेऽणि आयीरं प्रसज्येतेत्येवाभ्रापादनं युक्तम्। **ननु** स्वार्थकत्वे आनर्थक्यमित्यस्वरसादाह—**अथापीति**। यद्यप्यप्रगाणं प्रगाणाभावो न विकारस्तथा-

---

१ देशात्स्यात्.

चाप्रगाणमेव प्राप्तं तथाभूतस्योपदेशात्तस्मादप्रगाणम् । उच्यते—'गिरापदस्य यत्स्थानं तत्र हीदं विधीयते ॥ इरापदमतस्तस्य या गीतिस्तां लभेत तत् ॥' सत्यमप्रगीतात्तद्धितो न त्वप्रगाणं विधीयते । पदान्तरविधिपरं हीदं वाक्यं नाप्रगाणं प्रगाणं वा स्पृशति । तत्तु पदान्तरं गिरापदस्थाने विहितं स्थानापत्त्या तद्गीतिं लभ्यमानं न केनचिद्वार्यते । यज्ञायज्ञीयसाध्या हि स्तुतिः । समस्तं च साम यज्ञायज्ञीयं नैकदेशविकलम् । तत्र गिरापदे पदान्तरोपदेशान्निवृत्ते यस्तद्गतो गीत्यंशः स गेयमपेक्षते इरापदमपि सामसाध्ये स्तवे सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते तयोर्नष्टाश्वदग्धरथवत्संबन्धः । तस्मात्प्रगीतं प्रयोक्तव्यम् ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां नवमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## नवमाध्याये द्वितीयः पादः ।

गीतीनां सामनामताधिकरणम् ॥ १ ॥

### सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ [तदुक्तदोषम् ॥ २ ॥]

सामोक्तिर्बृहदाद्युक्ती गीतायामृचि केवले ॥ गाने वा गान एवेति स्मार्यते सप्तमोदितम् ॥ १ ॥
ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथ वाग्रिमः ॥ वेदसामसमानत्वाद्विधिसार्थत्वतोऽन्तिमः ॥ २ ॥

सामशब्दस्तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतस्य मन्त्रस्य वाचकाः किंतु गीतिमात्रस्यैवेति सप्तमे यदुक्तं तदेवेदमुत्तरविवक्षया स्मार्यते ॥ **एवंवा** ॥ योयमूहो नाम ग्रन्थविशेषः पठ्यते 'कया

---

प्यत्राप्रगाणशब्देन तत्सहचरितचातुःस्वर्यादिविवक्षितमिति न दोषः । **अर्थमिति** । तद्धित इत्यर्थः । **गिरापदस्येति** । 'न गिरा गिरेति ब्रूयाद्यदि गिरागिरेति ब्रूयादात्मानमेव तद्गिरेदैरं कृत्वोद्गेय'मिति गिरापदनिषेधानुवादबलाद्गिरापदस्थाने इरापदं विधीयते । गिरापदस्थाने विध्यभावे हि गिरापदनिषेधोऽपि विधेयः स्यादनुवादासंभवात् । नचैवमनुवादबलाद्गिरापदस्थाने विधिः । तत्स्थाने विधौ च गिरापदनिषेधस्य प्राप्तत्वादनुवाद इति परस्पराश्रय इति वाच्यम् स्थानविशेषासंयोगेन श्रूयमाणस्येरापदस्य यत्र स्थाने विधौ सति गिरापदनिषेधस्यानुवादत्वं संभवति तत्परत्वं विधेरिति भाव्यनुवादत्वतर्कबलादेव तत्स्थाने विधिरिति स्वीकारान्नतु प्रथमत एवानुवादत्वे सति पश्चात्तत्स्थाने विधिर्येनान्योन्याश्रयः स्यादिति भावः । **नन्व**प्रगीतोपदेशादप्रगाणरूपविकारस्यैव तद्धितार्थत्वादप्रगीतस्यैव विधिनिश्चये कथं स्थानापत्त्यापि तद्गीतिप्राप्तिरित्यतः श्लोकं व्याचष्टे—**सत्यमिति** । प्रकृत्यर्थभूतेरापदलक्षणपदान्तरविधिपरमेवेदं नतु तद्धितार्थप्रगाणाप्रगाणलक्षणविकारविधिः वाक्यभेदप्रसङ्गाद्विशिष्टविधिगौरवाच्चेत्यर्थः । प्रगाणविधिरिति दृष्टान्तार्थमुक्तम् । तथाचेरापदमात्रविधौ स्थानापत्तिरप्रत्यूहेत्याशयेनाह—**तत्त्विति** । युक्त्यन्तरमाह—**यज्ञायज्ञीयेति** । यस्य रथिनो रथोऽस्ति अश्वा नष्टाः यस्य चाश्वाः सन्ति रथो दग्धः तयोरुभयोरपि यथा परस्परापेक्षया संबन्ध एवमिरापदस्य गिरापदगीतेश्च संबन्धः सिद्ध इत्यर्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां नवमाध्यायस्य प्रथमः पादः ॥ १ ॥**

**सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥** अस्मिन्पादे सामोहश्चिन्त्यते इति पादान्तरत्वं सामोहोपोद्घातस्यावान्तरसंगतिलोभेन पूर्वपादे एव प्रक्रान्ततया आनन्तर्यं च । अत्र चाधिकरणे सामशब्दस्तद्विशेषवाचका रथन्तरादिशब्दाश्च किं प्रगीतमन्त्रवाचका उत गीतिमात्रवाचका इति विचार्यते । **ननु** सप्तमे एवायमर्थो विचारित इत्यत आह—**सामेति** । **उत्तरेति** । गीतिवचनत्वे सत्येव किं सामानि ऋचः प्रतिप्रधानानि उत गुणभूतानीति विचारो घटते नतु प्रगीतमन्त्रवचनत्वे । तथासत्युभयोरभेदेन गुणत्वप्रधानत्वविचारानुपपत्तेरिति भावः । नच स्मारणे गीतिः सामेति सिद्धान्त एव स्मार्यो नतु मन्त्रः सामेति पूर्वपक्षोऽपीति वाच्यम् । स्मृतेदार्ढ्यार्थं पूर्वपक्षपूर्वकं सिद्धान्तस्मारणोपपत्तेः । **सूत्रार्थस्तु** —प्रगीतमन्त्रः सामेत्याध्यायकस्मरणात् 'अहे बुध्न्य मन्त्रं मे गोपाय ऋचः सामानी'ति मन्त्रे सामशब्दोपदेशाच्च प्रगीतमन्त्रमेव सामान्येके मन्यन्ते इति ॥ **एवंवा** ॥ **ननु** सुधियां स्मारणं व्यर्थमित्यस्वरसाद्भाष्ये वर्णकान्तरमुक्तं तदाह —**एवंवेति** । **योयमिति** । यस्मिन्ग्रन्थे सामगा एकैकं साम तृचे तृचेऽधीयते स ग्रन्थविशेष इत्यर्थः । अनित्य इत्यस्य

---

१ साध्यस्तुतौ. २ प्रगीतमन्त्रस्य.

नश्चित्रआभवो वा' इत्यादि स किं नित्योऽनित्यो वा । पौरुषेय इति। कर्तृस्मरणाभावादध्यायानध्यायाचारशुश्रूषाराधितगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्राप्त उच्यते—ऊहसमाख्यानादनित्यत्वम्। नह्यध्ययनसिद्धस्योहत्वं घटते । किंच 'यद्योन्यां तदुत्तरयोर्गायती'त्यतिदेशवचनाद्योनावध्ययनसिद्धस्योत्तरयोरनुष्ठानावगमात्पौरुषेयत्वं विस्पष्टम् । नहि तिसृष्वप्यधीतस्य यद्योन्यां तदुत्तरयोरिति वादो घटते, कर्तुस्तु अस्मरणमनादरादुपपद्यते । नह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानम्। वचनादेवोत्तरयोर्गानसिद्धेः। ऋक्सामानां च पृथक्पृथग्वेदत्वात् । सत्यपि संसर्गस्य पौरुषेयत्वेऽध्यायाद्यादरः। तस्मात्पौरुषेयत्वान्न्याय्यं संगृह्यान्याय्यं त्यक्तव्यमिति न्यायतः कीदृशमनुष्ठानं भवतीति चिन्तनीयम् ॥

साम्न ऋक्संस्कारकर्मताधिकरणम् ॥ २ ॥

**कर्म वा विधिलक्षणम् ॥ ३ ॥ [तदृग्द्रव्यं वचनात्प्राकयज्ञवत् ॥ ४ ॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दानाम् ॥ ७ ॥ असंबन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ संस्कारश्चाप्रकरणेऽग्निवत्स्यात्प्रयुक्तत्वात् ॥ ९ ॥ अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ आश्रितत्वाच्च ॥ ११ ॥ प्रयुज्यत इति चेत् ॥ १२ ॥ ग्रहणार्थं प्रयुज्येत ॥ १३ ॥]**

सामर्चंप्रति मुख्यं स्याद्गुणो वा ब्राह्मपाठतः ॥ मुख्यमभ्यसितुं पाठो गुणो गीताक्षरैः स्तुतेः ॥ ३ ॥

सामानि किमृचंप्रति प्रधानभूतानि उत तत्संस्कारार्थानि गुणभूतानीति विचारः । तत्राकर्मकालप्रयोगात्प्राधान्यं संस्कारार्थत्वे ह्यक्षराभिव्यक्तिरेषां कार्यं स्यात् सा च कर्मकाल एवोपयुज्यत इत्यकर्मकाले प्रयोगो न स्यात्। ननु वचनादकर्मकाले गानं भविष्यति 'गर्भाष्टमे वर्षे उपनीयत', 'आ-

---

विवरणं **पौरुषेय इति**। तथाच 'कया नश्चित्र आभवो वा'इति ग्रन्थः किं वेद उत पौरुषेय इति संशयनिष्कर्षो बोध्यः। **नहीति** । गानस्य योनिवदुत्तरयोरध्ययनसिद्धत्वे अनाम्नातऋक्संचाराभावेनोहत्वं न स्यादन्यथा योनिगानस्याप्यूहत्वं स्यादिति भावः। **किंचेति**। यद्योन्यामिति वचनेन योनावाम्नानसिद्धस्य साम्न उत्तरयोः पुरुषेण स्वयमनुष्ठेयत्वमवगम्यते। ततश्च विस्पष्टं पौरुषेयत्वमन्यथा यद्योन्यामिति वाक्यमनुवादकं स्यादिति भावः । अनुवादकाभ्युपगमेऽप्याह—**नहीति**। तिसृष्वप्यधीतत्वे तिसृणामपि सामोत्पत्तिस्थानत्वेन योनित्वापत्त्या इयं योनिरिमे उत्तरे इति विभागस्यैवाभावाद्यद्योन्यां तदुत्तरयोरिति निर्देशस्यैवानुपपन्नतयानुवादोऽप्ययुक्त इति भावः । **ननु** पुरुषस्याप्तत्वनिश्चयोऽनुष्ठानेऽपेक्षितस्ततश्चानादरात्पुरुषास्मरणमित्ययुक्तमित्यत आह—**नहीति**। पुरुषे प्रत्ययः आश्वासः। आप्तत्वनिश्चय इतियावत्। तदधीनमित्यर्थः। वचनादेवानुष्ठानसिद्धेर्न पुरुषादरावश्यंभाव इत्यर्थः । तथाचापौरुषेयत्वाभावादाम्नानसिद्धमखिलं न ग्राह्यं किंतु न्यायादनपेतमेवेतरत्तु परित्याज्यमिति। प्रयोजनमाह—**तस्मादिति**। अस्याधिकरणस्य सामोहोपोद्घाततयाऽत्र संगतिरित्याशयेनाह—**इति न्यायत इति**। सूत्रार्थस्तु—सामानि ऊहसामानि मन्त्रभूतान्यार्षाणीत्येके मन्यन्ते । अध्येतॄणां नित्यत्वस्मरणादूहश्चिकीर्षित इति ब्राह्मणेन यज्ञे कर्तुमिष्टत्वोपदेशाद्वेदत्वं पौरुषेयत्वेऽन्यथाभावशङ्कया इष्टत्वासंभवादिति कर्तुमिष्टत्वप्रतिपादकं तु ब्राह्मणं प्रत्युतानित्यत्वमेव ज्ञापयतीति सिद्धान्त्याशयः॥

**कर्म वा विधिलक्षणम् ॥ ३ ॥** यदर्थं गीतिः सामेति विचारितं तदिदानीं विचार्यत इत्यवसरलक्षणा संगतिः। **अक्षराभिव्यक्तिरिति**। तस्या एव दृष्टतया कार्यत्वौचित्यादिति भावः । **नन्विति** । अकर्मकाले कृतैवाभिव्यक्तिः कथंचित्स्मृत्यादिद्वारा कर्मकाले उपयोक्ष्यत इति वचनबलात्कल्प्यत इत्याशयः । 'औदुम्बरीं स्पृष्ट्वोद्गाये'दित्यादिवाक्यपर्यालोचनया गानस्य कर्मकालप्रयोगावश्यंभावे ततएव कर्मौपयिकाभिव्यक्तिसिद्धेरकर्मकालप्रयोगस्यादृष्टार्थत्वमेव बलादाप-

---

१ प्रगीतमन्त्रस्य.

वण्यां पौर्णमास्यामुपकृत्य स्वाध्यायमधीयीते'ति । एवं तर्हि अदृष्टार्थतैव बलादापद्यते । नह्यकाले प्रयुक्तं साम कर्मोपयिकीमभिव्यक्तिमलं भवति कर्तुम् । अथादृष्टरूपः संस्कारस्ततोऽकर्मकाले संस्कृतानां कर्मकाले पुनः संस्कारोऽनर्थक इति क्रतुमध्ये सामानि न प्रयुज्येरन् । अथाकाले प्राधान्यं कर्मकाले तु संस्कारस्तदाऽर्धवैशसं तस्मात्प्रधानकर्म साम । बहिःप्रयोगः फलार्थः । क्रतुमध्ये तु क्रतोरारादुपकारक इति प्राप्ते उच्यते—'अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ॥ अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ॥ एवं दृष्टे फले लब्धे नादृष्टफलकल्पना ॥ ननु चाविनियुक्तत्वादक्षराणां न संस्क्रिया ॥ सक्तूनामिव होमेन नैवं दृष्टफलत्वतः ॥ प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥' यथोक्तं भाष्यकारेण—न होमसंस्कृतानां सक्तूनां प्रयोजनं श्रूयते नापि दृश्यते इति, दृश्यतेत्वक्षराणां प्रयोजनमिति वैषम्यम् । प्रयोजनवत्त्वं संस्कार्यत्वे हेतुर्न विनियोगः । तथाच ग्रहणावेक्षणसम्यग्जरणानामविनियुक्तानामपि मन्त्रप्रकाशनसंस्कार्यत्वमिष्टम् । अपिचोत्तराग्रन्थे क्रत्वर्थेन स्तोत्रक्रमेणर्चा[2] पाठादस्त्येव विनियोगः । तस्मात्संस्कारकर्माणि सामानीति । यत्त्वकर्मकाले गानं वाचनिकं तच्छिक्षार्थतया रथहस्त्यादियोग[3]वत् ॥

---

तितंमित्याशयेन परिहरति—एवमिति । अथेति । तथाचाधानवदकर्मकाले प्रयोग उपपन्न इति भावः । तर्हि तद्वदेव क्रतुमध्ये प्रयोगो न स्यादित्याह—तत इति । प्रधानकर्मेति । असंस्कारकर्मेत्यर्थः । बहिःप्रयोग इति । विश्वजिन्न्यायात्फलार्थ इत्यर्थः । तथाचोहसाम्नामप्यकर्मकालप्रयोगस्यादृष्टार्थत्वं बोध्यम् । तच्च वेदत्वं विना न निर्वहतीति पूर्वाधिकरणद्वितीयवर्णकार्थाक्षेपात्तेनापि संगतिर्द्रष्टव्या । अक्षराणामिति । कर्मकालेऽक्षराभिव्यक्तिर्दृष्टं प्रयोजनं अकर्मकालेऽप्यभ्याससद्वारा तदेव प्रयोजनमिति कर्मकालेऽकर्मकाले च दृष्टेनैवोपपत्तेर्न क्वाप्यदृष्टं कल्पनीयमित्यर्थः । ननु संस्कारवाक्यमेव संस्कार्यस्यापि विनियोजकमस्त्वितिचेत्तर्हि 'सक्तूञ्जुहोती'त्यादावपि संस्कारबलादेव सक्तूनां विनियोगकल्पनापत्त्या तत्रापि संस्कारकर्मत्वं स्यादित्यभिप्रायेण दृष्टान्तमाह—सक्तूनामिवेति । नहि संस्कारवाक्यं सर्वत्र संस्कार्यविनियोजकमिति ब्रूमो येनातिप्रसङ्गः स्यात्, किंतु यत्र संस्कारमात्रपर्यवसितं वाक्यं न तत्र संस्कार्यस्य विनियोगकल्पना । यत्र तु संस्कारविधिः प्रयोजनान्तरपर्यवसितः संस्कार्यस्य च तत्प्रयोजने सामर्थ्यं तत्र संस्कार्यस्यापि तत्प्रयोजने विनियोगं स एव संस्कारविधिः कल्पयति । यथा स्वाध्यायसंस्काररूपाध्ययनविधिरर्थज्ञानपर्यवसितः संस्कारप्रयोजनेऽर्थज्ञाने स्वाध्यायमपि विनियुङ्क्ते अध्ययनसंस्कृतेन स्वाध्यायेनार्थज्ञानं भावयेदिति, एवमिहापि 'रथंतरं पृष्ठं भवती'त्यादिभिः स्तुतिपर्यन्तः सामविधिः, स्तुतिश्च साम्नामृगक्षराभिव्यक्तिद्वारा कर्तुं शक्या नान्यथेति सामविधेरयमर्थो भवति ऋगक्षराभिव्यक्तिद्वारा रथंतरादिभिः स्तुतिं कुर्यादिति । ततश्च सामाभिव्यक्तैरक्षरैः स्तुतिं कुर्यादित्युक्तं भवतीति संस्कार्याणामृचामप्यनेनैव विनियोगो लभ्यते नैवं होमस्य प्रयोजनपर्यन्ततया विधिः येन तत्सामर्थ्यबलात्संस्कार्याणां सक्तूनां विनियोगः स्यादित्याशयेन परिहरति—नैवमिति । सक्तूनामिति । होमसंस्कृतानामिति शेषः । अक्षराणामिति । सामाभिव्यक्तानामिति शेषः । प्रयोजनवत्त्वमिति । संस्कारसाध्यप्रयोजनजननसामर्थ्यं संस्कार्यत्वे हेतुः नतु वचनान्तरेण विनियोगोऽपीत्यर्थः । ग्रहणेति । सोमस्येति शेषः । मन्त्रेति । 'अश्विनोस्त्वा बाहुभ्या'मित्यादिमन्त्रेत्यर्थः । अपिचेति । तथाच क्रमाविनास्त्येव विनियोगः । नचोत्तराग्रन्थे योनिपाठस्यावध्यर्थत्वमिति वाच्यम् । प्रकरणे पाठाविशेषात्त्रित्वविधिना तृचस्यापेक्षितत्वाच्च योनेरपि क्रत्वर्थः पाठ इति भावः । रथेति । यथा शिल्पी शिक्षार्थं रथहस्त्यादिकं भूमौ लिखति तद्वदित्यर्थः । एतेन 'दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वा'दिति न्यायस्य तानि द्वैधादौ व्युत्पादनेऽप्यकर्मकाले प्रयोगबलादवश्यमदृष्टार्थत्वमिति शङ्कानिराकरणार्थत्वेनास्या वैयर्थ्यमिति सूचितम् । एतेनैवाध्ययनविधेर्दृष्टार्थत्वं प्रथमसूत्रे साधितमपि सामांशे उक्ताशङ्कानिराकरणेन दृढीकृतमित्युक्तप्रायमिति ध्येयम् । अत्र पूर्वपक्षे साम्नः प्राधान्ये प्रधानभूतगीत्यन्यथाभावपरिहाराय योनिवर्णवशेन गानं, सिद्धान्ते तु ऋगक्षराणां प्राधान्यादुत्तरावर्णवशेन गानमन्यथाक्षरसंस्कारायोगादिति प्रयोजनं ऊहोपोद्घातत्वं च द्रष्टव्यम् । सूत्रार्थस्तु—साम प्रधानकर्म यतः प्रधानविधिलक्षणं द्वितीयारथंतरादिषु विद्यत इति ॥

---

१ नह्यकर्मकाले. २ क्रमेण वा पाठात्. ३ योग्यावत्.

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ॥ ३ ॥

**तृचे स्याच्छ्रुतिनिर्देशात् ॥१४॥ [शब्दार्थत्वाद्विकारस्य ॥१५॥ दर्शयति च ॥१६॥ वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ तथाचान्यार्थदर्शनम् ॥ १८ ॥ अनवानोपदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेनेतरा श्रुतिः ॥ २० ॥]**

**अंशैः सामर्क्षु कृत्स्नं वा प्रत्यृचं तिसृभिः श्रुतेः ॥ अंशैर्मैवं स्तुतेरंशैरसिद्धेः प्रत्यृचं भवेत् ॥ ४ ॥**

'एकं साम तृचे क्रियते स्तोत्रीय'मिति श्रूयते, तत्र संशयः किं व्यासज्य तिसृषु गानमुत प्रत्यृचं परिसमाप्तमिति । तदर्थं च विचार्यते किमिदं त्रित्वं सामनिर्वृत्त्यङ्गमुत स्तोत्राङ्गमिति । तत्र 'साम क्रियत इत्येवं सामनिर्वृतिरुच्यते ॥ तामुद्दिश्य ऋचां त्रित्वमङ्गत्वेन विधीयते ॥' प्रधानभूतानामप्यृचामार्थिकं सामसाधनत्वमस्त्येवेति तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वं, वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा व्यासज्य गेयम् । नहि प्रत्यृचं गीयमानस्य त्रित्वमङ्गभूतं संपादितं स्यात् । क्रियत इत्यनेनाभ्यासलक्षणा च स्यात्प्रत्यृचं गाने । तस्माद्व्यासज्येति प्राप्ते उच्यते—'स्तोत्रीयस्य हि साम्नोऽत्र तृचसंबन्ध उच्यते ॥ स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते ॥ साम्नस्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः ॥ स्तोत्रसाधनता चर्चां प्रत्येकं न तु सङ्घशः ॥' यदि त्रित्वसंपादनाय व्यासज्य गीयेत ततो 'रथंतरं पृष्ठं भवति' 'यज्ञायज्ञीयेन स्तुवीते'त्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं तन्न घटते । स्तोत्रसाधनीभूतशब्दाभिव्यक्त्या च साम्नां स्तोत्राङ्गत्वम्, वाक्यं च स्तुतिबुद्धेः साधनं न वाक्यसमुदायः । तस्मात् प्रत्यृचं गेयम् । एवंच त्रित्वं सामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन

---

**तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥ एकमिति** । स्तोत्रसाधनीभूतमेकं साम तिसृषु ऋक्षु कर्तव्यमित्यर्थः । **व्यासज्येति** । एकैकस्यामृचि सामांशो गेयो न कृत्स्नं सामेत्यर्थः । **तदर्थमिति** । यदि सामनिर्वृत्त्यङ्गं त्रित्वं तदा तिसृभिरप्येकं साम निर्वर्त्यमित्यवयवशो गानम् । यदि च स्तोत्राङ्गं तदा तिसृभिः स्तुवीतेत्यर्थपर्यवसानेन तिसृणामप्यभिव्यक्त्यपेक्षायां प्रधानानुसारेण परिसमाप्य गानमिति फलफलिभावः । **तामुद्दिश्येति** । तिसृभिः सामनिर्वृत्तिं कुर्यादित्येवमित्यर्थः । **ननु** इयं वचनव्यक्तिरेवानुपपन्ना ऋचां प्राधान्यात्तथाच तद्गतत्रित्वस्य न सामाङ्गत्वमित्यत आह—**प्रधानेति** । आर्थिकसामसाधनत्वाभिप्रायेण युक्ता वचनव्यक्तिरिति भावः । **प्रतिप्रधानावृत्तिमिति** । प्रतिप्रधानं गुणावृत्तिमित्यर्थः । **ननु** प्रत्यृचं परिसमाप्य गानेपि तिसृषु गानात्त्रित्वं गानाङ्गं संपत्स्यत एवेत्यत आह—**नहीति** । प्रत्यृचं गानसमाप्तौ गानानां भिन्नत्वान्नैकस्मिन्गाने त्रित्वमङ्गं संपद्यत इत्यर्थः । **क्रियत इति** । यदि सिद्धान्तरीत्या त्रित्वस्य स्तोत्राङ्गत्वेन विधीयमानत्वात्प्रत्यृचं गानमित्युच्येत तदैकस्यैव पुनःपुनः प्रादुर्भावात्प्रत्यृचमपूर्वतया साम्नः प्रादुर्भावाभावेनापूर्वप्रादुर्भावार्थककरोतेस्तृचे सामाभ्यसेदित्येवमभ्यासलक्षणा स्यादित्यर्थः । **स्तोत्रीयस्येति** । स्तोत्रीयमितिवचनादिति शेषः । यदि त्रित्वं सामाङ्गं तदनुसारेण व्यासज्य गेयं तदा साम्नः स्तोत्रसाधनत्वं न स्यात्, तद्धि स्तोत्रसाधनीभूतऋगभिव्यञ्जकतया न साक्षात्, स्तोत्रसाधनत्वं चर्चां प्रत्येकमेव न समुदायरूपेण । नच व्यासज्य गाने प्रत्येकं स्तोत्रसाधनीभूतानामृचामभिव्यक्तौ साम्नः सामर्थ्यमित्यर्थः । **ननु** स्तोत्रीयसामोद्देशेन तृचसंबन्धविधाने विशिष्टोद्देशप्रयुक्तो वाक्यभेदः स्यादित्याशङ्क्य मास्तु स्तोत्रीयत्वेन सामोद्देशः । साममात्रोद्देशेन तृचविधानेऽपि यज्ञायज्ञीयेनेत्यादिवचनान्तरावगतं स्तोत्रसाधनत्वं साम्नां न स्यादतो न सामाङ्गं त्रित्वमित्याह—**ततो रथंतरमिति** । रथंतराख्यसामसाधनकं पृष्ठस्तोत्रं कुर्यादित्यर्थः । **शब्दाभिव्यक्त्या चेति** । अनेन पूर्वाधिकरणोक्तं साम्नामृगभिव्यञ्जकत्वमुपजीव्य प्रत्यृचं परिसमाप्य गेयमित्येतत्सिद्धान्तप्रवृत्तेः संगतिरपि सूचिता । **न वाक्येति** । अन्यथा तिसृणामेकस्तुतिबुद्धिजनकत्वे एकार्थकत्वान्मन्त्रभेद एव न स्यादिति भावः । **तस्मादिति** । कृत्स्नस्यैव साम्नः कार्त्स्न्येनैकर्गभिव्यञ्जकत्वादित्यर्थः । **ननु** यद्युक्तरीत्या न सामोद्देशेन त्रित्वविधिस्तर्हि किमुद्देशेन तद्विधानम् । नच ऋगुद्देशेन तद्विधानं संभवति । एकस्मिन्पदे ऋगनुवादेन त्रित्वविधानासंभवात् एकस्य पदस्यैकप्रसरतया उद्देशोपादानलक्षणव्यापारद्वयासंभवादित्यत आह—**एवंचेति** । प्रकरणोपस्थितं स्तोत्रीयशब्दोपस्थितं वा स्तोत्रमेवानूद्य तिसृभिः स्तुवीतेति त्रित्वमङ्गत्वेन विधीयते । तत्र क्रमप्रकरणाभ्यां स्तोत्राङ्गत्वे-

---

१ त्रित्वमङ्गं भवति.

विधीयमानं स्तोत्रस्यैवाङ्गत्वेन विधीयते । तद्विधानेन प्राप्तं तिसृषु गानं तृचे क्रियते इत्यनेनानूद्यते अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोषः ॥

समास्वेव तिसृष्वृक्षु गानाधिकरणम् ॥ ४ ॥

**तदभ्यासः समासु स्यात् ॥ २१ ॥ [लिङ्गदर्शनाच्च ॥ २२ ॥]**

**तिसृष्वृक्षूदितं साम विषमासु समासु वा ॥ यथेच्छानियमादन्त्यः शरलेशापनुत्तये ॥ ५ ॥**

तिसृषु प्रत्येकं गीयमानं किमनियमेन समासु विषमासु वा गेयमुत समच्छन्दस्कास्वेवेति संशये विशेषाश्रवणादनियमः । संशरविलेशपरिहाराय तु समास्वेव स्यात् ॥

उत्तरयोर्गायतीत्यत्रोत्तराग्रन्थस्थयोर्ऋचोर्ग्रहणाधिकरणम् ॥ ५ ॥

**नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयते ॥२३॥ [ऐकार्थ्याच्च तदभ्यासः॥२४॥]**

**छन्दःस्थयोरुत्तरास्थयोर्वा गीतेरिहोहनम् ॥ अविशेषाद्विकल्पः स्यादन्त्यः संज्ञाबलित्वतः ॥ ६ ॥**

**त्रैशोकेति जगत्यौ द्वे आनेये गीतयेऽथ वा ॥ बृहत्यावादिमः साम्यान्नोत्तरात्वश्रुतेर्बलात् ॥ ७ ॥**

'यद्योन्यां तदुत्तरयोर्गायती'त्यत्र संशयः किं योन्युत्तरयोरुत्तराग्रन्थाधीतयोर्वा गेयमुतोत्तराग्रन्थाधीतयोरेवेति । तत्रोत्तराशब्दस्य संबन्धिशब्दत्वाचैव योनेः परतः पठिता सैवोत्तरा । ततश्च योनिपाठापेक्षया रथंतरयोनेः परतो बृहद्योनेः पठितत्वात्तस्यां गानं, उत्तराग्रन्थेतु रथंतरस्य योनेः परतो 'न त्वावाँ अन्यो दिव्य'इत्यस्याः पाठात्तस्यां गानमतो विकल्पः । द्वयोरपि रथंतरयोन्यपेक्षयोत्तरत्वादिति प्राप्ते ब्रूमः—यद्यप्ययं संबन्धिशब्दो लोके तथाप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः ।

---

नावगता ऋचस्त्रित्वसंख्यायाः परिच्छेद्यत्वेनान्वीयन्ते तदनुवादश्च तृचशब्दावयव ऋक्शब्द इति न काप्यनुपपत्तिरिति भावः । स्तोत्राङ्गत्वेन त्रित्वविधाने साम क्रियत इत्यस्य कथमन्वय इत्यत आह—**तद्विधानेनेति** । प्रागुक्तकरोतेर्लक्षणाप्रसङ्गदोषं परिहरति—**अनुवादत्वादिति** । सूत्रार्थस्तु—तृचे व्यासज्य गानं स्यात्साम क्रियत'इति सामनिर्वृत्तेः श्रुतत्वात्तत्रैव त्रित्वान्वयात्, यदा तृचे क्रियत इत्यनेन त्रिशब्दऋक्शब्दार्थयोः संबन्धविधाने परपदसंबन्धविधानाद्वाक्यं स्यात् । क्रियत इति धात्वर्थसामकरणे त्रित्वविधाने तु श्रुत्यनुग्रह इति ॥

**तदभ्यासः समासु स्यात् ॥ २१ ॥ समास्विति** । योनिसमच्छन्दस्कासु तद्विषमच्छन्दस्कासु वेत्यर्थः । **विशेषेति** । तृचे क्रियत इति त्रित्वमात्रस्यैव श्रवणादित्यर्थः । नचैवं साम्नः संशरविलेशदोषप्रसङ्गः । ऋगपेक्षया साम्नो गुणत्वेन गुणानुसारेण प्रधानभूतऋग्विषयकतृचशास्त्रसंकोचानुपपत्तेः । एवंच यदि त्रित्वं न सामाङ्गं किंतु स्तोत्रसाधनीभूतऋक्परिच्छेदद्वारा स्तोत्राङ्गं तर्हि तस्य प्रधानगततया प्राबल्यात्संशरविलेशकृतं वैगुण्यं गुणभूतसामगतत्वेन दुर्बलमुल्लङ्घ्य समासु विषमासु वा गानमित्युत्थितेः संगतिर्द्रष्टव्या । **संशरेति** । संशरः साम्नो हिंसा 'शॄ हिंसाया'मिति धातोः 'ऋदोरप्'इत्यपि निष्पत्तेः । विलेशोऽल्पत्वं 'लिश अल्पीभाव'इति धातोर्घञि निष्पत्तेः । यद्यधिकच्छन्दस्कायां योनौ उत्पन्नं साम न्यूनच्छन्दस्कयोरितरयोर्गीयते तदा सामैकदेशेनैव तदृगक्षराभिव्यक्तिपूर्तेरवशिष्टः सामभाग आश्रयाभावाद्धिंस्येत । यदि च योनेरप्यधिकच्छन्दस्कयोर्गीयते तदा साम्नोऽल्पत्वादवशिष्ट ऋग्भागः सामरहितत्वादनभिव्यक्त एव स्यादित्येतद्दोषद्वयपरिहारार्थं समास्वेव गानमित्यर्थः । साम्नो गुणत्वेऽपि तदनुसरणेऽपि तृचशास्त्रस्योपपत्तेरत्यन्तानुपपद्यमानगुणानुसारेण कांस्यभोजिन्यायेन तृचशास्त्रवर्णनमेव युक्तमिति संशरविलेशदोषपरिहारार्थं समास्वेव गानमिति भावः । अयंच विचारो यत्र सामनि उत्तराग्रन्थे योनेरुत्तरे ऋचौ न पठिते तद्विषयो बोध्यः । अन्यथा यद्योन्यां तदुत्तरयोरिति वचनेन विषमच्छन्दस्कयोरप्युत्तरयोरेव गानावश्यंभावेन विचारानवकाशादिति ध्येयम् ॥

**नैमित्तिकं तु० ॥ २३ ॥ योन्युत्तरयोरिति** । सामगानां रथंतरादिसामयोनीनामेव पाठात्मक एको ग्रन्थः छन्दोनामकस्तथा एकस्य साम्नो योनिपाठानन्तरमप्ययोनिभूतऋक्द्वयपाठः क्वचिदेकऋक्पाठोऽपि । ततः सामान्तरयोनिपाठ इत्येवं योनितदुत्तरऋक्पाठात्मकोऽपरो ग्रन्थो यः स एवोत्तराग्रन्थ इत्युच्यते । एवं स्थिते यद्योन्यां तदुत्तरयोरित्यत्र किं योनिग्रन्थपठितयोरुत्तरयोरुत्तराग्रन्थपठितयोर्वेत्यनियमः उतोत्तराग्रन्थपठितयोरेवेति नियम इति संशय इत्यर्थः । अस्तु पूर्वत्र संशरविलेशदोषप्रसङ्गलक्षणविशेषनियामकसद्भावात्समास्वेवेति नियमः इह तु विशेषनियामकाभावादनियम इत्युत्थितेः संगतिः । **संबन्धीति** । उत्तराग्रन्थेऽपि संबन्धिशब्दतयैव प्रयोगोपपत्तेः पृथक्शक्तिकल्पने मानाभावादिति भावः । **संज्ञारूपेणेति** । 'उत्तरा अध्यापयाम' इत्यादौ प्रतिसंबन्ध्यनुपादानेनानन्यथासिद्धप्रयोगबलात्संज्ञारूपेण पृथक्शक्तिरवश्यं

तत्र संज्ञाशब्दस्यानन्यापेक्षवृत्तित्वात्सापेक्षवृत्तेः संबन्धिशब्दाद्बलीयस्त्वं प्रकरणपाठाच्चोत्तराग्रन्थः ऋत्वङ्गं तस्मादुत्तराग्रन्थाधीतास्वेव गेयम् ॥ **एवंवा** ॥ द्वादशाहे 'पार्ष्ठिकं चतुर्थमहः एकविंशः षोडशी वैराजसामे'ति श्रुतम् । तत्र च 'त्रैशोकं नाम ब्रह्मसामातिजगतीषु स्तुवत' इति श्रूयते । तत्रातिजगत्यामुत्पन्नं 'विश्वाः पृतना' इति। उत्तरे द्वे बृहत्यौ 'नेमिनमन्ति चक्षसे' इत्याद्ये। तत्र तृचे गाने क्रियमाणे संशयः किमतिजगत्यौ द्वे आनीय समासु गानमुत बृहत्यावेवादाय विषमासु गानमिति। संशरविलेशपरिहारायातिजगतीषु स्तुवत इति चातिजगतीबहुत्वानुग्रहाय समासु गानं, बृहत्योस्तूत्तराग्रन्थपठितयोः ऋत्वर्थत्वात्तत्परित्यागे तयोरानर्थक्यादेकविंशसंपत्तये चैकैकस्यामृचि सप्तकृत्वोऽभ्यस्यमानायामभ्यासापेक्षयातिजगतीबहुत्वादनुवादस्वरूपस्य वर्तमाननिर्देशस्योपपत्तेर्विषमासु गानम् ॥

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथंतरस्य गानाधिकरणम् ॥ ६ ॥

**प्रागाथिकं तु ॥ २५ ॥ [स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥]**

रथंतरे ककुब्ग्राह्या ग्रथ्या वाद्योऽर्थवत्त्वतः ॥ पुनःपदाप्रसिद्ध्यादेरन्त्योऽर्थोऽन्यत्र वीक्ष्यताम् ॥ ८ ॥
यौधाजये रौरवे च बृहत्योरागमोऽथ वा ॥ ग्रथनं पूर्ववत्पक्षौ पष्टिलिङ्गमिहोच्यते ॥ ९ ॥
श्यावाश्वान्धीगवेऽनुष्टुबानेया ग्रथ्यतेऽथ वा ॥ पुरेव लिङ्गं जगतीचतुर्विंशतिकीर्तनम् ॥ १० ॥
चतुःशते प्रग्रथनमृचः पादस्य वाग्रिमः ॥ तृचे मुख्यत्वतो मैवमृगन्यत्वस्य वर्णनात् ॥ ११ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने 'अभि त्वा शूर नोनुमः' 'त्वामिद्धि हवामह' इति। तयोः पङ्क्ती उत्तरे 'नत्वावाँ अन्यो दिव्यो न पार्थिवः' 'स त्वं नश्चित्रे'ति। तत्र श्रूयते 'नैवं बृहद्रथंतरमेकछन्दो यत्तयोः पूर्वा बृहती ककुभावुत्तरे' इति तत्र किं पङ्क्ती परित्यज्य द्वेद्वे ककुंभावानेतव्ये उत

---

कल्पनीयेति भावः। ननु रूढत्वाविशेषात्संबन्धिशब्दात्संज्ञाशब्दस्य को विशेष इत्यत आह—**तत्रेति**। **प्रकरणेति**। अनियमपक्षे प्रकरणानुग्रहः पाक्षिकः स्यादिति भावः। **ननु** रूढत्वे उत्तराग्रन्थे यत्र क्वापि पठितयोरप्यृचोर्ग्रहणं स्यात्तत्तयोन्युत्तरपठितयोरेव ग्रहणमित्यत्र नियामकाभावादिति चेन्मैवम्। उत्तराग्रन्थे योनिपाठो न योनिस्वरूपज्ञानार्थः, छन्दोनामग्रन्थपाठादेव तत्स्वरूपावगतेः, किंतु योन्युत्तरयोरेवोत्तराग्रन्थपठितयोर्ग्रहणं यथा स्यादित्येवमर्थमेव ऋगन्तरसंवलिततया योनिपाठ इति तस्यैव नियामकत्वात्। सूत्रार्थस्तु—नैमित्तिकं संज्ञानिमित्तमेवोत्तरात्वमानन्तर्यात्प्रतिसंबन्ध्यपेक्षाकृतव्यवधानाभावात्प्रतीयत इति ॥ **एवंवा** ॥ **पार्ष्ठिकमिति**। पृष्ठ्यषडहे चतुर्थमित्यर्थः। **एकेति**। एकविंशस्तोमकः षोडशिसंस्थः वैराजाख्यपृष्ठसामा चेत्यर्थः। समासु गानमित्यस्यापवादात्संगतिः। **संशरेति**। विलेशग्रहणं संपातायातं बृहत्योरतिजगत्यपेक्षया न्यूनत्वेन विलेशस्यासंभवादिति ध्येयम्। **ननु** बृहत्योरुत्तराग्रन्थे पाठबलात्संशरोऽप्यङ्गीकार्यः। नचातिजगतीष्विति श्रुतबहुत्वानुपपत्तिरभ्यासेनाप्युपपत्तेरित्यत आह—**अतिजगतीष्विति**। अभ्यासे न मुख्यं बहुत्वं तथाच वचनस्य प्राबल्यात्पठितयोर्वाचस्तोमादौ विनियोग इति भावः। **ननु** वचनबलात्पाठो बाध्यतामत आह—**एकेति**। ब्रह्मसाम्नः त्रैशोकस्य पवमानातिरिक्ततया दशमे वक्ष्यमाणरीत्याभ्यासेनैवैकविंशत्वस्य संपादनीयत्वेनैकस्याप्यतिजगत्या अभ्यासकृतबहुत्वानुवादतया वचनस्योपपत्तेर्न पाठबाधकत्वमनुवादकत्वाच्च गौणबहुत्वेऽपि न दोष इति भावः ॥

**प्रागाथिकं तु ॥ २५ ॥ अभि त्वेति**। 'अभि त्वा शूरे'त्यस्यां रथंतरं, 'त्वामिद्धि हवामह'इत्यस्यां बृहदित्यर्थः। **तयोरिति**। **'नत्वावाँ अन्यो दिव्य'इति**। इयं पङ्क्तिः रथंतरस्योत्तरा 'स त्वं नश्चित्रे'तीयं बृहत इति विवेकः। **न वा इति**। वामदेव्यादिवद्बृहद्रथंतराख्यं सामद्वयमेकच्छन्दस्कासु गेयं न भवति यतस्तयोः पूर्वा बृहती ककुभावुत्तरे एवंरूपा असमास्तिस्र ऋच इत्यर्थः। **तत्रेति**। किं पठितामेकैकामपि पङ्क्तिं परित्यज्य द्वेद्वे उत्पत्तिककुभावानेये उत बृहतीं योनिमुत्तरां च पङ्क्तिं प्रग्रथ्य ककुभावुत्तरे संपादनीये इति संशय इत्यर्थः। अत्र 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः' इति पठितायां बृहत्यां प्रथमतो रथंतरं गेयं सैका स्तोत्रीया। ततः

---

१ म वे बृह.

योनिमुत्तरां च प्रग्रथ्य ककुभावुत्तरे संपादनीये इति संशयः। तत्प्रग्रथनेन मुख्यककुप्संपत्त्यभावादक्षरसामान्यमात्रेण गौणत्वापत्तेः तृचगानस्य च त्रयमन्तरेणासामञ्जस्यादन्यासां ककुभामानयनम्। उच्यते—प्रगाथस्मरणात्प्रगाथसमाख्यानात्पङ्क्तेश्चोत्तरात्वेन पाठस्यात्यन्तानर्थक्यापातात्पादात्पादं पुनरारभत इति च दर्शनात्तृचगानस्य च सामान्येन विहितत्वात्र प्रगाथेऽप्यत्यन्तदोषाभावात्प्रग्रथनम्॥ **एवं वा**॥ रौरवे यौधाजये बार्हते तृचे भवतः तयोश्च पूर्वा बृहती उत्तरा विष्टारपङ्क्तिरिति। तत्रापि पूर्ववदुत्पत्तिबृहत्यावानीय तृचसंपादनमुत पठितयोरेव प्रग्रथनमिति संशये तत्रैव विशेषतो बार्हते तृचे भवत इति तृचश्रवणादन्यागमनं प्रगाथस्मरणसमाख्योत्तरापाठलिङ्गदर्शनैस्तु प्रग्रथनम्॥ **एवं वा**॥ 'श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवत' इति तयोः पूर्वानुष्टुबुत्तरे द्वे गायत्र्यौ

---

ककुबुत्तराकारं प्रग्रथ्य गानं तत्प्रकारस्तु 'ईशानमिन्द्र तस्थुष' इति पादं पुनरादाय 'नत्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यत' इत्युत्तरस्या अर्धेन सह गातव्यं सैका त्रिपदाष्टाविंशत्यक्षरा ककुप्, द्वितीया स्तोत्रीया। 'न जातो न जनिष्यत' इति पादं पुनरादाय 'अश्वा यन्तो मघवन्निन्द्रवाजिनो गव्यन्तस्त्वा हवामह' इति उत्तरस्या अवशिष्टार्धेन सह गाने अपरा ककुप् संपद्यते सा तृतीया स्तोत्रीया। एवं बृहत्यपि योज्यम्। पूर्वत्र गौणस्यातिजगतीबहुत्वस्य ग्रहणेऽपीह न गौणं ककुब्द्वयं ग्राह्यमित्युत्थितेः संगतिः। **अक्षरेति**। गायत्र्यादिशब्दानां चतुर्विंशत्यादिसंख्यामात्रवाचित्वस्याष्टमे निराकरणादिति भावः। **स्मरणादिति**। याज्ञिकानामिति शेषः। प्रकृष्टं गानं यस्मिन् स प्रगाथः। प्रकर्षश्च पादस्य पुनरादानेनावृत्त्या गाने संभवति नान्यथेति भावः। **पादात्पादमिति**। पादात्प्रथमात्तृतीयाद्वा उत्तरं पादं द्वितीयं चतुर्थं वा पुनराददीतेत्यर्थः। यद्वा पादादिति ल्यब्लोपे पञ्चमी। पादमपेक्ष्येति ऋक्परिपूरणाय पादान्तरस्यापेक्षितत्वात्पादं पुनरारभेतेत्यर्थः। यद्यपि भाष्योदाहृतश्रुतौ पादादिति नास्ति तथापि श्रुत्यन्तरमिदमिति द्रष्टव्यम्। अर्थतो वानुभाषणं बोध्यम्। केचित्तु पादं पुनरारभते इत्येव पाठः। **तृचेति**। 'एकं साम तृचे क्रियते स्तोत्रीय' मिति सामान्यवचनस्य प्रग्रथनलब्धसंख्याश्रयणेऽप्युपपत्तेर्न तद्बलात्पठितायाः पङ्क्तेर्वाचस्तोमादौ विनियोगकल्पनं युक्तमित्याशयः। प्रग्रथननिमित्तं गानं स्यादिति सूत्रार्थः॥ **एवं वा**॥ **रौरवेति**। माध्यंदिने पवमाने रौरवाख्यं यौधाजयाख्यं च साम बृहतीछन्दस्के तृचे गेयमित्यर्थः। **तयोरिति**। उत्तराग्रन्थे रौरवयौधाजययोराश्रयभूत एकः प्रगाथः ऋग्द्वयात्मक आम्नातः, तत्र च 'पुनानः सोमे' त्येषा पूर्वा बृहती 'दुहा न ऊधर्दिव्य' मित्येषा द्वितीया विष्टारपङ्क्तिरित्यर्थः। **उत्पत्तीति**। विष्टारपङ्क्तिमपनीय तस्याः स्थाने उत्पत्तिबृहत्यावानीये इत्यर्थः। **प्रग्रथनमिति**। 'पुनानः सोमे' त्यस्यां बृहत्यां यथापाठं गानं कृत्वा तस्या एव चतुर्थं पादं पुनरुपादाय द्विरभ्यस्य 'दुहान ऊधर्दिव्य' मित्येतस्या विष्टारपङ्क्तेः पूर्वार्धेन संयोज्य गेयम्। एवं सति सा बृहती द्वितीया संपद्यते। 'तथा दुहान ऊधर्दिव्य' मित्यस्या द्वितीयपादलक्षणप्रग्रथनेन संपादिताया बृहत्याश्चतुर्थपादं पुनरुपादाय द्विरभ्यस्योत्तरार्धेन सह संयोज्य गाने तृतीया बृहती संपद्यते इत्येवं पठितयोरेव बृहतीविष्टारपङ्क्त्योः प्रग्रथनेन बार्हतस्तृचः संपाद्य इत्यर्थः। **तृचेति**। पूर्वत्र 'एकं साम तृचे क्रियते स्तोत्रीय' मिति सामान्यवचनस्य प्रग्रथनेन समर्थनेऽपीह बार्हते तृचे भवत इति विशेषेण तृचशब्दश्रवणादन्ययोरुत्पत्तिबृहत्योरागमनेनैव तृचः संपादनीयः, प्रग्रथने पृथक्त्वनिवेशिन्यास्त्रित्वसंख्याया असामञ्जस्येन विशेषवचनाख्यारस्यादित्यर्थः। अनया विशेषाशङ्कयोत्थानात्संगतिरपि बोध्या। **लिङ्गेति**। षष्टिस्त्रिष्टुभो माध्यंदिनं सवनमित्येतदिह लिङ्गम्। तस्य चायमर्थः—माध्यंदिनसवने पवमानस्तोत्रमेकं चत्वारि पृष्ठानीत्येवं पञ्च स्तोत्राणि। तत्र पवमानः पञ्चदशस्तोमः पृष्ठानि सप्तदशस्तोमकानि। तथाच त्र्यशीतिस्तोत्रीयाः तासां काश्चित्पठिताः काश्चित्प्रग्रथनलब्धाः काश्चिदभ्यासलब्धाः। तत्र द्वादश ककुभः अष्टाविंशत्यक्षरास्त्रयोविंशतिर्गायत्र्यश्चतुर्विंशत्यक्षराः पञ्चचत्वारिंशद्बृहत्यः षट्त्रिंशदक्षरास्तिस्रस्त्रिष्टुभश्चत्वारिंशदक्षराः। तत्र द्वादशापि ककुभः द्वादशभिर्गायत्र्यर्धैः संयोजिताः सत्यो द्वादश त्रिष्टुभः संपद्यन्ते। एवंच त्रिपदाऽष्टौ गायत्र्यो व्यतीताः अवशिष्टाः पञ्चदश गायत्र्यस्तासां पञ्चचत्वारिंशत्पादाः तावद्भिः पादैः पञ्चचत्वारिंशद्बृहत्यः संयोजिताः पञ्चचत्वारिंशत्त्रिष्टुभः संपद्यन्ते। आम्नाताश्च तिस्र इत्येवं षष्टिस्त्रिष्टुभः संपन्नाः। इयं च षष्टिसंख्या माध्यंदिनसवनप्रकरणे पठिताया विष्टारपङ्क्तेर्बृहत्याकारप्रग्रथन एवोपपद्यते। उत्पत्तिबृहत्योरानयने तु पठितानां न्यूनत्वान्माध्यंदिनसवने पठितानामृचां श्रूयमाणा त्रिष्टुप्षष्टिसंख्यानुपपन्ना स्यादित्यस्माल्लिङ्गात्प्रग्रथनमित्यर्थः॥ **एवं वा**॥ **श्यावाश्वेति**। आर्भवे पवमाने श्यावाश्वमान्धीगवं च साम आनुष्टुभे तृचे गेयमित्यर्थः। **तयोरिति**। उत्तराग्रन्थे तयोः साम्नोराश्रयभूते तृचे पूर्वा 'पुरोजिती वो अन्धसे' इत्येषानुष्टुप् 'यो धारया पावकये' ति 'तं दुरोष' मिति च द्वे उत्तरे गायत्र्यावित्यर्थः। **प्रग्रथनेनेति**। 'पुरोजिती वो अन्धसे' इत्यस्यां यथापाठं गानं कृत्वा चतुर्थं पादं पुनरुपादाय 'यो धारया पावकये' त्यनया संयुज्य गेयं तस्याश्चान्तिमं पादं पुनरु-

तत्राप्यन्ययोरनुष्टुभोरागमनं पठितानामेव वा प्रग्रथनेनानुष्टुप्त्रयं संपाद्यमिति विचारः। लिङ्गान्तरप्रदर्शनार्थं तु इदं व्याख्यानान्तरं नात्र काचिदधिकाशङ्कास्ति ॥ **एवंवा** ॥ गवामयने श्रूयते 'चतुःशतमैन्द्रा बार्हताः प्रगाथा'इति । तत्र किं तिसृषु ऋक्षु गानमुत द्वयोर्द्वयोः प्रग्रथनेनेति संशये तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात्। प्रग्रथने हि न समञ्जसं तृचत्वम् । असति प्रग्रथने कथं प्रगाथवचनम् 'ऐन्द्राबार्हताः प्रगाथा'इति ऋक्प्रग्रथनाभिप्रायमिति ब्रूमः। प्रथमे तृचे गीत्वा तस्मात्तृचादेकामृचमुपादायापरे द्वे ऋचौ गृहीत्वा गीयते पुनरप्येवं तथा सति तृचगानं प्रगाथशब्दश्चोभयमनुगृहीतं भवति। नैतदेवम्। 'अन्या अन्या ऋचो भवन्ती'ति वचनान्नैकस्यामृचि द्विर्गानं संभवति तस्माद्द्वयोः प्रग्रथनम् ॥

गीतिसंपादकाक्षरविकारादीनां विकल्पाधिकरणम् ॥ ७ ॥

**अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥**

**समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः ॥ आद्यः प्रयोगग्रहणादर्थैकत्वाद्विकल्पनम् ॥ १२ ॥**

छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वाद्युगपत्प्रयोगासंभवात्तदनुरोधेन च सामवृत्तेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः॥

साम्नैव स्तवनविधानाधिकरणम् ॥ ८ ॥

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ [वचनाद्विनियोगः स्यात् ॥ ३१ ॥]**

**ऋक्सामाभ्यां विकल्पेन स्तुतिः साम्नैव वाग्रिमः ॥ पुरेव मैवगृङ्ङ्निन्दासामप्राशस्त्यदर्शनात् ॥ १३ ॥**
**गानस्य नियमो नोत विद्यते वह्न्युपस्थितौ ॥ नाम्नानद्वयतोऽस्त्येव प्रकृतत्वाच्छ्रुतेरपि ॥ १४ ॥**
**त्रैस्वर्यादि समुच्चेयं विकल्प्यं तान एव वा ॥ प्रयोगादर्थतो द्वौ नो वचनात्स्मृतिकल्पितात् ॥ १५ ॥**

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि तेषां च न प्रकृतितः किंचित्सा-

---

पादाय 'तं दुरोष'मित्यनया संयुज्य गेयमित्येवं प्रग्रथनेनानुष्टुप्त्रयं संपाद्यमित्यर्थः । **लिङ्गान्तरेति**। चतुर्विंशतिर्जगत्यस्तृतीयसवन एका च ककुबितीदं जगतीककुबियत्तारूपं लिङ्गं पूर्ववत्प्रग्रथन एवोपपद्यते। अपूर्वयोरनुष्टुभोरानयने उत्तराग्रन्थपठिताभिरेव ऋग्भिः संख्यासंपत्त्यभावात् पूर्ववदेव लिङ्गमिदमनुपपन्नं स्यादित्येतत्प्रदर्शनार्थमित्यर्थः । तृतीयसवने 'आर्भवपवमानस्तोत्रं सप्तदशं यज्ञायज्ञीयमेकविंश'मिति । एवं स्तोत्रद्वयस्याश्रयभूता ऋचोऽष्टत्रिंशत्तत्र षड् गायत्र्यः षडनुष्टुभस्तिस्रो जगत्यः एका उष्णिक् पञ्चदश ककुभः सप्त बृहत्यः ताश्चाक्षरगणनया चतुर्विंशतिः जगत्य एका ककुप् च संपद्यत इति द्रष्टव्यम्। लिङ्गान्तरप्रदर्शनार्थत्वादेव न पृथक्संगतिः। अत्र प्राभाकरैः पठितयानुष्टुभा पठिताभ्यां च गायत्रीभ्यां तृचगानसंपत्तेर्नात्र प्रग्रथनेन कार्यमित्येवं विशेषाशङ्कानिराकरणार्थमिदमधिकरणम्। निराकरणं त्वानुष्टुभे **तृचे भवत** इत्यानुष्टुभत्वस्य पठितयोर्गायत्र्योर्गानेऽनुपपत्तेर्योन्यनुष्टुप्संबन्धमात्रेण तृचे आनुष्टुभत्वस्यैकदेशसंबन्धद्वारकत्वेन लाक्षणिकत्वात्। तस्मात्प्रग्रथनमेव कर्तव्यमित्येवमुक्तं तन्निराकरणाभिप्रायेणाह—**नात्रेति** । भाष्यकारेणान्यागमनस्यैव पूर्वपक्षितत्वेन पठितयोर्गानमिति पूर्वपक्षशङ्काया भाष्यविरुद्धत्वादिति भावः ॥ **एवंवा** ॥ **गवामयन इति**। अभिवर्ताख्यं ब्रह्मसाम प्रकृत्येति शेषः। **चतुरिति**। चतुरुत्तरशतसंख्याका इन्द्रदेवताका बृहतीछन्दस्काः प्रगाथाः द्व्यृचा इत्यर्थः। **इह** तिसृषु गानेपि प्रगाथसमाख्यानादिकमुपपद्यते इत्युत्थानात्संगतिः । **किमिति**। किं पठितेष्वेव प्रगाथेषु **ऋक्प्रग्रथनेन** तिसृषु गानमुत पादं पुनरारभत इत्यनेन पादप्रग्रथनेन द्वयोरेवेत्यर्थः । **प्रग्रथन इति** । पादप्रग्रथन इत्यर्थः । अत्र तिसृषु गानेऽपि प्रगाथसमाख्या उपपद्यत इति विशेषाशङ्कानिराकरणार्थमिदं वर्णकमित्याशयेन तच्छङ्कामवतारयितुं पृच्छति—**असतीति**। विशेषाशङ्कामाविष्कुर्वन्नुत्तरमाह—**ऋगिति** । **अन्या इति** । पादप्रग्रथने तु पादमात्र एव द्विर्गानं नतु कृत्स्नायामृचीति ऋगन्यत्वमुपपन्नमिति भावः। अत्र वर्णके सूत्रं पादप्रग्रथनपरं योज्यम् ॥

**अर्थैकत्वात्०** ॥ २९ ॥ **गीतिप्रकाराणामिति**। तेचाक्षरविकारो विकर्षणं अभ्यासो विरामः स्तोभ इत्येवमादयो भाष्ये उक्ताः। **तदिति**। गुणानुसारेण प्रधानावृत्तेरयुक्तत्वादित्यर्थः। **सिद्ध इति**। 'एकार्थास्तु विकल्पेरन्नि'ति द्वादशन्यायादिति भावः ॥

**अर्थैकत्वाद्विकल्पः स्यात्०** ॥ ३० ॥ पूर्ववदिहापि विकल्प इत्युत्थितेः संगतिः। **स्तोत्राणीति**। अत्र स्तोत्रश-

धनं प्राप्नोति । प्राकृतानां गायत्ररथंतरादिसाम्नां प्राकृतीषु बहिष्पवमानादिस्तुतिषु निबद्धानामप्राकृतेषु प्राप्त्यभावात्तेन तानि साकाङ्क्षाणि । तत्रेदं श्रूयते—'यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते दसुरा नान्ववायन् य एवं विद्वान्साम्ना स्तुवीते'ति । तत्र ऋग्ग्रहणमप्रगीतऋक्परम् । प्रगीतायाः सामोपदेशेनैव सिद्धत्वात् । साम्ना ह्यक्षराभिव्यक्तिद्वारैव स्तुतिः क्रियते न साक्षात् । तेन साम्ना स्तुवीतेति सामाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेत्यर्थः । एवंचेदप्रगीतपरमृग्वचनं तत्र संशयः किमृचा साम्ना वा स्तोतव्यमुत साम्नैवेति । द्वयोर्वचनाद्विकल्पप्राप्तावुच्यते—साम्न उपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमादृक्कीर्तनमसुरागमनिन्दया सामप्रशंसार्थं, तस्मात्साम्नास्तोतव्यम् ॥ **एवंवा** ॥ सामवेदे किंचित्प्रकृत्य 'अयं सहस्रमानवः' इतीयं प्रगीतापि पठिता अप्रगीतापि । तत्र श्रूयते 'अयं सहस्रमानव इत्येतयाहवनीयमुपतिष्ठते' इति । तत्र प्रगीतयाऽप्रगीतया वोपस्थातव्यमुत प्रगीतयैवेति विचारे विशेषाभावादनियमः । अप्रगीतायाः प्रगाणार्थः पाठः । नह्यनवधारितस्वरूपायां सुखं गानं संभवति प्रगीता त्वनन्यार्था तेन सा प्रयोजनमपेक्षमाणा क्रतुना गृह्यते उपस्थाने च विनियुज्यते एतयेति च सर्वनाम्ना परामृश्यते तस्मात्प्रगीतैव ग्राह्या ॥ **एवं वा** ॥ सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते । मन्त्रा हि कचित्त्रैस्वर्येणाधीताः कचिच्चातुःस्वर्येण । तत्र कर्मसु किं त्रैस्वर्यचातुःस्वर्ययोः समुच्चयो विकल्पो वा अथोभयहानेनैकश्रुत्या प्रयोग इति संशयः ।

---

त्त्वेन गुणाभिधानमात्रं विवक्षितं यथाश्रुते प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानस्यैव स्तोत्रशब्दाभिधेयतया तत्राप्रगीताया ऋचः साधनत्वासंभवेन पूर्वपक्षानुत्थितेरिति ध्येयम् । **तेषांचेति** । यद्यपि प्राकृतसाधनप्राप्तावपि तद्बाधनेन वैकृतऋक्सामविधिसंभवात्प्राकृतसाधनप्राप्त्यभावप्रतिपादनमनुपयुक्तं तथापीह प्रत्यक्षविध्यश्रवणादर्थवादाद्विधिः कल्पनीयः । तत्कल्पनं च स्तोत्राकाङ्क्षामुपजीव्यैवेति स्तोत्राणां प्राकृतैर्नैराकाङ्क्षाभावप्रदर्शनाय प्राकृतसाधनाभावप्रतिपादनमुपपद्यत इति ध्येयम् । **अप्राकृतेष्विति** । यूपावटास्तरणबर्हिषि वर्हिर्धर्माणामिवेति भावः । अन्ववायन् आगच्छन्नित्यर्थः । **ननु** साम्न ऋगनपेक्षस्य स्तुतिसाधनत्वाभावादृक्साम्नोर्विकल्प इति पूर्वःपक्षः । साम्नैव स्तुतिरिति सिद्धान्तश्चानुपपन्न इत्यत आह—**तत्रेति** । तथाचाप्रगीतयर्चा साम्नः विकल्पादिविचारः संभवतीति भावः । अप्रगीतपरत्वमुपपादयति—**प्रगीताया इत्यादिना** । **द्वयोरिति** । ननु प्रत्यक्षविध्यश्रवणात्कल्पनायामेकवाक्यतानिर्वाहार्थमेक एव विधिः कल्पयितव्य इति कथमुभयोर्वचनाद्विकल्प इतिचेत्, नैवमित्थम्, इयमृक् प्रशस्ता यदसुरा अप्यत्र वशीकृताः सन्त आगच्छन्ति । साम त्वनीदृक्त्वादप्रशस्तमित्येवं सामनिन्दासहितऋक्स्तुत्या ऋग्विधिः कल्पनीयः प्रतीयते । तथा ऋगप्रशस्ता यद्विघातका असुरा आगच्छन्ति साम त्वनीदृक्त्वात्प्रशस्तमित्येवं ऋङ्निन्दापूर्वकसामस्तुत्या सामविधिःप्रकल्पनीयः प्रतीयते । तत्र विनिगमकाभावादुभयोरपि विधिः कल्पनीयो वाक्यभेदाङ्गीकारेणेत्याशयात्, 'य एवं विद्वान्साम्ना स्तुवीते'ति तु यच्छन्दोपबन्धाद्विध्यक्षममिति विधिरवश्यं कल्पनीय इति भावः । **विस्पष्टेति** । असुराणां घातकत्वेनैव प्रसिद्धेः ऋचि निन्दा साम्नः प्रशंसा च विस्पष्टं प्रतीयत इत्यर्थः । तथाचोपसंहारे श्रवणं विस्पष्टप्रशंसा च विनिगमकमिति तस्यैव विधिः कल्प्य इति भावः । सूत्रार्थस्तु—ऋक्सामयोस्तत्परत्वात्स्तुत्यर्थत्वात् एकार्थकत्वे विकल्पः स्यादिति । यद्वा तत्परत्वात् यदृचेत्यादिवाक्यस्य स्तुत्यर्थतयोभयविधिपरत्वादिति ॥ **एवंवा** ॥ पूर्वत्र विकल्पाभावेऽपीह विकल्प इत्युत्थितेः संगतिः । **विशेषाभावादिति** । प्रतीकेन प्रगीताप्रगीतयोरुभयोरपि ग्रहणाविशेषादित्यर्थः । **प्रगाणार्थ इति** । अप्रगीतायाः संहिताग्रन्थे पठितत्वेन प्रगाणार्थ एव पाठः संहिताग्रन्थस्य ऋक्स्वरूपावधारणद्वारा प्रगाणार्थत्वादन्यथाऽदृष्टार्थत्वापातादिति भावः । तदेवोपपादयति—**नहीति** । **उपस्थान इति** । अनन्यप्रयोजनाप्रगीतैव प्रतीकेन प्रयुज्यत इत्यर्थः । **सर्वनाम्नेति** । अप्रगीतायाः पाठः प्रगाणार्थ इत्यनन्यार्थसंनिधानमादाय प्रगीतैव संनिहितार्थकसर्वनाम्ना परामृश्यत इत्यर्थः । इदंचापाततः । 'अयं सहस्रमानव'इत्येतयेति निर्देशस्य पाठसंनिधानानपेक्षणात्, किंतु प्रतीकोपादानकृतसंनिधानमपेक्ष्यम् । तच्च प्रगीताप्रगीतयोः साधारणमिति तस्या अपि सर्वनामनिर्देशार्हत्वादिति ध्येयम् ॥ **एवंवा** ॥ **क्वचिदिति** । उदात्तानुदात्तस्वरितलक्षणैस्त्रिभिः स्वरैः क्वचिच्छाखायां मन्त्राः पठ्यन्ते । क्वचित्तु प्रचयेन सह चतुर्भिरित्यर्थः । **समुच्चय इति** ।

---

१ मृक्पदं. २ साम्नां. ३ र्थ एव पाठः.

तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायवन्निरस्तत्वात्तद्वदेवतु विकल्प इति पूर्वः पक्षः । 'तानो यज्ञकर्मणी'ति स्मृत्यनुमिताद्वचनादैकश्रुत्यम् । अर्थावगमार्थं तु स्वराध्ययनम् । स्वरविशेषाधीनत्वादर्थविशेषाणां'बहुव्रीहौ प्रकृत्या पूर्वपद'मित्यादिवचनात्तस्मात्तानेन प्रयोगः ॥

उत्तरावर्णवशेन गानाधिकरणम् ॥ ९ ॥

**सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ३२ ॥ [वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥]**

**आयीभावो योनिवशादुत्तरावशतोऽथ वा ॥ गीत्यर्थत्वादादिमोऽन्त्यो वर्णाभिव्यञ्जकत्वतः ॥ १६ ॥**

उपोद्घातं समाप्य प्रकृतमिदानीं साम्नामूहं चिन्तयति।'रथंतरमुत्तरयोर्गायती'त्यादिभिः । ऋगन्तरे गीयमानानि सामानि किमूहितव्यानि नेति । यदि योनिवर्णवशेन गानं यस्मिन् प्रदेशे योनावायीभावस्तस्मिन्नेवासत्यपि संध्यक्षरे उत्तरयोरायीभावस्ततो नोहः । अथ तूत्तरावर्णवशेन गाने यस्मिन्प्रदेशे संध्यक्षरवशेनायीभावो योनौ ततः प्रदेशान्तरे यत्र संध्यक्षरं तत्रायीभावस्तत ऊहः । किं प्राप्तम् । योनिवर्णवशेन । कुतः । योनावेकारं निवर्त्याकार ईकारश्चोच्चारितः तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकारावुच्चार्यौ । किंच नात्र कार्यमुखेन साम्नः प्राप्तिः रथंतरादिस्वरू-

---

सर्वशाखाप्रत्ययन्यायेन समुच्चय इत्युपक्रममात्रमित्यर्थः । **गीत्युपायवदिति** । यथा गीत्युपायानां दृष्टार्थतया सर्वशाखाप्रत्ययन्यायं बाधित्वा विकल्पः एवमिहापि त्रैस्वर्यादीनामक्षराभिव्यक्त्यर्थत्वादेकेनैव तत्सिद्धेर्विकल्प एवेत्यर्थः । **तान इति** । एकश्रुतस्येयं पूर्वाचार्यसंज्ञा । स्मृत्यनुमितादित्यनेन स्वाध्यायविधिना स्वरोपेतमध्ययनं विधीयते स्वराध्ययनस्य तत्स्वरविशिष्टानामेव मन्त्राणां कर्माङ्गत्वसिद्धिः प्रयोजनम् । अन्यथा स्वराध्ययनस्यानर्थक्यापत्तेस्ततः श्रुतिबलेन 'तानो यज्ञकर्मणी'ति स्मृतेर्बाधितत्वात्तस्याः श्रुत्यनुमानासमर्थतया न प्रामाण्यमिति शङ्कां निराकरोति । अयंभावः—न साक्षात्स्वरविशिष्टतया मन्त्राणां कर्माङ्गत्वबोधिका श्रुतिरस्ति येन तद्विरोधे स्मृतिर्बाधिता भवेत् किंतु स्वराध्ययनविधिमुपजीव्य न्यायबलात्स्वरविशिष्टानां कर्माङ्गत्वम् । न्यायश्च स्मृतितो दुर्बल इति निष्प्रत्यूहं वेदानुमानमिति । किमर्थं तर्हि स्वराध्ययनं तत्राह—**अर्थेति** । ब्राह्मणभागस्य कर्माङ्गत्वाभावेन तदंशे स्वराध्ययनस्यार्थज्ञानार्थत्वस्यावश्यवक्तव्यतया तद्वदेव मन्त्रांशेऽप्यर्थज्ञानार्थत्वमित्यर्थः । **बहुव्रीहाविति** । बहुव्रीहौ समासे पूर्वपदं प्रकृतिस्वरं भवति पूर्वपदे यः स्वरः स एवावशिष्यते नतु समासान्तोदात्तत्वमित्यर्थः । यथा स्थूलपृषतीमित्यादौ पूर्वपदस्य स्थूलशब्दस्यान्तोदात्तत्वलक्षणं प्रकृतिस्वरं दृष्ट्वा बहुव्रीहिनिश्चयः । अयं चैकश्रुतिविधिर्जपमन्त्रादिव्यतिरिक्तविषयः । 'यज्ञकर्मण्यजपन्यूङ्खसाम'स्विति पाणिनिस्मृतेः । जपादौ तु चातुःस्वर्येण त्रैस्वर्येण वा प्रयोगः । एवंच जपमन्त्रादिव्यतिरिक्तेषु करणमन्त्रादिरूपेषु 'अग्नये जुष्टं निर्वपामी'त्यादिष्वाध्वर्यवयाजमानेष्वप्याधुनिकानां याज्ञिकानां चातुःस्वर्येण प्रयोगे मूलं मृग्यम् । अस्मिन्वर्णके सूत्रे ऋग्सामशब्दः चातुःस्वर्यादौ कथंचिन्नेयः ॥

**सामप्रदेशे विकारः० ॥ ३२ ॥** संगतिमाह—**उपोद्घातमिति** । आम्नातादन्यदित्यारभ्य प्रक्रान्तमिति शेषः । **इदानीमिति** । प्राप्तावसरत्वादिति भावः । **इत्यादिभिरिति** । अतिदेशवचनैरिति शेषः । अत्र किं योनिवर्णवशेन गानमुतोत्तरावर्णवशेनेति तदर्थसंशयं मनसि निधाय फलफलिभावमाह—**यदीति** । योनिवर्णवशेन गानमित्यस्य विवरणं **यस्मिन्निति** । यत्संख्याक्षरप्रदेश इत्यर्थः । **नोह इति** । योनौ यथा साम गीतं तथैवोत्तरयोरपि गानेन विकाराभावादिति भावः । उत्तरावर्णवशेन गानमित्यस्य विवरणं **यस्मिन्निति** । योनौ यत्र चतुर्थं संध्यक्षरं उत्तरायां च द्वादशं तत्र संध्यक्षरवशेन द्वादश एवायीभावो नतु चतुर्थ इत्यर्थः । **ऊह इति** । प्रदेशान्तरे आयीभावकरणेन योनिगानापेक्षया विकारसद्भावादिति भावः । **निवर्त्येति** । तथाच योनौ विद्यमानस्यैकारस्याभिव्यक्त्यर्थमायीभावो न कृतः किं त्वेकारं निवर्त्यापूर्व आयीभावः सामाङ्गतयोपात्त इत्युत्तरयोरपि योनौ यत्क्रमपठित एकारस्तत्क्रमपठितमक्षरमेकारव्यतिरिक्तमपि निवर्त्यायीभावः कर्तव्यस्तस्मान्नोह इत्यर्थः । **ननु** योनावेकारं निवर्त्यापूर्व आयीभावः सामार्थतया कृत इत्युक्तं, कर्म वा विधिलक्षणमित्यत्र साम्नामृगक्षराभिव्यञ्जकत्वस्योक्तत्वेन योनिगतस्यैवैकारस्यायीभावेनाभिव्यक्तिरिति वक्तव्यत्वात् ; तथाचोत्तरयोरपि यत्रैकारस्तत्रैवायीभावः कर्तव्योऽन्यथैकाराभिव्यक्त्यसंभवात् तथाच सिद्ध्यत्यूह इत्यस्वरसादाह—**किंचेति** । अस्तु योनौ साम्न उक्तरीत्याऽक्षराभिव्यञ्जकत्वं तथाप्युत्तरयोर्योनिवद्गातव्यमित्यतिदेशाभावेन सौर्ये आग्नेयोपकारवदिह ऋगक्षराभिव्यक्तिरूपस्योपकारस्य नातिदेशो येन संध्यक्षरवशेन गानं स्यात् किंतु यद्योन्या तदुत्तरयोरिति स्वरू-

---

१ विचारयति रथंतरयोर्गायतीत्यादिभिः. २ योनावायीभावो.

पयैवातिदेशात्तेन दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्तस्मान्नोहः साम्नामिति प्राप्ते ब्रूमः—यदि ह्येकारं लुप्त्वाऽवर्णेवर्णावुच्चारितौ ततो भवेत् यथात्र भवानाह । न त्वेतत् । किं तर्हि एकारो नाम न वर्णान्तरं, अवर्णेवर्णौ संहतावेकभावमापन्नावायीभावेन विश्लेषितौ दर्शितौ प्रत्यक्षं ह्यवर्णेवर्णावेकारे प्रत्यभिज्ञाप्येते, तस्मादुत्तरयोरप्येकार एव यत्र तत्रस्थोऽप्यायीभावेन विश्लेषणीयः । एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते नान्यथा । यद्यपिच सामस्वरूपस्यातिदेशस्तथापि स्तोत्रसाधनतयाऽतिदिश्यते । 'एकं साम त्रिचे क्रियते स्तोत्रीया'मिति वचनात् । स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारा । नच संध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति एवं सर्वत्र । तस्माद्योनिवर्णवशेन गानादस्त्यूहः साम्नाम् ॥

उत्तरयोः स्तोभातिदेशाधिकरणम् ॥ १० ॥

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ [सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥३५॥ अन्वयं चापि दर्शयति ॥३६॥ निवृत्तिर्वाऽर्थलोपात्॥३७॥ अन्वयो वाऽर्थवादः स्यात् ॥ ३८ ॥]**

स्तोभा नोत प्रदिश्यन्ते नागीतित्वेन वर्णवत् ॥ स्वरादिवत्प्रदिश्यन्ते गीतिकालोपयोगतः ॥ १७ ॥

सामातिदेशे किं स्तोभानामतिदेशोऽस्ति नेति संशये सामभ्योऽभिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः । भिन्नानामपि गीतिकालपरिच्छेदेन[1] सामाङ्गत्वात्तदतिदेशादेवातिदेशः । सामानि

---

पमात्रस्यैवातिदेशस्तस्य च स्वरूपस्याविकृतस्यानुष्ठाने यदि क्वचिदक्षराभिव्यक्तिर्न लभ्यते तदा तदंशेऽदृष्टमेव द्वारं स्यात्तश्च नोह इत्यर्थः । कर्म वा विधिलक्षणमित्यधिकरणोक्तं संस्कारकर्मत्वमपि वर्णलोपस्थले स्तोभादौ चाक्षराभिव्यक्तिरूपसंस्कारासंभवेन तदितरविषय इव योनिविषयतयापि संकोच्यमिति न तद्विरोधोपीति भावः । **दशमाद्येति** । सौर्यादौ कथंभावाकाङ्क्षाबलादुपकारातिदेश इति दशमाद्यसिद्धान्तन्यायस्यात्राप्रसरात्स्वरूपेण पदार्थानामतिदेश इति तदीयपूर्वपक्षन्याय एव प्रवर्तत इत्याशयः । **किं तर्हीति** । यद्येकारोनाम वर्णान्तरं भवेत्तदा तस्य लोपशङ्का स्यात्, नत्वेतदस्ति अवर्णेवर्णयोरेव प्रत्यभिज्ञायमानत्वेनावर्णेवर्णसमाहाररूपत्वात्तस्य । तथाच गानवशात्तयोर्विश्लेष एवायीभावो नापूर्ववर्णागम इत्युत्तरयोरपि यत्रैकारस्तत्रैवायीभावो नान्यत्रेत्यर्थः । नच महाभाष्ये संध्यक्षराणां वर्णान्तरत्वं साधितमित्ययुक्तमिदमिति वाच्यम् । वर्णान्तरत्वेऽपि अवर्णेवर्णसदृशावयवत्वाभ्युपगमादायीभावेनैकारे प्रत्यभिज्ञायमानयोरवर्णेवर्णसदृशावयवयोरभिव्यक्तिद्वारा एकाराभिव्यक्तिपरत्वेनास्य ग्रन्थस्योपपत्तेरविरोधात् । एवंच न वर्णान्तरं न निरवयववर्णान्तरमित्येवं योज्यम् । **एवमिति** । उत्तरयोर्यदि यत्रतत्रस्थेऽप्येकारे आयीभावस्तदाक्षराभिव्यञ्जकत्वेन साम्नः स्तुतिसाधनतोपपद्यते । अन्यथाऽदृष्टार्थत्वापातात् । तथाच दृष्टार्थत्वाय यद्योन्यामिति शास्त्रस्य यथा योनिः साम्नाऽभिव्यक्ता तथोत्तरे अप्यभिव्यञ्जनीये इत्युपकारातिदेशकत्वमेव वक्तव्यमित्यर्थः । अभ्युपगमवादेनाह—**यद्यपीति** । अस्य वचनस्य स्वरूपेणातिदेशकत्वेऽपि न ऋक्स्वरूपमात्रे साम्नः पर्यवसानं किंतु तद्द्वारा स्तोत्रे स्तोत्रीयमिति वचनात् । स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारैवेत्यस्मिन्नपि पक्षे सिध्यत्यूह इत्यर्थः । संध्यक्षरवशेन गाने योनौ क्लृप्तक्रमात्कर्मान्तरापत्त्या प्रसक्तः क्रमभेदोऽपि न दोषः प्रधानभूतऋगक्षरसंस्कारानुरोधेनाङ्गभूतक्रमबाधस्य न्याय्यत्वादित्याशयेनोपसंहरति—**तस्मादिति** । **सूत्रार्थस्तु**—सामातिदेश आयीभावादिलक्षणो विकारो योन्यपेक्षः स्यात्तस्य यद्योन्यामित्याद्यतिदेशशास्त्रकृतत्वादिति ॥

**स्तोभस्यैके द्रव्यान्तरे०** ॥ ३४ ॥ यदि ऋगक्षरादिव्यक्तिरूपोपकारमुखेन सामातिदेशस्तर्हि स्तोभानामृगक्षराभिव्यक्तावनुपयोगात्तेषामनतिदेश इत्युत्थितेः संगतिः । **नेति** । चिन्त्यत इति शेषः । **सामभ्य इति** । 'रथंतरमुत्तरयो'रित्यादौ रथंतरादिशब्दवाच्यस्य गीतिमात्रस्यातिदेशो नतु तदवाच्यतया ततो भिन्नानां स्तोभानामृगक्षराणामिवेत्यर्थः । भिन्नत्वेन रथंतरादिशब्दवाच्यत्वबलादतिदेशाभावेऽपि रथंतरादिशब्दवाच्यगीत्यङ्गतया प्रधानभूतगीत्यतिदेशादेव तदतिदेश इति सिद्धान्तमाह—**भिन्नानामपीति** । **गीतीति** । गीतेरधिकतया ऋगक्षराण्यभिव्यज्यावशिष्टो यो गीत्यंशस्तत्कालपरिच्छेदकतया ऋगक्षरानभिव्याप्तगीतेराश्रयतया तन्निर्वर्तकतयेति यावत् । **नन्वेवं** स्तोभानामृगक्षरानभिव्यञ्जकसा-

---

[1] परिच्छेदकत्वेन.

हि योनौ येनांशेनाक्षराण्यभिव्यञ्जन्ति तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति । स्तोभाक्षराभिव्यक्तिनिर्वर्त्येन त्वंशेन स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति । तद्यदि स्तोभा नातिदिश्येरन् तन्निर्वर्त्यस्य गीत्यंशस्य लोपात्तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्तस्मादतिदिश्येरन् । ऋगक्षराणां तु प्रधानत्वान्न सामवशादतिदेशः ॥

स्तोभलक्षणाधिकरणम् ॥ ११ ॥

## अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

**स्तोभस्य लक्षणं नास्ति किंवास्ति न विवर्णता ॥ आधिक्यमप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् ॥ १८ ॥**

प्रसंगात्स्तोभलक्षणमुच्यते यदृगक्षरेभ्योऽधिकं विवर्णं च[1] तत्स्तोभशब्देनोच्यते ॥

नीवारादिषु प्रोक्षणावघातानुष्ठानाधिकरणम् ॥ १२ ॥

## धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

**न स्युः स्युर्वात्र नीवारा व्रीहिस्थानेऽमितेर्नहि ॥ विकारतद्धिताते स्युः प्रोक्षणादिरतो भवेत् ॥ १९ ॥**
**मध्वाशनखपूतत्वपरिधीरापदेष्वपि ॥ ये धर्माः षडहादीनां ते कार्याः स्थानपाततः ॥ २० ॥**

प्रकृतौ[2] व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयो न तत्स्वरूपप्रयुक्तास्तन्मात्रपर्यवसायिनः किंतु 'व्रीहिभिर्यजेते' त्यादिविहितसाधनविशेषद्वारेणापूर्वभावनार्थाः । तथाहि 'आग्नेयोऽष्टाकपाल'इति पुरोडाशद्रव्यकोऽग्निदेवत्यो यागो विहितः, तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृतित्वं प्रति-

---

मभागनिर्वर्तकतया उपकारकत्वेऽपि ऋगक्षराभिव्यञ्जकांशे उपकारकत्वाभावेन कथमतिदेशः ऋगक्षरानभिव्यञ्जकसामभागस्यैवार्थलोपेनानतिदेशादित्यत आह—**सामानीति** । स्तोभनिर्वर्त्यसामभागस्य ऋगक्षरानभिव्यञ्जकतया दृष्टद्वारा स्तुत्युपकारकत्वाभावेप्यदृष्टद्वारा स्तुत्युपकारकत्वं योनौ क्लृप्तमुत्तरयोरपि स्तोभनिर्वर्त्यसामभागानतिदेशे तत्साध्यादृष्टवैकल्येन स्तुतेर्वैगुण्यं स्यादत ऋगक्षरानभिव्यञ्जकस्यापि स्तोभगीत्यंशस्यादृष्टरूपस्तुत्युपकारार्थमतिदेशे सिद्धे तन्निर्वर्तकतया स्तोभानामप्यतिदेश आवश्यक इत्यर्थः । ऋगक्षराणां तु सामापेक्षया प्राधान्यान्न सामातिदेशेनातिदेश इति दृष्टान्तवैषम्यमाह—**ऋगिति** । सूत्रार्थस्तु—स्तोभानामृगन्तरे निवृत्तिमृगक्षरवदेक आचार्या ब्रुवत इति ॥

**अधिकं च विवर्णं च० ॥ ३९ ॥ विवर्णमिति** । विपरीतवर्णं ऋक्पाठदशायामविद्यमानवर्णमित्यर्थः । विवर्णत्वमात्रे कृते 'अग्नआयाही'त्यादौ अकारस्थाने निवेश्यौग्नायीति गीयमाने ओकारादौ विकारेऽतिव्याप्तिरत उक्तं **ऋगक्षरेभ्योऽधिकमिति**। तावत्युक्तेर्हर्यश्वाद्रिरित्यत्र श्वाद्रिः श्वाद्रिरित्यभ्यासेऽतिव्याप्तिरत उक्तं **विवर्णमिति**। नचाभ्यासस्यापि ऋगक्षरतया ततोऽधिकत्वाभावाद्विवर्णपदं व्यर्थमिति वाच्यम् । अर्थाभिधानौपयिकेभ्योऽधिकस्यैव ऋगक्षराधिकपदेन विवक्षितत्वात् । ऋक्त्वस्य तेषामृग्यत्रार्थवशेन पादव्यवस्थेत्यर्थाभिधानघटितत्वेन प्रथमोपस्थित्यर्थाभिधायकत्वस्यैव लाघवेन ऋक्पदेन विवक्षितत्वात्तावतैवातिप्रसङ्गपरिहारे पादव्यवस्थाघटितऋक्त्वस्यानुपयोगाद्वस्तुगत्या प्रकृतेऽर्थाभिधायकत्वमृगक्षराणामेवेत्याशयेन ग्रन्थे ऋगक्षरेभ्य इत्युक्तम् । अतएव सूत्रेऽधिकमित्येवोक्तमिति ध्येयम् । सूत्रार्थस्तु—अधिकं च विवर्णं च यत्स स्तोभ इति जैमिनिर्मन्यते लोके देवदत्तेन वाक्यं विप्लावयता बहुस्तोभं कथितमित्यादावर्थाभिधानानुपयुक्ते च विपरीतशब्दभूते स्तोभव्यवहारादिति ॥

**धर्मस्यार्थकृतत्वात्० ॥ ४० ॥** अत्र भाष्ये नीवारेषु व्रीहिधर्मा भवन्ति न भवन्तीति विचारः कृतः स तु फलाभिप्रायेण । अधिकरणं तु नीवारादेः व्रीह्यादिस्थानापत्तिविचारात्मकम् । सिद्धायां स्थानापत्तौ धर्माः न व्रीह्यादिस्वरूपप्रयुक्ताः किंत्वपूर्वसाधनविशेषप्रयुक्ता नीवारादिष्वपि व्रीह्यादिस्थानापन्नेषु तत्साधनरूपसद्भावात्कर्तव्या एव धर्मा इत्यविचारितसिद्धत्वात् धर्मप्राप्तिपरत्वेऽधिकरणानर्थक्यप्रसङ्गादित्याशयेनाविचारितसिद्धत्वमेवोपपादयति—**प्रकृतावित्यादि** । नन्वस्त्वाग्नेयवाक्ये यागविधिस्तथापि न तत्र यागे व्रीहिविधिः संभवति उत्पत्तिशिष्टपुरोडाशावरोधात्, किंतु व्रीहिवाक्ये विशिष्टविधिरेव युक्तस्तथाच कथमाग्नेयधर्मत्वं व्रीहितद्धर्माणामित्यत आह—**तदनुवादेनेति** । उत्पत्तिशिष्टपुरोडाशाव-

---

१ च किंचित्तत्स्तोम. २ प्रकृतिषु.

पद्यन्ते। तदयमर्थः—व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति । ततः पुनराह यैर्यजेत तान्व्रीहीन्प्रोक्षति अवहन्तीति । ततश्च सर्वैरुपसंह्रियमाणैरयमर्थः संपद्यते—प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति । अयमेव वाक्यार्थः पारमार्थिकः । व्रीह्यादिवाक्यार्थो अस्यैवोपायभूताः पदार्थस्थानीयाः । एवंचेदाग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीत्थंभावस्तद्विकारेष्वतिदेशेन नीयते। तत्र नैवारे चरौ पुरोडाशस्थाने चरोर्निवेशाद्व्रीहिस्थाने च नीवारनिवेशादितरस्य समस्तस्य यथातिदेशमवस्थानान्नैवारं चरुं निर्वपेदाग्नेयवदित्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेरयमर्थो भवति—प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति । तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः स्थानापत्तिस्तु कथमवगम्यते इदमस्य प्राकृतस्य कार्ये वर्तते इदमस्येति। तत्प्रदर्शनार्थमिदमधिकरणम्। तत्र पूर्वपक्षवादी नीवारमध्वशननखपरिधीरापदानां व्रीहिषडहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन् न तेषु तद्धर्मा भवन्तीति मन्यते। सिद्धान्तस्तु नीवाराणां तावत्प्रत्यक्षमेव व्रीहिकार्ये तण्डुलनिर्वृत्तौ सामर्थ्यं सामर्थ्यानुसारी च शब्द इति नैवार इति तद्धितो विकारार्थ इति निश्चीयते चरुश्च देवतासंयोगात्पुरोडाशस्थानापन्न इति तत्प्रकृतिभूता नीवारा व्रीहिस्थानापन्ना भवन्ति तथा मध्वशनं षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत्षडहकार्यमेवावलम्बते। इदं च षडहाभावे मध्वशनं विधीयते इति कृत्वाचिन्तितम्। तेनाभावे विधिरपि कार्यापत्तौ प्रमाणम्। तथा नैर्ऋत-

---

रुद्धेपि प्रकृतिद्रव्यविधिसंभवात् व्रीहिमात्रविधिसंभवे विशिष्टविधिगौरवमन्याय्यमिति भावः । नन्वेवं पुरोडाश एव साधनत्वं स्यान्न यागेऽत आह—**तदयमिति**। यजेतेति यागानुवादेनैव विधानान्न पुरोडाशमात्रे पर्यवसानं किंतु तद्द्वारा याग एवेत्यर्थः। संस्कारस्य साधनविशेषप्रयुक्तत्वाय तद्वाक्यार्थमभिनयन्नाह—**ततः पुनरिति**। ननु संस्काराणां साधनरूपार्थत्वे एकेनैव व्रीहिषु तद्रूपसिद्धेरितरवैयर्थ्यमत आह—**ततश्च सर्वैरिति**। संहितानामेव साधनरूपापत्तिप्रयोजकत्वान्नैकस्यापि वैयर्थ्यमित्यर्थः । **ननु** प्रोक्षणादिसंस्कृतैर्व्रीहिभिर्यजेतेत्ययुक्तं, व्रीहिभिर्यजेतेति तन्मात्रस्यैव साधनत्वावगमात्तथासंस्कारवाक्येष्वपि एकस्यैव साधनरूपे निरपेक्षप्रयोजकत्वावगमात् संहतानां साधनरूपापत्तिप्रयोजकत्वमित्यप्ययुक्तमित्यत आह—**अयमेवेति**। प्रकरणबलेन संस्कारवाक्यानां व्रीहिवाक्येनैकवाक्यतायामयमेव वाक्यार्थः। **पारमार्थिक इति**। उभयमुपपन्नमिति भावः। फलफलिभावमाह—**एवंचेदिति**। निवेशादित्यनन्तरं व्रीहीणां नीवारैः पुरोडाशस्य चरुणा च निवृत्तिरिति शेषः। **सिद्ध इति**। ततश्चाविचारितसिद्धत्वान्न तदर्थमिदमधिकरणमिति भावः। तत्स्थानापत्तिसिद्ध्यर्थमेवेदमित्याह—**स्थानेति** । **पूर्वेति** । 'नैवारश्चरु'रिति वाक्ये व्रीहिकार्यस्थानापत्तिबोधकशब्दाभावान्नीवाराणां तत्स्थानापत्तिस्तद्धितस्य संबन्धसामान्येऽप्युपपत्तेः। षडहे संस्थिते मध्वाशयेद्घृतंवेति द्वादशाहगतवाक्येऽपि मध्वशनं षडहस्थानापन्नमित्यत्र न किंचित्प्रमाणं, तथा राजसूयगते नैर्ऋतं चरुं नखावपूतानामित्यत्रापि सौमिकचातुर्मास्यगते परिधौ पशुं नियुञ्जीतेत्यत्रापि दार्ढ्यातिशयार्थमप्राकृतनियोजनस्य परिधिविशिष्टस्य विधानोपपत्तेर्न परिधेर्यूपस्थानापत्तिः। इरापदस्यापि गिरापदस्थानापत्तिं विनापि स्वातन्त्र्येण पृथग्गानार्थत्वसंभवान्न तत्स्थानापत्तिरित्यर्थः। **विकारार्थ इति**। संबन्धसामान्यसाधारणस्य तद्धितस्य विकारार्थकत्वनिश्चयः प्रत्यक्षाधीन इति प्रत्यक्षमेव नीवाराणां व्रीहिस्थानापत्तौ प्रमाणमित्यर्थः। **ननु** नीवाराणां चरुप्रकृतित्वेऽपि न व्रीहिस्थानापत्तिश्चरोः व्रीहिकार्यत्वाभावेन नीवाराणां व्रीहिकार्यकरत्वाभावादित्यत आह—**चरुरिति**। देवतासंयोगेन चरोर्यागीयहविष्ट्वावगमात्तत्प्रकृतिभूतानां नीवाराणां हविःप्रकृतिव्रीहिकार्यापन्नत्वं युक्तमित्यर्थः। अत्र चरोः पुरोडाशस्थानापत्तौ प्रत्यक्षवचनं प्रमाणं, चरोर्हविष्ट्वेन विधानान्नीवाराणां व्रीहिस्थानापत्तौ तु प्रत्यक्षमेव प्रमाणमिति विवेकः। **तथेति**। मध्वशनस्य कार्यापेक्षत्वात्षडहकार्यस्य साधनापेक्षत्वाच्च परस्परसंबन्ध इत्यर्थः। **ननु** मध्वशनस्य षडहकार्ये विधाने तस्यापि फलार्थत्वापत्त्या द्वादशाहेन प्रजाकाममिति वाक्यविरोधः स्यात्, द्वादशाहशब्देन द्वादशसोमयागानामेव फलार्थत्वावगमात्। तथाच षडहे संस्थिते तत्कर्तृसंस्कारतया षडहाङ्गत्वेनैव मध्वशनविधानान्न तत्स्थानापत्तिरित्यत आह—**इदं चेति**। षडहाभावे विधानेऽपि नात्र प्रत्यक्षवचनं स्थानापत्तौ प्रमाणं, साक्षात्तत्कार्योद्देशेन विधानाभावात् किंत्वभावविधिबलात्कल्पितवचनेनेत्याशयेन पृथङ्निर्दिशति—**तेनेति**। **किमिति**।

श्चरुर्नखावपूतानामिति किं नखैरवदलनमन्यत्तुषविमोचनादतो नखानामुलूखलमुसलकार्यापत्तिः । परिधौ पशुं नियुंजीतेति तु विस्पष्टमेव यूपकार्ये नियोजने परिधिर्विधीयते तथा यत्प्रतिषिध्य यद्विधीयते 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमि'ति तस्यापि तत्कार्यापत्तिः । गिरापदेपि हि निवृत्ते तत्कार्यसाधनमपेक्षते इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण संबध्यते इति गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते ॥

परिधौ यूपधर्मानुष्ठानाधिकरणम् ॥ १३ ॥

**तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥ ४१ ॥ [आवेश्येरन्वार्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥]**

**न यूपधर्माः परिधौ सन्ति वान्यार्थजत्वतः ॥ नाविरोधादञ्जनाद्याः स्युर्नियोजनसाधने ॥ २१ ॥**

परिधौ[2] पुनराक्षेपः—नीवारादयो हि कार्यार्थतया विधीयमाना युक्तं यत्कार्यार्थान्व्रीहिधर्मान् लभन्ते, परिधिः पुनरग्निपरिधानार्थेनोत्पन्नो न नियोजनार्थेन, परिधानार्थ एव तु तस्मिन्वचनात्पशुर्नियुज्यते । प्रकृतौ च कार्यार्था धर्मास्तच्छेषभूते साधनेऽनुष्ठिता नाशेषभूते परिधौ भवितुमर्हन्ति । यूपोत्पत्त्यर्थाश्च परिव्याणादयो न चेह यूपोऽस्ति । अयूप एव हि परिधौ पशुर्बध्यते तेनार्थलोपादपि न परिधौ खलेवाल्यामिव यूपधर्माः कर्तव्या इति प्राप्ते ब्रूमः—यद्यपि परिधानार्थेन परिधिरुत्पादितस्तथापि नियोजने विनियोगात्पुरोडाशकपालस्येव तुषोपवापशेषत्वमस्त्येव । यद्यपि तादर्थ्यं नास्ति तथापि नियोजनसाधनत्वात्साधननिवेशिनो धर्मान् लभेतैव । नहि तादर्थ्यप्रयुक्ता

---

न तुषविमोचनादन्यन्नखावदलनं किंतु तुषविमोचनार्थव्यापार एव नखावदलनमित्यर्थः । **अत इति** । यद्यपि नखावदलनस्योलूखलमुसलकार्यरूपावहननार्थत्वं न प्रत्यक्षेणावगम्यते प्रत्यक्षेण नखनिर्भेदनावहननयोर्भेदस्यैवावगमात्तथाप्यवहननात्तुषविमोकं दृष्ट्वाऽवहननत्वेन नावहननार्थतोऽलूखलमुसलयोः किंतु यया क्रियया तुषविमोको भवति तदङ्गमुलूखलमुसलमिति नखावदलनस्यापि तुषविमोकार्थत्वान्नूनमुलूखलमुसलकार्ये वर्तन्ते नखा इत्यनुमानमेव तत्स्थानापत्तौ प्रमाणमिति भावः । **परिधाविति** । विशिष्टविधिगौरवादिति भावः । **विस्पष्टमिति** । तथाच प्रत्यक्षमेवात्र वचनं स्थानापत्तौ प्रमाणमित्यर्थः । **तथेति** । अत्र साक्षात् गिरापदकार्ये विधानाभावात् गिरापदं निषिध्येरापदविधाने गिरापदकार्यस्यापेक्षामवलम्ब्य तत्कार्यापत्तिरिरापदस्येति प्रत्यक्षवचनावगतनिवृत्त्यनुमितशब्द एवात्र प्रमाणमित्यर्थः । गिरापदनिषेधानुवादबलात्तत्स्थान एवेरापदविधिः । तथाच यथा नान्योन्याश्रयदोषस्तथा पूर्वपादे प्रतिपादितमस्माभिः । अत्र प्रत्यक्षमनुमानं प्रत्यक्षवचनं प्रत्यक्षवचनावगतनिवृत्त्यनुमितशब्द अभावविधिश्चेति पञ्च स्थानापत्तौ प्रमाणान्यवगम्यन्ते । तत्रारत्ने तु षडहे संस्थित इत्यत्र संस्थया प्रतिषेधो लक्ष्यते प्रतिषेधेन च षडहकार्यं लक्ष्यते तत्र च लक्षिते मध्वशनविधिरित्युक्तं तत्र लक्ष्यत इत्यस्यानुमीयत इत्यर्थकत्वमाश्रित्याप्पयदीक्षितैः प्रत्यक्षवचनावगतलिङ्गोन्नीतनिवृत्त्यवगतशब्दात्मकं पञ्चमं प्रमाणमुपन्यस्तम् । वस्तुतस्तु तेनैव ग्रन्थकारेणात्र कण्ठत अभावविधिरपि कार्यापत्तौ प्रमाणमित्युक्तत्वेन तत्रारत्नस्याप्यभावविधिलक्षणप्रमाणपरत्वमेवेति बोध्यम् । सूत्रार्थस्तु—द्रव्ये नीवारादौ गुणे मध्वशनादौ विकारे च नखावपवनादौ व्यतिक्रमे यूपं व्यतिक्रम्य नियोजनसाधनतया श्रुते परिध्यादौ प्रतिषेधे गिरापदं प्रतिषिध्य विहितेरापदादौ च चोदनानुबन्धः चोद्यमानप्रोक्षणादिधर्मसंबन्धः धर्मस्यार्थकृतत्वात् प्रोक्षणादेः कार्यार्थत्वात् तत्कार्यस्य च नीवारादौ समवायादिति ॥

**तदुत्पत्तेस्तु निवृत्तिः०** ॥ ४१ ॥ आक्षेपिकीं संगतिमाह—**परिधाविति** । न नियोजनार्थेनोत्पन्न इत्यनुषङ्गः । तथाच न नियोजनार्थत्वमिति भावः । **ननु** परिधानार्थेनोत्पन्नस्यापि वचनान्नियोजनार्थत्वं किं न स्यादित्यत आह—**परिधानेति** । परार्थत्वेनावगतस्य नियोजनार्थत्वानुपपत्तेः । 'परिधौ पशुं नियुञ्जीते'ति वचनमुपकारकत्वपरं न तादर्थ्यपरमित्यर्थः । **ननु** कार्यार्था धर्मास्तत्साधनतामात्रेण परिधौ निविशन्तीत्यत आह—**प्रकृताविति** । **यूपेति** । परिव्याणादिधर्मविधिषु द्वितीयया यूपस्यालौकिकस्य साध्यत्वावगमादित्यर्थः । यथा 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र परार्थत्वेनावगतस्यापि तत्स्वरूपतिरोधानेनाधिष्ठानमात्रपरत्वमाश्रित्य तुषोपवापे विनियोगस्तृतीयाबलादेवं परिधेरपि सप्तम्या नियोजने विनियोग इत्याशयेन दृष्टान्तमाह—**तुषेति** । अभ्युपगमवादेनाह—**यद्यपीति** । **अशाब्दमिति** । साधनत्वं

---

१ मन्यतस्तुष. २ आहवनीये पश्चिमोत्तरदक्षिणदिक्त्रये तिस्रः समिधः स्थाप्य पुरोडाशहोमादिक्रियते तास्वेकैका परिधिरित्युच्यते.

धर्माः किंतु साधनत्वप्रयुक्ताः 'व्रीहिभिर्यजेत' 'यूपे पशुं बध्नाती'त्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्यादयो धर्मैः प्रोक्षणपरिव्याणादिभिः संबध्यन्ते, तादर्थ्यं तु सदप्यशाब्दं न धर्मान्वयं भजते । नचोपयुज्यते तादर्थ्यं धर्माणां कार्यं गच्छतां तत्साधनमेव द्वारमपेक्षितमस्ति च परिधेरपि साधनत्वं नतु यूपाख्यमेकं किंचिदस्ति यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः । छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टमदृष्टं वा यथायथं कार्यं गमयन्ति । सर्वाणि च तानि कार्याणि नियोजनस्याङ्गं, तत्र परिधावसंभवतां छेदनादीनां लोपेऽपि संभवन्तः परिव्याणादयो न लोपनीयाः खलेवाल्यामप्यञ्जनपरिव्याणादयो भवन्त्येवेति वक्ष्यते । तस्मात्परिधौ यूपधर्माः कर्तव्याः ॥

शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

## पंरार्थे त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ [क्रियेरन्वार्थनिवृत्तेः ॥ ४५ ॥]

**शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा नहि ॥ अपाकार्थत्वतः सन्ति पाकहेतुत्वसाम्यतः ॥ २२ ॥**

अभ्युदयेष्ट्यां दधिशृतयोः किं प्रणीताधर्माः कर्तव्याः नेति चिन्तायां प्रणीताकार्ये श्रपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणमुत्पवनादीनामसत्यपि विनियोगेऽर्थादपि तावत्साधनत्वमस्तीति साधननिवेशिनो धर्माः कर्तव्याः ॥

बृहद्रथंतरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

## एकार्थत्वादविभागः स्यात् ॥ ४६ ॥ [निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥]

**बृहद्रथंतरे धर्मैः संकीर्णे वा व्यवस्थिते ॥ पृष्ठैक्यात्संकरो धर्मे निर्देशादेर्व्यवस्थितिः ॥ २३ ॥**

ज्योतिष्टोमे बृहद्रथंतरे पृष्ठसाधनत्वेन विहिते तयोर्धर्माः 'रथंतरे प्रस्तूयमाने संमीलयेद्बृहति प्रस्तूयमाने समुद्रं मनसा ध्याये' दित्यादयः किमुभयेऽपि धर्मा उभयोः कर्तव्या उत यथाश्रुति

---

यथा तृतीयया सप्तम्या च प्रतिपाद्यते नैवं तादर्थ्यवाचकः कश्चिच्छब्दोऽस्ति, समीहितसाधनताबोधकविधिसमभिव्याहारलभ्यत्वात्तादर्थ्यस्येत्यर्थः। कार्ये द्वारमपेक्षमाणेषु धर्मेषु साधनतामात्रेणैव द्रव्यस्य द्वारत्वसंभवादनपेक्षितं तादर्थ्यमित्याह—**नचेति । गमयन्तीति** । तथाच छेदनादिजन्यदृष्टादृष्टसमुदाय एव यूपशब्दार्थ इत्यर्थः । **छेदनादीनामिति ।** सत्वचः शयानस्यैव परिधित्वेन तक्षणादेस्तद्विरोधित्वात्प्रागेव छिन्नतया छेदनादेर्लुप्तार्थत्वाच्चेत्यर्थः। **परिव्याणादय इति ।** तत्तददृष्टस्यैव द्वारतया न लुप्तार्थाः परिव्याणादय इति भावः । यदुक्तं खलेवाल्यामिव यूपधर्मा इति तत्रापि लुप्तार्थानामेव निवृत्तिर्नेतरेषामिति दशमे वक्ष्याम इत्याह—**खलेवाल्यामिति** । एवंच परिव्याणादिकतिपयधर्मसद्भावेन सकलस्य यूपशब्दार्थस्याभावेऽपि विकलं यूपशब्दार्थमादाय 'यूपायाज्यमानायानुब्रूही'त्यविकारेण संप्रैषः प्रयोज्यः नतु परिधयेज्यमानायेति विकारेण, यथाप्रतिनिधौ विकलावयवसद्भावमात्रेणानूहस्तद्वदिति बोध्यम् । **सूत्रार्थस्तु**—तदुत्पत्तेः परिधेराहवनीयपरिधानार्थतयोत्पत्तेः यूपधर्मनिवृत्तिः स्यात् यूपधर्माणां नियोजनाङ्गत्वकृतत्वात् ॥

**परार्थे त्वर्थसामान्यं०** ॥ ४४ ॥ **प्रणीताकार्य इति ।** युक्तं परिधेर्यूपकार्ये नियोजने वचनेन विनियोगाद्यूपधर्मकरणम् । इह तु 'शृते चरुं दधनि चरु'मिति सप्तमीश्रवणेऽपि न प्रणीताकार्ये विधानं शृतदध्नोः प्रदेशत्वात् सप्तमी च सहश्रपयतीति विहितसहश्रपणलब्धार्थिकाधारत्वानुवाद इत्युक्तं षष्ठे । तस्मादिह न प्रणीताधर्माः । न च शेषत्वाभावेऽपि साधनत्वमादाय पूर्वाधिकरणोक्तरीत्या साधननिवेशिनो धर्मा भवेयुरिति वाच्यम् । पूर्ववदत्र साधनत्वबोधकवचनाभावादिति भावः । उक्तशङ्कयोत्थानात्संगतिः । साधनत्वमात्रे धर्मप्राप्तौ तन्त्रं नतु वाचनिकमित्याशयेन सिद्धान्तमाह—**असत्यपीति ।** सूत्रार्थस्तु—परार्थे प्रधानार्थे दध्नि शृते च प्रणीताभिः सहार्थसामान्याभावात्प्रणीताकार्यकरत्वाभावात्प्रणीतासंस्कारस्योत्पवनादेस्तदर्थत्वात्कार्यार्थत्वादिति ॥

**एकार्थत्वात्०** ॥ ४६ ॥ यदि कार्यसाधनत्वप्रयुक्ता धर्मास्तदा रथंतरबृहतोरेककार्यत्वात्तद्धर्मसंकरः स्यादित्युत्थितेः संगतिः । **एकेति ।** पृष्ठाख्यस्तुतिलक्षणैककार्यजनकत्वादित्यर्थः । **नन्विति ।** साम्नः ऋगभिव्यञ्जकतयैव स्तोत्रसाधनत्वेन

---

१ परार्थेन त्वर्थसामान्यं.

व्यवस्थेति संशये—'उभयोरेककार्यत्वात्कार्यसाधनगोचराः ॥ धर्माद्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव ॥' ननु चान्यथा रथन्तरेण स्तुतिः साध्यते शूरादिप्रकारेणान्यथा च बृहता चित्रादिप्रकारेण तेन साधनभावप्रकारभेदात्साधननिवेशिनो धर्माः न संकीर्यन्ते यथा व्रीहिधर्माः स्रुवादिष्वेककार्येष्वपि न संभवन्ति कारकभेदादेवमिहापि। नैतदेवम्। यदेव हि 'रथंतरं पृष्ठं भवती'तिशास्त्रविहितं साम्नोऽक्षराभिव्यञ्जकत्वेन साधनत्वं तेनांशेन संमीलनादिधर्माः संबध्यन्ते। साधनविधिना हि संबध्यमाना धर्मविधयो यदेव विधौ विवक्षितं साधनरूपं तेनैव संबध्यन्ते, शूरादिप्रकारभेदस्त्वविवक्षितो वस्तुस्वभावकृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति। किंचायमभिव्यज्यमानानामृचामेव भेदो यच्छूरादिरूपता। साम्नोस्त्वक्षराभिव्यक्त्यात्मकमेकरूपमेव साधनत्वं तस्मात्संकर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीनामिति प्राप्ते ब्रूमः—'साम्नोर्व्यवस्थया यस्मान्निर्देशो मीलनादिषु ॥ तस्मान्न संकरो युक्तो नत्वेवं प्रोक्षणादिषु ॥' व्रीहिग्रहणं कारकविशेषोपलक्षणमिति कृत्वा यवेष्वपि प्रोक्षणादयः क्रियन्ते तदिहापि यदि रथंतरग्रहणं साधनमात्रोपलक्षणं स्यात्तत एकमेव रथंतरं बृहद्वा सर्वधर्मविधिषु गृह्येत, यतस्तु क्वचिद्रथंतरं क्वचिद्बृहद्गृह्यते तन्नूनमिह रथंतरादिस्वरूपमपि विवक्षितमिति गम्यते तस्माद्व्यवस्था। किंच 'नानयोरेककार्यत्वं अन्यद्धि पृष्ठं रथंतरेण साध्यते अन्यच्च बृहता। ननु 'पृष्ठैः स्तुवते'इति वाक्योत्पन्नपृष्ठानुवादेन बृहद्रथंतरयोर्विधानादेककार्यत्वमनयोः। नैवम्। यदि 'पृष्ठैः स्तुवत'इत्युत्पत्तिः स्यात्तत उत्पत्तिगतया बहुत्वसंख्यया बहूनि पृष्ठानि स्युः। तत्र सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्टोमे पृष्ठबहुत्वं नास्तीत्युक्तं तद्विरुध्येत। तस्माद्रथंतरं पृष्ठं भवतीति रथंतरविशिष्टं पृष्ठं विधीयते। पृष्ठशब्दस्य स्तुतिवाचित्वं वाक्यशेषाद्गुणवाक्यैश्चावगम्यते तस्माद्भिन्नस्तोत्रसाधनत्वात्साम्नोस्तन्निबन्धनानां धर्माणामाज्यौषधा-

---

शूरत्वाद्यभिधायकऋगभिव्यञ्जकस्य रथंतरस्य शूरत्वादिना स्तोत्रसाधनत्वं चित्रत्वाद्यभिधायकऋगभिव्यञ्जकस्य च बृहतश्चित्रत्वादिना स्तोत्रजनकत्वमिति स्तुतिसाधनताप्रकारभेदान्न धर्मसंकरः। शूरत्वादिप्रकारकस्तुतिसाधनत्वेनैव रथंतरस्य संमीलनादिधर्मसंबन्धाद्बृहतश्चित्रत्वादिप्रकारकस्तुतिसाधनत्वेनैव समुद्रमनोध्यानादिधर्मसंबन्धाच्चेत्यर्थः। **यथेति**। व्रीहीणां स्रुवादीनां चाग्नेयाद्यपूर्वसाधनत्वेऽपि हविःप्रकृतितयाऽपूर्वसाधनत्वरूपेण व्रीह्यन्वितानामवहननादीनां तद्रूपरहितेषु स्रुवादिषु यथा न प्रवृत्तिस्तथेत्यर्थः। रथंतरादीनां शास्त्रतात्पर्यावगतं यत्साधनत्वं तदेव धर्मविधिषूपजीव्यं 'रथंतरं पृष्ठ'मित्यादिशास्त्रस्य ऋगक्षराभिव्यञ्जकमात्रे तात्पर्यं नतु शूरत्वादिप्रकारभेदेपि तस्यार्थिकत्वात् 'व्रीहिभिर्यजेते'त्यादौ तु हविःप्रकृतित्वे तात्पर्यात्तेनैव रूपेण धर्मान्वयावश्यंभावान्न स्रुवसाधारण्यमिति वैषम्यमभिप्रेत्य परिहरति—**नैतदिति**। **ऋचामेवेति**। ऋचामेव शूरत्वाद्यभिधायकत्वात्साम्नः गीतिक्रियारूपस्याक्षराभिव्यक्तिमात्रसमर्थत्वादित्यर्थः। **व्रीहीति**। यथा व्रीहियवयोः कठिनमसृणतण्डुलद्वारा पुरोडाशसाधनत्वेन साधनताप्रकारभेदे सत्यपि तस्यार्थिकतया शास्त्रीयहविःप्रकृतित्वमात्रसाधारण्यमादाय संकरस्तथेत्यर्थः। **स्वरूपमपी**त्यपिशब्देन न स्वरूपमात्रमेव धर्मान्वयि किंतु साधनत्वविशिष्टमिति सूचयता मीलनादिधर्मैर्विनापि रथंतरादिस्वरूपसिद्धेस्तद्वैयर्थ्यमिति शङ्का निराकृता। **ननु** स्वरूपविवक्षायां कण्वरथंतरादौ तत्स्वरूपाभावान्न मीलनादयः स्युरित्यस्वरसादाह—**किंचेति**। **नन्विति**। नच पृष्ठानुवादेन बृहद्रथंतरविधानेऽपि नैककार्यकरत्वं पृष्ठैरित्युत्पत्तिगतबहुत्वसंख्यया पृष्ठभेदे सत्येकत्र रथंतरस्य साधनत्वमन्यत्र बृहत इत्युपपत्तेरिति वाच्यम्। **पृष्ठभे**देऽपि माहेन्द्रस्तोत्रव्यतिरिक्तानां नौधसादिसामान्तरावरुद्धत्वेन तदनवरुद्धे महेन्द्रस्तोत्र एव बृहद्रथंतरविधेर्वक्तव्यत्वेनैककार्यकरत्वानपायात्। **बहुत्वेति**। पृथक्त्वनिवेशित्वादितिन्यायेनेति भावः। **तस्मादिति**। स्तोत्रानुवादेन सामविध्यसंभवाद्विशिष्टविधिः स्वीकार्य इत्यर्थः। **ननु** रथंतरं पृष्ठमिति सामानाधिकरण्यात्पृष्ठशब्दस्य रथंतराद्यर्थत्वमेव न्याय्यं, ततश्चान्यद्धि पृष्ठं रथंतरेण साध्यते अन्यच्च बृहतेत्ययुक्तमित्यत आह—**पृष्ठशब्दस्येति**। वाक्यशेषे माहेन्द्रादिस्तुतेः कीर्तनात्सप्तदशानि पृष्ठानीति सप्तदशत्वरूपगुणविधानाच्च स्तुतिपरत्वमेव पृष्ठशब्दस्येत्यर्थः। सप्तदशत्वसंख्यायाः[1] स्तोत्रीयापरिच्छेदद्वारा स्तोत्राङ्गत्वस्यैव वक्तव्यत्वादिति भावः। **गुणवाक्यैरिति**। बहुवचननिर्देशेन पृष्ठैः स्तुवत इत्यादीन्यनुवादवाक्यान्यपि संगृहीतानि, तेषु च स्तुतिसामानाधिकरण्याद्विस्पष्टमेव स्तोत्रनामकत्वं पृष्ठशब्दस्येति बोध्यम्। **तस्मादिति**। एवंच धर्मविधिषु बृहद्रथंतरनिर्देशभेदोऽपि भिन्नस्तुतिसाधनत्वनिबन्धन इत्युपपत्तेर्न तत्तत्स्वरूपविवक्षाप्रसङ्ग इति बोध्यम्।

---

१ पञ्चदशत्व.

दिधर्माणामिव व्यवस्थासिद्धिः। स्तोत्रयोश्चादृष्टार्थत्वात्प्रयाजादेरिव नैकार्थ्ये नानाकार्ययोश्च स्तोत्रयोर्वचनबलाद्विकल्पः। तस्मान्न धर्मसंकरः॥

कण्वरथंतरे बृहद्रथंतरधर्मसमुच्चयाधिकरणम्॥ १६॥

## अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्॥ ४८॥

**तयोर्धर्माः समुच्चेया न वा कण्वरथंतरे॥ द्विस्थानत्वाद्भाष्य आद्यो विरोधाद्वार्तिकेऽन्तिमः॥ २४॥**

वैश्यस्तोमे श्रूयते 'कण्वरथंतरं पृष्ठं भवती'ति। तत्र संशयः किं कण्वरथंतरं बृहद्रथंतरयोः स्थानापन्नं कार्यप्रयुक्तान् रथंतरधर्मान्बृहद्धर्मांश्च गृह्णद्विकल्पेन गृह्णाति उत समुच्चयेनेति—'विकल्प एव तेषां स्यात्प्रकृतावसमुच्चयात्॥ मिथोऽनपेक्षैस्तैर्धर्मैः प्रकृतौ साधिता स्तुतिः॥' उच्यते—'पृथङ्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता॥ इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते॥' तच्च द्वयोरपि कार्यं कुर्वत् धर्मानपि द्वयोः समुच्चयेन गृह्णातीति भाष्यकारः। वार्तिककारस्तु विकल्पमेव मन्यते। तथाहि यद्यपि तावत्प्रकृतावेकैव पृष्ठस्तुतिर्धर्माणां प्रयोजिका तथापि तेषां सामद्वारत्वात्साम्नोश्च वैकल्पिकत्वाद्धर्माणां च पृथङ्निर्देशेन व्यवस्थितत्वात्केचिद्धर्मा रथंतररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः केचिद्बृहद्द्वारेण, एवमेव विकृतावप्यतिदेशेन कदाचिद्रथंतरं स्वधर्मयुक्तपृष्ठसाधनं कदाचिच्च बृहदेवं प्राप्ते कण्वरथंतरयोः कार्ये विहितमपि यथा प्राप्तयोः कार्ये विधानात्कदाचिद्रथंतरकार्ये कदाचिच्चबृहत्कार्ये विहितं भवति न सर्वदा द्वयोः कार्ये। ततश्च कदाचित्कस्यचिद्धर्मान्गृह्णाति न सर्वदा सर्वान्। स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता विकृतावपि न समुच्चयमपेक्षते किमुत यदा द्वे स्तुती प्रकृतौ वचनादनुष्ठिते विकृतावपि तथैव प्राप्ते तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथंतरमन्यतरधर्मानेव गृह्णातीति व्यक्तमेतत्तस्माद्विकल्पः॥

---

**नैकार्थ्यमिति**। येन सत्यपि स्तोत्रभेदे साधनताप्रयुक्ता धर्माः संकीर्णा भवेयुरिति भावः। **ननु** तर्हि प्रयाजादिवदेव समुच्चयः स्यादित्यत आह—**नानेति**। वचनं चात्र रथंतरं बृहद्वा पृष्ठं कार्यमित्येवंरूपमिति मीमांसकप्रवादः। सूत्रार्थस्तु—रथंतरबृहतोरेकार्थत्वाद्धर्माणामविभागः संकरः स्यादिति॥

**अप्राकृते०॥ ४८॥ कण्वेति**। कण्वरथंतराख्यसामसाधनकं पृष्ठं भवतीति प्रकृतितः प्राप्तपृष्ठस्तुतौ कण्वरथंतराख्यसामविधिः श्रूयते इत्यर्थः। विकल्पसमुच्चयचिन्ताधर्मप्राप्तौ घटते नान्यथेत्याशयेन धर्मप्राप्तिमुपपादयन् संशयमाह—**तत्रेति। स्थानेति**। कण्वरथंतरं स्तुतिसाधनत्वेनावगततया तादृशबृहद्रथंतरस्थानापन्नमित्यर्थः। **विकल्प इति**। रथंतरबृहद्धर्माणां प्रकृतौ व्यवस्थितत्वेनैकत्र स्तुतौ समुच्चयाभावादिहापि तद्वदेवासति समुच्चये विकल्प इत्यर्थः। **ननु** प्रकृतौ समुच्चयाभावेऽपीह चोदकेन धर्मद्वयग्रहणात्समुच्चयोऽस्त्वित्यत आह—**मिथ इति**। प्रकृतौ निरपेक्षतया स्तुतिसाधनतार्थान्धर्मान्विकल्पेनैव चोदको गृह्णातीति भावः। अनेनैव प्रकृताविव न समुच्चय इत्युत्थानात्संगतिरपि सूचिता। **तच्चेति**। प्रकृताविव व्यवस्थाहेतुनिर्देशाभावादिति भावः। अनेनैव न्यायेन वैकृतनीवारादेः व्रीहियवोभयस्थानापत्त्या नित्यमेव व्रीहिमन्त्रप्रवृत्तिः। नच कदाचिद्व्यवस्थानापत्त्या मन्त्राभावोऽपि स्यादिति वाच्यम्। तन्मन्त्राभावस्य यवप्रयोगाङ्गत्वाभावेन कदापि मन्त्राभावप्रसङ्गादिति ध्येयम्। प्रकृतौ पृष्ठस्तुतेरेकत्वाभ्युपगमेऽपि कण्वरथंतरे धर्मविकल्पसिद्धौ किमु वक्तव्यं प्रकृतौ स्तुतिभेदे कण्वरथंतरे बृहद्रथंतरधर्मविकल्पसिद्धिरिति कैमुतिकन्यायमभिप्रेत्य प्रथमं स्तुत्यैक्येऽपि विकल्पमुपपादयति—**यद्यपीति**। ननु प्रकृतौ स्तुत्यैक्ये धर्माणां समुच्चय एव स्यादिति कथं विकृतौ विकल्प इत्याशङ्क्य प्रकृतौ स्तुत्यैक्येऽपि धर्माणां न साक्षात्स्तुत्यन्वयः किंतु सामद्वारा। तेच सामनी विकल्पिते इति द्वारविकल्पान्न समुच्चय इत्याह—**तेषामिति**। द्वारविकल्पे व्रीहिधर्माणां यवसाधारण्यमिव स्यादित्यत आह—**धर्माणां चेति**। नन्वस्तु प्रकृतौ व्यवस्था, विकृतौ तु उभयस्थानापन्नत्वात्कण्वरथंतरस्य स्थानापत्त्या धर्मा उभयेपि प्राप्नुयुरित्यत आह—**विकृताविति**। स्थानापत्तिरपि यथाप्राप्तिविकल्पेनैवेति युक्तो धर्मविकल्प इत्यर्थः। एवमपि यदि प्रधानभूतस्तुतेर्धर्मसमुच्चयापेक्षा स्यात्तदा बलात्समुच्चयः स्यान्न च सास्तीत्याह—**स्तुतिरपीति। तयोश्चेति**। तथाच कण्वरथंतरमेकस्मिन्प्रयोगे एकस्तुत्यपूर्व

---

१ वचनवशात्. २ वचनाद्विकल्पेनानुष्ठिते.

द्विसामके बृहद्रथंतरयोर्व्यवस्थाधिकरणम् ॥ १७ ॥

**उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥ [स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥]**

**द्विसामके द्वयोर्धर्मसांकर्यं वा व्यवस्थितिः ॥ पृष्ठैक्यात्संकरो मैवं धर्माणां सामगत्वतः ॥ २५ ॥**

यत्र बृहद्रथंतरयोः प्रकृतितो विकल्पे प्राप्ते समुच्चयो विधीयते 'संसव उभे कुर्या'दित्यादौ तत्र किमुभयो रथंतरधर्मा उभयोश्च बृहद्धर्माः कर्तव्या उत रथंतरे रथंतरधर्माः बृहति बृहद्धर्मा एवेति संशये द्वाभ्यामपि संहत्यैकैकस्य कार्यं साध्यते इति द्वयोरपि द्वयधर्मप्राप्तावुच्यते । यद्येकैकस्य कार्ये द्वयं विधीयते ततः स्यादेवम्—'चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह ॥ स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥' एवं हि समुच्चयमात्रविधानाल्लाघवमप्राकृतकार्यता च साम्नोर्न कल्पिता भविष्यति तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः ॥

सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

**पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥ [कालस्येति चेत् ॥ ५२ ॥ नाप्रकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥ ५४ ॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधिकारिकत्वात् ॥ ५६ ॥]**

**सौर्यादौ पार्वणौ होमौ स्तो न वा कालदेवकौ ॥ स्तः संवदेवकौ संवाविकारत्वान्न तत्र तौ ॥ २६ ॥**

'स्रुवेण पार्वणहोमौ जुहोती'ति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिष्वतिदिश्येते नेति संशयः । तदर्थमिदं विचार्यते किं पर्वशब्दः कालवचनः कालोऽस्य देवता तस्य चासंस्कार्यत्वादारादुपकारकौ

---

साधयत् परस्मिन् अपरस्तुल्यपूर्वमिति तत्साधनताप्रयुक्तान्धर्मान्विकल्पेनैव गृह्णाति न समुच्चयेनेत्यर्थः । सूत्रार्थस्तु—अप्राकृते कण्वरथंतरे तद्विकारत्वाद्बृहद्रथंतरोभयविकारत्वादुभयस्थानापन्नत्वादुभयधर्माः स्युः विरुद्धास्तु ये धर्मास्ते विरोधात्समुच्चयासंभवेन व्यवतिष्ठेरन् वार्तिककारपक्षे वैश्यस्तोमस्य ज्योतिष्टोमविकारत्वाद्यथाप्रकृति स्तुतिद्वयविकल्पे तद्धर्मा अपि विकल्पेरन् 'बृहत्युच्चैर्गेयं रथंतरे नोच्चै'रित्यादिधर्माणां विरोधाच्चेति ॥

**उभयसाम्नि०** ॥ ४९ ॥ **संसव इति** । संसवो नामैकस्यां जनितायामेकस्मिन्काले द्वयोर्यजमानयोः सुत्यायां प्रायश्चित्तरूपः सोमयागस्तत्रेत्यर्थः । यथा कण्वरथंतरे उभयधर्मास्तद्वदिहाप्युभयत्रोभयधर्मा इति कण्वरथंतरे विकल्पेऽपि इह समुच्चय इति चोत्थानात्संगतिः । **द्वाभ्यामिति** । उभे कुर्यादित्यनेन प्रकृतितः प्राप्ते पृष्ठस्तोत्रे उभयोः साम्नोः समुच्चित्य विधानेन सहितयोरेकैककार्यभूतपृष्ठस्तोत्रजनकत्वात्कार्यप्रयुक्ता धर्मा उभयत्र कर्तव्या इत्यर्थः । भवेदेवं यदि पृष्ठस्तोत्रे सामद्वयविधिः स्यान्नत्वेवं कण्वरथंतरं पृष्ठंभवतीतिवत्पृष्ठानुवादकशब्दाभावादित्याह—**यदीति** । किंतर्ह्यनेन विधीयते पृष्ठवाचकशब्दाभावेन पृष्ठसमुच्चयविधेरप्यसंभवादित्यत आह—**चोदकेनेति** । यद्यपि 'उभे बृहद्रथंतरे भवत' इति सामवाचकशब्द एव श्रूयते तथापि साममुखेन तत्साध्यपृष्ठयोरेव समुच्चयो विधीयत इत्यर्थः । **स्वधर्मेति** । यथाप्राप्ति व्यवस्थितस्वस्वधर्मयुक्तयोरित्यर्थः । अनेन विशेषणेन स्तुत्योः समुच्चयविधिपक्षे स्तुत्यपूर्वभेदाद्धर्माणां व्यवस्थेति दर्शयति । **ननु** सामवाचकशब्दानुसारात्साम्नोरेव स्तोत्रे समुच्चयविधिर्युक्तो नतु तन्मुखेन स्तोत्रयोः क्रतौ समुच्चयविधिरित्यत आह—**एवमिति** । स्तोत्रयोः समुच्चयमात्रविधानाल्लाघवं साम्नोस्तु परस्परकार्ये परस्परस्याप्राप्तस्यापि विधानाद्गौरवं स्यादित्यर्थः । **अप्राकृतेति** । साम्नोः समुच्चयपक्षे रथंतरस्य बृहत्कार्यकरत्वापत्तेः बृहतश्च रथंतरकार्यकरत्वापत्तेश्चाप्राकृतकार्यत्वं स्यादित्यर्थः । सूत्रार्थस्तु—उभयसाम्नि संसवादावपि । एवं कण्वरथंतरादिवदुभयस्यैव एकार्थापत्तेरुभयधर्माः स्युरिति ॥

**पार्वणहोमयोः०** ॥ ५१ ॥ संगतिमग्रिमाधिकरणे ग्रन्थकार एव वक्ष्यति । **ननु** पर्वणो देवतात्वे सति कालस्य संस्कार्यत्वाभावादारादुपकारकत्वमिति पूर्वः पक्षः । कर्मणः संस्कार्यत्वसंभवात्संनिपातित्वमिति सिद्धान्तश्च युज्यते । देवतात्वमेवासिद्धं संबन्धमात्रेऽपि पार्वणाविति तद्धितोपपत्तेरित्याशङ्क्य प्रतिपदविधानेन देवतातद्धितस्य प्रबलत्वाद्देवतात्वं पर्वण उपपादयन्संशयमाह—**तद्धितेति** । **तदर्थमिति** । तदर्थं च किमारादुपकारकौ होमावुत संस्कारार्थाविति, तदर्थं च किं पर्वशब्दः कालवचन उताग्नेयादिसमुदायपर इति चिन्तानिष्कर्षः । आरादुपकारकत्वे प्रयाजादिवद्विकृतिषु प्रवृत्तिरितरथा द्वाराभावादप्रवृत्तिरिति फलफलिभावः । कालदेवताकत्वेऽपि संस्कारकत्वं किं न स्यादत आह—**तस्येति** ।

होमौ उताग्नेयादिसमुदायवचनः समुदायदेवत्यौ होमौ तत्संस्कारार्थाविति । तत्र 'काले शब्दस्य मुख्यत्वात्कालाभीज्येह मन्यते ॥ पृणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यता ॥' पृणातेर्दानकर्मणः पर्वशब्दः । सच दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या कालेऽपि मुख्यः, भावव्युत्पत्त्या कर्मण्यपि । तत्र प्रकरणात्सामवायिकत्वलाभाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थतां होमयोरध्यवस्यामः । तेषां च कर्मणां तन्त्रेणाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं नैकैकशः । तेन समुदायस्य देवतात्वात्तस्य च विकृतिष्वभावादतद्विकारत्वाच्च सौर्यादेस्तत्र होमयोरप्रवृत्तिः । समुदायिविकारा हि सौर्यादयो न समुदायविकाराः ॥

दर्शपूर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ॥ १९ ॥

## उभयोरविशेषात् ॥ ५७ ॥ [यदभीज्या वा तद्विषयौ ॥ ५८ ॥]

**संकीर्णौ संधयोर्होमौ न वा प्रकरणादुभौ ॥ संकीर्णावुपकार्यस्य भेदादेतौ व्यवस्थितौ ॥ २७ ॥**

किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्तव्यौ उत विभज्य पौर्णमास्यां पौर्णमासीदेवत्योऽमावास्यायाममावास्यादेवत्य इति । तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य संस्कार्यवशत्वात्संस्कारस्य सूक्तवाकन्यायेन निष्कर्षस्तेनैव च न्यायेन गतत्वान्नेदमधिकरणान्तरम्, पूर्वस्यैव तु प्रयो-

---

कालस्य मन्त्रस्मार्यत्वेन संस्कार्यत्वं वक्तव्यं पशुपुरोडाशदेवतावत्तच्च प्रकृते न संभवति पार्वणहोमयोः प्रयोगमध्यवर्तित्वात्कालस्य चोपक्रम एव प्रतीक्षणीयस्य मध्ये स्मरणवैयर्थ्यादित्यर्थः । **काल इति** । कालएव प्रयोगप्राचुर्येण मुख्यत्वादित्यर्थः । पर्वेष्टिरथ प्रवर्तत इत्यभियुक्तप्रयोगः कर्मण्यप्यस्तीति सूचयति—**मन्यत इति** । यदि च प्रयोगतुल्यत्वेऽपि योगबलात्कालपरत्वं सोऽपि कर्मण्यप्यविशिष्ट इति सिद्धान्तमाह—**पृणातेरिति** । पृणातेः 'अन्येभ्योऽपि दृश्यत' इति वनिप्प्रत्यये पर्वशब्दनिष्पत्तेरित्यर्थः । **भावेति** । यागदानयोः शाब्दिकैरेकतया व्यवहाराद्यागरूपाणामपि कर्मणां भावव्युत्पत्त्या पर्वशब्दवाच्यत्वं संभवतीति भावः । **ननु** पर्वशब्दस्य साधारण्येऽपि 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे । अमावास्या सुभगे'ति मन्त्रवर्णबलात् 'छागो वा मन्त्रवर्णा'दिति न्यायेन कालपरत्वमेवावसीयत इत्यत आह—**तत्रेति** । **सामवायिकत्वेति** । आरादुपकारकत्वापेक्षया सामवायिकत्वस्य प्रबलत्वादिति भावः । एवंच प्रकरणादिना प्रधानवाक्यगतपर्वशब्दार्थनिर्णये तदनुगुणतयैव मन्त्रवर्णस्य गुणभूतस्य नयनं युक्तं, छागस्थले तु पशुशब्दस्य विशेषपरत्वे निर्णायकापेक्षतया मन्त्रवर्णानुगुणार्थपरत्वमिति वैषम्यं बोध्यम् । **ननु** कर्मणः संस्कार्यत्वेऽपि विकृतिकर्मणः संस्कारो माविलोपीत्येतदर्थं विकृतावपि होमप्रवृत्तिः किं न स्यात् । नच पर्वत्वं व्यासज्यवृत्ति येन समुदायरूपेण संस्कार्यत्वाद्विकृतौ तदभावादप्रवृत्तिः स्यात् । प्रत्येकमेव त्यागरूपाणां कर्मणां प्रत्येकमेव दानार्थकपर्वशब्दवाच्यत्वादित्यत आह—**तेषामिति** । प्रत्येकं पर्वत्वेऽपि तन्त्राभिधानबलात्संहितरूपेणैव तद्धितेन देवतात्वं प्रतिपाद्यत इत्यर्थः । **अग्नीषोमयोरिति** व्यासक्तत्वमात्रे दृष्टान्तः । तत्र व्यासक्तत्वस्य समासबललब्धत्वेन तन्त्राभिधानलभ्यत्वाभावादिति बोध्यम् । **अभावादिति** । समुदायो विकृतौ न प्रवर्तत इत्यष्टमे प्रतिपादनादिति भावः । **ननु** मास्तु समुदायाप्रवृत्त्या तदर्थसंस्कारप्रवृत्तिस्तथापि स्वातन्त्र्येणातिदेशात्प्रवृत्तिः किं न स्यादत आह—**अतदिति** । समुदायिसामान्यस्यैवैकदेवताकत्वादेर्विकृतिषूपलम्भादिति भावः । **ननु** समुदायस्य पृथक्फलसाधनत्वाभावेन तत्संस्कारोऽप्याग्नेयादीनामेवोपकरोतीत्याग्नेयादिविकारे सौर्यादौ कुतो न प्रवृत्तिरिति चेत् सत्यम् । तथापि संनिपातिनोऽप्यस्यावहननादिवन्नाग्नेयाद्युत्पत्त्यपूर्वोपयोगित्वं किंतु समुदायार्थतया समुदायापूर्वोपयोगित्वं, विकृतौ च तादृशद्वाराभावान्निवृत्तिः । अतएव वैमृधस्य संनिपातित्वाभावेऽपि समुदायापूर्वप्रयुक्तत्वाद्विकृतिषु निवृत्तिरिति दिक् । सूत्रार्थस्तु—पार्वणहोमयोर्विकृतिष्वप्रवृत्तिः पर्वशब्दस्य कर्मसमुदायार्थपरत्वेन तस्मात् दभीज्येति ॥

**उभयोरविशेषात्** ॥ ५७ ॥ पूर्वोक्तार्थ एव विशेषविचारात्संगतिः । **तत्रेति** । प्रकरणबलादुभयोरुभयत्राङ्गत्वे निश्चिते पूर्णमासलिङ्गकमन्त्रकरणकस्यामावास्यायामदृष्टार्थत्वममावास्यालिङ्गकमन्त्रकरणकस्य च पौर्णमास्यामदृष्टार्थत्वमिति पूर्वपक्षिणो भावः । **संस्कार्येति** । यत्र संस्कार्यं पूर्णमासत्रिकं तत्र पूर्णमासमन्त्रकस्य, यत्र च दर्शत्रिकं तत्रेतरस्य च संस्कार्यवशेन व्यवस्थया प्रयोगेण क्वाप्यदृष्टं कल्पनीयं, लिङ्गादिबलाच्च प्रकरणबाधः । यद्वोभयत्राप्येकैकहोमसद्भावाभावात्यन्तबाधः । **पूर्वस्येति** । कालाभीज्यापक्ष उभयोः पर्वणोरुभावपि होमौ स्यातां आरादुपकारकत्वेन लिङ्गेन विशेषासिद्धेरित्यु-

---

१ संस्काराणां.

जनसूत्रद्वयमिदमुभयोरविशेषाद्यदभीज्या वा तद्विषयाविति ऊहसिद्ध्यर्थमवान्तरकार्यनिरूपणं प्रस्तुतमिति तत्प्रसङ्गात्पार्वणयोरवान्तरकार्यं निरूपितम् ॥

समिदादीनां यागनामधेयताधिकरणम् ॥ २० ॥

**प्रयाजेऽपीति चेत् ॥ ५९ ॥ [नाचोदितत्वात् ॥ ६० ॥]**

**देवता यजयो वा स्युः प्रयाजे समिदादयः ॥ विष्ण्वादिवद्देवतात्वं न चतुर्थ्याद्यभावतः ॥ २८ ॥**

'समिधो यजति', 'तनूनपातं यजती'त्यत्रापि किं कर्मसंबन्धिनः समिदादीन्देवतात्वेनोद्दिश्य तत्संस्कारार्थं यागविधानमुतारादुपकारकयागविधानमिति संशये पूर्ववत्सामवायिकत्वलिप्सया संस्कारविधिः, द्वितीया च देवताभिधाने समर्थैव विष्णुं यजतीत्यादिषु दर्शनादिति प्राप्ते ब्रूमः—'उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते ॥ त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन ॥' उद्देशांशगतं तु कर्मत्वं त्यागेऽप्युपचर्य विष्णुं यजतीत्यादिनिर्देशः । नचेह विधावुपचारो युक्तः यागास्त्विह केवला विधीयन्ते तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात्प्रकरणेनारादुपकारकत्वम्, समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि देवता एव वानुवदन्ति । नचानुवाद उपचारो दोषस्तस्मादारादुपकारकाः प्रयाजाः ॥ इति शास्त्रदीपिकायां नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

भयोरविशेषादिति सूत्रं पूर्वाधिकरणपूर्वपक्षप्रयोजनकथनपरम् । यदभीज्या वा तद्विषयाविति सूत्रं च यस्य समुदायस्य यत्र संस्कार्यत्वसंभवस्तद्विषयो होमस्तत्रेति संस्कार्यवशाद्व्यवस्थेति सिद्धान्तप्रयोजनकथनपरमित्यर्थः । ननूहोपयोगाभावात्पार्वणहोमविचारस्य नात्र संगतिरत आह—**ऊहेति** । कण्वरथंतरादाविति शेषः । **अवान्तरेति** । अदृष्टरूपं संस्काररूपं वेति विचारितमित्यर्थः ॥

**प्रयाजेऽपीति चेत् ॥ ५९ ॥ देवतात्वेनेति** । यद्यपि व्रीह्यादिवद्देवतात्वाभावेऽपि द्वितीयान्तत्वेनोद्दिश्य विधानमात्रादेव संस्कार्यत्वसंभवाद्देवतात्वेनेति व्यर्थं तथापि प्रकृते 'समिधो यजती'ति यागस्य द्रव्यदेवतासंबन्धित्वेन स्विष्टकृदादिवद्द्रव्यसंस्कारत्वं पशुपुरोडाशादिवद्देवतासंस्कारत्वं वा वक्तव्यं नत्ववहननादिवदुभयव्यतिरिक्तसंस्कारत्वम् । तत्र च 'समिधो अग्न आज्यस्य वियन्त्वि'त्यादिमन्त्रप्रकाश्यानां समिदादीनां देवतात्वमेवोचितमिति देवतात्वेनोद्दिश्येत्युक्तमिति बोध्यम् । **पूर्ववदिति** । एतेनैव पूर्ववदुत्थानात्संगतिरपि सूचिता । **ननु** समिदादीनां देवतात्वे चतुर्थ्या भवितव्यमत आह—**द्वितीयेति** । देवताया यागे कर्मत्वाभावाद्द्वितीया सर्वथानुपपन्नैव । नचोद्देशकर्मत्वाद्द्वितीयोपपत्तिः । त्यागस्यैव प्रधानस्य यागशब्दार्थत्वात् उद्देशस्य च त्यागे गुणत्वेनोद्देशकर्मत्वेऽपि यागे कर्मत्वाभावादिति सिद्धान्तमाह—**उद्देशेति** । 'विष्णुं यजती'त्यादौ तु वाक्यान्तरप्राप्तत्वानुवादत्वादौपचारिको द्वितीयानिर्देश इत्याह—**उद्देशांशगतमिति** । देवताविधौ द्वितीयाया असमर्थत्वेन द्वितीयाबलेन देवतासंस्कारकत्वानवगमात्केवलमारादुपकारकयागविधिरित्याह—**यागास्त्वित्यादिना** । केवलाः देवतासंयोगरहिता इत्यर्थः । समिदादिशब्दास्तु तत्प्रख्यन्यायेन नामधेयानि 'अग्निहोत्रं जुहोती'तिवच्च द्वितीयोपपत्तिरित्याशयेनाह—**समिदादीति** । नन्वत्यन्ताप्रसिद्धत्वान्न नामत्वमित्यस्वरसादाह—**देवता एव वेति** । नन्वेवं तवाप्युपचारस्तुल्य इत्यत आह—**नचेति** । तव तु उद्देश्यसमर्पकतया विधिसंबन्धित्वात्समिदादिशब्दानां विधावेवोपचारः स्यादित्यर्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां नवमाध्यायस्य द्वितीयः पादः ॥ २ ॥**

# नवमाध्याये तृतीयः पादः।

विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् ॥ १ ॥

**प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ [लिङ्गदर्शनाच्च ॥ २ ॥]**

अग्निव्रीह्यादयो नोह्या ऊह्या वा न हि चोदनात् ॥ विवक्षा देवहविषोर्दृष्टत्वादूह्यते ततः ॥ १ ॥

मन्त्राणामपीदानीमूहश्चिन्त्यते 'अग्नये जुष्टं निर्वपामी'ति 'व्रीहीणां मेध सुमनस्यमान' इत्येतौ मन्त्रौ किं सौर्यादिषु नीवारादिषु चोहितव्यावुत नेति संशये—'प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः ॥ प्राप्यते विकृतौ तस्मान्नोहस्तत्रावकल्पते' ॥ **ननु** कार्यद्वारेण मन्त्राः प्राप्यन्ते कार्यं चापूर्वीयदेवताप्रकाशनं नाग्निस्वरूपप्रकाशनमित्युक्तं 'फलदेवतयोश्चे'त्यत्र, तस्मादिहापि सूर्य एव प्रकाशयितव्यः। नचाग्निपदं तत्प्रकाशने समर्थमिति सूर्यपदं प्रक्षेप्तव्यम्। उच्यते—सत्यं सूर्य एव प्रकाश्यः। स तु चोदकप्राप्तेनाग्निपदेनैव गुणवृत्त्या प्रकाश्यते। तद्यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति वचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्य उपस्थीयते तथेहापि प्राकृतस्यैवाग्निपदयुक्तस्य मन्त्रस्य सूर्यप्रकाशनाय चोदकेन विनियुक्तत्वात्तेनैव सूर्यं प्रकाशयिष्यामः। अन्यथार्थवशेन मन्त्राणामन्यथाभावकरणे गार्हपत्यवशादैन्द्रोऽपि मन्त्र ऊहितव्यः स्यात्। तस्मादेतावानेव मन्त्राणामन्यथाभावो यत्प्रकृतावग्निः प्रकाशितो विकृतौ सूर्य इति। ननु पठितपदोद्धारः पदान्तरप्रक्षेपश्च युक्त इति प्राप्तेऽभिधीयते—'प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम्। तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥' प्रकृतावग्निपदं न स्वरूपविवक्षया पठितं अग्निपदयुक्तो मन्त्रः कथं नाम स्यादिति। यदि ह्येवं भवेत्ततस्तेनैव यथाकथंचित्प्रकाश्येत सूर्यः। देवतावाचिपदविवक्षया त्विदं पठितं देवतावाचिपदयुक्तो मन्त्रः कथं नाम स्यादित्येवमभिसंधायाग्निपदं पठितं तस्यैव प्रकृतौ देवतावाचित्वात्। अवश्यं हि

---

**प्रकृतौ यथोत्पत्तिवचनमर्थानां० ॥ १ ॥** प्रथमपादे मन्त्रोहमध्य एवावान्तरसंगतिलोभेन सामोहोपोद्घातप्रसक्त्या सोपोद्घातं सामोहविचारं तत्संगतसंस्कारोहविचारं च परिसमाप्येदानीं स एव मन्त्रोहः प्रस्तूयते इत्यानन्तर्यमभिप्रेत्याह—**मन्त्राणामिति**। प्राक्प्रस्तुतावशिष्टो मन्त्रोह एवेदानीं चिन्त्यत इत्यर्थः। नचैवं प्रथमपादसंबन्धिनो मन्त्रोहस्यैवात्र विचारे कथं पादभेद इति वाच्यम्। मन्त्रोहावान्तरभेदमादाय पादभेदोपपत्तेः। तथाहि मन्त्रोहोऽष्टविधः—प्रकृत्यूहः, वचनोहः, लिङ्गोहः, प्रकृतिवचनोहः, लिङ्गवचनोहः, प्रकृतिलिङ्गोहः, प्रकृतिवचनलिङ्गात्मकत्रितयोहः, एकधेत्यादौ कृत्स्नपदाभ्यासलक्षणश्चेति। तत्र प्रायेण प्रथमपादे प्रकृत्यूहो विचारितः। अत्रपादे तु प्रायेण वचनोहश्चिन्त्यते। प्रकृत्यूहस्त्वल्पश इति प्रायेणप्रकृतिवचनोहविचारात्मकत्वात्प्रथमतृतीययोर्भेदः। अयं चार्थस्तन्त्ररत्ने स्पष्टः। **व्रीहीणामिति**। चरोः पात्र्यां प्रतिष्ठापनाभावेन तदर्थस्य व्रीहीणां मेधेत्यस्य नीवारेषु प्रसक्त्यभावादुदाहरणदिगियमुक्तेति ध्येयम्। **यादृश इति**। अग्न्यादिपदयुक्त इत्यर्थः। **सत्यमिति**। चोदकानुग्रहायेति भावः। **ननु** युक्तमैन्द्र्याः स्वरूपेण गार्हपत्योपस्थाने विनियोगाद्गौणीवृत्तिरिति। इह न स्वरूपेण शृङ्गग्राहिकया मन्त्रस्यातिदेशः किंतूपकारातिदेशाधीनः। तथाच सूर्यप्रकाशनरूपोपकारासमर्थस्याग्निपदस्य बाध एव युक्तो नोह इत्यत आह—**तथेहेति**। उपकारातिदेशानन्तरमुपकारस्य जनकाकाङ्क्षायां पदार्थानामपि पृथगतिदेशं मन्यते पूर्वपक्षवादी। तथाचैन्द्रीवदेवाग्निपदयुक्तस्यैव मन्त्रस्य शृङ्गग्राहिकया स्वरूपेणातिदेशाद्गौणमपि सामर्थ्यमाश्रित्य सूर्यः प्रकाश्यो नतु बाध इति भावः। **ननु** प्रत्यक्षवचनविहित ऐन्द्रो मन्त्रो निर्वापमन्त्रस्त्वातिदेशिकवचनप्रापितत्वादग्निपदोद्धारेण सूर्यपदप्रक्षेपमेवार्हतीत्यत आह—**अन्यथेति**। वाचनिकत्वाविशेषे प्रत्यक्षत्वातिदेशकत्वकृतो विशेषोऽकिंचित्कर इति भावः। **नन्वेवमपि** सूर्यप्रकाशनकृतान्यथाभावस्य विद्यमानत्वात्स एवोहोऽस्त्वित्यत आह—**तस्मादिति**। सूर्यप्रकाशनं द्वारान्तरमात्रं न द्वारान्तरसंबन्धमात्रमूहः किंतु तत्कृतोन्यथाभावः। स च मन्त्रे पठितपदोद्धारेण पदान्तरप्रक्षेपरूप एव वाच्यः। स च न प्रकृत इत्यर्थः। एवंचैतावानेवान्यथाभाव इत्येतन्नान्यथाभावत्वाभिप्रायेण किंतु सर्वथान्यथाभावान्तरं नास्तीत्यभिप्रायेणेति ध्येयम्। भवेदेवं यदि पदार्थानामपि पृथगतिदेशः स्यान्नत्वेवं, तथासति विकृतौ लुप्तोपकाराणामप्यतिदेशबलेनादृष्टकल्पनयानुष्ठानप्रसङ्गस्तस्मादुपकारातिदेशादार्थिक एव तन्मुखेन पदार्थानामतिदेशो वक्तव्यस्तथासत्युपकारजननाय यद्रूपविवक्षया प्रकृतौ मन्त्रपाठस्तद्रूपेणैवातिदेश उपकारजनने च प्रकृतौ देवतावाचकपदयुक्तत्वमेव तन्त्रं नाग्निपदयुक्तत्वमित्यग्निपदरूपस्याविवक्षितत्वाद्गौणीमपि वृत्तिमाश्रित्याग्निपदेनैव सूर्यः प्रकाश्य इत्यत्र न किंचित्प्रमाणमस्तीत्याशयेन सिद्धान्तमाह—**प्रकृताविति**। **तादृगेवेति**। ननु यादृशं पठितं

देवतापदयुक्तं मन्त्रमधिजिगांसमानैरग्निपदमेवाध्येतव्यम् । अतस्तद्रूपविवक्षयाऽग्निपदं पठितम् । तथाच दृष्टार्थं भवति स्वरूपविवक्षायां त्वदृष्टार्थतैव स्यात् । एवंच विकृतावपि देवतावाचिपदयुक्त एव मन्त्रः प्रयोक्तव्यः । नचाग्निपदस्य तद्रूपमस्तीत्यतः सूर्यपदप्रक्षेपः । एवं व्रीहिपदमपि हविःप्रकृतिद्रव्यवाचिपदाभिप्रायं न स्वरूपाभिप्रायमिति नीवारादिपूहसिद्धिः । बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितं ततो नियमादृष्टमात्रं कल्प्यते अवघातादिवत् । स्वरूपं त्वपूर्वीयसाधनविशेषवाचिपदविवक्षाप्रयुक्तं दृष्टार्थत्वात्तस्मादूहः । ऐन्द्री तु स्वरूपेणैव गार्हपत्ये त्विनियुज्यते इति वैषम्यम् ॥

पौण्डरीकेषु बर्हिःषु स्तरणमन्त्रस्योहाधिकरणम् ॥ २ ॥

**जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ [अविकारमेकेऽनार्षत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्तहेतुः ॥ ६ ॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ नियमो वोभयभागित्वात् ॥ ८ ॥]**

**हरितोक्तिः पौण्डरीके न त्याज्या त्यज्यतेऽथवा ॥ नादृष्टार्थत्वतो मैवं गुणिद्रव्यस्य भासनात् ॥ २ ॥**

**क्वचिच्छ्रूयते** 'पौण्डरीकाणि बर्हींषि भवन्ती'ति, प्रकृतावस्ति बर्हिषि मन्त्रः 'दर्भैस्तृणीते हरितै'रिति, तत्र दर्भशब्दस्थाने पुण्डरीकपदमूहितव्यं पूर्वेणैव न्यायेन हरितपदस्थानेऽपि किं रक्तपदमूहितव्यं नेति संशयः । दर्भशब्देनैव सिद्धे प्रकाशने हरिताभिधानमदृष्टार्थं प्रकृतौ, तस्माद्विकृतावपि हरितपदमेवादृष्टार्थमभिधातव्यमित्यनूहः । स्यादेवं यद्यदृष्टार्थं स्यादनेनापि तु गुणद्वारेण स्तरणद्रव्यमेव प्रकाश्यते अर्थाभिधानपरत्वान्मन्त्राणाम् । अतः पुण्डरीकाण्यपि स्वगुणद्वारेण प्रकाशयितुं रक्तपदं प्रयोक्तव्यम् ॥

---

तादृशं तस्याविवक्षितत्वादित्यर्थः । **ननु** देवतावाचित्वमात्रस्यैव विवक्षितत्वे वह्न्यादिपदयुक्ततयाप्यध्ययनं किं न स्यादित्यत आह—**अवश्यमिति** । आग्नेयमिति चोदनायामग्निपदस्यैव श्रुतत्वादिति भावः । **स्वरूपेति** । तद्विवक्षायां दृष्टांशे उपयोगाभावादिति भावः । **बहुष्विति** । अयंच प्रकारोऽग्निपदेऽपि द्रष्टव्यः । **स्वरूपेणेति** । इन्द्रपदयुक्तरूपेणैवेत्यर्थः । इह तु नाग्निपदयुक्तरूपेणातिदेश इति प्रागेवोपपादितमिति भावः । सूत्रार्थस्तु—प्रकृतौ यथोत्पत्तिमत्पदयुक्ततया मन्त्रा उत्पन्नास्तत्पदयुक्तैरेव मन्त्रैरर्थानामभिधानं कृतं तद्विकारत्वादुत्तरस्यामपि, ततो विकृतावपि तथैवाग्निपदयुक्तैरेवाभिधानं कर्तव्यमिति प्रापितं पक्षं चशब्देन निराचष्टे । नैतदेवम् । अर्थे अकार्यत्वात् वैकृतेऽर्थे यथाम्नातमन्त्रप्रकाश्यत्वासंभवादिति ॥

**जातिनैमित्तिकं० ॥ ३ ॥ क्वचिदिति** । 'मौद्गं चरुं निर्वपेत् श्रियै श्रीकाम'इत्यत्रेत्यर्थः । अत्र दर्भपदेनैवाभिधानसिद्धे हरितपदेनोह इति पूर्वपक्षो गुणद्वारेणापि द्रव्यप्रकाशकत्वादूह इति । सिद्धान्तश्च विशेष्यभूतद्रव्यवाचकदर्भशब्दस्योहे सत्येव नान्यथेत्याशयेन पूर्वन्यायसिद्धं द्रव्यवाचकशब्दस्योहं स्मारयति—**तत्रेति** । अनेन द्रव्यवाचकशब्दोहमुपजीव्य तद्विशेषणगुणवाचकशब्दोहविचारात्संगतिरित्यपि सूचितम् । **दर्भेति** । हरितादिशब्दानां गुणमात्राभिधायितया गुणस्य च कर्मानङ्गतया तदभिधानमदृष्टार्थम् । नच गुणद्वारा द्रव्याभिधानार्थत्वं वाच्यम् । तस्य स्वशब्देनैवाभिहितत्वादित्यर्थः । यदि कथंचिदपि दृष्टं न लभ्येत तदाऽदृष्टं कल्पनीयम् । संभवति तु गुणद्वारा द्रव्याभिधानेन दृढतरस्मृत्यर्थतया दृष्टार्थता नतु सुब्रह्मण्यागतहरितपदादिवदसत्त्वं गुणस्य येन स्तुत्यर्थतयाऽदृष्टार्थत्वं स्यादित्याशयेन सिद्धान्तमाह—**स्यादेवमिति** । **अर्थेति** । मन्त्राधिकरणन्यायेनेति शेषः । सूत्रार्थस्तु—जातिशब्दो दर्भशब्दो द्रव्ये नैमित्तिको गुणशब्दो गुणे च यथास्थानमूहितव्याविति ॥

---

१ ताद्रूप्यमस्ति. २ तृणविशेषः.

अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् ॥ ३ ॥

**लौकिके दोषसंयोगादपवृत्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ९ ॥**

**यूपस्पर्शे वैदिके वा लौकिके मन्त्रकीर्तनम् ॥ आद्यः प्रकरणान्मैवं लौकिके प्रतिषेधतः ॥ ३ ॥**

प्रासङ्गिकमिदमधिकरणं 'यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयाद्यदि द्वौ एतौ ते वायू इति यदि बहून् एते ते वायव' इत्यादि वाक्यं लिङ्गदर्शनत्वेन पूर्वाधिकरणे प्रस्तुतं तत्रेदं विचार्यते, किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे प्रायश्चित्तमुत लौकिके उतोभयत्रेति विशेषाश्रवणादनियमः प्रकरणात्फलकल्पनापरिहाराच्च वैदिक एवेति प्राप्ते उच्यते—'दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते ॥ दोषश्च प्रतिषिद्धे स्यात्प्रतिषेधश्च लौकिके ॥' 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यत' इति प्रतिषिध्य पश्चादिदमुच्यते यद्येकमुपस्पृशेदित्यादि, प्रतिषेधश्च रागप्राप्ते लौकिके, वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात् प्रतिषिद्धानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति तस्माल्लौकिके प्रायश्चित्तम् ॥

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तयोर्द्विवचनान्तेनोहाधिकरणम् ॥ ४ ॥

**अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ [विकारो वा तदर्थत्वात् ॥११॥ अपि त्वन्यायसंबन्धात्प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥१२॥ यथार्थं त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ छन्दसि तु यथादृष्टम् ॥ १४ ॥]**

**पाशं पाशान्द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम् ॥ एकैकत्वे द्वयत्वे किमेकस्योहोऽथवा द्वयोः ॥ ४ ॥**
**एकेनैव कृतार्थत्वादेको मन्त्रस्तदापि च ॥ अविकारेण बह्वर्थ एकार्थः समवायतः ॥ ५ ॥**
**प्राकृतत्वादुभावूह्य एकार्थोऽत्र विवक्षया ॥ बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरकुत्सितः ॥ ६ ॥**

अग्नीषोमीयपशावेकवचनान्तः पाशमन्त्रः 'अदितिः पाशं प्रमुमोक्त्वेत'मिति तथा बहुवचना-

---

**लौकिके दोषसंयोगादपवृत्ते हि चोद्यते० ॥ ९ ॥** ऊहविचारात्मकत्वाभावादाह—**प्रासङ्गिकमिति** । प्रासङ्गिकत्वमेवाह—**यद्येकमिति** । यदि मन्त्राणामूहः स्यात्तदा 'यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयाद्यदिद्वौ एतौ ते वायू इति यदि बहून् एते ते वायव'इत्यत्र यदि द्वौ यदि बहूनित्येतद्विधिवैयर्थ्यं द्वयोर्बहुषु च स्वत एव प्राप्तत्वादिति पूर्वपक्षलिङ्गदर्शनत्वेन पूर्वाधिकरणे यद्येकमित्यादिवाक्यं प्रस्तुतं तत्प्रसङ्गादिदमधिकरणमित्यर्थः । 'जातिनैमित्तक'मिति पूर्वाधिकरणस्यान्तरागर्भिणीत्वेन प्रवृत्त्या ततः पूर्वाधिकरणमेव पूर्वाधिकरण इत्यनेनोक्तम् । इदं च लिङ्गदर्शनं यद्यत्र यदि द्वौ इत्यादिविध्यभावेऽपि 'एतौ ते वायू एते ते वायव'इत्यनयोर्विकृतिनिवेश ऊहबलादेव सिद्धः स्यात्तदा विधिवैयर्थ्यं स्यान्नत्वेवं प्रकृतावग्नीषोमीयपशावेकयूपेऽप्याम्नानबलात्पाशन्यायेन मन्त्रत्रयनिवेशोपपत्तेः । तस्माद्विबह्वर्थकमन्त्रद्वयं मा प्रकृतौ भूदिति नियमार्थं वचनमिति तत्रैव सिद्धान्ते 'नियमो वा तथाविधित्वा'दित्यनेन सूत्रेण परिहृतमिति वेदितव्यम् । **ननु** लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता नचैकस्योभयार्थत्वं वैरूप्यादुपपद्यत इत्यनियमपक्षो दुष्ट इत्यतः पक्षान्तरं गृह्णाति—**प्रकरणादिति** । यद्यपि द्विबह्वर्थकमन्त्रयोर्न प्रकरणे निवेशसंभवोऽसमवेतार्थत्वात्तथापि प्रकरणादेकार्थस्य वैदिकोपस्पर्शननिमित्तकत्वनिश्चये तदवैरूप्यायेतरयोरपि विकृतिनिवेशमाश्रित्य वैदिकनिमित्तकत्वमेव वक्तुं युक्तमित्याशयेन प्रकरणादित्युक्तम् । **फलेति** । वैदिकनिवेशे क्रत्वङ्गतया फलानपेक्षत्वादिति भावः । **ननु** यद्येकमित्यादिवाक्ये दोषनिर्हरणस्याश्रवणात्कथं तादर्थ्यमत आह—**यूपो वा इति** । दुरिष्टं पापमामुञ्चते स्थापयतीत्यर्थः । तथाच प्रतिषिध्याम्नानबलाद्दोषनिर्घातार्थमेव नियम इत्यर्थः । **वैदिकस्येति** । नचात्र ग्रहणाग्रहणवद्विकल्पः संभवति, स्पर्शनंविना तक्षणाञ्जनोच्छ्रयणादीनामसंभवेनास्पर्शनकप्रयोगस्यैवासंभवात्तस्मान्निषेधः पुरुषार्थ एवेति भावः । पुरुषार्थश्चायं निषेधः सामान्येन प्रवर्तमानोऽपि न क्रत्वर्थस्पर्शनविषयः । न हिंस्यादितिवद्रागप्राप्तविषयत्वात् । अतएव पूर्ववाक्ये प्रतिषेधश्च रागप्राप्तलौकिक इत्युक्तम् । **ननु** प्रतिषिध्य पश्चादाम्नानमात्रात्कथं दोषनिबर्हणार्थत्वमित्यतस्तदुपपादयति—**प्रतिषिद्धेति** । अपेक्षितार्थत्वाद्दोषनिवर्हणार्थत्वमेव युक्तमित्यर्थः । सूत्रार्थस्तु—लौकिके उपस्पर्शने अयं विधिः स्याद्दोषसंयोगात् । कथं । दोषसंयोगः । हि यस्मादपवृत्ते प्रतिषिद्धे स्पर्शने तेन निमित्तेन विधीयते मन्त्रः प्रकृते क्रतौ प्रतिषेधस्याभागित्वात्तस्माद्दोषनिर्घातार्थत्वाल्लौकिक एव स्यादिति ॥

**अन्यायस्त्वविकारेण० ॥ १० ॥** प्रधानभूतप्रकृत्यूहचिन्तानन्तरं गुणभूतवचनोहचिन्तनात्संगतिः । ननूभयोरपि

न्तोऽपि 'अदितिः पाशान्प्रमुमोक्त्वेता'निति । तयोरग्नीषोमीये निवेशमुपरितनेऽधिकरणे वक्ष्यति तयोर्द्विपशुकेषु 'मैत्रं श्वेतमालभेत वारुणं कृष्ण'मित्यादिषु चोदकेन प्राप्तयोर्भवति संदेहः किमेकवचनान्तस्याप्रवृत्तिः बहुवचनान्तस्यानूहेन प्रवृत्तिरुत बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्योहेन प्रवृत्तिरथवोभावपि यथायथमूहेनानूहेन च प्रवर्तेते किंवोभयोरपि द्विवचनेनोहितयोः प्रवृत्तिरिति । तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसंख्यां वक्तुं विकारः स्यात् बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद्विकृतावपि तथैव संभवादनूहः । नचाविकारसंभवे विकारो युक्तस्तस्मादेकवचनान्तस्याप्रवृत्तिरितरस्य त्वविकारेण प्रयोग इति प्रथमः पक्षः । सकलाभिधानसंभवे विकलाभिधानमन्याय्यम् । तस्मात्संख्याविशिष्टपाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रयोगः बहुवचनान्तस्य त्वविवक्षितसंख्याकपाशमात्रप्रकाशनेनासमग्राभिधानत्वादप्रवृत्तिरिति द्वितीयः पक्षः । द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति तृतीयः । गृह्णीम एतद्द्वयोः प्रवृत्तिरिति ननु बहुवचनस्यानूहस्तदपि द्वयोरसाधुत्वादूहितव्यम् । प्रकृतावेकस्मिन्पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृतं नत्वेवं द्वयोः प्रयोगश्छन्दसि दृष्टः । तस्मात्स्वायत्ते प्रयोगे सत्यसाधुप्रयोगासंभवाद्द्विवचनं प्रक्षेप्तव्यं तस्मादुभयोरूह इति सिद्धान्तः ॥

---

प्रकृतौ निवेशे सत्ययं विचार उपपद्यते स एव त्वसिद्धः प्रकृते अग्नीषोमीयस्यैकपाशकत्वेन बहुवचनान्तस्य तत्र निवेशासंभवादित्यत आह—**तयोरिति** । **उभाविति** । तत्रैकवचनान्त ऊहेन बहुवचनान्तोऽनूहेनेति विवेकः । **निर्देशेति** । न केवला प्रकृतिः प्रयोक्तव्येति वचनं विना प्रकृतिनिर्देशासंभवेन बहुवचनस्य प्रकृतिप्रयोगमात्रार्थत्वादित्यर्थः । **नचेति** । विकारस्यानार्षत्वादार्षेण बहुवचनान्तेनाभिधानसंभवेनार्षैकवचनान्तस्य विकारो न युक्त इत्यर्थः । **सकलेति** । संख्याविशिष्टपाशाभिधानसंभवे पाशमात्राभिधानं न न्याय्यमित्यर्थः । **द्वयोरपीति** । प्रकृतौ बहुवचनान्तस्याप्यवयवबहुत्वमवयविन्युपचर्य प्रयोगः विकृतावपि तथैव प्रयोगसंभवेन चोदकावाधाय बहुवचनान्तस्याप्यनूहेन प्रवृत्तिरेकवचनान्तस्योहेनेति यथाप्रकृत्युभयोरपि विकल्पेन प्रवृत्तिरित्यर्थः । **ननु** एकस्मिन्बहुवचनस्य निर्देशमात्रार्थतया विवक्षितार्थत्वाभावात्कथमूहः अन्यथैकपाशकविकृतावप्यूहः स्यादित्यत आह—**तदपीति** । विवक्षितार्थत्वाभावेऽपि साधुत्वाय द्विवचनान्ततयोहः कर्तव्यः । एकपाशकविकृतौ तु प्रकृतिवदेकस्मिन्बहुवचनस्य साधुत्वोपपत्तेर्नोह इत्यर्थः । **नन्वेकस्मिन्निव** द्वयोरपि बहुवचनस्य साधुत्वं किं न स्यादित्यत आह—**प्रकृताविति** । प्रकृतौ छन्दस्येकस्मिन्बहुवचनस्य प्रयोगबलात् 'दृष्टानुविधिश्छन्दसी'ति सुब्व्यत्ययाश्रयणेन संभवति साधुत्वम् । तमेव प्राकृतं प्रयोगमादायैकपाशकविकृतावपि संभवति साधुत्वम् । द्वयोस्तु बहुवचनस्य प्रयोगादर्शनान्न व्यत्ययाश्रयणे किंचित्प्रमाणमस्तीत्यसाधुत्वमेवेत्यर्थः । **ननु** चोदकबलाद्द्वयोरपि बहुवचनस्य प्राप्त्या प्रत्यक्षप्रयोगाभावेऽपि चोदकापादितः प्रयोग एव व्यत्यये प्रमाणमित्यत आह—**तस्मादिति** । चोदको हि न मन्त्रं स्वरूपेण प्रापयति येन द्वयोरपि बहुवचनप्रयोगः शास्त्रीयः स्यात् किंत्वपूर्वीयप्रकाशकरूपेण । तत्र च यदि प्राकृतो मन्त्रस्तथाविधवैकृतपाशप्रकाशने समर्थस्तदा तद्रूपएव विकृतौ उपादेय इतरथा तत्समर्थरूपान्तरेणोपादेय इति स्वायत्ते वैकृतशब्दप्रयोगे सति बहुवचनान्तस्य द्वयोरसाधुत्वात् प्रत्युतापूर्वीयपाशप्रकाशकमन्त्रप्रापकचोदकस्य द्विवचनस्य प्रयोग एव तात्पर्याच्चोह एव युक्त इत्यर्थः । अत्रेदं चिन्त्यम्—पाशमन्त्रस्य पाशोन्मोचनकरणत्वेन द्वयोरपि पाशयोर्युगपन्मोचयितुमशक्यत्वेन याज्ञिकैरपि पर्यायेण प्रयोगस्योक्तत्वेन च पर्यायेण प्रयोज्यतया युगपत्पाशद्वयाभिधानस्यानपेक्षितत्वेन कथमूहोदाहरणत्वम् । नच क्रियमाणानुवादित्वमेवास्य न करणमन्त्रत्वमतस्तन्त्राभिधानसंभवादूहोदाहरणत्वं युक्तमिति वाच्यम् । तथासति द्वादशे क्रियमाणानुवादिनां समुच्चयप्रतिपादनेन प्रकृतौ द्वयोरपि समुच्चयप्रसङ्गान्नचेष्टापत्तिः । अतएव भाष्ये तयोः समुच्चयं वक्ष्यतीत्युक्तमिति वाच्यम् । प्रकृतौ उभयोर्निवेशोऽस्तीत्येतदभिप्रायं भाष्यं नत्वेकस्मिन्प्रयोगे उभयोः समुच्चय इत्यभिप्रायमिति टुप्टीकातन्त्ररत्नयोर्व्याख्यातत्वेन सूत्रकाराप्रतिपत्तेः यथायथमूहेनानूहेन च विकल्पेन प्रयोग इति मूलग्रन्थानुसारेण ग्रन्थकारस्यापि विकल्पस्यैव संमतत्वाच्च । उत्तराधिकरणे सूत्रकारश्चाप्याह—'विप्रतिपत्तौ विकल्पः स्या'दिति । अतएव च तन्त्ररत्ने द्वितीयचतुर्थपक्षयोरनुष्ठाने विशेषाभावेऽपि न्याय्यत्वाच्चतुर्थपक्ष एव स्वीकृत इत्युक्तं संगच्छते । अन्यथा द्वितीयपक्षे बहुवचनान्तस्याप्रवृत्त्या एकस्यैव मन्त्रस्य प्रयोगः । चतुर्थपक्षे तु द्वयोः समुच्चयेन प्रयोग इत्यनुष्ठानविशेषसंभवादयुक्तमिदं तन्त्ररत्नवाक्यं स्यात् । एतेन जपमन्त्रत्वाश्रयणेनाप्यूहोदाहरणत्वं निरस्तं, तथापि समु-

---

१ प्रवृत्तिः.

अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् ॥ ५ ॥

**विप्रतिपत्तौ विकल्पः स्यात्समत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १५ ॥ [प्रकरणविशेषाच्च ॥ १६ ॥ अर्थाभावात्तु नैवं स्यात्, गुणमात्रमितरत् ॥ १७ ॥ द्यावोस्तथेति चेत् ॥ १८ ॥ नोत्पत्तिशब्दत्वात् ॥ १९ ॥]**

उत्कृष्टव्यो न वा मन्त्रो बह्वर्थोऽसंगतत्वतः ॥ उत्कर्षो न विकल्प्योऽसौ गुणे त्वन्यायकल्पना ॥ ७ ॥

पशावग्नीषोमीये पाशमन्त्रावेकवचनबहुवचनान्तौ तत्र बहुवचनान्ते संदेहः किं प्रकृतावेवाग्नीषोमीये निविशते उत बहुपाशकेषु पशुगणेषूत्कृष्यते इति । एकस्मिन्बहुवचनस्यासमवेतार्थत्वादुत्कर्षे प्राप्तेऽभिधीयते—'प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः ॥ उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यावकल्प्यते ॥' पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्म कारकं प्रकृतावपि पाशकर्मकोन्मोचनाभिधानेन संभवान्नोत्कर्षं सहते । संख्यामात्रं त्वसंभवदपि गुणत्वान्न प्रातिपदिकं प्रधानभूतं कारकं वालमुत्क्रष्टुम् । अविवक्षिता चेह संख्या पाशकर्मकाभिधानमात्रेण व्यवहारसिद्धेरतो निर्देशमात्रार्थं बहुवचनं कर्ममात्रं त्वत्र विवक्षितमतोपि न संख्यावशेन मन्त्रोत्कर्षः । बहुवचनस्य त्वेकस्मिन्प्रयोगोऽवयवबहुत्वाभिप्रायेण छान्दसः ॥

---

बयापरिहाराज्जपमन्त्रत्वे दृष्टार्थत्वेनाविवक्षितार्थतया सर्वथोहाप्रसङ्गाच्चेति । तस्मादुदाहरणान्तरमन्वेष्टव्यमिति । सूत्रार्थस्तु—अन्याय अन्यायनिगदो बहुवचनान्त अविकारेण प्रयोज्यः एकस्मिन्बहुवचनस्य प्रतिघातदर्शनाद्द्वयोश्चैकस्माद्विशेषाभावादिति ॥

**विप्रतिपत्तौ०** ॥ १५ ॥ बहुवचनान्तमन्त्रस्यापि प्रकृतिनिवेशस्य पूर्वोक्तोहनिर्वाहकस्य चिन्तनात्संगतिः । **एकस्मिन्निति** । तथाच लिङ्गात्प्रकरणं बाधित्वा पूषानुमन्त्रणमन्त्रादिवदुत्कर्षः पाशमन्त्र इति समाख्याबलाद्दृष्टार्थत्वोपबृंहिताध्ययनविधेर्वा मन्त्रस्य बहुपाशकविकृतिषु सामान्यसंबन्ध इति भावः । **प्रकृतीति** । पाशानित्यनेन पदेन पाशकर्मत्वं बहुत्वं च प्रतीयते तत्र पाशकर्मत्वयोः समवायाल्लिङ्गानामेव परस्परविसंवादेऽनेकानुग्रहायानुत्कर्ष एव न्याय्य इत्यर्थः । स्यादेतदेवं यद्यत्र त्रयमपि परस्परासंबद्धं प्रतिपाद्येत । इहतु पाशानिति पदे बहुत्वसंख्याविशिष्टपाशरूपार्थस्य कर्मत्वं प्रतिपाद्यते । नच प्रकृतौ बहुत्वसंख्याविशिष्टः पाशोऽस्ति यस्य कर्मत्वं स्यात् । तस्मात्कथं समवेतार्थत्वमित्यत आह—**पाशेति** । नहि कर्मविभक्तिस्थले संख्याविशिष्टस्य कर्मत्वं किंतु संख्याप्रातिपदिकार्थश्च मिथोऽनन्वितौ कारकेणान्वीयेते । अतएव पश्वेकत्वाधिकरणे संख्यायाः समानप्रत्ययश्रुत्या समर्पितं कारकान्वयमादायैव क्रियाङ्गतोक्ता । तथाच पाशप्रातिपदिकार्थान्वितविभक्त्यर्थस्य कर्मत्वस्य समवायान्नोत्कर्ष इत्यर्थः । **संख्यामात्रं त्विति** । अत्र प्रधानभूतमित्येतत्कारकविशेषणं न प्रतिपादकविशेषणम् । एवंच गुणत्वादिति हेतुः कर्मानुत्कर्षकत्वे बोध्यः । प्रातिपदिकानुत्कर्षकत्वे तु प्रातिपदिकस्य मुख्यतया जघन्यत्वादिति हेतुरध्याहार्यः । यद्वा कारकापेक्षया प्रातिपदिकार्थस्य गुणत्वेऽपि संख्यापेक्षयाश्रयत्वादिकृतं प्राधान्यमस्तीत्येवं प्रातिपदिकस्यापि विशेषणं बोध्यम् । एवं बहुत्वसंख्याया विवक्षितत्वेऽपि न तद्बलादुत्कर्षस्तस्याः दुर्बलत्वादित्युक्तम् । इदानीमविवक्षितत्वादपि न तद्बलेन मन्त्रोत्कर्ष इत्याह—**अविवक्षिता चेति** । ननु प्रकृतावपि एकस्य पाशस्योन्मोचनीयैकत्वस्मृत्यभावेऽनुष्ठानासिद्धेः एकत्वे बहुवचनस्य लक्षणैवास्तु कथमविवक्षेत्यत आह—**पाशकर्मकेति** । प्रातिपदिकार्थस्मृतौ द्वित्वादिवदन्यापेक्षत्वाभावेन स्वारसिकत्वादेवैकत्वस्मृत्युपपत्तौ क्लेशेन साधनीयाया वचनलक्षणाया अयुक्तत्वादित्यर्थः । अविवक्षायामपि यथा विकृतावप्यूहस्तथा पूर्वाधिकरण एवोक्तम् । **नन्व**विवक्षायामपि श्रूयमाणस्य कथंचिदुपपत्तिर्वक्तव्येत्यत आह—**बहुवचनस्येति** । **अवयवेति** । अवयवावयविनोरत्यन्तभेदाभावेनावयवगतबहुत्वमेवावयविन्यारोप्यावयविगतमेव प्रतिपादयतीति छान्दसप्रयोगात्कल्प्यत इत्यर्थः । नचैतद्वाक्यबलेन पाशशब्दस्यावयवपरत्वमिति भ्रमः कर्तव्यः । बन्धनसाधनस्यैव मोचनीयतया स्मर्तव्यत्वेनावयवानां बन्धनसाधनत्वाभावेन मन्त्रेण स्मरणानपेक्षणात् । अतएव प्रोद्गातृणामित्यत्र बहुवचनानुसारेण प्रोद्गातृशब्दस्य प्रोद्गातृतदितरपरत्ववत्पाशशब्दस्यैव पाशतदितरपरत्वमस्त्विति निरस्तम् । उद्गातृतदितराणामेव चमसान्वयसंभवाल्लक्षणायामप्यजहल्लक्षणास्वीकारेण प्रकृत्यर्थस्यात्यन्तपरित्यागाभावाच्च कांस्यभोजिन्यायेन गुणभूतमपि बहुवचनमाश्रित्य प्रकृतेर्लक्षणायामपीह पाशतदितरयोर्बन्धनसाधनत्वाभावेनैकोन्मोचनसंबन्धाभावात्प्रकृते पाशतदितरलक्षणाऽसंभवेन कांस्यभोजिन्यायानवतारान्मुख्यप्रातिपदिकानुसारेण जघन्यबहुवचनमेव कथंचिन्नेयमिति वैषम्यात् । सूत्रार्थस्तु—अनुष्ठेयपाशस्यैकत्वान्मन्त्रस्य बहुत्वाभिधायित्वाच्च विप्रतिपत्तौ विरोधेसति न मन्त्र उत्क्रष्टव्यः किंत्वेकवचनान्तेन सहास्य विकल्पः स्यादुभयोरपि पाशविशिष्टकर्मप्रतिपादकत्वेन समत्वात् । गुणे तु बहुवचनेऽन्याय्यकत्वकल्पना । ततश्चकदेशबहुवचनाश्रयेण नोत्कर्ष इति ॥

दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं संनह्येति मन्त्रस्यानूहाधिकरणम् ॥ ६ ॥

## अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥

**पत्नीमिति द्विपत्न्यादावूह्यं नो चोद्यतेऽर्थतः ॥ नोपदेशस्य सामान्यादतिदेशाप्रवृत्तितः ॥ ८ ॥**

दर्शपूर्णमासयोः 'पत्नीं संनह्ये'ति मन्त्रः किमेकद्विबहुपत्नीकेषु प्रयोगेषु सर्वेष्वविकारेण प्रयोज्य उत द्विबहुपत्नीकप्रयोगयोर्द्विवचनबहुवचनाभ्यामूहितव्य इति संशयः । तत्रैकपत्नीके समवेताभिधायित्वसंभवान्नैकवचनमन्याय्यनिगदं तस्माद्द्विबहुत्वयोरूहः । नैतदेवम् । यद्येकपत्नीकप्रयोगाभिप्रायमाम्नातं स्यात्तत एकवचनस्य समवेतसंख्याभिधानरूपस्य संप्रतिपन्नरूपत्वात्समवेतसंख्याभिधानमिह विवक्षितमेकवचनरूपं त्वविवक्षितमिति कृत्वा द्विपत्नीके बहुपत्नीके च प्रयोगे समवेतसंख्याभिधानार्थमूह्येत । सर्वप्रयोगाणां तु समानविधानत्वात्सर्वाभिप्रायेणेदमाम्नातं द्वयोर्बह्वीषु चैकवचनस्य संप्रतिपत्त्यभावान्न समवेतसंख्याभिधानरूपेण प्रयुक्तमिति शक्यमध्यवसातुम् । निर्देशमात्रार्थत्वेकवचनमदृष्टार्थं चैकत्वमभिधातुं प्रयुक्तमित्यापद्यते । ततश्च द्विबहुपत्नीके प्रयोग एकवचनमेव प्रयोक्तव्यमित्यविकारः । नचैकवचनानुरोधेनैकपत्नीप्रयोगे मन्त्रो नान्यत्रेति वक्तव्यं पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः संख्यायाश्चाविवक्षितत्वेनानेकपत्नीकात्प्रयोगान्मन्त्रं व्यावर्तयितुमसमर्थत्वात् । तस्मात्सर्वत्राविकारेण प्रयोगः ॥

---

**अपूर्वे त्वविकारो० ॥२०॥** ननु वचनप्राधान्यं एकद्विबहुपत्नीकप्रयोगाणां मिथः प्रकृतिविकारभावं चाश्रित्य पूर्वपक्षो वक्तव्यः अन्यथा द्विबहुपत्नीकप्रयोगयोरूहासिद्धेः । सचातिमन्दः । प्रातिपदिकप्राधान्यस्य पाशाधिकरणे स्थितत्वात्प्रयोगाणां च व्रीहियवप्रयोगवत्समानविध्यस्यैव न्याय्यत्वादित्याशङ्क्य पूर्वपक्षमुपपादयति—**तत्रेति** । नह्यत्रैकवचनस्य प्राधान्यमाश्रीयते न वा प्रयोगाणां प्रकृतिविकृतिभावः किंतु एकद्विबहुपत्नीकप्रयोगेषु सर्वेष्वपि पत्नीप्रातिपदिकं समवेतार्थत्वात्प्रवर्तते । वचनं त्वेकपत्नीकप्रयोगमात्र इत्याश्रीयते । तत्र च प्रातिपदिकस्य द्विबहुपत्नीकप्रयोगयोरपि समवेतत्वान्न यवप्रयोगे सर्वथा असमवेतार्थकस्य 'व्रीहीणां मेध सुमनस्यमान'इति मन्त्रस्येव निवृत्तिः । न वा प्रातिपदिकस्य समवेतार्थकत्वमाश्रित्य पाशवद्वचनमविवक्षितं कृत्वा एकवचनान्तस्यैव प्रयोगसंभवः । एकपत्नीकप्रयोगे वचनस्य समवेतत्वेन पाशबहुत्ववत्सर्वथाऽसमवेतत्वाभावात् । अनेनैव वैषम्येणोत्थानात्संगतिरपि । तत्र यद्यपि प्रयोगाणां सामानविध्यान्नोहसंभवस्तथापि वचनानुसारेण प्रातिपदिकनिवृत्त्ययोगादेकपत्नीकप्रयोगेऽर्थसाधोरेकवचनस्येतरत्र शब्दसाधुत्वार्थत्वासंभवाच्च पठितस्यैकवचनस्य निवृत्तौ समवेतार्थस्यापि प्रातिपदिकस्य केवलस्य प्रयोगासंभवात्तदर्थं द्विवचनबहुवचने आक्षिप्य प्रयोक्तव्यो मन्त्र इति द्विवचनबहुवचनाक्षेप एवोहो विवक्षित इत्यर्थः । अत्र प्रातिपदिकं त्रिष्वपि प्रवर्तते वचनं त्वेकपत्नीकप्रयोग इत्यर्धजरतीयाश्रयणमयुक्तम् । प्रकृतिप्रत्यययोः सह प्रवृत्तिनियमात् । तस्मादिह द्विवचनबहुवचनप्रयोगमिच्छता प्रातिपदिकं वचनं चोभयमप्येकपत्नीकप्रयोगाभिप्रायेणाम्नातमिति तस्य प्रकृतित्वमितरयोस्तद्विकृतित्वं चाश्रित्य मुख्य एवोहो वक्तव्यः । सच न संभवति प्रयोगाणां सामानविध्यादिति सिद्धान्तमाह—**यदीति** । एकपत्नीकप्रयोग एवायं मन्त्रः शेषो यथास्यादित्यभिप्रायेण यद्याम्नातं स्यात्तदा तस्यैव धर्मग्राहित्वात्तत्र चैकवचनरूपाविवक्षया एकवचनस्य यत्समवेतसंख्याभिधानरूपं तस्यैव विवक्षितत्वाद्द्वित्वबहुत्वयोरपि प्रकाशनायोहः स्याद्यथालिङ्गविशेषनिर्देशादित्यत्र पूर्वपक्षे ऐन्द्रप्रदानानामेव धर्मग्राहित्वेनानैन्द्रेषु इन्द्रपीतादेरूहस्तद्वदित्यर्थः । **सर्वेति** । तथाचैकपत्नीकप्रयोगमात्राभिप्रायेणाम्नानाभावात्तस्य प्रकृतित्वाभावे सर्वार्थतयाम्नातस्य यत्र सामर्थ्यं तत्र प्रयोग इतरत्र निवृत्तिरिति लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वादित्यत्र निर्णीतत्वेन सामानविध्यपक्षे मेष्यामध्रिगुप्रैषस्येव द्विबहुपत्नीकप्रयोगे निवृत्तिरेव स्यान्नतूह इत्यर्थः । **ननु तर्हि** निवृत्तेरेव युक्तत्वात्कथमविकारेण प्रयोग इत्यत आह—**द्वयोरिति** । भवेन्निवृत्तिरपि यद्येकवचनं समवेतसंख्याभिधानार्थं विवक्षितं स्यात्तत्तु न विवक्षितं, द्वयोर्बहुषु चैकवचनस्यासमवायादित्यर्थः । किमर्थं तर्ह्येकवचनप्रयोगोऽत आह—**निर्देशेति** । प्रयोगसाधुत्वार्थमित्यर्थः । **ननु** साधुत्वार्थत्वे वचनान्तरं किं न स्यादित्यत आह—**अदृष्टेति** । **एकत्वमिति** । जात्यभिप्रायेणेति शेषः । **नन्वेकवचनं** विवक्षितं प्रातिपदिकमेव त्वविवक्षितमिति वैपरीत्यमाश्रित्य निवृत्तिरेव किं न स्यादित्याशङ्क्य निराकरोति—**नचेति** । **पाशवदिति** । तत्रैव प्रातिपदिकप्राबल्यं प्रतिपादितमिति भावः । **संख्याया** असमर्थत्वादित्यन्वयः । तत्र हेतुः **अविवक्षितत्वेनेति** । अविवक्षा च पाशबहुत्ववदेवेति बोध्यम् । **सूत्रार्थस्तु**—अपूर्वे प्रकृतौ पत्नीमित्यस्याविकारः अप्रदेशात्समानविध्येनानतिदेशात्प्रतीयेतेति ॥

द्विपत्नीकविकृतियागेपि पत्नीं संनह्येति मन्त्रस्यानूहाधिकरणम् ॥ ७ ॥

## विकृतौ चापि तद्वचनात् ॥ २१ ॥

**ऊह्यो नो वैष विकृतावूह्योऽपाठेन पाशवत् ॥ नादृष्टच्छान्दसत्वाभ्यां पाशे छान्दसता न हि ॥ ९ ॥**

विकृतौ पत्नीशब्दः किं द्विपत्नीकबहुपत्नीकप्रयोगयोरूहितव्यो नेति संशये प्रकृतौ द्वयोर्बह्वीषु च पत्नीष्वेकवचनाम्नानसामर्थ्यात्तत्प्रयुक्तं, विकृतौ त्वाम्नानाभावात् । द्विबहुत्वयोरेकवचनमसाधुत्वान्न प्रयोक्तव्यं तस्मादूहः । नैवम् । निर्देशमात्रार्थमदृष्टार्थं चैकवचनं न समवेतसंख्याभिधानार्थमित्युक्तं, अतो विकृतावपि तथैव कर्तव्यमित्यनूहः । नचासाधुत्वं, द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वात्| पाशे तु द्वयोर्बहुवचचप्रयोगस्य छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः ॥

सवनीयपशूनामग्नीषोमीयसमानविधानत्वे प्रास्मै अग्निमितिमन्त्रेऽनूहाधिकरणम् ॥ ८ ॥

## अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥

**अग्नीषोमीयसवनस्थास्तुल्यविधयो यदि ॥ प्रास्मा इति तदा मन्त्रे पत्नीन्यायेन नोहनम् ॥ १० ॥**

तृतीयेऽध्याये संस्थापशवः समानविधाना इति पूर्वपक्षे (समानविधानत्वं यदुक्तं तस्येदं प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते । यदा समानविधानास्तदोक्थ्यषोडश्यादिद्विबहुपशुकेपि सवनीयगणे प्रवर्तमानः प्रास्मा इत्यध्रिगुप्रैषगतैकवचनान्तः शब्दः पत्नीशब्दवदेव नोहितव्यः विकारपक्षे तूहितव्यः । ननु समानविधानत्वे यथा प्रास्मा इति पुंलिङ्गनिर्देशात्सारस्वत्यामप्रवृत्तिस्तथैकवचननिर्देशाद्द्विबहुष्वप्रवृत्तिः स्यात् । नैवम् । पुंलिङ्गस्य मेष्यामत्यन्तासंभवात् युक्ता निवृत्तिरेकवचनं तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि संभवात् नात्यन्तानुपपन्नं पाशानिति बहुवचनमिवावयवाभिप्रायेणैवोपपन्नमिति नेतव्यम् । अपिच 'जात्याख्यायामेकस्मिन्बहुवचनं'बहुषु चैकवचनं स्मर्यते अतोऽपि न वचनयोरनुपपत्तिः लिङ्गं त्वन्यलिङ्गेऽत्यन्तानुपपन्नमिति वैषम्यम् ॥

---

**विकृतौ चापि तद्वचनात् ॥ २१ ॥ प्रयुक्तमिति** । तथाच प्रयोगबलात्प्रकृतावेव साधुत्वं नतु विकृतावित्यर्थः । अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरपि सूचिता । **निर्देशेति** । यद्यपि समवेतसंख्याभिधायकत्वाभावेपि एकवचनस्य साधुत्वार्थमेव द्वयोर्बहुषु चोहः, यथा पाशानिति बहुवचनस्य द्वयोः पाशयोः साधुत्वार्थमूहस्तद्वदित्येव पूर्वपक्षिणोऽभिमतं तत्र च निर्देशमात्रार्थमित्यादिकं न दूषणं किंतु नचासाधुत्वं द्वित्वबहुत्वयोरेकवचनस्य छान्दसत्वादिति वक्ष्यमाणमेव दूषणं, तथाप्यूहाभावे द्वित्वबहुत्वयोरेकवचनस्य कथमुपपत्तिरित्याशङ्क्य प्रकृतिवदित्युपपादनार्थोऽयं ग्रन्थ इति द्रष्टव्यम् । **छान्दसत्वादिति** । एकवचनस्य द्वयोर्बहुषु चाम्नानबलात्कल्प्यमानं छान्दसत्वेन साधुत्वमविशेषात्प्रकृतिविकृतिसाधारण्येन कल्प्यते न प्रकृतिमात्रविषयमिति विकृतावप्येकवचनस्य साधुत्वोपपत्तेर्न तदर्थमूह इत्यर्थः । पाशे तर्हि कथं साधुत्वार्थमूह इत्यत आह—**पाशे त्विति** । बहुवचनस्यैकस्मिन्प्रयोगबलात्प्रकृताविव विकृतावप्येकपाशे साधुत्वेनैकवचनान्ततयोहाभावेऽपि द्वयोर्बहुवचनस्य छान्दसप्रयोगादर्शनेनासाधुत्वात्साधुत्वार्थं द्विवचनान्ततयोह एवेति पत्नीवैषम्यं पाशस्येत्यर्थः । सूत्रार्थस्तु—विकृतावप्यविकारस्तद्वचनात्पत्नीमात्रवचनेनैकवचनस्याविवक्षितत्वादिति ॥

**अध्रिगुः सवनीयेषु० ॥ २२ ॥** 'आग्नेयमग्निष्टोम आलभेत ऐन्द्राग्नमुक्थ्ये द्वितीयं ऐन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीं चतुर्थीमतिरात्र'इति श्रुतेषु सवनीयपशुषु संस्थानां पशूनां च सामानविध्यपक्षे प्रास्मा इति अध्रिगुप्रैषगत एकवचनान्त ऊहितव्यो नेति संदेहः पूर्वपक्षः सिद्धान्तश्च पत्नीशब्दवदेव द्रष्टव्यौ । **ननु तर्हि** विशेषाभावात्किमर्थमिदमधिकरणमित्यत आह—**तृतीय इति** । **पूर्वपक्ष इति** । अधिकरणद्वय इति शेषः । एवंचेदमधिकरणद्वयपूर्वपक्षयोः समुच्चित्य प्रयोजनकथनमिति ध्येयम् । **उक्थ्येति** । अनेकपशुकेषु उक्थ्यादिषु यः सवनीयपशुगणस्तत्रेत्यर्थः । **नोहितव्य इति** । किंत्वविकारेण योज्य इत्यर्थः । **विकारेति** । उक्थ्यादिसंस्थानामग्निष्टोमविकारत्वं सवनीयानां चाग्नीषोमीयविकारत्वमिति पक्ष इत्यर्थः । **ननु** मेष्यामिव निवृत्तेर्युक्तत्वात्कथमविकारेण प्रवृत्तिरिति शङ्कते—**नन्विति** । अत्र लिङ्गं प्रातिपदिकार्थः संख्या तु विभक्त्यर्थ इति वैषम्ये वक्तुं शक्ये विभक्तिविकाराणामाबादीनां च वाच्यं लिङ्गमिति पक्षमभ्युपेत्यापि परिहारमाह—**नैवमिति** । **अपिचेति** । जातिव्यक्त्योस्तादात्म्येनैकस्मिन् जात्याश्रयव्यक्तिगतं बहुत्वं जातिद्वारा व्यक्तावारोप्य बहुवचनं बहुषु चैकवचनं जात्यभिप्रायेणेत्याशयः । सूत्रे तद्वत्पत्नीमितिवत् ॥

नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

## प्रतिनिधौ चाविकारात् ॥ २३ ॥ [अनाम्नानादशब्दत्वमभावाच्चेतरस्य ॥ २४ ॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २५ ॥ उक्तं च तत्त्वमस्य ॥२६॥]

**व्रीहिप्रतिनिधावूहो व्रीहीणामिति नास्ति वा ॥ अर्थादूहो न सादृश्यादंशानां साधनत्वतः ॥ ११ ॥**

श्रुतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु 'व्रीहीणां मेध सुमनस्यमान' इति व्रीहिशब्दः किमूहितव्यो नेति संशये नीवारादिषु व्रीहिपदस्यासामर्थ्यादूहप्राप्तावुच्यते । यदि नीवारा व्रीहिवत्साधनं भवेयुस्ततस्तत्प्रकाशनार्थं नीवारपदं प्रक्षिप्येत नत्वेवं किं तर्हि नीवारादिगता ये व्रीह्यंशास्तेऽत्र साधनमित्युक्तम् । तेच व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमित्यविकारेण प्रयोगः ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्राणामनूहाधिकरणम् ॥ १० ॥

## संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥ [लिङ्गदर्शनाच्च ॥ २८ ॥]

**द्विपश्वोश्चक्षुराद्यूहो न वोहः पशुभेदतः ॥ तेजोमात्रस्य सूर्यादावेकीभावादनूहनम् ॥ १२ ॥**

ज्योतिष्टोमेऽग्नीषोमीये पशावध्रिगुः प्रैषः तत्र संसर्गिणोऽर्थाश्चक्षुरादयः 'सूर्यं चक्षुर्गमयता'-दित्यादयस्ते द्विबहुपश्वादिषु पशुगणेषु किं द्विवचनबहुवचनाभ्यामूहितव्या नेति संशये संसर्गिणां तेजः प्रभृतीनां स्वतः संख्याव्यवहाराभावादौपाधिको भेदव्यवहारः । तदिह चक्षुःशब्दस्य तेजोवचनत्वादसति स्वतःसंख्यावत्वेऽधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात्पशूपाधिकमेकवचनं अस्यशब्देन च पशोरुपात्तत्वात्तदुपाधिकमेव विज्ञायते अतः पशुभेदेन पशुसंख्यावशे नोह इति

---

**प्रतिनिधौ च०** ॥ २३ ॥ प्राप्ता इत्येकवचनस्याविवक्षितत्वादनूहेऽपि व्रीहिशब्दस्य विवक्षितार्थत्वादूह इत्युत्थितेः संगतिः । **नीवारादिष्विति** । व्रीह्यपचारे प्रक्रान्तप्रयोगस्य साधनापेक्षायां नीवारादयः सदृशतया साधनत्वेनोपादीयन्ते, ततो नीवाराणां व्रीहिकार्यापन्नत्वाद्व्रीहिमन्त्रः प्राप्नुवन्व्रीहिपदयुक्ततया नीवारप्रकाशनासामर्थ्यादूह्य इति पूर्वपक्षवादी मन्यत इत्यर्थः । एवंचात्र मन्त्रग्रहणमुपलक्षणमवहननादिसंस्काराणामप्युक्तप्रकारेणोहसंभवादिति ध्येयम् । **उक्तमिति** । षष्ठे इति शेषः । ततश्च व्रीह्यवयवेषु नीवारगतेषूपादीयमानेषु नीवारोपादानस्य नान्तरीयकतयोपपन्नत्वान्न नीवाराणां व्रीहिकार्यापन्नत्वं येनोहः स्यादिति मन्दोऽयं पूर्वपक्ष इत्यर्थः । **नन्वेवमप्यव्रीहिषु** नीवारगतावयवेषु व्रीहिशब्दस्य **कथं** प्रयोग इत्यत आह—**तेचेति** । यद्यपि 'व्रीहिभिर्यजेते'ति व्रीहित्वजातिरेव साधनत्वेन चोद्यते तथापि तस्याः साक्षात्साधनत्वाभावात्तत्परिच्छेद्यद्रव्यतदवयवद्वारा साधनत्वं वाच्यमित्यवयवानां साधनत्वे प्रयोगसमये मन्त्रेण प्रयोगसमवाय्यर्थस्यैव स्मर्तव्यतया व्रीहीणां मेधेत्यत्र व्रीहिपदेन व्रीहित्वजात्यवच्छेदनसमर्थद्रव्यावयवा एव स्मर्तव्या इति नीवारगतानामपि तादृशत्वान्नास्त्यूह इत्यर्थः । सूत्रार्थस्तु—प्रतिनिधौ चाविकारमाश्रित्यैव मन्त्रः प्रयोक्तव्य इति ॥

**संसर्गिषु चार्थस्य०** ॥ २७ ॥ नीवारगतावयवेषु व्रीहिशब्दस्येवैकवचनान्तचक्षुःशब्दस्यानेकपशुषु सामर्थ्याभावादूह इत्युत्थितेः संगतिः । **संसर्गिण इति** । ये संयुक्ता एकीभवन्ति न घटादिवत्संयुक्ता अपि पृथगवतिष्ठन्ते ते संसर्गिणः यथाऽऽज्यतैलजलतेजःप्रभृतय इति बोध्यम् । **ननु** संसर्गिणां स्वतः संख्याव्यवहारायोग्यतया संख्यायाः प्रकृतावेवाविवक्षिततया कथमूह इत्याशङ्क्य संसर्गिणां स्वतः संख्याव्यवहाराभावेऽप्यौपाधिकत्वं वाच्यम् । तथाच तादृशसंख्यामादायापि विवक्षितत्वसंभवे सर्वथाऽविवक्षितत्वस्याभावाद्युक्त ऊह इत्याशयेनौपाधिकसंख्यामेवोपपादयन् ऊहं दर्शयति—**संसर्गिणामिति** । **भेदेति** । एकत्वादिव्यवहार इत्यर्थः । **नन्वौ**पाधिकत्वेऽप्युपाध्यन्तराभावाच्चक्षुःशब्दवाच्यतेजोधिष्ठानरूपगोलकोपाधिकत्वं वाच्यम् । तथाच गोलकयोर्द्वित्वादेकवचनमविवक्षितमिति कथमूहः । नच तथाप्येकवचनस्य द्वयोः प्रयोगवशात्साधुत्वेऽप्यधिष्ठानबहुत्वे साधुत्वाभावात्तदर्थमूह आवश्यक इति वाच्यम् । तर्हि द्वयोरपि पश्वोर्गोलकानां चतुष्टयेन बहुवचनान्ततयोहापत्त्या पूर्वपक्ष्यभिमतस्य द्वयोः पश्वोर्द्विवचनान्ततयोहस्यासिद्धत्वादित्यत आह—**अधिष्ठानेति** । यत अधिष्ठानापेक्षत्वे द्विवचनप्रसङ्गादेकवचनस्याविवक्षितत्वप्रसङ्गः अतो गोलकाधीनत्वं परित्यज्य पशूपाधिकमेवैकत्वं स्वीक्रियत इत्यर्थः । किंच 'उदीचीनामस्य पदो निधत्ता'दिति संनिहितत्वात्पशोस्तदुपाधिकमेवैकत्वं युक्तमित्याशयेनाह—**अस्यशब्देनेति** । **अधिष्ठानादिति** । अधिष्ठानान्निर्गते तेजसि स्वारसिकैकत्वसंभवे औपाधिकं न ग्राह्यमित्यर्थः । यद्यपि निर्गमननिमित्तकमप्येकत्वं देशाद्युपाधिकमेव तथापि निर्गमननिमित्तस्य भेदतिरोधायकत्वात्स्वारसिकत्वं,

प्राप्तेऽभिधीयते। अधिष्ठानान्निर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं न त्वौपाधिकम्। नचाधिष्ठानाभिप्रायश्चक्षुःशब्दस्तयोः सूर्यगमनासंभवाद्द्वित्वाच्च तयोरेकवचनानुपपत्तेः तस्मान्निर्गततेजोभिप्रायम्। बहूनामपि पशूनां सन्निहितानि निर्गतानि चाक्षुषाणि तेजांस्यनेकप्रदीपप्रभावदेकीभवन्तीति तस्मादनूहः॥

द्विपशुयागेऽध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम्॥ ११॥

**एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात्॥२९॥ [अविकारो वा बहूनामेककर्मवत्॥ ३०॥ सकृत्त्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेन विवृद्धावभिधानं स्यात्॥ ३१॥]**

**एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः॥ आद्यो मैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः॥ १३॥**

'तत्रैवैकधास्य त्वचमाच्छ्यतादि'तिश्रुतं तत्रैकधाशब्दः पशुगणेषु किमविकारेण प्रयोक्तव्य उताभ्यासेनापि विकर्तव्य इति संशयः। तदर्थं विचार्यते किं प्रकृतौ येन प्रकारेणाभिधानं कृतं तेनैव प्रकारेण विकृतावपि कर्तव्यमुतान्यथापि संभवतीति। तत्र यद्यपि प्रकृतावेकत्वात्त्वचः साहित्याभिधानं न संभवतीत्येकप्रयत्नसाध्यत्वमेकधाशब्देनोक्तं नावयवश आच्छ्यतात्किंतु एकधा एकेन प्रयत्नेनेति, तथापि विकृतावार्षचोदकानुग्रहाय बह्वीनां त्वचां देशतः कालतो वा साहित्यमेकधा गाः पालयतीतिवदभिदधदविकारेणैव त्वगाच्छेदनं प्रकाशयिष्यतीति प्राप्ते ब्रूमः—'प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः॥ तादृगेवातिदेशेऽपि स हि कार्यपरो यतः॥' कार्यप्रधानो ह्यतिदेशो न शब्दस्वरूपपरः तेन प्राकृतमेकप्रयत्नसाध्यत्वं प्रत्येकं त्वचामभिधातुमेकधैकधेत्येवमभ्यसितव्यम्॥

---

पशूपाधिकं तु भेदव्यवहारतिरोधायकं न भवतीत्यौपाधिकमिति भावः। **ननु** यदि चक्षुःशब्दस्य तेजःपरत्वं स्यात् तदा निर्गतस्य तस्य स्वारसिकमेकत्वं स्यात् तदेव त्वसिद्धं, लोके चक्षुःशब्दस्य गोलकपरत्वेनैव व्यवहारादित्यत आह—**नचेति**। औपचारिको लोके व्यवहार इति भावः। **सूर्येति**। चक्षूरूपस्य तेजसः सूर्यप्रकृतिकत्वात्तद्गमनं संभवतीति भावः। **ननु** प्रकृतौ गोलकयोः संनिहितत्वेन संनिहितप्रदीपद्वयप्रभावन्निर्गतयोश्चाक्षुषयोस्तेजसोरेकीभवनसंभवेऽपि विकृतौ बहूनां पशूनां चाक्षुषाणि तेजांसि कथमेकीभवेयुः। नच संज्ञपनोत्तरकालं तत्संभवः। अध्रिगुप्रैषस्य ततः पूर्वकालत्वादित्यत आह—**बहूनामिति**। संज्ञपनदेशंप्रति नयनसमये प्रयुज्यमानत्वादध्रिगुवचनस्य तद्दशायां पशूनां संनिहितत्वेन तच्चाक्षुषतेजसामपि संनिधानान्निर्गतानामेकीभवनं संभवतीत्यर्थः। सूत्रार्थस्तु—संसर्गिषु चानूहः अर्थस्य तेजःप्रभृतेरस्थितपरिमाणत्वात् नियतपरिमाणत्वाभावादत्र परिमाणशब्दः संख्यापरस्तथाच संख्यानियमः संसर्गिषु नास्तीति निर्गतानां बहूनामप्येकत्वसंभवादनूह इति॥

**एकधेत्येकसंयोगात्०॥ २९॥** संसर्गिष्विवाविकार इत्युत्थितेः संगतिः। **किमिति**। प्रकृतौ येन शब्देन योऽर्थः प्रतिपादितस्तेन शब्देन स एवार्थो विकृतावभिधेय उतार्थान्तरमप्यभिधातुं शक्यत इत्यर्थः। **ननु** अर्थान्तराभिधानमाश्रित्य किमित्यविकारः प्रतिपाद्यते प्रकृतिविकृत्योरुभयोरपि साहित्यरूपार्थाभिधानमेवाश्रित्याविकारः किमिति न प्रतिपाद्यत इत्याशङ्क्यार्थभेदस्यावश्यकत्वं दर्शयन्पूर्वपक्षमुपपादयति—**तत्रेति**। **आर्षेति**। आर्षपठितशब्दस्य प्रापको यश्चोदकस्तदनुग्रहायेत्यर्थः। **साहित्यमिति**। नन्वेकधाशब्दस्यैकप्रयत्नसाध्यत्वे साहित्ये च शक्तिभेदाद्वैकृतशब्दस्य वृत्त्यन्तरेणार्थप्रतिपादकत्वाभावच्छक्त्यन्तरेणाप्यर्थप्रतिपादकत्वाभावादिदमयुक्तमितिचेन्नैवम्। शक्तिभेदानङ्गीकारात्, किंतु ऐकध्यमेवैकप्रकारत्वलक्षणमेकधाशब्दार्थः। तदेव तु प्रकृतावेकप्रयत्नसाध्यत्वरूपं विकृतौ तु साहित्यरूपमित्यङ्गीक्रियत इति न दोषः। **प्राकृतमेकेति**। नहि प्रकृतावैकध्यमात्रे तात्पर्यं येन विकृतौ साहित्यरूपं तद्गृह्येत किंत्वेकप्रयत्नसाध्यत्वरूप ऐकध्यविशेष इति तत्प्रतिपादनार्थमूह आवश्यकः। अन्यथाऽप्राकृतकार्यत्वापत्तिरिति भावः। **ननूहे**ऽपि द्विधा त्रिधेत्येवं प्रकृतिमात्रोहसंभवात्कृत्स्नपदाभ्यासरूप ऊहः किमर्थं स्वीक्रियत इत्यत आह—**प्रत्येकमिति**। द्विधा त्रिधेत्यादिरूपेणोहे सति प्रतिपशु एकप्रयत्नसाध्यत्वं न लभ्यत इति तदर्थमभ्यास एव स्वीकर्तव्य इत्यर्थः। सूत्रार्थस्तु—एकधेत्यभ्यासेनाभिधानं स्यादेकसंयोगादभ्यासं विना सर्वविषयत्वासंभवादिति॥

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १२ ॥

**मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्, तस्य चान्यार्थनिगदत्वात्, सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥ [अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् ॥ ३३ ॥ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात्तस्यां द्वितीयशब्दः स्यात् ॥ ३४ ॥ देवता तु तदाशीष्ट्वात्संप्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥ उत्सर्गाच्च भक्त्या तस्मिन्पतित्वं स्यात् ॥ ३६ ॥ उत्कृष्येतैकसंयुक्तो द्विदेवते संभवात् ॥ ३७ ॥ एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥३८॥ ससंर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३९ ॥ एकत्वेऽपि गुणानपायात् ॥४०॥]**

अविकारो विकारो वा स्यान्मेधपतिशब्दयोः ॥ विकारे स्वामिदेवार्थ एकार्थो वान्तिमेऽपि किम् ॥ १४ ॥
स्वाम्यर्थो देवतार्थो वा स्यादन्यार्थ्यस्वतोऽग्रिमः ॥ अर्थभेदाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ॥ १५ ॥
मन्त्रैक्यादर्थ एकोऽत्र स्वाम्यस्मिन्नाययाद्विता ॥ देवार्थाशीर्देव एकोऽधिष्ठाने द्वे द्विधेरणम् ॥ १६ ॥

तत्रैव श्रुतम् 'उपनयत मेध्यां दुर आशासाना मेधपतिभ्यां मेध'मिति । केषांचित्तु मेधपतये मेधमिति तत्र चतुर्धा संदेहः किमुभयोर्विकृतिष्वविकारः उत द्विवचनस्य देवतापर ऊहः एकवचनस्य तु यजमानपर अथवोभयोर्यजमानपर एव अथवोभयोर्देवतापर ऊह इति । तत्र मेधपतिशब्देन मेधस्य पशोः स्वामी यजमानो देवताभूतौ चाग्नीषोमौ उभयेऽप्यभिधीयन्ते तेन द्विवचनमेकवचनं च उभयमप्यन्यार्थ्यनिगदं तस्मादनूह इति प्रथमः पक्षः । संभवत्यर्थवत्त्वे नान्यार्थ्यनिगदता युक्ता तस्माद्विवचनान्तो देवतावचनस्तेनासौ देवताविवृद्धावूहितव्यः । एकवचनान्तस्तु स्वामिवचनः स्वामिविवृद्धाविति द्वितीयः । एकोयं मन्त्रः शाखाभेदेन किंचिद्भिन्नः समाम्नातस्तत्र यजमानपरत्वे मेधपतये यो मेधस्तमाशासाना इति संबन्धः । देवतापरत्वे मेधपतिभ्यामाशासाना इति । नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं संभवति तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधान तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वादेकवचनमनुपपन्नं स्यात् । यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्प्यते तस्मात्स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीयः । सिद्धान्तस्तु मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय संबध्यते । नच यजमानायासावाशास्यते तस्यैव हि सः देवताभ्यां त्वाशास्यते तस्माद्देवतावचनः । तर्हि कथमग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं तेन देवतासना तयोरेकत्वात्तदभिप्रायमग्नी-

---

**मेधपतित्वं०** ॥ ३२ ॥ एकधेत्यादिवत्समवेतार्थत्वाभावादनूह इत्युत्थितेः संगतिः । **तत्रेति** । पशुर्यजमानस्य स्वमिति मेधशब्दार्थस्य पशोर्यजमानः पतिस्तेन च देवतायै संकल्प्यमानत्वाद्देवतापि तस्य पतिरिति एकेन मेधपतित्वरूपेण सकृदुच्चरितस्यापि मेधपतिशब्दस्य त्रितयपरत्वसंभवात्त्रिष्वेकवचनं द्विवचनं च प्रयोगसाधुत्वार्थमेवेति विकृतावपि यत्रैकदेवत्यत्वं तत्र यजमानेन सह द्वित्वे द्वयोरेकवचनस्य प्रयोगादर्शनेन साधुत्वार्थमेकवचनस्योहेऽपि यत्र द्विदेवत्यत्वं बहुदेवत्यत्वं वा तत्र सर्वत्रापि मेधपतिशब्दार्थबहुत्वात्प्रकृतिवदेव साधुत्वोपपत्तेरेकवचनद्विवचनयोरुभयोरप्यनूह इत्यर्थः । **एक इति** । प्रत्यभिज्ञादेरिति भावः । **यजमानेति** । यजमानपरत्वे पशोर्यजमानार्थतया सिद्धस्य तादर्थ्येनाशासनासंभवान्मेधपतये यो मेधः सिद्धस्तमाशासाना मेध्या ऋत्विजो दुरो यज्ञस्य द्वारं चात्वालोत्करमध्यदेशमुपनयतेति संबन्धः स्यात्, देवतापरत्वे तु तादर्थ्येनाशासनं संभवति मेधं मेधपतिभ्यामाशासाना उपनयतेति संवन्ध इति वचनव्यक्तिभेद इत्यर्थः । नच विनिगमकाभाव इत्याह—**तत्रेति** । **पत्नीति** । इदं चापाततः द्विबहुपत्नीकप्रयोगे पत्न्यभिप्रायेणापि द्विवचनानुपपत्तेरिति बोध्यम् । **अपेक्षितेति** । तथाच देवतापरत्व एव वाक्यं परिपूर्णार्थं स्यादित्यर्थः । यजमानपरत्वे तु यजमानार्थतया सिद्धस्य पशोस्तदर्थतया आशासनासंभवान्मेधपतये यो मेधस्तदन्यार्थमाशासाना इत्येवार्थो वाच्यस्तत्र च किमर्थमाशासाना इति साकाङ्क्षत्वाद्वाक्यमपरिपूर्णं स्यादित्याशयेनाह—**नचेति** । ननु मेधपतिभ्यामाशासाना इत्यन्वयेऽपि कस्य मेधमिति साकाङ्क्षत्वादपरिपूर्णत्वं तुल्यमित्यत आह—**तस्यैवेति** । यजमानार्थकर्मणि परकीयस्य देवतार्थमाशासनानुपपत्तेस्त-

---

१ यज्ञसत्रंनिधपदार्थानानयत. २ निष्कासितरससोमपातस्थानमुत्करम्.

षोमौ देवते इति द्विवचनं त्वधिष्ठानापेक्षं तेन द्विवचनमधिष्ठानसंख्यावशादेकवचनं च देवतासंख्यावशाद्विकृतिषूहितव्यमिति ॥

बहुदेवत्ये पशावप्येकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥ १३ ॥

**नियमो वा बहुदेवते विकारः स्यात् ॥ ४१ ॥ [विकल्पो वा प्रकृतिवत् ॥ ४२॥]**

आदित्येष्वेकवाच्येष ऊह्यो नो वोह्यतेऽन्यवत् ॥ गणार्थत्वादनूहोऽतो विकल्पः प्रकृताविव ॥ १७ ॥

वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवन्निगदस्य मेधपतिशब्दस्योहोऽसंदिग्धः एकवन्निगदोऽपि तद्रूदेवोह्यः एकवचनान्तता तु निवर्तते उताविकारेण प्रयोक्तव्य इति चिन्तायामेकवचनस्य बहुत्वसामर्थ्यादूहो देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमात्रमिदमधिकरणं नतु किंचित्प्रतिपाद्यमस्ति यद्वोत्तराधिकरणोपोद्घातत्वेन पूर्वाधिकरणसिद्धमेवानुकीर्तितम् ॥

एकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम् ॥ १४ ॥

**अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात्स्यात् ॥ ४३ ॥**

कृष्णग्रीवादिके नोह ऊह्यो वास्य न पूर्ववत् ॥ देवत्वं न गणस्यात ऊहो बह्वभिधित्सया ॥ १८ ॥

'आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्य'इत्यादिषु पशुगणेषु किमेकवन्निगदस्याविकार उत विकारेण प्रयोग इति संशये गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरं—'देवतात्मन एकत्वादविकारः पुरोदितः ॥ तद्रूपस्य तु भिन्नत्वे को नामोहं निवारयेत् ॥' इति श्रीशास्त्रदीपिकायां नवमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

स्यैव मेधो देवताभ्यामाशास्यत इति गम्यमानत्वान्न साकाङ्क्षत्वमित्यर्थः । **द्विवचनं त्विति** । नचाधिष्ठानस्मृतेरनपेक्षितत्वादधिष्ठितदेवताकारकस्मृतेरेवापेक्षितत्वादानर्थक्यम् अधिष्ठानस्मृतिद्वारा तदधिष्ठितदेवताकारकस्मृत्युपयोगादित्याहुः । अत्र 'पशुर्वै मेधो यजमानो मेधपतिर्यजमानमेव तत्स्वेन मेधेन समर्पयती'ति पूर्वपक्षप्रतिपादनपूर्वकं 'अथो खल्वाहुः यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरिति स यद्येकदेवत्यः पशुः स्यान्मेधपतय इति ब्रूयात्, यदि द्विदेवत्यो मेधपतिभ्यामिति, यदि बहुदेवत्यो मेधपतिभ्य' इति ऐतरेयाम्नानं नास्तीति कृत्वाचिन्तेयमित्युक्तं तन्त्ररत्ने । सूत्रार्थस्तु—मेधपतित्वं स्वामिनो देवतायाश्च त्रयाणामपि मेधसमवायात्सर्वत्र चाधिपत्ये पतिशब्दप्रयोगात्त्रिषु चैकवचनस्य चान्याय्यनिगदत्वात्सर्वासु विकृतिष्वविकार इति ॥

**नियमो वा बहुत्वादेव० ॥ ४१ ॥ द्विवदिति** । अधिष्ठानाभिप्रायत्वाद्द्विवचनस्याधिष्ठानबहुत्वे द्विवन्निगदोहस्य पूर्वोत्तरपक्षयोः सिद्धत्वान्न तस्य विचार्यत्वमित्यर्थः । दृष्टान्तार्थमेव तु भाष्ये द्विवन्निगदोपादानमिति तद्वदेवेत्यनेन सूचयति । **ननु** यद्येकवचनस्योहस्तर्ह्येकवचनान्तो निवर्तेत इति कथं भाष्यमत आह—**एकेति** । नतु स्वरूपेण निवृत्त्यभिप्रायं भाष्यमित्यर्थः । **एकवचनस्येति** । द्विवन्निगदवदेकवन्निगदोऽप्यधिष्ठानापेक्ष एव नतु कारकाभिप्राय एकरूपत्वाय । अत एव पूर्वोक्तकारकरूपार्थत्वाक्षेपात्संगतिरपि । तथाच द्वयोरधिष्ठानयोरेकवचनस्य प्रकृतौ प्रयोगात्साधुत्वेऽपि विकृतौ बहुषु प्रयोगाभावात्साधुत्वार्थे पाशानितिवदूह इत्यर्थः । सिद्धान्तमाह—**देवतेति** । विवक्षितार्थत्वायैतादृशवैरूप्यमङ्गीक्रियत इति भावः । पूर्वपक्षाशङ्काया मन्दत्वान्नेदमधिकरणान्तरमित्याशयेनाह—**पूर्वेति** । कारकरूपाभिप्रायत्वे वैश्वदेवादिष्वधिष्ठानबहुत्वेऽपि कारकरूपभेदाभावादनूह इत्येवं प्रयोजनपरमिदमित्यर्थः [१] **नन्वे**कवचनं च देवतासंख्यावशादूहितव्यमिति प्रयोजनमपि पूर्वत्रैवोक्तमित्यस्वरसादाह—**यद्वेति** । सिद्धेह्यत्राविकारे उत्तराधिकरणेऽनेनैव न्यायेन पूर्वपक्षमाशङ्क्य प्रत्युदाहरणरूपेण सिद्धान्तः प्रदर्शयितुं शक्यत इति भावः । सूत्रार्थस्तु—एकवन्निगदस्य बहुदेवताधिष्ठानके नियमो निवृत्तिरेकवचनान्ततया निवृत्तिरिति यावत् । तस्माद्विकारः स्यादिति ॥

**अर्थान्तरे विकारः० ॥ ४३ ॥ गणेष्विति** । बहूनां देवतात्वाद्देवताकारकस्यैक्यात्पूर्ववदनूह इत्यर्थः । पूर्ववदित्यनेन संगतिरपि सूचिता । पूर्वत्र बहूनां देवतात्वमिह तु देवतानां बहुत्वमिति वैषम्यमभिप्रेत्याह—**देवतात्मन इति** । देवताकारकस्येत्यर्थः । सूत्रार्थस्तु—अर्थान्तरे एकादशिनादौ देवताकारकभेदाद्विकारः स्यात्प्रत्येकमेव तद्धितादिसमवायात्प्रत्येकमेव देवता स्यादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां नवमाध्यायस्य तृतीयः पादः ॥ ३ ॥**

---

१ प्रवर्तत इति.

## नवमाध्याये चतुर्थः पादः ।

षड्विंशतिरस्य वंक्रय इत्यादौ समस्योहाधिकरणम् ॥ १ ॥

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारो हि तासामकार्त्स्न्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ [अभ्यासेऽपि तथेति चेत् ॥ २ ॥ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ समासेऽपि तथेति चेत् ॥ ४ ॥ नासंभवात् ॥ ५ ॥ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ वंक्रीणा तु प्रधानत्वात्समासेनाभिधानं स्यात्प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ तासां च कृत्स्नवचनात् ॥ ८ ॥ अपि त्वसंनिपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥ अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥ आम्नातस्त्वविकारात्संख्यासु सर्वगामित्वात् ॥ १२ ॥ संख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥ १४ ॥ अभ्यासो वाऽविकारात्स्यात् ॥ १५ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्तस्मात्समासशब्दः स्यात् ॥ १६ ॥]**

षड्विंशतिर्वङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते ॥ ऊहोऽपि वचनान्यत्वमस्येत्यावर्त्यतेऽथ वा ॥ १ ॥
षड्विंशतेरुताभ्यासः समस्तोक्तिर्भवेदुत ॥ अनूह्योऽकरणत्वेन दृष्टलाभात्तदूहनम् ॥ २ ॥
संख्यायाश्च पशौ युक्तेर्वंक्रीणां-मुख्यतावशात् ॥ अमी पक्षा युज्यतेऽन्त्यस्ता अनुष्ठेयेति शेषतः ॥ ३ ॥

तत्रैव षड्विंशतिरस्य वंक्रय इति श्रुतं तद्धि अश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा संदिह्यते किं षड्विंशतिरस्येत्युभयपदाभ्यासः उताविकारेण प्रयोग उत षड्विंशतिपदगतमेकवचनं द्विवचनबहुवचनाभ्यामूहितव्यमथवास्येत्येतत्पदमभ्यसितव्यमाहोस्वित् सर्वपशुगता वंक्रीः समस्य तासामियत्ता वक्तव्येति । तत्र षड्विंशतिसंख्याया अस्यशब्दाभिधेयस्य च पशोर्यः संबन्धस्तत्प्रधानमिदं वाक्यम् । ततः प्रतिपशु तत्संबन्धं प्रकाशयितुं षड्विंशतिपदमस्य पदं चाभ्यसनीयम् । अयमेवात्र प्रधानतः पूर्वः पक्षः इतरे तु संभवमात्रेणोपन्यस्य दूष्यन्ते । तत्र द्वितीयपक्षः अकरणभूतोऽयमदृष्टार्थो मन्त्रस्तस्मादविकारः । तृतीयस्तु यद्यप्यकरणस्तथापि शमितॄणामन्यूनावदानोद्धरणाय पार्श्वयोः साकल्यं स्मारयन्दृष्टार्थ एव तत्र षड्विंशतिसंख्या प्राधान्येन प्रकाश्यते तेन द्वयोः षड्विं-

---

**षड्विंशतिरभ्यासेन०** ॥ १ ॥ येषामवान्तरकार्यं संदिग्धं तेषां मन्त्राणामूहोऽस्मिन्पादे विचार्यत इति पादभेदः । तादृशमन्त्रोहश्च मन्त्रगतपदावान्तरकार्यनिरूपणपूर्वकनिरूपणीयत्वेन विलम्बोपस्थितिक इत्यानन्तर्यं च । ज्योतिष्मत्यादिविचारस्तु प्रासङ्गिक इति बोध्यम् । **तत्रैवेति** । अध्रिगुप्रैष एवेत्यर्थः । वंक्रयः पार्श्वास्थीनि । **उत षड्विंशतीति** । अस्येति पदगतमेकवचनं चेत्यपि द्रष्टव्यम् । अतएव वक्ष्यति षड्विंशती अनयोर्वंक्रय इति । **अथवेति** । प्रथमपक्षे षड्विंशतिपदास्यपदयोरुभयोरभ्यासः, चतुर्थपक्षे त्वस्यपदमात्रस्येति विवेकः । **तत्प्रधानमिति** । वंक्रिप्राधान्यमिति सिद्धान्ते समस्यवचने सति कृत्स्नस्यैव षड्विंशतिशब्दस्य निवृत्त्यापत्त्या प्राकृतस्यैव प्रयोगार्थं संबन्धप्राधान्यं स्वीक्रियते तद्बलाचापतन्नभ्यासलक्षणः किंचिद्विकारो न दोष इति स एव स्वीक्रियत इत्यर्थः । **तत इति** । यद्यत्र संबन्धः पृथक् स्वपदोपात्तः स्यात्तदा तत्पदमात्रस्याभ्यासो द्विवचनादिना वा प्रयोगः स्यान्न त्विह स्वपदोपात्तः संबन्धस्तस्मात्संबन्धिपदद्वयाभ्यासः प्रतिपशु संबन्धप्रतिपादनायावश्यक इत्यर्थः । **अयमेवेति** । द्वितीयपक्षेऽदृष्टार्थत्वात्संख्याप्राधान्यमिति तृतीयपक्षे एकवचनस्य विकृतौ निवृत्तिप्रसङ्गात्पशुप्राधान्यमिति चतुर्थपक्षे च षष्ठीविरोधादिति भावः । **अकरणेति** । संज्ञपनात्पूर्वकालीनस्याध्रिगुवचनस्य विशसनकालीनवंक्र्युद्धरणकरणत्वासंभवादिति भावः । **शमितॄणामिति** । अस्य पशोर्वंक्रयः । षड्विंशतिरेकैकस्य पार्श्वस्य त्रयोदश वंक्रिकत्वात् अनुष्ठयप्रयत्नेनानुपूर्वस्य तिष्ठतेर्यन्नार्थत्वादुच्यावयतादुद्धरेत्येवं पार्श्वयोः साकल्यस्मरणद्वाराऽवदानयोरवदेययोः पार्श्वयोरन्यूनोद्धरणार्थतयादृष्टार्थ इत्यर्थः । **संख्येति** । संख्याप्राधान्य एव साकल्यप्रतिपादनं

---

१ पदाभिधेयस्य.

शतिसंख्ये प्रकाशयितुं षड्विंशती अनयोर्वंक्रय इति। ननु षड्विंशतिशब्दे संख्याप्राधान्ये संख्येयेषु वंक्रिषु षष्ठी स्यात्। सत्यम्। यथा सिद्धान्ते वंक्रीणां प्राधान्ये संख्याशब्दस्य लक्षणया सामानाधिकरण्यं तथा संख्याप्राधान्ये वंक्रिशब्दो लक्षणया संख्यासामानाधिकरण्यं प्रतिपत्स्यते। चतुर्थस्तु पशुप्रधानमिदं स हि चोदितः संख्यात्वचोदिता तस्मात्षष्ठ्यन्ताभिधेयः पशुरेवात्र प्रधानं तद्विशेषणं संख्या वंक्रयश्च षड्विंशतिवंक्रिकोयं पशुरिति। ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्य पदमभ्यसितव्यम्। सिद्धान्तस्तु—'वंक्रीयत्ता प्रकाश्येह पार्श्वसाकल्यसिद्धये॥ ता इति प्रतिनिर्देशादपि तासां प्रधानता॥' वंक्रयोऽत्र प्रधानं ता एव षड्विंशतिशब्देनेयत्तया प्रकाश्यन्ते। अन्यूनयोः पार्श्वयोरवद्यतीति वचनात्। यद्यपि पशुश्चोदितस्तथाप्यसौ हृदयादिद्वारेणैव साधनं न साक्षादिति वक्ष्यामः तस्माद्वंक्रयः प्रधानम्। तथाच ता अनुष्ठयोच्यावयतादिति तासामेवोत्तरत्र प्रतिनिर्देश उद्धरणं चोच्यते। पशुप्राधान्ये—हितमिति स्यात् संख्याप्राधान्ये तामिति। तस्माद्वंक्रीयत्तापरत्वात्समस्याभिधानम्। ननु यद्यपि वंक्रीयत्तापरमिदं तथापि प्रतिपशुभेदेन वंक्रीणामुद्धरणाद्भेदेनैव पशोर्वंक्रय इयत्तया च वक्तव्या इति षड्विंशतिपदाभ्यास एव न्याय्यः। तथाचाश्वलायनादयो यज्ञ-

---

संभवति नान्यथेति भावः। **नन्विति**। संख्याप्राधान्ये संख्यासंख्येययोः सामानाधिकरण्यासंभवात्। संख्येयवंक्रिषु षष्ठ्या भवितव्यमित्यर्थः। **यथेति**। नच 'आदशतः संख्याः संख्येये' इति 'विंशत्यादयः संख्याने संख्येये चे'ति स्मरणात्संख्येयपरत्वमादाय मुख्यवृत्त्यैव सिद्धान्ते सामानाधिकरण्यसंभवादिदमयुक्तमिति वाच्यम्। विंशत्यादीनां संख्यायां तद्विशिष्टसंख्येये च शक्तिरिति न, उक्तवचनार्थं आकृत्यधिकरणन्यायेन सर्वदा संख्यामात्रवाचित्वस्यैव न्याय्यत्वात्, किंतु कदाचित्संख्यामात्रे पर्यवसानं कदाचित्तद्द्वारा संख्येये पर्यवसानमित्येवोक्तवचनार्थस्तथाच वंक्रीणां प्राधान्यमिति सिद्धान्तपक्षे संख्यामात्राभिधायकस्य षड्विंशतिशब्दस्य लक्षणया संख्येयवंक्रिसामानाधिकरण्यं वाच्यम्, यथारुणयेत्यादौ गुणमात्राभिधायकस्यापि लक्षणया एकहायनीलक्षणगुणिना सामानाधिकरण्यं तद्वदिति भावः। **तथेति**। यथा देवदत्तयज्ञदत्तविष्णुमित्राः परिषदित्यत्र परिषदः प्राधान्येऽपि देवदत्तादयः षष्ठींविना सामानाधिकरण्यमनुभवन्ति तद्वदित्यर्थः। एवंच गवां विंशतिरित्यादौ यत्र षष्ठी तत्र गवामिति षष्ठ्याः संबन्धिपरतया श्रुत्यैव यथा सामानाधिकरण्यं तथा श्रुत्यसंभवेऽपि लक्षणया सामानाधिकरण्यसंभवान्न षष्ठ्या आवश्यकत्वमिति भावः। पशुप्राधान्ये हेतुमाह—**सहीति**। पशोश्चोदितत्वात्तत्प्रकाशनमनुष्ठानोपयोगित्वाद्दृष्टार्थं संख्यायास्त्वचोदिततया तत्प्रकाशनमदृष्टार्थं स्यात्तस्मात्पशोरेव प्राधान्यमित्यर्थः। **ननु** पशोः षष्ठ्या परार्थत्वप्रतीतेः कथं प्राधान्यं, नच चित्रगुरित्यादौ चित्रा गावो यस्येति विग्रहे षष्ठीनिर्दिष्टस्यापि प्राधान्यं दृष्टमिति वाच्यम्। चित्रा गावो यस्य स इति तच्छब्देन तत्र प्राधान्योपपत्तेः। अयं चार्थः सर्वादिसूत्रे कैयटेन सम्यक्प्रतिपादितस्तस्मात्कथं पशोः प्राधान्यमित्यत आह—**तस्मादिति**। षष्ठ्यन्ताभिधेयोऽपि चोदितत्वेनार्थगत्या पशुरेव प्रधानमित्यर्थः। एवंच शब्दतः प्रधानतया प्रतीयमानत्वेऽपि संख्यायाः वंक्रीणां च तद्विशेषणतयैव प्रतिपादनं न स्वातन्त्र्येणेत्याह—**तदिति**। अस्य पदमिति षड्विंशतिरस्यास्य वंक्रय इत्येवमस्यपदाभ्यासे तेन सकलपशूपस्थाने प्रत्येकं सर्वेषां पशूनां षड्विंशतिसंख्यवंक्रिसंबन्धात्तद्विशिष्टवेषेणाभिधानसिद्धिरिति तदर्थमस्यपदमभ्यसितव्यमित्यर्थः। **वंक्रीति**। अस्यपदेन षड्विंशतिपदेन च वंक्रीणामेवेयत्तात्र प्रतिपाद्यते। तथाचास्यपदेन षष्ठ्यन्तेन वंक्रयर्थतयैव पशोः प्रतिपादनात्षड्विंशतिपदेन च संख्यायाः संख्येयोपसर्जनत्वेनैव प्रतिपादनाद्वंक्रीणामेव प्राधान्यमित्यर्थः। **नन्वियत्ता**प्रकाशनमात्रेण न वंक्रीणां प्रधानता संख्याप्राधान्येऽपि तत्प्रकाशनोपपत्तेरित्याशङ्क्य संख्याप्राधान्ये संख्याया अननुष्ठेयतया तत्प्रकाशनमदृष्टार्थं स्याद्वंक्रयर्थतयेयत्ताप्रकाशने तु साकल्यसिद्धेर्दृष्टप्रयोजनं लभ्यते इत्याशयेन पार्श्वसाकल्यसिद्धये इत्येतद्व्याचष्टे—**अन्यूनयोरिति**। अर्थतः पशोः प्राधान्यमुक्तं निरस्यति—**यद्यपीति**। **वक्ष्याम इति**। दशम इति शेषः। तथाच वंक्रीणामेवार्थतोऽपि प्राधान्यं हविष्ट्वादिति भावः। संबन्धस्याप्यननुष्ठेयतया तत्प्रकाशनेऽप्यदृष्टार्थत्वापत्तेरेव न तस्यापि प्राधान्यमित्याशयेनाह—**तस्मादिति**। **पश्विति**। इदमुपलक्षणं संबन्धप्राधान्येऽपि सर्वनाम्नः प्रधानप्रत्यवमर्शकतया तमिति स्यादिति बोध्यम्। अदृष्टार्थत्वादेव द्वितीयपक्षो दुष्ट इति सिद्धान्ते तद्दूषणमुपेक्षितम्। **समस्येति**। प्रकारान्तरेण पशुगणगतवंक्रीयत्ताप्रतिपादनासंभवादिति भावः। भवेदेवं यदि गणगतेयत्ता प्रकाशनीया स्यात् प्रतिपशुभेदेनैव सा प्रतिपाद्या प्रतिपशुभेदेनोद्धरणादिति शङ्कते—**नन्विति**। **आश्वलायनेति**। एकधा षड्विंशतिरिति द्विर्द्विर्बहूनामित्याश्वलायनोक्ते-

सूत्रकारा मन्यन्ते । नेति भगवान् जैमिनिः । स हि मन्यते यथैव हि प्रकृतौ द्वयोः पार्श्वयोस्त्रयोदशसु वंक्रिषु पृथक्पृथगुद्ध्रियमाणास्वपि समस्तानामेवेयत्तोक्ता षड्विंशतिरस्य वंक्रय इति, तथा विकृतिष्वप्युद्धारभेदमतन्त्रीकृत्य प्रयोगसमवेतसमस्तवंक्रीयत्ता मन्त्रेण प्रकाशयितव्या । तस्माद्विपञ्चाशदनयोर्वंक्रयोऽष्टसप्ततिरेषां वंक्रय इत्येवं समस्ताभिधानमेव न्याय्यम् ॥

आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वंक्रिरूपविशेषवचनविकल्पाधिकरणम् ॥ २ ॥

## अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

न चतुस्त्रिंशदित्येष निषेधो नियतो न वा ॥ गिरापदवदाद्यः स्यान्नैवकारहतत्वतः ॥ ४ ॥
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते ॥ निषेधकप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते ॥ ५ ॥

अश्वमेधे श्रूयते 'अश्वस्तूपरो गोमृगस्ते प्राजापत्या' इति तस्याश्वस्य चतुस्त्रिंशद्वंक्रयस्तत्र वैशेषिको मन्त्रः पठितः 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वंक्रीरश्वस्य स्वधितिः समेती'ति तत्रेदं वचनमामनन्ति 'न चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूया'दिति । तत्र भाष्यकारोऽश्वस्य चतुस्त्रिंशतिरित्येवमादिसूत्रपञ्चकमेकाधिकरणत्वेन व्याख्यातवान् । वार्तिककारस्त्विदं सूत्रं पृथक्कृत्य प्राप्तिसूत्रत्वेनाधिकरणान्तरत्वेन व्याख्यातवान् । तत्राधिकरणान्तरमेवं द्रष्टव्यम् । वैशेषिक्या ऋचः प्रतिषेधोऽयं न चतुस्त्रिंशदिति ब्रूयादित्युपरितनेऽधिकरणे वक्ष्यति । इदं त्वत्र चिन्त्यते, किं निषिद्धमपि वैशेषिकं पक्षे स्यादुत सर्वदा प्राकृतमेवेति । तत्र पाठप्राप्तं वैशेषिकं गिरापदवत्प्रत्यक्षवचनबलान्नित्यवद्बाधित्वा[3] प्राकृतमेवाध्रिगुवचनमिरापदवत्सर्वदा वक्तव्यमिति प्राप्ते ब्रूमः—इरापदं हि प्रत्यक्षेण वचनेन गिरापदस्थाने विहितं युक्तं, यत्पाठप्राप्तं वैशेषिकं गिरापदं बाधते तस्मिन्बाधितेऽनुवाद एव

रिति भावः । उद्धरणभेदस्य प्रकृतावेवातन्त्रीकरणात्समस्तवचनमेव न्याय्यमित्याह—नेति । भगवानिति । नन्वियमधिकरणप्रवृत्तिरेवानुपपन्ना यत्र मन्त्रो विनियुक्तस्तस्यैव प्राधान्येन प्रतिपाद्यतया बहुप्रधाननिबन्धनपक्षभेदानामनुन्मेषादितिचेत् स्यादेवं, यदि श्रुत्यादिविनियोज्यः स्यान्नत्वेवं किंतु लिङ्गप्रकरणविनियोज्यस्तयोश्च साधारण्यादनेकपक्षोन्मेषसंभवात् । सूत्रार्थस्तु—पशुगणे षड्विंशतिशब्दोऽभ्यासेन प्रयुज्येत प्रकृतावेकस्य पशोः षड्विंशतिसंख्यवंक्रयभिधानादिह च षड्विंशतिसंख्यारूपगुणस्य प्रतिपशुविभक्तत्वात्तत्र यदि यथाप्रकृत्येवाविकारेण प्रयोगस्तदा गणे वंक्रीणां कार्त्स्न्येनाभिधानं न स्यात् । न च समस्यवचनं संभवति, प्राकृतस्य सर्वथा बाधेनात्यन्तविकारापत्तेः । समासेऽप्येकस्य पशोः सर्वाभिः वंक्रिभिः संयोगाभावाच्चेति ॥

**अश्वस्य चतुस्त्रिंशत्० ॥ १७ ॥ प्राप्तीति ।** वैशेषिकमेव नियमेन कर्तव्यमुत प्राकृतमपि कर्तव्यमिति करिष्यमाणविचारो वैशेषिकप्राप्तौ घटते नान्यथेति वैशेषिकवचनप्राप्तिसूत्रत्वेनेत्यर्थः । **अधिकरणान्तरत्वेनेति ।** अत्र वाशब्दोऽनास्थायामानुमानिकविधेः प्रत्यक्षनिषेधस्य च तुल्यबलत्वस्य दशमे व्युत्पादनेनात्र विकल्पस्यैव न्याय्यत्वात्षड्विंशतिरित्येव ब्रूयादित्यस्यैवकारापहतविधिशक्तिकतया विधायकत्वाभावस्याग्रिमाधिकरणे व्युत्पादनेन गिरापदवैषम्यस्यापि सिद्धत्वाच्च पूर्वपक्षस्य मन्दत्वादिति ध्येयम् । षड्विंशतिरित्यस्य पशुगणान्तरे समस्यवचनेऽपि अश्वमेधे न समास इत्यग्रिमाधिकरणद्वितीयपूर्वपक्षस्य पूर्वाधिकरणसंगत्योत्थानात्तस्य पाक्षिकप्राकृताध्रिगुवचनविषयत्वात्तत्पाक्षिकत्वविचाररूपस्यास्य वार्तिककारीयाधिकरणान्तरस्य तदुपोद्घाततया संगतिर्द्रष्टव्या । **ननु** 'न चतुस्त्रिंशदिति ब्रूया'दिति यदि पदप्रतिषेधस्तदा वैशेषिकऋचः प्रतिषेधान्नित्यवद्बाध इति पूर्वपक्षस्य विहितप्रतिषिद्धत्वाद्विकल्प इति, सिद्धान्तस्य चानुपपन्नत्वात्कथमयं विचार इत्यत आह—**वैशेषिक्या इति ।** न पदप्रतिषेधः किंतु ऋच एव इत्युपरितनेऽधिकरणे वक्ष्यमाणत्वाद्युक्तो विचार इत्यर्थः । **वैशेषिकमिति ।** 'चतुस्त्रिंशद्वाजिनो देवबन्धो'रिति मन्त्र इत्यर्थः । **तत्रेति ।** वैशेषिकवचनस्य पाठमात्रं न विधिः पाठात्तु विधिः कल्पनीयः । प्राकृतस्य तु 'षड्विंशतिरित्येव ब्रूया'दित्येवं प्रत्यक्षो विधिस्तद्विरोधाच्च पाठमात्राद्वैशेषिकविधिकल्पना न प्रवर्तत इति प्रत्यक्षवचनविहितेन प्राकृतेन पाठप्राप्तस्य वैशेषिकस्य प्रत्यक्षवचनविहितेरापदेन पाठप्राप्तगिरापदस्येव नित्यं बाधात्प्राकृतमेव सर्वथा प्रयोज्यमित्यर्थः । भवेदेवं यदि प्राकृतं प्रत्यक्षवचनविहितं स्यान्नत्वेवं 'षड्विंशतिरित्येव ब्रूया'दित्येतस्य विधायकत्वाभावादिरापदं तु प्रत्यक्षवचनविहितमिति वैषम्यमित्याह—**इरापदमिति ।** प्रत्यक्षवचनविहितस्यापि गिरापदकार्यापत्तिं विना न तद्बाधकत्वमित्याशयेन गिरापदस्थाने इत्युक्तम् । **ननु** तत्रापीरापदं न

१ शृङ्गरहितो मृगः. २ व्याख्यातमित्युक्तवान्. ३ बाधितत्वात्प्राकृत.

गिरापदप्रतिषेधः। नन्वेवमिह षड्विंशतिरित्येव ब्रूयादित्येतदेवकारापहृतविधिशक्तित्वान्न प्राकृतस्य विधौ समर्थमतोऽत्र न चतुस्त्रिंशदित्येवं प्रतिषेधं विधत्ते। तस्मिंश्च प्रतिषिद्धे षड्विंशतिरित्येव ब्रूयादिति चोदकप्राप्तानुवाद एव। नत्वेवं गिरापदप्रतिषेधादिरापदं प्राप्नोति। येनानूद्येत तस्यापि विधौ वाक्यभेदः तेन तत्रेरापदविधिरेव वाक्यार्थः। इहतु प्रतिषेध एव विधेयः सच प्राप्तिपूर्वकः। प्राप्तिश्च न शास्त्रमन्तरेण संभवतीत्यतोऽवश्यं वैशेषिकवचनस्य प्रापकं प्रकरणपाठानुमितं वाक्यं लाघवीयकाममङ्गीकर्तव्यम् अङ्गीकृते चास्मिन्नुभयोर्विधिप्रतिषेधयोः शास्त्रत्वाविशेषाद्विकल्पस्त-स्माद्वैशेषिकवचनमपि कर्तव्यम् ॥

आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ॥ ३ ॥

**तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥ [ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १९ ॥ तस्यां तु वचनादैरवत्पदविकारः स्यात् ॥ २० ॥ सर्वप्रतिषेधो वाऽसंयोगात्पदेन स्यात् ॥ २१ ॥]**

**पृथग्वचनमश्वस्य स्यादन्याभ्यां समस्य वा ॥ आद्यः पदे निषिद्धेऽत्र विशेषो नियतो यतः ॥ ६ ॥**
**वंक्रीयत्तानुक्तिदोषादृगेवात्र निषिध्यते ॥ पक्षे प्राप्तः प्राकृतोऽस्मिन्समस्योक्तः पुरा यथा ॥ ७ ॥**

तत्रैव संशयः किमश्वस्य पठितमेव चतुस्त्रिंशद्वाजिन इति वैशेषिकं कर्तव्यमुत प्राकृतमपि। यदापि प्राकृतं तदापि किंतूपरगोमृगयोरश्वस्य च समस्यवचनं षडशीतिरेषां वंक्रय इति उत तूपरगोमृगयोः सामासिकं वचनं कृत्वाऽश्वस्य षड्विंशतिरस्य वंक्रय इत्येवमयथार्थमध्रिगुवचनं कर्तव्यमिति। तत्र 'न चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूया'दित्यनेन पठितायामेवार्चि गिरापदव-च्चतुस्त्रिंशत्पदं प्रतिषिध्य षड्विंशतिपदमिरापदवन्निक्षिप्यते। नत्वयं समाम्नाताया ऋचः प्रतिषेधः। तस्मात्सैव षड्विंशतिपदयुक्ता वक्तव्येति चोदकप्राप्ताध्रिगुवचनस्य निवृत्तिरिति प्राप्ते उच्यते। 'एवकारोपबद्धत्वान्न षड्विंशतिचोदना ॥ चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य संभवी ॥ ऋच एव निषेधोऽत-

---

प्रत्यक्षवचनेन विधीयते किंतु गिरापदनिषेधविधेरेवेति साम्यमित्यत आह—**तस्मिन्निति। एवकारेति**। 'षड्विंशतिरित्येव ब्रूया'दित्यत्र षड्विंशतिरित्येतदेवकारस्य विशेषणं, ततश्चैवकारः स्वयं प्रधानभूतः सन् षड्विंशतिपदमात्मसात्कुर्वे-स्तस्य विधिसंबन्धं विहन्तीत्यर्थः। **नन्वप्राप्तार्थत्वात्तिरस्कृत्याप्येवकारंविध्यन्वय एव किं न स्यादित्यत आह—तस्मिंश्चेति**। वैशेषिकप्रतिषेधे निरपवादं चोदकेन प्राकृतस्य प्राप्तत्वान्न प्राप्तार्थकमिदं विधिक्षममित्यर्थः। **नन्वेवं** न गिरेत्यत्रापि गिरापदप्रतिषेधविधिरेवास्तु ऐरं कृत्वेत्यनुवाद एवास्त्वित्यत आह—**नत्विति**। नन्वस्तु प्रतिषेधविधिस्त-थापि वैशेषिकस्य प्रतिषेधात्प्राकृतमेव सर्वदा कर्तव्यं प्राप्नोतीत्यत आह—**सचेति**। नन्वेवमपि प्रत्यक्षानुमानिकयोस्तु-ल्यबलत्वाभावात्कथं विकल्प इत्यत आह—**अङ्गीकृत इति। शास्त्रत्वाविशेषादिति**। अबाधितार्थकस्यैव शास्त्रत्वा-दित्यर्थः। सूत्रार्थस्तु—अश्वस्य चतुस्त्रिंशद्वंक्रयः सन्ति तस्मात्तत्प्रकाशनसमर्थं वैशेषिकमेव कर्तव्यं वचनात् प्रकरणे वैशेषि-काम्नानादिति ॥

**तत्प्रतिषिध्य प्रकृतिः० ॥ १८ ॥ षडशीतिरिति**। तूपरगोमृगयोर्द्विपञ्चाशदश्वस्य चतुस्त्रिंशदित्येवं षडशीति-त्वादिति भावः। **अयथार्थमिति**। अश्वसंबन्धिचतुस्त्रिंशद्वंक्रिप्रतिपादनाशक्तत्वादित्यर्थः। वैशेषिकप्राकृतयोर्विकल्प इत्य-युक्तं वैशेषिकस्यैव नियतत्वादित्युत्थितेः संगतिः। **ननु** वैशेषिकस्य पाठानुमितविधिविहितत्वान्न चतुस्त्रिंशदिति प्रतिषि-द्धत्वाच्च विकल्पस्यैव न्याय्यत्वात्कथं पूर्वः पक्ष इत्यत आह—**तत्रेति। पठितायामिति**। यथा पठितायामेव 'यज्ञा-यज्ञा वो अग्नय'इत्यस्यामृचि गिरापदं प्रतिषिध्येरापदं प्रक्षिप्यते तथा पठितायामेव 'चतुस्त्रिंशद्वाजिनो देवबन्धो'रित्यस्यां चतुस्त्रिंशत्पदं प्रतिषिध्य षड्विंशतिपदं निक्षिप्यते। ततश्च कृत्स्नाया ऋचः[1] प्रतिषेधाभावान्नित्यवत्पाठलब्धो विधिरिति चोद-कबाधेन 'षड्विंशतिर्वाजिनो देवबन्धो'रित्येवंरूपेण पठितैव नित्यं प्रयोक्तव्येत्यर्थः। एवंचैन्द्रीन्यायेन वाचकेनैव षड्विंशति-पदेन चतुस्त्रिंशतोऽपि लक्षणयाभिधानमिति भावः। **एवकारेति**। चतुस्त्रिंशत्पदमात्रनिषेधे षड्विंशतिपदस्यानुवादो न संभवति अप्राप्तत्वात् षड्विंशतिपदविधाने तु चतुस्त्रिंशन्निषेधानुवादो युज्यते। नच तद्विधिरपि संभवति एवकारोपबद्धत्वा-

---

१ समस्ताया.

स्तथासति च चोदकात् ॥ प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥' 'न चतुस्त्रिंशदितिब्रूयात्षड्विंशतिरित्येव ब्रूया'दित्येकं वाक्यम् । तेनैकोऽत्र विधिरितरोऽनुवादः । तत्र यदीरापदवत्षड्विंशतिर्विधीयेत ततश्चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदनूद्येत नत्वत्र षड्विंशतिपदमिरापदवच्छक्यं विधातुम् । एवकारोपबन्धादेवकारार्थविशेषणं हि ब्रूयादिति न स्वयं विधिक्षमं एवकारार्थश्च निवृत्तिस्तस्मात्षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते 'ऐरं कृत्वोद्गेय'मिति तु शक्नोति विधातुमिति विशेषः। तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते । तद्यदि पदमात्रं प्रतिषिध्येत न षड्विंशतिपदमनुवदितुं शक्यते प्राप्त्यभावात् । नहि पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति । तस्मात्समस्ताया ऋचः प्रतिषेधः । तथासति हि 'षड्विंशतिरित्येव ब्रूया'दिति चोदकप्राप्तत्वात्संभवत्यनुवादः । शक्नोति च चतुस्त्रिंशदिति प्रतीकग्रहणेनर्चं प्रतिषेद्धुम् । गिरापदेन त्वनाद्यत्वाद्ग्रहणं न शक्यमिति वैषम्यम् । द्वितीयपूर्वपक्षवादी त्वाह—प्राकृतेऽपि वचने क्रियमाणे 'षड्विंशतिरिति ब्रूया'दिति वचनादेव वक्तव्यमश्वे न समस्यवचनमिति । तदिदं मन्दम् । नह्यनेन षड्विंशतिपदं विधीयते चतुस्त्रिंशन्निषेधपरत्वाद्वाक्यस्य तद्विधौ वाक्यभेदादेव शब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तं तस्मादेषोत्र वाक्यार्थः—न चतुस्त्रिंशदिति पठितं ब्रूयात्किंतु यथाप्राप्तमध्रिगुवचनमेवेति । तस्मात्समस्यवचनम्, पक्षे च वैशेषिकमृग्वचनम् ॥

अग्नीषोमीयपशावुरूकशब्देन वपाभिधानाधिकरणम् ॥ ४ ॥

## वनिष्टुसंनिधानादुरूकेण वपाभिधानम् ॥ २२ ॥

**पक्षी वपाऽथवोरूको रलयोरविशेषतः ॥ पक्षी वपा संनिधानाद्भ्रान्तिच्छेदनिषेधतः ॥ ८ ॥**

'वनिष्टुमस्य मा राविष्टोरूकं मन्यमाना' इति किमुरूकशब्देनोलूकस्याभिधानं तत्सादृश्यबुद्ध्या वनिष्टोर्लवनं प्रतिषिध्यते उत वपाभिधानं·उलूकशब्दः वपोद्धरणकाले वपां मन्यमाना वनिष्टुं मा रा-

---

दतो न पदविषयाविमौ शब्दौ किंतु ऋग्विषयावेवेत्यर्थः । **चोदकादिति** । चोदकप्राप्तमध्रिगुवचनमेव षड्विंशतिरिति ब्रूयादित्यनेनानूद्यत इत्यर्थः । **ननु** चतुस्त्रिंशन्निषेधचोदनायां यदि षड्विंशतिपदस्याप्राप्त्यानुवादासंभवस्तर्हि तदपि विधीयतामित्यत आह—**न चतुरिति** । एकवाक्यत्वान्नोभयविधिः संभवतीत्यर्थः । **एवकारार्थश्चेति** । अत्र एवकारार्थश्च निवृत्तिस्तस्मात्षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयत इति ग्रन्थस्वरसादेवकारार्थो विधीयत इति न भ्रमः कर्तव्यः किंतु न चतुस्त्रिंशदित्यत्रैव निवृत्तिविधिः । तस्यैव प्रथमोच्चरितत्वेन विधायकत्वौचित्यात् । अतएव पूर्वाधिकरणेन चतुस्त्रिंशदित्येव प्रतिषेधं विधत्त इत्युक्तं, तस्मादयमत्र वाक्यार्थः । एवकारार्थश्च निवृत्तिः सा च न चतुस्त्रिंशदिति निषेधेन प्राप्तत्वादिह षड्विंशतिपदेनानूद्यते इति शेषः । तस्मात्षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिर्न चतुस्त्रिंशदित्यनेन विधीयत इति । **ऐरमिति** । एवकाराद्युपबन्धाभावादिति भावः । **ननु** न चतुस्त्रिंशदिति पदमात्रस्य श्रवणात्कथमृक्प्रतिषेधोऽन्यथा न गिरेत्यत्रापि ऋक्प्रतिषेधः स्यादित्यत आह—**शक्नोतीति** । यत्रायं पदं प्रतीकेन गृह्यते तत्राद्यत्वात्तत्पदमुत्तराण्येकार्थतया स्वसंबद्धानि पदानि लक्षयितुं शक्तं यथा'ऽयं सहस्रमानव इत्याहवनीयमुपतिष्ठत'इत्यादौ, तद्वदिहापि चतुस्त्रिंशत्पदस्याद्यत्वाद्युक्तः कृत्स्नाया ऋचः प्रतिषेधः । तथेतिकरणस्याद्यार्थकत्वाङ्गीकारेणाप्याद्यपदोपादाने कृत्स्नप्रतिषेधसंभवः । गिरापदस्य त्वाद्यत्वाभावान्न कृत्स्नर्गुपस्थापने शक्तिः । नच कृत्स्नर्गुपस्थापनासामर्थ्येऽपि यावत्पदापेक्षया स्वस्यादित्वं तावदुपस्थापकत्वं किं न स्यादिति वाच्यम् । पदं हि स्वसंबद्धानि पदान्युपस्थापयति नासंबद्धानि पदानि । पदानां च संबन्ध एकार्थप्रतिपादकत्वकृतस्तथा च यावत्पदापेक्षयाऽऽद्यत्वं तावन्मात्रस्यैकार्थप्रतिपादकत्वाभावान्न तावदुपस्थापकत्वमपीति भावः । **प्राकृतेपीति** । यदा प्राकृतं तदापि तूपरगोमृगयोर्द्विपञ्चाशदनयोर्वंक्रय इति सामासिकं वचनं कर्तव्यम्। अश्वे तु षड्विंशतिरस्य वंक्रय इत्येव वक्तव्यं न षडशीतिरेषामिति त्रयाणामपि समस्यवचनमित्यर्थः । **ननु** यदि षड्विंशतिर्न विधीयते कथं तर्हि तदुपपत्तिरित्यत आह—**तस्मादिति** । **किंत्विति** । षड्विंशतिपदेनैकदेशेन तत्पदयुक्तमध्रिगुवचनमेव वक्ष्यत इति भावः । सूत्रार्थस्तु—वैशेषिकं वचनं प्रतिषिध्य प्रकृतिः प्राकृतमध्रिगुवचनमपि नियुज्यते सा च प्रकृतिर्नियुज्यमाना स्वपक्षे चतुस्त्रिंशद्वाच्यत्वाद्वारयतीति पक्षएव वैशेषिकं न नित्यमिति ॥

**वनिष्टुसंनिधानात्०** ॥ २२ ॥ षड्विंशतिशब्दे समस्यवचनात्मकोहेऽप्युरूकशब्देनोह इत्युत्थितेः संगतिः । **वनिष्टुमिति** । वनिष्टुर्नाम वपासंनिहितो वपासदृशोऽवयवविशेषस्तन्मा राविष्ट तल्लवनं मा कुरुत तत्रोरूकबुद्धिं कुर्वाणा इत्यर्थः । **प्रतिषिध्यत इति** । प्रतिषेधो मन्त्रेण प्रकाश्यत इत्यर्थः । मन्त्रवर्णादेव प्रतिषेधकविधिकल्पनात्तस्य मन्त्रप्रकाश्यत्वसंभव

विष्टेति। तत्र रलयोरेकवृत्तित्वादुलूकाभिधाने प्राप्ते ब्रूमः—नतावद्वनिष्टोर्लेवितव्यस्य लवनं शक्यं निषेद्धुम्। सादृश्यबुद्धिनिषेधस्यादृष्टार्थत्वात्। तस्मादवयवव्युत्पत्त्या वपाभिधानम्। दर्शिता चाव यवव्युत्पत्तिर्भाष्ये वपोद्धरणकाले संनिधानाद्भ्रान्त्या वनिष्टोर्लेवनं प्रसक्तमाशङ्क्य तन्निवारणार्थं वचनं दृष्टार्थं भवति तस्माद्वपाभिधानमिति वपाविवृद्धावूहः॥

अध्रिगौ प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम्॥ ५॥

## प्रशसाऽस्यभिधानम्॥ २३॥ [बाहुप्रशंसा वा॥ २४॥]

**प्रशसेत्यसिरर्थः स्यात्स्तुतिर्वा छेदनादसिः॥ स्तुतिः कार्त्स्न्याय बाह्वोः स्यात्स्वधितिश्छेदसाधनम्॥ १॥**

'प्रशसा बाहू कृणुतादि'ति किं प्रशसेति तृतीयान्तमस्यभिधानं असिना बाहू छेत्तव्याविति उत द्वितीयाद्विवचनस्याकारादेशे छान्दसे चौकारलोपे कृते प्रशसावचनोयमिति। तत्र प्रशास्शब्दस्याऽसौ प्रसिद्धत्वात्तद्वचनं मन्यते नतु स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितुम्। मान्त्रवर्णिकद्रव्यकल्पनायां चातिगौरवम् तस्मात्प्रशंसावचनत्वम्। प्रशस्तौ बाहू कृणुतादविकलावित्यर्थः। एवं दृष्टार्थता भवति। तस्माद्बाहुविवृद्धावूहः॥

---

इति भावः। **वपामिति**। वपां श्राम्यन्त इत्यर्थः। रलयोरिति पर्यङ्कः पल्यङ्क इत्यादिप्रयोगदर्शनादिति भावः। किमत्र वनिष्टोर्लेवननिषेधः प्रकाश्यते किंवा सादृश्यबुद्धिनिषेधः। नाद्य इत्याह—**नतावदिति**। 'वनिष्टुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रवितारवच्छमितार' इति। 'वनिष्टुमद्धुर्द्धि मेदो जाघनी-मित्युद्धरती'ति वनिष्टुलवनविधायकप्रत्यक्षवचनविरोधेन मन्त्रवर्णेन लवननिषेधविधेः कल्पयितुमशक्यत्वान्न तत्परत्वं मन्त्रस्येत्यर्थः। **सादृश्येति**। मन्त्रस्य सादृश्यबुद्धिनिषेधप्रकाशनार्थत्वेऽदृष्टार्थत्वं स्यात्तद्बलात्सादृश्यबुद्धिनिषेधस्याङ्गत्वकल्पने तस्याप्यदृष्टार्थत्वापत्तिरित्यर्थः। **दर्शितेति**। उरुशब्दो विस्तीर्णवचनः कशब्दो मेदोवाचककासशब्दैकदेशतया कासश-ब्दलक्षणाद्वारा मेदःप्रतिपादक इत्येवमुरूकशब्दस्य विस्तीर्णमेदोभिधायकतया वपायामवयवव्युत्पत्तिर्भाष्ये दर्शितेत्यर्थः। वपाभिधाने च नादृष्टार्थत्वमित्याह—**वपोद्धरणेति**। ननूरूकशब्दार्थविचारस्य कथमध्याये संगतिरत आह—**वपेति**। उरूकमित्यस्य पदद्वयत्वपक्षे वपाद्वित्वे उरुणी के इत्यूहः। एकपदत्वपक्षे उरूके इति। एवं बहुत्वेऽप्यूह्यम्। सूत्रार्थस्तु—उरूकशब्देन वपाभिधानं स्यात् वनिष्टुसंनिधानात् वनिष्टुसंनिधानकृतव्यामोहनिवर्तनेन दृष्टार्थत्वादिति॥

**प्रशसाऽस्यभिधानम्॥ २३॥** यथा उरूकशब्दस्य पक्ष्यभिधाने निष्प्रयोजनतया प्रयोजनवत्त्वाय वपाभिधायकत्वं तथा प्रशसाशब्दस्यापि प्रशस्तवाचकत्वे प्रयोजनाभावादस्यभिधायकत्वमित्युत्थितेः संगतिः। **बाहू कृणुतादिति**। 'श्येनमस्य वक्षः कृणुता'दिति तत्रत्यं कृणुतादितिपदं वक्ष्यमाणार्थकथनोपयोगितयाऽनुषज्य पठितमिति बोध्यम्। 'शसु हिंसाया'मित्यस्मात्प्रपूर्वाद्[१]क्विप्रत्यये प्रशस्शब्दस्य तृतीयान्तस्येदं रूपमित्यर्थः। **छेत्तव्याविति**। कृणुतादित्यस्य हिंसार्थकत्वमित्याशयः। **उतेति**। अत्र कृणुतादित्यस्य कुरुतादित्यर्थो बोध्यः। **द्वितीयेति**। प्रशस्तशब्दादुत्पन्नस्येति शेषः। अत्र प्रशसाशब्दः किमसिपरः उत प्रशंसापरः, तदर्थं च किमयं तृतीयान्त उत द्वितीयान्त इति संशयनिष्कर्षः। **प्रसिद्धत्वादिति**। 'असिं वै शासमाचक्षत'इति ब्राह्मणे लोके च प्रयोगादिति भावः। तथाच शास्शब्दस्यास्यर्थकत्वे तत्समानार्थकतया शस्शब्दस्याप्यस्यर्थकत्वमित्यभिमानः। नत्विदं युक्तं शास्शब्दस्येव शस्शब्दस्यासौ प्रसिध्यभावेन समानार्थकत्वस्यैवासिद्धेरित्याशयेन मन्यत इत्युक्तं सिद्धान्तमाह—**नत्विति**। स्वधितिना पशुं विशस्तीति स्वधितिसाधनके छेदनेऽसिकरणत्वासंभवादस्यभिधानमदृष्टार्थं स्यादित्यर्थः। **नन्व**सिप्रकाशकमन्त्रवर्णबलादसेः बाहुच्छेदने करणत्वं कल्प्यते स्वधितेस्तु तद्व्यतिरिक्तविषयत्वं भविष्यतीत्यत आह—**मान्त्रवर्णिकेति**। अक्लृप्तस्यासिकरणत्वस्य तत्र मन्त्रविनियोगस्य च कल्पनीयत्वादतिगौरवमित्यर्थः। **ननु** प्रशंसावचनेन दृष्टालाभात्तवाप्यदृष्टार्थत्वं तुल्यमित्यत आह—**अविकलाविति**। प्रशंसाया वैकल्याभावनिबन्धनत्वादविकलबाहूद्धरणार्थतया मत्पक्षे दृष्टार्थत्वमेवेत्यर्थः। प्रयोजनमाह—**तस्मादिति**। **बाहुविवृद्धौ** प्रशसाशब्दः द्वितीयाबहुवचनान्ततयोह्य इत्युक्तं भाष्ये। सूत्रे प्रशसा प्रशसाशब्देनेत्यर्थः॥

---

१ असिः खड्गः. २ क्विप्प्रत्यये.

अग्निगुप्रैषे श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ॥ ६ ॥

**श्येन-शला-कश्यप-कवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसंनिधानात् ॥ २५ ॥**
**[कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २६ ॥ अग्निगोश्च तदर्थत्वात् ॥ २७ ॥]**

**सादृश्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितम् ॥ प्रसिद्धसंनिधेराद्यस्तत्त्वादखिलोद्धृतिः ॥ १० ॥**

'श्येनमस्य वक्षः कृणुता'दिति । श्येनसदृशमित्यर्थः । तत्र संशयः किं सादृश्यमेवात्र विवक्षितमुत साकल्यमिति । तत्र सादृश्यमेव 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ता'मितिवद्विधीयते । तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसंपादनेन श्येनसंस्थानं कर्तव्यम् । नैतद्युक्तम् । अदृष्टार्थताप्रसङ्गात् कर्तने च वक्षसो वैकल्याद्धविर्विनाशः स्यात् । तस्मात्साकल्यमत्र विधीयते । अविकलं हि वक्षः श्येनसदृशं भवति तदनेन प्रकारेणावैकल्यमेवोच्यते दृष्टार्थत्वात् । एवं शलादोषणीकश्यपेवांसौ कवषोरुस्रेकपर्णाष्ठीवन्तेत्यपि साकल्यमेव ॥

दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ॥ ७ ॥

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥**

**ज्योतिष्मती भवेन्नो वा दर्शार्थोद्धृतलोपने ॥ निमित्तसत्त्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात् ॥ ११ ॥**

अग्निहोत्रे श्रूयते—'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वाये'दिति । तत्र संशयः यदा दर्शार्थेनोद्धृतोऽग्निरग्निहोत्रकाले उद्वाति किं तदा ज्योतिष्मतीष्टिः कर्तव्या नेति । तदर्थमिदं विचार्यते किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्यारादुपकारकमुतोद्वानपरीताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकमिति । किं प्राप्तम् । 'उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् ॥ वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया ॥' यदा हि वाक्यगम्याग्निनिमित्तत्वतिरस्कारेण पदश्रुत्योद्वानस्य निमित्तता तदोद्वानस्य क्रत्वनङ्गत्वेनासंस्कार्यत्वादग्नेस्तु विशेष-

---

**श्येनशलाकश्यपकवषोरुस्रेकपर्णेषु॰ ॥ २५ ॥** प्रशसाशब्दस्य प्रशंसामात्रपरत्वे आनर्थक्यात्तन्मुखेन साकल्यपरत्वेऽपि श्येनादिशब्दानां सादृश्यमात्रपरत्वोपपत्तेर्न तन्मुखेन साकल्यपरत्वमित्युत्थितेः संगतिः । श्येनशब्दस्य मुख्यार्थत्वे विचारानुपपत्तेराह—**श्येनेति** । मुख्यार्थस्य पक्षिणोऽत्रासमवायात्तत्सदृशपरः श्येनशब्द इत्यर्थः । **नन्वविकलोद्धरणेनापि** सादृश्यं कृतं भविष्यतीत्याशङ्क्य न स्वतःसिद्धवर्तुलत्वादिसादृश्यमात्रं विवक्षितं किंतु कर्तनादिसाध्यं चञ्चुचरणाद्यवयवकृतमसौ सादृश्यमेव विवक्षितमित्याशयेनाह—**तेनेति । अदृष्टेति** । पक्षादिसंपादनस्य दृष्टेऽनुपयोगादिति भावः । **हविर्विनाश इति** । 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस'इति वक्षस एवावदानसंबन्धश्रवणाद्धविष्ट्वं न तदेकदेशस्येति भावः । **ननु** सदृशपरस्य श्येनशब्दस्य कथमविकलपरत्वमत आह—**अविकलमिति । एवमिति** । शलादोषणीत्यत्र 'दोषणी भुजौ शला शल्यकलोमसदृशौ'श्वाविित्तु शल्यस्तल्लोम्नि शललो शललं शल'मित्यमरकोशाच्छलाकाकाराविे'ति भट्टभास्करः। 'अंसौ कश्यपे कच्छपावि'वेति माधवः । 'ऊरू कवषा कवाटसदृशाविति' भट्टभास्करः । खट्वासदृशावित्यन्ये । अष्ठीवन्तौ ऊर्वोः पूर्वभागौ । 'ऊरुपर्वाष्ठीव'दित्यभिधानकोशात् । ऋग्ब्राह्मणभाष्ये माधवोऽप्येवमाह—'स्रेकपर्णो करवीरपत्रसदृशौ, शुकपक्षसदृशावित्येके'इति भट्टभास्करः । एवमेतेष्वपि सादृश्यमुखेनावैकल्यमेव सर्वत्र प्रतिपिपादयिषितमित्यर्थः । सूत्रार्थस्तु—श्येनादिषु आकृतिवचनं चञ्चुचरणावयवसंस्थानाभिधानं स्यात्प्रसिद्धस्य श्येनादेः संनिधाने तदाकृतेरेव झटिति प्रतीतेरिति ॥

**प्रासङ्गिके प्रायश्चित्तं॰ ॥ २८ ॥** ऊहसिद्ध्यर्थमग्निगुप्रैषगतपदानामवान्तरकार्यं प्रस्तुतमिति तत्प्रसङ्गादिष्टेः किमपूर्वकार्यमुताग्निसंस्कार इति निरूपणात्संगतिरिति तत्त्वरत्ने । **उद्धृत इति** । गार्हपत्यादुद्धृत्य प्रणीत इत्यर्थः । **उद्वायेदिति** । नश्येदित्यर्थः । **तदर्थमिति** । तदर्थं च किमारादुपकारकमिदमुत सामवायिकमिति, तदर्थं च किमग्निविशिष्टोद्वाननिमित्तकमुतोद्वानव्याप्ताग्निनिमित्तकमिति संशय इत्यर्थः । उद्वानपरीतस्याग्नेर्निमित्तत्वे सामवायिकत्वोपपादनार्थं तस्यैवाग्नेरुत्पादकमित्युक्तं—**उद्वायेदिति** । लिङ्पदश्रुत्या धात्वर्थस्य निमित्ततां वदति । अग्नेस्तु पदान्तरोपात्तत्वादेकवाक्यतया निमित्ततां प्रतिपादयतीत्यर्थः । लिङ्प्रतिपाद्यं निमित्तत्वमुद्वानस्य श्रुतिगम्यमग्नेस्तु वाक्यगम्यमिति यावत् । उद्वानस्य निमित्तत्वे आरादुपकारकत्वमुपपादयति—**यदा हीति** । ननु उद्वानस्याग्निहोत्रानङ्गतयाऽसंस्कार्यत्वेऽपि तद्विशेषणस्याग्नेरङ्गत्वात्संस्कार्यत्वं किं न स्यादित्यत आह—**अग्नेरिति** । उद्वानविशेषणत्वादग्नेर्न संस्कारान्वययोग्यतेति संस्कारत्वासंभवादारादुपकारकत्वमेवेत्यर्थः । **नन्वेवमपि** भिन्ने जुहोतीत्यादौ प्रकरणबलात्प्रकृतस्यैव भेदनादेर्निमित्तत्ववदिहापि प्रकर-

---

१ कवणस्रेकपर्णे. २ उद्वानव्याप्त.

णत्वेन कार्यान्वयाभावादारादुपकारकत्वमेवेति निमित्तस्य च प्रकरणेन विशेषणासंभवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वाने संजातं निमित्तमितिकर्तव्येष्टिरिति प्राप्ते ब्रूमः—'उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता ॥ नच तस्याग्निना व्याप्तिः कदाचिदपि विद्यते ॥' अग्निसंबन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो न निमित्तं भवति । नच विनाशस्य चिन्तितनिर्मिपितादिषु सर्वदा विद्यमानस्याग्निना वा व्याप्तिः संभवति यो निमित्तं स्यात्, उद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता। कादाचित्की हि तेनाग्नेर्व्याप्तिर्नतु सदातनी । यद्यप्यग्नेरप्युद्वानसंबन्धो नित्यस्तथापि व्याप्तिरनित्या । तेनाग्निरेवात्रोद्वानव्याप्तो निमित्तं तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थेयमिष्टिरग्निहोत्राङ्गमग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योत्पादनं कुर्वती अग्निहोत्राङ्गं स्यान्नान्यार्थस्य । तस्माद्दर्शार्थेनाग्नावुद्धृत उद्वाने नैतत्प्रायश्चित्तम् ॥

धार्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम् ॥ ८ ॥

## धारणे च परार्थत्वात् ॥ २९ ॥ [क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥]

**धार्योद्वाने सास्ति नो वा सर्वार्थत्वेन विद्यते ॥ गतश्रीत्वनिमित्तं तत्परार्थत्वान्न विद्यते ॥ १२ ॥**

इदमाम्नायते 'धार्यो गतश्रिय आहवनीय'इति । तत्र यदा ध्रियमाणोऽग्निरग्निहोत्रकाल उद्वाति तदा किमिष्टिः कार्या नेति संदेहे 'अग्निहोत्रार्थ उद्वाते प्रायश्चितमिदं श्रुतम् ॥ धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ ॥' सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गमतोऽग्निहोत्रार्थताप्यस्तीति तदुद्वाने कर्तव्येष्टिः । नैवम्—'अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते ॥ धारणस्य निमित्तं तन्नोद्धारस्याश्रुतत्वतः ॥' नहि गतश्रीत्वेन पुरुषस्याग्न्युद्धरणं श्रुतं येनोद्धरणमुद्धृतो वाग्निः सर्वार्थः स्यात्

---

णबलादग्निहोत्रार्थमुद्धृताग्न्युद्वानस्यैव निमित्तत्वाद्दर्शार्थमुद्धृताग्न्युद्वाने कथमिष्टिरित्यत आह—**निमित्तस्येति** । भिन्ने जुहोतीत्यादौ होमस्य फलकल्पनाभीत्या प्रकरणादिनिवेशेनार्थात्प्रकृतस्य भेदनस्य निमित्तत्वपर्यवसानं नतु प्रथमनिमित्तताप्रतीतिदशायामेव प्रकृतत्वेन विशेषणम् । इह तु दर्शार्थमुद्धृताग्न्युद्वानेऽपि क्रियमाणाया इष्टेरग्निहोत्रे आरादुपकारकत्वाङ्गीकारान्न फलकल्पनाप्रसङ्ग इति निमित्ततादशायामेव प्रकरणबलादग्निहोत्रार्थत्वेन विशेषणं वाच्यम् । नच तत्संभवति। निमित्तस्योद्देश्यतया वाक्यभेदप्रसङ्गेन तद्विशेषणविवक्षायोगादिति भावः । **सर्वदेति** । काष्ठादिष्वग्निसंयुक्तेषु अग्न्यवयवनाशस्य सर्वदा विद्यमानत्वान्न निमित्तत्वमित्यर्थः । **ननूक्तरीत्याग्निसंबद्धस्य** विनाशस्य निमित्तत्वाभावेऽप्यग्निव्याप्तस्य तस्य निमित्तत्वं भविष्यतीत्यत आह—**नचेति । व्याप्तिरिति** । विनाशेनाग्नेर्व्याप्तिर्नाम कार्त्स्न्येन संबन्धः सच कादाचित्क इत्यर्थः । **तेनेति** । श्रौतस्योद्वानस्य निमित्तत्वासंभवाद्वाक्यगम्यमेवाग्निर्निमित्तं स्वीकार्यमित्यर्थः । अग्नेर्निमित्तत्वे तस्याग्निहोत्राङ्गत्वेन संस्कार्यत्वयोग्यत्वात्सामवायिकत्वसंभवे तस्यारादुपकारकत्वापेक्षया प्राबल्यात्तदेव युक्तमित्याशयेनाह—**तस्येति** । नन्वेवमपि उद्वानपरीताग्नित्वेनैव निमित्तत्वं नतु तत्राग्निहोत्रार्थत्वमपि विशेषणं शक्यं स्वीकर्तुं वाक्यभेदप्रसङ्गात्, तस्माद्दर्शार्थस्याप्यग्नेस्तादृक्त्वात्कथं न निमित्तत्वमित्यत आह—**अग्निहोत्रेति** । उक्तरीत्या सामवायिकत्वसिद्ध्यर्थमभ्युत्पत्तिलक्षणसंस्कारद्वाराऽग्निहोत्रार्थत्वनिश्चये दर्शार्थाभ्युत्पत्तिद्वाराऽग्निहोत्रार्थत्वासंभवेनाग्निहोत्रार्थाभ्युत्पादनसामर्थ्यस्यैव निश्चितत्वाद्विधेयसामर्थ्यानुसारेण 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति'रित्यत्राभ्युभयत्ववदग्निहोत्रार्थत्वं विवक्षितमिति न दर्शार्थमभ्युद्वाने प्रायश्चित्तमित्यर्थः । सूत्रार्थस्तु—प्रसङ्गादग्निहोत्रोपकारके दार्शिके प्रायश्चित्तं न विद्यते परार्थत्वादग्निहोत्रार्थ एव प्रायश्चित्तं यस्माद्विधीयत इति ॥

**धारणे च परार्थत्वात् ॥ २९ ॥ धार्य इति** । गता प्राप्ता श्रीर्येन स गतश्रीस्तस्याहवनीयो धार्यः । 'त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्य' इति श्रुतौ गतश्रीः प्रसिद्धः । **अग्निहोत्रेति** । अनेनैव पूर्वत्र तादर्थ्याभावाद्दर्शार्थाभ्युद्वाने प्रायश्चित्ताभावेऽपीह तादर्थ्यस्य सत्वाद्युक्तं प्रायश्चित्तमित्युत्थानात्संगतिरित्यपि सूचितम् । सर्वकर्मार्थत्वेऽपि यदि समुदायार्थस्तदा समुदाय्यग्निहोत्रार्थत्वाभावान्न प्रायश्चित्तमिति शङ्कां निराकरोति—**प्रत्येकमिति** । समुदायस्याफलत्वान्न तदङ्गं किंतु फलवतां समुदायिनामेव प्रत्येकं तदङ्गमित्यर्थः । **अन्यार्थमिति** । सत्यमग्निहोत्रार्थत्वमग्नेस्तथापि न तन्मात्ररूपेणोद्वानस्य निमित्तत्वं किंतु 'यस्याग्निरुद्धृत' इति श्रुतेस्तदर्थोद्धृतस्योद्वानस्य । नच गतश्रीस्थल उद्धरणमग्निहोत्रार्थं येनोद्धृतोऽग्निरपि तदर्थः स्यात्, किंत्वन्यार्थमेवोद्धृतोऽग्निर्गतश्रीकेन धार्यत इति गतश्रीत्वस्य धारण एव निमि-

किंतु धारणमात्रम् । तेन यदा यत्किंचित्कर्मविशेषमधिकृत्याग्निमुद्धरति तदा तस्य धारणमात्रं गतश्रीत्वेन करोति । यस्मिंश्च कर्मण्युपसंप्राप्तेरग्निरुद्धृतस्तदर्थमेवोद्धरणं उद्धृतश्चाग्निस्तदर्थ एव निमित्तवशाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोतीति न तदुद्वाने प्रायश्चित्तम् ॥

[library stamp]

दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् ॥ ९ ॥

## नतूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

**दर्शार्थोद्धरणे वाचेत्यादिर्नो वा समन्त्रकम् ॥ कर्तुं स्यान्न निमित्तस्य कालस्यात्र विवर्जनात् ॥ १३ ॥**

दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रो 'वाचा त्वा होत्रे'त्यादिः प्रयोक्तव्यो नेति संशयः । तत्र—'दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्तते ॥ साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥' तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्मा इव कर्तव्य एव मन्त्रः कालमनादृत्य, कालस्य गुणत्वेनासंभवेऽपि मन्त्रस्य लोपोऽन्याय्यः । अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणमन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्तेऽभिधीयते—'काले खल्वनुपादेये प्राप्ते कर्म विधीयते ॥ साङ्गं तस्मात्तु कालात्प्राङ् नाधिकारोऽस्ति कर्मणि ॥' अनधिकारिणा च क्रियमाणं निष्फलं स्यात्तस्मान्नाप्राप्ते कालेऽग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्तव्यः ॥

---

त्तत्वं नोद्धरण इत्युद्धृतस्याग्नेर्न तादर्थ्यमित्यर्थः । **ननूद्धरणं** विना धारणस्यासंभवादर्थादुद्धरणस्यापि गतश्रीत्वं निमित्तमेव गतश्रीरुद्धृत्याहवनीयं धारयेदिति । तत्रोद्धरणपूर्वकं धारणं फलकल्पनाभीत्या गतश्रिया पुरुषेण यानि कर्माणि क्रियन्ते तदर्थमिति उद्धरणस्याप्यग्निहोत्रार्थत्वमिति शङ्कां निराकर्तुमन्यार्थमित्युक्तं धारणमन्यार्थमुद्धृतेऽपि संभवतीति न तद्बलादुद्धरणस्यापि सर्वकर्मार्थत्वं येनोद्धरणमग्निहोत्रार्थं स्यादित्यर्थः । इदंच धारणस्य सर्वकर्मार्थत्वमभ्युपेत्योक्तम् । वस्तुतस्तु गतश्रिय इति षष्ठीश्रुत्या पुरुषार्थत्वमेव तद्बलाच्च फलकल्पना न दोष इति ध्येयम् । **निमित्तेति** । उद्धृतोऽग्निरन्यार्थ एव निमित्तवशाधीनधारणद्वारा प्रसङ्गादग्निहोत्रस्योपकरोतीति नैतावता तादर्थ्यमुपकारकत्वलक्षणशेषत्वस्य निराकरणादित्यर्थः । सूत्रार्थस्तु—धारणविषयेऽपि न प्रायश्चित्तमुद्धरणस्य परार्थत्वादिति ॥

**नतूत्पन्ने यस्य चोदना०** ॥ ३१ ॥ अन्यार्थोद्धृताग्निनाशे प्रायश्चित्ताभावेऽप्यन्यार्थोद्धरणे मन्त्रः स्यादित्युत्थितेः संगतिः । **नाङ्गमिति** । नाङ्गत्वमित्यर्थः । **यागार्थयोरिति** । अभ्युदयेष्ट्यां 'शृते चरुं दधंश्चरु'मिति श्रुतयोरिति शेषः । नन्वग्निहोत्रार्थोद्धरणमन्त्रस्य सायमधिवृक्षसूर्यः कालः प्रातश्चाविःसूर्यः । तथाच प्रातरग्निहोत्रानन्तरं क्रियमाणे दर्शार्थोद्धरणे कालाभावात्कथं मन्त्रप्रसक्तिः । नचोद्धरणस्यैव कालोऽङ्गं न मन्त्रस्येति वाच्यम् । कालस्याङ्गप्रधानार्थतया मन्त्रेऽपि तस्याङ्गत्वादित्यत आह—**कालमिति** । गुणभूतकालानुसारेण प्रधानभूतमन्त्रलोपो न न्याय्य इत्यर्थः । एवमुद्धरणस्यानङ्गत्वेऽप्युपकारकतामात्रेण मन्त्रप्राप्तिरित्युक्तमिदानीमङ्गमेवोद्धरणमिति स्वीकार्यम् । तथाच सुतरां मन्त्रः प्रयोज्य इति पक्षान्तरमाह—**अथवेति । काल इति** । कालस्य यद्यप्यङ्गत्वं तथापि नाङ्गान्तरवद्विधिबलादुपादेयत्वम् । ततश्च काले प्राप्ते तत्संयोगिनं पुरुषमधिकृत्य कर्म चोद्यते, कर्मचोदनया चाङ्गानि प्रयुज्यन्त इति कालात्प्रागधिकाराभावादनधिकारिणा क्रियमाणमनर्थकमित्यप्राप्ते काले क्रियमाणस्याङ्गत्वाभावादुद्धरणस्याङ्गत्वमादाय मन्त्रप्राप्त्युपपादको द्वितीयपूर्वपक्षप्रकारोऽनुपपन्नस्तथाचाङ्गत्वाभावेनोपकारकतामात्रेण साधननिवेशिमन्त्रः प्राप्यत इति प्रथमपक्षोऽप्यनुपपन्नः । उद्धरणस्याङ्गत्वाभावेऽपि मन्त्र उद्धरणाङ्गत्वादेव प्रयोज्यः । कालाभावे चोद्धरण इव तदङ्गभूतमन्त्रेऽप्यधिकाराभावादधिकारिणं प्रति अङ्गभूतमन्त्रानुष्ठापकस्योद्धरणविधेरधिकाराभावदशायां मन्त्रानुष्ठापकत्वासंभवेनाकाले मन्त्रप्रयोगाप्रसक्तेरित्यर्थः । एवंप्रकारेण पक्षद्वयनिराकरणमभिप्रेत्यैवोद्धरणं तदङ्गमन्त्रो वा न कर्तव्य इत्युक्तम् । एवंच दर्शार्थोद्धरणादेव प्रसङ्गादग्निहोत्रसिद्धेः प्रणयनलोपोऽपि न दोष इति ध्येयम् । सूत्रार्थस्तु—परार्थमुत्पन्ने यस्याग्निहोत्रस्य चोदना तत्र मन्त्रो न स्यादप्राप्तकालत्वादिति ॥

प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ॥ १० ॥

**प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ [संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्यानुवादः स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥]**

प्रदेयधर्माः स्युर्नो वा पयसि प्रायणीयगे ॥ चरुवत्स्युः पाकहेतुः सप्तम्या स्युर्न ते ततः ॥ १४ ॥

'आदित्यः प्रायणीयः पयसि चरु'रित्यत्र संशयः किमेतत्पयश्चरुणा तुल्यं तद्देवतासंबन्धिप्रदेयत्वेन विधीयते। ततश्च प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते उत चरोरेव श्रपणार्थं प्रणीताकार्ये विधीयते। ततश्च न प्रदेयधर्मांल्लभेत इति। तत्र—'चरोर्देवतया योगं पयसश्चरुसंगतिम् ॥ विदधद्भिद्यते वाक्यमर्थद्वयविधानतः ॥' द्रव्यद्वयविशिष्टदेवतासंबन्धविधौ त्वेकार्थविधानं तस्मात्पयःप्रातिपदिकार्थोऽपि देवतासंबन्धी, सप्तम्यर्थस्तु सहश्रपणादर्थसिद्धोऽनूद्यते, अभ्युदयेष्टिवदिति प्राप्ते ब्रूमः—'चरुणाधारभूतेन पयसा च विशेषतः ॥ द्रव्यदैवतसंबन्ध एकोऽर्थोऽत्र विधीयते ॥' पयस्यादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासंबन्धविधानान्नास्ति वाक्यभेदः। तत्र चरुः प्रथमानिर्देशाद्धविः, पयस्तु सप्तमीनिर्देशादाधारत्वेन संबध्यते। एवमवाक्यभेदे सति सप्तमीनिर्देशस्याविवक्षितत्वमङ्गीकृत्य तुल्यकल्पफलत्वमयुक्तमभ्युपगन्तुम्। तस्मान्न पयसि प्रदेयधर्माः ॥

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

**अभ्युदये दोहापनयः सधर्मः स्यात्प्रवृत्तत्वात् ॥४१॥ [शृतोपदेशाच्च ॥४२॥]**

पयोदध्नोरभ्युदये न ते स्युर्वा पुरेव नो ॥ प्रवृत्तत्वाद्देवयोगमात्रोक्तेः सन्ति तेऽन्यवत् ॥ १५ ॥

अभ्युदयेष्टावपि 'ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरु'मिति दधिशृतयोः सप्तमीनिर्देशात्पूर्ववत्प्रदेयधर्मा न कर्तव्या इति प्राप्तम्। तत्रोच्यते—नापूर्वकर्मविधानादृतेऽनेकार्थविधिः संभवति। नचेहापूर्वकर्मविधिः किंतु पूर्वप्रवृत्तदर्शकर्मणि निमित्ते।

---

**प्रदानदर्शनं०** ॥ ३२ ॥ आदित्यः। अदितिदेवताक इत्यर्थः। **किमिति**। किं पयः प्रदेयधर्मांल्लभते उत प्रणीतार्थान्धर्मान्, तदर्थं किं प्रदेयत्वेन विधीयते उत प्रणीताकार्ये विधीयत इति संशयनिष्कर्षः। तुल्यकल्पतया देवतासंबन्धित्वं प्रदेयत्वेन विधाने हेतुः। चरुश्रपणार्थत्वं प्रणीताकार्यविधाने हेतुः। प्रणीतानां संयवनद्वारा पुरोडाशश्रपणार्थत्वादिति बोध्यम्। दर्शार्थोद्धरणस्याग्निहोत्रार्थत्वाभावेन तदुद्धरणधर्मप्राप्त्यभावेऽपि पयसः प्रधानार्थतया प्रदेयधर्मप्राप्तिरित्युत्थितेः संगतिः। **चरोरिति**। प्रणीताकार्ये पयोविधानमिति पक्षे पयसश्चरुणा संबन्धश्चरोश्च देवतया संबन्धो वक्तव्यः। तत्र यः पयसि चरुः स आदित्यः कार्य इत्येवं पयोविशिष्टे चरावदितिदेवतासंबन्धमात्रविधानं न संभवति, पयसि कर्तव्यत्वेन चरोरन्यतोऽप्राप्तेः। तस्मात्पयसश्चरुसंबन्धः चरोर्देवतासंबन्धश्चेत्युभयविधानायोगादुभयविशिष्टदेवतासंबन्ध एव विधेय इत्यर्थः। **सहेति**। चरुपयसोरेकस्मिन्वाक्ये देवताविधानमहिम्ना साहित्यावगमात्सहश्रपणं लभ्यते इत्यभिमानः। **अभ्युदयेति**। तत्र यथा सहश्रपयतीति वाक्यबलात्सहश्रपणे आर्थिकमाधारत्वं सप्तम्याऽनूद्यते तद्वदित्यर्थः। **पयसेति**। पयसश्च विशेषणत्वं चरुद्वारा बोध्यम्। तथा चाधारत्वेन पयोविशेषितचरुविशिष्टदेवतासंबन्धविधानादवाक्यभेदः। यद्यपि चरुः पयसि कर्तव्यत्वेनाप्राप्तस्तथापि विधिव्यापारंविनैव 'विष्णवे शिपिविष्टाये'त्यादिसमभिव्याहारबलादेव विशेषणविशेष्यभावावगमे पयोविशिष्टचरुविशिष्टदेवतासंबन्धविधिसंभवाद्विध्यावृत्तिविनैव पयश्चरुसंबन्धस्य चरुदेवतासंबन्धस्य च विधेयत्वलाभान्न वाक्यभेददोष इति न तद्रीत्या सप्तम्या अविवक्षितत्वेन प्रदेयत्वमित्यर्थः। सूत्रार्थस्तु—सह श्रपणे प्रदानमपि सह दृश्यते चरोः पयसा सह त्यज्यमानत्वानुभवाद्दधिमधुघृतमापोधाना इत्यादिवत्संसृष्टत्वाच्च पयसोऽपि यागार्थद्रव्यत्वात्प्रदेयधर्माः स्युरिति ॥

**अभ्युदये०** ॥ ४१ ॥ **पूर्ववदिति**। अनेन संगतिरपि सूचिता। पूर्वप्रवृत्तदर्शकर्मणीत्यस्य विधीयत इत्यनेनान्वयः।

---

१ पयसा चरु. २ अभ्युदितेष्टिवत्.

पूर्वदेवतापनीतानां हविषां देवतान्तरसंबन्धमात्रं विधीयते इति स्थितं षष्ठे । तद्यदि तण्डुलानां देवतान्तरसंबन्धे दधिशृतयोश्च प्रणीतार्थे विधिः स्यात्ततः प्राप्ते कर्मण्यनेकार्थविधानाद्वाक्यं भिद्येत । तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधिशृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयते इति कर्तव्याः प्रदेयधर्माः ॥

पशुकामेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ १२ ॥

**अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् ॥४३॥ [लक्षणार्था शृतश्रुतिः ॥४४॥]**

स न्यायः पशुकामेष्टौ प्रायणीयनयोऽथ वा ॥ तुल्यश्रुतित्वात्स्यादाद्योऽपूर्वकर्मत्वतोऽन्तिमः ॥ १६ ॥

'यः पशुकामः स्यात् सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमास्तान्विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्टास्तानिन्द्राय प्रदात्रे दधंश्चरु'मिति श्रुतं तत्राभ्युदयेष्टितुल्यश्रुतत्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्यमानः प्रदेयधर्मान्मन्यते । कर्मान्तरविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या श्रपणार्थमादित्यचरुपयोवद्विधानमित्यकर्तव्याः प्रदेयधर्माः ॥

ज्योतिष्टोमे श्रपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १३ ॥

**श्रपणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ [गुणो वा श्रपणार्थत्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥ ४७ ॥ श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ अर्थवादश्च तदर्थवत् ॥ ४९ ॥ संस्कारं प्रति भावाच्च तस्मादप्य प्रधानं स्यात् ॥ ५० ॥]**

मिश्रणे पयआदीनां सोमधर्मा न वाग्रिमः ॥ प्रदातुं मेलनान्मैवं संस्कारार्थत्वतः श्रुतेः ॥ १७ ॥

ज्योतिष्टोमे श्रूयते 'पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन'मित्यादि । तत्र संशयः किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते ततश्च प्रदेयधर्माः क्रयादयः कर्तव्या उत सोमसंस्कारार्थत्वेन विधानादकर्तव्या इति । तत्र पयसा सोमस्य मिश्रणं श्रूयते । किमर्थम् । कथंनु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति । एवं हि यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं सोमसंस्कारार्थत्वे त्वदृष्टार्थता

---

**निमित्त इति** । अभ्युदयलक्षण इत्यर्थः । **पूर्ववदेवेति** । 'त्रेधा तण्डुलान्विभजे'दिति न मध्यमादिभावेन विभागविधिः ये मध्यमा इत्याद्यनुवादबलादेव तत्सिद्धेः किंतु पूर्वदेवताभ्योऽपनयो विधीयते स चापनयो दधिशृतयोरपि पूर्वदेवताभ्यो विभजेदित्यनेनैव पूर्वदेवतासंबद्धं हविरिति निश्चये तस्य पुनस्तण्डुलपदेन विशेषणायोगेन तस्य प्रकृतकर्मसंबन्धिहविर्मात्रोपलक्षणार्थत्वादित्याशयेन हविषामित्युक्तम् । ततश्च पूर्वदेवतापनयेऽपेक्षितत्वाद्देवतान्तरसंबन्धमात्रमेव ये स्थविष्ठा इत्यादिना विधीयत इत्युक्तमित्यर्थः । **तद्यदीति** । दधिशृतयोः प्रणीतार्थमपेक्षितयोः पूर्वदेवतासंबन्धस्यापनीतत्वाद्देवतान्तरसंबन्धविध्यभावाच्चोपांशुयाजवद्दधिपयोयागो लुप्यते इति ध्येयम् । प्रदेयत्वेनैव प्रवृत्तयोरित्यनेन देवतान्तरसंबन्धविधिरपेक्षितविधिरिति सूचयति । नचास्यार्थस्य षष्ठ एव व्युत्पादनेनास्याधिकरणस्य वैयर्थ्यमिति वाच्यम् । तथापि पूर्वाधिकरणरीत्या सप्तमीश्रवणात्प्रणीतार्थत्वमिति कस्यचिद्व्यामोहः स्यादिति तन्निराकरणार्थत्वेनावैयर्थ्यादयं चार्थः पूर्वपक्षे पूर्ववदित्यनेनैव सूचित इति ध्येयम् । सूत्रार्थस्तु—अभ्युदये दोहापनयः अपनीतदेवताको दोहः प्रदेयधर्मः स्यात्प्रदेयत्वेन दोहप्रवृत्तेरिति ॥

**अपनयो वार्थान्तरे०** ॥ ४३ ॥ पूर्वापवादात्संगतिः । **नन्वपूर्व**कर्मविधावादित्यः प्रायणीयः पयसि चरुरितिवत्प्रणीतार्थत्वस्यास्थितत्वात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । **कर्मान्तरेति** । कर्मान्तरविधिपरत्वेन प्रकृतकर्मसंबन्धिहविषो देवतान्तरसंबन्धविधावभ्युदयेष्टाविव प्रमाणाभावात्प्रदेयत्वात्प्राप्तिरिति भावः । **चर्विति** । आदित्यः प्रायणीयः पयसि चरुरित्यत्र चर्वर्थं यत्पयस्तद्वदित्यर्थः । सूत्रार्थस्तु—प्रदेयत्वापनयो वा चरुपयोवत्प्रणीताकार्ये विधानादिति ॥

**श्रपणानां०** ॥ ४५ ॥ पशुकामस्थले पयसि प्रदेयधर्माभावेऽपि श्रपणेषु तद्धर्मप्राप्तिरित्युत्थितेः संगतिः । 'हिरण्येन शुक्रं धानाभिर्हारि योजन'मित्यादिरादिशब्दार्थः । **तत्रेति** । किं पयःप्रभृतिषु प्रदेयधर्माः कर्तव्याः उत न, तदर्थं च किं प्रदेयत्वेनैषां विधिरुत सोमसंस्कारत्वेनेति संशयनिष्कर्षः । **प्रदेयत्वेनेति** । प्रदेयत्वेन निमित्तेन प्रदानार्थमिति यावत् । संसर्गेण विहितानामपि प्रदेयत्वे पर्यवसानादित्यर्थः । **ननु** पयसा मैत्रावरुणमिति श्रुत्या संस्कारकत्वावगतेः कथं पूर्वपक्षोऽत

---

१ अपूर्वकर्मविधाना.

स्यादिति—एतावताप्रदेयत्वं मन्यते। 'द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते ॥ तृतीयया च ताद‍र्थ्यं पयसः प्रतिपाद्यते। श्रुतेचाद‍ृष्टसंस्कारकल्पना नैव दुष्यति ॥ तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥'

ईशानाय परस्वत इत्यत्र यागान्तरविधानाधिकरणम् ॥ १४ ॥

**पर्यग्निकृतानामुत्सर्गे ताद‍र्थ्यमुपधानवत् ॥ ५१ ॥ [शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥५२॥ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥५३॥ प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥ क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥]**

**स्पर्शः परस्वदालम्भो यागो वोत्सर्गतोऽग्रिमः ॥ द्रव्यदेवान्वयाद्यागोऽङ्गरीतिविधिरुत्तमः ॥ १८ ॥**

अश्वमेधे 'ईशानाय परस्वत आलभते'इति प्रकृत्य श्रूयते 'पर्यग्निकृतानारण्यानुत्सृजती'ति तत्र संदेहः किमीशानायालभत इत्यालम्भमात्रं विधीयते तेषां चालब्धानां पर्यग्निकरणविशिष्ट उत्सर्गस्त्यागः पर्यग्निकरणवाक्येन विधीयते उतेशानायेति यागविधिः पर्यग्निकृतानारण्यानुत्सृजतीति तत्रैव गुणविधिरिति। तत्र सत्यपि देवतासंयोगे न यागविधिरालम्भमात्रं तु विधीयते। यागविधित्वेसति पर्यग्निकरणवाक्ये न किंचिद्विधेयं लभ्येत। न तावदुत्सर्गः। यागविधिनैव प्राप्तत्वान्नपर्यग्निकरणं चोदकेनप्राप्तत्वान्नपर्यग्निकरणोत्तरकाल उत्सर्गः तस्यापि प्राप्तत्वान्नपर्यग्निकरणानन्तर्यं आनन्तर्यशब्दाभावात् नच क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वम्। नह्यत्र पर्यग्निकरणत्वं विधीयते। सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्। नच पर्यग्निकरणान्ताङ्गरीतिविधिः प्राप्तत्वादेव। नच ततः परेषां पदार्थानां प्रतिषेधः प्रतिषेधकस्य शब्दस्याभावात्। नच पर्यग्निकरणकाल उत्सृजतीति विधिः कालस्याशाब्दत्वात्। कालविधौ तु कालान्तरं निवर्तेत नाङ्गान्तराणि तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते परस्वतां उत्तरवाक्ये तेषामुत्सर्गः। पर्यग्निकरणविशिष्टश्चोद्यते—उच्यते 'विना यागेन न द्रव्यं

---

आह—**तत्रेति**। दृष्टार्थत्वलोभेन द्वितीयाश्रुतिं तृतीयाश्रुतिं चाविवक्षितां कृत्वा मिश्रणमात्रे तात्पर्यकल्पनात्प्रदेयत्वमुपपद्यत इत्यर्थः। **द्वितीययेति**। प्रमाणानुसारेण प्रयोजनं कल्पनीयं न प्रयोजनानुसारेण प्रमाणप्रवृत्तिरिति दृष्टप्रयोजनलिप्सया श्रुत्यविवक्षा न युक्तेत्याशयः। सूत्रार्थस्तु—श्रपणानां पयःप्रभृतीनां प्रदानार्थं विधानं स्यात् नचात्र प्रकृतितः प्राप्तं श्रपणमनूद्य पयःप्रभृतेर्द्रव्यस्य विधानमित्युपपत्तिरस्ति सोमयागस्यापूर्वत्वादिति ॥

**पर्यग्निकृतानां० ॥ ५१ ॥** पयःप्रभृतीनामिव परस्वतामपि न हविष्ट्वं यागविधेरेवाभावादित्युत्थितेः संगतिः। **परस्वत इति**। आरण्यमृगविशेषवाचकः परस्वच्छब्द इति माधवः। पर्यग्निकरणविशिष्ट इति पूर्वपक्षे द्रव्योत्सर्गस्य यागरूपत्वाभावेन चोदकतः प्राप्त्यभावात्पर्यग्निकरणमपि विधेयमित्याशयः। **नन्वी**शानायेति देवतासंयोगेन यागविधेरेवावश्यवक्तव्यत्वात्कथमालम्भमात्रविधिरिति पूर्वपक्षोऽत आह—**तत्रेति**। ईशानवाक्यस्य यागविधिपरत्वे पर्यग्निकृतवाक्यस्य विधेयाभावेनानर्थक्यापत्त्या ईशानवाक्यस्यालम्भमात्रविधिपरत्वनिश्चयाद्देवतासंबन्धः कथंचिन्नेय इति भावः। **यागेति**। यागविधिना त्यागरूपस्योत्सर्गस्य प्राप्तत्वादित्यर्थः। **तस्यापीति**। बाल्यादुत्तरं वृद्धत्वमितिवद्व्यवहितेऽप्युत्तरत्वं संभवतीति भावः। **आनन्तर्यमिति**। अव्यवहितोत्तरत्वमित्यर्थः। **ननु** पर्यग्निकरणस्य चोदकप्राप्तत्वेऽपि न तद्विधेरानर्थक्यं क्लृप्तोपकारकप्राकृताङ्गविधेश्चोदकपरिलोपकत्वेन गृहमेधीये आज्यभागश्रवणवदपूर्वार्थत्वादित्याशङ्क्य निषेधति—**नचेति**। **सिद्धवदिति**। निष्ठयोपसर्जनत्वप्रतीतेरिति भावः। **नचेति**। पर्यग्निकृतमिति कृतपर्यग्निकरणनिर्देशात्पर्यग्निकरणान्तानि यान्याङ्गानि तेषु कृतेष्वेव कृतपर्यग्निकरणत्वमिति पर्यग्निकृतशब्दः शक्नोति तदन्तभङ्गरीतिमुपस्थापयितुमिति भावः। **नचेति**। कृतपर्यग्निकरणावस्थायामेवोत्सर्ग इत्युत्तरपदार्थप्रतिषेधविधिरित्यर्थः। **कालेति**। पर्यग्निकरणकालस्योत्सर्गविधेर्नियमविधित्वेन कालान्तरमेव निवर्तते नाङ्गान्तरमित्यर्थः। ततः किमित्यत आह—**तत्रेति**। ततश्च कृत्स्नाङ्गयुक्तस्योत्सर्गस्य पर्यग्निकरणकाले कर्तुमशक्यतयाऽप्रामाण्यापातान्न कालविधिः संभवतीत्यर्थः। **विनेति**। यागेन विना देव

देवतान्वयमृच्छति ॥ द्रव्यदेवतसंयोगादतो यागो विधीयते ॥' ईशानायेति देवतात्व गम्यमानमशक्यमपह्नोतुम् । तच्च न कदाचिद्यागमन्तरेणालम्भमात्रादुपपद्यतेऽतो यागविधिः । विहितेच तस्मिन्यदि पर्यग्निकरणवाक्यस्य विधेयं न लभ्येत ततोऽनुवादो भवतु । नचैतावता देवतासंबन्धज्ञानमप्रमाणीकर्तुं शक्यम् । नच नास्ति विधेयं अपूर्वतापरत्वात् क्लृप्तोपकारप्राकृतपर्यग्निकरणान्ताङ्गरीतिर्विधीयते तया प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते तस्माद्यागविधिः उत्तरं तु तत्रैव गुणविधिरिति ॥

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ॥ १५ ॥

**आज्यसंस्थाने प्रतिनिधिः स्याद्द्रव्योत्सर्गात् ॥ ५६ ॥ [समाप्तिवचनात् ॥ ५७ ॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥ अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥ संख्या तद्देवतत्वात्स्यात् ॥ ६० ॥]**

**आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् ॥ कर्मान्यद्वाऽग्निमत्यागशेषसंस्थापनोक्तिभिः ॥ १९ ॥**
**अङ्गरीत्या समाप्तत्वाद्देवतोक्त्यनुकर्तनात् ॥ साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत् ॥ २० ॥**

'त्वाष्ट्रं पात्नीवतमालभेते'ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती'तिश्रुतं तत्र पुनः श्रूयते 'आज्येन शेषं संस्थापयती'ति । तत्र संशयः किं पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्यं विधीयते किंवा कर्मान्तरविधिरिति । तत्र शेषशब्दात्संस्थापयतिशब्दाच्च तत्रैव प्रतिनिधिविधिः न कर्मान्तरं देवतान्तराभावात् । ननु पर्यग्निकरणान्ताङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे ततश्च तथैव निराकाङ्क्षस्य न शेषमस्ति । उच्यते—पूर्वाधिकरणे यागविधिरालभतिरित्युक्तं तदिह मृष्यामः पर्यग्निकरणान्ताङ्गरीतिनैराकाङ्क्ष्यं तु न मृष्यामहे । शेषसंस्थापयतिशब्दानुपपत्तेः किंतु यागस्यैव पशुनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः परित्यागः पशोर्विधीयते तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते कर्मान्तरस्य ह्यनुपक्रान्तस्य

---

तासंबन्धस्योपपादयितुमशक्यतयाऽन्यथासिद्धदेवतान्वयबलाद्यागविधिरेवेशानवाक्येनालम्भमात्रविधिरित्यर्थः । **ननु** यागविधिपरत्वे वाक्यान्तरवैयर्थ्यमुक्तमत आह—**विहित इति** । अपूर्वताविधिपरत्वं न पर्यग्निकरणविधानेन येन तस्य सिद्धवदुपसर्जनीभूततया निर्देशेन विध्यनर्हता स्यात्किंतु पर्यग्निकरणान्ताङ्गरीतिविधानेन । तस्याश्चोदकतः प्राप्तत्वेऽपि गृहमेधीयाज्यभागन्यायेन चोदकलोपेसति चोदकतोऽङ्गान्तराणामप्राप्त्या फलतोऽङ्गान्तरप्रतिषेधार्थत्वादित्याशयेनाह—**क्लृप्तेति** । सूत्रार्थस्तु—पर्यग्निकरणवाक्येन पर्यग्निकृतानामुत्सर्गे ईशानवाक्यविहितस्यालम्भस्य तादर्थ्यं यथा चरुमुपदधातीति विहितोपधानार्थं चरूपादानं तद्वन्नतु यागविधिरिति ॥

**आज्यसंस्थाने० ॥ ५६ ॥** पूर्वाधिकरणे 'आज्येन शेषं स्थापयती'तीदं लिङ्गदर्शनत्वेन प्रसक्तं तत्र च यागान्तरविधित्व एव तस्य लिङ्गत्वमुपपद्यत इति तस्य यागान्तरविधित्वसमर्थनात्संगतिः । लिङ्गत्वं चाधिकरणान्त उपपादयिष्यामः । **किमिति** । 'पर्यग्निकृतमुत्सृजती'ति पर्यग्निकरणानन्तरं तूष्णीं परित्यागो विधीयते । परित्यक्ते च तद्यागस्य द्रव्यापेक्षायां पशुस्थाने आज्यं प्रतिनिधित्वेन विधीयते उताज्यद्रव्यकयागान्तरविधिरित्यर्थः । **शेषेति** । पूर्वस्मिन्कर्मणि यत्कृतं तदितरपरत्वाच्छेषशब्दस्य संस्थापयतिशब्दस्य च प्रक्रान्तसमाप्तिपरत्वाच्च पशुना प्रक्रान्तस्य कर्मणः पर्यग्निकरणपर्यन्तं कृत्वा पशौ परित्यक्ते तस्यैव कर्मणः शेषमाज्येन समापयेदिति विधिपर्यवसानादाज्यं पशुप्रतिनिधिरित्यर्थः । **ननु** सति शेषे तस्य प्रतिनिधिना समाप्तिः स एव नास्तीति शङ्कते—**नन्विति** । तुल्यन्यायतया पर्यग्निकृतानारण्यानुत्सृजतीतिवत्पर्यग्निकृतं पात्नीवतमुत्सृजतीत्यत्रापि तदन्ताङ्गरीतिविधानं सिद्धमित्यर्थः । **उच्यत इति** । पूर्वाधिकरणे ईशानवाक्ये आलम्भमात्रविधिरिति पूर्वपक्षं कृत्वा यागविधिरिति सिद्धान्तितं तर्हि पर्यग्निकृतानुत्सृजतीत्यस्य वैयर्थ्यमिति शङ्कायां तदन्ताङ्गरीतिविधानपरत्वान्न वैयर्थ्यमित्येव नतु सर्वस्यापि पर्यग्निकृतोत्सर्गवाक्यस्य तदन्ताङ्गरीतिविधानपरत्वव्युत्पादनपरत्वं पूर्वाधिकरणस्य । ततश्च पूर्वाधिकरणबलात्पर्यग्निकृतं पात्नीवतमुत्सृजतीत्यत्र तदन्ताङ्गरीतिनैराकाङ्क्ष्यं न मृष्यामह इत्यर्थः । **शेषेति** । शेषसंस्थापनशब्दबलादिह तदन्ताङ्गरीतिविधानासंभवान्न तुल्यन्यायत्वमित्यर्थः । संस्थापयतिशब्दानुपपत्तिं विशदयति—**कर्मान्तरस्य हीति** । त्यागमात्रमिति मात्रशब्देन यागरूपत्वं व्यावर्त्यते । **तत इति** । देवतासंबन्धस्य यागैकसाध्यत्वा-

स्वरूपमेव वक्तव्यं न समापनं । शेषशब्दस्य चानुपपत्तिः तस्मात्पूर्वत्रैव प्रतिनिधिराज्येनेति प्राप्ते ब्रूमः । न प्रतिनिधिः संभवति । तथाहि यदि पशोस्त्यागमात्रं क्रियेत तत उत्पत्तिवाक्यविहितदेवतासंबन्धो नानुष्ठितः स्यात्तत्रैव देवतासंबन्धविधिरप्रमाणं स्यात् । असति च देवतासंबन्धे यागविधिस्त्वं न स्यात् प्रत्यक्षयज्यश्रवणादसति च यागेऽग्नीषोमीयविध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः शेषसंस्थापनं चोभयमप्यनुपपन्नम् । अथ देवतामुद्दिश्योत्सृजेत ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते किमर्थः प्रतिनिधिः देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वान्न पर्यग्निकरणवाक्येन विधातव्यः । तस्मात्पूर्वाधिकरणोक्तन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानात्तयैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वान्न शेषमस्ति यस्याज्येन संस्थापनमुच्येत । तस्मात्कर्मान्तरविधिरेवायमिति । नच देवताभावः प्राकृतपात्नीवतपदानुषङ्गादिह संस्थापयतीति प्रत्ययार्थेन भावनयाऽऽज्यप्रातिपदिकार्थोऽनुषक्तदेवतापदयुक्तः संबध्यते । तदयमर्थः पात्नीवतमाज्यं कुर्यादिति शेषसंस्थाशब्दौ च सादृश्यात्पूर्वो हि यागः पात्नीवद्दैवत्यः पर्यग्निकरणमात्रे संस्थापितः सशेष इव तदनन्तरं चाज्ययागः पात्नीवद्दैवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवति । यापि आज्यप्रातिपदिके तृतीया सापि संस्थासंबन्धानुवाद एव प्रातिपदिकार्थमात्रं तु देवतासंबन्धित्वेन विधीयते इति सिद्धं कर्मान्तरत्वम् । प्राकृतार्थपतितान्यकार्यतो मन्त्रसामविषये च संस्कृतौ ॥ एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## इति नवमोऽध्यायः समाप्तः ॥

---

दिति भावः । **असतीति** । देवतासंबन्धकल्प्यत्वात्तस्येति भावः । तदेवाह—**प्रत्यक्षेति** । तस्माद्देवतोद्देशेन द्रव्योत्सर्गः कर्तव्यः इति स्वपक्षमेव पर्यवसाययति—**अथेति** । **किमर्थ इति** । नच तथापि शेषकार्यार्थः प्रतिनिधिः किं न स्यादिति वाच्यम् । शेषकार्याणां प्रतिनिधिप्रयोजकत्वाभावादिति भावः । अत्रच पक्षे उत्सर्गविध्यसंभवात्तदन्ताङ्गरीतिरेव विधेयेत्याह—**देवतेति** । आज्येन शेषमित्यस्य वाक्यस्य यागान्तरविधिपरत्वमुपपादयति—**इहेति** । शेषाभावेन शेषशब्दस्य संस्थापयतिधातोश्चानुपपन्नत्वाच्छेषसंस्थाभावादेव तृतीयाया अप्यनुपपन्नत्वादवशिष्टस्याज्यप्रातिपदिकस्यानुषक्तपात्नीवतपदयुक्तस्य प्रत्ययस्य च परस्परसंबन्ध इत्यर्थः । तथासति फलितमाह—**तदयमिति** । शेषशब्दसंस्थापयतिधातुतृतीयानां का गतिरित्यत आह—**शेषेति** । सादृश्यं च पात्नीवद्दैवत्यत्वनिबन्धनमित्याशयेनाह—**पूर्व इति** । **सशेष इति** । शेषसहित इवेत्यर्थः । **संबन्धेति** । उक्तरीत्या लब्धसादृश्यशेषसंस्थासंबन्धानुवादस्तृतीयेत्यर्थः । सादृश्योपपादनेनैव पूर्वाधिकरणलिङ्गत्वमप्युक्तप्रायम् । तथाहि 'यदि त्वाष्ट्रं पात्नीवत'मिति यागविधिः स्यात्तदैव पात्नीवतयागस्य पात्नीवतयागान्तरसादृश्यमादाय तस्यैवेयं शेषसमाप्तिरिति वादो घटते द्रव्योत्सर्गमात्रविधाने तु देवतानिबन्धनसादृश्याभावाच्छेषसंस्थावादो न घटत इति त्वाष्ट्रवाक्ये यागविधिः पर्यग्निकरणवाक्यं तु तत्रैव तदन्ताङ्गरीतिविधायकमिति निश्चयवदारण्येष्वपि ईशानवाक्ये यागविधिः पर्यग्निकरणवाक्ये तदन्ताङ्गरीतिविधानमिति समानन्यायत्वात्सिध्यतीति युक्तं लिङ्गत्वम् । सूत्रार्थस्तु—आज्येन शेषं स्थापयतीत्यत्राज्यं प्रतिनिधिः स्यात् पशुद्रव्यस्योत्सृष्टत्वेन कर्मणो द्रव्यापेक्षत्वादिति ॥ **इति श्रीनिट्टलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेंकटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां नवमाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

---

---

१ यस्मिन्नाज्येन.

# दशमोऽध्यायः ॥ १० ॥

## दशमाध्याये प्रथमः पादः ।

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ॥ १ ॥

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ [अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥]**

रूपान्तरत्वादासक्तं नवमे स्थितमूहनम् ॥ निवृत्तिरवाद्धिप्रकृष्टो दशमे बाध उच्यते ॥ १ ॥
वेदिः स्वयंकृतेत्यादौ प्राकृतं सर्वमाचरेत् ॥ लुप्तार्थे बाधयतां वाथश्चोदकप्रापितत्वतः ॥ २ ॥
अपेक्षासत्तियोग्यत्वहानेरुद्धननादिकम् ॥ बाध्यतेऽपेक्षितं सर्वं चोदकेनातिदिश्यते ॥ ३ ॥
अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत् ॥ प्रत्यक्षोक्त्या चरेत्पाकमवघाते तु नास्ति सा ॥ ४ ॥
वैश्वदेवस्य तन्त्रे यः पक्षे विष्णुः स किं पुरा ॥ आवाह्यो वा न वावाह्य आग्नेयाङ्गातिदेशनात् ॥ ५ ॥
वैश्वदेवावाहनस्य काले स्पर्याश्लेषवर्जनात् ॥ विष्णुयागस्य संदेहाद्विष्णोरावाहनं न हि ॥ ६ ॥

ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया । इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥ अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । ननु ऊहबाधयोर्न मिथो हेतुहेतुमत्ता । ऊहो नाम प्राकृतस्य प्रयोगस्यान्यथाभावः । नच तदधीनो बाधः कृष्णलेषु ह्यवघातस्य बाधः । नच तत्रोहोऽस्ति अननुष्ठानात् । नह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति, यत्र चोहो नीवारादौ न तत्र बाध इति विषयभेदात्[1] । नानेयोरन्योन्यहेतुहेतुमत्ता[2] । यत्र हि द्रव्यान्तरे देवतान्तरे वा प्राकृतं

---

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥** शिष्यावधानार्थं वृत्तकथनपूर्वकं वर्तिष्यमाणं प्रतिजानीते—**ऊह इति** । विकृतिष्वतिदिष्टानामङ्गानामियत्तेत्यन्वयः । अभ्युच्चयो वैकृतैः प्राकृतानां समुच्चयः । अत्र बाधाभ्युच्चययोर्नाध्यायार्थत्वमध्यायभेदापत्तेरित्याशयेनोक्तमियत्तेति । तथाचाङ्गपरिमाणमेकमेवाध्यायार्थ इति न भेदप्रसक्तिरित्याहुः । वस्तुतस्तु बाध एवाध्यायार्थः । तस्य चैकत्वान्नाध्यायभेदप्रसङ्गः । अतएवानुपदमूहबाधयोरेव संगतिं वक्ष्यति । नच नक्षत्रेष्ट्युपहोमाद्यैर्नारिष्टादीनामभ्युच्चयस्यापि चिन्तनात्कथं बाधस्यैवाध्यायार्थत्वमिति वाच्यम् । बाधापवादतया बाधस्यैव स्थिरीकरणार्थमभ्युच्चयचिन्तनोपपत्तेर्नत्वेतावतास्याध्यायार्थत्वप्रसक्तिः । अन्यथा द्वितीयादावभेदादेरपि प्रतिपादनेन तस्याप्यध्यायार्थत्वप्रसङ्गात् । तस्मादियत्ताभिधीयत इति प्रयोजननिर्देशो नाध्यायार्थनिर्देशः । यथा तन्त्रप्रसङ्गयोरेवैकादशद्वादशाध्यायार्थत्वं प्रयोगपरिमाणं तु फलं, तद्वदिहापि बाध एवाध्यायार्थस्तस्य विकृतिगतपदार्थेयत्ताफलम् । अन्यथा तत्रापि प्रयोगेयत्ताया एवैकादशद्वादशाध्यायार्थत्वं तन्त्रप्रसङ्गयोस्तूपायत्वमिति वक्तुं शक्यत्वेनैकादशद्वादशयोरप्येकाध्यायत्वं स्यादिति ध्येयम् । इदमत्रावधेयम्—अबाधो द्विविधः । अभ्युच्चयपर्यन्तः केवलश्च । यत्र वैकृतेन प्राकृतस्य बाधप्रसक्तावबाधः प्रतिपाद्यते सोऽभ्युच्चयपर्यन्तः । तत्र प्राकृतवैकृतयोरुभयोरप्यनुष्ठेयत्वात् । यत्र तु न वैकृतं किंचित् किंतु प्राकृतस्यैव लुप्तद्वारत्वादिशङ्कया बाधप्रसक्तावबाधो व्युत्पाद्यते स केवलः । तत्र प्राकृतमात्रस्यैवानुष्ठेयत्वेनाभ्युच्चयाभावात् यथा खलेवाल्यादौ पर्यूहणादेः । एवंचाभ्युच्चयग्रहणं केवलाबाधस्याप्युपलक्षणमित्यूहनिरूपणानन्तरं बाधनिरूपणस्यावसरलक्षणा संगतिः । अवसरश्च प्रतिबन्धकजिज्ञासाविच्छेदः । स चोहजिज्ञासाया बाधनिरूपणप्रतिबन्धकत्वमादाय वाच्यः । तच्च प्रतिबन्धकत्वमुभयोर्युगपन्निरूपणप्रसक्तौ घटते नान्यथेत्यभिप्रेत्योभयोर्युगपन्निरूपणप्रसक्तिं संपादयन्नस्याध्यायस्योत्तरषट्कान्तर्भावं दर्शयति—**अतिदिष्टेति** । अवसरलक्षणामेव संगतिं स्पष्टयितुमतिदेशहेतुकत्वाविशेषादूहापेक्षया बाधस्यैव प्रथमनिरूपणं किं न स्यात् परस्परहेतुहेतुमद्भावाभावादिति शङ्कामवतारयति—**नन्विति** । यद्वा प्राभाकरोक्तरीत्या न हेतुहेतुमद्भावः संगतिः किंत्ववसर एवेत्याशयेन हेतुहेतुमद्भावानुपपत्तिशङ्कामवतारयति—**नन्विति** । प्राभाकरा एवमाहुः—अवघाता-

---

१ विषयभेदाच. २ तातयोरन्योन्य.

प्रयोजनमस्ति तद्विषय ऊहः। यत्र तु नास्ति तत्र बाधः। सत्यमेवं तथाप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्तानन्तरं चिन्ता कृता। बाधस्तु तन्निवृत्त्यात्मकः पश्चाच्चिन्त्यते। तत्र प्रथमं तावदिदं चिन्त्यते—किं सर्वं प्राकृतं विकृतौ कर्तव्यमुत लुप्तप्राकृतप्रयोजनं न कर्तव्यमिति। तदर्थमिदं विचार्यते—किं प्राकृतमङ्गजातमङ्गशास्त्रं वा स्वरूपेणैवानादृत्य[१] प्रयोजनं विकृतावतिदिश्यते। सौर्येण भावयेत्। कथम्। आग्नेयस्य यान्यङ्गानि तानिकृत्वेति उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तद्वत्तासंपादनाय य आग्नेयादिगतो व्यापारः सोऽतिदिश्यते। सौर्येण भावयेत, कथं, यथाग्नेयेन तथेति। तत्र पूर्वस्मिन्पक्षेऽतिदेशावगताङ्गभावानां पदार्थानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासंभवं दृष्टादृष्टप्रयोजनकल्पनात्स्वयं दितेऽपि बर्हिषि लवनमदृष्टार्थतया कर्तव्यमिति नास्ति बाधः। उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयं दिते बर्हिष्यभावेनानतिदेशाल्लवनस्वरूपस्य चानतिदेशान्न कर्तव्यं लवनमिति सिद्ध्यति बाधः। तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः। उपदेशानुरूपत्वात्तस्येति मन्वानः सर्वं कर्तव्यं नतु किंचिद्बाधितव्यमित्याह। सिद्धान्तस्तु—'अपेक्षासत्तियोग्यत्वैरुपकारातिदेशनम्॥ तदभावात्पदार्थानामतिदेशो न कल्प्यते॥' यागेन भावयेदिति हि यथा यागः फलसाधनं भवति तथा व्याप्रियेतेत्यर्थः। कथमिति केन व्यापारेण यागः फलसाधनतामापद्यत इत्येवं यागस्य फले[२]सामर्थ्यजनने व्यापरविशेषोऽपेक्षितो नतु व्यापारमात्रं येनावघातादिव्यापारः स्वरूपेणातिदिश्येत। अवघातप्रयाजादिज-

---

देर्विकृत्यपूर्वतादर्थ्ये सति प्राकृतस्थानपतितकृष्णलादौ तच्चिकीर्षायां द्रव्यान्तरेऽनुष्ठेयत्वेन प्रयोगविकारात्मके ऊहे निश्चिते पश्चाद्द्वारचिन्तायां द्वारलोपावतारस्ततो बाधः। एवं चोहस्य साक्षाद्बाधहेतुत्वाभावेऽपि बाधहेतुभूतद्वारलोपद्वारा हेतुत्वमिति तदयुक्तम्। ऊहबाधयोर्विषयभेदेन परस्परवार्तानभिज्ञतया हेतुहेतुमत्त्वस्याभावात्। अवघातादेर्लुप्तार्थस्य विकृत्यपूर्वशेषत्वे च बाधस्यैवासंभवात्। असति तादर्थ्ये तादर्थ्यनिर्वाहाय कृष्णलादाववघातादिचिकीर्षाभावान्न तत्र प्रयोगविकारप्रसक्तिरिति तदुक्तरीत्याप्यूहस्य न बाधहेतुत्वमिति भावः। विषयभेदमेव स्पष्टयति—**यत्रेति**। यद्यपि प्राकृतप्रयोजनलोपाभावेऽपि 'नार्षेयं वृणीते न तौ पशौ करोती'त्यादिप्रतिषेधस्थले 'शरमयं बर्हिर्भवती'त्यादिप्रत्याम्नानस्थलेपि बाधोस्ति तथापि परैरर्थलोपस्थल एवोहस्य हेतुत्वकथनात्तद्विषय एव बाध उदाहृत इति ध्येयम्। **सत्यमिति**। सत्यमूहबाधयोर्न मिथो हेतुहेतुमद्भावस्तथापि उभयोरतिदेशहेतुत्वाविशेषेऽप्यूहस्य प्रत्यासन्नतयान्तरङ्गत्वेन प्रथमं जिज्ञासितत्वात्पदार्थप्राप्तिचिन्तारूपातिदेशविचारानन्तरं तन्निरूप्य संप्रति प्राप्तावसरतया बाधश्चिन्त्यत इत्यर्थः। उपोद्घातत्वेनाद्याधिकरणमवतारयति—**तत्रेति**। अस्य चोपोद्घातत्वमर्थलोपस्थलीयबाधं प्रत्येव प्रतिषेधादौ तदसंभवादिति ध्येयम्। विध्यन्तराधिकरणे शास्त्रातिदेशपक्षस्याप्युक्तेराह—**अङ्गशास्त्रं वेति**। स्वरूपेणेत्यस्य विवरणं **अनादृत्येति**। व्यापारातिदेशमभिनीय दर्शयति—**सौर्येणेति**। यथेत्यनेन प्राकृतप्रकारनिर्देशादृष्टादृष्टप्रयोजनवत्तासंपादनस्यैव प्रकृतौ प्रकारत्वात्तथेत्यनेन स एव निर्दिश्यत इत्यर्थः। फलफलिभावमुपपादयति—**तत्रेति**। **स्वयं दितेपीति**। राजसूये मैत्राबार्हस्पत्येष्टौ 'स्वयं दितं बर्हिर्भवती'तिविहिते स्वयं दिते स्वयं लून इत्यर्थः। **प्राकृतस्येति**। मूलाद्विश्लेषलक्षणस्येति शेषः। तस्य कार्यस्य स्वतःसिद्धत्वादिति भावः। **लवनस्वरूपस्येति**। स्वरूपेण लवनस्यानतिदेशादित्यर्थः। **उपदेशवदिति**। तत्रोपकारवाचकशब्दाभावेन पदार्थोपदेशबलादेव तस्य कल्पनीयतया पदार्थपूर्वकत्वमेवमेवातिदेशस्यापि तत्सारूप्यात्पदार्थपूर्वकत्वेतिदेशावगताङ्गभावनिर्वाहाय दृष्टप्रयोजनालाभेऽदृष्टार्थमप्यनुष्ठेयमिति न कस्यापि बाध इत्यर्थः। **ननु** 'यागेन स्वर्गं कुर्यादि'ति बोधिते कथं केन व्यापारेणेति व्यापारविशेषरूपाणामवघातादीनामेवाकाङ्क्षा ज्ञायते नोपकारस्येत्यत आह—**यागेनेति**। 'यागेन स्वर्गं भावयेदि'ति यागस्य स्वर्गसाधनत्वेनोपदेशे सति अर्थाद्यथा यागस्य स्वर्गसाधनत्वं भवति तथा कुर्यादित्यर्थोऽवगम्यते। ततश्च कथमित्यपेक्षा केन व्यापारेण यागं फलसाधनं कुर्यादिति यागगतफलसाधनतापादकव्यापारविशेषापेक्षा पर्यवसन्ना। ननु यागगतफलसाधनतापादकत्वरूपं विनास्वरूपेण व्यापारापेक्षामात्रं यागगतफलसाधनतारूपसंपादकत्वं च तत्पदार्थजन्यदृष्टादृष्टोपकारसंपादनस्यैव साक्षात्संभवति पदार्थानां तु तादृगुपकारव्यवधानेनेति साक्षात्संबन्धिन उपकारस्यैवापेक्षा नतु व्यवहितानां पदार्थानामित्यर्थः। उपकारो द्विविधः परमोपकारः अवान्तरोपकारश्चेति करणस्य फलसाधनसामर्थ्याचरणात्मक उपकारः परमोपकारः, इत्थं दृष्टादृष्टरूपोपकारसंपादनेन यागं फलसाधनं कुर्यादिति

---

१ नादृतप्रयोजनं. २ फलसाधने,

न्यदृष्टादृष्टोपकारसंपादनं तु भवति यागस्य फलसाधनसामर्थ्यजनने व्यापारः । तस्मादपेक्षावशादुपकारसंपादनस्यैवातिदेशो न पदार्थानाम् । तथा संनिधिरपि तस्यैव वैकृतं वाक्यं चोदनासामान्येन प्राकृतं प्रधानवाक्यमुपस्थापयति, तच्च वाक्यं स्वार्थमुपस्थापयति, तस्य च स्वार्थोऽशत्रययुक्ता भावना, तत्र साध्यसाधनांशावनपेक्षितत्वादनादृत्य तृतीयोऽंशो गृह्यते, सचांगजन्योपकारसंपादनात्मा नाङ्गस्वरूपाणि तथा कथमाकाङ्क्षापूरणयोग्यतापि यागगतव्यापारस्यैव नाङ्गानाम् । तस्मादपेक्षासंनिधियोग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानामतिदेशो न पदार्थस्वरूपाणाम् । अपेक्षाद्यभावात् । एवं शास्त्रस्वरूपाणां एवं च विशिष्टकार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः । ततश्च यस्यां विकृतौ यत्प्राकृतं कार्यं न संभवति तस्यां तस्यासंभवादेवानतिदेशान्न तद्वशेन पदार्थप्राप्तिः स्वरूपस्य नास्त्येवातिदेशः । तदिदमुक्तं लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीति । यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य तस्य जनकापेक्षायां पदार्थानामपि पुनर्विकृत्यपूर्वेण तादर्थ्यादन्वयमिच्छति तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्यावगमात्तदुपपत्तये द्वारान्तरं परिकल्प्यानुष्ठानं स्यात् । पदार्थापोहेनच स्वरूपमतिदिशता किं तत्स्वरूपमतिदेष्टव्यम् । न तावत्प्रकृत्युपकारव्यक्तिर्विकृतौ शक्या कर्तुं तादृशस्तूपकारोऽतिदिश्यते तादृक्त्वं च न दर्शपूर्णमाससंबन्धितया । नहि विकृतौ तत्संबन्धिता संभवति तेन प्रयाजादिमत्तयैव तादृक्त्वमिति तादृग्रूपातिदेशेऽर्थसिद्ध एव पदार्थानामतिदेशोऽपि विशिष्टविधिनेव विशेषणानां विधिरिति व्यर्थः पृथक्पदार्थातिदेशः ।

---

फलसाधनसामर्थ्याचरणरूपः । परमोपकारसाधनत्वेन विधीयमानो दृष्टादृष्टसंपादनलक्षणो व्यापारः अवान्तरोपकारः । तत्र साधनोपदेशबलादेव तत्सामर्थ्याचरणलक्षणोपकारस्यार्थप्राप्तत्वेनाप्राप्तस्तदुपायविशेषभूतोऽवान्तरव्यापार एवातिदिश्यते इति दृष्टादृष्टोपकारसंपादनस्यैवाकाङ्क्षाप्रतिपादनेन सूचितम् । तथाच कारिकायामप्युपकारशब्देनावान्तरोपकारो विवक्षित इति ध्येयम् । **नाङ्गेति** । नचाङ्गस्वरूपाणां तृतीयांशत्वाभावेऽप्यङ्गजन्योपकारलक्षणतृतीयांशोपस्थितौ विशेषणभूताङ्गानामप्युपस्थितत्वादस्ति संनिधिरिति वाच्यम् । एवमपि स्वातन्त्र्येणाङ्गोपस्थित्यभावादिति भावः । **तथेति** । उक्तरीत्या कथमाकाङ्क्षाया उपकारविषयत्वादिति भावः । **एवमिति** । शास्त्राणामपि न स्वरूपेणातिदेशः किंतूपकारान्वितपदार्थपृष्ठभावेनेत्यर्थः । **ननु** पदार्थातिदेशाभावे पदार्थानां कथं विकृत्यङ्गत्वं तादर्थ्येन विधानाभावादित्यत आह—**एवं चेति** । **तस्यामिति** । तस्यां विकृतौ तस्य प्राकृतकार्यस्येत्यर्थः । **स्वरूपस्येति** । येन दृष्टालाभेऽप्यदृष्टं परिकल्प्यानुष्ठानं स्यादिति शेषः । तथाच तद्वर्ज्यमेवातिदेश इत्यर्थः । **तदिदमिति** । इदं च भाष्यं स्वमत एवानुगुणं परमते तु पृथक्पदार्थातिदेशाङ्गीकाराद्भाष्यमनुपपन्नमित्याशयः । प्राभाकरास्तु—परमोपकार एवातिदिश्यते तस्यैव फलजननसामर्थ्योद्बोधरूपतया प्रथममपेक्षितत्वात्तस्य च जनकापेक्षायां पदार्था अपि पृथगतिदिश्यन्ते नत्ववान्तरोपकारमुखेन पदार्थातिदेशस्तेनावघातादेस्तुषविमोकलक्षणावान्तरोपकाराभावेऽपि परमोपकारसद्भावात्पृथक्पदार्थातिदेशेनावहननादेस्तदर्थतया बोधनादस्त्येव कृष्णलचरावङ्गत्वं द्वारलोपात्त्वनुष्ठानं परं बाध्यते नतु तद्वर्ज्यमतिदेश इति वदन्ति । तन्मतमनूद्य दूषयति—**यस्त्वित्यादिना** । परमोपकारस्यापि पदार्थविशिष्टस्यातिदेशो पृथक्पदार्थातिदेशो न स्यादित्याशयेनोक्तम् । **पदार्थाननुरक्तमिति** । इष्टिषु सौमिकाङ्गजन्योपकारं व्यावर्तयति—**तदुपलक्षितमिति** । **तन्मत इति** । यदि पृथक्पदार्थातिदेशबलेन बाधितस्याप्यङ्गत्वमङ्गीक्रियते तर्हि तद्बलात्कृष्णलं श्रपयतीति उपदेशावगताङ्गभावस्य श्रपणस्येवातिदेशावगताङ्गभावानामवहननादीनामपि दृष्टद्वारा संभवेऽदृष्टं परिकल्प्यानुष्ठानप्रसङ्गात्तदभिमतोऽनुष्ठानबाधोऽपि न स्यादित्यर्थः । किंच पदार्थाननुरक्तोपकारातिदेशे सौमिकोपकारादिव्यावृत्त्युपलक्ष्याभावादतिप्रसङ्गः स्यात्तत्परिहारायास्मदुक्तरीत्या पदार्थविशिष्टस्यैवोपकारस्यातिदेशो वक्तव्य इत्याशयेन पदार्थाननुरक्तोपकारमात्रातिदेशं दूषयति—**पदार्थेति** । **किंतत्स्वरूपमिति** । अतिप्रसङ्गपरिहाराय किंचिद्रूपस्य वक्तव्यत्वादिति भावः । तत्र प्राकृतोपकारव्यक्तिविशेषस्य स्वतो व्यावृत्तत्वेऽपि नातिदेशसंभवः तस्य प्रकृतिमात्रनिष्ठत्वेन विकृतौ कर्तुमशक्यत्वादित्याह—**न तावदिति** । शङ्कते—**तादृश इति** । प्राकृतोपकारसदृश इत्यर्थः । तस्य विकृतिसंबन्धयोग्यत्वादतिदेशयोग्यतास्तीति भावः । तादृशत्वं विविच्यमानमस्मत्पक्ष एव पर्यवस्यतीत्याशयेन परिहरति—**तादृशत्वमिति** । ननु न प्रयाजादिविशिष्टत्वेन तादृशत्वं किंतु प्रयाजादिप्रयुक्तवैजात्यविशिष्ट-

---

१ फलसामर्थ्यं. २ संभवानतिदेशा. ३ तादृशत्वं च.

स्यान्मतं कारणभेदे कार्यभेदस्यावश्यंभावाद्यत्प्रयाजाद्यधीनमुपकारान्तराद्व्यावृत्तं सर्वदर्शपूर्णमासोपकारेष्वनुवृत्तमुपकाररूपं तदतिदिश्यत इति तथापि ततएव प्रयाजादिप्राप्तिः सिद्ध्येत्। नहि तस्य तस्मादन्यत उत्पत्तिसंभवः कारणभेदे कार्यभेदादिति त्वयैवोक्तत्वात्। तस्मादनर्थकोयं पदार्थातिदेशः केवलमूहबाधविघाताय स्यादित्यास्तां तावत्। **ननु** सप्तमे विध्यन्तातिदेश इत्युक्तं, विध्यन्तश्च ब्राह्मणम्, अतः कथमिह शास्त्रातिदेशो निराक्रियते। उच्यते—कार्यातिदेशादार्थिको यः शास्त्रातिदेशस्तदभिप्रायं तत्। अपिच विध्यन्तशब्देन प्राकृतस्य प्रधानविधेर्योऽन्तिमोंऽशः स उच्यते। नच 'समिधो यजति व्रीहीनवहन्ती'ति प्रत्यक्षश्रुतमात्रं प्रधानवाक्यस्य शेषः। किं तर्हि कल्पितकार्यवाचिशब्दसहितमीदृशमङ्गशास्त्रम् 'अवघातेन वितुषीकुर्याद्धवि'रिति। ततश्चेदृशस्यैवातिदेशः ईदृशस्य च कृष्णलचरावतिदेशासंभवात्सिद्धो बाधः। तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालोचनया झटिति प्राप्तिमवगतामपि भ्रान्तीकृत्य तद्व्यतिरिक्ताङ्गविषयमतिदेशशास्त्रमुपसंह्रियते। तेन 'स्वयं दितं बर्हिर्भवती'त्यादौ लवनादयस्तन्मन्त्रास्तत्साधनभूताश्च परश्वादयो न प्रवर्तन्ते॥

**एवंवा**॥ 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम' इति श्रूयते। तत्रावघातः कर्तव्यो नवेति संशये चरुशब्दोऽचरौ चरुधर्मविधानार्थः। तेन लुप्तार्थोऽप्यवघातो वचनाच्छ्रपणवत्कर्तव्य इति विशेषाशङ्कां विनाप्यवघातेनालुप्तार्थैरेव धर्मैः[3] वैशद्येन चोपपन्नश्चरुशब्दो नावघातं प्रापयितुमलं,

त्वेन। एवंच प्रयाजादीनां विशेषणत्वाभावान्नार्थात्प्राप्तिरिति शङ्कते—**स्यान्मतमिति**। एवं विशेषणतयार्थाक्षेपाभावेऽपि कारणतयैवाक्षेपसंभवान्न पदार्थेषु पृथगतिदेशशास्त्रप्रवृत्तिरिति परिहरति—**तथापीति**। प्रत्युत प्रतिकूलोपीत्याह—**केवलमिति**। स्वरूपेण पृथक्पदार्थातिदेशेऽग्नये जुष्टमिति मन्त्रस्याप्यग्निपदयुक्ततयैव सौर्यादौ प्राप्तेरग्निपदबाधेन सूर्यपदप्रक्षेपरूप ऊहः प्रागुक्तरीत्या कृष्णलादाववघातादेर्बाधश्च न स्यादिति प्रतिकूल एव पृथक्पदार्थातिदेश इत्यर्थः। **ननु** सप्तमे 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेते'ति विध्यन्तशब्दस्वारस्यबलाच्छास्त्रातिदेशो व्यवस्थापितः प्रकृते चोपकार एव साक्षादतिदिश्यते न शास्त्रं पदार्थो वेत्युच्यते तदेतत्परस्परव्याहतम्। अथैतद्दोषपरिहाराय पदार्थानामेवोपकारमुखेनातिदेशः शास्त्रस्य च साक्षादेवातिदेश इत्युच्यते। तथासति शास्त्रबलात्कृष्णलादौ दृष्टाभावेऽप्यदृष्टार्थोऽवघातः स्यात्सर्वौषधावघातवदिति बाधोपि न स्यादिति शङ्कते—**नन्विति**। सप्तमेऽपि न साक्षाच्छास्त्रातिदेशो व्युत्पाद्यते येन विरोधः स्यात् किंतूपकारमुखेनैवातो न विरोध इति परिहरति—**उच्यत इति**। विध्यन्तशब्दस्वारस्यादप्युपकारमुखातिदेश एवेत्याह—**अपिचेति**। **नचेति**। प्रधानविधिना स्वरूपेण पदार्थानामनपेक्षितत्वादुपकारस्यैवापेक्षितत्वादिते भावः। **ईदृशमिति**। नत्ववघातं कुर्यादित्येतादृशमित्यर्थः। एवं चोपकारमुखेनैव शास्त्रातिदेशाङ्गीकारान्न बाधानुपपत्तिरित्याह—**ईदृशस्य चेति**। ननु तद्वर्ज्यातिदेशे कथं प्राप्तबाध इत्यत आह—**तस्मादिति**। नत्वतिदेशशास्त्रं प्रथमतः प्रवर्तमानं तद्वर्ज्यमेव प्रवर्तत इति वदामः येनावघातादिप्रापकशास्त्रस्याभावाच्छ्रुतिलिङ्गादिष्विवाप्राप्तबाधः स्यात् किंतु प्रापकं शास्त्रं सामान्यतः सर्वपदार्थविषयं प्रवर्तते तस्य तु तात्पर्यं तद्वर्ज्यमिति कल्प्यत इत्युच्यते तस्मात्प्रापकशास्त्रसद्भावेन तस्य तात्पर्यानालोचनदशायां जायते या भ्रमरूपा प्रसक्तिस्तामादाय प्राप्तबाधत्वसंभवः। श्रुतिलिङ्गादौ तु प्रबलप्रमाणेन विनियोगे सत्याकाङ्क्षारूपस्य शास्त्रकल्पकस्याभावात्प्रापकशास्त्रमेव नास्तीत्यप्राप्तबाध इति भावः। सूत्रार्थस्तु—प्रकरणान्तरे विकृतिलक्षणे विधेः विधीयमानपदार्थानां विधायकशास्त्रस्य चातिदेशात्सर्वेषामनुष्ठानं स्यान्न कस्यचिद्बाध इति॥ **एवंवा**॥ एवं सामान्यविषयतया व्याख्याय वक्ष्यमाणविशेषाशङ्कानिराकरणार्थमुदाहरणे विशेषविषयतया वर्णिकान्तरमाह—**एवंवेति**। **शतेति**। शतं स्वर्णानि कृष्णलानि कृष्णलतुलितानि यस्य तमित्यर्थ इति भट्टभास्करः। **तत्रेति**। नचावघातस्य हविःप्रकृतिद्रव्यं संस्कार्यमित्युक्तं नवमे कृष्णलानां च हविष्ट्वमेव न प्रकृतित्वमित्यवघातप्रसक्तेरेवाभावादयं विचारोऽनुपपन्न इति वाच्यम्। सप्रकृतिकहविःकार्ये कृष्णलविधानेनहविषस्तत्प्रकृतेश्च निवृत्त्या कृष्णलानां हविःस्थानापन्नत्ववद्धविःप्रकृतिस्थानापन्नत्वमप्यस्तीत्यवघातप्राप्त्यविरोधात्। **चरुशब्द इति**। ओदनवचनस्य चरुशब्दस्य कृष्णलेषु मुख्यत्वाभावाद्गौण्या वृत्त्या धर्मविधानार्थः स इत्यर्थः। **श्रपणवदिति**। सिद्धान्ताभिप्रायेणायं दृष्टान्तः। पूर्वपक्षे तु चरुशब्दस्य चरुधर्मविधायकत्वेनावघातादिवच्छ्रपणस्यापि ततएव प्राप्त्या घृते श्रपयतीत्यस्यानुवादकतयावघातादितुल्ययोगक्षेमस्य श्रपणस्य वचनबलात्कर्तव्यतया दृष्टान्तत्वासंभवादिति ध्येयम्। **अलुप्तेति**। प्रोक्षणादिभिरिति शेषः। लोकसिद्धं धर्ममाह—**वैशद्येनेति**। विभक्तावयवत्वेनेत्यर्थः। **उपपन्न इति**। तथाचोक्तधर्मनिबन्धनसिद्धसादृश्यानुवादकश्चरुशब्दो

१ वाक्यशेषः. २ विशेषशङ्का विना. ३ धर्मै वैशद्येन.

श्रपणं तु घृते श्रपयतीत्याहत्य विधानात्क्रियत इति वैषम्यम् ॥ **एवंवा** ॥ 'वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् तंबर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुं चामुं च व्यूहामीति यं द्विष्यात्तं ध्यायेत् । यदधोवमृज्येत यच्च स्फ्य आश्लिष्येत तद्विष्णव उरुक्रमायावद्यती'तिश्रूयते, तत्र संशयः, किं वैश्वदेविकदेवतावाहनकाले विष्णोरावाहनं कर्तव्यं नेति । तत्र चोदकप्राप्तेः कर्तव्यम् । **ननु** कथं पुनश्चोदकप्राप्तिः । नहीयं देवता प्राकृत्याः कस्याश्चिद्देवतायाः कार्ये वर्तते किंत्वप्राकृतकार्येयम् । अतोऽस्याः यूपावटस्तरणबर्हिषीव बर्हिर्धर्मा नावाहनं प्राप्नोति । सत्यम् । वैश्वदेविकचोदकेन न प्राप्नोति स्वयमेव त्वयं वैष्णवयाग औषधद्रव्यकत्वादेकदेवतात्वाच्चाग्नेयविकारः । तत्र वैश्वदेविकतन्त्रमध्यपातात्सर्वाण्यङ्गानि प्रसङ्गेनोपकुर्वन्तीति न पृथक्क्रियन्ते । आवाहनं त्वकृतार्थत्वात्कर्तव्यमिति प्राप्ते ब्रूमः—नैमित्तिकविधेर्निमित्तापेक्षत्वान्निमित्तस्य च स्फ्यश्लेषादेरवश्यंभावाभावेन देवतावाहनकाले निश्चयासंभवादनिश्चितसद्भावमुरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षममविहितं चावाहनं कृतमपि निष्फलमेव तस्मान्न कर्तव्यम् ॥

दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् ॥ २ ॥

## इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

आरम्भणीया सोमाङ्गदीक्षणीयादिगा न वा ॥ अलोपादादिमोऽन्त्यः स्यादारम्भद्वारलोपनात् ॥ ७ ॥

दर्शपूर्णमासयोरारम्भणीया श्रुता सा विकृतिष्वपि कर्तव्येति द्वादशे वक्ष्यते सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्तव्या नेति विचारः—'कर्तव्या चोदकप्राप्तेरिति प्राप्तेऽभिधीयते ॥ अङ्गभू-

---

न साध्यसादृश्येनाप्राप्तधर्मविध्यर्थो विधौ गौणत्वायोगादिति भावः ॥ **एवंवा** ॥ यत्रार्थलोपो निश्चितस्तत्परतया व्याख्याय संप्रति यत्रार्थलोपसंदेहस्तदुदाहरणविषयतया वर्णकान्तरमाह—**एवंवेति** । **वैश्वदेवमिति** । शत्रुवधकामो विश्वेदेवदेवताकं चरुद्रव्यकं यागं कुर्यात्तत्रेडाभक्षणानन्तरं चरुं बर्हिषि स्थापयित्वा प्रकृतिवद्धस्तेन ऋत्विग्भ्यश्चतुर्धा न विभजेत् किंतु इदमहं चरुव्यूहनं कुर्वन्नमुं चामुं च शत्रुं व्यूहामीत्येतदर्थकमिदमहमिति मन्त्रमुच्चारयन्स्वशत्रुं च मनसा ध्यायन् शम्यया स्फ्येन च विभजेत् । तत्र व्यूहनसमये बर्हिषोधस्ताद्भूम्यां यदवमृज्यते पतति यच्च स्फ्ये संश्लिष्टं तदुभयमुरुक्रमाय विष्णवेऽवद्येत् । उरुक्रमगुणकविष्णुदेवताकयागेन तत्प्रतिपादयेदित्यर्थः । **वैश्वदेविकेति** । स च सामिधेनीप्रयाजमध्यकालः । **चोदकेति** । वैष्णवयागे चोदकप्राप्तेरित्यर्थः । चोदकशब्दस्य वैश्वदेविकचोदकपरत्वं मत्वा शङ्कते—**नन्विति** । प्रकृतावाज्यभागप्रधानयागप्रयाजानुयाजस्विष्टकृद्देवतानामावाहनं । विष्णोश्च वैश्वदेविकयागे आज्यभागादिदेवतात्वाभावादाज्यभागादिदेवताकार्यतत्तद्यागनिर्वाहकत्वाभावेनाप्राकृतकार्यत्वादावाहनं न भजते । वेदिस्तरणहविरासादनादिलक्षणप्राकृतबर्हिःकार्यकरत्वाभावेन यूपावटास्तरणार्थबर्हिरिव बर्हिर्धर्मांल्लवनादीनित्यर्थः । न वैश्वदेवचोदकश्चोदकशब्दार्थः किंतु वैष्णवचोदक इत्याशयमाविष्करोति—**स्वयमिति** । ननु यदि वैष्णवयागे पृथक्चोदकप्रवृत्तिस्तर्हि प्रयाजादीन्यपि पृथगनुष्ठेयानि स्युरित्यत आह—**तत्रेति** । **नैमित्तिकेति** । विष्ण्वावाहनस्य प्रयोजको वैष्णवयागविधिः सच निमित्तनिश्चयदशायामेव प्रधानं प्रयोजयन्नङ्गानुष्ठापको नच वैश्वदेविकावाहनकाले भाविस्फ्यश्लेषादिलक्षणनिमित्तनिश्चयोऽस्तीति नावाहनं कार्यमित्यर्थः । **ननु** निमित्तसंदेहेऽप्यावाहनं क्रियतां तत्र यदि दैवान्निमित्तं भविष्यति तदोपकरिष्यतीत्यत आह—**अविहितंचेति** । अधिकारिणं प्रत्यङ्गविधिः निमित्तसंदेहदशायां चाधिकाराभावेनाविहितत्वादनधिकारकृतत्वाच्च कृतमपि निष्फलं स्यादित्यर्थः । **तस्मादिति** । वैश्वदेविकावाहनकाल इति शेषः । यदा तु निमित्तनिश्चयश्चतुर्धाकरणकाले तदा देवतावाहनं वैश्वदेविकयागेऽसत्वेन प्रसङ्गासंभवात्पौरोडाशिकाज्यभागन्यायेन कर्तव्यमित्युक्तं तन्त्ररत्ने ॥

**इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात्** ॥ ४ ॥ नन्वारम्भणीया पुरुषसंस्कारद्वारा दर्शपूर्णमासाङ्गम् । स च संस्कारः सकृत्कृत एव सर्वप्राकृतप्रयोगेष्विव विकृतिष्वप्युपकरिष्यतीति विकृतौ पृथगनुष्ठानाप्रसक्तेरयं विचारोऽनुपपन्न इत्यत आह—**सेति** । पुरुषसंस्कारत्वमपि न साक्षात् किंत्वाग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इत्यारम्भसंयोगादारम्भद्वारेत्युक्तं नवमे । आरम्भश्च सर्वप्रयोगसाधारण इति प्रकृतौ प्रतिप्रयोगमारम्भणीयाभावेऽपि प्रकृतिविकृत्योरारम्भभेदाद्विकृतिष्वारम्भणीया कर्तव्येति द्वादशे वक्ष्यत इत्यर्थः । इदंच वस्तुकथनमात्रं

तास्वियं लुप्तद्वारत्वान्न प्रवर्तते ॥ आरप्स्यमानपुरुषसंस्कारार्थेन्नमिष्यते ॥ नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः ॥' आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत् अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः । नचाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वालीयारम्भोऽस्ति । ज्योतिष्टोमे तावन्न कर्तव्या । तस्या- पूर्वत्वाद्दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात् ज्योतिष्टोमे च प्रवृत्तोर्थोऽदङ्गेष्वपि प्रवृत्तो भवति प्रथमं च प्रवर्तनमारम्भः तेन प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वान्न तेषां पृथगारम्भोऽस्ति तदभावाच्च तद्द्वारारम्भणीया लुप्तार्थत्वान्न कर्तव्या ॥

अनुयज्ञादिष्वारम्भणीयाबाधाधिकरणम् ॥ ३ ॥

**प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥**

सा किमस्त्यनुमत्यादौ न वाङ्गिन्यस्त्युपक्रमात् ॥ संघस्योपक्रमो नेष्टेर्द्वारलोपान्न सा भवेत् ॥ ८ ॥

**अथ यत्रैष्टिकान्यन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये, तत्र किमैष्टिकेष्वारम्भणीया स्यान्नवेति पूर्वाधिकरणे प्रधानविषयारम्भो नाङ्गानामित्युक्तं स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः तेनालुप्तार्थत्वादारम्भणीया कर्तव्येति प्राप्ते ब्रूमः—प्रकृतौ हि यदङ्गमारम्भणीया तद्विषय आरम्भो द्वारं 'दर्शपूर्णमासावारप्स्यमान' इति वचनात् । इह त्विष्टिपशुसोमानामेकप्रयोगभाजामेकः सर्वेषु [१]व्यक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते अग्नीषोमीयहविरिवाग्निना । तेनात्रापीष्टीनामारम्भाभावाल्लुप्तार्थैवारम्भणीया ॥**

---

प्रकृत्यर्थतयानुष्ठितारम्भणीयाया विकृत्युपकारकत्वाभ्युपगमेऽपि सोमपूर्वत्वपक्षे दीक्षणीयाद्यनुष्ठानात्पूर्वं प्रकृत्यर्थतया तस्या- नुष्ठानाभावेन विचारप्रवृत्त्यविरोधादिति ध्येयम् । द्वारनिश्चयाभावाद्देवतावाहनस्य बाधेऽपि दीक्षणीयादीनामप्यनुष्ठेयतया पृथगारम्भसद्भावेनेह द्वारनिश्चयादारम्भणीयाया न बाध इत्युत्थितेः संगतिः । **नन्वनारब्धस्य** कर्तुमशक्यत्वादस्त्येव दीक्षणीयादेरारम्भ इत्यत आह—**नारम्भ इति** । आरम्भो नामौदासीन्यप्रच्युतिः । ज्योतिष्टोमं च कर्तुं पुरुष औदा- सीन्यात्प्रच्युतो न दीक्षणीयादीन्कर्तुं, किंतु तयैव प्रच्युत्याङ्गान्यप्यनुतिष्ठति प्रसङ्गादिति दीक्षणीयादीनां प्रधानारम्भादे- वानुष्ठानसिद्धेर्न स्वार्थ आरम्भोऽस्तीत्यर्थः । **ननु** न ज्योतिष्टोममात्रं कर्तुमसावौदासीन्यात्प्रच्यवते किंतु साङ्गम् । ततश्चा- स्त्यङ्गानामप्यारम्भ इत्यत आह—**ज्योतिष्टोम इति** । सत्यम् । साङ्गप्रधानचिकीर्षयारम्भस्तथाप्यसावङ्गेषु प्रधानेषु च नहि भिन्नः किंत्वेकस्तथाच यदा प्रधानमारभ्यते तदानीं प्रधानार्थतयारम्भणीया कर्तव्येति न चोद्यस्यावकाशोऽस्ति । प्रधा- नस्य ज्योतिष्टोमस्याविकृतित्वात्, किंतु तमेवारम्भमादाय दीक्षणीयाद्यर्थतयारम्भणीया कर्तव्येति चोदनीयम् । नच तत्संभवति तत्समये दीक्षणीयादीनां प्राप्तावसरत्वाभावात्प्रधानारम्भसमये प्राप्तावसरत्वाभावेऽपि यद्यङ्गार्थतया पृथगार- म्भस्तदाङ्गानुष्ठानसमये प्रसज्येतारम्भणीया प्राप्तावसरत्वात् । नच पृथगारम्भोऽस्ति । प्रसङ्गादेव तत्सिद्धेरित्यर्थः । **प्रथमं चेति** । औदासीन्यप्रच्युतिलक्षणं प्रवर्तनमित्यर्थः । सूत्रार्थस्तु—आरम्भणीयेष्टिर्दीक्षणीयादिकान्निवर्तेतारम्भद्वारकत्वादा- रम्भस्य च प्रधानसंयोगादङ्गेषु पृथगारम्भाभावादिति ॥

**प्रधानाच्च० ॥ ५ ॥ ऐष्टिकानीति** । अनुमत्यादीनि इष्टिपशुरूपाणीत्यर्थः । **अन्यानीति** । सोमयागरूपाणी- त्यर्थः । नवेति संशये इति शेषः । संगतिं सूचयन्नेव पूर्वपक्षमाह—**पूर्वेति** । नन्वेकविषयोऽप्यारम्भः एकेनापि व्यपदेष्टुं शक्यते यथा डित्थडपित्थयोर्माता डित्थमातेत्याशङ्क्य यत्र प्रत्येकं परिसमाप्तिस्तत्रैकेनापि व्यवहारः यत्र न समाप्तिस्तत्र नैकेन व्यवहार इति वैषम्यमभिप्रेत्याह—**इह त्विति** । भाष्यकारेण राजसूयप्रकरणेऽग्निष्टोममग्रे आहरतीत्यारम्भणीया- कार्येऽग्निष्टोमविधानात्प्रत्याम्नाताद्बाध इति सिद्धान्तितं तदयुक्तम् । उक्तवाक्यस्य क्रमविधिपरतयोपपन्नत्वेन प्रत्याम्नानाभा- वात्, तस्माद्द्वारलोपादेव बाध इति वार्तिककारेण सिद्धान्तितं, तदेव ग्रन्थकारेणाप्युक्तमिति ध्येयम् । सूत्रार्थस्तु—सौ- मिकसंयुक्तादैष्टिकात्प्रधानादप्यारम्भणीया निवर्तेत सर्वारम्भार्थतयाग्निष्टोमस्य विधानेनारम्भणीयाया अनङ्गत्वादिति भाष्य- कारपक्षे, वार्तिककारपक्षे तु सर्वेषामारम्भस्य साधारण्येनैष्टिकासाधारणाङ्गत्वाभावादिति ॥

---

१ व्यासक्त आरम्भो. २ प्रतिकूलाम्नानाभावात्.

आरम्भणीयायामारम्भणीयाबाधाधिकरणम् ॥ ४ ॥

**तस्यां तु स्यात्प्रयाजवत् ॥६॥ [न वाङ्गभूतत्वात् ॥७॥ एकवाक्यत्वाच्च ॥८॥]**

**तस्यां सास्ति न वाङ्गत्वेऽप्यस्याः पृथगुपक्रमात् ॥ अस्ति नैवं वचोऽशक्तेर्विधाने चातिदेशने ॥ ९ ॥**

किमारम्भणीयायामारम्भणीया कर्तव्या नेति संशयः । **नन्वङ्गभूतेयं** दर्शपूर्णमासयोः । अतो दीक्षणीयादिवदस्यां न कर्तव्या । तस्माद्गतार्थमेतत् । उच्यते—सत्यमङ्गभूता तथापि पृथगारम्भा[1] भवति न प्रधानारम्भेण सिध्यति । नह्यस्यां[2] वेलायामारब्धौ दर्शपूर्णमासौ तयोरारप्स्यमानयोरेषा विहिता । यदि चारब्धौ भवेतां तत आरम्भणीयैव न कर्तव्या । साहि कर्तारमारम्भयोग्यं कर्तुं क्रियते । तौ चेदारब्धौ किमर्था सा । तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा भवतीत्यलुप्तार्थत्वादस्यामारम्भणीया कर्तव्या । नैवम् । अशक्यासावतिदेष्टुं सा हीदानीं विधीयते । दूरतरं च तस्याः दर्शपूर्णमासाङ्गत्वम् । यच्च प्रकृतावज्ञातं न तद्विकृतावतिदेष्टुं शक्यम् । तदेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति विहितवच्चातिदिशतीति न कथंचिदवकल्पते । तस्मात्तद्व्यतिरिक्तेतिकर्तव्यतातिदिश्यते ॥

खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

**कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्ये श्रुतिसंयोगात् ॥ ९ ॥**

**यूपाहुतिः खलेवाल्यां कार्या नो वातिदेशतः ॥ कार्या होमच्छेदनार्थो नाच्छेद्यायां स युज्यते ॥ १० ॥**

साद्यस्के श्रूयते 'खलेवाली यूपो भवती'ति । प्रकृतौ चास्ति यूपाहुतिः '[3]यूपमाच्छेष्यता होत-

---

**तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥** इह स्वार्थतया पृथगारम्भसंभवात्कर्तव्येत्युत्थितेः संगतिः । पूर्वतराधिकरणेन गतार्थतां शङ्कते—**नन्विति** । **नह्यस्यामिति** । आरम्भणीयाचिकीर्षावेलायां न दर्शपूर्णमासावारब्धौ । आरप्स्यमान इति लृटा भविष्यदारम्भकर्तृपुरुषसंस्कारकत्वावगमादित्यर्थः । तदेवोपपादयति—**साहीति** । तथाच प्रयोगविषय आरम्भो दीक्षणीयादेश्च प्रधानेन सह प्रयोगः न पृथगिति पृथगारम्भाभावेऽपि आरम्भणीयायाः प्रयोगभेदादारम्भभेदोऽप्यस्तीति कर्तव्यैव तस्यां सेत्युपसंहरति—**तस्मादिति** । नचैवं तस्यामन्येत्येवमनवस्था स्यादिति वाच्यम् । 'यावतीः शक्नुयात्कर्तुं यस्मिन्नहनि तावतीः ॥ कुर्वतो नानवस्था स्यादि'ति पवमानेष्ट्यधिकरणपूर्वपक्षोक्तप्रकारेणानवस्थाभावात् । नचैवं तेनैवाधिकरणेन गतार्थत्वम् । पवमानहविषामभ्यर्थत्वमेव न दर्शाद्यङ्गत्वमिह त्वङ्गत्वमिति वैषम्येणोत्थानादिति भावः । **दूरतरमिति** । अनिश्चितमिति यावत् । **नन्व**निश्चयेऽप्यङ्गत्वस्य सद्भावमात्रेणातिदेशः किं न स्यादत आह—**यच्चेति** । कथंभावापेक्षा विकृतिभावनासादृश्येनोपस्थितं प्राकृतमित्थंभावं गृह्णाति । सादृश्येनोपस्थितिश्च प्रकृतौ निर्ज्ञातस्यैव न विद्यमानमात्रस्येत्यर्थः । तस्मात्प्रकृतौ निर्ज्ञातस्यैवातिदेश्यत्वादतिदेशसिद्ध्यर्थं पूर्वमेव प्रकृतौ विधानमपेक्षितम् । संप्रति विधीयमानत्वसिद्ध्यर्थं च पूर्वविहितत्वाभावोऽपेक्षितः तदुभयमपि युगपद्विप्रतिषेधादेकत्र न संभवतीत्याह—**तदिति** । तत्तस्मादेकमेवारम्भणीयावाक्यमेतामिष्टिमविहितवत् । स्वार्थे वतिः । अविहितां विदधाति विहितां चातिदिशतीत्ययुक्तम् । ज्ञातत्वाज्ञातत्वयोर्विरोधादित्यर्थः । अन्यश्च वतिनिर्वाहप्रकारो मन्त्राधिकरण एवोक्तः । वैकृतविधिरेव चोदनालिङ्गकल्पितप्रकृतिवच्छब्दसहितः सन् प्रयोगविधिर्भूत्वाङ्गान्यपि विधत्त इत्याशयेन तदेव विहितवच्चातिदिशतीत्युक्तम् । **तस्मादिति** । नचारम्भणीयाविधिसमये दर्शपूर्णमासविधेः कृत्स्नाङ्गोपदेशाभावेनालब्धात्मकत्वात्कथं प्रयाजादेरप्यतिदेश इति वाच्यम् । आरम्भणीयाया न साक्षाद्दर्शपूर्णमासाङ्गत्वं किंतु क्रियार्थायां क्रियायामुपपदे लृट्प्रत्ययबलात्तदङ्गारम्भाङ्गत्वम् । तथाचाङ्गाङ्गोपदेशदशायामपि स्वाङ्गोपदेशमात्रेण तद्विधेर्लब्धात्मकत्वसंभवान्न प्रयाजाद्यतिदेशानुपपत्तिः । सूत्रार्थस्तु—तस्यामारम्भणीयायां सा स्यात् प्रयाजादिवत् ॥

**कर्म च द्रव्यसंयोगार्थ० ॥ ९ ॥ खल इति** । साद्यस्काख्यक्रतोर्यवक्षेत्रं वेदिः तदीयखल उत्तरवेदिः तत्र खलेवारयति बलीवर्दानितस्ततः संचारादिति खलेवाली रलयोरभेदात् । खले बलीवर्दबन्धनार्थं निखाता स्थूणेति यावत् । सैव यूप इत्यर्थः । **यूपमिति** । आच्छेत्येतदाप्तुमित्यर्थं वर्तते एतिस्तु गमने । यूपमाप्तुं गमिष्यता होतव्यमित्यर्थः । आरम्भणीयायां स्वविधिसमये प्रकृत्यङ्गत्वेनाक्लृप्तत्वादकर्तव्यत्वेऽपि यूपाहुतेः क्लृप्तत्वादिह कर्तव्यत्वमित्युत्थितेः संगतिः । यूपमाप्तुमिच्छता क्रियमाणाया यूपाहुतेः गमनार्थत्वाद्गमनस्य च छेदनार्थत्वात्खलेवाल्यां च छेदनाभावेनाहुतिबाधस्यैव न्याय्य-

---

१ पृथगारम्भवती. २ नतस्याः. ३ यूपमच्छेष्यता.

व्य'मिति। सा किं खलेवाल्यां कर्तव्या नेति संशये अतिदेशप्राप्तेः कर्तव्येति प्राप्ते लुप्तार्थत्वादक-र्तव्येत्याह। कथं यूपमाच्छेष्यता होतव्यमिति छेदनार्थो होमः। नच खलेवाल्यां छेदनमस्ति स्वदे-शावस्थितायामेव तस्यां पशुर्बध्यते अतस्तत्र न यूपाहुतिः कर्तव्या॥

खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम्॥ ६॥

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत॥ १०॥ [अपि वा शेषभूतत्वात्त-त्संस्कारः प्रतीयेत॥११॥ समाख्यानं च तद्वत्॥१२॥ मन्त्रवर्णश्च तद्वत्॥१३॥]**

तस्यां स्थाण्वाहुतिः कार्या न वा स्थाणौ विधानतः॥ कर्तव्योपकरोत्यारात्पशौ सा प्रकृताविव॥ ११॥
यूपीयाव्रश्चनस्थाणुद्वाराऽसौ यूपसंस्कृतिः॥ स्रग्वत्तत्संभवात्सेयमयूपाद्विनिवर्तते॥ १२॥

तत्रैव स्थाण्वाहुतिं जुहोतीति सा किं यस्मिन्कस्मिंश्चित्स्थाणावारादुपकारकत्वेन कर्तव्या सती खलेवाल्यामपि स्यात् किंवा यूपाव्रश्चनस्थाणौ कर्तव्या, तद्वारेण यूपस्यैव संस्कारिका सती खलेवा-ल्यामाव्रश्चनस्थाण्वभावेन लुप्तार्थत्वादकर्तव्येति विचारे यूपवियोजिते स्थाणौ क्रियमाणा तद्वारेण न शक्नोति यूपस्योपकर्तुम्। तस्मादारादुपकारिका खलेवाल्यां कर्तव्येति प्राप्ते ब्रूमः—आव्रश्चनस्थाणोः संनिधानात्तद्वारेण च संस्कारत्वे संभवत्यारादुपकारकत्वानुपपत्तेः यूपसंस्कारार्थेयं वियोजितेपि स्थाणौ यूपीयोसावित्येवं क्रियमाणा शक्नोत्येव यूपस्योपकर्तुं देवदत्तधारिताया इव स्रजः शुचिदेशनि-धानं देवदत्तस्य, यद्यपि चादृष्ट एव संस्कारस्तथापि संस्कारत्वमेव संबद्धोपकारित्वलाभादसंबद्धो-पकारिण आरादुपकाराज्ज्यायः। तस्मात्खलेवाल्यां न कर्तव्या॥

---

त्वात् कथं पूर्वःपक्ष इत्यत आह—**अतिदेशेति**। भवेदेवं यदि गमनार्थो होमः स्यात्तत्वेवं 'यूपस्यान्तिके निर्मथित्वा यूपाहुतिं जुहोती'ति यूपान्तिकदेशे होमविधिबलात्प्राप्तगमनानुवादकत्वेन यूपमाच्छेष्यतेत्यस्योपपन्नतया गमनार्थत्वे प्रमाणा-भावात्तथाचादृष्टार्थतयैव यूपाहुतिः साचाञ्जनादिवत्संभवति न बाधितव्येत्यर्थः। उक्तरीत्याऽदृष्टार्थत्वादेव कथं लुप्तार्थत्व-मिति शङ्कते—**कथमिति**। **यूपमिति**। आहवनीयेपि यूपाहुतिविधानेन नित्यमन्तिकदेशगमनप्राप्त्यभावाद्यूपमाच्छेष्य-तेत्यस्य विधायकत्वावश्यंभावे लृट्प्रत्ययेन गमनार्थतया विधीयमानस्य तद्वारा छेदनार्थत्वमेव नत्वदृष्टार्थत्वमित्यर्थः। **नचेति**। प्रागेव छित्त्वा बलीवर्दबन्धनार्थं निखाताया एव तस्या नियोजनार्थत्वादिति भावः। **स्वदेशावस्थितायामे-वेति**। अनेन छेदनार्थगमनाभावेप्यामुं गमनं किं न स्यादिति शङ्कापि निरस्ता। खलस्यैवोत्तरवेदित्वेन खलेवाल्या देव-यजन एव स्थितत्वेनामुं गमनस्याप्यभावादिति। सूत्रार्थस्तु—कर्म चेदं यूपाहुतिलक्षणं यूपसंस्कारार्थम्। तादर्थ्यं च यूप-माच्छेष्यतेति श्रुतिसंयोगाच्छेदनार्थगमनद्वारेति लुप्तार्थत्वान्न कर्तव्यमिति॥

**स्थाणौ तु देशमात्रत्वात्०॥ १०॥ तत्रैवेति**। प्रकृतएव पशुयाग इत्यर्थः। स्थाण्वाहुतिः खलेवाल्यां कर्तव्या न वा, तदर्थं च किमियमारादुपकारिका उत यूपसंस्कारिका, तदर्थं च किं यस्मिन्कस्मिंश्चित्स्थाणौ कर्तव्योत यूपो यस्माच्छिद्यते तस्मिन्यूपाव्रश्चनस्थाणाविति संशयं फलफलिभावं दर्शयन्नेव दर्शयति—**सेति**। यूपाहुतेर्दृष्टार्थत्वेन निवृत्तावपि स्थाण्वाहुति-रदृष्टार्थत्वात्कर्तव्येत्युत्थितेः संगतिः। **ननु** स्थाणौ जुहोतीति सामान्यश्रवणेऽपि संनिधानाद्यूपाव्रश्चनस्यैव ग्राह्यत्वात् खले-वाल्यां च तदसंभवात्कथं पूर्वःपक्ष इत्यत आह—**यूपेति**। यदि यूपाव्रश्चनस्थाणौ क्रियमाणा यूपसंस्कारिका स्यात् तदा व्रश्चनश्रुतेः संनिधानाद्यूपाव्रश्चने संकोचो भवेत्। नच तत्संभवति। यूपासंयुक्ते क्रियमाणाहुतेर्यूपगतसंस्कारजनकत्वायो-गादसंबन्धात्। तस्मादाव्रश्चनश्रुतिसंकोचकाभावात्खलेवाल्यामपि यस्मिन्कस्मिन्स्थाणावारादुपकारकत्वेनाहुतिः कर्तव्ये-त्यर्थः। पूर्वपक्षसारं खण्डयति—**वियोजितेपीति**। संप्रति यूपसंबन्धाभावेऽपि ततो यूपो वृक्ण इत्येतावता यूपसं-स्कारकत्वं भवत्येव। लोके देवदत्तधृतायाः स्रजः शुद्धदेशे निधानमात्रेण देवदत्तस्योपचरितोहमित्यभिमानदर्शनेन पूर्वसं-बन्धमात्रादेव संस्कारकत्वसंभवादित्यर्थः। **ननु** यत्र दृष्टातिशयजनकत्वं तत्रैव संनिपातिनो बलवत्त्वमिह होमाच्च किंचि-द्दृष्टमिति कथं संनिपातित्वलाभाय प्रकृतग्रहणमत आह—**यद्यपीति**। **संबद्धेति**। संनिपातित्वे ह्युपकार्योपकारकयो-र्लोकतः सिद्ध एव परम्परासंबन्धो लभ्यते। तमुपजीव्यादृष्टसंस्कारमात्रं कल्पनीयमारादुपकारकत्वे तूपकार्योपकारकयोः संबन्धोऽपि कल्प्योऽदृष्टमपि कल्प्यमिति गौरवं, ततश्च कल्प्यसंबन्धादारादुपकारकात्क्लृप्तसंबन्धं सामवायिकमदृष्टसंस्कार-द्वारकमपि प्रबलमित्यर्थः। सूत्रार्थस्तु—देशमात्रत्वात्स्थाणोः सप्तम्या आधारमात्रत्वाद् होमार्थतया होमसंस्कार्यत्वाभावाद-निवृत्तिः। स्थाण्वाहुतेः खलेवाल्यामिति॥

---

१ संस्कारार्था सती.

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ॥ ७ ॥

**प्रयाजे च तन्न्यायात् ॥ १४ ॥ [लिङ्गदर्शनाच्च ॥ १५ ॥]**

**अन्त्यः प्रयाज आरात्किमुपकार्युत संस्कृतिः ॥ स्वाहाकारेतिदेवोक्तेर्मांत्रवन्मन्त्रवर्णनात् ॥ १३ ॥**
**आद्यो मैवं चतुर्थ्यादेरभावाद्यागमात्रके ॥ विधिस्तायाऽत्र सौर्यादावर्थोऽग्न्यादिनिवर्तनम् ॥ १४ ॥**

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः 'स्वाहाकारं यजती'ति स किमारादुपकारक उताज्यभागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां संस्कार इति । तदर्थमिदं विचार्यते किं स्वाहाकारं यजतीति देवताविधिरुत नामधेयम् 'स्वाहाग्निं स्वाहा सोम'मित्यादिमन्त्रवर्णात् देवताविधिरिति । तत्र—'वचनाद्देवतालाभे न मन्त्रात्कल्पनं क्षमम् ॥ तस्याश्चानुपयोगित्वाद्भवेदारादुपक्रिया ॥' नहि वचनविहितदेवतासंभवे स्वाहाग्निं स्वाहासोममित्यादिना तत्कल्पना युक्ता । नचायं मन्त्रः करणत्वेन श्रुत्या विधीयते यतस्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत । क्रमप्रकरणविनियोज्यो ह्यसौ । नचाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते । नचाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदैवत्ये यागे सामर्थ्यमवगम्यते, तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मातृशब्दवद्रूढ्या कथंचिद्वृत्तिरङ्गीकर्तव्या । अतो न मान्त्रवर्णिकी देवतेत्यारादुपकारकः । किंच नचायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुं, तेन स्वाहाकारदेवताकयागविधानमिदम् । नच स्वाहाकाराख्या देवतान्यत्रोपयोगिनी या संस्क्रियेत तस्मादारादुपकारकमिदं कर्मेति प्राप्ते उच्यते—'न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते ॥ नच यागविधौ क्षीणो विधत्ते देवतां विधिः ॥' नह्येकार्थविधिसंभवेऽनेकार्थ-

---

**प्रयाजे च तन्न्यायात् ॥ १४ ॥ उत्तम इति** । अन्त्य इत्यर्थः । **तदर्थमिति** । यदि स्वाहाकारमिति देवताविधिस्तदास्याः करिष्यमाणकर्मसमवायाभावादारादुपकारकत्वं, यदि तु नामधेयं तदा मन्त्रवर्णादेव देवताविधिरिति वक्तव्यम् । ततश्चाज्यभागादौ यक्ष्यमाणानामेवाग्न्यादीनां देवतात्वात्तत्संस्कारकत्वमिति फलफलिभावः । **ननु** स्वाहाकारमित्यस्य नामधेयत्वे देवताविध्यभावात्कथं यजतिनिर्वाह इत्यत आह—**स्वाहेति** । स्थाण्वाहुतेरस्तु संस्कारकत्वं स्थाणोः पूर्वं यूपसंबन्धित्वात् । इह तु कथंचिदपि स्वाहाकारस्य समवायाभावान्न संस्कारकत्वमित्युत्थितेः संगतिः । **वचनादिति** । वचनस्य झटिति प्रवृत्तेरिति भावः । किंच मन्त्रस्य विनियोगे सति मन्त्रवर्णतो देवतालाभः । अयं च मन्त्रः क्रमप्रकरणाभ्यां विनियुज्यते । नच तयोरसति मन्त्रसामर्थ्ये विनियोजकत्वं, ततश्च कर्मणो मन्त्रप्रकाश्याग्न्यादिदेवताकत्वनिश्चये मन्त्रसामर्थ्यं पर्यालोच्य क्रमप्रकरणाभ्यां मन्त्रस्य तत्र विनियोगो मन्त्रविनियोगाच्च मन्त्रप्रकाश्याग्न्यादिदेवताकत्वनिश्चय इति परस्पराश्रय इति दूषणं क्रमप्रकरणविनियोज्यो ह्यसावित्यादिनाग्रिमग्रन्थेन वक्ष्यति । तत्र मन्त्रस्य श्रुतिविनियोज्यत्वे कर्मणि देवतानिश्चयाभावेपि सूक्तवाकेन प्रस्तरं प्रहरतीतिवन्मन्त्रविनियोगबलादेव देवताविधिसिद्धेरन्योन्याश्रयानवकाशः स्यादित्यभिप्रेत्य वक्ष्यमाणदूषणोपयोगितया प्रथमं श्रुतिविनियोगं निषेधति—**नचेति** । तस्माच्छ्रुतिविनियोगाभावात्क्रमप्रकरणविनियोज्य एव मन्त्रस्तत्रान्योन्याश्रयः स्यादित्याह—**क्रमेति । नचेति** । क्रमप्रकरणयोर्लिङ्गकल्पनामुखेनैव विनियोजकत्वादिति भावः । **नचाग्न्यादीति** । ततश्चाग्न्यादिदेवताकत्वे कर्मणि निश्चित एव मन्त्रविनियोगसंभव इति परस्पराश्रयः स्यादेवेत्यर्थः । तस्माद्वाचनिकमेव देवताविधानमाश्रयणीयम् । नच तत्र पक्षे स्वाहाकारलक्षणदेवताकत्वात्कर्मणस्तत्र कथमग्न्यादिपदयुक्तस्य सामर्थ्यम् । स्वाहाकारदेवताया अग्न्यादेश्चात्यन्तविलक्षणत्वेन गौणसामर्थ्यस्याप्यभावादिति वाच्यम् । रूढिकल्पनया समर्थत्वोपपत्तेरित्याशयेनाह—**तेनेति । मातृशब्दवदिति** । यथा मातृशब्दो जनन्यां धात्रीमातरि च रूढस्तद्वदित्यर्थः । कथंचिदित्यनेन लोके रूढेरक्लृप्तत्वेऽपि इह विनियोगबलादेव रूढिः कल्पनीयेति सूचयति । किंच स्वाहाकारमित्यस्य देवताविधायकत्वाभावे कथं वाक्येऽन्वयः । नच नामतयान्वयः शङ्कनीयः । स हि तत्प्रख्यन्यायेन विधित्सितस्वाहाकारलक्षणदेवतायाः प्राप्तौ भवति । नचात्र तत्प्राप्तिरस्ति । नच मन्त्रवर्णात्स्वाहाकारलक्षणविधिः कल्पयितुं शक्यते तत्र स्वाहाकारवाचकशब्दाभावात् । अतः स्वाहाकारमित्येव देवताविधिः । नच कर्मविधिपरत्वाद्वाक्यस्य न देवताविधिसंभव इति वाच्यम् । विशिष्टविधिस्वीकारादित्याशयेनाह—**किंचेति । अन्यत्रेति** । नारिष्टादौ सत्यपि मन्त्रे स्वाहाशब्दे तस्यार्थपरतया स्वाहाकारशब्दवाच्यस्वाहाशब्दपरत्वाभावान्न स्वाहाकारदेवताया अन्यत्रोपयोग इत्यर्थः । **न देवतेति** । यदि वचनस्य स्वरसतो देवताविधौ शक्तिः स्यात्तदा वाचनिकदेवताविधिसंभवे मन्त्रवर्णात्तद्विधिरयुक्तः स्यात् । नचात्र द्वितीयान्तस्य स्वाहाकारमित्यस्य देवताविधौ सामर्थ्यम् । देवतायाः संप्रदानतया कर्मकारकत्वाभावेन द्वितीयानुपपत्तेरित्यर्थः । किंच देवताविधिपक्षे विशिष्टविधिर्वाच्यः । स च न संभवतीत्याह—**नचेति । नचैवं** क्वापि विशिष्टविधिर्न

विधिर्युक्तः। संभवति चात्र यागमात्रविधानं स्वाहाकारशब्दस्य, स्वाहाग्निमित्यादिमन्त्रसंबन्धेन नामधेयत्वसंभवात्, करणत्वंच क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य। नचासामर्थ्यं निश्चितं येन विनियोगो न स्यात्। संभवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यम्। यदि यागोऽयं न स्यात् यागोऽपि वा देवतान्तरयुक्तः स्यात्ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं निश्चीयेत। नत्वेतदस्ति तस्माद्योग्यतास्तीत्यविहितो विनियोगः। नच द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते मन्त्रवर्णाद्देवताविधिरिति। न वचनादगत्या देवताविध्याश्रयणम्। मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनमिति नादृष्टार्थकल्पना। तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्तन्ते॥

अग्नियागस्यारादुपकारकत्वाधिकरणम्॥ ८॥

## तथाज्यभागाग्निरपीति चेत्॥ १६॥ व्यपदेशाद्देवतान्तरम्॥ १७॥ [समत्वाच्च॥ १८॥]

**आज्यभागो य आग्नेयः किं मुख्याग्नेः स संस्कृतिः॥ आराद्रुतोपकारी स्यात्पूर्वन्यायेन संस्कृतिः॥ १५॥**
**निगदेऽग्नेर्द्विरुक्तत्वाद्द्विधावेकपदोक्तितः॥ उपकारी ततः सोऽग्निः सौर्यादौ न निवर्तते॥ १६॥**

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते 'आज्यभागावग्नीषोमाभ्यां यजती'ति योऽयमाग्नेय आज्यभागः स किं प्रधानदेवताया अग्नेः संस्कार उतारादुपकारक इति। पूर्वेण न्यायेन संस्कारत्वे प्राप्ते उच्यते—निगदेष्वावाहनादिषु 'अग्निमावह सोममावह अग्निमावह' इत्येवमग्निशब्दस्य द्विःपाठाद्देवतान्तरं गम्यते। सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततःपरभाविनः प्रधानाग्नेरन्य इति गम्यते। विधिवाक्ये चाग्नीषोमाभ्यां यजतीत्येकेन पदेनाग्निः सोमश्च विधीयते तत्र स्पष्टमेव यागंप्रति गुणत्वं सोमस्य। अन्यत्र देवतात्वाभावात्। तद्यदि अग्निः प्रधानं स्यात्ततो वैरूप्यं स्यात्, सोमापेक्षयाज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयम्। अग्न्यपेक्षया तद्विपरीतमिति वचनव्यक्तिभेदात्। तस्मादग्निरपि यागाङ्गत्वेन विधीयते यागस्तु प्रधानकर्मोऽऽरादुपकारकः तेन सौर्यादिषु नाग्निर्निवर्तते। अग्नीषोमीयादिविकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते॥

---

स्यादिति वाच्यम्। विशेष्यमात्रविध्यसंभवस्थले तदङ्गीकारादित्याशयेनाह—**नहीति**। स्वाहाकारशब्दस्य देवताविध्यभावे उक्तमन्वयमुद्धरति—**स्वाहेति**। देवतात्वेन प्राप्त्यभावेऽपि स्वाहाकारसंबन्धमात्रेण वैश्वदेवादिशब्दवत्स्वाहेति कृतिः करणं यस्मिन्निति व्युत्पत्त्या नामत्वसंभवान्नानन्वय इत्यर्थः। **ननु** मन्त्रविनियोगस्यैवाभावादिदमयुक्तमित्यत आह—**करणत्वं चेति**। अन्योन्याश्रयमुद्धरति—**नचेति**। यदि कर्मण्यग्न्यादिदेवतानिश्चयं विना मन्त्रविनियोगो न स्यात्तदान्योन्याश्रयः स्यान्नत्वेवं किंतु कर्मण्यग्न्यादिदेवताकत्वाभावरूपबाधस्याभावमात्रं विनियोगेऽपेक्षितं तस्मिंश्च सति कर्मणोऽग्न्यादिप्रकाशकमन्त्रान्वययोग्यतां मन्त्रस्य तत्प्रकाशनयोग्यतां च पर्यालोच्य क्रमप्रकरणाभ्यां कल्प्यमानो विनियोग एव कर्मणि देवताकल्पनपर्यन्तः कल्प्यत इति नान्योन्याश्रय इत्यर्थः। अन्यथा तवाप्यग्न्यादिपदानां स्वाहाकारे रूढिकल्पनस्यापि विनियोगाधीनत्वेन दोषतादवस्थ्यादिति भावः। **स्मरणमिति**। स्विष्टकृदादौ स्मरणलक्षणसंस्कारसंभवेपि स्मरणाविच्छेदार्थं विनिगमनाविरहादस्यापि स्मरणलक्षणसंस्कारार्थत्वमित्यर्थः। विचारमध्याये संगमयति—**तस्मादिति**। सूत्रार्थस्तु—दृष्टे संभवत्यदृष्टकल्पना न युक्तेति स्थाण्वाहुतिन्यायसाम्यादुत्तमप्रयाजस्यापि संस्कारकत्वमिति॥

**तथाज्यभागाग्निरपीति चेत्॥ १६॥ पूर्वेणेति**। प्रत्यभिज्ञाबलाद्दृष्टार्थत्वाच्चेत्यर्थः। अनेन पूर्ववदुत्थानात्संगतिः। **आवाहनादिष्विति**। आवाहनाद्यर्थेष्वित्यर्थः। यद्वा निगदेष्वावाहनादिष्विति व्यधिकरणसप्तम्यौ। अग्निशब्दस्यैकत्वेऽपि पाठबलादन्यत्वं यथा ब्राह्मण आयातो वृषल आयातोऽब्राह्मण आयात इत्यत्रेत्यर्थः। **अन्यत्वमेव द्रढयति—सोमाच्चेति**। **तद्यदीति**। एकस्मिन्वाक्ये अग्नेः संस्कार्यतया प्राधान्योद्देश्यत्वानुवाद्यत्वानि सोमस्य यागनिर्वर्तकतया गुणत्वोपादेयत्वविधेयत्वानीति विरुद्धत्रिकद्वयापत्त्या वाक्यभेदः स्यादित्यर्थः। **विपरीतमिति**। अग्नीषोमाभ्यामित्युद्दिश्याज्यभागावित्युपादेयमित्यर्थः। फलमध्यायसंगतिं चाह—**अग्नीषोमीयेति**। अग्निसंस्कारकत्वे एकदेवताकेष्वेवातिदेशः स्यान्नानेकदेवताकेष्वित्यर्थः। आज्यभागगताग्निरपि संस्कार्य इतिचेदिति सूत्रार्थः॥

पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम् ॥ ९ ॥

**पशावपीति चेत् ॥ १९ ॥ [न तद्भूतवचनात् ॥ २० ॥ लिङ्गदर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥ गुणेऽपीति चेत् ॥ २५ ॥ नासंहानात्कपालवत् ॥ २६ ॥ ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥ ग्रहाभावे च तद्वचनम् ॥ २८ ॥ देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥ अविरुद्धोपपत्तिरर्थापत्तेः शृतवद्गुणभूतविकारः स्यात् ॥ ३० ॥ स ह्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥३१॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥]**

उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः ॥ तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता ॥ १७ ॥
संदंशान्निश्चितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः ॥ देवान्तरं चेद्विकृतावग्नीषोमनिवर्तनम् ॥ १८ ॥

अग्नीषोमीये पशौ पशुपुरोडाशः । 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपती'ति स किं पशोरारादुपकारक उत पशुदेवतासंस्कार इति संदेहे पशौ पशुपुरोडाशे चोभयत्रापि तद्धितनिर्देशाद्विशेषणीभूता[1] देवता गुणत्वेनावगम्यते[2] । नच गृह्यते विशेषः पशोर्देवताङ्गं पुरोडाशे विपरीतमिति। उभयत्राप्यपूर्वैव देवतोपादीयत इति न संस्कारत्वम् । 'आसोमं वहन्त्यग्निना प्रतितिष्ठन्ती'ति वाक्यशेषाल्लता सोमः प्रणीयमानोऽग्निश्च पशौ देवता, पुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति । तस्मादारादुपकारकः पशुपुरोडाशः । नैवम् । 'दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना ॥ पशुधर्मैश्च संदंशात्तदङ्गत्वं सुनिश्चितम् ॥' ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशदेवतासंस्कारार्थत्वेन शक्यः शङ्कितुं, पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं सत्तद्गतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामवलम्बते । अतो नागृह्यमाणविशेषत्वम् । तेन यैव पशोर्देवता लता वान्या वा सैव पुरोडाशेन संस्कर्तव्येति विकृतिषु देवतान्तरवतीष्वग्नीषोमौ निवर्तेते ॥

---

**पशावपीति चेत् ॥१९॥** पूर्ववदिहापि देवतान्तरत्वादसंस्कारकत्वमित्युत्थितेः संगतिः । **पशाविति** । तद्धितेन देवताविशिष्टद्रव्यस्य प्राधान्येन प्रतिपादनेन देवताया उभयत्र गुणत्वेनाभिधानादित्यर्थः । **विपरीतमिति** । प्रधानमित्यर्थः । **आसोममिति** । अग्नीषोमीयप्रणयनसमये 'सोममावहन्ति हविर्धानमानयन्ति अग्निनाग्नीध्रीयार्थं प्रणीयमानेनाग्निना प्रतितिष्ठन्ती'ति पशुवाक्यशेषे लतायाः प्रणीयमानाग्नेश्च कीर्तनात्तयोरेव देवतात्वं पुरोडाशे तु तादृशवाक्यशेषाभावात्प्रसिद्धयोरेवाग्नीषोमयोर्देवतात्वमिति न संस्कारत्वमित्यर्थः । विनिगमनाभावमुक्तमुद्धरति—**पशुधर्मैरिति** । पुरोडाशस्य ज्योतिष्टोमप्रकरणगतस्यापि पश्वङ्गसंदष्टस्यावान्तरप्रकरणेन पश्वङ्गत्वात्संभवति पशुदेवतासंस्कारकत्वं, पशुयागस्य तु प्रकरणेन ज्योतिष्टोमाङ्गत्वान्न पुरोडाशदेवतासंस्कारकत्वसंभव इत्यर्थः । अन्या वेत्यनास्थावादः प्रागुक्तवाक्यशेषेण लताया एव देवतात्वात् । यद्वा यत्र विध्युद्देशे सामान्यश्रवणे सत्यनुष्ठानाय विशेषापेक्षा अक्ता इत्यादौ तत्रैव वाक्यशेषावगतविशेषपरत्वं विध्युद्देशगतसामान्यशब्दस्य । यत्र तु सामान्येनैवानुष्ठानसिद्धेर्न विशेषापेक्षा तत्र न संकोच इत्यभिप्रायेणेदमित्याहुः । एवंच सौत्रामण्यां पशुदेवतापेक्षया पुरोडाशदेवताया भिन्नत्वात्पुरोडाशानां देवतासंस्कारकत्वासंभवादारादुपकारकत्वमेवागत्या । नचैवं संस्कारलोपो माभूदित्येवमर्थं पशुषु या देवतास्तद्देवताकपुरोडाशान्तरानुष्ठानमपि स्यादिति वाच्यम् । तद्देवताकग्रहैरेव संस्कारसिद्धेः । अतएव 'न तेषां पशूनां पुरोडाशा भवन्ति ग्रहपुरोडाशा ह्येते पुरोडाशवानेष पशुर्भवति नह्येतस्य गृहं गृह्णाती'त्यर्थवादः संगच्छते । शेषं तन्त्ररत्ने स्पष्टम् । सूत्रार्थस्तु पुरोडाशयाग आरादुपकारक इति ॥

---

१ विशेषणभूता. २ गुणत्वेन गम्यते. ३ संदेशात्. ४ पुरोडाशे संस्कारा. ५ संस्तद्गत.

चरुशब्दस्यौदनवाचिताधिकरणम् ॥ १० ॥

**चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥ [प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ ओदनो वाऽन्नसंयोगात् ॥ ३६ ॥ न ह्यर्थत्वात् ॥ ३७ ॥ कपालविकारो वा विशये‌ऽर्थोपपत्तिभ्याम् ॥३८॥ गुणमुख्यविशेषाच्च ॥३९॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥४०॥ लिङ्गदर्शनाच्च ॥ ४१ ॥ ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदेशाच्च ॥४३॥ तथा च लिङ्गदर्शनम् ॥ ४४ ॥]**

**सौर्ये चरौ चरुः स्थाली किं वान्नं लौकिकोक्तितः ॥ स्थाल्यस्यां श्रपणं योग्यं कपालविकृतिस्त्वतः ॥ १९ ॥**
**विद्वच्छ्रुतिप्रसिद्ध्याऽन्नं देवता तद्धितोक्तितः ॥ योग्यत्वेन प्रदेयं तत्पुरोडाशहविर्यथा ॥ २० ॥**

'सौर्यं चरुं निर्वपे'दित्यत्र संशयः किं स्थालीवचनश्चरुशब्द उतौदनवचन इति। यद्यपि स्थालीवचनस्तदा किं स्थाली कपालविकारो हविःश्रपणार्था उत पुरोडाशस्य हविषो विकारः प्रदेयेति । तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वम् । यस्तु याज्ञिकानामोदने प्रयोगः स स्थालीसंबन्धाल्लाक्षणिकः। नच विपरीतं संभवति, ओदनमात्रे प्रयोगाभावादेव । येऽपि तस्यौदनवचनत्वं मन्यन्ते तेऽपि न तन्मात्रं वाच्यमाहुः। कपाले कटाहे वा श्रपितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात्। तथाचोपरितनेऽधिकरणे वक्ष्यामः । तेन स्थालीसंबन्धनिमित्त एवौदनेऽपि चरुशब्द इति विशेषणत्वात्स्थाल्येवाभिधेया। साचानदनीया हविष्ट्वायोग्या । श्रपणयोग्यता तु प्रसिद्धैव तस्मात्स्थालीचरुः कपालविकारश्च सौर्यमिति स्थाल्यां श्रपितस्य हविषः सूर्यसंबन्धात्स्थाल्येवाभिधीयते 'तस्येदमि'ति तद्धितो भविष्यतीत्येकः पक्षः । गृह्णीम एतत्स्थालीचरुरिति, स तु हविर्विकारः सौर्यमिति देवतासंयोगाद्देवतातद्धितो ह्ययम् । अन्यथा याग एवायं न स्यात् वचनाच्चानदनीयेनापि कृष्णलादिनेव यागः क्रियते तस्माद्धविर्विकार इति द्वितीयः । सत्यं चरुर्हविर्विकारः नतु स्थाल्यां चरुशब्दः किंत्वोदने, चरुशब्दस्य वेदे याज्ञिकप्रयोगे चौदनवचनत्वावधारणात्। वेदे तावत् 'आदित्यः प्रायणीयश्चरु'रित्युक्त्वा अदितिमोदनेनेति पश्चादनुवादादोदनवचनत्वं तत्र तावद्वाक्येऽवगम्यत इत्युक्तं 'शास्त्रस्था वा तन्निमित्तत्वा'दित्यत्र । ततश्चानेकार्थत्वमन्याय्यमिति सर्वत्रैवोदनवचनत्वं याज्ञिकाश्चानवस्ताविता-

---

**चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥** कपालविकारत्वं कपालकार्यकरत्वमित्याशयेनाह—**हविरिति। नच विपरीतमिति**। स्थाल्यां प्रयोगस्य सार्वलौकिकतया मुख्यत्वे याज्ञिकमात्रप्रयोगस्य क्काचित्कतया लाक्षणिकत्वमित्यर्थः। युक्त्यन्तरमाह—**ओदनमात्र इति**। पिठरादौ श्रपिते प्रयोगाभावादित्यर्थः । नागृहीतविशेषणान्यायेनापि स्थाल्येवौदनशब्दार्थ इत्याशयेनौदनस्य वाच्यत्ववादिभिरपि स्थाल्या विशेषणत्वमङ्गीकार्यमित्याह—**येऽपीति**। एवमोदनवचनत्वमिति सिद्धान्तं दूषयित्वा हविर्विकारत्वमिति द्वितीयपूर्वपक्षं दूषयति—**साचेति** । लोके अदनीय एव हविष्ट्वव्यवहारादित्यर्थः। **ननु** हविष्ट्वाभावे कथं देवतासंबन्ध इत्यत आह—**सौर्यमिति**। नायं देवतायां तद्धितः किंतु संबन्धसामान्ये। ततश्च स्थाल्या हविष्ट्वाभावेऽपि तत्र श्रपितस्य हविष्ट्वमात्रेण परम्परासंबन्धमादाय स्थाल्याः सौर्यमिति निर्देश उपपन्न इत्यर्थः। नच देवतातद्धितत्वाभावे कथं प्रकृते यागकल्पना कथं वा यागाभावे स्थाल्यां श्रपितस्य हविष्ट्वं तथैष्टिकविध्यन्तप्रापकाभावात्कथं स्थाल्याः कपालविकारत्वमिति वाच्यम्। स्थाल्याः सौर्यमिति संबन्धसामान्ये बोधितेऽदृष्टद्वारा सूर्यसंबन्धनिर्वाहार्थमेव तत्र श्रपितस्य हविष्ट्वकल्पनावश्यंभावेन तद्बलाद्यागस्यापि सिद्धेरुक्तदोषाभावात् । एवंच पूर्वत्र दृष्टार्थत्वाय संनिपातित्ववदिह दृष्टद्वारा सूर्यसंबन्धनिर्वाहाय हविराधारतया कपालविकारत्वमेव वक्तव्यमित्युत्थितेः संगतिर्बोध्या। **अन्यथेति**। इह हि प्रत्यक्षयज्यश्रवणाद्देवतासंबन्धबलादेव यागः कल्पनीयः, संबन्धसामान्यतद्धितपक्षे च यागकल्पकाभावाद्याग एव न स्यात् । नच प्रागुक्तरीत्या दृष्टद्वारासंबन्धनिर्वाहार्थं तत्र श्रपितस्य हविष्ट्वकल्पनाद्यागसिद्धिः । श्रपितस्य विशेषरूपेणालाभेन दृष्टद्वारा तदनिर्वाहात्। नच चोदकतः पुरोडाशप्राप्त्या स एव श्रपितविशेष इति वाच्यम्। यागत्वासिद्धौ चोदकाप्राप्तेरिति भावः। **नन्वस्तु** वाक्यशेषादादित्यः प्रायणीयः पयसि चरुरित्यादौ तत्र चरुशब्दस्यौदनार्थत्वं, सौर्यं चरुमित्यादौ वाक्यशेषाभावात्कथमोदनवचनत्वमत आह—**ततश्चेति**। **सर्वत्रेति**। वाक्यशेषस्थले तद-

---

१ भावात्. २ निमित्तादित्यत्र.

न्तरुष्मपक्वौदने चरुशब्दमुपचरन्ति । तेषां च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थविप्लवे तात्पर्यातिशयात्पृथग्जनेभ्यः प्रत्ययिततरत्वात्स एव शब्दार्थः । पाकविशेषनिमित्तश्चौदने चरुशब्दः । नच स्थालीमन्तरेण स पाको निर्वर्तेत इति कृत्वा स्थाल्यादरः नतु तावता स्थालीवचनत्वं, तस्मादोदनेन हविर्विक्रियते ॥

सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् ॥ ११ ॥

**स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ [एकस्मिन्वा विप्रतिषेधात् ॥ ४६ ॥ न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात्पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥**

चरुः कपाले पक्तव्यः क्वापि वा उचितेऽथवा ॥ कपाले चोदकप्राप्तेरनपूपत्वतः क्वचित् ॥ २१ ॥
स्थाल्यां चरुत्वयोग्यत्वात्कटाहे योग्यता नहि ॥ चिन्ताद्वयफलं त्वत्र पेषणादिनिवर्तनम् ॥ २२ ॥
पेषणं यवनं वापस्तापश्चापोद्धतिः प्रथा ॥ मार्जनाध्यूहनज्वालास्तथा व्युद्धृत्य सादनम् ॥ २३ ॥
एतानि मन्दप्रज्ञस्य कर्तव्यानीति विभ्रमः ॥ अपूपस्यैव योग्यानीत्येतत्सूत्रैर्निरूपितम् ॥ २४ ॥

स एष चरुः किं कपाले पक्तव्य उत यत्र क्वचिदुत स्थाल्यामिति संशयः । चोदकप्राप्तेः कपाले स्यात् । नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति । नच चरुरष्टसु कपालेषु शक्यः पक्तुम् । सत्यमष्टत्वं प्राप्यते, तत्त्वसंभवान्निवर्तते नतु तन्निवृत्त्या कपालमपि निवर्तितुमर्हति । तस्मात्कपाले स्यात् । नैवम् । अप्राकृतकार्यत्वात् । प्रकृतौ हि कपालगतोष्मणा हविःपाको निर्वर्तते, चरुस्तूदकगतोष्मणा पक्तव्यः, तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति न चोदकानुग्रहः । तस्माद्यत्र कचित्पक्तव्य इति प्राप्ते ब्रूमः—स्थाल्यामेव स्यात्तस्यां हि चरुत्वनिमित्तः पाको निर्वर्तते नान्यत्र तस्मात्स्थाल्यां स्यात् । यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकस्ततः पूर्वाधिकरणे स्थालीकपालविकार इति पक्षस्यौदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः । उभयथापि स्थाल्यां पक्वस्य हविष्ट्वादित्याशङ्क्य—

---

न्यत्र चेत्यर्थः । याज्ञिकप्रयोगस्य लाक्षणिकत्वमुक्तं निरस्यति—**तेषां चेति** । ततश्च लौकिकप्रयोगस्यैव लाक्षणिकत्वमिति वैपरीत्यमेव युक्तमित्यर्थः । नागृहीतविशेषणान्यायासिद्धिमाह—**पाकेति** । एवंच पिठरादौ श्रपिते ओदनव्यवहाराभावस्य पाकविशेषाभावेनान्यथासिद्धत्वान्न तदनुसारेण स्थाल्या विशेषणत्वं वक्तव्यमिति नागृहीतविशेषणान्यायस्य न प्रवृत्तिरिति न स्थालीवचनत्वमित्यर्थः । सूत्रार्थस्तु—देवतासंबन्धावगतयागसंबन्धाच्चरुर्हविर्विकार इति ॥

**स कपाले प्रकृत्या०** ॥ ४५ ॥ पुरोडाशकार्ये चरोरिव कपालकार्येऽन्यस्याविधानान्न तन्निवृत्तिरित्युत्थितेः संगतिः । **ननु** प्रकृतौ संख्याकपालयोरेकपदोपादानेनान्यतरस्य पदार्थैकदेशत्वेनाशास्त्रार्थत्वादष्टत्वसंख्यायाश्चरावनुग्रहासंभवात्तद्बाधे कपालबाधोऽपि न्याय्यस्तस्माद्यत्र क्वचिदेव पक्तव्य इति शङ्कते—**नन्विति** । **सत्यमिति** । समासान्तर्वर्तिकपालपदमाश्राय पदार्थत्वात्कपालमात्रस्य शास्त्रार्थत्वमुपपन्नमिति भावः । **तत्रेति** । उदकगतोष्मणा चरोः पाके च कपालमुदकधारणार्थमेव स्यादित्यप्राकृतकार्यत्वान्न कार्यमुखेन प्रवर्तमानचोदकानुग्रह इत्यर्थः । **तस्यामिति** । पिठरादौ पक्वे याज्ञिकानां चरुव्यवहाराभावान्न यत्र क्वचन पाकः स्थाल्यां पक्व एव तद्व्यवहाराच्चरुविधिबलादेव स्थाली प्राप्यत इति कपालबाधश्चेत्यर्थः । सूत्रार्थस्तु—स पाकः प्रकृतिप्राप्त्या कपाल एव स्यादिति भाष्यकारेण 'तस्मिन्पेषण'मित्यादिसूत्राणि पूर्वाधिकरणप्रयोजनपरत्वेन व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातानि । तत्र प्रयोजनपरत्वेन व्याख्यानस्य तात्पर्यं दर्शयिष्यन् शङ्कामवतारयति—**यदीति** । अनुष्ठाने विशेषाभावशङ्काया ओदनशब्दस्य चर्वर्थकत्वेन स्थाल्यामेव पाक इत्येतदधिकरणानन्तरमुन्मेषादेतदधिकरणानन्तरं पूर्वाधिकरणप्रयोजनकथनं संगच्छत इति ध्येयम् ॥

सौर्यचरौ पेषणाभावाधिकरणम् ॥ १२ ॥

**[तस्मिन्पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ अकर्म वा अपूपहेतुत्वात् ॥ ५० ॥ पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥ संवपनं च तादर्थ्यात् ॥ ५२ ॥ संतापनमधःश्रपणार्थत्वात् ॥ ५३ ॥ उपधानं च तादर्थ्यात् ॥ ५४ ॥ पृथुश्लक्ष्णौ चापूपार्थत्वात् ॥५५॥ अध्यूहनं चोपरिपाकार्थत्वात् ॥ ५६ ॥ तथावज्वलनम् ॥ ५७ ॥ व्युद्धृत्यासादनं च प्रकृतावश्रुतत्वात् ॥ ५८ ॥]**

इत्यादिभिः सूत्रैः प्रयोजनमुच्यते । स्थाल्या हि कपाले निर्वर्तितेऽपि चोदकप्राप्तः पुरोडाश एव स्थाल्यां श्रपितो हविः स्यात् । ततश्च पेषणसंयवनोपधानादीनि कर्तव्यानि स्युः । सिद्धान्ते चौदने तेषामर्थलोपादकरणम् । एवं प्रयोजनसूत्राणि व्याख्याय पुनरधिकरणान्तरत्वेन व्याख्यातवान् । यो नाम चरावपि संभवादवघातवत्पेषणादीनि कर्तव्यानीति मन्यते तस्य बुद्धिर्मन्दविषन्यायेन व्यावर्त्यते प्रयोजनप्रयुक्तत्वात्तेषां चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम् । उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्यां कुर्वते । नच स्थाली कपालकार्ये वर्तते उदकधारणार्थत्वात् । अत उपधानस्य व्यावृत्त्या आसादनमप्यप्राकृतत्वान्न चोदकेन प्राप्यते ॥ इति श्रीशास्त्रदीपिकायां दशमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

स्थालीहविर्विकार इति पक्षे स्थाल्याः प्रदेयत्वेनानुष्ठानविशेषस्य स्पष्टत्वात्तदितरपक्षद्वयेऽनुष्ठानाविशेषः शङ्कितः । यद्यपि पक्षद्वयेऽपि स्थाल्यां पक्वस्य हविष्ट्वं तथापि स्थालीकपालविकार इति पक्षे चोदकप्राप्तपुरोडाशस्य निवर्तकाभावात्स एव हविरिति पेषणादीनि कर्तव्यानि, ओदनेन हविर्विकार इति पक्षे तु पुरोडाशस्य चरुणा निवर्तितत्वात्पेषणादीनामकरणमित्येवंरूपोऽनुष्ठानविशेषः सूत्रेष्वेव स्फुट इत्याह—**तस्मिन्निति** । '**तस्मिन्पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ अकर्म वा अपूपहेतुत्वात् ॥ ५० ॥ पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥ संवपनं च तादर्थ्यात् ॥ ५२ ॥ संतापनमधःश्रपणार्थत्वात् ॥ ५३ ॥ उपधानं च तादर्थ्यात् ॥ ५४ ॥ पृथुश्लक्ष्णौ चापूपार्थत्वात् ॥ ५५ ॥ अध्यूहनं चोपरिपाकार्थत्वात् ॥ ५६ ॥ तथावज्वलनम् ॥ ५७ ॥ व्युद्धृत्यासादनं च प्रकृतावश्रुतत्वात् ॥ ५८ ॥**' इत्येतैः सूत्रैरित्यर्थः । स्थाल्या कपालानि विक्रियन्ते इति पक्षे पुरोडाशस्यैव हविष्ट्वात्तत्र पेषणं तण्डुलानामर्थलोपाभावात्कर्तव्यमित्यनुष्ठाने विशेषः प्रथमसूत्रे प्रतिपादितः । ओदनेन हविर्विकार इति सिद्धान्ते तु द्वितीयादिषु सूत्रेषु अक्रिया पेषणस्य तस्यापूपार्थत्वात् । तथा प्रणीताभिः संयौतीति संयवनं प्रणीताभिः संयोजनं न कर्तव्यं पिण्डोत्पत्त्यर्थत्वात् । पिण्डाश्चापूप एवोपयुज्यन्ते नत्वोदने । एवं पवित्रवत्यां पात्र्यां पिष्टानि संवपतीति पात्र्यां यत्संवपनं तदपि न कर्तव्यं संवपनस्य संयवनार्थत्वात् तस्यैवाभावात् । तथा 'भृगूणामङ्गिरसां तपसा तप्यध्व'मित्यनेन मन्त्रेण कपालानामङ्गारैः संतापनमपि न कर्तव्यं, तस्याधःश्रपणार्थत्वेन पुरोडाश एव तदुपयोगात् । ओदनेऽधःश्रपणाभावात् उपधानमङ्गारस्य 'उपरिध्रुवमासी'दित्यादिमन्त्रैः कपालस्थापनं न कर्तव्यं तस्याधःपाकार्थत्वात् । प्रथनं सर्वेषु कपालेषु अभिव्याप्य स्थापनरूपं श्लक्ष्णीकरणं त्वचं गृह्णीष्वेति अद्भिः श्लक्ष्णीकरणरूपं न कर्तव्यं उभयोरप्यपूपार्थत्वात् अध्यूहनं पुरोडाशस्योपर्यङ्गाराणां स्थापनरूपमुपरिपाकार्थत्वात् । व्युद्धृत्यासादनं कपालेषु श्रपितस्य पुरोडाशस्य तेभ्य उद्धृत्य बर्हिषि यदासादनं तन्न कर्तव्यं प्रकृतावश्रुतत्वात् । यद्यपि व्युद्धरणं न कर्तव्यमासादनं च न कर्तव्यमिति सूत्रे प्रतीयते तथाप्यश्रुतत्वादिति हेतुपर्यालोचनया व्युद्धरणमेव न कर्तव्यं तस्यार्थिकत्वेन प्रकृतौ श्रुतत्वाभावात् । आसादनं त्वन्तर्वेद्यामासादयतीति श्रुतत्वात्कर्तव्यमेवेति ध्येयम् । एवमुक्तप्रकारेण सूत्रैरेवानुष्ठानविशेषः प्रतिपादित इत्यर्थः । प्रयोजनपरतया व्याख्यानस्य तात्पर्यमुक्त्वाऽधिकरणान्तरत्वेन व्याख्यानस्याप्याह—**एवम्...अधिकरणान्तरत्वेनेति** । आद्यसूत्रद्वयमेकमधिकरणम् । इतराण्येकैकमेव सूत्रमधिकरणमिति द्रष्टव्यम् । **ननु** प्रयोजनाभावादेव पेषणादिनिवृत्तेः सिद्धतया पूर्वपक्षस्य मन्दत्वादिदमधिकरणान्तरमयुक्तमित्यत आह—**यो नामेति** । **मन्देति** । यथा मन्दमपि विषं परिहरणीयं नतूपेक्षणीयं एवं मन्दोऽपि पूर्वपक्षो निरसनीय इत्यर्थः । कथं तर्हि याज्ञिकानामुपधानानुष्ठानमत आह—**उपधानमिति** । याज्ञिकानुष्ठानममूलकमित्यर्थः । **नचेति** । पाकहेतूणाधारत्वाभावादित्यर्थः । अप्राकृतत्वात् प्रकृतावश्रुतत्वादित्यर्थः । अत्रासादनशब्देनासादनार्थं व्युद्धरणमेव विवक्षितं आसादनस्य प्रकृतौ श्रुतत्वेनावश्यानुष्ठेयत्वात् । उपधानस्य व्यावृत्त्या इति तृतीया प्रकृत्यादित्वात्कथंचिदुपपादनीया व्युद्धृत्यासादननिवृत्तेरुपधानव्यावृत्तिनिबन्धनकत्वाभावात् प्रकृतावश्रवणनिबन्धनत्वात् तथा प्रकृतावश्रुतत्वमपि न सम्यग्घेतुः व्युद्धृत्यासादनायाग्रवृत्तेः प्रयोजनाभावहेतुकत्वात् । अन्यथासति प्रयोजने प्रकृताविवार्थादप्यनुष्ठानप्रसङ्गादिति ध्येयम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमस्याध्यायस्य प्रथमः पादः ॥ १ ॥**

# दशमाध्याये द्वितीयः पादः ।

## कृष्णले चरौ पाकानुष्ठानाधिकरणम् ॥ १ ॥

**कृष्णलेष्वर्थलोपादपाकः स्यात् ॥१॥ [स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥]**

**नास्त्यस्ति वा कृष्णलेषु पाकः श्रौतोऽप्यसंभवी ॥ अदृष्टार्थतया स स्यादौष्ण्ये तु सुतरां भवेत् ॥ १ ॥**

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्काम' इत्यत्र संशयः किं कृष्णलेषु पाकः कर्तव्यः नेति । लुप्तार्थत्वादकर्तव्यः । ननु 'घृते श्रपयती'ति वचनात्कर्तव्यः । न । अशक्यत्वात् । रूपरसादीनां पूर्वेषां तिरोभावोऽपूर्वाणां च प्रादुर्भावः पाकः । असौ न कृष्णलेषु संभवति तस्मान्न कर्तव्य इति प्राप्ते ब्रूमः । यद्यपि मुख्यः पाको न संभवति तथापि लक्षणया तावन्मात्रं वचनेन विधीयते, अतस्तावन्मात्रं कर्तव्यं अन्यथा वचनानर्थक्यं स्यात् । यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं तदा सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्तव्यः ॥

---

**कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥** पूर्वस्मिन्पादे द्वारलोपनिबन्धनबाधो व्युत्पादितः । अस्मिन्पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः । **लुप्तेति** । प्रकृतौ पुरोडाशलक्षणहविर्निष्पत्त्यर्थः पाकः, इहच पाकंविनापि कृष्णलरूपहविषः सिद्धत्वेन प्रयोजनलोपान्न पाकः कर्तव्य इत्यर्थः । प्राकृतप्रयोजनाभावेऽपि वचनबलाददृष्टरूपाप्राकृतकार्यार्थं कर्तव्य इति शङ्कते—**नन्विति** । विक्लित्तेः पाकशब्दार्थतया तस्याः कृष्णलेषु संपादयितुमशक्यत्वात् । नच वचनबलादपि कर्तुं शक्य इति परिहरति—**अशक्यत्वादिति** । एवंचाशक्यार्थविध्यसंभवादन्यपरं वचनम् । अतएव भवनाथः व्यत्ययेन द्वितीयार्थे सप्तमीमाश्रित्य घृतं श्रपयतीति विधिपरं वचनमित्युक्तवानिति ध्येयम् । **ननु** न विक्लित्तिः पाकशब्दार्थः किंतु तद्धेतुभूतमग्निसंयोजनमेव । अन्यथा धातूपात्तस्य विक्लित्तिलक्षणव्यापारस्य तण्डुलनिष्ठत्वेन देवदत्तः पचतीति देवदत्तस्य कर्तृत्वं न स्यात् तेजःसंयोजनस्य च न कृष्णलेष्वशक्यत्वमित्यत आह—**रूपेति** । अग्निसंयोजनमात्रस्य पाकत्वे आकाशादेरपि पाकप्रसङ्गाद्विक्लित्तिहेतुभूतोऽग्निसंयोग इति वक्तव्यम् । तथाचावश्यवक्तव्यत्वात्प्रागृहीतविशेषणान्यायेन रूपपरावृत्तिलक्षणविक्लित्तिरेव पच्यर्थः । नचैवं देवदत्तस्य कर्तृत्वानुपपत्तिः । नहि धातूपात्तव्यापारवत्त्वेन कर्तृत्वम् । तथासति देवदत्ताय रोचन्ते मोदका इत्यत्र मोदकानां कर्तृत्वं न स्यात् । रुचधातोरिच्छार्थकत्वेन मोदकानां तद्वत्त्वाभावात् किंतु धातूपात्तव्यापारंप्रति प्रयोजकीभूतो यः प्रत्ययोक्तो व्यापारस्तद्वत्त्वेन कर्तृत्वम् । तथाच विक्लित्तेस्तण्डुलनिष्ठत्वेऽपि तदनुकूलव्यापारस्य देवदत्तसमवायाद्युक्तं देवदत्तस्य कर्तृत्वमिति भावः । **मुख्य इति** । विक्लित्तिलक्षणरूपपरावृत्तिरित्यर्थः । **तावन्मात्रमिति** । वक्ष्यमाणमुष्णीकरणमित्यर्थः । **ननु** लक्षणया तावन्मात्रविधानेऽपि प्रकृतितः प्राप्तः पाकः प्रयोजनाभावान्निवर्तमानो वचनेन प्रतिप्रसूयत इति सिद्धान्तो न साधितः स्यात् तावन्मात्रस्य पाकत्वाभावेन तस्य प्रकृतावचोदितत्वादित्यस्वरसादाह—**यदि त्विति** । न विक्लित्तिः पाकशब्दार्थः किंतु अनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणम् । किमत्र प्रमाणमिति चेत् विक्लित्त्यसंभवेऽपि कृष्णलेषु पाकप्रतिपादनं कृष्णलं श्रपयतीतिवचनमेव । लक्षणायां व्यत्यये वा मानाभावात् । विक्लित्तिस्तु फलम् । एवंच 'पचेर्हि विक्लित्तिः प्रधानार्थः' इति महाभाष्यमपि फलाभिप्रायम् । यद्वा भवत्वेतद्भाष्यानुसाराद्विक्लित्तिरेव पच्यर्थः तथापि न रूपरसाद्यन्यथाभावो विक्लित्तिः किंतूष्णीकरणमेव विक्लित्तिः कृष्णलेषु पाकवचनादेवेत्यर्थः । **प्राकृत इति** । प्रयोजन इति शेषः ॥

---

१ दकर्तव्य इति. २ ततः सुतरां.

कृष्णल उपस्तरणाभिघारणयोर्बाधाधिकरणम् ॥ २ ॥

**उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ [क्रियेत वार्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णे पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात्सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषां चैकावदानत्वात् ॥ ७ ॥ आप्तिः संख्यासमानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यात् अपि वा स्विष्टकृतः स्यात् इतरस्यान्याय्यत्वात् ॥ ११ ॥ अकर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥]**

**उपस्तराभिघारौ स्तस्तेषु नो वा द्वयं भवेत् ॥ अदृष्टार्थमसंसक्तिर्दृष्टार्थो नेति लुप्यते ॥ २ ॥**

कृष्णलचरावेव संशयः किमुपस्तरणाभिघारणे कर्तव्ये नेति । चोदकप्राप्तेः कर्तव्ये । **ननु** 'यदुपस्तृणात्यभिघारयति अमृताहुतिमेवैनां करोती'ति वचनात्स्वादिमाश्र्येत । नच कृष्णलेषु स्वादिमा संभवति अतो लुप्तार्थत्वादकर्तव्य इति चेत् । न । अर्थवादत्वादमृताहुतिवचनस्य । एवं तर्हि तत्र चतुरवत्तसंपत्त्यर्थमुपस्तरणाभिघारणम् । ननु 'चत्वारि चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या' इति कृष्णलचतुष्टेनैव चतुरवत्तावाप्तिवचनादकर्तव्यम् । नैवम् । नहि कृष्णलचतुष्टेनावदानचतुष्टमाप्तुं शक्यं विषयभेदात् । आप्तिवचनं त्वर्थवादमात्रम् । यदि कृष्णलचतुष्टेनैव चतुरवत्तमाप्येत तदा सकृदवत्तैरेव तदवाप्तेर्न द्व्यवदानमपि स्यात् । तत्र चत्वारि चत्वारीति वीप्सा नावकल्प्येत । अथ वीप्सार्थो विधीयते ततः प्राप्तावदानानुवादेन चतुःसंख्याया वीप्सायाश्च विधानाद्वाक्यं भिद्येत । **ननु** 'द्विर्हविषोऽवद्यती'त्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात् । न । चतुरवत्तसंपत्त्यर्थं हि प्रकृतौ द्व्यवदानमुपस्तरणाभिघारणवत् तच्चेदन्यतः संपन्नं ततो द्व्यवदानमप्युपस्तरणाभिघारणवदेव निर्वर्तितुमर्हति[1] । तस्मादर्थवादमात्रमाप्तिवचनमिति कर्तव्यमुपस्तरणाभिघारणमिति प्राप्त उच्यते—**सूक्ष्माणां** पुरोडाशावयवानां स्रुच्यसंसक्तानामाहवनीयपातः कथं स्यादित्येवमुपस्तरणाभिघारणं दृष्टार्थम् । **नच** कृष्णलानां संसक्तिः संभवति यत्परिहारायोपस्तरणादि भवेत् । **ननु** चतुरवत्तसंपत्तिरपि दृष्टमेव

---

**उपस्तरणाभिघारणयोः०** ॥ ३ ॥ लुप्तार्थं श्रपणमपि यदा कर्तव्यं तदा किं वक्तव्यमलुप्तार्थयोरुपस्तरणाभिघारणयोरित्युत्थानात्संगतिः । अस्त्यत्राप्यर्थलोप इति शङ्कते—**नन्विति** । 'अमृताहुतिमेवैनां करोती'त्यमृतत्वारोपः सादृश्यनिबन्धनस्तच्च सादृश्यं स्वादुत्वपर्यवसितमित्याशयेनाह—**स्वादिमेति** । किमर्थं तर्ह्युपस्तरणादिकं तत्राह—**तत्र चतुरवत्तेति** । चतुरवत्तासंपादनमपि प्रकृतेऽन्यथासिद्धमपि शङ्कते—**नन्विति** । **नहीति** । अनदेयकृष्णलगतचतुष्ट्वसंख्ययावदानक्रियागतचतुष्ट्वसंख्यानिर्वृत्तिर्न संभवति विषयभेदादित्यर्थः । **आप्तीति** । 'चतुरवत्तस्याप्त्या' इति वचनमित्यर्थः । **वीप्सेति** । नच प्रधानार्थतया सकृदवदानेऽपि स्विष्टकृदर्थावदानाभिप्रायेण वीप्सानुवादसंभवः 'प्रकरणात्प्रधानस्ये'ति न्यायेन प्रधानार्थावदानाभिप्रायकत्वस्यैव युक्तत्वात् । एवं 'चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत' इतिवत्प्रयोगभेदाभिप्रायेण वीप्सोपपादनमपि न स्वरसमिति भावः । अस्तु तर्हि वीप्साविधिरिति शङ्कते—**अथेति** । **द्व्यवदानं स्यादिति** । तथाच न वीप्सानुपपत्तिरिति भावः । **तच्चेदिति** । चतुरवत्ततासंपादनमित्यर्थः । **तस्मादिति** । आप्तिवचनस्यार्थवादत्वाच्चतुरवत्ततासंपादनार्थमुपस्तरणाभिघारणं कर्तव्यमित्यर्थः । **सूक्ष्माणामिति** । उपस्तरणं स्रुचि स्निग्धतासंपादनार्थं सदसंश्लेषणार्थमभिघारणमपि पुरोडाशावयवानामेकतापादकं सदसंश्लेषार्थमिति विवेकः । असंश्लेषस्य च कृत्स्नस्याग्नौ पातः प्रयोजनमित्येव दृष्टार्थम् । **अनङ्गत्वादिति** । तथाच तद्द्वारोपस्तरणाभिघारणयोर्दृष्टार्थत्वानिर्वाहाददृष्टार्थता स्यादित्यर्थः । **ननु** 'चतुरवत्तं जुहोती'त्यस्य चतुरवदानविशिष्टहोमविधानार्थत्वात्तेन विधिना विधीयमानचतुरवदानसंपत्तेः कथ

---

१ निवर्तितुम् ।

प्रयोजनम्। अनङ्गत्वात्। चतुरवत्तं जुहोतीत्यत्रावत्तं जुहोतीत्येतावद्विधीयते चतुःशब्दस्तूपस्तरणाभिघारणद्व्यवदानवचनप्राप्तचतुःसंख्यानुवादमात्रं न विधानार्थम्। अवत्तहोमविधिपरत्वाद्वाक्यस्य। तस्मादकर्तव्यमुपस्तरणाभिघारणम्॥

कृष्णलचरौ भक्षसद्भावाधिकरणम्॥ ३॥

**भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात्॥ १३॥ [स्याद्वा निर्धानदर्शनात्॥ १४॥ वचनं वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात्॥ १५॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात्॥ १६॥]**

**भक्षो नास्त्यस्ति वा तेषु नास्ति प्रीतेरभावतः॥ चुश्रुपाकारनिर्धानवचनात्स्यात्प्रदानवत्॥ ३॥**

कृत्वाचिन्तेयम्। यदा प्रकृतौ भक्षाः पुरुषप्रीत्यर्थास्तदा कृष्णलानामस्ति भक्षो नेति। तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति तेन प्राकृतास्तावद्भक्षा लुप्तार्थत्वादकर्तव्याः। यत्तु वचनं चुश्रुपाकारं[१] भक्षयतीति तदाज्यस्य भक्षणं विधत्ते तस्यादनीयत्वात्। चुश्रुपाकारस्यानुवादसंभवान्न कृष्णलानाम्। तस्मान्न तेषां भक्षणमिति प्राप्ते ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यादाज्यस्य च तदङ्गत्वात्तेषामेव भक्षणवाक्येऽन्वयः। तेषां चानदनीयानामपि प्रदानवद्भक्षणमपि वचनाद्भविष्यतीति। तेषामेव चुश्रुषाकरणविशिष्टं भक्षणं विधीयते॥

कृष्णलचरौ सपरिहारविधानाधिकरणम्॥ ४॥

**एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात्[२]॥ १७॥**

**सकृत्सहत्वयोरेकमेकधेत्यन्त्यमेव वा॥ एकं नियामकाभावादबाधादन्त्यमेव हि॥ ४॥**

तत्रैव श्रूयते 'एकधा ब्रह्मण उपहरती'ति। किमत्र सकृत्त्वं सहत्वं वा विधीयते उत सहत्वमिति। कश्चात्र विशेषः। यदि सकृत्त्वं विधीयते ततश्चोदकप्राप्तानामिडाप्राशित्रचतुर्धाकरणशंयुवा-

---

मनङ्गत्वमित्यत आह—**चतुरवत्तमिति**। वाक्यस्य होममात्रविधायकत्वेनोपस्तरणाभिघारणादिवाक्यपर्यालोचनाबललब्धसंख्यानुवादकतयोपपन्नस्य चतुःशब्दस्य न विधायकमित्यनङ्गत्वमेव चतुरवदानस्येत्यर्थः। तस्माद्धविषो द्विरवदायोपस्तरणाभिघारणाभ्यां स्रुच्यससर्गं संपाद्य होतव्यमित्येतावांच्छास्त्रार्थः। कृष्णलेषु चासंसर्गस्य स्वतःसिद्धत्वादुपस्तरणाभिघारणं न कर्तव्यमित्युपसंहरति—**तस्मादिति**। सूत्रार्थस्तु—उपस्तरणाभिघारणयोः स्वादिमार्थत्वादनुष्ठानं स्यादिति॥

**भक्षाणां तु प्रीत्यर्थत्वात्०॥ १३॥** यथोपस्तरणाभिघारणायोर्द्वारलोपादननुष्ठानं तथा भक्षाणामपि तृप्तिरूपद्वारलोपादननुष्ठानमित्युत्थितेः संगतिः। **ननु** भक्षणस्य द्रव्यप्रतिपत्त्यर्थतया तृप्त्यर्थत्वाभावादियं चिन्तैवानुपपन्नेत्यत आह—**कृत्वेति**। ननु प्रायणवद्वचनबलात्कर्तव्यत्वमत आह—**यत्त्विति**। यद्वा **ननु** वचनबलादप्राकृतं द्रव्यप्रतिपत्त्यर्थं भक्षणमस्त्वित्यत आह—**यत्त्विति**। इक्ष्वादिभक्षणे यः शब्दो रसानुभवकालीन उत्पद्यते स चुश्रुषेत्युच्यते। तं कृत्वा भक्षयतीति श्रुत्यर्थः। **तदाज्यस्येति**। तद्भक्षणमाज्यस्यैव विधीयते। आज्यस्य द्रवद्रव्यतया तद्भक्षणे चुश्रुषाकरणस्य नित्यप्राप्ततया चुश्रुषाकारमित्यनुवादसंभवेन भक्षणमात्रविधौ लाघवात् नतु कृष्णलानां भक्षणं विधीयते। तद्भक्षणे नियमेन चुश्रुषाशब्दस्याप्राप्त्या तस्यापि विधेयत्वेन गौरवप्रसङ्गादित्यर्थः। **पूर्वेति**। 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णल'-मित्यत्रेत्यर्थः। **नन्वदनीयानां** कृष्णलानां भक्षणं संभवति रसवत्पार्थिवद्रव्यविषयस्य तृप्तिफलकव्यापारस्यैव भक्षयत्यर्थत्वादित्यत आह—**अनदनीयानामिति**। हनुचलनभेद एव भक्षयत्यर्थः। नतु प्रागुक्ततृप्तिफलको व्यापारः। कृष्णलेषु भक्षणप्रतिपादकवचनविरोधात्तस्य घृतविषयकत्वानुपपत्तेरुक्तत्वादित्यर्थः। एवंच विशिष्टविधिगौरवमपि प्रामाणिकत्वादङ्गीकार्यमित्याशयेनाह—**तेषामिति**। इदं चाभ्युपेत्योक्तं वस्तुतस्तु कृष्णलानामपि भक्षणमात्रमेव विधीयते आधारभूताज्यसंसर्गबलेन चुश्रुषाकरणस्य तेष्वपि नित्यप्राप्ततया अनुवादसंभवादिति ध्येयम्॥

**एकधोपहारे०॥ १७॥ तत्रैवेति**। कृष्णलचरावेवेत्यर्थः। उपहरति उप समीपे हरति ददातीति यावत्। **किमत्रेति**। किमत्र सकृत्त्वं सहत्वं वा विधीयते इत्यनियम उत सहत्वमेवेति संशय इत्यर्थः। **ननूभयथाप्येकस्मिन्काले** उपहरणमनुष्ठेयमिति सकृत्त्वसहत्वयोः को विशेष इति पृच्छति—**कश्चात्रेति। शंयुवाकेति**। तच्छंयोरिति मन्त्रका-

---

१ चुचूषाकारं, चुचूषाकार. २ विहृतत्वात्.

ऋकालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते सकृद्धरति नाधिकमिति विधानादेक एवास्य भक्ष उपहर्तव्यः, भक्षान्तराणि निवर्तेरन् । सहत्वविधौ पुनरनिवर्तिता भक्षाः कालभेदेनोपहर्तव्याः प्राप्ताः सन्त एकस्मिन्काले उपह्रियन्ते। तत्र सकृत्त्वे सहत्वे चैकधाशब्दस्य लोके प्रयोगादनियमः। यत एवायं साधारणः अतएव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव विधीयते, प्राशित्रमिडामिति द्वितीयया क्रियांप्रति भक्षस्य प्राधान्यावगमाद्दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति तेषां सहत्वविधानमुपयुज्यते ॥

कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् ॥ ५ ॥

**सर्वत्वं च तेषामधिकारात्स्यात् ॥१८॥ [पुरुषापनयो वा तेषामवाच्यत्वात् ॥१९॥]**

सर्वं ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता ॥ अन्यभागस्यापि बाधो भागान्तरमबाधितुम् ॥ ५ ॥
सर्वत्वमन्यभागीयं ब्रह्मणोऽत्र विधीयते ॥ स्वभागीयं चोदकाप्तं बाध्यतामन्यभक्षणम् ॥ ६ ॥

तत्रैव सर्वं ब्रह्मणे परिहरतीति श्रुतं, तत्र संशयः किं ब्रह्मभागस्य सर्वस्य परिहारो विधीयते यद्ब्रह्मणे सर्वं तत्परिहरतीति, यद्ब्रह्मणे परिहरति तत्सर्वमिति वा, उत परिहरणीयस्य सर्वस्य ब्रह्मसंबन्धो विधीयते यत्परिहरति तत्सर्वं ब्रह्मणे नाध्वर्य्वादिभ्य इति पुरुषान्तरेभ्यो भक्षोऽपनीयते इति। तत्र चोदकप्राप्तपुरुषान्तरसंबन्धो माबाधीति ब्रह्मभागस्य परिहर्तव्यस्य सर्वता सर्वस्य ब्रह्मसंबन्धिनो वा परिहारो विधीयत इति मन्यते। वचनं त्वेवमनर्थकं स्यात्, प्रकृतित एव हि कृत्स्नस्य ब्रह्मभागस्य भक्षणाय परिहरणं प्राप्तमेव। कृत्स्नो हि भागस्तेन भक्षयितव्यः। अन्यथा ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्तस्मात्प्राप्तत्वाद्ब्रह्मभागस्य कृत्स्नता न विधातव्या, तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति[2] तत्सर्वं ब्रह्मणे परिहरति नान्येभ्य इति प्राकृता भक्षाः पुरुषान्तरेभ्योऽपनीयन्ते ॥

---

लेत्वर्थः। **भक्षाणामिति। चतुर्हरण इति।** सर्वेषां भक्षाणां युगपदप्राप्तत्वेन एकैकस्य भक्षस्यैकवारमित्येवं चतुर्वारहरणे प्राप्त इत्यर्थः। **लोक इति।** एकधा गाः पाययतीत्यादावित्यर्थः। अत्र सकृत्त्वे सहत्वे चैकधाशब्दस्य पृथक्शक्तिस्ततश्चायं शब्दः कदाचित्सकृत्त्वं प्रतिपादयति कदाचित्सहत्वमित्येवंरूपो नानियमः। तथासति शास्त्रस्यानध्यवसितार्थकत्वापत्तेः, किंत्वेकधाशब्द एकप्रकारकत्वमेव प्रतिपादयतीत्यध्यवसितार्थ एव। तत्त्वेकप्रकारकत्वमुभयसाधारणमिति द्वयोरनियमो बोध्यः। एवंच पूर्वत्र यथा वचनबलाद्भक्षणमेवमिहापि वचनस्य साधारण्यात्तद्बलादनियम इत्युत्थितेः संगतिर्बोध्या। साधारणस्यापि वचनस्य चोदकानुग्रहाय कांस्यभोजिन्यायेन सहत्वमात्रे संकोच इति सिद्धान्तमाह—**यत इति।** ननु तृप्त्यर्थानां प्राकृतानां भक्षाणां कृष्णलेष्वप्राप्तेः कथं चोदकानुग्रह इत्यत आह—**प्राशित्रमिति।** अतएव पूर्वाधिकरणे क्त्वाचिन्तेत्युक्तम्। **दृष्टेति।** नच तृप्तिद्वारा सामर्थ्यजननेन तत्रापि दृष्टार्थत्वं संभवतीति वाच्यम्। स्वल्पभक्षणमात्रेण तृप्तेः सामर्थ्यस्य चासंभवेन तत्रावश्यमदृष्टार्थत्वं वाच्यमित्याशयात्। सूत्रार्थस्तु—ब्रह्मभक्षाणां प्रकृतौ विहितत्वाद्भिन्नकालत्वात्तेषामेकधेत्यनेनेह सहोपहारो विधीयत इति ॥

**सर्वत्वं च तेषां०** ॥ १८ ॥ पूर्वत्र यथावचनं चोदकाविरोधेन नीतमेवेहापीत्युत्थितेः संगतिः। परिहरति प्रयच्छतीत्यर्थः। **ब्रह्मभागस्य सर्वस्येति।** नैकदेशस्य किंतु सर्वस्येत्यर्थः। तत्र वचनव्यक्तिद्वयाश्रयणेन सर्वब्रह्मभागपरिहारविधायकत्वं दर्शयति—**तदिति।** यद्ब्रह्मणे सर्वमित्यनूद्य तत्परिहरतीति विधौ ब्रह्मसंबन्धी यावान्भागस्तावत एव सर्वस्य परिहारो लभ्यते तथा यद्ब्राह्मणे परिहरतीत्यनूद्य तत्सर्वमिति तत्र सर्वताविधावपि सर्वस्य ब्रह्मभागस्यैव परिहारो लभ्यत इत्यर्थः। अत्रच पक्षद्वयेऽप्येकैकेन पदेन साकाङ्क्षतयोद्देश्यप्रतीत्यपर्यवसानान्न विशिष्टोद्देशदोषः। **उतेति।** सर्वेभ्य ऋत्विग्भ्यो यत्परिहर्तव्यं तस्य सर्वस्य ब्रह्मसंबन्धो विधीयत इत्यर्थः। अत्र यत्परिहरति तद्ब्रह्मण इति परिहर्तव्योद्देशेन ब्रह्मसंबन्धविधौ परिहर्तव्ये सर्वस्मिन्ब्रह्मसंबन्धसिद्धेः सर्वशब्दोऽनुवादः। **अपनीयते इति।** नाध्वर्य्वादिभ्य इत्यनेन भक्षान्तराणां न स्वरूपेण बाधः क्रियते किंतु तत्र पुरुषान्तरसंबन्धबाध इत्यर्थः। ननु ब्रह्मभागभक्षणमात्रं प्रकृतितः प्राप्यते न कृत्स्नब्रह्मभागभक्षणमतः कथं सर्वस्य परिहरणं प्राप्तमित्यत आह—**कृत्स्नो हीति। अन्यथेति।** भक्षणस्य संस्कारत्वादेकदेशभक्षणे एकदेशान्तरस्य प्रतिपत्तिलोपः स्यादिति कृत्स्नभक्षणमावश्यकमित्यर्थः। ततश्च वचनानर्थक्याच्चोदकबाधोऽप्यङ्गीकार्य इत्याशयेनोपसंहरति—**तस्मादिति।** सूत्रार्थस्तु—तेषां ब्रह्मभक्षाणां सर्वत्वं विधेयं स्यात्। अधिकारात् स्वरूपेण तेषां चोदकतः प्राप्तत्वात्ततश्च सर्वत्वं विध्यर्हमिति ॥

---

१ भक्षणीयः. २ परिहरति.

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् ॥ ६ ॥

## पुरुषापनयात्स्वकालत्वम् ॥ २० ॥

युगपत्स्वस्वकाले वा तत्सर्वं भक्षयेदयम् ॥ अविलम्बाद्यादिमोऽन्त्यस्तं तं कालमबाधितुम् ॥ ७ ॥

सर्वे भक्षा ब्रह्मण उपहर्तव्यास्ते चैकधा ब्रह्मण उपहरतीति सहत्वविधानादेकस्मिन्नेव काल उपहर्तव्या इति स्थिते संशयः किं युगपदुपहृतानां युगपद्भक्षणं उत प्रकृतिवन्नानाकालं भक्षणम् । तत्र—'भक्षार्थो ह्युपहारोऽतो भक्षोऽपि युगपद्भवेत् ॥ सहाप्युपहृतौ शक्यं यथाकालं तु भक्षणम् ॥' तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवन्नानाकालं भक्षणम् ॥

ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् ॥ ७ ॥

## एकार्थत्वादविभागः स्यात् ॥ २१ ॥

चतुर्धाकृतिनिर्देशौ तद्भक्षे स्तो न वाग्रिमः ॥ चोदकात्तौ तु बह्वर्थव्यवस्थार्थत्वतोऽत्र न ॥ ८ ॥

प्रकृतौ चतुर्धाकरणं विधायेदं ब्रह्मण इदं होतुरित्यादिव्यादेशो विहितः स किं कृष्णलेषु कर्तव्यः नेति । चोदकप्राप्तेः कर्तव्यः । नैवम् । चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ । इह तु ब्रह्मणैव सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्तव्यम् । व्यादेशोऽपि चतुर्णां व्यवस्थार्थः । इह तु सर्वस्य ब्रह्मसंबन्धित्वेन निश्चितत्वादिदं ब्रह्मण इत्यपि निर्देशो न कर्तव्यः नतरामिदं होतुरित्यादि होत्रादिभ्योऽपनीतत्वात् ॥

---

**पुरुषापनयात्स्वकालत्वम् ॥ २० ॥** नन्वत्र किं ब्रह्मभक्ष एव विषय उत सर्वे प्राकृता भक्षाः । नाद्यः । 'पुरुषापनयात्स्वकालत्व'मिति सूत्रात् 'पुरुषापनयं कृत्वा कृतार्थः शब्दः स्वकालत्वं भक्षाणां न निवारयती'ति भाष्याच्च सर्वविषयताप्रतीतेः । न द्वितीयः । 'एकधा ब्रह्मण उपहरती'त्यनेन ब्रह्मणे यत्प्राकृतं तदेकधा उपहरतीति ब्रह्मभक्षेष्वेव सहत्वविधानेन भक्षान्तरेषु च सहत्वाप्राप्त्या तेषु विचारस्यैवाप्रवृत्तेरित्याशङ्क्य सर्वेऽपि प्राकृता भक्षा विषयाः । नच तेषु सहत्वाप्राप्तिः एकधेत्यनेनैव प्राप्तेः । नहि तस्य ब्रह्मणे यत्प्राकृतमुपहरति तदेकधेत्यर्थः, प्राकृतपदाश्रवणात्, किंतु यद्ब्रह्मणे उपहरति तदेकधेति ब्रह्मणे उपहर्तव्यमात्रे एककालत्वं विधीयते । सर्वं ब्रह्मणे परिहरतीत्यनेन सर्वेषामेव प्राकृतानां भक्षाणां ब्रह्मण उपहर्तव्यत्वमनगन्तव्यम् । तस्मात्सर्वेषामपि भक्षाणां सहत्वावगमाद्युक्तं विषयत्वमित्याशयेन सर्वेषां ब्रह्मण उपहर्तव्यत्वं तेषां च सहत्वं गतनयद्वयसिद्धमनुवदति—**सर्व इति** । अनेनैव गतनयद्वयोपजीवनात्संगतिरपि सूचिता । नन्वेककालमपि भक्षयितुं शक्यमिति किं विनिगमकमित्यत आह—**तस्मादिति** । सूत्रार्थस्तु—प्रागुदाहृतभाष्येणैव व्यक्तः ॥

**एकार्थत्वादविभागः स्यात् ॥ २१ ॥** यद्यपनयमात्रं विधाय वचनस्य चरितार्थत्वाच्च कालबाधस्तर्हि व्यादेशोऽपि न बाध्य इत्युत्थितेः संगतिः । **व्यादेश इति** । निर्देश इत्यर्थः । **चोदकेति** । नचेदं ब्रह्मण इदं होतुरित्यादिव्यादेशस्य तृतीये भक्षणार्थत्वप्रतिपादनादिह च होत्रादिभ्यो भक्षापनयाद्व्यादेशाप्रसक्तिरिति वाच्यम् । होत्रादिभ्यो भक्षापनयेनेदं होतुरिदमध्वर्योरिदमग्नीध इति व्यपदेशाभावेऽपि ब्रह्मणो भक्षसद्भावेनेदं ब्रह्मण इति व्यादेशावश्यंभावादिति पूर्वपक्षिणोऽभिमानः । सति चतुर्धाकरणे व्यवस्थार्थं व्यादेशः कर्तव्यः स्यात् । इह चतुर्धाकरणस्यैवाभावाद्व्यादेशो नैव कर्तव्य इत्याशयेन चतुर्धाकरणस्याकर्तव्यत्वमुपपादयति—**चतुर्धेति । व्यादेशोऽपीति** । तथाचासौ न कर्तव्य इति भावः । ननु चतुर्णामव्यवस्थाप्रसक्त्यभावादिदं होतुरित्यादिनिर्देशाभावेऽपि इदं ब्रह्मण इति व्यादेशः किं न स्यादित्यत आह—**इहत्विति** । इदं ब्रह्मणे इत्यपि निर्देशो ब्रह्मभागस्य पुरुषान्तरसंबन्धव्यावर्तनेनैव भक्षार्थः, इहतु भक्षान्तरसंबन्धप्रसक्त्यभावात्सोऽपि न कर्तव्य इत्यर्थः । एवं पूर्वपक्ष्यभिमानविषयं इदं ब्रह्मण इत्येतावान्व्यादेशः कर्तव्य इत्येतदर्थं दूषयित्वा इदानीं यथाश्रुतं पूर्वपक्षं दूषयति—**नतरामिति** । सूत्रार्थस्तु—एकार्थत्वादिदमस्मा इत्येवंरूपो विभागो न कर्तव्य इति ॥

ऋत्विग्दानस्यानत्यर्थताधिकरणम् ॥ ८ ॥

**ऋत्विग्दानं धर्ममात्रं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥ [परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ न चान्येनानम्येत परिक्रयात्कर्मणः परार्थत्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सनित्रन्येत्र भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥]**

ऋत्विग्दानमदृष्टार्थमानत्यै वाग्रिमः श्रुतेः ॥ वैरूप्यान्नियमान्मैवं दृष्टत्वादानतेः श्रुतिः ॥ ९ ॥
भृतौ च नियमादेतददृष्टं स्याद्विरूपता ॥ वचनात्तेन सत्रेषु स्वामिनां न भृतिः क्वचित् ॥ १० ॥

'ऋत्विग्भ्यो दक्षिणां दद्या'दित्यादि यदृत्विग्दानं तददृष्टार्थमानत्यर्थं वेति संदेहे अदृष्टार्थमिति ब्रूमः। दानकर्तव्यताश्रुत्या दानेनानतिकर्तव्यतावाक्यात्। तच्च दुर्बलम्। तस्माद्दानमात्रं कर्तव्यम्। किंच द्वादशशतादिपरिमाणनियमो मन्त्रादीतिकर्तव्यताश्रुत्या, कर्माननुरूपद्रव्यता च दानस्यादृष्टार्थत्वेऽवकल्पते नान्यथा। उच्यते—कर्मकरेभ्यस्तु दीयमानमपेक्षितानतिद्वारेण दृष्टप्रयोजनवत्त्वान्न शक्यमदृष्टार्थं कल्पयितुम्। परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः नतु तावता दानस्याप्यदृष्टार्थता, तस्मात्सत्रेषु न कर्तव्यं दानम् ॥

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

**शेषभक्षाश्च तद्वत् ॥ २९ ॥ [संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥]**

क्रयाय प्रतिपत्त्यै वा चमसेडादिभक्षणम् ॥ क्रयाय पूर्ववन्मैवं यागीये स्वत्ववर्जनात् ॥ ११ ॥
अक्रीतयजमानस्य भक्षसत्त्वाच्च तेन सा ॥ प्रतिपत्तिः संस्कृतित्वात्सत्रेषु न निवर्तते ॥ १२ ॥

शेषभक्षा इडादिविषयाः[1] सोमविषयाश्च सोमे समाम्नाताः किं परिक्रयार्था उत प्रतिपत्त्यर्था इति विचारः। तत्र भक्षणात्प्रीतिः प्रीत्या चानतिः प्रत्यक्षा तस्मात्तदर्थाः। नैवम्। यागे कृतेऽवशिष्टं

**ऋत्विग्दानं धर्ममात्रं० ॥ २२ ॥** व्यादेशस्य बाधेऽपि ऋत्विग्दानस्य सत्रे न बाध इत्युत्थितेः संगतिः। **दानेति।** दद्यादिति प्रत्ययोपात्तभावनायां समानपदश्रुत्या धात्वर्थस्य कर्मत्वेनान्वयः ऋत्विक्पदलभ्यानतेस्तु वाक्यादित्यर्थः। **नन्विद**मनुपपन्नं, यद्यत्रान्यतः प्राप्तं दानमुद्दिश्य किंचिदन्यद्विधीयेत तदा दध्ना जुहोतीत्यादिवद्धात्वर्थस्य कर्मत्वं स्यात्। इहतु दानमेव विधीयते। तस्य च विधीयमानस्य करणत्वमेव न कर्मत्वम्। तथाचादृष्टार्थत्वपक्षेऽपि दानेनादृष्टं कुर्यादित्येव विधिर्वाच्यः। तद्वरं समभिव्याहृतऋत्विक्पदलभ्यानतेः कर्मत्वमाश्रित्य दानेनानतिं कुर्यादिति विधिस्वीकार इत्यस्वरसादाह—**किंचेति। द्वादशेति।** कश्चिदल्पेनानमति कश्चिदधिकेनेत्यानतेरनियतद्रव्यसाध्यतयाऽऽनत्यर्थत्वे परिमाणनियमोऽनुपपन्नः स्यादित्यर्थः। **कर्मेति।** स्वल्पेऽपि कर्मण्याधानादौ सहस्रदक्षिणादर्शनान्महत्यपि ऋतपेयादौ सोमचमसादेर्दक्षिणात्वदर्शनाच्च कर्माननुरूपत्वमित्यर्थः। **कर्मकरेभ्य इति।** ऋत्विक्शब्दस्य ऋतुयजननिमित्तकत्वेन यागकर्तृवचनतया कर्मकर्तृत्वपुरस्कारेण दानं दृष्टानत्यर्थमेव युक्तं नादृष्टार्थमित्यर्थः। **परिमाणादीति।** दृष्टार्थत्वेऽपि दानस्यावहननादिमन्त्रनियमस्येव नियतपरिमाणादिनैवानतिः संपादनीयेत्येवंरूपपरिमाणमन्त्रकर्माननुरूपद्रव्यनियमस्यादृष्टार्थत्वसंभवान्न तद्बलाद्दानस्यैवादृष्टार्थत्वमित्यर्थः। दृष्टादृष्टार्थविचारमध्याये संगमयति—**तस्मादिति।** सत्रे सर्वेषां यजमानत्वेन स्वत एवानतत्वादानत्यर्थत्वे दक्षिणादानस्य निवृत्तिरित्यर्थः। सूत्रार्थस्तु—ऋत्विग्भ्यो दानं धर्ममात्रमदृष्टार्थमेव[1] स्याद्ददातिसामर्थ्यात्, ददातीति समानपदलक्षणश्रुतिसामर्थ्येन दानस्यैव कर्तव्यत्वावगमादिति ॥

**शेषभक्षाश्च तद्वत् ॥ २९ ॥** यद्यानत्यर्थत्वाद्दक्षिणादानस्य सत्रे बाधस्तर्हि तद्वदेव शेषभक्षाणामपि बाध इत्युत्थितेः संगतिः। **इडादीति।** दर्शपूर्णमासयोरिति शेषः[2]। **सोम इति।** होतृचमसादिसमाख्यावषट्कारादिनिमित्तका इत्यर्थः। **प्रत्यक्षेति।** द्रव्यप्रतिपत्त्यर्थत्वेऽपि दृष्टार्थत्वात्पूर्वपक्षो मन्द इति ध्येयम्। **अपेक्षमाणमिति।** तथाच प्रतिपत्त्यर्थ-

१ धर्ममात्रार्थं. २ दर्शपूर्णमासयोः सोमविषयाश्च.

द्रव्यं प्रतिपत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते तत्तु दृष्टमेव प्रयोजनम्, अनीशानश्च यजमानो देवतायै संकल्पितस्य अतो न शक्नोत्यसौ तेन परिक्रेतुम् । तस्मात्प्रतिपत्त्यर्था भक्षाः । स्थिते चास्मिन्भक्षाणां प्रतिपत्त्यर्थत्वे चतुर्धाकरणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य भक्षणार्थता[1]व्यादेशस्य तृतीये साधिता तस्मात्सत्रेष्वप्यबाध्या भक्षाः ॥

सत्रे ऋत्विग्वरणाभावाधिकरणम् ॥ १० ॥

## वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥ ३४ ॥

ऋत्विजां वरणं सत्रे कार्यं नो वाऽत्र सोमवत् ॥ कार्यं मैवं स्वकर्मत्वात्क्रयार्था प्रकृतौ वृतिः ॥ १३ ॥

ज्योतिष्टोमे वरणमृत्विजामाम्नातं, 'अग्निर्होता स मे होते'त्यादि तत्सत्रेषु कर्तव्यं नेति संशये चोदकानुग्रहाय कर्तव्यं ऋत्विक्त्वार्थं चेदं प्रकृतौ, तच्च सत्रेऽपि यजमानेष्वाधातव्यं 'ये यजमानास्त ऋत्विज' इति वचनात् । अतो लुप्तार्थत्वात्कर्तव्यं वरणम् । नैवम् । आनत्यर्थं तत्प्रकृतौ कृतम् । नचात्र यजमानैर्वरणेनानमितव्यम्, अतोऽर्थलोपादकर्तव्यं, ऋत्विक्त्वमपि यागकर्तृत्वं, तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव । सत्रेषु तु वरणस्यार्थलोपान्निवृत्तवरणानामेव न विगुणमृत्विक्त्वं अध्वर्य्वादित्वं च भविष्यति । यदि तु कर्मकरवचनोऽयमृत्विक्शब्दस्ततो वरणेनापि यजमाने[2]ष्वशक्यमाधातुम् । ते हि स्वार्थं कुर्वाणा न कर्मकरा भवन्ति ते[3]नानृत्विग्भिरेव सत्रं कर्तव्यमिति वरणनिवृत्तिः ॥

---

त्वेऽपेक्षितविधिलाभो विनिगमक इति भावः । **अनीशान इति** । अस्वामीति यावत् । देवतायै संकल्पमात्रेण द्रव्ये स्वामित्वप्रच्युतेरिति भावः । **ननु** तृतीये इदं ब्रह्मण इति व्यादेशस्य प्रतिपत्त्यर्थत्वं यजमानस्यानीशत्वादपेक्षितविधिसंभवाच्च समर्थितं तेन पुनरुक्तमिदम् । नच तत्र व्यादेशस्य प्रतिपत्त्यर्थत्वमुक्तमिह तु भक्षाणामित्यपुनरुक्तिः । उदाहरणभेदमात्रस्याकिंचित्करत्वादित्यत आह—**स्थित इति** । अत्र व्यादेशस्य प्रतिपत्त्यर्थत्वं भक्षणद्वारैव वाच्यम् । अन्यथाऽदृष्टार्थत्वापत्तेः । नच व्यादेशे भक्षः श्रूयते तस्मान्न प्रतिपत्त्यर्थत्वं किंतु परिक्रयार्थत्वमिति शङ्कानिराकरणार्थं तदधिकरणमित्यर्थः । तद्वत् दक्षिणादानवत् । आनत्यर्थाः शेषभक्षा इति सूत्रार्थः ॥

**वरणमृत्विजां० ॥ ३४ ॥ इत्यादीति** । इत्यादिमन्त्रकरणकत्वेन विहितमित्यर्थः । यथा शेषभक्षणमलुप्तार्थत्वात्कर्तव्यं तथा वरणमपीत्युत्थितेः संगतिः । **ननु** प्रकृतावानत्यर्थं वरणं सत्रे च स्वत आनतत्वाद्द्वारलोपादकर्तव्यमित्यत आह —**ऋत्विक्त्वार्थं चेति** । 'ऋत्विजो वृणीत' इति वरणेन ऋत्विजः संपादयेदिति ऋत्विक्त्वार्थमेव वरणं नत्वानत्यर्थम् । आनतेर्दक्षिणादिदानादेव सिद्धेः । तथाच ऋत्विक्त्वलक्षणद्वारस्य सत्रेपि सत्वेन वरणं कर्तव्यमित्यर्थः । **तच्चेति** । सत्रेपि तददृष्टसंस्कारलक्षणमृत्विक्त्वं यजमानेषु संपादनीयं 'ये यजमानास्त ऋत्विज' इति वचनेन यजमानानामृत्विक्त्वविधानादित्यर्थः । यद्यपि षष्ठे ये यजमाना इत्यनेन ऋत्विक्कार्ये यजमानविधिरित्युक्तं, तथापीह ऋत्विक्शब्दस्य न कर्मलक्षकत्वं अदृष्टरूपसंस्कारलक्षणमुख्यार्थे बाधकाभावाद्वरणसाध्यत्वबलादेव ऋत्विक्शब्दस्य यूपादिशब्दवददृष्टवाचकत्वावगमात् तदेव तु ऋत्विक्त्वं यजमानानां विधीयते इति पूर्वपक्षी मन्यत इति न काप्यनुपपत्तिरिति ध्येयम् । **नैवमिति** । यद्यपि दक्षिणादानादानतिसिद्धिः तथापि वरणस्य प्रार्थनात्मकतया सत्कारपर्यवसानात्सत्कारपूर्वकदाने आनतिविशेषसिद्धिरित्यानत्यर्थमेव वरणमित्यर्थः । ऋत्विक्त्वमपि नादृष्टरूपं येन तदर्थत्वादलोपः स्यादित्याह—**ऋत्विक्त्वमपीति** । किन्त्वन्तस्य ऋत्विक्शब्दस्य तत्रैव मुख्यत्वौचित्यात् दृष्टमपि यागकर्तृत्वरूपमृत्विक्त्वं वरणेनैव संपाद्यमिति नियमविध्युपपत्तेः न वरणसाध्यत्वबलादप्यदृष्टवाचकत्वं तस्येति भावः । **नन्वेवं** यागकर्तृत्वसिद्ध्यर्थमेव वरणं किं न स्यादन्यथा यागकर्तृत्वस्यैव वैगुण्यापत्तेरित्यत आह—**तच्चेति** । नहि वरणं साक्षाद्यागकर्तृत्वे उपयुज्यते किंत्वानतिद्वारा । सा चात्र लुप्तेति तद्द्वारकवरणाभावेऽपि यागकर्तृत्वेन किंचिद्वैगुण्यमित्यर्थः । **नन्वेवमप्या**ध्वर्यवादिसिद्ध्यर्थं वरणमवश्यमङ्गीकार्यं वरणनिमित्तकत्वात्तस्येत्यत आह—**अध्वर्य्वादित्वं चेति** । अध्वर्युर्भवानीत्यध्यवसायनिमित्तमेवाध्वर्य्वादित्वं न वरणनिमित्तमिति भावः । **यदीति** । कर्मकरेषु लोके ऋत्विक्शब्दप्रयोगात्कर्मकरवचनत्वमपि संभाव्यत इति भावः । **ते हीति** । परार्थकर्मकुर्वाणानामेव कर्मकरत्वादिति भावः । **तेनेति** । कर्मकरत्वरूपर्त्विक्त्वाभावेनेत्यर्थः । **सूत्रार्थस्तु**—सत्रे वरणं न स्यात्तस्य ऋत्विगानत्यर्थत्वात् स्वार्थकर्मत्वात्सत्रस्य तत्र यजमानानां स्वयमेवानतत्वादिति ॥

---

१ भक्षणार्थत्वव्यादेशस्य. २ यजमानेषु शक्य. ३ तेन ऋत्विग्भिरेव.

सत्रे परिक्रयाभावाधिकरणम्॥ ११ ॥

**परिक्रयश्च तादर्थ्यात्॥ ३५ ॥ [प्रतिषेधश्च कर्मवत्॥ ३६ ॥ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात्॥३७॥ न दक्षिणाशब्दात्, तस्मान्नित्यानुवादः स्यात्॥ ३८ ॥]**

**क्रयः कार्यो न वा सत्रे निषेधात्कृतिकल्पनम्॥ नित्यानुवादेनाक्लृप्तेर्न क्रयो वरणं यथा॥ १४ ॥**

दक्षिणादानं परिक्रयार्थं नादृष्टार्थमित्युक्तं, इदानीं परिक्रय एव सत्रे किं कर्तव्यो नेति संशये पूर्वाधिकरणवत्पूर्वोत्तरपक्षौ, नात्र गौर्दीयत इत्यादिप्रतिषेधो नासत्यां दानप्राप्तौ घटते । तस्मादनिवृत्तं दानमिति विशेषाशङ्काविध्यन्तरशेषस्त्वयमनुवादो न प्राप्तिं सूचयति । तस्मादानमनार्थत्वाद्वरणवत्परिक्रयो निवर्तते॥

उदवसानीये दानस्य परिक्रयार्थताधिकरणम्॥ १२ ॥

**उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात्॥ ३९ ॥ [न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च॥ ४० ॥]**

**सत्राङ्गं स्यान्न वा पृष्ठशमनीयो त्वपाङ्गता॥ सौत्रामण्यादिवन्नैवं त्यागादूर्ध्वं विधानतः॥ १५ ॥**
**श्रूयमाणा दक्षिणेयं पूर्वपक्षेऽत्र धर्मकृत्॥ परिक्रयार्था सिद्धान्ते निमित्तं स्यात्समापनम्॥ १६ ॥**

'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्नि'ति श्रूयते। तत्र संशयः किं पृष्ठशमनीयः सत्राङ्गं तत्र च सत्रवद्यजमानैरेवार्त्विज्यं कर्तव्यमिति दक्षिणादानमदृष्टार्थं उत नाङ्गमृत्विग्भिः कर्तव्यं परिक्रयार्थं च दानमिति । तत्र फलवत्सत्रसमभिव्याहारात्तदुत्तरकालेऽपि श्रूयमाणः पृष्ठशमनीयो वाजपेयस्येव बृहस्पतिसवः सत्रस्याङ्गम्। इतरथाहि सत्रसंयोगः काललक्षणार्थः स्यात् फलं च कल्प्येत तस्मादङ्गम्। नैवम्। उदवसानं हि त्यागः स च निःशेषसमाप्ताववकल्प्यते। नच निःशेषसमाप्तस्याङ्गं संभवति । 'वाजपेयेनेष्ट्वे'ति तु प्रयोगसमाप्तिर्गम्यते । समाप्तेऽपि च

---

**परिक्रयश्च०॥ ३५॥ ननु** 'ऋत्विग्दानं धर्ममात्र'मित्यधिकरणे दक्षिणादानमानत्यर्थत्वात्सत्रे न कर्तव्यमित्युक्तं इहापि तदेवोच्यत इति पुनरुक्तिरित्यत आह—**दक्षिणेति** । यद्यपि तत्राधिकरणे आनत्यर्थमित्युक्तं ग्रन्थकारेण तथापि दक्षिणादानस्य परिक्रयद्वारैवानत्यर्थत्वात्, 'परिक्रयार्थं वा कर्मसंयोगाल्लोकवदि'ति तदधिकरणसिद्धान्तसूत्राच्च परिक्रयार्थमित्युक्तमित्यदोषः। परिक्रयो नाम दक्षिणापूर्वकं परेषां स्वकीयतापादनम्। एवंच तत्राधिकरणे परिक्रयहेतुभूतं दानं विचारितमिह तु परिक्रय एव चिन्त्यत इत्यपुनरुक्तिरित्यर्थः। द्वादशशतदक्षिणेनाहं यक्ष्ये तत्र त्वमुद्गाता भवेत्येवमियत्ताभिधानेन प्रवर्तनं परिक्रय इत्यप्याहुः । प्रकृतौ दक्षिणादानमानत्यर्थमिति पूर्वविचारस्यायं फलविचार इति ध्येयम्। **पूर्वेति**। चोदकानुग्रहात्कर्तव्यमिति पूर्वः पक्षः, आनत्यर्थत्वेनार्थलोपान्न कर्तव्यमिति सिद्धान्तश्च पूर्ववदेव द्रष्टव्याविस्यर्थः। किमर्थं तर्हीदमित्यत आह—**नात्रेति**। 'अदक्षिणानि सत्राणीत्याहु'रित्युपक्रमानुसारेण गवादिदाननिषेधो दक्षिणात्वेन गवादिदाननिषेधः सन् दक्षिणादानप्राप्तिं सूचयति। तस्मात्कर्तव्यं दानमित्येतादृशशङ्कानिराकरणार्थमिदमित्यर्थः। **विध्यन्तरेति**। सत्रविधिशेषत्वादित्यर्थः। सूत्रार्थस्तु—परिक्रयश्च सत्रे न कर्तव्यः सत्रस्यात्मार्थत्वादिति॥

**उदवसानीयः०॥ ३९॥** तदर्थसंशयप्रदर्शनपूर्वकमधिकरणाङ्गसंशयमाह—**तत्रेति** । यदि सत्रे न परिक्रयस्तर्हि तदङ्गे पृष्ठशमनीयेऽपि परिक्रयाभावाद्दानमदृष्टार्थमित्युत्थितेः संगतिः । अस्य विचारस्य प्राकृतर्त्विक्बाधाबाधविचारपर्यवसानादध्यायसंगतिः। **ननु** 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'तिवदत्र न क्त्वाप्रत्ययबलादङ्गाङ्गिभावसंभवः। क्त्वाप्रत्ययो हि समानकर्तृत्वं बोधयति, कर्त्रैक्यं च प्रयोगैक्य एव भवत्येकप्रयोगत्वावगतिबलादङ्गाङ्गित्वबोधः । तच्च समानकर्तृकत्वं प्रकृते उदवसानरूपत्यागस्यैव प्रतीयते न सत्रस्य, तस्मादङ्गत्वासंभवात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति**। **ननु** सत्रप्रयोगपरिसमाप्त्यनन्तरं श्रूयमाणस्य कथं सत्राङ्गत्वमत आह—**तदुत्तरेति** । सत्रप्रयोगसमाप्त्युत्तरेत्यर्थः। **वाजपेयस्येवेति**। तत्रापि वाजपेयेनेति तृतीयया वाजपेयकरणकभावनाप्रतीत्या साङ्गप्रयोगानन्तर्यप्रतीतेरिति भावः। **इतरथेति**। इतरथा सत्रे कस्यचिदविधानात्सत्रस्यापि क्वचिदविधानाच्च सत्रश्रुतिः स्वार्थत्वाभावात् । केवलं पृष्ठशमनीयकालोपलक्षणार्थैव स्यादित्यर्थः। **वाजपेयेनेति**। यद्यपि तृतीयाबलात्साङ्गप्रयोगसमाप्तिर्गम्यते तथापि यथोक्ताङ्गसहितप्रयोगसमाप्तिमात्रेणापि तदुपपत्तेरङ्गान्तरविधिर्नानुपपन्न इह तु निःशेषसमाप्त्यवगमान्नाङ्गान्तरविधिसंभव इत्यर्थः।

यथोक्ते प्रयोगे संभवत्यङ्गान्तरं त्यक्तस्य तु पुनरङ्गं न संभवति, संभवे वा त्यागो न स्यात् । तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वम् । नच लक्षणा श्रौतमेव सत्रावसानं निमित्तीकृत्य पृष्ठशमनीयविधानात् ॥

उदवसानीयसर्त्विजां सत्रिभ्यो भिन्नताधिकरणम् ॥ १३ ॥

## तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ ४१ ॥

**तत्रर्त्विजः सत्रिणः किमन्ये वा स्युर्ल्यबुक्तितः ॥ त एव यष्ट्रभेदेऽपि क्रीतत्वादृत्विजः परे ॥ १७ ॥**

पृष्ठशमनीय एव संशयः किमुदवसायिभिः संहत्य प्रयोक्तव्य उतैकैकश्येन यजेरन्निति । तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन विवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम् । अन्तराचिन्तान्तरं प्रक्रियते ॥

उदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् ॥ १४ ॥

## तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ [एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥]

**संभूयैकैकशो वाऽत्र यष्टृताद्यो बहूक्तितः ॥ द्वियागवद्बहुत्वस्य प्राप्तेरन्त्योऽस्तु सोमवत् ॥ १८ ॥**

यदा संहत्य कर्तव्यं तदा किं यजमानैरेव सर्वं कर्तव्यं उतर्त्विग्भिरिति विचारः । तत्रोदवसाने यजमानानामेव कर्तृत्वात् क्त्वाप्रत्ययेन च पृष्ठशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्तारो नान्य इति प्राप्ते ब्रूमः—यजेरन्नित्यनेन यो व्यापारो विधीयते तस्यैवोदवसानसमानकर्तृकता क्त्वाप्रत्ययादवगम्यते नार्त्विज्यस्य । तत्तु पुरुषान्तरैः प्रकृतिवत्क्रियमाणं न केनचिद्विरुध्यते ।

---

**संभवे वेति** । तथाचोदवसायेति श्रुतिर्बाध्येतेति भावः । शाब्दत्वादित्यनेन वाजपेयस्थले इष्ट्वेति क्रियासमाप्तिमात्रं प्रतीयते । तेन तु त्यागोऽनुमेयो न शाब्दस्ततश्च तत्र क्रियानिवृत्तिमात्रश्रवणाद्यथोक्तवाजपेयक्रियां परिसमाप्य न तावता कृतिर्भवेत्, किंत्विदमपरमङ्गं कर्तव्यमित्यङ्गान्तरविधानेऽपि न कस्यचिच्छन्दस्य हानिः । इहतु न यथोक्तप्रयोगसमाप्तिमात्रं प्रतीयते । किंतु शब्दस्वरसान्निःशेषत्यागएव प्रतीयते । अङ्गान्तरविधाने उदवसानश्रुतिबाधः स्यादिति सूचयति—**श्रौतमिति** । तथाच निमित्तकोटिनिक्षेपान्नात्यन्तपारार्थ्यं सत्रश्रुतेरिति भावः । श्रुतिबलाच्च फलकल्पनापि न दोष इति ध्येयम् । सूत्रे सत्रधर्मा सत्रवद्यजमानकर्तृक इत्यर्थः ॥

**तेषां तु वचनात्०** ॥ ४१ ॥ ऋत्विगबाधवदेककर्तृकत्वस्याप्यबाध इत्युत्थितेः संगतिः । **नन्वि**तरेतरनिरपेक्षाणामेवोदवसाने कर्तृत्वात्तत्समानकर्तृकतया पृष्ठशमनीयेऽपि परस्परनिरपेक्षकर्तृकत्वावगमात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । यद्यप्युदवसाने निरपेक्षास्तथापि यागे सापेक्षा एव कर्तारः आख्यातोपात्तसंख्याया विवक्षितत्वस्य षष्ठे व्युत्पादनात्पदान्तरनिरपेक्षया यजेरन्निति पदश्रुत्यैव साहित्यावगमेनोदवसानपदसमभिव्याहारेण निरपेक्षकर्तृत्वस्य वक्तुमशक्यत्वात् । **अन्तरेति** । निरपेक्षस्यैकैकस्य कर्तृत्वमित्येतदधिकरणसिद्धान्ते स्थिते एकेन यजमानेन सर्वस्य कर्तुमशक्यतया ऋत्विजामावश्यकतयाऽग्रिमचिन्तानुपपत्तेरन्तराचिन्तात्वमेव युक्तमिति भावः ॥

**तत्रान्यानृत्विजः०** ॥ ४२ ॥ **ननु** पृष्ठशमनीयस्य सत्रानङ्गतयान्यकर्तृकस्येदानीमेवोक्तत्वात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति** । सत्रादुदवसानं सत्रकर्तृणां सत्रकर्तृत्वं च यजमानानामिति क्त्वाप्रत्ययेन तत्समानकर्तृकतयावगम्यमानस्यास्य पृष्ठशमनीयस्यापि सत्राङ्गत्वे यजमानकर्तृकत्वं युज्यत इत्यर्थः । **यो व्यापार इति** । प्रधानभूतो यागात्मकव्यापार इत्यर्थः । **आर्त्विज्यस्येति** । ऋत्विक्कर्मभूतानामङ्गानामित्यर्थः । तेषां सत्रादुदवसायेतिवाक्यस्थयजिशब्दार्थत्वाभावात् । नच नात्र प्रधानयागमात्रे उदवसानसमानकर्तृत्वं किंतु तत्करणकभावनायां तस्याश्च त्र्यंशतया प्रधाने इवाङ्गेष्वपि तत्समानकर्तृकत्वमनिवार्यमिति वाच्यम् । यजेतेतिधातुसंबन्धाधिकारविहितप्रत्ययेन धात्वर्थस्यैवोदवसानसमानकर्तृकत्वबोधनेन भावनायां तदसंभवादिति भावः । **नन्वत्र** यजेः साङ्गप्रधानपरत्वमाश्रित्य समानकर्तृकत्वं सकलप्रयोगा-

---

१ त्याग एव न स्यात्. २ सह संहत्य.

किंच दक्षिणाशब्दः परिक्रयार्थे वर्तते । नचात्र परिक्रयः संभवति, अतो दक्षिणाश्रुतिबलादन्ये भवेयुः । यद्येवमङ्गत्वेऽपि दक्षिणाश्रुतेरेवान्ये सिध्येयुः 'ये यजमानास्त ऋत्विज' इति साधारणं वचनं पृष्ठशमनीयवर्जं भविष्यति तत्राहत्य परिक्रयवचनात् । भवतुनामैवं को दोषः, किमर्थं तस्याङ्गत्वनिराकरणम् । उच्यते—अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुं, तथापि तत्त्वत उत्तरं विवक्षित्वाऽङ्गत्वमेव नास्तीत्युक्तम् । अपिचाङ्गत्वे सति संहत्य प्रयोगः स्यात्प्रधानवत् । एकैकशस्तु प्रयोगं वक्तुकामोऽङ्गत्वं निराकृतवान् । तस्मादन्ये वरीतव्याः । स्थितादुत्तरं नैतदस्ति संहत्यप्रयोग इति । यदि बहुत्वं विधीयेत तत एवं स्यात् । उदवसायेतितु क्त्वाप्रत्ययादुदवसानसमानकर्तृकत्वावगमात् उदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं न विधीयते । नचाविहितमङ्गं भवति । उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितम्, यागे चानुवादत्वादनङ्गम् । किंचोदवसाने निरपेक्षाः कर्तारस्तद्यदि यागेऽपि निरपेक्षास्ततः समानकर्तृकत्वं संभवेन्नान्यथा तस्मादेकैकश्येन प्रयुञ्जीरन् ॥

कामेष्टौ दानस्यादृष्टार्थताधिकरणम् ॥ १५ ॥

## कामेष्टौ च दानशब्दात् ॥ ४४ ॥ [वचनं वा सत्रत्वात् ॥ ४५ ॥]

**अश्वां पुरुषीं वानत्यै धर्मार्थं वानतिर्यतः ॥ इष्टिर्न सत्रं धर्मार्थं सत्रादङ्गं बहिर्नहि ॥ १९ ॥**

**सारस्वते सत्रे श्रूयते 'प्लाक्षं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं निर्वपन्ति तस्यामश्वां च पुरुषीं च धेनुके दद्यु'रिति । किमिदं दानमदृष्टार्थमुत परिक्रयार्थमिति । तदर्थं चिन्त्यते किमेतस्यामृत्विजः सन्ति उत यजमानैरेवेयमिष्टिः कर्तव्येति । तत्र द्वादशाहे 'ये यजमानास्त ऋत्विज' इति यजमानानामार्त्विज्यमिहातिदेशेन प्राप्यमाणं प्राकृतेष्वेवाङ्गेषु प्राप्यते नापूर्वाङ्गेषु यूपावटास्तरणबर्हिःष्विव बर्हि-**

---

न्वितमेवावश्यं वाच्यम् । अन्यथोदवसायेत्यत्र विहितमानन्तर्यमप्यङ्गेषु न स्यादित्यस्वरसादाह—**किंचेति** । दक्षिणाशब्दस्य देयमात्रार्थत्वे गौणत्वं स्यादिति श्रुतिशब्देन सूचयति । दक्षिणाश्रुतिबलादन्यकर्तृकत्वस्वीकारे पूर्वाधिकरणवैयर्थ्यं शङ्कते—**यद्येवमिति** । नन्वङ्गत्वे ये यजमाना इत्यनेन यजमानकर्तृकत्वं स्यादिति तन्निराकरणं युक्तमित्यत आह—**य इति । तत्त्वत इति** । तात्त्विकमुत्तरं वक्तुमित्यर्थः । यद्यप्यङ्गत्वेऽप्यन्यकर्तृकत्वसिद्धेर्न तदर्थमङ्गत्वं निराकार्यं तथाप्यन्यार्थमङ्गत्वं निराकार्यमित्याह—**अपिचेति** । अन्तराचिन्तां समाप्य पूर्वचिन्तासिद्धान्तमाह—**स्थितादिति । यदीति** । यद्यप्याख्यातोपात्तसंख्या विवक्षार्हा तथापि प्रकृते प्राप्तत्वान्न विवक्षिता तेन बहुत्वस्यैवाविधेयत्वेन न तद्बलात्साहित्यावगम इति निरपेक्षाणां प्रत्येकमेव कर्तृत्वमित्यर्थः । प्राप्तिमेवोपपादयति—**उदवसायेति** । यद्यप्युदवसानं भावरूपं तत्र च प्रत्येकमेव कर्तृत्वं तथापि प्रत्येकमपि बहूनामेव कर्तृत्वमिति वस्तुतो बहुकर्तृकत्वात्तत्समानकर्तृकतया पृष्ठशमनीयेऽपि बहुकर्तृकत्वं प्राप्तत्वान्न विधेयमित्यर्थः । **नन्व**विधेयमपि बहुवचनेन प्रतीयमानतामात्रेणाङ्गमस्त्वत आह—**नचेति** । तदर्थतया विधौ सत्येव तदङ्गत्वं तस्यालौकिकत्वेन विध्येकसमभिगम्यत्वात् । अतएव लिङ्गादिनापि श्रुतिकल्पनेत्यर्थः । **ननु** मास्तु आख्यातोपात्तबहुत्वविवक्षया साहित्यप्राप्तिस्तथाप्युदवसाने सत्रसमभिव्याहारात्प्रतीयमानस्य बहुत्वस्याविवक्षाकारणाभावाद्विवक्षितत्वे तद्बलादेव तत्समानकर्तृके पृष्ठशमनीयेऽपि बहुत्वविवक्षा भविष्यतीत्यत आह—**उदवसाने-चेति । यागेचेति** । उपादेयगतत्वेपीति शेषः । किंच उदवसाने संख्याविवक्षायामपि न साहित्यविवक्षा संभवति, निरपेक्षाणामेव बहूनां कर्तृत्वादित्याशयेनाह—**किंचेति** । यद्वा प्रत्युतोदवसानसमानकर्तृकत्वं प्रत्येककर्तृकत्व एवानुकूलमित्याह—**किंचेति** । सूत्रार्थस्तु—तेषां सत्रिणां सह प्रयोगः स्याद्यजेरन्निति बहुत्ववचनात् यथा राजपुरोहितौ-र्येजेयातामिति द्वित्ववचनाद्द्वियज्ञे सहप्रयोगस्तद्वदिति ॥

**कामेष्टौ च दानशब्दात् ॥ ४४ ॥ प्लाक्षमिति** । सारस्वतं सत्रं सरस्वत्या नद्यास्तीरे कर्तव्यम् । साच नदी यस्मात्पर्वतादारभ्य प्रवहति तत्र प्लक्षमूलोत्पन्नं जलप्रस्रवणमस्ति तद्देशं प्राप्य तत्र देशे इयमिष्टिः कर्तव्येत्यर्थः । पूर्वत्रान्तराचिन्तायां दानं यथापरिक्रयार्थमेवमिहापीत्युत्थितेः संगतिः । **ननु** युक्तं पूर्वत्र दानस्य परिक्रयार्थत्वं सत्रानङ्गतया पृष्ठशमनीयस्य यजमानकर्तृकत्वाभावात्, इहतु कामेष्टेः सत्राङ्गतया यजमानकर्तृकत्वात्कथं परिक्रयार्थतया पूर्वपक्ष इत्यत आह—**तत्रेति** । तथापि प्रधाने सारस्वतसत्रे यजमानकर्तृकत्वप्रापकचोदकादस्यामिष्टौ न तत्प्राप्तिः । अप्राकृतकार्यत्वेन

र्धर्माः । तेनापूर्वाङ्गे कामेष्टौ असति यजमानार्त्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यम् । सत्सु च तेषु दानमसत्यपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते ब्रूमः—प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानामङ्गत्वाद्युक्तं यदपूर्वेषु न भवन्ति, यजमानास्तु कर्तारः प्रयोगाङ्गत्वाद्विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति । तस्मिंश्च प्रयोगे यदपूर्वमप्यङ्गं निपतति तत्रैव प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमाकाङ्क्षति तस्माददृष्टार्थमेवैतद्दानम् ॥

दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् ॥ १६ ॥

## द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

क्रीत्यै धर्माय वा द्वेष्ये दानं स्याद्दक्षिणोक्तितः ॥ क्रयाय मैवं द्वेष्यत्वं नार्त्विजो धर्मकृत्ततः ॥ २० ॥

दर्शपूर्णमासयोः श्रूयते 'यदि पत्नीः संयाजयन्कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां स द्वेष्याय दद्या'दिति । किमिदं दानं परिक्रयार्थमुतादृष्टार्थमिति । दक्षिणाशब्दात्परिक्रयार्थमिति । यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिस्तन्त्रमध्य एव क्रियते तथापि वचनाद्दक्षिणान्तरं नानुपपन्नम् । उच्यते—द्वेष्याय तद्दानम् । न चार्त्विक् द्वेष्यः संभवति । 'ऋत्विगाचार्यौ नातिचरितव्या'विति श्रवणात् । तस्मादनृत्विजे दानमिदमदृष्टार्थं दक्षिणाशब्दश्च दानमात्रेऽगत्या वर्तते ॥

---

कार्यमुख्यप्रवृत्तातिदेशाप्रवृत्तेः प्राकृतहविरासादनादिलक्षणबर्हिःकार्यकरत्वरहिते च यूपावटास्तरणबर्हिषि बर्हिर्धर्मलवनाद्यतिदेशाप्रवृत्तिवदित्यर्थः । प्राकृतेष्वित्यनेन प्राकृतकार्यकरत्वं लक्षणीयं, तथा अपूर्वाङ्गेष्वित्यनेनाप्राकृतकार्यकरत्वं लक्षणीयं, यथाश्रुते स्वरूपेणापूर्वेष्वपि नीवारादिषु व्रीहिधर्मप्राप्त्यापत्तेरिति ध्येयम् । **कामेष्टाविति** । कामगुणकाग्निदेवत्येष्टावित्यर्थः । **चोदकेति** । एकदेवताकत्वादिनिबन्धनैष्टिकचोदकेत्यर्थः । **नन्वे**वमपि दक्षिणाशब्दाभावाद्दानस्य कथं परिक्रयार्थत्वमित्यत आह—**सत्स्विति** । कर्मकरेभ्यो दानं परिक्रयायैव भवतीति भावः । **प्रकृताविति** । लवनादयो हि बर्हिरादितत्तत्पदार्थानां प्रातिस्विकरूपेणाङ्गत्वात् । यत्पदार्थकार्यापन्नं यद्विकृतमङ्गं तत्रैव भवन्ति नापूर्वे अङ्गे इति युक्तम् । कर्ता तु नैवं प्रातिस्विकपदार्थाङ्गं किंतर्हि प्रयोगाङ्गत्वात्तद्वारेण सर्वपदार्थसाधारणः स च विकृतावपि प्रयोगद्वारेणैव प्राप्नोति प्रयोगश्चापूर्वाङ्गमपि व्याप्नोतीति तत्रापि प्राकृतयजमानकर्तृकत्वमेवेत्यर्थः । **ननु** प्रयोगद्वारापि प्राकृतेष्वेव प्राप्तिर्नापूर्वाङ्गे । तथाच तत्र कर्त्रन्तरमेवापेक्षितमिति ऐष्टिककर्तृप्राप्तिरेव तत्रेत्यत आह—**प्रसङ्गादिति** । तथाच तत्र कर्त्रन्तराकाङ्क्षाविरहान्नैष्टिकचोदकप्रवृत्तिरिति भावः । सूत्रार्थस्तु—कामेष्टौ च दानं परिक्रय एव पृष्ठशमनीय इव कुतो दानशब्दात्कर्मकरेषु सत्सु दानशब्दस्य परिक्रयार्थदानप्रतिपादकत्वादिति ॥

**द्वेष्ये चाचोदनात्०** ॥ ४६ ॥ **यदीति** । गार्हपत्ये पुरोडाशश्रपणार्थमुपहितेषु कपालेषु यदि पत्नीसंयाजाहुतिः पतेत्तदेयमिष्टिरित्यर्थः । पूर्वत्र दक्षिणाशब्दाभावात्परिक्रयार्थत्वाभावेऽपि इह दक्षिणाशब्दात्परिक्रयार्थत्वमिति संगतिं सूचयन्नेव पूर्वपक्षमाह—**दक्षिणेति** । **अङ्गमिति** । प्रधानदक्षिणयैव प्रसङ्गादङ्गानुष्ठानसिद्धेरङ्गभूतायामस्यां पृथक्दक्षिणानुपपत्तेरित्यर्थः । अङ्गत्वेपि यदि पृथक्तन्त्रा स्यात्तदा प्रयोगभेदात्पृथग्दक्षिणापि स्यात् । नचास्याः पृथक्तन्त्रमित्याह—**तन्त्रेति** । **श्रवणादिति** । स्मरणादित्यर्थः । **ननु** निषेधस्य पुरुषार्थत्वात्तदतिक्रमेपि क्रतुवैगुण्याभावादृत्विज एव द्वेष्यस्य संभवः । नचैवमपि नित्यवच्छ्रुतस्य दानस्यानित्यद्वेष्यभूतऋत्विक्संबन्धो न संभवतीति वाच्यम् । यस्य ऋत्विगन्योऽपि न द्वेष्यः तत्रानित्यद्वारस्यावश्यत्वाङ्गीकार्यत्वादितिचेन्न । अत्र द्वेष्याय दद्यादिति द्वेष्यावस्थायां दानं विधीयते । तथाच वरणकाले द्वेष्ये ऋत्विक्त्वानुपपत्तिः प्रयोगमध्ये ऋत्विक्त्वनाश इति पुरुषार्थनिषेधेनाप्यर्थात् क्रतौ नियमसिद्धेः । यथा पुरुषार्थेनापि धनार्जने याजननियमेन क्रतौ ब्राह्मणानामार्त्विज्यनियमस्तद्वत्कर्तव्यभिचरितार्त्विक्संबन्धेन निषेधस्य क्रत्वर्थत्वसंभवादित्याहुः । तस्मादकर्मकराय द्वेष्याय दानमदृष्टफलमेवेत्याह—**तस्मादिति** । ननु दक्षिणाशब्दस्य रूढ्या दक्षकरणयोगेन वा परिक्रयार्थदान एव प्रसिद्धेरदृष्टार्थत्वे तदनुपपत्तिरित्यत आह—**दक्षिणेति** । सूत्रार्थस्तु—द्वेष्ये च यद्दानं तस्य दक्षिणात्वादपनयः स्याददृष्टार्थता स्यादिति यावत् । द्वेष्यस्य ऋत्विजोऽचोदितत्वादिति ॥

---

१ तन्त्रमध्यएव.

जीवतामस्थियज्ञाधिकरणम् ॥ १७ ॥

## अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥ [यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥]

**अस्थियागः किमस्थ्नां स्याज्जीवतां वाऽस्थिशब्दतः ॥ अस्थ्नां नैवमनर्हत्वाल्लक्ष्यन्ते जीविनोऽस्थितः ॥ २१ ॥**

इदं श्रूयते 'यदि सत्राय संदीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः संवत्सरेऽस्थीनि याजयेयु'रिति योयं संवत्सरेऽस्थियागः स विचार्यते किमस्थिशब्देन शरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते। तदधिकारे च यागे सत्रिणामितरेषामृत्विक्स्थानीयानां कर्तृत्वमात्रं उतास्थिशब्देन जीवत एव सत्रिणोऽस्थि सहायाल्लक्षयित्वा तेषामेव यागविधिरिति। तत्रास्थिशब्दस्य तच्छरीरे पुंसि प्रवृत्तेरितरेषां च ण्यन्तपरस्मैपदनिर्देशात्परार्थे कर्मणि याजयितृत्वावगमान्मृताधिकारमिदं कर्म सत्रमध्यमरणनिमित्तं तस्यैव फलमिति प्राप्ते ब्रूमः—न कथंचिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं संभवति। नचा कर्तुरधिकारः। तस्माज्जीवतामेवायं यागः। याजयतिश्च ये तेषां याजयितारस्तदभिप्रायेण भविष्यति ॥

अस्थियागेऽस्थ्नां जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

## यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टितदर्थत्वात् ॥ ४९ ॥

**अस्थिकर्तृमते चिन्तापञ्चकं स्याज्जपादिकम् ॥ न वा, तच्चोदकात्कुर्युर्न कुर्वीरन्नसंभवात् ॥ २२ ॥**

जीवदधिकारपक्षे चोदकप्राप्तं न किंचिद्बाधितव्यं, मृताधिकारे तु भवति केषांचिद्बाधः। तदिह कृत्वाचिन्तया किं बाध्यं किं नेति चिन्त्यते। ये यजमानजपा वपनादयश्च संस्कारा दीक्षणीयेष्टिश्च ते

---

**अस्थियज्ञः०** ॥ ४७ ॥ **किमिति**। तस्मिन्यागे मृतस्याधिकारः उत मृतव्यतिरिक्तानां जीवतां सत्रिणामेवाधिकार इति संशयनिष्कर्षः। **ननु** मृतस्य जीवतां चानुपात्ततया कथमयं विचार इत्याशङ्क्य लक्षणयाऽस्थिशब्देनैवोपादानं कोटिद्वयेप्युक्तं मृताधिकारे चेतरेषामृत्विक्त्वमेव याजयेयुरित्यनेनोच्यते नतु यजमानत्वमित्याह—**तदधिकार इति**। पूर्वत्र द्वैष्यशब्दबलाददृष्टार्थवदिहास्थिशब्दबलान्मृतस्याधिकार इत्युत्थितेः संगतिः। **तत्रेति**। यद्यप्यस्थिशब्दस्य लक्षणयैव तच्छरीरे पुंसि प्रवृत्तिस्तथाप्यस्थिसहचरितपुरुषेषु लक्षणा विप्रकृष्टा, मृतपुरुषे लक्षणा तु संनिकृष्टेति सैव ज्यायसीति भावः। **इतरेषां चेति**। तथाच तेषां नात्र कर्मण्यधिकारः संभवतीति भावः। इतरेषां याजयितृत्वं तेषामधिकारनिराकरणाभिप्रायेणोक्तं नतु तेषामेव याजयितृत्वमित्याशयेन तत्र नियमे प्रमाणाभावादित्याहुः। **फलमिति**। वचनबलात्कल्पनीयमिति शेषः। भाष्ये तु अस्थिशब्दस्य मुख्यार्थत्वमङ्गीकृत्यास्थ्नामेवाधिकार इति पूर्वपक्ष उपपादितः। **न कथंचिदिति**। व्यापारसामान्यासंभवान्मृतस्येति भावः। सर्वस्वारवैषम्याभिप्रायेणोक्तम्। **संविधानादिति**। तत्रार्भवपर्यन्तयाजमाने साक्षात्कर्तृत्वात्, इतरेषु 'समापयत मे यज्ञमि'ति प्रैषमुखेन संविधातृत्वाच्चाधिकारसंभव इति भावः। **नचेति**। 'शास्त्रफलं प्रयोक्तरी'ति न्यायादिति भावः। ण्यन्तपरस्मैपदबलात्परार्थकर्मणि कर्तृत्वं न स्वार्थ इति यदुक्तं तत्राह—**याजयतिश्चेति**। सह परस्मैपदेनेति शेषः। 'अतिरात्रेण प्रजाकामं याजये'दित्यादाविवेति भावः। एवंच सत्राङ्गत्वात्फलं सिद्धान्ते न कल्पनीयमित्युक्तं तन्त्ररत्ने। सूत्रार्थस्तु—अस्थीनि याजयेयुरित्ययं यज्ञो जीवतामितरेषां स्यादविरोधादस्थ्नामस्थिमतो मृतस्य विप्रतिषेधादधिकारासंभवादिति। भाष्यकारपक्षे तु अस्थिशब्दो यथाश्रुतः ॥

**यदि तु वचनात्०** ॥ ४९ ॥ इदमधिकरणं पूर्वाधिकरणपूर्वपक्षप्रयोजनविशेषविचारात्मकमित्याशयेन तदीयसिद्धान्तपूर्वपक्षयोः प्रयोजनभेदं दर्शयति—**जीवदिति**। **कृत्वेति**। मृतस्यैवाधिकार इति कृत्वाचिन्तयेत्यर्थः। तथाच पूर्वाधिकरणपूर्वपक्षे बाध्यविशेषश्चिन्त्यत इत्यर्थः। प्रयोजनचिन्तारूपत्वाच्च संगतिः। **यजमानेति**। यजमानो जपतीति जपः केशश्मश्रुवापादयश्च संस्काराः। 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण'इतीष्टिश्चेत्यर्थः। **अस्थीति**। स्वपक्षे

---

१ फलदमिति.

किमस्थ्यधिकारपक्षे कर्तव्या नेति चोदकानुग्रहाय कर्तव्याः । मैवम् । दीक्षार्था हीष्टिःयमनियमसंकल्पश्च दीक्षा । नचासौ मृतस्य संभवति । तस्माल्लुप्तार्था । वपनं तु दूरापास्तम् । केशश्मश्रुणोरभावात् । अपश्चाशक्यत्वात् ॥

अस्थियज्ञे शाखामानशुक्रस्पर्शानुष्ठानाधिकरणम् ॥ १९ ॥

**क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥**

**औदुम्बरीमानशुक्रस्पर्शौ नोतास्ति तद्वयम् ॥ पूर्ववन्नेति चेन्मैवमचैतन्येऽपि संभवात् ॥ २३ ॥**

अथ यत्र यजमानो गुणभूतः यथा 'शुक्रं यजमानोऽन्वारभते'इत्यादौ तत्कर्तव्यं नेति । अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासंभवादकर्तव्यम् । नतु चैतन्यापेक्षं कर्तृत्वम्, काष्ठादीनामपि ज्वलनादौ कर्तृत्वसंभवात् यस्यैवान्यानपेक्षस्याख्यातोपात्तव्यापारसमवायसंभवः स एव कर्ता तस्माच्छुक्रान्वारम्भणादिकर्मास्थिभिः कर्तव्यम् ॥

अस्थियज्ञेऽस्थ्नां काम्यकर्माद्यनुष्ठानाधिकरणम् ॥ २० ॥

**काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥**

**वृष्टिकामः सदो नीचैरिति कामोऽस्ति वा न वा ॥ विद्यते स्पर्शवत्कामश्चेतनस्यस्ततो न हि ॥ २४ ॥**

गुणकामानां विकृतौ प्रवृत्तिं कृत्वा चिन्त्यते 'यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुया'दित्यादयो गुणकामा मृताधिकारपक्षे प्रवर्तन्ते नेति चोदकप्राप्तेः प्रवर्तन्ते । नैवम् । कुतः । कामाज्ञानात् । नहीदं ज्ञायते किं मृतस्येष्टं न वेति । तस्मादप्रवृत्तिर्गुणकामानाम् ॥

अस्थियज्ञेऽस्थ्नां सूक्तवाकगताशासनानुष्ठानाधिकरणम् ॥ २१ ॥

**ईहार्थाश्चाभावात्सूक्तवाकवत् ॥ ५२ ॥ [स्युर्वाऽर्थवादत्वात् ॥ ५३ ॥ नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥]**

**सूक्तवाकाशासनं स्यान्न वा नित्यप्रवृत्तितः ॥ स्यान्मैवं फलनिर्देशात्फलेच्छास्थ्नां न युज्यते ॥ २५ ॥**

सूक्तवाकगतानि 'आयुराशास्त'इत्यादीनि फलपदानि प्रवर्तन्ते नेति संशये सूक्तवाकस्य प्रहरणा-

---

अस्थिशब्देन मृतो विवक्षितः । **चोदकेति** । इदमिदं न कर्तव्यमिति विवेचनाय प्रसक्तिमात्रसंपादनपरत्वात्पूर्वपक्षे नातीव यत्नः कर्तव्यः । **यमनियमेति** । 'यमनियमव्रतविषयसंकल्पो दीक्षे'ति तन्त्ररत्ने व्रतशब्देन ब्रह्मचर्यादिर्विवक्षितः । पयोव्रतादिरित्यन्येन चेति यमनियमादेश्चेतनसाध्यत्वान्मनःप्रभृतिकरणसाध्यत्वाच्चेत्यर्थः । लुप्तार्थत्वाद्दीक्षार्थजपनिवृत्तावपि जपान्तरसाधारण्येनाह—**जपश्चेति** । सूत्रार्थस्तु—यदि वचनात्तेषां मृतानामस्थ्नां वा यागस्तदा जपसंस्कारमिष्टिसहितं लुप्तार्थं दीक्षार्थत्वादिति ॥

**क्रत्वर्थं तु० ॥ ४९ ॥ शुक्रमिति** । शुक्राख्यग्रहं होमकाले यजमानोऽन्वारभत इत्यर्थः । **अचेतनानामिति** । एवंच यथा पूर्वत्राचेतनत्वादिना यमनियमाद्यसंभवस्तथात्राप्यचेतनत्वादेव कर्तृत्वासंभव इत्युत्थितेः संगतिर्द्रष्टव्या । **स्वातन्त्र्येति** । स्वातन्त्र्यं कारकान्तराप्रयुक्तस्य स्वयमेव प्रवृत्तिलक्षणं नचाचेतनस्य स्वयं प्रवृत्तिः संभवतीत्यर्थः । सिद्धान्तमाह—**नत्विति** । **काष्ठादीनामिति** । काष्ठानि ज्वलन्तीत्यस्य प्रयोगस्य गौणत्वे मानाभावादिति भावः । **अन्येति** । यद्यपि कर्तुरपि कारकान्तरापेक्षस्यैव क्रियासमवाय इतरथा एककारकपरिशेषापत्तेः, तथाप्यनपेक्षस्येत्यनेन प्राधान्यं विवक्षितं, तथाच यस्य व्यापारो धातुना प्राधान्येनोपादीयते स कर्तेति पर्यवसितोऽर्थः । एवंच धातुना सकलकारकानुगामिव्यापारोपादानेऽपि कारकान्तरव्यापारस्य राजसंनिधानेऽमात्यानामिव न्यग्भावान्नातिव्याप्तिरिति भावः । **अस्थिभिरिति** । मृताधिकारपक्षेऽप्यस्थ्यन्वारम्भ एव मृतान्वारम्भ इति भावः । सूत्रार्थस्तु—क्रत्वर्थं शुक्रान्वारम्भणादिकं क्रियेत तत्र कर्तुर्गुणत्वेन संस्कार्यत्वाभावादिति ॥

**काम्यानि तु० ॥ ५१ ॥ गुणकामानामिति** । अन्यथा तेषां विकृतावनतिदेश इत्यष्टमे उक्तत्वादयं विचार एवानुपपन्नः स्यादिति भावः । वस्तुतस्तु येषु गुणकामेषु प्रकृतिविकृतिसाधारण्यप्रापकमस्ति प्रमाणं तमुक्थ्येन तमतिरात्रेणेत्याद्याश्रितगुणकामेष्विव तदभिप्रायेणायं विचारः संभवतीति ध्येयम् । **चोदकेति** । 'अग्नीनि याजयेयु'रित्यत्र प्रकरणान्तरन्यायेन कर्मान्तरत्वे निश्चिते व्यक्तत्वात्सौमिकविध्यन्तप्राप्तौ तत्र श्रुतगुणकामा अपि प्राप्नुवन्तीत्यर्थः । **सूत्रार्थस्तु**—काम्यानि गुणकामा न विद्यन्ते कामाज्ञानात् यथा इतरस्य जीवतः अनुक्तानि काम्यानि न ज्ञायन्ते तद्वदिति ॥

**ईहार्थाश्चार्थाभावात्० ॥ ५२ ॥** काम्यत्वाद्गुणकामानामप्रवृत्तावपि नित्यत्वात्सूक्तवाकप्रवृत्तौ तदेकवाक्यतापन्नान्यायुरादीनि पदान्यपि प्रवर्तेरन्नित्युत्थितेः संगतिं सूचयन्पूर्वपक्षमाह—**सूक्तेति** । नन्वायुरादिकामानो 'आयुरादिकामः

ङ्गतया नित्यवत्प्रवृत्तेस्तन्निबन्धनानामायुरादिपदानामपि प्रवृत्तिः। नैवम्। फलनिर्देशा ह्येते मान्त्रवर्णिकफलकल्पनात्। नच मृतस्य फलाशंसनं गम्यत इत्युक्तमतो लुप्तार्थत्वादेषां निवृत्तिः॥

अस्थियज्ञे होतृकामाभावाधिकरणम्॥ २२॥

## स्युर्वा होतृकामाः॥ ५५॥ [न तदाशीष्ट्वात्॥ ५६॥]

**होतृकामो भवेन्नो वा होतुर्जीवनतो भवेत्॥ यजमानेष्टमेवासौ कामयेत्तेन नास्त्यसौ॥ २६॥**

प्रकृतौ सन्ति होतृकामाः 'यं कामयेत पापीयान्स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्यात् यं कामयेत वसीयान्स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्या'दित्यादयः। ते मृताधिकारेऽपि कर्मणि होतुः कामनासंभवान्न निवर्तेरन्। निवृत्तिर्वा यजमानफलमेव ह्यत्रापि निर्दिश्यते। नचानिर्दिष्टं फलं भवति। नच मृतस्येच्छा विज्ञायते तस्मादेवमादीनामपि निवृत्तिः॥

यजमानस्य मरणेऽपि सर्वस्वारस्य समापनाधिकरणम्॥ २३॥

## सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्॥ ५७॥ [स्याद्वोभयोः प्रत्यक्षशिष्टत्वात्॥ ५८॥]

**सर्वस्वारो मृतेरूर्ध्वं त्यज्यतां वा समाप्यताम्॥ त्यज्यतां स्वाम्यभावेन प्रैषादन्यैः समाप्यताम्॥ २७॥**

सर्वस्वारो नामैकाहः स्वर्गकामस्य विहितः। तत्रार्भवस्तोत्रकाले 'ब्राह्मणाः समापयत मे यज्ञ' मिति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते। तस्मिन्मृते शेषं कर्म समापनीयं नेति संशये न सामाप्यं, मृतस्य कर्तृत्वासंभवात् यजमानस्य तावन्न समाप्तिः कर्तव्या। यच्च यजमानस्य कार्यं तदृत्विजः कुर्वन्ति नान्यत्। तस्मादृत्विजोऽपि न समापयेयुः। उच्यते—'यद्यसंभवि कर्तृत्वं तत एवं भवेदिदम्॥ जीवन्नेव तु संप्रैषाच्छिष्टे कर्तृत्वमृच्छति॥' वरणभरणादिसमाचरणमेव

---

सूक्तवाकेन प्रस्तरं प्रहरेदि'ति कामसंयोगाभावादसति फलत्वे कथं तन्निर्देशार्थत्वमित्यत आह—**मान्त्रवर्णिकेति**। क्रियां तत्संबन्धिनं वा प्रकाशयतो मन्त्रस्य करणत्वं वाच्यमिति कृत्स्नसूक्तवाककरणत्वान्यथानुपपत्त्याऽऽयुरादीनां फलत्वकल्पनादित्यर्थः। **नन्वस्त्वायुरादीनां** फलत्वं कथं तत्पदनिवृत्तिः। नच मृतस्यायुराद्यसंभवात्तन्निवृत्तिर्जन्मान्तरे तत्संभवादित्यत आह—**नचेति**। मान्त्रवर्णिकफलकल्पनायां मन्त्रो यथा ब्रवीति तथा कल्पनीयम्। मन्त्रश्चायमाशास्त इत्याशासनविशिष्टस्यायुरादिकं फलमाहेत्यैहिकत्वाद्यजमानाशास्यस्यैवायुरादेः फलत्वेन मृतयजमानाशास्यत्वासंभवाच्चायुरादेर्नेह फलत्वमित्यर्थः। सूत्रार्थस्तु—सूक्तवाकवदिति 'तदर्ह'मित्यर्हार्थे वतिः। तथाच सूक्तवाकार्हा ईहार्था ये शब्दा आयुराशास्त इत्यादयस्ते लुप्तार्थत्वान्निवर्तेरन्निति॥

**स्युर्वा होतृकामाः॥ ५५॥ मृतेति**। मृतस्य फलसाधके कर्मणि होतुः कामनासंभवात् होतृकामनाया एव श्रुतत्वेन तामादायैव यजमानस्य फलसंभवादिति पर्यवसितोऽर्थः। तथाच पूर्ववैषम्यात्संगतिः। **यजमानेति**। प्रधानवाक्यगतात्मनेपदात् 'यां वै कांचन यज्ञऋत्विग आशिषमाशास्ते यजमानस्यैव से'तिवचनाच्च तदपि यजमानफलमेव न होतृफलमित्यर्थः। **ननूक्तफलस्य** याजमानत्वेऽपि कामना होतुर्भविष्यतीत्यत आह—**नचेति**। अनिष्टमिच्छयाऽविषयीकृतमित्यर्थः। एवंच यजमानेच्छाविषयस्यैव यजमानफलतया यजमानकामनानुसारिहोतृकामनानुवादोयं **यं कामयेतेति**। तथाचायमस्य वाक्यार्थः—यो यजमानो वसीयान्स्यामिति कामयेत तस्य यजमानस्य होता याज्यावषट्कारं उच्चैः कुर्यादिति। मृतस्य चेच्छाभावान्निवृत्तिरेवंजातीयानामित्यर्थः॥

**सर्वस्वारस्य०॥ ५७॥** कामनाभावान्नीचैस्तरत्वादिनिवृत्तौ किमु वक्तव्यं कामयितुरभाव इत्युत्थितेः संगतिः। **विहित इति**। 'शुनःकरणस्तोमोऽग्निष्टोमो मरणकामो ह्येतेन यजेत यः कामयेतानामयं स्वर्गमिया'मित्यनेनेति शेषः। **आर्भवेति**। तृतीयसवनादौ कर्तव्यस्तोत्रकाल इत्यर्थः। **ननु** यजमानस्य मृतत्वेन कर्तृत्वासंभवेऽपि ऋत्विजः समापयेयुः, जीवत्यपि तैरेव समापनीयत्वादित्यत आह—**यच्चेति**। सत्यं जीवत्यपि ऋत्विग्भिरेव समापनीयं तथापि स्वकार्यकरणार्थमेव यजमानेनर्त्विजां परिक्रयात्र यजमानस्य कर्तृत्वं तदेवर्त्विग्भिः कार्यमिह च यजमानस्य कर्तृत्वासंभवान्न ऋत्विग्भिरपि समापनीयमित्यर्थः। **संप्रैषादिति**। संप्रैषेण समापने परेषां प्रवृत्त्या संविधानात्कर्तृत्वं जीवदवस्थायामेव

---

१ कर्तव्यं ततः.

जीवदवस्थायामपि यजमानस्य कर्तृत्वं, तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामिव संविधानेन संभवति । प्रत्यक्षमेवच समापयतेति प्रैषेण समाप्तिश्चोद्यमाना न शक्यापह्नोतुम् । नहि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः । नहि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यं येन पौरुषेयत्वाद्दोषः स्यात् । प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम् । अतः प्रत्यक्षमेव विहितं समापनं। स्वर्ग एव हि अत्र मरणेनार्थिनः फलं, न मरणम् । मरणकाम इत्यङ्गीकृतमरण इत्यर्थः । तेन य एवं ज्ञात्वा स्वर्गं प्राप्नवानीति कामयते तस्यायं क्रतुः । तथाच हरिनिरुक्ते 'प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती'ति । तेन संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम् ॥

सर्वस्वारे कार्यबाध्यव्यवस्थाधिकरणम् ॥ २४ ॥

**गते कर्मास्थियज्ञवत् ॥ ५९ ॥**

**किं कार्यमत्र किं बाध्यमिति प्रश्ने तदुत्तरम् ॥ क्रत्वर्थमस्थिवत्कार्यं बाध्यते मृतकर्तृकम् ॥ २८ ॥**

अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यं किं नेति[2] प्रश्नेनैवोपक्रमः । अत्रोत्तरं—अस्थियज्ञेऽस्थामधिकारपक्षे यथोक्तं तथेहापि द्रष्टव्यम् ॥

सर्वस्वारे यजमानस्य दिष्टगतावप्यायुराशंसनाधिकरणम् ॥ २५ ॥

**जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥ [वचनं वा भागित्वात्प्राग्यथोक्तात् ॥ ६१ ॥]**

**मृतेः प्रागायुराशीर्नो स्याद्वा नो मृतिकामनात् ॥ प्रागाभवाज्जीवनार्थमायुराशासनं भवेत् ॥ २९ ॥**

सर्वस्वार एव 'मरणात्प्राग्जीवदवस्थायामायुराशास्त'इत्यायुराशीर्वक्तव्या नेति संशयः । तत्र मरणाभ्युपगमेन प्रवृत्तस्य नाशासितव्यमायुः । प्रागपि त्वाभवकालान्[3]मरणसंभवात्तथासति क्रतोर्वैगुण्याद्यावदाभवकालमाशासितव्यमायुः तस्मादायुराशीर्वक्तव्या ॥

---

संभवतीत्यर्थः । तथाच यजमानकर्तव्यत्वादृत्विग्भिरवश्यं समापनीयमिति भावः । **जीवदवस्थायामपीति** । जीवदवस्थाकालीनपदार्थेष्वपीत्यर्थः । किंच समापनस्य प्रत्यक्षवचनविहितत्वादवश्यकर्तव्यत्वमित्याह—**प्रत्यक्षमिति** । **ननु** ब्राह्मणभागगतविधेरेव विधायकत्वं न मन्त्रभागगतप्रैषस्येत्यत आह—**नहीति** । उभयोरपि प्रवर्तकत्वाविशेषादिति भावः । **ननु** प्रैषस्थले प्रैषकर्तुः पुरुषस्यैव प्रवर्तकत्वं न प्रैषस्य । तस्य पुरुषप्रयुक्ततया पौरुषेयत्वेन स्वातन्त्र्याभावाद्विधौ तु नैवमित्यत आह—**नहीति । प्रयोक्तृत्वमात्रमिति** । तथाच न पुरुषप्रयुक्तत्वमात्रेण पौरुषेयत्वं ब्राह्मणभागातिप्रसक्तेः प्रयोगमध्ये पुरुषप्रयुक्तत्वस्य मन्त्रत्वनिबन्धनत्वेनाकिंचित्करत्वात् किंतु स्वतन्त्रपुरुषप्रयुक्तत्वेन, तच्च प्रैषेऽपि नास्तीत्यर्थः । एवंच यत्र प्रैषार्थोऽन्यतः प्राप्तस्तत्र न प्रैषस्य विधायकत्वं स एव च विधिर्मन्त्राधिकरणविषयः । यत्र त्वन्यतो न प्राप्तस्तत्र विधायकत्वं यथा यच्छन्दोपबन्धेऽपि यदाग्नेय इत्यादेर्विधायकत्वं तद्वदिति भावः । वस्तुतस्त्विहापि न साक्षात्प्रैषस्य विधायकत्वं किंतु समापनप्रकाशनद्वारास्य क्रतुशेषतासमाप्तिविधौ सत्येवावकल्पते नान्यथेति स्वविनियोगनिर्वाहाय समाप्तिविधिकल्पकत्वमेव विवक्षितमिति ध्येयम् । **ननु** मरणकाम इति श्रवणान्मरणार्थमिदं कर्म, तथाच मरणलक्षणफलसिद्धौ किं समापनेनेत्यत आह—**स्वर्ग एवेति** । इदंच वस्तुगतिमनुरुध्योक्तम्, अन्तरा फललाभेऽपि कर्मसमाप्तेः षष्ठे उक्तत्वादिति ध्येयम् । **प्रधानस्येति** । मरणेन हेतुना प्रधानफलभूतस्वर्गार्थिन इत्यर्थः । सूत्रार्थस्तु—दिष्टगतौ यजमानस्य मरणे सर्वस्वारस्य समापनं न विद्यते सर्वस्यापि कर्मणो जीवदधिकारकत्वेन मृतस्याधिकारासंभवादिति ॥

**गते कर्मास्थियज्ञवत् ॥ ५९ ॥** पूर्वोक्तसमापनोपजीवनेन बाध्यविशेषनिरूपणात्संगतिः । अस्थामधिकार इति कृत्वाचिन्तया शुक्रान्वारम्भणादिकं क्रत्वर्थं कर्तव्यं यजमानसंस्कारादिकं तु न कर्तव्यमिति व्युत्पादनस्यानुष्ठानोपयोगप्रदर्शनाय विषयान्तरे तस्यातिदेशमात्रपरत्वादस्य नात्र पूर्वपक्षेण कार्यमित्याशयेनाह—**प्रश्नेनेति** । सूत्रे गत इत्यस्य दिष्टगतिं गते यजमान इत्यर्थः ॥

**जीवत्यवचनम्० ॥ ६० ॥** यथा मरणानन्तरमस्थियज्ञवदायुराशास्ते इत्यस्य निवृत्तिस्तथा मरणात्पूर्वमपीत्युत्थितेः संगतिः । **तत्रेति** । मरणविरोधित्वादायुराशासनं न कर्तव्यमित्यर्थः । आभवकाले मरणं विहितं ततः पूर्वं मरणं माभूदित्येतदर्थमायुराशासनं तावत्पर्यन्तमपेक्षितमेवेति सिद्धान्तमाह—**प्रागपीति** । सूत्रार्थस्तु—आयुराशिषो जीवत्यपि यजमाने अवचनं स्यादायुरर्थत्वात्तस्य, प्रकृते च यजमानस्य मरणार्थतयायुषोऽनपेक्षितत्वादिति ॥

---

१ शक्यतेऽपह्नोतुं. २ किंवा नेति. ३ मरणं संभवति.

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ॥ २६ ॥

**क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥**

आत्रेयदानर्त्वयाज्यावृती सत्रेषु नाचरेत् ॥ कुर्याद्दानतिलोपान्नो धर्मार्थं क्रियतां द्वयम् ॥ ३० ॥

यत्प्रकृतावानत्यर्थमृत्विग्वरणं दक्षिणादानं च तत्सत्रे न स्यादित्युक्तम् । यत्त्वदृष्टार्थमृतुयाज्या-वरणं आत्रेयाय हिरण्यदानं च तत्सत्रेऽपि कर्तव्यमिति प्रत्युदाहरणमात्रमेतत् ॥

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥ २७ ॥

**गुणलोपे च मुख्यस्य ॥ ६३ ॥**

लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा ॥ लुप्यते साधनाभावात्तेन मुख्यो न लुप्यते ॥ ३१ ॥

दर्शपूर्णमासयोः 'अग्निहोत्रहवण्यां हवींषि निर्वपती'ति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्तव्यो नेति संशये । न कर्तव्यः । कस्मात् । अग्निहोत्रहवण्यभावात् । ययाग्निहोत्रं हुतं साह्यग्निहोत्रहवणी । नच पवमानेष्टिवेलायामग्निहोत्रं हुतं संभवति । विना चाग्निहोत्रहवण्या निर्वापो विगुणत्वादकर्तव्य इति प्राप्ते ब्रूमः—अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविःसंस्का-रार्थतया निर्वापः प्राप्यते तदङ्गभूताग्निहोत्रहवण्यसंभवान्न प्राप्यते । नचाप्राप्ताया गुणत्वम् । अतस्तदभावेऽप्यविगुणत्वात्कर्तव्य एव निर्वापः ॥

वाजपेये मुष्टिलोपाधिकरणम् ॥ २८ ॥

**मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्स्यात् ॥ ६४ ॥ [न निर्वापशेषत्वात् ॥६५॥ संख्या तु चोदनां प्रति सामान्यात्तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसंबन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७ ॥]**

शरावैः सप्तदशभिर्यश्चरुस्तत्र मुष्टयः ॥ चत्वारः सन्ति नो वेति स्यादेकं मुष्टिसंख्ययोः ॥ ३२ ॥
तत्किमाद्यश्चोदितत्वाच्छरावापूरणान्न सः ॥ द्वितीयोऽस्त्विति चेन्मैवं द्विलोपे बाधगौरवात् ॥ ३३ ॥
तृतीयोऽस्त्वेकलोपोऽत्र धर्मः संख्यैव लुप्यताम् ॥ क्रियायोगान्न तद्धर्मः प्राथम्यात्सानुगृह्यताम् ॥ ३४ ॥

वाजपेये श्रूयते 'बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवती'ति । अस्ति तु प्रकृतौ 'चतुरो

---

**क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥** 'ऋतुयाज्यावयवैरिन्द्रं होत्रात्सजूर्दिव आ पृथिव्या'इत्यादिभिर्यद्धोत्रादिवरणं यच्चात्रेयादिहिरण्यदानं तत्सत्रे कर्तव्यं नेति संशयः । यथा क्रतूपक्रमकाले वरणं न कर्तव्यं तथा ऋतुयाज्यावरणमपि न कर्तव्यं दक्षिणादानवदात्रेयदानमपि न कर्तव्यमिति पूर्वः पक्षः । आनत्यर्थवरणदक्षिणादानयोरकर्तव्यत्वेऽप्यदृष्टार्थतया ऋतु-याज्यावरणमात्रेयदानं च कर्तव्यमिति सिद्धान्तः । **नन्व**दृष्टार्थत्वादेव चोदकानुग्रहाय कर्तव्यत्वस्य सिद्धतया पूर्वपक्षस्य मन्दत्वात्किमर्थमिदमित्यत आह—**यदिति** । सूत्रे धर्ममात्राणामदृष्टार्थानामित्यर्थः ॥

**गुणलोपे च मुख्यस्य ॥६३॥ पवमानेष्टिष्विति** । आधाने कर्तव्यास्वग्नये पवमानायेत्यादीष्टिष्वित्यर्थः । पूर्वत्र क्रतुयाज्यावरणादेर्वैगुण्याभावादनिवृत्तावर्पाह वैगुण्यान्निर्वापस्याकरणमित्युत्थानात्संगतिः । **ननु** ल्युटः कालत्रयौदासीन्येन विधानाद्भूतस्य वर्तमानस्य चाग्निहोत्रसंबन्धस्याभावेऽपि भाविनमादायाग्निहोत्रहवणीसद्भावः किं न स्यादित्यत आह—**ययेति** । पवमानेष्टिषु येन पात्रेण निर्वापः कृतस्तस्याग्निहोत्रात्पूर्वमेव नाशापहारादिसंभवेन भाविनोऽग्निहोत्रसंबन्धस्या-नियतत्वाद्भूतसंबन्ध एव नियतत्वाच्छास्त्रतात्पर्यविषय इति भावः । 'पुरोडाशकपालेन तुषानुपवपती'त्यत्र तु पुरोडाशार्थ-तया उपादानमेवाश्रित्य भूतसंबन्धोपपत्तिरिति ध्येयम् । **नन्वाधानाङ्ग**भूततूष्णीमग्निहोत्रमादाय भूतसंबन्धोऽपि संभव-त्येव । नचैवमप्यग्निहोत्रहवण्यसंभवः तूष्णींहोमस्य जुह्वा क्रियमाणत्वादिति वाच्यम् । सति तस्या एवाग्निहोत्रहवणीत्वा-द्भूताग्निहोत्रसंबन्धस्य तत्र सत्वादित्यत आह—**नचेति** । तूष्णींहोमस्तु न मुख्याग्निहोत्रं किंत्वपूर्वकर्मान्तरमिति भावः । जुह्वा अग्निहोत्रहवणीत्वाभ्युपगमेऽपि वैगुण्यमेव तस्याविकङ्कतप्रकृतिकत्वाभावादिति ध्येयम् । **ननु** अग्निहोत्रहवण्यभावेऽपि संभवान्निर्वापः किं न स्यादित्यत आह—**विनेति** । अग्निहोत्रहवणीकरणकनिर्वापस्यैव शास्त्रार्थत्वेन केवलनिर्वापः क्रिय-माणोऽप्यकिंचित्कर इति भावः । सत्यम् । प्रकृतावग्निहोत्रहवणीकरणकनिर्वापस्यैव शास्त्रार्थत्वं तथोपदेशाद्विकृतौ तु नोप-देशः किंत्वतिदेशः, सचासंभवन्त्यामग्निहोत्रहवण्यां नास्ति किंतु संभवतो निर्वापमात्रस्यैवेति केवलस्यैव शास्त्रार्थत्वं न सगु-णस्य गुणप्रापकाभावादित्याशयेनाह—**अतिदेशेनेति** । स्वरूपेणातिदेशे इहापि सगुण एव शास्त्रार्थः स्यात् । नत्वेवमि[1]-त्याशयेनोक्तं **कार्यमुखेनेति** ॥

**मुष्टिलोपात्तु० ॥ ६४ ॥** इहापि पूर्ववदेव गुणभूतायाः संख्याया बाधेऽपि प्रधानभूतमुष्टीनां न बाध इत्युत्थितेः

---

१ एतत्संज्ञकपात्रे.

मुष्टीन्निर्वपती'ति चतु:संख्या मुष्टिद्रव्यं च तदुभयमिह चोदकेन प्राप्तम् । नच चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरु: संपादयितुं शक्यते। अतोऽवश्यं बाधितव्येसति किमुभयं बाधितव्यं शरावद्रव्येण मुष्टिद्रव्यं सप्तदशसंख्यया च चतु:संख्या किंवान्यतरत् । तत्रापि किमनियम:, अथवा मुष्ट्यनुग्रह: संख्यालोप:, विपरीतं वेति । तत्राविशेषादुभयोर्बाध: । तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण, संख्या संख्ययेत्येक: पक्ष: । सप्तदशसंख्याशरावपरिमाणं च यागद्रव्याङ्गं, चतु:संख्या मुष्टिश्च निर्वापाङ्गमतो न तावत्साक्षादेकविषयत्वं येनोभयमुभयेन बाध्येत । चतुर्भिर्मुष्टिभि: सप्तदशशरावश्चरुर्न संपादयितुं शक्यत इत्यर्थाद्बाध: । तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तम् । तस्मादन्यतरबाध: । तत्राविशेषादनियम इति द्वितीय: । संख्याया द्रव्याङ्गत्वात्प्रधानस्य मुष्टिद्रव्यस्यानुग्रह:, संख्यायास्तु बाध इति तृतीय: । न संख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसंबन्धबाधेन द्वितीयाश्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वम् । तत्र मुख्यत्वात्संख्यानुग्रहो जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्त: ॥

धेन्वादिशब्दानां गोवाचिताधिकरणम् ॥ २९ ॥

## औत्पत्तिके तु द्रव्यतो विकार: स्यादकार्यत्वात् ॥ ६८ ॥

**धेनुवत्सर्षभाश्छागे गवि वा गुणकीर्तनात् ॥ अजेऽतिदिष्टे स्युर्मैवं गोजात्येकगुणोक्तित: ॥ ३५ ॥**

'द्यावापृथिव्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृषभमि'ति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं प्रवर्तते नेति संशय: । तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति तथापि न गोर्वाचका: । तेनात्र गोर्नोपदेशेन नातिदेशेन प्राप्ति: । अजस्त्वतिदेशेन प्राप्यते

---

संगतिः । **ननु** सति बाधावश्यंभावे चिन्तावसरः, प्रकृते च शरावद्रव्यसप्तदशसंख्ययोः प्रधानविषयतया मुष्टिचतुःसंख्ययोर्निर्वापविषयतया च भिन्नविषयत्वाद्बाध एव नास्तीति कथमयं विचार इत्यत आह—**नच चतुर्भिरिति** । निर्वापस्य यागीयप्रकृतिद्रव्यसंस्कारतयार्थात्तुल्यविषयतामादायावश्यंभाविबाध इत्यर्थः । **तत्रेति** । अन्यतरबाधेपीत्यर्थः । **विपरीतमिति** । संख्यानुग्रहो मुष्टिलोप इत्यर्थः । **समानेति** । मानलक्षणकार्यैक्यात् शरावद्रव्येण मुष्टिद्रव्यं, द्रव्यपरिच्छेदलक्षणकार्यैक्याच्च सप्तदशसंख्यया चतुःसंख्या बाध्येतेत्यर्थः । यदि प्रकृते द्रव्यसंख्ययोः प्राकृतद्रव्यसंख्यास्थानापत्तिः श्रूयेत तदोभयबाधः स्यान्नत्वेवमित्याह—**सप्तदशेति** । शरावपरिमाणमिति कर्मधारयः । **एकबाधेनेति** । आर्थिकबाधस्य तावताप्युपपत्तेरिति भावः । **द्रव्येति** । चतुरो मुष्टीनिति मुष्टिविशेषणत्वात्संख्याया इति भावः । **द्वितीयेति** । चतुरो मुष्टीनिति चतुःसंख्यानुवादेन वा मुष्ट्यनुवादेन वा निर्वापो न विधीयते । संख्याया मुष्टीनां चान्यतोऽप्राप्तेः संख्यामुष्ट्योः प्रत्येकमुद्देशे संख्याविशिष्टमुष्ट्युद्देशे च वाक्यभेदप्रसङ्गाच्च, किंतु चतुर्मुष्टिकरणकनिर्वाप एव विशिष्टो विधीयते । **एवंच** सक्तुन्यायेन चतुर्भिर्मुष्टिभिर्निर्वापं कुर्यादिति वाक्यार्थस्य वक्तव्यत्वात् इह द्वितीयाशब्देन तृतीया विवक्षिता । **अतएव** निर्वापाङ्गत्वावगमादित्युक्तमुपपद्यत इति ध्येयम् । **नन्वेवमपि** द्रव्यस्य साक्षात्क्रियानिर्वर्तकत्वादन्तरङ्गत्वं संख्यायास्तु तत्परिच्छेदद्वारतया बहिरङ्गत्वमित्यत आह—**उभयोरिति** । क्रियाङ्गत्वाविशेषात् । वस्तुस्वभावकृतमुक्तवैषम्यमकिंचित्करमिति भावः । सूत्रार्थस्तु—मुष्टिलोपे संख्यालोप आवश्यकः मुष्टिगुणत्वात्संख्यायास्तस्मादावश्यकत्वात्संख्यामात्रलोपो नतु मुष्टिलोप इति ॥

**औत्पत्तिके तु० ॥ ६८ ॥** पूर्वत्र चोदकप्राप्तसंख्याद्रव्यपरिग्रहे सप्तदशशरावपरिमितचरुसंपादनाशक्त्यावश्यंभाविनि बाधे जघन्यत्वान्मुष्टेर्बाधः । इह तु चोदकप्राप्ताजद्रव्यपरिग्रहेऽपि धानादिगुणोपपत्तेर्नावश्यंभाविबाध इत्युत्थितेः संगतिः । **गोद्रव्येति** । धेनुशब्दो धानक्रियावचनः । वत्सऋषभशब्दौ तु वयोविशेषवचनाविति विवेकः । **ननु** नियतप्रयोगबलेन गोगतधानादिवाचकतया गोद्रव्येणाजबाधावश्यंभावात्कथं पूर्वः पक्ष इत्यत आह—**तत्रेति** । **तथापीति** । गोत्वस्य धानाकर्मोपलक्षकत्वमात्रेणावस्थानान्नाभिधेयत्वमित्यर्थः । **तेनेति** । धेनुशब्दस्य गुणमात्रमेवार्थः गोद्रव्यं त्वर्थात्प्रतीयते, इह तु चोदकबलादानुमानिके द्रव्ये सत्यर्थापत्तिक्षयान्न गोद्रव्याक्षेप इत्यर्थः । **लक्षणयेति** । वस्तुतो गोगतधानादिवाच-

तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते तथाजमृषभमित्यादिष्विति प्राप्ते ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिर्न्याय्या। तेन यद्यपि गोद्रव्यं न शाब्दं तथापि श्रुतगुणविशेषसंपादनाय गौरेवालब्धव्यः। चोदकप्राप्तं त्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधान्न प्राप्यते॥

वायव्यं श्वेतमित्यत्राजस्यैवालम्भनाधिकरणम्॥ ३०॥

## नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः॥ ६९॥

**वायव्यं श्वेतमित्यत्र यः कोऽपि च्छाग एव वा॥ विशेषानुक्तितः कोऽपि च्छाग एवास्त्वबाधनात्॥ ३६॥**

यस्तु साधारणगुणवचनः श्वेतादिशब्दः 'वायव्यं श्वेतमालभेते'ति स चोदकप्राप्तेऽप्यजे संभवतीति न तत्राजस्य बाधनमिति प्रत्युदाहरणमेतत्॥

खलेवालीतण्डुलयोः खादिरत्रैहत्वानियमाधिकरणम्॥ ३१॥

## विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः स्यात्तेन च कर्मसंयोगात्॥ ७०॥

**खलेवालीतण्डुलयोः खादिरत्रैहता न वा॥ यूपोक्तेर्मुख्यवृत्त्यर्थमुद्देशात्खादिरी हि सा॥ ३७॥**
**अवघाताद्यबाधार्थं त्रैहता तण्डुलेष्वपि॥ प्रत्यक्षवचनत्वार्थं कार्यं यूपेन लक्ष्यताम्॥ ३८॥**
**अन्तरेण हविर्देवयोगाम्नात्रातिदेशनम्॥ न नियन्तुं शक्यतेऽतः खादिरत्रैहतानयोः॥ ३९॥**

साद्यस्क्रे श्रूयते 'खलेवाली यूपो भवती'ति। तत्र संशयः किं चोदकप्राप्तं खदिरादिकं यूपं छेदनादिभिः कृत्वा स खलेवाली कर्तव्यः यूपः खलेवाली भवतीति वचनव्यक्तिः, उत यैवोत्तरवेदिभूते[1] खले पूर्वावस्थिता खादिर्यखादिरी वा खलेवाली तस्यामेव पशुनियोजनं कर्तव्यं या खलेवाली स यूपो भवति यूपकार्यकारी भवतीति वचनव्यक्तिरिति। तथा चित्रायामिष्टौ श्रूयते 'दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य'मिति तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्तव्या उत त्रैहा अत्रैहा वा लोकसिद्धास्तण्डुला ग्रहीतव्या इति। तत्र चोदकानुग्रहाय यूपस्य खलेवालीत्वं व्रीहीणां च तण्डुलत्वम्, यथासिद्धोपादाने हि चोदकप्राप्ताः खदिरादयो व्रीहयस्तत्संस्काराश्च छेदनावघातादयो बाध्येरन्। किंच खलेवाली यूपकार्ये भवतीति विधौ यूपशब्दस्यायूपे तत्कार्यकरे यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात्, यूपस्य खलेवालीत्वविधौ न गौणत्वं

---

कस्याजगतधानादिपरत्वं लक्षणां विना न निर्वहतीति भावः। **अजमिति**। अजसंबन्धबोधकस्याजपदस्य प्रत्यक्षसंनिधाने ऋषभपदस्याजगतवयोविशेषपरत्ववच्चोदकादजपदसंनिधौ तत्परत्वमेवेत्यर्थः। **नानुमानिकेति**। चोदकानुग्रहे वस्तुतो गोगतधानादिलक्षणगुणस्य श्रुतस्यासंपादनेन गुणोपदेशबलादेवातिदिष्टाजबाधः। गोद्रव्यपर्यन्तत्वाद्गुणोपदेशस्येत्यर्थः। अजमृषभमित्यादौ तु प्रत्यक्षश्रुतत्वादजशब्दस्य लक्षणा न दुष्यतीति। सूत्रार्थस्तु—औत्पत्तिके स्वभावत एव द्रव्यविशेषगतगुणाभिधायके धेन्वादौ द्रव्यस्य विकारः स्यात् गवादिद्रव्यविशेषगतस्य धानादिगुणस्याजादिद्रव्ये कर्तुमशक्यत्वादिति॥

**नैमित्तिके तु०**॥ ६९॥ श्वेतादिशब्दानामपि न गुणमात्रपरत्वम्। तथासति द्रव्यदेवतासंबन्धाभावेन यागस्यैवालाभापत्तेः। अतो द्रव्यपर्यन्तत्वावश्यंभावे श्वेतगुणकद्रव्यमात्रस्यैवोपदेशतोऽवगमादतिदिष्टाजद्रव्यनियमबाध इति पूर्वपक्षे सिद्धान्तमाह—**चोदकेति**। उपदेशस्य द्रव्यपर्यन्तत्वेऽपि पूर्ववद्द्रव्ये जातिविशेषाक्षेपाशक्तेः प्राकृताजद्रव्यग्रहणेऽपि उपदेशाविरोधात्तत्रैव पर्यवसानमिति न बाध इत्यर्थः। **ननु** जातिविशेषानाक्षेपकेषु जातिबाधशङ्काया मन्दत्वात्किमर्थमिदमित्यत आह—**प्रत्युदाहरणमिति**। सूत्रार्थस्तु—नैमित्तिके गुणमात्रनिमित्तके श्वेतादिशब्दे तु प्रकृतेः स्यात्प्राकृतद्रव्यस्यैव ग्रहणं स्यात्तत्रैव श्वेतगुणस्य संपादयितुं शक्यत्वेन तदापत्तेस्तस्यैव श्वेतगुणेन परिच्छेदोपपत्तेरिति नैमित्तिक इत्यनेन पूर्ववदुत्पत्त्यैव जातिविशेषाविनाभावो नास्ति किंतु गुणमात्रमेवात्र निमित्तं, तच्च चोदकप्रहेऽप्युपपन्नमिति दर्शयति॥

**विप्रतिषेधे०**॥ ७०॥ किमत्र प्राकृतं खदिरादिकं प्रवर्तते उत नेति अधिकरणाङ्गसंशयमनुष्ठानभेदमुखेन सूचयन् तदर्थं च किं यो यूपः स खलेवाली कर्तव्य इति वचनव्यक्तिरुत या खलेवाली सा यूप इति तदर्थसंशयमाह—**तत्रेति**। **तत्रापीति**। चोदकप्राप्तान्व्रीहीन्यवान्वा उपादाय तण्डुलाः कर्तव्या उत व्रीहिनियमं सतुषावस्थां चानादृत्य लोकसिद्धा यत्किंचित्प्रकृतिकास्तण्डुला एव ग्राह्या इत्यर्थः। पूर्ववदिहापि चोदकाबाध इत्युत्थितेः संगतिः। **तण्डुलत्वमिति**। संपादनीयमिति शेषः। **ननु** खलेवाल्या यूपकार्ये विधिबलाच्चोदकबाधोऽपि युक्त इत्यत आह—**किंचेति**। **यूपस्येति**।

---

[1] यैवान्तर्वेदि.

तस्मात्खदिरादयः खलेवालीकर्तव्याः, व्रीहयश्च तण्डुलीकर्तव्या इति प्राप्ते ब्रूमः—यूपस्य खलेवालीत्वमदृष्टार्थं विधीयते । खलेवाल्यास्तु यूपत्वं दृष्टार्थं पश्वनपक्रमणात् । तस्माद्यथासिद्धैव खादिरैखादिरी वा खलेवाली यूपकार्यं कुर्यात्, तण्डुलाश्च यथासिद्धा एवोपादेयाः । प्रकृतौ हि श्रपणस्य विधानात् प्रकृतिद्रव्यमुपादाय स्वयमेव हविः कर्तव्यं, विकृतावपि यत्र श्रपणं चर्वादौ तत्रापि प्रकृतिद्रव्यं गृहीत्वा स्वयमेव हविः कर्तव्यम् । तण्डुलेषु श्रपणस्यार्थाभावान्निवृत्तौ न श्रपणकर्तव्यताबलेन प्रकृतिद्रव्यप्राप्तिः । प्राप्ते च प्रकृतिद्रव्योपादाने व्रीहियवनियमस्तस्माल्लोकसिद्धा एव तण्डुलाः व्रैहा अव्रैहा वा ग्रहीतव्याः ॥

खलेवाल्यां तक्षणाद्यनुष्ठानाधिकरणम् ॥ ३२ ॥

## परेषां प्रतिषेधः स्यात् ॥ ७१ ॥ [प्रतिषेधाच्च ॥ ७२ ॥]

**खलेवाल्यां जोषणं च च्छेदनं तक्षणोच्छ्रयौ ॥ स्युर्वा नो चोदकात्स्युर्नो वैयर्थ्याच्च विरोधतः ॥ ४० ॥**

यथासिद्धे खलेवाल्युपादानात् खदिरादिकाष्ठं बाध्यमिति स्थितं, अथ छेदनतक्षणादयः संस्काराः कर्तव्या नेति संदेहे चोदकानुग्रहाच्छक्यत्वाच्च कर्तव्याः प्रयोजनाभावात्तु न कर्तव्याः । छिन्ना हि खलेवाली श्लक्ष्णीभूता निखातोच्छ्रिता, तस्याश्छेदनं तक्षणं निखननमुच्छ्रयणं च लुप्तार्थमकर्तव्यम् ॥

---

खलेवालीशब्दः खले वारयति बलीवर्दानिति व्युत्पत्त्या रलयोरभेदेन खले वारणक्रियाविशिष्टे काष्ठे वर्तते । तत्र काष्ठस्य विशेष्यस्य प्राप्त्या विशेषणभूता खलेवारणक्रिया यूपस्येति श्रुत्यैव विधीयत इत्यर्थः । **अदृष्टार्थमिति** । खलेवारणक्रियाया दृष्टे कुत्राप्यनुपयोगादिति भावः । **ननु** भवतु खलेवाल्यां खदिरादिप्रकृतिद्रव्यनिवृत्तिः, स्वतःसिद्धखलेवाल्या एव यूपकार्ये विधानात् चित्रेष्टिगततण्डुलेषु कथं चोदकप्राप्तव्रीहिनिवृत्तिः, प्रमाणाभावात् । अन्यथा चर्वादावपि व्रीहिनिवृत्तिः स्यादित्यत आह—**प्रकृतौ हीति** । प्रयोजकाभावादत्र न व्रीहियवनियमप्रवृत्तिः । श्रपणविधिर्हि नियमप्रयोजकः । तथाहि प्रकृतौ पुरोडाशद्रव्यस्यापूपविशेषरूपस्य श्रपणं विना निष्पत्त्यसंभवेनार्थसिद्धेऽपि श्रपणे 'कपालेषु श्रपयती'ति विधिः श्रपणस्य प्रयोगमध्येऽनुष्ठेयत्वार्थः, नान्येन श्रपितं क्रयादिना संपादयेत्किंतु स्वयं प्रयोगमध्ये श्रपयेदिति । तच्च श्रपणं न पुरोडाशावस्थायां कर्तव्यं, श्रपणं विना पुरोडाशस्यैवानिष्पत्तेः । किंतु पुरोडाशप्रकृतिद्रव्ये कर्तव्यमिति श्रपणविधिबलात्प्रकृतिद्रव्योपादाने सिद्धे लाघवात्पिष्टानां तण्डुलानां वा प्रकृतितयोपादानप्रसक्तौ व्रीहिशास्त्रं प्रवर्तते । श्रपणविधिबलेन प्रकृतिमुपाददीतेति यत् व्रीहिरूपं सतुषावस्थं द्रव्यविशेषमिति व्रीहिशब्दस्य सतुषावस्थद्रव्यविशेषवचनत्वात्, तेन द्रव्यान्तराणां नीवारादीनां पिष्टतण्डुलाद्यवस्थान्तराणां च व्यावृत्तिः, एवंच प्रकृत्युपादानस्य श्रपणविधिलभ्यत्वेन व्रीहिशास्त्रं प्रकृत्युपादानेन व्याप्रियते । तथाच श्रपणविधेरेव प्रकृत्युपादानाक्षेपद्वारेण व्रीहिनियमप्रयोजकतया व्रीहिनियमानुष्ठापकत्वात् व्रीहिशास्त्रं नियमस्य प्रापकमपि नानुष्ठापकम् । तथाचोक्तरीत्या सतुषावस्थप्रयोजकस्य श्रपणस्य तण्डुलेषु निवृत्त्या तत्प्रयोज्यायाः सतुषावस्थाया व्रीहिनियमस्य च निवृत्तिः । यथा चरौ सत्यपि तुषोपवापरूपप्रयोजने पुरोडाशकपालस्याप्रयोजकस्याभावान्निवृत्तिस्तद्वदित्यर्थः । **स्वयमिति** । स्वयमेव यजमानेनैव प्रयोगमध्ये प्रकृतिद्रव्यं संपाद्य, श्रपणं कृत्वा पुरोडाशरूपं हविः कर्तव्यं नान्यतःसिद्धं हविरुपादेयमित्यर्थः । **अर्थेति** । तण्डुलानामेव हविष्ट्वेन हविर्निष्पत्तिप्रयोजनाभावादित्यर्थः । श्रपणाभावाद्व्रीहिनिवृत्तिरिति वस्तुगतिमनुरुध्योक्तम् । व्रीहिशास्त्रस्यैव प्रकृत्युपादानव्रीहिनियमप्रयोजकत्वेऽपि प्रकृतौ हविःप्रकृतिभूततण्डुलानामेव द्वारतया चित्रेष्टौ तण्डुलानां हविष्ट्वेन हविःप्रकृतित्वाभावेन द्वारलोपाद्व्रीहिनियमनिवृत्तिसंभवादिति ध्येयम् । सूत्रार्थस्तु—विप्रतिषेधे संशये सति प्राकृतगुणस्य खदिरव्रीह्यादेर्निवृत्तिः स्यात् तद्वचनात्खलेवाल्या यूपत्ववचनात्तण्डुलानां यागीयत्ववचनात्तेन खलेवाल्यादिद्रव्येण नियोजनादिकर्मसंयोगादिति ॥

**परेषां प्रतिषेधः स्यात्** ॥ ७१ ॥ ननु खदिरादिवदेव तक्षणादीनामपि निवृत्तेः सिद्धत्वात्किमर्थमिदमित्याशङ्क्य पूर्वन्यायाविषयत्वं वक्तुं तन्न्यायमनुवदति—**यथासिद्धेति** । यथासिद्धखलेवाल्युपादानेऽपि तक्षणादीनां कर्तुं शक्यत्वान्न पूर्वन्यायेन गतत्वमिति भावः । तत एव च संगतिः । **शक्यत्वादिति** । तक्षणादावपि खलेवालीस्वरूपहान्यभावात्तक्षणेनैकदेशविगमेऽपि प्रत्यभिज्ञानेन तत्त्वाध्यवसायादिति भावः । **श्लक्ष्णीभूतेति** । तक्षणस्य श्लक्ष्णीकरणार्थस्य लुप्तार्थत्वमनेन सूचितम् । सूत्रार्थस्तु—परेषां छेदनादीनां प्रतिषेध इति ॥

खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम् ॥ ३३ ॥

## अर्थाभावे संस्कारत्वं स्यात् ॥ ७३ ॥

**पर्यूहणाद्यञ्जनादि न स्यात्स्याद्वात्र पूर्ववत् ॥ न स्याद्दृष्टादृष्टभावादविरोधाच्च तन्नवेत् ॥ ४१ ॥**

अथ पर्यूहणपरिबृंहणपरिषेचनादि खलेवाल्यां संभवत्प्रयोजनं यच्चादृष्टार्थं अञ्जनप्रोक्षणादि तत्खलेवाल्यां भवति नेति संशये नेति ब्रूमः। कुतः। यूपार्थत्वात्तेषाम्। इह चायूपे खलेवाल्यां यूपकार्यकरणाल्लुप्तार्थं पर्यूहणादि न कर्तव्यम्। उच्यते—न यूपो नामैकः कश्चिदर्थोऽस्ति यदर्थाः संस्काराः, किंतु छेदनप्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्तमाना यूपशब्दाभिधेया नियोजनस्याङ्गभूताः। तत्र केषांचिल्लुप्तार्थानां लोपेऽप्यन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणं, तस्मात्पर्यूहणाञ्जनादयः कर्तव्याः॥

मतद्वयसहितमधिकरणम् ॥ ३४ ॥

## अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७४ ॥

**नावघातोऽवघातो वा धानानां नाविनष्टये ॥ न नाशः क्रमबाधेऽतोऽवघातो नात्र बाध्यते ॥ ४२ ॥**
**पेषणं नूतनं मन्थे प्राकृतं वा क्रमान्तरात् ॥ नूतनं प्राकृतं धर्ममात्रबाधस्य लाघवात् ॥ ४३ ॥**

महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै[1] दुग्धे मन्थम्'मिति। तत्र धानासु हन्तिः कर्तव्यो नेति संशये विघातादकर्तव्यः। क्रियमाणे हि हन्तौ धानात्वं विहन्येत सक्तवो भवेयुः, तस्मादकर्तव्योऽवघातः। सत्यम्। श्रपणोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा पश्चात्पाकः क्रियते क्रममात्रं बाधित्वा। तथाच न विहन्यते। नहि क्रमबाधे पदार्थोऽपि बाधितव्यः। तदुक्तं—'गुणलोपे च

---

**अर्थाभावे०** ॥ ७३ ॥ यूपं परितः पांसूनां समूहीकरणं पर्यूहणं, तेषां पांसूनां मैत्रावरुणदण्डेन भूमिसमतया घट्टनं परिबृंहणं, घट्टितदेशेऽपां व्युत्सेकः परिषेचनमित्यर्थः। **संभवदिति**। खलेवाल्या बलीवर्दविमर्दनेन चालितायाः पुनर्दार्ढ्यार्थतया पर्यूहणादीनां प्रयोजनं संभवतीत्यर्थः। अनेन पूर्वन्यायाविषयत्वं सूचितम्। तक्षणादिवत्पर्यूहणादिकमपि नेत्युत्थितेः संगतिः। **यूपेति**। संस्कारविधिषु द्वितीयाश्रवणेन तेषां यूपार्थत्वमित्यर्थः। **न यूप इति**। यो यूपस्तं छेदनेन कुर्यादित्येवं न वाक्यार्थसंभवः। तथासति वाक्येन निरपेक्षतया यूपार्थतया विधीयमानानां छेदनादीनां विकल्पापत्तेः। तथाच न यूपार्थत्वं संस्काराणां येनायूपे खलेवाल्यां न भवेयुरित्यर्थः। **नन्वेवं** संस्कारवैयर्थ्यमित्यत आह—**किंत्विति**। उक्तरीत्या एकस्य यूपशब्दार्थस्याभावेन यूपे पशुं नियुञ्जीतेति वाक्येन छेदनादिजन्यदृष्टादृष्टसंस्काराणामेव यूपशब्देन नियोजने विनियोग इति तेषां नियोजनार्थत्वान्न वैयर्थ्यमित्यर्थः। **तत्रेति**। एकशब्दोपात्तानां मध्ये कतिपयाभावे इतरनिवृत्तिरित्यत्र प्रमाणाभावादित्यर्थः। **अन्येषामिति**। दृष्टार्थेषु संभवत्प्रयोजनानामदृष्टार्थानां चेत्यर्थः। सूत्रार्थस्तु—अर्थाभावे हि यूपत्वरूपादृष्टसंस्कारार्थतामादाय खलेवाल्यां निवृत्तिः स्यान्न त्वत्रार्थाभाव इति॥

**अर्थेन च०** ॥ ७४ ॥ धाना इति। भ्रष्टतण्डुला इत्यर्थः। **अभिवान्याया इति**। मृतवत्साया धेन्वा इत्यर्थः। द्रवद्रव्ये क्षिप्त्वा मथिताः सक्तवो मन्थशब्दार्थः। **विघातादिति**। अनेनैव पर्यूहणादिवैषम्यप्रतिपादनात्संगतिरपि सूचिता। **ननु** प्रकृतौ व्रीह्यवस्थायामवघातो न पुरोडाशावस्थायाम्। तथाच यथाप्रकृति व्रीह्यवस्थायामवघाते क्रियमाणे धानात्वविघाताभावात्पूर्वपक्षोऽनुपपन्नः। तथा व्रीह्यवस्थायामवघाते पूर्वमवघातः पश्चात्पाक इति प्राकृतक्रमबाधाभावेन क्रमबाधेऽपि पदार्थो न बाधितव्य इति सिद्धान्तोप्ययुक्त इति चेदेवं मन्यते भाष्यकारः—धानाशब्दश्रवणाद्धानानामेवापूर्वीयत्वं नत्वत्र व्रीहीणामपूर्वार्थतया चोदकप्राप्तिरिति। तथाच व्रीह्यवस्थायामवघाताप्राप्तेः धानावस्थायां च विघातादकर्तव्य इति पूर्वपक्षो युज्यत एव। तथा धानावस्थायां प्राप्तोऽपि यतस्तदवस्थायां क्रियमाणो धानात्वं निहन्ति ततस्तत्पूर्वावस्थायां क्रियते। एवंच यदवस्था यागसंबन्धिनी ततः पूर्वावस्थायामेवावघातः। प्रकृतौ तु यागसंबन्धिव्रीह्यवस्थायामेवेति प्राकृतक्रमबाधात्सिद्धान्तोऽपि युक्त इति। **ननु** क्रमलोपे विगुणत्वात्पदार्थो नानुष्ठेय इत्यत आह—**नहीति**। क्रमस्य बाधितस्य चोदकेनाप्राप्तेस्तस्य गुणत्वाभावेन केवलपदार्थानुष्ठानेऽपि न वैगुण्यं, यथा पवमानेष्टिष्वग्निहोत्रहवण्यभावेऽपि निर्वापस्य न वैगुण्यं तद्वदिति 'गुणलोपेऽपि मुख्यस्ये'ति न्यायसिद्धमित्यर्थः। अत्र धानाशब्दश्रवणेऽपि धानानां न

---

[1] भिवामायै

मुख्यस्य क्रिया स्या'दिति । तस्मात्कर्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातम् तदिद-मनुपपन्नम् । प्रकृतावपि पूर्वमवघातः ततः पाकः तेन नास्ति क्रमविपर्यासः पुनरुक्तं च 'गुणलोपे च मुख्यस्ये'त्यनेन न्यायेन । 'ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति' यस्य पृथक् बाधं व्यवस्थापयामः, पदार्थो एव हि वितताः प्रतीयन्ते तेन केवलस्य क्रमस्य बाधासंभवात्तद्बाधे पदार्थोऽपि बाधित इत्यवघातो न कर्तव्य इत्येतन्निराकरणार्थमिदमधिकरणम् । यत्तु विपर्यासो ना-स्तीति तत्राप्याहुः—धानासु श्रपणं कृत्वाऽवघातः प्रकृतौ च विपरीतमित्यस्ति विपर्यास इति यदि विपर्यासः कथं तर्ह्यवघातानुष्ठानम् । नहि क्रमस्य पृथग्बाधः संभवति । सत्यम् । नत्वत्र परमार्थतः क्रमबाधः । प्रकृतौ हि श्रुतेष्वेव व्रीहिष्ववघातः कृतः अत्रापि श्रुतास्वेव धानास्ववघात इति नास्ति क्रमविपर्यासः । प्रकृतावबघातात्परं श्रपणं इह तु विपरीतमित्येतावता विपर्यासवाचोयुक्तिः । ननु धानावस्थायां हन्तिः क्रियमाणो विघातं कुर्यात्, यथा न विघातो भवति तथा कुर्महे, सकृदेवा-नभ्यस्तमवहननं क्रियते नच भविष्यति विघात इति, तदयुक्तम् । संभवति हि पृथक्क्रमस्य बाधः । त एव हि पदार्था अन्येनान्येन च क्रमेणानुष्ठातुं शक्यन्ते, तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते । यत्तु श्रपणं कृत्वावघात इति तत्पूर्वं हन्तिं कृत्वा पश्चात्पाकः कार्य इति भाष्यविरुद्धम् । यदपि श्रपणोत्तरकालेऽप्यवघाते विपर्यासो नास्ति श्रुते द्रव्येऽवघातकरणादिति, तदप्यसारम् । प्रकृतौ हि द्वे द्रव्यश्रवणे पुरोडाशश्रवणं व्रीहिश्रवणं च । तत्र धाना देवतासंबन्धात्पुरोडाशकार्ये वर्तन्ते न व्रीहकार्ये । प्रकृतौ च व्रीहिविषयोऽवघातो न पुरोडाशविषयः । तेन धानास्वपि चोदक-

---

चित्रेष्टिगततण्डुलानामिव यथासिद्धानां ग्रहणं येन व्रीहीणां चोदकात्प्राप्तिर्न स्यात्, किंतु व्रीहिलक्षणप्रकृतिद्रव्यप्रापकश्रप-णस्य चर्वादिष्विव धानास्वपि सद्भावेन व्रीहीनेवोपादाय धानाः कर्तव्याः । एवंच व्रीहीणामपूर्वार्थतया चोदकात्प्राप्तिस्तेष्व-वघातस्ततः पाक इति यथाप्रकृत्येवानुष्ठानं न क्रमबाध इत्याशयेन वार्तिककारोक्तं भाष्यदूषणं दर्शयति—**तदिदमिति** । प्राभाकरोक्तं भाष्यसमर्थनप्रकारमाह—**येत्विति** । **वितता इति** । धारारूपेणाविच्छेदेन वर्तमाना इत्यर्थः । तथाच यथा निर्वापव्यतिरेकेणाग्निहोत्रहवणीरूपगुणः पृथगस्ति नैवं पदार्थव्यतिरिक्तः कश्चित्क्रमशब्दार्थोऽस्ति । विततानां पदा-र्थानामेव क्रमबुद्धिविषयत्वात्, यथा वृक्षाणामेव वनबुद्धिविषयत्वाद्वृक्षव्यतिरिक्तवनशब्दार्थाभावस्तद्वत्, तथाचाग्निहोत्रह-वण्यभावेऽपि निर्वापस्यानुष्ठातुं शक्यत्वान्निर्वापाबाधेऽपि प्रकृते क्रमस्य पदार्थात्मकत्वेन तद्बाधे पदार्थबाधस्याप्यावश्यकत्वा-त्पृथक्पदार्थानुष्ठानसंभव इत्येतादृशपूर्वपक्षनिराकरणार्थत्वादस्याधिकरणस्य न गुणलोपाधिकरणेन पुनरुक्तिरित्यर्थः । निराकरणं तु प्रकृतौ श्रुतेषु व्रीहिष्विवात्रापि श्रुतासु धानास्वेवावघातानुष्ठानेन क्रमबाधाभावान्न पदार्थबाध इति परिहरति —**तत्रापीति** । त एवेति शेषः । **नन्वेवं** त्वन्मते पृथक् क्रमबाधानङ्गीकारादवघातबाधः स्यादिति शङ्कते—**यदीति** । **श्रुतास्वेवेति** । तथाच यदवस्थायामवघातः शास्त्रेण गम्यते तदवस्थायामेव तस्यानुष्ठानान्न शास्त्रावगतक्रमबाध इत्यर्थः । यद्यप्येवं सत्यवघातपाकयोः पौर्वापर्यस्य धानासु शास्त्रतात्पर्यविषयत्वाभावेन तद्विपर्यासेऽपि न शास्त्रावगतक्र-मबाधस्तथापि प्राकृतपौर्वापर्यान्यथाभावमात्रेण क्रमविपर्यासोक्तिरित्याह—**प्रकृताविति** । **विघातमिति** । धाना-नामेति शेषः । सकृदेवेत्यस्य विवरणमनभ्यस्तमिति । **संभवतीति** । पदार्थपौर्वापर्यभेदे विततेरप्यन्यत्वात्सत्यपि क्रम-भेदे पदार्थानां प्रत्यभिज्ञयैकत्वावगमेन पदार्थभेदाभावात्क्रमबाधेऽपि न पदार्थबाध इत्यर्थः । तथाच गुणलोपन्यायेन गतार्थत्वं दृढमेवेति भावः । **भाष्यविरुद्धमिति** । तथाच धानासु श्रपणं कृत्वावघातः प्रकृतौ च विपरीतमित्येवं क्रम-विपर्याससमर्थनासंभवात्क्रमविपर्यासो नास्तीति दूषणमपि स्थिरमिति भावः । सत्यमित्यादिनोक्तं दूषयति—**यदपीति** । **प्रकृताविति** । प्रकृतौ द्रव्यं पुरोडाशलक्षणं हविः तत्प्रकृतिभूतं व्रीहिलक्षणं चेत्येवं द्विः श्रूयते, तत्र धानानां न श्रूयमाण-त्वमात्रेण व्रीहिस्थानापन्नत्वं येन प्रकृतौ श्रुतेषु व्रीहिष्विव इह श्रुतासु धानास्वेवावघातानुष्ठानेन परमार्थतः क्रमबाधो न भवेत् किंतु देवतासंबन्धित्वेन श्रुतत्वात्पुरोडाशस्थानापत्तिरेव । ततश्चेह चोदकाद्व्रीहिप्राप्तौ तत्रैवावघातो न धानावस्था-

प्राप्तेषु व्रीहिष्वेवावघातो न धानावस्थायाम् । तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव । धानासु चावधातकरणे धानात्वं विहन्येत । यत्तु सकृदेवावहनिष्याम इति । तथासत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात् । प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात्, तस्मान्नैवमधिकरणं युक्तमिति यथावार्तिकं व्याख्यास्यामः । न धाना उदाहरणं तत्रैव मन्थ उदाहरणम् । तत्र पेषणं श्रपणोत्तरकालमर्थाद्भवति तत्प्राकृतमुताप्राकृतमिति संशयः । प्रकृतौ पाकात्पूर्वं पेषणं पाकार्थं भवति । नह्यसति पेषणे पुरोडाशनिर्वर्तकः पाकः कर्तुं शक्यते । तेन पाकार्थं पेषणम् । मन्थेतु विनैव पेषणेन भर्जनरूपः पाकस्तण्डुलावस्थायामेव कृत इति लुप्तार्थं प्राकृतं पेषणं निवृत्तं भर्जितेषु तण्डुलेषु सक्तुभावापादनाय लौकिकं पेषणमधर्मकं कर्तव्यमितिप्राप्ते ब्रूमः—न प्रकृतौ पाकार्थं पेषणं द्वितीयाश्रुत्या पेषणं श्रपणं चोभयमपि हविरर्थं अर्थात्तु तयोः पूर्वं पेषणं इह त्वर्थादेव पश्चात्क्रियते इति क्रममात्रमन्यत् । नच तदन्यत्वे पदार्थान्यत्वं तस्मात्प्राकृतमेव पेषणमिति कर्तव्याः पेषणधर्माः ॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

यामित्यर्थः । एवंच व्रीह्यवस्थायामेवावघातस्य प्रकृतावपि शास्त्रतात्पर्यविषयत्वाद्धानावस्थायां तत्करणे क्रमविपर्यासः स्यादेवेत्याह—**तत्र त्विति** । धानावस्थायामित्यर्थः । **तथासतीति** । प्रकृतौ दृष्टार्थस्य विकृतावदृष्टार्थत्वाश्रयणेन बाधाभावे कृष्णलादिष्वप्यवहननबाधो न स्यादिति भावः । तस्माद्यथाप्रकृत्यभ्यस्तमेवावहननमनुष्ठेयं, तथासति विघातः स्यादेवेत्याह—**प्रकृतिवदिति । तत्रैवेति** । पितृयज्ञ एवेत्यर्थः । अत्र तु क्रमविपर्यासे न विवाद इत्याह—**तत्रेति** । द्रवद्रव्यसंयुक्ताः सक्तवो हि मन्थशब्दार्थः । सक्तवश्च भर्जिततण्डुलानां पेषणेन भवन्तीति सक्तुभावरूपप्रयोजनवशात्पूर्वं भर्जनरूपः पाकः पश्चात्पेषणमित्यर्थः । अत्र पेषणधर्माः कर्तव्या नवेति अधिकरणाङ्गसंशयं मनसि निधाय तदर्थसंशयमाह—**तदिति** । वार्तिककारोक्ताधिकरणप्रकारे तु न गुणलोपन्यायेन पुनरुक्तिरित्याशयेन पूर्वपक्षमाह—**प्रकृताविति**। भवत्वग्निहोत्रहवण्याख्यगुणाभावेऽपि निर्वापस्यानिवृत्तिः प्राकृतकार्यसद्भावादिह तु पेषणात्पूर्वमेव पाकस्य सिद्धत्वेन पाकलक्षणप्राकृतप्रयोजनाभावान्नैव कर्तव्यं प्राकृतं पेषणं, सक्तुभावाक्षिप्तं तु लौकिकमेव पेषणान्तरमनुष्ठेयमिति पूर्वपक्षकरणान्न पुनरुक्तिरिति भावः । **नहीति** । भर्जितैः पिष्टैरेव पुरोडाशस्योत्पत्तेरिति भावः । प्राकृतवल्लौकिकस्याप्यनुष्ठानमाशङ्क्याह —**भर्जितेष्विति । अधर्मकमिति** । कृष्णाजिनादानादिधर्मरहितमित्यर्थः । **द्वितीयेति** । 'तण्डुलान्पिनष्टी'ति द्वितीयाश्रुत्या पेषणं हविरर्थं, 'हवींषि श्रपयती'ति द्वितीयाश्रुत्या श्रपणं हविरर्थमित्यर्थः । **ननु** पेषणं विना पुरोडाशानुकूलपाकानिष्पत्तेर्द्वितीयाश्रुत्यवगतहविरर्थत्वमपि पाकद्वारैवेति मन्थे द्वारलोपात्प्राकृतपेषणनिवृत्तिः किं न स्यादित्यत आह—**अर्थात्त्विति** । सत्यम् । पेषणं पाकानुकूलं तथापि तण्डुलान्पिनष्टीति शास्त्रेण पाकस्य व्रीहीनवहन्तीत्यनेन वैतुष्यस्येव द्वारत्वेनास्वीकारादार्थिक एव पेषणस्य पूर्वभावो न पाकद्वारत्वकृत इत्यर्थः । तन्त्ररत्ने तु कृष्णलचरौ घृते श्रपयतीति विहितं श्रपणमपि प्राकृतमेव नत्वपूर्वम् । अत्यन्ताप्राप्तविध्यपेक्षया प्रतिप्रसवविधेर्लघुत्वात् । एवंच प्राकृतमेव श्रपणं प्रयोजनाभावान्निवर्तमानं प्रतिप्रसूयत इति तत्रापि प्राकृतश्रपणधर्माः कर्तव्या इति तदप्युदाहरणमित्युक्तम् । सूत्रार्थस्तु—अर्थात्क्रमविपर्यासे हन्तेर्धानार्थत्वात्तत्त्वमविहतं धानात्वमेव स्यात् इति भाष्यकारपक्षे । वार्तिककारपक्षे तु तत्त्वं पेषणस्य प्राकृतत्वमेव स्याद्धविरर्थत्वादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमाध्यायस्य द्वितीयः पादः** ॥ २ ॥

## दशमाध्याये तृतीयः पादः ।

पश्चादौ सामिधेन्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ १ ॥

**विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ॥ १ ॥ [प्रकृतिवत्तस्य चानुपरोधः ॥ २ ॥ चोदनाप्रभुत्वाच्च ॥ ३ ॥ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान्विधिरविशेषात्प्रवर्तितः ॥४॥ न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चैकशब्द्यात्संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्यत्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥ तथाभूतेन संयोगाद्यथार्थविधयः स्युः ॥ १० ॥ विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥ ११ ॥ समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥]**

प्रयाजैकादशत्वादिविशेषविधिभिर्युते ॥ पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ ॥ १ ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ॥ लाघवाद्गुणमात्रस्य विधेः सोऽस्त्यतिदेशतः ॥ २ ॥

अग्नीषोमीये पशौ श्रूयते 'एकादश प्रयाजान्यजती'ति । तथा 'चातुर्मास्येषु नव प्रयाजान्यजति नवानूयाजानि'ति । तथा वायव्ये पशौ 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती'ति । एवमन्यत्रापि यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते तदुदाहृत्य विचार्यते किं तत्र चोदकेन प्राकृतीतिकर्तव्यता प्राप्यते नवेति । तदर्थमिदं विचार्यते, किमेतैर्गुणविशिष्टप्रयाजादिविधिरुत प्रयाजाद्यनुवादेन गुणमात्रविधिरिति । तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति प्रकारमात्रातिदेशात् । अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः संभवति । तस्मात्संख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते । एवंच धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति । तेच प्रयाजादयः प्रकृतौ क्लृप्तोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निरुन्धन्ति । तस्मान्न प्राकृतीतिकर्तव्यतादिश्यते इति प्राप्ते ब्रूमः—'प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणाम् ॥ तान्यनूद्य गुणः शक्यो विधातुमिति

---

**विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ॥ १ ॥** पूर्वत्र पादद्वये बाधः प्राधान्येन व्युत्पादितः । इह तु विकृतौ श्रुतेन प्राकृतस्याबाधः प्राधान्येन व्युत्पाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः । **एवमिति** । यदप्राकृतगुणयुक्तं प्राकृतं श्रूयते तदेवोदाहरणं नतु प्राभाकररीत्यौपदेशिकाङ्गवद्वैकृतमात्रमित्याशयः । **तदर्थमिति** । यदि विशिष्टविधिस्तदा विशेष्यभूतप्रयाजादेरपि विधिरावश्यकः प्रयाजादिश्च प्रकृतौ क्लृप्तोपकार इति चोदकलोपात्प्राकृतेतिकर्तव्यताया न प्राप्तिः । गुणमात्रविधौ तु चोदकलोपाभावात्प्राप्तिरिति फलफलिभावः । **तत्रेति** । नचोपकारद्वारा पदार्थप्राप्तिमङ्गीकृत्य तदनुवादेन गुणविध्युपपादनं संभवतीति वाच्यम् । उपकारविशेषणत्वेनापि पदार्थानां प्रयाजत्वादिना प्रातिस्विकरूपेण न प्राप्तिः येन तेन रूपेणानुवादः स्यात्, किंतु 'यथाग्नेयेन स्वर्गः कृतस्तथा सौर्येण ब्रह्मवर्चसं कुर्या'दित्युक्ते प्राकृताङ्गजातस्य सामान्येनैवोपस्थितिरिति नानुवादसंभव इति भावः । एवंच स्वरूपत इत्यस्य प्रातिस्विकरूपेणेत्यर्थो बोध्यः । तथा प्रकारमात्रातिदेशादिति मात्रशब्देन प्रयाजादिरूपप्रातिस्विकरूपेणातिदेशो निवार्यते नतु सामान्यरूपेणेति ध्येयम् । **श्रुतीति** । पदश्रुतीत्यर्थः । **ननु** धात्वर्थविधानेऽपि प्रकरणान्तरत्वात्कर्मान्तराण्येव भवेयुस्तथाच चोदकलोपाभावात्प्राकृतेतिकर्तव्यता स्यादेवेत्यत आह—**तेचेति** । उपकाराकाङ्क्षिण्या विकृतिभावनायाः संनिधौ श्रूयमाणाः प्रयाजादिशब्दाः प्राकृतानेवोपकारजनकत्वेन क्लृप्तान्पदार्थानुपस्थापयन्तीत्येवंभूतस्थले प्रधानाकाङ्क्षानुसारेण धातोर्नामवशवर्तित्वं नतु धातुवशवर्तित्वं नाम्न इति नामानुसारेण प्राकृता एव प्रयाजादयो विधीयन्ते नतु कर्मान्तराणि तैरेव निराकाङ्क्षा विकृतिभावनेति नातिदेशप्रसक्तिः । अन्यथा गृहमेधीयाज्यभागादावपि कर्मान्तरत्वापत्तौ चोदकपरिलोपकत्वं न स्यादिति भावः । **प्रकारेति** । प्रकारद्वारेण सामान्यतः प्राप्तावपि प्रातिस्विकरूपेणानुवादके प्रयाजादिशब्दे श्रुते प्राकृतस्यैवायमनुवाद इति प्रत्यभिज्ञानसंभवात्प्राकृताङ्गजातं प्रयाजादिकमेव संख्यादिगुणकं कुर्यादिति संभवति प्रयाजाद्यनुवादेन गुणविधिरित्यर्थः । यद्वा उपकारप्राप्तौ अर्थात्पदार्थानामपि प्रातिस्विकरूपेण प्राप्तिरस्तु ततश्च गुणविधिसंभव

तद्विधिः ॥नच सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम्॥ वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः॥' योऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थं विधित्सति तेनापि गुणत्वादस्याप्रमादपाठायावश्यं वाक्यार्थविधिरङ्गीकर्तव्यः। तथासति तत्र संक्रान्ते विधौ धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकारद्वाराप्राप्तिमालोच्य तदनुवादेन विधिर्गुणमात्रं विधत्ते। तस्मादेवंजातीयकेषु गृहमेधीयन्यायाभावादस्त्यतिदेशः॥

हिरण्यगर्भमन्त्रस्योत्तराघारगुणताधिकरणम् ॥ २ ॥

**हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ [प्रकृत्यनुपरोधाच्च ॥ १४ ॥ उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ विध्यतिदेशात्तच्छ्रुतौ विकारः स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १७ ॥]**

**हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथवा ॥ लिङ्गादाद्ये समं लिङ्गं क्लृप्तकार्यत्वतोऽन्तिमे ॥ २ ॥**

**वायव्ये पशौ श्रूयते 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती'ति तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितम्। प्रकृतौ च द्वावाघारौ पूर्वः प्राजापत्योऽमन्त्रक उत्तरस्त्वैन्द्रः समन्त्रकः। तदिह किं पूर्वस्याघारस्य मन्त्रविधिः उतोत्तरस्येति संशये मन्त्रस्य प्रजापतिलिङ्गत्वात् 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये'ति च वाक्यशेषात्पूर्वस्येति प्राप्ते ब्रूमः—पूर्वस्मिन्मन्त्राभावान्न मन्त्रकार्यमस्ति। तत्र मन्त्रविधौ मन्त्रकार्यमप्राकृतं कल्प्यं स्यात्। उत्तरत्र तु प्रकृतावेव मन्त्रविधानादस्ति मन्त्रनियमजन्यमदृष्टं तत्र मन्त्रविधानं सुकरं मन्त्रलिङ्गं त्विन्द्रेऽप्यवशिष्टमिति दर्शितं भाष्ये। वाक्य-**

---

इत्यर्थः। **वाक्यार्थेति**। पूर्वपक्षेऽपि न केवलधात्वर्थविधानं किंतु गुणविशिष्टधात्वर्थविधानम्। गुणवैशिष्ट्यं च समभिव्याहारगम्यमिति वाक्यार्थविधिदोषः समान इत्यर्थः। **ननु** सत्यं वाक्यार्थविधिदोषः समानस्तथापि पूर्वपक्षे धात्वर्थस्यापि विधानाच्छ्रुत्यनुग्रहोऽस्ति, सिद्धान्ते तु केवलगुणविधानान्न श्रुत्यनुग्रह इत्यस्ति विशेष इत्यत आह—**तथासतीति। धात्वर्थेति**। धात्वर्थानुवादसंभवेनेत्यर्थः। अनुवादत्वेनापि धातोरुपपन्नत्वेनेति यावत्। **एवमिति**। यत्र वैशेषिकगुणरहितं प्राकृतं श्रूयते तत्रैव गृहमेधीयन्यायस्तत्र धात्वर्थविध्यवश्यंभावादिति भावः। सूत्रार्थस्तु—विकृतौ प्रधानमात्रस्य शब्दवत्त्वात् श्रवणाद्गुणानां प्रयाजादीनामधिकोत्पत्तिः संख्यान्तरादिविशिष्टतयोत्पत्तिः। न केवलगुणविधिः संनिधानात्। संनिहितैस्तैरेव विकृत्याकाङ्क्षाशान्तेर्नातिदेश इति ॥

**हिरण्यगर्भे० ॥ १३ ॥ तदिति**। एवं च पूर्वसिद्धं प्राकृतानुवादेन गुणमात्रविधिमुपजीव्य प्रवृत्तेः संगतिरिति भावः। **मन्त्रस्येति**। प्रजास्रष्टरि प्रजापतावेव सृष्टिपूर्वकाले आविर्भाव एकत्वं भूतपतित्वं चोपपद्यत इति मन्त्रस्य प्रजापतिप्रतिपादकत्वमिति भावः। युक्त्यन्तरमाह—**प्रजापतिर्वाइति**। प्रजापतिरेव हि हिरण्यगर्भः। अतः प्राजापत्यर्थकहिरण्यगर्भपदयुक्तमन्त्रेणाघारणं प्रजापतेरनुरूपं भवतीति वाक्यशेषे प्रजापतेरनुरूपत्वप्रतिपादनं प्रजापतिदेवताकप्रथमाघार एव मन्त्रविधौ घटते नान्यथेत्यर्थः। **पूर्वस्मिन्निति**। प्रकृतौ पूर्वाघारे मन्त्रविध्यभावेन मन्त्रजन्यनियमादृष्टमक्लृप्तमुत्तराघारे तु 'इन्द्र ऊर्ध्वोध्वर' इति मन्त्रस्य विहितत्वेन तन्नियमादृष्टं क्लृप्तम्, एवंसति यद्यत्र पूर्वाघारे मन्त्रविधिः स्यात्तदा प्रकृतावक्लृप्तमन्त्रजन्यनियमादृष्टलक्षणं कार्यं कल्प्यमिति गौरवं स्यात्। उत्तराघारे तु मन्त्रविधौ न तत्कल्पनेति लाघवादत्रैव मन्त्रविधिरित्यर्थः। नच नियमादृष्टाक्लृप्तावपि मन्त्रकार्यमनुष्ठेयार्थस्मरणलक्षणं क्लृप्तमेव। उपद्रष्ट्रादिवचनतुल्ययोगक्षेमतया मन्त्रप्राप्तेरनिवार्यत्वात्। तथाच पक्षप्राप्तो यो मन्त्रः स एवंरूप इत्यस्त्येव मन्त्रविधेरवकाश इति वाच्यम्। एवं सति मन्त्रविधेः पाक्षिकत्वापत्तेरेव दोषत्वादिति भावः। **ननु** लिङ्गबलात्पाक्षिकत्वमपि न्याय्यमत आह—**लिङ्गमिति**। यथा प्रजापतेः प्रजास्रष्टृत्वेन सृष्टेः पूर्वमवस्थानमेकत्वं स्वसृष्टभूतपतित्वं तथा इन्द्रस्याप्यैश्वर्यार्थकेन्द्रशब्दबलेन सकलैश्वर्यसंपन्नस्य प्रजास्रष्टावपि सामर्थ्यसद्भावात्तदादाय मन्त्रलिङ्गमिन्द्रेऽप्युपपन्नमिति भाष्ये प्रदर्शितमित्यर्थः। हिरण्यगर्भशब्दश्च योगेनेन्द्रेपि समर्थः। सूक्तस्यैन्द्रत्वायोगाश्रयणमपि न दोष इति भावः। **प्रजानामिति**। उक्तरीत्या प्रजासृष्टौ सामर्थ्येन योगेनेन्द्र एव प्रजापतिशब्देन वाक्यशेषेऽभिधीयत इत्यर्थः। किंच वैदिकप्रसिद्धिबलादिन्द्रे प्रजापतिशब्दो रूढ एवेत्याह—

---

१ पाठादवश्यं. २ प्रकारद्वारा प्राप्ति.

शेषोऽपि प्रजानां पतिः प्रजापतिरित्येवमिन्द्र एवोपपन्नः । 'यो हि खलु वाव प्रजापतिः स एवेन्द्र' इतिचैकत्वादुपपत्तिर्वाक्यशेषस्य पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते । 'न स्वाहाकारो न मन्त्रं वाहे' ति तस्मादुत्तरस्य मन्त्रः ॥

चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् ॥ ३ ॥

**संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥ [प्रकृत्यनुपरोधाच्च ॥१९॥ विधेस्तु तत्र भावात्संदेहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ विप्रतिषेधात्क्रियाप्रकरणे स्यात् ॥ २२ ॥]**

**किमुत्करासादनं च परिधौ च नियोजनम् ॥ कर्मान्तरे प्राकृतयोर्गुणो वाद्योऽस्त्वसंभवात् ॥ ४ ॥**
**पृथुतामुत्कराग्रस्य परिधेश्च स्थविष्ठताम् ॥ आश्रित्य संभवात्कर्तुं गुणौ तौ लाघवान्मतौ ॥ ५ ॥**

'उत्करे वाजिनमासादयति, परिधौ पशुं नियुञ्जीते'त्यत्र संशयः किमप्राकृतमासादनान्तरं नियोजनान्तरं चादृष्टार्थमुत्करपरिधिविधिशिष्टं विधीयते उत प्राकृतयोरेवासत्तिभावानपक्रमणरूपदृष्टप्रयोजनयोरुत्करपरिधिविधिरिति । तत्र तीक्ष्णाग्रत्वात्तुच्छत्वाच्चोत्करस्य परिधेश्चाणीयस्त्वान्न दृष्टकार्यमासादनं नियोजनं च शक्यं कर्तुम् । अतोऽप्राकृतकार्यमन्यद्विधीयते । एवंच धात्वर्थविधानाच्छ्रुत्यनुग्रहः । अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते ब्रूमः—न संभवति गुणमात्रविधौ विशिष्टविधिर्युक्तः, साधारणश्च वाक्यार्थविधिः, गुणस्यावर्जनीयत्वात् । अतः प्राकृतयोर्गुणविधिः । नचाशक्यता पृथ्वग्रतामुत्करस्य स्थविमानं च परिधेराश्रित्य प्राकृतकार्यसंपादनात् ॥

---

**यो हि खल्विति** । ननूत्तरस्मिन्विधाने प्राकृतमन्त्रस्य चोदकप्राप्तस्य बाधः स्यात्तद्वरं पूर्वस्मिन्नेव विधानमत आह—**पूर्वेति** । **दृश्यत इति** । इति प्रकृताविति शेषः । पूर्वस्मिन्विधानेऽप्यमन्त्रत्वं बाध्येतेति तुल्यमित्यर्थः । यद्यपि प्रकृतावप्यमन्त्रत्वं नाङ्गं किंतु स्तुत्यर्थमेव तथापि पदार्थपृष्ठभावेन शास्त्रातिदेशे सति चोदकप्राप्तं स्तुतिवचनं बाध्येतेति भावः । आहत्यामन्त्रत्ववचनस्य वायव्यपशुगतत्वे पूर्वपक्षानुत्थानात्प्रकृतिगतत्वेन व्याख्यातम् । सूत्रार्थस्तु—'हिरण्यगर्भः समवर्तताग्र'इत्याघारमाघारयतीत्यत्र पूर्वस्मिन्नेव मन्त्रविधिः स्याल्लिङ्गबलादिति ॥

**संस्कारे तु क्रियान्तरं० ॥ १८ ॥ किमिति** । किमिदमासादनं नियोजनं चादृष्टार्थमुत प्राकृतकार्यार्थं । तदर्थं च किमुत्करपरिधिविशिष्टा प्राकृतासादननियोजनान्तरविधिरुत प्राकृतयोरेवासादननियोजनयोरुत्करपरिधिलक्षणगुणमात्रविधिरिति संशयनिष्कर्षः । **आसत्तीति** । प्रकृतौ वेद्यां हवींष्यासादयतीति विहतस्यासादनस्य होमार्थतयोत्करदेशप्राप्तिः दृष्टमेव प्रयोजनम् । 'यूपे पशुं नियुञ्जीते'त्यस्यापि पश्वनपक्रमणं तदर्थयोरित्यर्थः । पूर्वत्र क्लृप्तप्राकृतकार्ये उत्तराघारे मन्त्रविधावपीह न प्राकृतकार्ये कर्मणि गुणविधिरित्युत्थितेः संगतिः । **तीक्ष्णेति** । वेदिं खात्वा तत्पांसूनां बहिर्देशे क्षिप्तानां राशिरुत्करः । सर्वैकत्र विद्यमानानां पांसूनामन्यत्र राशिरूपेण क्षेपे तीक्ष्णाग्रत्वस्य लोके दर्शनात्पांसुममीध्रोऽञ्जलिनाभिगृह्णातीत्यभिग्रहणवशाद्याज्ञिकाचाराद्वा तीक्ष्णाग्र इत्यर्थः । **साधारण इति** । वाक्यार्थविधिशेषः पक्षद्वयसाधारणः । **गुणपद**स्याप्रमादपाठत्वाय गुणविधेरवर्जनीयत्वादित्यर्थः । **अत इति** । पूर्ववाक्यप्रस्तुतस्य वाजिनस्य सामर्थ्यप्राप्तस्य पशोश्चानुवादत्वेन वाजिनपशुशब्दयोरुपपत्तेर्गुणविधावपि न विशिष्टोद्देशदोष इति भावः । **संपादनादिति** । तथाच प्राकृतयोर्वेदियूपयोर्निवृत्तिरिति भावः । यत्र तु पृथ्वग्रतासंपादनं न शक्यं तत्रादृष्टार्थमासादनान्तरमेव विधेयं, यथा सौत्रामण्यां 'ब्राह्मणस्य मूर्धन्यासादयती'त्यत्रेत्युक्तं भाष्ये । सूत्रार्थस्तु—आसादनादिसंस्कारश्रवणे क्रियान्तरमेव विधेयं स्यात् न गुणमात्रं श्रुत्या तद्विधायकत्वावगमादिति ॥

---

१ परिधिविशिष्टं. २ मुत्करणस्य.

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम् ॥ ४ ॥

**षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥ [अभ्यासात्तु प्रधानस्य ॥ २४ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ तत्पृथक्त्वं च दर्शयति ॥ २८ ॥ न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥]**

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम् ॥ समुच्चितं वा बाधः स्यात्कार्यैक्यात्तच्च वाक्यतः ॥ ६ ॥
अग्नौ होमाङ्गताकॢप्तेरतिदिष्टेन तुल्यता ॥ विनावृत्तिं द्वादशत्वसिद्धये स्यात्समुच्चयः ॥ ७ ॥

अग्नौ प्रकृतितो दीक्षाहुतयः षट् प्राप्तास्तासां च षण्मन्त्राः प्रकृतित एव प्राप्ताः 'आकूत्यै प्रयुजेऽग्नये स्वाहे'त्यादयः । अग्नावपरे षण्मन्त्राः 'आकूतिमग्निं प्रयुजं स्वाहे'त्यादयः । तेच दीक्षार्थतया विनियुक्ताः 'षड्भिर्दीक्षयती'ति । दीक्षाहुतीनां चाभ्यासः श्रूयते 'द्वादश जुहोती'ति । तत्र संशयः किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते समुच्चीयन्ते वेति । 'तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च ॥ वैकृताः प्राकृतान्मन्त्रान्बाधेरन्नेककार्यतः ॥' यद्यपि 'द्वादश जुहोती'ति वचनाद्धोमानामभ्यासस्तथापि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकेन प्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते ब्रूमः—'न[1] प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः ॥ दीक्षार्थतावलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते ॥ वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥' 'षड्भिर्दीक्षयती'ति दीक्षार्थता श्रुता । सा च स्वाहाकारलिङ्गानां होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते । सकृत्प्रयुक्तैरेव च षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे प्राकृतबाधे वा प्रमाणमस्ति तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृतवैकृतानां समुच्चयः ॥

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ॥ ५ ॥

**आग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ [शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥]**

एकादिना समुच्चेयं पुनर्निष्कृत इत्यदः ॥ बाधकं वा समुच्चेयमुभयीरित्युदीरणात् ॥ ८ ॥
आधानदक्षिणोपेतमुभयीरित्यनूद्यते ॥ ददातीत्यविधायित्वात्कार्यैक्याद्बाधकं भवेत् ॥ ९ ॥

अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं नैमित्तिकं वा । तत्र श्रूयते 'पुनर्निष्कृतो रथो दक्षिणा पुनरु-

---

**षड्भिर्दीक्षयतीति० ॥२३॥ प्रकृतित इति ।** ज्योतिष्टोमादित्यर्थः । यद्यप्यग्निज्योतिष्टोमयागयोर्न प्रकृतिविकारभावस्तथाप्याग्निकदीक्षणीयेष्टेः सौमिकदीक्षणीयेष्टिविकारत्वं दीक्षाहुतयश्चोभयदीक्षणीयेष्टेरेवाङ्गमित्यधिकरणप्रवृत्तिमुपपादयन्ति । पूर्वोत्तरपक्षयोरुपयोगितया मन्त्राणां दीक्षार्थत्वमाहुत्यभ्यासं चाह—**तेचेति** । वैकृता इत्यर्थः । **श्रूयते इति** । विकृताविति शेषः । पूर्ववदिहापि प्राकृतबाध इत्युत्थितेः संगतिः । **तत्रेति** । वैकृतानां मन्त्राणां विकृतौ प्रत्यक्षपाठस्यानर्थक्यपरिहारार्थं दीक्षाहुतिषु विनियोगे तथा 'षड्भिर्दीक्षयती'ति स्वाहाशिरस्कमन्त्राणां साक्षाद्दीक्षार्थत्वानुपपत्त्या दीक्षयतीत्यनेन दीक्षाङ्गभूताहुतिलक्षणमन्त्रकार्यं लक्षयित्वा तत्राहत्य मन्त्रान्तरविधाने च सति एककार्यत्वाद्वैकृतैः प्राकृतबाध इत्यर्थः । **यद्यपीति** । सति होमाभ्यासे अबाधेनैव वैकृतानां होमार्थत्वं संभवतीति भावः । आहत्यविधिबलेन मन्त्रबाधावश्यंभावे होमाभ्यासोऽपि वैकृतमन्त्राभ्यासेनैव संपादनीयः, नतु तद्बलात्प्राकृतमन्त्रसमुच्चय इत्याह—**तथापीति** । भवेदेवं यदि प्रत्यक्षवचनेनाहत्य प्राकृतमन्त्रकार्ये मन्त्रान्तरविधानं स्यात् । नत्वेतदस्ति । वचनेन दीक्षार्थत्वस्यैव बोधनात् । नच स्वाहान्तमन्त्राणां साक्षाद्दीक्षार्थत्वानुपपत्त्या दीक्षयतीत्यस्य प्राकृतमन्त्रकार्यलक्षकत्वमुक्तमिति वाच्यम् । आहुतिद्वारापि दीक्षार्थत्वस्य श्रुतस्योपपत्तौ दीक्षयतीत्यस्य कार्यलक्षकत्वायोगात् । एवंचाहत्य वचनाभावे आर्थिकमेवाहुत्यर्थत्वं वाच्यम् । तच्चाहुतिषु मन्त्रान्वयमात्रेणोपपन्नमिति मन्त्राभ्यासे प्रमाणाभावादाहुत्यभ्यासबलेन समुच्चय एव न्याय्य इति सिद्धान्तमाह—**प्रत्यक्षेणेति** । पाठोऽपि प्रकरणे निवेशमात्रेणोपपन्नः न बाधायालमिति भावः । सूत्रार्थस्तु—षड्भिर्दीक्षयतीति तासां प्रकृतीनामाहुतीनां मन्त्रविकारः स्यात् श्रुत्या मन्त्रान्तरविधानादिति ॥

**आग्न्याधेयस्य० ॥ ३० ॥** ननु पुनरनुष्ठीयमानमाधानं पुनराधानमिति नानयोः प्रकृतिविकारभावप्रसक्तिरिति भ्रमं

---

१ नत्र प्रत्यक्षवाक्येन.

त्स्यूतं वास'इत्यादि सेयं दक्षिणा किमाग्न्याधेयस्य दक्षिणानामेका देयेत्येवमादीनां निवर्तिका न वेति चिन्तायां सत्यप्येककार्यत्वे वचनादुभयोर्ददातीतिसमुच्चयप्राप्तावुच्यते । विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः । कथं पुनरुभयोर्ददातीति निर्देशः । उच्यते—कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते । तेन पूर्वदत्तसंप्रतिदीयमानापेक्षयोभयदाननिर्देशः ॥

आग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम् ॥ ६ ॥

## वासो वत्सं च सामान्यात् ॥ ३४ ॥

**वासो वत्सं समुच्चेयमन्वाहार्येण वा न वा ॥ अविरोधात्समुच्चेयं न कार्यैक्याद्विरोधतः ॥ १० ॥**

आग्रयणे 'वासो दक्षिणा वत्सः प्रथमजो दक्षिणे'ति श्रुतं वासो वत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्तकमिति सिद्धमेवोत्तरविवक्षायै प्राप्यते ॥

आग्रयणे वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् ॥ ७ ॥

## अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

**अन्वाहार्यस्य धर्मोऽत्र न कार्यः क्रियतेऽथ वा ॥ न तद्धर्मत्वतो मैवं साधनत्वप्रयुक्तितः ॥ ११ ॥**

अन्वाहार्यकार्योपपत्तेर्वासो वत्सं तद्धर्माल्लभत इत्येतदपि प्राप्तिसूत्रमेव ॥

आग्रयणे वत्से पाकाभावाधिकरणम् ॥ ८ ॥

## दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

**पाकोऽस्ति नो वा वत्से स्यादन्वाहार्यस्य दर्शनात् ॥ न वत्सनाशादश्रौती दक्षिणा मांसदानतः ॥ १२ ॥**

अन्वाहार्यपाको वत्से कर्तव्यो नेति संशये चोदकानुग्रहायं पक्त्वा वत्सं तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते । श्रुतं तु वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत, वत्सशब्दो वा मांसलक्षणार्थः स्यात् । नचैतन्न्याय्यं तस्मान्न वत्सस्य पाकः ॥

---

व्युदस्यति—**तच्चेति** । वाशब्दश्चार्थे । पुत्रहत्यादौ निमित्ते विधानात् श्रीकामाद्यर्थेन च विधानान्नैमित्तिकः काम्यश्चोभयथाप्याग्न्याधेयविकार इत्यर्थः । शीर्णः पुनः संस्कृतः पुनर्निष्कृतः जीर्णं पुनरपि तन्तुभिः स्यूतं पुनरुत्स्यूतं पुनरुत्सृष्टोऽनड्वानित्यादिशब्दार्थः । पूर्वत्र यथा द्वादश जुहोतीति वचनानुसारेण समुच्चयः एवमिहापि वचनादेव समुच्चय इत्युत्थितेः संगतिः । **उभयोरिति** । अग्न्याधेयिकी पुनराधेयिकी चेत्यर्थः । **विधीति** । वर्तमानापदेशतया विधिप्रत्ययाश्रवणादित्यर्थः । **ननु** द्वादश जुहोतीतिवद्वर्तमानापदेशेऽपि विधिः किं न स्यादत आह—**विध्यन्तरेति** । पुनर्निष्कृतादिविधिस्तुत्यर्थत्वादित्यर्थः । **ननु** आलम्बनाभावे कथं स्तुत्यर्थत्वनिर्वाह इति शङ्कते—**कथमिति** । अनेन प्रथमयज्ञेऽप्यग्निचयनसंभवेन द्वादश जुहोतीत्यादौ नैवं निर्देशोपपत्तिरिति वैषम्यान्तरमिति सूचितम् । **निर्देश इति** । तथाच पूर्वमग्न्याधेयदक्षिणानां दत्तत्वात्संप्रति पुनर्निष्कृतादिदाने उभयोरपि दत्तवान्भवतीत्येवं स्तुतिरुपपद्यत इति भावः । सूत्रार्थस्तु—अग्न्याधेयस्य नैमित्तिके गुणविकारे पुनराधेयदक्षिणादानं उभयोर्ददातीति वाक्यसंयोगात्प्राकृतीभ्योऽधिकं नतु निवर्तकमिति॥

**वासो वत्सं च सामान्यात् ॥ ३४ ॥ वासो वत्समिति** । अनेनैव सूत्रमपि व्याख्यातम् ॥

**अर्थापत्तेस्तद्धर्मा स्यात् ॥ ३५ ॥ एतदपीति** । नवम एव स्थानापत्त्या धर्मलाभस्य सिद्धत्वादिति भावः । सूत्रार्थस्तु—वासो वत्समन्वाहार्यधर्मकं स्यात् अन्वाहार्यकार्यपरिक्रयनिमित्तकदक्षिणाशब्दसंयोगादिति ॥

**दाने पाकोऽर्थलक्षणः ॥ ३६ ॥** यदर्थं पूर्वं प्राप्तिरुक्ता तन्निरूप्यत इति संगतिः । **चोदकेति** । प्रकृतौ पक्वस्यैव दक्षिणात्वादिहापि चोदकानुग्रहाय पक्वमेव देयं, वत्सश्रुतिश्च देयद्रव्यप्रकृतितयाप्युपपन्नेति भावः । **श्रुतमिति** । यद्द्रव्यभृतिभ्यो भृतित्वेनानत्यर्थं तद्वाचकदक्षिणाशब्दसंयोगाद्वत्स एव देयत्वेन श्रुतः पाके च मांसस्याश्रुतस्यैव दक्षिणात्वं स्यादथवा मांसस्य दक्षिणात्वेन श्रुतत्वसिद्ध्यर्थं वत्सशब्दो मांसलक्षकः स्यात् तदुभयमप्ययुक्तमित्यर्थः । एवंच विकृतिद्रव्यस्य मांसस्याश्रुतत्वाद्वत्सशब्दस्य न देयप्रकृतिपरत्वं साक्षाद्दक्षिणात्वे बाधकाभावादिति भावः । सूत्रार्थस्तु—प्रकृतौ दाने अन्वाहार्यसिद्ध्यर्थं पाकोऽर्थसिद्ध इह तु न तथेति नासौ कर्तव्य इति ॥

आग्रयणे वाससि पाकाभावाधिकरणम् ॥ ९ ॥

**पाकस्य चान्नकारितत्वात् ॥ ३७ ॥**

वासस्यस्ति न वा पाको विनाशाभावतोऽस्त्यसौ ॥ वैयर्थ्यादप्यशक्यत्वात्पाको वाससि नोचितः ॥ १३ ॥

अथ वाससि पाकः स्यान्नेति संशये विरोधाभावात्पच्येत प्रयोजनाभावात्त्वपाकः । प्रकृतौ हि दक्षिणाभूतान्नसंपत्त्यर्थकः पाको नादृष्टार्थस्तस्मान्न वाससः पाकः ॥

आग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम् ॥ १० ॥

**तथाऽभिघारणस्य ॥ ३८ ॥**

अभिघारोऽस्ति नो वात्र शक्यत्वाद्वत्सवाससोः ॥ अस्त्यन्वाहार्यवन्नैवं स्वादुताग्रा असंभवात् ॥ १४ ॥

अभिघारणमन्वाहार्यधर्मः किं वासोवत्से कर्तव्यं न वेति प्रकृतावदृष्टार्थत्वादिह विरोधात्कर्तव्यम् । नैवम् । स्वादिमार्थं हि तत् दृष्टेनैवान्नानामुपकरोति । नच वासोवत्सयोः स्वादिम्ना प्रयोजनमस्ति । अतोऽभिघारणनिवृत्तिः ॥

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ॥ ११ ॥

**द्रव्यविधिसंनिधौ संख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ [समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ यस्य वा संनिधाने स्याद्वाक्यतो ह्यभिसंबन्धः॥४१॥ असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥ शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥ अनियमोऽविशेषात् ॥ ४६ ॥ भागित्वाद्वा गवां स्यात् ॥४७॥ प्रत्ययात् ॥४८॥ लिङ्गदर्शनाच्च ॥४९॥]**

दक्षिणा द्वादशशतं तस्येत्येतद्गवादिषु ॥ सर्वेषु केषुचिद्वाद्ये प्रत्येकं मिलितेषु वा ॥ १५ ॥
संख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽग्रिमः ॥ वाक्यभेदान्न तर्हि किंतु मिलितेषु समुच्चयात् ॥ १६ ॥
संख्यानौचित्यतो धान्ये सर्वेषां न समुच्चयः ॥ असर्वेष्विति पक्षेऽपि पशवो वैकमेव वा ॥ १७ ॥
संख्यौचित्येन पशवो नैतत्तस्येत्यनन्वयात् ॥ एकत्वेऽप्यत्र यत्किंचिन्माषा वा गाव एव वा ॥ १८ ॥
यत्किंचिन्नियमाभावान्माषाः सन्ति हि तत्त्वतः ॥ माषा निराकृता गावः प्राथम्याच्चोपकारतः ॥ १९ ॥
तस्येति वाक्याद्गोद्रव्यं न युक्तः प्रकृतः क्रतुः ॥ संख्यान्तरं चेद्विकृतौ स्याद्गवां बाध्यतामियम् ॥ २० ॥

ज्योतिष्टोमे श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणे'ति । तत्र संशयः किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसंख्या, उतैकस्य

---

**पाकस्य चान्नकारितत्वात् ॥ ३७ ॥ विरोधेति** । पूर्ववच्छ्रुतद्रव्यस्य पाकेन नाशाभावादित्यर्थः । अनेनैव संगतिरपि सूचिता । **ननु** कथं प्रयोजनाभावः पाकगतविकारलक्षणस्य प्राकृतप्रयोजनस्य सद्भावात् । भवति हि वाससि पाकेन शुक्लरूपोत्पत्तिलक्षणो विकार इत्यत आह—**प्रकृताविति** । प्रकृतौ न विकारमात्रं पाकस्य प्रयोजनं किं त्वदनीयद्रव्यसिद्ध्यर्थतया लोकसिद्धत्वात्पाकस्यान्नलक्षणदक्षिणाद्रव्यसिद्धिः प्रयोजनमिह च वासोरूपद्रव्यस्य पाकंविनापि सिद्धेः प्रयोजनाभाव इत्यर्थः । सूत्रे निवृत्तिरिति शेषः ॥

**तथाऽभिघारणस्य ॥ ३८ ॥** इहत्वदृष्टार्थत्वान्न प्रयोजनलोप इत्युत्थितेः संगतिः । **प्रकृताविति** । नच स्वादिमार्थतया दृष्टार्थत्वमेवेति वाच्यम् । स्वादिमा हि तृप्तावुपयुज्यते । नचान्वाहार्यदानं तृप्त्यर्थं किंत्वानत्यर्थम् । नचानतौ स्वादिम्न उपयोग इति भावः । **स्वादिमेति** । अन्वाहार्यदानस्य तृप्त्यर्थत्वाभावेऽपि वस्तुतस्तृप्त्यर्थमेवान्नस्याभिलषणीयत्वेन तृप्त्यर्थेनापि स्वादिम्नानतौ विशेषसंभवेन दृष्टे संभवति नादृष्टं परिकल्प्यमिति भावः । **स्वादिम्नेति** । इत्थंभावे तृतीया । स्वादिमात्मकं प्रयोजनं नास्तीत्यर्थः ॥

**द्रव्यविधिसंनिधौ० ॥ ३९ ॥ श्रूयत इति** । आध्वर्यवकाण्ड इति शेषः । छान्दोग्यवाक्यस्योदाहरणत्वसंभवासंभवप्रकारस्तु तन्त्ररत्ने द्रष्टव्यः । प्रथमपक्षाद्विशेषमाह—**संहतैरिति** । द्वितीयपक्षाद्विशेषमाह—**एकजातीयस्येति** ।

---

१ भावान्न पाकः. २ नैव प्रकृतावन्नानामुप.

यस्यकस्यचित्, अथवा माषाणामाहोस्वित्सर्वैः संहतैः संपाद्या किंवैकजातीयस्यैवानियमेन यद्वा पशूनां तदापि किमनियमोऽथवा गवामिति 'तत्र तस्ये'ति षष्ठ्यन्तेन गवादीनि प्रधानत्वेनोद्दिश्य[१] तद्गुणभूता संख्या विधीयमाना प्रतिप्रधानं संबध्यते । अतः प्रत्येकं द्वादशशतमिति प्रथमः पक्षः । नात्र गवाद्युद्देशेन संख्या विधीयते । नह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानं तदङ्गत्वेन च संख्याविधानं संभवति । तस्माद्गवादीनि द्रव्याणि संख्या च दक्षिणया संबध्यते सोभयविशिष्टा विधीयते । तत्रैकस्मिन्द्रव्ये निविष्टायां संख्यायां तद्विशिष्टा दक्षिणानुष्ठिता भवति । तस्मादेकस्य संख्या । तत्राप्यनियमः विशेषाभावात् । अथवा माषाणां स्यादानन्तर्यात् । नैतदपि युक्तं, चशब्दश्रुत्या ह्यन्यसहिता माषा निर्दिष्टाः । तेनान्यसहितानां माषाणां संख्या तेषां च बहुत्वात्तस्येति प्रतिनिर्देशासंभवात् । तस्येति तु क्रतुनिर्देशोऽङ्गीकर्तव्यः । यद्वा गवादिसमाहाराभिप्रायं तस्येत्येकवचनम् । यदा च क्रतुनिर्देशः तदा यद्यपि चशब्दो न स्यात्तथापि गवादिद्रव्यविशिष्टा द्वादशशतसंख्याविशिष्टा च दक्षिणा श्रुता, सहितानि च गवादीनि दक्षिणा नैकैकमतो दक्षिणापरिच्छेदिका संख्या सर्वेषु सहितेषु निवेष्टुमर्हति । तस्मात्सर्वसंपाद्या संख्या । नैवम् । नहि तस्येतिशब्दो वाक्यगतेन द्रव्येण संबन्धं

---

गवादयः षट् पशुजातीया व्रीह्यादयश्चत्वारो धान्यजातीयास्तत्रानियमेन पशुजातीयस्य वा धान्यजातीयस्य वेत्यर्थः । द्वितीयपक्षस्तु दशद्रव्यमध्ये यस्यकस्यचिद्द्रव्यस्येत्येवंरूपो नतु धान्यादिजातीयस्येत्येवंरूप इति भावः । **यद्वेति** । पशुजातीयस्यैवेत्यर्थः । यद्यानतौ आधिक्याभावाद्वासोवत्सेऽभिधारणनिवृत्तिस्तर्हि तदाधिक्यबलात्प्रतिद्रव्यं द्वादशसंख्यान्वय इत्युत्थितेः संगतिरित्याहुः । अध्यायसंगतिस्त्वाकर एव तस्य धेनुरित्यत्र स्पष्टा । **तत्रेति** । संख्यायाः स्वतो दक्षिणान्वयायोग्यतया गवादीनां दक्षिणात्वविधिपरेपि वाक्ये वाक्यभेदाश्रयणेन गवाद्युद्देशेन संख्या विधेयेति भावः । **ननु** षष्ठ्या उपसर्जनत्वेन प्रतीयमानस्य कथमुद्देश्यत्वमत आह—**प्रधानत्वेनेति** । दध्नेन्द्रियकामस्येतिवत्प्राधान्ये षष्ठीत्यर्थः । उद्देश्यगतसंख्याया अविवक्षितत्वात्तस्येत्येकवचनस्य प्रत्येकाभिप्रायेण कथंचिदुपपत्तिर्बोध्या । **नहीति** । द्रव्यपरिच्छेदद्वारा संख्याया अपि दक्षिणान्वययोग्यत्वान्नैकवाक्यता भजनीया, एकवाक्यताबलादेव षष्ठीश्रुत्यवगतमपि द्रव्यसंबन्धं विहाय सामानाधिकरण्यावगतो दक्षिणासंबन्ध एव संख्यायाः स्वीक्रियत इति भावः । **ननूभयोर्दक्षिणासंबन्धपक्षेऽपि दक्षिणोद्दे**शेन संख्याया द्रव्याणां च विधानाद्वाक्यभेदस्तुल्य इत्यत आह—**सेति** । उभयविशिष्टदक्षिणाविध्यङ्गीकारान्न दोष इत्यर्थः । एवं प्रथमपक्षं निरस्य द्वितीयमवतारयति—**तत्रेति** । **आनन्तर्यादिति** । माषाणामव्यवहितत्वेन बुद्धिविपरिवृत्तेस्तत्रैव संख्यान्वय इत्यर्थः । **नैतदपीति** । माषाणामानन्तर्येऽपि न केवलानां तेषां विपरिवृत्तिः किंतु चशब्दबलादन्यसहितानामिति तादृशानामेव दक्षिणान्वयात्सर्वसंपाद्या संख्येत्यर्थः । भवेदेवं यदि माषाणां प्रथमं चशब्दार्थान्वयः पश्चात्संख्यान्वय इत्यत्र किंचिन्नियामकं स्यात् । उभयोरपि पदार्थान्तरार्थत्वाविशेषात्तश्च केवलमाषैरेव संख्यान्वयोऽस्त्वित्यत उक्तम्—**श्रुत्येति** । इह हि संख्या तच्छब्दनिर्दिष्टेन संबध्यते न गवादिशब्दनिर्दिष्टेन । तच्छब्दश्च सर्वनामत्वान्निर्दिष्टप्रतिनिर्देशकत्वेन प्रथमनिर्देशसापेक्ष इति संख्यान्वयो विलम्बितः । चशब्दस्तु प्रथमनिर्देश एव वर्तत इति तदन्वयः प्राथमिक इत्यर्थः । झटित्यवगमाभिप्राया श्रुतित्वोक्तिः । तत्त्वतस्तु यथा प्रकृतेः परस्तादुच्चार्यमाणः प्रत्ययः स्वार्थं प्रकृत्यर्थान्वितमेवाभिधत्ते तद्वच्चशब्दो यस्मात्पर उच्चार्यते तदर्थमर्थान्तरान्वितमन्यनिरपेक्षे उच्चारितमात्र एवाभिधत्ते इति प्रकृतिप्रत्ययवच्चशब्दस्थलेऽपि मुख्यमेव श्रुतित्वम् । अन्यथा पुरस्तादप्युच्चार्यमाणः स्वार्थं कुर्यादित्युक्तं तच्चिन्त्यम् । लोकवेदयोश्चशब्दस्य व्यवहिततयापि प्रयोगदर्शनेन पुरस्तात्प्रयोगेऽपि तदर्थप्रतीतेरिष्टत्वात् । तथासति सर्वेषामपि निपातानां श्रुतित्वापत्तिः, ससंबन्धिकशब्दमात्रस्य श्रुतित्वापत्तिश्चेति दिक् । क्रतुनिर्देशपक्षे चशब्दाभावेऽपि सर्वसंपादनीया संख्येति सिध्यतीत्याह—**यदेति** । समुदायनिर्देशपक्षे तु चशब्दं विना समुदाय एव न स्यादिति भावः । **सहितानीति** । सहितानां दक्षिणात्वस्यानुपदमेव वक्ष्यमाणत्वादिति भावः । प्रथमं तस्येत्यनेन क्रतुनिर्देश इत्युक्तं तद्दूषयति—**नहीति** । वाक्यसंनिहितगवादिनिर्देशकत्वे संभवति प्रकरणसंनिहितक्रतुनिर्देशकत्वमयुक्तं प्रकरणोपस्थितेर्विलम्बितत्वात् तथा द्रव्यनिर्देशे यस्यैव द्रव्यस्य निर्देशस्तद्गता संख्योपादेयेति प्रवृत्तिविशेषकरत्वं, क्रतुनिर्देशे तु संख्यायाः क्रतुसंबन्ध एव फलं नान्यत्, क्रतुसंबन्धश्चासत्यपि क्रतुनिर्देशे प्रकरणादेव सिध्यतीत्यप्रवृत्तिविशेषकरत्वादानर्थक्यं चेत्यर्थः । यदुक्तं समुदाया-

---

१ नोपदिश्य.

लभमानः प्रकृतिविशेषं च कुर्वन्नप्रकृतेन क्रतुना संबन्धमानर्थक्यं चावलम्बते। तस्मात्तस्येति गवादीनां निर्देशः। तत्र चैकवचनान्तत्वान्न संनिहितानां सर्वेषां निर्देशः नापि समाहारस्य। तस्याशाब्दत्वात्। किंत्वेकजातीयकस्य। तत्राप्यनियमो विशेषाभावात्। अथवा पशूनामेव न माषादीनाम्। तेषामाढकादिपरिमाणान्तरापेक्षया संख्याव्यवहारो लोके न स्वरूपतः भृतित्वाभावादिति दर्शितं भाष्ये। अतएव माषैरप्यनन्तरैर्न संबध्यते। अतः पशूनामेव तत्राप्यनियमोऽविशेषात्। एकवचनान्तत्वाच्च तस्येति न बहुवचननिर्दिष्टानां माषादीनां निर्देशः। अतएवाजाविनामपि न निर्देशः। गवादीनि चत्वारि परिशिष्टानि। तत्र महोपकारित्वादप्रतिषिद्धत्वान्मुख्यत्वाच्च गवां निर्देशः। तेनायमर्थः—गवादिद्रव्याणि तस्य गोद्वादशशतं दक्षिणेति तस्माद्गवामेषा संख्या॥

विभज्य गोदक्षिणाया दानाधिकरणम्॥ १२॥

## तस्य दानं विभागेन प्रदानानां पृथक्त्वात्॥ ५०॥ [परिक्रयाच्च लोकवत् ॥ ५१॥ विभागं चापि दर्शयति॥ ५२॥]

**गोदाने विहिते स्वेच्छा नियतिर्वान्तिमेऽपि किम्॥ अविभागो विभागो वा नियमानुक्तितोऽग्रिमः॥ २१॥**
**अविभागो बहुत्वोक्तेर्बहुत्वं न विवक्षितम्॥ विभागे स्वामिभिः स्वत्वसिद्धेर्लिङ्गं च दृश्यते॥ २२॥**

किमेषा दक्षिणा ऋत्विग्भ्योविभज्याविभज्य वा देया किमविभज्यैव उत विभज्यैवेति संशये विशेषाश्रवणादनियमः। अथवा 'ऋत्विग्भ्यो दक्षिणां ददाती'ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादविभज्यैव सहितेभ्यो देया न विभज्यैकैकस्मै बहुवचनविरोधादिति प्राप्तेऽभिधीयते—'ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्। तेन तेषां प्रधानत्वाद्बहुत्वं न विवक्षितम्॥' अतः प्रति-

---

भिप्रायमेकवचनमिति तत्र वक्तव्यं किं संहतानां द्रव्याणामेतच्छब्दनिर्देशः एकत्वं तु समुदायान्वयि उत तच्छब्देनैव समुदायो निर्दिश्यते इति। नाद्य इत्याह—**तत्रचेति**। तच्छब्दप्रातिपदिकस्य गवादिनिर्देशकत्वे एकवचनस्यापि द्रव्यगतसंख्यापरत्वमेव युक्तं नतु समुदायगतसंख्यापरत्वं समुदायस्य प्रकृत्यर्थत्वाभावादिति भावः। न द्वितीय इत्याह—**नापीति**। **अशाब्देति**। गौश्चेत्यादिवाक्ये शब्देनानिर्दिष्टतया वाक्यसंनिहितपरतच्छब्दार्थत्वाभावादित्यर्थः। नच गौश्चेत्यादिवाक्ये चशब्देन साहित्यनिर्देशादिदमयुक्तमिति वाच्यम्। चशब्देनापि गवाद्युपसर्जनत्वेनैव निर्दिष्टस्य तच्छब्दनिर्देश्यत्वायोगादिति भावः। एवं चतुर्थपक्षं दूषयित्वा पञ्चममवतारयति—**किंत्विति**। पशुजातीयस्य धान्यजातीयस्य वैकजातीयस्यानियमेन तच्छब्दनिर्देशः संख्यान्वयश्चेत्यर्थः। यद्यप्यत्राप्येकजातीयत्वस्याशब्दत्वात्पूर्वोक्तदूषणानिवृत्तिस्तथापि संख्याया एव भेदमाश्रित्य प्रवृत्तेरौचित्यमाश्रित्यायं पक्ष उद्भावितस्ततः पशूनामेव पशुजातीयस्यैव न माषादीनां न धान्यजातीयस्येत्यर्थः। **तेषामिति**। धान्यानां मेयत्वेन परिमाणत एव लोके संख्याव्यवहारो न स्वरूपतः। किंचास्मिन्वाक्ये संख्या भृत्यर्थं श्रूयते। भृतित्वं च न धान्यानां स्वरूपतः। अतिस्वल्पत्वाल्लोके पञ्चभिरश्वैः परिक्रीत इतिवत्पञ्चभिर्व्रीहिभिः परिक्रीत इत्यव्यवहाराच्च। तस्मादाढकादिपरिमाणद्वारैव संख्यान्वयो न स्वरूपत इति भाष्ये प्रपञ्चितमित्यर्थः। इदं दूषणं तृतीयपक्षेऽपि तुल्यमित्याह—**अतएवेति**। पशुजातीयस्याश्रुतत्वात्तेन रूपेणैव संख्यान्वयासंभवाच्चतुर्थपक्षदूषणेनैवायं पक्षो दूषित इत्यभिप्रेत्य पशुजातीयान्वयपक्षेपि वस्तुतः पशुजातीयस्य गोत्वादिना प्रातिस्विकरूपेणैव संख्यान्वयो वक्तव्यः। तत्रच विशेषनियामकाभावादनियम इति पक्षान्तरमाह—**तत्रापीति**। एतत्पक्षदूषणपुरःसरं सिद्धान्तं परिशेषयति—**एकेति**। माषादीनामिति दृष्टान्तार्थम्। **महोपकारित्वादिति**। दधिपयःप्रभृतिभिरिहोपकुर्वन्ति दानपूजादिना परत्रेति गवां महोपकारित्वमश्वतरगर्दभयोर्न महोपकारित्वम्, अश्वानां क्रयादिना बहुधनलाभान्महोपकारित्वेऽपि 'नाश्वं क्रीणीते न केसरिणो ददाति नोभयतोदन्तं प्रतिगृह्णाती'त्यादिना निषेधान्नाश्वनिर्देश इत्यर्थः। संख्याविधेरनिषिद्धविषयत्वोपपत्तौ न तद्बलादश्वादिनिषेधसंकोचः कल्पनीय इति भावः। **मुख्यत्वादिति**। प्रथमातिक्रमे कारणाभाव इति भावः। **सूत्रार्थस्तु**—गवादिद्रव्यविधिसंनिधौ श्रूयमाणा संख्या तेषां प्रत्येकं स्यात्संख्याया गुणत्वादिति॥

**तत्र दानम्०॥ ५०॥** पूर्वत्रैव विशेषचिन्तनात्संगतिः। **विशेषेति**। विभागाविभागयोरुभयोरप्यश्रुतत्वादित्यर्थः। **अथवेति**। ऋत्विजां कारकार्थया चतुर्थ्या दानं प्रति गुणत्वावगमेन ऋत्विगुद्देशेन दानविधानासंभवात्तद्विशिष्टमेव दानं विधेयम्। तत्र विशेषणभूतानामृत्विजां बहुत्वसंख्याया विवक्षितत्वादविभज्य परिषद एव देयं न प्रत्येकमित्यर्थः। **परिक्रयार्थेनेति**। परिक्रयलक्षणप्रयोजनेन निमित्तेन परिक्रयार्थत्वेनेति यावत्। **स्थितमिति**। पूर्वपाद इति शेषः। **तेनेति**। तथाच ऋत्विजां प्राधान्येनोद्देश्यत्वसंभवात्तदुद्देशेन दानमात्रं विधीयते नतु विशिष्टं, तत्र चोद्देश्यगतस्य ऋत्वि-

प्रधानावृत्तेरेकैकस्यैव तद्दानम् । नचानियमः । आनमनार्थं हि तद्दानम् । यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति तेन तेषामानतिर्नान्यथा । तेनात्सीयं द्रव्यमृत्विजामुपयोगक्षमं कुर्यादिति दानविधेरर्थः । विभज्य च ददता संपूर्णं तदनुष्ठितं भवति । परिषदे तु ददता न तत्संपूर्णमनुष्ठितं स्यात् । पुनर्विभागापेक्षत्वात्तेषामुपयोगस्य 'तुथो वो विश्ववेदा विभजत्वि'ति च मन्त्रवर्णस्यापाक्षिकत्वाच्छागन्यायेनापि सिद्ध्यति विभागः । यत्र त्वेकमेव द्रव्यं दक्षिणा यथा 'धेनुर्दक्षिणान्वाहार्यो दक्षिणे'ति, तत्र विभागासंभवादविभज्यैव दानम् ॥

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभाभाधिकरणम् ॥ १३ ॥

**समं स्यादश्रुतत्वात् ॥ ५३ ॥ [अपि वा कर्मवैषम्यात् ॥ ५४ ॥ अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥]**

**स विभागः समो नो वा विशेषाश्रवणात्समः ॥ वैषम्यं स्याद्यथायासमेवं तत्स्यात्समाख्यया ॥ २३ ॥**

स्थिते विभागे चिन्त्यते किं समो विभागः स्यादुत प्रयासानुरूपोऽथवा समाख्यानुरूप इति । विशेषाश्रवणात्साम्ये लोकवद्वा प्रयासानुरूप्ये प्राप्ते द्वादशाहे दीक्षाक्रमवाक्यगताध्यार्दिसमाख्यानाद्ब्राह्मणाच्छंसिप्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते ॥

---

त्वबहुत्वस्याविवक्षितत्वात्प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वाच्च प्रत्येकमेव दानम् । चतुर्थी च प्राधान्य एवानुकूला प्रधानीभूतकर्मकारकापेक्षयापि संप्रदानस्य प्रधानत्वादिति भावः । **नचेति** । यद्यपि पूर्वदूषणेनैवानियमपक्षोऽपि निरस्तस्तथापि दूषणान्तरार्थं भेदोपन्यासः कृतः । **परिषद इति** । अनियमपक्षे यदा परिषदे दीयते तदा संपूर्णशास्त्रानुष्ठानं न स्यादित्यर्थः । यद्वा नचानियम इत्यस्यानियमश्च न भवति उक्तयुक्तेरित्यर्थः । अत्र परिषद उद्देशेन क्रियमाणस्य दानत्वं मुख्यमेवाङ्गीकृत्य तस्यानत्यर्थत्वमृत्विगुपयोगक्षमत्वं विना न निर्वहतीति तन्निर्वाहाय प्रत्येकं दानमुपपादितम् । प्राभाकरैस्तु परोपयोगक्षमत्वाभावेन परस्वत्वापत्तिपर्यन्तत्वाभावात्परिषदि दानं त्यागमात्रं न तु मुख्यं दानमित्युक्तम् । एवं न्यायेन विभागं प्रतिपाद्याभ्युच्चयमप्याह—**तुथ इति** । हे गावः, विश्वस्य विभागावेदिता तुथो नाम देवः दक्षिणाविभाजकः वः युष्मान्विभजत्विति मन्त्रार्थः । यदि च विभज्यैव दानं न स्यात्तदा विभागस्यैव पाक्षिकत्वेन विभागप्रतिपादकमन्त्रस्यापि पाक्षिकत्वं स्यात्, 'तस्माद्यथा 'अग्नीषोमीयं पशुमालभेते'ति विधिवाक्यस्य यत्किंचित्पशूपादानेऽप्युपपत्तावपि 'छागस्य वपाया मेदस' इति मन्त्रवर्णात्पाक्षिकत्वपरिहाराय छाग एव पशुरिति नियमः स्वीक्रियते तथात्रापि विभागनियम इत्यर्थः । नचैवं तन्न्यायेनैव विभागनियमसिद्धेरेतदधिकरणवैयर्थ्यमिति वाच्यम् । परिषदे दानेऽपि ऋत्विजां परस्परं यो दक्षिणाविभागो भावी तदभिप्रायेणापि मन्त्रवर्णोपपत्तेर्मन्त्रवर्णमात्रान्नियमासिद्ध्याधिकरणावश्यंभावादिति भावः । **असंभवादिति** । धेनोर्विभागे मांसमेव दक्षिणा स्यान्न धेनुः हिंसादोषश्च स्यादिति भावः । अत्र समुदायरूपस्यान्वाहार्यस्यैकत्वं न मुख्यं किंत्वेकस्थाल्यां पाकेन संश्लेषनिमित्तम् । ततश्चैकस्थाल्यां पक्वस्यान्नराशेश्चतुर्धा विभज्य चतुर्भ्यो दाने धेन्वादिवत्कस्यापि विरोधाभावात्प्रागुक्तप्रधानावृत्त्या नमनार्थत्वादिना विभज्यैव दानं द्वादशशतादिवन्न्याय्यमित्यन्वाहार्येऽप्यविभागप्रतिवचनं चिन्त्यम् । सूत्रार्थस्तु—तत्र गवादिषु दानं विभागेन स्यात् । प्रदानानां तदृत्विग्भ्यो देयानां विभागानां भिन्नत्वाद्विभज्य दानं विना तेन तेनर्त्विजा तस्य तस्य भागस्य संबन्धयितुमशक्यत्वादिति ॥

**समं स्यादश्रुतत्वात् ॥ ५३ ॥ स्थित इति** । पूर्वाधिकरणे विभागे प्रतिपादिते तन्निर्वाहकत्वेनेदं चिन्त्यत इत्यर्थः । अतएव संगतिः । **लोकवदिति** । समाख्यायाः विकृतौ श्रुताया न प्रकृतौ लोकन्यायप्राप्तप्रयासानुरूप्यबाधकत्वमिति भावः । **द्वादशाहे इति** । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादिवाक्ये 'अर्धिनो दीक्षयति तृतीयिनो दीक्षयति पादिनो दीक्षयती'त्यर्धिसमाख्यया ब्राह्मणाच्छंस्यादीनां, तृतीयिसमाख्यया आग्नीध्रादीनां, पादिसमाख्यया पोत्रादीनां च व्यवहारदर्शनादर्धादिसंबन्धं विनार्ध्यादिव्यवहारायोगात्प्रधानेभ्यो ब्रह्मादिभ्यो यद्दीयते तस्यार्धं ब्राह्मणाच्छंस्यादिभ्यः तृतीयांश आग्नीध्रादिभ्यः चतुर्थांशः पोत्रादिभ्यो देय इति नियमः कल्प्यत इत्यर्थः । यद्यपि विकृतिगता समाख्या तथापि सत्रद्वादशाहगतत्वात्सत्रे दक्षिणाभावात्तत्रत्यदक्षिणादानाभिप्रायेण समाख्याया उपपादयितुमशक्यतया द्वादशाहप्रकृतिभूतज्योतिष्टोम एव लोकन्यायेन प्राप्तप्रयासानुरूप्यबाधेनेत्थं नियमः कल्प्यः । अन्यथा वैदिकसमाख्याया असंगतत्वापत्तेः । नचार्ध्यादिसमाख्याया बलाद्विकृतावेव फलार्धाद्यंशकल्पनं किं न स्यादिति वाच्यम् । 'ऋद्धिकामाः सत्रमासीर'न्नित्यादिफलं न परिषद्गामि किंतु प्रत्येकगामीति षष्ठे व्यवस्थापनादिति भावः ॥

भूनाम्नि धेनुदानेन निखिलदक्षिणाबाधाधिकरणम् ॥ १४ ॥

**तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात्सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥ [सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवायाद्धि कर्मभिः ॥ ५७ ॥ चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥]**

भूनाम्नि धेनुर्बाधेत गाः किंवा कृत्स्नदक्षिणाम् ॥ धेन्वा विशेषितत्वाद्गा दक्षिणैकत्वतोऽखिलाम् ॥ २४ ॥

एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता । तस्यां हि निरूपितायां विकृतिषु बाधाबाधविचारः सुखेन वर्तिष्यत । इदानीं बाधाबाधौ विचार्येते। अस्ति भूनामैकाहः 'अथैष भूर्वैश्वदेवस्तस्य धेनुर्दक्षिणे'ति । तत्र संशयः किं धेनुर्गवामेव विकार उत सर्वस्य गवाश्वादेरिति। तदर्थमिदं विचार्यते, किं गवादीनां प्रत्येकं दक्षिणात्वमुत सहितानामिति । तत्र प्रत्येकं दक्षिणात्वं न्याय्यम् । कथम् । गवादिशब्दा जातिवचना: दक्षिणाशब्दो गुणवचनः स हि भृतित्वेन गुणेन वर्तते । जातिगुणयोश्च जातिर्विशेष्यत्वेन । गुणस्तु विशेषणत्वेन । नीलमुत्पलं शुक्ला गौरित्यादिषु सार्वजनीनमेतत् । यच्च विशेष्यं तत्प्रधानमेव । अतो गवादीनां प्राधान्यं प्राधान्यात्तेषां गुणभूता दक्षिणा प्रत्येकमेतैः संबध्यते गवादयो दक्षिणारूपाः कार्या इति । एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निवेशमानाया धेन्वाः दक्षिणात्वमुपपन्नम् । तत्र गोलिङ्गेन धेनुत्वेन गवां निवृत्तिर्गम्यते । तस्माद्गवामेव निवर्तिका धेनुर्नाश्वादीनामिति प्राप्तेऽभिधीयते—'गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम् ॥ ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना ॥' यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणाशब्दो बहुवचनान्तः स्यात् । गुणवचनशब्दस्य व्याकरणे परोपसर्जनार्थत्वात् स्वप्राधान्ये तु नैष दोषो भवति । तथाहि यदानतिकरं तद्दक्षिणेत्युच्यते एकाचानतिरिति तदुपाधिको दक्षिणाशब्द एकवचनं लभते । गवादीनि तु तत्र विशेषणानि। नच विशेषणवशेन विशेष्ये संख्या

---

**तस्य धेनुरिति०** ॥ ५६ ॥ वृत्ताधिकरणत्रयस्य करिष्यमाणबाधोपोद्घाततवादध्यायसंगतिं करिष्यमाणविचारस्यावसरलक्षणां च संगतिमभिप्रेत्याह—**एवमिति । वैश्वदेव इति ।** विश्वेदेवदेवताक इत्यर्थः । अतएव विश्वत्वत्याः स्तोत्रीया अस्मिन्क्रतौ विहिताः । **ननु** प्रत्येकं दक्षिणात्वं गवाद्युद्देशेन दक्षिणात्वविधौ स्यात्, नचात्र तत्संभवः । तथासति गवादीनां प्रत्येकशब्दोपात्तानामुद्देश्यत्वे प्रत्येकं दक्षिणाशब्दस्यावृत्त्या समर्थनीयत्वेन विध्यावृत्तेर्वाक्यभेदप्रसङ्गादिति शङ्कते—**कथमिति । गवादिशब्दा इति ।** अयं भावः—गवादीनामुद्देश्यत्वेऽपि न वाक्यभेदः । चशब्देन सहितानां प्रतीतेः । **ननू**द्देश्येषु साहित्यस्याविवक्षितत्वादिदमयुक्तमितिचेत् । नहि वयं साहित्यस्य विवक्षां ब्रूमः किंतु साहित्यस्याविवक्षितत्वेऽपि दक्षिणान्वयदशायां संहततयोपस्थितत्वमात्रेण युगपदेव दक्षिणात्वान्वयेनावृत्त्यभावात् तेन यथैकशब्दोपात्तानां बहूनामुद्देश्यत्वेऽपि 'ऋद्धिकामाः सत्रमासीरन्नि'त्यादौ न वाक्यभेदः । बहूनामप्येकशब्दोपादानमहिम्ना युगपदेव विधेयसत्रसंबन्धादेवमिहापि । पश्चात्तु परमुद्देश्यगतत्वात्साहित्यमविवक्षितं ऋद्धिकामगतबहुत्ववदिति । अयमेव प्रकारो ग्रन्थकारस्य संमतः । अन्यथा सिद्धान्ते कथं दक्षिणाशब्दस्य बहुवचनान्तत्वमापादयेत् । प्रत्येकं दक्षिणाशब्दस्य संबन्धे तदापादनाप्रसङ्गात् । **भृतित्वेनेति ।** उत्साहकर्मणो दक्षतेर्निष्पन्नस्य दक्षिणाशब्दस्योत्साहकरभृत्यर्थकत्वादिति भावः । **विशेष्यत्वेन** प्रतीयत इति शेषः । एवमग्रेऽपि । **अत इति ।** गवादीनां प्राधान्ये तदुद्देशेन दक्षिणाविधिर्नतु गवादिविशिष्टदक्षिणाविधिरिति भावः । **ननु** प्रत्येकं दक्षिणात्वेऽपि धेनुः सर्वदक्षिणास्थाने निविशमाना सर्वनिवर्तिका स्यादत आह—**एवमिति । गवादीनामिति ।** गवाद्युद्देशेन दक्षिणात्वविधौ गवादीनामन्यत्र विनियोगाभावाददृष्टार्थत्वं स्यात् । गवादिविशिष्टदक्षिणाविधौ तु तस्य 'ऋत्विग्भ्यो दक्षिणां ददाती'ति वचनेन ऋत्विगानमनार्थत्वान्नादृष्टार्थत्वप्रसक्तिरित्यर्थः । **ननु** गवाद्युद्देशेन दक्षिणात्वविधावपि गवादीनां दक्षिणात्वविध्यवगतभृतित्वबलादेवानत्यर्थत्वं कल्प्यते ततो नादृष्टार्थत्वम् । यद्वा 'ऋत्विग्भ्यो दक्षिणां ददाती'ति वाक्यमेव दक्षिणाशब्देन भृतित्वविशिष्टगवादींल्लक्षयित्वा तेषां विनियोजकमस्तु, तस्य वाक्यस्य विधेयान्तराभावादित्याशङ्क्य मूलयुक्तिमाह—**यदीति ।** ननु रूपाद्यर्थत्वाभावात्कथं गुणवचनत्वमत आह—**गुणेति ।** ननु प्राधान्येऽपि वस्तुतो गवादिष्वेव पर्यवसानाद्बहुवचनं किं न स्यादित्यत आह—**स्वप्राधान्येति ।** वस्तुतो बहुषु पर्यवसानेऽप्येकगुणार्थकत्वान्नैकवचनानुपपत्तिरित्यर्थः । अनुषङ्गेणैकवचनोपपादने वाक्यभेदः स्यादित्याशयेनोपसंहरति

भवति यथाग्नीषोमौ देवतेति । तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते । गवादिरूपया च भूत्या दृष्टं प्रयोजनमृत्विगानमनं भृतिरूपसंस्कृतैर्गवादिभिर्नास्ति दृष्टम् । तस्मादेका दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका जातेति समस्तगवादिनिवृत्तिः ॥

एकां गामित्यनेन गोगतसंख्याबाधाधिकरणम् ॥ १५ ॥

## एकां पञ्चेति धेनुवत् ॥ ५९ ॥

**एकां पञ्चेति कृत्स्नां वा गोसंख्यां वा निवर्तयेत् ॥ स्यादाद्यो दक्षिणायोगान्नैवं व्यवहितत्वतः ॥ २५ ॥**

'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे सोमे पञ्च गा दद्या'दिति श्रुतम् । तत्र संशयः किमेका पञ्च गवां निवर्तिका किंवा सर्वस्य दाक्षिण्यस्येति । तदर्थमिदं विचार्यते किं गामेकां दद्यादिति संबन्ध उतैकां गामिति । तत्र—'द्वितीयाश्रुतिसामर्थ्याद्ददातिक्रिययान्वयः । एकया पञ्चभिश्चातः सर्वं देयं निवर्तते ॥' उच्यते—'ददातिसंगतौ सत्यां गोशब्दे लक्षणा भवेत् ॥ पाक्षिको वानुवादः स्याद्विधौ वाक्यं तु भिद्यते ॥' बहुषु गवादिषु चोदकप्राप्तेषु एकां दद्यादिति विहिते किं तदेकमित्यनिर्देशाच्चोदकप्राप्तेषु यत्किंचिदिति गम्यते, तत्र गामित्यश्वादीनामप्युपलक्षणार्थं स्यात्, गोरपि वा पक्षे प्राप्तेः पाक्षिकोऽनुवादः स्यात् । नचैतदुभयमपि न्याय्यम् । अथ त्वेकां दद्यात्तां च गामिति विधीयते । ततः प्राप्तक्रियानुवादेनानेकार्थविधानाद्वाक्यं भिद्येत । यदि तु गां दद्यादिति गौरेव दक्षिणादाने विधीयते ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसंख्यापरिच्छेदिका प्राप्तेति पञ्चैकशब्दावनर्थकौ स्याताम् । विधाने वाक्यभेदः । अथ धेनुवद्विवक्षितैकसंख्यगोविधानादेकशब्दोऽनुवादस्तथाप्यानर्थक्यं पञ्चशब्दस्त्वननुवाद एव । तस्माच्छब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणमपि क्रियासंबन्धमविधाय वाक्यलक्षणो गोसंख्यासंबन्ध एव विधीयते । यद्वा भवतु संख्ययोर्दानेनैवान्वयस्तथापि ते प्रातिपदिकाभिहितसंख्यात्वसामान्याद्द्वादशशतसंख्यास्थाने निविशेते, सा च प्रकृतौ गोपरिच्छेदेनैवोपकृतवतीति तत्स्थानपतिते एकपञ्चसंख्ये गामेव परिच्छिद्यातामित्यश्वादीनामनिवृत्तिः ॥

---

—**तेनेति** । एवं मूलयुक्तिमुक्त्वा गवादीनामिति श्लोकोक्तमदृष्टार्थत्वमभ्युच्चयत्वात्संप्रति व्याचष्टे—**गवादिरूपया चेति** । अत्र 'गवाद्यात्मिकैका दक्षिणा विधीयते' इति वचनाद्दक्षिणाधिकरणे 'सोभयविशिष्टा विधीयते' इतिवचनाच्च विशिष्टदक्षिणाविधिरेव ग्रन्थकारस्य संमतः । अन्ये तु दक्षिणोद्देशेन गवादीनां विधानेऽपि न वाक्यभेदः । चशब्दबलात्सहिततयोपस्थितेर्विधिव्यापारंविनैव संभवेन विध्यावृत्त्यभावात् । तस्माद्गवादीनां दक्षिणोद्देशेन विधानमपि संभवतीत्याहुः । सूत्रार्थस्तु—तस्य धेनुरिति श्रुतधेनुर्गवां निवर्तिका स्यात् प्रकृतौ गवाश्वादीनां प्रत्येकमेव दक्षिणात्वस्य चोदितत्वात्तत्रापि गोभिरेव सामान्याद्यथागुणशब्देन निर्वपत्यादिना सामान्यादिष्टिः सौर्यादिराग्नेयविकारस्तद्वदिति ॥

**एका पञ्चेति धेनुवत् ॥ ५९ ॥ यदि सोममिति** । सोमापहारे निमित्ते नैमित्तिकः कश्चिदग्निष्टोमसंस्थो रथंतरसामा सोमयागविशेषो विहितः, तत्रैकां गां दक्षिणां दद्यादिति श्रुतम् । तथा सोमदाहनिमित्तिकक्रतौ 'पञ्च गाः दद्या'दिति श्रुतमित्यर्थः । पूर्ववदिहापि कृत्स्नदक्षिणानिवृत्तिरित्युत्थितेः संगतिः । **गवामिति** । द्वादशशतसंख्याकानामिति शेषः । **तदर्थमिति** । यद्येकां दद्यादिति संबन्धस्तदा संख्याविशिष्टद्रव्यस्य प्रकृतदक्षिणादाने विधानात्कृत्स्नदक्षिणानिवृत्तिः । एकां गामिति संबन्धे तु गोगतसंख्यामात्रनिवृत्तिर्नाश्वादीनामिति फलफलिभावः । **उपलक्षणार्थमिति** । गवाश्वादिरूपं यत्किंचिदेकमित्येवमित्यर्थः । **गोरपीति** । किं तदेकं द्रव्यमित्यपेक्षायां गोरपि प्राकृतत्वात्कदाचिदेकत्वाश्रयद्रव्यत्वेन प्राप्तेरित्यर्थः । **यदिचेति** । अभ्युपगमवादः । वस्तुतो मुख्यत्वेनैकामित्यस्यैव विध्यर्हत्वादिति ध्येयम् । **अथेति** । गामित्यनेन संख्याजातिद्रव्यविशिष्टकारकविधानादित्यर्थः । पञ्च दद्यादित्यत्र त्वयमपि प्रकारो न संभवतीत्याह—**पञ्चेति** । अनुवादस्याप्यसंभवादिति भावः । भवतु वा एकामित्यस्य श्रौतसंबन्धलिप्सया ददातिनान्वयस्तथापि नानेन संख्याविशिष्टं द्रव्यं विधीयते येन प्राकृताश्वादेर्द्रव्यस्य निवृत्तिः स्यात्, किंतु लाघवात्संख्यामात्रं विधीयते । ततश्च प्राकृतद्वादशशतसंख्याया एव निवृत्तिर्नाश्वादेर्द्रव्यस्येति पक्षान्तरमाह—**यद्वेति** । ननु संख्यामात्रविधाने एकत्वसंख्याया द्वादशशतसंख्यानिवर्तकत्वं भवतु, अश्वादीनां प्रकृतावप्येकत्वेनैव चोदितानां विकृतौ पुनरेकत्वविधिवैयर्थ्येन गोद्रव्य एव निवेशात् पञ्चसंख्यायास्त्वश्वादिसाधारण्यस्यापि संभवात्कथं गोसंख्याविकारत्वमत उक्तम्—**प्रातिपदिकेति** । अश्वादीनां प्रकृतौ वचनेन संख्याप्रतिपादनाच्च तत्र निवेश इत्यर्थः । नचैवमंशौ 'द्वादश प्रथमगर्भाः पृष्ठौहीर्ददाति एवमदाभ्य'इत्यत्रापि प्रातिपदि-

साद्यस्के त्रिवत्सेन सोमक्रयसाधनमात्रबाधाधिकरणम् ॥ १६ ॥

**त्रिवत्सश्च ॥ ६० ॥ [तथा च लिङ्गदर्शनम् ॥ ६१॥ एके तु श्रुतिभूतत्वात्संख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥]**

**त्रिवत्सेनर्षभो बाध्यः कृत्स्नं वा क्रयसाधनम् ॥ ऋषभः पुंगवत्वान्न क्रयोद्देशविधानतः ॥ २६ ॥**

'त्रिवत्सः साण्डः सोमक्रयण' इत्यत्र तु साण्डानुवादेन त्रिवत्सविधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो विधीयत इति सर्वाणि क्रयद्रव्याणि निवर्तन्त इति विशेषः ॥

अश्वमेधे प्राकाशेनाध्वर्युभागबाधाधिकरणम् ॥ १७ ॥

**प्राकाशौ तथेति चेत् ॥ ६३ ॥ [अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणेदन्ताविकारः स्यात् ॥ ६४ ॥]**

**किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याध्वर्यवस्य वा ॥ ददातियोगात्कृत्स्नस्य न विशिष्टेन योगतः ॥ २७ ॥**

अश्वमेधे श्रूयते 'प्राकाशावध्वर्यवे ददाती'ति तत्र संशयः किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ उताध्वर्युभागस्य निवर्तकाविति । यदि प्राकाशौ ददातीति संबन्धस्ततः कृत्स्नस्य । अथ प्राकाशा अध्वर्यव इति ततस्तद्भागस्यैव । तत्र—'तदानन्तर्यसंप्राप्तं बाधित्वाध्वर्युसंगमम् ॥ द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥' दानं च चोदकप्राप्तमुद्दिश्यते । नचोद्देशमध्वर्युणा शक्यं विशेष्टुम् । तस्माद्ध्वरं युङ्क्त इत्येवमध्वर्युशब्दं कथंचिद्दत्विङ्मात्रे व्याख्याय दानमात्रे प्राकाशविधिरिति कृत्स्ननिवृत्तिः—'उच्यतेऽध्वर्युसंबन्ध एव प्राकाशयोरिह ॥ विधीयतेऽथवा पूर्वं दानं द्वाभ्यां

---

कोक्तसंख्यात्वाविशेषान्निवेशः स्यादिति वाच्यम् । तयोः पाक्षिकत्वेन नित्यवच्छ्रुतैकत्वपञ्चत्वसंख्ययोस्तत्र निवेशासंभवात् । अतएवापस्तम्बाचार्यैः 'तौ न सर्वत्र गृहीतव्यौ वाजपेये राजसूये सत्रे सहस्रे सर्ववेदसे वा यो यस्य प्रियः सुविचितद्रव्यः स्यात्तस्य गृहीतव्या'वित्युक्तमिति भावः । एका पञ्चेत्यत्रापि धेनुवत्कृत्स्नदक्षिणानिवृत्तिरिति सूत्रार्थः ॥

**त्रिवत्सश्च ॥ ६० ॥** साद्यस्के श्रूयते 'त्रिवत्सः साण्डः सोमक्रयण' इति । त्रिवत्सः त्रिवत्सर इत्यर्थः । साण्डः अनुत्कालितपौंस्न इत्यर्थः । तत्र संशयः किं प्राकृतस्य ऋषभमात्रस्य निवर्तक उतैकहायन्यादीनां सर्वेषां क्रयद्रव्याणां निवर्तक । इति साण्डानुवादेन त्रिवत्सरत्वरूपवयोविधाने पुंगवस्य ऋषभस्यैव निवृत्तिः नतु सर्वद्रव्यनिवृत्तिः । पूर्ववत्संगतिपूर्वपक्षौ । सिद्धान्तं पूर्ववैषम्यप्रतिपादनमुखेनाह— **त्रिवत्स इति ।** साण्डशब्दस्य पुंपशुमात्रसाधारण्यादग्नीषोमीयेऽपि प्रसङ्गात्सोमक्रयणशब्दस्यानुवादासंभवादानर्थक्यं स्यात्, सोमक्रयणविशिष्टसाण्डानुवादेन त्रिवत्सविधाने तु विशिष्टोद्देशाद्वाक्यभेद इति भावः । **सोमक्रयण इति ।** यः सोमक्रयणः स त्रिवत्सः कार्य इत्येवं सोमक्रयणशब्दप्रकृत्यर्थक्रयानुवादेन त्रिवत्स इति पदेन प्रतिपादितं लिङ्गविशिष्टं त्रिवत्सद्रव्यं विधीयते । तत्र च साण्डशब्दस्यानुवादसंभवान्नैकां गामित्यत्र गोशब्दवत्पाक्षिकानुवादत्वलाक्षणिकत्वादिप्रसङ्ग इति धात्वर्थे क्रये द्रव्यान्तरविधानात्प्राकृतानां सर्वेषां निवृत्तिरित्यर्थः । अस्याधिकरणस्य भाष्येऽन्तरागर्भिणीत्वेन वर्णनात्तत्सूचनाय संशयपूर्वपक्षावनुपन्यस्य पूर्वाधिकरणवैषम्यप्रतिपादनमुखेन तत्संबन्धं दर्शयन्नेव सिद्धान्तमात्रमुक्तवानिति ध्येयम् । त्रिवत्सश्च कृत्स्नस्य निवर्तक इति सूत्रार्थः ॥

**प्राकाशौ च तथेतिचेत् ॥ ६३ ॥ प्राकाशाविति ।** प्रकाशन्ते रूपाण्यत्रेत्यधिकरणे घञ् । 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः छान्दसो वा । ततश्च सौवर्णदर्पणद्वयं प्राकाशावित्याह भट्टभास्करः । एकामित्यस्य ददात्यन्वयाभावात्कृत्स्नदाक्षिण्यानिवृत्तावपीह तदन्वयसंभवात्कृत्स्ननिवृत्तिरित्युत्थितेः संगतिः । नचानन्तर्यात्प्राकाशावध्वर्यव इति संबन्धस्यैव युक्तत्वात्कथं पूर्वपक्षोऽत आह—**तत्रेति ।** यथारुणयेत्यस्यानन्तर्येऽपि वाक्यगम्यैकहायनीसंबन्धं परित्यज्य तृतीयाश्रुत्या क्रीणातिनान्वयस्तथा इहापि द्वितीयाश्रुतिबलात्प्राकाशाध्वर्युसंबन्धविधाने धात्वर्थस्य धात्वर्थे वा कस्यचिदविधानादत्यन्तानर्थक्यप्रसङ्गाच्च ददातिनैवान्वय इत्यर्थः । **नन्वेवमध्वर्युशब्दानर्थक्यमत** आह—**तस्मादिति । कथंचिदिति ।** अनुवादत्वात्कथंचिद्व्याख्यानं न दोष इति भावः । **दानमात्र इति ।** सर्वदक्षिणादान इत्यर्थः । **अत इति ।** शब्दानर्थक्यापेक्षया वाक्यार्थविधिरेव ज्यायानिति भावः । **ननु** त्वत्पक्षेऽपि ददातेरानर्थक्यं तुल्यमित्यत उक्तं । **क्रियेति ।** चतुर्थीबलादध्वर्युविशिष्टं संप्रदानकारकमुद्दिश्य द्वितीयाबलात्प्राकाशविशिष्टं कर्म कारकं विधीयते । कारकस्य सापेक्षत्वाद्दुद्देस्याध्वर्युणा तैरिव हविषा विशेषणेपि न वाक्यभेदः । प्रदेयसंप्रदानसंबन्धश्च दानक्रियाधीन इति ददात्यन्वितयोः पाष्ठिको यः संबन्धस्तत्र विधिपर्यवसानात्तदुभयसंबन्धघटकत्वेनापेक्षितदानक्रियोपस्थापकत्वाद्ददातेर्नात्यन्तानर्थक्यमित्यर्थः । केचित्तु प्राकाशाध्वर्युशब्दार्थयोरेव स्वस्वामिभावसंबन्धो विधीयते । सच प्राकाशयोरध्वर्यवे दानाद्भवतीत्यध्वर्युसंप्रदानत्वस्य

विशेषितम् ॥' अध्वर्युशब्दस्यानर्थक्यभयान्न दानमात्रे विधानम् । अतः क्रियान्वयनिमित्तो यः पश्चात्तनः संप्रदानस्याध्वर्योः संप्रदेयभूतयोश्च प्राकाशयोर्मिथः संबन्धः स एव विधीयते। अथवा-ध्वर्युशब्दस्यानर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वमध्वर्युप्राकाशविशिष्टं विधीयते। तेनच दृष्टार्थत्वादध्वर्य्वानतिसिद्धेस्तद्भागः प्राकृतो निवर्तेत इति न कृत्स्ननिवृत्तिः ॥

उपहव्ये श्यावाश्वेनाखिलदक्षिणाबाधाधिकरणम् ॥ १८ ॥

**धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ एके तु कर्तृसंयोगात्स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥]**

श्यावाश्वो ब्रह्मभागस्य बाधको निखिलस्य वा ॥ आद्यः प्राकाशवन्मैवं धेनुवत्सोऽपि नान्यगः ॥ २८ ॥

उपहव्योऽनिरुक्त इत्युपहव्यसंज्ञकमेकाहं विधाय श्रूयते 'अश्वः श्यावो दक्षिणा सह्यनिरुक्तः स ब्रह्मणे देय'इति। किमयमश्वो ब्रह्मभागस्य निवर्तकः किंवा कृत्स्नस्य क्रतुदाक्षिण्यस्येति। तत्र ब्रह्मणे देय इति वचनाद्ब्रह्मणे दीयमानस्तस्यैवानतिं कुर्वंस्तद्भागमेव निवर्तयति । प्राकाशाविवाध्वर्युभागं पुरुषान्तराणां चानत्यर्थं चोदकप्राप्तं दाक्षिण्यं दातव्यमेवेति प्राप्ते ब्रूमः। द्वे ह्येते वाक्ये क्रतुसंयुक्तमेकं अश्वः श्यावो दक्षिणेति, पुरुषसंयुक्तमपरं स ब्रह्मणे देय इति। तत्र पूर्वेण वाक्येनास्मिन्क्रतावश्वो दक्षिणेत्यश्वेनानतिः कार्येति विहिते यदन्यदस्मिन्क्रतौ चोदकेनानत्यर्थतया प्राप्तं तत्सर्वं धेनुन्यायेन निवर्तते, सचाश्वः क्रतौ भृतित्वेन विहितः सर्वर्त्विजां दातव्यः प्राप्तः सन्नुत्तरेण वाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयते, तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेणानतिः कर्तव्येति कृत्स्ननिवृत्तिः ॥

---

प्राकाशकर्मत्वस्य दानत्वस्य च प्राप्तेर्द्वितीयाचतुर्थीभ्यां सह ददातिरनुवाद इत्याहुः। तत्र क्रयाविसाधारणस्य स्वस्वामिभावसंबन्धस्य नियमेन दानाक्षेपकत्वासंभवात्तदपि विधेयं स्यादित्यपरितुष्यता ग्रन्थकारेण कारकसंबन्ध एवोपपादित इति ध्येयम्। **अथवेति**। प्रौढवादः विशिष्टविधेः केवलविध्यसंभवनिबन्धनत्वादिति बोध्यम्। **ननु** दानान्तरविधौ अध्वर्युभागस्यापि निवृत्तिर्न स्यात् प्राकृताध्वर्युकार्ये विधानाभावादित्यत आह—**तेनेति**। 'धेनुवत्सर्वनिवर्तका'विति **सूत्रे** तथाशब्दार्थः ॥

**धेनुवच्चाश्वदक्षिणा० ॥ ६५ ॥ श्याव इति**। कपिशवर्णः 'श्यावः स्यात्कपिश'इत्यमरकोशात्। **सहीति**। स श्याववर्णोऽश्वोऽनिरुक्तः श्यावस्य वर्णसमाहाररूपत्वेन विशिष्य नीलादिशब्दैर्निर्वक्तुमशक्यत्वात् उपहव्यस्यास्पष्टमन्त्रगानेयुक्तत्वेनानिरुक्तत्वादौचित्येन श्यावस्य दक्षिणात्वं युक्तमिति श्रुत्यर्थः। **तत्रेति**। ब्रह्मशब्दानुसारेण दक्षिणाशब्दो ब्रह्मभागमात्रपरतया नेय इति भावः। **प्राकाशाविवेति**। अनेनैव संगतिरपि सूचिता। **द्वे इति**। यद्येकं वाक्यं स्यात्तदा ऋत्विग्विशेषवाचकब्रह्मशब्दबलेन सर्वभागसाधारणदक्षिणाशब्दस्य तद्भागपरत्वं स्यात्। सोमचमसवाक्यगतदक्षिणाशब्दस्येवैकवाक्यतापक्षे। अन्यथा परस्परविरुद्धार्थकत्वेनैकवाक्यताया एवानिर्वाहात्। इहतु भिन्नवाक्यत्वान्नैकस्यापि अन्यतरानुसारेण नयनं। प्राकाशावित्यत्रापि एकवाक्यत्वाद्दक्षिणाशब्दाभावाच्चाध्वर्युभागमात्रनिवृत्तिरिति भावः। **क्रतुसंयुक्तमिति**। दक्षिणायाः प्रकरणात्क्रतौ निवेशादिति भावः। **नन्वा**नत्यर्थमात्रस्य निवृत्तौ लौकिकोपायस्यापि निवृत्तिः स्यादित्यत उक्तं। **चोदकेनेति**। दक्षिणाशब्देनास्य भृतित्वावगमात्। तन्नियमेन भृतिरूपस्यैवानतिसाधनस्य निवृत्तिरिति भावः। **धेन्विति**। प्रकृतौ दक्षिणाया एकत्वाद्वैकृतिदक्षिणया सर्वनिवृत्तिरित्यर्थः। **प्रकारान्तरेणेति**। लौकिकेन प्रार्थनादिनेत्यर्थः। चोदकादध्वर्य्वादिकर्तृकत्वेन पदार्थानां प्रापकादध्वर्य्वादिप्राप्तेरवर्जनीयतया लौकिकोपायेन तदानतिरवश्यं संपाद्येति भावः। नचैकां गामित्यत्र प्राकृतगोद्रव्यानुवादेनैकत्वविधिवदिहापि प्राकृताश्वानुवादेन श्यावत्वविध्युपपत्तेर्न कृत्स्ननिवृत्तिरिति वाच्यम्। 'अश्वः श्यावो रुक्मललाटो दक्षिणे'ति श्यावरुक्मललाटरूपगुणद्वयश्रवणेन विशिष्टविध्यवश्यंभावादिति भावः। सूत्रार्थस्तु—अश्वदक्षिणा धेनुवत्सर्वदाक्षिण्यनिवर्तिका स्यात्स ब्रह्मण इति वाक्येन तु तस्य पुरुषान्तरेभ्योऽपनयः। यथा हिरण्यस्य कृष्णलाख्यस्य सर्वं ब्रह्मणे परिहरतीति तद्वदिति ॥

---

१ शवदध्वर्यु.

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ॥ १९ ॥

**तथा च सोमचमसः ॥ ६८ ॥ [सर्वविकारो वा क्रत्वर्थे प्रतिषेधात्पशूनाम् ॥६९॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ उत्सर्गस्य क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥**

**किं सोमचमसो ब्रह्मभागहार्युत कृत्स्नहृत् ॥ पशूनां निन्दया सर्वप्रसक्तेर्ब्रह्मभागहृत् ॥ २९ ॥**
**निन्देयं न निषेधाय चमसस्तुतये त्वसौ ॥ श्यावाश्ववत्सर्वदेयपुरुषान्तरबाधकः ॥ ३० ॥**

ऋतपेये श्रूयते 'औदुम्बरः सोमचमसो दक्षिणा सप्रियाय सगोत्राय ब्रह्मणे देय' इति । तत्र पूर्ववत्संशयपूर्वोत्तरपक्षाः । का पुनर्विशेषाशङ्का, पूर्वत्र द्वे एव वाक्ये इह त्वेकमिदं वाक्यं, अतः प्रथमं क्रतुसंयोगाभावाद्ब्रह्मभागस्यैव निवृत्तिरिति विशेषाशङ्का । यद्यप्येकं वाक्यं तथापि दक्षिणासंयोगात्सर्वनिवृत्तिरितिकेचिदेवं वर्णयन्ति नत्वेतद्युक्तम् । अत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं स ब्रह्मणे देय इत्यपरं स्पष्टमेवातो नायं विशेषः । सिद्धान्तोऽप्ययुक्तः । सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः । तस्मादेवं वक्तव्यम् । अत्र हि केषांचिद्दक्षिणाद्रव्याणां प्रतिषेधः श्रूयते, असौ सत्यां प्राप्तौ घटते तस्मान्न सोमचमसः सर्वस्य निवर्तक इति विशेषाशङ्का । सोमचमसस्तुत्यर्थोऽयमर्थवादो 'यत्पशून्दद्यात्सोऽनृतं कुर्या'दित्यादिर्न प्रतिषेधस्तस्मात्पूर्ववत्सर्वनिवृत्तिः ॥

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ॥ २० ॥

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥ [सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥]**

**पूर्वोक्तं निर्णयं पूर्वपक्षयित्वैकवाक्यताम् ॥ भ्रान्त्या कृत्वा दक्षिणांशं ब्रह्मभागं निवर्तयेत् ॥ ३१ ॥**
**दक्षिणोक्तिः क्रतौ दृष्टा सर्वत्रासौ न पुंसि सा ॥ वाक्यभेदश्च दुर्वारो युक्तोऽतः पूर्णनिर्णयः ॥ ३२ ॥**

सूत्रद्वयं इदं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय पुनरन्यथा व्याख्यातं 'सोमचमसो ब्रह्मणे दक्षिणा देय' इत्येकमिदं वाक्यमिति कृत्वाचिन्त्यते । यदैकं वाक्यं तदापि किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः उत ब्रह्मभागस्यैवेति, दक्षिणासंयोगाद्दक्षिणायाश्च चोदकेनैकस्याः प्राप्तत्वात्तत्संयुक्तश्चमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्, इतरथा हि ब्रह्मभागे दक्षिणावयवे

---

**तथा च सोमचमसः ॥ ६८ ॥** प्रथमं प्राभाकरोक्तविशेषाशङ्कामाह—**पूर्वत्रेति** । नच 'सोमचमसो दक्षिणा स ब्रह्मणे देय' इति तच्छब्दबलाद्वाक्यभेदस्य स्पष्टत्वादिदमयुक्तमिति वाच्यम् । तच्छब्दस्य पूर्वसापेक्षतया प्रत्युत वाक्यैकवाक्यतापादकत्वेनानुकूलत्वादन्यथा 'स्योनं ते' मन्त्रादेः कथं वाक्यलिङ्गविरोधोदाहरणत्वं स्यादिति भावः । अस्यां विशेषाशङ्कायां तदुक्तमेव परिहारमाह—**यद्यपीति । दक्षिणेति** । प्रकृतौ सर्वेभ्यो देया या भृतिः तद्वाचकत्वाद्दक्षिणाशब्दस्येह ब्रह्मभागमात्रपरत्वे लक्षणाप्रसङ्गाद्दक्षिणाशब्दबलात्कृत्स्ननिवृत्तिरित्यर्थः । **अत्रापीति** । एकवाक्यतापक्षे तच्छब्देन विनापि यदैकवाक्यतोपपत्तौ तच्छब्दस्यानर्थक्यापत्त्या वाक्यभेद आवश्यकः । **सति हीति** । एकवाक्यताया लक्षणां विनानुपपत्तेः सा न दोष इति भावः । **प्रतिषेध इति** । 'ऋतं वै सोमोऽनृतं पशवः यत्पशुं दद्यात्सोऽनृतं कुर्या'दिति निन्दया पशुदाननिषेधावगमादिति भावः । **सोमेति** । सोमचमसस्तुत्यर्थतया एकवाक्यतोपपत्तौ न निन्दायाः पृथक् निषेधकल्पकत्वमिति भावः ॥

**यदि तु ब्रह्मणस्तन्न्यूनं तद्विकारः स्यात् ॥ ७२ ॥ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥७३॥ इदमिति** । यदि ब्रह्मणे सोमचमसो देयस्तदा ब्रह्मभागन्यूनमितरत् क्रतुदाक्षिण्यं देयं तद्विकारः ब्रह्मभागन्यूनतैव विकारः स्यादिति प्रथमसूत्रं पूर्वपक्षप्रयोजनपरत्वेन दक्षिणानां क्रतुसंबन्धात्सर्वं दाक्षिण्यं निवर्तयेच्चमसः सब्रह्मण इति पुरुषान्तरेभ्योऽपनयमात्रविधिः । नत्वेतावता तद्भागमात्रनिवृत्तिरिति द्वितीयं सिद्धान्तप्रयोजनपरत्वेन व्याख्यायेत्यर्थः । पूर्ववदिहापि सर्वनिवृत्तिरित्युत्थितेः संगतिः । **नन्वेकवाक्यतापक्षे** ब्रह्मसंयोगात्तद्भागस्यैव निवृत्तिर्न कृत्स्नदाक्षिण्यस्येति कथं पूर्वः पक्ष इत्यत आह—**दक्षिणेति** । दक्षिणासंयोगादित्येतदेव विवृणोति—**दक्षिणायाश्चेति** । प्रकृतौ सर्वभागसाधारणसमु-

दक्षिणाशब्दे लक्षणा स्यात् तस्माद्दक्षिणासंयोगात्कृत्स्ननिवृत्तिः । ब्रह्मसंयोगाच्च पुरुषान्तरापनयं इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा यदि तु ब्रह्मण इति सिद्धान्ते वर्णयितव्यम् । एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः ब्रह्मणे दक्षिणात्वेन सोमचमसो देय इति । न खल्वेकं वाक्यं सोमचमसः क्रतोर्दक्षिणा नान्यत्, सोपि तु ब्रह्मणे देयो नान्येभ्य इत्यर्थद्वयं शक्नोति विधातुम्। भिद्येत हि तथा वाक्यं तस्माद्दक्षिणावयवे ब्रह्मभागे दक्षिणाशब्दमङ्गीकृत्य तत्रैव सोमचमसो विधातव्यः। किंच दक्षिणाशब्दो भृतिवचनः स च कर्मापेक्षयापि प्रवर्तते अस्मिन्कर्मणीयं भृतिरिति । कर्त्रपेक्षयापि प्रवर्तते अस्य पुरुषस्य कुर्वाणस्येयं भृतिरिति । तदिह यदि द्वे वाक्ये ततो यत्पुरुषविशेषासंयुक्तं तत्प्रकरणात् क्रतुना संबध्यमानं क्रत्वपेक्षयैव दक्षिणात्वं चमसस्य विदधत् क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्तयेत् । यदा तु पुरुषविशेषसंयुक्तमेकं वाक्यं तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत्तद्भागमेव निवर्तयति । तद्भागश्च यद्यपि क्रत्वपेक्षया दक्षिणावयवस्तथापि ब्रह्मापेक्षया भृतित्वान्मुख्यैव दक्षिणेति न लक्षणाप्रसङ्गः तस्मादेकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः सर्वं वा पुरुषापनयादिति कृत्वाचिन्तोद्धाटनम् ॥

वाजपेये रथस्य भागनियामकताधिकरणम् ॥ २१ ॥

## यजुर्युक्ते त्वध्वर्योर्दक्षिणा विकारः स्यात् ॥ ७४ ॥ [अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्यते ॥ ७५ ॥]

**यजुर्युक्तोऽध्वर्युभागं बाधते यमयत्युत ॥ बाधः प्राकाशवन्मैवं पक्षे प्राप्तेर्नियम्यते ॥ ३३ ॥**

वाजपेये 'सप्तदशरथाः सप्तदशदास्य' इति दक्षिणां विधाय श्रूयते 'यजुर्युक्तं रथमध्वर्यवे ददाती'ति । तत्र संशयः किं यजुर्युक्तो रथोऽध्वर्युभागं निवर्तयेन्नेति । तत्र 'प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः ॥ नत्वयं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥' प्राकाशौ ह्यपूर्वावध्वर्य्वोनतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं प्राकृतं बाधेते इति । इहतु सप्तदशरथा द्रव्यान्तराणि च वा-

---

दायवाचकत्वेन प्रसिद्धो दक्षिणाशब्द इह श्रूयमाणः कृत्स्नदक्षिणामेवोपस्थापयति नैकदेशमिति तथाभूतस्य ब्रह्मसंबन्धादेकस्यापि पदस्य लक्षणां विना कृत्स्ननिवृत्तिः पुरुषान्तरेभ्योऽपनयश्च लभ्यत इति भावः । **यदीति** । सूत्रे यदिशब्दोऽसंदिग्धे संदिग्धार्थत्वेन वा यद्येकं वाक्यमित्यध्याहारेण वा कथंचियोज्यः । यदीह दक्षिणाशब्दो यथाप्रकृति कृत्स्नोपस्थापकस्तदा सोमचमसस्य कृत्स्नदक्षिणात्वेन ब्रह्मसंबन्धित्वेन च विधानाद्वाक्यभेदः स्यादतो ब्रह्मभागमात्रपर एव सन्ननुवादो वाच्यः । अनुवादत्वाच्च लक्षणा न दोष इत्याशयेनाह—**एकेति** । **दक्षिणात्वेनेति** । ब्रह्मणे दक्षिणात्वेन यो देयः स सोमचमस इत्येव विधानात्तद्भागस्यैव निवृत्तिरित्यर्थः । अत्र ब्रह्मणे सोमचमस इत्येव विधिरितरत्सर्वमनुवाद इति ध्येयम् । **ननु** तवापि पक्षे ब्रह्मणे सोमचमसो देयः स चौदुम्बर इति विधेयभेदाद्वाक्यभेदः समानः, अतोऽत्र विशिष्टविधिरेव वाच्यस्तथासति दक्षिणापदमुख्यार्थत्वाय ब्रह्मसंबन्ध्यौदुम्बरचमसात्मककृत्स्नक्रतुदक्षिणाविधिरेव युक्त इति कृत्स्ननिवृत्तिः । प्राकाशावित्यत्र दक्षिणाशब्दाभावाद्विशिष्टविधावपि तद्भागमात्रनिवृत्तिरित्याशङ्क्य विशिष्टविधावपि ब्रह्मशब्दसमभिव्याहारात्तदंशदक्षिणाया एव विधानं नतु कृत्स्नक्रतुदक्षिणायाः । दक्षिणाशब्दस्य प्रतिसंबन्ध्यपेक्षायाः श्रुतब्रह्मशब्देनैव शान्तेः प्रकरणात्क्रतुशब्दकल्पनानौचित्याद्दक्षिणाशब्दमुख्यत्वं तु ममापि सुवचमित्याशयेनाह—**किंचेति** । **प्रकरणादिति** । भिन्नवाक्यतापक्षे 'औदुम्बरः सोमचमसो दक्षिणे'ति वाक्ये क्रतुसंबन्धिवाचकशब्दाभावात्प्रकरणात्तत्कल्पनमावश्यकमिति भावः । नन्वेवं सर्वं चेत्यस्य सूत्रस्य का गतिरित्यत आह—**सर्वमिति** ॥

**यजुर्युक्ते त्वध्वर्योः०** ॥ ७४ ॥ **यजुर्युक्तमिति** । 'इन्द्रस्य वज्रोऽसी'ति यजुर्मन्त्रैः सज्जीकृतमित्यर्थः । यदि दक्षिणाशब्दे सत्यप्येकवाक्यतायां भागबाधस्तदा तदभावे किं वक्तव्यमित्युत्थितेः संगतिः । **तत्रेति** । सप्तदशरथा इत्यादिवाक्यान्तरपूर्वकत्वे प्रमाणाभावाद्यजुर्युक्तवाक्यं न तत्प्राप्तनियमार्थं किंत्वप्राप्तविधानार्थमिति प्राकाशवदध्वर्युभागव्यावृत्तिरित्यर्थः । अप्राप्तविध्यपेक्षया नियमविधेर्लघुत्वाद्विधिलाघवाय यजुर्युक्तवाक्यस्य सप्तदशवाक्यपूर्वकत्वं स्वीकार्यमित्याशयेन सिद्धान्तमाह—**नत्विति** । **प्राकाशाविति** । तत्र न प्रापकमस्तीति भावः । भवनाथस्तु तत्रापि क्रतुसंबन्धबोधक-

जपेयस्य दक्षिणात्वेन विहितानि इति तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्वध्वर्यवेऽन्यस्मै वा कस्मैचिद्दातव्यः सत्रध्वर्यौ नियम्यते । ततश्च नायमर्थः यदध्वर्यवे ददाति तद्यजुर्युक्तं रथमिति किं तर्हि यजुर्युक्तं यद्ददाति तदध्वर्यवे इति । तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति तादृशस्यैव नियमान्न देयान्तरनिवृत्तिः । अध्वर्युभागे तु यथाप्राप्ते यजुर्युक्तो नियम्यते ॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## दशमाध्याये चतुर्थः पादः ।

नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ॥ १ ॥

**प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ [चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् ॥ २ ॥**

नक्षत्रेष्टयुपहोमादिर्नारिष्टादेर्निवर्तकः ॥ समुच्चितो वा कार्यैक्यादाद्योऽन्त्योऽपूर्वभेदतः ॥ १ ॥
समुच्चेयं शरमयं कौशेनोतास्य बाधकम् ॥ प्राचुर्यस्य विधेराद्यो मैवं प्रतिपदोक्तितः ॥ २ ॥
रथदुन्दुभितद्घोषौ किं बर्हिर्मन्त्रयोः क्रमात् ॥ बाधकावुत तद्घोष एक एव हि बाधकः ॥ ३ ॥
रथघोषेत्ययं द्वंद्वस्तेनैतौ बाधकौ न तत् ॥ घोषाभ्यामिति वा घोषे लक्षणा वा प्रसज्यते ॥ ४ ॥
पूर्वपक्षेऽन्यदीयोऽपि शब्दोऽत्रास्तु रथे सति ॥ राद्धान्ते रथदुन्दुभ्योरेव घोषः प्रयोजकः ॥ ५ ॥

नक्षत्रेष्टौ श्रूयते 'सोऽत्र जुहोती'ति तत्र मन्त्रा आम्नाताः 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा'इत्येवमादयः । सन्ति च प्रकृतौ नारिष्टहोमाः । तत्र संशयः किं वैकृतैरुपहोमैः प्राकृतानारिष्टहोमा बाध्यन्ते किंवा समुच्चय इति । तदर्थं च किं वैकृताः प्राकृतानां कार्ये वर्तन्ते नेति । तत्रोपहोमाः कार्यमपेक्षमाणा होमत्वसामान्यात्प्राकृतहोमकार्ये उपस्थिते तत्रैव विधीयन्ते, तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्निर्वर्तिते तत्कार्यकराः प्राकृता निवर्तन्ते शरैरिव कुशा इति प्राप्ते ब्रूमः—'सति प्राकृ-

---

वाक्यान्तरस्य सत्वात्कृत्वाचिन्तया प्राकाशाधिकरणप्रवृत्तिरित्युक्तवान् । **किं तर्हीति** । नचाध्वर्योरपि सप्तदशरथादिमध्ये किंचिद्देयत्वेन प्राप्तं यजुर्युक्तोऽपि कस्मैचिद्देयत्वेन प्राप्तस्तत्र नियमविधिपरत्वे यदध्वर्यवे ददाति तद्यजुर्युक्तमित्येवं नियमाश्रयणेनाध्वर्युभागस्यापि निवृत्तिः शक्यशङ्केति वाच्यम् । तथासति अध्वर्युभागप्रापकचोदकबाधापत्त्या यद्यजुर्युक्तं ददाति तदध्वर्यव इत्येव नियमवर्णनस्य युक्तत्वादिति भावः । **तादृशस्यैवेति** । यथाप्राप्तनियमस्य वर्णनीयत्वादिति भावः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥**

**प्रकृतिलिङ्गासंयोगात्०** ॥ १ ॥ पूर्वपादे बाधापवादत्वेनाबाधो व्युत्पादितः इहत्वभ्युच्चयो व्युत्पाद्यत इति पादान्तरत्वमानन्तर्यं चेत्याहुः । **स इति** । इष्टिकर्तात्र कर्मणि जुहोतीत्यर्थः । अयंच प्रकरणान्तरत्वाद्धोमान्तरविधिरिति भावः । **ननु** 'हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयती'तिवन्मन्त्रान्तरविधानार्थं प्रकृतिनारिष्टहोमानुवाद एव किं न स्यादिति शङ्कां 'आम्नाता'इत्यनेन निवर्तयति । अत्र मन्त्राः केवलमाम्नाताः नतु हिरण्यगर्भमन्त्रवद्विहिताः । 'अग्नयेस्वाहेति जुहोती'त्येवमितिकरणयुक्तत्वाभावात्तथाच 'सोऽत्र जुहोती'त्यस्य मन्त्रविधानार्थमनुवादत्वासंभवाद्धोमान्तरविधानार्थत्वमेव । तत्र च होमे 'अग्नये स्वाहे'त्यादीनां संनिधानादेव शेषत्वं न वाक्येनेति भावः । **तत्रेति** । यथा 'परिधौ पशुं नियुञ्जीते'ति वाक्येन पशुनियोजनलक्षणयूपकार्ये परिधेर्विधानेन तत्कार्यापत्तिस्तथा नारिष्टहोमकार्ये उपहोमानां विधानात्तेषामपि तत्कार्यापत्तिरिति भावः । एवं तत्कार्यकरत्वमुक्त्वा ततो बाधमुपपादयति—**तस्मिंश्चेति । साधारणमिति ।** यथानियोजनं स्वशब्दोपात्तमेवं नारिष्टहोमकार्यं न स्वपदोपात्तं तद्वाचकशब्दाभावात्तथाचात्र तद्वाचकशब्दं परिकल्प्य तत्र विनियोगो वक्तव्यः । न चात्र तत्कल्पना संभवति । होमत्वस्याग्निहोत्रादिसाधारणस्य नारिष्टहोमोपस्थापनाक्षमत्वेन तत्कार्यवाचकशब्दकल्पनाक्षमत्वादतो नात्र कार्यापत्तिरित्यर्थः । **ननु** होमत्वसामान्यस्यातिप्रसङ्गादनुपस्थापकत्वेऽपि विधीयमा-

---

१ सोऽनुजुहोतीति.

त्कार्यत्वे भवेद्बाधो न चास्ति तत् ॥ साधारणं न होमत्वं तस्योपस्थापनक्षमम् ॥' सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति, विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वम्, अदृष्टार्थत्वाच्च होमानां प्रमाणान्तरमपि तत्कार्यकरत्वेनास्ति । नच प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा विकृतिः प्राकृतमित्थंभावं नापेक्षत इति वाच्यम् । संनिपातिनां द्रव्यदेवतासंस्काराणामलाभे कथंभावस्यापरिपूर्णत्वात् । तस्मादुभयेषामभ्युच्चयः स्यादतिदेशोपदेशाभ्यामवगतत्वात् । यदुक्तमाद्येऽभ्युच्चयं वक्ष्याम इति तदिदम्, शरास्तु बर्हिःशब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते । तदिदमुक्तम्—'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधाना'दिति । यद्वाधिकरणान्तरमिदमुभयोः कुशशरयोः प्रमाणावगतत्वात्समुच्चयः प्राकृतकार्यत्वाच्च निवृत्तिः ॥ एवंवा ॥ वाजपेये श्रूयते 'रथघोषेण माहेन्द्रस्तोत्रमुपकरोती'ति प्रकृतौ 'उपावर्तध्वमि'ति मन्त्रेण

---

नानां होमविशेषाणामेवोपस्थापकत्वमस्तु । नच संबन्धाभावादनुपस्थापकत्वं शङ्कनीयम् । प्रधानानन्तरभाविभिर्नारिष्टहोमैस्तथाविधानामुपहोमानां स्थानसामान्यस्यैव संबन्धत्वादित्यत आह—**विधीयमानस्येति** । स्थानसामान्यस्यापि पार्वणहोमादिसाधारण्यान्न संबन्धत्वमिति भावः । अनेन प्रत्यक्षवचनेन कार्यापत्तिर्निराकृता । एतेनैवाभावे विधिलक्षणं कार्यापत्तिप्रमाणं निरस्तम् । 'षडहे संस्थिते मध्वाशये'दित्यत्र षडहाभावे मध्वशनं विधीयत इति कृत्वाचिन्तायां षडहाभावद्योतकशब्दवदिह नारिष्टाभावद्योतकशब्दाभावात् । अतएव प्रतिषिध्यविधानलक्षणमपि प्रमाणं प्रत्युक्तम् । 'न गिरा गिरेति ब्रूयादैरंकृत्वोद्गाये'दितिवदिह नारिष्टहोमान्प्रतिषिध्योपहोमविधानादिति ध्येयम् । इदानीं प्रत्यक्षानुमानलक्षणमवशिष्टप्रमाणद्वयं निराकरोति—**अदृष्टार्थत्वादिति** । इष्टार्थत्वे हि नीवाराणां हविर्निर्वृत्तिलक्षणव्रीहिकार्यापत्तिवत्प्रत्यक्षेण नखनिर्भिन्नचरौ नखानां तुषविमोचनलक्षणोलूखलमुसलकार्यापत्तिवदनुमानेन वा कार्यापत्तिः स्यात् । उपहोमानां चादृष्टार्थत्वान्नोक्तप्रमाणद्वयसंभव इत्यर्थः । तथाच कार्यापत्तिप्रमाणानां पञ्चानामप्यत्राप्रवृत्तेर्न तत्कार्यापत्तिरिति भावः । **नचेति** । इतिकर्तव्यताकाङ्क्षाया उपहोमैरेव शान्त्याकाङ्क्षाभावेन प्राकृतेतिकर्तव्यतासंबन्धाभावादेवमपि न समुच्चयः सिध्येदित्यर्थः । **संनिपातिनामिति** । भवेदेवं यदि श्रुतानामुपहोमानां निराकाङ्क्षीकरणसामर्थ्यं स्यान्न त्वेतदस्ति । तेषां हि न गृहमेधीयाज्यभागन्यायेन निराकाङ्क्षीकरणशक्तिस्तद्विधिदशायामेवोपकारकत्वेन क्लृप्तत्वाभावात् । नापि सोमयागादौ दीक्षणीयाभिषवादीनामिव संप्रत्ययेवोपकारकत्वकल्पनया निराकाङ्क्षीकरणशक्तिस्तद्वत्संनिपातिनां पौष्कल्याभावेनोपकाराकाङ्क्षायाः श्रुतमात्रादशान्तेर्नक्षत्रेष्टौ द्रव्यदेवतयोराम्नानेऽपि संस्काराणामनाम्नानात् । तस्मादुपकाराकाङ्क्षिणी विकृतिभावना संनिहितानामप्युपहोमानां संस्कारजनकत्वेनाक्लृप्ततया तान्विहाय प्राकृतोपकारेण तद्द्वारा प्राकृतपदार्थैश्च प्रथमं संबध्यते । पश्चात्तु विकृतेर्निराकाङ्क्षत्वेऽपि संनिध्याम्नातानां प्रयोजनाकाङ्क्षामवलम्ब्य संनिधिलक्षणप्रमाणेन तेषां विकृत्यङ्गत्वम् । यत्र त्वामनहोमादौ प्राकृताङ्गसंदंशस्तत्राकाङ्क्षाप्राह्यप्राकृताङ्गसंदंशबलादाकाङ्क्षयैवान्वयो न संनिधानात् । तथाचोभयत्रापि प्राकृताङ्गसंबन्धपूर्वक एव वैकृताङ्गसंबन्ध इति न तेषां निराकाङ्क्षीकरणशक्तिरिति भावः । नन्वेवं तर्हि वैकृतानामन्वय एव न स्यात्, नहि तेषां साक्षाद्भावनान्वयः संभवति, उपकारस्यैव साक्षादन्वयित्वात् । तस्मादुपकारजनकतया तेषामन्वयो वाच्यः । उपकारश्चात्र प्राकृत एवाङ्गीकृतः । नच प्राकृत उपकारे वैकृतानां जनकत्वसंभवः । तथासत्युपकारस्याधिकपदार्थजन्यत्वेनान्यत्वापत्तेः तथाच कथं समुच्चय इति शङ्कां परिहर्तुमुपसंहरति—**तस्मादिति** । यथा कृष्णलादौ पदार्थन्यूनत्वेऽपि नोपकारान्यत्वं तथा तदाधिक्येपीति भावः । अयंचार्थस्तन्त्ररत्ने स्पष्टः । बाधापवादत्वेनाभ्युच्चयचिन्तनादध्यायसंगतिमभिप्रेत्याह—**यदिति** । शरमयमित्यत्र तु परिध्यादिवत्कार्यवाचकशब्दाभावेऽपि तल्लक्षकस्य बर्हिःशब्दस्य विद्यमानत्वाद्युक्ता कार्यापत्तिरित्याशयेनाह—**शरास्त्विति** । शरमयमित्यत्र मयटो विकारार्थत्वात्तदन्वयसिद्ध्यर्थं जातिवाचिना बर्हिःशब्देन स्तरणरूपकार्यसाधनावस्थं बर्हिर्लक्षयित्वा तत्र शरविकारत्वविधानात्कुशबाधः स्तरणसाधनावस्थद्रव्यस्य केवलावस्थाविकारत्वात्तद्धितोत्पत्तिः । यद्वा बर्हिःशब्देन कार्यमेव लक्षयित्वा तत्रैव शरविकारत्वविधिः स्वसाधनावस्थद्रव्यद्वारा स्तरणरूपकार्यस्य तद्विकारत्वसंभव इति भावः । प्राकृतचोदनागतबर्हिःकार्योपस्थापकेन बर्हिःशब्देन संयोगे तत्र शरविधेर्बर्हिर्बाध इति सूत्रार्थः । प्रधानसूत्रार्थस्तु प्राकृतकार्योपस्थापकशब्दसंयोगाभावादुपहोमादिलक्षणं कर्म संस्कारमदृष्टार्थमिति यावत् । प्राकृतादधिकं स्यान्नतु बाध इति । यद्वा **इदमिति** । चोदनालिङ्गसूत्रमित्यर्थः । पूर्वाधिकरणोक्तशरवैषम्यसाधनार्थत्वादस्य व्याख्यानस्य संगतिः । **शरमयमिति** । मयटः प्राचुर्यार्थकत्वस्यापि संभवाच्छरप्रचुरत्वस्य शरसंयोगमात्रेण कुशाबाधेनैवोपपत्तेरुभयोश्चोदकोपदेशलक्षणप्रमाणावगतत्वात्समुच्चय इत्यर्थः । **प्राकृतेति** । 'नित्यं वृद्धशरादिभ्य' इति विकारार्थे शरशब्दे मयटः प्रतिपदोक्तत्वेन प्राबल्याद्विकारार्थ एवायं, ततश्च बर्हिषो द्रव्यस्य कुशविकारत्वासंभवात्तेन तत्कार्यं स्तरणं लक्षयित्वा तत्र विधानात्प्रत्यक्षवचनेन कार्यापत्त्या युक्तो बाध इत्यर्थः ॥ **एवंवा** ॥ अस्यैव सूत्रस्य

दर्भाभ्यां स्तोत्रोपाकरणम्। तदिह किं रथो दर्भयोर्निवर्तकः घोषश्च मन्त्रस्य उत रथस्य घोष उभयोर्निवर्तक इति संशयः। तदर्थं च किमयं समाहारद्वन्द्वो रथेन घोषेण चेति किंवा षष्ठीतत्पुरुषः। तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्। अतः समाहारद्वन्द्वः। तेन रथो घोषश्च द्वयमुपाकरणसाधनम्। तत्र रथो द्रव्यत्वसामान्याद्दर्भयोर्निवर्तकः घोषस्तु मन्त्रस्य शब्दत्वसामान्यात्। एवंच नावश्यं रथस्यैव घोष आदर्तव्यः। घोषस्याविशेषणात्, येनकेनचिदपि घोषेण कार्यसिद्धेरिति प्राप्ते ब्रूमः—इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्तथा तु रथघोषाभ्यामिति द्विवचनं स्यात्। समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्याताम्, तत्पूर्वपदमात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणम्, तस्माद्रथस्य घोष उपाकरणस्य साधनं स च प्राकृतं साधनं मन्त्रदर्भौ निवर्तयति॥

बार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवाय्वादिग्रहाणां समुच्चयाधिकरणम्॥ २॥

## सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत्॥ ३॥ [अधिकैश्चैकवाक्यत्वात्॥४॥ लिङ्गदर्शनाच्च॥ ५॥]

**बार्हस्पत्यादयः किं स्युः प्राकृतग्रहबाधकाः॥ समुच्चिता उताद्योऽस्तु कार्यैक्याद्ग्रहलिङ्गतः॥ ६॥**
**समुच्चयः प्रमाणाभ्यां ग्रहाणां प्रकृतौ यथा॥ विधेयोक्तेर्न लिङ्गं तच्चोक्तं लिङ्गं ब्रुवामहे॥ ७॥**

बृहस्पतिसवे श्रूयते 'बार्हस्पत्यं ग्रहं गृह्णातीति, विषुवत्यर्कं गृह्णातीति, महाव्रते शुक्रं गृह्णातीति, अश्वमेधे सौवर्णराजताभ्यां महिमानौ गृह्णातीति, एवंजातीयकाः वैकृता ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां निवर्तका न वेति संशये ग्रहाणां यागनिर्वृत्त्यर्थत्वेनैककार्यत्वात्प्रत्यक्षश्रुतैर्वैकृतैर्ग्रहैर्निर्वृत्ते यागे चोदकप्राप्ता निवर्तन्त इति प्राप्ते ब्रूमः—'येषां मिथोऽनपेक्षाणां कार्येणैकेन संगतिः॥ तेषां बाधो विकल्पो वा नैवमस्ति ग्रहे पुनः॥' नहि यागनिर्वृत्तौ ग्रहाः वाक्येन[1] विधीयन्ते बार्हस्पत्येन

---

वर्णकान्तरमाह—**एवंवेति**। **उपाकरोतीति**। स्तोत्रं प्रवर्तयतीति यावत्। यदि कार्ये विधानाच्छरैः कुशबाधस्तर्हि रथस्यापि दर्भकार्ये विधानात्तद्बाधकत्वं स्यादित्युत्थितेः संगतिः। **लक्षणेति**। षष्ठ्यर्थ इति शेषः। **अत इति**। यद्यपि समाहारे पदद्वयलक्षणास्ति तथापि पदद्वयार्थस्य कार्यान्वयात्स्वार्थमुच्चारणं, षष्ठीसमासे तु पूर्वपदार्थस्योत्तरपदार्थे लक्षणामात्रार्थत्वेन कार्यान्वयाभावान्न स्वार्थत्वं स्यादिति भावः। समाहारद्वन्द्वबलेन मिलितयोरेव द्वयोरुपाकरणसाधनत्वं न प्रत्येकम्। ततश्चैकैकेन दर्भमन्त्रयोरुभयोर्निवृत्त्ययोगादुभाभ्यामुभयोर्निवृत्तिरित्याशयेनाह—**तेनेति**। ननु पूर्वोत्तरपक्षयोः कथमनुष्ठाने विशेषः उभयनिवृत्तेरुभयत्राप्यविशेषादित्याशङ्क्य पूर्वपक्षे प्रयोजनं दर्शयति—**एवंचेति**। **घोषस्येति**। रथस्यापि स्वातन्त्र्येणोपाकरणान्वयेन रथेन घोषस्य विशेष्टुमशक्यत्वादित्यर्थः। **ननू**भयोरुपाकरणसाधनत्वेनान्वयादरुणान्यायेनैककर्मप्रयुक्तो रथान्वयनियमः किं न स्यादत आह—**येनकेनचिदिति**। एकहायनीसंबन्धं विनारुण्यस्यामूर्तस्य क्रयसाधनत्वाभावात्परिच्छेद्यद्रव्यापेक्षाबलादेकहायनीनियमेऽपि प्रकृतौ घोषस्य रथासंबद्धस्यापि साधनत्वसंभवेनापेक्षाविरहान्न तथान्वयनियम इत्यर्थः। **इतरेतरेति**। यद्यपि समाहारद्वन्द्व एव पूर्वपक्षे ग्रन्थकारेणाभिहितस्तथापि भाष्यादौ साधारण्येन पूर्वपक्षकरणात्सोपि दूषित इति ध्येयम्। **श्रुतिवृत्तमिति**। परेषामिव युगपदधिकरणवचनत्वाभावेन पदान्तरार्थयुक्तस्वार्थपरत्वाभावात्पदद्वयमपि श्रुतिवृत्तमित्यर्थः। **समाहारेति**। कार्यान्वयस्य प्रागसिद्धतया संप्रत्येव शब्दबलात्स कल्पनीयः। शब्दश्च प्रथमं पर्यालोच्यमानः पदद्वयलक्षणापेक्षया पूर्वपदमात्रलक्षणाया ज्यायस्त्वात्षष्ठीसमासाश्रयणेन रथोपलक्षितघोषस्यैव कार्यान्वयं प्रतिपादयतीति स एव युक्त इत्यर्थः। **सचेति**। रथोपलक्षितघोषस्यैवोपाकरणसाधनत्वेन विधानादविशेषेण दर्भमन्त्रोभयकार्यापत्त्यै केनाप्युभयनिवृत्तिरित्यर्थः॥

**सर्वत्र तु ग्रहाम्नानं०॥ ३॥** पूर्ववदिहापि प्राकृतबाध इत्युत्थितेः संगतिः। सत्यं ग्रहाणां यागनिर्वर्तकत्वं तथापि न प्राकृतनिरपेक्षाणां यागनिर्वर्तकत्वं प्रमाणाभावात्, किंतु तत्सापेक्षाणामेव। तथाच न बाधः, किंतु समुच्चय एवेत्याशयेनाह—**येषामिति**। **विकल्पो वेति**। पूर्वपक्षिणोऽपि यद्यपि विकल्पो नाभिमतः चोदकोपदेशरूपदुर्बलप्रबलप्रमाणप्रापितयोः प्राकृतवैकृतग्रहयोर्विषमशिष्टत्वेन विकल्पासंभवात्तथापि विकल्पस्यापि पाक्षिकबाधरूपत्वाद्दृष्टान्तार्थं विकल्पो वेत्युक्तम्। **ननु** कथं नैरपेक्ष्ये प्रमाणाभाव इत्याशङ्क्य ग्रहाणां यागनिर्वर्तकत्वे प्रयोगवचन एव प्रमाणं नान्यत्। स च समुच्चयमेव बोधयति न नैरपेक्ष्यमित्याशयेन प्रातिस्विकवाक्यं निषेधति—**नहीति**। वाक्येन प्रयोगवचनव्यतिरिक्तेन

---

[1] वाक्यैर्विधीयन्ते.

यजेतेति, येन निरपेक्षा यागं निर्वर्तयेयुः । प्रयोगवचनस्तु चोदकप्राप्तानुपदिष्टांश्च ग्रहान्यौगपद्येन गृह्णन्सहितानामेव यागान्वयं गमयति । नच दृष्टार्थानि ग्रहणानि । विनापि ग्रहणेन यागनिर्वृत्तिसिद्धेः । यश्च ग्रहेषु देवतोद्देशः सोऽत्यन्तादृष्टार्थ एव । नहि ग्रहणस्य देवतया किंचिद्दृष्टमस्ति । नचैकेन ग्रहणेन देवतोद्देशेन वा यददृष्टं तदन्येन क्रियत इति प्रमाणमस्ति । अतो यथा प्रकृतावैन्द्रवायवादिग्रहाणां समुच्चयस्तथा प्राकृतवैकृतानामपि भवितुमर्हति । आह । भवत्वेवं ग्रहान्तरविधावर्कं गृह्णातीत्यादौ, बार्हस्पत्ये तु प्राकृतेष्वेव देवतामात्रं विधीयते न ग्रहान्तरमित्यनुदाहरणम् । ग्रहणविधाने श्रुतिः देवताविधाने वाक्यं अतो ग्रहणविधिरेव न्याय्य इति चेत् । न । वाक्यार्थविधेरवर्जनीयत्वात्, देवतापदस्याप्रमाणपाठात्, तेनोभयविधानाद्वरं देवतामात्रविधानम् । नचाविपरिवृत्तिः, ग्रहाणां चोदकप्राप्त्या विपरिवृत्तेः । यद्यपि च चोदकः कार्यप्रधानत्वान्न स्वरूपेण पदार्थान्स्पृशति तथापि कार्यमुखेन तेषां परिवृत्तेः शक्यं तदनुवादेन गुणविधानं, येषां च कार्यप्राप्त्युत्तरकालं पदार्थानामपि पृथगतिदेश इष्टस्तन्मते सुतरामस्ति विपरिवृत्तिः । यस्त्वेवं नेच्छति तस्यैकां गां दक्षिणां दद्यादिति दानान्तरमेव विधीयेत । तेन समस्तं प्राकृतं दाक्षिण्यं धेनुन्यायेन निवर्तेत । तथा 'अध्यूध्नीं होत्रे हरती'ति हरणान्तरमप्राकृतं विधीयेताध्यूध्निप्रतिपत्त्यर्थम् । तथाप्राकृतकार्यत्वा-

---

प्रातिस्विकवाक्येनेत्यर्थः । यदि 'बार्हस्पत्येन यजेते'ति विधिः स्यात्तदा यजेतेति यागमनूद्य तत्र निरपेक्षतया बार्हस्पत्यग्रहणस्य परिधेर्नियोजन इव विधानाद्बाधः स्यान्नत्वत्र तादृशो विधिरस्तीत्यर्थः । गृह्णातीत्यनेन प्राकृतकार्यं लक्षयित्वा तत्र वैकृतग्रहविधौ लक्षणैव दोषः द्वितीयानुपपत्तिश्चेति भावः । तस्मात्प्रयोगविधिरेव परिशिष्यते, स च समुच्चयमेव बोधयतीत्याह—**प्रयोगेति** । वैकृतो हि प्रयोगवचनश्चोदकोपदेशानन्तरं प्रवर्तमानस्तदुभयप्रापितान्ग्रहान्युगपदेव गृह्णन्प्राकृतैर्वैकृतैश्च ग्रहैर्यजेतेति समुच्चयमेव बोधयतीत्यर्थः । **ननु** प्रागेव प्रयोगवचनादुपदिष्टमात्रा एव ग्रहाः प्रत्यक्षेण यागनिर्वर्तकतयावगम्यमाना निरपेक्षाः किं न स्युरित्यत आह—**नचेति** । ग्रहाणां दृष्टार्थत्वाभावान्न प्रत्यक्षेण यागनिर्वर्तकत्वमिति भावः । ग्रहणं नाम देवतोद्देशेनोर्ध्वपात्रादौ पृथक्करणम् । पृथक्करणंविनापि यत्र क्वचिदवस्थितेऽपि सोमरसे देवतोद्देशेन त्यागलक्षणयागसंभवात्पृथक्करणमदृष्टार्थम् । तथाचोक्तम् 'शक्यते चागृहीतेपि यत्र क्वचिदवस्थिते।द्रव्येऽस्मिन्देवतोद्देष्टुमित्यदृष्टार्थताविधे'रिति । देवतानिर्देशांशस्तु सुतरामदृष्टार्थः, ग्रहणस्य यागरूपत्वाभावेन तत्र देवतानिर्देशस्योपयोगाभावात् । तथाच स्वावयवभूतदेवतानिर्देशमुखेनापि ग्रहणस्य न दृष्टार्थत्वमित्यर्थः । नच 'अग्नये जुष्टं निर्वपामी'ति निर्वाप इव ग्रहणेपि देवतानिर्देशस्य यक्ष्यमाणदेवतास्मरणार्थतया दृष्टार्थत्वं किं न स्यादिति वाच्यम् । निर्वापसंबन्धात्पूर्वमेव यागदेवताया आग्नेयोऽष्टाकपाल इत्यादिवचनान्तरावगतत्वेन निर्वापविधिदशायां देवतानिर्देशस्य प्रयोजनजिज्ञासायां यूपमेव यागसंबन्धित्वेनावगताग्न्यादिदेवतास्मरणस्य प्रयोजनत्वस्वीकारेण दृष्टार्थत्वसंभवेऽपि 'सोमेन यजेते'तिविहिते यागे ऐन्द्रवायवादिग्रहणसंबन्धात्पूर्वमिन्द्रवाय्वादिदेवतासंबन्धस्यानवगतत्वेन ग्रहणे ऐन्द्रवायवादिदेवतानिर्देशांशस्य प्रयोजनजिज्ञासायां निर्वापवद्यक्ष्यमाणदेवतास्मरणार्थत्वासंभवेनादृष्टार्थत्वस्यावर्जनीयत्वात् । पश्चात्तु ग्रहणसंबन्धादापतन्नपि यागे देवतासंबन्धो न प्रागवगतं ग्रहणे देवतानिर्देशस्यादृष्टार्थत्वं विहन्तीति भावः । **अत इति** । यथा प्रकृतौ सोमवाक्ये संनिधानात्सर्वेषामैन्द्रवायवादिग्रहाणां संबन्धात्समुच्चयस्तथेहापि संनिधानाविशेषाच्चोदकावगतानां वैशेषिकाणां च समुच्चय इत्यर्थः । **अर्कमिति** । तत्रार्कादिशब्दानां संज्ञात्वेन गुणविधित्वासंभवादवश्यं कर्मान्तरविधित्वमेव वाच्यमिति तेषामुदाहरणत्वसंभव इति भावः । शङ्कते—**ग्रहणेति** । **वाक्यार्थेति** । ग्रहणविधानेऽपि देवताविधेरावश्यकत्वात्तन्मात्रविधिरेवास्त्वित्यर्थः । इदंच वक्ष्यमाणमतदूषणसौकर्यदृष्ट्योक्तं **कार्येति** । उपकारप्रापणपरत्वादित्यर्थः । **कार्यमुखेनेति** । विशिष्टोपकारप्रापणेनार्थाद्विशेषणीभूतपदार्थानामपि प्राप्तेरित्यर्थः । **येषां चेति** । प्राभाकराणामित्यर्थः । अत्र प्राभाकरैर्धात्वर्थविधिबलाद्ग्रहान्तरविधिः स्वीकृतस्तन्मतं दूषयति—**यस्त्विति** । यद्युक्तरीत्या विपरिवृत्तिमाश्रित्य केवलगुणविधिसंभवेऽपि धात्वर्थविधिलिप्सया विशिष्टविधिः स्वीक्रियते तदातिप्रसङ्ग इत्याह—**तस्येति** । **धेनुन्यायेनेति** । धेनुर्दक्षिणेत्यत्र कृत्स्नप्राकृतदक्षिणाकार्ये दक्षिणान्तरविधानाद्यथा कृत्स्ननिवृत्तिस्तद्वदित्यर्थः । अप्राकृतत्वमेवाह—**अध्यूध्निप्रतिपत्त्यर्थमिति** । **तथेति** । हरणान्तरविधिपक्षे 'यद्धोत्रे हरति अध्युद्धिमिति वचनव्यक्त्यभावाद्धौत्रभक्षणनिवृत्तिर्न स्यादित्यर्थः । **तथापीति** । 'ग्रहं संमार्ष्टी'त्यत्र ग्रहसाधनकसंमार्गविधौ द्वितीयाश्रुतिबाधप्रसङ्गादेकवचनं जात्याख्यायां कथंचिन्नेयम् ।

---

१ पुस्तके ग्रहाणामपरिवर्तमानत्वम्.

त्प्राकृतं होतुरिडाभक्षणं न निवर्तयेत् । तस्माच्चोदकप्राप्तेषु ग्रहेषु बृहस्पतिमात्रविधानादनुदाहरणम्। उच्यते—प्राकृतग्रहानुवादेन देवताविधौ तेषां बहुत्वादाग्नेया ग्रहा भवन्तीतिवद्बहुवचनं स्यात् । यद्यपि चानुवाद्यगता संख्या न विवक्षिता तथापि बहुषु बहुवचनेनैव भवितव्यं सोऽयमभिधानबाधः, विशिष्टविधौ तु गौरवमात्रम्। तस्माद्देवताविशिष्टग्रहान्तरविधिरेव न्याय्य इति सूक्तमुदाहरणम्॥

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ॥ ३ ॥

## प्राजापत्येषु चाम्नानात् ॥ ६ ॥

**प्राजापत्यैः पशूनां किं बाधो यद्वा समुच्चयः ॥ अक्रियार्था पशूक्तिः स्याल्लिङ्गं तत्रास्ति बाधनम् ॥ ८ ॥**
**पशूनुद्दिश्य संख्याया देवस्य च विधौ भिदा ॥ कर्मान्यत्वे ग्रहन्यायाद्रोधनाच्च समुच्चयः ॥ ९ ॥**

वाजपेये श्रूयते 'सप्तदश प्राजापत्यान्पशूनालभते' इति । सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवस्ते किं प्राजापत्यैर्निवर्त्यन्ते किंवा समुच्चीयन्त इति । पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्योत्तरं—न पशुत्वं सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणम् । नच प्राकृतपश्वनुवादेन गुणविधिः संभवति, देवतान्तरस्य संख्यान्तरस्य च विधौ वाक्यभेदात् । तस्मात्कर्मान्तराणि, तानि चादृष्टार्थत्वात्प्राकृतैः समुच्चीयन्ते ॥

सांग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयाधिकरणम् ॥ ४ ॥

## आमने लिङ्गदर्शनात् ॥ ७ ॥

**आमनाहुतिभिर्बाध्या अनुयाजा न वाग्रिमः ॥ त्रित्वलिङ्गाद्विशिष्टोक्तेर्भेदो मध्योक्तितोऽन्तिमः ॥ १० ॥**

सांग्रहण्यां श्रूयते 'आमनमस्यामनमस्य देवा इति तिस्र आहुतीर्जुहोती'ति । सन्ति तु प्रकृतौ

---

इह तु प्राकृतग्रहानुवादे वा ग्रहान्तरविधाने वा द्वितीयाया न बाधः । उभयथापि संस्कार्यत्वात् । एवंच द्वितीयाया अबाधे वचनानुग्रह एव न्याय्य इति भावः । **गौरवमात्रमिति** । नतु कस्यापि बाध इति मात्रशब्दार्थः । एवमपि 'शुक्रं गृह्णाती'त्यस्य महाव्रतगतस्यानुदाहरणत्वं गृहमेधीयाज्यभागन्यायेन चोदकपरिलोपकतया बाधसमुच्चयचिन्तायास्तत्रासंभवादितिचेन्न । गृहस्य संनिपातित्वेन साक्षादुपकारासंबन्धेन द्वयोः प्रणयन्तीत्यादेरिव चोदकपरिलोपकत्वासंभवात् । तस्माच्छुक्रं गृह्णातीत्यस्य प्राकृतशुक्रग्रहपरत्वे चोदकपरिलोपार्थतया विध्यसंभवादनुवादस्यानर्थकत्वाच्च ग्रहान्तरविधेरेव वक्तव्यत्वाद्युक्तमुदाहरणत्वमित्याहुः । सूत्रार्थस्तु—सर्वत्र विकृतौ ग्रहान्तराम्नानं प्राकृतादधिकं समुच्चयं स्यात् प्रकृतावनेकग्रहाम्नानवदिति ॥

**प्राजापत्येषु०** ॥ ६ ॥ पूर्वत्र प्रयोगवचनविधेयत्वात्तस्य चाविशेषात्समुच्चयेऽपीह प्रातिस्विकविधिना प्राकृतकार्यविधानात्तद्बाध इत्युत्थितेः संगतिः । **संतीति** । 'आग्नेयमग्निष्टोम आलभत ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं षोडशिनि तृतीयं सारस्वतीं चतुर्थीमतिरात्रे'इति क्रतुव्यवस्थया विहिता आग्नेयादयः क्रतुपशवस्तत्र वाजपेयस्य षोडशित्वात्त्रयः प्राप्ता इत्यर्थः। **पशुत्वेनेति** । पशुत्वेन प्राकृतसवनीयपशुकार्ये पशुयागलक्षणे उपस्थिते तत्र वैकृतप्राजापत्यपशुविधानात्तत एव तत्कार्यसिद्धेः प्राकृतपशुनिवृत्तिरित्यर्थः । यद्वा पशुत्वेनेत्यत्र पशुयागत्वेनेत्यर्थः । तथाच प्राजापत्यवाक्ये संख्याद्रव्यदेवताविशिष्टयागा एव विधीयन्ते । ते च पशुयागत्वेन लिङ्गेन सवनीयपशुयागकार्ये विधीयमानतया प्राकृतान्सवनीययागान्निवर्तयन्तीत्यर्थः । **ननु** पशुत्वस्य पशुयागत्वस्य निरूढपशुतद्यागादिसाधारण्येन सवनीयोपस्थापनाशक्ततया तत्र वैकृतपशोस्तद्यागस्य वा विध्यसंभवेऽपि प्राकृतपश्वनुवादेन गुणमात्रविधिरस्तु । एवंच न त्वदभिमतसमुच्चयसिद्धिरित्यत आह—**नचेति** । इह सप्तदशत्वसंख्यायाः प्रजापतिदेवतायाश्च श्रवणेन गुणविधिपक्षे विनिगमनाविरहादुभयोरपि विधेयत्वावश्यंभावाद्वाक्यभेद इत्यर्थः । तस्माद्गुणविध्यसंभवात्प्राकृतैः समुच्चय एवेत्युपसंहरति—**तस्मादिति** । सूत्रार्थस्तु—'आग्नेयं पशुमालभते अग्निष्टोममेव तेनावरुन्धे ऐन्द्राग्नेनोक्थ ऐन्द्रेण षोडशिनः स्तोत्र'मिति वाजपेये क्रतुपशूनामाम्नानात्प्राजापत्यैः समुच्चयो न बाध इति। अत्र सूत्रे आम्नानादित्युक्त्या तदनुसारेण सवनीया एवोदाहरणत्वेन प्रदर्शिताः। वस्तुतस्तु प्राकृतत्वाविशेषादग्नीषोमीयानुबन्ध्ययोरप्युदाहरणत्वम् । एवंचाम्नानादेव समुच्चयसिद्धेरधिकरणानर्थक्यमिति शङ्काया अप्यनवकाश इति ध्येयम् ॥

**आमने लिङ्गदर्शनात्** ॥ ७ ॥ पूर्वत्र सप्तदशत्वसंख्यायाः प्रकृतावविद्यमानतया प्रकृतिलिङ्गत्वाभावेऽपि इह त्रित्वसं-

थ्रयोऽनूयाजास्ते किमामनहोमैर्बाध्यन्ते उत समुच्चीयन्ते । प्रत्यक्षश्रुतत्वात्रित्वस्य च प्रकृतिलिङ्गत्वान्निवृत्तिः । अथवा 'यस्तिस्रो जुहोति तदामनमसीत्यादिभिर्मन्त्रै'रित्यनुयाजेष्वेव मन्त्रविधिः, त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादाद्वाक्यभेदः तस्मात्कर्मान्तराणि । नच त्रित्वमात्रमनेकसाधारणमनुयाजकार्यं शक्नोत्युपस्थापयितुमिति समुच्चयः ॥

महाव्रते पत्न्युपगानेनर्त्विगुपगानस्य समुच्चयाधिकरणम् ॥ ५ ॥

## उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥८॥ [आनर्थक्यात्त्वधिकं स्यात् ॥९॥]

**पत्न्य उपगायन्तीत्यृत्विजां विनिवर्तिकाः ॥ न वाद्यः सामगानोपचयः काण्डादिजस्ततः ॥ ११ ॥**
**नदनं दुन्दुभीनां हि चित्ते विपरिवर्तते ॥ उपगानं भवेत्तेन योग्यं वीणादिजं ततः ॥ १२ ॥**

गवामयने महाव्रतं नामैकाहः, तत्र 'दिक्षु दुन्दुभयो नदन्ती'त्यादि विधाय श्रूयते 'पत्न्य उपगायन्ती'ति । प्राकृतं च सामगानमृत्विजश्चोपगातारः प्राप्ताः तत्र पत्न्य उपगायन्त्यः किं सामगानस्योपगातॄणामृत्विजां च निवर्तकाः, किंवा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिवर्तकाः । तत इदमपरं संदिह्यते किं गानस्योपचय उपगानमुतोपचयात्मकं गानमुपगानमिति । तत्र गानस्योपचय उपगानम् । गानशब्दश्च शारीर्यां गीतौ प्रसिद्धः तस्माद्गानस्योपचयं काण्डवीणादिभिः कुर्वन्त्य ऋत्विजां निवर्तकाः । भवतु वोपचयात्मकं गानमुपगानं तथापि गायतेः शारीरगीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति समानजातीयत्वात् । अतः सामगानस्यैवोपगाने पत्न्यो वर्तन्ते इत्यृत्विजां निवृत्तिः । उच्यते—नायमेकान्तो यच्छरीर एव गायतिरिति । तन्त्रीगानेऽपि प्रयोगात् । ततश्च यद्यपि गानस्येदमुपगानं तथापि दुन्दुभ्यादीनां गानानाम-

---

स्याया लिङ्गत्वं संभवतीत्युत्थितेः संगतिः । **प्रत्यक्षेति** । त्रित्वस्य प्रकृतिलिङ्गत्वेन तदुपस्थितानुयाजकार्ये विहितैरामनहोमैः प्रत्यक्षश्रुतत्वाचोदकप्राप्तानामनुयाजानां निवृत्तिरित्यर्थः । **ननु** यद्यनुयाजोपस्थापकमस्ति तर्हि तत्र लाघवान्मन्त्रमात्रविधिरेवास्त्वित्यस्वरसादाह—**अथवेति** । प्रथमपूर्वपक्षं निराकरोति—**नचेति । अनेकेति** । परिध्यादिसाधारणमित्यर्थः । त्रित्वस्य परिध्यादिसाधारणत्वादेव तन्मात्रस्योद्देश्यत्वायोगाभिप्रायेणैव पूर्वं विशिष्टानुवादाद्वाक्यभेद इत्युक्तमिति ध्येयम् । सूत्रार्थस्तु—आमनहोमेऽपि समुच्चयः 'यत्प्रयाजानां पुरस्तादुपरिष्टाद्वा जुहुयाद्बहिरात्मन्सजातां दधीताथ यन्मध्यतो जुहोति मध्यत एव सजातां धत्त' इत्यनूयाजानिवृत्तिलिङ्गादिति ॥

**उपगेषु शरवत्०** ॥ ८ ॥ पूर्वत्रानुयाजकार्ये विधानाभावात्तदनिवृत्तावपीह उपगायन्तीत्यनेन प्राकृतोपगानमनूद्य तत्र पत्नीनां विधानात्प्राकृतानामुपगातॄणामृत्विजां निवृत्तिरित्युत्थितेः संगतिः । **तत्रेति** । किं पत्न्य ऋत्विजां निवर्तका उतानिवर्तकास्तदर्थं च किं पत्नीनां सामगानापेक्षया उपगातृत्वं उत दुन्दुभ्यादिवादनापेक्षयेति संशयनिष्कर्षः । **तत इदमपरमिति** । यदि गानस्योपचय उपगानं तदा समनन्तरविहितदुन्दुभिनादादीनां गानत्वाभावेन पत्नीभिः क्रियमाणस्य तदीयोपचयत्वासंभवात्प्राकृतसामगानापेक्षयैवोपचयस्य वक्तव्यत्वेन प्राकृतानां सामगानोपचयकर्तॄणामृत्विजां निवृत्तिः । यदि चोपचयात्मकं गानमुपगानं तदा समनन्तरविहितानां गानत्वाभावेऽपि पत्नीभिः क्रियमाणस्य गानत्वमात्रेणोपचयात्मकगानत्वसंभवेन संनिहितदुन्दुभिनादाद्यपेक्षयैवोपचयत्वोपपत्तेर्भिन्नविषयत्वान्न सामगानविषयप्राकृतोपगातृनिवृत्तिरिति फलफलिभावः । **गानस्येति** । प्राथमिकत्वादुपसर्गार्थः प्रधानं धात्वर्थस्तु तद्विशेषणमित्यभिमानः । **अस्तु** ततः किमित्यत आह—**गानशब्दश्चेति** । लौकिकव्यवहारादिति भावः । ततश्च दुन्दुभिनादादीनां गानत्वाभावान्न तेषामसावुपचय इति भावः । तस्मात्सामगानस्यैवासावुपचय इति वक्तव्यमित्याशयेनाह—**तस्मादिति । काण्डवीणादिभिरिति** । शरकाण्डादिनिर्मितवीणादिभिरित्यर्थः । अभ्युपगमवादेनाह—**भवतु वेति** । पूर्वस्मिन्पक्षे पत्नीभिः केवलं काण्डवीणावादनमेव कर्तव्यमत एव तत्र गायनस्योपचयं काण्डवीणादिभिः कुर्वन्त्य इत्युक्तम्, इह तु न केवलं काण्डवीणावादनं कर्तव्यं किंतु कण्ठेनापि गानं कर्तव्यम् । अतएवात्र शारीरमेवेदमुपगानमित्युक्तमिति बोध्यम् । **तन्त्रीगानेपीति** । 'दारवी गात्रवीणा च द्वे वीणे गानजातिषु'इति तन्त्रीगाने गानतत्त्वाभियुक्तप्रयोगस्यान्यथयितुमयोग्यत्वान्न लोकव्यवहारावष्टम्भेन शारीरगीतिमात्रवचनत्वमिति भावः । **ननु** दुन्दुभिनादादौ अभियुक्तप्रयोगस्याप्यभावान्न तस्य गानशब्दार्थ-

---

१ मन्त्रविधिं मन्यते. २ उपगेयेषु.

नन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्तव्यम् । अपिचोपचयात्मकं गानमुपगानं सामानाधिकरण्यलाभात्, तच्च काण्डवीणादिभिः क्रियमाणं न कथंचिच्छारीरं संभवति तेन वादित्रादिकमिदमुपगानं तत्कस्योपचय इति दुन्दुभ्यादीनां गानानां समानजातीयत्वात्प्रकृतत्वाच्च तेषामेवेदमुपगानं पत्न्यः कुर्वन्तीति न सामविषयाणामृत्विजां निवृत्तिः ॥

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम् ॥ ६ ॥

**संस्कारे चान्यसंयोगात् ॥१०॥ [प्रयाजवदिति चेत् ॥११॥ नार्थान्यत्वात् ॥१२॥]**

अभ्यङ्गो नावनीतः किं बाध्यो गौग्गुलवादिभिः। न बाध्यो लेपजैकत्वान्न शैत्यस्नेहभेदतः ॥ १३ ॥

अस्त्यञ्जनाभ्यञ्जनं नाम सत्रं तत्र श्रूयते—'गौग्गुलवेन प्रातःसवनेऽभ्यञ्जत'इत्यादि । तत्किं प्राकृतस्य नवनीताभ्यञ्जनस्य निवर्तकं नेति संशये दृष्टार्थत्वादञ्जनाभ्यञ्जनयोः प्राकृतस्य वैकृतेन निवृत्तिः । सत्यम् । दृष्टार्थमभ्यञ्जनं तथापि नैकार्थं नवनीताभ्यञ्जनस्य स्नेहनार्थत्वात् गौग्गुलवादेस्तु चन्दनानुलेपनवद्रूक्षीकरणार्थत्वात् । नच प्राकृतेऽभ्यञ्जने गुणविधिः प्रातःसवन इति च गौग्गुलवेनेति चानेकगुणश्रवणात् ॥

महाव्रते अहतवाससस्तार्यादिभिः समुच्चयाधिकरणम् ॥ ७ ॥

**आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥ [अधिकं वान्यार्थत्वात् ॥ १४ ॥ समुच्चयं च दर्शयति ॥ १५ ॥]**

तार्याद्यहतवस्त्रस्य बाधकं स्यान्न वाग्रिमः ॥ गुह्याच्छादनकार्यैक्यादयोग्यत्वात्समुच्चयः ॥ १४ ॥

महाव्रते श्रूयते 'तार्यं यजमानः परिधत्ते दर्भमयं पत्नी'ति । तत्र संशयः किं तार्यं दर्भमयं च चोदकप्राप्तस्याहतस्य वाससो निवर्तकं नेति । तत्र कौपीनाच्छादने परिदधातीति प्रयुज्यते । तस्मिंश्च तार्येण कृते तत्कार्यस्याहतस्य निवृत्तिः । नचैवं कम्बलं परिधत्त इत्युपरिवासस्यपि दर्श-

---

त्वमेवंच शारीरेऽन्यत्र वा यत्र षड्जादिस्वराभिव्यक्तिस्तस्यैव गानशब्दार्थत्वमित्यस्वरसात्प्रौढवादं परित्यज्य तात्विकं पक्षमवलम्बते—**अपिचेति** । उपसर्गस्य पारतन्त्र्यनियमेन तत्प्राथम्यमकिंचित्करमिति भावः । **तच्चेति** । गायतेस्तन्त्रीगानेपि मुख्यत्वाङ्गीकारेण काण्डवीणादिभिः क्रियमाणेऽपि गाने उपचयात्मकगानत्वोपपत्तेः कण्ठेनापि गातव्यमिति निर्बन्धे प्रमाणाभाव इति भावः । **तदिति** । वादित्रादिकमित्यर्थः । एवंचोपगायन्तीत्यस्य संनिहितसजातीयदुन्दुभ्यादिनादविषयोपचयात्मकं काण्डवीणादिभिः क्रियमाणं वादित्रगानमेव वाच्यमिति प्राकृतोपगानपरत्वासंभवेन तत्र पत्नीलक्षणगुणमात्रविधायकत्वासंभवाद्विशिष्टविधिरपि न दोष इति ध्येयम् । सूत्रार्थस्तु—उपगेषु उपगानसंयोगाच्छरैः कुशानामिव प्राकृतनिवृत्तिः स्यादिति ॥

**संस्कारे चान्यसंयोगात्** ॥ १३ ॥ **गौग्गुलवेनेति** । यन्त्राद्युपायसंपादितगुग्गुलुद्रव्येणेत्यर्थः । पैतुदारवेण माध्यंदिने सौगन्धिकेन तृतीयसवन इत्यादिशब्दार्थः । पूर्वत्र भिन्नकार्यत्वादनिवृत्तावपीहैककार्यत्वान्निवृत्तिरित्युत्थितेः संगतिः । **दृष्टार्थत्वादिति** । उपलेपार्थं प्राकृतं नवनीताभ्यञ्जनं गौग्गुलवाभ्यञ्जनमपि तदर्थमेवेत्युभयोरेककार्यत्वान्निवृत्तिरित्यर्थः । नच सुत्याकालीनगौग्गुलवाभ्यञ्जनेनापि कथं दीक्षाकालीननवनीतकार्यसिद्धिः भिन्नकालत्वादिति वाच्यम् । भिन्नकालत्वेऽपि पाशुकैः प्रयाजैः पुरोडाशोपकारवदविरोधात् । **नैकेति** । नोपलेपनमात्रं नवनीताभ्यञ्जनस्य प्रयोजनं, तथासत्यानर्थक्यात्, किंत्वङ्गवैशद्यावहस्नेहनार्थं तस्यच सुखप्रचारार्थमत्यन्तापेक्षितत्वान्नानर्थक्यम् । गौग्गुलवादेस्तु स्नेहद्रव्यत्वाभावेन स्नेहनार्थत्वासंभवाद्रूक्षीकरणमेव प्रयोजनमिति नैकार्थ्यमित्यर्थः । सूत्रार्थस्तु—संस्कारे अभ्यञ्जने समुच्चयः भिन्नकार्यसंयोगादिति ॥

**आच्छादने तु०** ॥ १६ ॥ तार्यमिति घृताक्तं वासः । तृयाख्यवृक्षविशेषस्य विकार इत्येके । वाजपेयब्राह्मणे भट्टभास्करः अहतं सद्यःकृतमनुपभुक्तं अक्लृप्तदशम् । **कौपीनाच्छादन इति** । गुह्याच्छादन इत्यर्थः । तत्रैव परिधानेरूढिः । अतएव 'परिधानमधोंशुक'इत्यमर इति भावः । एककार्यत्वादेव संगतिरपि स्फुटा । **नैवमिति** । नच परिपूर्वस्य दधातेः कौपीनाच्छादने उक्तनिघण्ट्वादिवशाद्रूढिनिर्णये कम्बलं परिधत्त इत्यादिप्रयोगः परितो धत्त इति योगबलादेव निर्वाह्यः । तार्यं यजमानः परिधत्त इत्यत्र च रूढिसंभवे योगग्रहणायोगादिदमयुक्तमिति वाच्यम् । इहापि चोदकालुमहाय

नात् तार्यदर्भमययोश्च कौपीनाच्छादनेतीवायोग्यत्वात्तत्राप्याचारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किंचाधिकमिदं तार्यादिपरिधानं वासांसि विस्रंसयतीति वासोबहुत्वानुवाददर्शनात् । तस्मादुपरिधारणे तार्यादिविधिरित्यहतस्यानिवृत्तिः ॥

महाव्रते रथंतरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ॥ ८ ॥

## सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

बाध्यं श्लोकादिनाज्यादि न वाद्यः स्तुतिलिङ्गतः ॥ देशसाम्नोर्विधौ भेदे वैशिष्ट्याच्च समुच्चयः ॥ १५ ॥

तत्रैव श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवीते'त्यादि । तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिर्न वेति संदेहे स्तुत्यर्थत्वान्निवृत्तिः । स्यादेवं यदि प्राकृतस्तुत्यनुवादेन सामान्तरं विधीयेत । नत्वेवमस्ति । नहि प्राप्तस्तुत्यनुवादेन सामान्तरं पुरस्तात्सदस इति च देशान्तरं शक्यं विधातुम् । अतः स्तुतिरेवात्र विधेया । सा चादृष्टार्था न प्राकृतीनां स्तुतीनां निवर्तिका भवितुमर्हति । एकार्थत्वानवगमात् । तदेतद्गतप्रायं विस्पष्टीकरणार्थमुत्तरविवक्षया वा ॥

विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् ॥ ९ ॥

## अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥

समुच्चीयेत कौत्सादि यद्वा प्राकृतबाधकम् ॥ स्तुत्यभावादादिमोऽन्त्यो लिङ्गप्रकरणद्वयात् ॥ १६ ॥

कचिच्छ्रूयते 'कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः क्रौञ्चानि भवन्ती'ति । किं कौत्सादीनि सामानि प्राकृतानां निवर्तकानि नेति संशयः । तत्र साममात्रं श्रूयते न स्तुत्यर्थता । तस्मात्स्तुत्यर्थानामनिवृत्तिः । सत्यम् । न प्रत्यक्षः स्तुतिसंयोगः, प्रकरणात्तु क्रत्वर्थत्वेनावगतानि सामानि लिङ्गात्प्राकृतानां साम्नां कार्यमृगक्षराभिव्यक्तिमवलम्बमानानि प्राकृतानां निवर्तकानि भवन्ति ॥

कौत्सादिभिर्व्यवस्थयैकादिबाधाधिकरणम् ॥ १० ॥

## सर्वेषामविशेषात् ॥ १८ ॥ [एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥१९॥]

तत्सर्वबाधकं सर्वमेकस्याद्युक्तितोऽथवा ॥ अविशेषादादिमोऽन्त्य एकाद्युक्तिविशेषतः ॥ १७ ॥

कौत्सादीनि निवर्तकानीत्युक्तम् । इदमिदानीं विचार्यते किं कौत्सं सर्वेषां निवर्तकं, तथा वसि-

---

योगग्रहणस्यैव युक्तत्वादिति भावः । **तार्येति** । यद्यपि तार्यं कौपीनाच्छादने योग्यं तथाप्यहतवत्र सौकर्यकरमिति भावः । वृक्षविकारत्वाभिप्रायेण वा योग्यत्वमुक्तमिति ध्येयम् । **ननूपर्याच्छादनार्थत्वेऽपि** बाधस्तुल्यः आचारप्राप्तोत्तरीयस्य बाधनीयत्वादित्यत आह—**तत्रापीति** ॥

**सामस्वर्थान्तरश्रुतेः** ॥ १६ ॥ 'अनुश्लोकेन पश्चात्क्रौञ्चेन चात्वालमभिवीक्षमाणा'इत्यादि शब्दार्थः । पूर्ववत्संगतिः । **स्तुत्यर्थत्वादिति** । प्राकृतस्तुत्यनुवादेन श्लोकादिसाममात्रं विधीयते, सदसः पुरस्तादिति च लक्षणया प्राकृतसदोदेशानुवाद इति भावः । **देशान्तरमिति** । प्राकृतदेशानुवादकत्वे लक्षणैव दोषः । चात्वालमभिवीक्षमाणा इत्यत्र लक्षणयापि न प्राकृतानुवादसंभव इति विशिष्टस्तुत्यन्तरविधिरवश्यमङ्गीकर्तव्य इति भावः । **ननु** स्तुत्यन्तरविधावपि प्राकृतस्तुतिनिवृत्तेस्तत्साधनसामनिवृत्तिरपि स्यादित्यत आह—**साचेति** । **तदेतदिति** । पूर्वपक्षस्य मन्दत्वादिति भावः । **उत्तरेति** । स्तुत्यन्तरविधावनिवर्तकत्वे उक्ते यत्र न स्तुत्यन्तरं श्रूयते तत्र प्राकृतनिवृत्तिः स्वध्यवसानेत्युत्तरसिद्धान्तसौकर्यार्थमित्यर्थः । सूत्रे अर्थान्तरश्रुतेः प्राकृतस्तुत्यपेक्षया स्तुत्यन्तरसंयोगश्रुतेः प्राकृतसाम्नामबाध इत्यर्थः ॥

**अर्थे त्वश्रूयमाणे०** ॥ १७ ॥ इदं सूत्रं पूर्वाधिकरणे श्लोकादेः कौत्सादेश्च वैषम्यप्रतिपादनपरत्वेन व्याख्याय पुनरेवं वेत्यधिकरणान्तरत्वेन भाष्ये व्याख्यातम् । तत्राद्यव्याख्यानस्य स्पष्टत्वाद्द्वितीयं दर्शयति—**कचिदिति** । **प्राकृतानामिति** । स्तुत्यर्थानामिति शेषः । **न स्तुत्यर्थतेति** । तथाच तार्क्ष्यादिसामवददृष्टार्थतेति भावः । अनेनैव पूर्ववत्प्राकृतस्तुत्यर्थत्वाभावादनिवृत्तिरित्युत्थानात्संगतिरपि सूचिता । **सत्यमिति** । साममात्रे विहिते प्रयोजनापेक्षायां दृष्टे संभवत्यदृष्टकल्पनायोगादृष्टऋगक्षराभिव्यक्तिद्वारा स्तुतिरेव प्रयोजनं स्वीक्रियते । तार्क्ष्यादिसाम्नां तु स्तुतेरन्यत्र विहितानां दृष्टासंभवाददृष्टार्थतेति भावः । **लिङ्गादिति** । साम्नां ऋगक्षराभिव्यक्तिजननसामर्थ्यलक्षणादित्यर्थः । सूत्रार्थस्तु—स्तुतिरूपे प्राकृते प्रयोजनेऽश्रूयमाणेऽपि प्राकृतसामनिवृत्तिः स्यात् प्राकृतस्य गायत्रादेः स्तुत्यर्थतया शेषत्वादिहापि तथात्वसंभवादिति ॥

**सर्वेषामविशेषात्** ॥ १८ ॥ पूर्वत्रैव विशेषचिन्तनात्संगतिरित्याशयेन वृत्तं कीर्तयति—**कौत्सादीनीति** । पूर्वो-

ष्ठस्य जनित्रे तथा क्रौञ्चानि उतैकमेकस्य द्वे द्वयोः बहूनि बहूनामिति। अविशेषात्सर्वत्र सर्वेषां निवृत्तौ प्राप्तायामुच्यते—यत्रैकं श्रूयते तत्रैकस्य निवृत्तिः, यत्र द्वयं तत्र द्वयोः, यत्र बहूनि तत्र बहूनामिति यावन्त्यत्र वैकृतानि तावतामेव प्राकृतानां निवृत्तिः तावन्मात्रेणैव वैकृतसामोपदेशस्यार्थवत्त्वादितरनिवृत्तौ प्रमाणाभावात् ॥

विवृद्धाविवृद्धस्तोमक्रतुषु क्रमेण प्राकृतसामबाधाबाधाधिकरणम् ॥ ११ ॥

## स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥२०॥

स्तोमस्थयोर्वृद्ध्यवृद्ध्योः प्राकृतः किं निवर्तते ॥ अवृद्धावेव बाधः स्यात्सामोत्पत्त्युपयोगतः ॥ १८ ॥
अवृद्धावुपयोगाय प्राकृतस्य निवर्तकम् ॥ वृद्धिं प्रत्युपयोगित्वाद्वृद्धौ तु न निवर्तकः ॥ १९ ॥

प्रत्यक्षश्रुतैः सामभिस्तावत्संख्याकानां प्राकृतानां विकार इत्युक्तम्। अथेदानीं विचार्यते यत्र स्तोमविवृद्धिः यथा 'द्वात्रिंशः पवमानोऽभिषेचनीय'इत्यादौ, तत्र प्रत्यक्षश्रुतै राजसामभिः प्राकृतानि विक्रियन्ते किंवा समुच्चय इति। तत्र विवृद्धस्तोमकेष्वागमेन संख्यापूरणं वक्ष्यते। तत्रागमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धाववकाशमलभमानानि प्राकृतबाधेन वर्तन्ते, तेनाविवृद्धौ विवृद्धौ च सर्वत्र बाध इति प्राप्ते ब्रूमः—'प्राकृतानामबाधेन वैकृतानामसंभवः ॥ यत्र तत्रैव बाधः स्याद्विवृद्धौ त्वस्ति संभवः ॥' नह्यागमेन संख्यापूरणं वाचनिकं विवृद्ध्यन्यथानुपपत्त्या त्वागमः क्रियते सा चेह विवृद्धिरुपदिष्टातिदिष्टसामभिरेव सिद्ध्यतीति को नामाश्रुतानामागमं कृत्वातिदिष्टानि बाधेत। तस्माद्विवृद्धौ समुच्चयः ॥

पवमाने विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ॥ १२ ॥

## पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥२१॥ [वचनानि त्वपूर्वत्वात् ॥२२]

क्वापि स्तोत्र ऋचि क्वापि स्यादावापस्तथोद्धृतिः ॥ पवमानेषु गायत्र्यादिष्वेवोताविशेषतः ॥ २० ॥
आद्यो नो परिसंख्यानादत्र ह्येवेति तद्विधेः ॥ विध्यन्तराशेषभूतमपूर्वं तद्विधीयते ॥ २१ ॥

अविवृद्धौ प्रत्यक्षश्रुतैः कौत्सं भवतीत्यादिभिस्तावत्संख्यानां प्राकृतानामुद्वापः, विवृद्धौ तु प्रत्यक्षश्रुतानां राजसामादीनामधिकानामावाप इति स्थितम्। तत्र चिन्त्यते किं यस्मिन्कस्मिंश्चित्स्तोत्रे

---

त्करीत्या स्तुत्यर्थत्वनिश्चये सामविशेषकार्यस्तुतिविशेषसंयोगाभावादविशेषात्सर्वेस्तुत्यर्थत्वावगमात्सर्वेषां निवृत्तिरित्यर्थः। **तावन्मात्रेणेति**। वैकृतोपदेशान्यथानुपपत्त्या हि प्राकृतनिवृत्तिस्तत्र यां निवृत्तिं विना वैकृतोपदेशोऽनुपपन्नस्तावदेव निवर्तयति नाधिकमित्यर्थः ॥

**स्तोमविवृद्धौ०** ॥ २० ॥ आपवादिकीं संगतिमभिप्रेत्याह—**प्रत्यक्षेति**। **स्तोमविवृद्धिरिति**। स्तोमस्य स्तोत्रियासंख्याया विवृद्धिरित्यर्थः। **द्वात्रिंशदिति**। अभिषेचनीयाख्यः सोमयागो द्वात्रिंशत्सोमकपवमानस्तोत्रयुक्त इत्यर्थः। **राजेति**। राजसामादिभिरित्यर्थः। **ननु** स्तोमविवृद्धौ संख्यापूरणाय समुच्चयस्यैव युक्तत्वात्कथं पूर्वः पक्ष इत्याशङ्क्य संख्यापूरणस्यान्यथासिद्धिं वदन्पूर्वपक्षमुपपादयति—**तत्रेति**। **नहीति**। अबाधेनैव राजसामाद्याम्नानस्य संख्यापूरणस्योपपत्तेर्बाधो न न्याय्यः। तथाच यत्र प्रत्यक्षेणाश्रुतानि सामानि तत्रैवागमेन संख्यापूरणं न श्रुतस्थलेऽपीति भावः। सूत्रार्थस्तु—स्तोमविवृद्धौ प्राकृतसमुच्चयः स्यादितरस्यागमस्याश्रुतत्वादविवृद्धौ यत्र प्राकृतसंख्या यथाप्रकृत्यवतिष्ठते यत्र वा 'पुनः स्तोमस्य सवनं मध्यमं द्वादशं स्मृत'मित्यादौ हीयते तत्रोभयत्रापि परं प्राकृतनिवृत्तिस्तां विना वैकृतनिवेशासंभवादिति ॥

**पवमाने स्यातां०** ॥ २१ ॥ पूर्वोक्तविषयचिन्तनात्संगतिरित्याशयेनाह—**अविवृद्धाविति**। उद्वाप उद्धारः निवृत्तिरिति पर्यवसितोऽर्थः। आवापः प्रक्षेपः समुच्चय इति पर्यवसितोऽर्थः। **तदिति**। वैकृतसामनिवेशनिबन्धनश्चाविवृद्धिस्तोमक उद्वाप इत्यर्थः। **ननु** 'त्रीणि ह वै यज्ञस्ये'ति वचनेन पवमानप्रकरणात्पवमानगतगायत्र्यादिष्वेवावापोद्वापौ नियम्येते ततः कथमविशेष इत्यत आह—**त्रीणीति**। तन्त्ररत्ने तु गायत्र्यादीनां पवमानेष्वेव संभवात्पवमानविषयत्वमुक्तम्। नच पञ्चमे 'अन्त्ययेतूत्तरयोरित्यत्रास्य वाक्यस्य विधायकत्वं ग्रन्थकारेण साधितमित्ययुक्तमिति वाच्यम्। भाष्यादावत्रैव विधायकत्वसाधनेनात्रत्यस्यैव तत्र व्यवहारात्। अतएव तत्रास्मादेवाक्षरसात्पूर्वोक्तबहिष्पवमानप्रत्युदाहरणमात्रं

यस्यांकस्यांचिदृचि प्रत्यक्षश्रुतानामावापो यतःकुतश्चिच्च प्राकृतानामुद्वापोऽथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्स्वावापोद्वापाविति । तत्र यत्र क्वचिदपि निवेशे वैकृतानामर्थवत्त्वादविशेषः तन्निबन्धनश्च प्राकृतानामुद्वाप इति सोऽप्यविशेषेणैव स्यात् । 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवावपन्ति अतएवोद्वपन्ती'त्येतत्तु हिशब्दोपबन्धात् वर्तमानापदेशरूपत्वाच्चाविधायकं नावापोद्वापौ नियन्तुमलम् । यद्यपि नियामकं तथापि पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थं न स्तोत्रान्तरपरिसंख्यानार्थमिति । उच्यते—अपूर्वत्वादस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकमतो वचनात्पवमानेष्वेवावापोद्वापौ । नन्वेकविंशेनातिरात्रेणेत्यादौ स्तोमविवृद्धिरविशेषेण श्रुता सर्वत्र कर्तव्या । साचावापेनैव नाभ्यासेन, अभ्यासस्याश्रुतत्वादिति वक्ष्यति । ततश्च सर्वस्तोत्रेष्वावापे कर्तव्ये प्रत्यक्षश्रुतानामपि यत्र क्वचिदावापः स्यात् । सत्यम् । यदि सर्वत्रावापः स्यात्स तु न्यायात्सर्वत्र प्राप्तः 'अत्रह्येवावपन्ति अतएवोद्वपन्ती'तिवचनाद्गायत्र्यादिभ्योऽन्यत्र परिसंख्यायते । नचेदमेवावापस्य वचनमिति निबन्धकारवचनाद्भ्रमितव्यम् । कौत्सादीनां पाठादेवावापसिद्धेरन्यत्रापि विवृद्धावागमेन संख्यापूरणं वक्ष्यमाणन्यायसिद्धं न विधातव्यम् । एवकारोपहतविधिशक्तिकं चेदम् । तस्मात्परिसंख्या । नच परिसंख्यायास्त्रिदोषत्वम्, एवकारेण तस्या एव श्रुतत्वात् । तेन स्तोत्रान्तरेष्वगत्याभ्यासेनैव पूरणम् । ननु कण्वरथंतरन्यायेन कौत्सादीनां स्वयोनावेव गानान्न प्राकृतीष्वृक्ष्वावापप्राप्तिः । असत्यां च प्राप्तौ कथं परिसंख्या । तस्माद्विधिरेव गायत्र्यादिष्वावापस्य । नैतदेवं । कौत्संभवतीत्यादिषु साममात्रमुपदिश्यते तद्योनिभूतायास्त्वृचो नोपदेशेन नातिदेशेन प्राप्तिः, यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते

नाधिकरणान्तरमित्युक्तम् । **पवमानेति** । पवमानेषु कर्तव्यौ यावावापोद्वापौ तौ गायत्र्यादिष्वेवेत्येवं पवमानविषयावापोद्वापमात्रऋगन्तरे व्यावृत्त्यादिवचनत्वेनास्योपपत्तेर्न स्तोत्रान्तरेभ्य आवापादिव्यावर्तकत्वमित्यर्थः । **अपूर्वेति** । यद्यपि हि शब्दोपबन्धवर्तमानापदेशाभ्यां स्वरसतः स्तुतिपरत्वं प्रतीयते तथापि विध्यन्तरशेषत्वाभावेन स्तुतेरानर्थक्यात् अप्राप्तत्वाच्च परिसंख्यायास्तद्विधानार्थमेवेदं वचनमिति बलादेव विधायकत्वं कल्प्यत इत्यर्थः । **ननु** तथापि पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थत्वं वचनस्य किं न स्यादिति शङ्कानिराकरणाभिप्रायेणाह—**अत इति** । 'त्रीणि ह वै यज्ञस्ये'त्युपक्रमाद्यज्ञगतयोरेवावापोद्वापयोरयं देशनियमो न पवमानमात्रगतयोः, पवमानोपस्थापकाभावात् गायत्र्यादीनामुपादानस्यावापमात्राधिकरणविधानार्थत्वेनाप्युपपत्त्या विधेयावापोद्वापविशेषणतया पवमानोपस्थापने सामर्थ्यादिति भावः । **ननु** 'एकविंशेनातिरात्रेणे'त्यादिना श्रूयमाणा विवृद्धिः सर्वस्तोत्रविषया नतु पवमानमात्रविषया, 'द्वात्रिंशत्पवमानोऽभिषेचनीय'इत्यादिवत्पमानशब्दाभावात् । तथाच स्तोत्रान्तरेष्वपि संख्यापूरणायावापस्यापेक्षितत्वेन वचनस्य तत्परिसंख्यायकत्वासंभवात् अगत्या पवमानविषययोरेव देशविधायकत्वं वाच्यमित्याशयेन शङ्कते—**नन्विति** । प्रागुक्तरीत्या वचनस्य परिसंख्यार्थत्वनिश्चयेनान्यत्र संख्यापूरणमभ्यासेनैव कार्यमिति परिहरति—**सत्यमिति** । **नचेदमिति** । यद्यप्यपूर्वविधित्वेऽपि स्तोत्रान्तरेषु नावापप्रसङ्गः । अस्य वचनस्य पवमानमात्रविषयत्वात्स्तोत्रान्तरेष्वावापविधायकवचनान्तराभावाच्च । तथाचास्याः शङ्काया न प्रकृतिसंगतिस्तथापि प्राभाकरोक्तापूर्वविधिनिराकरणेन स्वोक्तपरिसंख्यात्वस्थापनमात्राभिप्रायेणेयमाशङ्कोक्तेति ध्येयम् । **ननु** तर्हि यत्र विकृतौ न सामान्तरपाठस्तत्रावापस्याप्राप्तेरपूर्वविधित्वमस्त्वित्यत आह—**अन्यत्रेति** । आगमेन सामवेदपठितसामावापेनेत्यर्थः । **एवकारेति** । एवकारार्थविशेषणतया प्रतीयमानस्यावापादेः स्वयंविध्यन्वयायोग्यत्वेनापूर्वविधिशक्तेरेवकारेण प्रतिहतत्वादित्यर्थः । यथाश्रुते एवकारेण विधिशक्तिमात्रप्रतिबन्धस्वीकारे परिसंख्यात्वस्याप्यनुपपत्तेः । तस्माद्धात्वर्थस्यान्यतःप्राप्तेरेवकारार्थस्य प्राधान्येन विध्यन्वययोग्यत्वाच्चैवकारार्थपरिसंख्यैव विधेयेत्याह—**तस्मादिति** । **श्रुतत्वादिति** । श्रुतत्वादेव स्वार्थत्यागपरार्थस्वीकारलक्षणदोषद्वयाप्रसङ्गान्न त्रयोऽपि दोषाः किंतु प्राप्तबाधलक्षण एक एवेति नात्यन्तदुष्टा परिसंख्येति भावः । **तेनेति** । स्तोत्रान्तरेभ्य आवापस्य वचनेन व्यावर्तितत्वेनेत्यर्थः । भवेदेवं यदि पाठबलादपि कौत्सादीनां प्राकृतीष्वृक्षु प्राप्तिः स्यात्, नत्वेवं, तेषामध्ययनसिद्धस्वयोनिष्वेव गानप्राप्तेः, एवमपठितानामपि साम्नां स्वयोनिनिष्ठानामेवागमो न केवलानामिति तेषामपि प्राकृतीष्वप्राप्तेर्न परिसंख्या किंत्वपूर्वविधिरेव वक्तव्य इति शङ्कते—**नन्विति** । **अक्लृप्तेति** । योनौ गानं क्लृप्तं ऋगन्तरेषु गानस्योहनीयतया कल्पनीयत्वमित्यन्यथाभावश्चेति भावः । यदि प्रकृतावपि सामाम्नानबलादेव ऋचां प्राप्तिः स्यात्तदा कौत्सादीनां योनीनामपि तुल्य-

१ यास्यांश्चिदपि.

तच्चायुक्तम् । प्राकृत्यो हि ऋचः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिताः, सामानि च प्रतिसंस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम् । अतः प्राकृतीष्वेवर्क्षु प्रत्यक्षश्रुतान्यागम्यमानानि च सर्वाण्यपूर्वाणि सामानि गेयानीति प्राप्ते, आवापे परिसंख्यार्थमेव वचनम् । एवमेवकारः समर्थितो भवति । कण्वरथंतरस्यतु यथा स्वयोनौ स्वयोन्युत्तरयोश्च गानं तथा वक्ष्यामः । तस्मात्पवमानेष्वेवावापोद्वापौ ॥

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ॥ १३ ॥

## विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥ [शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥]

**पर्यायेणापि देवोक्तिर्वैधेनैव पदेन वा ॥ अर्थाभेदादादिमोऽन्त्यः शब्दपूर्वान्वयित्वतः ॥ २२ ॥**

दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपाल'इति । बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक इत्यादीनि, तत्र तद्वाचिषु निगमेषु येनकेनचिच्छब्देनाग्नेरभिधानं कर्तव्यं उत विधानगतेनैवाग्निशब्देनेति । तत्र—'देवतात्वं विधायाग्नेश्चोदना विनिवर्तते ॥ प्रयोगकाल उद्देशो येनकेनापि सिद्ध्यति ॥' अग्न्यर्थो देवताकर्तव्य इत्येतावांश्चोदनार्थः । तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापतति, तन्नियमे तु नास्ति प्रमाणम् । पावकशब्देनापि ह्युद्दिश्यमाने चोदनाभिहितमग्नेर्देवतात्वं संपादितमेव भवति, तस्मादनियम इति प्राप्ते केचित्तावदाहुः—सत्यम-

---

न्यायत्वात्प्राप्तिः स्यात्, नत्वेवं किंतु क्रमप्रकरणाभ्यां पृथगेव ऋचामप्यङ्गत्वमवगतं, तस्मान्न तुल्यन्यायत्वमित्याशयेनोक्तं **क्रमेति** । नच गुणभूतसामान्यथाभावभयेन प्रधानबाधो युक्त इत्याशयेनाह—**सामानि चेति** । कण्वरथन्तरस्योत्तराग्रन्थे स्वयोन्युत्तरयोश्च पाठबलात्तत्रैव गानमिति वक्ष्यत इत्याह—**कण्वेति** । अत्रेदमवधेयम्—आवाप एक एवात्र वाक्ये विधेयो नोद्वापोपि, तस्यार्थसिद्धत्वात् । तथाहि उद्वापस्य विधेयत्वे तद्विधेः को विषयः, न तावद्यत्र स्तोमविवृद्धिः स विषयस्तत्र संख्यापूरणार्थं प्राकृतवैकृतसमुच्चयस्यैव पूर्वत्र स्थितत्वेनोद्वापासंभवात्, नापि यत्र न विवृद्धिर्न वा हानिः किंतु यथाप्रकृत्येव सामावतिष्ठते स विषयस्तत्रापि प्राकृतोद्वापस्य सामावापनिबन्धनत्वेन तत एवार्थप्राप्तोद्वापस्य विधिवैयर्थ्यात्। नापि यत्र स्तोमस्य हानिः स विषयस्तत्रापि यत्र वैशेषिकसामान्याम्नातानि तत्रावापनिबन्धनोद्वापस्य तत एव प्राप्तेः। अस्तु तर्हि यत्र हीनस्तोमकेन वैशेषिकसामाम्नानं स विषय इति, तन्न । तत्रोद्वापस्यैवाभावात् । उद्वापो हि प्राकृतीष्वृक्षु सतीष्वेव तदपादानक उद्धारो न प्राकृतसामनिवृत्तिमात्रम्, ततश्च हीनस्तोमस्थले प्राकृतर्चामपि निवृत्त्योक्तलक्षणोद्वापाभावाद्यथाकथंचित्सामनिवृत्तिमात्रस्योद्वापत्वाभ्युपगमेऽपि त्रिवृदग्निष्टोम इत्यादावविशेषेण श्रुतत्रिवृत्त्वस्य सर्वस्तोत्रेषु संपादनीयत्वेन तदनुसारेण स्तोत्रान्तरेष्वपि सामनिवृत्त्यवश्यंभावेन पवमानेष्वेवोद्वापस्य नियन्तुमशक्यत्वाच्च । तस्मात्प्राकृतऋगपादानक उद्धार एवोद्वापः स सर्वोप्यावापनिबन्धनस्ततश्चावापविधिनैवार्थसिद्धत्वान्नोद्वापोऽपि पृथग्विधेयः । एवंचैकस्यावापरूपार्थस्यैव विधानादेकवाक्यत्वमपि संगच्छते । तन्निबन्धनश्च प्राकृतानामुद्वाप इति वदतो ग्रन्थकारस्याप्ययमेवार्थः संमत इति । सूत्रार्थस्तु—पवमानेष्वेवावापोद्वापौ स्यातां तत्रैव तयोः, त्रीणि ह वा इति वाक्ये दर्शनादिति ॥

**विधिशब्दस्य मन्त्रत्वे० ॥ २३ ॥ निगमेष्विति** । देवतानिर्देशकेषु 'अग्नये जुष्टमग्निमग्नमावहाग्नय इदं नममे'त्यादिष्वित्यर्थः । नच निर्वापादिनिगमे पाठादेवाग्निशब्दस्य नियमसिद्धेर्न तेषामुदाहरणत्वमिति वाच्यम् । निर्वापादिनिगमेष्वपि न्यायादेवाग्निशब्दनियमसिद्धावपि पुनरग्निशब्दपाठः पठितव्यदेशे यज्ञावधारणार्थं इति ग्रन्थकारेणैवाग्निमाधिकरणे पाठप्रयोजनस्यान्यस्य वक्ष्यमाणत्वेन तेषामप्युदाहरणत्वसंभवात् पूर्वत्र यथावापोद्वापयोः संकोच एवमिह देवतानिर्देशो विधिशब्देनैव कार्य इति संकोचे प्रमाणाभावाद्येनकेनचिच्छब्देन देवतानिर्देशः कार्य इत्युत्थितेः संगतिः । लक्षणसंगतिस्तु बाधप्रसङ्गात्पर्यायशब्दबाधपर्यवसानाद्विचारस्येति तन्त्ररत्ने । **नन्विन्द्रादिशब्दानां** लोकतोऽर्थानवगमेन हुमादिशब्दानामिव निरर्थकत्वादर्थस्य देवतात्वासंभवाच्छब्दएव देवतेति कथं पर्यायप्रसङ्गोऽत आह—**अग्न्यर्थ इति** । इन्द्रादिशब्दानां लोकतोऽर्थानवगमेऽपि मन्त्रार्थवादादिभिरर्थवत्त्वावगमात्, अग्न्यादिशब्दानां लोकतोऽर्थावगमाच्च असत्यर्थवत्त्वे गामुच्चारयेदित्यादिवल्लक्षणया स्वपरत्वानुपपत्तेश्च न शब्दो देवता किंत्वर्थ एवेत्यर्थः । एतेन शब्द एव देवतेति विवरणसिद्धान्तो निरस्तः । **ननु** देवतात्वस्योद्देशनिबन्धनत्वादग्न्यर्थस्य देवतात्वं वदन् शब्द एव उद्देशाय शब्दमपेक्ष्यमाणः संनिहितत्वाद्-

---

१ स्वयोनावेव स्वयोनेरुत्तरयोश्च. २ विधिगते.

र्थस्यैव देवतात्वं चोदनयोच्यते। तस्य त्विदमेव देवतात्वं यच्छब्देनोद्देशः। तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः, स्वव्यापारे चासौ नियोक्तव्यः, तेनार्थस्यापि देवतात्वमुक्त्वा तन्मात्रेणापर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति। तस्यां चावस्थायां विधिगतस्य शब्दस्य संनिहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधीयते न शब्दान्तरस्य। असंनिहितत्वात्। तस्माद्विधिशब्द-नियम इति। अस्मिंस्तु पक्षे स्यादपि कथंचिद्विधिशब्द एव नियमः, किंतु यत्र पर्यायेण शब्दद्व-येन देवताविधिः, यथा 'अग्नये पावकाय निर्वपेदग्नये शुचय' इति, तत्र द्वाभ्यामपि शब्दाभ्यामेकमर्थ-मभिधाय तस्य देवतात्वे विहिते शब्दाकाङ्क्षावेलायामुभयोः शब्दयोः संनिहितत्वेऽप्येकेनैवार्थस्यो-द्देशसंभवादगृह्यमाणविशेषत्वे विकल्पेनान्यतरस्यैवोपादानं स्यान्न द्वयोः। नहि निरपेक्षयोरेककार्ययोः समुच्चयः। नन्वेकेनैव वाक्येन विधानात्समुच्चयः सिध्यति। स्यादेवम् यदि प्रथमोपनिपात एव शब्द-स्वरूपं वाक्यार्थान्वयि स्यात्, अर्थसमर्पणेन तु चरितार्थौ शब्दौ पश्चादाकाङ्क्षावशाद्गृह्यमाणावेकै-कशस्तदाकाङ्क्षापूरणसामर्थ्याद्विकल्पेनैव ग्रहीतव्यौ। अथैकेनैवार्थस्य देवतात्वे सिद्धे द्वितीयः शब्दः स्वरूपपर इत्युच्यते। तथासति तस्यैवोच्चारणं स्यान्नेतरस्यार्थसमर्पणेन चरितार्थस्य। अथैवमादिषु शब्दस्यैव वाक्यार्थान्वयित्वं तथासति सर्वत्रैवमेव सिद्धान्तयितव्यम्। अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः। तत्र किमित्यर्थस्य देवतात्वं विधाय पश्चाच्छब्दोच्चारणं विधीयते, प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधीयते तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते, येन हि शब्देनोद्दिश्य हविस्त्यज्यते तस्यार्थस्य देवतात्वं भवति तस्माच्छब्दोच्चारणेन तस्यैव विधानान्न पर्या-यप्रसक्तिः॥

---

ग्निशब्दोच्चारणमपि विधत्त इति न पर्यायप्रसङ्ग इत्यत आह—**तस्येति**। सत्यमुद्देशनिबन्धनं देवतात्वं तथापि विधान-समये उद्देशो नापेक्षितः अग्न्यर्थो देवतेति विधानमात्रेण विधेश्चारितार्थ्यात् किंत्वनुष्ठानसमये तद्दशायां चाग्निशब्दश्चिरनि-वृत्तत्वान्न संनिहितः किंत्वग्न्यर्थस्य निर्देशाय शब्दापेक्षायां प्रयोगसमवायितया स्मृत्युपारूढोऽग्न्यर्थः स्ववाचकतयाग्निश-ब्दमुपस्थापयतीति स एव ग्राह्य इति वक्तव्यम्। तादृशी चोपस्थितिः पर्यायाणामप्यवशिष्टेति नाग्निशब्दनियमे प्रमाणमि-त्यर्थः। निबन्धनकारमतमाह—**केचिदिति**। भवेदेवं यदि विधानसमये शब्दापेक्षा न स्यात्, अस्ति तु तद्दशायामेव शब्दा-पेक्षा शब्देनोद्देशं विना देवतात्वानुपपत्तेः, तथाच देवतात्वं विदधच्छब्दः पुरुषव्यापाररूपं शब्दोच्चारणमपेक्षत इति तद्दशा-यामुपस्थितमग्निशब्दमेव स्वीकरोति न पर्यायानित्यर्थः। देवतात्वविधायकस्य विधेः शब्दनिर्देशापेक्षायामपि नाग्निशब्दग्र-हणनियमः संभवति। अग्निशब्दस्य प्रत्यक्षोपस्थितत्वेऽपि शब्देनोपस्थितत्वाभावादग्निशब्दस्यार्थपरत्वेन शब्दपरत्वाभावा-च्छाब्दीन्यायेन शब्देनोपस्थितेरेवापेक्षितत्वात्, तथाच प्रत्यक्षोपस्थितेरकिंचित्करत्वादस्मिन्नपि पक्षेऽग्निशब्दनियमो न सि-ध्यतीत्याशयेनोक्तम्—**कथंचिदिति**। ननु पावयितृत्वादिरूपगुणविशिष्टाभिधानार्थं शब्दद्वयमावश्यकमिति शङ्कानिराकर-णार्थं पर्यायेणेत्युक्तम्। पावकादिशब्दानामग्निशब्दपर्यायत्वात्केवलाग्न्यभिधायकत्वं न गुणविशिष्टार्थकत्वमिति भावः। **नन्विति**। एकेन वाक्येन विधाने मिलितयोरेव साधनत्वमिति समुच्चयसिद्धिः। विकल्पे तु साधनरूपभेदावेकवाक्यता न निर्वहतीति भावः। **स्यादेवमिति**। शब्देनोच्चार्य हविस्त्याज्यमित्येवं यदि प्रथमोच्चारण एव शब्दस्वरूपं वाक्यार्था-न्वयि स्यात्तदा विनिगमकाभावाच्छब्दद्वयस्यापि विध्यन्वयादेकवाक्यताविधानप्रयुक्तः समुच्चयः स्यात्, नत्वेवं त्वयाङ्गीक्रियते, किंतु प्रथमतः शब्दोऽर्थस्वरूपं प्रत्याय्य निवृत्तव्यापारः पश्चादर्थस्य निर्देशापेक्षायां विधीयत इति स्वीक्रियते। तथासत्ये-कैनैवार्थनिर्देशसिद्धिं पर्यालोच्य विकल्पेनैव शब्दद्वयं विधातुमुचितमिति न समुच्चयसिद्धिरित्यर्थः। प्रथमतो विधाने हि आहत्यशब्दद्वयविधानात्समुच्चयः, पश्चाद्विधाने तु शब्दसामर्थ्यपर्यालोचनपूर्वकत्वाद्विधिव्यापारस्य विकल्प इति विवेकः। **अथेति**। तथाच प्रथमस्यार्थमुखेन पश्चाद्विधेः द्वितीयस्य प्रथममेव साक्षाद्विधेश्च समुच्चय इत्याशयः। एवंसति साक्षाद्वि-हितद्वितीयशब्देनैवाकाङ्क्षाशान्तेर्नार्थमुखेन प्रथमशब्दोच्चारणविधिः स्यादिति। परिहरति—**तथासतीति**। अस्तु तर्हि शब्दद्वयस्याप्येवमादिषु प्रथमत एव विध्यन्वय इति शङ्कते—**अथैवमिति**। ननु शब्दान्तरानर्थक्यप्रसङ्गादग्नये पावका-येत्यादौ तथा स्वीकारेपि सर्वत्र तथा स्वीकारे न किंचित्प्रमाणमत आह—**अवश्यंहीति**। आग्नेय इत्यादावग्निदेवता-मुद्दिश्य हविस्त्यजेदित्यर्थस्य देवतात्वं श्रौतोऽर्थः। अग्निशब्दं समुच्चार्य हविस्त्यजेदिति शब्दोच्चारणमार्थिकोऽर्थः। तत्र श्रौतो-ऽर्थो विधीयत इति स्वीकारेऽपि शब्दस्य पश्चाद्विधेयत्वं वक्तव्यं तेन विना देवतात्वानिर्वाहात्तथासत्यावश्यकत्वादग्निशब्दमु-

अतिदेशस्थलेऽपि वैधशब्देनैव देवताभिधानाधिकरणम् ॥ १४ ॥

**तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥**

**सौर्यादिनिगमे कोऽपि शब्दः स्याद्वैध एव वा ॥ चरौ सूर्यान्वयादाद्यः प्रयोगान्वयतोऽन्तिमः ॥ २३ ॥**

सौर्यादिषु विकृतिषु चिन्त्यते चोदकप्राप्तेषूज्जित्यादिषु निगमेषु किं विधिशब्दो वक्तव्य उतादित्यादिशब्दा अपीति संशयः । तत्र विधिवाक्ये हविस्त्यागमात्रे सूर्यशब्दो विधीयते नोज्जित्यादिषु निगमेषु। प्रकृतौ तूज्जित्यादिष्वग्निशब्द एव पठित इति तदाश्रयणम् । इह त्वसति पाठे येनकेनचिदुपलक्षणमिति प्राप्तेऽभिधीयते—प्रकृतावग्निशब्दो न यागरूपेण संबध्यते, किंतु यागकरणके भावनापरनामधेये प्रयोगे। भावनया ह्यङ्गानि संबध्यन्ते इति सप्तमनवमाद्ययोर्व्याख्यातम् । तेनाग्निशब्दयुक्तः प्रयोगः कर्तव्यः। स तु कियत्कृत्वः केषु च प्रदेशेषूच्चारयितव्य इत्यपेक्षायां याज्यानुवाक्यापाठादुज्जित्यादिपाठाच्च तावत्कृत्वस्तेषु च प्रदेशेषूच्चारणीय इति गम्यते । विकृतावपि सूर्यशब्दः प्राकृतस्याग्निशब्दस्य स्थाने निविशमानस्तेषु प्रदेशेषु वक्तव्यो भवति । तस्माद्विधिशब्द एव सर्वेषु निगमेषु विकृतिष्वपि वक्तव्यः ॥

आधानेऽग्नेः सगुणेनाभिधानाधिकरणम् ॥ १५ ॥

**प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥ [अविकारो वार्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २७॥ तथारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८॥ द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ २९ ॥]**

**निगमे पावकाग्न्योः किमग्निः स्यादथवोभयम् ॥ अग्निश्चोदकतो मैवं वैधोऽग्निः सगुणो यतः ॥ २४ ॥**

सन्त्याधाने पवमानेष्टयः 'अग्नये पवमानायाग्नये पावकायाग्नये शुचय'इति । तत्र संशयः तद्वाचिषु

---

च्चार्ये हविस्त्यजेदित्येवमार्थिकार्थशब्दोच्चारणमेव विधीयते तद्विधाने चार्थस्य देवतात्वं प्राप्तमाग्नेय इत्यनेनानूद्यते इति नोभयविधानप्रयुक्तगौरवम्। नचाग्नेय इति देवतातद्धितानुपपत्तिः । यथा फलचमसे श्रौतस्यापि भक्षणस्य न विधिः किंत्वार्थिकस्य यागस्य। तद्विधाने च भक्षणस्य श्रौतस्याप्यनुवादस्तद्वदित्यर्थः । सूत्रार्थस्तु—मन्त्रत्वे मन्त्रवद्देवतावाचकशब्दोच्चारणावश्यंभावे विधिगतस्याग्निशब्दस्य भावः उच्चारणं स्याधतस्तेन विधिशब्देन हविःसंबन्धचोदनेति ॥

**तथोत्तरस्यां०** ॥ २५ ॥ इह पूर्ववन्न सर्वे निगमा उदाहरणं किंतु उद्देशत्यागव्यतिरिक्ता इत्याशयेनाह—**चोदकेति। उज्जित्यादिष्विति**। 'अग्नेरहमुज्जितिमनूज्जेष'मित्यादिष्वित्यर्थः । **ननु** सौर्यमिति सूर्यशब्दस्य चोदितत्वात्पूर्वन्यायेन विधिशब्दनियमस्य सिद्धत्वात्कथं पूर्वपक्ष इत्यत आह—**तत्रेति**। सत्यं सूर्यशब्दश्चोदितः किंतु त्यागमात्रे, नोज्जित्यादिषु। तथाच यत्र चोदितस्तत्र नियमेऽप्यन्यत्र नियामकाभावादर्थप्रत्यायनार्थं यः कश्चिच्छब्द उपादेय इत्यर्थः । कथं तर्हि प्रकृतावुज्जित्यादिषु विधिशब्दनियम इत्यत आह—**प्रकृताविति**। अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरपि सूचिता। प्रकृतावपि न्यायादेवाग्निशब्दनियमो न पाठादिति पूर्वोक्तवैषम्यमुद्धरति—**प्रकृताविति। किंत्विति**। भावनाया अनुष्ठानापरपर्यायत्वाद्भावनासंबन्धः प्रयोगसंबन्धो भवतीत्यर्थः । **ननु** त्यागान्विततया प्रतीयमानस्य किमर्थं भावनान्वयः। उच्यते—नच देवतायाः कारकत्वेन क्रियैव संबन्धो ननु यागेन भावनाकरणेन कारकयोर्मिथः संबन्धाभावादिति वाच्यम्। शब्द एव वाक्यार्थान्वयी न देवतेति पूर्वाधिकरण एवोक्तत्वादित्यत आह—**भावनयेति** । यागस्य निर्ज्ञाततत्वेन नासौ धर्मानपेक्षते यागकरणिकापूर्वभावनात्वनिर्ज्ञातप्रकारत्वात्कथंभावयेदिति धर्मानपेक्षत इति तयैव संबन्ध इत्यर्थः। नन्वेवं तर्हि भावनान्वयबलादेव सर्वेषु निगमेष्वग्निशब्दप्रयोगस्य सिद्धेर्निगमेष्वग्निशब्दपाठोऽनर्थकः स्यादित्यत आह—**सत्विति**। तथाचैतावत्कृत्व एतेषु प्रदेशेषूच्चारयितव्य इति पाठप्रदेशेयत्तानिर्धारणार्थत्वान्न पाठोऽनर्थक इत्यर्थः। **ननु** तर्हि प्रकृतिवद्विकृतौ तावत्प्रदेशेषु सूर्यशब्दस्य पाठाभावात्कथमेतावत्सु प्रयोगनियम इत्यत आह—**विकृतावपीति**। **सूत्रार्थस्तु**—यथा प्रकृतौ विधिशब्दनियमस्तथोत्तरस्यां ततौ विकृतावपि तत्प्रकृतित्वादिति ॥

**प्राकृतस्य गुणश्रुतौ०** ॥ २६ ॥ सिद्धे विधिशब्दनियमे किमेक एवोत सर्वोऽपीति विशेषचिन्तनात्संगतिः । **ननु** यदि प्रथममर्थं विधाय तत्प्रत्यायकत्वेन शब्द आश्रीयते तदा तेनैवार्थप्रत्यायनसिद्धेर्न सर्वोच्चारणं स्यात् शब्द एव तु

---

१ विधिशब्दएव.

निगमेषु किमेक एवाग्निशब्दो वक्तव्यः किमुभौ शब्दौ वक्तव्यौ अग्नये पवमानाय निर्वपाम्यग्निं पवमानमावहाग्नेः पवमानस्याहमुज्जितिमनूज्जेषमिति ।—'तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः ॥ सचाग्निशब्द एवैकश्चोदकानुग्रहो भवेत् ॥' स्यादेवं यदि प्रथममर्थं विधाय पश्चाच्छब्दाश्रयणं स्यात्, शब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तं तस्मादुभयोर्विधानादुभौ वक्तव्यौ ॥

आधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम् ॥ १६ ॥

**बुधन्वान्पवमानवद्विशेषनिर्देशात् ॥ ३० ॥ [मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥]**

**बुधन्वत्तादिगुणको देवो वाच्योऽथ केवलः ॥ आद्यो देवगुणत्वेन मैवं मन्त्रगुणत्वतः ॥ २५ ॥**

पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते 'बुधन्वानाग्नेयः कार्यः पावकवान्सौम्य'इति । तत्र संशयः किं बुधन्वत्तया पावकवत्तया च गुणेन सगुणमभिधानं निगमेषु कर्तव्यं 'बुधन्वन्तमग्निमावह पावकवन्तं सोममावहे'ति, उताविकारेण प्रकृतिवन्निर्गुणमिति । तदर्थमिदं चिन्त्यते किं देवताविशेषणं बुधन्वत्ता उत मन्त्रविशेषणमिति । मन्त्रस्य स्वरूपप्रकरणाभ्यां प्राप्तत्वाद्देवतानिर्देशः । तदयमर्थः—आग्नेय आज्यभागो बुधन्वान्बुधन्वच्छब्दयुक्तः कार्यः, तस्य च देवताद्वारेण बुधन्वच्छब्दवत्ता । तदनेन प्रकारेण देवताया बुधन्वत्ता विहिता भवति तस्मात्सगुणाभिधानं कर्तव्यम् । नैतदेवम् । मन्त्रान्तराण्यप्य[1]ग्निलिङ्गानि सोमलिङ्गानि च प्रकरणे विद्यन्ते तत्र मन्त्रविशेषनियमार्थं

---

प्रथमं संबध्यते, तद्दशायां च विनिगमकाभावात्सर्वस्यापि विधिसंबन्धसिद्धेः' कथं पूर्वःपक्षोऽत आह—**तत्रेति** । सत्यं शब्द एव प्रथमं विधीयते तथापि यथा 'वैष्णवीमृचमनूच्य वाग्यन्तव्ये'त्यादौ 'इदं विष्णु'रित्यादिकायामृच्यनूच्यमानायां प्रतीयमानोऽप्यर्थो न विवक्षितः, एवमिह निगमेष्वर्थो नाविवक्षितः, तथासति तद्वदेवादृष्टार्थत्वापत्तेः । तस्मादिह शब्दे विहितेपि तस्य दृष्टार्थत्वादर्थप्रत्यय एव द्वारमिति वाच्यम्। तस्य चैकेनैव शब्देन सिद्धेर्न सर्वोच्चारणे प्रमाणमित्यर्थः । एकशब्दोऽप्यग्निशब्द एवेत्यत्र नियामकमाह—**सचेति** । **स्यादेवमिति** । यद्यप्यर्थप्रत्यय एकेनैव सिद्ध्यति तथापि इहशब्दद्वयस्याप्येकवाक्ये विधानात्समुच्चये प्रथमत एवावगते पश्चाद्द्वारत्वेनापतन्नर्थप्रत्ययो न प्रथमावगतं समुच्चयं बाधते किंतु तदविरोधेनोभयोः समुच्चितयोरेव द्वारत्वेनावतिष्ठते । तथाच यथा 'चतुर्भिरभ्रिमादत्ते'इत्यादौ एकैकस्य मन्त्रस्याभ्यादानप्रकाशनसामर्थ्येऽपि वचनबलात्समुच्चय एवमिहापीति भावः । सूत्रार्थस्तु—प्राकृतस्याग्नेः पावकादिश्रुतौ तच्छब्देनाभिधानं स्यादिति ॥

**बुधन्वान्पवमानवत्० ॥ ३० ॥ बुधन्वन्तमिति** । यद्यपि नकारोप[2]सर्गस्य छान्दसत्वान्निगमेषु देवतानिर्देशस्योहरूपत्वेन लौकिकत्वाद्बुधवन्तमावहेत्येवं वक्तुमुचितं, तथापि छन्दसि यः शब्दो दृष्टस्तदनुसारेणैव प्रयोज्य ऊह इति याज्ञिकैरङ्गीकाराद्बुधन्वच्छब्दस्यैव विधिशब्दत्वाच्च बुधन्वन्तमावहेत्युक्तम् । बुधन्वत्तया बुधन्वत्ता इत्यादिग्रन्थकारव्यवहारस्त्वनुकरणत्वात्साधुः । यदि गुणश्रवणे सगुणमभिधानं तर्हीहापि गुणश्रवणात्सगुणाभिधानमित्युत्थितेः संगतिः । **मन्त्रस्येति** । 'अग्निं स्तोमेन बोधये'ति बुधधातुनिष्पन्नशब्दयुक्तमन्त्रस्याग्नेयाज्यभागक्रमे पठितस्य लिङ्गप्रकरणाभ्यामेव प्राप्तेर्मन्त्रविशेषणत्वेन विधिवैयर्थ्याद्देवताया एव बुधन्वत्ताविधिरित्यर्थः । **ननु** वृत्तिमन्त्रस्याग्नेः कथं गुणविधिस्तत्राह—**तदयमिति** । नह्यत्राग्न्यनुवादेन बुधन्वत्ता विधीयते येन वृत्तिमत्तयोपसर्जनस्याग्नेर्गुणान्वयो न स्यात्, किंत्वाग्नेयशब्देनाग्नेयाज्यभागमनूद्य तत्र बुधन्वत्तागुणो विधीयते तत्राज्यभागस्य साक्षाद्बुधन्वत्तासंभवादानर्थक्यतदङ्गन्यायेन तदङ्गदेवतायां पर्यवसानात्तत्र गुणविधिरित्युच्यत इत्यर्थः । मन्त्रविशेषणत्वेऽपि विधेर्नानर्थक्यं नियमार्थत्वादित्याह—**मन्त्रान्तराणीति।** एवंचाग्नेयशब्दस्याज्यभागपरत्वमङ्गीकृत्यानर्थक्यतदङ्गन्यायेनाङ्गान्तरणाभ्युपगमेऽपि मन्त्रविशेषणविधिपर्यवसानमेव युक्तं न देवताविशेषणविधिपर्यवसानम् । अपूर्वविध्यपेक्षया नियमविधेर्ज्यायस्त्वादिति भावः । किंचाग्नेयशब्दस्याग्निप्रकाशकमन्त्रपरत्वाश्रयणेन साक्षादेव तद्विशेषणविधिः संभवति, तव तु न साक्षाद्देवताविशेषणविधिः किंत्वानर्थक्यतदङ्गन्यायेन ।

---

१ अलिङ्गानि. २ उपसर्गस्य संबन्धस्य.

वचनमुपपन्नं तेन मन्त्रद्वारेण बुधन्वत्ताज्यभागस्य विधीयते, नचाहत्याग्नेर्बुधन्वत्ता विधीयते तद्धितार्थे वृत्तस्योपसर्जनीभूतस्याग्नेर्विशेषणत्वेन विशेषणान्तरासहत्वात् मन्त्रमेव चाग्नेयशब्देन निर्दिश्य तस्यैव बुधन्वत्ता साक्षाद्विधीयते। एवं च चोदकप्राप्ता देवता न विकृता भवति ॥

गवानुबन्धपृषदाज्यहोमयोर्विधिशब्दाभ्यामेवोस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ॥ १७ ॥

## विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥ [यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥]

किं गोवनस्पती केनाप्युतोस्राविधिशब्दतः ॥ वक्तव्यौ निगमाद्भेदो विधेर्दृष्टस्तथाग्रिमः ॥ २६ ॥
स भेद आर्थिकस्तं तु प्रापयेच्चोदको न हि ॥ उस्रा प्रकरणाम्नानाद्वैधत्वेन वनस्पतिः ॥ २७ ॥

ज्योतिष्टोमे श्रूयते 'गौरनूबन्ध्य' इति। तत्र 'अग्नीषोमीयस्य पशोः छागस्य वपाया मेदस' इति मन्त्रश्चोदकेन प्राप्तः। तत्र मन्त्रान्तरमाम्नातं 'उस्राया वपाया मेदस' इति। तत्र संशयः किं गोशब्दादन्येन येनकेनचिदभिधानं कर्तव्यमुत उस्राशब्देनैवेति। तथा पशौ 'वनस्पतिं यजती'ति श्रुतं स्विष्टकृद्विकारश्च वनस्पतिः। तत्र निगमेषु किं विधिशब्दादन्येन केनचिदभिधानमुत विधिशब्देनैवेति। किं प्राप्तम्। उभयत्रापि विधिशब्दादन्येन येनकेनचिदभिधानं तत्र निगमे स्यात् प्रकृतौ विधिनिगमभेदात्पशुशब्देन विधिः छागशब्देन निगमः। तथा स्विष्टकृच्छब्दको विधिः 'अग्निं स्विष्टकृतं यजती'ति, निगमस्त्वस्विष्टकृच्छब्दकः। 'ये दैव्या ऋत्विजस्तेभिरग्न' इति। यत्र प्रकृतौ श्रुतं तद्विकृतौ कर्तव्यम्। तस्माद्गोशब्दादन्येनाभिधानम्। तदपि येनकेनचिच्छब्देन 'उस्राया वपाया मेदस' इति च पाठमात्रं न विधिरस्ति। तथा वनस्पतावपि विधिशब्दादन्येन येनकेनचिदभिधानमिति मन्यते। उच्यते—प्रकृतावार्थिको विधिनिगमभेदो न वाचनिकः। नचार्थिकं चोदकः प्रतिदिशति। तेनानूबन्ध्याया द्रव्यत्वाद्विधिशब्दनियमाभावेऽपि विधिशब्देनान्येन वा येनकेनचिदभिधाने प्राप्ते प्रकरणाम्नानादुस्राशब्दस्य तेनैवाभिधानं, वनस्पतौ तु देवतात्वाद्विधिशब्देनैव ॥

---

नच साक्षाद्विधेसंभवे तन्न्यायाश्रयणं युक्तमित्याशयेन परपक्षे साक्षाद्विध्यसंभवं स्वपक्षे तत्संभवं चाह—**नचाहत्येत्यादिना**। आहत्य साक्षादित्यर्थः। **तद्धितार्थे वृत्तस्येति**। वृत्तिवशात्तद्धितार्थेऽन्तर्गतस्येत्यर्थः। जहत्स्वार्थायामग्निशब्दस्य पृथगर्थाभावादित्याशयः। अजहत्स्वार्थायामप्याह—**उपसर्जनीभूतस्येति**। सूत्रार्थस्तु—यथाग्नये पवमानायेत्यत्र सगुणाभिधानं तथा बुधन्वानित्यत्रापि बुधन्वत्तारूपगुणविशेषनिर्देशादिति ॥

**विधिनिगमभेदात्० ॥ ३२ ॥ तत्रेति**। गोरभिधानानि बहूनि उस्रामाहेयीत्यादीनि तत्र गोशब्दपर्यायेषु येनकेनचिदभिधानमित्यनियम उत उस्राशब्देनैवेति नियम इत्यर्थः। **स्विष्टकृदिति**। स्विष्टकृद्विकारत्वस्य संकर्षे स्थापितत्वादिति भावः। अन्येन वृक्षनगादिनेत्यर्थः। यदि चोदकानुग्रहाय मन्त्रविशेषणत्वाश्रयणं तदिहापि तदनुग्रहाय येनकेनचिदभिधानमित्युत्थितेः संगतिः। वनस्पतावपि स्विष्टकृच्छब्दसाहित्यराहिताभ्यां भेद इत्याह—**तथेति**। ननूस्रादिशब्देनाभिधानेऽपि विधिनिगमभेदः सिद्ध्येदित्यत आह—**तदपीति**। उस्राशब्दनियमे प्रमाणाभावादिति भावः। उस्राशब्दाम्नानं प्रमाणमाशङ्क्याह—**उस्राया इति**। प्रकृतौ 'छागस्य वपाया मेदस' इति निगमस्य न पाठमात्रं किंतु विधिरस्तीति भावः। उक्तंच भाष्ये 'छागस्य वपाया मेदस इति वक्तव्यमित्येतद्विधीयते' इति। यद्वा प्रकृतौ पाठबलादेव छागशब्दस्य विशेषतो विध्यनुमानादस्तु नियमः, इह तु यावत्पाठाद्विशेषविधिः कल्प्यते, ततः प्रागेव चोदकेनानियमस्य प्राप्तौ तद्विरोधान्न विध्यनुमानसंभव इति भावः। वनस्पतिप्रकृतौ स्विष्टकृति सगुणनिर्गुणकृतो विधिनिगमशब्दभेदो न मुख्य इत्याशयेन मन्यत इत्युक्तम्। **आर्थिक इति**। तथा विधिपाठबललब्धत्वादिति भावः। **ननु** विधिनिगमभेदस्यार्थिकत्वादनतिदेशेऽपि विधिश्रुतगोशब्दनियमस्यैव न्याय्यत्वादुस्राशब्दनियमः कथं स्यादित्यत आह—**तेनेति**। द्रव्येषु देवतायामिव प्रथमं शब्दस्य वाक्यार्थान्वयाभावाद्विधिशब्दस्य मन्त्रत्वे भावः स्यादित्यधिकरणन्यायविषयत्वाभावाद्विधिशब्दनियमाभावे सति पाठबलादुस्राशब्दविध्यनुमानप्रक्लृप्तप्रतिबन्धात्तन्नियम इत्यर्थः। **नियमाभावेऽपीति**। नियमाभावे सतीत्यर्थः। आपस्तम्बाचार्यैस्तु 'मित्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि मित्रावरुणाभ्यां गोर्वपायामेदसः प्रेष्येति संप्रैषा'विति गोशब्द-

अवभृथेऽग्नीवरुणयोः सस्विष्टकृच्छब्देनाभिधानाधिकरणम् ॥ १८ ॥

**स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्तेत ॥ ३४ ॥ [संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥]**

**किमग्नीवरुणौ स्विष्टकृच्छब्देन विवर्जितौ ॥ वक्तव्यौ सहितौ वाद्यो रूढत्वादगुणोक्तितः ॥ २८ ॥**
**कदाचित्कृतवान्स्विष्टमिति योगाद्गुणे सति ॥ पावकाग्निनयेनात्र वक्तव्यौ सगुणाविमौ ॥ २९ ॥**

अवभृथे श्रूयते 'अग्नीवरुणौ स्विष्टकृतौ यजती'ति किं निगमेष्वस्विष्टकृच्छब्दकं वचनं अग्नीवरुणावावहेति उत स्विष्टकृच्छब्दकमग्नीवरुणौ स्विष्टकृतावावहेति। यद्येषा वचनव्यक्तिः स्विष्टकृत्कार्येऽग्नीवरुणाविति ततोऽग्नीवरुणयोर्देवतात्वादस्विष्टकृच्छब्दकम्। अथैवं वचनं व्यज्यते यत् स्विष्टकृद्गुणेन सगुणां देवतां यजति तदग्नीवरुणौ न केवलमग्निमिति। ततः स्विष्टकृत्त्वेनाग्नीवरुणयोर्विधानात्सस्विष्टकृच्छब्दकमिति। तत्सिद्ध्यर्थमिदं चिन्त्यते किं स्विष्टकृच्छब्दः प्रकृतौ समुदायप्रसिद्ध्याग्नौ प्रयुक्तः उत स्विष्टकरणयोगेनेति। तत्र भूतस्य स्विष्टकरणयोगस्याग्नावभावाद्रूढ्यायं शब्दोऽग्नेर्वाचकोऽतो नाग्नीवरुणयोः शक्नोति वर्तितुमतः कार्यलक्षणार्थः स्विष्टकृच्छब्दः। स्विष्टकृत्कार्येऽग्नीवरुणौ निर्गुणौ विधीयेते तस्मादस्विष्टकृच्छब्दकं वचनम्। उच्यते—भूतकालतामात्रासंभवेऽपि स्विष्टकरणयोगस्य तावत्संभवात् भूतकालताया अपि प्रयोगान्तरापेक्षयोपपन्नत्वान्न समुदायप्रसिद्धौ प्रमाणमस्ति। तेन स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति श्रौत एव स्विष्टकृच्छब्दो न लक्षणा। तस्मात्सगुणयोरेव देवतात्वात्सगुणमभिधानम् ॥

अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम् ॥ १९ ॥

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥३६॥ [सर्वस्य वैककर्म्यात् ॥३७॥]**

**स्विष्टकृत्त्वगुणो लोप्यो याग एवाखिलेषु वा ॥ यज्यन्वयाद्याग एव प्रयोगान्वयतोऽन्तिमः ॥ ३० ॥**

अग्नीषोमीये पशौ पशुपुरोडाशः। तत्र चोदकप्राप्तस्य स्विष्टकृतो गुणलोपः श्रुतः 'अग्निं यजती'ति।

---

नियम एवोक्तः स च शाखान्तरे तथा पाठपरिकल्पनया कथंचिदुपपादनीयः। अत्र विधिनिगमशब्दभेदस्यार्थिकत्वान्न चोदकप्राप्तिरित्येव सिद्धान्तः तदार्थिकत्वेन चानियमे निरस्ते उस्राशब्दनियमो वनस्पतिशब्दनियमश्च पाठबलाद्विधिशब्दत्वाच्च न्यायान्तरादेव सिद्ध्यतीति नैतदधिकरणव्युत्पाद्यम्। ततश्चोदाहरणद्वयेऽपि सिद्धान्तैकरूप्यादधिकरणैक्यमिति तत्त्वरत्ने ॥

**स्विष्टकृद्देवतान्यत्वे० ॥ ३४ ॥** वनस्पतौ विधिशब्दत्वाद्वनस्पतिशब्देनाभिधानेऽपीह स्विष्टकृच्छब्दस्य विधिशब्दत्वाभावान्न तेनाभिधानमित्युत्थितेः संगतिः। **यद्येषेति**। किं स्विष्टकृच्छब्देन लक्षिते कार्ये देवतात्वेनाग्निवरुणविधिरुत स्विष्टकृत्त्वगुणकदेवतायां प्राकृतमग्निलक्षणगुणिनमपोह्य तत्राग्नीवरुणविधिरिति संशयनिष्कर्षः। **ननु** क्लृप्तयोगेनैवोपपत्तौ रूढिकल्पनायां प्रमाणाभावात्कथं पूर्वपक्षोऽत आह—**तत्रेति**। भूताधिकारे 'सुकर्मपापमन्त्रपुण्येषु कृञः' इत्यत्र कालोपपदप्रत्ययानामेव नियमाभ्युपगमेन स्वादिष्वेव कृञः क्विविति धातुनियमानङ्गीकारादुपपदान्तरे शास्त्रकृद्भाष्यकृदित्यादिवद्भूते क्विबन्तस्विष्टकृच्छब्दः तत्र 'स्विष्टं वै न इदं भविष्यति यदिमं राधयिष्याम' इत्यादिष्वर्थवादेषु अनेन स्विष्टकृद्यागेनाराधितस्याग्नेः स्विष्टकरणहेतुत्वावगमेन स्विष्टकृद्यागसमये भूतस्य तस्याभावात् सुष्ठु इष्टं यजनप्रधानं यागं कृतवानित्येवंरूपस्य योगस्यासंभवेन प्रयोगनिर्वाहार्थं रूढ्यवश्यमङ्गीकर्तव्येत्यर्थः। वस्तुतस्तु स्विष्टकृच्छब्दः 'क्विप्चे'ति क्विपैव व्युत्पाद्यः स च कालत्रयसाधारण इति भूतार्थासंभवे वर्तमानार्थमादाय योगसंभवात्पूर्वपक्षोऽयं मन्दः, सिद्धान्तश्चाभ्युपगमवादेनेति ध्येयम्। **अत इति**। भिन्नार्थतया सामानाधिकरण्यासंभवादिति भावः। **भूतेति**। यथा 'ग्रहं संमार्ष्टी'त्यत्र द्वितीयैकवचनस्य स्वाभिधेयैकत्वाभावेऽपि कर्मत्वसंभवमात्रेण प्रयोगस्तथेहापि संभावितस्विष्टकरणकर्तृत्वमात्रेण योगेनैव प्रयोगनिर्वाहे नात्यन्ताक्लृप्तरूढिकल्पनं युक्तमित्यर्थः। **ननु** तत्राप्येकत्वस्य नात्यन्तबाधः जात्यभिप्रायेणोपपत्तेरित्याशङ्क्य कथंचित्संभव इहापि तुल्य इत्याशयेनाह—**भूतेति**। **तेनेति**। अग्नीवरुणयोरपि प्राकृताग्निस्थानापन्नतया एतत्प्रयोगे स्विष्टकरणकर्तृत्वस्यानादौ वेदार्थानुष्ठाने प्रयोगान्तरीयस्य वा भूतस्य संभवाच्छ्रुत्यनुग्रह इत्यर्थः। **सूत्रार्थस्तु—देवतान्यत्वे** स्विष्टकृच्छब्दो निवर्तेत तच्छब्दत्वादग्निवाचकत्वादिति ॥

**सगुणस्य गुणलोपे० ॥ ३६ ॥ पशुपुरोडाश इति**। 'अग्नीषोमीयं पशुपुरोडाशं निर्वपती'ति विहित इति

किमयं प्रधानमात्रे गुणलोपः उत सर्वेषु निगमेष्विति । प्रधानमात्रे यजतीतिलोपश्रवणादवशिष्टेषु निगमेषु प्रकृतिवत्स्विष्टकृद्गुणयुक्तमभिधानं प्रयोग एव निर्गुणविधिरिति सर्वत्र गुणलोपः ॥

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ॥ २० ॥

## स्विष्टकृदावापिकोऽनुयाजे स्यात्प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥

**अनुयाजोऽन्तिमो योऽसौ किमारादुपकारकः ॥ स्विष्टकृत्संस्कृतिर्वाद्योऽनुयाजान्तरसाम्यतः ॥ ३१ ॥**
**स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञार्थवत्त्वतः ॥ दृष्टार्थत्वाच्च संस्कारो भवेदन्त्यप्रयाजवत् ॥ ३२ ॥**

दर्शपूर्णमासयोस्त्रयोऽनुयाजास्तृतीयः स्विष्टकृद्देवत्यः स किमावापिकस्य 'उत्तरार्धात्स्विष्टकृते समवद्यती'त्यस्य स्विष्टकृतः संस्कारार्थः उतारादुपकारक इति । तत्र—'उभयोर्दर्शशेषत्वाद्विशेषानवधारणात् ॥ न मिथोऽङ्गाङ्गिभावः स्यात्तस्मादारादुपक्रिया ॥' उच्यते—'देवतास्मरणं ह्यत्र दृष्टमेव प्रयोजनम् ॥ अनूयाजस्य तेनेह न युक्ता दृष्टकल्पना ॥' नचागृह्यमाणविशेषत्वम् । आवापिकस्य द्रव्यप्रतिपत्त्येष्टदेवतास्मरणेन च कृतार्थत्वान्नानूयाजिकस्विष्टकृद्देवतासंस्कारार्थत्वं अनूयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वमध्यवसीयते ॥

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ॥ २१ ॥

## अन्वाहेति शब्दवत्कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥ [संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ४० ॥ स्याद्गुणार्थत्वात् ॥ ४१ ॥]

**अन्वाहेत्यर्थकर्म स्यात्संस्कारो वार्थकर्मता ॥ शब्दवत्कार्यताज्ञानादृष्टार्थत्वेन संस्कृतिः ॥ ३३ ॥**

दर्शपूर्णमासयोः 'तिष्ठन्याज्यामन्वाह आसीनः पुरोनुवाक्यामन्वाहे'ति किं याज्यापुरोनुवाक्योच्चारणमर्थकर्म उत संस्कारकर्मार्थप्रतिपत्त्यर्थमिति । तत्रार्थप्रतिपत्त्यर्थत्वे रूपादेव प्राप्तमुच्चारणं न

---

शेषः। **गुणलोप इति**। चोदकात्स्विष्टकृत्त्वगुणस्याग्नेश्च प्राप्तौ पुनरग्नेर्विधानं गुणलोपविधिपर्यवसन्नमिति भावः। निगमेषु संप्रैषादिनिगमेष्वित्यर्थः । पूर्वत्र स्विष्टकृच्छब्दकत्वेपि इहास्विष्टकृच्छब्दकं निगमेष्वभिधानमित्युत्थितेः संगतिः । **प्रधानेति**। नच तथोत्तरस्यां ततावित्यत्र वैकृतसूर्यादिशब्दस्य प्रयोगान्वयमुखेन सर्वनिगमेषु वक्तव्यस्योक्तत्वादिहापि प्रयोगार्थत्वस्य तत एव सिद्धत्वात्कथं प्रधानमात्रार्थत्वाशङ्केति वाच्यम् । भावनान्वयतो हि प्रयोगान्वयस्तत्रोक्त इह च भावनान्वयस्वीकारे भावनोद्देशेनाग्निविधेर्धातोरत्यन्तपारार्थ्यप्रसङ्गाद्धात्वर्थानुवादेनैवाग्निविधिर्वक्तव्य इति पूर्वपक्षोत्थानादिति भावः। धात्वर्थरूपान्वयेसत्यानर्थक्यात्पारार्थ्यमप्यङ्गीकृत्य भावनामुद्दिश्यैव विधानं स्वीकर्तव्यमित्याशयेन सिद्धान्तयति—**प्रयोगेति**। सूत्रार्थस्तु—प्रकृतौ सगुणस्य विकृतौ गुणलोपे निगमेषु मध्ये यावदुक्तं यत्रैव प्रधाने गुणलोपस्तत्रैव स्यान्नतु सर्वेष्विति ॥

**स्विष्टकृदावापिकः०॥ ३८ ॥ तृतीय इति**। 'अग्निं स्विष्टकृतं यजती'ति तृतीयानुयाजविधिवाक्यादिति भावः। **आवापिकस्येति**। आज्यभागस्विष्टकृतावन्तरा आवापस्थानं तत्र भव आवापिक इति भाष्ये उक्तं तथाभूतस्येत्यर्थः। पशुपुरोडाशस्विष्टकृति प्रधानव्यतिरिक्तनिगमेषु स्विष्टकृच्छब्दबाधेऽपि यत्र विकृतौ आवापिकस्विष्टकृतौ देवतान्तरं तत्र तृतीयस्यानूयाजस्य न बाधः आरादुपकारकत्वादित्युत्थितेः संगतिः । **ननु** पुरोडाशयागस्य पशुयागादिदेवतासंस्कारार्थत्ववदिहापि सिद्धेरिदं पुनरुक्तमित्याशङ्क्य वैषम्यं सूचयन्पूर्वपक्षमाह—**तत्रेति**। युक्तं पुरोडाशयागस्य पश्वङ्गत्वात्तदीयदेवतासंस्कारार्थत्वमिह तूभयोरपि दर्शपूर्णमासाङ्गत्वेन परस्परमङ्गाङ्गिभावाभावाद्वैपरीत्यप्रसङ्गाच्चारादुपकारकत्वमेवेत्यर्थः। **द्रव्येति**। प्रक्षेपांशेन द्रव्यप्रतिपत्त्या 'अयाऽग्नेः प्रियाधामानी'ति मन्त्रांशेन देवतास्मरणेन प्रधानप्रतिपत्त्यर्थतया निश्चितस्यानूयाजिकसंस्कारार्थत्वानुपपत्तेः तस्येहादृष्टकल्पनापरिहारायावापिकसंस्कारार्थत्वमिति न वैपरीत्यमित्यर्थः । **सूत्रार्थस्तु**—आवापिकस्विष्टकृदनूयाजेन संस्कार्यः स्यात् तथासति संस्कारकर्म प्रयोजनवद्भवति दृष्टार्थत्वात् किंचाङ्गानां संनिपातिनामर्थसंयोगाद्वाक्येनैव विनियोज्यत्वादिति यावत्। तथाच प्रकरणविनियोज्यारादुपकारकात्तस्य ज्यायस्त्वादिति ॥

**अन्वाहेति शब्दवत्०॥ ३९ ॥** पूर्ववैषम्येणोत्थानात्संगतिः। **रूपादिति**। लिङ्गादित्यर्थः । एवंचाविहितस्यानुवचनस्य द्वारत्वासंभवेन तद्द्वारा क्रत्वर्थत्वासंभवादनुवचनस्वरूपार्थत्वे आनर्थक्याच्च केवलगुणविधानस्याभावाददृष्टार्थं गुणविशिष्टानुवचनं विधीयत इति भावः । अर्थप्राप्तग्रहणावेक्षणद्वारा भक्षानुवाकगतमन्त्राणां क्रत्वर्थत्वदर्शनादविहितस्यापि

विधातव्यम् तस्माददृष्टार्थम् । सत्यं यद्युच्चारणं विधीयेत रूपादेव तु प्राप्तमुच्चारणमनूद्य तिष्ठन्नासीन इति गुणविधानान्न वचनानर्थक्यमतो नादृष्टार्थता ॥

मनोतायामूहाभावाधिकरणम् ॥ २२ ॥

## मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

**मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वास्त्यसौ ॥ आग्नेय्येवेति वचनं प्रकृतौ सार्थकं यतः ॥ ३४ ॥**
**अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना ॥ अनर्थकात्तत्र वाक्याद्विकृतावूहवारणम् ॥ ३५ ॥**

अग्नीषोमीये पशावस्ति मनोतामन्त्रः 'त्वं ह्यग्ने प्रथमो मनोते'ति । तत्रैव चेदं वचनं 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्ये'ति । सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवतमूहितव्योऽथवाऽविकारेण प्रयोक्तव्य इति संशयः । तदर्थं च यद्यप्यन्यदेवत्य इत्येतद्वचनं प्रकृत्यर्थमुत विकृत्यर्थमिति । तत्र पशोरग्नीषोमदेवत्यत्वात्केवलाग्निदेवत्या मनोता । तत्रासामर्थ्यादुत्कृष्यमाणा वचनेनानेन वार्यते । यद्यपि द्विदेवत्यस्तथाप्येकदेवत्यैव मनोता तत्र कार्या नोत्क्रष्टव्येति । नचानेन वचनेन विकृतिषूहः प्रतिषिध्यते । प्रकृतावेवार्थवत्किमिति विकृतिषु कार्यं कुर्यात्तद्वचनेनावस्थापिता मनोता न प्रकृतावदृष्टार्था येन विकृतिषु नोह्येत । शक्नोति ह्यसावग्निद्वारेण लक्षणया देवताभूतावग्नीषोमौ प्रकाशयितुम् । तस्माद्वायव्यादिषु यथादेवतमूहितव्येति प्राप्ते ब्रूमः—'अग्निद्वारेण मन्त्रोऽयमग्नीषोमौ प्रकाशयन् ॥ अन्तरेणैव वचनं प्रकृताववतिष्ठते ॥' नच विकृतिषु सामान्यसंबन्धोऽस्ति येन लिङ्गेन केवलाग्निदेवत्याया उत्कर्षः स्यात् । तस्मान्नोत्कर्षप्राप्तिः येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात् । तस्माद्विकृतिषु यथादेवतमूहे प्राप्ते तन्निवारणार्थं वचनमिति वायव्यादिष्वनूह इत्यग्निशब्दस्याबाधः ॥

---

द्वारत्वसंभवात्केवलगुणविधिरेव । ततश्च दृष्टार्थत्वाद्विकृतिषु देवताभेदे प्राकृतयाज्याबाध इत्याशयेन सिद्धान्तयति—**सत्यमिति** । सूत्रार्थस्तु—अन्वाहेति विधीयमानमनुवचनमदृष्टार्थकर्म स्याच्चोदनान्तराददृष्टार्थतया विधानबलाच्छस्त्रवदिति ॥

**मनोतायां तु वचनात्०** ॥ ४२ ॥ याज्यादिवन्मनोताया अपि दृष्टार्थत्वादूह इत्युत्थितेः संगतिः । **तत्रेति** । मनोतामन्त्रस्य केवलाग्निप्रकाशकस्याग्नीषोमदेवताकप्रकृतावसमवेतार्थतयाग्नेयपशावुत्कर्षे प्राप्ते तन्निवारणेन प्रकृतावेव निवेशं बोधयन्प्रकृत्यर्थमेव यद्यपीति वचनं नोहनिवृत्त्यर्थत्वेन विकृत्यर्थमित्यर्थः । **ननूभयत्रार्थवत्त्वे** विनिगमकाभावाद्विकृत्यर्थमेव किं न स्यादित्यत आह—**प्रकृतावेवेति** । प्रकृतौ पठितस्य यद्यपीति वचनस्य तत्रैवार्थवत्त्वं न्याय्यं नतु विकृतौ । तथासत्युत्कर्षप्रसङ्गादिति भावः । नचाग्नेय्येवेत्यवधारणमूहेनानाग्नेय्याः प्राप्तौ विकृतावर्थवत् । प्रकृतौ त्वनाग्नेय्याः प्राप्त्यभावान्निरर्थकमवधारणं स्यादिति वाच्यम् । 'आग्नेयी मनोता कार्यैव नोत्क्रष्टव्ये'त्येवं प्रकृतावप्यवधारणोपपत्तेरिति भावः । नन्वेवं सामर्थ्याभावे वचनात्प्रकृतौ निवेशे सत्यदृष्टार्थतैव स्यात्तथाच कथमूह इत्यत आह—**नचेति** । 'धान्यमसि धिनुहि देवा'निति मन्त्रवल्लक्षणया सामर्थ्यमादाय संभवत्यूह इति भावः । भवेदेवमुत्कर्षप्रसक्तिः यदि प्रकृतावत्यन्तमसामर्थ्यं स्यान्नत्वेवं लक्षणया सामर्थ्यसंभवादित्याह—**अग्नीति** । नचैवं पूषानुमन्त्रणमन्त्रस्यापि लक्षणया प्रकृतदेवताभिधानसमर्थत्वादुत्कर्षो न स्यादिति वाच्यम् । तत्र पूष्णः प्रकृतदेवताभूताग्न्यादेश्च संबन्धस्याक्लृप्ततया लक्षणाया अप्यसंभवादिह त्वग्नीषोमस्यात्यन्तसहचरिततया संबन्धस्य क्लृप्तत्वेन लक्षणासंभवादिति भावः । किंच यत्र मन्त्रस्य विकृतिषु सामान्यसंबन्धः सिद्धस्तत्रैव लिङ्गबलादुत्कर्षः लिङ्गस्याभिधेयार्थशेषत्वबोधनमात्रक्षमतया क्रतुशेषत्वबोधने सामर्थ्याभावे सामान्यसंबन्धपूर्वकत्वनियमस्य 'लिङ्गक्रमसमाख्याना'दित्यत्र तृतीये व्यवस्थापितत्वादिह च सामान्यसंबन्धाभावान्नोहप्रसक्तिरित्याह—**नचेति** । पूषानुमन्त्रणमन्त्रस्य त्वनुमन्त्रणमन्त्र इति समाख्याबलादेव सामान्यसंबन्धः सिद्ध इति भावः । ऊहानूहचिन्तायाः प्रकृतसंगतिमाह—**अग्निशब्दस्येति** । अनूहे यथा प्रकृत्यग्निशब्दस्यैव प्रयोज्यत्वादबाध इत्यर्थः ॥

कण्वरथंतरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

**पृष्ठार्थेऽन्यद्रथंतरात्तद्योनिपूर्वत्वात्स्यादृचां प्रविभक्तत्वात् ॥ ४३॥ [स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ यूपवदिति चेत् ॥ ४५ ॥ न कर्मसंयोगात् ॥ ४६ ॥]**

बृहद्रथंतरैकीययोनौ कण्वरथंतरम् ॥ रथंतरस्यैव योनौ किं स्वयोनावुताग्रिमः ॥ ३६ ॥
चोदकस्याविशेषेण द्वितीयो नामसाम्यतः ॥ अनङ्गत्वान्नातिदेशः स्वयोनौ पठितत्वतः ॥ ३७ ॥

वैश्यस्तोमे श्रूयते 'कण्वरथंतरं पृष्ठं भवती'ति। तत्र संशयः किं कण्वरथंतरं बृहद्योनौ रथंतरयोनौ वा गेयं उत रथंतरयोनावेव उत स्वयोनाविति । तत्र कण्वरथंतरशब्देन साममात्रं प्राकृतयोः साम्नोः स्थाने विधीयते तद्योनिभूतयोस्त्वृचोः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारितयोरिह चोदकेन प्राप्तयोर्नास्ति किंचिन्निवर्तकम् । तस्मात्तयोरन्यतरत्र गानं, अथवा कण्वस्य रथंतरं कण्वरथंतरमिति यौगिकोऽयं शब्दः । रथंतरशब्दश्चारथंतरे तद्धर्मातिदेशार्थः । तस्माद्रथंतरयोनावेव गेयम् । नैतदेवम् । कण्वसंबन्धे प्रमाणाभावात् । तस्माद्रूढोऽय कण्वरथंतरशब्दो न कण्वस्य रथंतरमित्येवं प्रवृत्तः । तस्मान्न तावद्रथंतरयोनावेव गेयं, नापि बृहद्योनौ रथंतरयोनौ वा किंतु स्वयोनावेव । कस्मात् । उत्तराग्रन्थे तस्यास्तदुत्तरयोश्च पठितत्वात् । क्रत्वर्थो ह्युत्तराग्रन्थः । 'एकं साम तृचे क्रियते स्तोत्रीयं यद्योन्यां तदुत्तरयोर्गायती'ति वचनार्थानुष्ठानाय ऋग्विशेषापेक्षायां तत्परिज्ञानाय योनय उत्तराश्च प्रतिसाम विभक्ताः उत्तराग्रन्थे पठ्यन्ते नादृष्टार्थं । कण्वरथंतरयोनिरपि तत्रैव पठिता सा यत्र कण्वरथंतरं तदङ्गत्वेन ज्ञायते । तस्मात्स्वयोनौ गेयम् । एवं चाम्नानसिद्धपरित्याग ऋगन्तरसंचारस्य न कल्पितो भवति । कौत्सादिसाम्नां तु योनिरुत्तराग्रन्थेन पठितेति तेषां प्राकृतीष्वेवर्क्षु गानम् ॥

कण्वरथंतरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥ २४ ॥

**कार्यत्वादुत्तरयोर्यथाप्रकृति ॥४७॥ [समानदेवते वा तृचस्याविभागात् ॥४८॥]**

संदेहनिर्णयौ पूर्ववदेवोत्तरयोर्ऋचोः ॥ योनित्यागः समश्चेन्न तृचशब्देन बाधनात् ॥ ३८ ॥

कण्वरथंतरस्यैवोत्तरागाने संशयः किं बृहदुत्तरयो रथंतरोत्तरयोर्वा गानं उत स्वयोन्युत्तरयोरिति । तत्र स्वयोन्युत्तरयोरपि गीयमानस्याम्नानसिद्धर्क्परित्याग ऋगन्तरसंचारावपरिहार्यौ । तद्वरं

---

**पृष्ठार्थेऽन्यद्रथंतरात्०** ॥ ४३ ॥ यथा वायव्यादौ प्राकृती मनोता तथेहापि प्राकृत्य एव ऋच इत्युत्थानात्संगतिः । **साममात्रमिति** । ऋग्विशिष्टाभिधाने तस्या अपि वचनादेव प्राप्तिः स्यान्न त्वेतदस्ति, गीतिः सामेति बहुधा साधितत्वादित्यर्थः । **प्राकृतयोरिति** । नवमे उभयस्थानापत्तेर्व्युत्पादितत्वादिति भावः । **ननु** प्रकृतावपि ऋचां सामविधिबलात्सिंहपञ्जरन्यायेनार्थादेव प्राप्तिरेवं चेह तन्न्यायेनार्थिकत्वात्स्वयोनेरेव प्राप्तिसंभवादार्थिकस्यातिदेशासंभवाच्च ऋचो नातिदेशेन प्राप्तिरित्यत उक्तं **क्रमप्रकरणाभ्यामिति** । सत्यं यदि प्रकृतौ सिंहपञ्जरन्यायेनार्थात्प्राप्तिः स्यात्तदा तुल्यन्यायत्वात्स्वयोनेरेव प्राप्तिः स्यान्नत्वेवं, तत्र ऋचां क्रमप्रकरणाभ्यामङ्गत्वावधारणेनार्थिकत्वाभावादित्यर्थः । **नास्ति किंचिदिति** । उत्तराग्रन्थे पाठमात्रं नच विधिः, चोदकस्तु विधिरूपत्वात्प्रबल इति भावः । **अथवेति** । योगेनैवोपपत्तेर्न रूढिः कल्पनीयेति भावः । **कण्वसंबन्ध इति** । वैकृतस्य सामविशेषस्य कण्वसंबन्धे प्रमाणाभावेन तदनुवादेन रथंतरधर्ममात्रविध्यसंभवात्तस्यापि विधेयत्वे वाक्यभेदापत्तेरिति भावः । **तदुत्तरयोरिति** । उत्तराधिकरणसिद्धान्तसौकर्यार्थमुक्तं **क्रत्वर्थ इति** । तथाच क्रत्वर्थपाठस्यानर्थक्यपरिहाराय विधेरवश्यकल्प्यत्वान्न चोदकप्राबल्यसंभव इति भावः । कथं तर्हि कौत्सादीनां प्राकृतीषु गानम् । नच 'अत्र ह्येवावपन्ती'ति वचनादिति वाच्यम् । तस्य परिसंख्यार्थत्वाङ्गीकारेण परमत इवापूर्वविधित्वानङ्गीकरणादित्यत आह—**कौत्सेति** । सूत्रार्थस्तु—पृष्ठार्थे यदन्यद्रथंतराद्विहितं तत्साम रथंतरयोनिकं स्यात् वैश्यस्तोमस्य ज्योतिष्टोमविकारत्वात्तत्र बृहद्योनिसद्भावेऽपीह ऋचां विभक्तत्वात् कण्वरथंतरावयवरथंतरशब्देन विभागेन रथंतरयोनेरेव प्राप्तेरिति ॥

**कार्यत्वात्तु०** ॥ ४७ ॥ विशेषाशङ्कयोत्थानादगतार्थत्वमभिप्रेत्याह—**स्वयोनीति** । तथाच यथा उत्तराग्रन्थे पठि-

चोदकप्राप्तयोरेव गानमिति मन्यते । उत्तराग्रन्थे पाठस्तु स्वयोनिवदुत्तरयोरप्यविशिष्ट इति स्वयोन्युत्तरयोरेव गानम् ॥

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ॥ २५ ॥

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥**

आग्नेयेषु ग्रहेपूहो नास्ति वा स्तुतशस्त्रयोः ॥ संस्कारत्वादस्ति मैवमर्थकर्मत्वनिश्चयात् ॥ ३९ ॥

अग्निष्टुति श्रूयते 'आग्नेया ग्रहा भवन्ती'ति प्रकृतौ नानादेवतानि स्तोत्रशस्त्राणि तानि यदि देवतासंस्कारार्थानि ततोऽग्निष्टुति यथादेवतमूहितव्यानि तेषां त्वर्थकर्मत्वं द्वितीये व्यवस्थितम् । तस्मादविकार इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत् ॥

चातुर्मास्येष्वाज्यशब्दस्याविकारेणावाहनाधिकरणम् ॥ २६ ॥

**उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणत्वात् ॥ ५० ॥ [ न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥ स्याद्वाऽऽवाहनस्य तादर्थ्यात् ॥ ५२ ॥ न वा संस्कारशब्दत्वात् ॥ ५३ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपि वाज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५७ ॥ अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८ ॥ न वा स्याद्गुणशास्त्रत्वात् ॥ ५९ ॥]**

चातुर्मास्यातिदिष्टेषु निगमेष्वाज्यपानिति ॥ विक्रियेत न वाद्येऽपि किं स्याद्दध्याज्यपानिति ॥ ४० ॥
दधिपानिति वा यद्वेत्येवं स्यात्पृषदाज्यपान् ॥ द्रव्यद्वयोक्तेराद्यः स्याद्दधिमात्रहविष्ट्वतः ॥ ४१ ॥
द्वितीयः स्यात्तृतीयोऽस्तु द्रव्यान्तरविधानतः ॥ गुणो दध्नां चित्रताज्ये ततो विक्रियते नहि ॥ ४२ ॥

चातुर्मास्ये श्रूयते 'पृषदाज्येनानूयाजान्यजती'ति । सन्ति प्रकृतावाज्यपशब्दयुक्ता निगमाः 'देवतानाज्यपानावह स्वाहा । देवतानाज्यपान् देवतानामाज्यपानां प्रिया धामानि देवा आज्यपा आज्यमजुष-

---

तयोरपि स्वयोन्युत्तरयोरगानमेवं पठितायामपि स्वयोनौ न गानमिति पूर्वाधिकरणाक्षेपेणोत्थानात्संगतिः । सूत्रार्थस्तु— कण्वरथंतरस्य स्वयोन्युत्तरयोरपि कार्यत्वादाम्नानसिद्धत्वाभावेन पुरुषकृतिसंपाद्यत्वाद्यथाप्रकृत्येवोत्तरे ग्राह्ये इति ॥

**ग्रहाणां देवतान्यत्वे०** ॥ ४९ ॥ अत्र किमिमानि यथादेवतमूहितव्यान्युत न, तदर्थं च किं देवतासंस्कारार्थानि उतारादुपकारकाणीति संशयं मनसि निधाय पूर्वपक्षमाह—**यदीति । ऊहितव्यानीति** । ततश्च पूर्वत्र प्राकृतबाधवदिह प्राकृतदेवतावाचकपदबाध इत्युत्थानात्संगतिः । आरादुपकारकत्वं स्तुतशस्त्राधिकरण एव वर्णितमिति सिद्धान्तमाह— **तेषामिति । द्वितीयसिद्धस्येति** । अत्र स्तोत्रशस्त्राणामदृष्टार्थतया यत्किंचिद्देवतास्तुत्यापि तत्सिद्धावपि न प्राकृतीनामृचामविकारेणाग्निष्टुति प्रयोगः किंतु 'आग्नेयीषु स्तुवते आग्नेयीः शंसती'तिवचनेनाग्नेयीनामेव प्रयोगः । तथाचाग्निष्टुतीति प्रदर्शनमात्रम् । यत्र विकृतौ देवतान्तरं वचनाच्च तद्देवताकऋचां न प्राप्तिः स विषयः । अतएव सूत्रे 'ग्रहाणां देवतान्यत्वे' इति सामान्येनैवोक्तमिति ध्येयम् । अत्र स्तुतशस्त्रयोः संस्कारकर्मत्वेऽपि विकृतौ देवतान्यत्वे ऊह इति पूर्वपक्षोपवर्णनमनुपपन्नं 'पूयति वा एतदृचोक्षरं यदेनदूहति तस्मादृचं नोहे'दिति ऋचामूहनिषेधेन देवताभिधानार्थत्वेऽपि ऊहाप्रसङ्गात् किंतु देवताभिधानार्थत्वे विकृतौ देवतान्यत्वे प्राकृतीनामृचां तद्देवताभिधानासमर्थत्वादुक्तनिषेधवचनेनोहासंभवाच्च तासां निवृत्तौ वैकृतदेवताप्रकाशनसमर्था ऋचो दाशतयीभ्य आनीय स्तुतिः कर्तव्येति पूर्वपक्षो वर्णनीयः । अतएव च स्तुतशस्त्राधिकरणे देवतासंस्कारार्थत्वपक्षेऽग्निष्टुति आग्नेयीनां स्वतएव प्राप्तेराग्नेयीः शंसतीति वचनमनर्थकं स्यात् । 'अनर्थकं च तद्वचन'मिति गुणसूत्रे बाधकोपन्यासस्तत्सूत्रभाष्यं चाचार्यैः ऋचामनूह्यत्वहेतुनैवोपपादितं, अनूह्यत्वे चोक्तनिषेधवचनमेव न्यायसुधायां प्रमाणीकृतम् । तस्माद्यथाश्रुतं कृत्वाचिन्तया ऊहपदं प्राकृतनिवृत्त्यभिप्रायपरमिति व्याख्येयम् । सूत्रे कर्मत्वादर्थकर्मत्वादित्यर्थः ॥

**उभयपानात्०**॥५०॥ स्तुतशस्त्रयोः स्तुत्यर्थत्वेन देवताभिधानपरत्वाभावादनूहेऽपि निगमानां देवताभिधानपरत्वेन सत्यूहे प्राकृताज्यपशब्दस्य बाध इत्युत्थानात्संगतिः । **नन्वयं** विचारोऽनुपपन्नः आज्यपशब्दस्य प्रधानदेवतास्विष्टकृद्देवताशब्दमध्यपठितस्य तत्र कर्तव्ये पार्वणनारिष्टादिदेवतापरत्वौचित्येनानूयाजदेवतापरत्वस्यैवाभावादित्यत आह—**आज्यपेति** ।

न्ते'ति । आज्यपशब्देन च तत्र प्रयाजानूयाजदेवता उच्यन्ते । अत्रच पृषदाज्येनानूयाजा यष्टव्याः । तदिह संशयः आज्यपशब्दस्य आज्यदधिपानित्येवं विकारः अथवा दधिपानिति उत पृषदाज्यपानिति आहोस्विदविकारेणैव प्रयोग इति । यद्युभयं हविस्ततः प्रथमः पक्षः । यदि दध्येव ततो द्वितीयः । यदि पृषदाज्यं नाम द्रव्यान्तरं हविस्ततस्तृतीयः। अथ त्वाज्यमेव हविस्तस्य तु पृषत्त्वं चित्रता संस्कारमात्रं तज्जननार्थं च दधि ततः सिद्धान्तः तत्र पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्च दधि चेति तुल्यवत्संकीर्तनादुभयं हविः । नन्वेकेन प्रकृतौ देवतोपलक्षणात्तेनेह यद्युभयं हविस्तथाप्येकेन देवतोपलक्षणासिद्धेर्नोभयादरो यज्ञपतिवदिति चेत्, स्यादेवं, यदि यज्ञपतिवत्परार्थं हविः तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्तव्यमेव, तस्मादुभयोपलक्षणम् । अथवा 'द्विरुपस्तृणाति सकृदभिघारयती'त्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यं दध्येव हविस्ततो दधिपानित्येव वक्तव्यम्, नैतद्द्वयमपि युक्तम् । ग्रहणे हि दध्याज्ययोस्तुल्यत्वं दध्नो वा प्राधान्यं गम्यते । यागे त्वाज्यमेव पृषत्तागुणकं करणत्वेन श्रुत्या विधीयते नोभयम् । नापि दधि । यच्च यागद्रव्यं तदर्थो ग्रहणसंस्कारः । तस्माद्ग्रहणेऽप्याज्यमेव प्रधानं । तस्य तु पृषत्तासंपादनार्थं दधि गृह्यते न स्वार्थेन अनुपयोगित्वात् । तथाविधे तु दध्नि तुल्यनिर्देश उपस्तरणादिवादेन च प्राधान्यनिर्देशोऽर्थवादमात्रं तस्मादविकारः । अन्यस्त्वाह—दध्ना आज्येन च द्रव्यान्तरं निष्पद्यते तस्य वाचकः पृषदाज्यशब्दः तच्च हविः । 'पृषदाज्येनानूयाजान्यजती'ति वचनात् । तस्मात्पृषदाज्यपानिति वक्तव्यम् । स्यादेतदेवं यदि पृषदाज्यशब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते । नत्वेवमस्ति । पृषच्छब्दो हि लोके चित्रत्ववचनः पृषद्रज्जुः पृषन्मणिरिति । तेन पृषदाज्येन चित्रेणाज्येनेत्यर्थः । तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रतागुणमात्रविधानम् । एवंच गुणं संपादयितुं दधि गृह्यते, प्राधान्यनिर्देशोऽर्थवादमात्रं हविरेव च प्रकृतावुपलक्षितं न हविर्गुणः । अविकारेण तेनाज्यपानित्येवोपलक्षणं चोदकानुग्रहश्चैवमविकाराद्भविष्यति ॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

पार्वणनारिष्ठादीनामवषट्कारहोमत्वेन तदीयदेवतानामावाहनासंभवेन स्थानप्रमाणं बाधित्वा प्रयाजानूयाजदेवतापरत्वस्यैव वक्तव्यत्वाद्युक्तो विचार इत्यर्थः । **संकीर्तनादिति** । तथाच पृषदाज्येनेत्यत्राज्यशब्दः छत्रिन्यायेनोभयपरः परस्परसंबन्धप्राप्तचित्रतानुवादश्च पृषच्छब्द इति भावः । **ननु** 'यथा ये यज्ञपतिं वर्धा'नित्यत्रैकेनापि यज्ञपतिना उपलक्षणसिद्धेर्बहुयजमानके नोह एवमिहापि किं न स्यादिति शङ्कते—**यद्यपीति** । यज्ञपतिशब्दस्य 'उपहूता मनुष्या य इमं यज्ञमवान्ये यज्ञपतिं वर्धा'निति मनुष्याध्वर्युविशेषणत्वमुखेनेडास्तुतौ एकेनोपलक्षणसंभवेपीह देवतावद्द्रव्यस्याप्यनुष्ठेयतया स्मर्तव्यत्वेन स्वार्थत्वादुभयप्रकाशनमावश्यकमिति वैषम्येण परिहरति—**स्यादेवमिति** । **अथवेति** । 'यदि वसन्ते यजेत तद्विरुपस्तृणीयात् सकृदभिघारयेद्यदि प्रावृषि यजेत सकृदुपस्तृणीयात् द्विरभिघारयेदि'ति पृषदाज्यग्रहणवाक्यं श्रूयते वैश्वदेवपर्वणि पृषदाज्यधान्यां द्विरुपस्तीर्य सकृद्दधि गृहीत्वा सकृदभिघारयेद्वरुणप्रघासेषु सकृदुपस्तीर्य सकृद्दधि गृहीत्वा द्विरभिघारयेदिति तदर्थः । तत्र चोपस्तरणाभिघारणशब्दाभ्यामाज्यस्य संस्कारकत्वावगमात्संस्कृतं दध्येव प्रधानमवगम्यत इति तस्यैव हविष्ट्वं पृषदाज्यशब्दश्च पृषच्चित्रमाज्यं यस्येति बहुव्रीह्याश्रयणेन दधिपर एवेति भावः । **नोभयमिति** । लक्षणाप्रसङ्गादिति भावः । **नापि दधीति** । बहुव्रीहावपि लक्षणायास्तुल्यत्वादिति भावः । **ननु** दध्नो हविष्ट्वाभावे कथं हविःसंस्कारके ग्रहणे प्राधान्यमत आह—**यच्चेति** । **अनुपयोगित्वादिति** । नचाभिषवयुक्तपूतीकवद्ग्रहणसंस्कारान्वयबलादेव हविष्ट्वेनोपयोगः कल्प्यः श्रुतेन पृषदाज्येनावरोधात्कल्पनानुपपत्तेरिति भावः । **अर्थवादेति** । एवं चोपस्तरणादिवाक्यस्याज्यग्रहण एव तात्पर्यं तत्र चाज्यस्य ग्रहणमध्ये दधनि गृह्यमाणे पूर्वग्रहणमुपस्तरणमिव पश्चाद्ग्रहणमभिघारणमिव भातीत्यभिप्रायेणोपस्तरणाभिघारणश्रुतिरपि नेयेति भावः । **द्रव्यान्तरमिति** । परस्परसंसर्गेण संसर्गिषु आरनालादिषु द्रवद्रव्यान्तरत्वस्य युक्तत्वादिति भावः । न संसर्गमात्रेण द्रव्यान्तरं किंतु रसान्यत्वेन । नचात्र रसान्तरमिति द्रव्यान्तरत्वस्यैवाभावान्न समुदायशक्तिकल्पनावकाश इत्याशयेनाह—**स्यादेतदेवमिति** । **प्राकृतस्यैवेति** । अत्राज्योद्देशेन न पृषत्ताविधिः एकस्मिन्पदे विध्यनुवादयोरुच्यङ्गैः स्विष्टकृतमित्यादाविवानुपपत्तेः । तस्मादनूयाजेष्वेव पृषत्तागुणो विधीयमानस्तदङ्गे आज्ये पर्यवस्यतीत्यभिप्रायेण प्राकृतस्यैव चित्रता विधीयत इत्युक्तम् । **नन्वेवमपि** चित्रताविशिष्टाज्यप्रतिपादनार्थं पृषदाज्यपानिति प्रयोगः किं न स्यादत आह—**हविरिति** । प्रकृतौ बहुत्वचतुर्गृहीतत्वादिगुणेषु सत्स्वपि आज्यपानित्येव

---

१ पलक्षिताः । २ परार्थं कर्तृत्वेन गुणभूतं. ३ पृषत्त्वगुणकं.

# दशमाध्याये पञ्चमः पादः।

एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥ १ ॥

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ [लिङ्गदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥]**

प्राकृतानामेकदेशे कोऽपि स्यादाद्य एव वा ॥ अविशेषेण कोऽप्याद्यः पूर्वेणास्यैव बोधनात् ॥ १ ॥

प्राकृतानां बहूनामेकदेशे विकृतिषूपादातव्ये किमादितो मध्यतोऽन्ततो वा विकल्पेनोपादानमुतादित एवेति संशयः। यथा द्यावापृथिव्य एककपाले आश्विने द्विकपाले वैष्णवे त्रिकपाले प्राकृतानां कपालानामेकदेशग्रहणं तथा एकां सामिधेनीमित्यत्र सामिधेन्येकदेशः। तथा द्विरात्रादिषु द्वादशाहैकदेशः तत्र विशेषाग्रहणादनियमे प्राप्ते उच्यते—यः कपालोपधानानां मध्ये प्राचीनः पदार्थः तेन प्रथमः कपाल उपस्थाप्यते तस्योपस्थितस्य परित्यागे न किंचित्कारणमस्ति तथा तेनापि द्वितीयस्तेनापि तृतीय इत्येवं क्रमेणोपस्थापितेषु उपात्तेषु चावशिष्टानि प्रयोजनाभावाल्लुप्यन्ते, तथा सामिधेन्यादिष्वपि। तस्मादाद्योपादानमन्त्यलोपः ॥

एकत्रिक आद्ये त्रिचे गानाधिकरणम् ॥ २ ॥

**एकत्रिके तृचादिषु माध्यंदिनस्थछन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ [आदितो वा तन्न्यायत्वादितरस्याऽऽनुमानिकत्वात् ॥ ८ ॥ यथानिवेशं च प्रकृतिवत्संख्यामात्रविकारत्वात् ॥ ९ ॥]**

तृचाद्यासु तृचे वाद्ये तिसृष्वित्युच्यतेऽग्रिमः ॥ त्रिच्छन्दस्त्वात्प्राकृतं तत्क्रमादत्र तृचोऽखिलः ॥ २ ॥

अस्त्येकत्रिको नाम क्रतुः 'अथैष एकत्रिकः तस्यैकस्यां स्तोत्रीयायां 'बहिष्पवमानं स्तुवीत तिसृषु होतुराज्यमेकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः एकस्यामच्छावाकस्य तिसृषु माध्यंदि-

---

हविषामुपलक्षणादिहापि केवलेनैवोपलक्षणमित्यर्थः। सूत्रार्थस्तु—पृषदाज्ये हविषि सति निगमेषु दध्नोप्युपलक्षणं स्यात् प्रकृतौ पातव्यस्याज्यस्योपलक्षणत्वादिहाज्यदध्नोरुभयोरपि पृषत्त्वेन पावनावगमादिति ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

**आनुपूर्व्यवतामेकदेशग्रहणेषु०** ॥ १ ॥ प्राकृतस्य पदार्थस्य बाधनिरूपणानन्तरं पदार्थैकदेशबाधो निरूप्यते इति पादान्तरत्वमानन्तर्यं च। **यथेति**। यद्यपि 'द्यावापृथिव्यमेककपाल'मित्यादौ कपालविशिष्टकर्मविधानेन कपालानामातिदेशिकत्वाभावान्न प्राकृतैकदेशत्वसंभवस्तथापि प्रकृतौ कपालोपधानार्थानां 'ध्रुवमसि पृथिवीं दृँह धर्मस्यन्तरिक्षं दृँहे'त्यादीनां मन्त्राणामिहातिदेशिकत्वात्तदभिप्रायेणैकदेशग्रहणमित्युक्तं तदभिप्रायेणैव चादिमध्यान्तभावश्चेति ध्येयम्। **एकामिति**। यद्यपि महापितृयज्ञे 'एकां सामिधेनीमन्वाहे'ति श्रूयते तत्र चाप्राकृतसामिधेन्यन्तरपाठान्न प्राकृतैकदेशग्रहणं तथापि यत्र विकृतौ न सामिधेन्यन्तरपाठस्तत्रैकदेशत्वसंभवो बोध्यः। **तथेति**। नच द्विरात्रादिषु द्वादशाहस्य कात्स्न्येन न प्रकृतित्वं किंतु द्विरात्रे द्वादशाहगताहर्द्वयस्य त्रिरात्रे तद्गताहस्त्रयस्येत्येवमवयवश एव तावताप्याकाङ्क्षाशान्तेः, तथाच प्राकृतैकदेशग्रहणाभावान्नास्योदाहरणत्वसंभव इति वाच्यम्। कृत्स्नस्य द्वादशाहस्य न प्रकृतित्वं किंत्वाद्यस्यैवाहर्द्वयस्येत्यस्यैवार्थस्यात्र व्युत्पादनात्। एवंचेदं विशेषातिदेशविचारतयाष्टमे संगतमपि कपालादितुल्ययोगक्षेमतया लाघवादिहैव कृतमिति ध्येयम्। **तस्मादिति**। नचात्रागन्तुन्यायः। यत्र प्राथमिकपदार्थनिवेशो निश्चितस्तत्रागन्तुन्यायादन्त्यलोप इह तु सोऽपि न निश्चितः। सर्वेषां चोदकावगतत्वाविशेषादिति भावः। 'मुख्यं वा पूर्वचोदना'दित्यत्र मुख्यधर्मिणो धर्मोपादाने स्थितेऽपीह एकस्यैव धर्मिण आद्यधर्मोपादानं चिन्त्यत इति न ततोपि गतार्थत्वमित्याहुः। सूत्रे आगमवत् यत्रागन्तुषु अन्ते निवेशस्तद्वदित्यर्थः ॥

**एकत्रिके तृचादिषु०** ॥ ७ ॥ आद्योपादाने व्युत्पादिते कीदृशमाद्यमुपादेयमिति विचारणात्संगतिः। **एका तिस्रश्चेति**। अतएवास्य क्रतोरेकत्रिकसंज्ञापीति ध्येयम्। **ननु** संशरविलेशदोषपरिहारार्थं समच्छन्दस्काद्यतृचएव गानस्य

नःपवमान'इत्येवमन्तादेका तिस्रश्च स्तोत्रीया व्यतिषङ्गेण कर्तव्याः श्रूयन्ते । प्रकृतौ माध्यंदिनपवमाने त्रयस्तृचाः गायत्रः प्रथमः बार्हतो द्वितीयः त्रैष्टुभस्तृतीयः। तत्रैव चेदं वचनं 'त्रिच्छन्दा आवापो माध्यंदिनः पवमान' इति । तदिह नवानामृचां मध्ये तिसृषूपादातव्यासु भवति संशयः किं त्रयाणां तृचानामाद्या ऋच उपादातव्या उताद्यस्तृचः सकलो ग्राह्य इति । तत्र त्रिच्छन्दस्त्वं श्रुत्या प्रकृतौ विहितं चोदकप्राप्तमनुगृहीतुं तृचाद्यानामुपादानम् । आद्ये हि तृचे गायत्रीमात्रोपसंग्रहात्त्रिच्छन्दस्त्वं हीयते । नन्वाद्यया गायत्र्या द्वितीयागायत्र्युपस्थाप्यते नतु द्वितीयस्य तृचस्याद्या बृहती। सा हि तृतीयया गायत्र्योपस्थाप्यते तेन पाठक्रमोपस्थापकबलादाद्यस्तृच उपादेयः। सत्यम्। पाठप्राप्तः क्रमो लोपनीयः श्रुतिप्राप्तत्रिछन्दस्त्वानुग्रहायेति प्राप्ते ब्रूमः—प्रकृतावियं श्रुतिः अयं पाठः इति बलाबलं चिन्त्यम् । विकृतौ तु सर्वस्य प्रकृतितो लब्धात्मकस्य प्राप्तस्य न तत्कृतः कश्चिद्बलाबलविशेषः, किंतु यद्विकृतावेव शीघ्रमुपतिष्ठते तदुपादेयम् । अतः क्रम एवात्र बलीयान्। प्रथमा हि गायत्री समाप्यमानैव द्वितीयां गायत्रीमुपस्थापयति सोपस्थापितोपक्रान्तैव भवतीति नान्यस्यावसरः। तस्मादाद्ये तृचे माध्यंदिनः पवमानः स्तोतव्यः ॥

एकस्यामृचि धूर्गानाधिकरणम् ॥ ३ ॥

## त्रिकं तृचेषु धुर्ये स्यात् ॥ १० ॥ [एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥]

**तृचे स्यादृचि वैकस्यां धूर्गानं प्रकृताविव ॥ तृचे भवेदिहैकस्यां श्रुत्यावृत्तिविधानतः ॥ ३ ॥**

एकत्रिक एव क्रतौ व्यतिषङ्गेणैकस्यां तिसृषु च स्तोत्रेषु संपाद्यमानेषु यानि प्रकृतौ धूर्गानसंपाद्यानि स्तोत्राणि तेषु यत्त्रिकं संपाद्यं तत्किं तिसृष्वृक्षु उतैकस्या एवर्चोऽभ्यासेन त्रिकं संपाद्यमिति संशयः । तत्र तृचगानप्रापिचोदकानुग्रहाय गानान्तरवद्धूर्गानान्यपि त्रिस्तोमकानि तृचे गातव्यानि 'आवृतं धूर्षु स्तुवते' इति तु वचनं तिसृष्वपि गीयमानस्य साम्नः प्रत्येकमावृतेस्तेनाभिप्रायेणानुवादमात्रमिति मन्यते। स्यादेतदेवं यदि सामावृत्तिरियमुच्यते । स्तोत्रावृत्तिस्त्वियम्।

---

कर्तव्यतया विषमछन्दस्कासु प्रतितृचमाद्यासु गानमिति कथं पूर्वपक्षोऽत आह—**तत्रेति** । त्रिछन्दस्कत्वप्रापकचोदकानुग्रहाय संशरविलेशावपि स्वीकार्याविति भावः। **ननु** चोदकतः प्राप्तिः क्रमेप्यविशिष्टा, तथाच तदनुग्रहाय प्रथमतृचस्थानानामेवोपादानं किं न स्यादिति शङ्कते—**नन्विति । सत्यमिति** । यद्यपि प्रकृतावयं पाठः इयं श्रुतिरिति बलाबलचिन्ता विकृतौ तु क्रमत्रिछन्दस्त्वयोरुभयोरप्यानुमानिकत्वाविशेषात्तुल्यबलत्वं तथापि शास्त्रातिदेशाभिप्रायेण श्रुतिप्राप्तत्वोक्तिः। **प्रकृताविति** । तत्रैव तयोः स्वतःपदार्थोपस्थापकत्वादिति भावः। **विकृतौ त्विति** । शास्त्रं हि पदार्थपृष्ठभावेन पश्चादतिदिश्यते न स्वातन्त्र्येणेति तदतिदेशः सन्नप्यकिंचित्कर इति भावः । **ननु** तर्हि कथमाद्यस्तृच इति नियमो विनिगमकाभावादित्यत आह—**किंत्विति । उपक्रान्तेति** । उपस्थिततया कर्तव्यत्वेनाध्यवसितत्वादुपक्रान्तप्राया भवतीत्यर्थः। सूत्रार्थस्तु—एकत्रिकक्रतौ माध्यंदिनः पवमानः त्रयाणां त्रिकानामाद्यासु गेयः स्यात् त्रिच्छन्दा आवापो माध्यंदिनः पवमान इति त्रयाणामपि छन्दसां श्रुतत्वादिति ॥

**त्रिकं तृचेषु धुर्ये स्यात् ॥ १० ॥** धूर्गानेति गायत्रविकारात्मकानि सामानि धूर्गानशब्देनोच्यन्ते । 'गीतिविकारो गायत्रस्य धुर' इति वचनात् धूर्गानसंपाद्यमपि स्तोत्रं यदिहैकस्यां कर्तव्यत्वेन विहितं न तस्य विषयत्वं पूर्वपक्षाप्रवृत्तेः, अतस्तिसृषु स्तोत्रीयासु कर्तव्यं धूर्गानसंपाद्यस्तोत्रमेव विषय इत्याशयेनाह—**तेष्विति** । पूर्वत्र प्राकृतक्रमाबाधवदिहापि प्राकृततृचाबाधो न्याय्य इत्युत्थितेः संगतिः । **त्रिस्तोमकानीति** । त्रित्वलक्षणस्तोत्रीयासंख्याकानीत्यर्थः । **ननु** वैकृतवचनबलात्प्राकृततृचबाध इत्यत आह—**आवृतमिति । प्रत्येकमिति** । तृचे कर्तव्यं साम प्रत्यृचं परिसमाप्य कर्तव्यमिति नवमे व्यवस्थापनादिति भावः । विशेषतो धूर्गानमात्रेऽनुवादो न युक्त इत्याशयेन मन्यत इत्युक्तम्। 'आवृत्तं धूर्षु स्तुवते'इत्यत्रावृतमिति स्तुतिक्रियाया एव विशेषणं न धूर्नामकगानानाम्। तथाच न सामावृत्त्यनुवादः किंतु प्राप्तत्वात्स्तोत्रावृत्तिविधिरेवायमित्याशयेन सिद्धान्तमाह—**स्यादेवमिति** । ननु तथापि सामावृत्तिनिबन्धनस्तुत्या वृत्त्यनुवाद एव किं न स्यादित्याशङ्क्य, न सामावृत्तिमात्रा स्तुत्यावृत्तिः गुणाभिधानात्मिकायाः स्तुतेरभिधायकऋगावृत्तिंविना

गुणकीर्तनं च स्तुतिः। अतएकरूपैव स्तुतिरावर्तनीया साचैकस्यामेवर्चि क्रियमाणा तादृश्येवावृत्ता भवति। तद्भेदे तत्रान्यथाभावस्यावर्जनीयत्वाद्वचनं चैवमर्थवत्, इतरथा ह्यनुवादमात्रमनर्थकम्, तस्माद्धूर्गानानि त्रिकस्तोमकान्येकस्यामेवर्च्यभ्यस्तव्यानि ॥

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥ ४ ॥

**चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥ [प्राप्तिस्तु रात्रिशब्दसंबन्धात् ॥ १३ ॥]**

द्विरात्रादौ द्वादशाहप्रायणीयादिकः क्रमः ॥ आद्यन्तौ वर्जयित्वा वा विशेषाभावतोऽग्रिमः ॥ ४ ॥
द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वतः ॥ जागतस्यान्तरायाच्च विध्यन्तो दशरात्रगः ॥ ५ ॥

द्विरात्रादिष्वहर्गणेषु द्वादशाहः प्रवर्तते इति स्थितं तत्र किं द्वादशाप्यहान्यादितः प्रवर्तेन्त उत प्रायणीयोदयनीये वर्जयित्वा मध्यमो दशरात्रः पृष्ठ्यषडहच्छन्दोमचतुष्टयात्मक इति संशये विशेषाभावात्सर्वप्रवृत्तावुच्यते 'द्विरात्रे यत्प्रथमं तद्द्वितीयं यद्द्वितीयं तत्तृतीयं जगतीमन्तर्गच्छती'ति पैर्ष्टिकस्तृतीयस्य जागतस्यान्तरायदर्शनात्। अन्यैश्चैवंविधैर्लिङ्गैर्दशरात्रस्यैव प्रवृत्तिः। अस्ति च द्वादशाहे मध्यमस्य दशरात्रस्य पृथक्संघातकृतिः पृष्ठ्यादारभ्य हि प्रथममहर्द्वितीयमहरिति व्यवहारः चतुर्थं छन्दोममहः दशममहरिति व्यवहारः। सतिच दशरात्रसंघाते तस्यैव प्रवृत्तिर्लिङ्गविशेषैरध्यवसीयते ॥

---

वृत्त्ययोगादित्याशयेनाह—**गुणेत्यादिना । तद्भेद इति** । एतेनैव तिसृणामप्यृचामावृत्तिनिबन्धनस्तुत्यावृत्तिविधिरयं किं न स्यात्तथाच न चोदकप्राप्ततृचबाध इत्यपि निरस्तम्। ऋग्भेदे स्तुतिभेदावश्यंभावेन स्तुत्यावृत्त्यसामञ्जस्यादिति। **इतरथेति**। ननु एकस्यामृचि धूर्गानसंपाद्यं यत्स्तोत्रं तत्रावृत्तिविधायकतया वचनस्योपपत्तेः पूर्वपक्षेऽनुवादत्वोक्तिरिति प्राप्ते त्रिकस्तोमकस्तोत्रावृत्तिविधित्वाभावे आनर्थक्योक्तिश्चानुपपन्नेतिचेन्मैवम्। अस्य वचनस्यैकस्यामृचि धूर्गानसंपाद्यस्तोत्रविषयत्वे आवृत्तिविधिबलादेव तत्रैकत्वसिद्धेरेकस्यामिति वचनवैयर्थ्यं स्यात्। ऋग्भेदे त्वन्यथाभावस्य ग्रन्थकारेणैवोक्तत्वेन ऋगेकत्वं विना स्तुत्यावृत्त्यसंभवात्। अतस्तिसृषु यद्धूर्गानं तद्विषयमेवेदं वचनमित्यवश्यमङ्गीकर्तव्यतया पूर्वपक्षे सामावृत्त्यनुवादत्वोक्तेः सिद्धान्ते तदानर्थक्योक्तेश्चोपपन्नत्वादिति। सूत्रार्थस्तु—धूर्ये धूर्गानसंपाद्यस्तोत्रमध्ये यत्त्रिकस्तोमकं तत्तृचेषु स्यादिति ॥

**चोदनासु त्वपूर्वत्वात्०** ॥ १२ ॥ आद्योपादानापवादात्संगतिरित्याहुः। **स्थितमिति** । गणेषु द्वादशाहस्येत्यत्रेतिशेषः। नचैवं विशेषातिदेशचिन्तेयमष्टम एव संगतेति वाच्यम्। उक्तावान्तरसंगतेः प्रायणीयोदयनीयलक्षणाहर्द्वयप्रवृत्तिबाधचिन्तारूपत्वाच्चात्र संगतत्वादिति भावः। **पृष्ठ्येति** । दशरात्रे आदितः षण्णामह्नां यथाक्रमं रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यपृष्ठयुक्ततया पृष्ठ्यषडहत्वमितरेषां चतुर्णां चतुर्विंशतिचतुश्चत्वारिंशदादिस्तोमकत्वेन गायत्र्यादिछन्दोगताक्षरसमसंख्याकस्तोत्रियाकत्वाद्गायत्र्यादिभिश्छन्दोभिर्मीयन्ते इति व्युत्पत्त्या छन्दोमत्वं च बोध्यम्। **यत्प्रथममिति**। द्विरात्रे यत्प्रथमं तद्द्वादशाहस्य द्वितीयं यच्च द्विरात्रे द्वितीयं तद्द्वादशाहस्य तृतीयं यच्च द्वादशाहे चतुर्थं जागतमहस्तदन्तर्यन्ति परित्यजन्तीत्यर्थः। इत्थमेवेयं श्रुतिर्व्याख्येया द्विरात्रस्य प्रकृतत्वात्तृतीयाभावाच्चेति भाष्ये व्यक्तम्। तथाच यदि प्रायणीयमारभ्य प्रवृत्तिस्तदा जागतस्य चतुर्थत्वेन तृतीयमहरतील्य तत्परित्यागवचनमसंगतं स्यात् दशरात्रप्रवृत्तौ तु तदीययोराद्यद्वितीययोर्गायत्रत्रैष्टुभयोरह्नोः स्वीकारादव्यवहितस्य तृतीयस्य जागतस्य परित्याग उपपद्यत इति भावः। **अन्यैरिति**। गायत्रं प्रथममहः त्रैष्टुभं द्वितीयमिति द्विरात्रगतयोर्गायत्रत्रैष्टुभत्वदर्शनं दशरात्रप्रवृत्तौ लिङ्गम्। तथा प्रायणीयमारभ्य प्रवृत्तौ यत्प्रथमं तत्प्रथममेव स्यान्नतु द्वितीयम्। तथाच प्रथमस्य द्वितीयत्वं द्वितीयस्य तृतीयत्वं च लिङ्गमेवंरूपैरित्यर्थः। प्रागुक्तानां लिङ्गदर्शनानां चोदनालिङ्गोपोद्बलकत्वात्संप्रति चोदनालिङ्गमाह—**अस्तिचेति**। 'पृष्ठ्यः षडहस्त्रयश्छन्दोमाः अविवाक्यं दशममहः स एष व्यूढो दशरात्र'इत्यादाविति शेषः। व्यवहारबलादपि पृथगवान्तरसंघातः स्वीकार्य इत्याह—**पृष्ठ्यादिति**। होत्रादेः प्रयोगभ्रेषे सत्यनेनास्मिन्नहनि न वाच्यमिति व्युत्पत्त्या दशममहरविवाक्यमित्युच्यत इति ध्येयम्। सतिच पृथक्संघाते गणत्वं साधारणं रात्रान्तशब्दवत्त्वमवान्तरसामान्यमधिकमिति तस्यैव प्रवृत्तिरिति भावः। यदेकदेशोऽप्ययं रात्रशब्द उभयत्रार्थवत्त्वेनैकरूप इति लिङ्गम्। कण्वरथंतरे तु रथंतरमित्येकदेशोऽन-

---

१ तत्र एकरूपैव. २ पार्ष्णिक.

अग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम् ॥ ५ ॥

**अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥**

**धूनने वपने चाग्नौ सप्त चोक्ताश्चतुर्दश ॥ किमाद्यारम्भनियमः किंवारम्भो निजेच्छया ॥ ६ ॥**
**कपालवत्क्रमः प्राप्तः केचित्प्रकरणोचिताः ॥ व्यर्थाः स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पितः ॥ ७ ॥**

प्राकृतानां बहूनामेकदेशग्रहणे सत्याद्योपादानं अन्त्यलोप इति स्थितम् । यत्र तु प्रकरणपठितानां मन्त्राणामेकदेशग्रहणं यथाग्रावाधूननार्थानां 'वेशीनां त्वा पत्मन्नाधूनोमी'त्येवमादीनामावपनार्थानां च 'या जाता ओषधय' इत्येवमादीनां सप्तभिराधूनोतीति चतुर्दशभिर्वपतीति । तत्रापि किमाद्योपादानं उतानियम इति संशये क्रमानुग्रहादाद्योपादाने प्राप्ते बलीयसा प्रकरणेन सर्वेषामङ्गत्वावगमात्संख्याश्रुतेश्चानियमेन तत्संख्योपादानेऽप्यविरोधात् क्रमबाधेनादितो मध्यतोऽन्ततो वा सप्तानां चतुर्दशानां चोपादानम् ॥

विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम् ॥ ६ ॥

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमविकारात्संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ [आगमेन वाभ्यासस्याश्रुतित्वात् ॥ १६ ॥ संख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ पराक्शब्दत्वात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १९ ॥ अश्रुतित्वान्नेति चेत् ॥ २० ॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥२१॥ आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥ साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥ धुर्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्मत्वात् ॥ २५ ॥]**

**स्तोमवृद्धिः किमभ्यासादागमाद्वाग्रिमो यतः ॥ तत्कल्प्यमश्रुतं मैवं संख्यावापादिलिङ्गतः ॥ ८ ॥**

विवृद्धस्तोमकेषु क्रतुषु 'एकविंशेनातिरात्रेण प्रजाकामं याजये'दित्यादिषु किं प्राकृतानामेव साम्नामभ्यासेन स्तोमविवृद्धिसंपादनमुताप्राकृतानां साम्नामागमेनेति संदेहे अन्येषामश्रवणात्संख्यायाश्च

---

र्थको न सार्थकेन रथंतरपदेनैकरूप इति न लिङ्गमिति भवनाथः । सूत्रार्थस्तु—द्विरात्रादिचोदनासु प्रायणीयोदयनीययोरपूर्वत्वात्प्रकृतित्वासंभवाल्लिङ्गेन मध्यमदशरात्रधर्मनियमः स्यादिति ॥

**अपूर्वासु तु संख्यासु०** ॥ १४ ॥ पूर्वन्यायेनात्राद्योपादाननियम इति सिद्धान्तसौकर्यायातिदिष्टविषयः पूर्वन्यायः । अयंतु विचार उपदिष्टविषय इति विषयभेदं दर्शयति—**प्राकृतानामिति** । **आधूननेति** । उखास्थापने यदाधूननं तदर्थानामित्यर्थः । **आवपनेति** । कृष्टेऽग्निक्षेत्रे नानाबीजानामावपनार्थानामित्यर्थः । द्विरात्रादौ द्वादशाहिकानामहामाद्योपादानाभावेऽपि इहाद्योपादानमित्युत्थितेः संगतिः । **क्रमेति** । ननु प्रबलेन प्रकरणेन सर्वेषामङ्गत्वावगमात्कथं दुर्बलेन क्रमेणाद्योपादानमिति पूर्वपक्ष इतिचेन्नात्र सर्वेषामङ्गत्वसंभवः 'सप्तभिराधुनोती'ति श्रुत्या ताभ्यामपि बलीयस्या सप्तानामेव विनियोगादत्र च के सप्तेत्यपेक्षायां त्रिकपालादिवत्क्रमाध्यवस्थितिः । क्रमस्य श्रुत्यपेक्षितविशेषसमर्पकत्वमात्रेणाद्योपादाननियामकत्वमुच्यते नतु विनियोजकत्वमाश्रित्य येनोक्तदोषः स्यादिति भावः । सप्तभिरिति वाक्यं न मन्त्रविनियोजकं किंतु लिङ्गप्रकरणाभ्यामङ्गत्वेनावगतेषु मन्त्रेषु लाघवात् केवलं संख्यामात्रविधायकम् । ततश्च श्रौतविनियोगाभावे आद्योपादानमिच्छता क्रमस्य विनियोजकत्वमाश्रित्य तदुपपादनीयं क्रमस्य च नात्र विनियोजकत्वसंभवो दुर्बलत्वादित्याशयेन सिद्धान्तमाह—**बलीयसेति** । नन्वस्तु सप्तभिरित्यादेः संख्यामात्रविधायकत्वं तथापि तद्विरोधादेव न सर्वेषामङ्गत्वसंभव इत्यत आह—**संख्येति** । लिङ्गप्रकरणाभ्यां सर्वेषामङ्गत्वे निश्चिते संख्याश्रुतिरनियमेन यत्किंचिन्मन्त्रोपादानेऽप्युपपन्ना विकल्पमेवापादयति नतु प्रागवगतं सर्वेषामङ्गत्वमपि विहन्तीति भावः । सूत्रार्थस्तु—अपूर्वासु संख्यासु सतीषु विकल्पः स्यात् आदितो मध्यतोऽन्ततो वा याः सप्तचतुर्दशत्वादिसंख्यास्तासां सर्वासामर्थवत्त्वादिति ॥

**स्तोमविवृद्धौ०** ॥ १५ ॥ पूर्वत्र यथा सप्तभिरित्यादेः संख्यामात्रविधायकत्वमेवमिहाप्येकविंशेनेत्यादीनां संख्यामात्रविधायकत्वादभ्यास इत्युत्थितेः संगतिः । **अन्येषामिति** । एकविंशेनेत्य······विशिष्टसंख्येयान्तरविधिः येनागमः स्यात् किंतु लाघवात्संख्यामात्रमन्यद्विधीयते प्राकृतानि तु संख्येयानि तथैवावतिष्ठन्ते । तथाच यथा 'एकादशप्रयाजान्यजती'त्यत्र

---

१ चाश्रुतित्वात.

प्राकृताभ्यासेनापि संपत्तेरभ्यास एव न्याय्य: । नैवम् । संख्या हि पृथक्त्वनिवेशिनी स्तोत्रीयागता संपाद्या स्तोत्रीयापृथक्त्वसिद्ध्यर्थं सामान्तरागममाक्षिपति । अभ्यासे हि मुख्यपृथक्त्वाभावादसमञ्जसा संख्या स्यात्तस्मादागम: । सच साम्नामेव नर्चाम् । 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्च अत्र ह्येवावपन्त्यत एवोद्वपन्ती'ति वचनेनावपनव्यानां गायत्र्याद्याधारत्वनियमादृचां चक्त्वावापासंभवादनेनैव वचनेन न्यायप्राप्तोऽप्यागम: पवमानविषय एव कृत इति स्तोत्रान्तरेष्वगत्याभ्यासेनैव संख्यापूरणमित्युक्तम् ॥

वहिष्पवमान ऋगागमाधिकरणम् ॥ ७ ॥

## बहिष्पवमाने तु ऋगागम: सामैकत्वात् ॥ २६ ॥

**किं बहिष्पवमानर्धौ साम्नर्चा वाभिपूरणम् ॥ साम्ना पूर्वोक्तितो मैवं सामैकत्वपराक्श्रुतेः ॥ ९ ॥**

बहिष्पमानेऽपि किं सामागम उतर्गागम इति संशये पूर्वेण न्यायेन सामागमे प्राप्ते ब्रूम:— 'एकं हि तत्र सामेति ब्रूयात्स्वरसामैव गायती'ति वचनात्सामागमो न संभवति । नचाभ्यासेनापि

---

प्राकृतेषु संख्येयेषु संख्यामात्रविधानादभ्यासेन संख्यासंपत्तिरेवमिहापीत्यर्थः । **नैवमिति** । सत्यं संख्यामात्रविधिरिति, तथापि न प्राकृतं संख्येयं स्वशब्देनानूद्य प्रयाजैकादशत्ववदिह संख्या विधीयते येनाभ्यासः स्यात्, किंतु संख्याविधेरेव संख्येयानां मन्त्राणामत्र वाक्ये आक्षेपतो लाभो वाच्यः, स च संख्यायाः स्वरसावगतपृथक्त्वनिवेशित्वबलाद्भेदेनैव संख्येयमाक्षिपतीत्यागम एव युक्तो नाभ्यास इत्यर्थः । **ननु** सामागमेऽपि नात्र संख्यायाः पृथक्त्वनिवेशसिद्धिः साम्नां संख्येयत्वाभावात् । नच साम्नां स्तुतिसाधनत्वात्साधनभेदात्स्तोमभेदसंभवः । ऋचामपि यद्यपि साधनत्वमविशिष्टं तथापि 'साम्ना स्तुवीते'ति साम्नामेव स्तुतिसाधनत्वं श्रौतं, ऋचां तु सामसाधनत्वस्य ऋगक्षराभिव्यक्तिद्वारत्वादाक्षेप्यं न श्रौतमतः सामागम एव युक्त इति वाच्यम् । ग्रन्थकारेण स्तोमशब्दस्य स्तोत्रियासंख्यावाचकत्वाङ्गीकारेण स्तुतिपरत्वानङ्गीकारात् श्रौतस्यापि साम्नां स्तुतिसाधनत्वस्याकिंचित्करत्वात् । अतः कथं सामागमेऽपि पृथक्त्वनिवेशसिद्धिरित्याशङ्क्य स्तोमशब्दस्य स्तोत्रीयासंख्यावाचित्वात्तदन्तर्गतैकविंशतिसंख्यायाः पृथक्त्वनिवेशार्थः स्तोत्रीयाभेदो वक्तव्यः । स्तोत्रीयारूपत्वं तु स्तुतिसाधनत्वेन, तच्च सामाभिव्यङ्ग्यतया ततश्च व्यञ्जकीभूतसामभेदे व्यङ्ग्यानां स्तोत्रीयाणामृचामपि भेदः सिद्ध्यतीति युक्तः सामागमे पृथक्त्वनिवेश इत्याशयेनोपपादयति—**स्तोत्रीयागतेति** । साम्नामभ्यासे हि स्तोत्रीयाणां न स्वरूपतो नापि व्यञ्जकतो भेद इत्याह—**अभ्यासे हीति** । नन्वेवं संख्येयानां स्तोत्रीयाणामृचां स्वरूपत एव भेदसिद्ध्यर्थमृगागम एवास्तु किमनेन सामागमेनेत्यत आह—**सचेति** । नन्वयं विचारो न तावत्पवमानविषयः, तत्र 'त्रीणि ह वै यज्ञस्योदराणि'इत्यावापवचने जाग्रत्यभ्यासेन संख्यापूरणमिति पूर्वपक्षानुत्थितेः । नापि स्तोत्रान्तरविषयः, स्तोत्रान्तरेषु सिद्धान्तेऽप्यभ्यासेनैव संख्यापूरणाभ्युपगमात् । तस्मादिदमधिकरणमनर्थकमित्याशङ्क्य, नहि त्रीणीति वचनमपूर्वविधिः किंतु परिसंख्याविधिः । तथाचासत्यस्मिन्नधिकरणे यत्र क्रतौ प्राकृतेभ्योऽधिकानि सामानि तत्र पठितानां साम्नां पाठबलाद्यत्र क्वचिदावापे प्राप्ते पवमानेष्वेव नेतरेष्वित्येवं परिसंख्याय त्रीणि ह वा इत्यस्य चरितार्थत्वाद्यत्र विवृद्धस्तोमकेन वैशेषिकसामपाठस्तत्र कथं पवमानेष्वागम इतरत्राभ्यास इति व्यवस्था स्यादागमप्रापकवचनाभावात् न्यायव्युत्पादनाभावाच्च । सत्यस्मिन्नधिकरणे पवमानतदितरसाधारण्येनागमे व्युत्पादिते वैशेषिकसामपाठस्थल इव तदितरस्थलेऽपि पवमानेषु सिद्ध्यत्यागमः तत्प्रापकन्यायस्य व्युत्पादनात्पाठबलप्राप्तस्यापि पवमानेष्वेव नियमितत्वादितरस्तोत्रेष्वभ्यासश्च सिद्ध्यति । तस्मात्सामान्येन सर्वस्तोत्रविषय एवायं विचार इत्याशयेन पूर्वपादोक्तमर्थं स्मारयति—**अनेनैवेति** । सूत्रार्थस्तु—स्तोमविवृद्धौ प्राकृतानां साम्नामभ्यासेन संख्यापूरणं स्यादविकाराच्चोदकतः संनिधानात् तद्गुणत्वेन संख्यामात्रविधानात्सामान्तरस्याश्रुतत्वाच्चेति ॥

**बहिष्पवमाने० ॥ २६ ॥ पूर्वेणेति** । 'एकं हि तत्र सामे'ति सामैकत्वं प्रकृतौ यद्यपि श्रुतं तथाप्येकेन साम्ना वैकृतसंख्यापूरणायोगात्प्राकृतसामैकत्वं बाध्यमिति पूर्वपक्षिणो भावः । **एकमिति** । सामैकत्वाभावेनैव ऋगागमेनापि संख्यापूरणोपपत्तेर्न सामैकत्वं बाधनीयमिति भावः । **नन्वागमस्य** गायत्र्याद्याधारत्वावगमात् ऋचां ऋक्त्वावापासंभवादिह स्तोत्रान्तरवदभ्यासेनैव संख्यापूरणं युक्तमित्याशङ्क्याह—**नचेत्यादिना** । 'तं पराचमुक्थ्या गृह्णाती'तिवदवधिनिर्देशाभावेन पराक्शब्दस्य दिक्शब्दत्वाभावात् 'पराचीः सामिधेनीरन्वाहे'तिवदनभ्यासवचन एव पराक्शब्द इति भावः । नच वायुर्हि कर्तेति पवमानस्तोत्रोपाकरणस्यावहिष्पवमानत्वं तस्यात्र वाक्येऽनुपादानात् तत्परत्वे निरर्थकानुवादत्वप्रसङ्गाच्चेति

संख्यापूरणं संभवति, 'पराग्बहिष्पवमानेन स्तुवीते'त्यनभ्यासवचनेन पराक्शब्देनाभ्यासस्य श्रुत्यैव निषिद्धत्वात्। तस्मादृगागमः ॥

सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणाधिकरणम् ॥ ८ ॥

**अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥ [अविशेषान्नेति चेत् ॥ २८ ॥ स्यात्तद्धर्मत्वात्प्रकृतिवदभ्यस्येता संख्यापूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानां च दर्शनात् ॥ ३१ ॥ न कर्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥]**

सामिधेनीविवृद्धौ किमागमोऽभ्यस्यतामुत ॥ आगमः पूर्ववन्मैवमभ्यासः प्रकृतित्वतः ॥ १० ॥
तत्राप्याद्यन्तयोर्यावत्पूर्त्यभ्यासो यथोक्ति वा ॥ अभ्यस्यागमतः पूर्तिः पूरणार्थत्वतोऽग्रिमः ॥ ११ ॥
त्रित्वं न पूरणायोक्तमन्यथाप्यत्र पूरणात् ॥ विवक्षितमबाधित्वा भवेत्पूरणमागमात् ॥ १२ ॥

'यत्र सामिधेनीविवृद्धिरेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये'त्यादौ तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागम उत प्रथमोत्तमयोरेवाभ्यासेन संख्यापूरणमुत यावदुक्तं त्रिरभ्यासं प्रथमोत्तमयोः कृत्वावशिष्टानामागम इति संशये संख्यासामञ्जस्यादेकादशभ्यः प्राकृतीभ्योऽतिरिक्तानां सर्वासामागमः। नैवम्। प्रकृतौ हि पञ्चदशसु सामिधेनीषु विहितासु एकादशसु सामिधेनीषु पठितासु वचनं 'त्रिःप्रथमामन्वाह त्रिरुत्तमामि'ति। संख्यापूरणं यावद्भवति तावत्प्रथमोत्तमयोरभ्यसितव्यमित्येवंपरम्। पूरणसंख्याभिप्रायश्च त्रिःशब्दो दृष्टार्थत्वात्। त्रित्वस्वरूपपरत्वे हि अदृष्टार्थता स्यात्। तस्मात्प्रथमोत्तमयोरभ्यासेन संख्यापूरणमिति प्राप्ते ब्रूमः—स्यादेवं यदि पूरणसंख्याभिप्रायस्त्रिशब्दः स्यान्नत्वेतदस्ति। नह्यवश्यं प्रथमोत्तमयोरभ्यासेन संख्यायां पूर्यमाणायामेकैकस्य त्रिरभ्यासो भवति

---

भावः। तस्मादगत्या ऋगवयव एवेषितव्यः। गायत्र्याधारत्वं तु पवमानद्वये मुख्यं बहिष्पवमाने तु कथंचिद्व्याख्येयमित्याशयेनोपसंहरति—**तस्मादिति।** 'एकं हि तत्र साम गायती'ति सामैकत्ववचनानुसारेण सामाभ्यासस्यावश्यकत्वात्पराक्शब्देनावगम्यमानोऽप्यनभ्यास ऋङ्मात्रविषयः। अतएव तैत्तिरीयशाखायां 'पराचीभिः स्तुवत' इति ऋङ्निष्ठ एव पराक्शब्दः श्रूयत इति ध्येयम् ॥

**अभ्यासेन तु० ॥ २७ ॥ प्राकृतीभ्य इति।** यद्यप्येकविंशतिमनुब्रूयादित्यादिर्न विकृतिगतः किंतु प्रकृतावेव काम्यः सामिधेनीकल्पस्तथाप्येकविंशतिमित्यादौ संख्यासामिधेनीविशिष्टानुवचनान्तराण्येव फलाय विधीयन्ते। तानि च संख्यायुक्तानुवचनत्वसामान्याभित्यानुवचनविकृतिभूतानीति ग्रन्थकारेण तृतीये व्यवस्थापितत्वात्, वायव्यपश्वादौ 'एकविंशतिं सामिधेनीमन्वाहे'त्यादेर्विकृतावेव पाठाच्च तदुभयसाधारण्येन प्राकृतीभ्य इत्यादिव्यवहार इति ध्येयम्। पूर्वत्र यथा न सामागम एवमिहापि न सामिधेन्यन्तरागम इत्युत्थितेः संगतिः। **प्रकृतौ हीति।** प्रकृतावेकादश सामिधेनीः पठित्वा पञ्चदश विहिताः तत्र कथं संख्यापूरणमित्यपेक्षायां त्रिःप्रथमामिति वाक्यद्वयं प्रवर्तेत इति तस्य यावत्कृत्वः प्रथमोत्तरयोरभ्यासे संख्यापूरणं भवति तावत्कृत्वस्तेऽभ्यसितव्ये इति त्रिशब्देन पूरकसंख्यां लक्षयित्वा पूरकसंख्याविशिष्टः सुजर्थोऽभ्यासो विधीयते। तथासत्यपेक्षितविधानाद्दृष्टार्थत्वलाभो नतु त्रित्वसंख्यास्वरूपविशिष्टसुजर्थविधिः। तथासति स्वरूपेण त्रित्वसंख्याया अनपेक्षितत्वेनादृष्टार्थत्वापत्तेः। तथाच विकृतावपि यावत्संख्यापूरणं तयोरेवाभ्यासो नान्यागम इत्यर्थः। **स्यादेवमिति।** पूरकसंख्याविशिष्टाभ्यासविधौ त्रिशब्दस्य पूरकसंख्यालक्षकत्वेनार्थप्राप्तत्रित्वसंख्यानुवादकत्वेन वोपपत्तिर्वक्तव्या तदुभयमपि न संभवति। प्रथमोत्तमयोर्द्विश्चतुरभ्यासेनापि संख्यापूरणसंभवे नियमेन पूरकसंख्यासंबन्धलक्षणाविनाभावाभावेन लक्षकत्वासंभवात् अर्थप्राप्त्यभावाच्चेत्यर्थः। नच समं स्यादिति न्यायात्समविभाग एव प्राप्नोति न द्विश्चतुरभ्यास इति वाच्यम्। यत्र ह्येकेन वाक्येनैकार्थोऽनेकस्य विधीयते तत्रैव समविभागः। एकस्मिन्विधेये विभागं विना तस्यानेकसंबन्धाभावेन विभागपर्यन्तत्वात्तत्र विधिव्यापारस्य तत्र चैकरूप एवोभयत्र विधिव्यापारो वाच्य इति समविभागविधिः। यत्र तु वाक्यद्वयेनानेकमनेकस्य विधीयते तत्र विधिद्वयव्यापारयोरैकरूप्यप्रमाणाभावात्

---

१ संख्यायास्त्रित्वस्य च संप्रतिपत्तिः स्यात् नत्वेतदस्ति.

द्विचतुरभ्यासेनापि तत्पूरणसंभवात् । तस्मात्त्रिरभ्यास एव तत्र विवक्षितो न यावत्पूरणमभ्यासः । तेन विकृतिष्वपि त्रिरभ्यास एव प्राप्तो न यावत्पूरणमभ्यासः । तस्मात्प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामाग्नेयीनां दाशतयीभ्य आगमः । किंपुनरागम्यमानानां कर्मसंबन्धे प्रमाणम् । न तावल्लिङ्गम् । तस्याग्न्यादिस्वरूपमात्रविषयत्वेन क्रत्वर्थत्वे प्रमाणाभावात् । सर्वत्र हि लिङ्गं यत्किंचित्प्रमाणकं क्रतुसंबन्धसामान्यमपेक्ष्य द्वारविशेषमात्रे प्रमाणमिति याज्यापुरोनुवाक्याकाण्डे व्याख्यातम् । नचान्यदपि प्रमाणं पश्यामः । उच्यते—संख्यैवात्र संख्येयानां कर्माङ्गत्वे प्रमाणम् । तथाहि सामिधेनीपरिच्छेदद्वारा क्रतोरुपकर्तव्यम् । अग्निसमिन्धनप्रकाशिकाश्चर्चः सामिधेन्य उच्यन्ते । तेन तत्समर्था याः काश्चिदृचोऽवश्यमुपादातव्याः । एवं सर्वत्रागमे द्रष्टव्यम् ॥

षोडशिनां प्राकृतत्वाधिकरणम् ॥ ९ ॥

**षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ [प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नातं परिसंख्यार्थम् ॥ ३९ ॥ उक्तमभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥]**

विकृतौ प्रकृतौ वा स्यात्षोडश्युत्कर्षतोऽग्रिमः ॥ अविरुद्धेन वाक्येनानुत्कर्षात्प्रकृतावसौ ॥ १३ ॥

अस्ति ज्योतिष्टोमे षोडशी स च षोडशिना वीर्यकाम इति पुरुषार्थतया विहितोऽपि पुनः क्रत्वर्थतया श्रूयते—'अप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्योऽतिरात्रे ब्राह्मणस्योत्तरेहनि द्विरात्रस्य गृह्यते मध्यमेह्नस्त्रिरात्रस्य चतुर्थेहन्यहीनस्य गृह्यते' इति । तत्र क्रत्वर्थं षोडशिनं प्रति संदेहः किं प्रकृतौ स्यादुत विकृतिष्वेवोत्क्रष्टव्य इति । 'उत्तरेहन् द्विरात्रस्य गृह्यते'इत्यादिवचनैर्विकृतिसंबन्धावगमादग्निष्टोमे राजन्यस्येत्यादिवचनस्य च वैकृताग्निष्टोमाभिप्रायत्वेनाप्यविरोधात्प्रकरणं बाधित्वा वाक्येनोत्कर्षे प्राप्ते ब्रूमः—प्रकृतिकरणाम्नातैरग्निष्टोमादिशब्दैस्तत्रैव संभवद्भिः किमित्यसंनिहितापि विकृतिरभिधीयते । तस्माद्वाक्येनैव प्रकृतौ स्यात्तत्र राजन्यादिनिमित्तेन विहितः स विकृतिष्वनैमित्तिको विधीयते उत्तरेहन्द्विरात्रस्येति ॥

---

समविभागस्य प्रसक्तिरिति भावः । **तस्मादिति** । त्रिरभ्यासविधिरपि पञ्चदशत्वसिद्ध्यर्थ इति नादृष्टार्थत्वदोष इति भावः । **सर्वत्रेति** । अर्थप्रकाशनसामर्थ्यरूपलिङ्गात्स्वप्रकाश्यार्थमात्रे शेषत्वं मन्त्रस्य भवति नतु तद्द्वारा क्रतुशेषत्वमपि क्रतूपस्थित्यभावेनार्थप्रकाशनसामर्थ्यमात्रात्क्रतुशेषत्वासिद्धेः । अतः क्रतुना द्वारविशेषमनन्तर्भाव्य सामान्यतः शेषशेषिभावे सिद्धे किंद्वारं क्रतुशेषत्वं निर्वहतीति द्वारापेक्षायां मन्त्रप्रकाश्यार्थलक्षणद्वारा शेषत्वमात्रे लिङ्गं प्रमाणमिति 'लिङ्गक्रमसमाख्याना'दित्यधिकरणे निरूपितमित्यर्थः । **संख्येति** । ततश्च क्रत्वर्थसंख्यापरिच्छेद्यत्वबलादेव परिच्छेद्यतया गम्यमानानामृचां क्रत्वर्थत्वं भक्षसंयुक्तफलचमसवल्लभ्यत इति तदेव तत्र प्रमाणमित्यर्थः । **सर्वत्रेति** । स्तोत्रादिविषय ऋक्सामाद्यागमेपीत्यर्थः । सूत्रे अभ्यासप्रकृतित्वात्प्रकृतौ त्रिःप्रथमामित्यभ्यासेन संख्यापूरणस्य दृष्टत्वादित्यर्थः ॥

**षोडशिनो वैकृतत्वं०** ॥ ३४ ॥ **अस्तीति** । 'य एवं विद्वान्षोडशिनं गृह्णाती'ति विहित इति शेषः । **ननु** षोडशिनः पुरुषार्थत्वात्प्रकृतिविकृत्यर्थत्वविचार एवायमनुपपन्न इत्याशङ्क्याह—**सचेति** । त्रिरभ्यासस्येव षोडशिनो न प्रकृतिविकृतिसंबन्धः किंतु विकृतिमात्रसंबन्ध इत्युत्थितेः संगतिरित्याहुः । बाधप्रसङ्गात्प्रकृतिसंबन्धः षोडशिनो बाध्यते नेति चिन्त्यत इत्यध्यायसंगतिः । तत्रारम्भे **ननु** प्रकृत्यर्थत्वेऽप्यस्ति......समभिव्याहारादिति भावः । **ननु** वाक्यात्प्रकृत्यर्थत्वाभावेऽपि प्रकरणात्प्रकृत्यर्थत्वं किं न स्यादित्यत आह—**प्रकरणमिति** । **प्रकरणाम्नातैरिति** । प्रकृतत्वाद्बुद्धौ विपरिवर्तमानप्रकृतिपरत्वमेव युक्तमिति भावः । **ननु** यदि प्रकृत्यर्थं तर्हि चोदकादेव द्विरात्रादिषु प्राप्तेः पुनर्वचनं व्यर्थमत आह—**तत्रेति** । **सूत्रार्थस्तु**—षोडशिनो वैकृतत्वमेव द्विरात्रादिवाक्यैः कार्त्स्न्येन संबन्धावगमादिति ॥

आग्रयणादेव षोडशिग्रहणाधिकरणम् ॥ १० ॥

## तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥ [उक्थ्याच्च वचनात् ॥ ४३ ॥]

**उक्थ्याग्रयणतः स स्यात्केवलाग्रयणादुत ॥ आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः ॥ १४ ॥**

षोडशिन्येव संदेहः किमसावाग्रयणादुक्थ्याद्वा ग्रहीतव्य उताग्रयणादेवेति । तत्र 'आग्रयणाद्गृह्णाति उक्थ्यान्निगृह्णाती'ति वचनद्वयाद्विकल्पेन समुच्चयेन वा द्वाभ्यां गृह्यते, एवमपर्यवसिते पूर्वपक्षे मध्ये चिन्ता ॥

तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ ११ ॥

## स तृतीयसवने वचनात्स्यात् ॥४४॥ [अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥४५॥ उक्थ्याविच्छेदवचनत्वात् ॥ ४६ ॥ आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात्पुनराधेयवत् ॥ ४७ ॥ विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥]

**सवनेषु तृतीये वा स त्रयोक्त्या भवेत्त्रिषु ॥ द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम् ॥ १५ ॥**

वचनात् किं षोडशी सवनत्रये ग्राह्य उत तृतीयसवन एवेति । किं पुनः कारणमन्तराचिन्तायाः मूलाधिकरणसिद्धान्ते कालोपलक्षणत्वमुक्थ्यस्य स्यात्स्यति । स्थिते च तस्मिन्पूर्वयोः सवनयोर्ग्रहणमाशङ्कितुमशक्यं तयोरुक्थ्याभावात् । तस्मान्मध्येचिन्तितमिति केचित् । तदयुक्तम् । एवमपि पूर्वपक्षं समाप्य कर्तव्येयं चिन्ता स्यान्न मध्ये । किंच प्रातःसवने गृहीतव्य इत्यादिवचनादस्य सवनत्रये ग्रहणमाशङ्क्यते । नच वचनस्य परिपन्थी संभवति । तस्माद्यद्यपि पूर्वयोः सवनयोरुक्थ्याभावात्तदुत्तरकालता न संभवति तथापि वचनबलाद्गृहीतव्यः । कालवचनं तु तार्तीयसवनग्रहणाभिप्रायं भविष्यति । विद्यते च पूर्वयोरपि सवनयोरुक्थ्यं तस्माद्विचित्रगतिः । सूत्रकारश्चिन्तान्तरमध्येऽपि प्रसङ्गाच्चिन्तान्तरं कृतवानित्येव वक्तव्यम् । तत्र प्रातःसवने गृह्णातीत्यादिभिर्वाक्यैः सवनत्रयेऽपि विधानात्त्रिष्वपि ग्राह्यः । नैवम् । प्रातःसवनाद्यनुक्रमणं निन्दाद्वारेण तृतीयसवनस्तुत्यर्थम् । सवनत्रयं ह्यनुक्रम्य 'यत्प्रातःसवने गृह्णीयाद्वज्रो वै षोडशी'त्यादिना सवनद्वयं निन्दित्वा तृतीयसवने ग्राह्य इति

---

**तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥ षोडशिन्येवेति** । ततश्च तत्रैव विशेषचिन्तनात्प्रासङ्गिकी संगतिरिति भावः । **समुच्चयेनेति** । एवंच किमाग्रयणादेव ग्राह्य उतोक्थ्यादपीति संशयतात्पर्यं बोध्यम् । यथाश्रुते समुच्चयपक्षानुन्मेषात् ॥

**स तृतीयसवने० ॥ ४४ ॥** प्राभाकरोक्तमन्तराचिन्ताकारणमाशङ्कते—**मूलेति । उक्थ्याभावादिति** । 'उक्थ्यान्निगृह्णाती'त्यादौ उक्थ्यशब्देन पशुकाम उक्थं गृह्णीयादिति विहितो यः काम्य उक्थ्यः स विवक्षित इति पराभिमानः । तथाच तस्य यज्ञायज्ञीयानन्तरभावितया पूर्वयोः सवनयोरभाव इत्यर्थः । **कालेति** । उक्थान्निगृह्णातीति वचनमित्यर्थः । पराभिमानं खण्डयति—**विद्यते चेति** । उक्थ्यादित्यविशेषेण श्रुतस्योक्थ्यशब्दस्य यज्ञायज्ञीयानन्तरभाविकाम्योक्थ्यपरतया संकोचे प्रमाणाभावादुक्थ्यमात्रपरत्वमेव वक्तव्यम् । तथाच पूर्वयोरपि सवनयोः क्रत्वर्थोक्थ्यस्य सद्भावादुक्थ्यस्य कालोपलक्षणार्थत्वेऽपि चिन्ता संभवतीत्यर्थः । स्वयमन्तराचिन्ताप्रयोजकमाह—**तस्मादिति** । ननु यथा 'एकं वृणीते द्वौ वृणीते त्रीन्वृणीते'इत्यत्रैकवाक्यताबलात्त्रीन्वृणीते इत्यत्रैव विधिरितरत्तु वाक्यद्वयमवयुत्यानुवादकं सत्तच्छेषभूतमेवमिहापि एकवाक्यताबलात्तृतीयसवनवाक्य एव विधिरितरत्तु तच्छेषभूतमिति वक्तव्यत्वात्कथं पूर्वःपक्षोऽत आह—**तत्रेति** । इह हि तच्छेषत्वं 'जर्तिलयवाग्वा जुहुया'दित्यादिवन्निन्दाद्वारैव वाच्यमेकं वृणीत इत्यादिवदवयुत्यानुवादासंभवान्निन्दा च 'प्रातःसवने ग्राह्यः, तेजो वै प्रातःसवनं तेज एव वज्रं निर्मिमीते माध्यंदिने ग्राह्य ओजो वै माध्यंदिनं सवनमोज एव वज्रं निर्मिमीते तृतीयसवने ग्राह्यः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते' इति त्रिष्वपि दृश्यते । तत्र तृतीयसवने विधिरिति वदता वज्रनिर्माणं शत्रुविषयतया व्याख्याय स्तुतिरेवात्र दृश्यते नतु निन्देति वक्तव्यम् । एवं सत्याद्ययोरपि सवनयोस्तथा वक्तुं शक्यत्वेनाविशेषात्त्रिष्वपि विधिरित्यर्थः । **नैवमिति** । नहि वज्रनिर्माणवाक्यं निन्देत्युच्यते येन साम्यं स्यात् किंतु यत्प्रातःसवने इत्यादिवाक्यम् । तथाच प्रातःसवने ग्राह्य इत्यादिना पूर्वोक्तवाक्येन तदनुक्रम्य यत्प्रातःसवने गृह्णीयादित्यादिनाग्रिमवाक्येन सवनद्वयं निन्दित्वा तृतीयसवने ग्राह्य इत्यन्तेन तृतीय

श्रूयते। तस्मात्सर्वमिदमेकं वाक्यं तृतीयसवने षोडशिविधानार्थमिति तत्रैवास्य ग्रहणं स्थितादुत्तरं 'उक्थ्यान्निर्गृह्णाति षोडशिन'मिति वचनादुक्थ्यादपि गृहीतव्यमित्युक्तम्। यदपि शाखान्तरवचनं 'पराञ्चमुक्थ्यात्षोडशिनं गृह्णाती'ति तत्राप्युक्थ्यादित्यपादानपञ्चमी न दिक्शब्दयोगनिमित्ता। पराक्शब्दस्य पराचीः सामिधेनीरितिवदनभ्यासवाचित्वेन दिक्शब्दत्वाभावात्। तस्मादुभाभ्यां ग्रहणमिति प्राप्ते ब्रूमः—'कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवच्छ्रुतम्॥ न युक्तं बाधितुं तस्मान्न विकल्पसमुच्चयौ॥' यत्तु वचनादिति तन्न। पराञ्चमुक्थ्यादित्यत्र पराक्शब्दोऽनभ्यासवचनः सन्ननर्थकः स्यात्। अभ्यासस्य प्राप्त्यभावात्। तस्माद्दिक्शब्दोऽयं कालवचनः तन्निमित्तेयं पञ्चमी। उक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीति तत्समानार्थत्वाच्चोक्थ्यान्निगृह्णातीत्यत्रापि दिक्शब्दनिमित्तैव पञ्चमी। नह्यवश्यं दिक्शब्दयोगापेक्षैव सा। विनापि तेन मासात्प्रवक्ष्यामीत्यादिषु दर्शनात्। तेनेयं सहयुक्ते तृतीयावदर्थमात्रापेक्षा न शब्दमात्रप्रयोगमपेक्षते। एवंचाग्रयणात्कृत्स्नस्य नित्यवद्ग्रहणं न बाधितं भवति। तस्मादाग्रयणादेव गृहीतव्यः॥

षोडशिग्रहस्य सस्तोत्रशस्त्रताधिकरणम्॥ १२॥

**उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम्॥ ४९॥ [सस्तुतशस्त्रो वा तदङ्गत्वात्॥ ५०॥ लिङ्गदर्शनाच्च॥ ५१॥ वचनात्संस्थान्यत्वम्॥ ५२॥]**

अग्निष्टोमोक्थ्यसंबन्धी षोडश्यस्तुतशस्त्रकः॥ तद्युक्तो वाग्रिमः प्राप्तस्तत्संस्थामबाधितुम्॥ १६॥
स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः॥ इष्यते ह्यन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः॥ १७॥

'षोडश्येव यदाप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य'इत्यादिवचनादग्निष्टोमोक्थ्ययोर्वा

---

सवन एव विधानात्प्रातःसवने ग्राह्य इत्यादिकं यत्प्रातःसवने इति निन्दाद्वारा स तृतीयसवनविधिशेष इत्येव वाक्यत्वात्तृतीयसवन एव विधिरित्यर्थः। तैत्तिरीयशाखायां 'सवनेसवनेऽभिगृह्णाती'ति वचनेन पूर्वयोरपि सवनयोः षोडशिनो विधानादस्त्येव तयोरपि षोडशी। इदं त्वधिकरणमनेन वचनेन पूर्वयोर्न विधीयते किंतु तृतीयसवन एव विधीयत इति न्यायव्युत्पादनमात्रपरमिति ध्येयम्। **ननु** विस्पष्टमेव 'पराञ्चमुक्थ्या'दिति शाखान्तरीयवाक्ये उक्थ्योत्तरकालत्वं प्रतीयते तदेकार्थत्वाच्चोक्थ्यान्निगृह्णातीत्यस्याप्युक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीत्यर्थत्वात्कथमुक्थ्यादपि ग्रहणमित्यत आह—**यदपीति। अनभ्यासेति।** यद्यपि 'पराञ्चमग्न्याधेयात्पुनराधेय'मित्यादौ पराक्शब्दस्य कालवचनत्वमपि दृष्टं तथापीहोपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वेनोक्थ्यादित्यत्रापादानपञ्चम्येव स्वीकार्या। सा च पराक्शब्दस्य कालवाचित्वेनोपपद्यत इति तदर्थमनभ्यासवचनत्वमेव वाच्यमिति भावः। **नन्व**नभ्यासवचनत्वेन दिक्शब्दत्वाभावाद्दिक्शब्दयोगनिमित्ता पञ्चमी माभून्नाम, तथापि पराक्शब्दस्याञ्चूत्तरपदत्वेनाञ्चूत्तरपदयोगनिमित्ता पञ्चमीयं कुतो न भवेदिति चेन्नैवम्। 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्त'इति सूत्रे दिक्शब्दसाहचर्येणाञ्चूत्तरपदस्यापि दिक्शब्दस्यैव ग्रहणं नत्वदद्र्यङ्देवदत्तेनेत्यदिक्शब्दार्थमञ्चूत्तरपदग्रहणमिति स्वीकारात्। अनेनैवाशयेन महाभाष्ये'ऽञ्चूत्तरपदग्रहणं किमर्थं, न दिक्शब्दैर्योग इत्येव सिद्धं 'षष्ठ्यतसर्थप्रत्ययेने'ति वक्ष्यति तस्यायं पुरस्तादपकर्ष' इत्युक्तम्। एवंच पराक्शब्दस्यानभ्यासवाचिनो दिक्शब्दत्वाभावप्रतिपादनं न दिक्शब्दयोगनिमित्तपञ्चम्यभावाय किंतु अञ्चूत्तरपदयोगनिमित्तपञ्चम्यभावायैवेति न काप्यनुपपत्तिः। यद्वा 'षष्ठ्यतसर्थप्रत्ययेने'त्यत्र प्रत्ययग्रहणबलादेव प्राग्ग्रामादित्यादौ षष्ठीव्यावृत्तिसिद्धेर्न तदर्थमञ्चूत्तरपदग्रहणं कर्तव्यं, प्राग्ग्रामादित्यादौ पञ्चमीतु दिक्शब्दयोगादेव सिद्ध्यतीत्यञ्चूत्तरपदप्रत्याख्यानाभिप्रायेण दिक्शब्दत्वाभाव उपपादितो बोध्यः। **अभ्यासस्येति।** नच षोडशिपूर्तिरुक्थ्यपात्रात्कदाचिदावृत्त्यापि लोकतः प्राप्नोतीति तन्निरासेनानभ्यासनियमविधिः संभवतीति वाच्यम्। प्राप्ते षोडशिनि उक्थ्यापादानकत्वस्यानभ्यासस्य च विधौ वाक्यभेदप्रसङ्गादिति भावः। **ननु** देशस्य प्रकृतेऽन्वयाभावात्कथं दिक्शब्दत्वमित्यत उक्तं—**कालवचन इति।** दिशि दृष्टः शब्दो दिक्शब्द इत्येव दिग्देशकालवाचिनां दिक्शब्दत्वाङ्गीकाराद्दिक्शब्दत्वं कालवचनत्वेऽप्युपपन्नमिति भावः। **नहीति।** शब्दयोगानपेक्षायां 'अन्यारादि'ति सूत्रगतयुक्तग्रहणं प्रयोजकमिति तत्त्वम्॥

**उक्थ्याग्निष्टोमसंयोगात्॥ ४९॥** षोडशिप्रसङ्गात् बाधप्रसङ्गाच्च तद्गतस्तोत्रशस्त्रबाधाबाधौ चिन्त्येते इति तत्र-

---

१ शब्दयोगम.

गृह्यते तदा किमस्तुतशस्त्रः स्यात्, उत तदापि सस्तुतशस्त्र इति संशये—'उक्थ्याग्निष्टोमसंयोगेनास्य स्तोत्रादिकं भवेत् ॥ षोडशिस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत् ॥ अग्निष्टोमादिशब्दा हि स्तोत्रसंख्यानिमित्तकाः ॥ षोडशिस्तोत्रसंस्थायां नाग्निष्टोमः क्रतुर्भवेत् ॥' तत्राग्निष्टोमे ग्राह्य इत्येतदेव विरुध्यते तस्मादस्तुतशस्त्रः स्यात्।—'सत्यं संस्थान्यतापत्तिर्वचनात्तु न दुष्यति ॥ पूर्वसंस्थोपमर्देन संस्थैवान्या विधीयते ॥ उक्थ्यसंस्थो हि यः प्राप्तस्तथाग्निष्टोमसंस्थितिः ॥ राजन्यस्य तथा नासौ किंतु षोडशिसंस्थितिः ॥ इत्येष वचनस्यार्थस्तस्मात्स स्तुतशस्त्रकः ॥ तदङ्गत्वेन हि स्तोत्रं शस्त्रं चाहत्य चोदितम् ॥' 'एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यत'इति विहितं स्तुतशस्त्रमसति विरोधे किमुक्थ्याग्निष्टोमसंस्थस्य न क्रियते तस्मात्स स्तुतशस्त्रः ॥

अङ्गिरसां द्विरात्रे षोडशिनः परिसंख्याधिकरणम् ॥ १३ ॥

## अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ [अन्वयो वानारभ्यविधानात् ॥ ५४ ॥]

**द्विरात्रेऽङ्गिरसां षोडश्यप्राप्तः किं विधीयते ॥ परिसंख्यायते वाथ चोदकाच्छीघ्रबुद्धितः ॥ १८ ॥**
**अनारभ्य विधेः प्राप्ते परिसंख्यातिदेशतः ॥ विकल्पोऽन्यद्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम् ॥ १९ ॥**
**परिसंख्या पूर्वपक्षो न सा युक्ता त्रिदोषतः ॥ अप्राप्तस्यार्थवादेन विधेयः स न गम्यते ॥ २० ॥**

अङ्गिरसां द्विरात्रे श्रूयते 'वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर'इति किमिदमप्राप्तस्य षोडशिनो विधानार्थमुत प्राप्तस्य परिसंख्यार्थमिति संशये विधिः प्राप्त्यभावात्। नतावच्चोदकेन प्राप्तिः। सह्यनुमानिकः तत्प्राप्तेः प्रागेव प्रत्यक्षेण वचनेन विधीयते 'उत्तरेऽहन्द्विरात्रस्य गृह्यत' इत्यनेन। अथवा वैकल्पिकी चोदकप्राप्तिः प्रकृतावतिरात्रे षोडशिनो वैकल्पिकत्वात्तत्र नियमार्थं विधानम्। विहिते

---

रत्ने। **उक्थ्येति**। यद्यग्निष्टोमादावपि षोडशिनः स्तोत्रशस्त्रं स्यात्तदा षोडशिस्तोत्रेणैव समाप्तिः स्यात्तथाच क्रतोः षोडशिसंस्थात्वेनाग्निष्टोमोक्थ्यसंस्थात्वमेव न स्यात्, एवंचाग्निष्टोमोक्थ्यसंस्थारूपनिमित्ताभावात्तन्निमित्तकषोडश्येव न स्यात्। अस्तुतशस्त्रत्वे त्वग्निष्टोमादिस्तोत्रानन्तरं स्तोत्रान्तराभावेनाग्निष्टोमोक्थ्यस्तोत्रत एव समाप्त्या तत्संस्थात्वमुपपद्यते। तस्मात्स्तोत्रशस्त्रे न स्त इत्यर्थः। **नन्वग्निष्टोमादिशब्दाभिधेयत्वं स्तोत्रस्याप्यस्तीति तस्यैव निमित्तत्वं किं न स्यात्तथाच षोडशिसंस्थायामप्यग्निष्टोमादिस्तोत्रसद्भावान्न निमित्तव्याघात इत्यत आह—अग्निष्टोमादीति**। बहुवचनं दृष्टान्तत्वेनातिरात्रादिशब्दसंग्रहार्थम्। यद्यप्यग्निष्टोमादिशब्दाः स्तोत्राणां तत्स्तोत्रसंस्थानां च वाचकास्तथापीह संस्थापरा एवाङ्गीकर्तव्याः। अन्यथोक्थ्येऽग्निष्टोमादिस्तोत्रस्य विद्यमानत्वेन 'अप्यग्निष्टोमे राजन्यस्य गृह्णीया'दित्यनेनैवोक्थ्येपि सिद्धे 'उक्थ्ये ग्राह्य' इति वचनवैयर्थ्यादिति भावः। **ननु** तर्हि अग्निष्टोमादिशब्दवत्षोडशिशब्दस्यापि संस्थावाचित्वात्षोडशिसंस्थाविधिरेव युक्त इत्यत आह—**षोडशीति**। निमित्तविघातप्रसङ्गादिह षोडशिशब्देन संस्था नाभिधीयत इत्यर्थः। **ननु** निमित्तविघातात्संस्थाविधिरेव न संभवतीत्युक्तमत आह—**पूर्वेति**। इहाग्निष्टोमादिसंस्थां निमित्ततयोपादाय षोडशिसंस्था न विधीयते किंतु यः क्रतुः अग्निष्टोमसंस्थाक उक्थ्यसंस्थाकश्च विहितः स क्रतुराजन्यस्य न तत्संस्थाकः किंतु षोडशिसंस्थः कर्तव्य इति राजन्यमेव निमित्तीकृत्य पूर्वसंस्थोपमर्देन संस्थान्तरं विधीयते। तथाचाग्निष्टोमादिसंस्थाया निमित्तत्वाभावान्न निमित्तव्याघात इत्यर्थः। **ननु** सप्तम्याग्निष्टोमादिसंस्थायाः प्रतीयमानं निमित्तत्वं परित्यज्य किमित्येवं व्याख्यायत इत्याशङ्क्य 'षोडशिना वीर्यकामः स्तुवीते'त्यादौ संस्थावाचकत्वेन क्लृप्तषोडशिशब्दस्वारस्यबलादित्याशयेनोपसंहरति—**तस्मादिति**। उक्तव्याख्याने निमित्तान्तरमप्याह—**तदङ्गत्वेनेति**। **हरिवदिति**। हरिशब्दयुक्तं शस्त्रं शस्यत इत्यर्थः। तथाच स्वाङ्गभूतस्तोत्रशस्त्राभावे विगुणत्वात्षोडशी क्रतूपकारात्मकं स्वफलं न साधयेदित्यर्थः। **ननु** स्तोत्रशस्त्रयोः काम्यषोडशिविषयत्वमस्तु तथाच राजन्ये निमित्ते क्रत्वर्थतया विहितेऽस्मिन् तयोरङ्गत्वाभावेऽपि न वैगुण्यमित्यत आह—**असतीति**। षोडशिमात्राङ्गत्वेन विहितयोः काम्यविषयतया संकोचोऽप्यप्रमाणक इति भावः। सूत्रे सति स्तोत्रशस्त्रे संस्थान्यत्वं स्यादित्यर्थः ॥

**अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ किमिदमिति**। किमयमपूर्वविधिरुत परिसंख्याविधिरित्यर्थः। स्तोत्रशस्त्राबाधवद्द्विरात्रान्तरे षोडशिनोप्यबाधः परिसंख्याया अभवादित्युत्थितेः संगतिः। **ननु** प्रत्यक्षवचनस्य शीघ्रं प्रवृत्तावपि चोदकात्संभवत्प्राप्तिकस्य विधिवैयर्थ्यमत आह—**वैकल्पिकीति**। **तस्मादिति**। यद्यपि चोदकेन प्राप्त्यपेक्षाया-

**व तस्मिन्नानुमानिको न प्रापयति, तस्मान्न तावच्चोदकप्राप्तिमपेक्ष्य तत्परिसंख्या । नचानेनैव 'उत्तरेहन्द्विरात्रस्य गृह्यत' इति सामान्यवचनेन प्राप्तत्वात्षोडश्युत्तरवचनं परिसंख्यार्थमिति वाच्यम् । सामान्येन हि सर्वद्विरात्राणामिदं वचनं तत्प्राप्तेः प्रागेवाङ्गिरसां द्विरात्रे षोडश्युत्तर इति विशेषवचनेन विधीयते तस्मादप्राप्तविधिः षोडश्युत्तर इति । नैतदेवम् । यद्यपीदं सामान्यवचनं तथापि प्रत्यक्षेणैव वाक्येन द्विरात्रेषूत्तरेषामह्नां विकल्पेन प्राप्तः षोडशी नियतः । षोडश्युत्तर इत्यत्र तु नास्ति प्रत्यक्षो द्विरात्रसंयोगः । प्रकरणात्तु कल्प्यते । तच्च दुर्बलं वाक्यात् । तत्सामान्यवचनेनैव वैकल्पिकीं चोदकप्राप्तिमपोद्य नियम्यमानः षोडशी षोडश्युत्तर इत्यनेन द्विरात्रान्तरेभ्यः परिसंख्यायते, तेना-**

---

मपि तस्याः पाक्षिकत्वान्नियमविधिरेव युक्तो न परिसंख्या नियमविधेर्लघुत्वात्तथापि पक्षतः प्राप्तिर्द्विरात्रान्तरेष्वप्यस्तीति तत्र चान्यत्रच प्राप्तेरपि सद्भावेन परिसंख्यापि संभवतीति संभवमात्राभिप्रायेणायं ग्रन्थः । **नचेति** । चोदकप्राप्तपरिसंख्येति पक्षे चोदकेन या विकल्पेन प्राप्तिः सा द्विरात्रान्तरेभ्यो व्यावृत्तेति द्विरात्रान्तरे षोडशी नैव ग्राह्यः किंतु विकल्पेनाप्यङ्गिरसां द्विरात्र एव ग्राह्यः । सामान्यवचनप्राप्तपरिसंख्येति पक्षे तु सामान्यवचनस्य षोडशिनियमार्थतया तत्प्राप्तस्य नियमस्याङ्गिरसां द्विरात्रएव नियमो नतु द्विरात्रमात्रेष्वित्येवं द्विरात्रान्तरेभ्यो व्यावृत्तावपि वैकल्पिकचोदकप्राप्तेरव्यावर्तितत्वात्तेष्वपि विकल्पेन ग्राह्य इति विवेकः । **तस्मादप्राप्तेति** । सामान्यतया विलम्बितेनापि संभवत्प्राप्तिकस्य पुनर्वचनं मित्रविन्दादिगतसाप्तदश्यादिवचनवन्नोपसंहारार्थं साप्तदश्यस्यानारभ्याधीतवाक्ये सामिधेनीसंबन्धमात्रं प्रत्याख्याय क्रतुसंबन्धस्तत्र यावत्सामिधेनीद्वारा सर्वविकृतीर्हि······क्रतुसंबन्धः कल्प्यते ततः प्रागेव मित्रविन्दादिगतेन वाक्येन क्रतुसंबन्धे बोधिते सत्याकाङ्क्षाविरहान्न सामिधेनीद्वारा कृत्स्नविकृतिसंबन्धकल्पनावकाश इति श्रुतसाप्तदश्यासु मित्रविन्दादिषूपसंहारेपीह क्रतुसंबन्धस्यापि सामान्यवचनेनैव लाभेन तद्बोधमुखेन प्राकरणिकवाक्यस्योपसंहारार्थत्वायोगात् । नापि चोदकपरिलोपकत्वेन ग्रहमेधीयाज्यभागपुनःश्रवणवदपूर्वतार्थम् । यद्यस्य वचनस्य चोदके कटाक्षः स्यात्तर्हि चोदकाद्विकल्पेन प्राप्तषोडशिनियमार्थत्वमेव स्यान्नतु चोदकपरिलोपकत्वम् । तस्मात्प्रयोजनान्तराभावेऽपि प्रमाणप्रवृत्तेः प्रयोजनाधीनत्वाभावादन्यतः सिद्ध्यन्नप्यर्थो विधिशक्तिबलादनेनैव प्रथमं विधीयत इत्ययमपूर्वविधिः । अतएव च तन्त्ररत्ने प्रमाणशक्तिं निरूपयाम इत्युक्तमिति ध्येयम् । नहि सामान्यशास्त्रस्य सामान्यशास्त्रत्वेन दुर्बलत्वं किंतु मन्थरप्रवृत्तिकतया । इहतु सामान्यशास्त्रमेव शीघ्रप्रवृत्तिकं न विशेषशास्त्रमिति सिद्धान्तमाह—**नैतदिति । द्विरात्रसंयोग इति** । अङ्गिरसां द्विरात्रलक्षणद्विरात्रविशेषसंयोग इत्यर्थः । यद्वा सामान्यशास्त्रे द्विरात्रसंयोगस्य प्रत्यक्षत्वात्तन्मुखेन विशेषेऽङ्गिरसां द्विरात्रे तदेव झटिति प्रवर्तते । इह तु तावानप्यवलम्बो न प्रत्यक्ष इति सर्वस्य कल्पनीयत्वादत्यन्तमन्थरत्वमिति प्रतिपादनाय द्विरात्रसंयोग इत्युक्तम् । तथाच षोडश्युत्तर इत्यत्र केवलमुत्तरेणाह्ना संबन्धश्रवणादङ्गिरसां द्विरात्रगते तस्मिन्नहनीत्यस्यांशस्य प्रकरणकल्प्यत्वमित्यर्थः । तस्मात्सामान्यवचनेन नियमविधायकेन षोडशिनः प्राप्तत्वान्नापूर्वविधिः किंतु तत्प्राप्तनियमपरिसंख्यैवेयमित्याह—**तस्मादिति । त्रिदोषत्वादिति** । अङ्गिरसां द्विरात्रे षोडशिनियमसंबन्धप्रतिपादनमात्रेण द्विरात्रान्तरेभ्यो व्यावर्तकशब्दाभावे सामान्यवचनप्राप्तस्य नियमस्य व्यावृत्तिर्न लभ्यत इति षोडश्युत्तर इत्यनेनाङ्गिरसां द्विरात्रे षोडशिग्रहणनियमरूपः स्वार्थः परित्याज्यः, द्विरात्रान्तरेभ्यः षोडशिग्रहणनियमव्यावृत्तिरूपः परार्थः स्वीकार्यः, द्विरात्रान्तरेषु प्राप्तः षोडशिग्रहणनियमश्च बाध्य इति स्वार्थपरित्यागादयस्त्रयो दोषाः स्युरित्यर्थः । नचैवं 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते'इत्यप्राप्तपरिसंख्यायामप्यश्वरशनादाने मन्त्रस्य विनियोगमात्रेण गर्दभरशनादाने लिङ्गात्प्राप्नुवतो मन्त्रस्य निवर्तयितुमशक्यतया शब्दव्यापारेणैव निवर्तनीयत्वात्त्रैदोष्यं स्यादिति वाच्यम् । मन्त्रस्य शेष्याकाङ्क्षानुसारेण हि लिङ्गं विनियोजकम्, साचाकाङ्क्षा झटिति प्रवृत्तेन प्रत्यक्षवचनेनाश्वरशनादाने विनियोगान्निवृत्तेति गर्दभरशनादानतो मन्त्रस्य शब्दव्यापारं विनैव विनियोजकप्रमाणाप्रवृत्त्यैव निवृत्ततया त्रैदोष्यानवकाशात् । नच मंत्रस्य शेष्याकाङ्क्षानिवृत्तावपि गर्दभरशनादानस्य मन्त्राकाङ्क्षा न निवृत्ता । अतस्तद्बलेनान्यत्र विनियुक्तस्यापि मन्त्रस्य लिङ्गाद्गर्दभरशनादाने विनियोगः स्यादेव । तन्निवृत्त्यर्थं च शब्दस्यावश्यमितरनिवृत्त्यर्थकत्वमेव स्वीकार्यमिति वाच्यम् । गर्दभरशनादानस्य हि न मन्त्रः स्वरूपेणापेक्षितः किंतु स्मारकत्वेन । स्मारकत्वं चात्मीयग्रहणकवाक्योपद्रष्ट्रादिवचनसाधारणमिति नियमेन मन्त्रापेक्षत्वाभावेन निराकाङ्क्षस्यापि मन्त्रस्य पुनर्विनियोगकल्पनाया अप्रवृत्तेः । नचात्मीयग्रहणकवाक्यादीनामनियतानां बहूनां ग्रहणे गौरवाल्लाघवानुसारेणैकं नियतं मन्त्ररूपमेव स्मारकमपेक्षत इति वाच्यम् । एवमपि बहुषूपायेषु यस्य कस्यचिदेकस्य नियमेन ग्रहणसंभवेन मन्त्रमेवापेक्षत इत्यत्र प्रमाणानुपन्यासात् विनिगमनाविरहादनियतोपायग्रहणस्यैव युक्तत्वात् । यत्र कार्यस्य नियतोपायसाध्यत्वं प्रमाणसिद्धं तत्र तदुपायस्यान्यत्र विनियोगेन निराकाङ्क्षस्यापि कार्याकाङ्क्षाबलाद्विनियोगः ।

ङ्गिरसां द्विरात्र एव नियमः द्विरात्रान्तरेषु तु यथाचोदकं विकल्प एव स्यात्, तदिदं वृत्त्यन्तरकार-व्याख्यानमधिकरणस्यानुपपन्नमिति मन्वानेन भाष्यकारेण व्याख्यानान्तरमारब्धम् । तत्र यः पूर्वस्मिन् व्याख्याने सिद्धान्तः स एव पूर्वपक्षः परिसंख्येति । सिद्धान्तस्तु परिसंख्यायास्त्रिदोषत्वात् वैखानसविधिशेषोऽयं न विधिः परिसंख्या वा । तस्मात्सर्वद्विरात्रेषूत्तरेषामह्नां नियत एव षोडशी-सामान्यवचनेन प्राप्तत्वाद्वचनान्तरेणापरिसंख्यातत्वात् ॥

---

यथा 'आग्नेय्याग्नीध्रमुपतिष्ठत' इत्यत्र । तत्र हि प्रकरणाधीतयत्किंचिदाग्नेयीग्रहणे सति तस्याः क्रतुसंबन्धस्याक्लृप्तत्वात् तत्रापि विधेर्व्यापारस्य कल्पनीयतया गौरवं स्यादिति लाघवानुगृहीतेन विधिना क्लृप्तक्रतुसंबन्धायाः प्राकृताग्नेय्या एव साधनत्वेन विधानादुपस्थानादिषु विनियोगेन निराकाङ्क्षाया अपि प्राकृताया एव ग्रहणम् । एवं सौर्यादिवैकृतविधावपि विध्यन्ताधिकरणन्यायेनाष्टमिकन्यायैश्च दार्शपौर्णमासिकाङ्गकलापस्यैवेतिकर्तव्यतात्वे निश्चिते तस्य दर्शपूर्णमाससंबन्धेन निराकाङ्क्षस्यापि विनियोगः । नत्विह तथा गर्दभरशनादानं मन्त्रैकसाध्यमित्यत्र किंचिन्नियामकमस्ति, तस्माद्गर्दभरशनादाने मन्त्रस्याप्राप्तत्वान्न तन्निवृत्तिः शब्देन कर्तव्या किंतु वचनमश्वरशनायामप्राप्तं मन्त्रं प्रापयितुमेव प्रवर्तते । लिङ्गस्य विलम्बितप्रवृत्तिकत्वेन वचनप्रवृत्तिदशायां तदर्थस्याप्राप्तेः, प्रवृत्ते तु वचने मन्त्राकाङ्क्षाविरहाद्गर्दभरशनातो मन्त्रव्यावृत्तिरर्थादेव भवतीति फलतः परिसंख्येत्युच्यते । ततश्चाप्राप्तपरिसंख्यायां न त्रैदोष्यप्रसक्तिः । प्रकृते तु षोडश्युत्तर इत्येतद्वचनापेक्षया पूर्वमेव झटिति प्रवृत्तेन 'उत्तरेहन् द्विरात्रस्य गृह्यत' इति सामान्यवचनेनाङ्गिरसां द्विरात्रेषु तदितरद्विरात्रेषु च षोडशिनः प्राप्ततया नाप्राप्तप्रापणमुखेन वचनस्य प्रवृत्तिः, नवा द्विरात्रान्तरव्यावृत्तिर्व्यावर्तकशब्दं विना लभ्यत इतीतरव्यावृत्तावेव शब्दव्यापारस्य वक्तव्यतया स्यादेव त्रैदोष्यम् । एवंच मन्त्रेणाश्वस्य रज्जुग्रहणविधिफलं मन्त्रबाधोऽन्यरज्जौ त्रैदोष्यं प्राप्तबाधे प्रसरणमयते नत्विहेत्यप्ययुक्तम् । आग्नेयीन्यायतस्तामपि पुनरुपनयन् केन मन्त्रो निर्वार्यस्त्रैदोष्यं भाष्यकारान्तर-मुखपरिसंख्यासु केनोपपाद्यमिति विधिरसायनोक्तं चिन्त्यम् । **वैखानसेति** । पूर्वस्याह्नो वैखानसाख्यवैशेषिकाङ्गविधियुक्तः, यस्मादुत्तरस्मिन्नपि षोडश्याख्यं वैशेषिकमङ्गं वर्तत इत्येवमौचित्येन स्तावकतया वैखानसविधिशेष इत्यर्थः । ननु 'षोडश्युत्तर' इति वाक्यस्य चोदकाद्विकल्पेन प्राप्तषोडशिनियमार्थत्वे संभवति निरर्थकप्रायस्तुतिपरत्वमयुक्तम् । नच नियमोऽपि 'उत्तरेहन् द्विरात्रस्य गृह्यत' इति सामान्यवचनेनैव प्राप्त इत्याकर एवोक्तमिति वाच्यम् । सामान्यवचनस्य 'अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्योऽतिरात्रे ब्राह्मणस्ये'ति संनिहितब्राह्मणराजन्यादिनिमित्तनिरासार्थत्वसंभवेऽसंनिहितद्विरात्रादिचोदकपर्यालोचनालभ्यषोडशिनियमार्थत्वानुपपत्तेः । अतएव 'य एवंविद्वानग्निं चिनुत' इत्युत्पन्नस्याग्नेः क्रतुसंबन्धार्थेषु 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेणे'त्यादिवाक्येषु द्विरात्रादिषु पुनर्विधानस्य प्रयोजनमभ्याश्रिततया संनिहितानां 'श्येनचितं चिन्वीत स्वर्गकाम' इत्यादिगुणकामानां प्राप्तिरिति स्वीक्रियते, नत्वसंनिहिततत्तद्विकृतिव्यवस्थितचोदकगणात्प्राप्ययोत्तरवेद्या सहाग्नेः पाक्षिकप्राप्तिसापेक्षस्तन्नियमः प्रयोजनमिति स्वीक्रियते । एवंच सामान्यवचनेन नियमस्याप्राप्तत्वात्तद्विधानार्थत्वमेव 'षोडश्युत्तर' इत्यस्य नतु स्तुत्यर्थत्वमिति चेद्भवेदेवं यदि ब्राह्मणराजन्यादिनिमित्तनिरासरूपप्रयोजनं द्विरात्रादिचोदकपर्यालोचनां विना लभ्येत, नत्वेतल्लभ्यते द्विरात्रेषूत्तरेहनि षोडशिनो नैमित्तिकप्रसक्तिमुपजीव्य हि तन्निरासस्य प्रयोजनत्वं कल्पनीयम् । नैमित्तिकत्वप्रसक्तिश्च न संनिहितादप्यग्निष्टोमेत्यादिवाक्यमात्रात्तस्य प्रकृतौ नैमित्तिकत्वबोधकत्वेऽपि विकृतौ तत्प्रसक्तावसामर्थ्यात्तद्वाक्यगताग्निष्टोमादिशब्दानां प्रकृत्यग्निष्टोमादिमात्रपरत्वस्य षोडशिनो वैकृतत्वमित्यधिकरणे व्यवस्थापितत्वेन तद्वाक्यस्य प्रकृतिविकृतिसाधारण्याभावात् । एवंच तत्तद्विरात्रेषु उत्तरस्याह्नोऽतिरात्रसंस्थतां पर्यालोच्य प्रवर्तमानाच्चोदकगणादेव ब्राह्मणनिमित्तकत्वप्रसक्तिर्वक्तव्या । तथाच निमित्तनिरासलक्षणप्रयोजनस्यापि चोदकपर्यालोचनालभ्यत्वेन विनिगमनाविरहान्निमित्तनिरासवच्चोदकप्राप्तषोडशिनियमोऽपि सामान्यवचनस्यैव प्रयोजनं, तं द्विरात्रेणेत्यादौ तु गुणकामानामनारभ्याधीताग्निप्रकरण एवाम्नाततया चोदकनैरपेक्ष्येण प्रयोजनत्वं कल्पयितुं शक्यत इति तत्प्राप्तिरेव प्रयोजनमुत्तरवेद्या सह विकल्पनिरासस्तु तत्सापेक्षत्वान्न प्रयोजनमिति वैषम्यम् । अनेनैवाभिप्रायेण ग्रन्थकारेण उत्तरेहन् द्विरात्रस्येति वाक्यस्य षोडशिनो वैकृतत्वमित्यधिकरणे नैमित्तिकत्वार्थत्वमुक्त्वा इह नियमार्थत्वमुक्तमिति ध्येयम् । सूत्रार्थस्तु—अङ्गिरसां द्विरात्रे षोडशिनः प्राप्त्यभावादप्राप्तविधानाच्च परिसंख्या, ततश्च तदितरद्विरात्रेष्वपि गृह्यत इति वृत्तिकारपक्षे, भाष्यकारपक्षे तु द्विरात्रान्तरेषु परिसंख्यातत्वेन षोडशिनियस्याभावादङ्गिरसां द्विरात्र एव नियमेन षोडशी गृह्यत इति ॥

---

१ मत्वा भाष्य.

नानाहीने षोडशिग्रहग्रहणाधिकरणम् ॥ १४ ॥

**चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥**
**[अपि वा संख्यावत्त्वान्नानाहीनेषु गृह्यते पक्षवदेकस्मिन्संख्यार्थभावात् ॥ ५६ ॥**
**भोजने तत्संख्यं स्यात् ॥ ५७ ॥]**

किं चतुर्थेष्वहीनस्य ग्रहो नानागतेषु वा ॥ वीप्सैकवचनाभ्यां स्यादेकस्मिन्नेव स ग्रहः ॥ २१ ॥
चतुर्थाष्टमतापत्तेर्नानाहीनेषु स ग्रहः ॥ जात्यैकवचनं वीप्सा न्यायप्राप्तानुवादिनी ॥ २२ ॥

'षोडश्येन चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत' इति श्रूयमाणः संदिह्यते किमेकस्यैवाहीनस्य चतुर्थे गृहीत्वा पुनस्तत्पुरस्ताच्चतुर्थेऽभ्यासेन ग्रहीतव्य उतैकस्याहीनस्यैकस्मिन्नेव चतुर्थे सकृद्ग्रहणं वीप्सा तु नानाभिप्रायेति । तत्र नानाहीनाभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सानर्थक्यादहीनस्येति चैकवचनश्रवणादेकस्मिन्नहीने चतुर्थे चतुर्थेऽभ्यासः । नैवम् । अहीनस्य चतुर्थ इत्युच्यते एकस्य चाहीनस्यैकं चतुर्थमहः । यत्तु चतुर्थाच्चतुर्थं तदहीनस्याष्टमं भवति तत्र गृह्णन्नाहीनस्य चतुर्थे गृह्णीयात्तस्मात्सकृद्ग्रहणम् । एकवचनं तु सामान्याभिप्रायम् । वीप्सा च न्यायप्राप्तानुवादः ॥

वर्णकद्वयविशिष्टाधिकरणम् ॥ १५ ॥

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् ॥ ५८ ॥**

प्रकृतौ विकृतौ वा स्याद्ग्रहेष्वाग्रयणाग्रता ॥ आद्यः प्रकरणादन्त्यो जगत्सामत्वसंभवात् ॥ २३ ॥
बृहद्रथंतरैकं किं द्वयं वोत रथंतरम् ॥ यद्वा जगत्यामुत्पन्नं जगत्सामाग्रिमो भवेत् ॥ २४ ॥
ज्योतिष्टोमस्य तादृक्त्वादविकल्पाय तु द्वयम् ॥ जगत्त्वं सर्वतात्रास्ति तदुक्तिव्यर्थता तदा ॥ २५ ॥
रथंतरं जगच्छब्दाद्विप्रकृष्टात्र लक्षणा ॥ जगत्यृचि स्थितं सामेत्येतत्स्यात्संनिकर्षतः ॥ २६ ॥

ज्योतिष्टोमे श्रूयते 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्गृह्णीयात् यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामाग्रयणाग्रानि'ति किमाग्रयणाग्रता ज्योतिष्टोमे निविशते किंवोत्कृष्येतेति संशये, प्रकरणाज्ज्योतिष्टोमे स्यात् जगत्सामशब्देनापि ज्योतिष्टोम एव प्रकरणाद्यथाकथंचिदुच्यत इति प्राप्ते ब्रूमः—न जगन्नाम साम ज्योतिष्टोमेऽन्यत्र वा कुत्रचिदस्ति तेनायमृग्द्वारेण व्यपदेशः जगत्यामृ-

---

**चतुर्थे चतुर्थे०** ॥ ५५ ॥ 'षोडश्युत्तर' इतिवद्वीप्साया न विधेयत्वमित्युत्थितेः संगतिः । षोडशिप्रसङ्गादध्यायसंगतिः । **वीप्सात्विति** । अहीनप्रयोगाणां भिन्नत्वात्सर्वाहीनप्रयोगगतचतुर्थाहव्याप्त्यभिप्रायेत्यर्थः । **तत्रेति** । एकस्याहीनप्रयोगस्यैकस्मिन्नेव चतुर्थे सकृद्ग्राह्य इति पक्षेऽहीनस्य यच्चतुर्थमहरिति चतुर्थमहरुद्दिश्य तत्र षोडशिग्रहमात्रविधिरिति स्वीकार्यम् । तथासति प्रत्युद्देश्यं विधेयस्य पर्यवसानन्यायादेव वीप्सायाः प्राप्तत्वेन निरर्थकानुवादः स्यादतोऽहीनस्य षोडशी गृह्यत इति यत्तच्चतुर्थे चतुर्थेहनीत्येवं वीप्सैव विधेया । तथासत्यहीनस्येत्यस्य चतुर्थसंबन्धित्वाभावात्किमपेक्षया चतुर्थमित्याकाङ्क्षायां ग्रहणदिनापेक्षया चतुर्थमिति लभ्यते । तथाच चतुर्थेचतुर्थेदिने देवदत्तो भुङ्क्त इत्यत्र भोजनदिनापेक्षया चतुर्थमिति गम्यते तद्वत्, एवंचैकस्मिन्नेवाहीनप्रयोगे यस्मिन्नहनि षोडशी गृह्यते ततश्चतुर्थेप्यह्नि ग्रहीतव्य इत्यर्थः सिध्यतीति भावः । किंचाहीनस्येत्येकवचनबलादेकाहीनसंबन्धिनी वीप्सा प्रतीयते तस्याश्च त्वदभिमतरीत्याप्यप्राप्तत्वादनुवादासंभवाद्विधेयैव वीप्सेत्याशयेनाह—**अहीनस्येति** । **नैवमिति** । कस्य चतुर्थमित्यपेक्षायां श्रुतत्वादहीनस्य तदपेक्षमेव चतुर्थत्वं प्रतीयते नतु ग्रहणदिनापेक्षं तस्याश्रुतत्वात् । तस्मादहीनस्य यच्चतुर्थमित्युद्दिश्य तत्र षोडशिग्रह एव विधातव्यः । अहीनापेक्षे च चतुर्थत्वे सत्येकस्याहीनस्यैकमेव चतुर्थमिति सकृदेव ग्रहणमित्यर्थः । **एकवचनं त्विति** । तथाचैकाहीनसंबन्धाभावेऽपि वीप्साया उपपन्नत्वादनुवादः संभवतीति भावः । उक्तरीत्याऽहीनशब्दस्य चतुर्थान्वये सति वीप्साया विध्यनर्हत्वान्न्यायप्राप्तत्वादनुवादो न दोष इत्याशयेनाह—**वीप्सा चेति** । सूत्रार्थस्तु—चतुर्थेचतुर्थेहन्यहीनस्य गृह्यत इत्यत्र एकस्मिन्नेवाहीनेऽभ्यासेन ग्रहणं प्रतीयते । यथा देवदत्तो भुङ्क्त इत्यत्र भोजनदिनापेक्षं चतुर्थत्वं तद्वदिहापि, ग्रहणदिनापेक्षत्वाच्चतुर्थस्येति ॥

**जगत्साम्नि०** ॥ ५८ ॥ **यथाकथंचिदिति** । अग्रिमवर्णकपूर्वपक्षे वक्ष्यमाणमित्यर्थः । अनेनैव वीप्सा यथाकथंचिदनुवादतया नयनमेवं ज्योतिष्टोम एव जगत्सामशब्दस्य कथंचिन्नयनमित्युत्थानात्संगतिरित्यपि सूचितम् । **न जगदिति** । सामवेदे कुत्रापि जगन्नाम्नः साम्नोऽप्रसिद्धत्वादित्यर्थः । **तेनेति** । तथाच जगत्यामुत्पन्नत्वात्साम जगच्छब्देनो-

च्युत्पन्नं साम जगत्साम तद्यत्र स जगत्सामा। नच ज्योतिष्टोमे तदस्ति, विद्यते तु विषुवति। तस्माद्विषुवान् जगत्सामा, तत्संयुक्ता चाग्रयणाग्रता प्रकरणादुत्क्रष्टव्या॥ **एवंवा**॥ यदि जगत्सामाग्रयणाग्रानित्यत्रैव जगत्सामशब्दे संदेहः किमनेन ज्योतिष्टोम एव रथंतरसामा बृहत्सामा वोच्यते किंवा स एवोभयसामा अथवा रथंतरसामैव उत यत्र जगत्यामुत्पन्नं साम विषुवति सोऽनेनाभिधीयत इति। प्रकरणाज्ज्योतिष्टोम एवान्यतरसामाभिधीयते। तथासति पूर्वाभ्याममग्रताभ्यामाग्रयणाग्रताया विकल्प एव स्यात्। तस्मादुभयसामा जगत्सामा। जगच्छब्दो हि कृत्स्नवचनः। कार्त्स्न्यं च समुच्चये स्यात्। तस्मात्समुच्चितोभयसामा जगत्सामा। नैवमपि युक्तम्। एवं हि सति जगत्सामेत्यनर्थकं स्यात्। 'आग्रयणाग्रान्गृह्णीया'दित्येतावतैवोभयसामपक्षे निवेशसिद्धेः। अन्यतरसामत्वपक्षयोः पूर्वाभ्यामग्रताभ्यामवरुद्धत्वात्। नचोभयसामत्वं ज्योतिष्टोमेऽस्ति, बृहद्रथंरयोर्वचनेनैव विकल्पविधानात्। तस्मात् 'ईशानमस्य जगतः स्वर्दृशमि'त्येवं जगच्छब्दवत्यामुत्पन्नं रथंतरमेव जगत्साम। अतस्तत्सामा जगत्सामेति प्राप्ते ब्रूमः—पदद्वारेण ऋक् ऋचा च साम लक्षयितव्यं स्यात्तत्र लक्षितलक्षणा स्यात्। तस्माज्जगत्यामुत्पन्नेन साम्नासौ विषुवानेव जगत्सामा, तदर्थं चाग्रयणाग्रत्वं पूर्वव्याख्यायां नैमित्तिकमाग्रयणाग्रत्वं विचारितं तद्धेतुत्वेन तु जगत्सामशब्दप्रस्तावः। इहतु स एव साक्षाद्विचारित इति भेदः॥

---

च्यत इति। जगत्सामास्येति बहुव्रीहिरिति भावः। जगत्यां सामास्येति व्यधिकरणबहुव्रीहिरपि संभवति। अत्र जगतीशब्दपर्यायो जगच्छब्दः छान्दस ईकारलोपो वा बोध्यः। **उत्क्रष्टव्येति**। तथाच बाधप्रसङ्गात्प्रकरणबाधचिन्तेत्यध्यायसंगतिरिति भावः। सूत्रार्थस्तु—यदि जगत्सामेत्यत्र जगन्नाम्नः साम्नो भावादुक्तं ऋक्संबन्धात्साम तदाख्यं जगच्छब्दाभिधेयं स्यादिति। एवं वदतः सूत्रकारस्य समानाधिकरणसमास एवाभिमतः॥ **एवंवा**॥ **प्रकरणादिति**। ज्योतिष्टोम एवार्भवपवमाने कावाख्यं साम जगत्यामुत्पन्नमस्ति, तदादाय स एव बृहद्रथंतरान्यतरपृष्ठको जगत्सामत्वाकारेणाभिधीयत इत्यर्थः। कावाख्यसाम्नो नित्यत्वेन यदि जगत्सामेति पाक्षिकनिर्देशानुपपत्तेः पवमानगतस्य तस्य पृष्ठस्तोत्रसाधनत्वाभावेन तदादायापि बृहद्रथंतरप्रायपाठावगतपृष्ठस्तोत्रसाधनीभूतजगत्सामत्वालाभाच्च न ज्योतिष्टोमस्य जगत्सामशब्दवाच्यत्वं संभवति। अस्तुवा तथाप्यैन्द्रवायवाग्रताशुक्राग्रताभ्यां विकल्पप्रसङ्गान्न प्रकरणे निवेश इत्याह—**तथासतीति**। समुच्चितोभयसाम्नः कथं जगत्सामशब्दवाच्यत्वं द्वयोरपि जगत्यामुत्पन्नत्वाभावादित्यत आह—**जगच्छब्द इति**। **तस्मादिति**। ज्योतिष्टोमप्रकरणे 'रथंतरं पृष्ठं भवति, बृहत्पृष्ठं भवती'ति विहितयोरदृष्टार्थत्वात्समुच्चये न्यायतः सिद्धे विकल्पवचनं तदबाधेनैव पक्षे विकल्पं बोधयति। ततश्च बृहद्रथंतरयोर्ज्योतिष्टोम एव समुच्चयोऽप्यस्तीति पूर्वपक्षिणोऽभिमानः। यद्वा उत्कर्षभीत्या प्रकरणनिवेशे कर्तव्ये तन्निर्वाहार्थं यदि जगतसामेति पाक्षिकसमुच्चयानुवादबलादेव सोऽप्यस्तीति कल्प्यत इति भावः। **नन्वाग्रयणाग्रान्गृह्णीया**दित्येतावत्युक्ते कथं समुच्चयपक्षे निवेशः, अन्यतरसामपक्षेऽपि निवेशसंभवादित्यत आह—**अन्यतरेति**। **नचेति**। वचनेन न्यायप्राप्तसमुच्चयस्य बाध एवोचितः नतु न्यायेन वचनसंकोचः। तथाच प्रकरणे निवेशाभावे उत्कर्ष एव युक्तो नतु तत्सिद्ध्यर्थं समुच्चयकल्पनम्, अन्यथा पूषानुमन्त्रणमन्त्रादेरप्युत्कर्षो न स्यादिति दर्शपूर्णमासयोरेव पूष्णो देवतात्वपरिकल्पनेन तस्यापि प्रकरणे निवेशसंभवादिति भावः। **अत इति**। जगत्सामेत्यनेन रथंतरसाम्नोऽभिधाने सति एकस्मिन्नेव रथंतरनिमित्तेऽग्रताद्वयस्यापि विधानबलाद्विकल्पो न दोष इति भावः। **पदेति**। जगच्छब्दस्य स्ववाचकत्वाभावात्तेन जगच्छब्द एव तावल्लक्षणीयः तेन च तच्छब्दयुक्त ऋग्द्वारा साम लक्षणीयमिति लक्षितलक्षणा स्यादतो जगच्छब्देन जगतीछन्दोवाचकेन तच्छन्दस्कायामृच्युत्पन्नसामलक्षणैव ज्यायसी। व्यधिकरणबहुव्रीहिपक्षे तु न कस्यापि लक्षणेति भावः। **तदर्थं चेति**। यद्यपि विषुवति शुक्राग्रत्वं श्रुतं तथापि तत्कामाय भविष्यतीति भाष्ये उक्तमतः क्रत्वर्थतयाग्रयणाग्रताविधिर्नानुपपन्न इति भावः। शुक्राग्रताग्रयणाग्रतयोर्विकल्प इति केचित्। **इहत्विति**। नैमित्तिकमग्रत्वं तु फलतया विचारितं, तथाचोभयत्रोभयविचारेऽपि प्राधान्याप्राधान्याभ्यां भेद इत्यर्थः। संक्षेपविस्तररूपत्वान्नातीवापौनरुक्त्ये यत्नः कर्तव्य इति भावः। अतएव संगतावपि न यत्नः कार्यः॥

गोसवे उपवत्यग्रवत्योरभावाधिकरणम् ॥ १६ ॥

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥ ५९ ॥ [मुख्येन वा नियम्येत ॥ ६० ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥]**

उपवत्यग्रवत्यौ स्तो गोसवे यदि वा नहि ॥ आद्ये विकल्प आहोस्विदुपवत्येव केवला ॥ २७ ॥
विकल्पो द्विनिमित्तत्वाद्व्याघातः स्यात्समुच्चये ॥ रथंतरस्य मुख्यत्वादुपवत्येव युज्यते ॥ २८ ॥
एकैकस्य निमित्तत्वं प्रकृतावत्र तु द्वये ॥ मिलिते पृष्ठता तस्मान्निर्निमित्ते उभे न हि ॥ २९ ॥

यत्र बृहद्रथंतरपृष्ठयोः समुच्चयः संसवगोसवादिषु तत्र यत्प्रकृतौ रथंतरनिमित्तं बृहन्निमित्तं च 'उपवतीं रथंतरपृष्ठस्य प्रतिपदं कुर्यात् अग्रियवतीं बृहत्पृष्ठस्ये'त्यादि तदुभयं विकल्पेन कर्तव्यं उत रथंतरनिमित्तमेव अथवोभयं न कर्तव्यमिति संशयः । तत्रोभयसामत्वेऽपि रथंतरस्य बृहतश्च सद्भावात्सत्तया चोभयोः क्रतुविशेषणत्वादुभयमपि प्राप्तं समुच्चयासंभवाद्विशेषाग्रहणाच्च विकल्पः । अथवा मुख्यत्वाद्रथंतरनिमित्तमेव स्यादिति प्राप्ते ब्रूमः—बृहद्रथंतरे हि प्रकृतौ निरपेक्षया सत्तया परस्परव्यवच्छेदेन वा क्रतुं विशिंषन्ती निमित्ततामुपगते । अत्र तूभयोः सहैव क्रतुसंबन्धात्सापेक्षयोर्नान्यतरेणापि क्रतुर्विशेष्यते तस्मान्निमित्तविघातादकर्तव्यम् ॥

ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ॥ १७ ॥

**ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥ [अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च ॥ ६४ ॥]**

पुरोपांशोरुत स्वस्य स्थाने स्यादैन्द्रवायवः ॥ आद्योऽग्रत्वविधेर्मैवं धारायुक्ताग्रतोक्तितः ॥ ३० ॥

ज्योतिष्टोमे उपांश्वन्तर्यामौ अधाराग्रहौ विधाय ऐन्द्रवायवमैत्रावरुणादीनां धाराग्रहणमुपक्रमे श्रूयते 'वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानुप्रयन्ति अण्व्या धारया गृह्णाती'ति । तत्र संशयः किमैन्द्रवायवः सर्वादित उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्य उत पाठप्राप्तस्थाने इति । तदर्थमिदं विचार्यते किमैन्द्रवायवप्रभृतीनां ग्रहाणामेतद्विधायकमुत ग्रहानुवादेनैन्द्रवायवाग्रताधर्मोऽङ्गत्वेन विधीयत इति । तत्र ग्रहाणां वचनान्तरैरेव प्राप्तत्वात्तदग्रताविधिरयं तच्चाविशेषेण सर्वग्रहाणामङ्गमुपांश्वन्तर्यामयोरपि संपादयितव्यमितरथा तयोर्वैगुण्यं स्यात् । अतः सर्वो-

---

**उभयसाम्नि नैमित्तिकं०** ॥ ५९ ॥ कावस्य पृष्ठसबन्धाभावादग्रतानिमित्तत्वासंभवेऽपि संसवादिगतयोर्बृहद्रथंतरयोः पृष्ठसंबन्धात्प्रतिपन्निमित्तत्वसंभव इत्युत्थितेः संगतिः । **समुच्चय इति** । 'संसवे उभे कुर्यात् गोसवे उभे कुर्या'दित्यादिवचनादित्यर्थः । **रथंतरेति** । रथंतरपृष्ठकस्य क्रतोर्निमित्तत्वे रथंतरस्यापि निमित्तकोटिनिवेशान्निमित्तत्वव्यवहारः । उपवतीमुपशब्दयुक्तामृचं प्रतिपदं प्रथमामग्रियवतीमग्रियशब्दयुक्तां 'प्रयुजो वाचो अग्रिय' इत्येताम् । **ननु** रथंतरबृहतोः सद्भावेऽपि न निमित्तत्वसंभवः रथंतरं पृष्ठमस्य बृहत्पृष्ठमस्येति पृष्ठान्तरव्यावर्तकत्वेनैव क्रतुविशेषणत्वात्तथाभूतयोरेव निमित्तत्वादित्यत आह—**सत्तयेति** । अयोगव्यवच्छेदेनापि विशेषणत्वं संभवतीत्युभयसामक्रतुगतयोरपि रथंतरबृहतोः स्वस्वप्रतिपन्निमित्तत्वमित्यर्थः । **समुच्चयेति** । उभयोर्युगपदप्राप्तिसंभवादित्यर्थः । **मुख्यत्वादिति** । 'प्रथमाधीतत्वं रथंतरस्य मुख्यत्व'मिति भाष्ये । **निरपेक्षयेति** । **ननु** निरपेक्षात्रैवापि सत्ता, नहीतरसद्भावमात्रेणापरसत्तायास्तत्सापेक्षत्वम्, किंच निरपेक्षत्वमितरव्यावृत्तावेव पर्यवसितं, तथाच किमयोगव्यवच्छेदेनेत्यस्वरसात्तदेवाङ्गीकरोति—**परस्परेति** । **अकर्तव्यमिति** । किंत्वनिमित्तं प्रतिपदन्तरमेव कर्तव्यमिति शेषः ॥

**ऐन्द्रवायवस्य०** ॥ ६२ ॥ ऐन्द्रवायवादीनां धाराग्रहत्वसिद्ध्यर्थमाह—**अण्व्येति** । सर्वादितः इत्यस्य विवरणमुपांश्विति । **ननु** श्रुत्यनुग्रहाय ग्रहविधेरेव युक्तत्वात्कथं पूर्वःपक्षोऽत आह—**ग्रहाणामिति** । 'ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती'त्यादिप्रातिस्विकविधिभिरेव तेषां प्राप्तत्वान्न तद्विधिः किंतु तदनुवादेन वाक्यार्थविधिमपि स्वीकृत्याग्रताविधिरेवाभ्युपेय इत्यर्थः । **नन्वस्त्वग्रताविधिस्तथापि** ऐन्द्रवायवः पुरस्ताद्ग्राह्य इत्येतावान् शास्त्रार्थः सच यत्किंचिद्ग्रहापेक्षया पुरस्ताद्ग्रहणेऽप्युपपन्न इत्यत आह—**तच्चेति** । नात्राग्रता ऐन्द्रवायवधर्मः येन यत्किंचित्पुरस्ताद्भावेऽप्युपपत्तिः स्यात् किंतु ऐन्द्रवायवोऽग्रं येषामिति बहुव्रीहिबलादन्यपदार्थभूतानां ग्रहान्तराणामेवेयमैन्द्रवायवपूर्वता विधीयते इति तदितरस-

दित: प्रतिकर्ष: । स्यादेवं यद्यग्रताविधि: स्यात् । ग्रहविधिस्त्वयं कथम् । धारासंयोगाद्धि धाराग्रहाणामत्र गृह्णातिनोपादानं तेषां च पाठप्राप्तमैन्द्रवायवाग्रत्वम् । अतो वक्ष्यमाणानामैन्द्रवायवादीनां ग्रहाणां संक्षेपेणायमुपक्रम: । तस्मात्स्वस्थानस्यैवेन्द्रवायवस्य ग्रहणम् ॥

कामसंयोगेप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् ॥ १८ ॥

**कामसंयोगे तु वचनादादित: प्रतिकर्ष: स्यात् ॥ ६५ ॥ [तद्देशानां वाग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥]**

सर्वादौ स्वस्य वा स्थाने काम्य: स्यादैन्द्रवायव: ॥ पुनर्विधेरादिमोऽन्त्य: कामायैतद्विधानत: ॥ ३१ ॥

तत्रैव संक्षेपेणोपक्रम्य प्राग्विस्तरवचनेभ्य: कामसंयुक्तानि वचनान्याम्नातानि 'ऐन्द्रवायवाग्रान्गृह्णीयाद्य: कामयेत यथापूर्वं प्रजा: कल्पेरन्नि'ति । तत्र किं सर्वादित: प्रतिकर्ष: उत तत्रापि स्वस्थान एव ग्रहणमिति । तत्र ग्रहाणां नित्यत्वान्न कामे विधानमतो नैन्द्रवायवाग्रता गुण: कामाय विधीयत इति सर्वादित: प्रतिकर्ष: । नैवम् । गुणो हि विधीयमान: प्रकृतान्ग्रहानाश्रित्य विधीयते, धाराग्रहाश्च प्रकृता: तेषां च स्वरूपवदैन्द्रवायवाग्रतापि पाठादेव प्राप्तासती कामे विधातव्या । तद्वरं श्रुत्यर्थविधानाय ग्रहणमेव कामे विहितमत: कामसंयोगेऽपि स्वस्थान ऐन्द्रवायव: ॥

आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् ॥ १९ ॥

**परेषु चाग्रशब्द: पूर्ववत्स्यात्तदादिषु ॥ ६७ ॥ [प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥ प्रतिकर्षं च दर्शयति ॥ ६९ ॥]**

स्वस्थाने प्रतिकर्षो वा शुक्रादे: पूर्ववद्भवेत् ॥ स्थाने मैवं तदग्रत्वाप्राप्ते: स प्रतिकृष्यते ॥ ३२ ॥

तत्रैव श्रूयते शुक्राग्रान्गृह्णीयात्प्रतिष्ठाकामो मन्थ्यग्रानभिचर'न्नित्यादि । तत्र संशय: किं शुक्राग्रा-

---

कलग्रहधर्म: । अतएव पूर्वत्र बहुव्रीहिबलान्निरपेक्षपृष्ठसाधनत्ववदिहापि बहुव्रीहिबलादेव सर्वग्रहधर्मतालाभ इत्युत्थितेः संगतिः । ततश्च सर्वेषां धर्मत्वसिद्ध्यर्थं सर्वादितः प्रतिकर्ष इत्यर्थः । **ननु** ग्रहविधावप्यग्रतावश्यं विधेया उपांश्वन्तर्यामानन्तरं पठितस्यैन्द्रवायवस्य सर्वापेक्षयाग्रतायाः पाठादप्यप्राप्तेरतो लाघवादग्रतामात्रविधिरेवायमिति शङ्कते—**कथमिति** । इहहि विधीयमानाप्यैन्द्रवायवाग्रता 'अण्व्या धारया गृह्णाती'ति धाराग्रहाणां संनिहितत्वादनुवादस्य च सतिसंभवे संनिहितगामित्वाद्गृह्णातिना तानेवानूद्य विधातव्या । एवं सति पाठादेव तस्याः प्राप्तत्वान्न तद्विधिरतो ग्रहमात्रविधिरेवायमिति परिहरति—**धारेति** । ननु ग्रहा अपि प्रातिस्विकविधिभिः प्राप्ता इत्युक्तमत आह—**अत इति** । प्रातिस्विकविधिविधेयानामपि सामान्येनानेन पुनर्विधानमित्यर्थः । तस्य प्रयोजनमग्रे ग्रन्थकारो वक्ष्यति ॥

**कामसंयोगे तु०** ॥ ६५ ॥ **विस्तरेति** । प्रातिस्विकविधिभ्य इत्यर्थः । इह तर्हि भवत्वादितः प्रतिकर्ष इत्युत्थानात्संगतिः । **नित्यत्वादिति** । यद्यपि नित्यत्वेऽपि कामार्थतया विधानं नानुपपन्नं तथापि नित्यानामेव कामार्थतया विधाने प्रवृत्तिविशेषकरत्वाभावान्न तद्विधिर्युक्त इति तात्पर्यम् । नन्वेवमग्रतापि न विधेया स्यात्तस्या अपि पाठादेव प्राप्ततया प्रवृत्तिविशेषकरत्वाभावस्य तुल्यत्वादिति वाच्यम् । पाठादपि हि धाराग्रहाणामेव तदग्रता प्राप्नोति नतु सर्वेषाम् । तथाच सर्वेषां तदग्रताविधावस्ति प्रवृत्तिविशेष इत्याशयेनाह—**इति सर्वेति** । नन्वग्रतायाः कामाय विधाने 'वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्त' इति वचनमनर्थकं स्यात् । ग्रहाणामेव फले विधाने तु तेषां प्रकरणप्राप्तक्रत्वर्थत्वबाधेन वाक्यात्केवलफलार्थत्वप्राप्तौ प्रतिप्रसवार्थतया तद्वचनमर्थवदिति चेन्मैवम् । प्रतिप्रसवार्थत्वाभावेऽपि शुक्राग्रत्वादेः काम्यगुणस्य धाराग्रहमात्राश्रितत्वलाभरूपस्य ग्रन्थकारेण वक्ष्यमाणप्रयोजनस्य सद्भावेन वचनानर्थक्याभावादिति भावः । वस्तुतस्तु वाग्वा इत्यादिवाक्यस्य प्रतिप्रसवार्थत्वं न संभवतीति वयमनुपदमेव वक्ष्यामः । **नैवमिति** । यद्यत्र विधीयमानायामग्रतायां सर्वेषामाश्रयता स्यात्तदा प्रवृत्तिविशेषकरत्वं स्यान्नत्वत्र तत्संभवः । धाराग्रहाणामेवाधिकृतत्वेन तेषामेवाश्रयत्वयोग्यत्वात्तथाच तेषामेवाश्रयत्वे पाठादेवाग्रतायाः प्राप्तत्वात्तवाप्यप्रवृत्तिविशेषकरत्वं तुल्यमित्यर्थः । नच विनिगमनाविरह इत्याशयेनाह—**तद्वरमिति** ॥

**परेषु चाग्रशब्दः०** ॥ ६७ ॥ पूर्ववदिहापि ग्रहाणामेव विधानमित्युत्थितेः संगतिः । **ननु** नात्र ग्रहाणां विधिसं-

दीनामपि कामसंयोगे स्वस्थाने ग्रहणमुत प्रतिकर्ष इति । तत्र पूर्ववदेव शुक्रप्रभृतीनां नियतानां ग्रहाणां कामे विधानात्स्वस्थाने प्राप्ते उच्यते—नहि प्रकृता धाराग्रहाः पाठतः शुक्राग्रा येन तदनुवादेन ग्रहाणां कामे विधिः स्यात् । ऐन्द्रवायवाग्रा हि ते । तत्र ग्रहान्कामे ग्रहेषु च शुक्राग्रतां विदधद्वाक्यं भिद्यते । तस्माद्ग्रहाश्रितः शुक्राग्रतादिगुणः कामाय विधीयत इति प्रतिकर्षः ॥

आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् ॥ २० ॥

**पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥ [तुल्यधर्मत्वाच्च ॥ ७१ ॥ तथा च लिङ्गदर्शनम् ॥ ७२ ॥]**

**स सर्वादावैन्द्रवायवादौ वात्राविशेषतः ॥ सर्वादावाश्रयादैन्द्रवायवादौ घ्रतेरपि ॥ ३३ ॥**

स्थिते प्रतिकर्षे चिन्त्यते किं सर्वादितः प्रतिकर्षः उतैन्द्रवायवात्पूर्वमिति विशेषाग्रहात्सर्वग्रहाणां पुरस्ताच्छुक्रोपक्रष्टव्य इति प्राप्ते ब्रूमः—कामाय हि गुणो विधीयमानः प्राकृतान्ग्रहानाश्रित्य विधीयते । प्रकृताश्च 'यदैन्द्रवायवाग्रा गृह्यन्त' इत्यनेन साधारण्येनोपक्रमेणोपक्रान्ता ऐन्द्रवायवाद्या धाराग्रहाः वक्ष्यमाणाः तेन तानेवाश्रित्य शुक्राग्रतागुणः कामाय विधीयत इति न सर्वादितः प्रतिकर्षः । इदमेव वक्ष्यमाणानां ग्रहाणां साधारणोपक्रमप्रयोजनम् । कथं नाम सर्व एव वक्ष्यमाणा ग्रहाः काम्यानां गुणानामाश्रयत्वं प्रतिपद्येरन्निति ॥

---

भवः पूर्ववदग्रतायाः पाठप्राप्तत्वाभावेनानुवादासंभवाद्ग्रहाणां कामे ग्रहेषु शुक्राग्रतायाश्च विधाने वाक्यभेदप्रसङ्गात्, तस्मादग्रताया एव विधिर्युक्त इति शङ्कानिराकरणार्थं शुक्रप्रभृतीनामित्युक्तम् । तथाच पूर्ववदिह प्रकृताः सर्वे धाराग्रहा न विधीयन्ते किंतु शुक्रप्रभृतयो ये ग्रहाः पाठादेव शुक्राग्रत्वेनावगतास्त एव विधीयन्त इति न वाक्यभेद इति भावः । **उच्यते इति** । शुक्रप्रभृतीनां विधानेऽपि शुक्राग्रत्वविशिष्टानां ग्रहाणां कामे विधानाद्गौरवं स्यादतो लाघवादग्रतामात्रस्यैव विधानं युक्तमित्याशयः । सूत्रार्थस्तु—शुक्राग्रात्परेष्वपि ग्रहेष्वग्रशब्दः पूर्ववत्स्वक्रमस्थस्यैवाभिधानात्स्यादिति ॥

**पुरस्तादैन्द्रवायवस्य० ॥ ७० ॥** पूर्वत्रैव विशेषविचारात्संगतिरित्याशयेनाह—**स्थित इति । इदमेवेति ।** असत्यस्मिन्धाराग्रहाणां सामान्येनोपक्रमेऽविशेषादुपांश्वन्तर्यामयोरपि शुक्राग्रतादिगुणं प्रत्याश्रयता स्यात्, सतित्वस्मिन् संनिहितानां धाराग्रहाणामेवाश्रयत्वं लभ्यत इतीदमेवास्य सामान्यविधेः प्रयोजनमित्यर्थः । नचैतद्विध्यभावेपि 'अण्व्या धारया गृह्णाती'ति धाराग्रहाधिकारादेवोपांश्वन्तर्यामयोराश्रयत्वव्यावृत्तिसिद्धेर्नेदं प्रयोजनमिति वाच्यम् । अण्व्याधारयेति वाक्ये न ग्रहणविधिः किंतु ग्रहणे गुणमात्रविधिः । ततश्चैन्द्रवायवादीनां सामान्येनोपक्रमाभावे 'ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाती'ति प्रातिस्विकविधीनां वक्ष्यमाणानां गुणवाक्यविधिसंनिधिपाठाभावेनैन्द्रवायवादिष्वेवायं गुणो विधीयत इत्यत्र प्रमाणाभावेन धारावाक्यगतगृह्णातिना सर्वग्रहानुवादेन गुणविधिप्रसङ्गेसति सर्वेषां धाराग्रहत्वापत्त्या अण्व्या धारयेति वाक्यस्यैन्द्रवायवादिमात्रविषयत्वस्य तत्संनिधिपठितोक्तसामान्यविधित्वेनाण्व्या धारयेति वाक्याधिकारमात्रेणोपांश्वन्तर्यामयोराश्रयत्वव्यावृत्तेरलाभादिति भावः । तन्त्ररत्नादौ तु सामान्यविध्यभावे ऐन्द्रवायवादिवाक्यैरुत्पन्नानां ग्रहाणां प्राकरणिकक्रत्वर्थत्वबाधेनैन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति कामसंयुक्तवाक्येन पुरुषार्थत्वमेव प्राप्नोतीति क्रत्वर्थत्वप्रतिप्रसवार्थत्वं सामान्यविधेरिति प्रयोजनान्तरमुक्तं तच्चिन्त्यम् । एवंसति खादिरत्वादेरपि क्रत्वर्थत्वं न स्यात्तत्रापि 'खादिरो यूपो भवती'ति वाक्ये यूपसंबन्धमात्रस्यैव श्रवणेन क्रतुसंबन्धस्य प्रकरणकल्प्यतया तद्बाधनेन 'खादिरं वीर्यकामस्ये'ति वाक्येन केवलपुरुषार्थत्वप्रसङ्गात् । नच प्रकरणाम्नानानर्थक्यभिया दुर्बलेनापि तेन क्रत्वर्थत्वं खादिरत्वादेर्लभ्यते । इदन्तु ऐन्द्रवायवादिदेवताविशिष्टग्रहणस्वरूपस्यालौकिकदेवताघटिततया खादिरत्वादिवल्लोकप्रसिद्धत्वाभावेन तत्स्वरूपज्ञापनार्थतया द्वादशाहप्रकरणे व्यूढाम्नानस्येव प्रकरणाम्नानस्यार्थवत्त्वेनानर्थक्याभावान्न तन्मात्रेण क्रत्वर्थत्वस्यापि लाभ इति वाच्यम् । एवमपि ऐन्द्रवायवमित्यादिद्वितीयासंयोगाद्यागीयद्रव्यसंस्कारार्थत्वावगमेन तद्बलादेव क्रत्वर्थत्वेऽपि तद्वाक्यस्यैव तात्पर्यकल्पनौचित्यात्केवलस्वरूपज्ञापनार्थत्वे तु व्यूढाम्नानवत्स्वप्राधान्येनैव ग्रहाणामाम्नानं स्यान्नतु क्रत्वर्थद्रव्यसंस्कारकत्वेन । तस्मादिह संस्कारकत्वाम्नानबलादैन्द्रवायवादिप्रातिस्विकविधीनां क्रत्वर्थतात्पर्येण प्रवृत्तानां प्रसङ्गात्स्वरूपज्ञापनद्वारा कामसंयोगवाक्येऽप्युपकारकत्वमात्रं नत्वेतावता कामार्थत्वमेवेति । किंच वाग्वा इत्यादिसामान्यविधावपि न साक्षात्क्रतुसंयोगः किंतु प्रातिस्विकविधिसिद्धानां पुनराम्नानानर्थक्यबलात्कल्पनीयः । तद्वरं संस्कारकत्वबलात्क्रत्वर्थत्वकल्पनं पुनराम्नानमपि चोक्तरीत्योपांश्वन्तर्यामयोः काम्यशुक्राग्रत्वादिगुणं प्रत्याश्रयत्वव्यावर्तनेनार्थवदेवेति कथं तदानर्थक्यम् । तस्मादुक्तमेव प्रयोजनमिति दिक् । सूत्रार्थस्तु—ऐन्द्रवायवात्पुरस्तादुपांश्वन्तर्यामयोरूर्ध्वं शुक्रादेरपकर्षः स्यात् धाराग्रहाधिकारेण तस्यैव काम्यग्रनादेशत्वेन कृतत्वादिति ॥

सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

**सादनं चाविशेषात् ॥ ७३ ॥ [लिङ्गदर्शनाच्च ॥ ७४ ॥]**

**नापकर्षोऽपकर्षो वा सादनस्याश्रुतत्वतः ॥ न मैवं ग्रहशेषत्वात्तन्नाशक्तेर्ग्रहान्तरम् ॥ ३४ ॥**

धाराग्रहाणां पूर्वंपूर्वं गृहीत्वा सादयित्वोत्तरोत्तरस्य ग्रहणं सर्वेषु च गृहीतेष्वासादितेषु च पश्चात्क्रमेण प्रदानमित्येषा तावन्नित्यक्लृप्तिः, कामाय तु शुक्रादिग्रहणेष्वपकृष्यमाणेषु किं सादनं प्रतिकृष्यते नेति संशये वचनाभावान्न प्रतिकर्ष इति प्राप्ते उच्यते—सादनस्यैतत्प्रयोजनं यदुत्तरग्रहाणां साहित्यसंपादनम्, नह्यनासाद्यैकमपरो ग्रहीतुं शक्यते तस्माद्ग्रहणशेषत्वात्सादनस्य तत्प्रतिकर्षे प्रतिकर्षः ॥

प्रदानस्याप्रतिकर्षाधिकरणम् ॥ २२ ॥

**प्रदानं चापि सादनवत् ॥ ७५ ॥ [न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ॥७६॥]**

**प्रदानस्यापकर्षोऽस्ति न वा सादनवन्नवेत् ॥ प्रदानस्य तु मुख्यत्वान्नापकर्षोऽत्र युज्यते ॥ ३५ ॥**

तथा प्रदानं किं प्रतिकृष्यते नेति संदेहे प्रदानोपक्रमत्वाद्ग्रहणस्य तत्प्रतिकर्षे प्रदानस्य प्रतिकर्षः । नैवम् । नह्यवदानवत्प्रदानोपक्रमो ग्रहणं सर्वेषु गृहीतेषु पश्चात्प्रदानं नित्यक्लृप्तावित्युक्तमवगतस्वरूपं च ग्रहणं कामेऽपि प्रतिकृष्यत इति न प्रतिकृष्यमाणस्यापि प्रदानोपक्रमत्वम्, तस्मान्न प्रदानापकर्षः ॥

त्र्यनीकानामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥ २३ ॥

**त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ [अपि वाहर्गणेष्वग्निवत्समानविधानं स्यात् ॥ ७८ ॥]**

**त्र्यनीकायामैन्द्रवायवशुक्राग्रानुवादता ॥ परिसंख्या वार्थवादो वा विधिर्वा नहि त्रयम् ॥ ३६ ॥**
**वैयर्थ्येन त्रिदोषत्वाल्लक्षणापत्तितस्तथा ॥ विधिराग्रयणाग्रत्व इवानैमित्तिको हि सः ॥ ३७ ॥**

द्वादशाहे त्र्यनीकाम्नाता ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमित्यादि । तत्र प्रथमद्वि-

---

**सादनं चाविशेषात् ॥ ७३ ॥** क्रमे क्लृप्ते सत्यपकर्षविचारो घटते नान्यथेत्याशयेन नित्यप्रयोगे क्रमक्लृप्तिं दर्शयति —**धारेति । वचनेति ।** ग्रहणवत्सादनस्यापि प्रकरणेन क्रत्वर्थतया ग्रहणाङ्गत्वाभावाद्वचनेन ग्रहणेऽपकृष्यमाणेऽपि सादनं नापकृष्यत इत्यर्थः । अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरपि सूचिता । **सादनस्येति ।** ग्रहाणामेकप्रयोगवचनपरिगृहीततया साहित्यमवश्यं संपादनीयम् । नचैकेनाध्वर्युणा एकं ग्रहं गृहीत्वाऽनासाद्योत्तरो ग्रहीतुं शक्यत इत्यासादनं साहित्यसंपादनमुखेन लिङ्गाद्ग्रहणाङ्गं, ततश्च साङ्गस्य ग्रहणस्यापकर्षे वचनस्य तात्पर्याद्ग्रहणापकर्षे पाठप्राप्तक्रमबाधेन सादनमप्यपकृष्टव्यमित्यर्थः । सूत्रार्थस्तु—सादनमपि प्रतिकृष्येत सादनस्य ग्रहणाङ्गतया तदपकर्षेपि वचनतात्पर्याविशेषादिति ॥

**प्रदानं चापि सादनवत् ॥ ७५ ॥** सादनवत्प्रदानस्यापि प्रतिकर्ष इत्युत्थितेः संगतिः । **ननु** प्रदानस्य प्रधानत्वादङ्गभूतग्रहणापकर्षेऽप्यपकर्षासंभवात्कथं पूर्वपक्षोऽत आह—**प्रदानेति ।** प्रधानस्याङ्गत्वाभावेऽपि यथावदानस्य प्रदानाङ्गत्वात्तदन्तानुसमयः एवं ग्रहणमपि प्रदानान्तमिति ग्रहणस्य प्रदानोपक्रमरूपत्वात्तदपकर्षे प्रदानस्याप्यपकर्ष इत्यर्थः । **नैवमिति ।** सादनं पूर्वाधिकरणे साहित्यार्थमित्युक्तत्वादासादनविधिबलाद्ग्रहणानां साहित्ये सति पूर्वंपूर्वं गृहीत्वासाद्योत्तरोत्तरो ग्राह्य इत्यर्थलाभात्सर्वेषु गृहीतेषु पश्चात्क्रमेण प्रदानं नतु गृहीतमात्रस्यैव प्रदानमिति न ग्रहणं नित्यप्रयोगे प्रदानोपक्रमरूपम् । ततश्च नित्ये यादृशं ग्रहणस्वरूपमवगतं तादृशस्यैव कामाय प्रतिकर्षविधानात्तत्रापि प्रदानोपक्रमत्वाभावान्न प्रदानापकर्ष इत्यर्थः । सूत्रे प्रतिकृष्यत इति शेषः ॥

**त्र्यनीकायां न्यायोक्तेषु० ॥७७॥** प्रदानक्रमस्य बाधाभावेऽपि इह परिसंख्ययाग्रान्तराणां बाध इत्युत्थितेः संगतिः । **अग्रतेति ।** लोके शताग्रे शतानीक इति व्यवहारात्, वेदे च 'चित्रं देवानामुदगादनीकमि'ति प्रयोगाच्चाग्रतावचनोऽनीकशब्द इत्याहुः । **त्रयाणामिति ।** अजादेराकृतिगणत्वाट्टाप् नतु 'द्विगो'रिति ङीप् । उक्तंच 'स्मृत्याजादिगणे ह्युक्ता टाबुत्पत्तिर्द्विगोरपि । त्र्यनीकेतिगणे कीर्त्यः स्यादाकृतिगणो हि सः' । एवंच त्रिफलेत्यादिप्रयोगस्योपपन्नतेति । यद्यपि

---

१ चापि शेषत्वात्. २ तत्प्रदाना. ३ मूलपाठो न लभ्यते.

सीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रुता । सा तयोः रथंतरसामत्वाद्बृहत्सामत्वाच्च प्रकृतित एव प्राप्तासती किमर्थं श्रूयत इति चिन्त्यते । अनुवादमात्रमित्येकः पक्षः । तथाच सत्यानर्थक्यं तस्मादङ्गान्तरपरिसंख्यार्थम्। सापि त्रिदोषा तस्मादर्थवादार्थं तृतीयेहन्याग्रयणाग्रता न्याय्या। पूर्वयोरैन्द्रवायवाग्रतायाः शुक्राग्रतायाश्चानुष्ठितत्वादजामित्वायेति । सिद्धान्तस्तु प्रकृतौ रथंतरसामत्वेन बृहत्सामत्वेन च निमित्तेन नैमित्तिके ऐन्द्रवायवाग्रशुक्राग्रते विहिते तथैव चोदकेन प्राप्येते । इदं त्वनैमित्तिकार्थं वचनं तस्य च प्रयोजनं तत्तद्विकृतिष्वसत्यपि रथंतरबृहत्सामत्वे ऐन्द्रवायवशुक्राग्रतयोः सिद्धिः ॥

व्यूढद्वाशाहस्य समूढविकारत्वाधिकरणम् ॥ २४ ॥

**द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७९ ॥ [व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥]**

व्यूढोऽपि प्रकृतिः किंवा विकृतिः स्याद्धि पृष्ठवत् ॥ विधिसाम्यादादिमोऽन्त्यो लिङ्गात्कामे विधेरपि ॥ ३८ ॥

प्रहाग्रताविशेषद्वैविध्याद्द्विविधो द्वादशाहः समूढो व्यूढश्च। समूढः पूर्वोक्तः। व्यूढस्तु 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रं अथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रं अथ द्वे शुक्राग्रे अथाग्रयणाग्रं अथ द्वे ऐन्द्रवायवाग्रे' इति । तत्र किं द्वे अपि रूपे द्वादशाहस्य नैमर्गिके वैकल्पिके क्रत्वङ्गे उत समूढमेव नित्यं व्यूढरूपं तु तस्यैव काम्यो विकार इति । तत्र व्यूढस्याप्यकामसंयुक्तस्योत्पन्नस्य वाक्यान्तरेण कामसंयोगे सत्यप्येकस्योभयत्वे संयोगपृथक्त्वमित्यनेन न्यायेन क्रत्वर्थता पुरुषार्थता च । तस्मात्समूढवद्व्यूढोऽपि क्रत्वर्थः । उच्यते—न दध्यादिवद्व्यूढस्योभयार्थत्वं युक्तम् । तत्र हि दध्न इन्द्रियसंबन्धं विदधत् वाक्यं लोकतो दधिस्वरूपं प्रकरणेन चाश्रयसंबन्धं लब्ध्वा न दध्ना जुहोतीत्येतद्दधिविधिमपेक्षते । व्यूढस्वरूपस्य तु लोकतोऽप्रसिद्धेरवश्यं वाक्यान्तरसिद्धैव व्यूढोत्पत्तिः कामवाक्येन फले विधातव्या । अतः प्रत्यक्षेण कामवाक्येन फललाभाद्व्यूढोत्पत्तिवाक्यं न प्रकरणेन क्रत्वङ्गतां भजते । तस्मात्समूढविकारो व्यूढः ॥

---

नवस्वहःसु नव सन्त्यग्रत्वानि तथापि त्रयाणामैन्द्रवायवाग्रत्वादीनां त्रिरभ्यासान्नवत्वमिति युक्तत्र्यनीकाव्यवहार इति ध्येयम्। **तयोरिति** । द्वादशाहे प्रायणीयानन्तरभाविनि पृष्ठ्यषडहे रथंतरबृहद्वैरूप्यवैराजशाक्वररैवतानि क्रमेण प्रत्यहं पृष्ठानीति पृष्ठ्यषडहगतयोराद्यद्वितीययोरह्नो रथंतरबृहत्सामत्वात्तत्सामनिमित्तकत्वेन प्रकृतौ विहितमग्रताद्वयं चोदकादेव प्राप्नोतीत्यर्थः । **सापीति** । चोदकप्राप्तानामङ्गान्तराणां परिसंख्येति प्राप्तपरिसंख्यास्वीकारे त्रैदोष्यं स्यादित्यर्थः । नचात्र ग्रहमेधीयाज्यभागन्यायेन चोदकपरिलोपकत्वेनाप्राप्तपरिसंख्यासंभवः । अग्रतायाः संनिपातिग्रहणधर्मतया साक्षादुपकारासंबन्धादिति भवनाथादयः । **नन्वत्र** न कोपि स्तुतिप्रकारो लक्ष्यते तत्कथमर्थवादत्वमत आह—**तृतीय इति** । **इदं त्विति** । तथाच विधायकत्वे संभवति निरर्थं स्तुत्यर्थत्वं नाङ्गीकरणीयमिति भावः । **ननु** अनैमित्तिकत्वेन विधिरपि व्यर्थोऽनुष्ठाने विशेषाभावादित्याशङ्क्य द्वादशाहविकारेषु गर्गत्रिरात्रादिषु द्वितीयाद्यहःसु बृहत्सामत्वाद्यभावेऽपि शुक्राग्रताद्यनुष्ठानफलकत्वान्न व्यर्थं इत्याह—**तस्येति** । सूत्रार्थस्तु—त्र्यनीकायां चोदकप्राप्तेषु ऐन्द्रवायवाग्रत्वादिषु यत्पुनराम्नानं तदर्थवादार्थं स्यादिति ॥

**द्वादशाहस्य० ॥ ७९ ॥** पूर्वत्रानैमित्तिकत्वे विधानमपि वा'अहर्गणेष्वग्निवत्समानविधानं स्या'दिति सूत्रे समानविधानत्वेन व्यवहृतम्। एवंच पूर्ववदिहापि व्यूढसमूढयोः समानविधानत्वमित्युत्थानात्संगतिः। **ग्रहेति** । साम्येनोढा त्र्यनीका यत्र स समूढः वैषम्येणोढा त्र्यनीका यत्र स व्यूढ इत्येवं ग्रहाग्रताविशेषाद्द्वादशाहस्य समूढव्यूढभेदेन द्वैविध्यमित्यर्थः । **तत्रेति** । यद्यपि 'यः कामयेत बहुस्यां प्रजायेयेति सोऽनेन यजेते'ति कामसंयुक्तो व्यूढस्तथापि 'अथेतरेषामि'त्युत्पत्तिवाक्ये फलसंयोगाभावात्प्रकरणात्क्रत्वर्थोऽपीत्यर्थः । सत्यमुत्पत्तिवाक्ये फलं न श्रूयते तथापि फलवाक्येनापेक्षितत्वादियमुत्पत्तिः फलार्थैवेति न प्रकरणात्क्रत्वर्थत्वं, दध्यादौ तु फलवाक्येनोत्पत्तेरनपेक्षितत्वेनानर्थक्यापत्त्या क्रत्वर्थत्वमप्याश्रीयत इति वैषम्यमित्याशयेनाह—**न दध्यादिवदिति । न प्रकरणेनेति** । तथाच बाधप्रसङ्गात्प्रकरणबाधविचार इति भावः । **तस्मादिति** । तथाच द्वादशाहविकारेषु व्यूढस्याप्रवृत्तिः फलिष्यतीति भावः । सूत्रार्थस्तु—द्वादशाहस्य व्यूढत्वं समूढत्वं च रथंतरबृहत्पृष्ठवत्समानविधानं स्यादिति ॥

---

१ अथ शुक्रे आग्र.

संवत्सरसत्रेऽनीकानां त्रिवृद्ध्यधिकरणम् ॥ २५ ॥

**एकादशिनवत्र्यनीका परिवृत्तिः स्यात् ॥ ८३ ॥ [स्वस्थानविवृद्धिर्वाह्नामप्रत्यक्षसंख्यत्वात् ॥ ८४ ॥ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात्त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥ वचनात्परिवृत्तिरैकादशिनेषु ॥ ८६ ॥ लिङ्गदर्शनाच्च ॥ ८७ ॥]**

दण्डाकलितवत्सत्रे त्र्यनीकावृत्तिरिष्यते ॥ स्वस्थानवृद्धिरथवा स्यादाद्योऽहर्विवक्षया ॥ ३९ ॥
न विवक्षा वाक्यभेदान्नवानीकैस्तु पूरणम् ॥ एकैकवृद्ध्या न विना तेनैकैकं विवर्धते ॥ ४० ॥

गवामयने एकषष्ट्यधिकानि त्रीणि शतान्यहानि अशीतिशतं पूर्वः पक्षः। तथोत्तरं मध्ये विषुवान् तत्राहःक्लृप्तिं ताण्डकिनः समामनन्ति प्रायणीयं प्रथममहः चतुर्विंशं द्वितीयं ततश्चत्वारोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः ततस्त्रयोऽभिप्लवाः षडहा एकः पृष्ठ्यः षडहः अभिजिन्नामैकाहः त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षण्मासाः तदिदं पूर्वं पक्षः ततो विषुवान्। अथोत्तरं पक्षः त्रयः स्वरसामानः विश्वजिन्नामैकाहः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः त्रयोऽभिप्लवाः षडहाः तान्यष्टाविंशतिरहानि। पुनः पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः चत्वारोऽभिप्लवाः षडहाः स मासः स द्वितीयः स तृतीयः स चतुर्थः ततस्त्रयोऽभिप्लवाः षडहाः आयुर्गौरिति द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चेति द्वात्रिंशदहानि आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः। तदत्र भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां चोदकप्राप्तामाश्रित्य विचारितं किं दण्डकलितवदावर्तनीया किंवा नवानामप्यनीकानां स्वे स्वे स्थाने विवृद्धिरिति। तदर्थं च विचारितं ऐन्द्रवायवाग्रं प्रथममहरित्यहर्ग्रहणं विवक्षितम्। अतश्च प्रथमादीनामह्नामङ्गभूता ऐन्द्रवायवाग्रत्वादयोऽहरपूर्वप्रयुक्ता उत प्रथमादीनां यज्ञ-

---

**एकादशिनीवत्०॥८३॥** वक्ष्यमाणलिङ्गदर्शनादिसौकर्यार्थमहरियत्तां तत्क्लृप्तिं चाह—**गवामिति। अशीतीति।** गवामयनस्य शालारूपणाच्छालाया इवास्यापि पूर्वोत्तरार्धेपक्षसी पृष्ठवंशस्थानीये। मध्ये विषुवान् नामाहर्विशेष इत्यर्थः। अतएवामनन्ति 'यथा शालायै पक्षसी एवं संवत्सरस्य पक्षसी'इति। तत एकैकस्मिन्षडहे अहानि षट्षडिति चत्वारोऽप्यभिप्लवाख्याः षडहाश्चतुर्विंशतिरहानि संपद्यन्ते। तानि च पृष्ठ्यषडहगतैः षड्भिरहोभिः सह त्रिंशत्संपद्यन्ते। ततश्चतुर्भिरभिप्लवैरेकेन पृष्ठ्येन षडहेन च त्रिंशदहोरूप एको मासः संपन्न इत्यर्थः। अनेनैव प्रकारेण द्वितीयतृतीयचतुर्थपञ्चममासा अपि चतुरभिप्लवैरेकेन पृष्ठ्यषडहेन च ज्ञेया इत्याह—**सद्वितीय इति। तत इति।** त्रिभिरभिप्लवैरेकेन पृष्ठ्यषडहेन चतुर्विंशतिरभिजिन्नामकमेकं स्वरसामाख्यानि त्रीणीत्येवमष्टाविंशतिरहानि आद्याभ्यां प्रायणीयचतुर्विंशाख्याभ्यां सह त्रिंशदिति सर्वाणि मिलित्वा षण्मासा इत्यर्थः। एवमुत्तरत्राप्यर्थो बोध्यः। त्रयस्त्रिंशेति पृष्ठ्यषडहः त्रिवृत्पञ्चदशसप्तदशएकविंशत्रिणवत्रयस्त्रिंशात्मकस्तोमकः त्रिवृदुपक्रमः, इह तु न तथा किंतु त्रयस्त्रिंशाख्यमन्त्यमहरुपक्रम्य प्रतिलोमतयानुष्ठेयत्वात्त्रयस्त्रिंशारम्भण इत्यर्थः। **द्वादशाहस्येति**। द्वादशाहे यानि प्रायणीयोदयनीययोर्मध्यवर्तीनि दशाहानि तानीत्यर्थः। **प्रायणीयेति**। यद्यपि प्रायणीयादिवाक्यान्तरालवर्तिनी सा तथापि तदेवान्तरालं प्रायणीयोदयनीययोरप्यन्तरालं भवतीत्याशयेन तथा व्यवहारः, पूर्वाधिकरणोक्तसमूढनैसर्गिकत्वोपजीवनेनास्य विचारस्य प्रवृत्तेः संगतिरिति द्वादशाहिकीमित्यमेन सूचयति। वार्तिककारपक्षे तु प्रासङ्गिकी संगतिः। **किमिति**। यथा प्रकृतित्रिरावृत्ताग्रतामात्राद्गवामयनिकानामह्नामपूर्तेस्तत्पूरणायावृत्ताववश्यंभाविन्यां यथा क्षेत्रमाने कर्तव्ये क्वचित्कृत्स्नं मानदण्डं निवेश्य तदनन्तरदेशेऽपि कृत्स्नमेव मानदण्डं निवेश्य क्षेत्रं मीयते तथा प्रथमेहन्यैन्द्रवायवाग्रता द्वितीये शुक्राग्रता इत्येवंप्रकारेण कृत्स्नां त्र्यनीकामनुष्ठाय तथैव पुनःपुनरभ्यासः कर्तव्यः उत तावतामह्नां नवधा विभागं कृत्वा प्रथमभागे ऐन्द्रवायवाग्रता द्वितीये शुक्राग्रतेत्येवंप्रकारेण स्वेस्वे स्थान एव विवृद्धिः कर्तव्येत्यर्थः। **तदर्थंचेति**। किमिमे धर्माः प्रकृतौ अहरपूर्वप्रयुक्ता उत परमापूर्वप्रयुक्तास्तदर्थं च किमहर्धर्मा उत भागधर्माः, तदर्थं च किमहर्ग्रहणं विवक्षितं उत नेति संशयनिष्कर्षः। अहर्ग्रहणविवक्षायां द्वितीयादेरह्नः शुक्राग्रत्वादिधर्म इति तत्सिद्ध्यर्थं दण्डकलितवदावृत्तिः तदविवक्षायां तु कृत्स्नस्यैव प्रथमभागस्यैन्द्रवायवाग्रताधर्मं एवं द्वितीयादिभागानामपि शुक्राग्रतादिरिति स्वस्थानविवृद्धिसिद्धिरिति फलफलिभावः। **ननु** प्रथमश्रुतत्वात्प्रथमशब्दस्योद्देश्यसमर्पकत्वेन भागधर्मत्वमेव युक्तं, यद्वा नेहोद्देश्यं प्रथमशब्देनाहःशब्देन वा समर्पणीयं,

भागानां धर्मो: परमापूर्वप्रयुक्ता इति । तत्राहर्ग्रहणस्य श्रुतत्वादहर्धर्मत्वमतश्च प्रायणीयानन्तरस्याह्नो धर्मः ऐन्द्रवायवाग्रता तदनन्तरस्य शुक्राग्रता तदनन्तरस्याग्रयणाग्रता गवामयनेऽपि तथैव प्राप्नोति । नवभिश्चानीकैः नवस्वहःसु समनुष्ठितेषु पुनरैन्द्रवायवाग्रं प्रथममहरित्येतदेवोपतिष्ठते । तथा ततःपरमपि । तस्माद्दण्डकलितवदावृत्तिरिति प्राप्ते सिद्धान्तितम् । उद्दिश्यमानस्य हि प्रथमादेरह्नो विशेषणं न संभवति तस्मात्प्रथममैन्द्रवायवाग्रमथ शुक्राग्रमित्येतावद्विवक्षितम् । नवानां चानीकानां नवधा विभागः गवामयनेऽपि पूर्वे पक्षो नवधा विभज्य प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कर्तव्यमिति स्वस्थानविवृद्धिः सिद्धा भवति । एवंच कृत्स्नोत्तरे पक्षसि पंचमे षाडहिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रतादर्शनमुपपन्नं भवति । 'जगन्ति वै छन्दांसि प्रत्यवरोहन्त्याग्रयणं ग्रहाबृहत्पृष्ठानि त्रयस्त्रिंशं स्तोमा' इति दण्डकलितवदावृत्तावभिप्लवादारभ्य नवकैरहस्सु संकल्प्यमानेषु उत्तरस्मिन्नपि पक्षसि एकमहर्व्याप्य त्र्यनीका समाप्यते ततः पुनरैन्द्रवायवाग्रत्वादारभ्यानुष्ठीयमाने द्वितीयमहरैन्द्रवायवाग्रं तृतीयं शुक्राग्रं विश्वजिदाग्रयणाग्रं त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति । स्वस्थानविवृद्धौ पुनः पूर्वस्मिन्पक्षसि नवधा विभक्ते नवमे भागे आग्रयणाग्रतायामनुष्ठितायामुत्तरे पक्षस्यावृत्तेः प्रातिलोम्येनानुष्ठीयमाने प्रथमभाग आग्रयणाग्रता भवति तदन्तर्गतश्च त्रयस्त्रिंशमहरिति तत्राग्रयणाग्रतादर्शनमुपपन्नं भवति । तदिदं भाष्यकारीयाधिकरणव्याख्यानं लिङ्गोपवर्णनं चानुपप-

---

ताभ्यां विनापि नवानामग्रतानां विधेयत्वादन्तरालं नवधा विभज्य नवसु भागेषु क्रमान्नवाप्यग्रता निवेशनीया' इति विधेयपर्यालोचनयैव भागरूपोद्देश्यलाभात्, यथाभ्युदयेष्टौ 'त्रेधा तण्डुलान्विभजे'दित्यत्र पूर्वदेवताभ्योपनयलक्षणविधेयसामर्थ्यपर्यालोचनया पूर्वदेवतासंयुक्तहविर्लक्षणोद्देश्यलाभः, एवंच तत्र यथा तण्डुलपदं हविर्मात्रोपलक्षणार्थमेवमिहाप्यहःपदं भागोपलक्षणार्थमेवाहस्त्वेनापि विशेषणे वाक्यभेदप्रसङ्गात्, तथाच कथमहर्धर्मत्वमिति पूर्वपक्षोऽत आह— **तत्रेति** । प्रथमशब्दस्य प्राथम्यमात्रवाचकस्य विशेषसापेक्षत्वान्निरपेक्षाहःशब्दस्यैवोद्देश्यसमर्पकत्वं तथैकैकाग्रतामात्रपर्यालोचनया न भागलक्षणोद्देश्यलाभः किंत्वग्रतानवकपर्यालोचनया । तथाच तात्पर्यालोचनलभ्यभागोद्देश्यप्रतीतेर्विलम्बितत्वादहःशब्दादेवोद्देश्यसमर्पणं युक्तम् अभ्युदयेष्टौ तु नैवं विधेयसामर्थ्यलभ्योद्देश्यप्रतीतेर्विलम्बितत्वमिति वैषम्यम् । तथाचाह्नामेवोद्देश्यत्वादहर्धर्मत्वमेव युक्तमित्यर्थः । अहर्धर्मत्वे दण्डकलितवदावृत्तिमुपपादयति—**अतश्चेति** । **उद्दिश्यमानस्येति** । यद्यपि प्रथमशब्दस्य सापेक्षत्वं तथापि भागधर्मत्वे प्रधानार्थत्वमिति तल्लिप्सया तस्यैवोद्देश्यसमर्पकत्वम् । नचात्यन्तसापेक्षमपि प्रकरणात्कर्तुर्बुद्धौ विपरिवर्तमानतया प्रथमशब्दश्रवणानन्तरमेव तदीयावयवबोधोत्पत्तिरिति भावः । **नवानामिति** । ततश्चैकस्य भागस्याहस्त्वाव्यभिचारादहःशब्दोऽनुवादतयोपपन्न इति भावः । **ननु** स्वस्थानविवृद्धावपि नवधा विभागः कृत्स्नस्यैव गवामयनस्य स्यात्तथाच नवधाविभागे मध्यमभागस्य शुक्राग्रत्वात्तन्मध्यगते त्रयस्त्रिंशेऽहनि सिद्धान्तिनोऽप्याग्रयणाग्रता न प्राप्नोतीति वक्ष्यमाणलिङ्गदर्शनानुपपत्तिरिति शङ्कानिराकरणार्थमुक्तम् । **पूर्वे पक्ष इति** । उत्तरे पक्षसि प्रातिलोम्यवचनेन सर्वस्य धर्मजातस्य पूर्वपक्षमात्रविषयत्वात्तस्यैव ''विभागो न कृत्स्नस्येति न लिङ्गदर्शनानुपपत्तिरिति भावः । **एवंचेति** । स्वस्थानविवृद्धौ सत्यामुत्तरस्य पक्षसः पञ्चमे त्रयस्त्रिंशाख्ये षाष्ठिकेहनि जगतीमित्यादिवाक्ये कीर्त्यमानमाग्रयणाग्रत्वमुपपन्नं, दण्डकलितवदावृत्तौ त्वनुपपन्नमित्यर्थः । उत्तरे पक्षसि प्रातिलोम्येनानुष्ठीयमाने गायत्र्यादीनि छन्दांसि जगतीं प्रत्यवरोहन्ति जगतीमादितः कृत्वानुष्ठेयानीति यावत् । ऐन्द्रवायवादयो ग्रहा आग्रयणं प्रत्यवरोहन्ति रथंतरादीनि पृष्ठानि बृहत्प्रत्यवरोहन्ति त्रिवृदादयस्तोमास्त्रयस्त्रिंशं स्तोमं प्रत्यवरोहन्तीति श्रुतेरर्थः । तदेवोपपादयति—**दण्डेति** । दण्डकलितवदावृत्तिरिति पूर्वपक्षे प्रायणीयचतुर्विंशाख्ये आद्ये अहनी वर्जयित्वाऽभिप्लवषडहादारभ्य त्र्यनीकानुष्ठेया । आद्ययोरैन्द्रवायवाग्रतायां आहत्य विधानेनादितः आरभ्यानुष्ठाने द्वितीयेऽहनि शुक्राग्रतापत्त्या वाचनिकैन्द्रवायवाग्रताविरोधप्रसङ्गात् । ततश्चाभिप्लवादारभ्य नवसु नवस्वहस्सु प्रवृत्तायाः त्र्यनीकाया एकोनविंशतिकृत्वा आवृत्त्यनन्तरं सप्ताहान्यवशिष्यन्त इति विंशतितमे पर्याये विषुवंतमुत्तरे पक्षस्याद्यं चाहर्व्याप्य परिसमापनीयत्वात्पूर्वस्मिन्पक्षसि यत्परिसमाप्तं तस्यैवोत्तरे पक्षसि प्रातिलोम्येनानुष्ठेयतया पूर्वत्रापरिसमाप्तायास्त्र्यनीकाया उत्तरत्र प्रातिलोम्यासंभवेनोत्तरपक्षस्यापि द्वितीयमहरारभ्यानुलोम्येनैव तस्यानुष्ठेयतया तदीयपञ्चमेहन्यैन्द्रवायवाग्रत्वापत्त्या आग्रयणाग्रत्वदर्शनमनुपपन्नं स्यादित्यर्थः । **स्वस्थानेति** । स्वस्थानविवृद्धौ तु आद्ययोरह्नोः यद्वाचनिकमैन्द्रवायवाग्रत्वं तद्विरोधाभावेनादित आरभ्य एव प्रवर्तमाना त्र्यनीका पूर्वस्मिन् पक्षसि नवधा विभक्ते परिसमाप्यत इत्यस्मिन्प्रातिलोम्यसंभवादुत्तरस्य प्रथमभागगते त्रयस्त्रिंशे आग्रयणाग्रतादर्शनमुपपन्नमित्यर्थः । प्रातिलोम्येनानुष्ठीयमानत्वे हेतुः **आवृत्तेरिति** । आवृत्तं पक्षं उपयन्ती-

भ्रम्। नह्यत्र चोदकेन त्र्यनीका प्राप्यते अभिप्लवेषु हि ज्योतिर्गौरायुरिति नामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः। एकाहेषु च रथंतरसामस्वैन्द्रवायवाग्रता बृहत्सामसु च शुक्राग्रता तेनाभिप्लवेऽपि षडहे प्रथमतृतीयपञ्चमानां रथंतरसामत्वादैन्द्रवायवाग्रता द्वितीयचतुर्थषष्ठानां बृहत्सामत्वाच्छुक्राग्रता नतु त्र्यनीकाप्राप्तिः चोदकादपि बलीयो नामधेयमित्युक्तं बहुशोऽभिप्लवविकाराण्येव गवामयनेऽहानि तेन न त्र्यनीका स्यादस्तु वा चोदकेन त्र्यनीकाप्राप्तिस्तथापि नवधा विभागो न युक्तः। नहि द्वादशाहे प्रायणीयोदयनीययोरन्तरालं नवभिरनीकैः पूरितं किंतु दशभिः दशमे चैन्द्रवायवाग्रता ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चेति वचनात्। अतश्च गवामयनेऽपि पूर्वस्मिन्पक्षसि दशधा विभज्यमाने दशमो भाग ऐन्द्रवायवाग्रः स्यात्, उत्तरस्मिंश्च पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमो भाग ऐन्द्रवायवाग्रः स्यात् तदन्तर्गतं च त्रयस्त्रिंशमहरिति तत्राप्यैन्द्रवायवाग्रताप्राप्तेराग्रयणाग्रतानुपपत्तिः सिद्धान्तेऽपि स्यात्। अपिच पूर्वपक्षेत्वहर्धर्मत्वात्त्र्यनीकायां गवामयनिके च पृष्ठ्यषडहे नामधेयेन द्वादशाहिकपृष्ठ्यषडहधर्मप्राप्तेस्तत्र च त्रयस्त्रिंशस्याह्न आग्रयणाग्रत्वादिहापि यत्रक्वचिदवस्थितस्यापि त्रयस्त्रिंशस्याग्रयणाग्रता भवतीति विपरीतं लिङ्गम्। अन्यानि च दूषणानि तन्त्ररत्न एव दर्शितानीति नेह प्रपञ्च्यन्ते। तस्माद्यथावार्तिकमधिकरणं वर्ण्यते। सत्यम्। न चोदकेन त्र्यनीका प्राप्यते प्रत्यक्षेण तु वचनेन त्र्यनीका विधीयते ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमिति। तत्र संशयः किमेते दण्डकलितवदावर्तनीया उत नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेश इति। तत्र प्रथममहरिति वचनादुत्तरेष्वप्यहर्गणस्यानुषङ्गात्प्रथमादह्न आरभ्यान्तादैन्द्रवायवशुक्राग्रयणानां व्यतिषङ्गेणाग्रत्वमनेन वचनेन विधीयते।

---

त्युत्तरे पक्षस्यावृत्तेर्विधानादित्यर्थः। अत्राभ्यासमात्रं नावृत्तिशब्दार्थः। तत्तदहरुत्पत्तिवाक्यैरेव स्तोमच्छन्दःप्रभृतीनामभ्यासस्य सिद्धत्वात्षड्भिरितो मासैरध्वानं यन्ति षड्भिः पुनरायन्तीति दर्शनाच्च। अतएवापस्तम्बसूत्रे प्रवर्ग्यव्रतादेशे आवृत्तैर्मन्त्रैः समिध आधायावृत्तैर्देवता उपतिष्ठन्त इति प्रातिलोम्यमावृत्तशब्देन व्यवहृतमिति भावः। **अभिप्लवेष्विति।** 'ज्योतिर्गौरायुर्गौर्ज्योति'रित्याभिप्लविकानां षण्णामप्यह्नां ज्योतिरादिनामकत्वादेकाहिकज्योतिरादिधर्मप्राप्तेरयुग्मेषु ऐन्द्रवायवाग्रता युग्मेषु शुक्राग्रता च प्राप्नोति नतु त्र्यनीकेत्यर्थः। **नन्वेवमपि** ऐकाहिकेष्वैन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्विकल्पाज्ज्योतिरादिनाम्नां युग्मायुग्मसाधारण्याच्च कथमियं व्यवस्थेत्याशङ्क्य रथंतरबृहत्सामभ्यां व्यवस्थोपपादिता। अयमर्थः—ऐकाहिकेषु ज्योतिरादिषु ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोर्न स्वतो विकल्पः किंतु निमित्तभूतयो रथंतरबृहतोर्विकल्पान्नैमित्तिकयोरप्यग्रतयोर्विकल्पः। एवंच ज्योतिरादिनामभिरप्यतिदेशस्तत्तत्सामनिमित्तकतयैवाग्रतयोर्वाच्यः। आभिप्लविकेषु चायुग्मानां रथंतरं युग्मानां बृहदिति साम्नोर्निमित्तभूतयोर्नियतत्वान्नैमित्तिकयोरग्रतयोरपि नियम एव नत्वव्यवस्थेति। **उक्तमिति।** सप्तम इति शेषः। **ननु** नामधेयप्राप्ताग्रतानुष्ठानेऽपि स्थानोपलक्षणत्वमाश्रित्य सर्वाण्यहानि संकलय्य त्र्यनीकाप्रवृत्तिर्युज्यते कथमन्यथौपदेशिकत्र्यनीकावादिनामाचार्याणामपि मते दण्डकलितवदावृत्तावपि विषुवतः जगत्सामत्वेन यदि जगत्सामाग्रयणाग्रानित्याग्रयणाग्रत्वात्तत्र शुक्राग्रत्वासंभवादित्यहरतीत्योत्तरपक्षसि आद्येऽहनि शुक्राग्रता द्वितीयेहनि आग्रयणाग्रतेत्येवमुत्तरपक्षसिद्धे अहनी व्याप्य त्र्यनीका परिसमाप्यसे नत्वेकमहरिति। तृतीयमैन्द्रवायवाग्रं चतुर्थं शुक्राग्रं त्रयस्त्रिंशं चाग्रयणाग्रमिति त्रयस्त्रिंशेऽहन्याग्रयणाग्रताया उपपत्तेः पूर्वपक्षिणं प्रति कथं तदनुपपत्तिरुद्भावनीया स्यादतो विषुवत आग्रयणाग्रत्वेऽपि स्थानोपलक्षणत्वमादाय त्र्यनीकाप्राप्तिरविरुद्धेत्यस्वरसादाह—**अस्तुवेति। अतश्चेति।** द्वादशाहिकप्रायणीयोदयनीयमध्यवृत्तिदशरात्रस्यैव विकृतिषु प्रवृत्तेरत्रैव पादे उक्तत्वात् इहापि दशधा विभाग एव न्याय्य इति भावः। **दशम इति।** ततश्च प्रातिलोम्ये तस्या एव प्राथम्यं स्यादिति भावः। **अहर्धर्मत्वादिति।** प्रथमादिशब्दश्रवणेऽपि न तद्विशिष्टाहर्धर्मत्वमपि विशिष्टोद्देशदोषप्रसङ्गात्तथाच प्रदेशान्तरगतस्यापि तद्धर्मत्वमुपपद्यत इत्याशयः। **अन्यानीति।** सिद्धान्ते यज्ञभागधर्मत्वात्त्र्यनीकाया यज्ञ एव नवधा विभज्यो न पूर्वपक्षः। नच प्रातिलोम्यविधिबलात्पूर्वस्मिन्नेव त्र्यनीकानिवेश इति तस्यैव नवधाविभाग इति वाच्यम्। प्रातिलोम्यवचनं हि यत्पूर्वस्मिन्कृतं तस्योत्तरस्मिन्प्रातिलोम्यमात्रं विधातुं क्षमते नतु साधारण्येन प्राप्तस्य पूर्वस्मिन्नेव नियमनमपि कर्तुं क्षमते। अतश्च सर्वस्यैव नवधा विभागे मध्यमभागगतस्य त्रयस्त्रिंशस्य शुक्राग्रताप्त्त्याग्रयणाग्रतानुपपत्तिः सिद्धान्तेऽपि स्यादित्यादित्यर्थः। **प्रत्यक्षेणेति।** तथाच नामधेयापेक्षया तस्य बलवत्त्वाज्ज्योतिरादिष्वपि त्र्यनीकैव भवतीति भावः। **नन्वेवमप्युत्तरेष्वहर्गणाभावाद्भागधर्मत्वं स्यादत** आह—**उत्तरेष्विति।** नन्वन्यतरस्योद्देशे कथं प्रथममित्यस्यैवोद्देशोऽत आह—**तत्राहरिति।** ननु प्रकरणात्प्रधानार्थत्वात्क्रतस्यैव

ऐन्द्रवायवाग्रता शुक्राग्रताग्रयणाग्रतेति त्रिष्वहस्सु तथा परेष्वपि त्रिषु एवमान्तात्कुर्यादिति वचनार्थं मन्यते पूर्वपक्षवादी । सिद्धान्तस्तु उद्दिश्यमानस्य भागस्याह्नो वा प्राथम्येन विशेषणासंभवात्प्रथम-महरिति चोद्देश्यं तत्राहरुद्देशेऽहर्मात्रोद्देशादथेति निर्देशानुपपत्तिः । तस्मात्प्रथममैन्द्रवायवाग्रमथ शुक्राग्रमित्येतावद्विवक्षितमहर्ग्रहणं त्वहःसंघाते । तस्मात्प्रथमादीनां भागानां धर्माः नवानां चाग्रतानां विधानान्नवधाविभागः । गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्पक्षसि निवि-शन्ते । अतश्च पूर्वं पक्षो नवधा विभज्य नवाप्यनीकानि निवेशनीयानि । तत्र चान्त्ये भागे आग्रय-णाग्रता भवति उत्तरस्मिंश्च पक्षसि यत्पूर्वस्मिन्पक्षसि विहितं तत्प्रातिलोम्येनानुष्ठेयम् । ततश्च प्रथमे भाग आग्रयणाग्रता भवति तदन्तर्गतं च पार्ष्ठिकं त्रयस्त्रिंशमहरिति तत्राग्रयणाग्रत्वदर्शनमुपपद्यते दण्डकलितवदावृत्तौ त्वाद्ये द्वे अहनी वर्जयित्वा त्र्यनीका प्रारब्धव्या तयोरैन्द्रवायवाग्रताया आहत्य विधानात् आदितो ह्यारभ्यमाणा सा द्वितीयेऽहनि आहत्य चोदितेनैन्द्रवायवाग्रत्वेन विरुध्येत । तस्माद्द्वे अहनी वर्जयित्वाभिप्लवादिकात्प्रथमादह्नस्त्रिवृत आरभ्य प्रवर्तते ततश्च पूर्वस्मिन्पक्षस्यन्तिमे पर्याये सप्तानामह्नां परिशेषादसमाप्तैव त्र्यनीका विषुवन्तमुत्तरस्मिंश्च पक्षस्येकमहर्व्याप्य समाप्यते ततश्चासौ पूर्वस्मिन्पक्षसि साकल्येनासंभवन्ती सामर्थ्यात्मकेन लिङ्गेनावान्तरप्रकरणं बाधित्वा महा-प्रकरणेन गवामयनस्य विधीयमाना न पूर्वस्य पक्षसो विहितेति शक्यं वक्तुम् । यच्च पूर्वस्य पक्षसो विहितं तस्योत्तरस्मिन्प्रातिलोम्यमिति न त्र्यनीकायाः प्रातिलोम्यमित्यानुलोम्येनैवासावान्तात्प्रवर्तेत इति त्र्यस्त्रिंशेऽहन्यैन्द्रवायवाग्रत्वप्रसङ्गादाग्रयणाग्रतानुपपत्तिः । सिद्धांते त्वविरोधादादित आरभ्य प्रवर्तते उत्तरे च पक्षसि प्रातिलोम्यं लभत इत्युपपन्नं लिङ्गम् ॥

व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

## छन्दोव्यतिक्रमाद्व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिव-चनमूहवत्स्यात् ॥ ८८ ॥

व्यूढे भक्षादिमन्त्राणामर्थानां च व्यतिक्रमः ॥ मन्त्राणामेव वाच्यः स्यादविशेषेण कीर्तनात् ॥ ४१ ॥
छन्दसां व्यत्ययः प्रोक्तो नार्थानां तेन मन्त्रगाः ॥ गायत्र्याद्या विपर्यास्या अर्थेषूक्तिः प्रशस्तये ॥ ४२ ॥

व्यूढाख्यके द्वादशाहे छन्दोव्यतिक्रम आम्नातः 'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्ययन् गाय-त्री त्रिष्टुभा त्रिष्टुप् जगत्या जगती गायत्र्या' इति तत्र संशयः किं भक्षाणां पवमानानां परिधीनां कपालानां

---

नवधा विभागः स्यादित्यत आह—**गवामिति । विरुध्येतेति ।** साचाहत्य विधानात्सामान्यविहितत्र्यनीकापेक्षया प्रबलेति भावः । स्थानोपलक्षणत्वाश्रयणेनादित आरभ्य प्रवृत्त्यभ्युपगमेऽपि उत्तरस्मिन्प्रातिलोम्ये त्रयस्त्रिंशे शुक्राग्रता स्यात् सर्वथाग्रयणाग्रतानुपपन्नेति भावः । एवंच यद्यप्यादित आरभ्य त्र्यनीकाप्रवृत्तावपि पूर्वपक्षे लिङ्गदर्शनानुपपत्तिर्वक्तुं शक्या, तथापि वस्तुगतिमनुरुध्याद्ये द्वे वर्जयित्वेत्युक्तं **सिद्धान्त इति ।** नचासत्यपि विरोधे आद्ये वर्जयित्वा त्र्यनी-काप्राप्तिः सिद्धान्तेपि वाच्या । अन्यथा तस्या भागधर्मत्वबलादेवाद्ययोरप्यैन्द्रवायवाग्रतायाः सिद्धत्वेन प्रातिस्विकवचन-वैयर्थ्यप्रसङ्गादिति वाच्यम् । भागधर्मत्वपक्षे परमापूर्वप्रयुक्तत्वेन पुनर्वचनस्य तत्तदहरपूर्वार्थतयोपपत्तेः तस्य प्रयोजनं तद्विकारेषु गवामयनधर्मातिदेशाभावेऽप्यैन्द्रवायवाग्रतासिद्धिरिति नानर्थक्यमिति भावः । सूत्रार्थस्तु पश्चैकादशिन्या इव त्र्यनीकाया दण्डकलितवदावृत्तिः स्यादिति ॥

**छन्दोव्यतिक्रमात् ॥ ८८ ॥** यथा पूर्वत्र प्रातिलोम्यबलादुत्तरपक्षसि छन्दःप्रभृतीनां व्यतिक्रमः तथेहापि भक्षप-वमानादीनां व्यतिक्रमात्स्वस्थानबाध इत्युत्थितेः संगतिः । **लोकमिति ।** स्थानमित्यर्थः । **भक्षाणामिति ।** वसुमद्ग्रह-णस्य 'सोमदेवत्ते मतिविदः प्रातःसवनस्य गायत्रछन्दस उपहूतस्योपहूतो भक्षयामी'ति मन्त्रे प्रातःसवने भक्षणीये सोमे गायत्रशब्दनिर्देशः 'माध्यंदिनस्य त्रिष्टुप्छन्दसः' इति मन्त्रे माध्यंदिने सवने भक्षणीये त्रिष्टुप्छन्दनिर्देशः 'तृतीयस्य सवनस्य जगतीछन्दस' इति मन्त्रे तृतीयसवने भक्षणीये जगतीशब्दनिर्देशः । पवमानेष्वपि 'श्येनोसि गायत्रछन्दाः सुपर्णोसि त्रिष्टुप्छन्दाः सघासि जगतीछन्दा' इति मन्त्रेषु गायत्रादिशब्दनिर्देशः । परिधिष्वपि 'गायत्रो मध्यमः परिधिः त्रैष्टुभो

१ प्रतीयमाना.

च मन्त्रार्थवादेषु गायत्र्यादिशब्दैरभिलापितानां मन्त्राणामर्थानां च छन्दांस्यतिक्रमयितव्यानि उत मन्त्रगतानामेव छन्दसां व्यतिक्रम इति। विशेषाभावात्सर्वेष्वर्थेषु मन्त्रेषु च छन्दोव्यतिक्रमस्तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षस्त्रैष्टुभशब्दस्य माध्यन्दिनीयस्य भक्षस्य स्थाने माध्यंदिने सवने कर्तव्यः, माध्यंदिनीयश्च जागतशब्दितस्य तार्तीयसवनिकस्य स्थाने तृतीयसवने, तार्तीयसवनिकश्च प्रातःसवने, तथा बहिष्पवमानो माध्यन्दिने, माध्यन्दिनपवमानस्तृतीयसवने, आर्भवः पवमानः प्रातःसवने, तथा मध्यमः परिधिः स्थविष्ठो दक्षिणस्य स्थाने, दक्षिणश्चाणीयानुत्तरस्य, उत्तरश्चाणिष्ठो मध्यमस्य स्थाने परिधातव्यः। तथाष्टाकपालो माध्यंदिने एकादशकपालस्तृतीयसवने द्वादशकपालश्च प्रातःसवने कर्तव्यः। तथा मन्त्रगता गायत्रादिशब्दाः 'श्येनोऽसि गायत्रछन्दा' इत्यादयस्त्रिष्टुबादिशब्दानां 'सुपर्णोसि त्रिष्टुप् छन्दा' इत्यादीनां स्थाने 'सुपर्णोसि गायत्रछन्दा' इत्येवमूहितव्या इति प्राप्ते ब्रूमः— मन्त्रगतानामेव व्यतिक्रमो नार्थानां न हि तेषां गायत्रादिशब्दवत्त्वमस्ति स्तुतिमात्रं तु तेषु गायत्र्यादिभिर्निर्देशः। शक्यते त्वेकस्मिन्मन्त्रे प्रकाशितं छन्दो मन्त्रान्तरे गायत्र्यादिशब्दप्रक्षेपेण प्रकाशयितुम्। तस्मान्मन्त्रगतानामेव छन्दसां व्यतिक्रमः॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य पञ्चमः पादः॥ ५॥

---

## दशमाध्याये षष्ठः पादः।

रथंतरादीनां साम्नां तृचे गानाधिकरणम्॥ १॥

### एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत्॥ १॥ [तृचे वा लिङ्गदर्शनात्॥ २॥]

सामैकस्यां तृचे वा स्यादाद्यः स्वाध्यायवद्भवेत्॥ वचनाल्लिङ्गसंयुक्तात्स्तोत्रे साम तृचे भवेत्॥ १॥

संति ज्योतिष्टोमे रथंतरादीनि स्तोत्रीयाणि सामानि, तानि किमेकैकस्यामृचि गेयान्युत तृचे इति संशये स्वाध्यायवेलायामेकस्यामृचि गीतत्वात्तद्वैलक्षण्याय यज्ञेऽप्येकस्यां भवेयुः 'एकं साम

---

दक्षिणो जागत उत्तर' इत्यर्थवादे गायत्रादिशब्दनिर्देशः। कपालेषु यद्यपि प्रातःसवनादिगताष्टाकपालादिषु तत्प्रकरणेन गायत्र्यादिशब्दनिर्देशस्तथापि 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यदेकादशकपालः त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाती' ति जातेष्टिप्रकरणाम्नातार्थवादेऽष्टाकपालादिषु गायत्र्यादिशब्दनिर्देशात्प्रातःसवनादिसंबन्धिनामप्यष्टाकपालत्वाद्यविशेषोक्तेष्वपि गायत्र्यादिशब्दनिर्देशो बोध्यः। किं मन्त्रगतगायत्र्यादिछन्दसां भक्षपवमानादीनां च सर्वेषां व्यतिक्रमः उत मन्त्रगतगायत्र्यादिछन्दसामेवेति संशयनिष्कर्षः। **विशेषेति**। छन्दसां स्वरूपेणान्योन्यस्थानप्राप्तिलक्षणव्यतिक्रमासंभवान्मन्त्रगतगायत्र्यादिशब्दानां छन्दोवाचकतया तत्संबन्धित्वमात्रेण व्यतिक्रमो वाच्यः। गायत्र्यादिछन्दःसंबन्धित्वं च मन्त्रे वार्थवादे वा गौण्या लक्षणया वा तच्छब्दनिर्देशमात्रेणार्थानामप्यस्तीति छन्दःसंबन्धित्वाविशेषात्सर्वेषां व्यतिक्रम इत्यर्थः। एवंच 'श्येनोऽसि गायत्रछन्दा' इत्यादेर्बहुव्रीहित्वेनान्यपदार्थभूते पवमानेन गायत्रशब्दनिर्देश इति शङ्काया अप्यनवकाशः। यथाकथंचित्संबन्धित्वमात्रस्यैव प्रयोजकत्वादिति ध्येयम्। छन्दसां स्वरूपेण व्यतिक्रमो नास्तीति यदुक्तं तत्राह—**शक्यत इति**। प्रातःसवनिके मन्त्रे बहिष्पवमानसंबन्धित्वेन प्रकाशितं गायत्रं छन्दस्तस्माद्बहिष्पवमानलक्षणात्स्थानादपोद्धृत्य माध्यंदिनसवनिके मन्त्रे गायत्रशब्दप्रक्षेपेण माध्यंदिनपवमानसंबन्धित्वेन प्रकाशितं चेन्माध्यंदिनपवमानस्थानगतत्रिष्टुप्छन्दःस्थानापन्नं भवतीति मुख्यानामेव छन्दसां व्यतिक्रम इत्यर्थः। सूत्रार्थस्तु —भक्षादीनां मध्ये यथाशक्ति छन्दःशब्दमुख्यवृत्त्यनुसारेण छन्दसामेव व्यतिक्रमात्तेषां वचनमूहवत्स्यादिति॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमस्याध्यायस्य पञ्चमः पादः॥ ५॥**

**एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत्॥ १॥** स्वाध्यायप्राप्तैकर्चस्थत्वबाधो विध्यन्तरादिति पादान्तरता। यद्वा सामविषये बाधः प्राधान्येनात्र चिन्त्यत इति पादान्तरता पूर्वत्र वचनबलात् 'सुपर्णोऽसि गायत्रछन्दा' इत्ययथास्वाध्यायत्वेपीह यथास्वाध्यायस्थमेवेत्युत्थानात्पादावान्तरसंगतिश्चेत्याहुः। वस्तुतस्तु एकाहाहर्गणात्मकसोमयागविषयो बाधोऽत्र व्युत्पाद्यते इति पादान्तरत्वं बोध्यम्। यानि तृचोत्पन्नानि सामानि सीमासंतन्यादीनि तेषु तृचगाने विवादाभावान्न तेषां विषयत्वं किंत्वेकर्चोत्पन्नानामेवेत्याशयेनाह—**रथंतरादीति**। **तद्वैलक्षण्यायेति**। अन्यथा स्वाध्यायप्राप्तमेकर्च-

तृचे क्रियते' इति वर्तमाननिर्देशरूपं न विधिक्षममित्येतावान्पूर्वः पक्षः । ऋक्सामोवाचेत्याद्यर्थवाद-विभावितविधिशक्के 'एकं साम तृचे क्रियत' इति वचनात्तृचे गातव्यानीति सिद्धान्तः ॥

स्वर्दृक्शब्देन वीक्षणस्य कालार्थताधिकरणम् ॥ २ ॥

## स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

**स्वर्दृक्शब्दे वीक्षणे च किं स्यादङ्गाङ्गिताऽथ वा ॥ मीलनावधिताद्योऽस्तु भिन्नवाक्येन तद्विधेः ॥ २ ॥**
**प्रतिशब्देनावधिर्हि द्योत्यो वाक्यं न भिद्यते ॥ सत्येवं मीलनस्यापि विधिर्नोत्तरयोर्भवेत् ॥ ३ ॥**

रथंतरे प्रस्तूयमाने संमीलयेदिति विधाय श्रूयते 'स्वर्दृशं प्रतिवीक्षेते'ति । तत्र संदेहः किं स्वर्दृक्शब्दस्य वीक्षणस्य च कालार्थः संयोगः उताङ्गाङ्गिसंबन्ध इति । तत्र कालार्थत्वे स्वर्दृक्शब्दस्य लक्षणाप्रसङ्गादङ्गाङ्गिसंबन्ध एव न्याय्यः स्वर्दृक्शब्दो वा वीक्षणाङ्गं स्वर्दृक्शब्दं समुच्चारयन्वीक्षेत नान्यथेति वीक्षणं वा स्वर्दृक्शब्दस्याङ्गं वीक्षमाणः स्वर्दृक्शब्दमुच्चारयेन्नान्यथेति प्राप्ते ब्रूमः— 'अनपेक्षितसंबन्धाद्वाक्यभेदप्रसङ्गतः ॥ न युक्तोऽङ्गाङ्गिसंबन्धस्तस्मात्कालार्थता वरम् ॥' अभिवत्ये-कदेशो हि स्वर्दृक्शब्दः पृष्ठस्तुत्यर्थत्वान्न वीक्षणं प्रयोजनमपेक्षते स्वर्दृक्शब्दः कर्तृवचनत्वाद्धिती-यान्तत्वाच्च नोनुम इत्यनेन संबध्यमानः स्तुतिमेवालमभिनिर्वर्तयितुं न वीक्षणं प्रकाशयितुम् । तथा वीक्षणमपि रागप्राप्तं दृष्टेनैव प्रयोजनेन निराकाङ्क्षं न स्वर्दृक्शब्दाङ्गतया विधातव्यं संमीलनविधि-

---

स्थत्वं बाध्येत । तथा तृचगाने सति स्वाध्यायप्राप्तसामस्वरूपस्योहलक्षणविकारश्चापद्येतेत्यर्थः । **न विधीति** । तथाच तृचोत्पन्नसामसु प्राप्ततृचगानानुवादकमित्यर्थः । एवंच 'मघोन्यां तदुत्तरयोर्गायती'त्यादिकमपि तद्विषयमेवेति भावः । **ऋक्सामेति** । 'ऋक्सामोवाच मिथुनीसंभवावेति सोऽब्रवीन्नैव त्वं ममालमसि ते द्वे भूत्वोचतुर्मिथुनीसंभवावेति सोऽब्रवी-न्नैव युवां ममालं स्थस्तास्तिस्रो भूत्वोचुर्मिथुनीसंभवामेति सोऽब्रवीत्संभवामेति तस्मादेकं साम तृचे क्रियते स्तोत्रीय'मिति सार्थवादकस्य श्रवणादर्थवादे च ऋक्लक्षणस्त्रियाः सामपुरुषेण एकां द्वे च प्रत्याख्याय तिसृणामृचामङ्गीकाराभिधानेन तत्प्रशंसावगमबलेन वर्तमानोपदेशस्यापि विधिशक्तिरुत्तभ्यत इति एकर्चोत्पन्नसामसु तृचगानविधायकत्वमेवास्य नतु निर-र्थकानुवादत्वमित्यर्थः । सूत्रे रथंतरादीनुद्दिश्येत्यध्याहारः ॥

**स्वर्दृशं प्रतिवीक्षण० ॥ ३ ॥** पूर्ववदिहापि निरर्थकानुवादायोगाद्वीक्षणविधिरेव वाच्य इत्युत्थितेः संगतिः । **तत्रेति** । कालार्थत्वपक्षे स्वर्दृक्शब्दार्थस्य स्वर्गदर्शनस्येन्द्रनिष्ठस्योद्गातृवीक्षणकालोपलक्षणत्वासंभवात्स्वर्दृक्शब्देनार्थवाचकेन स्वर्दृक्शब्दः प्रथमं लक्षणीयः तेन च स्वर्दृक्शब्दकाले वीक्षेतेति काल उपलक्षणीयः । अङ्गाङ्गिभावपक्षे तु स्वर्दृक्शब्दस्य स्वस्मिँल्लक्षणामात्रमिति स एव युक्त इत्यर्थः । वीक्षणोपलक्षणार्थतया स्वार्थोच्चारणाभावात्परार्थं स्वर्दृक्शब्दोच्चारणं स्यादि-त्येव लक्षणाशब्देन विवक्षितं नतु लक्षणावृत्तिरिति वृक्षंप्रति वियोतते विद्युदित्यादौ कर्मप्रवचनीययोगस्थले लक्षणावृत्तिं विनैव लक्ष्यलक्षणसंबन्धप्रतीत्युत्पत्तेरिति ध्येयम् । **स्वर्दृक्शब्द इति** । अत्र यद्यप्यङ्गाङ्गिभावलक्षणसंबन्धे कर्मप्रवचनी-यसंज्ञाया विधानाभावात्तस्मिन्नपि पक्षे कर्मप्रवचनीययोगलक्षणद्वितीयाप्रयोगबलाल्लक्ष्यलक्षणसंबन्धप्रतियोगिता प्रतीयते । तथाऽपि न तत्र शब्दस्य तात्पर्यं उक्तरीत्या परार्थत्वापत्तेः किंतु लक्ष्यलक्षणभावनिग्रहणेन संबन्धमात्रे तात्पर्यमवतार्य संबन्ध······भावलक्षण इत्येवं पर्यवसायिते तद्बलादर्थप्राप्तो लक्ष्यलक्षणभावः पश्चादनूद्यते इत्येवं स्वर्दृक्शब्दस्य वीक्षणा-ङ्गत्वमुपपादनीयं वीक्षणस्य स्वर्दृक्शब्दाङ्गत्वे तु प्रतिशब्दो निरर्थक इत्याश्रित्य वीक्षणेन स्वर्दृक्शब्दं संस्कुर्यादित्येवं कर्म-णिद्वितीययैवोपपाद्यमिति विवेकः । स्वर्दृक्शब्दस्य वीक्षणाङ्गत्वविधावनपेक्षितत्वमुपपादयति—**अभिवतीति** । 'अभि-त्वाशूरनोनुम'इत्यस्या ऋच एकदेशभूतः स्वर्दृक्शब्दः । सा च ऋक् क्रमप्रकरणाभ्यां स्तोत्राङ्गत्वेन विनियुक्ता तदेकवाक्य-तया च तदेकदेशस्य स्वर्दृक्शब्दस्यापि स्तुत्यर्थतया निराकाङ्क्षत्वान्न वीक्षणापेक्षेत्यर्थः । ननु निराकाङ्क्षस्यापि वचनाद्वीक्षणे विनियोगः पुरोडाशकपालस्य तुषोपवापे इव किं न स्यादत आह—**स्वर्दृक्शब्द इति** । नच संपदादित्वाद्भावे क्विपमा-श्रित्य वीक्षणेऽपि सामर्थ्यमुपपादयितुं शक्यमिति वाच्यम् । तथासति स्वशब्दानर्थक्यापत्तेरतः स्वःपदे कर्मार्थक उपपदे क्विप् कर्त्रर्थक एवेत्यर्थः । **द्वितीयेति** । द्वितीयान्तशब्दसामानाधिकरण्येन नोनुम इत्यनेनैव संबन्ध इत्यर्थः । तथाच प्रकाशनाय दृष्टद्वारा वीक्षणे विनियोगासंभव,दृष्टद्वारा विनियोगस्य चात्यन्तजघन्यत्वाद्वीक्षणस्य रागप्राप्तस्य क्रत्वङ्गत्वाभा-वेन तादर्थ्ये आनर्थक्यप्रसङ्गाच्च न वचनबलादपि वीक्षणे विनियोग इति भावः । वीक्षणस्य स्वर्दृक्शब्दाङ्गत्वविधेरप्यनपे-क्षितत्वमुपपादयति—**तथेति** । एवं पक्षद्वयेऽप्यनपेक्षितविधानमुपपाद्य वाक्यभेदप्रसङ्गं विवृणोति—**संमीलनेति** । वीक्षणस्वर्दृशोरङ्गाङ्गिभावविधौ संमीलनविधिसंस्पर्शाभावाद्वाक्यभेदः स्यात् स्वपक्षे तु संमीलनविधिनाऽवधेरपेक्षितत्वामान-

ना वावधिप्रतिपादनेनैकार्थ्यसंभवान्न वाक्यान्तरत्वमवकल्प्यते । प्रतिशब्दश्च स्वर्दृक्शब्दस्य श्रुत्यैव लक्षणतामाचष्टे । अतः काललक्षणैव न्याय्या । तेनायमर्थः रथंतरे प्रस्तूयमाने संमीलयेदास्वर्दृक्शब्दोच्चारणात्तस्मिंस्तु काले वीक्षेतेति ॥

गवामयने पृष्ठ्यषडहे बृहद्रथंतरयोर्विभागाधिकरणम् ॥ ३ ॥

**पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥ ४ ॥ [विभक्ते वा समस्तविधानात्तद्विभागे विप्रतिषिद्धम् ॥ ५ ॥]**

गवामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम् ॥ बृहद्रथंतरं चोत भवेत्किंचित्कचिद्दिने ॥ ४ ॥

द्वन्द्वगर्भबहुव्रीहेराद्योऽन्त्योऽपि समो ह्यसौ ॥ अन्योन्यनिरपेक्षस्य चोदकादन्तिमो भवेत् ॥ ५ ॥

द्वादशाहे पृष्ठ्यः षडह उत्पन्नः तत्र षण्णामप्यह्नां क्रमेण रथंतरबृहद्वैरूपवैराजशाकररैवतानि पृष्ठसामानि । गवामयनादिषु श्रूयते 'पृष्ठ्यः षडहो बृहद्रथंतरसामा कार्य' इति । तेन वैरूपादिकं निवर्तते । बृहद्रथंतराभ्यामेव पृष्ठस्तुतिर्निर्वर्तयितव्या । तत्र संशयः किमेकैकस्मिन्नहनि द्वे द्वे स्यातां उत कचिद्बृहत्कचिद्रथंतरमिति । तदर्थमिदं विचार्यते किंबृहद्रथंतरसामेति द्वन्द्वगर्भो बहुव्रीहिः बृहच्च रथंतरं च बृहद्रथंतरे इति प्रथमं द्वन्द्वं कृत्वा पश्चाद्बृहद्रथंतरे सामनी अस्येत्यन्यपदार्थो बहुव्रीहिः उताकृत्वैव द्वन्द्वमनेकपदबहुव्रीहिः बृहच्च रथंतरं च सामास्येति । तत्र 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य-

---

पेक्षितविधानदोषो न वा वाक्यभेद इत्यर्थः । प्रतिना कर्मप्रवचनीयेन श्रुत्यैवान्योपलक्षणार्थत्वप्रतीतेः परार्थ्यमपि न दोष इत्याह—**प्रतिशब्द इति** । ननु तवापि रथंतरे प्रस्तूयमाने इत्यनेन संमीलनविधिः 'स्वर्दृशंप्रति वीक्षेते'त्यनेन तत्रावधिविधिरिति वाक्यभेदो दुर्वार इत्यत आह—**तेनेति** । संमीलनस्य स्वर्दृक्शब्दोच्चारणावधित्वे ततः परं संमीलनाभावादागप्राप्तं वीक्षणं वीक्षेतेत्यनेनानूद्य इत्याशयेनाह—**तस्मिन्निति** । ननु कालार्थसंयोगे अङ्गाङ्गिभावे वा कोनुष्ठाने विशेष इतिचेदत्र केचिद्वीक्षणस्य स्वर्दृक्शब्दाङ्गत्वे यस्यामृचि स्वर्दृक्शब्दस्तत्रैव वीक्षणं वचनाद्यत्र ऋगन्तरे गानं तत्र न वीक्षणं उपलक्षणत्वे तु उपलक्षणीभूतस्वर्दृक्शब्दाभावेपि उपलक्षणस्य कालस्यानपायात्स्वर्दृक्शब्दाभिव्यञ्जकगीतिकाले वीक्षणसिद्धिरिति प्रयोजनमाहुः तच्चिन्त्यम् । कवत्या विकृतिगतायाः प्राकृताभिवतीस्थानापन्नतया स्वर्दृक्शब्दस्थानापन्ने कवतीगतपदान्तरेपि वीक्षणप्राप्तेरनिवार्यत्वात् तस्मात्प्रकृतावेव रथंतरमुत्तरयोर्गायतीतिवचनादुत्तरयोर्यदा रथंतरं गीयते तदोत्तरयोरभिवतीस्थानापन्नत्वाभावेन स्वर्दृक्शब्दाङ्गत्वेन तत्र न वीक्षणं सिद्धान्ते तु तत्रापि वीक्षणमिति प्रयोजनं द्रष्टव्यम् अतएव भाष्येपि रथंतरमुत्तरयोरित्युदाहृत्य प्रयोजनमुक्तमिति । सूत्रार्थस्तु—स्वर्दृक्शब्दस्य स्तुत्यर्थत्वाद्वीक्षणकालोपलक्षणमात्रमिति ॥

**पृष्ठ्यस्य युगपत्०** ॥ ४ ॥ **द्वादशाह इति** । संसवादिष्विव न समुच्चयमात्रविधिसंभवः तृतीयादिष्वहस्सु वैरूपादिव्यावृत्त्यर्थं सामरूपस्यापि विधेयत्वात्तथाच रथंतरबृहतोः षडहसंबन्धः तयोश्च परस्परसाहित्यं विधेयमिति विधिगौरवं पूर्वपक्षे सूचयितुं द्वादशाहगतपृष्ठ्यषडहस्वरूपकथनपूर्वकवैरूपादिनिवृत्त्यर्थत्वोक्तिः । **तदर्थमिति** । नच द्वन्द्वगर्भबहुव्रीहौ बृहद्रथंतरशब्दस्यान्तोदात्तत्वं अनेकपदबहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण बृहच्छब्दाकारस्योदात्तत्वमिति स्वरभेदाद्यः समासोध्ययनसिद्धस्वरानुगुणः स एव ग्राह्य इति कथमयं विचार इति वाच्यम् । वेदे बहुषु स्थलेषु स्वरव्यत्ययदर्शनेन स्वरमात्रादर्थनिर्णयासंभवेन न्यायत एवार्थनिर्णयस्य वाच्यत्वात्, अन्यथा पूर्वोत्तरपक्षयोः समासभेदेन प्रवृत्तानां बहूनामधिकरणानामनुन्मेषप्रसङ्गादिति भावः । पूर्वत्र वीक्षणस्यार्थप्राप्तत्वादविधेयत्वेपीह समुच्चयस्याप्राप्तत्वाद्विधेयत्वमित्युत्थितेः संगतिः । **तत्रेति** । नन्वस्मिन्वार्तिके उत्तरपदे परतः समास उच्यते उत्तरपदं च सतिसमासे भवति प्रथममनेकपदबहुव्रीहिस्ततः सामशब्द उत्तरपदे परतो बृहद्रथंतरपदयोर्द्वन्द्वो वाच्यस्तथाच प्रथमं द्वन्द्वं कृत्वा पश्चाद्बहुव्रीहिरिति पूर्वपक्षप्रवर्तनमयुक्तमिति चेत् । भवेदेवं यदि वार्तिके उत्तरपदे इति परसप्तमी स्यात् । नचात्र परसप्तमी संभवति । तथाहि समास इत्यन्वर्थसंज्ञेयं समसनं संक्षेप एकार्थीभावः समास इति । संक्षेपश्च प्रागसंक्षिप्तानां कर्तव्यः यदि पूर्वं बहुव्रीहिः प्रवर्तेत ततो एकार्थीभावलक्षणसंक्षेपस्य सिद्धत्वात्पुनः संक्षेपासंभवेन पश्चाद्द्वन्द्व एव न प्रवर्तेत । अतः परसप्तम्यसंभवाद्विषयसप्तम्येवेयमाश्रयणीया । तथाच बहुव्रीहेर्भावितमात्रेणोत्तरपदस्य विषयत्वसंभवात्प्रागेव बहुव्रीहेर्द्वन्द्व इति भावः । नच पश्चाद्भाविद्वन्द्वमादायापि साहित्योपपादनस्य कर्तुं शक्यत्वात्किमिति तान्त्रिकाणां द्वन्द्वप्राथम्ये आग्रह इति वाच्यम् । प्रथममनेकपदबहुव्रीहौ सति परस्परनिरपेक्षयोरेव बृहद्रथंतरयोरस्य पदेनान्वयात्तदविरोधेनैव द्वन्द्वगतसाहित्यस्य निर्वाह्य-

---

१ यत्र कवत्यादौ.

समासवचन'मिति कात्यायनवचनादेवं विषये द्वन्द्वस्य नित्यत्वात्कृत्वैव द्वन्द्वं बहुव्रीहिः । तेनेतरेतरयुक्तयोः साम्नोः षडहसंबन्धाद्यत्रैकं प्रयोक्तव्यं तत्रेतरेतरसहितमेव कार्यमित्येवमवगमादेकैकमेवाहो बृहद्रथंतरसामैकं कार्यमिति प्राप्ते ब्रूमः—कचित्किंचित्स्यात् एवमेकैकस्येतरेतरनिरपेक्षस्य प्रापकश्चोदकोऽनुगृहीतो भवति । नच वचनविरोधः । यद्यपि तावद्द्वन्द्वगर्भो बहुव्रीहिः स्यात्तथापि षडहापेक्ष एवेतरेतरयोगो द्वन्द्वेनावगम्यते न षडहावयवापेक्षः । षडहापेक्षश्चेतरेतरयोगः कचित्कस्यचिन्निवेशेऽपि न विरुध्यते तत्र यदि विभागेन निवेशे प्रमाणं स्यात्ततः सर्वत्रेतरेतरयोगः स्यात् अविशेषात् । अस्तितु प्रमाणं चोदकस्तस्मादेकस्मिन्नहन्येकमितरस्मिंश्चेतरत्प्रयोक्तव्यम् । नचावश्यं द्वन्द्वगर्भोऽयं बहुव्रीहिः । विभाषावचनेन द्वन्द्वस्यानित्यत्वात् । कात्यायनीयं तु वचनं शब्दानुशासनपरत्वाद्यत्र सतोर्द्वन्द्वतत्पुरुषयोरन्यशब्दरूपं असतोश्चान्यद्भवति तत्र समासकृतरूपनियमार्थम् । तद्यथा वाक्त्वचप्रियः पञ्चगवधन इत्यत्र द्वन्द्वतत्पुरुषयोरकरणे वाक् त्वक् प्रियः पञ्चगोधन इत्यकृत्वापि समासान्तं प्रयोगः प्रसज्येत । तद्व्यावृत्त्यर्थं नित्यसमासवचनम् । बृहद्रथंतरसामेत्यादिषु तु द्वेधापि स्वरूपस्याभेदान्न्यायतोऽर्थो निर्णेतव्य इति प्रत्येकप्रापिचोदकानुग्रहायानेकपदबहुव्रीह्याश्रयणम् । तस्मात्कचित्किंचित्प्रयोक्तव्यं न प्रत्यहं द्वे द्वे स्याताम् ॥

प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम् ॥ ४ ॥

**समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ [विहारप्रतिषेधाच्च ॥ ७ ॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥ विहारप्रकृतित्वाच्च ॥ ९ ॥ विशये च तदासत्तेः ॥ १० ॥ त्रयस्तथेति चेत् ॥ ११ ॥ न समत्वात्प्रयाजवत् ॥ १२ ॥]**

स्युरेकादशिनाः किं प्रायणीयोदयनीययोः ॥ प्रत्येकमखिलाः किंवा विभज्याः स्युस्तयोरपि ॥ ६ ॥
उद्देश्ययोः प्रधानत्वात्प्रत्येकं पशवोऽखिलाः ॥ नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे ॥ ७ ॥

द्वादशाहे श्रूयते 'एकादशिनान्प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्नि'ति । तत्र किं सर्वे प्राय-

---

तया समुच्चयासिद्धिप्रसङ्गेन प्रथमं द्वन्द्वः पश्चाद्बहुव्रीहिरित्यत्राग्रहात्प्रथमं द्वन्द्वे समुच्चयमुपपादयति—**तेनेति** । **चोदक इति** । द्वादशाहे पृष्ठ्यषडहे प्रथमद्वितीययोरह्नोर्निरपेक्षे एव बृहद्रथंतरे पृष्ठस्तुतिसाधने पृष्ठे इहापि नामधेयात्तथैव प्राप्तुतस्तथा वैरूपादीनामपि तृतीयादिष्वहस्सु निरपेक्षमेव साधनत्वमिति तत्स्थानापन्नयोरपि तयोर्निरपेक्षत्वमिति तदनुग्रहो भवतीत्यर्थः । **षडहेति** । यथा देवदत्तो मासं दधिपयोभ्यां भोजयितव्य इत्यत्र मासापेक्ष इतरेतरयोगो नतु तदवयवदिनापेक्षस्तद्वदिति भावः । **सर्वत्रेति** । षडहे तदवयवेचेत्यर्थः । **विभाषेति** । पाणिनिना महाविभाषारम्भेण द्वन्द्वस्यानित्यत्वात्तमकृत्वा।प बहुव्रीहिः कर्तुं शक्यत इत्यर्थः । **ननु** कात्यायनेनैतादृशस्थले द्वन्द्वस्य नित्यत्वाभिधानाद्यथोत्तरं च मुनीनां प्रामाण्यान्महाविभाषायास्तदितरविषयत्वकल्पनमेव किं न स्यादत आह—**कात्यायनीयमिति** । समासान्तमिति 'द्वन्द्वाच्चुदषहान्तात्समाहारे' 'गोरतद्धितलुकी'ति च टचमित्यर्थः । कात्यायनवचनस्य समासतदभावयोर्यत्र रूपान्यत्वं तद्विषयतया संकोचे पाणिनीयं विभाषावचनमेव मूलमिति भावः । वस्तुतस्तु रूपभेदवत्स्वरभेदस्याप्यनुशासनप्रयोजकत्वाविशेषाद्यथारूपभेदस्थले नित्यसमास एवं यत्र समासे सत्यन्यस्वरः असति चान्यस्तद्विषयत्वस्यापि कात्यायनवचनस्यावश्यंवक्तव्यत्वाद्बृहद्रथंतरसामादौ समासासमासयोरसत्यपि रूपभेदे स्वरभेदस्य सत्वेन नित्यद्वन्द्वसमासस्याश्रयणीयत्वात् यदा वृत्तिस्तदा सर्वेषां वृत्तिरिति वदतो महाभाष्यकारस्यासत्यपि रूपभेदे समुदायसमासमात्रेणावयवयोर्नित्यं द्वन्द्वतत्पुरुषयोरभिमतत्वाच्च द्वन्द्वसमासमङ्गीकृत्यैव षडहापेक्षया इतरेतरयोगाश्रयणेन प्रवर्तितः प्रथमसिद्धान्तप्रकार एव श्रेयानिति बोध्यम् । **कचित्किंचिदिति** । नात्राऽनियमोऽभिमतः । नवा पूर्वनिपातेन बृहतः प्राथम्यं किंतु प्रथमे रथंतरं द्वितीये बृहत् तृतीये रथंतरं चतुर्थे बृहत् पंचमे रथंतरं षष्ठे बृहदित्येवंरूपो नियम एवाभिमतः । अन्यथा गवामयने अवान्तरप्रकरणेन पूर्वपक्षस्यन्वितस्य बृहद्रथंतरसामत्वस्योत्तरे पक्षसि प्रातिलोम्येनानुष्ठाने 'जगतीं वै छन्दांसि प्रत्यवरोहन्ति आग्रयणं ग्रहा बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमाः' इति बृहतः प्राथम्यदर्शनमनुपपन्नं स्यात् । एवंच दर्शपूर्णमासाभ्यामित्यत्र दर्शशब्दस्येव पूर्वनिपातस्याल्पाच्तरत्वप्रयुक्तत्वेन न प्राथम्यप्रयोजकत्वमिति भावः । **सूत्रार्थस्तु—पृष्ठस्य बृहद्रथंतरस्य युगपद्विधौ संसर्गोसवायैकाहवदेकैकस्मिन्नहनि सामद्वयं स्यादिति** ॥

**समासस्त्वैकादशिनेषु०** ॥ ६ ॥ इह सत्यपि द्वन्द्वे साहित्याविवक्षितेत्युत्थितेः संगतिः । **प्रधानत्वेनेति** । प्राय-

---

१ प्रमाणं न स्यात्.

णीये सर्वे चोदयनीये आलब्धव्या उत विभज्य केचित्प्रायणीये केचिच्चोदयनीये इति संशये। प्रायणीयोदयनीययोः प्रधानत्वेनोद्देश्यत्वाद्द्वन्द्वावगतसाहित्यस्याविवक्षितत्वात्प्रतिप्रधानमेकादशिन आलब्धव्या इति प्राप्ते ब्रूमः— द्वादशाहप्रकरणे प्रागेव वचनान्तरेणैकादशिनी विहिता प्रकरणाद्द्वादशाहाङ्गत्वेनावगता सानुष्ठातव्या सती क्व प्रदेश आलब्धव्येत्यपेक्षायां देशविधित्सायां प्रायणीयोदयनीयौ श्रूयेते न प्रधानतया द्वादशाहस्य प्रधानस्यावगमात् देशश्चाङ्गं न च प्रत्यङ्गमावर्तते प्रधानं तस्माद्विभज्यालम्भः॥

सर्वपृष्ठे देशविशेषव्यवस्थाधिकरणम्॥ ५॥

## सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात्॥ १३॥ [विधेस्तु विप्रकर्षः स्यात्॥ १४॥]

**किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा॥ पृष्ठशब्दात्पृष्ठदेशे वचनात्तु व्यवस्थितिः॥ ८॥**

'विश्वजित्सर्वपृष्ठो भवती'ति श्रूयते। तत्र षाडहिकानां रथंतरादिपृष्ठानां विधिरिति स्थितं सप्तमे। तत्र संशयः किं षण्णामपि साम्नां पृष्ठस्तुतिसाधनत्वं ततश्च पृष्ठदेशे माध्यंदिनपवमानमैत्रावरुणसाम्नोर्मध्ये निवेश उत वैरूपस्यैव तत्साधनत्वेन तत्र निवेशोऽन्येषां स्तोत्रान्तरसाधनत्वेन तत्तद्देशे प्रयोग इति। तत्र षडहे तेषां पृष्ठसाधनत्वेनेहापि पृष्ठशब्देन तत्साधनत्वानुवगमात् पृष्ठदेश एव प्रयोगः सर्वेषामिति प्राप्ते ब्रूमः—'रथंतरं बहिःपवमाने कुर्यादार्भवे बृहन्मध्यत इतराणि वैरूपं

---

णीयोदयनीयशब्दयोरेकैकाहसंमितसोमयागार्थकत्वात्सोमयागस्य च प्रधानस्यैकादशिनपशुयागार्थतया विधानासंभवात्प्रायणीयोदयनीययोरुद्देश्यत्वमित्यर्थः। **द्वादशाहेति**। यदि प्रायणीयोदयनीययोरुद्देशेनैकादशिनानां विधिः स्यात्तदा तेषां प्रकरणे पुनर्विधानमनर्थकं स्यात्। नच प्रकरणपठितापेक्षया प्रायणीयोदयनीयवाक्ये कर्मान्तरविधिरिति शक्यं वक्तुम्। प्रकृतप्रत्यभिज्ञानात्। तस्मात्प्रायणीयोदयनीयोद्देशेनैकादशिनविध्यसंभवादेकादशिनोद्देशेन प्रायणीयोदयनीययोः प्रधानभूतयोर्विध्यसंभवाच्चागत्या प्रायणीयोदयनीयशब्दयोर्देशलक्षकतामङ्गीकृत्य तल्लक्षितोद्देश एकादशिनाङ्गत्वेन विधीयत इत्यर्थः। **ननु** प्रकरणे आम्नानमुत्पत्त्यर्थं प्रायणीयवाक्ये तु विनियोगार्थमस्तु अत आह—**द्वादशाहस्येति**। प्रकरणेनैव प्रकरणिविनियोगस्यापि सिद्धेरानर्थक्यमपरिहार्यमित्यर्थः। एवंच प्रकरणे एकादशिनाम्नानानर्थक्यापेक्षया प्रायणीयोदयनीयशब्दस्योपचार एव ज्यायान् प्राधान्ये सप्तम्यनुपपत्तिश्चेति भावः। **ननु** देशस्यानुपादेयत्वात्तदुद्देशेन कर्मैवोपादेयमिति तदापि साहित्यं न विवक्षार्हमत आह—**देशश्चेति**। देशोपि कथंचिदुपादेयः यद्वा अनुपादेयतया साहित्याविवक्षायामपि देशस्याङ्गत्वान्न तदनुसारेण प्रधानावृत्तिरित्यर्थः। सूत्रार्थस्तु—प्रायणीयोदयनीययोरैकादशिनानां समासः सामस्त्यं स्यात् प्रकृतौ ज्योतिष्टोमे सामस्त्यस्य दर्शना······तत्सूत्रभाष्यपर्यालोचनया द्वादशाहगतत्वं प्रायणीयोदयनीयवाक्यस्य प्रतीयत इति ग्रन्थकारेण तथैवोपन्यस्तम्। नच द्वादशाहमेकैकमालभेतेति श्रवणात्कथं तद्गतमिति वाच्यम्। उभयाम्नानबलादन्वहं कर्तव्यत्वस्य प्रायणीयोदयनीययोर्विभज्य कर्तव्यत्वस्य च विकल्पोपपत्तेः। अतएवच तन्त्ररत्ने 'तस्माच्चोदकप्राप्तः कृत्स्नालम्भो बाध्यत' इति ज्योतिष्टोमप्रकृतिकद्वादशाहगतत्वाशयेनैव चोदकप्राप्तज्यौतिष्टोमिककृत्स्नालम्भबाध उपसंहृतः। एवंच विहारप्रकृतित्वाच्चेति सिद्धान्तगुणसूत्रं विभागः प्राकृत एकादशिन्यामन्वहमेकैकमालभेतेति तस्यैव विकारः ऐकादशिनान्प्रायणीयोदयनीययोरालभेरन्निति तद्भाष्यं च विभागस्य संनिहितत्वाद्विभागशेषपरत्वं प्रायणीयवाक्यस्येत्येवंपरतया योज्यम् अन्यथा प्राथमिकसूत्रतद्भाष्यविरोधादिति ध्येयम्॥

**सर्वशब्दे पृष्ठशब्दात्०॥ १३॥** पूर्वत्र चोदकप्राप्तकृत्स्नालम्भबाधेऽपीह पृष्ठशब्दस्वारस्यबललब्धः **पृष्ठदेशो न** बाधनीय इत्युत्थितेः संगतिः। **ननु** सर्वपृष्ठवाक्यस्य चोदकाद्विकल्पेन प्राप्तबृहद्रथंतरपृष्ठसमुच्चयविधानार्थत्वेनोपपन्नत्वादिह षाडहिकानामभावात्कथं तेषां देशविशेषविचार इत्यत आह—**तत्रेति**। अनेकापेक्षस्य सर्वशब्दस्य द्वयोरसंभवात्षाडहिकविधिरेवायमिति सप्तमे व्यवस्थापितमित्यर्थः। **षण्णामिति**। बृहद्रथंतरवैरूपवैराजशाक्वररैवताख्यानां षण्णां साम्नामित्यर्थः। किं सर्वेषां पृष्ठदेशे निवेश उत वैरूपस्यैव तदर्थं च किं सर्वेषामिहपृष्ठस्तुतिसाधनत्वमुत वैरूपस्यैवेति संशयनिष्कर्षः। **तत्रेति**। षडहे पृष्ठस्तोत्रसाधनत्वेनावगतानां साम्नामिह पृष्ठशब्देन लक्षणया तत्तत्साधनत्वावगमात्तेनैव रूपेण विधानात्साधनत्वस्योपलक्षणत्वाङ्गीकारेण साम्नां स्वरूपेण प्रयोजनासंयुक्ततया विध्यङ्गीकारेपि तेषां प्रयोजनाकाङ्क्षायां षडहे निर्ज्ञातं पृष्ठस्तुतिलक्षणमेव प्रयोजनं स्वीकर्तुमुचितमिति तद्देश एव निवेश इत्यर्थः। **रथंतरमिति**। 'वैराजं ब्रह्मसाम शाक्वरं मैत्रावरुणसाम रैवतमच्छावाकसामे'त्यादिशब्दार्थः। **ननु** सति संभवे विशेषणत्वमेव युक्तम्। तथाच पृष्ठ-

होतुः पृष्ठ'इत्यादिवचनाद्वैरूपस्यैव पृष्ठसाधनत्वं इतराणि स्तोत्रान्तरसाधनानि। नच पृष्ठस्तुतौ प्रयुक्तानामेव पुनर्वचनात्स्तोत्रान्तरेपि प्रयोगोस्त्विति वाच्यम्। वैरूपस्य पृष्ठे विधेरानर्थक्यप्रसङ्गात्। किंच सर्वपृष्ठशब्देन लक्षणया पृष्ठसाधनभूतानि रथंतरादीनि सामानि षाडहिकानि विधीयन्ते। स्तुतेर्बहुत्वाभावेन सर्वशब्दविषयत्वासंभवात् तेषां च साम्नामिहातिदिष्टानां कार्याकाङ्क्षिणां वाचनिकैरेव कार्यैरुपपत्तौ को नाम सर्वेषां पृष्ठसाधनत्वं कल्पयेत्, तस्माद्विभज्यैव निवेशः॥

वैरूपवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम्॥ ६॥

**वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात्॥ १५॥ [पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात्॥ १६॥ त्रिवृद्वदिति चेत्॥१७॥ न प्रकृतावकृत्स्नसंयोगात्॥१८॥ विधित्वान्नेति चेत्॥ १९॥ स्याद्विशये तन्न्यायत्वात्कर्माविभागात्॥ २०॥ प्रकृतेश्चाविकारात्॥ २१॥]**

**कार्त्स्न्याद्वैरूपवैराजे उक्थ्यषोडशिनोरुत॥ पृष्ठे स्यात्क्रतुसंयोगादाद्योऽन्त्यः पृष्ठलिङ्गतः॥ ९॥**

उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामेत्यत्र किं वैरूपवैराजयोः साम्नोः सर्वेषु सामकार्येषु निवेश उत पृष्ठस्तुतावेवेति संशये विशेषाग्रहणात्सर्वेष्विति प्राप्ते प्रकृतावेवं विधस्य निर्देशस्य रथंतरसामा बृहत्सामा वेति पृष्ठविषये दृष्टत्वादिहापि तेन प्रकृतिलिङ्गेन पृष्ठस्तुतेर्बुद्धावारोहात्तद्द्वारेण च साम्नोः क्रतुसंबन्धोपपत्तेः पृष्ठसाधनस्यैव रथंतरादेर्विकारो वैरूपादिः॥

त्रिवृति स्तोमगतसंख्याविकाराधिकरणम्॥ ७॥

**त्रिवृति संख्यात्वात्सर्वसंख्याविकारः स्यात्॥ २२॥ [स्तोमस्य वा तल्लिङ्गत्वात्॥ २३॥]**

**त्रिवृदग्निष्टुदित्येतत्सर्वत्र स्तोम एव वा॥ आद्यस्त्रैगुण्यवाचित्वादन्त्यः स्तोमेऽस्य रूढितः॥ १०॥**

'त्रिवृदग्निष्टुदग्निष्टोमः' इति श्रूयते। त्रिवृच्छब्दोयं त्रैगुण्यवचनो लोके त्रिवृद्रज्जुरित्यादौ वेदे च

---

स्तुतिसाधनत्वेनैव रूपेणेह साम्नां विधानात्पृष्ठस्तुतिसाधनानामेव तेषां वचनात्स्तोत्रान्तरेष्वपि विनियोगोस्त्वित्याशङ्क्य निषेधति—**नचेति**। **वैरूपस्येति**। तथाचैकस्यैव वचनान्तरे पृष्ठस्तुतिसाधनत्वबलादिह विशेषणतापक्षो नोन्मिषतीति भावः। तस्मादुपलक्षणतापक्ष एव स्वीकार्यः। तत्रच प्रयोजनाकाङ्क्षाया वचनाच्छान्तेर्न पृष्ठस्तुतेः प्रयोजनत्वकल्पनं युक्तमित्याह—**किंचेति**। ननु पृष्ठशब्दे मुख्यार्थभूतस्तुतीनामेवात्र विधानमस्तु तथाच तत्साधनीभूतानां साम्नां पृष्ठदेश एव निवेश इत्यत आह—**स्तुतेरिति**। वस्तुतस्तु ऋग्भेदेन स्तुतिबहुत्वमुपपाद्य मुख्यत्वात्षाडहिकस्तुतीनामेवातिदेशो नतु साम्नां पृष्ठशब्दलक्षणाप्रसङ्गात्। रथंतरं पवमान इत्यादिवचनंच स्तुतीनामेव देशभेदविधानार्थं नतु साम्नां स्तोत्रान्तरत्वविधानार्थमिति सप्तम एवास्माभिः प्रतिपादितम्। तथाच षाडहिकस्तुतीनामेवातिदिष्टानां देशविशेषविचारपरमिदमधिकरणं नतु साम्नामिति वयं पश्यामः। दीपशिखाकृतस्तु साम्नामतिदेशः इति कृत्वाचिन्तयेदमधिकरणमित्याहुः। सूत्रार्थस्तु—सर्वशब्दे सर्वपृष्ठ इति यावत्। तत्र तेषां साम्नां पृष्ठस्तोत्राणां वा एकदेशत्वं स्यात्पृष्ठशब्दात्पृष्ठशब्दस्य च नियतदेशत्वादिति॥

**वैरूपसामा०॥ १५॥** पूर्वत्र यथा पृष्ठस्तोत्रातिरिक्तेष्वपि स्तोत्रेषु चोदकप्राप्तसामबाधस्तथेहापीत्युत्थितेः संगतिः। **विशेषेति**। पृष्ठसंयोगाश्रवणादित्यर्थः। तथाच यथा त्रिवृदग्निष्टुदग्निष्टोम इत्यत्र त्रिवृत्स्तोमः न पृष्ठस्तोत्रमात्रे किंतु सर्वेषु। एवमिहापि। वैरूपादेः सर्वेषु स्तोत्रेषु निवेश इत्यर्थः—**प्रकृताविति**। इह स्तोत्रसंबन्धो न श्रूयते किंतु साममात्रं क्रत्वङ्गतया श्रूयते तस्य च द्वारजिज्ञासायां यावदविशेषात्सर्वस्तोत्राणि द्वारतया कल्प्यन्ते ततः प्रागेव स्ववाक्यगतेन सामान्तबहुव्रीहिलक्षणप्रकृतिलिङ्गेनोपस्थितायाः पृष्ठस्तुतेरेव द्वारत्वकल्पनात्र सर्वान्वयः त्रिवृदग्निष्टोम इत्यादौ तु स्तोत्रविशेषोपस्थापकप्रकृतिलिङ्गाभावादविशेषात्सर्वस्तोत्रे त्रिवृत्त्वान्वय इति वैषम्यमिति भावः॥

**त्रिवृति संख्यात्वात्॥ २२॥ वेदेचेति**। अनेन लोके त्रैगुण्यार्थत्वेऽपि त्रिवृद्बहिष्पवमान इति प्रकृतौ स्तोत्रीयानवके प्रयोगात्पूर्ववत्प्रकृतिलिङ्गेन त्रिवृच्छब्देन स्तोत्रीयानवकग्रहणमेव युक्तमिति शङ्का निरस्ता। रशनात्रैगुण्यसाधारणस्य

रशनात्त्रिवृद्भवतीति प्रयोगादवगतः स्तोत्रीयानवकवचनोपि वेदेऽवगतः त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रीयाणां नवानामनुक्रमणात्तदेवमुभयार्थत्वे सति यत्र त्रिवृदग्निष्टुदित्यादौ वाक्यशेषादर्थविशेषो नावगम्यते तत्र विचार्यते किं त्रैगुण्यवचनः सन् सर्वेषां क्रतुसाधनानां संख्याविकारः उत स्तोत्रीयानवकवचनः सन् स्तोमस्यैव विकार इति । तत्र शास्त्रस्य महाविषयत्वलिप्सया सर्वद्रव्याणां त्रैगुण्यविधिरिति प्राप्ते ब्रूमः—त्रैगुण्यं ह्यसौ ब्रुवन्नवयवप्रसिध्या ब्रूयात् रूढ्या च स्तोत्रीयानवकं साच बलीयसी तस्मात्स्तोत्रीयासंख्याविकारस्त्रिवृत्त्वम् ॥

उभयसाम्नि बृहद्रथंतरयोः समुच्चयाधिकरणम् ॥ ८ ॥

**उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥ [पृष्ठार्थे वाऽतदर्थत्वात् ॥२५॥ लिङ्गदर्शनाच्च ॥ २६ ॥]**

**संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम् ॥ एकं प्रकृतिवद्विश्वजिद्वदन्यत्र चेतरत् ॥ ११ ॥**
**वचनाद्विश्वजित्येते सामनी स्तोत्रयोर्द्वयोः ॥ नेहास्ति तत्पृष्ठ एव साहित्यं स्यात्पुनर्विधेः ॥ १२ ॥**

यत्र संसवादौ 'उभे बृहद्रथंतरे भवत' इति श्रुतं तत्र किमुभयोः पृष्ठसाधनत्वं उतैकेन पृष्ठमितरेण स्तोत्रान्तरं साधयितव्यमिति संशये चोदकेन वैकल्पिकपृष्ठप्राप्तेस्तदनुग्रहायैकमेव पृष्ठसाधनमितरत्तु साम विश्वजिद्वत्स्तोत्रान्तरेपि स्यात् नैवं विश्वजिति वाचनिकः कार्यान्तरे निवेशो नत्विह तादृक्वचनमस्ति येन कार्यान्तरे निवेशः स्यात् तेन विकल्पेन प्राप्तयोः पृष्ठयोः समुच्चयमात्रं वचनेन क्रियते चोदकबाधस्तु स्तोत्रान्तरसाधनत्वेऽपि तुल्यस्तस्मात्पृष्ठ एव निवेशः ॥

---

प्रकृतिलिङ्गस्यासंभवादिति । अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरपि सूचिता । **स्तोत्रीयेति** । अयं चार्थस्त्रिपाद्यां व्यवस्थापित इति भावः । तर्हि तेनैव गतार्थत्वमित्यत आह—**यत्रेति** । यद्यपीहाक्तादिवद्वाक्यशेषान्न विशेषतात्पर्यमात्रनिश्चयः किंतु स्तोत्रीयानवकलक्षणार्थान्तरे शक्तिरेव वाक्यशेषानुगुण्येन कल्प्यते । कल्पितायां च तस्यां वाक्यशेषाभावस्थलेऽपि तस्या अनपायाद्वाक्यशेषाभावोऽकिंचित्करस्तथापि त्रैगुण्ये स्तोत्रीयानवके च शक्तेरविशेषाद्वाक्यशेषाभावस्थले स्तोत्रीयानवकरूपार्थपरत्वसिद्ध्यर्थं न्यायान्तरव्युत्पादनस्यावश्यकत्वादगतार्थत्वमिति भावः । **ननु** तर्हि उभयसाधारण्यात्कथं त्रैगुण्यपरत्वेन निर्णयः प्रत्युत चोदकाबाधाय नवकपरत्वमेव युक्तम्, तथाच कथं पूर्वपक्षोऽत आह—**तत्रेति** । **सर्वेति** । प्रकृतौ यानि द्रव्याणि संख्यायुक्तानि तेषां सर्वेषामित्यर्थः । रूढिरपि महाविषयत्वलिप्सया परित्याज्येति पूर्वपक्षिणोऽभिमानः । **अवयवेति** । त्रिभिर्गुणैर्निर्वर्त्यत इति व्युत्पत्त्येत्यर्थः । **साचेति** । तथाच शब्दशक्त्यनुसारेण प्रयोजनकल्पनेति रूढेः प्राबल्यानुसारेणाल्पविषयत्वमपि न दोष इति भावः । **तस्मादिति** । पञ्चदशत्वादिलक्षणस्तोमाख्याया संख्याया एव विकारः स्तोमत्वसामान्यादित्यर्थः ॥

**उभयसाम्नि० ॥ २४ ॥ चोदकेनेति** । नच चोदकेन पृष्ठयोर्विकल्पेन प्राप्तावप्येकस्मिन्पृष्ठे उभयोः साम्नोः समुच्चयसंभवादिदमयुक्तमिति वाच्यम् । नह्यत्रैकस्मिन्पृष्ठे उभयोः समुच्चय इति सिद्धांतिना स्वीक्रियते येनोक्तदोषः स्यात् किंतु रथंतरसाधनकं बृहत्साधनकं च पृष्ठद्वयं कर्तव्यमिति । तथाच किमुभयोः पृष्ठसाधनत्वमिति सिद्धान्तकोटेरयमर्थः रथंतरेणापि स्वसाध्यं पृष्ठं कर्तव्यं बृहतापि स्वसाध्यं पृष्ठं कर्तव्यमिति नतूभयोरेकस्मिन्पृष्ठे साधनत्वमिति । एवंच सामसमुच्चयमुखेन पृष्ठसमुच्चय एव वचनस्य तात्पर्यमिति सिद्धान्तिन आशयः । अयं चार्थो नवमे उभयसाम्नि चैवमर्थापत्तेरित्यत्राकर एव स्पष्टः । अतएवच पृष्ठयोः समुच्चयमात्रं वचनेन क्रियते इति सिद्धान्ते वक्ष्यति । तथाचोभयोः पृष्ठसाधनत्वे पृष्ठसमुच्चयावश्यंभावेन तद्विकल्पप्रापकानुग्रहो न स्यात् । अतस्तदनुग्रहायैकस्यैव पृष्ठस्तोत्रसाधनत्वमन्यस्य स्तोत्रांतरे निवेश इति पूर्वपक्षोपपादनस्य न काप्यनुपपत्तिः । चोदकानुग्रहोक्त्यैव पूर्वोक्तयथास्तोत्रीयासंख्यामात्रविकारत्वे इतरद्रव्येषु संख्याप्रापकचोदकानुग्रह एवमिहापि तदनुग्रहाय नोभयोः साधनमित्युत्थानात्सङ्गतिरित्यपि सूचितम् । **समुच्चयमात्रमिति** । नतु सामस्वरूपमपि विधीयत इति मात्रशब्दार्थः । तथाच सामस्वरूपस्याविधेयतया प्रयोजनाकाङ्क्षाभावात्स्तोत्रान्तरे निवेशशङ्कैव नास्तीति भावः । **तुल्य इति** । स्तोत्रान्तरे प्राकृतसामबाधावश्यंभावादिति भावः ॥

मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ॥ ९ ॥

**पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात्प्रकृतिवत् ॥ २७ ॥ [अन्ते वा कृतकालत्वात् ॥ २८ ॥]**

**त्रयस्त्रिंशारम्भणे किं तदन्ते मधुभोजनम् ॥ षडहान्तेऽथ वाद्यः स्यात्सांनिध्याद्वाक्यतोऽन्तिमः ॥ १३ ॥**

द्वादशाहे त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इति षडहं विधाय श्रूयते 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वे'ति । गवामयनादौ पृष्ठ्यषडहस्य प्रातिलोम्यं विहितं 'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्य'इति । तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनमुत षडहान्त इति । तत्र त्रयस्त्रिंशेऽहनि प्रकृतावनुष्ठितत्वात्तदङ्गं मध्वशनं मन्वानः पूर्वानुष्ठिते त्रयस्त्रिंशे तदन्त एव मध्वशनं मन्यते । सिद्धान्तस्तु—'द्वादशाहाङ्गता ह्यस्य गम्यते प्रक्रियावशात् ॥ वाक्याद्वा षडहाङ्गत्वं त्रयस्त्रिंशाङ्गताक्रमात् ॥' अनुष्ठानसंनिधिलक्षणेन हि क्रमेण त्रयस्त्रिंशाङ्गता मध्वशनस्य स्यात् प्रकरणात्तु द्वादशाहाङ्गत्वं षडहाङ्गत्वं समभिव्याहाराद्वा । तत्र सत्यपि संस्थाशब्दे वैमृधवत्पौर्णमास्याः षडहस्यैवाङ्गं षडहावसाने च विधीयते न त्रयस्त्रिंशावसाने । तस्मात्षडहान्ते स्यात् ॥

षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणम् ॥ १० ॥

**अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥ [अन्ते वा कृतकालत्वात् ॥ ३० ॥]**

**अभ्यस्ते षडहे भुक्तिमभ्यस्येत्किं न वाऽग्रिमः ॥ स्तोत्रशस्त्रादिवन्नैवं संस्थिते तद्विधानतः ॥ १४ ॥**

यत्र षडहस्य पुनः **प्रयोगः** तत्र किं मध्वशनस्य पुनः प्रयोगः उत सर्वाभ्यासान्ते सकृदिति संशये षडहाङ्गत्वात्तदावृत्तावावृत्तिः षडहसंस्थायाश्च पुनः पुनर्भावात्तन्निमित्तं मध्वशनमावर्तनीयम् । नैवं संस्था नाम तद्विषयकव्यापारोपरमः पुनः प्रवर्तमानस्य च नोपरमोऽस्ति तस्मात्सत्यप्यङ्गत्वे निमित्ताभावान्नावृत्तिः । अङ्गत्वनिराकरणं तु भाष्येऽतिशयोक्तमिति नातीवादर्तव्यम् ॥

---

**पृष्ठे रसभोजनम्० ॥ २७ ॥** पूर्वत्र चोदकप्राप्तविकल्पबाधेपीह तत्प्राप्तक्रमस्य न बाध इत्युत्थितेः संगतिः । **त्रयस्त्रिंश इति** । द्वावत्र पूर्वपक्षप्रकारौ एको मध्वशनस्य त्रयस्त्रिंशेऽहन्यनुष्ठितत्वादनुष्ठानसादेश्येन तदङ्गमेवेदमतस्तत्रैवानुष्ठेयमिति द्वितीयस्तु माभून्नाम त्रयस्त्रिंशाङ्गं द्वादशाहस्य षडहस्य वाङ्गमस्तु । तथापि प्रकृतौ त्रयस्त्रिंशेहन्यनुष्ठितत्वादिहापि तस्मिन्नेवाहन्यनुष्ठेयमिति एवं चानुष्ठितत्वादित्यस्याङ्गत्वे **हेतुत्ववत्** । तदन्त एव मध्वशनमित्यत्रापि हेतुत्वं बोध्यम् । **ननु** संस्थितस्य षडहस्य नाङ्गविधिः संभवतीत्यत आह—**सत्यपीति** । संस्थाप्य पौर्णमासं वैमृधमनुनिर्वपेदितिवत् तद्यतिरिक्ताङ्गापेक्षया संस्थाशब्दोपपत्तिरिति भावः । द्वितीयं पूर्वपक्षं दूषयति—**षडहावसान इति** । तथाच षडहावसाने विधानात्प्रकृतौ च त्रयस्त्रिंशस्य षडहान्तत्वादर्थात्त्रयस्त्रिंशेऽनुष्ठानं नचार्थिकं चोदकः प्रतिदिशति येनेहापि त्रयस्त्रिंशे एवानुष्ठानं स्यादिति भावः । सूत्रे रसभोजनं मध्वशनं घृताशनं वा आवृत्तेः प्रातिलोम्येनानुष्ठीयमान इत्यर्थः ॥

**अभ्यासे च० ॥ २९ ॥ षडहाङ्गत्वादिति** । अनेनैव पूर्वोक्तषडहाङ्गत्वोपजीवनात्संगतिरपि सूचिता । **ननु** संस्थिते इति सप्तमीश्रवणात्संस्थायां निमित्ते षडहस्य नैमित्तिकमिदमङ्गं संस्था च सर्वाभ्यासान्त इति तन्निमित्तिकमध्वशनमपि तत्रैव कर्तव्यमित्यत आह—**संस्थायाश्चेति** । संस्था हि समाप्तिः सा च प्रत्यभ्यासमस्तीति नैमित्तिकस्याप्यावृत्तिः स्यादित्यर्थः । **नैवमिति** । प्रत्यभ्यासं तत्तदभ्यासस्यैव समाप्तिर्नतु षडहस्य तद्विषयकव्यापारानुवृत्त्या तदुपरमलक्षणसमाप्त्यभावादिति भावः । **सत्यपीति** । प्रयाजादिवदनैमित्तिकाङ्गत्वाभावान्न प्रधानावृत्तिमात्रेणावृत्तिः किंतु निमित्तावृत्त्या । इहतु निमित्तावृत्त्यभावान्न वृत्तिरित्यर्थः । **अङ्गत्वनिराकरणंत्विति** । षडहाङ्गत्वेऽप्युक्तरीत्या वृत्त्यभावसंभवात्संस्थासंयोगादेरङ्गत्वनिराकरणहेतोः सुपरिहरत्वाचेति भावः । सूत्रार्थस्तु—आवृत्तं पृष्ठ्यमुपयन्तीति यत्र षडहाभ्यासस्तत्र मध्वशनस्याप्यभ्यासः स्यात्कर्मणः पुनः प्रयोगादिति ॥

---

१ पृष्ठ्यषडहस्य.

गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्त्यधिकरणम् ॥ ११ ॥

**आवृत्तिस्तु व्यवाये कालभेदात्स्यात् ॥ ३१ ॥**

**सर्वान्ते प्रतिमासं वा पृष्ठ्यान्ते मधुभोजनम् ॥ सर्वान्ते पूर्ववन्मैवं संस्थितानां पृथक्त्वतः ॥ १५ ॥**

यत्र गवामयनादावभिप्लवादिभिर्व्यवेतस्य षडहस्याभ्यासस्तत्रापि किं सर्वान्ते मध्वशनमुत प्रत्यभ्यासमिति पूर्वेण न्यायेन सर्वान्त इति प्राप्ते उच्यते—अत्र षडहादुपरम्यैवाभिप्लवादिषु व्याप्रियते नतु पूर्ववदनुपरमः तस्मान्निमित्तभूतसंस्थावृत्तेर्नैमित्तिकस्य मध्वशनस्यावृत्तिः ॥

द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम् ॥ १२ ॥

**मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥ [प्राश्यते वा यज्ञार्थत्वात् ॥ ३३ ॥]**

**मध्वभक्ष्यं भक्ष्यते वा सत्रिभिर्ब्रह्मचारिणः ॥ निषिद्धत्वादादिमोऽन्त्यः पुंक्रत्वर्थविभेदतः ॥ १६ ॥**

सत्रमहीनश्च द्वादशाहः तत्र सत्रे मध्वशनं कर्तव्यं नेति संदेहे यजमानानामेव सत्रे दीक्षितानामृत्विक्त्वाद्दीक्षितस्य च ब्रह्मचर्यविधानाद्ब्रह्मचारिणश्च मधुप्रतिषेधान्न कर्तव्यं सत्रे मध्वशनम्। नच वैगुण्यं घृताशनेन साद्गुण्यसंभवान्मध्वशनं चाहीनविषयं भविष्यतीति प्राप्तेऽभिधीयते। यस्तावत्प्रतिपदोक्तो मध्वशनप्रतिषेधो ब्रह्मचारिणः स तु पुरुषार्थो न क्रत्वर्थं मध्वशनं बाधितुमर्हति। विषयभेदात्। यस्तु ज्योतिष्टोमे दीक्षितस्य क्रत्वर्थत्वेन ब्रह्मचर्यविधानादिहाप्यतिदेशेन क्रत्वर्थतया ब्रह्मचर्यप्राप्तेर्ब्रह्मचारिधर्मगतो मध्वशनप्रतिषेधः क्रत्वर्थतया प्राप्तः स प्रत्यक्षविहितं मध्वशनं नाहीनविषयत्वेन संकोचयितुमर्हति वरमतिदेशस्यैवानुमानिकस्याङ्गान्तरेषु संकोचः तस्मात्सत्रे मध्वशनं स्यात् ॥

---

**आवृत्तिस्तु०** ॥ ३१ ॥ पूर्वापवादात्संगतिः। **सर्वान्त इति** । अभिप्लवैर्व्यवधानेऽपि पश्चात्पृष्ठ्यषडहः करिष्यत इति न तद्विषयकव्यापारोपरमः यथा षडहप्रयोगमध्ये नान्तरीयकलौकिकव्यापारे सत्यपि न षडहविषयकव्यापारोपरमस्तद्वदिति भावः। **षडहादिति**। पृष्ठ्यषडहानन्तरमभिप्लवविधानेन षडहं समाप्याभिप्लवः कर्तव्य इति शास्त्रतात्पर्यावगमादस्त्येव षडहसमाप्तिः कालभेदेन प्रयोगे क्रत्वन्तरप्रयोग इव समाप्तिः । नान्तरीयकलौकिकव्यापारस्थलेन समाप्त्यवगमकं प्रमाणमिति वैषम्यमिति भावः ॥

**मधु न दीक्षिता ब्रह्मचारित्वात्** ॥ ३२ ॥ मध्वशनप्रसङ्गात्संगतिः। **दीक्षितस्येति**। ब्रह्मचर्यशब्दस्यानेकव्रतसमुदायवचनत्वाद्ब्रह्मचर्यशब्देन मध्वशननिषेधोऽपि क्रत्वर्थतया विधीयते ब्रह्मचारिणो मधुप्रतिषेधेन तस्याप्युक्तसमुदायान्तःपातित्वादित्यर्थः। **नचेति**। सिद्धान्तिनस्तु चोदकप्राप्तमध्वशननिषेधातिक्रमाद्वैगुण्यं स्यादित्यर्थः । **यस्तावदिति**। ब्रह्मणो वेदस्य चर्यं चरणमध्ययनमिति व्युत्पत्त्या वेदाध्ययनमाहूतो ब्रह्मचारीत्यादिदर्शनान्मैथुनवर्जनं वा ब्रह्मचर्यशब्दार्थः। मधुमांसवर्जनादिकस्य ब्रह्मचर्यशब्दार्थत्वे ब्रह्मचारी मधु नाश्नीयादित्यादिब्रह्मचारिपदेनेह तद्व्रतविधानानुपपत्तेः व्रतं च वेदाध्ययनं दीक्षितस्य न विध्यर्हं कृतवेदाध्ययनस्यैव कर्मण्यधिकारात् किंतु मैथुनवर्जनमेव । तथाच मधुनिषेधस्य ब्रह्मचर्यशब्दार्थत्वाभावेन मैथुनवर्जनरूपब्रह्मचर्यमात्रस्य क्रत्वर्थतया चोदकप्राप्तावपि न मध्वशनप्रतिषेधस्य प्राप्तिः । नच चोदकाद्ब्रह्मचर्यमात्रप्राप्तावपि ब्रह्मचारिणामाहत्य मध्वशननिषेधादेव तत्प्राप्तिरस्तीति वाच्यम् । आहत्यवचनस्य पुरुषार्थत्वेन तन्निषेधार्थकतया तद्बलेन क्रत्वर्थमध्वशनप्रापकवचनस्य संकोचायोगादित्यर्थः। अस्तु वा ब्रह्मचर्यशब्दस्य मधुमांसवर्जनादिव्रतसमुदायपरत्वं तथापि चोदकस्यानुमानिकस्यैव संकोचःप्रत्यक्षवचनाद्युक्तो नतु चोदकात्प्रत्यक्षवचनस्य संकोचः इत्यभ्युपगमवादेनाह—**यस्त्विति**। अत्र ब्रह्मचारिधर्मगत इत्यादिग्रन्थः पूर्वपक्षे ब्रह्मचर्यशब्दस्य व्रतसमुदायार्थकत्व एव घटते नान्यथेति तथैवास्माभिः पूर्वपक्षं व्याख्याय तदनुगुणतयैव सिद्धान्तो व्याख्यात इति ध्येयम् ॥

मानसस्य द्वादशाहाङ्गताधिकरणम् ॥ १३ ॥

**मानसमहरन्तरं स्याद्भेदव्यपदेशात् ॥ ३४ ॥ [तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण चोदना ॥ ३६ ॥ पक्षे संख्या सहस्रवत् ॥ ३७ ॥ अहरङ्गं वांऽशुवच्चोदनाभावात् ॥ ३८ ॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहन्निति च तद्गुणशास्त्रात् ॥४०॥ संख्यासामञ्जस्यात् ॥४१॥ पश्वतिरेके चैकस्य भावात् ॥४२॥ स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥ वचनादतदन्तत्वम् ॥ ४४ ॥]**

**मानसं किमहर्भिन्नमङ्गं वा दशमेऽहनि ॥ भिन्नं स्तुत्यादिनाऽङ्गं तद्विसर्गोक्त्यादिभिर्भवेत् ॥ ॥ १७ ॥**

द्वादशाहे दशमस्याह्नोधिकारे मानसो ग्रह: श्रूयते 'अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामी'ति मानसं प्राजापत्यं गृह्णामीति तत्र संशय: किमहरन्तरचोदनेयं यागान्तरचोदनेत्यर्थ: । उत दशमस्याह्नोऽङ्गभूतं ग्रहाभ्यासान्तरं चोद्यत इति । तत्र 'वाग्वै द्वादशाहो मनोमानस'मित्यादिभिर्व्यपदेशभेदादिभिर्हेतुभिर्यागान्तरशङ्कायामुच्यते—व्यपदेशभेदादेरवयवावयविभेदादप्युपपत्ते: ग्रहणचोदनानां वा चोदकाश्च संस्कारा इत्यनेन संस्कारमात्रपर्यवसायित्वेन यागान्तरकल्पकत्वाभावाद्दशमेहनि मानसाय प्रसर्पयन्तीत्यादिदर्शनैश्च दशमस्याह्नो ग्रहाभ्यासान्तरं नाहरन्तरम् ॥

सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

**सत्रमेक: प्रकृतिवत् ॥ ४५ ॥ [वचनात्तु बहूनां स्यात् ॥ ४६ ॥ अपदेश: स्यादिति चेत् ॥ ४७ ॥ नैकव्यपदेशात् ॥ ४८ ॥ संनिवापं च दर्शयति ॥ ४९ ॥ बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम् ॥ ५० ॥]**

**सत्रमेक: करोत्याहो बहव: प्रकृताविव ॥ एक: कुर्यादिहासीरन्नित्युक्त्या बहवो मता: ॥ १८ ॥**

सत्राणि किं कामिन एवैकैकश: कुर्युरुत बहव: संहत्येति चोदकानुग्रहाद्बहुवचनस्य चैकैकशोऽपि लोके बहव: कामिन: सत्रं कुर्वन्तीत्यनेनाभिप्रायेणानुवादत्वोपपत्तेरेकैकश: कुर्यु: । नैवम् । आख्या-

---

**मानसमहरन्तरं० ॥ ३४ ॥ ननु** अहरन्तरस्य परिमितत्वाभावात्कथमहरन्तरचोदनेत्यत आह—**यागेति** । तथाच किं द्वादशभिरहोभिर्मिता ये यागगणास्तेभ्योऽधिकं तै: सह समप्रधानभूतं यागान्तरं विधीयते उत नात्र यागान्तरविधि: किंतु तत्रैव दशमस्याह्न: अङ्गभूतं ग्रहणाख्यं संस्कारमात्रं विधीयत इति संशय इत्यर्थ: । **तत्रेति** । वाक्त्वेन द्वादशाहस्य मनस्त्वेन मानसस्य च निरूपणाद्वाङ्मनसयोरिव द्वादशाहमानसयोरपि भेदोऽवसीयत इत्यर्थ: । द्वादशाहस्य हृतरसानि छन्दांसि मानसेनाप्याययन्तीति मानसेन द्वादशाहिकछन्दसामाप्यायनादिरादिशब्दार्थ: । तथाच प्राजापत्यं मनोग्रहं गृह्णातीति द्रव्यदेवतासंबन्धावगमेन यागविधौ निश्चिते व्यपदेशभेदादिभ्यस्तस्य द्वादशाहापेक्षया भेदावगमाद्यागान्तरविधिरेवायमित्यर्थ: । नचात्रैन्द्रवायवादिवाक्येष्विव ग्रहणाख्य: संस्कार एव विधीयते ननु याग इति वक्तुं शक्यमिह प्रकृतयागद्रव्यभूतसोमाद्भिन्नस्य समुद्रलक्षणद्रव्यस्य श्रवणेन तद्धयागीयद्रव्यसंस्कारकत्वासंभवेन यागान्तरविधेरेव वक्तव्यत्वादिति भाव: । एवंच मध्वशनस्य सत्रद्वादशाहाङ्गत्वेपि मानसस्य न द्वादशाहाङ्गत्वमित्युत्थानात्संगतिर्बोध्या । यदुक्तं द्रव्यदेवतासंबन्धाद्यागविधिनिश्चय इति तत्राह—**ग्रहणेति** । ऐन्द्रवायवादिविधयो यागा नामचोदका यतो ग्रहणलक्षणसंस्कार एवात्र चोद्यत इति पशुसोमाधिकरणगुणसूत्रार्थस्तथाच तद्वदिहापि संस्कारमात्रमेव विधीयते, द्रव्यदेवतासंबन्धनिर्वाहस्तु तत्र यथा 'सोमेन यजेते'ति संनिहितयागादेवमिहापि संनिहितादेव यजेदिति न यागान्तरविधिरित्यर्थ: । प्रकृतप्रत्यभिज्ञाबलाद्रसावस्थसोम एव समुद्रशब्देनाभिधीयते इति संस्कारत्वं नानुपपन्नमिति भाव: । **दशम इति** । तथाच वाक्यान्तरेऽप्यङ्गत्वमित्यर्थ: । एष वै दशमस्याह्नो विसर्गोयं मानसमिति दशममहरपेक्ष्यान्तत्ववचनादिकमादिशब्दार्थ: प्रयोजनं च विकृतिषु दशरात्रप्रवृत्तौ मानसस्याप्रवृत्ति: पूर्वपक्षे सिद्धान्तेत्वङ्गत्वात्प्रवृत्ति: ॥

**सत्रमेक: प्रकृतिवत् ॥ ४५ ॥** मानसस्य विकृतिष्वबाधेऽपि सत्रे नैककर्तृकत्वबाध इत्युत्थितेः संगतिः। **चोदकेति**। यद्यपि षष्ठे आख्यातोपात्तसंख्याया विवक्षितत्वमुक्तं तथापीह 'पृथ्वशमनीयेन यजेरन्नि'ति बहोदकानुग्रहात्तदविवक्षा।

तगता हि कर्तृसंख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता । नहि तस्याः किंचिदविवक्षाकारणमस्ति । सा च चोदकप्राप्तमेकत्वं बाधते तस्माद्बहवः प्रयुञ्जीरन् ॥

सत्रे यजमानानामेवर्त्विक्त्वाधिकरणम् ॥ १५ ॥

**अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ [अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥५२॥ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥५३॥ स्याद्विशये तन्न्यायत्वात्प्रकृतिवत् ॥ ५४ ॥ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥ ५७ ॥ अदक्षिणत्वाच्च ॥ ५८ ॥]**

ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत चोदकात् ॥ अन्ये यष्टार एव स्युः प्रत्यक्षवचनादिभिः ॥ १९ ॥

सत्रेष्वपि किमन्यैरार्त्विज्यं उत यजमानैरेवेति संदेहे चोदकानुग्रहादन्यैः 'ये यजमानास्त ऋत्विज' इति वचनं यच्छब्दोपबद्धयजमानोद्देशेन तत्संस्कारार्थतयार्त्विज्यविधिः नत्वार्त्विज्ये यजमानविधिः । तेनार्त्विज्यमन्यैः कार्यम् । यद्वाध्वर्युर्गृहपतिं दीक्षयित्वेत्यनेन ऋत्विजां संस्कारार्थेन दीक्षा विधीयत इति तद्योगादृत्विगेव यजमानशब्दगोचर इत्यनुवादः । नैवम् । अप्राकृतकार्यत्वप्रसंगात्, वचनानर्थक्याच्च । नचार्त्विज्यस्य यजमानसंस्कारत्वम् । अप्राकृतकार्यत्वप्रसङ्गादेव । तस्मात्प्राकृतकार्यस्यैवार्त्विज्यस्य यजमानाः कर्तारो विधीयन्ते अतोऽन्येषां चोदकप्राप्तानां बाधः ॥

सत्राहीनयोर्विवेकाधिकरणम् ॥ १६ ॥

**द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥५९॥ [यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात् ॥६०॥]**

अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा नहि ॥ आवृत्तिसाम्यादाद्यः स्यादिज्यासिभ्यां तयोर्भिदा ॥ २० ॥

तत्र प्रसङ्गाद्द्वादशाहगतस्य सत्रस्वरूपस्य लक्षणं तत्प्रसङ्गाच्च तद्गतस्यैवाहीनरूपस्य लक्षणं सूत्रद्व-

---

बहुवचनं तु प्रचयशिष्टसंख्यानुवादकमित्यर्थः । नर्त्विगभिप्रायेणापि बहुवचनोपपत्तिः । प्रयोगवाक्येपीह फलार्थो यजमानव्यापारो विधिविषयीभूतः शब्देनोच्यते नतु ऋत्विक्संबन्धीति । तत्कर्तृभूतस्वामिबहुत्वस्यैव बहुवचनावगम्यत्वादित्याशयेन प्रयोगाङ्गतयेत्युक्तम् । नकिंचिदिति चोदकस्य दुर्बलत्वादिति भावः । पृष्ठशमनीये तु सत्रादुदवसायेत्युदवसानसमानकर्तृकत्वावगमादुदवसाने च प्रत्येकमेव कर्तृत्वाद्बहुवचनाविवक्षा न चोदकादिति वैषम्यमिति भावः ॥

**अन्ये स्युर्ऋत्विजः० ॥ ५१ ॥ आर्त्विज्यमिति** । ऋत्विक्कर्तृकमार्त्विज्यं प्रकृतौ ऋत्विक्कर्तृकपदार्था इति यावत् । **यच्छब्देति** । यच्छब्दयोगस्योद्देश्यलक्षणत्वादिति भावः । **नत्विति** । तथाच पूर्वत्र बहुकर्तृकत्वविधिबलादेककर्तृकत्वबाधेपीहार्त्विज्ये यजमानकर्तृकत्वविध्यभावादन्यकर्तृकत्वं चोदकप्राप्तं न बाधनीयमित्युत्थानात्संगतिरिति सूचितम् । **नच** यजमानसंस्कारतयार्त्विज्यविधावपि यजमानैरेव संस्कारार्थमार्त्विज्यं कर्तव्यमित्यर्थादन्यकर्तृकत्वनिवृत्तिः सिध्येदिति **वाच्यम्** । अन्यकर्तृकेणापि यजमानसंस्कारोपपत्त्या यजमानकर्तृकत्वानाक्षेपाद्यथाकथंचित्संबन्धमात्रेण यूपाहुतिवत्संस्कारकत्वसंभवादिति भावः । **अप्राकृतेति** । दीक्षायाः स्वामिसंस्कारार्थत्वेन प्रकृताववगताया इहान्यसंस्कारार्थत्वेऽप्राकृतकार्यत्वं स्यादित्यर्थः । अध्वर्य्वादिसंस्कारकत्वेन विधीयमाना दीक्षा कर्मान्तरमित्यत्र न किंचिन्मानमस्ति येनाप्राकृतकार्यत्वं न दोषः स्यादिति भावः । **नचेति** । करणोपकारव्यतिरेकेण पदार्थानां यजमानसंस्कारलक्षणकार्यस्वीकारेऽप्राकृतकार्यत्वं स्यादित्यर्थः । तस्माद्यत्तदोर्व्यत्यासेन ये ऋत्विजस्ते यजमाना इत्यृत्विक्शब्दलक्षिते कार्ये परित्यक्तस्वकार्या एव यजमानाः कर्तृत्वेन विधीयन्त इत्याह—**तस्मादिति** । अत्र ऋत्विक्कार्ये यजमानविधौ स्थितेऽपि षष्ठे ऋद्धिकामादिपदानां त्रैवर्णिकसाधारण्येन त्रयाणामधिकारमाशङ्क्यार्त्विज्ये ब्राह्मणनियमान्निराक्रियते अत्रत्यमेव तु ऋत्विक्कार्ये यजमानविधानं तत्र व्यवहृतमिति न पुनरुक्तिः ॥

**द्वादशाहस्य० ॥ ५९ ॥ यजतिचोदनात्० ॥ ६० ॥ लक्षणमिति** । सत्रत्वव्यवहारे निमित्तमिति यावत् । एतदेवमग्रेपि नतु द्वादशाहिकसत्रत्वाहीनत्वयोरेवात्र लक्षणमुच्यते सत्राहीनसामान्यस्यैव लक्षणकथनादतएव तत्रेत्यादिना निमित्तत्वमेवाह—**तत्प्रसङ्गादिति** । द्वादशाहप्रसङ्गादित्यर्थः । सामान्यलक्षणं तु आसनोपायिचोदनाचोदितत्वे सति

---

१ नुग्रहाय ये. २ मानोपदेशेन.

येनोच्यते तत्र त्रयोदशरात्रादिष्वासनोपायिचोदनेषु वेदेऽध्येतृप्रयोगेषु च सत्रशब्दप्रयोगाद्द्वादशाहेऽपि प्रयुज्यमानस्य सत्रशब्दस्य तन्निमित्तता द्विरात्रादिषु च यजतिचोदनेष्वहर्गणेष्वहीनशब्ददर्शना-द्द्वादशाहेऽपि तदेव तस्य निमित्तम् ॥

पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् ॥ १७ ॥

**अहीने दक्षिणाशास्त्रं गुणत्वात्प्रत्यहं कर्मभेदः स्यात् ॥ ६१ ॥ [सर्वस्य वैक-कर्म्यात् ॥ ६२ ॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥ ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात्प्रकृतिवत्तस्मान्नाऽऽसां विकारः स्यात् ॥ ६४ ॥ द्वाद-शाहे वचनात्प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात्परेषु तासां संख्याविकारः स्यात् ॥६५॥ परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥६६॥ भेदस्तु गुणसंयोगात् ॥६७॥]**

**अयुतादि प्रत्यहं स्यात्सकृद्वाऽङ्गयनुसारतः ॥ आद्यो भवेत्प्रयोगोऽङ्गी यद्वैक्येन सकृद्भवेत् ॥ २१ ॥**

**पौण्डरीको नामाहीन एकादशरात्रः तत्र श्रूयते** 'अयुतं दक्षिणाश्वसहस्रमेकादशमि'ति । तत्र स-शयः किमयुतमश्वसहस्रं च प्रत्यहं दातव्यमुतैकमेवायुतमश्वसहस्रं च दातव्यमिति । तत्र—'दक्षिणा ह्यहरङ्गत्वात्प्रत्यहं भेदमर्हति ॥ एकप्रयोगपातात्तु तन्त्रेणैका प्रतीयते ॥' सत्यम् । प्रत्येकमह्नामङ्गं द-क्षिणा तथापि कर्त्रानतिद्वारत्वात्कर्तॄणां च चिकीर्षितार्थमुपादानादेकप्रयोगे चोदितानामेकादशानाम-प्यह्नां युगपच्चिकीर्षितत्वात्तन्त्रेण सर्वेषां पुरुषाणामुपादानं तदानतिश्चैकैव तंत्रेण, तत्सिद्ध्यर्था च द-क्षिणेति सापि तन्त्रेण संभवादेकैव दीयते । **ननु** पौण्डरीकप्रकृतौ द्वादशाहे प्रत्यहं दक्षिणा भेदेन दत्ता-न्वहं द्वादशशतं ददातीति वचनात्तेनेहापि द्वादशशतविकारोऽयुतमश्वसहस्रं च प्रत्यहं भेदमर्हति । उच्यते—द्वादशाहेऽप्येकप्रयोगत्वादेकैवानतिरिति प्रत्यहं द्वादशशते दीयमाने यावती भवति तावती भवति दक्षिणैकैव । तस्मादिहाप्येकमेवायुतमश्वसहस्रं च दातव्यम् ॥

---

बहुयजमानकत्वं सत्रत्वं षडहेनोपासीतेत्यभिप्लवगतषडहेऽतिव्याप्तिवारणाय बहुयजमानकत्वमुपात्तमेवं यजतिचोदनाचो-दितत्वे सत्यनियतसंख्याकयजमानकत्वमिति प्रतीयते तन्नासनोपायिचोदनयोः परस्परव्यभिचारान्न प्रत्येकं विशिष्टस्य वा लक्षणत्वं संभवति अहीनलक्षणस्याप्येकाहेष्वतिप्रसङ्गस्तथापि मन्त्राणामिवाभियुक्तप्रसिद्धिरेव सत्राहीनयोर्लक्षणं तदेव च सौत्रेण लक्षणेनोपलक्ष्यते । यद्वा यजमानकर्तृकार्त्विज्यकाहर्गणत्वं यजमानभिन्नऋत्विग्युक्ताहर्गणत्वमहीनत्वमित्यनुगतं ल-क्षणं बोध्यम् ॥

**अहीने दक्षिणाशास्त्रं० ॥ ६१ ॥** सत्राद्भिन्नेऽहीनेऽर्थादन्यकर्तृके सिद्धे तत्र दक्षिणायाः प्रतिप्रधानं भेदेनानुष्ठान-बाधचिन्तनात्संगतिः । **तत्रेति** । पौण्डरीकशब्दवाच्यानामेकादशानामप्यह्नां प्रधानत्वात्प्रतिप्रधानमङ्गावृत्तेः सुत्या च गृह्यमाणविशेषत्वेन दीक्षादिवत्तन्त्रत्वासंभवात्सवनीयादिवत्प्रत्यहं दक्षिणाया भेद एव युक्त इत्यर्थः । कर्मकर्तृभ्यो भृति-दानरूपत्वाद्दक्षिणादानस्य तदानतिरेव सामर्थ्याद्द्वारं कर्तारश्च चिकीर्षितार्थत्वात्प्रयोगाङ्गं युगपच्चिकीर्षितप्रधानानां च प्रयोग एक इति प्रयोगैक्यान्नावृत्तिः सवनीयादिकं तु न प्रयोगद्वारं किंतु साक्षादेव प्रधानाङ्गमिति तद्भेदादावर्त्त्यमिति वैषम्यमिति सिद्धान्तमाह—**एकेति । तन्त्रेणेति** । समुदितानामेव फलसाधनत्वाद्युगपत्सर्वचिकीर्षायां सहायत्वेनोपादीयमानाः कर्तारः सर्वार्थतयैवोपादेया इत्यर्थः । दर्शपूर्णमासयोस्तु संभूय फलसाधनयोरपि 'पौर्णमास्यां पौर्णमास्या यजेतामावास्या-याममावास्यया यजेते'ति प्रयोगभेदावगमात्प्रयाजादिवद्दक्षिणाया अप्यावृत्तिरिति भावः । **नन्विति** । अन्वहं द्वादशशतं ददातीति वचनं न दक्षिणान्तरविधायकं किंतु ज्योतिष्टोमात्प्राप्ताया द्वादशशतदक्षिणाया उक्तरीत्या प्रयोगाङ्गतया सकृद्दा-नप्राप्तौ तस्याः प्रत्यहमावृत्तिविधिपरं पौण्डरीकदक्षिणापि तत्स्थानापन्नेति सापि यथाप्रकृति प्रत्यहं देयेत्यर्थः । **उच्यत इति । प्रत्यहमिति ।** वाक्यस्यैकप्रयोगार्थकर्त्रानतिद्वारा दक्षिणालक्षणविधेः सामर्थ्यानुसारेणान्वहं द्वादशशतदक्षिणाव-यवद्वारानुमितचतुश्चत्वारिंशत् उत्तरत्रिशताधिकसहस्रलक्षणसमुदायविधावेव तात्पर्यं नतु प्राकृत्या एव प्रत्यहं नयनविधौ । तथासति विधेयदक्षिणासामर्थ्यबाधप्रसङ्गादिति पौण्डरीकदक्षिणाया अपि समुदायस्थानापन्नाया न प्रत्यहमावृत्तिरित्यर्थः । सूत्रार्थस्त्वहीने पौण्डरीकादौ प्रत्यहं प्रधानभेदाद्दक्षिणाया अपि भेदः स्यात्तस्या गुणत्वादिति सूत्रेऽहीन इति सामान्योक्त्या पौण्डरीकोदाहरणप्रदर्शनार्थमित्याहुः ॥

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् ॥ १८ ॥

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ [एकार्थत्वान्नेति चेत् ॥ ६९ ॥ स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७१ ॥]**

**सकृत्किं प्रत्यहं वाऽस्य नयनं तत्र चोत्तमे ॥ सर्वस्य वा विभक्तस्य सकृत्संस्कारसिद्धितः॥ २२ ॥**

**प्रतिमाध्यंदिनं चोदकप्राप्तेः प्रत्यहं तदा ॥ सर्वं नेयं तदेकत्वाद्विभज्य द्वादशाहवत् ॥ २३ ॥**

प्रकृतौ माध्यंदिने सवने दक्षिणानयनं श्रुतं पौण्डरीके चायुतमश्वसहस्रं माध्यंदिने सवने प्रत्यहं नेतव्यमुतैकस्मिन्नहनि अथवा विभज्य प्रत्यहं सहस्रं नेतव्यं अश्वसहस्रं लेकादशेहनि नेयमिति संशये प्रकृतावासीये माध्यंदिने सवने नीतेतीहापि प्रतिकर्मावसायी चोदकः प्रतिमाध्यंदिनं नयनं प्रतिपादयति । समस्ताचेयं सर्वेषामह्नां दक्षिणेति सर्वैव प्रत्यहं नेतव्या । दक्षिणासंस्कारत्वान्नयनस्य सकृत्संस्कृतायाश्च न पुनः संस्कारेण प्रयोजनमित्येकस्मिन्कस्मिंश्चिन्माध्यंदिने नयनम् । नैवम् । द्वादशाहे हि विभज्य नयनं विहितमन्वहं द्वादशशतं ददातीति । तेनेहापि तद्वदेव विभज्य नयनम् ॥

मानवीषु पञ्चदशानामेव सामिधेनीत्वाधिकरणम् ॥ १९ ॥

**लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥७२॥ [यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥ आग्नेये कृत्स्नविधिः॥७४॥ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥७५॥]**

**मनोर्ऋचः सामिधेन्यः सर्वाः पञ्चदशैव वा ॥ अविशेषेण सर्वाः स्युः कार्याः पञ्चदशैव ताः ॥ २४ ॥**

क्वचिद्विकृतौ श्रूयते 'मनोर्ऋचः सामिधेन्यो भवन्ती'ति तत्र किं सर्वा एव मनोर्ऋचः सामिधेनीत्वेन वक्तव्या उत यावतीभिः संख्या पूर्यते प्राकृती तावत्य एवेति प्रत्यक्षेण वचनेन सर्वासामविशेषेण प्राप्त्यवगमाच्चोदकप्राप्तसंख्याबाधेन सर्वासामुपादानमित्येतावान्पूर्वः पक्षः । नावश्यं प्रत्यक्ष-

---

**प्रत्यहं० ॥ ६८ ॥ प्रकृताविति** । ज्योतिष्टोम इत्यर्थः । **इहापीति** । चोदकपरम्परामाश्रित्येदम् । नचैवं प्रकृतौ स्वसंमानसंस्कृताया एवौदुम्बर्याः स्वक्रतूपकारकत्वदर्शनात्सत्रेऽपि सर्वैर्यजमानैः संमानं स्यादिति वाच्यम् । औदुम्बरी हि न यजमानार्थः किंतु यजमान एव तदर्थ इत्येकेनापि संमाने न वैगुण्यम् । इह तु दक्षिणानयनस्याहरर्थत्वाद्यस्मिन्नहनि माध्यंदिने न नीयते तस्यैवाह्नो वैगुण्यप्रसङ्गेन प्रत्यहमावर्तनीयत्वादित्यर्थः । तथाच पूर्ववत्प्रत्यहं कृत्स्ननयनं न बाधनीयमित्युत्थानात्संगतिः । ज्योतिष्टोमाच्चोदकपरम्परया प्राप्त्यभिधानं चापाततः साक्षात्प्रकृतौ द्वादशाहे विभज्य नयनाम्नानेन तद्विरोधेन मूलप्रकृतेः कृत्स्ननयनप्रसङ्गादिति । अहरर्थत्वमपि न साक्षात् किंतु दक्षिणासंस्कारतया सकृन्नयनमात्रेण तत्संस्कारसिद्धेर्न प्रत्यहं नयनमिति पक्षान्तरमाह—**दक्षिणेति । द्वादशाह इति** । द्वादशाहे वचनबलेनावयवशः समुदायः संस्कार्य इत्यवगमादिहापि यथाप्रकृत्यवयवश एव कृत्स्नदक्षिणा संस्कार्येति विभज्य नयनमित्यर्थः । सूत्रार्थस्तु—प्रत्यहं सर्वासां नयनं स्यात् सर्वेष्वहस्सु कृत्स्नदक्षिणाया शेषत्वान्मूलप्रकृतौ ज्योतिष्टोमे माध्यंदिने कृत्स्नदक्षिणाया नयनस्य दृष्टत्वादिति ॥

**लिङ्गेन द्रव्यनिर्देशे० ॥ ७२ ॥** पूर्वत्र चोदकानुग्रहाय द्वादशाहवद्विभज्य नयनेपीह चोदकप्राप्तपञ्चदशत्वबाध इत्युत्थितेः संगतिः । **प्रत्यक्षेणेति** । तथाच यथा प्रकृतौ पञ्चदशानामुपदेशात्प्रधानमभिसमिन्धनमावर्तते तथेहाप्यविशेषेण मनुलिङ्गमात्रोपदेशात्सर्वासामुपादाने तावत्कृत्वः प्रधानावृत्तिर्न दोष इति भावः । **नहीति** । ऋचां संस्कार्यत्वे हि सर्वासां संस्कारो माविलोपीति सर्वोपादानं स्यादिह तु तासामुपादेयत्वाद्गुणानुरोधेन प्रधानावृत्तेरयुक्तत्वान्न सर्वा उपादेया इत्यर्थः । **ननू**पादेयत्वे कपिञ्जलाधिकरणन्यायेन तिसृणामेवोपादानं स्यात् एवमिहापि प्राकृतसंख्याबाधस्तदवस्थ इत्यत आह—

---

१ दक्षिणादानं.

वचनेन सर्वासां प्राप्तिः । नहीदमृक्संस्कारार्थमग्निसमिन्धनार्थं ह्यत्रर्च उपादीयन्ते तत्र बहुवचनात्रित्वे प्राप्ते त्रित्वमतिक्रम्य पञ्चदशोपादीयन्ते अधिकानां त्वनाशङ्क्यमेवोपादानम् ॥

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥**

**उपावहरणं मानमपि क्वाप्युत वाससि ॥ क्वापि स्यात्प्रांशुताभावाद्वचनाद्वाससोभयम् ॥ २५ ॥**

ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वासःसाधनकं 'वाससि मिनोति वाससोपावहरती'ति वचनादित्युत्तरविवक्षया प्राप्तिः क्रियते ॥

अहर्गणे वासोन्तरोत्पादनाधिकरणम् ॥ २१ ॥

**तत्राहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥**

**मान्यद्वासोऽहर्गणे स्यात्स्याद्वा न स्यादनुक्तितः ॥ चोदकात्प्रत्यहं प्राप्तं कार्यद्वासोन्तरं भवेत् ॥ २६ ॥**

स्थितं वाससि मानं वाससा चोपावहरणमिति द्वादशाहादावहर्गणे किमुपावहरणार्थं प्रत्यहं वासोभेदः स्यादुत नेति भेदे प्रमाणाभावान्नेति प्राप्ते ब्रूमः—अर्थाद्वाससो भेदः स्यात् हविर्धाने शकटेऽवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तस्तावान्सोमो वाससोपावहर्तव्यः । अवशिष्टश्च शकट एव वाससोपनद्धोऽवतिष्ठते तस्मादर्थादहर्भेदे वासोन्तरमुपावहरणार्थमुत्पादयितव्यम् ॥

उपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम् ॥ २२ ॥

**मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ [हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥]**

**तत्किं माने हृतौ वाद्यः प्रकृतावेकतेक्षणात् ॥ अर्थात्तदैक्यं तत्रोक्त्या हृतौ स्यात्सार्थकत्वतः ॥ २७ ॥**

यदेतदुपावहरणार्थमन्यद्वास उत्पाद्यते तत्किं मानकाल एवोत्पाद्यमुतोपावहरणकाल इति संशये प्रकृतौ यस्मिन्वाससि क्रयकाले मानं कृतं तेनैवाभिषववेलायामुपावहरणस्य दर्शनादहर्गणेऽपि मान-

---

**तत्रेति** । उपादेयत्वेऽपि यद्यप्राकृतकार्ये संख्याविशिष्टानां विधानं स्यात्तदा तिसृणामेवोपादानं स्यात्, इहतु प्रकृतौ पञ्चदशसंख्याकसामिधेनीकार्यत्वेनावगतं यदग्निसमिन्धनाख्यं कार्यं तत्र प्राकृतीनां प्रवोवाजीयाद्यानामृचां स्थाने मानव्याख्यऋङ्मात्रविधानेन प्राकृतऋग्बाधेऽपि न संख्याबाधे कश्चिद्धेतुरस्ति, संख्यान्तरस्याविधानात् । एवंच यथा तिसृणामप्रसक्तिस्तथा पञ्चदशभ्योऽधिकानामप्यप्रसक्तिरित्यर्थः । सूत्रार्थस्तु—मनोर्ऋचः इति लिङ्गेनोपलक्षणीकृत्य ऋग्विधाने लिङ्गस्य सर्वसाधारण्यात्सर्वासामपि संप्रत्ययः स्याद्यथा 'आग्नेयैः सूक्तैः संवत्सरमुपदधान आसीते'त्यत्र सर्वेषामाग्नेयसूक्तानामिष्टकोपधाने विनियोगस्तद्वदिति उपादेयानामिष्टकानां बहुत्वादाग्नेयसूक्तानां कार्त्स्न्येनोपादानं न विरुद्धमित्याग्नेयसूक्तवैषम्यमाग्नेये तु कृत्स्नविधिरिति गुणसूत्रभाष्ये स्पष्टम् ॥

**वाससि मानोपावहरणे० ॥ ७६ ॥ उपावहरणमिति** । हविर्धानाख्यशकटाद्ग्रावस्ववतारणमित्यर्थः । **प्राप्तिरिति** । सति वचने पूर्वपक्षप्रवृत्त्यसंभवादिति भावः । प्राप्तिसूत्रत्वादेव न पृथक्संगतिः ॥

**तत्राहर्गणे० ॥ ७७ ॥ किमिति** । यत्रोपावहरणार्थं वासोभेदः स्यान्नवेत्येव संशयः तत्र वासोभेदः सिध्यन्प्रत्यहमेव सिध्यतीत्याशयेन प्रत्यहमित्युक्तम् । **भेद इति** । तथाच यथा पूर्वत्र सर्वासां मानवीनामुपादाने प्रमाणाभावाद्यथाप्रकृति पञ्चदशानामेवोपादानमेवमिहापि भेदे प्रमाणाभावाद्यथाप्रकृत्येकमेव वास इत्युत्थानात्संगतिरस्तीति भावः । **ननु** प्रकृतिष्वमानार्थवाससैवोपावहृत्य एकस्याह्नः पर्याप्तं सोमं गृहीत्वावशिष्टं तस्मिन्नेवोपनह्य शकटे स्थाप्यतां, तथाच कथमर्थाद्वासोभेद इत्याशङ्क्योपावहरणस्याभिषवार्थत्वात्सर्वोपावहरणे चादृष्टार्थत्वप्रसङ्गादेकस्याह्नः पर्याप्तस्यैव ग्रहणं न सर्वस्य । तस्मात्सिध्यति वासोभेद इत्याशयेन तथोपपादितम् । एवंचोपावहरणार्थे वासोन्तरे सिद्धे तस्य प्रावस्तुते दानविधानाद्द्वितीयादिषु पुनरुपावहरणार्थं वासोन्तराण्युपादेयानि । नच प्रावस्तुते दानप्रतिपत्तिरिति सर्वान्ते स्यादिति वाच्यम् । मैत्रावरुणाय दण्डदानवच्चतुर्थीश्रवणात्प्रावस्तुदर्थत्वेन वासःप्रतिपत्त्यर्थत्वाभावादिति भावः ॥

**मानं प्रत्युत्पादयेत् ॥ ७८ ॥ प्रकृताविति** । तथाच चोदकप्राप्तैकत्वबाधेऽपि कालो न बाध्य इत्युत्थानात्संगतिरिति सूचितम् । **उत्पाद्यमिति** । उत्पाद्य तस्मिन्नपि मातव्यः सोमस्तस्मिन्काले उत्पादनस्य मानाङ्गत्वसिध्यर्थत्वादिति

वाससोपावहरणेन भवितव्यं तस्मान्मानकाल एवोत्पाद्यम्। नैवम्। आर्थिकं हि प्रकृतौ मानवाससोपावहरणं न शास्त्रीयम्। एतावद्धि श्रूयते 'वाससोपावहरती'ति। तत्र प्रकृतौ यस्मिन्वाससि सोमो मित उपनह्य शकटेऽवस्थापितः तेनैव सौकर्यादुपावहरणमनुष्ठितं, अहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि सर्वेषामह्नां सोमे मित्वोपनह्य स्थापिते अभिषववेलायामुपावहरणार्थमनुपपत्तिवशादन्यदुत्पाद्यते ॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य षष्ठः पादः ॥ ६ ॥

---

## दशमाध्याये सप्तमः पादः।

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ॥ १ ॥

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ [प्रत्यङ्गं वा ग्रहवदङ्गाना पृथक्प्रकल्पनत्वात् ॥ २ ॥]**

**पशुः कृत्स्नो हविः किंवा प्रत्यङ्गं हविरन्यता ॥ आद्यश्चोदनया मैवमवदानपृथक्त्वतः ॥ १ ॥**

'अग्नीषोमीयं पशुमालभेते'त्यत्र संशयः किं कृत्स्नपशुरेकं हविस्तेन च देवतायै दीयमानेन पयो विक्रीयते, ततएव चावदाय होमः उत पश्वङ्गं हृदयादि हविरिति। तत्र—'तद्धितेन पशोरेव देवतान्वयचोदनात् ॥ समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा ॥' 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस' इत्यादीनि वचनानि पशोरेवावदानप्रदेशलक्षणार्थानि मध्यपूर्वार्धवचनवत् हृदयप्रदेशेऽवद्यतीत्येकादशानां च प्रदेशानामुपदेशाद्द्व्यवदानमपोह्य एकादशकृत्वोवदाय हूयते। तस्मिन्नेव च काले समस्तः पशुर्देवतायै त्यज्यते पुरोडाशवत्तस्मात्पशुरेकं हविरिति प्राप्ते ब्रूमः—'खण्डनं प्राकृतार्थं हि

---

ध्येयम्। **आर्थिकमिति**। आर्थिकस्य च नातिदेश इति भावः। **सौकर्यादिति**। वासोन्तरोपादाने यत्नगौरवाच्छार्थस्य तावताप्युपपत्तेरिति भावः। **अनुपपत्तीति**। अतएवान्तिमेऽहनि अनुपपत्त्यभावान्मानवाससैवोपावहरणमिति भावः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमाध्यायस्य षष्ठः पादः ॥ ६ ॥**

**पशोरेकहविष्ट्वं०** ॥ १ ॥ सोमयागविषयबाधव्युत्पादनानन्तरं प्रायेण तदङ्गभूतेषु पश्वादिषु मध्यपूर्वार्धादिबाधो विचार्यत इति पादान्तरत्वमानन्तर्यं चेत्याहुः। **तेनचेति**। पशोर्हविष्ट्वे देवतोद्देशेन त्यागोऽष्टमे हविःसामान्यादुक्तं पयोविकारत्वमवदानापादानत्वं च तस्यैव भविष्यतीत्यर्थः। **तत्रेति**। हविष्ट्वं देवतोद्देशेन त्यज्यमानत्वलक्षणं यस्य देवतासंयोगस्तस्यैव वक्तुं युक्तम्। **'सास्य देवते'ति** सूक्तहविषोरेव देवतातद्धितविधानात्। अतएव 'सोमेन यजेते'त्युत्पत्तौ श्रुताया अपि लताया न हविष्ट्वं किंतु 'ऐन्द्रवायवं गृह्णाती'त्यादिवाक्येषु देवतासंयोगस्य सोमरसे श्रवणात्तस्यैव हविष्ट्वम्। तथाच देवतासंयोगात्पशोरेव कृत्स्नस्य देवतोद्देशेन त्यागः यथैन्द्रं पयोऽमावास्यायामिति देवतासंयोगात्कृत्स्नस्य पयसस्त्यागो न द्व्यवदानमात्रस्य तद्वदित्यर्थः। **ननु** हविःसंस्कारार्थावदानसंयोगाद्धृदयादीनामेव हविष्ट्वं किं न स्यादित्यत आह—**हृदयस्येति**। तथाच पशोरेवावदानमिति हृदयादीनामवदानलक्षणसंस्कारस्य संबन्धाभावान्न हविष्ट्वमित्यर्थः। नचैवं हृदयादिशब्दानां पश्ववदानप्रदेशलक्षणैव दोष इति वाच्यम्। तवापि पशोर्हविष्ट्वाभावेन देवतासंबन्धानुपपत्त्या 'अग्नीषोमीयं पशुमालभेते'ति देवतासंबन्धवाक्ये पशुशब्दस्य हृदयादिषु लक्षणावश्यंभावेन तुल्यत्वात्। वस्तुतस्तु 'हृदयस्याग्रेऽवद्यती'ति हृदयादिषु षष्ठी श्रूयते साच कथंचित्संबन्धमात्रेणोपपन्नेति न पूर्वपक्षिणो लक्षणा। सिद्धान्तिन एव तु पशुप्रकृतिकेषु हृदयादिषु पशुशब्दलक्षणा स्यादिति भावः। **ननु** 'द्विर्हविषोऽवद्यती'ति प्रकृतितो हविषो द्विरेवावदानं प्राप्नोति, तथाच प्राकृते द्व्यवदाने हृदयादिबहुदेशविध्यसंभवात्तेषामेवावदानविधिरिति वक्तव्यम्। ततश्च तत्संयोगात्तेषां हविष्ट्वं दुर्वारमित्यत आह—**एकादशानामिति**। एवंच यथा हृदयादिदेशाम्नानात्प्राकृतमध्यपूर्वार्धदेशबाध एवं बहूनां देशानां विधानेनावदाने संख्यान्तरावश्यंभावेन प्राकृतद्वित्वसंख्याया अपि बाध इत्यर्थः। **एकादशकृत्व इति**। अवदानप्रदेशानामेकादशत्वाभिप्रायेणैवमुक्तं, वस्तुतस्तु 'एकादश वै पशोरवदानानि तानि द्विरवद्यती'ति वचनादेकादशसु प्रदेशेषु द्विर्द्विरवदाने सति द्वाविंशतिकृत्व इति वक्तुं युक्तमिति ध्येयम्। **नन्वेवमप्यवत्तमात्रस्यैव** देवतायै त्याज्यत्वात्कथं कृत्स्नस्य पशोर्हविष्ट्वमत आह—**तस्मिन्नेवेति**। यथा 'आग्नेयोऽष्टाकपाल'इति कृत्स्ने पुरोडाशे देवतासंयोगबलेन कृत्स्नस्यैव पुरोडाशस्य देवतोद्देशेन त्यागः प्रक्षेपस्त्ववत्तस्यैव, एवं अवत्तस्य प्रक्षेपमात्रं, देवतोद्देशेन त्यागस्तु कृत्स्नस्यैव पशोरिति कृत्स्नस्य हविष्ट्वमुपपद्यत इत्यर्थः। **प्राकृतेति**। हविःसंस्कारलक्षणसाम्नाय्यावदानकार्यार्थमित्यर्थः। अनेन भेदं प्राकृतमवदानं येन प्रकृतितः प्राप्ते

हृदयादिषु दृश्यते ॥ तस्मात्तत्प्रकृतित्वेन देवतासंगतिः पशोः ॥' हृदयादिशब्दा हि मांसविशेषवचना न युक्तं यत्पशुप्रदेशलक्षणार्थतां नीयन्ते, हृदयादीनामेवावदानोपपत्तेः, अवदानं च प्रकृतौ हविःसंस्कारार्थमितीहाप्यवदानं हविष एव युक्तं तच्च हृदयादिषु दृश्यत इति हृदयादीनामेव हविष्ट्वं निश्चीयते । नचोत्पत्तिवाक्यविशिष्टपश्ववरोधः, तस्य हृदयादिप्रकृतित्वेन यागसाधनत्वेनापि देवतासंबन्धोपपत्तेः । यदि हि प्रणाड्यां प्रमाणं न स्यात्ततः पशुरेव साक्षाद्दीयेत । अस्ति तु प्रमाणं हृदयादिष्ववदानवचनं विशसनवचनं च । तस्माद्धृदयादीनि हवींषि देवतायै देयानि तेभ्य एव च ह्यवदानं गृहीत्वा हूयते तत्प्रकृतिश्च पशुः ॥

---

तस्मिन्प्राकृतमध्यपूर्वार्धलक्षणदेशबाधेन देशान्तरविधिः स्यात् किंत्ववदानान्तरमप्राकृतं प्राकृतकार्यापन्नं विधीयत इति दर्शयति। ततश्चेह विधीयमानस्यावदानान्तरस्य सांनाय्यावदानप्रकृतिकत्वेन तद्वदेव हविःसंस्कारकत्वावगमात्तत्संयुक्तानां हृदयादीनामेव हविष्ट्वमित्यर्थः । प्राकृत एवावदाने देशविधिस्वीकारे प्राप्तावदाने देशस्याग्राथशब्दार्थक्रमस्य च विधाने वाक्यभेदः स्यादतो न देशविधिः, किंतु हृदयादिविशिष्टावदानान्तरविधिरेवायम् । तत्र च पाठादेव क्रमस्य प्राप्त्याऽग्राथशब्दावनुवादकौ । नच ममापि पाठप्राप्त एव क्रमोऽग्राथशब्दाभ्यामनूद्यतामिति वाच्यम् । त्वत्पक्षे हि अनुष्ठानाय क्रमापेक्षिण्यामवदानक्रियायां न पाठात्क्रमोऽवगम्यते, तस्याः प्रकृतितः प्राप्तायाः संप्रति विधेयत्वाभावात्, तस्यां तु विधीयमानानां देशानां पाठक्रमः सन्नपि तेषां स्वरूपेणाननुष्ठेयतया क्रमापेक्षत्वाभावादकिंचित्करः पाठः । अस्तुवा हृदयादिष्ववदानस्यानुष्ठेयतामात्रेण हृदयादिपाठक्रमस्यावदानक्रमनियामकत्वं, तथापि प्राकृतावदानोद्देशेन प्रापकचोदकानुग्रहाय तेषां विकल्प एव स्यान्न समुच्चयः । प्रमाणान्तरेण समुच्चये सत्येव हि हृदयादिबहुदेशविधानस्य चोदकप्राप्तत्र्यवदानबाधकत्वम् । इहतु नास्ति समुच्चये प्रमाणम् । किंचावदानार्थानां हृदयादीनां 'एकार्थास्तु विकल्पेरन्नि'ति न्यायेन विकल्प एव न समुच्चयः । अतएव तन्त्ररत्ने तेषां च देशानां विकल्प इत्येव पूर्वपक्षे उक्तं, तस्मात्समुच्चयाभावात्क्रमस्योक्तविधयाप्यप्राप्तेरवश्यंविधेयत्वाद्वाक्यभेदो दुर्वार इति भावः । नन्वस्त्ववदानान्तरविधिस्तथापि न तत्र हृदयादीनां संस्कार्यत्वं किंतु मध्यपूर्वार्धवत्प्रदेशत्वमेव, संस्कार्यत्वं तु पशोरेव । तथाचावदानान्तरविधावपि पशोरेव हविष्ट्वमित्यत आह—**हृदयादीति** । मध्यमादिशब्दा हि परकीयावयवत्वेनैव स्वार्थं बोधयन्तो युक्तमवयविनः प्रदेशं लक्षयन्तीति । हृदयादिशब्दास्तु न तथा परकीयावयवत्वेन स्वार्थं समर्पयन्तीति मांसविशेषवचना इति वदतो भावः । यद्यपि हृदयादिषु षष्ठीश्रवणात्तस्याश्च यथाकथंचित्संबन्धमात्रेणोपपत्त्या लक्षणाप्रसङ्गाभावस्तथापि हृदयादीनां स्वप्राधान्यसंभवे प्रदेशोपलक्षणार्थत्वमयुक्तमित्यर्थः । ननु हृदयादीनां हविष्ट्वाभावेऽप्यदृष्टार्थमवदानान्तरमस्त्वित्यत आह—**अवदानमिति** । अदृष्टार्थत्वभयादेव यथाप्रकृति हविःसंस्कारार्थमेवावदानान्तरमित्यर्थः । केचित्तु हृदयादिवाक्येषु श्रौतमपि नावदानं विधेयं तथासत्यार्थिके यागसाधनत्वेऽपि विधिव्यापारावश्यंभावेन गौरवप्रसङ्गात्, किंत्वार्थिकं यागसाधनत्वमेव विधेयम्, अवद्यतीतिच हविःसंस्कारतया प्राप्तस्यावदानस्यानुवादः। यथा 'सोमाभावे पूतीकानभिषुणुया'दित्यत्र श्रौतोप्यभिषवो न विधीयते किंतु विधिलाघवार्थं यागसाधनत्वमेव विधीयते । तस्मिंश्च विहिते यागसाधनसंस्कारभूतोऽभिषवोऽर्थप्राप्तोऽनूद्यते तद्वदित्याहुस्तच्चिन्त्यम् । 'अग्नीषोमीयं पशुमालभेते'त्येतद्वाक्यविहिते यागे हृदयादिवाक्यैर्हृदयादीनां साधनत्वेन विधौ सति आग्नेयवाक्यविहितयागे साधनत्वेन व्रीहियववाक्यविहितव्रीहियवयोरिव हृदयादीनां विकल्पापत्तेः । तथाच समुच्चयाभावेन क्रमस्यात्यन्ताप्रसक्तेरग्राथशब्दावनर्थकौ स्याताम्, अवदानविधौ तु ऐन्द्रवायवादिग्रहणानामिव हृदयाद्यवदानानां सर्वेषां प्रयोगविधिग्रहणात् प्रयोगवचनमुखेनेन्द्रवाय्वादिदेवतानामिव हृदयादीनां सिध्यति समुच्चयः । तस्मादिहावदानसंस्कारविधिरेव स्वीकार्य इत्यनवद्यम् । **तस्येति** । तथाच प्रणाड्या पशोरेव देवतासंबन्धोपपत्तेर्न हृदयादिषु पशुशब्दलक्षणादोषप्रसङ्गः । इत्थमेव ह्यवदानस्यैव यागसाधनत्वं पुरोडाशस्तु तत्प्रकृतिरिति भाष्यकारपक्षे 'आग्नेयोऽष्टाकपाल'इति पुरोडाशे देवतासंबन्ध उपपादनीयः । तथाच सूक्तहविषोरिति व्याकरणस्मृतौ हविःपदं हविस्तत्प्रकृतिसाधारणं न्यायानुसाराद्व्याख्येयमिति भावः । नन्वेवं 'आग्नेयोऽष्टाकपाल'इति पुरोडाशे देवतासंबन्धोपि ह्यवदानद्वारा वार्तिककारपक्षेऽपि स्यादित्यत आह—**यदीति** । यद्यवत्तमात्रस्य यागसाधनत्वे किंचित्प्रमाणं स्यात्तदा तद्द्वारा पुरोडाशस्य देवतासंबन्धनिर्वाहः स्यान्न त्वेतदस्ति । 'चतुरवत्तं जुहोती'ति वाक्यस्यावत्तानुवादेनाप्राप्तप्रक्षेपविधायकत्वेन यागेऽवत्तस्य साधनत्वविधायकत्वाभावात् । तस्मात्तत्र प्रणाड्यां प्रमाणाभावात्कृत्स्नपुरोडाशस्य साक्षात्प्रदेयतया देवतासंबन्धः, इहतूक्तरीत्या हृदयादीनां देशलक्षकत्वानुपपत्त्या तेषामेवावदानसंस्कार्यत्ववचनमस्ति प्रणाड्यां प्रमाणम् । तथा पशुशब्दस्य प्राणिविशेषवाचकतया संज्ञपनविशसनादिना तन्नाशात्स्वरूपेण तस्य हविष्ट्वं, पुरोडाशस्य तु नैवं किंचित्साक्षाद्यागसाधनत्वे बाधकत्वमिति वैषम्यमित्यर्थः । एवंच पशोर्हविष्ट्वाभा-

---

१ वाक्यशिष्टपशुविरोध.

पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम् ॥ २ ॥

**हविर्भेदात्कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ [आज्यभागवद्वा निर्देशात्परिसंख्या स्यात् ॥ ४ ॥ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत्पशोः पञ्चावदानत्वात् ॥ ५ ॥ असंशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसंख्यानेऽनर्थकः स्यात्प्रदानत्वात्तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥ अपि वा परिसंख्या स्यादवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥]**

एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजिः ॥ एकेन यागसंसिद्धेर्हविषां भेदतोऽखिलैः ॥ २ ॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः ॥ न त्रिदोषी गत्यभावादश्रुतोक्तेश्च सोचिता ॥ ३ ॥

पश्वङ्गानि हवींषीति स्थिते चिन्त्यते किमेकेन केनचिदङ्गेन यागः कर्तव्यः उत सर्वैरङ्गैरथवा हृदयादिभिरेकादशभिरिति । तत्र—'एकेनापि पशोर्यागसाधनत्वोपपत्तितः ॥ तन्मात्रेणैव यागः स्यात्सर्वैर्वा युगपन्मतेः ॥' पश्वाकृतिर्हि देवतासंबन्धित्वेन श्रुता, तेन तया परिच्छिन्नेन द्रव्येण यष्टव्यं, सा चावयविद्रव्यं साक्षात्परिच्छिनत्ति, तस्य विशसनादिविधानान्न साक्षाद्यागसाधनता संभवतीति तदवयवानामवयविद्वारेण पश्वाकृत्या परिच्छिन्नानां साधनत्वं, अवयवी चावयवेषु व्यासज्यवर्तमानः सहैव सर्वावयवेषु धियमादधाति न जातिरिव व्यक्तिषु प्रत्येकमतो विशेषतः सर्वैर्यष्टव्यम् । हृदयादिवचनं तु द्व्यवदाननियमार्थम् । एवं हि श्रूयते 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यती'ति नियमश्च । नैवमेकादशैवावदेयानि नाधिकानीति किं तर्हि यान्येकादश तानि द्विरवद्यतीति नाधिकानीति । तेनाधिकान्यङ्गानि पशोः पञ्चावदानवचनात्त्रिस्त्रिरवद्यन्ते । तस्मात्सर्वेभ्योऽ-

---

वेन 'पशुर्हव्यं करोतु म' इति याज्ञिकानामूहप्रकारश्चिन्त्यः । सूत्रार्थस्तु—पशोः कृत्स्नस्यैव देवतासंबन्धित्वेन चोदितत्वात्स एवैकं हविरिति ॥

**हविर्भेदात्०** ॥ ३ ॥ **ननु** पूर्वाधिकरण एव हृदयादीनां हविष्ट्वमित्युक्तत्वात्किमर्थमिदमधिकरणमित्यत आह—**पश्विति** । पश्वङ्गानां हविष्ट्वं ननु कृत्स्नस्य पशोरित्येव पूर्वाधिकरणव्यापारः ननु हृदयादीनामेव हविष्ट्वमित्यत्रापि । एवंच पूर्वाधिकरणे उत पश्वङ्गं हृदयादि हविरिति हृदयादीनामेव हविष्ट्वं निश्चीयते इति च हृदयादिव्यवहारो वस्तुगतिमनुरुध्येति ध्येयम् । अनेनैव पूर्वाधिकरणोक्तसामान्यस्य विशेषपर्यवसाननिरूपणात्संगतिरिति सूचितम् । **तत्रेति** । अवयवानां हि यागसाधनत्वं न श्रुतं किंतु पशोरेव यागसाधनत्वं श्रुतं, तत्तु विशसनवाक्यपर्यालोचनया न साक्षात्किंत्ववयवद्वारेत्यवगमादवयवानां पशुगतयागसाधनत्वनिर्वाहकतया साधनत्वप्राप्तिः । पशोश्च यागसाधनत्वं येनकेनाप्येकेनैवोपपन्नमित्यर्थः । हृदयादिवाक्योपपत्तिस्तु द्वितीयपक्षवद्बोध्या । सत्यम् । पशुगतयागसाधनतानिर्वाहकत्वेनैवावयवप्राप्तिस्तदेव तु सर्वैरवयवैर्विना न निर्वहतीति सर्वेषां साधनत्वमिति पक्षान्तरमाह—**सर्वैरिति** । सर्वेष्ववयवेषु व्यासक्तस्यावयविनः सर्वैरेव मिलितैरवयवैरभिव्यक्तिर्नैकेनेति पश्ववयविनः साधनत्वं सर्वावयवनिर्वाह्यमिति सर्वैर्यष्टव्यमित्यर्थः । द्वितीयं पक्षं विवृणोति—**पश्वाकृतिरिति** । ननु विशसनवाक्यादवयवानां यद्यागसाधनत्वमवगतं तत् 'हृदयस्याग्रेऽवद्यती'त्यादिना हृदयादिष्वेव हविःसंस्कारार्थमवदानदर्शनात्तेष्वेवोपसंहर्तव्यमतः कथं सर्वेषां हविष्ट्वमत आह—**हृदयादीति** । भवेदेवं हृदयादिषूपसंहारः यदि 'हृदयस्याग्रेऽवद्यती'त्यादिवचनमवदानसंस्कारविधायकं स्यात्, नत्वेवं किंतु यद्यपि 'चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्ये'ति वपाग्रहणस्य पाशुकहविर्मात्रोपलक्षणार्थतया पञ्चावदानसंपत्त्यर्थं त्र्यवदानेद्व्यवदानेपि प्रसक्ते द्व्यवदाननियमार्थम् । यच्च वचनम् 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यती'ति तत्र संख्येयावदेयविशेषाश्रवणाद्धृदयादिरूपाण्येकादशावदानानीत्येवमपेक्षितविशेषसमर्पकतया तदेकवाक्यतापन्नं तत्तद्व्यवदाननियमार्थम् । तथाच संकोचकप्रमाणाभावात्सर्वेषां हविष्ट्वमित्यर्थः । **नन्वेवमपि** न सर्वेषां हविष्ट्वं 'एकादश वै पशोरवदानानी'त्यनेनैकादशैव पशोरवदेयानि नाङ्गान्तराणीत्येवमङ्गान्तरेष्ववदाननिषेधेन तेषां हविष्ट्वाप्रसक्तेरित्यत आह—**नैवमिति** । पशोरेकादशैवावदेयानि तानि च द्विरवद्यतीत्यर्थविधौ वाक्यभेदप्रसङ्गादिति भावः । **किंतर्हीति** । अत्र च प्राथम्यादेकादशेत्येवोद्देश्यसम-

---

१ तद्भेदात्कर्मणो.

वदेयम् । नैतदेवम्—'अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते ॥ अवदानवचोभ्यस्तु विशेषोऽत्रावधार्यते ॥' यदा हि हृदयादीनामवदानवचनेन हविष्ट्वमवगतं तदा तत्प्रकृतित्वेनैव पशोर्देवतासंबन्धोपपत्तेर्न किंचिदङ्गान्तराणां हविष्ट्वे प्रमाणमस्ति । नच द्विसंख्यार्थं हृदयादिश्रवणं, भिन्नवाक्यत्वात् । 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस'इत्यादीन्यवदानविधानानि, 'एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यती'ति संख्याविधानं, तस्माद्धृदयादिभ्यः परिगणितेभ्योऽवदानं नाधिकेभ्यः ॥

ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्धोमाधिकरणम् ॥ ३ ॥

## इज्याशेषात्स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ [त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥]

**इज्याशेषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः ॥ आद्यः प्रकृतिवन्मैवं पूर्वार्धेत्युक्तिशेषतः ॥ ४ ॥**

पशावेव चोदकप्राप्तः स्विष्टकृद्यागः किं प्रधानहविर्भ्यो हृदयादिभ्य उत्तरार्धं गृहीत्वा कर्तव्य उताङ्गान्तरेभ्य इति संशये प्रधानशेषप्रतिपत्त्यर्थत्वात्प्रकृतौ पशावपि प्रधानशेषेभ्यः कर्तव्यः । 'त्र्यङ्गैः स्विष्टकृतं यजती'ति वचनं चोदकप्राप्तेषु सर्वेषु प्रधानहविःषु त्रित्वविधानार्थं, तेन तेषामेव मध्ये त्रिभिः स्विष्टकृदिज्येतेति प्राप्ते ब्रूमः—'त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा ॥ तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते ॥' एकं हीदं समासपदं त्र्यङ्गैरिति तदेकप्रसरं युक्तं सकलमुद्देशकमुपादायकं वा, उत्तरार्धं तूद्दिश्य पूर्वार्धे विधीयमाने प्रसरभेदात्सामर्थ्यविघातात्समासो न स्यात् । अपिच 'दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्ये'ति वाक्यशेषेऽनिज्याशेषाणां कीर्तनाद्विस्पष्टमनिज्याशे-

---

र्यैकमवदानानीत्येतत्त्वनुवादमात्रमिति वा तानीत्येकपदोपादानाद्वा न विशिष्टोद्देशदोष इति भावः । **अविशेषादिति ।** पशोः प्रणाड्या यागसाधनत्वे प्रमाणद्वयं संभाव्यते विशसनवचनं हृदयादिवचनं च । तत्र यदि विशसनवचनं प्रणाड्या प्रमाणं तदा यद्यप्यविशेषेण सर्वेषां साधनत्वं प्राप्नोति तथापि हृदयादिवचनेन विशेषावगतसाधनत्वस्य हृदयादिष्वेवोपसंहारान्न सर्वेषां हविष्ट्वमित्यर्थः । द्वितीये त्वन्येषां हविष्ट्वं दूरापेतमित्याह—**यदाहीति । भिन्नेति ।** अप्राथशब्दानर्थक्यभयाद्धृदयादिवाक्यस्यावदानविधायकत्वमवश्यं स्वीकार्यमिति नास्य ह्यवदाननियमार्थेनैकादश **वा** इत्यनेनैकवाक्यत्वमिति भावः । एवंचावदानविधौ सति हृदयादीनां समुच्चयसिद्धेः प्रथमपक्षोऽपि निरस्त इति ध्येयम् । सूत्रार्थस्तु—सर्वेषामवयवानां हविष्ट्वेन तद्भेदात्प्रत्यवयवमवदानकर्माभ्यासावगमात्सर्वेभ्योऽवदेयमिति ॥

**इज्याशेषात्०** ॥ १० ॥ यदि हृदयादीनां हविष्ट्वं तर्हि तेभ्य एव स्विष्टकृदित्युत्थितेः संगतिः । **प्रतिपत्त्यर्थत्वादिति ।** स्विष्टकृत इति शेषः । **त्रित्वेति ।** पर्यवसितार्थकथनमेतत् । शब्दतस्तु त्रित्वविशिष्टाङ्गानामेव स्विष्टकृति विधानं, तत्रेज्याशेषाणामङ्गानां प्राप्तत्वात्प्राप्ताप्राप्तविवेकेन त्रित्वविधौ पर्यवसानम् । यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति, एकं साम तृचे क्रियते सप्तदशारत्नि'रित्यादौ शब्दतो विशिष्टविषयतया प्रतीयमानस्यापि विधेरुष्णीषादिलक्षणविशेष्यस्यान्यतः प्राप्त्या लौहित्यादिलक्षणविशेषणमात्रे तात्पर्यगत्या पर्यवसानं तद्वत् । एवंच शब्देन विशिष्टवेषेणैव विध्यन्वयात्समासे एकेनांशेनोद्दिश्यापरेणांशेन विधानानङ्गीकारान्न सामर्थ्यविघातनिबन्धनसमासानुपपत्तिदोषप्रसङ्गः । अन्यथा लोहितोष्णीषा इत्यादिष्वप्यसामर्थ्यादसमासः स्यात् । एवंच हृदयादिष्वेव त्रित्वविधिपर्यवसानेन तेष्वेव यैः कैश्च त्रिभिः स्विष्टकृन्नाङ्गान्तरैरुक्तवचनस्य तत्रासामर्थ्यादित्यर्थः । युक्तं लोहितोष्णीषा इत्यादिषु शब्दतो विशिष्टवेषेण विध्यन्वयेऽपि विशेषणमात्रे पर्यवसानमुभयथापि अनुष्ठानविशेषाभावात् । इह तु त्रित्वविशिष्टाङ्गविधौ अनिज्याशेषैः स्विष्टकृत् अङ्गेषु त्रित्वविधौ तु इज्याशेषैरित्यनुष्ठानभेदेन शब्दतो विशिष्टविषयतया प्रतीयमानस्याङ्गान्तरविधायकत्वोपपत्त्या हृदयादिषु त्रित्वविधेः पर्यवसाययितुमशक्यत्वात्, तथाचेह त्रित्वविधिमिच्छता प्रकारान्तरासंभवादङ्गानुवादेन त्रित्वं शब्दगत्यैव विधीयत इति वक्तव्यम् । तथासत्यसामर्थ्यात्समासानुपपत्तिः स्यादेवेत्याशयेनाह—**त्रित्वमिति । प्रसरेति ।** प्रथममुद्देश्यप्रतीतौ हि पश्चात्तत्र विधेयान्वयः, एवंचाङ्गोद्देशेन त्रित्वविधौ समासे एकदेशस्याङ्गशब्दस्य प्रथमं स्वार्थप्रत्यायकत्वं पश्चाच्चैकदेशान्तरस्य त्रिशब्दस्येत्यवयवशो व्यापारद्वयप्रसङ्गात्पदद्वयस्यापि संभूयैकव्यापारत्वाभावेनैकार्थीभावलक्षणसामर्थ्याभावात्समासो न स्यादित्यर्थः । ननु चोदकप्राप्तेज्याशेषाबाधायासमर्थसमासमपि स्वीकृत्य त्रित्वविधिरेव युक्त इत्यस्वरसादाह—**अपिचेति ।** नच हृदयादिष्वपि दोःप्रभृतीनां सद्भावात्कथमनिज्याशेषाणां कीर्तनमिति वाच्यम् । तत्रानन्तर्गतदक्षिणदोःसव्यश्रोणिगुदतृतीयानामेवात्र ग्रहणात् । अत एवापस्तम्बः 'दक्षिणं दोः सव्या श्रोणी गुदतृतीयमिति सौविष्टकृता'नित्याह । अनेन वाक्य-

षाणां विधानं तैश्च प्रत्याम्नानादिज्याशेषाणां बाधः। नन्वनिज्याशेषाणामङ्गत्वेन विधानादिज्याशेषाणां च चोदकेन प्रतिपाद्यत्वेन प्रधानतया प्राप्तानां विषयभेदादयुक्तो बाधः। प्रधानभूतानामपि निर्वर्तकत्वात्तस्मिंश्चांशेऽनिज्याशेषाणां विधानादार्थिकमस्त्येव तुल्यविषयत्वम्। नह्यनिज्याशेषैः क्रियमाणो यागस्तेषां प्रतिपत्तयेऽलं भवति तेन गुणभूतैरपि युक्तः प्रधानबाधः। किंचानिज्याशेषाणामपि हृदयाद्यर्थालब्धपश्वनुनिष्पन्नानामाकीर्णकराणां प्रतिपत्त्यपेक्षत्वाच्चोदकेनेज्याशेषप्रतिपत्त्यर्थतया प्राप्तः स्विष्टकृद्यागस्तत्प्रतिपत्तौ वचनेन विनियुज्यते, यत्स्विष्टकृता प्रतिपाद्यं तत् त्र्यङ्गानि न हृदयादीनि तस्मायुक्तो बाधः॥

अध्यूध्न्या इडाविकारताधिकरणम्॥ ४॥

**अध्यूध्नी तु होतुरुत्र्यङ्गवदिडाभक्षविकारः स्यात्॥ १२॥ [शेषे वा समवैति तस्माद्रथवन्नियमः स्यात्॥ १३॥ अशास्त्रत्वात्तु नैवं स्यात्॥ १४॥ अपि वा दानमात्रं स्याद्भक्षशब्दानभिसंबन्धात्॥ १५॥ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्यात्, शेषं प्रत्यविशिष्टत्वात्॥ १६॥]**

होतुर्नियम्यतेऽध्यूध्नी किंवेडां विकरोति सा॥ अनस्थिभिरिति प्राप्ता होतुः पक्षे नियम्यते॥ ५॥
अनुवादोऽनस्थिवाक्यं प्रापिका परिशिष्टगीः॥ नाध्यूध्नी तत्र तेनेडा होतुर्विक्रियते तया॥ ६॥

पशावेवं श्रूयते 'अध्यूध्नीं होत्रे हरन्ती'ति सेयमध्यूध्नी किं प्राकृतस्य होतुरिडाभक्षणस्य विकार उत नेति। यद्यत्यन्ताप्राप्ताऽध्यूध्नीयं विधीयते ततो विकारः। अथ पक्षे होतुः प्राप्ता सती नियम्यते ततोऽविकारः। तत्र 'अनस्थिभिरिडां वर्धयन्ती'ति वचनादिडायामन्तर्गताध्यूध्नीडायामृत्विग्भिर्विभज्य भक्ष्यमाणायां कदाचिद्धोतृभागे स्यात्कदाचिदन्यस्य भागे सा होतृभागे नियम्यते, ततो यजुर्युक्तरथवन्नेडाभक्षस्य विकारः। उच्यते—'अनस्थिभिरिडां वर्धयन्ती'तिवर्तमानापदेशसरूपत्वादनु-

---

शेषोपन्यासेनैव दोःप्रभृतीनां दोःपूर्वार्धस्याग्रेऽवयतीत्येकावदानक्रियासंबन्धेन त्रित्वं क्लृप्तम्। हृदयादिषु तु न तथा एकक्रियागुणादिसंबन्धकृतं त्रित्वं क्लृप्तमित्यपि सूचितम्। **नन्वेवमपि** त्र्यङ्गैः हृदयादीनां न प्रत्याम्नानं तत्कार्ये विधानाभावादिति शङ्कते—**नन्विति**। अङ्गत्वेन विधानमिति कोऽर्थः, किमनिज्याशेषविशिष्टस्विष्टकृत्प्रतिरूपकं कर्मान्तरं विधीयते उत प्राकृतस्विष्टकृत्येव त्र्यङ्गानां साधनत्वेन विधानमिति। नाद्यः। प्रत्यभिज्ञानाद्विशिष्टविधिगौरवप्रसङ्गाच्च कर्मान्तरविध्यनुपपत्तेः। द्वितीयं दूषयति—**प्रधानेति**। प्राकृते स्विष्टकृति इज्याशेषाणामार्थिकं साधनत्वमस्तीतीहानिज्याशेषाणां साधनत्वविधाविज्याशेषाणां साधनत्वनिवृत्त्यवश्यंभावात्। तत्साधनत्वेनेज्याशेषाणां प्रतिपत्त्यसंभवाच्चार्थात्प्रधानांशस्यापि निवृत्तिरित्यर्थः। नचानिज्याशेषाणां साधनत्वविधिबलात्स्विष्टकृतोऽभ्यासोस्तु तथाच नेज्याशेषप्रतिपत्तिबाध इति वाच्यम्। पुनःप्रयोगस्यादृष्टार्थत्वापत्त्याऽभ्यासस्याप्ययुक्तत्वादिति भावः। इदानीं नात्र त्र्यङ्गानां स्विष्टकृदर्थतया विधानं, स्विष्टकृदेव तु त्र्यङ्गार्थतया विधीयते, तथाचेज्याशेषप्रतिपत्त्यर्थस्य तस्य तेभ्योऽवच्छिद्यानिज्याशेषप्रतिपत्त्यर्थतया विधानाद्युक्तो बाध इति पक्षान्तरमाह—**किंचेति**। **आकीर्णेति**। नचेज्याशेषाणामेव प्रतिपत्त्यपेक्षा नान्येषामिति नियमोस्ति। अनिज्याशेषत्वेऽपि आकीर्णकरत्वमात्रेण शकल्लोहितादिवद्यज्ञदेशविविक्तीकरणार्थे प्रतिपत्त्यपेक्षत्वादित्यर्थः। तृतीया च प्रयाजशेषेण हवींष्यभिघारयतीत्यादिवत्प्रतिपाद्येप्युपपन्नेति भावः॥

**अध्यूध्नी तु होतुः०॥ १२॥** 'अध्यूध्निस्तरसो मांसमि'ति धूर्तस्वामी। तदर्थसंशयं फलफलिभावमुखेन दर्शयति—**यदीति**। त्र्यङ्गैरनिज्याशेषैर्हृदयादीनामिज्याशेषाणां बाधेप्यनिज्याशेषभूताध्यूध्न्या न तेषां बाध इत्युत्थितेः संगतिः। **ननु** अनिज्याशेषत्वादध्यूध्नेरिज्याशेषप्रतिपत्त्यर्थेडान्तर्भावाभावेन नियमविध्यसंभवात्कथं पूर्वःपक्ष इत्यत आह—**तत्रेति**। ननु यथाध्यूध्नेः कदाचिद्धोतृभागे प्राप्तिरेवं होतुरध्यूध्निव्यतिरिक्तमपि प्राप्नोति, ततश्च यद्धोत्रे हरन्ति तदध्यूध्निमित्यपि नियमविधिसंभवात्कथं यदध्यूध्नीं हरन्ति तद्धोत्रे इत्येवंरूपनियमस्यैव स्वीकार इत्यत आह—**यजुरिति**। यथा वाजपेये सप्तदशसु रथेषु यजुर्युक्तो रथोऽपि कस्मैचिद्देयत्वेन प्राप्तोऽध्वर्योरपि रथादिषु किंचिद्देयत्वेन प्राप्तं, तस्यां च दशायां प्रवर्तमानस्य 'यजुर्युक्तं रथमध्वर्यवे ददाती'त्यस्य यद्यजुर्युक्तं ददाति तदध्वर्यवे इति, यदध्वर्यवे ददाति तद्यजुर्युक्तमिति चोभयथा नियमपरत्वसंभवेऽपि रथव्यतिरिक्तद्रव्येषु अध्वर्युभागप्रापकचोदकानुग्रहाय यद्यजुर्युक्तं ददाति तदध्वर्यव इत्येवमेव नियमविधिः स्वीक्रियते, तथेहापि चोदकानुग्रहाय यदध्यूध्नीं हरन्ति तद्धोत्र इत्येव नियमः स्वीक्रियते इति नेडा भक्ष-

प्रादोऽयं कथं प्राप्तिः । अथ यत्परिशिष्टं तत्समवत्तधान्यामावपन्ति यद्धृदयं प्रास्यति जिह्वां वक्षस्त-न्नियमतस्तस्यै वनिष्टुमिति । नच तन्मध्येध्यूध्नीः कीर्तिता तस्मादप्राप्ता । तेन नैवं वचनव्यक्तिः 'यद-ध्यूध्नीं हरन्ती तद्धोत्रे' इति, किं तर्हि 'यद्धोत्रे हरन्ति तदध्यूध्नी'मिति प्राकृतं होतृसंप्रदानकं हरणम-ध्यूध्नीप्रतिपादने विनियुज्यते तस्मादिडाभक्षविकारः ॥

वनिष्टोर्भक्षविकारताधिकरणम् ॥ ५ ॥

## अग्नीधश्च वनिष्टुरध्यूध्नीवत् ॥ १७ ॥

**वनिष्टुरपि तद्वत्स्यात्प्राप्तिः प्रासनतो यदि ॥ इडासंस्कार एवायं भक्षो विक्रियते ततः ॥ ७ ॥**

तत्रैव श्रूयते 'वनिष्टुमग्नीधे हरन्ती'ति तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः । विशेषाशङ्का तु व-निष्टोरिडायां प्रासनवचनादस्ति प्राप्तिरिति । सत्यमस्ति प्रासनं तत्त्विडासंस्कारार्थमुपस्तरणादिवत् । अतो नास्येडात्वम् । नच भक्षसंयोगोऽस्य भक्षयितुं प्रास्यतीति । न चतुर्थीनिर्देशः प्रासनविधावस्ति । तस्मादप्राप्तोवनिष्टुरग्नीधे वनिष्टुमिति चतुर्थ्याग्नीत्संप्रदानके हरणे विधीयत इति **प्राकृतस्येडाभक्षस्य विकारः ॥**

मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ॥ ६ ॥

## अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ [स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसंबन्धात् ॥ १९ ॥]

**मैत्रावरुणनाम्नोऽत्र भक्षो नास्त्यस्ति वा नहि ॥ अप्राकृतत्वादध्वर्युहोत्रन्तर्भावतोऽस्ति सः ॥ ८ ॥**

**मैत्रावरुणो नामास्ति पशावृत्विक् स किमिडां भक्षयेन्नेति संदेहे नास्य प्रकृतितो भक्षः प्राप्नो-त्यप्राकृतो ह्यसौ हौत्राध्वर्यवकारित्वात् । कार्यतस्त्वस्ति भक्षणम् प्राकृता हि भक्षाः प्राकृतकर्तृनिय-**

---

विकार इत्यर्थः । **अथ यदीति** । समवत्तधान्यामिडापात्रमित्यर्थः । जिह्वावक्षःप्रभृतिकतिपयविषयतया स्वल्पविषय-स्याप्यस्यैव स्पष्टविधिप्रतीतिबलात्प्रापकत्वं नत्वस्थिरहितसर्वमांसविषयतया सामान्यविषयस्याप्यनस्थिवाक्यस्य तत्र विधि-प्रतीतेरस्पष्टत्वादिति भावः । **नैवमिति** । अप्राप्तत्वादध्यूध्नीहरणस्यानुवादत्वासंभवादिति भावः । **किंतर्हीति** । अध्यू-ध्नीहोतृविशिष्टहरणान्तरविधाने गौरवप्रसङ्गात्प्राकृतमेव होतृसंप्रदानकं हरणमिज्याशेषप्रतिपत्त्यर्थं तत आच्छिद्याध्यूध्नीप्रति-पत्त्यर्थतया विधीयत इत्यर्थः । तच्च होतृसंप्रदानकं हरणं प्रकृतौ इडाभक्षणार्थमितीहासत्यपि भक्षश्रवणे हरणमुखेन भक्ष-णविधिपर्यवसानाद्भक्षविकार इत्याशयेनाह—**तस्मादिति** । सूत्रार्थस्तु—अध्यूध्नीहोतुर्भक्षविकारः स्याद्यथा त्र्यङ्गानामि-ज्याशेषविकारत्वं तद्वदिति ॥

**अग्नीधश्च०** ॥ १७ ॥ वनिष्टुर्वपासंनिहितस्तत्सदृशो मांसविशेषः । धूर्तस्वामी तु स्थविरान्त्रविशेष इत्याह । **नास्ये-ति** । यथा 'पयसा मैत्रावरुणं श्रीणाती'ति ग्राह्यरससंस्कारकस्य पयसो न देयत्वं तद्वदिति भावः । **नचेति** । यदि प्रास-नवाक्ये भक्षयितुं प्रास्येतेति भक्षसंयोगः श्रूयेत तदा यस्य कस्यापि भक्षणमनियमेन प्राप्नोतीत्यग्नीद्वचनं नियमार्थं स्यात् । यदि वा प्रासनवाक्येऽग्नीदादिसाधारणः कश्चिच्छब्दश्चतुर्थ्या निर्दिश्येत तदा तद्बलादेव सामान्यतो भक्षणसंबन्धे सिद्धेऽ-ग्नीद्वचनं नियमार्थं स्यात् । नचेह तदुभयमप्यस्ति, किंतु प्रासनादन्यत्र हरणवाक्ये विशिष्याग्नीध्रमात्रवाचकः शब्दश्चतुर्थ्या निर्दिश्यते । ततश्च प्राक्सामान्यतो भक्षसंबन्धस्याप्राप्त्या नियमविध्यसंभवादग्नीत्संप्रदानकं हरणं वनिष्टुप्रतिपत्तित्वेन वि-धीयत इति पूर्ववदिडाभक्षविकार इत्यर्थः । तन्त्ररत्ने तु षष्ठ्यन्तपाठमाश्रित्य षष्ठ्या चतुर्थी लभ्यत इत्युक्तम् ॥

**अप्राकृतत्वात्०** ॥ १८ ॥ यथा वनिष्टुनाग्नीधः इडाभक्षबाधः एवं मैत्रावरुणस्यापीडाभक्षबाध इत्युत्थितेः संगतिः । **नास्येति** । प्राकृतावध्वर्य्वादीनामेव भक्षणोपदेशान्मैत्रावरुणस्य च प्रकृतावभावान्न तस्य चोदकाद्भक्षप्राप्तिरित्यर्थः । **नवा-**ध्वर्य्वादित्वृत्यर्थः प्रकृतौ भक्षः येन तत्कार्यकरत्वात्कार्यप्रयुक्तं भक्षं लभेत, किंतु हविःसंस्कारार्थः । नच प्राकृतैरेव भक्ष-णेपि सिध्यतीति भावः । **हौत्रेति** । मैत्रावरुणः प्रेष्यतिचानुचाहेति प्रैषानुवचनलक्षणाध्वर्युहोतृकार्यकरत्वात्तद्धर्मभक्षणं तत्कार्यकरस्य मैत्रावरुणस्यापि स्यादित्यर्थः । **ननु** तद्धर्मत्वमेव नास्ति भक्षसंस्कारार्थत्वादित्युक्तमत आह—**प्राकृता हीति** । यद्यपि द्वितीयासंयोगाद्धविःप्रतिपत्त्यर्थं भक्षणं तथापि तत्राध्वर्य्वादिकर्तृनियमाम्नानबलान्नियमांशे तत्संस्कारार्थ-

---

१ वक्षस्तन्नियममतस्तस्यै.

मांशेन कर्तृसंस्कारार्था अपीत्युक्तम्। अतोऽध्वर्युहोतृसंस्कारार्थत्वाद्भक्षस्य मैत्रावरुणे प्रैषकरणादध्वर्युकार्यमनुवचनकरणाच्च होतृकार्यं कुर्वाणेऽस्ति प्राप्तिः ॥

मैत्रावरुणस्यैकभागताधिकरणम् ॥ ७ ॥

**द्विभागः स्याद्विकर्मत्वात् ॥ २० ॥ [एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥]**

**द्विभाग एकभागो वा द्विभागः स्याद्विकर्मतः ॥ एकः पुमैक्यतो नो चेद्वैपम्यं प्रकृतावपि ॥ ९ ॥**

किमयं मैत्रावरुणो द्वौ भागौ भक्षयेदुतैकमिति द्वयोः कर्म कुर्वन् द्वौ लभेतेति प्राप्ते ब्रूमः— 'अध्वर्योर्यावती तृप्तिर्होतुस्तृप्तिश्च यावती ॥ तत्रेण तावती तृप्तिर्भागेनैकेन लभ्यते ॥' तस्मादेकभागः स्यात् ॥

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥

**प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ [अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥]**

**प्रतिप्रस्थातुरत्रास्ति भक्षो नो वा वपामसौ ॥ पचत्यतोऽस्ति नो पक्का वपा सर्वा हुता यतः ॥ १० ॥**

तत्रैव प्रतिप्रस्थातुरिडायामस्ति भक्षो नेति संशये अध्वर्युकार्यं हविःश्रपणमसौ च करोति वपाश्रपणं तस्माद्भक्षयेत्। सत्यमसौ वपां श्रपयति तस्यास्तु सर्वप्रदानत्वान्नास्ति शेषः। प्रकृतौ च यस्यापूर्वस्य यः कर्ता स तच्छेषस्य भक्षयिता, भिन्नं चाङ्गापूर्वेभ्यो वपापूर्वमतस्तस्य कर्ता प्रतिप्रस्थाता तच्छेषमेव भक्षयितुमर्हति साच निःशेषा तस्मान्नास्य भक्षः। ननु 'अङ्गेभ्योपि हृदयादिभ्योऽयमवदानं कुर्वन्भक्षं लभेत दक्षिणतो निधाय प्रतिप्रस्थातावद्यती'ति वचनाद्यस्यां शाखायामध्वर्योरेवावदानं तद्विषयमिदमधिकरणं, प्रतिप्रस्थात्रवदानपक्षे त्वस्त्येव भक्ष इत्ययमेव परमार्थपरिहारः। यस्त्वप्राकृतमिदमवदानमप्राकृतकार्यं च प्रदानारम्भत्वाभावादित्युक्तं तदयुक्तम्। यद्यपि दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवद्यतीति मध्ये पदार्थान्तरविधानान्नायं प्रदानारम्भः तथापि प्रदानार्थमेवेदमवदानं नादृष्टार्थम्। तथाचावदानदर्शनाद्धृदयादीनां हविष्ट्वमुक्तम्। अदृष्टार्थमवदाने हि न

---

मपि भवति। यथा 'प्रयाजशेषेण हवींष्यभिघारयती'त्यभिघारणस्य प्रयाजशेषप्रतिपत्त्यर्थस्यापि हविराघारतानियमाद्धविःसंस्कारार्थत्वं तद्वदित्यर्थः। **उक्तमिति**। तृतीये स्वेन ग्रन्थकारैः षष्ठे वेति शेषः। एवंच यथा हविःसंस्कारो माविलोपीति संनिहितसर्वहविःष्वभिघारणं नत्वेकस्मिन्नेवमिहापि कर्तृसंस्कारो माविलोपीति मैत्रावरुणस्यापि भक्षणमित्याशयेनाह —**अत इति** ॥

**द्विभागः स्यात्०** ॥ २० ॥ पूर्वोक्तोपजीवनेन तत्र विशेषचिन्तनात्संगतिः। **द्वयोरिति**। एकेन भागेन एकएव संस्कारो जायते मैत्रावरुणस्य चोभयकार्यत्वादुभयसंस्कारसिद्ध्यर्थं भागद्वयं स्यादित्यर्थः। **अध्वर्योरिति**। संस्कारो हि तृप्तिलक्षण एव नान्यः। तृप्तिश्चैकेनापि भागेन प्राकृती जायत इत्येकेनैव भागेन संस्कारसिद्धेर्न भागद्वये प्रमाणमस्तीत्यर्थः ॥

**प्रतिप्रस्थातुश्च०** ॥ २२ ॥ **अध्वर्य्विति**। अनेनैव मैत्रावरुणवदस्यापि कार्यप्रयुक्तो भक्ष इत्युत्थानात्संगतिरिति सूचितम्। **ननु** वपाया निःशेषहुतत्वेपि वपाश्रपणेऽध्वर्युकार्यापन्नत्वमादाय हृदयादिषु भक्षणं किं न स्यादत आह— **प्रकृताविति**। भक्षणं हि हविःसंस्कारद्वारा तद्धविःसाध्यापूर्वस्योपकरोति। कर्तृनियमोऽपि तद्भक्षणगतस्तद्धविःसाध्यापूर्वस्यैवाङ्गं नान्यस्येति कर्तृनियमस्यापि तद्धविःसाध्यं यदपूर्वं तत्कर्तृसंस्कार एव द्वारम्। ततश्च वपाहृदयादीनामभ्यासापूर्वभेदाद्धृदयादिसाध्येष्वपूर्वेषु प्रतिप्रस्थातुः कर्तृत्वाभावान्नासौ तदीयं शेषं भक्षयितुमर्हति किंतु वपासाध्यापूर्वे श्रपणद्वारा कर्तृत्वात्तदीयमेव शेषं भक्षयितुमर्हति तस्यास्तु निःशेषत्वान्न भक्ष इत्यर्थः। तत्र भाष्ये समाधानत्रयमुक्तम्। तत्रेदमाद्यम्। यस्यां शाखायां हृदयादिषु प्रतिप्रस्थातृकर्तृकावदानवचनं नास्ति तद्विषयमिदमधिकरणमिति। तद्यथाश्रुतमनुपपन्नं सर्वशाखाप्रत्ययन्यायविरोधात्। ततश्च यस्यां शाखायामध्वर्योरवदानवचनमस्ति तद्विषयमित्येवंपरं भाष्यमित्याशयेनाध्वर्योरेवावदानमित्युक्तम्। ततश्च क्वचिच्छाखायामध्वर्योरेवावदातृत्ववचनेन प्रतिप्रस्थातुरवदानकर्तृत्वाभावान्नास्ति भक्ष इत्यर्थः। **अयमेवेति**। भाष्योक्तपरिहारत्रयमध्ये आद्य एव युक्त इत्यर्थः। द्वितीयमनूद्य दूषयति—**यस्त्विति**। प्रतिप्रस्थातुरवदानकर्तृत्वमस्तु तथापि नासौ प्राकृतमध्वर्युकार्यं करोति मध्ये सौविष्टकृतावदानव्यवहितस्यास्यावदानस्य प्रदानोपक्रमत्वाभावेन प्रदानो-

तेषां हविष्ट्वं सिध्येत्। तस्मादवद्यन्प्रतिप्रस्थाता लभेतैव भक्षम्। अध्वर्य्वेवदानपक्षे तु नास्य भक्षो वपाया निःशेषत्वादित्येतावानधिकरणार्थः॥

गृहमेधीयकेऽपूर्वाज्यभागविधानाधिकरणम्॥ ९॥

**विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात्॥ २४॥ [अपि वाऽऽग्नेयवद्विशब्दत्वं स्यात्॥ २५॥ न वा शब्दपृथक्त्वात्॥ २६॥ अधिकं वाऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात्॥२७॥ प्रतिषेधः स्यादिति चेत्॥ २८॥ नाश्रुतत्वात्॥ २९॥ अग्रहणादिति चेत्॥३०॥ न तुल्यत्वात्॥ ३१॥ तथा तद्ग्रहणे स्यात्॥ ३२॥ अपूर्वतां तु दर्शयेद्ग्रहणस्यार्थवत्त्वात्॥ ३३॥]**

गृहमेधीयके त्वाज्यभागावित्यनुवादगीः॥ स चोदकविधिर्वार्थवादो वाधिककर्म वा॥ ११॥
परिसंख्योत संकोचश्चोदकान्यत्र वात्र वा॥ अपूर्वो गृहमेधीयः स्याद्वातो लुप्तचोदकम्॥ १२॥
अनुवादः पुनःश्रुत्या द्वितीयः सार्थतावशात्॥ निर्वापवच्चोदकस्य लिङ्गत्वेन सहायकृत्॥ १३॥
ओदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम्॥ विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः॥ १४॥
प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि॥ चोदकस्य च संकोच इतराङ्गनिषेधतः॥ १५॥
व्यापारैक्याच्चोदकस्य स्वार्थसंहरणं भवेत्॥ वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते॥ १६॥
आज्यभागेति नाम्नोपकारक्लृप्तिस्मृतेरिह॥ नामतादि समं तस्माल्लुप्यते तेन चोदकः॥ १७॥

चातुर्मास्येषु साकमेधे पर्वणि गृहमेधीयेष्टिस्तत्र श्रूयते 'आज्यभागौ यजति यज्ञताया' इति। तदिहाज्यभागश्रवणेऽष्टौ पक्षा विचार्यन्ते—किं चोदकप्राप्तानुवादमात्रं उत द्वाभ्यां विधानमर्थवादार्थं वा कर्मान्तरविधिर्वा परिसंख्या वा तद्वर्जातिदेशो वा तयोरेवातिदेशो वा अपूर्वो वा गृहमेधीय इति। 'तत्र प्रकृतितः प्राप्तेश्चोदकेनाज्यभागयोः॥ गुणान्तरस्य चाभावादनुवादत्वमिष्यताम्॥ आनर्थक्यप्रसङ्गात्तु नत्वेतद्धृदयंगमम्। तस्मादुभाभ्यां विध्यन्तो दार्शिकोऽत्र विधीयते॥' आज्यभागश्रवणं निर्वपत्यादिश्रवणवत्प्रकृतिसादृश्यमापादयच्चोदकस्य निमित्तं भवति चोदकस्त्वैष्टिकं विध्यन्तं नियच्छतीत्येवमुभाभ्यामैष्टिकविध्यन्तविधिः। नैतदपि युक्तं औषधद्रव्यकत्वादेवैष्टिकातिदेशसिद्धेः। तस्माच्चोदकप्राप्तैष्टिकविध्यन्तप्रशंसार्थमिदम्। एवमयं दर्शपूर्णमासविध्यन्तः प्रशस्तो

पक्रमप्राकृतावदानकार्यकरत्वाभावात्ततश्च प्राकृतं हविःसंस्कारकार्यार्थं यदवदानं तदध्वर्युणैव कर्तव्यं न प्रतिप्रस्थात्रेति न तस्य भक्षप्रसक्तिरित्यर्थः। **तस्मादिति**। न च हृदयादिविभागरूपमिदं शाखान्तरविहितावदानमिति भाष्यसमर्थनं युक्तम्। तथासति विशसनकालीनत्वापत्तेः। इदं च दक्षिणतो निधायेति वचनाद्ब्रह्मासादनोत्तरकालमिति भावः। अवदानकर्तृत्वमध्वर्योरार्थिकं प्रकृतावित्यार्थिकस्यानतिदेशात्तत्कुर्वन्नपि प्रतिप्रस्थाता भक्षं न लभत इति। तृतीयपरिहारस्तु समाख्यादिना तस्यापि शास्त्रीयत्वसमर्थनेन तन्त्ररत्न एव निराकृत इति भावः। यदि कस्यामपि शाखायामध्वर्युमात्रकर्तृकावदानं न स्यात्तदा कृत्वाचिन्तयेदमिति प्रथमपरिहाराशय इत्याह—**अध्वर्य्विति**॥

**विकृतौ प्राकृतस्य०॥ २४॥ गृहमेधीयेति**। 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदन'इति विहितेति शेषः। **द्वाभ्यामिति**। प्रत्यक्षवचनेन चोदकेन च द्वाभ्यां दार्शिकविध्यन्तविधिरित्यर्थः। तथाचाज्यभागश्रवणमैष्टिकविध्यन्तविधानार्थमिति द्वितीयः पक्षः। **परिसंख्येति**। चोदकप्राप्ताङ्गान्तरपरिसंख्येत्यर्थः। **तद्वर्जेति**। आज्यभागव्यतिरिक्ताङ्गानामतिदेश इत्येवमतिदेशपर्युदासार्थमाज्यभागश्रवणमित्यर्थः। **तयोरिति**। चोदकोपसंहारार्थं श्रवणमित्यर्थः। **अपूर्व इति**। आज्यभागश्रवणं चोदकपरिलोपकं सत्प्रकृतिराहित्यलक्षणापूर्वतासंपादनार्थमित्यर्थः। प्रतिप्रस्थातुर्भक्षबाधेऽपि आज्यभागव्यतिरिक्ताङ्गानां गृहमेधीये न बाध इत्युत्थितेः संगतिः। **ननु** चोदक एव कृत्स्नविषयत्वादैष्टिकविध्यन्तविधायकः नत्वाज्यभागश्रवणमतः कथमुभाभ्यां विधिरित्यत आह—**आज्यभागेति**। **नियच्छतीति**। नियतमैष्टिकमेव प्रतिपादयतीत्यर्थः। सत्यं चोदकस्यैव विधायकत्वमाज्यभागश्रवणस्य तु चोदकनिमित्तैष्टिकनियतसादृश्यापादकतया तद्विधुपयोगाद्विधायकत्वोक्तिरित्यर्थः। **औषधेति**। आज्यभागयोः पशुसाधारण्यादैष्टिकविध्यन्तनियम उत्पत्तिवाक्यश्रुतौदनशब्दावगतौषधद्रव्यकत्वादेव वाच्य इति भावः। 'सौर्यं चरुं निर्वपे'दित्यत्र चरुशब्दावगतौषधद्रव्यकत्वादेव निर्वा-

यत्तत्राज्यभागावपि स्तः तौ च यज्ञताया इति विध्येकवाक्यत्वाभावादिदमप्यन्याय्यम् । तस्मात्कर्मान्तरविधिः । प्रसिद्धाज्यभागप्रत्यभिज्ञानात्तदपि न सारम् । तस्माच्चोदकेन सर्वेष्वङ्गेषु प्राप्तेष्वाज्यभागयागपुनःश्रवणं समिदादियागानां परिसंख्यार्थमाज्यभागावेव यजति न समिदादियागानिति । तदप्यनुपपन्नम् । परिसंख्यायास्त्रिदोषत्वात् । तस्मात्प्रत्यक्षवचनसिद्धत्वादाज्यभागयोस्तद्वर्जमन्यान्यङ्गानि चोदकः प्रापयति । तदप्यचतुरस्रम् । नहि चोदकस्य प्रत्यङ्गं व्यापारभेदोस्ति येनाज्यभागविषये न व्याप्रियेत । एकेनैव व्यापारेणासौ सर्वाण्यङ्गानि प्रापयति तेनैव चाज्यभागयोरपि प्राप्तत्वादनर्थकमेव पुनःश्रवणं स्यात् । तस्माच्चोदकोपसंहारोयं प्रकृतिवत्कुर्यात् । किं तत्सादृश्यमाज्यभागौ यजति तदप्यपेशलम् । नहि प्रत्यक्षश्रुतोऽतिदेशः येनैवमाश्रीयते कल्प्योह्यसौ । तद्यदि कल्पितेऽपि तस्मिन्नाज्यभागावेवानुष्ठातव्यौ तयोः प्रत्यक्षेण वचनेनैव सिद्धेरनर्थकश्चोदकाङ्गीकारः । 'तस्मादपूर्वतैव स्याद्गृहमेधीयकर्मणः ॥ प्राकृताङ्गनिराकाङ्क्षं न तच्चोदकमर्थयेत् ॥' आज्यभागयोर्हि प्रकृतौ श्रुतयागरूपव्यतिरेकेण प्रकरणाम्नानकल्पितं स्वापूर्वद्वारेण यागगतव्यापाररूपमपरमस्ति तदुपलक्षणार्थं चेदमाज्यभागश्रवणं अन्यथानर्थक्यात् । अतश्च गृहमेधीयप्रयोगवचनो यागगतं व्यापारमपेक्षमाणः प्रत्यक्षवचनविहिताज्यभागनिराकाङ्क्षो न प्रकृतिमपेक्षते । विकृत्यन्तरे यानि त्वप्राकृ-

---

पनियमे लब्धेपि केवलप्रत्ययोपादानासंभवाद्विधिप्रत्ययार्थतया निर्वपत्युपादानस्य नानर्थक्यमिति तत्त्वरत्ने । **तौचेति ।** यज्ञतासंपत्त्यर्थावाज्यभागौ तत्सत्त्वे दर्शादिषु यज्ञतादर्शनादित्यर्थः । **विधीति ।** नच यथा 'नार्षेयं वृणीते' इत्यस्य पर्युदासतयार्षेयवरणवर्जं प्रकृतिवत्कुर्यादिति प्रकृतिवच्छब्दशेषत्वमेवमिहापि प्रकृतिवच्छब्दशेषत्वमेव स्तुतेरिति तृतीयपक्षेऽभिमतम् । तत्र चेदं दूषणमलग्नकमिति वाच्यम् । प्रकृतिवच्छब्दो हि प्रधानविध्यन्तर्गतस्ततश्च प्रकृतिवच्छेषत्वमित्यनेन गृहमेधीयविध्येकवाक्यतेत्युक्तं स्यात् नचात्र गृहमेधीयप्रधानविध्येकवाक्यता स्वरसतः प्रतीयते प्रत्युत भेदस्यैवावगमात् । नच कथंचित्कल्पनं युक्तम् । स्ववाक्य एव वक्ष्यमाणरीत्या कर्मान्तरविधायकत्वोपपत्तौ क्लेशेन तत्कल्पनाया अयुक्तत्वादित्यर्थः । तदेवाह—**तस्मादिति । प्रसिद्धेति ।** कर्मान्तरं न प्रकरणान्तरात् प्रकरणान्तरं ह्यसंनिधानं बुद्धौ विपरिवृत्त्यभावलक्षणं । नचात्र तत्संभवः । आज्यभागयोश्चोदकाद्विपरिवर्तमानत्वात् । नापि चोदकेनाज्यभागौ प्राप्येते प्रत्यक्षवचनेनापि तावेव प्राप्येते इत्यभ्यासात् कर्मान्तरत्वमाज्यभागशब्देन प्रसिद्धाज्यभागयोरेव प्रत्यभिज्ञानेन कर्मान्तरत्वासंभवादन्यथाज्यभागशब्दस्य धर्मलक्षकत्वप्रसङ्गादित्यर्थः । एवंच प्रकरणान्तरनिरासपरत्वे प्रत्यभिज्ञानशब्दश्चोदकाद्विपरिवृत्तिपरः अभ्यासनिरासपरत्वे तु यथाश्रुत इति विवेकः । **त्रिदोषत्वादिति ।** पञ्चमपक्षे प्राप्तपरिसंख्यात्वाङ्गीकारात्त्रैदोष्यं स्यादित्यर्थः । सिद्धान्ते तु चोदकप्रवृत्त्यनङ्गीकारादप्राप्तपरिसंख्यात्वान्न त्रैदोष्यम् । **प्रत्यक्षेति ।** प्रत्यक्षत्वादेव शीघ्रप्रवृत्तिकेन वचनेन प्राप्तत्वादानुमानिकतया पश्चात्प्रवर्तमानश्चोदकस्तद्वर्जमेव चोदयतीत्यर्थः । **नहीति ।** विकृतिभावनायाः प्रकारापेक्षिण्याः स्वरूपेणपदार्थानपेक्षितया प्रत्यक्षेणाप्याज्यभागवचनेन प्रथमं न संबध्यते तस्याज्यभागस्वरूपमात्रप्रापकत्वेपि प्रकारप्रापणशक्त्यभावात्, किंतु प्रकारप्रापणशक्तेन चोदकेनैवानुमानिकेनापि प्रथमं संबध्यते । तेनच प्रकारद्वारा सर्वपदार्थप्रापकेणाज्यभागयोरपि प्राप्तत्वात्प्रत्यक्षवचनमनुवादकं संपाद्यमानमनर्थकं स्यादित्यर्थः । **उपसंहार इति ।** तथाच चोदकस्य प्रकारप्रापकत्वं प्रत्यक्षवचनस्य तु पदार्थरूपप्रापकत्वमिति नैकस्याप्यानर्थक्यमित्यर्थः । **नहीति ।** उभयोरपि प्रत्यक्षत्वे केनचित्किंचिदंशः प्राप्यत इति कल्पनेन कथंचिदुभयोरपि सार्थक्यं वक्तुं शक्यते । इहतु चोदको न प्रत्यक्षः किंतु कल्प्यः । नचात्र कल्पनावश्यंभावः येन कल्पयित्वापि चोदकं कथंचित्सार्थक्यमाश्रियेतेति । उभयथाप्यनुष्ठानविशेषाभावेन तत्कल्पनानावश्यकत्वादेवंच प्रत्यक्षवचनस्यैव पदार्थद्वारा प्रकारप्रापकत्वमाश्रयितुं युक्तमिति चोदकस्यैवाभावान्न तदुपसंहारार्थमित्यर्थः । **ननु** प्रत्यक्षवचनस्य पदार्थमात्रप्रापकस्य प्रकारापकत्वाभावात्तदर्थं चोदकापेक्षा स्यादेवेत्यत आह—**आज्यभागयोरिति ।** दर्शपूर्णमासयागेन कथं स्वर्गं भावयेदिति यागगतव्यापारविशेषलक्षणप्रकारात्मकोपकाराकाङ्क्षिण्यां भावनायां प्रयाजादीनामाम्नानाद्यथायथं दृष्टादृष्टोपकारसंपादनद्वारा यागगतव्यापारत्वलक्षणप्रकारत्वकल्पनेन प्रकरणेनाज्यभागयोरपि तादृशव्यापारात्मकं रूपं प्रकृतौ क्लृप्तमिति विकृतावपि प्रकारापेक्षिण्यां भावनायां यावत्सादृश्येन चोदकः कल्प्यते ततः प्रागेवाज्यभागश्रवणेन लक्षणया झटिति तद्गतव्यापाररूपोपस्थित्या तदन्वयेन विकृतिभावनाया निराकाङ्क्षत्वादाकाङ्क्षाविना चोदककल्पनैव नावतरतीति चोदकाभावादपूर्वो गृहमेधीय इत्यर्थः । **अन्यथेति ।** आनर्थक्याद्वरं लक्षणाश्रयणमिति भावः । **नन्वेवमामनहोमादिभिः** संग्रहण्यादीनामपि निराकाङ्क्षत्वादपूर्वत्वं स्यादत आह—**यानीति ।** अप्राकृतेषु तद्रूपं प्राङ्न क्लृप्तमित्यामनहोमश्रवणमात्रेण तद्रूपानुपस्थित्या संनिहितैस्तैरुपकाराकाङ्क्षाशान्त्यभावात्तत्र प्रथमं चोद-

तान्यामनहोमादीन्यङ्गानि तेषां यागगतव्यापाररूपस्याकृतत्वात्तद्रूपापेक्षः प्रयोगवचनः संनिहितान्यपि तान्यतिक्रम्य प्राकृतान्क्लृप्तोपकारान्गृहीत्वा पश्चात्समीपाम्नाताङ्गानर्थक्यपरिजिहीर्षया तान्यपि गृह्णातीति न तैश्चोदकलोपः। किंच यदि गृहमेधीयः प्रकृतिपूर्वः स्यात् नाज्यभागग्रहणं क्रियेत, कृतं च तदतोऽवगच्छामो नूनमत्र नास्ति चोदक इति। तस्माद्यत्र प्राकृतमङ्गं निर्गुणं श्रुतं तत्रापूर्वत्वम् ॥

गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥ १० ॥

## ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

**तत्रान्यदङ्गं नो कार्यं कार्यं वान्यानपेक्षणात् ॥ न कार्यं विहितत्वेन कार्यं स्विष्टकृदादिकम् ॥ १८ ॥**

गृहमेधीय एव स्विष्टकृदिडादि कर्तव्यं नेति संशये निराकाङ्क्षत्वादाज्यभागाभ्यां न कर्तव्यं प्रत्यक्षश्रुतत्वाविशेषात्तु कर्तव्यम्। नच विकल्पः प्रकृताविव प्रकरणेन सर्वेषां युगपद्ग्रहणात् ॥

गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम् ॥ ११ ॥

## स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥ [अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥]

**तत्रैव परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा ॥ अस्तीडादर्शनान्मैवं तदुक्त्यात्रास्ति नेतरत् ॥ १९ ॥**

गृहमेधीय एव प्राकृताङ्गपुनःश्रवणं परिसंख्यार्थमिति कृत्वाचिन्त्यते। तदा हि समानजातीयमेव शीघ्रोपस्थापनात्परिसंख्यायते नान्यत्। तेनाज्यभागाभ्यां यागान्तराणि परिसंख्यायन्ते न शेषकार्याणि। स्विष्टकृत्तु किं प्राशित्रादीनां शेषकार्याणां परिसंख्यां करोति नेति चिन्तायामिडोपह्वानदर्शनान्नेतिप्राप्ते ब्रूमः—परिसंचष्ट एव प्राकृतः स्विष्टकृत् पुनः श्रूयमाणः शेषकार्यान्तराणि, इडादिदर्शनं तु वचनान्तरविहितत्वादुपपन्नं नान्यस्य शेषकार्यस्यानिवृत्तिं सूचयति ॥

---

कस्यैव प्रवृत्तेः पश्चादेव तु तेषां संनिध्याम्नानानर्थक्यपरिजिहीर्षया निराकाङ्क्षाया अपि विकृतिभावनाया आकाङ्क्षामुत्थाप्य तेषामन्वय इति नामनहोमादीनामपूर्वतापादकत्वमित्यर्थः। अस्तुवामनहोमतुल्ययोगक्षेमत्वमाज्यभागयोस्तथापि चोदकपरिलोपकत्वमवश्यमङ्गीकार्यमित्याह—**किंचेति**। अनेनैवानर्थक्यप्रतिपादनेनात्र विषये प्राभाकराणां चोदकप्रवृत्त्यभ्युपगमो न युक्त इति सूचितम्। **नास्ति चोदक इति**। एवंच चोदकस्य प्राकृताङ्गप्राकृतशास्त्रस्याभावादप्राप्तबाधोऽयं दाशमिकबाधस्य प्राप्तबाधत्वं च प्रायिकाभिप्रायमिति ध्येयम्। सूत्रार्थस्तु—विकृत्यां प्राकृतेतिकर्तव्यताया ग्रहणात्पुनःश्रुतिरनुवादमात्रं स्यादिति ॥

**ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥ स्विष्टकृदिति**। 'अग्नये स्विष्टकृते समवद्यति इडामुपह्वयत'इति श्रुतमिति शेषः। **नचेति**। सर्वेषां प्रकृतौ क्लृप्तोपकारत्वाविशेषादेकैकेनापि प्रधानाकाङ्क्षापूरणसंभवाद्विकल्प एव स्यादित्यर्थः। अयमेवात्र मुख्यः पूर्वपक्षः। विनिगमनाविरहेण स्विष्टकृदादिनापि नैराकाङ्क्ष्यसंभवेन यथाश्रुतपूर्वपक्षानुपपत्तेरिति ध्येयम्। एवंच प्राकृताङ्गस्य पुनःश्रूयमाणस्यापूर्वतापादकत्वं यदुक्तं तत्किमेकैकस्योत सर्वेषामिति पूर्वत्र विशेषविचारणात्संगतिर्बोध्या। **प्रकृताविति**। यथा प्रकृतौ प्रकरणपठितानां सर्वेषां युगपदेवेत्थंभावेनान्वयः प्रकरणस्यापर्यायव्यापारत्वे युगपद्ग्रहणादेवमिहापि प्रकृतौ क्लृप्तोपकाराणां श्रुतानां सर्वेषामपि युगपद्ग्रहणेन समुदितानामेव प्रधानाकाङ्क्षापूरकत्वं नैकैकस्येति न विकल्प इत्यर्थः। सूत्रार्थस्तु—आज्यभागावधिकमपि यावदुक्तं स्विष्टकृदादि स्यादिति ॥

**स्विष्टकृति भक्षप्रतिषेधः० ॥ ३५ ॥** ननु स्विष्टकृतः परिसंख्यापकत्वाभावेऽपि न प्राशित्रहरणादीनां पूर्वपक्षे कर्तव्यता सिध्यति, गृहमेधीयस्यापूर्वत्वेन चोदकात्तेषामप्राप्तेरतश्चिन्तैवेयमनुपपन्नेत्यत आह—**परिसंख्येति**। अनेनैव परिसंख्यापक्षप्रयोजनकथनपर्यवसानात्संगतिरिति सूचितम्। नन्वेवमप्याज्यभागश्रवणेन परिसंख्यातत्वात्प्राशित्रहरणादीनां कर्तव्यत्वं न प्राप्नोतीति वैयर्थ्यं स्यादित्यत आह—**तदाहीति। इडेति**। यदि स्विष्टकृद्वचनं शेषकार्यपरिसंख्यार्थं स्यादिडोपह्वानदर्शनमनुपपन्नं स्यात्तस्यापि परिसंख्येयत्वादतः स्विष्टकृद्वचनं चोदकप्राप्तानुवादकमेव वाच्यम्। तथासतीडोपह्वानदर्शनमप्यनुवादतयोपपन्नमिति भावः। **परिसंचष्ट इति**। अनुवादस्यानर्थक्यादिति भावः। **इडादीति**। स्विष्टकृद्वचनेन परिसंख्यातस्येडोपह्वानस्य प्रतिप्रसवार्थतयेडोपह्वानवाक्योपपत्तेरित्यर्थः। सूत्रार्थस्तु—स्विष्टकृति श्रूयमाणे भक्षणनिवृत्तिः स्यादुभयोरपि शेषप्रतिपत्तिकारणत्वेन तुल्यजातीयत्वादिति ॥

प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम् ॥ १२ ॥

**शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजप्रतिषेधोऽनर्थकः स्यात् ॥३८॥ नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥]**

प्रायणीयातिथ्ययोः किं विकल्पः शंय्विडान्तयोः ॥ नियमो वा विकल्पः स्यान्निषेधपरिसंख्यया ॥ २० ॥
शंय्विडान्तत्ववाक्याच्च नियमो विधिमात्रतः ॥ नित्यानुवादो नञ्वाक्यं दोषबाहुल्यमन्यथा ॥ २१ ॥

ज्योतिष्टोमे श्रूयते 'शंय्वन्ता प्रायणीया संतिष्ठते न पत्नीः संयाजयन्ति इडान्तातिथ्या संतिष्ठते नानूयाजान्यजती'ति । तत्र संशयः किं प्रायणीयातिथ्ये शंय्विडान्ते वा कृत्स्नसंस्थे वा उत शंय्विडान्ते एवेति । तत्र शंय्विडान्तवचनेन परेष्वङ्गेषु सर्वेष्वकर्तव्येषु पुनः पत्नीसंयाजानूयाजानामकर्तव्यत्ववचनं परिसंख्यारूपेणाङ्गान्तराणामकर्तव्यताप्रतिषेधेन कर्तव्यताविधानार्थं पत्नीसंयाजानेव न कुर्यादन्यानि कुर्यादेवेति । तेन पत्नीसंयाजानूयाजप्रतिषेधेन कृत्स्नसंस्थाविधानात् शंय्विडान्तवचनेन तत्संस्थाविधानाद्द्वयोः संस्थयोर्विकल्पः । नैवम्—'वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक् ॥ त्रिदोषा परिसंख्या च तस्मात्स्तुत्यैकवाक्यता ॥' शंय्विडान्तविधेरेवायमर्थवादार्थोनुवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति न विध्यन्तरम् । तस्मान्नियमेन शंय्विडान्ते एव प्रायणीयातिथ्ये ॥

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणम् ॥ १३ ॥

**प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥ [प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥४१॥ प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥४२॥]**

तत्रैव शंय्विडे पूर्वे परे वा स्वेच्छयाऽथ वा ॥ परे एवाथवा पूर्वे एवाद्यो द्विविधश्रुतेः ॥ २२ ॥
निषेधस्यार्थवत्त्वाय परे एवानुवादगीः ॥ पूर्वोक्तवाक्यतां याति पूर्वे एवाविरोधतः ॥ २३ ॥

शंय्विडान्तयोरेव संदेहः प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः तथेडे अपि द्वे अनूयाजानां पुरस्तादेका पश्चादपरा । तत्र किं पूर्वाभ्यां शंय्विडाभ्यां तदन्तता उतोत्तराभ्यामुतानियम इति । विशेषाभावादनियमे प्राप्तेऽभिधीयते—उत्तराभ्यामेव कुतः इदं तावत्पर्यग्निकृतोत्सर्गवचनवच्छंय्विडान्ताङ्गरीतिविधानमतो ये शंयोरिडायाश्च प्राञ्चः पदार्थास्ते कर्तव्याः ये चोत्त-

---

**शंय्विडान्तत्वे०** ॥ ३८ ॥ **किमिति** । किं शंय्विडान्तत्वकृत्स्नसंस्थयोर्विकल्पः उत शंय्विडान्तत्वं नियममित्यर्थः । यथानुवादस्यानर्थक्यात्स्विष्टकृद्वचनं परिसंख्यापकमेवं 'न पत्नीःसंयाजयन्ती'त्यादिकमपीत्युत्थानात्संगतिः । **ननु** शंय्विडान्तसंस्थाविधिवत्कृत्स्नसंस्थाविध्यभावात्कथं विकल्प इत्याशङ्क्य पूर्वपक्षमुपपादयति—**तत्रेति** । शंय्विडान्तवचनस्याग्निमाधिकरणरीत्या पूर्वशंय्विडाविषयत्वादितरेषां पत्नीसंयाजादीनामकर्तव्यत्वं प्राप्तमतो न पत्नीः संयाजयन्तीति वाक्यं परिसंख्यार्थं, शंय्विडान्तविधिप्राप्तपत्नीसंयाजादिनिषेधानुवादकत्वे आनर्थक्यादेवंच परिसंख्यापकं सदिदमेव कृत्स्नसंख्याविधायकमित्यर्थः । नचैवमपि शंय्विडान्तवचनेनोत्तरेषामकर्तव्यत्वं यत्प्राप्तं तस्योपसंहारार्थं न पत्नीः संयाजयन्तीत्यादिवाक्यमस्तु । तथाच पत्नीसंयाजानूयाजवर्जं कृत्स्नसंस्थैव स्यान्नतु खण्डसंस्थेति कथं विकल्प इति वाच्यम् । शंय्विडान्तवाक्यस्य शंय्विडान्तलक्षणखण्डसंस्थाविधायकत्वाभावे तदन्तशब्दसंस्थाशब्दयोरनुपपत्तिरित्याशयेनाह—**तेनेति** । श्रुत्या शंय्विडान्तविधिः लक्षणया परिसंख्यया कृत्स्नसंस्थाविधिरेवं विषमशिष्टयोरपि विकल्पो वचनार्थवत्त्वाय स्वीकर्तव्य इति भावः । स्तुत्यर्थतयापि वचनोपपत्तेरनेकदोषदुष्टकृत्स्नसंस्थाविधिर्न न्याय्य इत्याह—**नैवमिति** । सूत्रे आनर्थक्यं स्यात् कृत्स्नसंस्थाविध्यभावे पत्नीसंयाजनिषेधवचनमनुवादमात्रमनर्थकं स्यादित्यर्थः ॥

**प्रतिषेधार्थवत्त्वात्०** ॥ ४० ॥ **पुरस्तादिति** । शंयुवाकप्रचार आहवनीय एक इति यावत् । **पश्चादिति** । गार्हपत्य एक इति यावत् । गार्हपत्ये च शंयुवाक आश्वलायनेनोक्तः 'शंयुवाको भवेन्नवेति विशेषे'ति । एवंच संदेह अनियमकोटिरपि द्रष्टव्या । अनियमपक्षोत्यन्तं मन्दः । यदा पूर्वाभ्यां तदा 'न पत्नीः संयाजयन्ति नानूयाजान्यजती'ति वाक्ययोरनुवादकत्वं यदा पराभ्यां तदा पत्नीसंयाजानूयाजनिषेधविधायकमित्यनिर्धारितार्थत्वप्रसङ्गादिति ध्येयम् । **कुत इति** । शंय्विडान्तत्वे सत्युपरमविधानात् पूर्वाभ्यामपि शंय्विडाभ्यां तदन्तत्वसंपत्तावुपरमस्यावश्यकर्तव्यत्वेन कथमुत्तराभ्यामेव

---

१ प्रतिषेधादानर्थक्यं स्यात्.

राभ्यां शंय्विडाभ्यां प्राञ्चस्तेषामपि शंय्विडाभ्यां पूर्वभावित्वमस्तीति कर्तव्यतावगम्यते तस्मादुत्तराभ्यामेव तदन्तता । तथाच पत्नीसंयाजानूयाजप्रतिषेधोऽर्थवान्भवति वादमात्रं ह्यनर्थकम् । 'स्यादेवं शंय्विडान्ताङ्गरीतिर्यदि विधीयते ॥ प्रवृत्तयोस्तु संस्थानं चोद्यते शंय्विडान्तयोः ॥' संतिष्ठतिना हि संस्थानमुपरमो विधीयते नाङ्गरीतिः । तेन प्रवृत्ते प्रायणीयातिथ्ये शंय्विडान्ते सत्यौ संतिष्ठेते तामवस्थां प्राप्य ततः परं न प्रवर्तितव्यमुपरन्तव्यम् । तेन शंय्विडे चेत्साक्षात्कृते कर्तव्यमवस्थानमिति पूर्वयोः कृतयोः कर्तव्यं संस्थानमिति पूर्वाभ्यामेव तदन्तता पत्न्यनूयाजप्रतिषेधस्तु एकवाक्यत्वादर्थवादार्थोऽनुवाद इत्युक्तम् ॥

उपसदामपूर्वार्थत्वाधिकरणम् ॥ १४ ॥

**उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥ [स्रौवेण वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥४४॥ अप्रतिषिद्धं वा प्रतिषिध्यप्रतिप्रसवात् ॥ ४५ ॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥]**

**उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं किमाचरेत् ॥ यावदुक्तमुताद्योऽस्तु चोदकस्यानिवारणात् ॥ २४ ॥**
**स्रौवाघारे पुनः श्रुत्वा शिष्टस्य परिसंख्यया ॥ अपूर्वार्थत्वतो वान्त्योऽनुवादोऽत्र निषेधगीः ॥ २५ ॥**

ज्योतिष्टोमे सन्त्युपसदः ताः प्रकृत्य श्रूयते 'अप्रयाजास्ता अननूयाजास्ता' इति तथा 'स्रुवेणाघारमाघारयती'ति । तत्र संदेहः किं प्रतिषिद्धप्रयाजादिवर्जमन्यत्सर्वं प्राकृतं कर्तव्यमुत प्रत्यक्षवचनविहिताघारादिना परिसंख्यानादपूर्वता परत्वाद्वा सर्वमश्रुतमकर्तव्यमिति । परिसंख्यापक्षस्तु गृहमेधीयवन्निरस्तोऽपि संभवमात्रेणोपन्यस्त इति द्वावेव पक्षौ, तत्र केनापि कारणेनाघारादीनामभावमाशङ्क्य प्रतिप्रसवं कुर्वेदिव वचनमिदं प्रतिभाति नाघारादिभ्योऽन्यामाहुतिमौपसदीं पुरस्ताज्जुहुयादन्या जुहुयादन्यन्मुखं कुर्यात् । आघारादयो हि सर्वेष्टीनां मुखमतः 'स्रुवेणाघारमाघारयती'ति

---

तदन्तत्वमित्यर्थः । यद्यत्र शंय्विडान्तेषु पदार्थेष्वनुष्ठितेषु संस्थानमुपरमो विधीयेत तथासति चोदकप्रवृत्त्यप्रतिघातात्संस्थितस्य चाङ्गसंबन्धाभावात्सर्वाङ्गसाधारणस्य चोदकस्य तदन्ताङ्गेष्वेव संकोचः स्यात्तद्वरं पर्यग्निकृतानारण्यानुत्सृजन्तीतिवत्तदन्ताङ्गरीतिविधानं तद्विधौ च गृहमेधीयन्यायेन तयैव निराकाङ्क्षत्वात्प्रायणीयातिथ्ययोश्चोदकस्यैवाप्रवृत्त्या न तत्संकोचकल्पनाप्रसङ्गः चोदकाभावादेवेतरेषामननुष्ठानात्संतिष्ठतिरप्यनुवादः । तस्मात्तदन्ताङ्गरीतिरेव विधेया । तथासत्युत्तराभ्यामेव तदन्तत्वमिति परिहरति—**इदमिति** । ननु तदन्ताङ्गरीतिविधावपि पूर्वाभ्यां तदन्तत्वं किं न स्यादत आह—**अत इति** । ततश्च शास्त्रे कर्तव्यत्वेनावगतानां बाधप्रसङ्गादुत्तराभ्यामेव तदन्तत्वमित्यर्थः । यद्यप्युत्तरेषां कर्तव्यता बाध्यते सा तु न शास्त्रीयेति न तद्बाधो दोषायेति भावः । **अर्थवानिति** । पत्नीसंयाजानूयाजानामुत्तरशंय्विडापूर्वभावित्वेन प्राप्तानां प्रतिषेधार्थत्वादिति । एवंच पूर्वोक्तस्तुल्यर्थत्वाक्षेपात्संगतिरिति सूचितम् । **प्रवृत्तयोरिति** । प्रवृत्तयोः प्रायणीयातिथ्ययोः शंय्विडान्तयोः सत्योः समाप्तिश्चोद्यत इत्यर्थः । यद्वा शंय्विडान्तयोः प्रवृत्तयोरित्यन्वयः । शंय्विडापर्यन्तमनुष्ठितयोरिति यावत् । **संतिष्ठतिना हीति** । तथाच धात्वर्थविधानाच्छ्रुत्यनुग्रह इति भावः । **नाङ्गरीतिरिति** । धातुपारार्थ्यविप्रकृष्टविधानादिप्रसङ्गादिति भावः । तथाच प्रत्यक्षवचनस्वारस्यानुसारेण चोदकसंकोचो न दोष इत्याशयः । **नन्वेवमपि** कथं पूर्वाभ्यामेवेति नियम इत्यत आह—**तेनेति** । **कर्तव्यमिति** । यदि शंय्विडान्तत्वावस्थालक्षणनिमित्तसद्भावेऽपि नैमित्तिकसंस्थानं न क्रियेत तदा विध्यतिक्रमः स्यादिति भावः । सूत्रार्थस्तु—पत्नीसंयाजानूयाजप्रतिषेधार्थत्वादुत्तरस्य शंय्विडस्य परस्तायत्कर्तव्यं तस्य प्रतिषेधः स्यादिति ॥

**उपसत्सु यावदुक्तं० ॥ ४० ॥ उतेति** । उत प्रत्यक्षविहिताघारादिव्यतिरिक्तं न कर्तव्यं तत्रापि किं परिसंख्यार्थं श्रवणमपूर्वार्थं वेत्यर्थः । 'न पत्नीः संयाजयन्ती'त्यस्यानुवादत्वेऽप्यप्रयाजा इत्यादेर्नानुवादत्वमित्युत्थानात्संगतिः । **ननु** नात्र प्रतिप्रसवार्थता संभवति आघारादिनिषेधाप्रसक्तेः । नच नान्यामाहुतिमित्यनेन निषेधः संभवति । नान्यामिति निषेधात् स्रुवेणाघारमिति विधानाच्च विकल्पोपपत्तेरतः कथं पूर्वःपक्ष इत्यत आह—**केनापीति** । तत्राग्नेयी सौमी वैष्णवी चेति तिस्रः प्रधानाहुतयः । 'या ते अग्ने इत्यौपसदाहुतयश्चाम्नाता नत्वाघारादयः' इत्यनाम्नानादभावशङ्कायामाघारादीनां प्रतिप्रसवार्थमिदं वचनम् । एवंचाघारयतीति सर्वप्राकृतोपलक्षणार्थमित्यर्थः । **पुरस्तादिति** । आघारादिकमकृत्वेति । **न तावदिति** । एतादृशशङ्काया गृहमेधीयाज्यभागादावपि संभवेन तत्राप्यपूर्वतापादकत्वाभावप्रसङ्गादिति भावः ।

तेन प्रतिषिद्धप्रतिप्रसवार्थमिदं न परिसंख्यामपूर्वतां वा शक्नोति कर्तुं, अथवा चोदकप्राप्तानुवादमात्रमिदमस्तु। नन्वानर्थक्यं स्यात् अपूर्वतापक्षेऽपि 'अप्रयाजास्ता अननूयाजास्ता' इति वचनद्वयमनर्थकमेव स्यात्, तद्वरमेकस्यैवानर्थक्यम्, तस्मात्प्रतिषिद्धवर्जमन्यत्सर्वं कर्तव्यम्। उच्यते। न तावदभावाशङ्काघारादीनामस्ति येन प्रतिप्रसवः क्रियेत। तस्मादपूर्वतापरमेवैतत्। अप्रयाजाननूयाजवचनं त्वनुवादमात्रमाख्याताभावात्, स्रुवाघारवचनं त्वाख्यातसद्भावा 'यज्ञस्य प्रज्ञात्या' इति च श्रुतिसंबन्धाद्विधायकं सदपूर्वतां गमयतीति विशेषः॥

अवभृथेऽपूर्वकर्मताधिकरणम्॥ १५॥

**अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात्॥ ४७॥ [आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात्॥ ४८॥ प्रयाजानां त्वेकदेशप्रतिषेधाद्वाक्यशेषत्वम्, तस्मान्नित्यानुवादः स्यात्॥ ४९॥ आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत्स्यात्॥ ५०॥]**

किं स्यादवभृथे बर्हिर्वर्जं सर्वमुताचरेत्॥ यावदुक्तं प्रयाजानुयाजबर्हिर्निषेधतः॥ २६॥
आद्योऽप्सुमन्तावित्याज्यभागोक्त्या परिसंख्यया॥ अन्येनात्र गुणाप्राप्तेरपूर्वत्वेन वान्तिमः॥ २७॥

अवभृथे श्रूयते 'अप्सुमन्तावाज्यभागौ यजती'ति तथा 'अपबर्हिषः प्रयाजान्यजति अपबर्हिषावनूयाजौ यजती'ति तत्र किमवभृथे बर्हिःसंज्ञं चतुर्थं प्रयाजं बर्हिःसंज्ञं प्रथममनूयाजं वर्जयित्वान्यत्सर्वं कर्तव्यं उत प्रत्यक्षश्रुतव्यतिरिक्तमन्यत्सर्वं परिसंख्यानादपूर्वत्वाद्वा न कर्तव्यमिति संशयः। तत्राज्यभागवचनमप्सुमत्तागुणविधानार्थं नापूर्वतां गमयति तस्माद्बर्हिर्वर्जमन्यत्सर्वं कर्तव्यम्। नैवम्। लिङ्गक्रमाभ्यामेव 'अप्स्वग्ने सधिष्टव अप्सु मे सोमो अब्रवीदि'ति मन्त्रप्राप्तैः प्राप्तैवाज्यभागयोरप्सुमत्ता सा न विधातव्या। तेनाज्यभागविध्यर्थमेव वचनमित्यपूर्वोऽवभृथः। 'अपबर्हिषः प्रयाजान्यजती'त्यादिवचनं बर्हिर्व्यतिरिक्तप्रयाजविधानार्थं न बर्हिःप्रतिषेधार्थम्॥

वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम्॥ १६॥

**विरोधिनामेकश्रुतौ नियमः स्याद्ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात्॥ ५१॥ [उभयप्रदेशान्नेति चेत्॥ ५२॥ शरेष्वपीति चेत्॥ ५३॥ विरोध्यग्रहणात्तथा शरेष्विति चेत्॥ ५४॥ तथेतरस्मिन्॥ ५५॥ श्रुत्यानर्थक्यमिति चेत्॥ ५६॥ ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात्॥ ५७॥]**

बृहद्यवः खादिरश्च विकल्प्या नियता उत॥ विकल्प्याश्चोदकप्राप्तेर्नियताः स्युः पुनर्विधेः॥ २८॥

यत्र चोदकेनानेकेषां प्राप्तानामेकं प्रत्यक्षं श्रूयते यथा 'खादिरो यूपो बृहत्पृष्ठं यवमयः पुरोडाश'

---

तथाच न कांचित्स्रुवाघारादन्यां प्राकृतिमाहुतिं कुर्यात् किंतु स्रुवाघारमेव कुर्यादिति वाक्यार्थ इति भावः। तन्त्ररत्ने तु आग्नेय्यादिवैकृताहुतिमध्ये आग्नेय्यपेक्षायां नान्यां सौमीत्यादिकां पुरस्तान्न जुहुयादग्निर्हि सर्वेषां मुखमतोऽग्निमनीकं सोमं शल्यं विष्णुं तेजनमित्यनेनैव क्रमेण होतव्यमित्येवं नान्यामिति वाक्यं पूर्वस्य शेषो ननु स्रुवेणेत्यस्येत्यनन्यार्थं स्रुवेणेति वाक्यमपूर्वत्वार्थमित्युक्तम्। अथवेत्यादि निरस्यति—**अप्रयाजा इत्यादिना**। **यज्ञस्येति**। यज्ञोयमित्यवगमायेति यावत्। तथाच स्तुत्युत्तम्भितविधिशक्तेरनुवादत्वं न युक्तमित्यर्थः। सूत्रार्थस्तु—उपसत्सु यावदुक्तं कर्म स्यात्प्रतिषिद्धवर्जं यावत्कर्तव्यं स्यादिति॥

**अवभृथे बर्हिषः०॥४७॥ अप्सुमन्ताविति**। अप्सुशब्दयुक्तमन्त्रकावित्यर्थः। पूर्ववत्प्राकृतस्य निर्गुणस्य श्रवणाभावान्नेहापूर्वत्वमित्युत्थानात्संगतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति**। आनुमानिकस्यापि चोदकस्य वचनतया लिङ्गक्रमापेक्षया बलवत्त्वं, ततश्च चोदकप्राप्तवार्त्रघ्नादिमन्त्रनिवृत्त्यर्थमप्सुमन्तविधिरेव वाच्य इति भावः। **लिङ्गेति**। लिङ्गक्रमयोरुपदेशप्रमाणत्वादत्यन्तानर्थक्यप्रसङ्गाच्च चोदकात्प्राबल्यमिति भावः। **ननु** अपूर्वत्वेऽपबर्हिष इति वाक्यं प्रयाजविधायकं तेषु बर्हिःप्रतिषेधकं च स्वीकार्यं, ततश्च वाक्यभेद इत्यत **आह—अपेति**॥

**विरोधिनामेकश्रुतौ०॥ ५१॥** यथाप्सुमत्ता प्राप्तत्वान्न विधेया तथा खादिरादिकमपीत्युत्थितेः संगतिः। तस्मा-

इत्यादिषु तत्र किं श्रुतस्य खादिरादेरतिदिष्टस्य पलाशादेः प्रकृतिवद्विकल्पाः अथवा श्रुतस्यैव नियम इति संशये विकल्पः प्रकृतिवत् , प्रत्यक्षवचनं तु न खादिरादेर्विधायकं प्राप्तत्वात् पलाशादिनिवृत्त्यर्थत्वे त्रिदोषा परिसंख्या स्यात्तस्मादनुवादमात्रमिति यथाचोदकं विकल्पः । नैवम् । यथैव प्रकृतावर्थादनियतानेकद्रव्यकत्वे प्राप्ते व्रीहिखदिरादिश्रवणं नियमार्थम् । एवं चोदकेनापि अनियमेन खादिरादिप्राप्यमाणं प्रत्यक्षवचनेन नियम्यते तन्नियमाच्चार्थाभावात् पलाशादेर्निवृत्तिः ॥

काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ॥ १७ ॥

**सर्वासां च गुणानामर्थवत्त्वाद्ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥ [अधिकं स्यादिति चेत् ॥ ५९ ॥ नार्थाभावात् ॥ ६० ॥]**

**काम्येष्टिषु द्रव्यदेवं प्राकृतं न निवर्तते ॥ निवर्तते वा न प्राप्तेर्विकल्पो वा समुच्चयः ॥ २९ ॥**
**उत्पत्तिशिष्टेनैवात्र निराकाङ्क्षत्वतः कुतः ॥ चोदकः शिष्ट एवास्य विषयोऽर्थान्निवर्तते ॥ ३० ॥**

अध्यायादावर्थलोपाद्बाधो वर्णितः प्रत्याम्नानस्य तु बाधकत्वं सिद्धवत्सर्वत्र व्यवहृतमिदानीं तु तदेव चिन्त्यते किं प्रत्यक्षश्रुतेन श्यामाकादिना प्रत्याम्नानाच्चोदकप्राप्तं व्रीह्यादि बाधितुं शक्यमुतोभयं तुल्यबलमिति विकल्पः समुच्चयो वा । तत्र तद्वर्जप्राप्तिनिराकरणाच्चोदकेन तावद्व्रीह्याद्यपि प्राप्यते । नच प्राप्तं शक्यं केनचिद्बाधितुं शास्त्रप्रामाण्याविशेषात् । तथाच 'नार्षेयं वृणीत' इति प्रत्यक्षोपि प्रतिषेधः पक्षे चोदकप्राप्तेन वरणेन विकल्प्यत इति वक्ष्यते तत्तुल्यत्वादुभयं शाब्दलक्ष-

---

**दिति ।** नचात्र नियमविधिः संभवति, खदिरादिनियमेन हि आक्षेपादिलक्षणलौकिकप्रमाणप्राप्तस्य निवृत्तावपि न चोदकप्राप्तस्य निवृत्तिः 'शरमयं बर्हिर्भवती'त्यत्र बर्हिःकार्यवाचकबर्हिःशब्दवत्पलाशादिकार्यवाचकशब्दाभावेन पलाशादिकार्ये खदिरादिविधानाभावादतोऽनुवादत्वमिति भावः । अत्र ग्रहमेधीयाज्यभागन्यायेनापूर्वतार्थे विधानं संभवति । नच तथासति यूपव्यतिरिक्तं सर्वं प्राकृतं निवर्तेत तथाच नियोजनस्याप्यभावाद्यूपानर्थक्यं स्यादिति वाच्यम् । एवमपि यस्य बृहत्साधनकपृष्ठस्तुत्यादेः साक्षादेवोपकारकत्वं न त्वन्यद्द्वारा तस्यानर्थक्यप्रसङ्गेनापूर्वतार्थत्वानपायात् । तस्मात्खदिरादिकतिपयाभिप्रायेणानुवादेन पूर्वपक्षकरणं कथंचिन्नेयम् सिद्धान्ते तु नियमार्थत्वादन्यार्थप्राकृतपुनःश्रवणरूपत्वाभावेनापूर्वतार्थत्वमिति ध्येयम् । यद्यपि पालाशादिकार्यं शब्देनोद्दिश्य न तत्र खदिरादिविधिस्तथापि नियमविधिबलात्खदिरादेरेव नियतत्वावगतौ तेनैव कृतकार्यवदाक्षेपप्राप्तस्यैव चोदकप्राप्तस्यार्थादेव निवृत्तिसिद्धेरिति सिद्धान्तमाह—**नैवमिति** । सूत्रार्थस्तु—विरोधिनां खदिरपलाशादीनां मध्ये एकस्य श्रवणमितरनियमार्थं स्यात्तथासति तद्ग्रहणमर्थवद्भवेत श्रुतितो विशिष्टत्वात् प्रत्यक्षश्रुतिचोदितत्वात् शरवदानुमानिकनिवृत्तिः स्यादिति ॥

**सर्वासां च गुणानां०** ॥ ५८ ॥ भाष्ये द्रव्यदेवताग्रहणमुपलक्षणं प्रत्याम्नातमात्रमुदाहरणमित्याशयेनाह—**अध्यायादाविति** । यद्वा ननु वैकृतद्रव्यदेवतेन प्राकृतद्रव्यदेवतस्य शरैः कुशानामिव बाधः प्रत्याम्नानादेव सिद्ध इति किमर्थमधिकरणमत आह—**अध्यायादाविति** । अध्यायादौ लुप्तार्थमप्यदृष्टार्थं कर्तव्यमिति पूर्वपक्षपूर्वकमर्थलोपस्य बाधकत्वं व्युत्पाद्य पश्चात्तद्विशेषो विचारितः । प्रत्याम्नानस्य तु बाधकत्वसंभवासंभवौ न क्वचिद्विचारितौ, किंतु तस्य बाधकत्वसिद्धवत्कारेण तद्विशेष एव तत्र तत्र बहुधा विचारितः । इहतु सामान्येन प्रत्याम्नानमात्रस्य बाधकत्वं संभवति नवेति विचार्यत इति नास्य वैयर्थ्यमित्यर्थः । **प्रत्यक्षेति** । 'अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं ब्रह्मवर्चसकाम'इत्यादाविति शेषः । पूर्वत्र श्रुतस्यैव नियतत्वेपीह श्रुतस्य चोदकप्राप्तस्य च विकल्प इत्युत्थितेः संगतिः । **ननु** प्रत्यक्षश्रुतश्यामाकादिभिरेव यागनिर्वृत्तिसिद्धिं पर्यालोच्य चोदकः व्रीह्यादिवर्जमेव प्रापयेदित्यत आह—**तद्वर्जेति** । चोदकस्य प्रत्यङ्गं व्यापारभेदाभावेन तद्वर्जातिदेशस्य गृहमेधीयाधिकरण एव निरस्तत्वादित्यर्थः । **ननु** प्राप्तमपि दुर्बलप्रमाणप्रापितत्वाद्बाध्यतामित आह—**नचेति** । प्रापकशास्त्रस्याप्रामाण्यापत्त्या दुर्बलेनापि शास्त्रेण प्राप्तं न बाधार्हमित्यर्थः । **तथेति** । नार्षेयं वृणीत इत्यत्र प्रसज्यप्रतिषेधस्ततश्चार्षेयवरणतत्प्रतिषेधयोर्विकल्प इति पूर्वपक्षेऽ'र्थप्राप्तवदितिचे'दित्यनेन सूत्रेण यथार्थप्राप्तस्य निषेधेन विकल्पः किंतु निषेधनियम एव नित्योस्त्विति शङ्कायां न 'तुल्यत्वादुभयं शाब्दलक्षण'मित्यनेन सूत्रेणार्थप्रापिताच्छब्दप्रापितस्य विशेषमुपपाद्य दुर्बलचोदकप्राप्तवरणस्य प्रबलप्रत्यक्षवचनप्राप्तनिषेधस्य च विकल्प एव नतु नित्यबाध इति वक्ष्यत इत्यर्थः । ननु चोदकात्प्राप्तस्यापि नानुष्ठानं संभवति प्रत्यक्षोपदिष्टश्यामाकादिभिरेव यागनिर्वृत्तिरूपका-

णमितं। नच सत्यपि चोदकप्राप्त्यङ्गत्वे व्रीह्यादेरननुष्ठानम्। कार्यनिमित्तं ह्यननुष्ठानं तत्साधनत्वे सति व्रीहीणां को नाम निराकुर्यात्तस्माद्विकल्पः समुच्चयो वा। सत्यं यदि पारमार्थिकी चोदकप्राप्तिः स्यान्नत्वेवं, चोदको हि यद्यपि सर्वपदार्थानुरक्तं यागगतं व्यापारं प्रापयन्नेकेनैव व्यापारेण सर्वाण्यङ्गानि प्रापयति न प्रत्येकम् तथापि व्रीह्यादिविशेषे प्रत्यक्षवचनविरोधमालोच्य तद्व्यतिरिक्ताङ्गपरत्वेन व्यवस्थाप्यते। तदिदमुक्तं भाष्यकारेण यदुक्तमग्रहणाद्ग्रहणमिति तदिह सिद्धमिति सिद्धान्तत्वेन स्थापितमित्यर्थः। समुच्चयस्य तूत्तरं प्राप्तमपि प्रयोजनाभावान्नानुष्ठीयत इति। नह्यतिदिष्टमपि व्रीह्यादियवैः सिद्धे यागेनुष्ठातव्यमित्यभिप्रायः। तस्मात्प्रत्यक्षश्रुतं द्रव्यदेवतं चोदकप्राप्तं बाधते॥

सोमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम्॥ १८॥

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात्॥ ६१॥ [यावच्छ्रुतीति चेत्॥ ६२॥ न प्रकृतावशब्दत्वात्॥ ६३॥]**

**औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः॥ द्वयोर्नियोजनादाद्यो निरपेक्षत्वतोऽन्तिमः॥ ३१॥**

क्वचिच्छ्रूयते 'औदुम्बरो यूपो भवती'ति तत्र किं प्राकृतं खादिरं यूपद्रव्यं प्रवर्तते नेति संशये द्वयोरपि सह नियोजनसंभवादसति विरोधे न युक्तो बाधः तस्माद्द्वयोरपि यूपयोः समुच्चयः। नैवम्। निरपेक्षो हि खादिरश्चोदकेन प्राप्यते निरपेक्षश्चौदुम्बर उपदेशेन समुच्चये द्वयोरपि बाधः स्यात् किंच औदुम्बरवचनेन न यूपान्तरं विधीयते किं तर्हि प्राकृतस्यैव यूपस्य खादिरतां व्युदस्यौदुम्बरता विधीयते इति स्पष्टो बाधः॥

---

र्थसिद्धेः। नचानुष्ठीयमानस्याङ्गत्वं संभवति तस्मान्नित्यमेव बाधो युक्त इत्याशङ्क्याह—**नचेति**। यद्वा ननु चोदकेन ह्यङ्गत्वं बोध्यते नानुष्ठानं ततश्च वैकृतैरेव यागनिर्वृत्तिसिद्धेः प्राकृतव्रीह्यादीनामनुष्ठानबाधेप्यङ्गत्वाबाधान्नाप्रामाण्यापत्तिर्न वा विकल्पः। अनुष्ठानस्य नित्यं बाधितत्वादिति परमतमाशङ्क्याह—**नचेति**। यद्यङ्गत्वं चोदकावगतं स्यात्तदा प्रत्यक्षश्रुतानामिवानुमानिकानामपि शास्त्रावगताङ्गभावाविशेषात्प्रयोगवचनस्य चोदकानन्तरभावितया चोदकावगतानां तेषां यागनिर्वृत्त्यर्थतया प्रयोगविध्यनुष्ठाप्यत्वेन कथं तेषामनुष्ठानबाधः स्यादित्यर्थः। **तथापीति**। सर्वाङ्गेषु व्याप्रियमाणत्वात्तद्वर्जातिदेशाभावेपि सामान्यविषयस्य चोदकस्य विशेषविषयप्रत्यक्षवचनानुसारात्तदितरविषयमात्रे पर्यवसानमुच्यत इत्यर्थः। नार्षेयं वृणीत इत्यत्र तु वरणेपि तात्पर्यमवश्यं वाच्यमन्यथा वरणप्राप्त्यभावेन प्रतिषेधानुपपत्तेरतस्तत्र युक्तो विकल्प इति भावः। **यदुक्तमिति**। गृहमेधीयाधिकरणे तद्वर्जातिदेशोपपादनपरे अग्रहणादिति सूत्रे चोदकेनाज्यभागयोरग्रहणात्प्रत्यक्षवचनेन तयोर्ग्रहणमिति यच्चोदकेन कतिपयाङ्गग्रहणमित्यर्थः। **सिद्धान्तत्वेनेति**। तत्र कतिपयाङ्गग्रहणं तद्वर्जातिदेशरूपमित्याशयेन पूर्वपक्षतयोक्तमिह तु तदेव कतिपयाङ्गग्रहणमसत्यपि तद्वर्जातिदेशे सामान्यविषयस्य चोदकस्य कतिपयाङ्गव्यतिरिक्तेषु तात्पर्यपर्यवसानमुपपद्यत इत्याशयेन सिद्धान्ततया स्थापितमित्यर्थः। तथाच चोदकस्य किंचिद्विशेषव्यतिरिक्ते तात्पर्यमित्यर्थ उक्तभाष्यादवगम्यत इत्यर्थः। **नानुष्ठीयत इति**। अननुष्ठीयमानस्य चातिदेशानर्थक्यादितरविषयत्वमेव तस्येति भावः। **ननु** यागनिर्वृत्तिरेव प्रयोजनमत आह—**नहीति**। श्यामाकैः सिद्ध इति युक्तः पाठः। यवैरिति पाठे तु यत्रापि वैकृतद्रव्याश्रुतौ व्रीहियवोभयातिदेशस्तत्र यवायवप्रयोगैरेव यागसिद्धेर्व्रीहिद्रव्यस्याननुष्ठानं तदा किं वक्तव्यं प्रत्यक्षश्रुतैः श्यामाकादिभिरेव यागसिद्धेर्व्रीहिद्रव्यस्याननुष्ठानमित्यर्थः। **अभिप्राय इति**। नार्थाभावादिति सूत्रतद्भाष्ये सिद्धान्तिन इति शेषः। सूत्रार्थस्तु—सर्वासां द्रव्यदेवतादिगुणयुक्तवैकृतचोदनानां चोदके द्रव्यादिविषये अप्रवृत्ते सति वैकृतद्रव्यादीनां ग्रहणं स्यादुपदेशार्थवत्वायेति॥

**तथैकार्थविकारे०॥ ६१॥ क्वचिदिति**। सौमापौष्णे काम्यपशावित्यर्थः। **द्वयोरपीति**। पूर्वत्र प्राकृतवैकृतद्रव्याभ्यां सहिताभ्यां वा वैकृतेन वा यागानुष्ठानेपि यागक्रियायां विशेषाभावादेकेनापि तत्सिद्धेर्न समुच्चय इति युक्तम्। इहतु यूपद्वये युगपन्नियोजने सति दार्ढ्यातिशयात्पशोरत्यन्तानपक्रमणसिद्ध्या एकयूपनियोजनापेक्षया विशेषसद्भावात्समुच्चय एव युक्त इत्यर्थः। उक्तविशेषाशङ्कयोत्थानात्संगतिः। **असतीति**। चोदकोपदेशाभ्यामुभयोः साधनत्वं बोध्यमानं समुच्चयेप्युपपन्नमिति न कस्यापि विरोध इति भावः। न साधनत्वमात्रं शास्त्रार्थः किंतु निरपेक्षसाधनत्वम्। तथाच समुच्चये शास्त्रद्वयस्यापि बाधः स्यादित्याह—**नैवमिति। विधीयत इति**। विशिष्टविध्यभावादित्यर्थः। सूत्रार्थस्तु—एकार्थो यूपो यत्र खादिरत्वादिना विकृतः श्रूयते तत्र प्राकृतस्य यूपस्य निवृत्तिः प्रवृत्तौ हि विकल्पः स्यादिति॥

ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधिकरणम् ॥ १९ ॥

**विकृतौ त्वनियमः स्यात्पृषदाज्यवद्ग्रहणस्य गुणार्थत्वात्, उभयोश्च प्रदिष्टत्वाद्गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ६५ ॥ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥ विरोधिनां च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात् ॥ ६८ ॥ पृषदाज्ये समुच्चयाद्ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥ क्रत्वन्तरे वा तन्न्यायत्वात्कर्मभेदात् ॥ ७१ ॥ ]**

किं शुक्ला व्रीहयः पक्षे चोदकप्रापितान्यवान् ॥ न बाधन्तेऽथ बाधन्ते गुणार्थोक्तिरतोऽग्रिमः ॥ ३२ ॥
वाक्यभेदो यागशुक्लगुणयोर्विधितो भवेत् ॥ विशिष्टस्य विधौ कार्यमेकं वा बाधकास्ततः ॥ ३३ ॥

यत्र प्राकृतानां वैकल्पिकानामन्यतमद्वैकल्पिकगुणान्तरसहितं कर्मोत्पत्तिवाक्ये श्रूयते यथा 'सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणां नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणा'मिति । तत्र संशयः किं व्रीहियवयोर्विकल्पः व्रीहिपक्षे च शुक्लकृष्णविधिरुत सर्वदा व्रीहय एवेति । तत्र व्रीहिग्रहणस्य शुक्लादिगुणसंबन्धार्थत्वेनाविधायकत्वान्न यवानां बाधः । तस्माद्विकल्पः । नैवम् । नह्येकेन वाक्येन यागस्य चोदकप्राप्तव्रीह्युद्देशेन गुणस्य च विधानं संभवति तस्माद्द्रव्यगुणविशिष्टकर्मविधानादुपदिष्टा व्रीहयो यवान्बाधेरन् ॥

पश्चावदानतायाः सर्वाङ्गसाधारणताधिकरणम् ॥ २० ॥

**यथाश्रुतीति चेत् ॥ ७२ ॥ [न चोदनैकत्वात् ॥ ७३ ॥]**

वपायामेव किंवान्येष्वपि पञ्चावदानता ॥ वपोद्देशादाद्यपक्षोऽवदानोद्देशतोऽन्तिमः ॥ ३४ ॥

अग्नीषोमीये पशौ श्रूयते 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्ये'ति तत्र किं पञ्चावदानं वपायामेवोत हृदयादिष्वप्यङ्गेषु संकीर्येत इति संशये वपोद्देशेन विधानाद्वपापूर्वस्य चाङ्गापूर्वेभ्यो भिन्नत्वाच्चमसाधिकरणन्यायेनासंस्कारे प्राप्तेऽभिधीयते—'वपामुद्दिश्य चोद्येत यदि पञ्चावदानता ॥ स्यादेवमवदाने तु पञ्चसंख्यात्र चोद्यते ॥' नहि वपामुद्दिश्य पञ्चत्वविशिष्टमवदानं विधीयते अवदानस्य प्राप्तत्वात् । अतोऽवदानोद्देशेन पञ्चसंख्याविधानादुद्दिश्यमानस्य च वपया विशेषणासंभवात्प्राकृतावदानमुद्दिश्य पञ्चत्वं विधीयते । वपाग्रहणं तु प्रदर्शनार्थमिति सर्वेषां पञ्चावदानम् । ननु समासैकदेशमवदानमुद्दिश्यैकदेशान्तरं पञ्चत्वं त्र्यङ्गवन्न शक्यं विधातुमतो वपामेवो-

---

**विकृतौ त्वनियमः०** ॥ ६४ ॥ यद्युत्पन्ने कर्मणि वाक्यान्तरे सगुणद्रव्यश्रवणं स्यात्तदा गुणार्थमेव तत्र द्रव्यश्रवणमतो न तदुदाहरणमित्याशयेनोत्पत्तिवाक्ये इत्युक्तं सौकर्यार्थं, संशयप्रदर्शनावसर एव शुक्लविधेरुपपत्तिमाह—**व्रीहीति** । **अविधायकत्वादिति** । अनेनैव द्रव्यविधिस्थले बाधेऽपि नात्र बाध इत्युत्थितेः संगतिरिति सूचितम् । **नहीति** । नच शुक्लत्वविशिष्टो याग एव विधीयतां तत्र चार्थप्राप्तद्रव्यसंबन्धानुवादार्थं व्रीहिपदमस्तु ननु व्रीह्युद्देशेन शुक्लविधिः येनोक्तदोषः स्यादिति वाच्यम् । तथासति यवेष्वपि शुक्लत्वप्राप्त्यापत्त्या व्रीहिशब्दस्य पाक्षिकानुवादत्वापत्तिरिति भावः । **तस्मादिति** । विशिष्टकर्मविधौ च विशेष्यीभूतस्य व्रीहिद्रव्यस्य चोदकाद्विकल्पेन प्राप्तस्य नियमार्थो विधिः संपद्यत इति यवबाध इत्यर्थः । सूत्रार्थस्तु—सौमारौद्रादिविकृतौ व्रीह्यादेरनियमः स्यात् व्रीहिगणस्य पृषदाज्येनानूयाजानित्याज्यग्रहणवद्गुणार्थत्वाद्व्रीहियवयोरप्यतिदिष्टत्वादनियता व्रीहय इत्येवं व्रीहिपक्षे गुणशास्त्रमुपपन्नं स्यादिति ॥

**यथाश्रुतीति चेत्** ॥ ७२ ॥ यवानां बाधेऽपि हृदयादिषु न चतुरवदानबाध इत्युत्थितेः संगतिः । **यद्यपीति** । दर्शपूर्णमासयोर्यद्यपि अजामदग्न्यतया चतुरवत्ती यजमानः तथापि वपा पञ्चावत्तैव कार्येत्यर्थः । **विधानादिति** । अप्राप्तार्थतया एवकारयुक्तस्यापि पञ्चावदानविधायकत्वमिति भावः । **ननु** वपोद्देशेन विधानेपि हृदयादिव्यावृत्तिर्न सिध्यति अपूर्वसाधनत्वेनैव वपाया उद्देश्यत्वात्तस्य च हृदयादिसाधारण्यादत आह—**वपापूर्वस्येति** । सत्यमपूर्वसाधनत्वेनोद्देश्यत्वं वपायास्तथापि न तदपूर्वं पशुयागापूर्वं येन हृदयादिसाधारण्यं स्यात् किंतु प्रचारविप्रकर्षेण कल्पनीयं हि वपाया अपूर्वम् । एवं चोद्देश्यविशेषणस्याविवक्षायामपि चमसाधिकरणन्यायेनोद्देश्यस्य विवक्षितत्वम् । एवंच यथा ग्रहेषु श्रुतस्य संमार्गस्य चमसेषु न प्रवृत्तिर्ग्रहविवक्षाबलेन ग्रहाभ्यासापूर्वभेदस्यैव ग्रहशब्देन लक्षणीयत्वादेवं हृदयादिष्वपि न पञ्चावदानप्रसक्तिरित्यर्थः । **प्रदर्शनार्थमिति** । पाशुकहविर्मात्रोपलक्षणार्थमित्यर्थः । **त्र्यङ्गवदिति** । यथा 'त्र्यङ्गैः स्विष्टकृतं यजती'त्यत्र समा-

द्दिश्य पञ्चसंख्याविशिष्टमवदानान्तरं प्राकृतावदानकार्यमध्वर्युप्राकाशदानवद्विधीयते वपाग्रहणं चैवमर्थवद्भविष्यति, इतरथावयुत्यानुवादो लक्षणा वा स्यात्। सत्यपि पशुयागतदपूर्वयोरेकत्वेऽभ्यासापूर्वभेदान्मैत्रावरुणादिश्रवणवद्वपापूर्वप्रयुक्तत्वात्पञ्चावदानस्य नाङ्गेषु संस्कारो भवति। उच्यते 'एकादश वै पशोरवदानानितानि द्विर्द्विरवद्यती'ति यदेतद्द्व्यवदानवचनमिदमत्र सिद्धान्तस्य मूलयुक्तिः। वपामात्रविषयेहि पञ्चावदाने प्रकृतित एव द्विर्हविषोऽवद्यतीति प्राप्तत्वाद्द्व्यवदानवचनमनर्थकं स्यात्, सर्वविषये तु पञ्चावदाने संख्यासंपत्तये हविषद्व्यवदाने प्राप्ते द्व्यवदानविधानमर्थवद्भवति, सकलवचनानर्थक्याद्वरमेकस्य वपाग्रहणस्योपलक्षणार्थत्वाङ्गीकृतं तस्मात् सर्वविषयं पञ्चत्वं तच्चाङ्गेषु द्व्यवदानवचनादुपस्तरणविवृद्ध्याभिघारणविवृद्ध्या वा संपद्यते तस्मादङ्गेष्वपि पञ्चावदानम्॥ इति श्रीशास्त्रदीपिकायां दशमाध्यायस्य सप्तमः पादः॥ ७॥

---

## दशमाध्याये अष्टमः पादः।

प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासताधिकरणम्॥ १॥

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च, प्राप्तप्रतिषेधत्वाद्विकल्पः स्यात्॥ १॥ [अर्थप्राप्तवदिति चेत्॥ २॥ न तुल्यहेतुत्वादुभयं शब्दलक्षणम्॥ ३॥ अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्॥ ४॥]**

नार्षेयं न च होतारं नानुयाजेष्वितीदृशे॥ विकल्पः पर्युदासो वा स्यादाद्यो वचनद्वयात्॥ १॥

अन्याय्यत्वाद्विकल्पस्य विध्यंशः सा निषेधगीः॥ तेनानुयाजवाक्यस्थस्तदर्थं पर्युदस्यति॥ २॥

महापितृयज्ञे विध्यन्ते दार्शपौर्णमासिके प्रदिष्टे[1] श्रूयते 'नार्षेयं वृणीते न होतारमि'ति। तथानारभ्य श्रूयते 'यजतिषु येयजामहं करोती'ति। 'नानूयाजेषु येयजामहं करोती'ति। तत्र विचार्यते किं महापि-

---

सैकदेशेनाङ्गान्यनूद्यैकदेशान्तरेण न त्रित्वविधिः समासस्यैकप्रसरत्वेन प्रसरभेदनिबन्धनोद्देश्यविधानानुपपत्तेस्तद्वदित्यर्थः। यद्यत्र पञ्चसंख्याविशिष्टमवदानमसंयुक्तं विधीयेत तदा प्रकरणगृहीतं प्राकरणिकहविःसंस्कारकं लिङ्गेन भवद्धृदयादिष्वपि भवेत्, नत्वेवं किंतु वपासंयोगेनेति न प्रकरणग्राह्यत्वप्रसक्तिरिति वपामेवोद्दिश्येति वदतो भावः। यदुक्तमवदानस्य प्राप्तत्वाद्वपोद्देशेन पञ्चसंख्याविशिष्टावदानविधिर्न संभवतीति तत्राह—**अवदानान्तरमिति**। नचावदानान्तरत्वे सत्यदृष्टार्थत्वापत्तिरित्याशयेनाह—**प्राकृतेति**। यथा 'प्राकाशावध्वर्यवे ददाती'त्यत्राप्राकृतं दानान्तरं विधीयमानं प्राकृताध्वर्युभागदानकार्यापन्नं नादृष्टार्थं तद्वदित्यर्थः। नच वपोद्देशेनावदानस्य संख्यायाश्च विधाने वाक्यभेदप्रसक्तिः, विधिव्यापारं विनैव समासादेव संख्यावदानवैशिष्ट्यसिद्धौ विध्यावृत्तिलक्षणवाक्यभेदानवकाशाद्यथा सर्वपृष्ठो भवति त्र्यङ्गैरित्यादाविति भावः। **मैत्रावरुणादीति**। यथा 'पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिन'मित्यादिश्रपणादीनां तत्तद्ग्रहयज्याभ्यासापूर्वप्रयुक्ततया संस्कारस्तद्वदित्यर्थः। **उच्यत इति**। वपोद्देशेनावदानान्तरं विधीयतां तथापि यदत्रोद्देश्यसमर्पकं वपापदं तदवश्यं पाशुकहविर्मात्रोपलक्षणं स्वीकार्यमितरथा 'तानि द्विरवद्यती'तिवचनानर्थक्यप्रसङ्गात्। एवंच पाशुकहविर्मात्रोद्देशेन पञ्चसंख्याविशिष्टावदानविधानाद्धृदयादिष्वपि पञ्चावदानसिद्धिरित्यर्थः। **ननु** यदि हृदयादीनां द्विरेवावदानं तर्हि यथाप्रकृति चतुरवदानमेव संपन्नं न पञ्चावदानमत आह—**पञ्चेति**। वपायामिव हिरण्यशकलेनेति पक्षान्तरमुक्तं तन्त्ररत्ने। **वस्तुतस्तु** नात्र पञ्चसंख्याविशिष्टावदानान्तरविधिः किंतु वपोद्देशेन शब्दतः पञ्चसंख्याविशिष्टावदानविधिप्रतीतावपि प्राप्ताप्राप्तविवेकेन पञ्चसंख्यामात्रे विधेः पर्यवसानं यथा लोहितोष्णीषेत्यादौ। अन्यथा तत्रापि समानत्वाल्लौहित्यमात्रविधिर्न स्यात्। **एवंच** तात्पर्यगत्यावदाने संख्याविधिपर्यवसानेऽपि शब्दतस्तथात्वाभावान्न प्रसरभेदापत्तिरुक्तरीत्या च 'तानि द्विरवद्यती'ति वाक्यानर्थक्यप्रसङ्गाद्वपाग्रहणस्य पाशुकहविर्मात्रोपलक्षणार्थत्वाद्धृदयादिषु पञ्चावदानसिद्धेश्चेत्येवं प्रागुक्तशङ्कायां समाधानं द्रष्टव्यम्। सूत्रार्थस्तु—यथाश्रुति यत्र पञ्चावत्तत्वं श्रूयते वपायां तत्रैव प्राकृतं चतुरवत्तं निवर्तयति नान्यत्रेति॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां दशमाध्यायस्य सप्तमः पादः**॥ ७॥

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषेधत्वाद्विकल्पः स्यात्**॥ १॥ **प्रदिष्ट इति**। अतिदिष्ट इत्यर्थः। **नियोगत इति**। नियमत इत्यर्थः। **तत्रेति**। 'आर्षेयं वृणीत' इत्यार्षेयवरणकर्तव्यता प्रतिपाद्यते सा च नञा प्रतिषि-

---

[1] चातुर्मास्यानागते.

वृयञ्जे वरणस्य प्रदिष्टस्य तत्प्रतिषेधस्य च विकल्पः तथानूयाजेषु येयजामहतत्प्रतिषेधयोरुत नियोगतो वर्जनमेवेति तदर्थमिदं चिन्त्यते—नार्षेयं नानूयाजेष्विति किमयं प्रतिषेध उत पर्युदासः इति । 'तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः ॥ पदद्वयमपि ह्यन्यपरत्वाल्लक्षणा भवेत् ॥' प्रतिषेधपक्षे हि चोदकप्राप्तमार्षेयवरणं श्रुत्यैवानूद्यते, श्रुत्यैव च तत्प्रतिषिध्यते । अनारभ्यवादप्राप्तश्च येयजामहः पर्युदासपक्षे पुनर्नानूयाजशब्दाभ्यां यागान्तराणि । नञ्वृणातिभ्यां च वरणव्यतिरिक्तचोदकप्राप्ताङ्गान्तराणि लक्षणया प्रतिपाद्येरन् । नच श्रुतिसंभवे लक्षणा युक्ता । किंचानूयाजशब्दसंबन्धे नञ्समासप्रसङ्गः । नित्यो ह्यस्य सुबन्तसंबन्धे समास इति ब्रुवन् वार्तिककारो वावचनानर्थक्यं मन्यते । एवं हि वदन् वाक्यसमासयोर्भिन्नार्थतां मेने । सति ह्यैकार्थ्ये समासनियमाद्वाक्यं निवर्तेत तन्मा निवर्तिष्टेति कर्तव्यं वावचनमिति तदानर्थक्यं न ब्रूयात् । आनर्थक्यवचनात्तु नास्त्यैकार्थ्यमिति गम्यते । ततोऽननूयाजेष्विति समासगम्यः पर्युदासस्तदैव लभ्यत इति तद्विवक्षायां नित्यः समासः स्यात् । असति तु समासे नानूयाजेष्वित्याख्यातसंबन्धी सन् नञ्प्रतिषेधार्थ एव ज्ञायते । अतश्च प्रदेशानारभ्यवादाभ्यां विहितत्वादाभ्यां वचनाभ्यां च प्रतिषिद्धत्वात् वरणयेयजामहयोर्विकल्पः । **ननु** सामान्यविषयस्य विधेर्विषयस्य च प्रतिषेधः स्यात्तुल्यबलत्वाद्युक्तो बाधो न विकल्पः, तथानुमानिकस्य चोदकस्य प्रत्यक्षस्य च सुतरामयुक्त इति चेत् । नैवम् । तन्नामप्रत्यक्षविशेषशास्त्रं सामान्यस्यानुमानिकस्य च बाधने क्षमं यत्तन्निरपेक्षमात्मानं लभते, यथा शरपदशास्त्रे कुशाहवनीययोः । नहि शरविधिः कुशप्राप्तिमपेक्षते, तत्कार्यमात्रापेक्षत्वात् । पदविधिरपि होममा-

---

ध्यत इति प्रतिषेधपक्षे आर्षेयपदं वृणोतिधातुर्नशब्दश्चेति त्रीण्यपि श्रुतिवृत्तानि भवन्ति । पर्युदासपक्षे तु यथाऽब्राह्मणमानयेत्यत्र नञ्ब्राह्मणशब्दाभ्यां ब्राह्मणभिन्नो लक्ष्यते तथेहाप्यार्षेयशब्दवृणोतिधातुनञ्भिरार्षेयवरणव्यतिरिक्तानि चोदकप्राप्ताङ्गानि लक्षणीयानि स्युः, एवं नञनूयाजपदाभ्यामनूयाजव्यतिरिक्ता यागा लक्षणीया इति लक्षणाप्रसङ्गात्पर्युदासो न युक्त इत्यर्थः । अत्रार्षेयशब्दस्य वृणोतेश्च विशिष्टैकार्थप्रतिपादकतयैकपदत्वमभिमतम् । तेन पदद्वयमित्युक्तेर्न विरोधः । नच नञारोपितत्वं बोध्यते ततश्चाब्राह्मणशब्दस्यारोपितो ब्राह्मण इत्यर्थः, ब्राह्मणभिन्नं त्वर्थादेव गम्यते, अयं चार्थः शाब्दिकैर्नञ्सूत्रे सम्यक् प्रतिपादितस्ततश्च कथं पदद्वयलक्षणेति वाच्यम् । एवमपि नञो निषेधार्थकस्यारोपे लक्षणावश्यंभावाच्छाब्दिकानामप्यब्राह्मणादावारोपितार्थकत्वसाधनप्रयासस्य न फलं पश्यामः । नचाब्राह्मणशब्दस्य ब्राह्मणभिन्नार्थकत्वे नञ्तत्पुरुषस्योत्तरपदार्थप्राधान्यं स्यात्, तथाचास इत्यादौ त्यदाद्यत्वमतस्मिन्नित्यादौ सर्वनामकार्यं च न स्यादतः शाब्दिकैस्तत्र पराक्रान्तमिति वाच्यम् । असत्यप्युत्तरपदार्थप्राधान्ये 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि'त्यनञ्समासग्रहणं ज्ञापकमाश्रित्योत्तरपदार्थप्राधान्यप्रयुक्तकार्योपपादनसंभवादिति । **समासेति** । सति च समासेऽननूयाजेष्विति रूपं स्यादिति भावः । **ननु** पाणिनिना विभाषेति महाविभाषारम्भादसमासोपि स्यादित्यतआह—**नित्य इति** । वचनानर्थक्यं च स्वभावसिद्धत्वादिति वार्तिककारेण विभाषारम्भस्य प्रत्याख्यातत्वादिह नित्यं समासः स्यादित्यर्थः । स्वभावसिद्ध्यर्थत्वं विशदयन्नित्यसमासस्य वार्तिककारसंमतत्वमुपपादयति—**एवमिति** । वावचनं हि समासेन वाक्यस्य निवृत्तिर्माभूदित्येवमर्थं कर्तव्यम् । निवृत्तिश्च वाक्यसमासयोरेकार्थत्वे प्रसज्यते, भिन्नार्थत्वे हि स्वार्थप्रतिपादनाय वाक्यप्रयोगावश्यंभावेन तन्निवृत्त्यप्रसक्तिः, तस्मादेकार्थत्वे वावचनं कर्तव्यं स्यात्तदानर्थक्यवचनात्तु कात्यायनस्यैकार्थत्वमनिष्टमवगम्यते । असतिचैकार्थत्वे तत्तदर्थप्रतिपादनाय वाक्यसमासयोः स्वभावसिद्धत्वात्तद्वचनं न कर्तव्यमिति वार्तिकमुपपद्यत इत्यर्थः । **नन्वस्तु** भिन्नार्थत्वं तथापि समासवद्वाक्येनापि पर्युदासप्रतीतिः किं न स्यादत आह—**समासेति** । समासेन पर्युदासो गम्यत इत्यविवादम् । यच्च समासगम्यं तत्तदेकलभ्यमित्यवश्यं स्वीकार्यम् । अन्यथा वाक्येनापि समासगम्यार्थप्रतीतौ तयोर्भिन्नार्थत्वानुपपत्तेः । तस्माद्वाक्येन न पर्युदासप्रतीतिः संभवतीत्यर्थः । नचाननूयाजेष्विति रूपप्रसङ्गान्नञ्समासाभावेऽपि तत्समानार्थकस्य निरनुबन्धकनशब्दस्य समासोऽस्त्विति वाच्यम् । एवमपि वाक्ये नशब्दस्योदात्तत्वं समासे तु शेषनिघातेनानुदात्तत्वमिति स्वरभेदस्यापरिहार्यत्वान्नार्षेयं वृणीत इत्यत्र नशब्दस्यापि धातुना समासस्य वक्तुमशक्यत्वेन तत्र पर्युदासासंभवतादवस्थ्याच्चेति भावः । एवंच सुबन्तेन धातुना च संबन्धायोगादाख्यातेनैव संबन्धो वाच्य इत्याशयेनाह—**असतीति** । **अतुल्येति** । अतुल्यबलत्वान्न विकल्पः किंतु प्रबलेन निषेधेन बाध एव युक्त इत्यर्थः । **ननु** शरशास्त्रस्यापि चोदकप्राप्तकुशकार्ये शरविधायकतया चोदकाधीन एवात्मलाभ इति तत्रापि कुशबाधो न स्यादत आह—**नहीति** । कार्यप्राप्त्यंशे चोदकापेक्षायामपि कुशप्राप्त्यंशेऽनपेक्षितत्वाद्बाधकत्वं संभवतीत्यर्थः । **नन्विहा**पि प्रतिषेधशास्त्रस्य प्रतिषे-

---

१ लक्षणात्रमेव.

त्रापेक्षो नाहवनीयप्राप्तिमपेक्षते, तेन प्रागेव कुशाहवनीयप्राप्तेः प्रत्यक्षेण विशेषशास्त्रेण च शीघ्रं विहिते शरपदे पश्चात्सामान्यद्वारा लक्षणया प्राप्यमाणयोः प्राप्तिं निवारयत इति युक्तो बाधः। अत्र तु प्रतिषेधस्य प्राप्त्यपेक्षत्वादवश्यं प्रतिषेधता शास्त्रेणैव प्रतिषेध्ययोर्वरणयेयजामहयोर्महापितृयज्ञेऽनूयाजेषु च प्राप्तिः प्रतीक्षितव्या । प्राप्तिश्च निर्दोषशास्त्रकारितत्वादशक्या मिथ्याकर्तुं तस्माद्विकल्प इति प्राप्ते ब्रूमः—'यत एव विकल्पोऽयं प्रतिषेधे प्रसज्यते ॥ अतस्तत्परिहाराय पर्युदासाश्रयो वरम् ॥' नित्यवच्छ्रुतयोर्विधिप्रतिषेधयोः पक्षेप्यत्यन्ताविद्यमानमिथ्यात्वकल्पनादत्यन्तायुक्तो विकल्प इति वरं लक्षणयापि पर्युदासाश्रयणम् । नचानूयाजशब्दसंबन्धे नञ्समासापत्तिः। विभाषाध्ययनात्पाणिनेः । कात्यायनीयं तु वचनानर्थक्यं न्यायविरोधादनादर्तव्यम् । अस्ति हि वृत्तिवाक्ययोरैकार्थ्यं य एव राजपुरुष इति वृत्तेरर्थो राजविशिष्टः पुरुषः स एव राज्ञः पुरुष इति वाक्यस्यापि । विशेषस्त्वेतावान्—वृत्तावभिधानद्वयमप्यनन्याक्षिप्तस्वार्थं सदेकं विशिष्टं प्रतिपादयति, वाक्ये त्वर्थान्तराक्षेपं सहते यथा ऋद्धस्य राज्ञः पुरुष इति राजपदमृद्ध्याक्षेपमनुभवन्पुरुषं विशिनष्टि । नचैतावतार्थभेदः, प्रतिपाद्याभेदात्। यदि चैतावता भेदेन समासो वाक्यस्यानिवर्तक इत्यङ्गीक्रियेत ततो विभाषावचनात्प्राग्विहितेनोपकुम्भादिसमासेनापि वाक्यं न निवर्तेत, तथोपपदसमासेन कुम्भकारादिना । नचैवमिष्टम् । तस्मादवश्यादेयं विभाषावचनमित्यन्याय्यं तदानर्थक्यम् । तस्मादसमासेपि विकल्पपरिजिहीर्षया युक्तं पर्युदासाश्रयणम् । एवंच प्रदेशानारभ्यवादयोरेवायं वाक्यशेषः

---

ध्यबुद्धिमात्रापेक्षतया स्ववाक्य एव प्रतिषेध्यबोधकपदसद्भावान्न चोदकानारभ्यवादाधीनात्मलाभत्वमत आह—**अत्र त्विति** । न प्रतिषेध्यबुद्धिमात्रानपेक्षितं किंतु प्रतिषेध्यप्रसक्तिरिति युक्तं चोदकानारभ्यवादाधीनात्मलाभत्वमित्यर्थः । **ननु** प्राप्तिरपि 'ब्राह्मणो न हन्तव्य'इत्यादिवन्मिथ्याभूता किं न स्यादत आह—**प्राप्तिश्चेति** । 'ब्राह्मणो न हन्तव्य' इत्यादौ रागतः प्राप्तिर्न शास्त्रत इति प्रतिषेधशास्त्रासंकोचाय प्राप्तेर्नित्यं बाधेऽपीह तथात्वे प्रापकशास्त्राप्रामाण्यापत्त्या न सर्वथा बाध इत्यर्थः । किंच रागप्राप्तप्रतिषेधस्थले निषेधस्य सर्वथाऽप्राप्तत्वेन तत्र तत्प्राप्तावेव शास्त्रस्य तात्पर्यं न नियमन इति नित्यबाध इति तन्त्ररत्ने । **तस्मादिति** । एवं सति प्राप्तपरिसंख्यायामपि विकल्पः स्यात्तत्रापि शास्त्रप्राप्तस्य प्रतिषेधविधानात् । इयांस्तु विशेषः—तत्र प्रतिषेधो लक्षणीयस्तद्वाचकशब्दाभावादिह तु वाचकशब्दस्य सद्भावान्न लक्षणेति तस्मिन् विशेषे सत्यपि शास्त्रप्राप्तप्रतिषेधत्वाविशेषात्तत्रापि विकल्पो दुर्वारः । तान्त्रिकैस्तत्र विकल्पो न व्यवह्रियते, तस्मादत्र वैषम्ये नियामकं चिन्त्यम् । **ननु** प्रमाणानुसारित्वात्प्रयोजनकल्पनायाः पदद्वये लक्षणाभिया प्रथमं निषेधार्थकत्वे सिद्धे पश्चाद्विकल्पोपि न दोषः प्रामाणिकत्वादित्यत आह—**नित्यवदिति** । पक्षेऽप्रामाण्याद्वरं लक्षणाश्रयणमित्यर्थः । न्यायविरोधमेवाह—**अस्तिहीति** । नन्वेवं वाक्य इव समासेपि ऋद्धत्वादिविशेषणसहत्वं स्यादत आह—**विशेषस्त्विति** । इदमुपलक्षणं—वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति पुरुषो राज्ञा देवदत्तेन च संबध्यते । वृत्तौ तु राज्ञैव तथा वाक्ये राजपदपुरुषपदयोर्मध्ये पदान्तरसद्भावेऽप्यन्वयो भवति, समासे तु पदान्तरव्यवधानमनिष्टमित्यादिरपि विशेषो बोध्यः । **नचेति** । यथा ब्राह्मणाः शतं भोज्यन्तां ब्राह्मणानां शतमित्यत्राभिधानप्रकारभेदेऽपि शतसंख्याकब्राह्मणभोजनलक्षणप्रतिपाद्याभेदस्तद्वदित्यर्थः । **नन्वयमेव** विशेषो वार्तिककारस्य संमतः वृत्तावेकार्थीभावलक्षणसामर्थ्यस्य वाक्ये व्यपेक्षालक्षणसामर्थ्यस्य चाभ्युपगमेन वार्तिकस्य महाभाष्ये विवरणात्तथाचैतावतापि विशेषेण वाक्यस्याव्यावृत्तिः स्यादित्यत आह—**यदिचेति** । 'अव्ययं विभक्ती'त्यादिसूत्रपञ्चकानन्तरं विभाषावचनं क्रियते, ततश्च 'अव्ययं विभक्ती' त्यादिभिर्विधीयमानेषूपकुम्भादिसमासेषु वाक्यस्य निवृत्तिरिष्यते सापि न स्यादित्यर्थः । विभाषावचनात्पश्चाद्विहितेप्याह—**तथेति** । वार्तिककारपक्षे विभाषाग्रहणवत्तन्निवृत्त्यर्थनित्यग्रहणस्यापि प्रत्याख्येयतया 'नित्यं क्रीडाजीविकयो'रित्यत 'उपपदमतिङि'ति सूत्रे नित्यग्रहणानुवृत्तावप्यत्र वाक्यव्यावृत्तिः कर्तुं न शक्येति भावः । **इत्यन्याय्यमिति** । वस्तुतस्तु कात्यायनवचनस्य न्याय्यत्वेऽपि एकार्थीभावव्यपेक्षालक्षणसामर्थ्यभेदनिबन्धनादर्थभेदमादाय वावचनानर्थक्यं वदता कात्यायनेनापि प्रतिपाद्याभेदाङ्गीकारेण राजविशिष्टपुरुषस्य समासगम्यस्य राज्ञः पुरुष इति वाक्यगम्यत्ववत्समासगम्यस्यापि पर्युदासस्य वाक्यगम्यत्वसंभवेन समासैकलभ्यत्वाभावादसमासेपि न पर्युदासानुपपत्तिरिति ध्येयम् । **ननु** प्रतिषेधपर्युदासयोः को विशेषः येन पर्युदासे विकल्पो न स्यादत आह—**एवंचेति** । यद्वा ननु सत्येकवाक्यत्वे पर्युदासोऽवकल्प्यते, इह च 'यजतिषु येयजामहं करोति, नानूयाजेषु येयजामहं करोती'त्युभयोः परिपूर्णत्वान्नैकवाक्यत्वमतः कथं पर्युदास इत्यत आह—**एवंचेति** । परिपूर्णयोरपि वाक्यैकवाक्यत्वं संभवतीति भावः । **ततश्चेति** । यजतिषु येयजामह इति सामान्यवाक्यं यजतिसामान्यद्वारेणानूयाजतदितरविशेषान् गृहीतुं यावदुपक्रमते ततः प्रागेवानूयाजव्यतिरिक्तयज्ञलक्षणविशेषस-

प्रकृतिवत्कुर्यादार्षेयवरणव्यतिरिक्तं पितृयज्ञेऽनूयाजव्यतिरिक्तेषु यज्ञेषु च येयजामहं कुर्यादिति। ततश्च विधेरङ्गान्तरयागान्तरविषयत्वादविहितमेव वरणमनूयाजेषु च येयजामहः, तस्मान्न विकल्पोऽननुष्ठानमेव । सोयं प्रतिषेधनिबन्धनः प्राकृताङ्गबाधः शरैः कुशानां प्रत्याम्नानात् । स्वयंदितादिषु लवनादीनामर्थलोपादिति त्रेधा बाधो वेदितव्यः ॥

निषेधस्यार्थवादताधिकरणम् ॥ २ ॥

## अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

**न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते ॥ उतार्थवादो वाद्यः स्यादसमस्तपदोक्तितः ॥ ३ ॥**
**सोमे प्रसक्तिरङ्गेष्टाववविकल्पाय मध्यमः ॥ नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते ॥ ४ ॥**
**पुरैतस्मात्सोमयाग आज्यभागाप्रसक्तितः ॥ न पर्युदासः किंत्वर्थवादो दृष्टान्तवर्णनात् ॥ ५ ॥**

दर्शपूर्णमासयोः 'आज्यभागावग्नीषोमाभ्यां यजती'त्येवं विधाय श्रूयते—'न तौ पशौ करोति न सोम' इति किमयं प्रतिषेधः पर्युदासो वाऽर्थवादो वेति संशयः । तत्रासमस्तत्वात्प्रतिषेधः विकल्पभयाद्वा

---

मर्पकेण नानूयाजेष्वित्यनेन विशेष्यत इति तद्विशेषितस्यानूयाजव्यतिरिक्तेष्वेव येयजामहविधायकतयाऽनूयाजेषु येयजामहस्य न विधिस्ततश्च विधानाभावादेव नित्यमननुष्ठानमिति न विकल्पप्रसक्तिरित्यर्थः । **सोयमिति** प्रतिषेधशब्देन यः कश्चित्प्राकृतपदार्थनिवृत्तिफलको विधिः स सर्वो विवक्षितस्तेन नार्षेयमिति पर्युदासस्य 'न तौ पशौ करोती'ति निषेधस्य, गृहमेधीये आज्यभागौ यजत्यपूर्वतापरविधेश्चित्रेष्टिगततण्डुलेषु व्रीह्युपादाननिवृत्तिफलकस्य, कपालेषु श्रपयतीति विधेश्च संग्रह इति ध्येयम् । **प्रत्याम्नानादिति** । प्रत्याम्नानबाधो बहुविधः । क्वचिदुपदिष्टपदार्थाद्यथा 'औदुम्बरो यूपो भवती'ति यूपोद्देशेनोदुम्बरलक्षणप्रकृतिविधावुदुम्बरप्रकृतिके यूपे प्राकृतस्य बिल्वपलाशादेर्विरोधेन प्रकृतित्वासंभवाद्बाधः । क्वचिदुपदिष्टगतनैरपेक्ष्यविरोधाद्यथा 'नैवारश्चरुर्भवती'त्यादौ नैवारप्रकृतिके चरौ व्रैहतण्डुलानामपि मिश्रणेन प्रकृतित्वसंभवेऽपि नीवारशब्दपरतद्धितावगतनैरपेक्ष्यविरोधाद्व्रीहीणां बाधः, यथावा वैकृतदक्षिणया प्राकृतान्वाहार्यबाधः । क्वचिन्नैरपेक्ष्याभावेऽपि नियमवशान्निवृत्तिः यथा ऋतपेये 'औदुम्बरः सोमचमसो दक्षिणा स ब्रह्मणे देया'इत्यत्र सोमचमसेन केवलं ब्रह्मणे दत्तेन लोके लोपायमनपेक्ष्य सर्वेषामृत्विजामानतेरसंभवेऽपि श्रुतब्रह्मचमसनियमवशाज्ज्यौतिष्टोमिकदक्षिणाबाध इत्याद्यूह्यम् । **अर्थलोपादिति** । अर्थलोपशब्देन स्वरूपेण प्राकृतपदार्थलोपः फललोपः प्राकृतद्वारलोपश्च विवक्षितः । तत्र स्वरूपेण प्राकृतपदार्थलोपाद्बाधो यथा—पवमानेष्टावग्निहोत्रहवण्याः । ययाग्निहोत्रं हुतं सा अग्निहोत्रहवणी । पवमानेष्टिसमये नाग्निहोत्रं हुतमिति पदार्थस्वरूपलोपः । फललोपाद्बाधो यथा—मृते यजमाने क्रियमाणायामिष्टौ 'आयुराशास्त' इत्यादीनां बाधः । द्वारलोपोऽपि बहुविधः । क्वचिद्द्वारत्वाभिमतस्य स्वतःसिद्धतया यथा—कृष्णलेष्ववघातस्य । तत्र वैतुष्यस्य स्वतःसिद्धत्वात् । क्वचित्पूर्वसिद्धतया यथा—खलेवाल्यां छेदनतक्षणादेः । क्वचित्संपादनाशक्त्या यथा—प्राशित्रेडाभक्षणार्थेषु कृष्णलेषु अभिधारणजन्योपकारस्य स्वादित्रः संपादयितुमशक्यत्वात् । क्वचित्सिद्धशेषिविरोधाद्यथा—आग्रयणे दक्षिणारूपे वत्सेऽन्वाहार्यधर्मस्य पाकस्य पाके सति वत्सो नश्येत मांसमेव दक्षिणा स्यात् । क्वचित्साध्यशेषिविरोधाद्यथा—'नैवारः सप्तदशशरावश्चरुर्भवती'त्यत्र सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधात्प्राकृतमुष्टिबाध इत्याद्यूह्यम् । यद्यपि विकृतिविधानसमये पदार्थस्य प्राकृताङ्गत्वेनाक्लृप्तत्वादप्यस्ति बाधः यथा—आरम्भणीयायाः स्वविधिसमये दर्शपूर्णमासाङ्गत्वेनाक्लृप्तत्वाद्बाधस्तथाप्यङ्गत्वेनाक्लृप्तेर्द्वारक्लृप्त्यभावरूपतया सोपि कथंचिद्द्वारलोप एवान्तर्भवनीय इति भावः । अनेनैवं त्रैविध्यकथनादस्पष्टयोरर्थलोपप्रत्याम्नाननिबन्धनबाधयोर्निरूपणानन्तरमतिस्पष्टस्य प्रतिषेधनिबन्धनबाधस्यास्मिन्पादे प्राधान्येन निरूपणमिति पादान्तरत्वमानन्तर्यं च सूचितम् । गृहमेधीयादिविचारस्य तु एतत्पादे संगतस्यापि पादान्तरे करणमवान्तरसंगतिलोभादिति । सूत्रार्थस्तु—प्रदेशे चोदकेनार्षेयवरणातिदेशे येयजामहस्यानारभ्यविधाने च सति नार्षेयं नानुयाजेष्विति नञ्प्रतिषेधार्थकस्ततश्च विहितप्रतिषिद्धत्वाद्विकल्प इति ॥

**अपूर्वे चार्थवादः स्यात् ॥ ५ ॥** अयमित्यनेन संनिहितत्वान्न सोम इत्यस्य परामर्शः । अथत्यादिना 'न तौ पशौ करोती'त्यत्र वक्ष्यमाणरीत्या सोमवाक्येऽपि पर्युदासासंभवादनास्थया पर्युदासपक्षोक्तिः प्रतिषेध इत्येवमुख्यः पूर्वः पक्षः । अतएव भाष्यादावपि तथैव पूर्वपक्षितम् । एवंचासमस्तत्वादित्युपलक्षणं पर्युदासासंभवाच्चेत्यपि द्रष्टव्यम् । तथाच पूर्वत्र पर्युदाससंभवाद्विकल्पावहप्रतिषेधनिरासेऽपीह तदसंभवात्प्रतिषेध एव न्याय्य इत्युत्थितेः संगतिश्चेति ध्येयम् । **उभयमपीति** । पर्युदासस्य प्रतिषेधवत्प्राप्त्युपजीवकत्वाभावेऽपि 'यजतिषु येयजामहं करोती'तिवत्तदितरसाधारण्येन संभवत्प्राप्त-

पूर्ववत्पर्युदासः। ननु सोमस्योपदेशातिदेशाभ्यामाज्यभागप्राप्त्यभावादुभयमप्ययुक्तम्। सत्यम्। साक्षात्सोमे नाज्यभागौ स्तः दीक्षणीयादिद्वारेण तु आज्यभागाभ्यां सोमस्यास्ति संबन्धः, स प्रतिषिध्यते। तदनेन प्रकारेण सोमाङ्गेषु दीक्षणीयादिष्वाज्यभागप्रतिषेधः पर्युदासो वेति प्राप्ते ब्रूमः— यद्युपदेशेनातिदेशेन वाज्यभागौ सोमेन प्राप्नुयातां ततो निषेधः स्यात्। यदि च सोमासोमसाधारणमाज्यभागविधानमभविष्यत्ततोऽसोम इति पर्युदासो वा प्रतिषेधो वा कल्प्यः स्यात्। नत्वेवमस्ति। नच दीक्षणीयादिषु प्रतिषेधः। तथासति न सोम इत्यनेनैवाग्नीषोमीयेऽपि पशौ प्रतिषेधसिद्धेस्तत एव तद्विकारेषु निरूढादिपशुष्वपि प्राप्त्यभावान्न पशाविति प्रतिषेधोऽनर्थकः स्यात्। सोमशब्दस्य चैवं लक्षणा स्यात्। नच वाजपेयस्येव यूपेनाङ्गद्वारकः सोमाज्यभागसंबन्धो निर्दिश्यते। षष्ठी हि संबन्धमात्रमभिधत्ते सप्तमी त्वाधाराधेयभावमेव। नचाङ्गाङ्गित्वेनाधाराधेयभावः संभवति तस्मादङ्गाङ्गिभावनिर्देशोयं, सचाप्राप्त इति तत्प्रतिषेधपर्युदासावयुक्तौ, तस्मान्न पशावित्यस्यायमर्थवादो यथा सोमस्य नाज्यभागावेवं पशावपीति। अथ न पशाविति किमयं प्रतिषेधः पर्युदासो वा। विकल्पपरिहाराय पर्युदास इति केचित्। तदयुक्तम्। अनन्तरवृत्तस्याज्यभागाङ्गविधेः केवलदर्शपूर्णमासविषयत्वेन पश्वपशुसाधारण्याभावात्। नच पाशुकस्य प्रकृतिवच्छब्दस्यायं वाक्यशेषस्तस्य ह्यसंनिधानात्तच्छेषत्वे च न सोम इत्यर्थवादो नावकल्प्यते। नह्येवं संभवति यथा सोमस्याज्यभागव्यतिरिक्तमङ्गमैष्टिकं कर्तव्यं तथा पशोरपीति सोमस्यापूर्वत्वादैष्टिकाङ्गाभावात्, संभवति त्वेवं यथा सोमस्य नाज्यभागौ कर्तव्यौ तथा पशोरपीति। तस्मात्प्रतिषेधः। ततश्च पशावाज्यभागयोर्विकल्पः॥

---

स्थल एव पर्युदासो वाच्यः। सर्वात्मना प्रसक्त्यभावे तत्पर्युदासवैयर्थ्यादिति भावः। **यदीति**। वक्ष्यमाणरीत्या दीक्षणीयादिष्वनुपपत्तेः साक्षादेव सोमे प्रतिषेधः पर्युदासो वा वक्तव्यः, स च न संभवति। उपदेशादिना साधारणेनासाधारणेन वा सोमे प्राप्त्यभावादुपदेशातिदेशरूपस्य साधारणविधेरभावाच्चेत्यर्थः। **ननु** पशावित्यस्य विकृतिपशुविषयत्वमस्त्वित्यत आह—**तत एवेति**। किंचेह किं सोमशब्देन दीक्षणीयादीनि लक्षयित्वा तेषु प्रतिषेधः पर्युदासो वा विधीयत इत्युच्यते उत लक्षणांविनैवानर्थक्यतदङ्गन्यायमाश्रित्योच्यते। आद्य आह—**सोमशब्दस्येति**। द्वितीयमनूद्य दूषयति—**नच वाजपेयस्येति। नचेति**। कुण्डे बदरमित्यादौ साक्षात्संबन्ध एवाधाराधेयभावदर्शनेन तस्यैवाधाराधेयभावप्रयोजकतया परंपरासंबन्धो न तत्र प्रयोजकः। साक्षात्संबन्धोऽप्यङ्गाङ्गित्वादन्यः कर्मणां न संभवतीति सप्तमीनिर्देशोङ्गाङ्गित्वपर एवेत्यर्थः। एवंच प्रस्तुतमधिकरणं समाप्य न पशावित्यस्य प्रतिषेधत्वसाधनाय स्वयं विचारान्तरं प्रस्तौति—**अथेति**। वाशब्दयुक्तः पाठः प्रामादिकः वर्णकान्तरत्वाभावादिति ध्येयम्। तत्र प्राभाकरमतमेव पूर्वपक्षत्वेनाह—**विकल्पेति**। पर्युदासपक्षे किं नञः पशुसंबन्धमङ्गीकृत्यापशौ पशुव्यतिरिक्ते आज्यभागौ कर्तव्यावित्येवमाज्यभागविधिशेषः पर्युदास इत्युच्यत उत नञ आज्यभागसंबन्धमङ्गीकृत्याज्यभागव्यतिरिक्तं प्रकृतिवत्कुर्यादित्येवं पाशुकप्रकृतिवच्छब्दशेष इति। आद्य आह—**अनन्तरवृत्तस्येति**। यदि पश्वपशुसाधारण आज्यभागविधिः स्यात्तदा पशुव्यतिरिक्ते आज्यभागौ कर्तव्यावित्येवं विधिः स्यान्नत्वेवमस्ति, दर्शपूर्णमासमात्रविषयत्वादित्यर्थः। द्वितीयं दूषयति—**नचेति**। 'न तौ पशौ करोती'त्यस्य दर्शपूर्णमासप्रकरणस्थत्वेन तत्र पाशुकप्रधानविधिदेशे कल्पनीयस्य पाशुकचोदकस्य संनिधानाभावात् पर्युदासस्थले चैकवाक्यतार्थं संनिधानावश्यंभावान्नेह पर्युदास इत्यर्थः। **ननु** पशुशब्दादेव कथंचित्पश्वर्थोपस्थितिद्वारा तच्चोदकस्यापि संनिधानमस्त्वित्यत आह—**तच्छेषत्वे इति**। न सोम इत्यस्यार्थवादत्वं प्रतिवस्तूपमाविधया वाच्यम्, प्रकारान्तरासंभवात्, प्रतिवस्तूपमा च वाक्यद्वये साधारणधर्मैक्ये भवति। पर्युदासपक्षे च पशुवाक्ये पर्युदासः सोमवाक्ये प्रतिषेध इति धर्मभेद एव। यदि सोमवाक्येऽपि पर्युदासः संभाव्यते तदोभयत्राप्येकधर्मवत्तया स्तुतिर्भवेत्। इहतु सोमस्यापूर्वत्वेनैष्टिकाङ्गाभावात्तत्र पर्युदासो न संभवति तस्मात्तत्पक्षे स्तुतिर्नावकल्पत इत्याह—**नहीति**। पर्युदासपक्षे आज्यभागपर्युदासस्तत्सदृशेष्वैष्टिकाङ्गेष्वेव पर्यवस्यति न तद्विलक्षणेष्वित्याशयेनेष्टिकाङ्गमित्युक्तम्। स्वपक्षे तूभयत्रापि प्रतिषेधरूपधर्मैक्यात्स्तुतिः संभवतीत्याह—**संभवति त्विति**। सूत्रार्थस्तु—पूर्वं प्रकृतिरहिते सोमे श्रूयमाणो न सोमेऽध्वर इत्ययमर्थवादः स्यात्॥

अतिरात्रे षोडशिग्रहनिषेधस्य विकल्परूपताधिकरणम् ॥ ३ ॥

## शिष्टा तु प्रतिषेधः स्यात् ॥ ६ ॥

**नातिरात्रे पर्युदासो वादो वाऽथ निषेधनम् ॥ आद्योऽनुयाजवन्मैवं विध्येकविषयत्वतः ॥ ६ ॥**
**अत एवार्थवादोऽपि न युक्तः पशुसोमवत् ॥ निषेधः स्याद्विकल्पोऽत्र व्रीह्यादाविव युज्यते ॥ ७ ॥**

सामान्यविषये विधौ विशेषविषयो नञ्पर्युदासरूपेण विधेरेव वाक्यशेष इत्युक्तमप्राप्तविषयस्तु नञर्थवाद इति । अथ कोऽयं प्रतिषेधो भवतीति तत उच्यते—यत्रैकमर्थं शिष्ट्वा तद्विषय एव नकारः श्रूयते, यथा 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्र' इति । तत्र प्रतिषेधपर्युदासार्थवादासंभवादगत्या च करणाकरणयोर्विकल्पः प्रतिषेधार्थवत्त्वापाकरणे क्रतुसिद्धिरस्तीति कल्प्यते, विध्यर्थवत्त्वाय चानुष्ठाने फलभूयस्त्वमित्युभयोरुपपत्तिः ॥

जर्तिलोक्तौ निषेधसार्थवादताधिकरणम् ॥ ४ ॥

## न चेदन्यं कल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च ॥ ७ ॥

**जर्तिलोक्तौ चतुर्धा किं विकल्पोऽथ पयःस्तुतिः ॥ विकल्पः पूर्ववन्मैवं वाक्यैक्यात्पयसा सह ॥ ८ ॥**

अस्येदानीमपवादः क्रियते, शिष्ट्वापि श्रूयमाणो नञ् क्वचित्प्रतिषेधार्थमपहायार्थवादार्थो भवति यत्र विध्यन्तरेणैकवाक्यत्वम् । तथाहि 'अग्निहोत्रे जर्तिलयवाग्वा वा जुहुयात् गवेधुकयवाग्वा वे'त्युक्त्वा, 'अनाहुतिर्वै जर्तिलाश्च गवेधुकाश्चे'त्युक्तम् । ततः पुनः 'पयसाग्निहोत्रं जुहुया'दिति श्रुतं, तत्र संशयः किं जर्तिलगवेधुकानामनाहुतिवादः प्रतिषेधः उत पयोहोमस्यार्थवाद इति । तत्र पूर्वेण न्यायेन प्रतिषेधार्थता । जर्तिलगवेधुकास्तावद्विस्पष्टेन लिङ्प्रत्ययेन विहितास्तेषामयमनाहुतिवादः प्रतिषेधः, पयोविधिश्च वाक्यान्तरमिति प्राप्तेऽभिधीयते—यद्यपि जर्तिलगवेधुका विहिताः स्युस्तथाप्यनाहुतिवादो नैव प्रतिषेधोऽनर्थकत्वात् । विकल्पार्थत्वेन हि प्रतिषेधः स चेह विकल्पः पयोविधिनैव जर्तिलगवेधुकानां सिद्ध इति व्यर्थः प्रतिषेधः । परेण च विधिनास्य समस्तस्यैकार्थत्वमर्थवाद-

---

**शिष्टा तु प्रतिषेधः स्यात् ॥ ६ ॥** संगतिमाह—**सामान्येति** । सूत्रार्थं दर्शयन्नेव विषयं सिद्धान्तं चाह—**यत्रेति । पर्युदासेति** । अनतिरात्रे षोडशिनमिति वा षोडशिवर्जमतिरात्र इति वा पर्युदासे तत्र षोडशिविधानानर्थक्यात्पर्युदासो न संभवति न सोम इतिवदप्राप्तविषयत्वाभावात्, विध्यन्तरशेषत्वाभावाच्चार्थवादोऽपि न संभवतीत्यर्थः । **ननु** विधिप्रतिषेधयोरेकविषययोः परस्परोपमर्दकत्वं विना परस्परात्मलाभासंभवादुभयोरप्यप्रामाण्यापत्त्या प्रतिषेधोऽपि न संभवतीत्यत आह—**अगत्येति** । पर्युदासार्थवादासंभवान्नञः प्रतिषेधप्रापकत्वेऽवश्यंवाच्येऽगत्या विकल्पमाश्रित्य शास्त्रद्वयस्यापि पक्षे प्रामाण्यमुपपादनीयमित्यर्थः । उक्तैवाशङ्कात्र पूर्वःपक्षस्तस्यास्तु मन्दत्वान्न पृथगुपन्यास इति ध्येयम् । विकल्पाश्रयणेनोभयत्र प्रामाण्यमेवोपपादयति—**प्रतिषेधेत्यादिना** । यद्वा ननु प्रतिषेधपक्षे षोडशिग्रहणाभावात्कुतो वैगुण्यं न स्यादत आह—**प्रतिषेधेति** । ननु यद्यकरणेऽप्यवैगुण्यं तदा क्लेशात्मकत्वात्करणं कदापि न स्यात्तथाच कथं विकल्प इत्यत आह—**विधीति** । नचैवमकरणस्य फलभूमार्थकत्वाभावाद्भिन्नार्थयोः कथं विकल्प इति वाच्यम् । करणस्य फलभूमार्थत्वे संभवत्यपि करणाकरणयोरुभयोरपि प्रयोगविधिविधेयतया क्रतूपकारकत्वावगमेन समानार्थकत्वानपायादिति भावः ॥

**नचेदन्यं कल्पयेत्० ॥ ७ ॥** जर्तिलाः कृष्णतिलाः । गवेधुकास्तृणतण्डुलाः इति भट्टभास्करः । जर्तिला अरण्यतिलाः । गवेधुका वनगोधूमा इति केचित् । **तत्रेति** । नञ आहुतिसंबन्धत्वाज्जर्तिलादिविध्यानर्थक्यप्रसङ्गाच्च नात्र जर्तिलादिपर्युदासः संभवति, नाप्याहुतिपर्युदासः, आहुतिव्यतिरिक्तकर्तव्यान्तराभावात् । अतोऽत्र पर्युदासो नोपन्यस्तः । यद्यपि प्रसज्यप्रतिषेधेऽपि नञ आहुतिशब्देन समासानुपपत्तिः आख्यातसंबन्धं विना प्रतिषेधालाभात्तथापि शिष्ट्वा श्रूयमाणत्वाभ्यायतः प्रतिषेधार्थत्वे सति समासः कथंचिन्नेय इत्याशयेन पूर्वपक्षमाह—**पूर्वेणेति । विहिता इति** । ततश्च जर्तिलादिवाक्यस्य न पयोविधिशेषत्वमिति भावः । **पयोविधिरिति** । विधिरेव केवल एकं वाक्यं नत्वनाहुतिवाक्यसहित इत्यर्थः । अनाहुतिवाक्यस्य स्वातन्त्र्येण निषेधत्वे संभवति निरर्थकप्रायस्तुत्यर्थत्वमाश्रित्य पयोविध्यैकवाक्यत्वकल्पनं न युक्तमिति भावः । **प्रतिषेध इति** । प्रतिषेधस्य फलं विकल्पः स च पयोविधिनैव सिध्यतीति प्रतिषेधस्याप्या-

तया संभवतीति न युक्तो वाक्यभेदः, तद्वरमर्थवादत्वम्, तस्मादनाहुतिवादस्तावज्जर्तिलादिनिन्दाद्वारेण पयसः स्तुत्यर्थः। यदा चैवं तदा जर्तिलादिविधिरपि तन्निन्दाद्वारेण पयसः प्रशस्ततरत्वं ज्ञापयन्नर्थवाद एव न विधिः। एकवाक्यत्वसंभवे ह्यनेकादृष्टानुबन्धिवाक्यभेदकल्पनमन्याय्यम्। तस्मात्पयोमात्रं विधीयते अन्यस्तु सर्वोऽर्थवादः॥

त्रैयम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम्॥ ५॥

## पूर्वैश्च तुल्यकालत्वात्॥ ८॥

**अभिघारनिषेधौ च होमाहोमौ विकल्पितौ॥ विधास्यमानशेषौ वा विकल्पः श्रुतिसाम्यतः॥ ९॥**

**निषेधस्य विधेश्चात्र मीमांस्यत्वेन वर्णनात्॥ समीमांसावुभावर्थवादोऽस्त्वर्थे विधिरिति ॥ १०॥**

आधाने श्रूयते 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात् यन्न जुहुयादग्निः पराभवेत्तूष्णीमेव होतव्यमग्निहोत्र'मिति। तथा चातुर्मास्येषु त्र्यम्बकानधिकृत्य श्रूयते—'अभिघार्या अनभिघार्या' इति मीमांसन्ते 'यदभिघारयेत्तद्रुद्रायास्ये पशूनभिदध्याद्यन्नाभिघारयेन्न रुद्रायास्ये पशूनभिदध्यादथो खल्वाहुरभिघार्या एवे'ति। तत्र संशयः किं होमाभिघारणयोर्विकल्पः उतानुष्ठानमेवेति। तत्र होमाभिघारणयोर्विधेयत्वमविवादमतो होतव्यमभिघार्या इति च विध्यर्थमेव न जर्तिलश्रवणवदन्यार्थम्। एवंच न होतव्यं नाभिघार्या इति च प्रतिषेधार्थमेव भवति न मीमांसाविशेषणम्। नह्येकपक्षावलम्बिनी मीमांसा संभवतीति। तस्माद्धोतव्य-

---

नर्थक्यं तुल्यम्। नन्वेवं विनिगमनाविरह इत्याह—**न युक्त इति। वरमिति।** आख्यातरहितत्वाद्वैशब्दोपबन्धत्वाच्च पृथङ्निषेधकत्वानुपपत्त्या स्तुत्यर्थकत्वमेव युक्तमित्यर्थः। एवं जर्तिलादिवाक्यविधायकत्वमङ्गीकृत्य शिष्ट्वा श्रूयमाणस्याप्यत्र नञः न प्रतिषेधार्थत्वं पयोविध्यैकवाक्यतयाऽर्थवादार्थत्वादित्येवं प्रस्तुतं सूत्रानुसारिणं विचारं समाप्य यदा नाहुतिवाक्यस्यापि पयोविधिशेषत्वं तदा तद्वारा जर्तिलादिवाक्यस्य पयोविधिशेषत्वमेव नतु जर्तिलादिविधायकत्वं, तथाच जर्तिलादेरेवाविहितत्वात्प्रतिषेधशङ्का दूरापास्तेत्याशयेनाह—**यदाचेति। पयस इति।** 'एवं पयः प्रशस्ततरं यत् न ग्राम्यान्पशून्हिनस्ति नारण्या'निति पशुहिंसाभावेन प्रशस्तयोरपि जर्तिलगवेधुकयवाग्वोस्तदपेक्षया नाहुतित्वमित्येवं पयस्तुत्यर्थमित्यर्थः। नच जर्तिलवाक्ये लिङर्थविध्यभावे कथं लिङ्प्रत्ययोपपत्तिरिति वाच्यम्। लिङ्प्रत्ययाद्विधिप्रतीतावपि न तत्र तात्पर्यं किंतु निन्दार्थं तद्विधिप्रसक्तमात्रे तात्पर्यमिति लिङ्प्रत्ययस्य विध्यर्थत्वापरित्यागात्संभावनार्थकत्वाद्वा लिङ्प्रत्ययोपपत्तिः। सूत्रार्थस्तु—यद्यन्यत्र विधीयेत तदानीमेव शिष्ट्वा श्रूयमाणो नञ् प्रतिषेधार्थः स्यादन्त्यविधौ त्वर्थवादस्तद्विधिनैव जर्तिलादिविकल्पस्य सिद्धत्वाद्विकल्पार्थं प्रतिषेधानर्थक्यात्परद्रव्यान्तरविधानासमर्थत्वात्स्तुत्या एकार्थत्वादिति॥

**पूर्वैश्च तुल्यकालत्वात्॥ ८॥ अयथेति।** पवमानेष्ट्यनन्तरमन्याहुतियोग्योऽग्निः, तत्र यदि पवमानहविर्भ्यः पूर्वमाधानानन्तरमेव यजुषा होमः क्रियेत तदा पवमानाहुतिप्राथम्याभावादयथापूर्वता स्यात्। यदि चैतद्दोषपरिजिहीर्षया होम एव न क्रियेत तदाग्निर्नश्येदतो दोषद्वयपरिहारार्थं तूष्णीमेव होमं कुर्यात्तथासति तूष्णींहोमस्याकृतप्रायत्वान्नायथापूर्वत्वं नाग्निविनाश इत्यर्थः। माध्वीये वेदभाष्ये त्वस्मिन्होमे अग्निहोत्रशब्देन प्रसिद्धाग्निहोत्रधर्माः प्राप्नुवन्ति। तत्र यजुषा होमपक्षे क्रियमाणेऽस्मिन्सूर्यो ज्योतिरिति मन्त्रः स्यात्, प्रसिद्धाग्निहोत्रस्य च सायमुपक्रमत्वात्तत्र प्राथमिकप्रयोगेऽग्निर्ज्योतिरिति मन्त्रेण सायं हुत्वा पश्चात्प्रातःकाले सूर्यो ज्योतिरिति मन्त्रेण होम इत्येवं क्रमः, इह त्वादावेव सूर्यो ज्योतिरित्यनेनानुष्ठाने प्रकृतिक्लृप्तक्रमाभावादयथापूर्वता स्यादिति व्याख्यातं तच्चिन्त्यम्। तूष्णींहोमे श्रूयमाणस्याग्निहोत्रशब्दस्य धर्मातिदेशकत्वाभावात्। नह्यत्र कुण्डपायिनामयनगताग्निहोत्र इव विध्युद्देशेऽग्निहोत्रशब्दः श्रूयते येन धर्मातिदेशकत्वं स्यात्, किंत्वर्थवादे अर्थवादगतस्य च नाम्नो नातिदेशकत्वं स्तुत्युपक्षीणत्वात्। यथा 'एष वै दर्शपूर्णमासयोरवभृथः'इत्यपां व्युत्सेक एवावभृथशब्दस्य न धर्मातिदेशकत्वम्। यथा वा 'सोमो वै वाजिनं सुरा सोम उपशयो यूप' इत्यादीनाम्। किंचायं तूष्णींहोमोऽग्निसंस्कारार्थः तथाचाग्नये होत्रमस्मिन्निति यौगिकत्वाभावात्प्रायणीयादिवन्नातिदेशकत्वम्। अयं चार्थः पञ्चमे तन्त्ररत्ने व्यक्तः। एवंच प्राकृतहोमविकारत्वाश्रयणेन याज्ञिकानां तदीयधर्मानुष्ठानमपि चिन्त्यम्। त्र्यम्बकाः प्रतिपुरुषमेकैककपालान्निर्वपतीति विहिता एककपालास्तेषां च त्र्यम्बकत्वं तत्पदमन्त्रयोगादिति ध्येयम्। पूर्ववदिह विकल्पस्यान्यतः सिद्धत्वाभावात्प्रतिषेधस्य नानर्थक्यमित्युत्थितेः संगतिः। **तत्रेति।** अत्र होमाभिघारणयोः सिद्धान्तेऽपि विधेयमवश्यं वाच्यमन्यथाविधेयान्तराभावेन वाक्यानर्थक्यापत्तेः। एवंच तयोर्विधेयत्वे न विवादः, परंतु तूष्णीमेव होतव्यमभिघार्या एवेति चान्ते विधिरुत वाक्यादावित्येतावान्विवादः। तत्रच प्राथमिकत्वादादावेव विधिर्न्याय्यः। एवंच प्रथमश्रवणस्य जर्तिलादिवदन्यार्थत्वाभावाद्विध्यर्थत्वमेवेत्यर्थः। **प्रतिषेधार्थमिति।** पर्युदासस्य त्वत्राप्यत्यन्तासंभवादिति भावः।

मिति विधेर्न होतव्यमिति च निषेधाद्विकल्पः । सति च विकल्पेऽन्यतरपक्षपरिग्रहाय प्रयोगदशायां मीमांसा संभवतीति तदभिप्रायेणानुवादो मीमांसाशब्दः । अन्ते तूष्णीं होतव्यमिति तूष्णींभावगुणविधानार्थं वचनम् । अपिच रुद्रायास्ये पशूनभिदध्यादित्यभिघारणनिन्दाकथनं तावद्विधेः शेषो भवेत् । तस्मान्निषेधशेष एवायमन्ते त्वभिघार्यो इति वचनमनुवाद इति प्राप्ते ब्रूमः । सत्यं होमाभिघारणे विधेये तथाप्युपक्रमे श्रवणं न विध्यर्थमुभयोरपि होमाहोमयोर्मीमांसासंबन्धावगमात् । अन्ते त्वनन्यपरं श्रवणं विध्यर्थं तदर्थवादीया निन्दापि च प्रशस्ततरत्वज्ञापनार्थैव । एवमिदमभिघारणं प्रशस्तं यत्सन्तमपि दोषमनादृत्य कर्तव्यमिति । तस्मान्न विकल्पो नियते एव होमाभिघारणे ॥

आधान उपवादस्य विकल्पताधिकरणम् ॥ ६ ॥

## उपवादश्च तद्वत् ॥ ९ ॥ [प्रतिषेधादकर्मेति चेत् ॥१०॥ न शब्दपूर्वत्वात् ॥११॥]

**उक्तेयो ब्रह्मगानस्य निषेधो विहितस्तुतिः ॥ विकल्पितो वा शून्योऽपि वपोत्खेद इव स्तुतिः ॥ ११ ॥**

**विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति ॥ विषयैक्याद्विकल्पोऽत्र षोडशिग्रहवन्मतः ॥ १२ ॥**

अग्न्याधेये वारवन्त्यादिसामगानं विधाय श्रूयते—'न ब्रह्मा सामानि गायेदि'ति । तत्र संशयः किमयं प्रतिषेधो नित्यं सामगानमुत प्रतिषेधार्थमेवेदं विकल्पः सामगानस्येति । तत्र ब्रह्मणो गानप्राप्त्यभावादनुवादोऽयं निषेधस्तेन नित्यं गानम् । नैवम् । अनुवादमात्रस्यानर्थकत्वात् । तस्माद्गाननिषेधोऽयम् । ब्रह्मशब्दस्तु ब्राह्मणपरोऽनुवादः ॥

---

**तदभिप्रायेणेति** । तथाचेति मीमांसन्त इतीतिशब्दो न प्रकारपरः किंत्वनयोरर्थयोरित्येवंपर इति भावः । अभिघार्या इत्यत्र गुणाश्रवणादन्तिमस्य विधायकत्वमवश्यं वाच्यमित्याशङ्क्याह—**अपिचेति** । अभिघारणनिन्दायास्तद्विधिशेषत्वासंभवान्नाभिघार्या इत्यस्य निषेधकत्वमङ्गीकृत्य तच्छेषतया यदभिघारयेदिति निन्दोपपादनीया । एवं सति विधिनिषेधयोरवश्यंभावे आद्यवाक्यादेव विधिर्युक्त इत्यन्ते श्रवणमनुवाद इत्यर्थः । **मीमांसेति** । मीमांसासंबन्ध एवेतिशब्दस्य प्रवणत्वादिति भावः । **अनन्यपरमिति** । प्राथमिकश्रवणं यथेति शब्दबलान्मीमांसावशीकृतत्वान्न विधिक्षमं, नैवमन्ते श्रवणमन्यवशीकृतं किंतु स्वाधीनमतस्तदेव विध्यर्थं, प्राथमिकश्रवणं तु मीमांसाद्वारा तस्यैवार्थवाद इत्यर्थः । यदुक्तं निन्दाया विधिशेषत्वं न संभवतीति तत्राह—**निन्दापि चेति** । दुर्भरमपि रुद्रास्यं पशवः पूरयन्तीत्येवमभिघारणस्य गुण एवात्र कीर्त्यते नतु दोष इत्यप्याहुः । सूत्रार्थस्तु—पूर्वैर्जर्तिलाद्युदाहरणैर्होमाभिघारणवाक्ययोरपि तुल्यकालत्वात्तुल्यव्यापारत्वादन्यशेषत्वादिति यावत् । तस्मादिहाप्यर्थवादः स्यादिति ॥

**उपवादश्च तद्वत् ॥ ९ ॥ ब्रह्मेति** । यद्यपि 'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायती'ति भाष्ये उदाहृत उपशब्दः सामीप्यमाह । वीता गताः । कालविलम्बमन्तरेण गता भवन्तीत्यर्थः । तथाच तत्र निन्दैव श्रूयते नतु प्रतिषेधः । अतएव सूत्रेपि निन्दार्थक उपवादशब्द एव प्रयुक्तस्तथापि निन्दया प्रतिषेधो गम्यत इत्याशयेनैवोदाहृतमिति ध्येयम् । **तत्रेति** । सामगाने ब्रह्मकर्तृकत्वस्याप्राप्त्या तत्प्रतिषेधपर्युदासौ न संभवतः । नचोद्गातृरहिते आधाने विहितं सामगानं ब्रह्मण एव प्राप्नोति, ऋग्वेदेन होता करोतीत्युपक्रम्य सर्वैर्ब्रह्मेति विधानादिति **वाच्यम्** । आधानेप्युद्गातुः सद्भावात् । अतएव बोधायनादिभिराधाने उद्गातृवरणमुक्तम् । ततश्च साम्न उद्गातुरेव गानं प्राप्नोति नतु ब्रह्मण इति न ब्रह्मकर्तृकत्वप्रतिषेधसंभवः । नापि स्वरूपेण गानप्रतिषेधः, पर्युदाससंभवात्, तथासति ब्रह्मशब्दानन्वयप्रसङ्गात् । अतोऽनुवाद एवायं 'नान्तरिक्षे न दिव्यग्निश्चेतव्य'इतिवत् । सच वारवन्तीयादिविधिप्रशंसार्थः । **तेनेति** । विहितस्य गानस्य प्रतिषेधाभावान्नित्यमेवानुष्ठानमित्यर्थः । एवंच पूर्ववदुत्थानात्संगतिः । **अनर्थकत्वादिति** । वारवन्तीयादिविधिसंनिधानाभावात्स्तुत्यर्थत्वेन सार्थक्यं वक्तुमयुक्तमिति भावः । **तस्मादिति** । गानविध्यानर्थक्यादनाशङ्कनीयः पर्युदास इति भावः । **ननूक्तं** स्वरूपेण गाननिषेधे ब्रह्मशब्दानन्वय इत्यत आह—**ब्रह्मशब्द इति** । ब्राह्मणपरः समुद्गातुरनुवादकस्तथाच न गायेदिति स्वरूपेण गानमेव निषिध्यते प्रतिषेध्यस्य च गानस्य वस्तुतो ब्राह्मण उद्गाता कर्ता इति ब्रह्मशब्दोऽनुवाद इत्यर्थः । सूत्रे तद्वत् ग्रहणाग्रहणवदित्यर्थः ॥

दीक्षितदाननिषेधस्य पर्युदासताधिकरणम् ॥ ७ ॥

**दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥ अक्रतुयुक्तानां वा धर्मः स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥ तस्य वाऽप्यानुमानिकमविशेषात् ॥ १४ ॥ अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्, प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥]**

दीक्षितो न ददातीति प्राप्तं सर्वं निषिध्यते ॥ अतिदिष्टपुमर्थं वा पुमर्थं वोक्तितोऽग्रिमः ॥ १३ ॥
उपदेशार्थवत्त्वाय मध्यमोऽन्त्यस्तु संनिधेः ॥ एकवाक्यत्वलोभश्चेत्पुमर्थं पर्युदस्यताम् ॥ १४ ॥

ज्योतिष्टोमे श्रूयते 'दीक्षितो न ददाति न जुहोति न पचती'ति । तत्र विचारः किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामतिदिष्टानां च प्रतिषेधः उतातिदिष्टानां पुरुषार्थानां च अथवा पुरुषार्थानामेवाग्निहोत्रादीनामिति । तत्राविशेषात्सर्वेषामाहत्य विहितानां तु 'ग्रहैर्जुहोती'त्यादीनां बलवत्त्वात्तद्वर्जमातिदेशिकानां चतुरवत्तहोमादीनामग्निहोत्रादीनां च बाध इति प्राप्ते ब्रूमः—विकल्पप्रसङ्गान्न क्रत्वर्थप्रतिषेधः तस्मात्पुरुषार्थानामेव, तत्रापि प्रतिषेधपक्षे विकल्पदोषः स्यादेव, तस्मात्पर्युदासोऽग्निहोत्रादिविधेः शेषोयमदीक्षितोऽग्निहोत्रं कुर्यादिति। नन्वेतदयुक्तम्, असंनिहितत्वादग्निहोत्रादिविधेः। तस्मात्प्रतिषेध एवायम् । नच विकल्पप्रसक्तिरैकार्थ्याभावात्। यद्युभावपि विधिप्रतिषेधौ पुरुषार्थौ क्रत्वर्थौ वा भविष्येतां ततो विकल्पिष्येयाताम् । पुरुषार्थतया तु विहितानामग्निहोत्रादीनां क्रतुमध्येऽपि प्राप्तानां प्रतिषेधः क्रत्वर्थतया क्रियते स्त्र्युपगमादिप्रतिषेधवत् । अतः क्रतुमनुतिष्ठतावश्यंवर्जनीयान्यग्निहोत्रादीनि भवन्तीति नास्ति विकल्पप्रसङ्गः । यदा च प्रतिषेधपक्षेऽप्यविकल्पस्तदा श्रुत्यर्थलि-

---

**दीक्षितस्य० ॥ १२ ॥ किमयमिति** । वक्ष्यमाणरीत्या पर्युदासासंभवाद्भाष्योक्ताया अपि पर्युदासकोटेरत्रानुपन्यास इति ध्येयम् । **अतिदिष्टानामिति** । दीक्षानन्तरकर्तव्येषु प्रायणीयादिष्वतिदिष्टानामित्यर्थः । पूर्ववद्विकल्प इत्युत्थितेः संगतिः । द्वितीयं पक्षमाह—**आहत्येति** । विशेषविधेः सामान्यनिषेधस्य चातुल्यबलत्वात्सत्यां गतौ विषमशिष्टविकल्पायोगाच्च सामान्यतश्चोदकेन विहितानां चतुरवत्तादीनां दीक्षितादीक्षितसाधारण्येन विहितानामग्निहोत्रादीनां च निषेधो न त्वाहत्य विहितानामौदुम्बरीहोमादीनामित्यर्थः । **विकल्पेति** । क्रत्वर्थप्रतिषेधस्य वैकल्पिकाङ्गत्वं पुरुषार्थाग्निहोत्रादिप्रतिषेधस्य तु वक्ष्यमाणरीत्या नित्यमङ्गत्वमिति वैरूप्यापत्तेश्चेत्यपि द्रष्टव्यम् । प्राभाकरैस्तु पुरुषार्थानामपि न प्रतिषेधः विकल्पप्रसङ्गात् किंतु पर्युदास इति सिद्धान्तितं तन्मतमाशङ्कते—**तत्रापीति** । पुरुषार्थानां प्रतिषेधपक्षे हि प्रतिषेधस्यापि पुरुषार्थत्वमेव स्यान्न क्रत्वर्थत्वम् । नह्यन्यार्थायां प्रवृत्तावन्यार्थः प्रतिषेधो घटते । अतएव कर्त्रधिकरणे दर्शपूर्णमासप्रकरणे नानृतं वदेदितिपाठात्क्रत्वर्थमेवानृतवदनं निषिध्यते नतु पुरुषार्थं दर्शपूर्णमासप्रयोगमध्ये । पुरुषार्थानृतवदने तु 'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तस्य वैगुण्यं यथा चोदितसिद्धित'इति न्यायात् क्रतोर्न वैगुण्यं किंतु पुरुषस्य प्रत्यवायमात्रमिति प्रतिषेध्यप्रतिषेधयोरैकरूप्यमेवाश्रितम् । तस्मादिह पुरुषार्थानां प्रतिषेध इति प्रतिषेधस्यापि पुरुषार्थत्वापत्त्या विकल्पः स्यादेवातः पर्युदास एवायमित्यर्थः । **असंनिहितत्वादिति** । पर्युदासे ह्यग्निहोत्रादिविधिभिरेकवाक्यता वाच्या । नचात्र तत्संभवः तेषामसंनिहितत्वादित्यर्थः । **ननु** पुरुषे प्रसक्तानां कथं क्रतौ प्रतिषेधः क्रतौ तेषामप्रसक्तत्वादित्यत आह—**क्रतुमध्येऽपीति** । यद्यपि क्रत्वर्थतया तेषां न प्राप्तिस्तथापि पुरुषार्थतया विधिबलादेव क्रतुप्रयोगकालेऽप्यनुष्ठानप्रसक्त्यैककालतामात्रेण प्राप्तिमादाय प्रतिषेध उपपद्येत । अन्यथा क्रतुप्रकरणे 'न स्त्रियमुपेया'दिति श्रूयमाणः स्त्र्युपगमनिषेधोऽपि क्रत्वर्थो न भवेत्, स्त्र्युपगमस्य क्रत्वर्थतया प्राप्त्यभावात् । एवंच कर्त्रधिकरणे प्रतिषेध्यप्रतिषेधकयोरैकरूप्याश्रयणमपि प्रायिकाभिप्रायेण । ततश्च भिन्नविषयत्वादिह न विकल्प इत्यर्थः । **ननु** क्रत्वङ्गतया निषेधानुष्ठानवत्पुरुषार्थतयाग्निहोत्राद्यनुष्ठानस्याप्यावश्यकत्वादेवमपि विकल्पो दुर्वार इत्यत आह—**अत इति** । निरवकाशतया विशेषविषयनिषेधस्य प्रबलत्वात्सामान्यविषयोऽग्निहोत्रादिविधिरक्रतुयुक्तपुरुषविषयोऽवतिष्ठत इति नित्यं वर्जनमेव नतु विकल्प इत्यर्थः । **नन्वेवमपि** प्रतिषेधाभ्युपगमे किं नियामकम् । नचाग्निहोत्रादिविधीनामसंनिहितत्वेन पर्युदासासंभवात्प्रतिषेधाभ्युपगम इति वाच्यम् । नह्यस्याग्निहोत्रादिविधिभिः पदैकवाक्यता येन तेषामसंनिधाने तत्साकाङ्क्षस्यान्यस्यार्थबोधकत्वासंभवेन पर्युदासो न भवेत् किंतु 'अग्निहोत्रं जुहोति, दध्ना जुहोती'त्यादिवद्वाक्यानामेकवाक्यत्वं पुनःसंहत्य जायत इति न्यायाद्वाक्यैकवाक्यत्वम् । ततश्चादीक्षितोऽग्निहोत्रादिकं कुर्यादिति प्रकृतवाक्यार्थे पर्यवसिते तस्य द्वादशोपसत्त्वादिव-

त्सया प्रकरणानुजिघृक्षया च प्रतिषेधत्वमेव न्याय्यम् । पर्युदासपक्षे हि नशब्ददीक्षितशब्दावुभावपि दीक्षितव्यतिरिक्तपुरुषलक्षणार्थौ स्यातां तस्मात्प्रतिषेधस्तथापि विकल्पाभावात्फलतः पर्युदासत्वं भवतीति मत्वा सूत्रभाष्यकाराभ्यां पर्युदासत्वमुक्तम् । यदि च पर्युदासः स्यात्ततो वरं क्रत्वर्थानामेव होमादीनां पर्युदासः। यद्यपि प्रत्यक्षेण विशेषरूपेण चोपदिष्टानां 'ग्रहैर्जुहोत्यौदुम्बर्या जुहोती'त्येवमादीनामशक्यः पर्युदासस्तथापि सामान्यतोऽतिदेशेन प्राप्यमाणानां चतुरवत्तहोमनारिष्टहोमानामार्षेयवरणवत्पर्युदासः स्यात् । **ननु** ते दीक्षितस्यैव विधीयन्त इति कथं तेषु दीक्षितस्य पर्युदासो विधीयते । नैवम् । न दीक्षितशब्देन सह नञः पर्युदासत्वमदीक्षित इति, कथं तर्हि ददात्यादिशब्दैर्दीक्षितो दानहोमपाकव्यतिरिक्तानि प्राकृतान्यङ्गानि कुर्यादिति । एवमतिदेशपर्युदासेन प्रकरणगतानामेव प्रायणीयादिविधीनां दीक्षोत्तरकालभाविनां शेषो भवन्नयं पर्युदासो नासन्निहिताग्निहोत्रादिशेषतामवलम्बते । तस्माल्लक्षणापरिहाराय पर्युदासपक्षं परित्यज्य श्रुत्यर्थतृष्णया प्रतिषेधत्वमेवाङ्गीकृत्य क्रत्वर्थेप्रतिषेधे विकल्पप्रसङ्गात् पुरुषार्थानामेव प्रतिषेधः क्रत्वङ्गतया विधीयत इत्येतदेव समञ्जसम् ॥

वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणम् ॥ ८ ॥

## अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संदिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

**विकल्पितो बाध्यते वाहवनीयः पदादिभिः ॥ सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः ॥ १५ ॥**
**लिङ्गचोदकवद्बाधो नास्ति तेन विकल्पितः ॥ विशेषार्थे लक्षणा स्यादतो मुख्येन बाध्यते ॥ १६ ॥**

नञ्प्रसङ्गं समाप्याधुना प्राप्तबाधप्रसङ्गात्सामान्यविशेषबाधं चिन्तयति । 'यदाहवनीये जुहोती'ति सामान्यविहितस्याहवनीयस्य 'पदे जुहोति वर्त्मनि जुहोति गार्हपत्ये पत्नीसंयाजाञ्जुहोती'ति विशे-

---

त्प्रकरणादुत्कृष्टस्याग्निहोत्रादिविधेरेकवाक्यतोपपत्तेर्नात्र तदसंनिधानं दोषः । यत्र तु 'न तौ पशौ करोती'त्यादिपर्युदासपक्षे आज्यभागवर्जं प्रकृतिवत्कुर्यादिति पाशुकप्रकृतिवच्छब्दविशेषणत्वाद्विशेष्यभूतस्य पाशुकप्रकृतिवच्छब्दस्य दर्शपूर्णमासप्रकरणे संनिधानाभावाद्विशेष्यसाकाङ्क्षतया वाक्यस्यैवापर्यवसानं तत्र माभून्नाम पर्युदासः, इह तु न तथा साकाङ्क्षत्वम्, तस्मात्पर्युदास एव किं न स्यादित्यत आह—**यदाचेति** । कथं तर्हि अपितु वाक्यशेषत्वादितरपर्युदासः स्यादिति सूत्रभाष्ययोः पर्युदासोक्तिरित्यत आह—**तथापीति** । प्रतिषेधेऽपि विकल्पाप्रसङ्गात्पर्युदाससमानफलकतया पर्युदासत्वोक्तिरित्यर्थः । एवंच सूत्रभाष्ययोः प्रतिषेधे विकल्पः स्यादित्यनास्थावाद इति भावः । किंच पर्युदासाभ्युपगमेऽपि प्रकरणानुग्रहात्क्रत्वर्थहोमादीनामेव पर्युदासोऽभ्युपगन्तुं युक्तो नतु पुरुषार्थेषु दीक्षितपर्युदासः प्रकरणबाधापत्तेरतः प्राभाकरपक्षो न युक्त इति दूषणान्तरमाह—**यदिचेति** । **अशक्य इति** । उपदेशस्य विशेषनिष्ठस्य तदितरसाधारण्याभावात्प्रत्यक्षोपदेशस्य प्रबलस्यानर्थक्यप्रसङ्गाच्चेति भावः । अग्निहोत्रादिषु पर्युदासवादिनः प्राभाकरान्प्रति तदपेक्षया चोदकप्राप्तहोमादिपर्युदासो वरमित्युक्ते दीक्षितपर्युदासोऽपि नाग्निहोत्रादिषु युक्तः, किंतु तदपेक्षया चोदकप्राप्तहोमेष्वेव युक्त इति तात्पर्यं मत्वा शङ्कते—**नन्विति** । अदीक्षितश्चोदकप्राप्तहोमादिविशिष्टं प्रायणीयादिकं कुर्यादिति न पर्युदासः संभवति, दीक्षितस्यैव चोदकप्राप्तहोमादिविशिष्टप्रायणीयादिविधानादित्यर्थः । नास्माभिश्चोदकप्राप्तेषु दीक्षितपर्युदास एवाभ्युपगन्तुं युक्त इति तान्प्रतिपाद्यते किंतु यदि पर्युदासोऽवश्याभ्युपेयस्तदा प्रायणीयादिषु होमादिवर्जं प्राकृतं कुर्यादित्येवमेव पर्युदासोऽभ्युपेयः स्यादित्यापाद्यत इति स्वाशयमाविष्करोति—**नैवमिति** । अस्तु तर्ह्ययमेव पर्युदासस्तथाच सूत्रभाष्ययोरपि पर्युदासशब्दो यथाश्रुत उपपत्स्यते तथा प्रतिषेधे विकल्पापादनमपि संपत्स्यत इति तटस्थशङ्कां पूर्वोक्तलक्षणाप्रसङ्गेनैव परिहरन्नुपसंहरति—**तस्मादिति** ॥

**अविशेषेण० ॥ १६ ॥** ननूपदेशविचारस्य कथमत्र संगतिरित्यत आह—**नञ्प्रसङ्गमिति** । **पद इति** । सोमक्रयण्याः पदे जुहोतीत्यर्थः । **वर्त्मनीति** । हविर्धानाख्यशकटस्य मार्गे इत्यर्थः । 'पदे जुहोति, वर्त्मनि जुहोती'त्यत्राहवनीये जुहोतीतिवत्सामान्यवाचकजुहोतिशब्दस्यैव श्रवणान्न वाक्यश्रवणमात्रेण सामान्यविशेषभावः किंत्वेतद्वाक्यस्य कर्मविशेषपरत्वादस्ति सामान्यविशेषभाव इति वाक्यार्थपर्यालोचनया, स च विलम्बित इति मत्वा यत्र वाक्यार्थपर्यालोचनां विना शब्दश्रवणमात्रेण तत्प्रतीतिस्तादृशमुदाहरति—**गार्हपत्ये इति** । नन्वेवमपि विनाप्याघारं होमसंभवेन यदाहवनीयादीनामदृष्टार्थत्वात्समुच्चय एव न्याय्यो नतु विकल्पो बाधो वा । अतएव षष्ठे निरूपित आहवनीयादेः प्रतिनिध्यभाव उप-

षविहितैः पदादिभिः किं विकल्पोऽथ बाध इति संदेहः। यदि सामान्यविशेषयोस्तुल्यबलत्वं ततो विकल्पः विशेषबलीयस्त्वे तु बाधः। तत्र—'सामान्यस्यापि लब्धत्वात्प्रत्यक्षेण विशेषवत्॥ नास्ति लिङ्गादिवद्बाधो नापि बाधोऽतिदेशवत्॥' लिङ्गादिकल्प्यस्य हि शास्त्रस्य शीघ्रशास्त्रेण कल्पनाविरोधाद्युक्तो बाधः। तथातिदेशस्यानुमानिकत्वात्प्रत्यक्षेण शरादिशास्त्रेण विरोधे सति तद्विषयं परिहृत्य विषयान्तरपरिकल्पनाद्युक्तः कुशानां बाधः। सामान्यशास्त्रं तु क्लृप्तं प्रत्यक्षश्रुतं च विशेषशास्त्रवदिति तुल्यबलत्वाद्विकल्प एव युक्त इति प्राप्ते ब्रूमः—'प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात्॥ श्रुत्या विशेषे शिष्टस्य तस्मादस्ति बलाबलम्॥' पत्नीसंयाजादिषु होमविशेषेषु होमसामान्ये श्रुतस्याहवनीयस्य लक्षणया प्राप्तिः। गार्हपत्यादि तु श्रुत्यैव होमविशेषे विधीयते, तेनास्मिन्विशेषे श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकं लक्षणया मन्थरप्राप्तमाहवनीयं निरुणद्धीति बाधः॥

वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम्॥ ९॥

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत्प्राकृतप्रतिषेधार्थम्॥ १७॥ [विकारे तु तदर्थं स्यात्॥ १८॥ वाक्यशेषो वा क्रतुना ग्रहणात्स्यादनारभ्यविधानस्य॥ १९॥]**

**सामिधेनीसाप्तदश्यं वैमृधादावपूर्वगीः॥ संहतिर्वोपकारस्य क्लृप्त्याद्योऽस्त्वाज्यभागवत्॥ १७॥**
**सामिधेन्यश्चोदकाप्ताः साप्तदश्यं तु वैमृधे॥ पुनर्वाक्येन संहार्यमनारभ्योक्तिचोदितम्॥ १८॥**

'सप्तदश सामिधेनीरनुब्रूया'दित्यनारभ्य विहितं साप्तदश्यं विकृतौ पाञ्चदश्येन बाधितं विकृत्यर्थमिति स्थितम्। विकृतिष्वपि कासुचित्पशुमित्रविन्दाध्वरकल्पादिषु प्रकरणे साप्तदश्यं श्रुतं तदिदं प्रा-

पद्यते। दृष्टार्थत्वे व्रीह्यादीनामिव प्रतिनिधिरनिवार्यः स्यात्। एवंच यत्र सामान्यविशेषयोर्दृष्टार्थत्वं तदेवोदाहरणं नतु यदाहवनीयादिकमिति चेन्मैवम्। यदाहवनीयादीनामदृष्टार्थत्वेपि वचनेन होमप्रतिपाद्यचतुरवत्तादौ निरपेक्षतया विनियोगेन दृष्टाधारद्वारकतया समुच्चयासंभवादेवं दृष्टाधारद्वारकत्वेपि तस्याधारस्य न होमेनाक्षेपः। विनाप्याधारमप्रतिष्ठस्यैव द्रव्यस्य प्रक्षेपसंभवात्। एवंच क्रियाक्षेप्यत्वाभावादाहवनीयादेः प्रतिनिध्यभावोऽप्युपपद्यते। यत्रतु क्रियया साधनस्याक्षेपस्तत्रैव प्रतिनिधिर्यथा'आग्नेयोऽष्टाकपालो भवती'ति चोदितो यागो द्रव्येण विनानुष्ठातुं न शक्यत इति द्रव्याक्षेपान्मुख्यालाभे सति प्रतिनिध्युपादानमिति मुख्यालाभेऽप्याधारस्य होमेनानाक्षेपान्न प्रतिनिधिरित्यादि तन्त्ररत्ने द्रष्टव्यम्। इदमत्रावधेयम्—एवमपि पदे जुहोतीति नोदाहरणम्। इह हि न वाक्यान्तरविहिते होमे पदविधिः किंतु पदविशिष्टहोमान्तरविधिः। तथाच पदस्योत्पत्तिशिष्टत्वेनोत्पन्नशिष्टाहवनीयापेक्षया प्राबल्यस्य सिद्धत्वेन पूर्वपक्षानवतारादेवं गार्हपत्ये पत्नीसंयाजाञ्जुहोतीत्यपि यदि विशिष्टविधिस्तदा नोदाहरणम्। तस्माद्यत्र वाक्यान्तरविहिते होमे गुणमात्रविधिस्तदेवोदाहरणम्। तत्रोभयोरप्युत्पन्नशिष्टत्वेन तुल्यबलत्वात्पूर्वपक्षसंभवादिति। **तत्रेति**। श्रुतिलिङ्गादावप्राप्तत्वाल्लिङ्गादिकल्प्यशास्त्रस्य कल्पनातिरोधानेनालब्धात्मकस्य बाधः। प्रत्याम्नातस्थले तु सत्यपि चोदकात्मके शास्त्रे तस्यानुमानिकत्वेन दुर्बलत्वात्प्रत्यक्षेण वचनेन बाधः। सामान्यविशेषशास्त्रयोस्तूभयोरपि लब्धात्मकत्वात्प्रत्यक्षवत्त्वाच्च तुल्यबलवत्त्वमतः सामान्ये आधारान्वयायोगात्तद्द्वारा व्यक्तिविशेषेषु प्रवर्तमानसामान्यशास्त्रस्य विशेषविषयेऽपि प्रवृत्तेरप्रतिबन्धान्न बाधः, किंतु विकल्प एव न्याय्य इत्यर्थः। भवेदेवं यदि विशेषविषये सामान्यशास्त्रं प्रवर्तेत, नत्वेतदस्तीत्याह—**प्राप्तिरिति**। आहवनीयशास्त्रस्य जुहोतेर्होमसामान्यमर्थः, पत्नीसंयाजलक्षणहोमविशेषस्तु सामान्यद्वारा लक्षणीयः, विशेषशास्त्रे तु होमविशेष एव श्रुत्युपात्तः, ततश्च सामान्यशास्त्रस्य विशेषे प्रवृत्तिर्विलम्बिता विशेषशास्त्रस्य तु झटिति प्रवृत्तिरेवंच विशेषशास्त्रं झटिति गार्हपत्यलक्षणाधारप्रापणेन निराकाङ्क्षीकुर्वन् पत्नीसंयाजेषु आहवनीयलक्षणाधारान्वयं प्रतिबध्नातीति सामान्यशास्त्रं तद्वर्जमन्येष्वेवाधाराकाङ्क्षेषु प्रवर्तेत इति सामान्यशास्त्रस्य तत्राप्रवृत्त्या युक्तो बाध इत्यर्थः। सूत्रार्थस्तु—अविशेषेण यच्छास्त्रं तस्मादारादूरे विशेषशिष्टं स्यात्, विशेषविषये सामान्यशास्त्रं न प्रवर्ततेति यावत्। यतः सामान्यशास्त्रं किं यावद्विशेषविषयमुत कतिपयविशेषविषयमित्येवं संदिग्धत्वेन विलम्बितं, विकल्पस्यान्याय्यत्वाच्चेति॥

**अप्रकरणे०**॥ १७॥ अनारभ्याधीतसाप्तदश्यस्य प्रकृत्यर्थत्वे सति तस्य पाञ्चदश्येन विकल्पापत्त्या कासुचिद्विकृतिषु तच्छ्रवणं नियमार्थमेव स्यादिति विचारानारम्भमाशङ्क्य तृतीयोक्तं विकृत्यर्थत्वं स्मारयति—**सप्तदशेति**। चातुर्मास्याग्र-

१ श्रुतप्रकृतौ.

**करणिकं सप्तदशसामिधेनीवचनं किमाज्यभागविधिवदपूर्वतापरमुतोपसंहारार्थमिति संदेहे—'क्लृप्तोपकाराः प्राकृतौ सामिधेन्यो यतस्ततः ॥ ताभिरेव निराकाङ्क्षा नेच्छन्ति प्राकृतान्वयम् ॥ साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यते ॥ सामिधेन्यस्तु चोद्यन्ते ताभिश्चापूर्वता स्फुटा ॥ भवेदेवमपूर्वत्वं सामिधेनीविधिर्यदि ॥ साप्तदश्यविधिस्त्वेष तस्मान्नापूर्वता भवेत् ॥' साप्तदश्यविधौ किमित्यपूर्वता न भवति तस्य न सामिधेनीभिः संबन्धस्तासां च चोदकप्राप्तेर्न चोदकलोपः संभवति चोदकलोपे चापूर्वत्वमिति न साप्तदश्यविधावपूर्वत्वम् । किंच साप्तदश्यं ह्यनारभ्यवादेन सामिधेनीसंबन्धितया श्रुतं यावत्तद्बलेन क्रत्वङ्गतां नैव कल्पयति तावत्प्राकरणिकैर्वचनैरध्वरकल्पादिसंबन्धे कृते क्षीणार्थापत्तिर्न कर्मान्तरसंबन्धं कल्पयति तेन साप्तदश्योपसंहारार्थानि प्राकरणिकानि वचनानीति नापूर्वत्वम् ॥**

---

यणादिरादिशब्दार्थः । अनारभ्याधीतस्याहवनीयस्य पदहोमादिव्यतिरिक्तविषये संकोचेप्यनारभ्याधीतसाप्तदश्यमित्रविन्दादिविषये संकोच इत्युत्थितेः संगतिः । **ननु** सामिधेन्यनुपादाने साप्तदश्यविधिरेवायं न सामिधेनीविधिरिति कथमपूर्वत्वमत आह—**साप्तदश्यमिति** । तस्यानारभ्यवाक्यादेव सर्वविकृतिसाधारण्येन प्राप्तेर्न तद्विधिः, किंतु प्राप्तानामपि सामिधेनीनामेव विधिरपूर्वत्वायेत्यर्थः । **ननु** साप्तदश्यविधावपि न सामिधेन्यनुवादेन तद्विधिः किंतु साप्तदश्यविशिष्टसामिधेनीविधिः । ततश्च तासां प्रकृतिक्लृप्तोपकाराणां पुनर्विधानमपूर्वतार्थं किं न स्यादिति शङ्कते—**साप्तदश्येति** । यदि साप्तदश्यविधिस्तदा न सामिधेनीनां विधिः 'एकादशप्रयाजा'नित्यादिवत्प्राकृतस्य सगुणस्य श्रवणे गुणमात्रविधेरेव न्याय्यत्वात् । एवंच चोदकप्राप्तसामिधेन्यनुवादेन साप्तदश्यमात्रविधानेन चोदकलोपाभावान्नापूर्वत्वमिति परिहरति—**तस्येति** । नन्वनारभ्यविधेरेव प्राप्तत्वान्न साप्तदश्यविधिरित्युक्तमत आह—**किंचेति** । साप्तदश्यस्य सामिधेनीस्वरूपपर्यवसाने सत्यानर्थक्यात्तद्वारा क्रतुसंबन्धो वाच्यः । अनारभ्यवाक्ये च क्रतुर्न संनिहितः किंतु सामिधेनीद्वारा कथंचिद्धृदयमागमयितव्यस्ततश्चानारभ्यवाक्यं यावत्सामिधेनीद्वारा क्रतुसंबन्धं बोधयितुं प्रवर्तेत । ततः प्रागेव मित्रविन्दादिप्रकरणगतवाक्येन क्रतुसंबन्धो बोध्यते । ततश्च प्राकरणिकवाक्यप्रवृत्तेः पूर्वं सर्वविकृतिसाधारण्येन साप्तदश्याप्राप्तेर्न तत्प्राप्तसाप्तदश्यस्य प्राकरणिकवाक्यमनुवादः किंतु स्वयं झटिति क्रतुसंबन्धबोधकं सदनारभ्यवाक्ये अविशेषेण सर्वक्रतुसंबन्धकल्पनां निरुन्धत्तदुपसंहारार्थमित्यर्थः । **नन्वेवं** क्रतुसंबन्धवत्सामिधेनीसंबन्धस्यापि प्राकरणिकवाक्येनैव लाभादनारभ्यवाक्यवैयर्थ्यं स्यादिति चेदत्रोक्तं तन्त्ररत्ने—संबन्धद्वयस्यापि प्राकरणिकवाक्येनैव लाभेऽपि वाक्यद्वयाम्नानबलादेवं विज्ञानमभ्युदयकारीति विज्ञायते अर्थवादप्ररोचितविधिवदिति । विधिरसायने तु अनारभ्याधीतवाक्यं सौर्यादिषु पाञ्चदश्येन विकल्पितं साप्तदश्यं बोधयतु, मित्रविन्दादिगतवाक्यं तु साप्तदश्यनियमार्थमस्तु, एवंच वाक्यद्वयस्यापि प्रवृत्तिविशेषकरतयार्थवत्त्वे सति केवलादृष्टार्थत्वं न कल्पनीयं भवति । नचानारभ्यवाक्यस्य सौर्यादिगतत्वे उपदेशतया तस्य प्राबल्याच्चोदकेन पाञ्चदश्यमेव न प्राप्नुयादिति कथं तत्र विकल्प इति वाच्यम् । यद्यनारभ्यवाक्यं चोदकबाधेन साप्तदश्यं नियमेन विदध्यात्तदा सौर्यादिष्विव पशुमित्रविन्दादिष्वपि साप्तदश्यनियमसिद्धेः प्राकरणिकवाक्यवैयर्थ्यं स्यात् । अतोऽनारभ्यवाक्यं मित्रविन्दादिगतौ स्वस्य वैयर्थ्यं सौर्यादौ पाञ्चदश्यातिदेशबाधने प्राकरणिकसाप्तदश्यवाक्यवैयर्थ्यं चालोच्य सौर्यादौ पाञ्चदश्यातिदेशं सोढ्वा विकल्पितं साप्तदश्यं विधत्ते—यथा 'न तौ पशौ करोती'ति पशावाज्यभागप्रतिषेधः पशौ चोदकाप्राप्तावप्रसक्तप्रतिषेधतया स्ववैयर्थ्यं चोदकप्राप्तावाज्यभागयोः सर्वथा बाधे चोदकप्रामाण्यं चालोच्याज्यभागातिदेशं सोढ्वा विकल्पितमेव प्रतिषेधं बोधयतीति तद्वदित्युक्तं तच्चिन्त्यम् । अनारभ्याधीतं साप्तदश्यं हि सामिधेनीमुखेनैव विकृतिं प्राप्नोति । सामिधेन्यश्च विकृतौ चोदकलभ्यास्ताश्च चोदकेन पाञ्चदश्यसहिता एव प्राप्यन्त इति तत्रापि पाञ्चदश्यानरोधाविशेषान्न प्राक् सर्वविकृतीर्गच्छति किंतु यत्र यत्र प्राकरणिकवचनविरोधात्पाञ्चदश्यस्य न प्राप्तिस्तामेव मित्रविन्दादिकां विकृतिं गच्छति तत्र पाञ्चदश्यावरोधाभावादतः सौर्यादिषु साप्तदश्यप्रसक्तेरेवाभावात्कथं विकल्पः । उक्तं च तृतीये आचार्यैः 'नानारभ्यविधिप्राप्त्या सर्वास्वेव भविष्यति । पश्वादिव्यतिरिक्तासु पाञ्चदश्येन बाधनात् ॥ स्वाङ्गेन पाञ्चदश्येन व्याप्तास्ता ह्यतिदेशतः । विहितं सामिधेन्यङ्गं साप्तदश्यं न गृह्णत' इति । तस्मादुक्तरीत्यार्थवत्त्वासंभवादभ्युदयकारित्वमेवाश्रयणीयम् । किंच यदि वाक्यद्वयसार्थक्यार्थं प्रबलदुर्बलप्रमाणयोरप्यैक्यमत्याश्रयणेन विकल्पोऽभ्युपेयते तदा प्रकृतावेव क्लृप्तक्रतुसंबन्धतया प्रबलस्य पाञ्चदश्यवाक्यस्य कल्प्यक्रतुसंबन्धतया दुर्बलस्यानारभ्यवाक्यस्य चैकमत्याश्रयणेन विकल्पस्याभ्युपगन्तुं शक्यत्वात् किमित्यनारभ्याधीतवाक्यस्योक्तरीत्या दुर्बलस्य प्राबल्याश्रयणेन सौर्यादौ विकल्पवर्णनमिति । सूत्रार्थस्तु—अप्रकरणे यच्छास्त्रमाम्नातं विकृतिविशेषे पुनरधीतमविकृतं श्रूयते तदाज्यभागश्रवणवच्चोदकपरिलोपार्थमिति ॥

अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् ॥ १० ॥

**मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥२०॥ [अनाम्नाते च दर्शनात् ॥२१॥ प्रतिषेधाच्च ॥ २२ ॥]**

**स्वाहेत्युक्तिर्दर्विहोमे संहारः स्यान्न वाऽग्निमः ॥ पूर्वन्यायाश्च तन्मन्त्रे स्वाहाकाराविधित्वतः ॥ १९ ॥**
**विधित्वेऽपि नियम्यः स्यान्न व्यत्यासवषट्कृती ॥ होमान्तरे वषट्कारस्वाहाकारविकल्पनम् ॥ २० ॥**

अनारभ्य श्रूयते 'स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते' इति। केषुचिद्दर्विहोमेषु पुनः स्वाहाकारः पठ्यते 'पृथिव्यै स्वाहान्तरिक्षाय स्वाहे'ति। तदिदमनारभ्यवादप्राप्तस्य स्वाहाकारस्य विशेषेषु पुनः श्रवणं साप्तदश्यवदुपसंहारार्थमिति मन्वानस्योत्तरं—पृथिव्यादिशब्दास्तावन्मान्त्रवर्णिकदेवताविधानार्थाः स्वाहाकारपाठस्तु वषट्कारवैकल्पिकत्वेन नानियतप्राप्तस्य स्वाहाकारस्य नियमार्थो नोपसंहारार्थस्तस्माद्धोमान्तरेष्वपि नास्ति स्वाहाकारस्य बाधः॥

अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ॥ ११ ॥

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥ [मासि ग्रहणं च तद्वत् ॥ २४ ॥ ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ ग्रहणं समानविधानं स्यात् ॥ २७ ॥ मासि ग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥]**

नातिदेशोऽतिदेशो वा वह्न्यतिग्राह्ययोर्न सः ॥ विकृतौ पुनरुक्तत्वादेषोऽङ्गान्तरवद्भवेत् ॥ २१ ॥
प्रकृतेर्विकृतीनां च साम्याय स्यात्पुनर्वचः ॥ साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव ॥ २२ ॥

अग्निरनारभ्यवादविहितः स वाक्येन प्रकृतौ विकृतिषु च कासुचिद्विनियुज्यते 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं त्रिरात्रेणे'त्येवमाद्वादशरात्रादनुक्रान्तः सोऽयमग्निर्यासु विकृतिषु वाक्येन नोपदिष्टो यथा षोडशिषु वाजपेये च तत्र किं चोदकप्राप्त्या कर्तव्यो नेति संशयः। तथातिग्राह्यानामग्रहाः प्रकृतौ श्रुताः विकृतिष्वपि कासुचिदुपदिष्टाः 'उक्थ्ये गृह्णीयात् पृष्ठ्ये गृह्णीयात्

---

**मन्त्रेष्ववाक्यशेषत्वं० ॥ २० ॥ तदिदमिति ।** ननु मन्त्रस्य विधायकत्वाभावेनानारभ्यविधिशेषत्वासंभवात्कथमुपसंहारार्थमितिचेत्सत्यम्। मन्त्रः साक्षादुपसंहारक इति न ब्रूमः किंतु 'पृथिव्यै स्वाहे'त्यनेन मन्त्रेण जुहुयादिति योयं मन्त्राम्नानकल्पितः प्रत्यक्षो वा मन्त्रविनियोगविधिः स उपसंहारक इति तस्य च मन्त्रविधायकस्यापि स्वाहाशब्दाम्नानबलेन 'स्वाहाशिरस्केण मन्त्रेण जुहुया'दित्येवं स्वाहाशब्दविधावपि तात्पर्यावगमात्संभवत्यनारभ्यविधिप्राप्तस्वाहाकारोपसंहारार्थत्वमिति भावः। एवमपि नात्र साप्तदश्यन्यायेनोपसंहारः संभवति। साप्तदश्यस्य ह्यनारभ्यवाक्ये क्रतुसंबन्धानवगमेनापेक्षिततत्संबन्धबोधकप्राकरणिकवाक्येनोपसंहारेऽपि प्रकृते स्वाहाकारेण हविर्दीयते इत्यनारभ्यविधावेव हविस्त्यागलक्षणक्रतुसंबन्धावगमेन तदर्थं प्राकरणिकवाक्यानपेक्षणादित्याशयेन मन्वानस्येत्युक्तम्। **पृथिव्यादीति ।** स्वाहाशब्दस्यान्यतः प्राप्तेर्मन्त्रविधिरपि न स्वाहाशब्दपरः किंत्वप्राप्तचतुर्थ्यन्तपृथिव्यादिशब्दपरस्तथाच मन्त्रविधिबलान्मान्त्रवर्णिकपृथिव्यादेर्देवतात्वमात्रं लभ्यते नतु स्वाहाशब्दोपसंहारः स्वाहाशब्दविधिपरत्वाभावान्मन्त्रविधेरित्यर्थः। ननु प्राप्तेऽपि स्वाहाशब्दे उपसंहारार्थं मन्त्रविधेस्तात्पर्यमवश्यं वाच्यमन्यथा स्वाहाशब्दाम्नानानर्थक्यापत्तेरित्यत आह—**स्वाहाकारपाठस्त्विति ।** एवमपि नोपसंहारार्थत्वं, स्वाहाकारनियमार्थत्वस्यापि संभवात्तद्विधेरित्यर्थः। **सूत्रार्थस्तु**—मन्त्रेषु पृथिव्यादिदेवतालक्षणगुणोपदेशात्स्वाहाशब्दोपसंहारार्थत्वं नानारभ्यविधिशेषत्वात्स्यादिति॥

**अग्न्यतिग्राह्यस्य० ॥ २३ ॥** स्वाहाकारस्योपसंहाराभावेन पुनःश्रवणरहितदर्विहोमेषु बाधाभावेऽपि अग्नेः पुनःश्रवणरहितविकृतिषु बाध इत्युत्थितेः संगतिः। **वाक्येनेति ।** अग्निप्रकरणगतेनेति शेषः। **उपदिष्टा इति ।** 'उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्या'इति प्राकृतविधिसंनिधाविति शेषः। **पृष्ठ्य इति ।** पृष्ठ्यषडह इत्यर्थः। **नन्वग्नेः**पशुकामश्चिन्वीतेति वाक्यैः 'फलार्थत्वस्य भोगे प्रतिषेधा'दिति सूत्रे वार्तिके प्रतिपादितत्वेन क्रत्वर्थत्वाभावात्प्रकृत्यर्थत्वाभ्युपगमेन सत्यपि प्रकृत्यङ्गत्वे कासुचिद्विकृतिषु पुनःश्रवणानर्थक्यप्रसङ्गाद्विकृतिष्वतिदेशाभावोन्नयनेन पूर्वपक्षस्तथा पुनःश्रवणस्य समानविध्यर्थत्वान्नातिदेशाभावानुमापकत्वमिति सिद्धान्तस्य चानुपपत्तेर्विचार एवायमसंगत इतिचेन्मैवम्। 'य एवंविद्वानग्निं चिनुते'इत्यनारभ्योत्पन्नस्याग्नेः 'पशुकामश्चिन्वीते'त्यादिभिः फलार्थत्ववत् 'अथातोग्निमग्निष्टोमेनानुयजन्ती'त्यादिवाक्यैः क्रत्व-

विश्वजिति प्रगृहीतव्या' इति । तेपि विकृत्यन्तरेषु ग्राह्या नेति संशयः । तत्र—'चोदकेनाप्यतिग्राह्यं विकृतौ न प्रदिश्यते ॥ कासुचिच्छ्रवणं तस्य तथाहि स्यादनर्थकम् ॥ तस्मात्तदर्थवत्त्वाय प्रदेशो नेति कल्प्यते ॥ तेन यत्रोपदेशोऽस्य तत्रैवान्यत्र न क्रिया ॥' उच्यते—'अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा ॥ चोदकार्थस्य कृत्स्नत्वात्कासुचिच्छ्रवणं पुनः ॥ सामान्यविध्यसिद्ध्यर्थं नातिदेशं निवारयेत्' ॥ कोऽर्थः सामानविध्ये चेद्गुणकामप्रवर्तनम् ॥' यासु विकृतिषु विधीयते तासु प्रकृतौ च समानं विधानं भवति । विकृत्यन्तरेषु तु चोदकतः प्राप्तिरिति न प्रकृतितुल्यं विधानं, समानविधानत्वे च प्रयोजनमभ्याश्रितानां गुणकामानां 'श्येनचितं चिन्वीत स्वर्गकाम' इत्यादीनां तास्वपि विकृतिषु प्रवृत्तिः । गुणकामा हि प्रकृतमग्निमाश्रयन्ति प्रकृतश्चाग्निः प्रकृतिविकृतिसाधारणभूत इति तथाभूतस्याश्रयत्वाद्विकृतिष्वपि गुणकामप्रवृत्तिः । यासु विधिर्नास्ति तासु तु न गुणकामाः प्रवर्तन्ते 'निवृत्तिर्वा कर्मभेदा'दिति न्यायात् । तदेवं गुणकामप्रवृत्त्यर्थं विकृतिषु कासुचिच्छ्रवणमिति न तद्बलेनातिदेशाभावः

---

र्थत्वस्यापि संभवेन विचारप्रवृत्त्युपपत्तेः । नचाग्निष्टोमादिवाक्यानां फलवाक्यापेक्षिताश्रयत्वसमर्पकत्वमेव नतु क्रत्वर्थतापरत्वमिति वाच्यम् । दीक्षोपसदादिसौमिकाङ्गसंवलितत्वरूपलिङ्गादेव सोमयागलक्षणाश्रयलाभेनाग्निष्टोमादिवाक्यानां तत्परत्वाभावात् । नच लिङ्गाद्भवदाश्रयत्वं विकृतीनामेव नतु प्रकृतेस्तस्या उत्तरवेद्यवरोधात्ततश्चाग्निष्टोमवाक्यं प्रकृतेराश्रयत्वपरमेव वाच्यम्, तत्प्रायपाठाच्च द्विरात्रादिवाक्यानामप्याश्रयत्वपरत्वमेवेति वाच्यम् । पुरुषार्थसमासत्तेः । 'काम्यं नित्यस्य बाधक'मितिन्यायेन काम्यस्याग्नेः प्रबलतया नित्योत्तरवेदिबाधनेन लिङ्गादेव प्रकृत्याश्रयत्वलाभेनाग्निष्टोमादिवाक्यानां क्रत्वर्थतापरत्वावश्यंभावादिति भावः । **अनर्थकमिति** । यस्यां वेलायां प्रकृतौ विधीयते तस्यामेव वेलायां विकृतौ विधीयमानस्य प्रकृतिकॢप्तोपकारकत्वाभावेनाज्यभागवदपूर्वतापादकत्वेनार्थवत्त्वमसंभावितमिति भावः । **तस्मादिति** । क्वचिदाम्नानमनर्थकं सत्सामान्येन विकृतिमात्रे नास्यातिदेश इति कल्पयतीत्यर्थः । **नन्वभ्यतिग्राह्यमस्पृष्ट्वैव** चोदकः प्रवर्तत इति न ब्रूमः किंतु यथा नार्षेयं वृणीत इत्यादौ पर्युदासे तद्वर्जत्वं चोदकस्य विशेषणं तथेहापि तद्वर्जत्वं विशेषणं कल्प्यत इति, ततश्चोदकस्य सर्वाङ्गसाधारण्येन प्रवृत्तावपि न दोष इत्यत आह—**कासुचिदिति** । पुनःश्रवणस्य सामानविध्यर्थतयार्थवत्त्वान्न तद्वर्जविशेषणकल्पकत्वमित्यर्थः । **ननु** विकृतिषु पुनःश्रवणेपि न सामानविध्यर्थं प्रकृतौ विकृतौ चाग्नेर्भिन्नविधिविधेयत्वादित्याशङ्क्य, नात्रैकविधिविधेयत्वं सामानविध्यं विवक्षितं किंतु उपदेशतया एकजातीयविधिविधेयत्वमेवेत्याशयेनाह—**विकृत्यन्तरेष्विति** । **श्येनचितमिति** । अतिग्राह्येष्वपि गुणकामवचनं कस्यांचिच्छाखायां द्रष्टव्यम् । **ननु** प्रकृत्यपूर्वसाधनस्यैवाश्रयत्वं गोदोहनादौ दृष्टमिति वैकृतस्याश्रयत्वाभावान्न गुणकामप्रवृत्तिरित्यत आह—**गुणकामा इति** । संनिहितत्वमेवाश्रयत्वे तन्त्रं नतु प्रकृत्यपूर्वसाधनत्वमपि मानाभावात् । संनिधिश्च सति पुनःश्रवणे प्राकृतवैकृतयोरवशिष्ट इति वैकृतस्याप्याश्रयत्वं संभवतीत्यर्थः । **ननु** यासु न पुनःश्रवणं तास्वप्याश्रयीभूताग्निसद्भावाद्गुणकामप्राप्तिः किं न स्यादिति शङ्कापि 'गुणकामा हि प्रकृतमग्निमाश्रयन्ती'त्यनेनैव निरस्ता । औपदेशिकस्य झटित्युपस्थितत्वात्प्रथममाश्रयत्वान्वये पश्चादातिदेशिकस्य नाश्रयत्वान्वयः संभवति, शब्दस्य विरम्यव्यापाराभावात् । **नन्वतिदिष्टस्यासंनिहितत्वादुपदेशतस्तत्प्राप्त्यभावेऽप्यतिदेशतस्तत्रापि** गुणकामप्राप्तिः किं न स्यादित्यत आह—**यासुत्विति** । **निवृत्तिर्वेति** । गुणकामानां गोदोहनादीनां विकृतिषु निवृत्तिरेव, तेषां पुरुषार्थत्वेन भिन्नकार्यत्वात् । एवंच क्रत्वङ्गत्वाभावान्न तेषामतिदेश इत्याष्टमिकन्यायादित्यर्थः । यदुक्तं विधिरसायने यद्यभ्याश्रितगुणफलविधिप्रवृत्तेः पूर्वमग्निप्रकरणे तत्तत्क्रतुप्रकरणेषु वा उपदेशेनातिदेशेन वा क्रत्वन्वयित्वेन सिद्ध एवाग्निः श्येनाकृत्यादिगुणफलविधिष्वाश्रयत्वेनानुवाद्यः स्यात्तदा प्रथमं बुद्ध्युपारूढे औपदेशिक एवाग्नावाश्रयत्वेनान्विते चरमप्रतीतातिदेशिकाग्नेराश्रयत्वान्वयो न भवेदिति तस्यापि तदाश्रयत्वेनान्वयार्थं पुनःपुनरुपदेशः सफलः स्यात्, नत्वेवमग्निष्टोमादिवाक्यैः क्रत्वन्वयकरणात्प्रागेव य एवंविद्वानित्युत्पन्नस्य शुद्धस्याग्नेराश्रयत्वेनानुवादसंभवेन क्रत्वन्वयिन एवाश्रयत्वे प्रमाणाभावात् शुद्धस्य चाग्नेराश्रयत्वेनान्वयानन्तरमग्नेः क्रतुसंबन्धे सत्यर्थात्क्रत्वन्वितोग्निराश्रय इति पर्यवस्यति । आर्थिकं चापूर्वीयस्याग्नेराश्रयत्वम् । येष्वग्नेरौपदेशिकमपूर्वीयत्वं येषु चातिदेशाधीनं तेषु सर्वेष्वप्यविशेषेण सिध्यति । तस्मान्न गुणकामप्राप्त्यर्थं सामानविध्यमिति तच्चिन्त्यम् । भवेदेवं यदि शुद्धस्याग्नेराश्रयत्वयोग्यता स्यात् । नत्वेवं शुद्धस्य सिद्धरूपत्वेन क्रियानुप्रवेशनं विनाश्रयत्वायोग्यत्वात् । उक्तंच चतुर्थे तन्त्ररत्ने 'औदासीन्यप्रच्यावकोऽस्याश्रयः क्रिया च तथा न द्रव्य'मिति । अग्नेः सिद्धरूपत्वं च विधिरसायन एव 'पशुकामश्चिन्वीते'त्यादिना फलार्थत्वेनावगतस्याग्नेराश्रयार्थानि 'अथातोऽग्निमग्निष्टोमेने'त्यादिवाक्यानीति प्रतिपादनावसर आश्रितम् । एवंच यथासिद्धरूपस्य स्वतःफलसाधनत्वासंभवेन तदर्थमाश्रयापेक्षा तथा सिद्धरूपस्याश्रयत्वासंभवेन तदर्थं क्रत्वनुप्रवेशापेक्षाया-

शक्यते कल्पयितुं, तस्मादस्त्यतिदेशः । अत्र केचिदाहुः—अनारभ्याधीतोऽग्निः प्राकरणिकोत्तरवेदिविरोधात्प्रकृतौ न लभते निवेशम् । अप्राकृतश्च न विकृतिष्वतिदिश्यते तेनोपदेशेनैवास्य विकृतिषु प्राप्तिरित्यनुपदेशतः षोडशिवाजपेययोर्नाग्निश्चेतव्य इति । तदयुक्तम् । अग्निष्टोमवाक्येन प्रकृतावपि विधानात् । ननु विकृत्यग्निष्टोमाभिप्रायं तद्भविष्यति, प्रकृतौ प्राकरणिकोत्तरवेदिविरोधात् । नहि प्रकरणेन वाक्यसंकोचो युक्तः । किंच प्रकृतेरेवाग्निष्टोमत्वमन्यापेक्षं, विकृतीनां तु अतिदेशापेक्षमिति प्रकृतिरेवानेनाभिधीयते । नचात्र साप्तदश्यन्यायः, साप्तदश्यस्य हि सामिधेनीमात्रसंबन्धो वाक्येनावगम्यते क्रतुसंबन्धः कल्पयितव्यः । पाञ्चदश्यस्य तु प्रकरणेन संबन्धः क्रत्र इति युक्तं बलाबलम् । अग्निष्टोमशब्दस्तु क्रतुमेवाभिधत्त इति तत्संबन्धो वाक्यकृत इति न प्रकरणेन बाधमर्हति । तस्मादस्ति प्रकृतावग्निरिति विकृतिष्वप्यतिदिश्यते । तत्र साद्यस्क्रेषु सारस्वतेषु च सत्रेष्वशक्यत्वात्काममग्निर्न चीयतां षोडशिवाजपेययोस्तु चेतव्यः ॥

---

मग्निष्टोमादिवाक्यैः क्रत्वन्वितो योऽग्निः स एवाश्रयः स्वीकार्यः नतु शुद्ध इति गुणकामप्राप्तिः पुनःश्रवणप्रयोजनमुपपद्यत इति । नहि उत्तरवेद्या सह विकल्पितस्याग्नेर्नियमार्थतया कासुचिद्विकृतिषु पुनःश्रवणोपपत्तेर्न गुणकामप्राप्तिस्तत्प्रयोजनमिति वाच्यम् । द्विरात्रादितत्तद्विकृतिचोदकपर्यालोचनालभ्योत्तरवेदिप्राप्त्यपेक्षाग्निनियमापेक्षयाऽग्निप्रकरणगततदाश्रितगुणकामप्राप्तेः संनिहिततया तस्या एव प्रयोजनत्वौचित्यात् । यत्र तु संनिहितप्रयोजनालाभः यथा षोडशिग्रहविधिविषये 'उत्तरेहन् द्विरात्रस्य गृह्यत'इत्यादौ तत्र तत्तच्चोदकाधीनप्राप्तिसापेक्षोऽपि नियमः फलमगत्या स्वीक्रियते, इह तु संनिहितप्रयोजनलाभान्न नियमः प्रयोजनमिति । **अनारभ्येति** । अनारभ्याधीतस्याप्यग्नेर्न प्रकृतौ निवेशः प्राकरणिकोत्तरवेदिविरोधात् । प्राकरणिकपाञ्चदश्यविरोधादनारभ्याधीतसाप्तदश्यस्येवेत्यर्थः । साप्तदश्ये क्रतुसंबन्धस्य वाक्येनानवगमात्तस्य प्रकृतौ निवेशाभावेऽप्यग्निवाक्येनैव क्रतुसंबन्धावगमाद्युक्तः प्रकृतौ निवेश इति वक्ष्यमाणं साप्तदश्यवैषम्यं मनसि निधायाह—**तदयुक्तमिति** । ननु भवेदिदं वैषम्यं यदि वाक्येन प्रकृतिसंबन्धोऽवगम्येत नत्वेतदस्तीति शङ्कते—**नन्विति** । **नहीति** । तथाच प्राकरणिकोत्तरवेदेरनारभ्यविहिताग्नेश्च विकल्प इति भावः । न चेत् 'उत्तरवेद्यां ह्यग्निश्चीयत' इति वचनात्समुच्चय एव न विकल्प इति वाच्यम् । अग्निप्रकरणे 'उत्तरवेदिमुपवपति उत्तरवेद्यां ह्यग्निश्चीयत' इति वचनेन सोमप्रकरणे केवलमुत्तरवेदिमाम्नाय तस्यामग्निनिधानवचनेन च केवलोत्तरवेदेरुत्तरवेदिसहिताग्नेश्च विकल्पावगमादिति । **किंचेति** । अत्र प्रकृतिशब्देन यत्राग्निष्टोमसंस्था उपदिष्टा तत्सर्वं गृह्यते उपदिष्टाग्निष्टोमसंस्थायुक्तविकृतेरप्यनन्यापेक्षाग्निष्टोमरूपसद्भावेन तस्या अपि अत्रत्याग्निष्टोमशब्दवाच्यत्वसंभवात् । नचात्रापि 'अग्निष्टोमे राजन्यस्य गृह्णीया'दिति षोडशिग्रहविषयाग्निष्टोमशब्दवज्ज्योतिष्टोमप्रकरणे आम्नानं येन प्रकृतिमात्रस्य ग्रहणं स्यात् । तस्मादनारभ्याधीतयदाहवनीयवाक्यस्थजुहोतिना प्रकृतिविकृतिसाधारण्येनौपदेशिकहोममात्रग्रहणवदौपदेशिकाग्निष्टोममात्रस्यैवाग्निष्टोमशब्देन ग्रहणं न्याय्यम् । एवमपि द्विरात्रादावग्निष्टोमादिसंस्थाया आतिदेशिकतयाऽग्निष्टोमेनानुयजन्तीत्युपदेशस्य द्विरात्रादिविषयकत्वाभावेनात्र गुणकामाप्राप्तौ तत्प्रापणार्थं द्विरात्राद्यग्न्युपदेशस्य साफल्योपपत्त्या प्रकृतावग्निसत्तामात्रेण विकृतिष्वतिदेशोपपत्त्या चाग्निष्टोमशब्दस्य प्रकृतिमात्रपरत्वस्यावश्यवक्तव्यत्वाभावाद्विकृतीनां त्वतिदेशापेक्षमिति ग्रन्थपर्यालोचनयातिदेशिकाग्निष्टोमरूपयुक्तविकृतिमात्रव्यावर्तन एव ग्रन्थकारस्यापि तात्पर्यावगमाच्चेति ध्येयम् । यद्वैषम्यमभिप्रेत्याग्निष्टोमवाक्येन प्रकृतावपि विधानादित्युक्तं तद्वैषम्यं विशदयति—**नचात्रेत्यादिना** । **अशक्यत्वादिति** । साद्यस्काणामेकदिनसाध्यत्वात्सारस्वतसत्रप्रधानयागानामनुदिनमन्यान्यशम्याः प्रान्तप्रदेशेषु कर्तव्यत्वाच्चोभयत्राप्यग्निरशक्य इत्यर्थः । **षोडशीति** । वाजपेयस्य षोडश्यन्तर्भावेऽप्यवान्तरभेदाभिप्रायेण पृथगुक्तिः । **ननु** षोडशिशब्देनात्र किं षोडशिसंस्थो ज्योतिष्टोमो विवक्षितः उत यागान्तरम् । नाद्यः । तस्य विकृतित्वाभावेन तत्रातिदेशेनाग्निप्राप्त्यभावात्, फलाय गोदोहनग्रहेऽपि तदाश्रयीभूतप्रणयनस्य दार्शपूर्णमासिकत्ववत्फलार्थं षोडशिसंस्थानुष्ठानेऽपि तदाश्रयस्य प्रकृतिभूतज्योतिष्टोमत्वानपायात् । न द्वितीयः । षोडशिसंस्थे ज्योतिष्टोमे उक्तरीत्यातिदेशासंभवेनाग्निष्टोमेनानुयजन्तीत्युपदेशस्याग्निष्टोमसंस्थायुक्तज्योतिष्टोममात्रविषयतया संस्थान्तरयुक्तज्योतिष्टोमसाधारण्याभावेन चोपदेशातिदेशाभ्यां षोडशिसंस्थे ज्योतिष्टोमेऽग्नेरलाभेन षोडशिसंस्थयागान्तरेऽप्यतिदेशानुपपत्तेरितिचेत् । नहि तत्र षोडशिशब्देन तत्संस्थक्रतुर्विवक्षितः येनोक्तविकल्पावकाशः स्यात्, किंतु षोडशिसंस्थामात्रम् । एवंच ज्योतिष्टोममाश्रित्य 'षोडशिना वीर्यकामः स्तुवीते'ति फलाय विधीयमानायां तस्यामतिदेशेनाग्निप्राप्तिर्न विरुध्यते । उपपादिता च 'संस्थास्तु समानविधाना' इत्यत्र वार्तिके संस्थास्वतिदेशतो धर्मप्राप्तिरिति ॥

उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणम् ॥ १२ ॥

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ [तत्संस्कारश्रुतेश्च ॥ ३० ॥ ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरवधारणेन तदासिवचनात् ॥ ३१ ॥ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥]**

चतुर्द्विर्वा पुरोडाशेऽवदानं होमतोक्तितः ॥ चतुर्मैवं सहाज्येन सिद्धस्यात्रानुवादतः ॥ २३ ॥

दर्शपूर्णमासयोः 'उपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयती'ति विधाय श्रूयते 'चतुरवत्तं जुहोती'ति । तत्र संशयः किं चतुरवत्तहोमे हविष एव चतुरवदानमुपस्तरणाभिघारणे त्वधिके त्र्यवदानं च पक्षान्तरं उतोपस्तरणाभिघारणाभ्यां सह चतुरवत्तं हविषो नित्यं द्विरेवावदानमिति । 'तत्र द्वितीयासंयोगाच्चतुःखण्डनसंस्कृतम् ॥ होतव्यं हविषस्तस्माद्धोतव्यात्खण्डनं चतुः ॥' चतुरवत्तमिति द्वितीयानिर्देशाद्धोतव्यमेव चतुरवत्तं कर्तव्यं हविश्च होतव्यं नाज्यं, तस्माद्धविष एव चतुरवदानं उपस्तरणाभिघारणं त्वधिकम् । नच तेनाधिकेन होमे चतुरवत्तविघातः । तस्याहोतव्यत्वात् । त्र्यवदानचतुरवदानयोर्विकल्प इति प्राप्ते ब्रूमः—'चतुःसंख्यावदानस्था होमाङ्गं चोद्यते यदि ॥ तत एवं भवेत्सा तु यथाप्राप्तानुकीर्त्यते ॥' चतुरवत्तं जुहोतीति नात्र चतुःसंख्याविशिष्टमवदानं होमानुवादेन विधीयते । होमस्याग्नेयादिवाक्यैरप्राप्तत्वेनानुवादासंभवात् । नच चतुरवत्तविशिष्टहोमविधिर्गौरवात् । नचाविहितस्याङ्गत्वमतो न चतुःसंख्याहोमाङ्गं का तर्हि वचनव्यक्तिः यच्चतुरवत्तमित्युपस्तरणादिवाक्यकल्पितचतुरवत्तानुवादेन तत्संस्कारतया जुहोतिना त्यागदेवतोद्देशावुत्पत्तिवाक्यसिद्धावनूद्य प्रक्षेपो विधीयते । उपस्तरणाभिघारणाभ्यां च सह चतुरवत्तं प्राप्तमिति यथाप्राप्तानुवादात्सहैवोपस्तरणाभिघारणाभ्यां चतुरवत्तं यद्यपि होमाङ्गतया चतुरवत्तविधिस्तथाप्यवत्तमात्रं

---

**उत्पत्तितादर्थ्यात्०** ॥ २९ ॥ उत्तरवेद्यग्न्योर्यदि विकल्पस्तदा त्र्यवदानचतुरवदानयोरपि विकल्प इत्युत्थितेः संगतिः । **द्वितीयेति** । द्वितियासंयोगाच्चतुरवत्तस्य होमे कर्मत्वेन होतव्यावगमाद्धोतव्यं तच्चतुरवत्तं कुर्यादिति होतव्यानुवादेन चतुरवत्तत्वविधानाद्धविष एव चतुरवदानं नत्वाज्यस्य । तस्य होतव्यसंस्कारार्थतया होतव्यत्वाभावादित्यर्थः । आज्यस्य होतव्यत्वाभावादेवोपस्तरणाभिघारणाधिक्येऽपि न षडवत्ततापत्तिरित्याह—**नचेति** । प्रथमं वार्तिककारीयं सिद्धान्तमाह—**चतुःसंख्येति । अप्राप्तत्वेनेति** । होमाभावेऽपि पर्यग्निकृतोत्सर्जनस्थल इव यागोपपत्तेरिति भावः । **ननु** यच्चतुरवत्तं तज्जुहोतीति चतुरवत्तानुवादेन होमविधिरपि न संभवति । होमो नाम देवतोद्देशेन त्यागविशिष्टः प्रक्षेपः । नचात्र होमविधौ देवता लभ्यते आग्नेयादिशब्दानां यागदेवतासमर्पकत्वेन ततो होमदेवताया अलाभादित्याशयेन शङ्कते **—का तर्हीति** । नह्यत्रापूर्वस्त्यागांशो विधीयते येन देवतापेक्षा स्यात्, किंतु विशेष्यभूतप्रक्षेपमात्रमिति परिहरति—**यच्चतुरिति । ननु** तत्रापि कथमुपस्तरणाभिघारणाभ्यां चतुष्ट्वसिद्धिराज्यस्य हविष्ट्वाभावादित्यत आह—**यथाप्राप्तेति । होमाङ्गतयेति** । अत्रावत्तशब्दो विशेषणप्रधानस्तथाच होमाङ्गतयावदानविधिरित्यर्थः । तेन सर्वप्रदानाधिकरणे चतुरवत्तद्रव्यसंस्कारार्थत्वेन होमविधिरिति यदुक्तं न तद्विरोधः । अवदानस्य होमार्थत्वेऽपि होमस्यावत्तसंस्कारार्थत्वाविरोधादिति ध्येयम् । नचैवं 'द्विर्हविषोवद्यती'त्यत्र प्राप्तावदानं हविर्लक्षणापादानस्य संख्यायाश्च विधाने वाक्यभेदः स्यादिति वाच्यम् । पूर्ववदिहापि देवतोद्देशत्यागांशानुवादाङ्गीकारेण देवतायै त्यज्यमानस्य हविष एव प्रक्षेप्यत्वलाभेन द्विर्हविष इत्यस्य संख्यामात्रविधायकत्वात् । एवंच द्विर्हविष इत्यनेन संख्याविशिष्टावदानविधिः, चतुरवत्तवाक्ये होममात्रविधिरिति पक्षे चतुरवत्तवाक्ये च तद्विशिष्टहोमविधिः द्विर्हविष इत्यत्र संख्यामात्रविधिरिति पक्षे च लाघवगौरवकृतविशेषाभावाद्द्विर्हविष इत्यस्य संख्याविशिष्टावदानविधायकत्वेऽपि स्वातन्त्र्येणावदानविधावदृष्टार्थत्वापत्त्या दृष्टार्थत्वाय प्रदानोपक्रमतयैवावदानस्य विधेयतया पञ्चमोक्तप्रधानान्तानुसमयस्योपपन्नत्वाच्चतुरवत्तवाक्यस्यावत्तविशिष्टहोमविधायकत्वे चतुःसंख्याया विध्यनङ्गीकारेण हविषश्चतुरवदानाप्रसक्ततया एतदधिकरणप्रतिपाद्यस्य हविषो नित्यं द्व्यवदानस्य सिद्धेश्च पक्षद्वयमपि वार्तिककारस्य

विधीयते न चतुःसंख्यावाक्यान्तरप्राप्तानुवादत्वेनापि संभवतो विधाने गौरवापत्तेः। यद्यपि संख्या होमाङ्गतया विधीयते तथापि साधनमात्रपरिच्छेदेनाङ्गत्वोपपत्तेराज्यस्यापि च संस्कारद्वारेण होमसाधनत्वादुपस्तरणाभिघारणाभ्यां चतुरवत्तमित्याश्रीयते। एवंच व्यवदानस्य पाक्षिको बाधो न कल्पितो भवति॥

उपांशुयाजेपि चतुरवत्तस्यावश्यकताधिकरणम्॥ १३॥

## साप्तदश्यवन्नियम्येत॥३३॥ [हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात्॥३४॥]

**उपांशुयाजे किं न स्यादवदानचतुष्टयम्॥ स्याद्वा नास्त्युपसंहारान्नानूक्तिर्वाक्यतोऽस्ति तत्॥ २४॥**

कृत्वाचिन्तेयम्। यदि चतुःसंख्या होमाङ्गतया विधीयते तदा किमाज्यद्रव्यके उपांशुयाजे चतुरवदानं कर्तव्यं नेति संशये चतुरवत्तं विहितं कथं संपादनीयमित्यपेक्षायामुपस्तरणादिप्रकारविधानात्तस्य च केवलसान्नाय्यौषधविषयत्वात्तत्रैव चतुरवदानमुपसंह्रियते साप्तदश्यवदिति प्राप्ते उच्यते अत्र चतुरवत्तमविशेषविहितं सर्वहोमाङ्गम्। नच तच्छेषत्वेनोपस्तरणादिविधिः हविःसंस्कारार्थतयोपस्तरणाभिघारौ विहितौ ताभ्यामेव तु सान्नाय्यौषधयोश्चतुरवत्तसंपत्तेर्न हविषश्चतुरवदीयते। यत्रत्वाज्यभाग उपस्तरणादि न श्रुतं तत्रान्यतः संपत्त्यभावाद्धविष एव चतुरवदानम्। परमार्थतस्तु नात्र चतुःसंख्या विधीयते। अन्यपरे वाक्येऽनुवादत्वेनापि संभवन्त्यां विधानस्यान्याय्यत्वात्। अतोऽवत्तानुवादेन होमविधिर्न होमाङ्गतयावत्तविधिः। उपांशुयाजाज्ये तु चतुर्गृहीतं जुहोतीति वाक्याच्चतुर्गृहीतविधिर्न चतुरवत्तवाक्यात्॥

---

संमतमिति भावः। इदानीं भाष्योक्तसिद्धान्तप्रकारमाह—**यद्यपीति**। **साधनमात्रेति**। हविरेव परिच्छेद्यमित्यत्र प्रमाणाभावादिति भावः। सूत्रार्थस्तु—पुरोडाशोत्पत्तेर्होमार्थत्वात्प्रधानस्य पुरोडाशस्यैव चतुरवदानं होमसंयोगेन होतव्यस्यैव चतुरवदानप्रतीतेः। आज्यं तु पुरोडाशेनातुल्यत्वादधिकमिति नोपस्तरणाभिघारणाभ्यां संख्यापूरणं तदुत्पत्तेः **संस्कारार्थतया** गुणभूतत्वात्। नचैवं संख्याधिक्यं लोके प्रस्थभुक् देवदत्त इत्यादौ गुणेन सूपादिनाधिक्यादर्शनादिति॥

**साप्तदश्यवन्नियम्येत॥ ३३॥** पूर्वाधिकरणोक्तव्यवदाननियमोपजीवनेन प्रकारविधिरित्युत्थानात्संगतिः। **ननु** पूर्वाधिकरणे वार्तिककारपक्षे चतुःसंख्या न विधीयत इत्युपपादितं तथाचोपस्तरणादिवाक्यबलादुपसंहार **इति** पूर्वपक्षस्य चतुःसंख्याविधेरविशेषप्रवृत्तिमूलकोपसंहाराभावनिबन्धनसिद्धान्तस्याप्यप्रवृत्तेः कथमयं विचार इत्यत आह—**कृत्वेति**। चतुःसंख्या विधीयत इति कृत्वाचिन्तया विचारप्रवृत्तिरुपपन्नेत्यर्थः। इदमुपलक्षणं—'चतुर्गृहीतं जुहोती'त्यनारभ्याधीतमाज्यविषयमपि वाक्यं नास्तीति कृत्वाचिन्तेत्यपि द्रष्टव्यम्। **उपस्तरणादिप्रकारेति**। उपस्तरणादेश्चतुरवत्तापादनप्रकारतयेत्यर्थः। **तस्यचेति**। उपस्तरणादेः स्रुच्यसंसर्गार्थतया सामर्थ्येन तत्संसर्गप्रसक्तिमत्सांनाय्यादिविषयत्वमित्यर्थः। अविशेषेण प्रसक्तस्योपसंहारे दृष्टान्तः—**साप्तदश्यवदिति**। **नच तच्छेषत्वेनेति**। सर्वविषयकचतुरवत्तविधिं प्रति सांनाय्यौषधमात्रविषयकस्य शेषत्वासंभवादिति भावः। **नन्वेवमुपस्तरणादिविधेस्तच्छेषत्वाभावे** सांनाय्यादौ हविष एव चतुरवदानं स्यादित्यत आह—**हविःसंस्कारेति**। कृत्वाचिन्तामुद्घाटयति—**परमार्थत इति**। यद्यत्र चतुःसंख्या विधीयेत तदा प्रधानभूतहोमावैगुण्यार्थं कृष्णलेष्वपि चतुरवदानं कर्तव्यं स्यादतो नात्र चतुःसंख्याविधिरित्यर्थः। युक्त्यन्तरमाह—**अन्यपर इति**। कथं तर्ह्युपांशुयाजाज्ये चतुरवदानसिद्धिरित्यत आह—**उपांश्विति**। अनेन द्वितीयोऽपि कृत्वाचिन्ताप्रकार उद्घाटितः॥

दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् ॥ १४ ॥

**पुरोडाशाभ्यामित्याधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३५ ॥ [न त्वनित्याधिकारोऽस्ति विधौ नित्येन संबन्धस्तस्मादवाक्यशेषत्वम् ॥ ३६ ॥ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३७ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥ कर्तुः स्यादिति चेत् ॥ ३९ ॥ न गुणार्थत्वात्प्रासे च नोपदेशार्थः ॥ ४० ॥ कर्मणोऽस्तु प्रकरणे तन्न्यायत्वाद्गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥ यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥ अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद्यथाऽनभिप्रेतस्तथाऽऽग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ विधिं तु बादरायणः ॥ ४४ ॥ प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ तथा चान्यार्थदर्शनम् ॥ ४६ ॥]**

सप्त पक्षाः पुरोडाशाभ्यामेवेत्यधिकारिणः ॥ शेषः स्यात्तच्छ्रुतेर्मैवं कार्त्स्न्यनित्यत्वबाधनात् ॥ २५ ॥
कर्मान्तरविधिर्मैवं प्रत्यभिज्ञैवकारतः ॥ णिजर्थस्य विधिर्मैवमाफल्यात्स्वार्थवर्जनात् ॥ २६ ॥
कालस्यास्तु विधिर्मैवं लक्षणायाः प्रसङ्गतः ॥ ऐन्द्राग्नैकविधिर्मैवं वैषम्याच्चैवकारतः ॥ २७ ॥
कालो लाक्षणिकोऽप्यस्तु सार्थत्वायेति चेन्न तत् ॥ स्तुत्या विध्येकवाक्यत्वात्सार्थत्वाच्चानुवादता ॥ २८ ॥

दर्शपूर्णमासयोः श्रूयते 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च सान्नाय्येनतु सोमयाजिन'मिति । तत्र पुरोडाशाभ्यामेवासोमयाजिनमिति किमयं विधिरुतानुवाद इति संशयः । विधित्वे च बहवः पक्षाः अधिकृतोपदेश इत्येकः कर्मान्तरविधिरित्यन्यः, याजनविधिरित्यन्यतरः, कालोपदेश इत्यपरः, आग्नेयस्यानुवादः ऐन्द्राग्नस्य पौर्णमास्यां विधिरित्यन्यः, तत्रार्थवत्वाद्विधिः अनुवादस्यानर्थक्यात्तत्राधिकृतविधिः पुरोडाशाभ्यामेवासोमयाज्यधिक्रियते न सान्नाय्येनेति । असोमयाज्येव वा ताभ्यामधिक्रियते न सोमयाजीति । तदयुक्तम् । समस्ताभ्यां हि दर्शपूर्णमासाभ्यां चोदितं फलं न केवलाभ्यां पुरोडाशाभ्यामसोमयाजिन उत्पत्तुमर्हति नापि नित्ययोः पुरोडाशयोरनित्यमसोमयाजिनं प्रति संभवति विधिः । तस्मात्कर्मांतरे एते विधीयेते । नैवम् । प्रकृतप्रत्यभिज्ञानादेवकारानर्थक्याच्च । याजनविधिस्तर्हि भवतु न फलाश्रवणात् । परस्मैपदनिर्देशाच्च न फलकल्पनापि शक्यते तेन कालविधिरेव ज्यायान् । असोमयागकाले पुरोडाशाविति तदपि न चतुरस्रं । सान्नाय्यवैकल्पिको ह्यैन्द्राग्नः सांनाय्यं च नासोमयाजी संनयेदिति वचनात्सोम-

---

**पुरोडाशाभ्यां० ॥ ३५ ॥ अधिकृतेति** । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, असोमयाजिस्वर्गकामस्तु पुरोडाशाभ्या'मित्येवं स्वर्गकामवाक्यस्य शेषभूतं सदिदमधिकारविधिरित्यर्थः । **तत्रेति** । एवकारस्य यथाश्रुतान्वयमादाय पुरोडाशयोरेवासोमायाजिनोऽधिकारो न सांनाय्ये इति प्रथमः पक्षः । द्वितीयस्तु एवकारस्यासोमयाजिशब्देनान्वयादसोमयाजिन एव पुरोडाशयोरधिकारो न सोमयाजिन इति । ततश्चोपांशुयाजाज्ये चतुरवदानबाधाभावेऽपि इहासोमयाजिनः सांनाय्यबाधः सोमयाजिनः पुरोडाशबाधो वेत्युत्थानात्संगतिः । **केवलाभ्यामिति** । केवलपुरोडाशाभ्यामित्यर्थः । यद्वा सांनाय्यं विना कृताभ्यां दर्शपूर्णमासाभ्यामित्यर्थः । सोमयाजिनोपि केवलसांनाय्येन न फलमुत्पत्तुमर्हतीत्यनेनैवोक्तप्रायम् । वचनस्य वक्ष्यमाणरीत्योपपत्तेः न वचनबलाद्विकल्पस्यापि साधनत्वसंभवः । **नापीति** । दर्शपूर्णमासयोः सोमयाज्यसोमयाजिसाधारण्येन नित्यत्वाभित्यदर्शपूर्णमासान्तर्गतयोरनित्यासोमायाज्युपकारकत्वे नित्यानित्यसंयोगविरोधः स्यात् । नहि पुरोडाशौ नित्यौ दर्शपूर्णमासयोर्भविष्यतः पश्चात्सोमयाजी तस्योपकरिष्यत इति संभवतीत्यर्थः । **प्रत्यभिज्ञानादिति** । यावेताविति । प्रत्यभिज्ञायकशब्दबलादिति भावः । **एवकारेति** । कर्मान्तरविधावितरव्यावृत्त्यर्थकस्यैवकारस्यानन्वयादिति भावः । **परस्मैपदेति** । परस्मैपदेन याजनपारार्थ्यप्रतीतेर्विश्वजिन्न्यायेन फलकल्पनापि न संभवतीत्यर्थः । **असोमेति** । सोमयागात्प्राक्काल इत्यर्थः । कालविधिपक्षमपरिसमाप्यैव यथासूत्रमन्तरा पक्षान्तरमाह—**तस्मादिति** । **समु-**

यागकालात्परतः प्रवर्तते । तेन तद्वैकल्पिकस्यैन्द्राग्नस्य प्राक्कालः प्राप्त एवेति तद्विधिर्व्यर्थः । तस्मादाग्नेयस्य पर्वद्वयेपि प्राप्तत्वादनुवादः । ऐन्द्राग्नस्य त्वमावास्यायां विहितस्य पौर्णमास्यामप्राप्तस्य विधिरिति युक्तम् एवकारानर्थक्यात् समुच्चितयोश्च पुरोडाशयोरेकेन लिङ्गशब्देन कस्यचिदनुवादः कस्यचिद्विधिरिति वैषम्यमयुक्तम् तस्मात्पूर्वोक्त एव कालविधिरस्तु । नच प्राप्तः कालः सांनाय्यं ह्यसोमयाजिनोऽपि विहितम्। 'तदुह संनये'दिति प्रागूर्ध्वं च सोमात्सांनाय्यस्य काल एवेति तद्वैकल्पिकस्यैन्द्राग्नस्योभयोः प्राप्तौ संभवन्त्यां प्राक्काल एव नियम्यते । तन्नियमाच्च प्राक्सोमादैन्द्राग्नसांनाय्ये विकल्प्येते । पश्चात्तु सांनाय्यमेव भवतीति युक्तः कालविधिः । नैवं । असोमयाजिपदेन कालो लक्ष्यते नचैतद्युक्तं तस्मात्सांनाय्येन सोमयाजिनमित्यस्यायमर्थवादः ॥

उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् ॥ १५ ॥

## उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ ४७॥ [ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥]

**उपांशुयाजे यत्किंचिद्द्रव्यमाज्यमुताग्रिमः ॥ विशेषानुक्तितो नैवं ध्रौवाज्यस्य विधानतः ॥ २९ ॥**

उपांशुयाजस्य द्रव्ये संदेहः किमर्थप्राप्तं यत्किंचित्स्यादुताज्यमेव ध्रौवमिति । तत्र विशेषाश्रवणादनियमः । 'आज्यस्यैव नाउपांशुपौर्णमास्यां यज'न्नित्यस्य कालविधिपरत्वेन द्रव्यविधावसामर्थ्यात्सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमित्यस्य च वैशब्दोपबद्धस्य वर्तमानापदेशसरूपस्य विधिसामर्थ्याभावादिति प्राप्ते ब्रूमः—यद्यपि तावद्विधिर्न स्यात्तथाप्यसंयुक्तोत्पन्नध्रौवमाज्यं प्रयोजनमपेक्षमाणमश्रुतद्रव्यकेषु प्रकृतेषु यागेषु द्रव्याकाङ्क्षेषु निविशते किमुत यदा विस्पष्टं तादर्थ्ये चतुर्थीसंयुक्तं विपरिणामलब्धविधिसामर्थ्यं सर्वस्मै वा एतदिति वचनमेव विद्यते तस्माद्ध्रौवाज्यमस्य द्रव्यम् ॥

---

**च्चितयोरिति** । युगपल्लिङ्गशब्दान्वितयोरित्यर्थः । तदुह समवनयेत् । तदोपसन्नयेदेवेत्यर्थः । **प्राक्काल एवेति** । अत्र यद्यप्येवकारस्य पुरोडाशसंगततया पुरोडाशयोरेवासोमयागकाल इति नियमः प्रतीयते तथापि तथाविधनियमस्वीकारे 'तदुह समवनये'दिति सांनाय्ये सोमप्राक्कालविधायकवचनविरोधादसोमयाजिशब्देन कालपरेणैवैवकारान्वयमङ्गीकृत्यासोमयागकाल एव पुरोडाशयोरिति नियमः स्वीक्रियते । नच नियमेन प्राक्सांनाय्यस्य निवृत्तिः किंतूर्ध्वं पुरोडाशनिवृत्तिमात्रमिति न कस्यापि विरोध इति भावः । एतदेवाह—**नियमाच्चेति** । एवंच प्राक् नियमेन प्राप्तस्य नियमविध्यभावादूर्ध्वकालव्यावृत्तिलक्षणपरिसंख्यायामेवायं नियमशब्द इति ध्येयम् । तस्मात्सोमयाजिनः सांनाय्यविधिबलादेवासोमयाजिनः पुरोडाशप्राप्त्यनुवादोयम् । नचानर्थक्यम् । सांनाय्यविध्येकवाक्यतया तत्प्रशंसार्थत्वादित्याह—**तस्मादिति** । सूत्रार्थस्तु—पुरोडाशाभ्यामेवासोमयाजिनमित्यविकृतानामसोमयाजिनां पुरोडाशयोरुपदेशः । पुरोडाशयोरसोमयाज्यधिकारोपदेश इति यावत् । तत् श्रुतित्वात् असोमयाजिन एव श्रुतत्वाद्यथा 'वैश्यस्तोमेन यजेते'त्यत्र वैश्यस्यैव श्रुतत्वात्तस्यैवाधिकार इति ॥

**उपांशुयाजमन्तरा यजतीति०** ॥ ४७॥ असोमयाजिनः सांनाय्याबाधवदुपांशुयाजेऽप्यर्थप्राप्तद्रव्यान्तरस्य न बाध इत्युत्थितेः संगतिः । **अनियम इति** । यज्ञार्हं यत्किंचिद्द्रव्यमित्यर्थः । **कालेति** । कालविधिपरत्वमनुपदमेव ग्रन्थे स्पष्टम् । तथाचाज्यस्यैवेत्यनियमप्राप्तानुवाद इति भावः । **अश्रुतेति** । प्रयोजनासंयोगेनोत्पन्नं ध्रौवमाज्यमाज्यापेक्षोपस्तरणादिष्विव द्रव्यापेक्षेष्वाज्यभागादिषु निविशमानमुपांशुयाजेपि निविशत इत्यर्थः । **विस्पष्टेति** । विस्पष्टतादर्थ्यचतुर्थीबलादश्रुतद्रव्यकप्रकृतयागानां द्रव्यापेक्षाबलाद्ध्रौवस्य प्रयोजनापेक्षाबलाच्च विधितात्पर्ये निश्चिते वैशब्दो यदाग्नेय इत्यादौ यच्छब्दवन्न विधिशक्तिप्रतिबन्धक इति भावः । वर्तमानापदेशस्य परिहारमाह—**विपरिणामेति** । द्रव्यं विना यागानुपपत्त्या यजतेर्द्रव्यलिङ्गत्वाद्विशेषाश्रवणाच्चोपांशुयाजमन्तरा यजतीत्यत्र द्रव्ये यथाकामीति सूत्रार्थः ॥

उपांशुयागस्य प्राकृतदेवतानियमाधिकरणम् ॥ १६ ॥

**तद्वच्च देवतायां स्यात् ॥ ४९ ॥ [तान्त्रीणां वा प्रकरणात् ॥ ५० ॥]**

तत्र यः कोऽपि देवः स्यात्तान्त्रिको वाऽग्रिमो भवेत् ॥ अविशेषात्प्रकरणात्तान्त्रिकोऽत्र नियम्यते ॥ ३० ॥

उपांशुयाजस्यैव देवतायां संदेहः किमर्थप्राप्ता या काचिदनियमेन स्यादुतास्ति कश्चिन्नियम इति । तत्र 'विष्णुरुपांशुयष्टव्योऽजामित्वाये'त्यादेरर्थवादत्वादन्यस्य च देवताविधेरदर्शनादनियमः । नाविहिता देवता भवति तस्माद्देवतापेक्षोऽयमुपांशुयाजविधिः प्रकरणवशाद्दर्शपूर्णमासतन्त्रगताभिरेकवाक्यतां यातीति नानियमः ॥

उपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासीकर्तव्यत्वयोरधिकरणम् ॥ १७–१८ ॥

**धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥ [देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५३ ॥ अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगाद्गुणत्वान्मन्त्रो यथा प्रधानं स्यात् ॥ ५४ ॥ आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयति, अमावास्याविकारे ॥५५॥ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥५६॥ प्रतिषिध्य विधानाद्वा विष्णुःसमानदेशः स्यात् ॥५७॥ तथाचान्यार्थदर्शनम् ॥५८॥ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् ॥ ५९ ॥ गुणानां च परार्थत्वात्प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ६० ॥ विकारे चाश्रुतित्वात् ॥ ६१ ॥]**

कोऽपि देवस्तान्त्रिकेषु नियतो वा तदाऽपि किम् ॥ प्रजापतिरुताग्निः स्यादग्नीषोमावुताथवा ॥ ३१ ॥
विष्णुर्यद्वाऽग्निमुत्सृज्य विकल्प्यं देवतात्रयम् ॥ कोऽप्यत्रानियमान्नैवमुपांशुत्वादियन्त्रणात् ॥ ३२ ॥
प्रजापतिरुपांशुत्वान्न तूष्णींभावयोगतः ॥ अग्निर्मुख्यत्वतो नैवं तद्याज्यादेरपाठतः ॥ ३३ ॥
अग्नीषोमौ तदुक्तेर्नो तत्र कालविधानतः ॥ विष्णुर्याज्यादितस्तन्न प्राजापत्योक्तिबाधनात् ॥ ३४ ॥
याज्यात्रैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः ॥ विधिशेषार्थवादेऽपि प्राप्तं त्रयमनूद्यते ॥ ३५ ॥
दर्शादिर्वा तस्य कालो दर्श एवान्य एव वा ॥ द्विपुरोडाशसांनिध्यादाद्यो दर्शेऽग्नितोऽग्रतः ॥ ३६ ॥
विष्णुयाज्योक्तितो युक्तो मध्यमः पूर्णिमाविधेः ॥ स एव कालो याज्याया उत्कर्षः पूर्णिमादिने ॥ ३७ ॥

तान्त्रिक्यो देवता इति स्थिते का तासामिति चिन्त्यते देवताविचारसमानहेतुकत्वाच्च कालविचारोऽपि सहैव तेन क्रियते तदयमत्र विचारः—किं प्रजापतिर्देवता उताग्निरुत विष्णुः । अमावास्यायां चोपांशुयाजः किंवोभयोः पर्वणोर्विष्णुः प्रजापतिरग्नीषोमौ च व्यवस्थितविभाषया देवताः

---

**तद्वच्च देवतायां स्यात् ॥ ४९ ॥** पूर्ववदिह नियामकाभावादर्थप्राप्तदेवतान्तरस्य न बाध इत्युत्थितेः संगतिः । **तत्रेति ।** यागस्य देवतां विनानुपपत्तेर्देवताविशेषस्य चाश्रवणादनियमेन या काचिद्देवता ग्राह्या यथा द्रव्यविशेषाश्रवणे आक्षेपाद्यत्किंचिद्द्रव्यं गृह्यते तद्वदित्यर्थः । **नाविहितेति ।** न चोद्देश्यमात्रत्वाद्देवतात्वस्याविहितापि देवता संभवत्येवेति वाच्यम् । नह्युद्देश्यत्वमात्रं देवतात्वं तन्मात्रेण देवताशब्दाप्रयोगात्, उद्देश्यत्वमात्रेण देवतात्वे प्रतिनिधीयमानस्यापि देवतात्वसंभवेन पष्ठोक्तस्य देवताप्रतिनिध्यभावस्यानुपपत्तिप्रसङ्गाच्च, किंतु विधिरपि तत्रोपलक्षणं शब्दविशेषेण या उद्देश्यतया विधीयते सा तस्य देवतेति । नचैवं विधानाद्देवतात्वं देवतायाश्च विधानमितीतरेतराश्रयत्वं स्यादिति वाच्यम् । नहि देवतायाः सत्या विधानं किंतु शब्दोद्देश्यतामात्रेण विहिता पश्चाद्देवतात्वं प्रतिपद्यते तस्माद्द्रव्यवदाक्षेपतो देवताया लब्धुमशक्यत्वान्नानियम इत्यर्थः । सूत्रार्थस्तु—पूर्वाधिकरणपूर्वपक्षे द्रव्ये यथा अनियमस्तद्वद्देवताया अप्यनियमः स्यादिति ॥

**धर्माद्वा स्यात्प्रजापतिः ॥ ५१ ॥** पूर्वसिद्धान्ते विशेषविचारात्संगतिमभिप्रेत्याह—**तान्त्रिक्य इति । किमिति ।** किं प्रजापतिर्देवता उभौ च कालौ उताग्निः उभौ कालौ उत विष्णुर्देवता अमावास्यैव कालः किंवोभौ कालौ ।

यदामावास्यायां तदा विष्णुः पौर्णमास्यां तु प्रजापतिरग्नीषोमौ चेति । अथवा पौर्णमास्यामेवोपांशुयाजो विष्ण्वाद्याश्च तिस्रोऽपि देवता तत्रैव विकल्प्यन्त इति । तत्र धर्मसंप्रतिपत्तेः । प्रजापतिर्देवतेति गम्यते स हि 'यत्किंचित्प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियते' इति वचनादुपांशुत्वधर्मः यागोऽपि चायं तद्धर्मेति प्राजापत्यत्वाध्यवसानम् । न प्रजापतिरुपांशुत्वधर्मा तूष्णीं भावस्तस्य धर्मः प्रजापतिं मनसा ध्यायेदिति विधेः तदर्थवादस्त्वयं यत्किंचित्प्राजापत्यमिति । तस्मात्संप्रतिपत्त्यभावान्न प्रजापतिः मुख्यत्वात्त्वग्निः स्यात् । सोपि न । विष्णुस्तु मन्त्रवर्णात्स्यात् । आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवं याज्यानुवाक्यायुगलमाम्नातं यागश्चायं पुरोडाशद्वयमध्ये विहित इति स्थानसामान्याद्वैष्णवमन्त्रद्वयमस्याङ्गं भवद्विष्णुदेवतां परिकल्पयति । आग्नेयैन्द्राग्नमध्यवर्तित्वाच्च मन्त्रयोरमावास्याकालत्वावगमादविशेषविहितोपि यागो मन्त्रवशादमावास्याकाल इति निश्चीयते । सत्यं मान्त्रवर्णिकी देवता नतु विष्णुरेव । मन्त्रवशादेव तु तिस्रोऽपि देवता व्यवस्थितविकल्पेन स्युरुभयोश्च पर्वणोरुपांशुयाजः स्यात् । तथाहि 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरायजत्यजामित्वाये'त्यविशेषेण पुरोडाशद्वयोपलक्षिते काले विधानादुभयोश्च पर्वणोः पुरोडाशद्वयसद्भावादुभयत्रोपांशुयाजः स्यात् । नन्वमावास्यायां जामितादोषः पाक्षिकः सोमयाजिनः ऐन्द्राग्नाभावात् तुल्यं पौर्णमास्यामपि पाक्षिकत्वं असोमयाजिनोऽग्नीषोमीयाभावात् तस्मात्पाक्षिकेणैव जामित्वापनयनेनोभयत्रार्थवाद इत्युभयत्राप्युपांशुयाजः स्यात् । तत्र 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशुपौर्णमास्यां यजन्नि'त्यनेन वचनेन पौर्णमासीकालवर्तिनोग्नीषोमदेवताविधानान्मन्त्रवर्णाच्च स्यातामग्नीषोमौ प्रजापतिश्च मन्त्रवर्णात्स्यादाग्नेयाग्नीषोमीययाज्यानुवाक्यमध्ये तैत्तिरीयाणां प्राजापत्ययाज्यानुवाक्याम्नातात् विष्णुस्तु पूर्वोक्तेन न्यायेनामावास्यायां स्यादिति प्राप्ते ब्रूमः—'विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्पिताः ॥ नतु कालद्वये यागः पौर्णमास्यां तु वाक्यतः ॥' उपांशुपौर्णमास्यां यजन्नित्यनेन प्रत्यक्षवचनेन पौर्णमासीविधानात्पौर्णमास्यामेव स्यात् कालविधानं ह्येतन्न देवताविधानं, मन्त्रवर्णादेव देवतानां लब्धत्वात्पौर्णमासीकालविशिष्टयागानुवादेन च देवताविधौ विशिष्टानुवाददोषापत्तेः । तस्मादुपांशुयाजानुवादेन कालविधानमेतत् । अग्नीषोमग्रहणं तु मान्त्रवर्णिकीनां देवतानामुपलक्षणार्थम् । येत्वाश्वलायनाः कालविधिमनिच्छन्तः पर्वद्वयेऽप्युपांशुयाजमाहुस्ते कथमिव त्रयोदशामावास्यायामिति लिङ्गं समर्थयेरन् कालविध्यभावे च पौर्णमासीवाक्येनानुवादासंभ-

---

तत्र यदामावास्यायां तदा विष्णुः । पौर्णमास्यां तु प्रजापतिरग्नीषोमाविति कालभेदाद्देवताव्यवस्था । अथवा पौर्णमास्येव कालः विष्ण्वाद्याश्च देवता विकल्प्यन्त इत्यर्थः । **धर्मसंप्रतिपत्तेरिति** । धर्मैक्यादित्यर्थः । **तदर्थवाद इति** । गौणमुपांशुपदमिति भावः । **वैष्णवमिति** । 'इदं विष्णुः प्रतद्विष्णु'रित्येवंरूपमित्यर्थः । **सोमयाजिन इति** । सांनाय्येन तु सोमयाजिनमिति विधानादिति भावः । **असोमेति** ।आग्नेयो वै ब्राह्मणो देवतया ससोमेनेष्ट्वाग्नीषोमीयो भवतीत्यग्नीषोमीयस्योत्कर्षविधानादिति भावः । **मन्त्रवर्णाच्चेति** । 'आन्यं दिवः,' 'अग्नीषोमा यो अद्यवा'मिति मन्त्रवर्णादित्यर्थः । **प्राजापत्येति** । 'प्रजापते न त्वत्स वेद पुत्र'इत्येवंरूपमित्यर्थः । मन्त्राम्नानानर्थक्यप्रसङ्गाच्चतुर्थी मन्त्रवर्णप्राप्तयोः विषमशिष्टयोरपि विकल्प इति भावः । नाविल्यस्य षष्ठ्यादिसाधारणत्वाद्देवताविधिर्झटिति न गम्यते कालविध्यनुगुणसप्तमीश्रवणात्कालविधिरेव झटिति गम्यत इत्याशयेनाह—**कालविधानमिति** । अनेनैव न द्रव्यविधिपरमिदं आज्यस्येति षष्ठ्या द्रव्यविध्यनुगुणत्वाभावादित्यपि सूचितम् । **ननु** मन्त्रवर्णात्कालद्वयसाधारण्येन प्राप्ताग्नीषोमयोः पौर्णमासीकालिकोपांशुयाजे विधानार्थत्वान्न वैयर्थ्यमत आह—**पौर्णमासीति** । कालोपि नाग्नीषोमदेवताविशिष्टोपांशुयाजे विधीयते विशिष्टानुवाददोषप्रसङ्गादेव किंतूपांशुयाजमात्रे । अग्नीषोमग्रहणं तूपलक्षणम् । नच पौर्णमासीग्रहणस्योपलक्षणार्थत्वमङ्गीकृत्य देवताविधिरेव किं न स्यादिति वाच्यम् । मन्त्रवर्णादेव देवताप्राप्त्या तद्विधानानर्थक्यात् कालस्तु पुरोडाशान्तरालक्षणः पौर्णमास्यमावास्यासाधारण्येनैव प्राप्त इत्यमावास्याव्यावर्तनार्थतया कालविधिरर्थवानित्याशङ्गेनोपसंहरति—**तस्मादिति** । **त्रयोदशेति** । पञ्चप्रयाजाः द्वावाज्यभागौ आग्नेयाहुतिरेका दधिपयसोः संप्रतिपन्नदेवताकत्वादेका स्विष्टकृत्त्रयोऽनुयाजा इति त्रयोदशत्वं बोध्यम् । **कालविधीति** । असति कालविधौ 'य एवं विद्वान् पौर्णमासीं यजत' इति विद्वद्वाक्येऽनुवादो न स्यात् पौर्णमासीपदं कालयोगेन वर्तमानं यत्र कालसंबन्धोऽवगतस्तदेवानुवदितुं शक्नोति उपांशुयाजस्य च पौर्णमासीकालसंबन्धान-

वात्पूर्णमासशब्देनापि न फले विनियुज्येतेति प्राधान्यमुपांशुयाजस्य न स्यात् आज्यभागादिवदङ्गता स्यादित्यास्तां तावत् । तस्मात्पौर्णमासीकालस्य वाचनिकत्वात्प्रधानानुवर्तित्वाच्च देवतानां तिसृणामपि तत्रैव विकल्पः ॥

एकपुरोडाशायामप्युपांशुयाजाधिकरणम् ॥ १९ ॥

**द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥ [अजामिकरणार्थत्वाच्च ॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ अशिष्टेन च संबन्धात् ॥ ६५ ॥ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानां च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥६९॥ प्रशंसार्थमजामित्वम् ॥ ७० ॥]**

पुरोडाशैक्ययुक्तायां पौर्णमास्यामयं नहि ॥ स्याद्वा नास्त्यन्तरेऽस्त्युक्तलक्ष्ये कालेऽस्ति शङ्खवत् ॥ ३८ ॥

पौर्णमास्यामेवोपांशुयाज इति स्थिते चिन्त्यते किं द्विपुरोडाशायामेव स्यादुतैकपुरोडाशायामपीति । तत्रैकपुरोडाशायामन्तरालगुणालाभेन वैगुण्याद्द्विपुरोडाशायामेव स्यात् । सिद्धान्तैकदेशी त्वाह— यागस्याविशेषेण श्रवणादुभयत्रानुष्ठानं गुणस्तु यदा द्विपुरोडाशा तदा भविष्यतीति तदयुक्तम् । विधीयमानयागोन्तरालगुणविशिष्टोऽभिधीयते अनुपादेयश्चान्तरालगुणः तेन यत्रैवायं गुणस्तत्रैवास्य विधिरितरत्र तु विधिरेव नास्तीत्यकर्तव्य एवेति प्राप्ते ब्रूमः—'स्यादेवमंतरालस्य गुणत्वेन विधिर्यदि ॥ कालो विधीयते त्वत्र पुरोडाशोपलक्षितः ॥' अन्यार्थाभ्यां हि पुरोडाशाभ्यामुपलक्षिते काले कर्म विधीयते योयं पुरोडाशयोर्मध्यकालस्तत्रोपांशुयाज इति, सर्वत्र चोपलक्षणापायेप्युपल-

---

वगमान्न तस्यानुवादस्ततश्चाधिकारवाक्येनापि परामर्शासंभवात्फलसंबन्धोऽपि न स्यात् । नच पुरोडाशद्वयान्तरालकालः पौर्णमास्यामेवेति नियमो येन तत एव पौर्णमासी प्राप्ता स्यादमावास्यायामप्याग्नेयैन्द्राग्नलक्षणपुरोडाशद्वयसंभवात् । नच सत्यपि पौर्णमासीकालविधौ उपांशुयाजस्य विद्वद्वाक्यस्थपौर्णमासीपदेनाधिकारवाक्यस्थपौर्णमासीपदेन वा न परामर्शः पौर्णमासीकालस्योपांशुयाजोत्पत्तिवाक्यावगतत्वाभावात् उत्पत्त्यवगतकालसंबन्धानामाग्नेयादीनामेव झटिति प्रवृत्तिनिमित्तावगत्या परामर्शादिति वाच्यम् । 'तावब्रूतामग्नीषोमावाज्यस्य नावुपांशुपौर्णमास्यां यजन्नि'ति वाक्यं प्रकृत्योपांशुयाजमन्तरा यजतीति विधानेनोत्पत्तावपि तावब्रूतामिति वाक्ये मनसि विपरिवर्तमाने पौर्णमासीकालस्यैवान्तरालकालत्वेनावगमेनोत्पत्त्यवगतकालसंबन्धस्यात्रापि तुल्यत्वात्तावब्रूतामिति प्रकृत्याम्नानं च भाष्यादावुक्तम् । नचैवं तावब्रूतामित्यस्य विधायकत्वाभावेऽपि अर्थवादरूपैतस्मिन्नुपस्थितकालस्योत्पत्तिवाक्य एव विधिसंभवात्तत एवामावास्याकालव्यावृत्तेः फलसंबन्धस्य च लाभात्पुराकल्परूपस्य तस्य विधायकत्वं किमर्थमभ्युपेयत इति वाच्यम् । तावब्रूतामित्यस्य पूर्वभावित्वेप्यन्तरा वाक्येन सहैकवाक्यत्वाभावेऽर्थवादत्वासंभवेनानुवादमात्रस्यानर्थक्येन विधायकत्वस्यावश्यवाच्यतयैकस्यामावास्याव्यावर्तकत्वं परस्य फलसंबन्धार्थत्वमित्येव कल्पनीयत्वादित्याहुः । **नन्वेव**मप्याग्नेयेन्द्राग्नयाज्यानुवाक्यायुगलमध्ये आम्नातस्य वैष्णवयाज्यानुवाक्यायुगलस्यामावास्याकालेऽनुष्ठेयतया कथं पौर्णमास्यां कर्तव्य उपांशुयाजेऽन्वय इत्यत आह—**प्रधानेति** । अङ्गगुणविरोधन्यायेन वाचनिकप्रधानकालानुरोधेन याज्यानुवाक्याकालो बाध्यत इति भावः ॥

**द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥** पूर्ववत्संङ्गतिमाह—**पौर्णमास्यामिति** । **अविशेषेणेति** । पौर्णमास्यां यजन्निति पौर्णमासीमात्रश्रवणादित्यर्थः । **ननू**त्पत्तिशिष्टस्यापि गुणत्वाविशेषान्न तदनुसारेण प्रधानस्य संकोचो युक्त इत्यत आह—**अनुपादेयश्चेति** । पुरोडाशद्वयान्तरालो नोपांशुयाजविध्युपादेयः पुरोडाशद्वयस्या(न्या)नर्थतया एतद्विधिप्रयोज्यत्वाभावेन तदन्तरालस्यापि तत्प्रयोज्यत्वासंभवात् अनुपादेयान्तरालगुणानुसारेण तत्रैव प्रधानविधिरित्येकपुरोडाशायामविहितत्वान्न तदनुष्ठानं यद्यपि पौर्णमासीलक्षणकालोऽप्यनुपादेयस्तथापि तस्य द्विपुरोडाशायामप्यविरोधाउत्पन्नशिष्टत्वाच्चान्तरालोऽनुगुण एव संग्राह्य इति भावः । **स्यादेवमिति** । पुरोडाशान्तरालत्वं न गुणः तथासति पुरोडाशयोरपि गुणत्वापत्तेः । नचान्यार्थयोः पुरोडाशयोरुपांशुयाजे गुणत्वं संभवति तस्मात्पुरोडाशौ केवलमुपलक्षणतयोपा-

क्षणीयमवतिष्ठते । शङ्खवेलायामागन्तव्यमित्यादौ तेन कर्माङ्गभूतस्य कालस्यैकपुरोडाशायामपि लाभात्तत्राप्युपांशुयाजो न बाधितव्यः । 'तदेवं लुप्तार्थं यदपि च निषिद्धं विकृतिषु तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम् ॥ अतस्त्वन्यस्याभ्युच्चयविधिरियत्तैवमुदिता प्रयोगेयत्तायास्त्वत उपरि चिन्तां प्रकुरुते '। इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमाध्यायस्याष्टमः पादः ॥ ८ ॥

---

दीयेते ततश्च तदुपलक्षितकाल एव गुणः सचोपलक्षणापायेऽप्यनपेत इत्येकपुरोडाशायामपि स्यात् । यथा शङ्खवेलायामागन्तव्यमिति कालविशेषोपलक्षणतयोपात्ते शङ्खध्वनौ कचिद्दिने दैवादकृतेपि तदुपलक्षितकालस्यानपायात्तत्राप्यागम्यते तद्वदित्यर्थः ॥ इति श्रीनिट्टिलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां दशमाध्यायस्याष्टमः पादः ॥ ८ ॥

## इति दशमोऽध्यायः समाप्तः ॥

# एकादशोऽध्यायः ॥ ११ ॥

## एकादशाध्याये प्रथमः पादः ।

आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् ॥ १ ॥

**प्रयोजनाभिसंबन्धात्पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १॥ [शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥३॥ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥]**

**बाधाबाधविचारेण प्रयोज्ये निश्चिते सति ॥ प्रयोगस्य विचारोऽथ तन्त्ररूपो विचार्यते ॥ १ ॥**

**षड्यागानां फलं स्वर्गः प्रत्येकं तन्त्रतोऽथ वा ॥ आद्यः पृथक्फलार्थित्वान्न संघस्य फलोक्तितः ॥ २ ॥**

दशमेऽध्याये बाधाभ्युच्चयचिन्तया विकृतिष्वङ्गपरिमाणं चिन्तितं, अतिदेशविचारश्च सप्तमादिभिः दशमपर्यन्तैः समाप्तः । संप्रत्युपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गादेकादशे तन्त्रावापचिन्तया चिन्त्यते । उपदिष्टातिदिष्टपदार्थेयत्तावधारणाधीनं च प्रयोगेयत्तावधारणमिति तदुत्तरकालमारम्भः । तदिहैकप्रयोगवचनचोदितानामेकफलानां संहत्यकारिणां बहूनां कर्मणां साधार-

---

**प्रयोजनाभिसंबन्धात्०** ॥ १ ॥ ननु दशमेऽध्याये बाधो निरूपित एकादशे तन्त्रं निरूप्यते तयोश्च कथं पौर्वापर्यं हेतुहेतुमद्भावाभावात् । नच सत्यं दशमैकादशयोर्हेतुहेतुमद्भावाभावस्तथाप्येकादशे निरूप्यमाणस्य तन्त्रस्योपदेशातिदेशसाधारण्यात्तदुभयनिरूपणपरद्वितीयादिदशमान्तानां सर्वेषां बद्धक्रमत्वे सत्यर्थाद्दशमानन्तर्यमपि सिद्ध्यतीति वाच्यम् । एवमपि दशमानन्तर्यसिद्धेर्नवमान्तैरेवोपदेशातिदेशनिरूपणसमाप्तेः बाधस्यातिदेशविरोधिरूपतया तन्निरूपणपरस्य दशमस्यातिदेशनिरूपणात्मकत्वानुपपत्तेः उपदेशातिदेशसाधारण्ये प्रमाणवदादावेव निरूपणस्यापि संभवेनेह निरूपणे नियामकालाभाच्चेत्याशङ्क्याह—**दशम इति** । सामान्यशास्त्रस्य विशेषशास्त्रातिरिक्तविषयत्ववद्बाधेनातिदेशस्य बाधितेतरविषये संकोचकरणेन बाधनिरूपणस्यापि विशेषातिदेशनिरूपणात्मकतया दशमान्तैरेवोपदेशातिदेशसंस्थितिः । यद्यपि उपदेशातिदेशसाधारणं तन्त्रं तथापि बाधस्याङ्गपरिमाणं फलं तन्त्रस्य प्रयोगपरिमाणम् । तथाच दशमेऽङ्गपरिमाणफलके बाधे निरूपिते प्रयोगपरिमाणफलकं तन्त्रं परिमाणफलकत्वसामान्यादेकादशे चिन्त्यत इत्यर्थः । प्रमाणस्य त्वेवंविधविशेषनियामकाभावात्सर्वस्यापि प्रमाणाधीनसिद्धिकतया सर्वोपजीव्यत्वाच्चादौ निरूपणमिति वैषम्यम् । यद्यपि प्रसङ्गस्यापि प्रयोगपरिमाणफलकत्वमस्ति तथापि तन्त्रनिरूपणं प्रसङ्गनिरूपणे उपजीव्यमिति द्वादशाद्ये ग्रन्थकारेणैव वक्ष्यमाणत्वात्प्रथमं तन्त्रनिरूपणमेव युक्तमिति भावः । तथाचाङ्गपरिमाणं दशमाध्यायार्थबाधस्य फलमेव नत्वध्यायार्थस्तथा दशमाद्य एवास्माभिर्निरूपितम् । **ननु** यदि साधारणस्यापि परिमाणप्रसङ्गादत्र करणं तर्हि प्रयोगपरिमाणफलकतन्त्रावापविचारः प्रयोगविधिविचारात्मकचतुर्थपञ्चमानन्तरमपि प्रयोगविधिप्रसङ्गेन किं न क्रियत इत्यत्राह—**उपदिष्टेति** । प्रकृतौ विकृतिषु चानुष्ठेयपदार्थेयत्तायामवधारितायामेव तदनुष्ठानात्मकप्रयोगेयत्तावधारयितुं शक्यते नान्यथा । ततश्च न परिमाणप्रसङ्गमात्रादिह निरूपणं किंतु बाधाध्यायफलभूतपदार्थेयत्तावधारणस्यैतदध्यायफलभूतप्रयोगेयत्तावधारणहेतुतया फलयोर्हेतुहेतुमद्भावादपीति न पूर्वषट्केऽस्य विचारस्य प्रसक्तिरित्यर्थः । **नन्वत्र** किं तन्त्रावापचिन्तामात्रमध्यायार्थः उताङ्गविषयकतन्त्रावापचिन्तैव । नाद्यः । दशमाध्यायेऽङ्गानामेवेयत्तायाः प्रतिपादनेन तन्त्रावापचिन्तामात्रस्याध्यायार्थत्वे प्रागुक्तहेतुहेतुमद्भावानुपपत्तेः । न द्वितीयः । फलविषयकतन्त्रावापविचारात्मकाद्याधिकरणासंगतत्वापत्तेरित्यत आह—**तदिति** । तत्तस्मात्प्रागुक्तहेतुहेतुमद्भावादित्यर्थः । साधारणाङ्गभाजां बहूनां कर्मणामङ्गानुष्ठानं किं सकृदुतावृत्त्येत्यङ्गविषयकतन्त्रावापचिन्तैव लक्षणार्थः फलम् । तन्त्रविचारस्य च तदुपोद्घातरूपत्वान्नासंगतत्वम् । उपोद्घातत्वसिद्ध्यभिप्रायकाणि एकप्रयोगवचनचोदितानामित्यादीनि विशेषणानि साधारणाङ्गभाक्त्वेपि यदि प्रयोगवचनभेदः स्यात्तदा तन्त्रमङ्गानुष्ठानं न स्यादतस्तन्त्रतार्थमेकप्रयोगवचनचोदितत्वमपेक्षणीयम् । तच्चैकप्रयोगवचनचोदितत्वं संहत्यैकफलसाधनत्वे भवति नान्यथेति प्रथमाधिकरणे संहत्य-

णाङ्गभाजामङ्गानुष्ठानं किं तन्त्रेण भवत्युतावृत्त्येति चिन्तालक्षणार्थः । प्रथमं तावदुपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते । यदि ह्याग्नेयादयः षडपि परस्परानपेक्षाः स्वर्गं साधयेयुस्ततस्तेषां कामिनः कर्तव्यत्वेन युगपदुपस्थानाभावात्पृथक्पृथगेव स्वाङ्गयुक्ताः कर्तव्या इति न तन्त्रत्वं सिद्ध्येत्, तस्मात्संहत्यकारित्वं प्रतिपाद्यते । तदयमत्राधिकरणे विचारः किमाग्नेयादीनि पृथक्पृथक् स्वर्गं साधयन्ति उत संहत्येति । तत्र—'परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् ॥ चोद्यमानं फलं तेषामेकैकस्यावधार्यते ॥ तेषां ह्युद्दिश्यमानत्वात्साहित्यं न विवक्षितम् ॥ तस्मात्प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते ॥ आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते ॥ तत उद्दिश्यमानत्वात्तेषामेकैकशः फलम् ॥ कामिनं तु यदुद्दिश्य[1] कर्मणां चोदना तदा ॥ तेषां विधीयमानानां सहभावो विवक्षितः ॥' यद्यपि चोभयथा वचनव्यक्तिः संभवति तथापि द्वित्वावगतं दर्शशब्देन त्रिकस्य पूर्णमासशब्देन च त्रिकस्य तन्त्राभिधानावगतं च साहित्यं माबाधीति कामिनमेवोपायार्थिनं[2] नरमुद्दिश्याग्नेयादीनि विधीयन्ते इत्येतदेव युक्तम्। प्रधानत्वाच्च फलस्यैवोद्देशो युक्तः न कर्मणां गुणभूतानाम्। एकस्मिन्नपि[3] फले संहत्यकारित्वेन विनियुक्तानां कर्मणां प्रत्येकमुत्पन्नानां फलापेक्षा निवर्तेत इति नानपेक्षितसंबन्धापत्तिः। तस्मा-

---

कारित्वविचार उपोद्घातत्वेन संगत इत्यर्थः । तदेव विशदयति—**प्रथमं तावदिति । युगपदिति** । काम्यः प्रयोगविधिः यत्फलसाधनं तदनुष्ठापयन्प्रत्येकं फलसाधनत्वे एकमेवानुष्ठापयेत् न सर्वाणि युगपदिति न तेषां युगपत्कर्तव्यतयोपस्थापनमित्यर्थः । **ननु** संहत्यकारित्वाभावेऽप्यङ्गानुष्ठानं तन्त्रं भवति यथा धानानुष्ठानमङ्गत्वपक्षे सर्वक्रतूनामित्याशङ्क्य क्रतुबहिःप्रयोगेऽनुष्ठीयमानाङ्गस्य संहत्यकारित्वनैरपेक्ष्येण तन्त्रत्वसंभवेऽपि प्रयोगमध्येऽनुष्ठीयमानाङ्गस्य संहत्यकारित्वे सत्येव तन्त्रत्वं नान्यथा । तस्मात्संहत्यकारित्वमवश्यं व्युत्पाद्यमित्याशयेनोपसंहरति—**तस्मादिति । नन्वत्र** भाष्ये स्वर्गादिफलमाग्नेयादीनां तन्त्रेण भवत्युत भेदेनेति फलतन्त्रमेव विचारितं न संहत्यकारित्वमतः कथमुपोद्घातत्वमित्याशङ्क्य भाष्यस्यापि संहत्यकारित्वविचार एव पर्यवसानमित्याशयेनाह—**तदयमिति** । वस्तुतस्त्वङ्गानुष्ठानतन्त्रमात्रस्याध्यायार्थत्वे द्वितीयपादे करिष्यमाणदेशकालादिलक्षणपदार्थतन्त्रविचारस्यासांगत्यं स्यात् । मध्ये क्रियमाणस्य तस्योपोद्घातत्वस्याप्यसंभवात् । तस्मात्फलतन्त्रं पदार्थतन्त्रमनुष्ठानतन्त्रं चेति त्रिविधमपि तन्त्रमध्यायार्थः प्रागुक्तहेतुहेतुमद्भावश्चैकदेशापेक्षयोपपद्यत इति ध्येयम् । **परस्परेति** । उत्पत्तिवाक्येषु साहित्यावगमकशब्दाभावेन परस्परानपेक्षतयोत्पन्नानां यथोत्पत्ति किमाग्नेयस्य फलं किमग्नीषोमीयस्येत्येवं प्रत्येकमेव फलापेक्षायां फलवाक्येनाग्नेयादीन्युद्दिश्य विधीयमानं फलं प्रत्येकमेव संबध्यते अन्यथानपेक्षितविधानप्रसङ्गादित्यर्थः । नचोद्देश्येषु तेषु तन्त्राभिधानाद्यवगतं साहित्यं विवक्षितं वाक्यभेदप्रसङ्गादित्याह—**तेषां हीति** । अत्र लिप्सासूत्रादावेव फलस्य विधेयत्वनिराकरणादिह विधेयत्वाश्रयणेन पूर्वपक्षोऽनुपपन्नः । तस्मात्फलोद्देशेन कर्मविधिपक्षेऽपि विधीयमानविशेषणस्यापि साहित्यस्येह विवक्षा न संभवति । सहितत्वविशेषेण फलापेक्षाभावेन तद्विवक्षायामनपेक्षितविधानापत्तेः। अतः प्रत्येकमेव फले तेषां विधानान्न संहत्यकारित्वमित्येवं पूर्वपक्षो वर्णनीय इति ध्येयम् । **उभयथेति** । यत्स्वर्गं कुर्यात्तद्दर्शपूर्णमासाभ्यामिति, यद्दर्शपूर्णमासाभ्यां कुर्यात्तत्स्वर्गमित्येवमित्यर्थः । नच कर्मोद्देशेन फलविधौ प्रत्युद्देश्यं वाक्यपरिसमाप्तौ वाक्यभेदप्रसङ्गात्तद्वचनव्यक्तिरेव न संभवतीति वाच्यम् । प्रत्युद्देश्यं वाक्यपरिसमाप्तावपि यत्रैकेनाभिधानेन बहूनामुद्देश्यानां प्रतीतिस्तत्र विध्यावृत्त्यभावेन वाक्यभेदाप्रसङ्गादन्यथा 'ग्रहं संमार्ष्टि'त्यादावपि एकत्वस्याविवक्षायां प्रतिग्रहव्यक्तिवाक्यपरिसमाप्त्या वाक्यभेदप्रसङ्गादिति भावः । **तन्त्राभिधानेति** । एकेनाख्यातेन षण्णामभिधानमिह तन्त्राभिधानं विवक्षितं नाम्ना तन्त्राभिधानासंभवात् । तत्र दर्शपूर्णमासपदद्वयेन पृथगेवाभिधानात् । नच द्वन्द्वे पदद्वयस्याप्युभयार्थप्रतिपादकत्वान्नाम्नापि तन्त्राभिधानं संभवतीति वाच्यम् । युगपदधिकरणवचनतायास्तन्त्ररत्नादौ बहुधा निरस्तत्वेन तदसंभवात्, यद्वा त्रिकद्वयस्य द्वन्द्वाभिधानावगतं साहित्यमेकैकस्मिंस्त्रिके आग्नेयादित्रयस्य दर्शशब्देन पूर्णमासशब्देन च तन्त्राभिधानकृतं साहित्यं भवतीत्यभिप्रायकोयं ग्रन्थः । अनपेक्षितविधानप्रसङ्गं परिहरति—**एकस्मिन्निति** । सहितत्ववेषेण फलापेक्षाराहित्यवत्प्रत्येकवेषेणापि न फलापेक्षा किंतु प्रत्येकत्वसहितत्वौदासीन्येन फलापेक्षामात्रम् । तच्च यथाकथंचित्फलसंबन्धकरणमात्रेण शाम्यतीति प्रत्येकफलसंबन्धाभावेऽपि नानपेक्षितविधानप्रसङ्ग इत्यर्थः । अनेनैव पूर्वपक्षान्तरमपि निरस्तं द्रष्टव्यम् । **ननु** भाष्ये यथा 'राजा राजसूयेन यजेते'त्यत्राख्याताक्षिप्तकर्तृविशेषणं सम्राट्त्वं कर्माङ्गं तथा स्वर्गकामत्वमपि कर्तृविशेषणं सत् कर्माङ्गं, ततश्च स्वर्गकामपदं कर्तृविशेषकपुरुषपरं ननु फलपरमित्याशङ्क्य सर्वेषामपि पुरुषाणां कदाचित्स्वर्गकामनासंभवेनास्वर्गकामस्यासत्वेन तद्व्यावर्तकत्वाभावेन विशेषणत्वा-

---

१ यदोद्दिश्य. २ कामिनमेव स्वर्गार्थिनम्. ३ न्नपि काले संहत्य.

त्फलोद्देशेन विधीयमानानां विवक्षितं साहित्यमिति सिद्धं संहत्यकारित्वम् । यत्तु भाष्यकारेण पुरुषपरत्वं कालपरत्वं निमित्तपरत्वं च निराकृत्य फलपरत्वं कामपदस्य समर्थितं तदिहासूत्रितमपि सूत्रितविचारस्योपोद्धातत्वेन । सति हि तस्य फलपरत्वे किं प्रत्येकं फलमुत संहत्येति विचारो नान्यथेति । स्वर्गकामाधिकरणे तु स्वर्गस्य तत्कामनायाश्चाङ्गत्वेन विधानं निराकृतमित्यपुनरुक्तता ॥

अङ्गानामैककार्याधिकरणम् ॥ २ ॥

**अङ्गानां तु शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥ [अर्थभेदस्तु तत्रार्थेहैकार्थ्यादैककर्म्यम् ॥६॥ शब्दभेदान्नेति चेत् ॥७॥ कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥८॥ कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥९॥ आरम्भः शब्दपूर्वत्वात् ॥१०॥ एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥ फलाभावान्नेति चेत् ॥ १२ ॥ न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ ऐकशब्द्यादिति चेत् ॥ १४ ॥ नार्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दार्थो निवीतवत्स्यात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ तथा कर्मोपदेशः स्यात् ॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥]**

**कार्यभेदो न वाङ्गानां सौर्यचित्रादिवद्भिदा ॥ करणैक्यात्तदेकत्वं द्वारभेदो बहुत्वतः ॥ ३ ॥**
**उपकारः स एकेन कैश्चिद्वा निखिलैरुत ॥ आकाङ्क्षापूरणादाद्यः फलाधिक्याय मध्यमः ॥ ४ ॥**
**कपोतवद्यौगपद्ये त्यागहेतोरभावतः ॥ संभूयकरणाकाङ्क्षां पूरयन्त्युपकारतः ॥ ५ ॥**

अतःप्रभृति षड्भिः सूत्रैरेकमधिकरणं 'एकेनापि समाप्येते'त्यतः प्रभृति च नवभिः सूत्रैरधिकरणान्तरं भाष्यकारेण व्याख्यातमिति प्रतिभाति । तत्रच पूर्वाधिकरणे अङ्गानां कार्यभेदं पूर्वपक्षीकृत्यैककार्यत्वं सिद्धान्तितम् । उत्तराधिकरणे तु तस्मिन्नेकस्मिन्कार्ये विकल्पमाशङ्क्य समुच्चयः प्रतिपाद्यत इति व्याचष्टे । तदिदं वार्तिककारो नानुमेने । नहि कार्यभेदाभेदमात्रचिन्ता प्रयोजनवती । भेदे सति कार्याणां कारकवदङ्गानां समुच्चयः कार्यैक्येऽप्यपर्यायविधानात्समुच्चय इति नास्त्यनुष्ठाने वि-

---

संभवात्पुरुषपरत्वं निराकृतम् । **ननु** तर्हि साक्षात्पुरुषविशेषणत्वासंभवेऽपि यदा स्वर्गं कामयते तदा यजेतेत्येवं कालद्वारा कर्तृपुरुषविशेषणमस्त्वित्याशङ्क्य, एतदपि न संभवति साङ्गप्रधाननिर्वृत्तिपर्यन्तं कामनावस्थानाभावादन्तरा कामनान्तरस्यावर्जनीयतया तद्व्यावृत्तेः कर्तुमशक्यत्वाच्चेति परिहृत्य, तथापि न फलपरत्वं भेदनादिवन्निमित्तपरत्वसंभवादित्याशङ्क्य, तदपि न संभवति पुरुषाभिलषितफलकप्रवृत्तिभाव्यकत्वविना प्रवर्तनात्वानिर्वाहात्तन्निर्वाहार्थं फलपरत्वस्यैव वाच्यत्वादित्येवं निमित्तपरत्वमपि परिहृतं, तदिहासूत्रितत्वादसंगतमित्याशङ्क्याह—**यत्त्विति** । ननु एवमपि षष्ठाद्य एवास्य फलपरत्वं साधितमिति पुनरुक्तिरित्यत आह—**स्वर्गेति** । तत्र स्वर्गशब्दस्य लोकप्रसिद्ध्या स्रक्चन्दनादिपरत्वाश्रयणेन तस्य साधनत्वेन विधानं समुद्रमनोध्यानादिवत्कामनाया वाङ्गत्वेन विधानमिति शङ्का निराकृता । इह तु पुरुषपरत्वादिकं निराक्रियत इत्यपुनरुक्तिरित्यर्थः । सूत्रार्थस्तु—पृथगुत्पन्नानामपि ततो हेतोरैककर्म्यमेकफलत्वं स्यात् कुतो हेतोरेकशब्दाभिसंयोगेन तत्राभिधाने युगपत्प्रयोजनान्वयादिति ॥

**अङ्गानां तु० ॥ ५ ॥ एकमधिकरणमिति** । अङ्गानां संहत्यकारित्वप्रतिपादनार्थमिति शेषः । **अधिकरणान्तरमिति** । सर्वाङ्गयुक्तस्यैव काम्यकर्मणः प्रयोगो न कतिपयाङ्गयुक्तस्येत्येतत्प्रतिपादनपरमिति शेषः । इदानीं प्राभाकरोक्तमधिकरणद्वयस्य तात्पर्यमाह—**अत्रचेति** । **तदिदमिति** । भाष्ये प्रतीयमानं संहत्यकारित्वं सर्वाङ्गोपसंहारसिद्ध्यर्थाधिकरणद्वयं प्राभाकररीत्याधिकरणद्वयं च वार्तिककारो न मन्यत इत्यर्थः । तत्र प्राभाकररीतौ दूषणमाह—**नहीति** । **कारकवदिति** । यथा कर्तृकरणादिकारकाणां स्वस्वावान्तरव्यापारलक्षणकार्यभेदेऽपि क्रियायां समुच्चयस्तद्वदित्यर्थः । **अपर्यायेति** । प्रधानविधिना युगपद्विधानादित्यर्थः । तस्मात्पक्षद्वयेऽपि समुच्चित्यैवानुष्ठानं नास्त्यनुष्ठाने विशेष इत्यर्थः ।

शेषः। औपोद्घातिकमिदं सतिहि कार्यैकत्वे विकल्पसमुच्चयचिन्तेति चेत् तथापि नास्त्येव प्रयोजनम्। करणैकत्वाद्धि तत्सामर्थ्योद्बोधनरूपस्योपकारस्य स्पष्टमेवैकत्वम्। अवान्तरकार्यभेदस्तु सिद्धान्तेऽपि संमत एवेति न चिन्तनीयं पश्यामः। अथ शक्त्युद्बोधस्यावान्तरकार्याणां च मध्ये किंचिदुपकाराख्यं वस्तु मन्यसे तदप्रामाणिकं निष्प्रयोजनं च। शक्त्युद्बोधन एव विकल्पसमुच्चयचिन्तोपपत्तेः। तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थमधिकरणम्। त्रयश्चेह पक्षाः किमङ्गानामितरेतरनिरपेक्षाणां क्रतूपकारकतया विकल्प उतैकेन द्वाभ्यां बहुभिश्चोपकारसिद्धिरुपकारभूयस्तया च फलभूयस्त्वं उत समुच्चितानामेवोपकारकत्वमिति। तदर्थमिदं विचार्यते—किमङ्गानामात्मीयैर्विधिभिः प्रयोगो विधीयते किंवा प्रधानविधिभिरिति। तत्र प्रधानान्येकेन शब्देन तन्त्रेणाभिहितानि युगपत्फले विनियुक्तानि युक्तं यत्फले समुच्चीयन्ते, अङ्गानि तु पृथक्शब्देनाभिहितानि पृथगेव विहितानि फलमपेक्षमाणान्यन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितुमर्हन्ति। तेषां हि स्ववाक्यैरेव विधानमसति विधानेऽङ्गत्वानुपपत्तेः। उक्तं हि 'नचाविहितमङ्गं भवती'ति। स्ववाक्यानि च तेषामेकैकमेव विदधातीति कुतः समुच्चयः। नहि कश्चिच्छब्दोऽस्ति येनैतेषां सहितानामनुष्ठानमुच्यते। तस्माद्यथा सत्यपि पशुफलत्वे चित्रोद्भिदादीनां पृथक्विधानादसमुच्चयः तथाङ्गानामपीति प्रथमः पक्षः। सत्यं निरपेक्षाणामुपकारकत्वं गम्यते तथापि बह्वङ्गाम्नानसामर्थ्याद्विकल्पस्य चान्याय्यत्वात्तेषामेकमपि प्रयुञ्जीत तथा द्वे बहूनि चाङ्गभूयस्तया चोपकारभूयस्त्वात्फ-

---

**तथापीति**। अङ्गानां कार्यैक्यस्य विचारं विनैव सिद्धेर्न तदर्थं विचारान्तरं प्रयोजनवदित्यर्थः। तदेवाह—**करणैकत्वादिति**। ननु न शक्त्युद्बोधनरूप उपकारः किंतु पदार्थावान्तरकार्यशक्त्युद्बोधनयोरन्तरालवृत्तिः अतिशयात्मक एवोपकार इति। तत्र विकल्पसमुच्चयविचारोऽर्थवानिति शङ्कते—**अथेति**। भाष्यकारेण यत्सर्वाङ्गोपसंहारार्थं द्वितीयमधिकरणं वर्णितं तदप्ययुक्तम्। षष्ठ एव नित्ये प्रयोगे कतिपयाङ्गैरप्यधिक्रियते, काम्ये तु कृत्स्नाङ्गैरिति व्यवस्थापितत्वेन पौनरुक्त्यापत्तेस्तस्मात्सर्वमिदमेकमधिकरणं, तच्च संहत्यकारित्वव्युत्पादनार्थमित्याह—**तस्मादिति**। एकमप्यधिकरणं यदि द्विपक्षकं स्यात्तदैकेनापि समाप्येतेत्यादिसूत्राणामसांगत्यं स्यादित्याशङ्क्याह—**त्रयश्चेति**। नन्वेकेनाप्युपकारसिद्धौ द्विबहूनामप्रयोगः स्यादित्यत आह—**उपकारेति**। **तदर्थमिति**। यद्यङ्गानामात्मीयैर्विधिभिर्विधेयत्वं तदा तदङ्गविधिषु सर्वाङ्गवाचकशब्दाभावेनैकैकस्यैव क्रतूपकारार्थतया तैर्विधानादेकस्मिन्कार्ये निरपेक्षतया विधानेन व्रीहियवादिवद्विकल्पः। प्रधानविधिविधेयत्वेतु कथंभावाकाङ्क्षिणा तेनाविशेषाद्युगपत्सर्वान्वितप्रधानविधेः सर्वेषामङ्गानां युगपत्प्रधानविशेषणत्वेनान्वितानां विशेषणत्वनिर्वाहार्थं कल्प्यमान उपकारः सर्वसाध्यतयैव कल्पयितुं युक्त इति समुच्चय इति फलफलिभावः। तत्र पूर्ववैषम्येणोत्थानात्संगतिरिति सूचयन्पूर्वपक्षमाह—**तत्रेति**। यद्यपि 'समिधो यजती'त्यादिष्वङ्गविधिषु क्रतूपकारवाचकशब्दो नास्त्येव तथापि तेषां किमंशाकाङ्क्षायां कथंभावाकाङ्क्षप्रधानविधिसंनिध्याम्नानबलोपस्थितक्रतूपकारवाचकं शब्दं परिकल्प्य तदर्थतयाङ्गविधयः प्रयाजादिकं विदधति, ततश्च स्वस्ववाक्यैः तेषां निरपेक्षतया विनियोगावगमाद्विकल्प इत्यर्थः। स्यादेवं यद्यङ्गानां स्ववाक्यविधेयत्वं स्यात्प्रधानविधिरेव कथंभावापेक्षः प्रयोजनापेक्षप्रयाजादिविशिष्टस्वार्थं विधत्ते अङ्गवाक्यानि तु प्रयाजादिस्वरूपमात्रपराणि नतु विधिपराणि, ततश्च कथं निरपेक्षतया विधानमित्यत आह—**तेषां हीति**। यदि प्रयाजादिवाक्येन स्वरूपमात्रं बोध्यते तथासति विध्यभावेन प्रयोजनाकाङ्क्षाविरहादाकाङ्क्षालक्षणप्रकरणविनियोगाभावेनाङ्गत्वमेव न स्यादतस्तेषां विधायकत्वमवश्यं वाच्यमित्यर्थः। **उक्तमिति**। भाष्य इति शेषः। नचाङ्गवाक्यानां विधायकत्वेऽपि नोपकारोद्देशेन तद्विधायकत्वं प्रयाजादिपदार्थविशिष्टप्रधानविधित एव प्रयोजनाकाङ्क्षाशान्तेरतस्तदंशे औदासीन्यमेवेति वाच्यम्। अङ्गविधिभिरुपकारोद्देशेन प्रयाजादिषु विहितेषु तत एवोपकाराकाङ्क्षाशान्तेः प्रधानविधेरुपकारांशे औदासीन्यमिति वैपरीत्यस्यापि सुवचनत्वादिति भावः। **नहीति**। प्रातिस्विकविधिषु सर्वाङ्गप्रत्यायकः शब्दो नास्तीत्यर्थः। **सत्यमिति**। पृथग्विधानादेकैकस्यैवोपकारजननसामर्थ्ये बह्वङ्गाम्नानबलाद्बहूनामुपकारजनकत्वं च कल्प्यत इति द्वितीयः पक्षः सिध्यतीत्यर्थः। **विकल्पस्येति**। केवलविकल्पस्येत्यर्थः। स्वपक्षे तु समुच्चयस्यापि सद्भावात्नात्यन्तदोष इति भावः। **सचेति**। अङ्गानां न संहत्यकारित्वं किंतु शब्दभेदात्पृथग्विधिविधेयत्वाच्चित्रादिक्रतूनामिव फलान्यत्वं भेदेन फलसंबन्धः स्यादित्येवं प्रथमसूत्रेण प्रथमपक्षे उपक्षिप्ते द्वितीयादिपञ्चभिः सूत्रैः संहत्यकारित्वप्रतिपादनेन

---

१ समुच्चयावितिचेत्.

लभूयस्त्वमिति द्वितीयः । सचैकेनापि समाप्येतेत्यनेन सूत्रेणोच्यते । पक्षान्तरमेवाधिकरणान्तरमिव भाष्ये दर्शितम् । अधिकरणान्तरत्वे त्वनेनैव सूत्रेण विकल्पपक्षो वक्तव्यः स्यात् । नचानेन विकल्प उच्यते । 'प्राप्तेषु चोत्तरावत्स्या'दिति समुच्चयस्याप्यभ्यनुज्ञानात् । तस्मान्नाधिकरणान्तरम् । सिद्धान्तस्तु युक्तं चित्रादीनां नैरपेक्ष्यं, तेषु हि प्रतिवाक्यं भेदेन कामपदं श्रूयते, समिदादिषु तु यद्यपि प्रतिवाक्यं विधिश्रवणात्फलापेक्षोपजायते फलं तु न प्रतिवाक्यं श्रूयते, प्रधानभावनया ह्येषां फलाकाङ्क्षिणां कथंभावापेक्षिण्या सहेत्थंभावेन संबन्धः । साच सकृदुपात्ता सर्वैरङ्गैरगृह्यमाणविशेषैर्विशिष्टा युगपत्प्रधानविधिना विधीयत इति सिद्धः समुच्चयः । यद्यपि च प्रत्येकं विधिः श्रूयते तथाप्यंशत्रयालाभादसावुदास्ते । भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थरूपोपेक्ष्यते । एतावानेव च तत्र विधेरुपयोगः । तदभावे धात्वर्थ एव भाव्यांशेऽपि निपतेत् । सत्यां च फलापेक्षायां प्रकृतभावनया युगपत्संबन्धात्तस्याश्च सर्वाङ्गविशिष्टाया युगपत्प्रधानविधिना विधानादङ्गानामपि तत एवानुष्ठानसिद्धेस्तस्मिन्नंशेऽङ्गविधीनामनुवादकत्वं सर्वविशिष्टविधानाच्च समुच्चयः ॥

---

तत्पक्षे प्रक्षिप्ते संहत्यकारित्वाभ्युपगमेन प्रवृत्तो द्वितीयपक्षोऽनेन सूत्रेणोत्थाप्यत इत्यर्थः । **पक्षान्तरमेवेति** । तथाच भाष्यकारस्याप्यैकाधिकरण्य एव तात्पर्यमतएव तदनुगुण एव कृत्स्नो भाष्यसंदर्भ इति भावः । अनेनैवाभिप्रायेण भाष्यकारेण व्याख्यातमिति भातीति प्रागुक्तमिति ध्येयम् । तथाच वार्तिककारीयव्याख्यानमेव सूत्रभाष्यानुगुणमिति भावः । प्राभाकरमते दूषणमाह—**अधिकरणान्तरत्व इति** । तेषां मत आद्याधिकरणस्य कार्यैक्यप्रतिपादनपरत्वेन प्रथमसूत्रस्य भेदपरतया व्याख्यातत्वेन तत्सूत्रेण विकल्पपक्षस्य वक्तुमशक्यत्वादनेनैव सूत्रेण विकल्पपक्षो वक्तव्यः स्यादित्यर्थः । **प्राप्तेषु चेति** । 'एकेनापि समाप्येत कृतार्थत्वाद्यथाक्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्या'दिति सूत्रं तस्य चायमर्थः—एकेनाप्यङ्गेनेतिकर्तव्यताकाङ्क्षाशान्तेः कर्म समाप्येत । नचेतराम्नानवैयर्थ्यं सौर्यादिषु यो यावन्ति कर्माणि करोति तस्य तावत्फलनिष्पत्तिवदिहापि बह्वङ्गाम्नानबलेन यो यावत्कर्तुं शक्नुयात् स तावत्कुर्यादित्याश्रयणात् । नच संनिध्यविशेषात्सर्वेषामेव प्राप्तेर्न यथाशक्त्युपबन्ध इति वाच्यम् । सर्वप्राप्तावपि यथा 'तूष्णीमुत्तरा दोहयती'त्यत्र यस्य यावन्तो गावस्तस्य तावतीनां दोहेऽपि न वैगुण्यं तथेहापि यथाशक्त्युपबन्धेऽप्यवैगुण्यं स्यादिति । ततश्चात्र सूत्रावयवेन समुच्चयस्याप्यभ्यनुज्ञानेन विकल्पपक्षस्य नैतत्सूत्रप्रतिपाद्यत्वमित्यर्थः । भवेदेवमेकैकस्योपकारत्वं यद्यङ्गविधिभिः प्रत्येकमुपकारोद्देशेन तानि विधीयेरन् । नच तत्संभवति तेषूपकारवाचकशब्दाभावात् । नच प्रतिवाक्यं प्रयोजनाकाङ्क्षाबलात्तत्कल्पना युक्ता, प्रधानविधिविधेयत्वमादाय प्रयोजनाकाङ्क्षाशान्त्या प्रतिवाक्यं तत्कल्पनानौचित्यात् । एवंच न वैपरीत्यशङ्काया अप्यवकाश इत्याशयेनाह—**सिद्धान्तस्त्विति** । ननु प्रधानविधिनाङ्गानां विधाने प्रधानस्य फलं प्रत्युपादानादङ्गानि प्रति चोद्देशाद्वैरूप्यापत्तेरिति शङ्कामपनुदन्नाह—**प्रधानभावनयेति** । सर्वविशिष्टभावनाविधानान्न वैरूप्यं भावनान्वयेऽपीतिकर्तव्यतायाः करणार्थत्वं यथा न विहन्यते तथा सप्तमाद्य एव प्रतिपादितमिति भावः । भावनासंबन्धोपि यदि पर्यायेण स्यात्तदा विकल्पः स्यात्त्वेवमित्याशयेनाह—**सा चेति** । नन्वङ्गवाक्येषु विधिप्रत्ययश्रवणात्तत्रैव विधिः किं न स्यादित्यत आह—**यद्यपीति** । समिदादिलक्षणकरणांशस्य द्रव्यदेवतादिलक्षणेतिकर्तव्यतायाश्च लाभेऽपि फलांशाभावान्नासौ परिपूर्ण इति न ततस्तद्विधिरित्यर्थः । नन्वेवं तत्र विधिप्रत्ययानर्थक्यमिति वाच्यमित्याह—**भाव्यांशस्त्विति** । तदेवोपपादयति—**तदभाव इति** । यद्यङ्गवाक्येषु विधिप्रत्ययो न स्यात्तदा सर्वाख्यातसाधारणतया प्रतीयमानाया अर्थभावनाया भाव्यापेक्षायां समानपदोपात्ततया धात्वर्थ एव भाव्यः स्यात् । सति तु विधिप्रत्यये प्रवर्तनात्मकशब्दभावनाभाव्यत्वेन तस्या अवगमादपुरुषार्थे पुरुषस्य प्रवर्तयितुमशक्यत्वेन प्रवर्तनान्वयनिर्वाहार्थमर्थभावनासमानपदोपात्तमपि धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य पुरुषार्थमेव भाव्यत्वेनापेक्षत इति पुरुषार्थभाव्याकाङ्क्षोत्थापने तदुपयोग इत्यर्थः । **ननु** पुरुषार्थभाव्याकाङ्क्षायाः क्वोपयोग इत्यत आह—**सत्यामिति** । एवं प्रवर्तनात्मकविधिसंबन्ध्यभावे पुरुषार्थलक्षणक्रतूपकारसंबन्धो न भवेदित्यभिप्राया नचाविहितमङ्गं भवतीत्युक्तिर्नतु तेषां प्रवर्तकाभिप्रायेत्याशयेनाह—**अङ्गानामपीति** ॥

काम्यकर्मणां भूयोऽभ्यासाधिकरणम् ॥ ३ ॥

**कर्मण्यारम्भभाव्यत्वात्कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ २० ॥ [अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ २१ ॥ सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥ २३ ॥ अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥२४॥ ऐकशब्द्यात्तथाङ्गेषु ॥२५॥ लोके कर्मार्थलक्षणम् ॥२६॥]**

**काम्यकर्मप्रयोगः किं सकृदेवासकृच्च वा ॥ फलसिद्धेरादिमोऽन्त्यो भूयः स्वेच्छानुसारतः ॥ ६ ॥**

काम्यानां कर्मणामैन्द्राग्नसौर्यादीनां किं सकृदेव प्रयोग उत भूयोभूयः फलमिच्छतां भूयोपि प्रयोग इति संदेहे सकृदिति ब्रूमः। कर्मणां हि फलं कालान्तरे जनयितव्यम्। तच्च द्वारमपेक्षते। तत्रात्यन्तादृष्टमपूर्वं तस्य च कर्मजन्यत्वं फलहेतुत्वं स्थायित्वं चेत्यनेककल्पनाद्वरं कृतयागादात्मनः फलमिति कल्पितम्। आत्मनो हि सद्भावः स्थिरत्वं कर्मसंबन्धश्च क्लृप्तः, केवलं फलहेतुत्वं कल्पनीयं, अतः कृतयागादात्मनः फलं सकृत्प्रयोगादेव चासौ कृतयागो जातः पुनरपि प्रयुञ्जानस्य तस्य तावत्येव कृतयागता न तस्य कश्चिदतिशय इति अनर्थकः पुनःप्रयोगः सकृदेव तु प्रयोग इति प्राप्ते ब्रूमः—'आत्मन्यतिशयः कश्चित्कृते कर्मणि नैव चेत् ॥ प्रागवस्थासमानत्वादात्मनो न भवेत्फलम् ॥ आत्मस्वरूपहेतुत्वे ह्यकर्तुरपि तद्भवेत् ॥ तस्मादतिशयः कश्चित्कर्मभ्यो जायते नरे ॥ सच कार्यविरोधित्वात्स्वफलाप्तेर्विनश्यति ॥ फलान्तरार्थं कर्तव्यं तस्मादतिशयान्तरम् ॥ स एवातिशयोऽस्माभिरपूर्वमिति गीयते ॥ तस्माद्भूयः प्रयोक्तव्यं भूयःफलमभीप्सता ॥' कर्मभ्यः फलसिद्धिप्रकारे विकल्पसमुच्चयरूपे चिन्तिते बहुफलसिद्धिप्रकारः सकृदसकृद्रूपश्चिन्त्यत इति संगतिः ॥

अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम् ॥ ४ ॥

**क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥ [धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥]**

**अवघातः सकृन्नो वा सकृत्स्याद्विधिसिद्धितः ॥ दृष्टा तण्डुलनिष्पत्तिस्तदन्तोऽभ्यस्यतामयम् ॥ ७ ॥**
**सर्वौषधावघातः किमावर्त्यः सकृदेव वा ॥ आवर्त्यः पूर्ववन्मैवं दृष्टार्थस्यात्र वर्जनात् ॥ ८ ॥**

दर्शपूर्णमासयोः श्रुतं 'व्रीहीनवहन्ती'ति। तत्र संशयः किं सकृदेवोद्यमननिपातने कृत्वोपरन्तव्य-

---

**कर्मण्यारम्भभाव्यत्वात्०** ॥ २० ॥ ननु यजेतेत्यत्र यागादेव फलं प्रतीयते नतु कृतयागात्पुरुषात्कर्तुराख्यातवाच्यत्वाभावात्, ततश्च कथं पूर्वपक्ष इत्यत आह—**कर्मणेति**। सत्यं कर्मणः फलं प्रतीयते तथापि तस्य विनश्वरस्य साक्षात्फलसाधनत्वानुपपत्त्यातस्यापि फलजनकत्वादिधर्मकमपूर्वाख्यद्वारं कल्पनीयमिति गौरवात्तत्परित्यज्यार्थलभ्यस्य कृतयागस्य पुरुषस्यैव फलजनकत्वं कल्प्यत इत्यर्थः। **तावत्येवेति**। प्रथमप्रयोगे यावती तावत्येवेत्यर्थः। **आत्मनीति**। कृतयागत्वस्य विशेषणत्वसंभवादुपलक्षणत्वमेव वाच्यं तच्च न संभवति यागात्प्राचीनावस्थाव्यावृत्तस्योपलक्ष्यतावच्छेदकस्याभावादात्मस्वरूपमात्रस्योपलक्ष्यत्वे तु अकर्तुरपि फलं स्यादित्यर्थः। **ननु** जायतां कश्चिदतिशयः स तु ध्वंसलक्षणोऽन्यो वा एकएव नित्योऽस्तु, तस्य च सकृत्प्रयोगेणैव सिद्धत्वात्प्रयोगान्तरवैयर्थ्यं तदवस्थमित्यत आह—**सचेति**। कल्प्यमानो ह्यतिशयः कार्यनाश्य एवाङ्गीकार्योऽन्यथाकार्यानुपरमप्रसङ्गादतो भावरूप एव फलनाश्यः कश्चिदतिशयोऽङ्गीकर्तव्य इति फलान्तरार्थं पुनःपुनः प्रयोग आवश्यक इत्यर्थः। एवंच कृतयागस्य पुरुषस्य फलजनकत्वस्वीकारेऽपि फलनाशस्य स्थास्यतः कस्यचिदतिशयस्यावश्यकल्प्यत्वात् तद्द्वारा श्रुतस्य यागस्यैव फलजनकत्वमाश्रयितुं युक्तं नत्वश्रुतस्य कृतयागस्य पुरुषस्येत्याशयेनाह—**स एवेति**। **फलेति**। स्वर्गादिलक्षणफलसिद्धिचिन्ताप्रसङ्गात्क्रतूपकारलक्षणफलसिद्धिप्रकारश्चिन्तित इत्यर्थः। **सकृदिति**। किं सकृत्प्रयोगाद्बहुफलसिद्धिरुतासकृत्प्रयोगादित्येवंरूप इत्यर्थः। सूत्रार्थस्तु—काम्यकर्मणि प्रतिप्रयोगं कृषिवत्फलानि स्युः फलस्य कर्मप्रयोगसाध्यत्वादिति ॥

**क्रियाणामर्थशेषत्वात्०** ॥ २७ ॥ ननु तण्डुलफलकमुसलोद्यमननिपातनयोरेवावहन्तिशब्दार्थत्वात्तण्डुलफलकत्वस्याभ्यासेन विनानुपपत्तेः कथं पूर्वः पक्ष इत्यत आह—**तत्रेति**। मुसलोद्यमननिपातनमात्रमेव शब्दार्थः नतु तण्डुलनि-

---

१ जननीयम्.

श्रुत यावत्तण्डुलनिष्पत्ति प्रयोक्तव्यमिति । तत्रोद्यमननिपातनमात्रस्य शब्दार्थत्वात्तन्मात्रं विधीयते । विहितस्य च प्रयोजनकल्पनमित्यसत्यपि दृष्टेऽवघातमात्रमदृष्टार्थं कर्तव्यं सर्वौषधावहन्तिवत् । स्यादेवं यद्यवघातं कुर्यादिति विधीयेत । अवघातेन तु समीहितं कुर्यादिति विधिः । समीहितं च दृष्टे संभवति नादृष्टं कल्पयितव्यम् । संभवति चेह क्रत्वपेक्षिततण्डुलनिर्वृत्त्यर्थतावघातस्येति तदेव प्रयोजनं तच्चानभ्यस्तेनाशक्यमिति प्रयोजनवशादश्रुतोऽप्यभ्यासः कर्तव्यः । सर्वौषधावघाते तु दृष्टासंभवाददृष्टार्थं शब्दार्थमात्रं कर्तव्यम् । सकृदसकृद्विचारप्रसङ्गात्संगतिः एवमुत्तरत्रापि ॥

प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम् ॥ ५ ॥

**क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ [सकृद्वा कारणैकत्वात् ॥ ३० ॥ परिमाणं चानियमे न स्यात् ॥ ३१ ॥ फलस्याऽऽरम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ ३२ ॥ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३५ ॥ अभ्यासो वा छेदनसंमार्गावदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥]**

**अङ्गेऽभ्यासो न वा भूम्नाभ्यासो नाङ्गे पृथक्फलम् ॥ अङ्गावृत्त्यैव भूमातः प्रयोगेऽङ्गं सकृद्भवेत् ॥ ९ ॥**

फलभूमार्थिना कर्माणि पुनःपुनः प्रयोक्तव्यानीति स्थिते चिन्त्यते किमेकस्मिन्प्रयोगेऽङ्गानि पुनःपुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति नेति । तत्राभ्यस्यमानान्यङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तं च प्रधानं फलभूयस्त्वाय भवतीति मन्वानस्योत्तरं—समग्रकारणावृत्त्याहि कार्यमावर्तते प्रधानं च साङ्गफलसामग्री नाङ्गमात्रं अतस्तन्मात्रावृत्त्या न भूयः फललाभः । नचोपकारभूयस्तया

---

ष्पत्तिफलकत्वमपि कषायमवहन्तीत्यादौ तण्डुलनिष्पत्तिफलकत्वाभावेऽपि प्रयोगदर्शनादित्यर्थः । नच दृष्टार्थत्वाय साभ्यासोद्यमननिपातनयोः शब्दार्थत्वकल्पनं युक्तं प्रयोजनस्यैव शब्दार्थानुसारेण कल्पनौचित्यादित्याशयेनाह—**विहितस्येति । सर्वौषधेति** । अग्निचयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वावहन्ति अथैनदुपदधाती'त्यत्र यथादृष्टार्थं सकृदवघातस्तद्वदित्यर्थः । **स्यादेवमिति** । यद्यपि पूर्वपक्षेपि अवघातं कुर्यादित्यर्थो नाभिमतस्तथापि प्रयोजनानुसारेण प्रकृतेऽभ्यासस्य वक्तव्यत्वात्तदुपयुक्ततया विधेः प्रयोजनप्रवणत्वसूचनाय धात्वर्थमात्रे पर्यवसानाभावप्रतिपादनमिति ध्येयम् । नहि प्रयोजनवशेनाभ्यासस्य शब्दार्थत्वं कल्प्यते येन शब्दार्थानुसारित्वात्प्रयोजनकल्पनाया अदृष्टमेव प्रयोजनं स्यात्, किंतु शब्दार्थस्याभ्यासानभ्याससाधारण्येनाभ्यासेऽप्यविरोधादशब्दार्थोप्यभ्यासो दृष्टप्रयोजनलिप्सया कल्प्यत इत्याशयेनाह—**तच्चेति** । अत्र 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्या'दिति सूत्रं सर्वौषधावहन्तेरदृष्टार्थत्वसिद्ध्यर्थमधिकरणान्तरत्वेन परैर्व्याख्यातं न तत्तथा । पूर्वपक्षाभावात्, किंतु प्रत्युदाहरणमात्रम्, ततश्चैकाधिकरण्यमेवेत्याशयेनात्रैवाधिकरणे सर्वौषधावघातवैषम्यमाह—**सर्वौषधेति** । सूत्रार्थस्तु—अवहननपेषणादिक्रियाणां प्रत्यक्षे दृष्टे प्रयोजने सति तन्निर्वृत्त्यापवर्गः समाप्तिः स्यात् दृष्टप्रयोजनशेषत्वादिति ॥

**क्रतुवद्वानुमानेन०** ॥ २९ ॥ फलभूमार्थे कर्मणः पुनःप्रयोगप्रसक्तौ सत्यामयं विचारो घटते नान्यथेत्याशयेन पूर्वितनाधिकरणसिद्धं स्मारयन्नाह—**फलभूमेति** । नन्वङ्गानां फलार्थत्वाभावात्कथं फलभूमार्थं पुनःप्रयोग इति पूर्वःपक्ष इत्यत आह—**तत्रेति** । ननु करणावृत्त्यभावेऽपि करणोपकारभूयस्तया प्रयासाधिक्यात्फलभूमा वैकल्पिकाङ्गयोरन्यतरत्र प्रयासाधिक्यस्थल इव कल्प्यतामित्याशङ्क्याह—**नचोपकारेति । प्रमाणेति** । ग्रहणाग्रहणादिवैकल्पिकाङ्गस्थल इव प्रयासाधिक्यस्याशास्त्रीयत्वादित्यर्थः । **नन्व**शास्त्रीयत्वेप्यङ्गानामुपकारजनकत्वस्य शास्त्रीयतामात्रेण तद्भूयस्त्वार्थं पुनःपुनरनुष्ठानं स्यादन्यथा सौर्यादिक्रतुष्वपि पुनःप्रयोगस्य शास्त्रचोदितत्वाभावेन तत्रापि फलभूयस्त्वार्थिनः पुनःप्रयोगो न

फलभूयस्त्वं प्रमाणाभावात् । नचात्राङ्गाभ्यासः शास्त्रीयः नचाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुं अतः फलभूमार्थिना साङ्गं प्रधानमभ्यसितव्यं नाङ्गमात्रं नापि प्रधानमात्रम् ॥

बहुवचनस्य त्रित्वपरत्वे कपिञ्जलाधिकरणम् ॥ ६ ॥

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ [दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ तथेह ॥ ४० ॥ भक्त्येति चेत् ॥ ४१ ॥ तथेतरस्मिन् ॥ ४२ ॥ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४३ ॥ तथा चान्यार्थदर्शनम् ॥ ४४ ॥ प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४५ ॥]**

कपिञ्जलेषु त्रित्वाधाः पाक्षिकास्त्रित्वमेव वा ॥ आद्यो बहुत्वसाम्यान्न त्रित्वेनैव कृतत्वतः ॥ १० ॥

'वसन्ताय कपिञ्जलानालभेत' इत्यादिषु बहुवचनेषु किं त्रयाणामेवालम्भः उत त्रिप्रभृतीनामसंख्यानामिति संदेहे बहुवचनस्य सर्वत्र वृत्तेः सर्वसंख्यानां शास्त्रार्थत्वं शास्त्रीयाच्च प्रयासगौरवात्फलभूयस्त्वमविवादमतो यावदुत्साहं नानासंख्योपादानम् । नैतदेवं, बहुत्वमात्रं हि शब्दार्थः नतु षट् देया द्वादश देयेत्यादिवत्संख्याविशेषाणां भेदेन शास्त्रमस्ति यद्बलात्फलभूयस्त्वं कल्प्येत । यो हि त्रीनालभते यश्च सहस्रं तयोरुभयोरपि बहुत्वसंपादनमविशिष्टम् । यत्तु विशिष्यते सहस्रादि तदशास्त्रीयम् । नचाशास्त्रीयं गौरवं फलभूयस्त्वं कल्पयितुमलम् । एवंच त्रीननालभ्य चतुर्णामालम्भासंभवादवश्यं त्रय आलब्धव्यास्तावता च सिद्धे शास्त्रार्थे नाधिकालम्भं तावच्छास्त्रं कल्पयति । निवृत्तव्यापारे च विधौ न हिंस्यादिति निषेधशास्त्रं प्रवर्तत इत्यधिकानालम्भः ॥

---

स्यादित्यत आह—**नचात्रेति** । भावना हि फलाय विधीयमाना करणोपकारार्थमितिकर्तव्यतामपेक्षते, करणोपकारश्च सकृत्प्रयोगेणैव सिद्ध इति तावतैव निराकाङ्क्षत्वाद्भावनायाः नाङ्गानां पुनः प्रयोगः प्रयोजकाभावात्, सौर्यादीनां तु पुरुषाभिलषितफलसाधनानां पुरुषस्य पुनःपुनः फलाकाङ्क्षायां पुनःपुनः प्रयोगः । यद्यपि अङ्गेष्वपि पुरुषेच्छाधीनैव प्रवृत्तिस्तथापि न साक्षात् किंतु क्रतूपकारद्वारेति वैषम्यम् । एवंचाङ्गाभ्यासस्य शास्त्रीयत्वं विना पुनःप्रयोगो न निर्वहति । नचासौ शास्त्रीय इत्यर्थः । **ननु** लोके भोजनादौ दध्याद्युपकारभूयस्तया तृप्तिभूयस्त्वमशास्त्रीयेपि दृष्टमित्यत आह—**नचेति** । वैदिके शास्त्रसमधिगम्यं हेतुहेतुमत्त्वमिति भावः । तुल्यन्यायत्वादाह—**नापीति** । सूत्रार्थस्तु—अङ्गं फलभूमार्थमभ्यासमर्हति सफलत्वात्सौर्यादिवदित्यनुमानेनाङ्गाभ्यासे फलभूमा स्यादिति ॥

**बहुवचनेन०** ॥ ३८ ॥ **बहुवचनस्येति** । बहुवचनं त्रित्वादीनां प्रत्येकमभिधायकतयाऽक्षादिशब्दवन्नानार्थं ततश्च सर्वसंख्यानां प्रातिस्विकरूपेणैका देया षट् देयेत्यादिवच्छास्त्रार्थत्वमित्यर्थः । **शास्त्रीयादिति** । अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरित्यपि सूचितम् । **बहुत्वमात्रमिति** । बहुवचनस्य त्रित्वादिषु न पृथक्शक्तिर्नानार्थत्वस्यान्याय्यत्वात्, किंतु द्व्यधिकसंख्यात्वेन सर्वत्रैकैव शक्तिः । एवंच संख्याविशेषाणां न प्रातिस्विकरूपेण शास्त्रार्थत्वमित्यर्थः । बहुवचनस्य नानार्थत्वेप्येकस्मिन्वाक्ये सर्वेषामग्रहणाद्वक्ष्यमाणरीत्या प्राथम्यं नियामकमाश्रित्य त्रित्वस्यैव ग्रहणं संभवतीत्यपि बोध्यम् । **नन्वेवमपि** द्वित्वाधिकसंख्यात्वेन सामान्यरूपेणापि सर्वसंख्यानां शास्त्रार्थत्वात्तत्प्रयासाधिक्यात्फलभूयस्त्वं किं न स्यादित्यत आह—**योहीति** । संख्याविशेषाणां प्रत्येकं यदि विधेयत्वं स्यात्तदा तद्रूपेण विधानबलात्प्रयासगौरवस्य शास्त्रार्थत्वं स्यात् साधारणरूपेण तु विधाने बहुत्वसंपादनमात्रं शास्त्रतात्पर्यविषयो नतु सहस्रादिसंपादनमपीति प्रयासगौरवं न शास्त्रीयमित्यर्थः । **ननु** सहस्राद्यालम्भे उक्तरीत्या प्रयासाधिक्यप्रयुक्तफलभूयस्त्वाभावेऽपि सहस्रादीनामपि सामान्यरूपेण बहुवचनार्थत्वस्यावर्जनीयत्वात्त्रयाणामिव तेषामपि कदाचिदालम्भोऽपरिहार्य इत्यत आह—**एवंचेति** । अधिकालम्भे प्रत्यवायोऽपि स्यादित्याह—**निवृत्तेति** । यद्यपि कपिञ्जलानां पर्यग्निकृतोत्सर्गान्न हिंसाप्रसक्तिस्तथापि यत्र न पर्यग्निकृतोत्सर्गस्तदभिप्रायेणेदं बोध्यम् ॥

उत्तरा दोहयतीत्यत्र सर्वासां गवां दोहनाधिकरणम् ॥ ७ ॥

**उत्तरासु न यावत्स्वमपूर्वत्वात् ॥ ४६ ॥ [यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४७ ॥ साकल्यविधानात् ॥ ४८ ॥ बह्वर्थत्वाच्च ॥ ४९ ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५० ॥ तथा पयःप्रतिषेधः कुमाराणाम् ॥ ५१ ॥ सर्वप्रापिणाऽपि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५२ ॥]**

उत्तरास्तिस्र एव स्युर्यावत्स्वं वात्र पूर्ववत् ॥ तिस्र एव, हविःकात्स्न्र्यापूर्वयोर्विधितोऽन्तिमः ॥ ११ ॥

सान्नाय्यदोहाधिकारे श्रूयते 'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य[1] तूष्णीमुत्तरा दोहयती'ति। तत्र किमुत्तरासां तिसृणामेव दोह उत यावत्यो यजमानस्य गावस्तासां सर्वेसामिति संदेहे पूर्ववत्तिसृणामेव नच यावत्स्वं दोहनं साक्षात्केनचिद्विहितं येन सर्वासां दोहनं स्यात्। येन चोत्तरा दोहयतीत्यनुवादः स्यात्। अतो विधिरेवायमिति तिसृणामेव दोहः। मैवं 'नास्यैतां रात्रिं कुमारा अपि पयो लभेर'न्नित्यनेन वचनेन कृत्स्नस्यापि पयसो हविष्ट्ववचनात्प्राप्तमेव सर्वासां दोहनम्। नहीदं कुमाराणां पयःप्रदानप्रतिषेधपरं, अदृष्टार्थत्वप्रसङ्गादपिशब्दानर्थक्यप्रसङ्गाच्च। तस्मात्सर्वासां दोहः ॥

आघाराद्यङ्गानां तन्त्रेणानुष्ठानाधिकरणम् ॥ ८ ॥

**प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ५३ ॥ [क्रमकोपश्च यौगपद्ये स्यात् ॥ ५४ ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् ॥ ५५ ॥ ऐकार्थ्यादव्यवायः स्यात् ॥५६॥ तथा चान्यार्थदर्शनं कामुकायनः ॥५७॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात्संस्कारस्य तदर्थत्वात् ॥ ५८ ॥ असंस्पृष्टोऽपि तादर्थ्यात् ॥ ५९ ॥ विभवाद्वा प्रदीपवत् ॥ ६० ॥ अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥ सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६२ ॥ विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६३ ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६४ ॥ क्वचिद्विधानान्नेति चेत् ॥ ६५ ॥ न विधेश्चोदितत्वात् ॥ ६६ ॥]**

प्रत्यङ्गि कार्याण्यङ्गानि तन्त्रेणोताङ्गिनो यतः ॥ एकैकस्योपकार्यत्वं तस्मात्प्रत्यङ्ग्यनुष्ठितिः ॥ १२ ॥

विधानवदनुष्ठानं सकृदेवोपकारकम् ॥ तद्देशकालकर्तॄणामेकत्वात्तन्त्रतैकादिवत् ॥ १३ ॥

उपोद्घातप्रसक्तानुप्रसक्तादि गतम्। इदानीं लक्षणार्थं तन्त्रावापं विचारयामः। दर्शपूर्णमासयोः

---

**उत्तरासु तु यावत्०** ॥ ४६ ॥ ननु 'नास्यैतां रात्रि'मित्यनेन यावत्यो यजमानस्य गावस्तासां सर्वासां दोहनं विहितमतः सर्वासामेव दोहनीयत्वात्कथं तिसृणां दोहः, किंचोत्तरा दोहयतीत्यस्य विधायकत्वे हि पूर्वाधिकरणन्यायात्तिसृणां दोहः स्यादनुवादश्चायं नास्यैतामित्यनेनैव प्राप्तार्थकत्वाद्यथाप्राप्ति वानुवादस्य वर्णनीयत्वेन सर्वविषयत्वस्यैव न्याय्यतयानुवादेन पूर्वाधिकरणन्यायानवतारादित्याशङ्क्याह—**नच यावदिति**। नास्यैतां रात्रिं कुमारा अपि पयो लभेरन् इत्यस्य न सर्वदोहविधायकत्वं तद्वाचकशब्दाभावात् सर्वदोहसंबन्धिपदार्थस्याप्यनुपात्तत्वेन लक्षणयापि तदुपस्थित्यसंभवादतः कुमाराणां पयःप्राप्त्यभावस्य स्वतोऽसंभवेन तन्निमित्ततया लक्षितं पयसोऽदानमेवात्र विधीयत इति न सर्वासां दोहः। नचोत्तरावाक्यस्यानुवादकत्वमित्यर्थः। सत्यं सर्वासां दोहो नानेन विधीयते तथाप्यत्र प्रतीयमानस्य कुमाराणां पयःप्राप्त्यभावस्य सर्वस्य पयसो हविष्ट्वमपि हेतुः संभवतीति तद्धेतुत्वेन लक्षितं सर्वस्य पयसो हविष्ट्वमनेन विधीयते तद्बलादेव सर्वासां दोहः प्राप्त इति 'तूष्णीमुत्तरा दोहयती'त्यस्यानुवादकत्वमेवेत्याशयेनाह—**मैवमिति**। नच पयःप्राप्त्यभावो दानाभावहेतुकोऽपि संभाव्यत इति विनिगमनाविरह इति वाच्यमित्याह—**नहीदमिति**। यद्यप्यस्यादानविधिपक्षे कुमारादिपदानां मुख्यार्थता सर्वहविष्ट्वविधिपक्षे तु तेषामपि लक्षणा तथापि दृष्टार्थलाभात्सा न दोष इति भावः। **अपिशब्देति**। दाननिषेधेऽपि शब्दोऽनर्थकः तेन विनापि कुमारेभ्यो न दद्यादिति निषेधसंभवात्सर्वहविष्ट्वे तु कुमारैरपि पयो न लभ्यं किंतु सर्वं देवतयैव लभ्यमिति सोनुगुण इति भावः। एवंच 'तूष्णीमुत्तरा दोहयती'त्यस्यानुवादत्वात्तिसृणां दोहे वाग्यमे विहिते सत्युत्तरासु वाग्विसर्गस्यार्थप्राप्तत्वेन 'विसृष्टवा'गित्यस्याप्यनुवादत्वादनन्वारम्भमात्रपरं तद्वाक्यमित्याहुः। सूत्रार्थस्तु—उत्तरासु यावत्स्वं दोहनं, अपूर्वत्वादप्राप्तस्यैव विध्यर्हत्वादिति ॥

**प्रधानकर्मार्थत्वात्०** ॥ ५३ ॥ साङ्गानां प्रधानानामेकदेशकालकर्तृकत्वे सत्येव तन्त्रता भवेन्नान्यथेत्याशयेनाह—

---

[1] विसृष्टवागन्वारभ्य.

षट्प्रधानकर्माणि त्रीणि पौर्णमास्यां त्रीण्यमावास्यायां कर्तव्यानि तत्र देशकालकर्तॄणां तन्त्रत्वं वक्ष्यते तेनैकस्यामेव पौर्णमास्यामेकस्मिन्नेव देशे तैरेव कर्तृभिस्त्रीण्यप्याग्नेयादीनि तदङ्गानि च कर्तव्यानीति स्थिते चिन्त्यते । किं त्रयाणामप्याग्नेयादीनां प्रधानानां भेदेन प्रयाजाद्यङ्गानि कर्तव्यान्युत सकृदेवेति । तत्र—'भेदेन विनियुक्तत्वाद्भेदेनैव क्रिया भवेत् ॥ कथंभावस्य भिन्नत्वाद्भेदेन विनियोगधीः ॥' षडप्याग्नेयादिभावनाः साध्यसाधनांशयुक्ता उत्पत्तिप्रयोगवाक्याभ्यामवगताः परस्परानपेक्षा एव कथमितीत्थंभावं भेदेनैवापेक्षन्ते, तद्वशाच्च संनिधिसमाम्नातान्यङ्गानि प्रत्येकमेव तासु विनियुज्यन्ते विनियोगानुसारेण चानुष्ठानं, तस्मादेकैकं स्वाङ्गयुक्तं कर्तव्यमिति प्रत्येकं साङ्गं कृत्वाऽपरमपि तथैव कर्तव्यमिति प्राप्तेऽभिधीयते—'सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु ॥ विधानवदनुष्ठानं सकृदेवोपकारकम् ॥' यथैव हि षट्सु भावनासु त्र्यंशविशिष्टासु विधित्सितासु साध्यसाधनांशप्रतिपादनेन प्रकृतासु प्रक्रान्तासु तृतीयमंशं कथंभावं भेदेनैवापेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति । सत्यपि च कस्यचित्प्रधानोत्पत्तिविधिसंनिधौ प्रकरणवशेन संनिधिर्बाध्यते तथैव संहतानां प्रधानानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वनुष्ठातुं प्रकृतेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात्संतमपि केनचित्संनिधिं बाधित्वानुष्ठानक्रियाप्रारंभाख्यप्रकरणवशेन सर्वार्थं भवतीति न पुनः क्रियायां प्रयोजनमस्ति । किंच 'पौर्णमास्यां पौर्णमास्या यजेते'ति युगपदनुष्ठानं त्रयाणामवगतं पृथक्पृथक् स्वाङ्गेष्वनुष्ठीयमानेषु बाध्येत । तस्मादेकदेशकालकर्तॄणां तन्त्रमङ्गानीति सिद्धम् ॥

कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् ॥ ९ ॥

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥ [भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधिः प्रदानकालत्वात् ॥ ६८ ॥ तथा चान्यार्थदर्शनम् ॥ ६९ ॥ विधिरिति चेन्न वर्तमानापदेशात् ॥ ७० ॥]**

**कृष्णग्रीवद्वये तन्त्रं पृथग्वा देवतैक्यतः ॥ तन्त्रं सौम्यव्यवायेन कालभेदात्पृथग्भवेत् ॥ १४ ॥**

'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुं आग्नेयं कृष्णग्रीवं [पुरोधायां स्पर्धमान]' इति श्रुतं

---

**तत्रेति । तन्त्रत्वमिति ।** प्रधानत्रयस्याङ्गप्रधानयोश्चैकदेशकालकर्तृकत्वं वक्ष्यत इत्यर्थः । **भेदेनेति ।** प्रत्येकार्थतया विनियुक्तत्वादित्यर्थः । कथंभावस्य कथंभावापेक्षाया इत्यर्थः । **ननु** संहत्यकारिणामाग्नेयादीनामितिकर्तव्यताकाङ्क्षासहितानामेव युक्तेति कथं भेदेन कथंभावापेक्षेत्यत आह—**षडपीति ।** संहत्यकारित्वेप्युत्पत्तौ प्रत्येकावगतिबलेन प्रत्येकमेव करणत्वं ततश्च करणानां सहभावो ननु सहितानां करणत्वमिति करणानुग्राहिणीतिकर्तव्यता प्रत्येकमेवापेक्षितेति भावः । **नन्वस्तु** प्रत्येकमितिकर्तव्यतापेक्षा तथापि यथा प्रत्येकं फलापेक्षायामपि फले तन्त्राभिधानावगतेः सहितत्वमेवमिहापि सहभावोऽपि किं न स्यादित्यत आह—**तद्वशादिति ।** फलोद्देशेन कर्मणामुपादीयमानतया तत्र साहित्यविवक्षायामप्यङ्गानि प्रतिप्रधानानामुद्देश्यत्वात्तन्त्राभिधानावगतमपि साहित्यमिह नाविवक्षितमिति भावः । **विधानवदिति ।** यथाङ्गविधीनां सर्वप्रधानोद्देशेन स्वार्थविधाने एक एव व्यापारो ननु प्रतिप्रधानं व्यापारभेदस्तद्वदित्यर्थः । **केनचिदिति ।** पूर्वाङ्गानामादिमेनोत्तराङ्गानामन्तिमेन चेत्यर्थः । **अनुष्ठानेति ।** प्रधानानां युगपदनुतिष्ठासितत्वेनानुष्ठानप्रारम्भस्तेषामेक एव ततश्च यथाङ्गापेक्षिणां बहूनां प्रस्तुतत्वं संनिध्यपेक्षया प्रबलं तथाङ्गानुष्ठानापेक्षिणां बहूनां युगपदारम्भोपि संनिध्यपेक्षया प्रबल इत्यर्थः । **ननु** यदि साङ्गप्रधानमपरिसमाप्यैवान्तरा प्रधानान्तरं क्रियते तदाङ्गप्रधानयोः प्रयोगवचनावगतं साहित्यं बाध्येतेत्यत आह—**किंचेति ।** प्रयोगवचनस्य कल्पनीयत्वात्प्रधानान्यन्तर्भाव्यैव साहित्यं कल्पनीयमिति न तद्विरोधः प्रत्युत तवैव प्रत्यक्षवचनावगतं प्रधानानां युगपदनुष्ठानं बाध्येतेत्यर्थः । यथाचात्र युगपदनुष्ठानावगमस्तथाग्रिमपादे व्यक्तम् । सूत्रार्थस्तु—अङ्गानां प्रधानार्थमनुष्ठेयत्वात्प्रधानभेदे च सति प्रयोगदशायामनुष्ठानभेदः स्यादिति ॥

**व्याख्यातं तुल्यनां० ॥ ६७ ॥ श्रुतमिति ।** काम्यपशुकाण्डभाव इति शेषः । **तत्रेति ।** किं प्रधानभूतं

---

१ प्रारब्धेषु.

तत्राग्नेययोरनुष्ठानं तन्त्रं पृथग्वेति संशये तन्त्रमिति ब्रूमः । भवति हि तन्त्रेणानुष्ठानं द्रव्यदेवतैक्यात् । नच पाठक्रमात्क्रमेणानुष्ठानम् । अवश्यंभाविनि हि क्रमे पाठान्नियमः । संभवतिचेह कृत्स्नानुष्ठानमिति न क्रमापेक्षा तस्मात्तन्त्रम् । नैवं, यद्यप्याग्नेययोस्तन्त्रता संभाव्येत तथापि सौम्येन तावदवश्यंभावी क्रमः तत्र पाठवशादेकस्याग्नेयस्य सौम्यात्पूर्वमनुष्ठानमितरस्य ततः पश्चात्सहानुष्ठानेऽवश्यंभाव्यन्यतरस्य सौम्येन यः क्रमः स बाध्येत, तस्मात्पृथगेवानुष्ठानम् ॥ इति श्रीशास्त्रदीपिकायां एकादशाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## एकादशाध्याये द्वितीयः पादः ।

### आग्नेयादीनां प्रधानानां तन्त्राधिकरणम् ॥ १ ॥

**एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥ [अविधिश्चेत्कर्मणामभिसंबन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥२॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥३॥ यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात्प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथाचान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्, तथा चान्यार्थदर्शनम् ॥ १० ॥]**

आग्नेयादिप्रधानस्य देशे काले च कर्तरि ॥ भेदः स्यादथवा तन्त्रमङ्गत्वाद्द्रव्यदेववत् ॥ १ ॥
उत्पत्तिविधिशेषत्वाद्भेदः स्यादेकशब्दतः ॥ विधेः प्रयोगशेषत्वादभेदेन तु तन्त्रता ॥ २ ॥
अङ्गे ये केऽपि देशाद्याः किंवा ते दैवतादिवत् ॥ अनन्वयात्केऽपि नैवं प्रयोगेण परिग्रहात् ॥ ३ ॥

दर्शपूर्णमासयोर्देशः 'समे दर्शपूर्णमासाभ्यां यजेते'ति, कालः 'पौर्णमास्यां पौर्णमास्या यजेत अ-

---

प्रदानं तन्त्रं उत भेदेनेति संदेह इत्यर्थः । पूर्ववत्तन्त्रमित्युत्थानात्संगतिः । **द्रव्येति** । यद्यपि सहप्रदानं देवतैक्यमात्रेण द्रव्यभेदेऽपि दधिपयसोरिवोपपन्नमत एव 'एकधा वपा जुहोति एकदेवत्या हि एता' इति प्राजापत्यवपासु देवतैक्यमेव सहप्रदाने प्रसिद्धवद्धेतूक्रियते तथापि कैमुत्यार्थं द्रव्यपदोपादानमित्याहुः । **नचेति** । आग्नेयद्वयस्यापि क्रमेण पाठादनुष्ठानमपि क्रमेणेति न वाच्यमित्यर्थः । **तस्मादिति** । नच एकद्रव्यदेवताकानेकप्रधानस्य सहानुष्ठाने प्राजापत्यवदेकमेव विधानं स्यान्नतु विधिभेद इति वाच्यम् । सारस्वतौ भवत इति स्त्रीपुंसदेवताकयोर्भेदेनानुष्ठीयमानयोरपि सहविधानदर्शनेन विधिभेदस्यानुष्ठानभेदप्रयोजकत्वाभावादिति भावः । **पाठवशादिति** । यद्यपि 'अभितः सौम्यमाग्नेयौ भवत' इति वचनमस्ति तथापि वर्तमानापदेशत्वात्पाठप्राप्तानुवादकं वचनं 'हृदयस्याग्रेवद्यत्यथ जिह्वाया' इत्यादावथशब्दवदिति भावः । पूर्वपक्षे तु पाठात्क्रमप्राप्त्यनङ्गीकारेणास्यानुवादत्वासंभवाद्विधायकत्वमेवावश्यं वाच्यमिति वाचनिकक्रमविरोधादस्मिन्नुदाहरणे पूर्वपक्षो मन्दस्तथा च यत्र नैतादृशं वचनं केवलं पाठक्रम एव तत्र पूर्वः पक्षः प्रवर्तनीय इति ध्येयम् । **स बाध्येतेति** । सहानुष्ठानपक्षे यद्याग्नेयद्वयं प्रथममनुष्ठीयेत तदा द्वितीयस्याग्नेयस्य सौम्येन सह पश्चाद्भावित्वलक्षणो यः क्रमः स बाध्येत पश्चादाग्नेयद्वयानुष्ठाने तु प्रथमस्याग्नेयस्य सौम्येन पूर्वभावित्वलक्षणो यः क्रमः स बाध्येतेत्यर्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायामेकादशाध्यायस्य प्रथमः पादः ॥ १ ॥**

**एकदेशकालकर्तृत्वं०** ॥ १ ॥ पूर्वस्मिन्पादे केवलप्रधानार्थानामनुष्ठानतन्त्रता विचारिता, इहत्वङ्गप्रधानार्थानां देशा-

---

१ सकृदनुष्ठानमिति.

मावास्यायाममावस्यया यजेते'ति, कर्तारः 'दर्शपूर्णमासयोश्चत्वार ऋत्विज' इति, किमेते देशकाल कर्तारस्तन्त्रमुत भेदेनेति, किं यस्मिन्नेव समे यैरेव कर्तृभिर्यस्यामेव च पौर्णमास्यामाग्नेयस्तस्मिन्नेव च समे तस्यामेव पौर्णमास्यां तैरेव कर्तृभिरग्नीषोमीय उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैरिति । तदर्थमिदं विचार्यते किमुत्पत्तिवाक्यैः 'यदाग्नेयोऽष्टाकपाल'इत्यादिभिर्देशादिविधीनां संबन्धः उत फलवाक्येन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति तत्र—'कर्मरूपेण संबन्धो देशादीनां फलस्य च ॥ उत्पत्तिविधिनैवातः सर्वेषामेकवाक्यता ॥' त्रयाणामपि ह्यंशानां भावनयैव संबन्धो न परस्परम्। अतो देशादिविधीनां फलवाक्यस्य च न मिथः संबन्धः किंतु फलवाक्यं देशादिवाक्यानि च सर्वाणि भावनोत्पत्तिवाक्येन संबध्यन्ते । उत्पत्तिवाक्येषु चाग्नेयादयोऽन्यनिरपेक्षा एवावगता इति तथाभूतैः संबध्यमाना देशादयो निरपेक्षाणामेव भवन्ति इति । निरपेक्षोत्पन्ना अपि देशादिविधिषु पौर्णमास्यादिशब्दैस्तन्त्रेणोक्ताः सहैवावगता इति साहित्येनैव फलसंबन्धवद्देशादिसंबन्धः कस्मान्न भवतीतिचेन्न विषम उपन्यासः । फलं प्रति गुणभूतानां युक्ता तन्त्राभिधानावगतसाहित्यविवक्षा, देशादींस्तु प्रति कर्मणां प्राधान्यादविवक्षितं साहित्यं, तस्माद्यथा 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वे'त्यस्मिन्वाक्ये तन्त्राभिहिताभिरपीष्टिभिः प्रत्येकमेव कालः संबध्यते इति नैकस्यामेव पौर्णमास्यां सर्वाः क्रियन्ते तथाग्नेयादिभिः प्रत्येकमेव कालादीनां संबन्धादेकस्यां पौर्णमास्यामाग्नेयं कृत्वाऽपरस्यामग्नीषोमीयमित्येवं षट्सु पर्वसु षड्यागाः कर्तव्याः । नचैवं फलवाक्यावगतसाहित्यबाधः । तत्र ह्येतावदधिगतम्। एकमेव फलं सर्वैः साध्यते न प्रत्येकं फलस्य पृथङ्निष्पत्तिरिति न तस्य कालभेदाद्बाधः । यथा पौर्णमासीत्रिके दर्शत्रिके च द्वयोः पर्वणोर्निष्कृष्यमाणेऽपि न फलं प्रति साहित्यं बाध्यते तथा षण्णामपि निष्कर्षे द्रष्टव्यम् । यदा चैवमुत्पत्तिवाक्यशेषत्वं कालादीनां तदोत्पत्तिवाक्ये प्रधानमात्राणां निरङ्गानां विधानात्तन्मात्राणामेवामी कालादयो नाङ्गानां प्रधानदेशकालकर्तृत्वं, तानि तु कामं कालान्तरादिष्वपि कर्तव्यानीति

---

दीनां तन्त्रता प्राधान्येन विचार्यत इति पादान्तरत्वमनुष्ठानतन्त्रतानिर्वाहकत्वाद्देशादितन्त्रताया आनन्तर्यं च बोध्यम्। संशयमेव विवृणोति—**किं यस्मिन्निति । तदर्थमिति ।** किमाग्नेयादयः परस्परनिरपेक्षा देशादिभिः संबध्यन्ते उत परस्परसहिता इति । तदर्थसंशयनिष्कर्षः फलवाक्यारूढानामुत्पत्तीनामङ्गसंबन्ध इत्यादिग्रन्थपर्यालोचनया सिद्धान्तेपि साक्षात्फलवाक्येन न देशादिसंबन्धः किंतूत्पत्तिवाक्यैरेव, तत्र तु नोत्पत्त्यनन्तरमेव संबन्धः अपितु फलसंबन्धानन्तरमित्येतावन्मात्रप्रतीत्या यथाश्रुतसंशयानुपपत्तेरिति ध्येयम्। **कर्मरूपेणेति ।** भावनास्वरूपेणेत्यर्थः । सति च देशादिवाक्यानामुत्पत्तिवाक्यसंबन्धे फलसंबन्धानन्तरदेशादिसंबन्ध इत्यत्र प्रमाणाभावेन प्रथममेव देशादिसंबन्धसंभवान्निरपेक्षाणामेव देशादिसंबन्ध इत्याशयेनाह—**उत्पत्तिवाक्येष्विति । देशादींस्त्विति ।** समे दर्शपूर्णमासाभ्यामित्यादिदेशादिविधिषु सप्तम्या देशादीनां गुणत्वावगमेन कर्मणां प्राधान्यात्तन्त्रावगतमपि साहित्यमुद्देशगतत्वादविवक्षितमित्यर्थः। **ननु** देशकालयोरनुपादेयत्वात्सन्तमपि गुणभावमनादृत्य तयोरेवोद्देश्यत्वं वक्तव्यम्, ततश्च तदुद्देशेन कर्मणामुपादानादुपादेयगतत्वात्साहित्यविवक्षा दुर्वारेति शङ्कायां दृष्टान्तकथनव्याजेन प्रतिबन्दीमुत्तरं दददुपसंहरति—**तस्मादिति ।** तथासत्येकेनेष्टिशब्देन तन्त्राभिहितानां सर्वासामिष्टीनां साहित्यं स्यात्तथा पशूनां सोमानां चेति भावः । **तत्र हीति ।** फलवाक्येऽपि न केवलकर्तव्यतारूपं साहित्यमवगम्यते येन कालभेदे तद्बाधः स्यात्, किंतु संभूय फलजनकत्वलक्षणमित्यर्थः। अत्र भाष्ये अङ्गेषु किं समादिदेशकालकर्तार उतानियम इत्यन्तराचिन्तान्तरम् । अङ्गानां प्रधानदेशकालकर्तृकत्वसिद्ध्यर्थं कृतं, प्रस्तुताधिकरणसिद्धान्ते सति तच्चिन्तापूर्वपक्षानुत्थानादन्तराचिन्तेत्यन्तराचिन्तानिमित्तं च भाष्य एवोक्तमतः स्वयमपि तदनुसृत्य प्रस्तुताधिकरणपूर्वपक्षोपजीवनेनान्तराचिन्तापूर्वपक्षं दर्शयति—**यदाचेति । तन्मात्राणामेवेति ।** कालादिविधिष्वमावास्यादिशब्दानां प्रधानमात्रवाचित्वादिति भावः । यद्यप्यमावास्यादिशब्दानां प्रधानमात्रवाचित्वेप्यमावास्यया यजेतेत्यादितृतीयानिर्देशेन तत्करणकभावनाप्रतीतेस्तदन्वितानां देशादीनां 'मुष्टैः प्रवर्ग्येणाप्स्वभृथेने'त्यादीनामिवाङ्गप्रधानार्थत्वमयत्नसिद्धं, तथापि यत्र देशादिविधानेन तृतीयया प्रधाननिर्देशस्तत्रापि देशादीनां साङ्गप्रधानार्थत्वसाधनायान्तराविचार आवश्यक इति ध्येयम्। **कालान्तरादिष्विति ।** कालान्तरतुल्यप्रयोगक्षेमतया प्रधानकालेऽपि कदा-

**प्राप्तेऽभिधीयते**—'भावनोत्पत्तिवेलायां देशादिविधयो यदि ॥ तत एवं भवेत्ते तु फलवद्भावनाश्रयाः ॥' यद्यपि भावनयैव देशादीनां संबन्धो न परस्परं तथापि नोत्पत्तिवेलायामङ्गसंबन्धः । साहि प्रथमं भाव्यमपेक्षते तल्लाभश्च फलवाक्येनेति न फलवाक्यावरुद्धानामुत्पत्तिवाक्यानामङ्गसंबन्धः फलवाक्ये च फलं प्रति विवक्षितसाहित्यानां विनियोगात्फलार्थिनां युगपत्सर्वेषु कर्तव्यतावगतिः । यस्यां बुद्धावाग्नेयः कर्तव्यतयोपतिष्ठते तस्यामेवाग्नीषोमीयादयोऽपि प्रयोगविध्येकवाक्यत्वात् । तेन सर्वेषु कर्तव्यतयोपस्थितेषु चिकीर्षितेषु च पौर्णमासीकालो विहित इति यैवैका पौर्णमास्युपात्ता सैवा गृह्यमाणविशेषत्वात् सर्वार्था भवति तथा देशः कर्तारश्च । तस्मात्तन्त्रम् । सौर्यादीनां पुनः पृथक्पृथक् स्वफले विनियुक्तानां पृथगेव कर्तव्यतावगमो नानाविधिविधेयत्वात् । तेन तैरन्योन्यनिरपेक्षैरेव य इष्ट्या पशुनेत्यादिकालः संबध्यत इति नास्ति तन्त्रत्वम् । यदि पुनः कश्चिच्चित्राफलं सौर्यफलं च युगपदिच्छन्कर्मद्वयमपि सह चिकीर्षति किमसौ तन्त्रेणैकस्मिन्नेव काले द्वयमपि प्रयुञ्जीत नेति ब्रूमः । यदाहि विधिवेलायां साहित्यं नावगतं तदानुष्ठानदशायामपि न लब्धुं

---

चिदङ्गानुष्ठानाभिप्रायोऽपिशब्दः प्रथमं प्रस्तुताधिकरणसिद्धान्तमाह—**भावनोत्पत्तीति । सा हि प्रथममिति** फलवाक्येन समीहितविशेषे भाव्येऽवगते हीदं समीहितं कथं कर्तव्यमित्यपेक्षा भवति । तस्यां चापेक्षायामङ्गसंबन्धः यागेन कुर्यादिति भावनोत्पत्तिमात्रेण च प्रवर्तनान्वयबलात्सामान्यतः समीहितभाव्यप्रतीतावपि विशेषानवगमान्न कथमित्यपेक्षा जायते । नहि किंचित्समीहितं कथं कुर्यादिति कस्यचिदप्यपेक्षा किंत्विदं समीहितं कथं कुर्यादिति । ततश्च फलवाक्यान्वयात्पूर्वं समीहितविशेषानवगमे कथमित्यपेक्षाभावान्नाङ्गसंबन्धः किंतूत्पत्तिवाक्ये सामान्यावगतस्य समीहितस्य विशेषमेव भावना प्रथममपेक्षते इत्यपेक्षानुसारेण फलसंबन्धः प्रथमं पश्चादङ्गसंबन्ध इत्यर्थः । अस्तु ततः किमित्यत आह—**फलवाक्ये चेति ।** फलवाक्ये कर्मणामुपादेयतया साहित्यस्य विवक्षिततत्वेन सहितानामेव फलान्वयात्सहितेष्वेव कर्तव्यताबुद्धिर्भवति, येन रूपेण यस्य फलसाधनत्वं तेन रूपेण तद्गोचरत्वात्फलार्थिकर्तव्यताबुद्धेरित्यर्थः । **प्रयोगेति ।** प्रयोगोऽनुष्ठानं तत्प्रयोजकस्य फलविधेरेकत्वादित्यर्थः । यद्वा सहितानां फले विनियोगबलेन प्रयोगविधेरपि सर्वविषयस्यैकस्यैव कल्प्यत्वादित्यर्थः । **ननु** युगपत्कर्तव्यतयोपस्थितत्वमात्रेण सहितेषु यदि देशादयो विनियुज्येरन् तदा प्रयाजादीनामपि सहितेष्वेव विनियोगः स्यात् न चेष्टापत्तिः । अनुष्ठानमात्रस्य तन्त्रत्वेपि पृथगेव विनियोगस्य प्रधानकर्मत्वादङ्गानामिति पूर्वपादोपान्त्याधिकरणे । 'सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु । विधानवदनुष्ठानं सकृदेवोपकारक'मिति वदता ग्रन्थकारेणाङ्गीकृतत्वात् सहितेष्वेव प्रयाजादीनां प्रयोगे यथाविनियोगं भेदेनैवानुष्ठानमित्येवंरूपतदधिकरणपूर्वपक्षानुन्मेषप्रसङ्गाच्च, अतः कथं देशादीनां सर्वार्थतया विनियोग इत्यत उक्तम्—**चिकीर्षितेष्विति ।** भाव्यकरणेतिकर्तव्यताविशिष्टभावनावगमानन्तरं चिकीर्षा भवतीति प्रयाजादीतिकर्तव्यतान्वयसमये न सर्वचिकीर्षा किंतु सर्वेषां कर्तव्यतावगममात्रं, तद्दशायां च करणानुग्राहकत्वेनेतिकर्तव्यतां गृह्णाति । भावनोत्पत्तिवाक्ये भेदेन करणभावावगमाद्भेदेनैव गृह्णातीति प्रयाजादीनां भेदेन विनियोगः, देशादीनां तु विशिष्टभावनावगमानन्तरं तत्प्रयुयुक्षायां चिकीर्षापरनामधेयायां सत्यामीदृशे देशे ईदृशे काले ईदृशैः कर्तृभिस्तत्प्रयोगः कर्तव्य इति प्रयोगद्वारान्वीयमानानां युगपत्सर्वविषयकैकप्रयोगावच्छेदकत्वेनान्वय इति विनियोगदशायामेव सहितार्थतया विनियोग इति वैषम्यमिति भावः । तस्माद्देशकालकर्तॄणां युगपत्सर्वचिकीर्षाबलात्सर्वविषयकतया कल्प्यमानेन प्रयोगविधिना युगपत्सर्वार्थत्वेन विधानात्तन्त्रत्वं सिद्धमित्याह—**तस्मादिति । सौर्यादीनामिति** । 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामश्चित्रया यजेत पशुकाम' इत्यादिपृथग्विधिभिर्भिन्नानां फलेषु विनियोगेन युगपच्चिकीर्षाविरहादनपेक्षिततया इष्ट्यादिशब्दैस्तन्त्राभिधानलब्धसाहित्यं न विवक्षितमिति प्रत्येकमेव कालसंबन्ध इत्यर्थः । एवंच प्रागुक्तप्रतिबन्द्याः परिहृतत्वात् 'पौर्णमास्यां पौर्णमास्या यजेत समे दर्शपूर्णमासाभ्यां यजेते'त्यत्रानुपादेयौ देशकालावुद्दिश्य पौर्णमास्यादिशब्दवाच्यानां कर्मणामुपादेयतया तद्गतं साहित्यं युगपच्चिकीर्षाबलेनापेक्षिततया विवक्षितुं शक्यमिति तद्बलादपि देशकालयोस्तन्त्रत्वं, कर्तॄणां तु 'दर्शपूर्णमासयोश्चत्वार ऋत्विज' इत्यत्र कर्मोद्देशेनैवोपादेयतया तत्र कर्मसाहित्यस्योद्देशगतस्य विवक्षानर्हतया प्रागुक्तरीत्या प्रयोगविधित एव तन्त्रत्वमिति विवेकः । **ननु** यदि युगपच्चिकीर्षाधीनं तन्त्रत्वं तर्हि सौर्यादावपि युगपच्चिकीर्षा कस्यचित्पुरुषस्य संभवतीति तत्रापि तन्त्रत्वं स्यादिति शङ्कते—**यदि पुनरिति ।** विधिप्रयुक्ताया एव सहचिकीर्षायास्तन्त्रत्वप्रयोजकत्वान्नातिप्रसङ्ग इत्याशयेन परिहरति—**नेतिब्रूम इति । यदाहीति ।** तथाच युगपदुभयफलेच्छायां सत्यामपि प्रत्येकविधिभिः प्रत्येकफलार्थिनं प्रत्येव विधानबलाद्विधेः प्रत्ये-

---

१ वाङ्गानां संबन्धो. २ कर्तव्यतयावगतेषु.

शक्यते, तस्मादेकेन हि विधिना यावन्त्यङ्गप्रधानानि विधीयन्ते तावद्भिर्यावान्कालो व्याप्यते तावत्यविक्षिप्तः समस्ताङ्गप्रधानप्रयोगः कर्तव्यः इत्यवगमात्सहप्रयोगे च तद्विरोधात्। एकेन तु विधिना फले सह चोदितानामाग्नेयादीनामेकोपक्रमोपसंहारत्वात्तादृशैः संबध्यमाना देशादयो गृह्यमाणविशेषतया विधिवेलायामेव सर्वसंबन्धितयाऽवगतास्तन्त्रं भवन्तीति विशेषः। यदाचैवं प्रयोगवाक्यशेषत्वं कालादीनां तदङ्गानामपि तत्कालत्वं सिध्यति। तथाहि साध्यसाधनांशयुक्तावगता भावना कथमितीत्थंभावमपेक्षते भावनावगतस्वरूपविशेष इत्थंभावः। प्रज्ञातरूपा च भावना कालादीनपेक्षते तेन प्रकारापेक्षायां भावनायां तत्प्रकारत्वेन प्रयाजादिष्ववगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छेषत्वेन कालादयो विधीयन्त इत्यङ्गानामपि त एव देशादयो भवन्ति, द्रव्यदेवतं तु पुनर्न समस्तप्रयोगसंबन्धित्वेन विधीयते अनपेक्षितत्वादयोग्यत्वाच्च। नह्यग्न्यन्वाधानबर्हिःस्तरणाद्यनुरक्तस्य प्रयोगस्य द्रव्यदेवतापेक्षा। नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थं किंतु फलभावनावयवयागरूपनिष्पादनेन द्रव्यदेवतमपेक्षितत्वाद्योग्यत्वाच्च संबध्यते। तस्मान्न प्रधानसंबन्धिद्रव्यदेवतमङ्गानां भवति। कालादयस्त्वाग्नेयादिकरणिकया फलभावनया समग्ररूपया संबध्यमानास्तदन्तर्गतानामङ्गानामपि भवन्तीति विशेषः॥

दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेनाङ्गानां भेदेनानुष्ठानाधिकरणम्॥ २॥

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात्॥ ११॥ [कालभेदान्नेति चेत्॥ १२॥ नैकदेशत्वात्पशुवत्॥ १३॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात्॥ १४॥ तथा चान्यार्थदर्शनम्॥ १५॥ तदाऽवयवेषु स्यात्॥ १६॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात्॥ १७॥]**

संघभेदे तन्त्रमङ्गं न वा, कर्मैक्यतोऽग्रिमः॥ न मुख्यकालभेदोक्त्या प्रयोगस्य पृथक्त्वतः॥ ४॥

दर्शपूर्णमासयोर्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रमुत प्रतित्रिकमावर्तेरन्निति संदेहे तन्त्र-

---

कप्रयोग एव तात्पर्यान्न विधितो युगपच्चिकीर्षा। ततश्च युगपदिच्छामात्रेणैकस्मिन्कालेऽनुष्ठानं लभ्यत इत्यर्थः। **ननु** कोऽयं विधिनियमो विधिप्रयुक्तैव युगपच्चिकीर्षा तन्त्रत्वप्रयोजिकेति लाघवाच्चिकीर्षामात्रमेव प्रयोजकमस्तु ततश्च नानाविधिभिर्नानाफलसाधनत्वेनावगतानां युगपन्नानाफलेच्छायां युगपदनुष्ठानं लब्धुं कथं न शक्यमित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति**। अविक्षिप्तः विक्षेपरहितः कर्मान्तरासंवलित इति यावत्। तथाच प्रयोगविध्यवगताङ्गप्रधानसाहित्यविरोधेनेच्छामात्रेणान्तरा कर्मान्तरानुष्ठानं लब्धुमशक्यमेवेति विधिप्रयुक्तैव युगपच्चिकीर्षा कालादितन्त्रत्वप्रयोजिकावश्यं वाच्येति भावः। आग्नेयादौ तु विधिप्रयुक्तैव युगपच्चिकीर्षेति युक्तं देशादीनां तन्त्रत्वमित्याह—**एकेनेति**। इदानीमन्तराचिन्तासिद्धान्तमाह—**यदाचेति**। **ननु** प्रयोगवाक्यशेषत्वेपि कालादीनां प्रधानप्रयोगमात्रान्वयोपपत्तेः कथमङ्गप्रधानार्थत्वमित्यत आह—**तथाहीति**। साध्यसाधनांशयुक्तभावनामात्रेण न देशादीनां संबन्धः तदानीं कार्त्स्न्येन भावनास्वरूपस्यानवगतत्वेन देशाद्यपेक्षाविरहात्ततश्च तदानीं स्वरूपज्ञानायेत्थंभावमपेक्षत इति प्रथममङ्गान्वयः, पश्चात्साङ्गभावनयान्वीयमाना देशादयः साङ्गप्रधानप्रयोगार्था न केवलप्रधानप्रयोगार्थाः, साङ्गभावनाया एव प्रयोगविधिविधेयप्रयोगपर्यायत्वादित्यर्थः। इदंतूपलक्षणं देशाद्यन्वयस्य चिकीर्षामूलकतया फलार्थिचिकीर्षायाः फलसामग्रीविषयत्वेन साङ्गप्रधानस्यैव फलसामग्रीरूपतया तदेकदेशप्रधानमात्रविषयचिकीर्षानुदयान्न प्रधानमात्रेण देशादीनामन्वय इत्यपि द्रष्टव्यम्। एतेनाग्नेयादिपूत्पत्तौ श्रूयमाणस्य कालस्य कथमङ्गसंबन्धस्तदानीमङ्गानुपस्थितेरिति निरस्तम्। उक्तरीत्याकाङ्क्षाविरहेणोत्पत्तिश्रुतस्यापि कालस्य प्रधानमात्रान्वयासंभवेनाङ्गोपस्थितिमपि प्रतीक्ष्य साङ्गप्रधानार्थत्वस्यैव वक्तव्यत्वादिति। **नहीति**। नचाग्न्यन्वाधानादौ द्रव्यदेवतानर्हेऽपेक्षायोग्यताविरहादनन्वयेपि तदन्वयार्हेषु यागात्मकेष्वङ्गेषु प्रधानार्थद्रव्यदेवतयोरप्यन्वयः स्यात्तत्राकाङ्क्षायोग्यतयोः सद्भावादिति वाच्यम्। तथापि द्रव्यदेवतालक्षणकारकावच्छिन्नयागस्य प्रयोज्यतया प्रयोज्यावच्छेदकयोर्द्रव्यदेवतयोः कालादिवत्साक्षात्प्रयोगावच्छेदकत्वाभावेन प्रयोगद्वाराङ्गप्रधानार्थत्वस्य वक्तुमशक्यत्वादस्ति वैषम्यमिति भावः। सूत्रे एकशब्दोपदेशादेकेन शब्देन तन्त्रेणोपादाय फलं प्रत्युपदेशादित्यर्थः॥

**इष्टिराजसूयचातुर्मास्येषु०॥ ११॥ विभज्येति**। 'पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजे-

---

१ भावनागतश्च रूप.

मित्याह, कस्मात्, एककर्मत्वात्, षण्णामप्येकोपक्रमावसानत्वात् । तेन यदेव किंचिदङ्गमनुष्ठितं तदेव षट्सु चिकीर्षितेषु क्रियमाणमगृह्यमाणविशेषत्वात्तन्त्रं भवति वचनात्त्वेकोऽपि प्रयोगो विप्रकृष्यते न तावाताङ्गानामावृत्तिः पशुवत् । यथा पशुप्रयोगे 'वपया प्रातःसवने प्रचरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवने' इति विप्रकृष्यमाणेऽपि नाङ्गानामावृत्तिस्तथेहापीति प्राप्ते ब्रूमः—'त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः ॥ तेनाङ्गानामिहावृत्तिर्वपादीनां पशौ पुनः ॥' यद्यप्येकफलत्वादेकप्रयोगत्वं षण्णां प्राप्तं तथापि वाचनिकेन कालभेदेन प्रयोगभेदो भवति पौर्णमास्यां पौर्णमास्या यजेतेत्यनेन हि यः पौर्णमासीकरणकः फलार्थो व्यापारः प्रत्ययवाच्यस्तदङ्गत्वेन पौर्णमास्यामिति पौर्णमासीकालो विधीयते न पौर्णमासीयागमात्रे तेनाङ्गानामपि यागकरणफलक्रियान्तर्गतानां तत्कालता विहिता भवति तथामावास्यायामपि साङ्गैवामावास्या विधीयत इति द्वयोः कालयोरङ्गानामावृत्तिः । पशौ पुनर्वपाप्रचारादिमात्रस्य भिन्नकालस्य चोदना न पशुयागस्य । नच प्रचारार्थान्यङ्गानि विहितानि तेन तत्र नावर्तन्ते, अत्र पुनः प्रधानकालभेदेनाङ्गानामावृत्तिः । एवं चातुर्मास्येषु राजसूये च द्रष्टव्यम् ॥

---

ते'त्येताभ्यां वचनाभ्यामिति शेषः । **नन्वाभ्यां** कालद्वयेऽपि साङ्गयोरनुष्ठानचोदनात्कथं तन्त्रत्वमिति शङ्कते—**कस्मादिति** । अनयोर्वचनयोः प्रयोगविप्रकर्षमात्रविधायकत्वान्न तद्बलादङ्गावृत्तिरतः पूर्वाधिकरणोक्तरीत्यैकफलत्वात्तन्त्रत्वमेवेति परिहरति—**एकेति** । ततश्चापवादिकी संगतिर्बोध्या । **पशुवदिति** । पशुप्रयोगवदित्यर्थः । **तथेहापीति** । ततश्च पौर्णमासीमारभ्यामावास्यापर्यन्तं प्रयोगस्यापरिसमाप्त्यान्तराले यत्र क्वाप्यङ्गान्यनुष्ठीयन्तामिति भावः । **त्रिकेति** । पौर्णमास्यां पौर्णमास्येत्यादिना त्रिकद्वयस्य साङ्गस्यैव कालद्वये चोदनादिहाङ्गावृत्तिः पशौ तु हृदयादिष्वभ्यासमात्रस्य प्रातःसवनादौ चोदनेति न तत्राङ्गानामावृत्तिरिति वैषम्यमित्यर्थः । **ननूभयत्रापि** प्रयोगैक्ये सति कथमयं विशेष इत्यत उपपादयति—**यद्यपीत्यादिना** । **अनेन हीति** । पौर्णमासीशब्दस्याग्नेयादिवाचकस्य तृतीयान्तनिर्देशेन तत्करणकभावनाप्रतीयते, आग्नेयादीनां कर्मणां भिन्नत्वेन तेषां प्रत्येकरूपेण करणत्वेन तत्करणकभावनाप्रतीतेः संभवात्, वपादौ तु न कर्मभेदः, पशुयागस्यैव वपाहृदयादिभेदेनाभ्यस्यमानत्वान्न वपाद्यभ्यासानां करणत्वमिति तत्करणकभावनाप्रतीत्यसंभवात्तदभ्यासमात्रप्रचारविप्रकर्षपरत्वं वपादिवाक्यानामिति युक्तं वैषम्यमिति भावः । **न पौर्णमासीति** । कारकयोर्मिथः संबन्धानुपपत्तेरिति भावः । यद्वा **ननु** तर्हि यागकर्मकभावनायाः क्रियात्वात्तयैव कालस्यान्वयोस्तु तथाच संनिपातिभिरेवायं कालः संबध्यते नारादुपकारकैरित्यत आह—**न पौर्णमासीति** । तृतीयया यागानां करणत्वप्रतीतेर्नात्र वाक्ये यागकर्मिकभावना कालान्वयमर्हतीत्यर्थः । **ननु** तत्करणकभावनान्वयेऽपि करणमात्रेणान्वयः स्यान्नाङ्गैरित्यत आह—**तेनेति** । किंचाग्नेयादिषु पौर्णमास्यादिकालकर्तव्यत्वस्योत्पत्तिवाक्यैरेव लाभा'त्पौर्णमास्यां पौर्णमास्या यजेते'त्यादिवचनं प्रधानानां तत्कालकर्तव्यतामात्रपरत्वेऽनुवादमात्रमनर्थकं स्यात्, तस्मात्पर्वद्वयेऽपि साङ्गत्रिकद्वयविधानेनाङ्गावृत्तिपरमेवेदमवश्यं स्वीकार्यम् । नचोत्पत्तिवाक्यावगतकालस्यापि पूर्वाधिकरणेऽङ्गप्रधानार्थत्वसमर्थनात्तत एव साङ्गत्रिकद्वयस्यापि पौर्णमास्यमावास्याकालत्वसिद्धेस्तवापि वैयर्थ्यं तुल्यमिति वाच्यम् । उत्पत्तिवाक्यश्रुतकालबलात्प्राप्ताङ्गावृत्तेः 'समे दर्शपूर्णमासाभ्यां यजेते'ति देशविधानायोदितत्वादनेन हीतरेतरयुक्ताः कारणीभूताः षडपि यागाः देशं प्रति विधीयन्ते । विधीयमानानां चैतेषां साहित्यं करणत्वं च विवक्षितं, करणत्वविवक्षाबलाच्च सेतिकर्तव्यताकानां देशयोगः, ततश्च सेतिकर्तव्यताकानां षण्णां यागानां देशं प्रति यत्साहित्यमवगतं तदेकोपक्रमावसानत्व एवोपपद्यते नान्यथेति तद्बलादुत्पत्त्यवगतकालयोगं प्रधानेषु व्याख्याय पौर्णमास्यमावास्याकालयोर्यौगपद्यासंभवेन देशवाक्यावगतसाहित्यमङ्गमात्रे च व्याख्याय तन्त्रेणानुष्ठानं प्रसज्येतेति तन्निवृत्त्यर्थं कालद्वये साङ्गत्रिकविधानस्यापेक्षितत्वान्नास्मन्मते तद्वचनानर्थक्यमिति भावः । **एवमिति** । 'चातुर्मास्यैः स्वर्गकामो यजेते'त्येकफलार्थतया विनियुक्तानामपि वैश्वदेवादीनां चतुर्णां पर्वणां 'वसन्ते वैश्वदेवेन यजेत, वर्षासु वरुणप्रघासैर्हेमन्ते साकमेधै'रित्यादिवचनैः कालभेदविधानात्पर्वानुष्ठानकाले अङ्गानामावृत्तिः । तथा 'राजसूयेन स्वाराज्यकामो यजेते'त्येककालत्वेन चोदितानामपि 'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे ऐन्द्रमेकादशकपालं राजन्यस्य गृहे'इत्यादिदेशभेदात्, षडेव पूर्वेद्युर्निरूप्याणि षडुत्तरेद्युरित्यादिकालभेदाच्चाङ्गानामावृत्तिरित्यर्थः । सूत्रेऽप्यैककर्म्यादेकफलत्वादित्यर्थः ॥

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ३ ॥

**तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १८ ॥ [इष्टिरिति चैकवच्छ्रुतिः ॥१९॥ अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात्साङ्गानामुपदेशः स्यात् ॥ २० ॥ प्रथमस्य वा कालवचनम् ॥ २१ ॥ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २२ ॥]**

अङ्गान्यध्वरकल्पायां प्रातःकालादिवर्तिषु ॥ त्रिषु संघेषु तन्त्रेण स्युर्भेदेनाथवाग्रिमः ॥ ५ ॥
उपस्यशेपनिर्वापात्तद्वदङ्गापकर्षणात् ॥ प्रातर्निर्वापवैशेष्यान्मुख्यकालाय भिन्नता ॥ ६ ॥

अस्त्यध्वरकल्पा नामेष्टिः 'आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरुः आग्नावैष्णवमेकादशकपालं निर्वपेन्मध्यंदिने सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरुः । आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेत बार्हस्पत्यश्चरु'रिति । तत्र श्रूयते 'पुरा वाचः प्रवदितोर्निर्वपेदि'ति । तत्र किमङ्गानि तन्त्रं उत त्रयाणामपि त्रिकानामर्थेन त्रिरङ्गान्यावर्तनीयानीति । तदर्थमिदं चिन्त्यते 'पुरावाचः प्रवदितोर्निर्वपे'दिति किं सर्वनिर्वापस्यापकर्षः उत प्रातःकालीनस्यैवेति । प्रकरणाविशेषात्सर्वनिर्वापस्यापकर्षः । ततश्च तदा दिवाभिसंबन्धादिति न्यायान्निर्वापान्त्यस्याग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षः तच्चाङ्गकाण्डं वचनादन्यकालमेव प्रधानानामुपकारकमित्यगृह्यमाणविशेषत्वात्तन्त्रम् । अतश्च नवापि यागास्तन्त्रेणोपक्रान्ता भवन्ति, यथोपक्रमं च समापनमित्युत्तरेषामप्यङ्गानां तन्त्रत्वम् । 'स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते ॥ प्रातःकालिकमात्रस्य तद्विशेषोऽत्र चोद्यते ॥' प्रातःकालविशेषोऽयं पुरावाचः इति विधीयते तेन यस्य सामान्यतः प्राप्तिस्तस्यैवायं विधीयते नान्यकालस्याप्रधानकालत्वं चैवमङ्गानां चोदकप्राप्तं न बाधितं भवति तस्मान्माध्यंदिनापराह्णकालानां यागानामङ्गकाण्डं नापकृष्यत इति न सर्वेषां सहोपक्रमः । तस्मात्प्रातर्मध्यंदिनापराह्णवर्तिनां प्रधानानामङ्गान्यपि तत्रतत्रावर्तनीयानीति तन्त्रभेदः ॥

प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

**वसाहोमस्तन्त्रमेकदेवत्येषु स्यात्प्रदानस्यैककालत्वात् ॥ २३ ॥**

प्राजापत्यवसानां किं भेदस्तन्त्रभुताग्रिमः ॥ पशुभेदाद्देवपाककालैक्याच्छक्तितोऽन्तिमः ॥ ७ ॥

अग्नीषोमीयपशौ 'याज्यार्धर्चान्ते वसाहोमं जुहोती'ति श्रुतो वसाहोमश्चोदकपरंपरया प्राजापत्येषु पशुषु प्राप्तस्तन्त्रमावापो वेति संदेहे सहश्रपणाद्वसाया एकत्वादेकदेवतत्वाच्च याज्यार्धर्चान्तस्यैकत्वात्तन्त्र सकृत्कर्तव्य इति स्पष्टमेव शिष्यहितार्थमेवमुक्तम् ॥

---

**तथा स्यादध्वरकल्पायां० ॥ १८ ॥** अध्वरेति । 'इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानो यजमानस्याध्वरकल्पं प्रति निर्वपेत् भ्रातृव्ये यजमानेनास्येन्द्रियं वीर्यं वृङ्क्त'इति शत्रूणां क्रियमाणयागप्रतिविधानार्थत्वादध्वरकल्पेत्यर्थः । **पुरेति।** सुप्ता जनाः यावदुत्थाय वाचं न वदन्ति ततः पूर्वमेव निर्वपेदित्यर्थः । इह सत्यपि त्रिकत्रयस्य कालभेदेनाङ्गानुष्ठानावृत्तिरित्युत्थितेः संगतिः । तदा 'दिवाभिसंबन्धात्तदन्तमपकर्षे स्या'दिति पाञ्चमिकं सूत्रं, तत्राङ्गानां मुख्यकालत्वात् 'यथोक्तमुत्कर्षे स्या'दिति पूर्वपक्षसूत्रादुत्कर्षपदमनुषञ्जनीयम् । ततश्चाग्निमारुतादूर्ध्वमित्यादौ उत्कर्षे तदादि स्यादिति 'तिष्ठन्तं पशुं प्रयुजन्ती'त्यादावपकर्षे च तदन्तं स्यादिति तदर्थः । अङ्गकाण्डस्य अङ्गकलापस्य । **नन्वेवमपि** कतिपयाङ्गतन्त्रतामात्रेण कथं सर्वेषां तन्त्रत्वमत आह—**अतश्चेति । यथोपक्रममिति** । एकफलकामेककर्मगोचरप्रयोगविधेरुपक्रमावसानयोरैकरूप्यप्रवणत्वादिति भावः । **तद्विशेष इति** । प्रातःकालविशेषः सुप्तजनोत्थानात्प्राक्काललक्षणो विधीयत इत्यर्थः । तत्र युक्तिमाह—**तेन यस्येति** । प्रातःकालकर्तव्यप्रधानार्थनिर्वापस्य प्रधानकाले कर्तव्यत्वात्प्रातःकालत्वं प्राप्तं तद्विशेष एव विधेय इति तद्विषयत्वे विधेर्लाघवात्तस्यैव विधेयत्वम् । अन्यथा मध्यंदिनादिकालकर्तव्यप्रधानार्थनिर्वापस्यात्यन्ताप्राप्तः प्रातःकालो विधेय इति विधिगौरवं, तथा सर्वनिर्वापविषयत्वे प्रातःकालिकनिर्वापांशे नियमविधिरितरत्रापूर्वविधिरिति विधिवैरूप्यं स्यादिति भावः । तन्त्रभेदः प्रयोगभेद इत्यर्थः । सूत्रार्थस्तु—अध्वरकल्पायां पशुवदङ्गानुष्ठानतन्त्रता स्याद्विशेषस्य निर्वापान्ताङ्गकलापस्यैककालत्ववचनादिति ॥

**वसाहोमस्तन्त्रमेकदेवत्येषु स्यात्० ॥ २३ ॥** पूर्ववदावृत्तिरित्युत्थितेः संगतिः । **सहेति** । रसात्मको द्रवद्रव्यविशेषो वसा सा च कुम्भ्यास्तन्त्रत्वेन सह श्रपणे सति संसर्गिद्रव्यत्वादनेकपशूनामप्येकीभवतीति भावः । प्रदानस्यैककालत्वात्प्रधानयाज्याया एकत्वादर्धर्चोऽप्येक एवेति सूत्राशयः ॥

---

१ न्यावर्तेरन्निति.

एकादशिनगतवसाहोमस्य भेदेनानुष्ठानाधिकरणम् ॥ ५ ॥

**कालभेदावृत्तिर्देवताभेदे ॥ २४ ॥**

**ऐकादशिनगे तन्त्रं वसाहोमेऽथ भिन्नता ॥ तन्त्रं शक्यत्वतो भेदः प्रदानार्धर्चभेदतः ॥ ८ ॥**

**भिन्नदेवतेष्वपि पशुषु सहश्रपणश्रवणेन वसाया एकत्वाद्याज्यार्धर्चान्तभेदेऽपि यस्यकस्यचिद्याज्यार्धर्चान्ते सकृदेव वसाहोमः स्यात् । नैवम् । सर्वे हि पशवः स्वयाज्यार्धर्चान्ते स्वस्या वसाया होमेन प्रतिपत्तिमपेक्षन्ते । भवति च वसा द्रव्यं तेन सर्वेषु याज्यार्धर्चान्तेषु भेदेन वसाहोमः सर्वपशुवसाप्रतिपत्तये कर्तव्यः ॥**

यूपैकादशिन्यां तन्त्रेण यूपाहुत्यानुष्ठानाधिकरणम् ॥ ६ ॥

**अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥ [इतरप्रतिषेधो वा ॥ २६ ॥ अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥]**

**यूपैकादशिनीयूपाहुतेर्भेदोऽथ तन्त्रता ॥ समीपभेदादाद्योऽन्त्यः सामीप्यं दृष्टिगं यतः ॥ ९ ॥**

**अग्नीषोमीये पशौ यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति यूपाहुतिः यूपैकादशिन्यां भेदेन कर्तव्या उत तन्त्रेणेति संदेहे तदन्तिकदेशानां भेदाद्वसाहोमवदावृत्तिः । नैवम् । आपेक्षिके ह्यन्तिकदेशे मन्थनं संभवति तेन यं देशं प्राप्तो यूपसमीपं प्राप्तोऽस्मीति मन्यते यत्र यूपो दृष्टिपथमापद्यते तत्र मन्थनं होमश्च, सच सर्वेषामेकदेशः संभवतीत्यगृह्यमाणविशेषत्वात्तन्त्रम् ॥**

साङ्गस्यावभृथस्याप्स्वनुष्ठानाधिकरणम् ॥ ७ ॥

**अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगः ॥ २८ ॥ [द्रव्यदेवतवत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवतानपनयः ॥ ३२ ॥]**

**किमप्स्ववभृथे मुख्यमात्रं साङ्गमुताग्रिमः ॥ मुख्यत्वेनान्वयान्नैवं प्रयोगेण तदन्वयात् ॥ १० ॥**

**अप्स्ववभृथेन चरन्तीति किं प्रधानमात्रमप्सु कर्तव्यमुताङ्गान्यपीति संशये 'मुख्यार्थो वाङ्गस्याचोदितत्वा'दित्यनेन न्यायेन वैकृतविशेषाणां प्रकृतावेव श्रुतानां केवलं प्रधानार्थत्वादुपांशुत्ववदापोऽपि प्रधानस्यैव, अङ्गानां त्वाहवनीय एव क्रियेति प्राप्ते ब्रूमः 'ता उपांशु कर्तव्या'इति प्रधानक्रियायां**

---

**कालभेदात्त्वावृत्ति० ॥ २४ ॥** पूर्वापवादात्संगतिः । **यस्यकस्यचिदिति** । स्वयाज्यार्धर्चान्त इत्यश्रवणाच्छ्रवणेऽप्युद्देश्यविशेषणत्वेनाविवक्षितत्वाद्यस्यकस्यचियाज्यार्धर्चान्ते सकृदेव कर्तव्यमित्यर्थः । **स्वयाज्येति** । याज्याशब्दस्य यागसंबन्धिकत्वेन तत्सामर्थ्यादर्थादेव स्वत्वं लभ्यत इति न प्रागुक्तदोष इति भावः । **ननु** संसृष्टत्वादेतदीयेयं वसेति निश्चेतुमशक्यत्वादगृह्यमाणविशेषत्वमेव युक्तमित्यत आह—**भवतिचेति** । भवति वर्तत इत्यर्थः । ततश्चेयमस्य वसेति निष्कृष्यानुष्ठानासंभवेऽपि संसृष्टत्वादेव तदीयवसाद्रव्यस्य तत्तदाहुतौ संभवमात्रेणापि याज्यार्धर्चरूपनिमित्तसद्भावात्प्रतिपाद्यसद्भावाच्चावृत्तिरिति भावः ॥

**अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥ वसाहोमवदिति** । अनेन संगतिसूत्रार्थौ सूचितौ । अत्र यूपमुच्छ्रेत्स्यता होतव्यमिति यूपाहुतौ मन्थनस्य मन्थने चान्तिकदेशस्य विधाने वैरूप्यापत्तेर्मन्थनमात्रमेव विधेयं यूपाहुतेर्मन्थनस्य च छेदनाङ्गत्वादसत्यपवादे उत्सर्गतः देशतः कालतश्च प्रधानप्रत्यासन्नयोरनुष्ठेयतया प्राप्तोऽन्तिको देशोऽनुवाद्य इति स्वयाज्यार्धर्चान्तस्य च वसाहोम इवास्यान्तिकदेशस्य यूपाहुतौ विधानाभावान्नावृत्तिरिति सिद्धान्तयितुं शक्यत्वेऽप्यन्तिकदेशविधिमभ्युपेत्य सिद्धान्तमाह—**नैवमिति** ।

**अवभृथे प्रधानेऽग्निविकारः० ॥ २८ ॥** यूपाहुतेस्तन्त्रत्वेऽपि अपामवभृथतदङ्गेषु च न तन्त्रतेत्युत्थानात्संगतिः । **मुख्येति** । 'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः' इति श्रुतमुपांशुत्वं प्रधानार्थमङ्गस्य कामार्थत्वेनाचोदितत्वात्काम्यशब्दार्थत्वाभावादिति तात्पर्यसूत्रार्थः । ततश्च काम्येष्टिशब्दसंयुक्तस्योपांशुत्वस्य प्रधान एव श्रवणाद्यथाप्रधानार्थत्वमेवमपामप्यवभृथशब्दसंयुक्तानां केवलप्रधान एव श्रवणात्तदर्थत्वमेवेत्यर्थः । **ता इति** । नत्वपामवभृथशब्देन संबन्धः

विहितमुपांशुत्वं युक्त यदङ्गेषु न भवति, देशस्त्ववभृथकरणिकायां क्रियायां श्रूयमाणस्तदन्तर्गतानामङ्गानां भवति तस्मादङ्गप्रधानानामेकदेशत्वम् ॥

वरुणप्रघासेष्वाग्नेयादीनां मारुत्या भेदेनानुष्ठानाधिकरणम् ॥ ८ ॥

**दक्षिणाग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियते ॥ ३३ ॥ [अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ अथेह ॥३७॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥४०॥ आम्नायवचनं तद्वत् ॥ ४१ ॥]**

मारुत्याः सार्धमष्टाभिरङ्गैस्तन्त्रं भिदाऽथ वा ॥ प्रयोगैकत्वतस्तन्त्रं भेदो देशस्य भेदतः ॥ ११ ॥

वरुणप्रघासेषु विहारद्वयं द्वयोरप्याहवनीयो विभज्य स्थापितः तत्र श्रूयते अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति । तत्र विचार्यते किं नवानामपि हविषां तन्त्रमङ्गान्युताग्नेयादीनामष्टानां मारुत्याश्चामिक्षाया भेदेनाङ्गानि कर्तव्यानीति । तत्र 'प्रावृषि वरुणप्रघासैर्यजेते'ति प्रयोगवचनैकत्वात्तन्त्रत्वम् । नच देशभेदाद्भेदः आसादनमात्रं हि दक्षिणे विहारे मारुत्या विधीयते न होमस्तस्मात्प्रधानदेशाभेदात्तन्त्रमङ्गानि । नैवम् । नह्यत्रासादनमपूर्वं विधीयते किंतु नवानामपि हविषां चोदकप्राप्तमासादनं होमश्च विहारद्वयेऽप्यव्यवस्थया प्राप्त उभयत्राहवनीयस्य स्थापितत्वादासादनं नियम्यते वाक्यद्वयेन यथाप्राप्तस्य च नियमः प्राप्तिश्च होमार्थतयेति तादृश-

---

कारकाणां मिथः संबन्धायोगादतो न केवलं प्रधाने आपः श्रूयंते किंतु तृतीयाबलात्तत्करणकभावनायां प्रयोगापरपर्यायायां चरन्तीत्यत्र चरिधातोः प्रयोगार्थकत्वे प्रकृतिप्रत्ययाभिधेयायामापोधिकरणकारकत्वेन संबध्यन्तेऽन्तर्गतानि चाङ्गानीति तासामङ्गप्रधानार्थत्वमुपांशुत्वस्य नैवं काम्येष्टिकरणकभावनान्वयः किंतु कर्तव्या इति कर्मार्थकक्तव्यप्रत्ययानुसारेण तत्कर्मकभावनायामेवान्वय इति तस्य केवलप्रधानार्थत्वमिति वैषम्यमित्यर्थः। **तस्मादिति** । कृत्स्नप्रयोगान्वितानामपां तदेकदेशभूताङ्गेष्वाहवनीयलक्षणाधिकरणबाधकत्वादिति भावः । श्रपणमासादनं चाशक्यत्वादग्नौ स्थले च क्रियत इति बोध्यम् । सूत्रार्थस्तु—अवभृथे प्रधान एवापामग्निविकारत्वं स्यादङ्गानि त्वाहवनीय एवकर्तव्यानि । नह्यङ्गानामाहवनीयसंयोगः प्रधानदेशत्वकृतो भवतीति यावत् । येन प्रधानस्याहवनीयसंबन्धाभावेऽङ्गान्यपि न तत्र भवेयुरिति ॥

**दक्षिणाग्नौ वरुण०** ॥ ३३ ॥ **विहारेति** ॥ पृथग्वेदीं कुरुत इति वचनाद्वेदीद्वयमित्यर्थः। सिद्धान्तसौकर्यार्थमाह **—द्वयोरिति**। यद्यपि 'पृथगग्नी प्रणीयेत' इति वचनाद्द्वयोरपि विहारयोराहवनीयस्य पृथगेव प्रणयनं श्रूयते न विभागस्तथाप्याधाननिष्पन्नस्याहवनीयस्यैकत्वेन तद्द्वयासंभवादध्वर्युप्रतिप्रस्थातृभ्यां पृथक्प्रणीयमानोऽग्निर्न कृत्स्नाहवनीयात्मकः किंतु तदेकदेश एवेत्यभिप्रायेण विभज्य स्थापित इत्युक्तं। **अष्टाविति**। आग्नेयादीनि पञ्चसंचराणि ऐन्द्राग्नमेकादशकपालं वारुणीमामिक्षां कायमेकादशकपालं चेत्यर्थः । पूर्वत्राङ्गप्रधानानामेकदेशत्ववदिह नवानामपि हविषामेकदेशत्वं ततश्च तन्त्रत्वमित्युत्थितेः संगतिः। **प्रावृषीति** । अस्य साङ्गवरुणप्रघासगोचरप्रयोगबोधकत्वस्यास्मिन्नेव पादे व्यवस्थापितत्वादिति भावः। **नचेति**। अगृह्यमाणविशेषत्वाद्धि तन्त्रता, देशभेदे, तु तद्देशानामिदमङ्गानुष्ठानमिति विशेषग्रहणान्न तन्त्रत्वमित्यर्थः । **आसादनेति** । नचाप्राकृतस्यासादनस्य विधावदृष्टार्थत्वापत्तेरिदमयुक्तमिति वाच्यम्। प्राकृत एवासादने दक्षिणविहारस्याङ्गत्वेन विधानमिति पूर्वपक्ष्याशयात् । एवंच यथा 'उत्करे वाजिनमासादयती'त्यत्र प्राकृतासादने उत्करविधावपि नादृष्टार्थत्वमेवमिहापीति भावः । आसादनमात्रं विधीयत इति यथाश्रुताभिप्रायेणाह— **नहीति**। अदृष्टार्थत्वप्रसङ्गादप्राकृतमासादनं न विधीयत इत्यर्थः। एवंच प्राकृतमेवेदमासादनं तत्र चोत्तरविहारे मारुत्याः होममाश्रित्य तदीये प्राकृत एवासादने दक्षिणविहार उत्करवद्विधीयत इति पूर्वपक्ष्याशयतया वर्णितप्रकारोप्यनुपपन्नस्तथासत्यत्यन्ताप्राप्तदक्षिणविहारस्य विधेयतया गौरवं स्यात्, तथा सर्वेषामपि हविषामुत्तरविहार एव होमे स्वीक्रियमाणे प्रकृतित एव तत्रासादनस्य प्राप्तत्वात् उत्तरविहारवाक्यमनुवादकमनर्थकं स्यात् । दक्षिणविहारे प्रणीतस्य होमार्थत्वाभावेनाप्राकृतकार्यत्वं च स्यादतो विहारद्वयेऽप्यग्निप्रणयनबलादुभयत्रापि होमे सति होमस्य तदर्थमासादनस्य चाव्यवस्थया प्राप्तौ व्यवस्थार्थं वचनमित्येवाभ्युपगन्तव्यम् । तथासति प्राकृते मारुत्यासादने दक्षिणविहारनियममात्रविधानाल्लाघवं, अनेनैव न्यायेनोत्तरविहारवाक्यस्यापि नियमार्थतयार्थवत्त्वं दक्षिणविहाराग्नेर्होमलक्षणप्राकृतकार्यार्थत्वं च सिद्ध्यतीत्याशयेन नियमार्थत्वमुपपादयति—**किंत्वित्यादिना** । अस्तु व्यवस्थार्थत्वं ततः किमित्यत आह—**यथाप्राप्तस्येति**।

स्यैव दक्षिणे विहारे विधानाद्धोमोऽपि दक्षिणस्मिन्नेव विहारे मारुत्याः । तस्मात्प्रधानदेशभेदाद्गृह्यमाणविशेषाण्यङ्गानि न तन्त्रं भवन्ति—'सत्यं न तन्त्रमङ्गानि देशभेदात्तथापि तु ॥ न पृथक्स्यादनुष्ठानं प्रसङ्गात्कार्यसिद्धितः ॥' ननु कर्तृदेशभेदे कथं प्रसङ्गः, वक्ष्यत्यस्योत्तरं 'अर्थस्याविकृतत्वादि'ति । तदिहाप्यर्थो(ऽ)विकृतः । तथाहि सर्वाणि तावदङ्गानि प्रधानानि चाध्वर्युकर्तृकाणि प्रतिप्रस्थातृकर्तृकाणि चोत्तरवैहारिकाणि दक्षिणवैहारिकाणिचयजमानात्मन्येव स्वापूर्वाण्यादधति । ततश्चोत्तरवैहारिकप्रधानोद्देशेनोत्तरस्मिन्विहारेऽध्वर्युणा कृतैरङ्गैर्यजमानात्मनि स्वापूर्वेष्वाहितेषु तदेकार्थसमवायलब्धसामर्थ्योद्बोधं मारुतीयागोत्पत्त्यपूर्वं दक्षिणवैहारिकमपि प्रतिप्रस्थातृकर्तृकमपि स्वकार्यं जनयतीति कृतमस्य स्वाङ्गैः पृथगनुष्ठितैः । अत्रोच्यते—'तन्त्रेऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः ॥ तत्र प्रसङ्गो नत्वत्र युगपत्सर्वचोदनात् ॥' यत्र हि प्रधाने चोद्यमानेऽन्यान्यङ्गानि परिक्रान्तापरिसमाप्तान्यालोच्यन्ते तत्र लाघवात्प्रयोगविधिरेव गुणकालाद्यन्यथाभावं कार्यपरतयाऽनादृत्यान्यदीयमेव तन्त्रमुपजीव्य न स्वीयं तन्त्रं प्रयुङ्क्ते । इह पुनर्नवानामपि यागानां युगपच्चोदनाद्युगपदुपक्रमोऽवसानं च, तेन सर्वेऽपि तेऽन्योन्यापेक्षाः स्वाङ्गान्यात्मसमानदेशकालकर्तृकाणि प्रयुञ्जते, तेन मारुत्याः स्वाङ्गेषु दक्षिणे विहारे प्रतिप्रस्थात्रा कर्तव्यानीति गम्यमानेषु कथं तदनादरेणान्योपजीवनं तदुपजीवने हि तस्य स्वाङ्गैः समानदेशकालकर्तृकत्वं चोदनावगतं तल्लोपे वैगुण्यादामिक्षायागो न फलायालम्[1] । तस्मादुभयत्राङ्गानामावृत्तिः ॥

उत्तरदक्षिणविहारयोः कर्त्रभेदाधिकरणम् ॥ ९ ॥

**कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ [न समवायात् ॥ ४३ ॥ लिङ्गदर्शनाच्च ॥ ४४ ॥ वेदिसंयोगादिति चेत् ॥ ४५ ॥ न देशमात्रत्वात् ॥ ४६ ॥]**

**कर्तृभेदो न वा तत्र भेदः स्यादङ्गभेदवत् ॥ पञ्चर्त्विग्वचनान्मैवं द्वयोरुक्त्या व्यवस्थितिः ॥ १२ ॥**

कर्तृष्विदानीं तन्त्रावापौ चिन्त्येते । तत्राध्वर्युप्रतिप्रस्थातारौ वचनादेव विहारद्वये व्यवस्थितौ

---

प्रधानार्थस्य वस्तुत एकस्याप्याहवनीयस्य विहारद्वये विभज्य स्थापिततया भागद्वयस्य भिन्नत्वादस्ति प्रधानदेशभेद इति भावः । यद्यप्येवमपि प्रक्षेपात्मकहोम एव देशभेदो नतु प्रधानत्यागात्मके यागे तथापि त्यागस्य त्यज्यमानकर्मसंबन्धितया तस्यैव कर्मण आहवनीये प्रक्षिप्यमाणतया होमदेशभेद एव यागदेशभेदः पर्यवसितः एवं चासादननियममुखेनोत्तरेऽष्टाभिर्यजेत दक्षिणे मारुत्या इति याग एव देशो नियम्यते ततश्च होमार्थतयेत्यादौ ग्रन्थे होमशब्दो यागपर इति बोध्यम् । **ननु** गृह्यमाणविशेषत्वं तन्त्रत्वमेव विरुणद्धि न प्रसंगम् । एवंच पश्वर्थमेव तदनुष्ठानमिति गृह्यमाणविशेषैः प्रयाजादिभिः पुरोडाश इवोत्तरविहारार्थमनुष्ठितैरेव प्रसङ्गात्कार्यसिद्धेः कथमावृत्तिरिति शङ्कते—**सत्यमिति** । नन्वेवमपि नात्र कार्यसिद्धिः प्रकृतितः प्राप्तस्य प्रधानेन समानकर्तृकत्वस्य समानदेशत्वस्य चाभावेन वैगुण्यादिति **शङ्कते—नन्विति । वक्ष्यतीति** । पाशुकैः प्रयाजादिभिः कथं पुरोडाशे कार्यसिद्धिः पशौ हविरासादनात्पूर्वमेव तिष्ठति पशौ प्रयाजाः कर्तव्या अनूयाजा अपि पृषदाज्येन उभयेप्येकादशपुरोडाशे तु हविरासादनोत्तरकालं पञ्च प्रयाजाः केवलेनाज्येन त्रयोऽनूयाजा इति संख्याकालकृतभेदस्य विद्यमानत्वेन वैगुण्यप्रसङ्गादित्याशङ्कायां सूत्रकार एव 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वा' दित्यनेन सूत्रेण सत्यपि संख्याकालकृतविकारे पुरोडाशेन पृथगङ्गानुष्ठानं प्रयाजादिजन्योपकारस्याविकृतत्वादित्युत्तरं वक्ष्यति तदेवास्यापि चोद्यस्योत्तरमित्यर्थः । तथाच तत्र यथासंख्याकालकृतवैगुण्येऽपि प्रयोगविधिर्यथाकथंचिदुपकारमात्रस्यान्यतःसिद्धिं पर्यालोच्य तमेवानुमन्यत इति संख्याकालयोः प्रयोगविध्यग्राह्यत्वात्तदभावेऽप्यवैगुण्यं तथैहापीति भावः । **नन्वेवमप्यध्वर्युकर्तृकैरङ्गैः** प्रतिप्रस्थातृकर्तृकमारुत्याः कथमुपकारसिद्धिरङ्गप्रधानापूर्वयोरध्वर्युप्रतिप्रस्थातृलक्षणाश्रयभेदेन परस्परासंबन्धादित्यत आह—**तथाहीति । यजमानेति** । फलोपपादकापूर्वस्य फलाश्रय एव कल्पयितुमुचितत्वात्तस्यापि कर्तृत्वसद्भावाच्चेति भावः । **अत्रोच्यते** । अन्यदीये तन्त्रे बुद्धिस्थे सति यत्रान्यस्य विधिस्तत्र प्रयोगविधिः बुद्धिस्थमन्यत्तन्त्रमेवोपजीवतीति प्रसङ्गः । इह तु नान्यस्मिन्बुद्धिस्थेऽन्यस्य विधिः किंतु प्रावृषि वरुणप्रघासैर्यजेतेति सर्वेषां सहविधिरिति परकीयतन्त्रप्रयोगविधिप्रवृत्तिदशायां बुद्धिविपरिवृत्त्यभावेन **सर्वाङ्गयुक्ताया एव** मारुत्याः प्रयोगविधिना विधानाद्विहितस्य च परित्यागे वैगुण्यप्रसङ्गान्न प्रसङ्ग इत्यर्थः ॥

**कर्तृभेदस्तथेति चेत् ॥ ४२ ॥** पूर्वाधिकरणे देशभेदव्यवस्थापनेन सिद्धं भेदप्रयोगभेदमुपजीव्यैतदधिकरणप्रवृत्तेः

---

[1] नफलसाधनम्,

ब्रह्मा होताऽग्नीध्रश्च किं विहारयोर्भेदेनोत तन्त्रमिति । तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात्प्रयोगाङ्ग-भूतानां कर्तृणामपि भेदः स्यात् नैवम् । असत्यपि भेदे तैरेवोभयत्रापि कार्यसिद्धेः । दर्शिता च कार्यसिद्धिर्भाष्ये वचनाच्च 'चातुर्मास्यानां पञ्चर्त्विज'इति । विहारद्वयाभिप्रायं हीदं पञ्चर्त्विग्वच-नम् । नह्येकैकस्मिन्विहारे पञ्च पञ्च सन्ति । वचनादेवविहारद्वयेऽध्वर्युप्रतिप्रस्थात्रोर्व्यवस्थितत्वात्त-स्मात्तन्त्रं ब्रह्मादयः ॥

उत्तरदक्षिणविहारयोः पत्नीसंयाजादीनां भेदेनानुष्ठानाधिकरणम् ॥ १० ॥

**एकाग्नित्वादपरेषु तन्त्रैः स्यात् ॥ ४७ ॥ [नाना वा कर्तृभेदात् ॥ ४८ ॥]**

**तन्त्रैव पत्नीसंयाजादौ तन्त्रं भिन्नताऽथवा ॥ तन्त्रमप्यैक्यतो मैवं कर्तृभेदानिवारणात् ॥ १३ ॥**

ये पुनरापराग्निका होमाः पत्नीसंयाजादयस्तेषु तन्त्रमावापो वेति संदेहे पौर्वाग्निकवद्देशभेदाभावा-त्तन्त्रत्वं स्यात् । असत्यपि देशभेदे कर्तृभेदाद्भेदः प्रतिप्रस्थातृकर्तृका हि मारुत्या उपकुर्वन्ति अध्वर्यु-कर्तृकास्त्वितरेषां तस्माद्भेदः ॥

वाजपेये प्राजापत्यपश्वालम्भशेषस्य ब्रह्मसामकाल उत्कर्षाधिकरणम् ॥ ११ ॥

**पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्त-स्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४९ ॥ [संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५० ॥ वपानां चानभिघारणस्य दर्शनात् ॥ ५१ ॥]**

**पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि ॥ कर्मशेषनिषेधश्च कर्मान्तरविधिर्भवेत् ॥ १४ ॥**

**किंवोत्कर्षोऽवशिष्टस्य, ह्यारण्योक्तिवदादिमः ॥ अदृष्टवाक्यभेदासेर्द्रव्याभावेन चान्तिमः ॥ १५ ॥**

वाजपेये प्राजापत्यान्पशून्प्रकृत्य श्रूयते 'तान्पर्यग्निकृतानुत्सृजति ब्रह्मसाम्न्यालभत'इति, किमुत्सृ-

---

संगतिरित्याशयेनाह—**कर्तृष्विति । तत्रेति** । यद्यपि वरुणप्रघासशब्दितानामपि हविषामेकोपक्रमावसानत्वान्नात्यन्तं प्रयोगभेदस्तथापि देशभेदेनाङ्गानुष्ठानावृत्तेरुक्तत्वात्तदभिप्रायेण प्रयोगभेदोक्तिः ततश्चोभयत्रापि साङ्गप्रधानानुष्ठानाद्धोत्रा-दिभेदं विना तदसिद्धेस्तेषामपि भेद आवश्यकः, तत्र 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्य'इतिवचनादेकेन होत्रा वेदि-द्वयेप्युपकारासंभवाद्धोतृभेदस्तथा एक अग्नीध्रो ब्रह्मापि युगपत्तत्तदाहवनीयोत्तरदक्षिणदेशद्वये स्थित्वोपकर्तुमसमर्थाविति तद्भेदोप्यावश्यक इति भावः । **ननु** होत्रादिभेदं विना न तत्सिद्धिरित्युक्तमत आह—**दर्शितेति** । होता तावदग्रतो गार्हपत्यस्य प्रत्यगाहवनीयादवस्थितो याज्यानुवाक्यावचनेन संबोधयन्नुपकरोति । शक्नोति च तद्देशावस्थित एक एवाध्वर्यु-प्रतिप्रस्थातारौ संबोधयितुम् । अन्तर्वेद्यन्यः पाद इति न वेद्युपकारकत्वेन पादः श्रूयते किंतु 'अर्धमन्तर्वेद्यर्धं बहिर्वेदि यूपं मिनोती'त्यत्रान्तर्वेदिबहिर्वेदिशब्दलक्षितदेशस्य यूपमानाङ्गत्वेन विधानवदिहापि तादृशे देशे होत्रा स्थातव्यं यत्र स्थिता-स्यान्तर्वेद्येकः पादो बहिर्वेद्यन्यश्च पादो भवतीत्येवं देश एव विधीयत इति न ततोपि तद्भेद आवश्यक उत्करदेशे स्थित-स्याग्नीध्रस्योपकारकत्वमिह चोत्करदेशस्यैकत्वात्सोप्येक एव तथा ब्रह्मापि दक्षिणविहारस्य दक्षिणतोऽवस्थित उभयोरपि दक्षिणतः उपस्थितो भवतीति तद्भेदोऽपि नावश्यक इत्येवं तैरेव कार्यसिद्धिर्भाष्ये दर्शितेत्यर्थः । ननु प्रत्येकाभिप्रायेणापि वचनोपपत्तेः कथं पञ्चर्त्विज इति वचनात्कर्तृभेदाभाव इत्यत आह—**विहारेति । व्यवस्थितत्वादिति** । तथाचर्त्वि-ग्भेदेऽपि प्रतिविहारं चत्वार एव न पञ्चेति विहारद्वयसमुदायाभिप्रायमेवेदं वचनमित्यर्थः । नच सप्तदशर्त्विज इति सोमगतसप्तदशत्ववदिहापि स्वामिना सह पञ्चसंख्या प्रतिविहारं संभवतीति वाच्यम् । 'दर्शपूर्णमासयोश्चत्वार ऋत्विज' इत्यादिनिर्देशस्य यजमानव्यतिरिक्तविषयत्वदर्शनेनेहापि तद्व्यतिरिक्तविषयत्वस्यैव न्याय्यत्वात्, सोमे तु सप्तदशस्य यजमा-नव्यतिरिक्तस्याभावात्तेन सह संख्येति विशेष इति भावः ॥

**एकाग्नित्वात्० ॥ ४७ ॥** आपराग्निकाः गार्हपत्ये कर्तव्या इत्यर्थः । **पौर्वेति** । ततश्च गार्हपत्यरूपदेशैकेन पौर्वा-ग्निकप्रयाजादिवद्गृह्यमाणविशेषत्वाभावात्तन्त्रत्वमित्यर्थः । एवंच ये देशभेदादावर्तनीयाः प्रयाजादयस्तेषामेकेनाध्वर्युणा युगपत्कर्तुमशक्यत्वात्कर्त्रन्तरापेक्षायां तेष्वेव प्रतिप्रस्थाता विधीयते आपराग्निकेष्वध्वर्योरेव कर्तृत्वसंभवान्न तत्र प्रतिप्र-स्थातृविधिरिति कर्तृभेदस्याप्यभावान्नावृत्तिरिति भावः । भवेदेवं यदि देशविधिपूर्वकः कर्तृभेदविधिः स्यात् कर्तृभेदविधा-नादेवापेक्षिते देशे दक्षिणविहारविधिरिति वैपरीत्यस्यापि संभवादतः प्रतिप्रस्थातृविधेरविशेषेण सर्वाङ्गयुक्तमारुतीप्रयोगवि-षयत्वादापराग्निकहोमा अपि तत्कृता एव मारुत्या उपकुर्वन्ति अध्वर्युकृतास्त्वन्येषामेवेति कर्तृभेदेन विशेषग्रहणादावृत्ति-रिति सिद्धान्तमाह—**असत्यपीति** ।

**पर्यग्निकृतानामुत्सर्गे ॥ ४९ ॥ ब्रह्मसाम्नीति** । माध्यंदिनसवने ब्रह्मसामाख्यस्तोत्रकाल इत्यर्थः । **पूर्वत्र कर्तृ-**

जतीति कर्मशेषप्रतिषेध आलभत इति कर्मान्तरविधिरुतोत्सृजतीत्यनुवादः । आलभत इत्युत्कर्षविधिः तत्र 'तान्पर्यग्निकृतानारण्यानुत्सृजती'तिवत्तदन्ताङ्गरीतिविधानात्तथैव प्राजापत्यानां नैराकाङ्क्ष्यान्न चोदकेनाङ्गान्तरग्रहणम् अतः पर्यग्निकरणान्ताः प्राजापत्याः 'ब्रह्मसाम्न्यालभत' इत्याज्येन शेष इतिवत्कर्मान्तरमिति मन्वानस्योत्तरम्—'नान्यकर्मविधिर्युक्तोनेकादृष्टप्रकल्पनात् ॥ वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना ॥' पर्यग्निकरणानन्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले उत्कर्षमात्रं विधीयते तद्विधौ च प्राप्तः पर्यग्निकरणान्ते व्यापारोपरम इति तदनुवादमात्रमुत्सृजतिः । एवमत्यन्तलाघवलाभान्न कर्मान्तरवाक्यभेदाभ्युपगमो माध्यंदिने सवने ब्रह्मसामाख्यस्तोत्रकाले युक्तः । तस्मात्पर्यग्निकरणान्तमङ्गकाण्डं सकृदेव कर्तव्यं न माध्यंदिने पुनरावर्तनीयं, पशवश्च नान्ये उपादातव्याः ॥

अहीन उक्ष्णामुत्सर्गस्य कर्मशेषप्रतिषेधार्थताधिकरणम् ॥ १२ ॥

**पञ्चशारदीयास्तथेति चेत् ॥ ५२ ॥ [न चोदनैकवाक्यत्वात् ॥ ५३ ॥ संस्काराणां च दर्शनात् ॥ ५४ ॥]**

उक्षोत्सर्गः किमुत्कर्षस्त्यागो वाद्योऽत्र पूर्ववत् ॥ अन्वहत्रिवयोरुत्तमाहपञ्चत्वयोर्विधौ ॥ १६ ॥
वाक्यभेदाद्विशिष्टानामन्येषां कर्मणां विधिः ॥ तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम् ॥ १७ ॥

अस्ति पञ्चशारदीयो नामाहीनः पञ्चाहस्तत्रश्रूयते 'वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सा अप्रवीता उपाकरोति सप्तदश च पृश्नीनुक्ष्णस्तान्पर्यग्निकृतान्प्रोक्षितानितर आलभन्ते प्रेतरानुत्सृजन्ति ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्ष्णस्तान्पर्यग्निकृतानित्यादि पूर्ववत् एवं तृतीये

---

भेदादापराग्निकहोमानामेवेह कालभेदादावृत्तिरित्युत्थितेः संगतिः । **ननु** कर्मशेषप्रतिषेधवाचकशब्दाभावात्कथं तत्प्रतिषेध इति पूर्वः पक्ष इत्यत आह—**तत्रेति** । पर्यग्निकृतशब्दो हि कृतपर्यग्निकरणावस्थावाचकः सन्नकृतेषु पूर्वेष्वङ्गेषु तदवस्थानुपपत्तेस्तदन्ताङ्गरीतिमुपस्थापयति । तथाच प्रकृतिक्लृप्तोपकारतया 'ईशानाय परस्वत आलभते तान्पर्यग्निकृतानुत्सृजती'तीशानयागवत्प्राजापत्ययागनैराकाङ्क्ष्याद् गृहमेधीयाज्यभागन्यायेन चोदकपरिलोपादार्थिकोऽङ्गान्तरप्रतिषेध इत्यर्थः । **आज्येनेति** । यथा 'त्वाष्ट्रं पात्नीवतमालभेत पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन शेषं संस्थापयती'त्यत्र पात्नीवतयागस्य पर्यग्निकरणान्त एव समाप्त्या शेषाभावादाज्येन शेषमित्यत्र पात्नीवत्पदानुषङ्गाद्देवतालाभे कर्मान्तरविधिरेवमिहापि 'सप्तदशप्राजापत्यान्पशू'निति द्रव्यदेवतापदानुषङ्गात्कर्मान्तरविधिरित्यर्थः । पर्यग्निकृतशब्दस्य भूतत्वमात्रमर्थस्तदन्ताङ्गरीतिस्तु लक्षणया प्रतिपादनीया । नच श्रुतिसंभवे सा युक्ता आरण्यवाक्ये पात्नीवद्वाक्ये च विधेयान्तराभावादगत्या लक्षणामप्याश्रित्य तदन्ताङ्गरीतिविधानमिहतूत्कर्षसंभवान्न लक्षणाश्रयणं युक्तमित्याशयेन मन्वानस्येत्युक्तं—**नान्येति** । कर्मान्तरविधौ प्रतिकर्मादृष्टभेदः कल्पनीयः पर्यग्निकृतवाक्ये तदन्ताङ्गरीतिविधिः ब्रह्मसामवाक्ये कर्मान्तरविधिरिति वाक्यभेदश्च स्यादुत्कर्षविधौ तूत्कर्षस्यैव विधेयत्वान्न वाक्यभेदप्रसङ्गः । अदृष्टभेदस्त्वप्रसक्त एवेति भावः । **तद्विधाविति** । तदा दिवाभिसंबन्धादिति न्यायेन पर्यग्निकरणानन्तरभाविनामालम्भादीनां सर्वेषामुत्कर्षादर्थप्राप्तः प्रातःसवने पर्यग्निकरणान्ते व्यापारोपरम इत्यर्थः । लक्षणादोषादिरादिशब्दार्थः । इमं विचारमध्याये संगमयति—**तस्मादिति** । अत्राङ्गकाण्डशब्देन पर्यग्निकरणान्ताङ्गमध्यगतः संनिपातिवर्ग उच्यते । कर्मान्तरत्वेऽपि तस्य माध्यंदिनसवने कर्तव्यताया **पुरो**डाशेन माध्यंदिन इति माध्यंदिने सवने कर्तव्यपशुपुरोडाशस्येव तन्त्रमध्ये विधानेन प्रसङ्गादुपकारसिद्धेरारादुपकारकप्रयाजादिवर्गस्यावृत्त्यप्रसङ्गादिति ध्येयम् । सूत्रे श्रुतिसामान्यात् शब्दसारूप्यात् चोदनापृथक्त्वं कर्मान्तरविधिरित्यर्थः ॥

**पञ्चशारदीयास्तथेतिचेत् ॥ ५२ ॥ अस्तीति** । 'मरुतां पञ्चशारदीयो यः कामयेत बहु स्यामिति स एतेन यजेते'ति विहित इति शेषः । **वैशाख्यामिति** । विशाखानक्षत्रयुक्तायां नतु वैशाखमासीयायां 'नक्षत्रेण युक्तः काल'इति प्रतिपदोक्तस्याणो बलवत्त्वादित्याहुः । त्रिवत्साः त्र्यब्दाः । अप्रवीताः अप्रसूता इत्यर्थः । पृश्नयः नानावर्णाः शुद्धा इत्येके अल्पतरा इत्यन्ये । उक्ष्ण इत्यत्रोक्ष्णं द्वितीयया कर्मत्वेनोपस्थितानां क्रियाकाङ्क्षत्वादुपाकरोतीति संनिहितक्रियया आकाङ्क्षा पूरणीया । तत्र क्रियाया नानुषङ्गस्तथासति प्रथमं त्रिवत्साभिः संबध्य पश्चादुक्षभिः संबन्धाद्वाक्यभेदापत्तेः किंतु युगपदेवोभयाकाङ्क्षाबलात्त्रिवत्साभिरुक्षभिश्च संबध्यत इति चतुस्त्रिंशद्यागा एकेन वाक्येन प्रतिपाद्यन्त इति भाष्ये उक्तम् । नन्वेवमपि मारुतीरिति पदस्य देवतासंबन्धप्रतिपादकस्य स्त्रीलिङ्गतया त्रिवत्साभिरेवान्वयो नोक्षभिरिति सप्तदशैव यागाः

चतुर्थे च संवत्सरे स्त्रीपशुयागानां सामस्त्येनानुष्ठानमुक्ष्णां च पर्यग्निकृतानामुत्सर्गमुक्त्वा तत्र श्रूयते 'पञ्चमे वर्षे दीक्षितस्तानेवोक्ष्णस्त्रींस्त्रीनन्वहमालभते पञ्चोत्तमेऽहनी'ति । तत्रोक्षसु संशयः किं य एव प्रथमे संवत्सरे पर्यग्निकृता उक्षाण उत्सृष्टव्यास्तेषामेव द्वितीयादिषु संवत्सरेषु पर्यग्निकरणं पञ्चमे संवत्सरे तेषामेव पञ्चसु सुत्यासु त्रींस्त्रीनित्येवमालम्भः प्राजापत्यानामिवोत प्रथमे वर्षे उपक्रान्तानां पर्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिरारण्यवत् । द्वितीयादिष्वन्येन्ये उक्षाणः पञ्चमे वर्षे सुत्यास्वन्येषामुक्ष्णामालम्भ इति । तत्र त्रींस्त्रीनित्यनेन ब्रह्मसामालम्भवाक्यवत्तेषामेवालम्भोत्कर्षमात्रविधौ लाघवं वचनात्पर्यग्निकृतानामपि तेषां पुनःपुनः पर्यग्निकरणं क्रियते उत्सर्गवचनानि चालम्भोत्कर्षादेव प्राप्तस्योत्सर्गस्यानुवाद इति प्राप्ते ब्रूमः—स्यादेवं यदि त्रींस्त्रीनित्यनेनालम्भोत्कर्षः शक्यो विधातुं, नत्वेवमस्ति, गुणवाक्यत्वेसति त्रींस्त्रीनिति चानन्वहमिति चानेकार्थविधाने वाक्यभेदापत्तेः । तथा पञ्चेति चोत्तमेहनीति चार्थभेदो दर्शयितव्यः । तस्मादिदं तावत्संख्याकालविशिष्टापूर्वकर्मविधानम् । एवंचाविहिते सत्यालम्भोत्कर्षे प्राजापत्यन्यायासंभवात्तदन्ताङ्गरीतिविधानेनारण्यन्यायेन प्रथमवर्षोत्क्रान्तानामुक्ष्णां त्रिवत्सानामिव तत्रैव समाप्तिः द्वितीयादिष्वपि वर्षेष्वन्येष्वन्ये एव स्त्रीपशुयागाः पुंपशुयागाश्च । एवं प्रतिसंवत्सरं देवतानुषङ्गेण चतुस्त्रिंशत्कर्माणि पञ्चमे चान्येषामेवोक्ष्णामालम्भः ॥

---

स्युः । पुल्लिङ्गतया विपरिणामेनोक्षभिः संबन्धे प्रमाणाभावात् । न च मरुतां पञ्चशारदीय इत्यनेन मरुतां पञ्चशारदीयदेवतात्वं प्रतिपाद्यते तच्चाङ्गप्रधानसाधारणमित्युक्षस्वपि मरुद्देवतासंबन्धात्तावद्यागसिद्धिरिति वाच्यम् । प्रत्यक्षयज्यश्रवणेनोक्ष्णां देवताकाङ्क्षाविरहेण मरुतां पञ्चशारदीय इत्यनेनाप्युक्षसु देवतालाभस्य वक्तुमशक्यत्वादितिचेन्नैवम् । उक्षवाक्ये चशब्दः श्रूयते । सच नोपाकरोति क्रियायामुक्ष्णामप्यन्वयार्थस्तेन विनाप्याकाङ्क्षाबलादेव तदन्वयसिद्धेः किंतु देवतापदस्योक्षभिः संबन्धार्थ एव वाच्य इति तद्बलादेव विपरिणामेनोक्षभिरपि देवतापदान्वयस्य कल्पनीयत्वात्तावद्यागसिद्धेरिति । **तानिति।** एतरा इत्याङो लभन्त इत्यनेनान्वयः । प्रेतरानिति प्रशब्दस्योत्सृजन्तीत्यनेनान्वयः । सर्वेषां प्रोक्षणपर्यग्निकरणानन्तरमितरा त्रिवत्सा आलभन्त इतरानुक्ष्णः प्रोत्सृजन्तीत्यर्थः । वर्णविशेषार्थको राजीवशब्दः । **तत्रेति** । एतरा लभन्त इति स्त्रीलिङ्गेनेतराशब्देन वत्सतरीणामभिधानात्तासामालम्भानुवादेन विशसनादेः प्राकृतस्य कृत्स्नस्याप्यनुज्ञावगमेन तासु संदेहाभावादुक्षस्वित्युक्तं तत्र त्रीनिति यद्यपि त्रींस्त्रीनन्वहं पञ्चोत्तमेहनीत्यनेकगुणश्रवणाद्विशिष्टयागान्तरविधिरेव युक्तस्तथापि त्रींस्त्रीनित्यादिपञ्चमसंवत्सरवाक्ये देवताया अश्रवणान्न यागान्तरविधिः संभवति अतो वाक्यभेदमप्यङ्गीकृत्योत्कर्षविधिरेव स्वीकार्यः, एवंचोत्कर्षविधिबलादेव उत्पत्तिशिष्टोऽपि वैशाख्याममावास्यायामिति काल उक्षसु पर्यग्निकरणान्ताङ्गकलापमात्रविषय इति भावः । **ब्रह्मसामेति** । अनेन संगतिरपि सूचिता । **क्रियत इति** । अदृष्टार्थमिति शेषः । **स्यादेवमिति।** प्रथमसंवत्सरे प्रक्रान्तानां त्रींस्त्रीनित्यनेन पञ्चमे संवत्सरे आलम्भोत्कर्षविधिर्न संभवति तथासत्यालभेतेत्यनूद्य त्रीनित्यन्वहमिति च गुणद्वयस्य विधेयतया वाक्यभेदप्रसङ्गादित्यर्थः । **तथेति** । तथालभत इत्यनूद्य पञ्चसंख्याया उत्तमाहस्य च विधाने वाक्यभेदः प्रदर्शनीय इत्यर्थः । **तस्मादिति** । 'तस्मादेता ऐन्द्रा मारुता उक्षाणः सवनीया भवन्ती'ति तैत्तिरीयशाखायां देवताया आम्नानाद्विशिष्टयागविधिर्नानुपपन्न इति भावः । **ननु** द्वितीयादिसंवत्सरवाक्येषु देवतालाभाभावान्न यागविधिसंभव इत्यत आह—**देवतेति** । पर्यग्निकरणस्य यागीयद्रव्यसंस्कारत्वात्तत्संयोगेनाभिषवयुक्तपूतीकवद्यागसाधनत्वावगतौ देवतापेक्षायां प्रथमसंवत्सरगतमारुतपदानुषङ्गेण देवतालाभाद्यागविधिनिर्वाह इति भावः । नचैवं पञ्चमसंवत्सरवाक्ये त्रींस्त्रीनित्यत्रापि प्राणिद्रव्यकर्मकालम्भस्य यागीयद्रव्यसंस्कारत्वादेव यागविधिसिद्धौ देवतापेक्षायामनुषङ्गादेव देवतालाभसंभवे किमिति शाखान्तरीयवाक्यानुसरणमिति वाच्यम् । प्राणिद्रव्यकर्मकालम्भस्य वत्समालभेतेत्यादिवद्यागसाधनत्वाभावेऽपि संभवेन तन्मात्राद्यागलाभासंभवेन शाखान्तरीयवाक्यानुसरणावश्यंभावादिति । **पञ्चमे इति** । तानेवोक्ष्ण इति निर्देशश्च तानेव शालीन्भुक्त इतिवज्जात्यैक्याभिप्रायेणोपपन्न इति भाष्यादावुक्तम् । वस्तुतस्तु तानेवोक्ष्ण इत्यस्य व्यक्त्यैक्यविषयत्वाङ्गीकारेपि न दोषः । यथैव संस्कृतानां पूर्वपक्षे पुनःसंस्कारस्तथा त्यक्तानामपि पुनस्त्यागसद्भावात्किं हि न वचनं कुर्यान्नास्ति वचनस्यातिभारः । अतएवाग्न्यादिभ्यस्त्यक्तानामपि पुरोडाशानामेकदेशः स्विष्टकृते सन्त्यज्यते वातनामहोममानसग्रहादिषु अस्वभूता एव वाग्वाकाशादयः देवतोद्देशेन त्यज्यन्ते । सूत्रार्थस्तु—पञ्चशारदीयपशवोपि प्राजापत्यवदुत्कृष्यन्त इति ॥

दशपेयाभिषेचनीययोर्भेदेन प्रयोगाधिकरणम् ॥ १३ ॥

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षः, ततः प्राचां तत्समानं तन्त्रं स्यात् ॥ ५५ ॥ [समानवचनं तद्वत् ॥ ५६ ॥ अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधीयते ॥ ५७ ॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५८ ॥ दीक्षाणां चोत्तरस्य ॥ ५९ ॥ समानः कालसामान्यात् ॥ ६० ॥]**

दशपेये चाभिषेचनीये तन्त्रं भिदाऽथवा ॥ क्रयसाहित्यतस्तन्त्रं कालभेदेन भिन्नता ॥ १८ ॥

राजसूयेऽभिषेचनीयो नाम सोमयागस्ततः संसृपायां[1] हवींषि ततः पुनर्दशपेयः सोमयागस्ताविमावभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति संदेहे 'सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य चे'ति वचनादभिषेचनीयसोमक्रयकाले दशपेयक्रयः प्रतिकृष्यते सच प्रतिकृष्यमाणः प्राचोपि पदार्थान्प्रतिकर्षति 'तदन्तमपकर्षे स्यादि'तिन्यायात् । तस्मात्सहोपक्रमितव्यावभिषेचनीयदशपेयौ, यथोपक्रमं च समापयितव्याविति समानतन्त्रौ । नैवम् । उपसंवादमात्रमत्र क्रीणातिनोच्यते । नत्वङ्गभूतः क्रयः । नन्वसौ क्रीणातेर्न मुख्यो वाच्यः परकीयस्य मूल्यं हि दत्वा स्वीकरणं क्रयः । नचोपसंवादस्यैवंरूपत्वमस्ति । यद्यप्येवं तथापि गौण्या वृत्त्या तस्यैवेदं साहित्यमुच्यते वचनान्तरानुगुण्यात् । दशपेये हि श्रूयते 'सद्यो दीक्षयति सद्यः सोमं क्रीणाति'इति तथाभिषेचनीयेऽवभृथदर्शनमत्यन्तानुपपन्नमेकतन्त्रत्वे स्यात् । तस्मादङ्गभूतक्रयापकर्षाभावान्न तदन्तापकर्ष इति न सहोपक्रमत्वं कालभेदात्तु भिन्नोपक्रमावसानौ भिन्नतन्त्रावेवैतौ ॥

वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम् ॥ १४ ॥

**निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षः स्यात् ॥ ६१ ॥ [अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६२ ॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ६३ ॥]**

निष्कासावभृथे विप्रकर्षोऽथ प्रतिपादनम् ॥ उतार्थकर्म पशुवदाद्योऽवभृथशब्दतः ॥ १९ ॥
कर्मान्तरं तदाऽपि स्यात्प्रतिपत्तिः प्रयाजवत् ॥ प्राधान्यायार्थकर्म स्यात्तत्रावभृथधर्मकम् ॥ २० ॥

वरुणप्रघासेषु वारुण्यामिक्षा मारुत्यामिक्षेति श्रुतं तत्र पुनः श्रूयते 'वारुण्या निष्कासेन तुषैश्चा-

---

**दशपेये क्रयप्रतिकर्षात्० ॥५५॥ संसृपायां हवींषीति** । 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणे'त्यादीनि दशेति शेषः । पूर्वत्रालम्भोत्कर्षविध्यसंभवात्प्रतिसंवत्सरं पर्यग्निकरणान्ताङ्गकलापा वृत्तावपीहाभिषेचनीयदशपेययोः समानतन्त्रत्वान्नाङ्गावृत्तिरित्युत्थितेः संगतिः । **तदंतमिति** । इदं च तथा स्यादध्वरकल्पायामित्यत्र व्याख्यातम् । **तस्मादिति** । उभयोः क्रयपर्यन्तपदार्थजातस्य सहकर्तव्यत्वादित्यर्थः । **उपसंवादेति** । अत्रोपसंवादशब्देन 'कलया ते क्रीणाति भूयो वा अतः सोमो राजार्हती'त्येवं रूपः क्रेतृविक्रेत्रोर्यः संवादः सोमक्रयकाले कर्तव्यतया विहितः स न विवक्षितः । तथासति तस्याङ्गत्वादेव तदपकर्षे सहोपक्रमत्वस्यावर्जनीयत्वापत्तेः । किंतु क्रतुकाले यदि सोमविक्रयी न लभ्येत लब्धोपि वाधिकमर्थं याचेत तदा क्रतुरेव न संवर्तेतेति बुद्ध्या क्रतुप्रयोगाद्बहिरेव साधनान्तरसंपादनवद्विक्रेत्रा सह लौकिको यो मूल्यनिश्चयः स विवक्षितस्तस्य चानङ्गत्वान्न सह प्रयोगापादकत्वमिति भावः । **न मुख्य इति** । नच परकीयस्य द्रव्यस्य स्वत्वप्राप्त्यनुकूलानतिहेत्वसाधारणव्यापारः क्रीणात्यर्थः, उपसंवादोपि तादृशः तेनाप्यानतिसंभवादिति कथं न मुख्यत्वमिति वाच्यम् । तथासति सान्त्वादीनामपि तादृशत्वेन तेषामपि क्रीणात्यर्थत्वापत्तेरतो मूल्यार्पणेन स्वीकरणार्थतयानतिहेतुव्यापारो विवक्षणीयस्तथासत्यावश्यकत्वात्स एव क्रीणात्यर्थोस्तु किमानतिहेतुव्यापारपर्यन्तधावनेनेति भावः । 'सह सोमं क्रीणाती'त्यत्रोपसंवाद एव क्रीणातेरर्थः अन्यथा दशपेये समानेऽहनि क्रयप्रतिपादकवचनमननुगुणं स्यादिति प्रतिपादनाय सद्यः सोमं क्रीणातीत्युदाहर्तव्ये सद्यो दीक्षयतीत्युदाहरणम् समानतन्त्रतायां दशपेयपृथक्दीक्षादर्शनमनुपपन्नं स्यादिति दूषणान्तराभिप्रायेणेति ध्येयम् । **तथेति** । अवभृथस्यान्तिमपदार्थत्वेन समानतन्त्रतायां दशपेयानन्तरं कर्तव्यत्वादिति भावः । **भिन्नेति** । 'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्चे'ति वचनं न समानतन्त्रत्वाभिप्रायं किंत्वेकस्मिन्नृतौ कर्तव्यत्वमात्राभिप्रायमिति भाष्ये प्रतिपादितमिति न तद्वचनविरोध इति भावः ॥

**निष्कासस्यावभृथे० ॥ ६१ ॥ वारुण्या इति** । वारुण्या आमिक्षायाः स्थालीलग्नेन शेषेण पिष्टमयमेषप्रकृतिभु-

---

१ संसृपयां हवींषि.

वभृथं यन्ती'ति। तत्र संशयः किं प्रधानस्यामिक्षायागस्यायं प्रचारविप्रकर्षः पशोरिव वपाहृदयादिभिः प्रातःसवनतृतीयसवनयोरुत निष्कासस्येयं प्रतिपत्तिरथामिक्षानिष्कासद्रव्यकमवभृथधर्मकं कर्मान्तरं विधीयत इति। तत्र कृत्स्नस्यामिक्षाद्रव्यस्य प्रकृतयागशेषत्वात्तदेकदेशे तस्या एव देवतायै वरुणाय दीयमाने न कर्मान्तरं युक्तम्। अवभृथशब्दस्तु देवतासामान्याद्गौणोनुवादः अवभृथोऽपि हि वारुणः। नचानुवादे गौणत्वं दोषः, सिद्धान्ते तु तद्धर्मककर्मविधौ विधावेव गौणत्वं स्यात्तच्चायुक्तं, तस्मात्तस्यैवायमभ्यास इति न स्विष्टकृदादेः पुनः करणम्। नैवम्। अवभृथशब्दानर्थक्यात्। नचार्थवत्त्वे संभवत्यानर्थक्यं युक्तं, तस्मादवभृथधर्मकं कर्मान्तरविधानं तु प्रयाजशेषाभिघारणवदामिक्षाशेषस्य प्रतिपत्त्यर्थम्। सत्यं कर्मान्तरं न तु प्रतिपत्तिः अवभृथशब्दविरोधात्। अवभृथे हि द्रव्यं गुणतः कर्म प्रधानतः, इहतु विपर्ययात्तद्वद्भावानुपपत्तिः तेन यस्यैवावभृथशब्दस्य प्रसादात्कर्मान्तरमाश्रितं तेनैव प्रतिपत्त्यर्थतानिराकरणेनार्थकर्मता सिद्ध्यति वचनाच्चान्यदीयस्यापि द्रव्यस्यैकदेशोऽन्यत्र विनियुज्यमानो न दुष्यति॥

---

तयवानां तुषैश्चेत्यर्थ इति केचित्। पिष्टमयमेषस्यामिक्षासंस्कारार्थतया प्रधानहविष्ट्वाभावात्पुरोडाशादिलक्षणप्रधानहविरर्थानां तुषैरित्यन्ये। अविशेषादुभयेषामित्यपरे। **किमिति**। किं प्रचारविप्रकर्षः उतावभृथधर्मककर्मान्तरविधिः। यद्यप्यवभृथधर्मककर्मान्तरविधिस्तदापि किं प्रतिपत्तिरुत प्रधानकर्मेति संशयनिष्कर्षः। **तत्रेति**। प्रकृतयागशेषभूतामिक्षैकदेशस्य देवतान्तरसंबन्धानुपपत्त्या प्रकृतयागदेवताभूतवरुणायैव देयत्वान्न कर्मान्तरं किंतु प्रकृतस्यैवामिक्षायागस्य निष्कासलक्षणद्रव्यवशेनाभ्यासः। ततश्चाज्यभागानन्तरमामिक्षाद्रव्येण प्रचारः समिष्टयजुरनन्तरं तदेकदेशेन प्रचार इति प्रचारविप्रकर्ष एवायमित्यर्थः। **ननु** यदि निष्कासोऽवश्यं देवतायै देयः स्यात्तदा प्रकृतयागशेषस्य देवतान्तरसंबन्धानुपपत्त्या वरुणायैव दानमिति कर्मान्तरत्वासंभवात्प्रचारविप्रकर्षः स्यान्नचायं निष्कासोऽवश्यं देवतायै देय इत्यत्र प्रमाणमस्ति। पशौ तु विशसनादिवाक्यपर्यालोचनयावयवानां हविष्ट्वेसति 'आग्नेयमग्निष्टोम आलभत' इति श्रुतस्य देवतोद्देशेन त्यागस्य वपादिष्वेव पर्यवसानात् 'वपया प्रातःसवने प्रचरन्ति अङ्गैस्तृतीयसवन'इति युक्तः प्रचारविप्रकर्षविधिः, इह तु यत्किंचित्सोमलिप्तं तेनावभृथं यन्तीति सोमलिप्तनयनवद्देवताशून्यमेव कर्म निष्कासप्रतिपत्तितया विधीयते इत्येव वर्णनीयत्वात्प्रचारविप्रकर्षविधिरिति पूर्वपक्षवर्णनमयुक्तमिति चेत्। सत्यम्। वरुणप्रघासेषु वाक्यान्तरेणावभृथस्याविहितत्वेनावभृथदेशनयनस्य सोमलिप्तवद्विधातुमशक्यतया देवताशून्यस्य प्रतिपत्तिकर्मणो विध्यनर्हत्वे बुद्धौ विपरिवर्तमानतामात्रेण प्रत्येकं देवतासंबन्धं परिकल्प्य प्रकृतकर्मण एव निष्कासविशिष्टप्रचारविधिरगत्या स्वीकार्य इत्याशयात्। वस्तुतस्तु अवभृथशब्देन देवतासामान्यात्प्रकृतयागं परामृश्य वरुणयागं निष्कासेनापि कुर्यादित्येवं प्रचारविप्रकर्षविधिः सुखेनोपपादयितुं शक्यते तथाप्ययं प्रकारो ग्रन्थकारस्य नाभिमतः। तथात्वेऽवभृथशब्दानर्थक्याभावेन वक्ष्यमाणतदानर्थक्यानुपपत्तेरिति ध्येयम्। इमं विचारमध्याये संगमयति—**न स्विष्टकृदादेरिति**। अनेनैव दशपेयाङ्गानामावृत्तावपीह नावृत्तिरित्युत्थानादवान्तरसंगतिरित्यपि सूचितम्। **आनर्थक्यादिति**। अनुवादस्य प्रयोजनाभावादित्यर्थः। **अवभृथधर्मकमिति**। अवभृथधर्मकं कर्म कुर्यादिति प्रत्ययेनावभृथशब्दसंबन्धात्तद्धर्मककर्मविधौ सति नाम्नैव देवतालाभाद्यागरूपत्वसिद्धिः। यन्तीति प्रकृत्यंशश्च प्राप्तावभृथदेशगमनानुवाद इति ध्येयम्। **प्रयाजेति**। ततश्च तद्वदेव प्रातिपदिकानुसारेण तृतीया प्रतिपाद्येपि नेयेति भावः। गुणतः प्रधानत इति स्वार्थिकस्तसिः। **तद्वद्भावेति**। यथाप्रसिद्धेनावभृथेन कृतं तथा तेनापि कर्मणेत्येवावभृथनाम्नावगम्यते प्रसिद्धे च द्रव्यं गुणो यागः प्रधानमिह तु विपरीतमिति तद्वद्भावानुपपत्तिरित्यर्थः। **ननु** निष्कासप्रतिपत्तिलक्षणफलान्तरार्थत्वेऽपि प्रसिद्धावभृथगतपदार्थतज्जन्योपकारवत्तामात्रेण तद्वद्भावोपपत्तेरिदमयुक्तमिति चेत्। नैवम्। प्रतिपत्तिपक्षे निष्कासस्य द्रव्यत्वेन किंचित्प्रमाणमस्ति इह निष्कासशब्दस्य तत्प्रतिपत्तिलक्षणफलसमर्पणोपक्षीणतया गुणीभूतद्रव्यपरत्वाभावात् ततश्च गुणीभूतस्य प्रसिद्धाववभृथद्रव्यस्य नाम्ना भवभतिदेशो न निवारयितुं शक्यते। नच प्रसिद्धाववभृथवदेककपालद्रव्यकेणानेन कर्मणा निष्कासस्य प्रतिपत्तिः। संभवतीति तत्स्पर्शगन्धस्याप्यभावादित्याशयात्। यद्यपि सप्तमे दार्शपौर्णमासिकायां व्युत्सेके चोदकप्राप्ते तुषनिष्कासविधिरिति पूर्वपक्षं कृत्वा कर्मान्तरविधित्वं व्यवस्थापितं तथापीह तदेव कर्मान्तरत्वं प्रचारविप्रकर्षनिराकरणेन स्थिरीक्रियत इत्यपुनरुक्तिः। सूत्रार्थस्तु— अवभृथे निष्कासस्यामिक्षैकदेशत्वात्पशाविव प्रदानविप्रकर्ष इति॥

प्रायणीयनिष्कास उदयनीयनिर्वापस्य संस्कारकर्मताधिकरणम् ॥ १५ ॥

**उदयनीये च तद्वत् ॥ ६४ ॥ [प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६५ ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ६६ ॥]**

प्रायणीयस्य निष्कासे यो निर्वापोऽर्थकर्म तत् ॥ निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥ २१ ॥
उताद्यः पूर्ववन्नैवं मुख्यस्य प्रकृतत्वतः ॥ मध्योऽस्तु नोपयोक्तव्यसंस्कारस्य गुरुत्वतः ॥ २२ ॥

ज्योतिष्टोमे प्रायणीयश्चरुरुदयनीयश्च । तत्र श्रूयते 'प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपती'ति। तत्र संशयः किं प्रायणीयनिष्कासद्रव्यकमुदयनीयधर्मकं कर्मान्तरं विधीयते किंवा प्रायणीयनिष्कासस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिः उत प्रायणीयनिष्कासे निर्वापः उदयनीयस्य संस्कार इति पूर्ववत्तद्धर्मककर्मविधिः मुख्यस्यैव तूदयनीयस्येह प्रकृतत्वान्न प्रकरणान्तरन्यायेन तद्धर्मककर्मविधिः । तस्मात्प्रायणीयनिष्कासस्य कृतार्थस्येयं प्रतिपत्तिरुदयनीयनिर्वापसंयोगः । नैतदेवम्—'निष्कासस्य हि सप्तम्या गुणभावोऽवगम्यते ॥ द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम् ॥' उदयनीयहविर्हि निरूप्यमाणं भाव्युपयोगित्वात्सुतरां संस्कारार्हं, नच निष्कासस्य प्रयाजशेषवदुदयनीयसंयोगात्किंचिद्दृष्टमस्ति, तस्माच्छब्दानुगुण्यादुदयनीयहविःसंस्कारार्थः प्रायणीयनिष्कासनिर्वापः ॥ इति शास्त्रदीपिकायामेकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## एकादशाध्याये तृतीयः पादः ।

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यताधिकरणम् ॥ १ ॥

**अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥**

वेद्यादिर्मुख्यकाले स्यात्स्वकाले वेतराङ्गवत् ॥ मुख्यकाले न पूर्वेद्युरित्याद्युक्तेः स्वकालगः ॥ १ ॥

प्रधानसमदेशत्वं प्रधानसमानकालत्वं चाङ्गानामुक्तं, यत्र त्वाहत्याङ्गस्य भिन्नदेशकालत्वं वचनेनैवोक्तं तत्र तथा भवतीति सुहृद्भूत्वोक्तवान्, नात्र निराकार्यमस्ति ॥

---

**उदयनीये च तद्वत् ॥ ६४ ॥ पूर्ववदिति ।** प्रकृतस्याप्युदयनीयकर्मणः प्रायणीयशेषसंस्कारार्थत्वेन विधानानुपपत्तेः 'आदित्य उदयनीयश्चरु'रित्युत्पत्तिशिष्टद्रव्यावरुद्धे तस्मिन्प्रायणीयशेषस्य द्रव्यत्वेन विधानानुपपत्तेश्च कर्मान्तरमेवेदमित्यर्थः । पूर्ववत्कर्मान्तरमित्युत्थानात्संगतिरित्यनेनैव सूचितम् । **मुख्यस्येति ।** उदयनीयस्य संनिहितत्वेनासंनिहितत्वलक्षणप्रकरणान्तराभावान्नात्र कर्मान्तरविधिरित्यर्थः । **ननु** उदयनीयस्य निष्कासार्थत्वानुपपत्तेः निष्कासस्योदयनीयार्थत्वानुपपत्तेश्च कर्मान्तरविधिरावश्यक इत्युक्तमित्यत आह—**तस्मादिति ।** उदयनीयकर्मणो निष्काससंस्कारार्थत्वानुपपत्तावपि तदर्थद्रव्यनिर्वापस्य निष्काससंस्कारार्थत्वसंभवान्न कर्मान्तरं युक्तमित्यर्थः । **सुतरामिति ।** उपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वादिति भावः । **नन्वेवं** प्रयाजशेषाभिघारणस्याप्युपयोक्ष्यमाणहविःसंस्कारार्थत्वमेव स्यान्न प्रतिपत्तित्वमित्यत आह—**नचेति ।** प्रयाजशेषाभिघारणस्य हविःसंस्कारार्थत्वे दृष्टार्थत्वं स्यात्' प्रयाजशेषप्रतिपत्त्यर्थत्वे तु करिष्यमाणाज्यभागादिद्रव्यासंसर्गार्थं स्रुचो रिक्तीकरणाय शेषप्रतिपत्तेरपेक्षितत्वाद्दृष्टार्थत्वमित्येवं तृतीयावगतगुणभावपरित्यागेन प्रतिपत्त्यर्थत्वमेव स्वीकृतं, इहतु प्रतिपत्त्यर्थत्वेपि दृष्टप्रयोजनाभावाददृष्टार्थत्वं तुल्यमिति प्रतीयमानगुणप्रधानभावपरित्यागे उपयोक्ष्यमाणसंस्कारार्थत्वत्यागे च न किंचिन्नियामकमित्यर्थः । सूत्रार्थस्तु—अवभृथ इव उदयनीयेपि निष्कासो गुणभूत इति ॥

**इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायामेकादशाध्यायस्य द्वितीयः पादः ॥ २ ॥**

**अङ्गानां मुख्यकालत्वात्० ॥ १ ॥** पूर्वस्मिन्पादे कालादीनामङ्गप्रधानादिषु तन्त्रता प्राधान्येन निरूपिता । **इदानीं** तदपवादतया क्वचिदङ्गप्रधानयोर्भिन्नकालत्वं प्रस्तुत्य भिन्नदेशकालानामङ्गानां तन्त्रत्वं व्युत्पाद्यत इति पादान्तरत्वमानन्तर्यं च । **यत्रेति ।** 'अप्स्ववभृथेन चरन्ती'त्यादौ भिन्नदेशत्वं 'पूर्वेद्युरमावास्यायां वेदिं करोती'त्यादौ भिन्नकालत्वम् 'अग्नौ सौत्रामण्यां च वडवा दक्षिणेति' दक्षिणाभेदाद्भिन्नकर्तृकत्वं च द्रष्टव्यम् । अङ्गानां प्रधानदेशकालत्वं प्रयोगविधिविहितं भिन्नदेशकालत्वमपि प्रागुदाहृतवचनविहितमित्युभयोर्विकल्प इति पूर्वपक्षं कृत्वा यस्याङ्गस्य प्रातिस्विकवचनेन कालादिविधिर्न तस्य कालाद्यन्तरापेक्षेति तदतिरिक्ताङ्गविषयत्वं प्रयोगविधेरिति प्रतिपादनार्थमिदमित्युक्तं प्राभाकरैस्तदयुक्तम् । विशेषेण सामान्यबाधस्य प्रागेव व्यवस्थापितत्वात् । नच सामान्यवचनस्य विशेषवचनेन बाधसिद्धावपि सामान्यवचनार्थावधारणेतिकर्तव्यताभूतन्यायस्य बाधव्युत्पादनार्थमिदमिति युक्तम् । वचनबाधे न्यायबाधस्य कैमुतिकन्यायसिद्धत्वादित्याशङ्क्याह—**नात्रेति ।** सूत्रे कालग्रहणं देशकर्त्रोरप्युपलक्षणम् ॥

आधानस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ २ ॥

## द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥

**प्रतिकर्म पृथक्कार्यमाधानं यदि वा सकृत् ॥ अन्याङ्गवत्पृथङ्नैवं स्वकालत्वसमत्वतः ॥ २ ॥**

'वसन्ते ब्राह्मणोऽग्नीनादधीते'त्यनारभ्याधीतमप्याधानमग्निहोत्रादीनामङ्गमिति कृत्वाचिन्त्यते—किमङ्गं सदाधानं प्रतिकर्म प्रतिप्रयोगभेदेन कर्तव्यमुत सर्वकर्मणां सर्वप्रयोगाणां च तन्त्रेणेति। तत्र—'प्रयाजादिवदङ्गत्वादावृत्तिः स्यात्प्रतिक्रियम् । आनन्तर्याद्विशेषश्च गृह्यतेऽतो न तन्त्रता ॥ स्वकालत्वाच्च तन्त्रत्वं विशेषाग्रहणाद्भवेत् ॥ आनन्तर्याद्विशेषश्चेन्नाधानसमयेऽस्त्यसौ ॥' नहीदं कर्मणः प्रारम्भे मध्ये वा प्रयुज्यते येन तदपवर्गेऽपवृज्येत । वाचनिको ह्यस्य वसन्तादिः स्वकालस्तेन तत्रैव स्थितं सर्वेषामुपकरोतीत्यगृह्यमाणविशेषत्वात्तन्त्रं, यदाधाने कृतेऽनन्तरं किंचित्कर्मापतति तत्तदर्थमित्यानन्तर्येण विशेषो गृह्यत इति चेत्, नायमाधानसमयेऽस्ति विशेषः तदा ह्येवमभिसंधायासावाधत्ते यदेव किंचिन्निमित्तवशात्कामनावशाद्वा कर्तव्यं कर्मोपस्थास्यते तदर्थमाधास्येऽग्नीनिति, नतु कंचिदेव कर्मविशेषमभिसंधायाधत्ते। एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि किंचित्कारणवशात्प्रथमं कर्मापतति तथापि न तादर्थ्यमेव भवति प्रथमावस्थायामेव सर्वार्थत्वावधारणात्तस्मात्तन्त्रम् ॥

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ ३ ॥

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥ [एकयूपं च दर्शयति ॥ ४ ॥

**अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ॥ उपदेशातिदेशाभ्यां भिन्नो नो कालभेदतः ॥ ३ ॥**

ज्योतिष्टोमेऽग्नीषोमीये पशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोस्त्वतिदिष्टः स किं त्रयाणामपि पशूनां तन्त्रमुत प्रतिपशु भेदेन यूप इति। तदर्थमिदं विचार्यते 'दीक्षासु यूपं छिनत्ती'ति किमग्नी-

---

**द्रव्यस्याकर्मकालनिष्पत्तेः०** ॥ २ ॥ पूर्वोक्तभिन्नकालत्वोपजीवनेन सिद्धान्तप्रवृत्तेः संगतिः । **नन्वयं** विचार एवानुपपन्नः। आधानस्यानारभ्याधीतस्याहवनीयाद्यग्न्यर्थत्वेन क्रत्वङ्गत्वाभावात् । नचानारभ्याधीतस्यापि पर्णतासाप्तदश्यादिवत्क्रत्वर्थत्वं किं न स्यादिति वाच्यम्। पर्णतादेर्हि जुहूसामिधेनीस्वरूपार्थत्वे तत्स्वरूपस्य लौकिकत्वेन पर्णतादिकं विनापि सिद्धेरानर्थक्यापत्त्या जुह्वादिद्वारोपस्थितक्रत्वपूर्वार्थत्वम्। प्रकृते तु 'यदाहवनीये जुहोती'त्यादिना विनियुक्तानामाहवनीयादीनामलौकिकेन तत्स्वरूपार्थत्वेऽप्यानर्थक्याभावादित्यत आह—**अनारभ्येति। प्रतिकर्मेति।** सर्वेषां कर्मणां सर्वेषां प्रयोगाणामित्यर्थः। **प्रयाजादीति।** यथा प्रयाजादीनां तत्तत्कर्मार्थानां तत्तत्कर्मप्रयोगेष्वावृत्तिरेवं सर्वकर्मार्थाधानस्य सर्वकर्मप्रयोगेष्वावृत्तिरित्यर्थः। **प्रतिक्रियमिति।** क्रियाशब्दः कर्मतत्प्रयोगोभयपरः । **ननु** क्रतुवहिःस्वकाले क्रियमाणस्यागृह्यमाणविशेषत्वात्तन्त्रत्वं किं न स्यादित्यत आह—**आनन्तर्यादिति** । सर्वेषां कर्मणां तत्तन्निमित्तादिवशेनापततामसति यौगपद्ये यदेवाधानानन्तरं कर्मापतति तदर्थं तदाधानमिति विशेषः सुग्रह इत्यर्थः । सिद्धान्तमाह—**स्वकालत्वाच्चेति।** चस्त्वर्थः। स्वकालत्वं विशेषाग्रहणे हेतुः। **विशेषश्चेदिति** । विशेषग्रहश्चेदित्यर्थः। स्वकालत्वस्य विशेषाग्रहणहेतुत्वं व्यतिरेकपूर्वकमुपपादयति—**नहीति।** अपवृज्येत समाप्येत । चरितार्थं स्यादिति यावत् । यद्यानन्तर्याद्विशेषग्रहमाश्रित्य भेदेनानुष्ठीयेत तदा ग्रीष्मादिष्वापतन्ति यानि कर्माणि तदर्थतया तेष्वृतुष्वाधानं कर्तव्यं स्यात्तथैव वाचनिकस्वकालबाधः स्यात्, अतस्तेषामपि वसन्तकालिकाधानापेक्षितत्वात्तन्त्रत्वमेव युक्तमित्यपि वाचनिको ह्यस्य वसन्तादिः स्वकाल इत्यादिना सूचितम्। शङ्कते—**यदेति। नायमिति।** आदधानो हि पुरुषः सर्वेषां कर्मणां वसन्तकालाधानापेक्षित्वं दृष्ट्वा सर्वकर्मार्थमग्नीनाधास्य इत्येवाभिसंधायाधत्ते नत्वाधानानन्तरं यत्कर्मापतति तदर्थमित्यभिसंधाय धत्ते तत्र प्रमाणाभावादाधानविधेस्तत्रौदासीन्यादित्याधानसमये स विशेषो नोपस्थित इत्यर्थः। **तदाहीति। नन्वा**धानसमये विशेषाग्रहणेऽपि पश्चात्तद्ग्रहणादावृत्तिः किं न स्यादित्यत आह—**एवमिति।** सूत्रार्थस्तु—आधानस्य स्वकालत्वाद्वाचनिकवसन्तादिकालत्वाद्द्रव्यस्याधानसाध्याग्नेरप्यकर्मकालनिष्पन्नस्यैव कर्मोपयोगित्वकल्पनादाधानप्रयोगः सर्वार्थः स्यादिति ॥

**यूपश्चाकर्मकालत्वात्** ॥ ३ ॥ यद्यग्नीषोमीयप्रणयनानन्तरमाम्नातो यूपः सर्वार्थः स्यात्तदा विशेषात्सर्वयूपापकर्षः स्यादित्याद्यापकर्ष इति पूर्वपक्षो नोत्तिष्ठेदिति तदुत्थानसौकर्यायोपदेशस्याग्नीषोमीयविषयत्वमितरत्र त्वतिदेशात एव तल्लाभ

षोमीययूपस्यापकर्ष उत सर्वयूपानामिति । तत्र—'यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम् ॥ निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते ॥ अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते ॥ भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥ न तदस्त्यविशेषेण सर्वयूपापकर्षणात् ॥ नचेहाध्वरकल्पावद्युक्तमाद्यापकर्षणम् ॥ प्रधानकालबाधोऽत्र तथैवाप्राप्तचोदना ॥ आद्यापकर्षणेऽप्यस्ति तस्मात्सर्वापकर्षणम् ॥' अध्वरकल्पायां हि प्रथमनिर्वापापकर्षेसति प्रधानकालबाधो नियमविधानं च लभ्यत इति तस्यैवापकर्षः समाश्रितः । अत्रत्वग्नीषोमीययूपापकर्षेप्यस्ति प्रधानकालबाधोऽप्राप्तविधिश्च । तस्मादविशेषात्सर्वयूपापकर्षे सत्यकर्मकालत्वादगृह्यमाणविशेषो यूपः सर्वेषां तन्त्रम् ॥

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ [तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानं च दर्शयति ॥ ७ ॥**

**संस्कारास्तक्षणाद्याः किं भिन्नास्तन्त्रेण वाऽग्रिमः ॥ पशुकालत्वतो मैवं यूपत्वापादका यतः ॥ ४ ॥**

यूपस्य तन्त्रत्वे सर्वसंस्काराणां तक्षणजोषणादीनां तन्त्रत्वमावृत्तिर्वेति संदेहे छेदनमात्रस्यापकर्षविधानाज्जोषणादीनां चाग्नीषोमीयकालानां तदपवर्गेऽपवर्गात्सवनीयादौ पुनः प्रयोग इति प्राप्ते ब्रूमः—तेषामप्यपकर्षः दीक्षासु यूपं छिनत्तीति, नायमर्थः यूपं सन्तं छिनत्तीति, यूपस्य प्रागसिद्धत्वात्, किं तर्हि छेदनेन यूपं कुर्यादिति । नच छेदनमात्रेणासौ कर्तुं शक्यते । तक्षणादीनामपि

---

इत्यत आह—**अग्नीषोमीयेति** । नन्वेवमपि 'दीक्षासु यूपं कारये'दिति यूपशब्दश्रुत्यविशेषेण सर्वेषामेव यूपानामपकर्षस्ततश्च भिन्नकालत्वादाधानवदगृह्यमाणविशेषत्वात्तन्त्रत्वमेव न्याय्यमिति कथं पूर्वः पक्ष इत्यत आह—**तत्रेति** । यथाध्वरकल्पायां 'पुरा वाचः प्रवदितो निर्वपे'दिति सत्यपि निर्वापश्रुत्यविशेषे आद्यत्वात्प्रातःकालहविर्निर्वापमात्रस्यापकर्षो नतु माध्यंदिनकालिकहविर्निर्वापस्य, एवमिहाप्याद्यत्वादग्नीषोमीययूपस्यैवापकर्ष इत्यर्थः । ततश्चाधानवद्विशेषाग्रहणाभावादिह न तन्त्रत्वमित्युत्थितेः संगतिर्बोध्या । **नन्व**स्त्वग्नीषोमीयस्यैवापकर्षस्तथापि तस्मिन्नेव यूपे सवनीयानुबन्ध्ययोरप्यनुष्ठानसंभवात्किमिति भेदेन यूपसंग्रह इत्यत आह—**अग्नीषोमीयेति** । **अविशेषेणेति** । आद्यत्वमात्रेण यूपश्रुतेः संकोचायोगादिति भावः । **अध्वरेति** । यदि सर्वनिर्वापापकर्षः स्यात्तदा माध्यंदिनापराह्णकालिकहविर्निर्वापयोः प्रधानकालबाधस्तथा तयोरत्यन्ताप्राप्तः प्रातःकालविशेषो विधेय इति गौरवं च स्यात्, प्रातःकालिकमात्रापकर्षे तु न कस्यापि प्रधानकालबाधः । प्रातःकालनिर्वापस्य प्रधानकालकर्तव्यत्वादेव प्रातःकाले प्राप्ते 'पुरा वाचः प्रवदितो'रिति तद्विशेषनियमनमात्र एव विधितात्पर्यमिति लाघवं च लभ्यत इति तत्राद्यापकर्ष इत्यर्थः । **अत्रत्विति** । दीक्षाकालस्याग्नीषोमीयपशुकालत्वाभावादिति भावः । सूत्रे तन्त्रमिति शेषः ॥

**संस्कारास्त्वावर्तेरन्०** ॥ ५ ॥ यूपतन्त्रत्वं विना तत्संस्कारतन्त्रत्वाप्रसक्तेः पूर्वाधिकरणोक्तयूपतन्त्रत्वोपजीवनेन तत्संस्कारतन्त्रत्वे विचारप्रवर्तनात्सङ्गतिरित्याशयेन तदनुवदति—**यूपस्येति** । **छेदनमात्रस्येति** । तस्यैव श्रुतत्वादिति भावः । जोषणादीनामित्यतद्गुणसंविज्ञानो बहुव्रीहिः । छेदनात्पूर्वभाविनः 'तं त्वा जुषे वैष्णवं देवयज्याया' इति जोषणस्य कर्मकालत्वासंभवादिति ध्येयम् । कर्मकालत्वादित्यनेन सौत्रमर्थकालत्वं व्याख्यातं बोध्यम् । **ननु** जोषणादीनामपकर्षाभावेऽपि तेषां यूपद्वारकत्वात्तस्य च तन्त्रतया तेषामपि तन्त्रत्वं किं न स्यादित्यत आह—**अग्नीषोमीयेति** । अग्नीषोमीयपशुयागकालेऽनुष्ठितानां तेषां तदर्थमनुष्ठानमिति विशेषग्रहणात्तदपवर्गे चापवर्गात्सवनीयानुबन्ध्यकाले पुनरनुष्ठानमित्यर्थः । **यूपस्येति** । छेदनादिजन्यदृष्टादृष्टसंस्कारनिचयरूपयूपस्य छेदनात्पूर्वमसिद्धत्वान्न प्राक्सिद्धयूपानुवादेन तस्य दीक्षासु छेदनविधिः संभवतीत्यर्थः । **ननु** दीक्षासु छेदनेन यूपं कुर्यादिति विधावपि छेदनमात्रापकर्षसंभवात्कथं सर्वेषामपकर्ष इत्यत आह—**नचेति** । छेदनादिविधयो हि परस्परानपेक्षाः प्रत्येकं खदिरादिकाष्ठगतदृष्टमदृष्टं वा संस्कारं बोधयन्ति । ते च संस्कारा मिलिता एव यूपशब्दवाच्या न प्रत्येकं तावत्संस्कारसिद्ध्यनन्तरं यूपे पशुं नियुञ्जीतेति नियोजने संस्कारविनियोजकवाक्ये यूपशब्देनाविशेषेण सर्वेषामुपादानेन यूपशब्दस्य नानार्थत्वापत्तेश्च मिलितानामेव तेषां तच्छब्दार्थत्वकल्पनात् । एवंच तावत्संस्कारसमुदायरूपयूपोत्पत्तौ तत्संस्कारजनकानां तक्षणादीनामपेक्षितत्वात्केवलेन च छेदनेन यूपोत्पत्त्यसंभवे दीक्षासु छेदनेन यूपं कुर्यादित्युक्ते यावन्तः पदार्था यूपोत्पत्त्यर्थत्वेनावगतास्तेषां सर्वेषामपि छेदनमुपल-

---

१ जोषणादीनाम्.

यूपत्वेऽपेक्षितत्वात्। तस्माच्छब्देन ग्रहणमुपलक्षणं छेदनादिभिः यूपं कुर्यादिति। तस्मात्तेषामप्यपकर्षात्तन्त्रत्वम्। अस्तु वा छेदनमात्रापकर्षः तावतैव च यूपसिद्धिस्तथापि यूपस्तावत्सर्वेषामर्थेनैक एवोपात्तस्तद्द्वारा च संस्कारास्ते यद्यप्यग्नीषोमीयकालेऽनुष्ठीयन्ते तथापि यूपद्वारत्वात्तस्य च साधारणत्वात्तेषामपि साधारण्यम्॥

स्वरोस्तन्त्रेणानुष्ठानाधिकरणम्॥ ५॥

**स्वरुस्तन्त्रावपर्गः स्यादस्वकालत्वात्॥ ८॥ [साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात्॥ ९॥ सोमान्ते च प्रतिपत्तिदर्शनात्॥ १०॥ तत्कालो वा प्रस्तरवत्॥ ११॥ न वोत्पत्तिवाक्यत्वात्प्रदेशात्प्रस्तरे तथा॥ १२॥]**

**स्वरुर्भिन्नोऽथवैकः स्यादस्वकालत्वतो भिदा॥ प्राथम्यमेकशकले तन्त्रं स्यादविशेषतः॥ ५॥**

'यूपस्य स्वरुं करोती'ति स्वरुः किमेकयूपानां पशूनां तन्त्रमुत प्रतिपशु भिद्यत इति संदेहे अञ्जनकालेऽस्योपादानात्तदपवर्गे चापवर्गादञ्जनान्तरेऽन्यशकलोपादानं यः प्रथमः शकलः स स्वरुरिति चैकस्मिन्प्रहरणे यः प्रथम इति शास्त्रार्थः। तेनैकस्मिन्नपि यूपे प्रहरणबहुत्वात्संभवन्ति बहवः प्रथमाः शकलाः। नैवम्। प्रहरणस्यानुपात्तत्वात्तेन शकलमात्रापेक्षं प्राथम्यमित्येकस्मिन्यूप एकएव प्रथमः शकल इति तन्त्रत्वम्। यूपच्छेदनकाल एव चास्य व्यामोहनिवृत्त्यर्थं नाशापहारपरिहारार्थं चोपादानं कर्तव्यमित्यगृह्यमाणविशेषत्वादपि तन्त्रत्वम्॥

---

क्षणमाश्रित्य छेदनादिभिः सर्वैः पदार्थैः दीक्षासु यूपमुत्पादयेदिति वाक्यार्थपर्यवसानेन सर्वेषामेव पदार्थानामनेनापकर्षो बोध्यत इत्यर्थः। **ननु** यूपं छिनत्तीति छेदनविधेर्योऽर्थः स एव दीक्षासु यूपं छिनत्तीत्यपकर्षविधेरप्यर्थो युक्तः। ऐकरूप्याच्छेदनविधेश्च यूपीकर्तुं खदिरादिकाष्ठं छिनत्तीति यूपरूपार्थत्वमात्रेण छेदनमर्थः नतु छेदनेन यूपं कुर्यादिति निरपेक्षसाधनतया। तथासति प्रागुक्तरीत्या छेदनमात्रेण यूपोत्पत्त्यसंभवेन छेदनविधावपि प्रोक्षणादेरुपलक्षणीयत्वं स्यात्। नच तदिष्टम्। तेषां यूपं प्रोक्षतीत्यादिविध्यन्तरविधेयानां छेदनविधिविधेयत्वानुपपत्तेः। तस्माच्छेदनविधाविवापकर्षविधावपि खदिरादिकाष्ठं यूपीकर्तुं छिनत्तीति यत्तद्दीक्षास्विति छेदनमात्रापकर्षविध्युपपत्तेः किमिति लक्षणया सर्वापकर्षविध्याश्रयणमित्यस्वरसादाह—**अस्त्विति**। तावतैव तावन्मात्रेण। कियत्यापि मात्रया यूपसिद्धिमाश्रित्य यूपार्थत्वमात्रेण छेदनमात्रापकर्षोऽस्त्विति यावत्। अथवाभ्युपगमवादेनाह—**अस्त्विति। तथापीति**। यदि प्रोक्षणादयः साक्षात्पशुयागार्था भवेयुस्तदाग्नीषोमीयकालेऽनुष्ठानं तदर्थमिति विशेषग्रहणात्सवनीयानुबन्ध्ययोरावृत्तिः स्याद्यूपद्वारत्वे तु सकृदनुष्ठानादेव तत्सिद्धेः। सत्यप्यग्नीषोमीयकालेऽनुष्ठाने तदर्थं न विशेषग्रहणं संभवति किंतु यदर्थो यूपस्तदर्थमिदं संस्कारानुष्ठानमिति यूपद्वारा सर्वार्थत्वमेव गृह्यते। ततश्चाग्नीषोमीयापवर्गेऽपि संस्काराणामपवर्गाभावान्नावृत्तिर्यथा मिथ्याकालसंस्कृतस्य बर्हिषो न पुनरग्नीषोमीयकाले संस्काराणामावृत्तिस्तद्वदित्यर्थः॥

**स्वरुस्तन्त्रापवर्गः०॥ ८॥ अञ्जनकाल इति**। स्वरुणा पशुमनक्तीति अञ्जनार्थो नतु यूपार्थः। अञ्जनार्थस्यैव तु यूपादुपादानमात्रं यूपस्य स्वरुं करोतीत्यनेन विधीयत इति चतुर्थे उक्तम्। ततश्चाञ्जनकाल एवास्योपादानं न यूपच्छेदनकाले प्रयोजनाभावाच्छेदनवदपकर्षाभावात्। एवंच कर्मकालत्वे स्वकालत्वाभावान्न तत्तन्त्रत्वमित्यर्थः। अनेनैव यूपार्थत्वाभावान्न संस्कारवत्तन्त्रतेत्युत्थितेः संगतिरिति सूचितम्। **ननु** कर्मकालत्वेऽपि नास्य भेदः संभवति, एकस्य यूपस्यानेकप्रथमशकलाभावेन स्वरुभेदासंभवादित्यत आह—**य इति**। कर्मकालतया गृह्यमाणविशेषत्वेन तन्त्रत्वासंभवादेकप्रहारकृतशकलमध्ये यः प्रथमः शकलः सः स्वरुरिति शास्त्रार्थः कल्पनीय इत्यर्थः। एवंच संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं चेति सोमान्ते प्रतिपाद्यमानः स्वरुरनुबन्ध्याया भविष्यतीति न तद्विरोधोपीति भावः। **तेनेति**। ततश्च यूपस्य श्रुतेत्वात्संबन्धिशकलमध्ये यः प्रथम इति शास्त्रस्य स्वरसतोऽर्थे निश्चिते यूपस्यैकतयानेकप्रथमशकलासंभवादञ्जनकालोपात्तस्यापि तन्त्रत्वमेव स्वीकार्यं नतु शास्त्रार्थान्तरवर्णनं युक्तमिति भावः। अञ्जनकालोपादानमभ्युपेत्य तन्त्रत्वमुक्तमिदानीं तदेवासिद्धमित्याह—**यूपेति**। चिह्नेनापि व्यामोहनिवृत्तिः संभवतीत्यत आह—**नाशेति**। ततश्च छेदनापकर्षादेवार्थात्स्वरोरुपादानस्याप्यपकर्षः। सोमान्ते चाग्नीषोमीयस्वरोरेव प्रतिपत्तिर्नतु अनुबन्ध्यास्वरोः। स्वरुप्रतिपत्तेरौपदेशिकतया औपदेशिककर्मान्तरवदस्याअप्यग्नीषोमीयपशुविषयत्वादिति भावः। सूत्रार्थस्तु—स्वरुरग्नीषोमीयतन्त्रापवर्गेऽपवर्गी स्यात्स्वकालत्वाभावादिति॥

अहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहनियमाधिकरणम् ॥ ६ ॥

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाऽहनि विकल्पः स्यात् ॥ १३ ॥ [पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातःसवनमध्यत्वाच्छिष्टे वाभिप्रवृत्तत्वात् ॥ १४ ॥]**

अहर्गणे विषाणायास्त्यागोऽह्नोः किं विकल्प्यते ॥ किंवा नियम्यतेऽन्त्येऽह्नि स्यादाद्यो बाधसाम्यतः ॥ ६ ॥
कण्डूयनं न हस्तेन श्रुतमर्थात्तु तद्भवेत् ॥ श्रुताद्बाधाद्वरं तस्य बाधोऽतोऽन्त्ये नियम्यताम् ॥ ७ ॥

ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयत'इति । तथा 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यती'ति । द्विरात्रादिष्वहर्गणेषु संदिह्यते किं प्रथम एवाहनि कृष्णविषाणाप्रासनमुतान्त्य एवेति विकल्पः स्यात् । प्रकृतौ हि प्रासनोत्तरकालानां पदार्थानां पाणिकण्डूयनं धर्मः, पूर्वकालानां तु विषाणाकण्डूयनं, तद्यदि प्रथमेऽहनि प्रास्येत तत उत्तरेष्वहःसु ये दक्षिणानयनात्प्राग्भाविनः पदार्थास्तेषां विषाणाकण्डूयनं धर्मो बाध्येत । नहि प्रास्तायाः पुनरुपादानं संभवति । त्यागात्मकं हि प्रासनं प्रकृतौ विहितम् । नच पुनरुपादित्समानस्य त्यागबुद्धिर्भवति । तस्माद्बाध्यत एव विषाणाकण्डूयनम् । अथ पुनरन्त्येऽहनि प्रास्येत ततः पूर्वेष्वहःसु ये दक्षिणानयनात्परस्तात्पदार्थास्तेषां पाणिकण्डूयनं बाध्येत । नह्यप्रस्तायां तस्यां पाणिकण्डूयनं संभवति । अदृष्टार्थत्वापातात्, प्रक्रान्तनियमत्यागे शिष्टाचारविरोधाच्च । अतः पक्षद्वयेप्यवश्यंभावी केषांचिद्धर्मबाध इति विकल्पः स्यादेवं यद्यन्त्येऽहनि प्रासने धर्मबाधः स्यात् । नत्वेतदस्ति पाणिकण्डूयनस्यार्थकृतत्वेनाशास्त्रीयत्वात् । तस्मादन्त्येऽहनि प्रासनम् ॥

राजसूये नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम् ॥ ७ ॥

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥**

नानाबीजेषु यागेषु वाग्विसर्गश्च पूर्ववत् ॥ शङ्किते तद्विधौ न स्यादविधित्वे तदुत्तरम् ॥ ८ ॥

दर्शपूर्णमासयोः श्रुतं 'प्रणीताः प्रणेष्यन्वाचं यच्छति तां सहविष्कृता वाचं विसृजती'ति । हविष्कृतेति च कालोपलक्षणम् । हविष्कृदाह्वानकाल इत्यर्थः । तत्र नानाबीजेषु चिन्त्यते कृष्णाजिना-

---

**अहर्गणे विषाणाप्रासनं० ॥ १३ ॥ पाणीति** । यद्यपि विषाणायाः प्रास्तत्वेन पाणिकण्डूयनं प्रकृतावार्थिकं न शास्त्रीयमार्थिकस्य च नातिदेशः तथापि अविक्षिप्तचित्तेन कर्त्रा पदार्थाः सुखेनानुष्ठीयन्त इत्यनुष्ठानसौकर्याय प्रकृताविव विकृतावपि पाणिकण्डूयनस्यापेक्षितत्वात्तदपि शास्त्रानुमतमेवेति तुल्यबलत्वमित्यभिमानः । एवंच स्वरूपादानस्यार्थाच्छास्त्रार्थत्ववत्पाणिकण्डूयनस्यापि तथात्वं, ततश्च तदनुग्रहाय विकल्प इत्युत्थितेः संगतिर्बोध्या । **नहीति** । विषाणान्तरोपादाने त्यागस्यादृष्टार्थत्वं स्यादित्यपि बोध्यम् । **ननु** सत्यामपि विषाणायां पाणिना कण्डूयनमस्तु ततश्च न कस्यापि बाध इत्यत आह—**नहीति । प्रक्रान्तेति** । पाणिस्थायां विषाणायां तयैव कण्डूयननियमस्य यथाप्रकृति प्रक्रान्तत्वमिति भावः । **अर्थकृतत्वेनेति** । ततश्च नातिदेशः । नचाविकृतावाक्षेपतः शास्त्रानुमतत्वं, विषाणाकण्डूयनेपि दक्षिणानयनोत्तरपदार्थानुष्ठानसौकर्योपपत्त्यार्थापत्तेः प्रक्षीणत्वादिति भावः । ततश्च द्वितीयादिष्वहःसु दक्षिणानयनादुत्तरपदार्थानां विषाणाकण्डूयनेऽपि धर्मबाधाभावात्पूर्वेषां विषाणाकण्डूयनाबाधायान्तिम एवाहनि प्रासनमित्याह—**तस्मादिति** ॥

**वाग्विसर्गो हविष्कृता० ॥ १५ ॥** ननु हविष्कृच्छब्दो व्रीह्यादीनवघातेन हविर्योग्यान्करोतीति व्युत्पत्त्याऽवघातकर्तृपत्न्यादिपरस्तथाच प्रथमोत्तमबीजयोरवहन्तृभेदाभावेन हविष्कृद्भेदाभावादयं विचारोऽनुपपन्न इत्यत आह—**कालेति** । एवमपि दोषतादवस्थ्यं मत्वाह—**हविष्कृदाह्वानेति** । 'हविष्कृदेही'ति मन्त्रोच्चारणकाल इत्यर्थः । ततश्च तद्भेदाद्युक्तो विचार इति भावः । **नानेति** । 'अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमि'त्यादिष्वित्यर्थः । यदि नानाबीजेष्वेकस्यावहननं कृत्वा तदानीमेवान्यस्यावहननं क्रियेत तदा हविष्कृदाह्वानस्य तन्त्रत्वात्तद्भेदाभावेन पुनरपि विचारोऽनुपपन्नः स्यादित्याशयेन पञ्चमोक्तं कृष्णाजिनादिफलीकरणान्तानुसमयं स्मारयति—**कृष्णाजिनेति** । ततश्च बीजान्तरावहननस्य विभिन्नकालतया हविष्कृदाह्वानकालभेदाद्युक्तो विचार इति भावः । उद्ध-

---

१ प्रकृते विहितम्.

स्तरणादीनां फलीकरणपर्यन्तानामनुसमय इत्युक्तं तत्र किं प्रथमस्यान्त्यस्य वा बीजस्य हविष्कृता वाग्विसर्गः किंवान्त्यस्यैवेति । तत्र प्रथमे विसर्गे सत्युत्तरेषां बीजानां ये हविष्कृतः कालात्प्राञ्चः पदार्थो हविरावपनादयस्तेषां वाग्यमरूपो धर्मो बाध्येत । अन्तिमे तु विसर्गे पूर्वबीजानां ये हविष्कृतः प्रत्यञ्चः परावपनादयस्तेषां धर्मो वाग्विसर्गो वा बाध्येत । नह्यत्र पूर्ववद्वाग्विसर्गस्याशास्त्रीयत्वं विसृजतीति वचनात् । तस्मादवश्यंभाविनि धर्मबाधे विकल्पः । नैवम् । नह्यत्र वाग्विसर्गो विधीयते वाग्यमविधेस्त्वयमवधिरुच्यते तदेकवाक्यत्वाद्वा । विसर्गविधौ हि वाक्यभेदो दृष्टकल्पना च स्यात् । रागप्राप्तश्च विसर्गो न विधातव्यः तस्माद्विसर्गस्यानङ्गत्वादविसृष्टायामपि न कस्यचिद्धर्मबाध इत्यन्त एव विसर्गः ॥

अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ॥ ८ ॥

**पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १६ ॥**

**पशुकाले पुरोडाशकाले वा वाग्विसर्जनम् ॥ तन्त्रित्वादादिमोऽन्त्यः स्याद्वाग्यमात्कर्तृसंस्कृतिः ॥ ९ ॥**

पशावग्नीषोमीये पशुपुरोडाशः तत्र तावदस्ति हविष्कृदाह्वानं पशावप्यस्तीति कृत्वाचिन्त्यते किं प्रथमे पशुकाले वाग्विसर्गः पुरोडाशकाले वेति । प्रासङ्गिकत्वात्पशुपुरोडाशस्य पाशुकेनैव वाग्यमेन कार्यसिद्धेर्न वाग्यमेन कार्यम् । तस्मात्पशुकाले वाग्विसर्ग इति मन्वानस्योत्तरं वाग्यमोयमारादुपकारकः । कर्तृसंस्कारस्त्वसौ । अतो विसृष्टवाचा क्रियमाणाः पौरोडाशिका विगुणा भवेयुः । तस्मात्पुरोडाशकाले विसर्गः ॥

अग्निचयनेऽग्निविमोकस्य मतभेदेन व्यवस्थाधिकरणम् ॥ ९ ॥

**अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥ १७ ॥ [प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ २० ॥]**

**किमग्निमोकः सर्वान्ते मुख्यान्ते वाग्निमो यतः ॥ योगे सर्वार्थता मैवं मुख्यार्थोऽसौ तदन्तिमः ॥ १० ॥**
**व्यत्यस्तौ तावुभौ पक्षावुत्पत्तावविशेषतः ॥ सर्वार्थत्वं गुणे भाति सर्वान्तेऽतो विमोचनम् ॥ ११ ॥**

अग्नौ श्रूयते 'अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेव तद्युनक्ति पञ्चभिर्युनक्ति पाङ्क्तो यज्ञ'

---

खले हविःप्रक्षेपो हविरावपनशब्दार्थः । उलूखलाच्छूर्पे प्रक्षेपः परावपनशब्दार्थः । **नहीति** । ततश्चागतार्थत्वमिति भावः । उक्तविशेषाशङ्कयोत्थानात्संगतिः । **तदेकेति** । हविष्कृदाह्वानकालपर्यन्तं वाचं यच्छतीत्यवधिविशिष्टवाग्यमनविधानादुभयमेकं वाक्यमिति भावः । **वाग्विसर्गविधाविति** । वाग्यमनासंस्पर्शाद्वाक्यभेदः विधिबलाच्च विसर्गादृष्टं कल्पनीयं स्यादित्यर्थः । अवधिविधिस्तु दृष्टार्थ इति भावः । नच वाग्विसर्गस्य विधिरपि संभवति रागप्राप्तत्वादित्याह—**रागेति** । ततश्च हविष्कृदाह्वानकालपर्यन्तं वाग्यमने विहिते ततः परं रागप्राप्तो यो वाग्विसर्गस्तदनुवादो विसृजतिरिति भावः । सूत्रे तथा स्यात् प्रासनवदन्ते स्यादित्यर्थः ॥

**पशौ च पुरोडाशे०** ॥ १६ ॥ **तत्र तावदिति** । तस्यौषधद्रव्यकत्वादिति भावः । **ननु** तर्हि पशोरतथात्वान्न तत्र हविष्कृदाह्वानं ततश्च कथमियं चिन्तेत्यत आह—**पशावपीति** । वस्तुतस्तु हविष्कृदाह्वानस्य वाग्यमनावधिभूतकालोपलक्षणार्थत्वादुपलक्षणापायेऽप्युपलक्ष्यानपायन्यायेनासत्यपि हविष्कृदाह्वाने वाग्विसर्गसंभवान्न चिन्तानुपपत्तिरिति ध्येयम् । **पाशुकेनेति** । ततश्च पाशुकेनैव कार्यसिद्धौ पौरोडाशिकपदार्थानां धर्मलोपाभावात्पूर्ववदिह नान्ते वाग्विसर्ग इत्युत्थानात्संगतिः । **कर्त्रिति** । वाग्यमेनाविक्षिप्तचित्तः सुखं कर्मानुतिष्ठतीत्यविक्षिप्तचित्तताधायकतया तस्य कर्तृसंस्कारकत्वमिति भावः । **अत इति** । पाशुकवाग्यमेन पौरोडाशिकपदार्थानुष्ठानसमये कर्तुर्विक्षेपाभावस्यासिद्धेरिति भावः । **सूत्रार्थस्तु—पशौ** पुरोडाशे च वाग्यमस्य समानतन्त्रता स्यात् पाशुको वाग्यमः पौरोडाशिकाह्वानपर्यन्तमनुवर्तनीय इति यावत् ॥

**अग्नियोगः सोमकाले०** ॥ ९ ॥ **अग्निमेवेति** । असौ होम एवाग्नियोग इत्यर्थः । तदर्थसंशयं **फलफलिभावमु-**

त्यग्नियोगः तथा 'इमं स्तनमूर्जस्वन्तं धयामीत्याज्यस्य पूर्णां स्रुचं जुहोतीत्येष वाग्नेर्विमोक' इति। सोऽयमग्निविमोकः किं प्रधानमात्रापवर्गे स्यादुत साङ्गप्रधानापवर्गे इति । यदि प्रधानमात्रार्थो योगस्तदपवर्गे विमोकः, साङ्गप्रधानार्थत्वे तु योगस्य सर्वान्ते विमोकः तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगः सर्वार्थः । तस्मात्सर्वापवर्गे विमोक इति पूर्वपक्षं कृत्वा पाङ्क्तो यज्ञ इति वाक्यशेषेण यज्ञार्थता योगस्य । अतः प्रधानापवर्गे विमोक इति भाष्यकारेण सिद्धान्तितम् । एवंच सौमिकमपि वरणं यदवृता वषट्कुर्युर्भ्रातृव्यमेव यज्ञस्याशीर्गच्छेदि'ति यज्ञसंयोगादग्निसंयोगतुल्यन्यायं केवलप्रधानार्थं भवति । तत्रावभृथे सौमिकेन वरणेन प्रत्याम्नातं होतृवरणं प्राप्नोति । तत्र 'न होतारं वृणीत' इति प्रतिषेधोऽवक्लृप्तो भवति । इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वादवभृथे पृथग्वरणप्राप्त्यभावात्प्रतिषेधो न स्यादिति च लिङ्गमुक्तम् । तथा द्वादशाहे 'अहरहर्युनक्ति अहरहर्विमुञ्चती'ति प्रत्यहं योगविमोकदर्शनं द्वादशाहे इतरथा साङ्गप्रधानार्थत्वे आद्यन्तयोरेव योगविमोकदर्शनं स्यादिति । ननु प्रधानार्थत्वेऽपि वैरणस्यापूर्वत्वादवभृथस्य नैष्ठिकवरणप्राप्तिः । तत्र कश्चिदाह—अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति । सचापूर्वत्वपक्षे वरणप्राप्तौ सत्यामवकल्प्यते नान्यथेति । वयंतु ब्रूमः—यद्यप्यपूर्वोऽवभृथस्तथाप्याज्यभागयोस्तत्र सद्भावाद्धोतुश्चाङ्गप्रधानार्थत्वात्तद्वरणमप्यङ्गप्रधानार्थम् । नहि दार्शिकं वरणं केवलप्रधानार्थं यज्ञसंयोगाभावात्, अतो

---

त्वेनाह—**यदि प्रधानेति । तत्रेति ।** अङ्गप्रधानसाधारण्येनाग्निमात्रार्थो योगः नतु प्रधानार्थो योऽग्निस्तन्मात्रार्थः । संकोचकप्रमाणाभावात्ततश्च साङ्गप्रधानापवर्गे विमोक इत्यर्थः । एवंच यथा पूर्वत्र पौरोडाशिकपदार्थावैगुण्याय तदीयहविष्कृदाह्वाने वाग्विसर्ग एवमिहाप्यङ्गप्रधानार्थत्वेनैव प्रधानमात्रापवर्गानन्तरं विमोके तदुत्तरपदार्थानां योगाभावाद्वैगुण्यं स्यादिति तत्परिहारार्थं सर्वान्ते विमोक इत्युत्थितेः संगतिः । **पाङ्क्त इति ।** वाक्यशेषे यज्ञसंकीर्तनस्यात्यन्तपरोक्षार्थतापरिहारार्थं यज्ञार्थो योऽग्निस्तदर्थो योग इति यज्ञार्थतावगमाद्यज्ञशब्दस्य च याज्ञिकप्रसिद्ध्या प्रधानमात्रवाचित्वात्तदपवर्गे विमोक इत्यर्थः । नच यज्ञशब्दस्य प्रधानमात्रार्थत्वे 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्य'मिति ध्रौवाज्यस्यापि यज्ञसंयोगात्केवलप्रधानार्थता स्यादिति वाच्यम् । यज्ञाय गृह्यते इत्यनेनैवाविशेषेण सर्वप्रधानार्थत्वे सिद्धेऽपि सर्वशब्दस्य प्रयोगबलेन यज्ञशब्दस्यात्राङ्गप्रधानपरत्वकल्पनात् । नच 'वारणो यज्ञावचरो वैकङ्कतो यज्ञावचर' इति यज्ञसंयुक्तानां वारणवैकङ्कतादिपात्राणां प्रधानार्थत्वमेव स्यान्नतवङ्गप्रधानार्थत्वमिति वाच्यम् । प्रधानार्थैरेव पात्रैः प्रसङ्गादङ्गानुष्ठानसिद्ध्या इष्टत्वादिति भावः । यज्ञसंयुक्तस्य प्रधानार्थत्वे भाष्योक्तं लिङ्गदर्शनमुपपादयति—**एवंचेति ।** 'अवभृथेन होतारं वृणीत' इति प्रतिषेधः प्रवर्तते असौ चोदकाद्धोतृवरणप्राप्तौ घटते चोदकात्प्राप्तिश्च सौमिकवरणेन प्रत्याम्नानाभावे प्रत्याम्नानाभावश्च सौमिकवरणस्य केवलप्रधानार्थत्वे घटते नान्यथेति यज्ञसंयोगात्प्रधानार्थत्वे अवभृथे होतृवरणप्रतिषेधो लिङ्गमित्यर्थः । **इतरथेति ।** अङ्गप्रधानार्थत्वे तेनैव प्रत्याम्नातत्वेनावभृथे पृथग्वरणप्राप्त्यभावात्प्रतिषेधो नावकल्पेतेत्यर्थः । **तथेति ।** 'स वाहरहर्युनक्ति अहरहर्विमुञ्चती'ति प्रत्यहं योगविमोकदर्शनं केवलं प्रधानार्थत्वे लिङ्गं भाष्ये उक्तमित्यर्थः । तस्य लिङ्गत्वमुपपादयति—**साङ्गेति ।** साङ्गप्रधानार्थत्वे योगः साङ्गप्रधानापवर्गे विमोक इति वक्तव्यं नतु प्रत्यहं साङ्गप्रधानापवर्गः अन्तिमेहनि सर्वसाधारण्येनोत्तराङ्गानुष्ठानेन प्रत्यहं साङ्गप्रधानानुष्ठानाभावादिति न प्रत्यहं योगविमोकदर्शनं स्यात्किंत्वाद्येऽह्नि योगः अन्ते चाह्नि विमोकः स्यात् । केवलप्रधानार्थत्वे तु प्रत्यहं प्रधानानां भेदेन तदपवर्गे विमोकस्य कर्तव्यत्वात्प्रत्यहं योगविमोकदर्शनमुपपन्नमित्यर्थः । **ननु** सौमिकवरणस्य प्रधानार्थत्वेऽप्यवभृथे ऐष्टिकवरणस्य न प्राप्तिः 'अप्सुमन्तावाज्यभागा'विति प्रकृतिकृप्ताज्यभागयोः पुनर्विधानेन गृहमेधीयवत्तस्यापूर्वतया चोदकाप्रवृत्तेः । अतश्च केवलप्रधानार्थत्ववादिनापि 'न होतारं वृणीते'इत्ययं नित्यानुवाद इत्येव वक्तव्यम् । तर्हि साङ्गप्रधानार्थत्वेऽपि नित्यानुवादत्वोपपत्तिर्नास्य लिङ्गत्वमिति शङ्कते—**नन्विति ।** तत्र प्राभाकरोक्तलिङ्गत्वसमर्थनप्रकारमाह—**तत्रेति ।** अपूर्वत्वे होतृवरणाभावाल्लाघवमित्येवमपूर्वतास्तुतिरियं साचापूर्वत्वाभावपक्षे वरणप्राप्तौ घटते अन्यथोभयथापि वरणाभावाविशेषेण लाघवानवतारादपूर्वत्वाभावपक्षे वरणप्राप्तिश्च सौमिकवरणस्य प्रधानार्थत्व एव घटते नान्यथेति युक्तं लिङ्गत्वमित्यर्थः । **स्तुत्यर्थत्वमिति ।** जघन्यमित्याशयेन प्रकारान्तरमाह—**वयंत्विति । सद्भावादिति ।** तयोर्वाचनिकत्वादिति भावः । **होतुरिति ।** होतुः कर्तृत्वेन प्रयोगाङ्गतया प्रधानाङ्गार्थत्वमित्यर्थः । **ननु** सौमिकस्य वरणस्य होतृसंस्कारकस्यापि केवलप्रधानार्थत्ववदातिदेशिकस्यापि केवलप्रधानार्थत्वं किं न स्यात्ततश्च कथमाज्यभागार्थतया प्राप्तिरित्यत आह—**नहीति । असत्यपीति ।**

---

१ भावात्तत्प्रतिषेधो. २ लिङ्गदर्शनमुक्तम्. ३ वरणस्याप्राप्तिपूर्वत्वात्.

ऽसत्यप्यतिदेशे होतृवरणस्याज्यभागार्थतयास्त्येवावभृथे प्राप्तिरिति युक्तः प्रतिषेध इति। तदिदं भाष्यकारीयमधिकरणव्याख्यानमनुपपन्नमिति मत्वा वार्तिककारेण विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ। वाक्यशेषादवभृथलिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः। सिद्धान्तस्त्वग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः। नच वाक्यशेषवशाद्विशेषः, योगोत्पत्तिविधौ वाक्यशेषाभावात्तत्र तावत्सर्वार्थत्वं गम्यते पञ्चसंख्यागुणविधौ वाक्यशेषः श्रुतः नचासावुत्पत्तिवाक्यावगतं सर्वार्थत्वमलं निवर्तयितुम्। किंच यज्ञशब्दो यागमात्रं ब्रवीति न प्रधानयागमेव। अतो न तद्वशात्केवलप्रधानार्थत्वम्। अवभृथे च होतृवरणप्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव। सौमिकं हि वरणमानत्यर्थं प्राकृतं तु होतृवरणं प्रवृत्ते होतरि क्रियमाणमदृष्टार्थम्। अतस्तत्सर्वासु सोमेष्टिषु कार्यमिति द्वादशे वक्ष्यति तस्माद्युक्तः प्रतिषेधः। द्वादशाहे च प्रत्यहं योगविमोकदर्शनमस्मिन्नेव पक्षे घटते। विधानार्थं ह्येतद्वचनं नानुवादमात्रं, आनर्थक्यात्। तेन सर्वादौ सर्वान्ते च सकृदेव योगविमोकयोर्न्यायतः प्राप्तयोर्वचनेनाहरहर्योगविमोकौ विधीयेते। तस्मात्सर्वार्थो योगः सर्वापवर्गे च विमोकः। सूत्राणि तु तन्त्ररत्न एवास्माभिर्व्याख्यातानीति नेह व्याख्यायन्ते॥

---

प्रधानावभृथार्थतयेति शेषः। **युक्त इति**। ततश्चावभृथाङ्गाज्यभागगततया प्रतिषेधो लिङ्गमुपपद्यत इति भावः। **विपर्ययेणेति**। भाष्यकारीयसिद्धान्तः पूर्वपक्षत्वेन तदीयपूर्वपक्षश्च सिद्धान्तत्वेनेत्यर्थः। तदेवाह—**वाक्यशेषादित्यादिना**। **योगोत्पत्तीति**। 'अग्निं युनज्मि शवसा घृतेनेति जुहोती'ति योगोत्पत्तिवाक्यं न तस्य पाङ्क्तो यज्ञ इत्ययं शेषः। गुणवाक्यव्यवहितस्य योगोत्पत्तिविधिनैकवाक्यत्वासंभवादित्यर्थः। ननूत्पत्तिवाक्ये यज्ञसंयोगाभावेपि उत्पन्नस्य योगस्य प्रयोजनं न लभ्येत तदा कथंचिद्गुणवाक्यार्थवादगतयज्ञसंयोगात्तदर्थता कल्प्येत, इहतूत्पत्तिवाक्य एवाग्निमेव तद्युनक्तीत्यग्न्यर्थतावगम्यत इति तदनुसारेणाग्निसाध्यसर्वार्थत्वमेवोत्पत्तिवाक्ये गम्यते इत्यर्थः। **श्रुत इति**। इदमुपलक्षणं पाङ्क्तो यज्ञ इत्यस्य। पञ्चाक्षरा पङ्क्तिरिति पङ्क्तिच्छन्दोगताक्षरसाम्यात्पञ्चसंख्यास्तुतावेव सामर्थ्यं नतु योगस्तुतौ। अतः सामर्थ्यबलादपि पञ्चसंख्यात्मकगुणविधिशेषत्वमेवास्य नतु योगविधिशेषत्वमिति ध्येयम्। **ननु** गुणविधिवाक्यशेषे यज्ञसंयोगश्रवणाद्गुणस्य यज्ञार्थत्वं वक्तव्यं तच्च प्रधानभूतयोगस्य यज्ञार्थतां विना न निर्वहतीत्यर्थात्तस्यापि केवलयज्ञार्थता किं न स्यादित्यत आह—**नचासाविति**। उत्पत्तिवाक्ये प्रथमावगतसर्वार्थत्वानुरोधेन साङ्गप्रधानार्थत्वेऽपि यज्ञसंबन्धस्य सत्वेन तावन्मात्रेण कथंचिच्चरमश्रुतगुणविध्यर्थवादगतयज्ञसंयोगो नेय इति भावः। अनेनैव न्यायेन सौमिकवरणस्याप्युत्पत्तौ यज्ञसंयोगाभावादङ्गप्रधानार्थत्वं बोध्यम्। तदुक्तं तन्त्ररत्ने—तत्रापि हि योऽयं यज्ञसंयोगो 'यदवृता वषट्कुर्युर्भ्रातृव्यमेव यज्ञस्याशीर्गच्छे'दिति। अयमपि गुणवाक्यस्यार्थवादः। 'ऋत्विजो वृणीत'इत्यस्य ऋत्विगुत्पत्तिवाक्यस्य नायं शेषः। तेन सौमिकमप्यङ्गप्रधानार्थमेव वरणमिति। अस्तुवोत्पत्तिवाक्य एव यज्ञसंयोगस्तथापि न प्रधानार्थत्वमित्याशयेनाह—**किंचेति**। नच याज्ञिकप्रयोगबलाद्यज्ञशब्दस्य प्रधान एव शक्तिरिति वाच्यम्। 'यजयाचयतविच्छप्रच्छरक्षो नङ्'इत्यविशेषेण यज्ञशब्दसाधुत्वस्मरणात्तस्य याज्ञिकप्रयोगादपि प्रबलत्वादिति भावः। लिङ्गदर्शने विघटयति—**अवभृथेचेति**। **प्रवृत्त इति**। प्रवृत्तः सामिधेनीरन्वाहेति मन्त्रवरणात्पूर्वमेव सामिधेन्यनुवचने होता प्रवृत्त इत्यर्थः। आनत्यर्थत्वे तु प्रवृत्तेः पूर्वमेव स्यादिति भावः। **तस्मादिति**। साङ्गप्रधानार्थत्वेऽपि सौमिकेन वरणेन दृष्टार्थेनादृष्टार्थस्य प्राकृतवरणस्य प्रत्याम्नानासंभवादवभृथे तदङ्गाज्यभागयोर्वा होतृवरणप्राप्तौ तत्प्रतिषेधो युक्त इत्यर्थः। अवश्यं च सौमिकवरणं दृष्टार्थं प्राकृतवरणमदृष्टार्थमित्युभयोर्भिन्नार्थत्वं केवलप्रधानार्थत्ववादिनापि स्वीकार्यम्। उभयोरेकार्थत्वे प्रधानार्थेन सौमिकवरणेनैव प्रसङ्गादङ्गोपकारसिद्धेरवभृथे पुनःप्राप्त्ययोगात्तन्मतेपि प्रतिषेधोऽनुपपन्नः स्यादिति ध्येयम्। **अस्मिन्निति**। अहरहर्युनक्तीति चाङ्गप्रधानार्थपक्ष एव यद्युनक्ति तदहरहरिति गुणविधानार्थतयोपपद्यते। पक्षान्तरेत्वनुवादमात्रतयानर्थकं स्यादित्यर्थः। तदेवाह—**विधानेति**। **ननु** सोमकाले योऽग्निसंयोगः स साङ्गस्य। साङ्गप्रधानार्थः इति यावत्। कुतः। संस्कृतिकर्मणः योगसंस्कार्यस्याग्नेस्तदर्थत्वात्साङ्गप्रधानार्थत्वात्। तस्मात्परेष्वप्यङ्गेष्वनुष्ठितेषु सर्वान्ते विमोकः स्यादित्येवमाद्यसूत्रेण सर्वार्थत्वात्पूर्वपक्षो वर्ण्यते। प्रधानापवर्गे वा तदर्थत्वादिति द्वितीयसूत्रेण वाशब्देन पूर्वसूत्रोक्तं पक्षं निवर्त्य प्रधानान्ते विमोकः स्याद्यज्ञसंयोगेनाग्नियोगस्य प्रधानर्थत्वादिति केवलप्रधानार्थत्वसिद्धान्तो वर्ण्यते। अवभृथे च तद्वत्सोमार्थस्य वरणस्य प्रतिषेधोऽप्रवृत्तार्थत्वादिति तृतीयसूत्रेणावभृथे च सोमार्थस्य वरणस्याग्नियोगवद्यज्ञसंयोगेन प्रधानार्थत्वेऽप्रवृत्तार्थत्वादवभृथे निवृत्तप्रयोजनत्वात्तत्र प्राकृतवरणस्य प्राप्तौ प्रतिषेधो घटत इत्येवं तत्रैव सिद्धान्तलिङ्गं प्रदर्श्यते। 'अहर्गणे च प्रत्यहं स्यात्तदर्थत्वा'दिति चतुर्थसूत्रेण केवलप्रधानार्थत्वाद्द्वादशाहे प्रत्यहं योगविमोकदर्शनमुपपन्नं स्यादिति तत्रैव लिङ्गान्तरं प्रदर्श्यते। तेषां च सूत्राणां वार्तिककारपक्षेऽसाङ्गत्यं स्यादित्यत आह—**सूत्राणीति**। वार्तिककारपक्षे सिद्धान्तोपक्रम-

उपसत्कालस्य सुब्रह्मण्याह्वानस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ १० ॥

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥**

**उपसत्कालसुब्रह्मण्यागणो भिद्यते न वा ॥ प्रधानभेदाद्भेदः स्यात्कालभेदान्न भिद्यते ॥ १२ ॥**

ज्योतिष्टोमेऽस्त्युपसत्कालीनं सुब्रह्मण्याह्वानं तदहर्गणेषु भिद्यते तन्त्रं वेति[2] संशये प्रधानभेदाद्भेदः, अकर्मकालत्वात्तु तन्त्रम् । नहीदं प्रधानकालं उपसत्कालं तु सकृदनुष्ठितमेव सर्वेषामुपकरोतीति तन्त्रम् ॥

सुत्याकालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

**तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २२ ॥ [अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥ तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात् ॥ २७ ॥ लिङ्गदर्शनाच्च ॥ २८ ॥ तद्धि तथेति चेत् ॥ २९ ॥ नाशिष्टत्वादितरन्यायत्वाच्च ॥ ३० ॥ विध्येकत्वादिति चेत् ॥ ३१ ॥ न कृत्स्नस्य पुनः प्रयोगात्प्रधानवत् ॥ ३२ ॥]**

**सुत्याकालीनमाह्वानं तन्त्रं स्याद्भिद्यतेऽथ वा ॥ यूपाहुतिनयात्तन्त्रं सुत्याकालतया भिदा ॥ १३ ॥**

सुत्याकालमाह्वानं तन्त्रमावापो वेति संदेहे प्रथमसुत्याकाल एव कृतं सर्वसुत्यानामुपकारकं सत्यप्येकस्य संनिधिविशेषे यूपाहुतिवदिति प्राप्ते उच्यते—कर्मकालं ह्येतद्यस्य कर्मणः काले कृतं तदर्थमिति विशेषग्रहणात्तदपवर्गे तत्कृतस्य देवतासंस्कारस्यापवर्गादहरन्तरे पुनः कर्तव्यं तस्मान्न तन्त्रम् ॥

---

मिदमधिकरणम् । ततश्च प्रथमसूत्रे सर्वार्थत्वसिद्धान्तेनोपक्रमः, द्वितीयसूत्रं केवलप्रधानार्थत्वपूर्वपक्षप्रतिपादनार्थं, तृतीयसूत्रं पूर्वपक्षे लिङ्गप्रदर्शनार्थं, चतुर्थसूत्रं तुशब्दार्थकेन चशब्देन च पक्षं व्यावर्त्य ब्रूते । केवलप्रधानार्थत्वे न्यायादेव प्रत्यहं प्राप्तेरहरहर्युनक्ति अहरहर्विमुञ्चतीति न वक्तव्यं स्यादुक्तं च तत् । तस्मात्साङ्गप्रधानार्थं तदित्येव तत्रैव सिद्धान्तप्रतिपादनार्थमित्येवं तन्त्ररत्ने व्याख्यातानीत्यर्थः ॥

**सुब्रह्मण्या तु० ॥ २१ ॥** अहर्भेदाद्योगविमोकभेदवत्सुब्रह्मण्याह्वानस्यापि भेद इत्युत्थितेः संगतिः । अकर्मकालत्वेनागृह्यमाणविशेषत्वाद्दीक्षाकालकर्तव्ययूपच्छेदनवत्तन्त्रत्वं सिद्धमप्युत्तरविवक्षया प्राप्यत इति तन्त्ररत्ने । ननु 'त्र्यहे सुत्यामागच्छ द्व्यहे सुत्यामागच्छ श्वः सुत्यामागच्छे'ति प्रकृतौ दर्शनेनेहापि द्वादशाहे सुत्यामित्यादिप्रकारेण कर्तव्यत्वाद्द्वादशाह इत्युक्ते च प्रथमस्यैवाह्नो निर्देशेन तदर्थमयमिति विशेषग्रहणात्तत्तदहरहरर्थमावृत्तिः कर्तव्येति विशेषाशङ्कायां प्रकृतौ त्र्यहे द्व्यह इत्यादेः सुत्याकालोपलक्षणमात्रे तात्पर्यं नतु त्र्यहत्वादाविति द्वादशाह इत्यस्यापि सुत्याकालमात्रोपलक्षकतया विवक्षितार्थत्वाभावात्सर्वेषां चाह्नां सुत्याकालत्वाविशेषात्तन्त्रमिति व्युत्पादनार्थमिदमस्तु, ननु प्राप्तिमात्रार्थमितिचेत्, त्र्यहे द्व्यह इत्यादेः सुत्याकालोपलक्षणत्वस्याग्रिमपादे वक्ष्यमाणत्वेन तेनैव गतत्वादिति ॥

**तत्काला त्वा० ॥ २२ ॥** पूर्ववत्सुत्याकालाह्वानस्यापि तन्त्रतेत्युत्थितेः संगतिः । **सर्वेति** । अद्य सुत्यामित्यद्यशब्दस्यापि त्र्यहादिवत्सुत्याकालोपलक्षकतया ततो विशेषालाभादिति भावः । **नन्वेवमपि** संनिधेर्विशेषग्रहणात्तन्त्रतेत्यत आह—**सत्यपीति** । यथा यूपैकादशिन्यां सन्नपि कस्यचिद्यूपस्य देशतः संनिधिरविशेषक इति यूपाहुतेस्तन्त्रता तथेहापि कालतः संनिधिरविशेषक इति तन्त्रतेत्यर्थः । अत्यन्तान्तिकदेशे यूपाहुत्यसंभवाद्यत्रदेशे यूपो दृष्टिपथमवतरति तद्देशत्वेनैव प्रयोजकत्वात्कस्यचित्संनिधेरार्थिकत्वादविशेषकत्वेऽपि प्रकृतेरङ्गानां प्रधानकालकर्तव्यत्वस्य शास्त्रीयत्वात्तद्भेदे भेद एव न्याय्य इत्याशयेनाह—**कर्मेति** । नचैवमग्नीषोमीयकालेऽनुष्ठितस्याञ्जनादिसंस्कारस्यापि तदपवर्गेऽपवर्गः स्यादिति वाच्यम् । अञ्जनादेर्हि न यूपगतातिशयो द्वारं किंतु यूपस्वरूपमेव तच्च यूपापकर्षविधानात्पशुत्रयस्याप्येक इति पशुत्रयापवर्गेऽञ्जनाद्यपवर्ग इह तु आह्वानस्य द्वारं देवतागतातिशयः सः सर्वेषामह्नामेक इत्यत्र प्रमाणाभावाद्यस्मिन्नहन्यसावनुष्ठीयते तदपवर्गे प्रत्यहमग्निसंमार्जनादिवदपवर्गस्य युक्तत्वादिति भावः । किंच 'संस्थितेसंस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्यया सुब्रह्मण्यमाह्वये'ति संप्रेष्यतीति सप्रैषविधिबलादप्यावृत्तिरितरथा तस्यादृष्टार्थता स्यादित्याशयेनोपसंहरति—**तस्मादिति** ॥

---

१ ष्टोमेऽस्त्युपसत्कालं. २ न वेति संशये.

देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्यैच्छिकताधिकरणम् ॥ १२ ॥

**लौकिकेषु यथाकामी संस्कारानर्थलोपात्स्यात् ॥ ३३ ॥**

**देशपात्रर्त्विजोऽन्यस्मिन्प्रयोगेऽन्य उतैच्छिकाः ॥ भुक्त्यर्थपर्णवत्तेऽन्ये वासोवत्ते स्युरैच्छिकाः ॥ १४ ॥**

समादिदेशानामृत्विजां स्रुवादीनां च पात्राणां किं प्रयोगेऽन्येषामुपादानमुत तेषामन्येषां वेत्यनियम इति संदेहे निरिष्टकोपादाने शिष्टाचारविरोधादन्येषामेवोपादानं, नात्र शिष्टाचारविरोधः। एतेषु शिष्टा न पुनरुपादानं वर्जयन्ति तस्मादनियम इति पर्यवसितमृत्विक्षु देशे च । पात्रेषु तु चिन्त्यते ॥

पात्राणां तन्त्रस्य नियमाधिकरणम् ॥ १३ ॥

**यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ [यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३५ ॥ मुख्यसाधारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥ यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तथाऽऽशिरे ॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥ प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥४३॥ अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥४४॥ प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४५ ॥]**

**मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम् ॥ नियतं वाऽग्रिमो देशवन्मैवं प्रतिपत्तितः ॥ १५ ॥**
**किं पौर्णमासीमारभ्य यद्वाधानमियं धृतिः ॥ प्रकृत्यर्थतयाद्यः स्यान्मरणानियमात्परः ॥ १६ ॥**

पात्रेषु किं देशादिवदनियम उत तेषामेवान्ताद्धारणमिति नियामकस्याभावादनियमः। नहि। पूर्वप्रयोगे कृतः कश्चित्संस्कारः परेषु प्रयोगेषूपजीवनीयोस्ति । यज्ञोपाद्गीताः पात्रान्तराणि नोपाददीमहि । ननु 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति परिधानीये कर्मणि पात्राणां प्रतिपत्तिर्विहिता तत्परित्यागे लुप्येतातस्तेषामेव धारणम् । नेयं पात्राणां प्रतिपत्तिः यजमानशरीरसंस्कारार्थे दाहे पात्राणां तृतीयया गुणभावावगमात् । तेन परित्यज्यापि पूर्वोपात्तानि पात्राणि अभिनवैः परिदह्य-

---

**लौकिकेषु०** ॥ ३३ ॥ आह्वानभेदवद्देशादीनामपि भेद इत्युत्थितेः संगतिः । **निरिष्टकेति** । नितरामिष्टमनेनेति निरिष्टं निरिष्टमेव निरिष्टकं । एकस्मिन्कर्मण्युपयुक्तमिति यावत् । **एतेष्विति** । शिष्टाचारगम्येऽर्थे यथाचारं व्यवस्था । ततश्च यत्र बर्हिरादौ शिष्टानां कर्मान्तरोपयुक्तमिदमतो वर्जनीयमिति निरिष्टत्वबुद्ध्या वर्जनं तत्रैव पुनरुपादाने शिष्टाचारविरोधः, देशादौ तु शिष्टानां नैव वर्जनमिति नात्र शिष्टाचारविरोध इत्यर्थः । नच 'ऋत्विगाचार्यौ नातिचरितव्या'विति निषेधात्प्रयोगान्तरेपि त एव ऋत्विजो नान्ये इति वाच्यम् । तस्य निषेधस्य पुरुषार्थत्वेन तदतिक्रमेऽपि क्रतुवैगुण्याभावात् । किंचातिचारो नाम वैपरीत्याचरणं नत्वन्योपादानमिति न दोषः । **ननु** स्रुगादिष्वनियमे सत्यग्रिमनियमचिन्ताविरोध इत्यत आह—**इति पर्यवसितमिति** । एवंच पात्रोदाहरणे अन्यान्येवोपादेयानीति नियमाभावप्रतिपादन एवास्याश्चिन्तायास्तात्पर्यं नतु देशादिवत्तानि वाऽन्यानि वेत्यनियमेपि । ततश्च न केवलमन्योपादाननियमाभावः, किंतु तान्येवेति नियमोपीति प्रतिपादनायाग्रिमचिन्तापि युक्तेति भावः । सूत्रार्थस्तु—लौकिकेषु देशादिषु पूर्वप्रयोगकृतस्य प्रयोगान्तरे उपजीव्यस्य संस्कारस्याभावेऽन्योपादानेपि संस्कारलोपाभावादन्यैरपि प्रयोगनिर्वृत्त्यार्थलोपाभावाच्च यथाकामीति ॥

**यज्ञायुधानि०** ॥ ३४ ॥ पात्रेषु प्रागुक्तनियमाभावस्य पर्यवसानकथनात्संगतिः । **नहीति** । पूर्वप्रयोगकृत एव संस्कार उत्तरप्रयोगेषूपयुज्यत इत्यत्र प्रमाणाभावादिति भावः । **परिधानीय इति** । अन्तिमदाहाख्ये कर्मणीत्यर्थः । **ननु** प्रयाजशेष इव तृतीयासद्भावेऽपि प्रतिपाद्यत्वं किं न स्यादित्यत उक्तं—**यजमानशरीरसंस्कारार्थे इति** । दाहस्य यजमानशरीरसंस्कारार्थत्वेन सिद्धत्वात्तत्रैव पात्राणां तृतीयया विनियोगः, प्रयाजशेषाभिघारणस्य तु हविःसंस्कारार्थत्वमसिद्धमिति न तत्र प्रयाजशेषस्य विनियोग इति वैषम्यमिति भावः । **अभिनवैरिति** । क्वचित्प्रयोगे विनियुक्तैरिति शेषः । अन्यथा

भाने नास्ति किंचिद्वैगुण्यम्। तस्मादनियमः। सिद्धान्त्येकदेशी त्वाह—यद्यपि गुणाभावः पात्राणां तथापि धारणम्। परित्यागे हि सति मरणस्यानियतत्वात्कदाचित्पूर्वप्रयोगोपयुक्तेषु परित्यक्तेषूत्तरप्रयोगकाले नागते यजमानः प्रमीयेत तत्र यज्ञपात्राभावाद्विगुणो दाहः स्यात्। तस्मादवश्यमुत्तरकालं यावत्तेषामेव धारणम्। धारितेषु च तेषु तैरेव तत्प्रयोगस्यापि सिद्धेर्नान्योपादानम्। एवमतः परमपीत्यान्ताद्धारणम्। एवंस्थिते चिन्तान्तरं प्रस्तूयते—किं दर्शपूर्णमासप्रभृति धारणमुत पवमानहविःप्रभृतीति। दर्शपूर्णमासयोः सर्वप्रकृतित्वात्तत्रैव पात्राणामुपदेशात्ततःप्रभृति धारणं मन्वानस्योत्तरं पवमानहविःप्रभृति धारणम्। आधारितेषु प्रागेव दर्शपूर्णमासाभ्यां यदि यजमानः प्रमीयेत तदा तस्याहिताग्नेः सतो देहसंस्कारो यज्ञपात्राभावाल्लुप्येत तस्मात्पवमानहवींष्यारभ्य धारणं, स्थितादुत्तरं गुणाभावेपि पात्राणां धारणमित्येकदेशिमतम्। परमार्थतस्तु प्रतिपत्तिरत्र पात्राणाम्। यद्यपि दाहे गुणभावस्तृतीययावगम्यते तथापि दक्षिणे हस्ते जुहूमासादयतीत्येवं द्वितीयादिनिर्देशाद्वासादनं प्रतिपत्तिः। तेन यद्यप्यभिनवैरपि दाहस्यावैगुण्यं तथाप्यासादनरूपा प्रतिपत्तिर्मा विलोपीत्याद्यानामेव धारणम्। तस्मात्सर्वकर्मणां सर्वप्रयोगाणां च तन्त्रं पात्राणि॥

सर्वसोमानामुपरिष्टात्प्राजापत्यप्रयाजाधिकरणम्॥ १४॥

**उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः॥ ४६॥ [अङ्गविपर्यासो विना वचनादिति चेन्न॥ ४७॥ उत्कर्षः संयोगात्कालमात्रमितरत्र॥ ४८॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत्॥ ४९॥ न श्रुतिप्रतिषेधात्॥५०॥ विकारस्थान इति चेत्॥५१॥ न चोदनापृथक्त्वात्॥५२॥**

प्राजापत्यप्रचारः किमार्भवे शस्त्रिसोमतः॥ ऊर्ध्वं वा विकृतौ वोत परस्तात्सर्वसोमतः॥ १७॥
आर्भवे चोदकादुक्त्यासत्तिभ्यां तदनन्तरः॥ श्रुतिबाधस्तदा तस्मात्तृतीयो विकृतित्वतः॥ १८॥
पशवो न हि सोमस्य विकारा अविशेषतः॥ उक्तत्वात्सर्वसोमानामुपरिष्टात्प्रचर्यते॥ १९॥

वाजपेये श्रूयते 'सप्तदश प्राजापत्यान्पशूनालभत' इति। तान्प्रकृत्य श्रूयते 'उपरिष्टात्सोमानां

---

यज्ञपात्रत्वाभावादधिष्ठानलक्षणायामपि वस्तुतो यज्ञपात्राणामेव लक्षणीयत्वादिति मुख्यधारणं वा मरणस्यानियतत्वादिति सूत्रोक्तप्रकारमाह—**सिद्धान्तीति**। नच 'उपवेषेण कपालान्युपदधाती'त्यस्य संनयद्विषयतया संकोचवद्यज्ञपात्रैर्दहन्तीत्यस्यापि यज्ञकाले मरणविषयत्वमस्त्विति वाच्यम्। असंनयता शाखानुनिष्पन्नस्योपवेषस्य संपादयितुमशक्यतया संकोचेपीह धारणपात्रेणोपपत्त्या संकोचायोगादिति भावः। **नन्वेवमप्येकप्रयोगार्थमुपात्तानां प्रयोगान्तरपर्यन्तमेव धारणं स्यान्नतु** यावज्जीवमित्यत आह—**धारितेष्विति। एवंस्थित इति**। प्रतिपत्त्यर्थं धारणमिति मुख्यसिद्धान्ते स्थिते पवमानहविःप्रभृतिधारणमचिन्तितसिद्धम्। अन्यथा पवमानहविरर्थमुपात्तानां प्रतिपत्तिलोपापत्तेः। अतोऽर्थकर्मत्वपक्षानन्तरमपरिसमाप्त एवाधिकरणे इयं चिन्ता युक्तेत्येवंस्थित इति वदतो भावः। **उपदेशादिति**। ततश्च प्रकृतावेव यज्ञपात्रैश्चेति श्रुतिर्झटिति प्रवर्तत इति भावः। **लुप्येतेति**। यद्यपि पदपांसुलोपे पांस्वन्तरेणाक्षाञ्जनवदिहापि यज्ञपात्राभावेपि स्रुवादिपात्रेण दाहः कर्तव्यो न लोपनीयस्तथापि दाहो विगुणः स्यादित्यत्र तात्पर्यम्। अतएव पूर्वं विगुणो दाहः स्यादित्येवोक्तम्। **अत्रेति**। परिधानीयकर्मणीत्यर्थः। **ननु** दाहे गुणाभावस्यासादनं विनानुपपत्तेरर्थाक्षिप्ते आसादने दक्षिणहस्तादिदेशनियममात्रविधिरस्त्विति शङ्कामपनुदन्नाह—**द्वितीयेति**। द्वितीयावगतप्राधान्यभङ्गप्रसङ्गाद्वाक्यान्तरपूर्वकत्वे प्रमाणाभावाच्च जुह्वाद्युद्देशेनासादनं धात्वर्थ एव विधीयत इति भावः। **तेनेति**। अनेनैवैकदेशिसिद्धान्तोपि निराकृतः। प्रयोगान्तरसमये रमणीयतरपात्रलाभे पूर्वत्यागेनाभिनवपात्रोपादानेऽपि दाहस्यावैगुण्येनाद्यानामेव धारणनियमे प्रमाणाभावादिति। **तस्मादिति**। नचैवं प्रतिपत्तित्वे पात्रवतां कर्मणामियमङ्गं स्यात्ततश्च कर्मणां परिधानीयकर्मपर्यन्तमसमाप्तत्वादेकस्यापि कर्मणः विहितफलत्वं न स्यादिति वाच्यम्। प्रतिपत्तेः प्रयोगमध्ये विधानाभावेन समयान्तरे प्रतिपत्तिविधानादेवं कल्प्यते-विनापि प्रतिपत्तिं कर्म स्वफलं साधयति परंत्वन्यथाप्रतिपत्तौ दुष्यतीति। ततश्च कर्मणः स्वकार्यजनने प्रतिपत्त्यनपेक्षणान्नहि फलजनकत्वविरोधः। अन्तरा पात्रविनाशे सति प्रतिपत्तिर्नाङ्गमिति तादृशस्थले ऐहिकत्वं न सर्वत्रेत्यप्याहुः। **सूत्रे** ऋजीषवत् ऋजीषस्यावभृथे प्रतिपत्तिपर्यन्तं धारणवदित्यर्थः॥

**उपरिष्टात्सोमानां०॥ ४६॥ आर्भवेति**। तृतीयसवने आद्यं यदार्भवाख्यं पवमानस्तोत्रं तदुत्तरकाल **इत्यर्थः**।

प्राजापत्यैश्चरन्ती'ति। तत्र विचार्यते किमार्भवपवमानकाले[1] प्रचरितव्यं उत शस्त्रवतां सोमानामुपरिष्टात् उत विकारस्थाने अथ सर्वसोमानामुपरिष्टादिति । तत्र चोदकानुग्रहादार्भवकाले प्रचार इति ब्रूमः। प्रकृतावार्भवकाले प्रचारो दृष्टः प्रकृतिवदिहापि तथैव कर्तव्यः, आर्भवकालश्च केषांचित्सोमानामुपरिष्टाद्भवतीति नास्ति वचनविरोध इति पूर्वः पक्षः। नैवम् । तथासति चोदकेनैव तत्कालस्य सिद्धत्वाद्वचनमनर्थकं स्यात्। तस्माच्छस्त्रवतां सोमानामुपरिष्टात्तथासति हि प्राकृतकालप्रत्यासत्तिर्लभ्यत इति द्वितीयः। न प्रधानप्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति तस्माद्विकारस्थाने प्रचारोऽग्निष्टोमप्रचारादूर्ध्वं तत्खल्वागन्तुकानामुक्थादीनां विकाराणां स्थानं प्राजापत्यप्रचारश्चागन्तुकविकारः, तस्मात्तत्र स्यादिति तृतीयः पक्षः । सोमविकाराणामेतत्स्थानं न पशुविकाराणां प्राजापत्यप्रचारश्च पशुविकारस्तस्मान्न तत्स्थानत्वं सामान्यतो दृष्टम्। नचैवंजातीयकेष्वप्रमाणं तस्माद्वचनस्याविशेषप्रवृत्तेः सर्वसोमानामुपरिष्टादिति सिद्धान्तः । आर्भवकालप्रचारे क्रतुपशूनां प्राजापत्यानां चैककालः प्रचार इति 'मनोतायै हविषोऽवदीयमानस्यानुब्रूही'ति मनोतासूक्तानुवचनं तन्त्रम्। सिद्धान्ते तु कालभेदादावाप इति संगतिः॥

सवनीयपुरोडाशे देवतोत्कर्षाधिकरणम्॥ १५॥

## उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः पश्वनङ्गत्वात्, यथा निष्कर्षेऽनन्वयः॥ ५३॥ [वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः॥५४॥]

**सवनीयपुरोडाशे देवोत्कर्षो न विद्यते॥ अस्ति वा पश्वनङ्गत्वाभान्वयाभावतोऽस्ति सः॥ २०॥**

सवनीयपशौ प्राकृतस्य सूक्तवाकस्य विकृतस्य पाठः स चानुयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यते तत्र सवनीयपुरोडाशानां देवताः कीर्त्यन्ते 'भृज्जन्निन्द्राय हरिवते धाना'इत्यादि। पाशुकं च तन्त्रं पुरोडाशे प्रसज्यत इति वक्ष्यते । तत्र संशयः किमुत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतानामुत्कर्षो नेति तत्र 'प्रासङ्गिकं नोत्कर्षे'दित्यनेन न्यायेन दाक्षिणाग्निकहोमयोरिव हरिवदादिपदानामनुत्कर्षप्राप्तावुच्यते—तन्निपदापेक्षित्वादेषामुत्कर्षः। नहि 'भृज्जन्निन्द्राय धाना'इत्येतावन्मात्रं प्रयोगार्हम्।

---

अत्र शस्त्रवतामिति सामान्योक्तावपि तृतीयसवनकर्तव्यवैश्वदेवशस्त्रानन्तरभाविसोम एव विवक्षितः। वैश्वदेवशस्त्रस्यार्भवानन्तरभावितया तेष्वेव वक्ष्यमाणप्रकृतिकालप्रत्यासत्तिसद्भावादिति ध्येयम् । चोदकानुग्रहमेव विवृणोति—**प्रकृताविति**। **केषांचिदिति**। सवनद्वयगतानामित्यर्थः। **तस्मादिति**। प्रत्यासत्तेरकिंचित्करत्वादिति भावः । विकारस्थानमेवाह—**अग्निष्टोमेति**। नन्वेकविकारस्थानत्वदर्शनेन विकारान्तरत्वस्थानत्वमपि तस्यैव स्वध्यवसानमित्यत आह—**सामान्यत इति**। अनुमानेन श्रुतिसंकोचो न युक्त इत्येवंजातीयकेष्विति वदतो भावः । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति प्रहृत्य परिधिं जुहोती'ति क्रमविपर्यासशङ्कातत्परिहारौ भाष्ये द्रष्टव्यौ । इमं विचारमध्याये संगमयति—**आर्भवेति । तन्त्रमिति**। अनेनैव पात्रवन्मनोतापि तन्त्रमित्युत्थितेरवान्तरसंगतिरिति सूचितम्॥

**उत्कर्षे सूक्तवाकस्य०** ॥ ५३ ॥ करिष्यमाणपूर्वोत्तरपक्षोपयोगितया विषयं परिष्कुर्वन्नाह—**सवनीयेति**। **विकृतस्येति**। 'अग्निमद्यहोतारमवृणीतायं सुतासुती यजमान'इत्यादिरूपेणेति शेषः । **सचेति** । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्यनुयाजोत्कर्षे तदा दिवाभिसंबन्धादिति न्यायेन तदनन्तरभाविसूक्तवाकोप्युत्कृष्यत इत्यर्थः । **पाशुकमिति**। तन्त्रमध्यपातात्सवनीयपुरोडाशेषु सवनीयपशुतन्त्रं प्रसज्यत इति वक्ष्यत इत्यर्थः। **तत्रेति** । 'प्रासङ्गिकं नोत्कर्षेदसंयोगादि'ति पाश्चमिकं सूत्रम् । प्रासङ्गिकं प्रसङ्गादुपकारकं पाशुकानुयाजादिकमुत्कृष्यमाणमपि सवनीयपुरोडाशगतदक्षिणाग्निकर्तव्यपिष्टलेपफलीकरणहोमौ नोत्कर्षेत् पुरोडाशार्थदाक्षिणाग्निकहोमयोः पश्वर्थानुयाजादेश्च परस्परासंयोगेन क्रमानपेक्षणादिति तदर्थः। ततश्च वाक्याल्लिङ्गस्य प्रबलत्वात्सूक्तवाकैकवाक्यतामापन्नानामपि सवनीयदेवतापदानां लिङ्गादनुत्कर्ष इति भावः। **तन्नेति** । असत्युत्कर्षे स्वकाल एव पुरोडाशदेवतानिर्देशाद्धाना भृज्जन्निन्द्रायेत्यादिपदानां प्रयोगे सति भृज्जन्नित्यादेर्विशेषाभावात्क्रियापदाभावाच्चेन्द्राय हरिवते धाना भृज्जन् सुतासुती यजमानो होतारमग्निमवृणीतेति यज-

---

१ किमार्भवकाले.

ऽग्निमद्य होतारमवृणीतायं सुन्वन्यजमान' इति तन्त्रपदमपेक्ष्यैषामर्थप्राप्तिः । तच्च तन्त्रपदं पाशुकमुत्कृष्यते । अतस्तदपेक्षाणां पुरोडाशदेवतापदानामप्युत्कर्षः । तैश्चोत्कृष्टैरपि सवनीयदेवता एव प्रकाश्यन्ते इति न लिङ्गविरोधः । पूर्वं प्राजापत्यप्रचारस्योत्कर्षेऽभिहिते प्रसङ्गात्सवनीयपुरोडाशदेवतापदानामप्युत्कर्षः प्रतिपाद्यत इति संबन्धः ॥ इति श्रीशास्त्रदीपिकायामेकादशाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

# एकादशाध्याये चतुर्थः पादः ।

राजसूये सौमापौष्णादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ १ ॥

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥ [प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥]**

**सौमापौष्णादिके तन्त्रमङ्गानामुत भिन्नता ॥ तन्त्रं फलैक्यतो मैवं दक्षिणाकर्तृभेदतः ॥ १ ॥**

राजसूये यान्युक्तदेशकालानि दक्षिणाभेदवन्ति कर्माणि यथा 'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणे'ति किमेवंजातीयकेषु तन्त्रमङ्गानि उत प्रतिदक्षिणं तन्त्रभेद इति । तत्र—'देशकालफलाभेदादङ्गानां तन्त्रता भवेत् ॥ कर्तृभेदोऽपि

---

मानरूपविशेष्यलाभायावृणीतेति क्रियापदलाभाय चाग्निमद्यहे'तारमवृणीतेति तन्त्रपदसापेक्षत्वात्तदुत्कर्षे पुरोडाशदेवतापदानामप्युत्कर्ष इत्यर्थः । तदेवोपपादयति—**नहीति** । ततश्च लिङ्गादनुत्कर्षे साकाङ्क्षत्वेनानर्थक्यापत्त्या दुर्बलमपि वाक्यमेवाश्रित्योत्कर्षः स्वीकार्यः । दाक्षिणाग्निकहोममात्रस्य स्वकाले प्रयोगार्हत्वादनुत्कर्ष इति वैषम्यमिति भावः । तन्त्रिपदोत्कर्षे हेतुगर्भं विशेषणं पाशुकमिति । अयंभावः—प्रस्तरस्तावत्पाशुक एव प्रसङ्गात्सवनीयानामुपकरोति तदर्थश्च प्रस्तरस्तदर्थमेव तत्संस्काररूपं प्रहरणं प्रहरणाङ्गं च सूक्तवाक इति सूक्तवाकस्य पश्वर्थतया सूक्तवाकान्तर्गतानां तन्त्रिपदानामपि पश्वर्थतया पाशुकसूक्तवाकोत्कर्षे उत्कर्ष आवश्यक इति । एवंसत्यपि लिङ्गविरोध उत्कर्ष उपपादितः । इदानीं लिङ्गविरोधोऽपि नास्तीत्याह—**तैश्चेति** । यद्युत्कृष्टानामर्थान्तरत्वं स्यात्तदा लिङ्गविरोधः स्यान्नत्वेतदस्ति । उत्कर्षेपि पुरोडाशदेवतानामेवेयमिष्टेत्यविस्मरणाय प्रकाशनादित्यर्थः । **ननू**त्कर्षचिन्तायाः तन्त्रलक्षणे संगतिः । नचानुत्कर्षे अग्निमद्येत्यादितन्त्रिपदानामावृत्तिरुत्कर्षे तु नेत्येवं तन्त्रावापविचारात्मकत्वात्संगतिरिति वाच्यम् । पशोस्तन्त्रितया प्रस्तरप्रहरणस्य तदर्थतयानुयाजानन्तरमेव कर्तव्यतया पुरोडाशार्थमावृत्त्यसंभवेन 'सूक्तवाकेन प्रस्तरं प्रहरती'ति सूक्तवाकशब्दितानां सर्वेषामपि पदानां प्रहरणे विनियोगबलेन तन्त्रिपदानामपि इष्टदेवतापदैकवाक्यताभावेन प्रहरणाङ्गतया पुरोडाशार्थं पृथक्प्रहरणाभावेन तन्त्रिपदावृत्तेर्वक्तुमशक्यतया केवलसवनीयदेवतापदमात्रस्योत्कर्षो नतु तन्त्रिपदानां देवतापदानां चासत्यपि प्रहरण इयमियमिष्टदेवतेति देवतानामनुस्मरणार्थतयोपयोग इत्येव पूर्वपक्षस्य वक्तव्यतया तन्त्रिपदावृत्त्यभावादित्यत आह—**पूर्वमिति** । यथा पौर्णमास्यमावास्ययोस्तत्तद्देवतापदानां निष्कर्षे सतीतरदेवतानामन्वयस्तद्वदिति । सूत्रे यथा निष्कर्षेऽनन्वय इत्यस्यार्थः—प्रकरणाविशेषेणोभयार्थतया सूक्तवाकस्य विनियोगेनोभयत्र तन्त्रिपदावृत्तिलाभात्तत्र नैराकाङ्क्ष्यमिह तु प्रागुक्तरीत्या तन्त्रिपदोत्कर्षात्साकाङ्क्षत्वादानर्थक्यं स्यादिति वैषम्यं सिद्धान्ते भाष्येपि वक्तव्यम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायामेकादशाध्यायस्य तृतीयः पादः ॥ ३ ॥**

**चोदनैकत्वात्०** ॥ १ ॥ एवं पादत्रयेण यत्र देशकालकर्तॄणां भेदाभेदौ स्फुटौ तद्विषयतन्त्रावापौ विचारितौ । इदानीं यत्र भेदाभेदौ न स्फुटौ किंतु दक्षिणाभेदतदभावादिनोन्नेयौ तद्विषयतन्त्रावापौ चिन्त्येते इति पादान्तरत्वमानन्तर्यं च । इष्टिराजसूयचातुर्मास्येष्वित्यधिकरणविषयादेतदधिकरणविषयस्य भेदप्रदर्शनायानुक्तदेशकालानीति विशेषणं—**तत्रेति** । 'राजसूयेन स्वाराज्यकामो यजेते'ति फलाभेदस्तत एव देशकालाभेदोऽपि असति विशेषवचने एकफलानामेकदेशकालत्वस्य न्याय्यत्वादिति भावः । **ननु** देशाद्यभेदेऽपि वरुणप्रघासेष्वापराग्निकहोमानामिव कर्तृभेदाद्भेदः किं न स्यात् । नच ऋत्विजामुपादायकं वरणं, ततश्च नानाकर्मात्मकराजसूयप्रयोगाङ्गत्वेन सर्वादौ क्रियमाणस्य वरणस्य तन्त्रत्वात्कथं कर्तृभेद इति वाच्यम् । शास्त्रीयवरणभेदस्य ग्रन्थकारेणैवाग्निमाधिकरणे वक्ष्यमाणत्वादित्यत आह—**कर्तृभेद इति** ।

नैवास्ति दक्षिणामात्रभेदतः ॥' शक्यते हि तेभ्य एव कर्तृभ्योऽन्या दक्षिणा दातुं तस्मादेकतन्त्र्यम् —'उच्यते दक्षिणाभेदात्कर्तृत्वमपि भिद्यते ॥ तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः ॥' दक्षिणाभेदादानतिभेदस्तद्भेदात्तत्कृतस्य कर्तृरूपस्य भेदः। वामनानतैर्हि पूर्वं कर्म कर्तव्यं श्यामानतैरुत्तरम्। तन्त्रत्वे तूभाभ्यामानता उभयं कुर्युः। तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत। तस्मात्प्रतिदक्षिणं तन्त्रभेदः ॥

राजसूये कर्तुस्तन्त्रताधिकरणम् ॥ २ ॥

**अनियमः स्यादिति चेत् ॥ ४ ॥ [नोपदिष्टत्वात् ॥ ५ ॥ लाघवातिपत्तिश्च ॥ ६ ॥ प्रयोजनैकत्वात् ॥ ७ ॥ विशेषार्था पुनःश्रुतिः ॥ ८ ॥]**

**राजसूये प्रक्रमस्थकर्तारो नियता न किम् ॥ नियता वा दक्षिणानां भेदादनियता अमी ॥ २ ॥**
**अनेकसमुदायात्मराजसूयाय ते वृताः ॥ आदौ तेन नियम्यन्ते विशेषे दक्षिणाभिदा ॥ ३ ॥**

दक्षिणास्वरूपात् कर्तृरूपं भिद्यत इत्युक्तम्। इदानीं कर्तृत्वाधिष्ठानभूताश्चिन्त्यन्ते। किं ये पूर्वं प्रवृत्तास्त एवान्तात्कुर्युरुत ते वान्ये वेति। तदर्थमिदं विचार्यते—किं सर्वकर्मणामृत्विग्वरणं तन्त्रमुत भेदेनेति। तत्र दक्षिणाभेदेन प्रयोगाणां भिन्नत्वादङ्गभूतस्य वरणस्यापि भेदः। तेन यस्मिन्कर्मणि ये वरणभरणाभ्यामुपात्तास्ते तदपवर्गेऽपवृक्ता लौकिका भवन्ति। तत्र पुनर्वरणसंस्कार आधातव्यः कर्मान्तरार्थे तदाधाने चाविशेषात्ते वान्येवेति प्राप्ते ब्रूमः—सर्वस्य राजसूयस्यैकफलत्वाद्युगपत्सर्वचिकीर्षा, चिकीर्षितार्थे च सहायवरणं, तस्मादगृह्यमाणविशेषत्वात्सर्वकर्मणां राजसूयावयवभूतानां तन्त्रं

---

नन्वेकस्या आनतेरेकयैव दक्षिणया सिद्धेर्दक्षिणाभेदे आनतिभेदावश्यंभावादानतिभेदनिबन्धनकर्तृभेदो दुर्वार इत्यत आह—**शक्यत इति**। यथा दशद्रव्याम्नातबलादेक एव सोमविक्रेतुरानतिविशेषः एवमनेकदक्षिणाम्नानात्तावद्दक्षिणासाध्य एक एवानतिविशेष इति भावः। **तदानतानामिति**। यदनन्तरं कर्मणि प्रवृत्तिस्तत्कर्तृतापादकमानतिश्च तथेति तद्भेदात्कर्तृभेद इत्यर्थः। **कर्तृरूपस्येति**। कर्तृत्वरूपस्येत्यर्थः। **बाध्येतेति**। ततश्च दक्षिणाव्यवस्थाबाधप्रसङ्गादिह तावद्दक्षिणाकृत एवानतिविशेषः कल्पयितुं शक्यत इति भावः। नच यथा द्वादशाहेऽन्वहं द्वादशशते दीयमानेऽपि न दक्षिणाभेद एवमिहापि सर्वं संहृत्य यावद्भवति तावत्येकैव दक्षिणा। प्रयोगार्थत्वाद्दक्षिणायाः, प्रयोगस्य च फलसामग्रीविषयतया समस्तविषयस्यैकत्वादिति वाच्यम्। दक्षिणाशब्दो हि दक्षकरी दक्षिणेति व्युत्पत्त्यानत्यसाधारणहेतुपरस्ततश्च तावत्समुदायस्य दक्षिणाप्रसङ्गादिहानतिभेदस्यैव न्याय्यत्वात्। द्वादशाहे तु अन्वहं द्वादशशतं ददातीत्यन्वहं ददातिरेव श्रूयते नतु दक्षिणाशब्द इति तत्र समुदायो दक्षिणा। एवं द्वादश पृष्ठौहीर्ददातीत्यादौ दक्षिणाश्रुत्यभावात्प्रथममानतस्यैवाध्वर्योः कर्ममध्ये उत्साहजननमात्रं नतु तावता तत्र कर्तृभेदशङ्कावकाशः। तस्मात्प्रयोगाङ्गयोरपि देशकालयोस्तत्र यथावचनाद्भेद एवमिह कर्तृभेद इति भावः। सूत्रार्थस्तु—राजसूयेऽनुक्तदेशकालानां कर्मणां 'राजसूयेन यजती'ति चोदनैकत्वेन युगपत्प्रयोज्यत्वात्तन्त्रमङ्गानीति ॥

**अनियमः स्यादिति चेत् ॥ ४ ॥** पूर्वाधिकरणोक्तभेदस्यैतदधिकरणे वक्ष्यमाणभेदस्य च विषयभेदं दर्शयति—**दक्षिणेति**। **तत्रेति**। दक्षिणाभेदेन पूर्वाधिकरणोक्तरीत्या कर्तृभेदात्प्रयोगभेदः प्रयोगश्च सर्वाङ्गोपेतकर्मविषय इत्यङ्गान्तरवद्वरणस्यापि भेद इत्यर्थः। **नन्वेकस्मिन्कर्मणि** वृतानामेव सर्वकर्मकर्तृत्वसंभवेन वरणभेदो निष्फल इत्यत आह—**तेनेति**। नहीदं वरणं सर्वप्रयोगबहिर्भूतं येनाविशेषात्सर्वसाधारणं स्यात्ततश्च पवित्रे कृतं वरणं तदर्थमिति विशेषग्रहणात्तदपवर्गे वरणापवर्गादृत्विजामप्यपवर्गः। सांत्वनाद्यनियतोपायेन ऋत्विगुपादाने प्रसक्ते वरणाम्नानाद्दक्षिणाम्नानाच्च वरणभरणाभ्यामेव ऋत्विज उपादातव्या इति नियमकल्पनेन वरणापवर्गे तदुपादानीयर्त्विगपवर्गस्य न्याय्यत्वात्, एवंच कर्मान्तरार्थं वरणान्तरमावश्यकमित्यर्थः। **ननु** तेष्वेव पात्रेषु पुनः प्रोक्षणादिवत्तेष्वेवर्त्विक्षु पुनर्वरणसंस्कार आधीयतामित्यत आह—**तदाधान इति**। पात्रवत्पुरुषेषु त एवेत्यत्र प्रमाणान्तराभावादिति भावः। **सर्वस्येति**। प्रथमकर्मणि पवित्राख्ये क्रियमाणं वरणं न तन्मात्रार्थं, सर्वस्य कर्मजातस्य राजसूयसंशब्दितस्य फलसामग्रीत्वेन फलार्थचिकीर्षमाणयावत्सर्वविषयं तद्दशायां क्रियमाणस्य संतमपि कस्यचित्कर्मणः संनिधिं तिरस्कृत्य यूपाहुतिन्यायेन सर्वार्थत्वस्यैव वक्तुं न्याय्यत्वादतो वरणभेदाभावान्न ऋत्विग्भेद इत्यर्थः। एवं शास्त्रीयवरणविषयतया भाष्ये आपाततः प्रतीयमानमधिकरणं व्या-

---

१ दक्षिणाभेदात्कर्तृरूपं. २ दक्षिणाभेदात्प्रयोगाणां भेदात्.

वरणमित्युपक्रमवृता एवान्तात्कर्तारः। ननु सत्यप्येकफलत्वे देशकालकर्तृभेदादिष्टिपशुसोमानां भिन्ना एव प्रयोगाः 'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे ऐन्द्रमेकादशकपालं राजन्यस्य गृह'इत्यादिदेशभेदः। षडेव पूर्वेद्युर्निरुप्याणि षडुत्तरेद्युरिति कालभेदः। दक्षिणाभेदाच्च कर्तृभेदः। तदेवं भिन्नेषु प्रयोगेषु यस्मिन्कर्मणि प्रयुयुक्षिते वरणमनुष्ठितं तदर्थमेवैतदिति विशेषग्रहणान्नास्ति तन्त्रत्वम्। नहि पवित्रारम्भसमयेऽनेकेष्टिव्यवहितस्याभिषेचनीयस्य प्रयोग उपस्थितो येन तदेव तस्यापि वरणं स्यात्। नचाकर्मकालं यूपच्छेदनवत्प्रकृतावृत्विग्वरणं येन सर्वकर्मार्थं स्यात्। कर्मकालत्वे तु तद्भेदात्पौर्णमास्यमावास्ययोरिव सत्यप्येकफलत्वे भेदेनैव वरणमृत्विजश्च। तस्मादनियमो ज्यायान्। भाष्यकारमते च सौमिकस्य वरणस्य यज्ञसंयोगेन केवलप्रधानार्थत्वादग्नियोगविमोकवद्विस्पष्टमेव भेदेन प्रत्यहं वरणमित्यनाशङ्कनीयमेव तन्त्रत्वम्। सत्यमेवमङ्गभूतस्य वरणस्य भेदः, यत्तु लौकिकं वरणं तस्य तन्त्रत्वमस्माभिरुच्यते। यजमानो हि लौकिकं प्रार्थनमृत्विजां कुर्वन्सर्वराजसूयोद्देशेनैव कर्तुमर्हति लाघवादविघ्नसमाप्तये च। अन्यथा ह्येककर्मार्थे प्रार्थिताः कदाचित्तत्समाप्तौ ते न याजयेयुरन्ये च न लभ्येरन् तत्र कर्मविघ्नो भवेत्। निरन्तरप्रयोगाणि च राजसूयकानि कर्माणि न दर्शपूर्णमासवदौदासीन्यं मध्ये भजन्त इति त एवान्तादविघ्नसमाप्त्यर्थमवश्यं स्थापनीया इत्येतावानभिप्रायः॥

अवेष्टावङ्गानां भेदाधिकरणम्॥ ३॥

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्॥ ९॥ [वचनात्कामसंयोगेन॥ १०॥ क्रत्वर्थायामिति चेन्न वर्णसंयोगात्॥ ११॥]

**अवेष्टावङ्गतन्त्रत्वं भेदो वा लिङ्गतोऽग्रिमः॥ नोत्पत्तौ दक्षिणाभेदाल्लिङ्गं बाह्यप्रयोगगम्॥ ४॥**

राजसूयेऽवेष्टिर्नामेष्टिः 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणे'त्यादिपञ्चहविष्का। सा चेयं 'ईश्वरो वा एष दिशोनून्मदितोर्यद्दिशोऽनुव्यवस्थापयन्ति दिशामेवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाये'त्येवं दिग्व्यवस्थापननिमित्तोन्मादपरिहारार्थतया श्रूयमाणा राजसूयान्तर्गतेति तावदविवादम्। राजसूये हि दिशो व्यवस्थापयन्तीति दिग्व्यवस्थापनं विहितं अतो नैवं भ्रमितव्यम्। 'एतयाऽन्नाद्यकामं याजये'दिति प्रत्यक्षया विशेषश्रुत्यान्नाद्यसंयोगान्न प्रकरणापेक्षिण्या सामान्यरूपया

---

त्याय यथावार्तिकलौकिकवरणविषयत्वमेवास्याधिकरणस्य नतु अङ्गभूतवैदिकवरणविषयत्वमिति प्रतिपादनाभिप्रायेण वैदिकवरणविषयत्वमाक्षिपति—**नन्विति। भिन्ना एवेति।** ततश्च सर्वेषां संभूयफलजनकत्वेऽपि न युगपच्चिकीर्षाप्रयोगाणां भेदावगमेन युगपत्कर्तुमशक्यत्वात्। एवंच वरणं सर्वचिकीर्षायां नानुष्ठीयत इति यत्कर्मप्रयोगे यदनुष्ठीयते तत्तदर्थमिति विशेषावधारणान्न तन्त्रमित्यर्थः। यूपाहुतिवैषम्यं पूर्वपाद एवोक्तम्। **नहि पवित्रेति।** पवित्रारम्भसमये क्रियमाणं वरणं सौमिकं तच्च सोमयागेष्वेवोपकरोति नेष्टिपशुष्विति कथं विद्वान्यजमानः सर्वार्थतया तद्वरणं कुर्यात्, अतस्तन्त्रत्वमिच्छता सौमिकं वरणमिष्ट्यनुपकारकमपि सर्वसोमेषु तन्त्रमस्त्विति वाच्यम्। नच तद्वक्तुं शक्यम्। पवित्रारम्भसमये व्यवहितस्य सोमप्रयोगान्तरस्यानुपस्थितत्वादित्यर्थः। **नन्वनुपस्थितप्रयोगार्थमपि** यूपच्छेदनवदिदमस्त्वित्यत आह—**नचाकर्मेति। भाष्येति।** तन्मत एकप्रयोगत्वेऽपि द्वादशाहेऽन्वहमग्नियोगविमोकवद्वरणभेदसिद्धेः प्रयोगभेदोऽपि नापेक्षित **इति** तन्त्रत्वमत्यन्तानाशङ्कनीयमिति भावः। **यत्त्विति।** तथाच तद्विषयतयैव व्याख्येयमिति भावः। **न दर्शेति।** तयोस्तु अन्तरा औदासीन्येन तत्काले ऋत्विगन्तरं सुसंपादनमिति भावः॥

**अवेष्टौ चैकतन्त्र्यं०॥ ९॥** बहिःप्रयोगायां मध्ये निधानादिना समानतन्त्रत्वस्यावश्यवक्तव्यत्वान्न तत्रायं विचारः किंतु क्रतुमध्यस्थायामित्याशयेन प्रथमं क्रतुमध्यस्थतामुपपादयति—**साचेयमित्यादिना।** दिशोनु तां तां दिशमनु उन्मदितोरीश्वरः उन्मत्तो भवितुं समर्थः स्यात् यजमानस्यानुन्मादाय एता दिशामवेष्टयो भवन्ति। तथा सति दिक्षु प्रतिष्ठितो भवतीत्यर्थः। दिशां संबन्धिनां उन्मादयितॄणामवजननहेतुत्वाद्दिशामवेष्टय इति भट्टभास्करः। **ननु** स्वाराज्यकामवाक्यगतयजतिनाऽविशेषेण सर्वयागानां परामर्शादेव राजसूयान्तर्गतत्वस्य सिद्धत्वात्किमिति यत्नेन तदन्तर्गतत्वं साध्यत इत्यत आह—**अत इति। प्रत्यक्षयेति।** अनपेक्षत्वाभिप्रायः। **प्रकरणेति।** प्रकरणापेक्षिण्या परोक्षयेत्यर्थः। यद्य-

---

१ देशेन कुर्यात्.

च स्वाराज्यकामगतयजिचोदनयेयं गृह्यत इति तस्या एव बहिःप्रयोगोऽपि श्रूयते—'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारये'दिति। ततश्चैतयान्नाद्यकामं याजयेदितिबहिःप्रयोगस्य फलापेक्षत्वात्तेन संबध्यते । क्रतुमध्यप्रयोगस्य तु स्वाराज्यं फलमित्युभयोः फलयोर्भिन्नविषयत्वेनाविरोधः। तदेवं स्थिते क्रतुमध्यस्थायामवेष्टौ चिन्त्यते—पञ्चापि हवींषि समानतन्त्राणि नवेति। तत्र सत्यपि दक्षिणाभेदे बार्हस्पत्यं मध्ये निधायेति मध्येनिधानविध्यनुपपत्त्या समानतन्त्रत्वम्। ननु ब्राह्मणादिसंयुक्ते बहिःप्रयोगे मध्ये निधानं न क्रतुमध्यप्रयोगे । सत्यं तथाप्यन्तःप्रयोगेऽप्येकतन्त्रत्वं यथोत्पन्नाया एव हि दक्षिणाभेदयुक्तायाः क्रतुमध्य इव बहिरपि प्रयोगः। तद्यदि दक्षिणाभेदाम्नानात्तन्त्रत्वं स्याद्बहिःप्रयोगेऽपि स्यात्। तत्र मध्ये निधानमत्यन्तानुपपन्नं स्यात्। अथ तदनुरोधेन समानतन्त्रत्वमङ्गीकृत्य दक्षिणाभेदः कथंचिदेकस्मिन्नपि काले(प्रयोगे)तत्प्रधानोद्देशेन दानात्समर्थो न तथा क्रतुमध्येऽपि स्यात् । अवेष्टिरिति चैकनिर्देशः समानतन्त्रतां गमयति तस्मात्समानतन्त्रत्वम् । नैवम्। उत्पद्यमानान्येवैतानि दक्षिणाभेदसंयुक्तान्युत्पद्यन्ते राजसूयार्थत्वेन चैषामुत्पत्तिः, 'ईश्वरो वा एष दिशोनुन्मदितो'रित्युपक्रमविधानाद्दक्षिणाभेदादुत्पत्तिसमय एवैतानि नानातन्त्राणि क्रतुमध्ये प्रयोक्तव्यानीति निर्णीतम् । पश्चात्तु ब्राह्मणादीनां बहिःप्रयोज्यानीति विधीयमानानि मध्ये निधानविधानान्यथानुपपत्तेः 'एतयान्नाद्यकाम'मिति च प्रयोगवचनैक्यात्समानतन्त्राणि गम्यमानानि दक्षिणाभेदमुज्झयित्वा समानतन्त्राणि भवन्ति। क्रतुमध्ये तु दक्षिणाभेदान्नानातन्त्राणीति नावश्यकमैकरूप्यम् ॥

---

ध्येतच्छब्दस्यापि संनिहितवाचित्वादस्ति प्रकरणापेक्षा तथापि स्वाराज्यवाक्यवन्न कृत्स्नप्रकरणपर्यालोचनमिहापेक्षितं किंतु संनिहिताग्नेयादिवाक्यमात्रालोचनमित्यस्ति विशेष इति भावः। ततश्चाग्नेयादिवाक्यैरुत्पन्नावेष्टेः फलापेक्षाया विशेषविषयेणान्नाद्यकामवाक्येन शान्तेः समानवाक्येन स्वाराज्यफलसंबन्धाभावात्प्रकरणादुत्कर्ष एव स्यादिति प्रागुक्तयुक्त्यैवोपपाद्यं क्रत्वन्तर्गतत्वमिति भावः। **ननु** यदि राजसूयान्तर्गतत्वं तर्हि कथं तत्प्रयोगे स्वाराज्यफलकावेष्टेरन्नाद्यफलसंबन्ध इत्याशङ्क्य प्रयोगभेदमुपपादयन्फलद्वयाविरोधमाह—**तस्या एवेति**। यथाचायं प्रयोगान्तरविधिस्तथा द्वितीये उपपादितम्। **तत्रेति**। यदि पञ्चापि हवींषि समानतन्त्राणि तदानीमेवेतरेषां मध्ये बार्हस्पत्यस्य निधानमुपपद्यते नान्यथेत्यर्थः। उक्तरीत्या च बहिःप्रयोगे समानतन्त्रत्वे सिद्धे तदवैरूप्यायान्तःप्रयोगेपि समानतन्त्रत्वमाश्रयणीयमित्याशयः । तत्र पूर्वत्र वरणवदिहाप्यङ्गानुष्ठानं तन्त्रमित्युत्थितेः संगतिर्बोध्या। आशयमजानानः शङ्कते—**नन्विति**। आशयमुद्घाटयति—**सत्यमिति। यथोत्पन्नाया इति**। एतच्छब्दस्य तथाप्रत्यायकत्वादिति भावः । तत्तदिति प्रकृते प्रयोगैक्यबलेन दक्षिणाभेदासंभवाद्भेदाम्नानबलेन कर्मान्तर इव न प्रयोगोद्देशेन दानं किंतु तत्प्रधानोद्देशेन तत्तद्दक्षिणादानमङ्गेषु तु प्रधानोद्देशेन प्रसङ्गादुपकरिष्यतीति भावः। एवं बहिःप्रयोगावैरूप्याय समानतन्त्रत्वमुक्तम्, इदानीं साक्षादन्तःप्रयोग एव तत्त्वावगमकमाह—**अवेष्टिरितिचेति । उत्पद्यमानानीति** । ततश्चोत्पत्त्यवगतदक्षिणाभेदस्यात्यन्तानर्थक्यमिति तत्परिहाराय बहिःप्रयोगवैरूप्यमाश्रित्यान्तःप्रयोगे भिन्नतन्त्रत्वमेवेष्टव्यमिति भावः । अत्यल्पमिदमुच्यते । उत्पत्तिदशायामेवान्तःप्रयोगे तन्त्रभेदोऽप्यवगम्यत इत्याह—**राजसूयार्थत्वेनेत्यादिना**। राजसूयान्तर्गतत्वेनेति यावत्। **प्रयोगवचनेति**। प्रयोगवचने यदेतयेत्येकत्वं तस्मादित्यर्थः । प्रयोगाभिप्रायं हीदमेकवचनं न कर्माभिप्रायं तेषां बहुत्वादिति भावः। **दक्षिणाभेदमिति**। यद्यपि यथोत्पन्नाया एव कामे विधानं तथापि मध्ये निधानविधिबलादन्तःप्रयोगे सावकाशत्वाच्च बहिःप्रयोगे दक्षिणाभेदः परित्याज्य इति भावः। अप्पयदीक्षितैस्तु परिमले दक्षिणाशब्दो बहिःप्रयोगेऽवयवपरः अन्तःप्रयोगेषु मुख्यः । नच तत्रापि सोऽवयवलक्षक इत्यत्र मानमस्ति । ऐन्द्रमन्त्रस्याभ्युपस्थाने लक्षकस्यैन्द्रेऽपि कर्मणि विनियोगवशात्प्रयुज्यमानस्यैव मुख्यत्वोपपत्तेरित्युक्तं तच्चिन्त्यम् । नह्यभ्युपस्थाने ऐन्द्रकर्मणि चैन्द्रमन्त्रवदयं दक्षिणाशब्दः अन्तःप्रयोगे बहिःप्रयोगे चावर्तते येन वृत्तिद्वयेनार्थद्वयं प्रकाशयेत् । तस्मात्सकृदेव दक्षिणाशब्दोऽर्थप्रतिपादक इत्युत्पत्तिदशायां स्वमुख्यार्थं प्रतिपाद्य चरितार्थो वाच्यः, पश्चादेतयान्नाद्यकाममिति विनियोगे सति तत्रैकप्रयोगत्वबलेन प्रयोगविशेषे यदि दक्षिणाभेदोऽनन्वयी तदा तत्परित्याग एव युक्तो नतु तावता दक्षिणाशब्दस्यावृत्तिः । एतयेत्यर्थस्यैव विनियोगेन तद्बलेन दक्षिणाशब्दस्यार्थान्तरपरत्वालाभात्, ऐन्द्रमन्त्रे तु शब्दस्यैव विनियोगो नत्वर्थस्येति तत्र विनियोगभेदेन भिन्नार्थप्रतिपादकमिति वैषम्यम्। अत्रेदमवधेयम्—दक्षिणाभेदमुज्झयित्वेत्यनेनापि नात्यन्तपरित्यागो विवक्षितः

पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् ॥ ४ ॥

**पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १२ ॥ [लिङ्गदर्शनात् ॥ १३ ॥ वचनात्तु तन्त्रभेदः स्यात् ॥ १४ ॥ सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥]**

पवमानेष्टिहविषां तन्त्रं भेदोऽथ वाऽग्रिमः ॥ साध्यदेशाद्यभेदान्नो काम्ये भेदोक्तितोऽन्तिमः ॥ ५ ॥

सन्त्याधाने पवमानहवींषि 'अग्नये पवमानायाग्नये पावकायाग्नये शुचये' इति । तान्यधिकृत्य श्रूयते 'अह्नो निरुप्याणि सर्वाणि सह निरुप्याणि' इति । तथा 'यः कामयेतोत्तरं वरीयान् स्यामिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यामुत्तरे हविषी समाने बर्हिषि निर्वपेदि'ति । तदिह काम्ये प्रयोगे चिन्त्यते—किं सर्वाणि समानतन्त्राण्युत प्रथममुत्तरं च द्वयं नानातन्त्रमिति । तत्राह्नो निरुप्याणि सह निरुप्याणीति वचनात्समानतन्त्रत्वम् । नच यः कामयेतेत्यनेन वचनेन प्रयोगभेदः। नह्येकं वाक्यं प्राप्तानां पवमानहविषां फलार्थतां प्रयोगभेदं च शक्नोति विधातुमिति भ्रान्तः काम्येऽपि समानतन्त्रतामाह । सिद्धान्तस्तु न हविषां कामे विधिः तदाश्रितस्तु प्रयोगभेद एव दध्यादिवत्कामाय विधीयते, तस्माद्वशीयस्त्वं कामयमानः प्रथमं पृथङ् निरुप्य पश्चादुत्तरे समानतन्त्रे कुर्यात् ॥

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशाहताधिकरणम् ॥ ५ ॥

**द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥ [अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यंदिने ॥ १७ ॥ अपि वा फलकर्तृसंबन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ १९ ॥ तदपेक्षं च द्वादशत्वम् ॥ २० ॥ दीक्षोपसदां च संख्या पृथक्पृथक्प्रत्यक्षसंयोगात् ॥ २१ ॥ तथाचान्यार्थदर्शनम् ॥ २२ ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥]**

द्वादशाहे सदीक्षोपसदहे दिनमानकम् ॥ शतत्रयं द्वादश वा षट्त्रिंशद्वाग्रिमो यतः ॥ ६ ॥
एकैककर्मणोऽह्नोऽस्य ज्योतिष्टोमविकारता ॥ एकैकं तदनुष्ठानं दिनानां पञ्चविंशतिः ॥ ७ ॥
अह्नां द्वादशताश्रुत्या मध्यपक्षस्तदापि किम् ॥ कार्या द्वादश साद्यस्काश्चतुष्काणामुत त्रिकम् ॥ ८ ॥
एकैकस्यैव यागस्य विकृतित्वादिहादिमः ॥ अमुख्यकालाङ्गबाधाच्चतुष्कं भिद्यते त्रिधा ॥ ९ ॥
दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः ॥ साङ्गस्य द्वादशाहस्य षट्त्रिंशद्दिवसा मताः ॥ १० ॥

द्वादशाहे 'द्वादशदीक्षा द्वादशोपसद' इति श्रूयते । तत्र विचार्यते किमेकैकमहः पृथक्पृथक् द्वाद-

---

किंतु हिरण्यादीनां यद्दक्षिणात्वं निरपेक्षेणानतिहेतुत्वलक्षणं तत्परित्यागमात्रम् । ततश्च हिरण्यादीनामुत्पत्तिदशायां यन्निरपेक्षानतिसाधनत्वमवगतं तत्र निरपेक्षत्वांशपरित्यागेनानतिहेतुत्वमात्रेण हिरण्यादिसंबद्धाग्नेयादिकमेतच्छब्देन निर्दिश्यत इति । अवेष्टिरिति चैकत्वं याज्ञिकप्रयोगगतं नतु श्रुतिगतं, तत्र 'दिशामवेष्टयो भवन्ती'ति बहुत्वस्यैवावगमात् । अवेष्टिरिति चैकवन्निर्देश इत्यनेनावेष्टिप्रतिपादकैतच्छब्दगतैकवन्निर्देशविवक्षायां तस्य बहिःप्रयोगगतत्वान्न दोष इति सूत्रे लिङ्गदर्शनमध्ये निधानदर्शनमभिमतम् ॥

**पवमानहविषां०** ॥ १२ ॥ काम्य इति वचनात्तन्त्रभेदः स्यादिति सिद्धान्तस्य 'यः कामयेतोत्तरोत्तरं वरीयान्स्यामिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यामुत्तरे हविषी समाने बर्हिषि निर्वपे'दिति वाचनिकतन्त्रभेदवति काम्यप्रयोग एव प्रवृत्त्यौचित्यादिति भावः । **उत्तरं चेति** । उत्तरं द्वयं चेत्यन्वयः । **तत्राह इति** । यथा 'पौर्णमास्यां यजेते'ति त्रिकस्यैकस्मिन्काले विधानात्समानतन्त्रत्वमेवमिहापीति भावः । यद्यप्यह्नो निरुप्याणीति वचनं संवत्सरे निर्वपेद्द्वादशाहे चतुरहे वेत्यादि समीपे श्रूयमाणमेकस्मिन्नहनि निरुप्याणीत्येवंपरं नतु तावता समानतन्त्रता सिध्यति तथा सहनिरुप्याणीत्येतद्वचनमपि 'यो ब्रह्मवर्चसकामः स्यात्तस्य सर्वाणि हवींषि सह निरुप्याणी'त्येतद्वचनप्राप्तानुवादतयोपपन्नमिति न ततोऽपि समानतन्त्रतासिद्धिस्तथाप्युक्तवचनबलात्समानतन्त्रतासिद्ध्यभ्युपगमेऽपि नित्य एव तत्सिद्धिर्नतु काम्ये प्रयोगे । तत्र यः कामयेतेत्यनेन प्रयोगभेदस्यैव चोदितत्वादिति प्रतिपादनायोक्तवचनद्वयात्समानतन्त्रतासिद्धिमभ्युपेत्य ग्रन्थकारेणाधिकरणस्य प्रवर्तितत्वान्न दोषः । **नहीति** । स्वपक्षे तु हविषां फलार्थत्वमात्रं विधीयते पाठप्राप्तक्रमस्य प्रयोगैक्यप्राप्तसमानकर्तृकतासमानबर्हिष्ट्वयोश्चानुवाद इति न वाक्यभेदप्रसङ्ग इति भावः । काम्येपीत्यपिशब्देन नित्ये प्रयोगे समानतन्त्रताद्योतनेन तत्सिद्धवत्कारावगमादस्मदुक्ताभ्युपगमवादेनाधिकरणप्रवृत्तिराविष्कृतेति ध्येयम् । ततश्चावेष्टौ प्रयोगद्वयस्य वैरूप्येपि पवमानहविःषु न वैरूप्यमित्युत्थितेः संगतिर्बोध्या ॥

**द्वादशाहे तत्प्रकृतित्वात्०** ॥ १६ ॥ स्वस्थानविवृद्धिमेवाह—**द्वादशस्वेवाहःस्विति** । **तत्रेति** । तृत्वादिवा-

शदीक्षोपसद्युक्तं कृत्वा द्वादशपञ्चविंशतिरात्राः कर्तव्या उतैकैकमहः सद्य एव दीक्षोपसद्युक्तं निर्वर्त्य द्वादशाहःसु द्वादशसाद्यस्क्राः कर्तव्याः। अथवा द्वादशस्वेवाहःसु चतुरहे दीक्षा चतुरहे चोपसदश्चतुरहे च सुत्याः संपाद्याः आहोस्विद्दीक्षोपसत्सुत्यानां स्वस्थानविवृद्धिस्ततो द्वादशाहःसु दीक्षास्ततो द्वादशसूपसदस्ततो द्वादशसु सुत्या इत्येवं षट्त्रिंशताहोभिः समाप्तिरिति। तत्रैकैकस्य यागस्य ज्योतिष्टोमप्रकृतिकत्वात्तद्वशेनैकैकं सदीक्षोपसत्कं निर्वर्तनीयं, द्वादशसंख्या च दीक्षागतोपसद्गता च प्रत्येकमेवाङ्गम्, तस्माद्द्वादशपञ्चविंशतिरात्राः द्वादशाहशब्दस्य नामत्वादिति प्रथमः पक्षः। सत्यमेकैकं सदीक्षोपसत्कं कर्तव्यं नतु द्वादशाहशब्दो नामधेयं गुणविधिस्त्वसौ। तेन द्वादशस्वेवाहःसु द्वादशानामपि यागानां सदीक्षोपसत्कानां निर्वर्तनाद्द्वादश साद्यस्क्रा इति द्वितीयः पक्षः। गृह्णीम एतद्द्वादशाहशब्दो गुणविधिरिति, नत्वेकैकं पृथक् साङ्गं कर्तव्यम्। एकेन विधिनैकस्मिन्फले विनियुक्तानां सहकर्तव्यत्वावगमात्तन्त्रमङ्गान्यसुत्याकालानि, तेन तन्त्रेण सर्वेषां दीक्षोपसदः कार्याः द्वादशाहशब्दस्य च गुणविधित्वाद्द्वादशस्वेवाहःसु सर्वं संपादनीयं, तेन चतुरहे दीक्षाश्चतुरहे चोपसदः चतुरहे च सुत्या इति तृतीयः पक्षः। युक्तमेव तन्त्रं दीक्षोपसदामिति। नतु द्वादशाहशब्दो गुणविधिः, नामधेयत्वं तु यजिसामानाधिकरण्याद्द्वादशदीक्षा इति विधानाद्द्वादशाहःसु दीक्षास्तथोपसदस्तन्त्रेण

---

क्यैरहःशब्दयुक्तैरुपांश्वादिहार्योजनान्तलक्षणसोमयागगणात्मकानि एकैकाहर्मितानि द्वादशाहकर्माण्युत्पन्नानि, तेषां च प्रत्येकं ज्योतिष्टोमविकारत्वाज्ज्योतिष्टोमस्य च दीक्षोपसद्युक्तस्यापवर्गदर्शनादिहापि एकैकस्य दीक्षोपसद्युक्तस्यापवर्जनीयत्वाद्दीक्षागताया उपसद्गतायाश्च द्वादशसंख्यायाः प्रत्येकमङ्गत्वेनैकैकस्य द्वादशदीक्षा द्वादशोपसद्युक्तस्यापवर्गे द्वादशपञ्चविंशतिरात्राः संपन्ना इत्यर्थः। नच 'द्वादशाहेन प्रजाकामं याजये'दित्येकेन विधिना फले विनियुक्तानां द्वादशानामपि कर्मणां संहत्यकारित्वादङ्गानुष्ठानतन्त्रतायां द्वादशसंख्यायाः प्रत्येकमङ्गत्वेपि सर्वार्थं दीक्षोपसदां सकृदेवानुष्ठानमिति कथं द्वादशपञ्चविंशतिरात्रपक्ष इति वाच्यम्। प्रधानानां द्वादशस्वहःस्वनुष्ठेयतया भिन्नकालत्वेनाङ्गानुष्ठानतन्त्रत्वाभावात्। अन्यथा दर्शत्रिकस्य पूर्णमासत्रिकस्य चाङ्गानुष्ठानं भेदेन न स्यादिति प्रथमपूर्वपक्षवादिनो भावः। ततश्च पूर्ववदिहापि तन्त्रतेत्युत्थितेः संगतिर्बोध्या। **ननु** द्वादशाहशब्दे जाग्रति कथं द्वादशपञ्चविंशतिरात्रपक्षोन्मेष इत्यत आह—**द्वादशाहशब्दस्येति**। द्वादशाहशब्दो हि न गुणविधिर्येन द्वादशस्वेवाहःसु साङ्गप्रधानस्यापवर्जनीयतया द्वादशपञ्चविंशतिरात्रपक्षो नोत्तिष्ठेत। नामधेयं त्वसौ यजिसामानाधिकरण्यादित्यर्थः। **नत्विति**। नामधेयत्वेऽहःपरिमितकर्मस्वहःशब्दलक्षणाप्रसङ्गः, स्वपक्षेतु वैयधिकरण्येन गुणविधिस्वीकारान्न मत्वर्थलक्षणाप्रसक्तिरिति भावः। तन्त्ररत्ने तु बहुव्रीह्याश्रयणेन श्रुत्यैव मत्वर्थलाभ इत्युक्तं तत्र 'राजाहस्सखिभ्यष्ट'जिति टचस्तत्पुरुषविषयत्वेन बहुव्रीहौ द्वादशाहशब्दनिर्वाहे यत्नः कार्यः। **नन्वेतावतापि** प्रधानानां द्वादशस्वहःस्वनुष्ठानमात्रं सिध्येन्नतु साद्यस्कत्वमित्यत आह--**तेनेति**। प्रधानात्मकैकस्मिन्नहनि अनुष्ठानस्य त्रिवृत्प्रथममहरित्याद्युत्पत्तिवाक्यगताहःशब्दादेव लाभात् कालस्याङ्गप्रधानसाधारण्येन साङ्गप्रधानस्यैवैकैकस्मिन्नहनि कर्तव्यत्वाचैकैकं साङ्गमेकैकस्मिन्नहन्यपवर्जनीयमिति द्वादश साद्यस्काः सिद्धा इत्यर्थः। यद्यपि दीक्षोपसद्गता द्वादशसंख्या प्रत्येकं कर्माङ्गमिति द्वादशदीक्षा द्वादशोपसद्युक्तसोमयागगणस्येश्वरेणापि सद्यःकर्तुमशक्यत्वात्साद्यस्कपक्षानुपपत्तिस्तथापि संभवमात्राभिप्रायेण तदुपन्यास इति ध्येयम्। **एकेनेति**। ततश्च तन्निर्वाहार्थमेकोपक्रमावसानत्वस्य वक्तव्यत्वादसुत्याकालानामङ्गानामवश्यं तन्त्रता वक्तव्या। दर्शत्रिके पूर्णमासत्रिके च 'पौर्णमास्यां पौर्णमास्या यजेते'त्यादिवाचनिकप्रयोगभेदावगमबलादेकफलानामपि न तन्त्रमङ्गानुष्ठानमिति भावः। **नन्वेवं** सिद्धान्तरीत्या षट्त्रिंशदहानि स्युरित्यत आह—**द्वादशाहशब्दस्येति**। **चतुरह इति**। एकैकस्मिन्नहनि तिस्रस्तिस्रो दीक्षास्तथोपसदः सुत्याश्चेति भावः। उत्पत्तिवाक्यगताहःशब्दः उपांश्वादिहार्योजनान्तसोमयागोपलक्षकमात्र इति न तावन्मात्रेण सुत्यानामेकैकस्मिन्नहनि कर्तव्यत्वप्रसक्तिरिति भावः। **नत्विति**। वाक्यान्तरोत्पन्नकर्मणां फलसंबन्धविधिपरे वाक्ये वाक्यभेदप्रसङ्गेन गुणस्य विधातुमशक्यत्वादिति भावः। **द्वादशाहःस्विति**। प्रकृतावेकस्मिन्नहन्येका दीक्षानुष्ठिता तथोपसदपीतीहापि यथाप्रकृत्यनुष्ठाने द्वादशसु दीक्षास्ततो द्वादशसूपसदश्चानुष्ठेया इति भावः। प्रथमपक्षव्यावृत्त्यभिप्रायेणाह—**तन्त्रेणेति**। ननु नामधेयमपि

कृत्वा ततो द्वादशाहःसु सुत्याः कर्तव्याः । द्वादशाह इति च नामधेयं प्रधानकालनिमित्तमित्यविरुद्धं तस्मात्षट्त्रिंशताहोभिः समाप्तिः ॥

प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ६ ॥

**भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ॥ २४ ॥ [तथा चान्यार्थदर्शनम् ॥ २५ ॥ श्वःसुत्यावचनं तद्वत् ॥ २६ ॥ पश्वतिरेकश्च ॥ २७ ॥]**

**सवनीयादिकं तत्र सकृत्स्याक्रियतेऽथ वा ॥ प्रयोगैक्यात्सकृन्नैवं मुख्यकाले विधानतः ॥ ११ ॥**

यानि सुत्याकालान्यङ्गानि यथा सवनीयः पशुः सवनीयाः पुरोडाशाः तानि किं द्वादशानां यागानां तन्त्रमुतावाप इति संशये प्रयोगैक्यात्तन्त्रत्वे प्राप्ते प्रधानकालत्वादेषां यस्य काले यदनुष्ठितं तत्तदर्थमिति विशेषग्रहणात्तदपवर्गे तस्यापवर्गोदन्यस्मिन्नहनि प्रधानान्तरार्थं पुनः करणेन भवितव्यम् ॥

उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् ॥ ७ ॥

**सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥२८॥ [अपि वेन्द्राभिधानत्वात्सकृत्स्यादुपलक्षणम्, कालस्य लक्षणार्थत्वादविभागाच्च ॥ २९ ॥]**

**उपसत्काल आह्वानं द्वादशाहे विकारभाक् ॥ न वाद्य उपलक्ष्यत्वादत्राह्नां प्रकृताविव ॥ १२ ॥**
**सुत्यागमनमात्रस्य विवक्षा प्रकृतौ ततः ॥ विकारमन्तरेणात्र तत्सिध्येत्तेन तन्त्रता ॥ १३ ॥**

प्रकृतावुपसत्कालं सुब्रह्मण्याह्वानं श्रूयते 'इत्यहे सुत्यामागच्छ मघवन्निति ब्रूया'दिति । इतिकरणेन च संख्योच्यते । चतुरहे त्र्यहे सुत्यामागच्छेत्येवं ब्रूयादित्यर्थः । तदिदमकर्मकालत्वाद्द्वादशाहे तन्त्रमित्युक्तं तस्मिंस्तन्त्रेण क्रियमाणे किं सर्वेषामह्नां पृथक्पृथगुपलक्षणं त्रयोदशाहे चतुर्दशाहे

---

प्रवृत्तिनिमित्तशून्यं न संभवतीत्यत आह—**द्वादशाह इतीति** । प्रायणीयातिरात्रादेः रात्रिमतीत्य संस्थाप्यतया एकस्मिन्नहनि सुत्यात्रयासंभवेन प्रधानान्यवश्यं द्वादशस्वहःस्वनुष्ठेयानीति प्रधानकालनिमित्तं नामधेयमित्यर्थः । **सूत्रार्थस्तु**—द्वादशाहे एकैकमहः सदीक्षोपसत्कमपवृज्येत कर्मणां पृथक्त्वेन तेषां प्रत्येकं ज्योतिष्टोमप्रकृतिकत्वादिति ॥

**भेदस्तु तद्भेदात्०** ॥ २४ ॥ दीक्षादिवत्सुत्याकालाङ्गानामपि तन्त्रत्वमित्युत्थितेः संगतिः । **प्रयोगेति** । प्रयोगवचनैक्याद्दक्षिणैक्याच्च प्रयोगैक्यमिति भावः । **प्रधानेति** । प्रधानानां कालभेद आवश्यक इति पूर्वाधिकरण एवोक्तम् । एवंच पूर्वपक्षोऽतिमन्द इति ध्येयम् । सूत्रार्थस्तु—यतः कालभेदात्प्रधानकर्मणामनुष्ठानभेदः अतः प्रयोगे अङ्गानामपि भेदः स्यात्तेषां प्रधानविधिविधेयत्वादिति ॥

**सुत्याविवृद्धौ०** ॥ २८ ॥ ननु प्रकृतौ यदि 'चतुरहे सुत्यामागच्छ त्र्यहे सुत्यामागच्छे'त्येवरूपेण सुत्याकालेयत्ताप्रकाशकशब्दयुक्ततया प्रयोगः स्यात्तदायं विचार उपपद्यते, प्रकृतौ च 'इत्यहे सुत्यामागच्छ मघवन्निति ब्रूयादि'ति इत्यहःशब्दयुक्ताह्वानमेव विधीयते नतु चतुरहादिशब्दयुक्तम् । इत्यहे इत्यत्रेतिशब्दस्य स्वपरत्वादर्थपरत्वेपीतिकरणस्य लोके प्रकारार्थत्वेन प्रसिद्धस्य संख्यापरत्वासंभवेन संख्याविशिष्टाहःप्रकाशकचतुरहादिशब्दयुक्तप्रयोगो न लभ्यते, अतः कथमयं विचार इत्यत आह—**इतिकरणेनेति** । इह हि इतिकरणो न स्वरूपपरः किंत्वियत्तापरः । वाक्यशेषे चतुरहादिशब्दानामियत्तावाचिनां श्रवणादियत्ताया अपि प्रकारत्वेन तत्परत्वेऽपि न लोकप्रसिद्धप्रकारार्थत्वपरित्यागस्ततश्चेत्यहे सुत्यामागच्छेति ब्रूयादित्यस्य एतावदहे सुत्यामागच्छेति ब्रूयादित्यर्थः । तत्र चैतावदह इति सामान्येनेयत्तामात्रोक्तौ न कश्चिदर्थविशेषः प्रतीयत इति तदर्थमियत्तासामान्यवाचकस्येतिकरणस्य तद्विशेषाभिधायकचतुरहादिशब्दोपलक्षणार्थता वाच्या यथा 'आशास्तेऽयं यजमानोऽसा'वित्यत्र तत्तन्नामधेयोपलक्षणार्थत्वमसाविति सामान्यशब्दस्य तद्वत् । ततश्च यत्र सुत्यादिनं चतुर्थं प्रथमोपसद्दिने तत्र चतुरह इति ब्रूयात्, यत्र च तृतीयं द्वितीयं वा तत्रोपसद्दिने त्र्यहे द्व्यह इत्येवंरूपेण ब्रूयादिति इत्यहे सुत्यामिति प्रकृतावुपसत्कालसुब्रह्मण्याह्वानविधायकवाक्यार्थ इत्यर्थः । **उक्तमिति** । पूर्वपाद इति शेषः । **तस्मिन्निति** । अत्राहःशब्दस्य किमभ्यासात्मक ऊहो भवतीत्येव पूर्वपक्षकोटिः । अह्नां पृथगुपलक्षणं तु तदुपपादकत्वादुपन्यस्तम् । पृथगुपलक्षणस्य कोटित्वे उताविकारेण प्रयोग इति सिद्धान्तकोटेस्तत्प्रतिद्वन्द्वित्वाभावेनासंगतत्वापत्तेरिति ध्येयम् । **त्रयोदशाह इति** । द्वादशाहे उपसदां द्वादशत्वेन प्रथमसुत्यादिनं त्रयोदशं द्वितीयं चतुर्दशमिति तेन रूपेण

---

१ इत्यहःसुत्या.

आगच्छेत्येवमहःशब्दस्यैकधाशब्दस्येवाभ्यासात्मक ऊहो भवति उताविकारेण प्रयोग इति । **ननु** सिद्धान्तेऽप्यस्त्येव विकारः, प्रकृतौ चतुरहे सुत्यामित्युक्तम्, इह तूपसदह्नां द्वादशसंख्यया विवृद्धत्वात्त्रयोदशाह इति वक्तव्यम् । सत्यं तथापि नास्त्यूहः सिद्धान्ते । पूर्वपक्षे तु अहःशब्दस्याभ्यासात्मक ऊहो भवति । सिद्धान्ते तु तस्य तन्त्रत्वादविशेषादविकारः । तत्र प्रकृतौ सौत्यस्याह्न उपलक्षणादिहापि सर्वाणि तान्युपलक्षणीयानि । नचाहःशब्देनागृह्यमाणविशेषत्वात्सर्वोपलक्षणं सिद्ध्यतीति वाच्यम् । संख्याशब्देन विशेषग्रहणात्त्रयोदशाह आगच्छेत्युक्ते प्रथमस्यैवाह्न उपलक्षणं न द्वितीयादेस्तस्मादावृत्तिः । सुत्यामागच्छ मघवन्नित्येवं सुत्यासंबन्धिदेवतासंस्कारमात्रं विवक्षितं संख्याशब्दोहःशब्दश्चार्थसिद्धत्वादविवक्षितनिर्देशमात्रम् । अतः सकृदेव वक्तव्यं तन्त्रम् ॥

वाजपेये प्राजापत्येषु कुम्भ्यादीनां तन्त्रताधिकरणम् ॥ ८ ॥

## पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात् ॥ ३० ॥

प्राजापत्येषु कुम्भ्यादेर्भेदो नो वाङ्गभेदतः ॥ भेदो मैवं विशेषाङ्गश्रपणादौ प्रभुत्वतः ॥ १४ ॥

**एकदेवत्येषु प्राजापत्यपशुषु कुम्भी हृदयशूलं वपाश्रपणी च तन्त्रं विभवादित्युत्तरविवक्षया प्राप्यते ॥**

---

सर्वेषामुपलक्षणमित्यर्थः । **एकधेति** । यथा पशुगणे अध्रिगुप्रैषगतस्यैकधाशब्दस्याभ्यासात्मक ऊहस्तद्वदित्यर्थः । अविकारेणेत्यत्राहःशब्दस्येत्यनुषज्यते । अनुषङ्गमजानानः कृत्स्नस्यैवाविकार इति सिद्धान्तकोट्यर्थं मत्वा शङ्कते—**नन्विति** । अहःशब्दाविकार एव सिद्धान्तकोटेरर्थो न कृत्स्नाविकार इति परिहरति—**सत्यमिति** । यद्वा अनूहेन प्रयोग इति सिद्धान्तकोटेरर्थस्तमजानानो यथाश्रुतमेवाविकारशब्दार्थं मत्वा शङ्कते—**नन्विति** । **सत्यमिति** । सत्यप्युक्तविकारे नासावूहः, चतुरहादिशब्दानां प्रकृतावपठितत्वेन विकृतौ त्रयोदशाहादिशब्दप्रयोगस्योहरूपत्वासंभवात् । उक्तंच **तन्त्ररत्ने**—नचात्र चतुरादिशब्दानामूहः शक्यते कर्तुं, तेषां प्रकृतावपठितत्वादिति । तस्मात्सिद्धान्ते नास्त्यूह इत्यर्थः । कथं तर्हि पूर्वपक्षे ऊह इत्यत आह—**पूर्वेति** । नहि पूर्वपक्षे चतुरहादिशब्दानामूहः किंतु अहःशब्दस्यैवेत्यर्थः । सिद्धान्ते तु सोऽपि नास्तीत्याह—**सिद्धान्त इति** । ततश्च सिद्धान्ते अहःशब्दस्य तन्त्रत्वाच्चतुरादिशब्दानामूहायोग्यत्वाच्च न कस्यापि पदस्योह इत्यनूहेन प्रयोग इति सिद्धान्तकोटिरुपपद्यत इति भावः। **अगृह्यमाणेति**। प्रकृतावहःपदेनैव सौत्यस्याह्न उपलक्षणसिद्धेः संख्याशब्दो न विवक्षित इति न ततो विशेषग्रह इति भावः । **संख्येति** । इत्यह इति ब्रूयादितीयत्ताविशिष्टस्यैवाह्नः प्रकाशनीयत्वावगमान्नाविवक्षितः संख्याशब्द इति भावः । **तस्मादिति** । अत्रावृत्तिरिति वदता ऊहविचारस्याप्यस्यावापविचारात्मकत्वादध्याये संगतिः । सुत्याकालाङ्गानामावृत्तिवदहःशब्दस्याप्यावृत्तिरिति उत्थानादवान्तरसंगतिश्चेति सूचितम् । नहि प्रकृतावह्नः स्वार्थं प्रकाशनं किंतु परार्थं, तेन यज्ञपतिशब्दवदस्यापि नोह इत्याशयेनाह—**सुत्यामिति** । संख्याविशिष्टाहःपदं सुत्याया विशेषणं साचागमनस्य तच्च मघवदर्थमिति सुत्याकालीनागमनलक्षणदेवतासंस्कारमात्रं विवक्षितमित्यर्थः । **अर्थेति** । सुत्याकालस्य चतुरादिसंख्याकाहोरूपत्वादिति भावः । **ननु** संख्याशब्दस्याविवक्षितत्वे प्रथमोपसद्दिने त्रयोदशाहे द्वितीये द्वादशाह इत्यपि न प्रयोक्तव्यं स्यात् किंतु यथाप्रकृति चतुरहे त्र्यह इत्येव स्यादिति शङ्कां निराकर्तुं निर्देशमात्रार्थमित्युक्तम् । अयमर्थः—नहि संख्याशब्दस्यादृष्टार्थत्वापरपर्यायमविवक्षितत्वमभिमतं येन यथाप्रकृतिप्रयोग आपाद्येत किंतु संख्याविशिष्टाहस्त्वेन संपादितस्यैव सुत्याकालस्य देवतासंस्कारोपलक्षणार्थत्वेन तन्निर्देशार्थपरत्वात्स्वप्राधान्याभावलक्षणं सुत्याकालस्य संख्याविशिष्टाहस्त्वेन प्रतिपादितस्यैव संस्कारोपलक्षकत्वमिति नियमे चेत्यह इति ब्रूयादिति विधिरेव प्रमाणम् । एवंचेह सुत्याकालानां स्वप्राधान्याभावादेकेनापि संख्याविशिष्टाहस्त्वेन प्रतिपादितेन तेन देवतोपलक्षणत्वे सति तत्संस्कारसिद्धेस्तस्य चाकर्मकालत्वेनागृह्यमाणविशेष्यतया तन्त्रत्वाच्च प्रथमातिक्रमे कारणाभावात्त्रयोदशाह इत्यादिना रूपेण तत्तदुपसद्दिनेषु प्रतिपादितेन प्रथमं सुत्याकालेनैवोपलक्षणं न सर्वैरिति नाहःशब्दस्याभ्यास इति । सूत्रार्थस्तु—सुत्याविवृद्धौ उपसत्कालसुब्रह्मण्यायां सर्वेषामह्नामुपलक्षणं, प्रकृतौ सौत्यस्योपलक्षणीयत्वेनेहापि सर्वेषु तदन्वयात् । नच देवतासंस्कारार्थत्वादहरुपलक्षणस्य सकृदुपलक्षणेनापि तत्संस्कारसिद्धिरिति वाच्यम् । 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीव'मित्यत्राग्निदेवताह्वानलक्षणसंस्कारावृत्तिवदिहापि तदावृत्तिसंभवादिति देवतासंस्कारार्थत्वेऽपि इत्यह इति ब्रूयादितीयत्ताविधिबलेन स्वकालपरिमाणविशिष्टागमनसंस्कृतदेवता स्वाङ्गमित्यवगमात्संख्याशब्दाद्विशेषग्रहणमिति भावः । संख्याविशिष्टेनाह्ना देवतोपलक्षणीयेत्येतावन्मात्रेणापीयत्ताविध्युपपत्तेर्न ततः स्वकालपरिमाणविशिष्टागमनसंस्कृता देवता स्वाङ्गं नान्यथेत्येवं स्वसंबन्धित्वविवक्षापर्यन्तं कल्पयितुं शक्यमिति सिद्धान्त्याशयः ॥

**पशुगणे कुम्भीशूलवपाश्रपणीनां०** ॥ ३० ॥ पाकसौकर्यसिद्धेर्दृष्टार्थस्य कुम्भ्यादेर्न तन्त्रतेत्युत्थितेः **संगतिः** । **विभवादिति** । कुम्भ्यन्तरोपादाने गौरवान्महत्त्वमात्राक्षेपेणापि पाकः सुकर इति भावः । नचैकदेवत्यत्वेऽप्यवदानादेः क्रमानुष्ठानायासंकरस्यापेक्षितत्वात्कथं तन्त्रत्वमिति वाच्यम् । वक्ष्यमाणरीत्या चिह्नकरणेनापि तत्सिद्धेरिति ॥

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताधिकरणम् ॥ ९ ॥

**भेदस्तु सदेहाद्देवतान्तरे स्यात् ॥ ३१ ॥ [अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३२ ॥ अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात् ॥ ३३ ॥ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात् ॥ ३४ ॥ सकृदिति चेत् ॥ ३५ ॥ न कालभेदात् ॥ ३६ ॥]**

**किमैकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता न वा ॥ असंदेहाय भेदो न लिङ्गादेवास्य सिद्धितः ॥ १५ ॥**
**तत्तन्त्रं हेयमुत नो चिह्नं नास्ति वसा स्वतः ॥ हेयं नो प्रतिपत्तित्वात्सांकर्येणाप्यदोषतः ॥ १६ ॥**

ये तु भिन्नदेवत्या एकजातीयाः पशवस्तेषु किं कुम्भ्यादीनां भेद उत तत्रापि तन्त्रमिति संदेहे सह श्रपितेषु कस्मै देवतायै किमवदेयमित्यज्ञानात्कदाचिदन्यस्मै उपाकृतात्पशोरन्यस्मै देवतायै अवदीयेतापि । तस्माद्भेदः । चिह्नकरणेनापि तु शक्यते कर्तुं विवेकः । तस्मात्साहित्यलिप्सया तन्त्रत्वम् । ननु वसानां चिह्नकरणासंभवात्सर्वासां स्वेस्वे याज्यार्धर्चान्ते होमसिद्ध्यर्थं भेदेनैव कुम्भी स्यात् । नैवम् । एकीभूतानामपि वसानां स्वेस्वे याज्यार्धर्चान्ते हूयमानानां न किंचिद्वैगुण्यम् । तस्मात्तन्त्रम् ॥

भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानाधिकरणम् ॥ १० ॥

**जात्यन्तरेषु भेदः स्यात्पक्तिवैषम्यात् ॥ ३७ ॥ [वृद्धिदर्शनाच्च ॥ ३८ ॥]**

**भिन्नजातिषु कुम्भ्यादेस्तन्त्रं भेदोऽथ वाग्रिमः ॥ पूर्ववत्पाकवैषम्ये साहित्यासंभवाद्भिदा ॥ १७ ॥**

नानाजातीयेष्वेकादशिनादिषु 'आग्नेयः कृष्णग्रीवः सारस्वती मेषी'त्यादिष्वपि पूर्ववत्तन्त्रत्वं न पक्तिवैषम्यात् । केचिद्धि पशवः शीघ्रं सिद्ध्यन्ति केचिच्चिरेण, तत्र सह श्रपणे केषांचिदशृतत्वं विलयो वा स्यात्तस्मात्तन्त्रभेदः ॥

अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम् ॥ ११ ॥

**कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥ ३९ ॥ [प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ सर्वेषां चाभिप्रथनं स्यात् ॥ ४१ ॥]**

**तन्त्रं चतुष्कपालानां भेदो वा तन्महत्त्वतः ॥ कुम्भीवत्तन्त्रता मैवं भेदः स्यात्प्रकृताविव ॥ १८ ॥**

'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदि'ति श्रुतं, तत्र यदा बहुष्वश्वेषु प्रतिगृहीतेषु बहवः पुरोडाशाः प्रयुज्यन्ते तदा किं तन्त्रेण चत्वारि कपालानि स्युरुत प्रतिपुरोडाशं चत्वारि चत्वारीति संदेहे दीर्घेषु चतुर्ष्वेव कपालेषु सर्वपुरोडाशानां श्रपणसंभवात्तन्त्रत्वप्राप्तावुच्यते ।

---

**भेदस्तु संदेहात्०** ॥ ३१ ॥ अयाज्यत्वाद्वसानां भेदः स्यादित्यादिसूत्रचतुष्टयं वसाविषयमधिकरणान्तरत्वेन कैश्चिद्व्याख्यातं तदयुक्तम् । एकदेवत्यस्थलेऽपि चिह्नकरणलक्षणव्यामोहनिरासोपायानुसरणस्यावश्यकत्वेन प्रस्तुताधिकरणस्य तन्मात्रपरत्वे वैयर्थ्यापत्तेः । अतो वसानां चिह्नकरणासंभवान्न तन्त्रत्वमिति विशेषाशङ्कानिराकरणार्थं प्रस्तुताधिकरणमिति वक्तव्यत्वेनोक्तसूत्रचतुष्टयस्याधिकरणान्तरत्वायोगादित्याशयेन तत्रैवाधिकरणे तां शङ्कामुद्भावयति—**नन्विति** । एवंचोक्तविशेषाशङ्कयोत्थानात्संगतिरपि बोध्या । **एकीभूतानामिति** । एकीभूतानां तत्तद्वसांशस्यापि सत्वेन स्वीययाज्यार्धर्चान्ते स्वीयवसा हुता भवतीति न वैगुण्यमित्यर्थः । **ननु** स्वांशवदन्यांशस्यापि प्रविष्टत्वात्परस्परसांकर्याद्वैगुण्यं, नच भिन्नदेवत्यपुरोडाशेषु सहनिर्वापेण प्रसक्तसांकर्यदोषनिराकरणार्थं 'यथाभागं व्यवर्तेथा'मिति मन्त्रेण विभज्य 'अग्नये त्वाग्नीषोमाभ्या'मिति यथादैवतं मन्त्रेणाभिमर्शनवदिह न कश्चिदुपायोऽस्ति येन सांकर्यदोषनिर्घातः स्यात् । अतोत्र कुम्भीभेद आवश्यक इति चेन्न । वसाहोमस्य प्रतिपत्तित्वात् प्रतिपत्तिश्च प्रतिपाद्यमेव न प्रयुङ्क्ते किं पुनः पात्रभेदम् । अतोऽत्र कुम्भ्यन्तरप्रयुक्तगौरवादसति बाधके सहचोदितप्रधानसाहित्यबलेन, लब्धपाकसाहित्यपरित्यागायोगाच्च सह पाके सति वसायाः संसर्गितयांशान्तरसाहित्येनोत्पत्तौ यथोत्पन्नद्रव्यस्यैव प्रतिपाद्यत्वेनार्धर्चात्मकनिमित्तानुरोधेनावर्त्यमाने होमे अंशान्तरसंकरो न दोषः यथा सर्वपृष्ठायामेकपुरोडाशतया नानादेवत्यांशानां परस्परसंकरो न दोषस्तद्वदिति भावः ॥

**जात्यन्तरेषु०** ॥ ३७ ॥ एकादशिनानेवाह—**आग्नेय इति** । **तन्त्रत्वमिति** । पक्वमुद्धृत्य शेषस्य पक्तुं शक्यत्वान्न पक्तिवैषम्यं तन्त्रताविरोधीति भावः । **पक्तीति** । प्रकृतिभूतसांनाय्यवदेव 'हृष गा हृष गोपति' मिति मन्त्रेण कुम्भ्या सहोद्वासनीयतया पक्वमात्रस्य कुम्भीसकाशादुद्धारो न युक्त इति भावः । एवंचैकस्यामपि जातौ बाल्ययौवनस्थविरत्ववशेन यत्र पक्तिवैषम्यं तत्र कुम्भ्यादिभेद एव न्यायसाम्यादिति बोध्यम् ॥

**कपालानि च०** ॥ ३९ ॥ इह तर्हि पक्तिवैषम्याभावान्न भेद इत्युत्थितेः संगतिः । **दीर्घेष्विति** । करद्वारेणाध्व-

कपालावयवस्य कपालशब्दवाच्यत्वाभावात्तन्त्रत्वे च सर्वेषां कपालावयवेषु श्रपणान्नैकोऽपि चतुष्कपालः स्यात्। यावत्कपालं चाभिप्रथनं प्रकृतितः प्राप्तं, तच्च तन्त्रत्वे सति न संपादयितुं शक्यते, तस्मात्प्रतिपुरोडाशं कपालभेदः ॥

व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्त्यधिकरणम् ॥ १२ ॥

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४२ ॥ [तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः स्यात् ॥ ४३ ॥]**

अवघातार्थमन्त्रः किमसकृत्सकृदेव वा ॥ प्रहारभेदादावृत्तिः कर्मैक्येन सकृद्भवेत् ॥ १९ ॥

दर्शपूर्णमासयोरवघातमन्त्रः 'अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ती'ति। स किं प्रतिप्रहारं भेदेन प्रयोक्तव्य उत सकृदेव सर्वादाविति विचारे प्राप्ते प्रत्येकं प्रहरणानामवहन्तिशब्दवाच्यत्वादवघाताङ्गत्वाच्च मन्त्रस्य प्रधानावृत्तेरावृत्तिः। नैवम्। नह्यत्र प्रधानावृत्तिः, अवघातकरणिका हि तण्डुलभावना 'व्रीहीनवहन्ती'त्यत्र विधीयते, तच्छेषश्चायं मन्त्रविधिस्तेन तण्डुलभावनां प्रति करणीभवतोऽवघातस्य मन्त्रोऽङ्गम्। नच तद्रूपस्यावृत्तिः, नहि प्रतिप्रहारं भेदेन तण्डुलाः क्रियन्ते, साभ्यासेन हि ते निष्पद्यन्ते, नच तादृशस्यावृत्तिस्तस्मात्सकृदेव मन्त्रः ॥

नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्त्यधिकरणम् ॥ १३ ॥

**द्रव्यान्तरे कृतार्थत्वात्तस्य पुनःप्रयोगान्मन्त्रस्य च तद्गुणत्वात्पुनःप्रयोगः स्यात्तदर्थेन विधानात् ॥ ४४ ॥**

नानाबीजेषु तन्मन्त्रः सकृद्वाऽसकृदग्रिमः ॥ विशेषाग्रहणान्नैवमवघातस्य भेदतः ॥ २० ॥

'नानाबीजेष्वग्नये गृहपतयेऽष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरु'मित्यादिषु किं सर्वेषामवघातमन्त्रस्तन्त्रमुत प्रतिबीजमावर्तेतेति संदेहे सर्वावघातचिकीर्षया प्रयुक्तो मन्त्रो गृह्यमाणविशेषत्वात्तन्त्रम्[1]। सत्यं यदि न गृह्येत विशेषः संनिपातित्वादवघातस्य समन्त्र-

---

यौरिवावयवद्वारेण कपालानामेव श्रपणसाधनत्वसंभवाल्लाघवेन दैर्घ्यमात्रं संपाद्यं नतु कपालान्तराणि। यावत्कपालं प्रथनं चायामतो दैर्घ्येऽपि परिणाहतो ह्रस्वत्वस्यावश्यवक्तव्यत्वात्परिणाहापेक्षयोपपद्यत इति भावः। **नैकोऽपीति**। प्रकृतौ साक्षादेव कपालानां साधनत्वादिहापि तथैव स्वीकार्यं नावयवद्वारेति भावः। **ननु** कपालानामुपरिदेश एव पुरोडाशः श्रप्यते न सर्वावयवावच्छेदेन ततश्च प्रकृतावप्यवयवद्वारैव साधनत्वमिति यदि कश्चिद्ब्रूयात्तंप्रति प्रकारान्तरमाह—**यावदिति**। यावत्कपालं प्रथयतीति वचनस्य परिणाहमात्रविषयतया संकोचे न किंचित्प्रमाणमिति भावः ॥

**एकद्रव्ये संस्काराणां० ॥ ४२ ॥ अवहन्तिशब्देति**। अनेनैव यथा कपालशब्दशक्तिपर्यालोचनया कपालानां तन्त्रत्वमेवमवहन्तिशब्दशक्तिपर्यालोचनया मन्त्रस्यापि न तन्त्रत्वमित्युत्थितेः संगतिरिति सूचितम्। **ननु** प्रत्येकमवहन्तिशब्दवाच्यत्वेन मन्त्रस्य प्रतिप्रहारमङ्गत्वेऽपि नावृत्तिः सकृदुच्चरितस्यैव सर्वप्रहारार्थत्वसंभवादित्यत आह—**प्रधानेति**। करणमन्त्रत्वादनुप्रेयक्रियावृत्तावावृत्त्यवश्यंभाव इति भावः। धात्वर्थस्वरूपे न मन्त्रस्य शेषत्वं तथासत्यानर्थक्यप्रसङ्गादतो न तदावृत्तावप्यावृत्तिरित्याशयेनाह—**नहीति**। ननु 'व्रीहीनवहन्ती'त्यवघातकरणकतण्डुलभावनाविधानेऽपि कथमावृत्त्यभावः। नहि मन्त्रविधौ तस्या उद्देश्यत्वं येन तदन्वितमन्त्रं प्रति तत्करणभावेनावघातस्य शेषत्वं स्यात्, किंत्ववहन्तीति यत्तदनेन मन्त्रेणेत्यवहननकर्मकभावनोद्देशेनैव मन्त्रविधानं, ततश्चावहन्तिरूपावृत्त्या मन्त्रावृत्तिर्दुर्वारेत्यत आह—**तच्छेष इति**। मन्त्रविधौ अवहननकर्मकभावनाया उद्देश्यत्वप्रतीतावपि 'प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम्। अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावना'मिति सप्तमाद्यन्यायेन परमार्थतः प्रधानभूतावहननविधिविधेयत्वान्मन्त्रस्यावघातकरणकभावनान्वय उपपद्यत इति भावः। **सूत्रार्थस्तु**—यत्र मन्त्रकार्यस्य नानात्वं तत्रावृत्तावपीह सकृदेव प्रयोगः स्यादवहननस्य व्रीहिद्रव्यसंस्कारस्यैकत्वेन भेदाभावात्। व्याख्यातं चैवंजातीयकानामेकत्वमिति ॥

**द्रव्यान्तरे कृतार्थत्वात्० ॥ ४४ ॥ संनिपातित्वादिति**। अवघातस्य संनिपातित्वेन येन बीजेनासौ संनिपतति तदेव संस्कर्तुं क्षमते नान्यदिति एकस्मिन्बीजे क्रियमाणोऽवघातस्तदर्थ एव नान्यार्थ इति निश्चये तत्करणमन्त्रस्य

---

१ प्रयुक्तस्य मन्त्रस्य गृह्यमाणविशेषत्वात्तन्त्रत्वम्.

स्यातिदेशाद्यस्मिन्नेव बीजे मन्त्रः प्रयुक्तस्तस्यैव मन्त्रकृतः संस्कारो नान्यस्येति विशेषग्रहणाद्बीजान्तरे पुनः प्रयोक्तव्यः ॥

प्रतिनिर्वापादिमन्त्रावृत्त्यधिकरणम् ॥ १४ ॥

**निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ४५ ॥ [द्रव्यान्तरवद्वा स्यात्तत्संस्कारात् ॥ ४६ ॥]**

**निर्वापादिषु तन्मन्त्राः सकृद्भेदेन वाग्रिमः ॥ द्रव्यकर्मैक्यतो मैवं संस्कारस्य पृथक्त्वतः ॥ २१ ॥**

'दर्शपूर्णमासयोश्चतुरो मुष्टीन्निर्वपति अयुंगान्युंगान्मुष्टीन्लुनाति त्रिधातु पञ्चधातु वा वेदिं स्तृणाति चतुर्जुह्वां गृह्णाती'ति श्रूयते । तत्र मन्त्राः 'देवस्य त्वा सवितुः प्रसवे, बर्हिर्देवसदनं दामि, ऊर्णाम्रदसं त्वास्तृणामि, शुक्रं त्वा शुक्राया'मिति । ते किं सकृत्प्रयोक्तव्या उत प्रतिमुष्टि प्रतिधातु प्रत्याज्यं भेदेनेति संदेहे ससंख्यानामेककर्मत्वादवघातमन्त्रवन्मन्त्राणां सकृत्प्रयोगप्राप्तावुच्यते । युक्तमवघाते । तत्र हि त एव व्रीहयः पुनःपुनरवहन्यन्ते तेन सकृत्प्रयुक्तेनैव मन्त्रेण सर्वव्रीहीणां समन्त्रकावघातलाभान्न पुनःप्रयोगस्य करणमस्ति निर्वापादिषु पुनरन्येऽन्ये व्रीहयो दर्भा आज्यं च प्रतिमुष्टि प्रतिप्रस्तरणं प्रतिग्रहणं च निरुप्यन्ते लूयन्ते स्तीर्यन्ते गृह्यन्ते च । ततश्च यत्रैव मन्त्रः प्रयुक्तस्तत्रैव तत्कृतसंस्कारलाभात्सर्वेषां तल्लाभाय मुष्ट्यादिषु भेदेन मन्त्रः ॥

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रानावृत्त्यधिकरणम् ॥ १५ ॥

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४७ ॥ [एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत्प्रयोगः स्यात् ॥ ४८ ॥]**

वेदिप्रोक्षणमन्त्रः किमावर्त्यः सकृदेव वा ॥ आद्यः स्यात्प्रोक्षणत्रित्वात्संस्कार्यैकत्वतः सकृत् ॥ २२ ॥

दर्शपूर्णमासयोः श्रूयते 'वेदिरसि बर्हिषा त्वेति त्रिर्वेदिं प्रोक्षती'ति । तत्र किं प्रत्यभ्यासं मन्त्रावृत्तिरुत सकृदेवादौ मन्त्र इति संशये प्रोक्षणार्थत्वान्मन्त्रस्य प्रोक्षणस्य च संख्याया भिन्नत्वात्प्रति-

---

बीजान्तरोपकारकत्वासंभवात्तस्यापि तदर्थतया विशेषस्य ग्रहणे प्रतिबीजं मन्त्रातिदेशबलेनावृत्तिरेव कार्येत्यर्थः । एवंच मन्त्रशेषभूतावघातसंनिपातित्वस्य स्पष्टतया विशेषग्रहणे सति सर्वचिकीर्षाबलान्मन्त्रजन्यानुष्ठेयस्मृतेर्यावत्सर्वावघातसमाप्त्यवस्थानकल्पनानौचित्येन पूर्वपक्षस्य मन्दत्वात्प्रत्युदाहरणमात्रमेतदिति ध्येयम् । सूत्रार्थस्तु—द्रव्यान्तरेषु मन्त्रस्य पुनःप्रयोगः स्यात् पूर्वस्मिन् बीजे कृतार्थस्यावघातस्य बीजान्तरे पुनःप्रयोगान्मन्त्रस्य प्रतिकर्मावसायिना चोदकेन तदर्थत्वेनापि विधानात्तद्गुणत्वादिति ॥

**निर्वपणलवनस्तरणाज्यग्रहणेषु०** ॥ ४५ ॥ अयुंगान्युंगानिति गकारमकारयोः स्थानविनिमयेनायुग्मान्युग्मानित्यर्थः । **त्रिधात्विति** । धातुः परिपाटिरिति धूर्तस्वामी । **ससंख्यानामिति** । यथावहननस्य साभ्यासस्यैककर्मत्वान्न मन्त्रावृत्तिरेवमिहापि चतुर्मुष्टिनिर्वाप एकं कर्म चतुरो मुष्टीनिति कर्मणि श्रूयमाणायाः संख्यायाः क्रियाभेदसंपादनाक्षमत्वादत एव चतुर्मुष्टिनिर्वापस्यैकपदार्थत्वात्तेनानुसमयः पञ्चमोक्त उपपद्यते । अन्यथा मुष्टिना मुष्टेरेवानुसमयः स्यादेवं लवनादिष्वपीति भावः । अवघातमन्त्रवदित्यनेनैव पूर्वस्य प्रत्युदाहरणमात्रत्वेन पूर्वतरशेषत्वात्तेन संगतिरपि सूचिता । सत्यं क्रियायाः न भेदस्तथापि न क्रियास्वरूपप्रयुक्तो मन्त्रः किंतु क्रियाकार्यभूतसंस्कार्यप्रयुक्तः । संस्कार्यं च मुष्टिपरिमितव्रीह्यादिकं भिन्नमिति नानाबीजन्यायेन मन्त्रावृत्तिरेव न्याय्या । अवहनने तु न संस्कार्यभेद इति वैषम्यमित्याह—**युक्तमित्यादिना** । **स्तीर्यन्त इति** । इदं च स्तरणं दर्भाणां संस्कार इति पक्षे, वेदिसंस्कार इति पक्षे तु तत्तद्देशभेदानावृत्तिर्बोध्या । सूत्रार्थस्तु—निर्वपणादिष्वेकद्रव्यकावघातवत्सकृत्प्रयोगः स्यात् चतुर्मुष्टिनिर्वापादेरेकप्रयोजनतया युगपच्चिकीर्षितत्वादिति ॥

**वेदिप्रोक्षणे०** ॥ ४७ ॥ **भिन्नत्वादिति** । अनेन यदि क्रियैक्येऽपि मन्त्रावृत्तिस्तदा तद्भेदे किं वक्तव्यमित्युत्थानासंगतिः सूचिता । यद्यपि क्रियाभ्यावृत्तिगतैवेयं संख्या न क्रियागता, तया च न क्रियाभेदः संभवति तथापि प्रतिसेचनं प्रोक्षणशब्दस्य मुख्यत्वात्स्वरसतोऽत्र क्रियाभेद एव प्रतीयते । नचास्यावघातवद्दृष्टार्थत्वं येन साभ्यासस्यैकफलसाधनत्वेन तद्द्रव्यैक्यमादाय मन्त्रस्य सकृत्प्रयोगः स्यात् । तस्माददृष्टार्थत्वात्प्रोक्षणस्याभ्यासस्तस्यैवादृष्टजनकत्वमित्यत्र प्रमाणाभावेन

---

१ अयुग्मा युग्मा मुष्टीर्लुनाति.

प्रधानं च गुणानामावृत्तेः प्रत्यभ्यासमावृत्तिः । किंचानेन मन्त्रेण त्रिः प्रोक्षतीति वचनाद्विस्पष्टं मन्त्रावृत्तिर्गम्यते । उच्यते—नैवं संबन्धः अनेन मन्त्रेण त्रिरिति किंतर्हि मन्त्रस्य करणत्वात्क्रियया संबन्धोऽनेन प्रोक्षतीति । त्रिरभ्यासोऽपि क्रियाया एवाङ्गम् । तेन मन्त्रवदावृत्तिमच्च कर्तव्यं, नचात्र क्रियाभेदः किंत्वेकैव क्रिया । आवृत्तिधर्मिका क्रियाभ्यावृत्तौ हि सुज्विधीयते न क्रियाभेदे । तस्मात्सकृदेव मन्त्रः ॥

कण्डूयनमन्त्रस्यानावृत्त्यधिकरणम् ॥ १६ ॥

**कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ४९ ॥ [अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ५० ॥]**

एककालीनबह्वङ्गकण्ड्वां मन्त्रे भिदा न वा ॥ अङ्गभेदान्मन्त्रभेदो निवृत्त्यैकत्वतो न सः ॥ २३ ॥

ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयत' इति । तत्र मन्त्रः 'कृष्यै त्वा सुसस्याया' इति । तत्र यदाऽनेकेषु पाण्याद्यङ्गेषु युगपत्कण्डूरुत्पद्यते किं तदा प्रत्यङ्गं मन्त्रावृत्तिरुत सकृदिति संदेहे कण्डूयनकर्मणस्तदपनेयस्य दुःखस्य दुःखापनयनसंस्कार्याणामङ्गानां च भिन्नत्वात्प्रत्यङ्गमावृत्तिः । एकत्वे हि यस्मिन्नेवाङ्गे मन्त्रः प्रयुक्तस्तदर्थः स इति विशेषग्रहणादङ्गान्तराणां मन्त्रकृतसंस्कारहानिः स्यात् । सत्यं दुःखानि भिन्नानि नतु दुःखापनयनं स्वरूपेण चिकीर्षितं, नाप्यङ्गसंस्कारो येन तद्भेदाद्भेदः स्यात् किंत्वात्मानं कण्डूदुःखाक्षिप्तचित्तमपनीतकण्डूदुःखं कर्तुं कण्डूयनं क्रियते, तेन यावता दुःखेनानपनीतेनात्मनि दुःखं भवति तावत्सर्वमपनेतुमभिसंधाय कण्डूयनमुपक्रममाणेन प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्तन्त्रं भवति ॥

स्वप्नादिमन्त्रानावृत्त्यधिकरणम् ॥ १७ ॥

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५१ ॥**

स्वप्नादिमन्त्र आवर्त्यो नो वाद्योऽस्त्वन्तरायतः ॥ कृत्स्नोद्देशप्रवृत्तत्वान्निमित्ताभेदतः सकृत् ॥ २४ ॥

ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असी'ति । तथा नदीतरणमन्त्रः 'देवीरापो अपांनपा-

---

शब्दशक्त्यनुसारेण प्रत्येकमेवादृष्टजनकत्वस्य कल्पनीयत्वेनादृष्टसाधनरूपेणापि भेदादावृत्तिरित्यत्र पूर्वपक्षिणस्तात्पर्यम् । **ननु** प्रत्येकं प्रोक्षतिशब्दार्थत्वेऽपि विध्यैक्यादेकादृष्टमेव कल्पनीयम् । ततश्च साभ्यासस्यैवादृष्टजनकत्वमवश्याङ्गीकार्यमिति तद्रूपैक्यान्नावृत्तिरित्यस्वरसादाह—**किंचेति** । अव्यवधानात्रिरित्यनेनैव मन्त्रान्वय इति भावः । किंचेत्येतत्प्रथमं दूषयति—**नैवमिति** । मन्त्रस्य कारकत्वेन क्रियेतरेणान्वयायोग्यत्वादयोग्यतापराहतमव्यवधानमिति भावः । **त्रिरिति** । तथाच मन्त्राभ्यासयोरुभयोरपि गुणत्वान्न परस्परान्वय इति भावः । एवंच त्रिरभ्यासविधिबलादपि साभ्यासस्यैव कर्तव्यत्वं नतु कर्तव्यस्याभ्यासः येन प्रत्येकमदृष्टजनकता स्यादित्याशयेनाह—**तेनेति** । संख्याया भिन्नत्वं निरस्यति—**नचेति** । **क्रियाभ्यावृत्ताविति** । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु'जित्यधिकृत्य 'द्वित्रिचतुर्भ्यः सु'जिति विधानादिति भावः ॥

**कण्डूयने प्रत्यङ्गं०॥४९॥** पूर्वत्र संस्कारवैयैक्यान्मन्त्रस्य सकृत्प्रयोगेपीह तद्भेदाद्भेद इत्युत्थितेः संगतिः। **तदपनेयेति**। ततश्च कार्यतोऽपि भेद एवेति भावः। **नन्वेमपि** कण्डूयनसंस्कार्यस्यात्मन एकत्वात्सकृदेव मन्त्रः स्यादित्यत आह—**दुःखापनयनेति** । कण्डूयनसाध्यकण्डूनिवृत्तेरङ्गगतत्वेनाङ्गसंस्कार एव कण्डूयनं नात्मसंस्कार इति भावः। कण्डूतिदुःखापनयनं न शास्त्रेण कर्तव्यतया चोद्यते किंतु कण्डूतिदुःखे सति चित्तविक्षेपात्सुखं कर्मानुष्ठानं न भवतीत्यर्थादाक्षिप्ते तस्मिन्मन्त्रमात्रं शास्त्रेण विधीयते । ततश्चैकस्मिन्नङ्गे कण्डूत्यपनयेपि अङ्गान्तरे तत्सत्वे चित्तविक्षेपतादवस्थ्यात् यावदङ्गं कण्डूत्यपनय एव चित्ताविक्षेपेणाक्षेप्यः । एवंच चित्ताविक्षेपरूपप्रयोजनैक्यादवघातन्यायेन कण्डूयनक्रियैक्यात्सकृदेव मन्त्रः । तथा चित्ताविक्षेपलक्षणप्रयोजनस्यात्मगतत्वादात्मसंस्कार एव कण्डूयनं नाङ्गसंस्कारः । अङ्गगतकण्डूनिवृत्तिश्च द्वारमात्रमिति संस्कारैक्यादपि सकृन्मन्त्र इति सिद्धान्तमाह—**सत्यमित्यादिना** । **दुःखमिति** । चित्तविक्षेप इत्यर्थः । **सूत्रार्थस्तु**—कण्डूयने प्रत्यङ्गमावृत्तिः स्यात् कर्मभेदादिति ॥

**स्वप्ननदीतरणाभिवर्षणा० ॥ ५१ ॥ स्वप्नार्थ इति** । निद्रार्थ इत्यर्थः । स्वप्नादीनां भेदादानन्तर्येण विशेषग्र-

---

१ प्रत्यकम्.

द्रि'ति। तथा 'अभिवृष्टस्य उदन्तीर्बलं धत्ते'ति। तथा अमेध्यप्रतिमन्त्रणमन्त्रः 'अबद्धं मनो दरिद्रं चक्षुरि'ति। तत्र संशयः—यदा दीक्षितः पुनःपुनः प्रबुद्धः स्वपिति अनेकस्रोतसं वा नदीं तरति संतानेन वाभिवृष्यते युगपद्वाऽनेकानि अमेध्यानि पश्यति तदा किं मन्त्राणामावृत्तिरुत सकृत्प्रयोग इति। विशेषग्रहणादावृत्तिप्राप्तावुच्यते—सर्वां रात्रिं निद्रामभिसंधाय मन्त्रं प्रयुङ्क्ते तथा नदीं वृष्टिं च नत्ववान्तरनिद्रां नाप्येकं स्रोतः तथा वर्षधारां, तस्मात्सकृत्प्रयोगः। अमेध्येषु तु कालभेदाभावाद्विस्पष्टमगृह्यमाणविशेषत्वम्॥

दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधिकरणम्॥ १८॥

**प्रयाणे त्वाऽर्थनिर्वृत्तेः॥ ५२॥**

**प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वात्र विश्रमैः॥ प्रयाणभेदाद्भिन्नो नो गत्यैक्यादानिवृत्तितः॥ २५॥**

दीक्षितस्य प्रस्थानार्थो मन्त्रः 'भद्रादभिश्रेय' इति स किं पुनःपुनर्विश्रम्य प्रतिष्ठमानेनावर्तयितव्यः उत सकृदेवेति संशये विशेषग्रहणादावृत्तिं मन्वानस्योत्तरं आसमीहितप्राप्तेरेकं प्रयाणमिति। तदर्थस्य मन्त्रस्य सकृत्प्रयोगः॥

उपरवमन्त्रस्यावृत्त्यधिकरणम्॥ १९॥

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात्॥ ५३॥ [न संनिपातित्वात्, असंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनम्॥ ५४॥]**

**तन्त्रेणोपरवे मन्त्रो भिद्यते वा बहूक्तितः॥ तन्त्रं बहूक्तिः पूजार्था भिन्नोऽसौ खेयभेदतः॥ २६॥**

ज्योतिष्टोमे सन्त्युपरवाश्चत्वारः तेषां खननार्थो मन्त्रः 'रक्षोहणो वलगहनो वैष्णवान्खनामि' इति स किं चतुर्णामपि तन्त्रमुत प्रत्युपरवं भिद्यते इति संशये वैष्णवानिति बहुवचनान्तत्वात्सकृदेव प्रयुज्यमानो मन्त्रः सर्वानभिधत्ते इति न पुनः प्रयोक्तव्यः। प्रत्येकं हि प्रयोगे बहुवचनमसमर्थं स्यात्तस्मात्तन्त्रम्। नैवं, खननक्रियास्तावत्खेयभेदेन भिन्नाः क्रमेणोपक्रम्यन्ते न युगपत्। मन्त्रश्च

---

णाद्भेद इति मन्वानं प्रति पूर्वोक्तातिदेशात्संगतिः। **विशेषेति**। अमेध्येष्वपि देशभेदादस्ति विशेष इति भावः। **नत्ववान्तरेति**। ततश्च मध्ये प्रबोधस्यानियतत्वेनावान्तरनिद्रादेरनुद्देश्यत्वात्सन्नपि तद्भेदो नावृत्तिप्रयोजक इति भावः। **तथेति**। एकधारापतनमात्रं नोद्देश्यमित्यर्थः। **विस्पष्टमिति**। अमेध्यसंस्कारत्वाभावेन देशभेदान्न विशेष इति भावः। एवंचैकस्मिन्देशेऽनेकामेध्यदर्शने अबद्धं मन इति नावर्तते देशान्तरे त्वावृत्तिरिति कपर्द्युक्तिश्चिन्त्या॥

**प्रयाणे त्वाऽर्थनिर्वृत्तेः॥ ५२॥ विशेषेति**। नह्यन्तरा प्रबोधवदन्तरा विश्रामो नियतः। यत्र बहुदिनसाध्यं प्रयाणं तत्रान्तरा विश्रामावश्यंभावात्तथाच प्रथमं प्रयुज्यमानो मन्त्रः प्राक्प्राथमिकविश्रामाद्यत्प्रयाणं तदर्थमिति विशेषग्रहणादावृत्तिरित्यर्थः। उक्तविशेषाशङ्कयोत्थानात्संगतिः। **समीहितेति**। भृतिवननादिलक्षणेत्यर्थः। ततश्च प्रयोजनैक्यादवघातन्यायेन प्रयाणमप्येकमिति सत्यपि तदवयवभेदे सकृदेव मन्त्र इति भावः। सूत्रे आ अर्थनिर्वृत्तेरिति छेदः॥

**उपरवमन्त्रः०॥ ५३॥** पूर्ववदिहापि तन्त्रतेत्युत्थानात्संगतिः। उपरवा नाम प्रादेशमुखा बाहुमात्रखाता गर्तविशेषाः। **ननु** निर्वपणलवनादिमन्त्रवत्संस्कार्यभेदादावृत्तेर्न्याय्यत्वात्कथं पूर्वःपक्ष इत्यत आह—**वैष्णवानिति**। निर्वपणादिमन्त्रेषु मुष्ट्यन्तरेषु मन्त्रजन्यसंस्कारो माविलोपीत्येतदर्थमावृत्तिरिह तु सकृत्प्रयोगेणैव सर्वेषां प्रकाशने सति न कस्यापि मन्त्रकृतसंस्कारलोप इति नावृत्तिरित्यर्थः। मन्त्रलिङ्गविरोधादावृत्तिरिहात्यन्तं बाधितेत्याशयेनाह—**प्रत्येकमिति**। सर्वार्थतया सकृत्प्रयोगमाश्रित्य बहुवचनस्य विवक्षितत्वसंभवे केवलपूजार्थत्वमन्याय्यं, पाशानित्यत्र तु बहुवचनस्य न कथंचिदपि विवक्षा संभवतीति वैषम्यमिति भावः। **न युगपदिति**। ततश्च युगपत्प्रकाशनस्यानपेक्षितत्वात्केवलबहुवचनबलात्क्रियमाणं तदनर्थकमेव स्यादिति भावः। **मन्त्रश्चेति**। संनिपाती कर्मादौ संनिपतनशीलः। तथात्वं च करणमन्त्रत्वात्करणमन्त्रेषु मन्त्रान्तैः कर्मादिसंनिपातनियमादित्यर्थः। **अस्तु मन्त्रान्तकर्मादोः संनिपातस्ततः किमित्यत आह—**

संनिपाती। तेन यस्य खननस्योपक्रमो मन्त्रान्ते संनिपतितः तदर्थ एव मन्त्रो नान्येषामुपरवाणामलमुपकर्तुं, अतः प्रातिपदिकमात्रं कारकमात्रं च विवक्षितं बहुवचनं त्वेकस्मिन्नेव पूजार्थं प्रयुक्तमिति वेदितव्यम् ॥

हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम् ॥ २० ॥

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्याऽऽवृत्तिः कालभेदात्स्यात् ॥ ५५ ॥ [अध्रिगोश्च विपर्यासात् ॥ ५६ ॥ करिष्यद्वचनात् ॥ ५७ ॥]**

**हविष्कृदादिमन्त्राणां सवनीयादिगामिनाम् ॥ तन्त्रं न वा सहत्वार्थे तन्त्रं नो कालभेदतः ॥ २७ ॥**

ज्योतिष्टोमे अनुसवनं सवनीयाः पुरोडाशास्तेषु चोदकप्राप्तं हविष्कृदाह्वानं तन्त्रमुत प्रतिसवनं भेदेन। तथा वाजपेये प्राजापत्यान्क्रतुपशूंश्च सहोपक्रम्य यदा प्राजापत्यान्पर्यग्निकृत्वोत्सृज्य ब्रह्मसाम्न्यालभेत तदा किं क्रतुपश्वारम्भकाले प्रातःसवनकाले कृतमध्रिगुवचनं प्राजापत्यानामपि तन्त्रमुत प्राजापत्यार्थत्वेन ब्रह्मसामकाले पुनरध्रिगुर्वक्तव्यः। तथा 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीव'मिति कृष्णग्रीवयोर्भेदेन प्रदाने क्रियमाणेऽवदाने च किमनुवाक्याया मनोतामन्त्रस्य च तन्त्रत्वमुतावृत्तिरिति विचारे सर्वत्रासंनिपातित्वात्प्रयोगवचनानुग्रहाय तन्त्रत्वम्। नह्येतेषां करणवत्संनिपातित्वं, अनुवाक्यापि हि याज्याव्यवधानादसंनिपात्येव, तस्मादगृह्यमाणविशेषत्वात्तन्त्रत्वभ्रान्तिः कस्यचित्स्यादिति तद्व्यावृत्त्यर्थमिदं सूत्रम्। हविष्कृदादीनामावृत्तिः कालभेदेन विशेषग्रहणात्। नच प्रयाजादिवदत्र कालान्तरे कृतः संस्कारः कालान्तरेऽवतिष्ठते येनानावृत्तिः स्यात्। प्रकाशनार्थत्वादेषाम्। यद्यप्येतानि करणवत्सन्निपातीनि तथापि प्रकाशनार्थत्वात् प्रकाशनस्यच कालान्तरे प्रध्वंसात्तस्मादावर्तेरन्। तन्त्रावापनिमित्तः प्रयोगपरिमाणनिर्णयो वृत्तः प्रासङ्गिके प्रयोगे परिमाणमतः प्रवक्ष्यामः ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामेकादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

**तेनेति। नान्येषामिति।** तत्संनिपातं विना तत्करणत्वानिर्वाहादिति भावः। बहुवचनमिति संनिपातित्वमेव बहुवचनविवक्षाकारणमिति भावः। सूत्रार्थस्तु—उपरवमन्त्रस्तन्त्रं स्यात् बहुवचनाल्लोके यथैकस्मिन्बहुवचनमसमर्थं तद्वदिहापीति ॥

**हविष्कृदध्रिगु० ॥ ५५ ॥ प्रदान इति।** प्रदानेनानुवाक्यायाः अवदानेन मनोतायाश्चान्वयः। **ननु** तेषां क्रियाद्रव्यादिप्रकाशकानां प्रयाजादिवदारादुपकारकत्वाभावादस्त्येव संनिपातित्वमित्याशङ्क्य नारादुपकारकत्वप्रतिद्वन्द्वीभूतसंनिपातित्वाभाव इह विवक्षितः, किंतु मन्त्रान्तकर्माद्योः संनिपाताभाव इत्याशयेनाह—**नहीति।** करणमन्त्रस्य करणतानिर्वाहार्थं कर्मादिसंनिपातावश्यंभावेऽप्येतेषां संनिपातनियमे न किंचित्प्रमाणमिति भावः। अनेनैव पूर्ववैषम्येणोत्थानात्संगतिरिति सूचितम्। **ननु** याज्याया इव पुरोनुवाक्याया अपि संनिपातः किं न स्यादित्यत आह—**अनुवाक्येति।** कालभेदेन विशेषग्रहणस्य स्पष्टत्वादाह—**भ्रान्तिः कस्यचिदिति।** अनेनैव पूर्वपक्षस्य मन्दतया भाष्यकारकृतमधिकरणान्तरपरतया व्याख्यानमयुक्तं किंतु प्रयाजादीनामसंनिपातिनां तन्त्रत्वमिति पूर्वमुक्तस्य प्रत्युदाहरणतया संनिपातित्वाभावेऽपि हविष्कृदादीनामावृत्तिप्रतिपादनार्थमिदमिति यद्व्याख्यानान्तरं तदेव समीचीनमिति सूचितम्। **ननु** प्रयाजादिवत्कालभेदोऽकिंचित्कर इत्यत आह—**नचेति। प्रकाशनस्येति।** वचनबलाद्याज्यमात्रेणानुवाक्याया व्यवधानं सत्यं नत्वत्यन्तव्यवधानमिति भावः ॥ **इति श्रीनिट्टिलकुलतिलकसूरिभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायामेकादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

**इति एकादशोऽध्यायः समाप्तः ॥**

---

# द्वादशोऽध्यायः ॥ १२ ॥

## द्वादशाध्याये प्रथमः पादः ।

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकाराधिकरणम् ॥ १ ॥

**तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्यात् तादर्थ्ये श्रुतिकालनिर्देशात् ॥ १ ॥ [गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥ एकेषां चाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥]**

तन्त्रं द्वयोद्देशकत्वादेकादश उदीरितम् ॥ प्रसङ्गोऽन्योद्देशकत्वाज्जघन्यः सम्प्रथोच्यते ॥ १ ॥
पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ॥ अस्ति वा विध्यभावाङ्गो ह्यर्थतस्त्वस्तु लोकवत् ॥ २ ॥

सकृदनुष्ठितमप्यङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोत्युपकर्तुमित्येतत्तन्त्रलक्षणोक्तमुपजीव्य किमगृह्यमाणविशेषत्वादेव वैवं भवति उतास्मा इदमनुष्ठानं नास्मा इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेप्यनुष्ठितमप्यङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्तुं न तादर्थ्येन पुनरनुष्ठातव्यमिति चिन्त्यत इति तंत्र प्रसङ्गयोर्हेतुहेतुमत्ता । अग्नीषोमीये पशावैष्टिको विध्यन्तः प्रवर्तते तत्र पशुपुरोडाशः 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पुरोडाशं निर्वपती'ति तत्राप्यैष्टिको विध्यन्तः । तत्र चिन्त्यते किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्य नोपकुर्वन्ति तेन तदर्थं पृथगनुष्ठातव्यानि उत तैरेवोपकारसिद्धेर्न पृथक्पुरोडाशार्थेनाङ्गानामनुष्ठानमिति । तत्र—'अङ्गानि पशुकालानि पश्वर्थानीत्यसंशयम् ॥ अनागते पुरोडाशकाले नहि तदर्थता ॥ अन्यार्थानुष्ठितं चाङ्गं नह्यन्यस्योपकारकम् ॥ तदर्थेन कृतं चैव तथा प्रकृतिदर्शनात् ॥' प्रकृतौ हि यदुद्देशेनाङ्गमनुष्ठितं

---

**तन्त्रिसमवाये चोदनातः०** ॥ १ ॥ ननु कथं तन्त्रनिरूपणानन्तर्यं प्रसङ्गनिरूपणस्य तन्त्रप्रसङ्गयोः परस्परं हेतुहेतुमद्भावाभावात् । तथाहि यत्र तन्त्रमाग्नेयादौ प्रयाजादीनां तत्र न प्रसङ्गः यत्र प्रसङ्गः पश्वाद्यर्थानुष्ठितानामङ्गानां पशुपुरोडाशादौ तत्र न तन्त्रं तस्मात्तन्त्रप्रसङ्गयोः परस्परवार्ताभिज्ञतया हेतुहेतुमद्भावाभावात्कथमानन्तर्यमित्यत आह—**सकृदिति।** अत्र यद्यपि तन्त्रप्रसङ्गयोर्न हेतुहेतुमद्भावस्तथापि प्रसङ्गनिरूपणं तन्त्रनिरूपणमपेक्षते । पश्वाद्यर्थानुष्ठितैरङ्गैः पुरोडाशाद्युपकारसिद्धिलक्षणप्रसङ्गो हि पश्वर्थानां पुरोडाशोपकारकत्वसंभावनायां घटते नान्यथा । तत्संभावना च पश्वर्थानां पारार्थ्यनिश्चयेन विशेषग्रहणात्पुरोडाशोपकारकत्वं न संभवतीति शङ्कया न स्वरसत उत्पद्यते किंतु प्रयाजादेराग्नेयाग्नीषोमीयाद्यनेकोपकारकत्वदर्शनात्कथंचिदुन्मिषति । ततश्च प्रयाजादीनामगृह्यमाणविशेषतया एकदेशकालकर्तृकानेकप्रधानोपकारकत्वलक्षणतन्त्रव्युत्पादनस्य गृह्यमाणविशेषस्थलेऽप्येकस्यानेकोपकारकत्वसंभावनाद्वारा प्रसङ्गनिरूपणहेतुत्वाद्युक्तमानन्तर्यमित्यर्थः । तन्त्रप्रसङ्गयोः तन्त्रप्रसङ्गनिरूपणयोरित्यर्थः । ग्रन्थकारोऽपि संभावनाद्वारा हेतुत्वस्फोरणायैवोपकर्तुं शक्नोतीत्युक्तवानन्यथा उपकरोतीत्येवावक्ष्यदिति ध्येयम् । वस्तुतस्तु देशाद्यभेदंविना प्रसङ्गोऽपि न संभवतीति देशादितन्त्रतायाः प्रसङ्गोपजीव्यत्वात् साक्षादपि तन्त्रप्रसङ्गयोर्हेतुहेतुमद्भावः संभवतीति ध्येयम् । किं प्रयाजादीन्यङ्गानि पुरोडाशार्थं पृथगनुष्ठेयान्युत न, तदर्थं च किं पश्वर्थानुष्ठितैरङ्गैः पुरोडाशे उपकारो न सिध्यत्युत सिध्यतीति संशयं फलफलिभावगर्भमाह—**तत्रेति । अङ्गानीति ।** अङ्गानुष्ठानमित्यर्थः । **पशुकालानीति** । 'तिष्ठन्तं पशुं प्रयुजन्ती'त्यादिवचनादिति भावः । कृतं चैवेत्यत्र

---

१ पत्वादेवं भवति. २ पशुपुरोडाशं. ३ कृते तस्य.

तस्यैवोपकारकं दृष्टम्। इहापि नान्यार्थमनुष्ठितमन्यस्योपकरोति । किंच—'विधीयमानं कालादौ कर्म साङ्गं विधीयते ॥ स्वकालेऽतः पुरोडाशः कार्यः सर्वाङ्गसंगतः ॥' वपाप्रचारोत्तरकालेऽप्युपदिष्टातिदिष्टसर्वाङ्गयुक्ते पुरोडाशे कर्तव्यतया विज्ञायमाने कोनाम शास्त्रातिक्रमेण प्रधानमात्रमनुष्ठातुं क्षमः वैगुण्यं च प्रसङ्गसमाश्रयणे स्यात् । प्रयाजानन्तर्यं ह्याज्यभागाङ्गं तदानन्तर्यं च प्रधानाङ्गं प्रकृतिवदतिदेशात् । तदिह पाशुकेषु प्रयाजेषु प्रसज्यमानेषु तदानन्तर्यगुणहानाद्विगुणावाज्यभागौ न स्वकार्यं साधयेयाताम्। अथ तु वैकल्पिकत्वात्पशावेवाज्यभागावनुष्ठितौ ततस्तयोरपि प्रसज्यमानयोः पुरोडाशस्य तदानन्तर्यगुणलोपान्न स्वकार्यसाधनत्वं स्यात्। तस्मान्न पाशुकानामङ्गानां पुरोडाशे प्रसङ्ग इति तस्य स्वाङ्गानि पृथक्कर्तव्यान्येव । 'गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम् ॥ तेनापि न प्रसङ्गोऽस्तीत्येवंप्राप्तेऽभिधीयते ॥ वितते पाशुके तन्त्रे समाप्तिमागते सति ॥ मध्ये पतन्पुरोडाशस्तत्तन्त्रमुपजीवति ॥ चोदकेन पुरोडाशे यो विध्यन्तः समर्थितः ॥ ऐष्टिकः स पशावेव

---

तस्योपकारकमित्यनुषज्यते । एवमिति पाठे तु एवंशब्दस्यैव तस्योपकारकमित्यर्थः । **इहापीति** । चोदकानुग्रहादिति भावः। यद्यपि प्रकृतौ तदुद्देशेन कृतमेव तस्योपकारकमिति विधानाभावादुद्देशांशस्यार्थिकतयेह नातिदेशस्तथापि प्रासादार्थमारोपितस्य दीपस्य राजमार्गोपकारकत्ववदिह पश्वर्थानुष्ठितानामङ्गानां पुरोडाशोपकारकत्वं न प्रत्यक्षगम्यं, नापि तत्र प्रमाणान्तरमस्ति। तस्मात्प्रयाजादीनां पुरोडाशोद्देशेनानुष्ठानं विना तदुपकारकत्वानिर्वाहादिहापि प्रकृतिवदेव तदुद्देशेनानुष्ठानमर्थात्सिध्यतीति भावः। **साङ्गमिति** । कालादेरङ्गप्रधानसाधारण्यादिति भावः । **प्रचारेति** । प्रचारोत्तरकाल इत्यर्थः। नच पुरोडाशप्रयोगविधिः साङ्गपुरोडाशयागं विदधानोऽपि लाघवात्पश्वर्थैरेवोपकारसिद्धिमङ्गीकृत्य तत्राविद्यमानाङ्गमात्रविशिष्टमेव विधानं विदधाति नतु तत्र विद्यमानप्रयाजादिविशिष्टमपीति न शास्त्रातिक्रमप्रसक्तिरिति वाच्यम्। प्रयाजादिविशिष्टतया पुरोडाशस्याविधाने प्रयाजादीनां पुरोडाशोपकारकत्वमेव न सिध्यतीति तदर्थं प्रयाजाद्यंशेऽपि पुरोडाशप्रयोगविधिव्यापारावश्यंभावादिति भावः। एवंच प्रयाजादीनां विधीयमानतयाङ्गत्वात्तेषां क्रमादिलोपाद्वैगुण्यं च स्यादित्याह—**वैगुण्यं चेति** । **तदिहेति** । चोदकेन विहितत्वात् 'न तौ पशौ करोती'ति प्रतिषिद्धत्वाच्च पशावाज्यभागौ विकल्पितौ पुरोडाशे तु नित्यौ, तत्र यदि पशावाज्यभागावकृत्वा पुरोडाशे क्रियेते तदा पशुकाले क्रियमाणप्रयाजापेक्षया तयोर्बहुत्वव्यवहितत्वात्प्रयाजानन्तर्याभावाद्वैगुण्यं स्यात्। यदि पशावेवाज्यभागौ क्रियेते तदा यद्यप्याज्यभागयोर्न प्रयाजानन्तर्यबाधस्तथापि पाशुकयोराज्यभागयोः प्रयाजवत्पुरोडाशे प्रसङ्गे तदानन्तर्याभावात्पुरोडाशप्रधानस्य वैगुण्यं स्यादित्यर्थः। **गुणेति**। पशौ 'तिष्ठन्तं पशुं प्रयजन्ति' 'एकादश प्रयाजान्यजती'ति वचनात्पश्ववस्थितिकालीना एकादशप्रयाजास्तथा 'पृषदाज्येनानूयाजान्यजती'त्यादिवचनात्पृषदाज्यद्रव्यका एकादशानूयाजाश्चोपकारकाः, पुरोडाशे तु यथाप्रकृति हविरासादनोत्तरकालाज्यद्रव्यकाः पञ्चप्रयाजाः केवलाज्यद्रव्यकाः त्रयोऽनूयाजाश्चोपकारकास्तत्र पाशुकानां प्रसङ्गेपि पञ्चसंख्यारूपगुणस्य हविरासादनोत्तरकालस्य चाभावात्प्रयाजानां तथा केवलाज्यस्य त्रित्वसंख्यायाश्चाभावादनूयाजानां च वैगुण्यं स्यादिति भाष्ये प्रतिपादितमित्यर्थः। **वितत इति** । पाशुके तन्त्रे अङ्गजाते वितते विस्तार्यमाणे सति तन्मध्ये पतितः पुरोडाशस्तदेवाङ्गजातं स्वोपकारकत्वेन गृह्णातीत्यर्थः । **ननु** पाशुकाङ्गमध्येऽनुष्ठीयमानस्यापि पुरोडाशस्य न तदङ्गोपजीवित्वं संभवति, पुरोडाशानुष्ठानात्पूर्वं कृतानां प्रयाजादीनां विनष्टानां पुरोडाशोपकारकत्वासंभवादित्यत उक्तम् । **समाप्तिमगत इति**। सर्वैरङ्गैः संहत्य परमोपकारस्य जनयितव्यत्वाद्यावच्चरमाङ्गानुष्ठानं पूर्वानुष्ठितप्रयाजादिजन्यादृष्टलक्षणावान्तरोपकारसत्त्वावश्यंभावात् तत्सत्ताया एव प्रयाजादिसत्तारूपत्वपर्यवसानात्स्वरूपेण नाशोऽकिंचित्कर इति भावः। **ननु** प्रयाजादीनां पौरोडाशिकप्रयोगवचनेन वपाप्रचारोत्तरकाले पुरोडाशार्थतया विधीयमानानां तदर्थतया पृथगनुष्ठेयत्वात्कथं पाशुकतन्त्रोपजीवनं, पौरोडाशिकप्रयोगवचनेन प्रयाजादीनां विध्यनभ्युपगमे च तेषां पुरोडाशोपकारकत्वमेव न स्यादित्युक्तमित्यत आह—**चोदकेनेति** । पुरोडाशयागेन पशूपकारं भावयेदित्युक्ते कथमिति यागगतव्यापारविशेषात्मकप्रकारापेक्षायां प्रयाजादिजन्यदृष्टादृष्टलक्षणावान्तरोपकारवत्तासंपादनात्मको व्यापारोऽतिदेशेन पुरोडाशविषयत्वेन विनियुज्यते । तेन च विशिष्टं पुरोडाशयागं तत्प्रयोगवचनो विधत्ते प्राकृताङ्गावान्तरव्यापारवान्पुरोडाशयागः कर्तव्य इति। एष प्रयोगवचनस्य श्रौतोऽर्थः। एवं श्रुत्या विशिष्टं विदधत्प्रयोगवचनः, उपकारैः पदार्थैश्च विना तद्वृत्तासिद्धेरर्थादुपकारात्पदार्थांश्च पुरोडाशार्थतयानुष्ठापयितुं प्रवृत्तः स्वापेक्षितानैष्टिकोपकारानपदार्थांश्च पाशुकप्रयोगवचनेनानुष्ठाप्यान्दृष्ट्वा तैरेव तद्वृत्तासिद्धिं लाघवादनुमन्यमानोऽनुपपत्तिक्षयान्न स्वयं पृथक्पदार्थानुपकारांश्चानुष्ठेयतया विधत्ते। एवंच श्रुत्या चोदकसमर्पितप्रयाजादिजन्योप-

---

१ सर्वाङ्गसंयुतः.

विततो दृश्यते यदा ॥ तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम् ॥ प्राकृतानां पदार्थानां न करोत्युपसंग्रहम् ॥' पुरोडाशप्रयोगवचनो हि पशुतन्त्रे वितते तदीयेषु प्रयाजानुयाजाद्यङ्गेषु कृतकरिष्यमाणेषु तत्कार्येषु चोपकारेष्वारब्धारिप्सितरूपेण मनसि विपरिवर्तमानेषु तन्मध्ये पुरोडाशभावनां चोदकसमर्पितप्रयाजाद्यङ्गजन्योपकारयुक्तां विदधल्लाघवात्पश्वर्थैरेवोपकारैस्तद्वत्तामुपजीव्य यान्यङ्गानि पशुतो न लभ्यन्ते तद्युक्तामेव विदधाति यद्विशिष्टं च प्रधानं विधीयते तेषामेव प्रधानकालत्वं क्रमश्चाङ्गं भवति, तेन प्रधानमात्रानुष्ठानेऽपि नास्ति शास्त्रातिक्रमः । नापि क्रमलोपाद्वैगुण्यम् । तद्धि कार्यस्य प्रयाजादिजन्यस्य कृतत्वात्तन्मात्रस्य च पुरोडाशभावनयोपजीवनाद् भाष्य एव परिहृतम् । **नन्वेवं** पौर्णमास्यर्थकृताङ्गकृतानामुपकाराणामाफलापूर्वनिष्पत्तेरवस्थानादमावास्यायां न भूयः प्रयाजादीनि कर्तव्यानि स्युः । तत्र 'त्रयोदशामावास्यायामि'ति वषट्काराहुतीनामाहवनीयगतानां संख्यादर्शनं नोपपद्यते । तदिदं वारुणप्राघासिकयोर्दक्षिणोत्तरविहारयोर्मिथः प्रसङ्गनिराकरणेन निराकृतं चोद्यं 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेते'ति द्वे वाक्ये परस्परमनपेक्षमाणे द्वयोः कालयोः त्रिकस्य त्रिकस्य कृत्स्नाङ्गयुक्तस्य प्रयोगद्वयं विदधाते इति कः प्रसङ्गः । प्रसङ्गस्य प्रसङ्गे हि यथा चोदितानन्नुष्ठानात्क्रमादिलोपेन वैगुण्यान्नामावास्या स्वकार्यसाधनाय पर्याप्नुयात् । इह त्वन्यस्य तन्त्रे विहिते प्रवृत्तानपवृक्ते च मध्ये पुरोडाशो विधीयमानः प्रसङ्गमुपजीवतीति वैषम्यम् । यत्तु प्रकृतावनन्योद्देशेनानुष्ठितान्यङ्गान्युपकारकाणि दृष्टानि । इहापि पुरोडाशे तथैव कर्तव्यानीत्युक्तं तदयुक्तम् । नहि प्रकृतावुद्देशोऽङ्गमविहितत्वात् । प्रयाजादिस्व-

---

कारविशिष्टतया पुरोडाशविधानात्तेषां तदुपकारकत्वसिद्धिः । आर्थिकस्य पृथगनुष्ठानविधेरभावात्प्रसङ्गसिद्धिश्चेति लाघवसहकृतप्रयोगविधिरेव प्रसङ्गे प्रमाणमिति भावः । **ननु** यदि पुरोडाशप्रयोगवचनेन पदार्थानामुपकाराणां च पृथगनुष्ठेयतया न विधिस्तदाज्यभागावघातादिकमपि पुरोडाशेनानुष्ठेयं स्यादित्याशङ्क्याग्रिमाधिकरणे वक्ष्यमाणमत्र दर्शयन् श्लोकं व्याचष्टे **—पुरोडाशेत्यादिना** । करिष्यमाणानूयाजादिजन्योपकारस्य संप्रत्यसत्त्वात्तत्संग्रहार्थमारब्धारिप्सितरूपेणेत्युक्तिः । **तेषामेवेति** । प्रयोगविधिना स्वानुष्ठाप्याङ्गानामेव प्रधानकालत्वस्य क्रमस्य च बोधनादिति भावः । **नास्तीति** । वपाप्रचारोत्तरकाले पदार्थानां कर्तव्यत्वेनाविधानात् । नचाविधीयमानान्यङ्गानि भवन्ति । अङ्गत्वं हि नोपकारकत्वमात्रं गोदोहनादेः प्रणयनाद्युपकारकत्वेऽपि तदङ्गाभावात् । तादर्थ्या(?)धिकरणे उपकारकत्वलक्षणाङ्गत्वस्य निराकरणात् किंतु पारार्थ्यं परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणं, प्रयाजादिपदार्थानां चाविहितत्वेन तेषां पुरोडाशार्थप्रवृत्तकृतिव्याप्यत्वाभावात्पशूद्देशेन व्यापार्यतया पश्वर्थानामेव सतां प्रागुक्तरीत्या लाघवानुगृहीतचोदकसहितप्रयोगवचनानुमत्योपकारकत्वमात्रं नत्वङ्गत्वमिति भावः । अयंचार्थो न्यायरत्नमालायां स्पष्टः । **कार्यस्येति** । पृषदाज्यादिद्रव्यभेदादेकादशत्वादिसंख्याभेदात्पश्ववस्थानादिकालभेदाच्च न प्रयाजानूयाजानां कार्यभेदस्तथासत्यप्राकृतकार्यतापत्तेः, किंतु प्राकृतकार्याणामेव सतां तेषां पृषदाज्येनानूयाजानित्यादिना द्रव्यादिभेदमात्रं विधीयते । एवंच कार्यान्यथाभावापादकत्वाभावाद्गुणकालकृतवैगुण्यं न दोषावहमिति भाष्ये व्यक्तमित्यर्थः । **न भूय इति** । पौर्णमासिकाङ्गोपकाराणामेव प्रसङ्गादमावास्योपकारकत्वसंभवादिति भावः । **त्रयोदशेति** । प्रधानाहुतेर्द्वित्वात्त्रयोदशत्वं न स्यादङ्गानां पृथगनुष्ठाने तु 'पञ्च प्रयाजाः द्वावाज्यभागौ द्वे प्रधानाहुती एका स्विष्टकृत् त्रयोऽनूयाजा'इत्याहवनीयवषट्काराहुतीनां त्रयोदशत्वमुपपद्यत इति भावः । **तदिदमिति** । वरुणप्रघासेषूत्तरे विहारेऽध्वर्युकर्तृकाग्नेयादिहविरर्थकार्थमनुष्ठितानामङ्गानां दक्षिणविहारे प्रतिप्रस्थातृकर्तृकमारुत्यां प्रसङ्गादुपकारकत्वसंभवमाशङ्क्य 'तन्त्रेऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः ॥ तत्र प्रसङ्गो नत्वत्र युगपत्सर्वचोदना'दित्येकादशे परिहृतम् । अत्राप्याग्नेयादीनां षण्णामपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति युगपद्विधानेनैकस्मिन्बुद्धिस्थेऽन्यस्य विधानाभावे सत्येकविधेरन्यतन्त्रोपजीवनासंभवान्न प्रसङ्ग इति तेनैव परिहारेणेदमपि चोद्यं परिहृतमित्यर्थः । किंचात्र साङ्गयोस्त्रिकयोः कालभेदेन पृथक्विधिबलात्पृथगङ्गानुष्ठानमावश्यकमित्याह**—पौर्णमास्यामिति** । यद्वानपेक्षतया विधानात्मकत्वमेव परिहारं दर्शयति**—पौर्णमास्यामिति** । **कृत्स्नाङ्गेति** । करणविभक्तिनिर्देशेन फलार्थः पौर्णमासीकरणको यो व्यापारः प्रत्ययवाच्यस्तदङ्गत्वेन कालविधानादङ्गानामपि यागकरणकफलक्रियान्तर्भावात्कालद्वये त्रिकद्वयस्य कृत्स्नाङ्गयुक्तस्य विधानमित्यर्थः । अपूर्वाधिकरणवार्तिके तु पौर्णमास्यामनुष्ठिताङ्गावान्तरकार्याणां समुदायपूर्वं जनयित्वा प्रवृत्तत्वात्पुनरमावास्यायां पृथगङ्गानुष्ठानमावश्यकमिति परिहारान्तरमप्युक्तं**—नहीति** । तदुद्देशेनानुष्ठानं विनापि तदुपकारकत्वस्योपपादितत्वेन प्रकृतिवदिह तदुद्देशेनानुष्ठानमर्थादपि न सिद्ध्यतीति भावः । **ननु** कथमस्य प्रसङ्गशब्दवाच्यत्वमित्याशङ्क्य प्रकृष्टः

रूपमात्रं त्वङ्गं, आर्थिकस्तु तत्रोद्देशः। नचार्थिकं चोदकः प्रतिदिशति, तस्मादस्ति प्रसङ्गः। अन्यार्थानुष्ठिताङ्गस्यान्येनोपजीवनं प्रसंगः॥

पुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम्॥ २॥

## जैमिनेः परतन्त्रत्वापत्तेः[१] स्वतन्त्रप्रतिषेधः स्यात्॥ ७॥

**आज्यभागौ पुरोडाशे न स्तः स्तो वास्य चोदकः॥ लुप्तस्ततो न तौ मैवं प्रयोगांशस्य कोपनात्॥ ३॥**

**स्थितं पाशुकैरङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कर्तव्यानीति। यत्पुनराज्यभागावघातादिकमङ्गं पशौ न विद्यते तदपि पुरोडाशे कर्तव्यं न कर्तव्यं वेति संशयः। तदर्थमिदं विचार्यते—किं प्रसङ्गमुपजीवता पुरोडाशेन प्रयोगवचनमबाधित्वा चोदको बाध्यते उत चोदकस्याबाधः प्रयोगवचनस्तु बाध्यत इति। तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते, चोदकस्त्वनुमेयत्वादुर्बलो बाधमर्हति। लिङ्प्रत्ययो हि प्रयोगवचनः प्रत्यक्षो न शक्यते बाधितुं, प्रकृतिवच्छब्दस्त्वानुमानिकोऽयं बाध्यते। तेन पाशुकेन चोदकेन प्रापितान्यङ्गकार्याणि पौरोडाशिकः प्रयोगवचनः संगृह्य तद्विशिष्टं प्रयोगं विधत्ते। तैरेव च पुरोडाशस्य निराकाङ्क्षत्वाच्चोदको लुप्यते। तेन पशौ विद्यमानानामेव**

---

सङ्गः संबन्धः प्रसङ्ग इति योगवशादित्याशयेन प्रकर्षं सूचयितुमाह—**अन्यार्थेति**। ततश्च तदर्थानुष्ठितस्य तदुपकारकत्वं स्वतःसिद्धं तदर्थानुष्ठानाभावेऽप्युपकारकत्वलक्षणसंबन्धस्तु ततोऽप्यतिशयित इति प्रकृष्टः सङ्गः प्रसङ्ग इति योगः संगच्छत इति भावः। नत्विदं प्रसङ्गसामान्यलक्षणमनुघटितस्यास्य सर्वप्रसङ्गसाधारण्याभावात्। तथाहि प्रसङ्गस्त्रिविधः अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति। तत्र पदार्थस्य तत्वे सति परार्थमनुष्ठानेन परस्योपकारोऽनुष्ठानप्रसङ्गः। यथा—पशुपुरोडाशादौ पश्वर्थप्रयाजादेः। पदार्थस्य भेदे सत्यपि परार्थमुपात्तेन परस्योपकारः पदार्थप्रसङ्गः। यथा—सौमिक्याः वेदेरिष्टिपशुवेद्यपेक्षया भेदेऽपि तया सोमान्तर्गतेष्टिपशुषूपकारः। एकेन शास्त्रेण शास्त्रान्तरस्योपकारः शास्त्रप्रसङ्गः। यथा—याजनादिभिर्ब्राह्मणो धनमार्जयेदिति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकमार्त्विज्यमाक्षेप्य धृतस्योपकारः। तस्मादन्यार्थेन गृह्यमाणविशेषेणान्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसङ्ग इत्यादिकमन्यदेव प्रसङ्गसामान्यलक्षणं बोध्यम्। सूत्रार्थस्तु—तन्त्रिणा साधारणाङ्गग्रामभाजां समवाये एकदेशकालकर्तृत्वे सति यान्येकचोदनाचोदितान्याग्नेयादीनि तेषामेवैकतन्त्र्यं स्यात्, भिन्नचोदनाचोदितेषु पशुपुरोडाशादिष्वङ्गानुष्ठानस्य श्रुत्याग्नीषोमप्रणयनानन्तरलक्षणकालनिर्देशेन पश्वर्थत्वात्पुरोडाशार्थं तत्र भेदः स्यादिति॥

**जैमिनेः परतन्त्रत्वापत्तेः०॥७॥** पूर्वोक्तप्रसङ्गोपजीवनात्संगतिरित्याशयेनाह—**स्थितमिति। प्रसङ्गमुपजीवता पुरोडाशेनेति।** पुरोडाशोपजीव्येन प्रसङ्गेनेति विशेषणप्रधानोऽयं निर्देशः। चोदकप्रयोगवचनयोरन्यतरबाधस्य प्रसङ्गनिबन्धनत्वादिति ध्येयम्। **ननु** सिद्धान्ते यथा पौरोडाशिकप्रयोगवचनस्य प्रयाजाद्यनुष्ठापकत्वाभावाद्बाधस्तथा पूर्वपक्षेऽपि प्रसङ्गाङ्गीकारेण पौरोडाशिकप्रयोगवचनस्याङ्गानुष्ठापकत्वाभावाद्बाधस्तुल्य इति कथमयं संशय इतिचेत्सत्यम्। पक्षद्वयेऽपि प्रसज्यमानाङ्गानुष्ठापकत्वं प्रयोगवचनस्य नास्ति तथापि पूर्वपक्षे चोदकस्य पदार्थप्रापकस्याभावात्पुरोडाशार्थत्वेन पदार्थप्राप्तिं विना परकीयपदार्थोपजीवनासंभवाच्च पदार्थप्राप्त्यंशे प्रयोगवचनव्यापारावश्यंभावान्न प्रयोगवचनस्य सर्वथा बाधः। सिद्धान्ते तु पदार्थप्राप्तेश्चोदकत एव लाभेन पदार्थप्राप्त्यंशेऽपि व्यापाराभावात्सर्वथा बाधः। एवं चोदकस्य पदार्थप्रापकत्वे तत्प्रापकस्य प्रयोगवचनस्य बाधः प्रयोगवचनस्य प्रापकत्वे तत एव नैराकाङ्क्ष्याच्चोदकबाधः। तत्र कतरस्य बाधो न्याय्य इति युक्तः संशय इति। **ननु** प्रयोगवचनस्यापि कल्प्यत्वात्कथं प्रत्यक्षत्वमत आह—**लिङ्प्रत्यय इति**। प्रधानविधिवाक्यगतस्यैव लिङ्प्रत्ययस्य विधिप्रमाणप्रापितपदार्थजालविशिष्टभावनाविधायकतया प्रयोगविधित्वपर्यवसानाद्युक्तं प्रत्यक्षत्वं तावत्पदार्थगोचरत्वांशेन कल्प्यव्यवहारः शास्त्रे इति भावः। **प्रापितानीति**। उपस्थापितानीत्यर्थः। ततश्च पौरोडाशिकप्रयोगवचनस्य स्वयं पदार्थोपस्थापनसमर्थस्य प्रापकत्वमपि बुद्धौ विपरिवर्तमानत्वात्पशौ विद्यमानेष्वेवाङ्गेषु, नत्वाज्यभागादिषु तेषां विपरिवृत्त्यभावादिति भावः। **तैरेवेति**। गृहमेधीयन्यायेन कतिपयाङ्गैरेवोपकाराकाङ्क्षाशान्तेरिति भावः। भवेदेवं यदि प्रयोगवचनस्य पुरोडाशार्थतया पदार्थप्रापकत्वं स्यात्, नत्वेवं, तस्य विधानमात्रे व्यापारेण पुरोडाशभावनया पदार्थानां तादर्थ्येन संबन्धकरणरूपपदार्थप्रापणाशक्तेः, अतः पदार्थप्राप्त्यर्थं चोदकोऽवश्यमङ्गीकर्तव्य इत्याह

---

१ परतन्त्रतापत्तेः.

पुरोडाशेन संग्रहादाज्यभागादेरकरणमिति प्राप्ते ब्रूमः—'चोदकेनाङ्गकार्याणां पुरोडाशान्वये सति ॥ प्रयोगवचनः पश्चात्तद्विशिष्टं विधास्यति ॥' यत्खलु भावनासंबन्धितया श्रुत्यादिभिरतिदेशेन वा समर्पितं तद्विशिष्टां भावनां प्रयोगवचनो विदधाति नतु स्वयमङ्गानि भावनया संबध्नाति, विधिमात्रव्यापारात् । नच पाशुकेन चोदकेन पुरोडाशान्वयोऽङ्गानां कार्याणां वा सिध्यति । तेनावश्यं पौरोडाशिकश्चोदकोऽङ्गीकर्तव्यः । तेन तु प्राकृतेष्वङ्गेषु कार्यमुखेन भावनान्वयितया समर्पितेषु तद्विशिष्टां भावनां विदधत्प्रयोगवचनो यानि पश्वर्थतयैव प्रक्रान्तानुष्ठानानि तैस्तथाविधैरेव तद्वत्तामुपजीव्याङ्गान्तरयुक्तां विदधाति । तेन प्रयोगवचनैकदेशो यः प्रयाजादिविषयः स बाध्यते अङ्गान्तरेषु तु सोऽपि न बाध्यते इति सिद्धमाज्यभागादेरनुष्ठानम् । कश्चित्तु प्रयाजादिष्वपि प्रयोजकत्वं विधेर्न बाध्यते । सत्येव तु प्रयोजकत्वे कार्यस्यान्यार्थैरेव सिद्धेर्नानुष्ठानम् । एवंच प्रयोजकत्वाद्विशेषो भवति । इतरथा प्रसङ्ग्यप्रयोजकयोरविशेषः स्यादित्याह तदिदमसारम् । यदि शास्त्रेण पुरोडाशार्थतया वपाप्रचारादूर्ध्वकाले प्रयाजादीनि कर्तव्यानीति बोध्यते कस्तदतिक्रमेणान्यार्थाङ्गान्युपजीवितुं क्षमः । यदप्युच्यते प्रयोजनमप्यनुष्ठाने हेतुः,[1] नचेह पृथगनुष्ठाने प्रयोजनमस्ति अन्यार्थैरेव कार्यसिद्धेरिति, तदपि यत्किंचित् । यदि शास्त्रात्पुरोडाशार्थतयावगतं पृथगनुष्ठानं तदा तद्बलादेव फलं कल्प्यतां पृथगनुष्ठितैरेव पुरोडाशस्योपकारः सिध्यति न पश्वर्थैरिति । यत्तु प्रयोजकत्वलोपे सत्यप्रयोजकादविशेषापत्तिरिति, तदपि बुद्धिमान्द्यम् । अप्रयोजके प्रयुक्तिसामर्थ्यमेव नास्ति प्रसङ्गी तु प्रयुक्तिसमर्थ एव सन्नन्यार्थानामुपजीवनं लाघवात्करोतीति विशेषः । यदिच सत्यपि प्रयोजकत्वे कार्याभावादननुष्ठानं ततो वरुणप्रघासेषूत्तरवैहारिकैरेवाङ्गैर्मारुत्याः कार्यसिद्धेः सत्यपि देशभेदे कर्तृभेदे च विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादित्यनेन न्यायेन पृथगङ्गानि न क्रियेरन् । किंच वपाप्रचारानन्तरकाले पुरोडाशो यदि सकलप्राकृताङ्गयुक्त एव कर्तव्यतया चोद्यते ततस्तस्मिन्नेव काले सर्वाङ्गेषु प्राकृतेन क्रमेण कार्यतयावगम्यमानेषु यद्यपि कथंचित्प्राकृतानां प्रयाजाद्यङ्गानां कार्याणि निष्पन्नान्यनपवृक्तानि सन्निहितानीति कृत्वा तानि न क्रियेरन्, तथापि यानि तस्यामेव वेलायां पश्वर्थेनाप्यननुष्ठितान्यनूयाजादीनि तानि क्रमवशात्पौरोडाशिकेडोपाह्वानानन्तरमुपस्थितानि कर्तव्यतया च पुरोडाशप्रयोगवचनेन बोध्यमानानि किमिति न क्रियन्ते । नहि तदनुष्ठानं

---

—**चोदकेनेति** । **नचेति** । पश्वर्थताबोधकस्य तस्य पुरोडाशार्थत्वबोधनासामर्थ्यादिति भावः । **अङ्गान्तरेति** । पृथगनुष्ठेयतयाङ्गान्तराणि विदधातीत्यर्थः । **तेनेति** । प्रयोगवचनस्य प्रत्यक्षत्वेऽपि चोदकतः पदार्थप्राप्त्युत्तरकालीनस्य तत्प्रापकचोदकापेक्षत्वात्प्रयोगवचनस्यैव बाध इत्यर्थः । प्राभाकरास्तु आज्यभागादाविव प्रयाजादिष्वपि पौरोडाशिकप्रयोगवचनस्य व्यापारमङ्गीकृत्य तदंशेऽपि प्रयोजकत्वान्न बाधः । प्रयोजकैकस्वभावत्वाद्विधेः परकीयतन्त्रमध्ये विधानमात्रेण तस्य तत्स्वभावानपायात्स्वयं प्रयोजकोपि विधिः तन्त्रमध्ये विधानात्परप्रयुक्तिमुपजीवतीति न पृथगनुष्ठानम् । **नन्वे**तावता विधेः प्रयोजकत्वाभावस्तथासति प्रसङ्गिनः पुरोडाशादिविधेरप्रयोजकस्य वाजिनादिविधेश्च विशेषो न स्यादित्याहुस्तन्मतमाह—**कश्चिदिति** । **प्रयाजादीनीति** । प्रयोजकत्ववादिभिस्तैः प्रयाजादिकर्तव्यतायामविधिव्यापाराङ्गीकारादिति भावः । अत्र तदुक्तं परिहारमनुवदति—**यदपीति** । **प्रयोजनमपीति** । न केवलं विधानमात्रमनुष्ठाने प्रयोजकं किंतु प्रयोजनमपीत्यर्थः । **यदीति** । तस्माच्छास्त्रेण पृथग्विधिबलात्तदर्थानुष्ठितैरेव तदुपकारः सिध्यतीत्यवश्यमङ्गीकार्यमिति भावः । **नास्तीति** । अतएव वाजिनापचारे दध्यानयनस्य पृथगनुष्ठानमिति भावः । **प्रसङ्गीति** । अतएव पशावविद्यमानाज्यभागादिप्रयुक्तिरिति भावः । **देशेति** । दीक्षणोत्तरविहारलक्षणेत्यर्थः । 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वा'- दिति पूर्वाधिकरणगुणसूत्रं गुणकालविकारान्न तन्त्रभेदः स्यात्सत्यपि तद्विकारेऽस्याङ्गजन्योपकारस्याविकृतत्वादिति तदर्थः । किंच यद्यस्मन्मतरीत्या पौरोडाशिकविधिर्विधानदशायामेव प्रसङ्गसिद्धिं पर्यालोच्य तद्व्यतिरिक्ताङ्गयुक्तमेव स्वार्थं विधत्त इति न स्वीक्रियते किंतु विधानदशायां सर्वाङ्गविशिष्टस्वार्थं विधत्ते, पश्चात्त्वनुष्ठानदशायां परकीयानुष्ठानमुपजीवतीत्यभ्युपेयते तदा दोषमाह—**किंचेति** । तत्पक्षे हि अङ्गकार्यनिष्पत्तिः पृथगङ्गानुष्ठानाभावप्रयोजिका । नच पुरोडाशेडोपाह्वा-

---

१ प्रयोजनमनुष्ठाने हेतुः.

निष्प्रयोजनं, तत्कार्यस्येदानीमनिष्पन्नत्वात्, अनिष्पन्नस्य च प्रतीक्षणे कारणाभावात्, अस्मत्पक्षे पुनः पशुप्रयोगवचनसंनिधापितान्यङ्गान्युपजीवन्पुरोडाशविधिर्योदृशानि तेन पूर्वापरकालवर्तीनि संनिधापितानि तादृशान्येव लाघवतृष्णोपजीव्याधिकानामेव प्रयोगं विधत्ते इति युक्तं भाविनामपि प्रसङ्गोपजीवनेनानुष्ठानं लाघवमेव हि प्रसङ्गे कारणम्। आह च—'अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना ॥ प्रसङ्गं तदभावे च स्याद्भूयिष्ठप्रकल्पना ॥' तस्मात्प्रयोगवचनैकदेशो लुप्यत एव। अधिकाङ्गविषयस्त्वसौ न लुप्यत इति सिद्धमाज्यभागादेरनुष्ठानम् ॥

सोमे दार्शिकवेद्यकरणाधिकरणम् ॥ ३ ॥

**नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ [अकर्म वा कृतदृषा स्यात् ॥ ९ ॥]**

**सोमे वेद्यां कृतायां यदिष्टिप्रकृतिकं भवेत् ॥ तत्र कार्यैष्टिकी वेदिर्न वा वेदिस्तु सौमिकी ॥ ४ ॥**
**प्रचाराय हविःसादनाय कार्यैष्टिकी पृथक् ॥ नैवं सादनमप्यत्र कर्तुं शक्यं ततो न सा ॥ ५ ॥**

ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्तन्ते तेषु महावेदेर्भेदेन प्राकृती वेदिः कर्तव्या नेति संदेहे यद्यप्यङ्गप्रधानार्था महावेदिस्तथापि प्रचारार्थत्वान्न हविरासादनार्थायाः प्राकृत्याः कार्यं साधयतीति तदर्थं प्राकृती कर्तव्या। नैवम्। प्रचारार्थापि प्रसङ्गाद्धविरासादनमपि शक्नोति साधयितुम्। नहि तस्यां क्रियमाणं हविरासादनं विगुणं भवति। वेद्यां हि हविरासादनं प्रकृतौ श्रुतं न स्वार्थायामेवेति। तस्मात्प्रचारार्थैव प्रसङ्गादासादनेनोपजीव्यते ॥

---

नकाले अनूयाजादिभाव्यङ्गकार्यं निष्पन्नमिति तेषु प्रसङ्गेन सिद्ध्युपजीवनासंभवात्पृथगनुष्ठानं स्यात्। स्वपक्षे तु प्रसङ्गेऽङ्गकार्यनिष्पत्तिर्न प्रयोजिका किंतु पौरोडाशिकविधिर्विधानदशायां पशुप्रयोगवचनसंनिधापितान्यङ्गान्यनुमत्य लाघवात्तद्व्यतिरिक्ताङ्गमात्रं विधत्ते इति विधिलाघवमेव प्रसङ्गे प्रयोजकं पशुप्रयोगविधिकृतं च संनिधानं भाव्यङ्गानामपि तुल्यमिति सिद्ध्यति तत्रापि प्रसङ्ग इत्यर्थः। **अन्यार्थेति**। अन्यार्थानुष्ठितैरङ्गैः प्रसङ्गे प्रसङ्गादुपकारे सति अल्पल्पेष्वाज्यभागादिष्वेव प्रयोगविधिव्यापारकल्पना तदभावे तु बहुषु प्रयाजादिष्वपि तत्कल्पनेत्यर्थः। सूत्रार्थस्तु—जैमिनेराचार्यस्य मते कर्तव्यमाज्यभागादि यतः यस्य स्वतन्त्रस्य स्थाने परतन्त्रमापद्यते तस्यैव प्रतिषेधः, आज्यभागादेस्तु स्थाने न किंचित्पाशुकमापततीति ॥

**नानार्थत्वात्०** ॥ ८ ॥ आज्यभागादिकार्यस्यान्यतोऽसिद्धेः यथा तत्करणं तथा प्राकृतवेदेरपीत्युत्थितेः संगतिः। **ननु** सौमिक्या वेदेरङ्गप्रधानार्थत्वस्य तृतीये स्थापितत्वादैष्टिकवेदिर्बाधितत्वादेव न कर्तव्या, सौमिकी वेदिश्च देशरूपतया देशकालयोश्चाङ्गप्रधाने तन्त्रत्वात्तन्त्रेण सोमे तदङ्गभूतेष्वैष्टिकेषु चोपकरिष्यतीत्यत आह—**यद्यपीति**। **प्रचारेति**। अवदानग्रहणादिजातं प्रचार इति धूर्तस्वामी। प्रचारार्थत्वं च 'इयति शक्ष्यामहेऽस्यां कर्तुमित्यनेनावगम्यत' इति तन्त्ररत्ने। ततश्च प्रचारार्थत्वावगमबलेन प्रचारद्वारकमेवाङ्गप्रधानार्थत्वं वाच्यमित्यङ्गानामपि प्रचार एव तस्यास्तन्त्रेणोपकारकत्वं नत्वङ्गप्रचारात्पूर्वभाविनि तद्धविरासादनेऽपीति तदर्थं प्राकृती कर्तव्येत्यर्थः। **नच** तन्त्रत्वासंभवेऽपि प्रसङ्गादुपकारो हविरासादनेऽपि संभवतीति वाच्यम्। सौत्यादहः पूर्वं क्रियमाणैष्टिककर्मणः सोमप्रयोगमध्यपातित्वाभावेन तेषु प्रसङ्गासंभवादिति पूर्वपक्ष्यभिमानः। **प्रसङ्गादिति**। सोमप्रधानप्रयोगस्य सौत्यदिनकर्तव्यत्वेऽपि तदीयप्रयोगविधिगोचराङ्गानाममीषोमीयादिदिनेष्वपि कर्तव्यत्वेन तन्मध्यपतितैरैष्टिककर्षविधिभिः सोमप्रयोगवचनसंनिहिततया वेद्याः प्रसङ्गमङ्गीकृत्य तद्व्यतिरिक्ताङ्गानामेव विधानसंभवात्प्रसङ्गेनानुपपत्तिरिति भावः। सौमिकवेदेरैष्टिकवेदेश्च परिमाणभेदेन वैगुण्यमाशङ्क्याह—**नहीति**। कालादिभेदवत्परिमाणभेदोऽपि न वैगुण्यावह इति भावः। एवमपि तदुद्देशेनानुष्ठानाभावादनुपकारकत्वमाशङ्क्याह—**वेद्यां हीति**। उद्देशस्य प्रकृतावार्थिकत्वान्न दोष इति भावः। सूत्रे नानार्थत्वात्प्रचारहविरासादनलक्षणकार्यभेदादित्यर्थः ॥

---

१ साध्यानामपि प्रसङ्गेनोपजीवनेन. २ स्वांशो न.

सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणम् ॥ ४ ॥

**पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥ [न्याय्यानि वा प्रयुक्तत्वात् अप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥]**

**सौम्यचर्वादिहोमः किं सौमिकैरैष्टिकैरुत ॥ कार्यसिद्धेः सौमिकैः स्यादवैगुण्यादिहैष्टिकैः ॥ ६ ॥**

सोमाङ्गेष्वैष्टिकेषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन् उत जुह्वादीनि पात्राणि पृथक्प्रयोक्तव्यानीति संदेहे सौमिकैरेव होमार्थैरैष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्गं मन्यते । जुह्वादिकार्याणि होमादीन्यन्यैः क्रियमाणानि विगुणीभवेयुः । नचात्रान्यैरेव होमादयः कृताः येन पृषदाज्यानूयाजवन्न पुनः क्रियेरन्, तेन कर्तव्याः सन्तो होमादयः साद्गुण्यसंभवे किमिति विगुणाः क्रियन्ते तस्मान्न पात्रप्रसङ्गः ॥

शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् ॥ ५ ॥

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥**

**श्रप्यः पशुपुरोडाशः शामित्रेऽग्नावथोदिते ॥ शालामुखीयनाम्नाग्नौ पशुतन्त्रगतत्वतः ॥ ७ ॥**

**श्रपणं विहितं गार्हपत्ये सोऽत्र प्रयुज्यते ॥ प्राग्वंशपूर्वभागे च होमवैगुण्यहानये ॥ ८ ॥**

अग्नीषोमीये पशौ शामित्रोऽग्निर्हविःश्रपणार्थः श्रुतः । पशुतन्त्रोपजीवी च पुरोडाश इति स्थितम् । अतः सोऽपि तत्रैव श्रपयितव्य इति मन्यते । न पशुश्रपणेन पुरोडाशः श्रपितो भवति तेन पृथक्श्रपयितव्यः पुरोडाशश्चोदकप्राप्ते गार्हपत्ये श्रपयितव्योऽवैगुण्यात् ॥

कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् ॥ ६ ॥

**श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्, प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥**

**शालामुखीयवह्नौ किं श्रप्यतां कौण्डपायिने ॥ किंवा प्राजहिते वह्नौ चोदकप्रापितोऽग्रिमः ॥ ९ ॥**

**प्राग्वंशे पश्चिमो वह्निर्भवेत्प्राजहितोऽत्र सः ॥ अग्निहोत्रेति नाम्नासौ नामासौ लिङ्गतो बली ॥ १० ॥**

कुण्डपायिनामयनेऽग्निहोत्रे किं प्राजहिते मुख्ये गार्हपत्ये श्रपणमुत शालामुखीय इति संशये

---

**पात्रेषु च प्रसङ्गः०** ॥ १० ॥ **ऐष्टिकेष्विति** । सवनीयपश्वादिष्वित्यर्थः । **होमार्थैरिति** । अनेन यदि प्रचाराथतयापि वेद्या प्रकृतहविरासादनसिद्धिस्तदा किमु वक्तव्यं होमार्थतया समानार्थैः पात्रैः प्रकृतहोमसिद्धिरित्युत्थितेः संगतिरिति सूचयति । यदि पृथक्कर्तव्यानां साद्गुण्यलिप्सया न प्रसङ्गस्तदा हविरासादनस्यापि पृथक्कर्तव्यत्वात्तत्रापि सौमिकवेदेः प्रसङ्गो न स्यादिति भावः । **जुह्वादिभिरिति** । अङ्गे हि प्रयुक्ते न तद्गुणार्थं प्राकृतस्य पुनःप्रयोग इति वेद्यां हवींष्यासादयतीति वेदित्वेनैव प्राकृतवेदेरङ्गत्वेन वेदिलक्षणाङ्गप्रयुक्तौ सत्यां तत्र गुणहानावप्यासादने प्रसङ्गो युक्त इह तु नाङ्गप्रयुक्तिः जुह्वादीनां चमससाधारणमात्रत्वेन नाङ्गत्वं येनाङ्गप्रयुक्तिः स्यात् किंतु जुहूत्वादिना 'जुह्वा जुहोती'ति वचनात् । ततश्च जुहूरूपस्याङ्गस्यैवाप्रयुक्तत्वात्पुनरनुष्ठेयानां जुह्वादिभिरङ्गैरनुष्ठानाय प्राकृतपात्रप्रयुक्तिरिति वैषम्यमिति भावः ॥

**शामित्रे च पशुपुरोडाशः०** ॥ १२ ॥ सोमाहुतेरैष्टिकाहुतेश्च भिन्नकार्यत्वात्सोमाहुत्यर्थानां चमसादीनामैष्टिककार्याहुतिशक्त्यनवगमात्प्रसङ्गाभावेपि प्राकृतस्य पशुश्रपणस्य पुरोडाशश्रपणस्य च कार्यभेदाभावेन शामित्रस्य च प्राकृतकार्यश्रपणे दृष्टसामर्थ्यत्वादस्ति प्रसङ्ग इति विशेषाशङ्कानिराकरणार्थमिदमिति तन्त्ररत्ने तत एव च संगतिः । **ननु** गार्हपत्यस्यापि दृष्टसामर्थ्यत्वाविशेषात्तत्र वा हविःपाकः किं न स्यात्प्रत्युतावैगुण्यार्थं तत्रैव पाको युक्त इत्यत आह—**पशुतन्त्रेति** । ततश्च पौरोडाशिकविधिर्लाघवाय पशुतन्त्रमुपजीवन्नङ्गान्तरमिव शामित्रमप्युपजीवति, इतरथा गार्हपत्ये तद्व्यापारकल्पनावश्यंभावाद्गौरवं स्यादिति भावः । **न पश्विति** । भवेदेवं लाघवं यदि पुरोडाशश्रपणेऽपि विधिव्यापारो न कल्पनीयो भवेत् । इह तु पशुश्रपणेन पुरोडाशश्रपणकार्यासिद्धेरवश्यंभाविनि श्रपणव्यापारे तत्साद्गुण्यार्थं तद्विशेषणे गार्हपत्येपि व्यापारो न दुष्यतीति न लाघवादर इति भावः । **गार्हपत्ये इति** । शालामुखीय इत्यर्थः । सूत्रे इतरस्य गार्हपत्यस्य पौरोडाशिकविधिना प्रयुक्तत्वादित्यर्थः ॥

**श्रपणं चाग्निहोत्रस्य०** ॥ १३ ॥ प्राजहितशब्दः पूर्वाचार्यसंज्ञया पुराणगार्हपत्याभिधायक इत्याशयेन प्राजहितशब्दं व्याचष्टे—**मुख्य इति** । **शालामुखीय इति** । शालायाः मुखे शालायाः पूर्वस्मिन्भागे स्थित इत्यर्थः । पूर्ववदिहापि

चोदकप्राप्ते शालामुखीये स्यात् । 'ज्योतिष्टोमे हि शालामुखीय एवात ऊर्ध्वं गार्हपत्यो भवती'ति शालामुखीयो गार्हपत्यकार्ये विहितश्चोदकपरम्परया कुण्डपायिनामयने प्राप्तस्तस्मात्तत्र श्रपणम् । सत्यम्। चोदकादेवं, अग्निहोत्रनामधेयात्तु नैयमिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्रापितं, तच्चोदकाद्बलीय इत्युक्तम्। केचित्तु 'कृत्वाचिन्तामाहु:। असत्यपि नामधेये 'गार्हपत्ये हवींषि श्रपयती'-त्यस्यानारभ्यवादस्य सर्वार्थत्वादुपदेशतः प्राप्तः प्राजहितश्चोदकप्राप्तं शालामुखीयं बाधत इति' तत्तु नैवम् । अनारभ्यवादस्य हविःश्रपणद्वारकत्वात्कुण्डपायिनामयने च हविःश्रपणस्याश्रुतत्वात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेर्द्विरुक्तत्वान्नोपदेशसंभवः । तस्मान्नाम्नैव प्राजहितप्राप्तिः । ननु सिद्धं नाम्नः प्राबल्यं सप्तमे, सत्यं, इह तु प्रसङ्गनिराकरणार्थं सूत्रम्। शालामुखीयस्तावदस्मिंस्तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः स एव प्रसङ्गादग्निहोत्रश्रपणमपि साधयिष्यति विनापि तादर्थ्येनेति शङ्का सेयं निराक्रियते। अन्यार्थस्य नामप्राप्तेन प्राजहितेन बाधितत्वादिति पूर्ववत्साद्गुण्यसंभवे वैगुण्यानाश्रयणादित्यस्यैव न्यायस्य प्रपञ्चोऽयम् ॥

---

शालामुखीये पाक इत्युत्थितेः संगतिः । **ननु** दर्विहोमेऽस्मिन्कथं चोदकतः शालामुखीयप्रवृत्तिरित्यत आह—**ज्योतिष्टोम इति । चोदकेति** । ज्योतिष्टोमाद्द्वादशाहं द्वादशाहाद्गवामयनं गवामयनात्कुण्डपायिनामयनमित्येवं परम्परयेत्यर्थः । दर्विहोमेऽस्मिन्स्वतश्चोदकाच्छालामुखीयस्य प्राप्त्यभावेऽपि कुण्डपायिनामयने शालामुखीयस्य चोदकात्प्राप्त्या तदङ्गभूतदर्विहोमहविःश्रपणेऽप्यस्ति तत्प्राप्तिरिति भावः । **मुख्य एवेति** । शालामुखीयस्य च गार्हपत्यकार्ये विधानमात्रं नतु तस्य मुख्यं गार्हपत्यत्वमिति भावः । प्राभाकरास्तु नामप्राबल्यस्य सप्तम एव स्थितत्वेन पूर्वपक्षानुत्थितेः कृत्वाचिन्तेत्याहुस्तन्मतमाह—**केचिदिति** । ननु तर्हि चोदकप्राप्तशालामुखीयबाधकाभावान्मुख्यगार्हपत्य एव श्रपणमिति सिद्धान्तस्तन्मते कथमित्यत आह—**असत्यपीति** । नन्वनारभ्याधीतस्यापि 'यदाहवनीये जुह्वती'त्यस्य प्राकृतवैकृतहोमसाधारण्यवदस्यापि प्राकृतवैकृतश्रपणसाधारण्यं किं न स्यादित्यत आह—**कुण्डपायिनामिति** । यदाहवनीयवाक्यस्यापि न सर्ववैकृतसाधारण्यं किंतु यत्र वैकृतेष्वामनहोमादिषु प्रत्यक्षतो जुहोतिः श्रुतस्तन्मात्रसाधारण्यमितरथा द्विरुक्तदोषापत्तेः । एवं गार्हपत्ये हवींषि श्रपयतीत्यस्या यत्र विकृतौ प्रत्यक्षतः श्रपणं विहितं तन्मात्रसाधारण्येऽपि कुण्डपायिनामयनगतहविःश्रपणस्य प्रत्यक्षविहितत्वाभावात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेः प्रकृतौ वा द्विरुक्तत्वादिति तार्तीयन्यायान्नोपदेशतो मुख्यगार्हपत्यप्राप्तिरित्यर्थः । **ननु** कुण्डपायिनामयनगताग्निहोत्रे न चोदनालिङ्गातिदेशेनान्यतः श्रपणप्राप्तिस्तस्य दर्विहोमत्वेनापूर्वत्वात्, नापि नामधेयान्नैयमिकाग्निहोत्रतः श्रपणप्राप्तिः । परैर्नाम्नातिदेशो नास्तीति कृत्वाचिन्तयाधिकरणस्य प्रवर्तितत्वेन नाम्ना श्रपणप्राप्त्यसंभवात् । तस्मात्प्रकृतितः प्राप्यमाणस्य सह प्राजहितेन प्राप्तेर्द्विरुक्तत्वमित्येतदयुक्तमितिचेत्, सत्यम् । परैरपि नामातिदेश एव नास्तीति कृत्वाचिन्तयाधिकरणं न प्रवर्तयितुं शक्यं, तथासति श्रपणस्यैवात्र प्राप्त्यभावेन कुत्र श्रपणमिति विचारस्यैवानुपपत्तेः श्रपणस्यात्र प्रत्यक्षविध्यभावाद्दर्विहोमत्वेन चोदनालिङ्गातिदेशाभावाच्च । तस्मात्परैरपि नामधेयेन नैयमिकाग्निहोत्रतः श्रपणप्राप्तिमङ्गीकृत्य सत्यपि नाम्नातिदेशे तस्य प्राबल्यं नास्तीति कृत्वाचिन्ता प्रवर्तनीया । तथासति यदा नैयमिकाच्छ्रपणं प्राप्यते तदा सहैव प्राजहितेन प्राप्नोतीति युक्तमेव द्विरुक्तत्वाभिधानमिति । नचैवं नाम्ना प्राजहितप्राप्तिसंभवेपि तस्य प्राबल्याभावेन कुण्डपायिनामयने चोदकतः शालामुखीय एव प्राप्नुयादिति तद्बाधनार्थमनारभ्यविधेरातिदेशिकश्रपणविषयत्वमपि संभवतीति न द्विरुक्तत्वमिह दोषावहमिति वाच्यम् । तथासति द्वादशाहादिष्वपि श्रपणस्यातिदेशिकतया तत्रापि चोदकप्राप्तशालामुखीयबाधेनानारभ्यविधिना मुख्यगार्हपत्यस्यैव विधिप्रसङ्गेन चोदकपरम्परया कुण्डपायिनामयनगते श्रपणे शालामुखीयप्राप्तेरेव संभवापत्त्यानारभ्यविधेस्तत्र शालामुखीयबाधनार्थत्वानुपपत्तेः । तथासति द्वादशाहादिष्वेवास्य विचारस्य प्रवर्तयितुं शक्यत्वेन सूत्रभाष्ययोः कुण्डपायिनामयनपर्यन्तधावनानुपपत्तिस्तत्र कृत्वाचिन्ता श्रपणक्लेशाभावादिति दिक् । **ननु** सर्वगार्हपत्यकार्यार्थत्वे **तन्त्रमेव स्यान्न प्रसङ्ग** इति शङ्कां निराकर्तुं विनापि तादर्थ्येनेत्युक्तम् । मासाग्निहोत्रस्याप्राकृतकार्यतया न चोदकात्तदर्थतया गार्हपत्यप्राप्तिरिति तन्त्रत्वासंभवात्प्रसङ्ग एव युक्त इति भावः । अन्यार्थस्य प्रधानार्थस्य शालामुखीयस्येत्यर्थः । **अन्वयमपि** न्यायः पूर्वतराधिकरणे व्युत्पादितः । नच पूर्वाधिकरणवदिह विशेषाशङ्कास्तीत्यत आह—**प्रपञ्च इति** ॥

हविर्धानशकटान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणम् ॥ ७ ॥

**हविर्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात् ॥ १४ ॥[अप्रसिद्धिर्वाऽन्यदेशत्वा-त्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १५ ॥ अनसां च दर्शनात् ॥ १६ ॥]**

**हविर्धानोर्ध्वकाले किमौषधार्थमनोन्तरम् ॥ नास्त्यस्ति वा न शक्तत्वाद्देशभेदादिनान्तिमः ॥ ११ ॥**

ज्योतिष्टोमे हविर्धानसमाख्ययोः सोमधारणार्थयोरनसोः प्रवर्तने कृते यानि सवनीयपुरोडाशादीनि तेषां किं तयोरन्यतरत्र निर्वपणमुतात्रानोन्तरमुपादेयमिति संदेहे 'अनसोऽधिनिर्वपती'त्यस्य प्रकृतितः प्राप्तसोमधारणार्थाभ्यामपि प्रसङ्गतः सिद्धेर्न निर्वापार्थेऽनोन्तरमुपादेयम् । सत्यमेतावत्संभवति । देशस्तु निर्वापस्य 'अपरेण गार्हपत्यं निर्वपती'ति प्रकृतितः प्राप्तयोर्हविर्धानयोर्न संपद्यते तयोर्मन्त्रवन्नियमवच्च महावेद्यामवस्थापितयोः प्राग्वंशनयनासंभवात्तस्मादनोन्तरमुपादेयमवैगुण्यात् ॥

प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् ॥ ८ ॥

**तद्युक्तं च कालभेदात् ॥ १७ ॥**

**दीक्षाजागरणं प्रायणीयादौ तद्भवेन्न वा ॥ अदृष्टार्थं ततस्तत्स्यान्न रक्षार्थत्वतोऽन्यदा ॥ १२ ॥**

दीक्षाकालं जागरणमाम्नातं दीक्षोत्तरकालेषु प्रायणीयादिषु कर्मसु किं चोदकप्राप्तं दार्शपौर्णमासिकं जागरणं कर्तव्यं नेति संशये सोमार्थेन दीक्षाकालीनेन जागरणेन प्रसङ्गात्कार्यसिद्धेर्न पृथक्तेषु जागरणं कर्तव्यम् । यदि तावदप्रमादार्थं जागरणं यज्ञसाधनरक्षार्थं ततो न दीक्षाकालेषु रक्षितेषु तदुत्तरकालानि रक्षितानि संभवन्तीति तदर्थं पुनर्जागरितव्यम् । अथादृष्टार्थं जागरणं तथापि सौमिकेन जागरणेनैवैष्टिकजागरणजन्यादृष्टसिद्धौ प्रमाणाभावात्तदर्थं कर्तव्यमेव प्राकृतं जागरणम् ॥

विहारभेदेन मन्त्रभेदाधिकरणम् ॥ ९ ॥

**मन्त्राश्च संनिपातित्वात् ॥ १८ ॥**

**विहारभेदे निर्वापमन्त्रादेस्तन्त्रता न वा ॥ तन्त्रं द्वयोः स्मृतेः सिद्धेरुत्तमोक्त्या पृथग्भवेत् ॥ १३ ॥**

वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्निर्वापादिमन्त्राः किं तन्त्रेणाध्वर्युणा प्रतिप्रस्थात्रा वाऽन्यतरेण वक्तव्या उतोभाभ्यामपि भेदेनेति संशये अन्यतरेणाप्युच्यमानाः शक्नुवन्त्युभयोः स्मृतिं कर्तुमिति

---

**हविर्धाने० ॥ १४ ॥ सिद्धेरिति** । ततश्चानसोऽधिनिर्वपतीत्यनस्त्वाकारेणैवाङ्गत्वाद्धविर्धानयोर्निर्वापे अनस्येव निर्वापस्य सिद्ध्या वैगुण्याभाव इति पूर्ववैधर्म्येणोत्थितेः संगतिर्बोध्या । अङ्गे प्रयुक्ते तद्गुणार्थं पुनरङ्गप्रयोगस्यायुक्तत्वाद्वेदिप्रसङ्गस्थले परिमाणहानिवदिह गार्हपत्यपाश्चात्यलक्षणदेशहानिर्न दोष इति भावः । भवेदेवं यदि देशेन न संयोगः स्यान्नत्वेवं किंतु 'अपरेण गार्हपत्यं निर्वपती'ति वचनान्निर्वापस्यैवाङ्गं देश इति वेदिप्रमाणवैलक्षण्यमभिप्रेत्य सिद्धान्तमाह—**देशस्त्विति । न संपद्यत इति** । तयोरुत्तरवेदिसमीपे स्थितत्वादिति भावः । **ननूत्तरवेदिसमीपस्थितयोरपि पुनः** प्राग्वंशे नयने सति देशः संपद्यत इत्यत आह—**तयोरिति** । अत्र रमेधामित्यादिमन्त्रोऽनभ्यस्तत्वादिश्च नियमो बोध्यः । तथाच सोमार्थं पूर्वं मन्त्रेण कृतं हविर्धानप्रवर्तनं स्थापनं च मन्त्रवदनर्थकं स्यात् पुनःप्रवर्तनस्थापनयोरनुष्ठाने त्वावृत्तिरशास्त्रीया स्यादिति सर्वथा प्रधानभूतः सोमो विगुणः स्यादिति भावः । सूत्रे निर्वपणार्थं निर्वपणरूपकार्थमित्यर्थः ॥

**तद्युक्तं च कालभेदात् ॥ १७ ॥ आम्नातमिति** । 'यां प्रथमां रात्रिं जागर्ती'त्यनेनेति शेषः । **प्रायणीयादिष्विति** । ऐष्टिकस्य जागरणस्यौपवसथी रात्रिर्निमित्तमिति यानि सोमाङ्गभूतान्यैष्टिकानि सौमिकजागरणकालानि स्वकालोपवसथयुक्तानि तद्विषयोयं प्रायणीयादिशब्द इति बोध्यम् । इह तर्हि अस्तु प्रसङ्गो वैगुण्याभावादित्युत्थितेः संगतिः । **सोमार्थेनेति** । जागरणमात्रेण व्यापारान्तरं विना यज्ञसाधनरक्षणासंभवेनादृष्टार्थमेव जागरणं तत्र चैष्टिकसौमिकयोर्जागरणस्वरूपैक्यात्तत्कार्यमदृष्टमप्येकरूपमेव युक्तमिति सोमार्थेनैवेष्टिककार्यसिद्धेः क्रतुसमाप्तिपर्यन्तं तददृष्टावस्थितेरिति भावः । व्यापारान्तरद्वारापि दृष्टार्थत्वसंभवे तदेव युक्तमित्याशयेन सिद्धान्तमाह—**यदीति** । अभ्युपगमवादेनाह—**अथेति** । जागरणस्वरूपैक्येऽपि विधिभेदेन तद्गम्यादृष्टस्यापि भेदान्न सौमिकेनैष्टिककार्यसिद्धिरिति भावः । सूत्रार्थस्तु—दीक्षाकालयुक्तं जागरणं न प्रसज्येत कालभेदादिति ॥

**मन्त्राश्च संनिपातित्वात् ॥ १८ ॥ शक्नुवन्तीति** । निर्वपतिधातूच्चारणेनोभयोरपि तद्गोचरस्मृत्युपपत्तेरिति

मन्यते। निर्वपामीत्यादेरात्माभिवादित्वान्न तन्त्रता संभवतीत्युभयोः पृथक् पृथक् प्रयोगः। सकृदसकृदनुष्ठानप्रसङ्गात्तन्त्रावापचिन्तापीयमत्र कृता॥

दीक्षणीयादिष्वग्न्यन्वाधानस्याभावाधिकरणम्॥ १०॥

**धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते॥ १९॥**

**अन्वाधानं दीक्षणीयादिषु स्यान्नास्ति वाऽस्ति तत्॥ चोदकान्नास्ति सौमिक्यविहारेण धृतत्वतः॥ १४॥**

सोमाङ्गेष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं कार्यं नेति संदेहे चोदकानुग्रहात्कर्तव्यमिति प्राप्ते ब्रूमः—धारणार्थं तु तत्, सोमार्थेन विहृतस्य धारितस्य चाग्नेस्तेनैव धारणेन प्रसङ्गसिद्धकार्यत्वान्न पुनर्धारणं कर्तव्यम्। ननु चाक्रतुसमाप्तेः पुनःपुनः प्रयत्नेन धारयितव्य एवाग्निः। सत्यम्। तथापि नाग्न्यन्वाधानं कार्यम्। तद्धि विहृतस्याग्नेराद्यो यः समिन्धनव्यापारो धारणार्थस्तद्रूपं, नहि तत्प्रकृतौ पुनःपुनः कृतं, तस्मादत्रापि धार्यमाणस्य धारणायाग्न्यन्वाधानं न कर्तव्यम्॥

दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम्॥ ११॥

**तथा व्रतमुपेतत्वात्॥ २०॥ [विप्रतिषेधाच्च॥ २१॥ सत्यवदिति चेत्॥ २२॥ न संयोगपृथक्त्वात्॥ २३॥]**

**व्रतोपायनमेष्वस्ति न वा चोदकतोऽस्ति तत्॥ उपेतस्यापरित्यागे विरोधान्नास्ति तत्पुनः॥ १५॥**

तत्रैव प्राकृतं व्रतोपायनं कर्तव्यं नेति विचारे कर्तव्यमिति प्राप्ते सोमार्थेपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसंकल्परूपेणासमाप्तेरविसृष्टेन प्रसङ्गात्सिद्धेर्न पुनरुपायनं कर्तव्यम्॥

ऐषिकेष्वग्न्याधानाननुष्ठानाधिकरणम्॥ १२॥

**ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात्॥ २४॥ [शेषवदिति चेत्॥ २५॥ न वैश्वदेवो हि॥ २६॥ स्याद्वा व्यपदेशात्॥ २७॥ न गुणार्थत्वात्॥ २८॥]**

**परिग्रहाय देवानामन्वाधानं भवेन्न वा॥ असिद्धत्वाद्भवेन्मैवं वैश्वदेवेन सिद्धितः॥ १६॥**

यदुक्तं धारणार्थत्वात्सोमेऽन्यदग्न्यन्वाधानं न विद्यत इति तदाक्षिप्यते—यदि तत्केवलं धारणार्थं स्यात्ततो न विद्येत, तत्तु दर्शपूर्णमासयोर्देवतापरिग्रहार्थमपि श्रूयते 'ममाग्ने वर्च इति पूर्वमग्निं गृह्णाति देवता एव तत्पूर्वेद्युर्गृहीत्वा श्वोभूते यजत' इति। ततः प्रायणीयादिष्वपि तद्देवतापरिग्रहार्थं कर्तव्य-

---

भावः। अनेन पूर्ववदिह न कार्यसिद्धिरित्युत्थितेः संगतिरिति सूचयति—**आत्मेति**। ततश्च स्वकर्तृकक्रियाप्रकाशन एव सामर्थ्यमित्यन्यकर्तृकक्रियाप्रकाशनार्थमावृत्त्या भवितव्यमिति भावः। दक्षिणोत्तरविहारयोरङ्गानुष्ठानावृत्तेरेकादशे व्यवस्थापितत्वान्निर्वपामीत्युत्तमपुरुषानुसारेणासामर्थ्यस्यापि स्पष्टत्वेन निराकार्याभावात्तत्कथनमात्रमेतदिति ध्येयम्। सूत्रार्थस्तु—निर्वपणादिमन्त्रा भेदेन प्रयोक्तव्यास्तेषां करणमन्त्रतया कर्मादिसंनिपातित्वादुभयोश्च कर्त्रोः प्रयोगशैघ्र्यमान्यसंभवेनैकेन प्रयुक्तस्येतरकर्तृककर्मादिसंनिपातासंभवादिति॥

**धारणार्थत्वात्॥ १९॥** पूर्ववदत्रापि पृथक्कर्तव्यतेत्युत्थितेः संगतिः। **चोदकानुग्रहादिति**। सौमिकादमन्त्रकात् 'ममाग्ने वर्च'इत्यादिमन्त्रकरणकमैष्टिकमन्यदेवेति भिन्नकार्यत्वान्न प्रसङ्ग इति भावः। **धारणार्थमिति**। समन्त्रकस्याप्यस्य सामर्थ्यादग्निधारणमेव कार्यं न त्वदृष्टं, धारणं च सोमार्थेनैव सिद्धमिति युक्तः प्रसङ्ग इति भावः। **तथापीति**। अन्वाधानं नाम विहरणानन्तरमाद्यो यो धारणार्थः काष्ठैर्बलवत्करणरूपः समिन्धनव्यापारस्तदर्थः काष्ठाधानात्मकव्यापारः नतु समिन्धनार्थकाष्ठाधानमात्रं, विहरणानन्तरमादिमव्यापारश्चैक एवेत्यन्वाधानस्य न पुनःपुनः करणसंभव इत्यर्थः। **नहीति**। विहरणावृत्त्यभावेनान्वाधानस्य पुनःपुनः कर्तुमशक्यत्वादिति भावः॥

**तथा व्रतमुपेतत्वात्॥ २०॥ कर्तव्यमिति**। सौमिकं व्रतोपायनं क्रत्वङ्गभूतयमनियमात्मकव्रतानुष्ठानसंकल्परूपं दृष्टार्थमैष्टिकं तु 'अग्ने व्रतपते व्रतं चरिष्यामी'ति मन्त्रोच्चारणरूपमदृष्टार्थमिति सोमार्थेन तददृष्टासिद्धेः कर्तव्यमित्यर्थः। ततश्चान्वाधानस्य दृष्टार्थत्वादकर्तव्यत्वेऽपि व्रतोपायनस्यादृष्टार्थत्वात्कर्तव्यमित्युत्थितेः संगतिः। ऐष्टिकमपि व्रतोपायनं व्रतं चरिष्यामीति मन्त्रसामर्थ्यात् यमनियमाचरणार्थत्वाद्दृष्टार्थमेवेत्याशयेनाह—**सोमार्थेति**। आसमाप्तेरविसृष्टेनेत्यनेन व्रताचरणे वर्तमाने चरिष्यामीति भविष्यदर्थकमन्त्रोच्चारणं विरुद्धत्वादप्यकर्तव्यमित्यपि सूचयति॥

**ग्रहणार्थं च पूर्व०॥ २४॥ यदीति**। ततश्च व्रतोपायनवैलक्षण्यात्संगतिरपि सूचिता। **प्रायणीयादिष्विति**।

---

१ विहृतस्य.

मग्न्यन्वाधानम्। नैवम्। नह्यग्निधारणे दृष्टप्रयोजने सति अदृष्टदेवतापरिग्रहार्थत्वमर्थवादमात्रोपयुक्ताद्वाक्यशेषात्कल्पयितुं शक्यम्। अभ्युपेत्य ब्रूमः—यद्यपि देवतापरिग्रहार्थं तथापि प्रायणीयादिषु न कर्तव्यम्। दीक्षणीयाया अपि हि वाक्यशेषे देवतापरिग्रहार्थता श्रूयते 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निरवमो देवतानां विष्णुः परमो देवता एव तदुभयतः परिगृह्य दीक्षित' इति। यद्यपि 'दीक्षा सोमस्ये'ति वचनात्प्रधानार्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति तथापि वैश्वदेवग्रहे सर्वदेवतासमवायात्तत्परिग्रहं कुर्वती दीक्षणीया प्रसङ्गादङ्गकर्मदेवता अपि गृह्णाति। नहि विश्वदेवशब्दः कस्यचिद्देवतागणस्य वाचकः। प्रसिद्धावयवार्थस्य समुदायस्य शक्त्यन्तरकल्पनायां प्रमाणाभावात्। तस्मात्सर्वदेवतावचनलात्तत्परिग्रहे च सर्वान्तर्गतानामङ्गदेवतानामपि प्रसङ्गतः परिग्रहादकर्तव्यमन्वाधानम्। यद्वा तत्राभ्युपगमपक्षे दीक्षणीयायां कर्तव्यमेवान्वाधानं, ततः परंतु न कर्तव्यम्॥

---

आदिशब्दः प्रकारवाची। तेन दीक्षणीयाया अपि ग्रहणं बोध्यम्। **अर्थवादेति**। वर्तमानापदेशेनान्वाधानस्तुतिमात्रोपयुक्तादित्यर्थः। नच देवतापरिग्रहो नाम देवतास्मृतिः सा चान्वाधानस्य 'इमामूर्जं पञ्चदशीये प्रविष्टास्तान्देवान्परिगृह्णामि पूर्वे' इति स्वाङ्गमन्त्रेण ज्ञायत इति देवतापरिग्रहार्थत्वेऽपि दृष्टमेव प्रयोजनं नादृष्टमिति वाच्यम्। ये प्रविष्टास्तान्परिगृह्णामीति सामान्येन यक्ष्यमाणदेवतासद्भावमात्रविषयायाः स्मृतेः स्विष्टकृदुत्तमप्रयाजाद्यङ्गमन्त्रजनितस्मृतिवदपेक्षिततत्तद्देवताविशेषस्मृत्या प्रवृत्तिदार्ढ्यार्थत्वाभावेन प्रयोजनत्वासंभवात्। किंच स्वाङ्गमन्त्रद्वारा देवतास्मृत्यर्थत्वेन न पूर्वपक्षो वर्णयितुं शक्यते। तथासति प्रधानभूतक्रियासामर्थ्यलभ्यप्रयोजननैरपेक्ष्येण तदङ्गभूतमन्त्रजन्यस्मृतिरूपप्रयोजनसिद्ध्यर्थं प्रधानक्रियावृत्त्ययोगेन प्रायणीयादिष्वन्वाधानानुष्ठानासिद्धिः। अन्यथा स्विष्टकृदादिप्रतिपाद्य हविःशेषापचारेऽपि तदङ्गमन्त्रप्रकाश्यदेवतास्मृत्यर्थं हविरन्तरमुत्पाद्य स्विष्टकृदनुष्ठानप्रसङ्गात्। तस्मात्साक्षात्क्रियाजन्योऽन्य एव देवतापरिग्रहो वाच्यः। अतएव तन्त्ररत्ने 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण' इति क्रियार्थायां क्रियायामुपपदे विहितेन लृट्प्रत्ययेन क्रत्वर्थयमनियमसंकल्पलक्षणदीक्षारूपपुरुषसंस्कारार्थत्वेनावगम्यमानाया दीक्षणीयाया देवतापरिग्रहार्थत्वेऽदृष्टान्तरपरिकल्पना स्यादित्युक्तमुपपद्यते। अन्यथा तत्रापि तदङ्गभूतेन 'अग्निरग्रे प्रथमो देवतानां संयतानामुत्तमो विष्णुरासीत्। यजमाना परिगृह्य देवा'निति मन्त्रेणोक्तरीत्या स्मृतिसंभवाददृष्टान्तरकल्पनानवकाशः स्यादिति। तस्माद्देवतापरिग्रहार्थत्वे सत्यदृष्टार्थता स्यादेवेति भावः। **ननु** वैश्वदेवं गृह्णातीत्यत्र तद्धितप्रकृतिभूतविश्वेदेवशब्देन गणविशेष एव रूढ्याभिधीयते 'अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वेदेवै'रिति गणविशेषवाचकवस्वादिशब्दप्रायपाठबलेन तस्य गणविशेषे रूढिकल्पनात्, ततश्च वैश्वदेवग्रहे विश्वेदेवात्मकगणविशेषस्यैव देवतात्वात्तत्परिग्रहणेनापि नाङ्गदेवतापरिग्रहसिद्धिरित्यत आह—**नहीति**। **प्रमाणेति**। सेनापतिरस्य देशस्याधिपतिरमात्योऽस्य देशस्याधिपतिरित्यादिना सेनापत्यादीनामेकैकदेशाधिपतित्वोक्त्यनन्तरं राजा तु सर्वेषां देशानामधिपतिरित्युक्ते सर्वेषां देशानामित्यस्य सत्यपि तत्तद्देशविशेषवाचकशब्दप्रायपाठदेशविशेषे रूढिर्न कल्प्यते किंतु राजा तेषामन्येषां च देशानामधिपतिरित्येवार्थो वर्ण्यते, एवमिहापि अग्न्यादयो वस्वादिभिः केवलैः समेताः बृहस्पतिस्तु तैश्चान्यैश्च सर्वैर्देवैरित्येवं क्लृप्तयोगानुसारेणैवार्थवर्णनोपपत्तेस्तन्मात्रेणाक्लृप्तरूढिकल्पनं न युक्तम्। अयं चार्थो भाष्ये व्यक्त इति भावः। वस्तुतस्तु नैवमत्रार्थवर्णनं युक्तं 'देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽन्योन्यस्मै ज्यैष्ठ्यमातिष्ठमानाः पञ्चधा व्यक्रामन्' इति देवानामन्योन्यस्पर्धया पृथक्पृथग्व्यूहकल्पनामुपक्रम्याग्निर्वसुभिरित्यादेस्तद्विवरणरूपतया प्रवृत्तत्वेन तत्र विश्वेदेवैरिति तैश्चान्यैश्च वैर्देवैरित्यर्थवर्णनानुपपत्तेः। तस्माद्विशेषतः परिगणितवस्वादिव्यतिरिक्तैः सर्वैर्देवैरित्येवात्रार्थवर्णनं युक्तम्। एवंच पुरूरवार्द्रवप्रभृतिष्वपि यौगिक एव विश्वेदेवशब्दः कथंचिदुपपादनीयः। अस्तु वा गणविशेषे रूढिकल्पनया वैश्वदेवग्रहे तद्गणविशेषस्यैव देवतात्वं तथापि न दीक्षणीयायाः प्रधानदेवतामात्रपरिग्रहार्थत्वं येन प्रायणीयादिष्वन्वाधानं देवतापरिग्रहार्थं क्रियेत किंतु देवता एव तदुभयतः परिगृह्येत्यविशेषश्रवणादङ्गप्रधानदेवतापरिग्रहार्थत्वमेव तथापि यथा बर्हिर्धर्माणामङ्गप्रधानसाधारण्येपि न प्रकरणावगतप्रधानार्थताहानिरेवमिहापि दीक्षा सोमस्येति वाक्यावगतप्रधानार्थत्वहान्यभावादिति ध्येयम्। **दीक्षणीयायामिति**। देवतापरिग्रहस्यादृष्टरूपत्वेऽपि देवतासंस्कारकत्वात्संस्कृताया एव तस्याः कर्मोपयोगेन पशुपुरोडाशे भाव्यनूयाजाद्यदृष्टोपकारोपजीवनवदिह भाव्युपजीवनासंभवाद्दीक्षणीयायां देवतापरिग्रहार्थमग्न्यन्वाधानं कर्तव्यमित्यर्थः। सूत्रार्थस्तु—पूर्वमन्वाधानं ग्रहणार्थमपि निवर्तेत दीक्षणीयाया अपि तदर्थत्वादिति॥

ऐष्टिकेषु पत्नीसंनहनाननुष्ठानाधिकरणम् ॥ १३ ॥

**संनहनं च वृत्तत्वात् ॥ २९ ॥**

**पत्नीसंनहनं कार्यं चोदकादिति चेन्न तत् ॥ बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः ॥ १७ ॥**

दार्शपौर्णमासिकं पत्नीसंनहनं प्रायणीयादिषु चोदकप्राप्तं कर्तव्यम् । नैवं, वासोधारणार्थं तत् दृष्टार्थत्वात् । दीक्षाकालेन च सोमार्थेन संनहनेन वाससो धारितत्वादकर्तव्यम् । अथापि न वासोधारणार्थं तथापि संनद्धयैव[1] कर्माणि कार्याणीत्येतदर्थं संनहनं नादृष्टार्थं । अन्यार्थेनापि संनहनेन संनद्धैवेति न पृथक्संनहनम् ॥

ऐष्टिकेष्वारण्यभोजनाभावाधिकरणम् ॥ १४ ॥

**अन्यविधानादारण्यभोजनं न स्यात् उभयं हि वृत्त्यर्थम् ॥ ३० ॥**

**आरण्याशनमत्रास्ति चोदकप्रापितो यदि ॥ वृत्त्यर्थत्वेन तत्सिद्धं सोमप्रोक्तात्पयोव्रतात् ॥ १८ ॥**

आरण्याशनमपि प्रायणीयादिषु चोदकप्राप्तमपि वृत्त्यर्थत्वात्सौमिकेनैव पयोव्रतादिना वृत्तिसिद्धेर्न कर्तव्यम् ॥

ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम् ॥ १५ ॥

**शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३१ ॥**

**यजमानगता भक्ष्या न सन्त्यारण्यवद्यदि ॥ न वृत्त्यर्था इमे किंतु कर्तव्याः प्रतिपत्तये ॥ १९ ॥**

एवं तर्हि शेषभक्षा अपि ये यजमानकर्तृका इडाभक्षणादयस्तेऽपि वृत्त्यर्थत्वात्सौमिकेन व्रतेन निवर्तेरन् । सत्यं यदि वृत्त्यर्थः ते तु शेषभक्षप्रतिपत्त्यर्थाः । 'यजमानपञ्चमा इडां भक्षयन्ती'ति शेषस्य द्वितीयानिर्देशात् । तदिदं षष्ठ एव साधितं तस्यत्विदं प्रयोजनकथनं प्रसङ्गात्सकलादिहोक्तम् ॥

ऐष्टिकेष्वन्वाहार्यदानाभावाधिकरणम् ॥ १६ ॥

**भृतत्वान्न परिक्रयः[2] ॥ ३२ ॥**

**अन्वाहार्योऽत्र दातव्यो न वाद्यः सोममात्रगा ॥ गवादिदक्षिणा यस्मान्नत्यन्तरवर्जनात् ॥ २० ॥**

दीक्षणीयादिषु चोदकप्राप्तान्वाहार्यदक्षिणा दातव्या नेति संशये 'दक्षिणा सोमस्ये'ति वचना-

---

**संनहनं च प्रवृत्तत्वात् ॥ २९ ॥** पक्षद्वयेऽपि दीक्षणीयायां संनहनकर्तव्यतायां विवादाभावात्प्रायणीयादिष्वित्युक्तम् । **चोदकेति** । वासोधारणार्थत्वेऽपि तत्र शैथिल्यसंभवात्कर्मानुष्ठानकाले संभावितमध्यदेशवेदनापनोदनेन बलाधानार्थत्वपक्षेऽप्यन्तरा क्रियमाणकर्मानुष्ठानार्थं मध्येपि पुनःपुनर्बलाधानस्यापेक्षितत्वात्कर्तव्यमित्यर्थः । अतएवान्वाधानवैलक्षण्यात्संगतिः । सोमसमाप्तिपर्यन्तं तदर्थसंनहनसाध्यप्रयोजनानुवृत्तेस्तत एव प्रायणीयादिकार्यसिद्धेर्न पृथक्कर्तव्यत्वमित्याह—**नैवमिति** । ननु वासोधारणार्थत्वं 'न वासोऽभिसन्नह्यतीत्येक' इत्यापस्तम्बोक्त्या केषांचिच्छाखिनामनभिमतमवगम्यत इत्यस्वरसादाह—**अथापीति** । सूत्रार्थस्तु—संनहनं च न कर्तव्यं सोमे तस्य प्रवृत्तत्वादिति ॥

**अन्यविधानात् ॥ ३० ॥** इह तु न प्रसङ्ग इत्युत्थितेः संगतिः । चोदकप्राप्तमपीत्यनेन चोदकप्राप्तेः कर्तव्यमिति पूर्वपक्षं सूचयति । तस्य च मन्दत्वाच्छिष्यहितार्थं तत्त्वकथनमात्रमेतदिति ध्येयम् । **वृत्तीति** । उभयोर्वृत्त्यर्थत्वे सति भिन्नकालेनाप्येकेनापरस्य कार्यसिद्धेः प्रत्यक्षश्रुतप्रधानधर्मपयोव्रतादिकमेव कर्तव्यं नत्वङ्गधर्मचोदकप्राप्तारण्याशनमित्यर्थः ॥

**शेषभक्षास्तथेति० ॥ ३१ ॥** संगतिं सूचयन्नेव पूर्वपक्षमाह—**एवं तर्हीति** । **वृत्त्यर्थत्वादिति** । शेषभक्षणेन तृप्तिर्जायत इति लिङ्गाद्वृत्त्यर्थत्वमित्यर्थः । लिङ्गं विघटयति—**यजमानेति** । **षष्ठ इति** । होमाभिषवभक्षणं च तद्वदित्यत्रेति शेषः । सूत्रे आरण्याशनवदकर्तव्यत्वं तथाशब्दार्थः ॥

**भृतत्वान्न परिक्रयः ॥ ३२ ॥ उक्तमिति** । तृतीय इति शेषः । प्रसङ्गाभ्युपगमे च केवलप्रधानार्थत्वसाधनं निष्फलं स्यात् वचनात्केवलप्रधानार्थत्वे प्रयोगाङ्गकर्तृसंबन्धितया लिङ्गादङ्गप्रधानार्थत्वे च दीक्षणीयादिष्वन्वाहार्यदानाभा-

---

१ संनद्धैव कर्माणि. २ भृतत्वाच्च परिक्रमः.

द्वादशशतदक्षिणा केवलं प्रधानार्थेत्युक्तम्, अतोऽङ्गेषु स्वार्थदक्षिणा दातव्यैव । प्रसङ्गसिद्धकार्यत्वात्तु न दातव्या । प्रधानार्थाह्येषानतिरुपक्रमप्रभृत्यासमाप्तेः प्रवृत्ता चानपवृक्ता चावस्थितेति तामेवोपजीवन्तो दीक्षणीयादिविषयश्चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जते । किंच पृथग्दक्षिणायामानतिभेदादङ्गप्रधानानामश्रुतः कर्तृभेद आपद्यते । किंच यैः प्रधानं कर्तव्यं तैरेवावश्यमङ्गान्यपि कर्तव्यानि नाकुर्वद्भिरङ्गानि प्रधानं कर्तुं शक्यमिति निश्चिते शास्त्रार्थे प्रधानार्थत्वेनाङ्गानां बलादङ्गान्यपि कर्तव्यानि भवन्तीति प्रसङ्गसिद्धानुष्ठानत्वान्नाङ्गेषु दक्षिणा शक्यते ॥

ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम् ॥ १७ ॥

## शेषभक्षास्तथेति चेत् ॥ ३३ ॥ [न कर्मसंयोगात् ॥ ३४ ॥]

**ऋत्विग्भक्षा निवर्तेरन्यद्यन्वाहार्यवन्न तत् ॥ याजमानवदेतेषां कार्यत्वात्प्रतिपत्तये ॥ २१ ॥**

पूर्वं यजमानभक्षस्य वृत्त्यर्थत्वाद्व्रतेन निवृत्तिराशङ्किता । संप्रति ऋत्विग्भक्षाणां परिक्रयार्थतया प्रधानदक्षिणया निवृत्तिराशङ्क्यते । निराकरणं च तद्वदेव । शेषप्रतिपत्त्यर्था भक्षा नानत्यर्था इति दशम एव चानत्यर्थत्वं भक्षाणां निराकृतं तस्येदं प्रयोजनं प्रसङ्गात्मकत्वेनेहोक्तम् ॥

ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणम् ॥ १८ ॥

## प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३५ ॥ [ब्रह्मापीति चेत् ॥ ३६ ॥ न प्राङ्यिमात्तदर्थं हि ॥ ३७ ॥ निर्दिष्टस्येति चेत् ॥ ३८ ॥ नाश्रुतित्वात् ॥ ३९ ॥ होतुस्तथेति चेत् ॥ ४० ॥ न कर्मसंयोगात् ॥ ४१ ॥]

**नैतासु वरणं होतुरस्ति वानत्यभावतः । नास्त्यन्वाहार्यवद्धर्मैकत्वादत्रेष्टिवद्भवेत् ॥ २२ ॥**

दर्शपूर्णमासयोर्होतुर्वरणमाम्नातं 'अग्निर्देवो दैव्यो होते'ति तत्किमानत्यर्थत्वात्सौमिकेनैव वरणेन 'अग्निर्होता सोमो होते'त्यादिना प्रसङ्गादानतिसिद्धेर्दीक्षणीयादिषु न कर्तव्यमुतादृष्टार्थत्वात्कर्तव्यमिति संदेहे वरणस्यानत्यर्थत्वान्निवृत्तिं मन्यते । ननु प्रवृत्ते कर्मणि क्रियमाणं ऋतुयाज्यावरणवददृ-

---

ष्टस्य तुल्यत्वादतो नास्ति प्रसङ्ग इति भावः । ततश्च केवलप्रधानार्थत्वबलात्केवलप्रधानानतिरेव कार्यमित्यङ्गेष्वप्यकृतकरत्वात्कर्तव्यं शेषभक्षणवदित्युत्थितेः संगतिः । सिद्धान्तमाह—**प्रसङ्गेति** । यत एव केवलप्रधानानतिरेव कार्या अतएव तस्या यावत्प्रयोगपरिसमाप्त्यनुवृत्तेस्तदर्थत्वाङ्गानुष्ठानसिद्धिं पर्यालोच्याङ्गविषयो न पृथक् स्वार्थामानतिं प्रयुञ्जत इति केवलप्रधानार्थानतिफलकत्वं प्रसङ्गेऽनुकूलमेव न प्रतिकूलमित्यर्थः । **आपद्येतेति** । कर्तृभेदश्च प्रयोगभेदापादकत्वात्प्रयोगविधिनैकस्यैव प्रयोगस्यावगमादयुक्तः । क्वचिद्दक्षिणाभेदस्य श्रुतत्वात्कर्तृभेदो न दोषः । वाजपेयबृहस्पतिसवयोश्च श्रुतत्वादेव प्रयोगभेदोऽपि न दोष इति भावः । न केवलं प्रधानार्थानत्यनुवृत्तौ विधानात्प्रसंगोऽपि तु प्रधानार्थानतिकार्यप्रधानानुष्ठानमेवाङ्गानुष्ठानं विना न निर्वहति प्रयोगवचनेनाङ्गप्रधानानामेककर्तृकत्वावगमादित्यतोपि प्रसङ्ग इत्याह—**किंचेति** । केवलप्रधानार्थत्वसाधनस्य च सोमाङ्गविकृतिभूतकर्मसु द्वादशशतातिदेशाभावः फलं संभवतीति नानर्थक्यमिति भावः । सूत्रार्थस्तु—सोमदक्षिणयैव भृतत्वान्न पृथगन्वाहार्येण परिक्रय इति ॥

**शेषभक्षास्तथेति चेत् ॥ ३३ ॥** पूर्वतराधिकरणपूर्वपक्षाद्विशेषं वदन्पूर्वपक्षमाह—**पूर्वमिति । परिक्रयेति** । नच परिक्रयार्थत्वे सत्यन्वाहार्येण सह प्रकृतौ विकल्पः स्यात्स चायुक्तः । तस्य हि प्रत्यक्षतः श्रुतं परिक्रयार्थत्वं भक्षाणां तु तृप्तिजननसामर्थ्येन कल्पनीयमित्यतुल्यत्वादिति वाच्यम् । उपयोक्ष्यमाणसंस्कारस्य ज्यायस्तया भक्षाणामानत्यर्थत्वे सति अन्वाहार्यस्य भक्षणानां च नित्यवदाम्नाततया क्रयन्यायेन प्रीतिविशेषाधायकत्वेन समुच्चयोपपत्तेः, इतरथा सोमे वरणभक्षणयोरानत्यर्थयोर्विकल्पः स्यादिति भावः । ततश्च यदि प्रधानदक्षिणयानतिः कृतेत्यन्वाहार्यनिवृत्तिस्तदा भक्षणानामपि निवृत्तिः स्यादित्युत्थितेः संगतिः । **शेषेति** । प्रतिपत्तेरपेक्षितत्वात्तदर्थत्वमेव ज्यायः आनतिस्तु ऋत्विग्भिरेव शेषो भक्षणीय इति नियमफलत्वेनानुनिष्पादिनीति न भक्षणस्य प्रतिपत्त्यर्थत्वविरोधीनीति भावः । **दशम इति** । शेषभक्षास्तद्वदित्यत्रेति शेषः । सूत्रे तथा अन्वाहार्यवदित्यर्थः ॥

**प्रवृत्तवरणत्वात् ॥ ३५ ॥** भक्षाणां कृतकार्यत्वाभावेऽपि वरणमानत्यर्थत्वात्कृतकार्यमित्युत्थितेः संगतिः । **सौमिकेनेति** । तस्य कर्मादौ क्रियमाणस्यानत्यर्थत्वादिति भावः । **वरणस्येति** । ऐष्टिकहोतृवरणस्येत्यर्थः । **प्रवृत्त इति** । होतरि प्रागेव कर्मणि प्रयोगे प्रवृत्ते पश्चात्क्रियमाणमित्यर्थः । **ऋतुयाज्येति** । 'इन्द्रं होत्रा'दित्यादिमन्त्रैः क्रियमाणवरण-

ष्टार्थम्। नैवम्। ऋतुयाज्यावरणमादावेवानत्यर्थे कृते वरणे पश्चात्क्रियमाणमदृष्टार्थं स्याद्धोतुस्तु न प्रायस्ति वरणमतः प्रवृत्तेऽपि कर्मणि दृष्टार्थमेव ब्रह्मवरणवत्। तदपि हि पूर्वेद्युरमावास्यायां वेदिकरणे अनुमितिप्रसवदाने प्रवृत्ते ब्रह्मणि प्रणीताप्रणयनकाले अपरेद्युः क्रियते। अथ च दृष्टार्थमेवान्यथा तदपि दीक्षणीयादिषु कर्तव्यं स्यात्। तस्माद्धोतुर्वरणमपि न कर्तव्यमिति प्राप्ते ब्रूमः—प्रवृत्तस्य वरणं न कथंचिद्दृष्टार्थं भवति। दक्षिणादानं हि भविष्यदवस्थमपि भवत्यानतिनिमित्तं, लोके तथा दर्शनात् नतु वरणेन भाविना भवत्यानमनं तस्माददृष्टार्थं, ब्रह्मवरणं त्वप्रवृत्ते ब्रह्मणि क्रियते। पौर्णमास्यां तावदप्रवृत्त एव क्रियत इत्यविवादम्। अमावास्यायामपि पूर्वेद्युरपकृष्यमाणा वेदिः स्वाङ्गभूतप्रसवसिद्धये ब्रह्मणो वरणमप्यपकर्षति, लिङ्गाद्धि वरणस्यानतिरेव प्रयोजनं गम्यते। प्रयोजनवशेन च पाठक्रमं बाधित्वा युक्तमेव वरणस्य पूर्वेद्युरनुष्ठानम्। तस्मादप्रवृत्तविषयत्वाद्ब्रह्मवरणं दृष्टार्थम्। नचैवं होतृवरणस्यापकर्षः संभवति, 'अप्रवृत्तः सामिधेनीरन्वाहे'ति वचनात्। तस्माददृष्टार्थं होतृवरणं प्रतिकर्म कर्तव्यम्॥

आतिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम्॥ १९॥

## यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत॥ ४२॥ [न वा कृतत्वात्तदुपदेशो हि॥ ४३॥]

**आतिथ्यादिगते बर्हिष्युक्षणादि पृथङ्न वा॥ आद्योऽतन्त्रप्रसङ्गत्वान्न प्रसङ्गानिवारणात्॥ २३॥**

यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति बर्हिःसाधारण्यविधिरित्युक्तमेव त्रयाणामर्थेनोपान्ते बर्हिषि संस्काराः प्रोक्षणादयश्चिन्त्यन्ते, किं ते प्रतिकर्मावर्तनीया उतातिथ्याकालकृता एवोपसत्स्वग्नीषोमीये च प्रसज्यन्त इति संदेहे तन्त्रमध्यपाताभावान्न प्रसङ्गो नापि तन्त्रम्। आतिथ्या-

---

वदित्यर्थः। **ननु** ब्रह्मवरणं प्रणीताप्रणयनकाले क्रियते ततः पूर्वं तु न ब्रह्मणः प्रवृत्तिरित्यत आह—**तदपीति**। **पौर्ण**मास्यां प्रणीताप्रणयनात्पूर्वं ब्रह्मणः कर्तव्याभावादप्रवृत्तावप्यमावास्यायां पूर्वेद्युर्वेदिकरणाङ्गभूतानुज्ञादानायास्त्येव प्रणीताप्रणयनात्पूर्वं ब्रह्मणः प्रवृत्तिरित्यर्थः। इदं च पूर्वपरिग्रहेऽपि ब्रह्मानुज्ञास्तीति पक्षे उत्तरपरिग्रहमात्रे ब्रह्मानुज्ञापक्षे पूर्वेद्युः प्रसवदानाय ब्रह्मणः प्रवृत्त्यसंभवादिति ध्येयम्। नच परेद्युर्हविरासादनोत्तरकाले आम्नाताया वेदेः पूर्वेद्युरपकर्षे सति तदन्तापकर्षन्यायात्तत्पूर्वस्य ब्रह्मवरणस्याप्यपकर्षावश्यंभावादमावास्यायामप्रवृत्तस्यैव ब्रह्मणो वरणमिति वाच्यम्। पञ्चमे तथा पूर्वमित्यत्र वेद्यपकर्षे तदन्तापकर्षो नास्ति किंतु श्रुतमत्रापकर्ष इति व्यवस्थापितत्वादिति भावः। **लोक इति**। लौकिककर्मणि भाविभृतिदानस्याप्यानतिनिमित्तत्वदर्शनादित्यर्थः। **नत्विति**। वरणस्य सामवचनरूपपर्यवसानात्तस्य च भाविनोऽप्रवर्तकत्वादिति भावः। तदन्तापकर्षाभावान्न वरणापकर्ष इति यदुक्तं तत्राह—**स्वाङ्गेति**। सत्यं न तदन्तापकर्षस्तथापि साङ्गस्य वेदिकरणस्यापकर्षाद्ब्रह्मवरणस्यापकर्षप्रयोगाङ्गकर्तृसंस्कारतया ब्रह्मकर्तृकसर्वप्रयोगाङ्गत्वात् ब्रह्मकर्तृकप्रसवस्याप्यङ्गत्वादिति प्रसववत्प्रसवाङ्गभूतब्रह्मवरणस्याप्यपकर्ष इति भावः। **ननु** ब्रह्मवरणस्य यद्यानत्यर्थत्वं तर्ह्यमावास्यायां पूर्वेद्युरनुष्ठेयतया प्रणीताकालाम्नानावगतक्रमबाधः स्यादित्यत आह—**लिङ्गाद्धीति**। आनतिर्हि लिङ्गावगतं दृष्टं प्रयोजनमिति लिङ्गस्य प्रबलत्वात्तदवगतप्रयोजनानुसारेण क्रमबाधो न दोष इतरथा त्वदृष्टार्थत्वमेव दोष इति भावः। नन्वेवं होतृवरणमपि क्रमबाधेन लिङ्गादप्रवृत्त एव होतर्यनुष्ठेयं स्यादित्यत आह—**नचैवमिति**। ऋतुयाज्यावरणे तु न लिङ्गादानत्यर्थत्वेन क्रमबाधः सोमारम्भकालीनवरणादेवानतिसिद्ध्या तस्यानत्यर्थकत्वासंभवादिति भावः॥

**यज्ञोत्पत्त्युपदेशे०॥ ४२॥** सिद्धान्तोपयोगितया चतुर्थोक्तमनुवदति—**यदिति**। पूर्ववदिहाप्यावृत्तिरित्युत्थितेः संगतिः। **तन्त्रमध्येति**। आतिथ्योपसदग्नीषोमीयाणां भिन्नकालत्वादिति भावः। **ननु** मास्तु प्रसङ्गस्तथापि नावृत्तिः यूपसाधारण्यात्तद्वाराणां तक्षणादीनामग्नीषोमीयसवनीयानुबन्ध्यासु तन्त्रत्ववदेतेषामपि तन्त्रत्वादित्यत **आह—नापीति**। दीक्षासु क्रियमाणानां तक्षणादिरूपधर्माणामकर्मकालत्वेनागृह्यमाणविशेषत्वात्तन्त्रत्वेऽपीह न तथात्वमित्यर्थः। **नन्वत्र** प्रसङ्गोऽपि न संभवति बर्हिषः साधारण्येऽप्यातिथ्याप्रसङ्गकाले क्रियमाणानां संस्काराणां तदपवर्गेऽपवर्गेणोपसदाद्यर्थं पुनः करणावश्यंभावादन्यथा द्वादशाहसुत्याकालसुब्रह्मण्याह्वानस्यापि देवतासंस्कारकस्य प्रसङ्गसंभवात्प्रत्यहमावृत्तिर्न स्यादित्यतः

---

१ करणेऽनुमतिदाने प्रवृत्ते ब्रह्मण्यपरेद्युः प्रणीता. २ अवृत्तः सामिधेनी.

कालत्वेन विशेषग्रहणादिति प्राप्ते ब्रूमः—सत्यं न तन्त्रता, प्रसंगस्तु भवति । तन्त्रमध्यपाताभावेऽपि बर्हिर्द्वारा ये संस्कारास्ते यदर्थं बर्हिरुपात्तं तदर्था विज्ञायमाना बर्हिषः साधारणत्वात्तेऽपि सकृदेव कर्तव्या इत्यवगते सति नान्तरीयकमातिथ्यकालेऽनुष्ठानम् । उपसदादेस्तु तदानीमप्राप्तत्वात् । नचैतावता 'आतिथ्यापवर्गेऽपवृज्यन्ते बर्हिषोऽनपवृक्तत्वात् तदर्थत्वाच्च तेषां, तस्मान्न भेदेन कर्तव्याः ॥

आतिथ्यायां स्तरणमन्त्रावृत्त्यधिकरणम् ॥ २० ॥

## देशपृथक्त्वान्मन्त्रोऽभ्यावर्तेत ॥ ४४ ॥

**तन्त्रास्तरणमन्त्रस्य प्रसङ्गो यदि वा भिदा ॥ आद्यः प्रोक्षणवन्मैवं देशस्तरणभेदतः ॥ २४ ॥**

तदेव बर्हिर्यदातिथ्यार्थं प्राग्वंशे स्तीर्णं तत आनीयापरेणोत्तरवेदिमग्नीषोमीयार्थेनास्तीर्यते तदा किं 'ऊर्णाम्रदसं त्वा स्तृणामी'ति स्तरणमन्त्रः पूर्वकृत एव प्रसज्यत उतावर्तनीय इति विचारे पूर्ववद्बर्हिःसाधारण्यात्प्रसङ्गप्राप्तावुच्यते । स्यादेवं यदि बर्हिरर्थं स्तरणं स्यात्तत्तु 'बर्हिषा वेदिं स्तृणाती'ति द्वितीयानिर्दिष्टत्वात्प्रयोजनवत्त्वाच्च वेदिदेशसंस्कारार्थम् । भिन्नौ चेह प्राग्वंशोत्तरवेदिसमीपदेशौ तेन तदर्थं स्तरणं, तदङ्गं च मन्त्रोऽप्यावर्तते । असत्यामावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं, स्यात् । भवतु वा बर्हिरर्थं स्तरणं बर्हिष्यवस्तीर्णे हवींषि साक्षादासाद्यन्ते इति तथापि तदावृत्तेस्तदङ्गमन्त्रावृत्तिः । अन्यथा ह्यमन्त्रास्तीर्णे बर्हिषि हवींष्यासादयेरन् ॥

---

प्रसङ्गमुपपादयति—**तन्त्रमध्येति** । इहहि यदातिथ्यायां बर्हिस्तदुपसदामिति वाक्येनातिथ्यार्थं यद्बर्हिरुपादीयते न तन्मन्त्रार्थतयोपादेयं किंतूपसदग्नीषोमीयार्थमपीति साधारण्यबोधनेन सर्वार्थतयोपात्ते बर्हिषि प्रथमोपनिपातादातिथ्याकाले क्रियमाणैरपि संस्कारैर्बर्हिषो यत्सर्वं प्रतिसंधानत्वं तदेवाधीयते नातिथ्यामात्रसाधनत्वमिति कल्पनादसत्यपि तन्त्रमध्यपातेऽस्ति प्रसङ्गः । सुब्रह्मण्याह्वानसंस्कार्याया देवतायाः साधारण्येनोपपादकप्रमाणाभावात् । यत्सुत्याप्रयोगकाले आह्वानं कृतं तत्साधनभावोपयोग्येव देवतासंस्कारस्तेनाधीयते इति कल्पनात्सुत्यान्तरार्थं पुनःप्रयोगावश्यंभावान्नास्ति प्रसङ्ग इति वैषम्यमिति भावः । एवंच 'संस्कारास्त्वावर्तेरन्ननर्थकालत्वा'दित्यत्रैकादशे 'दीक्षासु यूपं छिनत्ती'त्यनेन छेदनग्रहणस्योपलक्षणत्वात्सर्वेषां यूपधर्माणामपकर्षविधिरित्यकर्मकालत्वात्तन्त्रमुक्त्वा अस्तुवा छेदनमात्रापकर्षस्तथापि यूपस्य साधारण्यादग्नीषोमीयकालेऽनुष्ठीयमानानामपि प्रोक्षणादीनां सवनीयानुबन्ध्योपकारकत्वमिति यत्पक्षान्तरमुक्तं तद्द्रव्यसाधारण्ये संस्काराणामेकस्मिन्कर्मणि क्रियमाणानां कर्मान्तरे प्रसङ्गादुपकारकत्वस्यैतदधिकरणसिद्धस्य कथनमिति ध्येयम् । सूत्रार्थस्तु—यज्ञोत्पत्त्युपदेशे यदातिथ्यायामित्युत्पत्तिदशायामेव सर्वसाधारण्येनोपदिश्यमान इति यावत् । यत्र बर्हिषि अनुष्ठितं प्रोक्षणादि प्रयोगभेदात्प्रतितन्त्रं क्रियेतेति ॥

**देशपृथक्त्वान्मन्त्रो०** ॥ ४४ ॥ **पूर्ववदिति** । अत्र प्राकृतस्तरणावृत्तावपि मन्त्रस्य नावृत्तिः किंत्वातिथ्याकाले प्रयुक्त एव मन्त्रप्रसङ्गादुपकरिष्यतीत्येवं पूर्वःपक्ष इति न भ्रमः कर्तव्यः । करणमन्त्रस्य स्तरणावृत्तावावृत्तेरवर्जनीयत्वात् । तस्मात्स्तरणस्य बर्हिःसंस्कारत्वात्समन्त्रकं स्तरणमेव प्रसज्यते । अपरेणोत्तरवेदिमग्नीषोमीयार्थेन क्रियमाणं तु स्तरणं सौकर्यार्थं लौकिकमन्यदेवेति न तद्बलान्मन्त्रावृत्तिप्रसक्तिरित्येवं पूर्वःपक्षः । एवंच मन्त्रमुखेन स्तरणस्यैव प्रसङ्गावृत्ती विचार्येते इति ध्येयम् । सक्तुवैषम्यार्थमाह—**प्रयोजनेति** । वेद्या हविरासादनार्थत्वान्न सक्तुवत्संस्कारानर्हत्वमिति भावः । **भिन्नाविति** । यद्यपि वस्तुतो, देशैक्येऽपि यदातिथ्यायामित्यादिवद्देशसाधारण्यविध्यभावात्संस्काराणामावृत्त्या भवितव्यमन्यथा प्रायणीयातिथ्ययोरपि वस्तुत एकदेशत्वाद्वेदिसंस्काराणामावृत्तिर्न स्यात्तथाप्येकदेशत्वे प्रसङ्गः संभाव्येत, नचात्रैकदेशत्वमपीत्यनेनाभिप्रायेणेदमुक्तम् । **नन्वेवं** वेदिसंस्कारत्वपक्षे आतिथ्यया सहैकदेशासूपसत्स्वप्यस्य विचारस्य कर्तुं शक्यतया सूत्रभाष्ययोर्भिन्नदेशाग्नीषोमीयपर्यन्तधावनमनर्थकं स्यात् । न चोपसदामपूर्वत्वाच्च वेदिसंस्कारप्रसक्तिरिति वाच्यम् । प्रधानार्थतया प्रसक्त्यभावेपि वेदितद्धर्माणामङ्गप्रधानसाधारण्येनाधारार्थं तत्प्राप्तेरन्यथा बर्हिषोऽप्यभावप्रसङ्ग इति न वेदिसंस्कारत्वमित्यस्वरसादाह—**भवतुवेति** । एवंच बर्हिरर्थं स्तरणे क्रियमाणे वेदिबर्हिषोरार्थिककर्मत्वकरणत्वाभावेन द्वितीयातृतीये इति भावः । यदुक्तं लौकिकमन्यदेव स्तरणमिति तत्राह—**अन्यथेति** । प्रकृतौ मन्त्रेण स्तरणं हविरासादनार्थं नादृष्टार्थमिह चामन्त्रकास्तीर्णे बर्हिषि हविरासादने तस्य वैगुण्यं स्यादित्यर्थः ॥

बर्हिषो देशान्तरनयने संनहनहरणमन्त्रयोरप्रयोगाधिकरणम् ॥ २१ ॥

**संनहनहरणे तथेति चेत् ॥ ४५ ॥ [नान्यार्थत्वात् ॥ ४६ ॥]**

**संनाहे हरणे मन्त्रावावर्त्यौ किं न वाग्रिमः ॥ पूर्ववन्नेदृशं कार्यं प्रकृतौ तदभावतः ॥ २५ ॥**

तदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः संनह्योत्तरवेदिसमीपे स्तीर्यते। प्रकृतौ संनहनमन्त्रः 'पूषा ते ग्रन्थिं ग्रथ्नात्वि'ति। तथा हरणमन्त्रो 'बृहस्पते मूर्ध्ना हरामी'ति तौ किमस्मिन्संनहने हरणे च प्रयोक्तव्यौ नेति संदेहे संनहनहरणयोरावृत्तेर्मन्त्रयोरपि पूर्ववदावृत्तिः स्यात्। मैवम्। प्रकृतौ हि लूनस्य बर्हिषो यद्विहारदेशप्रापणार्थं संनहनं हरणं च तदर्थावेतौ मन्त्रौ विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थमेतत्। अतोऽन्यकार्यत्वात्कार्यप्रयुक्तत्वाच्च मन्त्रयोर्न प्रसङ्गः। तथाच प्रकृतावेव गार्हपत्यादाहवनीये नीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तथेहापि ॥ इति श्रीशास्त्रदीपिकायां द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## द्वादशाध्याये द्वितीयः पादः ।

विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् ॥ १ ॥

**विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥ [मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सति चौपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्यविधानस्य ॥ ७ ॥]**

**सर्वार्थो वैदिकार्थो वा विहारः शक्तिमत्त्वतः ॥ आद्यः प्रत्यक्षवचनैर्निराकाङ्क्षत्वतोऽन्तिमः ॥ १ ॥**

गार्हपत्याग्निः किं लौकिकानां पार्वणस्थालीपाकतापपचनप्रकाशादीनां चरुपुरोडाशहोमहविःश्रपणादीनां च वैदिकानां सर्वेषामग्निकार्याणामङ्गमुत वैदिकानामेवेति संशये सामर्थ्याल्लिकाल्लिङ्गान्मांसपाकप्रतिषेधदर्शनाच्च सर्वार्थताप्राप्तावुच्यते—'गार्हपत्ये हवींषि श्रपयति दक्षिणाग्नावन्वाहार्यं

---

**संनहनहरणे० ॥ ४५ ॥ संनहनहरणयोरिति ।** प्रकृतौ प्रयोगोपयोगि संनहनहरणयोर्मन्त्रद्वारत्वमिति पूर्वपक्ष्याशयः। **अत इति ।** यूपावटास्तरणबर्हिर्न्यायेनेति भावः। **गार्हपत्यादिति ।** गार्हपत्यदेशे उपरि सादितस्य प्रोक्षणायाहवनीयदेशं प्रति यद्धरणं तत्रेत्यर्थः। एवंचातिप्रसंगान्न प्रयोगीयत्वेन द्वारत्वमिति भावः। एवं संनहनेऽपि दैवाद्ग्रन्थशैथिल्ये प्रसक्ते पुनस्तूष्णीं क्रियमाणेऽतिप्रसङ्गो बोध्यः। तन्त्रवापचिन्तापीयं पूर्वाधिकरणोक्तमन्त्रावृत्तिप्रसङ्गादत्र कृतेति ध्येयम्। सूत्रे स्तरणतौल्यं तथाशब्दार्थः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां द्वादशाध्यायस्य प्रथमः पादः ॥ १ ॥**

**विहारो लौकिकानां० ॥ १ ॥** पूर्वस्मिन्पादे यदीयतन्त्रमध्ये यन्निपतति तदीयाङ्गानां तत्र प्रसङ्ग इति तन्त्रमध्यपातस्थलीयप्रसङ्गो व्युत्पादितः। इदानीं तन्त्रमध्यपाताभावस्थलीयः प्रसङ्गः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वम्। तन्त्रमध्यपाते सति प्रसङ्गो झटित्युपतिष्ठते तदभावे तु विलम्बेनेत्यानन्तर्यं च बोध्यम्। **सामर्थ्येति ।** आहवनीयादेरग्नित्वेन लौकिकाग्निसाधारणेन रूपेण प्रकाशनादौ सामर्थ्यं लोकतः स्वध्यवसानमिति भावः। **मांसेति ।** 'मांसं न पचेयुस्तस्मिन्नग्नौ यदि पचेयुः क्रव्यादं कुर्यु'रिति मांसपाकप्रतिषेधः सत्यां लौकिकमांसपाकप्रसक्तौ न घटते, वैदिकमांसपाकस्य शामित्र एव नियतत्वादिति तद्बलात्पाकादिसर्वकार्यार्थत्वमभ्युपगन्तव्यमिति भावः। गार्हपत्ये हवींषीत्यादिवाक्यानि च सामर्थ्याद्गार्हपत्यादीनां हविःश्रपणादावव्यवस्थया प्राप्तौ तद्व्यवस्थार्थतयोपपन्नानीति भावः। **गार्हपत्य इति ।** आधाने-

---

१ नात्र प्रयोगः

पचति । यदाहवनीये जुहोती'ति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न लिङ्गेन सर्वार्थता शक्या कल्पयितुम् । मांसपाकप्रतिषेधस्तु वैदिकवपाश्रपण एवोपपन्नः । स्थालीपाकादयस्त्वौपासने विहिता न सामान्यविहितान् गार्हपत्यादीन्गृह्णन्ति । तस्माद्वैदिकानामेव विहारोऽङ्गम् । पूर्वं बर्हिःसंस्काराणां साधारण्यासाधारण्ये विचारिते तत्प्रसङ्गादग्नीनां लौकिकालौकिकसाधारण्यं विचारितमिति संबन्धः ॥

सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणम् ॥ २ ॥

## सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥ [क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥]

**सवनीये पुरोडाशोऽतिदिष्टो नोत विद्यते ॥ अन्यैः पिधानतो न स्याद्देवसंस्कृतये भवेत् ॥ २ ॥**

**सवनीये पशावग्नीषोमीयात्पशोश्चोदकप्राप्तः पशुपुरोडाशः कर्तव्यो नेति संशये, न कर्तव्यः स हि प्रकृतौ छिद्रापिधानार्थः 'सुषिरो ह वा एतर्हि पशुर्यर्हि वपामुत्खिदति तद्व्रीहिमयः पुरोडाशो भवति अपिहित्या अच्छिद्रताया' इति सवनीये च पशौ सवनीयैरेव पिधानाच्छिद्रापिधानं कृतं तत्रापि हि श्रूयते—'अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते अपिहित्या अच्छिद्रतायाः' इति । तस्मात्तैरेव कृतकार्यः पुरोडाशो निवर्तते । ननु पुरोडाशेन माध्यंदिने सवन इति लिङ्गात्कर्तव्यः, एवं तर्हि विकल्पोस्तु नैवमर्थवादमात्रं छिद्रापिधानवचनं प्रत्यक्षविरोधात्, देवतासंस्कारार्थस्त्वसौ, तस्मात्कर्तव्य एव । लिङ्गं च पुरोडाशेन माध्यंदिने इति न पाक्षिकं कल्पयितुं न्याय्यम् ॥**

---

नार्जितानां गार्हपत्याद्यग्नीनां प्रयोजनापेक्षायां सामर्थ्यापेक्षया शीघ्रं प्रवृत्तप्रत्यक्षवचनेन प्रयोजनसमर्पणे सति नैराकाङ्क्ष्यान्न सामर्थ्येनान्यत्र विनियोगसंभवः, सामर्थ्याद्विनियोगकल्पनाभूताया आकाङ्क्षायाः विच्छेदात् । अतएव 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त'इति प्रत्यक्षवचनेनाश्वाभिधान्यादाने मन्त्रस्य विनियोगे सति न लिङ्गाद्गर्दभरशनादाने विनियोगः । एवंच लिङ्गादव्यवस्थया विनियोगस्य प्रथमप्रसक्तेर्न व्यवस्थार्थं वचनप्रवृत्तिः किंतु झटिति वचने प्रवृत्ते सत्यर्थादेव व्यवस्थासिद्धिरिति भावः । **मांसेति** । अयं हि मांसपाकप्रतिषेध आहवनीयविषयः । नहि तस्मिन्नग्नौ मांसं पचति यस्मिन्नाहुतिं जुहोतीति वाक्यशेषे आहुतिसंयोगश्रवणात् । आहुतीनां च प्रायेणाहवनीयाधारत्वादाहवनीये च वपाश्रपणं विहितमस्तीति तद्विषयतया मांसपाकप्रतिषेध उपपन्नः । एवंच वपाश्रपणस्याहवनीये विहितप्रतिषिद्धत्वाद्विकल्प इति भावः । **नन्वेवमसत्यपि** लिङ्गविनियोगे तैरेव च वचनैः स्थालीपाकादिश्रपणादिष्वपि विनियोगः किं न स्यादित्यत आह—**स्थालीपाकेति । विहिता इति** । शेषवचनेनेति शेषः । **विहार इति** । गार्हपत्याद्यग्निरित्यर्थः । **नन्वग्नी**नां किं सर्वकर्माङ्गत्वमुत वैदिकमत्राङ्गत्वमिति विचारो नात्र स्वरूपेण संगतः । तृतीय एव तस्य संगतेः । नापि फलतः अग्नीनां सर्वकर्माङ्गत्वे सर्वकर्मार्थमग्नीनां सकृदर्जनमित्यादिफलस्यापि तन्त्रात्मकत्वेनात्रासंगतेरित्यत आह—**पूर्वमिति ॥**

**सवनीये छिद्रापिधानार्थं० ॥ ८ ॥ सहीति** । यद्यपि छिद्रापिधानं प्रत्यक्षविरुद्धं पुरोडाशयागेन वपोद्धरणकृतछिद्रापिधानानुपलम्भात्तथापि तथोद्धारणे सति पशोः छिद्रवत्पशुयागस्यापि व्यङ्गतया छिद्रमिवाशङ्क्य तत्समाधानार्थत्वेन पशुपुरोडाशो विधीयत इति पूर्वपक्षिणो हृदयम् । ततश्च न प्रत्यक्षविरोधः । एवंच यद्यपि पुरोडाशयागस्य देवतासंस्कारार्थत्वं दशम एवोक्तं तथापि श्रौतस्य छिद्रापिधानार्थत्वस्य प्रबलत्वात्सामर्थ्यलभ्यं देवतासंस्कारार्थत्वमप्रयुक्तमित्याक्षिप्य तदेवेह समर्थ्यत इति द्रष्टव्यम् । तथाच यथाग्नीनां श्रौतविनियोगविरोधान्न सामर्थ्यात्सर्वकर्मार्थत्वं तथा पुरोडाशस्यापि श्रौतछिद्रापिधानार्थत्वविरोधान्न सामर्थ्याद्देवतासंस्कारार्थत्वमित्युत्थितेः संगतिर्बोध्या । **प्रत्यक्षेति** । **वपोद्धरणस्य** विहितत्वेन ततः पशुयागस्य व्यङ्गतासद्भावे प्रमाणाभावान्न तत्समाधानार्थत्वमस्य व्यङ्गतासमाधानार्थत्वे·········**प्रमाणत्वं च स्यादिति** छिद्रापिधानवचनमर्थवाद एवेति भावः । तस्माच्छ्रौतविनियोगाभावात्सामर्थ्यादुत्तमप्रयाजवद्देवता·········
·········बाधविचारोप्ययं प्रयोगपरिमाणफलकत्वादिह संगत इति तन्त्ररत्ने । सूत्रे अन्येषां सवनीयपुरोडाशानामेवमर्थत्वाच्छिद्रापिधानार्थत्वादित्यर्थः ॥

---

१ पुरोडाशो निरूप्यते.

सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् ॥ ३ ॥

**हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥**

**सवनीये पुरोडाशे स्यादाहूतिर्हविष्कृतः ॥ न वाऽतिदेशात्स्यान्नैवं पश्वाह्वानात्प्रसक्तितः ॥ ३ ॥**

प्रकृतौ पात्रप्रोक्षणानन्तरमवघातकालस्तस्मिन्काले 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती'ति हविष्कृदाह्वानं तदाज्यौषधसांनाय्यानां सर्वेषामङ्गमिति कृत्वाचिन्त्यते तदा हि सांनाय्यविकारे पशावपि पात्रप्रोक्षणानन्तरमस्ति हविष्कृदाह्वानम् । अतश्च सवनीयपश्वर्थेन तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत्तन्मध्यपातिनां सवनीयपुरोडाशानां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति सिद्धमेवोत्तरविवक्षया प्राप्यते ॥

तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम् ॥ ४ ॥

**पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ [योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥]**

**अस्त्याहूतिश्चरौ सौम्ये नास्ति वा पशुपाकतः ॥ निवृत्तत्वादस्ति नैवमनिवृत्तेः पुरोस्थितेः ॥ ४ ॥**

सन्ति तृतीयसवने सवनीयः पुरोडाशः सौम्यश्चरुराश्विनश्च द्विकपाल इति । ते च सवनीये पशौ पक्के क्रियन्ते तेषु किं हविष्कृदाह्वातव्या उत पाशुक्येव प्रसज्यत इति संशये हविष्कृत्समाख्यया हविःकरणमेव तस्याः कार्यम् । अतः पक्के पशौ तदर्था हविष्कृत् कृतकार्यत्वादपवृक्तेति । ततः परेषु पुनराह्वातव्येति प्राप्ते ब्रूमः—साहाय्यकरणं तदाह्वानस्य कार्यं सामर्थ्यान्न केवलं हविष्करणमेव, मुख्यत्वात्तु हविष्करणेन समाख्यायते । तेनाहूता सती प्रागुत्थानविधानान्नोत्थातुमर्हति । प्रकृतौ च पत्नीसंयाजेभ्यः पश्चात्पत्न्युत्थानं विहितमिति सवनीयेऽपि पशावा पत्नीसंयाजेभ्यः संनिहितेति तत्कालवर्तिनां तार्तीयसवनिकानां न भेदेनाह्वातव्येति ॥

---

**हविष्कृत्सवनीयेषु०** ॥ ११ ॥ इह सत्यप्येककार्यत्वे भिन्नकालत्वात्पृथगनुष्ठानमित्युत्थितेः संगतिः । हविष्कृदेहीत्यस्यावघाताङ्गत्वे कृत्वाचिन्ताप्यसुकरेति तत्सौकर्यार्थं कालार्थसंयोगं तृतीयोक्तमभिप्रेत्याह—**प्रकृताविति । कृत्वेति ।** अन्यथा केवलौषधार्थत्वाद्विचारोप्यनुपपन्नः स्यादिति भावः । औषधार्थत्वं च भाष्ये व्यक्तम् । **तदाहीति** । उपलक्षणापायेप्युपलक्ष्यानपायादिति भावः । **सिद्धमिति** । नचैवमनेन न्यायेनाग्नीषोमीयपश्वर्था सास्त्येव पशुपुरोडाशे प्रसंगे सति तत्र पृथगाह्वानाभावाद्धविष्कृता वाचं विसृज्येत्ययं वाग्विसर्गो न पाशुकहविष्कृतः किंतु पौरोडाशिकहविष्कृत इत्येवमर्थकं पशौ च पुरोडाशे च समानतन्त्रता भवेदित्येकादशाधिकरणमनुपपन्नं स्यादिति वाच्यम् । पुरोडाशे पृथक्हविष्कृदाह्वानाभावेऽप्युपलक्ष्यानपायादेव तत्कालस्यानपेतत्वेन तदधिकरणोपपत्तेरिति भावः । सूत्रार्थस्तु—यदि हविष्कृत्प्रकृतावाज्यौषधसान्नाय्यार्था तदा हविष्कृत्पश्वर्थमाहूतैव विद्यमानत्वात्सवनीयपुरोडाशेऽप्युपकरिष्यतीति न पृथक् स्यादिति ॥

**पशौ तु संस्कृते०** ॥ १२ ॥ **हविष्करणमेवेति** । नतु साहाय्यकाचरणं कार्यं समाख्याविरोधादित्येवकारार्थः । **अत इति** । एवंच पूर्वत्र समाख्याबलात्पशुपाकपर्यन्तमनपवृक्तत्वात्पाकात्पूर्वभाविषु प्रातःसवनीयमाध्यंदिनसवनीयकेषु प्रसङ्गसंभवेऽपीह नास्ति प्रसङ्गः । पाकानन्तरमपवृक्तत्वाद्धविष्कृत इति पूर्ववैषम्येणोत्थानात्संगतिरिति सूचितम् । इदमेव वैषम्येणोत्थानं पूर्वाधिकरणे उत्तरविवक्षयेत्यनेन विवक्षितमिति ध्येयम् । **मुख्यत्वादिति** । स्त्रीणां पाकाभिज्ञतया तत्प्राधान्यादिति पर्यवसितोर्थः । **ननु** गृहकार्यव्यापृततयान्तरान्तरागमने सति पुनराह्वानं स्यादित्यत आह—**तेनेति । प्रागिति** । यस्मिन्काले उत्थानं विहितं ततः प्रागित्यर्थः । तमेव कालमाह—**प्रकृतौ चेति । सूत्रार्थस्तु**—तार्तीयसवनकीयेषु पुरोडाशेषु सौम्याश्विनयोश्च हविष्कृद्भेदेन स्यात् पक्के पशौ तेषां विहितत्वेन तस्यास्तदानीमपवृक्तत्वात् इति ॥

---

१ प्रत्याहूता.

निशि यज्ञेऽमावास्यातन्त्रप्रयोगाधिकरणम् ॥ ५ ॥

**निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ [कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥ वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देवतार्थम् ॥ १८ ॥]**

**निशि यज्ञे दर्शतन्त्रं नोतास्त्येतन्न दर्शगे ॥ तन्त्रमध्ये विध्यभावादस्त्यर्थात्तद्विधानतः ॥ ५ ॥**

काम्यास्विष्टिषु श्रूयते 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभिया'दिति। तत्रापरं वचनं 'अमावस्यायां निशि यजेते'ति। तस्मिन्निशियज्ञे चिन्त्यते किं पृथक् तन्त्रं कर्तव्यमुत दार्शिकमेव तन्त्रं प्रसज्यत इति। तत्रामावस्यायां निशीति सामानधिकरण्यात्कालवचनोऽमावास्याशब्दो न कर्मवचनः काले चानपेक्षः प्रवर्तते, कर्मणि तु कालापेक्षा वृत्तिरिति ततोऽपि कालवचनः, तेन वाक्यतो नामावास्याकर्मणामुपस्थानं नापि प्रकरणात्तदभावात्, अतो नालोच्य दर्शं विधीयमाना निशीष्टिस्तत्तन्त्रोपजीवनासंभवात्स्वाङ्गयुक्तैव निशि कर्तव्यतया विधीयते इति नास्ति प्रसङ्ग इति प्राप्ते ब्रूमः—यद्यपि वाक्यात्प्रकरणेन वा नोपस्थानं तथापि यस्मिन्काले विधीयते स तावन्नियमेन प्रवृत्तामावस्यातन्त्र एव। तेन तत्र विधीयमानेष्टिस्तत्तन्त्रमध्यविहिता भवति। अवश्यं चार्थस्वभावावगतमप्यमावास्यातन्त्रमालोच्यैव निशीष्टिर्विधातव्या। अन्यथाग्निप्रणयनव्रतोपायनादिकमपि विदध्यात्। तच्चाशक्यम्, प्रणीतानामग्नीनां पुनःप्रणयनासंभवादुपेतस्य व्रतस्यानुत्सृष्टस्य पुनरुपेतुमशक्यत्वात्। तस्मादालोच्यैव दर्शतन्त्रं विधीयमानेष्टिर्यत्तत उपजीवितुमशक्यमिध्माबर्हिःसामिधेन्यादि तन्मात्रं स्वयं प्रयुङ्क्ते, अन्यत्तु दार्शिकमेवोपजीवतीति। विकृत्यन्तराणि तु सौर्यादीनि पौर्णमास्यमावास्ययोर्विधीयमानान्यपि न प्रवृत्ततन्त्रायां प्रकृतौ विधीयन्ते प्रागेव प्रकृत्यारम्भात्तदनुष्ठानसंभवात्। इयं तु निशायां विधीयमाना तत्तन्त्रमध्यपातिनी प्रसङ्गमुपजीवतीति वैषम्यम् ॥

---

**निशि यज्ञे प्राकृतस्य०** ॥ १४ ॥ सवनीयपशोः सवनीयपुरोडाशानां चैकसौमिकप्रयोगवचनपरिगृहीतत्वात्पाशुकस्य पुरोडाशेषु प्रसङ्गसंभवेऽपि भिन्नप्रयोगवचनग्राह्यनिशीष्टौ न दार्शिकाङ्गप्रसङ्ग इत्युत्थितेः संगतिः। **सामानाधिकरण्यादिति।** कर्मवचनत्वेऽमावास्यायामित्यस्य निशीत्यस्य च भिन्नार्थत्वाद्वैयधिकरण्येनान्वयः स्यात्स चायुक्त इति भावः। **तदिति।** दर्शपूर्णमासप्रकरणे अस्या अनाम्नानादिति भावः। **स तावदिति। ननु** आधानानन्तरं यदा पौर्णमास्याः पूर्वमेवामावास्या प्राप्नोति तदा तस्यां न दर्शतन्त्रप्रवृत्तिः। दर्शपूर्णमासयोः पूर्णमासोपक्रमत्वेन तदा दर्शे कर्मानुष्ठानानुपपत्तेस्ततश्च तस्यां निशीष्ट्यनुष्ठानसंभवान्निशीष्टिकालस्य प्रवृत्तामावास्यातन्त्रत्वनियमोऽनुपपन्नः। नच प्रकृत्यनारम्भे निमित्तादिवशादापतन्त्या विकृतेरप्यननुष्ठानमित्यत्र प्रमाणमस्ति येन निशीष्ट्यनुष्ठानं दर्शपूर्णमासोपक्रमात्पूर्वं न संभवेत्तथासति सोमात्पूर्वं सांनाय्याग्नीषोमीयरूपप्रकृत्यनुष्ठानाभावादेव तद्विकाराणामननुष्ठाने सति सोमादूर्ध्वमेव तेषामनुष्ठानसिद्धेः तत्सिद्ध्यर्थस्य सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवदिति पाञ्चमिकाधिकरणस्य वैयर्थ्यप्रसङ्गादिति चेदेवमपि दर्शपूर्णमासोपक्रमानन्तरं यदा निशीष्टेरनुष्ठानं तदा तन्त्रमध्यपातनियमावश्यंभावेन तदभिप्रायेणास्य ग्रन्थस्योपपत्तेः। नचैवमेकस्या एव निशीष्टेः 'दर्शपूर्णमासोपक्रमात्पूर्वं क्रियमाणायास्तन्त्रित्वं तदनन्तरं क्रियमाणायाः प्रसङ्गित्व'मिति वैरूप्यं स्यादिति वाच्यम्। नित्यायाः प्रकृतेस्तन्त्रिण्या एव काम्यनैमित्तिकविकृतिसंनिपाते सति प्रसङ्गित्वस्य वक्ष्यमाणत्वेनोक्तवैरूप्यस्यादोषत्वादित्याहुः। **तन्त्रमध्येति।** यद्यपि स्वरूपसत्तन्त्रमध्ये विधानमात्रेण न प्रसङ्गसंभवः अनुपस्थितस्य परकीयस्य प्रयोगविधिनोपजीवितुमशक्यत्वात्तथापि यस्मिन्काले निशीष्टिः प्रयोगविधिना विधातव्या तत्कालस्वरूपे पर्यालोच्यमाने दार्शिकतन्त्रोपस्थितिरपि भवतीति भावः। **नन्वियमुपस्थितिर्न** नियता प्रयोगविधिप्रवृत्तिसमये तत्कालस्वरूपपर्यालोचनावश्यंभावादित्यत आह—**अवश्यंचेति। व्रतोपायनादीति।** आदिशब्देन वेद्युद्धननव्रतविप्रतिषेधात्तदेव स्यादिति सूत्रेऽपि वेद्युद्धननपरिग्रहः। **इध्मेति।** परेद्युः प्रयुज्यमानेनेध्म बर्हिरादिना पूर्वे पुनिश्चियां [illegible] ... पेक्षिताग्निसमिंधनवेद्यास्तरणादिलक्षणोपकारजनतासंभवात्तदुपजीवनमशक्यमित्यर्थः। **अन्यदिति।** अदृष्टोपकारकप्रयाजादित्यर्थः। **विधीयमानानीति।** य इष्ट्यादिवाक्येनेति शेषः। सूत्रे प्रत्यक्षशिष्टत्वादित्यस्य दर्शतन्त्र [illegible] ........प्रकर णान्तरेस्वातन्त्र्येण शिष्टत्वादिति पर्यवसितोऽर्थः ॥

विकृतिष्वप्यारम्भणीयानुष्ठानाधिकरणम् ॥ ६ ॥

**आरम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन ॥१९॥**
**[स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ आरम्भविभागाच्च ॥ २१ ॥]**

आरम्भणीया सौर्यादौ नोत स्यान्न प्रयोगवत् ॥ क्रत्वर्था न प्रयोगार्था क्रत्वारम्भे ततो भवेत् ॥ ६ ॥

सौर्यादिष्वारम्भणीया स्यान्न वेति विचारे न स्यादिति ब्रूमः । प्रकृतौ हि सकृदेवेयं कर्तव्या न प्रतिप्रयोगमावर्तनीयेत्युक्तं नवमे । यदि च सकृत्कृतयैवानया संस्कृतः पुरुषो यावज्जीवं संस्कृत एव भवति ततोऽस्याः सकृत्करणं युक्तम् । अपवृक्ते तु संस्कारे पुनःपुनस्तत्सिद्ध्यर्थमनुष्ठातव्या स्यात् । तेन प्रकृत्यर्थं कृत एव संस्कारोऽनपवृक्तः प्रसङ्गेन विकृतीनामुपकरोतीति न तास्वारम्भणीया कर्तव्या। उच्यते—न संस्कारव्यवस्थानात्प्रकृतावनावृत्तिः किंत्वारम्भैक्यात् । आद्या हि कर्तुः प्रवृत्तिरारम्भः सचैकस्य क्रतोरेक एव। अतस्तदपवर्गे प्रवृज्यत एव तदर्थः संस्कारः कार्यविरोधित्वात्। धर्मस्य पुनःपुनः प्रयोगे हि प्रयोगा एव भिद्यन्ते न क्रत्वारम्भः, क्रत्वारम्भाङ्गं चान्वारम्भणीया। दर्शपूर्णमासशब्दस्य क्रतुवचनत्वात् । तस्मान्न पुनःपुनः प्रयोगे आरम्भणीया । विकृतिषु त्वारम्भभेदाच्चोदकप्राप्तारम्भणीया कर्तव्यैवारम्भवेलायाम् ॥

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम् ॥ ७ ॥

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २२ ॥**

या पञ्चदशरात्रस्य सुब्रह्मण्याद्यकालगा ॥ आग्नेयी स्यात्किमैन्द्री वा प्रथमाहानुगुण्यतः ॥ ७ ॥
आग्नेयी प्रथमं चाहो विरोधानुदयाद्बलि ॥ न बह्वनुग्रहादैन्द्रा कुलार्थत्यागनीतितः ॥ ८ ॥
सप्तयागसमूहस्य वृधन्वत्यावृचावुत ॥ वार्त्रघ्न्यावाज्यभागार्थे प्रथमत्वाद्दधीन्द्रयोः ॥ ९ ॥
दर्शधर्मातिदेशेन प्राप्त आद्योऽन्तिमो यतः ॥ घृतं मध्वाप इत्येषां बहूनां बलितोचिता ॥ १० ॥

पञ्चदशरात्रेऽग्निष्टुत्प्रथममहः तत्रैकाहाग्निष्टुद्धर्मा नामधेयेन प्राप्यन्ते तेनाग्नेयी सुब्रह्मण्या अनन्तराणि त्रीणि ज्योतिरादीनि। तत्र ज्योतिरादीनामेकैकाहेभ्यो नाग्नैन्द्री परिशिष्टान्येकादशाहानि द्वादशाहिकानि तेष्वप्यैन्द्र्येव । तदिह चोदकप्राप्तैन्द्रीधर्मकाणामेकादशानामह्नामप्राप्ताग्नेयीधर्मकस्य

---

**आरम्भणीया०** ॥ १९ ॥ पूर्ववदिहापि प्रसङ्ग इत्युत्थितेः संगतिः । **प्रकृताविति** । 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान' इति शानजभिहितदर्शपूर्णमासारम्भकर्तृसंस्कारत्वेनावगताया आरम्भणीयायाः दर्शपूर्णमाससर्वप्रयोगार्थं सकृदनुष्ठानसंस्कारस्य स्थापितत्व एव निर्वहति । अन्यथा द्वारभूतकर्तृकसंस्कारापवर्गात्प्रयोगान्तरार्थत्वं न स्यात्ततश्च प्रयोगान्तराणामारम्भणीयासंस्काराभावाद्वैगुण्यं स्यादिति प्रयोगान्तराणामारम्भणीयासंस्कृतपुरुषकत्वनिर्वाहार्थं पुनःपुनरनुष्ठानस्यावर्जनीयत्वात्। एवं च नवमोक्तसकृदनुष्ठाननिर्वाहार्थं पुरुषसंस्कारस्य स्थापितत्वमावश्यकमिति स एव संस्कारो विकृतिष्वप्युपकरिष्यतीति विकृत्यर्थं न पृथक्कर्तव्येत्यर्थः । नवमोक्तं हि सकृदनुष्ठानं संस्कारस्य स्थापितत्वं विनापि निर्वहति। यद्यपि पुरुषसंस्कारार्थेयं तथापि पुरुषसंस्कारो न साक्षात्क्रतावुपयुज्यते किंत्वारप्स्यमानशब्दबलादारम्भकर्तृपुरुषसंस्कारत्वावगमादारम्भद्वारा क्रतावुपकरोति। सचारम्भः क्रतावप्रवृत्तस्य कर्तुराद्यप्रवृत्तिलक्षणः सर्वप्रयोगाणामेक एवेति पुरुषसंस्कारद्वारभूतारम्भैक्यादेव सकृदनुष्ठानसिद्धेर्न तदर्थं पुरुषसंस्कारस्य स्थापितत्वं कल्पनीयम् । एवं चारम्भलक्षणकार्येणैव कार्येनाश्यस्य पुरुषसंस्कारस्य नाशात् विकृतीनामारम्भभेदाच्च तत्तदारम्भवेलायां पृथक्कर्तव्येति सिद्धान्तमाह—**उच्यत इत्यादिना। न क्रत्वेति**। क्रतुगोचरौदासीन्यप्रच्युतेः प्रथमप्रयोगे एव वृत्तत्वात्पुनःप्रयोगे न क्रत्वारम्भ इत्यर्थः । सूत्रार्थस्तु—आरम्भणीया विकृतौ न स्यात्प्रकृतेर्यावज्जीवं प्रयोज्यतया विकृतीनां तत्कालमध्यपातेन प्रकृत्यर्थे कृताया एव तस्या विकृतिषु प्रसङ्गसंभवादिति । अत्र द्वितीय एव यावज्जीववाक्यस्य कालविधिपरत्वनिराकरणात्सूत्रस्वरसात्तत्परतया प्रतीयमानमपि प्रकारं विहाय प्रकारान्तरेणाधिकरणमुपवर्णितमिति ध्येयम् ॥

**विप्रतिषिद्धधर्माणां०** ॥ २२ ॥ किं मुख्यधर्मस्यैवेतरत्र प्रसङ्ग उत भूयसां धर्मस्येति प्रसङ्गविशेषविचारात्संगतिः। **नामधेयेनेति**। गणेषु द्वादशाहस्येति द्वादशाहधर्मप्रापकचोदनासामान्यान्नामधेयस्य प्रबलत्वादिति भावः। **तेष्वपीति**। तेषां द्वादशाहिकत्वात्तद्वदैन्द्री सुब्रह्मण्येत्यर्थः। **तदिहेति** । अत्राग्निष्टुद्व्यतिरिक्तानां चतुर्दशानामप्यैन्द्रीधर्मकत्वादग्निष्टुतो-

---

१ आग्नेयी तत्र सुब्रह्मण्या। ततो ज्योतिर्गौरायुरिति त्र्याहः तत्र ज्योतिरादिनामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः । तेन तेष्वैन्द्री सुब्रह्मण्या परिशिष्टानि इति पाठः।

चाग्निष्टुतो विरोधे चिन्त्यते । यद्वा नाम्नामेव ज्योतिरादीनामग्निष्टुतश्च मिथश्चिन्ता । तत्रोपसत्कालसुब्रह्मण्यायां तन्त्रभूतायां किमनियमः उताग्नेयी ग्राह्या अथ चैन्द्रीति । तत्रानियमे मुख्यत्वाद्वाग्निष्टुद्धर्मानुग्रहे प्राप्ते भूयसां साधर्म्याय ऐन्द्रीति सिद्धान्तितम् । नन्विह सुब्रह्मण्योदाहरणं युक्तम् । यत्रान्यार्थेनान्यस्योपकारसिद्धिस्तत्र प्रसङ्गः । नचाग्नेय्या सुब्रह्मण्यया इन्द्रः संस्कृतो भवत्यैन्द्र्या वाग्निः । अतएव न तन्त्रता । तेनोभावपि भेदेनाह्वातव्याविसनुदाहरणम् । काम्यास्विष्टिषु श्रूयते— 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधिमधुघृतमापोधानास्तत्संसृष्टं प्राजापत्यं पशुकाम'इति । तदिमानि सप्त हवींषि आग्नेयमैन्द्रं प्राजापत्यानि पञ्चेति । तत्राग्नेयं प्राजापत्याश्च धाना आग्नेयविकारत्वादुभयथाप्यविरुद्धाः । यस्त्वैन्द्रः पुरोडाशो यच्च प्राजापत्यं दधि तयोरैन्द्राग्नसांनाय्यविकारत्वादमावास्याधर्मापेक्षा मधुघृतायां तूपांशुयाजविकारत्वात्पौर्णमासिकधर्मापेक्षा । मधूदकयोराज्यविकारत्वमष्टमे सिद्धं, घृतस्य त्वसंदिग्धमेव । तदेतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां वार्त्रघ्नावाज्यभागमन्त्रौ प्राप्तौ दर्शविकारयोस्तु द्वयोर्वृधन्वत्यौ । नचान्यतराभ्यां कृतावाज्यभागौ पुनर्मन्त्रार्थमावर्तनीयौ । तदिह किममावास्यामन्त्राभ्यामाज्यभागौ कर्तव्यौ ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वात्पौर्णमासिकौ मन्त्रौ निवर्तेते अथवा विपर्यय

---

ऽन्येषां च विरोधे चिन्त्यत इत्येव वक्तुमुचितं ननु चतुर्दशानामह्नां मध्ये चोदकप्राप्तैन्द्रीधर्मकमेकं राशिं नामप्राप्तैन्द्रीधर्मकमपरं च राशिं कृत्वाग्निष्टुतः प्रथमेन द्वितीयेन वा राशिना विरोधे चिन्त्यत इति भेदेनोपन्यासो युक्तः । नच चोदकस्य नामापेक्षया दुर्बलत्वाच्चोदकप्राप्तैन्द्रीधर्मकाणां नामप्राप्ताग्नेयीधर्मकाग्निष्टुतश्च संप्रधारणा न संभवति असंबद्धत्वादित्याशयेन पृथङ्निर्देश इति वाच्यम् । अन्यविषयेण नाम्ना तदन्यविषये चोदकाद्धर्मप्राप्तेर्निवारयितुमशक्यत्वेन समानविषयनामधेयस्यैव चोदकापेक्षया प्रबलत्वेनेह भिन्नविषयचोदकस्य नामधेयप्राप्तधर्मस्थले संप्रधारणोपपत्तेरिति ध्येयम् । सुत्याकालं सुब्रह्मण्याया आवर्तनीयत्वेन तत्र विचारो नोपपद्यत इत्याशयेनाह—**उपसत्कालमिति । तन्त्रभूतायामिति** । सकृत्प्रयोज्यायामित्यर्थः । यथाश्रुते आग्नेयीत्वादिना विशेषग्रहेण तन्त्रत्वानुपपत्तेः । **मुख्यत्वादिति** । अनुपसंजातविरोधित्वान्मुख्यधर्मस्य प्राबल्यमित्यग्रिमाधिकरणे वक्ष्यमाणन्यायादित्यर्थः । **भूयसामिति** । मुख्यत्वापेक्षया भूयस्त्वस्य प्राबल्यमग्रिमाधिकरणे स्वयमेव वक्ष्यति—**नचेति** । सुब्रह्मण्याया आरादुपकारकत्वे मानाभावात्सामर्थ्याद्देवतासंस्कारकत्वमिति भावः । **पञ्चेति** । 'दधिमधुघृतमापोधानास्तत्संसृष्टं प्राजापत्य'मित्यत्र तदिति सर्वनाम्नो निर्दिष्टप्रतिनिर्देशकत्वेन पूर्वनिर्दिष्टदध्यादिद्रव्यनिर्देशकत्वात्तेषां प्राजापत्यपदेन देवतासंबन्धे सति द्रव्यदेवतासंबन्धभेदाद्यागभेदः । संसृष्टपदं तु एकदेवताकत्वात्सहप्रदानबलेनार्थलब्धसंसर्गानुवादः । एकवचनं तु पाशन्यायेन नपुंसकेनोपपन्नं । तस्मात्तत्संसृष्टं प्राजापत्यमित्यनेन पञ्चयागा विधीयन्त इत्याशयेन प्राजापत्यानि पञ्चेत्युक्तमिति द्रष्टव्यम् । **उभयथेति** । दार्शपौर्णमासिकाग्नेयद्वयस्यापि विकृतिषु प्रवृत्तेरिति भावः । **ऐन्द्राग्नेति** । एकदेवताकत्वापेक्षया विशिष्येन्द्रसंबन्धस्य प्रबलत्वादैन्द्रपुरोडाश ऐन्द्राग्नविकारो नत्वाग्नेयविकार इति भावः । स्वाभाविकद्रवत्वात्पयोविकारत्वमाशङ्क्याह—**मधूदकयोरिति** । वर्णसामान्याधिक्यादिनेति शेषः । **असंदिग्धमिति** । द्रव्यसामान्यजागरूकत्वादिति भावः । **पौर्णमासीति** । पौर्णमासीमात्रविकाराणामित्यर्थः । एवं दर्शविकारयोरित्यत्रापि । **ननु** पौर्णमासीविकाराणां वार्त्रघ्नावाज्यभागौ दर्शविकारयोर्वृधन्वन्तावित्ययुक्तम् । वार्त्रघ्नी पौर्णमास्यामनूच्यते वृधन्वत्यमावास्यायामिति वाक्यगतपौर्णमास्यमावास्याशब्दयोः कालपरत्वात्प्रकृतौ कालद्वारा व्यवस्थायां सत्यां विकृतावपि तथैव व्यवस्थाप्राप्तेर्दर्शविकाराणां पौर्णमास्यनुष्ठाने तत्कालप्रयुक्तौ वार्त्रघ्नावेव मन्त्रौ प्राप्नुतो नतु वृधन्वन्तौ । एवं पूर्णमासविकाराणाममावास्यायामनुष्ठाने वृधन्वन्तावेव प्राप्नुतो न वार्त्रघ्नौ । अतश्चैकस्मिन्काले सप्तानां सहप्रयोगे स कालो यदि पौर्णमासी तदा सर्वेषामपि वार्त्रघ्नौ, यद्यमावास्या तदा सर्वेषामेव वृधन्वन्तौ । तस्मादिहैकस्मिन्प्रयोगे वार्त्रघ्नवृधन्वन्तमन्त्रप्राप्तिरयुक्तेति चेत् । सत्यम् । वार्त्रघ्नी पौर्णमास्यामिति वाक्ये कालपरौ पौर्णमास्यमावास्याशब्दौ, तथापीह न पूर्णमासत्वादिना साक्षात्कालं प्रतिपादयतः । आज्यभागयोः साक्षात्कालसंबन्धाभावेन पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्नौ, अमावास्यायां काले यावाज्यभागौ तयोर्वृधन्वन्तावित्येवं व्यवस्थानुपपत्तेः । अतः पौर्णमास्यमावास्याशब्दौ प्रथममाग्नेयादिकर्मणी प्रतिपाद्य तत्र मन्त्रविध्ययोगात्तदीयकालोपलक्षणार्थाविति वक्तव्यम् । अयंचार्थस्तृतीये 'मिथश्चानर्थसंबन्धा'दित्यत्र न्यायसुधायां स्पष्टः । ततश्च प्रकृतौ पौर्णमासीत्वाद्यनादरेण प्रधानाग्नेयादिकालत्वमात्रेण व्यवस्थामन्त्रयोरिति प्रधानकर्मप्रयुक्तत्वाद्व्यवस्थाया विकृतावपि यथाप्रधानं मन्त्रप्राप्तिरुपपद्यत इति भावः । नन्वन्यतरोपादाने एकमन्त्राभावाद्वैगुण्यं स्यादत आवृत्तिरेवाज्यभागयोः किं न स्यादित्यत आह—**नचेति** । गुणानुरोधेन प्रधानावृत्तिरन्याय्या, प्रसङ्गस्थले च गुणलोपो न दोष इति भावः । **प्रसङ्गेति** । यद्यप्यत्र सर्वे तन्त्रिणस्तथापि विरुद्धेषु धर्मेषु प्रसङ्ग एव न्याय्य इति

इति संदेहे 'अनियमे मुख्यत्वाद्दैन्द्रदध्नोस्तद्धर्मानुग्रहे प्राप्ते ब्रूमः—भूयसां मध्वादीनां धर्मौ वार्त्रघ्नावनुगृहीतव्यौ । यद्यपि मुख्यधर्मः प्रथममवगम्यते तथापि पश्चाद्भूयोऽनुग्रहमालोच्य बाध्यते सोऽयं प्राप्तबाधः । तस्मात्पौर्णमासिकौ धर्मावनुग्रहीतव्यौ ॥

तुल्यसंख्याकानां धर्मविरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम् ॥ ८ ॥

## मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥ [तथाचान्यार्थदर्शनम् ॥ २४ ॥]

**आग्नावैष्णवसारस्वतयोरिच्छाथ मुख्यगम् ॥ आद्यो नियामकाभावादन्त्यः प्राथम्यतो भवेत् ॥ ११ ॥**

यत्र समसंख्यानां धर्मविप्रतिषेधस्तत्र कस्य स्वधर्मलाभः कस्य वान्यधर्मोपजीवनमिति चिन्तायामनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमित्याह । तस्य हि धर्मोऽसंजातविरोधावस्थायां निर्विघ्नमवगम्यते जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः संग्रहीतुं शक्यते । नचात्रावगतस्य त्यागेऽनवगतसंग्रहे च किंचित्कारणं भूयस्त्वं प्रधानधर्मत्वं चास्ति । तस्मादत्र मुख्यस्य स्वाधर्म्यमिति किमिहोदाहरणम् । अध्वरकल्पायां श्रूयते 'आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे सरस्वतीमाज्यस्य यजेते'ति । तत्राग्नावैष्णवस्यौषधद्रव्यकत्वाद्विदेवत्यत्वद्वादशकपालत्वैरैन्द्राग्नविकारत्वाद्दार्शिकं तन्त्रम् । आज्यस्य तूपांशुयाजविकृतित्वात्पूर्णमासधर्मापेक्षा । तत्र पूर्ववदाज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वाद्वृधन्वत्यौ गृहीतव्ये । ऐकाधिकरण्यं त्वेकीयमतत्वेनोपन्यासादन्याय्यत्वाच्च परमतमेव । नह्यल्पवैगुण्ये संभवति भूयोवैगुण्यं प्रयोगवचनः क्षमते । अवगतमपि हि कारणान्तरवशाद्बाध्यत एव । यथोपरितनेऽधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं हित्वा प्रधानधर्मत्वबलेन सुत्याकाल एवानुग्रहीष्यते तथा भूयस्त्वेनापि । तस्माद्द्वे एवाधिकरणे ॥

अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम् ॥ ९ ॥

## अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥

**य इष्ट्या पशुनेत्यादौ दीक्षाकालोऽथ सोमकः ॥ आद्यः प्राथम्यतो मैवं प्रधानस्य बलित्वतः ॥ १२ ॥**
**दीक्षापर्वणि वा सुत्या दीक्षा स्यात्प्रथमत्वतः ॥ सुत्या प्राधान्यतोऽन्या तु शेषत्वादपकृष्यते ॥ १३ ॥**

दीक्षणीयायाः सोमस्य च 'य इष्ट्या पशुना सोमेने'त्यादिवचनेनैककालत्वे प्राप्ते सति—एकादिदीक्षा-

---

भावः । **नन्व**संजातविरोधिमुख्यत्वं प्रतीक्ष्य दार्शिकधर्माणामेव शास्त्रेण प्रथमं प्रापितत्वात्तेषां कथं बाधः । शास्त्रप्राप्तस्य बाधे प्रापकशास्त्रस्याप्रामाण्यापत्तेरित्यत आह—**सोऽयमिति** । यथा च प्राप्तबाधस्थले प्रापकशास्त्रस्य न प्रामाण्यं तथा दशम एवोपपादितमिति भावः ॥

**मुख्यं वा पूर्वचोदनात्०** ॥ २३ ॥ पूर्ववदिह भूयस्त्वस्य नियामकस्याभावादनियम इत्युत्थितेः संगतिः । समसंख्यानामित्यनेन पूर्वाधिकरणविषयाद्व्यावर्तयति—**आहेति** । सूत्रकृदिति शेषः । **अवगतेति** । प्रथमावगतेत्यर्थः । **अनवगतेति** । चरमावगतेत्यर्थः । **भूयस्त्वमिति** । यथापूर्वाधिकरण इति शेषः । प्रधानधर्मत्वमित्यस्य तूदाहरणं यथोपरितने इत्यग्रिमवाक्ये स्फुटम् । अग्नीषोमीयविकारत्वनिरासार्थमाह—**द्वादशेति** । **ननु** मुख्ये वेति सूत्रे वाशब्दश्रवणाद्विप्रतिषिद्धधर्माणामिति सूत्रं पूर्वपक्षसूत्रं मुख्यं वेति सूत्रं सिद्धान्तसूत्रं प्रतीयते । ततश्चैकाधिकरण्यमेव युक्तं वक्तुम् । एवंच भूयस्त्वस्थले समसंख्यस्थले च सर्वत्रापि मुख्यधर्मानुग्रह एव न्याय्य इत्यत आह—**एकेति** । वाशब्दश्च धर्मविप्रतिषेधे भूयसां वा मुख्यस्य वा धर्म इति विकल्पार्थः नतु पक्षव्यावृत्त्यर्थः । सच विकल्पोऽल्पभूयोविरोधे भूयसां तुल्यसंख्यविरोधे मुख्यस्येति व्यवस्थया बोध्य इति भावः । **उपन्यासादिति** । 'ऐकाधिकरण्यं त्वेके मन्यन्ते'इति भाष्य इति शेषः । सूत्रार्थस्तु—मुख्यमनुग्राह्यधर्मकं स्यात्तस्य पूर्वचोदितत्वेन तदीयधर्मस्य प्रथमावगतत्वाल्लोकवत्प्रथमावगतस्यैव परिग्राह्यत्वादिति ॥

**अङ्गगुणविरोधे च०** ॥ २५ ॥ पूर्वोक्तमुख्यधर्मानुग्रहापवादात्संगतिः । प्रकृतावप्येकादिदीक्षापक्षसंभवस्य षष्ठे वार्तिककारमतेनोपपादनात्प्रकृतिविकृत्यौदासीन्येन सोमयागमात्रस्य विषयत्वं नतु परमत इव विकृतिभूतस्यैवेत्याशयेन सोमस्येति सामान्योक्तिः । द्वादशदीक्षापक्षे उभयोरपि पर्वकालत्वसंभवादाह—**एकादिदीक्षेति** । नच द्वादशदीक्षापक्षेऽपि अङ्गभूतप्रायणीयादीष्टीनामग्नीषोमीयादिपशूनां प्रधानभूतसोमयागस्य च पर्वकालत्वानुग्रहासंभवाद्विचारः संभवतीति वा-

पक्षे द्वयोः कालासंभवात्कस्य कालोऽनुग्राह्य इति विचारे अनियमे मुख्यत्वाद्वा दीक्षणीयाधर्मानुग्रहे प्राप्ते प्रधानधर्मत्वात्सुत्याकालानुग्रहः सर्वाणि ह्यङ्गानि तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते । नच साक्षात्साद्गुण्यसंभवे परंपरामाश्रयति तस्मात्प्रधानकालानुग्रहोऽयं प्राप्तबाधचिन्तापीयं विप्रतिषिद्धधर्मसमवायप्रसङ्गादिह कृता ॥

परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम् ॥ १० ॥

## परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

**पश्वर्थपरिधौ स्वीयधर्मो यद्वा द्विधर्मता ॥ मुख्यत्वादादिमोऽन्यः स्यान्नियोजनविधानतः ॥ १४ ॥**

'परिधौ पशुं नियुञ्जीते'ति परिधानं यूपकार्यं च कुर्वन्परिधिः परिधिधर्मान्संमार्जनादीन्यूपधर्मांश्च परिव्याणादींल्लभेतेति प्राप्तिसूत्रमेतत् ॥

परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् ॥ ११ ॥

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ [इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ उभयोश्चाङ्गसंयोगः ॥ २९ ॥]

**विरोधितक्षणाद्यत्र कार्यं नो वा यतो यजौ ॥ यूपासत्तिस्ततः कार्यं न तद्रूपोपमर्दनात् ॥ १५ ॥**

विरुद्धेषु धर्मेषु किं यूपधर्माः कर्तव्याः परिधिधर्मा वेति संशये यूपस्य हविषा पशुना । साक्षात्संबन्धात्प्रधानप्रत्यासत्तिः । परिधेस्तु । हविराघाराग्निसंस्कारार्थत्वाद्विप्रकृष्टा । तेन यूपधर्मानुग्रहः पूर्ववत्प्रधानप्रत्यासत्तेरिति प्राप्ते ब्रूमः—परिधेः सतो नियोजने विधानादपरित्यक्तस्वधर्मे परिधौ नियुञ्जीतेति । नियोजनमात्रं ह्यत्र वाचनिकं तत्प्रयुक्तास्तु तक्षणादिधर्माश्चोदकेन प्राप्नुवन्तः परि-

---

च्यम् । दीक्षणीयायाः प्रायणीयादीनां च धर्मविरोधे मुख्यत्वेन दीक्षणीयाधर्मस्यैव ग्राह्यत्वाद्दीक्षणीयैव बाधितस्वकालानां प्रायणीयादीनां सोमेन सह संप्रधारणाया अनवसरदुःस्थत्वादिति भावः । अनियम इति । अङ्गगुणस्यापि प्रधानोपकारकत्वाविशेषेण प्रधानगुणतुल्यत्वादनियम इत्यर्थः । **मुख्यत्वादिति** । उपकारकत्वाविशेषे सति प्रथमोपस्थितत्वात्प्रधानधर्मापेक्षया मुख्यधर्म एव बलवत्त्वादिति भावः । **प्रधानेति** । प्रथमोपस्थितमपि मुख्यधर्मं न साक्षात्प्रयोगविधिर्गृह्णाति किंत्वङ्गद्वारा । ततश्च प्रयोगविधिव्यापारस्याङ्गधर्मापेक्षया प्रधानधर्मे झटिति प्रवृत्तेस्तदनुग्रह एव युक्त इत्यर्थः । उपकारकत्वाविशेषं निरस्यति—**सर्वाणीति । प्रसङ्गादिति । ननु** परोक्तरीत्याङ्गकालानुग्रहे स एव कालोऽङ्गद्वारा प्रधाने प्रसज्यत इति संगतिः । अंगकालानुग्रहेंऽगिनो यथाश्रुतकालसिद्ध्या प्रसङ्गासंभवादिति भावः । सूत्रार्थस्त्वङ्गगुणेन प्रधानगुणस्य विरोधे प्रधानगुणानुग्रह एव न्याय्यः प्रधानार्थत्वादङ्गानामिति ॥

**परिधिर्द्व्यर्थत्वात्० ॥ २६ ॥ परिधाविति** । परिधित्वात्परित्यागेनैव नियोजने विधानादुभयकार्यकरत्वमित्यर्थः । **ननु** 'कार्यप्रयुक्ता धर्मास्तत्साधने भवन्ती'ति नवम एव सिद्धमित्यत आह—**प्राप्तीति** । अत एव न पृथक् संगतिः ॥

**यौप्यास्तु विरोधे० ॥ २७ ॥ यूपधर्मा इति** । नियोजनार्थास्तक्षणोच्छ्रयणनिखननादय इत्यर्थः । **परिधिधर्मा इति** । सत्ववत्त्वादय इत्यर्थः । **यूपस्येति** । यूपधर्मा यागस्यान्तरङ्गास्तदीयद्रव्येण पशुना यूपस्य साक्षात्संबन्धेन प्रत्यासन्नत्वात् । परिधिधर्मास्तु बहिरङ्गाः परिधेर्यागीयहविराधाराग्निपरिधानार्थत्वेन व्यवहितत्वात्ततश्चान्तरङ्गाणां प्रथममुपस्थितत्वात्तेषामेव परिग्रह इत्यर्थः । पूर्ववदित्यनेन संगतिः । सूचिता । सत्यं यूपधर्मा अन्तरङ्गास्तथापि प्रकृते तेषां न प्रथममुपस्थितिः । ते हि नियोजनेनोपस्थापनीयाः । नियोजनं च परिधिमपेक्षते ततश्च परिधिप्राप्त्यनन्तरं नियोजनस्यात्मलाभस्तदनन्तरं च तद्धर्मोपस्थितिरिति वक्तव्यम् । परिधिश्च प्राप्यमाणः स्वधर्मविशिष्टतयैव प्राप्यत इति परिधिधर्माणामेवात्र प्रथमोपस्थितत्वात्प्रयोगविधिपरिग्रहो न यूपधर्माणामित्याशयेनाह—**परिधेः सत इत्यादिना** । नन्वेवं 'यो होता सोऽध्वर्यु'रित्यत्रापि होतुः सतोऽध्वर्युकार्ये विधानाद्विप्रतिषेधे होतृकार्यमेव कर्तव्यं स्यान्नाध्वर्यवमित्यत आह—**नियोजनमात्रमिति** । यो होता सोध्वर्युरित्यत्राध्वर्यूपलक्षितेषु कार्येषु होतुः प्रत्यक्षविधानाच्चोदकप्राप्तहोतृकार्यस्य निवृत्तिरित्युक्तम् । इह तु यूपधर्मेषु तक्षणादिषु न परिधिविधिः किंतु नियोजनमात्रे । यूपधर्मास्त्वानुमानिका एव । ततश्च परिधिधर्माणां यूपधर्माणां चानुमानिकत्वाविशेषे सति परिधित्वानुपमर्दन नियोजनविधानात्परिधिधर्मा एव प्रबला इति भावः ।

धित्वानुपमर्देन भवितुमर्हन्ति । सत्यामपि च प्रत्यासत्तावङ्गधर्मत्वमुभयोरविशिष्टं, तस्माद्विरोधे परिधिधर्माः कर्तव्याः ॥

सवनीयपुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् ॥ १२ ॥

**पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥ [पाशुकं वा तस्य वैशेषिकाम्नानात् तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥]**

सवनीयपुरोडाशाः प्रातःसवनगास्त्रयः ॥ सवनीयः पशुस्तत्र तन्त्रित्वं किं विकल्प्यते ॥ १६ ॥
पशोरेवेति नियमो हेत्वभावाद्विकल्प्यते ॥ पुनः प्रैषात्स्वरूपासात्पशोरेव हि तन्त्रिता ॥ १७ ॥

सवनीयः पशुः प्रातःसवने प्रारभ्यते तृतीयसवने समाप्यते । 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने अङ्गैस्तृतीयसवने'इति सवनीयाः पुरोडाशाः प्रतिसवनं विहिताः । अनुसवनं सवनीयाः पुरोडाशा: निरूप्यन्त इति माध्यंदिनीयानां तार्तीयसवनिकानां च पुरोडाशानां तन्त्रमध्यपातादसंदिग्धं प्रसङ्गित्वं प्रातःसवनिकानां पशोश्च मिथश्चिन्ता किं पुरोडाशास्तन्त्रिणः पशुः प्रसङ्गी, अथवा तन्त्री । ते प्रसङ्गिणः पशुरेव तन्त्री विपरीतं वेति । यस्य पूर्वमुपक्रमो यस्य वा पश्चात् समाप्तिः स तन्त्री इतरस्तु प्रसङ्गी, तत्रेह कस्य प्रथममुपक्रमः इति विशेषो नावगम्यते । ननु समाप्तावस्ति विशेषः पशोस्तृतीयसवने समाप्तेः स एव तन्त्री स्यात् । प्रातःसवनिकाः पुरोडाशा हि प्रातःसवने समाप्यन्ते । अतस्ते प्रसङ्गिणः । नैवम् । तेऽपि तृतीयसवने समाप्यन्ते । 'अग्निमारुतादूर्ध्वमनूयाजैश्चरन्ती'ति पौरोडाशिकान् याजोत्कर्षविधिरस्त्विति मन्यते तस्मादविशेषः । उच्यते —पशुरेव तन्त्री । तत्र हि 'अग्निमद्य होतारमवृणीतायं यजमान'इत्यादिसूक्तवाकप्रैषो मैत्रावरुणकर्तृकोऽग्नीषोमीयात्पशोश्चोदकेन प्राप्तः पुनः 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमान' इत्यादिरूपेण विकृतः प्रत्यक्षेण सवनीये पशौ पठ्यते सोऽयमनर्थकः पुरोडाशानां तन्त्रित्वे स्यात् ।

---

**ननु** प्रथमोपस्थितत्वभावेऽपि प्रत्यासत्त्या प्रधानधर्मवद्ग्रहणं किं न स्यादित्यत आह—**सत्यामपि चेति** । परंपरया साङ्गुण्यलिप्सया साक्षाद्वैगुण्यमन्याय्यमित्यङ्गगुणविरोधे प्रधानधर्मस्य परिग्रहः । इह तूभयोरप्यङ्गधर्मत्वान्न तन्न्यायावतार इति भावः । सूत्रे मुख्यस्थानन्तर्यात्प्रधानाव्यवहितत्वादित्यर्थः ॥

**पशुसवनीयेषु०** ॥ ३० ॥ परिधित्वपुरस्कारेण नियोजने विधिवदिह सवनीयं पशुमुपाकृत्य सवनीयाः पुरोडाशाः निर्वप्तव्या इत्येवं यदि पशुतन्त्रपुरस्कारेण पुरोडाशविधिः स्यात्तदा परिधिधर्मग्रहवत्पाशुकतन्त्रग्रहनियमः स्यात् । नत्विह तथा विधिरस्ति तस्मादनियम इत्युत्थितेः संगतिः । **तन्त्रमध्येति** । माध्यंदिनसवनीयपुरोडाशास्तु तस्मिन्नेवोपक्रम्यन्ते परिसमाप्यन्ते च । एवं तृतीयसवनपुरोडाशा अपि, ततश्चानुसवनंसवनीया निरूप्यन्त इति वचनात् । 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीतिवत्तन्त्रमध्ये श्रवणाभावेऽपि निशीष्टवदार्थिकतन्त्रपातात्प्रसङ्गित्वमसंदिग्धम् । इयांस्तु विशेषः—यदा प्रातः सवनिकानां तन्त्रित्वं तदा तदीयतन्त्रप्रसङ्गः । यदातु सवनीयपशोस्तन्त्रित्वं तदा तदीयतन्त्रस्येत्यर्थः । **प्रातरिति** । तेष्वार्थिकतन्त्रमध्यपातस्याप्यभावादिति भावः । **यस्येति** । दीर्घकालस्य हि तन्त्रमल्पकालेनोपजीवितुमर्हं, न चाल्पकालस्य तन्त्रं, दीर्घकालेनाल्पकालतन्त्रस्य तत्समाप्तावपवृक्तत्वेन दीर्घकालेनोपजीवितुमशक्यत्वादेवं च प्रथममुपक्रमेण पश्चात्समाप्त्या च यस्य दीर्घकालत्वं स तन्त्रीत्यर्थः । **कस्येति** । प्रातरनुवाककाले ह्युभयोरुपक्रमः ततश्चोपक्रमपूर्वभावः कस्यापि नावगम्यत इत्यविशेषादनियतस्तन्त्रिप्रसङ्गिभाव इत्यर्थः । नचैवमुभयोरपि तन्त्रित्वापत्त्यैकस्य तन्त्रित्वमितरस्य प्रसङ्गित्वं चानुपपन्नं स्यादिति वाच्यम् । विरुद्धधर्मकप्रयाजादिप्रयुक्ततया गुणानुसारेण प्रधानभूतप्रयाजावृत्त्ययोगे नचैकत्र प्रसङ्गावश्यंभावादिति भावः । **समाप्यन्त इति** । अनुसवनं सवनीया निरूप्यन्त इति वचनेन प्रतिसवनं समाप्त्यवगमादिति भावः । **अस्त्विति** । ततश्चानूयाजोत्कर्षे सति प्रातःसवने समाप्त्यसंभवादनुसवनमिति वचनं तस्मिन्सवने प्रधानकर्तव्यतामात्रपरमिति भावः । **सोयमिति** । पशोः प्रसङ्गित्वे स्वकीयधर्माप्रयोजकत्वात्तदीयत्वेन धर्माम्नानमनर्थकं स्यादित्यर्थः । अस्तु तर्हि पुरोडाशार्थतयैव तदाम्नानमित्यत आह—

नहि । तेषामयमङ्गं नापि मैत्रावरुणस्तेषामस्ति येनायमुच्यते । विकल्पेपि नित्यवचनानर्थक्यं, तस्मादनेन पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते । किंचाग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्ययमपि पाशुकानामेवानूयाजानामुत्कर्षः, तेषां ह्यङ्गैस्तृतीयसवन इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसंबन्धे प्राप्ते प्रदेशविशेषमात्रं सुखेन विधीयते पुरोडाशानां त्वनुसवनं निरूप्यन्त इति वचनात्प्रातःसवनसमाप्त्यवगमात्तद्विरोधेनायुक्तं तदीयानूयाजोत्कर्षविधानम् । तस्माद्दीक्षाकालत्वात्पशोस्तन्त्रित्वं तन्मध्यपातात्पुरोडाशाः प्रसङ्गिनः ॥

समानतन्त्रप्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

## अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥

प्रकृतिर्विकृतिर्वा स्यात्तन्त्रिणी प्रकृतिर्यतः ॥ नित्याऽसावुपदिष्टाङ्गा मैवं कामबलित्वतः ॥ १८ ॥

प्रकृतिर्यावज्जीवं पर्वणिपर्वणि प्रयुज्यते विकृतयोऽपि कामेन निमित्तेन वा पर्वण्येवापतन्ति । तत्र प्रकृतिविकृत्योस्तन्त्रेण प्रयोगं कृत्वाचिन्त्यते—विरुद्धेषु धर्मेषु रक्षोघ्नीसामिधेनीत्यादिषु कस्य धर्मः प्रयुज्यते कस्य प्रसङ्गित्वमिति संशये प्रकृतेः पूर्वं प्रवृत्ततन्त्रत्वात्सैव तन्त्रिणीति प्राप्ते ब्रूमः—यद्यपि तावत्पूर्वं प्रवृत्ता प्रकृतिः स्यात् तथापि वैकृतमेवानुष्ठेयं, इतरथा सर्वदैव प्राकृतानां प्रयोगाद्वैकृता विशेषविधयोऽनर्थका भवेयुः । नच पूर्वं प्रवृत्ता प्रकृतिः । नह्ययमेको यावज्जीविकः प्रयोगः पर्वणिपर्वणि भिन्नाः प्रयोगाः प्रक्रम्यन्ते अपवृज्यन्ते च । तस्मात्कामेन निमित्तेन वा पतन्ती विकृतिरेवौत्सर्गिकीं नित्यचिकीर्षां बाधित्वा निविशत इति वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यत इति ॥

---

**नहीति** । पुरोडाशानां हीदं द्यावापृथिवीभद्रमभूदित्येव दार्शपौर्णमासिकसूक्तवाकोऽङ्गं नत्वग्निमद्य होतारमावृणीत······ ततश्चास्य पुरोडाशार्थत्वासंभवान्न तदर्थतयाम्नानमित्यर्थः । किंचास्य मैत्रावरुणेन कर्त्रा भवितव्यं, नच पुरोडाशेषु मैत्रावरुणोऽस्ति तस्मात्पुरोडाशार्थत्वे प्रैषस्य वैगुण्यं स्यादिति भावेनाह—**नापीति** । ननु यदा पशोस्तन्त्रित्वं तदा प्रैषाम्नानमर्थवद्भविष्यतीत्यत आह—**विकल्प इति** । ननु दार्शपौर्णमासिकस्य सूक्तवाकस्य यथा पशावग्निमद्य होतारमवृणीतेत्येवं विकारेण पाठः । एवमिहापि तस्यैवाग्निमद्य होतारमवृणीतायं सुतासुतीत्यादिरूपेण विकारेण पाठोस्तु नतु पाशुकस्यायं विकृतः पाठस्तत्र प्रमाणाभावादग्निमद्येत्यादिपदसंदर्भस्येहैव विकारार्थतया पाठोपपत्त्या पाशुकप्रत्यभिज्ञानासमर्थत्वादेवं च तस्य पुरोडाशार्थत्वसंभवात्तेषां तन्त्रित्वेऽपि न तत्पाठानर्थक्यमित्यस्वरसादाह—**किंचेति** । **प्राप्त इति** । तदा दिवाभिसंबन्धादिति न्यायादिति भावः । **समाप्तीति** । स्वरसतः साङ्गप्रधानस्यैवानुसवनं कर्तव्यत्वावगमादिति भावः । सूत्रार्थस्तु—सवनीयपशौ सवनीयपुरोडाशेषु च प्रसङ्गे विकल्पः स्याद्यतः पशुरयं वैकृतः ततश्च पुरोडाशानामपि वैकृतत्वेनोभयोरपि प्रत्यक्षश्रुतधर्मकत्वाभावेनाविशेषादेकस्य तन्त्रे परस्य विधिरित्यत्र प्रमाणाभावादिति ॥

**अपूर्वं च प्रकृतौ** ॥ ३४ ॥ **पर्वण्येवेति** । आपाद्यादौ पर्वकालत्वनियमाभावाद्यासां विकृतीनां पर्वकालत्वं ता अत्र विषय इति भावः । **ननु** पर्वणि प्रथमं विकृतिं सद्यः परिसमाप्य तदनन्तरं तदानीमेव प्रकृतिमुपक्रम्य परेद्युस्तस्याः समाप्यत्वादयं विचार एवानुपपन्न इत्यत आह—**तत्र प्रकृतीति** । **रक्षोघ्नीति** । निशीष्टे रक्षोघ्न्यः सामिधेन्यः प्रकृतौ प्रवोवाजीयाद्या इति रक्षोघ्न्यो विरुद्धा इत्यर्थः । **प्रकृतेरिति** । यावज्जीविकप्रयोगस्यैकत्वेन प्रक्रान्तायां प्रकृतौ क्रियमाणाया विकृतेः प्रयोगमध्ये पातात्प्रसङ्गित्वं प्रकृतेश्च तन्त्रित्वमित्यर्थः । प्रवृत्ततन्त्रत्वादित्यनेनैव यथा पशोः प्रवृत्ततन्त्रत्वात्तन्त्रित्वमेवमिहापीत्युत्थितेः संगतिरिति सूचितम् । यद्यपि प्रतिपत्रं प्रयोगा भिद्यन्ते तथापि प्रकृतेर्नित्यत्वेनावश्यकर्तव्यतया प्रथमोपस्थितत्वात्सैव तन्त्रिणी पश्चात्कामेन निमित्तेन वाऽऽपतन्ती विकृतिः प्रसङ्गिणीति । नचैवं प्रथमोपस्थितधर्मस्यापि भूयो धर्मानुग्रहाय बाधाङ्गीकाराद्यत्र वैकृतहविषां भूयस्त्वं तत्र प्रकृतेस्तन्त्रित्वं न स्यादिति वाच्यम् । तथा पशुपुरोडाशानुनिर्वाप्याणां देवसुवाहविषां पुरोडाशतन्त्रमध्ये विधानाद्भूयसामपि प्रसङ्गित्वमेवमिहासत्यपि तन्त्रमध्यविधाने विकृतौ धर्माभावेन वैकृतविधेः प्राकृतप्रयोगविधिपर्यालोचनावश्यंभावे स्वापेक्षितधर्माणां प्रकृतावेवानुष्ठानं दृष्ट्वा वैकृतविधिस्तानेवानुमन्यत इति भूयसामपि प्रसङ्गित्वस्यैव न्याय्यत्वादिति भावः । वस्तुतस्तु वैकृतविशेषविध्यानर्थक्याद्विकृतेरपि कदाचित्तन्त्रित्वमवश्यं वक्तव्यमित्यनियमेनैव तत्र पूर्वःपक्षः प्रवर्तयितुमुचितः । **अनर्थका इति** । विकल्पेपि नित्यवदाम्नानानर्थक्यमिति भावः । **बाधित्वेति** । नित्यतया प्रकृतिचिकीर्षायां सत्यामापतन्त्या विकृतेस्तद्बाधं विना निवेशासंभवात्तद्बाधेनैव निविशत इत्यर्थः । सूत्रार्थस्तु—विकृतिः प्रकृत्या समानतन्त्रा चेत् अपूर्वं वैकृतं प्रसज्येत विकृतेस्तद्बाधं विना निवेशासंभवात् । अन्यथा वैकृतविशेषाम्नानमनर्थकं स्यादिति ॥

आग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् ॥ १४ ॥

**अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥**

**बर्हिराग्रयणे किंचित्प्रसूनं वा बहुत्वतः ॥ प्राथम्याच्चाग्रिमो नैवमलोपात्कांस्यभोजिवत् ॥ १९ ॥**

आग्रयणेष्टयामैन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि तत्र द्यावापृथिव्यस्य वैश्वदेविकद्यावापृथिव्यविकारित्वात्प्रसूनं बर्हिः प्राप्तं ऐन्द्राग्नादेश्च प्रसूनमप्रसूनं वा बर्हिर्मात्रं, तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपादेयमुत प्रसूनमेवेति संशये मुख्यत्वाद्भूयस्त्वाच्चानियम एव युक्तः। नैवम्। नह्यनियमो नाम किंचिदङ्गं यदनुगृह्येत, बर्हिर्मात्रं त्वङ्गं तच्च सूनोपादानेऽप्यविरुद्धमिति न कस्यचिद्वैगुण्यम्। अनियमे तु द्यावापृथिवीयस्य वैगुण्यं स्यात्। नचावैगुण्यसंभवे तद्युक्तं तस्मात्प्रसूनमेव स्यात् ॥

द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम् ॥ १५ ॥

**तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ [न वाऽविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणाच्च ॥ ३७ ॥]**

**द्यावापृथिव्यस्तन्त्री स्यात्सर्वे वा तन्त्रिणोऽग्रिमः ॥ प्रैषन्यायात्प्रसूनस्य तन्त्रित्वापादकत्वतः ॥ २० ॥**
**प्रसूनत्वं नोपदिष्टमविरोधात्समाश्रितम् ॥ तन्त्रित्वनियतौ शक्तं नातः सर्वेऽत्र तन्त्रिणः २१ ॥**

एवं तर्ह्यनेनैव द्यावापृथिव्यतन्त्रलिङ्गभूतेन बर्हिषा सर्वमेवेदं द्यावापृथिवीयं तन्त्रमैन्द्राग्नादेस्तु तदेव तन्त्रं प्रसज्यते अतो विरुद्धेष्वपि धर्मेषु द्यावापृथिवीय एव स्यात्। नह्येतदैकान्तिकं द्यावापृथिवीयतन्त्रलिङ्गं साधारणमिदमविरोधात्संगृहीतं नत्वनेन द्यावापृथिव्यं तंत्रं नियन्तुं शक्यम्। तस्मात्सर्वे तन्त्रिण इति विरुद्धेषु धर्मेषु ऐन्द्राग्नादिधर्मः कर्तव्यो मुख्यभूयस्त्वाभ्याम् ॥ इति शास्त्रदीपिकायां द्वादशाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

**अधिकश्च गुणः०** ॥ ३४ ॥ पूर्वत्रानियमाभावेऽपीह तथाविधिबाधकाभावादनियमोऽस्त्वित्युत्थितेः संगतिः। **वैश्वदेविकेति**। स्वरसामैककपालामिक्षं च लिङ्गदर्शनादित्यत्र तथा व्यवस्थापनादिति भावः। प्रसूनं पुष्पितं लूनशेषात्पुनरुत्पन्नं वा। समानतन्त्रेष्वित्यनेनैकस्मिंस्तन्त्रे एकमेव बर्हिः नतु बर्हिर्द्वयं, ततश्चास्ति विचार इति दर्शयति—**अनियम एवेति**। यद्यप्यनियमो नाङ्गं तथाप्यप्रसूनमपि बर्हिरितरेषामङ्गं प्रसूननियमे च तद्बाधः स्यादित्यनियम एव युक्त इत्यर्थः। **नहीति**। अप्रसूनस्य न तत्वेनाङ्गता किंतु बर्हिर्मात्रत्वेन। ततश्चाप्रसूनस्य बाधेपि शास्त्रार्थस्य बर्हिर्मात्रस्य बाधाभावान्न कस्यचिद्वैगुण्यमित्यर्थः। सूत्रार्थस्तु—तन्त्रसाधारण्ये अधिको गुणः प्रसूनलक्षणः गुणिन्यमुख्येपि सति विरोधाभावान्नियम्येत यथा यत्र शिष्यस्य कांस्यभोजित्वनियमः। उपाध्यायस्यानियमः यदि द्वयोरेकस्मिन्पात्रे भोजनमापद्येत तत्रामुख्यस्यापि शिष्यस्य धर्मोऽनुगृह्यते तद्वदिति ॥

**तत्प्रवृत्त्या०** ॥ ३५ ॥ पूर्वोक्तप्रसूननियमोपजीवनेनास्य प्रवृत्त्या संगतिरित्येकोपक्रमावसानत्वादेकस्य तन्त्रे परस्य विनियोगाभावात्सर्वेषामेव वाच्यम्। ततश्च द्यावापृथिव्यस्यैव तन्त्रित्वमितरेषां प्रसङ्गित्वमिति कथं पूर्वपक्ष इत्यत आह—**एवं तर्हीति**। यथा सवनीयस्य पशोर्वैशेषिकसूक्तवाकदर्शनात्तन्त्रित्वं एवं द्यावापृथिव्यवैशेषिकप्रसूनदर्शनात्तस्यैव तन्त्रित्वम् इतरेषां च प्रसङ्गित्वम् एवं चासत्यपि तन्त्रमध्यपाते प्रसङ्ग एवात्र प्रयुक्तो नतु समानतन्त्रत्वमिति भावः। **नहीति**। ऐकान्तिकमसाधारणं। अग्निमद्येत्यादिसूक्तवाकस्य पुरोडाशसाधारण्याभावात्तद्बलेन पशोस्तन्त्रित्वं युक्तमिह तु प्रसूनग्रहणेप्यैन्द्राग्नादेर्वैगुण्याभावेन तत्साधारणत्वान्न तद्बलेन द्यावापृथिव्यस्य तन्त्रित्वं किंत्वेकोपक्रमावसानात्समानतन्त्रत्वमेव। तत्र च धर्मविप्रतिषेधे मुख्यत्वेन भूयस्त्वेन चैन्द्राग्नादिधर्म एव ग्राह्य इत्यर्थः। सूत्रे तच्छब्दः प्रसूनपरः ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकायां द्वादशाध्यायस्य द्वितीयः पादः ॥ २ ॥**

---

# द्वादशाध्याये तृतीयः पादः ।

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् ॥ १ ॥

**विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ [अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥]**

त्वग्वाससोरष्टरात्रे विकल्पो नियमोऽथवा ॥ समुच्चयो वा नामातिदेशसाम्याद्विकल्प्यते ॥ १ ॥
मुख्यत्वेन त्वगेव स्याद्वास एव बहुत्वतः ॥ योग्यत्वेन व्यवस्थायामुभयोः स्यात्समुच्चयः ॥ २ ॥

अष्टरात्रे विश्वजित्प्रथममहः ततोऽभिप्लवः षडहस्ततोऽभिजित् तत्र विश्वजिति नामधेयेनैकाहविश्वजिद्धर्मोऽवभृथादुदेत्य वत्सत्वचं परिधत्त इति वत्सत्वक्प्राप्तः इतरेषु तु ज्योतिष्टोमादहतं वासः तत्र द्वयोः परिधानार्थत्वान्महाव्रते 'तार्प्योदिवस्त्र वासांसि विभ्रंशयन्ती'त्यादिवासोबहुत्वादर्शनादसति समुच्चये भूयोधर्मत्वादहतानुग्रहः । ऐकाधिकरण्यवादिमते तु सूत्रान्यथाकरणं भाष्यकारेण दर्शितम् । सिद्धान्तस्तु सत्यं न दृष्टं वासोबहुत्वं तथापि कौपीनाच्छादने वत्सत्वचोऽयोग्यत्वादुपरिवासः कार्येऽसौ विधीयते । तत्रापि हि परिदधतीति प्रयोगात्कम्बलं परिधत्त इति वत् । अहतं तु कौपीनाच्छादने योग्यं तत्रैव विधीयते इति द्वयोरपि भिन्नकार्यत्वात्समुच्चयः ॥

अनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रत्वाधिकरणम् ॥ २ ॥

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥३॥ [आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥४॥ स्वस्थानत्वाच्च ॥५॥ स्विष्टकृच्छ्रवणान्नेति चेत् ॥ ६ ॥ विकारः पवमानवत् ॥७॥ अविकरो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥८॥]**

स्वाधर्म्यमनुनिर्वाप्येष्वस्ति नो वा, बहुत्वतः ॥ अस्ति मैवं तन्त्रमध्ये विहितत्वात्प्रसञ्जिता ॥ ३ ॥

'अग्नीषोमीयपशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपती'त्यत्रानुनिर्वाप्याणां स्वाधर्म्ये पुरोडाशस्य

---

**विश्वजिति वत्स०** ॥ १ ॥ इदानीं विकल्पसमुच्चयमुखेन प्रसङ्गकथा प्रस्तूयते । विकल्प्यते ह्येकस्य वैकल्पिकस्यानुष्ठाने वैकल्पिकान्तरस्य प्रसङ्गसिद्धकार्यत्वम् । समुच्चये तु तदभाव इति । अत्रच पादे समुच्चयः प्राधान्येन प्रतिपाद्यते । ततश्च प्रसङ्गापवादनिरूपणपर्यवसानात्पादान्तरत्वमानन्तर्यं च बोध्यम् । **इतरेष्विति** । विश्वजिद्विषयेण नामधेयेनाहरन्तरचोदकस्य निवारयितुमशक्यतया तेषु चोदकादहतं प्राप्नोतीति भावः । **तत्रेति** । अष्टरात्रान्तर्गतविश्वजित्प्रकृतिभूते एकाहविश्वजितिवत्सत्वगहतयोर्न समुच्चयः, उभयत्रापि परिदधातेः श्रावणेनो भयोरेकार्थत्वादसति च समुच्चये प्रत्यक्षविहितवत्सत्वचाऽऽनुमानिकस्याहतस्य बाध इत्येकाहविश्वजिति वत्सत्वगेव नाहतमित्यष्टरात्रगतेऽपि विश्वजिति नाम्ना केवलवत्सत्वगेव प्राप्नोति। एवंच तत्र प्राप्ताया वत्सत्वच इतरेषु चोदकप्राप्तस्याहतस्य च परिधानार्थत्वान्नास्ति समुच्चय इत्यर्थः । **महाव्रत इति** । महाव्रते 'तार्प्यं यजमानः परिधत्त'इति तार्प्यस्य चोदकप्राप्ताहतस्य च 'वासांसि विभ्रंशयती'ति वासोबहुत्वबलायथा समुच्चयः, एवमिह वासोबहुत्वादर्शनात्समुच्चयो नास्तीत्यर्थः । अनेन तार्प्यस्याहतेनाभ्युच्चयप्रतिपादनपरदाशमिकाधिकरणेनापुनरुक्तिः सूचिता वासोबहुत्वदर्शनादेव । तत्र सिद्धान्तः—अहततार्प्ययोर्भिन्नार्थत्वं त्वेतदधिकरणन्यायसिद्धं तत्र प्रतिपादनमिति भावः । **अहतानुग्रह इति** । एवंचात्र पूर्वपक्षस्याहतमेव ग्राह्यमित्येतावत्पर्यन्तत्वेनाहतवत्सत्वचोः समुच्चयाभावमात्रपर्यवसितत्वाभावादेकाहविश्वजित्ययं विचारो न प्रवर्तेत इति ध्येयम् । **नन्वे**काहिकविश्वजिति वत्सत्वगितरेष्वहतं प्राप्तं तत्र तन्त्रिभूयस्त्वादहतमेव स्यादिति सूत्रकारेण भूयोनुग्रहस्य व्यवह्रियमाणत्वेन 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वं' 'मुख्यं वा पूर्वचोदनाल्लोकव'दित्यनयोर्विस्पष्टमधिकरणभेदस्यैव प्रतीतेः कथं वृत्त्यन्तरकारैरैकाधिकरण्यमङ्गीकृतमित्यत आह—**ऐकेति** । उभयप्राप्तौ यदि विश्वजितो मुख्यत्वं न स्यात्तदा भूयोधर्मत्वादहतं स्यात् । नत्वेवं । विश्वजितो मुख्यत्वसद्भावात् । तस्माद्वत्सत्वगेवेत्येव वृत्तिकारमतानुसारेण सूत्रस्य व्याख्यानं भाष्यकारेणैव प्रदर्शितमित्यर्थः । **कौपीनेति** । गुह्यावयवेत्यर्थः । **अयोग्यत्वादिति** । सौकर्याभावादित्यर्थः । एवंचैकाहिकविश्वजित्येव पूर्वं वत्सत्वगहतयोर्भिन्नकार्यत्वात्समुच्चये सत्यष्टरात्रे तत्समुच्चयः कैमुतिकन्यायसिद्ध इति भावः ॥

**अनुनिर्वाप्येषु०** ॥ ३ ॥ पूर्वत्र विरोधाभावाद्भूयस्त्वस्याकिंचित्करत्वेऽपीह भूयस्त्वेन व्यवस्थेत्युत्थितेः । **संगतिः** । **अत्रेति** । अत्रानुनिर्वाप्याणां तन्त्रित्वमुत पुरोडाशस्येत्येवं न विचार्यते । बहूनामपि तन्त्रमध्यपातेन प्रसञ्जितत्वस्याविचा-

---

१ सत्वङ्नामधेयादितरथा तत्र.

प्रसङ्गित्वं विपरीतं वेति संशये भूयस्त्वादनुनिर्वाप्याणामिति प्राप्ते उच्यते । नहि तेषां सह चोदना नापि सहोपक्रमः किंतु पशुपुरोडाशतन्त्रे प्रक्रान्ते अनुनिर्वाप्याणां तन्त्रमध्ये विधानाद्विस्पष्टं प्रसङ्गित्वमितरस्य च तन्त्रित्वं तन्त्रिधर्मश्च प्रसङ्गिनोपजीवनीय इति पशुपुरोडाशस्य स्वाधर्म्यम् । ये तु सर्वेष्वपि तन्त्रिषु विप्रतिषिद्धविषये मुख्यस्यैव स्वाधर्म्यं न भूयसामित्यैकाधिकरण्यमाश्रित्य वदन्ति तेषां प्रसङ्गिभ्योनुनिर्वाप्येभ्यो मुख्यबलीयस्त्वं विस्पष्टमधिकरणमिदमनर्थकं स्यात् । ऐकाधिकरण्यमेव विस्पष्टं कर्तुमिदमधिकरणमित्येतत्तु लज्जाशून्यानां वैयात्यभाषितम् । किंच विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् साधर्म्यं मुख्यं वा स्वधर्मेति सामान्येनोक्त्वानुनिर्वाप्येष्विति विशेषमुपादाय तद्विशये भूयोभ्योपि मुख्यबलीयस्त्वमित्यभिधानात्तत्र भूयसामेव स्वधर्मत्वं मुख्यस्वाधर्म्यं तु समसंख्याविषयमित्यधिकरणभेद एव स्पष्टीभवति नैकाधिकरण्यमित्यास्तां तावत् ॥

भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् ॥ ३ ॥

## एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ९ ॥

ऋजुत्वादय आघारे विकल्प्यन्ते न वाऽग्रिमः ॥ एकार्थत्वाददृष्टार्थभेदात्संभवतोऽन्तिमः ॥ ४ ॥

दर्शपूर्णमासयोराघारौ प्रकृत्य श्रूयते 'ऊर्ध्वमाघारयति ऋजुमाघारयति संततमाघारयती'त्यादि । तत्रोर्ध्वत्वादीनां विकल्पसमुच्चयचिन्तायामेकार्थत्वाद्विकल्पप्राप्तौ सर्वेषां सह संभवात्समुच्चयः ॥

प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् ॥ ४ ॥

## एकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥ १० ॥ [अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतित्वात् ॥ १२ ॥ सति चाभ्यासशास्त्रत्वात् ॥ १३ ॥ विकल्पवच्च दर्शयति ॥ १४ ॥ कालान्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥]

समुच्चयो यवव्रीह्योर्विकल्पो वाऽत्र पूर्ववत् ॥ आद्यो मैवं नैरपेक्ष्याददृष्टाभेदतोऽन्तिमः ॥ ५ ॥

'व्रीहिभिर्यजेत यवैर्यजेते'त्यादिष्वपि सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहायाष्टदोषनिदानविकल्प-

---

रितसिद्धत्वात्किंतु पुरोडाशस्यैव तन्त्रित्वमनु निर्वाप्याणां प्रसङ्गित्वमिति सिद्धं कृत्वैव धर्मविप्रतिषेधे किं भूयसां प्रसङ्गिनां धर्मो ग्राह्य उतैकस्यापि तन्त्रिणो धर्म इत्येवं विचार्यते इति ध्येयम् । **भूयस्त्वादिति** । अनुनिर्वाप्याणामस्यर्थतया पशुपुरोडाशार्थत्वासंभवात् पशुपुरोडाशमनुनिर्वपतीति कालार्थ एव संयोगो नतु वैमृधमनुनिर्वपतीतिवदङ्गाङ्गिभावस्तेनाङ्गगुणविरोधन्यायेन पुरोडाशधर्मस्य ग्रहः किं न स्यादिति शङ्कानवकाशः ॥ **अनुनिर्वाप्याणामिति** ॥ स्वाधर्म्यमित्यनुषङ्गः । **तेषामिति** । नवानामित्यर्थः । **तन्त्रिधर्मश्चेति** । प्रसङ्गविधेस्तन्त्रविध्युपजीवनेन प्रवृत्त्या तन्त्रिणः प्राबल्यात्तद्धर्म एव ग्राह्य इत्यर्थः । **पशुपुरोडाशस्येति** । इदंच पुरोडाशस्वाधर्म्यं ये धर्मा पशौ न सन्ति तेष्वेव नतु पशौ विद्यमानप्रयाजादिष्वपि अनुनिर्वाप्याणां पशुपुरोडाशस्य च पशुतन्त्रमध्यपातित्वेन तेषु पशोरेव प्रयोजकत्वात्ततश्च पशोः पुरोडाशस्यानुनिर्वाप्याणां च धर्मविप्रतिषेधे पशोः स्वाधर्म्यं पुरोडाशस्यानुनिर्वाप्याणां च धर्मविप्रतिषेधे पुरोडाशस्य स्वाधर्म्यमिति बोध्यम् । **तन्त्रिष्विति** । अग्नये दात्र इत्यादीनां सप्तानामपि तन्त्रित्वादिति भावः । **ननु** भूयसामप्यनुनिर्वाप्याणां न स्वाधर्म्यं किंतु मुख्यस्य पशुपुरोडाशस्येत्येवमस्मिन्नधिकरणे व्युत्पादिते भूयस्त्वादपि मुख्यत्वस्य प्रबलत्वप्रतीतेरैकाधिकरण्यमेव विस्पष्टं भवतीति तत्स्पष्टीकरणार्थत्वान्नानर्थक्यमित्यत आह—**ऐकेति** । भवेदेवमैकाधिकरण्याविष्करणं यदि सामान्येन भूयस्त्वमात्रापेक्षया मुख्यत्वस्य प्राबल्यमत्र प्रतिपाद्येत इहतु भूयोविशेषानुनिर्वाप्येषु भूयस्त्वापेक्षया मुख्यत्वस्य प्राबल्यं प्रतिपाद्यते ततश्चान्यत्र भूयस्त्वस्यैव प्राबल्यमनेन प्रतीयते इति प्रत्युताधिकरणभेद एवानेन स्पष्टीक्रियत इत्याह—**किंचेति** ॥

**एककर्मणि शिष्टत्वात्** ॥९॥ अस्तु भिन्नकर्माश्रितधर्मेषु मुख्यत्वेन व्यवस्था एककर्माश्रितेषु तु तन्न्यायानवतारादनियम इत्युत्थितेः सङ्गतिः । ननु प्रयाजादीनामेकादशे समुच्चयः प्रतिपादितस्तन्न्यायेनैवात्र समुच्चयस्य सिद्धेः कथं पूर्वः पक्ष इत्यत आह—**एकार्थत्वादिति** । युक्तः प्रयाजादीनां प्रकरणविनियोज्यानां समुच्चयः प्रकरणस्यापर्यायव्यापारत्वात् ऊर्ध्वतादीनां तु तत्तद्वाक्यैः परस्परानपेक्षाणामाघारक्रियार्थतया विधीयमानानां 'एकार्थास्तु विकल्पेरन्नि'त्यग्रिमाधिकरणन्यायेन व्रीहियववद्विकल्प एवेत्यर्थः । व्रीहियवयोः पुरोडाशनिष्पत्तिरूपप्रधानक्रियाया एकत्वमात्रेण न विकल्पः किंतु तण्डुलनिष्पत्तिलक्षणद्वारकार्यस्याप्येकत्वादिह चोर्ध्वतादीनामाघाररूपप्रधानक्रियाया एकत्वेपि द्वारैक्याभावान्न विकल्पः किंतु युगपत्सर्वोपसंग्राहकप्रयोगवचनपरिग्रहबलात्परस्परविरोधाभावेन समुच्चयसंभवाच्च समुच्चय एवेति सिद्धान्तमाह—**सर्वेषामिति** । सूत्रे सर्वकर्म सर्वेषां क्रिया स्यादित्यर्थः ॥

**एकार्थास्तु०** ॥ १० ॥ **सर्वाङ्गेति** । प्रयोगवचनौ व्रीहियवौ युगपदेव गृह्णाति नित्यवदाम्नानान्नतु पर्यायेणेति भावः ।

---

१ प्रसङ्गिभिरुपजीवनीय २ विस्पष्टीकर्तुं.

परिहाराय च समुच्चयः स्यात्, संभवति च ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयसंपादनं मिश्रैर्वेज्यतामिति प्राप्ते ब्रूमः—एकार्थानामेकस्मिन्नुपकारे अन्योन्यनिरपेक्षतया विनियुक्तानां विकल्पः स्यात्। ज्योतिष्टोमो हि द्रव्यदेवतासंयुक्तानामदृष्टार्थानामपर्यायविधानात्प्रकरणेन युगपद्ग्रहणात्सर्वसंपादनाय युक्तं यदभ्यस्यते। व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन्पर्यायेणैव गृह्णाति न युगपत् येन बलात्प्रधानाभ्यासः स्याज्ज्योतिष्टोमवत्। मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव समुच्चित्य यजताहि वाक्यद्वयमपि बाधितं स्यात् द्वाभ्यामपि हि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात्तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेः। तस्माद्विकल्पः। तेन व्रीहिप्रयोगे तैरेव कार्यसिद्धेर्यवानामनुपादानं यथा पाशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम्। ननु चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः। 'साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः। एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधा'विति वचनात्, अत्रतु द्वयोरप्याग्नेयार्थत्वान्नास्ति प्रसङ्गरूपम्। सत्यमेतावान्विशेषः तथाप्यनेन कार्यसिद्धेरन्यस्य निवृत्तिरित्येतावता सामान्येनात्र संगतिः॥

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम्॥ ५॥

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगः तस्मात्सर्वस्य निर्घातः॥ १६॥**

**वैश्वानरे पथिकृते साहित्यं वा विकल्पनम्॥ साहित्यं स्याददृष्टाय विकल्पः स्यात्समाधये॥ ६॥**

यानि प्रायश्चित्तानि कर्मवैगुण्ये निमित्ते विधीयन्ते यथा 'यदृक्तो यज्ञ आर्तिमियाद्भूःस्वाहेति

---

संभवति चेत्यनेनेहापि सहसंभवात्समुच्चय इत्युत्थितेः संगतिरिति सूचितम्। **अभ्यासमिति**। यद्यपि पुरोडाशद्वयस्याप्येकदेवताकत्वेन दार्शिकदधिपयसोरिव सहप्रदेयत्वान्न यागाभ्यासस्तथापि यवैरेकः पुरोडाशः व्रीहिभिरपर इति पुरोडाशद्वयानुष्ठानादभ्यासोक्तिः। **नन्वे**कार्थानामपि द्वारभेदे समुच्चयः स्यादित्यत आह—**एकस्मिन्निति**। द्वारैक्येऽपि द्वन्द्वनिर्देशादिना यदि परस्परसापेक्षतया विधानं तदा समुच्चयः स्यादित्यत उक्तं **निरपेक्षतयेति**। **द्रव्यदेवतासंयुक्तानामिति**। द्रव्यदेवतासंयुक्तग्रहणानामित्यर्थः। ग्रहणेषु देवतोद्देशांशस्यादृष्टार्थत्वात्तेषामदृष्टार्थत्वद्योतनाय द्रव्यदेवतासंयोगशब्देन निर्देशः। **निरपेक्षाविति**। नच व्रीहिभिरिति तृतीयया व्रीहीणां साधनत्वमात्रं प्रतीयते तच्च यवसहितानां साधनत्वेऽप्युपपद्यत इति कथं नैरपेक्ष्यलाभ इति वाच्यम्। यवसहितानां साधनत्वे साधनत्वाय यवसापेक्षत्वेनासमर्थत्वात् 'समर्थः पदविधि'रिति सामर्थ्यापेक्षतृतीयाविभक्तिरेव न स्यादिति तद्बलादेव नैरपेक्ष्यलाभात्, अरुणयेत्यादौ तु द्रव्यपरिच्छेदादिलक्षणद्वारभेदेन तत्र द्रव्यगुणयोः परस्परनैरपेक्ष्यादुभयतृतीययोपपत्तिः। किंच 'व्रीहिभिर्यजेते'त्यनेन पुरोडाशप्रकृतिद्रव्यतया व्रीहयो विधीयन्ते प्रकृतिद्रव्यं च यावता पुरोडाशो निष्पद्यते तावदपेक्षितं न तदेकदेशः। तस्यां चापेक्षायां यववाक्यनिरपेक्षेण व्रीहिवाक्येन विधीयमाना व्रीहयः कृत्स्नमेव पुरोडाशं प्रति प्रकृतिद्रव्यत्वेन संबध्यन्ते तेनार्थाद्द्रव्यान्तरनिवृत्त्या निरपेक्षत्वं लभ्यते। तेनैकस्मिन्पुरोडाशनिर्वृत्तिलक्षणोपकारेऽन्यनिरपेक्षतया विनियोगेन नित्यवदाम्नातयोरपि पर्यायेणैव प्रयोगवचनग्राह्यत्वं न युगपदिति न ज्योतिष्टोमवदभ्यासप्रसक्तिः। निरपेक्षविधानादेव च मिश्रत्वमप्यनुपपन्नमित्यर्थः। विकल्पसमुच्चयचिन्तामध्याये संगमयति—**तेनेति**। **साधारणमिति**। यदङ्गमनुष्ठीयमानमगृह्यमाणविशेषत्वादनेकशेषिसाधारणं तत्र तन्त्रं यथाग्नेयादिषु प्रयाजादेः। यत्त्वनुष्ठीयमानं परार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्योपकारकं तत्र परार्थोपजीवी अप्रयोजकः यथा वाजिनतुषोपवापादिकं दध्यानयनकपालादेः। यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनं तत्र प्रसङ्ग इत्यर्थः। एवंच 'परार्थे त्वप्रयोजक'इत्यत्र स्वविधेः प्रयोजकत्वशक्त्यभावे इत्यर्थाल्लभ्यत इति बोध्यम्। **एतावतेति**। तावन्मात्रस्यापि प्रयोगपरिमाणकल्पकत्वादिति भावः। एतावन्मात्रेणैव समुच्चयचिन्तायाः प्रसङ्गापवादकत्वं बोध्यम्॥

**प्रायश्चित्तेषु०**॥ १६॥ वैगुण्ये विधीयमानानां प्रायश्चित्तानां तत्समाधानार्थत्वे सत्येवैकस्मिन्वैगुण्ये विधीयमानेषु विकल्पसमुच्चयचिन्ताया अवकाशो नान्यथेत्याशयेन प्रथमं वैगुण्ये विधीयमानानां तत्समानार्थत्वं समर्थयते—**यानीत्यादिना**। न नैमित्तिकमात्रस्य वैगुण्यसमाधानार्थत्वं किंतु कर्मवैगुण्ये निमित्ते विधीयमानस्य। तेन भिन्नादिहोमानां न वैगुण्यसमाधानार्थत्वमित्याशयेन कर्मवैगुण्ये निमित्त इत्युक्तं नतु तावता पुरुषार्थप्रायश्चित्तानां पुरुषवैगुण्यसमाधानार्थत्वा-

---

१ अन्योन्यानपक्षया. २ यद्बलात्प्रधानाभ्यासः.

गार्हपत्ये जुहुयात् योऽमावास्यां पौर्णमासीं वातिपातयेदग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपे-द्योऽमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेदि'त्यादीनि वैगुण्यसमाधित्सायां विधानात्समाधानार्थानि यानि एकस्मिन्वैगुण्ये विधीयन्ते पथिकृद्वैश्वानरादीनि तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्विकल्पः ॥

नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥

## समुच्चयस्त्वदोषर्थेषु ॥ १७ ॥

**भिन्नरकन्नादिहोमादेर्विकल्पो वा समुच्चयः ॥ विकल्पः पूर्ववन्नैवमदोषे विहितत्वतः ॥ ७ ॥**

यानि पुनर्न दोषनिर्घातार्थानि निमित्ते कर्माङ्गानि भिन्ने जुहोतीत्यादीनि तेषां प्रयाजादिवदपर्यायविधानात्समुच्चय इति प्रत्युदाहरणमात्रमेतत् ॥

कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम् ॥ ७ ॥

## मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥
## [विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात्प्रयोगस्य ॥ १९ ॥]

**अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा, न सः ॥ तत्पाठस्य निषिद्धत्वादस्ति तत्रानिषेधतः ॥ ८ ॥**

पर्वणि नाध्येतव्यमित्यादयो ये मन्त्राणामध्ययनकाले स्वधर्मास्ते कर्मकालेऽपि स्युर्न वेति संशये मन्त्रप्रयोगार्थत्वात्कर्मकालेऽपि प्रयोगात्तत्रापि स्युः । नैवं प्रकरणादेते धर्माः स्वाध्यायविधिविहितस्य

---

दुदाहरणं नास्तीति भ्रमः कर्तव्यः । अतएवानुपदं यान्येकस्मिन्वैगुण्ये विधीयन्ते इति वदन् कर्मपुरुषसाधारण्येन वैगुण्यमात्रे विभज्यमानस्यैतदधिकरणविषयत्वं दर्शयति । युक्तं च पुरुषार्थप्रायश्चित्तानामप्येतदधिकरणविषयत्वं पूर्वोत्तरपक्षयोर्वक्ष्यमाणन्यायस्य तत्साधारण्यादिति ध्येयम् । **यद्यृक्त इति** । यदि ऋग्वेदविहिताङ्गातिक्रमाद्यज्ञः आर्तिं नाशं वैगुण्यं प्राप्नुयादित्यर्थः । यद्यपि 'यद्यृक्तो यज्ञ आर्तिमियाद्भूःस्वाहेति गार्हपत्ये जुहुयाद्यदि यजुष्टो दक्षिणाग्नौ भुव इति यदि सामतः सुवःस्वाहेत्याहवनीय' इति ऋगादिप्रयुक्तार्तिभेदेन विधीयमानानामेकस्मिन्वैगुण्ये विधीयमानत्वाभावान्नैतदधिकरणविषयत्वं त्वथाप्येतेषामेतदधिकरणविषयत्वाभावेऽपि कर्मवैगुण्ये विधीयमानानां तेषां तत्समाधानार्थत्वसमर्थनमात्राभिप्रायेण तदुपन्यास इति ध्येयम् । भवनाथस्तु यज्ञार्तिरूपेणाङ्गान्वयः नतु ऋगाद्यार्तितयेत्यैकार्थ्यमाह—**नन्वेतेषां** भिन्नादिहोमवन्नैमित्तिकं क्रत्वङ्गत्वमेव स्यान्नतु वैगुण्यसमाधानार्थत्वमित्यत आह—**वैगुण्यसमाधित्सायामिति** । कर्मवैगुण्यसमाधानाभावे विगुणस्य कर्मणोऽङ्गविधानमनर्थकमिति वैगुण्यसमाधित्सावश्यंभावे तद्दशायां विधीयमानस्य यद्यार्तिमियादिदं कुर्यादिति वाक्यसंयोगाद्वैगुण्यसमाधानार्थत्वं भिन्नादिहोमानां तु नैवं वाक्ये दोषनिष्कृतिः श्रूयते । नवा तत्समाधित्सा तत्रेति वैषम्यमिति भावः । **अदृष्टार्थत्वादिति** । वैगुण्यसमाधानस्यादृष्टरूपस्यैकेनैव सिध्यनवगमात्प्रयाजादिवदेतेषां समुच्चयः व्रीहियवादौ तु दृष्टार्थत्वादेकेनैव पुरोडाशनिष्पत्त्यवगमाद्विकल्प इति भावः । तत एव संगतिः । दृष्टार्थत्वाभावेन प्रत्यक्षत एकेन सिध्यनवगमेऽपि वाक्यात्तदवगम इति सिद्धान्तमाह—**एकैकेनेति** । मिश्रैरपि पुरोडाशनिष्पत्तेः प्रत्यक्षेणावगमाद्व्रीहियवादावपि नैरपेक्ष्यं वाक्यगम्यमेवेति साम्यमिति भावः । सूत्रार्थस्तु—प्रायश्चित्तेषु यस्मान्निष्पन्नेन वैगुण्यरूपनिमित्तेन योगस्तस्मादैकार्थ्यं, ततश्चैकेन सर्वस्य वैगुण्यस्य निर्घात इति विकल्प इति ॥

**समुच्चयस्त्वदोषार्थेषु** ॥ १७ ॥ एकैकस्मिन्निमित्ते श्रूयमाणानामपि बहूनां तत्तद्विधिषु तत्तद्वाक्यशेषे वा दोषश्रवणाभावेन पूर्ववद्वाक्येन निरपेक्षतया दोषनिर्घातार्थत्वेन विधानाभावान्न विकल्पः किंतु निमित्ते विधीयमानानामपि प्रयाजादिवत्क्रत्वङ्गतया तद्वदेवापर्यायव्यापारेण प्रकरणेन युगपद्ग्रहणात्समुच्चय इत्यर्थः ॥

**मन्त्राणां कर्मसंयोगात्०** ॥ १८ ॥ ननु प्रकरणेन ग्रहणाध्ययनार्थत्वात्कथं पूर्वः पक्ष इत्यत आह—**मन्त्रेति** । ते धर्मा मन्त्रप्रयोगार्था इति यत्र मन्त्रप्रयोगस्तत्र सर्वत्रापि भवन्तीति कर्मकालेऽपि स्युरित्यर्थः । यद्वा बाधेयमिति सामान्यश्रवणादध्ययनमात्रस्यैवायं धर्मो न तद्विशेषग्रहणाध्ययनस्येति कर्मकालप्रयोगस्याप्यध्ययनरूपत्वात्तत्रापि स्युरित्यर्थः । **प्रयोगादिति** । प्रयोगस्य कर्तव्यत्वावगमादित्यर्थः । एवंच पर्वण्येव समन्त्रककर्मविधिबलात्पर्वण्यध्ययननिषेधाच्च मन्त्राणां कर्मसु विकल्पः । ततश्च पूर्वत्र समुच्चयेऽप्यत्र विकल्प इत्युत्थितेः संगतिः । अयं च पूर्वपक्षो मन्दः अङ्गगुणविरोधन्यायेन मन्त्रधर्मपरित्यागेन मन्त्रप्रयोगस्य न्याय्यत्वात्पर्वणि नाध्येयमित्यस्य स्मार्तत्वेन ग्रहणाध्ययने सावकाशत्वेन च कर्माङ्गत्वेन मन्त्रविधेः श्रौतत्वेन निरवकाशत्वेन चातुल्यबलत्वादिति ध्येयम् । **प्रकरणादिति** । एवं मन्त्रो भवतीति

---

१ त्स्वदोषनिर्घातार्थेषु. २ प्रयाजादीनामिवापर्याय.

ग्रहणार्थस्याध्ययनस्याविघ्नपरिसमाप्त्युपकारेणाङ्गभूताः कः प्रयोगो यत्कर्मणि धर्मादरः, पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तेस्तद्विधयः स्वाध्यायसमयवर्तिनः एव प्रसङ्गात् कर्मकालेऽप्युपकुर्वन्ति सिद्धान्ते तु नेत्येवंविधप्रसङ्गाप्रसङ्गविचारात्संगतिः ॥

कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणम् ॥ ८ ॥

**भाषास्वरोपदेशादैरवत्प्रावचनप्रतिषेधः स्यात् ॥ २० ॥ [मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ २१ ॥ विकारः कारणाग्रहणे ॥ २२ ॥]**

स्वरो मन्त्रे भाषिकः किं स्यात्प्रावचनिकोऽथ वा ॥ ब्राह्मणोक्तेरादिमोऽन्त्यस्तदुक्तेर्लक्षणत्वतः ॥ ९ ॥

ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः ब्राह्मणे च मन्त्राः स्वरान्तरेणोपात्तास्ते किं स्वसमाम्नायसिद्धेन स्वरेण प्रयोक्तव्या उत ब्राह्मणस्वरेणेति संशये वाचनिकत्वाद्ब्राह्मणस्वरस्य तेनैव प्रयोगः । नैवं । ये तावल्लिङ्गविनियुक्ता मन्त्रास्तेषां ब्राह्मणस्य गुणार्थवादपरिसंख्यार्थत्वान्न मन्त्रस्वरूपे तत्स्वरे वा व्यापारः । येऽपि वचनविनियोज्यास्तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते । स्वरान्तरोपादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्याविच्छेदार्थम् । तस्मादात्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः ॥

ब्राह्मणोत्पन्नमन्त्रस्य भाषिकस्वरेणैवोच्चारणाधिकरणम् ॥ ९ ॥

**तन्न्यायत्वाददृष्टोऽप्येवम् ॥ २३ ॥ [तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २४ ॥]**

ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथ वा ॥ आद्योऽन्यमन्त्रवन्नैवं स्वरान्तरविवर्जनात् ॥ १० ॥

ये पुनर्मन्त्रसमाम्नायेनाधीता ब्राह्मणोत्पन्ना मन्त्रास्तेष्वपि ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वान्न

---

विधानाभावान्नैते मन्त्रस्वरूपार्थाः किंत्वेवमधीयेतेत्यध्ययनार्थाः । तत्र सामान्यशब्दश्रवणेप्यनुवादस्य सति सद्भावे संनिहितगामित्वात्सामान्यशब्देनापि संनिहितग्रहणाध्ययनमेवानूद्य तस्य पर्वकालनिषेधोऽङ्गं विधीयत इति तत्रैवंजातीयका धर्मा नान्यत्रेति भावः । **स्वाध्यायेति** । स्वाध्यायाध्ययनविधिप्रकरणवर्तिन इत्यर्थः । **ननु** यद्यमी विधयो ग्रहणाध्ययनधर्मत्वेन स्वार्थं समर्पयन्ति तदा कर्मकाले प्रसक्तेरेवाभावान्न प्रसङ्गसंभवः । अथ सामान्येन मन्त्रप्रयोगमात्रार्थत्वेन स्वार्थं समर्पयन्ति तदा धर्मविधीनां ग्रहणाध्ययनकर्मकालप्रयोगसाधारण्यात्तन्त्रत्वमेव न प्रसङ्ग इति चेत्सत्यम् । तथापि एकप्रकरणवर्तिनां विधीनामन्यत्राप्युपयोग इत्येतावता प्रसङ्गोक्तिः । सूत्रार्थस्तु—मन्त्राणां स्वधर्मेण कर्मसंयोगे प्रयोगः स्यात् धर्माणां मन्त्रप्रयोगनिमित्तत्वादिति ॥

**भाषास्वरोपदेशा०** ॥ २० ॥ **वाचनिकत्वादिति** । मन्त्रलिङ्गादेव मन्त्रस्य प्राप्तेः ब्राह्मणं स्वरविधानार्थमेवेति स्वरो वाचनिकः । यद्वा ब्राह्मणस्य मन्त्रविधायकत्वेऽपि न केवलं मन्त्रविधायकत्वं किंतु ब्राह्मणे स्वरान्तराम्नानेन तद्विशिष्टमन्त्रविधायकत्वमिति ब्राह्मणस्वरो वाचनिक इति भावः । एवं च सर्वत्र कर्मकालेऽध्ययन धर्माणामनादरेपीह ब्राह्मणस्वरेणैव मन्त्रोच्चारणलक्षणकार्यसिद्धेः प्रसङ्गसिद्धकार्यत्वान्मन्त्राम्नानस्वरस्यानादर इत्युत्थितेः संगतिर्बोध्या । **तेषामिति** । ब्राह्मणे स्वरस्योच्चारणमात्रं नतु स्वरवाचकः शब्दोऽस्ति । तथाच स्वरस्य शब्दोपात्तत्वाभावेन स्वरविधायकत्वासंभवान्मन्त्राधिकरणोक्तगुणाद्यर्थत्वमेव न्याय्यमिति भावः । केवलस्वरविधानार्थं ब्राह्मणमिति पक्षे न मन्त्रस्वरूप इति दृष्टान्तार्थम् । **वचनेति** । वचनेन स्वरूपोपादानेन विनियुज्या इत्यर्थः । स्वरूपोपादानरहितेष्वैन्द्र्यादिषु वचनविनियुज्येष्वपि ब्राह्मणस्वराप्रसक्तेरिति ध्येयम् । **न तत्स्वरेति** । स्वरस्य शब्दोपात्तत्वाभावाद्विशिष्टविधिगौरवाच्चेति भावः । **अविच्छेदार्थमिति** । यद्यपि मन्त्रसमाम्नानस्वरस्य विच्छेदार्थत्वं संभवति तथापि स्वरं विना मन्त्रोच्चारणासंभवादवश्यं भाविनि स्वरोपादाने प्रथमावगतत्वान्मन्त्राम्नानस्वर एवोपादेय इति भावः । **तस्मादिति** । अयं चात्मीयस्वरो येषां मन्त्राणां यज्ञकर्मण्यैकश्रुत्यविधानं नास्ति तद्विषयः । पूर्वपक्षे तु 'ता नो यज्ञकर्मणी'त्यैकश्रुत्यविधानस्य स्मार्तत्वाद्ब्राह्मणस्वरविधेश्च श्रौतत्वादैकश्रुत्यबाधनेन तद्विषयेऽपि ब्राह्मणस्वर एव भवति । ऐकश्रुत्यविधिश्च ये मन्त्रा ब्राह्मणेनाविनियुक्तास्तत्र सावकाश इति विवेकः । सूत्रार्थस्तु—'भाषास्वरो नाम छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ॥ उच्चनीचस्वरं प्राहुः स वैभाषिक उच्यते॥' इत्युक्तलक्षणो भाषिकस्वरः । तदुपदेशेषु प्रवचनसिद्धस्वरस्यैरापदविधाने प्रवचनसिद्धगिरापदस्येव निवृत्तिः स्यादिति ॥

**तन्न्यायत्वात्०** ॥ २३ ॥ **ब्राह्मणेति** । 'तं प्रोहेद्वानस्पत्योसी'त्यादिब्राह्मणोत्पन्ना इत्यर्थः । **तेष्वपीति** । यदि

---

१ प्रसङ्गो. २ भाषास्वरोपदेशादैरवत्प्रवचनप्रतिषेधः स्यात्.

स्वरविनियोगपरत्वम्[1]। अतो न ब्राह्मणस्वरेण प्रयोक्तव्यः। नैवम् असत्यपि स्वरविनियोगे मन्त्रस्य विनियुक्तस्य यथा विज्ञातरूपस्य प्रयोगपरत्वात्तस्य ब्राह्मणस्वरातिरेकेण स्वरान्तरानवगमात्तेनैव स्वरेण प्रयोगः॥

मन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम्॥ १०॥

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात्॥ २५॥**

यदा कदाचिन्मन्त्रान्ते वा कर्मानियमाद्भवेत्॥ आद्यो मैवं कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः॥ ११॥

करणमन्त्रेषु किं मन्त्रमध्ये मन्त्रान्ते ततोऽपि वा कियन्तं कालं स्थित्वा समवेताभिधायिपदानन्तरं वा कर्मप्रयोगः। किंवा सर्वमन्त्रान्तेऽनन्तरमेवेति संशये अनियमः समवेताभिधायिनो वा स्मरणस्य संजातत्वादनन्तरमेवेति प्राप्ते ब्रूमः—सकलस्य मन्त्रस्य विनियुक्तत्वात्सकलेन संपादितं स्मरणं कर्माङ्गमतः सकलमन्त्रसमाप्तौ तज्जनितं स्मरणं यावदेव नोपभ्रष्टं तावदेव प्रयोगः कर्तव्यः। तेन मन्त्रान्तस्य कर्मादेः संनिपातः॥

वसोर्धारायां मन्त्रान्ते कर्मसंनिपाताधिकरणम्॥ ११॥

**संततवचनाद्धारायामादिसंयोगः॥ २६॥ [कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात्॥ २७॥]**

मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वाऽत्र संततेः॥ आद्यो होमेषु सांतत्याद्वादशान्तेषु तद्धुतिः॥ १२॥

'संततां वसोर्धारां जुहोती'त्यत्र संततवचनात्तस्य च साहित्यवाचित्वात्साहित्यस्य चानेकापेक्षितत्वात्कर्मणश्चैकत्वात्कर्ममन्त्रयोः साहित्यमिदमुच्यते। अतोऽत्र मन्त्रादेः कर्मादेश्च संनिपातः। स्या-

---

भाषिकस्वरोऽविच्छेदार्थस्तर्हि तस्य प्रयोगार्थत्वाभावात्प्रयोगे स्वरापेक्षायां व्याकरणसिद्धत्रैस्वर्यमेव ग्राह्यमित्याशयः। ब्राह्मणान्तःपातिमन्त्रस्वराम्नानस्याध्ययनविधिपरिगृहीतस्यादृष्टार्थत्वापत्त्या पाठमात्राज्झटित्यवगतो ब्राह्मणस्वर एव ग्राह्यो ननु व्याकरणसिद्धस्वरस्तस्य झटित्यनवगमादित्याशयनाह—**असत्यपीति**। सूत्रार्थस्तु—मन्त्रसमाम्नायादृष्टेऽपि मन्त्रे पूर्वन्यायान्न ब्राह्मणस्वर इति॥

**मन्त्राणां करणार्थत्वात्०॥ २५॥** मन्त्रप्रसङ्गात्संगतिरित्याहुः। **किमिति**। स्थित्वेत्यन्तेनानियमः प्रतिपादितः। ततश्च किमनियम उतानुष्ठेयक्रियाभिधायिपदानन्तरमेवोत सर्वमन्त्रान्तेऽव्यवहितोत्तरक्षण एवेति संशयनिष्कर्षः। **अनियम इति**। आदौ मध्ये वा यत्र क्वापि क्रियानुष्ठानेऽपि क्रियासंबन्धिपदार्थप्रकाशकतामात्रेण 'युराशास्ते सुप्रजास्त्वमाशास्ते' इत्यादीनामिव करणता निर्वहतीति भावः। 'आयुराशास्ते' इत्यादौ साक्षात्क्रियाप्रकाशकत्वासंभवात्तत्फलभूतायुरादिप्रकाशकतया करणत्वनिर्वाहाभ्युपगमेऽपि साक्षादनुष्ठेयक्रियाप्रतिपादकपदसत्त्वे क्रियाप्रकाशकत्वेनैव करणता वक्तुमुचिता न तत्संबन्धिप्रकाशकत्वेनेत्याशयेन द्वितीयपक्षमाह—**समवेतेति**। **स्मरणस्येति**। स्मरणे जाते मन्त्रान्तप्रतीक्षाया व्यर्थत्वान्न मन्त्रान्तसंनिपातनियम इत्यर्थः। **सकलेनेति**। अन्यथा क्रियापदमात्रस्यैव करणत्वापत्त्या सकलस्य करणत्वं न स्यादिति भावः। **नन्वेवमपि** मन्त्रान्ते किंचित्कालं स्थित्वा क्रियाप्रयोगः किं न स्यात्तत्रापि क्रियास्मृत्यनुवृत्तिसंभवादित्यत आह—**तज्जनितमिति**। कस्यचित्स्मृत्यनुवृत्तिसंभवेऽपि सर्वेषां तदनुवृत्तौ प्रमाणाभावादनुष्ठेयस्मरणे सति किंचित्कालं तूष्णीमवस्थाने प्रयोगप्राशुभावपरप्रयोगविधिव्याकोपापत्तेश्च न किंचित्कालं स्थित्वा प्रयोग इति भावः। सूत्रार्थस्तु—मन्त्राणां क्रियानुष्ठानार्थत्वान्मन्त्रान्ते न कर्मादेः संनिपातः स्यात् सकलस्य मन्त्रस्य विनियोजकवचनेन स्मृत्यर्थत्वावगमादिति॥

**संततवचनात्०॥ २६॥** पूर्ववैषम्येणोत्थानात्संगतिः। **ननु** 'संततमाघारयती'त्यत्रेवाघार्यमाणद्रव्यसांतत्यार्थतया संततवचनोपपत्तिः किं न स्यादित्यत आह—**तस्यचेति**। क्रियायां श्रूयमाणं सांतत्यमगत्या द्रव्यगतत्वेन वर्णितमिह तु गत्यन्तरसंभवान्न द्रव्यगतत्वेन वर्णनं युक्तमित्याशयः। सिद्धान्तरीत्या कर्मसाहित्यं निराकरोति—**कर्मणश्चेति**। द्वादश-

---

[1] स्वरपरत्वम्.

देवं यद्येकं कर्म स्यात् 'भिन्नानि त्वत्र द्वादश द्वादशानि जुहोती'ति संख्यया कर्माणि तेषामविच्छेदः संततशब्देनोच्यते । जुहोतीति तेषामुपात्तत्वान्न मन्त्रकर्मणोः साहित्यं मन्त्रस्यानुपात्तत्वात् । अविच्छेदेऽपि संततशब्दो वर्तते न केवलं साहित्ये । अतोऽत्रापि पूर्व एव न्यायः ॥

आघारेपि मन्त्रान्ते कर्मसंनिपाताधिकरणम् ॥ १२ ॥

## आघारे च दीर्घधारत्वात् ॥ २८ ॥

आघारे मन्त्रसाहित्यं धारा वा संततात्रिमः ॥ कर्मैकत्वादाज्यधारा नैरन्तर्यस्य संभवात् ॥ १३ ॥

आघारं प्रकृत्य श्रूयते 'संततमाघारयती'ति । तत्र कर्मैकत्वात् तत्संतानासंभवे मन्त्रसाहित्यमेव विधीयत इत्यादिसंयोगः नेत्याह न कर्मणः क्षणिकस्य दीर्घेण मन्त्रेण 'ऊर्ध्वोध्वर'इत्यादिना साहित्यसंभवः अतो दीर्घधारस्याघार्यमाणद्रव्यस्य सातत्यमुच्यते । तेनात्रापि मन्त्रान्तकर्मादोरेव संनिपातः ॥

एककार्यमन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥

## मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥

पूषाद्येकार्थमन्त्राणां साहित्यं वा विकल्पना ॥ आद्यः शक्यत्वतो मैवं मन्त्रान्ते संनिपाततः ॥ ॥ १४ ॥

करणमन्त्राणामेकार्थानां 'भगो वां विभज'त्वित्यादिनां व्रीहियवन्यायेन विकल्प इति प्राप्तिसूत्रमेतदपवादार्थम् ॥

संख्याविहितमन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥

## संख्याविहितेषु समुच्चयोऽसंनिपातित्वात् ॥ ३० ॥

चतुर्भिरभ्रिमित्यत्र विकल्पो वा समुच्चयः ॥ विकल्पः पूर्ववन्मैवं समूहे करणत्वतः ॥ १५ ॥

येतु संख्यायुक्ता मन्त्राः 'चतुर्भिरभ्रिमादत्त'इत्येवमादयस्तेषामपि पूर्ववद्विकल्पः संख्यावशात्तु समुच्चयः चतुःसंख्या हि कर्माङ्गभूता नासति समुच्चये संपद्यते । तत्र पूर्वप्रयुक्तानां मन्त्राणां संस्काद्वारेण करणत्वं चरमस्य तु साक्षादिति संख्यावचनसामर्थ्यादध्यवसीयते तस्मात्समुच्चयः ॥

---

द्वादशानीति संख्या मन्त्रोपाधिका भविष्यतीति भावः । **संख्ययेति** । साक्षात्कर्मगतत्वे बाधकाभावान्मन्त्रानुपस्थितेश्च न तदुपाधिकत्वमिति भावः । **ननु** कर्मणां भेदेप्याशुतरविनाशित्वेन क्रमिकाणां कथं साहित्यसंभव इत्यत आह—**तेषामिति** । ननु सह ततं संततमिति साहित्यवाचित्वमेव संततशब्दस्येत्यत आह—अविच्छेदेपीति । लोके तेषामपि प्रयोगादिति भावः ॥

**आघारे च दीर्घधारत्वात्** ॥ २८ ॥ कर्मैकत्वादित्यनेन संगतिरपि सूचिता । मन्त्रान्तकर्मणोऽभ्यासेन दीर्घाणामपि मन्त्रेण साहित्यं सूपपादमिति भावः । गुणानुसारेण प्रधानस्याभ्यासो न न्याय्य इत्याशयेनाह—**नेति** । नच कर्मणः क्षणिकत्वेऽपि क्रियाया एकफलावच्छिन्नव्यापारनिचयरूपत्वाद्दीर्घकालत्वसंभवेन साहित्यमुपपद्यत इति वाच्यम् । अवयवानामपि कतिपयत्वेन दीर्घतरमन्त्रसाहित्यस्य तथाप्यनुपपत्तेरिति भावः ॥

**मन्त्राणां संनिपातित्वात्०** ॥ २९ ॥ 'पूषा वां विभजत्वर्यमा वां विभज'त्वित्यादिशब्दार्थः । **अपवादेति** । अग्रिमाधिकरणे विकल्पापवादत्वेन समुच्चयप्रतिपादनार्थमित्यर्थः । सूत्रार्थस्तु—एकक्रियाकरणभूतानां मन्त्राणां विकल्पः स्यात्संनिपातित्वात् कर्मादिसंनिपतनशीलत्वात्, विकल्पमन्तरेण सर्वेषां मन्त्राणां कर्मादिसंनिपातासंभवादिति । एवंच पूर्वोक्तमन्त्रान्तकर्मादिसंनिपातोपजीवनात्संगतिर्बोध्या ॥

**संख्याविहितेषु०** ॥ ३० ॥ **तेषामपीति** । समुच्चये सति येनैव मन्त्रेण संनिपतितं कर्म तस्यैव करणत्वं निर्वहेदन्येषां त्वदृष्टार्थतयैव स्यादिति सर्वेषां करणत्वावगमबाधापत्त्या चतुःसंख्यायाः न विधिः किंतु य एते चत्वारो मन्त्रास्तैरादत्त इति प्रचयशिष्टसंख्यानुवाद एवायं चतुर्भिरिति शब्द इति मन्त्राधिकरणोक्तगुणविधित्वाक्षेपेण पूर्वः पक्ष इति भावः । **संख्यावशादिति** । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसे'त्यादीनां लिङ्गादेवाभ्यादाने विनियोगसिद्धेः संख्याविधानार्थमेव चतुर्भिरिति वाक्यं लिङ्गाभावेऽपि निरर्थकानुवादस्यायोगात्संख्याविधिरेव वाच्य इत्याशयः । अन्येषामदृष्टार्थत्वं स्यादिति यदुक्तं तत्राह—**पूर्वेति** । सूत्रार्थस्तु—ये मन्त्राः संख्यया विहितास्तेषु समुच्चयः स्यात्तेषां संख्याविधिबलेन सर्वेषां कर्मादिसंनिपाताभावेपि समुच्चयोपपत्तेरिति ॥

---

१ दीर्घत्वात्.

ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥

**ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात् ॥ ३१ ॥ [याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् ॥ ३२ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥३३॥ गुणार्थत्वादुपदेशस्य ॥ ३४ ॥ वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३५ ॥]**

प्रथमन्त्रौ समुच्चेयौ विकल्प्यौ वा चतुष्ट्ववत् ॥ आद्य उक्तिद्वयान्मैवं समुच्चित्यनुदीरणात् ॥ १६ ॥

ये ब्राह्मणविहिता मन्त्राः 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयति उरु ते यज्ञपतिः प्रथमामिति पुरोडाशं प्रथयती'ति च तेषामपि सर्वेषामुपदिष्टत्वाद्विकल्पे च पाक्षिकबाधप्रसङ्गात्समुच्चयेऽपि संख्याविहितवत्सर्वेषां करणत्वोपपत्तेः समुच्चय इति वचनविनियोगाङ्गीकारेण भाष्यकारेण पूर्वपक्षितम्, वार्तिककारस्तु लिङ्गविनियोगेनैव मन्त्राणां विनियोगसिद्धेः समुच्चयार्थमेव वचनं मन्यते, तस्मादपि समुच्चय इति । नैवम् । लिङ्गेनैवैतेषां निरपेक्षसाधनत्वावगमादतो न समुच्चयः । संख्यावशेन हि पूर्वत्र समुच्चयाश्रयणं । नचैवमिहास्ति । ब्राह्मणविनियोगस्तु येषां लिङ्गविनियोगो नास्ति तेषां मन्त्रस्वरूपविनियोगार्थः येषां त्वस्ति लिङ्गं तत्रार्थवादाद्यर्थ इति न तेनापि समुच्चयः ॥

हौत्राणां मन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

**हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ [समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३७ ॥ समुच्चयं च दर्शयति ॥ ३८ ॥]**

उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ॥ विकल्पः स्मारकत्वैक्यादाकारान्यत्वतोऽन्तिमः ॥ १७ ॥
उच्छ्रयस्व समिद्धस्येत्यादीनां किं विकल्पनम् ॥ समुच्चयो वा कार्यैक्यादाद्योऽनुस्मृतयेऽन्तिमः ॥ १८ ॥

'उच्छ्रयस्व वनस्पत'इत्यादयो ये क्रियमाणानुवादिनो हौत्रा मन्त्रास्तेषामपि करणवदेकार्थत्वाद्विकल्पप्राप्तावुच्यते । करणानि हि कर्मानुष्ठानकरणभूतां स्मृतिं पूर्वक्षणवर्तिनीं कुर्वन्ति । नचैकेन तत्सिद्धावितरेण कार्यमस्तीति युक्तस्तत्र विकल्पः । क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः । स्मृत्यविच्छेदश्चान्तादपेक्षितः इति सर्वेषां समुच्चयः ॥ इति श्रीशास्त्रदीपिकायां द्वाशाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

**ब्राह्मणविहितेषु० ॥ ३१ ॥** संख्याविहितवदित्यनेन संगतिरपि सूचिता । **ननु** वचनविनियोगाङ्गीकारे वचनेननिरपेक्षतया विधानाद्विकल्प एव स्यादित्यस्वरसादाह—**वार्तिकेति** । **ननु** लिङ्गेनापि नैरपेक्ष्यमेवावगम्यत इति भाष्यकारमतापेक्षया कोऽस्य विशेष इत्यत आह—**लिङ्गेति** । वचनेन समुच्चयविधौ सति लिङ्गस्य नैरपेक्ष्ये व्यापारः कुण्ठीभवति । भाष्यकारमते तु समुच्चयविधावपि वचनान्तराभावान्मन्त्रविनियोजकवचनस्य नैरपेक्ष्ये व्यापारोऽकुण्ठित इति वैषम्यमिति भावः । एवंचैककार्यार्थे नानामन्त्रस्थले वचनस्य समुच्चयविध्यर्थत्वमित्यस्मिन्पूर्वपक्षे मन्त्राधिकरणोक्तमन्त्रार्थवादार्थत्वं यत्रैको मन्त्रस्तद्विषयं बोध्यम् । **अर्थवादेति** । इति प्रथयतीत्यादिषु चतुर्भिरित्यादिवत्समुच्चयविधिसामर्थ्याभावान्नानामन्त्रस्थलेऽप्यर्थवादत्वमेव स्वीकार्यमिति भावः ॥

**हौत्रास्तु विकल्पेरन्० ॥ ३६ ॥** 'समिद्धस्य श्रयमाण'इत्यादयः आदिशब्दार्थः । **क्रियमाणेति** । अध्वर्युणा क्रियमाणपदार्थानुवादिन इत्यर्थः । **एकार्थत्वादिति** । उच्छ्रयस्वेत्यादीनां चतुर्णामपि मन्त्राणामध्वर्युणा क्रियमाणोच्छ्रयणस्मृतिलक्षणैककार्यार्थत्वादित्यर्थः । **मन्वेकस्य** कर्मणः सकृत्स्मृत्यैवानुष्ठानसिद्धेः किं स्मृत्यविच्छेदेनेत्यत आह—**स्मृत्यविच्छेदश्चेति** । एकफलावच्छिन्नानेकक्षणनिचयरूपत्वादुच्छ्रयणादिक्रियायाश्चरमक्षणपर्यन्तस्मृतेरपेक्षितत्वात्स्मृत्यविच्छेदः सप्रयोजन **इत्यर्थः** । अनेनैव न्यायेन यथाक्रियमाणानुवादिनां मिथः समुच्चयः । एवं करणमन्त्रस्य क्रियमाणानुवादिनश्च समुच्चयः सिद्ध इति ध्येयम् ॥ **इति श्रीशास्त्रदीपिकाव्याख्यायां मयूखमालिकाख्यायां द्वादशाध्यायस्य तृतीयः पादः ॥ ३ ॥**

## द्वादशाध्याये चतुर्थः पादः ।

जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् ॥ १ ॥

**जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानं च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥ [समुच्चयं च दर्शयति ॥ २ ॥]**

सारस्वतीमनूच्येति विकल्पोऽथ समुच्चयः ॥ जपैक्यादादिमोऽन्त्यः स्यात्प्रकारस्य विभेदतः ॥ १ ॥

यत्र सन्तमप्यर्थप्रत्ययमविवक्षित्वोच्चारणमात्रमदृष्टाय क्रियते 'वैष्णवीमनूच्य वाग्यन्तव्ये'त्यादौ स जपः, गुणकीर्तनं स्तुतिः अग्निर्मूर्धेति, आशासनमाशीः आयुर्मे देहीति, गुणविशिष्टगुणिकीर्तनमदृष्टार्थमभिधानं तेषु ब्राह्मणविहितवद्विकल्पप्राप्तावदृष्टार्थत्वात्समुच्चयः ॥

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम् ॥ २ ॥

**याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ [लिङ्गदर्शनाच्च ॥ ४ ॥]**

इदं वाऽऽदिद्वयोः किं स्यात्साहित्यं वा विकल्पनम् ॥ साहित्यं पूर्ववन्मैवं देवताबोधनैक्यतः ॥ २ ॥

पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ॥ पुरेवाद्यः समाख्यानाद्वचनाच्च समुच्चयः ॥ ३ ॥

ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यानुवाक्यायुगले समाम्नाते 'इदं वामास्ये हविः', 'अयं वां परिषिच्यत'इत्येकं युगलम् । 'अस्मे इन्द्राबृहस्पती' 'बृहस्पतिर्नः परिपात्वि'त्यपरं, तत्र समुच्चयविकल्पसंशये यथा याज्यापुरोनुवाक्ययोः सत्यपि देवतोपलक्षणार्थत्वेनैकार्थत्वे मिथः समुच्चयस्तथा युगलयोरपि स्यादविशेषादिति प्राप्त उच्यते विकल्प एकार्थत्वादिति । याज्यापुरोनुवाक्ययोस्तु पुरोनुवाक्यासमाख्यावशान्न्यायप्राप्तविकल्पबाधेन समुच्चय इति विशेषः ॥

सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् ॥ ३ ॥

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ [समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥ समुच्चयं च दर्शयति ॥ ७ ॥]**

क्रयणेषु विकल्पः स्यात्साहित्यं वाऽग्रिमो यतः ॥ कार्यैक्यमानतेर्लाभाद्दशोक्तेश्च समुच्चयः ॥ ४ ॥

'एकहायन्या क्रीणाति अजया क्रीणाति वाससा क्रीणाती'ति दश क्रयद्रव्याणि, तेषां विकल्पः समुच्चयो वेति चिन्त्यते । तत्र व्रीहियवन्यायेनैकार्थत्वाद्विकल्पः । कथं पुनरेकार्थत्वं, भिन्ना एव हि प्रतिवाक्यं क्रयः । नह्येकेन वाक्येन विहितं क्रयमनूद्य वाक्यान्तरैर्द्रव्यान्तरविधानं संभवति उत्पत्ति-

---

**जपाश्चाकर्मसंयुक्ताः०** ॥ १ ॥ अस्फुटविषयविकल्पसमुच्चयचिन्तानन्तरे स्फुटविषये तच्चिन्तनात्पादान्तरत्वमानन्तर्यं च जपादीनां परस्परं भेदं कथयति—**यत्रेति** । **अविवक्षित्वेति** । अनूच्येत्यनुवचनमात्रस्यैव विधानात्प्रकाशितस्यार्थस्योपयोगाभावात्स न विवक्षित इति भावः । **आशासनमिति** । अभीष्टप्रार्थनमित्यर्थः । **गुणविशिष्टेति** । गुण्युपादानमन्तरेण गुणकीर्तनासंभवात्स्तुतावपि गुणिप्रतिपादनावश्यंभावेऽपि स्तुतौ गुणस्य प्राधान्यमभिधाने तु गुणिन इति भेदः । ब्राह्मणविहितेष्वेकस्मिन्कार्ये निरपेक्षतया विधानाद्विकल्पेऽपि जपानामदृष्टार्थत्वेन वैष्णवमन्त्रजपजनितादृष्टं सारस्वतमन्त्रजपेन भवतीत्यत्र प्रमाणाभावात्प्रयाजादिवत्प्रकरणेन युगपद्ग्रहणात्समुच्चय इत्याह—**अदृष्टार्थत्वादिति** । अदृष्टार्थत्वादेव समुच्चयस्य स्पष्टत्वाद्विषयव्याप्तिमात्रमनेन क्रियत इति पूर्वपक्षे नातीव यतितव्यम् । एवं प्रायेण स्पष्टविषयतास्मिन्पादे द्रष्टव्या । सूत्रार्थस्तु—याजमानेषु मन्त्रेषु अकर्मसंयुक्ताः कर्मणि करणत्वेन संयोगरहिता ये जपा ये चाशीरादयस्तेषु समुच्चयः स्यादाशीरादिसाध्यादृष्टपृथक्त्वादिति ॥

**याज्यानुवाक्यासु०** ॥ ३ ॥ पूर्ववदिहापि समुच्चय इत्युत्थितेः संगतिः । **नन्वेकार्थत्वादेव** विकल्पसिद्धेः कथं पूर्वपक्ष इत्यत आह—**याज्येति** । एवंच याज्यापुरोनुवाक्यावैषम्यप्रतिपादनमात्रेऽस्य तात्पर्यमिति भावः । पुरः पूर्वं अनूच्यत इति समाख्यासमानजातीययाज्यापेक्षया पूर्वभावं विना न संभवतीति तद्बलात्समुच्चय इत्यर्थः ॥

**क्रयणेषु तु०** ॥ ५ ॥ पूर्ववदिहापि विकल्पः इत्युत्थितेः संगतिः । अस्याधिकरणस्य क्रयविषयत्वं प्रतिपादयितुं भाष्यादावापाततः प्रतीयमानद्रव्यविषयत्वमाश्रित्याह—**एकहायन्येत्यादिना** । **उत्पत्तीति** । यदि किंचिन्निर्गुणं क्रय-

---

१ गुणिप्रकाशन.

शिष्टद्रव्यविरोधात् । तस्मात्सर्वाणि क्रयविधानानि विधिभेदाच्च क्रयभेदः । तस्मान्नानाक्रयसाधनत्वाद्द्रव्याणां नास्त्यैकार्थ्यं । सत्यं साक्षान्नास्ति, क्रयद्वारेण त्वस्त्येव । सर्वे हि क्रयाः सोमप्राप्त्यर्थत्वादेकार्थाः तद्द्वारेण द्रव्याण्यप्येकार्थानि, तदनेन प्रकारेण क्रयाणामेवात्र विकल्पसमुच्चयौ चिन्त्येते, व्रीहियववच्च विकल्पप्राप्तावुच्यते—विक्रेतुरानतिरत्र प्रयोजनं तच्च बहुभिः सुकरं, अतः कार्यप्रधानत्वात्पदार्थानां सौकर्यमालोच्य समुच्चयाश्रयणं न्याय्यं, व्रीहियवादीनां तु नैवं किंचित्कारणमस्ति येन पृथक्श्रुतानामपि सापेक्षत्वं कल्प्येत, अत्र तु कार्यविशेषात्सापेक्षत्वं कल्पनमिति वैषम्यम् ॥

उपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् ॥ ४ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

**गुदोपयजने किं स्याद्विकल्पोऽथ समुच्चयः ॥ आद्यः स्यादर्थकर्मत्वान्न शेषप्रतिपत्तितः ॥ ५ ॥**

अग्नीषोमीये पशौ 'गुदेनोपयजती'ति श्रुतं, पशुगणेऽनेकगुदसंनिपाते गुदानां विकल्पः समुच्चयो वेति चिन्ता । यद्यर्थकर्म ततो विकल्पः । अथ प्रतिपत्तिस्ततः समुच्चयः । तत्र सत्यपि तृतीयासंयोगे प्रयाजशेषवदुत्पत्तौ येन संयुक्तमित्येवं सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमेतत् ॥

आधाने विविधसंख्याकानां दक्षिणानां विकल्पाधिकरणम् ॥ ५ ॥

## संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥

**एका देया समुच्चेयं विकल्प्यं वाद्य आनतेः ॥ सौलभ्यादन्तिमो नैरपेक्ष्यात्संख्यान्तरादपि ॥ ६ ॥**

अग्न्याधेयाङ्गानामेका देया षट् देयेत्यादीनां दक्षिणानामानत्यर्थत्वात्क्रयणवत्समुच्चयः संख्याश्रुतिविरोधात्तु विकल्पः समुच्चये संख्यान्तरोपजननाच्छ्रुतसंख्याहानिप्रसङ्गात् ॥

---

वाक्यं स्यात्तदा तत्र क्रयविधिरितरेषु गुणविधिरिति वक्तुं शक्यते । इह च सर्वेष्वपि वाक्येषु गुणश्रवणादेकस्य वाक्यस्योत्पादकत्वे तत्रत्यगुणस्योत्पत्तिशिष्टत्वात्तत्र वाक्यान्तरैर्गुणविध्यसंभवात्तेषामपि क्रयविधायकत्वमेव वाच्यं नतु गुणमात्रविधायकत्वमित्यर्थः । एवंच प्राप्ताप्राप्तविवेकेनैकार्थत्वस्य क्रयेष्वेव पर्यवसानात्तद्विषयत्वमेवास्येत्यत आह—**तदनेनेति । विकल्पेति** । सर्वेषामपि क्रयाणां सोमप्राप्तिलक्षणैककार्यत्वाद्विकल्पप्राप्ताविल्यर्थः । यद्यपि तत्तद्द्रव्यसाधनक्रयादानतिर्विलक्षणैव जायत इति द्वारकार्यभेदान्न विकल्पसंभवस्तथाप्यानतिसामान्यैक्याद्द्वारकार्यमप्येकमिति भावः । आनतिसामान्यादेकार्थत्वमपि पदार्थस्वरूपपर्यालोचनया परित्याज्यमित्याशयेनाह—**अत इति** ॥

**संस्कारे च०** ॥ ८ ॥ सोमसंस्कारक्रयेषु समुच्चयेपि प्रकृते संस्कारकर्मत्वाभावान्न समुच्चय इत्युत्थितेः संगतिः तदर्थसंशयं फलफलिभावमुखेनाह—**यदीति** । अर्थकर्मत्वे एकेनापि गुदेनोपयागे कृतेऽदृष्टरूपप्रयोजनस्य सिद्धेर्विकल्पः । प्रतिपत्तित्वे तु येनैव गुदेनोपयोगो न क्रियते तस्य प्रतिपत्तिलोपः स्यादिति सर्वैरपि गुदैरुपयजनस्य कर्तव्यत्वात्समुच्चय इत्यर्थः । सत्यपि तृतीयासंयोगे इत्यनेन तृतीयासंयोगादर्थकर्मत्वमिति पूर्वपक्षं सूचयति—**उत्पत्ताविति** । उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिसंयोगात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यादिति चतुर्थाध्यायन्यायसिद्धस्येत्यर्थः । तत्सूत्रं च तत्रैव व्याख्यातम् । सूत्रार्थस्तु—संस्कारे उपयजने समुच्चयः स्यात्संस्कारस्य द्रव्यप्रधानत्वादिति ॥

**संख्यासु तु०** ॥ ९ ॥ पूर्ववदिहापि समुच्चय इत्युत्थितेः संगतिः । **ननु** दक्षिणानामानत्यर्थतयैकार्थत्वाद्व्रीहियववद्विकल्पस्य न्याय्यत्वात्कथं पूर्वः पक्ष इत्यत आह—**आनतीति** । यथानतिसौकर्यात्क्रयाणामानत्यर्थानां समुच्चय एवमिहापीत्यर्थः । **समुच्चय इति** । एकया षड्भिश्च सप्तसंख्योपजननात् श्रुताया एकसंख्यायाः षट्संख्यायाश्च हानिः स्यादित्यर्थः । एतेन च सौत्रं श्रुतिविप्रतिषेधादित्येतद्व्याख्यातम् । **ननु** एकस्यां दानक्रियायां यद्येकाद्यन्वयस्तदा श्रुतसंख्याहानिः । यदि त्वेकदानमन्यत् षट्दानं चान्यत्तदा तत्संख्यावच्छिन्नदानक्रियाद्वयानुष्ठाने सति श्रुतसंख्याहानिर्नास्ति समुच्चयश्च सिध्यति तस्मादिदमनुपपन्नमिति चेत् सत्यम् । यदि तावद्दक्षिणादानं विवक्षितं तदा भेदेन दाने प्रयोजनाभावात्समुदायसंख्यावच्छिन्नदानमेकमेव श्रूयेत लाघवात् । तथातु न श्रूयते तस्मात्पृथक्संख्यावच्छिन्नदानश्रवणबलात्तत्तत्संख्याव-

---

१ विध्यन्तराच्च.

पशुगणेषु जाघनीनां विकल्पाधिकरणम् ॥ ६ ॥

**द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ [द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥ १२ ॥ न कर्मणः परार्थत्वात् ॥ १३ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ शृतेऽपि पूर्ववत्त्वात्स्यात् ॥ १५ ॥ विकल्पे त्वर्थकर्म नियमप्रधानत्वात् शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥]**

समुच्चयो जाघनीनां न बाधो गुदवन्न तत् ॥ प्रकृतौ नियमादर्थकर्मातोऽत्र तथात्वतः ॥ ७ ॥

दर्शपूर्णमासयोः पत्नीसंयाजेष्वाज्येन सह विकल्प्यमाना जाघनी विहिता । 'जाघन्या पत्नीः संयाजयन्ती'ति सा चोदकेनाग्नीषोमीये पशौ प्राप्ता अत्रापि पुनः श्रूयते । जाघन्या पत्नीः संयाजयन्तीति । ततोपि पशुगणे चोदकेन प्राप्नोति तत्र बह्वीनां जाघनीनां समुच्चयो विकल्पो वेति संशयः । यदि प्रतिपत्तिस्ततः समुच्चयः । अथार्थकर्म ततो विकल्पः । तत्र यद्यपि दर्शपूर्णमासयोर्जाघनी गुणभूता पत्नीसंयाजानां तथाप्यग्नीषोमीये हृदयाद्यर्थालब्धपशुनिष्पन्नाया जाघन्याः प्रतिपत्त्यपेक्षायां प्रतिपत्तित्वेन पत्नीसंयाजविधानम् एवमर्थं पुनर्वचनं ततश्च दृष्टार्थत्वात्पशुगणे समुच्चयः । नैवमाज्येन सह विकल्पमानायाश्चोदकप्राप्तायाः पुनर्वचनं नियमार्थं यथा प्राप्तायाश्च नियमः प्राप्तिश्च गुणभावनेति तादृश्येव नियम्यते अतः पशुगणे विकल्पः ॥

---

च्छिन्नदानानां विकल्प इत्याशयः । नचैवमपि यत्र सर्वापेक्षया महती संख्या श्रूयते सैव विधीयते एका देयेत्याद्यल्पसंख्याश्रवणं त्ववयुत्यानुवादः । यथा त्रीन्वृणीते इत्येकविधिरेकं वृणीते द्वौ वृणीत इत्यवयुत्यानुवादस्तद्वत्तत्रश्च कथं विकल्प इति वाच्यम् । एकं वृणीत इत्यादौ सर्वत्र वर्तमाननिर्देशेन प्रत्यक्षविध्यश्रवणाद्विधिः कल्पनीयः । कल्पनायां चैकत्र तत्कल्पनयोपपत्तौ लाघवादेकत्रैव कल्पयितुं युक्त इति त्रीन्वृणीत इत्यत्रैव विधेः कल्पने सत्येकं वृणीते इत्यादेरवयुत्यानुवादत्वेपीह एका देया षट् देया द्वादश देयाः शतं देयं सहस्रं देयमपरिमितं देयमिति प्रत्येकं प्रत्यक्षविधिश्रवणाद्विनिगमनाविरहेण सर्वत्र विधायकत्वस्यैव न्याय्यत्वात्प्रत्यक्षविधिश्रवणेऽपि यदि विष्णुरुपांशु यष्टव्य इत्यादौ जामित्वोपक्रमाजामित्वोपसंहाराभ्यामिवैकवाक्यतावगतिः स्यात्तदा तद्वदेव बलादर्थवादता स्यात्, इह तु न तथा एकवाक्यतावगमकं किंचित्प्रमाणमस्ति तस्मात्सर्वसंख्यानामपि विहितत्वाद्विकल्प इति ॥

**द्रव्यविकारं तु०** ॥ १० ॥ पूर्वत्र द्रव्यस्य गुणत्वादस्तु विकल्पः इह तु जाघनीनां प्रतिपाद्यतया समुच्चय इत्युत्थितेः संगतिः । **जाघन्येति** । जाघनीशब्दः पुच्छवाचीति भट्टरुद्रदत्तः । **गुणभूतेति** । ततश्च आज्येन सह विकल्पेन प्राप्तायाः पशौ पुनर्वचनान्नियमो यथाप्राप्ताया एव वक्तव्य इतीहापि गुणभूतैव सा नतु प्रतिपाद्येत्यर्थः । **तथापीति** । सत्यं गुणभूतैव नियन्तव्या तथापि नियमस्य प्रयोजनापेक्षायां गुणभूतयापि तया यागे क्रियमाणे हृदयाद्यर्थविशसनादिनानुनिष्पन्नाया जाघन्याः प्रतिपत्तिसंभवादपेक्षितदृष्टरूपप्रतिपत्तिरेव प्रयोजनं कल्पयितुमुचितमिति नियममुखेन प्रतिपत्तिविधानमेव पर्यवसितमिति समुच्चय इत्यर्थः । **तादृश्येवेति** । जाघन्याः प्रकृतौ गुणभावादिहापि गुणभावावश्यंभावाज्जाघनीगुणकयागादपूर्वं भवतीति स्वीकार्यम् । तदेवंसति प्रधानभूतः सन् यागो जाघनीयसंस्कारार्थोपीति यदि स्वीक्रियते तदा एकेन वाक्येन यागस्य द्वैरूप्यालाभाद्वाक्यभेदप्रसङ्गः । यदि चैतद्दोषपरिहारार्थं यागस्य प्राकृतमदृष्टार्थत्वं परित्यज्य केवलप्रतिपत्तित्वं स्वीक्रियते तदाऽप्राकृति कार्यापत्तिस्तस्मात्प्रकृताविवेहापि यागः केवलादृष्टार्थः । सर्वे यज्ञविधयो नियमविधय इति प्रकृतावपि जाघनीविधेर्नियमविधितया तत्रैव नियमप्रयोजनं क्लृप्तमिति नेह प्रयोजनाकाङ्क्षा येन तद्बलेनात्र प्रयोजनकल्पनायां दृष्टत्वात्प्रतिपत्त्यर्थत्वमेव कल्पनीयं स्यात् । इयांस्तु विशेषः । प्रकृतौ तन्नियमादृष्टं कदाचिदाज्येनापि साधितं पशौ तु पुनर्विधानात्तज्जाघन्यैव साधनीयमिति । तस्माद्यथाप्राप्ताया एव नियमनेन प्रतिपत्त्यर्थत्वाभावाद्विकल्प इत्यर्थः । एवंच दैवात्पशौ जाघन्यपचारे यथाप्रकृति सूनास्थजाघनीमुपादाय पत्नीसंयाजाः कर्तव्या इति भावः । सूत्रार्थस्तु—द्रव्यविकाराज्जाघन्याख्यद्रव्यस्य नियमलक्षणविकारेऽपि प्रकृतिवदर्थकर्मैवेदं, प्रकृतिवद्विकल्पे प्राप्ते नियमार्थत्वात्पुनर्विधानस्य नियमस्य च यथाप्राप्ति वक्तव्यत्वादिति ॥

उखायां काम्येन नित्याग्नेर्विकाराधिकरणम् ॥ ७ ॥

**उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥** [असति चासंस्कृतेषु कर्म स्यात् ॥ १८ ॥ तस्य च देवतार्थत्वात् ॥ १९ ॥ विकारो वा तदुक्तहेतुः ॥ २० ॥ वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥ संसर्गे चापि दोषः स्यात् ॥ २२ ॥ वचनादिति चेत् ॥ २३ ॥ तथेतरस्मिन् ॥ २४ ॥ उत्सर्गेऽपि परिग्रहः कर्मणः कृतत्वात् ॥ २५ ॥]

नित्योख्याग्नौ काम्यवह्निः संयुज्येताथ बाधकः ॥ कार्यभेदादादिमोऽन्त्यः कामेनान्यप्रसञ्जनात् ॥ ८ ॥

अग्नावुख्यं प्रकृत्य श्रूयते 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात् भ्राष्ट्रादन्नाद्यकामस्येति । तत्र किं नित्यस्योख्यस्य काम्यस्य च वार्क्षादेः समुच्चयोऽथवा नित्यो निवर्त्य इति संदेहे अवधानमात्रं कामाय श्रूयते न होमः । तस्मात्फलाय काम्यमवधाय होमाय पुनर्नित्योऽग्निरुख्योऽग्निवावधातव्य इति समुच्चः । स्यादेतदेवं यद्यवधानं विधीयते, प्राप्तमेव तु होमार्थमग्न्यन्वाधानमाश्रित्याग्न्यन्तरमात्रं विधीयते । तस्मात्तेन काम्येन नित्यस्य निवृत्तिः विकल्पसमुच्चयविचारे समाप्ते समुच्चय एवास्ति नास्तीति चिन्त्यत इति संगतिः ॥

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥

**स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥** [अन्यो वोद्धृत्याहरणात् ॥ २७ ॥]

सोऽग्निराहवनीयो नो वात्र आहुतियोगतः ॥ अन्योन्याश्रयतो मैवं संस्काराच्चेन्न सोऽत्र हि ॥ ९ ॥

सोऽयं काम्योऽग्निराहवनीयशब्दवाच्यः स्यादाहूयते अस्मिन्निति, तस्मादाहवनीयधर्मागतश्रीधारणादयोऽत्र कर्तव्याः । नैवं । आधानजन्मनः संस्कारविशेषस्य वाचकोऽयमाहवनीयशब्दो नासति तस्मिन् संस्कारे वर्तितुमर्हति । तस्मान्नात्राहवनीयधर्माः ॥

वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम् ॥ ९ ॥

**तस्मिन्संस्कारकर्म शिष्टत्वात् ॥ २८ ॥** [स्थानाद्वा परिलुप्येरन् ॥ २९ ॥]

अस्याधानादि नो वात्र सर्वशेषत्वतोऽस्ति तत् ॥ न संस्कृतस्थानपातान्मथनस्याप्यसंभवात् ॥ १० ॥

एवं तर्हि संस्कारात्तत्राधानादिकाः कर्तव्याः होमार्थत्वात्संस्काराणामस्य चाग्नेर्होमसाधनत्वात्

---

**उखायां काम्यनित्यः० ॥ १७ ॥ उख्यमिति ।** आहवनीये उखासंतापे सति तत्रोत्पन्नाग्निमित्यर्थः । जाघनीनामेकार्थत्वाद्विकल्पेऽपि उख्यस्य वार्क्षाग्न्यादेश्च भिन्नकार्यत्वात्समुच्चय इत्युत्थितेः संगतिः । **अवधानमात्रमिति ।** अवधानमायतने निधानं धारणमित्यन्ये । **न होम इति ।** वार्क्षाग्निमग्निं होमार्थं कुर्यादिति वचनाभावाद्धोमो न श्रूयते इत्यर्थः । ततश्च प्रकृतमाग्निकं कर्माश्रित्य वार्क्षाग्न्याद्यग्न्यन्तरविशिष्टमवधानं फलाय विधीयते इति भावः । एवंचोख्यस्य होमार्थत्वात्कामस्य चावधानमात्रार्थत्वादुभयोर्भिन्नार्थतया न काम्येन नित्योख्यस्य बाधः गोदोहनचमसवदेकार्थत्वाभावात् किंतु समुच्चय एवेत्याह—**तस्मादिति । अग्न्यन्तरमात्रमिति ।** नत्वग्न्यन्तरविशिष्टाधानं विशिष्टविधिगौरवप्रसङ्गादित्यर्थः । **तस्मादिति ।** विधिलाघवान्नित्योख्यबाधोऽपि न दोष इत्याशयः । **ननु** बाधाभ्युच्चयचिन्तेयं नात्र संगतेत्यत आह—**विकल्पेति ।** सूत्रे नियोगशब्दोऽवधानार्थकः ॥

**स आहवनीयः स्यात्० ॥ २६ ॥** सोऽयमित्यनेन प्रासङ्गिकीं संगतिं सूचयति । **नन्वा**धानपवमानजन्यसंकारे रूढत्वादाहवनीयशब्दस्य कथं तद्रहितकाम्याग्निवाचित्वमित्यत आह—**आहूयत इति ।** आधानपवमानजन्यसंस्कारस्थलेऽपि योगादेव प्रयोगोपपत्तेर्न तत्र रूढिरिति भावः । **आधानेति ।** होमाधारतयाहवनीयत्वे त्वाहवनीये जुहोतीत्याहवनीयस्य सतो होमे विधिः होमाधारत्वाच्चाहवनीयत्वमिति परस्पराश्रयप्रसङ्गाद्धोमाधारत्वेऽपि पदादिषु तत्प्रयोगाभावाच्च रूढ एवायमित्यर्थः ॥

**तस्मिन्संस्कारकर्म शिष्टत्वात् ॥ २८ ॥ कर्तव्या इति ।** ततश्च काम्याग्नेराहवनीयत्वमप्यस्तीति गतश्रीधारणादयः तत्रापि कर्तव्या इति पूर्वाक्षेपात्संगतिः । आक्षेपमेव द्योतयितुमेवं तर्हीत्युपक्रमः । **होमर्थत्वादिति ।** यद्यप्या-

---

१ हवनीयधर्मः

सत्यं । होमसाधनोऽयमग्निस्तथाप्यसंस्कृत एवायं संस्कृतस्थानापन्न इति नात्र संस्कारा: कर्तव्याः । नहि वृक्षादाहृतस्यारणिमन्थनादिजन्य: संस्कार: शक्यते आधातुं । तस्मान्नात्र संस्कारा: ॥

नित्यस्योख्यस्याग्नेरधारणाधिकरणम् ॥ १० ॥

**नित्यधारणे विकल्पो नह्यकस्मात्प्रतिषेधः स्यात् ॥ ३० ॥ [नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ ३१ ॥]**

धृतिर्विकल्पितोख्यस्य किंवा नैवास्ति धारणम् ॥ निषेधात्कल्प्यविधितश्चाद्यो न प्राप्तवारणात् ॥ ११ ॥

काम्याग्निप्रसङ्गं समाप्य पुनर्नित्यमेवोखाग्निमुपक्रम्य चिन्तयति किं मुख्यस्य नित्यधारणं न वेति विकल्प: उताधारणमेवेति । तत्र न प्रतिसंदध्यादिति धारणप्रतिषेधोऽसत्यां प्राप्तावनुपपद्यमान: प्रापकं विधिमनुमापयति । तेन चानुमितेन विधिना प्रापितं तत्प्रतिषेधेन च प्रतिषिद्धं धारणं विकल्पमर्हतीति प्राप्तेऽभिधीयते—सामान्येनाहवनीयधारणं गतश्रियो विहितं, उख्यश्चायमाहवनीयस्थानापन्न:, आहवनीय एव हि संतापेनोख्य: संजात: तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धारणमुख्यविषयेऽनेन प्रतिषिध्यत इति नानेनाश्रुतविध्यनुमानं संभवति तस्मादधार्य एवायमुख्य: ॥

सत्रे शुक्रस्पर्शादीनामेककर्तृकत्वाधिकरणम् ॥ ११ ॥

**परार्थान्येको यजमानगणे ॥ ३२ ॥**

शुक्रस्पर्शादिकं सत्रे सर्वेषामुत कस्यचित् ॥ अविशेषादादिमोऽन्त्यस्तावतैवार्थसिद्धितः ॥ १२ ॥

सत्राहीनयोरनेकयजमानसमवाये यानि परार्थान्ययजमानसंस्कारार्थानि शुक्रान्वारम्भणौदुम्बरीसंमाननादीनि तान्येकेनैव कर्तव्यानि न सर्वैः प्रयोजनाभावादिति प्राप्तिसूत्रमेतत् ॥

---

धानमाहवनीयार्थे तथाप्याहवनीये जुहोतीत्याहवनीयशब्दवाच्यानामाधानपवमानजन्यादृष्टसंस्काराणां होमे विनियोगात्संस्काराणां च साक्षाद्धोमाधारत्वानुपपत्त्या होमाधारभूताग्न्यर्थत्वावगमात्काम्यस्यापि होमाधारत्वात्तत्रापि संस्कारा: कर्तव्या इत्यर्थः । यदि वाक्यान्तरेण प्राप्तं होमाधारमुद्दिश्य संस्कारा विधीयेरन् तदा काम्यसाधारणा भवेयुः नत्वेतदस्ति किंत्वाहवनीये जुहोतीति वाक्यमेव संस्कारं होमे विदधत्संस्कृतस्याग्नेरपि होमार्थत्वमापादयति । ततश्च संस्कृताग्निबाधनेन काम्योऽग्निर्निविशमान: कथं संस्कारान् लभेत । तस्मान्न तत्र संस्कारा इत्याशयेनाह—**सत्यमिति** । अशक्यत्वादपि संस्कारा न कर्तव्या इत्याह—**नहीति** । सूत्रार्थस्तु—तस्मिन्काम्येऽग्नौ संस्काराणां क्रिया स्यात्तेषां सर्वहोमार्थतया विशिष्टत्वादिति ॥

**नित्यधारणे विकल्पः०** ॥ ३० ॥ अत्र काम्यस्याग्नेर्न विषयत्वं सूत्रभाष्यविरोधादित्याशयेनाह—**काम्येति**। काम्याग्निसंयोगागतं विचारं समाप्येत्यर्थः । **नेति** । 'न प्रतिसमिन्ध्येयत्प्रतिसमिन्ध्येत् भ्रातृव्यमस्मै जनयेदि'त्यनेनेत्यर्थः । **अर्हतीति** । सामान्यवचनकारिताया अपि प्राप्तेर्निर्दोषशास्त्रकारिततयात्यन्तबाधायोगात्तदानीमपि विकल्पो दुर्वार इति भावः । **ननु** सामान्यवचनेनाहवनीयगोचरेणोख्यधारणस्याप्राप्तेस्तत्प्रापकं वचनमवश्यमनुज्ञेयमित्यत आह—**उख्यश्चेति**। आहवनीयस्थानापन्नस्योख्यस्याहवनीयधर्मो धारणमपि सामान्यवचनप्रसादबलादेव प्राप्नोतीत्यर्थः। इदं च प्रौढिवादेनोक्तम्। वस्तुतस्त्वाहवनीय एवायं मुख्यः न तत्स्थानापन्नोऽन्योऽग्निस्ततश्च साक्षादेव सामान्यवचनेन तत्र धारणं प्राप्नोतीत्याशयेनाह—**आहवनीय एवेति । तस्मादिति** । नच सामान्यवचनप्राप्तिप्रतिषेधपक्षेऽपि विकल्पो दुर्वार इत्युक्तमिति वाच्यम् । सामान्यवचनप्राप्तस्य पर्युदास इत्यङ्गीकारेण दोषाभावात् । नच तस्योख्याग्निप्रकरणे संनिहितत्वाभावादुख्याग्निसंनिधौ श्रूयमाणस्य न प्रतिसमिन्ध्येदित्यस्य न पर्युदासत्वसंभव इति वाच्यम् । आहवनीयस्थानापन्नमभ्यन्तरमुख्याग्निरिति पक्षे उख्याग्नावाहवनीयधर्मसामान्यप्रापकवचनस्योख्यविधिशेषतया कल्पनीयत्वेन तस्य संनिहिततया पर्युदासत्वसंभवादाहवनीय एवोख्यः नत्वन्य इति पक्षेऽपि प्रतिसमिन्धेदित्याहवनीयधारणश्रवणबलेन कथंचिदाहवनीयधारणगोचरसामान्यवचनं हृदयमागम्य पर्युदासत्वं समर्थनीयम्। विकल्पापेक्षया यत्नेनापि पर्युदासत्ववर्णनस्य ज्यायस्त्वादिति ध्येयम्॥

**परार्थान्येको यजमानगणे** ॥ ३२ ॥ धारणस्य विकल्पाभाववद्यजमानानामपि शुक्रान्वारम्भणादौ न विकल्प इत्युत्थितेः संगतिः । **प्राप्तीति** । यजमानानां फलित्वेन प्राधान्यादन्यत्र गुणभावासंभवाद्यजमानसंस्कारार्थमौदुम्बरीसंमाननमिति शङ्कायाः शब्दतो यजमानानां गुणभावबोधनेन स्वकीयफलसिद्ध्यर्थमेव तेषां गुणभावाभ्यनुज्ञावश्यंभावेनैवानुन्मेषादुत्तरत्रानियमप्रतिपादनाय प्राप्तिमात्रं क्रियत इत्यर्थः ॥

अहीने शुक्रस्पर्शादौ यस्यकस्यचिद्यजमानस्य कर्तृत्वाधिकरणम् ॥ १२ ॥

**अनियमोऽविशेषात् ॥ ३३ ॥**

**अहीने सत्रवच्छुक्रस्पृगैक्ये स नियम्यते ॥ न बाधः संभवान्मैवं विशेषानवधारणात् ॥ १३ ॥**

स चोक्तो यः कश्चित्स्यादविशेषात् । अतो येनकेनचित्कृतमन्वारम्भणादिकमितरे प्रसङ्गादुपजीवन्तीतीदमपि प्राप्तिसूत्रमेव असत्रेष्वपवादं वक्तुम् ॥

सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

**मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥**

**कश्चिद्गृहपतिर्वा स्यात्सत्रे कश्चिदहीनवत् ॥ इतरेषां तदार्त्विज्यादविलम्बार्थमन्तिमः ॥ १४ ॥**

सत्रेषु गृहपतिरेव परार्थानि कुर्यान्नानियमः कस्मादितरेषामार्त्विज्यविरोधात् ॥

सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् ॥ १४ ॥

**सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥ [आम्नायवचनाच्च ॥ ३६ ॥ सर्वे वा तदर्थत्वात् ॥ ३७ ॥ गृहपतिरिति च समाख्यासामान्यात् ॥ ३८ ॥]**

**अञ्जनाद्या गृहपतेः सर्वेषां वा समाख्यया ॥ आद्यो नो फलिसंस्काराः सर्वेषां फलिता मता ॥ १५ ॥**

यानि पुनर्यजमानसंस्कारार्थानि कर्माणि अञ्जनाभ्यञ्जनादीनि तान्यपि सत्रे किं गृहपतिरेव कुर्यादुत सर्वे इति संशये गृहपतिरेवेत्याह गृहपतिसमाख्यानात् । अत्र हि गृहशब्देन कर्मोच्यते तस्य पतिर्गृहपतिः । सर्वेषां च यजमानानां स्वामित्वाद्गृहपतिशब्दार्हत्वे सति विशेषेण कस्यचिदेषा समाख्या फलभूयस्त्वनिमित्ता । फलभूयस्त्वं च संस्काराधिक्यात् । अतस्तस्यैव संस्कारा नेतरेषाम् । अत्राभिधीयते—फलिसंस्काराः सर्वैरेव कर्तव्यास्तदभावे फलमेव न स्यात् गृहपतिसमा-

---

**अनियमोऽविशेषात् ॥ ३३ ॥** स चेत्यनेन पूर्वोक्तोपजीवनात्संगतिरपि सूचयति । **इदमपीति** । ननु परमतवदहीनेऽनियमरूपसिद्धान्तं 'सत्रे मुख्यो वा विप्रतिषेधा'दित्यनेन गृहपतिनियमस्य सिद्धान्तयिष्यमाणत्वात्तत्राप्यनियमरूपपूर्वपक्षं च प्रतिपादयितुमिदं सूत्रमर्थद्वयपरत्वकल्पनागौरवान्नापि सत्र एवानियमरूपपूर्वपक्षमात्रप्रतिपादनार्थं भाष्यविरोधादिति भावः ॥

**मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥** सत्रेष्वपवादं वक्तुमिति पूर्वत्रैवास्य संगतिरुक्तप्राया । इतरेषामपि आर्त्विज्यस्य शुक्रान्वारम्भणादियाजमानस्य च संनिपाते युगपत्कर्तुमशक्यत्वादित्यर्थः । गृहपतेस्तु आर्त्विज्याभावेन विप्रतिषेधाप्रसक्तेः स एव परार्थानि याजमानानि कुर्यादिति भावः । नचैवं येषु परार्थयाजमानेषु आर्त्विज्यसंनिपातो नास्ति तेष्वार्त्विज्येन साकं विरोधाभावादनियमः स्यादिति वाच्यम् । आर्त्विज्येन सह संनिपातिषु परार्थयाजमानेषु गृहपतेरेव कर्तृत्वावश्यंभावादन्येष्वपि क्लृप्तगृहपतिनैवोपपत्तावनियमस्यायुक्तत्वात् ॥

**सत्रे गृहपतिः० ॥ ३५ ॥** परार्थवद्गृहपतिरेव स्वामिसंस्कारानपि कुर्यादित्युत्थितेः संगतिः । **ननु** गृहशब्दस्य शालापरत्वमादाय गृहपतिसमाख्याया उपपत्तेः कथं तद्बलाद्गृहपतिनियम इत्यत आह—**अत्र हीति** । शालापतित्वस्य सर्वसाधारण्यान्न गृहशब्दः शालापर इति भावः । **ननु** तर्हि कर्मस्वामित्वमपि साधारणमिति कर्मपरोपि न स्यादित्यत आह—**सर्वेषां चेति** । कर्मस्वामित्वस्य सर्वेषामविशेषेऽपि प्रकर्षगतेर्विज्ञानादेकस्यैव गृहपतिसमाख्योपपद्यते, प्रकर्षगतेश्च 'यो वै सत्रे बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाप्नोती'ति गृहपतेः फलभूयस्त्वावगमात्कर्मजन्यफलभोक्तृत्वरूपे कर्मस्वामित्व एव विज्ञातुं शक्या नतु शालापतित्वे तत्र प्रकर्षे प्रमाणाभावादिति भावः । नच फलिसंस्काराभावे इतरेषां फलमेव न स्यादिति वाच्यम् । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्येवं सत्रे ब्रह्मादीनामुपदिष्टदीक्षादिसंस्कारैरेव फलसिध्युपपत्तेरिति भावः । **तदभाव इति** । प्रकृतौ सर्वसंस्कारैः फलयोग्यत्वाधानेनेहापि तदर्थनिर्वाहावश्यंभावान्न दीक्षादिभिः कतिपयैः फलं संभवतीति भावः । गृहपतिर्लोके गृहस्वामी कर्मकरो न भवति किंत्वन्ये एवास्य कर्मकरा भवन्ति एवमयमपीति कर्मकरत्वाभावे सति स्वामित्वमात्रेण गृहपतिसमाख्योपपद्यते ततश्च समाख्याया अन्यथाप्युपपत्तेर्न ततः फलभूमसिद्धिस्तदभावाच्च न तस्य संस्काराधिक्यं कल्पनीयमिति भावः । **ननु** समाख्याया अन्यथो-

---

१ सर्वेषामेव.

स्यात्वार्त्विज्याभावात् इतरे ह्यार्त्विज्यं कुर्वाणाः कर्मकरा इव भवन्ति अयं तु केवलं यायमानकरणात्स्वामिवाचिना गृहपतिशब्देनोच्यते । भवतु वा फलभूयस्त्वं तत्तु वचनात् । सहि भूयिष्ठामृद्धिमृध्नोतीति न संस्काराधिक्यात् । अतः सर्वे याजमानं कुर्युः ॥

याजमानार्त्विज्ययोरार्त्विज्यस्यैव बलवत्त्वाधिकरणम् ॥ १५ ॥

**विप्रतिषेधे परम् ॥ ३९ ॥ [हौत्रे परार्थत्वात् ॥ ४० ॥ वचनं परम् ॥ ४१ ॥]**

**याजमानार्त्विज्ययोः किं बलवत्पूर्वमुत्तरम् ॥ उत्ताद्यश्चोदकप्राप्तेरन्त्यः प्रत्यक्षतो विधेः ॥ १६ ॥**

यत्रार्त्विज्ययाजमानयोर्विरोधस्तत्रार्त्विज्यमेव कुर्युः । प्रधानत्वात् । कर्तारो हि कर्मणां गुणभूताः कर्तॄणामपि गुणभूताः संस्काराः । प्रत्यक्षविधानाच्च 'ये यजमानास्त ऋत्विज' इति ह्यनेनार्त्विज्यं यजमानानां विहितं याजमानं तु चोदकप्राप्तमित्यार्त्विज्यं बलीयः ॥

ब्राह्मणस्यैवार्त्विज्याधिकाराधिकरणम् ॥ १६ ॥

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥ [स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥४३॥ फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥ सांनाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् ॥ ४५ ॥ चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥ अन्वाहार्ये च दर्शनात् ॥ ४७ ॥]**

**आर्त्विज्यं किं त्रिवर्णस्थं विप्रयोग्येव वाग्रिमः ॥ विद्यावत्त्वाच तद्युक्तं ब्राह्मणस्यैव तत्स्मृतेः ॥ १७ ॥**

विप्रतिषेधे परमिति सूत्रे याजमानार्त्विज्ययोरार्त्विज्यं बलीय इति सिद्धं तत्प्रसङ्गादार्त्विज्ये कर्तारश्चिन्त्यन्ते । दर्शपूर्णमासज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यमुत ब्राह्मणैरेवेति संशयः । तत्र, 'त्रयोप्यार्त्विज्यमर्हन्ति विद्वत्त्वात्स्मरणं पुनः ॥ पुरुषार्थमतः कर्म वैगुण्यं नास्ति किंचन ॥' याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्येते न क्रत्वर्थतया । तेन क्षत्रियवैश्यावार्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां नतु

---

पपत्तावपि सहि भूयिष्ठामृद्धिमाप्नोतीति वचनबलात्फलभूयस्त्वमङ्गीकर्तव्यमिति तद्बलात्संस्काराधिक्यं सिध्यति । किंच फलभूयस्त्वे प्रामाणिके तदेव प्रवृत्तिनिमित्तमपि भविष्यतीत्यस्वरसादाह—**भवतु वेति** । विनापि संस्काराधिक्यं वचनबलादेव फलभूयस्त्वोपपत्तेर्न तत्संस्काराधिक्यसिद्धिरित्यर्थः । सूत्रार्थस्तु—सत्रे गृहपतिरेव यजमानसंस्कारान्कुर्यात् गृहेस्य कर्मणः पतिरित्यस्य संयोगात्तत्रैव समाख्याया अन्वर्थत्वाद्यथा हौत्रसमाख्यानाद्धोता हौत्रकर्मसु कर्ता तद्वदिति ॥

**विप्रतिषेधे परम् ॥ ३९ ॥** यदि सर्वे तर्हि विरोधेऽपि कुर्युः ततश्चार्त्विज्यं बाध्येत । तस्मान्न सर्वे कुर्युरिति पूर्वाक्षेपात्संगतिः । मन्दबुद्धिसौकर्याय वस्तुकथनरूपमिदमित्याशयेन सिद्धान्तमेवाह—**तत्रेति** । ननु न संस्काराः गुणभूतकर्त्रर्थाः येनाङ्गगुणविरोधन्यायेन कर्तृगुणभूतसंस्कारपरित्यागेन प्रधानाङ्गभूतार्त्विज्यानुग्रहः स्यादित्यस्वरसादाह—**प्रत्यक्षेति** ॥

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥ त्रय इति** । क्रतुविधयो ह्यार्त्विज्यकर्तॄनाक्षिपन्तो विद्याप्रयुक्तिगौरवात् शूद्रं विहायाध्ययनविधिलब्धविद्यांस्त्रीनपि वर्णानाक्षिपन्तीति त्रयाणामपि वर्णानामार्त्विज्यार्हत्वमित्यर्थः । **ननु** 'षट्कर्मैको भवत्येषा'मित्यादिस्मृतिषु याजनं ब्राह्मणस्यैव विहितमतः क्षत्रियवैश्ययोर्विद्वत्त्वेपि नार्त्विज्यार्हतेत्यत आह—**स्मरणमिति** । क्रतुप्रकरणेनाम्नानात्पुरुषार्थत्वमित्याशयेन विवृणोति—**याजनेति** । अत्र याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो धनमर्जयेन्न तु कृष्यादिना इत्येवंरूपो नियमः पुरुषार्थतया ब्राह्मणस्य विधीयते इति प्रकृतग्रन्थार्थ इति भ्रमो न कर्तव्यः । तावता ब्राह्मणस्य कृष्यादिमात्रनिषेधलाभेऽपि क्षत्रियवैश्ययोरार्त्विज्यनिषेधालाभेन प्रकृतावनुपयोगात्तेनेत्यायग्रिमग्रन्थासंगत्यापत्तेश्च, किंतु याजनादयो ब्राह्मणादीनामेव न क्षत्रियवैश्ययोस्तयोस्तु जयवाणिज्यादय इत्येवंरूपो नियमः प्रकृतग्रन्थार्थ इत्येवं बोध्यम् । **नन्वेवमपि** क्षत्रियादेर्जयादिनैवार्जननियमात्कथमार्त्विज्ये प्रवृत्तिः स्यादित्यत आह—**तेनेति** । अर्थलोभेन स्वधर्ममप्यतिक्रम्यार्त्विज्ये प्रवृत्तिः संभवतीति भावः । ब्राह्मणानामार्त्विज्यमित्यादिस्मरणं च न्याया-

---

१ नयोर्विप्रतिषेधः.

**क्रतोः काचिद्गुणहानिः । तस्मात्त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्तेऽभिधीयते—'द्विजोत्तमानामार्त्विज्यं नतु क्षत्रियवैश्ययोः । ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥' 'यज्ञं व्याख्यास्याम'इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति स्मरन्तो यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति विस्पष्टमेतत् । तथाच भगवद्रामायणेऽपि 'क्षत्रियो याज्ञिको यस्य चाण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षय'इति सुरा देवा ऋषयश्च ऋत्विग्भूता इति देवताहविर्भागनिराकरणात्क्रतुवैगुण्यमेव दर्शितम् । 'राजयाजकयाज्यस्य विनश्यति यथा हवि'रिति च अब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः लिङ्गानि च दर्शितानि ब्राह्मणानामिदं हविरित्येवमादीनि । तस्माद्ब्राह्मणानामेवार्त्विज्यमिति सिद्धम् । 'मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तो मुख्यतन्त्रप्रसङ्गः ॥ जिज्ञास्यो यो धर्म उक्तश्चतुर्धा स प्रज्ञातो लक्षणैर्द्वादशान्तैः' ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

## इति द्वादशोऽध्यायः समाप्तः ॥

---

भासमूलमिति पूर्वपक्ष्यभिमानः । **द्विजोत्तमानामिति** । क्रतुविधयो ह्यार्त्विज्यकर्तृत्वेन त्रैवर्णिकानाक्षेप्तुं प्रवर्तमाना येषां पुरुषाणां याजनं वृत्त्युपायतयावगतं तैरेव स्वसिध्युपपत्तिं पर्यालोच्यात्यन्तालसस्वभावत्वादार्त्विज्यकर्त्राक्षेपविषये उदासते ततश्च ब्राह्मणानामेवार्त्विज्यं नतु क्षत्रियवैश्ययोरित्यर्थः । एवंच याजननियमशास्त्रस्य नियमार्थं प्रवृत्तस्य क्रतुविधिष्वप्युपकारेण तच्छास्त्रस्य प्रसङ्गविचारपर्यवसानादस्याधिकरणस्य साक्षादपि संगतिः संभवतीति ध्येयम् । एवंसति ब्राह्मणानामार्त्विज्यमित्यादिस्मरणस्य प्रामाण्यमप्यनुगृहीतमित्याशयेनाह—**ब्राह्मणार्त्विज्येति**।सुरर्षिशब्दस्य नारदादिपरत्वभ्रमं वारयितुं सुराश्च ऋषयश्चेति द्वन्द्वोऽत्र विवक्षित इत्याशयेन व्याचष्टे—**सुरा इति** । भारतेप्युक्तमित्याह—**राजेति** । राजा क्षत्रियो याजको यस्य तद्याज्यस्येत्यर्थः । **दर्शितानीति** । भाष्य इति शेषः । **ब्राह्मणानामिति** । अयं मन्त्रः दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणानन्तरं निर्देशार्थः । तत्र चतुर्धाकरणस्य ऋत्विक्तृकशेषभक्षणार्थत्वाद्ब्राह्मणानामित्यनेन तत्र ऋत्विजामेव निर्देश इति ब्राह्मणानामेवार्त्विज्ये इदं लिङ्गम् । आदिशब्देन तस्मिन्नेव मन्त्रे निर्भक्तो ब्राह्मणो नेहाब्राह्मणस्यास्तीत्यब्राह्मणस्य भागनिषेधः । तथा'हुतादो ये ब्राह्मणा यदन्वाहार्यमाहरन्ती'ति दर्शपूर्णमासयोरन्वाहार्यस्यादनीयेषु ऋत्विक्षु ब्राह्मणशब्दनिर्देश इत्येवमादयो गृह्यन्ते । उक्तमध्यायार्थं सुखप्रतिपत्त्यर्थं पूर्वार्धेन संगृह्णाति—**मध्ये तन्त्रमिति** । यस्य मध्ये तन्त्रं यदीये येषामन्येषां विधानं तेषु मुख्यस्य प्रथमप्रवृत्ततन्त्रस्य तस्य यत्तन्त्रं तत्प्रसङ्गोस्मिन्नध्याये प्रोक्त इत्यर्थः । शास्त्रार्थमपरार्धेन संगृह्णाति—**जिज्ञास्य इति** । 'अथातो धर्मजिज्ञासे'ति स्वरूपप्रमाणसाधनफलैश्चतुर्भिः प्रकारैर्यो धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः स धर्मः प्रथमादिभिर्द्वादशान्तैरध्यायैः प्रज्ञातः । धर्मनिर्णयरूपं फलं सिद्धमित्यर्थः ॥

**इति श्रीनिट्टिलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रदीपिकाव्याख्यायां मयूखमालिकायां द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

---

१ तीति स्पष्टमेव.

**समाप्तेयं सव्याख्या शास्त्रदीपिका।**

